


Phoenix P. Works, Ahmedabad

SHREE-KRISHNA

Copy Rt. 15

# ŚRĪMADBHAGAVADGĪTĀ

## WITH THE COMMENTARIES

S'RĪMAT-S'ĀNKARABHĀṢYA WITH ĀNANDAGIRI; NĪLAKANṬHĪ;
BHĀṢYOTKARṢADĪPIKĀ OF DHANAPATI; S'RĪDHARĪ;
GĪTĀRTHASAÑGRAHA OF ABHINAVAGUPTĀCHĀRYA;

AND

GŪḌHARTHADĪPIKĀ OF MADHUSŪDANA
WITH GŪḌHĀRTHATATTVĀLOKA OF
S'RĪDHARMADATTAS'ARMĀ
(BACHCHĀS'ARMĀ).





EDITED BY

**WĀSUDEV LAXMAṆ SHĀSTRĪ PAṆS'ĪKAR.**

**Second Edition.**

PUBLISHED
BY
PĀNDURANG JĀWAJĪ,
PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,
BOMBAY.

1936.

*Price* Rupees



# S'RĪMADBHAGAVADGĪTĀ

## WITH THE COMMENTARIES

S'RĪMAT-S'ĀNKARABHĀṢYA WITH ĀNANDAGIRI; NĪLAKANṬHĪ;

BHĀṢYOTKARṢADĪPIKĀ OF DHANAPATI; S'RĪDHARĪ;

GĪTĀRTHASAÑGRAHA OF ABHINAVAGUPTĀCHĀRYA;

AND

GŪḌHARTHADĪPIKĀ OF MADHUSŪDANA

WITH GŪḌHĀRTHATATTVĀLOKA OF

S'RĪDHARMADATTAS'ARMĀ

(BACHCHĀS'ARMĀ).





EDITED BY

**WĀSUDEV LAXMAṆ SHĀSTRĪ PAṆS'ĪKAR.**

**Second Edition.**

PUBLISHED

BY

PĀNDURANG JĀWAJĪ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1936.

*Price 8 Rupees.*





अयं सर्वतन्त्रापरतन्त्रः
**श्रीधर्मदत्तशर्मा ( बच्चाशर्मा )**
गूढार्थतत्त्वालोकप्रणेता ।

अयं **सुरेश्वरानन्दः**
यत्प्रेमवशंवदेन श्रीधर्मदत्त( बच्चा )
शर्मणा व्यरचि गूढार्थतत्त्वालोकः ।



गीतामृतदुहे श्रीकृष्णाय नमः ।

# श्रीमद्भगवद्गीता ।

श्रीमच्छाङ्करभाष्येण—आनन्दगिरिकृतव्याख्यायुजा संवलिता

तथा

नीलकण्ठी—भाष्योत्कर्षदीपिका—श्रीधरीयसुबोधिनी—अभिनवगुप्ताचार्यव्याख्या—

श्रीमधुसूदनसरस्वतीस्वामिकृतगूढार्थदीपिकाख्यव्याख्यासहिता

तद्व्याख्यानेन

श्रीधर्मदत्तशर्म(प्रसिद्धबच्चाशर्म)विरचित-

## गूढार्थतत्त्वालोकेन युता च ।

---

वंशीविभूषितकरान्नवनीरदाभात्पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।

पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने ॥

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा

परिष्कृता संस्कृता च ।

( द्वितीयावृत्तिः )

---

मुम्बापुर्यां

पाण्डुरङ्ग जावजी

इत्येतैर्निर्णयसागराख्यमुद्रणयन्त्रालयाधिपतिभिः स्वीयेऽङ्कनालये

संमुद्य प्रकाशिता ।

---

शाकः १८५८ सन १९३६.

---

मूल्यं ८ रूप्यकाः ।



# प्रस्तावना ।



विदितमेवैतदस्ति विदुषां यत्किल संतापमयसंसारजीर्णकान्तारनिरन्तरभ्रमणश्रमजुषो जीवजातस्य स्वप्रकाशपरमानन्दचिद्धामनिर्विरामविश्राममनिदानमुपनिषदर्णवोन्मथनसमुद्धृतात्मतत्त्वामृतकलशमखिलार्तिहारिणा करुणागृहीतमानवतनुना हरिणा गीताशास्त्रं समुपदिष्टमासीत् । तदालोच्यातिगूढार्थमखिलजगतां शङ्करेण भगवता शङ्करेण स्वयमनुकम्पासंपादितनृतनुना व्याख्यातमभूत् । तच्च भाष्याभिधानं व्याख्यानमतिमञ्जुलपदतदर्थसंनिवेशमतिस्फुटव्याख्येयार्थप्रतिपत्तिसुधियामर्थावबोधप्रत्यूहक्लिष्टत्वतमोव्यूहव्युदसने चन्द्रायमाणमप्यल्पमतीनामयथार्थतत्त्वावगतिकादम्बिनीतिरस्कृतं नातिव्यराजतेत्यानन्दगिरिणात्मतत्त्वाकलनसमुद्धतामितानन्दगिरिणा कुमतिप्रभञ्जने प्रभञ्जनमिव व्यरच्यत व्याख्यानमतिशोभनम् । यद्यप्यासीन्मुद्रितमेतद्व्याख्योपेतं तद्भाष्यं तथाप्यशुद्धतया समलादर्श इव विमलार्थप्रकाशाय नालमिति भूयसायासेन संशोध्य तदिह संनिवेशितम् यदवलोकनेन निष्कलङ्कशशाङ्कमण्डलवीक्षणेनेव विस्मयतरलीकृतचेतसो भविष्यन्ति सचेतसः । नीलकण्ठेन प्रज्ञातुलितनीलकण्ठेन विरचिता संक्षिप्तसारार्थप्रकाशनैककुशला मधुरिमविजितशारदेन्दुपूर्णकला व्याख्यापीह संनिवेशिता । यदवलोकनेन चकोरीयिष्यन्ति विद्वज्जनाः । मधुसूदनेन प्रज्ञाप्रकर्षजितमधुसूदनेन लोकप्रसिद्धसरस्वतीपुंमूर्तिभावेन विहिता वेदान्तरहस्यप्रकाशने योगतत्त्वप्रदर्शने च लोकप्रथितज्योतिर्द्वयीं तिरस्कुर्वती स्वमहिमाभिभाविताखिलव्याख्या गूढार्थदीपिकासमाख्यावती व्याख्या । यद्यपि प्रागप्यासीन्मुद्रिता तथाप्यनतिशुद्धतया निगूढस्वार्थत्वेन च व्याख्यासापेक्षतया च न भवति विदुषां तोषायेति तां संशोध्यातिप्रयत्नादितरमतनिराकरणदृढीकृतवेदान्तमततत्त्वप्रकाशने प्रद्योतमानां शारदनिशीथिनीदयितप्रभामिव सर्वतन्त्रापरतन्त्रेण मिथिलामण्डलमण्डनेन विद्वद्वर**श्रीधर्मदत्तशर्मणा (लोकप्रसिद्धबच्चाशर्मणा)** मैथिलेन प्रियशिष्यवैदुष्यसंकुलीकृतविद्वत्समाजसुरेश्वरानन्दयतिप्रेरणया विरचितामन्वर्थ**तत्त्वालोकसंज्ञाशालिनीं व्याख्यां** संपाद्य तदुपेता सापीह संनिवेशिता । यदालोचनेन सटीकगीतागूढार्थदीपिकाकलनौत्सुक्यं चातकस्येव पयोदवीक्षणेनौत्कण्ठ्यं विपश्चित्सार्थस्योपशमिष्यति । विशुद्धप्रज्ञेन विदुषा धनपतिना रचिताऽनघे निराकृतदुर्वादिवचनौघेऽपि शाङ्करभाष्ये विहिताक्षेपाणामासुरप्रज्ञाजुषां विदुषां परिभवने भाष्योत्कर्षप्रकाशनेन तमसामभिभवने प्रभेव भास्करी विद्योतमाना भाष्योत्कर्षदीपिकापीह संनिवेशिता । या राकेव संनिहिता चेतस्युदयगिरिशिखर इव भाष्योत्कर्षममृतधामानमुद्गमयिष्यति धीमताम् । परमकारुणिकेन श्रीधरस्वामिना विहितातिसरलविमला सुबोधिन्याख्या चाल्पप्रज्ञानां विज्ञानां च गीतारहस्यप्रकाशिका व्याख्यापीह निहिता । महामाहेश्वरश्रीमदभिनवगुप्तपादाचार्येण श्रीमद्भगवच्छङ्करपूज्यपादप्रतिस्पर्धिना विरचिता भगवद्गीतार्थसंग्रहाख्यातिप्राचीना विरलप्रचारा संक्षिप्तार्थाभिधायिन्यपि स्फुटमुद्भासयन्ती गीतायथार्थतत्त्वमतिसूक्ष्ममतीनां विदुषामतिशयितादरभूरिह विनिवेशिता । याचालोचिता चिरन्तनविद्वज्जनप्रज्ञाप्रकर्षविज्ञानमुद्भावयिष्यति विपश्चितां चेतसीत्युक्ताभिरष्टाभिष्टीकाभिः सिद्धिभिरिव तनूभिर्वा समुपेतं सम्यग्विभाव्यमानं भवमिव भवोन्मूलनक्षमं विभावयिष्यन्ति पुस्तकमिदं सुधिय इत्यसौ महार्घोऽपि पुस्तकचिन्तामणिः पुरस्समुपस्थापितो युष्माकम् । तदविलम्बेनामुं विधाय स्वीयं सफलयन्तु परिश्रममस्माकं सुमतय इत्यभ्यर्थयते

**पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजन्मा**

**वासुदेवशर्मा ।**

# श्रीमद्भगवद्गीतायाः काण्डत्रयाध्यायविषयाः ।

सच्चिदानन्दरूपं तत्पूर्णं विष्णोः परं पदम् ।
यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः ॥
कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् ।
तद्रूपाष्टादशाध्याय्या गीता काण्डत्रयात्मिका ॥

१ कर्मकाण्डम्—तत्र तु प्रथमे काण्डे कर्मतत्त्यागवर्त्मना ।
त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते ॥

१ अर्जुनविषादयोगः । स एव च जगदुद्दिधीर्षोर्भगवतो गीताशास्त्रावतारहेतुः ।

२ सांख्ययोगः । अत्र ज्ञानं तत्साधनं कर्म तत्फलं सत्त्वशुद्धिस्तत्फलं ज्ञानमिति दर्शितम् ।

३ कर्मयोगः । अत्रोपायभूतां कर्मनिष्ठां प्राधान्येनोपसंहृत्य ज्ञाननिष्ठोपेयेति वर्णनम् ।

४ ब्रह्मार्पणयोगः । स्वस्यानीशत्वबाधेन भक्तिश्रद्धे दृढीकृत्य धीहेतोः कर्मनिष्ठाया उपसंहारः ।

५ कर्मसंन्यासयोगः । अत्रानेकसाधनाभ्यासनिष्पन्नं मुक्तिसाधनं स्वस्वरूपपरिज्ञानमुक्तम् ।

६ आत्मसंयमयोगः । स्पर्शान्कृत्वेति श्लोकत्रयविवरणादिध्यानयोगस्य बहिरङ्गान्तरङ्गसाधनाधिकारिणः ।

२ उपासनाकाण्डम्—द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना ।
भगवान्परमानन्दस्तत्पदार्थोऽवधार्यते ॥

७ ज्ञानयोगः । अत्र यन्निष्ठया ब्रह्मवित्तिष्ठति तद्ब्रह्म किंलक्षणं कथं वा तत्र स्थातव्यमिति निरूपणम् ।

८ अक्षरब्रह्मयोगः । ब्रह्मादीनां स्वरूपविवेचनपूर्वकं प्रयाणकाले मुमुक्षोः कर्तव्यध्यातव्यनिरूपणम् ।

९ राजविद्याराजगुह्ययोगः । परब्रह्मस्वरूपं तस्य सृष्ट्यादिषु साक्षित्वादिधर्मा उपासनाभेदाश्च ।

१० विभूतियोगः । मन्दप्रज्ञमुमुक्षोरुपासनासिद्धये स्वोपास्तेः फलं भगवतो भक्तानुग्राहकत्वं विभूतयश्च ।

११ विश्वरूपदर्शनम् । भगवता स्वस्य मायाविजृंभिते विश्वरूपेऽखिलसृष्ट्यादिक्रियाप्रकाशननिरूपणम् ।

१२ भक्तियोगः । सगुणनिर्गुणोपासकानां तारतम्यविशेषस्तयोः पृथक्साधननिरूपणम् ।

३ ज्ञानकाण्डम्—तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम् ।
एवमप्यत्र काण्डानां संबन्धोऽस्ति परस्परम् ॥

१३ क्षेत्रक्षेत्रज्ञविभागयोगः । अनात्मात्मशब्दार्थयोः प्रकृतिपुरुषयोर्विवेचनं विविक्तस्यात्मनो ब्रह्मणैकत्वम् ।

१४ गुणत्रयविभागयोगः । प्रकृतेर्गुणविभागः गुणस्वरूपं परस्पराभिभावकत्वं तत्फलभेदश्च ।

१५ पुरुषोत्तमयोगः । क्षराक्षरविलक्षणं पुरुषोत्तमाख्यं ब्रह्म तदनुसंधानं तत्र महतां प्रवृत्तिस्तत्फलं च ।

१६ दैवासुरसंपद्विभागयोगः । उभयसंपदोः स्वरूपनिरूपणपूर्वकं तयोर्हेयोपादेयव्यवस्था ।

१७ श्रद्धात्रयविभागयोगः । त्रिविधास्वासु सात्त्विकाहारतपोयज्ञादियुजां शमादिसंपत्त्या मोक्षाधिकारनिरूपणम् ।

१८ मोक्षसंन्यासयोगः । अत्र त्यागसंन्यासयोरैकार्थ्यं काम्यनिषिद्धयोस्त्याज्यत्वं नित्ययज्ञादीनां नियमेनाचरणं त्यागस्य सात्त्विकादिभेदः नैष्कर्म्यसिद्धिलक्षणज्ञानस्य कर्मणो धृतेर्बुद्धेः सुखस्य च सात्त्विकादिभेदभिन्नत्वं ब्राह्मणादीनां कर्माणि तद्वतां ज्ञानं ज्ञाननिष्ठा ब्रह्मप्राप्तिश्च ।

समाप्तेयं विषयानुक्रमणी ।

# अत्र शोधनार्थमादर्शत्वेनोपात्तानां लिखिताङ्कित-ग्रन्थानां निर्देशः ।

१ **श्रीमद्भगवद्गीताशांकरभाष्यस्य** प्राचीनं जीर्णतरं हस्तलिखितमेकमेव पुस्तकमस्मन्मित्रप्रहितं नातिशुद्धं, द्वितीयं पुण्यपत्तनस्थगोंधळेकरमुद्रणालयाङ्कितं, तृतीयमानन्दाश्रममुद्रितमिति त्रीण्येव संगृहीतानि ।

२ **आनन्दगिरिव्याख्यायास्तू**परिनिर्दिष्टान्येवेति नहि तेषां पुनर्निर्देशापेक्षा ।

३ **नीलकण्ठीव्याख्यायाः** श्रीमन्महाभारतान्तर्गतभगवद्गीताव्याख्यारूपं गणपतकृष्णाजीमुद्रितभारत-पुस्तकमेकमेव ।

४ **मधुसूदनीव्याख्याया** गूढार्थदीपिकासमाख्यायास्तु लिखितमेकं प्राचीनं भारतमार्तण्डपण्डित-श्रीगट्टूजीनां ग्रन्थसंग्रहभाण्डारात्तद्व्यवस्थापकेन विठ्ठलदासमहाशयेन दत्तमेकं, द्वितीयं मैसूरस्थमहाराजास्था-नगतमहाविद्वद्भिः काशीशेषवेङ्कटाचलशास्त्रिभिर्दत्तं जीर्णतरं प्रायः शुद्धं, तृतीयं श्रीकाशीक्षेत्रमुद्रितं चतुर्थं ने. ओ. मुद्रितमिति चतुर्णां संग्रहः ।

५ **भाष्योत्कर्षदीपिकाव्याख्यायाः** हस्तलिखितं पुस्तकं कुरुंदवाटिकास्थ–श्रीमद्बापूसाहेबसंगृहीत-ग्रन्थसंग्रहात् श्रीमद्भिः सकलगुणसंपद्भिराजमानैः महाराजश्रीआण्णासाहेबपरिवृढैर्दत्तं प्रायः शुद्धतरं, द्वितीयं च रत्नागिरिनिवासिभिः सुप्रसिद्धैः आठल्ये इत्युपाह्वयैर्मुद्रितं चेति द्वयमेव समासादितम् ।

६ **श्रीधरीव्याख्योपेतं** तावन्निर्णयसागरमुद्रितमेकमेव ।

७ **अभिनवगुप्तपादाचार्यव्याख्याया** हस्तलिखितमेकं जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डित–दुर्गाप्रसादात्मजपण्डित–केदारनाथमहोदयैः कश्मीरात्संपाद्य दत्तं नातिशुद्धमेकं, द्वितीयं पुण्यपत्तनस्थ-डेक्कनकालेजवर्ति हस्तलिखितं प्रायः शुद्धमेकमिति पुस्तकद्वयमेवासादितम् ।

८ **गूढार्थदीपिकातत्त्वालोकव्याख्यायाः** (मधुसूदनीव्याख्याटिप्पनीरूपायाः) लिखितपुस्तकं मिथिलानगरस्थपण्डितप्रकाण्डविद्वन्मूर्धन्य-सर्वतन्त्रापरतन्त्रश्रीधर्मदत्तशर्म (प्रसिद्धबच्चाशर्म) संदर्भितमभिनवं मुम्बापुरस्थपण्डितवर-रमापतिमिश्रमहाशयैः संपाद्य दत्तमेकमेव । अस्या व्याख्यायाः श्रीमदभिनवगुप्तपादा-चार्यकृतव्याख्यायाश्चापूर्व एवायं मुद्रणशालावतारः समजनीति विशेषेणालम् ।

एवमादिग्रन्थसंकलनेनानल्पपरिश्रमेण यथामति संस्कृतेऽप्यस्मिन्ग्रन्थे गच्छतःस्खलनन्यायेन दृग्दोषा-ल्पप्रेक्षानवधानाक्षरयोजकनिबन्धनं मानुषशेमुषीसुलभं स्खलितं दृष्टिसरणिमापतितं निसर्गकरुणावरुणा-लया निबन्धसंशोधनश्रमविदुषो विदुषो मार्जयेयुरहमपि पुनर्मुद्रणावसरे मार्जयेयेति सप्रश्रयं विज्ञापयति

**ग्रन्थसंस्कर्ता ।**

---

**द्वितीयावृत्तौ**—मधुसूदनीव्याख्यायाः श्रीधरीव्याख्यायाश्च संशोधने आनन्दाश्रममुद्रितं पुस्तकं गृहीतम् ।

# श्रीमद्भगवद्गीतामाहात्म्यम् ।

## श्रीकृष्णाय गीतामृतदुहे नमः ।

धरा–भगवन्परमेशान भक्तिरव्यभिचारिणी । प्रारब्धं भुज्यमानस्य कथं भवति हे प्रभो ॥ १ ॥
विष्णुः–प्रारब्धं भुज्यमानो हि गीताभ्यासरतः सदा । स मुक्तः स सुखी लोके कर्मणा नोपलिप्यते २
महापापादिपापानि गीताध्यानं करोति चेत् । क्वचित्स्पर्शं न कुर्वन्ति नलिनीदलमम्बुवत् ॥ ३ ॥
गीतायाः पुस्तकं यत्र यत्र पाठः प्रवर्तते । तत्र सर्वाणि तीर्थानि प्रयागादीनि तत्र वै ॥ ४ ॥
सर्वे देवाश्च ऋषयो योगिनः पन्नगाश्च ये । गोपाला गोपिका वापि नारदोद्धवपार्षदैः ॥
सहायो जायते शीघ्रं यत्र गीता प्रवर्तते ॥ ५ ॥
यत्र गीताविचारश्च पठनं पाठनं श्रुतम् । तत्राहं निश्चितं पृथ्वि निवसामि सदैव हि ॥ ६ ॥
गीताश्रयेऽहं तिष्ठामि गीता मे चोत्तमं गृहम् । गीताज्ञानमुपाश्रित्य त्रींल्लोकान्पालयाम्यहम् ॥७॥
गीता मे परमा विद्या ब्रह्मरूपा न संशयः । अर्धमात्राक्षरा नित्या स्वानिर्वाच्यपदात्मिका ॥ ८ ॥
चिदानन्देन कृष्णेन प्रोक्ता स्वमुखतोऽर्जुनम् । वेदत्रयी परानन्दा तत्त्वार्थज्ञानसंयुता ॥ ९ ॥
योऽष्टादशजपी नित्यं नरो निश्चलमानसः । ज्ञानसिद्धिं स लभते ततो याति परं पदम् ॥ १० ॥
पाठेऽसमर्थः संपूर्णे ततोऽर्धं पाठमाचरेत् । तदा गोदानजं पुण्यं लभते नात्र संशयः ॥ ११ ॥
त्रिभागं पठमानस्तु गङ्गास्नानफलं लभेत् । षडंशं जपमानस्तु सोमयागफलं लभेत् ॥ १२ ॥
एकाध्यायं तु यो नित्यं पठते भक्तिसंयुतः । रुद्रलोकमवाप्नोति गणो भूत्वा वसेच्चिरम् ॥ १३ ॥
अध्यायं श्लोकपादं वा नित्यं यः पठते नरः । स याति नरतां यावन्मन्वन्तरं वसुंधरे ॥ १४ ॥
गीतायाः श्लोकदशकं सप्त पञ्च चतुष्टयम् । द्वौ त्रीनेकं तदर्धं वा श्लोकानां यः पठेन्नरः ॥ १५ ॥
चन्द्रलोकमवाप्नोति वर्षाणामयुतं ध्रुवम् । गीतापाठसमायुक्तो मृतो मानुषतां व्रजेत् ॥ १६ ॥
गीताभ्यासं पुनः कृत्वा लभते मुक्तिमुत्तमाम् । गीतेत्युच्चारसंयुक्तो म्रियमाणो गतिं लभेत् ॥१७॥
गीतार्थश्रवणासक्तो महापापयुतोऽपि वा । वैकुण्ठं समवाप्नोति विष्णुना सह मोदते ॥ १८ ॥
गीतार्थं ध्यायते नित्यं कृत्वा कर्माणि भूरिशः । जीवन्मुक्तः स विज्ञेयो देहान्ते परमं पदम् ॥ १९ ॥
गीतामाश्रित्य बहवो भूभुजो जनकादयः । निर्धूतकल्मषा लोके गीता याताः परं पदम् ॥ २० ॥
गीतायाः पठनं कृत्वा माहात्म्यं नैव यः पठेत् । वृथा पाठो भवेत्तस्य श्रम एव ह्युदाहृतः ॥ २१ ॥
एतन्माहात्म्यसंयुक्तं गीताभ्यासं करोति यः । स तत्फलमवाप्नोति दुर्लभां गतिमाप्नुयात् ॥ २२ ॥
सूतः–माहात्म्यमेतद्गीताया मया प्रोक्तं सनातनम् । गीतान्ते च पठेद्यस्तु यदुक्तं तत्फलं लभेत् ॥२३॥

इति श्रीवाराहपुराणे धराविष्णुप्रोक्तं श्रीगीतामाहात्म्यं संपूर्णम् ॥

# श्रीमद्भगवद्गीतामङ्गलाचरणम् ।

पार्थाय प्रतिबोधितां भगवता नारायणेन स्वयं व्यासेन ग्रथितां पुराणमुनिना मध्येमहाभारतम् ।
अद्वैतामृतवर्षिणीं भगवतीमष्टादशाध्यायिनीमम्ब त्वामनुसंदधामि भगवद्गीते भवद्वेषिणीम् ॥ १ ॥
नमोऽस्तु ते व्यास विशालबुद्धे फुल्लारविन्दायतपत्रनेत्र ।
येन त्वया भारततैलपूर्णः प्रज्वालितो ज्ञानमयः प्रदीपः ॥ २ ॥
प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये । ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः ॥ ३ ॥
सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः । पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥ ४ ॥
वसुदेवसुतं देवं कंसचाणूरमर्दनम् । देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ॥ ५ ॥
भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोपला शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला ।
अश्वत्थामविकर्णघोरमकरा दुर्योधनावर्तिनी सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्तकः केशवः ॥ ६
पाराशर्यवचःसरोजममलं गीतार्थगन्धोत्कटं नानाख्यानककेसरं हरिकथासंबोधनाबोधितम् ।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे ॥ ७ ॥
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् । यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ८ ॥
यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥९॥

इति श्रीमद्भगवद्गीतामङ्गलध्यानादि ॥



# आनन्दगिरिकृतव्याख्यासंवलितश्रीमच्छाङ्करभाष्ययुता

# श्रीमद्भगवद्गीता ।



## नीलकण्ठी-मधुसूदनी-भाष्योत्कर्षदीपिका-श्रीधरी-अभिनवगुप्ताचार्य-प्रणीतव्याख्यासनाथीकृता च ।



ॐ नमोभगवते वासुदेवाय ।

१ श्रीमच्छांकरभाष्योपक्रमणिका ।

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् । अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ १ ॥

२ आनन्दगिरिव्याख्या ।

दृष्टिं मयि विशिष्टार्थां कृपापीयूषवर्षिणीम् । हेरम्ब देहि प्रत्यूहक्ष्वेडव्यूहनिवारिणीम् ॥ १ ॥

यद्वक्रपङ्केरुहसंप्रसूतं निष्ठामृतं विश्वविभागनिष्ठम् ।
साध्येतराभ्यां परिनिष्ठितान्तं तं वासुदेवं सततं नतोऽस्मि ॥ २ ॥

प्रत्यञ्चमच्युतं नत्वा गुरूनपि गरीयसः । क्रियते शिष्यशिक्षायै गीताभाष्यविवेचनम् ॥ ३ ॥

कर्मनिष्ठाज्ञाननिष्ठेत्युपायोपेयभूतनिष्ठाद्वयमधिकृत्य प्रवृत्तं गीताशास्त्रं व्याचिख्यासुर्भगवान्भाष्यकारो विघ्नोपप्लवोपशमनादिप्रयोजनप्रसिद्धये प्रामाणिकव्यवहारप्रमाणकमिष्टदेवतातत्त्वानुस्मरणं मङ्गलाचरणं संपादयन् अवशेषेणेतिहासपुराणयोर्व्याचिख्यासितगीताशास्त्रेणैकवाक्यतामभिप्रेत्य पौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति—नारायण इति । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥' इति स्मृतिसिद्धः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो वंशऋषिभ्यो नमो गुरुभ्यः ।
प्रणम्य भगवत्पादान्श्रीधरादींश्च सद्गुरून् । संप्रदायानुसारेण गीताव्याख्यां समारभे ॥ १ ॥

४ मधुसूदनीव्याख्या ।

ॐ नमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीमद्रामचन्द्राय ॥
भगवत्पादभाष्यार्थमालोच्यातिप्रयत्नतः । प्रायः प्रत्यक्षरं कुर्वे गीतागूढार्थदीपिकाम् ॥ १ ॥

५ भाष्योत्कर्षदीपिका ।

सप्तद्वीपा धरेयं सगिरिवनजला लोकपालाः सलोका ब्रह्माण्डे सन्ति यस्मिन्सलिलहुतभुगाद्यावृते तत्प्रधानात् ।
यस्मादव्यक्तसंज्ञाद्भवति गुणमयाद्वेदवेद्यः परो यस्तस्मान्नारायणं तं सुविमलमभयं शंकरं नौमि सत्यम् ॥ १ ॥

६ श्रीधरीव्याख्या ।

शेषाशेषमुखव्याख्याचातुर्यं त्वेकवक्त्रतः । दधानमद्भुतं वन्दे परमानन्दमाधवम् ॥ १ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

य एष विततस्फुरद्विविधभावचक्रात्मकः परस्परविभेदवान्विषयतामुपागच्छति ।
यदेकभयभावनावशात एव भेदान्वयं स शंभुरशिवापहो जयति बोधभासां निधिः ॥ १ ॥

१ श्रीमच्छांकरभाष्योपक्रमणिका ।

**स भगवान्सृष्ट्वेदं जगत् तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं**

२ आनन्दगिरिव्याख्या ।

स्थूलदृशां नारायणशब्दार्थः । सूक्ष्मदर्शिनः पुनराचक्षते—नरशब्देन चराचरात्मकं शरीरजातमुच्यते । तत्र नित्यसंनिहिताश्चिदाभासा जीवा नारा इति निरुच्यते तेषामयनमाश्रयो नियामकोऽन्तर्यामी नारायण इति । यमधिकृत्यान्तर्यामिब्राह्मणं श्रीनारायणाख्यमन्त्राम्नायं चाधीयते । तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति । ननु परस्यात्मनो मायासंबन्धादन्तर्यामित्वं शास्त्रप्रतिपाद्यत्वं च वक्तव्यम् । अन्यथा कूटस्थासङ्गाविषयाद्वितीयस्य तदयोगात् । तथाच शुद्धतासिद्धौ कथं यथोक्तपरदेवता शास्त्रादावनुस्मर्यते । शुद्धस्य हि तत्त्वस्यानुस्मरणमभीष्टफलवदभीष्टं तत्राह—**परोऽव्यक्तादिति** । अव्यक्तमव्याकृतं मायेत्यनर्थान्तरं, तस्मात्परो व्यतिरिक्तस्तेनासंस्पृष्टोऽयमपरः, 'अक्षरात्परतः परः' इति श्रुतेः । गृहीतस्तत्त्वतो मायासंबन्धाभावेऽपि कल्पनया तदीयसंगतिमङ्गीकृत्यान्तर्यामित्वादिकमुन्नेयम् । यस्मादीश्वरस्य व्यतिरेको विवक्षितस्तस्मिन्नव्यक्ते साक्षिसिद्धेऽपि कार्यलिङ्गकमनुमानमुपन्यस्यति—**अण्डमिति** । अपञ्चीकृतपञ्चमहाभूतात्मकं हैरण्यगर्भं तत्त्वमण्डमित्यभिलप्यते । तदव्यक्तात्पूर्वोक्तादुत्पद्यते । प्रसिद्धा हि श्रुतिस्मृतिवादेषु हिरण्यगर्भस्य मूलकारणादुत्पत्तिः । तथाच कार्यलिङ्गादव्यक्ताभिव्यक्तिरित्यर्थः । हिरण्यगर्भे श्रुतिस्मृतिसमधिगतेऽपि कार्यलिङ्गकमनुमानमस्तीति मन्वानो विराडुत्पत्तिमुपदर्शयति—**अण्डस्येति** । उक्तस्याण्डस्य हिरण्यगर्भाभिधानीयस्यान्तरिमे भूरादयो लोका विराडात्मका वर्तन्ते । कार्यं हि कारणस्यान्तर्भवति तेन हिरण्यगर्भान्तर्भूता भूरादयो लोका विराडात्मानस्तेन सृष्टा इति तल्लिङ्गाद्धिरण्यगर्भसिद्धिरित्यर्थः । लोकानेव पञ्चीकृतपञ्चमहाभूतात्मकविराडात्मत्वेन व्युत्पादयति—**सप्तद्वीपेति** । 'सा पृथिव्यभवद्' इति श्रुतौ विराजो जन्म संकीर्तितमित्यङ्गीकारादशेषद्वीपोपेता पृथिवीत्यनेन सर्वलोकात्मको विराडेवोच्यते । चशब्देन विराजो हि हिरण्यगर्भे पूर्वोक्ताण्डात्मन्यन्तर्भावस्ततः संभवोऽनुकृष्यते । परमात्मा हि स्वाज्ञाद्वारा जगदशेषमुत्पाद्य स्वात्मन्येवान्तर्भाव्याखण्डैकरससच्चिदानन्दात्मना स्वे महिम्नि तिष्ठतीत्यर्थः । अत्र च नारायणशब्देनाभिधेयमुक्तम्, नरा एव नारा जीवास्त्वंपदवाच्यास्तेषामयनमधिष्ठानं तत्पदवाच्यं परं ब्रह्म । तथाच कल्पितस्याधिष्ठानातिरिक्तस्वरूपाभावाद्वाच्यस्य कल्पितत्वेऽपि लक्ष्यस्य ब्रह्ममात्रत्वाद्ब्रह्मात्मैक्यं विषयोऽत्र सूच्यते । तेनार्थाद्विषयविषयिभावः संबन्धोऽपि ध्वनितः । परोऽव्यक्तादित्यनेन मायासंस्पर्शाभावोक्त्या सर्वानर्थनिवृत्त्या परमानन्दाविर्भावलक्षणो मोक्षोऽपि विवक्षितस्तेन च तत्कामस्याधिकारो द्योतितः । परिशिष्टेन तुशब्देन वस्तुनो वास्तवमद्वितीयत्वमावेदितं, तेन च वस्तुद्वारा परमविषयत्वं तज्ज्ञाननिष्ठायास्तदुपायभूतकर्मनिष्ठायाश्चावान्तरविषयत्वमित्यर्थादुक्तमित्यवधेयम् ॥ १ ॥

ननु नैवं साध्यसाधनभूतं निष्ठाद्वयमत्र भगवता प्रतिपाद्यते, ब्रह्मणाभ्यर्थितस्य भगवतो भूमिभारापहारार्थं वसुदेवेन देवक्यामाविर्भूतस्य तादर्थ्येन मध्यमं पृथासुतं प्रथितमहिमानं प्रेरयितुं धर्मयोरिहानूद्यमानत्वात् । अतो नास्य शास्त्रस्य निष्ठाद्वयं परापरविषयभावमनुभवितुमलमिति । तन्न । भगवतो धर्मसंस्थापनस्वाभाव्यश्रौव्याद्धर्मद्वयस्थापनार्थमेव प्रादुर्भावाभ्युपगमाद्भूभारपरिहारस्य चार्थिकत्वादर्जुनं निमित्तीकृत्याधिकारिणं स्वधर्मप्रवर्तनद्वारा ज्ञाननिष्ठायामवतारयितुं गीताशास्त्रस्य प्रणीतत्वादुचितमस्य निष्ठाद्वयविषयत्वमिति परिहरति—**स भगवानित्यादिना धर्मद्वयमर्जुनायोपदिदेशेत्यन्तेन** भाष्येण ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भारते सर्ववेदार्थो भारतार्थश्च कृत्स्नशः । गीतायामस्ति तेनेयं सर्वशास्त्रमयी मता ॥ २ ॥

४ मधुसूदनीव्याख्या ।

सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम् । परं निःश्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम् ॥ २ ॥
सच्चिदानन्दरूपं तत्पूर्णं विष्णोः परं पदम् । यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः ॥ ३ ॥
कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् । तद्रूपाष्टादशाध्यायैर्गीता काण्डत्रयात्मिका ॥ ४ ॥

५ भाष्योत्कर्षदीपिका ।

सृष्ट्वेदं श्रुतिगं प्रवृत्तिजनकं धर्मं मरीच्यादिकान्विश्वस्थापनहेतवेऽब्जजतनुः संग्राहयामास यः ।
सर्वानर्थनिवर्हणं च सनकाद्यान्पूर्वसृष्टानृषीन्वैराग्यादिकलक्षणं शिवमहं तं वासुदेवं भजे ॥ २ ॥

६ श्रीधरीव्याख्या ।

श्रीमाधवं प्रणम्योमाधवं विश्वेशमादरात् । तद्भक्तियन्त्रितः कुर्वे गीताव्याख्यां सुबोधिनीम् ॥ २ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

द्वैपायनेन मुनिना यदिदं व्यधायि शास्त्रं सहस्रशतसंमितमत्र मोक्षः ।
प्राधान्यतः फलतया प्रथितस्तदन्यधर्मादि तस्य परिपोषयितुं प्रगीतम् ॥ २ ॥

१ श्रीमच्छांकरभाष्योपक्रमणिका ।

ग्राहयामास वेदोक्तम् । ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास । द्विविधो हि वेदोक्तो धर्मः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । तत्रैको जगतः स्थितिकारणं, प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मः ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोर्थिभिरनुष्ठीयमानो

२ आनन्दगिरिव्याख्या ।

तत्र नेदं गीताशास्त्रं व्याख्यातुमुचितमाप्तप्रणीतत्वानिर्धारणात्तथाविधशास्त्रान्तरवदित्याशङ्क्य मङ्गलाचरणस्योद्देश्यं दर्शयन्नादौ शास्त्रप्रणेतुराप्तत्वनिर्धारणार्थं सर्वज्ञत्वादिप्रतिज्ञापूर्वकं सर्वजगज्जनयितृत्वमाह—**स भगवानिति** । प्रकृतो नारायणाख्यो देवः सर्वज्ञः सर्वेश्वरः समस्तमपि प्रपञ्चमुत्पाद्य व्यवस्थितः, नच तस्यानाप्तत्वम् । ईश्वरानुगृहीतानामाप्तत्वसिद्ध्या तस्य परमाप्तत्वसिद्धेरित्यर्थः । ननु भगवता सृष्टमपि चातुर्वर्ण्यादिविशिष्टं हिरण्यगर्भादिलक्षणं जगन्न व्यवस्थितिमास्थातुं शक्यते व्यवस्थापकाभावात्, नच परस्यैवेश्वरस्य व्यवस्थापकत्वं वैषम्यादिप्रसङ्गात्तत्राह—**तस्य चेति** । सृष्टस्य जगतो मर्यादाविरहितत्वे शङ्किते तदीयां व्यवस्थां कर्तुमिच्छन् व्यवस्थापकमालोच्य क्षत्रस्यापि क्षत्रत्वेन प्रसिद्धं धर्मं तथाविधधर्ममधिगम्य सृष्टवानित्यर्थः । सृष्टस्य धर्मस्य साध्यत्वभावतया साधयितारमन्तरेणासंभवात्तस्यैव तदनुष्ठातृत्वानभ्युपगमात् प्राणिप्रभेदानामधर्मप्रायाणां तदयोगात् कुतस्तदीया सृष्टिरित्याशङ्क्याह—**मरीच्यादीनिति** । तेषां भगवता सृष्टानां प्रजासृष्टिहेतूनां यागदानादिप्रवृत्तिसाध्यं धर्ममनुष्ठातुमधिकृतानां स्वकीयत्वेन तदुपादानमुपपन्नमित्यर्थः । चैत्यवन्दनादिभ्यो विशेषार्थं धर्मं विशिनष्टि—**वेदोक्तमिति** । ननु नैतावता जगदशेषमपि व्यवस्थापयितुं शक्यते प्रवृत्तिमार्गस्य पूर्वोक्तधर्मं प्रति नियतत्वेऽपि निवृत्तिमार्गस्य तेन व्यवस्थापनायोग्यत्वात्तत्राह—**ततोऽन्यांश्चेति** । निवृत्तिरूपस्य धर्मस्य शमदमाद्यात्मनो गमकमाह—**ज्ञानेति** । विवेकवैराग्यातिशये शमाद्यतिशयो गम्यते ततो विवेकादि तस्य गमकमित्यर्थः । धर्मे बहुविदां विवाददर्शनाज्जगतः स्थित्यै कारणीभूतधर्मान्तरमपि स्रष्टव्यमस्तीत्याशङ्क्याह—**द्विविधो हीति** । अतिप्रसङ्गाप्रसङ्गव्यावृत्तये प्रकृतं धर्मं लक्षयति—**प्राणिनामिति** । प्रवृत्तिलक्षणो धर्मोऽभ्युदयार्थिनां साक्षादभ्युदयहेतुर्निःश्रेयसार्थिनां परम्परया निःश्रेयसहेतुः, निवृत्तिलक्षणस्तु धर्मः साक्षादेव निःश्रेयसहेतुरिति विभागः । ज्ञानस्यैव निःश्रेयसहेतुत्वेऽपि शमादीनां ज्ञानद्वारा मोक्षहेतुत्वं, ज्ञानातिरिक्तव्यवधानाभावाच्च साक्षादित्युक्तम् । यद्येवं धर्मो लक्ष्यते तर्हि वर्णित्वमाश्रमित्वं चोपेक्ष्य सर्वैरेव पुरुषार्थार्थिभिर्द्वावपि धर्मौ यथायोग्यमनुष्ठेयावित्यनुष्ठातृनियमासिद्धिरित्याशङ्क्याह—**ब्राह्मणाद्यैरिति** । अर्थित्वाविशेषेऽपि श्रुतिस्मृतिपर्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मोपास्तिज्ञानभेदैः शास्त्रं काण्डत्रयात्मकम् । अन्ये तूपासनाकाण्डात्तृतीयो नातिरिच्यते ॥ ३ ॥

४ मधुसूदनीव्याख्या ।

एकमेकेन षट्केन काण्डमत्रोपलक्षयेत् । कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः ॥ ५ ॥
यतः समुच्चयो नास्ति तयोरतिविरोधतः । भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्तिता ॥ ६ ॥
उभयानुगता सा हि सर्वविघ्नापनोदिनी । कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा ॥ ७ ॥
तत्र तु प्रथमे काण्डे कर्मतत्त्यागवर्त्मना । त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते ॥ ८ ॥
द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना । भगवान्परमानन्दस्तत्पदार्थोऽवधार्यते ॥ ९ ॥
तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम् । एवमप्यत्र काण्डानां संबन्धोऽस्ति परस्परम् ॥ १० ॥
प्रत्यध्यायं विशेषस्तु तत्र तत्रैव वक्ष्यते । मुक्तिसाधनपर्वेदं शास्त्रार्थत्वेन कथ्यते ॥ ११ ॥
निष्कामकर्मानुष्ठानं त्यागात्काम्यनिषिद्धयोः । तत्रापि परमो धर्मो जपस्तुत्यादिकं हरेः ॥ १२ ॥
क्षीणपापस्य चित्तस्य विवेके योग्यता यदा । नित्यानित्यविवेकस्तु जायते सुदृढस्तदा ॥ १३ ॥
इहामुत्रार्थवैराग्यं वशीकाराभिधं क्रमात् । ततः शमादिसंपत्त्या संन्यासो निष्ठितो भवेत् ॥ १४ ॥

५ भाष्योत्कर्षदीपिका ।

अजन्मा सर्वेषामधिपतिरमेयोऽपि जगतामधिष्ठाय स्वीयां प्रकृतिमिव देही स्फुरति यः ।
विनष्टं कालेन द्विविधममृतं धर्ममनघं पुनः प्राहेशं तं विमलशुभदं नौमि परमम् ॥ ३ ॥

६ श्रीधरीव्याख्या ।

भाष्यकारमतं सम्यक्तद्व्याख्यातृगिरस्तथा । यथामति समालोच्य गीताव्याख्यां समारभे ॥ ३ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

मोक्षश्च नाम सकलाप्तविभागरूपसर्वज्ञसर्वकरणादिशुभस्वभावे ।
आकाङ्क्षया विरहिते भगवत्यधीशे नित्योदिते लयमियात्प्रथितः समासात् ॥ ३ ॥

१ श्रीमच्छांकरभाष्योपक्रमणिका ।

**दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्मेणाभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल संबभूव । ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः तदधीनत्वाद्वर्णाश्रमभेदानाम् ।**

**स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां**

२ आनन्दगिरिव्याख्या ।

लोचनयानुष्ठानान्नियमसिद्धिरित्यर्थः । नित्यनैमित्तिकेषु यावज्जीवमनुष्ठानं काम्येषु करणांशे रागाधीना प्रवृत्तिरितिकर्तव्यतांशे वैधीति विभागेऽपि कदाचिदेवानुष्ठानमिति विभागमभिप्रेत्याह—**दीर्घेणेति** । अथ यथोक्तधर्मवशादेव जगतो विवक्षितस्थितिसिद्धेर्भगवतो नारायणस्यादिकर्तुरनेकानर्थकलुषितशरीरपरिग्रहासंभवादन्यस्यैव कस्यचिदनाप्तस्य वैषम्यनैर्घृण्यवतो निग्रहपरिग्रहद्वारेण गीताशास्त्रप्रणयनमिति कुतोऽस्याप्तप्रणीतत्वं तत्राह—**अनुष्ठातॄणामिति** । अथवा यथोक्तशङ्कायां दीर्घेणेत्यारभ्योत्तरम् । महता कालेन कृतत्रेतात्यये द्वापरावसाने साधकानां कामक्रोधादिपूर्वकादविवेकादधर्मबाहुल्याद्धर्माभिभवादधर्माभिवृद्धेश्च जगतो मर्यादाभेदे तदीयां मर्यादामात्मनिर्मितां पालयितुमिच्छन् प्रकृतो भगवानेतदर्थेन चातुर्वर्ण्यादिसंरक्षणार्थं लीलामयं मायाशक्तिप्रयुक्तं स्वेच्छाविग्रहं जग्राहेत्यर्थः । 'भौमस्य ब्रह्मणो गुप्त्यै वसुदेवादजीजनत्' इति स्मृतिमनुसृत्य पदद्वयमनूद्य व्याचष्टे—**भौमस्येति** । **अंशेनेति** । स्वेच्छानिर्मितेन मायामयेन स्वरूपेणेत्यर्थः । किलेत्यस्मिन्नर्थे पौराणिकी प्रसिद्धिरनूद्यते । नहि भगवतो व्यतिरिक्तस्येदं जन्मेति युज्यते बहुविधागमविरोधादिति भावः । ननु वैदिकधर्मसंरक्षणार्थं भगवतो जन्म, 'यदा यदा हि धर्मस्य' इत्यादिदर्शनात्, किमिदं ब्राह्मणत्वस्य रक्षणार्थमिति तत्राह—**ब्राह्मणत्वस्य हीति** । अथापि वर्णाश्रमभेदव्यवस्थापनं विना कथं यथोक्तधर्मरक्षणमित्याशङ्क्याह—**तदधीनत्वादिति** । ब्राह्मणं हि पुरोधाय क्षत्रादिः प्रतिष्ठां प्रतिपद्यते याजनाध्यापनयोस्तद्धर्मत्वात्तद्द्वारा च वर्णाश्रमभेदव्यवस्थापनात् । अतो ब्राह्मण्ये रक्षिते सर्वमपि सुरक्षितं भवतीत्यर्थः ।

नन्वेवमपि भगवतो नारायणस्य शरीरादिमत्त्वे सत्यस्मदादिभिरविशेषादनीश्वरत्वप्रसक्तिरित्याशङ्क्य ज्ञानादिकृतं विशेषमाह—**स चेति** । ज्ञानं ज्ञप्तिरर्थपरिच्छित्तिः, ऐश्वर्यमीश्वरत्वं स्वातन्त्र्यं, शक्तिस्तदर्थनिर्वर्तनसामर्थ्यं, बलं सहायसंपत्तिः, वीर्यं पराक्रमवत्त्वं, तेजस्तु प्रागल्भ्यमधृष्यत्वम्, एते च षड्गुणाः सर्वविषयाः सर्वदा भगवति वर्तन्ते । तथाच तस्य शरीरादिमत्त्वेऽपि नास्मदादिसाम्यमित्यर्थः । अथैवमपि कथमीश्वरस्यानादिनिधनस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य स्वभावविपरीतं जन्मादि संभवति, नहि भूतानामीशिता स्वतन्त्रः स्वात्मनोऽनर्थं स्वयमेव संपादयितुमर्हति, न चास्य देहादिग्रहे किमपि फलमुपलभ्यते तत्राह—**त्रिगुणात्मिकामिति** । सिसृक्षितदेहादिगतवैरूप्यसिद्ध्यर्थमिदं विशेषणं तस्याव्यापकत्वं वक्तुं **वैष्णवीमित्युक्तम्** । ईश्वरपारवश्यं तस्या दर्शयति—**स्वामिति** । तस्याश्च प्रतिभासमात्र-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तदेव ब्रह्म विद्धि त्वं नेदं यत्तदुपासते । इति श्रुत्यैव वेद्यस्य ह्युपास्यादन्यतेरिता ॥ ४ ॥

४ मधुसूदनीव्याख्या ।

एवं सर्वपरित्यागान्मुमुक्षा जायते दृढा । ततो गुरूपसदनमुपदेशग्रहस्ततः ॥ १५ ॥
ततः संदेहहानाय वेदान्तश्रवणादिकम् । सर्वमुत्तरमीमांसाशास्त्रमत्रोपयुज्यते ॥ १६ ॥
ततस्तत्परिपाकेण निदिध्यासननिष्ठता । योगशास्त्रं तु संपूर्णमुपक्षीणं भवेदिह ॥ १७ ॥
क्षीणदोषे ततश्चित्ते वाक्यात्तत्त्वमतिर्भवेत् । साक्षात्कारो निर्विकल्पः शब्दादेवोपजायते ॥ १८ ॥
अविद्याविनिवृत्तिस्तु तत्त्वज्ञानोदये भवेत् । तत आवरणे क्षीणे क्षीयेते भ्रमसंशयौ ॥ १९ ॥
अनारब्धानि कर्माणि नश्यन्त्येव समन्ततः । नत्वागामीनि जायन्ते तत्त्वज्ञानप्रभावतः ॥ २० ॥
प्रारब्धकर्मविक्षेपाद्वासना तु न नश्यति । सा सर्वतो बलवता संयमेनोपशाम्यति ॥ २१ ॥

५ भाष्योत्कर्षदीपिका ।

ईशावेकात्मकौ लोके संप्रदायप्रवर्तकौ । गीताभाष्यप्रकाशेन वन्दे श्रीकृष्णशंकरौ ॥ ४ ॥
बालस्वामिनमाचार्यं नुमो व्यासमुखान्मुनीन् । विघ्नहर्तॄन् गणेशादीन्पण्डितांश्च विमत्सरान् ॥ ५ ॥

६ श्रीधरीव्याख्या ।

गीता व्याख्यायते यस्याः पाठमात्रादयत्नतः । सेयं सुबोधिनी टीका सदा ध्येया मनीषिभिः ॥ ४ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

यद्यप्यन्यप्रसंगेषु मोक्षो नामात्र गीयते । तथापि भगवद्गीताः सम्यक्तत्प्राप्तिदायिकाः ॥ ४ ॥

१ श्रीमच्छांकरभाष्योपक्रमणिका ।

मूलप्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव लोकानुग्रहं कुर्वन् लक्ष्यते, स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणायानेकैर्विवृतपदार्थ-

२ आनन्दगिरिव्याख्या ।

शरीरत्वमेव नतु वस्तुत्वमित्याह—मायामिति । तस्या नानाविधकार्याकारेण परिणामित्वं सूचयति—मूलप्रकृतिमिति । ईश्वरस्य प्रकृत्यधीनत्वं वारयति—वशीकृत्येति । नित्यत्वं कार्याकारविरहितत्वं, शुद्धत्वमकारणत्वं, बुद्धत्वमजडत्वं, मुक्तत्वमविद्याकामकर्मपारतन्त्र्यराहित्यम् । नच नित्यत्वादयः संसारावस्थायामसन्तो मोक्षावस्थायां संभवन्तीति युक्तमित्याह—स्वभाव इति । देहग्रहे प्राधान्यं मायाया दर्शयितुं पुनः स्वमाययेत्युक्तम् । 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः' इति श्रुतिमाश्रित्याह—देहवानिति । इवकाराभ्यां देहादेरवस्तुत्वेन कल्पितत्वं द्योत्यते । धर्मद्वयोपदेशद्वारा प्राणिवर्गस्याभ्युदयनिःश्रेयसतत्परत्वापादनं लोकानुग्रहः । यद्यपि कूटस्थः स्वतन्त्रो नित्यत्वादिलक्षणश्चायमीश्वरः स्वतो दृश्यते, तथापि यथोक्तमायाशक्त्या देहादि गृहीत्वा प्राणिनामनुग्रहमादधानो न स्वभावविपर्ययं पर्येतीत्यर्थः । ननु 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायादीश्वरस्याप्तकामतया कृतकृत्यस्य प्रयोजनाभावादनुग्राह्याणां चाद्वैतवादे व्यतिरिक्तानामसत्त्वान्न धर्मद्वयमुपदेष्टुमुचितमिति तत्राह—स्वप्रयोजनेति । कल्पितभेदभाञ्जि भूतान्युपादाय तदनुग्रहेच्छया चैत्यवन्दनादिविलक्षणं धर्मद्वयमर्जुनं निमित्तीकृत्याप्तकामोऽपि भगवानुपदिष्टवानित्यर्थः । अर्जुनस्योपदेशापेक्षास्तीति दर्शयितुं विशिनष्टि—शोकेति । ननु भूतानुग्रहे कर्तव्ये किमित्यर्जुनाय धर्मद्वयं भगवतोपदिश्यते तत्राह—गुणाधिकैरिति । प्रचयं गमिष्यतीति मत्वा धर्मद्वयमर्जुनायोपदिदेशेति संबन्धः । अथ तथापि सुगतोपदिष्टधर्मवदयमपि भगवदुपदिष्टो धर्मो न प्रामाणिकोपादेयतामुपगच्छेदित्याशङ्क्य वेदोक्तत्वान्नास्य तत्तुल्यत्वमित्युक्तमित्यभिप्रेत्य शिष्टपरिगृहीतत्वाच्च मैवमित्याह—तं धर्ममिति । अधर्मे धर्मबुद्धिर्वेदव्यासस्य जातेत्याशङ्क्याह—सर्वज्ञ इति । 'कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुम्' इति स्मृतेः सज्जनोपकारकभगवदवतारत्वाच्च व्यासस्य नान्यथाबुद्धिरित्याह—भगवानिति ।

गीताशास्त्रस्यानाप्तप्रणीतत्वमपाकृत्य व्याख्येयत्वमुपपादितमुपसंहरति—तदिदमिति । पौरुषेयस्य वचसो मूलप्रमाणाभावेनाप्रामाण्यमिति मत्वा विशिनष्टि—समस्तेति । शास्त्राक्षरैरेव तदर्थप्रतिपत्तिसंभवे किमिति व्याख्यानमित्याशङ्क्याह—दुर्विज्ञेयार्थमिति । 'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥' इत्यादिक्रमेणास्य शास्त्रस्य पूर्वाचार्यैर्व्याख्यातत्वात्किमर्थमिदमारभ्यते गतार्थत्वात्तत्राह—तदर्थेति । गीताशास्त्रार्थस्य प्रकटीकरणार्थं पदविभागस्तदर्थोक्तिः समासद्वारा वाक्यार्थनिर्देशस्तत्रापेक्षितो न्यायश्चाक्षेपसमाधानलक्षणो वृत्तिकारैर्दर्शितस्तथापि तथाविधमेव शास्त्रं शास्त्रपरिचयशून्यैः समुच्चयवादिभिर्विरुद्धार्थत्वेनानेकार्थत्वेन च

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इयमष्टादशाध्यायी क्रमात्षट्कत्रिकेण हि । कर्मोपास्तिज्ञानकाण्डत्रितयात्मा निगद्यते ॥ ५ ॥

४ मधुसूदनीव्याख्या ।

संयमो धारणा ध्यानं समाधिरिति यत्त्रिकम् । यमादिपञ्चकं पूर्वं तदर्थमुपयुज्यते ॥ २२ ॥
ईश्वरप्रणिधानात्तु समाधिः सिध्यति द्रुतम् । ततो भवेन्मनोनाशो वासनाक्षय एव च ॥ २३ ॥
तत्त्वज्ञानं मनोनाशो वासनाक्षय इत्यपि । युगपत्त्रितयाभ्यासाज्जीवन्मुक्तिर्दृढा भवेत् ॥ २४ ॥
विद्वत्संन्यासकथनमेतदर्थं श्रुतौ कृतम् । प्रागसिद्धो य एवांशो यत्नः स्यात्तस्य साधने ॥ २५ ॥
निरुद्धे चेतसि पुरा सविकल्पसमाधिना । निर्विकल्पसमाधिस्तु भवेदत्र त्रिभूमिकः ॥ २६ ॥
व्युत्तिष्ठते स्वतस्त्वाद्ये द्वितीये परबोधितः । अन्ते व्युत्तिष्ठते नैव सदा भवति तन्मयः ॥ २७ ॥

५ भाष्योत्कर्षदीपिका ।

कुमतस्य निरासाय गीताभाष्यकृता स्वयम् । कृष्णात्मना शिवेनादौ व्याख्याता पदशः स्फुटम् ॥ ६ ॥
ततो भाष्यार्थमादाय व्याख्याता बहुभिस्तु सा । यत्तु कैश्चित्क्वचित्प्रोक्तं विरुद्धं भाष्यतोऽखिलम् ॥ ७ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

तास्वन्यैः प्राकृतैर्व्याख्या कृता यद्यपि भूयसा । न्याय्यस्तथाप्युद्यमो मे तद्गूढार्थप्रकाशकः ॥ ५ ॥

१ श्रीमच्छांकरभाष्योपक्रमणिका ।

**वाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।**

**तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम्, तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्–'स हि धर्मः स पर्याप्तो ब्रह्मणः पदवेदनम्' इत्यनुगीतासु । किंचान्यदपि तत्रैवोक्तम्–'नैव**

---

२ आनन्दगिरिव्याख्या ।

गृहीतमालक्ष्य तद्बुद्धिमनुरोद्धुमिदमारब्धव्यमित्यर्थः । येषां प्राचीने व्याख्याने बुद्धिरप्रविष्टा तेषां संप्रतितन एतस्मिन्नसौ प्रवेक्ष्यतीति कुतो नियमस्तत्राह—**विवेक इति** । पूर्वव्याख्याने तत्तदर्थनिर्धारणार्थोपन्यासः संकीर्णवद्भातीति न तत्र केषांचिन्मनीषा समुन्मिषति, प्रकृते त्वसंप्रकीर्णतया तत्तत्पदार्थनिर्णयोपयोगिन्यायो विव्रियते, तेनात्र मन्दमध्यमयोरपि बुद्धिरवतरतीत्यर्थः । किंचानपेक्षिताधिकग्रन्थसद्भावान्न प्राचीने व्याख्याने श्रोतृणां प्रवृत्तिरत्र त्वपेक्षिताल्पग्रन्थे विवरणे प्रायशः सर्वेषां प्रवृत्तिः स्यादिति मत्वाह—**संक्षेपत इति** ।

नन्वनाप्तप्रणीतत्वाद्यभावेऽपि नेदं शास्त्रं व्याख्येयं विषयाद्यनुबन्धस्यानभिहितत्वेन शास्त्रत्वाभावादित्याशङ्क्य सर्वव्यापाराणां प्रयोजनार्थत्वादादौ प्रयोजनमाह—**तस्येति** । प्रसाधितप्रामाण्यस्य व्याख्येयत्वेन मनसि संनिहितस्य गीताशास्त्रस्य संक्षेपतः संग्रहः संपिण्डितत्वमेकवाक्यत्वं, तेनेदं परमं फलं यन्निश्चितं श्रेयो निःश्रेयसं कैवल्यम्, अवान्तरफलं तु तत्रतत्रावान्तरवाक्यभेदेन मनोनिग्रहादि विवक्ष्यते । निःश्रेयसं च द्विविधं निरतिशयसुखाविर्भावो निःशेषानर्थोच्छित्तिश्च । तत्राद्यमुदाहरति—**परमिति** । द्वितीयं दर्शयति—**सहेतुकस्येति** । संसारोपरमस्यात्यन्तिकत्वं प्रतियोगिनः संसारस्य पुनरुत्पत्त्ययोग्यत्वं तच्च स्वापमूर्च्छादिव्यवच्छेदार्थं विशेषणं तदेव साधयितुं सहेतुकस्येत्युक्तम् । उक्तं फलं समुच्चितादेकाकिनो वा कर्मणः स्यादिति तस्यैव शास्त्रप्रतिपाद्यतेत्याशङ्क्याभिधेयमभिधित्समानः समाधत्ते—**तच्चेति** । आत्मज्ञाननिष्ठाशेषत्वेन कर्मनिष्ठात्रोच्यते, प्राधान्येन त्वात्मज्ञाननिष्ठैवात्र प्रतिपाद्यत इत्यर्थः । ननु शेषिणी निष्ठा कुतो न भवति संन्यासात्कर्मनिष्ठायाः शेषत्वात्तत्राह—**सर्वेति** । संन्यासद्वारेणासकृदनुष्ठितश्रवणादेः शेषिणी निष्ठा सिध्यति, शेषत्वं च कर्मणस्तत्र परस्पराश्रयत्वमित्यर्थः । ननु 'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' इति वाक्यशेषात्समुच्चितमात्मज्ञानमत्र प्रतिपाद्यते नेत्याह—**तथेति** । सर्वकर्मसंन्यासपूर्वकमात्मज्ञाननिष्ठारूपं धर्मं निःश्रेयससाधनं प्रयोजनं प्रागुक्तं परामृशति—**इममेवेति** । वक्तृभेदादभिप्रायभेदाशङ्कां वारयति—**भगवतैवेति** । उक्तमनुगीतास्विति संबन्धः । ब्रह्मणः पदं पूर्वोक्तं निःश्रेयसं तस्य वेदनं लाभस्तत्र विशिष्टो ज्ञाननिष्ठारूपो धर्मः समर्थो भवतीत्यर्थः । यज्ञदानादिवाक्यस्य तु तद्व्याख्यानावसरे तात्पर्यं वक्ष्यते । कर्मत्यागस्य भगवतोऽभिप्रेतत्वे वाक्यान्तरमनुगीतागतमेवोदाहरति—**तत्रैवेति** । धर्माधर्मापूर्वासंसर्गित्वे हेतुमाह—**नैवेति** । क्रियाद्वयसंबन्धाभावात्तन्निवृत्त्या

४ मधुसूदनीव्याख्या ।

एवंभूतो ब्राह्मणः स्याद्वरिष्ठो ब्रह्मवादिनाम् । गुणातीतः स्थितप्रज्ञो विष्णुभक्तश्च कथ्यते ॥ २८ ॥
अतिवर्णाश्रमी जीवन्मुक्त आत्मरतिस्तथा । एतस्य कृतकृत्यत्वाच्छास्त्रमस्मान्निवर्तते ॥ २९ ॥
'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' ॥ ३० ॥
इत्यादिश्रुतिमानेन कायेन मनसा गिरा । सर्वावस्थासु भगवद्भक्तिरत्रोपयुज्यते ॥ ३१ ॥
पूर्वभूमौ कृता भक्तिरुत्तरां भूमिमानयेत् । अन्यथा विघ्नबाहुल्यात्फलसिद्धिः सुदुर्लभा ॥ ३२ ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः । अनेकजन्मसंसिद्ध इत्यादि च वचो हरेः ॥ ३३ ॥
यदि प्राग्भवसंस्कारस्याचिन्त्यत्वात्तु कश्चन । प्रागेव कृतकृत्यः स्यादाकाशफलपातवत् ॥ ३४ ॥
न तं प्रति कृतार्थत्वाच्छास्त्रमारब्धुमिष्यते । प्राक्सिद्धसाधनाभ्यासाद्दुर्ज्ञेया भगवत्कृपा ॥ ३५ ॥
एवं प्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये । विधेया भगवद्भक्तिस्तां विना सा न सिध्यति ॥ ३६ ॥
जीवन्मुक्तिदशायां तु न भक्तेः फलकल्पना । अद्वेष्टृत्वादिवत्तेषां स्वभावो भजनं हरेः ॥ ३७ ॥
'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः' ॥ ३८ ॥

५ भाष्योत्कर्षदीपिका ।

साक्षेपं युक्तिहीनं च तन्निरासाय लेखकम् । अन्तर्यामिस्वरूपोऽसौ मां करोति महेश्वरः ॥ ८ ॥
यद्यपि प्राणिजातस्य प्रेरको जगदीश्वरः । स एवास्ति तथाप्येवं श्रुत्यर्थेन व्यवस्थितिः ॥ ९ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

भट्टेन्दुराजादाम्नायं विविच्य च चिरं धिया । कृतोऽभिनवगुप्तेन सोऽयं गीतार्थसंग्रहः ॥ ६ ॥

१ श्रीमच्छांकरभाष्योपक्रमणिका ।

**धर्मो न चाधर्मो न चैव हि शुभाशुभी । यः स्यादेकासने लीनस्तूर्ष्णी किंचिदचिन्तयन्' इति, 'ज्ञानं संन्यासलक्षणम्' इति च । इहापि चान्ते उक्तमर्जुनाय–'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति । अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स च देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः, शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । यथाचेममर्थमभिसंधाय वक्ष्यति—'ब्रह्मण्याधाय कर्माणि यतचित्ता जितेन्द्रियाः । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥' इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद् विशिष्टप्रयोजनसंबन्धाभिधेयवद्गीताशास्त्रं यतस्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धिरतस्तद्विवरणे यत्नः क्रियते मया ।**

समाप्तेयं श्रीमच्छांकरभाष्योपक्रमणिका ।

---

२ आनन्दगिरिव्याख्या ।

पूर्वाभ्याससंबन्धे प्राप्तमर्थमाह—**यः स्यादिति** । वागादिबाह्यकरणव्यापारविरहितत्वं तूष्णीमित्युच्यते, किंचिदचिन्तयन्नित्यन्तःकरणव्यापाराभावोऽभिप्रेतः, द्विविधकरणव्यापारविरहितः सन्प्रागुक्तो योऽधिकारी केवलमेकस्मिन्नद्वितीये ब्रह्मण्यासनमवस्थानं तत्र लीनस्तस्मिन्नेव समाप्तिभागी स्यात्तस्यासंप्रज्ञातसमाधिनिष्ठस्य सर्वकर्मत्यागहेतुकं ज्ञानं मुक्तिहेतुर्भवतीत्यर्थः । न केवलमनुगीतास्वेव यथोक्तं ज्ञानमुक्तं किंतु प्रकृतेऽपि शास्त्रे समाह्यवसरे दर्शितमित्याह—**इहापीति** । नन्वत्र निवृत्तिलक्षणधर्मात्मकं ससंन्यासमात्मज्ञानमेव न प्रतिपाद्यते 'कुरु कर्मैव तस्मात्त्वम्' इत्यादौ प्रवृत्तिलक्षणस्यापि धर्मस्य वक्ष्यमाणत्वाद्धर्मयोश्च प्रकृतत्वाविशेषात्तत्राह—**अभ्युदयार्थोऽपीति** । ननु वर्णिभिराश्रमिभिश्चानुष्ठेयत्वेनान्यत्र विहितस्यापि तस्य न युक्तं मोक्षसाधनत्वाधिकारे विधानं, देवादिस्थानप्राप्तिहेतुत्वेन मोक्षं प्रति प्रतिपक्षत्वात्, सत्यं, तथापि फलाभिलाषमन्तरेणेश्वरार्पणधिया कृतस्य बुद्धिशुद्धिहेतुत्वात्तस्येह वचनमित्याह—**स च देवादीति** । फलाभिसंधिद्वारा कृतः सन्निति शेषः । प्रवृत्तिलक्षणधर्मस्योक्तरीत्या चित्तशुद्धिहेतुत्वेऽपि मोक्षहेतुत्वेन कुतो मोक्षाधिकारे निर्देशः स्यादित्याशङ्क्याह—**शुद्धेति** । प्रतिपाद्यते प्रागुक्तो धर्म इति शेषः । यदुक्तं फलाभिसंधिवर्जितमीश्वरार्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धये भवतीति तत्र वाक्यशेषमनुकूलयति—**तथाचेति** । शास्त्रस्य प्रयोजनं ससाधनमुक्तमनूद्य विषयं दर्शयति—**इमसिति** । दर्शितेन फलेन शास्त्रस्य निष्ठाद्वयद्वारा साध्यसाधनभावः संबन्धो विषयेण विषयविषयित्वमिति विवक्षित्वाह—**विशेषत इति** । एवमनुबन्धत्रयविशिष्टं शास्त्रं व्याख्यानार्हमित्युपसंहरति—**विशिष्टेति** । सिद्धे व्याख्यानयोग्यत्वं व्याख्येयत्वे फलितमाह—**यत इति** ।

४ मधुसूदनीव्याख्या ।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । इत्यादिवचनात्प्रेमभक्तोऽयं मुख्य उच्यते ॥ ३९ ॥
एतत्सर्वं भगवता गीताशास्त्रे प्रकाशितम् । अतो व्याख्यातुमेतन्मे मन उत्सहते भृशम् ॥ ४० ॥
निष्कामकर्मानुष्ठानं मूलं मोक्षस्य कीर्तितम् । शोकादिरासुरः पाप्मा तस्य च प्रतिबन्धकः ॥ ४१ ॥
यतः स्वधर्मविभ्रंशः प्रतिषिद्धस्य सेवनम् । फलाभिसन्धिपूर्वा वा साहंकारा क्रिया भवेत् ॥ ४२ ॥
आविष्टः पुरुषो नित्यमेवमासुरपाप्मभिः । पुमर्थलाभायोग्यः सँल्लभते दुःखसंततिम् ॥ ४३ ॥
दुःखं स्वभावतो द्वेष्यं सर्वेषां प्राणिनामिह । अतस्तत्साधनं त्याज्यं शोकमोहादिकं सदा ॥ ४४ ॥
अनादिभवसन्ताननिरूढं दुःखकारणम् । दुस्त्यजं शोकमोहादि केनोपायेन हीयताम् ॥ ४५ ॥
एवमाकाङ्क्षयाविष्टं पुरुषार्थोन्मुखं नरम् । बुबोधयिषुराहेदं भगवाञ्शास्त्रमुत्तमम् ॥ ४६ ॥

५ भाष्योत्कर्षदीपिका ।

यमधो नेतुमिच्छास्य जायते परमात्मनः । असाधुकर्मनिर्वृत्तौ संप्रेरयति तं तु सः ॥ १० ॥
कारयत्यमलं कर्म यस्येच्छत्यूर्ध्वमास्पदम् । तस्मान्मदात्मना तेन स्वभाष्योत्कर्षदीपिका ॥ ११ ॥
तन्यते स्वस्य भक्तानां सुखदा सुहृदां सताम् । भक्ताभासस्य हीनस्य भक्त्या चोद्वेगदाऽसतः ॥ १२ ॥



**धृतराष्ट्र उवाच । धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।**
**मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥**

श्रीमच्छांकरभाष्यम् ।

**अत्र च धृतराष्ट्र उवाच—धर्मक्षेत्र इत्यादि ।**

२ आनन्दगिरिव्याख्या ।

एवं गीताशास्त्रस्य साध्यसाधनभूतनिष्ठाद्वयविषयस्य परापराभिधेयप्रयोजनवतो व्याख्येयत्वं प्रतिपाद्य व्याख्यातुकामः शास्त्रं तदेकदेशस्य प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्य तात्पर्यमाह—**अत्र चेति** । गीताशास्त्रे प्रथमाध्याये प्रथमश्लोके कथासंबन्धप्रदर्शनपरे स्थिते सतीति यावत् ।

तत्रैवमक्षरयोजना—**धृतराष्ट्र उवाचेति** । धृतराष्ट्रो हि प्रज्ञाचक्षुर्बाह्यचक्षुरभावाद्बाह्यमर्थं प्रत्यक्षयितुमनीशः सन्नभ्याशवर्तिनं संजयमात्मनो हितोपदेष्टारं पृच्छति—**धर्मक्षेत्र इति** । धर्मस्य तद्वृद्धेश्च क्षेत्रमभिवृद्धिकारणं यदुच्यते

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तत्र युद्धोद्यमं श्रुत्वौत्सुक्यादग्रिमं वृत्तान्तं बुभुत्सुर्धृतराष्ट्र उवाच—**धर्मक्षेत्र इति** । तत्र वेदे 'तेषां कुरुक्षेत्रं देव-

४ मधुसूदनीव्याख्या ।

तत्र 'अशोच्यानन्वशोचस्त्वम्' इत्यादिना शोकमोहादिसर्वासुरपाप्मनिवृत्त्युपायोपदेशेन स्वधर्मानुष्ठानात्पुरुषार्थः प्राप्यतामिति भगवदुपदेशः सर्वसाधारणः । भगवदर्जुनसंवादरूपा चाख्यायिका विद्यास्तुत्यर्था जनकयाज्ञवल्क्यसंवादादिवदुपनिषत्सु । कथं प्रसिद्धमहानुभावोऽप्यर्जुनो राज्यगुरुपुत्रमित्रादिष्वहमेषां ममैत इत्येवंप्रत्ययनिमित्तस्नेहनिमित्ताभ्यां शोकमोहाभ्यामभिभूतविवेकविज्ञानः स्वतएव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम । परधर्मं च भिक्षाजीवनादि क्षत्रियंप्रति प्रतिषिद्धं कर्तुं प्रववृते । तथाच महत्यनर्थे मग्नोऽभूत् भगवदुपदेशाच्चेमां विद्यां लब्ध्वा शोकमोहावपनीय पुनः स्वधर्मे प्रवृत्तः कृतकृत्यो बभूवेति प्रशस्ततरेयं महाप्रयोजना विद्येति स्तूयते । अर्जुनापदेशेन चोपदेशाधिकारी दर्शितः । तथाच व्याख्यास्यते । स्वधर्मप्रवृत्तौ जातायामपि तत्प्रच्युतिहेतुभूतौ शोकमोहौ 'कथं भीष्ममहं संख्ये' इत्यादिनार्जुनेन दर्शितौ । अर्जुनस्य युद्धाख्ये स्वधर्मे विनापि विवेकं किंनिमित्ता प्रवृत्तिरिति 'दृष्ट्वा तु पाण्डवानीकम्' इत्यादिना परसैन्यचेष्टितं तन्निमित्तमुक्तम् । तदुपोद्घातत्वेन धृतराष्ट्रप्रश्नः संजयं प्रति धर्मक्षेत्रे इत्यादिना श्लोकेन । तत्र धृतराष्ट्र उवाचेति वैशम्पायनवाक्यं जनमेजयं प्रति । पाण्डवानां जयकारणं बहुविधं पूर्वमाकर्ण्य स्वपुत्रराज्यभ्रंशाद्भीतो धृतराष्ट्रः पप्रच्छ स्वपुत्रजयकारणमाशंसन् । पूर्वं युयुत्सवो योद्धुमिच्छवोऽपि सन्तः कुरुक्षेत्रे समवेताः संगताः मामका मदीया दुर्योधनादयः पाण्डवाश्च युधिष्ठिरादयः किमकुर्वत किं कृतवन्तः । किं पूर्वोद्भूतयुयुत्सानुसारेण युद्धमेव कृतवन्त उत केनचिन्निमित्तेन युयुत्सानिवृत्त्यान्यदेव किंचित्कृतवन्तः, भीष्मार्जुनादिवीरपुरुषनिमित्तं दृष्टभयं युयुत्सानिवृत्तिकारणं प्रसिद्धमेव, अदृष्टभयमपि दर्शयितुमाह—**धर्मक्षेत्र इति** । धर्मस्य पूर्वमविद्यमानस्योत्पत्तेर्विद्यमानस्य च वृद्धेर्निमित्तं सस्यस्येव क्षेत्रं यत्कुरुक्षेत्रं सर्वश्रुतिस्मृ-

५ भाष्योत्कर्षदीपिका ।

इह खलु परमकारुणिकः परिपूर्णानन्दस्वभावः सकलैश्वर्यसंपन्नस्त्रिगुणात्मिकया स्ववशीकृतया निजमाययोपात्तकायो भगवान् वासुदेवः शोकमोहाभिभूतं जीवनिकायमुद्दिधीर्षुर्यद्गीताशास्त्रं सर्ववेदसारभूतं काण्डत्रयात्मकं तत्त्वम्पदाखण्डार्थप्रतिपादकं निजविग्रहार्जुनाय ग्राहयामास । तदेव क्रमप्राप्तं दयानिधिर्वेदव्यासो महाभारते निबध्नाति—**धृतराष्ट्र उवाचेत्यादि** । तत्र धृतराष्ट्र उवाच-

६ श्रीधरीव्याख्या ।

इह खलु सकललोकहितावतारः सकलवन्दितचरणः परमकारुणिको भगवान् देवकीनन्दनस्तत्त्वाज्ञानविजृम्भितशोकमोहविभ्रंशितविवेकतया निजधर्मत्यागपरधर्माभिसंधिपरमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्दधार । तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध । तत्र च प्रायशः श्रीकृष्णमुखनिःसृतानेव श्लोकानलिखत् कांश्चित्तत्संगतये स्वयं व्यरचयत् । यथोक्तं गीतामाहात्म्ये—'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥' इति । तत्र ताव-'द्धर्मक्षेत्र' इत्यादिना 'विषीदन्निदमब्रवीदि'त्यन्तेन ग्रन्थेन श्रीकृष्णार्जुनसंवादप्रस्तावाय कथा निरूप्यते—**धर्मक्षेत्र इति** । भो संजय, धर्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

विद्याविद्यात्मनोर्द्वयोरभिभाव्याभिभावकत्वं प्रदर्शयितुं प्रथमाध्यायप्रस्तावः । नह्यनुत्पन्नविद्यालेशावकाश उपदेशभाजनम् । नापि निर्मूलितसमस्ताविद्याप्रपञ्चः । एककोटिविश्रान्तस्य तु ततः कोटेश्च्यावयितुमशक्यत्वात् । अज्ञविपर्यस्तयोस्तूपदेश्यत्वं यदुच्यते तत्कचिदेव । तथात्वौन्मुख्योपदेष्टव्येऽर्थे संदिग्धतैव । अतएव संशयनिर्णोदक एवोपदेश इति विद्याविद्याङ्गसंघट्टमयः संशय उच्यते—देवासुरसृष्टिश्च विद्याविद्यामयीति । तत्कथोपक्रमणमेव मोक्षमार्गोपदेशनम् । ज्ञानं च प्रधानं कर्माणि चापहर्तव्यानीति कर्मणां ज्ञाननिष्ठतया क्रियमाणानामपि न बन्धकत्वमिति ज्ञानप्राधान्यनान्तरीयकत्वं तु कर्मणाम् । नतु ज्ञानकर्मणी समतया समुच्चीयेते इत्यत्र तात्पर्यम् । एवमेव मुनेरभिप्रायं यथास्थानं प्रतिपादयिष्याम इति किमन्यैस्तत्त्वदर्शनविघ्नमात्रफलैर्वाग्जालैः—धर्मक्षेत्र इति । अत्र केचिद्व्याख्याविकल्पमाहुः—

२ आनन्दगिरिव्याख्या ।

**कुरुक्षेत्रमिति तत्र समवेताः संगता युयुत्सवो योद्धुकामास्ते च केचिन्मदीया दुर्योधनप्रभृतयः पाण्डवाश्चापरे युधिष्ठिरा-**

३ नीलकण्ठव्याख्या ( चतुर्धरी )

यजनमास' इति कर्मकाण्डप्रसिद्धं कुरुक्षेत्रमन्यत् 'अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्' इत्यविमुक्ताख्यं ब्रह्मप्राप्तिस्थानभूतं कुरुक्षेत्रमन्यत् । ब्रह्मसदनत्वं चास्य–अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षी भवतीति वाक्यशेषेण व्युत्पादितम् । एतद्व्यावृत्त्यर्थं धर्मक्षेत्रे इति विशेषणम् । कुरुदेशान्तर्गतं हि कुरुक्षेत्रं धर्मक्षेत्रमेव नतु तद्ब्रह्मसदनम् । प्रवर्ग्यकाण्डे तस्य धर्मक्षेत्रत्वमात्रश्रवणात् । तत्र

४ मधुसूदनीव्याख्या ।

तिप्रसिद्धम् । 'बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्' इति जाबालश्रुतेः, 'कुरुक्षेत्रं वै देवयजनम्' इति शतपथश्रुतेश्च । तस्मिन् गताः पाण्डवाः पूर्वमेव धार्मिकाः यदि पक्षद्वयहिंसानिमित्तादधर्मा-द्भीता निवर्तेरंस्ततः प्राप्तराज्या एव मत्पुत्राः, अथवा धर्मक्षेत्रमाहात्म्येन पापानामपि मत्पुत्राणां कदाचिच्चित्तप्रसादः स्यात्तदा च तेऽनुतप्ताः प्राक्कपटोपात्तं राज्यं पाण्डवेभ्यो यदि दद्युस्तर्हि विनापि युद्धं हता एवेति स्वपुत्रराज्यलाभे पाण्ड-वराज्यलाभे च दृढतरमुपायमपश्यतो महानुद्वेग एव प्रश्नबीजम् । संजयेति च संबोधनं रागद्वेषादिदोषान्सम्यग्जितवान-सीति कृत्वा निर्व्याजमेव कथनीयं त्वयेति सूचनार्थम् । मामकाः किमकुर्वतेत्येतावतैव प्रश्ननिर्वाहे पाण्डवाश्चेति पृथङ्निर्दि-

५ भाष्योत्कर्षदीपिका ।

'केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति संजय । उदग्रमनसः केऽत्र के वा दीना विचेतसः ॥ के पूर्वं प्राहरंस्तत्र युद्धे हृदयकम्पिनि । मामकाः पाण्डवानां वा तन्ममाचक्ष्व संजय ॥' इत्यादिना कृतं प्रश्नं वैशंपायनो जनमेजयंप्रति संक्षिप्योपोद्घातायानुवदति—**धृतराष्ट्र उवाचेति** । मामकाः मदीयाः दुर्योधनादयः, पाण्डवाः पाण्डुपुत्राः युधिष्ठिरादयः, युयुत्सवः योद्धुमिच्छवः । धर्मस्योपचय-स्थानत्वात् धर्मक्षेत्रे कुरुक्षेत्रे श्रुतिस्मृतिलोकप्रसिद्धे समवेता मिलिताः सन्तः किमकुर्वत किं कृतवन्तः । स्वधर्मभूतं धर्मयुद्धं कृत-वन्त उताधर्मयुद्धमिति धर्मक्षेत्रपदेन बोधितम् । युयुत्सया समवेता इति मया विस्तरेण श्रुतं तदनन्तरं यथा यत्कृतवन्तः तथा तद्विस्तरेण वदेत्याशयः । भीष्मपतनेन कलहस्यानर्थताबोधकानां भवदादिवाक्यानां सम्यग्जयो जात इति ध्वनयन्संबोधयति—**संजयेति** । रागद्वेषादिदोषान्सम्यग्जितवानसीति कृत्वा निर्व्याजेन त्वया कथनीयमिति सूचनार्थं संजयेति संबोधनमिति केचित् । किंवा आक्षेपोऽपि ध्वनितः । अयोग्यं कृतवन्त इत्यर्थः । धर्मक्षेत्रे हिंसाप्रधानस्य युद्धस्यानुचितत्वात् । मामकानामधार्मिकत्वेन तत्संभवेऽपि परमधार्मिकत्वेन प्रसिद्धाः पाण्डवाः युधिष्ठिरादयो भीष्मादिपातनं किं कृतवन्त इति द्योतयन्नाह—**पाण्डवाश्चेति** । पाण्डवेषु ममकाराभावप्रदर्शनेन तेषु द्रोहमभिव्यनक्तीति केचित् । यत्तु पाण्डवानां जयकारणं बहुविधं पूर्वमाकर्ण्य स्वपु-त्रराज्यभ्रंशाद्भीतो धृतराष्ट्रः पप्रच्छ स्वपुत्रजयकारणमाशंसन् धृतराष्ट्र इत्यादिना । किं कृतवन्तः किं पूर्वोक्तयुयुत्सानुसारेण युद्धमेव कृतवन्तः, उत केनचिन्निमित्तेन युयुत्सानिवृत्त्याऽन्यदेव किंचित्कृतवन्तः । भीमार्जुनादिवीरपुरुषनिमित्तं दृष्टभयं युयुत्सानिवृत्ति-कारणं प्रसिद्धमेव । अदृष्टभयमपि दर्शयितुमाह—**धर्मक्षेत्र इति** । तस्मिन् गताः पाण्डवाः पूर्वमेव धार्मिकाः । यदि पक्षद्वय-हिंसानिमित्तादधर्माद्भीता निवर्तेरन् ततः प्राप्तराज्या एव मत्पुत्राः । अथवा धर्मक्षेत्रमाहात्म्येन पापिनामपि मत्पुत्राणां कदाचिच्चि-त्तप्रसादः स्यात्तदा च तेऽनुतप्ताः कपटोपात्तं राज्यं पाण्डवेभ्यो यदि दद्युः तर्हि विनापि युद्धं हता एवेति स्वपुत्रराज्यलाभे पाण्ड-वराज्यालाभे च दृढतरमुपायमपश्यतो महानुद्वेग एव प्रश्नबीजमिति केचिद्वर्णयन्ति, तदुपेक्ष्यम् । 'अथ गावल्गणिर्धीमान्समरादेत्य संजयः । प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यतः ॥ ध्यायतो धृतराष्ट्रस्य सहसोपेत्य दुःखितः । आचष्ट निहतं भीष्मं भारतानां पिता-महम् । संजयोऽहं महाराज नमस्ते भरतर्षभ ॥ हतो भीष्मः शान्तनवो भारतानां पितामहः । यो ररक्ष समेतानां दशरात्रमनी-कहा ॥ जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् । यः स शक्र इवाक्षोभ्यो वर्षन्बाणान्सहस्रशः ॥ जघान युधि योधानामर्बुदं दशभिर्दिनैः । स शेते निहतो भूमौ वातरुग्ण इव द्रुमः ॥' इत्यादिसंक्षेपोक्तिपरपूर्वग्रन्थविरोधात् । ननु संक्षेपेण श्रुतमपि मोहाद्वि-स्मृत्य धृतराष्ट्रेण प्रश्नः कृत इतिचेन्न । प्रश्नस्य पूर्वग्रन्थानुरोधेनास्मदीयोक्तरीत्या सम्यगुपपत्तेः । पूर्वोक्तविरुद्धप्रश्नव्याख्यानकर्तॄणा-मेव मोहादिति दिक् । यैस्त्वन्ये—धर्मक्षेत्रपदं कुरुक्षेत्रपदादविमुक्तक्षेत्रप्रतिपत्तिर्माभूदित्येतदर्थमिति । तन्न । कुरुक्षेत्रादागतं संजयं किमविमुक्तक्षेत्रे समवेता इति संशयरहितंप्रति विशेषणानर्थक्यात् । अन्येषामपि लोकप्रसिद्ध्या पूर्वग्रन्थेन च निर्णयस्य सत्त्वात् ॥ १ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

कुरूणां करणानां यत्क्षेत्रमनुग्राहकं अतएव सांसारिकत्वधर्माणां सर्वेषां क्षेत्रमुत्पत्तिनिमित्तत्वात् । 'अयं स परमो धर्मो यद्योगेनात्मदर्शनम्' इत्यस्य च धर्मस्य क्षेत्रं समस्ताधर्माणां क्षयादपवर्गप्राप्त्या त्राणभूतं तदधिकारिशरीरं सर्वक्षेत्राणामक्षादेर्हिंसार्थत्वात् परस्परबाध्यबाधक-भावेन वर्तमानानां रागवैराग्यक्रोधक्षमाप्रभृतीनां समागमो यत्र तस्मिन् स्थिता ये मामका अविद्यापुरुषोचिता अविद्यामयाः संकल्पाः

१ मधुसूदनः. २ मधुसूदनः. ३ मधुसूदनः. ४ नीलकंठः. ५ 'अविमुक्तं वै कुरुक्षेत्रं' इति श्रुतिः.

**संजय उवाच । दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**
**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

२ आनन्दगिरिव्याख्या ।

दयस्ते च सर्वे युद्धभूमौ संगता भूत्वा किमकुर्वत कृतवन्तः ॥ १ ॥ किमस्मदीयं प्रबलं बलं प्रतिलभ्य धीरपुरुषैर्भीष्मादिभिरधिष्ठितं परेषां भयमाविरभूत्, यद्वा पक्षद्वयहिंसानिमित्ताधर्मभयमासीद्येनैते युद्धादुपरमेरन्निल्येवं पुत्रपरवशस्य पुत्रस्नेहाभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने संजयस्य प्रतिवचनं—**दृष्ट्वेत्यादि** । पाण्डवानां भयप्रसङ्गो नास्तीत्येतत्तुशब्देन द्योत्यते, प्रत्युत दुर्योधनस्यैव राज्ञो भयं प्रभूतं प्रादुर्बभूव । पाण्डवानां पाण्डुसुतानां युधिष्ठिरादीनामनीकं सैन्यं धृष्टद्युम्नादिभिरतिधृष्टैर्व्यूहाधिष्ठितं दृष्ट्वा प्रत्यक्षेण प्रतीत्य त्रस्तहृदयो दुर्योधनो राजा तदा तस्यां संग्रामोद्योगावस्थायामाचार्यं द्रोणनामानमात्मनः शिक्षितारं रक्षितारं च श्लाघयन्नुपसंगम्य तदीयं समीपं विनयेन प्राप्य भयोद्विग्नहृदयत्वेऽपि तेजस्वित्वादेव वचनमर्थसहितं वाक्यमुक्तवानित्यर्थः ॥ २ ॥ तदेव वचनमुदाहरति—**पश्येति** । एतामस्मदभ्याशे महापुरुषानपि भवत्प्रमुखानपरिगणय्य

३ नीलकण्ठव्याख्या ( चतुर्धरी )

समवेता मिलिताः युयुत्सवो योद्धुमिच्छवः । पाण्डवानां पृथग्ग्रहणं तेषु ममत्वाभावसूचनार्थम् ॥ १ ॥ व्यूढं व्यूहरचनया स्थितम् । आचार्यं द्रोणम् । राजा दुर्योधनः । राजाब्रवीदित्येव सिद्धे वचनपदेन संक्षिप्तबह्वर्थत्वादिगुणवत्त्वं

४ मधुसूदनीव्याख्या ।

शन्पाण्डवेषु ममकाराभावप्रदर्शनेन तद्द्रोहमभिव्यनक्ति ॥ १ ॥ एवं कृपालोकव्यवहारनेत्राभ्यामपि हीनतया महतोऽन्धस्य पुत्रस्नेहमात्राभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने विदिताभिप्रायस्य संजयस्यातिधार्मिकस्य प्रतिवचनमवतारयति वैशम्पायनः । तत्र पाण्डवानां दृष्टभयसंभावनापि नास्ति, अदृष्टभयं तु भ्रान्त्यार्जुनस्योत्पन्नं भगवतोपशमितमिति पाण्डवानामुत्कर्षस्तुशब्देन द्योत्यते । स्वपुत्रकृतराज्यप्रत्यर्पणशङ्कया तु माग्लासीरिति राजानं तोषयितुं दुर्योधनदौष्ट्यमेव प्रथमतो वर्णयति—**दृष्ट्वेति ।** पाण्डुसुतानामनीकं सैन्यं व्यूढं व्यूहरचनया धृष्टद्युम्नादिभिः स्थापितं दृष्ट्वा चाक्षुषज्ञानेन विषयीकृत्य तदा संग्रामोद्यमकाले आचार्यं द्रोणनामानं धनुर्विद्यासंप्रदायप्रवर्तयितारमुपसंगम्य स्वयमेव तत्समीपं गत्वा नतु स्वसमीपमाहूय । एतेन पाण्डवसैन्यदर्शनजनितं भयं सूच्यते । भयेन स्वरक्षार्थं तत्समीपगमनेऽप्याचार्यगौरवव्याजेन भयसंगोपनं राजनीतिकुशलत्वादित्याह—**राजेति ।** आचार्यं दुर्योधनोऽब्रवीदित्येतावतैव निर्वाहे वचनपदं संक्षिप्तबह्वर्थत्वादिबहुगुणविशिष्टे वाक्यविशेषे संक्रमितुं वचनमात्रमेवाब्रवीन्नतु कंचिदर्थमिति वा ॥ २ ॥ तदेव वाक्यविशेषरूपं वचनमुदाहरति—**पश्यैतामित्यादिना ।** 'तस्य संजनयन्हर्षम्' इत्यतः प्राक्तनेन, पाण्डवेषु प्रियशिष्येष्वतिस्निग्धहृदयत्वादाचार्यो युद्धं

५ भाष्योत्कर्षदीपिका ।

एवं पृष्टः संजयः-अर्जुनो वीरशिरोमणिरतिकारुणिको युद्धाद्धिंसाप्रधानान्निवृत्तः पुनर्भूभारसंजिहीर्षुणा श्रीकृष्णेनोपदिष्टो युद्धं कृतवान् । युधिष्ठिरादयस्तु 'आततायिनमायान्तं हन्यादेवाविचारयन्' इत्यादिक्षात्रधर्मविदस्तत्कृतवन्तः । त्वदीयास्तु क्रूरस्वभावादेवेत्याशयेनाक्षेपं प्रतिक्षिपन् प्रश्नस्योत्तरमाह—**दृष्ट्वेत्यादि** । तुशब्द आक्षेपनिरासार्थः । पाण्डवानां सैन्यं व्यूहरचनया व्यवस्थितमवलोक्य दुर्योधनो द्रोणाचार्यसमीपं प्रणिपातादिपुरःसरं गत्वा राजनीतिगर्भं वाक्यमब्रवीत् । नन्वाचार्यं स्वसमीप आहूय कुतो नोक्तवानित्यत आह—**राजेति ।** 'वीरपुरुषा अत्यादरेण युद्धे प्रवर्त्याः' इति राजनीतिकुशल इत्यर्थः । आचार्यमुपसंगम्येत्यनेन दुर्योधनस्य भयोद्विग्नता सूचिता । भयोद्विग्नहृदयत्वेऽपि वचनमर्थसहितं वाक्यमुक्तवानिति सूचनार्थं राजेत्येके[1] । यत्तु तत्र पाण्डवानां दृष्टभयसंभावना नास्ति, अदृष्टभयं तु भ्रान्त्या अर्जुनस्योत्पन्नं भगवतोपशमितमिति पाण्डवानामुत्कर्षस्तुशब्देन द्योत्यते । स्वपुत्रकृतराज्यसमर्पणशङ्कया तु माग्लासीरिति राजानं तोषयितुं दुर्योधनदौष्ट्यमेव प्रथमतो वर्णयति दृष्ट्वेतीति केचित्[2] । तत्तु पूर्वोक्तग्रन्थविरोधादुपेक्ष्यम् ॥ २ ॥ तदेवोदाहरति—**पश्येत्यादिना ।** एतां भवदादीनतिरथानपरिगणय्य संमुखे स्थितां पाण्डुपुत्राणां युधिष्ठिरादीनां

६ श्रीधरीव्याख्या ।

भूमौ कुरुक्षेत्रे मत्पुत्राः पाण्डुपुत्राश्च युयुत्सवो योद्धुमिच्छन्तः समवेता मिलिताः सन्तः किं कृतवन्तः ॥ १ ॥ **दृष्ट्वेति** । पाण्डवानामनीकं सैन्यं व्यूढं व्यूहरचनया व्यवस्थितं दृष्ट्वा द्रोणाचार्यसमीपं गत्वा राजा दुर्योधनो वक्ष्यमाणं वाक्यमुवाच ॥ २ ॥ तदेव वाक्यमाह—**पश्यैतामित्यादिनवभिः श्लोकैः** । भो आचार्य, पाण्डवानां विततां चमूं सेनां पश्य । द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां

७ अभिनवगुप्ताचार्यव्याख्या ।

पाण्डवाः शुद्धविद्यापुरुषोचिता विद्यात्मानस्ते किमकुर्वत । कैः खलु के जिता इति यावत् । ममेति कायन्तीति मामका अविद्यापुरुषाः । पाण्डुः

[1] भाष्यव्याख्याकृतः.  [2] भाष्यटीकाकृतः.

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**

२ आनन्दगिरिव्याख्या ।

भयलेशशून्यामवस्थितां चमूमिमां सेनां पाण्डुपुत्रैर्युधिष्ठिरादिभिरानीतां महतीमनेकाक्षौहिणीसहितामक्षोभ्यां पश्येत्याचार्यं दुर्योधनो नियुङ्क्ते, नियोगद्वारा च तस्मिन्परेषामवज्ञां विज्ञापयन्क्रोधातिरेकमुत्पादयितुमुत्सहते । परकीयसेनाया वैशिष्ट्याभिधानद्वारा परापरपक्षेऽपि त्वदीयमेव बलमिति सूचयन्नाचार्यस्य तन्निरसनं सुकरमिति मन्वानः सन्नाह—**व्यूढामिति** । राज्ञो द्रुपदस्य पुत्रस्तव शिष्यो धृष्टद्युम्नो लोके ख्यातिमुपगतः स्वयं च शस्त्रास्त्रविद्यासंपन्नो महामहिमा तेन व्यूहमापाद्याधिष्ठितामिमां चमूं किमिति न प्रतिपद्यसे किमिति वा मृष्यसीत्यर्थः ॥ ३ ॥ अन्येऽपि प्रतिपक्षे पराक्रमभाजो बहवः सन्तीत्यनुपेक्षणीयत्वं परपक्षस्य विवक्षयन्नाह—**अत्रेति** । अस्यां हि प्रतिपक्षभूतायां

३ नीलकण्ठव्याख्या ( चतुर्धरी )

वाक्यस्य सूच्यते ॥ २ ॥ द्रुपदपुत्रेणेति पूर्ववैरसूचनेन क्रोधोद्दीपनार्थं विशेषणम् ॥ ३ ॥ महेष्वासा महान्त इष्वासाः

४ मधुसूदनीव्याख्या ।

न करिष्यतीति संभाव्य तस्मिन्परेषामवज्ञां विज्ञापयन् तस्य क्रोधातिशयमुत्पादयितुमाह । एतामत्यासन्नत्वेन भवद्विधानपि महानुभावानवगणय्य भयशून्यत्वेन स्थितां पाण्डुपुत्राणां चमूं महतीमनेकाक्षौहिणीसहितत्वेन दुर्निवारां पश्यापरोक्षीकुरु । प्रार्थनायां लोट् । अहं शिष्यत्वात्त्वामाचार्यं प्रार्थय इत्याह—**आचार्येति** । दृष्ट्वा च तत्कृतामवज्ञां स्वयमेव ज्ञास्यसीति भावः । ननु तदीयावज्ञा सोढव्यैवास्माभिः प्रतिकर्तुमशक्यत्वादित्याशङ्क्य तन्निरसनं तव सुकरमेवेत्याह—**व्यूढां तव शिष्येणेति** । शिष्यापेक्षया गुरोराधिक्यं सर्वसिद्धमेव । व्यूढां तु धृष्टद्युम्नेनेत्यनुक्त्वा द्रुपदपुत्रेणेति कथनं द्रुपदपूर्ववैरसूचनेन क्रोधोद्दीपनार्थम् । धीमतेति पदमनुपेक्षणीयत्वसूचनार्थम् । व्यासङ्गान्तरनिराकरणेन त्वरातिशयार्थं पश्येति प्रार्थनम् । अन्यच्च हे पाण्डुपुत्राणामाचार्य, नतु मम । तेषु स्नेहातिशयात् । द्रुपदपुत्रेण तव शिष्येणेति त्वद्वधार्थमुत्पन्नोऽपि त्वयाध्यापित इति तव मौढ्यमेव ममानर्थकारणमिति सूचयति । शत्रोस्तव सकाशात्त्वद्वधोपायभूता विद्या गृहीतेति तस्य धीमत्त्वम् । अतएव तच्चमूदर्शनेनानन्दस्तवैव भविष्यति भ्रान्तत्वान्नान्यस्य कस्यचिदपि । यंप्रतीयं प्रदर्शनीयेति त्वमेवैतां पश्येत्याचार्यंप्रति तत्सैन्यं प्रदर्शयन्निगूढं द्वेषं द्योतयति । एवंच यस्य धर्मक्षेत्रं प्राप्याचार्येऽपीदृशी दुष्टबुद्धिस्तस्य काऽनुतापशङ्का सर्वाभिशङ्कित्वेनातिदुष्टाशयत्वादिति भावः ॥ ३ ॥ नन्वेकेन द्रुपदपुत्रेणाप्रसिद्धेनाधिष्ठितां चमूमेतामस्मदीयो यःकश्चिदपि जेष्यति किमिति त्वमुत्ताम्यसीत्यत आह—**अत्र शूरा इत्या**दिभिस्त्रिभिः । न केवलमत्र धृष्टद्युम्न एव शूरो

५ भाष्योत्कर्षदीपिका ।

चमूं सेनां महतीमनेकाक्षौहिणीयुक्तामक्षोभ्यां द्रुपदस्य पुत्रेण धृष्टद्युम्नेन तव शिष्येण बुद्धिमता व्यूढां व्यूहरचनया स्थापितां पश्य । हे आचार्य, उभयेषामाचार्यस्यापि तव पाण्डवेषु प्रीतिर्न युक्ता, यतस्त्वामपरिगणय्य तव संमुखे महती सेना तैः स्थापितेत्याशयः । द्रुपदपुत्रेण तव शिष्येणेति पदद्वयेन द्रुपदपुत्रस्य स्वमृत्योरपि त्वया शिक्षणं कृतमिति मृत्योरपि तव भयं नास्तीति सूचितम् । एतेन स्वमृत्युना सह मया कथं योद्धव्यमिति शङ्कापि परिहृता । शिक्षितमपि मूर्खेण विस्मर्यते इति शङ्कानिरासाय धीमतेत्युक्तम् । परपक्षेऽपि त्वदीयमेव बलमिति सूचयन्नाचार्यस्य तन्निरसनमतिसुकरमिति मन्वानः सन्नाह—**व्यूढामित्या**दिनेत्येके । द्रुपदपुत्रेणेति कथनं द्रुपदपूर्ववैरसूचनेन क्रोधोद्दीपनार्थम् । धीमतेत्यनुपेक्षणीयत्वसूचनार्थम् । पश्येति व्यासङ्गान्तरनिराकरणेन त्वरातिशयार्थम् । अन्यच्च राजा अवचनमब्रवीत् । हे पाण्डुपुत्राणामाचार्य, नतु मम । तेषु स्नेहाधिक्यात् । द्रुपदपुत्रेण तव शिष्येणेति त्वद्वधार्थमुत्पन्नोऽपि त्वयाध्यापित इति तव मौढ्यमेव ममानर्थकारणमिति सूचयति । शत्रोरपि सकाशात्तद्वधोपायभूता विद्या गृहीतेति तस्य धीमत्त्वमतएव तच्चमूदर्शनेनानन्दस्तवैव भविष्यति भ्रान्तत्वान्नान्यस्य कस्यचिदपि । यं प्रतीयं प्रदर्शनीयेति त्वमेवैतां पश्येत्याचार्यं प्रति निगूढं द्वेषं द्योतयति । एवंच यस्य धर्मक्षेत्रेऽपीदृक् दुष्टबुद्धिस्तस्य काऽनुतापशङ्केति भाव इति केचित् । अन्यच्चेत्यारभ्य युद्धार्थं प्रार्थनां कुर्वतो दुर्योधनस्य प्रणिपातादिपुरःसरं आचार्यसमीपं गतस्यात्मनः शिक्षितारं रक्षितारं च प्रत्येवमभिप्रायवर्णनं प्रकृतासंगतं नवेति विद्वद्भिर्निर्मत्सरैः पक्षपातवर्जितैर्विचार्यम् । अनुतापशङ्का मूलविरुद्धेति तु पूर्वमुक्तमेव । नन्वनेन कृतं प्रतारणं बुद्ध्वैवाचार्येणोत्तरं न दत्तमिति चेत् । न । आचार्याभाषणस्य प्रकृतविरुद्धार्थकल्पनांविनैव वक्ष्यमाणरीत्योपपत्तौ तत्कल्पनाया अन्याय्यत्वात् ॥ ३ ॥ शत्रुसैन्ये प्रसिद्धाञ्शूरान्दर्शयन्नुपेक्षणीयत्वं वारयति—**अत्रेति** । महान्त इष्वासा धनूंषि येषां ते । तेषां युद्धाकुशलतां निर-

६ श्रीधरीव्याख्या ।

व्यूहरचनया अधिष्ठिताम् ॥ ३ ॥ **अत्र शूरा इति** । अत्रास्यां चम्वां इषवो बाणा अस्यन्ते क्षिप्यन्ते एभिरितीष्वासाः धनूंषि । महान्त इष्वासा येषां ते तथा । भीमार्जुनौ तावदत्रातिप्रसिद्धौ योद्धारौ ताभ्यां समाः शूराः शौर्येण क्षात्रधर्मेणोपेताः सन्ति । तानेव

१ मधुसूदनः. २ मधुसूदनः.

**धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान्।**
**पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः॥ ५॥**
**युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान्।**
**सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः॥ ६॥**

२ आनन्दगिरिव्याख्या।

सेनायां शूराः स्वयमभीरवः शस्त्रास्त्रकुशलाः भीमार्जुनाभ्यां सर्वसंप्रतिपन्नवीर्याभ्यां तुल्या युद्धभूमावुपलभ्यन्ते। तेषां युद्धशौण्डीर्यं विशदीकर्तुं विशिनष्टि—**महेष्वासा इति**। इषुरस्यतेऽस्मिन्निति व्युत्पत्त्या धनुस्तदुच्यते, तच्च महदन्यैरप्रधृष्यं तद्येषां ते राजानस्तथा विवक्ष्यन्ते। तानेव परसेनामध्यमध्यासीनान्परपक्षानुरागिणो राज्ञो विज्ञापयति—**युयुधान** इत्यादिना **सौभद्रो द्रौपदेयाश्चे**त्यन्तेन॥ ४॥ किंच **धृष्टकेतुरिति**। स्पष्टम्॥ ५॥ तेषां सर्वेषामपि महाबलपराक्रमभाक्त्वादनुपेक्ष्यत्वं पुनर्विवक्षति—**सर्व एवेति**॥ ६॥ यद्येवं परकीयं बलमतिप्रभूतं प्रतीत्यातिभीतव-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

धनूंषि येषां ते। युयुधानः सात्यकिः। द्रुपदश्च महारथ इत्येकः॥ ४॥ धृष्टकेत्वादयः षट्॥ ५॥ युधामन्यूत्तमौजसौ सौभद्रोऽभिमन्युः पञ्च द्रौपदेयाः प्रतिविन्ध्यादयश्चेत्यष्टौ। चकारात् पाण्डवा घटोत्कचादयश्चातिप्रसिद्धा ग्राह्याः। सर्वेऽपि महारथा एव। तल्लक्षणं तु 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स वै प्रोक्तो महारथः॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः। रथस्त्वेकेन योद्धा स्यात्तन्न्यूनोऽर्धरथः स्मृतः॥' इति॥ ६॥

४ मधुसूदनीव्याख्या।

येनोपेक्षणीयता स्यात्। किंत्वस्यां चम्वामन्येऽपि बहवः शूराः सन्तीत्यवश्यमेव तज्जये यतनीयमित्यभिप्रायः। शूरानेव विशिनष्टि—**महेष्वासा इति**। महान्तोऽन्यैरप्रधृष्या इष्वासा धनूंषि येषां ते तथा। दूरतएव परसैन्यविद्रावणकुशला इति भावः। महाधनुरादिमत्त्वेऽपि युद्धकौशलाभावमाशङ्क्याह—युधि युद्धे भीमार्जुनाभ्यां सर्वसंप्रतिपन्नपराक्रमाभ्यां समास्तुल्याः। तानेवाह—**युयुधान** इत्यादिना **महारथा** इत्यन्तेन। युयुधानः सात्यकिः। द्रुपदश्च महारथ इत्येकः। अथवा युयुधानविराटद्रुपदानां विशेषणं महारथ इति। धृष्टकेतुचेकितानकाशिराजानां विशेषणं वीर्यवानिति। पुरुजित्कुन्तिभोजशैब्यानां विशेषणं नरपुंगव इति। विक्रान्तो युधामन्युः वीर्यवांश्चोत्तमौजा इति द्वौ। अथवा सर्वाणि विशेषणानि समुच्चित्य सर्वत्र योजनीयानि। सौभद्रोऽभिमन्युः। द्रौपदेयाश्च द्रौपदीपुत्राः प्रतिविन्ध्यादयः पञ्च। चकारादन्येऽपि पाण्ड्यराजघटोत्कचप्रभृतयः। पञ्च पाण्डवास्त्वतिप्रसिद्धा एवेति न गणिताः। ये गणिताः सप्तदशान्येऽपि तदीयाः सर्वएव महारथाः सर्वेऽपि महारथाएव नैकोऽपि रथोऽर्धरथो वा। महारथा इत्यतिरथत्वस्याप्युपलक्षणम्। तल्लक्षणं च 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः। रथस्त्वेकेन यो योद्धा तन्न्यूनोऽर्धरथः स्मृतः॥' इति॥ ४॥ ५॥ ६॥ यद्येवं परबलमतिप्रभूतं दृष्ट्वा

५ भाष्योत्कर्षदीपिका।

स्यति—**युधीति**। युद्धे भीमार्जुनसमा इति। भीमार्जुनाभ्यां तुल्याः। युयुधानः सात्यकिः। महारथ इति संनिहितस्य द्रुपदस्यैव विशेषणम्, एकवचनस्वारस्यात्। एवमग्रेऽपि बोध्यम्। एतेन युयुधानादीनां महारथ इति विशेषणं, धृष्टकेत्वादीनां वीर्यवानिति, पुरुजिदादीनां नरपुंगव इति पक्षान्तरं प्रत्युक्तम्। आवृत्तेश्च प्रयोजनशून्यगौरवग्रस्तत्वेनाङ्गीकारायोगात्। यदपि अथवा सर्वाणि विशेषणानि समुच्चित्य सर्वत्र योजनीयानीति। तदपि न। महारथ इत्यस्य वीर्यवानित्यस्य च पौनरुक्त्यापत्तेः॥ ४॥ ५॥ सौभद्रः सुभद्रापुत्रोऽभिमन्युः। द्रौपदेयाः द्रौपदीपुत्राः प्रतिविन्ध्यादयः पञ्च। द्रुपदश्च महारथ इत्युक्तमयुक्तं, यतोऽन्येऽपि महारथा भीष्मप्रोक्ताः सन्तीत्याशङ्क्य तदङ्गीकरोति—**सर्व एवेति**। निर्दिष्टाश्चकारपरिगृहीताश्च महारथाः। एतल्लक्षणं तु 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च स वै प्रोक्तो महारथः॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः। रथस्त्वेकेन यो युध्येत्तन्न्यूनोऽर्धरथः स्मृतः॥' इति। यद्यपि परपक्षेऽतिरथादयोऽपि सन्ति तथापि तत्तिरोधानं तवातिरथस्य महारथानां निवारणे सामर्थ्यम्। नत्वन्येषामतिरथादीनामित्याचार्यस्योत्साहजननार्थम्। सर्वेऽपि महारथा एव नत्वेकोऽपि रथोऽर्धरथो वा। महारथा इत्य-

६ श्रीधरीव्याख्या।

नामभिर्निर्दिशति। युयुधानः सात्यकिः॥ ४॥ किंच—**धृष्टकेतुरिति**। चेकितानो नाम एको राजा। नरपुङ्गवो नरश्रेष्ठः शैब्यः॥ ५॥ **युधामन्युश्चेति**। विक्रान्तो युधामन्युर्नामैकः। सौभद्रोऽभिमन्युः। द्रौपदेयाः द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः प्रतिविन्ध्यादयः पञ्च। महारथादीनां लक्षणम्—'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः॥ अमितान्यो-

१ मधुसूदनः. २ मधुसूदनः.

**अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।**
**नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥**
**भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

२ आनन्दगिरिव्याख्या ।

दभिदधासि हन्त संधिरेव परैरिष्यतामलं विग्रहाग्रहेणेत्याचार्याभिप्रायमाशङ्क्य ब्रवीति—**अस्माकमिति** । तुशब्देनान्तरुत्पन्नमपि स्वकीयं भयं तिरोदधानो धृष्टतामात्मनो द्योतयति । ये खल्वस्मत्पक्षे व्यवस्थिताः सर्वेभ्यः समुत्कर्षजुषस्तान्मयोच्यमानान्निबोध । निश्चयेन मद्वचनादवधारयेत्यर्थः । यद्यपि त्वमेव त्रैवर्णिकेषु त्रैविद्यवृद्धेषु प्रधानत्वात्प्रतिपत्तुं प्रभवसि तथापि मदीयसैन्यस्य ये मुख्यास्तानहं ते तुभ्यं संज्ञार्थमसंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं विज्ञापनं करोमि न त्वज्ञातं किंचित्तव ज्ञापयामीति मत्वाह—**द्विजोत्तमेति** ॥ ७ ॥ तानेव स्वसेनानिविष्टान्पुरुषधौरेयानात्मीयभयपरिहारार्थं परिगणयति—**भवानित्यादिना** ॥ ८ ॥ द्रोणादिपरिगणनस्य परि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विशिष्टाः श्रेष्ठाः । निबोध बुध्यस्व । भौवादिकस्य परस्मैपदिनो बुधेरिदं रूपम् । संज्ञार्थं अस्मत्पक्षेऽपि शूराः सन्तीति ज्ञापनार्थम् । परेषु प्राबल्यं दृष्ट्वा तवोत्साहभङ्गो माभूदित्यर्थः ॥ ७ ॥ विकर्णः स्वभ्राता । सौमदत्तिर्भूरिश्रवाः । जयद्रथ-

४ मधुसूदनीव्याख्या ।

भीतोऽसि हन्त तर्हि संधिरेव परैरिष्यतां किं विग्रहाग्रहेणेत्याचार्याभिप्रायमाशङ्क्याह । तुशब्देनान्तरुत्पन्नमपि भयं तिरोदधानो धृष्टतामात्मनो द्योतयति । अस्माकं सर्वेषां मध्ये ये विशिष्टाः सर्वेभ्यः समुत्कर्षजुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेति भौवादिकस्य परस्मैपदिनो बुधे रूपम् । ये च मम सैन्यस्य नायका मुख्या नेतारस्तान्संज्ञार्थं असंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं ते तुभ्यं ब्रवीमि न त्वज्ञातं किंचिदपि तव ज्ञापयामीति । द्विजोत्तमेति विशेषणेनाचार्यं स्तुवन्स्वकार्ये तदाभिमुख्यं संपादयति । दौष्ट्यपक्षे द्विजोत्तमेति ब्राह्मणत्वात्तावद्युद्धाकुशलस्त्वं, तेन त्वयि विमुखेऽपि भीष्मप्रभृतीनां क्षत्रियप्रवराणां सत्त्वान्नास्माकं महती क्षतिरित्यर्थः । संज्ञार्थमिति प्रियशिष्याणां पाण्डवानां चमूं दृष्ट्वा हर्षेण व्याकुलमनसस्तव स्वीयवीरविस्मृतिर्माभूदिति ममेयमुक्तिरिति भावः । तत्र विशिष्टान् गणयति—भवान् द्रोणः भीष्मः कर्णः कृपश्च । समितिं संग्रामं जयतीति समितिंजय इति कृपविशेषणं कर्णादनन्तरं गण्यमानत्वेन तस्य कोपमाशङ्क्य तन्निरासार्थम् । एते चत्वारः सर्वतो विशिष्टाः । नायकान् गणयति—अश्वत्थामा द्रोणपुत्रः । भीष्मापेक्षयाचार्यस्य प्रथमगणनवद्विकर्णाद्यपेक्षया तत्पुत्रस्य प्रथमगणनमाचार्यपरितोषार्थम् । विकर्णः स्वभ्राता कनीयान् । सौमदत्तिः सोमदत्तस्य पुत्रः श्रेष्ठत्वाद्भूरिश्रवाः । जयद्रथः सिन्धुराजः । 'सिन्धुराजस्तथैव च' इति क्वचित्पाठः । किमेता-

५ भाष्योत्कर्षदीपिका ।

तिरथस्याप्युपलक्षणमिति केचित् ॥ ६ ॥ ननु ते बहवो महारथा मयैकेनातिरथेनापि कथं निवार्या इत्याशङ्क्यान्येऽपि तव सहकारिणोऽस्मत्सैन्ये महाशूराः सन्तीत्याह—**अस्माकमिति** । यद्येवं परकीयबलमतिप्रभूतं प्रतीत्य भीतोऽसि तर्हि संधिरेव तैरिष्यतामलं विग्रहाग्रहेणेत्याशङ्क्याह—अस्माकमित्येके । अस्माकं सर्वेषां मध्ये विशिष्टा उत्कृष्टा मम सैन्यस्य च मुख्यास्तान्निबोध जानीहि । असंख्येषु मध्ये कतिचिन्नामभिरुक्त्वावशिष्टानुपलक्षयितुं ते तुभ्यं ब्रवीमि विज्ञापनं करोमि, नतु किंचिदज्ञातं ज्ञापयामि, अत्युत्तमत्वात्तवेत्याशयेनाह—**द्विजोत्तमेति** । द्विजोत्तमेति ब्राह्मणत्वाद्युद्धाकुशलस्त्वं तेन त्वयि विमुखेऽपि भीष्मप्रमुखाणां क्षत्रियप्रवराणां सत्त्वान्नास्माकं महती क्षतिरिति दुर्योधनदौष्ट्यमिति केचित् ॥७॥ तानेव विशिष्टान् स्वसेनानायकान् परिगणयति—**भवानित्यादिना** । समितिं संग्रामं जयतीति तथा । समितिंजयपदं मध्यमणिन्यायेनोभयत्र संबध्यते । कर्णात्पश्चात्परिगणनेन कृपाश्वत्थाम्नोः कोपो माभूदिति तयोर्विशेषणत्वेन समितिंजयपदोपादानम् । विकर्णः स्वभ्राता । सौमदत्तिर्भूरिश्रवाः ॥ ८ ॥ गणयितुमसं-

६ श्रीधरीव्याख्या ।

धयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः । रथी त्वेकेन यो युध्येत्तन्न्यूनोऽर्धरथी मतः ॥' इति ॥ ६ ॥ **अस्माकमिति** । निबोध बुध्यस्व । नायका नेतारः । संज्ञार्थं सम्यग्ज्ञानार्थमित्यर्थः ॥ ७ ॥ तानेवाह—**भवानिति द्वाभ्याम्** । भवान्द्रोणः । समितिं संग्रामं जयतीति तथा ।

१ 'दत्तिर्जयद्रथः' म. पाठः. २ मधुसूदनः. ३ भाष्यटीकाकृतः. ४ मधुसूदनः.

**अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।**
**नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥**
**अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।**
**पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥**

२ आनन्दगिरिव्याख्या ।

शिष्टपरिसंख्यार्थत्वं व्यावर्तयति—**अन्ये चेति** । सर्वेऽपि भवन्तमारभ्य मदीयपृतनायां प्रविष्टाः स्वजीवितादपि मह्यं स्पृहयन्तीत्याह—**मदर्थ इति** । यत्तु तेषां शूरत्वमुक्तं तदिदानीं विशदयति—**नानेति** । नानाविधान्यनेकप्रकाराणि शस्त्राण्यायुधानि प्रहरणानि प्रहरणसाधनानि येषां ते तथा । बहुविधायुधसंपत्तावपि तत्प्रयोगे नैपुण्याभावे तद्वैफल्यमिति चेन्नेत्याह—**सर्वे इति** ॥ ९ ॥ राजा पुनरपि स्वकीयभयाभावे हेत्वन्तरमाचार्यं प्रत्यावेदयति—**अपर्याप्तमिति** । अस्माकं खल्विदमेकादशसंख्याकाक्षौहिणीपरिगणितमपरिमितं बलं भीष्मेण च प्रथितमहामहिम्ना सूक्ष्मबुद्धिना सर्वतो रक्षितं पर्याप्तं परेषां परिभवे समर्थम् । एतेषां पुनस्तदल्पं सप्तसंख्याकाक्षौहिणीपरिमितं बलं भीमेन च चपलबुद्धिना कुशलताविकलेन परिपालितमपर्याप्तम् । अस्मानभिभवितुमसमर्थमित्यर्थः । अथवा तदिदमस्माकं बलं भीष्माधिष्ठितमपर्याप्तमपरिमितमधृष्यमक्षोभ्यम्, एतेषां तु पाण्डवानां बलं भीमेनाभिरक्षितं पर्याप्तं परिमितम् । सोढुं शक्यमित्यर्थः । अथवा तत्पाण्डवानां बलमपर्याप्तं नालमस्माकमस्मभ्यं भीष्माभिरक्षितं भीष्मोऽभिरक्षितोऽस्मै परबलनिवृत्त्यर्थमिति तदेव तथोच्यते, इदं पुनरस्मदीयं बलमेतेषां पाण्डवानां पर्याप्तं परिभवे समर्थं, भीमाभिरक्षितं भीमो दुर्बलहृदयो यस्मादस्मै परबलनिवृत्त्यर्थमभिरक्षितस्तस्मादस्माकं न किंचिदपि भयकारणमस्तीत्यर्थः ॥ १० ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी )

पदस्थाने 'तथैव च' इति क्वचित्पाठः ॥ ८ ॥ अन्ये शल्यकृतवर्मप्रभृतयः । शस्त्राणि विदारकाणि खड्गादीनि प्रहरणानि केवलं प्रहारार्थानि गदादीनि नानाविधानि येषां ते नानाशस्त्रप्रहरणाः ॥ ९ ॥ पर्याप्तं परित आप्तं परिवेष्टितम् । पाण्डवसैन्यं हि सप्ताक्षौहिणीमितत्वादल्पं बहुनैकादशाक्षौहिणीमितेनास्मत्सैन्येन वेष्टयितुं शक्यं नतु तदीयेनास्मदी-

४ मधुसूदनीव्याख्या ।

वन्त एव नायका नेत्याह—अन्ये च शल्यकृतवर्मप्रभृतयो मदर्थे मत्प्रयोजनाय जीवितमपि त्यक्तुमध्यवसिता इत्यर्थेन त्यक्तजीविता इत्यनेन स्वस्मिन्ननुरागातिशयस्तेषां कथ्यते । एवं स्वसैन्यबाहुल्यं तस्य स्वस्मिन्भक्तिः शौर्यं युद्धोद्योगो युद्धकौशलं च दर्शितं शूरा इत्यादिविशेषणैः ॥ ७ ॥ ८ ॥ ९ ॥ राजा पुनरपि सैन्यद्वयसाम्यमाशङ्क्य स्वसैन्याधिक्यमावेदयति—अपर्याप्तमनन्तमेकादशाक्षौहिणीपरिमितं भीष्मेण च प्रथितमहिम्ना सूक्ष्मबुद्धिनाभितः सर्वतो रक्षितं तत्तादृशगुणवत्पुरुषाधिष्ठितमस्माकं बलम् । एतेषां पाण्डवानां बलं तु पर्याप्तं परिमितं सप्ताक्षौहिणीमात्रात्मकत्वान्न्यूनं भीमेन चातिचपलबुद्धिना रक्षितम्, तस्मादस्माकमेव विजयो भविष्यतीत्यभिप्रायः । अथवा तत्पाण्डवानां बलमपर्याप्तं नालमस्माकमस्मभ्यम् । कीदृशं तत् । भीष्मोऽभिरक्षितोऽस्माभिर्यस्मै यन्निवृत्त्यर्थमित्यर्थः । तत्पाण्डवबलं भीष्माभिरक्षितं, इदं पुनरस्मदीयं बलमेतेषां पाण्डवानां पर्याप्तं परिभवे समर्थं भीमोऽतिदुर्बलहृदयोऽभिरक्षितो यस्मै तदस्माकं बलं भीमाभिरक्षितं यस्माद्भीमोऽत्ययोग्य एवैतन्निवृत्त्यर्थं तै रक्षितस्तस्मादस्माकं न किंचिदपि भयकारणमस्तीत्यभिप्रायः । एवंचेन्निर्भयोऽसि

५ भाष्योत्कर्षदीपिका ।

ख्यान्सर्वानपि संगृह्णाति—**अन्ये चेति** । बहवोऽपरिमिताः स्वजीवितादप्यधिका मयि सर्वेषां भवदादीनां प्रीतिरस्तीत्याह—**मदर्थ इति** । त्यक्तं जीवितं यैस्ते मदर्थे जीवितमपि गच्छति चेत्तर्हि सर्वैस्त्यज्यत इति भावः । परे महेष्वासा अस्मदीयास्तु नानाशस्त्रप्रहरणा इति स्वकीयानामुत्कर्षं द्योतयन्नाह—नानाविधानि शस्त्राणि खड्गादीनि प्रहरणानि गदादीनि च येषां ते । युद्धाकुशलतानिरासार्थमाह—**सर्वे इति** । युद्धे विशारदा विचक्षणाः ॥ ९ ॥ स्वोत्कर्षे हेत्वन्तरमाह—**अपर्याप्तमिति** । तत्परेषां बलमस्माकं बलं सैन्यमभिभवितुमपर्याप्तमसमर्थं, यतोऽस्माकं बलं भीष्मेण प्रथितमहिम्नातिशूरेण रक्षितमिदमस्मदीयं तु बलमेतेषां सैन्यमभिभवितुं पर्याप्तं समर्थम् । यतः परेषां बलं भीमेन बालेनाभिरक्षितमित्यर्थः । यद्वा तत्परोक्षं सर्वं विषयीकर्तुमशक्यमस्माकं

६ श्रीधरीव्याख्या ।

सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः ॥ ८ ॥ **अन्ये चेति** । मदर्थे मत्प्रयोजनार्थं जीवितं त्यक्तुमध्यवसिता इत्यर्थः । नाना अनेकानि शस्त्राणि प्रहरणसाधनानि येषां ते । युद्धे विशारदाः । निपुणा इत्यर्थः ॥ ९ ॥ ततः किमित्यत आह—**अपर्याप्तमिति** । तत् तथाभूतैर्वीरैर्युक्तमपि भीष्मेणाभिरक्षितमप्यस्माकं बलं सैन्यमपर्याप्तं तैः सह योद्धुमसमर्थं भाति । इदं तु एतेषां पाण्डवानां बलं भीमे-

७ अभिनवगुप्ताचार्यव्याख्या ।

शुद्धः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ किंवानेन बहुपरिगणनेन इदं तावद्वस्तुतत्त्वमित्याह—अपर्याप्तमिति । भीमसेना-

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ।**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥**

२ आनन्दगिरिव्याख्या ।

**स्वकीयबलस्य भीष्माधिष्ठितत्वेन बलिष्ठत्वमुक्त्वा भीष्मशेषत्वेन तदनुगुणत्वं द्रोणादीनां प्रार्थयते—अयनेष्विति । कर्तव्यविशेषद्योती चशब्दः । समरसमारम्भसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थिति-स्थानानि नियम्यन्ते तान्यत्रायनान्युच्यन्ते, सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति, तेषु सर्वेषु प्रक्लृप्तं प्रविभागम-प्रत्याख्याय भवानश्वत्थामा कर्णश्चेत्येवमादयो भवन्तः सर्वेऽवस्थिताः सन्तो भीष्ममेव सेनापतिं सर्वतो रक्षन्तु, तस्य हि रक्षणे सर्वमस्मदीयं बलं रक्षितं स्यात्, परबलनिवृत्त्यर्थत्वेन तस्यास्माभी रक्षितत्वादित्यर्थः ॥ ११ ॥ तमेवमाचार्य-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यमित्यर्थः । एवंच पर्याप्तमित्यस्य पारणीयमित्यर्थः ॥ १० ॥ अयनेषु व्यूहरचनया स्थिते सैन्ये प्रवेशमार्गेषु स्वेस्वे स्थाने स्थिता यूयं मध्यस्थं भीष्ममेवाभिरक्षन्तु । अस्य सेनापतेश्चाञ्चल्ये सर्वापि सेना आकुलीभवेत् । तत्स्थैर्ये स्थिरा

४ मधुसूदनीव्याख्या ।

तर्हि किमिति बहु जल्पसीत्यत आह । कर्तव्यविशेषद्योती तुशब्दः ॥ १० ॥ समरसमारम्भसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थितिस्थानानि यानि नियम्यन्ते तान्यत्रायनान्युच्यन्ते । सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति । तत्रैवंसति यथाभागं विभक्तां स्वां स्वां रणभूमिमपरित्यज्यावस्थिताः सन्तो भवन्तः सर्वेऽपि युद्धाभिनिवे-शात्पुरतः पृष्ठतः पार्श्वतश्चानिरीक्षमाणं भीष्मं सेनापतिमेव रक्षन्तु । भीष्मे हि सेनापतौ रक्षिते तत्प्रसादादेव सर्वं सुर-

५ भाष्योत्कर्षदीपिका ।

बलं भीष्मेण चाभिरक्षितमतोऽपर्याप्तं पर्याप्तुमभिभवितुं क्षोभयितुमशक्यम् । एतेषां त्विदं परिदृश्यमानं परिमितमितियावत् । भीमेन चाभिरक्षितमतः पर्याप्तं पर्याप्तुमभिभवितुं क्षोभयितुं सोढुं च शक्यमित्यर्थः । यद्वा तत्तस्मात् अस्माकमिदं बलमपर्याप्तं परि समन्ता-दितस्ततः सर्वं प्राप्तं न भवति किंतु स्वकीयमेव बहु, एतेषां तु बलं परि समन्तादितस्ततः प्राप्तं पर्याप्तमतोऽस्मत्सैन्यं मनो दत्त्वा युद्धं करिष्यतीति कृत्वास्माकं प्राबल्यमिति भावः । अस्माकं किलेदमेकादशाक्षौहिणीपरिमितं बलं भीष्मेण चाभिरक्षितं पर्याप्तं परेषां परिभवे समर्थं, एतेषां पुनस्तदल्पं सप्ताक्षौहिणीपरिमितं बलं भीमेन चपलबुद्धिना कुशलताविकलेन परिपालितमपर्याप्तम् । अस्मानभिभवितुमसमर्थमित्यर्थः ॥ अथवा तदिदमस्माकं बलमपर्याप्तमनल्पं भीष्मेण चाधिष्ठितं, तेषां तु बलं पर्याप्तमल्पं भीमेन चाधिष्ठितमतोऽस्माकमेव जयो भविष्यतीति भावः । अथवा तत्पाण्डवानां बलमस्माकमस्मभ्यं अपर्याप्तं नालम्, यत एतेषां बलं भीष्माभिरक्षितं भीष्मोऽभिरक्षितो निवृत्त्यर्थमस्मै । ततः इदं पुनरस्मदीयं बलं तेषां परिभवे पर्याप्तं समर्थम् । यतो भीमोऽभिरक्षि-तोऽस्मै तत् अस्मत्सैन्यनिवृत्त्यर्थं दुर्बलहृदयो भीमः परैरभिरक्षित इत्यर्थ इत्येके । यैस्तु तथाभूतैर्युक्तमपि भीष्मेणाभिरक्षितमपि अस्मा-कं बलं सैन्यमपर्याप्तं तैः सह योद्धुमसमर्थं भाति, इदं त्वेतेषां पाण्डवानां बलं भीमाभिरक्षितं सत् पर्याप्तं समर्थं भाति । भीष्मस्योभ-यपक्षपातित्वादिति भाव इति तदुपेक्ष्यम् । प्रकरणविरोधात् । तदेवं बहुमानयुक्तं राजवाक्यं श्रुत्वा भीष्मः किं कृतवानिति स्वग्रन्थ-विरोधाच्च ॥ १० ॥ तस्माद्भीष्ममेव सेनापतिं गुणभूता भवन्तो रक्षन्त्विति प्रार्थयते—**अयनेष्विति** । संग्रामप्रारम्भे योधानां यथाप्रधानं संख्ये पूर्वपरादिविभागेन नियतेष्ववस्थितिस्थानेष्वयनेषु । तुना कर्तव्यविशेषो द्योत्यते । यथाभागं विभागेन प्राप्तं स्वस्था-नमवस्थिताः सावधानतया स्थिताः सर्व एव भवन्तः सर्वसैन्यमधिष्ठाय मध्ये स्थितं युद्धे व्यग्रं सेनापतिं भीष्ममेवाभि समन्ताद्रक्षन्तु परबलनिवृत्त्यर्थमस्माभिस्तस्मिन्रक्षिते सर्वमस्मदीयं रक्षितं स्यादित्यर्थः ॥ ११ ॥ एवं स्वस्याप्राधान्यं श्रुत्वा तूष्णीं स्थितमाचार्यं तं

६ श्रीधरीव्याख्या ।

नाभिरक्षितं सत् पर्याप्तं समर्थं भाति । भीष्मस्योभयपक्षपातित्वात् । अस्मद्बलं पाण्डवसैन्यं प्रत्यसमर्थम् । भीमस्यैकपक्षपातित्वात् ॥ १० ॥ तस्माद्भवद्भिरेवं वर्तितव्यमित्याह—**अयनेष्विति** । अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां स्वां रणभूमिमपरित्य-ज्यावस्थिताः सन्तः सर्वे भीष्ममेवाभितो रक्षन्तु यथाऽन्यैर्युध्यमानः पृष्ठतः कैश्चिन्न हन्येत तथा रक्षन्तु । भीष्मबलेनैवास्माकं जीवि-

७ अभिनवगुप्ताचार्यव्याख्या ।

**भिरक्षितं पाण्डवीयं बलं अस्माकमपर्याप्तं जेतुमसमर्थं, यदि वा अपर्याप्तं कियत्तदस्मद्बलस्येत्येवार्थः । इदं तु भीष्माभिरक्षितं बलमस्माकं संबन्धि एतेषां पाण्डवानां जेतुं शक्तं यदि वा पर्याप्तं बहुना समरे जय्यमेतैरिति ॥ १० ॥ अयनेषु च सर्वेष्वित्यत्र अयनानि वीथयः । अमी आचार्यादयः । रोषबुद्ध्या बुद्धावारोप्यमाणा वधकर्मतयावश्यं पापदायिनः । तथा भोगसुखादिदृष्टार्थमेतद्युद्धं क्रियते इति बुद्ध्या**

१ भाष्यटीकाकृतः. २ श्रीधरः.

**तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥**
**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**
**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥**

२ आनन्दगिरिव्याख्या ।

प्रति संवादं कुर्वन्तं भयाविष्टं राजानं दृष्ट्वा तदभ्याशवर्ती पितामहस्तद्बुद्ध्यनुरोधार्थमित्थं कृतवानित्याह—**तस्येति** । राज्ञो दुर्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं परपरिभवद्वारा स्वकीयविजयद्वारकं सम्यगुत्पादयन् भयं तदीयमपनिनीषुरुच्चैः सिंहनादं कृत्वा शङ्खमापूरितवान् । किमिति दुर्योधनस्य हर्षमुत्पादयितुं पितामहो यतते कुरुवृद्धत्वात्तस्य कुरुराजत्वात् पितामहत्वाच्चास्य दुर्योधनभयापनयनार्था प्रवृत्तिरुचिता तदुपजीवितया तद्वशत्वाच्च तस्य च सिंहनादे शङ्खशब्दे च परेषां हृदयव्यथा संभाव्यते दूरादेवारिनिवहंप्रति भयजननलक्षणप्रतापत्वादित्यर्थः ॥ १२ ॥ राजाभिप्रायं प्रतीत्य भीष्मप्रवृत्त्यनन्तरं तत्पक्षैस्तैस्तै राजभिः शङ्खादयो वाद्यविशेषा झटिति शब्दवन्तः संपादिताः । स च शङ्खादिप्रयुक्तशब्दस्तुमुलो बहुलं भयं परेषां परिद्योतयन्नासीदित्याह—**तत इति** ॥ १३ ॥ एवं दुर्योधनपक्षे प्रवृत्तिमालक्ष्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

च भवेदतः स एव रक्ष्य इत्यर्थः ॥ ११ ॥ तस्य एवं वदतो दुर्योधनस्य संजयवाक्यमिदम् । सिंहनादमिति णमुलन्तम् । तेन विनद्येत्यस्यानुप्रयोगः कषादित्वात् 'समूलकाषं कषतिस्म दैत्यान्' इत्यादिवत् । कुरुवृद्धो भीष्मः । प्राग्विराटनगरादौ दृष्टप्रभावान्पाण्डवान्दृष्ट्वा राज्ञो भयं मा भूदिति शङ्खं दध्मौ । हर्षं युद्धोत्साहं जनयन् । हेत्वर्थे

४ मधुसूदनीव्याख्या ।

क्षितं भविष्यतीत्यभिप्रायः ॥ ११ ॥ स्तौतु वा निन्दतु वा एतदर्थे देहः पतिष्यत्येवेत्याशयेन तं हर्षयन्नेव सिंहनादं विनद्य शङ्खवाद्यं च कारितवानित्याह । एवं पाण्डवसैन्यदर्शनादतिभीतस्य भयनिवृत्त्यर्थमाचार्यं कपटेन शरणं गतस्य इदानीमप्ययं मां प्रतारयतीत्यसंतोषवशादाचार्येण वाङ्मात्रेणाप्यनादृतस्याचार्योपेक्षां बुद्ध्वा, अयनेष्वित्यादिना भीष्ममेव स्तुवतस्तस्य राज्ञो भयनिवर्तकं हर्षं बुद्धिगतमुल्लासविशेषं स्वविजयसूचकं जनयन्नुच्चैर्महान्तं सिंहनादं विनद्य कृत्वा । यद्वा सिंहनादमिति णमुलन्तम् । अतो रैपोषं पुष्यतीतिवत्तस्यैव धातोः पुनः प्रयोगः । शङ्खं दध्मौ वादितवान् । कुरुवृद्धत्वादाचार्यदुर्योधनयोरभिप्रायपरिज्ञानं पितामहत्वादनुपेक्षणं, नत्वाचार्यवदुपेक्षणं, प्रतापवत्त्वादुच्चैः सिंहनादपूर्वकशङ्खवादनं परेषां भयोत्पादनाय । अत्र सिंहनादशङ्खवाद्ययोर्हर्षजनकत्वेन पूर्वापरकालत्वेऽप्यभिचरन्यजेतेतिवज्जनयन्निति शताऽवश्यंभावित्वरूपवर्तमानत्वे व्याख्यातव्यः ॥ १२ ॥ ततो भीष्मस्य सेनापतेः प्रवृत्त्यनन्तरं पणवा आनका गोमुखाश्च वाद्यविशेषाः सहसा तत्क्षणमेवाभ्यहन्यन्त वादिताः । कर्मकर्तरि प्रयोगः । स शब्दस्तुमुलो महानासीत्तथापि न पाण्डवानां क्षोभो जात इत्यभिप्रायः ॥ १३ ॥ अन्येषामपि रथस्थत्वे स्थितएवासाधारण्येन रथोत्कर्षकथनार्थं ततः श्वेतैर्हयैर्युक्त इत्यादिना रथस्थत्वक-

५ भाष्योत्कर्षदीपिका ।

दृष्ट्वा खिन्नं स्वस्मिन्नतिभक्तिमन्तं दुर्योधनं चालक्ष्य भीष्मस्तस्य हर्षोत्पादने प्रवृत्त इत्याह—**तस्येति** । दुर्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं सिंहनादशङ्खशब्दकरणद्वारकं सम्यगुत्पादयंस्तदीयखेदापनयार्थमुच्चैः सिंहनादं विनद्य कृत्वा शङ्खं दध्मौ आपूरितवान् । कुरुवृद्धः पितामहः कुरुवृद्धत्वात् पितामहत्वात् तदुपजीवितया तद्वशत्वाच्च भीष्मस्योक्तार्थे प्रवृत्तिरुचितैवेति भावः । असामर्थ्यं वारयति—**प्रतापवानिति** । कुरुवृद्धत्वादाचार्यदुर्योधनयोरभिप्रायपरिज्ञातं पितामहत्वादनुपेक्षणं नत्वाचार्यवदुपेक्षणमिति केचित्[१] ॥ १२ ॥ **तत इति** । दुर्योधनाभिप्रायानुरोधिभीष्मप्रवृत्त्यनन्तरं शङ्खादयो वाद्यविशेषा भीष्मानुसारिभिः सहसैव झटित्यभ्यहन्यन्ताभिहता वादिताः । स शब्दस्तुमुलो महाञ्जातः ॥ १३ ॥ स शब्दः परेषां वीररसोद्भावको जातो नतु भयजनक इत्याशयेन

६ श्रीधरीव्याख्या ।

तमिति भावः ॥ ११ ॥ तदेवं बहुमानयुक्तं राज्ञो दुर्योधनस्य वाक्यं श्रुत्वा भीष्मः किं कृतवांस्तदाह—**तस्येति** । तस्य राज्ञः हर्षं संजनयन् कुर्वन् पितामहो भीष्म उच्चैर्महान्तं सिंहनादं कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥ तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालक्ष्य सर्वतो युद्धोत्सवः प्रवृत्त इत्याह—**तत इति** । पणवा आनकाः गोमुखाश्च वाद्यविशेषाः । सहसैव तत्क्षणमेवाभ्यहन्यन्त वादिताः । स च शङ्खादिशब्दस्तुमुलो महानभवत् ॥ १३ ॥ ततः पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह—**तत इति पञ्चभिः** । ततः

१ मधुसूदनः ।

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥**
**अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।**
**नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥**
**काश्यश्च परमेष्वासः शिखण्डी च महारथः ।**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**

२ आनन्दगिरिव्याख्या ।

परिसरवर्तिनौ केशवार्जुनौ श्वेतैर्हयैरतिबलपराक्रमैर्युक्ते महत्यप्रधृष्ये रथे व्यवस्थितावप्राकृतौ शङ्खौ पूरितवन्ताविलाह—**ततः श्वेतैर्हयैरिति** ॥ १४ ॥ तयोः शङ्खयोर्दिव्यत्वमेवावेदयति—**पाञ्चजन्यमिति** । केशवार्जुनयोर्युद्धाभिमुख्यं दृष्ट्वा संहृष्टः सारस्येन समररसिको भीमसेनोऽपि युद्धाभिमुखोऽभूदिलाह—**पौण्ड्रमिति** ॥ १५ ॥ एतेषामीदृशीं प्रवृत्तिं प्रतीत्य परिपालनावकाशमासाद्य राज्ञो युधिष्ठिरस्यापि प्रवृत्तिं दर्शयति—**अनन्तेति** । ज्यायसां भ्रातॄणामनुसरणमावश्यकमिति मत्वा तयोर्यवीयसोर्भ्रात्रोरपि प्रवृत्तिमाह—**नकुल इति** ॥ १६ ॥ अन्येषामपि तत्पक्षीयाणां राज्ञामैकमत्यं विज्ञापयन् धृतराष्ट्रस्य दुराशां संजयो व्युदस्यति—**काश्यश्चेत्यादिना** ॥ १७ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शतृप्रत्ययः । हर्षजननार्थमित्यर्थः ॥ १२ ॥ अभ्यहन्यन्त अभिहताः । कर्मकर्तरिप्रयोगः ॥ १३ ॥ १४ ॥ १५ ॥

४ मधुसूदनीव्याख्या ।

थनम् । तेनाग्निदत्ते दुष्प्रधृष्ये रथे स्थितौ । सर्वथा जेतुमशक्यावित्यर्थः । पाञ्चजन्यो देवदत्तः पौण्ड्रोऽनन्तविजयः सुघोषो मणिपुष्पकश्चेति शङ्खनामकथनम्, परसैन्ये स्वस्वनामभिः प्रसिद्धा एतावन्तः शङ्खाः भवत्सैन्ये तु नैकोऽपि स्वनामप्रसिद्धः शङ्खोऽस्तीति परेषामुत्कर्षातिशयकथनार्थम् । सर्वेन्द्रियप्रेरकत्वेन सर्वान्तर्यामी सहायः पाण्डवानामिति कथयितुं हृषीकेशपदम् । दिग्विजये सर्वान्राज्ञो जित्वा धनमाहृतवानिति सर्वथैवायमजेय इति कथयितुं धनंजयपदम् । भीमं हिडिम्बवधादिरूपं कर्म यस्य तादृशः वृकोदरत्वेन बह्वन्नपाकादतिबलिष्ठो भीमसेन इति कथितम् । कुन्तीपुत्र इति कुन्त्या महता तपसा धर्ममाराध्य लब्धः, स्वयं च राजसूययाजित्वेन मुख्यो राजा, युधि चायमेव जयभागित्वेन स्थिरो नत्वेतद्विपक्षाः स्थिरा भविष्यन्तीति युधिष्ठिरपदेन सूचितम् । नकुलः सुघोषं सहदेवो मणिपुष्पकं दध्मावित्यनुषज्यते ॥ १६ ॥ परमेष्वासः काश्यो महा-

५ भाष्योत्कर्षदीपिका ।

तेषां शङ्खपूरणे प्रवृत्तिमाह—**तत इति** । तुमुलशब्दानन्तरं श्वेतैर्हयैः शुक्लवर्णैरश्वैरतिबलपराक्रमैर्युक्तेऽग्निना दत्ते महत्युत्तमे रथे स्थितौ नतु भयप्रचलितौ माधवो लक्ष्मीपतिः पाण्डवोऽर्जुनश्चैव दिव्यावप्राकृतौ शङ्खौ प्रदध्मतुः पूरितवन्तौ । माधव इति शङ्खशब्देनैव तव पुत्रेभ्यो राज्यलक्ष्मीमाहृतवानिति सूचनार्थम् । पाण्डव इति तदीयराज्यं तस्यैव भविष्यतीति ॥ १४ ॥ हृषीकेश इन्द्रियेश इति पदं पाण्डवानां पाण्यादीन्द्रियेभ्यो बलप्रदः, परेषां तु तेभ्यस्तदप्रदः प्रत्युत हारक इति सूचनार्थम् । दिग्विजये गोग्रहे च राज्ञो भीष्मादींश्च जित्वा धनं गोधनं चाहृतवानतः सर्वैरप्ययमजेय इति कथयितुं धनंजयपदम् । माधवार्जुनयोः शङ्खशब्दं श्रुत्वा संहृष्टो युद्धरसिको भीमसेनोऽपि शङ्खं वादितवानित्याह—**पौण्ड्रमिति** । अतिरौद्रे दुःशासनरक्तपानादिकर्मणि समर्थस्तेन पीतं च रक्तमपि तदुदरस्थवृकाग्निना जीर्णं भविष्यतीति भीमकर्मा वृकोदर इति पदाभ्यां सूचितम् । भीमं हिडिम्बवधादिरूपं कर्म यस्य तादृशो वृकोदरत्वेन बह्वन्नपाकादतिबलिष्ठ इति कथितमितिकेचित्[1] ॥ १५ ॥ एतेषां प्रवृत्तिमनुमोदयन् युधिष्ठिरोऽपि शङ्खपूरणे प्रवृत्त इत्याह—**अनन्तविजयमिति** । शत्रूञ्जित्वा निष्कण्टकराज्यलाभस्तस्यैव भविष्यतीति द्योतनार्थं राजेति पदम् । कुन्त्या दुःखं राज्यलाभेनापाकरिष्यतीति कुन्तीपुत्रत्वेन ध्वनितम् । युद्धे सर्वाञ्जित्वायमेव स्थिरो भविष्यतीति सूचनाय युधिष्ठिर इति । कुन्तीपुत्रः कुन्त्या महता तपसा धर्ममाराध्य लब्धः । स्वयं राजसूययाजित्वेन मुख्यो राजेति भाव इति केचित्[2] । ज्येष्ठभ्रातॄणां मार्गं नकुलसहदेवावनुसृतवन्तावित्याह—**नकुल इति** । नकुलः सुघोषं सहदेवो मणिपुष्पकं दध्मावित्यनुषज्यते । शङ्खतच्छब्दकर्तृनामकीर्तनेन परेषामुत्कर्षः सूचितः ॥ १६ ॥ अन्येषामपि तत्पक्षीयाणां सर्वेषामैकमत्यं बोधयंस्तेषां प्रवृत्तिमाह—**काश्यश्चेत्यादिना** । काश्यः

६ श्रीधरीव्याख्या ।

कौरवसैन्यवाद्यकोलाहलानन्तरं स्यन्दने रथे स्थितौ सन्तौ कृष्णार्जुनौ दिव्यौ शङ्खौ प्रकर्षेण दध्मतुर्वादयामासतुः ॥ १४ ॥ तदेव विभागेन दर्शयन्नाह—**पाञ्चजन्यमिति** । पाञ्चजन्यादीनि श्रीकृष्णादिशङ्खानां नामानि । भीमं घोरं कर्म यस्य सः वृकवदुदरं यस्य स वृकोदरो महाशङ्खं पौण्ड्रं दध्माविति ॥ १५ ॥ **अनन्तजयमिति** । नकुलः सुघोषं नाम शङ्खं दध्मौ । सहदेवो मणिपुष्पकं नाम ॥ १६ ॥ **काश्य-**

[1] मधुसूदनः. [2] मधुसूदनः.

**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ १८ ॥**
**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**
**अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।**
**प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**

२ आनन्दगिरिव्याख्या ।

**द्रुपद इति ।** परमेष्वासादिविशेषणचतुष्टयं प्रत्येकं संबध्यते ॥ १८ ॥ तैस्तै राजभिः शङ्खानापूरयद्भिरापादितो महान्घोषस्तुमुलोऽतिभैरवो नभश्चान्तरिक्षं पृथिवीं च भुवनं लोकत्रयं सर्वमेव विशेषेणानुक्रमेण नादयन्नादयुक्तं कुर्वन् धार्तराष्ट्राणां दुर्योधनादीनां हृदयान्यन्तःकरणानि व्यदारयद्विदारितवान् । युज्यते हि तत्प्रेरितशङ्खघोषश्रवणात्रैलोक्याक्रोशे तमुपशृण्वतां तेषां हृदयेषु दोधूयमानत्वम् । तदाह—**स घोष इति** ॥ १९ ॥ दुर्योधनादीनां धार्तराष्ट्राणामेवं भयप्राप्तिं प्रदर्श्य पार्थादीनां पाण्डवानां तद्वैपरीत्यमिदानीमुदाहरति—**अथेत्यादिना ।** भीतिप्रत्युपस्थितेरनन्तरं पलायने प्राप्तेऽपि वैपरीत्याद्व्यवस्थितानप्रचलितानेव परान्प्रत्यक्षेणोपलभ्य हनूमन्तं वानरवरं ध्वजलक्षणत्वेनादायावस्थितोऽर्जुनो भगवन्तमाहेति संबन्धः । किमाहेत्यपेक्षायामिदं वक्ष्यमाणं हेतुमद्वचनमित्याह—**वाक्यमिदमिति ।** कस्यामवस्थायामिदमुक्तवानिति तत्राह—**प्रवृत्त इति ।** शस्त्राणामिषुप्रासप्रभृतीनां संपातः समुदायस्तस्मिन्प्रवृत्ते । प्रयोगाभिमुखे सतीति यावत् । किं कृत्वा भगवन्तं प्रत्युक्तवानिति तदाह—**धनुरिति ।** महीपतिशब्देन राजा

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ १७ ॥ १८ ॥ १९ ॥ व्यवस्थितान् भयोद्विग्नतया वैषम्येणावस्थितान् । कपिध्वजपाण्डवपदाभ्यां भीषणध्वजत्वं

४ मधुसूदनीव्याख्या ।

धनुर्धरः काशिराजः । न पराजितः पारिजातहरणबाणयुद्धादिमहासंग्रामेषु एतादृशः सात्यकिः । हे पृथिवीपते धृतराष्ट्र, स्थिरो भूत्वा शृण्वित्यभिप्रायः । सुगममन्यत् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ धार्तराष्ट्राणां सैन्ये शङ्खादिध्वनिरतितुमुलोऽपि न पाण्डवानां क्षोभकोऽभूत्, पाण्डवानां सैन्ये जातस्तु स शङ्खघोषो धार्तराष्ट्राणां धृतराष्ट्रस्य तव संबन्धिनां सर्वेषां भीष्मद्रोणादीनामपि हृदयानि व्यदारयत् । हृदयविदारणतुल्यां व्यथां जनितवानित्यर्थः । यतस्तुमुलस्तीव्रः । नभश्च पृथिवीं च प्रतिध्वनिभिरापूरयन् ॥ १९ ॥ धार्तराष्ट्राणां भयप्राप्तिं प्रदर्श्य पाण्डवानां तद्वैपरीत्यमुदाहरति—**अथेत्यादिना ।** भीतिप्रत्युपस्थितेरनन्तरं पलायने प्राप्तेऽपि तद्विरुद्धतया युद्धोद्योगेनावस्थितानेव परान्प्रत्यक्षेणोपलभ्य तदा शस्त्रसंपाते प्रवर्तमाने सति । वर्तमाने क्तः । कपिध्वजः पाण्डवो हनूमता महावीरेण ध्वजरूपतयानुगृहीतोऽर्जुनः सर्वथा भयशून्य-

५ भाष्योत्कर्षदीपिका ।

काशिराजः परमेष्वासः परमधनुर्धरः । सात्यकिश्चापराजितः पराजयमप्राप्तः । शिखण्डी च महारथः ॥ १७ ॥ सौभद्रोऽभिमन्युश्च महाबाहुः । परमेष्वासादिविशेषणचतुष्टयं प्रत्येकं संबध्यत इत्येके । पृथिवीपतित्वेन पृथिवीवद्दुःखं सोढुं योग्योऽसीति सूचितम् । पृथिवीपते धृतराष्ट्र, स्थिरो भूत्वा शृण्वित्यभिप्राय इति केचित् ॥ १८ ॥ दुर्योधनादीनां त्वदीयानां शङ्खादिशब्दैः परेषां भयं नोत्पन्नं तेषां तु तैस्त्वदीयानां अत्यन्तं तदुत्पन्नमित्याशयेनाह—**स घोष इति ।** तुमुलः तीव्रः शब्दः धार्तराष्ट्राणां हृदयानि व्यदारयद्विदारणतुल्यां व्यथामजनयत् । युक्तं चैतदित्याशयेनाह—**नभ इति ।** नभश्च पृथिवीं चैव व्यनुनादयन्प्रतिशब्देनापूरयन् ॥ १९ ॥ अथ तुमुलशब्देन व्यथाप्राप्त्यनन्तरमपि व्यवस्थितान्नतु पलायितान्धृतराष्ट्रसंबन्धिनो दृष्ट्वा प्रत्यक्षेणोपलभ्य प्रवृत्ते शस्त्रसंपाते शस्त्राणां संपातः समुदायः तस्मिन्प्रवृत्ते प्रयोगाभिमुखे सति पाण्डवो धनुरुद्यम्य गाण्डीवं धनुरुद्यतं कृत्वा हृषीकेशमुवाचेत्यन्वयः । पाण्डोरतिवीरस्य महीपतेः पुत्रत्वात्स्वयमतिशूरः कपिर्वानरो हनूमान् सीतात्मिकां लक्ष्मीं भगवते रामचन्द्राय प्रापयिता । शत्रुपरा-

६ श्रीधरीव्याख्या ।

श्चेति । काश्यः काशिराजः । कथंभूतः । परमः श्रेष्ठ इष्वासो धनुर्यस्य सः ॥ १७ ॥ **द्रुपद इति ।** हे पृथिवीपते हे धृतराष्ट्र ॥ १८ ॥ स च शङ्खानां नादस्त्वदीयानां महाभयं जनयामासेत्याह—**स घोष इति ।** धार्तराष्ट्राणां त्वदीयानां हृदयानि विदारितवान् । किं कुर्वन् । नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥ तस्मिन्समये श्रीकृष्णमर्जुनो विज्ञापयामासेत्याह—**अथेति** चतुर्भिः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

क्रियमाणं युद्धे वध्यहननादि तदवश्यं पातककारीति पूर्वपक्षाभिप्रायः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

१ भाष्यटीकाकृतः. २ मधुसूदनः.

**हृषीकेशं तदा वाक्यमिदमाह महीपते ।**
**अर्जुन उवाच ।**
**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**
**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

२ आनन्दगिरिव्याख्या ।

प्रज्ञाचक्षुः संजयेन संबोध्यते ॥ २० ॥ तदेव गाण्डीवधन्वनो वाक्यमनुक्रामति—**सेनयोरिति** । उभयोरपि सेनयोः संनिहितयोर्मध्ये मदीयं रथं स्थापयेत्यर्जुनेन सारथ्ये सर्वेश्वरो नियुज्यते । किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगमनुतिष्ठति । युक्तं हि भगवतो भक्तपारवश्यम् । अच्युतेतिसंबोधनतया भगवतः स्वरूपं न कदाचिदपि प्रच्युतिं प्राप्नोतीत्युच्यते ॥ २१ ॥ मध्ये रथं स्थापयेत्युक्तं तदेव रथस्थापनस्थानं निर्धारयति—**यावदिति** । एतान्प्रतिपक्षे प्रतिष्ठितान्भीष्मद्रोणादीनस्माभिः सार्धं योद्धुमपेक्षावतो यावद्गत्वा निरीक्षितुमहं क्षमः स्यां तावति प्रदेशे रथस्य स्थापनं कर्तव्यमित्यर्थः । किंच प्रवृत्ते युद्धप्रारम्भे बहवो राजानोऽमुष्यां युद्धभूमावुपलभ्यन्ते तेषां मध्ये कैः सह मया योद्धव्यं, नहि क्वचिदपि मम गतिप्रतिहतिरस्तीत्याह—**कैर्मयेति** ॥ २२ ॥ प्रतियोगिनामभावे कथं तव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शौर्यं च प्रदृश्यते ॥ २० ॥ हृषीकेशं सर्वेषामिन्द्रियाणां प्रवर्तकत्वेन परचित्ताभिज्ञम् । वाक्यमेवाह नतु कंचिदर्थमिति द्योतनार्थं वाक्यपदम् । वाक्यमेवाह—**सेनयोरिति** ॥ २१ ॥ रथस्थापनप्रयोजनमाह—**यावदिति** । कैः सह मया योद्धव्यं मया सह वा कैर्योद्धव्यमित्युभयत्र सहशब्दसंबन्धः । के वा मां जेतुं यतन्ते मया वा के जेतव्या इत्यालो-

४ मधुसूदनीव्याख्या ।

त्वेन युद्धाय गाण्डीवं धनुरुद्यम्य हृषीकेशमिन्द्रियप्रवर्तकत्वेन सर्वान्तःकरणवृत्तिज्ञं श्रीकृष्णमिदं वक्ष्यमाणं वाक्यमाहोक्तवान् नत्वविमृश्यकारितया स्वयमेव यत्किंचित्कृतवानिति परेषां विमृश्यकारित्वेन नीतिधर्मयोः कौशलं वदन्नविमृश्यकारितया परेषां राज्यं गृहीतवानसीति नीतिधर्मयोरभावात्तव जयो नास्तीति महीपते इति संबोधनेन सूचयति । तदेवार्जुनवाक्यमवतारयति—सेनयोरुभयोः स्वपक्षप्रतिपक्षभूतयोः संनिहितयोर्मध्ये मम रथं स्थापय स्थिरीकुर्विति सर्वेश्वरो नियुज्यतेऽर्जुनेन । किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगमनुतिष्ठतीति ध्रुवो जयः पाण्डवानामिति । नन्वेवं रथं स्थापयन्तं मामेते शत्रवो रथाच्च्यावयिष्यन्तीति भगवदाशङ्कामाशङ्क्याह—**अच्युतेति** । देशकालवस्तुष्वच्युतं त्वां को वा च्यावयितुमर्हतीति भावः । एतेन सर्वदा निर्विकारत्वेन नियोगनिमित्तः कोपोऽपि परिहृतः ॥ २० ॥ २१ ॥ मध्ये रथस्थापनप्रयोजनमाह—योद्धुकामान् नत्वस्माभिः सह संधिकामान् । अवस्थितान् नतु भयात्प्रचलितानेतान्भीष्मद्रोणादीन्यावद्गत्वाहं निरीक्षितुं क्षमः स्यां तावत्प्रदेशे रथं स्थापयेत्यर्थः । यावदिति कालपरं वा । ननु त्वं योद्धा नतु युद्धप्रेक्षकोऽतस्तव किमेषां दर्शनेनेत्यत्राह—**कैरिति** । अस्मिन्रणसमुद्यमे बन्धूनामेव परस्परं युद्धोद्योगे मया कैः सह योद्धव्यं मत्कर्तृकयुद्धप्रतियोगिनः के कैर्मया सह योद्धव्यं किंकर्तृकयुद्धप्रतियोग्यहमिति च महदिदं कौतुकमेतज्ज्ञानमेव मध्ये

५ भाष्योत्कर्षदीपिका ।

जयं संपाद्य पाण्डवेभ्यो राज्यलक्ष्मीप्रदानाय यस्य ध्वजे स्थित इति भावः ॥ २० ॥ वाचः प्रवर्तकेन तेनैव प्रेरित आहेति हृषीकेशपदेन सूचितम् । हृषीकेशं इन्द्रियप्रवर्तकत्वेन सर्वान्तःकरणवृत्तिज्ञमिति केचित्[1] । तथाच निर्बलैर्बुद्धिहीनैर्भवद्भिः कपटेन गृहीतं महीपतित्वं पाण्डवानामतिशूराणां भगवता हनूमता चानुगृहीतानां बुद्धिमतामेव भविष्यतीति भवता तत्प्राप्तिदुराशा त्याज्येति ध्वनयन् संबोधयति—**महीपते इति** । वाक्यमेवोदाहरति—**सेनयोरिति** । उभयोः सेनयोर्मध्ये मे मम रथं स्थापय । ननु मत्स्थापितं रथं ते चालयिष्यन्तीत्यत आह—**अच्युतेति** । रथमप्यचलं कर्तुं समर्थोऽसीत्यभिप्रायः । तथाच परमेश्वरोऽपि यस्य सारथ्ये स्थितः प्राकृतसारथिवन्नियुज्यते तस्य विजये को विस्मय इति भावः । युक्तं च भगवतो भक्तपारवश्यं कोपश्च न युक्तः । यतो भगवतः स्वरूपं न कदाचिदपि प्रच्युतिं प्राप्नोतीत्यच्युतेति संबोधनाशय ईत्येके[2] । नन्वेवं रथं स्थापयन्तं मामेते शत्रवो रथाच्च्यावयिष्यन्तीति भगवदाशङ्कामाशङ्क्याह—**अच्युतेति** । देशकालवस्तुष्वच्युतं त्वां को वा च्यावयितुमर्हतीति भाव इति केचित्[3] ॥ २१ ॥ सेनयोरुभयोर्मध्येऽपि क्व स्थापनीय इत्यपेक्षायामाह—**यावदिति** । एतान्योद्धुकामानवस्थितान्यावदस्मिन्स्थाने स्थित्वाहं निरीक्षे द्रष्टुं समर्थः स्यां तस्मिन्स्थाने रथं स्थापयेत्यर्थः । यावदिति कालपरं वा । निरीक्षणप्रयोजनमाह—**कैरिति** । अस्मिन्रणसमुद्यमे युद्धोद्योगे बहूनां

६ श्रीधरीव्याख्या ।

व्यवस्थितान्युद्धोद्योगेन स्थितान् । कपिध्वजोऽर्जुनः ॥ २० ॥ **हृषीकेशमिति** । तदेव वाक्यमाह—**सेनयोरिति** ॥ २१ ॥ **यावदेतानिति** ।

१ नीलकण्ठः. २ भाष्यटीकाकृतः. ३ मधुसूदनः.

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥
संजय उवाच । एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥

२ आनन्दगिरिव्याख्या ।

युद्धौत्सुक्यं फलवद्भवेदिति तत्राह—**योत्स्यमानानिति** । ये केचिदेते राजानो नानादेशेभ्योऽत्र कुरुक्षेत्रे समवेतास्तानहं योत्स्यमानान्परिगृहीतप्रहरणोपायानतितरां संग्रामसमुत्सुकानुपलभे । तेन प्रतियोगिनां बाहुल्यमित्यर्थः । तेषामस्माभिः सह पूर्ववैराभावे कथं प्रतियोगित्वं प्रकल्प्यते तत्राह—**धार्तराष्ट्रस्येति** । धृतराष्ट्रपुत्रस्य दुर्योधनस्य दुर्बुद्धेः स्वरक्षणोपायमप्रतिपद्यमानस्य युद्धाय संरम्भं कुर्वतो युद्धे युद्धभूमौ स्थित्वा प्रियं कर्तुमिच्छवो राजानः समागता दृश्यन्ते, तेन तेषामौपाधिकमस्मत्प्रतियोगित्वमुपपन्नमित्यर्थः ॥ २३ ॥ एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशो युद्धात्तं निवर्तयिष्यतीति धृतराष्ट्रस्य मनीषां दुदूषयिषुः संजयो राजानं प्रत्युक्तवानित्याह—**संजय इति** । भगवतोऽपि भूभारापहारार्थं प्रवृत्तस्यार्जुनाभिप्रायप्रतिपत्तिद्वारेण स्वाभिसन्धिं प्रतिलभमानस्य परोक्तिमनुसृत्य स्वाभिप्रायानुकूलमनुष्ठानमादर्शयति—**एवमिति** ॥ २४ ॥ भीष्मद्रोणादीनामन्येषां च राज्ञामन्तिके रथं स्थापयित्वा भगवान्किं कृतवानिति तदाह—**उवाचेति** । एतानभ्याशे वर्तमानान्कुरून्कुरुवंशप्रसूतान्भवद्भिः सार्धं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चनार्थमित्यर्थः ॥ २२ ॥ योत्स्यमानान् नतु शान्तिकामान् । यतो दुर्बुद्धेः प्रियं चिकीर्षन्ति तेन तेषामपि तत्तुल्यत्वं सूचितम् ॥ २३ ॥ रथोत्तमं स्थापयित्वा उवाचेति द्वयोः संबन्धः ॥ २४ ॥ महीक्षितां पृथिवीश्वराणाम् ॥ २५ ॥

४ मधुसूदनीव्याख्या ।

रथस्थापनप्रयोजनमित्यर्थः ॥ २२ ॥ ननु बन्धव एव एते परस्परं संधिं कारयिष्यन्तीति कुतो युद्धमित्याशङ्क्याह—य एते भीष्मद्रोणादयो धार्तराष्ट्रस्य दुर्योधनस्य दुर्बुद्धेः स्वरक्षणोपायमजानतः प्रियचिकीर्षवो युद्धे नतु दुर्बुद्ध्यपनयनादौ तान् योत्स्यमानानहमवेक्षे उपलभे नतु सन्धिकामान् । अतो युद्धाय तत्प्रतियोग्यवलोकनमुचितमेवेति भावः ॥ २३ ॥ एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशो युद्धात्तं व्यावर्तयिष्यतीति धृतराष्ट्राभिप्रायमालक्ष्य तन्निराचिकीर्षुः संजयो धृतराष्ट्रं प्रत्युक्तवानित्याह वैशम्पायनः । हे भारत धृतराष्ट्र, भरतवंशमर्यादामनुसंधायापि द्रोहं परित्यज ज्ञातीनामिति संबोधनाभिप्रायः । गुडाकाया निद्राया ईशेन जितनिद्रतया सर्वत्र सावधानेनार्जुनेनैवमुक्तो भगवान् अयं मद्भृत्योऽपि सारथ्ये मां नियोजयतीति दोषमासज्य नाकुप्यत्, नवा तं युद्धाद्व्यवर्तयत्, किंतु सेनयोरुभयोर्मध्ये भीष्मद्रोणप्रमुखतः तयोः प्रमुखे संमुखे सर्वेषां महीक्षितां च संमुखे । आद्यादित्वात्सार्वविभक्तिकस्तसिः । चकारेण समासनिविष्टोऽपि

५ भाष्योत्कर्षदीपिका ।

शूराणां मध्ये कैः सह मया योद्धव्यम् । मया सह च कैर्योद्धव्यमित्यालोचनार्थमित्यर्थः ॥ २२ ॥ योद्धुकामानवस्थितानित्युक्तं विवृणोति—**योत्स्यमानानिति** । योत्स्यमानानहमवेक्षे उपलभे नतु संधिकामान्, नापि धार्तराष्ट्रस्य दुर्बुद्धेर्बुद्धिनिवृत्त्यर्थमवस्थितान् प्रत्युत तस्य प्रियचिकीर्षूनित्याह । य एते योधा अत्र समरभूमौ समागताः दुर्योधनस्य दुष्टबुद्धेः प्रियं कर्तुमिच्छवो नतु समर्था इत्यर्थः । धार्तराष्ट्रस्येत्यनेन धृतराष्ट्रस्यापि दुर्बुद्धित्वं सूचयति ॥ २३ ॥ ततः किं वृत्तमित्यपेक्षायां संजय उवाच—**एवमित्यादि** । यत्तु[1] एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशस्तं युद्धाद्व्यावर्तयिष्यतीति धृतराष्ट्राभिप्रायमालक्ष्य संजय उवाचेति, तदुपेक्ष्यम् । युद्धमेव जातमिति श्रुतवत एवमभिप्रायवर्णनस्यानुचितत्वात् । एवं पूर्वोक्तेन प्रकारेण गुडाकेशेनार्जुनेनोक्तो हृषीकेशो भगवान्वासुदेवः सेनयोरुभयोर्मध्ये भीष्मद्रोणयोः सर्वोत्तमयोः सर्वेषां च महीक्षितां महीपतीनां प्रमुखतः संमुखे रथोत्तमं दिव्यं रथं स्थापयित्वोवा-

६ श्रीधरीव्याख्या ।

ननु त्वं योद्धा न तु युद्धप्रेक्षकस्तत्राह । कैः सह मया योद्धव्यम् ॥ २२ ॥ **योत्स्यमानानिति** । धार्तराष्ट्रस्य दुर्योधनस्य प्रियं कर्तुमिच्छन्तो य इह समागताः तान्यावद्द्रक्ष्यामि तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यन्वयः ॥ २३ ॥ ततः किं प्रवृत्तमित्यपेक्षायां संजय उवाच—**एवमिति** । गुडाका निद्रा तस्या ईशेन जितनिद्रेणार्जुनेनैवमुक्तः सन् हे भारत धृतराष्ट्र, सेनयोर्मध्ये रथानामुत्तमं रथं हृषीकेशः स्थापितवान् ॥ २४ ॥ **भीष्मद्रोणेति** । महीक्षितां पितामहद्रोणराज्ञां च प्रमुखतः संमुखे रथं स्थापयित्वा हे पार्थ,

१ मधुसूदनः.

**तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।**
**आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ।**
**श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥**

२ आनन्दगिरिव्याख्या ।

युद्धार्थं संगतान्पश्य । दृष्ट्वा च यैः सहात्र युयुत्सा तवोपावर्तते तैः साकं युद्धं कुरु । नो खल्वेतेषां शस्त्रास्त्रशिक्षावतां महीक्षितामुपेक्षोपपद्यते, सारथ्ये तु न मनः खेदनीयमित्यर्थः ॥ २५ ॥ एवं स्थिते महानधर्मो हिंसेति विपरीतबुद्ध्या युद्धादुपरिरंसा पार्थस्य संप्रवृत्तेति कथयति—तत्रेत्यादिना । सप्तम्या भगवदभ्यनुज्ञाने समरसमारम्भाय संप्रवृत्ते सतीत्येतदुच्यते । सेनयोरुभयोरपि स्थितान्पार्थोऽपश्यदिति संबन्धः । अथशब्दस्तथाशब्दपर्यायः । श्वशुरा भार्याणां

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पितॄन् पितृव्यादीन् भूरिश्रवःप्रभृतीन् । पितामहान् भीष्मादीन् । मातुलान् शल्यादीन् । भ्रातॄन् दुर्योधनादीन् ।

४ मधुसूदनीव्याख्या ।

प्रमुखतःशब्द आकृष्यते । भीष्मद्रोणयोः पृथक्कीर्तनमतिप्राधान्यसूचनाय । रथोत्तममग्निना दत्तं दिव्यं रथं भगवता स्वयमेव सारथ्येनाधिष्ठिततया च सर्वोत्तमं स्थापयित्वा हृषीकेशः सर्वेषां निगूढाभिप्रायज्ञो भगवानार्जुनस्य शोकमोहावुपस्थिताविति विज्ञाय सोपहासमर्जुनमुवाच । हे पार्थ, पृथायाः स्त्रीस्वभावेन शोकमोहग्रस्ततया तत्संबन्धिनस्तवापि तद्वत्ता समुपस्थितेति सूचयन् हृषीकेशत्वमात्मनो दर्शयति । पृथा मम पितुः स्वसा तस्याः पुत्रोऽसीति संबन्धोल्लेखेन चाश्वासयति । मम सारथ्ये निश्चितो भूत्वा सर्वानपि समवेतान्कुरून्युयुत्सून्पश्य निःशङ्कतयेति दर्शनविध्यभिप्रायः । अहं सारथ्येऽतिसावधानस्त्वं तु सांप्रतमेव रथित्वं त्यक्ष्यसीति किं तव परसेनादर्शनेनेत्यर्जुनस्य धैर्यमापादयितुं पश्येत्येतावत्पर्यन्तं भगवतो वाक्यम्, अन्यथा रथं सेनयोर्मध्ये स्थापयामासेत्येतावन्मात्रं ब्रूयात् ॥ २४ ॥ २५ ॥ तत्र समरसमारम्भार्थं सैन्यदर्शने भगवताभ्यनुज्ञाते सति सेनयोरुभयोरपि स्थितान्पार्थोऽपश्यदित्यन्वयः । अथशब्दस्तथाशब्दपर्यायः । परसेनायां पितॄन्पितृव्यान्भूरिश्रवःप्रभृतीन्, पितामहान्भीष्मसोमदत्तप्रभृतीन्, आचार्यान्द्रोणकृपप्रभृतीन्, मातुलाञ्शल्यशकुनिप्रभृतीन्, भ्रातॄन्दुर्योधनप्रभृतीन्, पुत्रान्लक्ष्मणप्रभृतीन्, पौत्रान्लक्ष्मणादिपुत्रान्, सखीन् अश्वत्थामजयद्रथप्रभृतीन्वयस्यान्, श्वशुरान्भार्याणां जनयितॄन्, सुहृदो मित्राणि कृतवर्मभगदत्तप्रभृतीन् । सुहृद इत्यनेन यावन्तः कृतोपकारा मातामहादयश्च ते द्रष्टव्याः । एवं स्वसेनायामप्युपलक्षणीयम् । एवं स्थिते महानधर्मो हिंसेति विपरीतबुद्ध्या मोहाख्यया शास्त्रविहितत्वेन धर्मत्वमिति ज्ञानप्रतिबन्धकेन च ममकारनिबन्धनेन चित्तवैक्लव्येन शोकमोहाख्येनाभिभूतविवेकस्यार्जुनस्य पूर्वमारब्धाद्युद्धाख्यात्स्वधर्मादुपरिरंसा महा-

५ भाष्योत्कर्षदीपिका ।

चोक्तवान् । पार्थ, एतान्कुरून्भीष्मादीन्समवेतान्युद्धार्थं मिलितान्पश्येति द्वयोरर्थः । तथाच यस्याज्ञामीश्वरोऽप्यङ्गीकरोति तस्यार्जुनस्य माहात्म्यं किं वक्तव्यमिति भावः । हे भारत, भरतवंशोद्भवत्वाच्छोकं मा कुर्वित्याशयः । भरतवंशमर्यादामनुसंधायापि द्रोहं परित्यज ज्ञातीनामिति संबोधनाशय इति केचित्[१] । गुडाकेशेन जिताज्ञाननिद्रेणैवमुक्तो हृषीकेशः सर्वेन्द्रियनियन्ता लोकोद्धाराय स्वस्वरूपभूतस्यार्जुनस्यान्तःकरणे शोकमोहयोराविर्भावयिता सेनयोरुभयोर्मध्ये भीष्मद्रोणयोः सर्वेषां च राज्ञां प्रमुखतः रथोत्तमं स्थापयित्वोवाच । हे पार्थ, लोकोद्धाराय स्त्रीस्वभावौ शोकमोहावङ्गीकुरु । कथमित्यपेक्षायामाह । एतान्मिलितान्कुरून्सर्वान्स्वबान्धवान्पश्य, दृष्ट्वा चैते मदीया एतानहं न हन्मीति निर्विण्णो भवेति हृषीकेशादिपदैस्तात्पर्यार्थः सूचितः । हृषीकेशः सर्वेषां निगूढाभिप्रायज्ञो भगवान् अर्जुनस्य शोकमोहावुपस्थिताविति विज्ञाय सोपहासमर्जुनमुवाच हे पार्थ, पृथायाः स्त्रीस्वभावत्वेन शोकमोहग्रस्ततया तत्संबन्धिनस्तवापि तद्वत्तोपस्थितेति सूचयन् हृषीकेशत्वमात्मनो दर्शयति । पृथा मम पितुः स्वसा तस्याः पुत्रोऽसीति । तत्संबन्धोल्लेखेन चाश्वासयति । मम सारथ्ये निश्चितो भूत्वा सर्वानपि समवेतान्कुरून्युयुत्सून्पश्य निःशङ्कतयेति दर्शनविध्यभिप्रायः । अहं सारथ्येऽतिसावधानस्त्वं तु सांप्रतमेव रथित्वं त्यक्ष्यसीति किं तव परसेनादर्शनेनेत्यर्जुनस्य धैर्यमापादयितुं पश्येत्येतावतपर्यन्तं भगवतो वाक्यम् । अन्यथा रथं सेनयोर्मध्ये स्थापयामासेत्येतावदेव ब्रूयादिति केचित्[२] ॥ २४ ॥ २५ ॥ एवं स्वसारथ्ये दृढतया स्थितेन स्वोक्तकारिणा भगवतोक्तोऽर्जुनस्तथैव कृतवानित्याह—**तत्रेति** । तत्र समवेतान्कुरून्पश्येति भगवदभ्यनुज्ञाने संवृत्ते सति तत्र सेनयोरुभयोरपि स्थितान्पार्थोऽपश्यदिति वा तत्रपदान्वयः । एतान्समवेतान्कुरून्दृष्ट्वा स्त्रीस्वभावौ शोकमोहावङ्गीकुर्विति भगवदभिप्रायमर्जुनो ज्ञात्वा तानपश्यदिति सूचयितुं पार्थ इत्युक्तम् । पितॄन्पितृव्यान्भूरिश्रवआदीन् । अथशब्दस्तथाशब्दार्थे । तथा पितामहान्भीष्मप्रमुखान्, आचार्यान्द्रोणादीन्, मातुलान् शल्यप्रभृतीन्, भ्रातॄन् भीमदुर्योधनाद्यान्, पुत्रानभिमन्युलक्ष्मणप्रभृतीन्, पौत्रान् लक्ष्मणादि-

६ श्रीधरीव्याख्या ।

एतान्कुरून्पश्येत्युवाच ॥ २५ ॥ ततः किं प्रवृत्तमित्यत आह । पितॄन् । पितृव्यादीनित्यर्थः । पुत्रान्पौत्रानिति । दुर्योधनादीनां ये पुत्राः

१ मधुसूदनः. २ मधुसूदनः.

**तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ।**
**कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥**
**अर्जुन उवाच ।**
**दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समवस्थितम् ।**
**सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥ २८ ॥**
**वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।**
**गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ॥ २९ ॥**

२ आनन्दगिरिव्याख्या ।

जनयितारः । सुहृदो मित्राणि कृतवर्मप्रभृतयः ॥ २६ ॥ सेनाद्वये व्यवस्थितान्यथोक्तान्पितृपितामहादीनालोच्य परमकृपापरवशः सन्नर्जुनो भगवन्तमुक्तवानित्याह—**तानिति** । विषीदन् । यथोक्तानां पित्रादीनां हिंसासंरम्भनिबन्धनं विषादमुपतापं कुर्वन्नित्यर्थः ॥ २७ ॥ तदेवेदंशब्दवाच्यं वचनमुदाहरति—**दृष्ट्वेति** । आत्मीयं बन्धुवर्गं युद्धेच्छया युद्धभूमावुपस्थितमुपलभ्य शोकप्रवृत्तिं दर्शयति—**सीदन्तीति** । देवांशस्यैवार्जुनस्यानात्मविदः स्वपरदेहेष्वात्मानात्मीयाभिमानवतस्तत्प्रियस्य युद्धारम्भे तन्मृत्युप्रसङ्गदर्शिनः शोको महानासीदित्यर्थः ॥ २८ ॥ अङ्गेषु व्यथा मुखे परिशोषश्चेत्युभयं शोकलिङ्गमुक्तम्, संप्रति वेपथुप्रभृतीनि भीतिलिङ्गान्युपन्यस्यति—**वेपथुश्चेति** । रोमहर्षो रोम्णां

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पुत्रान् लक्ष्मणादीन् । पौत्रान् लक्ष्मणादिपुत्रान् । सखीन् अश्वत्थामादीन् । सुहृदः कृतवर्मादीन् ॥ २६ ॥ कृपया स्नेहेन ॥ २७ ॥ सच स्वजनमिति विशेषणेन प्रदर्श्यते । सीदन्ति निश्चेष्टानि भवन्ति ॥ २८ ॥ रोमहर्षो रोमाञ्चः

४ मधुसूदनीव्याख्या ।

नर्थपर्यवसायिनी प्रवृत्तेति दर्शयति—कौन्तेय इति स्त्रीप्रभवत्वकीर्तनं पार्थवत्तादात्विकमूढतामपेक्ष्य कृपया कर्त्र्या स्वव्यापारेणैवाविष्टो व्याप्तः नतु कृपां केनचिद्व्यापारेणाविष्ट इति स्वतःसिद्धैवास्य कृपेति सूच्यते । एतत्प्रकटीकरणाय परयेति विशेषणम् । अपरयेति वा छेदः । स्वसैन्ये पुरापि कृपाभूदेव तस्मिन्समये तु कौरवसैन्येऽप्यपरा कृपाभूदित्यर्थः । विषीदन्विषादमुपतापं प्राप्नुवन्नब्रवीदित्युक्तिविषादयोः समकालतां वदन् सगद्गदकण्ठताश्रुपातादि विषादकार्यमुक्तिकाले द्योतयति ॥ २६ ॥ ॥ २७ ॥ तदेव भगवन्तं प्रत्यर्जुनवाक्यमवतारयति संजयः-अर्जुन उवाचेत्यादिना 'एवमुक्त्वार्जुनः संख्ये' इत्यतः प्राक्तनेन ग्रन्थेन । तत्र स्वधर्मप्रवृत्तिकारणीभूततत्त्वज्ञानप्रतिबन्धकः स्वपरदेहे आत्मात्मीयाभिमानवतोऽनात्मविदोऽर्जुनस्य युद्धेन स्वपरदेहविनाशप्रसङ्गदर्शिनः शोको महानासीदिति तल्लिङ्गकथनेन दर्शयति त्रिभिः श्लोकैः । इमं स्वजनमात्मीयं बन्धुवर्गं युद्धेच्छुं युद्धभूमौ चोपस्थितं दृष्ट्वा स्थितस्य मम । पश्यतो ममेत्यर्थः । अङ्गानि व्यथन्ते मुखं च परिशुष्यतीति श्रमादिनिमित्तशोकापेक्षयातिशयकथनाय सर्वतोभाववाचिपरिशब्दप्रयोगः ॥ २८ ॥ वेपथुः कम्पः । रोमहर्षः पुलकितत्वम् । गाण्डीवभ्रंशेनाधैर्यलक्षणं दौर्बल्यम् । त्वक्परिदाहेन चान्तःसन्तापो दर्शितः ॥ २९ ॥ अवस्थातुं शरीरं धारयितुं च न शक्नोमीत्यनेन मूर्च्छा सूच्यते ।

५ भाष्योत्कर्षदीपिका ।

पुत्रान्, सखीनश्वत्थामादिकान् ॥२८॥ श्वशुरान्द्रुपदादीन्, सुहृदः सात्यकिकृतवर्मप्रभृतीन् । ततः किं कृतवानित्यपेक्षायामाह—**तानिति** । तान्पितृपितामहादीन्बन्धून्सेनयोरुभयोर्मध्ये युयुत्सूनवस्थितान्समीक्ष्य सम्यग्दृष्ट्वेदमब्रवीदित्यन्वयः । भगवदाज्ञया बन्धून्दृष्ट्वा शोकमोहावर्जुनेन गृहीताविति कौन्तेयपदेन सूचितम् । परया कृपया स्नेहजन्यकरुणयाविष्टो व्याप्तः सन्नहो एते पित्रादयो बन्धवो मरिष्यन्तीति विषादमुपतापं कुर्वन्निदं वक्ष्यमाणमब्रवीदुक्तवानित्यर्थः ॥ २७ ॥ तदेवेदंशब्दवाच्यं वचनमुदाहरति—**दृष्ट्वेति** । इमं प्रत्यक्षेणोपलभ्यमानं स्वजनं स्वसंबन्धिवर्गं युयुत्सुं युद्धेच्छुं समुपस्थितं सम्यग्युद्धभूमावुपस्थितं नतु साधारणयुयुत्सया साधारणमागतं दृष्ट्वोपलभ्य सीदन्तीति परेणान्वयः । हे कृष्णेति संबोधयन् यल्लोकोपकाराय मदीयज्ञानापकर्षणं त्वया कृतं तन्मया बुद्धमिति गूढाभिसंधिं सूचयति । आत्मतत्त्वापरिज्ञानकृताहंकारममकारोत्थयोः शोकमोहयोः लिङ्गानि स्वस्मिन्दर्शयति—**सीदन्तीत्यादिना** । मम युयुत्सुं स्वजनं दृष्ट्वा एते मरिष्यन्तीति शोकेनाविष्टस्य व्याकुलचित्तस्य गात्राण्यङ्गानि सीदन्ति शिथिलानि भवन्ति ॥२८॥

६ श्रीधरीव्याख्या ।

पौत्राश्च तानित्यर्थः । सखीन्मित्राणि । सुहृदः कृतोपकारांश्चापश्यत् ॥ २६ ॥ ततः किं कृतवानित्यत आह—**तानिति** । आविष्टो व्याप्तः युक्तः । विषीदन्विशेषेण सीदन्नवसादं ग्लानिं लभमानः ॥ २७ ॥ किमब्रवीदित्यपेक्षायामाह—**दृष्ट्वेममित्यादि** यावदध्यायसमाप्ति । हे कृष्ण, योद्धुमिच्छन्तं पुरतः सम्यगवस्थितमिमं बन्धुजनं दृष्ट्वा मदीयानि गात्राणि करचरणादीनि सीदन्ति विशीर्यन्ते । किंच मुखं परि समंताच्छुष्यति निर्द्रवीभवति ॥ २८ ॥ किंच—**वेपथुश्चेति** । वेपथुः कम्पः । रोमहर्षो रोमाञ्चः । स्रंसते निपतति । परिदह्यते सर्वतः

**न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।**
**निमित्तानि च पश्यामि विपरीतानि केशव ॥ ३० ॥**
**न च श्रेयोऽनु पश्यामि हत्वा स्वजनमाहवे।**
**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च।**

२ आनन्दगिरिव्याख्या।

गात्रेषु पुलकितत्वम् ॥ २९ ॥ किं चाधैर्यमपि संवृत्तमित्याह—**नचेति**। मोहोऽपि महान्भवतीत्याह—**भ्रमतीवेति**। विपरीतनिमित्तप्रतीतेरपि मोहो भवतीत्याह—**निमित्तानीति**। तानि विपरीतानि निमित्तानि यानि वामनेत्रस्फुरणादीनि ॥ ३० ॥ युद्धे स्वजनहिंसया फलानुपलम्भादपि तस्मादुपरिरंसा जायत इत्याह—**न चेति** ॥ ३१ ॥ प्राप्तानां युयुत्सूनां हिंसया विजयो राज्यं सुखानि च लब्धुं शक्यानीति कुतो युद्धादुपरतिरित्याशङ्क्याह—**न काङ्क्ष इति**। किमिति राज्यादिकं सर्वाकाङ्क्षितत्वान्न काङ्क्ष्यते तेन हि पुत्रभ्रात्रादीनां स्वास्थ्यमाधातुं शक्यमित्याशङ्क्याह—

४ मधुसूदनीव्याख्या।

तत्र हेतुः मम मनो भ्रमतीवेति भ्रमणकर्तृसादृश्यं नाम मनसः कश्चिद्विकारविशेषो मूर्च्छायाः पूर्वावस्था। चो हेतौ। यत एवमतो नावस्थातुं शक्नोमीत्यर्थः। पुनरप्यवस्थानासामर्थ्ये कारणमाह—निमित्तानि च सूचकतया आसन्नदुःखस्य विपरीतानि वामनेत्रस्फुरणादीनि पश्याम्यनुभवामि। अतोऽपि नावस्थातुं शक्नोमीत्यर्थः। अहमनात्मवित्त्वेन दुःखित्वाच्छोकनिबन्धनं क्लेशमनुभवामि, त्वं तु सदानन्दरूपत्वाच्छोकासंसर्गीति कृष्णपदेन सूचितम्। अतः स्वजनदर्शने तुल्येऽपि शोकासंसर्गित्वलक्षणाद्विशेषात्त्वं मामशोकं कुर्विति भावः। केशवपदेन च तत्करणसामर्थ्यम्। को ब्रह्मा सृष्टिकर्ता, ईशो रुद्रः संहर्ता, तौ वात्यनुकम्प्यतया गच्छतीति तद्व्युत्पत्तेः। भक्तदुःखकर्षित्वं वा कृष्णपदेनोक्तम् ॥ ३० ॥ केशवपदेन च केश्यादिदुष्टदैत्यनिबर्हणेन सर्वदा भक्तान्पालयसीत्यतो मामपि शोकनिवारणेन पालयिष्यसीति सूचितम्। एवं लिङ्गद्वारेण समीचीनप्रवृत्तिहेतुभूततत्त्वज्ञानप्रतिबन्धकीभूतं शोकमुक्त्वा संप्रति तत्कारितां विपरीतप्रवृत्तिहेतुभूतां विपरीतबुद्धिं दर्शयति—श्रेयः पुरुषार्थं दृष्टमदृष्टं वा बहुविचारणादनु पश्चादपि न पश्यामि। अस्वजनमपि युद्धे हत्वा श्रेयो न पश्यामि। 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥' इत्यादिना हतस्यैव श्रेयोविशेषाभिधानाद्धन्तुस्तु न किंचित्सुकृतम्। एवमस्वजनवधेऽपि श्रेयसोऽभावे स्वजनवधे सुतरां तदभाव इति ज्ञापयितुं स्वजनमित्युक्तम्। एवमनाहववधे श्रेयो नास्तीति सिद्धसाधनवारणाय आहव इत्युक्तम् ॥ ३१ ॥ ननु माभूददृष्टं प्रयोजनं दृष्टप्रयोजनानि तु विजयो राज्यं सुखानि च निर्विवादानीत्यत आह—पूर्वत्र सुखं परतः फलाकाङ्क्षा ह्युपायप्रवृत्तौ कारणम्। अतस्तदाकाङ्क्षाया अभावात्तदुपाये युद्धे भोजनेच्छाविरहिण इव पाकादौ मम

५ भाष्योत्कर्षदीपिका।

वेपथुः कम्पः। रोमहर्षो रोमाञ्चः। हस्ताद्गाण्डीवं स्रंसते पतति। त्वक्चैव परि समन्ताद्दह्यते ॥२९॥ धैर्याभावादवस्थातुं च न शक्नोमि। मे मनो भ्रमतीव च। मम मनो मोहं प्राप्नोतीवेत्यर्थः। विपरीतनिमित्तप्रवृत्तेरपि मोहो भवतीत्याह—**निमित्तानीति**। निमित्तानि च विपरीतानि वामनेत्रस्फुरणादीनि पश्यामि। तथाचास्मन्निमित्तः स्वजननाशो भविष्यति ननु केश्यादिमारणेन भवता यथा स्वजनः पालितः तथा स्वजनरक्षणमिति सूचयन्संबोधयति—**हे केशवेति**। अहमनात्मवित्त्वेन दुःखित्वाच्छोकनिबन्धनं क्लेशमनुभवामि, त्वं तु सदानन्दरूपत्वाच्छोकासंसर्गीति कृष्णपदेन सूचितम्। अतः स्वजनदर्शने तुल्येऽपि शोकासंसर्गित्वलक्षणाद्विशेषात्त्वं मामशोकं कुर्विति भावः। केशवपदेन च तत्करणसामर्थ्यं केशौ ब्रह्मरुद्रौ वात्यनुकम्प्यतया गच्छतीति तद्व्युत्पत्तेः। भक्तदुःखकर्षित्वं वा कृष्णपदेनोक्तम्। केशवपदेन च केश्यादिदुष्टनिबर्हणेन सर्वदा भक्तान्पालयसीत्यतो मामपि शोकनिवारणेन पालयिष्यसीति सूचितमिति केचित्[1] ॥३०॥ इदानीं शोकमोहाविष्टचित्तः स्वधर्मेऽधर्मतां निष्प्रयोजनतां चारोपयन्नाह—**नचेति**। आहवे युद्धभूमौ स्वजनं स्वबन्धुवर्गं हत्वा अनु पश्चाच्छ्रेयो न पश्यामि। अतो निष्फलाया बन्धुहिंसाया अधर्मनिमित्ताया निवृत्तिरेव युक्तेति भावः ॥३१॥ ननु युद्धेन शत्रूञ्जित्वा विजयराज्यादिश्रेयसो लाभस्यावश्यंभावात्किमिति नच श्रेयोऽनु पश्यामीत्युच्यते त्वयेति तत्राह—**न काङ्क्ष इति**। हे कृष्णेति संबोधयन् 'वासुदेवे मनो यस्य जपहोमार्चनादिषु। तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥' इति वचनात्स्वभक्त्यन्तरायात्मकस्य विजयराज्यादेः कर्षित्वमेव भक्तस्योपरि तवानुग्रहः 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्' इति भगवद्वचनात्। तस्माद्विजयादेर्भवद्भक्त्यन्तरायत्वमालोच्यापि। तन्न काङ्क्ष इति ध्वनयति। ननु भवतां भागवतानां स्वार्थे विषये विरक्तानां मास्तु स्वार्थे विजयाद्याकाङ्क्षा, स्वसंबन्धिनामर्थे तु तदाकाङ्क्षा युक्तेत्याशङ्क्य येषामर्थे विजयादिकमपेक्षितं ते त्वत्र मरिष्यन्तीति किमस्माकं पाण्डवानां तेनेत्याह—**किमित्यादि**सार्धद्वयेन। नोऽस्माकं राज्येन किम्। तज्जन्य-

६ श्रीधरीव्याख्या।

संतप्यते ॥ २९ ॥ अन्यच्च—**न चेति**। विपरीतानि निमित्तान्यनिष्टसूचकानि शकुनानि पश्यामि ॥ ३० ॥ किंच—**न चेति**। स्वजनं आहवे युद्धे हत्वा श्रेयः फलं न पश्यामि ॥ ३१ ॥ विजयादिकं फलं किं न पश्यसीति चेत्तत्राह—**न काङ्क्ष इति**। एतदेव प्रपञ्चयति—

1 मधुसूदनः.

**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३१ ॥**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३२ ॥**
**आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।**
**मातुलाः श्वशुराः पौत्राः [1]श्यालाः संबन्धिनस्तथा ॥ ३३ ॥**
**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।**
**अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते ॥ ३४ ॥**
**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।**

२ आनन्दगिरिव्याख्या ।

**किमिति ।** राज्यादीनामाक्षेपे हेतुमाह—**येषामिति** ॥३२॥ तानेव विशिनष्टि—**आचार्या इति** ॥३३॥ **मातुला इति ।** श्याला भार्याणां भ्रातरो धृष्टद्युम्नप्रभृतयः । वध्येष्वपि स्वराज्यपरिपन्थिष्वाततायिषु कृपाबुद्ध्या स्वधर्माद्युद्धात्पूर्वोक्तमोहादिवशात्प्रच्युतिं प्रदर्शयति—**एतानिति ।** 'जिघांसन्तं जिघांसीयात्' इति न्यायादेतेषां हिंसा न दोषायेत्याशङ्क्याह—**घ्नतोऽपीति** ॥ ३४ ॥ पृथिवीप्राप्त्यर्थं हि हननमेतेषामिष्यते नच तत्प्राप्तिः समीहितेति कैमुतिक-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ २९ ॥ ३० ॥ निमित्तानि लोकक्षयकराणि भूमिकम्पादीनि ॥ ३१ ॥ ३२ ॥ ३३ ॥ स्याला इति स्यालशब्दो दन्त्यादिः । 'वि जामातुरुत वाघा स्यालात्' इति मन्त्रवर्णात् । 'स्याल्लाजानावपतीति वा लाजा लाजतेः स्यं शूर्पं स्यतेः' इति यास्कः ॥ ३४ ॥ हन्तुं इच्छापि मम न भवति किमुत हन्तृत्वमित्यर्थः । महीकृते पृथिव्यर्थे ॥ ३५ ॥

४ मधुसूदनीव्याख्या ।

प्रवृत्तिरनुपपन्नेत्यर्थः । कुतः पुनरितरपुरुषैरिष्यमाणेषु तेषु तवानिच्छेत्यत आह—**किं न इति ।** भोगैः सुखैर्जीवितेन जीवितसाधनेन विजयेनेत्यर्थः । विना राज्यं भोगान् कौरवविजयं च वने निवसतामस्माकं तेनैव जगति श्लाघनीयजीवितानां किमेभिराकाङ्क्षितैरिति भावः । गोशब्दवाच्यानीन्द्रियाण्यधिष्ठानतया नित्यं प्राप्तस्त्वमेव ममैहिकफलविरागं जानासीति सूचयन्संबोधयति गोविन्देति । राज्यादीनामाक्षेपे हेतुमाह—एतेन स्वस्य वैराग्येऽपि स्वीयानामर्थे यतनीयमित्यपास्तम् । एकाकिनो हि राज्याद्यनपेक्षितमेव । येषां तु बन्धूनामर्थे तदपेक्षितं त एते प्राणान्प्राणाशां धनानि धनाशां च त्यक्त्वा युद्धेऽवस्थिता इति न स्वार्थः स्वीयार्थो वायं प्रयत्न इति भावः । भोगशब्दः पूर्वत्र सुखपरतया निर्दिष्टोऽप्यत्र पृथक्सुखग्रहणात्सुखसाधनविषयपरः ॥ ३२ ॥ प्राणधनशब्दौ तु तदाशालक्षकौ । स्वप्राणत्यागेऽपि स्वबन्धूनामुपभोगाय धनाशा संभवेदिति तद्वारणाय पृथग्धनग्रहणम् ॥ ३३ ॥ येषामर्थे राज्याद्यपेक्षितं तेऽत्र नागता इत्याशङ्क्य तान्विशिनष्टि स्पष्टम् । ननु यदि कृपया त्वमेतान्न हंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव अतस्त्वमेवैतान्हत्वा राज्यं भुङ्क्ष्वेत्यत आह—त्रैलोक्यराज्यस्यापि हेतोः तत्प्राप्त्यर्थमपि,

५ भाष्योत्कर्षदीपिका ।

भोगैर्जीवितेन वा किम् । न किमपीत्यर्थः । राज्याद्यपेक्षया वने निवसतामस्माकं कन्दमूलादिना जीवनं स्वजनरक्षणं वरम् । यतः सर्वप्रकारेण स्वबन्धुरक्षणं कर्तव्यमिति स्वजनरक्षणेन लब्धगोविन्दनामा जगद्गुरुस्त्वमेव गोविन्दनाम्ना शंससीति ध्वनयन्संबोधयति—**हे गोविन्देति ।** गोशब्दवाच्यानीन्द्रियाण्यधिष्ठानतया नित्यं प्राप्तस्त्वमेव ममैहिकफलविरागं जानासीति संबोधनाशय इति केचित् ॥ ३२ ॥ येषां स्वीयानामर्थे नो राज्यं भोगसाधनमाकाङ्क्षितमभिलषितं भोगाः सुखसाधनानि सुखानि च येषामर्थे आकाङ्क्षितानि त इमे प्रत्यक्षेणोपलभ्यमानाः प्राणान्धनानि च त्यक्त्वा युद्धेऽवस्थिताः । त्यक्तुमिति वक्तव्ये त्यक्त्वेति क्त्वाप्रत्ययेन प्राणादित्यागसाधने समरे प्रवृत्ते तत्त्यक्तुमवस्थिता अपि तत्प्रेमातिशयात्पलाय्य गमिष्यन्तीति शङ्का न कर्तव्येति सूचयति ॥ ३३ ॥ तान्विशिनष्टि—**आचार्या इति ।** मातुला जननीभ्रातरः । भार्याभ्रातारः स्यालाः । स्पष्टमन्यत् ॥ ३४॥ ननु स्वराज्यपरिपन्थिनामाततायिनां हननमेव युक्तं; 'जिघांसन्तं जिघांसीयात्' इति न्यायेनैतेषां हनने दोषाभावादित्याशङ्क्याह—**एतानिति ।** अपि त्रैलोक्यराज्यस्य हेतोर्घ्नतोऽप्येतानित्यन्वयः । पृथिवीप्राप्त्यर्थं हि हननमेतेषामिष्यते; नच तत्प्राप्तिः समीहितेति कैमुत्यन्यायेन दर्शयति—**अपीति ।** नहि महदपि त्रैलोक्यराज्यं लब्धुं स्वजनहिंसायै मनो मदीयं स्पृहयति, पृथिवीप्राप्त्यर्थं पुनर्बन्धुवधं न श्रद्द-

६ श्रीधरीव्याख्या ।

**किं न इति** सार्धाभ्याम् । यदर्थमस्माकं राज्यादिकमपेक्षितं त एते प्राणधनानि त्यक्त्वा त्यागमङ्गीकृत्य युद्धार्थमवस्थिताः । अतः किमस्माकं राज्यादिभिः कृत्यमित्यर्थः ॥ ३२ ॥ ३३ ॥ ननु यदि कृपया त्वमेतान्न हंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव । अतस्त्वमेवैतान्हत्वा राज्यं भुङ्क्ष्व तत्राह—**एतान्नेति** सार्धेन । घ्नतोऽप्यस्मान्घातयतोऽप्येतांस्त्रैलोक्यराज्यस्यापि हेतोस्तत्प्राप्त्यर्थमप्यहं

---

१ 'स्यालाः' इति नीलकंठधृतपाठः. २ मधुसूदनः.

**पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३५ ॥**
**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् सबान्धवान् ।**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३६ ॥**

२ आनन्दगिरिव्याख्या ।

न्यायेन दर्शयति—**अपीति** । नहि महदपि त्रैलोक्यलक्षणं राज्यं लब्धुं स्वजनहिंसायै मनो मदीयं स्पृहयति पृथिवीप्राप्त्यर्थं पुनर्बन्धुवधं न श्रद्दधामीति किं वक्तव्यमित्यर्थः । दुर्योधनादीनां शत्रूणां निग्रहे प्रीतिप्राप्तिसंभवाद्युद्धं कर्तव्यमित्याशङ्क्याह—**निहत्येति** ॥ ३५ ॥ यदि पुनरमी दुर्योधनादयो न निगृह्येरन् भवन्तस्तर्हि तैर्निगृहीता दुःखिताः स्युरित्याशङ्क्याह—**पापमेवेति** । यदीमे दुर्योधनादयो निर्दोषानेवास्मानकस्माद्युद्धभूमौ हन्युः, तदैतान् 'अग्निदो गरदश्च' इत्यादिलक्षणोपेतानाततायिनो निर्दोषस्वजनहिंसाप्रयुक्तं पापं पूर्वमेव पापिनः समाश्रयेदित्यर्थः । अथवा यद्यप्येते भवन्त्याततायिनस्तथाप्येतानतिशोच्यान्दुर्योधनादीन्हिंसित्वा तत्कृतं पापमस्मानेवाश्रयेदतो नास्माभिरेते हन्तव्या इत्यर्थः । अथवा गुरुभ्रातृसुहृत्प्रभृतीनेतान्हत्वा वयमाततायिनः स्याम, ततश्चैतान्हत्वा हिंसाकृतं पापमाततायिनोऽस्मानेव समाश्रयेदिति युद्धादुपरमणमस्माकं श्रेयस्करमित्यर्थः । फलाभावादनर्थसंभवाच्च परहिंसा न कर्तव्येत्युपसंहरति—**तस्मादिति** । किंच राज्यसुखमुद्दिश्य युद्धमुपक्रम्य तेन च स्वजनपरिक्षये न सुखमुपपद्यते तेन न कर्तव्यं युद्धमि-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

आततायिनः 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ आततायिनमायान्तं

४ मधुसूदनीव्याख्या ।

अस्मान्घ्नतोऽप्येतान्न हन्तुमिच्छामि इच्छामपि न कुर्यामहं किं पुनर्हन्याम्, महीमात्रप्राप्तये तु न हन्यामिति किमु वक्तव्यमित्यर्थः । मधुसूदनेति संबोधयन्वैदिकमार्गप्रवर्तकत्वं भगवतः सूचयति ॥ ३४ ॥ नन्वन्यान्विहाय धार्तराष्ट्रा एव हन्तव्यास्तेषामत्यन्तक्रूरतरतत्तद्दुःखदातॄणां वधे प्रीतिसंभवादित्यत आह—धार्तराष्ट्रान्दुर्योधनादीन्भ्रातॄन्निहत्य स्थितानामस्माकं का प्रीतिः स्यात् । न कापीत्यर्थः । नहि मूढजनोचितक्षणमात्रवर्तिसुखाभासलोभेन चिरतरनरकयातनाहेतुर्बन्धुवधोऽस्माकं युक्त इति भावः । जनार्दनेति संबोधनेन यदि वध्या एते तर्हि त्वमेवैताञ्जहि, प्रलये सर्वजनहिंसकत्वेऽपि सर्वपापासंसर्गित्वादिति सूचयति । ननु 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥' इति स्मृतेरेतेषां च सर्वप्रकारैराततायित्वात् 'आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' इति वचनेन दोषाभावप्रतीतेर्हन्तव्या एव दुर्योधनादय आततायिन इत्याशङ्क्याह—**पापमेवेति** । एतानाततायिनोऽपि हत्वा स्थितानस्मान्पापमाश्रयेदेवेति संबन्धः । अथवा पापमेवाश्रयेन्न किंचिदन्यद्दृष्टमदृष्टं वा प्रयोजनमित्यर्थः । 'न हिंस्यात्' इति धर्मशास्त्रात् 'आततायिनं हन्यात्' इत्यर्थशास्त्रस्य दुर्बलत्वात् । तदुक्तं याज्ञवल्क्येन–'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥' इति । **अपरा व्याख्या** । ननु धार्तराष्ट्रान्घ्नतां भवतां प्रीत्यभावेऽपि युष्मान्घ्नतां धार्तराष्ट्राणां प्रीतिरस्त्येवातस्ते युष्मान्हन्युरित्यत आह—**पापमेवेति** । अस्मान्हत्वा स्थितानेतानाततायिनो धार्तराष्ट्रान्पूर्वमपि

५ भाष्योत्कर्षदीपिका ।

ध्यामिति किं वक्तव्यमित्यर्थ इति प्राञ्चः । मधोः सूदनेन त्वयापि स्वपुत्ररक्षणं कृतमिति कथमस्माभिः संबन्धिनाशः कर्तव्य इति ध्वनयन्संबोधयति—**मधुसूदनेति** । यद्वा मधुरित्युपलक्षणं कैटभस्यापि । मधुकैटभयो रजस्तमसोः सूदनस्त्वं स्वभक्तं मां तदुभयात्मकेऽस्मिन्घोरे कर्मणि नियोजयितुं नार्हसीति सूचयन्नाह—**मधुसूदनेति** । मधुसूदनेति संबोधयन् वैदिकमार्गप्रवर्तकत्वं भगवतः सूचयतीति केचित्[1] । ननु बह्वपकर्तुर्धृतराष्ट्रस्य पुत्रान्दुःखदातॄन्निहत्य स्थितानां युष्माकं प्रीतिर्भविष्यतीति चेत्तत्राह—**निहत्येति** । धार्तराष्ट्रान्निहत्य नोऽस्माकं का प्रीतिः स्यात् । न कापीत्यर्थः । अपकर्तर्यपि वृद्धेऽपकारो न कार्य इति धृतराष्ट्रसंबन्धप्रदर्शनाशयः । तव तु दुष्टजनघातेन स्वसंबन्धिप्रसन्नता संपद्यते, अस्माकं तु सापि नास्ति, अस्मत्संबन्धिनामवश्यंभाविनाशदर्शनादिति सूचयन्नाह—**जनार्दनेति** । जनार्दनेति संबोधनेन यद्येते वध्यास्तर्हि त्वमेवैताञ्जहि, प्रलये सर्वजनहिंसकत्वेऽपि सर्वपापासंसर्गित्वादिति सूचयतीति केचित्[2] ॥ ३५ ॥ ननु 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥' इति वचनादाततायिन एतान्हत्वा 'नाततायिवधे दोषः' इति वचनाद्युष्मान्पापं नाश्रयिष्यति अपित्वाततायिन एतानेवेत्यत आह—**पापमिति** ।

६ श्रीधरीव्याख्या ।

हन्तुं नेच्छामि । किं पुनर्महीमात्रप्राप्त्यर्थमित्यर्थः ॥ ३४ ॥ ३५ ॥ ननुच 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ अतएव स्वधर्ममात्रतयैव

१ भाष्यटीकाकृतः. २ मधुसूदनः. ३ मधुसूदनः.

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३७ ॥**
**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३८ ॥**

---

२ आनन्दगिरिव्याख्या ।

त्याह—**स्वजनं हीति** ॥ ३६ ॥ कथं तर्हि परेषां कुलक्षये स्वजनहिंसायां च प्रवृत्तिस्तत्राह—**यद्यपीति ।** लोभोपहतबुद्धित्वात्तेषां कुलक्षयादिप्रयुक्तदोषप्रतीत्यभावात्प्रवृत्तिविस्रम्भः संभवतीत्यर्थः ॥ ३७ ॥ परेषामिवास्माकमपि प्रवृत्तिविस्रम्भः संभवेदिति चेन्नेत्याह—**कथमिति । कुलक्षयेति ।** कुलक्षये मित्रद्रोहे च दोषं प्रपश्यद्भिरस्माभिस्तद्दोषशब्दितं पापं कथं न ज्ञातव्यं तदज्ञाने तत्परिहारासंभवादतोऽस्मात्पापान्निवृत्त्यर्थं तज्ज्ञानमपेक्षितमिति

३ नीलकण्ठव्याख्या ( चतुर्धरी )

हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' इति । यद्यप्येवं तथापि एतान्हत्वा अस्मान्पापमेव आश्रयेत् । आततायिवधो हि अर्थशास्त्रविहितः । 'न हिंस्यात्सर्वा भूतानि' इतितु धर्मशास्त्रम् । तच्च पूर्वस्मात्प्रबलम् । यथोक्तं याज्ञवल्क्येन—'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥' इति । अस्मान्हत्वा एतान् आततायिनः पापमेवाश्रयेदित्यपरा योजना । तथाच एत एवास्मद्वधेन नश्यन्तु नतु वयमेतेषां

४ मधुसूदनीव्याख्या ।

पापिनः सांप्रतमपि पापमेवाश्रयेन्नान्यत्किंचित्सुखमित्यर्थः । तथा चायुध्यतोऽस्मान्हत्वैत एव पापिनो भविष्यन्ति नास्माकं कापि क्षतिः पापासंबन्धादित्यभिप्रायः ॥ ३५ ॥ फलाभावादनर्थसंभवाच्च परहिंसा न कर्तव्येति 'नच श्रेयोऽनुपश्यामि' इत्यारभ्योक्तं तदुपसंहरति । अदृष्टफलाभावोऽनर्थसंभवश्च तच्छब्देन परामृश्यते । दृष्टसुखाभावमाह—**स्वजनं हीति ।** माधवेति लक्ष्मीपतित्वान्नालक्ष्मीके कर्मणि प्रवर्तयितुमर्हसीति भावः ॥ ३६ ॥ कथं तर्हि परेषां कुलक्षये स्वजनहिंसायां च प्रवृत्तिस्तत्राह—लोभोपहतबुद्धित्वात्तेषां कुलक्षयादिनिमित्तदोषप्रतिसंधानाभावात्प्रवृत्तिः संभवतीत्यर्थः । अतएव भीष्मा-

५ भाष्योत्कर्षदीपिका ।

एतानाततायिनो हत्वाऽस्मानेव पापमाश्रयेत् । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥' इत्यादिना हतस्य पापापगमाच्छ्रेयोविशेषाभिधानात् हननकर्तृभूतानस्मानेव हिंसानिबन्धनं पापमाश्रयेदिति 'आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' इति वचनं त्वर्थशास्त्रत्वेन दुर्बलत्वात् 'न हिंस्यात्सर्वा भूतानि' इति प्रबलेन धर्मशास्त्रेण बाध्यते । तदुक्तं याज्ञवल्क्येन 'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥' इत्यभिप्रायः । युद्धायानुद्यतानस्मान्हत्वैतानाततायिनः । पापमेवाश्रयेदिति वा, एतान्हत्वाततायिनोऽस्मानेवेति वेति पक्षत्रयेऽपि एतदादेर्हननक्रियांप्रति कर्तृत्वे क्त्वाप्रत्ययः स्थित्यादिक्रियामध्याहृत्योपपद्यते । एवं युद्धस्य निष्फलतामनर्थहेतुतां चोपपाद्योपसंहरति—**तस्मादिति ।** ब्रह्मविद्यापतित्वात्तत्साधने प्रवर्तयितुमर्हसि नत्वस्मिन्क्लेशदे कर्मणीति सूचयन्नाह—**माधवेति ।** स्वजनसुखेन सुखार्थस्य राज्यलक्ष्मीपतित्वस्य स्वजननाशेन सुखाजनकत्वात्स्वजनं हत्वा कथं सुखिनः स्याम, यतस्त्वापि लक्ष्मीपतित्वं स्वजनार्थमेवेति वा माधवेति संबोधनेन सूचयति । लक्ष्मीपतित्वान्नालक्ष्मीके कर्मणि प्रवर्तयितुमर्हसीति भाव इति केचित्[1] ॥ ३६ ॥ ननु स्वजनहिंसाकृतस्य दोषस्योभयेषां समानत्वाद्यथा ते पापं न पश्यन्ति तथा भवद्भिरपि न ज्ञेयमिति चेत्तत्राह—**यद्यपीति ।** लोभेनोपहतं चेतो येषां ते लोभोपहतचेतसस्त्वादेते कुलक्षयकृतं दोषं मित्राणां द्रोहे च पातकं यद्यपि न

६ श्रीधरीव्याख्या ।

च षडेते ह्याततायिनः ॥' इति स्मरणात् । अग्निद इत्यादिभिः षड्भिरपि हेतुभिरेते तावदाततायिनः । आततायिनां च वधो युक्त एव । 'आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' इति वचनात्तत्राह सार्धेन—**पापमिति ।** 'आततायिनमायान्तम्' इत्यादिकमर्थशास्त्रं धर्मशास्त्राद्दुर्बलम् । यथोक्तं याज्ञवल्क्येन—'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥' तस्मादाततायिनामप्येतेषामार्यादीनां वधेऽस्माकं पापमेव भवेदन्याय्यत्वादधर्मत्वाच्चैतद्वधस्य न चेह सुखं स्यादित्याह—**स्वजनं हीति** ॥ ३६ ॥ ननु तवैतेषामपि बन्धुवधदोषे समाने सति यथैवैते बन्धुवधदोषमङ्गीकृत्य युद्धे प्रवर्तन्ते तथैव भवानपि प्रवर्ततां किमनेन विषादेनेत्यत आह—**यद्यपीति** द्वाभ्याम् । राज्यलोभेनोपहतं भ्रष्ट-

७ अभिनवगुप्ताचार्यव्याख्या ।

कर्माण्यनुतिष्ठन्विशेषधियेत्युत्तरं दास्यते—निहत्य धार्तराष्ट्रानिति । आततायिनां हनने पापमेव कर्तृ । अतोऽयमर्थः । पापेन तावदेतेऽस्मच्छत्रवो हताः । परतन्त्रीकृतांस्तांश्च निहत्यास्मानपि पापमाश्रयेत् । पापमत्र लोभवशात्कुलक्षयादिदोषदर्शनम् ॥ ३५ ॥ अतएव कुलादि-

---

१ मधुसूदनः।

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥**
**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४० ॥**

२ आनन्दगिरिव्याख्या ।

पापपरिहारार्थिनामस्माकं न युक्ता युद्धे प्रवृत्तिरित्यर्थः ॥ ३८ ॥ कोऽसौ कुलक्षये दोषो यद्दर्शनाद्युष्माकं युद्धादुपरतिरपेक्ष्यते तत्राह—**कुलेति** । कुलस्य हि क्षये कुलसंबन्धिनश्चिरन्तना धर्मास्तत्तदग्निहोत्रादिक्रियासाध्या नाशमुपयान्ति । कर्तुरभावादित्यर्थः । धर्मनाशेऽपि किं स्यादिति चेत्तत्राह—**धर्म इति** । कुलप्रयुक्ते धर्मे कुलनाशादेव नष्टे कुलक्षयकरस्य कुलं परिशिष्टमखिलमपि तदीयोऽधर्मोऽभिभवति । अधर्मभूयिष्ठं तस्य कुलं भवतीत्यर्थः ॥ ३९ ॥ कुलक्षयकृतेऽवशिष्टकुलस्याधर्मप्रवणत्वे को दोषः स्यादिति तत्राह—**अधर्मेति** । पापप्रचुरे कुले प्रसूतानां स्त्रीणां प्रदुष्टत्वे किं दुष्यति तत्राह—**स्त्रीष्विति** ॥ ४० ॥ वर्णसंकरस्य दोषपर्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

वधेन नङ्क्ष्याम इति भावः ॥ ३६ ॥ ३७ ॥ ननु 'आहूतो न निवर्तेत द्यूतादपि रणादपि' इति 'विजितं क्षत्रियस्य' इति च युद्धादनिवृत्तिर्हिंसया च वृत्तिः क्षत्रियस्येष्टा तत्कथं युद्धान्निवृत्तिमिच्छसीत्याशङ्क्याह—**कथमिति** । सा हि लोभमूलिका स्मृतिः कुलक्षयदोषविधिना बाध्यते । यथा 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति स्पर्शनविधिना विरुद्धा सती 'औदुम्बरी सर्वा वेष्टयितव्या' इति सर्ववेष्टनस्मृतिर्बाध्यते लोभमूलकत्वात्तद्वत् । नहि विधिमात्राद्यत्किंचित्कर्तव्यम् । श्येनादीनामधर्मरूपाणामप्यवश्यानुष्ठेयत्वापत्तेः । तस्माद्यत्फलतो न दुष्यति तदेव विहितं धर्मरूपमनुष्ठेयम् । यथोक्तम्—'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते । केवलं प्रीतिहेतुत्वात्तद्धर्म इति कथ्यते ॥' इति । श्येनादिवत्पापानुबन्धित्वात् युद्धं त्याज्यमेवेत्यर्थः ॥ ३८ ॥ प्रणश्यन्ति अनुष्ठातॄणां वृद्धानामभावात् । अवशिष्टं बालादिरूपं वंशं

४ मधुसूदनीव्याख्या ।

दीनां शिष्टानां बन्धुवधे प्रवृत्तत्वाच्छिष्टाचारत्वेन वेदमूलत्वादितरेषामपि तत्प्रवृत्तिरुचितेत्यपास्तम् । 'हेतुदर्शनाच्च' इति न्यायात् । तत्रहि लोभादिहेतुदर्शने वेदमूलत्वं न कल्प्यत इति स्थापितं यद्यप्येते न पश्यन्ति तथापि कथमस्माभिर्न ज्ञेयमित्युत्तरश्लोकेन संबन्धः ॥ ३७ ॥ ननु यद्यप्येते लोभात्प्रवृत्तास्तथापि 'आहूतो न निवर्तेत द्यूतादपि रणादपि' इति 'विजितं क्षत्रियस्य' इत्यादिभिः क्षत्रियस्य युद्धं धर्मो युद्धार्जितं च धर्म्यं धनमिति शास्त्रे निश्चयाद्भवतां च तैराहूतत्वाद्युद्धे प्रवृत्तिरुचितैवेत्याशङ्क्याह—अस्मात्पापाद्बन्धुवधफलकयुद्धरूपात् । अयमर्थः—श्रेयःसाधनताज्ञानं हि प्रवर्तकं श्रेयश्च तद्यदश्रेयोऽननुबन्धि । अन्यथा श्येनादीनामपि धर्मत्वापत्तेः । तथाचोक्तम् 'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते ॥' इति, ततश्चाश्रेयोनुबन्धितया शास्त्रप्रतिपादितेऽपि श्येनादाविवास्मिन्युद्धेऽपि नास्माकं प्रवृत्तिरुचितेति ॥ ३८ ॥ एवंच विजयादीनामश्रेयस्त्वेनानाकाङ्क्षितत्वान्न तदर्थं प्रवर्तितव्यमिति द्रढयितुमनर्थानुबन्धित्वेनाश्रेयस्त्वमेव प्रपञ्चयन्नाह—सनातनाः परम्पराप्राप्ताः कुलधर्माः कुलोचिता धर्माः कुलक्षये प्रणश्यन्ति कर्तुरभावात् । उत अपि अग्निहोत्राद्यनुष्ठातृपुरुषनाशेन धर्मे नष्टे । जात्यभिप्रायमेकवचनम् । अवशिष्टं बालादिरूपं कृत्स्नमपि कुलमधर्मोऽभिभवति स्वाधीन-

५ भाष्योत्कर्षदीपिका ।

पश्यन्ति तथाप्यस्माभिः कथं न ज्ञेयमिति परेणान्वयः ॥ ३७ ॥ अस्मात्पापान्निवर्तितुं निवृत्त्यर्थं कुलक्षयकृतं दोषं प्रकर्षेण पश्यद्भिरस्माभिस्तद्दोषशब्दितं पापं कथं न ज्ञातव्यं, तस्मात्पापपरिज्ञानं विना तत्र प्रवृत्तिपरिहारासंभवात्तज्ज्ञानमेवोचितं पापान्निवर्तितुं नतु पापसाधके युद्धे प्रवर्तितुं तदज्ञानमिति भावः । सदैव निर्लिप्तस्य तवैव परमेश्वरस्य प्रलयादौ जनानामर्दनेन पापसंश्लेषो नलन्यस्येति सूचयन्संबोधयति—**हे जनार्दनेति** ॥ ३८ ॥ कोऽसौ कुलक्षयकृतो दोष इत्यपेक्षायामाह—**कुलक्षय इति** । कुलस्य हि क्षये कुलकर्तृकाः कुलोचिता धर्माः सनातनाश्चिरंतनास्तत्कर्तॄणामभावात्प्रकर्षेण नश्यन्ति । धर्मे नष्टे च यत्स्यात्तदाह—**धर्म इति** । धर्मे नष्टे तत्कर्तृकुलनाशाद्धर्मे नष्टे सति कुलक्षयकर्तुरवशिष्टं कृत्स्नं सर्वमपि कुलमधर्मोऽभिभवति । अधर्मभूयिष्ठं तस्य

६ श्रीधरीव्याख्या ।

विवेकं चेतो येषां त एते दुर्योधनादयो यद्यपि दोषं न पश्यन्ति तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात्पापान्निवर्तितुं कथं न ज्ञेयम् । निवृत्तावेव बुद्धिः कर्तव्येत्यर्थः ॥ ३८ ॥ तमेव दोषं दर्शयति—**कुलक्षय इति** । सनातनाः परम्पराप्राप्ताः । उत अपि अवशिष्टं कुलमधर्मोऽभिभवति व्याप्नोति ॥ ३९ ॥ ततश्च अधर्माभिभवादिति ॥ ४० ॥ एवं सति—**संकर इति** । तेषां कुलघ्नानां पितरः पतन्ति । हि

**संकरो नरकायैव कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४१ ॥**
**दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४२ ॥**

२ आनन्दगिरिव्याख्या ।

वसायितामादर्शयति—**संकर इति** । कुलक्षयकराणां दोषान्तरं समुच्चिनोति—**पतन्तीति** । कुलक्षयकृतां पितरो निरयगामिनः संभवन्तीत्यत्र हेतुमाह—**लुप्तेति** । पुत्रादीनां कर्तॄणामभावाल्लुप्ता पिण्डस्योदकस्य च क्रिया येषां ते तथा । ततश्च प्रेतत्वपरावृत्तिकारणाभावान्नरकपतनमेवावश्यकमापतेदित्यर्थः ॥ ४१ ॥ कुलक्षयकृतामेतैरुदाहृतैर्दोषैर्वर्णसंकरहेतुभिर्जातिप्रयुक्ता वंशप्रयुक्ताश्च धर्माः सर्वे समुत्साद्यन्ते तेन कुलक्षयकारणाद्युद्धादुपरतिरेव श्रेयसीत्याह—**दोषैरिति** ॥ ४२ ॥ किंच जातिधर्मेषु कुलधर्मेषु चोत्सन्नेषु तत्तद्धर्मवर्जितानां मनुष्याणामनधिकृतानां नरकपतनध्रौ-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

धर्मलोपादधर्मोऽभिभवति ॥ ३९ ॥ दुष्टासु पुत्रार्थं वर्णान्तरमुपासीनासु ॥ ४० ॥ कथं तर्हि जामदग्न्येन रामेण क्षत्रियेषु हतेषु तत्स्त्रियः पुनःपुनर्ब्राह्मणेभ्यः पुत्रान् जनयामासुरित्युपाख्यायते, कथं वा धृतराष्ट्रादीनामसंकरजत्वमित्याशङ्क्याह—**पतन्तीति** । हिशब्दो वैदिकीं प्रसिद्धिं द्योतयति । सा हि 'न शेषो अग्ने अन्यजातमस्ति' इति श्रुतिः । अन्यस्माज्जातं शेषोऽपत्यं नास्तीति तदर्थः । 'अन्योदर्यो मनसापि न मन्तव्यो ममायं पुत्रः' इति यास्कवचनाच्च । 'ये यजामहे' इति शास्त्रात् ये वयं स्मस्ते वयं यजामह इत्यर्थकाद्दृश्यमानस्य पित्रादेः संशयग्रस्तत्वादयं मम पितैवेति निश्चयस्य दुःसाध्यत्वात् । मन्त्रश्च 'योऽहमस्मि स सन्यजे' । ब्राह्मणेऽर्थवादश्च 'नचैतद्विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वा' इति । तस्माद्बीजपतेरेव पिण्डादिप्राप्तिर्नतु क्षेत्रपतेरिति लुप्तपिण्डोदकक्रियत्वादवश्यं पितॄणां पातो भवति । क्षेत्रजपुत्रस्मृतिस्तु इह लोके वंशस्थापनमात्रपरा नतु तेन क्षेत्रपतेः कश्चिदामुष्मिक उपकारोऽस्ति । उदाहृतश्रुतिविरोधात् । अयं च संकरोऽस्माभिः स्वयं कृतश्चेदवश्यमस्मान्बाधिष्यत एवेति भावः ॥ ४१ ॥

४ मधुसूदनीव्याख्या ।

तया व्याप्नोति । उतशब्दः कृत्स्नपदेन संबध्यते ॥ ३९ ॥ अस्मदीयैः पतिभिर्धर्ममतिक्रम्य कुलक्षयः कृतश्चेदस्माभिरपि व्यभिचारे कृते को दोषः स्यादित्येवं कुतर्कहताः कुलस्त्रियः प्रदुष्येयुरित्यर्थः । अथवा कुलक्षयकारिपतितपतिसंबन्धादेव स्त्रीणां दुष्टत्वम् 'आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः' इत्यादिस्मृतेः ॥ ४० ॥ कुलस्य संकरश्च कुलघ्नानां नरकायैव भवतीत्यन्वयः । न केवलं कुलघ्नानामेव नरकपातः किंतु तत्पितॄणामपीत्याह—**पतन्तीति** । हिशब्दोऽप्यर्थे हेतौ वा । पुत्रादीनां कर्तॄणामभावाल्लुप्ता पिण्डस्योदकस्य च क्रिया येषां ते तथा कुलघ्नानां पितरः पतन्ति नरकायैवेत्यनुषङ्गः ॥ ४१ ॥ जातिधर्माः क्षत्रियत्वादिनिबन्धनाः, कुलधर्मा असाधारणाश्च एतैर्दोषैरुत्साद्यन्ते उत्सन्नाः क्रियन्ते । विनाश्यन्त इत्यर्थः ।

५ भाष्योत्कर्षदीपिका ।

कुलं भवतीत्यर्थः ॥ ३९ ॥ ततश्च किं स्यादत आह—**अधर्मेति** । अधर्मेणाभिभवादधर्मबाहुल्यात्कुलस्त्रियः प्रकर्षेण दुष्यन्ति दुष्टा व्यभिचारिण्यो भवन्ति । कुलक्षयकारिपतितपतिसंबन्धादेव स्त्रीणां दुष्टत्वम् 'आ शुद्धेःसंप्रतीक्ष्यो हि महापातकदूषितः' इत्यादिस्मृतेरित्यपि केचित्[1] । तासु च दुष्टासु यत्स्यात्तदाह—**स्त्रीष्विति** । स्त्रीषु दुष्टासु वर्णसंकरो जायते । सर्वानर्थमूलभूताधर्मसाधनाद्युद्धादस्मदपकर्षणमेव कर्तुमर्हसि नतु तत्र प्रवर्तनमिति सूचयन्नाह—**कृष्णेति** । हे वृष्णिकुलोद्भव, कुलमर्यादाभिज्ञस्त्वमेतत्कथं न जानासि, ज्ञात्वा च किमर्थमुपेक्षस इति ध्वनयन्संबोधयति—**वार्ष्णेयेति** ॥ ४० ॥ वर्णसंकरस्य दोषपर्यवसायितां दर्शयति—**संकर इति** । वर्णसंकरः कुलघ्नानां कुलहननकर्तॄणां कुलस्य चाधर्माभिभूतस्य नरकायैव नरकप्रदानायैव जायत इत्यनुषङ्गः । कुलस्य संकरश्च कुलघ्नानां नरकायैव भवतीत्यन्वय इति केचित्[2] । न केवलं तेषामेव नरकायापितु तत्पितॄणामपीत्याह—**पतन्तीति** । एषां कुलघ्नानां कुलस्य च पितरः पतन्ति निरयगामिनो भवन्ति । हि यस्माल्लुप्ता पिण्डोदकयोः क्रिया येषां ते । तत्कर्तॄणां पुत्रपौत्रादीनामभावात् । ततश्च प्रेतत्वादिनिवृत्तिकारणाभावात्तेषां निरयपतनमेवावश्यमायातमित्यर्थः ॥ ४१ ॥ कुलघ्नानामेतैरुक्तैर्दोषैर्वर्णसंकरस्य कारकैर्हेतुभिः जातिप्रयुक्ता धर्माः कुलप्रयुक्ताश्च धर्माः सर्वे शाश्वताश्चिरन्तनाः समुत्साद्यन्ते उत्सन्ना विनष्टाः क्रियन्ते

श्रीधरीव्याख्या ।

यस्माल्लुप्ताः पिण्डोदकक्रिया येषां ते ॥ ४१ ॥ उक्तं दोषमुपसंहरति—**दोषैरिति** द्वाभ्याम् । उत्साद्यन्ते लुप्यन्ते जातिधर्माः वर्णधर्माः

---

१ मधुसूदनः । २ मधुसूदनः ।

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।**
**नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥**
**अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४४ ॥**
**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥**
**संजय उवाच ।**
**एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।**
**विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अर्जुन-विषादयोगो नाम प्रथमोऽध्यायः ॥ १ ॥

२ आनन्दगिरिव्याख्या ।

व्यादनर्थकरमिदमेव हेयमित्याह—**उत्सन्नेति** । यथोक्तानां मनुष्याणां नरकपातस्यावश्यकत्वे प्रमाणमाह—**इत्यनुशुश्रुमेति** ॥ ४३ ॥ राज्यप्राप्तिप्रयुक्तसुखोपभोगलब्धतया स्वजनहिंसायां प्रवृत्तिरस्माकं गुणदोषविभागविज्ञानवतामतिकष्टेति परिभ्रष्टहृदयः सन्नाह—**अहो बतेति** ॥ ४४ ॥ यद्येवं युद्धे विमुखः सन्परपरिभवप्रतीकाररहितो वर्तेथास्तर्हि त्वां शस्त्रपरिग्रहरहितं शत्रुं शस्त्रपाणयो धार्तराष्ट्रा निगृह्णीयुरित्याशङ्क्याह—**यदीति** । प्राणत्राणादपि प्रकृष्टो धर्मः प्राणभृतामहिंसेति भावः ॥ ४५ ॥ यथोक्तमर्जुनस्य वृत्तान्तं संजयो धृतराष्ट्रं राजानं प्रति प्रवेदितवांस्तमेव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एतदेव विवृणोति द्वाभ्याम्—**दोषैरिति** ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ संख्ये संग्रामे ॥ ४६ ॥

इति श्रीनैलकण्ठीये भगवद्गीतासु प्रथमोऽध्यायः ॥ १ ॥

४ मधुसूदनीव्याख्या ।

॥ ४२ ॥ ततश्च प्रेतत्वपरावृत्तिकारणाभावान्नरके एव केवलं निरन्तरं वासो भवति ध्रुवमित्यनुशुश्रुमेत्याचार्याणां मुखाद्वयं श्रुतवन्तो न स्वाभ्यूहेन कल्पयाम इति पूर्वोक्तस्यैव दृढीकरणम् ॥ ४३ ॥ बन्धुवधपर्यवसायी युद्धाध्यवसायोऽपि सर्वथा पापिष्ठतरः किं पुनर्युद्धमिति वक्तुं तदध्यवसायेनात्मानं शोचन्नाह—यदीदृशी ते बुद्धिः कुतस्तर्हि युद्धाभिनिवेशेनागतोऽसीति न वक्तव्यम् । अविमृश्यकारितया मयौद्धत्यस्य कृतत्वादिति भावः ॥ ४४ ॥ ननु तव वैराग्येऽपि भीमसेनादीनां युद्धोत्सुकत्वाद्बन्धुवधो भविष्यत्येव त्वया पुनः किं विधेयमित्यत आह—प्राणादपि प्रकृष्टो धर्मः प्राणभृतामहिंसा पापानि-

५ भाष्योत्कर्षदीपिका ।

॥ ४२ ॥ ततो यद्भवति तदाह—**उत्सन्नेति** । उत्सन्ना विनष्टाः कुलधर्मा जातिधर्माश्च येषां तेषां मनुष्याणां नरके नियतं नियमेन वासो भवतीत्यनुशुश्रुम शास्त्रादाचार्याच्च श्रुतवन्तः, कुलक्षयहेतुभूतयुद्धकर्तृणामस्माकं नरकपतनध्रौव्यात्तस्मान्निवृत्तिरेव श्रेयसीति नरकात्राणार्थिभिर्जनैः प्रार्थ्यमानं त्वामहमपि तत्राणाय प्रार्थयामीति ध्वनयन्नाह—**हे जनार्दनेति** ॥ ४३ ॥ राज्यप्राप्तिसुखोपभोगलोभेन युद्धार्थमत्रागमनमपि शोचनीयमित्याह—**अहो इति** । अहो बतेत्यत्यन्तखेदे । वयं महत्पापं कर्तुं व्यवसिता निश्चिताः । यद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः युद्धोद्योगेनात्रागताः ॥ ४४ ॥ ननु स्वरक्षणाय व्यापारमकुर्वाणं शस्त्रपरिग्रहरहितं त्वां धार्तराष्ट्रा रणे निहन्युरितिचेत्तत्राह—**यदीति** । यत्तु ननु तव वैराग्येऽपि भीमसेनादीनां युद्धोत्सुकत्वात्तत्कृतो बन्धुवधो भविष्यत्येव

६ श्रीधरीव्याख्या ।

कुलधर्माश्च । चकारादाश्रमधर्मादयोऽपि गृह्यन्ते ॥ ४२ ॥ **उत्सन्नेति** । उत्सन्नाः कुलधर्मा येषामित्युत्सन्नजातिधर्मादीनामप्युपलक्षणम् । अनुशुश्रुम श्रुतवन्तो वयम् । 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः । अपश्चात्तापिनः कष्टान्निरयान्यान्ति दारुणान् ॥' इत्यादिवचनेभ्यः ॥ ४३ ॥ बन्धुवधाध्यवसायेन संतप्यमान आह—**अहो इति** । स्वजनं हन्तुमुद्यता इति । यत एतन्महत्पातकं कर्तुमध्यवसायं कृतवन्तो वयम् । अहो बत कष्टमित्यर्थः ॥ ४४ ॥ एवं संतप्तः सन्मृत्युमेवाशासान आह—**यदीति** । अकृतप्रतीकारं तूष्णीमुपविष्टं मां यदि

७ अभिनवगुप्ताचार्यव्याख्या ।

धर्माणामुपेक्षकं करोति—स्वजनं हि कथमित्यादिना ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ विशेषफलबुद्ध्या हन्तव्यादिविशेषबुद्ध्या च हननं महापातकमित्येतदेव संक्षिप्याभिधातुं परितापातिशयसूचनायात्मगतमेवार्जुनो वचनमाह—अहो बतेति । वयमिति

१ 'अर्द गतौ याचने च' इति धातुः. २ मधुसूदनः.

२ आनन्दगिरिव्याख्या ।

प्रवेदनप्रकारं दर्शयति—**एवमिति** । प्रदर्शितेन प्रकारेण भगवन्तं प्रति विज्ञापनं कृत्वा शोकमोहाभ्यां परिभूतमानसः सन्नर्जुनः संख्ये युद्धमध्ये शरेण सहितं गाण्डीवं त्यक्त्वा न योत्स्येऽहमिति ब्रुवन्मध्ये रथस्य संन्यासमेव श्रेयस्करं मत्वोपविष्टवानित्यर्थः ॥ ४६ ॥ इति परमहंसश्रीमदानन्दगिरिकृतटीकायां प्रथमोऽध्यायः ॥ १ ॥

४ मधुसूदनीव्याख्या ।

ष्पतेः तस्माज्जीवनापेक्षया मरणमेव मम क्षेमतरमत्यन्तं हितं भवेत् । 'प्रियतरम्' इति पाठेऽपि सएवार्थः । अप्रतीकारं स्वप्राणत्राणाय व्यापारमकुर्वाणं बन्धुवधाध्यवसायमात्रेणापि प्रायश्चित्तान्तररहितं वा । तथाच प्राणान्तप्रायश्चित्तेनैव शुद्धिर्भविष्यतीत्यर्थः ॥ ४५ ॥ ततः किं वृत्तमित्यपेक्षायां संख्ये संग्रामे रथोपस्थे रथस्योपर्युपविशेश । पूर्वं युद्धार्थमवलोकनार्थं चोत्थितः सन् शोकेन संविग्नं पीडितं मानसं यस्य सः ॥ ४६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यविश्वेश्वरसरस्वतीपादशिष्यसूनुमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां प्रथमोऽध्यायः ॥ १ ॥

५ भाष्योत्कर्षदीपिका ।

त्वया पुनः किं कार्यमित्यत आह—यदीति तदुपेक्ष्यम् । मूले शङ्कानुगुणस्योत्तरस्याभावात् । क्षेमतरं हिततरं पापानिष्पत्तेः ॥ ४५ ॥ एतद्वृत्तान्तं संजयो धृतराष्ट्रं प्रत्यावेदितवानित्याह—**संजय इति** । एवमुक्त्वा उक्तेन प्रकारेण श्रीकृष्णं प्रति विज्ञापनं कृत्वा पूर्वं शूराणामवलोकनायोत्थितोऽर्जुनः परया कृपयाविष्टः । शोकग्रहणं मोहस्याप्युपलक्षणार्थम् । शोकमोहाभ्यां सम्यगुद्विग्नं मनो यस्य स एतादृशः सन् संख्ये संग्रामभूमिमध्ये शरेण सहितं चापं कार्मुकं विसृज्य त्यक्त्वा रथोपस्थे रथस्योपरि उपाविशत् उपविष्टवानित्यर्थः ॥ ४६ ॥ इति श्रीपरमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां प्रथमोऽध्यायः ॥ १ ॥

६ श्रीधरीव्याख्या ।

हनिष्यन्ति तर्हि तद्धननं मम क्षेमतरमत्यन्तं हितं भवेत् । पापानिष्पत्तेः ॥ ४५ ॥ ततः किं वृत्तमित्यपेक्षायां संजय उवाच—**एवमिति** । संख्ये संग्रामे । रथोपस्थे रथस्योपरि । उपाविशदुपविवेश शोकेन संविग्नं प्रकम्पितं मानसं चित्तं यस्य सः ॥ ४६ ॥ इति श्रीसुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां प्रथमोऽध्यायः ॥ १ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

कौरवपाण्डवभेदभिन्नाः सर्वएवेत्यर्थः ॥ ४३ ॥ ४४ ॥ एवं सर्वेष्वविवेकिषु मम विवेकिनः किमुचितं तावद्युद्धान्निवर्तनम् । एतत्सूचितमित्याह—यदि मामिति । तदत्र संग्रहश्लोकः—'विद्याविद्योभयाघातसंघट्टविवशीकृतः । युक्त्या द्वयमपि त्यक्त्वा निर्विवेको भवेन्मुनिः ॥' ४५ ॥ ४६ ॥ इति महामाहेश्वराचार्याभिनवगुप्तपादविरचिते गीतार्थसंग्रहे प्रथमोऽध्यायः ॥ १ ॥



# द्वितीयोऽध्यायः ।

संजय उवाच ।

**तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

श्रीभगवानुवाच ।

**कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।**
**अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥**

२ आनन्दगिरिव्याख्या ।

अहिंसा परमो धर्मो भिक्षाशनं चेत्येवंलक्षणया बुद्ध्या युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यैश्वर्यमप्रचलितमवधार्य स्वस्थहृदयं धृतराष्ट्रं दृष्ट्वा तस्य दुराशामपनेष्यामीति मनीषया संजयस्तं प्रत्युक्तवानित्याह—**संजय इति** । परमेश्वरेण स्मार्यमाणोऽपि कृत्याकृत्ये सहसा नार्जुनः सस्मार विपर्ययप्रयुक्तस्य शोकस्य दृढतरमोहहेतुत्वात्तथापि तं भगवान्नोपेक्षितवानित्याह—**तं तथेति** । तं प्रकृतं पार्थं तथा स्वजनमरणप्रसङ्गदर्शनेन कृपया करुणयाविष्टमधिष्ठितमश्रुभिः पूर्णे समाकुले चेक्षणे यस्य तमश्रुव्याप्ततरलाक्षं विषीदन्तं शोचन्तमिदं वक्ष्यमाणं वाक्यं सोपपत्तिकं वचनं मधुनामानमसुरं सूदितवानिति मधुसूदनो भगवानुक्तवान्नतु यथोक्तमर्जुनमुपेक्षितवानित्यर्थः ॥ १ ॥ किं तद्वाक्यमित्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अर्जुने युद्धादुपरते मत्पुत्रा निष्कण्टकं राज्यं प्राप्स्यन्तीत्याशावन्तं राजानं प्रति संजय उवाच—**तं तथेति** । तमर्जुनम् । तथा 'स्वजनं हि कथं हत्वा सुखिनः स्याम माधव' इत्युक्तप्रकारेण कृपया स्नेहेन, नतु दयया परदुःखप्रहाणेच्छारूपया । तस्याः परदौर्बल्यनिश्चयोत्तरभाविन्याः अर्जुने 'यदि वा नो जयेयुः' इति स्वपराजयमाशङ्कमाने दुर्भणत्वात्, 'यानेव हत्वा न जिजीविषामः' इति स्नेहातिशयसूचकवाक्यशेषविरोधाच्च । आविष्टं व्याप्तम् । विषीदन्तं 'सीदन्ति मम गात्राणि' इत्यादिना उक्तरूपं विषादं प्राप्नुवन्तम् । इदं वक्ष्यमाणं वाक्यं वचनीयं उवाच । मधुसूदन इति दुष्टहन्तृत्वादेवार्जुनं निमित्तीकृत्य त्वत्पुत्रानपि हनिष्यत्येवेति त्वया जयाशा न कार्येति भावः ॥ १ ॥ अर्जुनमुद्योजयन् श्रीभगवानुवाच—**कुत इति** । कश्मलं वैक्लव्यम् । विषमे युद्ध-

४ मधुसूदनीव्याख्या ।

अहिंसा परमो धर्मो भिक्षाशनं चेत्येवंलक्षणया बुद्ध्या युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यमप्रचलितमवधार्य स्वस्थहृदयस्य धृतराष्ट्रस्य हर्षनिमित्तां ततः किंवृत्तमित्याकाङ्क्षामपनिनीषुः संजयस्तं प्रत्युक्तवानित्याह वैशम्पायनः । कृपा ममेत इति व्यामोहनिमित्तः स्नेहविशेषः । तया स्वभावसिद्धया आविष्टं व्याप्तम् । अर्जुनस्य कर्मत्वं कृपायाश्च कर्तृत्वं वदता तस्या आगन्तुकत्वं व्युदस्तम् । अतएव विषीदन्तं स्नेहविषयीभूतस्वजनविच्छेदाशङ्कानिमित्तः शोकापरपर्यायश्चित्तव्याकुलीभावो विषादस्तं प्राप्नुवन्तम् । अत्र विषादस्य कर्मत्वेनार्जुनस्य कर्तृत्वेन च तस्यागन्तुकत्वं सूचितम् । अतएव कृपाविषादवशादश्रुभिः पूर्णे आकुले दर्शनाक्षमे चेक्षणे यस्य तम् । एवमश्रुपातव्याकुलीभावाख्यकार्यद्वयजनकतया परिपोषं गताभ्यां कृपाविषादाभ्यामुद्विग्नं तमर्जुनमिदं सोपपत्तिकं वक्ष्यमाणं वाक्यमुवाच नतूपेक्षितवान् । मधुसूदन इति स्वयं दुष्टनिग्रहकर्ताऽर्जुनं प्रत्यपि तथैव वक्ष्यतीति भावः ॥ १ ॥ तदेव भगवतो वाक्यमवतारयति—**श्रीभगवानुवाचेति** । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।

५ भाष्योत्कर्षदीपिका ।

एवं रथोपस्थ उपविष्टमर्जुनं भगवान्किमुक्तवानित्याकाङ्क्षायां संजय उवाच—**तमिति** । यैस्त्वहिंसा परमो धर्मो भिक्षाशनं चेत्येवं लक्षणया बुद्ध्या युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यमप्रचलितमित्यवधार्य स्वस्थहृदयस्य धृतराष्ट्रस्य हर्षनिमित्तां ततः किं वृत्तमित्याकाङ्क्षामपनिनीषुः संजय उवाचेति, तत्तु पूर्वग्रन्थविरोधादुपेक्ष्यम् । तमर्जुनं तथा पूर्वोक्तेन प्रकारेण कृपया स्नेहजन्ययाऽऽविष्टं व्याप्तम् । अश्रुभिः पूर्णे आकुले दर्शनाक्षमे ईक्षणे नेत्रे यस्य तम् । विषादं बन्धुवियोगाशङ्कानिमित्तं शोकं प्राप्नुवन्तमिदं वक्ष्यमाणं वाक्यं वक्तुं योग्यं वचनमुवाच नतूपेक्षितवानित्यर्थः । मध्वादिदुष्टसूदनो भीमादिद्वारा दुर्योधनादिदुष्टसूदनायोवाचेति सूचयन्नाह—**मधुसूदन इति** ॥ १ ॥ किं तद्वाक्यमित्यत आह—**श्रीभगवानिति** । कुतो हेतोः त्वा त्वां शूरशिरोमणिमिदं

६ श्रीधरीव्याख्या ।

ततः किं वृत्तमित्यपेक्षायां संजय उवाच—**तं तथेति** । अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तम् । तथोक्तप्रकारेण विषीदन्तमर्जुनं प्रति मधुसूदन इदं वाक्यमुवाच ॥१॥ तदेव वाक्यमाह । श्रीभगवानुवाच—**कुत इति** । कुतो हेतोः त्वा इति त्वाम् । विषमे संकटे इदं

१ भाष्यटीकाकृतः, मधुसूदनः.

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ३ ॥**

२ आनन्दगिरिव्याख्या ।

पेक्षायामाह—**श्रीभगवानिति** । कुतो हेतोस्त्वा त्वां सर्वक्षत्रियप्रवरं कश्मलं मलिनं शिष्टगर्हितं युद्धात्पराङ्मुखत्वं विषमे सभयस्थाने समुपस्थितं प्राप्तं, अनार्यैः शास्त्रार्थमविद्वद्भिर्जुष्टं सेवितमस्वर्ग्यं स्वर्गानर्हं प्रत्यवायकारणमिह चाकीर्तिकरमयशस्करमर्जुननाम्ना प्रख्यातस्य तव नैतद्युक्तमित्यर्थः ॥ २ ॥ पुनरपि भगवानर्जुनं प्रत्याह—**क्लैब्यमिति** । क्लैब्यं क्लीबभावमधैर्यं मा स्म गमः मा गाः । हे पार्थ पृथातनय, नहि त्वयि महेश्वरेणापि कृताहवे प्रख्यातपौरुषे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संकटे । अनार्यैर्भीरुभिर्जुष्टं सेवितं नतु त्वादृशैः शूरैः, न आर्यैर्जुष्टमिति वा । यत्तु आर्यैरजुष्टमिति विग्रहो दर्शितस्तदर्थैक्येऽपि पदव्युत्क्रमदोषादुपेक्ष्यम् । अतएवास्वर्ग्यमकीर्तिकरं च । हे अर्जुन स्वच्छस्वभाव, तव नैतद्युक्तमिति भावः ॥ २ ॥ तदेवाह—**क्लैब्यमिति** । क्लैब्यं निर्वीर्यत्वं 'नच शक्नोम्यवस्थातुम्' इत्युक्तरूपं मा गाः ।

४ मधुसूदनीव्याख्या ।

वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना ॥' समग्रस्येति प्रत्येकं संबन्धः । मोक्षस्येति तत्साधनस्य ज्ञानस्य । इङ्गना संज्ञा । एतादृशं समग्रमैश्वर्यादिकं नित्यमप्रतिबन्धेन यत्र वर्तते स भगवान् । नित्ययोगे मतुप् । तथा—'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥' अत्र भूतानामिति प्रत्येकं संबध्यते । उत्पत्तिविनाशशब्दौ तत्कारणस्याप्युपलक्षकौ । आगतिगती आगामिन्यौ संपदापदौ । एतादृशो भगवच्छब्दार्थः श्रीवासुदेव एव पर्यवसित इति तथोच्यते—इदं स्वधर्मात्पराङ्मुखत्वं कृपाव्यामोहाश्रुपातादिपुरःसरं कश्मलं शिष्टगर्हितत्वेन मलिनं विषमे सभये स्थाने त्वा त्वां सर्वक्षत्रियप्रवरं कुतो हेतोः समुपस्थितं प्राप्तं, किं मोक्षेच्छातः, किंवा स्वर्गेच्छातः, अथवा कीर्तीच्छात इति किंशब्देनाक्षिप्यते । हेतुत्रयमपि निषेधति त्रिभिर्विशेषणैरुत्तरार्धेन । आर्यैर्मुमुक्षुभिर्न जुष्टमसेवितम् । स्वधर्मैराशयशुद्धिद्वारा मोक्षमिच्छद्भिरपक्वकषायैर्मुमुक्षुभिः कथं स्वधर्मस्त्याज्य इत्यर्थः । संन्यासाधिकारी तु पक्वकषायोऽग्रे वक्ष्यते । अस्वर्ग्यं स्वर्गहेतुधर्मविरोधित्वान्न स्वर्गेच्छया सेव्यम् । अकीर्तिकरं कीर्त्यभावकरमपकीर्तिकरं वा न कीर्तीच्छया सेव्यम् । तथाच मोक्षकामैः स्वर्गकामैः कीर्तिकामैश्च वर्जनीयम् । तत्काम एव त्वं सेवस इत्यहो अनुचितचेष्टितं तवेति भावः ॥ २ ॥ ननु बन्धुसेनावेक्षणजातेनाधैर्येण धनुरपि धारयितुमशक्नुवता मया किं कर्तुं शक्यमित्यत आह—क्लैब्यं क्लीबभावमधैर्यमोजस्तेजआदिभङ्गरूपं मा स्म गमः मा गाः । हे पार्थ पृथातनय, पृथया देवप्रसादलब्धे तत्तनयमात्रे वीर्यातिशयस्य प्रसिद्धत्वात्पृथातनयत्वेन क्लैब्यायोग्य इत्यर्थः । अर्जुनत्वेनापि तदयोग्यत्वमाह—**नैतदिति** । त्वय्यर्जुने साक्षान्महेश्वरेणापि सह कृताहवे प्रख्यातमहाप्रभावे नोपपद्यते न युज्यते । एतत्क्लैब्यमित्यसाधारण्येन तदयोग्यत्वनिर्देशः । ननु 'नच शक्नोम्यवस्थातुं भ्रमतीव च मे मनः' इति पूर्वमेव मयोक्तमित्याशङ्क्याह—**क्षुद्रमिति** । हृदयदौर्बल्यं मनसो भ्रमणादिरूपमधैर्यं क्षुद्रत्वकारणत्वात्क्षुद्रं

५ भाष्योत्कर्षदीपिका ।

स्वधर्मभूताद्युद्धात्पराङ्मुखत्वं कश्मलं मलिनं विषमेऽसमये समुपस्थितं संप्राप्तम् । यतोऽनार्यैर्दुष्टैर्जुष्टं सेवितमतएव दृष्टादृष्टफलरहितमित्याह । अस्वर्ग्यमकीर्तिकरमिति विशेषणद्वयेन स्वर्गानर्हं प्रत्यवायजनकत्वात् । अकीर्तिकरमयशस्यं किं मोक्षेच्छातः, किंवा स्वर्गेच्छातः, अथवा कीर्तीच्छातः, इति किंशब्देनाक्षिप्यते । हेतुत्रयमपि निषेधयति त्रिभिर्विशेषणैरुत्तरार्धेन । आर्यैर्मुमुक्षुभिर्न जुष्टमसेवितमिति केचित्, न आर्यैर्जुष्टम् । यत्त्वार्यैरजुष्टमिति विग्रहो दर्शितस्तत्त्वर्थैक्येऽपि पदव्युत्क्रमदोषादुपेक्ष्यमित्यन्ये, स्वधर्मयुद्धं कुर्वन्मलात्मकं पापं न प्राप्स्यसीति द्योतयन्नाह—**अर्जुनेति** । अर्जुननाम्ना प्रख्यातस्य तव नैतद्युक्तमित्येके । हे अर्जुन स्वच्छस्वभाव, तव नैतद्युक्तमिति भाव ईत्यन्ये ॥ २ ॥ एवं श्रुत्वापि क्लैब्यमत्यजन्तमर्जुनं पुनराह—**क्लैब्यमिति** । क्लैब्यं 'दृष्ट्वेमं स्वजनं कृष्ण' इत्यादिना प्रदर्शितमधैर्यं मा स्म गमः मा गाः । नैवाङ्गीकुर्वित्यर्थः । यत एतत्क्लैब्यं त्वयि प्रथितप्रभावेऽर्जुने नोपपद्यते उपपन्नं न भवति । तस्मात्क्षुद्रं क्षुद्रतायाः लघुतायाः संपादकं हृदयस्य दौर्बल्यं दुर्बलभावं निर्वीर्यत्वं त्यक्त्वोत्तिष्ठ युद्धायोद्युक्तो भव । मत्पितृष्वसृपृथातनये त्वयि मत्स्वभाव उचित इति ध्वनयन्नाह—**हे पार्थेति** । पृथया देवप्रसादलब्धे तत्तनयमात्रे त्वयि

६ श्रीधरीव्याख्या ।

कश्मलं समुपस्थितमयं मोहः प्राप्तः । यत आर्यैरसेवितम् । अस्वर्ग्यमधर्म्यमयशस्करं च ॥ २ ॥ तस्मात्—**क्लैब्यमिति** । हे पार्थ, क्लैब्यं कातर्यं मा स्म गमः न प्राप्नुहि । यतस्त्वय्येतन्नोपपद्यते योग्यं न भवति । क्षुद्रं तुच्छं हृदयदौर्बल्यं कातर्यं त्यक्त्वा युद्धायोत्तिष्ठ । हे

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १ ॥ आदौ लोकव्यवहाराश्रयेणैव भगवानर्जुनं प्रति बोधयति, क्रमात्तु ज्ञानं करिष्यतीत्यतोऽनार्यजुष्टमित्याह ॥ २ ॥ क्लैब्यादिभिर्निर्भ-

१ मधुसूदनः. २ नीलकण्ठः. ३ भाष्यटीकाकृतः. ४ नीलकण्ठः.

अर्जुन उवाच ।

**कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।**
**इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥**

२ आनन्दगिरिव्याख्या ।

महामहिमन्येतदुपपद्यते । क्षुद्रं क्षुद्रत्वकारणं हृदयदौर्बल्यं मनसो दुर्बलत्वमधैर्यं त्यक्त्वोत्तिष्ठ युद्धायोपक्रमं कुरु । हे परंतप, परं शत्रुं तापयतीति तथा संबोध्यते ॥ ३ ॥ एवं भगवता प्रतिबोध्यमानोऽपि शोकाभिभूतचेतस्त्वादप्रतिबुध्यमानः सन्नर्जुनः स्वाभिप्रायमेव प्रकृतं भगवन्तं प्रत्युक्तवान्—**कथमित्यादिना** । भीष्मं पितामहं द्रोणं चाचार्यं संख्ये रणे हे मधुसूदन, इषुभिर्यत्र वाचापि योत्स्यामीति वक्तुमनुचितं तत्र कथं बाणैर्योत्स्ये इति भावः । सायकैस्तौ कथं प्रतियोत्स्यामि प्रतियोत्स्ये, तौ हि पूजार्हौ कुसुमादिभिरर्चनयोग्यौ, हे अरिसूदन, सर्वानेवारीनयत्नेन सूदितवा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नैतत् त्वयि महादेवप्रतिभटे युक्तम् । अतः क्षुद्रं तुच्छं हृदयकृतमेव तव दौर्बल्यं नतु शक्तिसहायाद्यभावकृतं तत्त्यक्त्वा उत्तिष्ठ युद्धाय । परंतप शत्रुतापन ॥ ३ ॥ ननु शत्रवो वा स्वभावदुष्टा वा तापनीयाः नतु बान्धवाः साधवश्चेत्यर्जुन उवाच—**कथमिति** । मधुसूदनारिसूदनेति संबोधयन् तवापि दुष्टानपि शत्रूनेव तापयतः पूजार्हौ अदुष्टौ गुरू च भीष्मद्रोणौ जहीति वक्तुमयुक्तमिति सूचयति । समानार्थकमिदं संबोधनद्वयं वक्तुः शोकेन विक्लवत्वान्न पौनरुक्त्यदोषावहमित्यन्ये । इषुभिरिति ताभ्यां सह वाचापि योद्धुमशक्यं किमुत बाणैरिति भावः ॥ ४ ॥

४ मधुसूदनीव्याख्या ।

सुनिरसनं वा त्यक्त्वा विवेकेनापनीय उत्तिष्ठ युद्धाय सज्जो भव । हे परंतप परं शत्रुं तापयतीति तथा संबोध्यते । हेतुगर्भम् ॥ ३ ॥ ननु नायं स्वधर्मस्य त्यागः शोकमोहादिवशात् किंतु धर्मत्वाभावादधर्मत्वाच्चास्य युद्धस्य त्यागो मया क्रियत इति भगवदभिप्रायमप्रतिपद्यमानस्यार्जुनस्याभिप्रायमवतारयति—भीष्मं पितामहं, द्रोणं चाचार्यं, संख्ये रणे इषुभिः सायकैः प्रतियोत्स्यामि प्रहरिष्यामि कथम् । न कथंचिदपीत्यर्थः । यतस्तौ पूजार्हौ कुसुमादिभिरर्चनयोग्यौ । पूजार्हाभ्यां सह क्रीडास्थानेऽपि वाचापि हर्षफलकमपि लीलायुद्धमनुचितं किं पुनर्युद्धभूमौ शरैः प्राणत्यागफलकं प्रहरणमित्यर्थः । मधुसूदनारिसूदनेति संबोधनद्वयं शोकव्याकुलत्वेन पूर्वापरपरामर्शवैकल्यात् । अतो न मधुसूदनारिसूदनेत्यस्यार्थस्य पुनरुक्तत्वं दोषः । युद्धमात्रमपि यत्र नोचितं, दूरे तत्र वध इति प्रतियोत्स्यामीत्यनेन सूचितम् । अथवा पूजार्हौ कथं प्रतियोत्स्यामि । पूजार्हयोरेव विवरणं भीष्मं द्रोणं चेति । द्वौ ब्राह्मणौ भोजय देवदत्तं यज्ञदत्तं चेतिवत्संबन्धः । अयं भावः—दुर्योधनादयो नापुरस्कृत्य भीष्मद्रोणौ युद्धाय सज्जीभवन्ति । तत्र ताभ्यां सह युद्धं न तावद्धर्मः पूजादिवदविहितत्वात् । नचायमनिषिद्धत्वादधर्मोऽपि न भवतीति वाच्यम् । 'गुरुं हुंकृत्य त्वंकृत्य' इत्यादिना शब्दमात्रेणापि गुरुद्रोहो यदानिष्टफलत्वप्रदर्शनेन निषिद्धस्तदा किं वाच्यं ताभ्यां सह संग्रामस्याधर्मत्वे निषिद्धत्वे चेति ॥ ४ ॥ ननु भीष्मद्रोणयोः पूजार्हत्वं गुरुत्वेनैव, एवमन्येषामपि कृपादीनां । नच तेषां गुरुत्वेन स्वीकारः सांप्रतमुचितः 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥' इति स्मृतेः । तस्मादेषां युद्धगर्वेणावलिप्तानामन्याय-

५ भाष्योत्कर्षदीपिका ।

वीर्यातिशयस्य प्रसिद्धत्वात् । पृथातनयत्वेन त्वं क्लैब्यायोग्य इति केचित्[१] । शत्रूंस्तापय न स्वजनान्स्वहितकर्तॄनिति कथयितुं परंतपेति ॥ ३ ॥ ननु शत्रवस्तापनीया नतु गुरव इत्याशयेनाह—**कथमिति** । भीष्मं पितामहं द्रोणं च धनुर्विद्याचार्यं गुरुं संख्ये संग्रामभूमौ इषुभिः सह कथं प्रतियोत्स्यामि प्रतीपो भूत्वा युद्धं कथं करिष्यामि । यतः पूजार्हौ पूजायोग्यौ भीष्मद्रोणौ । पुष्पादिभिः पूजार्हयोस्तयोरिषुभिर्हननं मया कथं कर्तव्यमित्यर्थः । मधुसूदनारिसूदनेति संबोधयंस्त्वमपि दुष्टानेव तापयसीत्यतो गुरू अदुष्टौ च भीष्मद्रोणौ जहीति प्रेरयितुं नार्हसीति सूचयति । मधुसूदनारिसूदनेति संबोधनद्वयं शोकव्याकुलत्वेन पूर्वापरपरामर्शवैकल्यात् । अतो न मधुसूदनेत्यस्यार्थस्य पुनरुक्तत्वदोष इति केचित्[२] ॥ ४ ॥ एवं तर्हि राज्यालाभेन भोगाभावे भिक्षाटनं कर्तव्यं भविष्यती-

६ श्रीधरीव्याख्या ।

परन्तप शत्रुतापन ॥ ३ ॥ नाहं कातर्येण युद्धादुपरतोऽस्मि किंतु युद्धस्यान्याय्यत्वादित्यर्जुन उवाच—**कथमिति** । भीष्मद्रोणौ पूजायामर्हौ योग्यौ तौ प्रति कथमहं योत्स्यामि । तत्रापीषुभिः । यत्र वाचापि योत्स्यामीति वक्तुमनुचितं तत्र बाणैः कथं योत्स्यामीत्यर्थः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

स्त्वेनमभिदधदधर्मे तव धर्माभिमानो मिथ्येत्यादि दर्शयति ॥ ३ ॥ कथं भीष्ममहं संख्ये द्रोणं चेत्यादि । भुंजीय भोगानित्यादिना च कर्मवि-

१ मधुसूदनः. २ मधुसूदनः.

**गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।**
**हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥**

२ आनन्दगिरिव्याख्या ।

निति भगवानेवं संबोध्यते ॥ ४ ॥ राज्ञां धर्मेऽपि युद्धे गुर्वादिवधे वृत्तिमात्रफलत्वं गृहीत्वा पापमारोप्य ब्रूते—**गुरूनिति** । गुरून्भीष्मद्रोणादीन्भ्रात्रादींश्चात्र प्राप्तानहिंसित्वा महानुभावान्महामाहात्म्याञ्श्रुताध्ययनसंपन्नान् श्रेयः प्रशस्यतरं युक्तं भोक्तुमभ्यवहर्तुं भैक्ष्यं भिक्षाणां समूहः भिक्षाशनं नृपादीनां निषिद्धमपीह लोके व्यवहारभूमौ । नहि गुर्वादिहिंसया राज्यभोगोऽपेक्ष्यते । किंच हत्वा गुर्वादीनर्थकामानेव भुञ्जीय न मोक्षमनुभवेयमिहैव भोगो न स्वर्गे । अर्थकामानेव विशिनष्टि—**भोगानिति** । भुज्यन्त इति भोगास्तान्रुधिरप्रदिग्धांल्लोहितलिप्तानिवात्यन्तगर्हितान्, अतो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ननु युद्धोद्यतानां गुरूणामपि वधः श्रेयानित्याशङ्क्याह—**गुरूनिति** । यद्यपि त्वदुक्तं प्रशस्तमेव तथापि महानुभावान् गुरूनहत्वा भैक्षमेव भोक्तुं श्रेयः प्रशस्ततरम् । एवं तर्हि गुरूंस्त्यक्त्वा दुर्योधनादीनेव दुष्टान् जहीत्याशङ्क्याह—**अर्थकामानिति** । धनार्थिनो गुरवोऽवश्यं दुर्योधनसाहाय्यं करिष्यन्ति तेन तद्वधोऽपि प्रसक्त एवेत्यर्थः । तुशब्दः पक्षान्तरोपन्यासार्थः । इहैव नतु परलोके । भुञ्जीयेति संप्रश्ने लिङ् । गुरूनहत्वा भैक्षं श्रेयः उत हत्वा भोगसंपादनं श्रेय इति संप्रश्ने स्वयमेवान्त्यपक्षे दूषणमाह—**रुधिरप्रदिग्धानिति** ॥ ५ ॥ एवं तर्हि भैक्ष-

४ मधुसूदनीव्याख्या ।

राज्यग्रहणेन शिष्यद्रोहेण च कार्याकार्यविवेकशून्यानामुत्पथनिष्ठानां वधएव श्रेयानित्याशङ्क्याह—**गुरूनहत्वा** परलोकस्तावदस्त्येव, अस्मिंस्तु लोके तैर्हतराज्यानां नो नृपादीनां निषिद्धं भैक्ष्मपि भोक्तुं श्रेयः प्रशस्यतरमुचितं नतु तद्वधेन राज्यमपि श्रेय इति धर्मेऽपि युद्धे वृत्तिमात्रफलत्वं गृहीत्वा पापमारोप्य ब्रूते नत्ववलिप्तत्वादिना तेषां गुरुत्वाभाव उक्त इत्याशङ्क्याह—**महानुभावानिति** । महाननुभावः श्रुताध्ययनतपआचारादिनिबन्धनः प्रभावो येषां तान् । तथाच कालकामादयोऽपि यैर्वशीकृतास्तेषां पुण्यातिशयशालिनां नावलिप्तत्वादिक्षुद्रपाप्मसंश्लेष इत्यर्थः । हिमहानुभावानित्येकं वा पदम् । हिमं जाड्यमपहन्तीति हिमहा आदित्योऽग्निर्वा तस्येवानुभावः सामर्थ्यं येषां तान् । तथाचातितेजस्वित्वात्तेषामवलिप्तत्वादिदोषो नास्त्येव 'धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् । तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥' इत्युक्तेः । ननु यदार्थलुब्धाः सन्तो युद्धे प्रवृत्तास्तदैषां विक्रीतात्मनां कुतस्त्यं पूर्वोक्तं माहात्म्यम् । तथाचोक्तं भीष्मेण युधिष्ठिरंप्रति 'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥' इत्याशङ्क्याह—**हत्वेति** । अर्थलुब्धा अपि ते मदपेक्षया गुरवो भवन्त्येवेति पुनर्गुरुग्रहणेनोक्तम् । तुशब्दोऽप्यर्थे । ईदृशानपि गुरून्हत्वा भोगानेव भुञ्जीय नतु मोक्षं लभेय । भुज्यन्त इति भोगा विषयाः । कर्मणि घञ् । ते च भोगा इहैव न परलोके । इहापि च रुधिरप्रदिग्धा इव अपयशोव्याप्त-

५ भाष्योत्कर्षदीपिका ।

त्याशङ्कामिष्टापत्त्या परिहरति—**गुरूनिति** । गुरून्भीष्मद्रोणादीन्महानुभावानहत्वाऽहिंसित्वा इहास्मिँल्लोके भैक्ष्मपि भिक्षया लब्धमन्नं क्षत्रियस्य निषिद्धमपि भोक्तुमशितुं श्रेयः प्रशस्यम् । गुरुहिंसावर्जनार्थस्य भिक्षाशनस्य प्रत्यवायाजनकत्वात् । गुर्वहननेन नरकाभावं, महानतिप्रसिद्धोऽनुभावः प्रभावो येषामिति विशेषणेनापकीर्त्यभावं च गुणमुक्त्वा हनने दोषमाह—**हत्वेति** । महानुभावानित्यस्यात्रापि संबन्धः । गुरून्महानुभावान्हत्वा भोगानर्थकामानिहैव भुञ्जीय नतु परलोके, इहापि रुधिरप्रदिग्धान् । अपकीर्तिव्याप्तत्वेनात्यन्तजुगुप्सितानित्यर्थः । अर्थकामानिति गुरुविशेषणम् । तथाचार्थतृष्णाकुलत्वेनैते तावद्युद्धान्न निवर्तेरन् तस्मादेतद्वधः प्रसज्येतैवेत्यर्थः । तथाचोक्तं भीष्मेण 'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥' इत्यपरे । केचित्तु ननु 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥' इति स्मृतेस्तेषां युद्धगर्वेणावलिप्तानामन्यायराज्यग्रहणेन शिष्यद्रोहेण च कार्याकार्यविवेकशून्यानामुत्पथनिष्ठानां च वधएव श्रेयानित्याशङ्क्याह—**गुरूनिति** । महान् श्रुताध्ययनादिनिबन्धनः प्रभावो येषां तान् । तथाच कालकामादयोऽपि यैर्वशीकृतास्तेषां पुण्यातिशयिनां नावलिप्तत्वादिक्षुद्रपाप्मसंश्लेष इत्यर्थः । हिमहानुभावानित्येकं वा पदम् । हिमं जाड्यमपहन्तीति हिमहा आदित्योऽग्निर्वा तस्येवानुभावः सामर्थ्यं

६ श्रीधरीव्याख्या ।

हे अरिसूदन शत्रुसूदन ॥ ४ ॥ तर्हि तव देहयात्रापि न स्यादिति चेत्तत्राह—**गुरूनिति** । गुरून्द्रोणादीनहत्वा परलोकविरुद्धो गुरुवधस्तमकृत्वा इह लोके भिक्षान्नमपि भोक्तुं श्रेयः उचितम् । विपक्षे तु न केवलं परत्र दुःखं, इहैव तु नरकदुःखमनुभवेयमित्याह—**हत्वेति** । गुरून्हत्वा इहैव तु रुधिरेण प्रदिग्धान्प्रकर्षेण लिप्तानर्थकामात्मकान्भोगानहं भुञ्जीय अश्नीयाम् । यद्वा अर्थकामानिति गुरूणां विशेषणम् । अर्थतृष्णाकुलत्वादेते तावद्युद्धान्न निवर्तेरन् । तस्मादेतद्वधः प्रसज्येतैवेत्यर्थः । तथाच युधिष्ठिरं प्रति भीष्मेणोक्तम् 'अर्थस्य

---

१ भैक्षं भिक्षाणां समूहमिति भाष्यटीकाकारः. २ मधुसूदनः श्रीधरश्च. ३ मधुसूदनः.

**नचैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥**

२ आनन्दगिरिव्याख्या ।

भोगान्गुरुवधादिसाध्यान्परित्यज्य भिक्षाशनमेव युक्तमित्यर्थः ॥ ५ ॥ क्षत्रियाणां स्वधर्मत्वाद्युद्धमेव श्रेयस्करमित्याशङ्क्याह—**नचैतदिति** । एतदपि न जानीमो भैक्षयुद्धयोः कतरन्नोऽस्माकं गरीयः श्रेष्ठं किं भैक्षं हिंसाशून्यत्वादुत युद्धं स्ववृत्तित्वादिति । संदिग्धा च जयस्थितिः किं साम्यमेवोभयेषां, यद्वा वयं जयेमातिशयीमहि यदि वा नोऽस्मान्धार्तराष्ट्रा दुर्योधनादयो जयेयुः । जातोऽपि जयो न फलवान् । यतो यान्बन्धून्हत्वा न जिजीविषामो जीवितुं नेच्छामस्ते एवावस्थिताः प्रमुखे संमुखे धार्तराष्ट्रा धृतराष्ट्रस्यापत्यानि । तस्माद्भैक्षाद्युद्धस्य श्रेष्ठत्वं न सिद्धमित्यर्थः ॥ ६ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मेव तव श्रेय इत्याशङ्क्याह—**नचैतदिति** । यद्यप्यक्षत्रियस्य भैक्षमेवेष्टं तथापि नः अस्माकं क्षत्रियाणां भैक्षभोगयोर्मध्ये कतरत् गरीय इति वयं न विद्मः । ननूक्तं युद्धमेव गरीय इति तत्राह—**यद्वेति** । यदि वा वयं जयेम शत्रून्, यदि वा नोऽस्मान् शत्रव एव जयेयुः इदमपि न विद्मः । अन्त्यपक्षे पुनर्मरणमप्रार्थितं भैक्षमेव वापद्यत इति भावः । ननु मयि सहाये सति तव जय एव निश्चित इत्यत आह—**यानेवेति** । इष्टनाशाज्जयोऽपि पराजयरूप एवेत्यर्थः । यत्तु निश्चितेऽपि भैक्षश्रेयस्त्वे पुनर्युद्धभैक्षयोः कतरत् श्रेय इति संशयो नोचितः, अतो नः अस्माकं मध्ये कतरत् सैन्यं गरीय इति व्याख्येयमिति । तदसत् । धर्मसंमूढचेता इति वाक्यशेषादुक्तसंशयस्यैवोचितत्वात्, सैन्यगरीयस्त्वसंशयेनैव जयसंशयेऽन्यथासिद्धेऽन्यतरसंशयस्य वैयर्थ्यात्, विशे-

४ मधुसूदनीव्याख्या ।

त्वेनात्यन्तजुगुप्सिता इत्यर्थः । यदेहाप्येवं तदा परलोकदुःखं कियद्वर्णनीयमिति भावः । अथवा गुरून्हत्वार्थकामात्मकान्भोगानेव भुञ्जीय नतु धर्ममोक्षावित्यर्थकामपदस्य भोगविशेषणतया व्याख्यानान्तरं द्रष्टव्यम् ॥ ५ ॥ ननु भिक्षाशनस्य क्षत्रियं प्रति निषिद्धत्वाद्युद्धस्य च विहितत्वात्स्वधर्मत्वेन युद्धमेव तव श्रेयस्करमित्याशङ्क्याह—एतदपि न जानीमो भैक्षयुद्धयोर्मध्ये कतरन्नोऽस्माकं गरीयः श्रेष्ठं किं भैक्षं हिंसाशून्यत्वात्, उत युद्धं स्वधर्मत्वादिति इदं च न विद्मः । आरब्धेऽपि युद्धे यद्वा वयं जयेमातिशयीमहि, यदि वा नोऽस्माञ्जयेयुर्धार्तराष्ट्राः । उभयोः साम्यपक्षोऽप्यर्थाद्बोद्धव्यः । किंच जातोऽपि जयो नः फलतः पराजय एव, यतो यान्बन्धून्हत्वा जीवितुमपि वयं नेच्छामः किं पुनर्विषयानुपभोक्तुं, त एवावस्थिताः संमुखे धार्तराष्ट्राः धृतराष्ट्रसंबन्धिनो भीष्मद्रोणादयः सर्वेऽपि । तस्माद्भैक्षाद्युद्धस्य श्रेष्ठत्वं न सिद्धमित्यर्थः । तदेवं प्राक्तनेन ग्रन्थेन संसारदोषनिरूपणादधिकारिविशेषणान्युक्तानि । तत्र 'नच श्रेयोऽनु पश्यामि हत्वा स्वजनमाहवे' इत्यत्र रणे हतस्य परिव्राट्समानयोगक्षेमत्वोक्तेः 'अन्यच्छ्रेयोऽन्यदुतैव प्रेयः' इत्यादिश्रुतिसिद्धं श्रेयो मोक्षाख्यमुपन्यस्तम् । अर्थाच्च तदितरदश्रेय इति

५ भाष्योत्कर्षदीपिका ।

येषां तान् । तथाचातितेजस्वित्वात्तेषामवलिप्तत्वादिदोषो नास्त्येव 'धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् । तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥' इत्युक्तेरिति वर्णयन्ति तत्रैतदीयोत्थापनोक्तस्मृतौ अवलिप्तत्वादिदोषप्रयुक्तत्यागविधानेन वधानुज्ञया तच्छ्रेयस्त्वस्य दूरापास्तत्वमस्ति नवेति विद्वद्भिर्विचार्यम् ॥ किंच यैस्तु ननु पदार्थलुब्धाः सन्तो युद्धे प्रवृत्तास्तैर्दैषां विक्रीतात्मनां कुतस्त्यं पूर्वोक्तं माहात्म्यम् । तथाचोक्तं भीष्मेण युधिष्ठिरं प्रति 'अर्थस्य पुरुषो दासः' इत्यादीत्याशङ्क्याह–हत्वेतीत्युत्तरार्धं तैरवतारितं तत्राप्येतन्मूलकावलिप्तत्वादिदोषाणां तैरेव तदीयातिप्रसिद्धमहानुभावत्वातितेजस्वित्ववर्णनेन समाहितत्वात्पुनरीदृक्शङ्काया उत्थानमस्ति नवेति विचारणीयम् ॥ ५ ॥ नन्वहननस्य श्रेयस्त्वे निश्चिते किमर्थं शोचसीति चेत्तत्राह—**नेति** । नोऽस्माकं किं भैक्ष्यं गरीयः श्रेष्ठं हिंसाशून्यत्वादुत युद्धं स्वधर्मत्वादित्येतन्न विद्मः । इदमेव श्रेय इति न जानीमः । ननु पक्षद्वययोरपि समबलत्वे युद्धमेव कुतो नाङ्गीकरोषीत्याशङ्क्य स्वबुद्ध्या तु तत्र दोषं पश्यामीत्याह—**यद्वेति** । यद्वा वयं जयेम यदि वा नोऽस्मांस्ते जयेयुरिति न विद्मः जये सत्यपि दोष इत्याह—**यानिति** । यानेव हत्वा हिंसित्वा न जिजीविषामो जीवितुं नेच्छामस्ते धार्तराष्ट्राः

६ श्रीधरीव्याख्या ।

पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥' इति ॥ ५ ॥ किंच यद्यप्यधर्ममङ्गीकरिष्यामस्तथाऽपि किमस्माकं जयः पराजयो वा भवेदिति न ज्ञायत इत्याह—**नचेति** । एतद्द्वयोर्मध्ये नोऽस्माकं कतरत् किं नाम गरीयोऽधिकतरं

७ अभिनवगुप्ताचार्यव्याख्या ।

शेषानुसंधानं फलविशेषानुसंधानं च हेयतया सूचयति ॥ ४ ॥ ५ ॥ नचैतद्विद्म इत्यनेन च कर्मविशेषानुसंधानमाह । निरनुसंधानं तावत्कर्म नोपपद्यते । नच पराजयमभिसंधाय युद्धे प्रवर्तते । जयोऽपि नश्चायमनर्थ एव तदाह । अहत्वा गुरून् भैक्षमपि चर्तुं श्रेयः ॥ ६ ॥

१ मधुसूदनः.

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥**

२ आनन्दगिरिव्याख्या ।

समधिगतसंसारदोषजातस्यातितरां निर्विण्णस्य मुमुक्षोरुपसन्नस्यात्मोपदेशसंग्रहणेऽधिकारं सूचयति—कार्पण्येति । योऽल्पां स्वल्पामपि स्वक्षतिं न क्षमते स कृपणस्तद्विधत्वादखिलोऽनात्मविदप्राप्तपरमपुरुषार्थतया कृपणो भवति । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः तस्य भावः कार्पण्यं दैन्यं तेन दोषेणोपहतो दूषितः स्वभावश्चित्तमस्येति विग्रहः । सोऽहं पृच्छाम्यनुयुञ्जे त्वा त्वां धर्मसंमूढचेताः धर्मो धारयतीति परं ब्रह्म तस्मिन्संमूढ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

षाध्याहारदोषाच्च ॥ ६ ॥ उक्तसंशयवानेव पृच्छति—**कार्पण्येति** । कार्पण्यं दीनत्वम् । स्वभावः 'शौर्यं तेजो

४ मधुसूदनीव्याख्या ।

नित्यानित्यवस्तुविवेको दर्शितः, 'न काङ्क्षे विजयं कृष्ण' इत्यत्रैहिकफलविरागः, 'अपि त्रैलोक्यराजस्य हेतोः' इत्यत्र पारलौकिकफलविरागः, 'नरके नियतं वासः' इत्यत्र स्थूलदेहातिरिक्त आत्मा, 'किं नो राज्येन' इति व्याख्यातवर्त्मना शमः, 'किं भोगैः' इति दमः, 'यद्यप्येते न पश्यन्ति' इत्यत्र निर्लोभता, 'तन्मे क्षेमतरं भवेत्' इत्यत्र तितिक्षा, इति प्रथमाध्यायस्यार्थः स संन्याससाधनसूचनम्, अस्मिंस्त्वध्याये 'श्रेयो भोक्तुं भैक्षमपि' इत्यत्र भिक्षाचर्योपलक्षितः संन्यासः प्रतिपादितः ॥ ६ ॥ गुरूपसदनमिदानीं प्रतिपाद्यते, समधिगतसंसारदोषजातस्यातितरां निर्विण्णस्य विधिवद्गुरुमुपसन्नस्यैव विद्याग्रहणेऽधिकारात् । तदेवं भीष्मादिसंकटवशात् 'व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति श्रुतिसिद्धभिक्षाचर्येऽर्जुनस्याभिलाषं प्रदर्श्य विधिवदुपसत्तिमपि तत्संकटव्याजेनैव दर्शयति । यः स्वल्पामपि वित्तक्षतिं न क्षमते स कृपण इति लोके प्रसिद्धस्तद्विधत्वादखिलोऽनात्मविदप्राप्तपुरुषार्थतया कृपणो भवति । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः तस्य भावः कार्पण्यं अनात्माध्यासवत्त्वं तन्निमित्तोऽस्मिञ्जन्मन्येत एव मदीयास्तेषु हतेषु किं जीवितेनेत्यभिनिवेशरूपो ममतालक्षणो दोषस्तेनोपहतस्तिरस्कृतः स्वभावः क्षात्रो युद्धोद्योगलक्षणो यस्य सः । तथा धर्मविषये निर्णायकप्रमाणादर्शनात्संमूढं किमेतेषां वधो धर्मः, किमेतत्परिपालनं धर्मः, तथा किं पृथ्वीपरिपालनं धर्मः, किंवा यथावस्थितोऽरण्यनिवासएव धर्म इत्यादिसंशयैर्व्याप्तं चेतो यस्य स तथा । 'न चैतद्विद्मः कतरन्नो गरीयः' इत्यत्र व्याख्यातमेतत् । एवंविधः सन्नहं त्वा त्वामिदानीं पृच्छामि । श्रेय इत्यनुषङ्गः । अतो यन्निश्चितमैकान्तिकमात्यन्तिकं च श्रेयः परमपुमर्थभूतं फलं स्यात्तन्मे मह्यं ब्रूहि । साधनानन्तरमवश्यंभावित्वमैकान्तिकत्वम्, जातस्याविनाश आत्यन्तिकत्वम्, यथा ह्यौषधे कृते कदाचिद्रोगनिवृत्तिर्न भवेदपि, जातापि च रोगनिवृत्तिः पुनरपि रोगोत्पत्त्या विनाश्यते, एवं कृतेऽपि यागे प्रतिबन्धवशात्स्वर्गो न भवेदपि, जातोऽपि स्वर्गो दुःखाक्रान्तो नश्यति चेति नैकान्तिकत्वमात्यन्तिकत्वं वा तयोः । तदुक्तम् 'दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ । दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥' इति 'दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः । तद्विपरीतः श्रेयान्व्यक्ताव्यक्तज्ञविज्ञानात् ॥' इति च । ननु त्वं मम सखा ननु शिष्योऽत आह—**शिष्यस्तेऽहमिति** ।

५ भाष्योत्कर्षदीपिका ।

धृतराष्ट्रसंबन्धिनः प्रमुखे संमुखेऽवस्थिताः ॥ ६ ॥ संसारासारतां ज्ञातवत इहामुत्रार्थे भोगेऽत्यन्तविरक्तस्य मुमुक्षोर्गुरूपसत्तिं सूचयन्नाह—**कार्पण्येति** । अनात्मवित्त्वात्संबन्धिनां वियोगासहनं कार्पण्यम् । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः । तेन कार्पण्येन दैन्यरूपेण दोषेणोपहतो दूषितः स्वभावोऽन्तःकरणं यस्य सः । कार्पण्यदोषेणोपहतोऽभिभूतः स्वभावः शौर्यादिलक्षणो यस्य स इत्यपरे[1] । स्वभावः क्षात्रो युद्धोद्योगलक्षण इति केचित्[2] । यतो धर्मसंमूढचेताः धारयतीति धर्मः सर्वाधिष्ठानं परमात्मा तस्मिन्सम्यङ्मूढमविवेकितां प्राप्तं चेतो यस्य सोऽहं त्वा त्वां पृच्छामि । किमित्यत आह—**यदिति** । यच्छ्रेयः स्यान्निश्चितं श्रुतिस्मृतीतिहासपुराणैर्यच्छ्रेयस्त्वेन नित्यनिरतिशयानन्दत्वेन निश्चितं स्यात्तन्मे ब्रूहि निश्चितमैकान्तिकमनपेक्षिकं श्रेयः स्यान्न रोगनिवृत्तिवदनैकान्तिकमनात्यन्तिकं स्वर्गवदापेक्षिकं चेत्येके[3] । मे मह्यं ब्रूहि कथय । ननु नापुत्रशिष्यायेति

६ श्रीधरीव्याख्या ।

भवष्यतीति न विद्मः । तदेव द्वयं दर्शयति । यद्वा एतान्वयं जयेम जेष्यामः यदि वा नोऽस्मानेते जयेयुर्जेष्यन्तीति । किं चास्माकं वा जयोऽपि फलतः पराजय एवेत्याह । यानेव हत्वा जीवितुं नेच्छामस्त एवैते संमुखेऽवस्थिताः ॥ ६ ॥ **कार्पण्येति** । तस्मात्कार्पण्यदोषोपहतस्वभावः । एतान्हत्वा कथं जीविष्याम इति कार्पण्यं, दोषश्च स्वकुलक्षयकृतः, ताभ्यामुपहतोऽभिभूतः स्वभावः शौर्यादिलक्षणो

७ अभिनवगुप्ताचार्यव्याख्या ।

एतच्च निश्चेतुमशक्यं किं जयं काङ्क्षामः किंवा पराजयम् । जयेऽपि बन्धूनां विनाशात् 'सेनयोरुभयोर्मध्ये' इत्यादिना सूचयति । संशयाविष्टो-

---

१ नीलकण्ठः. २ मधुसूदनः. ३ भाष्यटीकाकृत्.

**न हि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छोषणमिन्द्रियाणाम् ।**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

२ आनन्दगिरिव्याख्या ।

मविवेकतां गतं चेतो यस्य ममेति तथाहमुक्तः । किं पृच्छसि, यन्निश्चितमैकान्तिकमनापेक्षिकं श्रेयः स्यान्न रोगनिवृत्तिवदनैकान्तिकमनात्यन्तिकं स्वर्गवदापेक्षिकं वा तन्निःश्रेयसं मे मह्यं ब्रूहि 'नापुत्रायाशिष्याय' इति निषेधान्न प्रवक्तव्यमिति मा मंस्थाः । यतः शिष्यस्तेऽहं भवामि । शाध्यनुशाधि मां निःश्रेयसं । त्वामहं प्रपन्नोऽस्मि ॥ ७ ॥ कुतो निःश्रेयसमेवेच्छसि तत्राह—**नहीति** । यस्मान्न प्रपश्यामि । किं न पश्यसि । ममापनुद्यादपनयेद् यच्छोकमुच्छोषणं प्रतपनमिन्द्रियाणां तन्न पश्यामि । ननु शत्रून्निहत्य राज्ये प्राप्ते शोकनिवृत्तिस्ते भविष्यति नेत्याह—**अवाप्येति** । अविद्यमानः सपत्नः शत्रुर्यस्य तद् दृढं राज्यं राज्ञः कर्म प्रजारक्षणप्रशासनादि तदिदमस्यां भूमाववाप्यापि शोकापनयकारणं न पश्यामीत्यर्थः । तर्हि देवेन्द्रत्वादिप्राप्त्या शोकापनयस्ते भविष्यति नेत्याह—**सुराणामपीति** । तेषामाधिपत्यमधिपतित्वं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

धृतिर्दाक्ष्यम्' इत्यादिना वक्ष्यमाणलक्षणः । शेषं स्पष्टम् ॥ ७ ॥ ननु क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतपेति युद्धमेव श्रेय इत्युक्तं किं पुनः पृच्छसीत्यत आह—**नहीति** । बन्धुनाशनिमित्तः शोको राज्यलाभेन स्वर्गाधिप-

४ मधुसूदनीव्याख्या ।

त्वदनुशासनयोग्यत्वादहं तव शिष्य एव भवामि न सखा न्यूनज्ञानत्वात् । अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय करुणया नत्वशिष्यत्वशङ्कयोपेक्षणीयोऽहमित्यर्थः । एतेन 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति' इत्यादिगुरूपसत्तिप्रतिपादकः श्रुत्यर्थो दर्शितः ॥ ७ ॥ ननु स्वयमेव त्वं श्रेयो विचारय श्रुतसंपन्नोऽसि किं परशिष्यत्वेनेत्यत आह—यच्छ्रेयः प्राप्तं सत् कर्तृ मम शोकमपनुद्यादपनुदेन्निवारयेत्तन्न पश्यामि । हि यस्मात्तस्मान्मां शाधीति 'सोऽहं भगवः शोचामि तं मा भगवाञ्शोकस्य पारं तारयतु' इति श्रुत्यर्थो दर्शितः । शोकानपनोदे को दोष इत्याशङ्क्य तद्विशेषणमाह—**इन्द्रियाणामुच्छोषणमिति** । सर्वदा संतापकरमित्यर्थः । ननु युद्धे प्रयतमानस्य तव शोकनिवृत्तिर्भविष्यति जेष्यसि चेत्तदा राज्यप्राप्त्या इतरथा च स्वर्गप्राप्त्या । 'द्वावेतौ पुरुषौ लोके' इत्यादिधर्मशास्त्रादित्याशङ्क्याह—**अवाप्येत्यादिना** । शत्रुवर्जितं सस्यादिसंपन्नं च राज्यं, तथा सुराणामाधिपत्यं हिरण्यगर्भत्वपर्यन्तमैश्वर्यमवाप्य स्थितस्यापि मम यच्छोकमपनुद्यात्तन्न पश्यामीत्यन्वयः । 'तद्यथेह कर्मचितो लोकः

५ भाष्योत्कर्षदीपिका ।

निषेधान्न वक्तव्यमिति चेन्नाहमशिष्यः किंतु शिष्यस्तेऽहमतो मां शिष्यं शासनार्हं त्वां प्रपन्नं शरणागतं च शाधि शिक्षय । स्वबुद्ध्या भिक्षाशनं प्रशस्यं मन्यमानोऽपि कार्पण्यदोषोपहतस्वभावः भिक्षाशनं धर्म उत युद्धमिति संशयापगमाभावात् धर्मसंमूढचेता अहं त्वां पृच्छामि यद्भैक्षं युद्धं वा निश्चितमव्यभिचारि श्रेयःसाधनं तन्मे ब्रूहीति धर्मतत्त्वविषयकोऽपि प्रश्नो बोध्यः । यत्तु केचित् धर्मविषये संमूढं किमेतेषां वधो धर्मः, किमेतत्परिपालनं धर्मः । तथा किं पृथ्वीपरिपालनं धर्मः, किं वा यथावस्थितोऽरण्यनिवास एव धर्म इत्यादिसंशयैर्व्याप्तं चेतो यस्य स एवंविधोऽहं त्वामिदानीं पृच्छामि श्रेय इत्यनुषङ्गः । अतो यन्निश्चितमैकान्तिकमात्यन्तिकं च श्रेयः परमपुरुषार्थभूतं फलं स्यात्तन्मे ब्रूहि । साधनानन्तरमवश्यंभावित्वमैकान्तिकत्वम् । जातस्याविनाशित्वमात्यन्तिकत्वमिति वर्णयन्ति । तत्र धर्मविषयकसंदेहवान्परमपुमर्थभूतं फलं पृच्छाम्यतस्तन्मे ब्रूहीत्यस्यान्यद्भुक्तमन्यद्वान्तमिति न्यायतुल्यस्य सामञ्जस्यमस्ति नवेति विद्वद्भिराकलनीयम् ॥ ७ ॥ ननु विजयिनो लब्धभूमिराज्यस्य हतस्य स्वधर्मबलादिन्द्रपुत्रत्वाद्वा प्राप्तदेवाधिपत्यस्य वा तवाज्ञाननिबन्धनशोकापनोदकोऽपि यः कश्चित्सुलभो भविष्यतीति चेत्तत्राह—**नहीति** । यदित्यव्ययम् । भूमौ राज्यमसपत्नं न विद्यते सपत्नः शत्रुर्यस्य तत् । निष्कण्टकमित्यर्थः । ऋद्धं सस्यादिसंपन्नं सुराणामाधिपत्यं वा प्राप्यापि तन्नहि प्रपश्यामि यः शोकमिन्द्रियाणामुच्छोषणमत्यन्तशोषकरं ममापनुद्यादपनयेदित्यन्वयः । अतस्त्वमेवेदानीमेव शोकमपाकुर्वित्यभिप्रायः । कुतो निःश्रेयसमेवेच्छसीति तत्राह—**नहीति** । यस्मान्ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणां तन्न पश्यामि । ननु शत्रून्निहत्य राज्ये प्राप्ते शोकनिवृत्तिस्ते भविष्यति नेत्याह—**अवाप्येति** । अविद्यमानः सपत्नः शत्रुर्यस्य तदृद्धं राज्यं राज्ञः कर्म प्रजारक्षणशासनादि तदिदमस्यां भूमाववाप्यापि शोकापनयनकारणं न पश्यामीत्यर्थः । तर्हि देवेन्द्रत्वादिप्राप्त्या शोकापनयस्ते भविष्यति नेत्याह—**सुराणामपीति** ।

६ श्रीधरीव्याख्या ।

यस्य सोऽहं त्वां पृच्छामि । तथा धर्मे संमूढं चेतो यस्य सः । युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्मो वाऽधर्मो वेति संदिग्धचित्तः सन्नित्यर्थः । अतो मे यन्निश्चितं श्रेयो युक्तं स्यात्तद्ब्रूहि । किंच तेऽहं शिष्यः शासनार्हः । अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय ॥ ७ ॥ त्वमेव विचार्य यद्युक्तं तत्कुर्विति चेत्तत्राह—**नहीति** । इन्द्रियाणामुच्छोषणमतिशोषणकरं मदीयं शोकं यत्कर्मापनुद्यादपनये-

१ मधुसूदनः।

**एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः ।**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥**
**तमुवाच हृषीकेशः प्रहसन्निव भारत ।**
**सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥**

२ आनन्दगिरिव्याख्या ।

स्वाम्यमिन्द्रत्वं ब्रह्मत्वं वा तदवाप्यापि मम शोको नापगच्छेदित्यर्थः ॥ ८ ॥ एवमर्जुनेन स्वाभिप्रायं भगवन्तं प्रति प्रकाशितं संजयो राजानमावेदितवानित्याह—**संजय इति** । एवं प्रागुक्तप्रकारेण भगवन्तं प्रत्युक्त्वा परंतपोऽर्जुनो न योत्स्ये न संप्रहरिष्येऽत्यन्तासह्यशोकप्रसङ्गादिति गोविन्दमुक्त्वा तूष्णीमब्रुवन्बभूव किलेत्यर्थः ॥ ९ ॥ तमर्जुनं सेनयोर्वाहिन्योरुभयोर्मध्ये विषीदन्तं विषादं कुर्वन्तमतिदुःखितं शोकमोहाभ्यामभिभूतं स्वधर्मात्प्रच्युतप्रायं प्रतीत्य प्रहसन्निवोपहासं कुर्वन्निव तदाश्वासार्थं हे भारत भरतान्वय, इत्येवं संबोध्य भगवानिदं प्रश्नोत्तरं निःश्रेयसाधिगमसाधनं वचन-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

त्यलाभेन वा न निवर्तयिष्यत इति युद्धादन्यं कंचित् निवृत्तिरूपं शमोपायं ब्रूहीत्याशयः । अत्रार्जुनविषादव्याजेन ब्रह्मविद्याधिकारिविशेषणं भैक्षचर्या, इहामुत्रार्थफलभोगविरागश्च दर्शितः ॥ ८ ॥ ९ ॥ **तमिति** । मूढोऽप्ययममूढ-

४ मधुसूदनीव्याख्या ।

क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति श्रुतेः । 'यत्कृतकं तदनित्यम्' इत्यनुमानात्, प्रत्यक्षेणाप्यैहिकानां विनाशदर्शनाच्च । नैहिक आमुत्रिको वा भोगः शोकनिवर्तकः किंतु स्वसत्ताकालेऽपि भोगपारतन्त्र्यादिना विनाशकालेऽपि विच्छेदाच्छोकजनक एवेति न युद्धं शोकनिवृत्तयेऽनुष्ठेयमित्यर्थः । एतेनेहामुत्रभोगविरागोऽधिकारिविशेषणत्वेन दर्शितः ॥ ८ ॥ तदनन्तरमर्जुनः किं कृतवानिति धृतराष्ट्राकाङ्क्षायां गुडाकेशो जितालस्यः परंतपः शत्रुतापनोऽर्जुनः हृषीकेशं सर्वेन्द्रियप्रवर्तकत्वेनान्तर्यामिणं गोविन्दं गां वेदलक्षणां वाणीं विन्दतीति व्युत्पत्त्या सर्ववेदोपादानत्वेन सर्वज्ञम् । आदौ एवं 'कथं भीष्ममहं संख्ये' इत्यादिना युद्धस्वरूपायोग्यतामुक्त्वा, तदनन्तरं 'न योत्स्ये' इति युद्धफलाभावं चोक्त्वा, तूष्णीं बभूव । बाह्येन्द्रियव्यापारस्य युद्धार्थं पूर्वं कृतस्य निवृत्त्या निर्व्यापारो जात इत्यर्थः । स्वभावतो जितालस्ये सर्वशत्रुतापने च तस्मिन्नागन्तुकमालस्यमतापकत्वं च नास्पदमादधातीति द्योतयितुं हशब्दः । गोविन्दहृषीकेशपदाभ्यां सर्वज्ञत्वसर्वशक्तित्वसूचकाभ्यां भगवतस्तन्मोहापनोदनमनायाससाध्यमिति सूचितम् ॥ ९ ॥ एवं युद्धमुपेक्षितवत्यप्यर्जुने भगवान्नोपेक्षितवानिति धृतराष्ट्रदुराशानिरासायाह—सेनयोरुभयोर्मध्ये युद्धोद्यमेनागत्य तद्विरोधिनं विषादं मोहं प्राप्नुवन्तं तमर्जुनं प्रहसन्निव अनुचिताचरणप्रकाशनेन लज्जाम्बुधौ मज्जयन्निव हृषीकेशः सर्वान्तर्यामी भगवानिदं वक्ष्यमाणमशोच्यानित्यादि वचः परमगम्भीरार्थमनुचिताचरणप्रकाशकमुक्तवान्नतूपेक्षितवानित्यर्थः । अनुचिताचरणप्रकाशनेन लज्जोत्पादनं प्रहासः । लज्जा च दुःखात्मिकेति द्वेषविषय एव मुख्यः । अर्जुनस्य तु भगवत्कृपाविषयत्वादनुचिताचरणप्रकाशनस्य च विवेकोत्पत्तिहेतुत्वादेकदलाभावेन

५ भाष्योत्कर्षदीपिका ।

तेषामाधिपत्यमधिपतित्वं स्वाम्यमिन्द्रत्वं ब्रह्मत्वं वा तदवाप्यापि मम शोको नापगच्छतीत्यर्थ इत्येके[1] ॥ ८ ॥ जिताज्ञाननिद्रोऽपि शत्रुतापनोऽपि हृषीकेशनियमितसर्वेन्द्रियोऽज्ञानं युद्धोपरतिं चाङ्गीकृत्य लोकोद्धारार्थं वेदार्थप्रकाशनाय वेदज्ञं परमात्मानं गोविन्दमेवमुक्त्वा तूष्णीं बभूवेति सूचयन्नाह—**एवमिति** । एवं पूर्वोक्तप्रकारेण हृषीकेशं सर्वेन्द्रियनियन्तारमुक्त्वा गुडाकेशोऽर्जुनः परंतपः शत्रुतापनो न योत्स्ये युद्धं न करिष्यामीति गोविन्दमुक्त्वा तूष्णीं वाग्व्यापारविनिर्मुक्तो बभूवेत्यर्थः । हेति वाक्यालंकारे । स्वभावतो जितालस्ये सर्वशत्रुतापने च तस्मिन्नागन्तुकमालस्यमतापकत्वं च नास्पदमध्यास्यतीति द्योतयितुं हशब्दः । गोविन्दहृषीकेशपदाभ्यां सर्वज्ञत्वसर्वशक्तित्वसूचकाभ्यां भगवतस्तन्मोहापनोदनमनायाससाध्यमिति सूचितमिति केचित्[2] ॥ ९ ॥ एतदनन्तरं भगवान्किं कृतवानित्यत आह—**तमिति** । तं सेनयोरुभयोर्मध्ये विषीदन्तं शोकमोहावङ्गीकुर्वन्तं अर्जुनं हृषीकेशो भगवान्वासुदेवः प्रहसन्निव मदाज्ञावशवर्तिनि त्वय्यहं प्रसन्नोऽस्मीति प्रकटयन्निवेदं वक्ष्यमाणं वचो वचनमुवाच । अनुचिताचरणप्रकाशनेन लज्जाम्बुधौ मज्जयन्निवेति केचित्[3] । मूढोऽप्ययममूढवद्वदतीति प्रहसन्निवेत्यन्ये[4] । त्वमपि भरतवंशोद्भवत्वाद्भगवद्वाक्यं सावधानतया श्रोतुमर्हसीति

६ श्रीधरीव्याख्या ।

त्तदहं न प्रपश्यामि । यद्यपि भूमौ निष्कण्टकं समृद्धं राज्यं प्राप्स्यामि । तथा सुरेन्द्रत्वमपि यदि प्राप्स्यामि । एवमभीष्टं तत्सर्वमवाप्यापि शोकापनोदनोपायं न प्रपश्यामीत्यन्वयः ॥ ८ ॥ एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायां संजय उवाच । एवमिति स्पष्टार्थः ॥ ९ ॥ ततः किं वृत्तमित्यपेक्षायामाह—**तमुवाचेति** । प्रहसन्निव प्रसन्नमुखः सन्नित्यर्थः ॥ १० ॥ देहात्मनोरविवेकादस्यैवं शोको भवतीति

१ भाष्यटीकाकृत. २ मधुसूदनः. ३ मधुसूदनः. ४ नीलकण्ठः.

**श्रीभगवानुवाच ।**

**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम् ।

'दृष्ट्वा तु पाण्डवानीकम्' इत्यारभ्य 'न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह' इत्येतदन्तः प्राणिनां शोकमोहादिसंसारबीजभूतदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः, तथा ह्यर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसंबन्धिबान्धवेष्वहमेषां ममैत इत्येवं प्रत्ययनिमित्तस्नेहविच्छे-

२ आनन्दगिरिव्याख्या ।

सूचिवानित्याह—तमुवाचेति ॥ १० ॥ तदेव वचनमुदाहरति—श्रीभगवानिति । अतीतसंदर्भस्येत्थमक्षरोत्थमर्थं विवक्षित्वा तस्मिन्नेव वाक्यविभागमवगमयति—दृष्ट्वा त्विति । 'धर्मक्षेत्रे कुरुक्षेत्रे' इत्यादिराद्यश्लोकस्तावदेकं वाक्यम् । शास्त्रस्य कथासंबन्धपरत्वेन पर्यवसानात् । दृष्ट्वेत्यारभ्य यावत्तूष्णीं बभूव हेति तावच्चैकं वाक्यम् । इत आरभ्य 'इदं वचः' इत्येतदन्तो ग्रन्थो भवत्यपरं वाक्यमिति विभागः । नन्वाद्यश्लोकस्य युक्तमेकवाक्यत्वं प्रकृतशास्त्रस्य महाभारतेऽवतारावद्योतित्वादन्तिमस्यापि संभवत्येकवाक्यत्वमर्जुनाश्वासार्थतया प्रवृत्तत्वात्तन्मध्यमस्य तु कथमेकवाक्यत्वमित्याशङ्क्यार्थैकत्वादित्याह—प्राणिनामिति । शोको मानससंतापः, मोहो विवेकाभावः । आदिशब्दस्तदवान्तरभेदार्थः, स एव संसारस्य दुःखात्मनो बीजभूतो दोषस्तस्योद्भवे कारणमहंकारो ममकारस्तद्धेतुरविद्या च तत्प्रदर्शनार्थत्वेनेति योजना । संगृहीतमर्थं विवृणोति—तथाहीति । राज्यं राज्ञः कर्म परिपालनादि । पूजार्हा गुरवो भीष्मद्रोणादयः । पुत्राः स्वयमुत्पादिताः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वद्वदतीति प्रहसन्निव । इदं वक्ष्यमाणम् ॥ १० ॥ अर्जुनस्य देहनाशे आत्मनाशधीः, स्वधर्मे युद्धे चाधर्मधीरिति मोहद्वयम् । तत्राद्यं ब्रह्मविद्यासूत्रभूतैर्विंशत्या श्लोकैरपनिनीषन् श्रीभगवानुवाच—**अशोच्यानन्वशोचस्त्वमिति ।**

४ मधुसूदनीव्याख्या ।

गौण एवायं प्रहास इति कथयितुमिवशब्दः । लज्जामुत्पादयितुमिव विवेकमुत्पादयितुमर्जुनस्यानुचिताचरणं भगवता प्रकाश्यते, लज्जोत्पत्तिस्तु नान्तरीयकतयास्तु मास्तु वेति न विवक्षितेति भावः । यदि युद्धारम्भात्प्रागेव गृहे स्थितो युद्धमुपेक्षेत तदा नानुचितं कुर्यात्, महता संरम्भेण तु युद्धभूमावागत्य तदुपेक्षणमतीवानुचितमिति कथयितुं सेनयोरित्यादिविशेषणम् । एतच्चाशोच्यानित्यादौ स्पष्टं भविष्यति ॥ १० ॥ तत्रार्जुनस्य युद्धाख्ये स्वधर्मे स्वतो जातापि प्रवृत्तिर्द्विविधेन मोहेन तन्निमित्तेन च शोकेन प्रतिबद्धेति द्विविधो मोहस्तस्य निराकरणीयः । तत्रात्मनि स्वप्रकाशपरमानन्दरूपे सर्वसंसारधर्माऽसंसर्गिणि स्थूलसूक्ष्मशरीरद्वयतत्कारणाविद्याख्योपाधित्रयाविवेकेन मिथ्याभूतस्यापि संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभासरूप एकः सर्वप्राणिसाधारणः । अपरस्तु युद्धाख्ये स्वधर्मे हिंसादिबाहुल्येनाधर्मत्वप्रतिभासरूपोऽर्जुनस्यैव करुणादिदोषनिबन्धनोऽसाधारणः । एवमुपाधित्रयविवेकेन शुद्धात्मस्वरूपबोधः प्रथमस्य निवर्तकः सर्वसाधारणः, द्वितीयस्य तु हिंसादिमत्त्वेऽपि युद्धस्य स्वधर्मत्वेनाधर्मत्वाभावबोधोऽसाधारणः, शोकस्य तु कारणनिवृत्त्यैव निवृत्तेर्न पृथक् साधनान्तरापेक्षेत्यभिप्रेत्य क्रमेण भ्रमद्वयमनुवदन् श्रीभगवानुवाच—अशोच्यान्शोचितुमयोग्यानेव भीष्मद्रोणादीनात्मसहितांस्त्वं पण्डितोऽपि सन् अन्वशोचो-

५ भाष्योत्कर्षदीपिका ।

द्योतयन्संजयः प्रज्ञाचक्षुषं धृतराष्ट्रं संबोधयति भारतेति तदाश्वासार्थं भारतान्वयेत्येवं संबोध्य भगवांस्तमुवाचेत्येके ॥ १० ॥ तदेवमर्जुनः कथं भीष्ममहमित्यादिना प्रदर्शिताभ्यां गुर्वादिष्वहमेतेषां ममैत इति भ्रान्तिप्रत्ययनिमित्तस्नेहाविच्छेदादिनिमित्ताभ्यां शोकमोहाभ्यां स्वतएव क्षत्रधर्मे युद्धे प्रवृत्तोऽप्यभिभूतविवेकविज्ञानस्तस्माद्युद्धादुपरराम, परधर्मं च भिक्षाशनादिकं कर्तुं प्रववृते, तथाच सर्वप्राणिनां शोकमोहाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धाश्रयणं च स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां कायिकादित्रिविधं कर्म फलाभिसंधिपूर्वकमेव साहंकारं भवति तत्रैवंसति धर्माधर्मोपचयादिष्टानिष्टजन्ममरणादिसंप्राप्तिलक्षणः संसारो नोपशाम्यत्यतो धर्मसंमूढचेतसं महति शोकसागरे निमग्नं लोकमुद्दिधीर्षुः संसारबीजभूतयोस्तयोश्चित्तशुद्धिजनकनिष्कामकर्मणो लब्धात्तत्त्वज्ञानात्केवलादन्यतो निवृत्तिमपश्यन् उपायोपेयभूतं निष्ठाद्वयमुपदिदिक्षुरर्जुनं निमित्तीकृत्य भगवान्वासुदेव आह—**अशोच्या-**

६ श्रीधरीव्याख्या ।

तद्विवेकप्रदर्शनार्थं श्रीभगवानुवाच—**अशोच्यानिति ।** शोकस्याविषयभूतानेव बन्धूंस्त्वमन्वशोचः अनुशोचितवानसि 'दृष्ट्वेमं स्वजनं कृष्ण

७ अभिनवगुप्ताचार्यव्याख्या ।

ऽनेकपक्षेण युद्धान्निवृत्तो यत एवमाहस्स शाधि मां त्वां प्रपन्नमिति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ अत उभयोर्ज्ञानाज्ञानयोर्मध्यगः श्रीभगवताऽनुशिष्यते । श्रीभगवानुवाच । त्वं मानुष्येणोपहत इति । मानुष्यं मनुष्यभावः । अन्तकमुखं स्वयमेते प्रविष्टा इति तव को बाधः । अशोच्य॰

१ श्रीमच्छांकरभाष्यम् ।

दादिनिमित्तावात्मनः शोकमोहौ प्रदर्शितौ 'कथं भीष्ममहं संख्ये' इत्यादिना । शोकमोहाभ्यां ह्यभिभूतविवेकविज्ञानः स्वतएव क्षात्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम । परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते । तथाच सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धसेवा च स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसन्धिपूर्विकैव साहंकारा च भवति । तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखासंप्राप्तिलक्षणः संसारोऽनुपरतो भवतीत्यतः संसारबीजभूतौ शोकमोहौ तयोश्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति । तदुपदिदिक्षुः सर्वलोकानुग्रहार्थमर्जुनं निमित्तीकृत्याह भगवान्

२ आनन्दगिरिव्याख्या ।

सौभद्रादयः, संबन्धान्तरमन्तरेण स्नेहगोचरा गुरुपुत्रप्रभृतयो मित्रशब्देनोच्यन्ते, उपकारनिरपेक्षतया स्वयमुपकारिणो हृदयानुरागभाजो भगवत्प्रमुखाः सुहृदः, स्वजना ज्ञातयो दुर्योधनादयः, संबन्धिनः श्वशुरश्यालप्रभृतयो द्रुपदधृष्टद्युम्नादयः, परंपरया पितृपितामहादिष्वनुरागभाजो राजानो बान्धवास्तेषु यथोक्तं प्रलयं निमित्तीकृत्य यः स्नेहो यश्च तैः सह विच्छेदो यच्चैतेषामुपघाते पातकं या च लोकगर्हा सर्वं तन्निमित्तं ययोरात्मनः शोकमोहयोस्तावेतौ संसारबीजभूतौ कथमित्यादिना दर्शिताविलर्थः । कथं पुनरनयोः संसारबीजयोरर्जुने संभावनोपपद्यते, नहि प्रथितमहामहिम्नो विवेकविज्ञानवतः स्वधर्मे प्रवृत्तस्य तस्य शोकमोहावनर्थहेतू संभाविताविलाशङ्क्य विवेकतिरस्कारेण तयोर्विहिताकरणप्रतिषिद्धाचरणकारणत्वादनर्थाधायकयोरस्ति तस्मिन्संभावनेत्याह—शोकमोहाभ्यामिति । भिक्षया जीवनं प्राणधारणमादिशब्दादशेषकर्मन्यासलक्षणं पारिव्राज्यमात्माभिध्यानमित्यादि गृह्यते । किंचार्जुने दृश्यमानौ शोकमोहौ संसारबीजं शोकमोहत्वादस्मदादिनिष्ठशोकमोहवदित्युपलब्धौ शोकमोहौ प्रत्येकं पक्षीकृत्यानुमातव्यमित्याह—तथाचेति । शोकमोहादीत्यादिशब्देन मिथ्याभिमानस्नेहगर्हादयो गृह्यन्ते स्वभावतश्चित्तदोषसामर्थ्यादित्यर्थः । अस्मदादीनामपि स्वधर्मे प्रवृत्तानां विहिताकरणत्वाद्यभावान्न शोकादेः संसारबीजतेति दृष्टान्तस्य साध्यविकलतेति चेत्तत्राह—स्वधर्मे इति । कायादीनामित्यादिशब्दादवशिष्टानीन्द्रियाण्यादीयन्ते । फलाभिसन्धिस्तद्विषयेऽभिलाषः कर्तृत्वभोक्तृत्वाभिमानोऽहंकारः । प्रागुक्तप्रकारेण वागादिव्यापारे सति किं सिध्यति तत्राह—तत्रेति । शुभकर्मानुष्ठानेन धर्मोपचयादिष्टं देवादिजन्म ततः सुखप्राप्तिः, अशुभकर्मानुष्ठानेनाधर्मोपचयादनिष्टं तिर्यगादिजन्म ततो दुःखप्राप्तिः, व्यामिश्रकर्मानुष्ठानादुभाभ्यां धर्माधर्माभ्यां मनुष्यजन्म ततः सुखदुःखे भवतः, एवमात्मकः संसारः संततो वर्तत इत्यर्थः । अर्जुनस्यान्येषां च शोकमोहयोः संसारबीजत्वमुपपादितमुपसंहरति—इत्यत इति । तदेवं प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्यात्माज्ञानोत्थनिवर्तनीयशोकमोहाख्यसंसारबीजप्रदर्शनपरत्वं दर्शयित्वा वक्ष्यमाणसंदर्भस्य सहेतुकसंसारनिवर्तकसम्यग्ज्ञानोपदेशे तात्पर्यं दर्शयति—तयोश्चेति । तद्यथोक्तं ज्ञानम् उपदिदिक्षुरुपदेष्टुमिच्छन् भगवानाहेति संबन्धः । सर्वलोकानुग्रहार्थं यथोक्तं ज्ञानं भगवानुपदिदिक्षतीत्ययुक्तमर्जुनं प्रत्येवोपदेशादित्याशङ्क्याह—अर्जुनमिति । नहि तस्यामवस्थायामर्जुनस्य भगवता यथोक्तज्ञानमुपदेष्टुमिष्टं किंतु स्वधर्मानुष्ठानाद्बुद्धिशुद्ध्युत्तरकालमित्यभिप्रेत्योक्तं निमित्तीकृत्येति । सर्वकर्मसंन्यासपूर्वकादात्मज्ञानादेव केवलात्कैवल्यप्राप्ति-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' इति श्रुतेर्देहाद्युपाधिनाशेऽप्याकाशवन्नाशरहितत्वेन अशोचनीयान्

४ मधुसूदनीव्याख्या ।

ऽनुशोचितवानसि । ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेत्येवमर्थकेन 'दृष्ट्वेमं स्वजनम्' इत्यादिना । तथाचाशोच्ये शोच्यभ्रमः पश्वादिसाधारणस्त्वात्यन्तपण्डितस्यानुचित इत्यर्थः । तथा 'कुतस्त्वा कश्मल'मित्यादिना मद्वचनेनानुचितमिदमाचरितं मयेति विमर्शे प्राप्तेऽपि त्वं स्वयं प्रज्ञोऽपि सन् प्रज्ञानां अवादान्प्रज्ञैर्वक्तुमनुचितान्शब्दांश्च

५ भाष्योत्कर्षदीपिका ।

नित्यादिना । एतेन तत्रार्जुनस्य द्विविधो मोहो निराकरणीयः । तत्रात्मन्युपाधित्रयाविवेकेन मिथ्याभूतस्यापि संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभासरूपः सर्वप्राणिसाधारण एकः, अपरस्तु स्वधर्मेऽधर्मत्वप्रतिभासरूपोऽर्जुनस्यैवासाधारण इति प्रत्युक्तम् । सर्वे-

६ श्रीधरीव्याख्या ।

युयुत्सुं समुपस्थितम्' इत्यादिना तत्र 'कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्' इत्यादिना मया बोधितोऽपि पुनश्च प्रज्ञावतां पण्डि-

७ अभिनवगुप्ताचार्यव्याख्या ।

निति । शोचितुमशक्यं कलेवरं सदा नश्वरत्वात्, अशोचनार्हं चात्मानं शोचसि । न कश्चिद्गतासुः मृतः अगतासुः जीवन्वा शोच्यो-

१ मधुसूदनः,

१ श्रीमच्छांकरभाष्यम् ।

**वासुदेवः—अशोच्यानित्यादि । तत्र केचिदाहुः, सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवला-त्कैवल्यं न प्राप्यत एव किं तर्ह्यग्निहोत्रादिश्रौतस्मार्तकर्मसहिताज्ज्ञानात्कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति । ज्ञापकं चाहुरस्यार्थस्य 'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि', 'कर्मण्येवा-धिकारस्ते', 'कुरु कर्मैव तस्मात्त्वम्' इत्यादि । हिंसादियुक्तत्वाद्वैदिकं कर्माधर्मायेतीयमप्याशङ्का न कार्या, कथं क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसालक्षणमत्यन्तक्रूरतरमपि स्वधर्म इति कृत्वा नाधर्माय, तदकरणे च 'ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि' इति ब्रुवता यावज्जीवादिश्रुति-चोदितानां स्वकर्मणां पश्वादिहिंसालक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति । तदसत्, ज्ञानकर्मनिष्ठयोर्विभागवचनाद्बुद्धिद्वयाश्रययोरशोच्यानित्यादिना भगवता**

२ आनन्दगिरिव्याख्या ।

रिति गीताशास्त्रार्थः स्वाभिप्रेतो व्याख्यातः । संप्रति वृत्तिकृतामभिप्रेतं निरसितुमनुवदति—**तत्रेति** । निर्धारितः शास्त्रार्थः सतिसप्तम्या परामृश्यते । तेषामुक्तिमेव विवृण्वन्नादौ सैद्धान्तिकमभ्युपगमं प्रत्यादिशति—**सर्वकर्मेति** । वैदिकेन कर्मणा समुच्चयं व्युदसितुं मात्रपदम् । स्मार्तेन कर्मणा समुच्चयं निरसितुमवधारणम् । अभ्याससंबन्धं धुनीते—**केवलादिति** । नैवेत्येवकारः संबध्यते । केन तर्हि प्रकारेण ज्ञानं कैवल्यप्राप्तिकारणमित्याशङ्क्याह—**किं तर्हीति** । किं तत्र प्रमापकमित्याशङ्क्येदमेव शास्त्रमित्याह—**इति सर्वास्विति** । यथा प्रयाजानुयाजाद्युपकृतमेव दर्शपौर्णमासादि स्वर्गसाधनं तथा श्रौतस्मार्तकर्मोपकृतमेव ब्रह्मज्ञानं कैवल्यं साधयति । विमतं सेतिकर्तव्यताकमेव स्वफलसाधकं करणत्वाद्दर्शपौर्णमासादिवत् । तदेवं ज्ञानकर्मसमुच्चयपरं शास्त्रमित्यर्थः । इतिपदमाहुरित्यनेन पूर्वेण संबध्यते । पौर्वापर्यपर्यालोचनायां शास्त्रस्य समुच्चयपरत्वं न निर्धारितमित्याशङ्क्याह—**ज्ञापकं चेति** । न केवलं ज्ञानं मुक्तिहेतुरपितु समुच्चितमित्यस्यार्थस्य स्वधर्माननुष्ठाने पापप्राप्तिवचनसामर्थ्यलक्षणं लिङ्गं गमकमित्यर्थः । शास्त्रस्य समुच्चयपरत्वे लिङ्गवद्वाक्यमपि प्रमाणमित्याह—**कर्मण्येवेति** । तत्रैव वाक्यान्तरमुदाहरति—**कुरु कर्मेति** । ननु 'न हिंस्यात्सर्वा भूतानि' इत्यादिना प्रतिषिद्धत्वेन हिंसादेरनर्थहेतुत्वावगमात्तदुपेतं वैदिकं कर्माधर्मायेति नानुष्ठातुं शक्यते, तथाच तस्य मोक्षे ज्ञानेन समुच्चयो न सिध्यतीति सांख्यमतमाशङ्क्य परिहरति—**हिंसादीति** । आदि-शब्दादुच्छिष्टभक्षणं गृह्यते । यथोक्तशङ्का न कर्तव्येत्यत्राकाङ्क्षापूर्वकं हेतुमाह—**कथमित्यादिना** । स्वशब्देन क्षत्रियो विवक्ष्यते । युद्धाकरणे क्षत्रियस्य प्रत्यवायश्रवणात्तस्य तं प्रति नित्यत्वेनावश्यकर्तव्यत्वप्रतीतेर्गुर्वादिहिंसायुक्त-मतिक्रूरमपि कर्म नाधर्मायेति हेत्वन्तरमाह—**तदकरणे चेति** । आचार्यादिहिंसायुक्तमतिक्रूरमपि युद्धं नाधर्मायेति ब्रुवता भगवता श्रौतानां हिंसादियुक्तानामपि कर्मणां दूरतो नाधर्मत्वमिति स्पष्टमुपदिष्टं भवति सामान्यशास्त्रस्य व्यर्थहिंसानिषेधार्थत्वात्क्रतुविषये चोदितहिंसायास्तदविषयत्वात्कुतो वैदिककर्मानुष्ठानानुपपत्तिरित्यर्थः । ज्ञानकर्मसमु-च्चयात्कैवल्यसिद्धिरित्युपसंहर्तुमितिशब्दः । यत्तावद्ब्रह्मज्ञानं सेतिकर्तव्यताकं स्वफलसाधकं कारणत्वादित्यनुमानं तद्दूषयति—**तदसदिति** । नहि शुक्तिकादिज्ञानमज्ञाननिवृत्तौ स्वफले सहकारि किंचिदपेक्षते, तथाच व्यभिचाराद-साधकं करणत्वमित्यर्थः । यत्तु गीताशास्त्रे समुच्चयस्यैव प्रतिपाद्यतेति प्रतिज्ञातं तदपि विभागवचनविरुद्धमित्याह—**ज्ञानेति** । सांख्यबुद्धिर्योगबुद्धिश्चेति बुद्धिद्वयं तत्र सांख्यबुद्ध्याश्रयां ज्ञाननिष्ठां व्याख्यातुं सांख्यशब्दार्थमाह—**अशोच्यानित्यादिनेति** । 'अशोच्यानित्यादि स्वधर्ममपि चावेक्ष्य' इत्येतदन्तं वाक्यं यावद्विवक्ष्यति तावता

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

भीष्मादीनन्वशोचः कथमेते गुरवो मया हन्तव्याः, कथं वा तैर्विनाहं जीविष्यामीति शोकं कृतवानसि । एवं मूढोऽपि त्वं प्रज्ञावादान् प्रज्ञावतां देहादन्यमात्मानं जानतां वादान् शब्दान् 'नरके नियतं वासः', 'पतन्ति पितरो ह्येषाम्' इत्यादीन् भाषसे परं नतु प्रज्ञावानसि । तत्र हेतुः—**गतासूनिति** । गतासून् गतप्राणान्देहा-

४ मधुसूदनीव्याख्या ।

'कथं भीष्ममहं संख्ये' इत्यादीन्भाषसे वदसि नतु लज्जया तूष्णींभवसि । अतःपरं किमनुचितमस्तीति सूचयितुं चकारः । तथाचाधर्मे धर्मत्वभ्रान्तिर्धर्मे चाधर्मत्वभ्रान्तिरसाधारणी तवातिपण्डितस्य नोचितेति भावः । प्रज्ञावतां पण्डितानां वादा-न्भाषसे परं नतु बुध्यस इति वा भाषणापेक्षयानुशोचनस्य प्राक्कालत्वादतीतत्वनिर्देशः । भाषणस्य तु तदुत्तरकालत्वेना-व्यवहितत्वाद्वर्तमानत्वनिर्देशः । छान्दसेन तिङ्व्यत्ययेनानुशोचसीति वर्तमानत्वं व्याख्येयम् । ननु बन्धुविच्छेदे शोको नानु-चितः वसिष्ठादिभिर्महाभागैरपि कृतत्वादित्याशङ्क्याह—**गतासूनिति** । ये पण्डिताः विचारजन्यात्मतत्त्वज्ञानवन्तस्ते गत-

७ अभिनवगुप्ताचार्यव्याख्या ।

स्ति । तथाहि । आत्मा तावदविनाशी । नानाशरीरेषु संचरतः कास्य शोच्यता । नच देहान्तरसंचारएव शोच्यता । एवंहि यौवनादाव-

१ श्रीमच्छांकरभाष्यम् ।

यावत् 'स्वधर्ममपि चावेक्ष्य' इत्येतदन्तेन ग्रन्थेन यत्परमार्थात्मतत्त्वनिरूपणं कृतं तत्सांख्यं तद्विषया बुद्धिरात्मनो जन्मादिषड्विक्रियाभावादकर्तात्मेति प्रकरणार्थनिरूपणाद्या जायते सा सांख्यबुद्धिः, सा येषां ज्ञानिनामुचिता भवति ते सांख्याः, एतस्या बुद्धेर्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तत्वकर्तृत्वभोक्तृत्वाद्यपेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाधनानुष्ठाननिरूपणलक्षणो योगः, तद्विषया बुद्धिर्योगबुद्धिः, सा येषां कर्मिणामुचिता भवति ते योगिनः । तथाच भगवता विभक्ते द्वे बुद्धी निर्दिष्टे 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति । तयोश्च सांख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां सांख्यानां विभक्तां वक्ष्यति 'पुरा वेदात्मना मया प्रोक्ता' इति, तथाच योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां विभक्तां च वक्ष्यति 'कर्मयोगेन योगिनाम्' इति, एवं सांख्यबुद्धिं योगबुद्धिं चाश्रित्य द्वे निष्ठे विभक्ते भगवतैवोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रययोरेकपुरुषाश्रयत्वासंभवं पश्यता । यथैतद्विभागवचनं तथैव दर्शितं शातपथीये ब्राह्मणे 'एतमेव प्रव्राजिनो लोकमिच्छन्तो ब्राह्मणाः प्रव्रजन्ति' इति सर्वकर्मसंन्यासं विधाय तच्छेषेण 'किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः' इति । तत्रैव च 'प्राग् दारपरिग्रहात्पुरुष आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोक-

२ आनन्दगिरिव्याख्या ।

ग्रन्थेन यत्परमार्थभूतमात्मतत्त्वं भगवता निरूपितं तद्यथा सम्यक्ख्यायते प्रकाश्यते सा वैदिकी सम्यग्बुद्धिः संख्या तया प्रकाश्यत्वेन संबन्धि प्रकृतं तत्त्वं सांख्यमित्यर्थः । सांख्यशब्दार्थमुक्त्वा तत्प्रकाशिकां बुद्धिं तद्वतश्च सांख्यान्व्याकरोति—तद्विषयेति । तद्विषया बुद्धिः सांख्यबुद्धिरिति संबन्धः । तामेव प्रकटयति—आत्मन इति । 'न जायते म्रियते वा' इत्यादिप्रकरणार्थनिरूपणद्वारेणात्मनः षड्भावविक्रियासंभवात्कूटस्थोऽसाविति या बुद्धिरुत्पद्यते सा सांख्यबुद्धिः तत्पराः संन्यासिनः सांख्या इत्यर्थः । संप्रति योगबुद्ध्याश्रयां कर्मनिष्ठां व्याख्यातुकामो योगशब्दार्थमाह—एतस्या इति । यथोक्तबुद्ध्युत्पत्तौ विरोधादेवानुष्ठानायोगात्तस्यास्तन्निवर्तकत्वात्पूर्वमेव तदुत्पत्तेरात्मनो देहादिव्यतिरिक्तत्वाद्यपेक्षया धर्माधर्मं निष्कृष्य तेनेश्वराराधनरूपेण कर्मणा पुरुषो मोक्षाय युज्यते योग्यः संपद्यते तेन मोक्षसिद्धये परंपरया साधनीभूतप्रागुक्तधर्मानुष्ठानात्मको योग इत्यर्थः । अथ योगबुद्धिं विभजन्योगिनो विभजते—तद्विषयेति । उक्ते बुद्धिद्वये भगवतोऽभिमतिं दर्शयति—तथाचेति । सांख्यबुद्ध्याश्रया ज्ञाननिष्ठेत्येतदपि भगवतोऽभिमतमित्याह—तयोश्चेति । ज्ञानमेव योगो ज्ञानयोगस्तेन हि ब्रह्मणा युज्यते तादात्म्यमापद्यते तेन संन्यासिनां निष्ठा निश्चयेन स्थितिस्तात्पर्येण परिसमाप्तिस्तां कर्मनिष्ठातो व्यतिरिक्तां निष्ठयोर्मध्ये निष्कृष्य भगवान्वक्ष्यतीति योजना । 'लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन सांख्यानाम्' इत्येतद्वाक्यमुक्तार्थविषयमर्थतोऽनुवदति—पुरेति । योगबुद्ध्याश्रया कर्मनिष्ठेत्यत्रापि भगवदनुमतिमादर्शयति—तथाचेति । कर्मैव योगः कर्मयोगस्तेन हि बुद्धिशुद्धिद्वारा मोक्षहेतुज्ञानाय पुमान्युज्यते तेन निष्ठां कर्मिणां ज्ञाननिष्ठातो विलक्षणां कर्मयोगेनेत्यादिना वक्ष्यति भगवानिति योजना । निष्ठाद्वयं बुद्धिद्वयाश्रयं भगवता विभज्योक्तमुपसंहरति—एवमिति । कया पुनरनुपपत्त्या भगवता निष्ठाद्वयं विभज्योक्तमित्याशङ्क्याह—ज्ञानकर्मणोरिति । कर्म हि कर्तृत्वाद्यनेकत्वबुद्ध्याश्रयं, ज्ञानं पुनरकर्तृत्वैकत्वबुद्ध्याश्रयं, तदुभयमित्थं विरुद्धसाधनसाध्यत्वान्नैकावस्थस्यैव पुरुषस्य संभवति, अतो युक्तमेव तयोर्विभागवचनमित्यर्थः । भगवदुक्तविभागवचनस्य मूलत्वेन श्रुतिमुदाहरति—यथेति । तत्र ज्ञाननिष्ठाविषयं वाक्यं पठति—एतमेवेति । प्रकृतमात्मानं नित्यविज्ञप्तिस्वभावं वेदितुमिच्छन्तस्त्रिविधेऽपि कर्मफले वैतृष्ण्यभाजः सर्वाणि कर्माणि परित्यज्य ज्ञाननिष्ठा भवन्तीति पञ्चमलकारस्वीकारेण संन्यासविधिं विवक्षित्वा तस्यैव विधेः शेषेणार्थवादेन किं प्रजयेत्यादिना मोक्षफलं ज्ञानमुक्तमित्यर्थः । ननु फलभावात्प्रजाक्षेपो नोपपद्यते पुत्रेणैतल्लोकजयस्य वाक्यान्तरसिद्धत्वादित्याशङ्क्य विदुषां प्रजासाध्यमनुष्यलोकस्यात्मव्यतिरेकेणाभावादात्मनश्चासाध्यत्वादाक्षेपो युक्तिमानिति विवक्षित्वाह—येषामिति । इति ज्ञानं दर्शितमिति शेषः । तस्मिन्नेव ब्राह्मणे कर्मनिष्ठाविषयं वाक्यं दर्शयति—तत्रैवेति ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

न्नानुशोचयन्ति प्रत्युत निर्हरन्त्येव । एतेन प्राण एवेष्टो नतु देहः । तथाच श्रुतिः 'प्राणो ह पिता प्राणो माता

४ मधुसूदनीव्याख्या ।

प्राणानगतप्राणांश्च बन्धुत्वेन कल्पितान्देहान्नानुशोचन्ति । एते मृताः सर्वोपकरणपरित्यागेन गताः किं कुर्वन्ति क्व तिष्ठन्ति एते च जीवन्तो बन्धुविच्छेदेन कथं जीविष्यन्तीति न व्यामुह्यन्ति । समाधिसमये तत्प्रतिभासाभावात्, व्युत्थानसमये तत्प्रतिभासेऽपि मृषात्वेन निश्चयात् । नहि रज्जुतत्त्वसाक्षात्कारेण सर्पभ्रमेऽपनीते तन्निमित्तभयकम्पादि संभवति, नवा

१ श्रीमच्छांकरभाष्यम् ।

**त्रयसाधनं पुत्रं, द्विप्रकारं च वित्तं मानुषं दैवं च, तत्र मानुषं वित्तं कर्मरूपं पितृलोकप्राप्तिसाधनं, विद्यां च दैवं वित्तं देवलोकप्राप्तिसाधनं, 'सोऽकामयत' इत्यविद्याकामवत एव सर्वाणि कर्माणि श्रौतादीनि दर्शितानि, 'तेभ्यो व्युत्थाय प्रव्रजन्ति' इति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितम् । तदेतद्विभागवचनमनुपपन्नं स्यात् यदि श्रौतकर्मज्ञानयोः समुच्चयोऽभिप्रेतः स्याद्भगवतः । नचार्जुनस्य प्रश्न उपपन्नो भवति 'ज्यायसी चेत्कर्मणस्ते' इत्यादिः, एकपुरुषानुष्ठेयत्वासंभवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं कथमर्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेन्मृषैव ज्यायसी चेत्कर्मणस्ते मता बुद्धिरिति, किंच यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तः स्यात् अर्जुनस्यापि स उक्त एवेति 'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम्' इति कथमुभयोरुपदेशे सत्यन्यतरविषय एव प्रश्नः स्यात्, नहि पित्तप्रशमार्थिनो वैद्येन मधुरं शीतलं च भोक्तव्यमित्युपदिष्टे तयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नो भवति । अथार्जुनस्य भगवदुक्तवचनार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत, तथापि भगवता प्रश्नानुरूपं प्रतिवचनं देयं, मया बुद्धिकर्मणोः समुच्चय उक्तः किमर्थ-**

२ आनन्दगिरिव्याख्या ।

प्राकृतत्वमतत्त्वदर्शित्वेनाज्ञत्वं, स च ब्रह्मचारी सन्गुरुसमीपे यथाविधि वेदमधीत्यार्थज्ञानार्थं धर्मजिज्ञासां कृत्वा तदुत्तरकालं लोकत्रयप्राप्तिसाधनं पुत्रादित्रयं 'सोऽकामयत जाया मे स्यात्' इत्यादिना कामितवानिति श्रुतमित्यर्थः । वित्तं विभजते—**द्विप्रकारमिति** । तदेव प्रकारद्वैरूप्यमाह—**मानुषमिति** । मानुषं वित्तं व्याचष्टे—**कर्मरूपमिति** । तस्य फलपर्यवसायित्वमाह—**पितृलोकेति** । दैवं वित्तं विभजते—**विद्यां चेति** । तस्यापि फलनिष्ठत्वमाह—**देवेति** । कर्मनिष्ठाविषयत्वेनोदाहृतश्रुतेस्तात्पर्यमाह—**अविद्येति** । अज्ञस्य कामनाविशिष्टस्यैव कर्माणि 'सोऽकामयत' इत्यादिना दर्शितानीत्यर्थः । ज्ञाननिष्ठाविषयत्वेन दर्शितश्रुतेरपि तात्पर्यं दर्शयति—**तेभ्य इति** । कर्मसु विरक्तस्यैव संन्यासपूर्विका ज्ञाननिष्ठा प्रागुदाहृतश्रुत्या दर्शितेत्यर्थः । अवस्थाभेदेन ज्ञानकर्मणोर्भिन्नाधिकारत्वस्य श्रुतत्वात्तन्मूलेन भगवतो विभागवचनेन शास्त्रस्य समुच्चयपरत्वं प्रतिज्ञातमपबाधितमिति साधितम्, किंच समुच्चयो ज्ञानस्य श्रौतेन स्मार्तेन वा कर्मणा विवक्ष्यते, यदि प्रथमस्तत्राह—**तदेतदिति** । समुच्चयेऽभिप्रेते प्रश्नानुपपत्तिं दोषान्तरमाह—**नचेति** । तामेवानुपपत्तिं प्रकटयति—**एकपुरुषेति** । यदि समुच्चयः शास्त्रार्थो भगवता विवक्षितस्तदा ज्ञानकर्मणोरेकेन पुरुषेणानुष्ठेयत्वमेव तेनोक्तमर्जुनेन च श्रुतं तत् कथं तदसंभवमनुक्तमश्रुतं च मिथ्यैव श्रोता भगवत्यारोपयेत् । नच तदारोपादृते किमिति मां कर्मण्येवातिक्रूरे युद्धलक्षणे नियोजयसीति प्रश्नोऽवकल्पते । तथाच प्रश्नालोचनया प्रष्टृप्रवक्त्रोः शास्त्रार्थतया समुच्चयोऽभिप्रेतो न भवतीति प्रतिभातीत्यर्थः । किंच समुच्चयपक्षे कर्मापेक्षया बुद्धेर्ज्यायस्त्वं भगवता पूर्वमनुक्तमर्जुनेन चाश्रुतं कथमसौ तस्मिन्नारोपयितुमर्हति ततश्चानुवादवचनं श्रोतुरनुचितमित्याह—**बुद्धेश्चेति** । इतश्च समुच्चयः शास्त्रार्थो न संभवत्यन्यथा पञ्चमादावर्जुनस्य प्रश्नानुपपत्तेरित्याह—**किंचेति** । ननु सर्वान्प्रत्युक्तेऽपि समुच्चयेनार्जुनं प्रत्युक्तोऽसाविति तदीयप्रश्नोपपत्तिरित्याशङ्क्याह—**यदीति** । **एतयोः** कर्मतत्त्यागयोरिति यावत् । ननु कर्मापेक्षया कर्मत्यागपूर्वकस्य ज्ञानस्य प्राधान्यात्तस्य श्रेयस्त्वात्तद्विषयप्रश्नोपपत्तिरिति चेन्नेत्याह—**नहीति** । तथैव समुच्चये पुरुषार्थसाधने भगवता दर्शिते सत्यन्यतरगोचरो न प्रश्नो भवतीति शेषः । समुच्चये भगवतोक्तेऽपि तदज्ञानादर्जुनस्य प्रश्नोपपत्तिरिति शङ्कते—**अथेति** । अज्ञाननिमित्तं प्रश्नमङ्गीकृत्यापि प्रत्याचष्टे—**तथापीति** । भगवतो भ्रान्त्यभावेन पूर्वापरानुसन्धानसंभवादित्यर्थः । प्रश्नानुरूपत्वमेव प्रतिवचनस्य प्रकटयति—**मयेति** । व्यावर्त्यमंशमा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्राण आचार्यः' इत्यादिः । अतएव सप्राणानेतान् अवगणयन्तं नरं पित्रादिहन्ता त्वमसि धिक्त्वामिति वदन्ति उत्क्रान्तप्राणान् दहन्तमपि नैवं वदन्तीति लोकवेदप्रसिद्धिः । तस्मात् आत्मा देहादन्यः चेतनत्वात् व्यतिरेकेण

४ मधुसूदनीव्याख्या ।

पित्तोपहतेन्द्रियस्य कदाचिद्गुडे तिक्तताप्रतिभासेऽपि तिक्तार्थितया तत्र प्रवृत्तिः संभवति मधुरत्वनिश्चयस्य बलवत्त्वात्, एवमात्मस्वरूपाज्ञाननिबन्धनत्वाच्छोच्यभ्रमस्य तत्स्वरूपज्ञानेन तदज्ञानेऽपनीते तत्कार्यभूतः शोच्यभ्रमः कथमवतिष्ठेतेति

५ भाष्योत्कर्षदीपिका ।

प्राणिसाधारणयोर्मोहयोर्लोके उपलभ्यमानत्वात् । तथाच सर्वप्राणिनामिति भाष्यकारैस्तथैवोक्तत्वात् अर्जुनं निमित्तीकृत्य लोकार्थमेव भगवतोपदेशः कृत इति भाष्यकृद्भिः स्वेन च स्थापितत्वात्, अशुद्धान्तःकरणानां तु योगनिष्ठोक्तान्तःकरणशुद्धिद्वारा ज्ञानभूमिकारोहणार्थं 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इत्यादिनेति लोकेऽस्मिन्निति श्लोकस्थस्वग्रन्थविरोधाच्चेति दिक् । अशोच्यान्शोकानर्हान्सद्भूतत्वात्परमार्थरूपेण नित्यत्वाच्च शोचितवानसि । प्रज्ञावतां बुद्धिमतां वादान् 'किं नो राज्येन', 'कथं भीष्ममहम्' इत्यादीनि

१ श्रीमच्छांकरभाष्यम् ।

मित्थं त्वं भ्रान्तोऽसीति, नतु पुनः प्रतिवचनमननुरूपं, पृष्टादन्यदेव द्वे निष्ठे मया पुरा प्रोक्ते इति वक्तुं युक्तम् । नापि स्मार्तेनैव कर्मणा बुद्धेः समुच्चयेऽभिप्रेते विभागवचनादि सर्वमुपपन्नम्, किंच क्षत्रियस्य युद्धं स्मार्तं कर्म स्वधर्ममिति जानतः 'तत्किं कर्मणि घोरे मां नियोजयसि' इत्युपालम्भोऽनुपपन्नः, तस्माद्गीताशास्त्रे ईषन्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणात्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः । यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वा विशुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमेवेदं सर्वं ब्रह्माकर्तृ चेति, तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं यत्नपूर्वं यथा प्रवृत्तिस्तथैव कर्मणि प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेः समुच्चयः स्यात्, यथा भगवतो वासुदेवस्य क्षात्रकर्म चेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये तद्वत्तत्फलाभिसन्ध्यहंकाराभावस्य तुल्यत्वाद्विदुषः । तत्त्ववित्तु नाहं करोमीति मन्यते नच तत्फलमभिसन्धत्ते, यथाच स्वर्गादिकामार्थिनोऽग्निहोत्रादिकामसाधनानुष्ठानायाहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सामिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतोऽपि न तत्काम्यमग्निहोत्रादि भवति, तथाच दर्शयति भगवान् 'कुर्वन्नपि न करोति न लिप्यते' इति तत्र तत्र । यच्च 'पूर्वैः पूर्वतरं कृतं',

२ आनन्दगिरिव्याख्या ।

दर्शयति—**न्त्विति** । प्रतिवचनस्य प्रश्नाननुरूपत्वमेव स्पष्टयति—**पृष्टादिति** । श्रौतेन कर्मणा समुच्चयो ज्ञानस्येति पक्षं प्रतिक्षिप्य पक्षान्तरं प्रतिक्षिपति—**नापीति** । श्रुतिस्मृत्योर्ज्ञानकर्मणोर्विभागवचनमादिशब्दगृहीतं बुद्धेर्ज्यायस्त्वं पञ्चमादौ प्रश्नो भगवत्प्रतिवचनं सर्वमिदं श्रौतेनेव स्मार्तेनापि कर्मणा बुद्धेः समुच्चये विरुद्धं स्यादित्यर्थः । द्वितीयपक्षासंभवे हेत्वन्तरमाह—**किंचेति** । समुच्चयपक्षे प्रश्नप्रतिवचनयोरसंभवान्नेदं गीताशास्त्रं तत्परमित्युपसंहरति—**तस्मादिति** । विशुद्धब्रह्मात्मज्ञानं स्वफलसिद्धौ न सहकारिसापेक्षमज्ञाननिवृत्तिफलत्वाद्रज्ज्वादितत्त्वज्ञानवत्, अथवा बन्धः सहायानपेक्षेण ज्ञानेन निवर्त्यते अज्ञानात्मकत्वाद्रज्जुसर्पादिवदिति भावः । ननु 'कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम्' इति वक्ष्यमाणत्वात् कथं गीताशास्त्रे समुच्चयो नास्ति तत्राह—**यस्य त्विति** । चोदनासूत्रानुसारेण विधितोऽनुष्ठेयस्य कर्मणो धर्मत्वाद्व्यापारमात्रस्य तथात्वाभावात्तत्त्वविदश्च वर्णाश्रमाभिमानशून्यस्याधिकारप्रतिपत्त्यभावाद्यागादिप्रवृत्तीनामविद्यालेशतो जायमानानां कर्माभासत्वात् कुर्याद्विद्वानित्यादि वाक्यं न समुच्चयप्रापकमिति भावः । वा शब्दश्चार्थे, द्वितीयस्तु विविदिषावाक्यस्थसाधनान्तरसंग्रहार्थः । सांसारिकं ज्ञानं व्यावर्तयति—**परमार्थेति** । तदेवाभिनयति—**एकमिति** । प्रवृत्तिरूपमिति रूपग्रहणमाभासत्वप्रदर्शनार्थं कर्माभाससमुच्चयस्तु यादृच्छिकत्वान्न मोक्षं फलयतीति शेषः । किंच ज्ञानिनो यागादिप्रवृत्तिर्न ज्ञानेन तत्फलेन समुच्चीयते फलाभिसन्धिविकलप्रवृत्तित्वादहंकारविधुरप्रवृत्तित्वाद्वा भगवत्प्रवृत्तिवदित्याह—**यथेति** । हेतुद्वयस्यासिद्धिमाशङ्क्य परिहरति—**तत्त्वविदिति** । कूटस्थं ब्रह्मैवाहमिति मन्वानो विद्वान् प्रवृत्तिं तत्फलं वा नैव स्वगतत्वेन पश्यति रूपादिवद् दृश्यस्य द्रष्टृधर्मत्वायोगात् किंतु कार्यकरणसंघातगतत्वेनैव प्रवृत्त्यादि प्रतिपद्यते, ततस्तत्त्वविदो व्याख्यानभिक्षाटनादावहंकारस्य तृप्त्यादिफलाभिसन्धेश्चाभासत्वान्नासिद्धं हेतुद्वयमित्यर्थः । ननु ज्ञानोदयात्प्रागवस्थायामिवोत्तरकालेऽपि प्रतिनियतप्रवृत्त्यादिदर्शनान्न तत्त्वदर्शिनिष्ठप्रवृत्त्यादेराभासत्वमिति तत्राह—**यथाचेति** । स्वर्गादिरेव काम्यमानत्वात्कामस्तदर्थिनः स्वर्गादिकामस्याग्निहोत्रादेरपेक्षितस्वर्गादिसाधनस्यानुष्ठानार्थमग्निमाधाय व्यवस्थितस्य तस्मिन्नेव काम्ये कर्मणि प्रवृत्तस्यार्धकृते केनापि हेतुना कामे विनष्टे तदेवाग्निहोत्रादि निर्वर्तयतो न तत् काम्यं भवति नित्यकाम्यविभागस्य स्वाभाविकत्वाभावात् कामोपबन्धानुपबन्धकृतत्वात्, तथा विदुषोऽपि विध्यधिकाराभावाद्यागादिप्रवृत्तीनां कर्माभासतेत्यर्थः । विद्वत्प्रवृत्तीनां कर्माभासत्वमित्यत्र भगवदनुमतिमुपन्यस्यति—**तथाचेति** । ननु विद्वद्व्यापारेऽपि कर्मशब्दप्रयोगदर्शनात् तद्व्यापारस्य कर्माभासत्वानुपपत्तेः समुच्चयसिद्धिरिति तत्राह—**यच्चेति** । ज्ञानकर्मणोः समुच्चित्यैव संसिद्धिहेतुत्वे प्रतिपन्ने कुतो विभज्यार्थंज्ञानमिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

घटवत् । देहो न चेतनः दृश्यत्वात् घटवत् । यदि देहश्चेतनः स्यात् मृतेऽपि तत्र चैतन्यमुपलभ्येत, तस्माद्देह-

४ मधुसूदनीव्याख्या ।

भावः । वसिष्ठादीनां प्रारब्धकर्मप्राबल्यात्तथा तथानुकरणं न शिष्टाचारतयान्येषामनुष्ठेयतामापादयति, शिष्टैर्धर्मबुद्ध्यानु-

५ भाष्योत्कर्षदीपिका ।

वचनानि च भाषसे तदेतदुभयमुन्मत्तचेष्टितमित्यभिप्रायः । यतः पण्डिता आत्मज्ञाः गतासून्मृतानगतासूनमृतांश्च नानुशोचन्ति ।

६ श्रीधरीव्याख्या ।

तानां वादान् शब्दान् 'कथं भीष्ममहं संख्ये' इत्यादीन्केवलं भाषसे नतु पण्डितोऽसि । यतो गतासून्गतप्राणान्बन्धूनगतासूंश्च जीवतो

श्रीमच्छांकरभाष्यम् ।

'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति तत्तु प्रविभज्य विज्ञेयम्, तत्कथम्, यदि तावत्पूर्वे जनकादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणः स्युस्ते लोकसंग्रहार्थं 'गुणा गुणेषु वर्तन्ते' इति ज्ञानेनैव संसिद्धिमास्थिताः, कर्मसंन्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिता न कर्मसंन्यासं कृतवन्त इत्येषोऽर्थः । अथ न ते तत्त्वविद ईश्वरसमर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् । एतमेवार्थं वक्ष्यति भगवान्सत्त्वशुद्धये कर्म कुर्वन्तीति, 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्त्वा सिद्धिं प्राप्तस्य च पुनर्ज्ञाननिष्ठां वक्ष्यति 'सिद्धिं प्राप्तो यथा ब्रह्म' इत्यादिना । तस्माद्गीतासु केवलादेव तत्त्वज्ञानान्मोक्षप्राप्तिः न कर्मसमुच्चितादिति निश्चितोऽर्थः । यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र दर्शयिष्यामः । तत्रैवं धर्मसंमूढचेतसो महति शोकसागरे निमग्नस्यार्जुनस्यान्यत्रात्मज्ञानादुद्धरणमपश्यन् भगवान्वासुदेवस्ततोऽर्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह—अशो-

२ आनन्दगिरिव्याख्या ।

पृच्छति—**तत्कथमिति** । तत्र किं जनकादयोऽपि तत्त्वविदः प्रवृत्तकर्माणः स्युराहोस्विदतत्त्वविद इति विकल्प्य प्रथमं प्रत्याह—**यदिति** । तत्त्वविश्वे कथं प्रवृत्तकर्मत्वं कर्मणामकिंचित्करत्वादित्याशङ्क्याह—**ते लोकेति** । तेषामुक्तप्रयोजनार्थमपि न प्रवृत्तिर्युक्ता सर्वत्राप्युदासीनत्वादित्याशङ्क्याह—**गुणा इति** । इन्द्रियाणां विषयेषु प्रवृत्तिद्वारा तत्त्वविदां प्रवृत्तकर्मत्वेऽपि ज्ञानेनैव तेषां मुक्तिरित्याह—**ज्ञानेनेति** । उक्तमेवार्थं संक्षिप्य दर्शयति—**कर्मेति** । कर्मणेत्यादौ बाधितानुवृत्त्या प्रवृत्त्याभासो गृह्यते । द्वितीयमनुवदति—**अथेति** । तत्र वाक्यार्थं कथयति—**ईश्वरेति** । विभज्य विज्ञेयत्वं वाक्यार्थस्योक्तमुपसंहरति—**इति व्याख्येयमिति** । कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वमित्युक्तेऽर्थे वाक्यशेषं प्रमाणयति—**एतमेवेति** । 'योगिनः कर्म कुर्वन्ति' इत्यादिवाक्यमर्थतोऽनुवदति—**सत्त्वेति** । स्वकर्मणेत्यादौ साक्षादेव मोक्षहेतुत्वं कर्मणां वक्ष्यतीत्याशङ्क्याह—**स्वकर्मणेति** । स्वकर्मानुष्ठानादीश्वरप्रसादद्वारा ज्ञाननिष्ठायोग्यता लभ्यते ततो ज्ञाननिष्ठया मुक्तिस्तेन न साक्षात्कर्मणां मुक्तिहेतुतेत्यग्रे स्फुटीभविष्यतीत्यर्थः । तत्त्वज्ञानोत्तरकालं कर्मासंभवे फलितमुपसंहरति—**तस्मादिति** । ननु यद्यपि गीताशास्त्रं तत्त्वज्ञानप्रधानमेकं वाक्यं तथापि तन्मध्ये श्रूयमाणं कर्म तदङ्गमङ्गीकर्तव्यं प्रकरणप्रामाण्यादिति समुच्चयसिद्धिस्तत्राह—**यथा चेति** । अर्थशब्देनात्मज्ञानमेव केवलं कैवल्यहेतुरिति गृह्यते । वृत्तिकृतामभिप्रायं प्रत्याख्याय स्वाभिप्रेतः शास्त्रार्थः समर्थितः । संप्रत्यशोच्यानित्यस्मात्प्राक्तनग्रन्थसंदर्भस्य प्रागुक्तं तात्पर्यमनूद्याशोच्यानित्यादेः स्वधर्ममपि चावेक्ष्येत्येतदन्तस्य समुदायस्य तात्पर्यमाह—**तत्रेति** । अत्र हि शास्त्रे त्रीणि काण्डानि, अष्टादशसंख्याकानामध्यायानां षट्कत्रितयमुपादाय त्रैविध्यात्, तत्र पूर्वषट्कात्मकं पूर्वकाण्डं त्वंपदार्थं विषयीकरोति, मध्यमषट्करूपं मध्यमकाण्डं तत्पदार्थं गोचरयति, अन्तिमषट्कलक्षणमन्तिमं काण्डं पदार्थयोरैक्यं वाक्यार्थमधिकरोति, तज्ज्ञानसाधनानि तत्र तत्र प्रसङ्गादुपन्यस्यन्ते तज्ज्ञानस्य तदधीनत्वात् । तत्त्वज्ञानमेव केवलं कैवल्यसाधनमिति च सर्वत्र विगीतम् । एवं पूर्वोक्तरीत्या गीताशास्त्रार्थे परिनिश्चिते सतीति यावत् । धर्मे संमूढं कर्तव्याकर्तव्यविवेकविकलं चेतो यस्य तस्य मिथ्याज्ञानवतोऽहंकारममकारवतः शोकाख्यसागरे दुरुत्तारे प्रविश्य क्लिश्यतो ब्रह्मात्मैक्यलक्षणवाक्यार्थज्ञानमात्मज्ञानं तदतिरेकेणोद्धरणासिद्धेस्तमतिभक्तमतिस्निग्धं शोकादुद्धर्तुमिच्छन्भगवान्यथोक्तज्ञानार्थं तमर्जुनमवतारयन् पदार्थपरिशोधने प्रवर्तयन्नादौ त्वंपदार्थं शोधयितुमशोच्यानित्यादिवाक्यमाहेति योजना । यस्याज्ञानं तस्य भ्रमो यस्य भ्रमस्तस्य पदार्थपरिशोधनपूर्वकं सम्यग्ज्ञानं वाक्यादुदेतीति ज्ञानाधिकारिणमभिप्रेत्याह—**अशोच्यानित्यादीति** । यत्तु कैश्चित् 'आत्मा वा अरे द्रष्टव्यः' इत्याद्यात्मयाथात्म्यदर्शनविधिवाक्यार्थमनेन श्लोकेन व्याचष्टे स्वयं हरिरित्युक्तं तदयुक्तं, कृतियोग्यतैकार्थसमवेतश्रेयःसाधनताया वा पराभिमतनियोगस्य वा विध्यर्थस्यात्राप्रतीयमानस्य कल्पनाहेत्वभावात् । नच दर्शने पुरुषतन्त्रत्वरहिते विधेय-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

नाशेनात्मनाशं मन्वानो मूर्ख एवासीत्यर्थः । यत्तु 'प्रज्ञानां पण्डितानां प्रवादान् वक्तुमयोग्यान् भाषसे' इति

४ मधुसूदनीव्याख्या ।

च्छीयमानस्यालौकिकव्यवहारस्यैव तदाचारत्वात् अन्यथा निष्ठीवनादेरप्यनुष्ठानप्रसङ्गादिति द्रष्टव्यम् । यस्मादेवं तस्मात्त्वं-

५ भाष्योत्कर्षदीपिका ।

अहो कष्टमेते मृता एते मरिष्यन्तीति चिन्तां न कुर्वन्तीत्यर्थः । यत्तु प्रज्ञानां पण्डितानामवादान्वक्तुमयोग्यान्भाषस इति तदुपेक्ष्यम्

१ नीलकण्ठः ।

**[1]न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**नचैव नभविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

श्रीमच्छांकरभाष्यम् ।

**च्यानित्यादि** । न शोच्या अशोच्या भीष्मद्रोणादयः सद्वृत्तत्वात्परमार्थरूपेण च नित्यत्वात्, तानशोच्यानन्वशोचोऽनुशोचितवानसि ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेति । त्वं प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतन्मौढ्यं पाण्डित्यं च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः । यस्माद्गतासूनगतप्राणान्मृतान् अगतासूनगतप्राणाञ्जीवतश्च नानुशोचन्ति पण्डिता आत्मज्ञाः । पण्डात्मविषया बुद्धिर्येषां ते हि पण्डिताः । 'पाण्डित्यं निर्विद्य' इति श्रुतेः । परमार्थतस्तु नित्यानशोच्याननुशोचस्यतो मूढोऽसीत्यभिप्रायः ॥ ११ ॥ कुतस्ते शोच्या यतो नित्याः । कथं न त्वेव जातु कदाचिदहं च नासं किं त्वासमेवातीतेषु देहोत्पत्तिविनाशेषु नित्य एवाहमासमित्यभि-

२ आनन्दगिरिव्याख्या ।

यागादिविलक्षणे विधिरुपपद्यते कृत्यान्तर्भूतस्यार्हार्थत्वात् तव्यो न विधिमधिकरोतीत्यभिप्रेत्य व्याचष्टे—**न शोच्या इति** । कथं तेषामशोच्यत्वमित्युक्ते भीष्मादिशब्दवाच्यानां वा शोच्यत्वं, तत्पदलक्ष्याणां वेति विकल्प्याद्यं दूषयति—**सद्वृत्तत्वादिति** । ये भीष्मादिशब्दैरुच्यन्ते ते श्रुतिस्मृत्युदीरिताविगीताचारवत्त्वान्न शोच्यतामश्नुवीरन्नित्यर्थः । द्वितीयं प्रत्याह—**परमार्थेति** । अरजते रजतबुद्धिवदशोच्येषु शोच्यबुद्ध्या भ्रान्तोऽसीत्याह—**तानिति** । अनुशोचनप्रकारमभिनयन्भ्रान्तिमेव प्रकटयति—**ते म्रियन्त इति** । पुत्रभार्यादिप्रयुक्तं सुखमादिशब्देन गृह्यते । इत्यनुशोचितवानसीति संबन्धः । विरुद्धार्थाभिधायित्वेनापि भ्रान्तत्वमर्जुनस्य साधयति—**त्वं प्रज्ञावतामिति** । **वचनानि** 'उत्सन्नकुलधर्माणाम्' इत्यादीनि । किमेतावता फलितमिति तदाह—**तदेतदिति** । तन्मौढ्यमशोच्येषु शोच्यदृष्टित्वमेतत्पाण्डित्यं बुद्धिमतां वचनभाषित्वमिति यावत् । अर्जुनस्य पूर्वोक्तभ्रान्तिभाक्त्वे निमित्तमात्माज्ञानमित्याह—**यस्मादिति** । ननु सूक्ष्मबुद्धिभाक्त्वमेव पाण्डित्यं न त्वात्मज्ञत्वं हेत्वभावादित्याशङ्क्याह—**तेहीति** । पाण्डित्यं पण्डितभावमात्मज्ञानं निर्विद्य निश्चयेन लब्ध्वा 'बाल्येन तिष्ठासेद्' इति बृहदारण्यकश्रुतिमुक्तार्थामुदाहरति—**पाण्डित्यमिति** । यथोक्तपाण्डित्यराहित्यं कथं ममावगतमित्याशङ्क्य कार्यदर्शनादित्याह—**परमार्थतस्त्विति** । यस्मादित्यस्यापेक्षितं दर्शयति—**अत इति** ॥ ११ ॥ नित्यत्वमशोच्यत्वे कारणमिति सूचितं विवेचयितुं प्रश्नपूर्वकं प्रतिजानीते—**कुत इत्यादिना** । नित्यत्वमसिद्धं प्रमाणाभावादिति चोदयति—**कथमिति** । आत्मा न जायते प्रागभावशून्यत्वान्नरविषाणवदिति परिहरति—**नत्वेवेति** । किंचात्मा नित्यो भावत्वे सत्यजातत्वाद्व्यतिरेके घटवदित्यनुमानान्तरमाह—**नचैवेति** । यत्तु कैश्चिदात्मयाथात्म्यं जिज्ञासितं भगवानुपदिशति नत्वित्यादिना श्लोकचतुष्टयेनेत्यादिष्टं तदसत्, विशेषवचने हेत्वभावात्, सर्वत्रैवात्मयाथात्म्यप्रतिपादनाविशेषादित्याशयेन 'पदच्छेदः पदार्थोक्तिर्विग्रहो

३ नीलकण्ठव्याख्या ( चतुर्धरी )

तार्किकव्याख्यानं तत् अर्हार्थे घञो दुर्लभत्वात् विशेषाध्याहारसापेक्षत्वाच्चोपेक्ष्यम् ॥ ११ ॥ ननु देहादन्योऽपि देहनाशेन नश्यतां कोशकार इव कोशनाशेनेति तत्राह—**नत्वेवाहमिति** । त्वमहमिमे च सर्वे अनादयोऽनन्ताश्च स इत्यर्थः । जातु कदाचित् अहं न आसं इति न अपितु आसमेव । तथा त्वमपि नासीरिति न अपित्वासीरेव । इमे जनाधिपाः राजान इत्युपलक्षणं सर्वस्य जन्तुजातस्य । नासन्निति न अपित्वासन्नेवेति योजना । अनादित्वादनन्ताश्चेत्याह—**नचेति** । न भविष्याम इति नैव किंतु सर्वे भविष्याम एव । ननु देहस्यानात्मत्वे

४ मधुसूदनीव्याख्या ।

मपि पण्डितो भूत्वा शोकं माकार्षीरित्यभिप्रायः ॥ ११ ॥ नत्वेवेत्याद्येकोनविंशतिश्लोकैः 'अशोच्यानन्वशोचस्त्वम्' इत्यस्य विवरणं क्रियते, 'स्वधर्ममपि चावेक्ष्य' इत्याद्यष्टभिः श्लोकैः । 'प्रज्ञावादांश्च भाषसे' इत्यस्य मोहद्वयस्य पृथक्प्रयत्ननिरा-

५ भाष्योत्कर्षदीपिका ।

अर्हार्थे घञो दुर्लभत्वात्, विशेष्याध्याहारसापेक्षत्वाच्चेति ॥ ११ ॥ तेषां नित्यत्वाच्छोकानर्हतामाह—**नेति** । जातु कदाचिदहं

६ श्रीधरीव्याख्या ।

ऽपि बन्धुहीना एते कथं जीविष्यन्तीति नानुशोचन्ति ॥ ११ ॥ अशोच्यत्वे हेतुमाह—**नत्वेवेति** । यथाऽहं परमेश्वरो जातु कदाचि-

७ अभिनवगुप्ताचार्यव्याख्या ।

दपि शोच्यता भवेत् ॥ ११ ॥ एवमर्थद्वयमाह—नह्येवाहमित्यनेन, देहिनोऽस्मिन्नित्यनेन च । नह्येवाहमिति । अहं हि नैव नासं अपितु

१ 'नह्येवाहं जातु नासं' इत्यभिनवगुप्ताचार्यपाठः.

श्रीमच्छांकरभाष्यम् ।

**प्रायः । तथा न त्वं नासीः किं त्वासीरेव, तथाच नेमे जनाधिपा नासन्किं त्वासन्नेव, तथा न चैव नभविष्यामः किंतु भविष्याम एव च । सर्वे वयमतोऽस्माद्देहविनाशात्परमुत्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः । देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्रायेण ॥ १२ ॥ तत्र कथमिव**

२ आनन्दगिरिव्याख्या ।

वाक्ययोजना' इति त्रितयमपि व्याख्यानाङ्गं प्रतिपादयति—**नत्वित्यादिना** । नन्वात्मनो देहोत्पत्तिविनाशयोरुत्पत्तिविनाशप्रसिद्धेरुक्तमनुमानद्वयं प्रसिद्धिविरुद्धतया कालात्ययापदिष्टमिष्टमिति नेत्याह—**अतीतेष्विति** । 'चराचरव्यपाश्रयस्तु स्यात्' इति न्यायेनात्मनो जन्मविनाशप्रसिद्धेरौपाधिकजन्माविनाशाविषयत्वान्निरुपाधिकस्य तस्य जन्मादिराहित्यमिति भावः । यद्यपि तवेश्वरस्य जन्मराहित्यं तथापि कथं ममेत्याशङ्क्याह—**तथेति** । तथापि भीष्मादीनां कथं जन्माभावस्तत्राह—**तथाच नेम इति** । द्वितीयमनुमानं प्रपञ्चयन्नुत्तरार्धं व्याचष्टे—**तथेत्यादिना** । ननु देहोत्पत्तिविनाशयोरात्मनो जन्मनाशाभावेऽपि महासर्गमहाप्रलययोस्तस्याग्निविस्फुलिङ्गदृष्टान्तश्रुत्या जन्मविनाशावेष्टव्यावित्याशङ्क्य 'नात्मा श्रुतेः' इति न्यायेन परिहरति—**त्रिष्वपीति** । 'यावद्विकारं तु विभागो लोकवत्' इति न्यायेन भिन्नत्वाद्विकारित्वमात्मनामनुमीयते भिन्नत्वं च बहुवचनप्रयोगप्रमितमित्याशङ्क्याह—**देहेति** ॥ १२ ॥ ननु पूर्वं देहं विहायापूर्वं देहमुपाददानस्य विक्रियावत्त्वेनोत्पत्तिविनाशवत्त्वविभ्रमः समुद्भवेदिति शङ्कते— **तत्रेति** । अशोच्यत्व-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

कथं तत्पीडयायं पीड्यत इति चेद्यक्षवत्तदभिमानमात्रादिति ब्रूमः । यदाहि यक्षः परशरीरे विशति तदा तत्पीडया देहपतिर्न बाध्यते । तस्य तदानीं देहाभिमानाभावात् । यक्षस्तु बाध्यतेऽभिमानसत्त्वादिति लोके प्रसिद्धम् । किंच प्राचीनकर्मव्यतिरेकेण जीवनं नोपपद्यते । कृतहानाकृताभ्यागमप्रसङ्गात् । वृक्षादिष्वपि प्राक्कर्मास्तीत्यनुमेयम् । स्थावरजीविका प्राक्कर्मपूर्विका जीविकात्वात् पाकादिक्रियापूर्वकास्मदादिजीविकावत् । अपिच क्रियावैचित्र्यात्कार्यवैचित्र्यं दृष्टं घटशरावोदञ्चनादिषु तद्वदिहापि सुखदुःखादिवैचित्र्यं प्राक्कर्मवैचित्र्यादनुमेयम् । तथा सद्यो जातस्य गोवत्सस्य स्तनपानादौ प्रवृत्तिर्जन्तुमात्रस्य मरणात्त्रासश्च प्रागभवीयानुभवजनितसंस्कारजन्यौ भोजनादिप्रवृत्तिश्वोच्छ्वासादिवदित्यतोऽस्ति प्राचीनं कर्म । अपिच कौलिकशास्त्रप्रसिद्धमेतत् । यथा देवदत्तः स्वशरीरे कण्टकवेधेन खिद्यते एवं शत्रुकृतायां देवदत्तप्रतिमायां कण्टकेन विद्धायां देवदत्तो व्यथते । तत्र व्यथाहेतुर्नान्तरं धातुवैषम्यं नापि बाह्यं कण्टकवेधादि किंतु केवलं प्राक्कर्ममात्रम् । एवंच बीजाङ्कुरन्यायेन कर्मतज्जन्यसंस्कारपरम्परयाऽनादिः संसार इति न, देहनाशादात्मनाशोऽस्तीति न भीष्मादयः शोचनीयाः । अत्र पूर्वस्मिञ्श्लोके आत्मनो देहादन्यत्वमुक्तं गतासून् देहानिति विशेषणेन । अत्र तु सूक्ष्मशरीरविशिष्टस्यात्मनो व्यवहारदृष्ट्या नित्यत्वं साधितमिति भेदः ॥ १२ ॥

४ मधुसूदनीव्याख्या ।

कर्तव्यत्वात् । तत्र स्थूलशरीरादात्मानं विवेक्तुं नित्यत्वं साधयति । तुशब्दो देहादिभ्यो व्यतिरेकं सूचयति । यथा अहमितः पूर्वं जातु कदाचिदपि नासमिति नैव, अपितु आसमेव, तथा त्वमप्यासीः, इमे जनाधिपाश्चासन्नेव । एतेन प्रागभावाप्रतियोगित्वं दर्शितम् । तथा सर्वे वयं अहं त्वं इमे जनाधिपाश्चातःपरं नभविष्याम इति न अपितु भविष्याम एवेति ध्वंसाप्रतियोगित्वमुक्तम् । अतः कालत्रयेऽपि सत्तायोगित्वादात्मनो नित्यत्वेनानित्याद्देहाद्वैलक्षण्यं सिद्धमित्यर्थः ॥ १२ ॥ ननु 'देह-

५ भाष्योत्कर्षदीपिका ।

नासमिति न किंत्वासमेव । तथा त्वं नासीरिति न अपित्वासीरेव । तथेमे जनाधिपाः नासन्निति न किंत्वासन्नेव । तथा नच भविष्याम इति न किंतु भविष्याम एव । अतोऽस्माद्देहविनाशादुत्तरकालेऽपि त्रिष्वपि कालेषु नित्यः । आत्मस्वरूपेणेत्यर्थः । स्वस्य मध्ये गणनमात्मैक्याभिप्रायं, बहुवचनं तु जीवभेदाभिप्रायेण देहभेदानुवृत्त्या तत्तद्देहाभिमानिनां जीवानामपि भेदान्नतु परमार्थत आत्मभेदाभिप्रायेणेति । तथाच शारीरकभाष्ये 'भेदस्तूपाधिनिमित्तकः मिथ्याज्ञानकल्पितो न पारमार्थिकः' इति बोध्यम् ॥ १२ ॥

६ श्रीधरीव्याख्या ।

लीलाविग्रहस्याविर्भावे तिरोभावेऽपि नासमिति नैव, अपितु आसमेव अनादित्वात् । नच त्वं नासीः नाभूः, अपित्वासीरेव । इमेच जनाधिपाः नृपाः नासन्निति न, अपितु आसन्नेव मदंशत्वात्, तथाऽतःपरं इतउपर्यपि नभविष्यामो न स्थास्याम इति च नैव, अपितु स्थास्याम एव । जन्ममरणशून्यत्वादशोच्या इत्यर्थः ॥ १२ ॥ नन्वीश्वरस्य तव जन्मादिशून्यत्वं सत्यमेव जीवानां तु जन्ममरणे

**देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥**

श्रीमच्छांकरभाष्यम् ।

नित्य आत्मेति दृष्टान्तमाह—देहिन इति । देहोऽस्यास्तीति देही तस्य देहिनो देहवदात्मनोऽस्मिन्वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था, यौवनं यूनो भावो मध्यावस्था, जरा वयोहानिर्जीर्णावस्थेत्येतास्तिस्रोऽवस्था अन्योन्यविलक्षणास्तासां प्रथमावस्थानाशे न नाशो द्वितीयावस्थोपजनने नोपजननमात्मनः किं तर्ह्यविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा, तथा तद्वदेव देहादन्यो देहान्तरं तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवात्मन इत्यर्थः । धीरो धीमांस्तत्रैवं

२ आनन्दगिरिव्याख्या ।

प्रतिज्ञायां नित्यत्वे हेतौ कृते सतीति यावत् । अवस्थाभेदे सत्यपि वस्तुतो विक्रियाभावादात्मनो नित्यत्वमुपपन्नमित्युत्तरश्लोकेन दृष्टान्तावष्टम्भेन प्रतिपादयतीत्याह—दृष्टान्तमिति । न केवलमागमादेवात्मनो नित्यत्वं किंत्ववस्थान्तरवज्जन्मान्तरे पूर्वसंस्कारानुवृत्तेश्चेत्याह—देहिन इति । देहवत्त्वं तस्मिन्नहंममाभिमानभाक्त्वम् । तासामिति निर्धारणे षष्ठी । आत्मनः श्रुतिस्मृत्युपपत्तिभिर्नित्यत्वज्ञानम् । धीमानित्यत्र धीर्विवक्ष्यते । एवं सतीति । तत्त्वतो विक्रि-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

यद्यप्येवं तथापीष्टदेहवियोगजः शोको भवत्येवेत्याशङ्क्याह—देहिन इति । देहौ स्थूलसूक्ष्मौ विद्येते अस्य स देही चिदात्मा तस्य यथास्मिन् स्थूलशरीरे कौमाराद्यवस्थासु देहभेदेऽपि एक एवाहं बाल आसमिदानीं वृद्धोऽस्मीत्यभेदप्रत्यभिज्ञानादैक्यं बालादिशरीरेभ्योऽन्यत्वं च व्यावृत्तेभ्योऽनुवृत्तं भिन्नं कुसुमेभ्यः सूत्रमिवेति न्यायात् । एवं देहान्तरप्राप्तिरपि स्थूलाच्छरीरादन्येषां लिङ्गशरीराणां सूक्ष्माणां स्थूलशरीरानुकारिणां प्राप्तिः । अयमर्थः—यथा एकमपि स्थूलं शरीरं कौमाराद्यवस्थाभेदादनेकरूपं एवं नित्यमपि लिङ्गशरीरं प्राणिकर्मभेदात्सुरनरतिर्यगाद्यवस्थाभेदादनेकं भवति । ततश्चोक्तन्यायेन स्थूलादिवत्सूक्ष्मादपि शरीरादात्मा विविक्त एव । एवंच शोकादिधर्मिणो

४ मधुसूदनीव्याख्या ।

मात्रं चैतन्यविशिष्टमात्मा' इति लोकायतिकाः । तथाच स्थूलोऽहं गौरोऽहं गच्छामि चेत्यादिप्रत्यक्षप्रतीतानां प्रामाण्यमनपोहितं भविष्यति, यतः कथं देहादात्मनो व्यतिरेकः, व्यतिरेकेऽपि कथं वा जन्मविनाशशून्यत्वं जातो देवदत्तो मृतो देवदत्त इति प्रतीतेर्देहजन्मनाशाभ्यां सहात्मनोऽपि जन्मविनाशोपपत्तेरित्याशङ्क्याह—देहाः सर्वे भूतभविष्यवर्तमाना जगन्मण्डलवर्तिनोऽस्य सन्तीति देही । एकस्यैव विभुत्वेन सर्वदेहयोगित्वात्सर्वत्र चेष्टोपपत्तेर्न प्रतिदेहमात्मभेदे प्रमाणमस्तीति सूचयितुमेकवचनम् । सर्वे वयमिति बहुवचनं तु पूर्वत्रदेहभेदानुवृत्त्या न त्वात्मभेदाभिप्रायेणेति न दोषः । तस्य देहिन एकस्यैव सतोऽस्मिन्वर्तमाने देहे यथा कौमारं यौवनं जरेत्यवस्थात्रयं परस्परविरुद्धं भवति नतु तद्भेदेनात्मभेदः, यएवाहं बाल्ये पितरावन्वभूवं सएवाहं वार्धके प्रणप्तृननुभवामीति दृढतरप्रत्यभिज्ञानात्, अन्यनिष्ठसंस्कारस्य चान्यत्रानुसन्धानाजनकत्वात्, तथा तेनैव प्रकारेणाविकृतस्यैव सत आत्मनो देहान्तरप्राप्तिरेतस्माद्देहादत्यन्तविलक्षणदेहप्राप्तिः स्वप्ने योगैश्वर्ये च तद्देहभेदानुसन्धानेऽपि स एवाहमिति प्रत्यभिज्ञानात् । तथाच यदि देह एवात्मा भवेत्तदा कौमारादिभेदेन देहे भिद्यमाने प्रतिसन्धानं न स्यात्, अथतु कौमाराद्यवस्थानामत्यन्तवैलक्षण्येऽप्यवस्थावतो देहस्य 'यावत्प्रत्यभिज्ञं वस्तुस्थितिः' इति न्यायेनैक्यं ब्रूयात्तदापि स्वप्नयोगैश्वर्ययोर्देहधर्मभेदे प्रतिसन्धानं न स्यादित्युभयोदाहरणम् । अतो मरुमरीचिकादावुदकादिबुद्धेरिव स्थूलोऽहमित्यादिबुद्धेरपि भ्रमत्वमवश्यमभ्युपेयम्, बाधस्योभयत्रापि तुल्यत्वात् । एतच्च 'न जायते' इत्यादौ प्रपञ्चयिष्यते । एतेन देहाद्यतिरिक्तो देहेन सहोत्पद्यते विनश्यति चेति पक्षोऽपि प्रत्युक्तः । तत्रावस्थाभेदे प्रत्यभिज्ञोपपत्तावपि धर्मिणो देहस्य भेदे प्रत्यभिज्ञानुपपत्तेः । अथवा यथा कौमाराद्यवस्थाप्राप्तिरविकृतस्यात्मन एकस्यैव तथा देहान्तर-

५ भाष्योत्कर्षदीपिका ।

तत्र दृष्टान्तमाह—देहिन इति । देहोऽस्यास्तीति देही आत्मा तस्य यथास्मिन्देहेऽवस्थात्रयमेकस्यैव तथा देहान्तरप्राप्तिः तत्रैवं सति धीमानात्मनित्यत्वज्ञानवान्न मुह्यति न मोहं प्राप्नोति । नन्वेतेषां श्लोकानां वादिमतान्याशङ्क्यानवतारणं भाष्यकाराणां न्यूनतेति

६ श्रीधरीव्याख्या ।

प्रसिद्धे तत्राह—देहिन इति । देहिनो देहाभिमानिनो जीवस्य यथाऽस्मिन्स्थूलदेहे कौमाराद्यवस्था देहनिबन्धना एव नतु स्वतःपूर्वा-

७ अभिनवगुप्ताचार्यव्याख्या ।

आसम् । एवं त्वमी च राजानः । देहिनोऽस्मिन्निति । आकारान्तरे च सति यदि शोच्यता तर्हि कौमाराद्यौवनावाप्तौ किमिति न

१ मधुसूदनः.

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**सति न मुह्यति न मोहमापद्यते ॥ १३ ॥ यद्यप्यात्मविनाशनिमित्तो मोहो न संभवति नित्य आत्मेति**

२ आनन्दगिरिव्याख्या ।

याभावान्नित्यत्वे समधिगते सतीत्यर्थः ॥ १३ ॥ आत्मनः श्रुत्यादिप्रमिते नित्यत्वे तदुत्पत्तिविनाशप्रयुक्तशोकमोहाभावेऽपि प्रकारान्तरेण शोकमोहौ स्यातामित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति—**यद्यपीत्यादिना** । शीतोष्णयो-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

लिङ्गादपि विभिन्नस्य तव इष्टवियोगजः शोकोऽपि न युक्तः । अतएव तत्र तस्मिन्विषये धीरो न मुह्यति । आभिमानिकौ शोकमोहौ देहद्वयाभिमानत्यागाद्धीरं न बाधेते । अतस्त्वमपि धीरो भवेति भावः । पूर्वश्लोकयोर्गतासूनिति वयमिति च बहुवचनमुपाधिभेदाभिप्रायम्, अत्र तु देहिन इत्येकवचनमुपधेयचिदात्मैक्याभिप्रायमिति **ज्ञेयम्** । तथाच श्रुतिरेकस्यात्मन औपाधिकं भेदमाह—'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति । क्षेत्रेषु वक्ष्यमाणलक्षणेषु स्थूलसूक्ष्मदेहद्वयात्मकेषु । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इतिच । एकत्वाच्च विभुत्वमप्यस्य सिद्धम् । **तेन** देहादीनामनित्यानामविभूनां च पराभिमतमात्मत्वं प्रत्याख्यातं वेदितव्यम् ॥ १३ ॥ ननु आत्मनो लिङ्गशरीरादन्यत्वेऽप्यहं दुःखीत्याद्यनुभवाद्दुःखादिधर्माश्रयत्वं दुर्वारम् । ततश्च भीष्मादिबन्धुवर्गनाशे सति दुःखसंबन्धो भवत्येवेत्याशङ्क्याह—**मात्रास्पर्शा इति** । मीयन्ते विषया आभिस्ता मात्रा इन्द्रियवृत्तयः । यद्वा दश प्रज्ञामात्राः वागादयः, दश

४ मधुसूदनीव्याख्या ।

प्राप्तिरेतस्माद्देहादुत्क्रान्तौ । तत्र स एवाहमिति प्रत्यभिज्ञानाभावेऽपि जातमात्रस्य हर्षशोकभयादिसंप्रतिपत्तेः पूर्वसंस्कारजन्याया दर्शनात् । अन्यथा स्तनपानादौ प्रवृत्तिर्न स्यात् । तस्या इष्टसाधनतादिज्ञानजन्यत्वस्यादृष्टमात्रजन्यत्वस्य चाभ्युपगमात् । तथाच पूर्वापरदेहयोरात्मैक्यसिद्धिः । अन्यथा कृतनाशाकृताभ्यागमप्रसङ्गादित्यन्यत्र विस्तरः । कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः कृतनाशः, अकृतयोः पुण्यपापयोरकस्मात्फलदातृत्वमकृताभ्यागमः । अथवा देहिन एकस्यैव तव यथा क्रमेण देहावस्थोत्पत्तिविनाशयोर्न भेदः नित्यत्वात्, तथा युगपत्सर्वदेहान्तरप्राप्तिरपि तवैकस्यैव विभुत्वात्, मध्यमपरिमाणत्वे सावयवत्वेन नित्यत्वायोगात्, अणुत्वे सकलदेहव्यापिसुखाद्यनुपलब्धिप्रसङ्गात्, विभुत्वे निश्चिते सर्वत्र दृष्टकार्यत्वात्सर्वशरीरेष्वेक एवात्मा त्वमिति निश्चितोऽर्थः । तत्रैवंसति वध्यघातकभेदकल्पनया त्वमधीरत्वान्मुह्यसि धीरस्तु विद्वान्न मुह्यति, अहमेषां हन्ता एते मम वध्या इति भेददर्शनाभावात् । तथाच विवादगोचरापन्नाः सर्वे देहा एकभोक्तृकाः देहत्वात्त्वद्देहवत् इति । श्रुतिरपि 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादि । एतेन यदाहुः 'देहमात्रमात्मा' इति चार्वाकाः, 'इन्द्रियाणि मनः प्राणश्च' इति तदेकदेशिनः, 'क्षणिकं विज्ञानम्' इति सौगताः, 'देहातिरिक्तः स्थिरो देहपरिमाणः' इति दिगम्बराः, 'मध्यमपरिमाणस्य नित्यत्वानुपपत्तेः नित्योऽणुः' इत्येकदेशिनः, तत्सर्वमपाकृतं भवति नित्यत्वविभुत्वस्थापनात् ॥ १३ ॥ नन्वात्मनो नित्यत्वे विभुत्वे च न विवदामः, प्रतिदेहमेकत्वं तु न सहामहे । तथाहि 'बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यनवविशेषगुणवन्तः प्रतिदेहं भिन्नाः, एवं नित्या विभवश्चात्मानः' इति वैशे-

५ भाष्योत्कर्षदीपिका ।

चेन्न । 'नानुशोचन्ति पण्डिताः', 'धीरस्तत्र न मुह्यति', 'तांस्तितिक्षस्व भारत', 'यं हि न व्यथयन्त्येते' इतिवाक्यशेषाणां सत्त्वात् शोकनिवारणायात्मनित्यत्वव्याख्यानस्य शब्दार्थत्वादात्मानित्यत्ववादी मूर्ख इत्येवमादीनां तेषामश्रवणात्, आत्मनो नित्यत्वादिवर्णनेन वादिमतनिराकरणस्यार्थसिद्धत्वात्, शारीरकभाष्ये कुमतानां स्वेनैव खण्डितत्वाच्च तथाऽनवतारणे न्यूनताया अभावात् ॥ १३ ॥ नन्वात्मनो नित्यत्वात्तन्नाशनिमित्तशोकमोहाभावेऽपि सुखवियोगदुःखसंयोगशीतादिप्राप्तिनिमित्तौ तौ दुर्वाराविति चेत्तत्राह—**मात्रास्पर्शा इति** । मीयन्ते आभिर्विषया इति मात्राः इन्द्रियाणि तेषां विषयैः स्पर्शाः संयोगाः । यद्वा स्पृश्यन्त इति

६ श्रीधरीव्याख्या ।

वस्थानाशेऽवस्थान्तरोत्पत्तावपि स एवाहमिति प्रत्यभिज्ञानात्तथैवैतद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धना । ननु तावतात्मनो नाशः । जातमात्रस्य पूर्वसंस्कारेण स्तन्यपानादौ प्रवृत्तिदर्शनात् । अतो धीरः धीमांस्तत्र तयोर्देहनाशोत्पत्त्योर्न मुह्यति आत्मैव मृतो जातश्चेति न मन्यते ॥ १३ ॥ ननु गतानागतानहं न शोचामि किंतु तद्वियोगादिदुःखभाजमात्मानमेवेति चेत्तत्राह—**मात्रास्पर्शा इति** । मीयन्ते

७ अभिनवगुप्ताचार्यव्याख्या ।

शोच्यते । यो धीरः स न शोचति । धैर्यं चैतच्छरीरेऽपि यस्यास्था नास्ति तेन सुकरं । अतस्त्वं धैर्यमन्विच्छ ॥ १२ ॥ १३ ॥ अधीरास्तु मात्राशब्दवाच्यैरर्थैः कृताः स्पर्शा इन्द्रियद्वारेणात्मनः संबन्धास्तत्कृता याः शीतोष्णसुखाद्यवस्था अनित्याः तास्वपि शोचन्ति नत्वेवं धीरा

१ श्रीमच्छांकरभाष्यम् ।

**विजानतस्तथापि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते । सुखवियोगनिमित्तो मोहो दुःखसंयोगादिनिमित्तश्च शोक इत्येतदर्जुनस्य वचनमाशङ्क्याह—मात्रास्पर्शा इति । मात्रा**

२ आनन्दगिरिव्याख्या ।

**स्ताभ्यां सुखदुःखयोश्च प्राप्तिं निमित्तीकृत्य यो मोहादिर्दृश्यते तस्यान्वयव्यतिरेकाभ्यां दृश्यमानत्वमाश्रित्य लौकिकविशेषणम् । अशोच्यानित्यत्र यो विद्याधिकारी सूचितस्तस्य 'तितिक्षुः समाहितो भूत्वा' इति श्रुतेस्तितिक्षुत्वं विशेषणमिहोपदिश्यते । व्याख्येयं पदमुपादाय करणव्युत्पत्त्या तस्येन्द्रियविषयत्वं दर्शयति—मात्रा इत्यादिना । षष्ठीसमासं दर्श-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भूतमात्राः नामादयः कौषीतकिप्रसिद्धा इन्द्रियविषयरूपा ग्राह्याः । तासां स्पर्शाः परस्परं विषयविषयिभावेन संबन्धा इति व्याख्येयम् । यद्वा मात्रा प्रमात्रा सह स्पर्शाः विषयेन्द्रियसंबन्धाः । स्पर्शशब्दस्य तद्वाचित्वं 'स्पर्शान्कृत्वा बहिर्बाह्यान्' इत्यत्र दृष्टम् । तत्र स्पर्शपदेन तद्वतोर्विषयेन्द्रिययोरपि लाभः । तेन प्रमातुः प्रमाणद्वारा प्रमेयेण सह संबन्धाः सर्वे शीतोष्णादिवदागमापायिन उत्पत्तिविनाशशीला अतएवानित्याश्च तद्वदेव सुखदुःखदाश्च । अतस्तान् तितिक्षस्व सहस्व । हे कौन्तेय भारतेत्युत्तमवंश्यत्वेन धीरत्वमस्य सूचयति । प्रमातृत्वादिरनर्थो हि सुप्तिसमाधिग्रहावेशादिष्वभावाज्जाग्रत्स्वप्नादौ भावाच्च कादाचित्कतया आत्मनि प्रतीयमानोऽपि रज्जूरगादिवन्मिथ्याभूतः सन्न तद्धर्मत्वं भजते । यद्धि यत्राभेदेन कदाचिद्भाति कदाचिन्न तत्तत्राध्यस्तं रज्ज्वामिव सर्पः । प्रमात्रादिश्च प्रतीचि प्रत्यगभेदेन कदाचिद्भाति अतो मिथ्येति निश्चितम् । तेन प्रतीचि प्रमातृसंबन्ध एव नास्ति । सत्यमिथ्यावस्तुनोर्वास्तवसंबन्धायोगात् । प्रमातृधर्माणां दुःखादीनां तु प्रतीचि संबन्धो दूरापेतएव । कथं तर्ह्यात्मनि दुःखित्वप्रत्ययः । तत्तदुपाधितादात्म्याध्यासादिति ब्रूमः । अतएव जाग्रति दृष्टं दुःखं स्वप्ने नानुवर्तते, स्वप्नदृष्टं वा जाग्रति न दृश्यते ।

४ मधुसूदनीव्याख्या ।

षिका मन्यन्ते । इममेवच पक्षं तार्किकमीमांसकादयोऽपि प्रतिपन्नाः । सांख्यास्तु विप्रतिपद्यमाना अप्यात्मनो गुणवत्त्वे प्रतिदेहं भेदे न विप्रतिपद्यन्ते । अन्यथा सुखदुःखादिसंकरप्रसङ्गात् । तथाच भीष्मादिभिन्नस्य मम नित्यत्वे विभुत्वेऽपि सुखदुःखादियोगित्वाद्भीष्मादिबन्धुदेहविच्छेदे सुखवियोगो दुःखसंयोगश्च स्यादिति कथं शोकमोहौ नानुचिताविर्त्यर्जुनाभिप्रायमाशङ्क्य लिङ्गशरीरविवेकायाह—मीयन्ते आभिर्विषया इति मात्रा इन्द्रियाणि तासां स्पर्शा विषयैः संबन्धास्तत्तद्विषयाकारान्तःकरणपरिणामा वा ते आगमापायिन उत्पत्तिविनाशवतोऽन्तःकरणस्यैव शीतोष्णादिद्वारा सुखदुःखदाः नतु नित्यस्य विभोरात्मनः । तस्य निर्गुणत्वान्निर्विकारत्वाच्च । नहि नित्यस्यानित्यधर्माश्रयत्वं संभवति, धर्मधर्मिणोरभेदात्संबन्धान्तरानुपपत्तेः । साक्ष्यस्य साक्षिधर्मत्वानुपपत्तेश्च । तदुक्तम्—'नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥' इति । तथाच सुखदुःखाद्याश्रयीभूतान्तःकरणभेदादेव सर्वव्यवस्थोपपत्तेर्न निर्विकारस्य सर्वभासकस्यात्मनो भेदे मानमस्ति, सद्रूपेण स्फुरणरूपेण च सर्वत्रानुगमात् । अन्तःकरणस्य तावत्सुखदुःखादौ जनकत्वमुभयवादिसिद्धम् । तत्र समवायिकारणत्वस्यैवाभ्यर्हितत्वात्तदेव कल्पयितुमुचितं नतु समवायिकारणान्तरानुपस्थितौ निमित्तत्वमात्रम् । तथाच 'कामः संकल्पः' इत्यादिश्रुतिः 'एतत्सर्वं मन एव' इति कामादिसर्वविकारोपादानत्वमभेदनिर्देशान्मनस आह । आत्मनश्च स्वप्रकाशज्ञानानन्दरूपत्वस्य श्रुतिभिर्बोधनान्न कामाद्याश्रयत्वम्, अतो वैशेषिकादयो भ्रान्त्यैवात्मनो विकारित्वं भेदं चाङ्गीकृतवन्त इत्यर्थः । अन्तःकरणस्यागमापायित्वात् दृश्यत्वाच्च नित्यदृग्रूपात्त्वत्तो भिन्नस्य सुखादिजनका ये मात्रास्पर्शास्तेऽप्यनित्या अनियतरूपाः, एकदा सुखजनकस्यैव शीतोष्णादेरन्यदा दुःखजनकत्वदर्शनात् । एवं कदाचिद्दुःखजनकस्याप्यन्यदा सुखजनकत्वदर्शनात् । शीतोष्णग्रहणमाध्यात्मिकाधिभौतिकाधिदैविकसुखदुःखोपलक्षणार्थम् । शीतमुष्णं

५ भाष्योत्कर्षदीपिका ।

स्पर्शा विषयाः मात्राश्च स्पर्शाश्च ते शीतोष्णसुखदुःखदाः । त्वगिन्द्रियतद्विषयसंबन्धस्य तयोर्वाऽनियतसुखदुःखशीतोष्णदातृत्वमप्यस्तीत्यभिप्रेत्य नियतरूपाभ्यां सुखदुःखाभ्यां अनियतसुखदुःखप्रदयोः शीतोष्णयोः पृथग्ग्रहणम् । यत उत्पत्तिविनाशशीला अतएवानित्याः । अतएव तान् सहस्व । तेषु हर्षं विषादं च मा कार्षीरित्यर्थः । स्त्रीस्वभाववतः सुखादिदानेतान् भरतादिपुरुषधौरेयस्वभाव-

६ श्रीधरीव्याख्या ।

ज्ञायन्ते विषया आभिरिति मात्रा इन्द्रियवृत्तयः तासां स्पर्शाः विषयैः संबन्धाः ते शीतोष्णादिप्रदा भवन्ति ते त्वागमापायित्वादनित्या अस्थिराः अतस्तांस्तितिक्षस्व सहस्व । यथा जलातपादिसंपर्कास्तत्तत्कालकृताः स्वभावतः शीतोष्णादि प्रयच्छन्ति एवमिष्टसंयोगवियोगा

७ अभिनवगुप्ताचार्यव्याख्या ।

इत्याह—मात्रास्पर्शा इति । अथवा मात्राभिरिन्द्रियैरेषां स्पर्शो नतु साक्षात्परमात्मनः । आगम उत्पत्तिः अपायो विनाशः । एत उक्ताः । तांस्ति-

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि, मात्राणां स्पर्शाः शब्दादिभिः संयोगास्ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखं च प्रयच्छन्तीति । अथवा स्पृश्यन्ते इति स्पर्शा विषयाः शब्दादयः, मात्राश्च स्पर्शाश्च शीतोष्णसुखदुःखदाः शीतं कदाचित् सुखं कदाचिद्दुःखं तथोष्णमप्यनियतस्वरूपं सुखदुःखे पुनर्नियतरूपे यतो न व्यभिचरतोऽतस्ताभ्यां पृथक् शीतोष्णयोर्ग्रहणम् । यस्मात्ते मात्रास्पर्शादयः आगमापायिन आगमापायशीलास्तस्मादनित्या उत्पत्तिविलयरूपत्वात् । अतस्ताञ्शीतोष्णादींस्तितिक्षस्व प्रसहस्व । तेषु हर्षविषादं मा कार्षीरित्यर्थः ॥ १४ ॥ शीतोष्णादीन्सहतः किं स्यादिति श्रृणु—यं हीति । यं हि पुरुषं समदुःखसुखं समे दुःखसुखे यस्य तं समदुःखसुखं

२ आनन्दगिरिव्याख्या ।

यत् भावव्युत्पत्त्या स्पर्शशब्दार्थमाह—**मात्राणामिति** । तेषामर्थक्रियामादर्शयति—**ते शीतेति** । संप्रति शब्दद्वयस्य कर्मव्युत्पत्त्या शब्दादिविषयपरत्वमुपेत्य समासान्तरं दर्शयन् विषयाणां कार्यं कथयति—**अथवेति** । ननु शीतोष्णप्रदत्वे सुखदुःखप्रदत्वस्य सिद्धत्वात्किमिति शीतोष्णयोः सुखदुःखाभ्यां पृथक्ग्रहणमिति तत्राह—**शीतमिति** । विषयेभ्यस्तु पृथक्कथनं तदन्तर्भूतयोरेव तयोः सुखदुःखहेत्वोरानुकूल्यप्रातिकूल्ययोरुपलक्षणार्थम् । अध्यात्मं हि शीतमुष्णं वा आनुकूल्यं प्रातिकूल्यं वा संपाद्य बाह्या विषयाः सुखादि जनयन्ति । ननु विषयेन्द्रियसंयोगस्यात्मनि सदा सत्त्वात्तत्प्रयुक्तशीतादेरपि तथात्वात्तन्निमित्तौ हर्षविषादौ तस्मिन्नापन्नावित्याशङ्क्योत्तरार्धं व्याचष्टे—**यस्मादित्यादिना** । अत्र च कौन्तेय भारतेति संबोधनाभ्यामुभयकुलशुद्धस्यैव विद्याधिकारित्वमित्येतदेव द्योत्यते ॥ १४ ॥ अधिकारिविशेषणं तितिक्षुत्वं नोपयुक्तं केवलस्य तस्य पुमर्थाहेतुत्वादिति शङ्कते—**शीतेति** । विवेकवैराग्यादिसहितं तन्मोक्षहेतुज्ञानद्वारा तदर्थमिति परिहरति—**श्रृण्विति** । तितिक्षमाणस्य विवक्षितं लाभमुपलम्भयति—**यं हीति** ।

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

तथाच श्रुतिः 'स यत्तत्र पश्यति पुण्यं च पापं चानन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' इति । 'कामः संकल्पो विचिकित्सा' इत्यादिश्रुतिरेतत्सर्वं मनएवेति अभेदनिर्देशात्कामादिसर्वविकारोपादानत्वं मनस एवाह । तस्मात्स्वप्न इवात्मनि दुःखित्वप्रतीतिर्भ्रान्तिरेवेतीष्टवियोगजनितां तां तितिक्षस्वेति भावः ॥ १४ ॥ तितिक्षाफलं प्रत्यक्षमेवेत्याह—**यं हीति** । एते मात्रास्पर्शाः प्राग्व्याख्यातरीत्या त्रिविधा अपि यं जाग्रति स्वप्नेऽसंप्रज्ञातसमाधौ वा न व्यथयन्ति

४ मधुसूदनीव्याख्या ।

च कदाचित्सुखं कदाचिद्दुःखं सुखदुःखे तु न कदापि विपर्ययेते इति पृथङ्निर्देशः । तथा चात्यन्तास्थिरान् त्वद्भिन्नस्य विकारिणः सुखदुःखादिप्रदान्भीष्मादिसंयोगवियोगरूपान्मात्रास्पर्शांस्त्वं तितिक्षस्व, नैते मम किंचित्करा इति विवेकेनोपेक्षस्व । दुःखितादात्माध्यासेनात्मानं दुःखिनं मा ज्ञासीरित्यर्थः । कौन्तेय भारतेति संबोधनद्वयेनोभयकुलविशुद्धस्य तवाज्ञानमनुचितमिति सूचयति ॥ १४ ॥ नन्वन्तःकरणस्य सुखदुःखाद्याश्रयत्वे तस्यैव कर्तृत्वेन भोक्तृत्वेन च चेतनत्वमभ्युपेयम्, तथाच तद्व्यतिरिक्ते तद्भासके भोक्तरि मानाभावान्नाममात्रे विवादः स्यात्, तदभ्युपगमे च बन्धमोक्षयोर्वैयधिकरण्यापत्तिः अन्तःकरणस्य सुखदुःखाश्रयत्वेन बद्धत्वात्, आत्मनश्च तद्व्यतिरिक्तस्य मुक्तत्वादित्याशङ्कामर्जुनस्यापनेतुमाह भगवान्—यं स्वप्रकाशत्वेन स्वतएव प्रसिद्धं 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति श्रुतेः । पुरुषं पूर्णत्वेन पुरि शयानं 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो

५ भाष्योत्कर्षदीपिका ।

माश्रित्य सोढुं योग्योऽसीति संबोधनाशयः । अत्र संबोधनद्वयेनोभयकुलशुद्धस्यैव विद्याधिकारित्वं सूचयतीत्येके । उत्तमवंश्यत्वेन धीरत्वमस्येत्यन्ये । उभयकुलविशुद्धस्य तवात्माज्ञानमनुचितमिति केचित् । अयं पक्ष उभयकुलशुद्धिमात्रादेवात्मज्ञानं यदि स्यात्तर्हि सम्यक् । अथवा प्रथमपक्षानुरोधेन व्याख्येयः । भाष्यकृद्भिस्तु सुगमत्वात्संबोधनाभिप्रायवर्णनं न सर्वत्र क्रियत इति बोध्यम् ॥१४॥ तितिक्षायाः फलमाह—**यमिति** । समे सुखदुःखे यस्य तं धीरं धीमन्तं नित्यात्मज्ञानवन्तं नित्यात्मज्ञानादेते शीतोष्णादयो न चाल-

६ श्रीधरीव्याख्या ।

अपि सुखदुःखादि प्रयच्छन्ति तेषां चास्थिरत्वात्सहनं तव धीरस्योचितं नतु तन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥ तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितं महाफलत्वादित्याह—**यमिति** । एते मात्रास्पर्शाः यं पुरुषं न व्यथयन्ति नाभिभवन्ति । समे सुख-

७ अभिनवगुप्ताचार्यव्याख्या ।

तिक्षस्व सहस्व ॥ १४ ॥ ननु यतएवागमापायिन एते सर्वे दशाविशेषास्तत एव शोच्यन्ते । मैवम् । तथाहि कोऽयमागमो नाम । उत्पत्ति-

१ भाष्यटीकाकृतः. २ नीलकण्ठः. ३ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

**सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनादेते यथो-**

२ आनन्दगिरिव्याख्या ।

**हर्षविषादरहितमित्यत्र शमादिसाधनसंपन्नत्वमुच्यते—धीमन्तमिति । नित्यानित्यविवेकभागित्वमेतच्चोभयं वैराग्या-देरुपलक्षणम् । नित्यात्मदर्शनं स्वमर्थज्ञानं साधनचतुष्टयवन्तमधिकारिणमनूद्य त्वंपदार्थज्ञानवतस्तस्य मोक्षौपयिक-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्वास्थ्यान्न प्रच्यावयन्ति । पुरुषं पूर्षु अष्टासु वसतीति पुरुषस्तम् । पुरश्च 'कर्मेन्द्रियाणि खलु पञ्च तथा पराणि ज्ञाने-न्द्रियाणि मनआदि चतुष्टयं च । प्राणादिपञ्चकमथो वियदादिकं च कामश्च कर्म च तमः पुनरष्टमी पूः ॥' इति

४ मधुसूदनीव्याख्या ।

नैतेन किंचनानावृतं नैतेन किंचनासंवृतम्' इति श्रुतेः । समदुःखसुखं समे दुःखसुखे अनात्मधर्मतया भास्यतया च यस्य निर्विकारस्य स्वयंज्योतिषस्तम् । सुखदुःखग्रहणमशेषान्तःकरणपरिणामोपलक्षणार्थम् । 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' इति श्रुत्या वृद्धिकनीयस्त्वारूपयोः सुखदुःखयोः प्रतिषेधात् । धीरं धियमीरयतीति व्युत्पत्त्या चिदाभासद्वारा धीतादात्म्याध्यासेन धीप्रेरकम् । धीसाक्षिणमित्यर्थः । 'स धीरः स्वप्नो भूत्वेमं लोकमतिक्रामति' इति श्रुतेः । एतेन बन्धप्रसक्तिर्दर्शिता । तदुक्तम् 'यतो मानानि सिध्यन्ति जाग्रदादित्रयं तथा । भावाभावविभागश्च स ब्रह्मास्मीति बोध्यते' इति । एते सुखदुःखदा मात्रास्पर्शाः हि यस्मान्न व्यथयन्ति परमार्थतो न विकुर्वन्ति, सर्वविकारभासकत्वेन विका-रायोग्यत्वात् 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेः । अतः स पुरुषः स्वस्वरूपभूतब्रह्मात्मैक्यज्ञानेन सर्वदुःखोपादानतदज्ञाननिवृत्त्युपलक्षिताय निखिलद्वैतानुपर-क्तस्वप्रकाशपरमानन्दरूपाय अमृतत्वाय मोक्षाय कल्पते । योग्यो भवतीत्यर्थः । यदि ह्यात्मा स्वाभाविकबन्धाश्रयः स्यात्तदा स्वाभाविकधर्माणां धर्मिनिवृत्तिमन्तरेणानिवृत्तेर्न कदापि मुच्येत । तथाचोक्तम् 'आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्त-ताम् । नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥' इति । प्रागभावासहवृत्तेर्युगपत्सर्वविशेषगुणनिवृत्तेर्धर्मिनिवृत्तेर्नान्तरीय-कत्वदर्शनात् । अथात्मनि बन्धो न स्वाभाविकः किंतु बुद्ध्याद्युपाधिकृतः 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुतेः । तथाच धर्मिसद्भावेऽपि तन्निवृत्त्या मुक्त्युपपत्तिरितिचेत् हन्त तर्हि यः स्वधर्ममन्यनिष्ठतया भासयति स उपाधि-रित्यभ्युपगमाद्बुद्ध्यादिरुपाधिः स्वधर्ममात्मनिष्ठतया भासयतीत्यायातम् । तथाचायातं मार्गे बन्धस्यासत्यत्वाभ्युपगमात्,

५ भाष्योत्कर्षदीपिका ।

यन्ति यद्यप्येते मात्रास्पर्शा इति वक्तुमुचितं तथापि शीतादिकमदत्त्वा न व्यथयन्ति इत्यतो भाष्यकृद्भिरेतच्छब्देन शीतादीनामेव परामर्शः कृतः । स साधनचतुष्टयसंपन्नो नित्यात्मदर्शननिष्ठोऽमृतत्वाय मोक्षाय समर्थो भवति । पुरुषं न व्यथयन्ति त्वं तु पुरुषर्षभ इति सूचयन्नाह—**पुरुषर्षभेति** । अत्र केचिद्वर्णयन्ति । नन्वात्मनो नित्यत्वे विभुत्वे च न विवदामः । प्रतिदेहमेकत्वं तु न सहामहे । तथाहि 'बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यनवविशेषगुणवन्तः प्रतिदेहं भिन्ना एव नित्या विभवश्चात्मानः' इति वैशेषिका मन्यन्ते । इममेव पक्षं तार्किकमीमांसकादयोऽपि प्रतिपन्नाः । सांख्यास्तु विप्रतिपद्यमाना अप्यात्मनो गुणवत्त्वे प्रतिदेहं भेदे न विप्रतिपद्यन्ते । अन्यथा सुखदुःखादिसंकरप्रसङ्गात् । तथाच भीष्मादिभिन्नस्य मम नित्यत्वे विभुत्वेऽपि सुखदुःखादियोगि-त्वात् भीष्मादिबन्धुदेहविच्छेदे सुखवियोगो दुःखसंयोगश्च स्यादिति कथं शोकमोहौ नानुचिताविल्यर्जुनाभिप्रायमाशङ्क्य लिङ्गशरीरवि-वेकमाह—**मात्रेति** । मात्रास्पर्शा उत्पत्तिविनाशवतोऽन्तःकरणस्यैव शीतादिद्वारा सुखदुःखदा नतु नित्यस्य विभोरात्मनः । तथा-चान्तःकरणभेदान्न सांख्योक्तः संकरप्रसङ्गः । वैशेषिकादयश्च भ्रान्त्यैवात्मनो विकारित्वं भेदं चाङ्गीकृतवन्त इत्यर्थः । अन्तःकरणस्या-नित्यत्वाद्दृश्यत्वाच्च नित्यदृग्रूपत्वात्त्वत्तो भिन्नस्य सुखादिजनका ये मात्रास्पर्शास्तेऽप्यनित्यास्तांस्तितिक्षस्व नैते मम किंचित्करा इति विवेकेनोपेक्षस्व । दुःखितादात्म्येनात्मानं दुःखिनं मा ज्ञासीरित्यर्थः । नन्वन्तःकरणस्य सुखाद्याश्रयत्वे तस्यैव कर्तृत्वादिना चेतनत्वम-भ्युपेयम् । तथाच तद्व्यतिरिक्ते तद्भासके भोक्तरि मानाभावान्नाममात्रे विवादः स्यात्तदभ्युपगमे च बन्धमोक्षयोर्वैयधिकरण्यापत्तिः अन्तःकरणस्य सुखाद्याश्रयत्वेन बद्धत्वात् आत्मनश्च तद्व्यतिरिक्तस्य मुक्तत्वादित्याशङ्कामर्जुनस्यापनेतुमाह—**यमिति** । यं स्वप्र-काशत्वेन स्वतएव प्रसिद्धं पुरुषं पूर्णत्वेन पुरि शयानं समे सुखदुःखे अनात्मधर्मतया भास्यतया च यस्य तं धीरं धियं प्रेरयतीति व्युत्पत्त्या चिदाभासद्वारा धीतादात्म्याध्यासेन धीप्रेरकं धीसाक्षिणमित्यर्थः । एतेन बन्धप्रसक्तिर्दर्शिता । एते सुखदुःखदा मात्रास्पर्शा यस्मान्न व्यथयन्ति परमार्थतो न विकुर्वन्ति स पुरुषोऽमृतत्वाय मोक्षाय योग्यो भवतीत्यर्थः । अतः सर्वधर्मासंसर्गिणोऽप्या-त्मन उपाधिवशात्तत्संसर्गित्वप्रतिभासो बन्धः स्वरूपज्ञानेन स्वरूपाज्ञानतत्कार्यबुद्ध्याद्युपाधिनिवृत्त्या तन्निमित्तनिखिलभ्रमनिवृत्तौ

७ अभिनवगुप्ताचार्यव्याख्या ।

रिति चेत् सापि का । असत आत्मलाभः सा इति त्वसत् । असत्स्वभावता हि निःस्वभावता । निरात्मा निःस्वभावः कथं सस्वभावीकर्तुं

१ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

**क्ताः शीतोष्णादयः स नित्यानित्यस्वरूपदर्शननिष्ठो द्वन्द्वसहिष्णुरमृतत्वायामृतभावाय मोक्षायेत्यर्थः ।**

२ आनन्दगिरिव्याख्या ।

वाक्यार्थज्ञानयोग्यतामाह—**स नित्येति** ॥ १५ ॥ अधिकारिविशेषणे तितिक्षुत्वे हेत्वन्तरपरत्वेनोत्तरश्लोकमवतार-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

प्रसिद्धाः । यद्वा स्थूलसूक्ष्मोपाधिमध्ये एव इतरासामन्तर्भावादत्र पूरिति तमएव ग्राह्यम् । तेन कारणोपाधेरप्यात्मनो विविक्तत्वं दर्शितम् । पुरुषर्षभेति त्वमप्येतदनुभवितुं योग्योऽसि सर्वपुरुषश्रेष्ठत्वादिति सूचयति । उपाधित्रयत्यागा-देव समे दुःखसुखे यस्य तम् । नहि समाधिस्थस्य सुखाय दुःखाय वा शीतोष्णस्पर्शौ भवत इति युक्तमस्य समदुःख-सुखत्वम् । धीरं ध्यायिनं योगिनं न व्यथयन्ति । सोऽमृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १५ ॥ ननु सुसि-

४ मधुसूदनीव्याख्या ।

नहि स्फटिकमणौ जपाकुसुमोपधाननिमित्तो लोहितिमा सत्यः, अतः सर्वसंसारधर्मासंसर्गिणोऽप्यात्मन उपाधिवशात्तत्संसर्गि-त्वप्रतिभासो बन्धः । स्वस्वरूपज्ञानेन तु स्वरूपाज्ञानतत्कार्यबुद्ध्याद्युपाधिनिवृत्त्या तन्निमित्तनिखिलभ्रमनिवृत्तौ निर्मृष्टनिखिल-भास्योपरागतया शुद्धस्य स्वप्रकाशपरमानन्दतया पूर्णस्यात्मनः स्वत एव कैवल्यं मोक्ष इति न बन्धमोक्षयोर्वैयधिकर-ण्यापत्तिः । अतएव 'नाममात्रे विवादः' इत्यपास्तम्, भास्यभासकयोरेकत्वानुपपत्तेः । 'दुःखी स्वव्यतिरिक्तभास्यः भास्यत्वात् घटवत्' इत्यनुमानात्, भास्यस्य भासकत्वादर्शनात् एकस्यैव भास्यत्वे भासकत्वे च कर्तृकर्मविरोधादात्मनः कथमिति चेत् । न । तस्य भासकत्वमात्राभ्युपगमात् । अहं दुःखीत्यादिवृत्तिसहिताहंकारभासकत्वेन तस्य कदापि भास्यकोटावप्रवेशात् । अतएव 'दुःखी न स्वातिरिक्तभासकापेक्षः भासकत्वात् दीपवत्' इत्यनुमानमपि न । भास्यत्वेन स्वातिरिक्तभासकसाधकेन प्रतिरोधात् । भासकत्वं च भानकरणत्वं स्वप्रकाशभानरूपत्वं वा । आद्ये दीपस्येव करणान्तरानपेक्षत्वेऽपि स्वातिरिक्तभान-सापेक्षत्वं दुःखिनो न व्याहन्यते । अन्यथा दृष्टान्तस्य साध्यवैकल्यापत्तेः । द्वितीये त्वसिद्धो हेतुरित्यधिकबलतया भास्य-त्वहेतुरेव विजयते बुद्धिवृत्त्यतिरिक्तभानानभ्युपगमात् । बुद्धिरेव भानरूपेतिचेत् । न । भानस्य सर्वदेशकालानुस्यूततया भेदकधर्मशून्यतया च विभोर्नित्यस्यैकस्य चानित्यपरिच्छिन्नानेकरूपबुद्धिपरिणामात्मकत्वानुपपत्तेः, उत्पत्तिविनाशादिप्रतीतेश्चाव-श्यकल्प्यविषयसंबन्धविषयतयाप्युपपत्तेः । अन्यथा तत्तज्ज्ञानोत्पत्तिविनाशभेदादिकल्पनायामतिगौरवापत्तेरित्याद्यन्यत्र विस्तरः । तथाच श्रुतिः 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्', 'आकाशवत्सर्वगतश्च नित्यः', 'महद्भूतमनन्तमपारं विज्ञानघन एव', 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' इत्याद्या विभुनित्यस्वप्रकाशज्ञानरूपतामात्मनो दर्शयति । एतेनाविद्यालक्षणादप्युपाधेर्व्यतिरेकः सिद्धः । अतोऽसत्योपाधिनिबन्धनबन्धभ्रमस्य सत्यात्मज्ञानान्निवृत्तौ मुक्तिरिति सर्वमवदातम् । पुरुषर्षभेति संबोधयन्स्वप्रकाशचैतन्यरूपत्वेन पुरुषत्वं परमानन्दरूपत्वेन चात्मन ऋषभत्वं सर्वद्वैतापेक्षया श्रेष्ठत्वमजानन्नेव शोचसि अतः स्वस्वरूपज्ञानादेव तव शोकनिवृत्तिः सुकरा 'तरति शोकमात्मवित्' इति श्रुतेरिति सूचयति । अत्र पुरुषमित्येकवचनेन सांख्यपक्षो निराकृतः । तैः पुरुषबहुत्वाभ्युपगमात् ॥ १५ ॥ ननु भवतु पुरुषैकत्वं

५ भाष्योत्कर्षदीपिका ।

निर्मृष्टनिखिलभास्योपरागतया शुद्धस्य स्वप्रकाशपरमानन्दतया पूर्णस्यात्मनः स्वतएव कैवल्यं मोक्ष इति न बन्धमोक्षयोर्वैयधि-करण्यापत्तिः । अतएव नाममात्रे विवाद इत्यपास्तम् । भास्यभासकयोरेकत्वानुपपत्तेः । पुरुषर्षभेति संबोधयन्स्वप्रकाशचैतन्य-रूपत्वेन पुरुषत्वं परमानन्दरूपत्वेनात्मन ऋषभत्वं सर्वद्वैतापेक्षया श्रेष्ठत्वमजानन्नेव शोचसि । अतः स्वस्वरूपज्ञानादेव तव शोक-निवृत्तिः सुकरा 'तरति शोकमात्मवित्' इति श्रुतेरिति सूचयतीति । अत्रेदमवधेयम्—शीतोष्णद्वारा सुखदुःखदा इत्यसंगतम् । सर्वेषां मात्रास्पर्शानां सुखादिदातृत्वे शीतोष्णयोर्द्वारत्वाभावात् । शीतोष्णग्रहणं त्रिविधसुखदुःखोपलक्षणार्थं शीतमुष्णं च कदाचित्सुखं कदाचिद्दुःखं सुखदुःखे तु न कदाचिद्विपरीते इति तयोः पृथङ्निर्देश इति स्वपरग्रन्थविरोधाच्च । शीतोष्णद्वारा सुखदुःखदा इत्यस्य शीतोष्णद्वारा साक्षाच्च सुखदुःखदा इत्यर्थ इति यदि कश्चिद्ब्रूयात्तर्हि भाष्य एवास्यार्थस्यान्तर्भावः । तस्मात् शीतं चोष्णं च सुखं च दुःखं च प्रयच्छन्तीति भाष्यकृद्व्याख्यानमेवर्जु । एतेनागमापायिनोऽन्तःकरणस्येत्यपास्तम् । वाक्यार्थस्य सत्यपि सम्यक्संभवे विशे-ष्याध्याहारानौचित्यात् । तितिक्षस्वेति वाक्यशेषस्य मुख्यार्थत्यागापत्तेश्च । एतेनोत्तरश्लोकव्याख्यानमप्यपास्तम् । यं पुरुषमित्येतावतैव निर्वाहे समे इत्यादिविशेषणद्वयस्यानर्थक्यापत्तेश्च । बन्धप्रसक्तिरपि पुरिषु तादात्म्याध्यासं कृत्वा शेत इत्यर्थकेन पुरुषशब्देनैव लभ्यते । एतेन सुखादेः क्षेत्रधर्मत्वस्य वक्ष्यमाणत्वाच्चास्य व्याख्यानस्याकरणे भाष्यकृतां न्यूनता न शङ्कनीया । एवमन्येषामपि मूलतद्भाष्यब-हिर्भूताः कल्पनाः सम्यग्विचार्य निराकर्तव्याः । अस्माभिस्तु विस्तरभयान्नोद्धाट्य निराक्रियन्ते ॥ १५ ॥ शीतोष्णादेः प्रतीयमान-

७ अभिनवगुप्ताचार्यव्याख्या ।

शक्यः । अनीलं हि न नीलीकर्तुं शक्यम् । स्वभावान्तरापत्तेर्दुष्टत्वात् । तथाच शास्त्रं 'नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः' इति

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कल्पते समर्थो भवति ॥ १५ ॥ इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं यस्मात् नासत इति ।**

२ आनन्दगिरिव्याख्या ।

**यति—इतश्चेति** । इतःशब्दार्थमेव स्फुटयति—**यस्मादिति** । यतः शीतादेः शोकादिहेतोरनात्मनो नास्ति वस्तुत्वं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

समाध्यादौ त्यक्तोपाधेरात्मनः समदुःखसुखत्वेऽपि सोपाधिकदशायां तप्तायःपिण्डस्य दग्धृत्वमिव तस्य दुःखित्वं दुर्वारम् । उपाधिश्च मूलप्रकृतेर्व्यापिकाया मात्रारूप इति तत्सत्त्वे तु न निर्मूलोच्छेदमर्हत्यतः सोऽमृतत्वाय कल्पत इत्यनुपपन्नमित्याशङ्क्याह—**नासत इति** । प्रमात्रादेरागमापायित्वेन कादाचित्कत्वात् रज्जूरगादिवत् असतः भावः सत्ता कालत्रयेऽपि नास्ति । अयमर्थः—प्रमात्रादिर्मूलाज्ञानेन चिदात्मनि कल्पितः । मूलाज्ञानस्य चात्मज्ञानेन निवृत्तौ कारणाभावान्न पुनः प्रमात्राद्युद्भवोऽस्तीति निष्प्रत्यूहममृतत्वं ज्ञानात्सिध्यतीति । नन्वप्रतीतिमात्रात्प्रमात्रादेर्मिथ्यात्वोपगमे आत्मनोऽपि सुप्त्यादावप्रतीयमानत्वाविशेषान्मिथ्यात्वमस्तु । उभयोर्वा सत्यत्वमस्तु इत्याशङ्क्याह—**नाभावो विद्यते**

४ मधुसूदनीव्याख्या ।

तथापि तस्य सत्यस्य जडद्रष्टृत्वरूपः सत्य एव संसारः । तथाच शीतोष्णादिसुखदुःखकारणे सति तद्भोगस्यावश्यकत्वात्सत्यस्य च ज्ञानाद्विनाशानुपपत्तेः कथं तितिक्षा कथं वा सोऽमृतत्वाय कल्पत इति चेत् । न । कृत्स्नस्यापि द्वैतप्रपञ्चस्यात्मनि कल्पितत्वेन तज्ज्ञानाद्विनाशोपपत्तेः । शुक्तौ कल्पितस्य रजतस्य शुक्तिज्ञानेन विनाशवत् । कथं पुनरात्मानात्मनोः प्रतीत्यविशेषे आत्मवदनात्मापि सत्यो न भवेत् अनात्मवदात्मापि मिथ्या न भवेत् उभयोस्तुल्ययोगक्षेमत्वादित्याशङ्क्य विशेषमाह भगवान् । यत्कालतो देशतो वस्तुतो वा परिच्छिन्नं तदसत् यथा घटादि जन्मविनाशशीलं प्राक्कालेन परकालेन च परिच्छिद्यते ध्वंसप्रागभावप्रतियोगित्वात् कादाचित्कं कालपरिच्छिन्नमित्युच्यते । एवं देशपरिच्छिन्नमपि तदेव मूर्तत्वेन सर्वदेशावृत्तित्वात् । कालपरिच्छिन्नस्य देशपरिच्छेदनियमेऽपि देशपरिच्छिन्नत्वेनाभ्युपगतस्य परमाण्वादेस्तार्किकैः कालपरिच्छेदानभ्युपगमाद्देशपरिच्छेदोऽपि पृथगुक्तः । सच किंचिद्देशवृत्तिरत्यन्ताभावः । एवं सजातीयभेदो विजातीयभेदः स्वगतभेदश्चेति त्रिविधो भेदो वस्तुपरिच्छेदः । तथा वृक्षस्य वृक्षान्तराच्छिलादेः पत्रपुष्पादेश्च भेदः । अथवा जीवेश्वरभेदो जीवजगद्भेदो जीवपरस्परभेद ईश्वरजगद्भेदो जगत्परस्परभेद इति पञ्चविधो वस्तुपरिच्छेदः । कालदेशापरिच्छिन्नस्याप्याकाशादेस्तार्किकैर्वस्तुपरिच्छेदाभ्युपगमात्पृथङ्निर्देशः । एवं सांख्यमतेऽपि योजनीयम् । एतादृशस्यासतः शीतोष्णादेः कृत्स्नस्यापि प्रपञ्चस्य भावः सत्ता पारमार्थिकत्वं स्वान्यूनसत्ताकतादृशपरिच्छेदशून्यत्वं न विद्यते न संभवति, घटत्वाघटत्वयोरिव परिच्छिन्नत्वापरिच्छिन्नत्वयोरेकत्र विरोधात् । नहि दृश्यं किंचित्क्वचित्काले देशे वस्तुनि वा न निषिध्यते सर्वत्राननुगमात्, नवा सद्वस्तु क्वचिद्देशे काले वस्तुनि वा निषिध्यते सर्वत्रानुगमात्, तथाच सर्वत्रानुगते सद्वस्तुन्यननुगतं व्यभिचारि वस्तु कल्पितं रज्जुखण्ड इवानुगते व्यभिचारि सर्पधारादिकमिति भावः । ननु व्यभिचारिणः कल्पितत्वे सद्वस्त्वपि कल्पितं स्यात्तस्यापि तुच्छव्यावृत्तत्वेन व्यभिचारित्वादित्यत आह—**नाभावो विद्यते सत इति** । सदधिकरणकभेदप्र-

५ भाष्योत्कर्षदीपिका ।

त्वेऽपि बाध्यत्वेन मिथ्यात्वात्, तद्विपर्ययेणात्मनः सत्यत्वाच्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तमित्याह—**नेति** । असतो विचारेण बाध्यत्वात्पूर्वमप्यविद्यमानस्य शीतादेः सकारणस्य प्रत्यक्षादिप्रमाणैर्निरूप्यमाणस्यापि भावः परमार्थसत्ता न विद्यते । एतेनासतः शून्यस्य नरविषाणतुल्यस्यास्तित्वप्रसङ्गाभावादप्रसक्तप्रतिषेध इति प्रत्युक्तम् । विमतं शीतादि अतात्त्विकमप्रामाणिकत्वात् शुक्तिरूप्यवत् । धर्मिग्राहकस्य प्रत्यक्षादेस्तात्त्विकप्रामाण्याबोधकत्वदर्शनात्, तद्विषयस्य शीतादेरनिर्वाच्यस्यासतो भ्रान्तैर्लौकैः प्रत्यक्षा-

६ श्रीधरीव्याख्या ।

दुःखे यस्य तम् । स तैरविक्षिप्यमाणो धर्मज्ञानद्वारा अमृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १५ ॥ ननु तथापि शीतोष्णादिकमतिदुःसहं कथं सोढव्यम्, अत्यन्तं तत्सहने च कदाचिद्देहनाशस्यापि संभवादित्याशङ्क्य तत्त्वविचारतः सर्वं सोढुं शक्यमित्याशयेनाह—**नेति** । असतः अनात्मधर्मत्वादविद्यमानस्य शीतोष्णादेरात्मनि भावः सत्ता न विद्यते । तथा सतः सत्स्वभावस्यात्मनोऽभावो

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १५ ॥ अथ सत एवात्मलाभ उत्पत्तिः तदा लब्धात्मनोऽस्य जात्वप्यभावान्नित्यतैवेत्यागमे का शोच्यता । एवमपायोऽपि सतोऽसतो वा । असत्तावदसदेव । सत्स्वभावस्यापि कथमसत्तास्वभावः । द्वितीये क्षणेऽसावसत्स्वभाव इतिचेत् आद्येऽपि तथा स्यादिति न कश्चिद्भावः स्यात् । स्वभावस्यात्यागात् । अथ मुद्गरादिनास्य नाशः क्रियते स यदि व्यतिरिक्तो भावस्य किं वृत्तं । न दृश्यते इति चेत् मानाम दर्शि भावः । नत्वन्यथाभूतः पटावृतइव । अव्यतिरिक्तस्तु नासावित्युक्तं तदतत्संक्षिप्याह—नासतो विद्यते इति । अथच लोकवृत्तेनेदमाह । असतो नित्यवि-

१ श्रीमच्छांकरभाष्यम् ।

**नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता, नहि शीतोष्णादि**

२ आनन्दगिरिव्याख्या ।

वस्तुनश्चात्मनो निर्विकारत्वेनैकरूपत्वमतो मुमुक्षोर्विशेषणं तितिक्षुत्वं युक्तमित्याह—**नेत्यादिना** । कार्यस्यासत्त्वेऽपि कारणस्य सत्त्वे नात्यन्तासत्त्वासिद्धिरित्याशङ्क्य विशिनष्टि—**सकारणस्येति** । नासत इत्युपादाय पुनर्नकारानुकर्षणमन्वयार्थम् । असतः शून्यस्यास्तित्वप्रसङ्गाभावादप्रसक्तप्रतिषेधप्रसक्तिरित्याशङ्क्याह—**नहीति** । विमतमतात्विक-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

**सत इति** । सद्वस्तुनः अभावोऽसत्त्वं कदाचिदपि न विद्यते । सुषुप्त्यादावपि अनुभूतयोः सुखाज्ञानयोः सुखमहमस्वाप्सं न किंचिदवेदिषमिति उत्थाने परामर्शदर्शनात् । तदनुभवमन्तरेण तयोः परामर्शासंभवात् । अतः सतोऽसत्त्वं नास्ति । श्रुतिरपि सुप्तिकैवल्ययोः प्रमात्राद्यभावं दृशो नित्यत्वं चाह । 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इति । यदि प्रमात्रादिः सत्यस्तर्हि

४ मधुसूदनीव्याख्या ।

तियोगित्वं हि वस्तुपरिच्छिन्नत्वं, तच्च न तुच्छव्यावृत्तत्वेन । तुच्छे शशविषाणादौ सत्त्वायोगात् 'सदसन्नामभावो निरूप्यते' इति न्यायात् । एकस्यैव स्वप्रकाशस्य नित्यस्य विभोः सतः सर्वानुस्यूतत्वेन सद्व्यक्तिभेदानभ्युपगमात् घटः सन्नित्यादिप्रतीतेः सार्वलौकिकत्वेन सतो घटाद्यधिकरणकभेदप्रतियोगित्वायोगात्, अभावः परिच्छिन्नत्वं देशतः कालतो वस्तुतो वा, सतः सर्वानुस्यूत-

५ भाष्योत्कर्षदीपिका ।

दिभिरुपलभ्यमानत्वात्, सत्त्वेन गृहीतस्य भावस्तात्त्विकत्वं नास्तीत्यर्थः । ननु क्वचित्प्रत्यक्षादेस्तात्त्विकप्रामाण्यावेदकत्वदर्शनात्तद्विषयस्य शीतादिद्वैतस्य दुर्निरूपत्वेनानिर्वचनीयत्वं न शक्यते वक्तुम् । वेदैकदेशस्य क्रियार्थत्वे ब्रह्मबोधकवेदस्यापि क्रियार्थत्वं यथा । यथावा श्रोत्रादीन्द्रियै रूपानुपलब्ध्या चक्षुषापि तन्नोपलभ्यत इतिचेन्न । शीतादिद्वैतस्य विकारस्यागमापायित्वेनासत्त्वनिर्धारणात् । तथाचायं प्रयोगः—विमतमसत् आगमापायित्वाद्रज्जूरगवदिति । तथाच 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुत्यापि विकारस्य मिथ्यात्वं बोधितम् । किंच कार्यं कारणान्न भिद्यते कुण्डलादिसंस्थानस्य चक्षुरादिनिरूप्यमाणस्य कनकादिव्यतिरेकेणानुपलब्धेः । ततश्चायं प्रयोगः—विमतं न कारणाद्वस्तुतो भिन्नं कार्यत्वात् कुण्डलादिवदिति । 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायात्, कार्यस्य जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः कारणादव्यतिरेकाच्च । सर्वः शीतादिविकारोऽसत् कारणव्यतिरेकेणानुपलब्धेः कुण्डलादिवदिति सर्वस्यापि कारणस्य स्वस्वकारणाद्यतिरेकेणानुपलभ्यमानस्य कार्यकारणपरम्पराभ्रमाधिष्ठाने कल्पितत्वं सिध्यति । ननु कार्यकारणविभागविहीनस्य वस्तुनोऽभावात्कार्यकारणपरम्पराया असत्त्वे सर्वाभावप्रसङ्ग इतिचेन्न । सर्वत्रानुवृत्तव्यावृत्तसदसद्बुद्धिद्वयोपलब्ध्यानुवृत्ते च व्यावृत्तानां कल्पितत्वात्, अकल्पितस्य सर्वभेदविकल्पाधिष्ठानस्याकार्यकारणस्य वस्तुनः सिद्धेः । तथाच यद्यद्व्यावृत्तेष्वनुवृत्तं तत्तत्परमार्थसत् यथा रजतादिधारास्वनुगतः शुक्त्यादेरिदमंशः, विमतं सत् अव्यभिचारित्वादिदमंशवत्; यद्व्यावृत्तं तन्मिथ्या यथा रजतादिधारा, विमतं मिथ्या व्यभिचारित्वात् रजतादिधारावत्; इत्यनुमानद्वयेन सतोऽकल्पितत्वमसतः कल्पितत्वं च सिद्धम् । ननु नेदमनुमानद्वयमुपपद्यते सर्वमिथ्यात्ववादिनो विभागाभावादनुमानादिव्यवहारानुपपत्तेरिति चेन्न सदसद्विभागस्य बुद्ध्यायत्तत्वात्, बुद्धिद्वयाधीने विभागे स्थिते सत्यनुमानादिव्यवहारोपपत्तेः । नन्वद्वैतवादिनस्तव बुद्धिद्वयाभावात्तदधीनः सदसद्विभागः कथं सेत्स्यतीति चेत् सर्वत्र व्यवहारदशायां कल्पितस्य सदसद्विभागस्य हेतुभूतबुद्धिद्वयस्य सर्वैरुपलभ्यमानत्वात् । नन्वेवमपि सतः सामान्यरूपतया विशेषाकाङ्क्षायां सामान्यविशेषरूपे द्वे वस्तुनी स्यातामितिचेन्न । सोऽयमित्यादिसामानाधिकरण्यवद्धटः सन्नित्यादिसामानाधिकरण्यस्यैकवस्तुनिष्ठत्वाद्वस्तुभेदे घटपटयोरिव तदयोगात् । ननूक्तसामानाधिकरण्यस्यैकवस्तुनिष्ठत्वं न वाच्यं नीलमुत्पलमितिवद्धर्मधर्मिविषयतया तस्य सुवचत्वादितिचेन्न । नीलोत्पलमिति सामानाधिकरण्यस्य धर्मधर्मिविषयस्य गौणत्वात् । तदपेक्षयानुवृत्ते व्यावृत्तं कल्पितमिति ऐक्यनिष्ठस्यैव मुख्यस्यौचित्यात् । तथाच सन् घटः सन् पटः सन्हस्ती सन्नश्वः सन् गौरित्येवं बुद्धिद्वयमुपलभ्यते तयोश्च बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति घटादेर्विकारस्य व्यभिचारित्वं पूर्वं दर्शितं नतु सद्बुद्धिर्व्यभिचरति घटे नष्टेऽपि पटादौ तद्दर्शनात् । एतेन घटे नष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति प्रत्युक्तम् । तस्माद्घटादिबुद्धिविषयोऽसत् व्यभिचारात् रज्जूरगवत्, सद्बुद्धिविषयस्तु नासत् अव्यभिचारादिदमंशवत् । ननु यथा घटे विनष्टे सद्बुद्धिः पटादौ दृश्यते तथा घटबुद्धिरपि घटान्तर इतिचेन्न । घटबुद्धेः पटादावदर्शनात् । ननु नष्टे घटे सद्बुद्धिरपि तत्र न दृश्यत इति चेन्न । यतो घटादिनाशे व्यक्तिनाशे जातेरिव विशेष्यस्य विशेषणीभूतसत्ताभिव्यञ्जकस्याभावात् सद्बुद्धेरप्यदर्शनं नतु तस्या विषयस्य सत्ताया अभावाददर्शनम् । ननु द्वयोः सतोरेव नीलोत्पलयोर्विशेषणविशेष्यत्वदर्शनात् सद्घटयोरपि विशेषणविशेष्यत्वाभ्युपगमे द्वयोः सत्त्वावश्यंभावाद्घटादिकल्पितत्वानुमानं सामानाधिकरण्यबुद्धिबाधितं, घटादेः कल्पितत्वाभ्युपगमे तस्याभावेन समानाधिकरणत्वस्यायुक्तत्वादिति चेन्न । यतः सामानाधिकरण्यबुद्धिः पदार्थद्वयभानमपेक्षते न द्वयोः सत्त्वम् । मरीच्यादावन्यतरस्याभावेऽपि सदिदमुदकमिति सामानाधिकरण्यदर्शनात् । तस्माद्देहादेः शीतोष्णादेर्द्वन्द्वस्य च सकारणस्य सत्त्वेन कल्पितस्य वस्तुतोऽसतो भावः

१ श्रीमच्छांकरभाष्यम् ।

**सकारणं प्रमाणैर्निरूप्यमाणं वस्तुसद्भवति, विकारो हि सः, विकारश्च व्यभिचरति, यथा घटा-**

२ आनन्दगिरिव्याख्या ।

**मप्रामाणिकत्वाद्रज्जुसर्पवत्, नहि धर्मिग्राहकस्य प्रत्यक्षादेस्तत्त्वावेदकं प्रामाण्यं कल्प्यते विषयस्य दुर्निरूपत्वादतोऽनिर्वाच्यं द्वैतमित्यर्थः । कथं पुनरध्यक्षादिविषयस्य शीतोष्णादिद्वैतस्य दुर्निरूपत्वेनानिर्वाच्यत्वं तत्राह—विकारो हीति । ततश्च विमतं मिथ्या आगमापायित्वात्संप्रतिपन्नवदिति फलितमाह—विकारश्चेति । वाचारम्भणश्रुतेर्द्वैतमिथ्यात्वेऽनुग्राहकत्वं दर्शयितुं चकारः । किंच कार्यं कारणाद्भिन्नमभिन्नं वेति विकल्प्याद्यं दूषयति—यथेति । निरूप्य-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सतोऽर्थस्य सुषुप्त्यादावदर्शनं सान्निध्याभावाद्वा द्रष्टुर्दृग्लोपाद्वा वक्तव्यम् । नाद्यः । आत्मनि दृष्टनष्टस्वभावस्यान्यत्र सद्भावकल्पनायोगात् । नान्त्यः । उदाहृतया श्रुत्यैव तन्निषेधात् । तस्मादुभयोरपि सत्यत्वेन मिथ्यात्वेन वा साम्यं दुर्वचम् । ननु सत आकाशादेः क्वचिदपि देशे काले चाभावो यद्यपि नास्ति तथापि सत एव परमाणोर्देशान्तरेऽभावोऽस्ति, प्रागसतोऽपि घटादेर्भावश्च दृष्टः, तत्कथमुच्यते 'नासतो विद्यते भावो नाभावो विद्यते सत' इत्याशङ्क्य विद्वदनुभवेन निरस्यति—**उभयोरपीति** । अन्तो याथात्म्यम् । यथा स्वप्ने नभःकुम्भरज्जूरगादयो नित्यत्वानित्यत्व-

४ मधुसूदनीव्याख्या ।

सन्मात्रस्य न विद्यते न संभवति पूर्ववद्विरोधादित्यर्थः । ननु सन्नाम किमपि वस्तु नास्त्येव यस्य देशकालवस्तुपरिच्छेदः प्रतिषिध्यते । किं तर्हि सत्त्वं नाम परं सामान्यं यदाश्रयत्वेन द्रव्यगुणकर्मसु सद्व्यवहारः । तदेकाश्रयसंबन्धेन सामान्यविशेषसमवायेषु । तथाचासतः प्रागभावप्रतियोगिनो घटादेः सत्त्वं कारणव्यापारात् सतोऽपि तस्याभावः कारणनाशाद्भवत्येवेति कथमुक्तं 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति, एवं प्राप्ते परिहरति—**उभयोरपीत्यर्धेन** । उभयोरपि सदसतोः सतश्चासतश्चान्तो मर्यादा नियतरूपत्वं यत्सत्तत्सदेव यदसत्तदसदेवेति दृष्टो निश्चितः श्रुतिस्मृतियुक्तिभिर्विचारपूर्वकम् । कैः ? तत्त्वदर्शिभिर्वस्तुयाथात्म्यदर्शनशीलैर्ब्रह्मविद्भिः, नतु कुतार्किकैः । अतः कुतार्किकाणां न विपर्ययानुपपत्तिः । तुशब्दोऽवधारणे । एकान्तरूपो नियम एव दृष्टो नत्वनेकान्तरूपोऽन्यथाभाव इति तत्त्वदर्शिभिरेव दृष्टो नातत्त्वदर्शिभिरिति वा । तथाच श्रुतिः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रम्य 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपसंहरन्ती सदेकं सजातीयविजातीयस्वगतभेदशून्यं सत्यं दर्शयति, 'वाचारम्भणं विकारो

५ भाष्योत्कर्षदीपिका ।

परमार्थसत्ता न विद्यते । जन्मध्वंसाभ्यां प्रागूर्ध्वं च वस्त्वन्तरे देशान्तरे चानुपलब्धेः । तथा परमार्थसतः अविनाशिनोऽबाध्यस्यात्मनोऽतत्त्वविद्भिरज्ञातत्वादविद्यमानकल्पस्याभावोऽविद्यमानत्वं परमार्थतोऽसत्ता न संभवति सर्वत्राव्यभिचारात् त्रिविधपरिच्छेदशून्यत्वात् । इत्थं भाष्यकृद्भिः सदसतोः साध्यत्वं परिच्छिन्नापरिच्छिन्नत्वयोर्हेतुत्वं च बोधितम् । कैश्चित्तु—परिच्छिन्नस्यासतः शीतादेः प्रपञ्चस्य भावः सत्ता पारमार्थिकत्वं स्वान्यूनसत्ताकतादृशपरिच्छेदशून्यत्वं न विद्यते सतः सर्वत्रानुस्यूतसन्मात्रस्याभावः परिच्छिन्नत्वं न विद्यते इति व्याख्यातम् । परिच्छिन्नत्वं च त्रिविधं तत्रात्यन्ताभावप्रतियोगित्वलक्षणं देशतः परिच्छिन्नत्वं, ध्वंसप्रतियोगित्वलक्षणं कालतः परिच्छिन्नत्वं, अन्योन्याभावप्रतियोगित्वलक्षणं वस्तुतः परिच्छिन्नत्वम् । नन्वात्मनोऽप्याकाशवत्क्वाप्यसमवेतत्वात्समवायसंबन्धेनात्यन्ताभावप्रतियोगित्वं तस्मिन्नतिव्याप्तं, आकाशादेश्च यावन्मूर्तसंयोगित्वनियमात्संयोगसंबन्धेन तस्मिन्नव्याप्तं च, अमूर्तनिष्ठेतिविशेषणदाने त्वात्मन्यतिव्याप्तिस्तदवस्था, सर्वसंबन्धित्वाभावविवक्षायां सर्वसंबन्धशून्ये परमात्मन्यतिव्याप्तिः । सर्वसंबन्धिन्यज्ञानेऽव्याप्तिश्च । ध्वंसप्रतियोगित्वमप्याकाशादावव्याप्तं तेषां परैर्नित्यत्वाभ्युपगमात्, अन्योन्याभावप्रतियोगित्वं चात्मनि व्यभिचारि तस्य जडनिष्ठान्योन्याभावप्रतियोगित्वादन्यथास्य जडत्वापत्तेरितिचेन्न । अत्यन्ताभावेऽन्योन्याभावे च प्रतियोगिसमसत्ताकत्वविशेषणेनात्मन्यतिव्याप्तिवारणात् अज्ञानाकाशादौ स्वस्वसमानसत्ताकान्योन्याभावात्यन्ताभावप्रतियोगित्वसत्त्वेनाव्याप्त्यभावात् । अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे स्वान्यूनसत्ताकेतिविशेषणं देयम् । अतएव प्रातिभासिकरजतादेर्व्यावहारिकाभावप्रतियोगित्वेऽपि न साधनवैकल्यम् । ध्वंसप्रतियोगित्वं च नाकाशादावव्याप्तम् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति श्रुतिसिद्धत्वेन तस्यानुमतत्वात् । 'आकाशवत्सर्वगतश्च नित्यः' इत्यत्रात्मनिदर्शनत्वं तु स्वसमानकालीनसर्वगतत्वेनाभूतसंप्लवस्थायित्वेन चेति द्रष्टव्यम्—इति तत्रोदाहृतव्याख्या 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतौ ब्रह्मणोऽपरिच्छिन्नत्वबोधकस्यानन्तपदस्य पृथङ्निर्देशात् ब्रह्म सत्यमपरिच्छिन्नत्वात्, जगदसत्यं परिच्छिन्नत्वादित्यनुमानद्वये हेतुत्वेनोभयोर्निर्देशादप्रसिद्धार्थकल्पनात्मकेन हेतुसाध्ययोरैक्यापत्तिरूपेण च दोषेण ग्रस्ता यदि भाष्यानुरोधेन योजयितुं शक्या तर्हि निर्दुष्टेति दिक् । ननु सर्वेषामेव कुतो न निर्णय इत्याशङ्क्य सर्वेषां तत्त्वदर्शित्वाभावात्तत्त्वदर्शिनां त्वस्त्येव निर्णय इत्याह—**उभयोरिति** । उभयोरात्मानात्मनोः सदसतोरपि दृष्टोन्तः सत्सदेवासदसदेवेति निर्णयस्तत्त्व-

१ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

**दिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसज्जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः, कार्यस्य घटादेर्मृदादिकारणस्य तत्कारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वं, तदसत्त्वे सर्वाभावप्रसङ्ग इति चेन्न । सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति यद्विषया बुद्धिर्न व्यभिचरति तत्सत् यद्विषया व्यभिचरति तदसद् इति सदसद्विभागे बुद्धितन्त्रे स्थिते, सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे न नीलोत्पलवत्**

२ आनन्दगिरिव्याख्या ।

माणमन्तर्बहिश्चेति शेषः । विमतं कारणान्न तत्त्वतो भिद्यते कार्यत्वाद्घटवदित्यर्थः । इतोऽपि कारणाद्भेदेन नास्ति कार्यम् 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायादित्याह—**जन्मेति** । यदि कार्यं कारणादभिन्नं तदा तस्य भेदेनासत्त्वे पूर्वस्मादविशेषः । तादात्म्येनावस्थानं तु न युक्तं तस्यापि कारणव्यतिरेकेणाभावात् । कार्यकारणविभागविधुरे वस्तुनि कार्यकारणपरम्पराया विश्रमत्वादित्यभिप्रेत्याह—**मृदादीति** । कार्यकारणविभागविहीनं वस्त्वेव नास्तीति मन्वानश्चोदयति—**तदसत्त्व इति** । अनुवृत्तव्यावृत्तबुद्धिद्वयदर्शनादनुवृत्ते च व्यावृत्तानां कल्पितत्वादकल्पितं सर्वभेदकल्पनाधिष्ठानमकार्यकारणं वस्तु सिध्यतीति परिहरति—**न सर्वत्रेति** । संप्रति सतो वस्तुत्वे प्रमाणमनुमानमुपन्यस्यति—**यद्विषयेति** । यद्व्यावृत्तेष्वनुवृत्तं तत्सत् यथा सर्पधारादिष्वनुगतो रज्ज्वादेरिदमंशः । विमतं सत्यमव्यभिचारित्वात्संप्रतिपन्नवदित्यर्थः । व्यावृत्तस्य कल्पितत्वे प्रमाणमाह—**यद्विषयेत्यादिना** । यद्व्यावृत्तं तन्मिथ्या यथा सर्पधारादि, विमतं मिथ्या व्यभिचारित्वात्संप्रतिपन्नवदित्यर्थः, इत्यनुमानद्वयमनुसृत्य सतोऽकल्पितत्वमसतश्च कल्पितत्वं स्थितमिति शेषः । ननु नेदमनुमानद्वयमुपपद्यते समस्तद्वैतवैतथ्यवादिनो विभागाभावादनुमानादिव्यवहारानुपपत्तेस्तत्राह—**सदसदिति** । उक्ते विभागे बुद्धिद्वयाधीने स्थिते सत्यनुमानादिव्यवहारो निर्वहति प्रातिभासिकविभागेन वियोगात्परमार्थस्यैव तद्धेतुत्वे केवलव्यतिरेकाभावादित्यर्थः । कुतः सदसद्विभागस्य बुद्धिद्वयाधीनत्वं बुद्धिविभागस्यापि तन्त्राभावात्तत्राह—**सर्वत्रेति** । व्यवहारभूमिः सप्तम्यर्थः । बुद्धिविभागस्यापि कल्पितस्यैव बोध्यविभागप्रतिभासहेतुतेति भावः । बुद्धिद्वयमनुरुध्य सदसद्विभागे सतः सामान्यरूपतया विशेषाकाङ्क्षायां सामान्यविशेषे द्वे वस्तुनी वस्तुभूते स्यातामिति चेत्तत्राह—**समानाधिकरण इति** । पदयोः सामानाधिकरण्यं बुद्ध्योरुपचर्यते, सोऽयमिति सामानाधिकरण्यवद्घटः सन्नित्यादि सामानाधिकरण्यमेकवस्तुनिष्ठं वस्तुभेदे घटपटयोरिव तदयोगादित्यर्थः । नीलमुत्पलमितिवद्धर्मधर्मिविषयतया सामानाधिकरण्यस्य सुवचत्वान्न वस्त्वैक्यविषयत्वमिति चेन्नेत्याह—**न नीलेति** । नहि सामान्यविशेषयोर्भेदेऽभेदे च तद्भावो भेदाभेदौ च विरुद्धावतो जातिव्यक्त्योः सामा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सत्यत्वासत्यत्वादिधर्मोपेततया निश्चिता अपि प्रबोधेन बाध्यन्ते तद्वज्जाग्रद्दृष्टा अपि ते तत्त्वज्ञानेन बाध्यन्ते । ननु जाग्रद्वासनावशात् स्वप्नगतनभआदौ नित्यत्वादिनिश्चयो भ्रम इतिचेत् अनादिकालप्रवृत्तप्राग्भवीयसंस्कारवशात् जाग्रन्नभआदावपि स भ्रम एवेति तुल्यम् । ननु स्वरूपसदेव रजतादिकं शुक्त्यादावध्यस्यते नत्वसत् शशशृङ्गादिकम् । गगना-

४ मधुसूदनीव्याख्या ।

नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादिश्रुतिस्तु विकारमात्रस्य व्यभिचारिणो वाचारम्भणत्वेनानृतत्वं दर्शयति, 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति श्रुतिः सर्वेषामपि विकाराणां सति कल्पितत्वं दर्शयति । सत्त्वं च न सामान्यं तत्र मानाभावात् । पदार्थमात्रसाधारण्यात्सत्सदिति प्रतीत्या द्रव्यगुणकर्ममात्रवृत्तिसत्त्वस्य स्वानुपपादकस्याकल्पनात् वैपरीत्यस्यापि सुवचत्वात् एकरूपप्रतीतेरेकरूपविषयनिर्वाह्यत्वेन संबन्धभेदस्य स्वरूपस्य च कल्पयितुमनुचितत्वात् विषयस्याननुगमेऽपि प्रतीत्यनुगमे जातिमात्रोच्छेदप्रसङ्गात् । तस्मादेकमेव सद्वस्तु स्वतः स्फुरणरूपं ज्ञाताज्ञातावस्थाभासकं स्वतादात्म्याध्यासेन सर्वत्र सद्व्यवहारोपपादकं सन्घट इति प्रतीत्या तावत्सद्व्यक्तिमात्राभिन्नत्वं घटे विषयीकृतम्, नतु सत्तासमवायित्वम् । अभेदप्रतीतेर्भेदघटितसंबन्धानिर्वाह्यत्वात् । एवं द्रव्यं सद्गुणः सन्नित्यादिप्रतीत्या सर्वाभिन्नत्वं सतः सिद्धम् । द्रव्यगुणभेदासिद्ध्या च न तेषु धर्मिषु सत्त्वं नाम धर्मः कल्प्यते किंतु सति धर्मिणि द्रव्याद्यभिन्नत्वं लाघवात्, तच्च वास्तवं न संभवतीत्याध्यासिकमित्यन्यत् । तदुक्तं वार्तिककारैः 'सत्तातोऽपि न भेदः स्याद्द्रव्यत्वादेः कुतोऽन्यतः । एकाकारा हि संवित्तिः सद्द्रव्यं सद्गुणस्तथा ॥' इत्यादि । सत्तापि नासतो भेदिका तस्याप्रसिद्धेः । द्रव्यत्वादिकं तु सद्धर्मत्वान्न सतो भेदकमित्यर्थः । अतएव घटाद्भिन्नः पट इत्यादिप्रतीतिरपि न भेदसाधिका घटपटतद्भेदानां सदभेदेनैक्यात् । एवं यत्रैव न भेदग्रहस्तत्रैव

७ अभिनवगुप्ताचार्यव्याख्या ।

नाशिनः शरीरस्य न भावः । अनवरतमवस्थाभिः परिणामित्वात् । नित्यसतश्च परमात्मनो नास्ति कदाचिद्विनाशः । अपरिणामधर्मत्वात् ।

१ श्रीमच्छांकरभाष्यम् ।

सन् घटः सन् पटः सन् हस्तीत्येवं सर्वत्र । तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति, तथाच दर्शितं, न तु सद्बुद्धिस्तस्माद्घटादिबुद्धिविषयोऽसन्, व्यभिचारात्, न तु सद्बुद्धिविषयोऽव्यभिचारात् । घटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत् न, पटादावपि सद्बुद्धिदर्शनात् । विशेषणविषयैव सा सद्बुद्धिरतोऽपि न विनश्यति । अथ सद्बुद्धिवद्घटबुद्धिरपि घटान्तरे दृश्यत इति चेन्न । पटादावदर्शनात् । सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेन्न, विशेष्याभावात् सद्बुद्धिर्विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किंविषया स्यात् । ननु पुनः सद्बुद्धेर्विषयाभावादेकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति चेन्न, सदिदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् । तस्माद्देहादेर्द्वन्द्वस्य च सका-

२ आनन्दगिरिव्याख्या ।

नाधिकरण्यं नीलोत्पलयोरिव न गौणं किंतु व्यावृत्तमनुवृत्ते कल्पितमित्येकनिष्ठमित्यर्थः । सामान्यविशेषयोरुक्तन्यायं गुणगुण्यादावतिदिशति—**एवमिति** । तुल्यौ हि तत्रापि विकल्पदोषाविति भावः । सामानाधिकरण्यानुपपत्त्या द्वे वस्तुनी सामान्यविशेषाविति पक्षं प्रतिक्षिप्य विशेषाएव वस्तूनीति पक्षं प्रतिक्षिपति—**तयोरिति** । बुद्धिव्यभिचाराद्बोध्यव्यभिचारेऽपि कथं व्यावृत्तानां विशेषाणामवस्तुत्वमित्याशङ्क्याह—**तथाचेति** । विकारो हि स इत्यादाविति शेषः । न चैकं वस्तु सामान्यविशेषात्मकमेकस्य द्वैरूप्यविरोधादित्यभिप्रेत्य सामान्यमेकमेव वस्तु तद्बुद्धेरव्यभिचाराद्, बोधस्यापि सतस्तथात्वादित्याह—**नत्विति** । व्यभिचरतीति पूर्वेण संबन्धः । विशेषाणां व्यभिचारित्वे सतश्चाव्यभिचारित्वे फलितमुपसंहरति—**तस्मादिति** । असत्त्वं कल्पितत्वम् । तच्छब्दार्थमेव स्फोरयति—**व्यभिचारादिति** । सद्बुद्धिविषयस्य सतोऽकल्पितत्वे तच्छब्दोपात्तमेव हेतुमाह—**अव्यभिचारादिति** । सद्बुद्धिव्यभिचारद्वारा बोध्यस्यापि व्यभिचारात्तदव्यभिचारित्वहेतोरसिद्धिरिति शङ्कते—**घटे विनष्ट इति** । सद्बुद्धेर्घटमात्रबुद्धिवद्घटविषयत्वाभावान्न घटनाशे व्यभिचारोऽस्तीति परिहरति—**न, पटादाविति** । सद्बुद्धेरघटविषयत्वे निरालम्बनत्वायोगाद् विषयान्तरं वक्तव्यमित्याशङ्क्याह—**विशेषणेति** । सतोऽकल्पितत्वहेतोरव्यभिचारित्वस्यासिद्धिमुद्धृत्य विशेषाणां कल्पितत्वहेतोर्व्यभिचारित्वस्यासिद्धिं शङ्कते—**सदिति** । यथा सद्बुद्धिर्घटे नष्टे पटादौ दृष्टत्वादव्यभिचारिणी, अव्यभिचारः सतो दर्शितस्तथा घटबुद्धिरपि घटे नष्टे घटान्तरे दृष्टेत्यव्यभिचाराद्घटे व्यभिचारासिद्धौ विशेषान्तरेष्वपि कल्पितत्वहेतोर्व्यभिचारो न सिध्यतीत्यर्थः । घटबुद्धेर्घटान्तरे दृष्टत्वेऽपि पटादावदृष्टत्वेन व्यभिचारात् पटादिविशेषेष्वपि व्यभिचारित्वसिद्धिरित्युत्तरमाह—**पटादाविति** । विशेषाणामेवं व्यभिचारित्वे सतोऽपि तदुपपत्तेरव्यभिचारित्वहेतुसिद्धितादवस्थ्यमिति शङ्कते—**सद्बुद्धिरिति** । घटादिनाशदेशे तदुपरक्ताकारेण सत्त्वाभानेऽपि नासत्त्वं घटाद्यभावाधिष्ठानतया भानादित्याह—**न विशेष्येति** । यथा सर्वगता जातिरित्यत्र खण्डमुण्डादिव्यक्त्यभावदेशे गोत्वं व्यञ्जकाभावान्न व्यज्यते न गोत्वाभावात् तथा सत्त्वमपि घटादिनाशे व्यञ्जकाभावान्न भाति न स्वरूपाभावादित्युक्तमेव प्रपञ्चयति—**सदित्यादिना** । सप्रतियोगिकविशेषणत्वव्यभिचारेऽपि स्वरूपाव्यभिचाराद्युक्तं सतः सत्त्वमिति भावः । द्वयोः सतोरेव विशेषणविशेष्यत्वदर्शनाद्घटसतोरपि विशेषणविशेष्यत्वे द्वयोः सत्त्वध्रौव्याद्घटादिविकल्पितत्वानुमानं सामानाधिकरण्यधीबाधितमिति चोदयति—**एकेति** । अनुभवमनुसृत्य बाधितविषयत्वमुक्त्वानुमानस्य निरस्यति—**नेत्यादिना** । घटादेः सति कल्पितत्वानुमानस्य दोषराहित्ये फलितमुपसंहरति—**तस्मादिति** । प्रथमपादव्याख्यानपरिसमाप्तावितिशब्दः । ननु नेदं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दिकं तु त्वद्रीत्या स्वरूपेण असदपि कथमात्मन्यध्यस्यत इतिचेन्न । अध्यासे हि पूर्वानुभवमात्रमपेक्षते नत्वनुभूतस्य स्वरूपेण सत्त्वमपि । दर्पणप्रतिबिम्बिते गगनेऽपि नैल्याध्यासदर्शनात् । नच गगने नैल्यं स्वरूपेण सत्यमस्ति अथचान्यत्राध्यस्यते । तस्मात् भ्रमपरम्परायाः संभवात् । स्वप्नद्रष्टृभिरिवास्माभिरदृष्टमपि सदसतोर्याथात्म्यं प्रबुद्धैर्द्रष्टुं शक्यमेव ।

४ मधुसूदनीव्याख्या ।

लब्धपदा सती सदभेदप्रतीतिर्विजयते, तार्किकैः कालपदार्थस्य सर्वात्मकस्याभ्युपगमात्तेनैव सर्वव्यवहारोपपत्तौ तदतिरिक्तपदार्थकल्पने मानाभावात्तस्यैव सर्वानुस्यूतस्य सद्रूपेण स्फुरणरूपेण च सर्वतादात्म्येन प्रतीत्युपपत्तेः स्फुरणस्यापि सर्वानुस्यूतत्वेनैकत्वान्नित्यत्वं विस्तरेणाग्रिमश्लोके वक्ष्यते । तथाच यथा कस्मिंश्चिद्देशे काले वा घटस्य पटादेर्न देशान्तरे कालान्तरे वा घटत्वं, एवं कस्मिंश्चिद्देशे काले वा घटस्यान्यत्राघटत्वं शक्रेणापि न शक्यते संपादयितुं पदार्थस्वभावभङ्गायोगात्, एवं कस्मिंश्चिद्देशे काले वा सतो देशान्तरे कालान्तरे वा सत्त्वं कस्मिंश्चिद्देशे काले वा सतोऽन्यत्रासत्त्वं न शक्यते संपादयितुं

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

रणस्यासतो न विद्यते भाव इति । तथा सतश्चात्मनोऽभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम, एवमात्मानात्मनोः सदसतोरुभयोरपि दृष्ट उपलब्धोऽन्तो निर्णयः सत्सदेवाऽसदसदेवेति त्वनयोर्यथोक्तयोस्तत्त्वदर्शिभिः, तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति तद्भावस्तत्त्वं ब्रह्मणो याथात्म्यं तद्द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैस्तत्त्वमपि तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादीनि नियतानियतरूपाणि द्वन्द्वानि विकारोऽयमसन्नेव मरीचिजलवन्मिथ्यावभासत इति मनसि निश्चित्य तितिक्षस्वेत्यभिप्रायः ॥ १६ ॥ किं पुनस्तत्सत् यत् सदेव

२ आनन्दगिरिव्याख्या ।

व्याख्यानं भाष्यकाराभिप्रेतं सर्वद्वैतशून्यत्वविवक्षायां शास्त्रतद्भाष्यविरोधात्केनापि पुनर्दुर्विदग्धेन स्वमनीषिकयोत्प्रेक्षितमेतदिति चेत्, मैवम्, किमिदं द्वैतप्रपञ्चस्य शून्यत्वं किं तुच्छत्वं किं सद्विलक्षणत्वम्, नाद्योऽनभ्युपगमात्, द्वितीयानभ्युपगमे तु तवैव शास्त्रविरोधो भाष्यविरोधश्च, सर्वं हि शास्त्रं तद्भाष्यं च द्वैतस्य सत्यत्वानधिकरणत्वसाधनेनाद्वैतसत्यत्वे पर्यवसितमिति त्रैविद्यवृद्धैस्तत्र तत्र प्रतिष्ठापितं, तथाच प्रक्षेपाशङ्कासंप्रदायपरिचयाभावादिति द्रष्टव्यम् । अनात्मजातस्य कल्पितत्वेनावस्तुत्वप्रतिपादनपरतया प्रथमपादं व्याख्याय द्वितीयपादमात्मनः सर्वकल्पनाधिष्ठानस्याकल्पितत्वेन वस्तुत्वप्रसाधनपरतया व्याकरोति—**तथेति** । नन्वात्मनः सदात्मनो विशेषेषु विनाशिषु तदुपरक्तस्य विनाशः स्यादित्याशङ्क्य विशिष्टनाशेऽपि स्वरूपानाशस्योक्तत्वान्मैवमित्याह—**सर्वत्रेति** । ननु कदाचिदसदेव पुनः सत्त्वमापद्यते प्रागसतो घटस्य जन्मना सत्त्वाभ्युपगमात्, स च कदाचिदसत्त्वं प्रतिपद्यते स्थितिकाले सतो घटस्य पुनर्नाशेनासत्त्वाङ्गीकारादेवं सदसतोरव्यवस्थितत्वाविशेषादुभयोरपि हेयत्वमुपादेयत्वं वा तुल्यं स्यादिति तत्राह—**एवमिति** । तुशब्दो दृष्टशब्देन संबध्यमानो दृष्टिमवधारयति । नहि प्रागसतो घटस्य सत्त्वमसत्त्वे स्थिते सत्त्वप्राप्तिविरोधादसत्त्वनिवृत्तिश्च सत्त्वप्राप्त्या चेत्प्राप्तमितरेतराश्रयत्वमन्तरेणैव सत्त्वापत्तिमसत्त्वनिवृत्तावसत्त्वमनवकाशि भवेत् । एतेन सतोऽसत्त्वापत्तिरपि प्रतिनीतेति भावः । कथं तर्हि सतोऽसत्त्वमसतश्च सत्त्वं प्रतिभातीत्याशङ्क्य तत्त्वदर्शनाभावादित्याह—**तत्त्वेति** । तस्य भावस्तत्त्वं नच तच्छब्देन परामर्शयोग्यं किंचिदस्ति । प्रकृतं प्रतिनियतमित्याशङ्क्य व्याचष्टे—**तदित्यादिना** । ननु सदसतोरन्यथात्वं केचित्प्रतिपद्यन्ते केचित्तु तयोरुक्तनिर्णयमनुसृत्य तथात्वमेवाभिगच्छन्ति तत्र केषां मतमेषितव्यमिति तत्राह—**त्वमपीति** ॥ १६ ॥ ननु सदिति सामान्यं स्वरूपं वा । प्रथमे तस्य विशेषसापेक्षतया प्रलयदशायामशेषविशेषविनाशे विनाशः स्यात् । नचात्मादयो विशेषास्तदापि सन्तीति वाच्यम् । आत्मातिरिक्तानां विशेषाणां कार्यत्वाङ्गीकारात्प्रलयावस्थायामनवस्थानादात्मनस्तु सामान्यात्मनो धर्मित्वादुक्तदोषाद्, द्वितीये तु स्वरूपस्य व्यावृत्तत्वे कल्पितत्वाद्विनाशित्वमनुवृत्तत्वे तस्यैव सामान्यतया प्रागुक्तदोषानुषक्तिरिति मन्वानश्चोदयति—**किं पुनरिति** । सामान्यविशेषभावशून्यमखण्डैकरसं सदेवेत्यादिश्रुतिप्रमितं सर्वविक्रिया-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तथाच श्रुतयः 'नेह नानास्ति किंचन', 'अस्तीत्येवोपलब्धव्यः', 'अतोऽन्यदार्तम्' इत्याद्या अनात्मनोऽसत्त्वं आत्मनश्च सत्त्वं प्रतिपादयन्ति । एवं सतो ज्ञानेनासतो बाधात्कैवल्यं सिध्यतीति भावः ॥ १६ ॥ यस्याभावो नास्ति तस्य सतः सत्त्वे किं मानमित्याशङ्क्याह—**अविनाशीति** । तच्छब्देन प्रकृतं सत् परामृश्यते । येन सता इदं सर्वं वियदादि

४ मधुसूदनीव्याख्या ।

युक्तिसामान्यात्, अत उभयोर्नियतरूपत्वमेव द्रष्टव्यमित्यद्वैतसिद्धौ विस्तरः । अतः सदेव वस्तु मायाकल्पिताऽसन्निवृत्त्याऽमृतत्वाय कल्पते सन्मात्रदृष्ट्या च तितिक्षाप्युपपद्यत इति भावः ॥ १६ ॥ नन्वेतादृशस्य सतो ज्ञानाद्भेदे परिच्छिन्न-

५ भाष्योत्कर्षदीपिका ।

दर्शिभिर्ब्रह्मविद्भिः । तस्मात्त्वमपि तेषां दृष्टिमवलम्ब्य शोकमोहौ हित्वा शीतादींस्तितिक्षस्वेत्याशयः ॥१६॥ किं तत्सदित्याकाङ्क्षायामाह—**अविनाशि त्विति** । न विनष्टुं शीलमस्येति तत् जानीहि । तुशब्दोऽसतो व्यावृत्त्यर्थः । किं येनेदं सर्वं व्याप्तं निरवयवत्वात्

६ श्रीधरीव्याख्या ।

विनाशो न विद्यते एवमुभयोः सदसतोरन्तो निर्णयो दृष्टः । कैः, तत्त्वदर्शिभिर्वस्तुयाथात्म्यविद्भिः । एवंभूतविवेकेन सहस्वेत्यर्थः ॥ १६ ॥ तत्र सत्स्वभावमविनाशि वस्तु सामान्येनोक्तं विशेषतो दर्शयति—**अविनाशीति** । येन सर्वमिदमागमापायधर्मकं देहादि-

७ अभिनवगुप्ताचार्यव्याख्या ।

तथाच 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति अनयोः सदसतोः अन्तः प्रतिष्ठापदं यत्रानयोर्विश्रान्तिः ॥ १६ ॥ यस्तत्त्वदर्शी-

१ श्रीमच्छांकरभाष्यम् ।

**सर्वदैवास्तीत्युच्यते—अविनाशीति । अविनाशि न विनष्टुं शीलमस्येति । तुशब्दः सतो विशेषणार्थः । तद्विद्धि विजानीहि । किं येन सर्वमिदं जगत्ततं व्याप्तं सदाख्येन ब्रह्मणा साकाशमाकाशेनेव घटादयः विनाशमदर्शनमभावमव्ययस्य न व्येत्युपचयापचयौ न यातीत्यव्ययं तस्याव्ययस्य नैतत् सदाख्यं ब्रह्म स्वेन रूपेण व्येति व्यभिचरति निरवयवत्वाद्देहादिवत्, नाप्यात्मीयेनात्मीयाभावाद्**

२ आनन्दगिरिव्याख्या ।

रहितं वस्तु प्रकृतं सद्विवक्षितमित्युत्तरमाह—**उच्यत इति** । आत्मनः सदात्मनो विनाशराहित्यविज्ञाने सर्वजगद्व्यापकत्वं हेतुमाह—**येनेति** । आत्मनो विनाशाभावे युक्तिमाह—**विनाशमिति** । आत्मनो विनाशमिच्छता स्वतो वा परतो वा नाशस्तस्येष्यते । नाद्य इत्याह—**अविनाशीति** । देहादिद्वैतमसदुच्यते ततः सतो विशेषणं स्वतो नाशराहित्यम् । तस्य द्योतको निपात इत्याह—**तुशब्द इति** । आकाङ्क्षापूर्वकं विशेष्यं दर्शयति—**किमित्यादिना** । विमतमविनाशि व्यापकत्वादाकाशवत्, नहि प्रमितमेवोदाहरणं किंतु प्रसिद्धमपीति भावः । न द्वितीय इत्याह—**विनाशमिति** । न खल्वस्य विनाशं कर्तुं कश्चिदर्हतीति संबन्धः । विनाशस्य सावशेषत्वनिरवशेषत्वाभ्यां द्वैराश्यमाश्रित्य व्याकरोति—**अदर्शनमिति** । न कश्चिदस्याभावं कर्तुं शक्नोतीत्यत्र हेतुमाह—**अव्ययस्येति** । ब्रह्म हि स्वरूपेण व्येति स्वसंबन्धिना वेति विकल्प्याद्यं दूषयति—**नैतदिति** । नहि निरवयवस्य स्वावयवापचयरूपव्ययः संभवतीत्यत्र वैधर्म्यदृष्टान्तमाह—**देहादिवदिति** । द्वितीयं निरस्यति—**नापीति** । तदेव व्यतिरेकदृष्टान्तेन स्पष्टयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ततं व्याप्तम् । घटः सन्पटः सन्निति सर्वस्य सदभेदानुभवात् । यथा घटो मृत् शरावो मृदिति घटादीनां मृदभेदानुभवान्मृदुपादानकत्वं तद्वत्सर्वस्यापि सदुपादानकत्वं बोध्यम् । ननु मृद्वत्सदपि किं विकारवद्भवतीत्याशङ्क्याह—**अविनाशीति** । तत् सत् अविनाशि विद्धि । अयमर्थः—पूर्वावस्थापरित्यागोऽत्र विनाशः । मृद्धि पिण्डाकारतां त्यक्त्वा घटीभवति अतः सा विनाशशीला । विकारधाराश्रयत्वात् । ब्रह्म तु न तथा किंतर्हि रज्जुवत्स्वयमविनश्यदेव कार्याकारं भवति । स्वकीये च सत्तास्फुरणे कार्येऽर्पयति । अतोऽविनाशि । तथाच श्रुतयः 'अजायमानो बहुधा विजायते', 'जात एव न जायते को न्वेनं जनयेत्पुनः' । अजायमानः जन्माख्यं विकारमलभमानोऽपि विजायते वियदादिरूपेणाविर्भवति । तथा लोकदृष्ट्या जातो घटादिः परमार्थदृष्ट्या न जायते । परिणाम्युपादानस्याभावात् । मृदादेस्तु स्वाभ-

४ मधुसूदनीव्याख्या ।

त्वापत्तेर्ज्ञानात्मकत्वमभ्युपेयं तच्चानाध्यासिकम्, अन्यथा जडत्वापत्तेः । तथाचानाध्यासिकज्ञानरूपस्य सतो धात्वर्थत्वादुत्पत्तिविनाशवत्त्वं घटज्ञानमुत्पन्नं घटज्ञानं नष्टमिति प्रतीतेश्च । एवंचाहं घटं जानामीति प्रतीतेस्तस्य साश्रयत्वं सविषयत्वं चेति देशकालवस्तुपरिच्छिन्नत्वात्स्फुरणस्य कथं तद्रूपस्य सतो देशकालवस्तुपरिच्छेदशून्यत्वमित्याशङ्क्याह—विनाशो देशतः कालतो वस्तुतो वा परिच्छेदः सोऽस्यास्तीति विनाशि परिच्छिन्नं तद्विलक्षणमविनाशि सर्वप्रकारपरिच्छेदशून्यं तु एव तत् सद्रूपं स्फुरणं त्वं विद्धि जानीहि । किं तत् । येन सद्रूपेण स्फुरणेनैकेन नित्येन विभुना सर्वमिदं दृश्यजातं स्वतः सत्तास्फूर्तिशून्यं ततं व्याप्तं स्वसत्तास्फूर्त्यध्यासेन रज्जुशकलेनेव सर्पधारादि स्वस्मिन्समावेशितं तदविनाश्येव विद्धीत्यर्थः । कस्मात् । यस्मात् विनाशं परिच्छेदं अव्ययस्यापरिच्छिन्नस्यापरोक्षस्य सर्वानुस्यूतस्य स्फुरणरूपस्य सतः कश्चित् कोऽप्याश्रयो वा विषयो वा इन्द्रियसंनिकर्षादिरूपो हेतुर्वा न कर्तुमर्हति समर्थो न भवति, कल्पितस्याकल्पितपरिच्छेदकतायोगात् आरोपमात्रे चेष्टापत्तेः । अहं घटं जानामीत्यत्र ह्यहंकार आश्रयतया भासते घटस्तु विषयतया । उत्पत्तिविनाशवती काचिदहंकारवृत्तिस्तु सर्वतो विप्रसृतस्य सतः स्फुरणस्य व्यञ्जकतया आत्ममनोयोगस्य परैरपि ज्ञानहेतुत्वाभ्युपगमात्,

५ भाष्योत्कर्षदीपिका ।

स्वरूपेण देहादिवत् आत्मीयाभावात् धनादिहान्या देवदत्तवच्च न व्येतीत्यव्ययं तस्यास्याव्ययस्य ब्रह्मणः स्वस्वरूपस्य विनाशमभावं बाधं न कश्चित् ईश्वरोऽपि कर्तुमर्हति शक्नोति । स्वात्मनि क्रियाविरोधात् । ननु नन्वेतादृशस्य सतो ज्ञानाद्भेदे परिच्छिन्नत्वापत्तेर्ज्ञानात्मकत्वमभ्युपेयं, तच्चानाध्यासिकं, अन्यथा जडत्वापत्तेः । तथा चानाध्यासिकज्ञानरूपस्य सतो धात्वर्थत्वादुत्पत्तिविनाशवत्त्वं घटज्ञानमुत्पन्नं घटज्ञानं नष्टमिति प्रतीतेश्च । एवं चाहं घटं जानामीति प्रतीतेस्तस्य साश्रयत्वं सविषयत्वं चेति देशकालवस्तुपरिच्छिन्नत्वात्स्फुरणस्य कथं तद्रूपस्य सतो देशकालवस्तुपरिच्छिन्नशून्यत्वमित्याशङ्क्याह—**अविनाशि** । त्रिविधपरिच्छेदशून्यं तु एव तत्स-

६ श्रीधरीव्याख्या ।

ततं तत्साक्षित्वेन व्याप्तम् । तत्तु आत्मस्वरूपमविनाशि विनाशशून्यं विद्धि जानीहि । तत्र हेतुमाह—**विनाशमिति** ॥ १७ ॥ आग-

१ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम्।

**यथा देवदत्तो धनहान्या व्येति न त्वेवं ब्रह्म व्येति, अतोऽव्ययस्यास्य ब्रह्मणो विनाशं न कश्चित्कर्तुमर्हति न कश्चिदात्मानं विनाशयितुं शक्नोतीश्वरोऽपि। आत्मा हि ब्रह्म स्वात्मनि च क्रिया-**

२ आनन्दगिरिव्याख्या।

**यथेति**। द्विविधेऽपि व्ययायोगे फलितमाह—**अत इति**। किंच ब्रह्म परतो न नश्यत्यात्मत्वाद्देवदत्तवदित्याह—**न कश्चिदिति**। आत्मत्वहेतोरसिद्धिमुद्धरति—**आत्मा हीति**। तादात्म्यश्रुतिरत्र हीति हेतू क्रियते। अस्तु तर्हि स्वयमेव ब्रह्मात्मनो नाशकमुद्बन्धनादिदर्शनान्नेत्याह—**स्वात्मनीति**॥ १७॥ सदसतोरनन्तरप्रकृतयोः **स्वरूपाव्यभि-**

३ नीलकण्ठव्याख्या (चतुर्धरी)।

मृदादिवत्तुच्छत्वात्। अत एनं घटादिं को नु जनयेन्न कोऽपि। कुतस्तर्हि भासत इति चेत् रज्जूरगादिवदिति दत्तोत्तरमेतत्। तथा 'प्राणा वै सत्यं तेषामेष सत्यम्', 'तस्य भासा सर्वमिदं विभाति' इति सतः सत्यत्वेन प्राणोपलक्षितस्य प्रपञ्चस्य सत्यत्वं सतो भानमेव प्रपञ्चस्य भानमिति। तथाच प्रपञ्चगते सत्तास्फूर्ती सतः सत्त्वे प्रमाणमित्यर्थः। श्रुतिश्च 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' इति सतो जगदुपादानत्वं कार्यलिङ्गेन द्रढयति। सतोऽविनाशित्वं च विनाशहेत्वभावादित्याह—**विनाशमिति**। न व्येति नापक्षीयत इत्यव्ययम्। एतेन सर्वविकारशून्यस्य विनाशो नास्तीत्यर्थः। अपक्षयो हि जन्मादिविकारवत एव भवतीति स एवात्र सर्वविकारोपलक्षणतया बोध्यः। न कश्चिदित्यनेन तदन्यस्य विनाशहेतोरभावो दर्शितः। 'द्वितीयाद्वै भयं भवति' इति श्रुतेः॥ १७॥ एवं सत

४ मधुसूदनीव्याख्या।

तदुत्पत्तिविनाशेनैव च तदुपहिते स्फुरणरूपे सत्युत्पत्तिविनाशप्रतीत्युपपत्तेर्नैकस्य स्फुरणस्य स्वत उत्पत्तिविनाशकल्पनाप्रसङ्गः, ध्वन्यवच्छेदेन शब्दवद्घटाद्यवच्छेदेनाकाशवच्च। अहंकारस्तु तस्मिन्नध्यस्तोऽपि तदाश्रयतया भासते, तद्वृत्तितादात्म्याध्यासात् सुषुप्तावहंकाराभावेऽपि तद्वासनावासिताज्ञानभासकस्य चैतन्यस्य स्वतःस्फुरणात्, अन्यथैतावन्तं कालमहं किमपि नाज्ञासिषमिति सुषुप्तोत्थितस्य स्मरणं न स्यात्। नचोत्थितस्य ज्ञानाभावानुमितिरियमिति वाच्यम्। सुषुप्तिकालरूपपक्षाज्ञानाल्लिङ्गासंभवाचास्मरणादेर्व्यभिचारित्वात् स्मरणाजनकनिर्विकल्पकाद्यभावासाधकत्वाच्च। ज्ञानसामग्र्यभावस्य चान्योन्याश्रयग्रस्तत्वात्। तथाच श्रुतिः 'यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इत्यादिः। सुषुप्तौ स्वप्रकाशस्फुरणसद्भावं तन्नित्यतया दर्शयति। एवं घटादिर्विषयोऽपि तदज्ञातावस्थाभासके स्फुरणे कल्पितः। य एव प्रागज्ञातः स एवेदानीं मया ज्ञात इति प्रत्यभिज्ञानात्। अज्ञातज्ञापकत्वं हि प्रामाण्यं सर्वतन्त्रसिद्धान्तः। यथार्थानुभवः प्रमेति वदद्भिस्तार्किकैरपि ज्ञातज्ञापिकायाः स्मृतेर्व्यावर्तकमनुभवपदं प्रयुञ्जानैरेतदभ्युपगमात्। अज्ञातत्वं च घटादेर्न चक्षुरादिना परिच्छिद्यते तत्रासामर्थ्यात्तज्ज्ञानोत्तरकालमज्ञानस्यानुवृत्तिप्रसङ्गाच्च। नाप्यनुमानेन लिङ्गाभावात्। नहीदानीं ज्ञातत्वेन प्रागज्ञातत्वमनुमातुं शक्यं, धारावाहिकानेकज्ञानविषये व्यभिचारात्। इदानीमेव ज्ञातत्वं तु प्रागज्ञातत्वे सतीदानीं ज्ञातत्वरूपं साध्याविशिष्टत्वादसिद्धम्। नचाज्ञातावस्थाज्ञानमन्तरेण ज्ञानं प्रति घटादेर्हेतुता ग्रहीतुं शक्यते, पूर्ववर्तित्वाग्रहात्, घटं न जानामीति सार्वलौकिकानुभवविरोधश्च। तस्मादज्ञातं स्फुरणं भासमानं स्वाध्यस्तं घटादिकं भासयतीति घटादीनामज्ञाते स्फुरणे कल्पितत्वसिद्धिः। अन्यथा घटादेर्जडत्वेनाज्ञातत्वतज्ज्ञानयोरनुपपत्तेः स्फुरणं चाज्ञातं स्वाध्यस्तेनैवाज्ञानेनेति स्वयमेव भगवान्वक्ष्यति 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इत्यत्र। एतेन विभुत्वं सिद्धम्। तथाच श्रुतिः 'महद्भूतमनन्तमपारं विज्ञानघन एव' इति, 'सत्यं ज्ञानमनन्तम्' इति च ज्ञानस्य महत्त्वमनन्तत्वं च दर्शयति। महत्त्वं स्वाध्यस्तसर्वसंबन्धित्वं, अनन्तत्वं त्रिविधपरिच्छेदशून्यत्वमिति विवेकः। एतेन शून्यवादोऽपि प्रत्युक्तः, निरधिष्ठानभ्रमायोगान्निरवधिबाधायोगाच्च। तथाच श्रुतिः 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति सर्वबाधावधिं पुरुषं परिशिनष्टि। उक्तंच भाष्यकारैः 'सर्वं विनश्यद्वस्तुजातं पुरुषान्तं विनश्यति पुरुषो विनाशहेत्वभावान्न विनश्यति' इति। एतेन क्षणिकवादोऽपि परास्तः। अबाधितप्रत्यभिज्ञानादन्यदृष्टान्यस्मरणाद्यनुपपत्तेश्च। तस्मादेकस्य सर्वानु-

५ भाष्योत्कर्षदीपिका।

द्रूपं स्फुरणं विद्धि। किं तत्। येनेदं सर्वं ततं रज्जुशकलेनेव सर्पधारादि स्वस्मिन्समावेशितं यस्माद्विनाशं परिच्छेदमव्ययस्यापरिच्छिन्नस्यास्य कोऽप्याश्रयो वा विषयो वा इन्द्रियसंनिकर्षादिरूपो हेतुर्वा न कर्तुमर्हतीति। भाष्यकृद्भिः कुतो न व्याख्यातमितिचेन्मूलाक्षरैरुक्तशङ्कोत्तरस्य घटादिज्ञानस्य व्यावृत्त्यात्मकस्यात्मन्यध्यस्तत्वेऽपि तस्य स्वप्रकाशत्वान्न जडत्वं व्यावृत्त्यादेरुत्पत्त्यादिमत्त्वेऽपि तस्य न तत्त्वमित्येवमादिरूपस्याप्रतीतेः, उत्तरत्रान्तवन्त इमे देहा इत्यस्य स्थानेऽन्तवत्य इमा वृत्तय इति वक्तव्यत्वापत्तेः। एतेषां नाशो भविष्यतीत्यर्जुनस्य भ्रमनिराकरणायात्मसंसृष्टदेहाद्यसत्यत्वप्रतिपादनस्यावश्यकत्वेनाश्रयत्वेत्या।देरार्थिकत्वाच्चेति गृहाण। किंच

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**विरोधात् ॥ १७ ॥ किं पुनस्तदसद् यत् स्वात्मसत्तां व्यभिचरतीत्युच्यते—अन्तवन्त इति ।**

२ आनन्दगिरिव्याख्या ।

चारित्वेन परमार्थतया सन्निर्धारितम् । इदानीमसन्निर्दिधारयिषया पृच्छति—**किं पुनरिति** । असदसदेवेति निर्धारितत्वात् प्रश्नस्य निरवकाशत्वमाशङ्क्य शून्यं व्यावर्त्य विवक्षितमसन्निर्धारयितुं तस्य सावकाशत्वमाह—**यत्स्वात्मेति** । देहादेरनात्मवर्गस्य प्रकृतासच्छब्दविषयतेत्याह—**उच्यत इति** । तेषां स्वातन्त्र्यं व्युदस्यति—**नित्यस्येति** । आकाशादिव्यावृत्त्यर्थं विशिनष्टि—**शरीरिण इति** । परिणामिनित्यत्वं व्यवच्छिनत्ति—**अनाशिन इति** । तस्य प्रत्यक्षाद्यविषयत्वमाह—**अप्रमेयस्येति** । देहादेरवस्तुत्वादात्मनश्चैकरूपत्वाद् युद्धे स्वधर्मे प्रवृत्तस्यापि तव न हिंसादिदोषसंभावनेत्याह—**तस्मादिति** । ननु देहादिषु सद्बुद्धेरनुवृत्तेस्तस्या विच्छेदाभावात्कथमन्तवत्त्वं तेषामिष्यते तत्राह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आत्मनो नित्यत्वं असतो देहादेरनित्यत्वं चोक्तमुपसंहरन् एनं युद्धाभिमुखं करोति—**अन्तवन्त इति** । यद्यपि 'नासतो विद्यते भावः' इति असतां देहानां कालत्रयेऽपि सत्त्वं नास्तीति परमार्थदृष्ट्या उक्तं तथापि तां दृष्टिमप्रति-

४ मधुसूदनीव्याख्या ।

स्यूतस्य स्वप्रकाशस्फुरणरूपस्य सतः सर्वप्रकारपरिच्छेदशून्यत्वादुपपन्नं नाभावो विद्यते सत इति ॥ १७ ॥ ननु 'स्फुरणरूपस्य सतः कथमविनाशित्वं, तस्य देहधर्मत्वात् देहस्य चानुक्षणविनाशात्' इति भूतचैतन्यवादिनस्तान्निराकुर्वन्, 'नासतो विद्यते भावः' इत्येतद्विवृणोति । अन्तवन्तो विनाशिनः इमे परोक्षा देहाः उपचितापचितरूपत्वाच्छरीराणि । बहुवचनात्स्थूलसूक्ष्मकारणरूपाः विराट्सूत्राव्याकृताख्याः समष्टिव्यष्ट्यात्मानः सर्वे नित्यस्याविनाशिन एव शरीरिण आध्यासिकसंबन्धेन शरीरवत एकस्य आत्मनः स्वप्रकाशस्फुरणरूपस्य संबन्धिनः दृश्यत्वेन भोग्यत्वेन चोक्ताः श्रुतिभिर्ब्रह्मवादिभिश्च । तथाच तैत्तिरीयकेऽन्नमयाद्यानन्दमयान्तान्पञ्च कोशान्कल्पयित्वा तदधिष्ठानमकल्पितं 'ब्रह्मपुच्छं प्रतिष्ठा' इति दर्शितम् । तत्र पञ्चीकृतपञ्चमहाभूततत्कार्यात्मको विराट् मूर्तराशिरन्नमयकोशः स्थूलसमष्टिः, तत्कारणीभूतोऽपञ्चीकृतपञ्चमहाभूततत्कार्यात्मको हिरण्यगर्भः सूत्रममूर्तराशिः सूक्ष्मसमष्टिः, 'त्रयं वा इदं नामरूपं कर्म' इति बृहदारण्यकोक्तत्रयात्मकः सकर्मात्मकत्वेन क्रियाशक्तिमात्रमादाय प्राणमयकोश उक्तः । नामात्मकत्वेन ज्ञानशक्तिमात्रमादाय मनोमयकोश उक्तः । रूपात्मकत्वेन तदुभयाश्रयतया कर्तृत्वमादाय विज्ञानमयकोश उक्तः । ततः प्राणमयमनोमयविज्ञानमयात्मैक एव हिरण्यगर्भाख्यो लिङ्गशरीरकोशः । तत्कारणीभूतस्तु मायोपहितचैतन्यात्मा सर्वसंस्कारशेषोऽव्याकृताख्य आनन्दमयकोशः । तेच सर्वे एकस्यैवात्मनः शरीराणीत्युक्तम् 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति । तस्य प्राणमयस्यैष एव शरीरे भवः शारीर आत्मा यः सत्यज्ञानादिलक्षणो गुहानिहितत्वेनोक्तः पूर्वस्यान्नमयस्य । एवं प्राणमयमनोमयविज्ञानमयानन्दमयेषु योज्यम् । अथवा इमे सर्वे देहास्त्रैलोक्यवर्तिसर्वप्राणिसंबन्धिन एकस्यैवात्मन उक्ता इति योजना । तथाच श्रुतिः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥' इति सर्वशरीरसंबन्धिनमेकमात्मानं नित्यं विभुं दर्शयति । ननु नित्यत्वं यावत्कालस्थायित्वं, तथाचाविद्यादिवत्कालेन सह नाशेऽपि तदुपपन्नमित्यत आह—**अनाशिन इति** । देशतः कालतो वस्तुतश्च परिच्छिन्नस्याविद्यादेः कल्पितत्वेनानित्यत्वेऽपि यावत्काल-

५ भाष्योत्कर्षदीपिका ।

शुक्त्यध्यस्तरजतज्ञानस्य कल्पितत्ववत्सदध्यस्तघटादिज्ञानस्याप्यध्यस्तत्वेन कल्पितत्वस्य सद्बुद्धिरसद्बुद्धिरित्यादिभाष्येण प्रदर्शितत्वादुक्तशङ्कानुत्थानमित्यभिप्रेत्याचार्यैरेवं न व्याख्यातमिति दिक् ॥ १७ ॥ किंपुनस्तदसदित्याकाङ्क्षायामाह—**अन्तवन्त इति ।** ननु स्फुरणरूपस्य सतः कथमविनाशित्वं तस्य देहधर्मत्वाद्देहस्य चानुक्षणविनाशित्वादिति भूतचैतन्यवादिनस्तान्निराकुर्वन् 'नासतो विद्यते भावः' इत्येतद्विवृणोति इति तु नत्वेत्यादिना देहात्मविवेकस्योक्तत्वमभिप्रेत्याचार्यैर्नावतारितम् । अन्तस्तत्त्वज्ञानेन बाधो येषां विद्यते तेऽन्तवन्तः । यथा शुक्त्यादिज्ञानेन शुक्तिरूप्यादयो बाध्यास्तथा इमे भ्रान्त्या प्रतीयमाना देहाः स्थूलादयो नित्यस्याबाध्यस्याध्यासिकसंबन्धेन कारणादिशरीरवतः देहा इति सकारणस्य शीतादेरप्युपलक्षणम् । देहानेकत्वाद्बहुवचनम् । पृथिव्यादिवद्व्यावहारिकनित्यत्वमाशङ्क्याह—**अनाशिन इति** । परमार्थनित्यस्य विद्वद्भिरुक्ताः अप्रमेयस्य रूपादिरहितत्वात्, व्याप्तिग्रहाभावात्,

६ श्रीधरीव्याख्या ।

मापायधर्मकं संदर्शयति—**अन्तवन्त इति** । अन्तो विनाशो विद्यते येषां तेऽन्तवन्तः । नित्यस्य सर्वदैकरूपस्य शरीरिणः शरीरवतः

७ अभिनवगुप्ताचार्यव्याख्या ।

भिर्दिष्टः स खलु नित्योऽनित्यो वेत्याशङ्क्याह—अविनाशि त्विति । तुश्चार्थे । आत्मा त्वविनाशी ॥ १७ ॥ अन्तवन्त इति । निरुपाख्यताकाले

१ श्रीमच्छांकरभाष्यम् ।

**अन्तो विनाशो विद्यते येषां तेऽन्तवन्तो यथा मृगतृष्णिकोदकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्या अन्तस्तथेमे देहाः । स्वप्नमायादेहादिवच्चान्तवन्तो नित्यस्य शरीरिणः**

२ आनन्दगिरिव्याख्या ।

**यथेति** । तथेमे देहाः सद्बुद्धिभाजोऽपि प्रमाणतो निरूपणायामवसाने विच्छेदादन्तवन्तो भवन्तीति शेषः । देहत्वादिना च जाग्रद्देहादेरन्तवत्त्वं संप्रतिपन्नवदनुमातुं शक्यमित्याह—**स्वप्नेति** । शरीरादेरन्तवत्त्वेऽपि प्रवाहरूपेणात्मनस्तत्संबन्धस्यानन्तवत्त्वमाशङ्क्याह—**नित्यस्येति** । प्रवाहस्य प्रवाहिव्यतिरेकेणानिरूपणान्न तदात्मनः देहाद्यभावे संबन्ध-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पद्यमानस्य नरकादिभयमनुरुध्यमानस्य व्यवहाराभिप्रायेण नित्यानित्यविभागमभिप्रेत्य देहानामन्तवत्त्वमुच्यत इति न दोषः नित्यत्वं कालापरिच्छेद्यत्वं तच्च व्यवहारे नभसोऽप्यस्तीत्यत उक्तं अनाशिन इति । नाशः अदर्शनं तद्वान् हि आकाशः 'नभ आत्मनि लीयते' इति स्मृतेः । अयं तु न तथेत्यनाशी । सर्वदैव प्रकाशमान इत्यर्थः । एतदपि न घटादिवद्दृश्यत्वेनेत्याह—**अप्रमेयस्येति** । तथाच श्रुतिरात्मनोऽप्रमेयत्वमाह 'एतदप्रमयं ध्रुवम्' इति अप्रमयमित्य-

४ मधुसूदनीव्याख्या ।

स्थायित्वरूपमौपचारिकं नित्यत्वं व्यवह्रियते । 'यावद्विकारं तु विभागो लोकवत्' इति न्यायात् । आत्मनस्तु परिच्छेदत्रयशून्यस्याकल्पितस्य विनाशहेत्वभावान्मुख्यमेव कूटस्थनित्यत्वं नतु परिणामिनित्यत्वं यावत्कालस्थायित्वं चेत्यभिप्रायः । नन्वेतादृशे देहिनि किंचित्प्रमाणमवश्यं वाच्यम्, अन्यथा निष्प्रमाणस्य तस्यालीकत्वापत्तेः शास्त्रारम्भवैयर्थ्यापत्तेश्च । तथाच वस्तुपरिच्छेदो दुष्परिहरः 'शास्त्रयोनित्वात्' इति न्यायाच्चात आह—**अप्रमेयस्येति** । 'एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्' । अप्रमयमप्रमेयम् । 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति च श्रुतेः स्वप्रकाशचैतन्यरूप एवात्मा अतस्तस्य सर्वभासकस्य स्वभानार्थं न स्वभास्यापेक्षा किंतु कल्पिताज्ञानतत्कार्यनिवृत्त्यर्थं कल्पितवृत्तिविशेषापेक्षा । कल्पितस्यैव कल्पितविरोधित्वात् 'यक्षानुरूपो बलिः' इति न्यायात् । तथाच सर्वकल्पितनिवर्तकवृत्तिविशेषोत्पत्त्यर्थं शास्त्रारम्भः, तस्य तत्त्वमस्यादिवाक्यमात्राधीनत्वात्स्वतः सर्वदा भासमानत्वात्सर्वकल्पनाधिष्ठानत्वाद्दृश्यमात्रभासकत्वाच्च न तस्य तुच्छत्वापत्तिः । तथाच 'एकमेवाद्वितीयं', 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिशास्त्रमेव स्वप्रमेयानुरोधेन स्वस्यापि कल्पितत्वमापादयति । अन्यथा स्वप्रामाण्यानुपपत्तेः । कल्पितस्य चाकल्पितपरिच्छेदकत्वं नास्तीति प्राक् प्रतिपादितम् । आत्मनः स्वप्रकाशत्वं च युक्तितोऽपि भगवत्पूज्यपादैरुपपादितम् । तथाहि यत्र जिज्ञासोः संशयविपर्ययव्यतिरेकप्रमाणानामन्यतममपि नास्ति तत्र तद्विरोधि ज्ञानमिति सर्वत्र दृष्टम् । अन्यथा त्रितयान्यतरापत्तेः आत्मनि चाहं वा नाहं वेति न कस्यचित्संशयः, नापि नाहमिति विपर्ययो व्यतिरेकः, प्रमा वेति तत्स्वरूपप्रमा सर्वदास्तीति वाच्यम् । तस्य सर्वसंशयविपर्ययधर्मित्वात् 'धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः' इति न्यायात् । अतएवोक्तम् 'प्रमाणमप्रमाणं च प्रमाभासस्तथैव च । कुर्वन्त्येव प्रमां यत्र तदसंभावना कुतः ॥' इति । प्रमाभासः संशयः स्वप्रकाशे सद्रूपे धर्मिणि प्रमाणाप्रमाणयोर्विशेषो नास्तीत्यर्थः । आत्मनो भासमानत्वे च घटज्ञानं मयि जातं नवेत्यादिसंशयः स्यात् । नचान्तरपदार्थे विषयस्यैव संशयादिप्रतिबन्धकत्वस्वभावः कल्प्यः बाह्यपदार्थे क्लृप्तेन विरोधिज्ञानेनैव संशयादिप्रतिबन्धसंभवे आन्तरपदार्थे स्वभावभेदकल्पनाया अनौचित्यात् । अन्यथा सर्वविप्लवापत्तेः । आत्ममनोयोगमात्रं चात्मसाक्षात्कारे हेतुः । तस्य च ज्ञानमात्रे हेतुत्वाद्, घटादिभानेऽप्यात्मभानं समूहालम्बनन्यायेन तार्किकाणां प्रवरेणापि दुर्निवारम् । नच चाक्षुषत्वमानसत्वादिसङ्करः लौकिकत्वालौकिकत्ववदंशभेदेनोपपत्तेः सङ्करस्यादोषत्वाच्चाक्षुषत्वादेर्जातित्वानभ्युपगमाद्वा । व्यवसायमात्र एवात्मभानसामग्र्या विद्यमानत्वादनुव्यवसायोऽप्यपास्तः । नच व्यवसायभानार्थं सः । तस्य दीपवत्स्वव्यवहारे सजातीयानपेक्षत्वात् । नहि घटतज्ज्ञानयोरिव व्यवसायानुव्यवसाययोरपि विषयत्वविषयित्वव्यवस्थापकं वैजात्यमस्ति, व्यक्तिभेदातिरिक्तवैधर्म्यानभ्युपगमात्, विषयत्वावच्छेदकरूपेणैव विषयित्वाभ्युपगमे घटयोरपि तद्भावापत्तिरविशेषात् । ननु यथा घटव्यवहारार्थं घटज्ञानमभ्युपेयते तथा घटज्ञानव्यवहारार्थं घटज्ञानविषयं ज्ञानमभ्युपेयं, व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादिति चेत्, कानुपपत्तिरुद्भाविता देवानांप्रियेण स्वप्रकाशवादिनः । नहि व्यवहर्तव्यभिन्नत्वमपि

५ भाष्योत्कर्षदीपिका ।

सदृशस्यान्यस्यानिरूपणात्प्रवृत्तिनिमित्ताभावात्, तेन विनानुपपद्यमानस्याभावात्, अभावत्वाभावात्, प्रत्यक्षादिभिरपरिच्छेद्यस्य अथवाऽज्ञाते हि वस्तुनि प्रमाणान्वेषणा भवति, ज्ञातश्चात्मा देहाद्भिन्नः सर्वैः प्राणिभिः योऽहं बाल्ये पितरावन्वभूवं स एव नप्तॄननुभवामीत्यनुसंधानदर्शनात् । स्वप्ने देवादिशरीरमास्थाय तदुचितान्भोगान्भुक्त्वा प्रबुद्धो मनुष्यदेहं प्राप्य मनुष्य एवाहं नतु देव

७ अभिनवगुप्ताचार्यव्याख्या ।

स्थूलविनाशयोगिनः तदन्यथानुपपत्तेरेव च विनाशिनः प्रतिक्षणमवस्थान्तरभागिनः । यदुक्तं 'अन्ते पुराणं दृष्ट्वा प्रतिक्षणं नवत्वहानिरनु-

१ श्रीमच्छांकरभाष्यम् ।

शरीरवतोऽनाशिनोऽप्रमेयस्यात्मनोऽन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः । नित्यस्यानाशिन इति न पुनरुक्तं, नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च यथा देहो भस्मीभूतोऽदर्शनं गतो नष्ट उच्यते विद्यमानोऽप्यन्यथा परिणतो व्याध्यादियुक्तो जातो नष्ट उच्यते तत्रानाशिनो नित्यस्येति द्विविधेनापि नाशेनासंबन्धोऽस्येत्यर्थः । अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्माभूदिति नित्यस्यानाशिन इत्याह । अप्रमेयस्य न प्रमेयस्य । प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः । नन्वागमेनात्मा परिच्छिद्यते प्रत्यक्षादिना च पूर्वम् । न, आत्मनः स्वतःसिद्धत्वात् । सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति । नहि पूर्वमित्थमहमित्यात्मानमप्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते । नह्यात्मा नाम कस्यचिदप्रसिद्धो भवति । शास्त्रं त्वन्त्यं प्रमाणमतद्धर्माध्यारोपणमात्र-

२ आनन्दगिरिव्याख्या ।

सिद्धिरित्यभिसंधायोक्तं—**विवेकिभिरिति** । पदद्वयस्यैकार्थत्वमाशङ्क्य निरस्यति—**नित्यस्येत्यादिना** । नित्यत्वस्य द्वैविध्यसिध्यर्थं नाशद्वैविध्यं प्रतिज्ञातं प्रकटयति—**यथेत्यादिना** । नाशस्य निरवशेषत्वेन सावशेषत्वेन च सिद्धे द्वैविध्ये फलितमाह—**तत्रेति** । विशेषणाभ्यां कूटस्थनित्यत्वमात्मनो विवक्षितमित्यर्थः । अन्यतरविशेषणमात्रोपादाने परिणामिनित्यत्वमात्मनः शङ्क्येतेत्यनिष्टापत्तिमाशङ्क्याह—**अन्यथेति** । औपनिषदत्वविशेषणमाश्रित्याप्रमेयत्वमाक्षिपति—**नन्विति** । इतश्चात्मनो नाप्रमेयत्वमित्याह—**प्रत्यक्षादिनेति** । तेन चागमप्रवृत्त्यपेक्षया पूर्वावस्थायामात्मैव परिच्छिद्यते तस्मिन्नेवाज्ञातत्वसंभवाद्, अज्ञातज्ञापकं प्रमाणमिति च प्रमाणलक्षणादित्यर्थः । एतदप्रमेयमित्यादिश्रुतिमनुसृत्य परिहरति—**नेत्यादिना** । कथं मानमनपेक्ष्यात्मनः सिद्धत्वमित्याशङ्क्योक्तं विवृणोति—**सिद्धे हीति** । प्रमित्सोः प्रमेयमिति शेषः । तदेव व्यतिरेकमुखेन विशदयति—**नहीति** । आत्मनः सर्वलोकप्रसिद्धत्वाच्च तस्मिन्न प्रमाणमन्वेषणीयमित्याह—**नह्यात्मेति** । प्रत्यक्षादेरनात्मविषयत्वात्तत्र चाज्ञाततया व्यवहारे संभवात्तत्प्रामाण्यस्य च व्यावहारिकत्वाद्विशिष्टे तत्प्रवृत्तावपि केवले तदप्रवृत्तेः यद्यपि नात्मनि तत्प्रामाण्यं तथापि तद्धितश्रुत्या शास्त्रस्य तत्र प्रवृत्तिरवश्यंभाविनीत्याशङ्क्याह— **शास्त्रं त्विति** । शास्त्रेण प्रत्यग्भूते ब्रह्मणि प्रतिपादिते प्रमात्रादिविभागस्य व्यावृत्तत्वा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्याप्रमेयमित्यर्थः । एतच्चात्मनि प्रमाणाप्रसराज्ज्ञेयम् । तथाच श्रुतिः 'येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयात्' इति । प्रसिद्धिस्त्वस्य प्रत्यगात्मत्वादेव । 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इति

४ मधुसूदनीव्याख्या ।

ज्ञानविशेषणं व्यवहारहेतुतावच्छेदकं गौरवात् । तथाचेश्वरज्ञानवद्योगिज्ञानवत्प्रेयमिति ज्ञानवच्च स्वेनैव स्वव्यवहारोपपत्तौ न ज्ञानान्तरकल्पनावकाशः । अनुव्यवसायस्यापि घटज्ञानव्यवहारहेतुत्वं किं घटज्ञानज्ञानत्वेन किंवा घटज्ञानत्वेनैवेति विवेचनीयम्, उभयस्यापि तत्र सत्त्वात् । तत्र घटव्यवहारे घटज्ञानत्वेनैव हेतुतायाः क्लृप्तत्वात्तेनैव रूपेण घटज्ञानव्यवहारेऽपि हेतुतोपपत्तौ न घटज्ञानज्ञानत्वं हेतुतावच्छेदकं गौरवान्मानाभावाच्च । तथाच नानुव्यवसायसिद्धिरेकस्यैव व्यवसायस्य व्यवसातरि व्यवसेये व्यवसाये च व्यवहारजनकत्वोपपत्तेरिति त्रिपुटीप्रत्यक्षवादिनः प्राभाकराः । औपनिषदास्तु मन्यन्ते स्वप्रकाशज्ञानरूप एवात्मा न स्वप्रकाशज्ञानाश्रयः कर्तृकर्मविरोधेन तद्भानानुपपत्तेः ज्ञानभिन्नत्वे घटादिवज्जडत्वेन कल्पितत्वापत्तेश्च स्वप्रकाशज्ञानमात्रस्वरूपोऽप्यात्माऽविद्योपहितः सन्साक्षीत्युच्यते, वृत्तिमदन्तःकरणोपहितः प्रमातेत्युच्यते । तस्य चक्षुरादीनि करणानि स चक्षुरादिद्वारान्तःकरणपरिणामेन घटादीन्व्याप्य तदाकारो भवति । एकस्मिंश्चान्तःकरणपरिणामे घटावच्छिन्नचैतन्यं अन्तःकरणावच्छिन्नचैतन्यं चैकलोलीभावापन्नं भवति । ततो घटावच्छिन्नचैतन्यं प्रमात्रभेदात्स्वाज्ञानं नाशयदपरोक्षं भवति घटंच स्वावच्छेदकं स्वतादात्म्याध्यासाद्भासयति अन्तःकरणपरिणामश्च वृत्त्याख्योऽतिस्वच्छः स्वावच्छिन्नेनैव चैतन्येन भास्यत इत्यन्तःकरणतद्वृत्तिघटानामपरोक्षता । तदेतदाकारत्रयमहं जानामि घटमिति भासकचैतन्यस्यैकरूपत्वेऽपि घटंप्रति वृत्त्यपेक्षत्वात्प्रमातृता अन्तःकरणतद्वृत्तीःप्रति तु वृत्त्यनपेक्षत्वात्साक्षितेति विवेकः । अद्वैतसिद्धौ सिद्धान्तबिन्दौ च विस्तरः । यस्मादेवं प्रागुक्तन्यायेन नित्यो विभुरसंसारी सर्वदैकरूपश्चात्मा तस्मात्तन्नाशशङ्कया स्वधर्मे युद्धे प्राक्प्रवृत्तस्य तव तस्मादुपरतिर्न युक्तेति युद्धाभ्यनुज्ञया भगवानाह—**तस्माद्युध्यस्व भारतेति** । अर्जुनस्य स्वधर्मे युद्धे प्रवृत्तस्य तत उपरतिकारणं शोकमोहौ तौ च विचारजनितेन विज्ञानेन बाधिताविति 'अपवादापवादे उत्सर्गस्य

५ भाष्योत्कर्षदीपिका ।

इति देवशरीरे बाध्यमानेऽप्यहमास्पदस्यात्मनोऽबाध्यमानत्वाच्च योगमाहात्म्येन सिंहादिशरीरभेदेऽप्यात्मनोऽभेदेन ज्ञातत्वाच्च । तथा इन्द्रियेभ्योऽपि भिन्न आत्मा सर्वैर्ज्ञायते योऽहमद्राक्षं स एवेदानीं शृणोमीत्यहमालम्बनस्य प्रत्यभिज्ञानात् । बुद्धिमनोभ्यामपि भिन्नः तयोः करणत्वेन कर्तृत्वाश्रयत्वायोगात् । अहं कृश इत्यादिप्रत्ययस्तु प्रेमास्पदे पुत्रादौ विकलेऽहमेव विकल इत्यादिप्रत्ययवदुपपद्यते ।

१ श्रीमच्छांकरभाष्यम्।

निवर्तकत्वेन प्रमाणत्वमात्मनि प्रतिपद्यते नत्वज्ञातार्थज्ञापकत्वेन। तथाच श्रुतिः-'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इति। यस्मादेवं नित्योऽविक्रियश्चात्मा तस्माद् युध्यस्व। युद्धादुपरमं मा कार्षीरित्यर्थः। नह्यत्र युद्धकर्तव्यता विधीयते, युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्ते, अतस्तस्य कर्तव्यप्रतिबन्धापनयनमात्रं भगवता क्रियते। तस्माद्युध्यस्वेत्यनुवादमात्रं न विधिः॥ १८॥

२ आनन्दगिरिव्याख्या।

द्युक्तमस्यान्त्यत्वमपौरुषेयतया निर्दोषत्वाच्चास्य प्रामाण्यमित्यर्थः। तथापि कथमस्य प्रत्यगात्मनि प्रामाण्यं तस्य स्वतःसिद्धत्वेनाविषयत्वादज्ञातज्ञापनायोगादित्याशङ्क्य स्वतो भानेऽपि प्रतीचो मनुष्योऽहं कर्ताहमित्यादिना मनुष्यत्वकर्तृत्वादीनामतद्धर्माणामध्यारोपणेनात्मनि प्रतीयमानत्वात्तन्मात्रनिवर्तकत्वेनात्मनो विषयत्वमनापद्यैव शास्त्रं प्रामाण्यं प्रतिपद्यते सिद्धंतु निवर्तकत्वादिति न्यायादित्याह—**अतद्धर्मेति**। घटादाविव स्फुरणातिशयजनकत्वेन किमित्यात्मनि शास्त्रप्रामाण्यं नेष्टमित्याशङ्क्य जडत्वाजडत्वाभ्यां विशेषादिति मत्वाह—**नत्विति**। ब्रह्मात्मनो मानापेक्षामन्तरेण स्वतः स्फुरणे प्रमाणमाह—**तथाचेति**। साक्षादन्यापेक्षामन्तरेणापरोक्षादपरोक्षस्फुरणात्मकं यद्ब्रह्म न च तस्यात्मनोऽर्थान्तरत्वं सर्वाभ्यन्तरत्वेन सर्ववस्तुसारत्वात्तमात्मानं व्याचक्ष्वेति योजना। अप्रमेयत्वेनाविनाशित्वं प्रतिपाद्य फलितं निगमयति—**यस्मादिति**। स्वधर्मनिवृत्तिहेतुनिषेधे तात्पर्यं दर्शयति—**युद्धादिति**। आत्मनो नित्यत्वादिस्वरूपमुपपाद्य युद्धकर्तव्यत्वविधानाज्ज्ञानकर्मसमुच्चयोऽत्र भातीत्याशङ्क्याह—**नहीति**। युध्यस्वेति वचनात्तत्कर्तव्यत्वविधिरस्तीत्याशङ्क्याह—**युद्ध इति**। कथं तर्हि कथं भीष्ममहमित्याद्यर्जुनस्य युद्धोपरमपरं वचनमिति तत्राह—**शोकेति**। यदि स्वतो युद्धे प्रवृत्तिस्तर्हि भगवद्वचनस्य का गतिरित्याशङ्क्याह—**तस्येति**। भगवद्वचनस्य प्रतिबन्धनिवर्तकत्वे सत्यर्जुनप्रवृत्तेः स्वाभाविकत्वे फलितमाह—**तस्मादिति**॥ १८॥ 'अविनाशि तु तद्विद्धि' इत्यत्र पूर्वार्धेन तत्पदार्थसमर्थनमुत्तरार्धेन निरीश्वरवादस्य परिणामवादस्य वा निराकरणमात्मनि जन्मादिप्रतिभानस्यौपचारिकत्वप्रदर्शनार्थमन्तवन्त इत्यादि वचनमिति केचित्। अस्तु नामायमपि पन्थाः। पूर्वोक्तस्य गीताशास्त्रार्थस्योत्प्रेक्षा-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

श्रुतेः। उक्तंच 'प्रमाणमप्रमाणं च प्रमाभासस्तथैव च। यत्प्रसादात्प्रसिध्यन्ति तदसंभावना कुतः॥' इति। तस्माद्युध्यस्व भारत। भीष्मादिदेहानां मिथ्यात्वादनित्यत्वाच्च स्वयमेव नष्टप्रायतया हननान्निवृत्त्या त्वया स्वधर्मो न नाशनीय इति भावः॥ १८॥ ननु 'नासतो विद्यते भावः' इति न्यायेनासतो मात्रादेर्मिथ्यात्वेन निःस्वरूपत्वात्कर्तृत्वं न संभवति। अतः सत एव कर्तृत्वं बन्धमोक्षभाक्त्वं च वाच्यम्। अन्यथाऽन्तःकरणे बन्ध

४ मधुसूदनीव्याख्या।

स्थितिः' इति न्यायेन युध्यस्वेत्यनुवादो न विधिः। यथा 'कर्तृकर्मणोः कृति' इत्युत्सर्गः, 'उभयप्राप्तौ कर्मणि' इत्यपवादः, 'अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम्' इति तदपवादः। तथाच मुमुक्षोर्ब्रह्मणो जिज्ञासेत्यत्रापवादापवादे पुनरुत्सर्गस्थितेः 'कर्तृकर्मणोः कृति' इत्यनेनैव षष्ठी। तथाच 'कर्मणिच' इति निषेधाप्रसराद्ब्रह्मजिज्ञासेति कर्मषष्ठीसमासः सिद्धो भवति। कश्चित्त्वेतस्मादेव विधेर्मोक्षे ज्ञानकर्मणोः समुच्चय इति प्रलपति। तन्न। युध्यस्वेत्यतो मोक्षस्य ज्ञानकर्मसमुच्चयसाध्यत्वाप्रतीतेः। विस्तरेण चैतदग्रे भगवद्गीतावचनविरोधेनैव निराकरिष्यामः॥ १८॥ नन्वेवं 'अशोच्यानन्वशोचस्त्वम्' इत्यादिना भीष्मादिबन्धुविच्छेदनिबन्धने शोकेऽपनीतेऽपि तद्वधकर्तृत्वनिबन्धनस्य पापस्य नास्ति प्रतीकारः। नहि यत्र शोको नास्ति तत्र पापं नास्तीति नियमः, द्वेष्यब्राह्मणवधे शोकाविषये पापाभावप्रसङ्गात्। अतोऽहं कर्ता त्वं प्रेरक इति द्वयोरपि

५ भाष्योत्कर्षदीपिका।

तस्मादात्मनोऽज्ञातत्वान्न प्रमाणपरिच्छेद्यता। ननु कथं शास्त्रस्य प्रत्यगात्मनि प्रामाण्यम्। तस्य स्वतःसिद्धस्य ज्ञातत्वेनाविषयत्वादितिचेत्सत्यम्। तथापि शास्त्रस्यात्माध्यस्तसमूलकर्तृत्वाद्यनात्मधर्मनिरासकत्वेन प्रामाण्यमुपपद्यते। तथाच भाष्यम् 'नहि पूर्वमित्थमहमित्यात्मानं प्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते। नह्यात्मा नाम कस्यचिदप्रसिद्धो भवति। शास्त्रं त्वन्त्यं प्रमाणम्। अतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रामाण्यमात्मनः प्रतिपद्यते नत्वज्ञातार्थज्ञापकत्वेन'। तथाच श्रुतिः 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा' इति। यस्मादात्मा नित्यः केनापि क्वचिदपि कदापि न नश्यति देहाश्चानित्यत्वान्नश्यन्त्येव, तस्माद्धे भारत भरतवंशोद्भव, त्वं

६ श्रीधरीव्याख्या।

अतएव अनाशिनो विनाशरहितस्याप्रमेयस्यापरिच्छिन्नस्यात्मन इमे सुखदुःखादिधर्मका देहा उक्तास्तत्त्वदर्शिभिः। यस्मादेवमात्मनो न विनाशः नच सुखदुःखादिसंबन्धः तस्मान्मोहजं शोकं त्यक्त्वा युध्यस्व। स्वधर्मं मा त्याक्षीरित्यर्थः॥ १८॥ तदेवं भीष्मादिमृत्यु-

७ अभिनवगुप्ताचार्यव्याख्या।

मीयते' इति। मुनिनापि 'कलानां पृथगर्थानां प्रतिभेदः क्षणेक्षणे। वर्तते सर्वभावेषु सौक्ष्म्यात्तु न विभाव्यते॥' इति। पृथगर्थाभिधानमिति।

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं न प्रवर्तकमित्येतस्यार्थस्य साक्षिभूते ऋचावानिनाय भगवान् । यत्तु मन्यसे युद्धे भीष्मादयो मया हन्यन्ते अहमेव तेषां हन्तेत्येषा बुद्धिर्मृषैव ते, कथं—य एनमिति । य एनं प्रकृतं देहिनं वेत्ति जानाति हन्तारं हननक्रियायाः कर्तारं, यश्चैनमन्यो मन्यते हतं देहहनने हतोऽहमिति हननक्रियायाः कर्मभूतं, तावुभौ न विजानीतो न ज्ञातवन्तावविवेकेनात्मानमहंप्रत्ययविषयं हन्ताहं हतोऽस्म्यहमिति देहहननेनात्मानमहंप्रत्ययविषयं यौ विजानीत-**

२ आनन्दगिरिव्याख्या ।

मात्रमूलत्वं निराकर्तुं मन्त्रद्वयं भगवानानीतवानिति श्लोकद्वयस्य संगतिं दर्शयति—**शोकमोहादीति** । तत्र प्रथममन्त्रस्य संगतिमाह—**यत्त्विति** । प्रत्यक्षनिबन्धनत्वादमुष्या बुद्धेर्मृषात्वमयुक्तमित्याक्षिपति—**कथमिति** । प्रत्यक्षस्याज्ञानप्रसूतत्वेनाभासत्वात्तत्कृता बुद्धिर्न प्रमेति परिहरति—**य एनमिति** । 'हन्ता चेन्मन्यते हन्तुम्' इत्याद्यामृचमर्थतो दर्शयित्वा व्याचष्टे—**य एनमिति** । हन्तारं हतं वात्मानं मन्यमानस्य कथमज्ञानमित्याशङ्क्याह—**हन्ता-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आत्मनश्च मोक्ष इति तयोर्वैयधिकरण्यं स्यात् । तथा येन सर्वमिदं ततमिति सतो देहाद्युपादानत्वं चोक्तम् । तथाच हननक्रियां प्रत्येकस्यैव कर्तृत्वं कर्मत्वं चापतति तच्च विरुद्धम् । स्वात्मनि स्वव्यापारायोगात् । नहि वह्निर्वह्निं दहतीति युक्तमित्याशङ्क्याह—**य एनमिति** । यश्च तार्किकादिरेनमात्मानं हन्तारं हननक्रियायाः कर्तारं मन्यते, यश्च चार्वाकादिरेनं हतं हननक्रियायाः कर्मीभूतं मन्यते, तावुभावपि न जानीतः । आत्मतत्त्वमिति शेषः । यस्मान्नायं हन्ति न हन्यते । नहि यः कर्ता स आत्मा, नापि देह आत्मा, तयोः प्रागेवानात्मत्वावधारणात् । अयं भावः—यथायःपिण्डे वह्निसंबन्धादेव दग्धृत्वं नतु स्वतः, एवं मात्राद्युदयसमनियतं कर्तृत्वं मात्रादिधर्म एव नात्मनः । आत्मनि तु कर्तृत्वप्रतीतिर्मात्रादिसंबन्धादेव । अतो मात्रादिविशिष्टस्यैव बन्धो न केवलस्य । मोक्षश्च मात्रादिवियोग एवेति न बन्धमोक्षयोर्वैयधिकरण्यम् । नच मात्रादेर्निःस्वरूपत्वमस्ति । सत्त्वासत्त्वाभ्यामनिर्वचनीयस्य व्यवहारयोग्यस्य ब्रह्मज्ञानैकबाध्यस्य स्वप्नमायागन्धर्वनगरादितुल्यस्य तत्स्वरूपस्याभ्युपगमात् । तस्मान्न कर्तृत्वमात्मधर्मः । यथोक्तम् 'आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् । नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥'

४ मधुसूदनीव्याख्या ।

हिंसानिमित्तपातकापत्तेरयुक्तमिदं वचनं 'तस्माद्युध्यस्व भारत' इत्याशङ्क्य काठकपठितयर्चा परिहरति भगवान्—एनं प्रकृतं देहिनमदृश्यत्वादिगुणकं यो हन्तारं हननक्रियायाः कर्तारं वेत्ति अहमस्य हन्तेति विजानाति, यश्चान्य एनं मन्यते हतं हननक्रियायाः कर्मभूतं देहहननेन हतोऽहमिति विजानाति, तावुभौ देहाभिमानित्वादेनमविकारिणमकारकस्वभावमात्मानं न विजानीतो न विवेकेन जानीतः शास्त्रात् । कस्मात् । यस्मान्नायं हन्ति न हन्यते । कर्ता कर्म च न भवती-

५ भाष्योत्कर्षदीपिका ।

युध्यस्व स्वधर्मं युद्धं मा त्याक्षीरित्यर्थः ॥ १८ ॥ अहमेतेषां हन्ता मयैते हन्यन्त इत्यर्जुनबुद्धेर्मृषात्वबोधनाय ऋचावुदाहरति—**य इति** । यत्तु नन्[1]वेवमशोच्यानित्यादिना बन्धुविच्छेदनिबन्धने शोकेऽपनीतेऽपि तद्वधकर्तृत्वनिबन्धनपापस्य नास्ति प्रतीकारः शोकाविषयेऽपि द्वेष्यब्राह्मणवधे पापस्य सत्त्वात् । अतः कर्तुर्मम प्रेरकस्य तव च हिंसानिमित्तपापापत्तेरयुक्तमिदं वचनं तस्मादित्यादीत्याशङ्कां काठकपठितयर्चा परिहरति य इति तद्विचार्यम् । ऋचि हन्त्रादेः पापं न जायते इति परिहारस्यानुक्तेः वधनिबन्धनबन्धुविच्छेदस्यात्मनित्यत्वप्रतिपादकपूर्वग्रन्थेन नाशाभावोक्त्या प्रतिषिद्धत्वेन तन्निबन्धनपापस्यापि निवारितत्वाच्छङ्काया अनुत्थानात् । यस्मा-

६ श्रीधरीव्याख्या ।

निमित्तः शोको निवारितः । यच्चात्मनो हन्तृत्वनिमित्तं दुःखमुक्तं 'एतान्न हन्तुमिच्छामि' इत्यादिना तदपि तद्वदेव निर्निमित्तमित्याह—**य एनमिति** । एनमात्मानम् । आत्मनो हननक्रियायां कर्मत्वं कर्तृत्वमपि नास्तीत्यर्थः । तत्र हेतुर्नायमिति ॥ १९ ॥ न हन्यत

७ अभिनवगुप्ताचार्यव्याख्या ।

पृथगर्थक्रियाकारित्वादितियावत् ॥ १८ ॥ देहा अन्तवन्तो विनाशिनश्च । आत्मा तु नित्यः । यतोऽप्रमेयः । प्रमेयस्य तु जडस्य परिणामित्वं नत्वजडस्य चिदेकरूपस्य । स्वभावान्तरायोगात् । एवं देहा नित्यमन्तवन्त इति शोचितुमशक्याः । आत्मा नित्यमविनाशी । तेन न शोचनादेः तन्त्रेणायमेकः कृत्यप्रत्यययोर्द्वयोरर्थयोर्मुनिना दर्शितः अशोच्यानन्वशोचस्त्वमिति । य एनमिति । एनमात्मानं देहं च यो हन्तारं

1 मधुसूदनः.

**न जायते म्रियते वा कदाचिन्नायं भूत्वाभविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**स्तावात्मस्वरूपानभिज्ञावित्यर्थः । यस्मान्नायमात्मा हन्ति न हननक्रियायाः कर्ता भवति, न हन्यते नच कर्म भवतीत्यर्थः, अविक्रियत्वात् ॥ १९ ॥ कथमविक्रिय आत्मेति द्वितीयो मन्त्रः ।**

२ आनन्दगिरिव्याख्या ।

**हमिति** । हन्तृत्वादिज्ञानमज्ञानमित्यत्र हेतुमाह—**यस्मादिति** । आत्मनो हननं प्रति कर्तृत्वकर्मत्वयोरभावे हेतुं दर्शयति—**अविक्रियत्वादिति** ॥ १९ ॥ तदेव साधयितुं न जायते म्रियते वा विपश्चिदित्यादिमन्त्रान्तरमवतारयति—**कथमिति** । सर्वविक्रियाराहित्यप्रदर्शनेन हेतुं विशदयन्मन्त्रमेव पठति—**न जायत इति** । जन्ममरणविक्रियाद्वयप्रतिषेधं साधयति—**नायमिति** । अयमात्मा भूत्वा नाभविता, न वा भूत्वा भूयो भवितेति योजना । न केवलं विक्रियाद्वयमेवात्र निषिध्यते किंतु सर्वमेव विक्रियाजातमित्याह—**अज इति** । वाच्यमर्थमुक्त्वा विवक्षितमर्थमाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी )

इति । किंच कर्तृत्वं रागद्वेषादिविकारवत एव संभवति तद्वांश्च दुःखीत्यात्मनोऽनुभूयमानं साक्षित्वं बाध्येत । यथोक्तम् 'नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥' इति । नच सतो देहाद्युपादानत्वेन हननक्रियाकर्मत्वं संभवति । विवर्तवादाभ्युपगमात् । नह्यध्यस्तस्य धर्मैरधिष्ठाने विकारो दृश्यते । यथोक्तं भाष्ये 'यत्र यदध्यस्तं सत्तत्कृतेन गुणेन दोषेण वाऽणुमात्रेणापि न संबध्यते' इति । विवृतं चैतद्वृद्धैः 'नहि भूमिरूषरवती मृगतृट्जलवाहिनीं सरितमुद्वहति । मृगवारिपूरपरिपूरवती न नदी तथोषरभुवं स्पृशति ॥' इति । एतेन कर्तृत्वकर्मत्वयोरनात्मधर्मत्वादनात्मनश्चानेकरूपत्वादेकत्रात्मनि तदुभयविरोधोद्भावनमपि निरस्तं वेदितव्यम् । एवं चार्वाकतार्किकाभिमतौ देहात्मकर्त्रात्मवादौ । 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥' इति काठकोक्तेन मन्त्रेण पूर्वार्धे पाठभेदात्पठितेन परिहृतौ वेदितव्यौ ॥ १९ ॥ नायं हन्ति न हन्यत इत्युक्तं तत्र न हन्यत इत्येतदुपपादयति तत्रस्थेनैव द्वितीयेन मन्त्रेण—**न जायत इति** । अयं आत्मा कदाचित् न जायते अभिनवो नोत्पद्यते । न वा म्रियते निरन्वयो न नश्यति । तार्किकाभिमतघटवत् । तत्र क्रमेण हेतुद्वयम्—**अजो नित्य इति** । अजत्वान्न जायते । नित्यत्वाच्च न वा

४ मधुसूदनीव्याख्या ।

त्यर्थः । अत्र य एनं वेत्ति हन्तारं हतं चेत्येतावति वक्तव्ये पदानामावृत्तिर्वाक्यालंकारार्था । अथवा य एनं वेत्ति हन्तारं तार्किकादिरात्मनः कर्तृत्वाभ्युपगमात्, तथा यश्चैनं मन्यते हतं चार्वाकादिरात्मनो विनाशित्वाभ्युपगमात्, तावुभौ न विजानीत इति योज्यम् । वादिभेदख्यापनाय पृथगुपन्यासः । अतिशूरातिकातरविषयतया वा पृथगुपदेशः । 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्' इति पूर्वार्धे श्रौतः पाठः ॥ १९ ॥ कस्मादयमात्मा हननक्रियायाः कर्ता कर्म च न भवति अविक्रियत्वादित्याह द्वितीयेन मन्त्रेण—'जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यति' इति षड्भावविकारा इति वार्ष्यायणिरिति नैरुक्ताः । तत्राद्यन्तयोर्निषेधः । क्रियते न जायते म्रियते वेति । वाशब्दः समुच्चयार्थः । न जायते

५ भाष्योत्कर्षदीपिका ।

देवं प्रागुक्तन्यायेन नित्यो विभुरसंसारी सर्वदैकरूपश्चात्मा तस्मात्तन्नाशशङ्कया स्वधर्मे युद्धे प्राक्प्रवृत्तस्य तव तस्मादुपरतिर्न युक्तेति स्वपूर्वोक्तिविरोधात् द्वेष्यब्राह्मणवधे शोकाभावे द्वेष्यत्वस्य हेतोः पापासाधकत्वेन दृष्टान्तस्य वैषम्यात् संघातवधनिबन्धनपापाभावस्याग्रिमग्रन्थेन क्षत्रधर्मबोधकेन वक्ष्यमाणत्वाच्च । नत्वेवाद्येकोनविंशतिश्लोकैरशोच्यानन्वशोचस्त्वमित्येतस्य विवरणं क्रियते, 'स्वधर्ममपि चावेक्ष्य' इत्यष्टभिः श्लोकैः 'प्रज्ञावादांश्च भाषसे' इत्यस्य मोहद्वयस्य पृथक्प्रयत्ननिराकर्तव्यत्वादिति स्वपूर्वग्रन्थविरोधाच्चेत्यास्तां तावत् । य एनमात्मानं हननक्रियायाः कर्तारं यश्च तस्याः कर्म जानाति तौ द्वौ देहात्मबुद्धिमत्त्वेन भ्रान्तौ न विजानीतः । यतोऽयमात्मा देहभिन्नोऽविक्रियत्वाद्धननक्रियायाः कर्ता ततएव कर्म च न भवतीत्यर्थः ॥ १९ ॥ 'जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यति' इति यास्कोक्तान्षड्भावविकारानात्मनि निराकुर्वंस्तस्याविक्रियत्वं साधयति—**नेति** । कदाचित्पदं सर्वविक्रियाप्रतिषेधैः

६ श्रीधरीव्याख्या ।

इत्येतदेव षड्भावविकारशून्यत्वेन द्रढयति—**नेति** । न जायत इति जन्मप्रतिषेधः । न म्रियते चेति विनाशप्रतिषेधः । वाशब्दौ

७ अभिनवगुप्ताचार्यव्याख्या ।

हतं च वेत्ति तस्याज्ञानम् । अतएव स बद्धः ॥ १९ ॥ न जायते म्रियते वा कदाचित् । एतदेव स्फुटयति—नायं भूत्वेति । अयमात्मा न

१ श्रीमच्छांकरभाष्यम् ।

**न जायते नोत्पद्यते, जनिलक्षणा वस्तुविक्रिया नात्मनो विद्यत इत्यर्थः । तथा न म्रियते वा। वाशब्दश्चार्थे । न म्रियते चेत्यन्त्या विनाशलक्षणा विक्रिया प्रतिषिध्यते । कदाचिच्छब्दः सर्वविक्रियाप्रतिषेधैः संबध्यते न कदाचिज्जायते न कदाचिन्म्रियत इत्येवं यस्मादयमात्माभूत्वा भवनक्रियामनुभूय पश्चादभविता अभावं गन्ता न भूयः पुनस्तस्मान्न म्रियते, यो हि भूत्वा न भविता स म्रियत इत्युच्यते लोके, वाशब्दान्नशब्दाच्चायमात्माऽभूत्वा भविता वा देहवन्न भूयः पुनस्तस्मान्न जायते, यो ह्यभूत्वा भविता स जायत इत्युच्यते नैवमात्माऽतो न जायते । यस्मादेवं तस्मादजो**

२ आनन्दगिरिव्याख्या ।

**जनिलक्षणेति** । विकल्पार्थत्वं व्यावर्तयति—**चेति** । निष्पन्नमर्थं निर्दिशति—**नेत्यादिना** । संबन्धमेवाभिनयति—**न कदाचिदिति** । अन्त्यविक्रियाभावे हेतुत्वेन नायमित्यादि व्याचष्टे—**यस्मादिति** । उक्तमेव व्यनक्ति—**यो हीति** । आत्मनि तु भूत्वा पुनर्भवनाभावान्नास्ति मृत्युरित्यर्थः । आत्मनो जन्माभावेऽपि हेतुरिहैव विवक्षित इत्याह—**वाशब्दादिति** । अभूत्वेति च्छेदः । देहवदिति व्यतिरेकोदाहरणम् । उक्तमेवार्थं साधयति—**यो हीति** । जन्माभावे तत्पूर्विकास्तित्वविक्रियापि नात्मनोऽस्तीत्याह—**यस्मादिति** । प्राणवियोगादात्मनो मृतेरभावे सावशेषनाशाभाववन्निरव-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

म्रियत इत्यर्थः । अस्तु तर्हि क्षणिकविज्ञानधारारूपः । तस्याविज्ञानवादिभिरजत्वनित्यत्वाभ्युपगमादित्याशङ्क्याह—**भूत्वा भविता वा न भूय इति** । अयमित्यनुवर्तते । अयं भूत्वा भूयो भविता न । भूयोऽसकृत् भूत्वा भवितेति भवनक्रियाद्वयस्य क्त्वाप्रत्ययोक्तं समानकर्तृत्वं धात्वैक्याभिप्रायेण । भूत्वैव भविता नतु भूत्वा स्थित्वा विनश्यति । तार्किकाणां हि विज्ञानमुत्पत्तिस्थितिनाशक्षणव्यापित्वात्त्रिक्षणावस्थायि । विज्ञानवादिना तु पूर्वस्य नाशक्षण एवोत्तरस्योत्पत्तिक्षणः सएव तस्य स्थितिक्षणश्चेति क्षणिकत्वाद्विज्ञानानां भवनक्रियाद्वयस्याव्यवधानाद्भूत्वा भवितेत्युक्तम् । तादृशोऽप्ययं न, यतः शाश्वतः शश्वदेकरूपः । योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रणप्तॄननुभवामीति बाल्यस्थाविरयोरात्मैक्यप्रत्यभिज्ञानात् । नच सादृश्यात्प्रत्यभिज्ञानम् । सादृश्यग्रहीतुः स्थिरस्याभावात् ।

४ मधुसूदनीव्याख्या ।

न म्रियते चेत्यर्थः । कस्मादयमात्मा नोत्पद्यते यस्मादयमात्मा कदाचित्कस्मिन्नपि काले न भूत्वा अभूत्वा प्राक् भूयः पुनरपि भविता न । यो ह्यभूत्वा भवति स उत्पत्तिलक्षणां विक्रियामनुभवति । अयं तु प्रागपि सत्त्वाद्यतो नोत्पद्यतेऽतोऽजः । तथायमात्मा भूत्वा प्राक् कदाचित् भूयः पुनः न भविता । न वा शब्दाद्वाक्यविपरिवृत्तिः । यो हि प्राग्भूत्वोत्तरकाले न भवति स मृतिलक्षणां विक्रियामनुभवति, अयं तूत्तरकालेऽपि सत्त्वाद्यतो न म्रियतेऽतो नित्यः । विनाशायोग्य इत्यर्थः । अत्र न भूत्वेत्यत्र समासाभावेऽपि नानुपपत्तिर्नानुयाजेष्विवितिवत् । भगवता पाणिनिना महाविभाषाधिकारे नञ्समासपाठात् । यत्तु कात्यायनेनोक्तं 'समासनित्यताभिप्रायेण वा वचनानर्थक्यं तु स्वभावसिद्धत्वात्' इति, तत् भगवत्पाणिनिवचनविरोधादनादेयम् । तदुक्तमाचार्यशबरस्वामिना 'असद्वादी हि कात्यायनः' इति । अत्र न जायते म्रियते वेति प्रतिज्ञा, कदाचिन्नायं भूत्वा भविता वा न भूय इति तदुपपादनं, अजो नित्य इति तदुपसंहार, इति विभागः । आद्यन्तयोर्विकार-

५ भाष्योत्कर्षदीपिका ।

पदैः संबन्धनीयम् । न कदाचिज्जायते यतोऽयमात्मा न भूत्वा भूयः पुनर्भविता न, यस्माच्च भूत्वा भवनक्रियामनुभूय भूयोऽभविताऽभावं गन्ता वा न, तस्मान्न कदाचिन्म्रियते च । वाशब्दश्चार्थे । यद्वा अयं ना पुरुषो भूत्वा पुनर्भविता न अस्ति, विक्रिययोग्यो नच भवतीत्यर्थः । अस्मिन्पक्षे द्वितीयोऽपि वाशब्दश्चार्थे । उक्तरीत्या ना अयमिति च्छेदे पूर्वनकारस्य म्रियत इत्यनेन संबन्धः । न अयमिति च्छेदे त्वस्येति बोध्यम् । भाष्यकृद्भिस्तु सुगमत्वादयमर्थस्त्यक्तः । यतो न जायतेऽतोऽजः यतो न म्रियतेऽतो नित्यः । ये त्वन्ये[1]—अस्तु तर्हि क्षणिकविज्ञानधारारूपः, तस्य विज्ञानवादिभिरजत्वनित्यत्वाभ्युपगमादित्याशङ्क्याह—**भूत्वा भविता वा न भूय इति** । अयमित्यनुवर्तते । अयं भूत्वा भूयो भविता न भूयोऽसकृद्भूत्वा भवितेति भवनक्रियाद्वयस्य क्त्वाप्रत्ययोक्तसमानकर्तृत्वधात्वैव साभिप्रायेण भूत्वैव भविता नतु भूत्वा स्थित्वा विनश्यति, तार्किकाणां हि विज्ञानं उत्पत्तिस्थितिनाशक्षणव्यापित्वात्,

६ श्रीधरीव्याख्या ।

चार्थे । नचायं भूत्वा उत्पद्य भविता भवति अस्तित्वं भजते । किंतु प्रागेव स्वतः सद्रूप इति जन्मानन्तरास्तित्वलक्षणद्वितीयविकारप्रतिषेधः । तत्र हेतुः यस्मादजः । यो हि जायते स जन्मानन्तरमस्तित्वं भजते नतु यः स्वयमेवास्ति स भूयोऽप्यन्यदस्तित्वं भजत इत्यर्थः । नित्यः सर्वदैकरूप इति वृद्धिप्रतिषेधः । शाश्वतः शश्वद्भव इत्यपक्षयप्रतिषेधः । पुराण इति विपरिणामप्रतिषेधः । पुरापि नव एव नतु

1 नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

**यस्मान्न म्रियते तस्मान्नित्यश्च । यद्यप्याद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति तथापि मध्यभाविनीनां विक्रियाणां स्वशब्दैरेव तदर्थैः प्रतिषेधः कर्तव्य इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह—शाश्वत इत्यादिना । शाश्वत इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते । शश्वद्भवः शाश्वतः । नापक्षीयते स्वरूपेण । निरवयवत्वान्निर्गुणत्वाच्च । नापि गुणक्षयेणापक्षयः । अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराण इति । यो ह्यवयवागमेनोपचीयते स वर्धतेऽभिनव इति चोच्यते । अयं त्वात्मा निरवयवत्वात्पुरापि नव एवेति पुराणो न वर्धत इत्यर्थः । तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेऽपि शरीरे ।**

२ आनन्दगिरिव्याख्या ।

शेषनाशाभावोऽपि सिध्यतीत्याह—**यस्मादिति** । ननु जन्मनाशयोर्निषेधे तदन्तर्गतानां विक्रियान्तराणामपि निषेधसिद्धेस्तन्निषेधार्थं न पृथक्प्रयतितव्यमिति तत्राह—**यद्यपीति** । स्वशब्दैः मध्यवर्तिविक्रियानिषेधवाचकैरिति यावत् । आर्थिकेऽपि निषेधे निषेधस्य सिद्धतया शाब्दो निषेधो न पृथगर्थवानित्याशङ्क्याह—**अनुक्तानामिति** । नित्यशब्देन शाश्वतशब्दस्य पौनरुक्त्यं परिहरन्व्याकरोति—**शाश्वत इत्यादिना** । अपक्षयो हि स्वरूपेण वा स्याद्गुणापचयतो वेति विकल्प्य क्रमेण दूषयति—**नेत्यादिना** । पुराणपदस्यागतार्थत्वं कथयति—**अपक्षयेति** । तदेव स्फुटयति—**यो हीति** । न म्रियते वेत्यनेन चतुर्थपादस्य पौनरुक्त्यमाशङ्क्य व्याचष्टे—**तथेत्यादिना** । ननु हिंसार्थो हन्तिः श्रूयते

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यद्वा जन्ममरणहीनोऽपि धर्मान्तरविशिष्टः पूर्वं भूत्वा पुनर्धर्मान्तरविशिष्टो भविता इत्यपि न । भूत्वैव भविता नत्वभूत्वेति योजना । आर्हता हि शरीरपरिमाणमात्मानमभ्युपगच्छन्तो नित्यस्यैवात्मनः क्रमेण व्युत्क्रमेण वा मशकमनुजमतंगजशरीरप्राप्तौ परिमाणभेदं मन्यमाना भूतस्यैवात्मनो विशेषणीभूतपरिमाणभवनादौपचारिकं भवनमभ्युपगच्छन्ति तदपि न । शाश्वतत्वादेव उपचयापचयवतो मध्यमपरिमाणस्य वस्तुनो नित्यत्वायोगात् । अनेनैव सुखदुःखादिधर्मान्तरोत्पत्त्यात्मनो भाक्तं भूत्वा भवनं प्रत्याख्येयम् । नहि दुःखादिधर्मिणः स्वनाशमन्तरेणात्यन्तिकदुःखोच्छेदः संभवति । घटादौ यावद्रूपनाशादर्शनात् । नन्वजत्वं नित्यत्वं शाश्वतत्वं चाकाशेऽप्यस्ति अत आह—**पुराण इति** । पुरा वियदादिसृष्टेः प्रागपि नव एव । एतेन अपक्षयादिधर्मराहित्यान्मुख्यमजत्वादिकं आत्मन एव, वियदादेस्त्वमुख्यं तदिति दर्शितम् । अतएव शरीरे हन्यमाने न हन्यते । भाष्ये तु वाशब्दश्चार्थे । न जायते म्रियते चेत्यर्थः । तत्रोपपत्तिः—अयं न भूत्वा अनुत्पद्य न भविता घटादिवदतो न जायते । अथवा नञः पूर्वान्वयित्वं, न जायते

४ मधुसूदनीव्याख्या ।

योर्निषेधेन मध्यवर्तिविकाराणां तद्व्याप्यानां निषेधे जातेऽपि गमनादिविकाराणामनुक्तानामप्युपलक्षणयापक्षयश्च वृद्धिश्च स्वशब्देनैव निराक्रियते । तत्र कूटस्थनित्यत्वादात्मनो निर्गुणत्वाच्च न स्वरूपतो गुणतो वापक्षयः संभवतीत्युक्तं शाश्वत इति । शश्वत्सर्वदा भवति नापक्षीयते नापचीयत इत्यर्थः । यदि नापक्षीयते तर्हि वर्धतामिति नेत्याह—**पुराण इति** । पुरापि नव एकरूपो नत्वधुना नूतनां कांचिदवस्थामनुभवति । यो हि नूतनां कांचिदुपचयावस्थामनुभवति स वर्धत इत्युच्यते लोके । अयं तु सर्वदैकरूपत्वान्नापचीयते नोपचीयते चेत्यर्थः । अस्तित्वविपरिणामौ तु जन्मविनाशान्तर्भू-

५ भाष्योत्कर्षदीपिका ।

त्रिक्षणावस्थायिविज्ञानवादिनां तु पूर्वस्य नाशक्षण एवोत्तरस्योत्पत्तिक्षणः सएव तस्य स्थितिक्षणश्चेति क्षणिकत्वाद्विज्ञानानां भवनक्रियाद्वयस्याव्यवधानाद्भूत्वा भवितेत्युक्तम् । तादृशोऽप्ययं नेत्यादिवर्णयन्ति तैर्विकारनिषेधोपक्रमादिविरोधस्य परिहारः प्रदर्शनीयः । एतेनाजत्वान्न जायते नित्यत्वान्न म्रियत इत्यपि प्रत्युक्तम् । नायं भूत्वेत्यादेर्हेतुत्वस्य भाष्यकारैः प्रदर्शितत्वेन न जायत इत्यादेरेव हेतुत्वौचित्यात् । एवं जन्मनाशास्तित्वरूपविकारत्रयं निराकृत्यावशिष्टान्विकारान्निराकरोति—**शाश्वत इत्यादिना** । शश्वद्भवः शाश्वत इत्यनेनापक्षयस्य निरवयवत्वान्निर्गुणत्वात् । पुराप्यभिनवः पुराण इत्यनेन वृद्धिरूपस्य हन्यमाने विपरिणम्यमाने शरीरे न हन्यते न विपरिणम्यत इत्यनेन विपरिणामस्य विकारस्य प्रतिषेधः । तथाच भाष्यम् 'हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्ततायै ।' अस्मिन्श्लोके षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यस्मादेवं

६ श्रीधरीव्याख्या ।

परिणामतो रूपान्तरं प्राप्य नवो भवतीत्यर्थः । यद्वा न भवितेत्यस्यानुषङ्गं कृत्वा भूयोऽधिकं यथा भवति तथा न भवतीति वृद्धिप्रतिषेधः । अजो नित्य इति चोभयवृद्ध्यभावे हेतुरित्यपौनरुक्त्यम् । तदेवं 'जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यती'त्येवं यास्कादिभिर्वेद-

१ नीलकण्ठः.

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्ततायै न विपरिणम्यत इत्यर्थः । अस्मिन्मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते । सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य संबन्धः ॥ २० ॥ 'य एनं वेत्ति हन्तारम्' इत्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय 'न जायत' इत्यनेनाविक्रियत्वे हेतुमुक्त्वा प्रतिज्ञातार्थमुपसंहरति—वेदाविनाशिनमिति । वेद विजानात्यविनाशिनमन्त्यभावविकार-**

२ आनन्दगिरिव्याख्या ।

तत्कथं विपरिणामो निषिध्यते तत्राह—**हन्तिरिति** । हिंसार्थत्वसंभवे किमित्यर्थान्तरं हन्तेरिष्यते तत्राह—**अपुनरुक्तताया इति** । हिंसार्थत्वे मृतिनिषेधेन पौनरुक्त्यं स्यात्तन्निषेधार्थं विपरिणामार्थत्वमेष्टव्यमित्यर्थः । पूर्वावस्थात्यागेनावस्थान्तरापत्तिर्विपरिणामस्तदर्थश्चेदत्र हन्तिरिष्यते तदा निष्पन्नमर्थमाह—**नेति** । न जायत इत्यादिमन्त्रार्थमुपसंहरति—**अस्मिन्निति** । षण्णां विकाराणामात्मनि प्रतिषेधे फलितमाह—**सर्वेति** । आत्मनः सर्वविक्रियाराहित्येऽपि किमायातमित्याशङ्क्याह—**यस्मादिति** ॥ २० ॥ पूर्वश्लोकार्थस्यैवोत्तरत्रापि प्रतिभानात् पौनरुक्त्यमाशङ्क्य वृत्तानुवादपूर्वकमुत्तरश्लोकमवतारयति—**य एनमित्यादिना** । कर्तृत्वाद्यभिमानविरोधादद्वैतकूटस्थात्मनिश्चयसामर्थ्यात्प्राप्तं विदुषः संन्यासं विद्यापरिपाकार्थमभ्यनुजानाति—**वेदेति** । पदद्वयस्य पूर्वमेव पौनरुक्त्यपरिहारेऽपि प्रकारान्तरेणापौनरुक्त्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

न वा म्रियत इति । यतो भूत्वा अभविता घटवद्विनाशी न अतो न म्रियत इति । शाश्वतः पुराण इत्येताभ्यामुपचयापचयौ निषिध्येते इति न हन्यते न विपरिणम्यत इति च व्याख्यातम् । केचिदेवमाहुः—न जायते म्रियत इति प्रतिज्ञा । कदाचिदित्यादिना तस्या उपपादनम् । अज इत्यादिरुपसंहार इति ॥ २० ॥ नायं हन्तीत्येतदुपपादयति—**वेदेति** । विनष्टु अदर्शनं गन्तुं शीलमस्येति विनाशि रज्जूरगतुल्यमुपाधित्रयं स्थूलसूक्ष्मकारणशरीराख्यं ततोऽन्यं अविनाशिनम् । अतएव नित्यं नाशहीनम् । तत्र हेतुः अजम् । जन्मवान् हि अनित्यः अयं तु अजत्वान्नित्यश्चेत्यर्थः । ननु विनाशिनः स्वकार्यापेक्षया अन्यत्वमजत्वं नित्यत्वं च सांख्याभिमते प्रधाने तार्किकाभिमते नभसि चास्त्यत उक्तं अव्ययमिति । न व्येति पूर्वावस्थां त्यजतीत्यव्ययमपरिणामि । प्रधानं तु 'चलं गुणवृत्तम्' इति

४ मधुसूदनीव्याख्या ।

तत्वात्पृथङ्निषिद्धौ[1] । यस्मादेवं सर्वविकारशून्य आत्मा तस्माच्छरीरे हन्यमाने तत्संबद्धोऽपि केनाप्युपायेन न हन्यते न हन्तुं शक्यत इत्युपसंहारः ॥ २० ॥ 'नायं हन्ति न हन्यते' इति प्रतिज्ञाय न हन्यत इत्युपपादितं, इदानीं न हन्तीत्युपपादयन्नुपसंहरति—न विनष्टुं शीलं यस्य तमविनाशिनमन्त्यविकाररहितम् । तत्र हेतुः अव्ययं न विद्यते व्ययोऽवयवापचयो गुणापचयो वा यस्य तमव्ययम् । अवयवापचयेन गुणापचयेन वा विनाशदर्शनात्तदुभयरहितस्य न विनाशः संभवतीत्यर्थः ।

५ भाष्योत्कर्षदीपिका ।

तस्मादुभौ तौ न विजानीत इति पूर्वेण संबन्ध इति । एतेनास्तित्वपरिणामौ जन्मविनाशान्तर्भूतत्वात्पृथङ्न निषिद्धौ, यस्मादेतत्सर्वविकारशून्य आत्मा तस्माच्छरीरे हन्यमाने तत्संबद्धोऽपि केनाप्युपायेन न हन्यते न हन्तुं शक्यते इत्युपसंहार इति प्रत्युक्तम् । आद्यन्तविकारयोर्निषेधे मध्यतनानां निषेधे सिद्धेऽपि तेषामुपादानमवस्थान्तरक्रियान्तरोपलक्षणार्थम् ॥ २० ॥ 'नायं हन्ति न हन्यते' इति मन्त्रकृतां प्रतिज्ञां न जायत इति मन्त्रेणात्मनो विक्रियत्वकथनपरेणोपपाद्य स्वयमुपसंहरति—**वेदेति** । एतेन न[2] हन्ति न हन्यत इति प्रतिज्ञाय न हन्यत इत्युपपादितम् । इदानीं न हन्तीत्युपपादयतीति परास्तम् । कस्मादयमात्मा हननक्रियायाः कर्ता कर्म च न भवति अविक्रियत्वादित्याह द्वितीयेन मन्त्रेणेति स्वपूर्वग्रन्थविरोधादन्यथा मन्त्रे न्यूनतापत्तेश्च । एतेन [3]नायं हन्ति न हन्यत इत्युक्तं तत्र न हन्यत इत्येतदुपपादयति न जायत इति, न हन्तीत्येतदुपपादयति वेदेतीत्यपि परास्तम् । एनं पूर्व-

६ श्रीधरीव्याख्या ।

वादिभिरुक्ताः षड्भावविकारा निरस्ताः । यदर्थमेते विकारा निरस्तास्तं प्रस्तुतं विनाशाभावमुपसंहरति, न हन्यते हन्यमाने शरीर इति ॥ २० ॥ अतएव हन्तृत्वाभावोऽपि पूर्वोक्तः प्रसिद्ध इत्याह—**वेदेति** । नित्यं वृद्धिशून्यम्, अव्ययमपक्षयशून्यम्, अजमविना-

७ अभिनवगुप्ताचार्यव्याख्या ।

न भूत्वा भविता अपितु भूत्वैव । अतो न जायते नच म्रियते । यतो भूत्वा न न भविता अपितु भवितैव ॥ २० ॥ वेदाविनाशिनमिति ।

१ मधुसूदनः. २ मधुसूदनः. ३ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम्।

रहितं नित्यं विपरिणामरहितं यो वेदेति संबन्धः। एनं पूर्वेण मन्त्रेणोक्तलक्षणमजं जन्मरहितमव्ययमपक्षयरहितं कथं केन प्रकारेण स विद्वान् पुरुषोऽधिकृतो हन्ति हननक्रियां करोति, कथं वा घातयति हन्तारं प्रयोजयति, न कथंचित्कंचिद्धन्ति न कथंचित्कंचिद्घातयतीत्युभयत्राक्षेप एवार्थः। प्रश्नार्थासंभवात् हेत्वर्थस्याविक्रियत्वस्य च तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवतः। हन्तेस्त्वाक्षेप उदाहरणार्थत्वेन कथितः, विदुषः कं कर्मासंभवे हेतुविशेषं पश्यन्कर्माण्या-

२ आनन्दगिरिव्याख्या।

माह—**अविनाशिनमित्यादिना**। प्रश्नेऽपि संभवति किमिति नञुल्लेखेन व्याख्यायते तत्राह—**उभयत्रेति**। उत्तरत्र प्रतिवचनादर्शनान्नात्र प्रश्नः संभवतीत्यर्थः। विवक्षितं प्रकरणार्थं निगमयति—**हेत्वर्थस्येति**। अविक्रियत्वं हेत्वर्थस्तस्य विदुषः सर्वकर्मनिषेधे समानत्वादिति यावत्। यदि विदुषः सर्वकर्मनिषेधोऽभिमतस्तर्हि किमिति हन्त्यर्थ एवाक्षिप्यते तत्राह—**हन्तेरिति**। उक्तं हेतुमाक्षेप्तुं पृच्छति—**विदुष इति**। अभिप्रायमप्रतिपद्यमानो

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

न्यायेन गुणसाम्यावस्थायामपि परिणममाणमेव सर्वदास्तीति तेषामभ्युपगमात्। आकाशस्यापि 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इति उत्पत्तिश्रवणादजत्वाभावादेव नाव्ययत्वम्। तादृशं आत्मानं यो वेद अपरोक्षीकरोति स पुमान् कथं केन प्रकारेण कमन्यं घातयति हननक्रियायां प्रवर्तयति। कं वा हन्ति। न केनचित्प्रकारेण कमपि घातयति न वा हन्तीत्यर्थः। द्वैताभावात्। तथाहि श्रुतिर्विद्यावस्थायां सर्वकारकव्यापारं निषेधति। 'यत्र

४ मधुसूदनीव्याख्या।

ननु जन्यत्वेन विनाशित्वमनुमास्यामहे, नेत्याह—**अजमिति**। न जायत इत्यजमाद्यविकाररहितम्। तत्र हेतुः नित्यं सर्वदा विद्यमानम्। प्रागविद्यमानस्य हि जन्म दृष्टं नतु सर्वदा सत इत्यभिप्रायः। अथवा अविनाशिनमबाध्यं सत्यमिति यावत्। नित्यं सर्वव्यापकम्। तत्र हेतुः। अजमव्ययं जन्मविनाशशून्यं, जायमानस्य विनश्यतश्च सर्वव्यापकत्वसत्यत्वयोरयोगात्। एवं सर्वविक्रियाशून्यं प्रकृतमेनं देहिनं स्वमात्मानं यो वेद विजानाति शास्त्राचार्योपदेशाभ्यां साक्षात्करोति अहं सर्वविक्रियाशून्यः सर्वभासकः सर्वद्वैतरहितः परमानन्दबोधरूप इति, स एवं विद्वान्पुरुषः पूर्णरूपः कं हन्ति कथं हन्ति। किंशब्द आक्षेपे। न कमपि हन्ति न कथमपि हन्तीत्यर्थः। तथा कं घातयति। कथं घातयति। कमपि न घातयति कथमपि न घातयतीत्यर्थः। नहि सर्वविकारशून्यस्याकर्तुर्हननक्रियायां कर्तृत्वं संभवति। तथाच श्रुतिः 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्' इति। शुद्धमात्मानं विदुषस्तदज्ञाननिबन्धनाध्यासनिवृत्तौ तन्मूलरागद्वेषाद्यभावात्कर्तृत्वभोक्तृत्वाद्यभावं दर्शयति। अयमत्राभिप्रायो भगवतः—वस्तुगत्या कोऽपि न करोति न कारयति च किंचित् सर्ववि-

५ भाष्योत्कर्षदीपिका।

मन्त्रेणोक्तस्वरूपमविनाशिनमन्त्यविकाररहितं नित्यमविपरिणामिनम्। अव्ययमपक्षयरहितं तत्र हेतुरजं जन्मरहितत्वात्सर्वविकारशून्यं यो वेद जानाति सोऽविक्रियः स्वात्मदर्शी विद्वान्कं कथं घातयति हन्तारं प्रयोजयति, तथा कं हन्ति न कथंचित्कंचिदपीत्यर्थः। तथा त्वमपि विद्वान्भूत्वा स्वयं हननकर्ता शिखण्ड्यादिप्रयोजकश्चेति कर्तृत्वकारयितृत्वे स्वस्मिन्माऽध्यारोपयेत्याशयः। ननु नै विनष्टुं शीलमस्य तमविनाशिनमन्त्यविकाररहितं, तत्र हेतुरव्ययं न विद्यते व्ययोऽवयवापचयो गुणापचयो वा यस्य तमव्ययं, अवयवापचयेन गुणापचयेन वा विनाशदर्शनात्तदुभयरहितस्य न विनाशः संभवतीत्यर्थः। ननु जन्यत्वे विनाशित्वमनुमास्यामहे नेत्याह—**अजमिति**। न जायत इत्यजमाद्यविकाररहितं, तत्र हेतुर्नित्यं सर्वदा विद्यमानं, प्रागविद्यमानस्य हि जन्म दृष्टं नतु सर्वदा रत इत्यभिप्रायः। अथवाऽविनाशिनमबाध्यं सत्यमिति यावत्। नित्यं सर्वव्यापकं, तत्र हेतुरजमव्ययं जन्मविनाशशून्यं जायमानस्य विनश्यतश्च सर्वव्यापकत्वसत्यत्वयोरयोगात्। यद्वा विनष्टुमदर्शनं गन्तुं शीलमस्येति विनाशि रज्जूरगतुल्यमुपाधित्रयं स्थूलसूक्ष्मकारणशरीराख्यं ततोऽन्यमविनाशिनम्। अतएव नित्यं नाशहीनं। तत्र हेतुः अजं। जन्मवान्हि अनित्यः अयं त्वजत्वान्नित्यश्चेत्यर्थः। ननु विनाशिनः स्वकार्यापेक्षयान्यत्वमजत्वं नित्यत्वं च सांख्याभिमते प्रधाने, तार्किकाभिमते नभसि चास्त्यत उक्तमव्ययमिति। न व्येति पूर्वावस्थां न त्यजतीत्यव्ययम्। परिणामि प्रधानं तु 'चलं गुणवृत्तम्' इति न्यायेन गुणसाम्यावस्थायामपि परिणममानमेव सर्वदास्तीति तेषामभ्युपगमात्। आकाशस्यापि 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्युत्पत्तिश्रवणादन्तवत्त्वभावादेव नाव्ययत्वमित्येवमाचार्यैः कुतो न व्याख्यातमिति चेत् सर्वविक्रियाशून्यमेनं यो वेदेति प्रकृतानुसारिवाक्यार्थस्वर्जुमार्गेण सम्यक्संभवे क्लिष्टकल्पनाया अन्याय्यत्वमभिप्रेत्येति गृहाण। तथाच एनं नित्यमविनाशिनं सदैव नाशरहितं नत्वाकाशादिवद्व्यवहारदशायां नाशरहितं अतएवाजं जन्मरहितं नित्यम्, अविनाशिनो जन्यत्वायोगात्, अतएवाव्ययं सदैकरसं यो

१ मधुसूदनः. २ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम्।

**क्षिपति भगवान्—कथं स पुरुष इति । ननूक्तमेवात्मनोऽविक्रियत्वं सर्वकर्मासंभवहेतुः कारणविशेषः सत्यमुक्तो नतु स कारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियत्वादात्मन इति । नह्यविक्रियं स्थाणुं विदितवतः कर्म न संभवतीति चेन्न । विदुष आत्मत्वात्, न देहादिसंघातस्य विद्वत्ता, अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय इति तस्य विदुषः कर्मासंभवादाक्षेपो युक्तः—कथं स पुरुष इति । यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्याविक्रिय एव सन्बुद्धिवृत्त्यविवेकविज्ञानेनाविद्ययोपलब्धात्मा**

२ आनन्दगिरिव्याख्या।

हेतुविशेषं पूर्वोक्तं स्मारयति—**नन्विति**। उक्तमङ्गीकृत्याक्षिपति—**सत्यमिति** । विदुषो विज्ञानात्मनो ब्रह्मणश्च वेद्यस्य विरुद्धधर्मत्वेन दहनतुहिनवद्भिन्नत्वाद्विदुषः सर्वकर्मत्यागेनासौ कारणविशेषः स्यादित्याह—**अन्यत्वादिति**। अविक्रियत्वादिति च्छेदः । तथापि कूटस्थमविक्रियं ब्रह्म प्रतिपद्यमानस्य कुतो विक्रिया संभवेद्ब्रह्मप्रतिपत्तिविरोधादित्याशङ्क्याह—**नहीति** । 'अयमात्मा ब्रह्म' इत्यादिश्रुत्या समाधत्ते—**न विदुष इति** । किंच विद्वत्ता विशिष्टस्य वा केवलस्य वा। नाद्यः । विशिष्टस्य विद्वत्तायां विशेषणस्यापि तत्प्रसङ्गान्न च विशेषणीभूतसंघातस्याचेतनत्वाद्विद्वत्ता युक्तेत्याह—**न देहादीति** । द्वितीये तु जीवब्रह्मविभागासिद्धिरित्याह—**असंहत इति** । किंच प्रामाणिकविरुद्धधर्मवत्त्वस्यासिद्धत्वात्प्रातिभासिकस्य च बिम्बप्रतिबिम्बयोरनैकान्त्याद्भेदानुमानायोगाज्जीवब्रह्मणोरभेदसिद्धिरित्यभिप्रेत्य फलितमाह—**इति तस्येति** । नन्वविक्रियस्य ब्रह्मस्वरूपतया सर्वकर्मासंभवे विदुषो विद्वत्तापि कथं संभवति, नहि ब्रह्मणोऽविक्रियस्य विद्यालक्षणा विक्रिया स्वक्रिया भवितुमर्हति तत्राह—**यथेति** । अदृष्टेन्द्रियादिसहकृतमन्तःकरणं प्रदीपप्रभावद्विषयपर्यन्तं परिणतं बुद्धिवृत्तिरुच्यते । तत्र प्रतिबिम्बितं चैतन्यमभिव्यञ्जकबुद्धिवृत्त्यविवेकाद्विषयज्ञानमिति व्यवह्रियते । तेनात्मोपलब्धा कल्प्यते । तच्चाविद्याप्रयुक्तमिथ्यासंबन्धनिबन्धनं तथैवाध्यासिकसंबन्धेन ब्रह्मात्मैक्याभिव्यञ्जकवाक्योत्थबुद्धिवृत्तिद्वारा विद्वानात्मा व्यपदिश्यते, नच मिथ्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इत्यादि । अविद्यावस्थायामेव च सर्वकारकव्यवहारं दर्शयति । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यादि । एतेन सर्वकारकोपमर्दिन्या विद्यायाः सर्वकारकसापेक्षैः कर्मभिः सह समुच्चयो निरस्तः । परस्परविरुद्धस्वभावत्वेन शीतोष्णयोरिव द्वयोरेककार्यकारित्वस्य रथाश्वन्यायेनासंभवादित्य-

४ मधुसूदनीव्याख्या।

क्रियाशून्यस्वभावत्वात्, परंतु स्वप्न इवाविद्यया कर्तृत्वादिकमात्मन्यभिमन्यते मूढः । तदुक्तं 'उभौ तौ न विजानीतः' इति । श्रुतिश्च 'ध्यायतीव लेलायतीव' इत्यादि । अतएव सर्वाणि शास्त्राण्यविद्वदधिकारिकाणि । विद्वांस्तु समूलाध्यासबाधान्नात्मनि कर्तृत्वादिकमभिमन्यते स्थाणुस्वरूपं विद्वानिव चोरत्वम् । अतो विक्रियारहितत्वादद्वितीयत्वाच्च विद्वान्न करोति कारयति चेत्युच्यते । तथाच श्रुतिः 'विद्वान्न बिभेति कुतश्चन' इति । अर्जुनो हि स्वस्मिन्कर्तृत्वं भगवति च कारयितृत्वमध्यस्य हिंसानिमित्तं दोषमुभयत्राप्याशशङ्के । भगवानपि विदिताभिप्रायो हन्ति घातयतीति तदुभयमाचिक्षेप । आत्मनि

५ भाष्योत्कर्षदीपिका।

वेदेत्यर्थः । यद्वा एनं नित्यं, तत्र हेतुरविनाशिनम् । अविनाशित्वे हेतुरजमव्ययमपक्षयरहितम् । यद्वा एनमविनाशिनमजमव्ययं यो नित्यं सदैव वेदेत्यर्थः । अथवा वेद आ विनाशिनमिति छेदः । अज्ञानेनावृतत्वादासमन्ताददर्शनं गतमेनं यो नित्यं सच्चिदानन्दात्मना सदैव सन्तं अज्ञानावृतत्वाद्रज्जुशकलवत्तस्यासत्त्वाभावात् । तथा ज्ञानेन जातः क्षीण इति प्रतीयमानमप्यजं अव्ययं यो वेदेत्यादि यत्किंचित्कल्पनस्य बालैरप्यस्मदादिभिः सुकरत्वेन मार्गप्रदर्शकानां सर्वज्ञानां भाष्यकृतामुक्तकल्पनाकरणप्रयुक्ता न्यूनता न प्रदर्शनीयेति ध्येयम् । यत्त्वर्जुनो हि स्वस्मिन्कर्तृत्वं भगवति च कारयितृत्वमध्यस्य हिंसानिमित्तं दोषमुभयत्राप्याशशङ्के, भगवानपि विदिताभिप्रायो हन्ति घातयतीति तदुभयमाचिक्षेप । आत्मनि कर्तृत्वं मयि च कारयितृत्वमारोप्य प्रत्यवायशङ्कां मा कार्षीरित्यभिप्राय इति कैश्चिदुक्तं[1] तन्न । आत्मज्ञानरहितस्य हिंसानिबन्धनपापभयात् स्वधर्माद्युद्धान्निवृत्तस्यार्जुनस्यात्मस्वरूपतदुपायभूतधर्मबोधनपरेण गीताशास्त्रेण सर्वेणापि बोधनं भगवता क्रियत इति स्पष्टप्रतिपत्त्या आशशङ्के । शङ्कां मा कार्षीरित्यस्य निरर्थकत्वात्, य इति मन्त्रोत्थापकाया अस्याः शङ्काया असंभवस्य तत्रैवोक्तत्वाच्च । हननक्रियानिषेधः क्रियामात्रनिषेधस्योपलक्षणार्थः । असंहतस्यात्मस्वरूपस्य विदुषः कर्मासंभवात्प्रबलप्रारब्धवशाद्बाधितानुवृत्त्या कर्मसंभवेऽपि तस्य कर्तृत्वाभिमानाभावेन कर्मणां फलाजनकत्वाद्वस्तुगत्या तेषामसंभवस्य सुवचत्वात् । तस्मात्फलाभिसंधिकर्तृत्वाभिमानपूर्वको ज्ञस्य कर्मणि मुख्योऽधिकारः । ननु विद्यायामप्यविदुष एवाधिकारः । तथाच भाष्यं 'तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चे'ति ।

---

१ मधुसूदनः,

१ श्रीमच्छांकरभाष्यम् ।

कल्प्यते एवमेवात्मानात्मविवेकज्ञानेन बुद्धिवृत्त्या विद्ययाऽसत्यरूपयैव परमार्थतोऽविक्रिय एवात्मा विद्वानुच्यते । विदुषः कर्मासंभववचनाद् यानि कर्माणि शास्त्रेण विधीयन्ते तान्यविदुषो विहितानीति भगवतो निश्चयोऽवगम्यते । ननु विद्याप्यविदुष एव विधीयते विदितविद्यस्य पिष्टपेषणवद्विद्याविधानानर्थक्यात्, तत्राविदुषः कर्माणि विधीयन्ते न विदुष इति विशेषो नोपपद्यते । न । अनुष्ठेयस्य भावाभावविशेषोपपत्तेः । अग्निहोत्रादिविध्यर्थज्ञानोत्तरकालमग्निहोत्रादिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेयं कर्ताहं मम कर्तव्यमित्येवंप्रकारकविज्ञानवतोऽविदुषो यथानुष्ठेयं भवति नतु तथा न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किंचिदनुष्ठेयं भवति । किंतु नाहं कर्ता न भोक्तेत्याद्यात्मैकत्वाकर्तृत्वादिविषयज्ञानादन्यन्नोत्पद्यत इत्येष विशेष उपपद्यते । यः पुनः कर्ताहमिति वेत्त्यात्मानं तस्य ममेदं कर्तव्यमित्यवश्यंभाविनी बुद्धिः स्यात्तदपेक्षया सोऽधिक्रियत इति तं प्रति कर्माणि संभवन्ति । स चाविद्वान् 'उभौ तौ न विजानीतः' इति वचनाद् विशेषितस्य च विदुषः कर्माक्षेपवचनात् 'कथं स पुरुषः' इति । तस्माद्विशेषितस्याविक्रियात्मदर्शिनो विदुषो मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः । अतएव भगवान्नारायणः सांख्यान्विदुषोऽविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति । तथाच पुत्रायाह भगवान्व्यासो 'द्वाविमा-

२ आनन्दगिरिव्याख्या ।

संबन्धेन पारमार्थिकाविक्रियत्वविहतिरस्तीत्यर्थः । अहं ब्रह्मेति बुद्धिवृत्तेर्मोक्षावस्थायामपि भावादात्मनः सविशेषत्वमाशङ्क्य तस्या यावदुपाधिसत्त्वमेवेत्याह—असत्येति । ननु कूटस्थस्यात्मनो मिथ्याविद्यावत्त्वेऽपि तस्य कर्माधिकारनिवृत्तौ कस्य कर्माणि विधीयन्ते, नहि निरधिकाराणां तेषां विधिरित्याशङ्क्याह—विदुष इति । कर्माण्यविदुषो विहितानीति विशेषमाक्षिपति—नन्विति । कर्मविधानमविदुषो विदुषश्च विद्याविधानमिति विभागे का हानिरित्याशङ्क्याह—विदितेति । विद्याया विदितत्वं लब्धत्वम् । कर्मविधिरविदुषो विदुषो विद्याविधिरिति विभागासंभवे फलितमाह—तत्रेति । धर्मज्ञानानन्तरमनुष्ठेयस्य भावात् ब्रह्मज्ञानोत्तरकालं च तदभावाद् ब्रह्मज्ञानहीनस्यैव कर्मविधिरिति समाधत्ते—नानुष्ठेयस्येति । विशेषोपपत्तिमेव प्रपञ्चयति—अग्निहोत्रादीति । ननु देहादिव्यतिरिक्तात्मज्ञानं विना पारलौकिकेषु कर्मसु प्रवृत्तेरनुपपत्तेस्तथाविधज्ञानवता कर्मानुष्ठेयमिति चेत्तत्राह—कर्ताहमिति । आत्मनि कर्ता भोक्तेत्येवं विज्ञानवत्त्वेऽपि ब्रह्मज्ञानविहीनत्वेनाविदुषोऽनुष्ठेयं कर्मेत्यर्थः । देहादिव्यतिरेकज्ञानवद्ब्रह्मज्ञानमपि ज्ञानत्वाविशेषात् कर्मप्रवृत्तावुपकरिष्यतीत्याशङ्क्याह—नन्विति । अनुष्ठेयविरोधित्वादविक्रियात्मज्ञानस्येति शेषः । ननु ब्रह्मात्मैकत्वज्ञानादुत्तरकालमपि कर्ताहमित्यादिज्ञानोत्पत्तौ कर्मविधिः सावकाशः स्यादिति नेत्याह—नाहमिति । कारणाभावादिति शेषः । कर्तृत्वादिज्ञानमन्यदित्युक्तम् । अनुष्ठानाननुष्ठानयोरुक्तविशेषादविदुषोऽनुष्ठानं विदुषो नेत्युपसंहरति—इत्येष इति । नन्वात्मविदो न चेदनुष्ठेयं किंचिदस्ति कथं तर्हि विद्वान्यजेतेत्यादिशास्त्रात्तं प्रति कर्माणि विधीयन्ते तत्राह—यः पुनरिति । आत्मनि कर्तृत्वादिज्ञानापेक्षया कर्मस्वधिकृतत्वज्ञाने तथाविधं पुरुषं प्रति कर्माणि विधीयन्ते । स च प्राचीनवचनादविद्वानेवेति निश्चीयते । न खल्वकर्तृत्वादिज्ञानवतस्तद्विपरीतकर्तृत्वादिज्ञानद्वारा कर्मसु प्रवृत्तिरित्यर्थः । कर्मासंभवे ब्रह्मविदो हेत्वन्तरमाह—विशेषितस्येति । 'वेदाविनाशिनम्' इत्यादिनेति शेषः । यद्यपि विदुषो नास्ति कर्म तथापि विविदिषोः स्यादित्याशङ्क्याह—तस्मादिति । विद्यया विरुद्धत्वादिष्यमाणमोक्षप्रतिपक्षत्वाच्च कर्मणामित्यर्थः । यद्यपि मुमुक्षोराश्रमकर्माण्यपेक्षितानि तथापि विद्यातत्फलाभ्यामविरुद्धान्येव तान्यभ्युपगतान्यन्यथा विविदिषासंन्यासविधिविरोधादित्यभिप्रेत्योक्तेऽर्थे भगवतोऽनुमतिमाह—अतएवेति । विदुषो विविदिषोश्च संन्यासेऽधिकारोऽविदुषस्तु कर्मणीति विभागस्येष्टत्वादित्यर्थः । अधिकारिभेदेन निष्ठाद्वयं भगवता वेदव्यासेनापि दर्शितमित्याह—तथाचेति । अध्ययनविधिना स्वाध्यायपाठे त्रैवर्णिकस्य प्रवृत्त्यनन्तरं तत्र क्रियामार्गो ज्ञानमार्गश्चेति द्वौ मार्गावधिकारिभेदेनावेदितावित्यर्थः । आदिशब्दाद् 'यत्र वेदाः प्रतिष्ठिताः' इत्यादि गृह्यते । उक्त-

४ मधुसूदनीव्याख्या ।

कर्तृत्वं मयि च कारयितृत्वमारोप्य प्रत्यवायशङ्कां मा कार्षीरित्यभिप्रायः । अविक्रियत्वप्रदर्शनेनात्मनः कर्तृत्वप्रतिषेधात्सर्वकर्माक्षेपे भगवदभिप्रेते हन्तिरुपलक्षणार्थः । पुरःस्फूर्तिकत्वात्, प्रतिषेधहेतोस्तुल्यत्वात्कर्मान्तराभ्यनुज्ञानुपपत्तेः । तथाच

५ भाष्योत्कर्षदीपिका ।

उच्यते देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरित्यादि । अयमर्थः—प्रमातृत्वं हि प्रमां प्रति कर्तृत्वं तच्च स्वातन्त्र्यं, स्वातन्त्र्यं च इतरकारकाप्रयोज्यस्य प्रमातुः समस्तकारकप्रयोक्तृत्वं तदनेन प्रमाणं प्रयोजनीयं, नच स्वव्यापारमन्तरेण करणं प्रयोक्तुं शक्यते इति । नहि कूटस्थनित्यश्चिदात्मा परिणामी स्वतो व्यापारवान्भवितुमर्हति, तस्माद्व्या-

१ श्रीमच्छांकरभाष्यम् ।

वथ पन्थानौ' इत्यादि । तथाच क्रियापथश्चैव पुरस्तात्पश्चात्संन्यासश्चेत्येतमेव विभागं पुनः पुनर्दर्शयिष्यति भगवान् । अतत्त्वविदहंकारविमूढात्मा कर्ताहमिति मन्यते, तत्त्ववित्तु नाहं करोमीति । तथाच सर्वकर्माणि मनसा संन्यस्यास्त इत्यादि । तत्र केचित्पण्डितंमन्या वदन्ति । जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्तैकोऽहमात्मेति न कस्यचिज्ज्ञानमुत्पद्यते यस्मिन्सति सर्वकर्मसंन्यास उपदिश्यते । तन्न । न जायत इत्यादिशास्त्रोपदेशानर्थक्यप्रसङ्गात् । यथाच शास्त्रोपदेशसामर्थ्याद्धर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसंबन्धिज्ञानं चोत्पद्यते । तथा शास्त्रात्तस्यैवात्मनोऽविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मान्नोपपद्यत इति प्रष्टव्यास्ते करणागोचरत्वादिति चेन्न । 'मनसैवानुद्रष्टव्यम्' इति श्रुतेः । शास्त्राचार्योपदेशजनितशमदमादिसंस्कृतं मन आत्मदर्शने करणम् । तथाच तदधिगमायानुमान आगमे च सति ज्ञानं नोत्पद्यत इति साहसमात्रमेतत् । ज्ञानं चोत्पद्यमानं तद्विपरीतमज्ञानमवश्यं बाधत इत्यभ्युपगन्तव्यम्, तच्चाज्ञानं दर्शितं हन्ताहं हतोऽस्मीत्युभौ तौ न विजानीत इति, अत्र चात्मनो हननक्रियायाः कर्तृत्वं, कर्मत्वं हेतुकर्तृत्वं चाज्ञानकृतं दर्शितम् । तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मनः । विक्रियावान्हि

२ आनन्दगिरिव्याख्या ।

योर्मार्गयोस्तुल्यतां परिहर्तुमुदाहरणान्तरमाह—**तथेति** । बुद्धिशुद्धिद्वारा कर्मतत्फलयोर्वैराग्योदयात्पूर्वं कर्ममार्गो विहितो विरक्तस्य पुनः संन्यासपूर्वको ज्ञानमार्गो दर्शितः । स चेतरस्मादतिशयशालीति श्रुतमित्यर्थः । उक्ते विभागे पुनरपि वाक्यशेषानुकूल्यमादर्शयति—**एवमेवेति** । अहंकारविमूढात्मेत्यस्य व्याख्यानं—**अतत्त्वविदिति** । तत्त्ववित्त्विति श्लोकमवतार्य तात्पर्यार्थं संगृह्णाति—**नाहमिति** । पूर्वेण क्रियापदेनेतिशब्दः संबध्यते । विरक्तमधिकृत्य वाक्यान्तरं पठति—**तथाचेति** । आदिशब्दस्तस्यैव श्लोकस्य शेषसंग्रहार्थः । अविक्रियात्मज्ञानात्कर्मसंन्यासे दर्शिते मीमांसकमतमुत्थापयति—**तत्रेति** । आत्मनो ज्ञानक्रियाशक्त्याधारत्वेनाविक्रियत्वाभावादविक्रियात्मज्ञानं संन्यासकारणीभूतं न संभवतीत्यर्थः । यथोक्तज्ञानाभावो विषयाभावाद्वा मानाभावाद्वेति विकल्प्याद्यं दूषयति—**नेत्यादिना** । न तावदविक्रियात्माभावो न जायते म्रियते वेत्यादिशास्त्रस्याप्तवाक्यतया प्रमाणस्यान्तरेण कारणमानर्थक्यायोगादित्यर्थः । द्वितीयं प्रत्याह—**यथाचेति** । पारलौकिककर्मविधिसामर्थ्यसिद्धं विज्ञानमुदाहरति—**कर्तुश्चेति** । कर्मकाण्डादज्ञाते धर्मादौ विज्ञानोत्पत्तिवज्ज्ञानकाण्डादज्ञाते ब्रह्मात्मनि विज्ञानोत्पत्तिरविरुद्धा प्रमाणत्वाविशेषादित्यर्थः । ज्ञानस्य मनःसंयोगजन्यत्वादात्मनश्च श्रुत्या मनोगोचरत्वनिरासान्नात्मज्ञाने साधनमस्तीति शङ्कते—**करणेति** । श्रुतिमाश्रित्य परिहरति—**न । मनसेति** । तत्त्वमस्यादिवाक्योत्थमनोवृत्त्यैव शास्त्राचार्योपदेशमनुसृत्य द्रष्टव्यं तत्त्वमिति श्रूयते, स्वरूपेण स्वप्रकाशमपि ब्रह्मात्मवस्तु वाक्योत्थबुद्धिवृत्त्यभिव्यक्तं सविकल्पकव्यवहारालम्बनं भवतीति मनोगोचरत्वोपचारादसिद्धं करणागोचरत्वमित्यर्थः । कथं तर्हि ब्रह्मात्मनो मनोविषयत्वनिषेधश्रुतिरित्याशङ्क्यासंस्कृतमनोवृत्त्यविषयत्वविषया सेति मन्वानः सन्नाह—**शास्त्रेति** । सत्यपि श्रुत्यादौ तदनुग्राहकाभावान्नास्माकमविक्रियात्मकज्ञानमुत्पत्तुमर्हतीत्याशङ्क्याह—**तथेति** । तस्याविक्रियस्यात्मनोऽधिगत्यर्थं, विमतो विकारो नात्मधर्मो विकारत्वादुभयाभिमतविकारवदित्यनुमाने पूर्वोक्तश्रुतिस्मृतिरूपागमे च सत्येव तस्मिन्नोत्पद्यते ज्ञानमिति वचः साहसमात्रं, सत्येव माने मेयं न भातीतिवदित्यर्थः । ननु यथोक्तं ज्ञानमुत्पन्नमपि हानायोपादानाय वा न भवतीति कुतोऽस्य फलवत्त्वं तत्राह—**ज्ञानं चेति । अवश्यमिति** । प्रकाशप्रवृत्तेस्तमोनिवृत्तिव्यतिरेकेणानुपपत्तिवदात्माज्ञाननिवृत्तिमन्तरेणात्मज्ञानोत्पत्तेरनुपपत्तेरित्यर्थः । नन्वज्ञानस्य ज्ञानप्रागभावत्वात्तन्निवृत्तिरेव ज्ञानं नतु तन्निवर्तकमिति तत्राह—**तच्चेति** । कथं पुनर्भगवतापि ज्ञानाभावातिरिक्तमज्ञानं दर्शितमित्याशङ्क्याह—**अत्रचेति** । विमतं ज्ञानाभावो न भवत्युपादानत्वान्मृदादिवदिति भावः । ननु हननक्रियाया न हिंस्यादिति निषिद्धत्वात् तत्कर्तृत्वादेरज्ञानकृतत्वेऽपि विहितक्रियाकर्तृत्वादेर्न तथात्वमिति नेत्याह—**तच्चेति** । न तावदात्मनि कर्तृत्वादि नित्यम् अमुक्तिप्रसङ्गान्न चानित्यमपि निरुपादानं भावकार्यस्योपादाननियमान्न चानात्मा तदुपादानमात्मनि तत्प्रतिभानान्न चात्मैव तदुपादानं कूटस्थस्य तस्याविद्यां विना तदयोगादित्याह—**अविक्रियत्वादिति** । कर्तृत्वाभावेऽपि कारयितृत्वं स्यादित्याशङ्क्याह—**विक्रि-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

न्यत्र विस्तरः । मादृशानां ज्ञानिनां व्युत्थानकाले अविद्यालेशानुवृत्त्या घातयितृत्वादेः प्रसक्तावपि विद्यया तस्य

५ भाष्योत्कर्षदीपिका ।

पारवद्बुद्ध्यादितादात्म्याध्यासाद्व्यापारवत्तया प्रमाणमधिष्ठातुमर्हतीति भवत्यविद्यावत्पुरुषविषयत्वमविद्यावत्पुरुषाश्रयत्वं प्रमाणानामिति चेत्सत्यम् । तथापि कर्मनियोगार्थबोधानन्तरमहं कर्ता ममेदं कर्तव्यमित्येवंप्रकारज्ञानवतोऽनेकसाधनोपसंहारपूर्वकं यथाकर्मा-

१ श्रीमच्छांकरभाष्यम् ।

कर्तात्मनः कर्मभूतमन्यं प्रयोजयति कुर्विति । तदेतदविशेषेण विदुषः सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान् विदुषः कर्माधिकाराभावप्रदर्शनार्थं 'वेदाविनाशिनं', 'कथं स पुरुष' इत्यादिना। क्व पुनर्विदुषोऽधिकार इत्येतदुक्तं पूर्वमेव 'ज्ञानयोगेन सांख्यानाम्' इति । तथाच सर्वकर्मसंन्यासं वक्ष्यति 'सर्वकर्माणि मनसा' इत्यादिना । ननु मनसेति वचनान्न वाचिकानां कायिकानां च संन्यास इति चेन्न, सर्वकर्माणीति विशेषितत्वात् । मानसानामेव सर्वकर्मणामिति चेन्न, मनोव्यापारपूर्वकत्वाद्वाक्कायव्यापाराणां मनोव्यापाराभावे तदनुपपत्तेः । शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि वर्जयित्वान्यानि सर्वकर्माणि मनसा संन्यसेदिति चेन्न । 'नैव कुर्वन्न कारयन्' इति विशेषणात् । सर्वकर्मसंन्यासोऽयं भगवतोक्तो मरिष्यतो न जीवत इति चेन्न । 'नवद्वारे पुरे देह्यास्ते' इति विशेषणानुपपत्तेः । नहि सर्वकर्मसंन्यासेन मृतस्य तद्देहे आसनं संभवति । अकुर्वतोऽकारयतश्च देहे संन्यस्येति संबन्धो न देहे आस्त इति चेन्न । सर्वत्रात्मनोऽविक्रियत्वावधारणात् । आसनक्रियायाश्चाधिकरणापेक्षत्वात्तदनपेक्षत्वाच्च संन्यासस्य । संपूर्वस्तु न्यासशब्दस्त्यागार्थो न निक्षेपार्थः । तस्माद्गीताशास्त्रात्मज्ञानवतः संन्यास एवाधिकारो न

२ आनन्दगिरिव्याख्या ।

**धावानिति** । आत्मनि कर्तृत्वादिप्रतिभानस्यानाद्यनिर्वाच्यमज्ञानमुपादानं तन्निवृत्तिश्च तत्त्वज्ञानादित्युक्तम्, इदानीं कर्तृत्वकारयितृत्वयोरविद्याकृतत्वे भगवतोऽनुमतिं दर्शयति—**तदेतदिति** । विदुषो यदि कर्माधिकाराभावो भगवतोऽभिमतस्तर्हि कुत्र तस्य जीवतोऽधिकारः स्यादिति पृच्छति—**क्व पुनरिति** । ज्ञाननिष्ठायामित्युक्तं स्मारयति—**उक्तमिति** । तदङ्गभूते सर्वकर्मसंन्यासे च तस्याधिकारोऽस्तीत्याह—**तथेति** । वक्ष्यमाणे वाक्ये सर्वकर्मसंन्यासो न प्रतिभाति, मानसानामेव कर्मणां विशेषणवशात्त्यागावगमादिति शङ्कते—**नन्विति** । विशेषणान्तरमाश्रित्य दूषयति—**न सर्वेति** । मनसेतिविशेषणान्मानसेष्वेव कर्मसु सर्वशब्दः संकुचितः स्यादिति शङ्कते—**मानसानामिति** । सर्वात्मना मनोव्यापारत्यागे व्यापारान्तराणामनुपपत्तेः सर्वकर्मसंन्यासः सिध्यतीति परिहरति—**नेत्यादिना** । मानसेष्वपि कर्मसु संन्यासे संकोचान्न वागादिव्यापारानुपपत्तिरिति शङ्कते—**शास्त्रीयाणामिति** । **अन्यानीति** । अशास्त्रीयवाक्कायकर्मकारणान्यशास्त्रीयाणि मानसानि तानि च सर्वाणि कर्माणीत्यर्थः । वाक्यशेषमादाय दूषयति—**न । नैवेति** । नहि विवेकबुद्ध्या सर्वाणि कर्माण्यशास्त्रीयाणि संन्यस्य तिष्ठतीति युक्तं नैव कुर्वन्नित्यादिविशेषणस्य विवेकबुद्धेश्च त्यागहेतोस्तुल्यत्वादित्यर्थः । भगवदभिमतसर्वकर्मसंन्यासस्यावस्थाविशेषे संकोचं दर्शयन्नाशङ्कते—**मरिष्यत इति** । संन्यासो जीवदवस्थायामेवात्र विवक्षित इत्यत्र लिङ्गं दर्शयन्नुत्तरमाह—**न । नवेति** । अनुपपत्तिमेव स्फोरयति—**नहीति** । अन्वयविशेषान्वाख्यानेन लिङ्गासिद्धिं चोदयति—**अकुर्वत इति** । विवेकवशादशेषाण्यपि धर्माणि देहे यथोक्ते निक्षिप्याकुर्वन्नकारयंश्च विद्वानवतिष्ठते। तथाच देहे कर्माणि संन्यस्याकुर्वतोऽकारयतश्च सुखमासनमिति संबन्धसंभवाद् विशेषणस्य सति देहे कर्मत्यागविषयत्वाभावाज्जीवतः सर्वकर्मत्यागो नास्तीत्यर्थः । अथवा कुर्वत इत्यादि पूर्वत्रैव संबन्धनीयम्, लिङ्गासिद्धिचोद्यं तु देहे संन्यस्येत्यारभ्योन्नेयम् । आत्मनः सर्वत्राविक्रियत्वनिर्धारणाद्देहसंबन्धमन्तरेण कर्तृत्वकारयितृत्वाप्राप्तेरप्राप्तप्रतिषेधप्रसङ्गपरिहारार्थमस्मदुक्त एव संबन्धः साधीयानिति समाधत्ते—**न सर्वत्रेति** । श्रुतिषु स्मृतिषु चेत्यर्थः । किंच संबन्धस्याकाङ्क्षासंनिधियोग्यताधीनत्वादाकाङ्क्षावशादस्मदभिमतसंबन्धसिद्धिरित्याह—**आसनेति** । भवदिष्टस्तु संबन्धो न सिध्यत्याकाङ्क्षाभावादित्याह—**तदनपेक्षत्वाच्चेति** । संन्यासशब्दस्य निक्षेपार्थत्वात्तस्य चाधिकरणसापेक्षत्वादस्मदिष्टसंबन्धसिद्धिरित्याशङ्क्याह—**संपूर्वस्त्विति** । अन्यथोपसर्गवैयर्थ्यादित्यर्थः । मनसा विवेकविज्ञानेन सर्वकर्माणि परित्यज्यास्ते देहे विद्वानित्यस्यैव संबन्धस्य साधुत्वं मत्वोपसंहरति—**तस्मादिति**। सर्वव्यापारोपरमात्मनः संन्यासस्याविक्रियात्मज्ञानाविरोधित्वात् प्रयोजकज्ञानवतो वैधे संन्यासेऽधिकारः, सम्यग्ज्ञानवतस्त्ववैधे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बाधितत्वादागामिकर्मणामश्लेषाच्च न दोषः । तथाच वक्ष्यते 'हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते' इति

४ मधुसूदनीव्याख्या ।

वक्ष्यति 'तस्य कार्यं न विद्यते' इति । अतोऽत्र हननमात्राक्षेपेण कर्मान्तरं भगवताभ्यनुज्ञायत इति मूढजनजल्पितमपा-

५ भाष्योत्कर्षदीपिका ।

नुष्ठेयं न तथा न जायत इत्यादावात्मस्वरूपविध्यर्थज्ञानानन्तरं किंचिदनुष्ठेयं भवति, किंतु नाहं कर्ता न भोक्तेत्यादिज्ञानद्वारा-

६ श्रीधरीव्याख्या ।

शिनं च यो वेद स पुरुषः कं हन्ति कथं वा हन्ति । एवंभूतस्य वधे साधनाभावात् । तथा स्वयं प्रयोजको भूत्वाऽन्येन कं घातयति ।

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कर्मणीति तत्रतत्रोपरिष्टादात्मज्ञानप्रकरणे दर्शयिष्यामः ॥२१॥ प्रकृतं तु वक्ष्यामः, तत्रात्मनोऽविनाशित्वं प्रतिज्ञातं तत्किमिवेत्युच्यते—वासांसीति । वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नवान्यभिनवानि गृह्णात्युपादत्ते नरः पुरुषोऽपराण्यन्यानि तथा तद्व-**

२ आनन्दगिरिव्याख्या ।

स्वाभाविके फलात्मनीति विभागमभ्युपेत्योक्तेऽर्थे वाक्यशेषानुगुण्यं दर्शयति—**इति तत्र तत्रेति** ॥२१॥ आत्मनोऽविक्रियत्वेन कर्मासंभवं प्रतिपाद्याविक्रियत्वहेतुसमर्थनार्थमेवोत्तरग्रन्थमवतारयति—**प्रकृतं त्विति** । किं तत्प्रकृतमिति शङ्कमानं प्रत्याह—**तत्रेति** । अविनाशित्वमित्युपलक्षणमविक्रियत्वमित्यर्थः । तदेव दृष्टान्तेन स्पष्टयितुमुत्तरश्लोकमुत्थापयति—**तदित्यादिना** । आत्मनः स्वतो विक्रियाभावेऽपि पुरातनदेहत्यागे नूतनदेहोपादाने च विक्रियावत्त्वध्रौव्यादविक्रियत्वमसिद्धमिति चेत्तत्राह—**वासांसीति** । शरीराणि जीर्णानि वयोहानिं गतानि वलीपलितादिसंगतानीत्यर्थः । वाससां पुरातनानां परित्यागे नवानां चोपादाने त्यागोपादानकर्तृभूतलौकिकपुरुषस्याप्यविकारित्वेनैकरूपत्ववदात्मनो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ २१ ॥ ननु 'ब्राह्मणो यजेत', 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति आत्मानं वयोवर्णादिविशेषणवन्तमेवाधिकृत्य कर्मविधयः प्रवर्तन्ते तेन नीलादुत्पलमिव देहादन्य आत्मावधारयितुं न शक्यत इत्याशङ्क्याह—**वासांसीति** । दण्डी प्रैषानन्वाहेति दण्डस्य विशेषणत्वेऽपि न प्रैषानुवक्तृस्वरूपान्तर्गतत्वम्, एवं ब्राह्मणत्वादेरपि न स्वर्गकामस्वरूपान्तर्गतत्वमिति वस्त्रदेवदत्तयोरिव जडाजडयोर्देहात्मनोरत्यन्तविलक्षणत्वमस्तीति वस्त्रनाशेन देवदत्तनाशं मन्वानस्येव

४ मधुसूदनीव्याख्या ।

त्वम् । तस्माद्युध्यस्वेत्यत्र हननस्य भगवताभ्यनुज्ञानात्, वास्तवकर्तृत्वाद्यभावस्य कर्ममात्रे समत्वादिति दिक् ॥ २१ ॥ नन्वेवमात्मनो विनाशित्वाभावेऽपि देहानां विनाशित्वाद्युद्धस्य च तन्नाशकत्वात्कथं भीष्मादिदेहानामनेकसुकृतसाधनानां मया युद्धेन विनाशः कार्य इत्याशङ्काया उत्तरं जीर्णानि विहाय वस्त्राणि नवानि गृह्णाति विक्रियाशून्य एव नरो यथेत्येतावतैव निर्वाहे अपराणीति विशेषणमुत्कर्षातिशयख्यापनार्थम् । तेन यथा निकृष्टानि वस्त्राणि विहायोत्कृष्टानि जनो गृह्णातीत्यौचित्यायातम् । तथा जीर्णानि वयसा तपसा च कृशानि भीष्मादिशरीराणि विहाय अन्यानि देवादिशरीराणि सर्वोत्कृष्टानि चिरोपार्जितधर्मफलभोगाय संयाति सम्यक् गर्भवासादिक्लेशव्यतिरेकेण प्राप्नोति । देही प्रकृष्टधर्मानुष्ठातृदेहवान्भीष्मादिरित्यर्थः । 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वा' इत्यादिश्रुतेः । एतदुक्तं भवति—भीष्मादयो हि यावज्जीवं धर्मानुष्ठानक्लेशेनैव जर्जरशरीरा वर्तमानशरीरपातमन्तरेण तत्फलभोगायासमर्था यदि धर्मयुद्धेन स्वर्गप्रतिबन्धकानि जर्जरशरीराणि पातयित्वा दिव्यदेहसंपादनेन स्वर्गभोगयोग्याः क्रियन्ते त्वया तदात्यन्तमुप-

५ भाष्योत्कर्षदीपिका ।

त्मैकत्वाकर्तृत्वाभोक्तृत्वज्ञानादन्यत्किंचिदनुष्ठेयं भवतीत्येष विशेष इति स्पष्टं चेदं भाष्ये ॥ २१ ॥ नन्वात्मनः पुरातनदेहत्यागे नवीनदेहोपादाने च सति विक्रियावत्त्वध्रौव्यादविक्रियत्वमसिद्धमित्याशङ्कां दृष्टान्तेन परिहरति—**वासांसीति** । यथा लोके जीर्णानि दुर्बलतां गतानि वस्त्राणि नरः पुरुषः परित्यज्यापराण्यन्यानि नवान्युपादत्ते तद्वदेव देह्यात्मा जीर्णानि शरीराणि विहायान्यानि नवानि संगच्छति । जीर्णानीत्यादिविशेषणत्रयेण वस्त्राणां शरीराणां च जीर्णत्वादिमत्त्वेऽपि तदुपादानत्यागकर्त्रोः पुरुषदेहिनोस्तत्त्वाभावबोधकेन तयोरविक्रियत्वं कथितम् । तथाच पुरुषवदविक्रिय एवात्मेत्यर्थः । यत्तु केचित्[1] नन्वेवमात्मनोऽविनाशित्वेऽपि देहानां विनाशित्वाद्युद्धस्य तन्नाशकत्वात्कथं भीष्मादिदेहानामनेकसुकृतसाधकानां मया युद्धेन विनाशः कार्य इत्याशङ्कायां उत्तरं वासांसीति । यथा निकृष्टानि वस्त्राणि विहाय नवान्युत्कृष्टानि जनो गृह्णाति तथा वयसा तपसा च कृशानि भीष्मादिशरीराणि विहायान्यानि देवादिशरीराणि सर्वोत्कृष्टानि संयाति देही प्रकृष्टधर्मानुष्ठाता देहवान्भीष्मादिरित्यर्थः । तथाचात्यन्तमुपकारके युद्धेऽपकारकत्वभ्रमं मा कार्षीरिति । तच्चिन्त्यम् । प्रकरणविरोधस्य विशेष्याध्याहारदोषस्य च स्पष्टत्वात्, जीर्णानीति विशेषणात् नवीनादिसाधारणशरीरनाशनिमित्तस्य युद्धस्यात्यन्तोपकारकताया मूलादसिद्धेश्च उक्तरीत्या पराणीति पदस्य सार्थकत्वेन जीर्णानि

६ श्रीधरीव्याख्या ।

न कंचिदपि कथंचिदपीत्यर्थः । अनेन मय्यपि प्रयोजकत्वाद्दोषदृष्टिं मा कार्षीरित्युक्तं भवति ॥ २१ ॥ नन्वात्मनोऽविनाशित्वेऽपि तदीयशरीरनाशं पर्यालोच्य शोचामीति चेत्तत्राह—**वासांसीति** । कर्मनिबन्धनभूतानां देहानामवश्यंभावित्वान्न जीर्णदेहनाशे शोका-

---

1 मधुसूदनः.

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥**
**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**

१ श्रीमच्छांकरभाष्यम् ।

देव शरीराणि विहाय जीर्णान्यन्यानि संयाति संगच्छति नवानि देह्यात्मा पुरुषवदविक्रिय एवेत्यर्थः ॥ २२ ॥ कस्मादविक्रिय एवेत्याह—नैनं छिन्दन्तीति । एनं प्रकृतं देहिनं न छिन्दन्ति शस्त्राणि निरवयवत्वान्नावयवविभागं कुर्वन्ति शस्त्राण्यस्यादीनि, तथा नैनं दहति पावकोऽग्निरपि न भस्मीकरोति, तथा न चैनं क्लेदयन्त्यापः । अपां हि सावयवस्य वस्तुन आर्द्रीभावकरणेनावयवविश्लेषापादने सामर्थ्यं तन्न निरवयव आत्मनि संभवति, तथा स्नेहवद्द्रव्यं स्नेहशोषणेन नाशयति वायुरेनं स्वात्मानं न शोषयति मारुतोऽपि ॥२३॥ यत एवं तस्मात्—अच्छेद्योऽयमिति । यस्मादन्योन्यनाशहेतूनि भूता-

२ आनन्दगिरिव्याख्या ।

देहत्यागोपादानयोरविरुद्धमविक्रियत्वमिति वाक्यार्थमाह—**पुरुषवदिति** ॥ २२ ॥ पृथिव्यादिभूतचतुष्टयप्रयुक्तविक्रियाभाक्त्वादात्मनोऽसिद्धमविक्रियत्वमिति शङ्कते—**कस्मादिति** । यतो न भूतान्यात्मानं गोचरयितुमर्हन्त्यतो युक्तमाकाशवत्तस्याविक्रियत्वमित्याह—**आहेत्यादिना** ॥ २३ ॥ पृथिव्यादिभूतप्रयुक्तच्छेदनाद्यर्थक्रियाभावे योग्यताभावं कारणमाह—**यत इति** । पूर्वार्धमुत्तरार्धे हेतुत्वेन योजयति—**यस्मादिति** । नित्यत्वादीनामन्योन्यं हेतुहेतुमद्भावं

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

तव देहनाशादात्मनाशं मन्वानस्यात्यन्तमौढ्यं स्पष्टमिति भावः । स्पष्टार्थश्च श्लोकः ॥ २२ ॥ कीदृशोऽसौ देहीत्यत आह—**नैनमिति** । एनं शस्त्राणि न छिन्दन्ति न द्वेधा कुर्वन्ति । अस्थूलत्वात् । तर्हि पार्थिवपरमाणुवत्पाकजरूपाद्याश्रयो भविष्यतीत्याशङ्क्याह—**नैनं दहति पावक इति** । अनणुत्वात् । आपश्चैनं न क्लेदयन्ति अस्पर्शत्वात् । स्पर्शवद्धि द्रव्यमद्भिरार्द्रीकर्तव्यं न त्वस्पर्शम् । न शोषयति मारुतः अस्नेहत्वात् । एतेन 'अदीर्घमस्थूलमनणु' 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' इति श्रुतिप्रसिद्धानामदीर्घत्वाशब्दत्वादीनामपि संग्रहो ज्ञेयः ॥ २३ ॥ कुतो हेतोरस्य शस्त्रादीनि छेदादीन्न कुर्वन्तीत्याशङ्क्य तस्य छेदाद्ययोग्यत्वादित्याह—**अच्छेद्योऽयमिति** । अत्राच्छेद्यत्वादौ पूर्वोक्तान्येवास्थूलत्वादीनि कारणानि ज्ञेयानि । **एवमच्छे-**

४ मधुसूदनीव्याख्या ।

कृता एव ते । दुर्योधनादीनामपि स्वर्गभोगयोग्यदेहसंपादनान्महानुपकार एव । तथाचात्यन्तमुपकारके युद्धेऽपकारकत्वभ्रमं मा कार्षीरिति 'अपराणि अन्यानि संयाति' इति पदत्रयवशाद्भगवदभिप्राय एवमभ्यूहितः । अनेन दृष्टान्तेनाविकृतत्वप्रतिपादनमात्मनः क्रियत इति तु प्राचां व्याख्यानमतिस्पष्टम् ॥ २२ ॥ ननु देहनाशे तदभ्यन्तरवर्तिन आत्मनः कुतो न विनाशो गृहदाहे तदन्तर्वर्तिपुरुषवदित्यत आह—शस्त्राण्यस्यादीन्यतितीक्ष्णान्यप्येनं प्रकृतमात्मानं न छिन्दन्ति अवयवविभागेन द्विधाकर्तुं न शक्नुवन्ति । तथा पावकोऽग्निरतिप्रज्वलितोऽपि नैनं भस्मीकर्तुं शक्नोति । नचैनमापोऽत्यन्तं वेगवत्योऽप्यार्द्रीकरणेन विश्लिष्टावयवं कर्तुं शक्नुवन्ति । मारुतो वायुरतिप्रबलोऽपि नैनं नीरसं कर्तुं शक्नोति । सर्वनाशकाक्षेपे प्रकृते युद्धसमये शस्त्रादीनां प्रकृतत्वादवयुत्यानुवादेनोपन्यासः पृथिव्यप्तेजोवायूनामेव नाशकत्वप्रसिद्धेस्तेषामेवोपन्यासो नाकाशस्य ॥ २३ ॥ शस्त्रादीनां तन्नाशकत्वासामर्थ्ये तस्य तज्जनितनाशानर्हत्वे हेतुमाह—यतोऽच्छेद्योऽयमतो नैनं

५ भाष्योत्कर्षदीपिका ।

विहाय नवानि गृह्णाति विक्रियाशून्य एव नरो यथेत्येतावतैव निर्वाहे अपराणीति विशेषणमुत्कर्षातिशयख्यापनार्थमिति वर्णनं त्वयुक्तमिति दिक् । अतएवानेन दृष्टान्तेनाविकृतत्वप्रतिपादनमात्मनः क्रियत इति प्राचां व्याख्यानमतिस्पष्टमिति कटाक्षोऽपि परास्तः । आत्माविक्रियत्वप्रतिपादकपूर्वोत्तरप्रकरणानुसारिमूलादतिस्पष्टतया प्रतीयमानस्य भाष्योक्तव्याख्यानस्यैव सम्यक्त्वात् ॥ २२ ॥ तस्याविक्रियत्वं प्रकारान्तरेण पुनराह—**नैनमित्यादिना** । नच क्लेदयन्ति विश्लिष्टावयवं न कुर्वन्ति । निरवयवत्वं हेतुः ॥ २३ ॥ फलितमाह—**अच्छेद्य इति** । एवकारस्य सर्वत्र संबन्धः । यस्मादन्योन्यनाशहेतूनि भूतान्यात्मानं नाशयितुं

६ श्रीधरीव्याख्या ।

वकाश इत्यर्थः ॥ २२ ॥ कथं हन्तीत्यनेनोक्तं वधसाधनाभावं दर्शयन्नविनाशित्वमात्मनः स्फुटीकरोति—**नैनमिति** । आपो नैनं क्लेदयन्ति मृदुकरणेन शिथिलं न कुर्वन्ति ॥ २३ ॥ तत्र हेतूनाह—**अच्छेद्य इति** सार्धेन । निरवयवत्वादच्छेद्योऽयमक्लेद्यश्च ।

७ अभिनवगुप्ताचार्यव्याख्या ।

य एनमात्मानं अबुद्धत्वाज्जानाति न स हन्ति न स हन्यते न विनश्यति । एवमात्मा देहान्तराप्तृतः ॥ २१ ॥ २२ ॥ नैनमिति । नास्य नाश-

**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**न्येनमात्मानं नाशयितुं नोत्सहन्ते तस्मान्नित्यो नित्यत्वात्सर्वतः सर्वगतत्वात्स्थाणुः, स्थाणुरिव स्थिरः। इत्येतत् स्थिरत्वादचलोऽयमात्माऽतः सनातनश्चिरंतनो न कारणात्कुतश्चिन्निष्पन्नोऽभिनव इत्यर्थः। नैतेषां श्लोकानां पौनरुक्त्यं चोदनीयम्। यत एकेनैव श्लोकेनात्मनो नित्यत्वमविक्रियत्वं चोक्तं 'न जायते म्रियते वा' इत्यादिना। तत्र यदेवात्मविषयं किंचिदुच्यते तदेतस्माच्छ्लोकार्थान्नातिरिच्यते, किंचि-**

२ आनन्दगिरिव्याख्या ।

सूचयति—**नित्यत्वादित्यादिना**। नच नित्यत्वं परमाणुषु व्यभिचारादसाधकं सर्वगतत्वस्येति वाच्यम्। तेषामेवाप्रामाणिकत्वेन व्यभिचारानवतारात्। नच सर्वगतत्वेऽपि विक्रियाशक्तिमत्त्वमात्मनोऽस्तीति युक्तं विभुत्वेनाभिमते नभसि तदनुपलम्भात्। नच विक्रियाशक्तिमत्त्वे स्थैर्यमास्थातुं शक्यं तथाविधस्य मृदादेरस्थिरत्वदर्शनादित्याशयेनाह—**स्थिरत्वादिति**। स्वतो नित्यत्वेऽपि कारणान्नाशसंभवादुत्पत्तिरपि संभावितेति कुतश्चिरंतनत्वमित्याशङ्क्याह—**न कारणादिति**। आत्मनोऽविक्रियत्वस्य न जायते म्रियते वेत्यादिना साधितत्वात्तस्यैव पुनःपुनरभिधाने पुनरुक्तिरित्याशङ्क्याह—**नैतेषामिति**। अनाशङ्कनीयस्य चोद्यस्य प्रसङ्गं दर्शयति—**यत इति**। अतो वेदाविनाशिनमित्यादौ शङ्क्यते पौनरुक्त्यमिति विशेषः। कथं तत्र पौनरुक्त्याशङ्का समुन्मिषति तत्राह—**तत्रेति**। वेदाविनाशिनमित्यादिश्लोकः सप्तम्या परा-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

द्यत्वादिना स्थूलादीनभावरूपान् गुणानुक्त्वा भावरूपानपि गुणानाह—**नित्य इति**। सर्वैर्विशेषणैरखण्डैकरसस्यैव वस्तुनो लक्ष्यत्वात् नित्यत्वादिभिरुत्पाद्यत्वादिकं निराक्रियते। यतो नित्यः अतो घटवदनुत्पाद्यः। यतः सर्वगतः अतो ग्रामवदप्राप्यः। यतः स्थाणुः पूर्वरूपापरित्यागेन स्थिरस्वभावः अतः क्षीरादिवदविकार्यः। अचलः यथा दर्पणः स्वतः स्वाच्छयादप्रच्युतोऽपि मलरूपेणावरणेन स्वाच्छयात्प्रच्याव्यते, एवं स्वयं स्थाणुरपि अन्यसंयोगाचाञ्चल्यमश्नुवीत। स च दोषापकर्षणलक्षणं संस्कारमपेक्षते। अयं तु अचलत्वान्न तथा, एवंच उत्पत्त्याप्तिविकृतिसंस्कृतिरूपं चतुर्विधं क्रियाफलमात्मनि न संभवतीत्युक्तम्। तत्र हेतुः—**सनातन इति**। सना इत्यव्ययं नैरन्तर्ये। तच्च

४ मधुसूदनीव्याख्या ।

च्छिन्दन्ति शस्त्राणि, अदाह्योऽयं यतोऽतो नैनं दहति पावकः, यतोऽक्लेद्योऽयमतो नैनं क्लेदयन्त्यापः, यतोऽशोष्योऽयमतो नैनं शोषयति मारुत इति क्रमेण योजनीयम्। एवकारः प्रत्येकं संबध्यमानोऽच्छेद्यत्वाद्यवधारणार्थः। चः समुच्चये हेतौ वा। छेदाद्यनर्हत्वे हेतुमाहोत्तरार्धेन। नित्योऽयं पूर्वापरकोटिरहितोऽतोऽनुत्पाद्यः। असर्वगतत्वे ह्यनित्यत्वं स्यात् 'यावद्विकारं तु विभागः' इति न्यायात्पराभ्युपगतपरमाण्वादीनामनभ्युपगमात्। अयं तु सर्वगतो विभुरतो नित्य एव। एतेन प्राप्यत्वं पराकृतम्। यदि चायं विकारी स्यात्तदा सर्वगतो न स्यात्, अयं तु स्थाणुरविकारी अतः सर्वगत एव। एतेन विकार्यत्वमपाकृतम्। यदि वायं चलः क्रियावान्स्यात्तदा विकारी स्याद्घटादिवत्, अयं त्वचलोऽतो न विकारी। एतेन संस्कार्यत्वं निराकृतम्। पूर्वावस्थापरित्यागेनावस्थान्तरापत्तिर्विक्रिया। अवस्थैक्येऽपि चलनमात्रं क्रियेति विशेषः। यस्मादेवं तस्मात् सनातनोऽयं सर्वदैकरूपः। न कस्या अपि क्रियायाः कर्मेत्यर्थः। उत्पत्त्याप्तिविकृतिसंस्कृत्यन्यतरक्रिया-

५ भाष्योत्कर्षदीपिका ।

नोत्सहन्ते तस्मान्नित्यः परमाणुनित्यत्वे प्रमाणाभावान्न तत्रातिप्रसङ्गः। अतएव सर्वगतः तत एव सर्वगताकाशवत्स्थाणुरिव स्थिर इत्यर्थः। तत एवाचलः अतएवायमात्मा सनातनश्चिरंतनः न कुतश्चित्कारणान्निष्पन्न इतीदं भाष्यमुपलक्षणं यथेष्टहेतुहेतुमद्भावस्यापि। तथाचोत्पाद्याप्यविकार्यसंस्कार्यरूपाणां क्रियाफलानां क्रमेण नित्य इत्यादिविशेषणचतुष्टयेन निराकरणं हेतुहेतुमद्भावविपर्ययश्च न कुतश्चित्कारणान्निष्पन्न इति भाष्यात् तस्योपलक्षणार्थत्वाच्च सिध्यत इति न कोऽपि विरोधः। यत्तु तथाच श्रुतयः 'आकाशवत्सर्वगतश्च नित्यः', 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः', 'निष्कलं निष्क्रियं शान्तम्' इत्याद्याः। 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो योऽप्सु तिष्ठन्नद्भ्योन्तरो यस्तेजसि तिष्ठंस्तेजसोन्तरो यो वायौ तिष्ठन्वायोरन्तरः' इत्याद्याश्च श्रुतयः सर्वगतस्य सर्वान्तर्यामितया तदविषयत्वं दर्शयन्ति। यो हि शस्त्रादौ न तिष्ठति तं शस्त्रादयश्छिन्दन्ति अयं तु शस्त्रादीनां सत्तास्फूर्तिप्रदत्वेन तत्प्रेरकस्तदन्तर्यामी,

६ श्रीधरीव्याख्या ।

अमूर्तत्वात् अदाह्यो द्रवत्वाभावादशोष्य इति भावः। अतश्च छेदादियोग्यो न भवति। यतो नित्यः, अविनाशी सर्वत्रगतः, स्थाणुः

७ अभिनवगुप्ताचार्यव्याख्या ।

कारणं शस्त्रादि किंचित्करम्। चिदेकस्वभावस्यानाश्रितस्य निरपेक्षस्य स्वतन्त्रस्य स्वभावान्तरापत्त्याऽऽश्रयविनाशावयवविभागविरोधिप्रादुर्भावादिप्रक्रमेण नाशयितुमशक्यत्वात्। नच देहान्तरगमनस्यापूर्वदेहान्नित्योऽपि सततं देहान्तरं गच्छति तेन संबध्यत इत्यर्थः। देहस्य

१ श्रीमच्छांकरभाष्यम् ।

**च्छब्दतः पुनरुक्तं किंचिदर्थत इति । दुर्बोधत्वादात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान्वासुदेवः, कथं नु नाम संसारिणामव्यक्तं तत्त्वं बुद्धिगोचरतामापन्नं**

२ आनन्दगिरिव्याख्या ।

मृश्यते, श्लोकशब्देन न जायते म्रियते वेत्यादिरुच्यते । नन्विह श्लोके जन्ममरणाद्यभावोऽभिलक्ष्यते, वेदेत्यादौ पुनरपक्षयाद्यभावो विवक्ष्यते, तत्र कथमर्थातिरेकाभावमादाय पौनरुक्त्यं चोद्यते तत्राह—किंचिदिति । कथं तर्हि पौनरुक्त्यं न चोदनीयमिति मन्यसे तत्राह—दुर्बोधत्वादिति । पुनःपुनर्विधानभेदेन वस्तु निरूपयतो भगवतोऽभिप्राय-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

देशतः कालतो वस्तुतश्च परिच्छेदराहित्यम् । परमते परमाणूनां कालतः परिच्छेदाभावेऽपि देशतः परिच्छेदोऽस्ति । आकाशस्य तदुभयाभावेऽपि वस्तुतः परिच्छेदोऽस्ति । सोऽपि त्रिविधः सजातीयविजातीयस्वगतभेदरूपः । यथा 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः । वृक्षान्तरात्सजातीयो विजातीयः शिलादितः ॥' ततश्च सना नैरन्तर्येण त्रिविधपरिच्छेदराहित्येन भवति अस्तीति सनातनोऽखण्डैकरसो यस्मात्तस्मात् नोत्पत्त्याद्याश्रय इत्यर्थः ॥ २४ ॥

४ मधुसूदनीव्याख्या ।

फलयोगे हि कर्मत्वं स्यात् । अयं तु नित्यत्वान्नोत्पाद्यः, अनित्यस्यैव घटादेरुत्पाद्यत्वात् । सर्वगतत्वान्न प्राप्यः, परिच्छिन्नस्यैव घटादेः प्राप्यत्वात् । स्थाणुत्वादविकार्यः, विक्रियावतो घृतादेरेव विकार्यत्वात् । अचलत्वादसंस्कार्यः, सक्रियस्यैव दर्पणादेः संस्कार्यत्वात् । तथाच श्रुतयः 'आकाशवत्सर्वगतश्च नित्यः', 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः', 'निष्कलं निष्क्रियं शान्तम्' इत्यादयः । 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यस्तेजसि तिष्ठंस्तेजसोऽन्तरो यो वायौ तिष्ठन्वायोरन्तरः' इत्याद्या च श्रुतिः सर्वगतस्य सर्वान्तर्यामितया तदविषयत्वं दर्शयति । यो हि शस्त्रादौ न तिष्ठति तं शस्त्रादयश्छिन्दन्ति, अयंतु शस्त्रादीनां सत्तास्फूर्तिप्रदत्वेन तत्प्रेरकस्तदन्तर्यामी । अतः कथमेनं शस्त्रादीनि स्वव्यापारविषयीकुर्युरित्यभिप्रायः । अत्र 'येन सूर्यस्तदपि तेजसेद्धः' इत्यादिश्रुतयोऽनुसन्धेयाः । सप्तमाध्याये च प्रकटीकरिष्यति

५ भाष्योत्कर्षदीपिका ।

अतः कथमेनं शस्त्रादीनि स्वव्यापारविषयीकुर्युरित्यभिप्राय इति केचिद्वर्णयन्ति । तत्रेदं वक्तव्यम्—त्वंपदशोधनप्रकरणे तत्पदवाच्यान्तर्यामिप्रतिपादकश्रुत्युदाहरणमयुक्तम् । 'गतासूनगतासून्' इत्युपक्रमः, 'देहिनोऽस्मिन्-अन्तवन्त इमे देहा-वासांसि जीर्णानि' इत्यादिर्मध्यनिर्देशः, 'देही नित्यम्' इत्युपसंहारः, इत्येवंरूपतात्पर्यलिङ्गैस्त्वंपदनिरूपणप्रतीतेः स्पष्टत्वात् । आद्यषट्कं त्वंपदशोधनपरमिति सर्वैः स्वेन च तथैव स्थापितत्वाच्च । अभेदस्तु नियम्यनियामकभावाभावविनिर्मुक्तयोः शुद्धचैतन्ययोर्वास्तवः । औपाधिकस्तु भेद एव । तथाच भाष्यं 'अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः' इति । एवंच येन शुद्धेन शुद्धस्यास्याभेदः तस्य नियामकत्वाभावात् नान्तर्यामिश्रुत्युदाहरणं प्रकृत उपयुक्तम् । तथाचौपाधिकभेदप्रतिपादकानि भगवतो बादरायणस्य सूत्राणि 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्', 'नच स्मार्तमतद्धर्माभिलापात्', 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति, 'य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति' इत्युपक्रम्य श्रूयते 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' इत्यादि । अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति श्रूयते सोऽधिदैवाद्यभिमानी कश्चिद्देवतात्मा स्यात्, प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी वा स्यात्, अर्थान्तरं किंचिद्वा स्यादितिप्राप्ते राद्धान्तः । योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्यः । कुतः । तद्धर्मव्यपदेशात्तस्य परमात्मनो धर्माणामस्यां श्रुतौ व्यपदेशात् । नच स्मार्तं प्रधानमन्तर्यामिशब्दप्रतिपाद्यं भवितुमर्हति । कस्मात्, अतद्धर्माभिलापाद्द्रष्टृत्वादीनामप्रधानधर्माणां कथनात् । ननु शारीरोऽस्त्वित्यत आह—शारीर इति । पूर्वसूत्रान्नेत्यनुवर्तते । शारीरश्च नान्तर्यामी स्यात् । हि यस्मादुभयेऽपि काण्वा माध्यन्दिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते, यो विज्ञाने तिष्ठन्निति काण्वाः, आत्मनि तिष्ठन्निति माध्यन्दिनाः, तस्माच्छारीरादन्य आत्मान्तर्यामीति सिद्धम् । यत्तु 'यो हि शस्त्रादौ तिष्ठति न तं शस्त्रादयश्छिन्दन्ति' इति तदपि न, शस्त्रादौ स्थितस्यापि लोहादेस्तैश्छेदस्योपलब्धेः । तस्मात्सर्वज्ञैर्भाष्यकारैरुक्तो निरवयवत्वहेतुरेव समीचीन इति दिक् । न जायत इति श्लोकेनोक्तस्याप्यात्मज्ञानस्य दृष्टफलस्य व्रीह्यवहननस्यावृत्तिवद्दृष्टफलत्वाद्दुर्बोधत्वाच्च पुनःपुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूप्यते भगवता करुणानिधिना श्रीकृष्णेन कथंचिदपि संसारनिमग्नानां मुमुक्षूणां बुद्धिगोचरतामापन्नं स्पष्टतत्त्वं सत् संसारनिवृत्तये स्यादित्यभिप्रायवता इति न पौनरुक्त्यम् । तथाच भगवतो व्यासस्य सूत्रं 'आवृत्तिरसकृदुपदेशात्' इति । अस्यार्थः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः', 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्यादि श्रूयते, तत्र संशयः किं सकृत्प्रत्ययः कर्तव्य

१ मधुसूदनः. २ मधुसूदनः.

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सत्संसारनिवृत्तये स्यादिति ॥ २४ ॥ किंच अव्यक्तोऽयमिति । अव्यक्तः सर्वकरणाविषयत्वान्न व्यज्यते इत्यव्यक्तोऽयमात्मा । अतएवाचिन्त्योऽयं, यद्धीन्द्रियगोचरं वस्तु तच्चिन्ताविषयत्वमापद्यतेऽयं त्वात्मानिन्द्रियगोचरत्वादचिन्त्योऽतएवाविकार्यः । यथा क्षीरं दध्यातञ्चनादिना विकारि न तथायमात्मा । निरवयवत्वाच्चाविक्रियः, नहि निरवयवं किंचिद्विक्रियात्मकं दृष्टम् । अविक्रियत्वादविकार्योऽयमात्मोच्यते । तस्मादेवं यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि हन्ताह-

२ आनन्दगिरिव्याख्या ।

माह—कथं न्विति ॥२४॥ त्वंपदार्थपरिशोधनस्य प्रकृतत्वात्तत्रैव हेत्वन्तरमाह—किंचेति । आत्मनो नित्यत्वादिलक्षणस्य तथैवं प्रथा किमिति न भवति तत्राह—अव्यक्त इति । मा तर्हि प्रत्यक्षत्वं भूदनुमेयत्वं तु तस्य किं न स्यादित्याशङ्क्याह—अतएवेति । तदेव प्रपञ्चयति—यद्धीति । अतीन्द्रियत्वेऽपि सामान्यतो दृष्टविषयत्वं भविष्यतीत्याशङ्क्य कूटस्थेनात्मना व्याप्तिलिङ्गाभावान्मैवमित्याह—अविकार्य इति । अविकार्यत्वे व्यतिरेकदृष्टान्तमाह—यथेति । किंचात्मा न विक्रियते निरवयवद्रव्यत्वाद्घटादिवदिति व्यतिरेक्यनुमानमाह—निरवयवत्वाच्चेति । निरवयवत्वेऽपि विक्रियावत्त्वे का क्षतिरित्याशङ्क्याह—नहीति । सावयवस्यैव विक्रियावत्त्वदर्शनाद् विक्रियावत्त्वे निरवयवत्वानुपपत्तिरित्यर्थः । यद्धि सावयवं सक्रियं क्षीरादि तद्दध्यादिना विकारमापद्यते, नचात्मनः श्रुतिप्रमितनिरवयवत्वस्य सावयवत्वमतोऽविक्रियत्वान्नायं विकार्यो भवितुमलमिति फलितमाह—अविक्रियत्वादिति । आत्मयाथात्म्योपदेशमशोच्यानन्वशोचस्त्वमित्युपक्रम्य व्याख्यातमुपसंहरति—तस्मादिति । अव्यक्तत्वाचिन्त्यत्वाविकार्यत्वनित्यत्वसर्वगतत्वादिरूपो यस्मादात्मा निर्धारितस्तस्मात्तथैव ज्ञातुमुचितस्तज्ज्ञानस्य फलवत्त्वादित्यर्थः । प्रतिषेध्यमनुशोकमेवाभि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एवं ज्ञेयं वस्तूक्तं तच्च तत्राध्यस्तदेहत्रयनिरासेनापरोक्षीकर्तव्यमित्याह—अव्यक्तोऽयमिति । व्यक्तं स्थूलशरीरं प्रत्यक्षगम्यं तदन्योऽयं प्रत्यगात्मा । तथा अचिन्त्योऽयं चिन्त्यं चिन्तायोग्यं रूपादि प्रकाशकार्येणानुमेयं चक्षुरादिसमुदायात्मकं लिङ्गशरीरं अप्रत्यक्षं ततोऽप्यन्योऽयम् । तथा अविकार्योऽयं विकारं स्थूलसूक्ष्मकार्यभावेनावस्थानमर्हतीति विकार्यं त्रिगुणात्मकं मूलाज्ञानं कारणशरीरं सुप्तोत्थितस्य न किंचिदवेदिषमिति परामर्शदर्शनादहं न जानामीत्यनुभवाच्च साक्ष्येकगम्यं ततोऽप्यन्योऽयम् । उच्यते व्यक्तादिनिषेधमुखेन नतु शृङ्गग्राहिकयाऽयमेवंविध

४ मधुसूदनीव्याख्या ।

श्रीभगवानिति दिक् ॥ २४ ॥ छेद्यत्वादिग्राहकप्रमाणाभावादपि तदभाव इत्याह—अव्यक्तोऽयमित्यार्धेन । यो हीन्द्रियगोचरो भवति स प्रत्यक्षत्वाद्व्यक्त इत्युच्यते । अयं तु रूपादिहीनत्वान्न तथा । अतो न प्रत्यक्षं तत्र छेद्यत्वादिग्राहकमित्यर्थः । प्रत्यक्षाभावेऽप्यनुमानं स्यादित्यत आह—अचिन्त्योऽयं चिन्त्योऽनुमेयस्तद्विलक्षणोऽयम्, क्वचित्प्रत्यक्षो हि वह्न्यादिर्गृहीतव्याप्तिकस्य धूमादेर्दर्शनात्क्वचिदनुमेयो भवति, अप्रत्यक्षे तु व्याप्तिग्रहणासंभवान्नानुमेयत्वमिति भावः । अप्रत्यक्षस्या-

५ भाष्योत्कर्षदीपिका ।

आहोस्विदावृत्त्येति । किं तावत्प्राप्तं सकृत्प्रत्ययः स्यात्प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात्, अश्रूयमाणायामप्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत् । नन्वसकृदुपदेशा उदाहृताः श्रोतव्य इत्यादयः । एवमपि यावच्छब्दमावर्तयेत् सकृच्छ्रवणमित्यादिनातिरिक्तमित्येवं प्राप्ते ब्रूमः । प्रत्ययावृत्तिः कर्तव्या । कुतः, असकृदुपदेशात् । श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति । ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति, न । दर्शनपर्यवसानत्वादेतेषाम् । दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति, यथावघातादीनि तन्दुलनिष्पत्तिपर्यवसानानि तद्वदिति ॥ २४ ॥ किंच सर्वकरणागोचरत्वान्न व्यज्यत इत्यव्यक्तः । अयं प्रत्यक्षातीतः प्रत्यक्षागोचरत्वात् अचिन्त्योऽनुमानागम्यः कार्यलिङ्गकानुमानगम्योऽपि न भवतीत्याह । अविकार्यः विकारं न प्राप्नोतीत्यर्थः । एतेन देहत्रयातिरिक्तोऽप्यर्थाद्बोधित इति ज्ञेयम् । यत्त्वविकार्यः

६ श्रीधरीव्याख्या ।

स्थिरस्वभावः रूपान्तरापत्तिशून्यः, अचलः पूर्वरूपापरित्यागी, सनातनोऽनादिः ॥ २४ ॥ किंच अव्यक्तश्चक्षुराद्यविषयः, अचिन्त्यो मनसोऽप्यविषयः, अविकार्यः कर्मेन्द्रियाणामप्यगोचर इत्यर्थः । उच्यत इति नित्यत्वादावभियुक्तोक्तिं प्रमाणयति । उप-

७ अभिनवगुप्ताचार्यव्याख्या ।

क्षणमात्रमप्यनवस्थायित्वात् । एवंभूतं विदित्वैनमात्मानं शोचितुं नार्हसि ॥२५॥ अथवैनमिति । अथाप्येनं देहं मन्यसे नित्यजातं प्रवाहस्या-

१ श्रीधरी.

**अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।**
**तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**मेषां मयैते हन्यन्ते इति ॥ २५ ॥ आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते—अथ चैनमिति । अथ चेत्य-**

२ आनन्दगिरिव्याख्या ।

नयति—**हन्ताहमिति** ॥ २५ ॥ आत्मनो नित्यत्वस्य प्रागेव सिद्धत्वादुत्तरश्लोकानुपपत्तिरित्याशङ्क्याह—**आत्मन इति** । अनित्यत्वमिति च्छेदः, शाक्यानां लोकायतानां वा मतमिदमा परामृश्यते । श्रोतुरर्जुनस्य पूर्वोक्तमात्मयाथात्म्यं श्रुत्वापि तस्मिन्निर्धारणासिद्धेर्द्वयोर्मतयोरन्यतरमताभ्युपगमः शङ्कितस्तदर्थौ निपातद्वयप्रयोग इत्याह—**अथ**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इति विधिमुखेनोच्यते । यस्मादेवमयमुच्यते तस्मादेनं विदित्वा नानुशोचितुमर्हसि । 'तरति शोकमात्मवित्' इति श्रुतेरात्मविद्भूत्वा बन्धुवियोगजं शोकं मा कार्षीरित्यर्थः । उक्तं चात्मनोऽवस्थात्रयातीतत्वम् 'स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया । न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥' इति ॥ २५ ॥ एवं तत्त्वदृष्ट्या शोको नोचित इत्युक्तं, इदानीं प्राकृतजनदृष्ट्यापि शोको नोचित इत्याह—**अथचेति** । नित्यं नियमेन जातं नित्यजातमिति

४ मधुसूदनीव्याख्या ।

पीन्द्रियादेः सामान्यतो दृष्टानुमानविषयत्वं दृष्टमत आह—अविकार्योऽयं यद्विक्रियावच्चक्षुरादिकं तत्स्वकार्यान्यथानुपपत्त्या कल्प्यमानमर्थापत्तेः सामान्यतो दृष्टानुमानस्य च विषयो भवति । अयं तु न विकार्यो न विक्रियावानतो नार्थापत्तेः सामान्यतो दृष्टस्य वा विषय इत्यर्थः । लौकिकशब्दस्यापि प्रत्यक्षादिपूर्वकत्वात्तन्निषेधेनैव निषेधः । ननु वेदेनैव तत्र छेद्यत्वादि ग्रहीष्यत इत्यत आह–उच्यते वेदेन सोपकरणेनाच्छेद्याव्यक्तादिरूप एवायमुच्यते तात्पर्येण प्रतिपाद्यते, अतो न वेदस्य तत्प्रतिपादकस्यापि छेद्यत्वादिप्रतिपादकत्वमित्यर्थः । अत्र 'नैनं छिन्दन्ति' इत्यत्र शस्त्रादीनां तन्नाशकसामर्थ्याभाव उक्तः । 'अच्छेद्योऽयम्' इत्यादौ तस्य छेदादिकर्मत्वायोग्यत्वमुक्तम् । 'अव्यक्तोऽयम्' इत्यत्र तच्छेदादिग्राहकमानाभाव उक्त इत्यपौनरुक्त्यं द्रष्टव्यम् । 'वेदाविनाशिनम्' इत्यादीनां तु श्लोकानामर्थतः शब्दतश्च पौनरुक्त्यं भाष्यकृद्भिः परिहृतम् । दुर्बोधत्वादात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान्वासुदेवः । कथं नु नाम संसारिणां बुद्धिगोचरमापन्नं तत्त्वं संसारनिवृत्तये स्यादिति वदद्भिः । एवं पूर्वोक्तयुक्तिभिरात्मनो नित्यत्वे निर्विकारत्वे च सिद्धे तव शोको नोपपन्न इत्युपसंहरति—**तस्मादित्यर्धेन** । एतादृशात्मस्वरूपवेदनस्य शोककारणनिवर्तकत्वात्तस्मिन्सति शोको नोचितः । कारणाभावे कार्याभावस्यावश्यकत्वात् । तेनात्मानमविदित्वा यदन्वशोचस्तद्युक्तमेव । आत्मानं विदित्वा तु नानुशोचितुमर्हसीत्यभिप्रायः ॥ २५ ॥ एवमात्मनो निर्विकारत्वेनाशोच्यत्वमुक्तम् । इदानीं विकारवत्त्वमभ्युपेत्यापि श्लोकद्वयेनाशोच्यत्वं प्रतिपादयति भगवान्—तत्र आत्मा ज्ञानस्वरूपः प्रतिक्षणविनाशीति सौगताः, देह एवात्मा स च स्थिरोऽप्यनुक्षणपरिणामी जायते नश्यति चेति प्रत्यक्षसिद्धमेवैतदिति लोकायतिकाः । देहातिरिक्तोऽपि देहेन सहैव जायते नश्यति चेत्यन्ये । सर्गाद्यकाल एवाकाशवज्जायते देहभेदेऽप्यनुवर्तमान एवाकल्पस्थायी नश्यति प्रलय इत्यपरे । नित्यएवात्मा जायते म्रियते चेति तार्किकाः। तथाहि प्रेत्यभावो जन्म सचापूर्वदेहेन्द्रियादिसंबन्धः । एवं मरणमपि पूर्वदेहेन्द्रियादिविच्छेदः । इदं चोभयं धर्माधर्मनिमित्तत्वात्तदाधारस्य नित्यस्यैव मुख्यम् । अनित्यस्य तु कृतहान्यकृताभ्यागमप्रसङ्गेन धर्माधर्माधारत्वानुपपत्तेर्न जन्ममरणे मुख्ये इति वदन्ति । नित्यस्याप्यात्मनः कर्णशष्कुलीजन्मनाप्याकाशस्येव देहजन्मना जन्म तन्नाशाच्च मरणं तदुभयमौपाधिकममुख्यमेवेत्यन्ये । तत्रानित्यत्वपक्षेऽपि शोच्यत्वमात्मनो निषेधति—अथेति पक्षान्तरे । चोप्यर्थे । यदि दुर्बोधत्वादात्मवस्तुनोऽ-

५ भाष्योत्कर्षदीपिका ।

कर्मेन्द्रियाणामप्यगोचर इति तच्चिन्त्यम् । अव्यक्त इत्यनेनैव तस्य संग्रहात् । अन्यथा सामान्यतो दृष्टानुमानागोचरत्वालाभापत्तेश्च । उच्यते 'नावेदविन्मनुते तं बृहन्तम्', 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतिभिः । तस्मादेवं यथोक्तप्रकारेण एनमात्मानं ज्ञात्वाऽहं हन्ता मयैवैते हन्यन्त इति शोचितुं नार्हसि ॥ २५ ॥ प्रौढ्या आत्मनो नित्यत्वं वेदबाह्यवादिसिद्धान्तमभ्युपेत्यापि शोकमपाकरोति—**अथेति** । अथशब्दः पक्षान्तराभ्युपगमार्थः । एनं लोकदृष्ट्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति मन्यसे, तथा

६ श्रीधरीव्याख्या ।

संहरति—**तस्मादिति** ॥ २५ ॥ तदेवमात्मनो जन्मविनाशाभावान्न शोकः कार्य इत्युक्तम् । इदानीं देहेन सहात्मनो जन्म, तद्विनाशेन च विनाशमङ्गीकृत्यापि शोको न कार्य इत्याह—**अथ चेति** । अथ च यद्यप्येनमात्मानं नित्यं सर्वदा तत्तद्देहे जाते जातं मन्यसे,

७ अभिनवगुप्ताचार्यव्याख्या ।

विनाशात् । तथापि न शोच्यता । क्षणिकप्रक्रियया वा नित्यविनाशिनं तथापि का शोच्यता एवं यद्यात्मनस्तद्देहयोगवियोगाभ्यां नित्यजातत्वं नित्यमृतत्वं वा मन्यसे तथापि सर्वथा शोचनं प्राकरणिकानामयुक्तम् ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ नचैतदन्यथा नित्यत्वानित्यत्वमुप-

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**भ्युपगमार्थः । एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्ति जातो जात इति वा मन्यसे, तथा प्रतितद्विनाशं नित्यं वा मन्यसे मृतं मृतो मृत इति । तथापि तथाभाविन्यप्यात्मनि त्वं महाबाहो, नैवं शोचितुमर्हसि जन्मवतो जन्म नाशवतो नाशश्चेत्येताववश्यंभाविनाविति ॥ २६ ॥ तथाच सति—जातस्येति । जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं, ध्रुवं जन्म मृतस्य च तस्मादपरिहार्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

२ आनन्दगिरिव्याख्या ।

**चेति ।** प्रकृतस्यात्मनो नित्यत्वादिलक्षणस्य पुनःपुनर्जातत्वाभिमानो मानाभावादसंभवीत्याह—**लोकेति** । नित्यजातत्वाभिनिवेशे पौनःपुन्येन मृतत्वाभिनिवेशो व्याहतः स्यादित्याशङ्क्याह—**तथेति** । परकीयमतमनुभाषितमभ्युपेत्य 'अहो बत महत्पापं कर्तुं व्यवसिता वयम्' इत्यादेस्तदीयशोकस्य निरवकाशत्वमित्याह—**तथापीति** । एवमर्जुनस्य दृश्यमानमनुशोकप्रकारं दर्शयित्वा तस्य कर्तुमयोग्यत्वे हेतुमाह—**जन्मवत इति** । जन्मवतो नाशो नाशवतश्च जन्मेत्येताववश्यंभाविनौ मिथो व्याप्ताविति योजना ॥ २६ ॥ तयोरवश्यंभावित्वे सत्यनु शोकस्याकर्तव्यत्वे हेत्वन्तरमाह—**तथाचेति** ॥ २७ ॥ आत्मानमुद्दिश्यानुशोकस्य कर्तुमयोग्यत्वेऽपि भूतसंघातात्मकानि भूतान्युद्दिश्य तस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी )

चार्वाकपक्षः । नित्यं सर्वदा जातमिति क्षणिकविज्ञानवादिपक्षः । नित्यश्चासौ अपूर्वदेहेन्द्रियसंबन्धाज्जातश्चेति तार्किकादिपक्षः । एवं नित्यं वा मन्यसे मृतमित्यपि योज्यम् । पक्षत्रयेऽपि शोको न युक्तः । महाबाहो इति युद्धार्थमुत्साहयति ॥ २६ ॥ शोचितुं नार्हसीत्युक्तं तत्र हेतुमाह—**जातस्येति** । ध्रुवोऽपरिहार्यः मृत्युर्मरणम् । अपरि-

४ मधुसूदनीव्याख्या ।

सकृच्छ्रवणेऽप्यवधारणासामर्थ्यान्मदुक्तपक्षानङ्गीकारेण पक्षान्तरमभ्युपैषि, तत्राप्यनित्यत्वपक्षमेवाश्रित्य यद्येनमात्मानं नित्यजातं नित्यमृतं वा मन्यसे । वाशब्दश्चार्थे । क्षणिकत्वपक्षे नित्यं प्रतिक्षणं, पक्षान्तरे आवश्यकत्वान्नित्यं नियतं जातोऽयं मृतोऽयमिति लौकिकप्रत्ययवशेन यदि कल्पयसि, तथापि हे महाबाहो पुरुषधौरेयेति सोपहासम् । कुमताभ्युपगमात्त्वय्येतादृशी कुदृष्टिर्न संभवतीति सानुकम्पं वा । एवं 'अहो बत महत्पापं कर्तुं व्यवसिता वयम्' इत्यादि यथा शोचसि एवंप्रकारमनुशोकं कर्तुं स्वयमपि त्वं तादृश एव सन्नार्हसि योग्यो न भवसि क्षणिकत्वपक्षे, देहात्मवादपक्षे देहेन सह जन्मविनाशपक्षे च जन्मान्तराभावेन पापभयासंभवात्, पापभयेनैव खलु त्वमनुशोचसि तच्चैतादृशे दर्शने न संभवतीत्यर्थः । क्षणिकत्वपक्षे च दृष्टमपि दुःखं न संभवति बन्धुविनाशदर्शित्वाभावादित्यधिकम् । पक्षान्तरे दृष्टदुःखनिमित्तं शोकमभ्यनुज्ञातुमेवकारः । दृष्टदुःखनिमित्तशोकसंभवेऽप्यदृष्टदुःखनिमित्तः शोकः सर्वथा नोचित इत्यर्थः प्रथमश्लोकस्य ॥ २६ ॥ नन्वात्मन आभूतसंप्लवस्थायित्वपक्षे नित्यत्वपक्षे दृष्टादृष्टदुःखसंभवात्तद्भयेन शोचामीत्यत आह द्वितीयश्लोकेन—हि यस्मात् जातस्य स्वकृतधर्माधर्मादिवशाल्लब्धशरीरेन्द्रियसंबन्धस्य स्थिरस्यात्मनो ध्रुव आवश्यको मृत्युस्तच्छरीरादिविच्छेदस्तदारम्भककर्मक्षयनिमित्तः । संयोगस्य वियोगावसानत्वात् । तथा ध्रुवं जन्म मृतस्य च प्राग्देहकृतकर्मफलोपभोगार्थं सानुशयस्यैव प्रसुतत्वान्न जीवन्मुक्तैर्व्यभिचारः । तस्मादेवमपरिहार्ये परिहर्तुमशक्येऽस्मिञ्जन्ममरणलक्षणेऽर्थे विषये त्वमेवं विद्वान्न शोचितुमर्हसि । तथाच वक्ष्यति 'ऋतेऽपि त्वां नभविष्यन्ति सर्वे' इति । यदि हि त्वया युद्धेनाहन्यमाना एते जीवेयुरेव तदा युद्धाय शोकस्तवोचितः स्यात्, एते तु कर्मक्षयात्स्वयमेव म्रियन्त इति तत्परिहारासमर्थस्य तव दृष्टदुःखनिमित्तः

५ भाष्योत्कर्षदीपिका ।

तद्विनाशं नित्यं वा मन्यसे । उपलक्षणमेतद्भाष्यं नास्तिकोक्तपक्षान्तराणामपि । यद्वा इतरेषां मतानामत्रोपपादनमविवक्षितं प्रयोजनाभावात्, अतिस्थूलमताभ्युपगमेऽपि शोको न कार्यः किमुत वैदिकमताङ्गीकार इति फलितार्थस्य विवक्षितत्वात् । महाबाहो इति संबोधयन् शोकमकृत्वा बाह्वोर्महत्त्वं सार्थकं कुर्विति सूचयति ॥ २६ ॥ अस्मिन्पक्षे शोकाभावं स्फुटयति—**जातस्येति** । नन्वा-

६ श्रीधरीव्याख्या ।

तथा तद्देहे मृते मृतं मन्यसे पुण्यपापयोस्तत्फलभूतयोर्जन्ममरणयोरात्मगामित्वात्, तथापि त्वं शोचितुं नार्हसि ॥ २६ ॥ कुत इत्यत आह—**जातस्येति** । हि यस्माज्जातस्य स्वारम्भककर्मक्षये मृत्युर्ध्रुवो निश्चितः । मृतस्य तत्तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव । तत्त-

७ अभिनवगुप्ताचार्यव्याख्या ।

पत्तिमत् यतः जातस्य हि ध्रुवो मृत्युरिति । जन्मन एवानन्तरं नाशः नाशादनन्तरं जन्मेति चक्रवदयं जन्ममरणसंतान इति किंपरिमाणं

१ मधुसूदनः०

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

हार्ये अर्थे मरणाख्ये त्वदुद्योगं विनापि अवश्यंभाविनि विषये न त्वं शोचितुमर्हसि । वक्ष्यति च 'मयैवैते निहताः पूर्वमेव' इति ॥ २७ ॥ अस्त्वात्मनोऽशोच्यत्वं तथापि इष्टदेहविनाशजः शोको भवत्येवेत्याशङ्क्य सकारणस्य देहादे-

४ मधुसूदनीव्याख्या ।

शोको नोचित इति भावः । एवमदृष्टदुःखनिमित्तेऽपि शोके 'तस्मादपरिहार्येऽर्थे' इत्येवोत्तरम् । युद्धाख्यं हि कर्म क्षत्रियस्य नियतमग्निहोत्रादिवत् । तच्च 'युध संप्रहारे' इत्यस्माद्धातोर्निष्पन्नं शत्रुप्राणवियोगानुकूलशस्त्रप्रहाररूपं विहितत्वादग्नीषोमीयादिहिंसावन्न प्रत्यवायजनकम् । तथाच गौतमः स्मरति 'न दोषो हिंसायामाहवेऽन्यत्र व्यश्वासारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः' इति । ब्राह्मणग्रहणं चात्रायोद्धृब्राह्मणविषयम् । गवादिप्रायपाठादिति स्थितम् । एतच्च सर्वं 'स्वधर्ममपि चावेक्ष्य' इत्यत्र स्पष्टीकरिष्यते । तथाच युद्धलक्षणेऽर्थेऽग्निहोत्रादिवद्विहितत्वादपरिहार्ये परिहर्तुमशक्ये तदकरणे प्रत्यवायप्रसङ्गात् त्वमदृष्टदुःखभयेन शोचितुं नार्हसीति पूर्ववत् । यदि तु युद्धाख्यं कर्म काम्यमेव 'य आहवेषु युध्यन्ते भूम्यर्थमपराङ्मुखाः । अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥' इति याज्ञवल्क्यवचनात्, 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति भगवद्वचनाच्च, तदापि प्रारब्धस्य काम्यस्याप्यवश्यपरिसमापनीयत्वेन नित्यतुल्यत्वात्, त्वयाच युद्धस्य प्रारब्धत्वादपरिहार्यत्वं तुल्यमेव । अथवा आत्मनित्यत्वपक्ष एव श्लोकद्वयं अर्जुनस्य परमास्तिकस्य वेदबाह्यमताभ्युपगमासंभवात् । अक्षरयोजना तु नित्यश्चासौ देहेन्द्रियादिसंबन्धवशाज्जातश्चेति । नित्यजातस्तमेनमात्मानं नित्यमपि सन्तं जातं चेन्मन्यसे तथा नित्यमपि सन्तं मृतं चेन्मन्यसे तथापि त्वं नानुशोचितुमर्हसीति प्रतिज्ञाय हेतुमाह—**जातस्य हीत्यादिना** । नित्यस्य जातत्वं मृतत्वं च प्राग्व्याख्यातम् । स्पष्टमन्यम् । भाष्यमप्यस्मिन्पक्षे योजनीयम् ॥ २७ ॥ तदेवं सर्वप्रकारेणात्मनोऽशोच्यत्वमुपपादितम् । अथेदानीमात्मनोऽशोच्यत्वेऽपि

५ भाष्योत्कर्षदीपिका ।

त्मन आभूतसंप्लवस्थायित्वपक्षेऽनित्यत्वपक्षे च दृष्टादृष्टदुःखसंभवात्तद्भयेन शोचामीत्यत आहेति तु यथाश्रुतमूलाननुगुणत्वादाचार्यैर्नावतरितं, तस्मादपरिहार्येऽवश्यंभाविनि जन्ममरणलक्षणेऽर्थे, यत्त्वेवं अदृष्टनिमित्तेऽपि शोके तस्मादपरिहार्येऽर्थे इत्येवोत्तरम् । युद्धाख्यं हि कर्मक्षत्रियस्यापरिहार्यमित्यादि तदुपेक्ष्यम् प्रकरणविरोधात्, जन्ममरणलक्षणस्यार्थस्य ध्रुवताया एव पूर्वार्धे प्रस्तुतत्वात्। यत्तु अथवा आत्मनित्यत्वपक्ष एव श्लोकद्वयमर्जुनस्य परमास्तिकस्य वेदबाह्यमताभ्युपगमासंभवात् । अक्षरयोजना तु नित्यश्चासौ देहेन्द्रियसंबन्धवशाज्जातश्चेति नित्यजातस्तमेनमात्मानं नित्यमपि सन्तं जातं चेन्मन्यसे, तथा नित्यमपि सन्तं मृतं चेन्मन्यसे तथापि त्वं नानुशोचितुमर्हसि इति प्रतिज्ञाय हेतुमाह—जातस्य हीत्यादिना । मृत्युः शरीरादिविच्छेदः, तत्संयोगो जन्म । भाष्यमप्यस्मिन्पक्षे योजनीयमिति तद्विचार्यम् । समासैकदेशस्य क्रियायामन्वयायोगात्, प्रयोजनशून्यक्लिष्टकल्पनाया अन्याय्यत्वाच्च । ननूक्तमेवार्जुनस्य परमास्तिकस्य वेदबाह्यमताभ्युपगमासंभवरूपं प्रयोजनमितिचेन्न । भगवतैवाभ्युपगम्य कैमुत्यन्यायः प्रदर्शित इत्युक्तत्वात्। तथाच परमास्तिकं श्रीरामचन्द्रं प्रति भगवतो वसिष्ठस्य वचनं 'त्वं चेद्बभूविथ पुरा तथेदानीं भविष्यसि । अद्य चेह स्थितोऽसीति ज्ञातवानसि निश्चयम् १ तदानन्तरगानन्यान्प्राणादीन्निकटस्थितान् । बन्धूनतीतान्सुबहून्कस्मात्त्वं नानुशोचसि २ पूर्वमन्यस्तथेदानीं बभूविथ भविष्यसि । यदि राम तथापि त्वं सद्रूपः किं विमुह्यसि ३ पुरा भूत्वाथ भूत्वा च भूयश्चेन्न भविष्यसि । तथापि क्षीणसंसारः किमर्थमनुशोचसि ४ तस्मान्न दुःखिता युक्ता प्राकृते जागते भ्रमे । तथैव मुदिता युक्ता युक्तं कार्यानुवर्तनम् ५' इति । विवृतं चेदं टीकाकारैः । एवमात्मनोऽसङ्गत्वाद्द्वितीयत्वदर्शने शोकासंभव उक्तः । इदानीमस्त्वासङ्गी तथापि स किं नित्य उत क्षणिक उत प्रागभाववद्घटादिवद्वा कालान्तरेण नश्वरः । सर्वेष्वपि पक्षेषु बन्धुशोको न युक्त इति प्रौढ्या समाधित्सुराद्ये कल्पे तावदाह—त्वं चेदिति । इति यदि निश्चयं ज्ञातवानसि बन्धून्प्राणादीनित्यध्याहारः १ विनिगमनाविरहात्सर्वशोकाशक्तेः क्वापि शोको न युक्त इति भावः २ द्वितीयेऽप्याह—पूर्वमिति । इदानीमन्यः अग्रेऽप्यन्यः क्षणिकमात्मानं यदि जानासि, तथापि किं सद्रूपमालम्ब्य विमुह्यसि द्वितीयक्षणे शोच्यस्य शोचितुश्चासत्त्वेन शोकावसराभावादित्यर्थः ३ तृतीयेऽप्याह—पुरेति । तथाप्यात्मनाशादेव क्षीणसंसारः ४ यदात्मनो जन्मादिसङ्गित्वेन शोको न युक्तस्तदा किंवाच्यमसङ्गोदासीनकूटस्थस्वप्रकाशपूर्णानन्दैकरसत्वे स न युक्त इत्याशयेनोपसंहरति—तस्मादिति । मुदिता सहजसंतोषवृत्तिः ५' इति । यत्तु भाष्यमपीत्यादि तदपि न । आत्मनो नित्यत्वमभ्युपगम्येदमुच्यत इति भाष्यस्यास्मिन्पक्षे योजनाया अशक्यत्वात् नित्यत्वच्छेदेऽभ्युपगम्येति न संगच्छते नित्यत्वस्य स्वसिद्धान्तत्वात्। देहादिसंबन्धेनानित्यत्वमिति शेषपूरणे तु जातत्वादिकमभ्युपगम्येति वक्तव्यं स्यात् । अथचेत्यभ्युपगमार्थः । एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति वा मन्यसे तथा प्रतितद्विनाशं नित्यं वा मन्यसे मृतो मृत इति भाष्यस्य जातादौ नित्यशब्दान्वयप्रतिपादनपरस्योक्तपक्षे योजयितुमशक्यत्वाच्चेति दिक् ॥ २७ ॥ नन्वात्मनो नित्यत्वेऽपि कार्य-

६ श्रीधरीव्याख्या ।

त्सादेवमपरिहार्येऽर्थेऽवश्यंभाविनि जन्ममरणलक्षणेऽर्थे त्वं विद्वाञ्शोचितुं नार्हसि । योग्यो न भवसीत्यर्थः ॥ २७ ॥ किंच देहादीनां

१ मधुसूदनः. २ मधुसूदनः. ३ मधुसूदनः.

## अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
## अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

१ श्रीमच्छांकरभाष्यम् ।

**कार्यकारणसंघातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं, यतः—अव्यक्तादीनीति । अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिरादिर्येषां भूतानां पुत्रमित्रादिकार्यकारणसंघातात्मकानां तान्यव्यक्तादीनि भूतानि प्रागुत्पत्तेः उत्पन्नानि च प्राङ्मरणाद्व्यक्तमध्यान्यव्यक्तनिधनान्येव पुनरव्यक्तमदर्शनं**

२ आनन्दगिरिव्याख्या ।

कर्तव्यत्वमाशङ्क्याह—**कार्येति** । समनन्तरश्लोकस्तत्र हेतुरित्याह—**यत इति** । चाक्षुषदर्शनमात्रवृत्तिं व्यावर्तयति—**अनुपलब्धिरिति** । नहि यथोक्तसंघातरूपाणि भूतानि पूर्वमुत्पत्तेरुपलभ्यन्ते तेन तानि तथा व्यपदेशभाञ्जि भवन्तीत्यर्थः । किं तन्मध्यं यदेषां व्यक्तमिष्यते तदाह—**उत्पन्नानीति** । उत्पत्तेरूर्ध्वं मरणाच्च पूर्वं व्यावहारिकं सत्त्वं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मिथ्यात्वं साधयति—**अव्यक्तादीनीति** । भूतानि वियदादीनि तद्विकारभूतानि जरायुजादीनि च । न व्यक्तमव्यक्तमज्ञानं आदिर्येषां तथाविधानि । व्यक्तः स्पष्टः मध्यः उत्पत्तिमारभ्य मरणात्प्रागवस्था येषाम् । अव्यक्ते एव निधनं लयो येषामिति । अयमर्थः—रज्जूरगादिकारणमज्ञानं न रज्जुवत् उरगवद्वा व्यक्तमस्ति । परीक्ष्यमाणं च न दृष्टिपथमवतरति । अतस्तदव्यक्तम् । तत उत्पन्नः सर्पस्तत्रैव लीयते न रज्ज्वाम् । एवं आत्मनि कल्पितानां भूतानां आदिरन्तश्चाव्यक्तमेव । तेन 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायेन मध्ये भासमानान्यपि तानि रज्जूरगवत् असन्त्येव । एवंविधे तत्र तस्मिन्विषये का परिदेवना को वा विलापः । नहि मरुमरीचिकाह्रदो नष्ट इति कश्चित्तत्त्ववित् विलपति । अतएव भूतानां रज्जूरगादीनामिव प्रतीतिसमकालिकीं सृष्टिमभिप्रेत्य कौषीतकिब्राह्मणे स्वापप्रबोधयोर्जगल्लयोदयौ पठ्येते । 'स यदा स्वपिति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैं रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रबुध्यतेऽथैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति । प्राणाश्चक्षुरादीन्द्रियाणि । देवास्तदनुग्राहकाः

४ मधुसूदनीव्याख्या ।

भूतसङ्घातात्मकानि शरीराण्युद्दिश्य शोचामीत्यर्जुनाशङ्कामपनुदति भगवान्-आदौ जन्मनः प्राक् अव्यक्तान्यनुपलब्धानि पृथिव्यादिभूतमयानि शरीराणि मध्ये जन्मानन्तरं मरणात्प्राक् व्यक्तान्युपलब्धानि सन्ति, निधने पुनरव्यक्तान्येव भवन्ति, यथा स्वप्नेन्द्रजालादौ प्रतिभासमात्रजीवनानि शुक्तिरूप्यादिवत्तु ज्ञानात्प्रागूर्ध्वं वा स्थितानि दृष्टिसृष्ट्यभ्युपगमात् । तथाच 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायेन मध्येऽपि न सन्त्येवैतानि 'नासतो विद्यते भावः' इति प्रागुक्तेश्च । एवंसति तत्र तेषु मिथ्याभूतेष्वत्यन्ततुच्छेषु भूतेषु का परिदेवना को वा दुःखप्रलापः । न कोऽप्युचित इत्यर्थः । नहि स्वप्ने विविधान्बन्धूनुपलभ्य प्रतिबुद्धस्तद्विच्छेदेन शोचति पृथग्जनोऽपि । एतदेवोक्तं पुराणे 'अदर्शनादापतितः पुनश्चादर्शनं गतः' । भूतसङ्घ इति शेषः । तथाच शरीराण्युद्दिश्य शोको नोचित इति भावः । आकाशादिमहाभूताभिप्रायेण वा श्लोको योज्यः । अव्यक्तमव्याकृतमविद्योपहितचैतन्यमादिः प्रागवस्था येषां तानि, तथा व्यक्तं नामरूपाभ्यामेवाविद्याकाभ्यां प्रकटीभूतं नतु स्वेन परमार्थसदात्मना मध्यस्थित्यवस्था येषां तादृशानि भूतान्याकाशादीन्यव्यक्तनिधनान्येव अव्यक्ते स्वकारणे मृदीव घटादीनां निधनं प्रलयो येषां तेषु भूतेषु का परिदेवनेति पूर्ववत् । तथाच श्रुतिः 'तद्धेदं तर्ह्यव्याकृतमासी-

५ भाष्योत्कर्षदीपिका ।

करणसंघातात्मकानि भूतानि शोचामीति चेत्तत्राह—**अव्यक्तादीनीति** । प्रागुत्पत्तेरव्यक्तमदर्शनमादिर्येषां पुत्रमित्रादिकार्यकरणसंघातानां भूतानां तानि अव्यक्तं निधनं मरणं येषां तानि तत्र का परिदेवना कः शोकः । नहि शुक्तिरूप्यमुद्दिश्य कश्चिच्छोचतीति भावः । तथाचोक्तं 'अदर्शनादापतितः पुनश्चादर्शनं गतः । नासौ तव न तस्य त्वं वृथा का परिदेवना ॥' इति । ननु अव्यक्तमव्याकृतं भूतान्याकाशादीनि नामरूपाभ्यां व्यज्यत इति व्यक्तमित्याकाशादिमहाभूताभिप्रायेणायं श्लोक आचार्यैः कुतो न

६ श्रीधरीव्याख्या ।

च स्वभावं पर्यालोच्य तदुपाधिके आत्मनो जन्ममरणे च शोको न कार्य इत्याह—**अव्यक्तादीनीति** । अव्यक्तं प्रधानं तदेवादिः पूर्वरूपं येषां तान्यव्यक्तादीनि भूतानि शरीराणि कारणात्मनापि स्थितानामेवोत्पत्तेः । तथा व्यक्तमभिव्यक्तं मध्यं जन्ममरणान्तराल-

७ अभिनवगुप्ताचार्यव्याख्या ।

शोच्यतायामिति ॥ २७ ॥ अपिच अव्यक्तादीनीति । नित्याः सन्तु अनित्या वा, यस्तावदस्य शोचकस्तं प्रत्येष आदावव्यक्तः अन्ते चाव्यक्तः मध्ये

१ नीलकंठः.

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

निधनं मरणं येषां तान्यव्यक्तनिधनानि मरणादूर्ध्वमव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः । तथाचोक्तम्—'अदर्शनादापतितः पुनश्चादर्शनं गतः । नासौ तव न तस्य त्वं वृथा का परिदेवना ॥' इति । तत्र का परिदेवना को वा प्रलापोऽदृष्टदृष्टप्रनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थः ॥ २८ ॥ दुर्विज्ञेयोऽयं प्रकृत आत्मा

२ आनन्दगिरिव्याख्या ।

मध्यमेषां व्यक्तमिति तथोच्यते जन्मानुसारित्वं विलयस्य युक्तमिति मत्वा तात्पर्यार्थमाह—**मरणादिति** । उक्तेऽर्थे पौराणिकसंमतिमाह—**तथाचेति** । तत्रेत्यस्यार्थमाह—**अदृष्टेति** । पूर्वमदृष्टानि सन्ति पुनर्दृष्टानि तान्येव पुनर्नष्टानि तदेवं भ्रान्तिविषयतया घटिकायन्त्रवच्चक्रीभूतेषु शोकनिमित्तस्य प्रलापस्य नावकाशोऽस्तीत्यर्थः ॥ २८ ॥ अर्जुनं प्रत्युपालम्भं दर्शयित्वा प्रकृतस्यात्मनो दुर्विज्ञेयत्वात्तं प्रत्युपालम्भो न संभवतीति मन्वानः सन्नाह—**दुर्विज्ञेय इति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सूर्यादयः । लोकाः रूपादयः । नन्विहान्यत्र च आत्मैव सर्वभूतानां लयोदयस्थानमित्युच्यते नान्यत् । तत्कथमेषामव्यक्तं लयोदयस्थानमित्युच्यते । सत्यम् । अज्ञानाश्रयत्वाद्ब्रह्मणि तथात्वव्यपदेशो न वस्तुगत्या । नहि अपरिणामिनः कूटस्थस्य मृद्वत्कार्यप्रविलयोदयस्थानत्वं भवति । यथोक्तम् 'अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् । अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥' इति ॥२८॥ ननु वज्रपञ्जरतुल्यस्य सर्वप्रमाणसिद्धस्य वियदादिप्रपञ्चस्य कथं रज्जूरगादिवदज्ञानप्रभवत्वेनात्यन्ततुच्छत्वमुच्यते, कथं वा कर्मज्ञानकाण्डापेक्षितमात्मनो यज्ञादिकर्तृत्वं श्रवणादिकर्तृत्वं चाप-

४ मधुसूदनीव्याख्या ।

त्तन्नामरूपाभ्यामेव व्याक्रियत' इत्यादिरव्यक्तोपादानतां सर्वस्य प्रपञ्चस्य दर्शयति । लयस्थानत्वं तु तस्यार्थसिद्धम् । कारण एव कार्यलयस्य दर्शनाद्ग्रन्थान्तरे तु विस्तरः । तथा चाज्ञानकल्पितत्वेन तुच्छान्याकाशादिभूतान्यप्युद्दिश्य शोको नोचितश्चेत्तत्कार्याण्युद्दिश्य नोचित इति किमु वक्तव्यमिति भावः । अथवा सर्वदा तेषामव्यक्तरूपेण विद्यमानत्वाद्विच्छेदाभावेन तन्निमित्तः प्रलापो नोचित इत्यर्थः । भारतेत्यनेन संबोधयन् शुद्धवंशोद्भवत्वेन शास्त्रीयमर्थं प्रतिपत्तुमर्होऽसि किमिति न प्रतिपद्यस इति सूचयति ॥ २८ ॥ ननु विद्वांसोऽपि बहवः शोचन्ति तत्किं मामेव पुनः पुनरेवमुपालभसे, अन्यच्च इति न्यायात्त्वद्वचनार्थाप्रतिपत्तिरपि मम न दोषः । तत्रान्येषामपि तवेवात्मापरिज्ञानादेव शोकः, आत्मप्रतिपादकशास्त्रार्थाप्रतिपत्तिश्च तवाप्यन्येषामिव स्वाशयदोषादिति नोक्तदोषद्वयमित्यभिप्रेत्यात्मनो दुर्विज्ञेयतामाह—एनं प्रकृतं देहिनमाश्चर्येणाद्भुतेन तुल्यतया वर्तमानं आविद्यकनानाविधविरुद्धधर्मवत्तया सन्तमप्यसन्तमिव, स्वप्रकाशचैतन्यरूपमपि जडमिव, आनन्दघनमपि दुःखितमिव, निर्विकारमपि सविकारमिव, नित्यमप्यनित्यमिव, प्रकाशमानमप्यप्रकाशमानमिव, ब्रह्माभिन्नमपि तद्भिन्नमिव, मुक्तमपि बद्धमिव, अद्वितीयमपि सद्वितीयमिव, संभावितविचित्रानेकाकारप्रतीतिविषयं पश्यति । शास्त्राचार्योपदेशाभ्यामाविद्यकसर्वद्वैतनिषेधेन परमात्मस्वरूपमात्राकारायां वेदान्तमहावाक्यजन्यायां सर्वसुकृतफलभूतायामन्तःकरणवृत्तौ प्रतिफलितं समाधिपरिपाकेन साक्षात्करोति, कश्चिच्छमदमादिसाधनसंपन्नचरमशरीरः कश्चिदेव नतु सर्वः । तथा कश्चिदेनं यत्पश्यति तदाश्चर्यवदिति क्रियाविशेषणम् । आत्मदर्शनमप्याश्चर्यवदेव यत्स्वरूपतो मिथ्याभूतमपि सत्यस्य व्यञ्जकं, आविद्यकमप्यविद्याया विघातकं, अविद्यामुपघ्नत्कार्यतया स्वात्मानमप्युपहन्तीति । तथा, यः कश्चिदेनं पश्यति स आश्चर्यवदिति कर्तृविशेषणम् । यतोऽसौ निवृत्ताविद्यातत्कार्योऽपि प्रारब्धकर्मप्राबल्यात्तद्वानिव व्यवहरति सर्वदा समाधिनिष्ठोऽपि व्युत्तिष्ठति व्युत्थितोऽपि पुनः समाधिमनुभवतीति प्रारब्धकर्मवैचित्र्याद्विचित्रचरित्रः प्राप्तदुष्प्रापज्ञानत्वात्सकललोकस्पृहणीयोऽत आश्चर्यवदेव भवति । तदेतत्त्रयमाश्चर्यमात्मा तज्ज्ञानं तज्ज्ञाता

५ भाष्योत्कर्षदीपिका ।

व्याख्यात इति चेत् तत्र का परिदेवनेति वाक्यशेषविरोधात् । अदर्शनादापतित इत्यादिवचनेन, तस्मात्सर्वाणि भूतानीत्युपसंहारस्थेन कार्यकरणसंघातबोधकभूतशब्देन चैकार्थत्वानापत्तेश्चेति गृहाण । यथा भरतादयोऽव्यक्ताद्भूत्वाऽव्यक्त एव लयं गतास्तथेति सूचयन्नाह—भारतेति ॥ २८ ॥ शुद्धात्मनो दुर्विज्ञेयत्वाद्भ्रान्तेश्च सर्वसाधारणत्वान्न त्वां प्रत्येवोपालम्भो युक्त इत्याह—**आश्चर्यव-**

६ श्रीधरीव्याख्या ।

स्थितिलक्षणं येषाम् । अव्यक्ते निधनं लयो येषां तानीमान्येवंभूतान्येव तत्र तेषु का परिदेवना कः शोकनिमित्तो विलापः । प्रतिबुद्धस्य स्वप्नदृष्टवस्तुष्विव शोको न युज्यत इत्यर्थः ॥ २८ ॥ कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति, आत्माज्ञानादेवेत्याशयेनात्मनो

७ अभिनवगुप्ताचार्यव्याख्या ।

तस्य व्यक्तता इति । प्रत्युत विकारे शोचनीयस्वभावे । किंच तन्मूलकारणं किंचिदभिमतं तदेव तथा क्रमविचित्रस्वभावतया स्वात्ममध्ये दर्शिततत्तदनन्तसृष्टिस्थितिसंहृतिवैचित्र्यं नित्यमेव तथास्वभावमिति कस्य शोच्यता ॥ २८ ॥ एवंविधं च आश्चर्यवत्पश्यति कश्चिदेनमिति ।

१ श्रीमच्छांकरभाष्यम् ।

**किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते, कथं दुर्विज्ञेयोऽयमात्मेत्यत आह—आश्चर्यवदिति । आश्चर्यवदाश्चर्यमदृष्टपूर्वमद्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मानं पश्यति,**

२ आनन्दगिरिव्याख्या ।

तथाचात्माज्ञाननिमित्तविप्रलम्भस्य साधारणत्वादसाधारणोपालम्भस्य निरवकाशतेत्याह—**किं त्वामेवेति** । अहंप्रत्ययवेद्यत्वादात्मनो दुर्विज्ञेयत्वमसिद्धमिति शङ्कते—**कथमिति** । विशिष्टस्यात्मनोऽहंप्रत्ययस्य दृष्टत्वेऽपि केवलस्य तदभावादस्ति दुर्विज्ञेयतेति श्लोकमवतारयति—**आहेति** । आश्चर्यवदित्याद्येन पादेनात्मविषयदर्शनस्य दुर्लभत्वं दर्शयता द्रष्टुर्दौर्लभ्यमुच्यते, द्वितीयेन च तद्विषयवेदनस्य दुर्लभत्वोक्तेस्तदुपदेष्टुस्तथात्वं कथ्यते, तृतीयेन तदीयश्रवणस्य दुर्लभत्वद्वारा श्रोतुर्विरलता विवक्षिता, श्रवणदर्शनोक्तीनां भावेऽपि तद्विषयसाक्षात्कारस्यात्यन्तायासलभ्यत्वं चतुर्थेनाभिप्रेतमिति विभागः । आत्मगोचरदर्शनादिदुर्लभत्वद्वारा दुर्बोधत्वमात्मनः साधयति—**आश्चर्यवदिति** । संप्रत्यात्मनि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ह्यूयत इत्याशङ्क्याह—**आश्चर्यवदिति** । कश्चित् ज्ञातात्मतत्त्व एनमतीतानन्तरश्लोकोक्तं भूतग्राममाश्चर्यवत् आश्चर्य-

४ मधुसूदनीव्याख्या ।

चेति परमदुर्विज्ञेयमात्मानं त्वं कथमनायासेन जानीया इत्यभिप्रायः । एवमुपदेष्टुरभावादप्यात्मा दुर्विज्ञेयः । यो ह्यात्मानं जानाति स एव तमन्यस्मै ध्रुवं ब्रूयात्, अज्ञस्योपदेष्टृत्वासंभवात् । जानंस्तु समाहितचित्तः प्रायेण कथं ब्रवीतु । व्युत्थितचित्तोऽपि परेण ज्ञातुमशक्यः । यथाकथंचिज्ज्ञातोऽपि लाभपूजाख्यात्यादिप्रयोजनानपेक्षत्वान्न ब्रवीत्येव, कथंचित्कारुण्यमात्रेण ब्रुवंस्तु परमेश्वरवदत्यन्तदुर्लभएवेत्याह—**आश्चर्यवद्वदति तथैव चान्य इति** । यथा जानाति तथैव वदति । एनमित्यनुकर्षणार्थश्चकारः । स चान्यः सर्वज्ञजनविलक्षणो नतु यः पश्यति ततोऽन्य इति व्याघातात् । तत्रापि कर्मणि क्रियायां कर्तरि चाश्चर्यवदिति योज्यम् । तत्र कर्मणः कर्तुश्च प्रागाश्चर्यत्वं व्याख्यातं, क्रियायास्तु व्याख्यायते । सर्वशब्दावाच्यस्य शुद्धस्यात्मनो यद्वचनं तदाश्चर्यवत् । तथाच श्रुतिः 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति ।

५ भाष्योत्कर्षदीपिका ।

**दिति** । आश्चर्यमद्भुतमदृष्टपूर्वमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवत् । कश्चिदेनमात्मानमाश्चर्यवत्पश्यति । तथैव चान्य एनमाश्चर्यवद्वदति । अन्यश्चैनमाश्चर्यवच्छृणोति । श्रुत्वोक्त्वा दृष्ट्वाप्येनं कश्चित्प्रतिबन्धवशान्न वेद साक्षान्न जानाति । 'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इति व्याससूत्रात् फलोन्मुखं विद्याविरुद्धफलत्वं कर्म प्रस्तुतं तेन प्रतिबन्धः प्रस्तुतप्रतिबन्धः तदभावे 'ऐहिकमस्मिन्नेव जन्मनि विद्या जायते सति तु तस्मिञ्जन्मान्तरेऽपि सा जायते, कुतः, तद्दर्शनात् प्रतिबन्धतदभावाभ्यामुभयविधविद्याजन्मनः श्रुतौ दर्शनात् 'गर्भस्थ एव वामदेवः प्रतिपेदे ब्रह्मभावम्' इति वदन्ती श्रुतिः सति प्रतिबन्धे जन्मान्तरसंचितसाधनाज्जन्मान्तरे विद्योत्पत्तिं दर्शयतीति तदर्थः । यद्वा योऽयमात्मानं पश्यति स आश्चर्यतुल्य एवमग्रेऽपि यो वदति यश्च शृणोति सोऽनेकशतसहस्रेषु कश्चिदेव, यश्चोक्त्वा श्रुत्वा पश्यति परोक्षज्ञानवान् भवति स ततोऽपि दुर्लभः, यस्तु साक्षात्करोति स तु ततोऽपि दुर्लभ इत्याह—**श्रुत्वापीति** । अतो दुर्बोध आत्मेत्यभिप्रायः । तथाच प्रथमपक्षे प्रथमपादेनात्मविषयकपरोक्षदर्शनस्य तथैव द्वितीयेन वदनस्य तृतीयेन श्रवणस्य च दुर्लभत्वं चतुर्थेन साक्षात्कारस्य चात्यन्तदौर्लभ्यं च दर्शयता द्रष्टुर्वक्तुः श्रोतुः साक्षात्कर्तुर्विरलतोच्यते । तद्द्वारा चात्मनो दुर्विज्ञेयत्वं कथ्यते । द्वितीयपक्षे त्वात्मनि चतुर्णां दुर्लभत्वकथनेन तदीयं दुर्बोधत्वमुच्यत इति विवेकः । इत्थं च श्रुत्यैकार्थत्वमस्याः स्मृतेः सम्यगुपपद्यते । तथाच श्रुतिः 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति । विवृता चेयं भगवत्पादैः—प्रायेण ह्येवंविधएव लोकः, यस्तु श्रेयोर्थी सोऽनेकशतसहस्रेषु कश्चिदेवात्मविद्भवति त्वद्विधः यस्मादित्याह । श्रवणायापि श्रवणार्थं श्रोतुमपि यो न लभ्यः आत्मा बहुभिरनेकैः, शृण्वन्तो बहवोऽनेकेऽन्ये यमात्मानं न विद्युर्न विन्दन्ति अभागिनोऽसंस्कृतात्मानो न विजानीयुः । किंचास्य वक्ताप्याश्चर्योऽद्भुतवदेवानेकेषु कश्चिदेव भवति । तथा श्रुत्वाप्यस्यात्मनः कुशलो निपुण एवानेकेषु लब्धा कश्चिदेव भवति । तस्मादाश्चर्यो ज्ञाता कश्चिदेव कुशलानुशिष्टः कुशलेन निपुणेनाचार्येणानुशिष्टः सन्नित्यर्थ इति । तथाच श्रवणायापीत्यादेरर्थः आश्चर्यवत्कश्चिदेनं शृणोतीति, शृण्वन्तोऽपीत्यादेः श्रुत्वाप्येनं वेद न चैव कश्चिदिति, आश्चर्यो वक्तेत्यस्य आश्चर्यवद्वदति तथैव चान्य इति, कुशलोऽस्येत्यादेराश्चर्यवत्पश्यति कश्चिदेनमिति, आश्चर्यो ज्ञाता कुशलानुशिष्ट इत्येतत्तु कुशल इत्यादेर्व्याख्यानं, तस्मादित्यादिभाष्यात् । यद्वा लब्धा परोक्षज्ञानवान्, ज्ञाता साक्षात्कर्ता । आश्चर्यवत्पश्यतीत्यत्रापि द्विविधं दर्शनं वक्ष्यते श्रुत्यैकवाक्यतार्थम् । अस्मिन्पक्षे 'परोक्षेणापरोक्षेण वाऽस्य दर्शनं' द्रष्टृत्वात्यन्तदुर्लभः, परोक्षेणास्य दर्शनं द्रष्टा वा कुतो दुर्लभ इत्यत आह—**आश्चर्यवद्वदतीत्यादि** ।

६ श्रीधरीव्याख्या ।

दुर्विज्ञेयतामाह—**आश्चर्यवदिति** । कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन्नाश्चर्यवत्पश्यति । सर्वगतस्य नित्यज्ञानानन्दस्वभा-

१ श्रीमच्छांकरभाष्यम् ।

**कश्चिदाश्चर्यवदेनं वदति, तथैव चान्य आश्चर्यवच्चैनमन्यः शृणोति, श्रुत्वा दृष्ट्वोक्त्वाप्येनं वेद**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मद्भुतं स्वप्नमायेन्द्रजालादिकं तेन तुल्यं आश्चर्यवत् तथाभूतं पश्यति । तथा कश्चिदेनं आश्चर्यवद्वदति सत्त्वेन असत्त्वेन वा निर्वक्तुमशक्यमपि अनिर्वचनीयेनैव लोकाप्रसिद्धेन रूपेणोपपादयति । तथाहि रज्जूरगवत्प्रपञ्चः संश्चेत् 'नेह नानास्ति किंचन' इतिश्रुत्या न बाध्येत, असंश्चेन्न प्रतीयेत, तस्मादनिर्वचनीयोऽयमिति । तदिदं सर्वव्यवहारास्पदस्यापि प्रपञ्चस्य मिथ्यात्वोपपादनमत्याश्चर्यमित्यर्थः । तथा एनं प्रपञ्चमन्य आश्चर्यवत् शृणोति । 'इमे लोका इमे देवा इमे वेदा इदं सर्वं यदयमात्मा' इति प्रत्यक्षेणानात्मतया उपलभ्यमानस्यापि प्रपञ्चस्य यत् प्रत्यगभिन्नत्वेन श्रवणं तदत्यन्तमाश्चर्यम् । नहीयं श्रुतिः 'यजमानः प्रस्तरः' इत्यादिवदुपचरितार्था । प्रपञ्चस्यात्मनः पृथक्त्वे 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवति' इत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञोपरोधापत्तेः । नच प्रतिज्ञाप्यौपचारिकी । प्रदेशान्तरे श्रुतस्य 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति दृष्टान्तस्योपरोधापत्तेः । तस्मात्प्रतिज्ञादृष्टान्तनिगमनानामेकवाक्यत्वात् न प्रपञ्चस्यात्मान्यत्वम् । तच्च भेदग्राहिप्रत्यक्षविरोधादाश्चर्यमिव शृणोति । तथा कश्चिदेनं प्रपञ्चं प्रत्यगनन्यत्वेन श्रुत्वा अपिशब्दात् उक्त्वा स्वप्नादिदृष्टान्तैरुपपाद्य दृष्ट्वा ध्यानेन च साक्षात्कृत्वापि तत्त्वतो न वेद न जानाति । तथाहि प्राप्तापि प्रज्ञा तीव्रविक्षेपवतः परिहीयत इति वक्ष्यति । तस्मादात्मैक्यात्संभवत्येव प्रपञ्चस्य रज्जूरगादितुल्यत्वेन तुच्छत्वम् । यद्वा एनं आत्मानं कर्तृत्वभोक्तृत्वदुःखित्वानित्यत्वजडत्वसङ्गित्वपरिच्छिन्नत्वादिधर्मवत्तया प्रसिद्धमपि तत्त्वमसीत्यागमोत्थया ब्रह्माकारान्तःकरणवृत्त्या ब्रह्मविद्याख्यया अकर्तारमभोक्तारमानन्दघनं सत्यचिद्रूपमसङ्गमनन्तमपरोक्षीकरोतीति महदाश्चर्यम् । यत् पश्यति तदाश्चर्यवदिति क्रियाविशेषणं वा । आविद्यकमपि दर्शनमविद्यां स्वात्मानं च कतकरजोवन्निवर्तयतीति । यद्वा यः पश्यति स आश्चर्यवदिति कर्तृविशेषणम् । यत एक एव विद्वान् समाधिव्युत्थानयोः परस्परविरुद्धमात्मनो ब्रह्मभावं जीवभावं च यावदारब्धकर्मक्षयमनुभवतीति तथा वाङ्मनसातीतमप्यात्मानं यद्वाचा वदति तदप्याश्चर्यम् । अगृहीतसंगतिकेनापि शब्देन यथा सुप्तः प्रबोध्यते तद्वत् । यथोक्तं वार्तिके 'अगृहीत्वैव संबन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥ जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन । ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम् ॥ अविद्याघातिनः शब्दाद्याहं ब्रह्मेति धीर्भवेत् । नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥' इति । तथा यः शृणोति सोऽपि आश्चर्यवत् अतिदुर्लभ इत्यर्थः । 'श्रवणायापि बहुभिर्यो न लभ्यः' इति श्रुतेः । 'शृण्वन्तोऽपि बहवो यं न विद्युः' इति श्रुतिद्वितीयपादार्थं संगृह्णाति—**श्रुत्वाप्येनमिति** । 'आश्चर्यो वक्ता कुशलोऽस्य लब्धा

४ मधुसूदनीव्याख्या ।

केनापि शब्देनावाच्यस्य शुद्धस्यात्मनो विशिष्टशक्तेन पदेन जहदजहत्स्वार्थलक्षणया कल्पितसंबन्धेन लक्ष्यतावच्छेदकमन्तरेणैव प्रतिपादनं तदपि निर्विकल्पकसाक्षात्काररूपमत्याश्चर्यमित्यर्थः । अथवा विना शक्तिं विना लक्षणां विना संबन्धान्तरं सुषुप्तोत्थापकवाक्यवत्तत्त्वमस्यादिवाक्येन यदात्मतत्त्वप्रतिपादनं तदाश्चर्यवत् । शब्दशक्तेरचिन्त्यत्वात् । नच विना संबन्धं बोधनेऽतिप्रसङ्गः लक्षणापक्षेऽपि तुल्यत्वात् शक्यसंबन्धरूपानेकसाधारणत्वात् । तात्पर्यविशेषान्नियम इतिचेत् न । तस्यापि सर्वान्प्रत्यविशेषात् । कश्चिदेव तात्पर्यविशेषमवधारयति न सर्व इतिचेद्धन्त तर्हि पुरुषगत एव कश्चिद्विशेषो निर्दोषत्वरूपो नियामकः सचास्मिन्पक्षेऽपि न दण्डवारितः । तथाच यादृशस्य शुद्धान्तःकरणस्य तात्पर्यानुसन्धानपुरःसरं लक्षणया वाक्यार्थबोधो भवद्भिरङ्गीक्रियते तादृशस्यैव केवलः शब्दविशेषोऽखण्डसाक्षात्कारं विनापि संबन्धेन जनयतीति किमनुपपन्नम् । एतस्मिन्पक्षे शब्दवृत्त्याविषयत्वात् 'यतो वाचो निवर्तन्ते' इति सुतरामुपपन्नम् । अयं च भगवदभिप्रायो वार्तिककारैः प्रपञ्चितः 'दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः । शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः ॥ अगृहीत्वैव संबन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यन्ते सुषुप्तेर्बोधिताः परैः ॥ जाग्रद्वन्न यतः शब्दं सुषुप्तौ वेत्ति कश्चन । ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम् ॥ अविद्याघातिनः शब्दाद्याहं ब्रह्मेति धीर्भवेत् । नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥' इत्यादिना ग्रन्थेन । तदेवं वचनविषयस्य वक्तुर्वचनक्रियायाश्चात्याश्चर्यरूपत्वादात्मनो दुर्विज्ञानत्वमुक्त्वा श्रोतुर्दुर्लभत्वादपि तदाह—आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेदेति । अन्यो द्रष्टुर्वक्तुश्च मुक्ताद्विलक्षणो मुमुक्षुर्वक्तारं ब्रह्मविदं विधिवदुपसृत्य एनं शृणोति श्रवणाख्यविचारविषयीकरोति । वेदान्तवाक्यतात्पर्यनिश्चयेनावधारयतीति यावत् । श्रुत्वा

५ भाष्योत्कर्षदीपिका ।

तोऽस्य कथनं वक्ता वा श्रवणं श्रोता वा दुर्लभोऽत इत्यर्थः । अपरोक्षेणास्य दर्शनस्य द्रष्टुर्वात्यन्तदौर्लभ्ये हेतुमाह—**श्रुत्वापीति** ।

१ श्रीमच्छांकरभाष्यम् ।

**नचैव कश्चित् । अथवा योऽयमात्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेक-**

२ आनन्दगिरिव्याख्या ।

**द्रष्टुर्वक्तुः श्रोतुः साक्षात्कर्तुश्च दुर्लभत्वाभिधानेन तदीयं दुर्बोधत्वं कथयति—अथवेति । व्याख्यानद्वयेऽपि फलित-**

४ मधुसूदनीव्याख्या ।

चैनं मननिदिध्यासनपरिपाकाद्वेदापि साक्षात्करोत्यपि आश्चर्यवत् । तथाच 'आश्चर्यवत्पश्यति कश्चिदेनम्' इति व्याख्यातम् । अत्रापि कर्तुराश्चर्यरूपत्वमनेकजन्मानुष्ठितसुकृतक्षालितमनोमलतयातिदुर्लभत्वात् । तथाच वक्ष्यति 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥' इति । 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः', 'आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति श्रुतेश्च । एवं श्रवणश्रोतव्ययोराश्चर्यत्वं प्राग्वद्व्याख्येयम् । ननु यः श्रवणमननादिकं करोति स आत्मानं वेदेति किमाश्चर्यमत आह—**नचैव कश्चिदिति ।** चकारः क्रियाकर्मपदयोरनुषङ्गार्थः । कश्चिदेनं नैव वेद श्रवणादिकं कुर्वन्नपि, तदकुर्वंस्तु न वेदेति किमु वक्तव्यम् । 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इति न्यायात् । उक्तंच वार्तिककारैः 'कुतस्तज्ज्ञानमिति चेत्तद्धि बन्धपरिक्षयात् । असावपि च भूतो वा भावी वा वर्तते ऽथवा ॥' इति । श्रवणादिकुर्वतामपि प्रतिबन्धपरिक्षयादेव ज्ञानं जायते अन्यथा तु न । सच प्रतिबन्धपरिक्षयः कस्यचिद्भूत एव यथा हिरण्यगर्भस्य । कस्यचिद्भावी यथा वामदेवस्य । कस्यचिद्वर्तते यथा श्वेतकेतोः । तथा च प्रतिबन्धक्षयस्यातिदुर्लभत्वात् 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति स्मृतेश्च दुर्विज्ञेयोऽयमात्मेति निर्गलितोऽर्थः ।

५ भाष्योत्कर्षदीपिका ।

श्रुत्वा उक्त्वा परोक्षेण दृष्ट्वाप्येनं कश्चिदभागी असंस्कृतात्मा लोको नचैव जानातीति । अतः साक्षादस्य दर्शनं द्रष्टा वात्यन्तदुर्लभ इत्यर्थः । एतेन यदि श्रुत्वाप्येनं वेद न चैव कश्चिदित्येवं व्याख्यायेत तदा 'आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति श्रुत्यैकवाक्यता न स्यात् । 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इति भगवद्वचनविरोधश्चेति प्रत्युक्तम् । य आत्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेवेति भाष्यात्स्मृतिविरोधानवकाशाच्च । अत्र केचिद्वर्णयन्ति । एनं प्रकृतं देहिनं आश्चर्येणाद्भुतेन तुल्यतया वर्तमानं आविद्यकनानाविरुद्धधर्मवत्तया सन्तमप्यसन्तमिव स्वप्रकाशचैतन्यरूपमपि जडमिवानन्दरूपमपि दुःखितमिवेत्याद्यसंभावितविचित्रानेकाकारप्रतीतिविषयं पश्यति, शास्त्राचार्योपदेशाभ्यामाविद्यकसर्वद्वैतनिषेधेन परमात्मस्वरूपाकारायां वेदान्तमहावाक्यजन्यायां सर्वसुकृतफलभूतायामन्तःकरणवृत्तौ प्रतिफलितं समाधिपरिपाकेन साक्षात्करोति । कश्चिच्छमदमादिसाधनसंपन्नचरमशरीरः कश्चिदेव मर्त्यो नतु सर्वः । तथा कश्चिदेनं यत्पश्यति तदाश्चर्यवदिति क्रियाविशेषणम् । आविद्यकमपि दर्शनमविद्यां स्वात्मानं च निवर्तयतीति । तथा यः कश्चिदेनं पश्यति स आश्चर्यवदिति कर्तृविशेषणम् । यत एकएव विद्वान् समाधिव्युत्थानयोः परस्परविरुद्धमात्मनो ब्रह्मभावं जीवभावं च यावत्प्रारब्धकर्मक्षयमनुभवतीति तदेतत्त्रयमप्याश्चर्यमात्मा तज्ज्ञानं ज्ञाता चेति । एवमग्रेऽपि कर्मणि क्रियायां कर्तरि चाश्चर्यवदिति योज्यम् । सर्वशब्दावाच्यस्य शुद्धस्यात्मनो यद्वदनं तदाश्चर्यवत् श्रुत्वाप्येनं वेद श्रुत्वाचैनं मनननिदिध्यासनपरिपाकाद्वेदापि साक्षात्करोत्यपि आश्चर्यवत् । तथा चाश्चर्यवत्पश्यति कश्चिदेनमित्यत्र व्याख्यातम् । ननु यः श्रवणादिकं करोति स आत्मानं वेदेति किमाश्चर्यमत आह—नचैव कश्चिदिति । चकारः क्रियाकर्मपदयोरनुषङ्गार्थः । कश्चिदेनं नैव वेद श्रवणादिकं कुर्वन्नपि तदकुर्वंश्च वेदेति किमु वक्तव्यम् । अथवा नचैव कश्चिदित्यस्य सर्वत्र संबन्धः । कश्चिदेनं न पश्यति, न वदति, न शृणोति, श्रुत्वापि न वेदेति पञ्च प्रकारा उक्ताः । कश्चित्पश्यत्येव न वदति, कश्चित्पश्यति वदति च, कश्चित्तद्वचनं शृणोति तदर्थं जानाति च, कश्चित् श्रुत्वापि न जानाति, कश्चित्तु सर्वबहिर्भूत इति तत्रेदमवधेयम् । आश्चर्यमद्भुतमदृष्टमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवत् यो वदति यश्च शृणोति स सहस्रेषु कश्चिदेवेत्यादिवदद्भिराचार्यैः कर्तृक्रिययोराश्चर्यवत्त्वं दुर्लभत्वं प्रदर्शितम् । 'श्रवणायापि बहुभिर्यो न लभ्यते' इति श्रुत्यनुरोधात्, आत्मनस्तु कर्तृक्रियाविरलत्वद्वारैव दुर्ज्ञेयत्वं नतु साक्षात्, आश्चर्यवत्पदविशेष्यत्वेन श्रुतौ तथात्वासंभवात्तदेकवाक्यतानापत्तेः । तस्मादाश्चर्यवत्पदस्य विरुद्धधर्माश्चर्यपरत्वं कर्मविशेषणत्वं चावदतामाचार्याणां न्यूनता न शङ्कनीया । यदपि वेदेत्यस्य पृथक्करणादि तदपि क्लेशमात्रं तद्विनापि श्रुत्यैकवाक्यताया निरूपितत्वात्, यदपि नचैव कश्चिदित्यस्य सर्वत्र संबन्ध इत्यादि तदपि न आश्चर्यवदित्याद्युक्त्या बहव एनं न पश्यन्ति इत्यादेरर्थस्य स्पष्टप्रतीतेः क्लिष्टकल्पनया पक्षान्तरप्रदर्शनस्य वैयर्थ्यात्, कश्चिदेनं पश्यतीत्यादिनोपपादिते सर्वबहिर्भूते श्रुत्वापि न वेदेत्यस्योक्तत्वेन चतुर्थप्रकारानर्थक्याच्चेति दिक् । एतेन कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन्नाश्चर्यवत्पश्यति सर्वगतस्य नित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवद्घटमानं पश्यन्निव विस्मयेन पश्यति असंभावनाभिभूतत्वादित्यादिभाष्यकृद्भिः कुतो न व्याख्यातमिति प्रत्युक्तम् । अत्रापि मूलश्रुत्यैकवाक्यत्वाभावापत्तेस्तुल्यत्वात् । अन्ये तु वज्रपञ्जरतुल्यस्य सर्वप्रमाणसिद्धस्य वियदादिप्रपञ्चस्य कथं रज्जूरगादिवदज्ञानप्रभवत्वेनात्यन्ततुच्छत्वमुच्यते कथंवा कर्मज्ञानकाण्डापेक्षितमात्मनो यज्ञादिकर्तृत्वं चापह्नूयत इत्याशङ्क्याह—**आश्चर्यवदिति ।** कश्चिज्ज्ञातात्मतत्त्व एनं अतीतानन्तरश्लोकोक्तं भूतग्राममाश्चर्यं अद्भुतं स्वप्नमायेन्द्र-

१ मधुसूदनः. २ नीलकण्ठः. ३ मधुसूदनः.

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

१ श्रीमच्छांकरभाष्यम् ।

सहस्रेषु कश्चिदेव भवति । अतो दुर्बोध आत्मेत्यभिप्रायः ॥२९॥ अथेदानीं प्रकरणार्थमुपसंहरन्ब्रूते— देहीति । देही शरीरी नित्यं सर्वावस्थास्ववध्यो निरवयवत्वान्नित्यत्वाच्च, तत्रावध्योऽयं देहे शरीरे सर्वस्य सर्वगतत्वात्स्थावरादिषु स्थितोऽपि सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥ ३० ॥ इह परमार्थतत्त्वापेक्षायां

२ आनन्दगिरिव्याख्या ।

माह—अत इति ॥ २९ ॥ श्लोकान्तरमुत्थापयति—अथेति । आत्मनो दुर्ज्ञानत्वप्रदर्शनानन्तरमिति यावत् । वस्तुवृत्तापेक्षया शोकमोहयोरकर्तव्यत्वं प्रकरणार्थः । देहे वध्यमानेऽपि देहिनो वध्यत्वाभावे फलितमाह—यस्मादिति । हेतुभागं विभजते—सर्वस्येति । फलितप्रदर्शनपरं श्लोकार्धं व्याचष्टे—तस्माद्भीष्मादीनीति ॥ ३० ॥ श्लोकान्तरमवतारयन्वृत्तं कीर्तयति—इहेति । पूर्वश्लोकः सप्तम्यर्थः, यत्पारमार्थिकं तत्त्वं तदपेक्षायामेव केवलं शोक-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आश्चर्यो ज्ञाता कुशलेनानुशिष्टः' इति, उत्तरार्धस्तु श्लोकपूर्वार्धेन संगृहीत इति ज्ञेयम् । दुर्विज्ञेयोऽयमात्मा, अतस्त्वं तज्ज्ञानार्थं यतस्वेति भावः ॥ २९ ॥ प्रकृतमर्थमुपसंहरति—देहीति । सर्वाणि भूतानि कथमेते दीना अल्पबला बलवत्तरेण मया हन्तव्याः, कथमेषां पुत्रादय एतैर्विना जीविष्यन्ति, कथं वाहं भीष्मादिभिर्गुरुभिर्विना जीविष्यामीति शोचितुं नार्हसीत्यर्थः ॥ ३० ॥ अर्जुनस्य अनात्मनि देहे आत्मधीरूपो मोहो निवारितः । इदानीं

४ मधुसूदनीव्याख्या ।

यदि तु 'श्रुत्वाप्येनं वेद न चैव कश्चित्' इत्येव व्याख्यायेत तदा 'आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति श्रुत्यैकवाक्यता न स्यात् । 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इति भगवद्वचनविरोधश्चेति विद्वद्भिरविनयः क्षन्तव्यः । अथवा न चैव कश्चिदित्यस्य सर्वत्र संबन्धः । कश्चिदेनं न पश्यति, न वदति, न शृणोति, श्रुत्वापि न वेदेति पञ्चप्रकारा उक्ताः । कश्चित्पश्यत्येव न वदति, कश्चित्पश्यति च वदति च, कश्चित्तद्वचनं शृणोति च तदर्थं जानाति च, कश्चिच्छ्रुत्वापि न जानाति च, कश्चित्तु सर्वबहिर्भूत इति । अविद्वत्पक्षे त्वसंभावनाविपरीतभावनाभिभूतत्वादाश्चर्यतुल्यत्वं दर्शनवदनश्रवणेष्विति निगदव्याख्यातः श्लोकः । चतुर्थपादे तु दृष्ट्वोक्त्वा श्रुत्वापीति योजना ॥ २९ ॥ इदानीं सर्वप्राणिसाधारणभ्रमनिवृत्तिसाधनमुक्तमुपसंहरति—सर्वस्य प्राणिजातस्य देहे वध्यमानेऽप्ययं देही लिङ्गदेहोपाधिरात्मा वध्यो न भवतीति । नित्यं नियतम् । यस्मात्तस्मात्सर्वाणि भूतानि स्थूलानि सूक्ष्माणि च भीष्मादिभावापन्नान्युद्दिश्य त्वं न शोचितुमर्हसि स्थूलदेहस्याशोच्यत्वमपरिहार्यत्वात्, लिङ्गदेहस्याशोच्यत्वमात्मवदेवावध्यत्वादिति न स्थूलदेहस्य लिङ्गदेहस्यात्मनो वा शोच्यत्वं युक्तमिति भावः ॥ ३० ॥ तदेवं स्थूलसूक्ष्मशरीरद्वयतत्कारणाविद्याख्योपाधित्रयाविवेकेन मिथ्याभूतस्यापि

५ भाष्योत्कर्षदीपिका ।

जालादिकं तेन तुल्यमाश्चर्यवत्तथाभूतं पश्यति । तथा कश्चिदेनमाश्चर्यवद्वदति सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यमप्यनिर्वचनीयत्वेनैव लोकाप्रसिद्धेन रूपेणोपपादयति । तथा एनं प्रपञ्चमन्य आश्चर्यवच्छृणोति । 'इमे लोका इमे देवा इमे वेदा इदꣳसर्वं यदयमात्मा' इति । प्रत्यक्षेणानात्मतयोपलभ्यमानस्यापि प्रपञ्चस्य यत्प्रत्यगभिन्नत्वेन श्रवणं तदत्यन्तमाश्चर्यम् । तथा कश्चिदेनं प्रपञ्चं प्रत्यगनन्यत्वेन श्रुत्वापिशब्दादुक्त्वा दृष्ट्वापि तत्त्वतो न वेदेति वर्णयन्ति तदपि सर्वमुपेक्ष्यम् । 'देही नित्यम्' इति श्लोकस्थभूतानीत्यनुरोधेनातीतानन्तरश्लोकस्थभूतानीत्यस्य कार्यकरणसंघातपरत्वेन व्याख्यातत्वात् प्रपञ्चस्यानुक्तेरेनदादेशानुपपत्तेः एनमित्यनेन बहुभ्यस्तस्यात्मनस्त्यागेन प्रकरणविरोधात् बह्वध्याहारग्रस्तत्वादुपलभ्यमानमूलभूतश्रुतिविरोधात् एतद्व्याख्यातृभिरप्यरुच्या यद्वेत्यादिपक्षान्तरस्वीकाराच्च पक्षान्तरं च केषांचिद्व्याख्यानमनूदितमिति निर्मत्सरैर्विद्वद्भिराकलनीयम् ॥ २९ ॥ उपसंहरति—देहीति । देही आत्मा देहे वध्यमानेऽपि सर्वाणि भूतानि भीष्मादीनि देहाश्च भरतादिदेहवदनित्या एवेति । तानुद्दिश्यापि शोचितुं नार्हसीति भारतेतिसंबोधनेन

६ श्रीधरीव्याख्या ।

वस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवदघटमानं पश्यन्निव विस्मयेन पश्यति असंभावनाभिभूतत्वात् । तथा आश्चर्यवदन्यो वदति च शृणोति च । अन्यः कश्चित्पुनर्विपरीतभावनाभिभूतः श्रुत्वापि नैव वेद । चशब्दादुक्त्वापि न सम्यग्वेदेति द्रष्टव्यम् ॥ २९ ॥ तदेवं दुर्बोधमात्मतत्त्वं संक्षेपेणोपदिशन्नशोच्यत्वमुपसंहरति—देहीति ॥ ३० ॥ यच्चोक्तमर्जुनेन 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति

७ अभिनवगुप्ताचार्यव्याख्या ।

ननु यद्येवमयमात्मा अविनाशी किमिति सर्वेण तथैव नोपलभ्यते । यतः अद्भुतवत्कश्चिदेव पश्यति । श्रुत्वापि न कश्चिज्जानाति न वेत्ति

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**शोको वा मोहो वा न संभवतीत्युक्तं, न केवलं परमार्थतत्त्वापेक्षायामेव किंतु—स्वधर्ममिति । स्वधर्ममपि स्वो धर्मः क्षत्रियस्य धर्मो युद्धं, तमप्यवेक्ष्य त्वं न विकम्पितुं प्रचलितुं नार्हसि धर्म्यात्क्षत्रियस्य स्वाभाविकाद्धर्मादात्मस्वाभाव्यादित्यभिप्रायः, तच्च युद्धं पृथिवीजयद्वारेण धर्मार्थं प्रजारक्षणार्थं चेति धर्मादनपेतं परं धर्म्यं तस्माद्धर्म्याद्युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते । हि यस्मात् ॥ ३१ ॥ कुतश्च**

२ आनन्दगिरिव्याख्या ।

मोहयोरसंभवो न भवति किंतु स्वधर्ममपि चावेक्ष्येति संबन्धः । स्वकीयं क्षात्रधर्ममनुसंधाय ततश्चलनं परिहर्तव्यमित्यर्थः । यद्धि क्षत्रियस्य धर्मादनपेतं श्रेयःसाधनं तदेव मयानुवर्तितव्यमित्याशङ्क्याह—**धर्म्यादिति** । जातिप्रयुक्तं स्वाभाविकं स्वधर्ममेव विशिनष्टि—**क्षत्रियस्येति** । पुनर्नकारोपादानमन्वयार्थम् । प्रचलितुमयोग्यत्वे प्रतियोगिनं दर्शयति—**स्वाभाविकादिति** । स्वाभाविकत्वमशास्त्रीयत्वमिति शङ्कां वारयितुं तात्पर्यमाह—**आत्मेति** । आत्मनः स्वस्यार्जुनस्य स्वाभाव्यं क्षत्रियस्वभावप्रयुक्तं वर्णाश्रमोचितं कर्म तस्मादित्यर्थः । धर्मार्थं प्रजापरिपालनार्थं च प्रयतमानस्य युद्धादुपरिरंसा श्रद्धातव्येत्याशङ्क्याह—**तच्चेति** । ततोऽपि श्रेयस्करं किंचिदनुष्ठातुं युद्धादुपरतिरुचितेत्याशङ्क्याह—**तस्मादिति** । तस्माद्युद्धात्प्रचलनमनुचितमिति शेषः ॥ ३१ ॥ युद्धस्य गुर्वाद्यनेकप्राणिहिंसात्मकस्याहिंसा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्वधर्मे युद्धे अधर्मधीरूपं मोहं निवारयति—**स्वधर्ममपीत्यादिना** । युद्धं क्षत्रियस्य स्वो धर्मः तमवेक्ष्यापि विकम्पितुं चलितुं नार्हसि । यस्मात् धर्म्यात् धर्मादनपेताद्युद्धादन्यत् क्षत्रियस्य श्रेयः प्रशस्ततरं नास्ति ॥ ३१ ॥

४ मधुसूदनीव्याख्या ।

संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभासरूपं सर्वप्राणिसाधारणमर्जुनस्य भ्रमं निराकर्तुमुपाधित्रयविवेकेनात्मस्वरूपमभिहितवान् । संप्रति युद्धाख्ये स्वधर्मे हिंसादिबाहुल्येनाधर्मत्वप्रतिभासरूपमर्जुनस्यैव करुणादिदोषनिबन्धनमसाधारणं भ्रमं निराकर्तुं हिंसादिमत्त्वेऽपि युद्धस्य स्वधर्मत्वेनाधर्मत्वाभावं बोधयति भगवान्—न केवलं परमार्थतत्त्वमेवावेक्ष्य किंतु स्वधर्ममपि क्षत्रियधर्ममपि युद्धापराङ्मुखत्वरूपमवेक्ष्य शास्त्रतः पर्यालोच्य विकम्पितुं विचलितुं धर्मादधर्मत्वभ्रान्त्या निवर्तितुं नार्हसि । तत्रैवं सति 'यद्यप्येते न पश्यन्ति' इत्यादिना 'नरके नियतं वासो भवति' इत्यन्तेन युद्धस्य पापहेतुत्वं त्वया यदुक्तं, 'कथं भीष्ममहं संख्ये' इत्यादिना गुरुवधब्रह्मवधायकरणं यदभिसंहितं तत्सर्वं धर्मशास्त्रापर्यालोचनादेवोक्तम् । कस्मात् । हि यस्मात् धर्म्यादपराङ्मुखत्वधर्मादनपेताद्युद्धादन्यत्क्षत्रियस्य श्रेयः श्रेयःसाधनं न विद्यते । युद्धमेव हि पृथिवीजयद्वारेण प्रजारक्षणब्राह्मणशुश्रूषादिक्षात्रधर्मनिर्वाहकमिति तदेव क्षत्रियस्य प्रशस्ततरमित्यभिप्रायः । तथाचोक्तं पराशरेण–'क्षत्रियो हि प्रजा रक्षञ्शस्त्रपाणिः प्रदण्डवान् । निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥' मनुनापि—'समोत्तमाधमै राजा चाहूतः पालयन्प्रजाः । न निवर्तेत संग्रामात्क्षात्रं धर्ममनुस्मरन् ॥ संग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् । शुश्रूषा ब्राह्मणानां च राज्ञः श्रेयस्करं परम् ॥' इत्यादिना । राजशब्दश्च क्षत्रियजातिमात्रवाचीति स्थितमवेष्ट्यधिकरणे । तेन भूमिपालस्यैवायं धर्म इति न भ्रमितव्यम् । उदाहृतवचनेऽपि क्षत्रियो हीति क्षात्रं धर्ममिति च स्पष्टं लिङ्गम् । तस्मात्क्षत्रियस्य युद्धं प्रशस्तो धर्म इति साधु भगवताभिहितम् 'अपशवोऽन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इतिवत्प्रशंसालक्षणया युद्धादन्यच्छ्रेयःसाधनं न विद्यत इत्युक्तमिति न दोषः । एतेन युद्धात्प्रशस्ततरं किंचिदनुष्ठातुं ततो

५ भाष्योत्कर्षदीपिका ।

ध्वनितम् ॥३०॥ इत्थमात्मतत्त्वापेक्षायां शोकमोहौ न संभवत इत्युक्तम् । न केवलमात्मतत्त्वापेक्षायामेव किंतु स्वधर्ममपि चावेक्ष्येत्याह—**स्वधर्ममपीति** । यत्तु कैश्चित्सर्वप्राणिसाधारणं भ्रमं निराकृत्यार्जुनस्यैवासाधारणं भ्रमं निराकरोतीत्युक्तं तत्पूर्वोक्तयुक्त्या निरसनीयम् । स्वधर्मं क्षत्रियस्य धर्मयुद्धं धर्मशास्त्रादवेक्ष्य विचार्य शोकमोहाभिभूतः स्वधर्माच्चलितुं नार्हसि । यस्मात्पृथिवीजयद्वारा युद्धस्य यज्ञादिधर्मार्थत्वेन ब्राह्मणादिप्रजारक्षणार्थत्वेन च धर्मादनपेताद्युद्धादन्यच्छ्रेयःसाधनं युद्धसदृशं क्षत्रियस्य न भवती-

६ श्रीधरीव्याख्या ।

तदप्ययुक्तमित्याह—**स्वधर्ममिति** । आत्मनो नाशाभावादेवैतेषां हननेऽपि विकम्पितुं नार्हसि । किंच स्वधर्ममप्यवेक्ष्य विकम्पितुं नार्हसीति संबन्धः । यच्चोक्तं 'न च श्रेयोऽनु पश्यामि हत्वा स्वजनमाहवे' इत्यादि तत्राह—**धर्म्यादिति** । धर्मादनपेतान्न्याय्याद्युद्धाद-

७ अभिनवगुप्ताचार्यव्याख्या ।

देही नित्यमिति । अतो नित्यमात्मनोऽविनाशित्वम् ॥२९॥ ३० ॥ स्वधर्ममपीति । स्वधर्मस्य चापरिहार्यत्वाद्युद्धविषयः कम्पो न युक्तः ॥३१॥

१ मधुसूदनः.

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तद्युद्धं कर्तव्यमित्युच्यते—यदृच्छयेति । यदृच्छया चाप्रार्थिततयोपपन्नं स्वर्गद्वारमपावृतमुद्घाटितं य एतदीदृशं युद्धं लभन्ते क्षत्रियाः हे पार्थ, किं न सुखिनस्ते ॥ ३२ ॥ अथेति । एवं कर्तव्यताप्राप्तमपि

२ आनन्दगिरिव्याख्या ।

शास्त्रविरोधान्नास्ति कर्तव्यतेति शङ्कते—कुतश्चेति । अग्नीषोमीयहिंसादिवद्युद्धमपि क्षत्रियस्य विहितत्वादनुष्ठेयं सामान्यशास्त्रतो विशेषशास्त्रस्य बलीयस्त्वादित्याह—उच्यत इति । तथापि युद्धे प्रवृत्तानामैहिकामुष्मिकस्यापि सुखाभावादुपरतिरेव ततो युक्ता प्रतिभातीत्याशङ्क्याह—यदृच्छयेति । चिरेण चिरतरेण कालेन च यागाद्यनुष्ठायिनः स्वर्गादिभाजो भवन्ति, युध्यमानास्तु क्षत्रिया बहिर्मुखताविहीनाः सहसैव स्वर्गादिसुखभोक्तारस्तेन तव कर्तव्यमेव युद्धमिति व्याख्यानेन स्फुटयति—यदृच्छयेत्यादिना । इहामुत्र च भाविसुखवतामेव क्षत्रियाणां स्वधर्मभूतयुद्ध-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

किंच यदृच्छया अप्रार्थितमप्युपपन्नमुपस्थितं स्वर्गद्वारं अपावृतमुद्घाटितं ये क्षत्रिया लभन्ते ते सुखिनो धन्या

४ मधुसूदनीव्याख्या ।

निवृत्तिरुचितेति निरस्तम्, 'न च श्रेयोऽनु पश्यामि हत्वा स्वजनमाहवे' इत्येतदपि ॥ ३१ ॥ ननु युद्धस्य कर्तव्यत्वेऽपि न भीष्मद्रोणादिभिर्गुरुभिः सह तत्कर्तुमुचितमतिगर्हितत्वादित्याशङ्क्याह—यदृच्छया स्वप्रयत्नव्यतिरेकेण । चोऽवधारणे । अप्रार्थनयैवोपस्थितमीदृशं भीष्मद्रोणादिवीरपुरुषप्रतियोगिकं कीर्तिराज्यलाभदृष्टफलसाधनं युद्धं ये क्षत्रियाः प्रतियोगिकत्वेन लभन्ते ते सुखभाज एव । जये सत्यनायासेनैव यशसो राज्यस्य च लाभात्, पराजये चातिशीघ्रमेव स्वर्गस्य लाभादित्याह—**स्वर्गद्वारमपावृतमिति** । अप्रतिबद्धं स्वर्गसाधनं युद्धमव्यवधानेनैव स्वर्गजनकम् । ज्योतिष्टोमादिकं तु चिरतरेण । देहपातस्य प्रतिबन्धाभावस्य चापेक्षणादित्यर्थः । स्वर्गद्वारमित्यनेन श्येनादिवत्प्रत्यवायशङ्का परिहृता । श्येनादयो हि विहिता अपि फलदोषेण दुष्टाः । तत्फलस्य शत्रुवधस्य 'न हिंस्यात्सर्वा भूतानि', 'ब्राह्मणं न हन्यात्' इत्यादिशास्त्रनिषिद्धस्य प्रत्यवायजनकत्वात् फले विध्यभावाच्च न 'विधिस्पृष्टे निषेधानवकाशः' इति न्यायावतारः । युद्धस्य हि फलं स्वर्गः स च न निषिद्धः । तथाच मनुः—'आहवेषु मिथोन्योन्यं जिघांसन्तो महीक्षितः । युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥' इति । युद्धं तु अग्नीषोमीयाद्यालम्भवद्विहितत्वान्न निषेधेन स्प्रष्टुं शक्यते, षोडशिग्रहणादिवद्ग्रहणाग्रहणयोस्तुल्यबलतया विकल्पवत्सामान्यशास्त्रस्य विशेषशास्त्रेण संकोचसंभवात् । तथाच 'विधिस्पृष्टे निषेधानवकाशः' इति न्यायाद्युद्धं न प्रत्यवायजनकम् । नापि भीष्मद्रोणादिगुरुब्राह्मणादिवधनिमित्तो दोषस्तेषामाततायित्वात् । तदुक्तं मनुना—'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥ आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥' इत्यादि । ननु 'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥' इति याज्ञवल्क्यवचनादाततायिब्राह्मणवधेऽपि प्रत्यवायोऽस्त्येव । 'ब्राह्मणं न हन्यात्' इति हि दृष्टप्रयोजनानपेक्षत्वाद्धर्मशास्त्रम्, 'जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्' इति च स्वजीवनार्थत्वादर्थशास्त्रम् । अत्रोच्यते 'ब्रह्मणे ब्राह्मणमालभेत' इतिवद्युद्धविधायकमपि धर्मशास्त्रमेव । 'सुखदुःखे समे कृत्वा' इत्यत्र दृष्टप्रयोजनानपेक्षत्वस्य वक्ष्यमाणत्वात् । याज्ञवल्क्यवचनं तु दृष्टप्रयोजनोद्देश्यककूटयुद्धादिकृतवधविषयमित्यदोषः । मिताक्षराकारस्तु—'धर्मार्थसंनिपातेऽर्थग्राहिण एतदेवेति द्वादशवार्षिकप्रायश्चित्तस्यैतच्छब्दपरामृष्टस्यापस्तम्बेन विधानान्मित्रलब्ध्याद्यर्थशास्त्रानुसारेण चतुष्पाद्व्यवहारे शत्रोरपि जये धर्मशास्त्रातिक्रमो न कर्तव्य इत्येतत्परं वचनमेतत्' इत्याह । भवत्वेवं न नो हानिः । तदेवं युद्धकरणे सुखोक्तेः 'स्वजनं हि कथं हत्वा सुखिनः स्याम माधव'

५ भाष्योत्कर्षदीपिका ।

त्यर्थः । अतो मोक्षरूपश्रेयोर्थिनो ते युद्धेन स्वधर्मेण जयं लब्ध्वा यज्ञाद्यनुष्ठानप्रजापालनादिभ्योऽन्यत्तत्साधनं न भवतीत्याशयः ॥ ३१ ॥ स्वधर्मत्वाद्युद्धं प्रयत्नेनापि क्षत्रियैः संपाद्यते तव तु भाग्यवशाद्भवत्प्रयत्नंविनैवोपपन्नं अतः कर्तव्यमेवेत्याह—**यदृच्छयेति** । अप्रार्थिततयागतं सद्यःस्वर्गप्रदं यतः उद्घाटितं स्वर्गद्वारं ये ईदृशं युद्धं क्षत्रिया लभन्ते त एव सुखिनः राज्य-

६ श्रीधरीव्याख्या ।

न्यत् ॥ ३१ ॥ किंच महति श्रेयसि स्वयमेवोपगते सति कुतो विकम्पस इत्याह—**यदृच्छयेति** । यदृच्छयाऽप्रार्थितमेवोपपन्नं प्राप्तमीदृशं युद्धं सुखिनः सभाग्या एव लभन्ते । यतो निरावरणं स्वर्गद्वारमेवैतत् । यद्वा य एवंविधं युद्धं लभन्ते त एव सुखिन इत्यर्थः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

यदृच्छयेति । अन्येऽपि काममयाः क्षत्रियास्तैरपीदृशं युद्धं स्वर्गहेतुत्वान्न त्याज्यम्, किं पुनर्यस्येदृशं ज्ञानमुपदिष्टमिति तात्पर्यम् ॥ ३२ ॥

**अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥**
**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

अथ त्वमिमं धर्म्यं धर्मादनपेतं विहितं संग्रामं युद्धं न करिष्यसि चेत्ततस्तदकरणात्स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि ॥ ३३ ॥ अकीर्तिमिति । न केवलं स्वधर्मकीर्तिपरित्यागोऽकीर्तिं चापि भूतानि कथयिष्यन्ति ते तवाव्ययां दीर्घकालाम् । धर्मात्मा शूर इत्ये-

२ आनन्दगिरिव्याख्या ।

सिद्धेस्तादर्थ्येनोत्थानं शोकमोहौ हित्वा कर्तव्यमित्यर्थः ॥ ३२ ॥ स्वधर्मस्य युद्धस्य श्रद्धया करणे स्वर्गादिमहाफलप्राप्तिं प्रदर्श्य तदकरणे प्रत्यवायप्राप्तिं प्रदर्शयन्नुत्तरश्लोकगताथशब्दार्थं कथयति—**एवमिति** । विहितत्वं फलवत्त्वमित्यनेन प्रकारेणेत्यर्थः, अन्वयार्थः पुनश्चेदित्यनूद्यते, महादेवादीत्यादिशब्देन महेन्द्रादयो गृह्यन्ते ॥ ३३ ॥ युद्धाकरणे क्षत्रियस्य प्रत्यवायमामुष्मिकमापाद्य शिष्टगर्हालक्षणं दीर्घकालभाविनमैहिकमपि प्रत्यवायं प्रतिलम्भयति—**न केवलमिति** । युद्धे स्वस्मरणसंदेहात्तत्परिहारार्थमकीर्तिरपि सोढव्या आत्मसंरक्षणस्य श्रेयस्करत्वादित्याशङ्क्याह—**धर्मात्मेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भवन्तीति संबन्धः ॥ ३२ ॥ युद्धत्यागे इष्टनाशोऽनिष्टप्राप्तिश्च भवतीत्याह—**अथचेदिति** ॥ ३३ ॥ अव्ययां

४ मधुसूदनीव्याख्या ।

इत्यर्जुनोक्तमपाकृतम् ॥ ३२ ॥ ननु नाहं युद्धफलकामः 'न काङ्क्षे विजयं कृष्ण', 'अपि त्रैलोक्यराज्यस्य' इत्युक्तत्वात्तत्कथं मया कर्तव्यमित्याशङ्क्याकरणे दोषमाह—अथेति पक्षान्तरे । इमं भीष्मद्रोणादिवीरपुरुषप्रतियोगिकं धर्म्यं हिंसादिदोषेणादुष्टं सतां धर्मादनपेतमिति वा । सच मनुना दर्शितः–'न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून् । न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ॥ न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् । न मुक्तकेशं नासीनं न तवास्मीतिवादिनम् ॥ न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् । नायुध्यमानं पश्यन्तं न परेण समागतम् ॥ नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् । न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥' इति । सतां धर्ममुल्लङ्घ्य युध्यमानो हि पापीयान्स्यात्, त्वं तु परैराहूतोऽपि सद्धर्मोपेतमपि संग्रामं युद्धं न करिष्यसि धर्मतो लोकतो वा भीतः परावृत्तो भविष्यसि चेत् ततो 'निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्' इत्यादिशास्त्रविहितस्य युद्धस्याकरणात्स्वधर्मं हित्वाऽननुष्ठाय कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा 'न निवर्तेत संग्रामात्' इत्यादिशास्त्रनिषिद्धसंग्रामनिवृत्त्याचरणजन्यं पापमेव केवलमवाप्स्यसि नतु धर्मं कीर्तिं चेत्यभिप्रायः । अथवाऽनेकजन्मार्जितं धर्मं त्यक्त्वा राजकृतं पापमेवाप्स्यसीत्यर्थः । यस्मात्त्वां परावृत्तमेते दुष्टा अवश्यं हनिष्यन्ति अतः परावृत्तहतः सन् चिरोपार्जितनिजसुकृतपरित्यागेन परोपार्जितदुष्कृतमात्रभाग्भाभूरित्यभिप्रायः । तथाच मनुः–'यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः । भर्तुर्यद्दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते ॥ यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम् । भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ॥' इति । यावज्ञवल्क्योऽपि–'राजा सुकृतमादत्ते हतानां विपलायिनाम्' इति । तेन यदुक्तम् 'पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः', 'एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन' इति तन्निराकृतं भवति ॥ ३३ ॥ एवं कीर्तिधर्मयोरिष्टयोरप्राप्तिरनिष्टस्य च पापस्य प्राप्तिर्युद्धपरित्यागे दर्शिता । तत्र पापाख्यमनिष्टं व्यवधानेन दुःखफलमामुत्रिकत्वात्, शिष्टगर्हालक्षणं त्वनिष्टमासन्नफलदमत्यसह्यमित्याह—भूतानि देवर्षिमनुष्यादीनि ते तवाव्ययां दीर्घकालमकीर्तिं न धर्मात्मायं न शूरोऽयमित्येवंरूपां कथयिष्यन्त्यन्योन्यं कथाप्रसङ्गे । कीर्तिधर्मनाशसमुच्चयार्थौ निपातौ । न केवलं कीर्तिधर्मौ हित्वा पापं प्राप्स्यसि अपितु अकीर्तिं च प्राप्स्यसि । न केवलं

५ भाष्योत्कर्षदीपिका ।

स्वर्गादिसुखभाजः । पार्थेति संबोधयन्स्वोत्साहसदृशे उत्साहे प्रेरयति ॥ ३२ ॥ विपक्षे दोषमाह—**अथेति** ॥ ३३ ॥ किंच अकीर्तिमव्ययां दीर्घकालां धर्मात्मा शूर इत्येवमादिभिर्गुणैः संभावितस्य चाकीर्तिर्मरणादतिरिच्यते तस्याकीर्तेर्मरणं वरमित्यर्थः ॥ ३४ ॥ न

६ श्रीधरीव्याख्या ।

एतेन 'स्वजनं हि कथं हत्वा सुखिनः स्याम' इति यदुक्तं तन्निरस्तं भवति ॥ ३२ ॥ विपक्षे दोषमाह—**अथ चेत्त्वमिति** ॥ ३३ ॥ किंच **अकीर्तिमिति** । अव्ययां शाश्वतीम् । संभावितस्य बहुमानितस्याकीर्तिर्मरणादतिरिच्यतेऽधिकतरा भवति ॥ ३४ ॥ किंच

७ अभिनवगुप्ताचार्यव्याख्या ।

थद्भयाच्च भवान्निवर्तते तदेव शतशाखमुपनिपतिष्यति भवत इत्याह—अथ चेदिति ॥ ३३ ॥ किंच अकीर्तिं चेति । अथ चेदित्यादि कृतनिश्चय

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**
**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

वमादिभिर्गुणैः संभावितस्य चाकीर्तिर्मरणादतिरिच्यते । संभावितस्य चाकीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥ किंच—भयादिति । भयात्कर्णादिभ्यो रणाद्युद्धादुपरतं निवृत्तं मंस्यन्ते चिन्तयिष्यन्ति न कृपयेति त्वां महारथा दुर्योधनप्रभृतयः । येषां च त्वं दुर्योधनादीनां बहुमतो बहुभिर्गुणैर्युक्त इत्येवं बहुमतो भूत्वा पुनः यास्यसि लाघवं लघुभावम् ॥ ३५ ॥ किंच अवाच्यवादानिति । अवाच्यवादान् अवक्तव्यवादांश्च बहूननेकप्रकारान्वदिष्यन्ति तवाहिताः शत्रवो निन्दन्तः कुत्सयन्तस्तव

२ आनन्दगिरिव्याख्या ।

मान्यानामकीर्तिर्भवति मरणादपि दुःसहेति तात्पर्यार्थमाह—**संभावितस्येति** ॥ ३४ ॥ इतश्च त्वया युद्धं कर्तव्यमित्याह—**किंचेति** । प्राणिषु कृपया नाहं युद्धं करिष्यामीत्याशङ्क्याह—**भयादिति** । महारथानेव विशिनष्टि—**येषां चेति** । दुर्योधनादिभिस्तवोपहास्यतानिरसनाय संग्रामे प्रवृत्तिरवश्यंभाविनीत्यर्थः ॥ ३५ ॥ इतश्च मा त्वं युद्धादुपरमं कार्षीरित्याह—**किंचेति** । ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः स्वसामर्थ्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दीर्घकालम् ॥ ३४ ॥ अकीर्तिमेवाह—**भयादिति** । त्वं बहुमतो भूत्वा स्वत एव अतिश्लाघ्यवृत्तः सन् लाघवं लघुभावं कातर्याख्यं येषां पुरतो यास्यसि, ते महारथास्त्वां भयाद्रणादुपरतं मंस्यन्त इति योजना ॥ ३५ ॥ किंच अवाच्यवादान् वक्तुमयोग्यान् शब्दान्षण्ढतिलोऽर्जुन इत्यादीन् । सामर्थ्यं निन्दन्तः धिगस्य शौर्यं यो भीष्मादि-

४ मधुसूदनीव्याख्या ।

त्वमेव तां प्राप्स्यसि, अपितु भूतान्यपि कथयिष्यन्तीति वा निपातयोरर्थः । ननु युद्धे स्वमरणसंदेहात्तत्परिहारार्थमकीर्तिरपि सोढव्या आत्मरक्षणस्यात्यन्तापेक्षितत्वात् । तथाचोक्तं शान्तिपर्वणि–'साम्ना दानेन भेदेन समस्तैरुत वा पृथक् । विजेतुं प्रयतेतारीन्न युध्येत कदाचन ॥ अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः । पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत् ॥ त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे । तथा युध्येत संपत्तौ विजयेत रिपून्यथा ॥' इति । एवमेव मनुनाप्युक्तम् । तथाच मरणभीतस्य किमकीर्तिर्दुःखमिति शङ्कामपनुदति—संभावितस्य धर्मात्मा शूर इत्येवमादिभिरनन्यलभ्यैर्गुणैर्बहुमतस्य जनस्याकीर्तिर्मरणादप्यतिरिच्यतेऽधिका भवति । चो हेतौ । एवं यस्मादतोऽकीर्तेर्मरणमेव वरं न्यूनत्वात् । त्वमप्यतिसंभावितोऽसि महादेवादिसमागमेन । अतो नाकीर्तिदुःखं सोढुं शक्ष्यसीत्यभिप्रायः । उदाहृतवचनं त्वर्थशास्त्रत्वात् 'न निवर्तेत संग्रामात्' इत्यादिधर्मशास्त्राद्दुर्बलमिति भावः ॥ ३४ ॥ ननूदासीना मां निन्दन्तु नाम भीष्मद्रोणादयस्तु महारथाः कारुणिकत्वेन स्तोष्यन्ति मामित्यत आह—कर्णादिभ्यो भयाद्युद्धान्निवृत्तं न कृपयेति त्वां मंस्यन्ते भीष्मद्रोणदुर्योधनादयो महारथाः । ननु ते मां बहुमन्यमानाः कथं भीतं मंस्यन्त इत्यत आह—येषामेव भीष्मादीनां त्वं बहुमतो बहुभिर्गुणैर्युक्तोऽयमर्जुन इत्येवं मतस्त एव त्वां महारथा भयादुपरतं मंस्यन्त इत्यन्वयः । अतो भूत्वा युद्धादुपरत इति शेषः । लाघवमनादरविषयत्वं यास्यसि प्राप्स्यसि । सर्वेषामिति शेषः । येषामेव त्वं प्राग्बहुमतोऽभूस्तेषामेव तादृशो भूत्वा लाघवं यास्यसीति वा ॥ ३५ ॥ ननु भीष्मादयो महारथा न बहु मन्यन्तां दुर्योधनादयस्तु शत्रवो बहु मंस्यन्ते मां युद्धनिवृत्त्या तदुपकारित्वादित्यत आह—तवासाधारणं यत्सामर्थ्यं लोकप्रसिद्धं तन्निन्दन्तस्तव शत्रवो दुर्योधनादयोऽवाच्यान्वादान्वचनानर्हान्षण्ढतिलादिरूपानेव शब्दान्बहूननेकप्रकारान्वदिष्यन्ति नतु बहु मंस्यन्त इत्यभिप्रायः । अथवा तव सामर्थ्यं स्तुतियोग्यत्वं तव निन्दन्तोऽहिता अवाच्यवादान्वदिष्यन्तीत्यन्वयः । ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः शत्रुकृतसामर्थ्यनिन्दनादिदुःखं सोढुं शक्ष्यामीत्यत आह—ततः

५ भाष्योत्कर्षदीपिका ।

केवलमितरभूतान्येवाकीर्तिं कथयिष्यन्ति किंतु महारथा अपीत्याह—**भयादिति** । कर्णादिभयाद्युद्धान्निवृत्तं न कृपयेति चिन्तयिष्यन्ति । बहुमतो बहुभिर्गुणैर्मतो भूत्वा लघुतां यास्यसि ॥ ३५ ॥ न केवलमेतावदेव मंस्यन्ते अपि तु षण्ढतिल इत्यादिरूपानवाच्यवादानपि वदिष्यन्ति यतोऽहिता इत्याह—**अवाच्येति** । वक्तुमयोग्यान्वादान्वचनानि । अहिताः शत्रवः । ततो निन्दाप्राप्तेर्दुःखा-

६ श्रीधरीव्याख्या ।

**भयादिति** । येषां बहुगुणत्वेन त्वं पूर्वं संमतोऽभूस्त एव भयेन संग्रामात्त्वां निवृत्तं मन्येरन्, ततश्च पूर्वं बहुमतो भूत्वा लाघवं यास्यसि ॥ ३५ ॥ किंच **अवाच्येति** । अवाच्यान्वादान्वचनानर्हाञ्शब्दांस्तवाहितास्त्वच्छत्रवो वदिष्यन्ति ॥ ३६ ॥ यच्चोक्तं 'न चैतद्विद्मः

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**
**सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।**
**ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्वदीयं सामर्थ्यं निवातकवचादियुद्धनिमित्तम् । तस्मात्ततो निन्दाप्राप्तेर्दुःखाद्दुःखतरं नु किम् । ततः कष्टतरं दुःखं नास्तीत्यर्थः ॥ ३६ ॥ हतो वेति । युद्धे पुनः क्रियमाणे कर्णादिभिर्हतो वा प्राप्स्यसि स्वर्गं, हतः सन्स्वर्गं प्राप्स्यसि, जित्वा वा कर्णादीन् शूरान् भोक्ष्यसे महीम्, उभयथापि तव लाभ एवेत्यभिप्रायः । यत एवं तस्मादुत्तिष्ठ कौन्तेय, युद्धाय कृतनिश्चयः । जेष्यामि शत्रून्मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥ ३७ ॥ तत्र युद्धं स्वधर्म इत्येवं युध्यमानस्योपदेशमिमं शृणु—सुखदुःखे इति । सुखदुःखे

२ आनन्दगिरिव्याख्या ।

निन्दनादि शत्रुकृतं सोढुं शक्ष्यामीत्याशङ्क्याह—**तत इति** ॥ ३६ ॥ तर्हि युद्धे गुर्वादिवधवशान्मध्यस्थनिन्दा ततो निवृत्तौ शत्रुनिन्देत्युभयतःपाशा रज्जुरित्याशङ्क्याह—**युद्धे पुनरिति** । जये पराजये च लाभध्रौव्याद्युद्धार्थादुत्थानमावश्यकमित्याह—**तस्मादिति** । नहि परिशुद्धकुलस्य क्षत्रियस्य युद्धायोद्युक्तस्य तस्मादुपरमः साधीयानित्याह—**कौन्तेयेति** । जये पराजये चेत्येतदुभयथेत्युच्यते, जयादिनियमाभावेऽपि लाभनियमे फलितमाह—**यत इति** । कृतनिश्चयत्वमेव विशदयति—**जेष्यामीति** ॥ ३७ ॥ पापभीरुतया युद्धाय निश्चयं कृत्वा नोत्थातुं शक्नोमीत्याशङ्क्याह—**तत्रेति** । युद्धस्य स्वधर्मतया कर्तव्यत्वे सतीति यावत् । सुहृज्जीवनमरणादिनिमित्तयोः सुखदुःखयोः समताकरणं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भयात् पलायित इति । इदं वचनं मरणादप्यधिकं दुःखम् । इतोऽन्यद्दुःखतरमधिकं दुःखं किम् । न किमपीत्यर्थः ॥ ३६ ॥ 'यद्वा जयेम यदि वा नो जयेयुः' इत्युक्तं तत्राह—**हतो वेति** । रणे स्थितस्य स्वर्गो वा राज्यं वा सिद्धमस्तीति पक्षद्वयमपि हितावहमित्यर्थः ॥ ३७ ॥ स्वधर्मस्य युद्धस्याकरणे धर्मकीर्त्योर्नाशः पापावाप्तिश्च 'अथचेत्' इति श्लोकेन भगवता यद्यप्युक्ता तथापि युद्धस्य अर्जुनाभिमते काम्यत्वपक्षे 'अहो बत महत्पापं कर्तुं व्यवसिता वयम् । यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥' इति तत्करणे पापप्रसक्तिरस्ति तां निवारयितुं सिद्ध्यसिद्ध्योः समत्वलक्षणं योगमाह—**सुखदुःखे इति** । समे कृत्वा सुखदुःखयोस्तद्धेत्वोः राज्यलाभालाभयोस्तद्धेत्वोश्च

४ मधुसूदनीव्याख्या ।

तस्मान्निन्दाप्राप्तिदुःखात्किंनु दुःखतरम् । ततोऽधिकं किमपि दुःखं नास्तीत्यर्थः ॥ ३६ ॥ ननु तर्हि युद्धे गुर्वादिवधवशान्मध्यस्थकृता निन्दा, ततो निवृत्तौ तु शत्रुकृता निन्देत्युभयतःपाशा रज्जुरित्याशङ्क्य जये पराजये च लाभध्रौव्याद्युद्धार्थमेवोत्थानमावश्यकमित्याह । स्पष्टं पूर्वार्धम् । यस्मादुभयथापि ते लाभस्तस्माज्जेष्यामि शत्रून्मरिष्यामि वेति कृतनिश्चयः सन्युद्धायोत्तिष्ठ, अन्यतरफलसंदेहेऽपि युद्धकर्तव्यताया निश्चितत्वात् । एतेन 'न चैतद्विद्मः कतरन्नो गरीयः' इत्यादि परिहृतम् ॥ ३७ ॥ नन्वेवं स्वर्गमुद्दिश्य युद्धकरणे तस्य नित्यत्वव्याघातः, राज्यमुद्दिश्य युद्धकरणे त्वर्थशास्त्रत्वाद्धर्मशास्त्रापेक्षया दौर्बल्यं स्यात्, ततश्च काम्यस्याकरणे कुतः पापं, दृष्टार्थस्य गुरुब्राह्मणादिवधस्य कुतो धर्मत्वं, तथाच 'अथ चेत्' इति श्लोकार्थो व्याहत इति चेत्तत्राह—समताकरणं रागद्वेषराहित्यं सुखे तत्कारणे लाभे तत्कारणे जये च रागमकृत्वा, एवं दुःखे तद्धेतावलाभे तद्धेतावपजये च द्वेषमकृत्वा, ततो युद्धाय युज्यस्व संनद्धो भव । एवं सुखकामनां दुःखनिवृत्ति-

५ भाष्योत्कर्षदीपिका ।

त्कष्टतरं दुःखं नास्तीत्यर्थः ॥ ३६ ॥ विपक्षे दोषमुक्त्वा युद्धप्रवृत्तौ सर्वथा लाभ एवेत्याशयेनाह—**हत इति** । हतः कर्णादिभिः, जित्वा कर्णादीन्, यत एवं तस्मात् शत्रूञ्जेष्यामि मरिष्यामीति निश्चयं कृत्वोत्तिष्ठ । कौन्तेयेति संबोधयन्शत्रूञ्जित्वा राज्यलाभेनावश्यं त्वया कुन्त्यै सुखं प्रदेयमिति द्योतयति ॥ ३७ ॥ ननु गुर्वादिवधार्थं प्रवृत्तस्य पापावाप्त्या कुतः स्वर्गप्राप्तिः, जित्वा वा कुतो भोगसुखं निन्दया व्याप्तत्वात्तेषामित्याशङ्क्य निष्कामस्य समदृष्टेः स्वधर्मबुद्ध्या प्रवृत्तस्य ते पापादिप्राप्तिर्नास्तीत्याशयेनाह—**सुखेति** ।

६ श्रीधरीव्याख्या ।

कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः' इति तत्राह—**हतो वेति** । पक्षद्वयेऽपि तव लाभ एवेत्यर्थः ॥ ३७ ॥ यदप्युक्तं 'पापमेवाश्रयेदस्मान्' इति तत्राह—**सुखदुःखे इति** । सुखदुःखे समे कृत्वा, तथा तयोः कारणभूतौ यौ लाभालाभावपि, तयोरपि

७ अभिनवगुप्ताचार्यव्याख्या ।

इत्यन्तं श्लोकपञ्चकमिदमुपगम्यवादरूपमुच्यते । यदि लौकिकेन व्यवहारेणास्से भवांस्तथाप्यवश्यानुष्ठेयमेतत् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

**एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

समे तुल्ये कृत्वा रागद्वेषावप्यकृत्वेत्येतत् तथा लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व, नैवं युद्धं कुर्वन्पापमवाप्स्यसीत्येष उपदेशः प्रासङ्गिकः ॥ ३८ ॥ शोकमोहापनय-

२ आनन्दगिरिव्याख्या ।

कथमिति तत्राह—रागद्वेषाविति । लाभः शत्रुकोषादिप्राप्तिरलाभस्तद्विपर्ययः, न्याय्येन युद्धेनापरिभूतेन परस्य परिभवो जयस्तद्विपर्ययस्त्वजयस्तयोर्लाभालाभयोर्जयाजययोश्च समताकरणं समानमेव, रागद्वेषावकृत्वेत्येतद्दर्शयितुं तथेत्युक्तम्, यथोक्तोपदेशवशात्परमार्थदर्शनप्रकरणे युद्धकर्तव्यतोक्तेः समुच्चयपरत्वं शास्त्रस्य प्राप्तमित्याशङ्क्याह—एष इति । क्षत्रियस्य तव शर्मभूतयुद्धकर्तव्यतानुवादप्रसङ्गागतत्वादस्योपदेशस्य नानेन मिषेण समुच्चयः सिध्यतीत्यर्थः ॥३८॥ ननु 'स्वधर्ममपि चावेक्ष्य' इत्यादिश्लोकैर्न्यायावष्टम्भेन शोकमोहापनयनस्य तात्पर्येणोक्तत्वात्तस्मिन्नुपसंहर्तव्ये किमिति परमार्थदर्शनमुपसंह्रियते तत्राह—शोकेति । स्वधर्ममपीत्यादिभिरतीतैः श्लोकैः शोकमोहयोः स्वजनमरणगुर्वादिवधशङ्कानिमित्तयोः सम्यग्ज्ञानप्रतिबन्धकयोरपनयार्थं वर्णाश्रमकृतं धर्ममनुतिष्ठतः स्वर्गादि सिध्यति नान्यथेत्यन्वय-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जयाजययोः रागद्वेषावकृत्वेत्यर्थः । केवलं स्वधर्मोऽयमिति मत्वा युद्धाय युज्यस्व घटस्व । एवं कुर्वंस्त्वं पापं नावाप्स्यसि । यस्तु राज्यलोभेन सुहृद्वधं करोति तस्यास्त्येव पापमिति भावः । कथं तर्हि स्वधर्मत्वेनानुष्ठितेऽपि युद्धे हतो वा प्राप्स्यसि स्वर्गमित्यादिफलस्मरणमानुषङ्गिकमिति ब्रूमः । तथाचापस्तम्बः 'तद्यथाम्रे फलार्थे निमिते च्छाया गन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते नो चेदनूत्पद्यन्ते न धर्महानिर्भवति' इत्याम्रनिदर्शनेन प्रतिपादयति ॥३८॥ एवमर्जुनस्य पूर्वोक्तौ द्वावपि मोहावपनीतौ, तत्र 'कं घातयति हन्ति कम्' इति कर्तृत्वकारयितृत्वयोरात्मन्यसंभव उक्तः, 'ततो युद्धाय युज्यस्व' इति नियोगश्चोक्तः, नह्यकर्तुराकाशवत्सर्वगतस्य नियोज्यत्वं संभवतीति परस्परव्याहत-

४ मधुसूदनीव्याख्या ।

कामनां वा विहाय स्वधर्मबुद्ध्या युध्यमानो गुरुब्राह्मणादिवधनिमित्तं नित्यकर्माकरणनिमित्तं च पापं न प्राप्स्यसि । यस्तु फलकामनया करोति स गुरुब्राह्मणादिवधनिमित्तं पापं प्राप्नोति । यो वा न करोति स नित्यकर्माकरणनिमित्तम् । अतः फलकामनामन्तरेण कुर्वन्नुभयविधमपि पापं न प्राप्नोतीति प्रागेव व्याख्यातोऽभिप्रायः । 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति त्वानुषङ्गिकफलकथनमिति न दोषः । तथाचापस्तम्बः स्मरति 'तद्यथाम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते नो चेदनूत्पद्यन्ते न धर्महानिर्भवति' इति । अतो युद्धशास्त्रस्यार्थशास्त्रत्वाभावात् 'पापमेवाश्रयेदस्मान्' इत्यादि निराकृतं भवति ॥ ३८ ॥ ननु भवतु स्वधर्मबुद्ध्या युध्यमानस्य पापाभावस्तथापि न मांप्रति युद्धकर्तव्यतोपदेशस्तवोचितः 'य एनं वेत्ति हन्तारं' इत्यादिना 'कथं स पुरुषः पार्थ कं घातयति हन्ति कम्' इत्यनेन विदुषः सर्वकर्मप्रतिक्षेपात् । नह्यकर्त्रभोक्तृशुद्धस्वरूपोऽहमस्मि युद्धं कृत्वा तत्फलं भोक्ष्य इति च ज्ञानं संभवति विरोधात्, ज्ञानकर्मणोः समुच्चयासंभवात्प्रकाशतमसोरिव । अयं चार्जुनाभिप्रायो 'ज्यायसी चेत्' इत्यत्र व्यक्तो भविष्यति । तस्मादेकमेव मांप्रति ज्ञानस्य कर्मणश्चोपदेशो नोपपद्यते इति चेन्न, विद्वदविद्वदवस्थाभेदेन ज्ञानकर्मोपदेशोपपत्तेरित्याह भग-

५ भाष्योत्कर्षदीपिका ।

सुखदुःखे समे कृत्वा सुखे रागं दुःखे द्वेषं चाकृत्वा तथा तत्साधनीभूतौ लाभालाभौ तत्साधनीभूतौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि । तथाचाग्नीषोमीयहिंसाविधायकवचनवद्युद्धहिंसाविधायकमपि धर्मशास्त्रविशेषवचनं 'न हिंस्यात्सर्वा भूतानि' इत्यस्य सामान्यशास्त्रस्य बाधकमतः पापावाप्तेरभावाद्युद्धप्रवृत्तौ सर्वथापि लाभ एवेति ॥३८॥ एष उपदेशः शोकमोहापनयसाधनस्यात्मतत्त्वज्ञानस्य प्रसङ्गे आगतः लौकिको न्यायः स्वधर्मविद्भिः कैश्चिल्लोकैर्यथा स्वधर्मप्रतिबन्धकौ शोकमोहावकृत्वा स्वधर्मोऽनुष्ठीयते तद्वत्त्वं स्वधर्ममपि चावेक्ष्य शोकमोहाभिभूतो विकम्पितुं नार्हसीति । अथ चैनमित्यादिवत्प्रासङ्गिकः स्वधर्ममपीत्याद्यष्टभिः श्लोकैरुक्तो न तु समुच्चयतात्पर्येण, परमार्थदर्शनस्येह प्रकृतत्वात् । तच्चोक्तं परमार्थदर्शनमुपसंहरन् तदुपायभूतां योगनिष्ठां

६ श्रीधरीव्याख्या ।

कारणभूतौ जयाजयावपि समौ कृत्वा एतेषां समत्वे कारणं हर्षविषादराहित्यम् । युज्यस्व सन्नद्धो भव । सुखाद्यभिलाषं हित्वा स्वधर्मबुद्ध्या युध्यमानः पापं न प्राप्स्यसीत्यर्थः ॥ ३८ ॥ उपदिष्टं ज्ञानयोगमुपसंहरंस्तत्साधनं कर्मयोगं प्रस्तौति—

७ अभिनवगुप्ताचार्यव्याख्या ।

सुखदुःखे इति । तव तु स्वधर्मतयैव कर्माणि कुर्वतो न कदाचित्पापसंबन्धः ॥ ३८ ॥ एषा ते इति । एषा च तव सांख्ये सम्यग्ज्ञाने बुद्धिर्निश्चया-

१ श्रीमच्छांकरभाष्यम् ।

नाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो नतु तात्पर्येण, परमार्थदर्शनं त्विह प्रकृतं तच्चोक्तमुपसंह्रियते—एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय । इह हि दर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात् 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते श्रोतारश्च विषयविभागेन सुखं ग्रहीष्यन्तीत्यत आह—एषा ते इति । एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसंसार-

२ आनन्दगिरिव्याख्या ।

व्यतिरेकात्मको लोकप्रसिद्धो न्यायो यद्यपि दर्शितस्तथापि नासौ तात्पर्येणोक्त इत्यर्थः । किं तर्हि तात्पर्येणोक्तं तदाह—**परमार्थेति** । 'न त्वेवाहं जातु नासं' इत्यादि सप्तम्या परामृश्यते । उक्तम् 'न जायते म्रियते वा कदाचिन्न' इत्यादिनोपपादितमित्यर्थः । उपसंहारप्रयोजनमाह—**शास्त्रेति** । तस्य वस्तुद्वारा विषयो निष्ठाद्वयं तस्य विभक्तस्य तेनैव विभागेन प्रदर्शनार्थं परमार्थदर्शनोपसंहार इत्यर्थः । ननु किमित्यत्र शास्त्रस्य विषयविभावः प्रदर्श्यते उत्तरत्रैव तद्विभागप्रवृत्तिप्रतिपत्त्योः संभवादिति तत्राह—**इह हीति** । शास्त्रप्रवृत्तेः श्रोतृप्रतिपत्तेश्च सौकर्यार्थमादौ विषयविभागसूचनमित्यर्थः । उपसंहारस्य फलवत्त्वमेवमुक्त्वा तमेवोपसंहारमवतारयति—**अत आहेति** । परमार्थतत्त्वविषयां ज्ञाननिष्ठामुक्तामुपसंहृत्य वक्ष्यमाणां संगृह्णाति—**योगे त्विति** । तामेव बुद्धिं विशिष्टफलवत्त्वेनाभिष्टौति—**बुद्ध्येति** । तत्रोपसंहारभागं विभजते—**एषेत्यादिना** । बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यावर्तयति—**ज्ञानमिति** । तस्य सहकारिनिरपेक्षस्य विशिष्टं फलवत्त्वमाचष्टे—**साक्षादिति** । शोकमोहौ रागद्वेषौ कर्तृत्वं भोक्तृत्वमित्यादिरनर्थः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मेतदितीमामाशङ्कां अधिकारिभेदेन उभयं व्यवस्थापयन् परिहरति—**एषा ते इति** । एषा ते तुभ्यं अभिहिता अशोच्यानन्वशोचस्त्वमित्यादिना स्वधर्ममपि चावेक्ष्येत्यतः प्राक्तनेन संदर्भेणोक्ता । सांख्ये सम्यक् ख्यायते प्रकथ्यते वस्तुतत्त्वमनयेति संख्या उपनिषत् तत्र विदिते सांख्ये औपनिषदे ब्रह्मणि विषये बुद्धिर्ज्ञानं संसारनिवर्तकम् । एषा ते सांख्ये बुद्धिरभिहितेति संबन्धः । योगे 'सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते' इति वक्ष्यमाणलक्षणे विषये । तुशब्दः पूर्ववैलक्षण्यद्योतनार्थः । वक्ष्यति च ज्ञानकर्मनिष्ठयोर्विभिन्नाधिकारिकत्वं 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥' इति । एतेन ज्ञानकर्मणोः समुच्चयशङ्काप्यपास्ता । इमां 'स्वधर्ममपि चावेक्ष्य' इत्यादिनाऽनन्तरग्रन्थेनोक्तामपि विस्तरेणाभिधीयमानां शृणु । इमामेव बुद्धिं स्तौति सार्धेन—**बुद्ध्येत्यादिना** । ननु कर्मबन्धप्रहाणमात्मज्ञानेनैव श्रूयते 'तपसै-

४ मधुसूदनीव्याख्या ।

वान्—एषा 'नत्वेवाहम्' इत्याद्येकविंशतिश्लोकैः ते तुभ्यमभिहिता । सांख्ये सम्यक्ख्यायते सर्वोपाधिशून्यतया प्रतिपाद्यते परमात्मतत्त्वमनयेति संख्योपनिषत्तयैव तात्पर्यपरिसमाप्त्या प्रतिपाद्यते यः स सांख्यः । औपनिषदः पुरुष इत्यर्थः । तस्मिन्बुद्धिस्तन्मात्रविषयं ज्ञानं सर्वानर्थनिवृत्तिकारणं त्वांप्रति मयोक्तम् । नैतादृशज्ञानवतः क्वचिदपि कर्मोच्यते 'तस्य कार्यं न विद्यते' इति वक्ष्यमाणत्वात् । यदि पुनरेवं मयोक्तेऽपि तवैषा बुद्धिर्नोदेति चित्तदोषात्तदा तदपनयेनात्मतत्त्वसाक्षात्काराय कर्मयोग एव त्वयानुष्ठेयः । तस्मिन्योगे कर्मयोगे तु करणीयामिमां 'सुखदुःखे समे कृत्वा' इत्यत्रोक्तां फलाभिसन्धित्यागलक्षणां बुद्धिं विस्तरेण मया वक्ष्यमाणां शृणु । तुशब्दः पूर्वबुद्धेर्योगविषयत्वव्यतिरेकसूचनार्थः । तथाच शुद्धान्तःकरणंप्रति ज्ञानोपदेशोऽशुद्धान्तःकरणंप्रति कर्मोपदेश इति कुतः समुच्चयशङ्कया विरोधावकाश इत्यभिप्रायः । योगविषयां बुद्धिं फलकथनेन स्तौति । यया व्यवसायात्मिकया बुद्ध्या कर्मसु युक्तस्त्वं कर्मनिमित्तं बन्धमाशयाशुद्धिलक्षणं ज्ञानप्रतिबन्धं प्रकर्षेण पुनः प्रतिबन्धानुत्पत्तिरूपेण हास्यसि त्यक्ष्यसि । अयं भावः—कर्मनिमित्तो ज्ञानप्रतिबन्धः

५ भाष्योत्कर्षदीपिका ।

चित्तशुद्धये वक्तुं प्रतिजानीते—**एषेति** । एषा ते तुभ्यमभिहिता कथिता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसहेतुदोषनिवृत्तिकारणम् । योगे तु निःसङ्गतया द्वन्द्वप्रहाणपूर्वकं ईश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च तत्प्राप्त्युपाये इमामनन्तरोच्यमानां बुद्धिं शृणु । तां स्तौति—**ययेति** । यया बुद्ध्या योगविषयया युक्तः कर्मबन्धं कर्मैव धर्मा-

६ श्रीधरीव्याख्या ।

**एषा त इति** । सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्मिन्प्रकाशमानमात्मतत्त्वं सांख्यं तस्मिन्करणीया बुद्धिरेषा तवाभिहिता । एवमभिहितायामपि सांख्यबुद्धौ तव चेदात्मतत्त्वमपरोक्षं न संभवति तर्ह्यन्तःकरणशुद्धिद्वाराऽत्मतत्त्वापरोक्षार्थं

७ अभिनवगुप्ताचार्यव्याख्या ।

त्मिकोक्ता । एवैव च यथा योगे कर्मकौशलायोच्यते तथैव शृणु । यथा बुद्ध्या कर्मणां बन्धकत्वं त्यक्ष्यसि । नहि कर्माणि स्वयं बध्नन्ति जड-

१ श्रीमच्छांकरभाष्यम् ।

**हेतुदोषनिवृत्तिकारणं, योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमामनन्तरमेवोच्यमानां बुद्धिं शृणु । तां च बुद्धिं स्तौति प्ररोचनार्थम् । बुद्ध्या यया योगविषयया युक्तो हे पार्थ, कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धस्तं**

२ आनन्दगिरिव्याख्या ।

संसारस्तस्य हेतुर्दोषः स्वाज्ञानं तस्य निवृत्तौ निरपेक्षं कारणं ज्ञानम् । अज्ञाननिवृत्तौ ज्ञानस्यान्वयव्यतिरेकसमधिगतसाधनत्वादित्यर्थः । योगे त्विमामित्यादि व्याकुर्वन्योगशब्दस्य प्रकृते चित्तवृत्तिनिरोधविषयत्वं व्यवच्छिनत्ति—**तत्प्राप्तीति** । प्रकृतं मुक्त्युपयुक्तं ज्ञानं तत्पदेन परामृश्यते । ज्ञानोदयोपायमेव प्रकटयति—**निःसङ्गतयेति** । फलाभिसन्धिवैधुर्यं निःसङ्गत्वम् । बुद्धिस्तुतिप्रयोजनमाह—**प्ररोचनार्थमिति** । अभिष्टुता हि बुद्धिः श्रद्धातव्या सत्यनुष्ठातारमधिकरोति तेन स्तुतिरर्थवतीत्यर्थः । कर्मानुष्ठानविषयबुद्ध्या कर्मबन्धस्य कुतो निवृत्तिः, नहि तत्त्वज्ञानमन्तरेण

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वात्मपदं विदित्वा न लिप्यते कर्मणा पापकेन' इति श्रुतेः । कर्मयोगस्तु कर्मबन्धं दृढीकरिष्यत्येवेति कथमुच्यते कर्मबन्धं प्रहास्यसीति चेत्, श्रुतिबलादिति ब्रूमः । तथाहि 'ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥' इति श्रुतिरीश्वरेणेदं सर्वं स्तम्भितमस्तीति न कश्चित्किंचित्स्वेच्छया कर्तुं प्रभवति, अतः सर्वत्र ममताहीनः सन् भोक्तृत्वकर्तृत्वाभिमानत्यागेनैव भोगान् भुङ्क्ष्व, कर्माणि च कुरु, एवं कुर्वति त्वयि कर्मलेपो नास्ति इतोऽन्यदुपायान्तरं च नास्तीति वदति । तस्मात् कनककार्ष्णायसादिवत्केनचिद्विशेषरूपेणोपेतं कर्मैव सजातीयोच्छेदनिमित्तं भविष्यतीति युक्तमुक्तं कर्मयोगेनापि कर्मबन्धं प्रहास्यसीति ॥ ३९ ॥ एतदेवोपपादयति—

४ मधुसूदनीव्याख्या ।

कर्मणैव धर्माख्येनापनेतुं शक्यते । 'धर्मेण पापमपनुदति' इति श्रुतेः । श्रवणादिलक्षणो विचारस्तु कर्मात्मकप्रतिबन्धरहितस्यासंभावनादिप्रतिबन्धं दृष्टद्वारेणापनयतीति न कर्मबन्धनिराकरणायोपदेष्टुं शक्यते । अतोऽत्यन्तमलिनान्तःकरणत्वाद्बहिरङ्गसाधनं कर्मैव त्वयानुष्ठेयं, नाधुना श्रवणादियोग्यतापि तव जाता दूरे तु ज्ञानयोग्यतेति । तथाच वक्ष्यति 'कर्मण्येवाधिकारस्ते' इति । एतेन सांख्यबुद्धेरन्तरङ्गसाधनं श्रवणादि विहाय बहिरङ्गसाधनं कर्मैव भगवता किमित्यर्जुनायोपदिश्यत इति निरस्तम् । कर्मबन्धं संसारमीश्वरप्रसादनिमित्तज्ञानप्राप्त्या प्रहास्यसीति प्राचां व्याख्याने त्वध्याहारदोषः कर्मपदवैयर्थ्यं च परिहर्तव्यम् ॥ ३९ ॥ ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति

५ भाष्योत्कर्षदीपिका ।

धर्माख्यं बन्धस्तं प्रहास्यसि प्रकर्षेण त्यजसि । ननु योगविषयया बुद्ध्या कर्मबन्धस्य कुतो निवृत्तिः, नहि तत्त्वज्ञानमन्तरेण समूलं कर्म हातुं शक्यमिति चेत्सत्यम् । तथापीश्वरप्रसादनिमित्तज्ञानप्राप्तिद्वारेत्यभिप्रायः । द्वाराकथनं तु तत्साधनस्तुत्यर्थम् । पार्थेति संबोधयन् एतद्बुद्धियुक्तस्य मातृगर्भाप्राप्तिं सूचयति । यत्तु कर्मनिमित्तं बन्धमाशयाशुद्धिलक्षणं ज्ञानप्रतिबन्धं प्रहास्यसि । अयंभावः—कर्मनिमित्तो ज्ञानप्रतिबन्धः कर्मणैव धर्माख्येनापनेतुं शक्यते, श्रवणादिलक्षणविचारस्तु कर्मात्मकप्रतिबन्धरहितस्यासंभावनादिप्रतिबन्धं दृष्टद्वारेणापनयतीति न कर्मबन्धनिराकरणायोपदेष्टुं शक्यत इति । तन्न । स्वर्गनरकादिसाधनपुण्यपापप्रतिपादककर्मपदसंकोचे बन्धशब्दस्य प्रतिबन्धपरत्वे च कारणाभावात् । ननु एतद्बुद्ध्या धर्माधर्माख्यबन्धप्रहाणस्यासंभव एव कारणमिति चेन्न । ज्ञानप्राप्तिद्वारा तत्संभवस्योक्तत्वात् । 'असंभावनादेरपि पापनिमित्तचित्ताशुद्धिमूलकत्वात् । अतएव शुद्धचित्तस्य विद्याधरस्यासंभावनाद्यनुत्पत्तिर्वासिष्ठ उपाख्यायते—असंभावनादिनिमित्तदुरितनिवृत्त्यर्थमेवादृष्टोत्पादको विवरणाचार्यैः श्रवणे विधिरङ्गीकृतः । अन्यथा प्राकृतप्रबन्धाद्यर्थेन दृष्टेनासंभावनादिनिरासः स्यात्, तथाच वेदान्तश्रवणजेन पुण्येन पापनिवृत्त्या आत्मतत्त्वं सम्यगवगम्यत इति सर्वसंमतमनर्थकं भवेत् । एतेन कर्मबन्धं संसारं ईश्वरप्रसादनिमित्तज्ञानप्राप्त्या प्रहास्यसीति प्राचां व्याख्याने त्वध्याहारदोषः कर्मपदवैयर्थ्यं च परिहर्तव्यमिति प्रत्युक्तम् । जन्मबन्धविनिर्मुक्ता इत्यत्र जन्मपदवत्कर्मपदस्यापि बन्धस्वरूपबोधनपरत्वेन सार्थक्यात्, भाष्ये अभिप्राय इत्युक्त्या तस्याभिप्रायकथनपरत्वेनाध्याहारदोषाभावात्, स्वेनापि 'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते'

६ श्रीधरीव्याख्या ।

कर्मयोगे त्विमां बुद्धिं शृणु । यया बुद्ध्या युक्तः परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः सन् तत्प्रसादप्राप्तापरोक्षज्ञानेन कर्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि ॥ ३९ ॥ ननु कृष्यादिवत्कर्मणां कदाचिद्विघ्नबाहुल्येन फले व्यभिचारान्मन्त्राद्यङ्गवैगुण्येन च प्रत्यवायसंभवा-

१ मधुसूदनः. २ मधुसूदनः.

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**प्रहास्यसीश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः ॥ ३९ ॥ किंचान्यत्—नेहाभीति । नेह मोक्षमार्गे कर्मयोगे अभिक्रमनाशोऽभिक्रमणमभिक्रमः प्रारम्भस्तस्य नाशो नास्ति यथा कृष्यादेर्योगविषये**

२ आनन्दगिरिव्याख्या ।

समूलं कर्म हातुं शक्यमित्याशङ्क्याह—**ईश्वर इति** ॥ ३९ ॥ ननु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिंचित्करत्वादनेकानर्थकलुषितत्वेन दोषवत्त्वाच्च योगबुद्धिरपि न श्रद्धेयेति तत्राह—**किंचेति** । अन्यच्च किंचिदुच्यते । कर्मानुष्ठानस्यावश्यकत्वे कारणमिति यावत् । कर्मणा सह समाधेरनुष्ठातुमशक्यत्वादनेकान्तरायसंभवात्तत्फलस्य च साक्षात्कारस्य दीर्घकालाभ्याससाध्यस्यैकस्मिञ्जन्मन्यसंभवादर्थायोगी श्रद्धयेतानर्थे च निपतेदित्याशङ्क्याह—**नेहेति** । प्रतीकत्वेनोपात्तस्य नकारस्य पुनरन्वयानुगुणत्वेन नास्तीत्यनुवादः । यत्तु कर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिंचित्करत्वमुक्तं तद्दूषयति—**यथेति** । कृषिवाणिज्यादेरारम्भस्यानियतं फलं संभावनामात्रोपनीतत्वान्न तथा कर्मणि वैदिके प्रारम्भस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

**नेहेति** । इह कर्मबन्धप्रहाणार्थे कर्मयोगेऽनुष्ठीयमाने । अभिक्रम्यते व्याप्यत इत्यभिक्रमः कर्मारम्भः कर्मैव वा तस्य नाशो नास्ति । अन्यत्तु फलं दत्त्वा नश्यति नत्विदम् । इष्टफलस्याजननात् । नन्वेतस्यापि काम्यान्तःपातितया नित्याकरणजनितः प्रत्यवाय उत्पद्येतैव । सकृदनुष्ठितस्य बन्धप्रहाणप्रत्यवायपरिहाराख्यफलद्वयहेतुत्वायोगादित्याशङ्क्याह—**प्रत्यवायो न विद्यत इति** । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या संयोगपृथक्त्वन्यायेन 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यनेन नित्यस्य दध्नो वीर्यार्थत्वमिव नित्यानामपि कर्मणां विविदिषार्थत्वं विनियोगबलात्सिध्यति । ततश्च काम्येनैव प्रयोगेण नित्यस्यापि सिद्धेर्न नित्याकरणनिमित्तो वा काम्यत्वात्सर्वाङ्गानुपसंहारनिमित्तो वा प्रत्यवायो विद्यते । नित्यानामेव विनियोगात् । नित्येषु च यथाशक्त्युपबन्धस्यानुज्ञानात् । वार्तिके तु काम्यानामप्यत्र विनियोगो दृष्टः । यथा 'वेदानुवचनादीनामैकात्म्यज्ञानजन्मने । तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् ।

४ मधुसूदनीव्याख्या ।

श्रुत्या विविदिषां ज्ञानं चोद्दिश्य संयोगपृथक्त्वन्यायेन सर्वकर्मणां विनियोगात्तत्र चान्तःकरणशुद्धिद्वारत्वान्मांप्रति कर्मानुष्ठानं विधीयते । तत्र 'तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते' इति श्रुतिबोधितस्य फलनाशस्य संभवात् ज्ञानं विविदिषां चोद्दिश्य क्रियमाणस्य यज्ञादेः काम्यत्वात्सर्वाङ्गोपसंहारेणानुष्ठेयस्य यत्किंचिदङ्गासंपत्तावपि वैगुण्योपपत्तेर्यज्ञेनेत्यादिवाक्यविहितानां च सर्वेषां कर्मणामेकेन पुरुषायुषपर्यवसानेऽपि कर्तुमशक्यत्वात्कुतः 'कर्मबन्धं प्रहास्यसि' इति फलं प्रत्याशेत्यत आह भगवान्—अभिक्रम्यते कर्मणा प्रारभ्यते यत्फलं सोऽभिक्रमस्तस्य नाशस्तद्यथेहेत्यादिना प्रतिपादितः स इह निष्कामकर्मयोगे नास्ति एतत्फलस्य शुद्धेः पापक्षयरूपत्वेन लोकशब्दावाच्यभोग्यत्वाभावेन च क्षयासंभवात्, वेदनपर्यन्ताया एव विविदिषायाः कर्मफलत्वाद्वेदनस्य चाव्यवधानेनाज्ञाननिवृत्तिफलजनकस्य फलमजनयित्वा नाशासंभवादिह फलनाशो नास्तीति साधूक्तम् । तदुक्तम्—'तद्यथेहेति या निन्दा सा फले न तु कर्मणि । फलेच्छां तु परित्यज्य कृतं कर्म विशुद्धिकृत् ॥' इति । तथा प्रत्यवायोऽङ्गवैगुण्यनिबन्धनं वैगुण्यमिह न विद्यते तमितिवाक्येन नित्यानामेवोपात्तदुरितक्षयद्वारेण विविदिषायां विनियोगात् । तत्रच सर्वाङ्गोपसंहारनियमाभावात्, काम्यानामपि संयोगपृथक्त्वन्यायेन विनियोग इति पक्षेऽपि फलाभिसंधिरहितत्वेन तेषां नित्यतुल्यत्वात् । नहि काम्यनित्याग्निहोत्रयोः स्वतः कश्चिद्विशेषोऽस्ति । फलाभिसंधितदभावाभ्यामेव तु काम्यत्वनित्यत्वव्यपदेशः । इदंच पक्षद्वयमुक्तं वार्तिके—'वेदानुवचनादीनामैकात्म्यज्ञानजन्मने । तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् ।

५ भाष्योत्कर्षदीपिका ।

इत्यत्र द्वारस्योक्तत्वाचेति दिक् ॥ ३९ ॥ काम्यादस्य महद्वैलक्षण्यमित्याशयेनाह—**नेहेति** । इह निष्कामकर्मणि समाधियोगे च मोक्षमार्गे अभिक्रमस्य प्रारम्भस्य नाशो नास्ति । कृष्यादेरिव प्रत्यवायः पापोत्पत्तिरपि चिकित्सावन्न विद्यते । अस्य धर्मस्य

६ श्रीधरीव्याख्या ।

रकुतः कर्मयोगेन कर्मबन्धप्रहरणं तत्राह—**नेहेति** । इह निष्कामकर्मयोगेऽभिक्रमस्य प्रारम्भस्य नाशो निष्फलत्वं नास्ति, प्रत्यवायश्च

७ अभिनवगुप्ताचार्यव्याख्या ।

त्वात् । अतः स्वयमात्मा कर्मभिर्वासनात्मकैरात्मानं बध्नाति ॥३९॥ इहास्यां बुद्धौ अतिक्रमेणापराधेन प्रमादेन नाशो न भवति प्रमादस्याभा-

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**प्रारम्भस्य नानैकान्तिकफलत्वमित्यर्थः । किंच नापि चिकित्सावत्प्रत्यवायो विद्यते किंतु भवति स्वल्पमप्यस्य योगधर्मस्यानुष्ठितं त्रायते रक्षति महतः संसारभयाज्जन्ममरणादिलक्षणात् ॥ ४० ॥ येयं सांख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा सा । व्यवसायेति । व्यवसायात्मिका निश्चयस्वभा-**

२ आनन्दगिरिव्याख्या ।

फलमनियतं युज्यते शास्त्रविरोधादित्यर्थः । यत्तूक्तमनेकानर्थकलुषितत्वेन दोषवदनुष्ठानमिति तत्राह—**किंचेति** । इतोऽपि कर्मानुष्ठानमावश्यकमिति प्रतिज्ञाय हेत्वन्तरमेव स्फुटयति—**नापीति** । चिकित्सायां हि क्रियमाणायां व्याध्यतिरेको वा मरणं वा प्रत्यवायोऽपि संभाव्यते कर्मपरिपाकस्य दुर्विवेकत्वान्न तथा कर्मानुष्ठाने दोषोऽस्ति विहितत्वादित्यर्थः । संप्रति कर्मानुष्ठानस्य फलं पृच्छति—**किंत्विति** । उत्तरार्धं व्याकुर्वन्विवक्षितं फलं कथयति—**स्वल्पमपीति** । सम्यग्ज्ञानोत्पादनद्वारेण रक्षणं विवक्षितं 'सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । यतिस्तपस्वी भवति पङ्क्तिपावनपावनः ॥' इति स्मृतेरित्यर्थः ॥४०॥ ननु बुद्धिद्वयातिरिक्तानि बुद्ध्यन्तराण्यपि काणादादिशास्त्रप्रसिद्धानि विद्यन्ते । तथाच कथं बुद्धिद्वयमेव भगवतोपदिष्टमिति तत्राह—**येयमिति** । सैवैका प्रमाणभूता बुद्धिरित्याह—**व्यवसा-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ॥' इति । अस्मिन्पक्षे काम्यानामपि तुल्यफलत्वात् नित्यवद्यथाशक्त्युपबन्धो भविष्यतीति न सर्वाङ्गानुपसंहारजनितः प्रत्यवायो विद्यते । स्वल्पमपि अस्य योगधर्मस्यानुष्ठितं अनुपभुक्तबीजकल्पम् 'जन्मजन्मान्तराभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तच्चैवाभ्यसते पुनः ॥' इति स्मृतेरुत्तरोत्तरसंस्काराधानद्वारा स्वसजातीयवृद्धेर्निमित्तं सत्कामादिदोषक्षपणद्वारा महतो भयात्संसारात्त्रायते । तस्मात्सांख्यानधिकारिणा कर्मयोग एवानुष्ठेय इति भावः ॥ ४० ॥ नन्वेवं सांख्ययोगयोर्महाभयात्त्राणहेतुत्वं तुल्यं चेत्कोऽनयोर्विशेष इत्याशङ्क्य सांख्यानां पातशङ्का नास्ति योगिनां तु यावद्विदेहकैवल्यं पातशङ्कास्तीत्याह—**व्यवसायात्मिकेति** । व्यवसायस्तत्त्वनिश्चयस्तदात्मिका तदाकारा बुद्धिरन्तःकरणवृत्तिः 'अहं ब्रह्मास्मि' इति वाक्य-

४ मधुसूदनीव्याख्या ।

तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ॥' इति । तथाच फलाभिसंधिना क्रियमाण एव कर्मणि सर्वाङ्गोपसंहारनियमात्तद्विलक्षणे शुद्ध्यर्थे कर्मणि प्रतिनिध्यादिना समाप्तिसंभवान्नाङ्गवैगुण्यनिमित्तः प्रत्यवायोऽस्तीत्यर्थः । तथास्य शुद्ध्यर्थस्य धर्मस्य 'तमेतम्' इत्यादिवाक्यविहितस्य मध्ये स्वल्पमपि संख्ययेतिकर्तव्यतया वा यथाशक्तिभगवदाराधनार्थं किंचिदप्यनुष्ठितं सन्महतः संसारभयात्त्रायते भगवत्प्रसादसंपादनेनानुष्ठातारं रक्षति । 'सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥' इत्यादिस्मृतेः । 'तमेतम्' इति वाक्ये समुच्चयविधायकाभावाच्च शुद्धितारतम्यादेवानुष्ठानतारतम्योपपत्तेर्युक्तमुक्तं 'कर्मबन्धं प्रहास्यसि' इति ॥ ४० ॥ एतदुपपादनाय तमेतमितिवाक्यविहितानामेकार्थत्वमाह—हे कुरुनन्दन, इह श्रेयोमार्गे 'तमेतम्' इतिवाक्ये वा व्यवसायात्मिका आत्मतत्त्वनिश्चयात्मिका बुद्धिरेकैव चतुर्णामाश्रमाणां साध्या विवक्षिता, 'वेदानुवचनेन' इत्यादौ तृतीयाविभक्त्या प्रत्येकं निरपेक्षसाधनत्वबोधनात् । भिन्नार्थत्वे हि समुच्चयः स्यात् । एकार्थत्वेऽपि दर्शपूर्णमासाभ्यामितिवद्द्वन्द्वसमासेन 'यदग्नये च प्रजापतये च' इतिवच्चशब्देन वा' न तथात्र किंचित्प्रमाणमस्तीत्यर्थः । सांख्यविषया योगविषया च बुद्धिरेकफलत्वादेका व्यवसायात्मिका सर्वविपरीतबुद्धीनां बाधिका निर्दोषवेद-

५ भाष्योत्कर्षदीपिका ।

स्वल्पमप्यनुष्ठितं महतो भयाज्जन्ममरणादिलक्षणसंसारभयाद्रक्षति ॥ ४० ॥ इह मोक्षमार्गे व्यवसायात्मिका निश्चयात्मिकोपायोपेयबुद्धिरेका सम्यक्प्रमाणजनितत्वादितरविपरीतबुद्धिशाखाभेदस्य बाधिका । येतु व्यवसायात्मिका परमेश्वरभक्त्यैव तरिष्यामीति निश्चयात्मिकेति वर्णयन्ति तद्बुद्धेः स्वरूपं निरूपितं प्रमाणजनितत्वादितिवदद्भिर्भाष्यकृद्भिः सा दृढेत्युक्तमिति न विरोधः । अव्यवसायिनां

६ श्रीधरीव्याख्या ।

न विद्यते ईश्वरोद्देशेनैव विघ्नवैगुण्याद्यसंभवात् । किंच अस्य धर्मस्य स्वल्पमप्युपक्रममात्रमपि कृतं महतो भयात्संसारात्त्रायते रक्षति नतु काम्यकर्मवत्किंचिदङ्गवैगुण्यादिना नैष्फल्यमस्येत्यर्थः ॥ ४० ॥ कुत इत्यपेक्षायामुभयोर्वैषम्यमाह—**व्यवसायेति** । इहेश्वराराधन-

७ अभिनवगुप्ताचार्यव्याख्या ।

वात् । तथाच परिमितेन श्रीखण्डकणेन ज्वालायमानोऽपि तैलकटाहः सद्यः शीतो भवति एवमनयापि स्वल्पया योगबुद्ध्या महाभयं संसाररूपं विनश्यति ॥ ४० ॥ नचैषा बुद्धिरपूर्वानीयते । किंतर्हि व्यवसायात्मिकेति । व्यवसायात्मिका सर्वस्यैकैव धीः, निश्चेतव्यवशात्तु बहुत्वं गच्छति

१ श्रीधरी.

१ श्रीमच्छांकरभाष्यम् ।

**वैकैव बुद्धिरितरविपरीतबुद्धिशाखाभेदस्य बाधिका सम्यक् प्रमाणजनितत्वादिह श्रेयोमार्गे हे कुरुनन्दन, याः पुनरितरा बुद्धयो यासां शाखाभेदप्रचारवशादनन्तोऽपारोऽनुपरतः संसारोऽपि नित्यप्रततो विस्तीर्णो भवति प्रमाणजनितविवेकबुद्धिनिमित्तवशाच्चोपरतास्वनन्तभेदबुद्धिषु संसारोऽप्युपरमते । ता बुद्धयो बहुशाखा बह्व्यः शाखा यासां ता बहुशाखा बहुभेदा इत्येतत् प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः केषामव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः ॥ ४१ ॥ येषां**

२ आनन्दगिरिव्याख्या ।

**यात्मिकेति** । बुद्ध्यन्तराण्यविवेकमूलान्यप्रमाणानीत्याह—**बहुशाखा हीति** । व्यवसायात्मिकाया बुद्धेः श्रेयोमार्गे प्रवृत्ताया विवक्षितं फलमाह—**इतरेति** । प्रकृतबुद्धिद्वयापेक्षयेतरा विपरीताश्चाप्रमाणजनिताः स्वकपोलकल्पिता या बुद्धयस्तासां शाखाभेदो यः संसारहेतुस्तस्य बाधिकेति यावत् । तत्र हेतुः—**सम्यगिति** । निर्दोषवेदवाक्यसमुत्थत्वादुक्तमुपायोपेयभूतं बुद्धिद्वयं साक्षात्पारम्पर्याभ्यां संसारहेतुबाधकमित्यर्थः । उत्तरार्धं व्याचष्टे—**याः पुनरिति** । प्रकृतबुद्धिद्वयापेक्षयार्थान्तरत्वमितरत्वम् । तासामनर्थहेतुत्वं दर्शयति—**यासामिति** । अप्रामाणिकबुद्धीनां प्रसक्तानुप्रसक्त्या जायमानानामतीव बुद्धिपरिणामविशेषाः शाखाभेदास्तेषां प्रचारः प्रवृत्तिस्तद्वशादित्येतत्, अनन्तत्वं सम्यग्ज्ञानमन्तरेण निवृत्तिविरहितत्वम्, अपरत्वं कार्यस्यैव सतो वस्तुभूतकारणविरहितत्वम् । अनुपरतत्वं स्फोरयति—**नित्येति** । कथं तर्हि तन्निवृत्त्या पुरुषार्थपरिसमाप्तिस्तत्राह—**प्रमाणेति** । अन्वयव्यतिरेकाख्येनानुमानेनागमेन च पदार्थपरिशोधनपरिनिष्पन्ना विवेकात्मिका या बुद्धिस्तां निमित्तीकृत्य समुत्पन्नसम्यग्बोधानुरोधात्प्रकृता विपरीतबुद्धयो व्यावर्तन्ते, तास्वसंख्यातासु व्यावृत्तासु सतीषु निरालम्बनतया संसारोऽपि स्थातुमशक्नुवन्नुपरतो भवतीत्यर्थः । याः पुनरित्युपक्रान्तास्तत्त्वज्ञानापनोद्याः संसारास्पदीभूता विपरीतबुद्धीरनुक्रामति—**ता बुद्धय इति** । बुद्धीनां वृक्षस्येव कुतो बहुशाखित्वं तत्राह—**बहुभेदा इत्येतदिति** । एकैकां बुद्धिं प्रति शाखाभेदोऽवान्तरविशेषस्तेन बुद्धीनामसंख्यत्वं प्रख्यातमित्याह—**प्रतिशाखेति** । बुद्धीनामानन्त्यप्रसिद्धिप्रद्योतनार्थो हिशब्दः । सम्यग्ज्ञानवतां यथोक्तबुद्धिभेदभाक्त्वमप्रसिद्धमित्याशङ्क्य प्रत्याह—**केषामित्यादिना** ॥ ४१ ॥ यदि सांख्ययोगरूपैकैव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जन्या ब्रह्माकारान्तःकरणवृत्तिर्ब्रह्मविद्याभिधाना समस्तवृत्त्यन्तरबाधेन सम्यगभ्युदिता एका एकैव । 'सकृद्विभातो ह्येष ब्रह्मलोकः' इति श्रुतेः । ब्रह्मैव लोको ब्रह्मलोक इह ब्रह्मैव । नहि सकृज्ज्ञाते ब्रह्मणि ज्ञातव्यं कर्तव्यं वा किंचिदवशिष्यते कृतकृत्यत्वाद्ब्रह्मविदोऽतोऽस्य पातशङ्का नास्ति । अव्यवसायिनामज्ञानिनां तु बुद्धयोऽनन्ताः ताश्च प्रत्येकं बहुशाखा इति इदमेव मम श्रेय इति निश्चयस्य दुर्लभत्वात्कदाचिदश्रेयस्यपि श्रेयोबुद्धौ सत्यां पात-

४ मधुसूदनीव्याख्या ।

वाक्यसमुत्थत्वादितरास्त्वव्यवसायिनां बुद्धयो बाध्या इत्यर्थ इति भाष्यकृतः । अन्ये तु परमेश्वराराधनेनैव संसारं तरिष्यामीति निश्चयात्मिका एकनिष्ठैव बुद्धिरिह कर्मयोगे भवतीत्यर्थमाहुः । सर्वथापि तु ज्ञानकाण्डानुसारेण 'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इत्युपपन्नम्, कर्मकाण्डे पुनर्बहुशाखा अनेकभेदाः कामानामनेकभेदत्वात्, अनन्ताश्च कर्मफलगुणफलादिप्रकारोपशाखाभेदात्, बुद्धयो भवन्त्यव्यवसायिनाम् । तत्फलकामानां बुद्धीनामानन्त्यप्रसिद्धिद्योतनार्थो हिशब्दः । अतः काम्यकर्मापेक्षया महद्वैलक्षण्यं शुद्ध्यर्थकर्मणामित्यभिप्रायः ॥ ४१ ॥ अव्यवसायिनामपि व्यवसायात्मिका बुद्धिः

५ भाष्योत्कर्षदीपिका ।

प्रमाणजनितविवेकबुद्धिरहितानां कामिनां बुद्धयो बहुशाखाः बह्व्योऽनुपरतसंसारप्रदाः शाखा यासां ताः प्रतिशाखाभेदेन ह्यनन्ताश्च कामनानामानन्त्यात् । यत्तु नन्वेवं सांख्ययोगयोर्महाभयात्त्राणहेतुत्वं तुल्यं चेत्कोऽनयोर्विशेष इत्याशङ्क्य सांख्यानां पातशङ्का नास्ति योगिनां तु यावद्विदेहकैवल्यं पातशङ्कास्तीत्याह व्यवसायात्मिकेति तच्चिन्त्यम् । योगस्तवनपरस्य ग्रन्थस्य तन्निन्दापरत्वेनोत्थापनस्यानुचितत्वात्, कामात्मान इत्यादिना सकामस्य । निन्दाप्रतीतेः स्पष्टत्वाच्च । तव तूत्तमवंशोद्भवस्य व्यवसायात्मिकैव बुद्धिर्युक्तेति सूचयन्नाह—कुरुनन्दनेति ॥ ४१ ॥ अव्यवसायिनां तु व्यवसायात्मिका बुद्धिर्न भवति प्रतिबन्धबाहुल्यादित्याशये-

६ श्रीधरीव्याख्या ।

लक्षणे कर्मयोगे व्यवसायात्मिका परमेश्वरभक्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका एकैवैकनिष्ठैव बुद्धिर्भवति । अव्यवसायिनां तु बहिर्मुखानां कामिनां कामानामानन्त्यादनन्ताः, तत्रापि कर्मगुणफलादिभेदाद्बहुशाखाश्च बुद्धयो भवन्ति । ईश्वराराधनार्थं हि नित्यनैमित्तिकं कर्म किंचिदङ्गवैगुण्येनापि न नश्यति । यथा शक्नुयात्तथा कुर्यादिति हि तद्विधीयते । नच वैगुण्यम् । ईश्वरोद्देशेनैव वैगुण्योपरमात् । नतु तथा काम्यं कर्म 'अग्निहोत्रं जुहुयात्स्वर्गकामः', 'दध्नेन्द्रियकामो जुहुयात्' इति, अतो महद्वैषम्यमिति भावः ॥४१॥ ननु कामिनोऽपि

---

१ नीलकण्ठः.

**यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥**
**कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।**
**क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

व्यवसायात्मिका बुद्धिर्नास्ति ते । यामिति । यामिमां वक्ष्यमाणां पुष्पितां पुष्पितवृक्ष इव शोभमानां श्रूयमाणरमणीयां वाचं वाक्यलक्षणां प्रवदन्ति । के अविपश्चितोऽल्पमेधसः । अविवेकिन इत्यर्थः । वेदवादरता इति । वेदवादरता बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः हे पार्थ, नान्यत्स्वर्गप्राप्त्यादिफलसाधनेभ्यः कर्मभ्योऽस्तीत्येवंवादिनो वदनशीलाः ॥ ४२ ॥ ते च कामात्मान इति । कामात्मानः

२ आनन्दगिरिव्याख्या ।

प्रमाणभूता बुद्धिस्तर्हि सैव सर्वेषां चित्ते किमिति स्थिरा न भवति तत्राह—**येषामिति** । ते यामिमां पुष्पितां वाचं प्रवदन्ति तयापहृतचेतसां कामिनाम् । कामवशान्निश्चयात्मिका बुद्धिर्न प्रायः स्थिरा भवतीत्याह—**ते** । **यामिति** । इमामित्यध्ययनविध्युपात्तत्वेन प्रसिद्धत्वं कर्मकाण्डरूपाया वाचो विवक्ष्यते । वक्ष्यमाणत्वं क्रियाविशेषबहुलामित्यादौ द्रष्टव्यम् । किंशुको हि पुष्पशाली शोभमानोऽनुभूयते न पुरुषभोग्यफलभागी लक्ष्यते तथेयमपि कर्मकाण्डात्मिका श्रूयमाणदशायां रमणीया वागुपलभ्यते साध्यसाधनसंबन्धप्रतिभानान्न त्वेषा निरतिशयफलभागिनी भवति कर्मानुष्ठानफलस्यानित्यत्वादिति मत्वाह—**पुष्पितामिति** । वाक्यत्वेन लक्ष्यतेऽर्थवत्त्वप्रतिभानाद्वस्तुतस्तु न वाक्यमर्थाभासत्वादित्याह—**वाक्यलक्षणामिति** । प्रवक्तॄणां वेदवाक्यतात्पर्यपरिज्ञानाभावं सूचयति—**अविपश्चित इति** । वेदवादा वेदवाक्यानि तानि च बहूनामर्थवादानां फलानां साधनानां च विधिशेषाणां प्रकाशकानि तेषु रतिरासक्तिस्तन्निष्ठत्वं तद्वत्त्वमपि तेषां विशेषणमित्याह—**वेदवादेति** । कर्मकाण्डनिष्ठत्वं फलं कथयति—**नान्यदिति** । ईश्वरो वा मोक्षो वा नास्तीत्येवं वदन्तो नास्तिकाः सन्तः सम्यग्ज्ञानवन्तो न भवन्तीत्यर्थः ॥ ४२ ॥ प्रकृतान्प्रवक्तॄनविवेकिनो व्यवसायात्मकबुद्धिभाक्त्वासंभवसिद्ध्यर्थं विधान्तरेण विशिनष्टि—**ते चेति** । तेषां संसारपरिवर्तनपरिदर्शनार्थं

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

शङ्कास्तीति महांस्तयोर्विशेष इति भावः ॥ ४१ ॥ उत्तरार्धमेव विवृणोति—**यामिमामित्यादिना** । यां पुष्पितां पुष्पितद्रुमवद्दूरतो रमणीयां वाचम् 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'अपाम सोमममृता अभूम' इत्येवंरूपां प्रवदन्ति । अविपश्चितः अव्यवसायिनो मूढाः । यतो वेदवादरताः वेदान्तर्गतेषु अर्थवादेषु 'यस्य पर्णमयी जुहूर्भवति स न पापꣳ श्लोकꣳ शृणोति' इत्येवमादिषु रताः बद्धश्रद्धाः अतएव कर्मणोऽन्यत् आत्मज्ञानं

४ मधुसूदनीव्याख्या ।

कुतो न भवति प्रमाणस्य तुल्यत्वादित्याशङ्क्य प्रतिबन्धकसद्भावान्न भवतीत्याह त्रिभिः—यामिमां वाचं प्रवदन्ति तया वाचापहृतचेतसामविपश्चितां व्यवसायात्मिका बुद्धिर्न भवतीत्यन्वयः । इमामध्ययनविध्युपात्तत्वेन प्रसिद्धां पुष्पितां पुष्पितपलाशवदापातरमणीयां साध्यसाधनसंबन्धप्रतिभानान्निरतिशयफलाभावाच्च । कुतो निरतिशयफलत्वाभावस्तत्राह—जन्मकर्मफलप्रदां जन्म चापूर्वशरीरेन्द्रियादिसंबन्धलक्षणं, तदधीनं च कर्म तत्तद्वर्णाश्रमाभिमाननिमित्तं, तदधीनं च फलं

५ भाष्योत्कर्षदीपिका ।

नाह—**यामिति** त्रिभिः । यामिमां वक्ष्यमाणां पुष्पितां फलाप्रदपुष्पितवृक्षवच्छोभमानां श्रवणमात्ररमणीयां 'अपाम सोमममृता अभूम' इत्यादिरूपां वाचं प्रवदन्ति, अविपश्चितो बुद्धिरहिता वेदस्य वादेऽर्थवादे 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्येवंरूपे रताः प्रीतिमन्तोऽतएव नान्यन्मोक्षादिकं स्वर्गादन्यदस्तीति वादिनः । त्वया तु मम मतमेवाभ्युपेयमिति सूचयन्नाह—**हे पार्थेति** ॥ ४२ ॥ यतः कामे आत्मान्तःकरणं येषाम् अतएव स्वर्गएव परः पुरुषार्थो येषां ते कर्मणः फलं जन्मैव कर्मफलं प्रददातीति तथा तां, वेदवाचा कर्मणि प्रवृत्तिः कर्मणा जन्मलाभः ननु वेदवाचः स्वतन्त्रं जन्मादिप्रदातृत्वमस्तीत्यभिप्रेत्याचार्यैर्जन्म

६ श्रीधरीव्याख्या ।

कस्मात्कामान्विहाय व्यवसायात्मिकामेव बुद्धिं किं न कुर्वन्ति तत्राह—**यामिति** । पुष्पितां विषलतावदापातरमणीयां प्रकृष्टां परमार्थफलपरामेव वदन्ति वाचं स्वर्गादिफलश्रुतिं ये तेषां तया वाचापहृतचेतसां व्यवसायात्मिका बुद्धिर्न विधीयत इति तृतीयेनान्वयः । किमिति तथा वदन्ति । यतोऽविपश्चितो मूढाः । तत्र हेतुः । वेदे ये वादा अर्थवादाः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'अपाम सोमममृता अभूम' इत्याद्यास्तेष्वेव रताः प्रीताः । अतएव अतः परमन्यदीश्वरतत्त्वं प्राप्यं नास्तीति वचनशीलाः ॥ ४२ ॥ अतएव—**कामात्मान इति** । कामात्मानः कामाकुलचित्ताः । अतः स्वर्ग एव परः पुरुषार्थो येषां ते । जन्म च तत्र कर्माणि च तत्फलानि च

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कामस्वभावाः । कामपरा इत्यर्थः । स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः स्वर्गप्रधाना जन्मकर्मफलप्रदां कर्मणः फलं कर्मफलं जन्मैव कर्मफलं जन्मकर्मफलं तत्प्रददातीति जन्मकर्मफलप्रदा तां वाचं प्रवदन्तीत्यनुषज्यते । क्रियाविशेषबहुलां क्रियाणां विशेषाः क्रियाविशेषास्ते बहुला यस्यां वाचि तां, स्वर्गपशुपुत्राद्यर्था यया वाचा बाहुल्येन प्रकाश्यन्ते, भोगैश्वर्यगतिं प्रति भोगश्चैश्वर्यं च भोगैश्वर्ये तयोर्गतिः प्राप्तिर्भोगैश्वर्यगतिस्तां प्रति साधनभूता ये क्रियाविशेषास्तद्बहुलां तां वाचं प्रवदन्तो मूढाः संसारे परिवर्तन्त इत्यभिप्रायः ॥ ४३ ॥ भोगेति । तेषां च भोगैश्वर्यप्रसक्तानां भोगः कर्तव्यमैश्वर्यं चेति**

२ आनन्दगिरिव्याख्या ।

प्रस्तुतां वाचमेव विशिनष्टि—**जन्मेति** । ननु पुंसां कामस्वभावत्वमयुक्तं चेतनस्येच्छावतस्तदात्मत्वानुपपत्तेरिति तत्राह—**कामपरा इति** । तत्परत्वं तत्तत्फलार्थित्वेन तत्तदुपायेषु कर्मस्वेव प्रवृत्ततया कर्मसंन्यासपूर्वकाज्ज्ञानाद्बहिर्मुखत्वम् । ननु कर्मनिष्ठानामपि परमपुरुषार्थापेक्षया मोक्षोपाये ज्ञाने भवत्याभिमुख्यमिति नेत्याह—**स्वर्गेति** । तत्परत्वं तस्मिन्नेवासक्ततया तदतिरिक्तपुरुषार्थराहित्यनिश्चयवत्त्वम् । उच्चावचमध्यमदेहप्रभेदग्रहणं जन्मवाचो यथोक्तफलप्रदत्वमप्रामाणिकमित्याशङ्क्यानुष्ठानद्वारा तदुपपत्तिरित्याह—**क्रियेति** । क्रियाणामनुष्ठानानां यागदानादीनां विशेषा देशकालाधिकारिप्रयुक्ताः सप्ताहानेकाहलक्षणास्ते खल्वस्यां वाचि प्राचुर्येण प्रतिभान्तीत्यर्थः । कथं यथोक्तायां वाचि क्रियाविशेषाणां बाहुल्येनावस्थानमित्याशङ्क्य प्रकाश्यत्वेनेत्येतद्विशदयति—**स्वर्गेति** । तथापि तेषां मोक्षोपायत्वोपपत्तेस्तन्निष्ठानां मोक्षाभिमुख्यं भविष्यति, नेत्याह—**भोगेति** । यथोक्तां वाचमभिवदतां पर्यवसानं दर्शयति—**तद्बहुलामिति** ॥ ४३ ॥ ननु कर्मकाण्डनिष्ठानां कर्मानुष्ठायिनामपि बुद्धिशुद्धिद्वारेणान्तःकरणे साध्यसाधनभूतबुद्धिद्वयसमुदायसंभवादतो मोक्षो भविष्यति, नेत्याह—**तेषां चेति** । तदात्मभूतानां तयोरेव भोगैश्वर्ययोरात्मकर्त-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

तत्फलं मोक्षश्च नास्तीति वादिनो वदनशीलाः ॥ ४२ ॥ तथा भोगश्च ऐश्वर्यं च तयोर्गतिः प्राप्तिस्तां प्रति तदर्थमित्यर्थः । कामात्मानः कामग्रस्तचित्ताः । अतएव स्वर्गपराः । कीदृशीं भोगैश्वर्यगतिम् । जन्मकर्मफलप्रदाम् । प्राप्तभोगैश्वर्यो हि पुरुषस्तद्वासनावासितः पुनर्भोगैश्वर्यप्राप्तये जन्म लभते तदर्थं कर्माणि च कुरुते फलं च ततो भोगादिकं प्राप्नोतीति चक्रमनिशमावर्तते । तेन निष्ठातश्च्युतो भवतीत्यर्थः । किंच क्रियाविशेषेण बहुलां यथायथा वित्तव्ययायासाद्याधिक्यं तथातथा भोगैश्वर्यप्राप्तेरप्याधिक्यमित्यर्थः । एतेनात्यन्तायाससाध्येष्वपि कर्मसु फललोभात्सज्जन्त इत्युक्तम् । भाष्ये भोगैश्वर्यगतिं प्रति साधनभूताः ये क्रियाविशेषा अग्निहोत्रादयः तद्बहुलां जन्मरूपं यत् कर्मफलं तत्प्रदां च वाचमेवेति व्याख्यातम् ॥ ४३ ॥ **भोगेति** । तया पुष्पितया वाचा अपहृतचेतसां

४ मधुसूदनीव्याख्या ।

पुत्रपशुस्वर्गादिलक्षणं विनश्वरं, तानि प्रकर्षेण घटीयन्त्रवदविच्छेदेन ददातीति तथा ताम् । कुतएवमत आह—भोगैश्वर्यगतिं प्रति क्रियाविशेषबहुलां अमृतपानोर्वशीविहारपारिजातपरिमलादिनिबन्धनो यो भोगस्तत्कारणं च यदैश्वर्यं देवादिस्वामित्वं तयोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषा अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादयस्तैर्बहुलां विस्तृताम् । अतिबाहुल्येन भोगैश्वर्यसाधनक्रियाकलापप्रतिपादिकामिति यावत् । कर्मकाण्डस्य हि ज्ञानकाण्डापेक्षया सर्वत्रातिविस्तृतत्वं प्रसिद्धम् । एतादृशीं कर्मकाण्डलक्षणां वाचं प्रवदन्ति प्रकृष्टां परमार्थस्वर्गादिफलामभ्युपगच्छन्ति । के । येऽविपश्चितो विचारजन्यतात्पर्यपरिज्ञानशून्याः । अतएव वेदवादरताः वेदे ये सन्ति वादा अर्थवादाः 'अक्षय्यं ह वै चातुर्मास्ययाजिनः

५ भाष्योत्कर्षदीपिका ।

च तत्र कर्म च तत्फलं च प्रददातीति न व्याख्यातम् । यतो भोगश्चैश्वर्यं च तयोर्गतिं प्राप्तिं प्रति क्रियाणां विशेषा बहुला यस्यां तां वाचं प्रवदन्तीत्यनुषङ्गः ॥ ४३ ॥ तेषां भोगैश्वर्ययोः प्रसक्तानामतिरक्तचित्तानां यतस्तया वाचापहृतमाच्छादितं चेतो येषां

६ श्रीधरीव्याख्या ।

प्रददातीति तथा ताम् । भोगैश्वर्ययोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषास्ते बहुला यस्यां तां प्रवदन्तीत्यनुषङ्गः ॥ ४३ ॥ ततश्च—**भोगैश्वर्यप्रसक्तानामिति** । भोगैश्वर्ययोः प्रसक्तानामभिनिविष्टानाम् । तया पुष्पितया वाचापहृतमाकृष्टं चेतो येषां तेषां

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ४१ ॥ तथाच यामिमामिति ॥ ४२ ॥–कामात्मान इति ॥ ४३ ॥–भोगैश्वर्येति । ये कामाभिलाषिणस्ते स्वयमेतां वाचं देहात्मिकां पुष्पितां स्वर्गफलेन व्याप्तां वदन्ति । अतएव जन्मनः कर्मैव फलमिच्छन्ति ते अविपश्चितः । ते तयैव स्वयं कल्पितया वेदवाचा अपहृतचित्ता

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

भोगैश्वर्ययोरेव प्रणयवतां तदात्मभूतानां तया क्रियाविशेषबहुलया वाचापहृतचेतसामाच्छादितविवेकप्रज्ञानां व्यवसायात्मिका सांख्ये योगे वा या बुद्धिः समाधौ समाधीयतेऽस्मिन्पुरुषोपभोगाय सर्वमिति समाधिरन्तःकरणं बुद्धिस्तस्मिन्समाधौ न विधीयते न भवतीत्यर्थः ॥ ४४ ॥ य एवं विवेकबुद्धि-

२ आनन्दगिरिव्याख्या ।

त्वेनारोपितयोरभिनिविष्टे चेतसि तादात्म्याध्यासवतां बहिर्मुखानामित्यर्थः । तथापि शास्त्रानुसारिण्या विवेकप्रज्ञया व्यवसायात्मिका बुद्धिस्तेषामुदेष्यतीत्याशङ्क्याह—**तयेति** । ननु समाधिः संप्रज्ञातासंप्रज्ञातभेदेन द्विधोच्यते, तत्र बुद्धिद्वयविधिरप्रसक्तः सन्कथं निषिध्यते तत्राह—**समाधीयत इति** ॥ ४४ ॥ अविवेकिनामपि वेदाभ्यासवतां विवेकबुद्धिरुदेष्यतीत्याशङ्क्याह—**य एवमिति** । तर्हि वेदार्थतया कामात्मता प्रशस्तेत्याशङ्क्याह—**निस्त्रैगुण्य इति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पुंसां बुद्धिः समाधौ समाध्यनुष्ठानकाले व्यवसायात्मिका व्यवसायो ज्ञानं तदात्मिका शुद्धचिन्मात्राकारा न विधीयते न भवति । कर्मकर्तरि लकारः । विरक्तस्य हि बुद्धिः समाधौ चिन्मात्राकारा भवति नतु भोगाद्यासक्तस्येति स्पष्टमेव । भाष्येतु समाधौ अन्तःकरणे व्यवसायात्मिका बुद्धिर्न भवतीति व्याख्यातम् । यद्वा समाध्यनुष्ठानार्थमेव निश्चयात्मिका तेषां बुद्धिर्न भवतीति व्याख्येयम् ॥ ४४ ॥ कस्य तर्हि समाधौ बुद्धिर्भवतीत्यत आह—**त्रैगुण्येति** । त्रैगुण्यं गुणत्रयकार्यमूर्ध्वमध्याधोगतिरूपं संसरणं तदेव प्रकाश्यत्वेन विषयो येषां तादृशाः कर्म-

४ मधुसूदनीव्याख्या ।

सुकृतं भवति' इत्येवमादयस्तेष्वेव रता वेदार्थसत्यत्वेनैवमेवैतदिति मिथ्याविश्वासेन संतुष्टाः । हे पार्थ, अतएव नान्यदस्तीतिवादिनः कर्मकाण्डापेक्षया नास्त्यन्यज्ज्ञानकाण्डं, सर्वस्यापि वेदस्य कार्यपरत्वात्, कर्मफलापेक्षया च नास्त्यन्यन्निरतिशयं ज्ञानफलमिति वदनशीलाः । महता प्रबन्धेन ज्ञानकाण्डविरुद्धार्थभाषिण इत्यर्थः । कुतो मोक्षद्वेषिणस्ते । यतः कामात्मानः काम्यमानविषयशताकुलचित्तत्वेन काममयाः । एवंसति मोक्षमपि कुतो न कामयन्ते । यतः स्वर्गपराः स्वर्ग एवोर्वश्याद्युपेतत्वेन पर उत्कृष्टो येषां ते तथा । स्वर्गातिरिक्तः पुरुषार्थो नास्तीति भ्राम्यन्तो विवेकवैराग्याभावान्मोक्षकथामपि सोढुमक्षमा इति यावत् । तेषां च पूर्वोक्तभोगैश्वर्ययोः प्रसक्तानां क्षयित्वादिदोषादर्शनेन निविष्टान्तःकरणानां तया क्रियाविशेषबहुलया वाचापहृतमाच्छादितं चेतो विवेकज्ञानं येषां तथाभूतानामर्थवादाः स्तुत्यर्थास्तात्पर्यविषये प्रमाणान्तराबाधिते वेदस्य प्रामाण्यमिति सुप्रसिद्धमपि ज्ञातुमशक्तानां समाधावन्तःकरणे व्यवसायात्मिका बुद्धिर्न विधीयते । न भवतीत्यर्थः । समाधिविषया व्यवसायात्मिका बुद्धिस्तेषां न भवतीति वा । अधिकरणे विषये वा सप्तम्यास्तुल्यत्वात् । विधीयत इति कर्मकर्तरि लकारः । समाधीयतेऽस्मिन्सर्वमिति व्युत्पत्त्या समाधिरन्तःकरणं वा परमात्मा वेति नाप्रसिद्धार्थकल्पनम् । अहं ब्रह्मेत्यवस्थानं समाधिस्तन्निमित्तं व्यवसायात्मिका बुद्धिर्नोत्पद्यत इति व्याख्याने तु रूढिरेवादृता । अयंभावः—यद्यपि काम्यान्यग्निहोत्रादीनि शुद्ध्यर्थेभ्यो न विशिष्यन्ते तथापि फलाभिसंधिदोषान्नाशयशुद्धिं संपादयन्ति । भोगानुगुणा तु शुद्धिर्न ज्ञानोपयोगिनी । एतदेव दर्शयितुं भोगैश्वर्यप्रसक्तानामिति पुनरुपात्तम् । फलाभिसन्धिमन्तरेण तु कृतानि कर्माणि ज्ञानोपयोगिनीं शुद्धिमादधतीति सिद्धं विपश्चिदविपश्चितोः फलवैलक्षण्यम् । विस्तरेण चैतदग्रे प्रतिपादयिष्यते ॥ ४२ ॥ ४३ ॥ ४४ ॥ ननु सकामानां माभूदाशयदोषाद्व्यवसायात्मिका बुद्धिः, निष्कामानां तु व्यवसायात्मकबुद्ध्या कर्म

५ भाष्योत्कर्षदीपिका ।

तेषां व्यवसायात्मिका सांख्ये योगे वा या बुद्धिः सा समाधौ समाधीयते पुरुषोपभोगाय सर्वमस्मिन्नन्तःकरणं तस्मिन्न विधीयते न स्थिरीभवतीत्यर्थः । ननु अहं ब्रह्मास्मीत्यवस्थानं समाधिस्तन्निमित्तमिति चित्तैकाग्र्यं परमेश्वरैकाग्र्याभिमुखत्वं तस्मिन्वेति व्याख्यानद्वयमाचार्यैः कुतो न प्रदर्शितमितिचेत्, अहं ब्रह्मास्मीत्यवस्थानस्य परमेश्वरैकाग्र्याभिमुखत्वस्य च व्यवसायात्मिकसांख्ययोगबुद्धावन्तर्भावमभिप्रेत्येति गृहाण ॥ ४४ ॥ वेदवादरतानां वेदोक्तत्रिगुणात्मकसंसार एव फलमित्याशयेनाह—**त्रैगुण्येति** । त्रैगुण्यं

६ श्रीधरीव्याख्या ।

समाधिः चित्तैकाग्र्यं परमेश्वरैकाग्र्याभिमुखत्वं तस्मिन्निश्चयात्मिका बुद्धिर्न विधीयते । कर्मकर्तरिप्रयोगः । नोत्पद्यत इत्यर्थः ॥ ४४ ॥ ननु च यदि स्वर्गादिकं परमं फलं न भवति तर्हि किमिति वेदैस्तत्साधनतया कर्माणि विधीयन्ते तत्राह—**त्रैगुण्यविषया इति** । त्रिगुणा-

७ अभिनवगुप्ताचार्यव्याख्या ।

व्यवसायबुद्धियुक्ता अपि न समाधियोग्याः । तत्र फलनिश्चयत्वादिति श्लोकत्रयस्य तात्पर्यम् ॥ ४४ ॥ अतएव च त्रैगुण्येति । वेदास्त्रै-

१ मधुसूदनः. २ श्रीधरी.

१ श्रीमच्छांकरभाष्यम् ।

**रहितास्तेषां कामात्मनां यत्फलं तदाह—त्रैगुण्येति । त्रैगुण्यविषयास्त्रैगुण्यं संसारो विषयः प्रकाशयितव्यो येषां ते वेदास्त्रैगुण्यविषयाः त्वं तु निस्त्रैगुण्यो भवार्जुन । निष्कामो भवेत्यर्थः । निर्द्वन्द्वः सुखदुःखहेतू सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ ततो निर्गतो निर्द्वन्द्वो भव । त्वं नित्यसत्त्वस्थः सदा सत्त्वगुणाश्रितो भव । तथा निर्योगक्षेमः । अनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमः । योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करेत्यतो निर्योगक्षेमो भव, आत्मवानप्रमत्तश्च भव, एष तवोपदेशः ॥ ४५ ॥**

२ आनन्दगिरिव्याख्या ।

भवेति पदं निर्द्वन्द्वादिविशेषणेष्वपि प्रत्येकं संबध्यते । त्रयाणां सत्त्वादीनां गुणानां पुण्यपापव्यामिश्रकर्मतत्फलसंबन्धलक्षणः समाहारस्त्रैगुण्यमित्यङ्गीकृत्य व्याचष्टे—**संसार इति** । वेदशब्देनात्र कर्मकाण्डमेव गृह्यते, तदभ्यासवतां तदर्थानुष्ठानद्वारा संसारध्रौव्यान्न विवेकावसरोऽस्तीत्यर्थः । तर्हि संसारपरिवर्जनार्थं विवेकसिद्धये किं कर्तव्यमित्याशङ्क्याह—**त्वं त्विति** । कथं निस्त्रैगुण्यो भवेति गुणत्रयराहित्यं विधीयते नित्यसत्त्वस्थो भवेति वाक्यशेषविरोधादित्याशङ्क्याह—**निष्काम इति** । सप्रतिपक्षत्वं परस्परविरोधित्वं, पदार्थौ शीतोष्णादिलक्षणौ । निष्कामत्वे द्वन्द्वान्निर्गतत्वं शीतोष्णादिसहिष्णुत्वं हेतुमुक्त्वा तत्रापि हेत्वपेक्षायां सदा सत्त्वगुणाश्रितत्वं हेतुमाह—**नित्येति** । योगक्षेमव्यापृतचेतसो रजस्तमोभ्यामसंस्पृष्टे सत्त्वमात्रे समाश्रितत्वमशक्यमित्याशङ्क्याह—**तथेति** । योगक्षेमयोर्जीवनहेतुतया पुरुषार्थसाधनत्वान्निर्योगक्षेमो भवेति कुतो विधिरित्याशङ्क्याह—**योगेति** । योगक्षेमप्रधानत्वं सर्वस्य स्वारसिकमिति ततो निर्गमनमशक्यमित्याशङ्क्याह—**आत्मवानिति** । अप्रमादो मनसो विषयपारवश्यशून्यत्वम् । अथ यथोक्तोपदेशस्य मुमुक्षुविषयत्वादर्जुनस्य मुमुक्षुत्वमिह विवक्षितमिति नेत्याह—**एष इति** ॥ ४५ ॥ ईश्वरार्पणधिया

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

काण्डपरा वेदाः । त्वं तु निस्त्रैगुण्यो भव । ऊर्ध्वगतावपि विरक्तो भवेत्यर्थः । वक्ष्यति च तत्तद्गुणप्रधानं गतित्रयं 'ऊर्ध्वं गच्छन्ति सत्त्वस्था' इति । दिव्येभ्योऽपि विषयेभ्यो विरक्तः समाधावधिक्रियत इति भावः । किंलक्षणोऽसौ निस्त्रैगुण्य इत्यत आह—**निर्द्वन्द्व इति** । सुखदुःखे मानापमानौ शत्रुमित्रे शीतोष्णे इत्यादीनि द्वन्द्वानि सप्रतिपक्षपदार्थरूपाणि तेभ्यो निर्गतो निर्द्वन्द्वः । सर्वत्र समबुद्धिरित्यर्थः । ननु बाधमानमुष्णादिकं कथं शीतादिवत्क्षन्तुं शक्यमत आह—**नित्यसत्त्वस्थ इति** । नित्यं सर्वदा सत्त्वं धैर्यं सत्त्वगुणो वा तदाश्रितो भूत्वा । धीरो हि सर्वं सोढुं शक्तः, सात्त्विको वा प्रारब्धकर्मोपस्थापितमिदं दुःखमपरिहार्यं किमु तप्ततयेति जानन् सर्वं सोढुं शक्नोत्येव । नन्वत्यन्तदुःसहं क्षुधादिदुःखं कथं निस्त्रैगुण्येन सर्वथा प्रवृत्तिशून्येन सोढुं शक्यमत आह—**निर्योगक्षेम इति** । अप्राप्तस्य प्राप्तिर्योगः । प्राप्तस्य संरक्षणं क्षेमः । एतद्द्वयमपि प्रारब्धकर्माधीनमिति ततोऽपि निर्गत इत्यर्थः ।

४ मधुसूदनीव्याख्या ।

कुर्वतां कर्मस्वाभाव्यात्स्वर्गादिफलप्राप्तौ ज्ञानप्रतिबन्धः समान इत्याशङ्क्याह—त्रयाणां गुणानां कर्म त्रैगुण्यं काममूलः संसारः स एव प्रकाश्यत्वेन विषयो येषां तादृशा वेदाः कर्मकाण्डात्मकाः, यो यत्फलकामस्तस्यैव तत्फलं बोधयन्तीत्यर्थः । नहि सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति विनियोगेऽपि सकृदनुष्ठानात्सर्वफलप्राप्तिर्भवति तत्तत्कामनाविरहात्, यत्फलकामनयानुतिष्ठति तदेव फलं तस्मिन्प्रयोग इति स्थितं योगसिद्ध्यधिकरणे । यस्मादेवं कामनाविरहे फलविरहः तस्मात्त्वं निस्त्रैगुण्यो निष्कामो भव हे अर्जुन । एतेन कर्मस्वाभाव्यात्संसारो निरस्तः । ननु शीतोष्णादिद्वन्द्वप्रतीकाराय वस्त्राद्यपेक्षणात्कुतो निष्कामत्वमत आह—निर्द्वन्द्वः । सर्वत्र भवेति संबध्यते । मात्रास्पर्शास्त्वित्युक्तन्यायेन शीतोष्णादिद्वन्द्वसहिष्णुर्भव । असह्यं दुःखं कथं वा सोढव्यमित्यपेक्षायामाह—नित्यसत्त्वस्थः नित्यमचञ्चलं यत्सत्त्वं धैर्यापरपर्यायं तस्मिंस्तिष्ठतीति तथा । रजस्तमोभ्यामभिभूतसत्त्वो हि शीतोष्णादिपीडया मरिष्यामीति मन्वानो धर्माद्विमुखो भवति, त्वं तु, रजस्तमसी अभिभूय सत्त्वमात्रालम्बनो भव । ननु शीतोष्णादिसहनेऽपि क्षुत्पिपासादिप्रतीकारार्थं किंचिदनुपात्तमुपादेयमुपात्तं च रक्षणीयमिति तदर्थं यत्ने क्रियमाणे कुतः सत्त्वस्थत्वमित्यत आह—निर्योगक्षेमः । अलब्धलाभो योगः, लब्धपरिरक्षणं क्षेमस्तद्रहितो भव । चित्तविक्षेपकारिपरिग्रहरहितो भवेत्यर्थः । नचैवं चिन्ता कर्तव्या कथमेवं सति जीविष्यामीति । यतः सर्वान्तर्यामी परमेश्वर एव तव योगक्षेमादि निर्वाहयिष्यतीत्याह—आत्मवान् आत्मा परमात्मा ध्येयत्वेन योगक्षेमादिनिर्वाहकत्वेन च वर्तते यस्य

५ भाष्योत्कर्षदीपिका ।

संसारो विषयः प्रतिपाद्यो येषां कर्मकाण्डपराणां वेदानां तर्हि मया कथं भाव्यमित्याकाङ्क्षायामाह—**निस्त्रैगुण्य इति** । निस्त्रैगुण्यो निष्कामो भव । हे अर्जुनेति संबोधयन्स्वनाम सार्थकं कर्तुमर्हसीति ध्वनयति । निस्त्रैगुण्यभवने उपायमाह—**निर्द्वन्द्व इति**। सुखदुःखहेतू प्रतिपक्षपदार्थौ द्वन्द्वशब्दवाच्यौ तस्माद्रहितो भव । तत्रोपायमाह—**नित्येति** । नित्यं सत्त्वे स्थितो भव । तत्राप्युपायमाह—**निर्योगेति** । अनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमः, ताभ्यां निर्गतः रजोगुणरहितो भव । आत्मवानप्रमत्तः ।

**यावानर्थ उदपाने सर्वतःसंप्लुतोदके ।**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**स्वधर्ममनुतिष्ठतः सर्वेषु वेदोक्तेषु कर्मसु यान्यनन्तानि फलानि तानि नापेक्ष्यन्ते चेत् किमर्थं तानीश्वरायेत्यनुष्ठीयन्त इति, उच्यते शृणु—यावानिति । यथा लोके कूपतडागाद्यनेकस्मिन्नुदपाने परि-**

२ आनन्दगिरिव्याख्या ।

स्वधर्मानुष्ठानेऽपि फलकामनाभावाद्वैफल्यं योगमार्गस्येति मन्वानः शङ्कते—**सर्वेष्विति** । कर्ममार्गस्य फलवत्त्वं प्रतिजानीते—**उच्यत इति** । किं तत्फलमित्युक्ते तद्विषयं श्लोकमवतारयति—**शृण्विति** । यथोदपाने कूपादौ परिच्छिन्नोदके स्नानाचमनादिर्योऽर्थो यावानुत्पद्यते स तावानपरिच्छिन्ने सर्वतः संप्लुतोदके समुद्रेऽन्तर्भवति, परिच्छिन्नोदकानामपरिच्छिन्नोदकांशत्वात् । तथा सर्वेषु वेदोक्तेषु कर्मसु यावानर्थो विषयविशेषोपरक्तः सुखविशेषो जायते स तावानात्मविदः स्वरूपभूते सुखेऽन्तर्भवति परिच्छिन्नानन्दानामपरिच्छिन्नानन्दान्तर्भावाभ्युपगमात् 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । तथा चापरिच्छिन्नात्मानन्दप्राप्तिपर्यवसायिनो योगमार्गस्य नास्ति वैफल्यमित्याह—**यावानिति** । उक्तमर्थमक्षरयोजनया प्रकटयति—**यथेति** । उदकं पीयतेऽस्मिन्निति व्युत्पत्त्या कूपादिपरिच्छिन्नोदकविषयत्वमुदपानशब्दस्य दर्शयति—**कूपेति** । कूपादिगतस्याभिधेयस्य समुद्रेऽन्तर्भावासंभवात्कथ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तत्र हेतुः यत आत्मवाञ्जितचित्तः । सहि सर्वास्वप्यापत्स्वनाकुलो नित्यतृप्ततया निरुद्यमश्च भवतीति त्वमप्येतादृशो निस्त्रैगुण्यो भवेत्यर्थः ॥ ४५ ॥ नन्वात्मवत्त्वं चित्तशुद्धौ सत्यामेव भवति, सा च सकलवेदोक्तकर्मानुष्ठानसाध्या, अतो निस्त्रैगुण्यत्वं दुर्लभमित्याशङ्क्याह—**यावानिति** । सर्वतःसंप्लुतोदके महति उदपाने जलाशये पुरुषस्य यावान् अर्थो यावत्स्नानपानादिकं प्रयोजनं घटमात्रजलनिर्वर्त्यं भवति न कृत्स्नजलाशयव्ययनिर्वर्त्यं तावानेवार्थो विजानतो व्युत्पन्नचित्तस्य ब्राह्मणस्य ब्रह्मबुभूषोः सर्वेषु वेदेषु वेदैकदेशोपनिषच्छ्रवणमात्रनिर्वर्त्यो भवति न कृत्स्नवेदार्थानुष्ठानं स्वसिद्ध्यर्थमपेक्षते । एकेन जन्मना कृत्स्नवेदार्थानुष्ठानासंभवात् । ऐहिकेन जन्मान्तरीयेण

४ मधुसूदनीव्याख्या ।

स आत्मवान् । सर्वकामनापरित्यागेन परमेश्वरमाराधयतो मम सएव देहयात्रामात्रमपेक्षितं संपादयिष्यतीति निश्चित्य निश्चिन्तो भवेत्यर्थः । आत्मवानप्रमत्तो भवेति वा ॥ ४५ ॥ न चैवं शङ्कनीयं सर्वकामनापरित्यागेन कर्म कुर्वन्नहं तैस्तैः कर्मजनितैरानन्दैर्वञ्चितः स्यामिति । यस्मात् उदपाने क्षुद्रजलाशये । जातावेकवचनम् । यावानर्थः यावत्स्नानपानादिप्रयोजनं भवति, सर्वतःसंप्लुतोदके महति जलाशये तावानर्थो भवत्येव । यथाहि पर्वतनिर्झराः सर्वतः स्रवन्तः क्वचिदुपत्यकायामेकत्र मिलन्ति तत्र प्रत्येकं जायमानमुदकप्रयोजनं समुदिते सुतरां भवति, सर्वेषां निर्झराणामेकत्रैव कासारेऽन्तर्भावात्, एवं सर्वेषु वेदेषु वेदोक्तेषु काम्यकर्मसु यावानर्थो हैरण्यगर्भानन्दपर्यन्तस्तावान्विजानतो ब्रह्मतत्त्वं साक्षात्कृतवतो ब्राह्मणस्य

५ भाष्योत्कर्षदीपिका ।

तमोगुणाद्विनिर्गतो भवेत्यर्थः ॥४५॥ ननु वेदोक्तकर्मफलाकाङ्क्षा नापेक्षिता चेदीश्वरार्थमपि कर्म किमर्थमनुष्ठेयमित्याशङ्क्य फलाकाङ्क्षया कर्मानुष्ठातुरनेकानर्थसंभावना, फलाभिसंधिरहितस्य तस्य तु ज्ञानप्राप्त्या सर्वकर्मफलानां यस्मिन्ब्रह्मसुखेऽन्तर्भावः तत्प्राप्तिः समस्तानर्थनिवृत्तिश्च भवतीत्याशयेनाह—**यावानिति** । यथा लोके उदपाने कूपाद्यनेकस्मिन्स्वल्पे क्वचिद्धस्तादिप्रक्षालनं क्वचित्स्नानं क्वचित्पानमित्यादिर्यावानर्थो यावत्परिमाणं प्रयोजनं स सर्वार्थस्तावत्परिमाण एव सर्वतःसंप्लुतोदके परिपूर्णोदके भवति । तत्रान्तर्भ-

६ श्रीधरीव्याख्या ।

त्मकाः सकामा येऽधिकारिणस्तद्विषयास्तेषां कर्मफलसंबन्धप्रतिपादका वेदाः । त्वं तु निस्त्रैगुण्यो निष्कामो भव । तत्रोपायमाह । निर्द्वन्द्वः सुखदुःखशीतोष्णादियुगुलानि द्वन्द्वानि तद्रहितो भव । तानि सहस्वेत्यर्थः । कथमित्यत्राह । नित्यसत्त्वस्थः सन् । धैर्यमवलम्ब्येत्यर्थः । तथा निर्योगक्षेमः । अप्राप्तस्वीकारो योगः, प्राप्तपरिपालनं क्षेमं तद्रहितः । आत्मवानप्रमत्तः । नहि द्वन्द्वाकुलस्य योगक्षेमव्यापृतस्य च प्रमादिनस्त्रैगुण्यातिक्रमः संभवतीति ॥ ४५ ॥ ननु वेदोक्तनानाफलपरित्यागेन निष्कामतयेश्वराराधनविषया व्यवसायात्मिका बुद्धिस्तु कुबुद्धिरेवेत्याशङ्क्याह—**यावानिति** । उदकं पीयतेऽस्मिन्नित्युदपानं वापीकूपतडागादि तस्मिन्स्वल्पोदके एकत्र कृत्स्नस्यार्थस्याभावात्तत्र परिभ्रमणेन विभागशो यावान्स्नानपानादिरर्थः प्रयोजनं भवति तावान्सर्वोऽप्यर्थः सर्वतःसंप्लुतोदके महाह्रदे एकत्रैव यथा

७ अभिनवगुप्ताचार्यव्याख्या ।

गुण्येन कारणेन विशेषेण चिन्वन्ति बध्नन्तीति बन्धकाः । यस्मात्सुखदुःखमोहबुद्ध्या कर्माणि वैदिकानि क्रियमाणानि बन्धकानि अतस्त्रैगुण्यं कामरूपं त्याज्यम् । यदि तु वेददूषणपरमेतद्भविष्यत् प्रकृतं युद्धकरणं व्यघटिष्यत वेदादन्यस्य स्वधर्मनिश्चायकत्वाभावात् । येषां तु फलाभिलाषो विगलितस्तेषां न वेदा बन्धकाः, यतो वेदाः परं तेषां सम्यग्ज्ञानोपयोगिनः ॥ ४५ ॥ अतएवाह—यावानर्थेति ॥ ४६ ॥ यस्य धर्ममात्रे

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**च्छिन्नोदके यावान्यावत्परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वोऽर्थः सर्वतःसंप्लुतोदकेऽपि योऽर्थस्तावानेव संपद्यते तत्रान्तर्भवतीत्यर्थः । एवं तावांस्तावत्परिमाण एव संपद्यते सर्वेषु वेदेषु वेदोक्तेषु कर्मसु योऽर्थो यत्कर्मफलं सोऽर्थो ब्राह्मणस्य संन्यासिनः परमार्थतत्त्वं विजानतो योऽर्थो यद्विज्ञानफलं सर्वतःसंप्लुतोदकस्थानीयं तस्मिंस्तावानेव संपद्यते । तत्रैवान्तर्भवतीत्यर्थः । 'यथा कृतायविजिताया धरेयाः संयन्त्येवमेवैनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' इति श्रुतेः । 'सर्वं कर्माखिलम्' इति च वक्ष्यति । तस्मात्प्राग्ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतडागाद्यर्थस्थानीयमपि कर्म कर्तव्यम् ॥४६॥ कर्मणीति । तव च कर्मण्येवाधिकारो न ज्ञाननिष्ठायां ते तव तत्र च**

२ आनन्दगिरिव्याख्या ।

मिदमित्याशङ्क्यार्थशब्दस्य प्रयोजनविषयत्वं व्युत्पादयति—**फलमिति** । यत्फलत्वेन लीयते तत्फलमित्युच्यते तत्कथं तडागादिकृतं स्नानपानादि तथेत्याशङ्क्य तस्याल्पीयसो नाशोपपत्तेरित्याह—**प्रयोजनमिति** । तडागादिप्रयुक्तप्रयोजनस्य समुद्रनिमित्तप्रयोजनमात्रत्वप्रयुक्तान्यस्यान्यात्मत्वानुपपत्तेरित्याशङ्क्याह—**तत्रेति** । घटाकाशादेरिव महाकाशे परिच्छिन्नोदककार्यस्यापरिच्छिन्नोदककार्यान्तर्भावः संभवति तत्प्राप्तावितरापेक्षाभावादित्यर्थः । पूर्वार्धं दृष्टान्तभूतमेवं व्याख्याय दार्ष्टान्तिकमुत्तरार्धं व्याकरोति—**एवमित्यादिना** । कर्मसु योऽर्थ इत्युक्तं व्यनक्ति—**यत्कर्मफलमिति** । सोऽर्थो विजानतो ब्राह्मणस्य योऽर्थस्तावानेव संपद्यत इति संबन्धः । तदेव स्पष्टयति—**विज्ञानेति** । तस्मिन्नन्तर्भवतीति शेषः । सर्वं कर्मफलं ज्ञानफलेऽन्तर्भवतीत्यत्र प्रमाणमाह—**सर्वमिति** । यत्किमपि प्रजाः साधु कर्म कुर्वन्ति तत्सर्वं स पुरुषोऽभिसमेति प्राप्नोति यः पुरुषस्तद्वेद विजानाति यद्वस्तु स रैक्वो वेद तद्वेद्यमिति श्रुतेरर्थः । कर्मफलस्य सगुणज्ञानफलेऽन्तर्भावः संवर्गविद्यायां श्रूयते कथमेतावता निर्गुणज्ञानफले कर्मफलान्तर्भावः संभवतीत्याशङ्क्याह—**सर्वमिति** । तर्हि ज्ञाननिष्ठैव कर्तव्या तावतैव कर्मफलस्य लब्धतया कर्मानुष्ठानानपेक्षणादित्याशङ्क्याह—**तस्मादिति** । योगमार्गस्य निष्फलत्वाभावस्तच्छब्दार्थः ॥ ४६ ॥ तर्हि परम्परया पुरुषार्थसाधनं योगमार्गं परित्यज्य साक्षादेव पुरुषार्थकारणमात्मज्ञानं तदर्थमुपदेष्टव्यं तस्मै हि स्पृहयति मनो मदीयमित्याशङ्क्याह—**तव**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वा जपादिना चित्तशुद्धौ सत्यामुपनिषच्छ्रवणान्निस्त्रैगुण्यता संभवतीति भावः । वृद्धास्तु–सर्वतःसंप्लुतोदकस्थानीये आत्मज्ञाने पुरुषस्य तावानर्थः कृत्स्नोपि भवति यावाननेककूपरूपोदपानस्थानीयेषु सकलवेदोक्तकर्मस्वनुष्ठितेषु भवति, ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भावात् । तथाच श्रुतिर्ज्ञाने सर्वकर्मफलान्तर्भावं दर्शयति । 'यथा कृतायविजितायाधरेयाः संयन्त्येवमेवैनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' इति । वक्ष्यति च 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति । गङ्गातुल्यज्ञानोदयात्प्रागेव कूपोपमानि कर्माणि कर्तव्यानीति भाव इति व्याचख्युः । अस्मिन्पक्षे पूर्वार्धे अनेकस्मिन्–यथा-तथा-भवतीति पदचतुष्टयाध्याहारः, यावान्-तावान्-पदयोरनुषङ्गश्च दार्ष्टान्तिके द्रष्टव्यः ॥ ४६ ॥ ननु ममाप्यौपनिषदात्मज्ञानार्थिनः शम एवेष्टस्तत्कथं मां युध्य-

४ मधुसूदनीव्याख्या ।

ब्रह्मबुभूषोर्भवत्येव । क्षुद्रानन्दानां ब्रह्मानन्दांशत्वात्तत्र क्षुद्रानन्दानामन्तर्भावात् 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । एकस्याप्यानन्दस्याविद्याकल्पिततत्तदुपाधिपरिच्छेदमादायांशांशिवद्व्यपदेश आकाशस्येव घटाद्यवच्छेदकल्पनया । तथाच निष्कामकर्मभिः शुद्धान्तःकरणस्य तवात्मज्ञानोदये परब्रह्मानन्दप्राप्तिः स्यात्तयैव च सर्वानन्दप्राप्तौ न क्षुद्रानन्दप्राप्तिनिबन्धनवैय्यग्र्यावकाशः । अतः परमानन्दप्रापकाय तत्त्वज्ञानाय निष्कामकर्माणि कुर्वित्यभिप्रायः । अत्र यथातथाभवतीति पदत्रयाध्याहारो यावान्–तावानिति पदद्वयानुषङ्गश्च दार्ष्टान्तिके द्रष्टव्यः ॥ ४६ ॥ ननु निष्कामकर्मभिरात्म-

५ भाष्योत्कर्षदीपिका ।

वतीत्यर्थः । तथा यावानर्थः फलं वेदेषु वेदबोधितेषु कर्मसु तावानर्थो ब्राह्मणस्य परमार्थतत्त्वं विजानतः संभवति, सर्वतःसंप्लुतोदकस्थानीये ज्ञानफले ब्रह्मणि सर्वेषां फलानामन्तर्भावात् । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । ब्राह्मणप्र-

६ श्रीधरीव्याख्या ।

भवति । एवं यावान्सर्वेषु वेदेषु तत्तत्कर्मफलरूपोऽर्थस्तावान्सर्वोऽपि विजानतो व्यवसायात्मिकबुद्धियुक्तस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य भवत्येव । ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात् 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । तस्मादियमेव बुद्धिः सुबुद्धिरित्यर्थः

१ श्रीमच्छांकरभाष्यम्।

**कर्म कुर्वतो मा फलेष्वधिकारोऽस्तु कर्मफलतृष्णा मा भूत् कदाचन। कस्यांचिदप्यवस्थायामित्यर्थः। कदा कर्मफले तृष्णा ते स्यात्तदा कर्मफलप्राप्तेर्हेतुः स्याः, एवं मा कर्मफलहेतुर्भूः। यदा हि कर्मफलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत्, यदि कर्मफलं नेष्यते किं कर्मणा दुःखरूपेणेति। मा ते तव सङ्गोऽस्त्वकर्मण्यकरणे प्रीतिर्मा भूत् ॥४७॥ यदि कर्मफलप्रयुक्तेन न कर्तव्यं**

२ आनन्दगिरिव्याख्या।

चेति। तर्हि तत्फलाभिलाषोऽपि स्यादिति नेत्याह—**मा फलेष्विति**। पूर्वोक्तमेवार्थं प्रपञ्चयति—**मा कर्मेति**। फलाभिसन्ध्यसंभवे कर्माकरणमेव श्रद्दधामीत्याशङ्क्याह—**मा त इति**। ज्ञानानधिकारिणोऽपि कर्मत्यागप्रसक्तिं निवारयति—**कर्मण्येवेति**। कर्मण्येवेत्येवकारार्थमाह—**न ज्ञानेति**। नहि तत्राब्राह्मणस्यापरिपक्वकषायस्य मुख्योऽधिकारः सिध्यतीत्यर्थः। फलैस्तर्हि संबन्धो दुर्वारः स्यादित्याशङ्क्याह—**तत्रेति**। कर्मण्येवाधिकारे सतीति सप्तम्यर्थः। फलेष्वधिकाराभावं स्फोरयति—**कर्मेति**। कर्मानुष्ठानात्प्रागूर्ध्वं तत्काले चेत्येतत्कदाचनेति विवक्षितमित्याह—**कस्यांचिदिति**। फलाभिसंधाने दोषमाह—**यदेति**। एवं कर्मफलतृष्णाद्वारेणेत्यर्थः। कर्मफलहेतुत्वं विवृणोति—**यदा हीति**। तर्हि विफलं क्लेशात्मकं कर्म न कर्तव्यमिति शङ्कामनुभाष्य दूषयति—**यदीत्यादिना**। अकर्मणि ते सङ्गो मा भूदित्युक्तमेव स्पष्टयति—**अकरण इति** ॥ ४७ ॥ आसक्तिरकरणे न युक्ता चेत्तर्हि क्लेशात्मकं कर्म किमुद्दिश्य कर्तव्यमित्याशङ्कामनूद्य श्लोकान्तरमवतारयति—**यदीत्यादिना**। वक्ष्यमाणयोगमुद्दिश्य तन्निष्ठो भूत्वा कर्माणि

३ नीलकण्ठव्याख्या (चतुर्धरी)।

स्वेति प्रेरयसीत्याशङ्क्याह—**कर्मण्येवेति**। कर्मण्येवाधिकारो न ज्ञाननिष्ठायाम्। मा फलेषु सङ्गोऽस्त्वित्यपकृष्यते। कर्मफलं स्वर्गपश्वादिहेतुः कर्मसु प्रवर्तकं यस्य तादृशो मा भूः। अकर्मणि कर्माकरणेऽपि तव सङ्गो मास्तु ॥ ४७॥

४ मधुसूदनीव्याख्या।

ज्ञानं संपाद्य परमानन्दप्राप्तिः क्रियते चेदात्मज्ञानमेव तर्हि संपाद्यं किं बह्वायासैः कर्मभिर्बहिरङ्गसाधनभूतैरित्याशङ्क्याह—ते तवाशुद्धान्तःकरणस्य तात्त्विकज्ञानोत्पत्त्ययोग्यस्य कर्मण्येवान्तःकरणशोधकेऽधिकारो मयेदं कर्तव्यमिति बोधोऽस्तु न ज्ञाननिष्ठारूपे वेदान्तवाक्यविचारादौ। कर्म च कुर्वतस्तव तत्फलेषु स्वर्गादिषु कदाचन कस्यांचिदप्यवस्थायां कर्मानुष्ठानात्प्रागूर्ध्वं तत्काले वाधिकारो मयेदं भोक्तव्यमिति बोधो मास्तु। ननु मयेदं भोक्तव्यमिति बुद्ध्यभावेऽपि कर्म स्वसामर्थ्यादेव फलं जनयिष्यतीति चेन्नेत्याह—मा कर्मफलहेतुर्भूः, फलकामनया हि कर्म कुर्वन्फलस्य हेतुरुत्पादको भवति। त्वं तु निष्कामः सन्कर्मफलहेतुर्माभूः। नहि निष्कामेन भगवदर्पणबुद्ध्या कृतं कर्म फलाय कल्पत इत्युक्तम्। फलाभावे किं कर्मणेत्यत आह—मा ते सङ्गोऽस्त्वकर्मणि। यदि फलं नेष्यते किं कर्मणा दुःखरूपेणेत्यकरणे तव प्रीतिर्माभूत् ॥ ४७ ॥ पूर्वोक्तमेव

५ भाष्योत्कर्षदीपिका।

हृणं ब्रह्मविद्यायां ब्राह्मणस्य मुख्याधिकारसूचनार्थम् ॥ ४६ ॥ मम तर्हि क्वाधिकार इत्याकाङ्क्षायामाह—**कर्मणीति**। कर्मण्येव नतु ज्ञाननिष्ठायामन्तःकरणशुद्ध्यभावात्, तत्रापि चित्तशुद्धिहेतौ फलाभिसंधिरहिते कर्मणि नतु बन्धनिमित्ते काम्ये इत्याह—**मेति**। कदाचन कस्यांचिदवस्थायामपि कर्मफलतृष्णा ते मास्तु। फलतृष्णया काम्ये तेऽधिकारो मास्त्विति यावत्। ननु तृष्णाभावेऽपि भोजनात्तृप्तिरिव कर्मणः फलं स्यादेवेति तत्राह—**मा कर्मेति**। मा कर्मफले हेतुर्भूः फलतृष्णया तदुत्पादको माभूः। कामनया कृतस्य कर्मणः पश्वादिफलदातृत्वनियमात् 'चित्रया यजेत पशुकामः' इति श्रुतेः। यत्तु कर्मफलं प्रवृत्तिहेतुर्यस्येति तन्न। बहुव्रीह्यपेक्षया तत्पुरुषस्य लघुत्वात्, दुःखरूपेण निष्फलेन कर्मणा किमिति ते कर्माकरणे सङ्ग आसक्तिर्माभूत् ॥४७॥ एतदेव विवृणोति—

६ श्रीधरीव्याख्या।

॥ ४६ ॥ तर्हि सर्वकर्मफलानि परमेश्वराराधनादेव भविष्यन्तीत्यभिसंधाय प्रवर्तेत किं कर्मणेत्याशङ्क्य तद्वारयन्नाह—**कर्मण्येवेति**। ते तव तत्त्वज्ञानार्थिनः कर्मण्येवाधिकारः। तत्फलेषु बन्धहेतुष्वधिकारः कामो मास्तु। ननु कर्मणि कृते तत्फलं स्यादेव भोजने कृते तृप्तिवदित्याशङ्क्याह। मा कर्मफलहेतुर्भूः कर्मफलं प्रवृत्तिहेतुर्यस्य तथाभूतो मा भूः। कामितस्यैव स्वर्गादेर्नियोज्यविशेषणत्वेन फलत्वादकामितं फलं न स्यादिति भावः। अतएव फलं बन्धकं भविष्यतीति भयादकर्मणि कर्माकरणेऽपि तव सङ्गो निष्ठा मास्तु ॥ ४७ ॥ किं

७ अभिनवगुप्ताचार्यव्याख्या।

ज्ञाने च प्राधान्यं परिमितादपि वेदभावितात्कार्यं, अतश्च कर्मण्यस्तु इति कर्ममात्रे त्वं व्यापृतो भव न तु कर्मफलेषु। ननु कर्मणि जाते नान्तरीयकतयैव फलमापततीति। मैवम्। तत्रहि यदि त्वं फलकामनाकालुष्यव्याप्तो भवसि तदा कर्मणां फलंप्रति हेतुत्वम्। यदप्रार्थ्यमानं

१ नीलकण्ठः।

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥**
**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कर्म कथं तर्हि कर्तव्यमित्युच्यते, योगस्थ इति । योगस्थः सन्कुरु कर्माणि केवलमीश्वरार्थं, तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा धनंजय, फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिस्तद्विपर्ययजाऽसिद्धिस्तयोः सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि । कोऽसौ योगो यत्रस्थः कुर्वित्युक्तमिदमेव तत्सिद्ध्यसिद्ध्योः समत्वं योग उच्यते ॥ ४८ ॥ दूरेणेति । यत्पुनः समत्वबुद्धियुक्तमीश्वराराधनार्थं कर्मैतस्मात्कर्मणो दूरेणातिविप्रकर्षेण ह्यवरं

२ आनन्दगिरिव्याख्या ।

क्लेशात्मकान्यपि विहितत्वादनुष्ठेयानीत्याह—**योगस्थः सन्निति** । कर्मानुष्ठानस्योद्देश्यं दर्शयति—**केवलमिति** । फलान्तरापेक्षामन्तरेणेश्वरार्थं तत्प्रसादनार्थमनुष्ठानमित्यर्थः । तर्हीश्वरसंतोषोऽभिलाषगोचरीभूतो भविष्यति नेत्याह—**तत्रापीति** । ईश्वरप्रसादनार्थे कर्मानुष्ठाने स्थितेऽपीत्यर्थः । सङ्गं त्यक्त्वा कुर्विति पूर्वेण संबन्धः । आकाङ्क्षितं पूरयित्वा सिद्धिशब्दार्थमाह—**फलेति** । तद्विपर्ययजा सत्त्वाशुद्धिजन्या । ज्ञानप्राप्तिलक्षणेति यावत् । कर्माननुतिष्ठतो योगमुद्दिश्य शेषतया प्रकृतमाकाङ्क्षापूर्वकं प्रकटयति—**कोऽसावित्यादिना** ॥ ४८ ॥ किमिति योगस्थेन तत्त्वज्ञानमुद्दिश्य कर्म कर्तव्यं फलाभिलाषेऽपि तदनुष्ठानस्य सुलभत्वादित्याशङ्क्य यथोक्तयोगयुक्तं कर्म स्तुवन्ननन्तरश्लोकमुत्थापयति—**यत्पुनरिति** । अवरं कर्म बुद्धिसंबन्धविरुद्धमिति शेषः । बुद्धियुक्तस्य बुद्धियोगाधीनं प्रकर्षं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एतदेव विवृणोति—**योगस्थ इति** । योगस्थः सन् सङ्गं फलतृष्णां कर्तृत्वाभिमानं च त्यक्त्वा कर्माणि ज्ञानार्थं कुरु । हे धनंजय, सिद्ध्यसिद्ध्योः कर्मफलस्य विविदिषादेः सिद्धावसिद्धौ वा समो हर्षविषादशून्यो भूत्वा कर्माणि कुर्विति संबन्धः । इदमेव सिद्ध्यसिद्ध्योः समत्वं योग इत्युच्यते ॥ ४८ ॥ इममेव बुद्धियोगं स्तौति—**दूरेणेति** ।

४ मधुसूदनीव्याख्या ।

विवृणोति—हे धनंजय, त्वं योगस्थः सन् सङ्गं फलाभिलाषं कर्तृत्वाभिनिवेशं च त्यक्त्वा कर्माणि कुरु । अत्र बहुवचनात्कर्मण्येवाधिकारस्ते इत्यत्र जातावेकवचनम् । सङ्गत्यागोपायमाह—सिद्ध्यसिद्ध्योः समो भूत्वा फलसिद्धौ हर्षं फलासिद्धौ च विषादं त्यक्त्वा केवलमीश्वराराधनबुद्ध्या कर्माणि कुर्वित्यर्थः । ननु योगशब्देन प्राक्कर्मोक्तम् । अत्र तु योगस्थः कर्माणि कुर्वित्युच्यते, अतः कथमेतद्बोद्धुं शक्यमित्यत आह—समत्वं योग उच्यते । यदेतत्सिद्ध्यसिद्ध्योः समत्वं इदमेव योगस्थ इत्यत्र योगशब्देनोच्यते नतु कर्मेति न कोऽपि विरोध इत्यर्थः । अत्र पूर्वार्धस्योत्तरार्धेन व्याख्यानं क्रियत इत्यपौनरुक्त्यमिति भाष्यकारीयः पन्थाः । सुखदुःखे समे कृत्वेत्यत्र जयाजयसाम्येन युद्धमात्रकर्तव्यता प्रकृतत्वादुक्ता । इह तु दृष्टादृष्टसर्वफलपरित्यागेन सर्वकर्मकर्तव्यतेति विशेषः ॥ ४८ ॥ ननु किं कर्मानुष्ठानमेव पुरुषार्थो येन निष्फलमेव सदा कर्तव्य-

५ भाष्योत्कर्षदीपिका ।

**योगस्थ इति** । योगस्थः कर्माणि कुरु केवलमीश्वरार्थम् । ननु योगः परमेश्वरैकपरतेति योगशब्दार्थ आचार्यैः कुतो न प्रदर्शित इतिचेत् समत्वं योग उच्यते इत्यनेन तदर्थस्य मूल एवोक्तत्वात् । तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा । एतद्भाष्यमुपलक्षणं कर्तृत्वाद्यभिनिवेशस्यापि । चित्तशुद्धिद्वारा ज्ञानप्राप्तिरूपायां सिद्धौ तद्विपर्ययरूपायामसिद्धौ च समो हर्षविषादशून्यो भूत्वा । अयमेव योग इत्याह—**समत्वमिति** । दिग्विजये महीपाञ्जित्वा धनमाहृत्य राजसूययज्ञे त्वया नियोजितं तथाधुनाप्येतान्सर्वाञ्जित्वा यज्ञादीन्संपादयितुमर्हसीति द्योतयन्नाह—हे धनंजयेति ॥ ४८ ॥ काम्यं त्वतिनिकृष्टमित्याह—**दूरेणेति** । दूरेण विप्रकर्षेणावरम-

६ श्रीधरीव्याख्या ।

तर्हि—**योगस्थ इति** । योगः परमेश्वरैकपरता तत्र स्थितः कर्माणि कुरु । तथा सङ्गं कर्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराश्रयेणैव कुरु । तत्फलस्य ज्ञानस्यापि सिद्ध्यसिद्ध्योः समो भूत्वा केवलमीश्वरार्पणेनैव कुरु । यत एवंभूतं समत्वमेव योग उच्यते सद्भिः । चित्तसमाधानरूपत्वात् ॥ ४८ ॥ काम्यं तु कर्मातिनिकृष्टमित्याह—**दूरेणेति** । बुद्ध्या व्यवसायात्मिकया कृतः कर्मयोगो बुद्धियोगः । बुद्धि-

७ अभिनवगुप्ताचार्यव्याख्या ।

फलं ज्ञानं नानिच्छोस्तदिति कर्माभावेन यः सङ्गः स एव गाढग्रहरूपो मिथ्याज्ञानस्वरूप इत्यत्याज्य एव ॥ ४७ ॥ **योगस्थ इति** । योगे स्थित्वा कर्माणि कुरु । साम्यं च योगः । ( यस्य सर्वे इति । यस्य सर्वे व्यापारा आशीरूपेण बन्धनेन युक्ताः । अभिलाषो हि बन्धकः ) ॥ ४८ ॥ दूरेण हीति । बुद्धियोगात्किल हेतोरवरं दुष्टफलयुक्तं कर्म दूरीभवति । अतस्तादृश्यां बुद्धौ शरणमन्विच्छ प्रार्थयस्व, येन सा बुद्धिर्लभ्यते

१ श्रीधरी. २ उपलब्धोभयादर्शपुस्तकयोरपीयं व्याख्याऽसंबद्धैव दृश्यते.

१ श्रीमच्छांकरभाष्यम् ।

**निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात्समत्वबुद्धियुक्तात्कर्मणो जन्ममरणादिहेतुत्वाद् धनंजय, यत एवं योगविषयायां बुद्धौ तत्परिपाकजायां वा सांख्यबुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थयस्व । परमार्थज्ञानशरणो भवेत्यर्थः । यतोऽवरं कर्म कुर्वाणाः कृपणा दीनाः फलहेतवः फलतृष्णाप्रयुक्ताः सन्तः 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः ॥ ४९ ॥ समत्वबुद्धियुक्तः सन्स्वधर्ममनुतिष्ठन् यत्फलं प्राप्नोति तच्छृणु—बुद्धीति ।**

२ आनन्दगिरिव्याख्या ।

सूचयति—**बुद्धीति** । बुद्धिसंबन्धासंबन्धाभ्यां कर्मणि प्रकर्षनिकर्षयोर्भावे करणीयं नियच्छति—**बुद्धाविति** । यत्तु फलेच्छयापि कर्मानुष्ठानं सुकरमिति तत्राह—**कृपणेति** । निकृष्टं कर्मैव विशिनष्टि—**फलार्थिनेति** । कस्मात्प्रतियोगिनः सकाशादिदं निकृष्टमित्याशङ्क्य प्रतीकमुपादाय व्याचष्टे—**बुद्धीत्यादिना** । फलाभिलाषेण क्रियमाणस्य कर्मणो निकृष्टत्वे हेतुमाह—**जन्मेति** । समत्वबुद्धियुक्तात्कर्मणस्तद्धीनस्य कर्मणो जन्मादिहेतुत्वेन निकृष्टत्वे फलितमाह—**यत इति** । योगविषया बुद्धिः समत्वबुद्धिः । बुद्धिशब्दस्यार्थान्तरमाह—**तत्परिपाकेति** । तच्छब्देन समत्वबुद्धिसमन्वितं कर्म गृह्यते । तस्य परिपाकस्तत्फलभूता बुद्धिशुद्धिः । शरणशब्दस्य पर्यायं गृहीत्वा विवक्षितमर्थमाह—**अभयेति** । सप्तमीमविवक्षित्वा द्वितीयं पक्षं गृहीत्वा वाक्यार्थमाह—**परमार्थेति** । तथाविधज्ञानशरणत्वे हेतुमाह—**यत इति** । फलहेतुत्वं विवृणोति—**फलेति** । तेन परमार्थज्ञानशरणतैव युक्तेति शेषः । परमार्थज्ञानबहिर्मुखानां कृपणत्वे श्रुतिं प्रमाणयति—**यो वा इति** । अस्थूलादिविशेषणमेतदित्युच्यते ॥ ४९ ॥ पूर्वोक्तसमत्वबुद्धियुक्तस्य स्वधर्मानुष्ठाने प्रवृत्तस्य किं स्यादित्याशङ्क्याह—**समत्वेति** । बुद्धियुक्तः स्वधर्माख्यं कर्मा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मफलकामेन क्रियमाणं बुद्धियोगात्पूर्वोक्तान्निष्कामात्कर्मणः दूरेण हि प्रसिद्धं अवरं अत्यन्तनिकृष्टं, अतो बुद्धौ योगरूपायां तत्फलभूतायां सांख्यरूपायां वा तन्निमित्तं शरणं रक्षितारं आश्रयं वा ईश्वरं अन्विच्छ प्रार्थयस्व । तत्प्रीत्यर्थं कर्माणि कुर्वित्यर्थः । यतः फलहेतवः फलमेव हेतुः प्रवर्तकं येषां तादृशाः फलतृष्णावन्तः कृपणा दीना भवन्ति । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः ॥ ४९ ॥ किंच

४ मधुसूदनीव्याख्या ।

मित्युच्यते 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात्, तद्वरं फलकामनयैव कर्मानुष्ठानमिति चेन्नेत्याह—बुद्धियोगात् आत्मबुद्धिसाधनभूतान्निष्कामकर्मयोगात् दूरेणातिविप्रकर्षेणावरमधमं कर्म फलाभिसंधिना क्रियमाणं जन्ममरणहेतुभूतं, अथवा परमात्मबुद्धियोगाद्दूरेणावरं सर्वमपि कर्म । हि यस्मात् हे धनंजय, तस्मात् बुद्धौ परमात्मबुद्धौ सर्वानर्थनिवर्तकायां शरणं प्रतिबन्धकपापक्षयेण रक्षकं निष्कामकर्मयोगम् । अन्विच्छ कर्तुमिच्छ । ये तु फलहेतवः फलकामा अवरं कर्म कुर्वन्ति ते कृपणाः सर्वदा जन्ममरणादिघटीयन्त्रभ्रमणेन परवशाः । अत्यन्तदीना इत्यर्थः । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः । तथाच त्वमपि कृपणो माभूः, किंतु सर्वानर्थनिवर्तकात्मज्ञानोत्पादकं निष्कामकर्मयोगमेवानुतिष्ठेत्यभिप्रायः । यथाहि कृपणा जना अतिदुःखेन धनमर्जयन्तो यत्किंचिद्दृष्टसुखमात्रलोभेन दानादिजनितं महत्सुखमनुभवितुं न शक्नुवन्तीत्यात्मानमेव वञ्चयन्ति, तथा महता दुःखेन कर्माणि कुर्वाणाः क्षुद्रफलमात्रलोभेन परमानन्दानुभवेन वञ्चिता इत्यहो दौर्भाग्यं मौढ्यं च तेषामिति कृपणपदेन ध्वनितम् ॥ ४९ ॥ एवं बुद्धियोगाभावे दोषमुक्त्वा तद्भावे

५ भाष्योत्कर्षदीपिका ।

धमफलाभिसंधिनानुष्ठीयमानं कर्म बुद्धियोगात्समत्वबुद्धियुक्तादीश्वराराधनार्थात्कर्मणः जन्मादिहेतुत्वाद्बुद्धियोगात्, आत्मबुद्धिसाधनभूतात्समत्वलक्षणाद्योगादिति वाऽर्थः । यतएवमतो बुद्धौ समत्वबुद्धिं सांख्यबुद्धिं वा शरणमाश्रयं अभयप्राप्तेः परम्परया साक्षाद्वा कारणमन्विच्छ प्रार्थयस्व । शरणो भवेत्यर्थः । बुद्धौ शरणं त्रातारमीश्वरमित्यर्थस्त्वप्रक्रान्तार्थकल्पनया विशेष्याध्याहारेण च ग्रस्तोऽत आचार्यैर्न प्रदर्शितः । यतः कारणादवरं कर्म कुर्वाणा दीनाः, यतः फलहेतवः फलतृष्णायुक्ताः 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः धनं त्वया हृतं तेन युधिष्ठिरेण स्वाराज्यकामनया राजसूयकर्मानुष्ठितं तस्य फलं भवद्भिः पूर्वमनुभूतमधुना चोपस्थितमतः काम्यं कर्मात्यधममिति सूचयन्संबोधयति—धनंजयेति ॥ ४९ ॥ काम्यकर्मणोऽवरत्वमुक्त्वा निष्काम-

६ श्रीधरीव्याख्या ।

साधनभूतो वा तस्मात्सकाशादन्यत्काम्यं कर्म दूरेणावरमत्यन्तमपकृष्टम् । हि यस्मादेवं तस्माद्बुद्धौ ज्ञाने शरणमाश्रयं कर्मयोगमन्विच्छानुतिष्ठ । यद्वा बुद्धौ शरणं त्रातारमीश्वरमाश्रयेत्यर्थः । फलहेतवस्तु सकामा नराः कृपणा दीनाः । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लो-

१ श्रीधरी.

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

१ श्रीमच्छांकरभाष्यम् ।

बुद्धियुक्तः समत्वविषयया बुद्ध्या युक्तो बुद्धियुक्तः, स जहाति परित्यजतीहास्मिँल्लोके उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यतस्तस्मात्समत्वबुद्धियोगाय युज्यस्व घटस्व । योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत्कौशलं कुशलभावस्तद्धि कौशलं यद्बन्धनस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्तन्ते तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥ ५० ॥ यस्मात् कर्मजमिति । कर्मजं फलं

२ आनन्दगिरिव्याख्या ।

नुतिष्ठन्निति शेषः । बुद्धियोगस्य फलवत्त्वे फलितमाह—**तस्मादिति** । पूर्वार्धं व्याचष्टे—**बुद्धीत्यादिना** । ननु समत्वबुद्धिमात्रान्न पुण्यपापनिवृत्तिर्युक्ता परमार्थदर्शनवतस्तन्निवृत्तिप्रसिद्धेरिति तत्राह—**सत्त्वेति** । उत्तरार्धं व्याचष्टे—**तस्मादिति** । स्वधर्ममनुतिष्ठतो यथोक्तयोगार्थं किमर्थं मनो योजनीयमित्याशङ्क्याह—**योगो हीति** । तर्हि यथोक्तयोगसामर्थ्यादेव दर्शितफलसिद्धेरनास्था स्वधर्मानुष्ठाने प्राप्तेत्याशङ्क्याह—**स्वधर्माख्येष्विति** । ईश्वरार्पितचेतस्तया कर्मसु वर्तमानस्यानुष्ठाननिष्ठस्य या यथोक्ता बुद्धिस्तत्तेषु कौशलमिति योजना । कर्मणां बन्धस्वभावत्वात्तदनुष्ठाने बन्धानुबन्धः स्यादित्याशङ्क्य कौशलमेव विशदयति—**तद्धीति** । समत्वबुद्धेरेवं फलत्वे स्थिते फलितमुपसंहरति—**तस्मादिति** ॥ ५० ॥ समत्वबुद्धियुक्तस्य सुकृतदुष्कृततत्फलपरित्यागेऽपि कथं मोक्षः स्यादित्याशङ्क्याह—**यस्मादिति** । समत्वबुद्ध्या यस्मात्कर्मानुष्ठीयमानं दुरितादि त्याजयति तस्मात्परम्परयासौ मुक्तिहेतुरित्यर्थः । मनीषिणो हि ज्ञानातिशयवन्तो बुद्धियुक्ताः सन्तः स्वधर्माख्यं कर्मानुतिष्ठन्तस्ततो जातं फलं देहप्रभेदं हित्वा

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

**बुद्धीति** । बुद्धियुक्तः समत्वबुद्धियुक्तः योगाय समत्वबुद्धियोगाय युज्यस्व घटस्व । योगः सिद्ध्यसिद्ध्योः समत्वबुद्धिः कर्मसु बन्धकेष्वपि कौशलं बन्धनिवर्तकत्वसंपादकम् । ननु बुद्धियुक्तः कर्मभिर्दुष्कृतं त्यजतु 'धर्मेण पापमपनुदति' इति श्रुतेः; सुकृतं तु सजातीयत्वात्तैर्दुष्परिहरमिति कथमुभे सुकृतदुष्कृते जहातीत्युच्यते सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण प्राञ्चः । अर्वाञ्चस्तु दुष्कृतत्यागमुक्तरीत्याभ्युपेत्य फलत्यागात्सुकृतत्यागोऽपि कर्मयोगिनो भवति । दुष्कृतफलवन्मोक्षप्रतिबन्धकतत्फलस्यानुत्पादात् । यत्तु आपस्तम्बोक्ताम्रवृक्षनिदर्शनेन नान्तरीयकं सुकृतफलमुक्तं न तत्फलत्वेनोपपद्यते नान्तरीयकत्वादेव । तस्मात्फलद्वारा मोक्षप्रतिबन्धके क्रियमाणे एव सुकृतदुष्कृते

४ मधुसूदनीव्याख्या ।

गुणमाह—इह कर्मसु बुद्धियुक्तः समत्वबुद्ध्या युक्तो जहाति परित्यजति उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण । यस्मादेवं तस्मात्समत्वबुद्धियोगाय त्वं युज्यस्व घटस्व उद्युक्तो भव । यस्मादीदृशः समत्वबुद्धियोग ईश्वरार्पितचेतसः कर्मसु प्रवर्तमानस्य कौशलं कुशलभावः यद्बन्धहेतूनामपि कर्मणां तदभावो मोक्षपर्यवसायित्वं च तन्महत्कौशलम् । समत्वबुद्धियुक्तः कर्मयोगः कर्मात्मापि सन् दुष्कर्मक्षयं करोतीति महाकुशलः, त्वं तु न कुशलो यतश्चेतनोऽपि सन्सजातीयदुष्टक्षयं न करोषीति व्यतिरेकोऽत्र ध्वनितः । अथवा इह समत्वबुद्धियुक्ते कर्मणि कृते सति सत्त्वशुद्धिद्वारेण बुद्धियुक्तः परमात्मसाक्षात्कारवान्सन् जहात्युभे सुकृतदुष्कृते, तस्मात्समत्वबुद्धियुक्ताय कर्मयोगाय युज्यस्व । यस्मात्कर्मसु मध्ये समत्वबुद्धियुक्तः कर्मयोगः कौशलं कुशलः । दुष्टकर्मनिवारणचतुर इत्यर्थः ॥ ५० ॥ ननु दुष्कृतहानमपेक्षितं नतु सुकृतहानं पुरुषार्थभ्रंशापत्तेरित्या-

५ भाष्योत्कर्षदीपिका ।

कर्मणः श्रैष्ठ्यमाह—समत्वबुद्धियुक्तः सत्त्वशुद्धिज्ञानप्राप्तिद्वारेणोभे पुण्यपापे त्यजति सांख्यबुद्धिर्युक्त इति वा तस्माद्योगाय समत्वलक्षणकर्मयोगानुष्ठानार्थं घटस्व ज्ञानयोगप्राप्त्यर्थमिति वा । यस्माद्योगः समत्वलक्षणः कर्मसु सर्वेषु कौशलं बन्धकानामपि तेषामीश्वरार्पितचेतस्तया मोक्षपरत्वसंपादनचातुर्यं ज्ञानयोग इति वा । अस्मिन्पक्षे कर्मसु ज्ञानप्रतिबन्धकेषु फलाभिसंधिं विहाय ज्ञानलाभचातुर्यमिति व्याख्येयम् । तस्मात्समत्वयुक्तो भवेत्यर्थः ॥ ५० ॥ पुण्यपापत्यागमात्रस्य फलत्वाभावमाशङ्क्याह—

६ श्रीधरीव्याख्या ।

कात्प्रैति स कृपणः' इति श्रुतेः ॥ ४९ ॥ बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह—**बुद्धीति** । सुकृतं स्वर्गादिप्रापकम् , दुष्कृतं निरयादिप्रापकम् , ते उभे इहैव जन्मनि परमेश्वरप्रसादेन जहाति त्यजति । तस्माद्योगाय तदर्थाय कर्मयोगाय युज्यस्व घटस्व । यतः कर्मसु यत्कौशलं बन्ध-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥४९॥ उभे सुकृतेति । उभे इति परस्परव्यभिचारं दर्शयति—तस्माद्योगायेति । यथाहि सुकृतदुष्कृते न नश्यतस्तथाकरणमेव परमं कौशलमिति

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्यक्त्वेति व्यवहितेन संबन्धः । इष्टानिष्टदेहप्राप्तिः कर्मजं फलं कर्मभ्यो जातम् । बुद्धियुक्ताः समत्वबुद्धियुक्ताः । हि तस्मात्फलं त्यक्त्वा परित्यज्य मनीषिणो ज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धो जन्मबन्धस्तेन विनिर्मुक्ता जीवन्त एव जन्मबन्धविनिर्मुक्ताः सन्तः पदं परमं विष्णोर्मोक्षाख्यं गच्छन्त्यनामयं सर्वोपद्रवरहितमित्यर्थः । अथवा बुद्धियोगाद्धनंजयेत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतःसंप्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजनिता बुद्धिर्दर्शिता साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥ ५१ ॥ योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्स्यत इत्युच्यते—

२ आनन्दगिरिव्याख्या ।

जन्मलक्षणाद्बन्धाद्विनिर्मुक्ता वैष्णवं पदं सर्वसंसारसंस्पर्शशून्यं प्राप्नुवन्तीति श्लोकोक्तमर्थं श्लोकयोजनया दर्शयति—**कर्मजमित्यादिना** । इष्टो देहो देवादिलक्षणोऽनिष्टो देहस्तिर्यगादिलक्षणस्तत्प्राप्तिरेव कर्मणो जातं फलं तद्यथोक्तबुद्धियुक्ता ज्ञानिनो भूत्वा तद्बलादेव परित्यज्य बन्धविनिर्मोकपूर्वकं जीवन्मुक्ताः सन्तो विदेहकैवल्यभाजो भवन्तीत्यर्थः । बुद्धियोगादित्यादौ बुद्धिशब्दस्य समत्वबुद्धिरर्थो व्याख्यातः, संप्रति परम्परां परिहृत्य सुकृतदुष्कृतप्रहाणहेतुत्वस्य समत्वबुद्धावसिद्धेर्बुद्धिशब्दस्य योग्यमर्थान्तरं कथयति—**अथवेति** । अनवच्छिन्नवस्तुगोचरत्वेनानवच्छिन्नत्वं तस्याः सूचयन्बुद्ध्यन्तराद्विशेषं दर्शयति—**सर्वत इति** । असाधारणं निमित्तं तस्या निर्दिशति—**कर्मेति** । यथोक्तबुद्धेर्बुद्धिशब्दार्थत्वे हेतुमाह—**साक्षादिति** । जन्मबन्धविनिर्मोकादिरादिशब्दार्थः ॥ ५१ ॥ यस्मिन्कर्मणि क्रियमाणे परमार्थदर्शनलक्षणा बुद्धिरुद्देश्यतया युज्यते तस्मात्कर्मणः सकाशादितरत्कर्म तथाविधोद्देश्यभूतबुद्धिसंबन्धविधुरमतिशयेन निष्कृष्यते, ततश्च परमार्थबुद्धिमुद्देश्यत्वेनाश्रित्य कर्मानुष्ठातव्यं परिच्छिन्नफलान्तरमुद्दिश्य तदनुष्ठाने कार्पण्यप्रसङ्गात्, किंच परमार्थबुद्धिमुद्देश्यमाश्रित्य कर्मानुतिष्ठतः करणशुद्धिद्वारा परमार्थदर्शनसिद्धौ जीवत्येव देहे सुकृतादि हित्वा मोक्षमधिगच्छति । तथाच परमार्थदर्शनलक्षणयोगार्थं मनो धारयितव्यं योगशब्दितं हि परमार्थदर्शनमुद्देश्यतया कर्मस्वनुतिष्ठतो नैपुण्यमिष्यते, यदि च परमार्थदर्शनमुद्दिश्य तद्युताः सन्तः समारभेरन्कर्माणि तदा तदनुष्ठानजनितबुद्धिशुद्ध्या ज्ञानिनो भूत्वा कर्मजं फलं परित्यज्य निर्मुक्तबन्धना मुक्तिभाजो भवन्तीत्येवमस्मिन्पक्षे श्लोकत्रयाक्षराणि व्याख्यातव्यानि । यथोक्तबुद्धिप्राप्तिकालं प्रश्नपूर्वकं प्रकटयति—**योगेति** । श्रुतं श्रोतव्यं दृष्टं द्रष्टव्यमित्यादौ फला-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मयोगी जहाति ज्ञानी तु संचिते अपि ते जहातीति तयोर्विशेष इत्याहुः ॥ ५० ॥ एतदेवाह—**कर्मजमिति** । बुद्धियुक्ताः समत्वबुद्धियुक्ताः । क्रियमाणकर्मजं फलं त्यक्त्वा मनीषिणो मनोनिग्रहसमर्था भूत्वा जन्मरूपेण बन्धेन मुक्ताः सन्तोऽनामयं निरुपद्रवं पदं मोक्षाख्यं गच्छन्ति ॥ ५१ ॥ कदा मनीषिणो भवन्तीत्यत आह—

४ मधुसूदनीव्याख्या ।

शङ्का तुच्छफलत्यागेन परमपुरुषार्थप्राप्तिं फलमाह—समत्वबुद्धियुक्ता हि यस्मात्कर्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थं कर्माणि कुर्वाणाः सत्त्वशुद्धिद्वारेण मनीषिणस्तत्त्वमस्यादिवाक्यजन्यात्ममनीषावन्तो भवन्ति, तादृशाश्च सन्तो जन्मात्मकेन बन्धेन विनिर्मुक्ताः विशेषेणात्यन्तिकत्वलक्षणेन निरवशेषं मुक्ताः पदं पदनीयमात्मतत्त्वमानन्दरूपं ब्रह्म, अनामयमविद्यातत्कार्यात्मकरोगरहितमभयं मोक्षाख्यं पुरुषार्थं गच्छन्ति । अभेदेन प्राप्नुवन्तीत्यर्थः । यस्मादेवं फलकामनां त्यक्त्वा समत्वबुद्ध्या कर्माण्यनुतिष्ठन्तस्तैः कृतान्तःकरणशुद्धयस्तत्त्वमस्यादिप्रमाणोत्पन्नात्मतत्त्वज्ञानविनष्टाज्ञानतत्कार्याः सन्तः सकलानर्थनिवृत्तिपरमानन्दप्राप्तिरूपं मोक्षाख्यं विष्णोः परमं पदं गच्छन्ति तस्मात्त्वमपि 'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे' इत्युक्तेः श्रेयो-

५ भाष्योत्कर्षदीपिका ।

**कर्मजमिति** । कर्मजं फलमिष्टानिष्टदेहप्राप्तिलक्षणं त्यक्त्वा हि यस्मात्समत्वबुद्धियुक्ता मनीषिणो ज्ञानिनो भूत्वा जन्मैव बन्धस्तेन विनिर्मुक्ताः सर्वोपद्रवरहितं विष्णोः परमं मोक्षाख्यं पदं गच्छन्ति । जीवन्त एव स्वस्वरूपेण जानन्तीत्यर्थः । कर्मजं फलं

६ श्रीधरीव्याख्या ।

कानामपि तेषामीश्वराराधनेन मोक्षपरत्वसंपादनचातुर्यं स एव योगः ॥ ५० ॥ कर्मणां मोक्षसाधनत्वप्रकारमाह—**कर्मेति** । कर्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थमेव कर्म कुर्वाणा मनीषिणो ज्ञानिनो भूत्वा जन्मरूपेण बन्धेन विनिर्मुक्ताः सन्तोऽनामयं सर्वोपद्रव-

७ अभिनवगुप्ताचार्यव्याख्या ।

भावः॥५०॥कर्मजमिति । योगबुद्धियुक्ताः कर्मणां फलं त्यक्त्वा जन्मबन्धं त्यजन्ति ब्रह्मसत्तामवाप्नुवन्ति ॥५१॥ यदा ते इत्यादि । तत्रच योगबुद्धि-

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**
**श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**यदेति।** यदा यस्मिन्काले ते तव मोहकलिलं मोहात्मकमविवेकरूपं कालुष्यं, येनात्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्तते, तत्ते तव बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति । शुद्धभावमापत्स्यत इत्यर्थः । तदा तस्मिन्काले गन्तासि प्राप्स्यसि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च तदा श्रोतव्यं श्रुतं च निष्फलं प्रतिपद्यत इत्यभिप्रायः ॥ ५२ ॥ मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगमवाप्स्यसीति चेत्तच्छृणु—श्रुतिविप्रतिपन्नेति । श्रुतिविप्रतिपन्नानेकसाध्यसाधनसंबन्धप्रकाशनश्रुतिभिः श्रवणैर्विप्रति-

२ आनन्दगिरिव्याख्या ।

भिलाषप्रतिबन्धान्नोक्ता बुद्धिरुदेष्यतीत्याशङ्क्याह—**यदेति** । विवेकपरिपाकावस्था कालशब्देनोच्यते । कालुष्यस्य दोषपर्यवसायित्वं दर्शयन्विशिनष्टि—**येनेति** । तदनर्थरूपं कालुष्यं तवेत्यन्वयार्थं पुनर्वचनम् । बुद्धिशुद्धिफलस्य विवेकस्य प्राप्त्या वैराग्यप्राप्तिं दर्शयति—**तदेति** । अध्यात्मशास्त्रातिरिक्तं शास्त्रं श्रोतव्यादिशब्देन गृह्यते । उक्तं वैराग्यमेव स्फोरयति—**श्रोतव्यमिति** । यथोक्तविवेकसिद्धौ सर्वस्मिन्ननात्मविषये नैष्फल्यं प्रतिभातीत्यर्थः ॥ ५२ ॥ बुद्धिशुद्धिविवेकवैराग्यासिद्धावपि पूर्वोक्तबुद्धिप्राप्तिकालो दर्शितो न भवतीति शङ्कते—**मोहेति** । प्रागुक्तविवेकादि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

**यदेति** । ते तव मोहः इष्टानिष्टवियोगसंयोगजपरितापजन्यं वैचित्यं तदेव कलिलमिव कलिलं कालुष्यं बुद्धिगतं बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति बुद्धिः प्रसन्ना भविष्यति तदा श्रोतव्यस्य शास्त्रभागस्य श्रुतस्य च निर्वेदं वैराग्यं गन्तासि । अयं भावः—मलिनायां बुद्धावसकृद्गृहीतस्यापि शास्त्रार्थस्यास्फुरणाच्छ्रोतव्यं श्रुतं च वृथैव, तद्वच्छुद्धायामपि बुद्धौ सद्यः शास्त्रार्थस्फुरणात्तयोर्वैयर्थ्यमित्युभयथापि तत्र निर्वेद उचितः । प्रसन्ना च बुद्धिर्निग्रहीतुं योग्या भवतीति श्रवणादिकं त्यक्त्वा ध्याननिष्ठ एव भवेदिति ॥ ५२ ॥ ननु बुद्धिप्रसादोऽपि केन लिङ्गेन ज्ञेय इत्यत आह—**श्रुतीति** । श्रुतिभिर्नानाविधशास्त्रश्रवणैर्विप्रतिपन्ना आत्मा नित्योऽनित्यो वा, नित्योऽपि कर्ताऽकर्ता

४ मधुसूदनीव्याख्या ।

जिज्ञासुरेवंविधं कर्मयोगमनुतिष्ठेति भगवतोऽभिप्रायः ॥ ५१ ॥ एवं कर्माण्यनुतिष्ठतः कदा मे सत्त्वशुद्धिः स्यादित्यत आह—न ह्येतावता कालेन सत्त्वशुद्धिर्भवतीति कालनियमोऽस्ति किंतु यदा यस्मिन्काले ते तव बुद्धिरन्तःकरणं मोहकलिलं व्यतितरिष्यति अविवेकात्मकं कालुष्यं अहमिदं ममेदमित्याद्यज्ञानविलसितमतिगहनं व्यतिक्रमिष्यति । रजस्तमोमलमपहाय शुद्धभावमापत्स्यत इति यावत् । तदा तस्मिन्काले श्रोतव्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं वैतृष्ण्यं गन्तासि प्राप्तासि प्राप्नोषि । 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्' इति श्रुतेः । निर्वेदेन फलेनान्तःकरणशुद्धिं ज्ञास्यसीत्यभिप्रायः ॥ ५२ ॥ अन्तःकरणशुद्ध्यैवं जातनिर्वेदस्य कदा ज्ञानप्राप्तिरित्यपेक्षायामाह—ते तव बुद्धिः श्रुतिभिर्नानाविधफलश्रवणैरविचारिततात्पर्यै-

५ भाष्योत्कर्षदीपिका ।

त्यक्त्वा सांख्यबुद्धियुक्ताः शुद्धैकाग्रमनस इति वा ॥ ५१ ॥ सांख्यं बुद्धिं कदा प्राप्स्यामि यदर्थं कर्मानुष्ठानं भवतोपदिश्यत इत्यत आह—**यदेति** । यदा यस्यामवस्थायां तव बुद्धिर्मोहात्मकमविवेकरूपं कालुष्यं व्यतिक्रमिष्यति तदा तस्यामवस्थायां श्रोतव्यस्य श्रुतस्य च वैराग्यं प्राप्तासि । पूर्वं श्रुतिभिरनेकसाध्यसाधनश्रवणैर्विप्रतिपन्ना विक्षिप्ता श्रुतश्रोतव्ययोर्निर्वेदं लब्ध्वा यदा समाधीयते चित्तमस्मिन्निति समाधिरात्मा तस्मिन्निश्चला विक्षेपरहिता स्थास्यति स्थिरीभूता भविष्यति तदा योगं सांख्ययोगमवाप्स्यसीति द्वयोरर्थः । यद्वा योगानुष्ठानजनितसत्त्वशुद्धिजा वैराग्यादीतरसाधनसहिता नित्यानित्यवस्तुविवेकरूपा ज्ञानाधिकारसंपादिका बुद्धिः कदा प्राप्यत इत्यत आह—**यदेति** । यदा तव बुद्धिर्मोहात्मकमविवेकरूपं कालुष्यं चित्ताशुद्धिजं व्यतितरिष्यति तदा श्रोतव्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं गन्तासि । चित्तशुद्धिद्वारा लब्धात्मविवेकबुद्धिः कर्मयोगजं फलं परमात्मयोगं कदाप्स्यसीति

६ श्रीधरीव्याख्या ।

रहितं विष्णोः पदं मोक्षाख्यं गच्छन्ति ॥ ५१ ॥ कदा तत्पदमहं प्राप्स्यामीत्यपेक्षायामाह—**यदेति** द्वाभ्याम् । मोहो देहादिष्वात्मबुद्धिः तदेव कलिलं 'कलिलं गहनं विदुः' इत्यभिधानकोशस्मृतेः । ततश्चायमर्थः । एवं परमेश्वराराधने क्रियमाणे यदा तत्प्रसादेन तव बुद्धिर्देहाभिमानलक्षणं मोहमयं गहनं दुर्गं विशेषेणातितरिष्यति तदा श्रोतव्यस्य श्रुतस्यार्थस्य च निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि । तयोरनुपादेय-

अर्जुन उवाच ।

**स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

पन्ना नानाप्रतिपन्ना श्रुतिविप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिर्यदा यस्मिन्काले स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ समाधीयते चित्तमस्मिन्निति समाधिरात्मा तस्मिन्नात्मनीत्येतदचला तत्रापि विकल्पवर्जितेत्येतद्बुद्धिरन्तःकरणं तदा तस्मिन्काले योगमवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥ ५३ ॥ प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया—स्थितप्रज्ञस्येति । स्थिता प्रतिष्ठिताऽहमस्मि परं ब्रह्मेति प्रज्ञा यस्य

२ आनन्दगिरिव्याख्या ।

युक्तबुद्धेरात्मनि स्थैर्यावस्थायां प्रकृतबुद्धिसिद्धिरित्याह—तच्छृण्विति । पृष्टं कालविशेषाख्यं वस्तु तच्छब्देन गृह्यते, बुद्धेः श्रुतिविप्रतिपन्नत्वं विशदयति—अनेकेति । नानाश्रुतिप्रतिपन्नत्वमेव संक्षिपति—विक्षिप्तेति । उक्तं हेतुद्वयमनुरुध्य वैराग्यपरिपाकावस्था कालशब्दार्थः, नैश्चल्यं विक्षेपराहित्यम्, अचलत्वं विकल्पशून्यत्वं, विक्षेपो विपर्ययः, विकल्पः संशय इति विवेकः । विवेकद्वारा जाता प्रज्ञा प्रागुक्ता बुद्धिः समाधिस्तत्रैव निष्ठा ॥ ५३ ॥ संन्यासिनो ज्ञाननिष्ठातत्प्राप्तिवचनं प्रश्नबीजं पृच्छतोऽर्जुनस्याभिप्रायमाह—लब्धेति । लब्धा समाधावात्मनि समाधानेन वा प्रज्ञा परमार्थदर्शनलक्षणा येन तस्येति यावत् । ननु तस्य भाषा तत्कार्यानुरोधिनी भविष्यति किमित्यसौ विजिज्ञास्यते तत्राह—कथमिति । ज्ञाननिष्ठस्य लक्षणविवक्षया प्रश्नमवतार्य तन्निष्ठासाधनबुभुत्सया विशिनष्टि—समाधि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वा, अकर्ताप्येकोऽनेको वेत्येवमादिसंशयग्रस्ता सती यदा असंभावनाविपरीतभावनानिरासपूर्वकं श्रुतितात्पर्यविषयीभूते ब्रह्माद्वैते निश्चला पुनः कुतर्कैरनास्कन्दनीया निर्विचिकित्सा परोक्षनिश्चयवती भूत्वा समाधौ निर्विकल्पके प्रत्यगात्मनि अचला लयविक्षेपशून्या स्थास्यति स्थिरा भविष्यति तदा योगं विवेकप्रज्ञां प्राप्स्यसि । निश्चलसमाधिलाभ एव बुद्धिप्रसादलिङ्गमिति भावः ॥ ५३ ॥ लब्धसमाधेः स्थितप्रज्ञापरनाम्नो लक्षणानि बुभुत्सुरर्जुन उवाच—स्थितप्रज्ञस्येति । स्थिता प्रत्यगात्मनि प्रतिष्ठिता प्रज्ञा यस्य तस्य स्थितप्रज्ञस्य समाधिस्थस्य समाधौ स्थितस्य का भाषा

४ मधुसूदनीव्याख्या ।

विप्रतिपन्ना अनेकविधसंशयविपर्यासवत्त्वेन विक्षिप्ता प्राक्, यदा यस्मिन्काले शुद्धिजविवेकजनितेन दोषदर्शनेन तं विक्षेपं परित्यज्य समाधौ परमात्मनि निश्चला जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिता, अचला सुषुप्तिमूर्च्छास्तब्धीभावादिरूपलयलक्षणचलनरहिता सती स्थास्यति । लयविक्षेपलक्षणौ दोषौ परित्यज्य समाहिता भविष्यतीति यावत् । अथवा निश्चलाऽसंभावनाविपरीतभावनारहिता अचला दीर्घकालादनैरन्तर्यसत्कारसेवनैर्विजातीयप्रत्ययादूषिता सती निर्वातप्रदीपवदात्मनि स्थास्यतीति योजना । तदा तस्मिन्काले योगं जीवपरमात्मैक्यलक्षणं तत्त्वमस्यादिवाक्यजन्यमखण्डसाक्षात्कारं सर्वयोगफलमवाप्स्यसि । तदा पुनः साध्यान्तराभावात्कृतकृत्यः स्थितप्रज्ञो भविष्यसीत्यभिप्रायः ॥ ५३ ॥ एवं लब्धावसरः स्थितप्रज्ञलक्षणं ज्ञातुमर्जुन उवाच—यान्येव हि जीवन्मुक्तानां लक्षणानि तान्येव मुमुक्षूणां मोक्षोपायभूतानीति मन्वानः—स्थिता निश्चलाहं ब्रह्मास्मीति प्रज्ञा यस्य स स्थितप्रज्ञोऽवस्थाद्वयवान् समाधिस्थो व्युत्थितश्चेति । अतो विशिनष्टि—समाधिस्थस्य स्थितप्रज्ञस्य

५ भाष्योत्कर्षदीपिका ।

तच्छृणु—**श्रुतीति** । प्राग्व्याख्यानद्वयमपि भाष्याल्लभ्यत इति बोध्यम् ॥ ५२ ॥ ५३ ॥ तत्त्वविल्लक्षणानि जिज्ञासुरर्जुन उवाच—**स्थितेति** । स्थिता प्रतिष्ठिताहंब्रह्मास्मीति प्रज्ञा यस्य स एव समाधिस्थः । नत्वात्मज्ञानशून्यस्य मुख्यसमाधिरस्तीति भावः । तस्य

६ श्रीधरीव्याख्या ।

त्वेन जिज्ञासां न करिष्यसीत्यर्थः ॥ ५२ ॥ ततश्च **श्रुतीति** । श्रुतिभिर्नानालौकिकवैदिकार्थश्रवणैर्विप्रतिपन्ना इतः पूर्वं विक्षिप्ता सती तव बुद्धिर्यदा समाधौ स्थास्यतीति समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरः तस्मिन्निश्चला विक्षेपव्याप्तिविषयान्तरैरनाकृष्टात एवाचला अभ्यासपटुत्वेन तत्रैव स्थिरा लयव्याप्तिः सती तदा योगं योगफलं तत्त्वज्ञानमवाप्स्यसि ॥ ५३ ॥ पूर्वश्लोकोक्तस्यात्मतत्त्वज्ञस्य लक्षणं जिज्ञासुः अर्जुन उवाच—**स्थितप्रज्ञस्येति** । स्वाभाविके समाधौ स्थितस्यातएव स्थिता निश्चला प्रज्ञा बुद्धिर्यस्य तस्य का भाषा ।

७ अभिनवगुप्ताचार्यव्याख्या ।

प्राप्यवसरे तव स्फुटमेवेदमभिज्ञानं । श्रोतव्यस्य श्रुतस्याभिलप्यमानस्य चागमस्योभयस्यापि निर्वेदभावत्वम् । अनेन चेदमुक्तम् । अविद्यामदनिपतितप्रमातृनुग्राहकशास्त्रश्रवणसंस्कारविप्रलम्भमहिमायं यत्तवास्थाने कुलक्षयादिदोषदर्शनम् । तत्तु तथा शासनबहुमानविगलने विगलिष्यति ॥ ५१ ॥ ५२ ॥ ५३ ॥ स्थिरप्रज्ञस्येति । यदा स्थास्यति बुद्धिरित्यनेन वचसा समाधिस्थस्य योगिनो यः स्थिरप्रज्ञशब्दस्तत्र

१ 'स्थिरप्रज्ञस्य', 'स्थिरधीः' इत्युभयत्रापि पाठोऽभिनवगुप्तादृतो दृश्यते.

१ श्रीमच्छांकरभाष्यम् ।

**स स्थितप्रज्ञस्तस्य का भाषा किं भाषणं वचनं कथमसौ परैर्भाष्यते । समाधिस्थस्य समाधौ स्थितस्य केशव, स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत । किमासीत व्रजेत किं भाषणं व्रजनं वा तस्य कथमित्यर्थः । स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति ॥ ५४ ॥ यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तो यश्च कर्मयोगेन तयोः स्थितप्रज्ञस्य प्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते । सर्वत्रैव ह्यध्यात्मशास्त्रे**

२ आनन्दगिरिव्याख्या ।

**स्थस्येति** । तस्यैवार्थक्रियां पृच्छति—**स्थितधीरिति** ॥ ५४ ॥ प्रतिवचनमवतारयितुं पातनिकां करोति—**यो हीति** । हिशब्देन कर्मसंन्यासकारणीभूतविरागतासंपत्तिः सूच्यते । आदितो ब्रह्मचर्यावस्थायामिति यावत् । ज्ञानमेव योगो ब्रह्मात्मभावप्रापकत्वात्तस्मिन्निष्ठा परिसमाप्तिस्तस्यामित्यर्थः । कर्मैव योगस्तेन कर्माण्यसंन्यस्य तन्निष्ठायामेव प्रवृत्त इति शेषः । ननु तत्कथमेकेन वाक्येनार्थद्वयमुपदिश्यते द्व्यर्थो वाक्यभेदात्, नच लक्षणमेव साधनं कृतार्थलक्षणस्य तत्स्वरूपत्वेन फलत्वे साधनत्वानुपपत्तेरिति तत्राह—**सर्वत्रैवेति** । यद्यपि कृतार्थस्य ज्ञानिनो ज्ञानलक्षणं तद्रूपेण

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भाषणं वचनं । कथमसौ परैर्भाष्यते इत्येकः प्रश्नः । स्थितधीः स्थितप्रज्ञः अर्थाद्व्युत्थितः सन् किं प्रभाषेत कथं वदति

४ मधुसूदनीव्याख्या ।

का भाषा । कर्मणि षष्ठी । भाष्यतेऽनयेतिभाषा लक्षणम् । समाधिस्थः स्थितप्रज्ञः केन लक्षणेनान्यैर्व्यवह्रियत इत्यर्थः । सच व्युत्थितचित्तः स्थितधीः स्थितप्रज्ञः स्वयं किं प्रभाषेत स्तुतिनिन्दादावभिनन्दनद्वेषादिलक्षणं किं कथं प्रभाषेतेति सर्वत्र संभावनायां लिङ् । तथा किमासीत व्युत्थितचित्तनिग्रहाय कथं बहिरिन्द्रियाणां निग्रहं करोति, तन्निग्रहाभावकाले च किं व्रजेत कथं विषयान्प्राप्नोति । तत्कर्तृकभाषणासनव्रजनानि मूढजनविलक्षणानि कीदृशानीत्यर्थः । तदेवं चत्वारः प्रश्नाः समाधिस्थे स्थितप्रज्ञे एकः, व्युत्थिते स्थितप्रज्ञे त्रय इति । केशवेति संबोधयन्सर्वान्तर्यामितया त्वमेवैतादृशं रहस्यं वक्तुं समर्थोऽसीति

५ भाष्योत्कर्षदीपिका ।

का भाषा कथमसौ लोकैर्भाष्यते । कैर्लक्षणैर्लक्षितः सन् लोकैः स्थितप्रज्ञ इत्युच्यत इत्यर्थः । यथा भवानपि केशिहननादिकर्मणा केशव इत्युच्यते तथेति सूचयन्नाह—**हे केशवेति** । एतेनावस्थाद्वयवान्समाधिस्थो व्युत्थितचेताश्चेति, अतो विशिनष्टि समाधिस्थस्य स्थितप्रज्ञस्येत्यादि प्रत्युक्तम् । योगिनोऽप्रकान्तत्वेन तस्य लक्षणप्रश्नानौचित्यात् । तत्त्वज्ञानरूपसमाधिस्थस्यैव प्रकान्तत्वात् उत्तरे प्राणनिरोधं यदा करोति तदा समाधिस्थ इत्यनुक्तत्वाच ज्ञानिनः प्राणायामानपेक्षसमाधेर्वासिष्ठे स्पष्टमुक्तत्वाच । तथाहि—'परिघ उवाच । यद्यत्संसारजालेऽस्मिन्क्रियते कर्म भूमिप । तत्समाहितचित्तस्य सुखायान्यस्य नानघ ॥ १ ॥ कच्चित्संकल्पहितं परं विश्रमणास्पदम् । परमोपशमं श्रेयः समाधिमनुतिष्ठसि ॥ २ ॥ रघुरुवाच । एतन्मे ब्रूहि भगवन्सर्वसंकल्पवर्जितम् । परमोपशमं श्रेयः समाधिर्हि किमुच्यते ॥ १ ॥ योऽज्ञो महात्मन्सततं तिष्ठन्व्यवहरंश्च वा । असमाहितचित्तोऽसौ कदा भवति कः किल ॥२॥ नित्यप्रबुद्धचित्तास्तु कुर्वन्तोऽपि जगत्क्रियाः । आत्मैकतत्त्वसंनिष्ठाः सदैव सुसमाधयः ॥ ३ ॥ बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि । अविश्रान्तस्वभावस्य कः समाधिः कथं च वा ॥४॥ तत्त्वावबोधो भगवन्सर्वाशातृणपावकः । प्रोक्तः समाधिशब्देन नतु तूष्णीमवस्थितिः ॥५॥ समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी । साधो समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥६॥ अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी । प्रोक्ता समाधिशब्देन मेरोः स्थिरतराकृतिः ॥७॥ निश्चिताभिगताभीष्टा हेयोपादेयवर्जिता । प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः ॥८॥ यतःप्रभृति बोधेन युक्तमात्यन्तिकं मनः । तदारभ्य समाधानमव्युच्छिन्नं महात्मनः ॥९॥' इत्यादि । स्थितधीः स्वयं वा किं प्रभाषेत । किं प्रभाषणमासनं व्रजनं वा तस्य कथमित्यर्थः । आत्मनि स्थितस्य स्थितप्रज्ञस्य लक्षणं ब्रूहीति प्रश्नार्थः । तथाच भाष्यं । स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छ्यते । यो ह्यादित एव संन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः यश्च कर्मयोगेन तयोः स्थितप्रज्ञस्य प्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते । सर्वत्र ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वादिति ॥५४॥ एवं पृष्टः श्रीभगवान्वासुदेवो मुमुक्षोर्यत्न-

६ श्रीधरीव्याख्या ।

भाष्यतेऽनयेति भाषा लक्षणमिति यावत् । केन लक्षणेन स्थितप्रज्ञ उच्यत इत्यर्थः । तथा स्थितधीः किं कथं भाषणमासनं व्रजनं च कुर्यादित्यर्थः ॥ ५४ ॥ अत्र च यानि साधकस्य ज्ञानसाधनानि तान्येव स्वाभाविकानि सिद्धस्य लक्षणानि । अतः सिद्धस्य लक्षणानि

७ अभिनवगुप्ताचार्यव्याख्या ।

वाचक उक्तस्तस्य भाषा किं प्रवृत्तिनिमित्तं भाष्यते येन निमित्तेन शब्दैरर्थ इति कृत्वा योगिनः स्थितप्रज्ञः किं रूढ्या वाचकः अन्वर्थतया वा इत्येकः प्रश्नः । यद्यपि रूढौ शङ्कैव नास्ति तथाप्यन्वर्थतां लब्धामपि स्वरूपलक्षणनिमित्तरूपेण स्फुटीकर्तुमेष प्रश्नः । स्थितधीरिति शब्दपदार्थकोऽर्थपदार्थकः स्थितधीशब्दः किं प्रयोगलक्षणमेवार्थमाह आहो तपस्विनमपीति द्वितीयः प्रश्नः । सच स्थिरधीर्योगी किमासीत किमभ्यसेत्

१ मधुसूदनः.

श्रीभगवानुवाच ।
**प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वाद् यानि यत्नसाध्यानि साधनानि लक्षणानि भवन्ति तानि श्रीभगवानुवाच—प्रजहातीति । प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले सर्वान्समस्तान्कामानिच्छाभेदान् हे पार्थ, मनोगतान्मनसि प्रविष्टान्हृदि प्रविष्टान् सर्वकामपरित्यागे तुष्टिकारणाभावाच्छरीरधारणानिमित्तशेषे च सत्युन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्तेत्यत उच्यते । आत्मन्येव प्रत्यगात्मस्वरूप एवात्मना स्वेनैव बाह्यलाभनिरपेक्षस्तुष्टः परमार्थदर्शनामृतरसलाभेनान्यस्मादलंप्रत्ययवान्स्थितप्रज्ञः स्थिता प्रतिष्ठितात्मानात्म-

२ आनन्दगिरिव्याख्या ।

फलत्वान्न साधनत्वमधिगच्छति तथापि जिज्ञासोस्तदेव प्रयत्नसाध्यतया साधनं संपद्यते लक्षणं चात्र ज्ञानसामर्थ्यलब्धमनूद्यते न विधीयते विदुषो विधिनिषेधागोचरत्वात्, तेन जिज्ञासोः साधनानुष्ठानाय लक्षणानुवादादेकस्मिन्नेव साधनानुष्ठाने तात्पर्यमित्यर्थः । उक्तेऽर्थे भगवद्वाक्यमुत्थापयति—**यानीति** । लक्षणानि च ज्ञानसामर्थ्यलभ्यान्ययत्नसाध्यानीति शेषः । स्थितप्रज्ञस्य का भाषेति प्रथमप्रश्नस्योत्तरमाह—**प्रजहातीति** । कामत्यागस्य प्रकर्षो वासनाराहित्यं कामानामात्मनिष्ठत्वं कैश्चिदिष्यते तदयुक्तं तेषां मनोनिष्ठत्वश्रुतेरित्याशयवानाह—**मनोगतानिति** । आत्मन्येवात्मनेत्याद्युत्तरभागनिरस्यं चोद्यमनुवदति—**सर्वकामेति** । तर्हि प्रवर्तकाभावाद्विदुषः सर्वप्रवृत्तेरुपशान्तिरिति नेत्याह—**शरीरेति** । उन्मादवानुन्मत्तो विवेकविरहितबुद्धिभ्रमभागी प्रकर्षेण मदमनुभवन् विद्यमानमपि विवेकं निरस्यन्भ्रान्तवद्व्यवहरन्प्रमत्त इति विभागः । उत्तरार्धमवतार्य व्याकरोति—**उच्यत इति** । आत्मन्येवेत्येवकारस्यात्मनेत्यत्रापि संबन्धं द्योतयति—**स्वेनैवेति** । बाह्यलाभनिरपेक्षत्वेन तुष्टिमेव स्पष्टयति—**परमार्थेति** । स्थितप्रज्ञ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कथमासीत कथं वा व्रजति विषयान्भुङ्क्ते इति प्रश्नत्रयम् ॥ ५४ ॥ एतेषां क्रमेणोत्तराण्याह भगवान्—**प्रजहातीत्यादिना** । अत्र यान्येव कृतार्थलक्षणानि तानि ज्ञानसाधनानीति मत्वा उपदिश्यन्ते स्थितप्रज्ञलक्षणानि तेषामकृतार्थेषु यत्नसाध्यत्वात् । कृतार्थेषु स्वाभाविकत्वात् । यथोक्तम् 'उत्पन्नात्मप्रबोधस्य ह्यद्वेष्टृत्वादयो गुणाः । भवन्त्ययत्नतस्तस्य नतु साधकरूपिणः ॥' इति । यदायं योगी सर्वान्स्थूलसूक्ष्मकारणशरीरभोग्यान् कामान्काम्यमानान्विषयान्प्रकर्षेण समूलं जहाति त्यजति । कीदृशान्कामान् । मनोगतान्मनस्येव संकल्पविकल्पात्मके स्थितान्नतु बहिः । यथोक्तमक्षपादाचार्यैः 'दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः' इति । तत्र स्थूलानां कामानां त्याग एकान्त-

४ मधुसूदनीव्याख्या ।

सूचयति ॥५४॥ एतेषां चतुर्णां प्रश्नानां क्रमेणोत्तरं भगवानुवाच यावदध्यायसमाप्ति—कामान् कामसंकल्पादीन्मनोवृत्तिविशेषान्, प्रमाणविपर्ययविकल्पनिद्रास्मृतिभेदेन तन्त्रान्तरे पञ्चधा प्रपञ्चितान्सर्वान्निरवशेषान्प्रकर्षेण कारणबाधेन यदा जहाति परित्यजति सर्ववृत्तिशून्य एव यदा भवति स्थितप्रज्ञस्तदोच्यते । समाधिस्थ इति शेषः । कामानामनात्मधर्मत्वेन परित्यागयोग्यतामाह—**मनोगतानिति** । यदि ह्यात्मधर्माः स्युस्तदा न त्यक्तुं शक्येरन् वह्न्यौष्ण्यवत्स्वाभाविकत्वात् । मनसस्तु धर्मा एते । अतस्तत्परित्यागेन परित्यक्तुं शक्या एवेत्यर्थः । ननु स्थितप्रज्ञस्य मुखप्रसादलिङ्गगम्यः संतोषविशेषः प्रतीयते, स कथं सर्वकामपरित्यागे स्यादित्यत आह—आत्मन्येव परमानन्दरूपे नत्वनात्मनि तुच्छे, आत्मना स्वप्रकाशचिद्रूपेण भासमाने नतु वृत्त्या तुष्टः

५ भाष्योत्कर्षदीपिका ।

साध्यानि जीवन्मुक्तस्वभावभूतानि लक्षणानि वदन्प्रथमप्रश्नस्योत्तरमाह—**प्रजहातीति** द्वाभ्याम् । यदा कामानिच्छाभेदान्मनोगतान्मनसि प्रतिष्ठितान्सर्वानशेषान्प्रजहाति प्रकर्षेण त्यजति । ननु सर्वान्कामान्परित्यज्यापि प्रारब्धकर्मवशाज्जीवतस्तस्योन्मत्तवत्प्रवृत्तिः प्राप्तेत्यत आह—**आत्मन्येवेति** । आत्मन्येव प्रत्यगात्मस्वरूप एवात्मना स्वेनैव बाह्यविषयलाभनिरपेक्षः परमार्थदर्श-

६ श्रीधरीव्याख्या ।

कथयन्नेवान्तरङ्गाणि ज्ञानसाधनान्याह यावदध्यायसमाप्ति । तत्र प्रथमप्रश्नोत्तरमाह—**प्रजहातीति** द्वाभ्याम् । श्रीभगवानुवाच ।

७ अभिनवगुप्ताचार्यव्याख्या ।

क्वास्य धैर्यं स्यादिति तृतीयः । अभ्यासश्च किमाश्रयादिति चतुर्थः ॥ ५४ ॥ एतदेव प्रश्नचतुष्टयं क्रमेण निर्णीयते भगवता । श्रीभगवानुवाच—प्रजहातीत्यादिना । स्थिता रूढा प्रज्ञा यस्य । रूढिश्च नित्यमात्मरूढित्वे सति विषयविक्षेपकृतस्य भ्रमस्य निवृत्तत्वात् योगिनो यः

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

१ श्रीमच्छांकरभाष्यम्।

**विवेकजा प्रज्ञा यस्य स स्थितप्रज्ञो विद्वांस्तदोच्यते। त्यक्तपुत्रवित्तलोकैषणः संन्यास्यात्माराम आत्मक्रीडः स्थितप्रज्ञ इत्यर्थः ॥ ५५ ॥ किंच दुःखेष्विति। दुःखेष्वाध्यात्मिकादिषु प्राप्तेषु नोद्विग्नं न प्रक्षुभितं दुःखप्राप्तौ मनो यस्य सोऽयमनुद्विग्नमनाः, तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य नाग्निरिवेन्धनाद्याधाने सुखान्यनुवर्धते स विगतस्पृहः। वीतरागभयक्रोधः रागश्च**

२ आनन्दगिरिव्याख्या।

पदं विभजते—**स्थितेति**। प्रज्ञाप्रतिबन्धकसर्वकामविगमावस्था तदेति निर्दिश्यते। उक्तमेव प्रपञ्चयति—**त्यक्तेति**। आत्मानं जिज्ञासमानो वैराग्यद्वारा सर्वैषणात्यागात्मकं संन्यासमासाद्य श्रवणाद्यावृत्त्या तज्ज्ञानं प्राप्य तस्मिन्नेवासक्त्या विषयवैमुख्येन तत्फलभूतां परितुष्टिं तत्रैव प्रतिलभमानः स्थितप्रज्ञव्यपदेशभागित्यर्थः ॥ ५५ ॥ लक्षणभेदानुवादद्वारा विविदिषोरेव कर्तव्यान्तरमुपदिशति—**किंचेति**। ज्वरशिरोरोगादिकृतानि दुःखान्याध्यात्मिकानि आदिशब्देनाधिभौतिकानि व्याघ्रसर्पादिप्रयुक्तान्याधिदैविकानि चातिवातवर्षादिनिमित्तानि दुःखानि गृह्यन्ते, तेषूपलब्धेष्वपि नोद्विग्नं मनो यस्य स तथेति संबन्धः। नोद्विग्नमित्येतद्व्याचष्टे—**न प्रक्षुभितमिति**। दुःखानां मुक्तानां प्राप्तौ परिहाराक्षमस्य तदनुभवपरिभावितं दुःखमुद्वेगस्तेन सहितं मनो यस्य न भवति स तथेत्याह—**दुःखप्राप्ताविति**। मनो यस्य नोद्विग्नमिति पूर्वेण संबन्धः। सुखान्यपि दुःखवत्त्रिविधानीति मत्वा तथेत्युक्तम्, तेषु प्राप्तेषु सत्सु तेभ्यो विगता स्पृहा तृष्णा यस्य स विगतस्पृह इति योजना। अज्ञस्य हि प्राप्तानि सुखान्यनुविवर्धते तृष्णा, विदुषस्तु नैवमित्यत्र वैधर्म्यदृष्टान्तमाह—**नाग्निरिवेति**। यथा हि दाह्यस्येन्धनादेरभ्याधाने वह्निर्विवर्धते तथाज्ञस्य सुखान्यु-

३ नीलकण्ठव्याख्या ( चतुर्धरी )

सेवनमात्राद्भवतीति स स्थवीयानेव। विलीनकरणग्रामस्य समनस्कस्य जाग्रद्वासनामयाः स्वप्ने ये कामाः स्फुरन्ति तेषामपि त्यागो भगवद्ध्यानादिरूपसद्वासनाभ्यासबलेन भवति। येतूपसंहृतकरणस्य संप्रज्ञातसमाधिकाले दिव्याः कामाः संकल्पमात्रोपनता दहरविद्यादिषु प्रसिद्धास्तेषामपि त्यागोऽसंप्रज्ञातसमाध्यभ्यासबलेन भवति। एवं त्रिविधान्कामान्त्यक्त्वा आत्मन्येवाखण्डैकरसे आत्मना स्वेनैव स्वरूपानन्देन तुष्टो बाह्यविषयनिरपेक्षो यदा भवति तदायं स्थितप्रज्ञ इत्युच्यते ॥ ५५ ॥ दुःखेषु शस्त्रपातादिषु दुःखसाधनेषु प्राप्तेष्वपि अनुद्विग्नमना अचञ्चलमनाः। वक्ष्यति-

४ मधुसूदनीव्याख्या।

परितृप्तः परमपुरुषार्थलाभात्। तथाच श्रुतिः 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति। तथाच समाधिस्थः स्थितप्रज्ञ एवंविधैर्लक्षणवाचिभिः शब्दैर्भाष्यत इति प्रथमप्रश्नस्योत्तरम् ॥ ५५ ॥ इदानीं व्युत्थितस्य स्थितप्रज्ञस्य भाषणोपवेशनगमनानि मूढजनविलक्षणानि व्याख्येयानि। तत्र किं प्रभाषेतेत्यस्योत्तरमाह द्वाभ्याम्—**दुःखेष्विति**। दुःखानि त्रिविधानि शोकमोहज्वरशिरोरोगादिनिमित्तान्याध्यात्मिकानि, व्याघ्रसर्पादिप्रयुक्तान्याधिभौतिकानि, अतिवातातिवृष्ट्यादिहेतुकान्याधिदैविकानि, तेषु दुःखेषु रजःपरिणामसंतापात्मकचित्तवृत्तिविशेषेषु प्रारब्धपापकर्मप्रापितेषु नोद्विग्नं दुःखपरिहाराक्षमतया व्याकुलं न भवति मनो यस्य सोऽनुद्विग्नमनाः। अविवेकिनो हि दुःखप्राप्तौ सत्यामहो पापोऽहं धिङ्मां दुरात्मानमेतादृशदुःखभागिनं को मे दुःखमीदृशं निराकुर्यादित्यनुतापात्मको भ्रान्तिरूपस्तामसचित्तवृत्तिविशेष उद्वेगाख्यो

५ भाष्योत्कर्षदीपिका।

भामृतरसलाभेनान्यस्मात्प्राप्तालंप्रत्ययस्तुष्टस्तदा स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य स विद्वान् तदोच्यते। आत्मानं जिज्ञासमानो वैराग्यद्वारा पुत्रवित्तलोकैषणात्यागात्मकं संन्यासमासाद्य श्रवणाद्यावृत्त्या तज्ज्ञानं प्राप्य तस्मिन्नेव आसक्त्या विषयवैमुख्येन तत्फलभूतां तुष्टिं तत्रैव प्रतिलभमानः स्थितप्रज्ञव्यपदेशभागित्यर्थः। एतेन समाधिस्थ इति शेष इति प्रत्युक्तम्। शेषस्योक्तयुक्त्या निरर्थकत्वात्। एतादृशसंबन्धलक्षणेन स्थितप्रज्ञ उच्यते। यथा पृथासंबन्धेन त्वं पार्थ इति सूचयन्नाह—**पार्थेति** ॥५५॥ किंच-दुःखेष्विति। यत्तु पूर्वश्लोकेन प्रथमप्रश्नस्योत्तरमुक्तं इदानीं व्युत्थितचित्तस्य स्थित-

६ श्रीधरीव्याख्या।

मनसि स्थितान्कामान्यदा प्रकर्षेण जहाति। त्यागे हेतुः आत्मन्येव स्वस्मिन्नेव परमानन्दरूपे आत्मना स्वयमेव तुष्ट इति। आत्मारामः सन्यदा क्षुद्रविषयाभिलाषांस्त्यजति तदा तेन लक्षणेन मुनिः स्थितप्रज्ञ उच्यत इत्यर्थः ॥ ५५ ॥ किंच—**दुःखेष्विति**। दुःखेषु

७ अभिनवगुप्ताचार्यव्याख्या।

स्थितप्रज्ञशब्दोऽन्वर्थः स च युक्त इत्येकः प्रश्नो निर्णीतः ॥ ५५ ॥ दुःखेष्विति। सुखदुःखयोर्यस्य रागद्वेषरहिता वृत्तिः स मुनिरेव स्थिर-

१ मधुसूदनः. २ मधुसूदनः.

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

भयं च क्रोधश्च वीता विगता रागभयक्रोधा यस्मात्स वीतरागभयक्रोधः स्थितधीः स्थितप्रज्ञो मुनिः संन्यासी तदोच्यते ॥ ५६ ॥ किंच—यः सर्वत्रेति । यो मुनिः सर्वत्र देहजीवितादि-

२ आनन्दगिरिव्याख्या ।

पनतान्यनुविवर्धमानापि तृष्णा विदुषो न तान्यनुविवर्धते, नहि वह्निरदाह्यमुपगतमपि दग्धुं विवृद्धिमधिगच्छति, तेन जिज्ञासुना सुखदुःखयोस्तृष्णोद्वेगौ न कर्तव्याविल्यर्थः । रागादयश्च तेन कर्तव्या न भवन्तीत्याह—**वीतेति** । अनुभूताभिनिवेशे विषयेषु रञ्जनात्मकस्तृष्णाभेदो रागः, परेणापकृतस्य गात्रनेत्रादिविकारकारणं भयं, क्रोधस्तु परवशीकृत्यात्मानं स्वपरापकारप्रवृत्तिहेतुर्बुद्धिवृत्तिविशेषः मनुते इति मुनिरात्मविदित्यङ्गीकृत्याह—**संन्यासीति** । सुखादिविषयतृष्णादे रागादेश्चाभावावस्था तदेत्युच्यते ॥ ५६ ॥ लक्षणभेदानुवादद्वारा विविदिषोरेव कर्तव्यान्तरमुपदिशति—**किंचेति** । विवेकवतो विदुषो विवेकजन्या प्रज्ञा कथं प्रतिष्ठां प्रतिपद्यतामित्याशङ्क्याह—**यः सर्वे-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

च 'यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते' इति । सुखेषु सुखसाधनेषु स्रक्चन्दनादिषु प्राप्तेष्वपि विगतस्पृहो निर्वृत्तिकत्वाद्भवति । अतएव वीताः रागभयक्रोधा यस्मात्स तथा । नहि तस्यामवस्थायां रागादयो दुःखादयो वा संभवन्ति । एवंविधः समाधिस्थः स्थितधीः स्थितप्रज्ञ उच्यते ॥ ५६ ॥ स्थितधीः किं प्रभाषेतेत्यस्योत्तरमाह—

४ मधुसूदनीव्याख्या ।

जायते । यद्येवं पापानुष्ठानसमये स्यात्तदा तत्प्रवृत्तिप्रतिबन्धकत्वेन सफलः स्यात् । भोगकालेऽनुभवकारणे सति कार्यस्योच्छेत्तुमशक्यत्वान्निष्प्रयोजने दुःखकारणे सत्यपि किमिति मम दुःखं जायत इत्यविवेकजभ्रमरूपत्वान्न विवेकिनः स्थितप्रज्ञस्य संभवति । दुःखमात्रं हि प्रारब्धकर्मणा प्राप्यते नतु तदुत्तरकालीनो भ्रमोऽपि । ननु दुःखान्तरकारणत्वात्सोऽपि प्रारब्धकर्मान्तरेण प्राप्यतामिति चेत् । न । स्थितप्रज्ञस्य भ्रमोपादानाज्ञाननाशेन भ्रमासंभवात्तज्जन्यदुःखप्रापकप्रारब्धाभावात् यथाकथंचिद्देहयात्रामात्रनिर्वाहकप्रारब्धकर्मफलस्य भ्रमाभावेऽपि बाधितानुवृत्त्योपपत्तेरिति विस्तरेणाग्रे वक्ष्यते । तथा सुखेषु सत्त्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेषेषु त्रिविधेषु प्रारब्धपुण्यकर्मप्रापितेषु विगतस्पृहः आगामितज्जातीयसुखस्पृहारहितः । स्पृहाहि नाम सुखानुभववृत्तिकाले तज्जातीयसुखस्य कारणं धर्ममननुष्ठाय वृथैव तदाकाङ्क्षारूपा तामसी चित्तवृत्तिर्भ्रान्तिरेव सात्राविवेकिन एव जायते । नहि कारणाभावे कार्यं भवितुमर्हति । अतो यथाऽसतिकारणे कार्यं माभूदिति वृथाकाङ्क्षा उद्वेगो विवेकिनो न संभवति । तथैवासति कारणे कार्यं भूयादिति वृथाकाङ्क्षारूपा तृष्णात्मिका स्पृहापि नोपपद्यते । प्रारब्धकर्मणः सुखमात्रप्रापकत्वात् । हर्षात्मिका वा चित्तवृत्तिः स्पृहाशब्देनोक्ता सापि भ्रान्तिरेव । अहो धन्योऽहं यस्य ममेदृशं सुखमुपस्थितं, को वा मया तुल्योऽस्ति भुवने, केन वोपायेन ममेदृशं सुखं न विच्छिद्येतेत्येवमात्मिकोत्फुल्लतारूपा तामसी चित्तवृत्तिः । अतएवोक्तं भाष्ये 'नाग्निरिवेन्धनाद्याधाने यः सुखान्यनुविवर्धते स विगतस्पृहः' इति । वक्ष्यति च 'न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्' इति । सापि न विवेकिनः संभवति भ्रान्तित्वात् । तथा वीतरागभयक्रोधः । रागः शोभनाध्यासनिबन्धनो विषयेषु रञ्जनात्मकश्चित्तवृत्तिविशेषोऽत्यन्ताभिनिवेशरूपः । रागविषयस्य नाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेषो भयम् । एवं रागविषयविनाशके समुपस्थिते तन्निवारणसामर्थ्यमात्मनो मन्यमानस्याभिज्वलनात्मकश्चित्तवृत्तिविशेषः क्रोधः । ते सर्वे विपर्ययरूपत्वाद्विगता यस्मात्स तथा एतादृशो मुनिर्मननशीलः संन्यासी स्थितप्रज्ञ उच्यते । एवंलक्षणः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिस्पृहत्वादिवाचः प्रभाषत इत्यन्वय उक्तः । एवंचान्योऽपि मुमुक्षुर्दुःखे नोद्विजेत् सुखे न प्रहृष्येत् रागभयक्रोधरहितश्च भवेदित्यभिप्रायः ॥ ५६ ॥ किंच—**यः सर्वत्रेति** । सर्वदेहेषु जीवनादिष्वपि यो मुनिरनभिस्नेहः

५ भाष्योत्कर्षदीपिका ।

प्रज्ञस्य भाषणोपवेशनगमनानि मूढजनविलक्षणानि व्याख्येयानि । तत्र किंप्रभाषेतेत्यस्योत्तरमाहेति तच्चिन्त्यम् । 'स्थितधीर्मुनिरुच्यते' इति वाक्यशेषेण प्रथमप्रश्नोत्तरप्रतीतेः स्पष्टत्वात् । दुःखेष्वाध्यात्मिकाधिदैविकाधिभौतिकेष्वनुद्विग्नमक्षुभितं मनो यस्य स तथा । त्रिविधसुखेषु विगता स्पृहाभिलाषो यस्य सः । अतएव वीता रागभयक्रोधा यस्मात्स स्थितधीः स्थितप्रज्ञस्तदोच्यते ॥ ५६ ॥ द्वितीयप्रश्नस्योत्तरमाह—**य इति** । यो मुनिः सर्वत्र देहजीवनादिष्वपि स्नेहवर्जितः तत्तत्प्राप्य शुभाशुभं शुभं लब्ध्वा नाभि-

६ श्रीधरीव्याख्या ।

प्राप्तेष्वप्यनुद्विग्नमक्षुभितं मनो यस्य सः । सुखेषु विगता स्पृहा यस्य सः । तत्र हेतुः वीतापगता रागभयक्रोधा यस्मात् । तत्र रागः प्रीतिः । स मुनिः स्थितधीः स्थितप्रज्ञ इत्युच्यते ॥ ५६ ॥ कथं भाषेतेत्यस्योत्तरमाह—**य इति** । यः सर्वत्र पुत्रादिष्वप्यनभिस्नेहः

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्वप्यनभिस्नेहः स्नेहवर्जितस्तत्तत्प्राप्य शुभाशुभं तत्तच्छुभमशुभं वा लब्ध्वा नाभिनन्दति न द्वेष्टि । शुभं प्राप्य न तुष्यति न हृष्यत्यशुभं च प्राप्य न द्वेष्टीत्यर्थः । तस्यैवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता भवति ॥ ५७ ॥ किंच—यदा संहरत इति । यदा संहरते सम्यगुपसंहरते चायं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मोऽङ्गानीव सर्वशो यथा कूर्मो भयात्स्वा-

२ आनन्दगिरिव्याख्या ।

त्रेति । ननु देहजीवनादौ स्पृहा शुभाशुभप्राप्तौ हर्षविषादौ विदुषो विविदिषोश्चावर्जनीयाविति प्रज्ञास्थैर्यासिद्धिस्तत्राह—**यो मुनिरिति** । तत्तदिति शोभनवत्त्वेनाशोभनवत्त्वेन वा प्रसिद्धत्वं प्रतिनिर्दिश्यते । तदेव विभजते—**शुभमिति** । विषयेष्वभिषङ्गाभावः शुभादिप्राप्तौ हर्षाद्यभावश्च प्रज्ञास्थैर्ये कारणमित्याह—**तस्येति** ॥ ५७ ॥ जिज्ञासोरेव कर्तव्यान्तरं सूचयति—**किंचेति** । इन्द्रियाणां विषयेभ्यो वैमुख्यस्य प्रज्ञास्थैर्ये कारणत्वादादौ जिज्ञासुना तदनुष्ठेयमित्याह—**यदेति** । मुमुक्षुणा मोक्षहेतुं प्रज्ञां प्रार्थयमानेन सर्वेभ्यो विषयेभ्यः सर्वाणीन्द्रियाणि विमुखानि कर्तव्यानीति श्लोकव्याख्यानेन कथयति—**यदेत्यादिना** । उपसंहारः स्ववशत्वापादनं तस्य च सम्यक्त्वमतिदृढत्वम् । अयमिति प्रकृतस्थितप्रज्ञग्रहणं व्यावर्तयति—**ज्ञाननिष्ठायामिति** । इन्द्रियोपसंहारस्य प्रलयरूपत्वं व्यावर्त्य संकोचात्मकत्वं दृष्टान्तेन दर्शयति—**कूर्म इति** । दृष्टान्तं व्याकरोति—**यथेति** । दार्ष्टान्तिके योजयन्ज्ञान-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

**यः सर्वत्रेति** । सर्वेषु धनदारदेहजीवनादिषु अभिस्नेहः । अभिस्नेहवान्हि धनदारादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलोऽस्मीति दैन्यदर्पोपेतः पूर्वापरानुसंधानरहितो जल्पति अयं तु न तथेति भावः । तथा शुभं प्राप्य नाभिनन्दति संतुष्टो भूत्वा शुभप्रापयितारं न प्रशंसति । तथा अशुभं प्राप्य न द्वेष्टि दुःखी भूत्वा अशुभप्रापयितारं न निन्दति यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥ किमासीतेत्यस्योत्तरमाह—**यदेति** । इन्द्रियार्थेभ्यः शब्दादिविषयेभ्यः प्रारब्धकर्मवशेन व्युत्थितोऽपि योगी द्वैतदर्शनादुद्विग्नः सन् निरोधसंस्कारप्राबल्यात्प्रीत्या समाधिमनुतिष्ठ-

४ मधुसूदनीव्याख्या ।

यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते स तादृशोऽन्यविषयः प्रेमापरपर्यायस्तामसो वृत्तिविशेषः स्नेहः सर्वप्रकारेण तद्रहितोऽनभिस्नेहः भगवति परमात्मनि तु सर्वथाभिस्नेहवान्भवेदेव अनात्मस्नेहाभावस्य तदर्थत्वादिति द्रष्टव्यम् । तत्तत्प्रारब्धकर्मपरिप्रापितं शुभं सुखहेतुं विषयं प्राप्य नाभिनन्दति हर्षविशेषपुरःसरं न प्रशंसति । अशुभं दुःखहेतुं विषयं प्राप्य न द्वेष्टि अन्तरसूयापूर्वकं न निन्दति । अज्ञस्य हि सुखहेतुर्यः स्वकलत्रादिः स शुभो विषयस्तद्गुणकथनादिप्रवर्तिका धीवृत्तिर्भ्रान्तिरूपाभिनन्दः सच तामसः । तद्गुणकथनादेः परप्ररोचनार्थत्वाभावेन व्यर्थत्वात् । एवमसूयोत्पादनेन दुःखहेतुः परकीयविद्याप्रकर्षादिरेनं प्रत्यशुभो विषयस्तन्निन्दादिप्रवर्तिका भ्रान्तिरूपा धीवृत्तिर्द्वेषः । सोऽपि तामसः । तन्निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात् तावभिनन्दद्वेषौ भ्रान्तिरूपौ तामसौ कथमभ्रान्ते शुद्धसत्वे स्थितप्रज्ञे संभवेताम् । तस्माद्विचालकाभावात् तस्यानभिस्नेहस्य हर्षविषादरहितस्य मुनेः प्रज्ञा परमात्मतत्त्वविषया प्रतिष्ठिता फलपर्यवसायिनी । स स्थितप्रज्ञ इत्यर्थः । एवमन्योऽपि मुमुक्षुः सर्वत्रानभिस्नेहो भवेत् । शुभं प्राप्य न प्रशंसेत् अशुभं प्राप्य न निन्देदित्यभिप्रायः । अत्र च निन्दाप्रशंसादिरूपा वाचो न प्रभाषेत इति व्यतिरेक उक्तः ॥ ५७ ॥ इदानीं किमासीतेति प्रश्नस्योत्तरं वक्तुमारभते भगवान् षड्भिः श्लोकैः—तत्र च प्रारब्धकर्मवशाद्व्युत्थानेन विक्षिप्तानीन्द्रियाणि पुनरुपसंहृत्य समाध्यर्थमेव स्थितप्रज्ञस्योपवेशनमिति दर्शयितुमाह—अहं व्युत्थितः सर्वशः सर्वाणीन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः सर्वेभ्यः । च पुनरर्थे । यदा संहरते पुनरुपसंहरति संकोचयति । तत्र

५ भाष्योत्कर्षदीपिका ।

नन्दति हर्षगर्भितं स्तुतिवचनं नाभिभाषते तथाऽशुभं लब्ध्वा न द्वेष्टि । द्वेषगर्भितं निन्दावाक्यं न वक्तीत्यर्थः । तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥ विचारादिनेन्द्रियनिग्रहार्थं स्थितप्रज्ञस्योपवेशनमिति तृतीयप्रश्नस्योत्तरं वक्तुं जितेन्द्रियत्वम् । तस्य लक्षणमाह—**यदेति** । यथा कूर्मः कमठो भयादङ्गान्युपसंहरति तथा यदा ज्ञाननिष्ठो यतिः शब्दादिविषयेभ्यः इन्द्रियाण्युपसंहरति तदा तस्य प्रज्ञा

६ श्रीधरीव्याख्या ।

स्नेहशून्यः अतएव बाधितानुवृत्त्या तत्तच्छुभमनुकूलं प्राप्य नाभिनन्दति न प्रशंसति । अशुभं प्रतिकूलं प्राप्य न द्वेष्टि न निन्दति किंतु केवलमुदासीन एव भाषते तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः ॥ ५७ ॥ किंच—**यदेति** । यदा चायं योगी इन्द्रियार्थेभ्यः सकाशादि-

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रज्ञो नान्यः ॥ ५६ ॥ उक्तं चैतत्—यः सर्वत्रेति । शुभाशुभप्राप्तौ तस्याह्लादतापौ न भवतः ॥ ५७ ॥ यदा संहरते इति । नचास्य पाचकव-

**विषया विनिवर्तन्ते निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

न्यङ्गान्युपसंहरति सर्वत एवं ज्ञाननिष्ठ इन्द्रियाणीन्द्रियार्थेभ्यः सर्वविषयेभ्य उपसंहरते तस्य प्रज्ञा प्रतिष्ठितेत्युक्तार्थं वाक्यम् ॥ ५८ ॥ तत्र विषयाननाहरत आतुरस्यापीन्द्रियाणि निवर्तन्ते कूर्माङ्गानीव संह्रियन्ते न तु तद्विषयो रागः, स कथं संह्रियत इत्युच्यते—विषया इति । यद्यपि विषयोपलक्षितानि विषयशब्दवाच्यानीन्द्रियाण्यथवा विषया एव निराहारस्यानाह्रियमाणविषयस्य कष्टे तपसि स्थितस्य मूर्खस्यापि निवर्तन्ते देहिनो देहवतः, रसवर्जं रसो रागो विषयेषु यस्तं वर्जयित्वा । रसशब्दो रागे प्रसिद्धः । स्वरसेन प्रवृत्तो रसिको रसज्ञ इत्यादिदर्श-

२ आनन्दगिरिव्याख्या ।

निष्ठापदं तत्र प्रवर्तयति—**एवमिति** । इन्द्रियाणां विषयेभ्यो वैमुख्यकरणं प्रज्ञास्थैर्यहेतुरित्युक्तमुपसंहरति—**तस्येति** ॥ ५८ ॥ इन्द्रियाणां विषयेभ्यो वैमुख्येऽपि तद्विषयरागानुवृत्तौ कथं प्रज्ञालाभः स्यादिति शङ्कते—**तत्रेति** । व्यवहारभूमिः सप्तम्यर्थः । विषयाननाहरतस्तदुपभोगविमुखस्येत्यर्थः । रागश्चेन्नोपसंह्रियते न तर्हि प्रज्ञालाभः संभवति रागस्य तत्परिपन्थित्वादिति मत्वाह—**स कथमिति** । रागनिवृत्त्युपायमुपदिशन्नुत्तरमाह—**उच्यत इति** । विषयोपभोगपराङ्मुखस्य कुतो विषयपरावृत्तिस्तत्परावृत्तिश्चाप्रस्तुतेत्याशङ्क्याह—**यद्यपीति** । निराहारस्येत्यस्य व्याख्यानमनाह्रियमाणविषयस्येति । यो हि विषयप्रवणो न भवति तस्यात्यन्तिके तपसि क्लेशात्मके व्यवस्थितस्य विद्याहीनस्यापीन्द्रियाणि विषयेभ्यः सकाशाद्यद्यपि संह्रियन्ते, तथापि रागोऽवशिष्यते, स च तत्त्वज्ञानादुच्छिद्यत इत्यर्थः । रसशब्दस्य माधुर्यादिषड्विधरसविषयत्वं निषेधति—**रसशब्द इति** । वृद्धप्रयोगमन्तरेण कथं प्रसिद्धिरित्याशङ्क्याह—**स्वरसेनेति** । स्वेच्छयेति यावत् । रसिकः स्वेच्छावशवर्ती रसज्ञो विवक्षितापेक्षितज्ञातेत्यर्थः । कथं तर्हि तस्य निवृत्ति-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नैवास्ते इत्यर्थः । शेषं स्पष्टम् ॥ ५८ ॥ ननु विषयेभ्य इन्द्रियाणां निवृत्तिश्चेत् स्थितप्रज्ञताहेतुस्तर्हि सुप्तिमूर्च्छालयग्रहावेशादावपि सास्तीति सर्वोऽपि स्थितप्रज्ञ एवेत्याशङ्क्याह—**विषया इति** । सत्यं देहिनो देहाभिमानवतो मूढस्य सुप्त्यादौ निराहारस्य इन्द्रियैर्विषयाननाहरतोऽभुञ्जानस्य विषया विनिवर्तन्तएव, तथापि रसवर्जं रसो रागस्तद्वर्जं निवर्तन्ते । तदापि सूक्ष्मरूपेण रागोऽस्ति रागमूलस्यात्माज्ञानस्यादाहान्नासौ स्थितप्रज्ञ इत्यर्थः । अस्यैव पुनः परं दृष्ट्वा आत्मानं साक्षात्कृत्य निराहारस्य शब्दादीनगृह्णतो रसोऽपि निवर्तते मूलाज्ञानदाहादित्यस्ति सुप्तादेः

४ मधुसूदनीव्याख्या ।

दृष्टान्तः कूर्मोऽङ्गानीव तदा तस्य प्रज्ञा प्रतिष्ठितेति स्पष्टम् । पूर्वश्लोकाभ्यां व्युत्थानदशायामपि सकलतामसवृत्त्यभाव उक्तः अधुना तु पुनः समाध्यवस्थायां सकलवृत्त्यभाव इति विशेषः ॥ ५८ ॥ ननु मूढस्यापि रोगादिवशाद्विषयेभ्य इन्द्रियाणामुपसंहरणं भवति तत्कथं तस्य प्रज्ञा प्रतिष्ठितेत्युक्तमत आह—**विषया इति** । निराहारस्य इन्द्रियैर्विषयाननाहरतो देहिनो देहाभिमानवतो मूढस्यापि रोगिणः काष्ठतपस्विनो वा विषयाः शब्दादयो विनिवर्तन्ते किंतु रसवर्जं रसस्तृष्णा तं वर्जयित्वा । अज्ञस्य विषया निवर्तन्ते । तद्विषयो रागस्तु न निवर्तत इत्यर्थः । अस्य तु स्थितप्रज्ञस्य परं पुरुषार्थं दृष्ट्वा तदेवाहमस्मीति साक्षात्कृत्य स्थितस्य

५ भाष्योत्कर्षदीपिका ।

प्रतिष्ठिता ॥ ५८ ॥ ननु निराहारस्य रोगिणो व्रतिनो वापि विषयेभ्य इन्द्रियाणि विनिवर्तन्तेऽत इदं लक्षणं मूढेष्वप्यागतमित्याशङ्क्य परिहरति—**विषया इति** । विषया लक्षणयेन्द्रियाणि शब्दादयो वा रसवर्जं रसो रागस्तं वर्जयित्वा निराहारस्याहारविनिर्मुक्तस्यानाह्रियमाणविषयस्य कष्टेन तपसि स्थितस्य मूर्खस्यापि देहिनो देहवतो विनिवर्तन्ते । परं परमात्मानं दृष्ट्वाऽहं ब्रह्मास्मीति साक्षा-

६ श्रीधरीव्याख्या ।

न्द्रियाणि संहरते प्रत्याहरति । अनायासेन संहारे दृष्टान्तः । अङ्गानि करचरणादीनि कूर्मो यथा स्वभावेनैवाकर्षति तद्वत् ॥ ५८ ॥ ननु नेन्द्रियाणां विषयेष्वप्रवृत्तिः स्थितप्रज्ञस्य लक्षणं भवितुमर्हति । जडानामातुराणामुपवासपराणां च विषयेष्वप्रवृत्तेरविशेषात्तत्राह—विषया इति । इन्द्रियैर्विषयाणामाहरणं ग्रहणमाहारः । निराहारस्येन्द्रियैर्विषयग्रहणमकुर्वतो देहिनो देहाभिमानिनोऽज्ञस्य विषया विनिवर्तन्ते । तदनुभवो निवर्तत इत्यर्थः । किंतु रसो रागोऽभिलाषस्तद्वर्जम् । अभिलाषस्तु न निवर्तत इत्यर्थः । रसोऽपि रागोऽपि

७ अभिनवगुप्ताचार्यव्याख्या ।

योगरूढत्वं । यदायदा किलायमिन्द्रियाणि संह्रियते आत्मन्येव कूर्म इवाङ्गानि क्रोडीकरोति विषयेभ्यो विषयान्निवार्य तदा तदा स्थिरप्रज्ञः । यद्वा इन्द्रियार्थेभ्यः प्रभृति इन्द्रियाण्यात्मनि संहरते विषयेन्द्रियात्मकमासन्नमात्मसात्कुरुते ॥ ५८ ॥ ननु तपस्विनोऽपि कथं स्थिरप्रज्ञशब्दो न प्रवर्तते । उच्यते—विषया इति । यद्यप्याहार्यैः रूपादिभिर्विषयैः संबन्धोऽस्य नास्ति तथापि तस्य विषया अन्तःकरणगतमुपराग-

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

१ श्रीमच्छांकरभाष्यम् ।

नात् । सोऽपि रसो रञ्जनरूपः सूक्ष्मोऽस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वोपलभ्याहमेव तदिति वर्तमानस्य निवर्तते । निर्बीजं विषयविज्ञानं संपद्यत इत्यर्थः । नासति सम्यग्दर्शने रसस्योच्छेदस्तस्मात्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥ ५९ ॥ सम्यग्दर्शनलक्षणं प्रज्ञास्थैर्यं चिकीर्षताऽऽदाविन्द्रियाणि स्ववशे स्थापयितव्यानि यस्मात्तदनवस्थापने दोषमाह—यतत इति । यततः प्रयत्नं कुर्वतोऽपि हि यस्मात् कौन्तेय, पुरुषस्य विपश्चितो मेधाविनोऽपीति व्यवहितेन संबन्धः । इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्त्याकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं

२ आनन्दगिरिव्याख्या ।

तत्राह—**सोऽपीति** । दृष्टिमेवोपलब्धिपर्यायां स्पष्टयति—**अहमेवेति** । रागापगमे सिद्धमर्थमाह—**निर्बीजमिति** । ननु सम्यग्ज्ञानमन्तरेण रागो नापगच्छति चेत्तदपगमादृते रागवतः सम्यग्ज्ञानोदयायोगादितरेतराश्रयतेति नेत्याह—**नासतीति** । इन्द्रियाणां विषयपारवश्ये विवेकद्वारा परिहृते स्थूलो रागो व्यावर्तते, ततश्च सम्यग्ज्ञानोत्पत्त्या सूक्ष्मस्यापि रागस्य सर्वात्मना निवृत्त्युपपत्तेर्नेतरेतराश्रयतेत्यर्थः । प्रज्ञास्थैर्यस्य सफलत्वे स्थिते फलितमाह—**तस्मादिति** ॥ ५९ ॥ श्लोकान्तरमवतारयति—**सम्यग्दर्शनेति** । मनसः स्ववशत्वादेव प्रज्ञास्थैर्यसंभवे किमर्थमिन्द्रियाणां स्ववशत्वापादनमित्याशङ्क्याह—**यस्मादिति** । ननु विवेकवतो विषयदोषदर्शिनो विषयेभ्यः स्वयमेवेन्द्रियाणि व्यावर्तन्ते किं तत्र प्रज्ञास्थैर्यं चिकीर्षता कर्तव्यमिति तत्राह—**यततो हीति** । विषयेषु भूयो भूयो दोषदर्शनमेव प्रयत्नः । हिशब्दस्य यस्मादर्थस्य समाप्तौ संबन्धं वक्ष्यति । अपिशब्दस्य प्रयत्नं कुर्वतोऽपीति संबन्धं गृहीत्वा संबन्धान्तरमाह—**पुरुषस्येति** । प्रमथनशीलत्वं प्रकटयति—**विषयेति** । विक्षोभस्याकुलीकरणस्य फलमाह—**आकुलीकृत्येति** । प्रकाशमेवेत्युक्तं विशदयति—**पश्यत इति** । विपश्चितो विदुषोऽपि प्रकाशमेव प्रकाशशब्दितविवेकाख्यविज्ञानेन

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

समाधिस्थस्य च महान्विशेष इति भावः । प्राञ्चस्तु रोगिणः काष्ठतपस्विनो वा मूढस्यापि विषयाननाहरतो रसवर्जं विषया विनिवर्तन्ते तस्यैव परं दृष्ट्वा स्थितस्य रसोऽपि निवर्तत इति व्याचख्युः ॥ ५९ ॥ किंच सुप्तादेरिन्द्रियाणि श्रान्त्या स्वयमेव लीयन्ते, समाहितेन तु तानि कूर्मेणाङ्गानीव स्वेच्छया संह्रियन्ते, एतच्चात्यन्तायाससाध्यमित्याह—**यतत इति** । विपश्चितः शास्त्राचार्योपदेशवतो यततोऽपि समाधिसिद्ध्यर्थं यतमानस्यापि पुरुषस्य इन्द्रियाणि कर्तॄणि

४ मधुसूदनीव्याख्या ।

रसोऽपि क्षुद्रसुखरागोऽपि निवर्तते । अपिशब्दाद्विषयाश्च । तथाच 'यावानर्थ' इत्यादौ व्याख्यातम् । एवंच सरागविषयनिवृत्तिः स्थितप्रज्ञस्य लक्षणमिति न मूढे व्यभिचार इत्यर्थः । यस्मान्नासति परमात्मसम्यग्दर्शने सरागविषयोच्छेदस्तस्मात्सरागविषयोच्छेदिकायाः सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं महता यत्नेन संपादयेदित्यभिप्रायः ॥ ५९ ॥ तत्र प्रज्ञास्थैर्ये बाह्येन्द्रियनिग्रहो मनोनिग्रहश्चासाधारणं कारणं तदुभयाभावे प्रज्ञानादर्शनादिति वक्तुं बाह्येन्द्रियनिग्रहाभावे प्रथमं दोषमाह—**यतत इति** । हे कौन्तेय, यततः भूयोभूयो विषयदोषदर्शनात्मकं यत्नं कुर्वतोऽपि । चक्षिङो ङित्करणादनुदात्तेतोऽनावश्यकमात्मनेपदमिति

५ भाष्योत्कर्षदीपिका ।

दुपलभ्य रसोऽपि रञ्जनात्मकः सूक्ष्मोऽप्यस्य यतेर्निवर्तते । निर्बीजं विषयज्ञानं संपद्यत इत्यर्थः । तस्माद्रसस्योच्छेदाय सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥ ५९ ॥ सम्यग्दर्शनं विना रसस्योच्छेदो नास्तीत्युक्तं तच्चाजितेन्द्रियस्य दुर्लभमिन्द्रियनिग्रहश्चातियत्नसाध्यः तस्मात्सम्यग्दर्शनलक्षणं प्रज्ञास्थैर्यं चिकीर्षता आदाविन्द्रियजयः कार्य इत्याशयेन तदकरणे दोषमाह—**यतत इति** । हि यस्माद्विपश्चितो बुद्धिमतः प्रज्ञास्थैर्यार्थं यततो यतमानस्यापीन्द्रियाणि प्रमथनशीलानि पुरुषं विषयाभिमुखं

६ श्रीधरीव्याख्या ।

परं परमात्मानं दृष्ट्वाऽस्य स्थितप्रज्ञस्य स्वतो निवर्तते । नश्यतीत्यर्थः । यद्वा निराहारस्योपवासपरस्य विषयाः प्रायशो विनिवर्तन्ते क्षुधासंतप्तस्य शब्दस्पर्शाद्यपेक्षाभावात् । परंतु रसवर्जम् । रसापेक्षा तु न निवर्तत इत्यर्थः । शेषं समानम् ॥ ५९ ॥ इन्द्रियसंयमं विना तु स्थितप्रज्ञता न संभवति । अतः साधकावस्थायां तत्र महान्प्रयत्नः कर्तव्य इत्याह—**यततो ह्यपीति** द्वाभ्याम् । यततो

७ अभिनवगुप्ताचार्यव्याख्या ।

लक्षणं रसं वर्जयित्वा निवर्तन्ते । अतो नासौ स्थिरप्रज्ञः । रसं केचिदास्वाद्यं मधुरादिकमाहुः । योगिनस्तु परमेश्वरदर्शनादुपरागो भवति । अन्यस्य तु तपस्विनो नासौ निवर्तते ॥ ५९ ॥ यततो ह्यपीति । यदस्मात् तस्यापि तपस्विनो मन इन्द्रियैर्ह्रियते, अथवा यत्तस्य सयत्नस्यापि

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**मनो यतस्तस्मात् ॥ ६० ॥ तानीति । तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्तः समाहितः सन्नासीत । मत्परोऽहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परो नान्योऽहं तस्मादित्यासीतेत्यर्थः । एवमासीनस्य यतेर्वशे हि यस्येन्द्रियाणि वर्तन्तेऽभ्यासबलात्तस्य प्रज्ञा प्रति-**

२ आनन्दगिरिव्याख्या ।

युक्तमेव मनो हरन्तीन्द्रियाणीति संबन्धः । हिशब्दार्थमनूद्य तस्मादिन्द्रियाणि स्ववशे स्थापयितव्यानीति पूर्वेण संबन्धमभिसन्धायाह—**यतस्तस्मादिति** ॥ ६० ॥ इन्द्रियाणां स्ववशत्वसंपादनानन्तरं कर्तव्यमर्थमाह—**तानीति** । एवमासीनस्य किं स्यादिति तदाह—**वशे हीति** । समाहितस्य विक्षेपविकलस्य कथमासनमित्यपेक्षायामाह—**मत्पर इति** । परापरभेदशङ्कामपाकृत्यासनमेव स्फोरयति—**नान्योऽहमिति** । उत्तरार्धं व्याकरोति—**एवमिति** । हिशब्दार्थं स्फुटयति—**अभ्यासेति** । परस्मादात्मनो नाहमन्योऽस्मीति प्रागुक्तानुसंधानस्यादरेण नैरन्तर्यदीर्घकालानुष्ठानसामर्थ्यादित्यर्थः । अथवा विषयेषु दोषदर्शनाभ्याससामर्थ्यादिन्द्रियाणि संयतानीत्यर्थः ॥ ६१ ॥ समनन्तर-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मनः प्रतीचि स्थिरीक्रियमाणं कर्मीभूतं हरन्ति विषयप्रवणं कुर्वन्ति । यतः प्रमाथीनि यथा बहवश्चोरा वने एकं पुरुषं प्रमथ्य तस्य वित्तं हरन्ति, एवमिन्द्रियाणि यततो मनो हरन्ति । यतः प्रसभमतिशयेन प्रमथनशीलानि ॥ ६० ॥ यद्यप्येवं तथापि तानि नियन्तव्यान्येवान्यथा स्थितप्रज्ञत्वस्यैवासिद्धेरित्याह—**तानीति** । संयम्य वशीकृत्य युक्तः संनद्धो मत्परः अहमेव सर्वेषां प्रत्यगात्मा परः स्त्र्यादिभ्यो बाह्येभ्यो देहेन्द्रियादिभ्य आन्तरेभ्यश्च उत्कृष्टः प्रियतमो यस्य स मत्परः सन्नासीत । हि यस्मात् वशे आज्ञायाम् । शेषं स्पष्टम् ॥ ६१ ॥ 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्' इति श्रुतौ इन्द्रियमनोबुद्धीनां निग्रहे परमपद-

४ मधुसूदनीव्याख्या ।

ज्ञापनात्परस्यैपदमविरुद्धम् । विपश्चितोऽत्यन्तविवेकिनोऽपि पुरुषस्य मनः क्षणमात्रं निर्विकारं कृतमपीन्द्रियाणि हरन्ति विकारं प्रापयन्ति । ननु विरोधिनि विवेके सति कुतो विकारप्राप्तिस्तत्राह—प्रमाथीनि प्रमथनशीलानि अतिबलीयस्त्वाद्विवेकोपमर्दनक्षमाणि । अतः प्रसभं प्रसह्य बलात्कारेण पश्यत्येव । विपश्चिति स्वामिनि विवेके च रक्षके सति सर्वप्रमाथित्वादेवेन्द्रियाणि विवेकजप्रज्ञायां प्रविष्टं मनस्ततः प्रच्याव्य स्वविषयाविष्टत्वेन हरन्तीत्यर्थः । हिशब्दः प्रसिद्धिं द्योतयति । प्रसिद्धो ह्ययमर्थो लोके यथा प्रमाथिनो दस्यवः प्रसभमेव धनिनं धनरक्षकं चाभिभूय तयोः पश्यतोरेव धनं हरन्ति तथेन्द्रियाण्यपि विषयसंनिधाने मनो हरन्तीति ॥ ६० ॥ एवं तर्हि तत्र कः प्रतीकार इत्यत आह—तानीन्द्रियाणि सर्वाणि ज्ञानकर्मसाधनभूतानि संयम्य वशीकृत्य युक्तः समाहितो निगृहीतमनाः सन्नासीत निर्व्यापारस्तिष्ठेत् । प्रमाथिनां कथं स्ववशीकरणमिति चेत्तत्राह—**मत्पर इति** । अहं सर्वात्मा वासुदेव एव पर उत्कृष्ट उपादेयो यस्य स मत्परः । एकान्तमद्भक्त इत्यर्थः । तथा चोक्तम् 'न वासुदेवभक्तानामशुभं विद्यते क्वचित्' इति । यथा हि लोके बलवन्तं राजानमाश्रित्य दस्यवो निगृह्यन्ते राजाश्रितोऽयमिति ज्ञात्वा च ते स्वयमेव तद्वश्या भवन्ति, तथैव भगवन्तं सर्वान्तर्यामिणमाश्रित्य तत्प्रभावेणैव दुष्टानीन्द्रियाणि निग्राह्याणि । पुनश्च भगवदाश्रितोऽयमिति मत्वा तानि तद्वश्यान्येव भवन्तीति भावः । यथा च भगवद्भक्तेर्महाप्रभावत्वं तथा विस्तरेणाग्रे व्याख्यास्यामः । इन्द्रियवशीकारे फलमाह—**वशे हीति** । स्पष्टम् । तदेतद्वशीकृतेन्द्रियः सन्नासीतेति किमासीतेति प्रश्नस्योत्तरमुक्तं

५ भाष्योत्कर्षदीपिका ।

कर्तुं समर्थानि तं व्याकुलीकृत्य प्रसभं बलात्कारेण विवेकयुक्तमपि मनो हरन्ति । कौन्तेयेति संबोधयन्निन्द्रियापेक्षया पुरुषस्य दौर्बल्यं सूचयति ॥ ६० ॥ तस्मात्तानि सर्वाणि वशीकृत्य युक्तः समाहितः सन् मत्परोऽहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परो नान्यस्तस्मादहमित्यासीतेत्यर्थः । स्पष्टमन्यत् ॥ ६१ ॥ इन्द्रियस्य जयः प्रयत्नेन संपाद्य इत्युक्तं तत्र मनसा विषयाचिन्तनाभ्यास

६ श्रीधरीव्याख्या ।

मोक्षे प्रयतमानस्यापि विपश्चितो विवेकिनोऽपि मन इन्द्रियाणि प्रसभं बलाद्धरन्ति । यतः प्रमाथीनि प्रमथनशीलानि प्रक्षोभकाणि ॥ ६० ॥ यस्मादेवं तस्मात्—**तानीति** । युक्तो योगी तानीन्द्रियाणि संयम्य मत्परः सन्नासीत । यस्य वशे वशवर्तीनि । एतेन कथमासीतेति प्रश्नस्य वशीकृतेन्द्रियः सन्नासीतेत्युत्तरमुक्तं भवति ॥ ६१ ॥ बाह्येन्द्रियसंयमाभावे दोषमुक्त्वा मनःसंयमाभावे

७ अभिनवगुप्ताचार्यव्याख्या ।

योगिना च मनएव जेतव्यमिति द्वितीयो निर्णीतः ॥ ६० ॥ तानीति । य एवं मनसा इन्द्रियाणि नियमयति नत्वप्रवृत्त्या स एव स्थिरप्रज्ञः

**ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।**
**सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥**
**क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।**
**स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

स्थिता ॥ ६१ ॥ अथेदानीं पराभविष्यतः सर्वानर्थमूलमिदमुच्यते—ध्यायत इति । ध्यायतश्चिन्तयतो विषयाञ्शब्दादिविषयविशेषानालोचयतः पुंसः पुरुषस्य सङ्ग आसक्तिः प्रीतिस्तेषु विषयेषूपजायते, सङ्गात्प्रीतेः कामः संजायते समुत्पद्यते, कामस्तृष्णा, तस्मात्कामात्कुतश्चित्प्रतिहतात्क्रोधोऽभिजायते ॥ ६२ ॥ क्रोधाद्भवति संमोहः संमोहोऽविवेकः कार्याकार्यविषयः भवतीति संबध्यते । क्रुद्धो हि संमूढः सन्गुरुमप्याक्रोशति, संमोहात्स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्याद्विभ्रमो भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्तिः । ततः स्मृतिभ्रंशात्तु बुद्धेर्नाशः कार्याकार्यविषयविवेकायोग्यतान्तःकरणस्य बुद्धेर्नाश उच्यते, बुद्धिनाशात्प्रणश्यति तावदेव हि पुरुषो याव-

---

२ आनन्दगिरिव्याख्या ।

श्लोकद्वयतात्पर्यमाह—**अथेति** । पुरुषार्थोपायोपदेशानन्तर्यमथशब्दार्थः । तन्निष्ठत्वराहित्यावस्थां दर्शयति—**इदानीमिति** । पराभविष्यतो महान्तमनर्थं गमिष्यतो विवेकविज्ञानविहीनस्येति यावत्, सर्वानर्थमूलं विषयाभिध्यानं तस्य तथात्वमनुभवसिद्धमिति वक्तुमिदमित्युक्तम् । विषयेषु विशेषत्वमारोपितरमणीयत्वं प्रीतिरासक्तिरिति साधारणासक्तिमात्रं गृह्यते । तृष्णेत्युद्रिक्ता शक्तिरुक्ता प्रतिबन्धेन प्रणाशेन वा प्रतिहतिः ॥ ६२ ॥ क्रोधस्य संमोहहेतुत्वमनुभवेन द्रढयति—**क्रुद्धो हीति** । आक्रोशत्यधिक्षिपति तदयोग्यत्वमपेरर्थः । संमोहकार्यं कथयति—**संमोहादिति** । स्मृतेर्निमित्तनिवेदनद्वारा स्वरूपं निरूपयति—**शास्त्रेति** । क्षणिकत्वादेव तस्याः स्वतो नाशसंभवान्न संमोहाधीनत्वं तस्येत्याशङ्क्याह—**स्मृतीति** । स्मृतिभ्रंशेऽपि कथं बुद्धिनाशः स्वरूपतः सिध्यति तत्राह—**कार्येति** । ननु पुरुषस्य नित्यसिद्धस्य बुद्धिनाशेऽपि प्रणाशो न कल्पते तत्राह—**तावदेवेति** । कार्याकार्यविवेचनयोग्यान्तःकरणाभावे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्राप्तिरित्युक्तम् । तत्र उपसंहृतकरणस्य बाह्याञ्शब्दादीनगृह्णतो मनोमात्रेणावस्थितस्य योगिनो मनसोऽनिग्रहे किं स्यादित्याह—**ध्यायत इति** द्वाभ्याम् । विषयाञ्शब्दादीन्ध्यायतश्चिन्तयतः पुंसः पुरुषस्य तेषु शब्दादिषु सङ्गः संबन्धो जायते । बाह्यार्थेभ्यो निगृहीतान्यपीन्द्रियाणि मनोदोषात्पुनर्बाह्यार्थान्गृह्णन्तीत्यर्थः । ततः सङ्गात्कामस्तस्मिन्विषयेऽभिलाषः संजायते । कामात्कुतश्चिद्धेतोः प्रतिहतादभिज्वलनात्मा क्रोधोऽभिजायते ॥ ६२ ॥ ततः क्रोधात्संमोहः कार्याकार्यविवेकाभावो भवति । ततः स्मृतिविभ्रमः शास्त्रार्थानुसंधानस्य विभ्रंशरूपं चलनं भवति । स्मृतिभ्रंशा-

४ मधुसूदनीव्याख्या ।

भवति ॥ ६१ ॥ ननु मनसो बाह्येन्द्रियप्रवृत्तिद्वाराऽनर्थहेतुत्वं निगृहीतबाह्येन्द्रियस्य तूत्खातदंष्ट्रोरगवन्मनस्यनिगृहीतेऽपि न कापि क्षतिर्बाह्योद्योगाभावेनैव कृतकृत्यत्वादतो युक्त आसीतेति व्यर्थमुक्तमित्याशङ्क्य निगृहीतबाह्येन्द्रियस्यापि युक्तत्वाभावे सर्वानर्थप्राप्तिमाह द्वाभ्याम्—निगृहीतबाह्येन्द्रियस्यापि शब्दादीन्विषयान्ध्यायतो मनसा पुनःपुनश्चिन्तयतः पुंसस्तेषु विषयेषु सङ्ग आसङ्गो ममात्यन्तं सुखहेतव एत इत्येवं शोभनाध्यासलक्षणः प्रीतिविशेष उपजायते । सङ्गात्सुखहेतुत्वज्ञानलक्षणात्संजायते कामो ममैते भवन्त्विति तृष्णाविशेषः । तस्मात्कामात्कुतश्चित्प्रतिहन्यमानात्तत्प्रतिघातकविषयः क्रोधोऽभिज्वलनात्माभिजायते । क्रोधाद्भवति संमोहः कार्याकार्यविवेकाभावरूपः । संमोहात्स्मृतिविभ्रमः स्मृतेः शास्त्राचार्योपदिष्टार्थानुसन्धानस्य विभ्रमो विचलनं विभ्रंशः । तस्माच्च स्मृतिभ्रंशाद्बुद्धेरैकात्म्याकारमनोवृत्तेर्नाशो विपरीतभावनोपचयदोषेण प्रतिबन्धादनुत्पत्तिरनुत्पन्ना-

५ भाष्योत्कर्षदीपिका ।

एवोपाय इत्याशयेन व्यतिरेके दोषमाह—**ध्यायत इति** । विषयांश्चिन्तयतः पुरुषस्य तेषु प्रीतिरुपजायते, सङ्गादभिलाषः संजायते, कामात्कुतश्चित्प्रतिहतात्क्रोधोऽभिजायते, क्रोधात्कर्तव्याकर्तव्यविषये विभ्रमो भवति, क्रुद्धो हि संमूढो गुरूनप्याक्रोशति,

६ श्रीधरीव्याख्या ।

दोषमाह—**ध्यायत इति** द्वाभ्याम् । गुणबुद्ध्या विषयान्ध्यायतः पुरुषस्य तेषु सङ्ग आसक्तिर्भवति । आसक्त्या च तेष्वधिकः कामो भवति । कामाच्च केनचित्प्रतिहतात्क्रोधो भवति ॥ ६२ ॥ किंच—**क्रोधादिति** । क्रोधात्संमोहः कार्याकार्यविवेकाभावः । ततः

७ अभिनवगुप्ताचार्यव्याख्या ।

स च मत्पर एवासीत । मामेव चिदात्मानं परमेश्वरमभ्यसेत् ॥ ६१ ॥ ध्यायत इति ॥ ६२ ॥ क्रोधादिति । तपस्विनो विषयत्यागएव विषय-

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

दन्तःकरणं तदीयं कार्याकार्यविषयविवेकयोग्यं, तदयोग्यत्वे नष्ट एव पुरुषो भवत्यतस्तस्यान्तःकरणस्य बुद्धेर्नाशात्प्रणश्यति । पुरुषार्थायोग्यो भवतीत्यर्थः ॥ ६३ ॥ सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानम् । अथेदानीं मोक्षकारणमिदमुच्यते—रागद्वेषेति । रागद्वेषवियुक्तै रागश्च द्वेषश्च रागद्वेषौ तत्पुरःसरा हीन्द्रियाणां प्रवृत्तिः स्वाभाविकी तत्र यो मुमुक्षुर्भवति स ताभ्यां वियुक्तैः श्रोत्रादिभिरिन्द्रियैर्विषयानवर्जनीयांश्चरन्नुपलभमान आत्मवश्यैरात्मनो वश्यानि वशीभूतानि तैरात्मवश्यैर्विधेयात्मेच्छातो विधेय आत्मान्तःकरणं यस्य सोऽयं प्रसादमधिगच्छति । प्रसादः प्रसन्नता

२ आनन्दगिरिव्याख्या ।

सतोऽपि पुरुषस्य करणाभावादपगततत्त्वविवेकविवक्षया नष्टत्वव्यपदेशः, तदेतदाह—**पुरुषार्थेति** ॥ ६३ ॥ विषयाणां स्मरणमपि चेदनर्थकारणं सुतरां तर्हि भोगस्तेन जीवनार्थं भुञ्जानो विषयाननर्थं कथं न प्रतिपद्येत इत्याशङ्क्य वृत्तानुवादपूर्वकमुत्तरश्लोकतात्पर्यमाह—**सर्वानर्थस्येति** । अनर्थमूलकथनानन्तर्यमथशब्दार्थः । परिहर्तव्ये निर्णीते तत्परिहारोपायजिज्ञासां दर्शयति—**इदानीमिति** । रागद्वेषपूर्विका प्रवृत्तिरित्यत्रानुभवदर्शनार्थो हिशब्दः । शास्त्रीयप्रवृत्तिव्यासेधार्थं स्वाभाविकीत्युक्तं, तत्रेत्यधिकृतानधिकृत्य प्रयोगः । अवर्जनीयानशनपानादीन् देहस्थितिहेतूनिति यावत् । इन्द्रियाणां विषयेषु प्रवृत्तिश्चेन्नियमानुपपत्त्या वर्जनीयेष्वपि सा स्यादित्याशङ्क्याह—**आत्मेति** । अन्तःकरणाधीनत्वेऽपीन्द्रियाणां तदनियमात्तेषामपि नियमानुपपत्तिरित्याशङ्क्याह—**विधेयात्मेति** ॥ ६४ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बुद्धिनाशः शास्त्रार्थस्य निश्चितस्यापि तिरोधानं भवति । तस्मिंश्च शास्त्रजे परोक्षज्ञानेऽपि नष्टे पुरुषो नश्यति पुरुषार्थायोग्यो भवति । यो हि तादृशः स नष्ट एवेति लोके वदन्ति ॥ ६३ ॥ ननु विषयानध्यायतोऽपि योगिनो व्युत्थाने प्रमाणस्वाभाव्यादिन्द्रियाणां विषयेषु सङ्गो दुष्परिहरस्ततश्चोक्तरीत्या तस्यापि नाशप्रसक्तिरित्याशङ्क्याह—**रागद्वेषेति** । विधेयात्मा किंकरीकृतमनास्तु आत्मवश्यैर्मनोधीनैरिन्द्रियैः स्वामिनश्चित्तस्य किंकरीकृतस्य कामक्रोधहीनत्वात्स्वयमपि रागद्वेषवियुक्तैः विषयान्पथि पतिततृणादीनीवानास्थया चरन्पश्यन्नपि पुमान् तत्र कामाद्यनुदयात्प्रसादं संकल्पविकल्पपङ्कलेपप्रक्षालनेन मनसः स्वाच्छ्यमधिगच्छति । मनसः स्वाच्छ्यमेव प्रत्यगात्मनः स्वाच्छ्यं तस्य

४ मधुसूदनीव्याख्या ।

याश्च फलायोग्यत्वेन विलयः । बुद्धिनाशात्प्रणश्यति तस्याश्च फलभूताया बुद्धेर्विलोपात्प्रणश्यति सर्वपुरुषार्थायोग्यो भवति । यो हि पुरुषार्थायोग्यो जातः स मृत एवेति लोके व्यवह्रियते । अतः प्रणश्यतीत्युक्तम् । यस्मादेवं मनसो निग्रहाभावे निगृहीतबाह्येन्द्रियस्यापि परमानर्थप्राप्तिस्तस्मान्महता प्रयत्नेन मनो निगृह्णीयादित्यभिप्रायः । अतो युक्तमुक्तं 'तानि सर्वाणि संयम्य युक्त आसीत' इति ॥ ६२ ॥ ६३ ॥ मनसि निगृहीते तु बाह्येन्द्रियनिग्रहाभावेऽपि न दोष इति वदन् किं व्रजेतेत्यस्योत्तरमाहाष्टभिः—योऽसमाहितचेताः स बाह्येन्द्रियाणि निगृह्यापि रागद्वेषदुष्टेन मनसा विषयांश्चिन्तयन्पुरुषार्थाद्भ्रष्टो भवति । विधेयात्मा तु । तुशब्दः पूर्वस्माद्व्यतिरेकार्थः । वशीकृतान्तःकरणस्तु आत्मवश्यैर्मनोधीनैः स्वाधीनैरिति वा रागद्वेषाभ्यां वियुक्तैर्विरहितैरिन्द्रियैः श्रोत्रादिभिर्विषयाञ्शब्दादीननिषिद्धांश्चरन्नुपलभमानः प्रसादं प्रसन्नतां चित्तस्य स्वच्छतां परमात्मसाक्षात्कारयोग्यतामधिगच्छति । रागद्वेषप्रयुक्तानीन्द्रियाणि दोषहेतुतां प्रतिपद्यन्ते । मनसि स्ववशे तु न रागद्वेषौ । तयोरभावे च न

५ भाष्योत्कर्षदीपिका ।

तस्मात् स्मृतेः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः विभ्रंशः स्यात्, स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्तिः, ततः कार्याकार्यविवेकायोग्यता बुद्धेर्नाशः, तस्मात्प्रणश्यति जीवन्नेव मृतः पुरुषार्थायोग्यो भवतीति द्वयोरर्थः । विषयध्यानमेव सर्वानर्थबीजमित्यभिप्रायः ॥ ६२ ॥ ६३ ॥ एवं विषयचिन्तनस्यानर्थोपायत्वमुक्त्वा अथेदानीं विषयध्यानरहितस्य स्वाधीनस्य चेतसः परमपुरुषार्थोपायत्वं वदन्किं व्रजेतेत्यस्योत्तरमाह—**रागेति** । विधेयात्मा स्वाधीनचित्तोऽत एवात्मवश्यैः स्वाधीनैरतएव रागद्वेषाभ्यां स्वाभाविकेन्द्रिय-

६ श्रीधरीव्याख्या ।

शास्त्राचार्योपदिष्टार्थस्मृतेर्विभ्रमो विचलनम् । ततो बुद्धेश्चेतनाया विनाशो वृक्षादिष्विवाभिभवः । ततः प्रणश्यति मृततुल्यो भवति ॥ ६३ ॥ नन्विन्द्रियाणां विषयप्रवणस्वभावानां विरोद्धुमशक्यत्वादयं दोषो दुष्परिहर इति स्थितप्रज्ञत्वं कथं स्यादित्याशङ्क्याह—**रागेति** द्वाभ्याम् । रागद्वेषरहितैर्विगतदर्पैरिन्द्रियैर्विषयांश्चरन्भुञ्जानोऽपि प्रसादं शान्तिं प्राप्नोति । रागद्वेषराहित्यमेवाह—आत्मनो मनसो

७ अभिनवगुप्ताचार्यव्याख्या ।

ग्रहणे पर्यवस्यति । ध्यात्वा हि ते लभ्यन्ते । ध्यानकाल एव सङ्गादय उपजायन्ते इत्यनपायो विषयत्यागः स्थितप्रज्ञत्वस्य ॥ ६४ ॥

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**
**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।**
**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

स्वास्थ्यम् ॥ ६४ ॥ प्रसादे सति किं स्यादित्युच्यते—**प्रसाद** इति । प्रसादे सर्वदुःखानामाध्यात्मिकादीनां हानिर्विनाशोऽस्य यतेरुपजायते । किंच प्रसन्नचेतसः स्वच्छान्तःकरणस्य हि यस्मादाशु शीघ्रं बुद्धिः पर्यवतिष्ठत आकाशमिव परि समन्तादवतिष्ठते । आत्मरूपेणैव निश्चलीभवतीत्यर्थः । एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तः समाचरेदिति वाक्यार्थः ॥ ६५ ॥ सेयं प्रसन्नता स्तूयते—**नास्तीति**।

२ आनन्दगिरिव्याख्या ।

तथापि नानाविधदुःखाभिभूतत्वान्न स्वास्थ्यमास्थातुं शक्यमित्याशयेन पृच्छति—**प्रसाद इति** । श्लोकार्धेनोत्तरमाह—**उच्यत इति** । सर्वदुःखहान्या बुद्धिस्वास्थ्येऽपि प्रकृतं प्रज्ञास्थैर्यं कथं सिद्धमित्याशङ्क्याह—**प्रसन्नेति** । बुद्धिप्रसादस्यैव फलान्तरमाह—**किंचेति** । तस्माद्बुद्धिप्रसादार्थं प्रयतितव्यमिति शेषः । श्लोकद्वयस्याक्षरोत्थमर्थमुक्त्वा तात्पर्यार्थमुपसंहरति—**एवमिति** । युक्तः समाहितो विषयपारवश्यशून्यः सन्निति यावत् ॥ ६५ ॥ किं पुनः सत्त्वशुद्ध्यैव यथोक्तबुद्धिः सिध्यति नेत्याह—**सेयमिति** । असमाहितस्यापि बुद्धिमात्रमुत्पद्यमानं प्रतिभातीत्याशङ्क्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तद्गुणसारत्वात् । अजितमनस्कमिव जितमनस्कं विषयसङ्गो न बाधतेऽतो मनोजयोऽवश्यं कर्तव्य इत्यर्थः ॥ ६४ ॥ किंच चित्तस्य प्रसादे हि अस्य पुंसः सर्वदुःखानां काममूलकानां कामाभावाद्धानिः परिहारो जायते । कामानुदये हेतुमाह—**प्रसन्नेति** । हि यस्मात्प्रसन्नचेतसः पुंसो बुद्धिर्ब्रह्मात्मैक्यनिश्चय आशु शीघ्रं पर्यवतिष्ठते सुदृढो भवति । तस्मिंश्च सति प्राप्याभावान्न कामोदय इत्यर्थः ॥ ६५ ॥ समनस्कानामिन्द्रियाणामनिग्रहे दोष उक्तः, बुद्धेरपर्यवस्थाने को दोष इत्यत आह—**नास्तीति** । अयुक्तस्य श्रवणमननयोरनासक्तस्य बुद्धिर्ब्रह्मात्मैक्यनिश्चयो नास्ति । प्रमाण-

४ मधुसूदनीव्याख्या ।

तदधीनेन्द्रियप्रवृत्तिः । अवर्जनीयतया तु विषयोपलम्भो न दोषमावहतीति न शुद्धिव्याघात इति भावः । एतेन विषयाणां स्मरणमपि चेदनर्थकारणं सुतरां तर्हि भोगस्तेन जीवनार्थं विषयान्भुञ्जानः कथमनर्थं न प्रतिपद्येतेति शङ्का निरस्ता । स्वाधीनैरिन्द्रियैर्विषयान्प्राप्नोतीति च किं व्रजेतेति प्रश्नस्योत्तरमुक्तं भवति ॥ ६४ ॥ 'प्रसादमधिगच्छति' इत्युक्तं तत्र प्रसादे सति किं स्यादित्युच्यते । चित्तस्य प्रसादे स्वच्छत्वरूपे सति सर्वदुःखानामाध्यात्मिकादीनामज्ञानविलसितानां हानिर्विनाशोऽस्य यतेरुपजायते । हि यस्मात्प्रसन्नचेतसो यतेराशु शीघ्रमेव बुद्धिर्ब्रह्मात्मैक्याकारा पर्यवतिष्ठते परि समन्तादवतिष्ठते स्थिरा भवति विपरीतभावनादिप्रतिबन्धाभावात् । ततश्च प्रसादे सति बुद्धिपर्यवस्थानं, ततस्तद्विरोध्यज्ञाननिवृत्तिः, ततस्तत्कार्यसकलदुःखहानिरिति क्रमेऽपि प्रसादे यत्नाधिक्याय सर्वदुःखहानिकरत्वकथनमिति न विरोधः ॥ ६५ ॥ इममेवार्थं व्यतिरेकमुखेन द्रढयति—अयुक्तस्याजितचित्तस्य बुद्धिरात्मविषया श्रवणमननाख्यवेदान्तविचारजन्या नास्ति नोत्पद्यते । तद्बुद्ध्यभावे

५ भाष्योत्कर्षदीपिका ।

प्रवृत्तिहेतुरूपाभ्यां वियुक्तैरिन्द्रियैः विषयान्जीवनहेतून्भोजनाच्छादनादींश्चरन्नुपलभमानः प्रसन्नतां स्वास्थ्यं प्राप्नोति ॥ ६४ ॥ **प्रसादे इति** । प्रसादे सति अस्य विवेकिनः सर्वदुःखानां त्रिविधतापानां हानिरुपजायते । कुत इत्यत आह—**प्रसन्नेति** । हि यस्मात्प्रसन्नचेतस आशु शीघ्रं बुद्धिः आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः । एवं प्रसन्नचेतसः स्थिरबुद्धेः कृतकृत्यता यतः तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्वावश्यकेषु जीवनहेतुभूतेषु युक्तः समाचरेदिति वाक्यार्थः ॥ ६५ ॥ ननु किं चित्तप्रसादस्यैव साक्षाद्बुद्धिप्रतिष्ठासाधनत्वमुत परम्परयेत्याकाङ्क्षायां निदिध्यासनद्वारेणेति वक्तुं चित्तप्रसादं विना तन्न जायत इति पूर्वोक्तेस्तात्पर्यं प्रसन्नतास्तुत्या स्फुटयति—**नास्तीति**। यत्तु समनस्कानामिन्द्रियाणामनिग्रहे दोष उक्तः बुद्धेरपर्यवस्थाने को दोष

६ श्रीधरीव्याख्या ।

वश्यैर्विधेयो वशवर्ती आत्मा मनो यस्येति । अनेनैव कथं व्रजेत भुञ्जीतेत्यस्य चतुर्थप्रश्नस्य स्वाधीनैरिन्द्रियैर्विषयानधिगच्छतीत्युत्तरमुक्तं भवति ॥ ६४ ॥ प्रसादे सति किं स्यादित्यत्राह—**प्रसाद इति** । प्रसादे सति सर्वदुःखनाशस्ततश्च प्रसन्नचेतसो बुद्धिः प्रतिष्ठिता भवतीत्यर्थः ॥ ६५ ॥ इन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनत्वं व्यतिरेकमुखेनोपपादयति—**नास्तीति** । अयुक्तस्यावशीकृतेन्द्रियस्य

१ नीलकण्ठः.

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

१ श्रीमच्छांकरभाष्यम् ।

**नास्ति न विद्यते । न भवतीत्यर्थः । बुद्धिरात्मस्वरूपविषयायुक्तस्यासमाहितान्तःकरणस्य । न चायुक्तस्येति । न चास्त्ययुक्तस्य भावनात्मज्ञानाभिनिवेशस्तथा न चास्य भावयत आत्मज्ञानाभिनिवेशं कुर्वतः शान्तिरुपशमो न विद्यते, अशान्तस्य कुतः सुखम् । इन्द्रियाणां हि विषयसेवातृष्णातो निवृत्तिर्या तत् सुखं न विषयविषया तृष्णा दुःखमेव हि सा, न तृष्णायां सत्यां सुखस्य गन्धमात्रमुत्पद्यत इत्यर्थः ॥ ६६ ॥ अयुक्तस्य कस्माद्बुद्धिर्नास्तीत्युच्यते—इन्द्रियाणामिति**

२ आनन्दगिरिव्याख्या ।

विशिनष्टि—**आत्मस्वरूपेति** । नहि विक्षिप्तचित्तस्यात्मस्वरूपविषया बुद्धिरुदेतुमर्हतीत्यत्र हेतुमाह—**नचेति** । आत्मज्ञाने शब्दादापाततो जाते स्मृतिसन्तानकरणं साक्षात्कारार्थमभिनिवेशो भावनेति चोच्यते । न चासौ विक्षिप्तबुद्धेः सिध्यतीति हेत्वर्थं विवक्षित्वाह—**आत्मज्ञानेति** । भावनाद्वारा साक्षात्काराभावेऽपि का क्षतिरित्याशङ्क्याह—**तथेति** । असमाहितस्य भावनाभाववदिति यावत् । आत्मन्यापाततो ज्ञाते श्रवणाद्यावृत्तिरूपां स्मृतिमनातन्वानस्यापरोक्षबुद्ध्यभावेनानर्थनिवृत्तिः सिध्यतीत्याह—**उपशम इति** । अनिवृत्तानर्थस्य परमानन्दसागराद्बिभक्तस्य संसारवारिधौ निमग्नस्य सुखाविर्भावो न संभवतीत्याह—**अशान्तस्येति** । तस्यापि विषयसेवातो वैषयिकं सुखं संभवतीत्याशङ्क्याह—**इन्द्रियाणां हीति** । तृष्णाक्षयस्य शास्त्रप्रसिद्धमानुभविकं च सुखत्वमिति वक्तुं हिशब्दः । विषयसेवातृष्णयापि विषयोपभोगद्वारा सुखमुपलब्धमित्याशङ्क्याह—**दुःखमेवेति** । तत्रापि हिशब्दोऽनुभवद्योती । तदेव स्पष्टयति—**नेत्यादिना** ॥ ६६ ॥ आकाङ्क्षाद्वारा श्लोकान्तरमुत्थापयति—**अयुक्तस्येति** । विक्षिप्तचेतसो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विषयासंभावनायाः प्रमेयविषयासंभावनायाश्चानिरासात् । तथा अयुक्तस्यासमाहितमनसो भावना ब्रह्माकारान्तःकरणवृत्तिप्रवाहो नास्ति । मनसश्चाञ्चल्येन बुद्धेरपि चाञ्चल्यात् अभावयतो ध्यानमकुर्वतः शान्तिः सर्वदुःखोपरमश्च नास्ति । चेतसोऽनवस्थितत्वेन दुःखावश्यंभावात् । अशान्तस्यानुपरतसर्वदुःखस्य सुखं प्रत्यगद्वयानन्दात्मकं कुतो न कुतश्चित् । दुःखित्वादेव आद्यमयुक्तस्येति पदं 'युजिर् योगे' इत्यस्य रूपम् । द्वितीयं 'युज समाधौ' इत्यस्य । तस्माद्बुद्धेः पर्यवस्थानमावश्यकम् ॥ ६६ ॥ तदभावे दोषमाह—**इन्द्रियाणां हीति** । हि यस्मादिन्द्रियाणां चरतां

४ मधुसूदनीव्याख्या ।

न चायुक्तस्य भावना निदिध्यासनात्मिका विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपा । सर्वत्र नञोऽस्तीत्यनेनान्वयः । नचाभावयत आत्मानं शान्तिः सकार्याविद्यानिवृत्तिरूपा वेदान्तवाक्यजन्या ब्रह्मात्मैक्यसाक्षात्कृतिः । अशान्तस्यात्मसाक्षात्कारशून्यस्य कुतः सुखं मोक्षानन्द इत्यर्थः ॥ ६६ ॥ अयुक्तस्य कुतो नास्ति बुद्धिरित्यत आह—चरतां स्वविषयेषु

५ भाष्योत्कर्षदीपिका ।

इत्यत आहेति तच्चिन्त्यम् । अयुक्तस्य बुद्धिर्नास्तीत्युक्त्या चित्तप्रसादस्तुतेः स्पष्टप्रतीतेः तथोत्थापनानौचित्यात् । अयुक्तस्यासमाहितचेतसः । अप्रसन्नचित्तस्येति यावत् । बुद्धिरात्मस्वरूपज्ञानविषया ब्रह्मात्मैक्याकारा कुत इत्यत आह—**नचेति** । नचायुक्तस्य भावना पूजाप्रतिष्ठाद्यर्थं श्रवणमननयोः सत्त्वेऽपि भावनाऽभिनिवेशो निदिध्यासनं बुद्धिसाधनं नास्ति । नचाभावयतः विजातीयप्रत्ययस्य विषयानुसंधानस्य तिरस्कारमकुर्वतः शान्तिरुपशमः तृष्णाया इच्छापरपर्यायाया अभावो नास्ति । अशान्तस्य कुतः सुखं अविद्यानिवृत्त्या आविद्यकतृष्णाद्यभावकर्तुस्तत्त्वसाक्षात्कारस्याभावाद्ब्रह्मानन्दसुखं तु तस्य नास्त्येव विषयसुखमपि तस्य नास्तीति द्योतयितुं कुतःशब्दः । ननु विषयार्जनतद्विनाशयोः दुःखसाधनत्वेऽपि विषयोपभोगस्य सुखहेतुत्वं भविष्यतीति चेन्न । तस्मिन्कालेऽपि सर्वदुःखमूलभूतायास्तृष्णायाः सत्त्वेन सुखगन्धस्याप्यनुपपत्तेः । तृष्णायाः दुःखहेतुत्वमुक्तं वासिष्ठे—'यान्येतानि दुरन्तानि दुर्जराण्युन्नतानि च । तृष्णावल्ल्याः फलानीह तानि दुःखानि राघव ॥ इच्छोदयो यथा दुःखमिच्छाशान्तिर्यथा सुखम् । तथा न नरके नापि ब्रह्मलोकेऽनुभूयते ॥ यावतीयावती जन्तोरिच्छोदेति यथायथा । तावतीतावती दुःखबीजमुष्टिः प्ररोहति ॥' इत्यादि ॥ ६६ ॥ अयुक्तस्य बुद्धिर्नास्तीत्युक्तं तत्र हेतुमाह—**इन्द्रियाणामिति** । यत्तु तदभावे दोषमाहेति तदयुक्तम् । पूर्वश्लोकेऽपि

६ श्रीधरीव्याख्या ।

नास्ति बुद्धिः शास्त्राचार्योपदेशाभ्यामात्मविषया बुद्धिः प्रज्ञैव नोत्पद्यते, कुतस्तस्य प्रतिष्ठा वार्ता वा कुत इत्यत आह । न चायुक्तस्य भावना ध्यानम् । भावनया हि बुद्धेरात्मनि प्रतिष्ठा भवति । सा चायुक्तस्य यतो नास्ति । न चाभावयत आत्मध्यानमकुर्वतः शान्तिरात्मनि चित्तोपरतिः । अशान्तस्य कुतः सुखं मोक्षानन्द इत्यर्थः ॥ ६६ ॥ नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह—**इन्द्रियाणामिति** । इन्द्रियाणा-

१ नीलकण्ठः.

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**इन्द्रियाणां हि यस्माच्चरतां स्वस्वविषयेषु प्रवर्तमानानां यन्मनोऽनुविधीयतेऽनुप्रवर्तते तदिन्द्रियविषयविकल्पनेन प्रवृत्तं मनोऽस्य यतेर्हरति प्रज्ञामात्मानात्मविवेकजां नाशयति । कथम्, वायुर्नावमिवाम्भस्युदके जिगमिषतां मार्गादुद्धृत्योन्मार्गे यथा वायुर्नावं प्रवर्तयत्येवमात्मविषयां प्रज्ञां हृत्वा मनो विषयविषयां कल्पनां करोति ॥ ६७ ॥ यततो ह्यपीत्युपन्यस्तस्यार्थस्यानेकधोपपत्तिमुक्त्वा तं चार्थमुपपाद्योपसंहरति—तस्मादिति । इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्तस्माद् यस्य यतेः हे महाबाहो, निगृहीतानि सर्वशः सर्वप्रकारैर्मानसादिभेदैरिन्द्रियाणीन्द्रियार्थेभ्यः शब्दादिभ्य-**

२ आनन्दगिरिव्याख्या ।

भावनाभावे साक्षात्कारलक्षणा बुद्धिर्न भवतीति हेत्वन्तरेण साधयति—**इन्द्रियाणामिति** । यत्पदोपात्तं मनस्तत्पदेनापि गृह्यते । इन्द्रियाणां श्रोत्रादीनां विषयाः शब्दादयस्तेषां विकल्पनं मिथो विभज्य ग्रहणं तेनेति यावत् । दृष्टान्तं व्याकरोति—**उदक इति** । करोति यस्मात्तस्मादयुक्तस्य नोत्पद्यते बुद्धिरिति योजना ॥ ६७ ॥ यततो हीत्यादिश्लोकाभ्यामुक्तस्यैवार्थस्य प्रकृतश्लोकाभ्यामपि कथ्यमानत्वादस्ति पुनरुक्तिरित्याशङ्क्य परिहरति—**यततो हीत्यादिना** । ध्यायतो विषयानित्यादिनोपपत्तिवचनमुन्नेयम् । तच्छब्दापेक्षितार्थोक्तिद्वारा श्लोकमवतारयति—**इन्द्रियाणामिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्वस्वविषये प्रवर्तमानानाम् । कर्मणि षष्ठी । यत् रागादिकलुषितं मनः तान्यनुलक्षीकृत्य विधीयते प्रवर्त्यते । कर्मकर्तरि लकारः । प्रवर्तत इत्यर्थः । तत् इन्द्रियानुसारि मनोऽस्य साधकस्य प्रज्ञामात्मतत्त्वविषयां बुद्धिं हरति । तस्या मनोनुसारित्वात् । दृष्टान्तः स्पष्टार्थः । अन्ये तु इन्द्रियाणां मध्ये यदिन्द्रियमनुलक्षीकृत्य मनः प्रवर्तते तदिन्द्रियमस्य साधकस्य मनसो वा प्रज्ञां हरतीति योजयन्ति । आत्मविषयां प्रज्ञां हृत्वा मनोविषयविषयां करोतीति भाष्यमप्यालोचनीयम् ॥ ६७ ॥ यततो ह्यपीत्यत्रोपक्रान्तमर्थं बहुधोपपाद्योपसंहरति—**तस्मादिति** । यस्मादिन्द्रियाधीनं मनो मनोनुगा च प्रज्ञा तस्मात् हे महाबाहो, यस्य यतेरिन्द्रियाणि सर्वशः सर्वप्रकारेण स्वकारणेन मनसा

४ मधुसूदनीव्याख्या ।

प्रवर्तमानानामवशीकृतानामिन्द्रियाणां मध्ये यदेकमपीन्द्रियमनुलक्षीकृत्य मनोऽनुविधीयते प्रेर्यते । प्रवर्तत इति यावत् । कर्मकर्तरि लकारः । तदिन्द्रियमेकमपि मनसानुसृतमस्य साधकस्य मनसो वा प्रज्ञामात्मविषयां शास्त्रीयां हरत्यपनयति, मनसस्तद्विषयाविष्टत्वात् । यदैकमपीन्द्रियं प्रज्ञां हरति तदा सर्वाणि हरन्तीति किमु वक्तव्यमित्यर्थः । दृष्टान्तस्तु स्पष्टः । अम्भस्येव वायोर्नौकाहरणसामर्थ्यं न भुवीति सूचयितुमम्भसीत्युक्तम् । एवं दार्ष्टान्तिकेऽप्यम्भःस्थानीये मनश्चाञ्चल्ये सत्येव प्रज्ञाहरणसामर्थ्यमिन्द्रियस्य नतु भूस्थानीये मनःस्थैर्ये इति सूचितम् ॥ ६७ ॥ हि यस्मादेवं—सर्वशः सर्वाणि समनस्कानि । हे महाबाहो इति संबोधयन् सर्वशत्रुनिवारणक्षमत्वादिन्द्रियशत्रुनिवारणेऽपि त्वं क्षमोऽसीति सूचयति । स्पष्टमन्यत् । तस्येति सिद्धस्य साधकस्य च परामर्शः । इन्द्रियसंयमस्य स्थितप्रज्ञंप्रति लक्षणत्वस्य, मुमुक्षुंप्रति प्रज्ञासाधनत्वस्य चोपसंहरणीयत्वात् ॥ ६८ ॥

५ भाष्योत्कर्षदीपिका ।

दोषस्यैवोक्तत्वात् । इन्द्रियाणां स्वविषये प्रवर्तमानानां यन्मनोऽनुवर्तते तदिन्द्रियविषयविकल्पे प्रवृत्तमस्य पुरुषस्य विवेकिनः प्रज्ञामात्मानात्मविवेकजां हरति । अम्भसि नावं वायुरिव, जले जिगमिषतां मार्गादुद्धृत्योन्मार्गे यथा वायुः प्रवर्तयति तद्वत् । यैस्त्विन्द्रियाणां मध्ये यदेकमपीन्द्रियमनु लक्षीकृत्य विधीयते प्रेर्यते । प्रवर्तत इति यावत् । तदिन्द्रियमेकमपि मनसानुसृतं अस्य साधकस्य मनसो वा प्रज्ञां हरतीत्यादि तदयुक्तम् । 'नास्ति बुद्धिरयुक्तस्य' इत्यनुरोधेन इन्द्रियानुगतमनस एव बुद्धिहरणकर्तृत्वस्य विवक्षितत्वात् । श्रुतं मनःपदं त्यक्त्वाऽश्रुतस्यैकेन्द्रियस्य यत्तत्पदेनोपादानानौचित्यात् । मनस इत्यपि न । साधकस्यैव प्रकृतत्वात् ॥ ६७ ॥ उपसंहरति—**तस्मादिति** । महाबाहुभ्यां शत्रून्विजित्य यथा राज्यस्य प्रतिष्ठितत्वं शूरैः संपाद्यते एवं विवेकिभिरिन्द्रियशत्रू-

६ श्रीधरीव्याख्या ।

मवशीकृतानां स्वैरं विषयेषु चरतां मध्ये यदेवैकमिन्द्रियं मनोऽनुविधीयतेऽवशीकृतं सदिन्द्रियेण सह गच्छति, तदेवैकमिन्द्रियमस्य मनसः पुरुषस्य वा प्रज्ञां हरति विषयविक्षिप्तां करोति, किमुत वक्तव्यं बहूनि प्रज्ञां हरन्तीति । यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्वतः परिभ्रामयति तद्वत् ॥ ६७ ॥ इन्द्रियसंयमस्य स्थितप्रज्ञत्वसाधनत्वलक्षणत्वं प्रोक्तमुपसंहरति—**यस्मादिति** । प्रतिष्ठिता

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ६५ ॥ ६६ ॥ ६७ ॥ तस्माद्यस्येति । यस्तु मनसो नियामकः स विषयान्सेवमानोऽपि क्रोधादिकल्लोलैरभिभूयते इति स एव स्थित-

---

१ मधुसूदनः ।

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

स्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥ योऽयं लौकिको वैदिकश्च व्यवहारः समुत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्याविद्याकार्यत्वादविद्यानिवृत्तौ निवर्ततेऽविद्यायाश्च विद्याविरोधान्निवृत्तिरित्येतमर्थं स्फुटीकुर्वन्नाह—या निशेति । या निशा रात्रिः सर्वपदार्थानामविवेककरी तमःस्वभावत्वान्निशा सर्वेषां भूतानां सर्वभूतानाम् । किं तत्परमार्थतत्त्वं स्थितप्रज्ञस्य विषयो यथा नक्तंचराणामहरेव सदन्येषां निशा भवति तद्वन्नक्तंचरस्थानीयानामज्ञानिनां सर्वभूतानां निशेव निशा परमार्थतत्त्वागोचर-

२ आनन्दगिरिव्याख्या ।

असमाहितेन मनसा यस्मादनुविधीयमानानीन्द्रियाणि प्रसह्य प्रज्ञामपहरन्ति तस्मादिति योजना ॥ ६८ ॥ आत्मविदः स्थितप्रज्ञस्य सर्वकर्मपरित्यागेऽधिकारस्तद्विपरीतस्याज्ञस्य कर्मणीत्येतस्मिन्नर्थे समनन्तरश्लोकमवतारयति—योऽयमिति । अविद्यानिवृत्तौ सर्वकर्मनिवृत्तिश्चेत्तन्निवृत्तिरेव कथमित्याशङ्क्याह—अविद्यायाश्चेति । स्फुटीकुर्वन् बाह्याभ्यन्तरकरणानां पराक्प्रत्यक्प्रवृत्तिवत्तथाविधे दर्शने च मिथो विरुध्येते परागदर्शनस्यानाद्यात्मावरणाविद्याकार्यत्वादात्मदर्शनस्य च तन्निवर्तकत्वात्ततश्चात्मदर्शनार्थमिन्द्रियाण्यर्थेभ्यो निगृह्णीयादित्याहेति योजना । सर्वप्राणिनां निशा पदार्थाविवेककरीत्यत्र हेतुमाह—तमःस्वभावत्वादिति । सर्वप्राणिसाधारणीं प्रसिद्धां निशां दर्शयित्वा तामेव प्रकृतानुगुणत्वेन प्रश्नपूर्वकं विशदयति—किं तदित्यादिना । स्थितप्रज्ञविषयस्य परमार्थतत्त्वस्य प्रकाशैकस्वभावस्य कथमज्ञानं प्रति निशात्वमित्याशङ्क्याह—यथेति । तत्र हेतुमाह—अगोचरत्वादिति । अतद्बुद्धीनां परमार्थतत्त्वातिरिक्ते द्वैतप्रपञ्चे प्रवृत्तबुद्धीनामप्रतिपन्नत्वात् परमार्थतत्त्वं निशेवाविदुषामित्यर्थः । तस्यामित्यादि व्याचष्टे—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सहितानीति यावत् । इन्द्रियार्थेभ्यः शब्दादिभ्यो निगृहीतानि भवन्ति तस्य प्रज्ञा प्रतिष्ठितेति विद्धि ॥ ६८ ॥ 'यदा पञ्चावतिष्ठन्ते' इत्युदाहृतश्रुतेः 'तामाहुः परमां गतिम्' इत्येतं चतुर्थं पादं व्याचष्टे—**या निशेति** । सर्वेषां भूतानामज्ञानां या निशेव निशा यस्यां मध्यंदिने उलूका इवानन्धा अप्यन्धा एव सर्वे प्राणिनो भवन्ति तस्यां तस्मिन्प्रत्यग्ज्योतिषि संयमी इन्द्रियमनोबुद्धीनां निग्रहणशीलो योगी जागर्ति इन्द्रियादीनां दृक्शक्तिलोपेऽप्यनुप-

४ मधुसूदनीव्याख्या ।

तदेवं मुमुक्षुणा प्रज्ञास्थैर्याय प्रयत्नपूर्वकमिन्द्रियसंयमः कर्तव्य इत्युक्तं, स्थितप्रज्ञस्य तु स्वतःसिद्ध एव सर्वेन्द्रियसंयम इत्याह । या वेदान्तवाक्यजनितसाक्षात्काररूपाऽहंब्रह्मास्मीति प्रज्ञा सर्वभूतानामज्ञानां निशेव निशा तां प्रत्यप्रकाशरूपत्वात्तस्यां ब्रह्मविद्यालक्षणायां सर्वभूतनिशायां जागर्ति अज्ञाननिद्रायाः प्रबुद्धः सन्सावधानो वर्तते । संयमी इन्द्रियसंयमवान् स्थितप्रज्ञ इत्यर्थः । यस्यां तु द्वैतदर्शनलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रति स्वप्नवद्व्यवहरन्ति सा निशा न प्रकाशत आत्मतत्त्वं पश्यतोऽपरोक्षतया मुनेः स्थितप्रज्ञस्य । यावद्धि न प्रबुध्यते तावदेव स्वप्नदर्शनं बोधपर्यन्तत्वाद्भ्रमस्य । तत्त्वज्ञानकाले तु न भ्रमनिमित्तः कश्चिद्व्यवहारः । तदुक्तं वार्तिककारैः 'कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते । शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिस्तथा ॥ काकोलूकनिशेवायं संसारो ह्यात्मवेदिनोः । या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः ॥'

५ भाष्योत्कर्षदीपिका ।

न्जित्वा प्रज्ञाप्रतिष्ठितत्वमिति सूचयन्संबोधयति हे महाबाहो इति ॥ ६८ ॥ एवं स्थितप्रज्ञलक्षणवर्णनेन मुमुक्षुभिरतियत्नेन स्थितप्रज्ञत्वाय समनस्केन्द्रियनिग्रहः कर्तव्य इत्युक्तम् । उत्पन्नविवेकविज्ञानस्य स्थितप्रज्ञस्य तु स्वतःसिद्ध एव समनस्केन्द्रियसंयमः । अविद्याविरोधिन्या विद्यया समूलस्य सर्वव्यवहारस्य निवृत्तेरित्येतद्वक्तुकामोऽविद्यावस्थायामेव कर्माणि विधीयन्ते न विद्यावस्थायामिति द्योतयन्नाह—**येति** । सर्वभूतानामुलूकस्थानीयानां या निशेव निशा रात्रिः परमार्थतत्त्वलक्षणा तस्यामज्ञाननिद्रातः प्रबुद्धः

६ श्रीधरीव्याख्या ।

भवतीत्यर्थः । लक्षणत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता ज्ञातव्येत्यर्थः । महाबाहो इति संबोधनं वैरिनिग्रहसमर्थस्य तवात्रापि सामर्थ्यं भवेदिति सूचयति ॥ ६८ ॥ ननु च कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यः सर्वात्मना निगृहीतेन्द्रियो लोके न दृश्यते, अतोऽसंभावितमिदं लक्षणमित्याशङ्क्याह—**या निशेति** । सर्वेषां भूतानां या निशा निशेव निशा आत्मनिष्ठा आत्मज्ञानध्वान्तावृतमतीनां तस्यां दर्शनादिव्यवहाराभावात् तस्यामात्मनिष्ठायां संयमी निगृहीतेन्द्रियो जागर्ति प्रबुध्यते, यस्यां तु विषयबुद्ध्या भूतानि जाग्रति

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रज्ञो योगीति तात्पर्यम् ॥ ६८ ॥ योगी च सर्वव्यवहारान्कुर्वाणोऽपि लोकोत्तर इति निरूपयता परमेश्वरेण संक्षिप्यास्य स्वरूपं कथ्यते—या निशेति । या सर्वेषां भूतानां निशा मोहिनी माया तस्यां मुनिर्जागर्ति कथमियं हेयेति । यस्यां च दशायां लोको जागर्ति नानाविधां

१ श्रीमच्छांकरभाष्यम् ।

त्वात्तद्बुद्धीनां, तस्यां परमार्थतत्त्वलक्षणायामज्ञाननिद्रायां प्रबुद्धो जागर्ति संयमी संयमवान् जितेन्द्रियो योगीत्यर्थः । यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यते यस्यां निशायां प्रसुप्ता इव स्वप्नदृशः सा निशाविद्यारूपत्वात्परमार्थतत्त्वं पश्यतो मुनेरतः कर्माण्यविद्यावस्थायामेव चोद्यन्ते न विद्यावस्थायां, विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या, प्राग्विद्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा सती सर्वकर्महेतुत्वं प्रतिपद्यते नाप्रमाणबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः प्रमाणभूतेन वेदेन मम चोदितं कर्तव्यं कर्मेति नहि, कर्मणि कर्ता प्रवर्तते नाविद्यामात्रमिदं सर्वं निशेवेति । यस्य तु पुनर्निशेवाविद्यामात्रमिदं सर्वं भेदजातमिदं ज्ञानं तस्यात्मज्ञस्य सर्वकर्मसंन्यास एवाधिकारो न प्रवृत्तौ । तथा दर्शयिष्यति 'तद्बुद्धयस्तदात्मानः' इत्यादिना, ज्ञाननिष्ठायामेव तस्याधिकारः । तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्तेरनुपपत्तिरिति चेत्, न । स्वात्मविषयत्वादात्मविज्ञानस्य । न ह्यात्मनः स्वात्मनि

२ आनन्दगिरिव्याख्या ।

तस्यामिति । निशावदुक्तायामवस्थायामिति यावत्, योगीति ज्ञानी कथ्यते । द्वितीयार्धं विभजते—यस्यामिति । प्रसुप्तानां जागरणं विरुद्धमित्याशङ्क्याह—प्रसुप्ता इवेति । परमार्थतत्त्वमनुभवतो निवृत्ताविद्यस्य संन्यासिनो द्वैतावस्था निशेत्यत्र हेतुमाह—अविद्यारूपत्वादिति । परमार्थावस्था निशेत्यविदुषां विदुषां तु द्वैतावस्था तथेति स्थिते फलितमाह—अत इति । अविद्यावस्थायामेव क्रियाकारकफलभेदप्रतिभानादित्यर्थः । विद्योदयेऽपि तत्प्रतिभानाविशेषात्पूर्ववमिव कर्माणि विधीयेरन्नित्याशङ्क्याह—विद्यायामिति । अविद्यानिवृत्तौ बाधितानुवृत्त्या विभागभानेऽपि नास्ति कर्मविधिर्विभागाभिनिवेशाभावादित्यर्थः । अविद्यावस्थायामेव कर्मणीत्युक्तं व्यक्तीकरोति—प्रागिति । विद्योदयात्पूर्वं बाधकाभावादबाधिता विद्या क्रियादिभेदमापाद्य प्रमाणरूपया बुद्ध्या ग्राह्यतां प्राप्य कर्महेतुर्भवति क्रियादिभेदाभिमानस्य तद्धेतुत्वादित्यर्थः । न विद्यावस्थायामित्युक्तं प्रपञ्चयति—नाप्रमाणेति । उत्पन्नायां च विद्यायामविद्याया निवृत्तत्वात् क्रियादिभेदभानमप्रमाणमिति बुद्धिरुत्पद्यते तया गृह्यमाणा यथोक्तविभागभागिन्यप्यविद्या न कर्महेतुत्वं प्रतिपद्यते बाधितत्वेनाभासतया तद्धेतुत्वायोगादित्यर्थः । विद्याविद्याविभागेनोक्तमेव विशेषं विवृणोति—प्रमाणभूतेनेति । यथोक्तेन वेदेन कामनाजीवनादिमतो मम कर्म विहितं तेन मया तत्कर्तव्यमिति मन्वानः सन् कर्मण्यज्ञोऽधिक्रियते तं प्रति साधनविशेषवादिनो वेदस्य प्रवर्तकत्वादित्यर्थः । सर्वमेवेदमविद्यामात्रं द्वैतं निशेवेतेति मन्वानस्तु न प्रवर्तते कर्मणीति व्यावर्त्यमाह—नाविद्येति । विदुषो न कर्मण्यधिकारश्चेत्तस्याधिकारस्तर्हि कुत्रेत्याशङ्क्याह—यस्येति । तस्यात्मज्ञस्य फलभूतसंन्यासाधिकारे वाक्यशेषं प्रमाणयति—तथाचेति । प्रवर्तकं प्रमाणं विधिस्तदभावे कर्मस्विव विदुषो ज्ञाननिष्ठायामपि प्रवृत्तेरनुपपत्तेराश्रयणीयो ज्ञानवतोऽपि विधिरिति शङ्कते—तत्रापीति । किमात्मज्ञानं विधिमपेक्षते किं वात्मा । नाद्यः । तस्य स्वरूपविषयस्य यथा प्रमाणप्रमेयमुत्पत्तेर्विध्यनपेक्षत्वादित्याह—न स्वात्मेति । न द्वितीय इत्याह—नहीति । प्रवर्तकप्रमाणशब्दितस्य विधेः साध्यविषयत्वा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रतदृक्शक्तिरेवास्ते । तथाच श्रुतिः 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इति । यस्यामविद्याख्यायां निशायां क्रियाकारकादिद्वैतस्वप्नप्रवर्तिकायां सर्वाणि भूतानि जाग्रति निशीथे उलूका इव स्वस्वव्यापारे प्रवर्तन्ते सा अविद्या पश्यतो मुनेः आत्मदर्शनवतो योगिनः प्रारब्धकर्मणा विदेहकैवल्यप्रतिबन्धाल्लेशतोऽनुवर्तमाना व्युत्थानकाले व्यवहारतोऽस्य गाढान्धकारवती निशेव क्लेशकरी भवति । अतिसुकुमारा हि योगिनो बाह्यव्यवहारादुद्विजन्ते

४ मधुसूदनीव्याख्या ।

इति । तथाच यस्य विपरीतदर्शनं तस्य न वस्तुदर्शनं विपरीतदर्शनस्य वस्त्वदर्शनजन्यत्वात्, यस्य च वस्तुदर्शनं तस्य न विपरीतदर्शनं विपरीतदर्शनकारणस्य वस्त्वदर्शनस्य वस्तुदर्शनेन बाधितत्वात् । तथाच श्रुतिः 'यत्र वा अन्यदिव स्यात्

५ भाष्योत्कर्षदीपिका ।

संयमी स्थितप्रज्ञो ज्ञानयोगी जागर्ति, यस्यां ग्राह्यग्राहकलक्षणायामविद्यायां भूतानि जाग्रति सा पश्यतो मुनेर्निशेव निशेत्यर्थः

६ श्रीधरीव्याख्या ।

प्रबुध्यन्ते सा आत्मतत्त्वं पश्यतो मुनेर्निशा । तस्यां दर्शनादिव्यापारस्तस्य नास्तीत्यर्थः । एतदुक्तं भवति । यथा दिवान्धानामुलूकादीनां

७ अभिनवगुप्ताचार्यव्याख्या ।

चेष्टां कुरुते सा मुने रात्रिः यतोऽसौ व्यवहारं प्रत्यबुद्धः । एतदुक्तं भवति । येयं माया खलु तस्या मोहकत्वे नामरूपं सुखतन्तुताभासनं च तत्र लोकः प्राच्यं स्वरूपमस्या अपरामृश्यैव द्वितीयस्मिन्रूपे निबद्धस्मृतिरास्ते । योगी तु तद्विपरीतस्तदीयं मोहकत्वं तदुन्मूलनाय

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥ ७० ॥

१ श्रीमच्छांकरभाष्यम् ।

प्रवर्तकप्रमाणापेक्षतात्मत्वादेव तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य । नह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारः संभवति, प्रमातृत्वं ह्यात्मनो निवर्तयत्यन्तं प्रमाणं निवर्तयदेव चाप्रमाणीभवति स्वप्नकालप्रमाणमिव । प्रबोधे लोके च वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात्प्रमाणस्य । तस्मान्नात्मविदः कर्मण्यधिकार इति सिद्धम् ॥ ६९ ॥ विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिर्न त्वसंन्यासिनः कामकामिन इत्येतमर्थं दृष्टान्तेन प्रतिपादयिष्यन्नाह—आपूर्येति । आपूर्यमाणमद्भिर-

२ आनन्दगिरिव्याख्या ।

दात्मनश्चासाध्यत्वादिति हेतुमाह—आत्मत्वादेवेति । आत्मतज्ज्ञानयोर्विध्यनपेक्षत्वेऽपि ज्ञानिनो मानमेव व्यवहारं प्रति नियमार्थं विध्यपेक्षा स्यादित्याशङ्क्याह—तदन्तत्वाच्चेति । सर्वेषां प्रमाणानां प्रामाण्यस्यात्मज्ञानोदयावसानत्वात्तस्मिन्नुत्पन्ने व्यवहारस्य निरवकाशत्वान्न तत्प्रति नियमाय ज्ञानिनो विधिरित्यर्थः । उक्तमेव व्यक्तीकरोति—नहीति । धर्माधिगमवदात्माधिगमेऽपि किमिति यथोक्तो व्यवहारो न भवतीत्याशङ्क्याह—प्रमातृत्वंहीति । तन्निवृत्तौ कथमद्वैतज्ञानस्य प्रामाण्यमित्याशङ्क्याह—निवर्तयदेवेति । निवर्तयदद्वैतज्ञानं स्वयं निवृत्तेर्न प्रमाणमित्यत्र दृष्टान्तमाह—स्वप्नेति । आत्मज्ञानस्य विध्यनपेक्षत्वे हेत्वन्तरमाह—लोके चेति । व्यवहारभूमौ हि प्रमाणस्य वस्तुनिश्चयफलपर्यन्तत्वे सति प्रवर्तकविधिसापेक्षत्वानुपलम्भादद्वैतज्ञानमपि प्रमाणवान्न विधिमपेक्षते रज्ज्वादिज्ञानवदित्यर्थः । आत्मज्ञानवतस्तन्निष्ठाविधिमन्तरेण ज्ञानमाहात्म्येनैव सिद्धत्वात्तस्य कर्मसंन्यासेऽधिकारो न कर्मणीत्युपसंहरति—तस्मादिति ॥ ६९ ॥ नन्वसंन्यासिनापि विद्यावतां विद्याफलस्य मोक्षस्य लब्धुं शक्यत्वात्किमिति विदुषः संन्यासो नियम्यते—तत्राह—विदुष इति । आपातज्ञानवतो विवेकवैराग्यादिविशिष्टस्यैषणाभ्यः सर्वाभ्योऽभ्युत्थितस्य श्रवणा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नरा इव गाढान्धकारे संचारात् । यथोक्तं योगभाष्ये 'अक्षिमात्रकल्पो हि विद्वानल्पल्पदुःखलेशेनाप्युद्विजते' इति । अत्र वार्तिकानि 'कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते । शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिस्तथा । काकोलूकनिशेवायं संसारोऽज्ञात्मवेदिनोः । या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः ॥' इति । 'बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् । बुद्धतत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत् ॥' इति । तदेवं किमासीतेत्यस्योत्तरं 'यदा संहरते चायम्' इत्यादिना एतदन्तेन ग्रन्थेन स्थितप्रज्ञः तदा समाधिमनुतिष्ठन्परमां गतिं प्राप्यास्त इत्युक्तम् ॥ ६९ ॥ ननु 'प्रजहाति यदा कामान्', 'इन्द्रियाणीन्द्रियार्थेभ्यो निगृहीतानि' इत्यादिनाऽसकृद्विषयाणां प्रहाणं तेभ्यश्च इन्द्रियादीनां प्रत्याहरणमुक्तम् । तेन तेषामात्मनः पृथक्सत्त्वमस्तीति सिद्धम् । नच 'नेह नानास्ति किंचन' इत्यादिश्रुत्या तेषां बाधान्न तदस्तीति वाच्यम् । इहेति प्रतीच्येव तन्निषेधात् । नहि इह भूतले घटो नास्तीत्युक्ते घटस्य स्वरूपं निषिध्यते किंतु तस्य भूतलसंबन्धमात्रम् । तस्मात्कामानां पृथक्सत्त्वमस्त्यतो नाद्वैतसिद्धिरित्याशङ्क्य सदृष्टान्तं परिहरति—आपूर्यमाणमिति । प्रविशन्तीभिरद्भिरापूर्यमाणमपि अचलप्रतिष्ठमनुद्रिक्तम् । वृद्धिहीनत्वात् ।

४ मधुसूदनीव्याख्या ।

तत्रान्योऽन्यत्पश्येत् । यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ॥' इति विद्याविद्ययोर्व्यवस्थामाह । यथा काकस्य रात्र्यन्धस्य दिनमुलूकस्य दिवान्धस्य निशा, रात्रौ पश्यतश्चोलूकस्य यद्दिनं रात्रिरेव सा काकस्येति महदाश्चर्यमेतत् । अतस्तत्त्वदर्शिनः कथमाविद्यकक्रियाकारकादिव्यवहारः स्यादिति स्वतःसिद्ध एव तस्येन्द्रियसंयम इत्यर्थः ॥ ६९ ॥ एतादृशस्य स्थितप्रज्ञस्य सर्वविक्षेपशान्तिरप्यर्थसिद्धेति सदृष्टान्तमाह—सर्वाभिर्नदीभिरापूर्यमाणं सन्तं वृष्ट्यादिप्रभवा अपि सर्वा अपि नद्यः समुद्रं प्रवि-

५ भाष्योत्कर्षदीपिका ।

॥ ६९ ॥ एतादृशस्यैव मोक्षप्राप्तिर्न कामिन इति सदृष्टान्तमाह—आपूर्यमाणमिति । अद्भिरापूर्यमाणमचलप्रतिष्ठमनतिक्रान्त-

६ श्रीधरीव्याख्या ।

रात्रावेव दर्शनं न तु दिवसे, एवं ब्रह्मज्ञस्योन्मीलिताक्षस्यापि ब्रह्मण्येव दृष्टिर्नतु विषयेषु । अतो नासंभावितमिदं लक्षणमिति ॥ ६९ ॥ ननु विषयेषु दृष्ट्यभावे कथमसौ तान्भुङ्क्ते इत्यपेक्षायामाह—आपूर्यमाणमिति । नानानदीभिरापूर्यमाणमपि अचलप्रतिष्ठमनति-

७ अभिनवगुप्ताचार्यव्याख्या ।

पश्यति । सुखतन्तुना च नाश्रीयते । पश्यन्सम्यग्ज्ञानी मिथ्याज्ञानोपघाताच्च सुखतन्तुतानादरः पश्यत एव सा रात्रिरिति चित्रम् । विद्यायां वा बुध्यते योगी यत्र सर्वो विमूढः, अविद्यायां त्वबुद्धो यत्र जनः प्रबुद्ध इत्यपि चित्रम् ॥ ६९ ॥ अतएव आपूर्यमाणेति । योगी न

१ श्रीमच्छांकरभाष्यम् ।

**चलप्रतिष्ठमचलतया प्रतिष्ठावस्थितिर्यस्य तमचलप्रतिष्ठं समुद्रमापः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्तद्वत्कामा विषयसंनिधावपि सर्वत इच्छाविशेषा यं समुद्रमिवापो विकुर्वन्तः प्रविशन्ति सर्वे आत्मन्येव प्रलीयन्ते न स्वात्मवशं कुर्वन्ति स शान्तिं मोक्षं प्राप्नोति नेतरः कामकामी काम्यन्त इति कामा विषयास्तान्कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः**

२ आनन्दगिरिव्याख्या ।

दिद्वारा समुत्पन्नसाक्षात्कारवतो मुख्यस्य संन्यासिनो मोक्षो नान्यस्य विषयतृष्णापरिभूतस्येत्येतद्दृष्टान्तेन प्रतिपादयितुमिच्छन् 'रागद्वेषवियुक्तैस्तु' इति श्लोकोक्तमेवार्थं पुनराहेति योजना । अद्भिः समुद्रस्य समन्तात्पूर्यमाणत्वे वृद्धिह्रासवती तदीया स्थितिरापतेदित्याशङ्क्याह—**अचलेति** । नहि समुद्रस्योदकात्मकं प्रतिनियतं रूपं कदाचिद्विवर्धते ह्रसते वा, तेन तदीया स्थितिरेकरूपैवेत्यर्थः । तत्तन्नादेयाश्चेदापः समुद्रान्तर्गच्छन्ति तर्हि तस्य विक्रियावत्त्वादप्रतिष्ठा स्यादित्याशङ्क्याह—**स्वात्मस्थमिति** । इच्छाविशेषा विषयाणामसंनिधौ विदुषि निर्विकारे प्रविशन्तोऽपि संनिधाने तस्मिन्प्रविशन्तो विकारमापादयेयुरित्याशङ्क्याह—**विषयेति** । प्रवेशं विशदयति—**सर्वत इति** । **योऽकाम इत्यादि** । श्रुतेर्विषयविमुखस्य निष्कामस्य मोक्षो न कामकामुकस्येत्याह—**स शान्तिमिति** ॥ ७० ॥ यदि गृह-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एवं निर्गच्छन्तीभिरद्भिः रिच्यमानमप्यचलप्रतिष्ठमरिक्तं ह्रासहीनत्वादित्यपि बोध्यम् । एवंविधं समुद्रं यद्वत् आत्मप्रभवा आपः प्रविशन्ति तद्वत् यं पुरुषं कामैरापूर्यमाणं हीयमानं वा अचलप्रतिष्ठं निर्विकारं वृद्धिह्रासहीनत्वात् आत्मप्रभवाः सर्वे कामाः प्रविशन्ति, स एव शान्तिं मोक्षं आत्यन्तिकं दुःखोपरमं प्राप्नोति नतु कामकामी विषयार्थी । अयं भावः—कूटस्थादात्मनः सर्वस्योत्पत्तिस्तत्रैव च लय इति सर्वश्रुतिस्मृतिप्रसिद्धम् । तेन कामानां प्रहाणं तेभ्यश्चेन्द्रियाणां प्रत्याहरणं स्मर्यमाणं न तेषां परमार्थतः पृथक्सत्त्वं साधयति । बहुप्रमाणविरोधात् किंतु पामरप्रसिद्धं पृथक्सत्त्वमभिप्रेत्य प्रहाणादिकमुक्तं, प्रविलापनं त्वेवमेव व्याख्येयम् । यथा 'अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इत्यादौ निर्वपतिना याग उच्यते नतु श्रौतार्थमात्रं तद्वदिहापि ज्ञेयम् । 'नेह नानास्ति' इत्यपीह परिदृश्यमाने प्रपञ्चे आत्मातिरिक्तं नाना किमपि नास्तीत्येवंपरतया व्याख्येयम् । तथाच 'आत्मैवेदं सर्वं', 'ब्रह्मैवेदं सर्वं', 'सर्वं खल्विदं ब्रह्म' इत्यादयः श्रुतिवादाः संगच्छन्ते । आत्मनि कल्पितस्यास्य तत्रैव निषेधेनान्यत्र सत्त्वानुपपत्तेर्न

४ मधुसूदनीव्याख्या ।

शन्ति । कीदृशम् । अचलप्रतिष्ठमनतिक्रान्तमर्यादं, अचलानां मैनाकादीनां प्रतिष्ठा यस्मिन्निति वा गाम्भीर्यातिशय उक्तः । यद्वद्येन प्रकारेण निर्विकारत्वेन तद्वत्तेनैव निर्विकारत्वप्रकारेण यं स्थितप्रज्ञं निर्विकारमेव सन्तं कामा अज्ञैर्लोकैः काम्यमानाः शब्दाद्याः सर्वे विषया अवर्जनीयतया प्रारब्धकर्मवशात्प्रविशन्ति नतु तच्चित्तं विकर्तुं शक्नुवन्ति स महासमुद्रस्थानीयः स्थितप्रज्ञः शान्तिं सर्वलौकिकालौकिककर्मविक्षेपनिवृत्तिं बाधितानुवृत्ताविद्याकार्यनिवृत्तिं चाप्नोति ज्ञानबलेन । न कामकामी कामान्विषयान्कामयितुं शीलं यस्य स कामकाम्यज्ञः शान्तिं व्याख्यातां नाप्नोति, अपितु सर्वदा लौकिकालौकिककर्मविक्षेपेण

५ भाष्योत्कर्षदीपिका ।

मर्यादं अचलानां मैनाकादीनां प्रतिष्ठा यस्मिंस्तम् । एतेन गाम्भीर्यातिशय उक्त इत्यर्थस्तु भाष्यकृद्भिर्न कृतः । अनतिक्रान्तमर्यादत्वस्यैवात्र विवक्षितत्वात् । मैनाकादेरिन्द्रवज्रभयात्समुद्रे तिरोभूय स्थितस्य सपक्षत्वेन तस्मिन्नचलशब्दप्रवृत्तौ कारणाभावाच्च । समुद्रमापः काश्चित्सकण्टकाः काश्चित्सपुष्पाः सर्वतोगताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्तद्वत्सर्वे कामाः लोकैः काम्यमाना विषयाः यं स्थितप्रज्ञं अचलाऽप्रकम्पा प्रतिष्ठा यस्य, अचले ब्रह्मणि प्रतिष्ठा यस्येति वा प्रविशन्ति । सर्वे आत्मन्येव लीयन्ते । नह्यात्मवशं कुर्वन्ति सः शान्तिं मोक्षाभिधां प्राप्नोति । कामान्विषयान्कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः । यैस्त्वन्ये प्रजहातीत्यादिग्रन्थेन कामादित्यागेन्द्रियनिग्रहकथनपरेण कामादीनां पृथक्त्वमुक्तम्, अतो नाद्वैतसिद्धिरित्याशङ्क्य सदृष्टान्तं परिहरति । प्रविशन्तीभिरद्भिरापूर्यमाणमचलप्रतिष्ठं समुद्रं यद्वदापः प्रविशन्ति तद्वद्यं पुरुषं कामैरापूर्यमाणं हीयमानं वाचलप्रतिष्ठं निर्विकारं वृद्धिह्रासहीनत्वात् । आत्मप्रभवाः सर्वे कामाः प्रविशन्ति स शान्तिमाप्नोति । नतु कामकामी काम्यन्त इति कामा विषयास्तान्कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः । अयं भावः—पूर्वग्रन्थेन कामादीनां पृथक्सत्त्वं न प्रतिपाद्यते

६ श्रीधरीव्याख्या ।

क्रान्तमर्यादमेव समुद्रं पुनरप्यन्या आपो यथा प्रविशन्ति । तथा कामा विषया यं मुनिमन्तर्दृष्टिं भोगैरविक्रियमाणमेव प्रारब्धकर्मभि-

७ अभिनवगुप्ताचार्यव्याख्या ।

कामार्थं बहिर्धावति अपितु इन्द्रियधर्मतया विषयाननुप्रविशन्तो नतरां यान्ति नदीवेगा इवोदधिम् । एवं तृतीयो निर्णीतः ॥ ७० ॥

१ मधुसूदनः. २ नीलकण्ठः.

**विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।**
**निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

॥ ७० ॥ यस्मादेवं तस्मात् विहायेति । विहाय परित्यज्य कामान् यः संन्यासी सर्वानशेषतः कार्त्स्न्येन चरति । जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः । निःस्पृहः शरीरजीवनमात्रेऽपि निर्गता स्पृहा यस्य स निःस्पृहः सन् निर्मम इति ममत्ववर्जितः शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेत्यभिनिवेशवर्जितः निरहंकारो विद्यावत्त्वादिनिमित्तात्मसंभावनारहित इत्यर्थः । स एवंभूतः स्थितप्रज्ञो ब्रह्मविच्छान्तिं सर्वसंसारदुःखोपरमत्वलक्षणां निर्वाणाख्यामधिगच्छति प्राप्नोति । ब्रह्मभूतो भवतीत्यर्थः ॥ ७१ ॥

२ आनन्दगिरिव्याख्या ।

स्वेनापि मनसा समस्ताभिमानं हित्वा कूटस्थं ब्रह्मात्मानं परिभावयता ब्रह्मनिर्वाणमाप्यते प्राप्तं तर्हि मौढ्यादिविडम्बनमेवेत्याशङ्क्याह—**यस्मादिति** । शब्दादिविषयप्रवणस्य तत्तदिच्छाभेदमानिनो न मुक्तिरिति व्यतिरेकस्य सिद्धत्वात् पूर्वोक्तमन्वयं निगमयितुमनन्तरं वाक्यमित्यर्थः । अशेषविषयत्यागे जीवनमपि कथमित्याशङ्क्याह—**जीवनेति** । संभवद्रागद्वेषादिके देशे निवासव्यावृत्त्यर्थं चरतीत्येतद्व्याचष्टे—**पर्यटतीति** । विहाय कामानित्यनेन पुनरुक्तिं परिहरति—**शरीरेति** । निःस्पृहत्वमुक्त्वा निर्ममत्वं पुनर्वदन् कथं पुनरुक्तिमार्थिकीं न पश्यसीत्याशङ्क्याह—**शरीरजीवनेति** । सत्यहंकारे ममकारस्यावश्यकत्वान्निरहंकारत्वं व्याकरोति—**विद्यावत्त्वादीति** । स शान्तिमाप्नोतीत्युक्तमुपसंहरति—**स एवंभूत इति** । संन्यासिनो मोक्षमपेक्षमाणस्य सर्वकामपरित्यागादीनि श्लोकोक्तानि विशे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कामानां पृथक्सत्त्वमस्तीति युक्त एव समुद्रदृष्टान्तः । यत्तु समुद्रात्पृथग्गङ्गायाः सत्त्वमस्तीति । तन्न । कार्ये कारणसत्तातिरिक्तसत्ताया अभावात् । 'वाचारम्भणं विकारो नामधेयम्' इति कार्यस्य वागालम्बनमात्रत्वश्रवणादित्यन्यत्र विस्तरः ॥ ७० ॥ प्रासङ्गिकीमाशङ्कां परिहृत्य व्रजेत किमित्यस्य प्रश्नस्योत्तरमाह—**विहायेति** । पूर्वोक्तांस्त्रिविधान्कामान्विहाय यः चरति विषयान्भुङ्क्ते निस्पृहश्च । यतो निर्ममः । ममतावान्हि इदं मम भूयादित्यन्यधनाद्यर्थं स्पृहां करोति न निर्ममोऽपि । कुतः, यतो निरहंकारः । नह्यहंकारशून्यस्य सुप्त्यादौ ममता दृष्टा । तस्मादहंकारप्रविलयाच्छान्तिं मोक्षं प्राप्नोति । अत्र 'यः सर्वत्रानभिस्नेह' इति सर्वत्र यच्छब्ददर्शनात्साधनविधिपर एवायं ग्रन्थः । अन्यथा स्थितप्रज्ञस्य प्रकृतत्वात्तदनुवादार्थो यच्छब्दोऽनर्थकः प्राप्नोति । लोकेऽपि हि परस्वभावकथने स एवं करोतीति तच्छब्द एव प्रयुज्यते नतु यच्छब्दः । विधौ तु य एवं करोति स इदं प्राप्नोतीति द्वयोरपि प्रयोगो दृश्यते ।

४ मधुसूदनीव्याख्या ।

महति शोकार्णवे मग्नो भवतीति वाक्यार्थः । एतेन ज्ञानिन एव फलभूतो विद्वत्संन्यासस्तस्यैव च सर्वविक्षेपनिवृत्तिरूपा जीवन्मुक्तिर्दैवाधीनविषयभोगेऽपि निर्विकारतेत्यादिकमुक्तं वेदितव्यम् ॥ ७० ॥ यस्मादेवं तस्मात्प्राप्तानपि सर्वान्बाह्यान्गृहक्षेत्रादीन् आन्तरान्मनोराज्यरूपान्वासनामात्ररूपांश्च पथि गच्छतस्तृणस्पर्शरूपान्कामांस्त्रिविधान्विहायोपेक्ष्य शरीरजीवनमात्रेऽपि निःस्पृहः सन् । यतो निरहंकारः शरीरेन्द्रियादावयमहमित्यभिमानशून्यः, विद्यावत्त्वादिनिमित्तात्मसंभावनारहित इति वा । अतो निर्ममः शरीरयात्रामात्रार्थेऽपि प्रारब्धकर्माक्षिप्ते कौपीनाच्छादनादौ ममेदमित्यभिमानवर्जितः सन् यः पुमांश्चरति प्रारब्धकर्मवशेन भोगान्भुङ्क्ते, यादृच्छिकतया यत्र क्वापि गच्छतीति वा । स एवंभूतः स्थितप्रज्ञः शान्तिं सर्वसंसारदुःखोपरमलक्षणामविद्यातत्कार्यनिवृत्तिमधिगच्छति ज्ञानबलेन प्राप्नोति, तदेतदीदृशं व्रजनं स्थितप्रज्ञस्येति चतुर्थप्रश्नस्योत्तरं परिसमाप्तम्

५ भाष्योत्कर्षदीपिका ।

किंतु पामरसिद्धं पृथक्सत्त्वमभिप्रेत्य प्रहाणादिकमुच्यते इत्यादि वर्णयन्ति तदुपेक्ष्यम् । प्रकरणविरोधात्, यत्पदेन पूर्वोत्तरं बहुभ्यस्तस्यात्रापि यमिति श्रूयमाणस्य मोक्षाधिकारिणस्त्यागायोगात्, 'स शान्तिमाप्नोति न कामकामी' इति वाक्यशेषविरोधाच्चेति दिक् ॥ ७० ॥ चतुर्थप्रश्नस्योत्तरमुपसंहरति—**विहायेति** । यस्मादेवं तस्माद्विहाय कामान्सर्वान्यः स्थितप्रज्ञः शरीरजीवनमात्रेऽपि निःस्पृहः अतएव शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्यभिनिवेशरहितः निरहंकारः विद्यावत्त्वादिनिमित्तात्मसंभावनावर्जितः । ननु देहाभिमानरहित इत्याचार्यैः कुतो न व्याख्यातमिति चेदुक्ताहंभावेऽस्यान्तर्भावविवक्षयेत्यदोषः । चरति पर्यटति स शान्तिम-

६ श्रीधरीव्याख्या ।

राक्षिप्ताः सन्तः प्रविशन्ति स शान्तिं कैवल्यं प्राप्नोति नतु कामकामी भोगकामनाशीलः ॥ ७० ॥ यस्मादेवं तस्मात्—**विहायेति** । प्राप्तान्कामान्विहाय त्यक्त्वोपेक्ष्य, अप्राप्तेषु च निःस्पृहः यतो निरहंकारः अतएव तद्भोगसाधनेषु निर्ममः सन्नन्तर्दृष्टिर्भूत्वा यश्चरति

१ मधुसूदनः.

**एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।**
**स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

१ श्रीमच्छांकरभाष्यम् ।

**सैषा ज्ञाननिष्ठा स्तूयते—एषा ब्राह्मीति । एषा यथोक्ता ब्राह्मी ब्रह्मणि भवेयं स्थितिः सर्वकर्म संन्यस्य ब्रह्मरूपेणैवावस्थानमित्येतद् हे पार्थ, नैनां स्थितिं प्राप्य लब्धा विमुह्यति न मोहं प्राप्नोति । स्थित्वा-**

२ आनन्दगिरिव्याख्या ।

षणानि यत्नसाध्यानि तत्संमतिफलं तु कैवल्यमित्यर्थः ॥ ७१ ॥ तत्र तत्र संक्षेपविस्तराभ्यां प्रदर्शितां ज्ञाननिष्ठामधिकारिप्रवृत्त्यर्थत्वेन स्तोतुमुत्तरश्लोकमवतारयति—**सैषेति** । गृहस्थः संन्यासीत्युभावपि चेन्मुक्तिभोगिनौ किं तर्हि कष्टेन सर्वथैव संन्यासेनेत्याशङ्क्य संन्यासिव्यतिरिक्तानामन्तरायसंभवादपेक्षितः संन्यासो मुमुक्षोरित्याह—**एषेति** । स्थितिमेव व्याचष्टे—**सर्वमिति** । न विमुह्यतीति पुनर्नञोऽनुकर्षणमन्वयार्थं संन्यासिनो विमोहाभावेऽपि गृहस्थो धनहान्यादिनिमित्तं प्रायेण विमुह्यति । विक्षिप्तः सन्परमार्थविवेकरहितो भवतीत्यर्थः । यथोक्ता ब्राह्मी स्थितिः सर्वकर्मसंन्यासपूर्विका ब्रह्मनिष्ठा, तस्यां स्थित्वा तामिमामायुषश्चतुर्थेऽपि भागे कृत्वेत्यर्थः । अपिशब्दसूचितं कैमुतिकन्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

लक्षणकथनार्थत्वेऽपि तत्र तात्पर्याभावाद्विधावेव पर्यवस्यतीति दिक् ॥ ७१ ॥ प्रतिपादितां कर्मयोगप्राप्यां सांख्ययोगनिष्ठां फलेन स्तुवन्नुपसंहरति—**एषेति** । एषा स्थितप्रज्ञलक्षणप्रसङ्गात्कथिता ब्राह्मी । ब्रह्मशब्देनात्र ब्रह्मविदुच्यते । 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुतेः । तस्येयं ब्राह्मी स्थितिर्निष्ठा, एनां निष्ठां प्राप्य नरो न विमुह्यति पुनर्मोहं न प्राप्नोति । अस्यामन्तकालेऽपि स्थित्वेति सकृज्जातापीयं फलवती नतूपासनावच्चिराभ्याससापेक्षेत्युक्तम् । ब्रह्म ऋच्छति प्राप्नोति । किं लोकान्तरवद्गतिप्राप्यं ब्रह्म, नेत्याह—**निर्वाणमिति** । निर्गतं वानं गमनं यस्मिन्प्राप्ये ब्रह्मणि तन्निर्वाणम् । तथाच श्रुतिः 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति' इति । गतिमन्तरेण प्राणरूपोपाधिप्रविलयमात्राद्घटाकाशस्य महाकाशत्वप्राप्तिवत् जीवस्य ब्रह्मप्राप्तिमाह । अन्तकालेऽपीत्यपि-

४ मधुसूदनीव्याख्या ।

॥ ७१ ॥ तदेवं चतुर्णां प्रश्नानामुत्तरव्याजेन सर्वाणि स्थितप्रज्ञलक्षणानि मुमुक्षुकर्तव्यतया कथितानि, संप्रति कर्मयोगफलभूतां सांख्यनिष्ठां फलेन स्तुवन्नुपसंहरति—एषा स्थितप्रज्ञलक्षणव्याजेन कथिता, 'एषा तेऽभिहिता सांख्ये बुद्धिः' इति च प्रागुक्ता स्थितिर्निष्ठा सर्वकर्मसंन्यासपूर्वकपरमात्मज्ञानलक्षणा ब्राह्मी ब्रह्मविषया । हे पार्थ, एनां स्थितिं प्राप्य यः कश्चिदपि पुनर्न विमुह्यति । नहि ज्ञानबाधितस्याज्ञानस्य पुनः संभवोऽस्ति अनादित्वेनोत्पत्त्यसंभवात् । अस्यां स्थितावन्तकालेऽप्यन्त्येऽपि वयसि स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वाणं निर्वृतिं, ब्रह्मरूपं निर्वाणमिति वा, ऋच्छति गच्छत्यभेदेन । किमु वक्तव्यं यो

५ भाष्योत्कर्षदीपिका ।

विद्यातत्कार्योपरमरूपां निर्वाणाभिधामधिगच्छति प्राप्नोति ॥ ७० ॥ ज्ञाननिष्ठां स्तुवन्नुपसंहरति—**एषेति** । एषा यथोक्ता ब्रह्मणि भवा स्थितिः । सर्वं परित्यज्य ब्रह्मरूपेणैवावस्थानमिति यावत् । 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुत्या ब्रह्मशब्देनात्र ब्रह्मविद्गृह्यत इति व्याख्यानं त्वाचार्यैर्न कृतं मुख्यार्थेन वाक्यार्थनिर्वाहेऽमुख्यार्थस्यानौचित्यात् । एनां स्थितिं लब्ध्वा न विमुह्यति मोहं न प्राप्नोति । अस्यां ब्राह्म्यां स्थितावन्तकाले वृद्धावस्थायामपि स्थित्वा ब्रह्मणि निर्वृतिं मोक्षमृच्छति गच्छति, किं वक्तव्यं प्रथमावस्थात आरभ्य ब्रह्मण्येव योऽवतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति । अन्तकाले मृत्युसमये इत्यर्थस्तु न, तस्मिन्काले एतादृशस्थित्यसंभवात् । ननु तदा विवशस्य स्मरणोद्यमः संभवतीति । यंयं वापीति श्लोकस्थस्वोक्तिविरोधाच्च ब्रह्मणि निर्वाणमिति भाष्यस्योपलक्षणत्वेन ब्रह्मरूपं निर्वाणमित्यर्थोऽप्यविरुद्धः । निर्गतं वानं गमनं यस्मिन्नित्यर्थोऽपि तवाप्ययं शोकमोहाभिभूतत्वरूपः स्वभावो नोचितः किंतु जीवन्मुक्तस्वभाव एवेति सूचयन्नाह—**पार्थेति** । यद्वा मत्संबन्धिनस्तव मयि ब्रह्मण्येवावस्थानं युक्तमिति सूचयन्नाह—**पार्थेति** ।

६ श्रीधरीव्याख्या ।

प्रारब्धवशेन भोगान्भुङ्क्ते यत्र क्वापि गच्छति वा स शान्तिमाप्नोति ॥ ७१ ॥ उक्तां ज्ञाननिष्ठां स्तुवन्नुपसंहरति—**एषेति** ।

७ अभिनवगुप्ताचार्यव्याख्या ।

विहायेति । स योगी सर्वकामसंन्यासित्वाच्छान्तिरूपं मोक्षमेति ॥७१॥ एषेति । एषासौ ब्रह्मसत्ता । यस्यां क्षणमात्रं स्थित्वाऽवस्थितिं प्राप्य

१ नीलकण्ठः, २ श्रीधरी, ३ मधुसूदनः, ४ नीलकण्ठः,

१ श्रीमच्छांकरभाष्यम् ।

**स्यां स्थितौ ब्राह्म्यां यथोक्तायामन्तकालेऽन्ते वयस्यपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षमृच्छति, किमु वक्तव्यं ब्रह्मचर्यादेव संन्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति ॥ ७२ ॥ इति श्रीमच्छंकरभगवतः कृतौ गीताभाष्ये द्वितीयोऽध्यायः ॥ २ ॥**

---

२ आनन्दगिरिव्याख्या ।

यमाह—**किमु वक्तव्यमिति** । तदेवं तत्त्वंपदार्थौ तदैक्यं वाक्यार्थस्तज्ज्ञानादेकाकिनो मुक्तिस्तदुपायश्चेत्येतेषामेकैकत्रश्लोके प्राधान्येन प्रदर्शितमिति निष्ठाद्वयमुपायोपेयभूतमध्यायेन सिद्धम् ॥ ७२ ॥ इति परमहंसश्रीमदानन्दगिरिकृतटीकायां द्वितीयोऽध्यायः ॥ २ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शब्दाद्यो ब्रह्मचर्यादारभ्यात्र तिष्ठति स ब्रह्मनिर्वाणं कैमुतिकन्यायेन प्राप्नोतीति गम्यते । अस्याध्यायस्यार्थः संगृहीतो मधुसूदनश्रीपादैः 'ज्ञानं तत्साधनं कर्म सत्त्वशुद्धिश्च तत्फलम् । तत्फलं ज्ञाननिष्ठैवेत्यध्यायेऽस्मिन्प्रकीर्तितम्' ॥ ७२ ॥ इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणचतुर्धरवंशावतंसश्रीगोविन्दसूरिसूनोर्नीलकण्ठस्य कृतौ भगवद्गीताप्रकाशे द्वितीयोऽध्यायः ॥ २ ॥

४ मधुसूदनीव्याख्या ।

ब्रह्मचर्यादेव संन्यस्य यावज्जीवमस्यां ब्राह्म्यां स्थितावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीत्यपिशब्दार्थः ॥ ७२ ॥ ज्ञानं तत्साधनं कर्म सत्त्वशुद्धिश्च तत्फलम् । तत्फलं ज्ञाननिष्ठैवेत्यध्यायेऽस्मिन्प्रकीर्तितम् ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां सर्वगीतार्थसूत्रणं नाम द्वितीयोऽध्यायः॥२॥

५ भाष्योत्कर्षदीपिका ।

तदनेन द्वितीयाध्यायेन तत्पदलक्ष्यं परमात्मानमेव त्वंपदलक्ष्यत्वेन प्रतिपादयता साक्षाच्छोकमोहनिवृत्तिहेतुभूतां ज्ञाननिष्ठां लक्षणसहितां प्राधान्येन तदुपायभूतां योगनिष्ठां च गुणभावेन प्रदर्शयता उपायोपेयभूतं निष्ठाद्वयं प्रकाशितम् ॥ ७२ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥

६ श्रीधरीव्याख्या ।

ब्राह्मीस्थितिर्ब्रह्मज्ञाननिष्ठा एषा एवंविधा । एनां परमेश्वराराधनेन शुद्धान्तःकरणः पुमान् प्राप्य न विमुह्यति पुनः संसारमोहं न प्राप्नोति । यतः अन्तकाले मृत्युसमयेऽप्यस्यां क्षणमात्रमपि स्थित्वा ब्रह्मणि निर्वाणं लयमृच्छति प्राप्नोति, किं पुनर्वक्तव्यं बाल्यमारभ्य स्थित्वा प्राप्नोतीति ॥ ७२ ॥ शोकपङ्कनिमग्नं यः सांख्ययोगोपदेशतः । उज्जहारार्जुनं भक्तं स कृष्णः शरणं मम ॥ १ ॥ इति श्रीमद्भगवद्गीतासुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां द्वितीयोऽध्यायः ॥ २ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

शरीरभेदात्परमं ब्रह्माप्नोतीति प्रश्नचतुष्टयं निर्णीतमिति शिवम् । अत्रार्थे संग्रहः । अहो नु चेतसश्चित्रा गतिर्योगेन यत्किल । आरोहत्येव विषयाञ्छ्रयंस्तामपरित्यजेत् ॥ ७२ ॥ इति महामाहेश्वराचार्याभिनवगुप्तविरचिते गीतार्थसंग्रहे द्वितीयोऽध्यायः ॥ २ ॥



# तृतीयोऽध्यायः।

अर्जुन उवाच।

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन।
तत्किं कर्मणि घोरे मां नियोजयसि केशव॥ १॥

१ श्रीमच्छांकरभाष्यम्।

शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्ये बुद्धिर्योगे बुद्धिरिति च। तत्र 'प्रजहाति यदा कामान्' इत्यारभ्याध्यायपरिसमाप्तेः सांख्यबुद्ध्याश्रितानां संन्यासं कर्तव्यमुक्त्वा तेषां तन्निष्ठतयैव च कृतार्थतोक्ता 'एषा ब्राह्मी स्थिति'रिति। अर्जुनाय च 'कर्मण्येवाधिकारस्ते', 'मा ते सङ्गोऽस्त्वकर्मणि' इति कर्मैव कर्तव्यमुक्तवान् योगबुद्धिमाश्रित्य, न तत एव श्रेयःप्राप्तिमुक्तवान्, तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच। कथं भक्ताय श्रेयोर्थिने यत् साक्षाच्छ्रेयःसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारंपर्येणाप्यनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्यादिति युक्तः पर्याकुलीभावोऽर्जुनस्य, तदनुरूपश्च प्रश्नो 'ज्यायसी चेत्' इत्यादिः। प्रश्नापा-

२ आनन्दगिरिव्याख्या।

पूर्वोत्तराध्याययोः संबन्धं वक्तुं पूर्वस्मिन्नध्याये वृत्तमर्थं संक्षिप्यानुवदति—**शास्त्रस्येति**। गीताशास्त्रप्रारम्भापेक्षितं हेतुफलभूतं बुद्धिद्वयं भगवतोपदिष्टमित्यर्थः। प्रष्टुरर्जुनस्याभिप्रायं निर्देष्टुं प्रवृत्तमर्थान्तरमनुवदति—**तत्रेति**। अध्यायो बुद्धिद्वयनिर्धारणं वा सप्तम्यर्थः, पारमार्थिके तत्त्वे यज्ज्ञानं तन्निष्ठानामशेषकामत्यागिनां कामयुक्तानां कर्मिणामपि प्रतिपत्तिकर्मवत्त्यागं कर्तव्यत्वेन भगवानुक्तवानित्यर्थः। तथापि मोक्षसाधने विकल्पसमुच्चययोरन्यतरस्य विवक्षितत्वबुद्ध्या समनन्तरप्रश्नप्रवृत्तिरित्याशङ्क्याह—**उक्तेति**। अर्जुनस्य मनसि व्याकुलत्वं प्रश्नबीजं दर्शयितुमुक्तमर्थान्तरमनुभाषते—**अर्जुनाय चेति**। सांख्यबुद्धिमाश्रित्य कर्मत्यागमुक्त्वा पुनस्तस्यैव कर्तव्यत्वं कथं मिथो विरुद्धं ब्रवीतीत्याशङ्क्याह—**योगेति**। यथा सांख्यबुद्धिमाश्रितानां संन्यासद्वारा तन्निष्ठानां कृतार्थतोक्ता तथा योगबुद्धिमाश्रित्य कर्म कुर्वतोऽपि कृतार्थत्वमुक्तमित्याशङ्क्याह—**न तत एवेति**। दूरेण ह्यवरं कर्म बुद्धियोगादिति दर्शनादिति शेषः। बुद्धिव्याकुलत्वं प्रश्नबीजं प्रतिलभ्य प्रश्नं करोतीत्याह—**तदेतदिति**। साक्षादेव श्रेयःसाधनं ज्ञानमन्येभ्यो दर्शितं तदित्युच्यते, तद्विपरीतं कर्म स्वस्यानुष्ठेयत्वेनोक्तमेतदिति निर्दिश्यते, भगवदुक्तेऽर्थे संदिह्यमानस्य निर्णयाकाङ्क्षया प्रश्नप्रवृत्तेरस्ति पूर्वोत्तराध्याययोरुत्थाप्योत्थापकलक्षणा संगतिरित्यर्थः। अर्जुनस्य प्रश्ननिमित्तं पर्याकुलत्वं प्रपञ्चयति—**कथमित्यादिना**। यद्धि साक्षादेव श्रेयःसाधनं सांख्यशब्दितपरमार्थतत्त्वविषयबुद्धौ निष्ठारूपं तदन्यस्मै श्रेयोर्थिने भक्ताय श्रावयित्वा मां पुनरभक्तमश्रेयोर्थिनमिव कर्मणि पूर्वोक्तविपरीते कथं भगवान्नियोक्तुमर्हतीत्यर्जुनस्य पर्याकुलीभावो युक्त इति संबन्धः ज्ञाननिष्ठातो वैपरीत्यं स्फोरयितुं कर्म विशिनष्टि—**दृष्टेति**। युद्धे हि क्षत्रकर्मणि दृष्टोऽनेकोऽनर्थो गुरुभ्रातृहिंसादिस्तेन संबद्धे बुद्धिशुद्धिद्वारापि वर्तमाने जन्मन्येव फलमित्यनियते मम भक्तस्य श्रेयोर्थिनो नियोगो भगवता युक्तो न भवतीति शेषः। यथोक्तं निमित्तं प्रश्नस्य युक्तं तदनुगुणत्वात्तस्येति द्योतकमाह—**तदनुरूपश्चेति**। ज्ञाननिष्ठानां कृतार्थता कर्मनिष्ठानां तु न तथेत्युक्त-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

पूर्वस्मिन्नध्याये 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति द्वे बुद्धी प्रदर्श्य 'व्यवसायात्मिका बुद्धिः'

४ मधुसूदनीव्याख्या।

एवं तावत्प्रथमेनाध्यायेनोपोद्घातितो द्वितीयेनाध्यायेन कृत्स्नः शास्त्रार्थः सूत्रितः। तथाहि आदौ निष्कामकर्मनिष्ठा ततोऽन्तःकरणशुद्धिः ततः शमदमादिसाधनपुरःसरः सर्वकर्मसंन्यासः ततो वेदान्तवाक्यविचारसहिता भगवद्भक्तिनिष्ठा ततस्तत्त्वज्ञाननिष्ठा तस्याः फलं च त्रिगुणात्मकाविद्यानिवृत्त्या जीवन्मुक्तिः प्रारब्धकर्मफलभोगपर्यन्तं तदन्ते च विदेहमुक्तिः। जीवन्मुक्तिदशायां च परमपुरुषार्थालम्बनेन परवैराग्यप्राप्तिर्दैवसंपदाख्या च शुभवासना तदुपकारिण्यादेया। आसुरसंपदाख्या-

५ भाष्योत्कर्षदीपिका।

पूर्वाध्याये उपायोपेयभूते कर्मनिष्ठा ज्ञाननिष्ठा चेति द्वे निष्ठे प्रोक्ते, तत्र प्रजहातीत्यादिना एषा ब्राह्मीत्यन्तेन ज्ञाननिष्ठात्युत्तमेत्य-

६ श्रीधरीव्याख्या।

एवं तावत् 'अशोच्यानन्वशोचस्त्वम्' इत्यादिना प्रथमं मोक्षसाधनत्वेन देहात्मविवेकबुद्धिरुक्ता। तदनन्तरं 'एषा तेऽभिहिता सांख्ये

१ श्रीमच्छांकरभाष्यम् ।

करणवाक्यं च भगवतोक्तं यथोक्तविभागविषये शास्त्रे । केचित्त्वर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति, यथा चात्मना संबन्धग्रन्थे गीतार्थो निरूपितस्तत्प्रतिकूलं चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति । कथं, तत्र संबन्धग्रन्थे तावत् सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तं पुनर्विशेषितं च यावज्जीवं श्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिषिद्धमिति । इह त्वाश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः, तत् कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान्, श्रोता वा कथं विरुद्धमर्थमवधारयेत् । तत्रैतत् स्याद्गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यते नत्वाश्रमान्तराणामित्येतदपि पूर्वोत्तरविरुद्धमेव । कथं,

२ आनन्दगिरिव्याख्या ।

विभागभागि शास्त्रमित्यत्र लोकेऽस्मिन्नित्यादिवाक्यस्यापि द्योतकत्वं दर्शयति—**प्रश्नेति** । साक्षादेव श्रेयःसाधनमन्येभ्यो भगवतोक्तं नतु मह्यमिति मत्वा व्याकुलीभूतः सन् पृच्छतीति स्वाभिप्रायेण संबन्धमुक्त्वा वृत्तिकाराभिप्रायं दूषयति—**केचित्त्विति** । ज्ञानकर्मणोः समुच्चयमवधारयितुं प्रश्नाङ्गीकारे समुच्चयावधारणेनैव प्रतिवचनमुचितं नच तथा भगवता प्रतिवचनमुक्तं, तथाच प्रश्नस्य समुच्चयविषयत्वोपगमात्प्रत्युक्तेश्चासमुच्चयविषयत्वात्तयोर्मिथो विरोधो वृत्तिकारमते स्यादित्यर्थः । किंच केवलं प्रश्नप्रतिवचनयोरेव परमते परस्परविरोधो न भवत्यपितु परेषां स्वग्रन्थेऽपि पूर्वापरविरोधोऽस्तीत्याह—**यथाचेति** । आत्मना वृत्तिकारैरिति यावत्, संबन्धग्रन्थो गीताशास्त्रारम्भोपोद्घातः । **इहेति** । तृतीयाध्यायारम्भं परामृशति । तदेव विवृण्वन्नाकाङ्क्षामाह—**कथमिति** । पूर्वापरविरोधं स्फोरयितुं संबन्धग्रन्थोक्तमनुवदति—**तत्रेति** । परकीया वृत्तिः सप्तम्या समुल्लिख्यते, संबन्धग्रन्थे तावदयमर्थ उक्त इति संबन्धः । तमेवार्थं विशदयति—**सर्वेषामिति** । सर्वकर्मसंन्यासपूर्वकज्ञानादेव केवलात्कैवल्यमित्यस्मिन्नर्थे शास्त्रस्य पर्यवसानान्न समुच्चयो विवक्षितस्तत्रेत्याशङ्क्याह—**पुनरिति** । उक्तगीतार्थो वृत्तिकारैरेव कर्मत्यागायोगेन विशेषितत्वान्नाविवक्षितोऽलं भवितुमुत्सहते, तथाच श्रौतानि कर्माणि त्यक्त्वा ज्ञानादेव केवलान्मुक्तिर्भवतीत्येतन्मतं नियमेनैव यावज्जीवश्रुतिभिर्विप्रतिषिद्धत्वान्नाभ्युपगन्तुमुचितमित्यर्थः । तथापि कथं मिथो विरोधधीरित्याशङ्क्याह—**इह त्विति** । प्रथमतो हि संबन्धग्रन्थे समुच्चयो गीतार्थप्रतिपाद्यत्वेन वृत्तिकृता प्रतिज्ञातः । श्रौतकर्मपरित्यागश्च श्रुतिविरोधादेव न संभवतीत्युक्तं, तृतीयाध्यायारम्भे पुनः संन्यासिनां ज्ञाननिष्ठा कर्मिणां कर्मनिष्ठेत्याश्रमविभागमभिदधता पूर्वप्रतिषिद्धकर्मत्यागाभ्युपगमान्मिथो विरोधो दर्शितः स्यादित्यर्थः । ननु यथा भगवता प्रतिपादितं तथैव वृत्तिकृता व्याख्यातमिति न तस्यापराधोऽस्तीत्याशङ्क्याह—**तत्कथमिति** । नहीह भगवान्विरुद्धमर्थमभिधत्ते सर्वज्ञस्य परमाप्तस्य विरुद्धार्थवादित्वायोगात् किंतु तदभिप्रायापरिज्ञानादेव व्याख्यातुर्विरुद्धार्थवादितेत्यर्थः । भगवतो विरुद्धार्थवादित्वाभावेऽपि श्रोतुर्विरुद्धार्थप्रतिपत्तिं प्रतीत्य व्याचक्षाणो वृत्तिकारो नापराध्यतीत्याशङ्क्याह—**श्रोता वेति** । अर्जुनो हि श्रोता । सोऽपि बुद्धिपूर्वकारी भगवदुक्तमेवावधारयन्न विरुद्धमर्थमवधारयितुमर्हति, तथाच परस्यैव विरुद्धार्थवादितेत्यर्थः । विरोधं परिहरन्नाशङ्कते—**तत्रेति** । संबन्धग्रन्थे हि वृत्तिकारस्यैतदभिप्रेतं गृहस्थानामेव सतां परिपक्वज्ञानमन्तरेण यावजीवश्रुतिचोदिताग्निहोत्रादित्यागेन केवलादेवापातिकादात्मज्ञानान्मोक्षमवेक्ष्यमाणानां यावजीवादिशास्त्रैरसौ निषिध्यते नतु स्वरूपेणैव कर्मत्यागो ज्ञानान्मोक्षो वा निषेद्धुमिष्यते । तृतीये पुनरध्याये कर्मत्यागिनां गृहस्थेभ्यो व्यतिरिक्तानामेव केवलादात्मज्ञानान्मोक्षो विवक्ष्यतेऽतो भिन्नविषयत्वान्निषेधाभ्यनुज्ञानयोर्न विरोधाशङ्केत्यर्थः । विधान्तरेण विरोधं दर्शयन्नुत्तरमाह—**एतदपीति** । विरोधमेवाकाङ्क्षा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इति श्लोकेन सांख्यनिष्ठावतां पातशङ्का नास्ति कर्मयोगनिष्ठावतां तु सास्तीत्युक्त्वा 'यावानर्थ उदपाने' इति सांख्य-

४ मधुसूदनीव्याख्या ।

त्वशुभवासना तद्विरोधिनी हेया । दैवसंपदोऽसाधारणं कारणं सात्त्विकी श्रद्धा । आसुरसंपदस्तु राजसी तामसी चेति हेयोपादेयविभागेन कृत्स्नशास्त्रार्थपरिसमाप्तिः । तत्र 'योगस्थः कुरु कर्माणि' इत्यादिना सूत्रिता सत्त्वशुद्धिसाधनभूता निष्कामकर्मनिष्ठा सामान्यविशेषरूपेण तृतीयचतुर्थाभ्यां प्रपञ्च्यते । ततः शुद्धान्तःकरणस्य शमदमादिसाधनसंपत्तिपुरःसरा 'विहाय कामान्यः सर्वान्' इत्यादिना सूत्रिता सर्वकर्मसंन्यासनिष्ठा संक्षेपविस्तररूपेण पञ्चमषष्ठाभ्याम् । एतावता च त्वंपदार्थोऽपि निरूपितः । ततो वेदान्तवाक्यविचारसहिता 'युक्त आसीत मत्परः' इत्यादिना सूत्रितानेकप्रकारा भगवद्भक्तिनिष्ठाऽध्यायषट्केन प्रति-

६ श्रीधरीव्याख्या ।

बुद्धियोगे त्विमां शृणु' इत्यादिना कर्म चोक्तम् । नच तयोर्गुणप्रधानभावः स्पष्टं दर्शितः । तत्र बुद्धियुक्तस्य स्थितप्रज्ञस्य निष्कामत्व-

१ श्रीमच्छांकरभाष्यम् ।

सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञायेह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयादाश्रमान्तराणाम् । अथ मतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानाच्छ्रौतकर्मरहिताद्गृहस्थानां मोक्षः प्रतिषिध्यत इति, तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलादित्युच्यत इति एतदपि विरुद्धम्, कथं गृहस्थस्यैव स्मार्तकर्मणा समुच्चिताज्ज्ञानान्मोक्षः प्रतिषिध्यते नत्वाश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुम् । किंच यदि मोक्षसाधनत्वेन स्मार्तानि कर्माण्यूर्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापीष्यतां स्मार्तैरेव समुच्चयो न श्रौतैः । अथ श्रौतैः स्मार्तैश्च गृहस्थस्यैव समुच्चयो मोक्षायोर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानान्मोक्ष इति, तत्रैवं सति गृहस्थस्यायासबाहुल्याच्छ्रौतं स्मार्तं च बहुदुःखरूपं कर्म शिरस्यारोपितं स्यात् । अथ गृहस्थस्यैवायासबाहुल्यकारणान्मोक्षः स्यान्नाश्रमान्तराणां श्रौतनित्यकर्मरहितत्वादिति, तदप्यसत्, सर्वोपनिषत्स्वितिहासपुराणयोगशास्त्रेषु च ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसंन्यासविधानादाश्रमविकल्पसमुच्चयविधानाच्च श्रुतिस्मृत्योः सिद्धस्तर्हि सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयः । न,

२ आनन्दगिरिव्याख्या ।

द्वारा साधयति—कथमित्यादिना । श्रौतं कर्म गृहस्थानामवश्यमनुष्ठेयमित्यनेनाभिप्रायेण तेषां केवलादात्मज्ञानान्मोक्षो निषिध्यते नतु गृहस्थानां ज्ञानमात्रायत्तं मोक्षं प्रतिषिध्यान्येषां केवलज्ञानाधीनो मोक्षो विवक्ष्यत आश्रमान्तराणामपि स्मार्तेन कर्मणा समुच्चयाभ्युपगमादिति चोदयति—अथेति । एतत्परामृष्टं वचनमेवाभिनयति—केवलादिति । ननु गृहस्थानां श्रौतकर्मराहित्येऽपि सति स्मार्ते कर्मणि कुतो ज्ञानस्य केवलत्वं लभ्यते येन निषेधोक्तिरर्थवती तत्राह—तत्रेति । प्रकृतवचनमेव सप्तम्यर्थः, प्रधानं हि श्रौतं कर्म तद्राहित्ये सति स्मार्तस्य कर्मणः सतोऽप्यसद्भावमभिप्रेत्य ज्ञानस्य केवलत्वमुक्तमिति युक्ता निषेधोक्तिरित्यर्थः । गृहस्थानामेव श्रौतकर्मसमुच्चयो नान्येषाम्, अन्येषां तु स्मार्तेनेति पक्षपाते हेत्वभावं मन्वानः सन् परिहरति—एतदपीति । तमेव हेत्वभावं प्रश्नद्वारा विवृणोति—कथमित्यादिना । गृहस्थानां श्रौतस्मार्तकर्मसमुच्चितं ज्ञानं मुक्तिहेतुरित्यभ्युपगमात्केवलस्मार्तकर्मसमुच्चितात्ततो न मुक्तिरिति निषेधो युज्यते, ऊर्ध्वरेतसां तु स्मार्तकर्ममात्रसमुच्चिताज्ज्ञानान्मुक्तिरिति विभागे नास्ति हेतुरित्यर्थः । पक्षपाते कारणं नास्तीत्युक्त्वा पक्षपातपरित्यागे कारणमस्तीत्याह—किंचेति । गृहस्थानामपि ब्रह्मज्ञानं स्मार्तैरेव कर्मभिः समुच्चितं मोक्षसाधनं ब्रह्मज्ञानत्वादूर्ध्वरेतःसु व्यवस्थितब्रह्मज्ञानवदिति पक्षपातत्यागे हेतुं स्फुटयति—यदीत्यादिना । यदि गृहस्थानां ब्रह्मज्ञानं स्मार्तैरेव कर्मभिः समुच्चितं मोक्षहेतुरिति विवक्षितं तदा तान्प्रति यावज्जीवश्रुतिर्विरुध्येत, यदि स्मार्तैरपि कर्मभिः समुच्चितं तदीयं ज्ञानं मोक्षसाधनं विवक्ष्यते तदा सिद्धसाध्यतेति प्रागुक्तमभिप्रेत्य चोदयति—अथेति । आश्रमान्तराणां तर्हि केवलादेव ज्ञानान्मुक्तिरिति प्रागुक्तविरोधतादवस्थ्यमित्याशङ्क्याह—ऊर्ध्वरेतसां त्विति । यथोक्ते विभागे गार्हस्थ्यं क्लेशात्मकं कर्म बाहुल्यादनुपादेयमापद्येतेति दूषयति—तत्रेति । साधनभूयस्त्वे फलभूयस्त्वमिति न्यायमाश्रित्य शङ्कते—अथेति । क्लेशबाहुल्योपेतं श्रौतं स्मार्तं च बहु कर्म तस्यानुष्ठानाद्गृहस्थस्य मोक्षः स्यादेवेत्यर्थः । एवकारनिरस्यं दर्शयति—नाश्रमान्तराणामिति । तेषां नास्ति मुक्तिरित्यत्र यावजीवादिश्रुतिविहितावश्यानुष्ठेयकर्मराहित्यं हेतुं सूचयति—श्रौतेति । शास्त्रविरोधिन्यायस्य निरवकाशत्वमभिप्रेत्य दूषयति—तदपीति । ऐकाश्रम्यस्मृत्या गार्हस्थ्यस्यैव प्राधान्यादनधिकृतान्धादिविषयं कर्मसंन्यासविधानमित्याशङ्क्याह—ज्ञानाङ्गत्वेनेति । न खल्वनधिकृतानामन्धादीनां संन्यासः श्रवणाद्यावृत्तिद्वारा ज्ञानाङ्गं भवितुमलं तेषां श्रवणाद्यभ्याससामर्थ्यात् । अतः श्रुत्यादीनां विरोधे नास्ति गार्हस्थ्यस्य प्राधान्यमित्यर्थः । तस्य प्राधान्याभावे हेत्वन्तरमाह—आश्रमेति । 'ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' इति श्रुतौ तस्याश्रमविकल्पमेके ब्रुवत इति 'यमिच्छेत्तमावसेत्' इत्यादिस्मृतौ चाश्रमाणां समुच्चयेन विकल्पेन चाश्रमान्तरमिच्छन्तं प्रति विधानान्न गार्हस्थ्यस्य प्रधानत्वमित्यर्थः । यदि सर्वेषामाश्रमाणां श्रुतिस्मृतिमूलत्वं तर्हि तत्तदाश्रमविहितकर्मणां ज्ञानेन समुच्चयः सिध्यतीति शङ्कते—सिद्धस्तर्हीति । यद्यपि ज्ञानोत्पत्तावाश्रमकर्मणां

४ मधुसूदनीव्याख्या ।

पाद्यते । तावता च तत्पदार्थोऽपि निरूपितः । प्रत्यध्यायं चावान्तरसङ्गतिमवान्तरप्रयोजनभेदं च तत्र तत्र प्रदर्शयिष्यामः । ततस्तत्त्वंपदार्थैक्यज्ञानरूपा 'वेदाविनाशिनं नित्यम्' इत्यादिना सूत्रिता तत्त्वज्ञाननिष्ठा त्रयोदशे प्रकृतिपुरुषविवेकद्वारा प्रपञ्चिता । ज्ञाननिष्ठायाश्च फलं 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इत्यादिना सूत्रितम् । त्रैगुण्यनिवृत्तिश्चतुर्दशे सैव

६ श्रीधरीव्याख्या ।

नियतेन्द्रियत्वनिरहंकारत्वाद्यभिधानात् 'एषा ब्राह्मी स्थितिः पार्थ' इति सप्रशंसमुपसंहाराच्च बुद्धिकर्मणोर्मध्ये बुद्धेः श्रैष्ठ्यं भगवतोऽभिमतं

१ श्रीमच्छांकरभाष्यम्।

मुमुक्षोः सर्वकर्मसंन्यासविधानात्। 'व्युत्थायाथ भिक्षाचर्यं चरन्ति तस्मात् संन्यासमेषां तपसामतिरिक्तमाहुः। न्यास एवात्यरेचयत्' इति 'न कर्मणा न प्रजया धनेन त्यागेनैके ऽमृतत्वमानशुः' इति च। 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्याद्याः श्रुतयः, 'त्यज धर्ममधर्मं च उभे सत्यानृते त्यज। उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज', 'संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः' इति बृहस्पतिः। 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इति शुकानुशासनम्। इहापि च 'सर्वकर्माणि मनसा संन्यस्ये'त्यादि, मोक्षस्य चाकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम्। नित्यानि प्रत्यवायपरिहारार्थमनुष्ठेयानीति चेत्, न, असंन्यासिविषयत्वात् प्रत्यवायप्राप्तेः। नह्यग्निकार्याद्यकरणात्संन्यासिनः प्रत्यवायः कल्पयितुं शक्यो यथा ब्रह्मचारिणामसंन्यासिनामपि कर्मिणाम्। न तावन्नित्यानां कर्मणामभावादेव भावरूपस्य प्रत्यवाय-

२ आनन्दगिरिव्याख्या।

साधनत्वं तथापि ज्ञानमुत्पन्नं नैव फले सहकारित्वेन तान्यपेक्षतेऽन्यथा संन्यासविध्यनुपपत्तेरिति दूषयति—**न मुमुक्षोरिति**। संन्यासविधानमेवानुक्रामति—**व्युत्थायेत्यादिना**। एषणाभ्यो वैमुख्येनोत्थानं तत्परित्यागः। आश्रमसंपत्त्यनन्तरं तत्र विहितधर्मकलापानुष्ठानमपि कर्तव्यमित्याह—**अथेति**। प्रागुक्तानां सत्यादीनामल्पफलत्वाभ्यासस्य च ज्ञानद्वारा मोक्षफलत्वादित्याह—**तस्मादिति**। अतिरिक्तमतिशयवन्तं महाफलमिति यावत्। प्रकृतकर्मभ्यः सकाशान्न्यास एवातिशयवानासीदित्युक्तेऽर्थे वाक्यान्तरं पठति—**न्यास एवेति**। लोकत्रयहेतुं साधनत्रयं परित्यज्य संसाराद्विरक्ताः संन्यासपूर्वकादात्मज्ञानादेव प्राप्तवन्तो मोक्षमित्याह—**न कर्मणेति**। सति वैराग्ये नास्ति कर्मापेक्षा सत्यां सामग्र्यां कार्यापेक्षानुपपत्तेरित्याह—**ब्रह्मचर्यादेवेति**। इत्याद्याः सर्वकर्मसंन्यासविधायिन्यः श्रुतयो भवन्तीति शेषः। आत्मानमेव लोकमिच्छन्तः प्रव्रजन्तीत्यादिवाक्यसंग्रहार्थमादिपदम्। तत्रैव स्मृतिमुदाहरति—**त्यजेति**। धर्माधर्मयोः सत्यानृतयोश्च संसारारम्भकत्वान्मुमुक्षुणा तत्त्यागे प्रयतितव्यमित्यर्थः। त्यक्तस्याभिमानस्यापि तत्त्वतः स्वरूपसंबन्धाभावात्त्याज्यत्वमविशिष्टमित्याह—**येनेति**। अनुभवानुसारेण प्रमातृताप्रमुखस्य संसारस्य दुःखफलत्वमालक्ष्य मोक्षहेतुसम्यग्ज्ञानसिद्धये ब्रह्मचर्यादेव पारिव्राज्यमनुष्ठेयमित्युत्पत्तिविधिमुपन्यस्यति—**संसारमिति**। तत्त्वज्ञानमुद्दिश्य ब्रह्मचर्यादेव कर्मसंन्याससामग्रीमभिदधानो विनियोगविधिं सूचयति—**परमिति**। ज्ञानकर्मणोरसमुच्चयार्थे फलविभागं कथयति—**कर्मणेति**। उक्तं फलविभागमनूद्य ज्ञाननिष्ठानां कर्मसंन्यासस्य कर्तव्यत्वमाह—**तस्मादिति**। वाक्यशेषेऽपि सर्वकर्मसंन्यासो विवक्षितोऽस्तीत्याह—**इहापीति**। ज्ञानार्थिनो मुमुक्षोः संन्यासविध्यनुपपत्तिबाधितं समुच्चयविधिवचनमित्युक्तमिदानीं मोक्षस्वभावालोचनयापि समुच्चयवचनमनुचितमित्याह—**मोक्षस्य चेति**। 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन्। प्रसंजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति' इति स्मृतेः। मुमुक्षुणापि प्रत्यवायनिवृत्तये कर्तव्यं नित्यकर्मेति शङ्कते—**नित्यानीति**। यो यस्मिन्कर्मण्यधिकृतस्तस्य तदकरणात्प्रत्यवायो भवति न तु कर्मानधिकारिणः संन्यासिनस्तदकरणात्प्रत्यवायः संभवतीति दूषयति—**नासंन्यासीति**। तदेव स्पष्टयति—**नहीति**। समिद्धोमाध्ययनाद्यकरणात्प्रत्यवायः संन्यासिनो नास्तीत्यर्थः। तत्र व्यतिरेकोदाहरणमाह—**यथेति**। अकरणात्प्रत्यवायोत्पत्तिमभ्युपेत्योक्तं, संप्रति प्रतिषिद्धकरणादेव प्रत्यवायो न त्वकरणादभावाद्भावोत्पत्तेर्लौकिकवेदविरुद्धत्वादित्याह—**न तावदिति**।

४ मधुसूदनीव्याख्या।

जीवन्मुक्तिरिति गुणातीतलक्षणकथनेन प्रपञ्चिता। 'तदा गन्तासि निर्वेदम्' इत्यादिना सूत्रिता परवैराग्यनिष्ठा संसारवृक्षच्छेदद्वारा पञ्चदशे। 'दुःखेष्वनुद्विग्नमना' इत्यादिना स्थितप्रज्ञलक्षणेन सूत्रिता परवैराग्योपकारिणी दैवी संपदादेया। 'यामिमां पुष्पितां वाचम्' इत्यादिना सूत्रिता तद्विरोधिन्यासुरी संपच्च हेया षोडशे। दैवसंपदोऽसाधारणं कारणं च सात्त्विकी श्रद्धा 'निर्द्वन्द्वो नित्यसत्त्वस्थः' इत्यादिना सूत्रिता तद्विरोधपरिहारेण सप्तदशे। एवं सफला ज्ञाननिष्ठा अध्यायपञ्चकेन प्रतिपादिता। अष्टादशेन च पूर्वोक्तसर्वोपसंहार इति कृत्स्नगीतार्थसङ्गतिः। तत्र पूर्वाध्याये सांख्यबुद्धिमाश्रित्य ज्ञाननिष्ठा भगवतोक्ता 'एषा तेऽभिहिता सांख्ये बुद्धिः' इति। तथा योगबुद्धिमाश्रित्य कर्मनिष्ठोक्ता 'योगे त्विमां शृणु' इत्यारभ्य 'कर्मण्येवाधिकारस्ते···मा ते सङ्गोऽस्त्वकर्मणि' इत्यन्तेन। न चानयोर्निष्ठयोरधिकारिभेदः स्पष्टमुपदिष्टो भगवता। नचैकाधिकारिकत्वमुभयोः समुच्चयस्य विवक्षितत्वादिति वाच्यम्। 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय' इति कर्मनिष्ठायाः बुद्धिनिष्ठापेक्षया निकृष्टत्वाभिधानात् 'यावानर्थ उदपाने' इत्यत्र च ज्ञानफले सर्वकर्मफलान्तर्भावस्य दर्शितत्वात्। स्थितप्रज्ञलक्षणमुक्त्वा च 'एषा ब्राह्मी स्थितिः

५ भाष्योत्कर्षदीपिका।

भिहितं तदेव श्रुत्वार्जुनः फलभूतायां ज्ञाननिष्ठायामप्युत्कण्ठितः स्वस्यापि चित्तशुद्धिपुरःसरं ज्ञानाधिकारं मन्यमान उवाच—

१ 'परमात्मनि यो रक्तो यो रक्तोऽपरमात्मनि। सर्वैषणाविनिर्मुक्तः स भैक्ष्यं भोक्तुमर्हति'.

१ श्रीमच्छांकरभाष्यम् ।

स्योत्पत्तिः कल्पयितुं शक्या युक्ता च । 'कथमसतः सज्जायेत' इत्यसतः सज्जन्मासंभवश्रुतेः; यदि विहिताकरणादसंभाव्यमपि प्रत्यवायं ब्रूयाद्वेदस्तदानर्थकरो वेदोऽप्रमाणमित्युक्तं स्यात्, विहितस्य करणाकरणयोर्दुःखमात्रफलत्वात्। तथाच कारकं शास्त्रं न ज्ञापकमित्यनुपपन्नार्थं कल्पितं स्यात् । नचैतदिष्टम्। तस्मान्न संन्यासिनां कर्माण्यतो ज्ञानकर्मणोः समुच्चयानुपपत्तिः, 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिः' इत्यर्जुनस्य प्रश्नानुपपत्तेश्च । यदि हि भगवता द्वितीयेऽध्याये ज्ञानं कर्म च समुच्चयेन त्वयानुष्ठेयमित्युक्तं स्यात् ततोऽर्जुनस्य प्रश्नोऽनुपपन्नो 'ज्यायसी चेत् कर्मणस्ते मता बुद्धि'रिति । अर्जुनाय चेत् बुद्धिकर्मणी त्वयानुष्ठेये इत्युक्ते या कर्मणो ज्यायसी बुद्धिः साप्युक्तैवेति 'तत् किं कर्मणि घोरे मां नियोजयसि केशव' इति प्रश्नो न कथंचनोपपद्यते । न चार्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्तं पूर्वमिति कल्पयितुं युक्तं येन 'ज्यायसी चे'दिति प्रश्नः स्याद्, यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधाद्युगपदनुष्ठानं न संभवतीति भिन्नपुरुषानुष्ठेयत्वं भगवता पूर्वमुक्तं स्यात् ततोऽयं प्रश्न उपपन्नो ज्यायसी चेदित्यादिः । अविवेकतः प्रश्नकल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन

२ आनन्दगिरिव्याख्या ।

ननु नित्यकर्मविधायी वेदस्तदकरणात्प्रत्यवायो भवतीति ब्रवीति तत्कथमकरणात्प्रत्यवायो न भवतीति श्रुतिमाश्रित्योच्यते श्रुत्यन्तरविरोधादिति तत्राह—**यदीति** । विहितस्याकरणे सत्यनर्थप्राप्तेर्न नित्यकर्मविधायी वेदोऽनर्थकरत्वेनाप्रमाणमित्याशङ्क्याह—**विहितस्येति** । न विहितस्य करणे पितृलोकप्राप्तिलक्षणं फलं भवतेष्यते धूमादिना नयनपीडादिदुःखं तु प्रत्यक्षमेवाकरणे च प्रत्यवायोत्पत्तिरुभयथापि पुरुषस्यानर्थकरो वेदोऽप्रमाणमेव स्यादित्यर्थः । नन्वभावस्यापि भावोत्पादनसामर्थ्यं वेदः संपादयिष्यति तथाच विहिताकरणप्रत्यवायपरिहारो विहितकरणे फलिष्यतीति नेत्याह—**तथाचेति** । लोकप्रसिद्धपदार्थशक्त्याश्रयणेन शास्त्रप्रवृत्त्यङ्गीकारादपूर्वशक्त्याधानायोगाज्ज्ञापकमेव शास्त्रमित्यर्थः । कारकत्वे च तस्याप्रामाण्यमप्रत्यूहं स्यादित्याह—**कारकमिति** । भवतु शास्त्रस्याप्रामाण्यमित्याशङ्क्यापौरुषेयतया शेषदोषानागन्धितत्वान्मैवमित्याह—**नचेति** । अनिर्वाच्यानुपलम्भस्य संवेदनमभावज्ञाने कारणं समीहितसाधनज्ञानं तु चरणन्यासादि प्रवृत्तिकारणमित्यङ्गीकृत्योपसंहरति—**तस्मादिति** । अकरणात्प्रत्यवायोत्पत्त्यसंभवस्तच्छब्दार्थः । संन्यासिनां ज्ञाननिष्ठानां कर्मसंन्यासित्वादेव कर्मासंभवे फलितमाह—**अत इति** । समुच्चयानुपपत्तौ हेत्वन्तरमाह—**ज्यायसीति** । प्रश्नानुपपत्तिमेव प्रपञ्चयति—**यदि हीति** । समुच्चयोपदेशे प्रश्नैकदेशानुपपत्तेश्च न तदुपदेशोपपत्तिरित्याह—**अर्जुनायेति** । 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इत्यर्जुनं प्रत्युपदेशात्तं प्रति ज्यायसी बुद्धिर्नोक्तेति युक्तं तत्किमित्याद्युपालम्भवचनमित्याशङ्क्याह—**नचेति** । येन कल्पनेन ज्यायसी चेदित्यारभ्य तत्किं कर्मणीत्युपालम्भात्मा प्रश्नः स्यात्तथा न युक्तं कल्पयितुम् । 'एषा तेऽभिहिता सांख्ये बुद्धिः' इति वचनविरोधादिति योजना । कस्मिन्पक्षे तर्हि प्रश्नस्योपपत्तिरित्याशङ्क्याह—**यदीति** । भगवदुक्तेऽर्थे प्रष्टुर्विवेकाभावात् प्रश्नः स्यादित्याशङ्क्य पूर्वोक्तमेवाधिकं विवक्षया स्मारयति—**अविवेकत इति** । भगवतोऽपि प्रतिवचनमज्ञाननिमित्तं प्रश्नाननुरूपत्वादित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

निष्ठायां सर्वकर्मफलान्तर्भावश्रवणात्तामेव प्रशमात्मिकां स्वाशयानुकूलां मन्वानोऽर्जुन उवाच—**ज्यायसीति** । हे

४ मधुसूदनीव्याख्या ।

पार्थ' इति सप्रशंसं ज्ञानफलोपसंहारात् 'या निशा सर्वभूतानाम्' इत्यादौ ज्ञानिनो द्वैतदर्शनाभावेन कर्मानुष्ठानासंभवस्य वोक्तत्वात् अविद्यानिवृत्तिलक्षणे मोक्षफले ज्ञानमात्रस्यैव लोकानुसारेण साधनत्वकल्पनात्—'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेश्च । ननु तर्हि तेजस्तिमिरयोरिव विरोधिनोर्ज्ञानकर्मणोः समुच्चयासंभवाद्भिन्नाधिकारिकत्वमेवास्तु, सत्यमेवं न संभवति, एकमर्जुनंप्रति तूभयोपदेशो न युक्तः । नहि कर्माधिकारिणंप्रति ज्ञाननिष्ठोपदेष्टुमुचिता, नवा ज्ञानाधिकारिणंप्रति कर्मनिष्ठा । एकमेव प्रति विकल्पेनोभयोपदेश इति चेन्न । उत्कृष्टनिकृष्टयोर्विकल्पानुपपत्तेः, अविद्यानिवृत्त्युपलक्षितात्मस्वरूपे मोक्षे तारतम्यासंभवाच्च । तस्माज्ज्ञानकर्मनिष्ठयोर्भिन्नाधिकारिकत्वे एकं प्रत्युपदेशायोगादेकाधिकारिकत्वे च विरुद्धयोः समुच्चयासंभवात् कर्मापेक्षया ज्ञानप्राशस्त्यानुपपत्तेश्च विकल्पाभ्युपगमे चोत्कृष्टमनायाससाध्यं ज्ञानं विहाय निकृष्टमनेकायासबहुलं कर्मानुष्ठातुमयोग्यमिति मत्वा पर्याकुलमतिरर्जुन उवाच—हे जनार्दन, सर्वैर्जनैरर्द्यते याच्यते स्वाभि-

५ भाष्योत्कर्षदीपिका ।

**ज्यायसीति** । जनान्देवविपक्षभूतानर्दयति पीडयतीति जनार्दनः तं संबोधयन् ममासुरत्वाभावाद्घोरे कर्मणि प्रेरणेन पीडादातृत्वं

६ श्रीधरीव्याख्या ।

मन्वानोऽर्जुन उवाच—**ज्यायसी चेदिति** । कर्मणः सकाशान्मोक्षान्तरङ्गत्वेन बुद्धिर्ज्यायस्यधिकतरा श्रेष्ठा चेत्तव संमता तर्हि किमर्थं

१ श्रीमच्छांकरभाष्यम् ।

भगवतः प्रतिवचनं नोपपद्यते । नचाज्ञाननिमित्तं भगवत्प्रतिवचनं कल्प्यम् । अस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचनदर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः । तस्मात्केवलादेव ज्ञानान्मोक्ष इत्येषोऽर्थो निश्चितो गीतासु सर्वोपनिषत्सु च । ज्ञानकर्मणोरेकं वद निश्चित्येति चैकविषयैव प्रार्थनानुपपन्नोभयोः समुच्चयसंभवे । कुरु कर्मैव तस्मात्त्वमिति च ज्ञाननिष्ठासंभवमर्जुनस्यावधारणेन दर्शयिष्यति—ज्यायसी चेदिति । ज्यायसी श्रेयसी चेद्यदि कर्मणः सकाशात्ते तव मताभिप्रेता बुद्धिर्ज्ञानं हे जनार्दन, यदि बुद्धिकर्मणी समुच्चिते इष्टे तदैकं श्रेयःसाधनमिति कर्मणो ज्यायसी बुद्धिरिति कर्मणोऽतिरिक्तकरणं बुद्धेरनुपपन्नमर्जुनेन कृतं स्यान्न हि तदेव तस्मात् फलतोऽतिरिक्तं स्यात् । तथाच कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिरश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयति तत् किं नु कारणमिति भगवत उपालम्भमिव कुर्वन् तत् किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशवेति च यदाह तच्च नोपपद्यते ॥ १ ॥ अथ स्मार्तेनैव कर्मणा समुच्चयः सर्वेषां भगवतोक्तोऽर्जुनेन चावधारितश्चेत् तत्किं कर्मणि घोरे मां नियोजयसीत्यादि

२ आनन्दगिरिव्याख्या ।

शङ्काधिकं दर्शयति—**नचेति** । भगवतः सर्वज्ञत्वप्रसिद्धिविरोधादज्ञानाधीनप्रतिवचनायोगादित्यर्थः । इतश्च समुच्चयः शास्त्रार्थो न भवतीत्याह—**अस्माच्चेति** । कस्तर्हि शास्त्रार्थो विवक्षितस्तत्राह—**केवलादिति** । ज्ञानकर्मणोः समुच्चयानुपपत्तौ कारणान्तरमाह—**ज्ञानेति** । वाक्यशेषवशादपि समुच्चयस्याशास्त्रार्थतेत्याह—**कुरु कर्मैवेति** । प्राथमिकेन संबन्धग्रन्थेन समस्तशास्त्रार्थसंग्राहकेण तद्विवरणात्मनोऽस्य संदर्भस्य नास्ति पौनरुक्त्यमिति मत्वा प्रतिपदं व्याख्यातुं प्रश्नैकदेशं समुत्थापयति—**ज्यायसी चेदिति** । वेदाश्चेत्प्रमाणमितिवच्चेदित्यस्य निश्चयार्थत्वं व्यावर्तयति—**यदीति** । बुद्धिशब्दस्यान्तःकरणविषयत्वं व्यवच्छिनत्ति—**ज्ञानमिति** । पूर्वार्धस्याक्षरयोजनां कृत्वा समुच्चयाभावे तात्पर्यमाह—**यदीति** । इष्टे भगवतेति शेषः । एकं ज्ञानं कर्म च समुच्चितमिति यावत् । ज्ञानकर्मणोरभीष्टे समुच्चये समुच्चितस्य श्रेयःसाधनस्यैकत्वात्कर्मणः सकाशाज्ज्ञानस्य पृथक्करणमयुक्तमित्यर्थः । एकमपि साधनं फलतोऽतिरिक्तं किं न स्यादित्याशङ्क्याह—**नहीति** । नच केवलात्कर्मणो ज्ञानस्य केवलस्य फलतोऽतिरिक्तत्वं विवक्षित्वा पृथक्करणं समुच्चयपक्षे प्रत्येकं श्रेयःसाधनत्वानभ्युपगमादिति भावः । पूर्वार्धस्येवोत्तरार्धस्यापि समुच्चयपक्षे तुल्यानुपपत्तिरित्याह—**तथेति** । दूरेण ह्यवरं कर्मेत्यत्र कर्मणः सकाशाद्बुद्धिः श्रेयस्करी भगवतोक्ता कर्म च बुद्धेः सकाशादश्रेयस्करमुक्तं तथापि तदेव कर्म कर्मण्येवाधिकारस्ते मा फलेष्विति स्निग्धं भक्तं च मां प्रति कुर्विति भगवान् प्रतिपादयति, तत्र कारणानुपलम्भादयुक्तमतिक्रूरे कर्मणि भगवतो मन्नियोजनमिति यदर्जुनो ब्रवीति तच्च समुच्चयपक्षेऽनुपपन्नं स्यादित्यर्थः ॥ १ ॥ यत्तु वृत्तिकारैरुक्तं श्रौतेन स्मार्तेन च कर्मणा समुच्चयो गृहस्थानां श्रेयःसाधनमितरेषां स्मार्तेनैवेति भगवतोक्तमर्जुनेन च निर्धारितमिति तदेतदनुवदति—**अथेति** । तत्रापि तत्किमित्याद्युपालम्भवचनमनुपपन्नं कर्ममात्रसमुच्चयवादिनो भगवतो नियोजनाभावादिति दूषयति—**तत्किमिति** । इतश्च प्रश्नः समुच्चयानुसारी न भवती-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जनार्दन, कर्मणो निष्कामकर्मयोगापेक्षया बुद्धिः सांख्यनिष्ठालक्षणं ज्ञानं ज्यायसी प्रशस्ततरा चेत्ते तव मता तत्तर्हि मां भैक्ष्यवृत्त्यापि तुष्यन्तं घोरे बन्धुवधाख्ये कर्मणि किं कुतो हेतोर्नियोजयसि पुनः पुनर्युध्यस्वेति वदन् ॥ १ ॥

४ मधुसूदनीव्याख्या ।

लषितसिद्धय इति त्वं तथाभूतो मयापि श्रेयोनिश्चयार्थं याच्यस इति नैवानुचितमिति संबोधनाभिप्रायः । कर्मणो निष्कामादपि बुद्धिरात्मतत्त्वविषया ज्यायसी प्रशस्ततरा चेद्यदि ते तव मता तत्तदा किं कर्मणि घोरे हिंसाद्यनेकायासबहुले मामतिभक्तं नियोजयसि 'कर्मण्येवाधिकारस्ते' इत्यादिना विशेषेण प्रेरयसि । हे केशव सर्वेश्वर, सर्वेश्वरस्य सर्वेष्टदायिनस्तव मां भक्तं 'शिष्यस्तेऽहं शाधि माम्' इत्यादिना त्वदेकशरणतयोपसन्नंप्रति प्रतारणा नोचितेत्यभिप्रायः ॥ १ ॥ ननु

५ भाष्योत्कर्षदीपिका ।

तवानुचितमिति सूचयति । यदि निष्कामकर्मणः सकाशादपि बुद्धिर्ज्ञानं श्रेष्ठं तवाभिमतं तर्हि कस्माद्घोरे हिंसाप्रधाने क्रूरे कर्मणि मां स्वभक्तं तस्माद्युध्यस्वेत्यादिना नियोजयसि प्रेरयसि । हे केशव, कं ब्रह्मादिमनुकम्पार्थं गच्छतीति तथा संबोधयन्मामपि स्वभक्तं प्रति केशवो भव नतु जनार्दन इति द्योतयति ॥ १ ॥ ननु त्वया सैव ज्यायसी ममेति मद्वाक्यान्निश्चिता चेत्किमर्थमधुना पृच्छसी-

६ श्रीधरीव्याख्या ।

तद्युध्यस्वेति, तस्मादुत्तिष्ठेति च वारंवारं वदन्घोरे हिंसात्मके कर्मणि मां नियोजयसि प्रवर्तयसि ॥ १ ॥ ननु 'धर्म्याद्धि युद्धाच्छ्रेयोऽ-

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कथं युक्तं वचनं, किंच—व्यामिश्रेणेति ।** व्यामिश्रेणेव यद्यपि विविक्ताभिधायी भगवांस्तथापि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति । तेन मम बुद्धिं मोहयसीव । मम मन्दबुद्धिव्यामोहापनयाय हि प्रवृत्तस्त्वं तु कथं मोहयस्यतो ब्रवीमि बुद्धिं मोहयसीव मे ममेति । त्वं तु भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासंभवं यदि मन्यसे तत्रैवं सति तत्तयोरेकं बुद्धिं कर्म वेदमेवार्जुनस्य योग्यं बुद्धिशक्त्यवस्थानुरूपमिति निश्चित्य वद ब्रूहि । येन ज्ञानेन कर्मणा वान्यतरेण श्रेयोऽहमाप्नुयां प्राप्नुयाम् । यदि हि कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात्तत् कथं तयोरेकं वदेत्येकविषयैवार्जुनस्य शुश्रूषा स्यात्, नहि भगवतोक्तमन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि नैव द्वयमिति । येनोभय-

२ आनन्दगिरिव्याख्या ।

त्याह—**किंचेति** । भगवतो विविक्तार्थवादित्वादयुक्तं व्यामिश्रेणेत्यादिवचनमित्याशङ्क्याह—**यद्यपीति** । यदि भगवद्वचनं संकीर्णमिव ते भाति तर्हि तेन त्वदीयबुद्धिव्यामोहनमेव तस्य विवक्षितमिति किमिति मोहयसीवेत्युच्यते तत्राह—**ममेति** । ज्ञानकर्मणी मिथो विरोधाद्युगपदेकपुरुषाननुष्ठेयतया भिन्नकर्तृके कथ्येते, तथाच तयोरन्यतरस्मिन्नेव त्वं नियुक्तो नतु ते बुद्धिव्यामोहनमभिमतमिति भगवतो मतमनुवदति—**त्वं त्विति** । तदेकमित्यादिश्लोकार्थेनोत्तरमाह—**तत्रेति** । उक्तं भागवतमतं सप्तम्या परामृश्यते । एकमित्युक्तप्रकारोक्तिः । एकमित्युक्तमेव स्फुटयति—**बुद्धिमिति** । निश्चयप्रकारं प्रकटयति—**इदमिति** । योग्यत्वं स्पष्टयति—**बुद्धीति** । अस्य क्षत्रियस्य सतोऽन्तःकरणस्य देहशक्तेः समरसमारम्भावस्थायाश्चेदमेव ज्ञानं कर्म वानुगुणमिति निर्धार्य ब्रूहीत्यर्थः । निश्चित्यान्यतरोक्तौ तेन श्रोतुः श्रेयोवाप्तिं फलमाह—**येनेति** । तदेकमित्यादिवाक्यस्याक्षरोत्थमर्थमुक्त्वा समुच्चयस्य शास्त्रार्थत्वाभावे तात्पर्यमाह—**यदि हीति** । गुणभूतमपीत्यादिना प्रधानभूतमपि वेति विवक्षितं । नतूभयप्राह्यसंभवमात्मनो मन्यमानस्यार्जुनस्यान्यतरविषया शुश्रूषा भविष्यति नेत्याह—**नहीति** । यथोक्तभगवद्वचनाभावे द्वयप्राह्यसंभवबुद्ध्या नान्यतरप्रार्थना संभवतीत्याह—**येनेति** । नहि तथाविधं भगवद्वचनं भवतेष्टं भगवतः समुच्चयवादित्वाङ्गीकारादत-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ननु तव ज्ञाननिष्ठायामनधिकारात्कर्मैव कुर्विति त्वां ब्रवीमीत्याशङ्क्याह—**व्यामिश्रेणेति** । व्यामिश्रेणाविविक्तेन । इवशब्दो विविक्तेऽपि बुद्धिदोषादविविक्ततां गृह्णामीति सूचयति तेन वाक्येन 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति क्वचिद्वेदनिष्ठां त्याजयसि । 'कर्मण्येवाधिकारस्ते' इति तामेव च ग्राहयसि । तथा 'निर्द्वन्द्वो नित्य-

४ मधुसूदनीव्याख्या ।

नाहं कंचिदपि प्रतारयामि किं पुनस्त्वामतिप्रियम् । त्वं तु किं मे प्रतारणाचिह्नं पश्यसीति चेत्तत्राह—तव वचनं व्यामिश्रं न भवत्येव ममत्वेकाधिकारिकत्वभिन्नाधिकारिकत्वसंदेहाद्व्यामिश्रं संकीर्णार्थमिव ते यद्वाक्यं मांप्रति ज्ञानकर्मनिष्ठाद्वयप्रतिपादकं तेन वाक्येन त्वं मे मम मन्दबुद्धेर्वाक्यतात्पर्यापरिज्ञानाद्बुद्धिमन्तःकरणं मोहयसीव भ्रान्त्या योजयसीव । परमकारुणिकत्वात्त्वं न मोहयस्येव । मम तु स्वाशयदोषान्मोहो भवतीतीवशब्दार्थः । एकाधिकारित्वे विरुद्धयोः समुच्चयानुपपत्तेरेकार्थत्वाभावेन च विकल्पानुपपत्तेः प्रागुक्तेर्यद्यधिकारिभेदं मन्यसे तदैकं मांप्रति विरुद्धयोर्निष्ठयोरुपदेशायोगात्तज्ज्ञानं वा कर्म वैकमेवाधिकारं मे निश्चित्य वद । येनाधिकारनिश्चयपुरःसरमुक्तेन त्वया मया चानुष्ठितेन ज्ञानेन कर्मणा

५ भाष्योत्कर्षदीपिका ।

त्याशङ्क्याह—**व्यामिश्रेणेवेति** । 'बुद्ध्या युक्तो यया' इत्यादिना कर्मप्रशंसा, 'या निशा सर्वभूतानाम्' इत्यादिना ज्ञानप्रशंसा, 'कर्मण्येवाधिकारस्ते' इत्यादिना मम कर्मण्येवाधिकारबोधनं, 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति ज्ञाननिष्ठाधिकारबोधनमित्येवं व्यामिश्रेण किं श्रेष्ठं किमश्रेष्ठं क्व ममाधिकारः क्व नेति संदेहोत्पादकेन वाक्येन । यद्यपि विविक्ताभिधायी भगवांस्तथापि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभातीतीवशब्दार्थः । मम बुद्धेर्मोहापनयार्थं हि प्रवृत्तस्त्वं कथं मोहयस्यतो ब्रवीमि

६ श्रीधरीव्याख्या ।

न्यत्क्षत्रियस्य न विद्यते' इत्यादिना कर्मणोऽपि श्रेष्ठत्वमुक्तमेवेत्याशङ्क्याह—**व्यामिश्रेणेति** । क्वचित्कर्मप्रशंसा क्वचिज्ज्ञानप्रशंसेत्येवं व्यामिश्रं संदेहोत्पादकमिव यद्वाक्यं तेन मे बुद्धिं मतिमुभयत्र दोलायितां कुर्वन्मोहयसीव । परमकारुणिकस्य तव मोहकत्वं नास्त्येव तथापि भ्रान्त्या ममैवं भातीतीवशब्देनोक्तं, अत उभयोर्मध्ये यद्भद्रं तदेकं निश्चित्य वदेति । यद्वा इदमेव श्रेयःसाधनमिति निश्चित्य येनानुष्ठितेन श्रेयो

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीः ॥ ज्यायसीति । व्यामिश्रेणेति । कर्मोक्तं ज्ञानं च । तत्र न द्वयोः प्राधान्यं युक्तं अपितु ज्ञानस्य । तद्बलेन क्षपणीयत्वं यदि

श्रीभगवानुवाच।
**लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम्।

प्राप्त्यसंभवमात्मनो मन्यमान एकमेव प्रार्थयते ॥ २ ॥ प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच— लोकेऽस्मिन्निति। लोकेऽस्मिन् शास्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिरनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेनेश्वरेण। हेऽनघापाप, तत्र का सा द्विविधा निष्ठेत्याह—तत्र ज्ञानयोगेन ज्ञानमेव योगस्तेन सांख्यानामात्मविषयविवेकज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता, कर्मयोगेन कर्मैव

२ आनन्दगिरिव्याख्या।

स्तदभावादुक्तबुद्ध्या न युक्तान्यतरप्रार्थनेत्यर्थः ॥ २ ॥ समुच्चयविरोधितया प्रश्नं व्याख्याय तद्विरोधित्वेनैव प्रतिवचनमुत्थापयति—**प्रश्नेति**। येयं व्यवहारभूमिरुपलभ्यते तत्र त्रैवर्णिका ज्ञानं कर्म वा शास्त्रीयमनुष्ठातुमधिक्रियन्ते। तेषां द्विधा स्थितिर्मया प्रोक्तेति पूर्वार्धं योजयति—**लोकेऽस्मिन्निति**। स्थितिमेव व्याकरोति—**अनुष्ठेयेति**। पूर्वं प्रवचनप्रसङ्गं प्रदर्शयन्प्रवक्तारं विशिनष्टि—**सर्गादाविति**। प्रवचनस्यायथार्थत्वशङ्कां वारयति—**सर्वज्ञेनेति**। अर्जुनस्य भगवदुपदेशयोग्यत्वं सूचयति—**अनघेति**। निर्धारणार्थे तत्रेति सप्तमी। ज्ञानं परमार्थवस्तुविषयं तदेव योगशब्दितं युज्यतेऽनेन ब्रह्मणेति व्युत्पत्तेस्तेन। निष्ठेत्यनुवर्तते। उक्तज्ञानोपायमुपदिदिक्षुः सांख्यशब्दार्थमाह—**आत्मेति**। तेषामेव कर्मनिष्ठत्वं व्यावर्तयति—**ब्रह्मचर्येति**। तेषां जपादिपारवश्येन श्रवणादिपराङ्मुखत्वं पराकरोति—**वेदान्तेति**। उक्तविशेषणवतां मुख्यसंन्यासित्वेन फलावस्थत्वं दर्शयति—**परमहंसेति**। कर्म वर्णाश्रमविहितं धर्माख्यं तदेव युज्यते तेनाभ्युदयेनेति योगस्तेन निष्ठा कर्मिणां प्रोक्तेत्यनुषङ्गं दर्शयन्नाह—**कर्मैवेत्यादिना**।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

सत्वस्थो निर्योगक्षेम आत्मवान्भवेति' निवृत्तिमार्गमुपदिशसि। 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इति प्रवृत्तिमप्युपदिशसि। नह्येकेन मया युगपदुभयं स्थितिगतिवदनुष्ठातुं शक्यम्। अतो मे मम बुद्धिं मोहयसीव वस्तुतस्तु मम मोहं नाशयितुं प्रवृत्तोऽसीतीवशब्देनोच्यते। तत्तयोर्मध्ये यदेकं प्रधानं मद्योग्यं तन्निश्चित्य वद येनानुष्ठितेनाहं श्रेयः कल्याणमाप्नुयाम् ॥ २ ॥ अत्रोत्तरं श्रीभगवानुवाच—लोकेऽस्मिन्निति। पुरा पूर्वाध्याये मया निष्ठा एकैव प्रोक्ता परंतु सा द्विविधा द्विप्रकारा। एकस्या एव ब्रह्मनिष्ठायाः प्रकारद्वयमुक्तमधिकारिभेदेन नतु

४ मधुसूदनीव्याख्या।

वैकेन श्रेयो मोक्षमहमाप्नुयां प्राप्तुं योग्यः स्याम्। एवं ज्ञानकर्मनिष्ठयोरेकाधिकारित्वे विकल्पसमुच्चययोरसंभवादधिकारिभेदज्ञानायार्जुनस्य प्रश्न इति स्थितम्। 'इहेतरेषां कुमतं समस्तं श्रुतिस्मृतिन्यायबलान्निरस्तम्। पुनः पुनर्भाष्यकृतातियत्नादतो न तत्कर्तुमहं प्रवृत्तः ॥ भाष्यकारमतसारदर्शिना ग्रन्थमात्रमिह योज्यते मया। आशयो भगवतः प्रकाश्यते केवलं स्ववचसो विशुद्धये ॥' एवमधिकारिभेदेऽर्जुनेन पृष्टे तदनुरूपं प्रतिवचनं श्रीभगवानुवाच—अस्मिन्नधिकारित्वाभिमते लोके शुद्धाशुद्धान्तःकरणभेदेन द्विविधे जने द्विविधा द्विप्रकारा निष्ठा स्थितिर्ज्ञानपरता कर्मपरता च पुरा पूर्वाध्याये मया तवात्यन्तहितकारिणा

५ भाष्योत्कर्षदीपिका।

बुद्धिं मोहयसीव म इति। भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासंभवं यदि त्वं मन्यसे तर्हि तयोर्मध्ये एकं ज्ञानं वा कर्म वा इदमेव तव योग्यमिति निश्चित्य वद, येन ज्ञानकर्मान्यतरेण श्रेयो मोक्षमहं प्राप्नुयामित्यर्थः ॥ २ ॥ अर्जुनप्रश्नानुरूपमुत्तरं श्रीभगवानुवाच—**लोक इति**। लोकेऽस्मिञ्शास्त्रोक्तानुष्ठानाधिकृते त्रैवर्णिके जने शुद्धाशुद्धान्तःकरणतया द्विविधे द्विविधा उपायोपेयभेदेन द्विप्रकारा निष्ठाऽनुष्ठेयतात्पर्यं पुरा सर्गादौ मया सर्वज्ञेनेश्वरेण प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयससाधनवेदार्थ-

६ श्रीधरीव्याख्या।

मोक्षमहमाप्नुयां प्राप्स्यामि, तदेवैकं निश्चित्य वदेत्यर्थः ॥ २ ॥ अत्रोत्तरं श्रीभगवानुवाच—**लोकेऽस्मिन्निति**। अयमर्थः। यदि मया परस्परनिरपेक्षं मोक्षसाधनत्वेन कर्मज्ञानयोगरूपं निष्ठाद्वयमुक्तं स्यात्तर्हि द्वयोर्मध्ये यद्भद्रं तदेकं वदेति त्वदीयप्रश्नः संगच्छेत, न

७ अभिनवगुप्ताचार्यव्याख्या।

कर्मणां 'बुद्धियुक्तो जहातीह' इत्यादिनयेन मूलतएव तर्हि कर्मणां किं प्रयोजनमिति प्रश्नाभिप्रायः ॥ २ ॥ श्रीभगवांस्तूत्तरं ददाति—लोकेऽस्मिन्निति। लोके एषा द्वयी गतिः प्रसिद्धा-सांख्यानां ज्ञानं प्रधानं, योगिनां च कर्मेति। मया तु सैवैव निष्ठोक्ता। ज्ञानक्रियामयत्वात्संवि-

१ श्रीमच्छांकरभाष्यम्।

**योगः कर्मयोगस्तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्तेत्यर्थः। यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्यानुष्ठेयं भगवतेष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं कथमिहार्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात्। यदि पुनरर्जुने ज्ञानं कर्म च**

२ आनन्दगिरिव्याख्या।

एवं प्रतिवचनवाक्यस्थान्यक्षराणि व्याख्याय तस्यैव तात्पर्यार्थं कथयति—**यदि चेति** । इष्टस्यापि दुर्बोधत्वमाशङ्क्याह—**उक्तमिति**। ज्ञानस्यापि मूलविकलतया विभ्रमत्वमाशङ्क्याह—**वेदेष्विति** । तस्याशिष्यत्वबुद्ध्यान्यथाकथनमित्याशङ्क्याह—**उपसन्नायेति**। तथापि तस्मिन्नौदासीन्यादन्यथोक्तिरित्याशङ्क्याह—**प्रियायेति**। ब्रवीति च भिन्नपुरुषकर्तृकं निष्ठाद्वयं तेन समुच्चयो भगवदभीष्टः शास्त्रार्थो न भवतीति शेषः। नन्वर्जुनस्य प्रेक्षापूर्वकारित्वाज्ज्ञानकर्मश्रवणानन्तरमुभयनिर्देशानुपपत्त्या समुच्चयानुष्ठानं संपत्स्यते तद्व्यतिरिक्तानां तु ज्ञानकर्मणोर्भिन्नपुरुषानुष्ठेयत्वं श्रुत्वा प्रत्येकं तदनुष्ठानं भविष्यतीति भगवतो मतं कल्प्यते तस्यार्जुनेऽनुरागातिरेकादितरेषु च तदभावादिति तत्राह—**यदि पुनरिति**। अप्रमाणभूतत्वमनाप्तत्वम्। नच भगवतो रागादिमत्त्वेनानाप्तत्वं युक्तं 'समं सर्वेषु भूतेषु

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

ब्रह्मप्राप्तये परस्परनिरपेक्षमार्गद्वयमुक्तमिति भावः । हेऽनघ विशुद्धान्तःकरण, मद्वचनस्यार्थं सम्यगालोचयेत्यर्थः। तदेव प्रकारद्वयमाह—**ज्ञानयोगेनेति** । सांख्यानां प्रकृतिपुरुषयोर्विविक्तत्वं जानतामात्मानात्मविवेकज्ञानवतां ज्ञानार्थं युज्यते इति ज्ञानयोगः ज्ञानोपायो वेदान्तश्रवणमनननिदिध्यासनात्मकस्तेन ज्ञानयोगेन ब्रह्मणि निष्ठां परिसमाप्तिं सांख्याः प्राप्नुवन्तीत्यर्थः । योगिनां 'सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते' इत्युक्तलक्षणयोगवतां कर्मयोगेन संध्योपासनादिनिर्विकल्पकसमाध्यनुष्ठानमिह कर्मयोगपदार्थः तेन योगिनो ब्रह्मनिष्ठां प्राप्नुवन्तीत्यर्थः। अयं भावः—इह जन्मनि जन्मान्तरे वा ईश्वरप्रीत्यर्थमनुष्ठितैः कर्मभिर्विशुद्धसत्त्वो विवेकवैराग्यशमादिषट्कोपेतो मुमुक्षुः प्रत्यक्प्रवणचित्तः श्रवणमननाभ्यामेव कृतकृत्यो भवति, स चेच्छ्रवणादेः प्रागसमाहितचित्तस्तर्हि निदिध्यासनमस्यापेक्षितम्, अतएव 'सहकार्यन्तरविधिः पक्षेण' इति सूत्रकृता निदिध्यासनस्य पाक्षिकत्वमुक्तं सोऽयं सांख्यमार्गः । तथा सर्वाणि कर्माणि परमगुरावर्पयञ्श्रवणमननात्मकं विचारमन्तरेणैव केवलं श्रद्धामात्रात्प्रतीचो निर्विशेषब्रह्मरूपत्वं गुरुवाक्यतो निश्चित्यासंभावनादिदोषरहित आचार्यान्निर्गुणब्रह्मोपास्तिप्रकारमधिगम्य कर्मच्छिद्रेषु समाध्यभ्यासं कुर्वन्निष्कलं प्रत्यगात्मस्वरूपं साक्षात्करोति सोऽयं योगमार्गः तेन ऊहापोहकौशलं येषामस्ति ते सांख्याः, येषां तन्नास्ति ते योगिन इति। अत इयं द्विप्रकारा निष्ठा नतु द्वे निष्ठे इति भ्रमितव्यम्। यथोक्तं वसिष्ठेन 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम्॥ असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः। प्रकारौ द्वौ ततो देवो जगाद परमः शिवः॥' इति । चित्तादर्शनोपलक्षितस्य

४ मधुसूदनीव्याख्या।

प्रोक्ता प्रकर्षेण स्पष्टत्वलक्षणेनोक्ता । तथा चाधिकार्यैक्यशङ्कया माग्लासीरिति भावः । हे अनघ अपापेति संबोधयन्नुपदेशयोग्यतामर्जुनस्य सूचयति। एकैव निष्ठा साध्यसाधनावस्थाभेदेन द्विप्रकारा नतु द्वे एव स्वतन्त्रे निष्ठे इति कथयितुं निष्ठेत्येकवचनम्। तथाच वक्ष्यति 'एकं सांख्यं च योगं च यः पश्यति स पश्यति' इति। तामेव निष्ठां द्वैविध्येन दर्शयति—सांख्येति। संख्या सम्यगात्मबुद्धिस्तां प्राप्तवतां ब्रह्मचर्यादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां ज्ञानभूमिमारूढानां शुद्धान्तःकरणानां सांख्यानां ज्ञानयोगेन ज्ञानमेव युज्यते ब्रह्मणानेनेति व्युत्पत्त्या योगस्तेन निष्ठोक्ता 'तानि सर्वाणि संयम्य

५ भाष्योत्कर्षदीपिका।

संप्रदायमाविष्कुर्वता प्रोक्ता। यत्तु पुरा पूर्वाध्याय इति भाष्यविरुद्धं वर्णयन्ति तन्न। प्रोक्तेत्येतावतैव निर्वाहे लोकेऽस्मिन्नित्यस्य पुरेत्यस्य च वैयर्थ्यप्रसङ्गात्। 'इमं विवस्वते योगं प्रोक्तवानहमव्ययम्' इति वक्ष्यमाणेन भाष्योक्तार्थस्य स्पष्टप्रतिपादकेन मूलेन विरोधाच्च। हे अनघेति संबोधयन् भवच्चित्तशुद्ध्यर्थमेव त्वां स्वधर्मे नियोजयामि न स्वार्थमिति ध्वनयति। निष्ठायाः प्रकारविभागमाह—**ज्ञानेति**। युज्यते ब्रह्मणानेनेति योगः ज्ञानमेव योगः ज्ञानयोगः तेन सांख्यानां चित्तशुद्ध्यात्मानात्मविषयविवेकज्ञानवतां

६ श्रीधरीव्याख्या।

तु मया तथोक्तं किंतु द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता। गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेः। एकस्या एव तु प्रकारभेदमात्रमधिकारभेदेनोक्तमिति। अस्मिन् शुद्धाशुद्धान्तःकरणतया द्विविधे लोकेऽधिकारिजने द्वे विधे प्रकारौ यस्याः सा द्विविधा निष्ठा मोक्षपरता पुरा पूर्वाध्याये मया सर्वज्ञेन प्रोक्ता स्पष्टमेवोक्ता। प्रकारद्वयमेव निर्दिशति। सांख्यानां शुद्धान्तःकरणानां ज्ञानभूमिकामारूढानां ज्ञानपरि-

---

१ श्रीधरः, मधुसूदनः, नीलकण्ठश्च।

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

द्वयं श्रुत्वा स्वयमेवानुष्ठास्यत्यन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत तदा रागद्वेषवानप्रमाणभूतो भगवान्कल्पितः स्यात् । तच्चायुक्तं, तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः ॥ ३ ॥ यदर्जुनेनोक्तं कर्मणो ज्यायस्त्वं बुद्धेस्तच्च स्थितमनिराकरणात् । तस्याश्च ज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वं भिन्नपुरुषानुष्ठेयत्ववचनाच्च भगवत एवमेवानुमतमिति गम्यते । मां च बन्धकारणे कर्मण्येव नियोजयसीति विषण्णमनसमर्जुनं कर्म नारभ इत्येवंमन्वानमालक्ष्याह

२ आनन्दगिरिव्याख्या ।

तिष्ठन्तम्' इत्यादिविरोधादित्याह—**तच्चेति** । निष्ठाद्वयस्य भिन्नपुरुषानुष्ठेयत्वनिर्देशफलमुपसंहरति—**तस्मादिति** ॥ ३ ॥ किमिति भगवता बुद्धेर्ज्यायस्त्वं ज्यायसी चेदित्यत्रोक्तमुपेक्षितमिति तत्राह—**यदर्जुनेनेति** । किंच ज्ञाननिष्ठायां संन्यासिनामेवाधिकारो भगवतोऽभिप्रेतोऽन्यथा तदीयविभागवचनविरोधादिति विभागवचनसामर्थ्यसिद्धमर्थमाह—**तस्याश्चेति** । तर्हि विभागवचनानुरोधादर्जुनस्यापि संन्यासपूर्विकायां ज्ञाननिष्ठायामेवाधिकारो भविष्यति नेत्याह—**मां चेति** । बुद्धेर्ज्यायस्त्वमुपेत्यापीति चकारार्थः । अर्जुनमालक्ष्य भगवानाहेति संबन्धः । अन्तरेणापि कर्माणि श्रवणादिभिर्ज्ञानावाप्तिर्भविष्यतीति परबुद्धिमनुरुध्य विशिनष्टि—**कर्मेति** । विभागवचनवशादसमुच्चयश्चे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ब्रह्मसाक्षात्कारस्य द्वौ क्रमौ । चित्तादेर्मिथ्यात्वपक्षे ज्ञानमेव । यथा रज्जूरगादिसम्यगवेक्षणेनैव नश्यति तद्वत् । तस्य सत्यत्वपक्षे योग एव । यथा सत्य उरगो मन्त्रादिना निरुद्धप्रचारः स्वयमेव नश्यति तद्वच्चित्तमपि योगेन निरुध्यमानं नश्यति । तस्य निरन्वयोच्छेदस्तु प्रारब्धकर्मान्ते पक्षद्वयेऽपि तुल्य इति ॥ ३ ॥ अनयोः प्रकारयोरङ्गाङ्गिभावमाह—**न कर्मणामिति** । कर्मणां यज्ञादीनामनारम्भादननुष्ठानान्नैष्कर्म्यं ज्ञाननिष्ठां नाश्नुते न प्राप्नोति ।

४ मधुसूदनीव्याख्या ।

युक्त आसीत मत्परः' इत्यादिना । अशुद्धान्तःकरणानां तु ज्ञानभूमिमनारूढानां योगिनां कर्माधिकारयोगिनां कर्मयोगेन कर्मैव युज्यतेऽन्तःकरणशुद्ध्यानेनेति व्युत्पत्त्या योगस्तेन निष्ठोक्तान्तःकरणशुद्धिद्वारा ज्ञानभूमिकारोहणार्थं 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इत्यादिना । अतएव न ज्ञानकर्मणोः समुच्चयो विकल्पो वा किंतु निष्कामकर्मणा शुद्धान्तःकरणानां सर्वकर्मसंन्यासेनैव ज्ञानमिति चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैकमेव त्वांप्रति द्विविधा निष्ठोक्ता 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति । अतो भूमिकाभेदेनैकमेव प्रत्युभयोपयोगान्नाधिकारभेदेऽप्युपदेशवैयर्थ्यमित्यभिप्रायः । एतदेव दर्शयितुमशुद्धचित्तस्य चित्तशुद्धिपर्यन्तं कर्मानुष्ठानं 'न कर्मणामनारम्भात्' इत्यादिभिः 'मोघं पार्थ स जीवति' इत्यन्तैस्त्रयोदशभिर्दर्शयति । शुद्धचित्तस्य तु ज्ञानिनो न किंचिदपि कर्मापेक्षितमिति दर्शयति 'यस्त्वात्मरतिरेव' इति द्वाभ्याम् । 'तस्मादसक्तः' इत्यारभ्य तु बन्धहेतोरपि कर्मणो मोक्षहेतुत्वं सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण संभवति फलाभिसंधिराहित्यरूपकौशलेनेति दर्शयिष्यति । ततः परंतु 'अथ केन' इति प्रश्नमुत्थाप्य कामदोषेणैव काम्यकर्मणः शुद्धिहेतुत्वं नास्ति । अतः कामराहित्येनैव कर्माणि कुर्वन्नन्तःकरणशुद्ध्या ज्ञानाधिकारी भविष्यसीति यावदध्यायसमाप्ति वदिष्यति भगवान् ॥ ३ ॥ तत्र कारणाभावे कार्यानुपपत्तेः कर्मणा—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्यात्मज्ञाने

५ भाष्योत्कर्षदीपिका ।

निष्ठा स्थितिः प्रोक्ता । चित्तशुद्धिद्वारा युज्यतेऽनेन ज्ञानेनेति योगः कर्मैव योगः कर्मयोगः तेन योगिनामशुद्धान्तःकरणानां कर्मिणां मया निष्ठा प्रोक्तेत्यर्थः ॥ ३ ॥ 'तत्किं कर्मणि घोरे मां नियोजयसि केशव' इत्युक्तवन्तं खिन्नचित्तमर्जुनं कर्म न कर्तव्यमित्येवंमन्वानमालक्ष्याह—**नेति** । यद्वा निष्ठेत्येकवचनेन सूचितं कर्मनिष्ठायाः ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थसाधनत्वं, ज्ञाननिष्ठायाः कर्म-

६ श्रीधरीव्याख्या ।

पाकार्थं ज्ञानयोगेन ध्यानादिना निष्ठा ब्रह्मपरतोक्ता 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः' इत्यादिना । सांख्यभूमिकामारुरुक्षूणां त्वन्तःकरणशुद्धिद्वारा तदारोहार्थं तदुपायभूतकर्मयोगाधिकारिणां योगिनां कर्मयोगेन निष्ठोक्ता 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इत्यादिना । अतएव चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैव द्विविधापि निष्ठोक्ता 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति ॥३॥ अतः सम्यक् चित्तशुद्ध्यर्थं ज्ञानोत्पत्तिपर्यन्तं वर्णाश्रमोचितानि कर्माणि कर्तव्यानि । अन्यथा चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह—**न कर्मणामिति** । कर्मणामनारम्भादननुष्ठानान्नैष्कर्म्यं ज्ञानं नाश्नुते नाप्नोति । ननु च 'एवमेव प्रव्राजिनो लोकमी-

७ अभिनवगुप्ताचार्यव्याख्या ।

त्वस्येति भावः ॥ ३ ॥ तथाहि—न कर्मणामिति । नहि कश्चिदिति । ज्ञानं कर्मणा रहितं न भवति । कर्म च कौशलोपेतं ज्ञानरहितं न

१ श्रीमच्छांकरभाष्यम् ।

**भगवान्—न कर्मणामनारम्भादिति । अथवा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सतीतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठाया ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं न स्वातन्त्र्येण, ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिका सती स्वातन्त्र्येण पुरुषार्थहेतुरन्यानपेक्षेत्येतमर्थं दर्शयिष्यन्नाह भगवान् । न कर्मणामनारम्भादप्रारम्भात् कर्मणां क्रियाणां यज्ञादीनामिह जन्मनि जन्मान्तरे वानुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन**

२ आनन्दगिरिव्याख्या ।

दुभयोरपि ज्ञानकर्मणोः स्वातन्त्र्येण पुरुषार्थहेतुत्वमन्यथा कर्मवज्ज्ञानमपि न स्वातन्त्र्येण पुरुषार्थं साधयेदित्याशङ्क्य संबन्धान्तरमाह—**अथवेति** । तर्हि ज्ञाननिष्ठापि कर्मनिष्ठावन्निष्ठात्वाविशेषान्न स्वातन्त्र्येण पुरुषार्थहेतुरिति समुच्चयसिद्धिरित्याशङ्क्याह—**ज्ञाननिष्ठा त्विति** । नहि रज्जुतत्त्वज्ञानमुत्पन्नं फलसिद्धौ सहकारिसापेक्षमालक्ष्यते । तथेदमपि चोत्पन्नं मोक्षाय नान्यदपेक्षते तदाह—**अन्येति** । 'यस्य चैतत्कर्म' इति श्रुताविव कर्मशब्दस्य क्रियमाणवस्तुविषयत्वमाशङ्क्य व्याचष्टे—**क्रियाणामिति** । ताश्च नित्यनैमित्तिकत्वेन विभजते—**यज्ञादीनामिति** । अस्मिन्नेव जन्मन्यनुष्ठितानां कर्मणां बुद्धिशुद्धिद्वारा ज्ञानकारणत्वे ब्रह्मचारिणां कुतो ज्ञानोत्पत्तिर्जन्मान्तरकृतानां कर्मणां वा तथात्वे गृहस्थादीनामैहिकानि कर्माणि न ज्ञानहेतवः स्युरित्याशङ्क्यानियमं दर्शयति—**इहेति** । नेमानि सत्त्वशुद्धिकारणान्युपात्तदुरितप्रतिबन्धादित्याशङ्क्याह—**उपात्तेति** । तर्हि तावतैव कृतार्थानां कुतो ज्ञाननिष्ठाहेतुत्वं तत्राह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'विविदिषन्ति यज्ञेन' इति श्रुत्या यज्ञादीनां विद्याङ्गत्वेन विधानात् । ननु सन्प्रत्ययप्राधान्यात्कर्मणां विविदिषाङ्गत्वमत्र गम्यते । तेन विविदिषायां यज्ञादिना सिद्धायाम् 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति श्रुतेः प्रव्रज्यारूपमेव नैष्कर्म्यमिह ज्ञाननिष्ठासाधनं ग्राह्यम् । न ज्ञानं नैष्कर्म्यसिद्धिं परमामित्यादाविवात्र तद्ग्राहकस्य परमत्वविशेषणस्याभावात् । ननु कर्मयोगजनितचित्तशुद्ध्यभावे केवलात्संन्यासात्सिद्धिं समधिगच्छतीति योजनायां विप्रकृष्टयोर्ज्ञानकर्मणोः समुच्चयासंभवस्याभीष्टस्य सिद्धेः किमिति नैष्कर्म्यशब्देन निष्ठा गृह्यत इति चेत्सत्यम् । गुणैः कर्म कार्यत इति वाक्यशेषान्नैर्गुण्यहेतुकं मुख्यं ज्ञानमेवेह नैष्कर्म्यपदार्थो नतु प्रव्रज्या । विविदिषन्ति यज्ञेनेत्यत्रापि जिगमिषत्यश्वेन जिघांसत्यसिनेत्यादाविव तृतीयान्तस्य धात्वर्थेनैवान्वयादश्वादीनां गमनादाविव यज्ञादीनां वेदन एवान्वयो ज्ञेयः । एतमेवेति श्रुतिस्तु विविदिषासंन्यासाभिप्रायेण प्रवृत्ता । 'एवं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति ज्ञानपरिपाकार्थस्य जीवन्मुक्तिसुखार्थस्य वा याज्ञवल्क्यादिभिरनुष्ठितस्य विद्वत्संन्यासस्यापि शास्त्रे दर्शनात् । असंन्यासिनो ज्ञानमेव नोत्पद्यत इति प्राचामाग्रहो विक्षेपककर्मत्यागरूपसंन्यासविषयो नतु काषायपरिधानमात्रविषयः । गार्गीव्याधवासिष्ठादीनामतथाविधानामपि ज्ञानोत्पत्त्यवगमादित्यास्तां तावत् । कर्मभिरशोधितचित्तस्य मन्दबुद्धेः रागद्वेषादिग्रस्तस्यात्मानात्मविवेकद्वारा चित्तरोधद्वारा वा नैष्कर्म्यप्राप्तिर्नास्तीति पूर्वार्धार्थः । ननु 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इति केवलात्कर्मसंन्यासादपि नैष्कर्म्यसिद्धिः स्मर्यते तत्कथमुच्यते न कर्मणामनारम्भान्नैष्कर्म्यमस्तीति तत्राह—**नचेति** । कर्मज-

४ मधुसूदनीव्याख्या ।

विनियुक्तानामनारम्भादननुष्ठानाच्चित्तशुद्ध्यभावेन ज्ञानायोग्यो बहिर्मुखः पुरुषो नैष्कर्म्यं सर्वकर्मशून्यत्वं ज्ञानयोगेन निष्ठामिति यावत्, नाश्नुते न प्राप्नोति । ननु 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति श्रुतेः सर्वकर्मसंन्यासादेव ज्ञाननिष्ठोपपत्तेः कृतं कर्मभिरित्यत आह—नच संन्यसनादेव चित्तशुद्धिंविना कृतात्सिद्धिं ज्ञाननिष्ठालक्षणां

५ भाष्योत्कर्षदीपिका ।

निष्ठोपायलब्धस्वरूपायास्तु स्वातन्त्र्येणैव पुरुषार्थहेतुत्वं च स्फुटं वक्तुमारभते—**नेत्यादिना** । कर्मणां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' इति स्मृत्या 'सर्वापेक्षा च यज्ञादिश्रुतेरि'ति न्यायेन च चित्तशुद्धिद्वारा ज्ञानोपायत्वेन विहितानामकरणात् नैष्कर्म्यं कर्मशून्यत्वं ज्ञानयोगेन निष्ठां पुरुषो नाश्नुते न प्राप्नोति किंतु तेषामारम्भात्प्राप्नोतीत्यर्थः । ननु 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिः श्रूयतेऽतस्तदर्थिनः किं कर्मारम्भेणेति चेत्तत्राह—**नेति** । नच संन्य-

६ श्रीधरीव्याख्या ।

च्छन्तः प्रव्रजन्ति' इति संन्यासस्य मोक्षाङ्गत्वश्रुतेः संन्यासादेव मोक्षो भविष्यतीति किं कर्मभिरित्याशङ्क्योक्तम्—**नचेति** । नच चित्तशुद्धिं

७ अभिनवगुप्ताचार्यव्याख्या ।

भवति इत्येकमेव वस्तु ज्ञानकर्मणी । तथाचोक्तं—'न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया । ज्ञानक्रियाविनिष्पन्न आचार्यः पशुपाशहा ॥'

**नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' इत्यादिस्मरणादनारम्भादननुष्ठानान्नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणैवावस्थानमिति यावत् । पुरुषो नाश्नुते न प्राप्नोतीत्यर्थः । कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति वचनात्तद्विपर्ययात् तेषामारम्भान्नैष्कर्म्यमश्नुत इति गम्यते । कस्मात्पुनः कारणात्कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति । उच्यते, कर्मारम्भस्यैव नैष्कर्म्योपायत्वात् । नह्युपायमन्तरेणोपेयप्राप्तिरस्ति । कर्मयोगोपायत्वं च नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविह च प्रतिपादनात् । श्रुतौ तावत्प्रकृतस्यात्मलोकस्य वेद्यस्य वेदनोपायत्वेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम् । इहापि च 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये', 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इत्यादि प्रतिपादयिष्यति । ननु च 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति । लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरं अतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेणेति प्राप्तमत आह—नच संन्यसनादेवेति । नापि संन्यसनादेव केवलात्कर्मपरित्यागमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां न समधिगच्छति न प्राप्नोति ॥ ४ ॥ कस्मात् पुनः कारणात्कर्म संन्यासमात्रादेव ज्ञानरहितात्सिद्धिं

२ आनन्दगिरिव्याख्या ।

तत्कारणत्वेनेति । कर्मणां चित्तशुद्धिद्वारा ज्ञानहेतुत्वे मानमाह—ज्ञानमिति । अनारम्भशब्दस्योपक्रमविपरीतविषयत्वं व्यावर्तयति—अननुष्ठानादिति । निष्कर्मणः संन्यासिनः कर्मज्ञानं नैष्कर्म्यमिति व्याचष्टे—निष्कर्मेति । कर्माभावावस्थां व्यवच्छिनत्ति—ज्ञानयोगेनेति । तस्याः साधनपक्षपातित्वं व्यावर्तयति—निष्क्रियेति । कर्मानुष्ठानोपायलब्धा ज्ञाननिष्ठा स्वतन्त्रा पुमर्थहेतुरिति प्रकृतार्थसमर्थनार्थं व्यतिरेकवचनस्यान्वये पर्यवसानं मत्वा व्याचष्टे—कर्मणामिति । तद्विपर्ययमेव व्याचष्टे—तेषामिति । उक्तेऽर्थे हेतुं पृच्छति—कस्मादिति । जिज्ञासितं हेतुमाह—उच्यत इति । उपायत्वेऽपि तदभावे कुतो नैष्कर्म्यासिद्धिरित्याशङ्क्याह—नहीति । ज्ञानयोगं प्रति कर्मयोगस्योपायत्वे श्रुतिस्मृती प्रमाणयति—कर्मयोगेति । श्रौतमुपायोपेयत्वप्रतिपादनं प्रकटयति—श्रुताविति । यत्तु गीताशास्त्रे कर्मयोगस्य ज्ञानयोगं प्रत्युपायत्वोपपादनं तदिदानीमुदाहरति—इहापि चेति । न कर्मणामित्यादिना पूर्वार्धं व्याख्यायोत्तरार्धं व्याख्यातुमाशङ्कयति—नन्विति । आदिशब्देन 'शान्तो दान्त उपरतस्तितिक्षुः', 'संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इत्यादि गृह्यते । तत्रैव लोकप्रसिद्धिमनुकूलयति—लोके चेति । प्रसिद्धतरं 'यतो यतो निवर्तते ततस्ततो विमुच्यते । निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि' इत्यादिदर्शनादिति शेषः । लौकिकवैदिकप्रसिद्धिभ्यां सिद्धमर्थमाह—अतश्चेति । तत्रोत्तरत्वेनोत्तरार्धमवतार्य व्याकरोति—अत आहेत्यादिना । एवकारार्थमाह—केवलादिति । तदेव स्पष्टयति—कर्मेति । उक्तमेव नञमनुकृष्य क्रियापदेन संगतिं दर्शयति—न प्राप्नोतीति ॥ ४ ॥ उक्तेऽर्थे बुभुत्सितं हेतुं वक्तुमुत्तरश्लोकमुत्थापयति—कस्मादिति । कस्मान्न कर्मसंन्यासादेव सिद्धिमधिगच्छ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चित्तशुद्ध्यभावे कृतादपि संन्यासान्न मोक्षसिद्धिः । उदाहृतस्मृतिस्तु चित्तशुद्धिपूर्वकसंन्यासाभिप्राया । नहि रागादिग्रस्तः सर्वभूतेभ्यः सर्वात्मनाऽभयं दातुमीष्टे अतो युक्तमुक्तं नच संन्यसनादेवेति ॥ ४ ॥ एतदेव प्रपञ्चयति—नहीति ।

४ मधुसूदनीव्याख्या ।

सम्यक्फलपर्यवसायित्वेन नाधिगच्छति नैव प्राप्नोतीत्यर्थः । कर्मजन्यां चित्तशुद्धिमन्तरेण संन्यास एव न संभवति यथाकथंचिदौत्सुक्यमात्रेण कृतोऽपि न फलपर्यवसायीति भावः ॥ ४ ॥ ततः कर्मजन्यशुद्ध्यभावे बहिर्मुखः—हि यस्मात्क्षण-

५ भाष्योत्कर्षदीपिका ।

सनात्कर्मत्यागमात्रात् ज्ञानशून्यात्सिद्धिं नैष्कर्म्यलक्षणां प्राप्नोतीत्यर्थः ॥ ४ ॥ तत्र हेत्वाकाङ्क्षायामाह—नहीति । हि यस्मात्कश्चि-

६ श्रीधरीव्याख्या ।

विना कृतात्संन्यसनादेव ज्ञानशून्यात्सिद्धिं मोक्षं समधिगच्छति प्राप्नोति ॥ ४ ॥ कर्मणां च संन्यासस्तेष्वनासक्तिमात्रं न तु स्वरूपेण-

७ अभिनवगुप्ताचार्यव्याख्या ।

इति ॥ ४ ॥ तस्माज्ज्ञानान्तर्वर्ति कर्मापरिहार्यम् । यतः परवशएव कायवाङ्मनसां परिस्पन्दात्मकत्वादवश्यं किंचित्करोति ॥ ५ ॥ कर्मे-

**कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छतीति हेत्वाकाङ्क्षायामाह—नहीति । न हि यस्मात् क्षणमपि कालं जातु कदाचित् कश्चित्तिष्ठत्यकर्मकृत् सन् । कस्मात् कार्यते हि यस्मादवश एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिर्गुणैः । अज्ञ इति वाक्यशेषः । यतो वक्ष्यति 'गुणैर्यो न विचाल्यते' इति । सांख्यानां पृथक्करणादज्ञानामेव हि कर्मयोगो न ज्ञानिनाम् । ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात्कर्मयोगो नोपपद्यते । तथाच व्याख्यातं वेदाविनाशिनमित्यत्र ॥ ५ ॥ यस्त्वनात्मज्ञश्चोदितं कर्म नारभत इति तदसदेवेत्याह—कर्मेन्द्रियाणीति । कर्मेन्द्रियाणि हस्तादीनि

२ आनन्दगिरिव्याख्या ।

तीति पूर्वेण संबन्धः । कदाचित्क्षणमात्रमपि न कश्चिदकर्मकृत्तिष्ठतीत्यत्र हेतुत्वेनोत्तरार्धं व्याचष्टे—कस्मादिति । सर्वशब्दाज्ज्ञानवानपि गुणैरवशः सन् कर्म कार्यते ततश्च ज्ञानवतः संन्यासवचनमनवकाशं स्यादित्याशङ्क्याह—अज्ञ इतीति । तमेव वाक्यशेषं वाक्यशेषावष्टम्भेन स्पष्टयति—यत इति । आत्मज्ञानवतो गुणैरविचाल्यतया गुणातीतत्ववचनादज्ञस्यैव सत्त्वादिगुणैरिच्छाभेदेन कार्यकरणसंघातं प्रवर्तयितुमशक्तस्याजितकार्यकरणसंघातस्य क्रियासु प्रवर्तमानत्वमित्यर्थः । ज्ञानयोगेनेत्यादिनोक्तन्यायाच्च वाक्यशेषोपपत्तिरित्याह—सांख्यानामिति । ज्ञानिनां गुणप्रयुक्तचलनाभावेऽपि स्वाभाविकचलनबलात्कर्मयोगो भविष्यतीत्याशङ्क्याह—ज्ञानिनां त्विति । प्रत्यगात्मनि स्वारसिकचलनासंभवे प्रागुक्तं न्यायं स्मारयति—तथा चेति ॥ ५ ॥ आत्मज्ञवदनात्मज्ञस्यापि तर्हि कर्माकुर्वतो न प्रत्यवायः शरीरेन्द्रियसंघातं नियन्तुमसमर्थस्य मूर्खस्यापि संन्याससंभवादित्याशङ्क्याह—यस्त्विति । तस्य चोदिताकरणं तच्छब्देन परामृश्यते—तदसदिति । मिथ्याचारत्वादिति भावः । मिथ्याचारतामेव वर्णयति—कर्मेन्द्रियाणीति ॥ ६ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अवशः कर्मजशुद्ध्यभावादजितचित्तः कश्चिदपि जातु कदाचित्समाधिकालेऽपि क्षणमप्यकर्मकृत् कर्माणि दुर्मनोरथादीन्यकुर्वन् हि प्रसिद्धं न तिष्ठति । हि यस्मात्सर्वोऽपि लोकः प्रकृतिजैर्गुणैः सत्त्वरजस्तमोभिः स्वभावप्रभवैः रागद्वेषादिभिर्वा कर्म कायिकं वाचिकं मानसिकं वा कार्यतेऽवश्यं तत्र प्रवर्त्यते ॥ ५ ॥ ननु संन्यासपूर्वकं ध्यानेनैव चित्तशुद्धिमपि संपादयिष्यामि किं कर्मभिरित्याशङ्क्याह—कर्मेन्द्रियाणीति । यो विमूढात्मा रागाद्याक्रान्तचित्तः कर्मेन्द्रियाणि

४ मधुसूदनीव्याख्या ।

मपि कालं जातु कदाचित्कश्चिदप्यजितेन्द्रियोऽकर्मकृत्सन्न तिष्ठति, अपितु लौकिकवैदिककर्मानुष्ठानव्यग्र एव तिष्ठति । तस्मादशुद्धचित्तस्य संन्यासो न संभवतीत्यर्थः । कस्मात्पुनरविद्वान्कर्माण्यकुर्वाणो न तिष्ठति । हि यस्मात्सर्वः प्राणी चित्तशुद्धिरहितोऽवशोऽस्वतन्त्रएव सन् प्रकृतिजैः प्रकृतितो जातैरभिव्यक्तैः कार्याकारेण सत्त्वरजस्तमोभिः स्वभावप्रभवैर्वा रागद्वेषादिभिर्गुणैः कर्म लौकिकं वैदिकं वा कार्यते । अतः कर्माण्यकुर्वाणो न कश्चिदपि तिष्ठतीत्यर्थः । यतः स्वाभाविका गुणाश्चालकाः अतः परवशतया सर्वदा कर्माणि कुर्वतोऽशुद्धबुद्धेः सर्वकर्मसंन्यासो न संभवतीति न संन्यासनिबन्धना ज्ञाननिष्ठा संभवतीत्यर्थः ॥ ५ ॥ यथाकथंचिदौत्सुक्यमात्रेण कृतसंन्यासस्त्वशुद्धचित्तस्तत्फलभाङ् न भवति । यतः—यो विमूढात्मा

५ भाष्योत्कर्षदीपिका ।

दज्ञोऽशुद्धचित्तः क्षणमपि कालं जातु कदाचिदपि कस्यांचिदप्यवस्थायां अकर्मकृत्सन्न तिष्ठति । हि यस्मादस्वतन्त्र एव सर्वोऽज्ञलोकः प्रकृतितो जातैः सत्वरजस्तमोभिर्गुणैः कर्म कार्यते । एतेन कर्मणां च संन्यासस्तेष्वनासक्तिमात्रं नतु स्वरूपेणाशक्यत्वादित्याह—नहीति । कश्चिदपि ज्ञानी वाऽज्ञो वेति परास्तम् । अस्य पक्षस्य युक्तिशतेन भगवत्पादैर्निराकृतत्वात् 'गुणैर्यो न विचाल्यते' इति वक्ष्यमाणविरोधस्यात्रैवाचार्यैरुक्तत्वाच्च । अतोऽज्ञं कर्मत्यागिनं निन्दति कर्मेन्द्रियाणीति स्वपरग्रन्थविरोधाच्च ॥ ५ ॥ ननु हठात्कर्मेन्द्रियाणि संयम्याकर्मकृद्भविष्यतीत्याशङ्क्य यस्त्वनात्मज्ञोऽशुद्धान्तःकरणो हठात्कर्मेन्द्रियाणि संयम्य विहितं कर्म न करोति औत्सुक्यात्संन्यस्यति स तूभयतोभ्रष्ट इत्याह—कर्मेति । कर्मेन्द्रियाणि यो विमूढात्मा रागद्वेषादिभिर्मलिनचित्तः हस्तादीनि

६ श्रीधरीव्याख्या ।

शक्यत्वादित्याह—नहीति । जातु कस्यांचिदवस्थायां क्षणमात्रमपि कश्चिदपि ज्ञानी वाऽज्ञो वा अकर्मकृत्कर्माण्यकुर्वाणो न तिष्ठति । तत्र हेतुः, प्रकृतिजैः स्वभावप्रभवै रागद्वेषादिगुणैः सर्वोऽपि जनः कर्म कार्यते कर्मणि प्रवर्तते अवशोऽस्वतन्त्रः सन् ॥५॥ अतोऽज्ञं कर्मत्यागिनं निन्दति—कर्मेन्द्रियाणीति । वाक्पाण्यादीनि कर्मेन्द्रियाण्यपि संयम्य निगृह्य यो मनसा भगवद्ध्यानच्छलेनेन्द्रियार्थान् विषयान्

७ अभिनवगुप्ताचार्यव्याख्या ।

न्द्रियाणीति । कर्मेन्द्रियैश्चेन्न करोति अवश्यं मनसा च तर्हि करोति प्रत्युत मूढाचारः मानसानां कर्मणामत्यन्तमपरिहार्यत्वात् ॥ ६ ॥

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**
**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

संयम्य संहृत्य य आस्ते तिष्ठति मनसा स्मरंश्चिन्तयन्निन्द्रियार्थान्विषयान् विमूढात्मा विमूढान्तःकरणो मिथ्याचारो मृषाचारः पापाचारः स उच्यते ॥ ६ ॥ यस्त्विति । यस्तु पुनः कर्मण्यधिकृतोऽज्ञो बुद्धीन्द्रियाणि मनसा नियम्यारभतेऽर्जुन कर्मेन्द्रियैर्वाक्पाण्यादिभिः । किमारभत इत्याह । कर्मयोगमसक्तः सन् स विशिष्यत इतरस्मान्मिथ्याचारात् ॥ ७ ॥ यत एवमतः—नियतमिति । नियतं

२ आनन्दगिरिव्याख्या ।

अनात्मज्ञस्य चोदितमकुर्वतो जाग्रतो विषयान्तरदर्शनध्रौव्यान्मिथ्याचारत्वेन प्रत्यवायित्वमुक्त्वा विहितमनुतिष्ठतस्तस्यैव फलाभिलाषविकलस्य सदाचारत्वेन वैशिष्ट्यमाचष्टे—**यस्त्विन्द्रियाणीति** । विहितमनुतिष्ठतो मूर्खात् कर्म त्यजतो वैशिष्ट्यमक्षरयोजनया स्पष्टयति—**यस्तु पुनरिति** ॥ ७ ॥ कर्मानुष्ठायिनो वैशिष्ट्यमुपदिष्टमनूद्य तदनुष्ठान-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वागादीनि संयम्य निगृह्य आस्ते एकान्ते ध्यानापदेशेनोपविशति स मिथ्याचारः । तस्य तदासननियमनादिकमाचरणं मिथ्या अलीकमेव निष्फलत्वात् । तत्र हेतुः इन्द्रियार्थान्मनसा स्मरन्निति । यतः इन्द्रियार्थाञ्शब्दादीञ्श्रोत्रादिभिर्गृह्णाति मनसा च स्मरति अतो मिथ्याचारः स विषयांश्चिन्तयन्योगनिष्ठामात्मनो लोकेऽभिव्यनक्त्यतः कपटीत्यर्थः । तस्मात्कर्मव्यतिरिक्तश्चित्तशुद्ध्युपायो नास्तीति भावः ॥ ६ ॥ यस्तु पूर्वस्मान्मिथ्याचाराद्विलक्षणः पुरुषधौरेयः इन्द्रियाणि मनसा सह नियम्य रागद्वेषवियुक्तानि कृत्वा कर्मेन्द्रियैः कर्मयोगमारभते हे अर्जुन, सः कर्मफले स्वर्गादावैहिके वा शब्दादौ असक्तोऽनासक्तोऽतो विशिष्यते । पूर्वस्मादधिको भवतीत्यर्थः ॥ ७ ॥ **नियत-**

४ मधुसूदनीव्याख्या ।

रागद्वेषादिदूषितान्तःकरण औत्सुक्यमात्रेण कर्मेन्द्रियाणि वाक्पाण्यादीनि संयम्य निगृह्य, बहिरिन्द्रियैः कर्माण्यकुर्वन्निति यावत् । मनसा रागादिप्रेरितेनेन्द्रियार्थाञ्शब्दादीन् नत्वात्मतत्त्वं स्मरन्नास्ते कृतसंन्यासोऽहमित्यभिमानेन कर्मशून्यस्तिष्ठति स मिथ्याचारः सत्त्वशुद्ध्यभावेन फलायोग्यत्वात्पापाचार उच्यते 'त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । श्रुत्येह विहितो यस्मात्तत्त्यागी पतितो भवेत् ॥' इत्यादिधर्मशास्त्रेण । अत उपपन्नं नच संन्यसनादेवाशुद्धान्तःकरणः सिद्धिं समधिगच्छतीति ॥ ६ ॥ औत्सुक्यमात्रेण सर्वकर्माण्यसंन्यस्य चित्तशुद्धये निष्कामकर्माण्येव यथाशास्त्रं कुर्यात् । यस्मात्—तुशब्दोऽशुद्धान्तःकरणसंन्यासिव्यतिरेकार्थः । इन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि मनसा सह नियम्य पापहेतुशब्दादिविषयासक्तेर्निवर्त्य, मनसा विवेकयुक्तेन नियम्येति वा, कर्मेन्द्रियैर्वाक्पाण्यादिभिः कर्मयोगं शुद्धिहेतुतया विहितं कर्मारभते करोत्यसक्तः फलाभिलाषशून्यः सन् यो विवेकी स इतरस्मान्मिथ्याचाराद्विशिष्यते । परिश्रमसाम्येऽपि फलातिशयभाक्त्वेन श्रेष्ठो भवति । हे अर्जुन, आश्चर्यमिदं पश्य यदेकः कर्मेन्द्रियाणि निगृह्णञ्ज्ञानेन्द्रियाणि व्यापारयन्पुरुषार्थशून्यः, अपरस्तु ज्ञानेन्द्रियाणि निगृह्य कर्मेन्द्रियाणि व्यापारयन्परमपुरुषार्थभाग्भवतीति ॥ ७ ॥ यस्मादेवं तस्मान्मनसा ज्ञानेन्द्रियाणि निगृह्य कर्मेन्द्रियैः—त्वं प्रागननुष्ठितशुद्धिहेतुकर्मा नियतं विध्युद्देशे फलसंबन्धशून्यतया नियतनिमित्तेन

५ भाष्योत्कर्षदीपिका ।

संहृत्य इन्द्रियार्थाञ्शब्दादीन्मनसा स्मरन्नास्ते स मिथ्याचारोऽसदाचारः पापाचार उच्यते ॥ ६ ॥ **य इति** । यस्त्वज्ञः कर्मण्यधिकृतः ज्ञानेन्द्रियाणि विवेकवैराग्ययुक्तेन मनसा नियम्य । मनसा सहेत्यर्थस्त्वरुचिग्रस्तः । अरुचिबीजं तु पूर्वश्लोकोक्तस्य मनसः करणत्वस्य त्यागः सहशब्दाध्याहारश्च । फलाभिसंधिरहितः कर्मेन्द्रियैः कर्मयोगमारभते स पूर्वस्माच्छ्रेष्ठो भवति ज्ञाननिष्ठोपाये स्थितो यतः । अर्जुनेति संबोधयन् एवमेव त्वमपि कुर्वन् अन्वर्थसंज्ञो भविष्यसीति ध्वनयति ॥ ७ ॥ यतएवमतो नियतं स्ववर्णा-

६ श्रीधरीव्याख्या ।

स्मरन्नास्ते अविशुद्धतया मनसा आत्मनि स्थैर्याभावात् स मिथ्याचारः कपटाचारो दाम्भिक उच्यत इत्यर्थः ॥ ६ ॥ एतद्विपरीतः कर्मकर्ता श्रेष्ठ इत्याह—**यस्त्विति** । यस्तु ज्ञानेन्द्रियाणि मनसा नियम्य ईश्वरप्रवणानि कृत्वा कर्मेन्द्रियैः कर्मरूपं उपायमारभतेऽनुतिष्ठति असक्तः फलाभिलाषरहितः सन् स विशिष्यते विशिष्टो भवति । चित्तशुद्ध्या ज्ञानवान्भवतीत्यर्थः ॥ ७ ॥ यस्मादेवं तस्मात्—**नियत-**

७ अभिनवगुप्ताचार्यव्याख्या ।

यस्त्विति । कर्मसु क्रियमाणेषु न ज्ञानहानिः मनसो व्यापारे यन्त्रपुरुषवत्कर्मणः क्रियमाणत्वात् ॥ ७ ॥ अतो नियतं कुर्विति । नियतं

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**नित्यं यो यस्मिन्कर्मण्यधिकृतः फलाय चाश्रुतं तन्नियतं कर्म तत् कुरु त्वं हेऽर्जुन, यतः कर्म ज्यायोऽधिकतरं फलतो हि यस्मात्तदकर्मणोऽकरणादनारम्भात् । कथं शरीरयात्रा शरीरस्थितिरपि च ते तव न प्रसिद्ध्येत् प्रसिद्धिं न गच्छेदकर्मणोऽकरणात् । अतो दृष्टः कर्माकर्मणोर्विशेषो लोके ॥ ८ ॥ यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसत्, कथं—यज्ञार्थादिति । 'यज्ञो वै विष्णुः' इति श्रुतेर्यज्ञ ईश्वरस्तदर्थं यत्क्रियते तद्यज्ञार्थं कर्म, तस्मात्कर्मणोऽन्यत्रान्येन कर्मणा लोकोऽयमधि-**

२ आनन्दगिरिव्याख्या ।

मधिकृतेन कर्तव्यमिति निगमयति—**यत इति** । उक्तमेव हेतुं भगवदनुमतिकथनेन स्फुटयति—**कर्मेति** । इतश्च त्वया कर्तव्यं कर्मेत्याह—**शरीरेति** । तन्नियतं तस्याधिकृतस्येति संबन्धः । स्वर्गादिफले दर्शपूर्णमासादावधिकृतस्य तस्य तदपि नित्यं स्यादित्याशङ्क्य विशिनष्टि—**फलायेति** । नित्यं कर्मेति नियमेन कर्तव्यमित्यत्र हेतुमाह—**यत इति** । हिशब्दोपात्तमुक्तमेव हेतुमनुवदति—**यस्मादिति** । करणस्याकरणाज्ज्यायस्त्वं प्रश्नपूर्वकं प्रकटयति—**कथमित्यादिना** । सत्येव कर्मणि देहादिचेष्टाद्वारा शरीरं स्थातुं पारयति तदभावे जीवनमेव दुर्लभं भवेदिति फलितमाह—**अत इति** ॥ ८ ॥ 'कर्मणा बध्यते जन्तुः' इति स्मृतेर्बन्धार्थं कर्म तन्न श्रेयोर्थिना कर्तव्यमित्याशङ्कामनूद्य दूषयति—**यच्चेत्यादिना** । कर्माधिकृतस्य तदकरणमयुक्तमिति प्रतिज्ञातं प्रश्नपूर्वकं विवृणोति—**कथमित्यादिना** । फलाभिसन्धिमन्तरेण यज्ञार्थं कर्म कुर्वाणस्य बन्धाभावात्तादर्थ्येन कर्म कर्तव्यमित्याह—**तदर्थमिति** । यज्ञार्थं कर्मेत्ययुक्तं नहि कर्मार्थमेव कर्मेत्याशङ्क्य व्याचष्टे—**यज्ञो वै विष्णुरिति** । कथं तर्हि कर्मणा बध्यते जन्तुरिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

**मिति** । यस्मादेवं तस्मात्त्वं नियतं संध्योपासनादिकर्मैव कुरु । यद्वा नियतं नियमेन त्वं कर्म नित्यकाम्यसाधारणं यत्पापनिवर्तकस्वभावं तत्तदेव कुरु । हि यस्मादकर्मणः सकलकर्मेन्द्रियनिग्रहेण तदकरणाच्चित्तजयशून्यात्कर्मैव ज्यायः प्रशस्ततरम् । अपिच ते तव क्षत्रियस्य अकर्मणः सत्यामपि चित्तशुद्धौ सर्वकर्मत्यागिनः शरीरयात्रा देहव्यवहारो न प्रसिध्येत् । भैक्ष्यचर्यायामनधिकारात् 'ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति संन्यासविधायके वाक्ये 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र राजपदवद्ब्राह्मणपदस्य विवक्षितस्वार्थत्वात् 'चत्वार आश्रमा ब्राह्मणस्य त्रयो राजन्यस्य द्वौ वैश्यस्य' इति स्मृतेश्च । अन्यत्राप्युक्तं पारिव्राज्यं प्रकृत्य 'मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते ॥' इति ॥ ८ ॥ ननु 'कर्मणा बध्यते जन्तुः' इति कर्मणां बन्धकत्वस्मृतेः कथं मुमुक्षुं मां तत्र नियोजयसीत्याशङ्क्याह—**यज्ञार्थादिति** । यज्ञः परमेश्वराराधनं 'यज देवपूजायाम्' इति धात्वर्थानुगमात् । तदर्थं 'यज्ञो वै विष्णुः' इति श्रुते-

४ मधुसूदनीव्याख्या ।

कर्म श्रौतं स्मार्तं च नित्यमिति प्रसिद्धं कुरु । कुर्विति मध्यमपुरुषप्रयोगेणैव त्वमिति लब्धे त्वमिति पदमर्थान्तरे संक्रमितम् । कस्मादशुद्धान्तःकरणेन कर्मैव कर्तव्यम्, हि यस्मात् अकर्मणोऽकरणात्कर्मैव ज्यायः प्रशस्यतरम् । न केवलं कर्माभावे तवान्तःकरणशुद्धिरेव न सिध्येत्, किंतु अकर्मणो युद्धादिकर्मरहितस्य ते तव शरीरयात्रा शरीरस्थितिरपि न प्रकर्षेण क्षात्रवृत्तिकृतत्वलक्षणेन सिध्येत् । तथाच प्रागुक्तम् । अपिचेत्यन्तःकरणशुद्धिसमुच्चयार्थः ॥ ८ ॥ 'कर्मणा बध्यते जन्तुः' इति स्मृतेः सर्वं कर्म बन्धात्मकत्वान्मुमुक्षुणा न कर्तव्यमिति मत्वा तस्योत्तरमाह—यज्ञः परमेश्वरः 'यज्ञो वै विष्णुः'

५ भाष्योत्कर्षदीपिका ।

श्रमोचितं नित्यं कर्म त्वं फलाभिसंधिरहितः कुरु । हि यस्मादकरणात् चित्तशोधकं कर्म श्रेष्ठं न केवलमकरणाच्चित्तशुद्ध्यभाव एव किंतु शरीरयात्रापि शरीरस्थितिरपि च ते प्रकर्षेण स्वधर्मवृत्त्या न सिध्येदकर्मणः ॥ ८ ॥ ननु 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते' इति स्मृत्या यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसदित्याह—**यज्ञेति** । यज्ञार्थादीश्वरार्थात् । 'यज्ञो वै

६ श्रीधरीव्याख्या ।

**मिति** । नियतं नित्यं संध्योपासनादिकर्म कुरु । हि यस्मादकर्मणः कर्माकरणात्सकाशात्कर्म ज्यायोऽधिकतरम् । अन्यथा कर्मणः सर्वकर्मशून्यस्य तव शरीरनिर्वाहोऽपि न भवेत् ॥ ८ ॥ सांख्यास्तु सर्वमपि कर्म बन्धकत्वान्न कार्यमित्याहुस्तन्निराकुर्वन्नाह—**यज्ञार्था-**

७ अभिनवगुप्ताचार्यव्याख्या ।

शास्त्रीयं कर्म कुरु । शरीरयात्रामात्रस्यापि कर्माधीनत्वात् ॥ ८ ॥ यतः यज्ञार्थादिति । यज्ञार्थादवश्यकरणीयादन्यानि कर्माणि बन्धकानि ।

**सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कृतः कर्मकृत् कर्मबन्धनः कर्म बन्धनं यस्य सोऽयं कर्मबन्धनो लोको नतु यज्ञार्थादतस्तदर्थं यज्ञार्थं कर्म कौन्तेय, मुक्तसङ्गः कर्मफलसङ्गवर्जितः सन् समाचर निर्वर्तय ॥ ९ ॥ इतश्चाधिकृतेन कर्म कर्तव्यं—सहेति । सहयज्ञा यज्ञसहिताः प्रजास्त्रयो वर्णास्ताः सृष्ट्वोत्पाद्य पुरा पूर्वं सर्गादावुवाचोक्तवान्प्रजापतिः प्रजानां स्रष्टा, अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिरुत्पत्तिस्तां कुरुध्वम् । एष यज्ञो वो युष्माकमस्तु भवत्विष्टकामधुगिष्टानभिप्रेतान्कामान्फलविशेषान्दोग्धीतीष्टकामधुक् ॥ १० ॥**

२ आनन्दगिरिव्याख्या ।

**स्मृतिस्तत्राह—तस्मादिति** । ईश्वरार्पणबुद्ध्या कृतस्य कर्मणो बन्धार्थत्वाभावे फलितमाह—**अत इति** ॥ ९ ॥ **नित्यस्य** कर्मणो नैमित्तिकसहितस्याधिकृतेन कर्तव्यत्वे हेत्वन्तरपरत्वेनानन्तरश्लोकमवतारयति—**इतश्चेति** । कथं पुनरनेन

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

र्विष्णुर्वा तदाराधनार्थं यत्कर्म ततोऽन्यत्र कर्मणि स्वर्गाद्यर्थे प्रवृत्तोऽयं लोकः कर्मबन्धनः कर्मणा बध्यते नत्वीश्वराराधनार्थेन । अतस्तदर्थं ईश्वराराधनार्थं कर्म वर्णाश्रमोचितं हे कौन्तेय, मुक्तसङ्गः फलाभिलाषशून्यः सन् समाचर सम्यक्कुरु ॥ ९ ॥ एतदेवार्थवादेन द्रढयति—**सहेति** । यज्ञैः सहेति सहयज्ञाः । 'वोपसर्जनस्य' इति पक्षे सादेशाभावः । कर्माधिकृता इति यावत् । प्रजास्त्रैवर्णिकाः । अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिस्तां लभध्वम् । एष

४ मधुसूदनीव्याख्या ।

इति श्रुतेः । तदाराधनार्थं यत्कर्म क्रियते तद्यज्ञार्थं तस्मात्कर्मणोऽन्यत्र कर्मणि प्रवृत्तोऽयं लोकः कर्माधिकारी कर्मबन्धनः कर्मणा बध्यते नत्वीश्वराराधनार्थेन । अतस्तदर्थं यज्ञार्थं कर्म हे कौन्तेय, त्वं कर्मण्यधिकृतो मुक्तसङ्गः सन्समाचर सम्यक् श्रद्धादिपुरःसरमाचर ॥ ९ ॥ प्रजापतिवचनादप्यधिकृतेन कर्म कर्तव्यमित्याह—**सहयज्ञा इत्यादिचतुर्भिः** । सह यज्ञेन विहितकर्मकलापेन वर्तन्ते इति सहयज्ञाः । कर्माधिकृता इति यावत् । 'वोपसर्जनस्य' इति पक्षे सादेशाभावः । प्रजाः त्रीन्वर्णान् पुरा कल्पादौ सृष्ट्वोवाच प्रजानां पतिः स्रष्टा । किमुवाचेत्याह—अनेन यज्ञेन स्वाश्रमोचितधर्मेण प्रसविष्यध्वं प्रसूयध्वम् । प्रसवो वृद्धिः । उत्तरोत्तरामभिवृद्धिं लभध्वमित्यर्थः । कथमनेन वृद्धिः स्यादत आह—एष यज्ञाख्यो धर्मो वो युष्माकं इष्टकामधुक्, इष्टानभिमतान्कामान्काम्यानि फलानि दोग्धि प्रापयतीति तथा । अभीष्टभोगप्रदोऽस्त्वित्यर्थः । अत्र यद्यपि यज्ञग्रहणमावश्यककर्मोपलक्षणार्थं अकरणे प्रत्यवायस्याग्रे कथनात् । काम्यकर्मणां च प्रकृते प्रस्तावो नास्त्येव 'मा कर्मफलहेतुर्भूः' इत्यनेन निराकृतत्वात्, तथापि नित्यकर्मणामप्यानुषङ्गिकफलसद्भावात् 'एष वोऽस्त्विष्टकामधुक्' इत्युपपद्यते । तथाचापस्तम्बः स्मरति—'तद्यथाम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते नोचेदनूत्पद्यन्ते न धर्महानिर्भवति' इति । फलसद्भावेऽपि तदभिसंध्यनभिसंधिभ्यां काम्यनित्ययोर्विशेषः । अनभिसंहितस्यापि

५ भाष्योत्कर्षदीपिका ।

विष्णुः' इति श्रुतेः कर्मणोऽन्यत्रान्येन कर्मणाऽयं लोकः कर्म बन्धनं यस्य सः । ये[1] त्वन्यत्र कर्मणि प्रवृत्तोऽयं लोकः कर्मणा बध्यत इति भाष्यविरुद्धं वर्णयन्ति तैः प्रवृत्तपदाध्याहारदोषः कर्मण्यनुशासनाभावाद्बहुलग्रहणस्यागतिकगतित्वात् ल्युडनुपपत्तिदोषो बहुव्रीह्यभावेन पुंलिङ्गानुपपत्तिदोषश्च परिहरणीयः । तस्मात्कर्मफलासंगवर्जितःसन् यज्ञार्थं कर्म समाचर । कौन्तेयेति संबोधयन् स्वपक्षग्रहण उत्साहयति ॥९॥ इतश्च हेतोरधिकृतेन कर्म कर्तव्यं, प्रजापतिर्ब्रह्मा सर्गादौ यज्ञसहिताः त्रैवर्णिकाः प्रजाः सृष्ट्वोवाच । अनेन यज्ञेन कर्मणा प्रसविष्यध्वं वृद्धिं लभध्वं उत्पत्तिं कुरुध्वम् । वृद्ध्यादिहेतुत्वमस्यास्तीत्याह । एष यज्ञो वो युष्माकमभिप्रेतभोगप्रदो

६ श्रीधरीव्याख्या ।

**दिति** । यज्ञोऽत्र विष्णुः । 'यज्ञो वै विष्णुः' इति श्रुतेः । तदाराधनार्थात्कर्मणोऽन्यत्र तदेकं विनाऽयं लोकः कर्मबन्धनः कर्मभिर्बध्यते न त्वीश्वराराधनार्थेन कर्मणा । अतस्तदर्थं विष्णुप्रीत्यर्थं मुक्तसङ्गो निष्कामः सन्कर्म सम्यगाचर ॥ ९ ॥ प्रजापतिवचनादपि कर्मकर्तैव श्रेष्ठ इत्याह—**सहयज्ञा इति** चतुर्भिः । यज्ञेन सह वर्तन्त इति सहयज्ञाः यज्ञाधिकृता ब्राह्मणाद्याः प्रजाः पुरा सर्गादौ सृष्ट्वा ब्रह्मेदमुवाच । अनेन यज्ञेन प्रसविष्यध्वं प्रसूयध्वम् । प्रसवो वृद्धिः । उत्तरोत्तरामभिवृद्धिं लभध्वमित्यर्थः । तत्र हेतुः । एष यज्ञो वो युष्माकमिष्टकामधुगिष्टान्कामान्दोग्धीति तथा । अभीष्टभोगप्रदोऽस्त्वित्यर्थः । अत्र च यज्ञग्रहणमावश्यककर्मोपलक्षणार्थम् । काम्यकर्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

अवश्यकर्तव्यमुक्तफलसङ्गतया क्रियमाणं न फलदम् ॥ ९ ॥ सहेति । प्रजापतिः परमात्मा प्रजाः सहैव कर्मभिः ससर्ज । तेन प्रजानां कर्मभ्य एव प्रसवः संतानः । एतान्येव चेद्वं संसारं मोक्षं वा दास्यन्ति । सङ्गात्संसारं मुक्तसङ्गत्वान्मोक्षम् । यत्र येषां मोक्षप्राधान्यं

---

1 नीलकण्ठः मधुसूदनः श्रीधरश्च.

**देवान्भावयतानेन ते देवा भावयन्तु वः ।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥**
**इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।**
**तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कथं—देवानिति । देवानिन्द्रादीन् भावयत वर्धयतानेन यज्ञेन, ते देवा भावयन्त्वाप्याययन्तु वृष्ट्यादिना वो युष्मान्, एवं परस्परमन्योन्यं भावयन्तः श्रेयः परं ज्ञानप्राप्तिक्रमेणावाप्स्यथ, स्वर्गं वा परं श्रेयोऽवाप्स्यथ ॥ ११ ॥ किंच—इष्टान्भोगानिति । इष्टानभिप्रेतान्भोगान् हि वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन् यज्ञभाविता यज्ञैर्वर्धितास्तोषिता इत्यर्थः । तैर्देवैर्दत्तान्भोगानप्रदायादत्त्वानृण्यमकृत्वेत्यर्थः, एभ्यो देवेभ्यो यो भुङ्क्ते स्वदेहेन्द्रियाण्येव तर्पयति स्तेन एव

२ आनन्दगिरिव्याख्या ।

यज्ञेन वृद्धिरस्माभिः शक्या कर्तुमित्याशङ्क्याह—एष इति ॥ १० ॥ कथं पुनरभीष्टफलविशेषहेतुत्वं यज्ञस्य विज्ञायते, नहि देवताप्रसादादृते स्वर्गादिरभ्युदयो लभ्यते, नापि सम्यग्दर्शनमन्तरेण निःश्रेयसं सेद्धुं पारयतीति शङ्कते—कथमिति । तत्र श्लोकेनोत्तरमाह—देवानिति । मुमुक्षुत्वबुभुक्षुत्वविभागेन श्रेयसि विकल्पः ॥ ११ ॥ इतश्चाधिकृतेन कर्म कर्तव्यमित्याह—किंचेति । कथमस्माभिर्भाविताः सन्तो देवा भावयिष्यन्त्यस्मानिति तदाह—इष्टानिति । यज्ञानुष्ठानेन पूर्वोक्तरीत्या स्वर्गापवर्गयोर्भावेऽपि कथं स्त्रीपशुपुत्रादिसिद्धिरित्याशङ्क्य पूर्वार्धं व्याकरोति—इष्टानभिप्रेतानिति । पश्वादिभिश्च यज्ञानुष्ठानद्वारा भोगो निवर्तनीयोऽन्यथा प्रत्यवायप्रसङ्गादित्युत्तरार्धं व्याचष्टे—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यज्ञो वो युष्माकमिष्टकामधुगिष्टार्थपूरकोऽस्तु ॥ १० ॥ इष्टार्थपूरकत्वमेवाह—देवानिति । भावयत तर्पयत । अनेन देवतापूजात्मकेन यज्ञेन ते वो युष्मान्भावयन्तु वृष्ट्यादिदानेन । परस्परं भावयन्तो देवाश्च यूयं च श्रेयः परं प्राप्स्यथ ॥ ११ ॥ किंच इष्टान्पुत्रपश्वादीन्वो युष्मभ्यम् । एभ्यो देवेभ्यस्तद्दत्तानेत्र व्रीहिपश्वाज्यादीनप्रदायादत्त्वा देवतोद्देशेन द्रव्यत्यागात्मकं यागं नित्यनैमित्तिकरूपं वैश्वदेवाग्निहोत्रजातेष्ट्यादिरूपमकृत्वेत्यर्थः । अदत्त्वा यो भुङ्क्ते

४ मधुसूदनीव्याख्या ।

वस्तुस्वभावादुत्पत्तौ न विशेषः । विस्तरेण चाग्रे प्रतिपादयिष्यते ॥ १० ॥ कथमिष्टकामदोग्धृत्वं यज्ञस्येति तदाह—अनेन यज्ञेन यूयं यजमाना देवानिन्द्रादीन्भावयत हविर्भागैः संवर्धयत । तर्पयतेत्यर्थः । ते देवा युष्माभिर्भाविताः सन्तो वो युष्मान्भावयन्तु वृष्ट्यादिनान्नोत्पत्तिद्वारेण संवर्धयन्तु । एवमन्योन्यं संवर्धयन्तो देवाश्च यूयं च परं श्रेयोऽभिमतमर्थं प्राप्स्यथ । देवास्तृप्तिं प्राप्स्यन्ति, यूयं च स्वर्गाख्यं परं श्रेयः प्राप्स्यथेत्यर्थः ॥ ११ ॥ न केवलं पारत्रिकमेव फलं यज्ञात् किंत्वैहिकमपीत्याह—इष्टानभिलषितान्भोगान्पश्वन्नहिरण्यादीन् वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति । हि यस्मात् यज्ञैर्भावितास्तोषितास्ते । यस्मात्तैर्ऋणवद्भवद्भ्यो दत्ता भोगास्तस्मात्तैर्देवैर्दत्तान्भोगानेभ्यो देवेभ्योऽप्रदाय यज्ञेषु

५ भाष्योत्कर्षदीपिका ।

भवतु ॥ १० ॥ कथमित्याकाङ्क्षायामाह—अनेनेति । अनेन यज्ञेन देवानिन्द्रादीन् वर्धयत । ते वृष्ट्यादिद्वाराऽन्नदानेन युष्मान् वर्धयन्तु । एवं परस्परं वर्धयन्तोऽभीष्टं परं परलोके स्वर्गादिकमवाप्स्यथ ॥ ११ ॥ किंच ते देवा यज्ञैर्वर्धिता वो युष्मभ्यं इष्टान् भोगान् स्त्रीपुत्रपशुस्वर्णादीन् वितरिष्यन्ति । यस्तु तैर्देवैर्दत्तान्भोगानेभ्यो देवेभ्योऽदत्त्वा आनृण्यमकृत्वा स्वदेहादीन्येव तर्पयति स

६ श्रीधरीव्याख्या ।

प्रशंसा तु प्रकरणेऽसंगतापि सामान्यतोऽकर्मणः कर्मश्रेष्ठमित्येतदर्थेत्यदोषः ॥ १० ॥ कथमिष्टकामदोग्धा यज्ञो भवेदित्यत्राह—देवानिति । अनेन यज्ञेन यूयं देवान्भावयत हविर्भागैः संवर्धयत । ते च देवा वो युष्मान्संवर्धयन्तु वृष्ट्यादिनान्नोत्पत्तिद्वारेण । एवमन्योन्यं संवर्धयन्तो देवाश्च यूयं च परस्परं श्रेयोऽभीष्टमर्थं प्राप्स्यथ ॥ ११ ॥ एतदेव स्पष्टीकुर्वन्कर्माकरणे दोषमाह—इष्टानिति । यज्ञैर्भाविताः सन्तो देवा वृष्ट्यादिद्वारेण वः युष्मभ्यं भोगान्दास्यन्ति हि । अतो देवैर्दत्तानन्नादीनेभ्यो देवेभ्यः पञ्चयज्ञादिभिरदत्त्वा यो

७ अभिनवगुप्ताचार्यव्याख्या ।

तैरेव विषयाः सेव्या इत्युच्यते ॥ १० ॥ देवान्भावयतेति । देवाः क्रीडाशीला इन्द्रियवृत्तयः करणेश्वर्यो देवता रहस्यशास्त्रप्रसिद्धाः ता अनेन कर्मणा तर्पयत । यथासंभवं विषयान्भक्षयतेत्यर्थः । तृप्ताश्च सत्यस्ता वो युष्मानात्मन एव स्वरूपमात्रोचितानपवर्गान्भावयन्तु स्वात्मस्थितियोग्यत्वात् । एवमनवरतं व्युत्थानसमाधिसमयपरम्परायामिन्द्रियतर्पणतदात्मसाङ्ख्यावलक्षणे परस्परभावने सति शीघ्रमेव परमं श्रेयः परस्परभेदविगलनलक्षणं ब्रह्म प्राप्स्यथ ॥ ११ ॥ न केवलमिदमपवर्गे, यावत्सिद्धिलाभेऽप्ययं मार्ग इत्याह—इष्टानिति । यज्ञतर्पितानि हीन्द्रियाणि स्थितिं बध्नन्ति यत्र क्वापि ध्येयादाविति । अत एतद्व्यापारे सति तेषां विषयाणां स्मृतिसंकल्पध्यानादिना भावा विषया

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तस्कर एव स देवादिस्वापहारी ॥ १२ ॥ यज्ञेति । ये पुनर्देवयज्ञादीन्निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः सर्वपापैश्चुल्ल्यादिपञ्चसूनाकृतैः प्रमादकृतहिंसादिजनितैश्चान्यैः । ये त्वात्मम्भरयो भुञ्जते ते त्वघं पापं स्वयमपि पापा ये पचन्ति पाकं

२ आनन्दगिरिव्याख्या ।

तैरिति । आनृण्यमकृत्वेत्यर्थः । अयमर्थः—देवानामृषीणां पितॄणां च यज्ञेन ब्रह्मचर्येण प्रजया च संतोषमनापाद्य स्वकीयं कार्यकरणसंघातमेव पोष्टुं भुञ्जानस्तस्करो भवतीति ॥ १२ ॥ देवादिभ्यः संविभागमकृत्वा भुञ्जानानां प्रत्यवायित्वमुक्त्वा तदन्येषां सर्वदोषराहित्यं दर्शयति—ये पुनरिति । यज्ञशिष्टाशिनो ये पुनस्ते तादृशाः सन्तः सर्वकिल्बिषैर्मुच्यन्त इति योजना । तैर्दत्तानित्यादिनोक्तं निगमयति—भुञ्जत इति । देवयज्ञादीनित्यादिशब्देन पितृयज्ञो मनुष्ययज्ञो भूतयज्ञो ब्रह्मयज्ञश्चेति चत्वारो यज्ञा गृह्यन्ते, चुल्लीशब्देन पिठरधारणाद्यर्थक्रियां कुर्वन्तो विन्यासविशेषवन्तस्त्रयो ग्रावाणो विवक्ष्यन्ते । आदिशब्देन कण्डनी पेषणी मार्जन्युदककुम्भश्चेत्येते हिंसाहेतवो गृहीतास्तान्येतानि पञ्च प्राणिनां सूनास्थानानि हिंसाकारणानि तत्प्रयुक्तैः सर्वैरपि बुद्ध्यबुद्धिपूर्वकैर्दुरितैर्मुच्यन्त इति संबन्धः । प्रमादो विचारव्यतिरेकेणाबुद्धिपूर्वकमुपनतं पादपातादिकर्म तेन प्राणिनां हिंसा संभाव्यते । आदिशब्देनाशुचिसंस्पर्शादि गृहीतं, तदुत्थैश्च पापैर्महायज्ञकारिणो मुच्यन्ते । उक्तंहि 'कण्डनं पेषणं चुल्ली उदकुम्भश्च मार्जनी । पञ्च सूना गृहस्थस्य पञ्चयज्ञात्प्रणश्यति' इति । 'पञ्च सूना गृहस्थस्य चुल्ली पेषण्यवस्करः । कण्डनी चैव कुम्भश्च बध्यन्ते यांस्तु वाहयन्' इति च । अस्यायमर्थः—या यथोक्ताः पञ्चसंख्याका गृहस्थस्य सूनास्ता यो वाहयन्नापादयन् वर्तते तेन प्राणिनो बुद्धिपूर्वकमबुद्धिपूर्वकं च बध्यन्ते तत्प्रयुक्तं सर्वमपि पापं महायज्ञानुष्ठानात्प्रणश्यतीति महायज्ञानुष्ठानस्तुत्यर्थम् । तदनुष्ठानविमुखान्निन्दति—ये त्विति । आत्मंभरित्वमेव स्फोरयति—ये पचन्तीति । स्वदेहेन्द्रियपोषणार्थमेव पाकं कुर्वतां देवयज्ञादिपराङ्मुखानां पापभूयस्त्वं दर्शयति—भुञ्जत इति । पाठक्रमस्त्वर्थक्रमादपबाधनीयः ॥ १३ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स स्तेन एव ॥ १२ ॥ ये तु यज्ञशिष्टाशिनः वैश्वदेवादिशेषान्नभोजनशीलाः सन्तः ऋणापाकरणात् ते मुच्यन्ते सर्वकिल्बिषैः प्रमादकृतैर्विहिताकरणनिमित्तैः पञ्चसूनानिमित्तैर्वा । ये त्वात्मकारणात्स्वार्थमेव पचन्ति नतु पञ्चमहायज्ञार्थं ते पापाः स्वयं पापरूपा एव सन्तः पापमेव भुञ्जते । तथाच स्मृतिः 'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥' इति 'पञ्चसूनाकृतं पापं पञ्चयज्ञैर्व्यपोहति' इति च । श्रुतिश्च 'इदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत्' इति । मन्त्रवर्णोऽपि

४ मधुसूदनीव्याख्या ।

देवोद्देशेनाहुतीरसंपाद्य यो भुङ्क्ते देहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव स देवस्वापहारी देवर्णानपाकरणात् ॥ १२ ॥ ये तु वैश्वदेवादियज्ञावशिष्टममृतं येऽश्नन्ति ते सन्तः शिष्टा वेदोक्तकारित्वेन देवाद्यृणापाकरणात् । अतस्ते मुच्यन्ते । सर्वैर्विहिताकरणनिमित्तैः पूर्वकृतैश्च पञ्चसूनानिमित्तैः किल्बिषैः । भूतभाविपातकासंसर्गिणस्ते भवन्तीत्यर्थः । एवमन्वये भूतभाविपापाभावमुक्त्वा व्यतिरेके दोषमाह—भुञ्जते इति । ते वैश्वदेवाद्यकारिणोऽघं पापमेव । तुशब्दोऽवधारणे । ये

५ भाष्योत्कर्षदीपिका ।

तस्कर एव देवादिस्वापहारी ॥ १२ ॥ ये पुनर्यज्ञान् 'ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैवच । भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्तिताः ॥' अध्यापनमध्ययनं चाद्यः, होमो द्वितीयः, तर्पणं श्राद्धं च तृतीयः, भूतेभ्यो बलिप्रदानं चतुर्थः, अतिथिपूजनं पञ्चमः इत्युक्तान्कृत्वा तच्छिष्टममृतमशितुं शीलं येषां ते सन्तः सर्वपापैः 'कण्डणी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य वर्तन्तेऽहरहः

६ श्रीधरीव्याख्या ।

भुङ्क्ते स तु चोर एव ज्ञेयः ॥ १२ ॥ अतश्च यजन्त एव श्रेष्ठा नेतरा इत्याह—**यज्ञशिष्टाशिन इति** । वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्चसूनाकृतैः सर्वैः किल्बिषैर्मुच्यन्ते । पञ्चसूनाश्च स्मृतावुक्ताः-'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना गृहस्थस्य

७ अभिनवगुप्ताचार्यव्याख्या ।

इन्द्रियैरेव दत्ताः, यदि तेषामेवोपभोगाय न दीयन्ते तर्हि स्तेनत्वं चौर्यं स्यात् छद्मचारित्वात् । उक्तंहि पूर्वमेव भगवता 'मिथ्याचारः स उच्यते' इति । अतोऽयं वाक्यार्थः—यः सुखोपायं सिद्धिमपवर्गं वा प्रेप्सति तेनेन्द्रियकौतुकनिवृत्तिमात्रफलतयैव भोगा यथोपनतमासेव्या इति ॥ १२ ॥ यज्ञशिष्टेति । अवश्यकर्तव्यतारूपशासनमहिमायातान्भोगान्येऽश्नन्ति अवान्तरव्यापारमात्रतयातएव च पृथक्फलत्वाभावाङ्गतया । अथचेन्द्रियात्मकदेवगणतर्पणलक्षणयज्ञादवशिष्टमन्तःसारस्वात्मस्थित्यानन्दनलक्षणविघसं येऽश्नन्ति तत्रारूढा भवन्ति तदुपादेयोपायतया तु विषयभोगं वाञ्छन्ति ते सर्वकिल्बिषैः शुभाशुभैर्मुच्यन्ते । येत्वात्मकारणादिति । अविद्यावशात्स्थूलमेव विषयभोगं परत्वेन

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम्।

निर्वर्तयन्त्यात्मकारणादात्महेतोः ॥१३॥ इतश्चाधिकृतेन कर्म कर्तव्यम्। जगच्चक्रप्रवृत्तिहेतुर्हि कर्म। कथमिति उच्यते—अन्नाद्भवन्तीति। अन्नाद्भुक्ताल्लोहितरेतःपरिणतात्प्रत्यक्षं भवन्ति जायन्ते भूतानि, पर्जन्याद्वृष्टेरन्नस्य संभवोऽन्नसंभवः, यज्ञाद्भवति पर्जन्यः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः। यज्ञोऽपूर्वं स च यज्ञः कर्मसमुद्भव ऋत्विग्यजमानयोश्च व्यापारः कर्म ततः समुद्भवो यस्य यज्ञस्यापूर्वस्य स यज्ञः कर्मसमुद्भवः ॥ १४ ॥ तच्च

२ आनन्दगिरिव्याख्या।

देवयज्ञादिकं कर्माधिकृतेन कर्तव्यमित्यत्र हेत्वन्तरमितःशब्दोपात्तमेव दर्शयति—**जगदिति**। ननु भुक्तमन्नं रेतोलोहितपरिणतिक्रमेण प्रजारूपेण जायते तच्चान्नं वृष्टिसंभवं प्रत्यक्षदृष्टं तत्कथं कर्मणो जगच्चक्रप्रवर्तकत्वमिति शङ्कते—**कथमिति**। पारंपर्येण कर्मणस्तद्धेतुत्वं साधयति—**उच्यत इति**। उक्तेऽर्थे स्मृत्यन्तरं संवादयति—**अग्नाविति**। तत्र हि देवताभिध्यानपूर्वकं तदुद्देशेन प्रहिताहुतिरपूर्वतां गता रश्मिद्वारेणादित्यमारुह्य वृष्ट्यात्मना पृथिवीं प्राप्य व्रीहियवाद्यन्नभावमापद्य संस्कृतोपभुक्ता शुक्रशोणितरूपेण परिणता प्रजाभावं प्राप्नोतीत्यर्थः। यज्ञः कर्मसमुद्भव इत्ययुक्तं स्वस्यैव स्वोद्भवे कारणत्वायोगादित्याशङ्क्याह—**ऋत्विगिति**। द्रव्यदेवतयोः संग्राहकश्चकारः ॥ १४ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

'मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी' इति ॥ १३ ॥ जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्तव्यमित्याह—**अन्नादिति**। अन्नाद्रेतोरूपेण परिणताद्भूतानि प्राणिशरीराणि भवन्ति। अन्नं च पर्जन्यात्। एतत्प्रसिद्धमेव। यज्ञाद्भवति पर्जन्यः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति स्मृतेः। यज्ञो देवताराधनजो धर्मः कर्मभ्यो यागहोम-

४ मधुसूदनीव्याख्या।

पापाः पञ्चसूनानिमित्तं प्रमादकृतहिंसानिमित्तं च कृतपापाः सन्तः आत्मकारणादेव पचन्ति नतु वैश्वदेवाद्यर्थम्। तथाच पञ्चसूनादिकृतपापे विद्यमानएव वैश्वदेवादिनित्यकर्माकरणनिमित्तमपरं पापमाप्नुवन्तीति भुञ्जते ते त्वघं पापा इत्युक्तम्। तथाच स्मृतिः 'कण्डणी पेषणी चुल्ली उदकुम्भी च मार्जनी। पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति' इति। 'पञ्चसूनाकृतं पापं पञ्चयज्ञैर्व्यपोहति।' इति च। श्रुतिश्च 'इदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रं ह्येतत्' इति। मन्त्रवर्णोऽपि 'मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य। नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी' इति। इदं चोपलक्षणं पञ्चमहायज्ञानां स्मार्तानां श्रौतानां च नित्यकर्मणाम्। अधिकृतेन नित्यानि कर्माण्यवश्यमनुष्ठेयानीति प्रजापतिवचनार्थः ॥ १३ ॥ न केवलं प्रजापतिवचनादेव कर्म कर्तव्यमपि तु जगच्चक्रप्रवृत्तिहेतुत्वादपीत्याह—**अन्नादित्यादित्रिभिः**। अन्नाद्भुक्ताद्रेतोलोहितरूपेण परिणताद्भूतानि प्राणिशरीराणि भवन्ति जायन्ते। अन्नस्य संभवो जन्म। अन्नसंभवः पर्जन्याद्वृष्टेः। प्रत्यक्षसिद्धमेवैतत्। अत्र कर्मोपयोगमाह—यज्ञात्कारीर्यादेरग्निहोत्रादेश्चा-

५ भाष्योत्कर्षदीपिका।

सदा' इतिस्मृत्युक्तैः पञ्चसूनाकृतैरन्यैश्च मुच्यन्ते। ये त्वन्ये आत्मकारणात्स्वोदरपूरणार्थं नतु वैश्वदेवाद्यर्थं पाकं कुर्वन्ति ते तु पापं भुञ्जते। तुशब्दः पूर्वेभ्यो वैलक्षण्यार्थः। अवधारणं तु 'सर्वं वाक्यं सावधारणम्' इति न्यायलब्धम्। एतेन[1] तुशब्दोऽवधारण इत्याचार्यविरुद्धोक्तिः प्रत्युक्ता ॥ १३ ॥ जगच्चक्रप्रवृत्तिहेतुत्वादप्यधिकृतेन कर्म कर्तव्यमित्याह—**अन्नादिति**। अन्नाद्भुक्ताद्रेतआदिरूपेण परिणतात् भूतानि प्राणिशरीराणि भवन्ति, पर्जन्याद्वृष्टेरन्नस्य संभव उत्पत्तिः, यज्ञादपूर्वात्पर्जन्यो भवति। तदुक्तं 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति। यज्ञः कर्मणः ऋत्विग्यजमानव्यापारात्समुद्भवो

६ श्रीधरीव्याख्या।

ताभिः स्वर्गं न विन्दति' इति। ये त्वात्मनो भोजनार्थमेवान्नं पचन्ति न तु वैश्वदेवाद्यर्थं ते पापा दुराचारा अघमेव भुञ्जते ॥ १३ ॥ जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्तव्यमित्याह—**अन्नादिति** त्रिभिः। अन्नाच्छुक्रशोणितरूपेण परिणताद्भूतान्युत्पद्यन्ते। अन्नस्य च

७ अभिनवगुप्ताचार्यव्याख्या।

मन्वाना आत्मार्थमिदं वयं कुर्म इति कुर्वते त एवाघं शुभाशुभात्मकं लभन्ते॥१३॥ अन्नादिति। कर्मेति। अन्नादविभागभोग्यस्वभावात्कथंचिन्मायाविद्याप्रकृतिकालाद्यनेकापरपर्यायाद्भूतानि विचित्राणि भवन्ति। तच्चान्नं पर्जन्यादविच्छिन्नसंवित्स्वभावादात्मनः। भोक्तृतन्त्रात्मलाभत्वाद्भोग्यतायाः। सच पर्जन्यो भोक्ता। यज्ञाद्भोगक्रियायत्तत्वाद्भोक्तृत्वस्य। भोगक्रिया च कर्मणः क्रियाशक्तिस्वातन्त्र्यबलात् ॥ १४ ॥ तच्च

१ मधुसूदनः।

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कर्मेति । कर्म ब्रह्मोद्भवं ब्रह्म वेदः स उद्भवः कारणं यस्य तत् कर्म ब्रह्मोद्भवं विद्धि जानीहि । ब्रह्म पुनर्वेदाख्यमक्षरसमुद्भवम् । अक्षरं ब्रह्म परमात्मा समुद्भवो यस्य तदक्षरसमुद्भवं ब्रह्म वेद इत्यर्थः । यस्मात्साक्षात्परमात्माख्यादक्षरात्पुरुषनिःश्वासवत् समुद्भूतं ब्रह्म तस्मात्सर्वार्थप्रकाशकत्वात्सर्वगतम् ।**

२ आनन्दगिरिव्याख्या ।

यदपूर्वहेतुत्वेन कर्मोक्तं तत्किं चैत्यवन्दनादि किं वाग्निहोत्रादीति संदिहानं प्रत्याह—**कर्मेति** । किमिति कर्मणो ब्रह्मोद्भवत्वमुच्यते सर्वस्य तदुद्भवत्वाविशेषादित्याशङ्क्याह—**ब्रह्म वेद इति** । ब्रह्म तर्हि वेदाख्यमनादिनिधनमिति तत्राह—**ब्रह्म पुनरिति** । अक्षरात्मनो वेदस्य पुनरक्षरेभ्यः सकाशादेव समुद्भवो न संभवतीत्याशङ्क्याह—**अक्षरमिति** । ब्रह्मेत्यक्षरमेवोक्तं, तत्कथं तस्मादेवोद्भवतीत्याशङ्क्य ब्रह्मशब्दार्थमुक्तमेव स्मारयति—**ब्रह्म वेद इति** । ननु ब्रह्मशब्दितस्य वेदस्यापि पौरुषेयत्वादप्रामाण्यसंदेहात्कथं त्वदुक्तमग्निहोत्रादिकं कर्म निर्धारयितुं शक्यते तत्राह—**यस्मादिति** । कथं तर्हि तस्य यज्ञे प्रतिष्ठितत्वं सर्वगतत्वे विशेषायोगादित्याशङ्क्याह—**सर्वगतमपीति** ॥ १५ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दानादिभ्यः समुद्भवतीति कर्मसमुद्भवः ॥ १४ ॥ कर्म ब्रह्मोद्भवं वेदोद्भवम्, वेद एव धर्मे प्रमाणं नतु पाखण्डादिप्रणीतागमः, ब्रह्म वेदोऽप्यक्षरसमुद्भवम् । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः' इत्यादिश्रुतेः साक्षात्परमेश्वरादेवोत्पन्नः, अतो न तत्र भ्रमविप्रलम्भकत्वादिदोषाक्रान्तपाखण्डादिवाक्यवदप्रामाण्यशङ्कास्तीति भावः । यस्मादेवं तस्मात्सर्वस्मिन्देशे काले च वर्तमानं ब्रह्म वेदः । एतेन वेदस्य नित्यत्वं शब्दस्य विभुत्वं च दर्शितम् ।

४ मधुसूदनीव्याख्या ।

पूर्वाख्यात् धर्माद्भवति पर्जन्यः । यथा चाग्निहोत्राहुतेर्वृष्टिजनकत्वं तथा व्याख्यातमष्टाध्यायीकाण्डे जनकयाज्ञवल्क्यसंवादरूपायां षट्प्रश्न्याम् । मनुना चोक्तम् 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति । स च यज्ञो धर्माख्यः सूक्ष्मः कर्मसमुद्भवः ऋत्विग्यजमानव्यापारसाध्यः । यज्ञस्य हि अपूर्वस्य विहितं कर्म कारणम् ॥ १४ ॥ तच्चापूर्वोत्पादकम्, ब्रह्मोद्भवं ब्रह्म वेदः स एवोद्भवः प्रमाणं यस्य तत्तथा । वेदविहितमेव कर्मापूर्वसाधनं जानीहि नत्वन्यत्पाखण्डप्रतिपादितमित्यर्थः । ननु पाखण्डशास्त्रापेक्षया वेदस्य किं वैलक्षण्यं, यतो वेदप्रतिपादित एव धर्मो नान्य इत्यत आह—ब्रह्म वेदाख्यमक्षरसमुद्भवं अक्षरात्परमात्मनो निर्दोषात्पुरुषनिःश्वासन्यायेनाबुद्धिपूर्वं समुद्भव आविर्भावो यस्य तदक्षरसमुद्भवम् । तथाचापौरुषेयत्वेन निरस्तसमस्तदोषाशङ्कं वेदवाक्यं प्रमितिजनकतया प्रमाणमतीन्द्रियेऽर्थे नतु भ्रमप्रमादकरणापाटवविप्रलिप्सादिदोषवत्प्रणीतं पाखण्डवाक्यं प्रमितिजनकमिति भावः । तथाच श्रुतिः 'अस्य

५ भाष्योत्कर्षदीपिका ।

यस्य सः ॥ १४ ॥ कर्म ब्रह्म वेद उद्भवः कारणं यस्य तज्जानीहि ब्रह्म वेदाख्यमक्षरः परमात्मा समुद्भवः कारणं यस्य तत् 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः' इत्यादिश्रुतेः । यस्मादेवं तस्मात्सर्वार्थप्रकाशकत्वात् सर्वगतमपि सद्वेदाख्यं ब्रह्म नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम् । यैस्त्वक्षरं ब्रह्म सर्वदा यज्ञे प्रतिष्ठितं यज्ञेनोपायभूतेन प्राप्यत इत्यपरेषां व्याख्यानं तदरुचिग्रस्तम् । अरुचिबीजं तु पूर्वार्धस्थब्रह्मपदद्वयस्य वेदपरत्वेनात्रान्यपरत्वे 'वेदो वा प्रायदर्शनात्' इतिन्याय-

६ श्रीधरीव्याख्या ।

संभवः पर्जन्याद्वृष्टेः । स च पर्जन्यो यज्ञाद्भवति । स च यज्ञः कर्मसमुद्भवः । कर्मणा यजमानादिव्यापारेण सम्यङ्निष्पद्यत इत्यर्थः । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः ॥ १४ ॥ तथा **कर्मब्रह्मोद्भवमिति** । तच्च यजमानादिव्यापाररूपं कर्म ब्रह्मोद्भवं विद्धि ब्रह्म वेदस्तस्मात्प्रवृत्तं जानीहि । तच्च ब्रह्म वेदाख्यमक्षरात्परब्रह्मणः समुद्भूतं विद्धि । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः' इति श्रुतेः । यत एवमक्षरादेव यज्ञप्रवृत्तेरत्यन्तं तस्याभिप्रेतो यज्ञः तस्मात्सर्वगतमप्यक्षरं ब्रह्म नित्यं सर्वदा यज्ञे प्रतिष्ठितम् । यज्ञेनोपायभूतेन प्राप्यत इति यज्ञे प्रतिष्ठितमुच्यते । उद्यमस्था सदा लक्ष्मी-

७ अभिनवगुप्ताचार्यव्याख्या ।

स्वातन्त्र्यमविच्छिन्नमप्यनवच्छिन्नानन्तस्वातन्त्र्यपूर्णसमुच्छलन्महेश्वरभावपरमात्मब्रह्मणः संस्पर्शवशात् । तच्च उच्छलदच्छादितैश्वर्यं ब्रह्म अक्षरात्प्रशान्ताशेषैश्वर्यतरङ्गात्संविन्मात्रात् । इत्येवं व्यवस्थितोऽयं यज्ञः षडरं चक्रं वाहयन् तत्तु अरात्रयसंधानादपवर्गं अरात्रयतत्रणाद्व्यवहारमासूत्रयतीति विद्याविद्योल्लासतरङ्गसुभगं ब्रह्म यज्ञे एव प्रतिष्ठितम् । अन्ये तु अन्नं तावद्वीर्यलोहितक्रमेण भूतकारणम् । अन्नं च वृष्टिद्वारेण पर्जन्यात् । सोऽपि 'अग्नौ प्रास्ताहुतिः सम्यक्' इत्यादिस्मेति ततो वृष्टिर्यज्ञात् यज्ञः क्रियातः सा च ज्ञानपूर्विका ज्ञानमक्षरादिति । अपरे तु अन्नम-

१ श्रीधरः,

**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सर्वगतमपि सन्नित्यं सदा यज्ञविधिप्रधानत्वाद् यज्ञे प्रतिष्ठितम् ॥ १५ ॥ एवमिति । एवमित्थमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं नानुवर्तयतीह लोके यः कर्मण्यधिकृतः सन्नघायुरघं पापमायुर्जीवनं यस्य सोऽघायुः पापजीवन इति यावत्, इन्द्रियाराम इन्द्रियैराराम आरमणमाक्रीडा विषयेषु यस्य स इन्द्रियारामो मोघं वृथा हे पार्थ, स जीवति । तस्मादज्ञेनाधिकृतेन कर्तव्यमेव कर्मेति प्रकरणार्थः । प्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेस्तादर्थ्येन कर्मयोगानुष्ठानमधिकृतेनानात्मज्ञेन कर्तव्यमेवेत्येतत् 'न कर्मणामनारम्भाद्' इत्यत आरभ्य 'शरीरयात्रापि च ते न प्रसिध्येदकर्मणः' इत्येवमन्तेन प्रतिपाद्य 'यज्ञार्थात्कर्मणोऽन्यत्र' इत्यादिना 'मोघं पार्थ स जीवति' इत्येवमन्तेनापि ग्रन्थेन प्रासङ्गिकमधिकृतस्यानात्मविदः कर्मानुष्ठाने बहुकारणमुक्तं तदकरणे च दोषसंकीर्तनं कृतम् ॥ १६ ॥

२ आनन्दगिरिव्याख्या ।

अधिकृतेनाध्ययनादिद्वारा जगच्चक्रमनुवर्तनीयमन्यथेश्वराज्ञातिलङ्घिनस्तस्य प्रत्यवायः स्यादित्याह—**एवमिति** । 'न कर्मणामनारम्भात्' इत्यादिनोक्तमुपसंहरति—**तस्मादिति** । जगच्चक्रस्य प्रागुक्तप्रकारेणानुवर्तने वृथा जीवनमघसाधनं यस्मात्तस्माजीवता नियतं कर्म कर्तव्यमित्यर्थः । यद्यधिकृतेन कर्तव्यमेव कर्म तर्हि किमित्यज्ञेनेति विशिष्यते ज्ञाननिष्ठेनापि तत्कर्तव्यमेवाधिकृतत्वाविशेषादित्याशङ्क्य पूर्वोक्तमनुवदति—**प्रागिति** । नहि ज्ञानकर्मणोर्विरोधाज्ज्ञाननिष्ठेन कर्म कर्तुं शक्यते तथा चानात्मज्ञेनैव चित्तशुद्ध्यादिपरंपरया ज्ञानार्थं कर्मानुष्ठेयमिति प्रतिपादितमित्यर्थः । तर्हि यज्ञार्थादित्यादि । किमर्थं, नहि तत्र ज्ञाननिष्ठा प्रतिपाद्यते कर्मनिष्ठा तु पूर्वमेवोक्तत्वान्नात्र वक्तव्येत्याशङ्क्य वृत्तमर्थान्तरमनुवदति—**प्रतिपाद्येति** । प्रासङ्गिकमज्ञस्य कर्मकर्तव्यतोक्तिप्रसङ्गागतमिति यावद् बहुकारणमीश्वर-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नित्यं नियमेन यज्ञे प्रतिष्ठितं तात्पर्येण पर्यवसन्नम् ॥ १५ ॥ भवत्वेवं ततः किं फलितमित्यत आह—**एवमिति** । भूतानामादौ वेदाधिगमस्ततः कर्मानुष्ठानं ततो देवानां तृप्तिस्ततो वृष्टिस्ततोऽन्नं ततो भूतानि तेषां वेदाधिगम इत्येवंरूपं चक्रमिव चक्रं निरन्तरमावर्तमानं जगद्यात्रानिर्वाहकं नानुवर्तयति नानुतिष्ठति सोऽघायुः पापजीवनः इन्द्रियारामो नतु धर्माराम आत्मारामो वा मोघं व्यर्थं दंशमशकादिवज्जीवति । यस्त्वेतदनुवर्तयति स जगदुपकारको धन्य

४ मधुसूदनीव्याख्या ।

महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निःश्वसितानि' इति । तस्मात्साक्षात्परमात्मसमुद्भवतया सर्वगतं सर्वप्रकाशकं नित्यमविनाशि च ब्रह्म वेदाख्यं यज्ञे धर्माख्येऽतीन्द्रिये प्रतिष्ठितं तात्पर्येण । अतः पाखण्डप्रतिपादितोपधर्मपरित्यागेन वेदबोधित एव धर्मोऽनुष्ठेय इत्यर्थः ॥ १५ ॥ भवत्वेवं ततः किं फलितमित्याह—आदौ परमेश्वरात्सर्वावभासकनित्यनिर्दोषवेदाविर्भावः, ततः कर्मपरिज्ञानं, ततोऽनुष्ठानाद्धर्मोत्पादः, ततः पर्जन्यस्ततोऽन्नं ततो भूतानि पुनस्तथैव भूतानां कर्मप्रवृत्तिरित्येवं परमेश्वरेण प्रवर्तितं चक्रं सर्वजगन्निर्वाहकं यो नानुवर्तयति नानुतिष्ठति सोऽघायुः पापजीवनो मोघं व्यर्थमेव जीवति । हे पार्थ, तस्य जीवनान्मरणमेव वरम् । जन्मान्तरे धर्मानुष्ठानसंभवादित्यर्थः । तथाच श्रुतिः 'अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामि-

५ भाष्योत्कर्षदीपिका ।

विरोधादि ॥१५॥ फलितमाह । एवमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं य इहलोके कर्माधिकृतो नानुवर्तयति नानुतिष्ठति स अघायुरघं पापमायुर्जीवनं यस्य स इन्द्रियैरारमणं विषयसेवनं यस्य सः व्यर्थं जीवति । त्वया तु जगच्चक्रप्रवर्तकस्य ममानुसरणमवश्यं कर्तव्यमिति द्योतयन्नाह—**पार्थेति** । तस्मादज्ञेनाधिकृतेन कर्म कर्तव्यमेवेति प्रकरणार्थः ॥ १६ ॥ न कर्मणामित्यारभ्य

६ श्रीधरीव्याख्या ।

रितिवत् । यद्वा यस्माज्जगच्चक्रमूलं कर्म तस्मात्सर्वगतं मन्त्रार्थवादैः सर्वेषु सिद्धार्थप्रतिपादकेषु भूतार्थाख्यानादिषु गतं स्थितमपि वेदाख्यं ब्रह्म सर्वदा यज्ञे च तात्पर्यरूपेण प्रतिष्ठितम् । अतो यज्ञादि कर्म कर्तव्यमित्यर्थः ॥ १५ ॥ यस्मादेवं परमेश्वरेणैव भूतानां पुरुषार्थसिद्धये कर्मादिचक्रं प्रवर्तितं तस्मात्तदकुर्वतो वृथैव जीवितमित्याह—**एवमिति** । परमेश्वरवाक्यभूताद्वेदाख्याद्ब्रह्मणः पुरुषाणां कर्मणि प्रवृत्तिः, ततः कर्मनिष्पत्तिः, ततः पर्जन्यः, ततोऽन्नम्, ततो भूतानि, भूतानां च पुनस्तथैव कर्मणि प्रवृत्तिरित्येवं प्रवर्तितं चक्रं यो

७ अभिनवगुप्ताचार्यव्याख्या ।

ब्रमानं विषयपञ्चकमाश्रित्य भूतानीन्द्रियाणि विषयाश्चात्मनः स्फुरितरूपाः । अत आत्मैव विषयोपभोगेन पोष्यते । अतश्च सर्वगतं

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

१ श्रीमच्छांकरभाष्यम् ।

एवं स्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयमाहोस्वित्पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यानात्मविदो ज्ञानयोगेनैव निष्ठामात्मविद्भिः सांख्यैरनुष्ठेयामप्राप्तेनैवेत्येवमर्थमर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव वा शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थमेव तं वैतमात्मानं विदित्वा निवृत्तमिथ्याज्ञानाः सन्तो ब्राह्मणा मिथ्याज्ञानवद्भिरवश्यं कर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति न तेषामात्मज्ञाननिष्ठाव्यतिरेकेणान्यत्कार्यमस्तीत्येवं श्रुत्यर्थमिह गीताशास्त्रे प्रतिपादयिषित-

२ आनन्दगिरिव्याख्या ।

प्रसादो देवताप्रीतिश्चेत्यादि दोषसंकीर्तनं 'तैर्दत्तानप्रदाय' इत्यादि ॥ १६ ॥ वृत्तमर्थमेवं विभज्यानूद्यानन्तरश्लोकमाशङ्कोत्तरत्वेनावतारयति—**एवमिति** । अर्जुनस्य प्रश्नमित्येवमर्थमाशङ्क्याह भगवानिति संबन्धः । नन्वेषाशङ्का नावकाशमासादयत्यनात्मज्ञेन कर्तव्यं कर्मेति बहुशो विशेषितत्वादित्याशङ्क्याह—**स्वयमेवेति** । किमर्थं श्रुत्यर्थं स्वयमेव भगवानत्र प्रतिपादयतीत्याशङ्क्याह—**शास्त्रार्थस्येति** । गीताशास्त्रस्य ससंन्यासं ज्ञानमेव मुक्तिसाधनमर्थो नार्थान्तरमिति विवेकार्थमिह श्रुत्यर्थं कीर्तयतीत्यर्थः । तमेव श्रुत्यर्थं संक्षिपति—**एवमिति** । सिद्धं चेदात्मवेदनमनर्थकं तर्हि व्युत्थानादीत्याशङ्क्यापातिकविज्ञानफलमाह—**निवृत्तेति** । ब्राह्मणग्रहणं तेषामेव व्युत्थाने मुख्यमधिकारित्वमिति ज्ञापनार्थम् । क्लेशात्मकत्वादेषणानां ताभ्यो व्युत्थानं सर्वेषां स्वाभाविकत्वादविधिलिसितमित्याशङ्क्याह—**मिथ्येति** । भिक्षाचर्यं चरन्तीति वचनं व्युत्थानविरुद्धमित्याशङ्क्याह—**शरीरेति** । तर्हि तद्वदेव तेषामग्निहोत्राद्यपि कर्तव्यमापद्येतेत्याशङ्क्य व्युत्थायिनामाश्रमधर्मवदग्निहोत्रादेरनुष्ठापकाभावान्नैवमित्याह—**न तेषामिति** । यथोक्तं श्रुत्यर्थमस्मिन् गीताशास्त्रे पौर्वापर्येण पर्यालोच्यमाने प्रतिपादयितुमिष्टं प्रकटीकुर्वन्कर्तव्यमेव कर्म जीवतेति नियमे 'ज्ञानयोगेन सांख्यानाम्' इति कथमुक्तमिति परिचोद्य परिहारमुपदर्शयतीत्याह—**इत्येवमिति** । आत्मनिष्ठस्य विषय-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इति भावः । तथाच श्रुतिः 'अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छति तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदो वयांस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः' इति ॥ १६ ॥ एवमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितमज्ञैरधिकृतैरनुवर्तितव्यमित्युक्तम् । अस्याननुवर्तनेच महान्प्रत्यवाय उक्तः । स ब्रह्मविदमपि स्पृशेदिति संभाविताम् आशङ्कां परिहरति—**यस्त्विति** । आत्मन्येव रतिः प्रीतिर्यस्य नतु स्त्र्यादौ स तथा । नन्वात्मनि प्रीतिः प्राणिमात्रस्यानौपाधिक्यस्ति प्रत्युत

४ मधुसूदनीव्याख्या ।

च्छते तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयांस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः' इति । ब्रह्मविदं व्यावर्तयति इन्द्रियाराम इति । यत इन्द्रियैर्विषयेष्वारमति अतः कर्माधिकारी संस्तदकरणात्पापमेवाविचिन्वन्व्यर्थमेव जीवतीत्यभिप्रायः ॥ १६ ॥ यस्त्विन्द्रियारामो न भवति परमार्थदर्शी स एवं जगच्चक्रप्रवृत्तिहेतुभूतं कर्माननुतिष्ठन्नपि न प्रत्यवैति कृतकृत्यत्वादित्याह द्वाभ्याम्—इन्द्रियारामो हि स्रक्चन्दनवनितादिषु रतिमनुभवति, मनोज्ञान्नपानादिषु तृप्तिम्, पशुपुत्रहिरण्यादिलाभेन

५ भाष्योत्कर्षदीपिका ।

शरीरयात्रापीत्यन्तेन ग्रन्थेनात्मज्ञाननिष्ठायोग्यताप्राप्त्यर्थं फलाभिसंधिरहितं कर्मानुष्ठेयमिति प्रतिपाद्य यज्ञार्थादित्यादिना मोघमित्यन्तेन प्रासङ्गिकमनात्मविदोऽधिकृतस्य कर्मानुष्ठाने बहु कारणमुक्तं तदकरणे च दोषसंकीर्तनं कृतमेवंस्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयमुतानात्मज्ञेनाशुद्धान्तःकरणेन ज्ञानप्राप्त्यर्थमित्यर्जुनसंशयमालक्ष्य स्वयमेव वा शास्त्रस्य विवेकप्रतिपत्त्यर्थं तत्त्वविदस्तन्निषेधति—**यस्त्विति** । यस्तु मानव आत्मज्ञाननिष्ठ आत्मन्येव रतिर्न विषयेषु यस्य सः आत्मनैव नान्नरसादिना तृप्तश्च भवेत् ।

६ श्रीधरीव्याख्या ।

मानुवर्तयति नानुतिष्ठति सोऽघायुः अघं पापरूपमायुर्यस्य सः । यत इन्द्रियैर्विषयेष्वेव रमति न तु ईश्वराराधनार्थे कर्मणि । अतो मोघं व्यर्थं स जीवति ॥ १६ ॥ तदेवं 'न कर्मणामनारम्भान्नैष्कर्म्यं' इत्यादिनाऽज्ञस्यान्तःकरणशुद्ध्यर्थं कर्मयोगमुक्त्वा ज्ञानिनः कर्मानुपयोगमाह—**यस्त्विति** द्वाभ्याम् । आत्मन्येव रतिः प्रीतिर्यस्य । ततश्चात्मन्येव तृप्तः स्वानन्दानुभवेन निर्वृतः । अतएवात्मन्येव

७ अभिनवगुप्ताचार्यव्याख्या ।

ब्रह्म कर्मणि प्रतिष्ठितं तन्मयत्वात्तस्य ॥ १५ ॥ एवमिति । यस्त्वेवं नाङ्गीकरोति स पापमयः । अतः स इन्द्रियेष्वेव रमते नात्मनि ॥ १६ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

माविष्कुर्वन्नाह भगवान्—यस्त्विति । यस्तु सांख्य आत्मज्ञाननिष्ठ आत्मरतिरात्मन्येव रतिर्न विषयेषु यस्य स आत्मरतिरेव स्याद्भवेदात्मतृप्तश्चात्मनैव तृप्तो नान्नरसादिना स मानवो मनुष्यः संन्यस्यात्मन्येव च संतुष्टः । संतोषो हि बाह्यार्थलाभेन सर्वस्य भवति तमनपेक्ष्यात्मन्येव च संतुष्टः सर्वतो वीततृष्ण इत्येतद् । य ईदृश आत्मवित्तस्य कार्यं करणीयं न विद्यते नास्तीत्यर्थः ॥ १७॥ किंच नैवेति । नैव तस्य परमात्मरतेः कृतेन कर्मणार्थः प्रयोजनमस्ति । अस्तु तर्ह्यकृतेनाकरणेन प्रत्यवायाख्योऽनर्थो

२ आनन्दगिरिव्याख्या ।

सङ्गराहित्यं दृष्टं तदनात्मज्ञेन जिज्ञासुना कर्तव्यमिति मत्वाह—**यस्तु सांख्य इति** । किंचात्मज्ञस्य ज्ञानेनात्मनैव परितृप्तत्वान्नान्नपानादिना साध्या तृप्तिरिष्टा तेन विद्यार्थिना संन्यासिनापि नान्नरसादावासक्तिर्युक्ता कर्तुमित्याह—**आत्मतृप्त इति** । किंचात्मविदः सर्वतो वैतृष्ण्यं दृष्टं तदनात्मविदा विद्यार्थिना कर्तव्यमित्याह—**आत्मन्येवेति** । रतितृप्तिसंतोषाणां मोदप्रमोदानन्दवदवान्तरभेदः, अथवा रतिर्विषयासक्तिः, तृप्तिर्विषयविशेषसंपर्कजं सुखं, संतोषोऽभीष्टविषयमात्रलाभाधीनं सुखसामान्यमिति भेदः । नन्वात्मरतेरात्मतृप्तस्यात्मन्येव संतुष्टस्यापि किंचित्कर्तव्यं मुक्तये भविष्यतीति नेत्याह—**य ईदृश इति** ॥ १७ ॥ इतश्चात्मविदो न किंचित्कर्तव्यमित्याह—**किंचेति** । अभ्युदयनिःश्रेयसयोरन्यतरत्प्रयोजनं कृतेन सुकृतेनात्मविदो भविष्यतीत्याशङ्क्याह—**नैवेति** । प्रत्यवायनिवृत्तये स्वरूपप्रच्युतिप्रत्याख्यानाय वा कर्म स्यादित्याशङ्क्याह—**नेत्यादिना** । ब्रह्मादिषु स्थावरान्तेषु भूतेषु कंचिद्भूतविशेषमाश्रित्य कश्चिदर्थो विदुषः साध्यो भविष्यति तदर्थं तेन कर्तव्यं कर्मेत्याशङ्क्याह—**नचेति** । तत्राद्यं पादमादत्ते—**नैवेति** । तं व्याचष्टे—**तस्येति** । आत्मविदः स्वर्गाद्यभ्युदयानर्थित्वं निःश्रेयसस्य च प्राप्तत्वान्न कृतं कर्मार्थवदित्यर्थः । आत्मविदा

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तदर्थत्वेनैव स्त्र्यादिष्वपि प्रीतिर्भवतीत्यत उक्तम्—**आत्मतृप्त इति** । आत्मनैव परमानन्दरूपेण तृप्तो न मिष्टान्नादिना । ननु मन्दाग्निरपि स्त्र्यादौ न रमते नापि मिष्टान्नेन तृप्यत्यत उक्तं आत्मन्येव च संतुष्ट इति । मन्दाग्निर्हि धातुवृद्धिं जाठरोद्दीपनं च कामयमान औषधाद्यर्थमितस्ततो धावति नत्वात्मन्येव तुष्यति, विद्वांस्तु रतितृप्तितुष्टीरात्मनैवानुभवति न स्त्र्यन्नधनादिभिरिति तस्य कार्यं कर्तव्यं किमपि नास्ति । क्रियाप्राप्तस्य कस्यचिदप्यर्थस्याभावात् ॥ १७ ॥ एतदेवाह—**नैवेति** । तस्यात्मरतेः कृतेन कर्मणार्थः प्रयोजनं नास्ति । स्वर्गादौ लिप्साभावात् । मोक्षस्य

४ मधुसूदनीव्याख्या ।

रोगाद्यभावेन च तुष्टिं, उक्तविषयाभावे रागिणामरत्यतृप्त्यतुष्टिदर्शनात् । रतितृप्तितुष्टयो मनोवृत्तिविशेषाः साक्षिसिद्धाः । लब्धपरमात्मानन्दस्तु द्वैतदर्शनाभावादतिफल्गुत्वाच्च विषयसुखं न कामयत इत्युक्तं 'यावानर्थ उदपाने' इत्यत्र । अतो नात्मविषयकरतितृप्तितुष्ट्यभावादात्मानं परमानन्दमद्वयं साक्षात्कुर्वन्नुपचारादेवमुच्यते आत्मरतिरात्मतृप्त आत्मसंतुष्ट इति । तथाच श्रुतिः 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' इति । आत्मतृप्तश्चेति चकार एवकारानुकर्षणार्थः । मानव इति यः कश्चिदपि मनुष्य एवंभूतः स एव कृतकृत्यो नतु ब्राह्मणत्वादिप्रकर्षेणेति कथयितुम् । आत्मन्येव च संतुष्ट इत्यत्र चकारः समुच्चयार्थः । य एवंभूतस्तस्याधिकारहेत्वभावात्किमपि कार्यं वैदिकं लौकिकं वा न विद्यते ॥ १७ ॥ नन्वात्मविदोऽप्यभ्युदयार्थं निःश्रेयसार्थं प्रत्यवायपरिहारार्थं वा कर्म स्यादित्यतआह—तस्यात्मरतेः कृतेन कर्मणाभ्युदयलक्षणो

५ भाष्योत्कर्षदीपिका ।

आत्मन्येव तुष्टो न बाह्येष्वर्थेषु सर्वतो विगततृष्ण इत्यर्थः । तस्य कर्तव्यं नास्ति ॥ १७॥ चतुर्थपादं विवृणोति—**नैवेति** । तस्यात्मरतेः कृतेन कर्मणाभ्युदयार्थेन ज्ञानार्थेन मोक्षार्थेन वा प्रयोजनं नैवास्ति । स्वर्गस्य तुच्छरूपेण ज्ञातत्वात् । ज्ञानस्य जातत्वात् 'नास्त्यकृतः कृतेन' इतिश्रुत्या मोक्षस्य कर्माकार्यत्वप्रतिपादनात् । अस्तु तर्ह्यकृतेन प्रत्यवायाख्योऽर्थ इत्यत आह—**नेति** । इह लोके कश्चि-

६ श्रीधरीव्याख्या ।

संतुष्टो भोगापेक्षारहितो यस्तस्य कर्तव्यं नास्ति ॥ १७ ॥ तत्र हेतुमाह—**नैव तस्येति** । कृतेन कर्मणा तस्यार्थः पुण्यं नैवास्ति । न चाकृतेन कश्चन कोऽपि प्रत्यवायोऽस्ति । निरहंकारत्वेन विधिनिषेधातीतत्वात्, तथापि 'तस्मात्तदेषां न प्रियं यदेतन्मनुष्या विदुः' इति श्रुतेर्मोक्षे देवकृतविघ्नसंभवात्तत्परिहारार्थं कर्मभिर्देवाः सेव्या इत्याशङ्क्योक्तम् । सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिद-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १७ ॥ यस्त्वात्मेति । आत्मरतेस्तु कर्म इन्द्रियव्यापारतयैव कुर्वतः करणाकरणेषु समता । अतएव नासौ भूतेषु किंचिदात्मप्रयोजनमपेक्ष्य

१ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

**नाकृतेनेह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूप आत्महानिलक्षणो वा नैवास्ति । न चास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चिदर्थव्यपाश्रयः प्रयोजननिमित्तक्रियासाध्यो व्यपाश्रयो व्यपा-**

२ आनन्दगिरिव्याख्या ।

चेत्कर्म न क्रियते तर्हि तेनाकृतेन तस्यानर्थो भविष्यतीति तत्प्रत्याख्यानार्थं तस्य कर्तव्यं कर्मेति शङ्कते—**तर्हीति** । द्वितीयपादेनोत्तरमाह—**नेत्यादिना** । अतो न तन्निवृत्त्यर्थं कृतमर्थवदिति शेषः । द्वितीयं भागं विभजते—**नचास्येति** । व्यपाश्रयणमालम्बनं नेति संबन्धः । पदार्थमुक्त्वा वाक्यार्थमाह—**कंचिदिति** । भूतविशेषस्याश्रितस्यापि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चाक्रियासाध्यत्वात् 'नास्त्यकृतः कृतेन' इति श्रुतेः । अकृतो मोक्षः कृतेन कर्मणा नास्तीति श्रुत्यर्थः । अकृतेन विरुद्धकर्मणाप्यर्थो नरकादिरस्य नास्ति । अत्र कृताकृतशब्दौ मित्रामित्रपदवत्परस्परविरुद्धार्थवाचितया पुण्यपापवचनौ । ये तु अकृतेनेति भावे निष्ठा । नित्याकरणाद्गर्हितत्वरूपो वा प्रत्यवायप्राप्तिरूपो वा कश्चनार्थो विदुषो नास्तीति व्याचक्षते । तेषामप्यभावात् भावोत्पत्तेरनभ्युपगमान्नित्यानां काले यदन्यदविहितं क्रियते ततएव प्रत्यवायोत्पादो वक्तव्य इति घट्टकुट्यां प्रभातवृत्तान्त आपद्यते । अत्रोपपत्तिमाह—**नचेति** । चो हेतौ । यस्मादात्मरतेः सर्वभूतेषु चेतना-

४ मधुसूदनीव्याख्या ।

निःश्रेयसलक्षणो वाऽर्थः प्रयोजनं नैवास्ति । तस्य स्वर्गाद्यभ्युदयानर्थित्वात्, निःश्रेयसस्य च कर्मासाध्यत्वात् । तथाच श्रुतिः 'परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' इति । अकृतो नित्यो मोक्षः कृतेन कर्मणा नास्तीत्यर्थः । ज्ञानसाध्यस्यापि व्यावृत्तिरेवकारेण सूचिता । आत्मरूपस्य हि निःश्रेयसस्य नित्यप्राप्तस्याज्ञानमात्रमप्राप्तिः । तच्च तत्त्वज्ञानमात्रापनोद्यम् । तस्मिंस्तत्त्वज्ञानेनापनुन्ने तस्यात्मविदो न किंचित्कर्मसाध्यं ज्ञानसाध्यं वा प्रयोजनमस्तीत्यर्थः । एवंभूतेनापि प्रत्यवायपरिहारार्थं कर्माण्यनुष्ठेयान्येवेत्यत आह—नाकृतेनेति भावे निष्ठा । नित्यकर्माकरणेनेह लोके गर्हितत्वरूपः प्रत्यवायप्राप्तिरूपो वा कश्चनार्थो नास्ति । सर्वत्रोपपत्तिमाहोत्तरार्धेन । चो हेतौ । यस्मादस्यात्मविदः सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कोऽप्यर्थव्यपाश्रयः प्रयोजनसंबन्धो नास्ति, कंचिद्भूतविशेषमाश्रित्य कोऽपि क्रियासाध्योऽर्थो नास्तीति वाक्यार्थः । अतोऽस्य कृताकृते निष्प्रयोजने । 'नैनं कृताकृते तपतः' इति श्रुतेः । 'तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति' इति श्रुतेर्देवा अपि तस्य मोक्षाभवनाय न समर्था इत्युक्तेर्न विघ्नाभावार्थमपि देवाराधनरूपकर्मानुष्ठानमित्यभिप्रायः । एतादृशो ब्रह्मविद्भूमिकासप्तकभेदेन निरूपितो वसिष्ठेन 'ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता । विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका । पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता' इति । तत्र नित्यानित्यवस्तुविवेकादिपुरःसरा फलपर्यवसायिनी मोक्षेच्छा प्रथमा । ततो गुरुमुपसृत्य वेदान्तवाक्यविचारः श्रवणमननात्मको द्वितीया । ततो निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यत्वं तृतीया । एतद्भूमिकात्रयं साधनरूपं जाग्रदवस्थोच्यते योगिभिः अभेदेन जगतो भानात् । तदुक्तम् 'भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम् । यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥' इति । ततो वेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिका फलरूपा सत्त्वापत्तिः स्वप्नावस्थोच्यते । सर्वस्यापि जगतो मिथ्यात्वेन स्फुरणात् । तदुक्तं 'अद्वैते स्थैर्यमायाते द्वैते प्रशममागते । पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः ॥' इति । सोऽयं चतुर्थभूमिं प्राप्तो योगी ब्रह्मविदित्युच्यते । पञ्चमीषष्ठीसप्तम्यस्तु भूमिका जीवन्मुक्तेरेवावान्तरभेदाः । तत्र सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि या निर्विकल्पकसमाध्यवस्था साऽसंसक्तिरिति सुषुप्तिरिति चोच्यते । ततः स्वयमेव व्युत्थानात् । सोऽयं योगी ब्रह्मविद्वरः । ततस्तदभ्यासपरिपाकेण या चिरकालावस्थायिनी सा पदार्थाभावनीति गाढसुषुप्तिरिति चोच्यते । ततः स्वयमनुत्थितस्य योगिनः परप्रयत्नेनैव व्युत्थानात् सोऽयं ब्रह्मविद्वरीयान् । उक्तंहि 'पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् । षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकाम् ॥' इति । यस्यास्तु समाध्यवस्थायाः न स्वतो न वा परतो व्युत्थितो भवति सर्वथा भेददर्शनाभावात्, किंतु सर्वदा तन्मय एव स्वप्रयत्नमन्तरेणैव परमेश्वरप्रेरितप्राणवायुवशादन्यैर्निर्वाह्यमाणदैहिकव्यवहारः परिपूर्णपरमानन्दघन एव सर्वतस्तिष्ठति सा सप्तमी तुरीयावस्था । तां प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते । उक्तंहि 'षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् । किंचिदेवैष संपन्न-

५ भाष्योत्कर्षदीपिका ।

दपि प्रत्यवायप्राप्तिरूपः स्वहानिलक्षणोऽर्थो नास्ति आत्मरतेः नित्यकरणेऽधिकृतत्वाभावात् । तस्मिन्काले प्रत्यवायजनकभावरूपविहितान्यकर्मणि तस्य व्यापृतत्वाभावाच्च । यतो यत्किंचिदपि कस्मादपि तस्य साध्यं नास्तीत्याह—**नचेति** । अस्य सर्वभूतेषु

६ श्रीधरीव्याख्या ।

प्यर्थव्यपाश्रयः आश्रय एव व्यपाश्रयः । अर्थे मोक्ष आश्रयणीयोऽस्य नास्तीत्यर्थः । विघ्नाभावस्य श्रुत्यैवोक्तत्वात् । तथाच श्रुतिः–'तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति' इति । ह्नेत्यव्ययमप्यर्थे । देवा अपि तस्यात्मतत्त्वज्ञस्याभूत्यै ब्रह्मताप्रतिबन्धनाय

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥ १९ ॥**
**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

श्रयणम् । कंचिद्भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थोऽस्ति । येन तदर्था क्रियानुष्ठेया स्यात् । न त्वमेतस्मिन् सर्वतः संप्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे ॥ १८ ॥ यत एवं तस्मादिति । तस्मादसक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं कर्म समाचर निर्वर्तय । असक्तो हि यस्मात् समाचरन्नीश्वरार्थं कर्म कुर्वन् मोक्षमाप्नोति पूरुषः सत्त्वशुद्धिद्वारेणेत्यर्थः ॥ १९ ॥ यस्माच्च कर्मणैवेति । कर्म-

२ आनन्दगिरिव्याख्या ।

क्रियाद्वारा प्रयोजनप्रसवहेतुत्वमिति मत्वाह—येनेति । तर्हि मयापि यथोक्तं तत्त्वमाश्रित्य त्याज्यमेव कर्मेत्यर्जुनस्य मतमाशङ्क्याह—न त्वमिति ॥ १८ ॥ सम्यग्ज्ञाननिष्ठत्वाभावे कर्मानुष्ठानमावश्यकमित्याह—यत इति । तस्मात् ज्ञाननिष्ठाराहित्यादिति यावत् । मोक्षमेवापेक्षमाणस्य कथं कर्मणि फलान्तरवति नियोगः स्यादित्याशङ्क्याह—असक्तो हीति ॥ १९ ॥ यद्यपि जितेन्द्रियोऽपि विवेकी श्रवणादिभिरजस्रं ब्रह्मणि निष्ठातुं शक्नोति तथापि क्षत्रियेण त्वया विहितं कर्म न त्याज्यमित्याह—यस्माच्चेति । तस्मात्त्वमपि कर्म कर्तुमर्हसीति संबन्धः । इतोऽपि त्वया विहितं कर्म कर्तव्यमित्याह—लोकेति । पूर्वार्धं विभजते—कर्मणैवेति । कथं जनकादीनां कर्मणा संसिद्धिप्राप्तिरुच्यते

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चेतनेषूत्तममध्यमाधमेषु कश्चिदप्यर्थव्यपाश्रयः सुखभोगात्मकप्रयोजनाभिसंबन्धो नास्ति आत्मरतित्वादेव निष्कामत्वाद्विदुषः पुण्यपापफलसंबन्धो नास्तीत्यर्थः ॥ १८ ॥ यस्मान्निष्कामस्य कर्मलेपो नास्ति तस्मात्त्वमप्यसक्तः फलासक्तिशून्यः सततं सर्वदा कार्यमवश्यकर्तव्यं कर्म नित्यनैमित्तिकं समाचर । हि यस्मादसक्तः कर्माचरन् परं मोक्षं सत्त्व-

४ मधुसूदनीव्याख्या ।

स्त्यथवैष न किंचन ॥ विदेहमुक्तता तूक्ता सप्तमी योगभूमिका । अगम्या वचसां शान्ता सा सीमा योगभूमिषु ॥' इति । यामधिकृत्य श्रीमद्भागवते स्मर्यते 'देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् । दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः । तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥' इति । श्रुतिश्च 'तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरो मृतः प्राणो ब्रह्मैव तेज एव' इति । तत्रायं संग्रहः—'चतुर्थीभूमिकाज्ञानं तिस्रः स्युः साधनं पुरा । जीवन्मुक्तेरवस्थास्तु परास्तिस्रः प्रकीर्तिताः ॥' अत्र प्रथमभूमित्रयमारूढोऽज्ञोऽपि न कर्माधिकारी किं पुनस्तत्त्वज्ञानी तद्विशिष्टो जीवन्मुक्तो वेत्यभिप्रायः ॥ १८ ॥ यस्मान्न त्वमेवंभूतो ज्ञानी किंतु कर्माधिकृत एव मुमुक्षुः । असक्तः फलकामनारहितः । सततं सर्वदा नतु कदाचित् कार्यमवश्यकर्तव्यं यावज्जीवादिश्रुतिचोदितम् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्यज्ञाने विनियुक्तं कर्म नित्यनैमित्तिकलक्षणं सम्यगाचर यथाशास्त्रं निर्वर्तय । असक्तो हि यस्मादाचरन्नीश्वरार्थं कर्म कुर्वन्सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण परं मोक्षमाप्नोति पूरुषः पुरुषः स एव सत्पुरुषो

५ भाष्योत्कर्षदीपिका ।

ब्रह्मादिस्थावरान्तेषु कश्चिदर्थोऽर्थार्थमाश्रयणीयः सेवनीयो नास्ति येन तदर्था क्रियानुष्ठेया स्यात् । अस्मिन्श्लोके भूमिकारूढस्येत्यादिशब्दस्याभावेनाप्रासङ्गिकं वासिष्ठोक्तभूमिकाप्रदर्शनं कैश्चित्कृतमिति बोध्यम् ॥ १८ ॥ तव तु चित्तशुद्धिद्वारा ज्ञानार्थं कर्मण्यधिकारः । तस्मादसक्तः फलासक्तिवर्जितः कार्यमवश्यंकर्तव्यं नित्यं नैमित्तिकं च कर्म सर्वदा समाचर । हि यस्मात्पुरुषोऽसक्तः कर्म समाचरन् ईश्वरार्थं कर्म कुर्वन् सत्त्वशुद्धिद्वारा ज्ञानप्राप्त्या परं मोक्षं प्राप्नोति ॥ १९ ॥ हि यस्माच्च जनकादयो जनकाश्वपतिप्रभृतयः पूर्वे

६ श्रीधरीव्याख्या ।

नेशते न शक्नुवन्तीति श्रुतेरर्थः । देवकृतास्तु विघ्नाः सम्यग्ज्ञानोत्पत्तेः प्रागेव 'यदेतद्ब्रह्म मनुष्या विदुस्तदेषां देवानां न प्रियम्' इति श्रुत्या ब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैव विघ्नकर्तृत्वस्य सूचितत्वात् ॥ १८ ॥ यस्मादेवंभूतस्य ज्ञानिन एव कर्मानुपयोगो नान्यस्य तस्मात्त्वं कर्म कुर्वित्याह—तस्मादिति । असक्तः फलसङ्गरहितः सन्कार्यमवश्यकर्तव्यतया विहितं नित्यनैमित्तिकं कर्म सम्यगाचर । हि यस्मादसक्तः कर्माचरन्पुरुषः परं मोक्षं चित्तशुद्धिं ज्ञानद्वारा प्राप्नोति ॥ १९ ॥ अत्र सदाचारं प्रमाणयति—कर्मणैवेति । कर्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

निग्रहानुग्रहौ करोति ॥ १८ ॥ अपितु करणीयमिदमित्येतावता तदत्र कुर्वतामपि सिद्धौ जनकादयो दृष्टान्ताः ॥ १९ ॥ प्राप्तप्रापणीयस्य

---

१ मधुसूदनः।

१ श्रीमच्छांकरभाष्यम् ।

**णैव हि तस्मात् पूर्वे क्षत्रिया विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतयः । यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात् कर्मणा सहैवासंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः । अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकः । अथ मन्यते पूर्वैरपि जनकादिभिरप्यजानद्भिरेव कर्तव्यं कर्म कृतं तावता नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति, तथापि प्रारब्धकर्मायत्तस्त्वं लोकसंग्रहमेवापि लोकस्योन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तमेवापि प्रयोजनं संपश्य-**

२ आनन्दगिरिव्याख्या ।

कर्मत्यजां हि सम्यग्दर्शनवतां प्रसिद्धा संसिद्धिरिति । तत्र किं जनकादयोऽपि प्राप्तसम्यग्दर्शनाः स्युरुताप्राप्तसम्यग्दर्शना भवेयुरिति विकल्प्य प्रथमं प्रत्याह—**यदीति** । लोकसंग्रहार्थं कर्मणा सहैव संसिद्धिमास्थिता इति संबन्धः । कर्मणा सहैवेत्येतद्व्याकरोति—**असंन्यस्यैव कर्मेति** । तत्र हेतुमाह—**प्रारब्धेति** । जनकादीनां सत्यपि ज्ञानित्वे प्रारब्धकर्मवशात्कर्मापरित्यज्यैव लोकसंग्रहार्थं प्रवर्तमानानां ज्ञानमाहात्म्यादुपपन्ना संसिद्धिरित्यर्थः । द्वितीयमनूद्य पूर्वार्धेनैवोत्तरमाह—**अथेत्यादिना** । द्वितीयार्धव्यावर्त्यामाशङ्कामुत्थापयति—**अथेति** । अज्ञेनाकृतार्थेन कृतं कर्मेत्येतावता ज्ञानवता कृतकृत्येन न तत्कर्तव्यमित्युक्तमङ्गीकरोति—**तथापीति** । तर्हि मयापि ज्ञानवता कृतार्थेन कर्म न कर्तव्यमित्याशङ्क्यार्जुनस्य कर्तव्यमेव कर्मेत्युत्तरार्धव्याख्यानेन कथयति—**प्रारब्धेति** ॥ २० ॥ ज्ञानवता कृतार्थेन

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शुद्धिद्वारेणाप्नोति ॥ १९ ॥ अत्र शिष्टाचारं प्रमाणयति—**कर्मणेति** । कर्मणैव सह संसिद्धिं श्रवणादिसाध्यां ज्ञाननिष्ठां गन्तुमास्थिताः प्रवृत्ता जनकादयस्त्वादृशाः क्षत्रियाः नतु संन्यासेन । ननु शुद्धचित्तस्य मम नास्ति कर्मापेक्षेत्याशङ्क्याह—**लोकेति** । लोकस्य संग्रहः स्वधर्मे प्रवर्तनम् । ननु स्वप्रयोजनाभावेऽपि केवलं लोकसंग्रहार्थं चेत्कर्म कर्तव्यं तदा विदुषां ब्राह्मणानामपि संन्यासो न स्यात् । यतीनेव संन्यासधर्मान्ग्राहयितुं तेषां संन्यास इति चेत् अर्जुनेऽपि न तद्दण्डवारितमस्ति । ननु क्षत्रियस्य संन्यासेऽधिकारो नास्तीति चेत् लिङ्गधारणेऽधिकाराभावेऽपि भरतऋषभादिवद्विक्षेप-

४ मधुसूदनीव्याख्या ।

नान्य इत्यभिप्रायः ॥ १९ ॥ ननु विविदिषोरपि ज्ञाननिष्ठाप्राप्त्यर्थं श्रवणमनननिदिध्यासनानुष्ठानाय सर्वकर्मत्यागलक्षणः संन्यासो विहितः । तथाच न केवलं ज्ञानिन एव कर्मानधिकारः किंतु ज्ञानार्थिनोऽपि विरक्तस्य । तथाच मयापि विरक्तेन ज्ञानार्थिना कर्माणि हेयान्येवेत्यर्जुनाशङ्कां क्षत्रियस्य संन्यासानधिकारप्रतिपादनेनापनुदति भगवान् । जनकादयो जनकाजातशत्रुप्रभृतयः श्रुतिस्मृतिपुराणप्रसिद्धाः क्षत्रिया विद्वांसोऽपि कर्मणैव सह नतु कर्मत्यागेन सह संसिद्धिं श्रवणादिसाध्यां ज्ञाननिष्ठामास्थिताः प्राप्ताः । हि यस्मादेवं तस्मात्त्वमपि क्षत्रियो विविदिषुर्विद्वान्वा कर्म कर्तुमर्हसीत्यनुषङ्गः । 'ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति संन्यासविधायके वाक्ये ब्राह्मणत्वस्य विवक्षितत्वात् 'स्वाराज्यकामो राजा राजसूयेन यजेत' इत्यत्र क्षत्रियत्ववत् 'चत्वार आश्रमा ब्राह्मणस्य त्रयो राजन्यस्य द्वौ वैश्यस्य' इति च स्मृतेः । पुराणेऽपि 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ॥' इति क्षत्रियवैश्ययोः संन्यासाभाव उक्तः । तस्माद्युक्तमेवोक्तं भगवता 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति । 'सर्वे राजाश्रिता धर्मा राजा धर्मस्य धारकः' इत्यादिस्मृतेर्वर्णाश्रमधर्मप्रवर्तकत्वेनापि क्षत्रियोऽवश्यं कर्म कुर्यादित्याह—**लोकेति** । लोकानां स्वे स्वे धर्मे प्रवर्तनमुन्मार्गान्निवर्तनं च लोकसंग्रहस्तं पश्यन्नपिशब्दाज्जनकादिशिष्टाचारमपि पश्यन्कर्म कर्तुमर्हस्येवेत्यन्वयः । क्षत्रियजन्मप्रापकेण कर्मणारब्धशरीरस्त्वं विद्वानपि जनकादिवत्प्रारब्धकर्मबलेन लोकसंग्रहार्थं कर्म कर्तुं योग्यो भवसि नतु

५ भाष्योत्कर्षदीपिका ।

णैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं प्राप्ता इत्यर्थः । यद्यपि त्वं सम्यग्ज्ञानिनमेवात्मानं मन्यसे तथापि कर्माचरणं भद्रमेवेत्याह—क्षत्रियाः कर्मणैव संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ताः, श्रवणादिसाध्यां ज्ञाननिष्ठां प्राप्ता इति वा । इदं व्याख्यानं परमाप्नोति पूरुष इति पूर्वोक्तानुगुणमत आचार्यैः परित्यक्तम् । यदि प्राप्तसम्यग्दर्शनास्तर्हि लोकसंग्रहार्थं प्रारब्धकर्मत्वात्कर्मणा सहैवासंन्यस्यैवाथाप्राप्तसम्यग्दर्शनास्तदा कर्मणा चित्तशुद्धिसाधनभूतेन कर्मणेत्यर्थः । पूर्वैरप्यज्ञानवद्भिरेव कर्तव्यं कर्म कृतमतो नावश्यमन्येन तत्त्वज्ञेन कृतार्थेन कर्तव्यमिति चेत्तथापि प्रारब्धकर्माधीनस्त्वं लोकस्योन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तमेवापि प्रयोजनं संपश्यन्

६ श्रीधरीव्याख्या ।

**लोकसंग्रहमिति** । लोकस्य संग्रहः स्वधर्मे प्रवर्तनं मया कर्मणि कृते जनः सर्वोऽपि करिष्यति, अन्यथा ज्ञानिदृष्टान्तेनाज्ञः कर्म त्यजेदित्येवं लोकरक्षणमपि तावत्प्रयोजनं पश्यन्कर्म कर्तुमेवार्हसि नतु त्यक्तुमित्यर्थः ॥ २० ॥ कर्मकरणे लोकसंग्रहो यथा स्यात्तथाह—

१ नीलकण्ठः.

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**
**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

न्कर्तुमर्हसि ॥ २० ॥ लोकसंग्रहं कः कर्तुमर्हति कथं चेत्युच्यते—यद्यदिति । यद्यत् कर्माचरति येषु येषु श्रेष्ठः प्रधानभूतस्तत्तदेव कर्माचरतीतरोऽन्यो जनस्तदनुगतः । किंच श्रेष्ठो यत्प्रमाणं कुरुते लौकिकं वैदिकं वा लोकस्तदनुवर्तते तदेव प्रमाणीकरोतीत्यर्थः ॥ २१ ॥ यद्यत्र ते लोकसंग्रहकर्तव्यतायां विप्रतिपत्तिस्तर्हि मां किं न पश्यसि—न मे इति । न मे मम पार्थ, नास्ति न विद्यते कर्तव्यं त्रिष्वपि

२ आनन्दगिरिव्याख्या ।

लोकसंग्रहार्थमपि न प्रवर्तितव्यमित्याशङ्कामुत्थाप्य परिहरति—लोकेत्यादिना । श्रुताध्ययनसंपन्नत्वेनाभिमतो यद्यद्विहितं प्रतिषिद्धं वा कर्मानुतिष्ठति तत्तदेव प्राकृतो जनोऽनुवर्तते तेन विद्यावतापि लोकमर्यादास्थापनार्थं विहितं कर्तव्यमित्यर्थः । श्रेष्ठानुसारित्वमितरेषामाचारे दर्शयित्वा प्रतिपत्तावपि दर्शयति—किंचेति ॥ २१ ॥ कृतार्थस्यापि लोकसंग्रहार्थं विहितं कर्म कर्तव्यमित्युक्त्वा तत्रैव भगवन्तमुदाहरणत्वेनोपन्यस्यति—यदीत्यादिना । अप्राप्तस्य प्राप्तये तवापि कर्तृत्वसंभवाद् न किंचिदपि विद्यते कर्तव्यमिति कथमुक्तमित्याशङ्क्याह—नानवाप्तमिति । प्रतीकमुपादाय व्याख्यानद्वारा विद्यावतोऽपि कर्मप्रवृत्तिं संभावयति—नेत्यादिना । अन्वयार्थं पुनर्नञोऽनुवादः । भगवतो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मत्यागमात्रेऽधिकारात् । वार्तिके 'सर्वाधिकारविच्छेदि ज्ञानं चेदभ्युपेयते । कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥' इति विद्वत्संन्यासे क्षत्रियादेरप्यधिकारस्य साधितत्वात् । अतो लोकसंग्रहो न मुख्यं कर्मप्रयोजनमिति चेत्सत्यम् । 'न मे पार्थास्ति कर्तव्यम्' इति स्वदृष्टान्तेनाधिकारिकत्वादर्जुन एवैवं नियोज्यते न क्षत्रियमात्रमिति

४ मधुसूदनीव्याख्या ।

त्यक्तुं ब्राह्मणजन्मालाभादित्यभिप्रायः । एतादृशभगवदभिप्रायविदा भगवता भाष्यकृता ब्राह्मणस्यैव संन्यासो नान्यस्येति निर्णीतम् । वार्तिककृता तु प्रौढिवादमात्रेण क्षत्रियवैश्ययोरपि संन्यासोऽस्तीत्युक्तमिति द्रष्टव्यम् ॥ २० ॥ ननु मया कर्मणि क्रियमाणेऽपि लोकः किमिति तत्संगृह्णीयादित्याशङ्क्य श्रेष्ठाचारानुविधायित्वादित्याह—यद्यदिति । श्रेष्ठः प्रधानभूतो राजादिर्यद्यत्कर्माचरति शुभमशुभं वा तत्तदेवाचरतीतरः प्राकृतस्तदनुगतो जनः नत्वन्यत्स्वातन्त्र्येणेत्यर्थः । ननु शास्त्रमवलोक्याशास्त्रीयं श्रेष्ठाचारं परित्यज्य शास्त्रीयमेव कुतो नाचरति लोक इत्याशङ्क्य आचारवत्प्रतिपत्तावपि श्रेष्ठानुसारितामितरस्य दर्शयति—स यदिति । स श्रेष्ठो यल्लौकिकं वैदिकं वा प्रमाणं कुरुते प्रमाणत्वेन मन्यते तदेव लोकोऽप्यनुवर्तते प्रमाणं कुरुते नतु स्वातन्त्र्येण किंचिदित्यर्थः । तथाच प्रधानभूतेन त्वया राज्ञा लोकसंरक्षणार्थं कर्म कर्तव्यमेव 'प्रधानानुयायिनो जनव्यवहारा भवन्ति' इति न्यायादित्यभिप्रायः ॥ २१ ॥ अत्र चाहमेव दृष्टान्त इत्याह त्रिभिः—हे पार्थ, मे मम त्रिष्वपि लोकेषु किमपि कर्तव्यं नास्ति । यतोऽनवाप्तं फलं किंचिन्ममावाप्तव्यं नास्ति । तथापि वर्तएव कर्मण्यहम् । कर्म

५ भाष्योत्कर्षदीपिका ।

कर्तुमर्हसीत्यर्थः ॥ २० ॥ मयि कर्मणि प्रवृत्ते कथं लोकसंग्रहो भविष्यतीत्यत आह—यदिति । यद्यत्कर्म श्रेष्ठः प्रधान आचरति तत्तदेव कर्मेतरोऽन्यो जनस्तदनुगत आचरति । किंच स प्रधानः यल्लौकिकं वैदिकं वा प्रमाणं कुरुते लोकस्तदनुवर्तते । तदेव प्रमाणीकुरुते इत्यर्थः । यत्कर्म शास्त्रं वा निवृत्तिशास्त्रं वेत्याचार्यैः संकोचे मानाभावमभिप्रेत्य न व्याख्यातम् ॥ २१ ॥ अहमिव त्वमपि लोकसंग्रहं कुर्वित्याशयेनाह—नेति । त्रिषु लोकेषु मम कर्तव्यं किंचिदपि न विद्यते यस्मादनवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं त्रिषु लोकेषु किंचिदपि मे नास्ति यद्यप्येवं तथापि कर्मणि वर्त एव । कर्म करोम्येवेत्यर्थः । त्वयापि मत्संबन्धित्वान्मत्पक्षपात एव कर्तव्य इति सूचयन्नाह—पार्थेति ॥ २२ ॥ यद्यहमतन्द्रितोऽनलसः सन् कर्मणि कदाचिन्न वर्तेयं मम श्रेष्ठस्य वर्त्म

६ श्रीधरीव्याख्या ।

यदिति । इतरः प्राकृतो जनः तत्तदेवाचरति । स श्रेष्ठो जनः कर्मशास्त्रं निवृत्तिशास्त्रं वा यत्प्रमाणं मन्यते तदेव लोकोऽप्यनुसरति ॥ २१ ॥ अत्र चाहमेव दृष्टान्त इत्याह त्रिभिः—न मे पार्थेति । हे पार्थ, मे कर्तव्यं नास्ति । यतस्त्रिष्वपि लोकेष्वनवाप्त-

७ अभिनवगुप्ताचार्यव्याख्या ।

परिपूर्णमनसोऽपि कर्मप्रवृत्तौ लोकानुग्रहः प्रयोजनमित्यत्र श्रीभगवानात्मानमेव दृष्टान्तीकरोति ॥ २० ॥ २१ ॥ तस्मादसक्तएव करणीयं

१ श्रीधरः०

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥**
**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

लोकेषु किंचन किंचिदपि । कस्मान्नानवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं तथापि वर्त एव च कर्मण्यहम् ॥२२॥ यदि हि पुनरहं न वर्तेयं जातु कदाचित्कर्मण्यतन्द्रितोऽनलसः सन् मम श्रेष्ठस्य सतो वर्त्म मार्गमनुवर्तन्ते मनुष्याः हे पार्थ, सर्वशः सर्वप्रकारैः ॥ २३ ॥ तथाच को दोष इत्याह—उदिति । उत्सीदेयुर्विनश्येयुरिमे सर्वे लोका लोकस्थितिनिमित्तस्य कर्मणोऽभावात् न कुर्यां कर्म चेदहम्, किंच संकरस्य च कर्ता स्याम् । तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्त उपहतिमुपहननं कुर्यामि-

२ आनन्दगिरिव्याख्या ।

नास्ति कर्तव्यमित्येतदाकाङ्क्षाद्वारा स्फोरयति—**कस्मादित्यादिना** । प्रयोजनाभावे त्वयापि नानुष्ठेयं कर्मेत्याशङ्क्य लोकसंग्रहार्थं ममापि कर्मानुष्ठानमिति मत्वाह—**तथापीति** ॥ २२ ॥ लोकसंग्रहोऽपि न ते कर्तव्यो विफलत्वादित्याशङ्क्याह—**यदि हीति** ॥ २३ ॥ श्रेष्ठस्य तव मार्गानुवर्तित्वं मनुष्याणामुचितमेवेत्याशङ्क्य दूषयति—**तथाचेत्यादिना** । ईश्वरस्य कर्मण्यप्रवृत्तौ तदनुवर्तिनामपि कर्मानुपपत्तेरिति हेतुमाह—**लोकस्थितीति** । इतश्चेश्वरेण कर्म कर्तव्यमित्याह—**किंचेति** । यदि कर्म न कुर्यामिति शेषः । संकरकरणस्य कार्यं कथयति—**तेनेति** । प्रजोपहतिः परिप्राप्यते चेत् किं तया तव स्यादिति तत्राह—**प्रजानामिति** । त्वामनाचरन्तमनुवर्तितां सर्वेषां को दोषः स्यादित्यपे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तुष्यतु भवान् ॥ २० ॥ २१ ॥ कर्मणि वर्ते एव । अहं कर्म करोम्येवेत्यर्थः ॥ २२ ॥ यद्यहं कर्मणि न वर्तेयं तर्हि मनुष्याः ममैव वर्त्मानुवर्तन्ते अनुवर्तेरन् । कर्म न कुर्वीरन्नित्यर्थः । अतन्द्रितोऽनलसः । सर्वशः सर्वप्रकारैः ॥ २३ ॥ ततश्च किमित्यत आह—**उत्सीदेयुरिति** । यद्यदाचरतीत्यादेरपरा योजना । न केवलं लोकसंग्रहं पश्यन् कर्तुमर्हसि अपितु श्रेष्ठाचारत्वादपीत्याह—**यद्यदिति** । तथाच मम श्रेष्ठस्य यादृश आचारस्तादृश एव मदनुवर्तिना त्वया-

४ मधुसूदनीव्याख्या ।

करोम्येवेत्यर्थः । पार्थेति संबोधयन् विशुद्धक्षत्रियवंशोद्भवस्त्वं शूरापत्यापत्यत्वेन चात्यन्तं मत्समोऽहमिव वर्तितुमर्हसीति दर्शयति ॥ २२ ॥ लोकसंग्रहोऽपि न ते कर्तव्यो विफलत्वादित्याशङ्क्याह—यदि पुनरहमतन्द्रितोऽनलसः सन् कर्मणि जातु कदाचिन्न वर्तेयं नानुतिष्ठेयं कर्माणि तदा मम श्रेष्ठस्य सतो वर्त्म मार्गं हे पार्थ, मनुष्याः कर्माधिकारिणः सन्तोऽनुवर्तन्तेऽनुवर्तेरन् । सर्वशः सर्वप्रकारैः ॥ २३ ॥ श्रेष्ठस्य तव मार्गानुवर्तित्वं मनुष्याणामुचितमेव अनुवर्तित्वे को दोष इत्यत आह—अहमीश्वरश्चेद्यदि कर्म न कुर्यां तदा मदनुवर्तिनां मन्वादीनामपि कर्मानुपपत्तेर्लोकस्थितिहेतोः कर्मणो लोपेनेमे सर्वे लोका उत्सीदेयुर्विनश्येयुः । ततश्च वर्णसंकरस्य च कर्ताहमेव स्याम्, तेन चेमाः सर्वाः प्रजा अहमेवोपहन्यां धर्मलोपेन विनाशयेयम्, कथंच प्रजानामनुग्रहार्थं प्रवृत्त ईश्वरोऽहं ताः सर्वा विनाशयेयमित्यभिप्रायः । यद्यदाचरतीत्यादेरपरा योजना—न केवलं लोकसंग्रहं पश्यन्कर्तुमर्हस्यपितु श्रेष्ठाचारत्वादपीत्याह—**यद्यदिति** । तथाच

५ भाष्योत्कर्षदीपिका ।

मार्गमनुवर्तन्ते सर्वे मनुष्या अनुवर्तेरन् । इतरे जना अपि मम मार्गमनुवर्तन्ते त्वं संबन्धी नानुवर्तस इत्यत्याश्चर्यमिति द्योतयन्संबोधयति—**पार्थेति** ॥ २३ ॥ तथाच को दोष इत्यत आह—**उत्सीदेयुरिति** । अहं चेत्कर्म न कुर्यां तर्हि इमे लोकाः उत्सीदेयुर्नश्येयुः लोकानुच्छित्तिनिमित्तकर्मणोऽभावात् । संकरस्य च कर्ता स्यां तेनेमाः प्रजाः उपहन्यामतः प्रजानामनुग्रहाय प्रवृत्तस्य ममेदं नानुरूपमित्यर्थः । यत्तु यद्यदाचरतीत्यादेरपरा योजना—न केवलं लोकसंग्रहं पश्यन्कर्तुमर्हस्यपि तु श्रेष्ठाचारत्वादपीत्याह—**यद्यदिति** । तथाच मम श्रेष्ठस्य यादृश आचारस्तादृश एव मदनुवर्तिना त्वयानुष्ठेयो न स्वातन्त्र्येणान्य इत्यर्थः । कीदृशस्तवाचारो

६ श्रीधरीव्याख्या ।

मप्राप्तं सदवाप्तव्यं प्राप्यं नास्ति, तथापि कर्मण्यहं वर्ते । कर्म करोम्येवेत्यर्थः ॥ २२ ॥ अकरणे लोकस्य नाशं दर्शयति—**यदीति** । जातु कदाचिदतन्द्रितोऽनलसः सन्यदि कर्मणि न वर्तेयं कर्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गं मनुष्या अनुवर्तन्ते । अनुवर्तेरन्नित्यर्थः ॥ २३ ॥ ततः किमत आह—**उत्सीदेयुरिति** । उत्सीदेयुः कर्मलोपेन नश्येयुः । ततश्च यो वर्णसंकरो भवेत्तस्याप्यहमेव कर्ता

७ अभिनवगुप्ताचार्यव्याख्या ।

कर्म कुर्यात् । किंच विदितवेद्यः कर्म चेत्त्यजेत् ॥ २२ ॥ तल्लोकानां दुर्भेद एवैकप्रसिद्धपक्षशिथिलितास्थाबन्धत्वेनाप्ररूढिलक्षणो

१ 'न वर्तेय' इति पाठः. २ मधुसूदनः.

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥**
**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।**

१ श्रीमच्छांकरभाष्यम् ।

त्यर्थः । ममेश्वरस्यानुरूपमापद्येत यदि पुनरहमिव त्वं कृतार्थबुद्धिरात्मविदन्यो वा तस्याप्यात्मनः कर्तव्याभावेऽपि परानुग्रह एव कर्तव्य इति ॥ २४ ॥ सक्ता इति । सक्ताः कर्मण्यस्य कर्मणः फलं मम भविष्यतीति केचिदविद्वांसो यथा कुर्वन्ति भारत, कुर्याद्विद्वानात्मवित्तथासक्तः सन् । तद्वत् किमर्थं करोति तच्छृणु चिकीर्षुर्यथा कर्तुमिच्छुर्लोकसंग्रहम् ॥ २५ ॥ एवं लोकसंग्रहं चिकीर्षोर्ममात्मविदो न कर्तव्यमस्त्यन्यस्य वा लोकसंग्रहं मुक्त्वा ततस्तस्यात्मविद इदमुपदिश्यते—नेति । बुद्धेर्भेदो बुद्धिभेदो

२ आनन्दगिरिव्याख्या ।

क्षायामीश्वरस्य कृतार्थतया कर्मानुष्ठानाभावे तदनुवर्तिनामपि तदभावादेव स्थितिहेत्वभावात्पृथिव्यादिभूतानां विनाशप्रसङ्गाद्वर्णाश्रमधर्मव्यवस्थानुपपत्तेश्चाधिकृतानां प्राणभृतां पापोपहतत्वप्रसङ्गात्परानुग्रहार्थं प्रवृत्तिरीश्वरस्येत्युक्तं, संप्रति लोकसंग्रहाय कर्म कुर्वाणस्य कर्तृत्वाभिमानेन ज्ञानाभिभवे प्राप्ते प्रत्याह—**यदि पुनरिति** । कृतार्थबुद्धित्वे हेतुमाह—**आत्मविदिति** । यथावदात्मानमवगच्छन्कर्तृत्वाद्यभिमानाभावात्कृतार्थो भवत्येवेत्यर्थः । अर्जुनादन्यत्रापि ज्ञानवति कृतार्थबुद्धित्वं कर्तव्यत्वाद्यभिमानहीने तुल्यमित्याह—**अन्यो वेति** । तस्य तर्हि कर्मानुष्ठानमफलत्वादनवकाशमित्याशङ्क्याह—**तस्यापीति** । कर्तव्य इत्यात्मविदापि परानुग्रहाय कर्तव्यमेव कर्मेत्याहेति शेषः ॥ २४ ॥ दृष्टान्तदार्ष्टान्तिकरूपं श्लोकं व्याकरोति—**सक्ता इत्यादिना** । असक्तः सन् कर्तृत्वाभिमानं फलाभिसन्धिं वा कुर्वन्निति यावत् ॥ २५ ॥ वृत्तमनूद्योत्तरश्लोकमवतारयति—**एवमिति** । कर्तव्यं कर्मेति शेषः । पूर्वार्धमेवं व्याख्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नुष्ठेयः न स्वातन्त्र्येणान्य इत्यर्थः । कीदृशस्तवाचारो यो मयानुवर्तनीय इत्याकाङ्क्षायां न मे पार्थेत्यादिभिस्त्रिभिः श्लोकैस्तत्प्रदर्शनमिति मधुसूदनश्रीपादाः ॥ २४ ॥ यदि मादृश एव त्वं कृतार्थोऽसि तथापि परानुग्रहार्थं कर्माणि कुर्वित्याह—**सक्ता इति** । कर्मणि कर्मफले । कुर्वन्ति कर्माणीति शेषः । असक्त इति च्छेदः ॥ २५ ॥ विद्वान् अज्ञानां

४ मधुसूदनीव्याख्या ।

मम श्रेष्ठस्य यादृश आचारस्तादृश एव मदनुवर्तिना त्वयानुष्ठेयो न स्वातन्त्र्येणान्य इत्यर्थः । कीदृशस्तवाचारो यो मयानुवर्तनीय इत्याकाङ्क्षायां न मे पार्थेत्यादिभिस्त्रिभिः श्लोकैस्तत्प्रदर्शनमिति ॥ २४ ॥ ननु तवेश्वरस्य लोकसंग्रहार्थं कर्माणि कुर्वाणस्यापि कर्तृत्वाभिमानाभावान्न कापि क्षतिः । मम तु जीवस्य लोकसंग्रहार्थं कर्माणि कुर्वाणस्य कर्तृत्वाभिमानेन ज्ञानाभिभवः स्यादित्यत आह—सक्ताः कर्तृत्वाभिमानेन फलाभिसन्धिना च कर्मण्यभिनिविष्टा अविद्वांसोऽज्ञा यथा कुर्वन्ति कर्म लोकसंग्रहं कर्तुमिच्छुर्विद्वानात्मविदपि तथैव कुर्यात् । किंतु असक्तः सन् । कर्तृत्वाभिमानं फलाभिसंधिं चाकुर्वन्नित्यर्थः । भारतेति भरतवंशोद्भवत्वेन, भा ज्ञानं तस्यां रतत्वेन वा त्वं यथोक्तशास्त्रार्थबोधयोग्योऽसीति दर्शयति ॥ २५ ॥ ननु कर्मा-

५ भाष्योत्कर्षदीपिका ।

मयानुवर्तनीय इत्याकाङ्क्षायां न मे पार्थेत्यादिभिस्त्रिभिस्तत्प्रदर्शनमिति केषांचिद्व्याख्यानं तद्भाष्यानुगुण्येन योजनीयम् । यद्वा लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसीति पूर्वोक्तानुरोधेन लोकसंग्रहं कः कर्तुमिच्छति कथंचेत्युच्यते । यद्यदित्यस्य भाष्योक्तोत्थापनविरुद्धं न केवलमित्याद्युपेक्ष्यम् । कर्मणैवेत्यादिना शिष्टाचारस्योक्तत्वात् सक्ता इत्यादिना विदुषो लोकसंग्रहाय कर्मणि प्रवृत्तिं दर्शयता यदि त्वमात्मानं विद्वांसं मन्यसे तर्हि लोकसंग्रहं संप्रति पश्यन्कर्म कर्तुमर्हसीत्येवं दृढीकृतं, तस्मान्मध्येऽपि स्वस्य श्रेष्ठस्य कर्मणि प्रवृत्तिं प्रत्यक्षसिद्धां दर्शयंस्तदेव द्रढयति । योजनान्तरानीतार्थस्त्वर्थात्संबोधनाद्वापि सिध्यतीति न तदर्था भाष्यविरुद्धा क्लिष्टयोजना प्रदर्शनीयेति दिक् ॥ २४ ॥ यथाहं कृतार्थो लोकसंग्रहार्थं कर्म करोमि तथा त्वमन्यो वा विद्वांस्तदर्थं कर्म कुर्यादित्याह—**सक्ता इति** । यथा विद्वांसः कर्मणि सक्ताः कर्तृत्वाभिमानफलाभिसंधिभ्यामासक्ताः कर्म कुर्वन्ति तथाऽसक्तः सन् विद्वानात्मविल्लोकसंग्रहं कर्तुमिच्छुः कर्म कुर्यात् । तव तु भरतवंशोद्भवत्वादपि लोकसंग्रहोऽवश्यं संपाद्य इति सूचयन्नाह—**भारतेति** ॥ २५ ॥ लोकसंग्रहं चिकीर्षोस्तत्त्वविद इदमुपदिश्यते—**नेति** । अज्ञानामतएव कर्मसङ्गिनां फलार्थं कर्मण्यास-

६ श्रीधरीव्याख्या ।

स्यां भवेयम् । एवमहमेव प्रजा उपहन्यां मलिनीकुर्याम् ॥ २४ ॥ तस्मादात्मविदापि लोकसंग्रहार्थं तत्कृपया कर्म कार्यमेवेत्युपसंहरति—**सक्ता इति** । कर्मणि सक्ता अभिनिविष्टाः सन्तोऽज्ञाः यथा कर्म कुर्वन्ति तथैव असक्तः सन् विद्वानपि कुर्यात् लोकसंग्रहं

७ अभिनवगुप्ताचार्यव्याख्या ।

जायेत ॥ २३ ॥ यतः कर्मवासनां च न मोक्तुं शक्नुवन्ति ज्ञानधारां च नाश्रयितुं अथच शिथिलीभवन्ति ॥ २४ ॥ यतस्तेन सम्यग्ज्ञानेन

१ मधुसूदनः.

जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

१ श्रीमच्छांकरभाष्यम् ।

मयेदं कर्तव्यं भोक्तव्यं चास्य कर्मणः फलमिति निश्चितरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदस्तं न जनयेन्नोत्पादयेदज्ञानामविवेकिनां कर्मसङ्गिनां कर्मण्यासक्तानामासङ्गवतां, किंतु कुर्याज्जोषयेत्कारयेत् सर्वकर्माणि विद्वान्स्वयं तदेवाविदुषां कर्म युक्तोऽभियुक्तः समाचरन् ॥२६॥ अविद्वानज्ञः कथं कर्मसु सज्जत इत्याह—प्रकृतेरिति । प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेर्गुणैर्विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैरहंकारविमूढात्मा कार्यकरणसंघात आत्मप्रत्ययोऽहंकारस्तेन विविधं नानाविधं मूढ आत्मान्तःकरणं यस्य

२ आनन्दगिरिव्याख्या ।

योत्तरार्धं प्रश्नपूर्वकमवतार्य व्याचष्टे—किंतु कुर्यादिति । सर्वकर्माणि कारयेत्तेषु प्रीतिं कुर्वन्निति शेषः । कथं कारयेदित्याकाङ्क्षायामाह—तदेवेति ॥ २६ ॥ अज्ञानां कर्मसङ्गिनामित्युक्तं तेनोत्तरश्लोकस्य संगतिमाह—अविद्वानिति । कर्तृत्वमात्मनो वास्तवमित्यभ्युपगमाद्विद्वान्कथं कुर्वन्नेव तस्याभावं पश्यतीत्याशङ्क्याह—प्रकृतेरिति । कर्मस्वविदुषः सक्तिप्रकारं प्रकटयन्व्याकरोति—प्रकृतेरित्यादिना । प्रधानशब्देन मायाशक्तिरुच्यते, अविद्यये-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

कर्मस्वासक्तानां बुद्धिभेदं बुद्धेश्चालनं न जनयेन्नोत्पादयेत् किंतु तान्सर्वाणि कर्माणि जोषयेत्सेवयेत् । कथम् । युक्त आदृतो भूत्वा समाचरन् ॥ २६ ॥ अविद्वान्कथं कर्मसु सजत इत्यत आह—प्रकृतेरिति । प्रकृतेः पारमेश्वर्याः सत्त्वरजस्तमोगुणात्मिकायाः 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतिप्रसिद्धायाः शक्तेर्गुणैः कार्यकारणसंघातात्मकैः क्रियमाणानि कर्माणि अहंकारेण स्वस्मिन्नध्यस्तेन विमूढः तदीयान्कर्तृत्वादीनात्मधर्मत्वेन पश्यन्, आत्मनश्चासङ्गानन्द-

४ मधुसूदनीव्याख्या ।

नुष्ठानेनैव लोकसंग्रहः कर्तव्यो नतु तत्त्वज्ञानोपदेशेनेति को हेतुरत आह—अज्ञानामविवेकिनां कर्तृत्वाभिमानेन फलाभिसंधिना च कर्मसङ्गिनां कर्मण्यभिनिविष्टानां या बुद्धिरहमेतत्कर्म करिष्ये एतत्फलं च भोक्ष्य इति तस्या भेदं विचालनं अकर्त्रात्मोपदेशेन न कुर्यात्, किंतु युक्तोऽवहितः सन् विद्वान् लोकसंग्रहं चिकीर्षुः अविद्वदधिकारिकाणि सर्वकर्माणि समाचरन् तेषां श्रद्धामुत्पाद्य जोषयेत् प्रीत्या सेवयेत् । अनधिकारिणामुपदेशेन बुद्धिविचालने कृते कर्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेरुभयभ्रष्टत्वं स्यात् । तथाचोक्तं 'अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् । महानिरयजालेषु स तेन विनियोजितः ॥' इति ॥ २६ ॥ विद्वदविदुषोः कर्मानुष्ठानसाम्येऽपि कर्तृत्वाभिमानतदभावाभ्यां विशेषं दर्शयन्सक्ताः कर्मणीति (२५) श्लोकार्थं विवृणोति द्वाभ्याम्—प्रकृतिर्माया सत्त्वरजस्तमोगुणमयी मिथ्याज्ञानात्मिका पारमेश्वरी शक्तिः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतेः । तस्याः प्रकृतेर्गुणैर्विकारैः कार्यकारणरूपैः क्रियमाणानि लौकिकानि वैदिकानि च कर्माणि सर्वशः सर्वप्रकारैरहंकारेण कार्यकारणसंघातात्मप्रत्ययेन विमूढः स्वरूपविवेकासमर्थ आत्मान्तःकरणं यस्य सोऽहंकारविमूढात्माऽनात्मन्यात्माभिमानी, तानि कर्माणि कर्ताहमिति करोम्यहमिति मन्यते कर्त्रध्यासेन ।

५ भाष्योत्कर्षदीपिका ।

क्तानां इदं कर्म मयावश्यं कर्तव्यं तत्फलं च भोक्तव्यमिति निश्चितरूपाया बुद्धेर्भेदनं चालनं न कर्मणेत्याद्युपदेशेन नोत्पादयेत् । किंतु विद्वान्युक्तः समाहितः सन्नविदुषां कर्म स्वयं समाचरन्सर्वकर्माणि जोषयेत्कारयेत् । अन्यथा कर्मसु तेषां श्रद्धापगमे चित्तशुद्ध्यभावाज्ज्ञानाप्राप्त्योभयभ्रष्टत्वं स्यादिति भावः ॥ २६ ॥ सक्ताः कर्मणीत्येतं श्लोकं व्याचष्टे—प्रकृतेरिति द्वाभ्याम् । प्रकृतेः प्रधानस्य मायाशक्तेर्गुणैर्विकारैः कार्यकारणरूपैः क्रियमाणानि कर्माणि सर्वाणि सर्वशः सर्वप्रकारैः कार्यकरणसंघातेऽहंप्रत्ययो-

६ श्रीधरीव्याख्या ।

कर्तुमिच्छुः ॥ २५ ॥ ननु कृपया तत्त्वज्ञानमेवोपदेष्टुं युक्तं नेत्याह—नेति । अज्ञानामतएव कर्मसङ्गिनां कर्मासक्तानामकर्तात्मोपदेशेन बुद्धेर्भेदमन्यथात्वं न जनयेत्कर्मणः सकाशाद्बुद्धिचालनं न कुर्यादपि तु जोषयेत्सेवयेत् । 'जुषी प्रीतिसेवनयोः' अज्ञान्कर्माणि कारयेत् । कथम् । युक्तोऽवहितो भूत्वा स्वयं च समाचरन् । बुद्धिचालने कृते सति कर्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेस्तेषामुभयभ्रंशः स्यादिति भावः ॥ २६ ॥ ननु विदुषापि चेत्कर्म कर्तव्यं तर्हि विद्वदविदुषोः को विशेष इत्याशङ्क्योभयोर्विशेषं दर्शयति—प्रकृतेरिति द्वाभ्याम् ।

७ अभिनवगुप्ताचार्यव्याख्या ।

पूताः अतो बुद्धेर्भेदनं विगलनं तेषां परमोऽप्ययमनर्थ इत्यनुग्रहाय भेदयेन्न धियमेषाम् ॥२५॥ तदाह—न बुद्धीति । स्वयं चैवं बुध्यमानः कर्माणि कुर्यात् । न च लोकानां बुद्धिं भिन्द्यात् ॥ २६ ॥ अज्ञानामित्युक्तं तदज्ञत्वं दर्शयति—प्रकृतेरिति । प्रकृतिसंबन्धिभिर्गुणैः सत्त्वाद्यैः

**तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः।**
**गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥**

१ श्रीमच्छांकरभाष्यम्।

**सोऽयं कार्यकरणधर्मा कार्यकरणाभिमान्यविद्यया कर्माण्यात्मनि मन्यमानस्तत्तत्कर्मणामहं कर्तेति मन्यते ॥ २७ ॥ यः पुनर्विद्वान् तत्त्वविदिति। तत्त्ववित्तु महाबाहो, कस्य तत्त्ववित् गुणकर्मविभागयोर्गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थः। गुणाः करणात्मका गुणेषु विषयात्मकेषु वर्तन्ते**

२ आनन्दगिरिव्याख्या।

त्युभयतः संबध्यते ॥ २७ ॥ अज्ञस्य कर्मसु शक्तिमुक्त्वा विदुषस्तदभावमभिदधाति—**यः पुनरिति**। तत्त्वं याथार्थ्यं वेत्तीति व्युत्पत्त्या तत्त्वविदिति तुशब्देनाज्ञाद्विशिष्टे निर्दिष्टप्रश्नपूर्वकं द्वितीयपादमवतार्य व्याचष्टे—**कस्येत्यादिना**। गुणानामेव गुणेषु वर्तमानत्वमयुक्तं निर्गुणत्वात्तेषामित्याशङ्क्य विभजते—**गुणा इति**। कार्यकरणानामेव विषयेषु

३ नीलकण्ठव्याख्या (चतुर्धरी)।

संविद्रूपतामपश्यन्नात्मा अहंकारेण विमूढश्चासावात्मा चेति विग्रहः। अहं कर्माणि करोमि कर्मणां कर्तेति मन्यते कर्त्रध्यासेन। कर्ताहमिति तृन्प्रत्ययस्तेन 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधः। अन्यथा तृच्प्रत्यये कर्मणां कर्ताहमिति षष्ठ्या भाव्यम् ॥ २७ ॥ एवं सक्तस्य कर्माचरणं प्रदर्श्यासक्तस्य तत्प्रदर्शयति—**तत्त्वविदिति**। गुणकर्मविभागयोः गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति भाष्यम्। नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागः, नाहं कर्मात्मक इति कर्मभ्यश्चात्मनो विभागः, तयोर्गुणकर्मविभागयोस्तत्त्वं वेत्तीति श्रीधरः। मधुसूदनस्तु गुणाः देहेन्द्रियान्तःकरणान्यहंकारास्पदानि। कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानि। गुणकर्मेति द्वन्द्वैकवद्भावः। विभज्यते सर्वेषां जडानां भासकत्वेन पृथग्भवतीति विभागः स्वप्रकाशज्ञानरूपोऽसङ्ग आत्मा। गुणकर्म च विभागश्चेति द्वन्द्वः। तयोर्जडाजडयोस्तत्त्वं यो वेत्ति सः गुणाः करणात्मकाः गुणेषु विषयेषु वर्तन्ते इति मत्वा न सज्जते। कर्तृत्वाभिनिवेशं न करोतीत्यर्थः। गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति पक्षे गुणकर्मणोरित्येव सिद्धे विभागपदं व्यर्थमिति। यद्वा यस्तत्त्ववित् स गुणाः गुणेषु वर्तन्त इति मत्वा गुणविभागे कर्मविभागे च न सज्जते इति योजना। गुणानां सत्त्वरजस्तमसां विभागो बुद्ध्यहंकारज्ञानेन्द्रियकर्मेन्द्रियविषयरूपेण विभज्यावस्थानं तस्मिन्न सज्जते इदमहमिति न मन्यते। तथाहि शरीरे गौरोऽहं गौरोऽस्मि हस्ताभ्यामात्ते मयेदमात्तमिति चक्षुषा दृष्टे मयेदं दृष्टमित्यहंकारेणाभिमन्यते

४ मधुसूदनीव्याख्या।

कर्ताहमिति तृन्प्रत्ययः। तेन 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीप्रतिषेधः ॥ २७ ॥ विद्वांस्तु तथा न मन्यत इत्याह—तत्त्वं याथात्म्यं वेत्तीति तत्त्ववित्। तुशब्देन तस्याज्ञाद्वैशिष्ट्यमाह। कस्य तत्त्वमित्यत आह—गुणकर्मविभागयोः गुणा देहेन्द्रियान्तःकरणान्यहंकारास्पदानि कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानीति गुणकर्मेति द्वन्द्वैकवद्भावः। विभज्यते सर्वेषां जडानां विकारिणां भासकत्वेन पृथग्भवतीति विभागः स्वप्रकाशज्ञान-

५ भाष्योत्कर्षदीपिका।

ऽहंकारस्तेन विमूढः स्वात्मस्वरूपविवेकासमर्थः आत्मान्तःकरणं यस्य सोऽविद्यया कर्मणामहंकर्तेति मन्यते ॥ २७ ॥ तत्त्ववित्तु। तुशब्दोऽज्ञाद्वैलक्षण्यद्योतनार्थः। कस्य तत्त्वविदित्यत आह। गुणकर्मविभागयोः गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थ इति भाष्यम्। अस्यायमर्थः। नाहं कार्यकरणसंघातात्मेति गुणेभ्य आत्मनो विभागः न मे कर्माणीत्यात्मनस्तेभ्यो विभागः गुणकर्मभ्यां विभक्तात्मसाक्षात्कारवान्। तथाच नायमहंकारविमूढात्मा नापि कर्मण्यासक्तो येनाहंकर्तेति मन्येत। विभागपदाभावे त्वयमर्थो न लभ्यते। विग्रहस्तु विभागश्च विभागश्च विभागौ गुणकर्मभ्यो विभागौ गुणकर्मविभागौ तयोर्गुणकर्मविभागयोरिति बोध्यः। एतेन गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति वा। अस्मिन्पक्षे गुणकर्मणोरित्येतावतैव निर्वाहे विभागपदस्य प्रयोजनं चिन्त्यमित्याक्षेपः प्रत्युक्तः। यत्त्वाक्षेप्त्रा स्वव्याख्यानं प्रदर्शितं गुणानि देहेन्द्रियान्तःकरणान्यहंकारास्पदानि कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानीति। गुणकर्मेति द्वन्द्वैकवद्भावः। विभज्यते सर्वेषां जडानां विकारिणां भासकत्वेन यथा भवतीति विभागः स्वप्रकाशज्ञानरूपोऽसङ्ग आत्मा गुणकर्म च विभागश्चेति द्वन्द्वः तयोर्गुणकर्मविभागयोर्भास्यभासकयोर्जडचैतन्ययोर्विकारिनिर्विकारयोस्तत्त्वं याथात्म्यं यो वेत्तीति

६ श्रीधरीव्याख्या।

प्रकृतेर्गुणैः प्रकृतिकार्यैरिन्द्रियैः सर्वप्रकारेण क्रियमाणानि यानि कर्माणि तान्यहमेव कर्ता करोमीति मन्यसे। तत्र हेतुः। अहंकारेणेन्द्रियादिष्वात्माध्यासेन विमूढ आत्मा बुद्धिर्यस्य सः ॥ २७ ॥ विद्वांस्तु तथा न मन्यत इत्याह—**तत्त्वविदिति**। नाहं गुणात्मक इति

७ अभिनवगुप्ताचार्यव्याख्या।

किल कर्माणि क्रियन्ते। मूढश्चाहं कर्तेत्यध्यवस्य मिथ्यैवात्मानं बध्नाति ॥ २७ ॥ तत्त्वविच्चिति। गुणकर्मविभागतत्त्ववित्तु प्रकृतिः करोति

१ मधुसूदनः।

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।**
**तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ २९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**नात्मेति मत्वा न सज्जते सक्तिं न करोति ॥ २८ ॥ ये पुनः प्रकृतेरिति । प्रकृतेर्गुणैः सम्यङ् मूढाः**

२ आनन्दगिरिव्याख्या ।

प्रवृत्तिरात्मनस्तु कूटस्थत्वान्नैवमिति ज्ञात्वा तत्त्ववित्कर्मसु दृढतरं कर्तव्याभिमानं न करोतीत्यर्थः ॥ २८ ॥ विद्वान-विद्वानित्युभावपि प्रकृत्य विद्वानविदुषो बुद्धिभेदं न कुर्यादित्युपसंहरति—**ये पुनरिति** । प्रकृतेरुक्तगुणैर्देहादिभिः

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

ममेदमित्यभिमन्यते । बुद्धौ विक्रियमाणायामहं सुखीति च सर्वेषु बुद्ध्यादिषु विभज्य गृह्यमाणेष्वपि प्रत्येकं प्रत्यक्त्व-मध्यस्याहमिदमिति ममेदं कर्मेति च मन्यते । एतेन कर्मविभागोऽप्यावश्यकत्वेन व्याख्यातः । अन्यथा चिदात्मन्ये-वादानादिकर्तृत्वं दुःखादिमत्त्वं चापतति । अयं च कर्मविभागः श्रुत्यापि दर्शितः 'अन्धो मणिमविन्दत् । तमनङ्गु-लिरावयत् । अग्रीवः प्रत्यमुञ्चत् । तमजिह्वो असश्चत' इति । अन्धः स्वयं प्रकाशहीनोऽपि चक्षुरादिर्मणिं रूपादिकं विष-यमविन्दत्प्रकाशयति । अनङ्गुलिः काष्ठलोष्टादिवज्जडत्वात् स्वयं कर्म कर्तुमशक्तोऽपि पाण्यादिः आवयदासीव्यत् विषयमुपादत्ते । अग्रीवः छिन्नशिरस्कवन्निर्जीवोऽहंकारस्तं प्रत्यमुञ्चत् ग्रीवायां धारयति मयेदं लब्धमिति मन्यते । अजिह्वो धीधातुः जडत्वात्स्वयं स्वगतसुखदुःखयोः पट इव स्वगतरूपादेः प्रकाशनेऽसमर्थोऽप्यहं सुखी दुःखीति चानु-भवति । तथाचात्मानात्मनोर्याथात्म्यज्ञो व्यावृत्तेष्वहंकारादिषु तत्कर्मसु चाभिमानादिषु कुसुमेषु सूत्रमिवानुवर्तमान-मात्मानं तेभ्यः पृथग्भूतं जानन् गुणा धीचक्षुरादयो गुणेषु दुःखरूपादिषु वर्तन्ते नत्वात्मेति मत्वा न सज्जतेऽहमेव हस्तादिसंघातरूपो ममैवेदमादानादिकं कर्मेति न सक्तो भवतीत्यर्थः ॥ २८ ॥ एवं सक्तासक्तयोः कर्माणि विभज्य

४ मधुसूदनीव्याख्या ।

रूपोऽसङ्ग आत्मा । गुणकर्म च विभागश्चेति द्वन्द्वः । तयोर्गुणकर्मविभागयोर्भास्यभासकयोर्जडचैतन्ययोर्विकारिनिर्विकारयोस्तत्त्वं याथात्म्यं यो वेत्ति स गुणाः करणात्मका गुणेषु विषयेषु प्रवर्तन्ते विकारित्वान्नतु निर्विकार आत्मेति मत्वा न सज्जते सक्तिं कर्तृत्वाभिनिवेशमतत्त्वविदिव न करोति । हे महाबाहो इति संबोधयन्सामुद्रिकोक्तसत्पुरुषलक्षणयोगित्वान्न पृथग्जनसाधारण्येन त्वमविवेकी भवितुमर्हसीति सूचयति । गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति वा । अस्मिन्पक्षे गुणकर्मणोरित्येतावतैव निर्वाहे विभागपदस्य प्रयोजनं चिन्त्यम् ॥ २८ ॥ तदेवं विद्वदविदुषोः कर्मानुष्ठानसाम्येन विद्वानविदुषो बुद्धिभेदं न कुर्या-

५ भाष्योत्कर्षदीपिका ।

तच्चिन्त्यम् । गुणकर्मेत्यस्यैकपदत्वेऽल्पाच्त्वादभ्यर्हितत्वाच्च विभागपदस्य पूर्वनिपातापत्तेश्छान्दसत्वनिपातप्रकरणानित्यत्वयोराश्रय-णस्य भाष्योक्तरीत्या सत्यां गतावनुचितत्वात् । विभागपदस्य प्रसिद्धमर्थं परित्यज्याप्रसिद्धार्थकल्पनायाः क्लिष्टकल्पनायाश्चान्याय्यत्वा-दितिदिक् । यदप्यन्ते यस्तत्त्ववित्सः गुणा गुणेषु वर्तन्त इति मत्वा गुणविभागे कर्मविभागे च न सज्जत इति योजना । गुणानां सत्त्वरजस्तमसां विभागः बुद्ध्यहंकारज्ञानेन्द्रियविषयरूपेण विभज्यावस्थानं तस्मिन्न सज्जते इदमहमिति न मन्यते । एतेन कर्म-विभागोऽप्यावश्यकत्वेन व्याख्यातः । अन्यथा चिदात्मन्येवादानादिकर्तृत्वं दुःखादिमत्त्वं चापतति तथाचात्मानात्मनोर्याथात्म्यज्ञः व्यावृत्तेष्वहंकारादिषु तत्कर्मसु चाभिमानादिषु कुसुमेषु सूत्रमिवानुवर्तमानमात्मानं तेभ्यः पृथग्भूतं जानन् गुणा धीचक्षुरादयो गुणेषु दुःखरूपादिषु वर्तन्ते न त्वात्मेति मत्वा न सज्जतेऽहमेव हस्तादिसंघातरूपो ममैवेदमादानादिकं कर्मेति न सक्तो भवतीत्यर्थ इति, तदपि विचार्यम् । गुणकर्मणोर्न सज्जत इत्येतावतैव निर्वाहे विभागपदवैयर्थ्यापत्तेः, तथाचेत्यादिग्रन्थस्य स्वव्याख्यानाननुरू-पत्वाच्चेति दिक् । गुणाः करणात्मकाः गुणेषु विषयेषु प्रवर्तन्ते नात्मेति मत्वा न सज्जते सक्तिं कर्तृत्वाभिनिवेशं न करोति । महान्तौ बाहू शत्रुहनने प्रवर्तेते नाहमिति मत्वा त्वमपि कर्तृत्वाभिनिवेशं कर्तुं नार्हसीति ध्वनयन्नाह—**हे महाबाहो** इति ॥ २८ ॥ विद्वत्स्वरूपमविद्वत्स्वरूपं च प्रकृतमुपपाद्य विद्वानविदुषो बुद्धिभेदनं न कुर्यादित्युपसंहरति—**प्रकृतेरिति** । प्रकृतेः प्रधा-

६ श्रीधरीव्याख्या ।

गुणेभ्य आत्मनो विभागः । न मे कर्माणीति कर्मभ्योऽप्यात्मनो विभागस्तयोर्गुणकर्मविभागयोर्यस्तत्त्वं वेत्ति स तु न सज्जते कर्तृत्वाभि-निवेशं न करोति । तत्र हेतुः । गुणा इन्द्रियाणि गुणेषु विषयेषु वर्तन्ते नाहमिति मत्वा ॥ २८ ॥ न बुद्धिभेदं जनयेदित्युक्तमुपसंह-रति—**प्रकृतेरिति** । यैः प्रकृतेर्गुणैः सत्त्वादिभिः संमूढाः सन्तो गुणेष्विन्द्रियेषु तत्कर्मसु च सज्जन्ते वयं कुर्म इति, तानकृत्स्नविदो

७ अभिनवगुप्ताचार्यव्याख्या ।

मम किमायातमित्यात्मानं मोचयति ॥ २८ ॥ कर्मसङ्गिनामित्युक्तं कर्मसङ्गित्वं दर्शयति—प्रकृतेरिति । प्रकृतिसंबन्धिभिर्गुणैः सत्त्वाद्यैः

१ नीलकण्ठः.

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**संमोहिताः सन्तः सज्जन्ते गुणानां कर्मसु गुणकर्मसु वयं कर्म कुर्मः फलायेति, तान् कर्मसङ्गिनोऽकृत्स्नविदः कर्मफलमात्रदर्शिनो मन्दान्मन्दप्रज्ञान्कृत्स्नविदात्मवित्स्वयं न विचालयेद् बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः ॥ २९ ॥ कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमित्युच्यते—**

२ आनन्दगिरिव्याख्या ।

विकारैः संमूढास्तानेवात्मत्वेन मन्यमाना ये ते गुणानां तेषामेव देहादीनां कर्मसु व्यापारेषु सजन्ते सक्तिं दृढतरामात्मीयबुद्धिं कुर्वन्तीत्याह—**प्रकृतेरित्यादिना** । तेषामनात्मविदां स्वयमात्मविद् बुद्धिभेदं नापादयेदित्याह—**तानित्यादिना** ॥ २९ ॥ यद्यपि कर्मण्यज्ञोऽधिक्रियते तथापि मोक्ष्यमाणेन तेन कर्म त्यक्तव्यं मोक्षस्य कर्मासाध्यत्वान्नतु तेन कर्म कर्तुं शक्यं कर्मणः सापेक्षितविरोधित्वादिति शङ्कते—**कथमिति** । श्लोकेनोत्तरमाह—**उच्यत इति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सक्तकर्मानुवादपूर्वकं न बुद्धिभेदं जनयेदज्ञानामित्युपक्रान्तमुपसंहरति—**प्रकृतेरिति** । गुणैरहंकारादिभिः स्वस्मिन्नध्यस्तैः संमूढाः एकीभावेनाभेदाध्यासेन, मूढास्तु प्रकृतेः प्रकृतिसंबन्धिषु गुणेषु देहादिषु कर्मसु गमनादिषु च सज्जन्ते अहमयं ब्राह्मणो ममैवेदं यज्ञादिकं कर्मेति सज्जन्ते सक्ता भवन्ति तान् मूढत्वात् अकृत्स्नविदः आत्मज्ञानहीनान् आत्मविद्धि कृत्स्नवित् । 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इति श्रुतेः । मन्दाञ्शास्त्रार्थग्रहणासमर्थान् । कृत्स्नविदात्मविन्न विचालयेत्कर्मनिष्ठातो न प्रच्यावयेत् । तेषामुभयभ्रष्टत्वापत्तेः प्रकृतेर्गुणैः संमूढाः गुणानां कर्मसु सज्जन्त इति प्राचां योजना ॥ २९ ॥ **मयीति** । त्वं तु अज्ञो मुमुक्षुश्च मयि सर्वान्तर्यामिणि सर्वाणि

४ मधुसूदनीव्याख्या ।

दित्युक्तमुपसंहरति—प्रकृतेः पूर्वोक्ताया मायाया गुणैः कार्यतया धर्मैर्देहादिभिर्विकारैः सम्यङ्मूढाः स्वरूपास्फुरणेन तानेवात्मत्वेन मन्यमानास्तेषामेव गुणानां देहेन्द्रियान्तःकरणानां कर्मसु व्यापारेषु सज्जन्ते सक्तिं वयं कर्म कुर्मस्तत्फलायेति दृढतरामात्मीयबुद्धिं कुर्वन्ति ये तान् कर्मसङ्गिनोऽकृत्स्नविदोऽनात्माभिमानिनो मन्दानशुद्धचित्तत्वेन ज्ञानाधिकारमप्राप्तान् कृत्स्नवित् परिपूर्णात्मवित् स्वयं न विचालयेत् । कर्मश्रद्धातो न प्रच्यावयेदित्यर्थः । ये त्वमन्दाः शुद्धान्तःकरणास्ते स्वयमेव विवेकोदयेन विचलन्ति ज्ञानाधिकारं प्राप्ता इत्यभिप्रायः । कृत्स्नाकृत्स्नशब्दावात्मानात्मपरतया श्रुत्यर्थानुसारेण वार्तिककृद्भिर्व्याख्यातौ । 'सदेवेत्यादिवाक्येभ्यः कृत्स्नं वस्तु यतोऽद्वयम् । संभवस्तद्विरुद्धस्य कुतोऽकृत्स्नस्य वस्तुतः ॥ यस्मिन्दृष्टेऽप्यदृष्टोऽर्थः स तदन्यत्र शिष्यते । तथादृष्टेऽपि दृष्टः स्यादकृत्स्नस्तादृगुच्यते ॥' इति । अनात्मनः सावयवत्वादनेकधर्मवत्त्वाच्च केनचिद्धर्मेण केनचिदवयवेन वा विशिष्टे तस्मिन्नेकस्मिन्घटादौ ज्ञातेऽपि धर्मान्तरेणावयवान्तरेण वा विशिष्टः स एवाज्ञातोऽवशिष्यते तदन्यश्च पटादिरज्ञातोऽवशिष्यतएव, तथा तस्मिन्घटादावज्ञातेऽपि पटादिर्ज्ञातः स्यादिति तज्ज्ञानेऽपि तस्यान्यस्य चाज्ञानात्तदज्ञानेऽप्यन्यज्ञानाच्च सोऽकृत्स्न उच्यते कृत्स्नस्त्वद्वय आत्मैव तज्ज्ञाने कस्यचिदवशेषस्याभावादिति श्लोकद्वयार्थः ॥ २९ ॥ एवं कर्मानुष्ठानसाम्येऽप्यज्ञविज्ञयोः कर्तृत्वाभिनिवेशतदभावाभ्यां विशेष उक्तः । इदानीमज्ञस्यापि मुमुक्षोरमुमुक्षवपेक्षया भगवदर्पणं फलाभिसंध्यभावं च विशेषं वदन्नज्ञतयार्जुनस्य कर्माधिकारं द्रढयति—मयि भगवति वासुदेवे परमेश्वरे

५ भाष्योत्कर्षदीपिका ।

नस्य मायाशक्तेर्गुणैर्विकारैः कार्यकरणरूपैः सम्यग्मूढाः स्वस्वरूपास्फुरणेन तानेवात्मतया मन्यमानास्तेषामेव गुणानां कर्मसु व्यापारेषु सज्जन्ते । वयं कुर्मः फलायेति दृढतरस्वकीयबुद्धिं कुर्वन्ति ये तान्कर्मसङ्गिनोऽतएवाकृत्स्नविद आत्मज्ञानशून्यान् यतो मन्दप्रज्ञान् कृत्स्नविदात्मवित् 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इतिश्रुत्यात्मविदः कृत्स्नवित्त्वप्रतिपादनात् स्वयं न विचालयेत् । बुद्धिभेदं न कुर्यादित्यर्थः । प्रकृतेर्गुणैः सत्त्वादिभिरिति व्याख्यानं तु भाष्यविरुद्धम् । प्रकृतेः क्रियमाणानि गुणैरित्यत्रेन्द्रियैरिति स्वोक्त्यननुरूपं च । एतेन गुणेष्विन्द्रियेषु तत्कर्मसु च प्रकृतेः संबन्धिषु गुणेषु देहादिषु कर्मसु गमनादिषु चेति व्याख्यानद्वयमपि प्रत्युक्तम् । देहेन्द्रियाद्यासक्तेर्गुणसंमूढा इत्यनेनैवोक्तत्वात् । प्रकृतेरित्यस्य गुणकर्मस्वित्यनेन संबन्धस्य प्रयोजनशून्यत्वाच्च ॥ २९ ॥ ननु नाहं तत्त्ववित् किंत्वज्ञो मुमुक्षुर्मया कथं कर्म कर्तव्यमिति चेत्तत्राह—**मयीति** । मयि परमेश्वरे

६ श्रीधरीव्याख्या ।

मन्दमतीन्कृत्स्नवित्सर्वज्ञो न विचालयेत् ॥ २९ ॥ तदेवं तत्त्वविदापि कर्म कर्तव्यं, त्वं तु नाद्यापि तत्त्ववित्, अतः कर्मैव कुर्वित्याह—

७ अभिनवगुप्ताचार्यव्याख्या ।

कृतेषु कर्मसु मूढाः सजन्ति सत्त्वादिगुणमाहात्म्यात् ॥ २९ ॥ तस्माद्युक्तः सन् जुषेत कर्माणीत्युक्तं तत्र कथमिति स्फुटयति—मयीति ।

---

१ श्रीधरः. २ नीलकण्ठः.

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥

१ श्रीमच्छांकरभाष्यम् ।

मयीति । मयि वासुदेवे परमेश्वरे सर्वज्ञे सर्वात्मनि सर्वाणि कर्माणि संन्यस्य निक्षिप्याध्यात्मचेतसा विवेकबुद्ध्याहं कर्तेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या । किंच निराशीस्त्यक्ताशीर्निर्ममो ममभावश्च निर्गतो यस्य तव स त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरो विगतसंतापो विगतशोकः सन्नित्यर्थः ॥३०॥ यदेतन्मतं कर्म कर्तव्यमिति सप्रमाणमुक्तं तत्तथा—ये म इति । ये मे मदीयमिदं मतमनुतिष्ठन्त्यनुवर्तन्ते मानवा मनुष्याः श्रद्धावन्तः श्रद्दधाना अनसूयन्तोऽसूयां च मयि गुरौ वासुदेवेऽकुर्वन्तो

२ आनन्दगिरिव्याख्या ।

यथोक्ते परस्मिन्नात्मनि सर्वकर्मणां समर्पणे कारणमाह—अध्यात्मेति । विवेकबुद्धिमेव व्याकरोति—अहमिति । दर्शितरीत्या कर्मसु प्रवृत्तस्य कर्तव्यान्तरमाह—किंचेति । त्यक्ताशीः फलप्रार्थनाहीनः सन्नित्यर्थः । निर्ममो भूत्वा पुत्रभ्रात्रादिष्विति शेषः । ननु युद्धे नियोगो नोपपद्यते पुत्रभ्रात्रादिहिंसात्मनस्तस्य संतापहेतोर्नियोगविषयत्वायोगादिति तत्राह—विगतेति ॥ ३० ॥ प्रकृतं भगवतो मतमुक्तप्रकारमनुसृत्यैवानुतिष्ठतां क्रममुक्तिफलं कथयति—यदेतदिति । शास्त्राचार्योपदिष्टेऽदृष्टार्थे विश्वासवत्त्वं श्रद्धानत्वं, गुणेषु दोषाविष्करणमसूया, अपिर्यथोक्ताया मुक्ते-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्माणि संन्यस्य समर्प्य अध्यात्मचेतसा आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मं तत्र प्रवणेन चेतसा । शाकपार्थिवादिवन्मध्यमपदलोपी समासः । आत्मानात्मविवेकवतेत्यर्थः । ईश्वरप्रेरितोऽहं करोमीत्यनया बुद्ध्या निराशीः फलमनिच्छन् निर्ममो लब्धे ममत्वाभिमानशून्यश्च भूत्वा युध्यस्व विगतज्वरो विशोकः सन् ॥ ३० ॥ ये म इति । येऽन्येऽपि त्वादृशाः मे मम मतमसत्तया कर्मानुष्ठानं अनुतिष्ठन्त्यनुवर्तन्ते मानवाः श्रद्धावन्तः अनसूयन्तः अत्र दोषमपश्यन्तः

४ मधुसूदनीव्याख्या ।

सर्वज्ञे सर्वनियन्तरि सर्वात्मनि सर्वाणि कर्माणि लौकिकानि वैदिकानि च सर्वप्रकाराणि अध्यात्मचेतसा अहं कर्तान्तर्याम्यधीनस्तस्मा एवेश्वराय राज्ञ इव भृत्यः कर्माणि करोमीत्यनया बुध्या संन्यस्य समर्प्य निराशीर्निष्कामः निर्ममो देहपुत्रभ्रात्रादिषु स्वीयेषु ममताशून्यः विगतज्वरः संतापहेतुत्वाच्छोक एव ज्वरशब्देनोक्तः, ऐहिकपारत्रिकदुर्यशोनरकपातादिनिमित्तशोकरहितश्च भूत्वा त्वं मुमुक्षुर्युध्यस्व विहितानि कर्माणि कुर्वित्यभिप्रायः । अत्र भगवदर्पणं निष्कामत्वं च सर्वकर्मसाधारणं मुमुक्षोः । निर्ममत्वं त्यक्तशोकत्वं च युद्धमात्रे प्रकृते इति द्रष्टव्यम् । अन्यत्र ममताशोकयोरप्रसक्तत्वात् ॥ ३० ॥ फलाभिसंधिराहित्येन भगवदर्पणबुद्ध्या विहितकर्मानुष्ठानं सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण मुक्तिफलमित्याह । इदं फलाभिसंधिराहित्येन विहितकर्माचरणरूपं मम मतं नित्यं नित्यवेदबोधितत्वेनानादिपरंपरागतं आवश्यकमिति वा सर्वदेति वा मानवा मनुष्याः ये केचित् मनुष्याधिकारित्वात्कर्मणां श्रद्धावन्तः शास्त्राचार्योपदिष्टेर्थेऽननुभूतेऽप्येवमेवैतदिति विश्वासः श्रद्धा तद्वन्तः । अनसूयन्तः गुणेषु दोषाविष्करणमसूया सा च दुःखात्मके कर्मणि मां प्रवर्तयन्नकारुणिकोऽयमित्येवंरूपा । प्रकृते प्रसक्तां तामसूयामपि गुरौ वासुदेवे सर्वसुहृद्यकुर्वन्तो येऽनुतिष्ठन्ति तेऽपि सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण सम्यक् ज्ञानिवन्मुच्यन्ते कर्मभिर्धर्माधर्माख्यैः

५ भाष्योत्कर्षदीपिका ।

सर्वाणि वैदिकानि लौकिकानि च कर्माणि अध्यात्मचेतसा विवेकबुद्ध्याऽहंकर्तेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या संन्यस्य समर्प्य निराशीः फलाभिसंधिरहितः ममत्वशून्यस्त्वं भूत्वा विगतज्वरो विगतशोकः सन् युध्यस्व । यत्त्वत्र भगवदर्पणं निष्कामत्वं च सर्वकर्मसाधारणं मुमुक्षोः निर्ममत्वं त्यक्तशोकत्वं च युद्धमात्रे प्रकृत इति द्रष्टव्यमन्यत्र ममताशोकयोरप्रसक्तत्वादिति तच्चिन्त्यम् । सर्वस्मिन्कर्मणि ममेदमिति ममत्वस्य निष्फले कष्टसाध्ये वा कर्मणि ज्वरस्य च प्रसक्तत्वात् । शोकादेर्निवृत्त्यर्थमेव सिद्ध्यसिद्ध्योः समो भूत्वेति भगवतोक्तत्वाच्चेति दिक् ॥ ३० ॥ येऽन्येऽपि मानवाः मम परमेश्वरस्य मतं फलाभिसंधिराहित्येन चित्तशोधकं कर्मानुष्ठेयमित्येवंरूपं सप्रमाणमुक्तमीश्वरेण सर्वज्ञेनाप्ततमेनोक्तं यत्तत्तथ्यमेवेति निश्चयः श्रद्धा तद्युक्ता अतएवानुसूयन्तो मयि परम-

६ श्रीधरीव्याख्या ।

मयीति । सर्वाणि कर्माणि मयि संन्यस्य समर्प्याध्यात्मचेतसान्तर्याम्यधीनोऽहं करोमीति दृष्ट्या निराशीर्निष्कामोऽतएव मत्फलसाधनं मदर्थमिदं कर्मेत्येवं ममताशून्यश्च भूत्वा विगतज्वरस्त्यक्तशोकश्च भूत्वा युध्यस्व ॥ ३० ॥ एवं कर्मानुष्ठाने गुणमाह—ये मे मतमिति । मद्वाक्ये श्रद्धावन्तः अनसूयन्तः दुःखात्मके कर्मणि प्रवर्तयतीति दोषदृष्टिमकुर्वन्तश्च । ये मे मदीयमिदं मतमनुतिष्ठन्ति तेऽपि शनैः

७ अभिनवगुप्ताचार्यव्याख्या ।

मयि सर्वाणि कर्माणि नाहं कर्तेति संन्यस्य स्वतन्त्रः परमेश्वरएव सर्वकर्ता नाहं कश्चिदिति निश्चित्य लोकानुग्रहं चिकीर्षुर्लोकाचारं युद्धात्मकमनुतिष्ठ ॥३०॥ ये मे इति । येरवेतदिति । एतच्च मतमाश्रित्य यः कश्चिद्यत्किंचित्करोति तत्तस्य न बन्धकं । एतस्मिंस्तु ज्ञाने येन श्रद्धा-

१ मधुसूदनः.

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः॥ ३२॥**
**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति॥ ३३॥**

१ श्रीमच्छांकरभाष्यम्।

**मुच्यन्ते तेऽप्येवंभूताः कर्मभिर्धर्माधर्माख्यैः॥ ३१॥ ये त्विति। ये तु तद्विपरीता एतन्मम मतमभ्यसूयन्तो नानुतिष्ठन्ति नानुवर्तन्ते मे मतं सर्वेषु ज्ञानेषु विविधं मूढास्ते सर्वज्ञानविमूढांस्तान्विद्धि नष्टान् नाशं गतानचेतसोऽविवेकिनः॥ ३२॥ कस्मात् पुनः कारणात्त्वदीयं मतं नानुतिष्ठन्ति परधर्माननुतिष्ठन्ति, स्वधर्मं च नानुवर्तन्ते, त्वत्प्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात्, तत्राह— सदृशमिति। सदृशमनुरूपं चेष्टते। कस्याः? स्वस्याः स्वकीयायाः प्रकृतेः। प्रकृतिर्नाम पूर्वकृतधर्माधर्मा-**

२ आनन्दगिरिव्याख्या।

रमुख्यत्वद्योतनार्थः॥ ३१॥ भगवन्मताननुवर्तिनां प्रत्यवायित्वं प्रत्याययति—**ये त्विति**। तद्विपरीतत्वं भगवन्मतानुवर्तिभ्यो वैपरीत्यं, तदेव दर्शयति—**एतदित्यादिना**। अभ्यसूयन्तस्तत्रासन्तमपि दोषमुद्भावयन्त इत्यर्थः। सर्वज्ञानानि सगुणनिर्गुणविषयाणि। प्रमाणप्रमेयप्रयोजनविभागतो विविधत्वम्॥ ३२॥ भगवन्मतानुवर्तनमन्तरेण परधर्मानुष्ठाने स्वधर्माननुष्ठाने च कारणं पृच्छति—**कस्मादिति**। भगवत्प्रतिकूलत्वमेव तत्र कारणमित्याशङ्क्याह—**त्वत्प्रतिकूला इति**। राजानुशासनातिक्रमे दोषदर्शनाद्भगवदनुशासनातिक्रमेऽपि दोषसंभवात्प्रतिकूलत्वं भयकारणमित्यर्थः। उत्तरत्वेन श्लोकमवतारयति—**सदृशमिति**। तत्राहेति। सर्वस्य प्राणिवर्गस्य प्रकृतिवशवर्तित्वे कैमुतिक-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

तेऽपि स्वकर्मभिर्धर्माधर्माख्यैर्मुच्यन्ते॥ ३१॥ विपक्षे दोषमाह—**येत्विति**। सर्वशब्द ईश्वरवाची। 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति निर्वचनात्। तस्य ज्ञाने विषये विशेषेण मूढानपारोक्ष्येणापि ते ईश्वरमजानन्तो देहमात्रनिष्ठास्तान् नष्टान्स्वर्गापवर्गभ्रष्टान् अचेतसः विवेकशून्यान्॥ ३२॥ ननु ते चेत्तव मतं नानुतिष्ठन्ति तर्हि कथं तवान्तर्यामित्वमित्यत आह—**सदृशमिति**। स्वस्याः प्रकृतेः स्वकीयस्य प्राग्भवीयधर्माधर्मसंस्कारस्य सदृशमनुरूपं ज्ञानवानपि

४ मधुसूदनीव्याख्या।

॥ ३१॥ एवमन्वये गुणमुक्त्वा व्यतिरेके दोषमाह—तुशब्दः श्रद्धावद्वैधर्म्यमश्रद्धां सूचयति। तेन ये नास्तिक्यादश्रद्दधाना अभ्यसूयन्तो दोषमुद्भावयन्तः एतन्मम मतं नानुवर्तन्ते तानचेतसो दुष्टचित्तान् अतएव सर्वज्ञानविमूढान् सर्वत्र कर्मणि ब्रह्मणि सगुणे निर्गुणे च यज्ज्ञानं तत्र विविधं प्रमाणतः प्रमेयतः प्रयोजनतश्च मूढान् सर्वप्रकारेणायोग्यान्नष्टान् सर्वपुरुषार्थभ्रष्टान्विद्धि जानीहि॥ ३२॥ ननु राज्ञ इव तव शासनातिक्रमे भयं पश्यन्तः कथमसूयन्तस्तव मतं नानुवर्तन्ते कथं वा सर्वपुरुषार्थसाधने प्रतिकूला भवन्तीत्यत आह—प्रकृतिर्नाम प्राग्जन्मकृतधर्माधर्मज्ञानेच्छादिसंस्कारो वर्तमानजन्म-

५ भाष्योत्कर्षदीपिका।

गुरौ वासुदेवेऽसूयादुःखात्मके कर्मण्यस्मान् प्रेरयतीति सुखसाधने तस्मिन्दोषारोपणमकुर्वन्तोऽनुतिष्ठन्ति अनुवर्तन्ते तेऽप्येवंभूताः सत्त्वशुद्धिद्वारा ज्ञानप्राप्त्या धर्माधर्माख्यैः कर्मभिर्मुच्यन्ते॥३१॥ येतु तद्विपरीताः श्रद्धाहीना एतन्मम मतमभ्यसूयन्तः गुणेऽपि दोषमारोप्य निन्दन्तः नानुतिष्ठन्ति तान् कर्मज्ञाने सगुणज्ञाने निर्गुणज्ञाने चेति सर्वेषु ज्ञानेषु विविधप्रमाणप्रमेयप्रयोजनविभागे मूढान् सर्वप्रकारेणायोग्यान् अचेतसोऽविवेकिनो दुष्टचेतसो नष्टान् सर्वपुरुषार्थेभ्यो भ्रष्टान् विद्धि। सर्वशब्द ईश्वरवाची 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति निर्वचनात्। तस्य ज्ञाने इति व्याख्यानं तूक्तव्याख्याने ईश्वरज्ञानस्यान्तर्भावात् व्यर्थमेव लोकप्रसिद्धित्याग इत्यत उपेक्ष्यम्॥ ३२॥ ननु कस्मात्त्वत्प्रतिकूलास्त्वच्छासनातिक्रमाच्च बिभ्यति त्वदीयं मतं स्वधर्मं नानुतिष्ठन्ति परधर्मं चानुतिष्ठन्तीति चेत्तत्राह—**सदृशमिति**। ज्ञानवानपि 'पश्वादिभिश्चाविशेषात्' इति न्यायात् गुणदोषज्ञानवानपीति वा। स्वस्याः प्रकृतेः

६ श्रीधरीव्याख्या।

कर्मकुर्वाणाः सम्यग्ज्ञानिवत्कर्मभिर्मुच्यन्ते॥ ३१॥ विपक्षे दोषमाह—**येत्विति**। ये तु मे मतमीश्वरार्थं कर्म कर्तव्यमित्यनुशासनमभ्यसूयन्तो द्विषन्तो नानुतिष्ठन्ति तानचेतसो विवेकशून्यानतएव सर्वस्मिन्कर्मणि ब्रह्मविषये च यज्ज्ञानं तत्र विमूढान्नष्टान्विद्धि॥ ३३॥ ननु तर्हि महाफलत्वादिन्द्रियाणि निगृह्य निष्कामाः सन्तः सर्वेऽपि स्वधर्ममेव किं नानुतिष्ठन्ति तत्राह—**सदृशमिति**। प्रकृतिः प्राचीन-

७ अभिनवगुप्ताचार्यव्याख्या।

स्तवस्ते विनष्टा अविरतं जन्ममरणादिभयभावितत्वात्॥३१॥ सदृशमिति। योऽपि च ज्ञानी न तस्य व्यवहारे भोजनादौ विपर्यासः कश्चित्। अपितु सोऽपि स्वस्वायुचितमेव चेष्टते एवमेव जानन्। अतो भूतानां पृथिव्यादीनां प्रकृतौ विलयः आत्मा चाकर्ता नित्यमुक्त इति कस्य जन्मा-

१ नीलकण्ठः।

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

दिसंस्कारो वर्तमानजन्मादावभिव्यक्तः सा प्रकृतिस्तस्याः सदृशमेव सर्वो जन्तुर्ज्ञानवानपि किं पुनर्मूर्खः । तस्मात् प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति मम वान्यस्य वा ॥ ३३ ॥ यदि सर्वो जन्तुरात्मनः प्रकृतिसदृशमेव चेष्टते नच प्रकृतिशून्यः कश्चिदस्ति ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते—इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्यार्थे सर्वेन्द्रियाणामर्थे शब्दादिविषये

२ आनन्दगिरिव्याख्या ।

न्यायं सूचयति—ज्ञानवानपीति । सर्वाण्यपि भूतान्यनिच्छन्त्यपि प्रकृतिसदृशीं चेष्टां गच्छन्तीति निगमयति—प्रकृतिमिति । भूतानां प्रकृत्यधीनत्वेऽपि प्रकृतिर्भगवता निग्राह्येत्याशङ्क्याह—निग्रह इति । का पुनरियं प्रकृतिर्यदनुसारिणी भूतानां चेष्टेति पृच्छति—प्रकृतिर्नामेति । भगवदभिप्रेतां प्रकृतिं प्रकटयति—पूर्वेति । आदिशब्देन ज्ञानेच्छादि संगृह्यते । यथोक्तः संस्कारः स्वशक्त्या प्रवर्तकश्चेत्प्रलयेऽपि प्रवृत्तिः स्यादित्याशङ्क्य विशिनष्टि—वर्तमानेति । सर्वो जन्तुरित्युक्तं विवेकिप्रवृत्तेरतथात्वादित्याशङ्क्य 'पश्वादिभिश्चाविशेषात्' इति न्यायमनुसरन्नाह—ज्ञानवानिति । ज्ञानवतामज्ञानवतां च प्रकृत्यधीनत्वाविशेषे फलितमाह—तस्मादिति । प्रकृतिं यान्ति प्रकृतिसदृशीं चेष्टां गच्छन्त्यनिच्छन्त्यपि सर्वाणि भूतानीत्यर्थः । प्रकृतेर्भगवता तत्तुल्येन वा केनचिन्निग्रहमाशङ्क्यावतारितचतुर्थपादस्यार्थापेक्षितं पूरयति—मम वेति ॥ ३३ ॥ सर्वस्य भूतवर्गस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यमिति शङ्कते—यदीति । ननु यस्य न प्रकृतिरस्ति तस्य पुरुषकारसंभवादर्थवत्त्वं तद्विषये विधिनिषेधयोर्भविष्यति नेत्याह—नचेति । शङ्कितदोषं श्लोकेन परिहरति—इदमित्यादिना । वीप्सायाः सर्वकरणगोचरत्वं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चेष्टते किमु मूर्खः 'पश्वादिभिश्चाविशेषात्' इति न्यायात् । तस्मात्प्रकृतिं यान्त्यनुसरन्ति भूतानि प्राणिनस्तत्र मम वान्यस्य वा निग्रहः किं करिष्यति, न किमपि । अहमपि पूर्वकर्मापेक्षयैव तान्प्रवर्तयामीति भावः ॥ ३३ ॥ एवं तर्हि पुरुषस्य स्वातन्त्र्याभावाद्विधिनिषेधशास्त्रं व्यर्थमित्याशङ्क्याह—इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्येति द्विर्वचनं वीप्सायाम् । प्रतीन्द्रियं स्वेस्वेऽर्थे शब्दादौ वचनादौ च विषये रागद्वेषौ अनुकूले रागः प्रतिकूले द्वेषश्च व्यवस्थितौ नित्यसंबद्धौ

४ मधुसूदनीव्याख्या ।

न्यभिव्यक्तः सर्वतो बलवान् 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतिप्रमाणकः । तस्याः स्वकीयायाः प्रकृतेः सदृशमनुरूपमेव सर्वो जन्तुर्ज्ञानवान् ब्रह्मविदपि 'पश्वादिभिश्चाविशेषात्' इतिन्यायात्, गुणदोषज्ञानवान्वा चेष्टते किं पुनर्मूर्खः । तस्मात् भूतानि सर्वे प्राणिनः प्रकृतिं यान्ति अनुवर्तन्ते पुरुषार्थभ्रंशहेतुभूतामपि । तत्र मम वा राज्ञो वा निग्रहः किं करिष्यति । रागौत्कट्येन दुरितान्निवर्तयितुं न शक्नोतीत्यर्थः । महानरकसाधनत्वं ज्ञात्वापि दुर्वासनाप्राबल्यात्पापेषु प्रवर्तमाना न मच्छासनातिक्रमदोषाद्बिभ्यतीति भावः ॥ ३३ ॥ ननु सर्वस्य प्राणिवर्गस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यं प्राप्तं, नच प्रकृतिशून्यः कश्चिदस्ति यं प्रति तदर्थवत्त्वं स्यादित्यत आह—इन्द्रियस्येन्द्रियस्येति वीप्सया सर्वेषामिन्द्रियाणामर्थे विषये शब्दे स्पर्शे रूपे रसे गन्धे च एवं कर्मेन्द्रियविषयेऽपि वचनादावनुकूले

५ भाष्योत्कर्षदीपिका ।

साच पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः तस्याः सदृशमनुरूपं चेष्टां करोति किं पुनर्मूर्खः । तस्माद्भूतानि प्राणिनः प्रकृतिं यान्त्यनुगच्छन्ति । निग्रहो निषेधरूपः मम परमेश्वरस्यान्यस्य राज्ञो वा किं करिष्यति । प्रकृतेः प्राबल्यान्नास्मदादिशासनाद्बिभ्यतीति भावः ॥ ३३ ॥ ननु सर्वस्यापि प्राणिजातस्य प्रकृत्यायत्तत्वात्पुरुषकारस्य विषयालाभाद्विधिनिषेधशास्त्रानर्थक्यं प्राप्तमित्याशङ्क्याह—इन्द्रियस्येति । सर्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे रागोऽनिष्टे द्वेष इति प्रतिविषयं रागद्वेषाववश्यंभाविनौ तस्मात्तयोर्वशं नागच्छेत्तदधीनो न प्रवर्तेत । तत्रायमेव पुरुषप्रयत्नस्य शास्त्रस्य च विषय उच्यते । तथाहि इन्द्रियार्थसंनिकर्षे पदार्थ-

६ श्रीधरीव्याख्या ।

कर्मसंस्काराधीनस्वभावः स्वस्याः स्वकीयायाः प्रकृतेः स्वभावस्य सदृशमनुरूपमेव गुणदोषज्ञानवानपि चेष्टते, किं पुनर्वक्तव्यमज्ञश्चेष्टत इति । तस्माद्भूतानि सर्वेऽपि प्राणिनः प्रकृतिं यान्त्यनुवर्तन्ते । एवं सति इन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलिष्ठत्वादित्यर्थः ॥ ३३ ॥ नन्वेवं प्रकृत्यधीनैव चेत्पुरुषस्य प्रवृत्तिः तर्हि विधिनिषेधवैयर्थ्यं प्राप्तमित्याशङ्क्याह—इन्द्रियस्येन्द्रियस्येति । वीप्सया प्रत्येकं सर्वेषा-

७ अभिनवगुप्ताचार्यव्याख्या ।

दिनिग्रहः ॥ ३२ ॥ ३३ ॥ ३४ ॥ कथं तर्हि बन्ध इत्युच्यते—इन्द्रियस्येति । श्रेयानिति । स्वधर्मे इति । संसारी च प्रतिविषयं रागं द्वेषं च गृह्णाति ।

१ इदं पद्यमधिकमत्राभिनवगुप्ताचार्याहतं दृश्यते,

१ श्रीमच्छांकरभाष्यम् ।

**इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थे रागद्वेषाववश्यंभाविनौ । तत्रायं पुरुषकारस्य शास्त्रार्थस्य च विषय उच्यते । शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेत्, या हि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्ये पुरुषं प्रवर्तयति तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति, यदा पुना रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः, तस्मात्तयो रागद्वेषयो-**

२ आनन्दगिरिव्याख्या ।

दर्शयति—**सर्वेति** । प्रत्यर्थं रागद्वेषयोरव्यवस्थायाः प्राप्तौ प्रत्यादिशति—**इष्ट इति** । प्रतिविषयं विभागेन तयोरन्यतरस्यावश्यकत्वेऽपि पुरुषकारविषयाभावप्रयुक्त्या प्रागुक्तं दूषणं कथं समाधेयमित्याशङ्क्याह—**तत्रेति** । तयोरित्याद्यवतारितं भागं विभजते—**शास्त्रार्थ इति** । प्रकृतिवशत्वाज्जन्तोर्नैव नियोज्यत्वमित्याशङ्क्याह—**या हीति** । रागद्वेषद्वारा प्रकृतिवशवर्तित्वे स्वधर्मत्यागादि दुर्वारमित्युक्तम्, इदानीं विवेकविज्ञानेन रागादिनिवारणे शास्त्रीयदृष्ट्या प्रकृतिपारवश्यं परिहर्तुं शक्यमित्याह—**यदेति** । मिथ्याज्ञाननिबन्धनौ हि रागद्वेषौ तत्प्रतिपक्षत्वं विवेकविज्ञानस्य मिथ्याज्ञानविरोधित्वादवधेयम् । रागद्वेषयोर्मूलनिवृत्त्या निवृत्तौ प्रतिबन्धध्वंसे कार्यसिद्धिमभिसंधायोक्तं—**तदेति** । एवकारस्यान्ययोगव्यवच्छेदकत्वं दर्शयति—**नेति** । पूर्वोक्तं नियोगमुपसंहरति—**तस्मादिति** । तत्र हेतुमाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तत्र तयोर्वशं नागच्छेदिति शास्त्रस्याभ्यनुज्ञा । पुरुषस्य च तदनुष्ठाने स्वातन्त्र्यमस्ति । हि यतः तौ रागद्वेषावेवास्य प्राणिनः परिपन्थिनौ विरोधिनौ दृष्टद्वारेण प्रवर्तकत्वात् । ननु प्रकृत्यनुसारी ईश्वरोऽस्य परिपन्थी, तस्य वैषम्यादिदोषापत्तेः । अयं भावः—यथा स्वस्तनेन स्वाज्ञोल्लङ्घनजेनापराधेन कुपितो राजाऽपराधिनं हि निगडादौ निग्रहीतुं स्वीयान्भटान्प्रवर्तयति स एवाद्यतनेन दानमानेन प्रसादित एनं तेषामेव भटानामाधिपत्ये नियुङ्क्ते, एवं पूर्वकर्मानुसारी ईश्वरो रागादिद्वारा पुरुषं बाधमानोऽपि विधिप्रतिषेधशास्त्रानुसारिणा तेनैव भक्तिध्यानप्रणिधानेनावर्जितः एनं रागादिजये नियुङ्क्ते तस्माद्विधिप्रतिषेधशास्त्रस्य नानर्थक्यम् । पुरुषस्य स्वातन्त्र्यसत्त्वात् । नापीश्वरे वैषम्यादिकम् । प्राणिकर्मा-

४ मधुसूदनीव्याख्या ।

शास्त्रनिषिद्धेऽपि रागः, प्रतिकूले शास्त्रविहितेऽपि द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषौ व्यवस्थितावानुकूल्यप्रातिकूल्यव्यवस्थया स्थितौ नत्वनियमेन सर्वत्र तौ भवतः । तत्र पुरुषकारस्य शास्त्रस्य चायं विषयो यत्तयोर्वशं नागच्छेदिति । कथं । या हि पुरुषस्य प्रकृतिः सा बलवदनिष्टानुबन्धित्वज्ञानाभावसहकृतेष्टसाधनत्वज्ञाननिबन्धनं रागं पुरस्कृत्यैव शास्त्रनिषिद्धे कलञ्जभक्षणादौ प्रवर्तयति, तथा बलवदिष्टसाधनत्वज्ञानाभावसहकृतानिष्टसाधनत्वज्ञाननिबन्धनं द्वेषं पुरस्कृत्यैव शास्त्रविहितादपि सन्ध्यावन्दनादेर्निवर्तयति । तत्र शास्त्रेण प्रतिषिद्धस्य बलवदनिष्टानुबन्धित्वे ज्ञापिते सहकार्यभावात्केवलं दृष्टेष्टसाधनताज्ञानं मधुविषसंपृक्तान्नभोजनइव तत्र न रागं जनयितुं शक्नोति । एवं विहितस्य शास्त्रेण बलवदिष्टानुबन्धित्वे बोधिते सहकार्यभावात्केवलमनिष्टसाधनत्वज्ञानं भोजनादाविव तत्र न द्वेषं जनयितुं शक्नोति । ततश्चाप्रतिबद्धं शास्त्रं विहिते पुरुषं प्रवर्तयति निषिद्धाच्च निवर्तयतीति शास्त्रीयविवेकविज्ञानप्राबल्येन स्वाभाविकरागद्वेषयोः कारणोपमर्देनोपमर्दाच्च प्रकृतिर्विपरीतमार्गे पुरुषं शास्त्रदृष्टिं प्रवर्तयितुं शक्नोतीति न शास्त्रस्य पुरुषकारस्य च वैयर्थ्यप्रसङ्गः । तयो रागद्वेषयोर्वशं नागच्छेत्तदधीनो न प्रवर्तेत निवर्तेत वा । किंतु शास्त्रीयतद्विपक्षज्ञानेन तत्कारणविघटनद्वारा तौ नाशयेत् । हि यस्मात् तौ रागद्वेषौ स्वाभाविकदोषप्रयुक्तौ

५ भाष्योत्कर्षदीपिका ।

ज्ञानं ततो मिथ्याज्ञानवशात्तत्र रागादिः प्रकृतिश्च रागादिपुरःसरैव पुरुषं स्वकार्ये प्रवर्तयति तदा निषिद्धाचरणं विहितत्यागश्च संपद्यते । यदा पुनः शास्त्रदृष्ट्या पूर्वमेव यथावद्वस्तु प्रतिभाति तदा मिथ्याज्ञाननिवृत्त्या रागादिर्निवर्तते । सहकारिनिवृत्त्या च प्रकृतिः प्रवर्तयितुं न शक्नोति । तस्मात्प्रथममेव पुरुषकारेण रागद्वेषयोर्वशं नागच्छेत् । नच पुरुषकारे शास्त्रे च प्रवृत्तिरेव न सिध्यति प्रकृतेः प्रतिबन्धिकायाः सत्त्वादिति वाच्यम् । अदृष्टस्य दृष्टसामग्रीं विना प्रतिबन्धकत्वाभावात् । ननु तुल्यन्यायेन दृष्टस्यापि शास्त्रादौ प्रवृत्तिरूपस्यादृष्टापेक्षतया प्रकृत्यधीनत्वमेव पुनरागतमिति चेत्तर्हि तदनुकूलसंस्कारोऽपि ब्राह्मणाद्यधिकारिजनेऽस्त्येवेति न काचिदनुपपत्तिः । नच ततएव सर्वं भविष्यति किं विधिनिषेधमोक्षपरैः शास्त्रैरिति वाच्यम् । अदृष्टस्य दृष्टसामग्र्यपेक्षाया आवश्यकत्वस्योक्तत्वात् । तथाच यथा लोके संस्काररूपेण स्थितस्य कामस्य कामिनीदर्शनमुद्बोधकं तथा शास्त्रमपि । ननु शास्त्र-

६ श्रीधरीव्याख्या ।

मिन्द्रियाणामित्युक्तम् । अर्थे स्वस्वविषयेऽनुकूले रागः, प्रतिकूले द्वेषश्चेत्येवं रागद्वेषौ व्यवस्थितावयश्यंभाविनौ । ततश्च तदनुरूपा प्रवृत्तिरिति भूतानां प्रकृतिः, तथापि तयोर्वशवर्ती न भवेदिति शास्त्रेण नियम्यते । हि यस्मादस्य मुमुक्षोस्तौ परिपन्थिनौ प्रतिपक्षौ । अयं

७ अभिनवगुप्ताचार्यव्याख्या ।

यतः कर्माण्यात्मकर्तृकान्येव विमूढत्वादभिमन्यते इति समपि भोजनादिव्यवहारं कुर्वतोऽज्ञानिसंसारिणोरस्त्ययं विशेषः । अयं नः सिद्धान्तः

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**वैशं न गच्छेत् । यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्करावित्यर्थः ॥३४॥ तत्र रागद्वेषप्रयुक्तो मन्यते शास्त्रार्थमप्यन्यथा परधर्मोऽपि धर्मत्वादनुष्ठेय एवेति तदसत्—श्रेयानिति। श्रेयान्प्रशस्यतरः स्वो धर्मः स्वधर्मो विगुणोऽपि विगतगुणोऽप्यनुष्ठीयमानः परधर्मात् स्वनुष्ठितात् साद्गुण्येन संपादितादपि, स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात्, कस्मात्**

२ आनन्दगिरिव्याख्या ।

**यत इति** । हिशब्दोपात्तो हेतुर्यत इति प्रकटितः स च पूर्वेण तच्छब्देन संबन्धनीयः । पुरुषपरिपन्थित्वमेव तयोः सोदाहरणं स्फोरयति—**श्रेयोमार्गस्येति** ॥ ३४ ॥ रागद्वेषयोः श्रेयोमार्गप्रतिपक्षत्वं प्रकटयितुं परमतोपन्यासद्वारा समनन्तरश्लोकमवतारयति—**तत्रेत्यादिना** । व्यवहारभूमिः सप्तम्यर्थः । शास्त्रार्थस्यान्यथा प्रतिपत्तिमेव प्रत्याययति—**परधर्मोऽपीति** । स्वधर्मवदित्यपेरर्थः । अनुमानं दूषयन्नुत्तरत्वेन श्लोकमुत्थापयति—**सदसदिति** । क्षत्रधर्माद् युद्धाद् दुरनुष्ठानात्परिव्राड्धर्मस्य भिक्षाशनादिलक्षणस्य स्वानुष्ठेयतयापि कर्तव्यत्वं प्राप्तमित्याशङ्क्य व्याचष्टे—**श्रेयानिति** । उक्तेऽर्थे प्रश्नपूर्वकं हेतुमाह—**कस्मादित्यादिना** । स्वधर्ममवधूय परधर्ममनुतिष्ठतः स्वधर्मातिक्रम-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

यत्तत्वादिति ॥ ३४ ॥ यस्मादेवं तस्माच्छ्रेयान्प्रशस्यतरः स्वधर्मः स्वस्य वर्णाश्रमानुरूप्येण ईश्वरेण विहितत्वात् । विगुणो हिंसादिमिश्रोऽपि किंचिदङ्गहीनोऽपि परधर्माद्धिंसादिदोषरहितपरधर्मापेक्षया स्वनुष्ठितात्सर्वाङ्गोपसंहारेण सम्यगनुष्ठितादपि सएव श्रेयान् । स्वधर्मे युद्धादौ निधनं मरणमपि श्रेयः विहितत्वात् । परस्य धर्मो भैक्षचर्यादिर्भयावहः

४ मधुसूदनीव्याख्या ।

अस्य पुरुषस्य श्रेयोर्थिनः परिपन्थिनौ शत्रू श्रेयोमार्गस्य विघ्नकर्तारौ दस्यूइव पथिकस्य । इदं च 'द्वये ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त' इत्यादिश्रुतौ स्वाभाविकरागद्वेषनिमित्तशास्त्रविपरीतप्रवृत्तिमसुरत्वेन शास्त्रीयप्रवृत्तिं च देवत्वेन निरूप्य व्याख्यातमतिविस्तरेणेत्युपरम्यते ॥ ३४ ॥ ननु स्वाभाविकरागद्वेषप्रयुक्तपश्वादिसाधारणप्रवृत्तिप्रहाणेन शास्त्रीयमेव कर्म कर्तव्यं चेत्तर्हि यत्सुकरं भिक्षाशनादि तदेव क्रियतां किमतिदुःखावहेन युद्धेनेत्यतआह—**श्रेयानिति** । श्रेयान् प्रशस्यतरः स्वधर्मः यं वर्णमाश्रमं प्रति वा यो विहितः स तस्य स्वधर्मः विगुणोऽपि सर्वाङ्गोपसंहारमन्तरेण कृतोऽपि परधर्मात् स्वं प्रत्यविहितात् स्वनुष्ठितात् सर्वाङ्गोपसंहारेण संपादितादपि । नहि वेदातिरिक्तमानगम्यो धर्मः येन परधर्मोऽप्यनुष्ठेयः धर्मत्वात् स्वधर्मवदित्यनुमानं तत्र मानं स्यात् । 'चोदनालक्षणोऽर्थो धर्मः' इतिन्यायात् । अतः स्वधर्मे किंचिदङ्गहीनेऽपि स्थितस्य निधनं मरणमपि श्रेयः प्रशस्यतरं परधर्मस्य जीवितादपि । स्वधर्मस्थस्य निधनं हीह लोके

५ भाष्योत्कर्षदीपिका ।

श्रवणे प्रवृत्तिजनकस्य तस्य किमुद्दीपकमितिचेत् यथा जनकस्य क्रीडार्थमुद्यानं गतस्याकस्मिकं सिद्धवाक्यश्रवणं, यथावा कार्यान्तरवशाच्छ्रवणशालायामागतस्य तत्रत्यशब्दश्रवणं, यथावा केनचिल्लौकिकेन निमित्तेन मित्रतां प्राप्तस्य कस्यचिच्छिष्टस्य वचनमिति गृहाणेत्यलं विस्तरेण । हि यस्मात्तौ रागद्वेषौ अस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकरौ तस्कराविव पथि ॥ ३४ ॥ ननु शास्त्रीयमेव कर्म कर्तव्यं चेत्तर्हि परधर्मोऽपि सुकरो धर्मत्वात् कुतो नानुष्ठेय इति चेत्तत्राह—**श्रेयानिति** । परधर्मात्साद्गुण्येन संपादितादपि स्वकीयो धर्मो विगतगुणोऽप्यनुष्ठीयमानः प्रशस्यतरः । स्वधर्मे स्थितस्य मरणमपि श्रेयः । इह लोके कीर्त्यावहममुत्र स्वर्गप्रापकम् । परधर्मस्तु तद्विपर्ययेण भयप्रदः । यद्वा तत्तदिन्द्रियविषये स्थितयो रागद्वेषयोरात्मप्रापक आत्मधर्मे विघ्नकर्तृत्वेऽपीन्द्रियधर्मे प्राकृत्तिके विषयसुखजनके तयोस्तत्त्वाभावादिन्द्रियधर्म एवानुष्ठेयः । किमात्मधर्मानुष्ठानेन विघ्नकर्तृयुक्तेनेतिचेत्तत्राह—**श्रेयानिति** । परेषामिन्द्रियाणां धर्मात्प्राकृत्तिकात्स्वनुष्ठितात्सुगमत्वेनानुष्ठातुं शक्यादपि स्वधर्मे आत्मधर्मे अध्यात्मावगतिरूपः विगुणः प्राकृतगुणवियुक्तः मुक्तिहेतुत्वात्प्रशस्यतरः । तत्र निधनं श्रेयः अपुनर्भवत्वात् । परधर्मो भयावहः अविद्यारूप-

६ श्रीधरीव्याख्या ।

भावः । विषयस्मरणादिना रागद्वेषावुत्पाद्यानवहितं पुरुषमनर्थेऽपि गम्भीरे स्रोतसीव प्रकृतिर्बलात्प्रवर्तयति, शास्त्रं तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ प्रवर्तयति । गम्भीरस्रोतःपातात्पूर्वमेव नावमाश्रित इव नानर्थं प्राप्नोतीति ॥ ३४ ॥ तदेवं स्वाभाविकीं पश्वादिसदृशीं प्रकृतिं त्यक्त्वा स्वधर्मे प्रवर्तितव्यमित्युक्तं, तर्हि स्वधर्मस्य युद्धादेर्दुःखरूपस्य यथावत्कर्तुमशक्यत्वात्परधर्मस्य चाहिंसादेः सुकरत्वाद्धर्मत्वाविशेषाच्च तत्र प्रवर्तितुमिच्छन्तं प्रत्याह—**श्रेयानिति** । किंचिदङ्गहीनोऽपि स्वधर्मः श्रेयान्प्रशस्यतरः । स्वनु-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ३४ ॥ सर्वथा मुक्तसङ्गस्य स्वधर्मचारिणो नास्ति कश्चित्पुण्यपापात्मको बन्धः । स्वधर्मो हि हृदयादनपायी स्वरसनिगूढ एव न तेन कश्चि-

**अर्जुन उवाच।**

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥ ३६॥**

१ श्रीमच्छांकरभाष्यम्।

**परधर्मो भयावहः, नरकादिलक्षणं भयमावहति यतः॥ ३५॥ यद्यप्यनर्थमूलं ध्यायतो विषयान्पुंसो रागद्वेषौ ह्यस्य परिपन्थिनाविति चोक्तं विक्षिप्तमनवधारितं च यदुक्तं तत्संक्षिप्तं निश्चितं चेदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच। ज्ञाते हि तस्मिंस्तदुच्छेदाय यत्नं कुर्यामिति—अथेति। अथ केन हेतुभूतेन प्रयुक्तः सन् राज्ञेव भृत्योऽयं पापं कर्म चरत्याचरति पुरुषः स्वयमनिच्छन्नपि हे वार्ष्णेय,**

२ आनन्दगिरिव्याख्या।

कृतदोषस्य दुष्परिहरत्वान्न तत्त्यागः साधीयानित्यर्थः॥ ३५॥ प्रागेवानर्थमूलस्योक्तत्वात्पुनस्तज्जिज्ञासया प्रश्नानुपपत्तिरित्याशङ्क्याह—**यद्यपीति**। विक्षिप्तं विविधेषु प्रदेशेषु क्षिप्तं दर्शितमिति यावत्, अनवधारितमनेकत्रोक्तत्वादनेकधा विवेककामादिभिर्विकल्पितत्वादित्यर्थः। नन्वनर्थमूलं परिहर्तव्यं तत्किमिति ज्ञातुमिष्यते तत्राह—**ज्ञाते हीति**। कुर्यामिति। तज्ज्ञानमर्थवदिति शेषः। वाक्यारम्भार्थत्वमथशब्दस्य गृहीत्वा प्रश्नवाक्यं व्याकरोति—**अथेत्यादिना**।

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

क्षत्रियस्य तव निषिद्धत्वात्। तस्मात्स्वतन्त्रेण त्वया स्वधर्म एवानुष्ठेय इति भावः॥ ३५॥ ईश्वरो धर्माधर्मौ रागद्वेषौ वा पुरुषस्य प्रवर्तकौ भवत इत्यात्मनोऽस्वातन्त्र्यं मन्वानोऽर्जुन उवाच—**अथ केनेति**। केन ईश्वरादीनामन्यतमेनान्येन वा प्रयुक्तः प्रवर्तितः सन् अयं पुरुषः पापमनिष्टं चरति करोति। अनिच्छन्नित्यनेन रागद्वेषयोः प्रवर्तकत्वं निरस्तम्। सति हि रागे इच्छा भवति। अत इच्छाया अभावाद्रागाभावः। रागस्याप्रवर्तकत्वे तन्मूलभूतसंस्कारहेत्वोर्धर्माधर्मयोरप्रवर्तकत्वं ततश्च तत्सापेक्षस्येश्वरस्यापीति सर्वेषामाक्षेपः। तस्मान्मुख्यं प्रवर्तकं यत्तद्वाच्यमित्यर्थः।

४ मधुसूदनीव्याख्या।

कीर्त्यावहं परलोके च स्वर्गादिप्रापकं। परधर्मस्तु इहाकीर्तिकरत्वेन परत्र नरकप्रदत्वेन च भयावहो यतः, अतो रागद्वेषादिप्रयुक्तस्वाभाविकप्रवृत्तिवत्परधर्मोऽपि हेय एवेत्यर्थः। एवं तावद्भगवन्मताङ्गीकारिणां श्रेयःप्राप्तिस्तदनङ्गीकारिणां च श्रेयोमार्गभ्रष्टत्वमुक्तं। श्रेयोमार्गभ्रंशेन फलाभिसंधिपूर्वककाम्यकर्माचरणे च केवलपापमात्राचरणे च बहूनि कारणानि कथितानि ये त्वेतदभ्यसूयन्त इत्यादिना। तत्रायं संग्रहश्लोकः: 'श्रद्धाहानिस्तथाऽसूया दुष्टचित्तत्वमूढते। प्रकृतेर्वशवर्तित्वं रागद्वेषौ च पुष्कलौ। परधर्मरुचित्वं चेत्युक्ता दुर्मार्गवाहकाः' इति॥ ३५॥ तत्र काम्यप्रतिषिद्धकर्मप्रवृत्तिकारणमपनुद्य भगवन्मतमनुवर्तितुं तत्कारणावधारणाय ध्यायतो विषयान्पुंस इत्यादिना पूर्वमनर्थमूलमुक्तम्। सांप्रतं च प्रकृतेर्गुणसंमूढा इत्यादिना बहुविस्तरं कथितम्। तत्र किं सर्वाण्यपि समप्राधान्येन कारणानि अथवैकमेव मुख्यं कारणमितराणि तु तत्सहकारीणि केवलम्। तत्राद्ये सर्वेषां पृथक्पृथङ्निवारणे महान्प्रयासः स्यात्। अन्त्ये त्वेकस्मिन्नेव निराकृते कृतकृत्यता स्यादित्यतो ब्रूहि मे केन हेतुना प्रयुक्तः प्रेरितोऽयं त्वन्मताननुवर्ती सर्वज्ञानविमूढः पुरुषः पापमनर्थानुबन्धि सर्वं फलाभिसंधिपुरःसरं काम्यं चित्रादि, शत्रुवधसाधनं च श्येनादि, प्रतिषिद्धं च कलञ्जभक्षणादि बहुविधं कर्माचरति स्वयं कर्तुमनिच्छन्नपि। ननु निवृत्तिलक्षणं परमपुरुषार्थानुबन्धि त्वदुपदिष्टं कर्मेच्छन्नपि करोति। नच पारतन्त्र्यं विनेत्थं संभवति। अतो येन बलादिव नियोजितो राज्ञेव भृत्यस्त्वन्मतविरुद्धं सर्वानर्था-

५ भाष्योत्कर्षदीपिका।

त्वया संसारपातहेतुत्वात्॥ ३५॥ ध्यायतो विषयान् रागद्वेषौ ह्यस्य परिपन्थिनाविति पूर्वग्रन्थेन संसारपातहेतुभूतानि विस्तरेण भगवतोक्तानि तत्र संक्षिप्तं निश्चितमिदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच। ज्ञाते हि तस्मिंस्तदुच्छेदाय प्रयत्नं कुर्यामित्यभिप्रायेण—**अथेति**। केन हेतुभूतेन प्रयुक्तः प्रेरितः सन्ननिच्छन्नपि बलादिव नियोजितो राज्ञेव भृत्योऽयं पुरुषः पापमाचरति यथा त्वमजोऽपि केनचिदतिभक्तेन प्रार्थितः वृष्णिकुले जन्म लब्धवानसि तथेति सूचयन्नाह—**वार्ष्णेयेति**। तं वैरिणं ब्रूहीत्यर्थः

६ श्रीधरीव्याख्या।

ष्ठितात्सर्वाङ्गपूर्णा त्कृतादपि परधर्मात्सकाशात्। तत्र हेतुः। स्वधर्मे युद्धादौ प्रवर्तमानस्य निधनं मरणमपि श्रेष्ठम्। स्वर्गादिप्रापकत्वात्। परधर्मस्तु स्वस्य भयावहः। निषिद्धत्वेन नरकप्रापकत्वात्॥ ३५॥ तयोर्न वशमागच्छेदित्युक्तं तदेतदशक्यं मन्वानोऽर्जुन उवाच—**अथ केनेति**। वृष्णेर्वंशेऽवतीर्णो वार्ष्णेयः हे वार्ष्णेय, अनर्थरूपं पापं कर्तुमनिच्छन्नपि केन प्रयुक्तः प्रेरितोऽयं पुरुषः पापं चरति। कामक्रोधौ विवेकबलेन निरुन्धतोऽपि पुरुषस्य पुनः पापे प्रवृत्तिदर्शनादन्योऽपि तयोर्मूलभूतः कश्चित्प्रवर्तको भवेदिति संभावनायां प्रश्नः

७ अभिनवगुप्ताचार्यव्याख्या।

दपि रिक्तो जन्तुर्जायत इत्यत्राशयः॥ ३५॥ अथकेनेति। पापं पापतया विदन्नपि जनः कथं तत्र प्रवर्तत इति प्रश्नः। अस्य प्रश्नस्योत्थानेऽयमाशयः। स्वधर्मो यदि स्वहृदयादनपायित्वादत्राशयः कथं तर्ह्यधर्माचरणमेवामिति कोऽयं स्वधर्मो नाम येनानतिरिक्तो जन्तुरित्युक्तं भवति

श्रीभगवानुवाच ।

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

१ श्रीमच्छांकरभाष्यम् ।

वृष्णिकुलप्रसूत, बलादिव नियोजितो राज्ञेवेत्युक्तो दृष्टान्तः ॥ ३६ ॥ शृणु त्वं तं वैरिणं सर्वानर्थकरं यं त्वं पृच्छसि—श्रीभगवानुवाच । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भग इतीङ्गना' । ऐश्वर्यादिषट्कं यस्मिन् वासुदेवे नित्यमप्रतिबन्धत्वेन सामस्त्येन च वर्तते 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति'। उत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो वाच्यो भगवानिति । काम इति । काम एष सर्वलोकशत्रु-

२ आनन्दगिरिव्याख्या ।

अनिच्छतोऽपि बलादेव दुश्चरितप्रेरितत्वे दृष्टान्तमाचष्टे—राज्ञेवेति । विनियोज्यत्वस्येच्छासापेक्षत्वात्तदभावे तदसिद्धिमाशङ्क्य प्रागुक्तं स्मारयति—राज्ञेवेत्युक्त इति ॥ ३६ ॥ संप्रति प्रतिवचनं प्रस्तौति—शृण्विति । तस्य वैरित्वं स्फोरयति—सर्वेति । अप्रस्तुतं किमिति प्रस्तूयते तत्राह—यं त्वमिति । भगवच्छब्दार्थं निर्धारयितुं पौराणिकं वचनमुदाहरति—ऐश्वर्यस्येति । समग्रस्येत्येतत्प्रत्येकं विशेषणैः संबध्यते, अथशब्दस्तथाशब्दपर्यायः समुच्चयार्थः । मोक्षशब्देन तदुपायो ज्ञानं विवक्ष्यते । उदाहृतवचसस्तात्पर्यमाह—ऐश्वर्यादीति । स वाच्यो भगवानिति संबन्धः । तत्रैव पौराणिकं वाक्यान्तरं पठति—उत्पत्तिमिति । भूतानामिति प्रत्येकमुत्पत्त्यादिभिः संबध्यते । कारणार्थौ चोत्पत्तिप्रलयशब्दौ क्रियामात्रस्य पुरुषान्तरगोचरत्वसंभवात् । आगतिर्गतिश्चेत्यागामिन्यौ संपदापदौ सूच्येते । वाक्यान्तरस्यापि तात्पर्यमाह—उत्पत्त्यादीति । वेत्तीत्युक्तः साक्षात्कारो विज्ञानमित्युच्यते, समग्रैश्वर्यादिसंपत्तिसमुच्चयार्थश्चकारः । उक्तलक्षणो भगवान्किमुक्तवानिति तदाह—काम इति । कामस्य सर्वलोकशत्रुत्वं विशदयति—यन्नि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बलादिव नियोजितः विष्टिगृहीत इवेत्यर्थः ॥ ३६ ॥ अत्रोत्तरं 'काममय एवायं पुरुष' इत्यादिश्रुतिसिद्धं भगवानुवाच—काम एष इति । एष प्रसिद्धः कामः 'सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीय' इति श्रुतेरिदं मे भूयादिदं मे भूयादिति तीव्राभिलाषहेतुभूतश्चेतसोऽनवस्थिततत्वापादको वृत्तिविशेषः । स च चेतोरूप एव । 'कामः संकल्पः' इत्युपक्रम्य 'एतत्सर्वं मन एव' इत्युपसंहारात् स एष कामः केनचिन्निमित्तेन प्रतिहतः क्रोधरूपेण परिणमतेऽतः क्रोधोऽभिज्वलनात्माप्येष एव तमेनमिह शरीरेऽन्तःस्थितं वैरिणं विद्धि । कुतो वैरी । यतः रजोगुणसमुद्भवः रजो रञ्जनात्मकः प्राकृतो गुणः तस्य गुणौ कार्यभूतौ तृष्णासङ्गौ तावेवोद्भवो यस्य सः । रजःकार्यत्वात्

४ मधुसूदनीव्याख्या ।

नुबन्धित्वं जानन्नपि तादृशं कर्माचरति तमनर्थमार्गप्रवर्तकं मां प्रति ब्रूहि ज्ञात्वा समुच्छेदायेत्यर्थः । हे वार्ष्णेय वृष्णिवंशे मन्मातामहकुले कृपयावतीर्णेतिसंबोधनेन वार्ष्णेयीसुतोऽहं त्वया नोपेक्षणीय इति सूचयति ॥ ३६ ॥ एवमर्जुनेन पृष्टे 'अथो खल्वाहुः काममय एवायं पुरुषः' इति 'आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीय' इत्यादिश्रुतिसिद्धमुत्तरं श्रीभगवानुवाच । यस्त्वया पृष्टो हेतुर्बलादनर्थमार्गे प्रवर्तकः स एष कामएव महान् शत्रुः यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम् । ननु क्रोधोऽप्यभिचारादौ प्रवर्तको दृष्ट इत्यत आह—क्रोध एषः । काम एव केनचिद्धेतुना प्रतिहतः क्रोधत्वेन परिणमते अतः क्रोधोऽप्येष काम एव । एतस्मिन्नेव महावैरिणि निवारिते सर्वपुरुषार्थप्राप्ति-

५ भाष्योत्कर्षदीपिका ।

॥ ३६ ॥ एवं पृष्टः श्रीभगवान् 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तं समग्रमैश्वर्यादिषट्कं नित्यमप्रतिबन्धेन यस्मिन्वासुदेवे वर्तते 'उत्पत्तिं निधनं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' । इत्युत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो भगवानितिशब्दवाच्य उवाचोत्तरमुक्तवान्—काम इति । यस्त्वया वैरी पृष्टः एष कामः शत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिर्लोकस्य । ननु क्रोधोऽप्यनर्थहेतुर्लोके दृश्यते इत्यत आह । स एव

६ श्रीधरीव्याख्या ।

॥ ३६ ॥ अत्रोत्तरं श्रीभगवानुवाच—काम एष इति । यस्त्वया पृष्टो हेतुरेष काम एव । ननु क्रोधोऽपि पूर्वं त्वयोक्तः 'इन्द्रियस्येन्द्रियस्य' इत्यत्र । सत्यम् । नासौ ततः पृथक्, किंतु क्रोधोऽप्येष एव काम एव केनचित्प्रतिहतः क्रोधात्मना परिणमते । अतः पूर्वं

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ३६ ॥ अत्रोत्तरं । सत्यपि धर्मे हृदिस्थे आगन्तुकाचरणकृतोऽयं विप्लवो न तु तद्भावकृत इत्याशयेन श्रीभगवानुवाच—काम एष इति ।

१ श्रीमच्छांकरभाष्यम् ।

**यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित्क्रोधत्वेन परिणमते । अतः क्रोधोऽप्येष एव । रजोगुणसमुद्भवो रजश्च तद् गुणश्च रजोगुणः समुद्भवो यस्य स कामो रजोगुणसमुद्भवो रजोगुणस्य वा समुद्भवः', कामो ह्युद्भूतो रजः प्रवर्तयन् पुरुषं प्रवर्तयति । तृष्णया ह्यहंकारित इति दुःखितानां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते । महाशनो महदशनमस्येति महाशनोऽतएव महापाप्मा कामेन प्रेरितो जन्तुः पापं करोति । अतो विद्ध्येनं काममिह संसारे वैरिणम् ॥ ३७ ॥**

२ आनन्दगिरिव्याख्या ।

**मित्तेति** । तथापि कथं तस्यैव क्रोधत्वं तदाह—**स एष इति** । कामक्रोधयोरेव हेयत्वद्योतनार्थं कारणं कथयति—**रजोगुणेति** । कारणद्वारा कामादेरेव हेयत्वमुक्त्वा कार्यद्वारापि तस्य हेयत्वं सूचयति—**रजोगुणस्येति** । कामस्य पुरुषप्रवर्तकत्वमेव न रजोगुणजनकत्वमित्याशङ्क्याह—**कामो हीति** । तत्रैवानुभवानुसारिणीं लोकप्रसिद्धिं प्रमाणयति—**तृष्णया हीति** । तस्य योग्यायोग्यविभागमन्तरेण बहुविषयत्वं. दर्शयति—**महाशन इति** । बहुविषयत्वप्रयुक्तं कर्म निर्दिशति—**अत इति** । सर्वविषयत्वेऽपि कुतोऽस्य पापत्वमित्याशङ्क्याह—**कामेनेति** । कामस्योक्तविशेषण-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दुःखैकफलोऽयमतो वैरी । यद्वा रजोगुणस्य लोभप्रवृत्त्यादिलक्षणस्य समुद्भवो यस्मात् । ननु विषयाभिलाषात्मकः कामो विषयार्पणेन शाम्यति, विषयस्य दौर्लभ्यनिश्चये स्वत एव वा निवर्तते अन्ध इव रूपदर्शनाभिलाषादित्याशङ्क्याह—**महाशनो महापाप्मेति** । महद्दातुमपारणीयमशनमस्य स तथा । यथोक्तं 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति । 'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्' इति । तथा महापाप्मात्युग्रः । स हि सहस्रशः प्रबोधितोऽपि न निवर्तते तद्वदयमपि दुश्चिकित्स्यः । महाशनत्वान्नायं वैरी दानसाध्यः । नापि सामभेदसाध्यः । अत्युग्रत्वात् । अतो हन्तव्य

४ मधुसूदनीव्याख्या ।

रित्यर्थः । तन्निवारणोपायज्ञानाय तत्कारणमाह—रजोगुणसमुद्भवः दुःखप्रवृत्तिबलात्मको रजोगुण एव समुद्भवः कारणं यस्य । अतः कारणानुविधायित्वात्कार्यस्य सोऽपि तथा । यद्यपि तमोगुणोऽपि तस्य कारणं तथापि दुःखे प्रवृत्तौ च रजसएव प्राधान्यात्तस्यैव निर्देशः । एतेन सात्त्विक्या वृत्त्या रजसि क्षीणे सोऽपि क्षीयत इत्युक्तम् । अथवा तस्य कथमनर्थमार्गे प्रवर्तकत्वमित्यत आह—रजोगुणस्य प्रवृत्त्यादिलक्षणस्य समुद्भवो यस्मात् । कामो हि विषयाभिलाषात्मकः स्वयमुद्भूतो रजः प्रवर्तयन्पुरुषं दुःखात्मके कर्मणि प्रवर्तयति तेनायमवश्यं हन्तव्य इत्यभिप्रायः । ननु सामदानभेददण्डाश्चत्वार उपायास्तत्र प्रथमत्रिकस्यासंभवे चतुर्थो दण्डः प्रयोक्तव्यो नतु हठादेवेत्याशङ्क्य त्रयाणामसंभवं वक्तुं विशिनष्टि—महाशनो महापाप्मेति । महदशनमस्येति महाशनः 'यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥' इति स्मृतेः । अतो न दानेन संधातुं शक्यः । नापि सामभेदाभ्याम् । यतो महापाप्माऽत्युग्रः । तेन हि बलात्प्रेरितोऽनिष्टफलमपि जानन्पापं करोति । अतो विद्धि जानीहि एनं काममिह संसारे वैरिणम् । तदेतत्सर्वं विवृतं वार्तिककारैरात्मैवेदमग्र आसीदिति श्रुतिव्याख्याने 'प्रवृत्तौ च निवृत्तौ च यथोक्तस्याधिकारिणः । स्वातन्त्र्ये सति संसारसृतौ कस्मात्प्रवर्तते ॥ ननु निःशेषविध्वस्तसंसारानर्थवर्त्मनि । निवृत्तिलक्षणे वाच्ये केनायं प्रेर्यतेऽवशः ॥ अनर्थपरिपाकत्वमपि जानन्प्रवर्तते । पारतन्त्र्यमृते दृष्टा प्रवृत्तिर्नेदृशी क्वचित् ॥ तस्माच्छ्रेयोर्थिनः पुंसः प्रेरकोऽनिष्टकर्मणि । वक्तव्यस्तन्निरासार्थमित्यर्था स्यात्परा श्रुतिः ॥ अनाप्तपुरुषार्थोऽयं

५ भाष्योत्कर्षदीपिका ।

कामः कुतश्चिन्निमित्तात्प्रतिहतः क्रोधत्वेन परिणमतेऽतः क्रोधोऽप्येष एव शत्रोः पुत्रत्वादप्ययं शत्रुरित्याह । रजोगुणः समुद्भवो यस्य सः । यद्वा कथं शत्रुतां करोतीत्यत आह । रजोगुणस्य समुद्भवः कारणं कामो रजः प्रवर्तयन्पुरुषं प्रवर्तयति । ननु विषयभोगेन तृप्तिं नीतः शत्रुत्वं जिहास्यतीति चेत् तत्राह । महदशनमस्य सः । तदुक्तम्—'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्' इति । ननु लोके यथा स्वेनापराधिनः कश्चिच्छत्रुत्वं भजति तथायमप्यतोऽपराधं तस्य न करिष्यामीतिचेत्तत्राह । महाशनत्वान्म-

६ श्रीधरीव्याख्या ।

पृथक्त्वेनोक्तोऽपि क्रोधः कामज एवेत्यभिप्रायेण कामेनैकीकृत्योच्यते । रजोगुणात्समुद्भवतीति तथा । अनेन सत्त्ववृद्ध्या रजसि क्षयं नीते सति कामोऽपि क्षीयत इति सूचितम् । एनं काममिह मोक्षमार्गे वैरिणं विद्धि । अयं च वक्ष्यमाणक्रमेण हन्तव्य एव । यतो नासौ

७ अभिनवगुप्ताचार्यव्याख्या ।

द्वाभ्यामेतच्छब्दाभ्यामनयोरत्यन्तवैषम्यं सूच्यते । एतौ च कामक्रोधौ नित्यसंबन्धिनावन्योन्याविनाभावेन वर्तेते इत्येकरूपतयैव व्याचष्टे—एष च महतः सुखस्याशनो ग्रासकारकः महतः पापस्य हेतुत्वाच्च क्रोध एव पापदायी । एनं च वैरिणं प्राज्ञो जानीयात् । नत्वर्थाद्युपघातकं

**धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।**
**यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कथं वैरीति दृष्टान्तैः प्रत्याययति—धूमेनेति । धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकोऽप्रकाशात्मकेन यथा वाऽऽदर्शो मलेन च यथोल्बेन गर्भवेष्टनेन जरायुणावृत आच्छादितो गर्भस्तथा तेनेदमावृ-**

२ आनन्दगिरिव्याख्या ।

वश्वे फलितमाह—**अत इति** ॥ ३७ ॥ उत्तरश्लोकमवतारयति—**कथमिति** । अनेकदृष्टान्तोपादानं प्रतिपत्तिसौकर्यार्थम् । सहजस्य धूमस्य प्रकाशात्मकवह्निं प्रत्यावरकत्वसिद्ध्यर्थं विशिनष्टि—**अप्रकाशात्मकेनेति** ॥ ३८ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एवेति ॥ ३७ ॥ अस्य वैरित्वमेव विवृणोति—**धूमेनेत्यादिना** । उल्बेन गर्भवेष्टनेन जरायुणा । तेन कामेन इदं

४ मधुसूदनीव्याख्या ।

निःशेषानर्थसंकुलः । इत्यकामयतानाप्तान्पुमर्थान्साधनैर्जडः ॥ जिहासति तथानर्थानविद्वानात्मनि श्रितान् । अविद्योद्भूतकामः सन्नथो खल्विति च श्रुतिः ॥ अकामतः क्रियाः काश्चिद्दृश्यन्ते नेह कस्यचित् । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ काम एष क्रोध एष इत्यादिवचनं स्मृतेः । प्रवर्तको नापरोऽतः कामादन्यः प्रतीयते' इति 'अकामतः' इति मनुवचनम् । अन्यत्स्पष्टम् ॥ ३७ ॥ तस्य महापाप्मत्वेन वैरित्वमेव दृष्टान्तैः स्पष्टयति—तत्र शरीरारम्भात्प्रागन्तःकरणस्यालब्धवृत्तिकत्वात्सूक्ष्मः कामः शरीरारम्भकेण कर्मणा स्थूलशरीरावच्छिन्ने लब्धवृत्तिकेऽन्तःकरणे कृताभिव्यक्तिः सन् स्थूलो भवति, स एव विषयस्य चिन्त्यमानतावस्थायां पुनःपुनरुद्रिच्यमानः स्थूलतरो भवति, स एव पुनर्विषयस्य भुज्यमानतावस्थायामत्यन्तोद्रेकं प्राप्तः स्थूलतमो भवति । तत्र प्रथमावस्थायां दृष्टान्तः—यथा धूमेन सहजेनाप्रकाशात्मकेन प्रकाशात्मको वह्निराव्रियते । द्वितीयावस्थायां दृष्टान्तः—यथादर्शो मलेनासहजेनादर्शोत्पत्त्यनन्तरमुद्रिक्तेन । चकारोऽवान्तरवैधर्म्यसूचनार्थः, आव्रियत इति क्रियानुकर्षणार्थश्च । तृतीयावस्थायां दृष्टान्तः—यथोल्बेन जरायुणा गर्भवेष्टनचर्मणातिस्थूलेन सर्वतो निरुध्यावृतः तथा प्रकारत्रयेणापि तेन कामेनेदमावृतम् । अत्र धूमेनावृतोऽपि वह्निर्दाहादिलक्षणं स्वकार्यं करोति । मलेनावृतस्त्वादर्शः प्रतिबिम्बग्रहणलक्षणं स्वकार्यं न करोति स्वच्छताधर्ममात्रतिरोधानात् । स्वरूपतस्तूपलभ्यतएव । उल्बेनावृतस्तु गर्भो न हस्तपादादिप्रसारणरूपं स्वकार्यं करोति न वा स्वरूपत उपलभ्यत इति विशेषः ॥ ३८ ॥ तथा तेनेदमावृतमिति संग्रहवाक्यं विवृणोति—

५ भाष्योत्कर्षदीपिका ।

हापाप्माऽत्युग्रो विनैवापराधं स्वेनोपकृतश्च नाशयतीत्यर्थः । अतः काममेव परमं वैरिणं विद्धि । ज्ञात्वा च तत्परिहाराय यतस्वेति भावः ॥ ३७ ॥ तस्य शत्रुत्वं स्पष्टयति । यथा धूमेन सहजेनाप्रकाशात्मकेनाग्निः प्रकाशात्मको यथावाऽऽदर्शो मलेनाव्रियते यथोल्बेन गर्भवेष्टनेन जरायुणा गर्भ आच्छादितस्तथा तेन कामेनेदं ज्ञानमावृतम् । प्रथमदृष्टान्तेनात्मस्वरूपप्रकाशात्मकत्वं द्वितीयेन

६ श्रीधरीव्याख्या ।

दानेन संधातुं शक्य इत्याह । महाशनः महदशनं यस्य । दुष्पूर इत्यर्थः । न च साम्ना संधातुं शक्यः, यतो महापाप्मा अत्युग्रः ॥ ३७ ॥ कामस्य वैरित्वं दर्शयति—**धूमेनेति** । यथा धूमेन सहजेन वह्निराव्रियत आच्छाद्यते, यथा वाऽऽदर्शो मलेनागन्तुकेन, यथा चोल्बेन गर्भवेष्टनचर्मणा गर्भः सर्वतो निरुध्यावृतः तथा प्रकारत्रयेणापि तेन कामेनावृतमिदम् ॥ ३८ ॥ इदंशब्दनिर्दिष्टं दर्शयन्वैरित्वं

७ अभिनवगुप्ताचार्यव्याख्या ।

ज्ञानस्वरूपं च वस्तु हातुं सुशकं भवेदित्यभिप्रायेण—( भवत्येषं कथं कृष्ण कथं चैव विवर्धते । किमात्मकः किमाचारस्तन्ममाचक्ष्व पृच्छतः ) भवत्येष इति । अस्य चोत्पत्तौ किं कारणम् । वर्धने च को हेतुः । स्वरूपं चास्य कीदृक् । उत्पन्नो दृढीभूतश्च किमाचरति किं करोतीति प्रश्नः ॥ ३७ ॥ अत्रोत्तरं श्रीभगवानुवाच—( एष सूक्ष्मः परः शत्रुर्देहिनामिन्द्रियैः सह । सुखतन्त्र इवासीनो मोहयन्पार्थ तिष्ठति ॥ कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः । अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ हर्षमस्य निवर्त्यैष शोकमस्य ददाति च । भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ स एष कलुषः क्षुद्रश्छिद्रप्रेक्षी धनंजय । रजःप्रवृत्तो मोहात्मा मानुषाणामुपद्रवः ॥ ) एष तावत्सूक्ष्म उत्पत्तिसमयेऽलक्ष्य इन्द्रियेषु । एवंच वर्तमानः सुखं तत्रयितुमिवोत्पद्यते । वस्तुतस्तु दुःखमोहमयस्तामसत्वात् । अतएव मोहयन् । कामेति । स्तम्भः कुलाद्यभिमानस्तत्प्रसूतो यो हर्षोऽहमीदृश इति । अतएवाह—अहंकार इति । अतएवच गर्वाद्वर्धतेऽभिमानस्वभावः सुखबुद्धिप्रकारेण च जायते इति त्रयः प्रश्नाः परिहृताः ॥ स एष इति । छिद्राणि प्रेक्षते अमुना छिद्रेणास्येहलोकपरलोकौ नाशयामीति । तथाच मोक्षधर्मेषु 'यत्क्रोधनो यजते यद्ददाति यद्वा तपस्तप्यते यज्जुहोति ॥ वैवस्वतस्तद्धरतेऽस्य सर्वं मोघः श्रमो भवति हि क्रोधनस्य ॥' इति ॥ रजसः प्रवृत्तस्तमोरूप इत्यर्थः ।

१ इतश्चत्वारि पद्यानि अभिनवगुप्तपाठे मूले व्याख्यायां चैवाधिकानि दरीदृश्यन्त इतरनानुल्लेखात्.

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**तम् ॥ ३८ ॥ किं पुनस्तदिदंशब्दवाच्यं यत् कामेनावृतमित्युच्यते—आवृतमिति । आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा । ज्ञानी हि जानात्यनेनाहमनर्थे प्रयुक्तः पूर्वमेवेति । दुःखी च भवति नित्यमेव, अतोऽसौ ज्ञानिनो नित्यवैरी नतु मूर्खस्य । स हि कामं तृष्णाकाले मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते जानाति तृष्णयाहं दुःखित्वमापादित इति न पूर्वमेवातो ज्ञानिन एव नित्यवैरी । किंरूपेण, कामरूपेण काम इच्छैव रूपमस्येति कामरूपस्तेन दुष्पूरेण दुःखेन पूरणमस्येति दुष्पूरस्तेनानलेन**

२ आनन्दगिरिव्याख्या ।

सामान्यतो निर्दिष्टं विशेषतो निर्देष्टुमाकाङ्क्षापूर्वकमनन्तरश्लोकमवतारयति—**किं पुनरिति** । कामस्य ज्ञानं प्रत्यावरणसिद्ध्यर्थं ज्ञानिनो नित्यवैरिणेत्यादिविशेषणम् । प्रतीकमादाय व्याकरोति—**आवृतमित्यादिना** । ज्ञानिनां प्रतिवैरित्वेऽपि नित्यवैरित्वं कामस्य कथमित्याशङ्क्याह—**ज्ञानी हीति** । अनर्थप्राप्तिमन्तरेण कामस्य प्रसङ्गावस्था पूर्वमेवेत्युच्यते, अतःशब्देन कामप्रसक्तिरेव परामृश्यते, नित्यमेवेत्युत्पत्त्यवस्था कार्यावस्था च कामस्य कथ्यते । ननु सर्वस्यापि कामात्मता न प्रशस्तेति कामो नित्यवैरी भवति ततः कुतो ज्ञानिविशेषणमित्याशङ्क्याह—**नत्विति** । अज्ञस्य नासौ नित्यवैरीत्येतदुपपादयति—**स हीति** । कार्यप्राप्तिप्रागवस्था पूर्वमित्युक्ता, अज्ञं प्रति वैरित्वे सत्यपि कामस्य नित्यवैरित्वाभावे फलितमाह—**अत इति** । स्वरूपतो नित्यवैरित्वाविशेषेऽपि ज्ञानाज्ञानाभ्यामवान्तरभेदसिद्धिरित्यर्थः । आकाङ्क्षाद्वारा प्रकृतं वैरिणमेव स्फोरयति—**किंरूपेणेत्यादिना** ॥ ३९ ॥ कामस्य निराश्रयस्य कार्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वक्ष्यमाणं ज्ञानमावृतम् । आवरणीयस्य त्रैविध्यात्तदनुगुणं दृष्टान्तत्रयं ज्ञेयम् ॥ ३८ ॥ **आवृतमिति** । ज्ञानमन्तःकरणसत्त्वम् 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेः । एतेन कामेन रजोगुणात्मकेनावृतम् । ज्ञानिनोऽन्तःकरणविशिष्टस्य प्रमातुः नित्यवैरिणा कामरूपेण दुष्पूरेण पूरयितुमयोग्येन । अयं हि पूर्यमाणोऽनर्थानेव प्रसवेत् । अनलेन अथापि पूर्यते चेत् अनलः नास्त्यलं पर्याप्तिर्यस्य स तथा तेनानलेन । न ह्यनलः काष्ठैस्तर्पयितुं शक्यः किंतु वर्धत एव तद्वदयमपीत्यर्थः । अयं भावः—अन्तःकरणसत्वं हि वह्निवत्प्रकाशात्मकं तत्सहजेन कामेन वह्निरिव धूमेनावृतं चेत्प्र-

४ मधुसूदनीव्याख्या ।

ज्ञायतेऽनेनेति ज्ञानमन्तःकरणं विवेकविज्ञानं वा इदंशब्दनिर्दिष्टमेतेन कामेनावृतं तथाप्यापाततः सुखहेतुत्वादुपादेयः स्यादित्यत आह—ज्ञानिनो नित्यवैरिणा । अज्ञो हि विषयभोगकाले कामं मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते वैरित्वं जानाति कामेनाहं दुःखित्वमापादित इति । ज्ञानी तु भोगकालेऽपि जानात्यनेनाहमनर्थे प्रवेशित इति अतोऽविवेकी दुःखी भवति भोगकाले च तत्परिणामे चानेनेति ज्ञानिनोऽसौ नित्यवैरीति सर्वथा तेन हन्तव्य एवेत्यर्थः । तर्हि किंस्वरूपोऽसावित्यत आह—कामरूपेण काम इच्छा तृष्णा सैव रूपं यस्य तेन । हे कौन्तेयेति संबन्धाविष्कारेण प्रेमाणं सूचयति । ननु विवेकिना हातव्योऽप्यविवेकिनोपादेयः स्यादित्यत आह—दुष्पूरेणानलेन च । चकार उपमार्थः । न विद्यतेऽलं पर्याप्तिर्यस्येत्यनलो वह्निः । स यथा हविषा पूरयितुमशक्यस्तथायमपि भोगेनेत्यर्थः । अतो निरन्तरं संतापहेतुत्वाद्विवेकिन इवाविवेकिनोऽपि हेय एवासौ । तथाच स्मृतिः 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' इति । अथवा इच्छाया विषयसिद्धि-

५ भाष्योत्कर्षदीपिका ।

यथावद्विषयस्वरूपप्रतिभानात्मकत्वं तृतीयेनोहापोहात्मकत्वं ज्ञानस्यावृतमिति बोध्यम् ॥ ३८ ॥ इदंशब्दवाच्यं दर्शयति—**आवृतमिति** । एतेन कामेन ज्ञानं विवेकरूपमावृतं ज्ञानिनो नित्यवैरिणा । ज्ञानी हि तदुत्पत्तिकालेऽपि जानात्यनेनाहमनर्थे नियोजित इति । तत आरभ्यैव दुःखी भवति । तेनासौ ज्ञानिनो नित्यवैरी नतु मूर्खस्य । स हि कामं तदुत्पत्तिकाले मित्रमिव पश्यन् तदानीमहमनेन दुःखे नियोजित इति न जानाति किंतु तत्कार्ये दुःखे प्राप्तेऽतस्तस्य नायं नित्यवैरी । केन रूपेण वैरीत्यत आह । कामः कामनेच्छैव रूपं यस्य तेन दुःखेन पूरणमस्य तेन । कुत इत्यत आह । नालं पर्याप्तिरस्य विद्यत इत्यनलः तेन । यो हि कदाचित्तृप्तिं गच्छति स पूरयितुं शक्यः, अयं तु न तथेत्यर्थः । चकार उपमार्थः । अनलेन वह्निनेवेति व्याख्यानं तु सुगमत्वादाचार्यैरुपेक्षितम् ।

६ श्रीधरीव्याख्या ।

स्फुटयति—**आवृतमिति** । इदं तु विवेकज्ञानमेतेनावृतम्, अज्ञस्य खलु भोगसमये कामः सुखहेतुरेव, परिणामे तु वैरितां प्रपद्यते । ज्ञानिनः पुनस्तत्कालमप्यनर्थानुसंधानाद्दुःखहेतुरेवेति नित्यवैरिणेत्युक्तम् । किंच विषयैः पूर्यमाणोऽपि दुःपूरोऽपूर्यमाणः शोकसंताप-

७ अभिनवगुप्ताचार्यव्याख्या ।

दृष्टान्तत्रयेण दुरुपसर्गत्वं अकार्यकरत्वं जुगुप्सास्पदत्वं चोक्तम् ॥ ३८ ॥ अयमित्यात्मा कामरूप इच्छायां यतश्चरति अनलेन चाग्निनेव

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।

१ श्रीमच्छांकरभाष्यम् ।

नास्यालं पर्याप्तिर्विद्यत इत्यनलस्तेन ॥ ३९ ॥ किमधिष्ठानः पुनः कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्येत्यपेक्षायामाह, ज्ञाते हि शत्रोरधिष्ठाने सुखेन शत्रुनिबर्हणं कर्तुं शक्यत इति—इन्द्रियाणीति । इन्द्रियाणि मनो बुद्धिश्चास्य कामस्याधिष्ठानमाश्रय उच्यते, एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविधं मोहयत्येष कामो ज्ञानमावृत्याच्छाद्य देहिनं शरीरिणम् ॥ ४० ॥ यत एवं—तस्मादिति । तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ, पाप्मानं पापाचारं कामं प्रजहिहि परित्यज,

२ आनन्दगिरिव्याख्या ।

करकत्वाभावं मत्वा प्रश्नपूर्वकमाश्रयं दर्शयति—किमधिष्ठान इति । कामस्य नित्यवैरित्वेन परिजिहीर्षितस्य किमित्यधिष्ठानं ज्ञाप्यते तत्राह—ज्ञाते हीति । इन्द्रियादीनां कामाधिष्ठानत्वं प्रकटयति—एतैरिति । नन्वेताभिरिति वक्तव्ये कथमेतैरित्युच्यते तत्राह—इन्द्रियादिभिरिति ॥ ४० ॥ तेषां कामाश्रयत्वे सिद्धे साश्रयस्य तस्य परिहर्तव्यत्वमाह—यत इति । तस्मादिन्द्रियादीनामाश्रयत्वादिति यावत्, पूर्वं कामनिरोधात्प्रागवस्थायामित्यर्थः । तेषु

३ नीलकण्ठव्याख्या (चतुर्धरी)।

मातारमनर्थे पातयति । अन्यथा तदेव स्वभावशुद्धत्वाद्विवेकवैराग्योपगं भूत्वा तमुद्धरेत् । अतोऽयं कामो ज्ञानिनो नित्यवैरीति ॥ ३९ ॥ किंच—इन्द्रियाणीति । अयमर्थः—इन्द्रियमनोबुद्धयो हि कामेनाधिष्ठिता बाह्यार्थप्रवणा भवन्ति । तैश्च तथाभूतैरयं कामो ज्ञानं चिदाकाशरूपमादर्शतलप्रख्यम् । यत्र योगिनो व्यवहितं विप्रकृष्टमतीतमनागतं वा पश्यन्ति । यथोक्तमाचार्यैः 'विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्त्यात्मनि' इति । निजान्तर्गतं शरीरान्तर्गतं आत्मनि हार्दाकाशाख्ये ब्रह्मणि तत् मलेनादर्शमिवावृत्य देहिनं देहाभिमानिनं विशेषेण मोहयति । विशब्दाद्देहाभिमानशून्यं योगिनमपि व्युत्थानावस्थायां किंचिन्मोहयतीति गम्यत इति । अक्षरयोजना स्पष्टा ॥ ४० ॥ तस्मादिति । यस्मादिन्द्रियाण्यस्याधिष्ठानं सामन्तस्येव गिरिदुर्गादिकं तस्मात्तान्येव नियम्य वशीकृत्य

४ मधुसूदनीव्याख्या ।

निवर्त्स्यत्वादिच्छारूपः कामो विषयभोगेन स्वयमेव निवर्तिष्यते किं तत्रातिनिर्बन्धेनेत्यत उक्तं—दुष्पूरेणानलेन चेति । विषयसिद्ध्या तत्कालमिच्छातिरोधानेऽपि पुनः प्रादुर्भावाच्च विषयसिद्धिरिच्छानिवर्तिका, किंतु विषयदोषदृष्टिरेव तथेति भावः ॥ ३९ ॥ ज्ञाते हि शत्रोरधिष्ठाने सुखेन स जेतुं शक्यत इति तदधिष्ठानमाह—इन्द्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रादीनि, वचनादानगमनविसर्गानन्दजनकानि वागादीनि च, मनः संकल्पात्मकं, बुद्धिरध्यवसायात्मिका च, अस्य कामस्याधिष्ठानमाश्रय उच्यते । यत एत एतैरिन्द्रियादिभिः स्वस्वव्यापारवद्भिराश्रयैर्विमोहयति विविधं मोहयति । एष कामो ज्ञानं विवेकज्ञानमावृत्याच्छाद्य देहिनं देहाभिमानिनम् ॥ ४० ॥ यस्मादेवं तस्मात् यस्मादिन्द्रियाधिष्ठानः कामो देहिनं मोहयति तस्मात्त्वमादौ

५ भाष्योत्कर्षदीपिका ।

यत्तु ज्ञायतेऽनेनेति ज्ञानमन्तःकरणमिति तदुपेक्ष्यम् । ज्ञानविज्ञाननाशनमित्यनुरोधेनात्रापि विवेकज्ञानग्रहणस्यौचित्यात् । कौन्तेय इति संबोधयन् संबन्धिवियोगो मा भवत्वित्येवंरूपेण कामेनैवावृतज्ञानस्त्वमपि स्त्रीस्वभावे शोकमोहरूपे नियोजितोऽसीति ध्वनयति ॥ ३९ ॥ सुखेन शत्रुं नाशयितुं तदधिष्ठानं किमित्यर्जुनाकाङ्क्षायामाह—इन्द्रियाणीति । इन्द्रियादीन्यस्य कामस्याधिष्ठानमाश्रय उच्यते । एतैराश्रयैर्विवेकज्ञानमावृत्य जीवं विविधं मोहयति । यत्तु ज्ञानं चिदात्मकमिति तन्न, उक्तयुक्तेः ॥ ४० ॥ तस्मादिन्द्रिया-

६ श्रीधरीव्याख्या ।

हेतुत्वादनलतुल्यः । अनेन सर्वान्प्रति नित्यवैरित्वमुक्तम् ॥ ३९ ॥ इदानीं तस्याधिष्ठानं कथयञ्जयोपायमाह—इन्द्रियाणीति द्वाभ्याम् । विषयदर्शनश्रवणादिभिः संकल्पेनाध्यवसायेन च कामस्याविर्भावादिन्द्रियाणि च मनश्च बुद्धिश्चास्याधिष्ठानमुच्यते । एतैरिन्द्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्य देहिनं विमोहयति ॥ ४० ॥ यस्मादेवं—तस्मात्त्वमिति । आदौ विमोहात्पूर्व-

७ अभिनवगुप्ताचार्यव्याख्या ।

पूरयितुमशक्येन दृष्टादृष्टद्वयदाहकत्वात् ॥ ३९ ॥ अस्य निवारणोपायमाह—इन्द्रियाणीति । आदाविन्द्रियेषु सत्सु तिष्ठति । यथा चक्षुषा शत्रुर्दृष्ट इन्द्रियप्रदेश एव क्रोधमात्मनो जनयति । ततो मनसि संकल्पते ततो बुद्धौ निश्चये एतद्द्वारेण मोहं जनयन् ज्ञानं नाशयति ॥ ४० ॥ तस्मादादाविन्द्रियाणि नियमयेत् । क्रोधादिकमिन्द्रियेषु प्रथमं न गृह्णीयात् । ज्ञानं ब्रह्मविज्ञानं च भगवन्मयीं

**पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रत आचार्यतश्चात्मादीनामवबोधः विज्ञानं विशेषस्तदनुभवस्तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनं प्रजहिह्यात्मनः परित्यजेत्यर्थः ॥ ४१ ॥ इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहीत्युक्तं तत्र किमाश्रयः कामं जह्यादित्युच्यते—**

२ आनन्दगिरिव्याख्या ।

नियमितेषु मनोबुद्ध्योर्नियमः सिध्यति तत्प्रवृत्तेरितरप्रवृत्तिव्यतिरेकेणाफलत्वादिति भावः । पापमूलतया कामस्य तच्छब्दवाच्यत्वमुन्नेयम् । कामस्य परित्याज्यत्वे वैरित्वं हेतुं साधयति—**ज्ञानेति** । ज्ञानविज्ञानशब्दयोरर्थभेदमावेदयति—**ज्ञानमित्यादिना** ॥ ४१ ॥ पूर्वोक्तमनूद्य कामत्यागस्य दुष्करत्वं मन्वानो रसोऽप्यस्येत्यत्रोक्तमेव स्पष्टीकर्तुं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एनं कामं हि निश्चयेन प्रजहि प्रकर्षेण नाशय । गिरिदुर्गादीन्स्वायत्तीकृत्यैव तत्स्थं सामन्तं घ्नन्ति राजानस्तद्वत् । हन्तव्यत्वे हेतुः पाप्मानमत्युग्रम् । तत्रापि हेतुः ज्ञानविज्ञाननाशनमिति । ज्ञानस्य शास्त्राचार्योपदेशजस्य परोक्षस्य विज्ञानस्य निदिध्यासनपरिपाकजस्यापरोक्षस्य च नाशनम् ॥ ४१ ॥ न केवलं बाह्येन्द्रियजयेनैव कृतार्थत्वं किंतु मनोबुद्ध्योरपि जयः कर्तव्यः कामस्य समूलोच्छेदाय । त्रिप्राकारदुर्गस्थस्य सामन्तस्येवाभ्यन्तरप्राकारद्वयजयेन ।

४ मधुसूदनीव्याख्या ।

मोहनात्पूर्वं कामनिरोधात्पूर्वमिति वा इन्द्रियाणि श्रोत्रादीनि नियम्य वशीकृत्य । तेषु हि वशीकृतेषु मनोबुद्ध्योरपि वशीकरणं सिध्यति । संकल्पाध्यवसाययोर्बाह्येन्द्रियप्रवृत्तिद्वारैवानर्थहेतुत्वात् । अत इन्द्रियाणि मनोबुद्धिरिति पूर्वं पृथङ्निर्दिश्यापीहेन्द्रियाणीत्येतावदुक्तम् । इन्द्रियत्वेन तयोरपि संग्रहो वा । हे भरतर्षभ, महावंशप्रसूतत्वेन समर्थोऽसि । पाप्मानं सर्वपापमूलभूतमेनं कामं वैरिणं प्रजहिहि परित्यज । हि स्फुटं प्रजहि प्रकर्षेण मारयेति वा । जहि शत्रुमित्युपसंहाराच्च ज्ञानं शास्त्राचार्योपदेशजं परोक्षं विज्ञानमपरोक्षं तत्फलं तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनम् ॥ ४१ ॥ ननु यथाकथंचिद्बाह्येन्द्रियनियमसंभवे-

५ भाष्योत्कर्षदीपिका ।

दीनामाश्रयत्वात्त्वमिन्द्रियाणि पूर्वं कामनिरोधात्प्रागवस्थायां मोहनात्पूर्वमिति वा नियम्य वशीकृत्य पाप्मानं पापाचारं कामं प्रजहि आत्मनः सकाशात्परित्यज । कामस्य परित्याग एव मारणं नतु शस्त्रेण शिरश्छेदनम् । एवं जहि शत्रुमित्युपसंहारेऽपि परित्यजेत्येवार्थः । एतेन प्रजहि प्रकर्षेण जहि मारयेति भाष्यानुक्तं कैश्चिदुक्तं प्रत्युक्तम् । हि यस्माज्ज्ञानविज्ञाननाशनम् । अस्य विशेषणस्य हेतुगर्भस्य सूचयति हिशब्दः । तथाच यस्मादित्यस्याध्याहारोऽपि नापेक्षितः । एतेन हि प्रस्फुटमिति प्रत्युक्तम् । ज्ञानं शास्त्रत आचार्यतश्चात्मादीनामवबोधः विज्ञानं विशेषतः तदनुभवः तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनम् । येतु ज्ञानं आत्मविषयं विज्ञानं शास्त्रीयम् । यद्वा ज्ञानं शास्त्राचार्योपदेशजं विज्ञानं निदिध्यासनं 'विज्ञाय प्रज्ञां कुर्वीत' इति श्रुतेरिति वर्णयन्ति तेषां व्याख्याने प्रथमपक्षोऽरुचिग्रस्तः । अरुचिबीजं ज्ञानं विवेकज्ञानमिति पूर्वं स्वेन व्याख्यातम् । तच्चात्मविषयं शास्त्रीयमेवेति विज्ञानपदेन पौनरुक्त्यम् । द्वितीयस्तु विज्ञानं विशेषतस्तदनुभव इति भाष्यस्य निदिध्यासनपरत्वं व्याख्याय तदविरुद्धो बोध्यः । तेनेदमावृतं आवृतं ज्ञानमेतेन ज्ञानमावृत्येत्यनुरोधेन नाशनमित्यस्यादर्शनसंपादकमित्यर्थः । 'णश अदर्शने' इति स्मरणात् । ज्ञानविज्ञानयोरुत्पन्नयोरावरणात्मकाज्ञानबाधकत्वप्रसिद्ध्या विक्षेपात्मकाज्ञानेन कदाचित्प्रारब्धप्राबल्यादाभासरूपेणोत्पन्नस्य कामस्य तावत्कालज्ञानविज्ञाननाशनत्वमुपपद्यते । यद्वा मुमुक्षूणां मोक्षसाधनज्ञानविज्ञानप्राप्तये यतमानेनेन्द्रियाणि नियम्य ज्ञानविज्ञानावरकः कामो हातव्य इति । तथाच नाशनमावरकमिति व्याख्यानेऽस्य सम्यक्त्वेन घातकमित्यर्थभ्रान्त्या ज्ञानविज्ञाननाशासंभवशङ्कायास्तदुत्तरस्य चानवकाशः । भरतैरप्ययं शत्रुः परित्यक्तः त्वं तु भरतर्षभ इति सूचयन्नाह—**भरतर्षभेति** ॥ ४१ ॥ इन्द्रियाण्यादौ नियम्य कामं

६ श्रीधरीव्याख्या ।

मेवेन्द्रियाणि मनो बुद्धिं च नियम्य पापरूपमेनं कामं हि स्फुटं प्रजहि घातय । यद्वा प्रजहिहि परित्यज । ज्ञानमात्मविषयम्, विज्ञानं शास्त्रीयं तयोर्नाशकम् । यद्वा ज्ञानं शास्त्राचार्योपदेशजम्, विज्ञानं निदिध्यासनजम् । 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' इति श्रुतेः ॥४१॥

७ अभिनवगुप्ताचार्यव्याख्या ।

क्रियां नाशयति हि यतः अतः पाप्मानं क्रोधं त्यज । अथवा ज्ञानेन मनसा विज्ञानेन बुद्ध्या च नाशनं वारणं कुरुष्वेति क्रियाविशेषणं

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरस्थत्वव्यापित्वाद्यपेक्ष्य पराणि प्रकृष्टान्याहुः पण्डिताः । तथेन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकम् ।**

२ आनन्दगिरिव्याख्या ।

प्रश्नपूर्वकं श्लोकान्तरमवतारयति—**इन्द्रियाणीत्यादिना** । पञ्चेति ज्ञानेन्द्रियवत्कर्मेन्द्रियाण्यपि वागादीनि गृह्यन्ते । किमपेक्षया तेषां परत्वं तत्राह—**देहमिति** । तथापि केन प्रकारेण परत्वं तदाह—**सौक्ष्म्येति** । आदिशब्देन कारणत्वादि गृह्यते । इन्द्रियापेक्षया सूक्ष्मत्वादिना मनसः स्वरूपोक्तिपूर्वकं परत्वं कथयति—**तथेति** । मनसि दर्शितं

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

अतो मनोबुद्ध्योर्जयार्थं योगं दर्शयति—**इन्द्रियाणीति** । अत्र परत्वं सूक्ष्मत्वेन कारणत्वेन वा बोध्यम् । इन्द्रियाणि चक्षुरादीनि पराणि स्वविषयेभ्यः पृथिव्यादिस्वाश्रयसहितेभ्यो गन्धादिभ्यो वित्तपुत्रशरीरेभ्यश्च तेषां तत्कारणत्वात् । तथाच कौषीतकिनः समामनन्ति ब्राह्मणे 'प्राणेभ्यो देवा देवेभ्यो लोकाः' इति । व्युच्चरन्तीत्यनुषज्यते । प्राणेभ्य इन्द्रियेभ्यो देवास्तदधिष्ठात्र्यो देवता उत्पद्यन्ते देवेभ्यश्च लोका भूतभौतिका उत्पद्यन्त इति श्रुत्यर्थः । 'इन्द्रियेभ्यः परं मनः', 'मनसा ह्येव पश्यति मनसा शृणोति' इति श्रुतेरिन्द्रियाणां मनोविकारत्वात् । तेन बाह्यार्थेभ्य इन्द्रियाण्याकृष्य मनसि प्रविलापनीयानीति दर्शितम् । केवलं परत्वमात्रप्रतिपादने प्रयोजनाभावात् 'मनसस्तु परा बुद्धिः', 'तस्माद्वा एतस्मान्मनोमयात् अन्योऽन्तर आत्मा विज्ञानमयः' इति श्रुतेः । मनसः प्रविलापनं तत्कारणे बुद्धौ कर्तव्यमित्यर्थः । समष्टिबुद्धेरप्यत्रैवान्तर्भावः । 'यो बुद्धेः परतस्तु सः' । यस्तु । तुशब्दो भास्यवर्गाद्बुद्ध्यादेर्भासकस्य ज्ञानस्य वैलक्षण्यं गमयति । यो बुद्धेरपि परतः स ज्ञानपदाभिधेयः कामेन उल्बेन गर्भ इव आवृत इति व्यवहितेन संबन्धः ।

४ मधुसूदनीव्याख्या ।

प्यान्तरतृष्णात्यागोऽतिदुष्कर इति चेत् । न । रसोऽप्यस्य परं दृष्ट्वा निवर्तत इत्यत्र परदर्शनस्य रसाभिधानीयकतृष्णात्यागसाधनस्य प्रागुक्तेः । तर्हि कोऽसौ परो यद्दर्शनात्तृष्णानिवृत्तिरित्याशङ्क्य शुद्धमात्मानं परशब्दवाच्यं देहादिभ्यो विविच्य दर्शयति—श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्च स्थूलं जडं परिच्छिन्नं बाह्यं च देहमपेक्ष्य पराणि सूक्ष्मत्वात्प्रकाशकत्वाद्व्यापकत्वादन्तःस्थत्वाच्च प्रकृष्टान्याहुः पण्डिताः श्रुतयो वा । तथेन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकं तत्प्रवर्तकत्वात् । तथा मनसस्तु परा बुद्धिरध्यवसायात्मिका । अध्यवसायो हि निश्चयस्तत्पूर्वकएव संकल्पादिर्मनोधर्मः । यस्तु बुद्धेः परतस्तद्भासकत्वेनावस्थितः यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारा मोहयतीत्युक्तं स बुद्धेर्द्रष्टा पर आत्मा 'स एष इह प्रविष्टः' इतिवद्व्यवहितस्यापि देहिनस्तदा परामर्शः । अत्रार्थे श्रुतिः 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' इति । अत्रात्मनः परत्वस्यैव वाक्यतात्पर्यविषयत्वादिन्द्रियादिपरत्वस्याविवक्षितत्वात् । इन्द्रियेभ्यः परा ह्यर्था इति स्थानेऽर्थेभ्यः पराणीन्द्रियाणीति विवक्षाभेदेन भगवदुक्तं न विरुध्यते । बुद्धेरस्मदादिव्यष्टिबुद्धेः सकाशान्महानात्मा समष्टिबुद्धिरूपः परः 'मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः

५ भाष्योत्कर्षदीपिका ।

वैरिणं जहिहीत्युक्तं तत्र किमाश्रयः कामं जह्यादित्यपेक्षायां 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तं स्मारयन्परं ज्ञापयति । इन्द्रियाणि श्रोत्रादीनि देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरस्थितत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टान्याहुः पण्डिता उक्तविवक्षया । ननु श्रुतयः साक्षादाहुः 'इन्द्रियेभ्यः परा ह्यर्था' इति श्रुतावुक्तत्वात् । तथेन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकम् । मनसस्तु बुद्धिर्निश्चयात्मिका परा । बुद्धेः परतस्तु सः बुद्धेर्द्रष्टा परमात्मा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्यः आभ्यन्तरः यमिन्द्रियादिभिराश्रयैर्युक्तः

६ श्रीधरीव्याख्या ।

अथात्र प्रसन्नतया चित्तप्रणिधानेनेन्द्रियाणि नियन्तुं शक्यन्ते तदात्मस्वरूपं देहादिभ्यो विविच्य दर्शयति—**इन्द्रियाणीति** । इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराणि श्रेष्ठान्याहुः । सूक्ष्मत्वात्प्रकाशकत्वाच्च । अतएव तद्व्यतिरिक्तत्वमप्यर्थादुक्तं भवति । इन्द्रियेभ्यश्च संक-

७ अभिनवगुप्ताचार्यव्याख्या ।

इन्द्रियेषूत्पन्नं संकल्पं न गृह्णीयात् संकल्पितं वा न निश्चिनुयादिति तात्पर्यम् ॥ ४१ ॥ अत्र युक्तिः श्लोकद्वयेनाह—इन्द्रियाणीत्यादि । यत इन्द्रियाणि शत्रुलक्षणाद्विषयादन्यानि तेभ्यश्चान्यन्मनः तस्मादपि बुद्धेर्व्यतिरेकः बुद्धेरपि यस्यान्यस्वभावत्वं स आत्मा । एवमिन्द्रियोत्पन्नेन

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

१ श्रीमच्छांकरभाष्यम् ।

**तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका । तथा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरो यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तं स बुद्धेर्द्रष्टा परमात्मा ॥ ४२ ॥ एवमिति । एवं बुद्धेः परमात्मानं बुद्ध्वा ज्ञात्वा संस्तभ्य सम्यकस्तम्भनं कृत्वा स्वेनैवात्मना संस्कृतेन**

२ आनन्दगिरिव्याख्या ।

न्यायं बुद्धावतिदिशति—**तथा मनसस्त्विति** । यो बुद्धेरित्यादि व्याचष्टे—**तथेत्यादिना** । आत्मनो यथोक्तविशेषणस्याप्रकृतत्वमाशङ्क्याह—**यं देहिनमिति** ॥ ४२ ॥ इन्द्रियादिसमाधानपूर्वकमात्मज्ञानाद् कामजयो भवतीत्युपसंहरति—**एवमित्यादिना** । संस्कृतं मनो मनःसमाधाने हेतुरिति सूचयति—**संस्तभ्येति** । प्रकृतं शत्रुमेव

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

तथाच श्रुतिः 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि । ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनि' इति । एतदुक्तं भवति—वागादिबाह्येन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत । मनोऽपि विषयविकल्पाभिमुखं ज्ञानात्मशब्दोदितायां बुद्धौ धारयेत् । तामपि महत्यात्मनि समष्टिबुद्धौ धारयेत् । तत् तं महान्तमात्मानं शान्ते निष्कले परस्मिञ्ज्योतिषि प्रत्यगात्मनि धारयेदिति ॥ ४२ ॥ योगफलमाह—**एवमिति** । आत्मानं मनः हार्दाकाशेऽपि तत्स्थान्नित्यान्कामान्कामयानम् । श्रूयते हि दहरविद्यायां हार्दाकाशं प्रकृत्य 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदत्र गत्वा विन्दते' इति तत्रत्यानां कामानां सत्त्वम् । तेषां च सत्यत्वं 'त इमे सत्याः कामाः' इति श्रुतेः । आत्मानं मनः आत्मना मनसैव बुद्ध्यैव वा संस्तभ्य निर्वृत्तिकं कृत्वा बुद्धेः परं परमात्मानं बुद्ध्वा समूलघातं कामरूपं शत्रुं शातयि-

४ मधुसूदनीव्याख्या ।

ख्यातिरीश्वरः' इति वायुपुराणवचनात् । महतो हैरण्यगर्भ्या बुद्धेः परमव्यक्तमव्याकृतं सर्वजगद्बीजं मायाख्यं 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति च । अव्यक्तात्सकाशात्सकलजडवर्गप्रकाशकः पुरुषः पूर्ण आत्मा परः तस्मादपि कश्चिदन्यः परः स्यादित्यत आह—पुरुषान्न परं किंचिदिति । कुत एवं । यस्मात् सा काष्ठा समाप्तिः । सर्वाधिष्ठानत्वात्सा परा गतिः । 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इत्यादिश्रुतिप्रसिद्धा परा गतिरपि सैवेत्यर्थः । तदेतत्सर्वं यो बुद्धेः परतस्तु स इत्यनेनोक्तम् ॥ ४२ ॥ फलितमाह—रसोऽप्यस्य परं दृष्ट्वा निवर्तत इत्यत्र यः परशब्देनोक्तस्तमेवंभूतं पूर्णमात्मानं बुद्धेः परं बुद्ध्वा साक्षात्कृत्य संस्तभ्य स्थिरीकृत्यात्मानं मनः आत्मना एतादृशनिश्चयात्मिकया बुद्ध्या जहि मारय

५ भाष्योत्कर्षदीपिका ।

कामो ज्ञानावरणद्वारा मोहयति । परतस्तु इत्युक्तिस्तु 'बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति श्रुत्यर्थसंग्रहार्था, श्रुत्यनुसारेणेन्द्रियेभ्यः परा ह्यर्था इति वक्तव्येऽपि एवं भगवत उक्तिः सफला पूर्वपुरुषपरत्वप्रतिपादनायाः श्रुतेरफलार्थादिपरत्वाभिधाने तात्पर्याभावज्ञापनार्थेति मन्तव्यम् । तदुक्तं 'आध्यानाय प्रयोजनाभावात् आत्मशब्दाच्च' इति ॥ ४२ ॥ ततः किमित्याशङ्क्येन्द्रियादिसमाधानपूर्वकादात्मज्ञानात्कामजयो भवतीत्युपसंहरति—**एवमिति ।** आत्मना संस्कृतमनसा बुद्ध्या वा आत्मानं मनः सम्यक्स्तम्भनं कृत्वा समाधाय बुद्धेः परं साक्षिभूतं ज्ञात्वा साक्षात्कृत्वा मूलोच्छेदेन कामरूपं दुरासदं दुर्विज्ञेयानेकविशेषं शत्रुं जहि परित्यज । महाबाहो इति संबोधयन्मदुक्तमुपायं विना महद्भिर्बाहुभिः बाह्यशत्रुवद्-

६ श्रीधरीव्याख्या ।

ल्पात्मकं मनः परम्, तत्प्रवर्तकत्वात् । मनसस्तु बुद्धिर्निश्चयात्मिका परा, निश्चयपूर्वकत्वात्संकल्पस्य । यस्तु बुद्धेः परः तत्साक्षित्वेनावस्थितः सर्वान्तरः स आत्मा विमोहयति देहिनमिति देहिशब्दोक्त आत्मा स इति परामृश्यते ॥ ४२ ॥ उपसंहरति—**एवमिति ।** बुद्धेरेव विषयेन्द्रियादिजन्याः कामादिविक्रियाः, आत्मा तु निर्विकारस्तत्साक्षीत्येवं बुद्धेः परमात्मानं बुद्ध्वा आत्मना एवंभूतनिश्चयात्मि-

७ अभिनवगुप्ताचार्यव्याख्या ।

क्रोधेन कथं मनसो बुद्धेरात्मनो वा क्षोभ इति पर्यालोचयेदित्यर्थः ॥ ४२ ॥ रहस्यविदां त्वयमाशयः—बुद्धेर्यः परत्र वर्तते परोऽहंकारः सर्वमहमित्यभेदात्मा स खलु परमो भेदः । अतएव च परिपूर्णस्य खण्डनाभावान्न क्रोधादय उदयन्ते । अतः परमहंकारं परमोत्साहं संविदा-

१ श्रीमच्छांकरभाष्यम् ।

**मनसा सम्यक्समाधायेत्यर्थः । जह्येनं शत्रुं हे महाबाहो, कामरूपं दुरासदं दुःखेनासद आसादनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥ ४३ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीशंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये कर्मप्रशंसायोगो नाम तृतीयोऽध्यायः ॥ ३ ॥**

---

२ आनन्दगिरिव्याख्या ।

**विशिनष्टि—कामरूपमिति । तस्य दुरासदत्वे हेतुमाह—दुर्विज्ञेयेति । अनेकविशेषोऽतादृशो महाशनत्वादिस्तदनेनोपायभूता कर्मनिष्ठा प्राधान्येनोक्ता, उपेया तु ज्ञाननिष्ठा गुणत्वेनेति विवेक्तव्यम् ॥ ४३ ॥ ॐतत्सत् इत्यानन्दगिरिकृतटीकायां तृतीयोऽध्यायः ॥ ३ ॥**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तारं जहि नाशय । हे महाबाहो इति संबोधयंस्तन्नाशे तव सामर्थ्यमस्तीति दर्शयति । अयमर्थः—यावत्काममूलस्याज्ञानस्योच्छेद आत्मतत्त्वज्ञानेन क्रियते तावत्पर्यन्तं कामस्य निर्मूलोच्छेदो न भवतीति बुद्धेः परं बुद्ध्वा कामो नाशनीयः । तस्मिंश्च नष्टे संसारानर्थोच्छेदो भवतीति । दुरासदं परबोधं विना दुःखेनापि नाशयितुमशक्यम् । उपायः कर्मनिष्ठात्र प्राधान्येनोपसंहृता । उपेया ज्ञाननिष्ठा तु तद्गुणत्वेन कीर्तिता ॥ ४३ ॥ इति नैलकण्ठीये भारतभावदीपे तृतीयोऽध्यायः ॥ ३ ॥

४ मधुसूदनीव्याख्या ।

शत्रुं सर्वपुरुषार्थशातनम् । हे महाबाहो, महाबाहोर्हि शत्रुमारणं सुकरमिति योग्यं संबोधनम् । कामरूपं तृष्णारूपं दुरासदं दुःखेनासादनीयं दुर्विज्ञेयानेकविशेषमिति यत्नाधिक्याय विशेषणम् ॥ ३ ॥ उपायः कर्मनिष्ठात्र प्राधान्येनोपसंहृता । उपेया ज्ञाननिष्ठा तु तद्गुणत्वेन कीर्तिता ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीयपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां ज्ञाननिष्ठावर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

५ भाष्योत्कर्षदीपिका ।

यमजेय इति सूचयति । तदनेन तृतीयाध्यायेन साधनभूता कर्मनिष्ठा तु प्राधान्येनोक्ता । साध्या तु ज्ञाननिष्ठा गुणत्वेनेति विवेक्तव्यम् ॥ ४३ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां तृतीयोऽध्यायः ॥ ३ ॥

६ श्रीधरीव्याख्या ।

कया बुद्ध्यात्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपं शत्रुं जहि मारय । दुरासदं दुःखेनासादनीयम् । दुर्विज्ञेयगतिमित्यर्थः ॥ ४३ ॥ स्वधर्मेण यमाराध्य भक्त्या मुक्तिमिता नराः । तं कृष्णं परमानन्दं तोषयेत्सर्वकर्मभिः ॥ १ ॥ इति श्रीधरस्वामिकृतायां सुबोधिन्यां टीकायां तृतीयोऽध्यायः ॥ ३ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

त्मकं गृहीत्वा क्रोधमविद्यात्मानं शत्रुं जहीति शिवम् । अत्र संग्रहः—धनानि दारान् देहं च योऽन्यत्वेनाधिगच्छति । किं नाम तस्य कुर्वन्ति क्रोधाद्याश्चित्तविभ्रमाः ॥ इति ॥ ४३ ॥ इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे तृतीयोऽध्यायः ॥ ३ ॥



# चतुर्थोऽध्यायः ।

श्रीभगवानुवाच ।

**इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षणः ससंन्यासः कर्मयोगोपायो यस्मिन् वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च, गीतासु च सर्वास्वयमेव योगो विवक्षितो भगवताऽतः परिसमाप्तं वेदार्थं मन्वानस्तं वंशकथनेन स्तौति श्रीभगवान् । इममध्यायद्वयेनोक्तं योगं विवस्वत आदि-**

२ आनन्दगिरिव्याख्या ।

पूर्वाभ्यामध्यायाभ्यां निष्ठाद्वयात्मनो योगस्य गीतत्वाद् वेदार्थस्य च समाप्तत्वाद् वक्तव्यशेषाभावाद् उक्तयोगस्य कृत्रिमत्वशङ्कानिवृत्तये वंशकथनपूर्विकां स्तुतिं भगवानुक्तवानित्याह—**श्रीभगवानिति** । तदेतद्भगवद्वचनं वृत्तानुवादद्वारेण प्रस्तौति—**योऽयमिति** । उक्तमेव योगं विभज्यानुवदति—**ज्ञानेति** । संन्यासेनेतिकर्तव्यतया सहितस्य ज्ञानात्मनो योगस्य कर्माख्यो योगो हेतुरतश्चोपायोपेयभूतं निष्ठाद्वयं प्रतिष्ठापितमित्यर्थः । उक्ते योगद्वये प्रमाणमुपन्यस्यति—**यस्मिन्निति** । अथवा ज्ञानयोगस्य कर्मयोगोपायत्वमेव स्फुटयति—**यस्मिन्निति** । प्रवृत्त्या लक्ष्यते ज्ञायते कर्मयोगो निवृत्त्या च लक्ष्यते ज्ञानयोग इति विभागः । यद्यपि पूर्वस्मिन्नध्यायद्वये यथोक्तनिष्ठाद्वयं व्याख्यातं तथापि वक्ष्यमाणाध्यायेषु वक्तव्यान्तरमस्तीत्याशङ्क्याह—**गीतासु चेति** । कथं तर्हि समनन्तराध्यायस्य प्रवृत्तिरत आह—**अत इति** । वंशकथनं संप्रदायोपन्यासः संप्रदायोपदेशश्च कृत्रिमत्वशङ्कानिवृत्त्या योगस्तुतौ पर्यवस्यति । गुरुशिष्यपरंपरोपन्यासमेवानुक्रामति—**इममिति** । इममित्यस्य संनिहितं विषयं दर्शयति—**अध्यायेति** । योगं ज्ञाननिष्ठालक्षणं कर्मयोगोपायलभ्यमित्यर्थः । स्वयमकृतार्थानां प्रयोजनव्यग्राणां परार्थप्रवृत्त्यसंभवाद्भगवतस्तथाविधप्रवृत्तिदर्शनात्कृतार्थता कल्पनीयेत्याह—**विवस्वत इति** । अव्ययवेदमूलत्वादव्ययत्वं योगस्य गमयितव्यं किमिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अध्यायद्वयोक्तेऽर्थेऽप्रामाण्यशङ्का माभूदिति विद्यावंशसंप्रदायमात्मनश्च भ्रमविप्रलम्भकत्वादिनिरासायेश्वरत्वं सर्वज्ञत्वं च दर्शयति—**इममित्यादिना** । इमं सांख्ययोगं कर्मयोगरूपोपायसहितं ससंन्यासमिति भाष्यम् । इमं संध्योपासनादिनिर्विकल्पकसमाध्यनुष्ठानान्तं कर्मयोगं ज्ञाननिष्ठोपसर्जनं पारिव्राज्यानधिकारिणां राज्ञामेव योग्यं विवस्वते सूर्याय मण्डलाभिमानिने सर्वेषां क्षत्रियाणामादिभूतायाहमादित्यान्तर्यामी ‘य एषोऽन्तरादित्ये हिरण्मयः पुरुषो

४ मधुसूदनीव्याख्या ।

यद्यपि पूर्वमुपेयत्वेन ज्ञानयोगस्तदुपायत्वेन च कर्मयोग इति द्वौ योगौ कथितौ तथाप्येकं सांख्यं च योगं च यः पश्यति स पश्यतीत्यनया दिशा साध्यसाधनयोः फलैक्यादैक्यमुपचर्य साधनभूतं कर्मयोगं साध्यभूतं च ज्ञानयोगमनेकविधगुणविधानाय स्तौति वंशकथनेन भगवान्—इममध्यायद्वयेनोक्तं योगं ज्ञाननिष्ठालक्षणं कर्मनिष्ठोपायलभ्यं विवस्वते सर्वक्षत्रियवंशबीजभूतायादित्याय प्रोक्तवान् प्रकर्षेण सर्वसंदेहोच्छेदादिरूपेणोक्तवानहं भगवान् वासुदेवः सर्वजगत्परिपालकः ।

५ भाष्योत्कर्षदीपिका ।

एवमध्यायद्वयेनोक्तस्य निष्ठाद्वयात्मकस्य वेदार्थस्य समाप्तिं मन्यमानः संप्रदायप्रदर्शनेन तं स्तुवन् श्रीभगवानुवाच । इममध्यायद्वयेनोक्तं योगं सांख्ययोगं कर्मयोगरूपोपायसहितं ससंन्यासं इमं संध्योपासनादिनिर्विकल्पकसमाध्यनुष्ठानान्तं कर्मयोगं ज्ञाननिष्ठोपसर्जनं पारिव्राज्यानधिकारिणां राज्ञामेव योग्यमित्यन्येषां व्याख्याने तु द्वितीयाध्यायार्थस्येदंशब्देनाग्रहणप्रसङ्गः । नचेष्टापत्तिः । अध्यायद्वयोक्तेऽर्थेऽप्रामाण्यशङ्का माभूदिति । विद्यावंशसंप्रदायं दर्शयति इममित्यादिनेति स्वोक्तिविरोधात् । एतेन

६ श्रीधरीव्याख्या ।

आविर्भावतिरोभावावाविष्कर्तुं स्वयं हरिः । तत्त्वंपदविवेकार्थं कर्मयोगं प्रशंसति ॥ १ ॥ एवंतावदध्यायद्वयेन कर्मयोगोपायो ज्ञानयोगोपायश्च मोक्षसाधनत्वेनोक्तः, तमेव ब्रह्मार्पणादिगुणविधानेन त्वंपदार्थविवेकादिना च प्रपञ्चयिष्यन्प्रथमं तावत्परम्पराप्राप्तत्वेन स्तुवन्श्रीभगवानुवाच—**इममिति** त्रिभिः । अव्ययफलत्वादव्ययं इमं योगं पुराहं विवस्वते आदित्याय कथितवान्, स च स्वपुत्राय मनवे

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीभगवानुवाच । इमं विवस्वते इति । एवं परंपरेति । स एवायं मयेति । एतच्च गुरुपरंपराप्राप्तमपि अद्य त्वेतन्नष्टमित्यनेन भगवानस्य

१ नीलकण्ठः.

**एवं परंपराप्राप्तमिमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**त्याय सर्गादौ प्रोक्तवानहं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय । तेन योगबलेन युक्ताः समर्था भवन्ति ब्रह्म परिरक्षितुम् । ब्रह्मक्षत्रे परिपालिते जगत्परिपालयितुमलम् । अव्ययमव्ययफलत्वात् । नह्यस्य सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति । स च विवस्वान्मनवे प्राह । मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥ १ ॥ एवमिति । एवं क्षत्रियपरंपराप्राप्तमिमं राजर्षयो राजानश्च त ऋषयश्च राजर्षयो विदुरिमं योगम् । स योगः कालेनेह महता दीर्घेण नष्टो विच्छिन्नसंप्रदायः संवृत्तः । हे**

२ आनन्दगिरिव्याख्या ।

भगवता कृतार्थेनापि योगप्रवचनं कृतमिति तदाह—**जगदिति** । कथं यथोक्तेन योगेन क्षत्रियाणां बलाधानं तदाह—**तेनेति** । युक्ताः क्षत्रिया इति शेषः । ब्रह्मशब्देन ब्राह्मणत्वजातिरुच्यते । यद्यपि योगप्रवचनेन क्षत्रं रक्षितं तेन च ब्राह्मणत्वं तथापि कथं रक्षणीयं जगदशेषं रक्षितमित्याशङ्क्याह—**ब्रह्मेति** । ताभ्यां हि कर्मफलभूतं जगदनुष्ठानद्वारा रक्षितुं शक्यमित्यर्थः । योगस्याव्ययत्वे हेत्वन्तरमाह—**अव्ययफलत्वादिति** । ननु कर्मफलवदुक्तयोगफलस्यापि साध्यत्वेन क्षयिष्णुत्वमनुमीयते नेत्याह—**नहीति** । अपुनरावृत्तिश्रुतिप्रतिहतमनुमानं न प्रमाणीभवतीति भावः । भगवता विवस्वते प्रोक्तो योगस्तत्रैव पर्यवस्यतीत्याशङ्क्याह—**स चेति** । स्वपुत्रायेत्युभयत्र संबध्यते । आदिराजायेतीक्ष्वाकोः सूर्यवंशप्रवर्तकत्वेन वैशिष्ट्यमुच्यते ॥ १ ॥ यथोक्ते योगे परंपरागते विशिष्टजनसंमतिमुदाहरति—**एवमिति** । तस्य कथं संप्रति वक्तव्यत्वं तदाह—**स कालेनेति** । पूर्वार्धं व्याकरोति—**एवमित्यादिना** । ऐश्वर्यसंपत्ती राजत्वं येषां तेषामेव सूक्ष्मार्थनिरीक्षणक्षमत्वमृषित्वम् । इहेति भगवतोऽर्जुनेन सह संव्यवहारकालो गृह्यते ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम' इत्यादिश्रुतिप्रसिद्धः प्रोक्तवान् पुरा । अव्ययमविच्छिन्नसंप्रदायम् । तेनानादित्वमपि । मनवे स्वपुत्राय विवस्वान्प्राह । इक्ष्वाकवे मनुः स्वपुत्रायाब्रवीत् ॥ १ ॥ **एवमिति** । एवं परंपराप्राप्तमिक्ष्वाकोर्निमिनाभागादिक्रमेण राजर्षयो जनकाजातशत्रुकैकेयप्रभृतयो राजानः, ऋषयश्च सनकवसिष्ठाद्याः, सूक्ष्मार्थदर्शिनस्ते, राजान एव ऋषय इति वा

४ मधुसूदनीव्याख्या ।

सर्गादिकाले राज्ञां बलाधानेन तदधीनं सर्वं जगत्पालयितुम् । कथमनेन बलाधानमिति विशेषणेन दर्शयति । अव्ययमव्ययवेदमूलत्वादव्ययमोक्षफलत्वाच्च न व्येति स्वफलादित्यव्ययमव्यभिचारिफलम् । तथाचैतादृशेन बलाधानं शक्यमिति भावः । सच मम शिष्यो विवस्वान् मनवे वैवस्वताय स्वपुत्राय प्राह । सच मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् । यद्यपि प्रतिमन्वन्तरं स्वायंभुवमन्वादिसाधारणोऽयं भगवदुपदेशस्तथापि सांप्रतिकवैवस्वतमन्वन्तराभिप्रायेणादित्यमारभ्य संप्रदायो गणितः ॥ १ ॥ एवमादित्यमारभ्य गुरुशिष्यपरम्परया प्राप्तमिमं योगं । राजानश्च ते ऋषयश्चेति राजर्षयः प्रभुत्वे सति सूक्ष्मार्थनिरीक्षणक्षमा निमिप्रमुखाः स्वपित्रादिप्रोक्तं विदुः । तस्मादनादिवेदमूलत्वेनानन्तफलत्वेनानादिगुरुशिष्यपरंपराप्राप्तत्वेन च कृत्रिमत्वशङ्कानास्पदत्वान्महाप्रभावोऽयं योग इति श्रद्धातिशयाय स्तूयते—स एवं महाप्रयोजनोऽपि योगः कालेन महता दीर्घेण धर्मह्रासकरेण इह इदानीमावयोर्व्यवहारकाले द्वापरान्ते दुर्बलानजितेन्द्रियाननधिकारिणः प्राप्य कामक्रोधादिभि-

५ भाष्योत्कर्षदीपिका ।

राज्ञामेव योग्यमित्यपि प्रत्युक्तम् । अध्यायद्वयेन प्रतिपादिते वेदार्थेऽग्रे विस्तरेण वक्ष्यमाणे ब्राह्मणादियोग्यताभावप्रसङ्गात् । सर्गादौ विवस्वते सूर्यायाहं श्रीकृष्णः प्रोक्तवान् । ब्रह्मपरिपालनसमर्थबलाधानाय । ब्रह्मक्षत्रे परिपालिते सर्वं जगद्रक्षितं भवति । अव्ययमव्ययफलत्वादिदं भाष्यमुपलक्षणं अव्ययवेदमूलत्वात् । न व्येति स्वफलादित्यव्ययं अव्यभिचारिफलमित्यस्यापि । यत्त्वव्ययमविच्छिन्नसंप्रदायमिति तत्तु स कालेनेह महता योगो नष्टः परंतपेति वाक्यशेषविरोधादुपेक्ष्यम् । सच विवस्वान्मनवे श्राद्धदेवाय प्राह । सच मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥ १ ॥ एवं क्षत्रियपरंपरया प्राप्तमागतमिमं योगं राजानश्च ते ऋषयश्च प्रभुत्वे सति सूक्ष्मार्थदर्शनसमर्थाः निमिप्रभृतयो विदुः । यत्तु जनकाजातशत्रुकैकयप्रभृतयो राजानः ऋषयश्च सनकवसिष्ठाद्याः सूक्ष्मार्थ-

६ श्रीधरीव्याख्या ।

श्राद्धदेवाय प्राह, स च मनुः स्वपुत्रायेक्ष्वाकवेऽब्रवीत् ॥ १ ॥ **एवमिति** । राजानश्च त ऋषयश्चान्येऽपि राजर्षयो निमिप्रमुखाः स्वपुत्रादिभिरिक्ष्वाकुप्रमुखैः प्रोक्तमिमं योगं विदुर्जानन्तिस्म । अद्यतनानामज्ञाने कारणमाह । हे परंतप शत्रुतापन, स योगः कालवशादिह

१ नीलकण्ठः. २ मधुसूदनः. ३ नीलकण्ठः. ४ मधुसूदनः.

**स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।**
**भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥**

**अर्जुन उवाच।**

**अपरं भवतो जन्म परं जन्म विवस्वतः।**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम्।

परंतप, आत्मनो विपक्षभूताः पर उच्यन्ते तान् शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति परंतपः शत्रुतापन इत्यर्थः ॥ २ ॥ दुर्बलानजितेन्द्रियान्प्राप्य नष्टं योगमिममुपलभ्य लोकं चापुरुषार्थसंबन्धिनं—स एवायमिति। स एवायं मया ते तुभ्यमद्येदानीं योगः प्रोक्तः पुरातनः, भक्तोऽसि मे सखा चासीति। रहस्यं हि यस्मादेतदुत्तमं योगो ज्ञानमित्यर्थः ॥ ३ ॥ भगवता विप्रतिषिद्धमुक्तमिति मा

२ आनन्दगिरिव्याख्या।

परंतपेति संबोधनं विभजते—आत्मन इति ॥ २ ॥ किमिति वर्तमाने काले प्रकृतो योगः संप्रदायरहितोऽभूदित्याशङ्क्याधिकार्यभावादित्याह—दुर्बलानिति। तदेव दौर्बल्यं प्रकृतोपयोगित्वेन व्याकरोति—अजितेन्द्रियानिति। यद्यपि कामक्रोधादिप्रधानान्पुरुषान्प्रतिलभ्य कामक्रोधादिभिरभिभूयमानो योगो नष्टो विच्छिन्नसंप्रदायः संजातस्तथापि योगादृते पुरुषार्थो लोकस्य लभ्यते चेत् किमनेन योगोपदेशेनेत्याशङ्क्य यथोक्तयोगाभावे परमपुरुषार्थाप्राप्तेर्मैवमित्याह—लोकं चेति। पूर्वो योगो विच्छिन्नसंप्रदायोऽधुना त्वन्यो योगो मदर्थमुच्यते भगवतेत्याशङ्क्याह—स एवेति। कस्मादन्यस्मै यस्मै कस्मैचित्पुरातनो योगो नोक्तो भगवतेत्याशङ्क्याह—भक्तोऽसीति। उक्तमधिकारिणं प्रति योगस्य वक्तव्यत्वे हेतुमाह—रहस्यं हीति। अनादिवेदमूलत्वाद्योगस्य पुरातनत्वम्। भक्तिः शरणबुद्ध्या प्रीतिस्तया युक्तो निजरूपमवेक्ष्य भक्तो विवक्षितः। समानवयाः स्निग्धः सहायः सखेत्युच्यते। एतदिति कथं योगो विशेष्यते तत्राह—ज्ञानमिति ॥ ३ ॥ भगवति लोकस्यानीश्वरत्वशङ्कां निवर्तयितुं चोद्यमुद्भावयति—भगवतेति।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

अविदुर्ज्ञातवन्तः। 'सिजभ्यस्तविदिभ्यश्च' इति लङो झेर्जुस्। नष्टोऽदर्शनं गतः ॥ २ ॥ स इति। अद्य संप्रदायविच्छेदे सति। भक्तः शरणागतः, सखा प्रीतिविषयः,। रहस्यं गोप्यमभक्तादिभ्यो न देयम्। अन्यथा निर्वीर्या विद्या भवेदित्यर्थः। तथाच मन्त्रवर्णः 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। असूयकायानृजवे,

४ मधुसूदनीव्याख्या।

रभिभूयमानो नष्टः विच्छिन्नसंप्रदायो जातः। तं विना पुरुषार्थाप्राप्तिः। अहो दौर्भाग्यं लोकस्येति शोचति भगवान्। हे परंतप परं कामक्रोधादिरूपं शत्रुगणं शौर्येण बलवता विवेकेन तपसा च भानुरिव तापयतीति परंतपः शत्रुतापनः। जितेन्द्रिय इत्यर्थः। उर्वश्युपेक्षणाद्यद्भुतकर्मदर्शनात्। तस्मात्त्वं जितेन्द्रियत्वादत्राधिकारीति सूचयति ॥ २ ॥ य एवं पूर्वमुपदिष्टोऽप्यधिकार्यभावाद्विच्छिन्नसंप्रदायोऽभूत्, यं विना च पुरुषार्थो न लभ्यते स एवायं पुरातनोऽनादिगुरुपरंपरागतो योगोऽद्य संप्रदायविच्छेदकाले मयाऽतिस्निग्धेन ते तुभ्यं प्रकर्षेणोक्तः नत्वन्यस्मै कस्मैचित्। कस्मात्। भक्तोऽसि मे सखाचेति। इतिशब्दो हेतौ। यस्मात्त्वं मम भक्तः शरणागतत्वे सत्यत्यन्तप्रीतिमान् सखा च समानवयाः स्निग्धसहायोऽसि सर्वदा भवसि अतस्तुभ्यमुक्त इत्यर्थः। अन्यस्मै कुतो नोच्यते तत्राह—हि यस्मादेतज्ज्ञानमुत्तमं रहस्यं अतिगोप्यम् ॥ ३ ॥

५ भाष्योत्कर्षदीपिका।

दर्शिन इति पक्षान्तरप्रदर्शनं तदरुचिग्रस्तम्। तद्बीजं तु अभ्यर्हितस्य पूर्वनिपातादि। स योगो महता कालेनेह लोके नष्टः संप्रदायविच्छेदेनादर्शनं गतः। परान्शत्रून्कामादीन् तापयतीति परंतपः। दुर्बलानजितेन्द्रियान् प्राप्य नष्टं योगं मत्त उपलभ्य जितेन्द्रियस्त्वं पुनर्लोके स्थापयेति सूचयन्संबोधयति परंतपेति ॥ २ ॥ स आदित्यं प्रत्युक्त एव पुरातनोऽयं अध्यायद्वयनिरूपितस्ते तुभ्यं मया प्रोक्तो भक्तोऽसि मे सखा चासीति हेतोः। नन्वन्यस्मै कुतो नोच्यत इत्यत आह। रहस्यं गुह्यं हि यस्मादेतज्ज्ञा-

६ श्रीधरीव्याख्या।

लोके नष्टो विच्छिन्नः ॥ २ ॥ स एवायमिति। स एवायं योगोऽद्य विच्छिन्ने संप्रदाये सति पुनश्च मया ते तुभ्यमुक्तः। यतस्त्वं

७ अभिनवगुप्ताचार्यव्याख्या।

ज्ञानस्य दुर्लभतां गौरवं च प्रदर्शयति—भक्तोऽसि मे सखाचेति। त्वं भक्तो मत्परमः सखा च। चशब्देनान्वाचय उच्यते। तेन यथा भिक्षाटने भिक्षाणां प्राधान्यं गवानयने त्वप्राधान्यं एवं भक्तिरत्र गुरुंप्रति प्रधानं न सखित्वमपीति तात्पर्यार्थः ॥ १ ॥ २ ॥ ३ ॥ अर्जुनो

श्रीभगवानुवाच।

**बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप॥ ५॥**

१ श्रीमच्छांकरभाष्यम्।

भूतकस्यचिद्बुद्धिरिति परिहारार्थं चोद्यमिव कुर्वन्नर्जुन उवाच—अपरमिति। अपरमर्वाग् वसुदेवगृहे भवतो जन्म, परं पूर्वं सर्गादौ जन्मोत्पत्तिर्विवस्वत आदित्यस्य तत्कथमेतद्विजानीयामविरुद्धार्थतया यस्त्वमेवादौ प्रोक्तवानिमं योगं स एव त्वमिदानीं मह्यं प्रोक्तवानसीति॥ ४॥ या वासुदेवेऽनीश्वरासर्वज्ञाशङ्का मूर्खाणां तां परिहरन् श्रीभगवानुवाच यदर्थो ह्यर्जुनस्य प्रश्नः—बहूनीति। बहूनि मे

२ आनन्दगिरिव्याख्या।

परिहारार्थं भगवतो मनुष्यवदवस्थितस्यानीश्वरत्वमुपेत्य तद्वचने शङ्कितविप्रतिषेधस्येतिशेषः। भगवतो निजरूपमुपेत्य नेदं चोद्यं किंतु लीलाविग्रहं गृहीत्वेति वक्तुं चोद्यमिवेत्युक्तम्। एतच्छब्दार्थमेव स्फुटयति—**यस्त्वमिति**॥ ४॥ भगवत्यज्ञानान्मनुष्यत्वशङ्कां वारयितुं प्रतिवचनमवतारयति—**या वासुदेव इति**। अन्यथाप्रश्ने कथमाशङ्कान्तरं परिहर्तुं भगवद्वचनमित्याशङ्क्य प्रश्नप्रतिवचनयोरेकार्थत्वमाह—**यदर्थो हीति**। यस्य शङ्कितस्य विरोधस्य परिहारार्थो यस्य प्रश्नस्तमेव परिहारं वक्तुं भगवद्वचनमित्यर्थः। अतीतानेकजन्मवत्त्वं ममैव नासाधारणं किंतु सर्वप्राणिसाधारण-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

अप्रयताय न मा ब्रूया वीर्यवती तथा स्याम्' इति॥ ३॥ भगवद्देहस्य वसुदेवादुत्पत्तिं मन्वानोऽर्जुन उवाच—**अपरमिति**। अपरमर्वाक्कालिकं परं बहुकालिकं विजानीयाम्। यद्यपि शब्दादयमर्थो ज्ञातस्तथापि विरुद्धस्य वाक्यस्याबोधकत्वात्कथमेतद्विजानीयामित्युक्तम्। पदयोजना स्पष्टा॥ ४॥ स्वदेहस्याजत्वं साधयितुं स्वस्य सर्वज्ञत्वं तावदाह—**बहूनीति**। स्पष्टार्थः श्लोकः॥ ५॥ किं तर्हि योगिनां सर्वज्ञत्वप्रसिद्धेस्त्वं जातिस्मरो जीवोऽसीत्याश-

४ मधुसूदनीव्याख्या।

या भगवति वासुदेवे मनुष्यत्वेनासर्वज्ञत्वानित्यत्वाशङ्का मूर्खाणां तामपनेतुमनुवदन्नर्जुन आशङ्कते अपरमल्पकालीनमिदानींतनं वसुदेवगृहे भवतो जन्म शरीरग्रहणं विहीनं च मनुष्यत्वात्, परं बहुकालीनं सर्गादिभवं उत्कृष्टं च देवत्वात् विवस्वतो जन्म। अत्रात्मनो जन्माभावस्य प्राग्व्युत्पादितत्वाद्देहाभिप्रायेणैवार्जुनस्य प्रश्नः। अतः कथमेतद्विजानीयामतिविरुद्धार्थतया। एतच्छब्दार्थमेव विवृणोति—**त्वमादौ प्रोक्तवानिति**। त्वमिदानींतनो मनुष्योऽसर्वज्ञः सर्गादौ पूर्वतनाय सर्वज्ञायादित्याय प्रोक्तवानिति विरुद्धार्थमेतदिति भावः। अत्रायं निर्गलितोऽर्थः—एतद्देहावच्छिन्नस्य तव देहान्तरावच्छेदेन वा आदित्यं प्रत्युपदेष्टृत्वं एतद्देहेन वा। नाद्यः। जन्मान्तरानुभूतस्यासर्वज्ञेन स्मर्तुमशक्यत्वात्। अन्यथा ममापि जन्मान्तरानुभूतस्मरणप्रसङ्गः। तव मम च मनुष्यत्वेनासर्वज्ञत्वाविशेषात्। तदुक्तमभियुक्तैः 'जन्मान्तरानुभूतं च न स्मर्यते' इति। नापि द्वितीयः। सर्गादाविदानींतनस्य देहस्यासद्भावात्। तदेवं देहान्तरेण सर्गादौ सद्भावसंभवेऽपीदानीं तत्स्मरणानुपपत्तिः। अनेन देहेन स्मरणोपपत्तावपि सर्गादौ सद्भावानुपपत्तिरित्यसर्वज्ञत्वानित्यत्वाभ्यां द्वावर्जुनस्य पूर्वपक्षौ॥ ४॥ तत्र सर्वज्ञत्वेन प्रथमस्य परिहारं कथयति

५ भाष्योत्कर्षदीपिका।

नमुत्तमम्॥ ३॥ भगवति वासुदेवे मनुष्यवत् स्थिते याऽनीश्वरत्वासर्वज्ञत्वशङ्का मूर्खाणां तत्परिहाराय चोद्यमिव कुर्वन्नर्जुन उवाच। भवतो जन्मापरं अर्वाचीनं वसुदेवगृहे। विवस्वतो जन्म परं पूर्वं सर्गादौ। तत्तस्मादेतज्ज्ञानं त्वमेवादौ प्रोक्तवानिति कथं विजानीयाम्। यत्तु अपरमतिहीनं च मनुष्यत्वात् परमुत्कृष्टं च देवत्वात् इति, तत्तु त्वमादौ प्रोक्तवानिति वाक्यशेषविरोधादुपेक्ष्यम्। भाष्यस्योपलक्षणपरत्वेन तदविरोधेन वा ग्राह्यम्। आदित्यं प्रत्युपदेष्टा सर्वज्ञ ईश्वरस्त्वं तु तदन्यत्वादनीश्वरः। तत एवासर्वज्ञश्चेत्येवं तस्माद्विरुद्धमिदमहमादौ प्रोक्तवानिति॥ ४॥ मूर्खाणां शङ्कां परिहरन् श्रीभगवानुवाच। बहूनि मे तवान्यस्य च जन्मानि व्यतीतानि तानि सर्वाण्यहं शुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिर्वेद जानामि। त्वं तु न वेत्थ। धर्मा-

६ श्रीधरीव्याख्या।

मम भक्तोऽसि सखा चेति। अन्यस्मै मया नोच्यते। हि यस्मादिदमुत्तमं रहस्यम्॥ ३॥ भगवतो विवस्वन्तं प्रति योगोपदेशासंभवं पश्यन्नर्जुन उवाच—**अपरमिति**। अपरमर्वाचीनं तव जन्म, परं प्राक्कालीनं विवस्वतो जन्म, तस्मात्तवाधुनिकत्वाच्चिरंतनाय विवस्वते त्वमादौ योगं प्रोक्तवानित्येतत्कथमहं विजानीयां ज्ञातुं शक्नुयाम्॥ ४॥ इति पृष्टवन्तमर्जुनं रूपान्तरेणोपदिष्टवानित्यभिप्रायेणोत्तरं श्रीभगवानुवाच—**बहूनीति**। मम बहूनि जन्मानि तव च व्यतीतानि। तानि सर्वाण्यहं वेद जानामि, अलुप्तविद्याशक्तित्वात्। त्वं तु

१ मधुसूदनः

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**मम व्यतीतान्यतिक्रान्तानि जन्मानि तव च हेऽर्जुन, तान्यहं वेद जाने सर्वाणि । न त्वं वेत्थ न जानीषे । धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात् । अहं पुनर्नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहं हे परंतप ॥५॥ कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावेऽपि जन्मेत्युच्यते—अजोऽपीति । अजोऽपि जन्मरहितोऽपि संस्तथाऽव्ययात्माऽक्षीणज्ञानशक्तिस्वभावोऽपि संस्तथा भूतानां ब्रह्मादि-**

२ आनन्दगिरिव्याख्या ।

मित्याह—**तव चेति** । तानि प्रमाणाभावान्न प्रतिभान्तीत्याशङ्क्याह—**तानीति** । ईश्वरस्यानावृतज्ञानत्वादित्यर्थः । किमिति तर्हि तानि मम न प्रतीयन्ते तवावृतज्ञानत्वादित्याह—**न त्वमिति** । परान्परिकल्प्य तत्परिभवार्थं प्रवृत्तत्वात्तव ज्ञानावरणं विज्ञेयमित्याह—**परंतपेति** । अर्जुनस्य भगवता सहातीतानेकजन्मवत्त्वे तुल्येऽपि ज्ञानवैषम्ये हेतुमाह—**धर्मेति** । आदिशब्देन रागलोभादयो गृह्यन्ते । ईश्वरस्यातीतानागतवर्तमानसर्वार्थविषयज्ञानवत्त्वे हेतुमाह—**अहमिति** ॥ ५ ॥ ईश्वरस्य कारणाभावाजन्मैवायुक्तमतीतानेकजन्मवत्त्वं तु दूरोत्सारितमिति शङ्कते—**कथमिति** । वस्तुतो जन्माभावेऽपि मायावशाजन्म संभवतीत्युत्तरमाह—**उच्यत इति** । पारमार्थिकजन्मायोगे कारणं पूर्वार्धेनानूद्य प्रातिभासिकजन्मसंभवे कारणमाह—**प्रकृतिमिति** । प्रकृतिशब्दस्य स्वरूपविषयत्वं प्रत्यादेष्टुमात्ममाययेत्युक्तम् । वस्तुतो जन्माभावे कारणानुवादभागं विवृणोति—**अजोऽपीत्यादिना** । प्रातिभासिकजन्मसंभवे कारणकथनपर-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ङ्क्याह—**अज इति** । देहान्निष्कृष्टस्याजत्वाव्ययत्वे 'नत्वेवाहं जातु नासं' इत्यत्र साधिते, इह तु देहविशिष्टस्यैव ते

४ मधुसूदनीव्याख्या ।

श्रीभगवान्—जन्मानि लीलादेहग्रहणानि लोकदृष्ट्यभिप्रायेणादित्यस्योदयवन्मे मम बहूनि व्यतीतानि । तव चाज्ञानिनः कर्मार्जितानि देहग्रहणानि । तवचेत्युपलक्षणमितरेषामपि जीवानां, जीवैक्याभिप्रायेण वा । हे अर्जुन, श्लेषेण अर्जुनवृक्षनाम्ना संबोधयन्नावृतज्ञानत्वं सूचयति । तानि जन्मान्यहं सर्वज्ञः सर्वशक्तिरीश्वरो वेद जानामि । सर्वाणि मदीयानि त्वदीयान्यन्यदीयानि च । न त्वमज्ञो जीवस्तिरोभूतज्ञानशक्तिर्वेत्थ न जानासि स्वीयान्यपि किं पुनः परकीयाणि । हे परंतप, परं शत्रुं भेददृष्ट्या परिकल्प्य हन्तुं प्रवृत्तोऽसीति विपरीतदर्शित्वाद्भ्रान्तोऽसीति सूचयति । तदनेन संबोधनद्वयेनावरणविक्षेपौ द्वावप्यज्ञानधर्मौ दर्शितौ ॥ ५ ॥ नन्वतीतानेकजन्मवत्त्वमात्मनः स्मरसि चेत्तर्हि जातिस्मरो जीवस्त्वं परजन्मज्ञानमपि योगिनः सार्वात्म्याभिमानेन 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति न्यायेन संभवति । तथाचाह वामदेवो जीवोऽपि 'अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्रः' इत्यादि दाशतय्याम् । अतएव न मुख्यः सर्वज्ञस्त्वम् । तथाच कथमादित्यं सर्वज्ञमुपदिष्टवानस्यनीश्वरः सन् । नहि जीवस्य मुख्यं सार्वज्ञ्यं संभवति व्यष्ट्युपाधेः परिच्छिन्नत्वेन सर्वसंबन्धित्वाभावात् । समष्ट्युपाधेरपि विराजः स्थूलभूतोपाधित्वेन सूक्ष्मभूतपरिणामविषयं मायापरिणामविषयं च ज्ञानं न संभवति । एवं सूक्ष्मभूतोपाधेरपि हिरण्यगर्भस्य तत्कारणमायापरिणामाकाशादिसर्गक्रमादिविषयज्ञानाभावः सिद्ध एव । तस्मादीश्वर एव कारणोपाधित्वादतीतानागतवर्तमानसर्वार्थविषयज्ञानवान्मुख्यः सर्वज्ञः । अतीतानागतवर्तमानविषयं मायावृत्तित्रयमेकैव वा सर्वविषया मायावृत्तिरित्यन्यत् । तस्य च नित्येश्वरस्य सर्वज्ञस्य धर्माधर्माद्यभावेन जन्मैवानुपपन्नम् । अतीतानेकजन्मवत्त्वं तु दूरोत्सारितमेव । तथाच जीवत्वे सार्वज्ञ्यानुपपत्तिरीश्वरत्वे च देहग्रहणानुपपत्तिरिति शङ्काद्वयं परिहरन्नित्यत्वपक्षस्यापि परिहारमाह—अपूर्वदेहेन्द्रियादिग्रहणं जन्म, पूर्वगृहीतदेहेन्द्रियादिवियोगो व्ययः । यदुभयं तार्किकैः प्रेत्यभाव इत्युच्यते । तदुक्तम् 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' इति । तदुभयं च धर्माधर्मवशाद्भवति । धर्माधर्मवशत्वं चाज्ञस्य जीवस्य देहाभिमानिनः कर्माधिकारित्वाद्भवति । तत्र यदुच्यते सर्वज्ञेश्वरस्य सर्वकारणस्येदृग्देहग्रहणं नोपपद्यत इति तत्तथैव कथम् । यदि तस्य शरीरं स्थूलभूतकार्यं स्यात्तदा व्यष्टिरूपत्वे जाग्रदवस्थाऽस्मदादितुल्यत्वं समष्टिरूपत्वे च विराड्जीवत्वम् । तस्य तदुपाधित्वात् । अथ सूक्ष्मभूतकार्यं तदा व्यष्टिरूपत्वे स्वप्नावस्थाऽस्मदादितुल्यत्वं समष्टिरूपत्वे च हिरण्यगर्भजीवत्वम् । तस्य तदुपाधित्वात् । तथाच भौतिकं शरीरं जीवानाविष्टं परमेश्वरस्य न संभवत्येवेति सिद्धम् । नच जीवाविष्ट एव तादृशे शरीरे तस्य भूतावेशवत्प्रवेश इति वाच्यम् । तच्छरीरावच्छेदेन तज्जीवस्य भोगाभ्युपगमेऽन्तर्यामिरूपेण सर्वशरीरप्रवेशस्य विद्यमानत्वेन शरीरविशेषाभ्युपगमवैयर्थ्यात् ।

५ भाष्योत्कर्षदीपिका ।

धर्मादिप्रतिबद्धज्ञानशक्तित्वान्न जानासि । इत्येतत्सूचनार्थमेव संबोधनद्वयम् । हे अर्जुन शुद्धधर्मवत्त्वाच्छुद्ध, हे परंतप, परमात्मानमन्यान्वा अधर्मेण तापयतीति तथेति विवक्षणात् ॥ ५ ॥ ईश्वरस्य तव धर्माधर्माद्यभावाजन्मैवायुक्तम् । व्यतीतानेकजन्म-

६ श्रीधरीव्याख्या ।

न जानासि, अविद्यावृतत्वात् ॥ ५ ॥ नन्वनादेस्तव कुतो जन्म, अविनाशिनश्च कथं पुनर्जन्म येन बहूनि मे व्यतीतानीत्युच्यते, ईश्वरस्य

१ श्रीमच्छांकरभाष्यम्।

स्तम्बपर्यन्तानामीश्वर ईशनशीलोऽपि सन् प्रकृतिं स्वां मम वैष्णवीं मायां त्रिगुणात्मिकां यस्या

२ आनन्दगिरिव्याख्या।

मुत्तरार्धं विभजते—**प्रकृतिमित्यादिना**। प्रकृतिशब्दस्य स्वरूपशब्दपर्यायत्वं वारयति—**मायामिति**। तस्याः स्वातन्त्र्यं निराकृत्य भगवदधीनत्वमाह—**ममेति**। तस्याश्चाधिकरणद्वारेणावच्छिन्नत्वं सूचयति—**वैष्णवीमिति**। मायाशब्दस्यापि प्रज्ञानामसु पाठाद्विज्ञानशक्तिविषयत्वमाशङ्क्याह—**त्रिगुणात्मिकामिति**। तस्याः कार्यलिङ्गकमनुमानं सूचयति—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

उच्येते। ईश्वरोऽपीत्यनेन देहान्निष्कृष्टस्यास्मदादेरपीश्वरत्वं 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इत्यादिश्रुतिप्रसिद्धमतो देहविशिष्टस्यैवाजत्वनित्यत्वे दृढीक्रियेतेऽन्यथानीश्वरत्वप्रसङ्गात्। नह्यादित्यान्तर्यामिणः परमेश्वरस्य हिरण्यश्मश्रुत्वादिविशिष्टो देहो जन्मव्ययवानिति वक्तुं शक्यम्। अकर्मजत्वात्। कर्मफलस्य हि परा काष्ठा हैरण्यगर्भशरीरप्राप्तिः। नच 'पुरुषो ह वै नारायणोऽकामयत अत्यतिष्ठेयं सर्वाणि भूतानि अहमेवेदं सर्वं स्यादिति स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्' इत्यादिना शतपथे नारायणाख्यस्य परमात्मनः 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्' इति, 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति च पुरुषसूक्तप्रतिपाद्यस्य सर्वाणि भूतान्यतिक्रम्य स्थितस्येश्वरस्यापि शरीरं पञ्चरात्राख्यकर्मविशेषफलमिति श्रूयत इति वाच्यम्। तत्र नारायण-

४ मधुसूदनीव्याख्या।

भोगाभावे च जीवशरीरत्वानुपपत्तेः। अतो न भौतिकं शरीरमीश्वरस्येति पूर्वार्धेनाङ्गीकरोति—**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्निति**। अजोऽपि सन्नित्यपूर्वदेहग्रहणं, अव्ययात्मापि सन्निति पूर्वदेहविच्छेदं, भूतानां भवनधर्माणां सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानामीश्वरोऽपि सन्निति धर्माधर्मवशत्वं निवारयति। कथं तर्हि देहग्रहणमित्युत्तरार्धेनाह—प्रकृतिं स्वामधिष्ठाय संभवामि प्रकृतिं मायाख्यां विचित्रानेकशक्तिमघटमानघटनापटीयसीं स्वां स्वोपाधिभूतामधिष्ठाय चिदाभासेन वशीकृत्य संभवामि। तत्परिणामविशेषैरेव देहवानिव जातइव च भवामि। अनादिमायैव मदुपाधिभूता यावत्कालस्थायित्वेन च नित्या जगत्कारणत्वसंपादिका मदिच्छयैव प्रवर्तमाना विशुद्धसत्त्वमयत्वेन मम मूर्तिः। तद्विशिष्टस्य चाजत्वमव्ययत्वमीश्वरत्वं चोपपन्नम्। अतोऽनेन नित्येनैव देहेन विवस्वन्तं च त्वां च प्रति इमं योगमुपदिष्टवानहमित्युपपन्नम्। तथाच श्रुतिः 'आकाशशरीरं ब्रह्मेति आकाशोऽत्राव्याकृतं आकाशएव तदोतं च प्रोतं च' इत्यादौ तथा दर्शनात् 'आकाशस्तल्लिङ्गात्' इति न्यायाच। ['आकाश इति होवाच' इत्याकाशशब्दः परमात्मा। कुतः। तस्य परमात्मनो लिङ्गं सर्वाणि भूतानीत्यादि तस्मात्।] तर्हि भौतिकविग्रहाभावात्तद्धर्ममनुष्यत्वादिप्रतीतिः कथमिति चेत् तत्राह—**आत्ममाययेति**। मन्माययैव मयि मनुष्यत्वादि-

५ भाष्योत्कर्षदीपिका।

वत्त्वं तु दूरनिरस्तमित्याशङ्क्य वस्तुतो जन्माभावेऽपि स्वमायया जन्म संभवतीत्याह—**अजोऽपीति**। अजो जन्मरहितोऽपि सन्नव्ययात्माऽक्षीणज्ञानशक्तिस्वभावोऽपि सन् कदापि मम विच्छेदाभावात् तथा भूतानां ब्रह्मादिस्तम्बपर्यन्तानामीश्वर ईशनशीलोऽपि सन् प्रकृतिं मम वैष्णवीं त्रिगुणात्मिकां मायां यस्या वशे सर्वं जगद्वर्तते यया मोहितः सन् स्वमात्मानं वासुदेवं न जानाति तामधिष्ठाय वशीकृत्य संभवामि देहवानिव जात इव। आत्मनः स्वस्य मायया मन्माययैव मयि विग्रहवत्त्वादिप्रतीतिः साधकानुग्रहार्थं न परमार्थं इति भावः। तदुक्तं मोक्षधर्मे 'एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते। इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः॥' नश्येयमदृश्यो भवेयमित्यर्थः। 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं नतु मां द्रष्टुमर्हसि॥' इति। सर्वभूतगुणैर्युक्तं कारणोपाधिकमित्यर्थः। अत्र केचित् 'नित्यो यः कारणोपाधिर्मायाख्योऽनेकशक्तिमान्। सएव भगवद्देह इति भाष्यकृतां मतम्' इत्याचार्यानुसारिव्याख्यानानन्तरं तन्मतं संग्रहेणोक्त्वा मतान्तरं प्रदर्शयन्ति। अन्येतु परमेश्वरे देहदेहिभावं न मन्यन्ते। किंतु यश्च नित्यो विभुः सच्चिदानन्दघनो भगवान्वासुदेवः परिपूर्णो निर्गुणः परमात्मा जन्मविनाशरहितः सर्वभासकः सर्वकारणत्वेन सर्वभूतेश्वरोऽपि सन् अहं प्रकृतिं स्वभावं सच्चिदानन्दघनैकरसम्। मायां व्यावर्तयति—**स्वामिति**। निजरूपामित्यर्थः। 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति' इति श्रुतेः स्वस्वरूपमधिष्ठाय स्वरूपावस्थित एव सन् संभवामि देहदेहिभावमन्तरेणैव देहिवद्व्यवहरामि। कथं तर्ह्यदेहे सच्चिदानन्दघने देहित्वप्रतीतिरत आह—**आत्ममाययेति**। निर्गुणे शुद्धे सच्चिदानन्दरसघने मयि भगवति वासुदेवे देहदेहिभावशून्ये तद्रूपेण प्रतीतिर्मायामात्रमित्यर्थः। तदुक्तं 'कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्। जगद्धिताय सोऽप्यत्र देहीवाभाति मायया॥' इति। 'अहोभाग्यमहोभाग्यं नन्दगोपव्रजौकसाम्।

६ श्रीधरीव्याख्या।

तव पुण्यपापविहीनस्य कथं जीववज्जन्मेत्यत आह—**अजोऽपीति**। सत्यमेवं तथाप्यजोऽपि सन्नहं तथाव्ययात्माप्यनश्वरस्वभावोऽपि

१ मधुसूदनः।

१ श्रीमच्छांकरभाष्यम् ।

**वशे सर्वं जगद्वर्तते यया मोहितं सत् स्वमात्मानं वासुदेवं न जानाति तां प्रकृतिं स्वामधिष्ठाय**

२ आनन्दगिरिव्याख्या ।

**यस्या इति ।** जगतो मायावशवर्तित्वमेव स्फुटयति—**ययेति ।** यथा लोके कश्चिज्जातो देहवानालक्ष्यते एवमहमपि मायामाश्रित्य तया स्ववशया संभवामि जन्मव्यवहारमनुभवामि तेन मायामयमीश्वरस्य जन्मेत्याह—**तां प्रकृतिमित्यादिना ।**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शब्देन हिरण्यगर्भस्यैव विवक्षितत्वात् । नहि परमेश्वरस्य पूर्णकामस्य सर्वानतिक्रम्य स्थितस्य पुनरत्यतिष्ठेयं सर्वाणि भूतानीति कामना भवति । ननु परमेश्वरेऽपि कामना दृष्टा 'सोऽकामयत बहु स्यां प्रजायेयेति' इतिचेच्छ्लाघनीयप्रज्ञो देवानांप्रियः, यत 'आप्तकामस्य का स्पृहा' इति श्रुतेः 'लोकवत्तु लीलाकैवल्यम्' इति न्यायाच्च निस्पृहस्य लीलयैव ब्रह्माण्डकोटीः सृजतो भगवतो राजगोपालस्य कर्मकिंकरेण कर्मणा सार्वात्म्यं प्रार्थयता साम्यमापादयति । तस्मान्न कर्मफलं भगवतः शरीरम् । अतएव न भौतिकम् । विराट्सूत्रात्मातिरिक्तस्य भौतिकस्याभावात् । तस्माद्युक्तमजोऽपि सन्निति । ननु तर्हि भगवच्छरीरस्य किमुपादानम् । अविद्येतिचेन्न । परमेश्वरे तदभावात् । जीवाविद्याचेन्न । शुक्तिरजतादेरिव तुच्छत्वापत्तेः । चिन्मात्रं चेन्न । चितः साकारत्वायोगात् । तथात्वे वा तस्यातीन्द्रियत्वापत्तिः । तस्मा-

४ मधुसूदनीव्याख्या ।

प्रतीतिर्लोकानुग्रहाय न वस्तुवृत्त्येतिभावः । तथाचोक्तं मोक्षधर्मे 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नतु मां द्रष्टुमर्हसि ॥' इति । सर्वभूतगुणैर्युक्तं कारणोपाधिं मां चर्मचक्षुषा द्रष्टुं नार्हसीत्यर्थः । उक्तंच भगवता भाष्यकारेण । सच भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां प्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव, जातइव च लोकानुग्रहं कुर्वँल्लक्ष्यते स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षयेति । व्याख्यातृभिश्चोक्तं स्वेच्छाविनिर्मितेन मायामयेन दिव्येन रूपेण संबभूवेति । 'नित्यो यः कारणोपाधिर्मायाख्योऽनेकशक्तिमान् । सएव भगवद्देह इति भाष्यकृतां मतम् ॥' अन्येतु परमेश्वरे देहदेहिभावं न मन्यन्ते किंतु यश्च नित्यो विभुः सच्चिदानन्दघनो भगवान्वासुदेवः परिपूर्णो निर्गुणः परमात्मा स एव तद्विग्रहो नान्यः कश्चिद्भौतिको मायिको वेति अस्मिन्पक्षे योजना । 'आकाशवत्सर्वगतश्च नित्यः', 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इत्यादिश्रुतेः । 'असंभवस्तु सतोऽनुपपत्तेः' [ तुशब्दो ब्रह्मण उत्पत्तिशङ्कानिराकरणार्थः । सतो ब्रह्मण उत्पत्तेरसंभवः । कुतः 'नचास्य कश्चिज्जनिता' इति श्रुतेः । युक्तितश्च तत्कारणानुपपत्तेः ] । 'नात्माऽश्रुतेर्नित्य-

५ भाष्योत्कर्षदीपिका ।

यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्' इतिचेति । तत्रेदमवधेयम्—परमेश्वरे देहदेहिभावो नास्तीत्युक्तिर्माययां देहदेहिभावो न वस्तुत इत्यङ्गीकुर्वतां भाष्यकृतां मतेन प्रतिकूला । यत्तु नित्य इत्यादि तत्र यो निर्गुणः 'अथात आदेशो नेतिनेति', 'नेदं यदिदमुपासते', 'एकमेवाद्वितीयं', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'अस्थूलमनण्वह्रस्वमदीर्घं', 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा', 'यो वै भूमा तत्सुखं', 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह', 'तदेतदपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः', 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्', 'अपाणिपादम्' इत्यादिश्रुतितात्पर्यसिद्धः परमात्मा सएव तद्विग्रहः । स च विग्रहः किं साकार उत निराकारः । आद्ये निर्गुणस्य परिणाम उत विवर्तः । नाद्यः । निर्विकारस्य विकाररूपपरिणामायोगात् । अन्यथा तस्यानित्यत्वं स्यात् । द्वितीये मायाया विवर्तसाधिकाया आवश्यकत्वेन न मायिक इत्युक्तिरनुपपन्ना । न द्वितीयः । सर्वाकारशून्यः पुनश्च विशेषाकारेण गृह्यत इति विग्रह इति वदतो व्याघातात् । किंच स विग्रहः किं हस्तपादादिमान् उत तद्रहितः । आद्ये हस्तादयोऽपि किं दृश्या उतादृश्याः । आद्ये विग्रहस्य भूतकार्यत्वाभावान्मायिकत्वमवश्यमभ्युपेयम् । न द्वितीयः । भक्तानां तद्दर्शनायनापत्तेः । नन्वदृश्या अपि मायया दृश्या इति चेत्तर्हि किं परमाण्वादिवददृश्या उत ब्रह्मरूपेण । आद्ये योगिनामक्षगोचराः स्युः । द्वितीये हस्तादयोऽवयवास्तद्वान्विग्रह इति कृतमुक्तिमात्रेण स्वशिष्यबन्धनेन । न द्वितीयः । तद्रहितो विग्रहश्चेति व्याघातात् । एतेन एतत्पक्षानुसारेण क्लिष्टकल्पनया श्लोकयोजनापि प्रत्युक्ता । उदाहृतवचनद्वयमपि भाष्यकृतामतएव सम्यगुपपद्यते । तस्मात्सच्चिदानन्दस्वरूपः मायावच्छिन्नः 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति', 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये' 'जन्माद्यस्य यतः' इत्यादिश्रुतिस्मृतिन्यायैर्जगत्कारणत्वेन प्रतिपादितः शुद्धबुद्धमुक्तस्वभावः अशरीरी परमात्मा सर्वेश्वरो मायानियन्ता साधकानुग्रहार्थं स्वमायया लीलाविग्रहं गृहीत्वा जात इव विग्रहवानिव भातीति श्रुतिस्मृतीतिहासपुराणाद्यनुगृहीतं सर्वज्ञानां भाष्यकृतां मतं शरणीकरणीयमिति दिक् । अन्येतु न कर्मफलं भगवतः शरीरमतएव न भौतिकम् । तस्माद्युक्तमजोऽपि

६ श्रीधरीव्याख्या ।

सन्, तथा ईश्वरोऽपि कर्मपारतन्त्र्यरहितोऽपि सन्स्वमायया संभवामि सम्यगप्रच्युतज्ञानबलवीर्यादिशक्त्यैव भवामि । ननु तथापि

१ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

**वशीकृत्य संभवामि देहवानिव भवामि जात इवात्ममाययात्मनो मायया न परमार्थतो लोकवत्**

२ आनन्दगिरिव्याख्या ।

**संभवामीत्युक्तमेव विभजते—देहवानिति । अस्मदादेरिव तवापि परमार्थत्वाभिमानो जन्मादिविषये स्यादित्या-शङ्क्य प्रागुक्तस्वरूपपरिज्ञानवत्त्वादीश्वरस्य मैवमित्याह—न परमार्थत इति । आवृतज्ञानवतो लोकस्य जन्मादिविषये**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्किमालम्बो भगवद्देहो देवकीगर्भप्रवेशजननबाल्यकौमारपौगण्डयौवनादिप्रतीतिविषय इति चेच्छृणु । प्रकृतिं स्वाम-धिष्ठाय संभवाम्यात्ममाययेति । अयमर्थः—जीवात्मानो ह्यनात्मभूतां प्रकृतिं तेजोबन्नात्मिकां पञ्चभूतात्मिकां वाधिष्ठाय संभवन्ति जन्मादींल्लभन्ते, अहं तु स्वां प्रत्यगनन्यां प्रकृतिं प्रत्यक्चैतन्यमेवेत्यर्थः । तदेवाधिष्ठाय नतूपादा-नान्तरम् । आत्ममायया स्वीयमायया संभवामि । यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युतस्वभावोऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वसदृशमेव सूत्रमार्गेण गगनमारोहन्तं सृजति, एवमहं कूटस्थचिन्मात्रोऽग्राह्यः स्वमायया चिन्मयमात्मनः शरीरं सृजामि तस्य बाल्याद्यवस्थाश्च सूत्रारोहणवद्दर्श-यामि । एतावांस्तु विशेषः—लौकिकमायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति, अहं तु तामनुपसंह-रन् स्वविग्रहमपि नोपसंहरामीति । एवं हि सति हिरण्यश्मश्रुत्वादिलक्षणविग्रहयोगिनश्चैतन्यस्य 'अन्तस्तद्धर्मोप-देशात्' इत्यादिन्यायसिद्धं वियदाद्युपादानत्वलक्षणं सर्वेश्वरत्वं युज्यते नान्यथेति । तस्मात्सिद्धं परमेश्वरस्य मायामयं शरीरं नित्यमिति एकेनैव देहेन विवस्वन्तमुपदिश्य त्वामप्युपदिशामीति । अन्यत्रापि 'नित्यैव सा जगन्मूर्तिः' इति सावधारणं प्रतिज्ञायते 'देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा । उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते'

४ मधुसूदनीव्याख्या ।

त्वाच्च ताभ्यः' इत्यादिन्यायाच्च । नैवायमात्मा आकाशादिवज्जायते । कुतः । तद्वदस्योत्पत्तेरश्रुतेः । बुद्ध्याद्युत्पत्तिवदस्त्वनुमेयमि-त्यत आह । नित्यत्वाच्चशब्दादजन्यत्वादिभ्यश्च । नित्यत्वादिकमेव कुत इत्यत आह । ताभ्यः ताः श्रुतयः 'न जीवो म्रियते', 'स वा एष महानज आत्मा' इत्याद्याः वस्तुगत्या जन्मविनाशरहितः सर्वभासकः सर्वकारणमायाधिष्ठानत्वेन सर्वभूतेश्वरोऽपि सन्नहं प्रकृतिं स्वभावं सच्चिदानन्दघनैकरसम् । मायां व्यावर्तयति—निजस्वरूपमित्यर्थः । 'स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि' इति श्रुतेः । स्वस्वरूपमधिष्ठाय स्वरूपावस्थित एव सन् संभवामि देहदेहिभावमन्तरेणैव देहिवद्व्यवहरामि । कथं तर्ह्य-देहे सच्चिदानन्दघने देहत्वप्रतीतिरत आह—निर्गुणे शुद्धे सच्चिदानन्दरसघने मयि भगवति वासुदेवे देहदेहिभावशून्ये तद्रूपेण प्रतीतिर्मायामात्रमित्यर्थः । तदुक्तं 'कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् । जगद्धिताय सोऽप्यत्र देहीवाभाति मायया ॥' इति । 'अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥'

५ भाष्योत्कर्षदीपिका ।

सन्निति । ननु तर्हि भगवच्छरीरस्य किमुपादानम् । अविद्येतिचेन्न । परमेश्वरे तदभावात् । जीवाविद्येति चेन्न । शुक्तिरजतादि-वत्तुच्छत्वापत्तेः । चिन्मात्रं चेन्न । चितः साकारत्वायोगात् । तथात्वे वा तस्यातीन्द्रियत्वापत्तिः । तस्मात्किमालम्बनोऽयं भगव-देहो देवकीगर्भप्रवेशजननबाल्यकौमारपौगण्डयौवनादिप्रतीतिविषय इतिचेत् शृणु । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममाययेति । अयमर्थः—जीवात्मानो हि अनात्मभूतां प्रकृतिं तेजोबन्नात्मिकां पञ्चभूतात्मिकां वाऽधिष्ठाय संभवन्ति जन्मादींल्लभन्ते । अहं तु स्वां प्रत्यगनन्यां प्रकृतिं प्रत्यक्चैतन्यमित्यर्थः । तदेवाधिष्ठाय नतूपादानान्तरम् । आत्ममायया स्वीयमायया संभवामि । यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युतस्वभावोऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वस-दृशमेव सूत्रमार्गेण गगनमारोहन्तं सृजति एवमहं कूटस्थचिन्मात्रोऽग्राह्यः स्वमायया चिन्मयमात्मनः शरीरं सृजामि तस्य बालाद्यवस्थाश्च सूत्रारोहणवद्दर्शयामीति । एतावांस्तु विशेषः—लौकिकमायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति, अहं तु तामनुपसंहरन्स्वविग्रहमपि नोपसंहरामीति । एवंहि सति हिरण्यश्मश्रुत्वादिलक्षणविग्रहयोगिनश्चेतनस्य 'अन्तस्तद्धर्मो-पदेशात्' इत्यादिन्यायसिद्धं वियदाद्युपादानलक्षणं सर्वेश्वरत्वं युज्यते नान्यथेति । तस्मात्सिद्धं परमेश्वरस्य मायामयं शरीरं नित्य-मिति । एकेनैव हिरण्यश्मश्रुत्वादिलक्षणेन देहेन विवस्वन्तमुपदिश्य त्वामुपदिशामीत्यादिवर्णयन्ति । अत्रेदं वक्तव्यम्—नियम्य-देहातिरिक्तनियामकदेहाभावादेकेनैवेत्यादि नोपपद्यते । किंच हिरण्यश्मश्रुत्वादिविशिष्ट आदित्यान्तर्यामिदेह एव यदि कृष्णादिदेहः स्यात्तर्हि तथैव प्रतीयेत नतु मेघश्यामत्वादिलक्षणः । ननु मायया तथेति चेद्वरं परमेश्वरस्याशरीरस्यैव साधकानु-ग्रहायादित्यान्तर्यामिरूपेण कृष्णादिदेहात्मना च माययावस्थानवर्णनम्, कृष्णादिविग्रहाणां परंपरया मायिकत्वकल्पनाया भाष्य-

६ श्रीधरीव्याख्या ।

षोडशकलात्मकलिङ्गदेहशून्यस्य तव कुतो जन्मेत्यत उक्तम् । स्वां शुद्धसत्त्वात्मिकां प्रकृतिमधिष्ठाय स्वीकृत्य विशुद्धोर्जितसत्त्व-

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**॥ ६ ॥ तच्च जन्म कदा किमर्थं चेत्युच्यते—यदेति । यदा यदा हि धर्मस्य ग्लानिर्हानिर्वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति भारत, अभ्युत्थानमुद्भवोऽधर्मस्य तदा तदात्मानं**

२ आनन्दगिरिव्याख्या ।

परमार्थत्वाभिमानः संभवतीत्याह—**लोकवदिति** ॥ ६ ॥ यदीश्वरस्य मायानिबन्धनं जन्मेत्युक्तं तस्य प्रश्नपूर्वकं कालं कथयति—**तच्चेत्यादिना** । चातुर्वर्ण्ये चातुराश्रम्ये च यथावदनुष्ठीयमाने नास्ति धर्महानिरिति मन्वानो विशिनष्टि—**वर्णेति** । वर्णैराश्रमैस्तदाचारैश्च लक्ष्यते ज्ञायते धर्मस्तस्येति यावत् । धर्महानौ समस्तपुरुषार्थभङ्गो भवतीत्यभिप्रेत्याह—**प्राणिनामिति** । नच यथोक्तस्य धर्मस्य हानिं सोढुं शक्तो भवानित्याह—**भारतेति** । न केवलं प्राणिनां धर्महानिरेव भगवतो मायाविग्रहस्य परिग्रहे हेतुरपि तु तेषामधर्मप्रवृत्तिरपीत्याह—**अभ्युत्थानमिति** । यदा यदेति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इति । नित्याया अप्याविर्भावापेक्षया सूर्यस्येव बाल्यादिकमुत्पत्त्याद्युपगम्यते । भाष्ये तु स्वां प्रकृतिं वैष्णवीं त्रिगुणात्मिकां मायामधिष्ठाय वशीकृत्य आत्ममायया संभवामि देहवान् जात इवात्मनो मायया न परमार्थतो लोकवदिति व्याख्यातम् ॥ ६ ॥ कदा संभवसीत्यपेक्षायामाह—**यदेति** । ग्लानिर्ह्रासः । अभ्युत्थानं वृद्धिः ॥ ७ ॥ किमर्थ-

४ मधुसूदनीव्याख्या ।

इतिच । केचित्तु नित्यस्य निरवयवस्य निर्विकारस्यापि परमानन्दस्यावयवावयविभावं वास्तवमेवेच्छन्ति ते 'निर्युक्तिकं ब्रुवाणस्तु नास्माभिर्विनिवार्यते' इति न्यायेन नापवाद्याः । यदि संभवेत्तथैवास्तु किमतिपल्लवितेनेत्युपरम्यते ॥ ६ ॥ एवं सच्चिदानन्दघनस्य तव कदा किमर्थं वा देहिवद्व्यवहार इति तत्रोच्यते—धर्मस्य वेदविहितस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य प्रवृत्तिनिवृत्तिलक्षणस्य वर्णाश्रमतदाचारव्यंग्यस्य यदा यदा ग्लानिर्हानिर्भवति हे भारत भरतवंशोद्भवत्वेन भा ज्ञानं तत्र रतत्वेन वा, त्वं न धर्महानिं सोढुं शक्नोषीति संबोधनार्थः । एवं यदा यदाभ्युत्थानमुद्भवोऽधर्मस्य वेदनिषिद्धस्य नानाविधदुःखसाधनस्य धर्मविरोधिनः तदा तदात्मानं देहं सृजामि नित्यसिद्धमेव सृष्टमेव दर्शयामि मायया ॥ ७ ॥ तत्किं धर्मस्य

५ भाष्योत्कर्षदीपिका ।

विरुद्धाया हिरण्यश्मश्रुत्वादिविशिष्टस्यापि सविशेषत्वेन मायिकत्वात् । यदपि यथा कश्चिदित्यादि तदपि न । भगवता वासुदेवेनैवादौ चतुर्भुजं विग्रहं प्रदर्श्य पुनर्द्विभुजं रूपं प्रदर्शितम् । तदपि तिरोधाय पुनस्तदपि प्रकटितमिति प्रसिद्धेः । अन्यथा परमेश्वरदेहानां मोहिन्यादिरूपाणामनन्तानां युगपत्प्रतीत्यापत्तेः । तस्मादीश्वरो भक्तार्थं तत्तद्विग्रहमाविर्भावयति तिरोभावयति चेत्यवश्यमभ्युपेयम् । एतेनाहमित्याद्यपि प्रत्युक्तम् । अजोऽपीत्यादिविशेषणैर्भाष्योक्तव्याख्यानेन च जीवाद्वैलक्षण्यस्य सम्यक्प्रतीतेः । क्लिष्टाप्रसिद्धकल्पनाया भाष्यविरुद्धाया अनौचित्यात् । अतएवेश्वरदेहाभिप्रायेणैवायमर्जुनस्य प्रश्न इति पूर्वोक्तिं प्रत्युक्तम् । परमात्मनो वास्तवदेहस्याभावात् । तस्मात्त्वमपि कश्चिदसर्वज्ञोऽनीश्वरो जीवएव तस्य तवादित्वं प्रत्युपदेष्टृत्वं विरुद्धमिति मूर्खाणामभिप्रायेणार्जुनस्य शङ्काऽहं जीववद्धर्माधर्मादिपारतन्त्र्याभावादजोऽव्ययात्मा भूतानामीश्वर एतादृशोऽपि सन् प्रकृतिं स्वामधिष्ठाय स्वमायया संभवामीत्यनेन योऽहमीश्वरः सर्वज्ञः सर्गादावुपदेशाय योग्यं विग्रहमुपादाय सूर्यं प्रति योगमुक्तवान् सएवाहमिदानीमुक्तवानित्युत्तरमित्यलं विस्तरेण ॥ ६ ॥ एवं सर्वज्ञः सर्वेश्वरोऽशरीरी त्वं कदा किमर्थं देहवानिव जात इव प्रतीयस इत्यत आह—**यदेति** । ग्लानिर्हानिः । अभ्युत्थानं वृद्धिः । भरतवंशोद्भवत्वेन धर्महानिं कर्तुमयोग्योऽसीति सूचयन्नाह—**भारतेति** । त्वमपि धर्मसंस्थापनायै भरतवंशेऽवतीर्णोऽसीति गूढाभिप्रायेण वा संबोधयति—भारतेति । मायया आत्मानं स्वं सृजामि जन्मवन्तमिव प्रदर्शयामि । आत्मानं देहं सृजामि नित्यसिद्धमेव सृष्टमिव प्रदर्शयामीति केचित्[1] । तन्न । परमेश्वरस्य देहः किं तस्मादन्य उतानन्यः । नाद्यः । तस्यासत्त्वाद्यापत्त्या सच्चिदादिरूपत्वस्वीकारविरोधात् । द्वितीयेऽपि स देहः किं परिच्छिन्न उतापरिच्छिन्नः । आद्ये ईश्वरस्य नित्यमेव परिच्छिन्नत्वं स्यात् । तथाच देहस्य नित्यसिद्धत्वं वदद्भिः परमेश्वरस्यासत्त्वसंपादनेन मूलोच्छेद एव संपादितः । न द्वितीयः । अपरिच्छिन्नः पुनरवयवसमूहः परिमिताकारो देह इति वदतो व्याघातात्

६ श्रीधरीव्याख्या ।

मूर्त्या स्वेच्छयावतरामीत्यर्थः ॥ ६ ॥ कदा संभवसीत्यपेक्षायामाह—**यदा यदेति** । धर्मस्य ग्लानिर्हानिः । अधर्मस्याभ्युत्थानमाधि-

७ अभिनवगुप्ताचार्यव्याख्या ।

भगवत्स्वरूपं जानन्नपि लोके स्फुटीकर्तुं पृच्छति—अपरमिति ॥ ४ ॥ बहूनि मे व्यतीतानीति । अजोऽपीति । यदायदा । परित्राणाय । जन्मकर्मेति । भगवान्किल पूर्णषाड्गुण्यत्वाच्छरीरसंपर्कमात्ररहितोऽपि स्थितिकारित्वात्कारुणिकतयात्मांशं सृजति । आत्मा पूर्णषाड्गुण्य-

1 मधुसूदनः ।

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥ ८ ॥**
**जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सृजाम्यहं मायया ॥ ७ ॥ किमर्थं—परित्राणायेति । परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां, विनाशाय च दुष्कृतां पापकारिणाम् । किंच धर्मसंस्थापनार्थाय धर्मस्य सम्यक्स्थापनं तदर्थं संभवामि युगे युगे प्रतियुगम् ॥ ८ ॥ तत्—जन्मेति । जन्म मायारूपं, कर्म च साधुपरित्राणादि, मे मम दिव्यमप्राकृतमैश्वरमेवं यथोक्तं यो वेत्ति तत्त्वतस्तत्त्वेन यथावत्त्यक्त्वा देहमिमं पुनर्जन्म पुनरुत्पत्तिं

२ आनन्दगिरिव्याख्या ।

पूर्वेण संबन्धः ॥ ७ ॥ यथोक्ते काले कृतकृत्यस्य भगवतो मायाकृते जन्मनि प्रश्नपूर्वकं प्रयोजनमाह—**किमर्थमित्यादिना** । यथा साधूनां रक्षणमसाधूनां निग्रहश्च भगवदवतारफलं तथा फलान्तरमपि तस्यास्तीत्याह—**किंचेति** । धर्मे हि स्थापिते जगदेव स्थापितं भवत्यन्यथा भिन्नमर्यादं जगदसंगतत्वमापद्येतेत्यर्थः ॥ ८ ॥ मायामयमीश्वरस्य जन्म न वास्तवं तस्यैव च जगत्परिपालनं कर्म नान्यस्येति जानतः श्रेयोवाप्तिं दर्शयन् विपक्षे प्रत्यवायं सूचयति—**तज्जन्मेत्यादिना** । यथोक्तं मायामयं कल्पितमिति यावत्, वेदनस्य यथावत्त्वं वेद्यस्य जन्मादेरुक्तरूपानतिवर्तित्वम् । यदि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मात्मानं मायया सृजसीत्यत आह—**परित्राणायेति** । दुष्कृतां दुष्टं कर्म कुर्वतां पापिनाम् । संभवाम्याविर्भवामि ॥ ८ ॥ जन्म मायामयम्, कर्म साधुत्राणम्, दिव्यमप्राकृतं यो वेत्ति स त्यक्त्वा देहं पुनर्जन्म न प्राप्नोति किंतु

४ मधुसूदनीव्याख्या ।

हानिरधर्मस्य च वृद्धिस्तव परितोषकारणं येन तस्मिन्नेव काल आविर्भवसीति । तथाचानर्थावह एव तवावतारः स्यादिति नेत्याह—धर्महान्या हीयमानानां साधूनां पुण्यकारिणां वेदमार्गस्थानां परित्राणाय परितः सर्वतो रक्षणाय तथा अधर्मवृद्ध्या वर्धमानानां दुष्कृतां पापकारिणां वेदमार्गविरोधिनां विनाशाय च तदुभयं कथं स्यादिति तदाह । धर्मसंस्थापनार्थाय धर्मस्य सम्यगधर्मनिवारणेन स्थापनं वेदमार्गपरिरक्षणं धर्मसंस्थापनं तदर्थं संभवामि पूर्ववत् । युगे युगे प्रतियुगम् ॥ ८ ॥ जन्म नित्यसिद्धस्यैव मम सच्चिदानन्दघनस्य लीलया तथानुकरणं कर्म च धर्मसंस्थापनेन जगत्परिपालनं मे मम नित्यसिद्धेश्वरस्य दिव्यमप्राकृतमन्यैः कर्तुमशक्यमीश्वरस्यैवासाधारणम् । एवमजोऽपि सन्नित्यादिना प्रतिपादितं यो वेत्ति तत्त्वतो भ्रमनिवर्तनेन । मूढैर्हि मनुष्यत्वभ्रान्त्या भगवतोऽपि गर्भवासादिरूपमेव जन्म स्वभोगार्थमेव कर्मेत्यारोपितं परमा-

५ भाष्योत्कर्षदीपिका ।

॥ ७ ॥ अवतरणप्रयोजनमाह । परित्राणाय रक्षणाय साधूनां सन्मार्गस्थानां भक्तानाम् । विनाशाय च पापिष्ठानाम् । किंच धर्मसंस्थापनार्थाय । तथाचावतरणप्रयोजनत्रयमुक्तम् । यत्तु तदुभयं कथं स्यादित्यत आह । धर्मसंस्थापनार्थायेति तच्चिन्त्यम् । धर्मसंस्थापनेन साधूनां रक्षणस्य पापिनां नाशस्य चासिद्धेः । यथा वसुदेवगृहेऽवतीर्णेन श्रीकृष्णेन गीताद्युपदेशेन धर्मसंस्थापनं युधिष्ठिरादिपरिपालनेन साधुपरित्राणं कंसादिमारणेन दुष्कृतां विनाश इति प्रयोजनत्रयमेव संपादितम् । नहि गीतोपदेशमात्रेण तत्र तत्र कृतमर्जुनसंरक्षणं तत्तदुपायैः कर्मनाशश्च सिध्यतीति दिक् । एतेन साधुरक्षणेन दुष्टवधेन च धर्मं स्थिरीकर्तुमिति प्रत्युक्तम् । नहि वसुदेवादिरक्षणेन कंसादिवधेन च कस्यचिद्धर्मस्य स्थापनं भवति धर्मस्थापनहेतुभूतैतत्कर्मद्वयाकर्तुर्व्यासावतारस्य धर्मसंस्थापनार्थस्य वैयर्थ्यापत्तेश्च । तथाच कदाचिदेकस्मै कदाचिद्द्वाभ्यां कदाचित्सर्वेभ्यः प्रयोजनाय भगवदवतरणमिति ध्येयम् ॥ ८ ॥ जन्म मायिकम् । कर्म साधुपरित्राणादि । मम परमेश्वरस्यैश्वरमप्राकृतं यस्तत्त्वतो वेत्ति स देहं त्यक्त्वा पुनरुत्पत्तिं न प्राप्नोति किंतु मां परमात्मानमेति । मुच्यत इत्यर्थः । अर्जुनेति संबोधयन् मज्जन्मकर्मतत्त्वज्ञानशोधितत्वंपदस्तत्पदाभेदं लब्ध्वा

६ श्रीधरीव्याख्या ।

क्यम् ॥ ७ ॥ किमर्थमित्यपेक्षायामाह—**परित्राणायेति** । साधूनां स्वधर्मवर्तिनां रक्षणाय । दुष्टं कर्म कुर्वन्तीति दुष्कृतस्तेषां वधाय च । एवं धर्मस्य संस्थापनार्थाय साधुरक्षणेन दुष्टवधेन च धर्मं स्थिरीकर्तुं युगेयुगे तत्तदवसरे संभवामीत्यर्थः । नचैवं दुष्टनिग्रहं कुर्वतोऽपि नैर्घृण्यं शङ्कनीयम् । यथाचाहुः–'लालने ताडने मातुर्नाकारुण्यं यथार्भके । तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः ॥' इति ॥ ८ ॥ एवंविधानामीश्वरजन्मकर्मणां ज्ञाने फलमाह—**जन्मकर्मेति** । मे जन्म स्वेच्छाकृतं, कर्म च धर्मपालनरूपं दिव्यमलौकिकं तत्त्वतः

७ अभिनवगुप्ताचार्यव्याख्या ।

अंश उपकारकत्वेन प्रधानभूतो यत्र तदात्मांशं शरीरं गृह्णातीत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ अतएवास्य जन्म दिव्यम् । यत आत्ममायया योग-

१ श्रीधरः. २ नीलकण्ठः.

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**नैति न प्राप्नोति मामेत्यागच्छति स मुच्यते हेऽर्जुन ॥ ९ ॥ नैष मोक्षमार्ग इदानीं प्रवृत्तः किं तर्हि पूर्वमपि—वीतरागेति । वीतरागभयक्रोधा रागश्च भयं च क्रोधश्च वीता विगता येभ्यस्ते वीतरागभयक्रोधा मन्मया ब्रह्मविद ईश्वराभेददर्शिनो मामेव परमेश्वरमुपाश्रिताः । केवलज्ञाननिष्ठा इत्यर्थः । बहवोऽनेके ज्ञानतपसा ज्ञानमेव च परमात्मविषयं तपस्तेन ज्ञानतपसा पूताः परां शुद्धिं गताः सन्तो मद्भावमीश्वरभावं मोक्षमागताः समनुप्राप्ताः । इतरतपोनिरपेक्षज्ञाननिष्ठा इत्यस्य लिङ्गं ज्ञानतपसेति**

२ आनन्दगिरिव्याख्या ।

पुनर्भगवतो वास्तवं जन्म साधुजनपरिपालनादि चान्यस्यैव कर्म क्षत्रियस्येति विवक्ष्यते तदा तत्त्वापरिज्ञानप्रयुक्तो जन्मादिः संसारो दुर्वारः स्यादिति भावः ॥ ९ ॥ संप्रति प्रस्तुतमोक्षमार्गस्य नूतनत्वेनाव्यवस्थितत्वमाशङ्क्य परिहरति—**नैष इति** । मन्मयत्वस्य मद्भावगमनेनापौनरुक्त्यं दर्शयति—**ब्रह्मविद इति** । आत्मनो भिन्नत्वेन भिन्नाभिन्नत्वेन वा ब्रह्मणो वेदनं व्यावर्तयति—**ईश्वरेति** । अभेददर्शनेन समुच्चित्य कर्मानुष्ठानं प्रत्याचष्टे—**मामेवेति** । तदुपाश्रयत्वमेव विशदयति—**केवलेति** । मामुपाश्रिता इति केवलज्ञाननिष्ठत्वमुक्त्वा ज्ञानतपसा पूता इति किमर्थं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मामेति मामेव प्राप्नोति । एतेन भगवतो जन्मानि कर्माणि च भगवत्प्राप्तिकामेन गेयानीति दर्शितम् ॥ ९ ॥ एतस्यापि भगवत्प्राप्तेर्द्वारमाह—**वीतेति** । रागो विषयेषु प्रीतिः, भयं स्वोच्छेदाशङ्का, क्रोधः स्वपरपीडाहेतुरभिज्वलनं, ते त्रयो वीता येभ्यस्ते वीतरागभयक्रोधाः । अतएव मन्मयाः मदेकप्रधानाः । किं जारिणी यथा जारमपि भर्तारं चाश्रिता योगक्षेमार्थं तद्वन्नेत्याह । मामुपाश्रिताः ज्ञानतपसा ज्ञानमयं तप आलोचनं मम जन्मकर्मणोः स्वरूपस्य च निरन्तरं चिन्तनं 'यस्य ज्ञानमयं तपः' इति श्रुतिप्रसिद्धं ज्ञानतपस्तेन पूताः सन्तो मद्भावं मत्तादात्म्यं प्राप्ता इत्यर्थः ।

४ मधुसूदनीव्याख्या ।

र्थतः शुद्धसच्चिदानन्दघनरूपत्वाज्ञानेन तदपनुद्य अजस्यापि मायया जन्मानुकरणमकर्तुरपि परानुग्रहाय कर्मानुकरणमित्येव यो वेत्ति स आत्मनोऽपि तत्त्वस्फुरणात् त्यक्त्वा देहमिमं पुनर्जन्म नैति, किंतु मां भगवन्तं वासुदेवमेव सच्चिदानन्दघनमेति । संसारान्मुच्यत इत्यर्थः । हे अर्जुन ॥ ९ ॥ मामेति सोऽर्जुनेत्युक्तं तत्र स्वस्य सर्वमुक्तप्राप्यतया पुरुषार्थत्वं अस्य मोक्षमार्गस्यानादिपरंपरागतत्वं च दर्शयति—रागस्तत्फलं तृष्णां, सर्वान्विषयान्परित्यज्य ज्ञानमार्गे कथं जीवितव्यमिति त्रासो भयम्, सर्वविषयोच्छेदकोऽयं ज्ञानमार्गः कथं हितः स्यादिति द्वेषः क्रोधः, त एते रागभयक्रोधाः वीता विवेकेन विगता येभ्यस्ते वीतरागभयक्रोधाः शुद्धसत्त्वाः मन्मयाः मां परमात्मानं तत्पदार्थं त्वंपदार्थाभेदेन साक्षात्कृतवन्तः मदेकचित्ता वा मामुपाश्रिताः एकान्तप्रेमभक्त्या मामीश्वरं शरणं गताः बहवोऽनेके ज्ञानतपसा ज्ञानमेव तपः सर्वकर्मक्षयहेतुत्वात् । 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति हि वक्ष्यति तेन पूताः क्षीणसर्वपापाः सन्तो निरस्ताज्ञानतत्कार्यमलाः ।

५ भाष्योत्कर्षदीपिका ।

मुच्यत इति सूचयति ॥ ९ ॥ अस्य मोक्षमार्गस्याधुनिकत्वं वारयति—**वीतेति** । रागो विषयेषु रञ्जनात्मकश्चित्तवृत्तिविशेषः, विषयत्यागान्नाशाच्च भयम्, विषयप्राप्तौ विघ्नकर्तृषु ताडनाक्रोशनादिकर्तृषु च क्रोधः । वीता विगता रागादयो येभ्यस्ते अतएव मन्मया ईश्वराभेददर्शिनः । कर्मानुष्ठानसहभावं वारयति । मामेव परमेश्वरमुपाश्रिताः । केवलज्ञाननिष्ठा इत्यर्थः । तन्निष्ठस्य मोक्षोपदेशादिति न्यायात् इतरकर्मानपेक्षाः । केवलज्ञाननिष्ठा मुच्यन्त इति ज्ञापयन् विशिनष्टि । बहवोऽनेके ज्ञानमेव तपः तेन पूताः परां शुद्धिं गताः पूर्वेषामघानां नाशादुत्तरेषामसंबाधाच्च 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायात् । मद्भावं ब्रह्मभावं मोक्षं प्राप्ताः । यत्तु मन्मयाः मदेकचित्ताः मामुपाश्रिता एकान्तभक्त्या मामीश्वरं शरणं गताः सन्तो मत्प्र-

६ श्रीधरीव्याख्या ।

परानुग्रहार्थमेवेति यो वेत्ति स देहाभिमानं त्यक्त्वा पुनर्जन्म नैति न प्राप्नोति किंतु मामेव प्राप्नोति ॥ ९ ॥ कथं जन्मकर्मज्ञानेन त्वत्प्राप्तिः स्यादित्यत्राह—**वीतरागेति** । अहं शुद्धसत्त्वावतारैर्धर्मपरिपालनं करोमीति मदीयं परमकारुणिकत्वं ज्ञात्वा वीता विगता रागभयक्रोधा येभ्यस्ते विक्षेपाभावात् । मन्मया मदेकचित्ता भूत्वा मामेवोपाश्रिताः सन्तो मत्प्रसादलभ्यं यदात्मज्ञानं च तपश्च तत्परि-

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रज्ञया स्वस्वातन्त्र्यशक्त्यारब्धं न कर्मभिः । कर्मापि दिव्यं फलदानासमर्थत्वात् । यश्चैवमेतत्तत्त्वं वेत्ति आत्मन्यप्येवमेव मन्यते सोऽवश्यं भगवद्वासुदेवतत्त्वं जानाति ॥ ८ ॥ ९ ॥ वीतेति । तथाचैवं विदन्तः मन्मयत्वात्परिपूर्णेच्छत्वात्क्रोधादिरहिता निष्फलं कर्म करणीयं

१ श्रीधरः.

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

१ श्रीमच्छांकरभाष्यम् ।

विशेषणम् ॥ १० ॥ तव तर्हि रागद्वेषौ स्तः, येन केभ्यश्चिदेवात्मभावं प्रयच्छसि न सर्वेभ्य इत्युच्यते—ये यथेति । ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तांस्तथैव तत्फलदानेन भजाम्यनुगृह्णाम्यहमित्येतत् । तेषां मोक्षं प्रत्यनर्थित्वाद् । नह्येकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत्संभवति । अतो ये फलार्थिनस्तान्फलप्रदानेन, ये यथोक्तकारिणस्त्वफलार्थिनो मुमुक्षवश्च

२ आनन्दगिरिव्याख्या ।

पुनरुच्यते तत्राह—इतरेति ॥ १० ॥ ईश्वरः सर्वेभ्यो भूतेभ्यो मोक्षं प्रयच्छति चेत्प्रागुक्तविशेषणवैयर्थ्यं, यदि तु केभ्यश्चिदेव मोक्षं प्रयच्छेत्तर्हि तस्य रागादिमत्त्वादनीश्वरत्वापत्तिरिति शङ्कते—तव तर्हीति । ये मुमुक्षवस्तेभ्यो मोक्षमीश्वरो ज्ञानसंपादनद्वारा प्रयच्छति फलान्तरार्थिभ्यस्तु तत्तदुपायानुष्ठानेन तत्तदेव ददातीति नास्य रागद्वेषाविति परिहरति—उच्यत इति । मुमुक्षूणामीश्वरानुसारित्वेऽपि फलान्तरार्थिनां कुतस्तदनुसारित्वमित्याशङ्क्य 'फलमत उपपत्ते'रिति न्यायेन तत्फलस्येश्वरायत्तत्वात्तदनुवर्तित्वमावश्यकमित्याह—ममेति । भगवद्वचनभागिनां सर्वेषामेव कैवल्यमेकरूपं किमिति नानुगृह्यते तत्राह—तेषामिति । अभ्युदयनिःश्रेयसार्थित्वं प्रार्थनावैचित्र्यादेकस्यैव किं न स्यादित्याशङ्क्य पर्यायेण तदनुपपत्तिं साधयति—नहीति । मुमुक्षूणां फलार्थिनां च विभागे स्थिते सत्यनुग्रहविभागं फलितमाह—अत इति । फलप्रदानेनानुगृह्णामीति संबन्धः । नित्यनैमित्तिककर्मानुष्ठायिनामेव फलार्थित्वाभावे सति मुमुक्षुत्वे कथं तेष्वनुग्रहः स्यादिति तत्राह—ये यथोक्तेति । ज्ञानप्रदानेन भजामीत्युत्तरत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ १० ॥ ननु साध्वसाध्वोस्त्राणविनाशौ कुर्वतस्तव वैषम्यनैर्घृण्ये स्तोऽतः किं तवास्मदादितुल्यस्य जन्मकर्मस्वरूपाणां चिन्तनेनेत्याशङ्क्याह—ये यथेति । ये मनुष्याः मां सर्वशरीरस्थं यथा येन प्रकारेण शत्रुत्वेन मित्रत्वेन वा प्रपद्यन्ते प्राप्नुवन्ति तांस्तेनैव प्रकारेणाहमपि भजाम्यनुसरामि । येतु मम वर्त्म भक्तिध्यानप्रणिधानात्मकमनुवर्तन्ते तान्ममात्म-

४ मधुसूदनीव्याख्या ।

मद्भावं मद्रूपत्वं विशुद्धसच्चिदानन्दघनं मोक्षमागताः अज्ञानमात्रापनयेन मोक्षं प्राप्ताः । ज्ञानतपसा पूता जीवन्मुक्ताः सन्तो मद्भावं मद्विषयं भावं रत्याख्यं प्रेमाणमागता इति वा । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति हि वक्ष्यति ॥ १० ॥ ननु ये ज्ञानतपसा पूता निष्कामास्ते त्वद्भावं गच्छन्ति ये त्वपूताः सकामास्ते न गच्छन्तीति फलदातुस्तव वैषम्यनैर्घृण्ये स्यातामिति नेत्याह—ये आर्ताः अर्थार्थिनो जिज्ञासवो ज्ञानिनश्च यथा येन प्रकारेण सकामतया निष्कामतया च मामीश्वरं सर्वफलदातारं प्रपद्यन्ते भजन्ति तांस्तथैव तदपेक्षितफलदानेनैव भजाम्यनुगृह्णाम्यहम् । न । यदुच्यते सर्वज्ञस्येश्वरस्य सर्वकार्यविपर्ययेण तत्रामुमुक्षूनार्तानर्थार्थिनश्चार्तिहरणेनार्थदानेन चानुगृह्णामि । जिज्ञासून् 'विविदिषन्ति यज्ञेन' इत्यादिश्रुतिविहितनिष्कामकर्मानुष्ठातॄन् ज्ञानदानेन, ज्ञानिनश्च मुमुक्षून् मोक्षदानेन, न त्वन्यकामायान्यद्ददामीत्यर्थः । ननु

५ भाष्योत्कर्षदीपिका ।

सादलभ्यं यदात्मज्ञानं तपश्च तत्परिपाकहेतुः स्वधर्मस्तयोः । द्वन्द्वैकवद्भावः । तेन पूताः शुद्धाः निरस्ताज्ञानतत्कार्यमलाः मद्भावं सायुज्यं प्राप्ता इति । तत्रेदं बोध्यम्—मन्मयशब्दार्थत्यागे कारणाभावात्तच्छब्दार्थानुरोधेन मामुपाश्रिता इत्यस्यापि भाष्योक्तव्याख्यानमेव सम्यगिति । यदपि यदात्मज्ञानं चेत्यादि, तदपि न । समुच्चयप्रसङ्गात् । यत्तु मद्भावं मद्विषयं भावं रत्याख्यं प्रेमाणमागता इति वेति, तच्चिन्त्यम् । त्यक्त्वा देहमित्यादिपूर्वग्रन्थानुगुण्याभावप्रसङ्गात् ॥ १० ॥ एवं स्वस्मिन्प्रसक्तौ रागद्वेषौ वारयति—य इति । ये यथा येन प्रकारेण यदर्थं मोक्षार्थमर्थार्थमार्तिनिवृत्त्यर्थं ज्ञानार्थं च मां प्रपद्यन्ते भजन्ति तांस्तथैव तत्तत्फलप्रदानेनाहं समस्तफलप्रदाता परमेश्वरो भजाम्यनुगृह्णामि । ये मनुष्याः यत्फलार्थितया यस्मिन्कर्मण्यधिकृता इन्द्रादिदेवतान्तरं यजन्ते सर्वशः सर्वप्रकारेण प्रवृत्तास्ते ममैव सर्वात्मनस्तत्कर्मात्मकं वर्त्म मार्गमनुवर्तन्ते । येतु ये मनुष्याः

६ श्रीधरीव्याख्या ।

पाकहेतुः स्वधर्मस्तयोः । द्वन्द्वैकवद्भावः । तेन ज्ञानतपसा पूताः शुद्धा निरस्ताज्ञानतत्कार्यमलाः सन्तो मद्भावं मत्सायुज्यं प्राप्ता बहवः नत्वधुनैव प्रवृत्तोऽयं मद्भक्तिमार्ग इत्यर्थः । तदेवं 'तान्यहं वेद सर्वाणि' इत्यादिना विद्याविद्योपाधिभ्यां तत्त्वंपदार्थावीश्वरजीवौ प्रदर्श्यैश्वरस्य चाविद्याभावेन नित्यशुद्धत्वाज्जीवस्य चेश्वरप्रसादलब्धज्ञानेनाज्ञाननिवृत्तेः शुद्धस्य सतश्चिदंशेन तदैक्यमुक्तमिति द्रष्टव्यम् ॥ १० ॥ ननु तर्हि किं त्वय्यपि वैषम्यमस्ति, यस्मादेवं त्वदेकशरणानामेवात्मभावं ददासि नान्येषां सकामानामित्यत आह—ये यथेति । यथा येन प्रकारेण सकामतया निष्कामतया वा ये मां भजन्ति तानहं तथैव तदपेक्षितफलदानेन भजाम्यनुगृह्णामि, नतु

१ मधुसूदनः. २ नीलकण्ठः.

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तान्ज्ञानप्रदानेन, ये ज्ञानिनः संन्यासिनो मुमुक्षवश्च तान्मोक्षप्रदानेन, तथार्तानार्तिहरणेनेत्येवं यथा प्रपद्यन्ते ये तांस्तथैव भजामीत्यर्थः । न पुना रागद्वेषनिमित्तं मोहनिमित्तं वा कंचिद्भजामि । सर्वथापि सर्वावस्थस्य ममेश्वरस्य वर्त्म मार्गमनुवर्तन्ते मनुष्याः । यत्फलार्थितया यस्मिन्कर्मण्यधिकृता ये प्रयतन्ते ते मनुष्या उच्यन्ते । हे पार्थ, सर्वशः सर्वप्रकारैः ॥ ११ ॥ यदि तवेश्वरस्य रागादिदोषाभावात्सर्वप्राणिष्वनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयि सति वासुदेवः सर्वमिति ज्ञानेनैव मुमुक्षवः सन्तः कस्मात्त्वामेव सर्वे न प्रतिपद्यन्त इति शृणु तत्र कारणं—काङ्क्षन्त इति । काङ्क्षन्तो-

२ आनन्दगिरिव्याख्या ।

संबन्धः । सन्ति केचित्त्यक्तसर्वकर्माणो ज्ञानिनो मोक्षमेवापेक्ष्यमाणास्तेष्वनुग्रहप्रकारं प्रकटयति—ये ज्ञानिन इति । केचिदार्ताः सन्तो ज्ञानादिसाधनान्तररहिता भगवन्तमेवार्तिमपहर्तुमनुवर्तन्ते तेषु भगवतोऽनुग्रहविशेषं दर्शयति—तथेति । पूर्वार्धव्याख्यानमुपसंहरति—इत्येवमिति । भगवतोऽनुग्रहे निमित्तान्तरं निवारयति—न पुनरिति । फलार्थित्वे मुमुक्षुत्वे च जन्तूनां भगवदनुसरणमावश्यकमित्युत्तरार्धं विभजते—सर्वथापीति । सर्वावस्थत्वं तेन तेनात्मना परस्येश्वरस्यावस्थानं, मार्गो ज्ञानकर्मलक्षणः । मनुष्यग्रहणादितरेषामीश्वरमार्गानुवर्तित्वपर्युदासः स्यादित्याशङ्क्याह—यत्फलेति । सर्वप्रकारैर्मम मार्गमनुवर्तन्त इति पूर्वेण संबन्धः ॥ ११ ॥ अनुग्राह्याणां ज्ञानकर्मानुरोधेन भगवता तेष्वनुग्रहविधानात्तस्य रागद्वेषौ यदि न भवतस्तर्हि तस्य रागाद्यभावादेव सर्वेषु प्राणिष्वनुग्रहेच्छा तुल्या प्राप्ता, नच तस्यां सत्यामेव फलस्याल्पीयसः संपादने सामर्थ्यं नतु भगवतो महतो मोक्षाख्यस्य फलस्य प्रदानेऽशक्तिरिति युक्तमप्रतिहतज्ञानेच्छाक्रियाशक्तिमतस्तव सर्वफलप्रदानसामर्थ्यात्, तथाच यथोक्तानुजिघृक्षायां सत्यां त्वयि च यथोक्तसामर्थ्यवति सति सर्वे फल्गुफलादभ्युदयाद्विमुखा मोक्षमेवापेक्षमाणा ज्ञानेन त्वामेव किमिति न प्रतिपद्येरन्निति चोदयति—यदीति । मोक्षापेक्षाभावात्तदुपायभूतज्ञानादपि वैमुख्याद्भगवत्प्राप्त्यभावे हेतुमभिदधानः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भूतांस्तथैव सर्वशः सर्वैः प्रकारैरनुवर्तेऽहमिति योजना । ततश्च मद्बिम्बभूते प्राणिजाते यथा यः प्रीतिं द्वेषं वा करोति तस्मिन्प्रतिबिम्बभूतेऽहमपि तथैव प्रीतिं द्वेषं च करोमि । बिम्बपूजापरिभवौ प्रतिबिम्बे एव संक्रामतोऽतो न मम वैषम्यनैर्घृण्ये स्तः । तस्मात् श्रेयोर्थिना सर्वस्य कल्याणायैव यतितव्यमिति भावः । भाष्ये तु ये यथा येन प्रकारेण येन प्रयोजनेन आर्ता जिज्ञासवोऽर्थार्थिनो ज्ञानिनो वा प्रतिपद्यन्ते तांस्तथैव पीडापरिहारेण ज्ञानदानेन अर्थदानेन मोक्षदानेन वाऽनुगृह्णामि । सर्वथा ते ममैव वर्त्मानुवर्तन्त इति अन्यदेवताभक्ता इति चैतद्व्याचक्षते ॥ ११ ॥ **काङ्क्षन्त इति** । हि यस्मात् मानुषे लोके कर्मसिद्धिः काम्यकर्मफलं पुत्रपश्वादिकं क्षिप्रं भवति नतु निष्कामकर्मजा

४ मधुसूदनीव्याख्या ।

तथापि स्वभक्तानामेव फलं ददासि नत्वन्यदेवभक्तानामिति वैषम्यं स्थितमेवेति नेत्याह—मम सर्वात्मनो वासुदेवस्य वर्त्म भजनमार्गं कर्मज्ञानलक्षणमनुवर्तन्ते । हे पार्थ, सर्वशः सर्वप्रकारैरिन्द्रादीनप्यनुवर्तमाना मनुष्या इति कर्माधिकारेण 'इन्द्रं मित्रं वरुणमग्निमाहुः' इत्यादिमन्त्रवर्णात् 'फलमत उपपत्तेः' इति न्यायाच्च सर्वरूपेणापि फलदाता भगवानेक एवेत्यर्थः । तथाच वक्ष्यति 'येऽप्यन्यदेवताभक्ता' इत्यादि ॥ ११ ॥ ननु त्वामेव भगवन्तं वासुदेवं किमिति सर्वे न

५ भाष्योत्कर्षदीपिका ।

मां सर्वशरीरस्थं यथा येन प्रकारेण शत्रुत्वेन मित्रत्वेन वा प्रपद्यन्ते प्राप्नुवन्ति तांस्तेनैव प्रकारेणाहमपि भजाम्यनुसरामि । येतु मम वर्त्म भक्तिध्यानप्रणिधानात्मकं अनुवर्तन्ते तान्ममात्मभूतान् तथैव सर्वशः सर्वप्रकारैः अनुवर्तेऽहमिति वर्णयन्ति तैस्त्वर्थान्तरं वर्णनीयमिति व्यग्रचित्तैः मामुपाश्रिताः यजन्त इति पूर्वोत्तरग्रन्थानुसारी प्रपद्यन्ते भजामीत्यनयोर्यथाश्रुतार्थः परित्यक्तः । एतेन ममेत्यादिक्लिष्टकल्पनापि प्रत्युक्ता । इतरमनुष्या अपि मम वर्त्मानुवर्तन्ते त्वया तु मत्संबन्धिनापि मदनुवर्तनं न क्रियत इत्यत्याश्चर्यमिति द्योतयन्नाह—**पार्थेति** ॥ ११ ॥ ननु वासुदेवः सर्वमिति ज्ञानार्थं सर्वे त्वामेव कुतो नानुवर्तन्त इत्याशङ्क्य मम

६ श्रीधरीव्याख्या ।

ये सकामा मां विहायेन्द्रादीनेव भजन्ते तानहमुपेक्षे इति मन्तव्यम् । यतः सर्वशः सर्वप्रकारैरिन्द्रादिसेवका अपि ममैव वर्त्म भजनमार्गमनुवर्तन्ते । इन्द्रादिरूपेणापि ममैव सेव्यत्वात् ॥ ११ ॥ तर्हि मोक्षार्थमेव किमिति सर्वे त्वां न भजन्तीत्यत आह—**काङ्क्षन्त**

७ अभिनवगुप्ताचार्यव्याख्या ।

कुर्वाणा बहवो मत्स्वरूपमवाप्ताः ॥ १० ॥ यतः ये यथा मामिति । काङ्क्षन्त इति । ये यथैव बुद्ध्या मामाश्रयन्ते तान्प्रति तदेव स्वरूपमहं

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

ऽभीप्सन्तः कर्मणां सिद्धिं फलनिष्पत्तिं प्रार्थयन्तो यजन्त इहास्मिँल्लोके देवता इन्द्राग्न्याद्याः, 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' इति श्रुतेः । तेषां हि भिन्नदेवतायाजिनां फलाकाङ्क्षिणां क्षिप्रं शीघ्रं हि यस्मान्मानुषे लोके मनुष्यलोके हि शास्त्राधिकारः । क्षिप्रं हि मानुषे लोक इति विशेषणादन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान् । मानुषे लोके वर्णाश्रमादिकर्माणीति शेषः, तेषां वर्णाश्रमाद्यधिकारिकर्मणां फलसिद्धिः क्षिप्रं भवति । कर्मजा कर्मणो जाता ॥ १२ ॥ मानुष एव लोके वर्णाश्रमादिकर्माधिकारो नान्येषु लोकेष्विति नियमः किंनिमित्त इति, अथवा वर्णाश्रमादिप्रविभागोपेता मनुष्या मम वर्त्मानुवर्तन्ते सर्वश इत्युक्तं कस्मात्पुनः कारणान्नियमेन तवैव वर्त्मानुवर्तन्ते नान्यस्येत्युच्यते—चातुर्वर्ण्यमिति । चातुर्वर्ण्यं चत्वार एव

२ आनन्दगिरिव्याख्या ।

समाधत्ते—**शृण्विति** । कर्मफलसिद्धिमिच्छता किमिति मानुषे लोके देवतापूजनमिष्यते तत्राह—**क्षिप्रं हीति** । कर्मफलसंपत्त्यर्थिनां यष्टृयष्टव्यविभागदर्शिनां तद्दर्शने कारणमात्मज्ञानमित्यत्र बृहदारण्यकश्रुतिमुदाहरति—**अथेति** । अविद्याप्रकरणोपक्रमार्थमथेत्युक्तम् । उपासनं भेददर्शनमित्यनूद्य कारणमात्माज्ञानं न तत्रेति दर्शयति—**नेति** । यथास्मदादीनां हलवहनादिना पशुरुपकरोत्येवमज्ञो देवादीनां यागादिभिरुपकरोतीत्याह—**यथेति** । किमिति ते फलाकाङ्क्षिणो भिन्नदेवतायाजिनो ज्ञानमार्गं नापेक्षन्ते तत्रोत्तरार्धमुत्तरत्वेन योजयति—**तेषामित्यादिना** । यस्माद्यथोक्तानामधिकारिणां कर्मप्रयुक्तं फलं लोकविशेषे झटिति सिध्यति तस्मात्तेषां मोक्षमार्गादस्ति वैमुख्यमित्यर्थः । मानुषलोकविशेषणं किमर्थमित्याशङ्क्याह—**मनुष्यलोके हीति** । लोकान्तरेषु तर्हि कर्मफलसिद्धिर्नास्तीत्याशङ्क्य क्षिप्रविशेषणस्य तात्पर्यमाह—**क्षिप्रमिति** । क्वचित्कर्मफलसिद्धिरविलम्बेन भवत्यन्यत्र तु विलम्बेनेति विभागे को हेतुरित्याशङ्क्य सामग्रीभावाभावाभ्यामित्याह—**मानुष इति** । मनुष्यलोके कर्मफलसिद्धेः शैघ्र्यात्तदभिमुखानां ज्ञानमार्गवैमुख्यं प्रायिकमित्युपसंहरति—**तेषामिति** ॥ १२ ॥ मनुष्यलोके चातुर्वर्ण्यं चातुराश्रम्यमित्यनेन द्वारेण कर्माधिकारनियमे कारणं पृच्छति—**मानुष एवेति** । आदिशब्देनावस्थाविशेषा विवक्ष्यन्ते । प्रकारान्तरेण वृत्तानुवादपूर्वकं चोद्यमुत्थापयति—**अथवे-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चित्तशुद्धिः । अतो ये कर्मणां सिद्धिं फलं इहैव क्षिप्रं काङ्क्षन्तः काङ्क्षमाणा देवता इन्द्रादीन्यजन्ते तेऽपि ममैव वर्त्मानुवर्तन्त इति पूर्वेणान्वयः । वक्ष्यति च 'येऽप्यन्यदेवताभक्ताः' इत्यादि ॥ १२ ॥ अन्यदेवताभक्ता अपि कस्मात्पुनः कारणात्तवैव वर्त्मानुवर्तन्ते नान्यस्येत्यत आह—**चातुर्वर्ण्यमिति** । चतुर्णां वर्णानां हितं चातुर्वर्ण्यम् ।

४ मधुसूदनीव्याख्या ।

प्रपद्यन्त इति तत्राह—कर्मणां सिद्धिं फलनिष्पत्तिं काङ्क्षन्त इह लोके देवताः देवानिन्द्राग्न्याद्यान्यजन्ते पूजयन्ति अज्ञानप्रतिहतत्वान्नतु निष्कामाः सन्तो मां भगवन्तं वासुदेवमिति शेषः । कस्मात् । हि यस्मात् इन्द्रादिदेवतायाजिनां तत्फलकाङ्क्षिणां कर्मजा सिद्धिः कर्मजन्यं फलं क्षिप्रं शीघ्रमेव भवति मानुषे लोके । ज्ञानफलं त्वन्तःकरणशुद्धिसापेक्षत्वान्न क्षिप्रं प्रभवति । मानुषे लोके कर्मफलं शीघ्रं भवतीति विशेषणादन्यलोकेऽपि वर्णाश्रमधर्मव्यतिरिक्तकर्मफलसिद्धिर्भगवता सूचिता । यतस्तत्तत्क्षुद्रफलसिद्ध्यर्थं सकामा मोक्षविमुखाः अन्या देवता यजन्तेऽतो न मुमुक्षव इव मां वासुदेवं साक्षात्ते प्रपद्यन्त इत्यर्थः ॥ १२ ॥ शरीरारम्भकगुणवैषम्यादपि न सर्वे समानस्वभावा इत्याह—चत्वारो वर्णा एव चातुर्वर्ण्यं

५ भाष्योत्कर्षदीपिका ।

वर्त्मेत्यादिविवृण्वन् तत्र कारणमाह । काङ्क्षन्तः प्रार्थयन्तः इहास्मिँल्लोके इन्द्राग्न्यादयः देवता यजन्ते । हि यस्मान्मानुषे लोके काम्यकर्मजा सिद्धिः फलं क्षिप्रं शीघ्रं भवति । क्षिप्रं मानुषे लोके इति विशेषणादन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान् । मानुषे लोके वर्णाश्रमादिकर्माणीति विशेषः ॥ १२ ॥ कस्मात्पुनः कारणात्तवैव वर्त्मानुवर्तन्ते नान्यस्येत्यत आह । यद्वा मानुष

६ श्रीधरीव्याख्या ।

इति । कर्मणां सिद्धिं फलं काङ्क्षन्तः प्रायशः इह मनुष्यलोके इन्द्रादिदेवता एव यजन्ते नतु साक्षान्मामेव । हि यस्मात्कर्मजा सिद्धिः कर्मजं फलं शीघ्रं भवति नतु ज्ञानफलं कैवल्यम् । दुष्प्राप्यत्वाज्ज्ञानस्य ॥ १२ ॥ ननु केचित्सकामतया प्रवर्तन्ते केचिन्निष्काम-

७ अभिनवगुप्ताचार्यव्याख्या ।

गृह्णंस्ताननुगृह्णामि । एवमेव मदीयं मार्गं मन्मया अमन्मयाश्च सर्वएवानुवर्तन्ते ॥ ११ ॥ नहि ज्योतिष्टोमादिरन्यो मार्गो मदीयैव सा तथेच्छा । वक्ष्यते हि—चातुर्वर्ण्यं मया सृष्टमिति । अन्यस्त्वाह लिङर्थे लट् । यथाऽतिरात्रे षोडशिनं गृह्णन्तीत्यत्र गृह्णीयुरित्यर्थः । एवमिहाप्यनुवर्तेरन्निति

१ श्रीमच्छांकरभाष्यम्।

**वर्णाश्चातुर्वर्ण्यं मयेश्वरेण सृष्टमुत्पादितं 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतेः, गुणकर्मविभागशो गुणविभागशः कर्मविभागशश्च। गुणाः सत्त्वरजस्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तप इत्यादीनि कर्माणि। सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि। तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि। रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्मेत्येवं गुणकर्मविभागशश्चातुर्वर्ण्यं मया सृष्टमित्यर्थः। तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेष्वतो मानुषे लोके इति विशेषणम्। हन्त तर्हि चातुर्वर्ण्यसर्गादेः कर्मणः कर्तृत्वात्तत्फलेषु युज्यसेऽतो न त्वं**

२ आनन्दगिरिव्याख्या।

त्यादिना। प्रश्नद्वयं परिहरति—**उच्यत इति**। तर्हि तव कर्तृत्वभोक्तृत्वसंभवादस्मदादितुल्यत्वेनानीश्वरत्वमित्याशङ्क्याह—**तस्येति**। ईश्वरस्य विषमसृष्टिं विदधानस्य सृष्टिवैषम्यनिर्वाहकं कथयति—**गुणेति**। गुणविभागेन कर्मविभागस्तेन चातुर्वर्ण्यस्य सृष्टिमेवोपदिष्टां स्पष्टयति—**तत्रेत्यादिना**। प्रश्नद्वयप्रतिविधानं प्रकृतमुपसंहरति—**तच्चेदमिति**। मनुष्यलोके परं वर्णाश्रमादिपूर्वके कर्मण्यधिकारस्तत्रैव वर्णादेरीश्वरेण सृष्टत्वान्न लोकान्तरेषु तत्र वर्णाद्यभावादीश्वरमेव चातुर्वर्ण्याश्रमादिविभागभागिनोऽधिकारिणोऽनुवर्तन्ते तेनैव वर्णादेस्तदाज्ञापारस्य च सृष्टत्वात्तदनुवर्तनस्य युक्तत्वादित्यर्थः। तस्येत्यादि द्वितीयभागापोह्यं चोद्यमनुद्रवति—**हन्तेति**। यदि चातुर्वर्ण्यादिकर्तृत्वादीश्वरस्य प्रागुक्तो नियमोऽभिमत-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

गुणाश्च कर्माणि चेति गुणकर्म। द्वन्द्वैकवद्भावः। कर्माण्यग्निहोत्रादीनि। गुणाश्च द्रव्यदेवतादिरूपाः। विभागशः साधारणासाधारणविभागेन। तथाहि दानजपादिकं सर्वसाधारणम्। अग्निहोत्रादिकं त्रैवर्णिकस्यैव न शूद्रस्य। राजसूयादिकं राज्ञ एव नेतरेषामिति विभागो दृश्यते। यतश्चातुर्वर्ण्यं गुणकर्म मया सृष्टं ततोऽन्यदेवतानामपि मदुत्थत्वात्पुत्रप्रीत्या पितुरिव तत्प्रीत्या ममैव तृप्तिरस्तीत्यर्थः। यद्वा गुणविभागशः कर्मविभागश इति योज्यम्। तथाहि सत्त्वप्रधाना ब्राह्मणास्तेषां कर्म शमदमादिकम्, सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियास्तेषां कर्म शौर्यादि, तमउपसर्जनरजःप्रधाना वैश्यास्तेषां कर्म कृष्यादि, रजउपसर्जनतमःप्रधानाः शूद्रास्तेषां कर्म शुश्रूषैवेति गुणकर्मविभागो दृश्यते तदा चातुर्वर्ण्यमिति स्वार्थे ष्यञ्। चत्वारो वर्णाः गुणकर्मविभागशो मया सृष्टा इत्यर्थः। अन्यदेवताभक्ता अपि मदुक्तकर्मकारित्वान्मद्भक्ता एवेति भावः। ननु यद्येवं त्वं स्वसन्ततितर्पणेन स्वाज्ञाकरणेन प्रीयसे तदर्थं च त्वया चातुर्वर्ण्यं सृष्टं तर्हि महान्संसारी त्वमसीत्याशङ्क्याह—**तस्येति**। कर्तारं मायायोगात् वस्तुतोऽकर्तारम्। अत-

४ मधुसूदनीव्याख्या।

स्वार्थे ष्यञ्। मयेश्वरेण सृष्टमुत्पादितम्। गुणकर्मविभागशः गुणविभागशः कर्मविभागशश्च। तथाहि सत्त्वप्रधान ब्राह्मणास्तेषां च सात्त्विकानि शमदमादीनि कर्माणि। सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियास्तेषां च तादृशानि शौर्यतेजःप्रभृतीनि कर्माणि। तमउपसर्जनरजःप्रधाना वैश्यास्तेषां च कृष्यादीनि तादृशानि कर्माणि। तमःप्रधानाः शूद्रास्तेषां च तामसानि त्रैवर्णिकशुश्रूषादीनि कर्माणीति मानुषे लोके व्यवस्थितानि। एवं तर्हि विषमस्वभावचातुर्वर्ण्यस्रष्टृत्वेन तव वैषम्यं दुर्वारमित्याशङ्क्य नेत्याह—तस्य विषमस्वभावस्य चातुर्वर्ण्यस्य व्यवहारदृष्ट्या कर्तारमपि मां परमार्थदृष्ट्या विद्धि-

५ भाष्योत्कर्षदीपिका।

एव लोके वर्णाश्रमकर्माधिकारो नान्येष्विति नियमः किंनिमित्त इति तत्राह—**चातुर्वर्ण्यमिति**। यत्तु ननु च केचित्सकामतया वर्तन्ते केचिन्निष्कामतयेति कर्मवैचित्र्यं तत्कर्तॄणां ब्राह्मणादीनां उत्तममध्यमादिवैचित्र्यं च कुर्वतस्तव कथं वैषम्यं नास्तीत्याशङ्क्याहेति तदुपेक्ष्यम्। भाष्योक्तरीत्याऽव्यवहितेन संबन्धे संभवति व्यवहितसंबन्धेनोत्थानानौचित्यात्। शरीरारम्भकगुणवैषम्यादपि न सर्वे समानस्वभावा इत्याहेति वा। अस्मिन्पक्षे गुणकर्मविभागशश्चातुर्वर्ण्यमुत्पन्नमित्येतावतैव निर्वाहे मया सृष्टमित्यस्य प्रयोजनं चिन्त्यम्। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। गुणविभागशः कर्मविभागशश्च सत्त्वप्रधानस्य ब्राह्मणस्य शमदमादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधानस्य राजन्यस्य शौर्यादीनि, तमउपसर्जनस्य रजःप्रधानस्य वैश्यस्य कृष्यादीनि, रजउपसर्जनस्य तमःप्रधानस्य शूद्रस्य त्रैवर्णिकशुश्रूषैवेत्येवं गुणकर्मविभागशः चातुर्वर्ण्यं मयेश्वरेण सृष्टम्। चतुर्णां वर्णानां हितं चातुर्वर्ण्यम्। गुणाश्च कर्माणि चेति गुणकर्म। द्वन्द्वैकवद्भावः। कर्माण्यग्निहोत्रादीनि गुणाश्च द्रव्यदेवतारूपाः विभागशः साधारणा-

६ श्रीधरीव्याख्या।

तयेति कर्मवैचित्र्यम्, तत्कर्तॄणां च ब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यं कुर्वतस्तव कथं वैषम्यं नास्तीत्याशङ्क्याह—**चातुर्वर्ण्यमिति**। चत्वारो वर्णा एव चातुर्वर्ण्यम्। स्वार्थे ष्यञ्प्रत्ययः। अयमर्थः—सत्त्वप्रधाना ब्राह्मणास्तेषां शमदमादीनि कर्माणि, सत्त्वरजः-

१ नीलकण्ठः. २ मधुसूदनः.

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नित्यमुक्तो नित्येश्वर इति । उच्यते । यद्यपि मायासंव्यवहारेण तस्य कर्मणः कर्तारमपि सन्तं मां परमार्थतो विद्ध्यकर्तारम् अतएवाव्ययमसंसारिणं च मां विद्धि ॥ १३ ॥ येषां तु कर्मणां कर्तारं मां मन्यसे परमार्थतस्तेषामकर्तैवाहं यतः—नेति । न मां तानि कर्माणि लिम्पन्ति

२ आनन्दगिरिव्याख्या ।

स्तर्हि तद्विषयसृष्ट्यादेस्तन्निष्ठव्यापारस्य च धर्मादेर्निर्वर्तकत्वात्तत्फलस्य कर्तृगामित्वात् कर्तृत्वभोक्तृत्वयोस्त्वयि प्रसङ्गात् नित्यमुक्तत्वादि ते न स्यादित्यर्थः । मायया कर्तृत्वं परमार्थतश्चाकर्तृत्वमित्यभ्युपगमान्नित्यमुक्तत्वादि सिध्यतीत्युत्तरमाह—**उच्यत इति** । मायावृत्यादिसंव्यवहारेण चातुर्वर्ण्यादेस्तत्कर्मणश्च यद्यपि कर्ताहं तथापि तथाविधं मां परमार्थतोऽकर्तारं विद्धीति योजना । अकर्तृत्वादेवाभोक्तृत्वसिद्धिरित्याह—**अतएवेति** ॥ १३ ॥ ईश्वरस्य कर्तृत्वभोक्तृत्वयोर्वस्तुतोऽभावे कर्मतत्फलसंबन्धवैधुर्यं फलतीत्याह—**येषां त्विति** । कर्मतत्फलसंस्पर्शशून्यमीश्वरं पश्यतो दर्शनानुरूपं फलं दर्शयति—**न मामिति** । तानि कर्माणीति येषां कर्मणामहं कर्ता तवाभिमतस्तानीति यावत् ।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

एवाव्ययमविकारिणम् ॥ १३ ॥ ननु कर्तुरपि कथमकर्तृत्वमत आह —**न मामिति** । कर्मलेपोऽपि कुतो नास्तीत्यत आह—**न मे इति** । यः कर्तृत्वाभिमानी स लिप्यते यस्तु फलेच्छुः स एवात्मनः कर्तृत्वं मनुत इति फले-

४ मधुसूदनीव्याख्या ।

कर्तारमव्ययं निरहंकारत्वेनाक्षीणमहिमानम् ॥ १३ ॥ कर्माणि विश्वसर्गादीनि मां निरहंकारत्वेन कर्तृत्वाभिमानहीनं भगवन्तं न लिम्पन्ति देहारम्भकत्वेन न बध्नन्ति । एवं कर्तृत्वं निराकृत्य भोक्तृत्वं निराकरोति – न मे ममाप्तकामस्य कर्मफले स्पृहा तृष्णा । 'आप्तकामस्य का स्पृहा' इति श्रुतेः । कर्तृत्वाभिमानफलस्पृहाभ्यां हि कर्माणि लिम्पन्ति तदभावान्न मां कर्माणि लिम्पन्ति इति एवं योऽन्योऽपि मामकर्तारमभोक्तारं चात्मत्वेनाभिजानाति कर्मभिर्न स बध्यते । अकर्त्रात्मज्ञानेन

५ भाष्योत्कर्षदीपिका ।

साधारणविभागेन । तथाहि दानजपादिकं सर्वसाधारणम्, अग्निहोत्रादिकं त्रैवर्णिकस्यैव न शूद्रस्य, राजसूयादिकं राज्ञ एव नेतरेषामिति विभागो दृश्यते । यतश्चातुर्वर्ण्यं गुणकर्म च मया सृष्टं ततोऽन्यदेवतानामपि मदुत्थत्वात् । पुत्रप्रीत्या पितुरिव तत्प्रीत्या ममैव तृप्तिरस्तीत्यर्थस्तु विभागपदेन साकाङ्क्षेण गुणकर्मणोः समासस्यौचित्यमभिप्रेत्याचार्यैर्न प्रदर्शित इति बोध्यम् । एवं तर्हि चातुर्वर्ण्यस्य विषमस्वभावस्य सृष्ट्यादेस्तन्निष्ठव्यापारस्य च निर्वर्तकत्वात्, वैषम्यस्य कर्मफलस्य कर्तृगामित्वात्, कर्तृत्वभोक्तृत्वयोश्च त्वयि प्रसङ्गात्, संसारित्वादिकं ते स्यादित्याशङ्क्य मायया कर्तृत्वं न वस्तुत इत्यतो नित्यमुक्तस्य मम संसारित्वस्याभाव इत्याशयेनाह । तस्य चातुर्वर्ण्यस्य मायिकेन व्यवहारेण कर्तारमपि मां परमार्थतोऽकर्तारं विद्धि । अतएव कर्तृत्वाभावादभोक्तृत्वादिसिद्ध्याऽव्ययमविकारिणमक्षीणमहिमानम् । असंसारिणमितियावत् । आसक्तिराहित्येन श्रमरहितमित्यर्थस्त्वयुक्तः । फलासक्तिरहितानां जीवानां श्रमस्योपलब्धेः ॥ १३ ॥ अतएवाहंकाराभावात्तानि कर्माणि मां न लिम्पन्ति देहाद्यारम्भकत्वेन न निबध्नन्ति । आसक्तं न कुर्वन्तीत्यर्थस्तु न मे कर्मफले स्पृहेत्यनेन पौनरुक्त्यमभिप्रेत्याचार्यैर्न दर्शितः । मे मम कर्मफले स्पृहा तृष्णा आसक्तिर्नास्ति । अतोऽपि मां कर्माणि न लिम्पन्तीत्येतत् । यत्तु ननु कर्तुरपि कथमकर्तृत्वमत आह—**न मामिति** । कर्मलेपोऽपि कुतो नास्तीत्यत आह—**न मे इति** । यः कर्तृत्वाभिमानी स लिप्यते । यस्तु फलेच्छुः स एवात्मनः कर्तृत्वं मन्यत इति । फलेच्छाभावादकर्ताऽकर्तृत्वाच्च न लिप्यत इति तच्चिन्त्यम् । कर्तृत्वाभिनिवेशस्य फलासक्तेश्च बन्धकतयोक्तत्वेनात्रान्यथावर्णनस्यानौचित्यात् । फलेच्छारहितस्य मुमुक्षोस्तावतैवाकर्तृत्वापत्त्या निर्लेपत्वेन जन्माभावप्रसङ्गाच्च । मां कर्माणि न लिम्पन्तीति किं वक्तव्यम् । इति मां य आत्मत्वेनाभिजानाति परात्माभिन्नस्य मे कर्तृत्वं कर्मफले स्पृहा च नास्तीति स कर्मभिर्न निबध्यते । देहादि-

६ श्रीधरीव्याख्या ।

प्रधानाः क्षत्रियास्तेषां च शौर्ययुद्धादीनि कर्माणि, रजस्तमःप्रधाना वैश्यास्तेषां कृषिवाणिज्यादीनि कर्माणि, तमःप्रधानाः शूद्रास्तेषां च त्रैवर्णिकशुश्रूषादिकर्माणीत्येवं गुणानां कर्मणां च विभागैश्चातुर्वर्ण्यं मयैव सृष्टमिति । सत्यम् । तथाप्येवं तस्य कर्तारमपि फलतोऽकर्तारमेव मां विद्धि । तत्र हेतुः । अव्ययमासक्तिराहित्येन श्रमरहितं नाशादिरहितम् ॥ १३ ॥ तदेव दर्शयन्नाह—**न मामिति** । कर्माणि विश्वसृष्ट्यादीन्यपि मां न लिम्पन्ति आसक्तं न कुर्वन्ति । निरहंकारत्वात् । आप्तकामत्वेन मम कर्मफले स्पृहाभावाच्च मां न

७ अभिनवगुप्ताचार्यव्याख्या ।

मानुषे एव लोके भोगापवर्गलक्षणा सिद्धिर्नान्यत्रेति ॥ १२ ॥ चातुर्वर्ण्यमिति । न मां कर्माणीति । एवं ज्ञात्वा कृतं कर्मेति । मम किल कथ-

१ श्रीधरः. ३ नीलकण्ठः.

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

देहाद्यारम्भकत्वेनाहंकाराभावात् । नच तेषां कर्मणां फलेषु मे स्पृहा तृष्णा । येषां तु संसारिणामहं कर्तेत्यभिमानः कर्मसु स्पृहा तत्फलेषु च तान्कर्माणि लिम्पन्तीति युक्तं तदभावान्न मां कर्माणि लिम्पन्तीति, एवं योऽन्योऽपि मामात्मत्वेनाभिजानाति नाहं कर्ता न मे कर्मफले स्पृहेति स कर्मभिर्न बध्यते । तस्यापि न देहाद्यारम्भकाणि कर्माणि भवन्तीत्यर्थः ॥ १४ ॥ नाहं कर्ता न मे कर्मफले स्पृहेति—एवमिति । एवं ज्ञात्वा कृतं कर्म पूर्वैरप्यतिक्रान्तैर्मुमुक्षुभिः, कुरु तेन कर्मैव त्वं न तूष्णीमासनं नापि संन्यासः कर्तव्यस्तस्मात्त्वं पूर्वैरप्यनुष्ठितत्वाद्यद्यनात्मज्ञस्त्वं तदात्मशुद्ध्यर्थं तत्त्वविच्चेल्लोकसंग्रहार्थं पूर्वैर्जनकादिभिः पूर्वतरं कृतं नाधुनातनं कृतं निर्वर्तितम् ॥ १५ ॥ तत्र कर्म चेत्कर्तव्यं

२ आनन्दगिरिव्याख्या ।

देहेन्द्रियाद्यारम्भकत्वेन तेषां कर्मणामीश्वरे संस्पर्शाभावे तस्य तत्कारणावस्थायामहंकाराभावं हेतुं करोति—अहंकाराभावादिति । कर्मफलतृष्णाभावाच्चेश्वरं कर्माणि न लिम्पन्तीत्याह—नचेति । उक्तमेव प्रपञ्चयति—येषां त्विति । तदभावात्कर्मस्वहं कर्तेत्यभिमानस्य तत्फलेषु स्पृहायाश्चाभावादित्यर्थः । ईश्वरस्य कर्मनिर्लेपेऽपि क्षेत्रज्ञस्य किमायातमित्याशङ्क्योत्तरार्धं व्याचष्टे—इत्येवमिति । अभिज्ञानप्रकारमभिनयति—नाहमिति । ज्ञानफलं कथयति—स कर्मभिरिति । कर्मासंबन्धं विदुषि विशदयति—तस्यापीति ॥ १४ ॥ तव कर्मतत्फलसंबन्धाभावे तथा ज्ञानवतश्च तदसंबन्धे ममापि किं कर्मणेत्याशङ्क्य कर्मणि कर्तृत्वाभिमानं तत्फले स्पृहां चाकृत्वा मुमुक्षुवत्त्वया कर्म कर्तव्यमेवेत्याह—नाहमित्यादिना । नाहं कर्तेत्येवमादि एवमा परामृश्यते, तेन पूर्वैर्मुमुक्षुभिरनुष्ठितत्वेन हेतुनेत्यर्थः । कर्मैवेत्येवकारार्थमाह—नेत्यादिना । त्वंशब्दस्य क्रियापदेन संबन्धः । तस्मादित्युक्तमेव स्फुटयति—पूर्वैरिति । यदुक्तं किं मम कर्मणेति तत्र त्वमज्ञो वा तत्त्वविद्वा । यद्यज्ञस्तदा चित्तशुद्ध्यर्थं कुरु कर्मेत्याह—यदीति । द्वितीयं प्रत्याह—तत्त्वविदिति । कुरु कर्मेति संबन्धः । पूर्वैर्मूढैराचरितमित्येतावता किमिति विवेकवता मया तत्कर्तव्यमित्याशङ्क्याह—जनकादिभिरिति । ते तावदेवं संपाद्य कर्म कृतवन्तो न तदिदानीमप्रामाणिकत्वादनुष्ठेयमित्याशङ्क्याह—पूर्वतरमिति ॥ १५ ॥ कर्मविशेषणमाक्षिपति—तत्रेति । मनुष्यलोकः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

च्छाभावादकर्ता अकर्तृत्वाच्च न लिप्यतेऽयं इति मां योऽभिजानाति स कर्मफलस्पृहात्यागात्कर्मभिर्न बध्यते ॥ १४ ॥ एतदेव शिष्टाचारप्रदर्शनपूर्वकं ग्राहयति—एवं ज्ञात्वेति । पूर्वतरं वेदोक्तत्वान्नत्वधुना केनचित्कल्पितमित्यर्थः ।

४ मधुसूदनीव्याख्या ।

मुच्यत इत्यर्थः ॥ १४ ॥ यतो नाहं कर्ता न मे कर्मफले स्पृहेति ज्ञानात्कर्मभिर्न बध्यते, अतः एवं आत्मनोऽकर्तुः कर्मालेपं ज्ञात्वा कृतं कर्म पूर्वैरतिक्रान्तैरपि अस्मिन् युगे ययातियदुप्रभृतिभिर्मुमुक्षुभिः । तस्मात्त्वमपि कर्मैव कुरु न तूष्णीमासनं नापि संन्यासम् । यद्यतत्त्ववित्तदात्मशुद्ध्यर्थं तत्त्वविच्चेल्लोकसंग्रहार्थं पूर्वैः जनकादिभिः पूर्वतरं अतिपूर्वं युगान्तरेऽपि

५ भाष्योत्कर्षदीपिका ।

संबन्धं प्राप्य न संसरतीत्यर्थः । यत्तु मम निर्लेपत्वे कारणं निरहंकारत्वनिस्पृहत्वादिकं जानतस्तस्याप्यहंकारशैथिल्यादिति तच्चिन्त्यम् । ईश्वराभेदसाक्षात्कारं विना कर्तृत्वादेर्मूलोच्छेदाभावेनोक्तज्ञानवतो मोक्षासंभवात् । अन्यथा मूर्खाणामप्येतावज्ज्ञानवतां कर्मप्रयुक्तबन्धनाभावप्रसङ्गात् ॥ १४ ॥ नाहं कर्ता न मे कर्मफले स्पृहेत्येवंज्ञात्वा पूर्वैरपि मुमुक्षुभिश्चित्तशुद्धिद्वारा ज्ञानार्थं कर्म कृतं तस्मात्त्वमपि कर्मैव कुरु । नापि तूष्णीमासनं नापि संन्यासम् । यस्मात्त्वत्तोऽपि पूर्वैर्जनकादिभिः ज्ञानिभिर्लोकसंग्रहार्थं अनादिसिद्धत्वा-

६ श्रीधरीव्याख्या ।

लिम्पन्तीति किं वक्तव्यम् । यतः कर्मफले स्पृहाराहित्येन मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते । मम निर्लेपत्वे कारणं निरहंकारत्वनिःस्पृहत्वादिकं जानतस्तस्याप्यहंकारादिशैथिल्यात् ॥ १४ ॥ 'ये यथा मां प्रपद्यन्ते' इत्यादिचतुर्भिः श्लोकैः प्रासङ्गिकमीश्वरस्य वैषम्यं परिहृत्य पूर्वोक्तमेव कर्मयोगं प्रपञ्चयितुमनुसारयति—एवमिति । अहंकारादिराहित्येन कृतं कर्म बन्धकं न भवतीत्येवं ज्ञात्वा पूर्वैर्जनकादिभिरपि मुमुक्षुभिः सत्त्वशुद्ध्यर्थं पूर्वतरं युगान्तरेष्वपि कृतम् । तस्मात्त्वमपि प्रथमं कर्मैव कुरु ॥ १५ ॥ तच्च तत्त्वविद्भिः

७ अभिनवगुप्ताचार्यव्याख्या ।

माकाशकल्पस्य कर्मभिर्लेपः । आकाशप्रतिमत्वं कामनाभावादित्यनेन ज्ञानप्रकारेण यो भगवन्तमेवाश्रयते । सर्वत्र सर्वदानन्दघनं परमेश्वरमेव न वासुदेवात्परमस्ति किंचिदिति नीत्या विमृशति तस्य किं कर्मभिर्बन्धः । तस्मादनयोर्बुद्ध्या पवित्रीकृतस्त्वमपि कर्माण्यवश्यकर्तव्यानि

१ श्रीधरः०

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**
**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्वद्वचनादेव करोम्यहं किं विशेषितेन पूर्वैः पूर्वतरं कृतमित्युच्यते यस्मान्महद्वैषम्यं कर्मणि, कथं— किं कर्मेति । किं कर्म किं चाकर्मेति कवयो मेधाविनोऽप्यत्रास्मिन्कर्मादिविषये मोहिता मोहं गताः अतस्ते तुभ्यमहं कर्माकर्म च प्रवक्ष्यामि । यज्ज्ञात्वा विदित्वा कर्मादि मोक्ष्यसेऽशुभात्संसारात् ॥१६॥ न चैतत्त्वया मन्तव्यं, कर्म नाम देहादिचेष्टा लोकप्रसिद्धम्, अकर्म तदक्रिया तूष्णीमासनं, किं तत्र बोद्धव्यमिति । कस्मादुच्यते—कर्मण इति । कर्मणः शास्त्रविहितस्य हि यस्मादप्यस्ति बोद्धव्यं, बोद्धव्यं

२ आनन्दगिरिव्याख्या ।

सप्तम्यर्थः । कर्मणि महतो वैषम्यस्य विद्यमानत्वात्तस्य पूर्वैरनुष्ठितत्वेन पूर्वतरत्वेन च विशेषितत्वे तस्मिन्प्रवृत्तिस्तव सुकरेति युक्तं विशेषणमिति परिहरति—**उच्यत इति** । कर्मणि देहादिचेष्टारूपे लोकप्रसिद्धे नास्ति वैषम्यमिति शङ्कते—**कथमिति** । विज्ञानवतामपि कर्मादिविषये व्यामोहोपपत्तेः सुतरामेव तव तद्विषये व्यामोहसंभवात्तदपोहार्थमाप्तवाक्यापेक्षणादस्ति कर्मणि वैषम्यमित्युत्तरमाह—**किं कर्मेति** । तत्ते कर्मेत्यत्राकारानुबन्धेनापि पदं छेत्तव्यम् । कर्मादिप्रवचनस्य प्रयोजनमाह—**यज्ज्ञात्वेति** । तत्कर्माकर्म चेति संबन्धः । अतो मेधाविनामपि यथोक्ते विषये व्यामोहस्य सत्त्वादित्यर्थः । कर्मणोऽकर्मणश्च प्रसिद्धत्वात्तद्विषये न किंचिद्बोद्धव्यमिति चोद्यमनूद्य निरस्यति—**नचेति** ॥ १६ ॥ तत्र हेत्वाकाङ्क्षापूर्वकमनन्तरं श्लोकमवतारयति—**कस्मादिति** । त्रिष्वपि कर्माकर्मविकर्मसु बोद्धव्यमस्तीति यस्मा-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

पूर्वतरं प्रथमतरं कृतं अत्यावश्यकत्वादिति वार्थः ॥ १५ ॥ आवश्यकत्वेऽपि न कर्मणो गतानुगतिकतयानुष्ठानं कर्तव्यं किंतु 'ज्ञात्वा कर्माणि कुर्वीत' इतिवचनात्कर्माश्रितं किंचिद्विशेषं ज्ञापयितुमुपोद्घातयति—**किं कर्मेति** । यतः कर्माकर्मणी कवीनामपि दुर्निरूपे तत्तस्मात्ते तुभ्यं कर्म अकर्म चाकारप्रश्लेषेण ग्राह्यम् । ते उभे प्रवक्ष्यामि यत् द्वयं

४ मधुसूदनीव्याख्या ।

कृतम् । एतेनास्मिन्युगेऽन्ययुगे च पूर्वपूर्वतरैः कृतत्वादवश्यं त्वया कर्तव्यं कर्मेति दर्शयति ॥ १५ ॥ ननु कर्मविषये किं कश्चित्संशयोऽप्यस्ति येन पूर्वैः पूर्वतरं कृतमित्यतिनिर्बध्नासि, अस्त्येवेत्याह—नौस्थस्य निष्क्रियेष्वपि तटस्थवृक्षेषु गमनभ्रमदर्शनात् तथाऽदूराचक्षुःसंनिकृष्टेषु गच्छत्स्वपि पुरुषेष्वगमनभ्रमदर्शनात् परमार्थतः किं कर्म किंवा परमार्थतोऽकर्मेति कवयो मेधाविनाऽप्यत्रास्मिन्विषये मोहिताः मोहं निर्णयासामर्थ्यं प्राप्ताः । अत्यन्तदुर्निरूपत्वादित्यर्थः । तत्तस्मात्ते तुभ्यमहं कर्म अकारप्रश्लेषेण छेदादकर्म च प्रवक्ष्यामि प्रकर्षेण संदेहोच्छेदेन वक्ष्यामि । यत्कर्माकर्मस्वरूपं ज्ञात्वा मोक्ष्यसे मुक्तो भविष्यस्यशुभात्संसारात् ॥ १६ ॥ ननु सर्वलोकप्रसिद्धत्वादहमेवैतज्जानामि देहेन्द्रियादिव्यापारः कर्म तूष्णी-

५ भाष्योत्कर्षदीपिका ।

त्पूर्वतरं कृतम् । यद्यज्ञो मुमुक्षुस्त्वं तर्हि सत्त्वशुद्ध्यर्थं, तत्त्वविच्चेत्तर्हि लोकसंग्रहार्थं कर्म कुर्वित्यभिप्रायः ॥ १५॥ ननु कर्म कर्तव्यं चेत्त्वदुक्त्यैवाहमिदं कर्मेति स्वबुद्ध्या विचार्य करोमि किं पूर्वैः पूर्वतरं कृतमिति विशेषितेनेत्याशङ्क्य कर्मणि महावैषम्यस्य सत्त्वात्, तस्य पूर्वैरित्यादिविशेषितत्वेन तव प्रवृत्तिस्तस्मिन्सुकरेत्याशयेन कर्मणो दुर्विज्ञेयत्वमाह—**किमिति** । यत्तु तच्च तत्त्वविद्भिः सह विचार्य कर्तव्यं न लोकपरम्परामात्रेणेत्याहेति तच्चिन्त्यम् । कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतमिति स्वयमतिनिर्बन्धेनोक्त्वा पुनस्तत्रैवानिर्बन्धं वदतः परमेश्वरस्य पूर्वापरविरोधापत्तेः । अत्रास्मिन्कर्मादिविषये कवयो मेधाविनोऽपि मोहं किं कर्म किमकर्मेति संशयं गताः प्राप्ताः । अतस्ते तुभ्यमहं कर्म, अकारप्रश्लेषेणाकर्म च प्रवक्ष्यामि । यत्कर्मादि ज्ञात्वाऽशुभात्संसारान्मोक्ष्यसे ॥ १६ ॥ ननु देहादिव्यापारः कर्माकरणं तूष्णीमासनमिति लोकप्रसिद्ध्यैव ज्ञातुं शक्यमिति तत्राह—**कर्मण इति** । हि यस्मात्कर्मणः

६ श्रीधरीव्याख्या ।

सह विचार्य कर्तव्यं न लोकपरम्परामात्रेणेत्याह—**किं कर्मेति** । किं कर्म कीदृशं कर्मकरणम्, किमकर्म कीदृशं कर्माकरणमित्येतस्मिन्नर्थे विवेकिनोऽपि मोहिताः, अतो यज्ज्ञात्वानुष्ठाय अशुभात्संसारान्मोक्ष्यसे मुक्तो भविष्यसि, तत्कर्माकर्म च तुभ्यमहं प्रवक्ष्यामि शृणु ॥ १६ ॥ ननु लोकप्रसिद्धमेव कर्म देहादिव्यापारात्मकम्, अकर्म च तदव्यापारात्मकम्, अतः कथमुच्यते कवयोऽप्यत्र मोहं

७ अभिनवगुप्ताचार्यव्याख्या ।

कुरु ॥ १३ ॥ १४ ॥ १५ ॥ अथोच्यते करणादेव सिद्धिरिति तन्न । यतः किं कर्म । कर्मणोह्यपि । कर्माकर्मणोर्विभागो दुष्परिज्ञानः । तथा

१ श्रीधरः।

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**चास्त्येव विकर्मणः प्रतिषिद्धस्य तथाऽकर्मणश्च तूष्णींभावस्य बोद्धव्यमस्तीति त्रिष्वप्यध्याहारः कर्तव्यो यस्माद् गहना विषमा दुर्ज्ञाना, कर्मण इत्युपलक्षणार्थं, कर्मादीनां कर्माकर्मविकर्मणां गतिर्याथात्म्यं तत्त्वमित्यर्थः ॥ १७ ॥ किं पुनस्तत्त्वं कर्मादेर्यद्बोद्धव्यं वक्ष्यामीति प्रतिज्ञातमुच्यते—कर्मणीति । कर्मणि कर्म क्रियत इति व्यापारमात्रं तस्मिन्कर्मण्यकर्म कर्माभावं यः पश्येदकर्मणि च कर्माभावे कर्तृतन्त्रत्वात्प्रवृत्तिनिवृत्त्योर्वस्त्वप्राप्यैव हि सर्व एव क्रियाकारकादिव्यवहारोऽविद्याभूमावेव**

२ आनन्दगिरिव्याख्या ।

दध्याहारस्तस्मान्मदीयं प्रवचनमर्थवदिति योजना । बोद्धव्यसद्भावे हेतुमाह—**यस्मादिति** । त्रितयं प्रकृत्यान्यतमस्य गहनत्ववचनमयुक्तमित्याशङ्क्यान्यतमग्रहणस्योपलक्षणार्थत्वमुपेत्य विवक्षितमर्थमाह—**कर्मादीनामिति** ॥ १७ ॥ उत्तरश्लोकमाकाङ्क्षापूर्वकमुपादत्ते—किं **पुनरिति** । प्रथमपादस्याक्षरोत्थमर्थं कथयति—**कर्मणीत्यादिना** । द्वितीयपादस्यापिशब्दप्रकाशितमर्थं निर्दिशति—**अकर्मणि चेति** । कर्माभावे यः कर्म पश्यतीति संबन्धः । प्रवृत्तेरेव कर्मत्वान्निवृत्तेस्तदभावत्वात्तत्र कथं कर्मदर्शनमित्याशङ्क्य द्वयोरपि कारकाधीनत्वेनाविशेषमभिप्रेत्याह—**कर्तृतन्त्रत्वादिति** । प्रवृत्ताविव निवृत्तावपि कर्मदर्शनमविरुद्धमिति शेषः । ननु निवृत्तेर्वस्त्वधीनत्वात् कारकनिबन्धनाभावान्न तत्र कर्मदर्शनं युज्यते तत्राह—**वस्त्विति** । क्रियाकारकफलव्यवहारस्य सर्वस्याविद्यावस्थायामेव प्रवृत्तत्वाद्वस्तुसंस्पर्शशून्यत्वात्प्रवृत्तिवन्निवृत्तावपि यः कर्म पश्यति स मनुष्येषु बुद्धिमानिति संबन्धः । कर्मण्यकर्माऽकर्मणि च कर्म

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ज्ञात्वाऽशुभात्संसारान्मोक्ष्यसे ॥ १६ ॥ एतज्ज्ञानमावश्यकमित्याह—**कर्मण इति** । तत्त्वं बोद्धव्यमस्तीति स्थलत्रयेऽपि तत्त्वमस्तीति पदद्वयाध्याहारः । कर्मणः शास्त्रविहितस्य । विकर्मणः प्रतिषिद्धस्य । अकर्मणस्तूष्णींभावस्य । गहना कर्मण इत्यत्र कर्मण इति त्रितयोपलक्षणम् । कर्मविकर्माकर्मणां गतिर्याथात्म्यं तत्त्वं गहनम् ॥ १७ ॥ यत्कर्मादेस्तत्त्वं वक्ष्यामीति प्रतिज्ञातं तदाह—**कर्मणीति** । कर्मणि कर्माकर्मविकर्मात्मके देहेन्द्रियादिव्यापारे अविद्यया प्रत्यगात्मन्यारोपिते सति तत्राकर्म कर्माभावं नौस्थे तीरतरौ चलने आरोपिते सति तत्त्वबुद्ध्या तत्र चलनाभावमिव यः पश्येत् तथा 'चलं गुणवृत्तम्' इति न्यायेन त्रिगुणात्मकेषु देहेन्द्रियादिषु नित्यकर्मवत्सु यश्चन्द्रतारकादौ गत्यभावमिव तूष्णींभूतोऽहमस्मि न किंचित्करोमीत्यध्यस्ते अकर्मणि कर्माभावे कर्म तन्निग्रहाख्य-

४ मधुसूदनीव्याख्या ।

मासनमकर्मेति तत्र किं त्वया वक्तव्यमिति तत्राह—हि यस्मात् कर्मणः शास्त्रविहितस्यापि तत्त्वं बोद्धव्यमस्ति । विकर्मणश्च प्रतिषिद्धस्य । अकर्मणश्च तूष्णींभावस्य । अत्र वाक्यत्रयेऽपि बोद्धव्यं तत्त्वमस्तीत्यध्याहारः । यस्मात् गहना दुर्ज्ञाना । कर्मण इत्युपलक्षणम् । कर्माकर्मविकर्मणां गतिस्तत्त्वमित्यर्थः ॥ १७ ॥ कीदृशं तर्हि कर्मादीनां तत्त्वमिति तदाह—कर्मणि देहेन्द्रियादिव्यापारे विहिते प्रतिषिद्धे च अहं करोमीति धर्माध्यासेनात्मन्यारोपिते नौस्थेनाचलत्सु तटस्थ-

५ भाष्योत्कर्षदीपिका ।

शास्त्रविहितस्यापि तत्त्वं बोद्धव्यं ज्ञातव्यमस्ति । विकर्मणश्च प्रतिषिद्धस्य तत्त्वं बोद्धव्यमस्ति । अकर्मणश्च तूष्णींभावस्य तत्त्वं बोद्धव्यमस्ति । सर्वत्र तत्त्वमस्तीति पदाध्याहारः । भाष्ये त्वस्तीत्यस्याध्याहारकथनमुपलक्षणमित्यविरोधः । यस्माद्गहना कर्मण इत्युपलक्षणार्थम् । कर्माकर्मविकर्मणां गतिस्तत्त्वं याथात्म्यमित्यर्थः ॥ १७ ॥ किं पुनः कर्मादेस्तत्त्वं बोद्धव्यमस्तीत्यपेक्षायामाह—**कर्मणीति** । नौस्थस्य तटस्थतरुपर्वतादिषु समारोपितचाञ्चल्यप्रतीतिरिव लोकस्य देहाद्याश्रयं कर्मात्मन्यारोप्याहं कर्ता ममैतत्कर्मास्य

६ श्रीधरीव्याख्या ।

प्राप्ता इति तत्राह—**कर्मण इति** । कर्मणो विहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति, न तु लोकसिद्धमात्रमेव अकर्मणोऽविहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति, विकर्मणोऽपि निषिद्धस्यापि तत्त्वं बोद्धव्यमस्ति, यतः कर्मणो गतिर्गहना । कर्मण इत्युपलक्षणार्थम् । कर्माकर्मविकर्मणां तत्त्वं बोद्धव्यमस्ति । यतो दुर्विज्ञेयमित्यर्थः ॥ १७ ॥ तदेवं कर्मादीनां दुर्विज्ञेयत्वं दर्शयन्नाह—**कर्मण्यकर्मेति** । परमे-

७ अभिनवगुप्ताचार्यव्याख्या ।

कर्मण्यपि मध्ये दुष्टं कर्मास्ति अग्निष्टोमइव पशुवधः । विरुद्धेपिच कर्मणि शुभमस्ति कर्म यथा हिंस्रप्राणिवधे प्रजोपतापाभावः । अकरणेऽपिच शुभाशुभं कर्मास्ति वाङ्मनसकृतानां कर्मणामवश्यंभावात् तेषां ज्ञानमन्तरेण दुष्परिहरत्वात् । अतः कुशलैरपि गहनत्वात्कर्म न ज्ञायते अनेन शुभकर्मणा शुभमस्माकं भविष्यति अनेन च कर्मणामनारम्भेण मोक्षो न भविष्यतीति । तस्माद्वक्ष्यमाणो विज्ञानवह्निरेवावश्यं सकलशुभाशुभकर्मेन्धनप्लोषसमर्थः शरणत्वेनान्वेष्य इति भगवतोऽभिप्रायः ॥१६॥१७॥ तमेवोद्बोधयितुमाह—कर्मणीति । कर्मणीत्यात्मीयेषु कर्मसु यः

१ श्रीमच्छांकरभाष्यम् ।

कर्म यः पश्येत्पश्यति स बुद्धिमान् मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृत्समस्तकर्मकृच्च स इति स्तूयते कर्माकर्मणोरितरेतरदर्शी । ननु किमिदं विरुद्धमुच्यते कर्मण्यकर्म यः पश्येदित्यकर्मणि च कर्मेति । नहि कर्माकर्म स्यादकर्म वा कर्म, तत्र विरुद्धं कथं पश्येद्द्रष्टा । नन्वकर्मैव परमार्थतः सत्कर्मवदवभासते मूढदृष्टेर्लोकस्य तथा कर्मैवाकर्मवत् तत्र यथाभूतदर्शनार्थमाह भगवान्—कर्मण्यकर्म यः पश्येदित्यादि । अतो न विरुद्धम् । बुद्धिमत्त्वाद्युपपत्तेश्च बोद्धव्यमिति च यथाभूतदर्शनमुच्यते । नच विपरीतज्ञानादशुभान्मोक्षणं स्याद्यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति चोक्तम् । तस्मात्कर्माकर्मणी

२ आनन्दगिरिव्याख्या ।

पश्यतो बुद्धिमत्त्वं युक्तत्वं समस्तकर्मकृत्त्वं च कथमित्याशङ्क्याह—इति स्तूयत इति । श्लोकस्य शब्दोत्थेऽर्थे दर्शिते तात्पर्यार्थापरिज्ञानान्मिथो विरोधं शङ्कते—नन्विति । कथमिदं विरुद्धमित्याशङ्क्य कर्मणीति विषयसप्तमी वा स्यादधिकरणसप्तमी वेति विकल्प्याद्येऽन्याकारं ज्ञानमन्यावलम्बनमिति स्पष्टो विरोधः स्यादित्याह—नहीति । अन्यस्यान्यात्मतायोगात्कर्माकर्मणोरभेदासंभवादकर्माकारं कर्मावलम्बनं ज्ञानमयुक्तमित्यर्थः । द्वितीयं दूषयति—तत्रेति । कर्मण्यधिकरणे ततो विरुद्धमकर्म कथमाधेयं द्रष्टा द्रष्टुमीष्टे । नहि कर्माकर्मणोर्मिथोविरुद्धयोराधाराधेयभावः संभवतीत्यर्थः । विषयसप्तमीमभ्युपेत्य सिद्धान्ती परिहरति—नन्वकर्मैवेति । लोकस्य मूढदृष्टेर्विवेकवर्जितस्य परमार्थतो ब्रह्माकर्माक्रियमेव सद् भ्रान्त्या कर्मसहितं क्रियावदिव प्रतिभातीत्यक्षरार्थः । परस्पराध्यासमभ्युपेत्योक्तं—तथेति । यथा खल्वकर्म ब्रह्म कर्मवदुपलभ्यते तथा कर्म सक्रियमेव द्वैतमक्रिये ब्रह्मण्यधिष्ठाने संसृष्टं तद्वद्भातीत्यक्षरयोजना । कर्माकर्मणोरितरेतराध्यासे सिद्धे सम्यग्दर्शनसिद्ध्यर्थं भगवतो वचनमुचितमित्याह—तत्रेति । यथा यदिदं रजतमिति प्रतिपन्नं तदिदानीं शुक्तिशकलं पश्येति भ्रमसिद्धरजतरूपविषयानुवादेन तदधिष्ठानं शुक्तिमात्रमुपदिश्यते तथा भ्रमसिद्धकर्माद्यात्मकविषयानुवादेन तदधिष्ठानं कर्मादिरहितं कूटस्थं ब्रह्म भगवता व्यपदिश्यते, तथाच भगवद्वचनमविरुद्धमित्याह—अत इति । इतश्चाध्यारोपितकर्माद्यनुवादपूर्वकं तदधिष्ठानस्य कर्मादिरहितस्य निर्विशेषस्य ब्रह्मणो भगवता बोध्यमानत्वान्न तत्र विरोधाशङ्कावकाशो भवतीत्याह—बुद्धिमत्त्वादीति । कूटस्थाद्ब्रह्मणोऽन्यस्य सर्वस्य मायामात्रत्वादन्यज्ञानाद्बुद्धिमत्त्वयुक्तत्वसर्वकर्मकृत्त्वानामनुपपत्तेरत्र च स बुद्धिमानित्यादिना बुद्धिमत्त्वादिनिर्देशाद्ब्रह्मज्ञानादेव तदुपपत्तेः सर्वविक्रियारहितब्रह्मज्ञानमेव विवक्षितमित्यर्थः । बोधशब्दस्य सम्यग्ज्ञाने प्रसिद्धत्वात्कर्माकर्मविकर्मणां स्वरूपं बोद्धव्यमस्तीति वदता सम्यग्ज्ञानोपदेशस्य विवक्षितत्वादपि कूटस्थं ब्रह्मात्राभिप्रेतमित्याह—बोद्धव्यमिति चेति । फलवचनपर्यालोचनायामपि कूटस्थं ब्रह्मात्राभिप्रेतं प्रतिभातीत्याह—नचेति । सम्यग्ज्ञानाधीनफलमत्र न श्रुतमित्याशङ्क्याह—यज्ज्ञात्वेति । अध्यारोपापवादार्थं भगवद्वचनमविरुद्धमित्युपपादितमुपसंहरति—तस्मादिति । तद्विपर्ययेत्यत्र तच्छब्देन प्राणिनो गृह्यन्ते । विषयसप्तमीपरिग्रहेण

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रयत्नरूपं यः पश्यति स मनुष्येषु बुद्धिमान् तत्त्वदर्शी । आत्मनि भ्रान्तिजनितव्यापारस्य, अनात्मनि च तादृशनिर्व्यापारत्वस्य बाधात् । सएव च युक्तो योगी कृत्स्नकर्मकृच्च । कर्मयोगफलस्य तत्त्वज्ञानस्य प्राप्तत्वादिति स्तुतिमात्रम् । आत्मनोऽकर्तृत्वं संघातस्यैव कर्तृत्वमिति भावयता कर्माणि कर्तव्यानीत्यर्थः । यद्यप्येतद्बहुधा प्रपञ्चितं 'अव्यक्तोऽयम्' इत्यादौ तथापि तत्त्वस्य दुर्ज्ञेयत्वात्पुनःपुनरुच्यत इति प्राञ्चः । यत्तु कर्मणि नित्ये परमेश्वरार्थेऽनुष्ठीयमाने बन्धहेतु-

४ मधुसूदनीव्याख्या ।

वृक्षादिषु समारोपिते चलनइवाकर्त्रात्मस्वरूपालोचनेन वस्तुतः कर्माभावं तटस्थवृक्षादिष्विव यः पश्येत्पश्यति । तथा देहेन्द्रियादिषु त्रिगुणमायापरिणामत्वेन सर्वदा सव्यापारेषु निर्व्यापारस्तूष्णीं सुखमास इत्यभिमानेन समारोपितेऽकर्मणि व्यापारो-

५ भाष्योत्कर्षदीपिका ।

फलं मया भोक्तव्यमिति भ्रान्त्या प्रतीतिस्तन्निवृत्त्यर्थं भगवानाह । कर्मणि क्रियत इति कर्म व्यापारमात्रमात्मन्यारोपितं तस्मिन्नकर्म पूर्वैर्जनकादिभिर्मुक्तैर्मुमुक्षुभिश्च नाहं कर्ता न ममैतत्कर्मास्य फलं मम नापेक्षितमिति कर्माभावो यथा दृष्टः तथाधुनातनो-

६ श्रीधरीव्याख्या ।

श्वराराधनलक्षणे कर्मणि विषये अकर्म कर्मेदं न भवतीति यः पश्येत्तस्य ज्ञानहेतुत्वेन बन्धकत्वाभावात् । अकर्मणि च विहिताकरणे कर्म यः पश्येत्तस्य प्रत्यवायोत्पादकत्वेन बन्धहेतुत्वात् मनुष्येषु कर्मकुर्वाणेषु स बुद्धिमान्व्यवसायात्मकबुद्धिमत्त्वाच्छ्रेष्ठः संस्तौति, स युक्तः

७ अभिनवगुप्ताचार्यव्याख्या ।

अकर्तृत्वादकर्मत्वं पश्यति प्रशान्ततया, अकर्मसु च परकृतेष्वात्मकृतत्वं जानाति परिपूर्णोदितरूपत्वेन सएव सर्वस्य मध्ये बुद्धिमान् कात्स्न्र्येन साकल्येनासौ कर्म करोति । अतोऽस्य केन कर्मणा फलं दीयतामित्युदितदशायां प्रशान्तत्वे तु कृत्स्नानि कर्माणि कृन्तति छिनत्ति । अतः सर्व-

१ श्रीमच्छांकरभाष्यम् ।

विपर्ययेण गृहीते प्राणिभिस्तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनं 'कर्मण्यकर्म यः' इत्यादि । नचात्र कर्माधिकरणमकर्मास्ति कुण्डे बदराणीव । नाप्यकर्माधिकरणं कर्मास्ति कर्माभावत्वादकर्मणः । अतो विपरीतकर्मगृहीते एव कर्माकर्मणी लौकिकैर्यथा मृगतृष्णिकायामुदकं शुक्तिकायां वा रजतम् । ननु कर्मैव सर्वेषां न क्वचिद्व्यभिचरति । तन्न । नौस्थस्य नावि गच्छन्त्यां तटस्थेष्वगतिषु नगेषु प्रतिकूलगतिदर्शनात् दूरेषु चक्षुषोऽसंनिकृष्टेषु गच्छत्सु गत्यभावदर्शनात् । एवमिहाप्यकर्मण्यहं करोमीति कर्मदर्शनं कर्मणि चाकर्मदर्शनं विपरीतदर्शनं येन तन्निराकरणार्थमुच्यते कर्मण्यकर्म यः पश्येदित्यादि । तदेतदुक्तप्रतिवचनमप्यसकृदत्यन्तविपरीतदर्शनभाविततया मोमुह्यमानो लोकः श्रुतमप्यसकृ-

२ आनन्दगिरिव्याख्या ।

परिहारमभिधायाधिकरणसप्तमीपक्षे दर्शितं दूषणमनङ्गीकारेण परिहरति—नचेति । व्यवहारभूमिरत्रेत्युच्यते, योग्यत्वे सत्यनुपलब्धेरित्यर्थः । अकर्माधिकरणं कर्म न संभवतीत्यत्र हेत्वन्तरमाह—कर्माभावत्वादिति । नहि तुच्छस्याधिकरणं क्वचिद्दृष्टमिष्टं चेत्यर्थः । निरूप्यमाणे कर्माकर्मणोरधिकरणाधिकर्तव्यभावासंभवे फलितमाह—अत इति । शास्त्रपरिचयविरहिणामध्यारोपमुदाहरति—यथेति । कर्माकर्मणोरारोपितत्वमुक्तममृष्यमाणः सन्नाशङ्कते—नन्विति । कर्म कर्मैवेत्यत्राकर्म चाकर्मैवेति द्रष्टव्यम् । विमतं सत्यमव्यभिचारित्वाद्ब्रह्मवदित्यर्थः । तत्र कर्म तत्त्वतो नाव्यभिचारि कर्मत्वान्नौस्थस्य तटस्थवृक्षगमनवदित्यव्यभिचारित्वं कर्मण्यसिद्धमिति परिहरति—तन्नेति । अकर्म च तत्त्वतो नाव्यभिचारि कर्माभावत्वाद् दूरप्रदेशे चैत्रमैत्रादिषु गच्छत्स्वेव चक्षुषा संनिधानविधुरेषु दृश्यमानगत्यभाववदित्याह—दूरेष्विति । दूरत्वादेव विशेषतः संनिकर्षविरहितेषु तेषु स्वरूपेण चक्षुःसंनिकृष्टेषु चक्षुषा गत्यभावदर्शनादिति योजना । गतिरहितेषु तरुषु गतिदर्शनवत्प्रकृते ब्रह्मण्यविक्रिये कर्मदर्शनं सक्रिये च द्वैतप्रपञ्चे चितिमत्सु चैत्रादिषु गत्यभावदर्शनवत्कर्माभावस्य विपरीतस्य दर्शनं येन हेतुना संभवति तेन तस्य विपरीतदर्शनस्य निरसनार्थं भगवद्वचनमिति दार्ष्टान्तिकं निगमयति—एवमित्यादिना । ननु कर्मतदभावयोरारोपितत्वादविक्रियस्य ब्रह्मणो ज्ञानमात्राभिमेतं चेदव्यक्तोऽयमचिन्त्योऽयं न जायते म्रियते वेत्यादिना पौनरुक्त्यं प्राप्तं तत्रैव ब्रह्मात्मनो निर्विकारत्वस्योक्तत्वादिति तत्राह—तदेतदिति । तदेतदात्मनि शङ्कितं सक्रियत्वमसकृदुक्तप्रतिवचनमपि निर्विकारात्मवस्त्वपेक्षयात्यन्तविपरीतदर्शनं मिथ्याज्ञानं तेन भावितत्वं तत्संस्कारप्रचयवत्त्वं ततोऽतिशयेन मोहमापद्यमानो लोकः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्वाभावादकर्मेदमिति यः पश्येत्तथाऽकर्मणि नित्यकर्माकरणे प्रत्यवायहेतुत्वेन कर्मेदमिति च यः पश्येत्स बुद्धिमानिति तदसंगतमेव । नित्यकर्मण्यकर्मेदमिति ज्ञानस्याशुभमोक्षहेतुत्वाभावान्मिथ्याज्ञानत्वेन तस्यैवाशुभत्वाच्च । नचैतादृशं मिथ्याज्ञानं बोद्धव्यं तत्त्वं, नाप्येतादृशज्ञाने बुद्धिमत्त्वादिस्तुत्युपपत्तिरिति दिक् । येतु कर्मणि ज्ञानकर्मणि दृश्ये जडे सद्रूपेण स्फुरणरूपेण वानुस्यूतं सर्वभ्रमाधिष्ठानं अकर्म अवेद्यं स्वप्रकाशचैतन्यं परमार्थदृष्ट्या यः पश्येत्, तथा अकर्मणि स्वप्रकाशे दृग्वस्तुनि कल्पितं कर्म दृश्यं मायामयं न परमार्थं सदिति यः पश्यति स बुद्धिमानिति परमार्थदर्शित्वाद्वास्तवैरेव गुणैः स्तूयत इत्यपि व्याचख्युस्तदप्यसंगतमेव । कर्म कुरु कर्म प्रवक्ष्यामीत्यनुष्ठेयकर्मप्रस्तावे तत्त्वज्ञानानवसरात् । नापि 'कर्तुरीप्सिततमं कर्म' इति पारिभाषिक्या कर्मसंज्ञया दृश्यस्य कर्मशब्दार्थत्वं ग्रहीतुं शक्यम् । तस्या घुटिभादिसंज्ञानामिवागमार्थनिर्णयानर्हत्वादिति संक्षेपः । वस्तुतस्तु कर्मणो हीति श्लोके कर्मविकर्माकर्मणां गतिशब्दितं पर्यवसानं गहनत्वाद्बोद्धव्यमित्युपक्षिप्तं, तद्व्याख्यानं कर्मण्यकर्म यः पश्येत्स मनुष्येषु बुद्धिमानिति । तथाहि । कर्मणि कर्माकर्मविकर्मरूपे अकर्म तद्वैपरीत्यं शास्त्रतो दृश्यते । यथा क्रतुः कर्मणि श्रद्धाहीनस्य कृतोऽप्यकृत

४ मधुसूदनीव्याख्या ।

परमे दूरस्थचक्षुःसंनिकृष्टपुरुषेषु गच्छत्स्वप्यगमन इव सर्वदा सव्यापारदेहेन्द्रियादिस्वरूपपर्यालोचनेन वस्तुगत्या कर्मनिवृत्त्याख्यप्रयत्नरूपं व्यापारं यः पश्येदुदाहृतपुरुषेषु गमनमिव । औदासीन्यावस्थायामप्युदासीनोऽहमास इत्यभिमान एव कर्म । एतादृशः परमार्थदर्शी स बुद्धिमानित्यादिना बुद्धिमत्त्वयोगयुक्तत्वसर्वधर्मकृत्त्वैस्त्रिभिर्धर्मैः स्तूयते । अत्र प्रथमपादेन कर्म-

५ भाष्योत्कर्षदीपिका ।

ऽपि यः कश्चित्पश्यति सूर्यादिषु गच्छत्स्वप्यगमनप्रतीतिरिव देहेन्द्रियादिषु मायिकेषु नित्यं प्रवृत्तिनिवृत्तिरूपक्रियायुक्तेषु निर्व्यापार-

६ श्रीधरीव्याख्या ।

योगी तेन कर्मणा ज्ञानयोगावाप्तेः स एव कृत्स्नकर्मकर्ता च । सर्वतः संप्लुतोदकस्थानीये तस्मिन्कर्मणि सर्वकर्मफलानामन्तर्भूतत्वात् ।

७ अभिनवगुप्ताचार्यव्याख्या ।

मेव कर्म करोति न किंचिद्वा करोतीत्युपनिषत् । यस्य सर्वे कर्मणि देहेन्द्रियक्रियायामकर्मस्वात्मनि निष्क्रियत्वं श्रोत्रादीनि शब्दादिषु वर्तन्ते,

१ श्रीमच्छांकरभाष्यम् ।

त्तत्त्वं विस्मृत्य मिथ्याप्रसंगमवतार्यावतार्य चोदयतीति पुनः पुनरुत्तरमाह भगवान्दुर्विज्ञेयत्वं चालक्ष्य वस्तुनः । 'अव्यक्तोऽयमचिन्त्योऽयं', 'न जायते म्रियते' इत्यादिनात्मनि कर्माभावः श्रुतिस्मृतिन्यायप्रसिद्ध उक्तो वक्ष्यमाणश्च । तस्मिन्नात्मनि कर्माभावेऽकर्मणि कर्मविपरीतदर्शनमत्यन्तनिरूढम् । यतः 'किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः' देहाद्याश्रयं कर्मात्मन्यध्यारोप्याहं कर्ता ममैतत्कर्म मयास्य फलं भोक्तव्यमिति च । तथाहं तूष्णीं भवामि येनाहं निरायासोऽकर्मा सुखी स्यामिति कार्यकरणाश्रयव्यापारोपरमं तत्कृतं च सुखित्वमात्मन्यध्यारोप्य न करोमि किंचित्तूष्णीं सुखमासमित्यभिमन्यते लोकः । तत्रेदं लोकस्य विपरीतदर्शनापनयनायाह भगवान्—कर्मण्यकर्म यः पश्येदि-

२ आनन्दगिरिव्याख्या ।

श्रुतमपि तत्त्वं विस्मृत्य पुनर्यत्किंचित्प्रसङ्गमापाद्य सक्रियत्वमेवात्मनश्चोदयतीति पुनः पुनस्तत्त्वभूतमुत्तरं भगवानभिधत्ते । वस्तुनश्च दुर्विज्ञेयत्वात्पुनः पुनः प्रतिपादनं तत्तद्भ्रमनिराकरणार्थमुपयुज्यते । तथाच नास्ति पुनरुक्तिरित्यर्थः । असकृदुक्तप्रतिवचनमेवानुवदति—**अव्यक्तोऽयमिति** । कर्माभाव उक्त इति संबन्धः । उक्तस्य 'न जायते म्रियते वा विपश्चिदि'त्यादिश्रुतौ प्रकृतस्मृतावसङ्गत्वादिन्यायेन च प्रसिद्धत्वमस्तीत्याह—**श्रुतीति** । न केवलमुक्तः कर्माभावः किंतु सर्वकर्माणि मनसा संन्यस्येत्यादौ वक्ष्यमाणश्चेत्याह—**वक्ष्यमाणश्चेति** । ननु कर्मणो देहादिनिर्वर्त्यत्वेन त्रैविध्यात्कूटस्थस्वभावस्यात्मनोऽसङ्गत्वात्तद्व्यापाररूपस्य कर्मणोऽप्रसिद्धत्वान्न तस्मिन्नकर्मणि विपरीतस्य कर्मणो दर्शनं सिध्यतीत्याशङ्क्याह—**तस्मिन्निति** । कर्मैव विपरीतं तस्य दर्शनमिति यावत् । अहं कर्तेत्यात्मसमानाधिकरणस्य व्यापारस्यानुभवात्कर्मभ्रमस्तावदात्मन्यत्यन्तरूढोऽस्तीत्यर्थः । आत्मनि कर्मविभ्रमोऽस्तीत्यत्र हेतुमाह—**यत इति** । आत्मनो निष्क्रियत्वे कुतस्तस्मिन्यथोक्तो विभ्रमः संभवेदित्याशङ्क्याह—**देहेति** । इदानीमात्मन्यकर्मभ्रममुदाहरति—**तथेत्यादिना** । यथा शुक्तौ स्वाभाविकमरूप्यत्वं रूप्यत्वमारोपितं तदभावोऽप्यारोप्याभावत्वादारोपपक्षपाती तथात्मनोऽपि स्वाभाविकमविक्रियत्वं सक्रियत्वं पुनरध्यस्तं तदभावत्वात्कर्माभावोऽप्यध्यस्त एवेति मन्वानः सन्नुपसंहरति—**तत्रेदमिति** । आत्मनि कर्मादिविभ्रमे लौकिके सिद्धे सतीदं कर्मणीत्यादिवचनं तत्परिहारार्थं भगवानुक्तवानित्यर्थः ।

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

एव भवतीत्यकर्मणि पर्यवस्यति । दाम्भिकस्य तु विकर्मणि पर्यवस्यति । यथोक्तं 'अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ नच तत्प्रेत्य नो इह' इति 'चत्वारि कर्माण्यभयंकराणि भयं प्रयच्छन्त्ययथा कृतानि । मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः ॥' इतिच । एवमौदासीन्यमकर्मापि शक्तस्यार्तपरित्राणाभावाद्विकर्मणि पर्यवस्यति । दीक्षितस्य भगवद्ध्यानाद्यासक्तस्य वा स्वकाले पञ्चयज्ञाद्यकरणं 'दीक्षितो न ददाति' इत्यादिवचनात् 'सर्वधर्मान्परित्यज्य' इत्यादिवचनाच्च कर्मण्येव पर्यवस्यति । नित्यकर्मकाले प्रत्यवायहेतोरन्यस्याविहितस्याकरणात् । एवं विकर्मापि हिंसा 'अग्नीषोमीयं पशुमालभेत' इति वचनाद्यज्ञे कर्मैव भवति सैव वृथा नष्टे पशौ न कर्म । विध्यर्थानिष्पत्तेः । नापि विकर्म कामकारेणाकृतत्वात् । किंतु परिशेषात्कृताप्यकृतैवेत्यकर्मणि पर्यवस्यति । एवं स्तेनप्रमोचनं तत्सयूथ्यानां कर्मापि राज्ञो विकर्म । 'स्तेनः प्रमुक्तो राजनि पापं मार्ष्टि' इति वचनात् तदेव यतीनामुपेक्षणीयत्वादकर्म । एवं हिंसाफलके सत्यादौ दानफलकेऽनृतादौ च विकर्मत्वकर्मत्वे बोध्ये । तस्मात्कर्माकर्मविकर्माख्ये कर्मणि

४ मधुसूदनीव्याख्या ।

विकर्मणोस्तत्त्वं कर्मशब्दस्य विहितप्रतिषिद्धपरत्वात्, द्वितीयपादेन चाकर्मणस्तत्त्वं दर्शितमिति द्रष्टव्यम् । तत्र यत्त्वं मन्यसे कर्मणो बन्धहेतुत्वात्तूष्णीमेव मया सुखेन स्थातव्यमिति तन्मृषा । असति कर्तृत्वाभिमाने विहितस्य प्रतिषिद्धस्य वा कर्मणो बन्धहेतुत्वाभावात् । तथाच व्याख्यातं न मां कर्माणि लिम्पन्तीत्यादिना । सति च कर्तृत्वाभिमाने तूष्णीमहमास इत्यौदासीन्याभिमानात्मकं यत्कर्म तदपि बन्धहेतुरेव वस्तुतत्त्वापरिज्ञानात् । तस्मात्कर्मविकर्माकर्मणां तत्त्वमीदृशं ज्ञात्वा विकर्माकर्मणी परित्यज्य कर्तृत्वाभिमानफलाभिसंधिहानेन विहितं कर्मैव कुर्वित्यभिप्रायः । अपरा व्याख्या—कर्मणि ज्ञानकर्मणि दृश्ये जडे

५ भाष्योत्कर्षदीपिका ।

स्तूष्णीं सुखमास इति भ्रान्त्या प्रतीतिस्तन्निराकरणायाह—अकर्मणि कर्म यः पश्यति । निवृत्तेरपि क्रियात्वात् । स मनुष्येषु

६ श्रीधरीव्याख्या ।

तदेवमारुरुक्षोः कर्मयोगाधिकारावस्थायां 'न कर्मणामनारम्भात्' इत्यादिनोक्त एव कर्मयोगः स्फुटीकृतः । तत्प्रपञ्चरूपत्वाच्चास्य प्रकरणस्य

७ अभिनवगुप्ताचार्यव्याख्या ।

वागादीनि वचनादानादौ मम क्रियायात्तमित्येवंलक्षणं यः पश्येत् । अकर्मणि च परैः प्रमातृभिः कृते कर्मणि पूजादौ कर्म क्रियां जनयति । एते कर्तारः सर्वेऽहमेवेति दृष्ट्या 'पूजकैरविभेदेन सदा पूजेति पूजनं' इति सिद्धभाषाप्रामाण्यात् । स एव मनुष्येषु सामान्यजनेषु मध्ये बुद्धि-

१ श्रीमच्छांकरभाष्यम् ।

**त्यादि । अत्र च कर्म कर्मैव सत् कार्यकरणाश्रयं कर्मरहितेऽविक्रिय आत्मनि सर्वैरध्यस्तं यतः पण्डितोऽप्यहं करोमीति मन्यते । अत आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिः प्रातिलोम्येनाकर्म कर्माभावं यथाभूतं गत्यभावमिव वृक्षेषु यः पश्येदकर्मणि च कार्यकरणव्यापारोपरमे कर्मवदात्मन्यध्यारोपिते तूष्णीमकुर्वन्सुखमास इत्यहंकाराभिसंधिहेतुत्वात्तस्मिन्नकर्मणि च कर्म यः पश्येत् । य एवं कर्माकर्मविभागज्ञः स बुद्धिमान्पण्डितो मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृच्च सोऽशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः । अयं श्लोकोऽन्यथा व्याख्यातः कैश्चित्—कथं, नित्यानां किल कर्मणामीश्वरार्थेऽनुष्ठीयमानानां तत्फलाभावादकर्माणि तान्युच्यन्ते गौण्या वृत्त्या । तेषां चाकरणमकर्म तच्च प्रत्यवायफलत्वात्कर्मोच्यते गौण्यैव वृत्त्या । तत्र नित्ये कर्मण्यकर्म यः पश्येत् फलाभावाद्यथा धेनुरपि गौरगौरुच्यते क्षीराख्यं फलं न प्रयच्छतीति तद्वत् । तथा नित्याकरणे त्वकर्मणि कर्म यः पश्येन्नरकादिप्रत्यवायफलं प्रयच्छतीति । नैतद्युक्तं व्याख्यान-**

२ आनन्दगिरिव्याख्या ।

संप्रत्युक्तेर्थे श्लोकाक्षरसमन्वयं दर्शयितुं कर्मणीत्यादि व्याचिख्यासुर्भूमिकां करोति—**अत्र चेति** । व्यवहारभूमौ कार्यकरणाधिकरणं कर्म स्वेनैव रूपेण व्यवस्थितं सदात्मन्यविक्रिये कार्यकरणारोपणद्वारेण सर्वैरारोपितमित्यत्र हेतुमाह—**यत इति** । अविवेकिनां तु कर्तृत्वाभिमानः सुतरामिति वक्तुमपिशब्दः । एवमात्मनि कर्मारोपमुपपाद्य प्रथमपादं व्याचष्टे—**अत इति** । आत्मनि कर्मरहिते कर्मारोपे दृष्टान्तमाह—**नदीति** । आरोपवशादात्मनिष्ठत्वेन कर्मणि सर्वलोकप्रसिद्धे कर्माभावं यः पश्येत्स बुद्धिमानिति संबन्धः । अकर्मदर्शनस्य यथाभूतत्वं सम्यक्त्वम् । तत्र दृष्टान्तमाह—**गत्यभावमिवेति** । द्वितीयपादं व्याकरोति—**अकर्मणि चेति** । अध्यारोपमभिनयति—**तूष्णीमिति** । अकर्मणि कर्मदर्शने युक्तिमाह—**अहंकारेति** । पूर्वार्धेनोक्तमनूद्योत्तरार्धं विभजते—**य एवमिति** । आत्मनि कार्यकरणसंघातसमारोपद्वारेण तद्व्यापारमात्रे कर्मणि शुक्तिकायामिव रजतमारोपितविषये तदभावमकर्म वस्तुतो यो रजताभाववदनुभवत्यकर्मणि च संघातव्यापारोपरमे तद्द्वारा स्वात्मन्यहं तूष्णीमासे सुखमित्यारोपिते गोचरे कर्माहंकारहेतुकं यस्तत्त्वतो मन्यते स रूप्यतदभावविभागहीनशुक्तिमात्रवदात्ममात्रं कर्मतदभावविभागशून्यं कूटस्थं परमार्थतोऽवगच्छन्बुद्धिमानित्यादिस्तुतियोग्यतां गच्छतीत्येवं स्वाभिप्रायेण श्लोकं व्याख्यायात्र वृत्तिकारव्याख्यानमुत्थापयति—**अयमिति** । अन्यथाव्याख्यानमेव प्रश्नद्वारा प्रकटयति—**कथमित्यादिना** । ईश्वरार्थेनानुष्ठाने फलाभाववचनं व्याहतमिति मत्वाह—**किलेति** । नित्यानामकर्मत्वमप्रसिद्धमित्याशङ्क्य फलराहित्यगुणयोगात्तेष्वकर्मत्वव्यवहारः सिध्यतीत्याह—**गौण्येति** । नित्यानामकरणं मुख्यवृत्त्यैवाकर्म वाच्यमित्याह—**तेषां चेति** । तत्र कर्मशब्दस्य प्रत्यवायाख्यफलहेतुत्वगुणयोगाद् गौण्यैव वृत्त्या प्रवृत्तिरित्याह—**तच्चेति** । पातनिकामेवं कृत्वा श्लोकाक्षराणि व्याचष्टे—**तत्रेत्यादिना** । अकर्मणि चेत्यादि व्याकरोति—**तथेति** । स बुद्धिमानित्यादि पूर्ववत् । परकीयं व्याख्यानं व्युदस्यति—**नैतदिति** । नित्यं कर्माकर्म नित्याकरणं कर्मेति ज्ञानाद्दुरितनिवृत्त्यनुपपत्तेर्भगवद्वचनं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अकर्म तद्वैपरीत्यं यः पश्येत् स कार्याकार्यविभागज्ञो बोद्धव्यानामेषां प्रबोधात् बुद्धिमानित्युच्यते । तथा किं कर्मेति श्लोके यत्र कवीनामपि मोहोऽस्ति ययोश्च ज्ञानमशुभमोक्षहेतुस्ते कर्माकर्मणी प्रवक्ष्यामीत्युपक्षिप्तं तद्व्याख्या न कर्मणि च कर्म यः पश्येत्स युक्त इति । चकारो दर्शनद्वयसमुच्चयार्थः । तेन यो बुद्धिमान्युक्तश्च स एव कृत्स्नकर्मकृत् नत्वेकैक इत्यपि ज्ञेयम् । तथाहि अकर्मणि स्पन्दशून्ये कूटस्थे वस्तुनि कर्म सस्पन्दं बाह्यं वियदादि आभ्यन्तरं प्रमात्रा-

४ मधुसूदनीव्याख्या ।

सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वभ्रमाधिष्ठानमकर्मावेद्यं स्वप्रकाशचैतन्यं परमार्थदृष्ट्या यः पश्येत् । तथा अकर्मणि च स्वप्रकाशे दृग्वस्तुनि कल्पितं कर्म दृश्यं मायामयं न परमार्थसत्, दृग्दृश्ययोः संबन्धानुपपत्तेः 'यस्तु सर्वाणि भूतान्यात्म-

५ भाष्योत्कर्षदीपिका ।

बुद्धिमान् स युक्तः योगी कृत्स्नकर्मकृत् समस्तकर्मकृच्च स इति कर्माकर्मणोस्तत्त्वदर्शी स्तूयते । यत्तु परमेश्वराराधनलक्षणे कर्मणि

६ श्रीधरीव्याख्या ।

न पौनरुक्त्यदोषः । अनेनैव योगारूढावस्थायां 'यस्त्वात्मरतिरेव स्यात्' इत्यादिना यः कर्मानुपयोग उक्तस्तस्याप्यर्थात्प्रपञ्चः कृतो वेदि-

७ अभिनवगुप्ताचार्यव्याख्या ।

मान् । देहेन्द्रियादिष्वपि कर्तृत्वदर्शनादात्मनि निष्क्रियत्वदर्शनाच्च सएव कृत्स्नकर्मकृत् । कर्त्रन्तरेषु स्वरूपदृष्टयध्यवसायात् 'पूजनान्नास्ति मे

---

१ श्रीधरः

१ श्रीमच्छांकरभाष्यम् ।

मेवंज्ञानादशुभान्मोक्षानुपपत्तेर्यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति भगवतोक्तं वचनं बाध्येत । कथं, नित्यानामनुष्ठानादशुभात्स्यान्नाम मोक्षणं नतु तेषां फलाभावज्ञानात् । नहि नित्यानां फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदितं नित्यकर्मज्ञानं वा । नच भगवतैवेहोक्तम् । एतेनाकर्मणि कर्मदर्शनं प्रत्युक्तम् । नह्यकर्मणि कर्मेति दर्शनं कर्तव्यतयेह चोद्यते, नित्यस्य तु कर्तव्यतामात्रम् । नचाकरणान्नित्यस्य प्रत्यवायो भवतीति विज्ञानात्किंचित्फलं स्यात् । नापि नित्याकरणं ज्ञेयत्वेन चोदितम् । नापि कर्माकर्मेति मिथ्यादर्शनादशुभान्मोक्षणं बुद्धिमत्त्वं युक्तता कृत्स्नकर्मकृत्त्वादि च फलमुपपद्यते स्तुतिर्वा । मिथ्याज्ञानमेव हि साक्षादशुभरूपं कुतोऽन्यस्मादशुभान्मोक्षणम् । नहि तमस्तमसो

२ आनन्दगिरिव्याख्या ।

वृत्तिकारमते बाधितं स्यादित्यर्थः । 'धर्मेण पापमपनुदति' इति श्रुतेर्नित्यानुष्ठानाद् दुरितनिबर्हणप्रसिद्धेस्तदनुष्ठानस्य फलान्तराभावात्तदकर्मेति ज्ञात्वानुष्ठाने क्रियमाणे कथमशुभक्षयो नेति शङ्कते—कथमिति । 'क्षेत्रज्ञस्येश्वरज्ञानादिशुद्धिः परमा मता' इति स्मरणात्कर्मणात्यन्तिकाशुभक्षयाभावेऽप्यङ्गीकृत्य परिहरति—नित्यानामिति । नित्यानुष्ठानादशुभक्षयेऽपि नास्मिन्प्रकरणे तद्विवक्षितं यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति ज्ञानादशुभक्षयस्य प्रतिज्ञातत्वात्, नच तज्ज्ञानफलाभावविषयमेषितव्यमित्याह—नहीति । अशुभस्य फलाभावाज्ञानकार्यत्वाभावान्न फलाभावज्ञानात्क्षयः सिध्यतीत्यर्थः । किंचातीन्द्रियोऽर्थः शास्त्रान्निश्चीयते, नच नित्यकर्मणां फलाभावज्ञानादशुभनिवृत्तिरित्यत्र शास्त्रमस्तीत्याह—नहीति । नित्याकरणं कर्मेति ज्ञानमपि नाशुभनिवृत्तिफलत्वेन चोदितमस्तीत्याह—नित्यकर्मेति । भगवद्वचनमेवात्र प्रमाणमित्याशङ्क्याह—नचेति । साधारणमेव यज्ज्ञात्वेत्यादि भगवतो वचनं नतु नित्यानां फलाभावं ज्ञात्वेति विशेषविषयमित्यर्थः । अशुभमोक्षणासंभवप्रदर्शनेन कर्मण्यकर्मदर्शननिराकरणन्यायेनाकर्मणि कर्मदर्शनं निराकरोति—एतेनेति । नामादिषु फलाय ब्रह्मदृष्टिवदकर्मण्यपि फलार्थं कर्मदृष्टिविधानान्नाशुभमोक्षणानुपपत्तिरित्याशङ्क्याह—नहीति । अत्र हि श्लोके नित्यस्य कर्तव्यतामात्रं परमते विवक्षितमतश्चाकर्मणि कर्मदर्शनं विधीयते तत्फलायेति कल्पना परस्य सिद्धान्ताविरुद्धेत्याह—नित्यस्य त्विति । परमतेऽपि नित्यस्य कर्तव्यतामात्रमत्र श्लोके न विवक्षितं किंतु नित्यानुष्ठाने प्रवृत्तिसिद्ध्यर्थं नित्याकरणात्प्रत्यवायो भवतीति ज्ञानमपि कर्तव्यत्वेनात्र विवक्षितमेवेत्याशङ्क्याह—नचेति । न तावत्प्रवृत्तिरस्य विज्ञानस्य फलं नियोगादेव तदुपपत्तेर्नापि फलान्तरमनुपलम्भादतोऽफलत्वादकरणात्प्रत्यवायो भवतीति ज्ञानं नात्र कर्तव्यत्वेन विवक्षितमित्यर्थः । किंचाकरणे कर्मदृष्टिविधावकरणस्यालम्बनत्वेन प्रधानत्वाज्ज्ञेयत्वं वक्तव्यं तच्च तुच्छत्वादनुपपन्नमित्याह—नापीति । अकरणस्यासतो नामादिवदाश्रयत्वेन दर्शनासंभवेऽपि सामानाधिकरण्येनेदं रजतमितिवद्दर्शनं भविष्यतीत्याशङ्क्याह—नापि कर्मेति । आदिशब्देन सर्वोत्कर्षादि गृह्यते, फलवत्त्वं स्तुतिर्वा सम्यग्ज्ञानस्य युक्तं न मिथ्याज्ञानस्यानुपपत्तेरित्यर्थः । स्वप्ने मिथ्याज्ञानमपि फलवदुपलब्धमित्याशङ्क्य मिथ्याज्ञानस्याशुभाविरोधित्वान्न तस्मात्तन्निवृत्तिरित्याह—मिथ्याज्ञानमेवेति । अशुभादेवाशुभानिवृत्तौ दृष्टान्तमाह—नहीति । अविवेकपूर्वकमिदं रजतमिति सदसतोः सामानाधिकरण्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दिकं चाधाराधेयभावेन वा, उपादानोपादेयभावेन वा, अधिष्ठानाध्यस्तभावेन वा पश्यन्तः शास्त्रविदः कर्माणि कुर्वन्ति । तत्राद्यः सांख्येऽसङ्गे मयि संघातकर्म एव सन्कर्त्रादिरविवेकात्स्फटिके लौहित्यमिव भातीति मन्यते । द्वितीयस्तु कनककुण्डलवद्ब्रह्मोद्भवं सर्वं ब्रह्मैवेति कर्म तत्साधनादिकमहं च ब्रह्मैवेति भावयन्करोति । एतौ युक्तावप्यतिबुद्धिमानप्ययुक्तः करोति तस्य सर्वमसदेव भवति नत्वशुभमोक्षाय । 'यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके यजति

४ मधुसूदनीव्याख्या ।

न्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते' इति श्रुतेः । एवं परस्पराध्यासेऽपि शुद्धं वस्तु यः पश्यति मनुष्येषु मध्ये स एव बुद्धिमान्नान्यः । अस्य परमार्थदर्शित्वादन्यस्य चापरमार्थदर्शित्वात् । सच बुद्धिसाधनयोगयुक्तोऽन्तःकरणशुद्ध्या

५ भाष्योत्कर्षदीपिका ।

विषयेऽकर्म कर्मेदं न भवति इति यः पश्येत्तस्य ज्ञानहेतुत्वेन बन्धकत्वाभावात् । अकर्मणि च विहिताकरणे कर्म यः पश्येत्प्रत्यवायोत्पादकत्वेन बन्धहेतुत्वात् स बुद्धिमानित्यादि तदसंगतम् । एवं ज्ञानादशुभान्मोक्षस्यानुपपत्त्या यज्ज्ञात्वेत्यादि भगवदुक्तिबाध-

६ श्रीधरीव्याख्या ।

तव्यः । यदा आरुरुक्षोरपि कर्म बन्धकं न भवति तदाऽऽरूढस्य कुतो बन्धकं स्यादित्यत्रापि श्लोको योज्यते । यद्वा कर्मणि देहेन्द्रियादि-

७ अभिनवगुप्ताचार्यव्याख्या ।

तुष्टिर्नास्ति खेदो स्वपूजनात् । पूजकैरविभेदेन सदा पूज्येति पूजनम् ॥' इति सोमानन्दपादाः । ननु परकृते कर्मणि कथं स्वकीयकर्मदर्शनम् ।

१ श्रीमच्छांकरभाष्यम् ।

**निवर्तकं भवति । ननु कर्मणि यदकर्मदर्शनमकर्मणि वा कर्मदर्शनं न तन्मिथ्याज्ञानं किं तर्हि गौणं फलभावाभावनिमित्तम् । न कर्माकर्मविज्ञानादपि गौणात्फलस्याश्रवणात् । नापि श्रुतहान्यश्रुतपरिकल्पनया कश्चिद्विशेषो लभ्यते । स्वशब्देनापि शक्यं वक्तुं नित्यकर्मणां फलं नास्त्यकरणाच्च तेषां नरकपातः स्यादिति । तत्र व्याजेन परव्यामोहरूपेण कर्मण्यकर्म यः पश्येदित्यादिना किं, तत्रैवंव्याचक्षाणेन भगवतोक्तं वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यात् । नचैतच्छद्मरूपेण वाक्येन रक्षणीयं वस्तु, नापि शब्दान्तरेण पुनः पुनरुच्यमानं सुबोधं स्यादित्येवं वक्तुं युक्तम् । कर्मण्येवाधिकारस्त**

२ आनन्दगिरिव्याख्या ।

न्मिथ्याज्ञानं युक्तं कर्माकर्मणोस्तु विवेकेन भासमानयोः सामानाधिकरण्याधीनं ज्ञानं सिंहदेवदत्तयोरिव गौणं न मिथ्याज्ञानमिति शङ्कते—**नन्विति** । कर्माकर्मेति दर्शने फलाभावो गुणोऽकर्म कर्मेति दर्शने तु फलाभावो गुणस्तन्निमित्तमिदं ज्ञानं गौणमित्याह—**फलेति** । यथोक्तज्ञानस्य गौणत्वेऽपि प्रामाणिकफलाभावान्न तद्गौणतोचितेति दूषयति—**नेत्यादिना** । कर्माकर्मेत्यादिगौणविज्ञानोपन्यासव्याजेन नित्यकर्मणः कर्तव्यतया विवक्षितत्वाद्गौणज्ञानस्याफलत्वमदूषणमित्याशङ्क्याह—**नापीति** । ज्ञानादशुभमोक्षणस्य श्रुतस्य हानिरश्रुतस्य नित्यानुष्ठानस्य कल्पनेत्यनेन व्यापारगौरवेण न कश्चिद्विशेषः सिध्यतीत्यर्थः । उक्तमेव प्रपञ्चयति—**स्वशब्देनेति** । नरकपातः स्यादतो विधेरेवानुष्ठेयानि तानीति शेषः । यथोक्तवाचकशब्दप्रयोगादेवापेक्षितार्थसिद्धिसंभवे भगवतो व्याजवचनकल्पनमनुचितमित्याह—**तत्रेति** । प्रकृते श्लोके वृत्तिकृतां व्याख्यानेन परमाप्तस्यैव भगवतो विप्रलम्भकत्वमापादितमिति तदीयं व्याख्यानमुपेक्षितव्यमिति फलितमाह—**तत्रैवमिति** । नित्यकर्मानुष्ठानसिद्ध्यर्थं व्याजरूपमिति भगवद्वचनमुचितमित्याशङ्क्य स्वशब्देनापीत्यादिप्रागुक्तपरिपाट्या तदनुष्ठानबोधनसंभवान्मैवमित्याह—**नचैतदिति** । वस्तुशब्देन नित्यकर्मानुष्ठानमुच्यते । यथात्मप्रतिपादनं सुबोधत्वसिद्ध्यर्थं पौनःपुन्येन क्रियते तथा नित्यानामपि कर्मणामनुष्ठानं कर्मण्यकर्मेत्यादिशब्दान्तरेणोच्यमानं सुबोधं स्यादिति भगवतः शब्दान्तरं युक्तमित्याशङ्क्य तस्य नित्यानुष्ठानवाचकत्वाभावान्मैवमित्याह—**नापीति** । किंच पूर्वमेव नित्यानुष्ठानस्य स्पष्टमुपदिष्टत्वान्न तस्य सुबोधनार्थं शब्दान्तरमपेक्षितमित्याह—**कर्मण्येवेति** । कर्माकर्मादिविज्ञानव्याजेन नित्यकर्मानुष्ठानकर्तव्यतायां तात्पर्यमित्येतन्निराकृत्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ददाति तपस्तप्यतेऽपि बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति' इति श्रुतेः । यस्तु युक्तोऽपि निर्बुद्धित्वादकार्यमपि करोति स प्रत्यवैति । पापाश्लेषनिमित्तस्यापरोक्षज्ञानस्याभावात् । अनयोश्चाविद्याविद्याशब्दितयोः कर्मपरोक्षज्ञानयोः समुच्चयः श्रूयते 'विद्यां चाविद्यां च' इति मन्त्रे । यद्वा द्विविधं कर्मणि कर्मदर्शनं परोक्षमपरोक्षं च । तत्राद्यवान् ज्ञानकर्मसमुच्चयानुष्ठाता बुद्धिमानुच्यते । अपरोक्षमपि द्विविधम् । उपास्यसाक्षात्काररूपं तत्त्वसाक्षात्काररूपं च । तत्राद्यमपि व्याकृताव्याकृतरूपोपास्यभेदेन द्विविधम् । तत्रापि व्याकृतं सूत्रं कार्यम् । तद्दर्शी विगतदेहाहंकारत्वाद्योगशास्त्रे विदेह उच्यते । अव्याकृतं कारणं तद्दर्शी प्रकृतिलय उच्यते । अनयोरुपासनयोः संभवासंभवसंज्ञयोः समुच्चयो विधीयते

४ मधुसूदनीव्याख्या ।

एकाग्रचित्तः । अतः स एवान्तःकरणशुद्धिसाधनकृत्स्नकर्मकृदिति वास्तवधर्मैरेव स्तूयते । यस्मादेवं तस्मात्त्वमपि परमार्थदर्शी भव, तावतैव कृत्स्नकर्मकारित्वोपपत्तेरित्यभिप्रायः । अतो यदुक्तं यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति, यच्चोक्तं कर्मादीनां तत्त्वं बोद्धव्यमस्तीति, स बुद्धिमानित्यादिस्तुतिश्च, तत्सर्वं परमार्थदर्शने संगच्छते । अन्यज्ज्ञानादशुभात्संसारान्मोक्षानुपपत्तेः । अतस्त्वं चान्यन्न बोद्धव्यं न वा तज्ज्ञाने बुद्धिमत्त्वमिति युक्तैव परमार्थदर्शिनां व्याख्या । यत्तु व्याख्यानं कर्मणि नित्ये परमे-

५ भाष्योत्कर्षदीपिका ।

प्रसङ्गात् । नहि नित्यानामनुष्ठानसापेक्षाणां कर्मणां फलाभावज्ञानान्मोक्षणं भवति । नापि कर्माकर्माकर्म कर्मेति मिथ्याज्ञानादशुभस्वरूपादन्यतोऽशुभान्मोक्ष उपपद्यते । अकर्मणश्चाभावरूपतया भावरूपस्य प्रत्यवायस्योत्पत्तेर्वर्णनम् 'कथमसतः सज्जायत' इति श्रुतिविरुद्धमिति संक्षेपः । विस्तरस्तु भाष्ये द्रष्टव्यः । [1]यदपि कर्मणि ज्ञानकर्मणि दृश्ये जडे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वभ्रमाधिष्ठानमकर्मावेद्यं स्वप्रकाशचैतन्यं परमार्थदृष्ट्या यः पश्येत्तथाऽकर्मणि च स्वप्रकाशे दृग्वस्तुनि कल्पितं कर्म दृश्यं मायामयं

६ श्रीधरीव्याख्या ।

व्यापारे वर्तमानोऽप्यात्मनो देहादिव्यतिरेकानुभवेनाकर्म स्वाभाविकं नैष्कर्म्यमेव यः पश्येत्, तथा कर्मणि च ज्ञानरहिते दुःखबुद्ध्या

७ अभिनवगुप्ताचार्यव्याख्या ।

नह्यन्यकृतभोजनेन स्वकृतभोजनाद्युपगमः । तस्मादकर्मणि च कर्म यः पश्येदिति कथमितिचेत् ज्ञानिन एवंविधानुसंधानादिति भ्रमः । यतो

१ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

इत्यत्र हि स्फुटतर उक्तोऽर्थो न पुनर्वक्तव्यो भवति । सर्वत्र च प्रशस्तं बोद्धव्यं च कर्तव्यमेव न निष्प्रयोजनं बोद्धव्यमित्युच्यते । नच मिथ्याज्ञानं बोद्धव्यं भवति तत्प्रत्युपस्थापितं चावस्थाभासम् । नापि नित्यानामकरणादभावात्प्रत्यवायोत्पत्तिर्नासतो विद्यते भाव इति वचनात् 'कथमसतः सज्जायेत' इति च दर्शितम् । असतः सज्जन्मप्रतिषेधादतः सदुत्पत्तिं ब्रुवताऽसदेव सद्भवेत्सच्चासद्भवेदित्युक्तं स्यात् । तच्चाप्ययुक्तं सर्वप्रमाणविरोधात् । नच निष्फलं विदध्यात्कर्मशास्त्रं दुःखरूपत्वाद् दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेः । तदकरणे च नरकपाताभ्युपगमेऽनर्थायैवोभयथापि करणे-

२ आनन्दगिरिव्याख्या ।

कर्माकर्मादिदर्शनं गौणमिति पक्षे दूषणान्तरमाह—सर्वत्र चेति । लोके वेदे च यथा प्रशस्तं देवतादितत्त्वं यच्च कर्तव्यमनुष्ठानार्हमग्निहोत्रादि तदेव बोद्धव्यमित्युच्यते न निष्फलं काकदन्तादि कर्मण्यकर्मदर्शनमकर्मणि च कर्मदर्शनं गौणत्वादेवाप्रशस्तमकर्तव्यं च नातस्तद्बोद्धव्यमिति वचनमर्हतीत्यर्थः । किंच कर्मादेर्मायामात्रत्वाद्गौणमपि तद्विषयं ज्ञानं मिथ्याज्ञानमिति न तस्य बोद्धव्यत्वसिद्धिरित्याह—नचेति । मिथ्याज्ञानस्य बोद्धव्यत्वाभावेऽपि तद्विषयस्य बोद्धव्यता सिध्येदित्याशङ्क्य वस्त्वाभासत्वान्मैवमित्याह—तत्प्रत्युपस्थापितं चेति । यत्पुनरकरणस्य प्रत्यवायहेतुत्वमकरणे गौण्या वृत्त्या कर्मशब्दप्रयोगे निमित्तमिति तद्दूषयति—नापीति । अकरणात्प्रत्यवायो भवतीत्यत्र श्रुतिस्मृतिविरोधमभिधाय युक्तिविरोधमभिदधाति—असत इति । असतः सद्रूपेण भवनमभवनं च निःस्वरूपत्वादनुपपन्नं निरस्तसमस्ततत्त्वस्य किंचित्तत्त्वाभ्युपगमे सर्वप्रमाणानामप्रामाण्यप्रसङ्गादित्याह—तच्चेति । यत्तु नित्यानां फलराहित्यं तत्राकर्मशब्दप्रयोगे निमित्तमिति तन्निरस्यति—नचेति । न केवलं विध्युद्देशे स्वफलाभावान्नित्यानां विध्यनुपपत्तिरपितु धात्वर्थस्य क्लेशात्मकत्वात्तत्र श्रुतफलाभावेनैव विधिरवकाशमासादयेदित्याह—दुःखेति । दुःखरूपस्यापि धात्वर्थस्य साध्यत्वेन कार्यत्वात्तद्विषयो विधिः स्यादिति चेन्नेत्याह—दुःखस्य चेति ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'अन्यदेवाहुः संभवात्' इत्यादिना । सोऽयं युक्त इत्युच्यते । अस्याप्यग्रे कर्तव्यमवशिष्टमस्तीति नायमपि कृत्स्नकर्मकृत् किंतु यस्य कर्मबाधेनाकर्मदर्शनं मुख्यमस्ति स एव कृतकृत्यत्वान्मुख्यः कृत्स्नकर्मकृदिति । एतेष्वाद्यो मनुष्येषु देहाभिमानिष्वेव बुद्धिमानित्यक्रान्तदर्शित्वादकविरेव । मध्यमौ क्रान्तदर्शिनावपि तत्त्वविषये मूढत्वात्कवयोऽप्यत्र मोहिता इत्युक्तौ । एतयोर्व्यवधानेनाशुभान्मुक्तिः । उत्तमस्तु जीवन्नेवाशुभान्मुक्त इति श्लोकार्थः प्रतिभाति । 'व्याख्यातुरपि मे नास्ति भाष्यकारेण तुल्यता । गुहावद्योतिनोऽप्यस्ति किं दीपस्यार्कतुल्यता ॥' यद्वा कर्माकर्मणी वक्तव्यत्वेन बोद्धव्यत्वेन चोपक्षिप्यात्र तयोर्लक्षणप्रदर्शनमुचितम् । अतो यदकर्मणा विशेषितं तदेव कर्म नान्यदिति कर्मलक्षणम् । यच्च कर्मणा विशेषितं तदेवाकर्मेत्यकर्मलक्षणमिति व्याख्येयम् । अक्षरार्थस्तु कर्म यज्ञादिकं ससा-

४ मधुसूदनीव्याख्या ।

श्वरार्थेऽनुष्ठीयमाने बन्धहेतुत्वाभावादकर्मेदमिति यः पश्येत् तथा अकर्मणि च नित्यकर्माकरणे प्रत्यवायहेतुत्वेन कर्मेदमिति यः पश्येत् स बुद्धिमानित्यादि तदसङ्गतमेव । नित्यकर्मण्यकर्मेदमिति ज्ञानस्याशुभमोक्षहेतुत्वाभावात्, मिथ्याज्ञानत्वेन तस्यैवाशुभत्वाच्च । नचैतादृशं मिथ्याज्ञानं बोद्धव्यं तत्त्वं नाप्येतादृशज्ञाने बुद्धिमत्त्वादिस्तुत्युपपत्तिर्भ्रान्तत्वात् । नित्यकर्मानुष्ठानं हि स्वरूपतोऽन्तःकरणशुद्धिद्वारोपयुज्यते न तत्राकर्मबुद्धिः कुत्राप्युपयुज्यते शास्त्रेण नामादिषु ब्रह्मदृष्टिवदविहितत्वात् । नापी-

५ भाष्योत्कर्षदीपिका ।

न परमार्थसत् दृग्दृश्ययोः संबन्धानुपपत्तेः । एवं परस्पराध्यासेऽपि शुद्धं वस्तु यः पश्यति स परमार्थदर्शित्वाद्बुद्धिमानित्यादिवास्तवैरेव गुणैः स्तूयत इति कैश्चिद्व्याख्यातं तदप्युपेक्ष्यम् । ज्ञानकर्मणः घटादिरूपस्याप्रस्तुतत्वात् । एवं ज्ञात्वेत्यादिनोपक्रम्य किं कर्मेत्यनेन तत्र वैषम्यं प्रदर्श्य तस्य कर्मणो बोद्धव्यं तत्त्वमस्तीति निरूप्यानेन श्लोकेन तत्त्वकथनस्योचितत्वेन ज्ञानकर्मणोऽकर्तव्यस्य वर्णनमसंगतमिति दिक् । यदपि कर्माकर्मणी वक्तव्यत्वेन बोद्धव्यत्वेन चोपक्षिप्यात्र तयोर्लक्षणदर्शनमुचितम् । अतो यदकर्मणा विशेषितं

६ श्रीधरीव्याख्या ।

कर्मणां त्यागे कर्म यः पश्येत्, तस्य प्रतिबन्धकत्वेन मिथ्याचारत्वात् । तदुक्तं 'कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्' इति । य

७ अभिनवगुप्ताचार्यव्याख्या ।

निष्पन्ननिष्कम्पविज्ञानशालिनः प्रमेयान्तरप्रमात्रन्तरजातं बहुविधमनुसंधानमस्ति । यथा य एवाहं घटादीन्वेद्मि स एव पटादीन् । एवं चैत्र-

१ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

**ऽकरणे च शास्त्रं निष्फलं कल्पितं स्यात् । स्वाभ्युपगमविरोधश्च नित्यं निष्फलं कर्मेत्यभ्युपगमस्य मोक्षफलायेति ब्रुवतः । तस्माद्यथाश्रुत एवार्थः कर्मण्यकर्मेत्यादेः । तथाच व्याख्यातोऽस्माभिः श्लोकः**

२ आनन्दगिरिव्याख्या ।

**स्वर्गादिफलाभावेऽपि नित्यानामकरणनिमित्तनिरयनिरासार्थं दुःखरूपाणामपि स्यादनुष्ठेयत्वमित्याशङ्क्याह—तदकरणे चेति । फलान्तराभावेऽपि मोक्षसाधनत्वान्मुमुक्षुणा नित्यानि कर्माण्यनुष्ठेयानीत्याशङ्क्याह—स्वाभ्युपगमेति । वृत्तिकारव्याख्यानासद्भावे फलितमुपसंहरति—तस्मादिति । कोऽसौ यथाश्रुतोऽर्थः श्लोकस्येत्याशङ्क्याह—**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

धनम् । तत्राकर्म स्पन्दशून्यं कूटस्थं ब्रह्म यः पश्येत् कर्मतदङ्गेषु ब्रह्मदृष्टिमध्यस्येत् 'अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् । मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्' इत्युक्तप्रकारेण । अन्यथा यत्कृतं तद्वृथा चेष्टारूपमेवातो गहना कर्मणो गतिः । किं तदकर्म यत्कर्मण्यध्यस्यत इत्याकाङ्क्षायां यत्रैतत्कर्म पुण्यपापात्मकं दृश्यते 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' इति तत्फलं च सुखदुःखादिकं अहं सुखी अहं दुःखीति स प्रत्यक्चेतनोऽकर्म तत्रैवेदं कर्म अस्पन्दे स्पन्दात्मकमसर्पे सर्प इवाध्यस्तमिति यः पश्येदिति । अयं भावः—यथा रज्ज्वामध्यस्तं सर्पं पश्यन्नायं सर्पो रज्जुरियमिति वाक्यात्तस्य रज्जुत्वं विक्षेपप्राबल्यादप्रतिपद्यमानो नरः सर्पमिमं रज्जुदृष्ट्योपास्स्वेति नियोज्यते सचोपासनादार्ढ्ये सर्पं विस्मृत्य रज्जुतत्त्वमेव विन्दति । यस्तु वाक्यादेव रज्जुतत्त्वं विन्दति न तस्य प्रत्ययावृत्तिलक्षणया उपास्त्या प्रयोजनमस्ति । एवमकर्मण्यध्यस्तं कर्त्रादितत्त्वमसीतिवाक्याद्बाधित्वाऽकर्मप्रतिपत्तिर्भवति शुद्धसत्त्वस्य । अन्यस्य तु कर्त्रादीनेवाकर्मदृष्ट्या उपासीनस्य भावनादार्ढ्यात्कर्त्रादिरूपतिरोधानेनाकर्मतत्त्वप्रतिपत्तिरिति । यद्वा कर्मणीवाकर्मण्यपि विकर्मसहितेऽकर्मदृष्टिर्माभूदित्याशङ्क्याह—**कर्मणीति** । विहिताकरणे प्रतिषिद्धाचरणे च कर्मदृष्टिरेव भवेत् । अकर्मतो बिभ्यत्कर्म ब्रह्मदृष्ट्या कुर्यान्न त्वकर्मापि तादृशदृष्ट्या कुर्यादित्यर्थः ॥ १८ ॥ अविदुषां

४ मधुसूदनीव्याख्या ।

दमेव वाक्यं तद्विधायकम् । उपक्रमादिविरोधस्योक्तेः । एवं नित्यकर्माकरणमपि स्वरूपतो नित्यकर्मविरुद्धकर्मलक्षकतयोपयुज्यते नतु तत्र कर्मदृष्टिः क्वाप्युपयुज्यते । नापि नित्यकर्माकरणात्प्रत्यवायः, अभावाद्भावोत्पत्त्ययोगात् । अन्यथा तदविशेषेण सर्वदा कार्योत्पत्तिप्रसङ्गात् भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयत इति न्यायेन भावार्थस्यैवापूर्वजनकत्वात् । 'अतिरात्रे षोडशिनं न गृह्णाती'त्यादावपि संकल्पविशेषस्यैवापूर्वजनकत्वाभ्युपगमात् 'नेक्षेतोद्यन्तमादित्यम्' इत्यादि प्रजापतिव्रतवत् । अतो नित्यकर्मानुष्ठानार्हे काले तद्विरुद्धतया यदुपवेशनादिकर्म तदेव नित्यकर्माकरणोपलक्षितं प्रत्यवायहेतुरिति वैदिकानां सिद्धान्तः । अतएवाकुर्वन्विहितं कर्मेत्यत्र लक्षणार्थे शता व्याख्यातः । 'लक्षणहेत्वोः क्रियायाः' इत्यविशेषस्मरणेऽप्यत्र हेतुत्वानुपपत्तेः । तस्मान्मिथ्यादर्शनापनोदे प्रस्तुते मिथ्यादर्शनव्याख्यानं न शोभतेतरां, नापि नित्यानुष्ठानपरमेवैतद्वाक्यम् । नित्यानि कुर्यादित्यर्थे कर्मण्यकर्म यः पश्येदित्यादि तदबोधकं वाक्यं प्रयुञ्जानस्य भगवतः प्रतारकत्वोपपत्तेरित्यादि भाष्य एव विस्तरेण व्याख्यातमित्युपरम्यते ॥ १८ ॥ तदेतत्परमार्थदर्शिनः कर्तृत्वाभिमानाभावेन कर्मालिप्तत्वं प्रपञ्च्यते—

५ भाष्योत्कर्षदीपिका ।

तदेव कर्म नान्यदिति कर्मलक्षणम् । यच्च कर्मणा विशेषितं तदेवाकर्म इत्यकर्मलक्षणमिति व्याख्येयम् । अक्षरार्थस्तु कर्म यज्ञादिकं ससाधनं तदकर्म स्पन्दशून्यं कूटस्थं ब्रह्म यः पश्येत्कर्म तदङ्गेषु ब्रह्मदृष्टिमध्यसेत् । 'अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् । मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्' इत्युक्तेः । अन्यथा यत्कृतं तद्वृथाचेष्टारूपमेवातो गहना कर्मणो गतिः । किं तदकर्म यत्कर्मण्यध्यस्यते इत्याकाङ्क्षायां यत्रैतत्कर्म पुण्यपापात्मकं दृश्यते 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन' इति तत्फलं च सुखदुःखादिकमहं सुख्यहं दुःखीति स प्रत्यक्चेतनोऽकर्म तत्रैवेदं कर्म अस्पन्दे स्पन्दात्मकं सर्पः असर्प इव अध्यस्तमिति यः पश्येदिति तदप्यसंगतमेव प्रकरणविरोधस्यात्रापि तुल्यत्वात् । प्रस्तुतस्य तूष्णींभावात्मकस्याकर्मणः प्रत्यक्चैतन्यपरत्ववर्णने प्रस्तुतविरोधः स्फुटः । तथा कर्मण्यकर्मेत्यत्रापि कर्मप्रतियोगिकमेवाकर्मापेक्षितं नापि यज्ञरूपे कर्मणि ब्रह्मदृष्ट्यध्यासात्फलाभिसंधिकर्तृत्वाभिनिवेशत्यागं

६ श्रीधरीव्याख्या ।

एवंभूतः स तु सर्वेषु मनुष्येषु बुद्धिमान्पण्डितः । तत्र हेतुः कृत्स्नानि सर्वाणि यदृच्छया प्राप्तान्याहारादीनि कर्माणि कुर्वन्नपि स युक्त एवाकर्त्रात्मज्ञानेन समाधिस्थ एवेत्यर्थः । अनेनैव ज्ञानिनः स्वभावादापन्नं कलञ्जभक्षणादिकं न दोषाय, अज्ञस्य तु रागतः कृतं दोषायेति विकर्मणोऽपि तत्त्वं निरूपितं द्रष्टव्यम् ॥ १८ ॥ 'कर्मण्यकर्म यः पश्येत्' इति श्रुत्यर्थार्थापत्तिभ्यां यदुक्तमर्थद्वयं तदेव स्पष्टयति—

७ अभिनवगुप्ताचार्यव्याख्या ।

मैत्रादिप्रमात्रन्तरविषयमनुसंधानं ज्ञेयम् । अतएव वसिष्ठपादैरपि पूजकैरविभेद इत्युपदिष्टम् । तस्मादस्तुष्ठूक्तं अकर्मणि चेति ॥ १८ ॥ अतएव

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**
**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

॥ १८ ॥ तदेतत्कर्मण्यकर्मादि यथोक्तदर्शित्वं स्तूयते—यस्येति । यस्य यथोक्तदर्शिनः सर्वे यावन्तः समारम्भाः सर्वाणि कर्माणि समारभ्यन्त इति समारम्भाः कामसंकल्पवर्जिताः कामैस्तत्कारणैश्च संकल्पैर्वर्जिताः मुधैव चेष्टामात्रा अनुष्ठीयन्ते प्रवृत्तेन चेल्लोकसंग्रहार्थं निवृत्तेन चेज्जीवनमात्रार्थं तं ज्ञानाग्निदग्धकर्माणं कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निस्तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तमाहुः परमार्थतः पण्डितं बुधा ब्रह्मविदः ॥ १९ ॥ यस्त्वकर्मादिदर्शी सोऽकर्मादिदर्शनादेव निष्कर्मा संन्यासी जीवनमात्रार्थचेष्टः सन्कर्मणि न प्रवर्तते, यद्यपि प्राग्विवेकतः

२ आनन्दगिरिव्याख्या ।

तथाचेति ॥ १८ ॥ कर्मण्यकर्मदर्शनं पूर्वोक्तं स्तोतुमुत्तरश्लोकं प्रस्तौति—तदेतदिति । यथोक्तदर्शित्वं पूर्वोक्तदर्शनसंपन्नत्वम् । समारम्भशब्दस्य कर्मविषयत्वं न रूढ्या किंतु व्युत्पत्त्येत्याह—समारभ्यन्त इतीति । कामसंकल्पवर्जितत्वे कथं कर्मणामनुष्ठानमित्याशङ्क्याह—मुधैवेति । उद्देशफलाभावे तेषामनुष्ठानं यादृच्छिकं स्यादित्याशङ्क्य प्रवृत्तेन निवृत्तेन वा तेषामनुष्ठानं यादृच्छिकं स्यादिति विकल्प्य क्रमेण निरस्यति—प्रवृत्तेनेत्यादिना । ज्ञानाग्नीत्यादि विभजते—कर्मादाविति यथोक्तज्ञानं योग्यमेव दहति नायोग्यमिति विवक्षितत्वात्तस्मिन्नग्निपदम् । यथोक्तविज्ञानविरहिणामपि वैशेषिकादीनां पण्डितत्वप्रसिद्धिमाशङ्क्य तेषां पण्डिताभासत्वं विवक्षित्वा विशिनष्टि—परमार्थत इति ॥ १९ ॥ विवेकात्पूर्वं कर्मणि प्रवृत्तावपि सति विवेके तत्र न प्रवृत्तिरित्याशङ्क्याङ्गीकरोति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मण्यकर्मभावनां द्रढयितुं विदुषां कर्मदर्शनं स्तौति—**यस्य सर्वे समारम्भा इत्यादिभिः** षड्भिः । यस्य विदुषः सर्वे समारभ्यन्त इति समारम्भाः कर्माणि । कामेन फलेच्छया, संकल्पेनाहमिदं करोमीत्यभिमानेन च वर्जिताः तं ज्ञानाग्निना कर्मादावकर्मादिदर्शनेन दग्धान्यङ्कुरीभावाच्याावितानि कर्माणि शुभाशुभानि येन तं पण्डितं बुधा आहुः ॥ १९ ॥ ननु प्रायश्चित्तेनेव ज्ञानाग्निना पूर्वकर्मदाहेऽपि क्रियमाणं तत्फलाय भवेदित्यत आह—**त्यक्त्वेति ।**

४ मधुसूदनीव्याख्या ।

यस्येति ब्रह्मकर्मसमाधिनेत्यन्तेन । यस्य पूर्वोक्तपरमार्थदर्शिनः सर्वे यावन्तो वैदिका लौकिका वा समारम्भाः समारभ्यन्त इति व्युत्पत्त्या कर्माणि कामसंकल्पवर्जिताः, कामः फलतृष्णा, संकल्पोऽहं करोमीति कर्तृत्वाभिमानस्ताभ्यां वर्जिताः लोकसंग्रहार्थं वा जीवनमात्रार्थं वा प्रारब्धकर्मवेगाद्वृथाचेष्टारूपा भवन्ति । तं कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निस्तेन दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य, 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायात् । ज्ञानाग्निदग्धकर्माणं तं बुधा ब्रह्मविदः परमार्थतः पण्डितमाहुः । सम्यग्दर्शी हि पण्डित उच्यते नतु भ्रान्त इत्यर्थः ॥ १९ ॥ भवतु ज्ञानाग्निना प्राक्तनानामप्रारब्धकर्मणां दाहः, आगामिनां चानुत्पत्तिः, ज्ञानोत्पत्तिकाले क्रियमाणं तु पूर्वोत्तरयोरनन्तर्भावात्फलाय भवेदिति

५ भाष्योत्कर्षदीपिका ।

विनाऽशुभान्मोक्षणं भवति । तस्मात्सर्वैर्भाष्यकृद्भिरुक्तं व्याख्यानमेव समीचीनमिति दिक् ॥ १८ ॥ तदेतत्स्तौति—**यस्येति ।** यथोक्तदर्शिनः सर्वे समारभ्यन्त इति समारम्भाः कर्माणि कामैः फलतृष्णाभिः संकल्पैस्तत्रतत्र कर्तृत्वाभिनिवेशैस्तत्कारणीभूतैः यद्वा काम्यन्त इति कामाः फलानि तैः तत्कारणीभूतैस्तत्संकल्पैश्च वर्जिताः मुधैव चेष्टामात्रा अनुष्ठीयन्ते । कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निस्तेन दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तं परमार्थतः पण्डितं बुधाः तत्त्वदर्शिन आहुः ॥ १९ ॥ ज्ञानाग्निदग्धकर्मत्वात्तदीयं ज्ञानोत्तरं क्रियमाणमपि कर्माकर्मैव संपद्यत इत्येतमर्थं दर्शयन्नाह—**त्यक्त्वेत्यादिना ।** यत्तु भवतु ज्ञानाग्निना

६ श्रीधरीव्याख्या ।

**यस्येत्यादिपञ्चभिः ।** सम्यगारभ्यन्त इति समारम्भाः कर्माणि । काम्यत इति कामो बलं तत्संकल्पेन वर्जिता यस्य भवन्ति तं पण्डितमाहुः । तत्र हेतुः । यतस्तैः समारम्भैः शुद्धचित्ते सति जातेन ज्ञानाग्निना दग्धान्यकर्मतां नीतानि कर्माणि यस्य तम् । आरूढावस्थायां तु कामः फलविषयस्तदर्थमिदं कर्म कर्तव्यमिति कर्मविषयः संकल्पश्च ताभ्यां वर्जितः । शेषं स्पष्टम् ॥ १९ ॥ किंच—**त्यक्त्वेति ।**

७ अभिनवगुप्ताचार्यव्याख्या ।

कामेषु काम्यमानेषु फलेषु संकल्पं विहाय क्रियमाणानि कर्माणि कथितकथयिष्यमाणस्वरूपे ज्ञानाग्नावनुप्रविश्य दह्यन्ते ॥ १९ ॥ त्यक्त्वेति ।

१ मधुसूदनः ।

१ श्रीमच्छांकरभाष्यम् ।

**प्रवृत्तो यस्तु प्रारब्धकर्मा सन्नुत्तरकालमुत्पन्नात्मसम्यग्दर्शनः स्यात् स कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव, स कुतश्चिन्निमित्तात्कर्मपरित्यागासंभवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावाल्लोकसंग्रहार्थं पूर्ववत्कर्मणि प्रवृत्तोऽपि नैव किंचित्करोति । ज्ञानाग्निदग्धकर्मत्वात् । तदीयं कर्माकर्मैव संपद्यत इत्येतदर्थं दर्शयिष्यन्नाह—त्यक्त्वेति । त्यक्त्वा कर्मस्वभिमानं फलासङ्गं च यथोक्ते ज्ञाने नित्यतृप्तो निराकाङ्क्षो विषयेष्वित्यर्थः । निराश्रय आश्रयरहितः । आश्रयो नाम यदाश्रित्य पुरुषार्थं सिसाधयिषति । दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः । विदुषा क्रियमाणं कर्म परमार्थतोऽकर्मैव तस्य निष्क्रियात्मदर्शनसंपन्नत्वात् । तेनैवंभूतेन स्वप्रयोजनाभावात्ससाधनं कर्म परित्यक्तव्यमेवेति प्राप्ते ततो निर्गमासंभवाल्लोकसंग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा**

२ आनन्दगिरिव्याख्या ।

**यस्त्विति** । विवेकात्पूर्वमभिनिवेशेन प्रवृत्तस्य विवेकानन्तरमभिनिवेशाभावात्प्रवृत्त्यसंभवेऽपि जीवनमात्रमुद्दिश्य प्रवृत्त्याभ्यासः संभवतीत्यर्थः । सत्यपि विवेके तत्त्वसाक्षात्कारानुदयात्कर्मणि प्रवृत्तस्य कथं तत्त्यागः स्यादित्याशङ्क्याह—**यस्तु प्रारब्धेति** । त्यक्त्वेत्यादि समनन्तरश्लोकमवतारयितुं भूमिकां कृत्वा तदवतारणप्रकारं दर्शयति—**स कुतश्चिदिति** । लोकसंग्रहादिनिमित्तं विवक्षितं कर्म परित्यागासंभवे सति तस्मिन्प्रवृत्तोऽपि नैव करोति किंचिदिति संबन्धः । कर्मणि प्रवृत्तो न करोति कर्मेति कथमुच्यते तत्राह—**स्वप्रयोजनाभावादिति** । कथं तर्हि कर्मणि प्रवर्तते तत्राह— **लोकेति** । प्रवृत्तेरर्थक्रियाकारित्वाभावं 'पश्वादिभिश्चाविशेषात्' इति न्यायेन व्यावर्तयति—**पूर्ववदिति** । कथं तर्हि विवेकिनामविवेकिनां च विशेषः स्यादित्याशङ्क्य कर्मादौ सङ्गासङ्गाभ्यामित्याह—**कर्मणीति** । उक्तेऽर्थे समनन्तरश्लोकमवतारयति—**ज्ञानाग्नीति** । एतमर्थं दर्शयिष्यन्निमं श्लोकमाहेति योजना । यथोक्तं ज्ञानं कूटस्थात्मदर्शनं तेन स्वरूपभूतं सुखं साक्षादनुभूय कर्मणि तत्फले च सङ्गमपास्य विषयेषु निरपेक्षश्चेष्टते विद्वानित्याह—**त्यक्त्वेत्यादिना** । इष्टसाधनसापेक्षस्य कुतो निरपेक्षत्वमित्याशङ्क्य विशिनष्टि—**निराश्रय इति** । यदाश्रित्येति यच्छब्देन फलसाधनमुच्यते । आश्रयरहितमित्यस्यार्थं स्पष्टयति—**दृष्टेति** । तेन ज्ञानवता पुरुषेणैवंभूतेन । त्यक्त्वा कर्मफलासङ्गमित्यादिना विशेषितेनेत्यर्थः । ततः ससाधनात्कर्मणः सकाशादिति यावत् । निर्गमासंभवे हेतुमाह—**लोकेत्यादिना** । पूर्ववज्ज्ञानोदयात्प्रागवस्थायामिवेत्यर्थः । अभिप्रवृत्तोऽपि लोकदृष्ट्येति शेषः । नैव करोति किंचिदिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आत्मलाभेन नित्यतृप्तत्वात्फलासङ्गं त्यक्त्वा निराश्रयत्वात् । अहंकाराद्याश्रयेण हि कर्म क्रियते । निराश्रयो निरहंकारो यस्मात् ततः कर्मसङ्गमहंकरोमीत्यभिमानं च त्यक्त्वा कर्मणि लौकिके वैदिके वा अभितः सर्वाङ्गोपसंहारेण

४ मधुसूदनीव्याख्या ।

भवेत्कस्यचिदाशङ्का तामपनुदति—कर्मणि फले चासङ्गं कर्तृत्वाभिमानं भोगाभिलाषं च त्यक्त्वा अकर्त्रभोक्त्रात्मसम्यग्दर्शनेन बाधित्वा नित्यतृप्तः परमानन्दस्वरूपलाभेन सर्वत्र निराकाङ्क्षः । निराश्रयः आश्रयो देहेन्द्रियादिरद्वैतदर्शनेन निर्गतो यस्मात्स निराश्रयो देहेन्द्रियाद्यभिमानशून्यः । फलकामनायाः कर्तृत्वाभिमानस्य च निवृत्तौ क्रमेण हेतुगर्भं विशेषणद्वयम् । एवंभूतो जीवन्मुक्तो व्युत्थानदशायां कर्मणि वैदिके लौकिके वा अभिप्रवृत्तोऽपि प्रारब्धकर्मवशाल्लोकदृष्ट्याऽभितः

५ भाष्योत्कर्षदीपिका ।

प्राक्तनानामप्रारब्धकर्मणां दाहः । आगामिनां चानुत्पत्तिः । ज्ञानोत्पत्तिकाले क्रियमाणं तु पूर्वोत्तरयोरनन्तर्भावात् फलाय भवेदिति भवेत्कस्यचिदाशङ्का तामपनुदतीति तच्चिन्त्यम् । मूलात्तद्भाष्यादेवंभूतो जीवन्मुक्तो व्युत्थानदशायां कर्मणि वैदिके लौकिके प्रवृत्तोऽपीत्यादिस्वग्रन्थाच्च ज्ञानोत्तरक्रियमाणकर्माश्लेषस्य प्रतीतेः स्फुटत्वेनैवमुत्थानानौचित्यात् । ज्ञानोत्पत्तिकाल इत्यस्य किं ज्ञानोत्पत्तिक्षण इत्यर्थ उत ज्ञानसाधनानामनुष्ठानकाल इति । आद्ये पापादेरसंभवः । द्वितीये तत्कर्मणः पूर्वकर्मण्यन्तर्भाव इति शङ्काया अप्यनुत्थानाच्च । अतएव तस्य नाशो वा विश्लेषो वा व्यासेन पृथक् न सूत्रितः । कर्मस्वभिमानं फलासक्तिं च त्यक्त्वा यथोक्तेन ज्ञानेन नित्यतृप्तः । विषयेषु निराकाङ्क्षः । अतएव दृष्टादृष्टेष्टफलसाधनाश्रयरहितः । योगक्षेमार्थाश्रयणीयरहित इति व्याख्या तु भाष्यान्तर्भूता । यत्त्वाश्रयो देहेन्द्रियादिरद्वैतदर्शनेन निर्गतो यस्मात्स निराश्रयः देहेन्द्रियाद्यभिमानशून्यः । फलकामनायाः कर्तृत्वाभिनिवेशस्य च निवृत्तौ क्रमेण विशेषणद्वयमिति व्याख्यानं तदपि दृष्टादृष्टेष्टफलसाधनानि देहेन्द्रियादीनि तदेवाश्रयस्तद्रहितः देहाद्यभिमानशून्य इति भाष्यं व्याख्याय तदविरोधेनादेयं तेनैवंभूतेन प्रयोजनाभावात्समग्रं कर्म यद्यपि त्याज्यं तथापि प्रारब्ध-

६ श्रीधरीव्याख्या ।

कर्मणि तत्फले चासक्तिं त्यक्त्वा नित्येन निजानन्देन तृप्तः अतएव योगक्षेमार्थमाश्रयणीयरहितः एवंभूतो यः स्वाभाविके विहिते च

१ श्रीधरः. २ मधुसूदनः.

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः।**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्॥ २१॥**

१ श्रीमच्छांकरभाष्यम्।

पूर्ववत्कर्मण्यभिप्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वान्नैव किंचित्करोति सः॥ २०॥ यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारम्भाद्ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शनः स दृष्टादृष्टेष्टविषयाशीर्विवर्जिततया। दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन्ससाधनं कर्म संन्यस्य शरीरयात्रामात्रचेष्टो यतिर्ज्ञाननिष्ठो मुच्यत इत्येतमर्थं दर्शयितुमाह—निरिति। निराशीर्निर्गता आशिषो यस्मात्स निराशीः, यतचित्तात्मा चित्तमन्तःकरणमात्मा बाह्यः कार्यकरणसंघातस्तावुभावपि यतौ संयतौ येन स यतचित्तात्मा, त्यक्तसर्वपरिग्रहस्त्यक्तः सर्वः परिग्रहो येन स त्यक्तसर्वपरिग्रहः, शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं कर्म तत्राप्यभिमानवर्जितं कर्म कुर्वन्नाप्नोति न प्राप्नोति किल्बिषमनिष्टरूपं पापं धर्मं च। धर्मोऽपि मुमुक्षोरनिष्टरूपत्वात्किल्बिषमेव बन्धापादकत्वात्। किंच शारीरं केवलं कर्मेत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्माभिप्रेतमाहोस्विच्छरीरस्थितिमात्रप्रयोजनं शारीरं कर्मेति। किंचातो यदि शरीरनिर्वर्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरमित्युच्यते। यदा

२ आनन्दगिरिव्याख्या।

स्वदृष्ट्येति द्रष्टव्यम्॥ २०॥ सत्यपि विक्षेपके कर्मणि कूटस्थात्मानुसंधानस्य सिद्धे कैवल्यहेतुत्वे विक्षेपाभावे सुतरां तस्य तद्धेतुत्वसिद्धिरित्यभिप्रेत्याह—**यः पुनरिति**। पूर्वोक्तविपरीतत्वं लोकसंग्रहादिनिरपेक्षत्वम्। तदेव वैपरीत्यं स्फोरयति—**प्रागेवेति**। ससाधनसर्वकर्मसंन्यासे शरीरस्थितिरपि कथमित्याशङ्क्याह—**शरीरेति**। तर्हि तथाविधचेष्टानिविष्टचेतस्तया सम्यग्ज्ञानबहिर्मुखस्य कुतो मुक्तिरित्याशङ्क्य यथोपदिष्टचेष्टायामनादरान्नैवमित्याह—**ज्ञाननिष्ठ इति**। इति दर्शयितुमिमं श्लोकं प्राहेति पूर्ववत्। आशिषः प्रार्थनाभेदास्तृष्णाविशेषाः। आशिषां विदुषो निर्गतत्वे हेतुमाह—**यतेति**। चित्तवदात्मनः संयमनं कथमित्याशङ्क्याह—**आत्मा बाह्य इति**। द्वयोः संयमने सत्यर्थसिद्धमर्थमाह—**त्यक्तेति**। सर्वपरिग्रहपरित्यागे देहस्थितिरपि दुःस्था स्यादित्याशङ्क्याह—**शरीरमिति**। मात्रशब्देन पौनरुक्त्यादनर्थकं केवलं पदमित्याशङ्क्याह—**तत्रापीति**। शारीरं केवलमित्यादौ शरीरपदार्थं स्फुटीकर्तुमुभयथा संभावनया विकल्पयति—**शारीरमिति**। शरीरनिर्वर्त्यं शारीरमित्यस्मिन्पक्षे किं दूषणं शरीरस्थितिमात्रं शारीरमित्यस्मिन्वा पक्षे किं फलमिति पूर्ववादी पृच्छति—**किंचात इति**। शरीरनिर्वर्त्यं शारीरमित्यस्मिन्पक्षे सिद्धान्ती दूषणमाह—**उच्यत इति**। **शरीरेण यन्निर्वर्त्यं** तत्किं प्रतिषिद्धं विहितं वा, प्रथमे विरोधः स्यादित्याह—**यदेति**।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

प्रवृत्तोऽपि स नैव किंचित्करोति। अतोऽस्य क्रियमाणमपि कर्म न फलाय प्रभवतीत्यर्थः॥ २०॥ नन्वेतस्माद्गौणात्कर्मकरणादकरणं मुख्यमेव तद्वरमित्याशङ्क्य गृहस्थस्य तत्प्रत्यवायावहमिति व्यतिरेकमुखेनाह—**निराशीरिति**। यो निष्परिग्रहः स्त्र्यादिपरिग्रहरहितः संन्यासी स चेन्निराशीः योगैश्वर्यमप्यनिच्छन् यतं चित्तं बुद्धिरात्मा च देहे-

४ मधुसूदनीव्याख्या।

साङ्गोपाङ्गानुष्ठानाय प्रवृत्तोऽपि स्वदृष्ट्या नैव किंचित्करोति सः। निष्क्रियात्मदर्शनेन बाधितत्वादित्यर्थः॥ २०॥ यदात्यन्तविक्षेपहेतोरपि ज्योतिष्टोमादेः सम्यग्ज्ञानवशात्र तत्फलजनकत्वं तदा शरीरस्थितिमात्रहेतोरविक्षेपकस्य भिक्षाटनादेर्नास्त्येव बन्धहेतुत्वमिति कैमुत्यन्यायेनाह—निराशीर्गततृष्णः यतचित्तात्मा चित्तमन्तःकरणं आत्मा बाह्येन्द्रियसहितो देहस्तौ संयतौ प्रत्याहारेण निगृहीतौ येन सः। यतो जितेन्द्रियोऽतो विगततृष्णत्वात् त्यक्तसर्वपरिग्रहः त्यक्ताः सर्वे परिग्रहा

५ भाष्योत्कर्षदीपिका।

प्राबल्यात् लोकसंग्रहार्थं लोकदृष्ट्या पूर्ववत्कर्मण्यभितः साङ्गोपाङ्गानुष्ठानाय प्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वात्स्वदृष्ट्या नैव किंचित्करोति सः। तत्त्वविदः क्रियमाणकर्मसंबन्धो न भवतीत्यर्थः॥ २०॥ सत्यपि विक्षेपके दर्शपूर्णमासादिकर्मणि निष्क्रियात्मवित् निर्लेप एव भवति किं पुनर्वक्तव्यं यो विक्षेपरहितः शरीरमात्रचेष्टो यतिर्ज्ञाननिष्ठो नाप्नोति किल्बिषमितीत्याशयेनाह। निराशीः निर्गता आशिषस्तृष्णा यस्मात्सः। यतौ निगृहीतौ चित्तात्मानावन्तःकरणबाह्यकार्यकरणसंघातौ येन सः। त्यक्तः सर्वः परिग्रहो येन सः केवलं शारीरं शरीरस्थितिमात्रप्रयोजनं भिक्षाशनादिकं कर्म, तत्रापि अभिमानवर्जितं लोकदृष्ट्या कुर्वन्किल्बिषं

६ श्रीधरीव्याख्या।

कर्मण्यभितः प्रवृत्तोऽपि किंचिदपि नैव करोति। तस्य कर्माकर्मतामापद्यत इत्यर्थः॥ २०॥ किंच—**निराशीरिति**। निर्गता आशिषः

७ अभिनवगुप्ताचार्यव्याख्या।

निराशीरीति। अभिप्रवृत्तोऽप्याभिमुख्येन प्रवृत्तोऽपि शरीरोपयोगीन्द्रियव्यापारात्मकं कर्म शारीरं यन्मनोबुद्धिभ्यां न तथानुरञ्जितं॥२०॥२१॥

१ श्रीमच्छांकरभाष्यम् ।

**शरीरनिर्वर्त्यं कर्म शारीरमभिप्रेतं स्यात्तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन्नाप्नोति किल्बिषमिति ब्रुवतो विरुद्धाभिधानं प्रसज्येत, शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन्नाप्नोति किल्बिषमित्यपि ब्रुवतोऽप्राप्तप्रतिषेधप्रसङ्गः शारीरं कर्म कुर्वन्निति विशेषणात् केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन्नाप्नोति किल्बिषमित्युक्तं स्यात् । तत्रापि वाङ्मनोभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत, प्रतिषिद्धसेवापक्षेऽपि भूतार्थानुवादमात्रमनर्थकं स्यात्, यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्माभिप्रेतं भवेत्तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधशास्त्रगम्यं शरीरवाङ्मनोनिर्वर्त्यमन्यदकुर्वंस्तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगादहं करोमीत्यभिमानवर्जितः शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन्नाप्नोति किल्बिषम् । एवंभूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसंभवात् किल्बिषं संसारं नाप्नोति । ज्ञानाग्निदग्धसर्वकर्मत्वादप्रतिबन्धेन मुच्यत एवेति पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैषः ।**

२ आनन्दगिरिव्याख्या ।

प्रतिषिद्धाचरणेऽपि नानिष्टप्राप्तिरित्युक्ते प्रतिषेधशास्त्रविरोधः स्यादित्यर्थः । द्वितीये विहितकरणे सत्यनिष्टप्राप्त्यभावादप्राप्तप्रतिषेधः स्यादित्याह—**शास्त्रीयं चेति** । दृष्टप्रयोजनं कारीर्यादिकं कर्म, अदृष्टप्रयोजनं स्वर्गसाधनं ज्योतिष्टोमादिकं कर्मेति विभागः । शरीरनिर्वर्त्यं कर्म शारीरमभिमतमिति पक्षे दूषणान्तरमाह—**शारीरमिति** । वाचा मनसा चाकर्मणोऽनुष्ठाने संन्यासिनो भवत्येव किल्बिषप्राप्तिरित्याशङ्क्याह—**तत्रापीति** । वाङ्मनोभ्यां विहितानुष्ठाने वा प्रतिषिद्धकरणे वा किल्बिषप्राप्तिः संन्यासिनः स्यादिति विकल्प्याद्ये जपध्यानविधिविरोधः स्यादित्युक्त्वा द्वितीयं दूषयति—**प्रतिषिद्धेति** । शरीरनिर्वर्त्यं कर्म शारीरमिति पक्षमेवं प्रतिक्षिप्य द्वितीयपक्षे लाभं दर्शयति—**यदा त्विति** । अन्यदेहस्थितिप्रयोजनात्कर्मणः सकाशादिति शेषः । तत्रापि विदुषः स्वदृष्ट्या न प्रवृत्तिरिति सूचयति—**लोकेति** । विद्वानुक्तया रीत्या वर्तमानो नाप्नोति किल्बिषमित्यत्र विवक्षितमर्थमाह—**एवंभूतस्येति** । विधिनिषेधगम्यं कर्म देहस्थितिहेतुव्यतिरिक्तमकुर्वत इत्यर्थः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषमित्यस्योक्तेन प्रकारेण परिग्रहे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

न्द्रियसंघातो येन स यतचित्तात्मा । समाधिकाले निरुद्धबाह्याभ्यन्तरवृत्तिरित्यर्थः । स व्युत्थानकाले शारीरं शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादि । तदपि केवलं कर्तृत्वाभिमानशून्यं पराध्यारोपितकर्तृत्वेन कुर्वन्नपि किल्बिषं 'यावज्जीवमग्निहोत्रं जुहुयात्' इति यावज्जीवाधिकारचोदिताग्निहोत्राद्यकरणजं प्रत्यवायं नाप्नोति । विधितस्तेषां त्यागात् । यस्तु सपरिग्रहः स निराशीरपि यतचित्तात्मापि केवलमपि शारीरं कर्म कुर्वन् विहिताकरणात्किल्बिषं प्राप्नोत्येवे-

४ मधुसूदनीव्याख्या ।

भोगोपकरणानि येन सः एतादृशोऽपि आरब्धकर्मवशात् शारीरं शरीरस्थितिमात्रप्रयोजनं कौपीनाच्छादनादिग्रहणभिक्षाटनादिरूपं यतिं प्रति शास्त्राभ्यनुज्ञातं कर्म कायिकं वाचिकं मानसं च तदपि केवलं कर्तृत्वाभिमानशून्यं पराध्यारोपितकर्तृत्वेन कुर्वन्परमार्थतोऽकर्त्रात्मदर्शनान्नाप्नोति न प्राप्नोति किल्बिषं धर्माधर्मफलभूतमनिष्टं संसारम् । पापवत्पुण्यस्याप्यनिष्टफलत्वेन किल्बिषत्वात् । ये तु शरीरनिर्वर्त्यं शारीरमिति व्याचक्षते तन्मते केवलं कर्म कुर्वन्नित्यतोऽधिकार्थालाभादव्यावर्तकत्वेन शारीरपदस्य वैयर्थ्यम् । अथ वाचिकमानसिकव्यावर्तनार्थमिति ब्रूयात् तदा कर्मपदस्य विहितमात्रपरत्वेन शारीरं विहितं कर्म कुर्वन्नाप्नोति किल्बिषमित्यप्रसक्तप्रतिषेधोऽनर्थकः, वाचिकं मानसं च विहितं कर्म कुर्वन्नाप्नोति किल्बिषमिति च शास्त्रविरुद्धमुक्तं स्यात्, विहितप्रतिषिद्धसाधारण्य-

५ भाष्योत्कर्षदीपिका ।

धर्माधर्माख्यं संसारं नाप्नोति । मुमुक्षुं प्रति बन्धोदर्कत्वेन धर्मस्यापि किल्बिषरूपत्वात् । यत्तु नन्वेतस्माद्गौणात्करणादकरणं मुख्यमेव तद्वरमित्याशङ्क्य गृहस्थस्य तत्प्रत्यवायावहमिति व्यतिरेकमुखेनाह । यस्तु त्यक्तसर्वपरिग्रहः स निराशीरपि यतचित्तात्मापि केवलमपि शारीरं कर्म कुर्वन् विहिताकरणात्किल्बिषं प्राप्नोत्येवेत्यर्थ इति तदुपेक्ष्यम् । निराशीरित्यादिविशेषणाननुरूपया कुकल्पनया व्यतिरेकमुखेन नैव किंचित्करोति सः । कृत्वापि न निबध्यते । हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यत इत्यादिविरुद्धार्थप्रदर्शनानौचित्यात् 'कथमसतः सज्जायेत' इति श्रुत्या अकरणादभावरूपात्किल्बिषस्य भावस्य उत्पत्तिर्न जायतेऽपितु प्रतिषिद्धाचरणादित्यसकृद्भाष्यकारैरुक्तत्वेन च शारीरं केवलमिति विशेषणात् किल्बिषस्याप्राप्तेः प्राप्नोत्येवेत्यस्यासंगतत्वात् प्रत्यवायेन निब-

६ श्रीधरीव्याख्या ।

कामना यस्मात् । यतं नियतं चित्तं आत्मा च शरीरं यस्य । त्यक्ताः सर्वे परिग्रहा येन सः । शारीरं शरीरमात्रनिर्वर्त्यं कर्तृत्वाभि-

१ नीलकण्ठः॰

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥

१ श्रीमच्छांकरभाष्यम् ।

एवं शारीरं केवलं कर्मेत्यस्यार्थस्य परिग्रहे निरवद्यं भवति ॥ २१ ॥ त्यक्तसर्वपरिग्रहस्य यतेरन्नादेः शरीरस्थितिहेतोः परिग्रहस्याभावाद्याचनादिना शरीरस्थितौ कर्तव्यतायां प्राप्तायाम् 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इत्यादिना वचनेनानुज्ञातं यतेः शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारमाविष्कुर्वन्नाह—यदृच्छेति । यदृच्छालाभसंतुष्ट अप्रार्थितोपनतो लाभो यदृच्छालाभस्तेन संतुष्टः संजातालंप्रत्ययः । द्वन्द्वातीतः द्वन्द्वैः शीतोष्णादिभिर्हन्यमानोऽविषण्णचित्तो द्वन्द्वातीत उच्यते । विमत्सरो विगतमत्सरो निर्वैरबुद्धिः समस्तुल्यो यदृच्छया लाभस्यापि सिद्धावसिद्धौ च य एवंभूतो यतिरन्नादेः शरीरस्थितिहेतोर्लाभालाभयोः समो हर्षविषादवर्जितः कर्मादावकर्मादिदर्शी यथाभूतात्मदर्शननिष्ठः

२ आनन्दगिरिव्याख्या ।

शारीरं केवलमिति विशेषणद्वयं निर्दोषं सिध्यतीति फलितमाह—एवमिति ॥ २१ ॥ पूर्वश्लोकेन संगतिं दर्शयन्नुत्तरश्लोकमुत्थापयति—त्यक्तेति । अन्नादेरित्यादिशब्देन पादुकाच्छादनादि गृह्यते, याचनादिनेत्यादिपदेन सेवाकृष्याद्युपादीयते, भिक्षाटनार्थमुद्योगात्प्राक्काले केनापि योग्येन निवेदितं भैक्ष्यमयाचितमभिशस्तं पतितं च वर्जयित्वा संकल्पमन्तरेण पञ्चभ्यः सप्तभ्यो वा गृहेभ्यः समानीतं भैक्ष्यमसंक्लृप्तसिद्धमन्नं भक्तजनैः स्वसमीपमुपानीतमुपपन्नं यदृच्छया । स्वकीयप्रयत्नव्यतिरेकेणेति यावत् । आदिशब्देन 'माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् । तत्तत्कालोपपन्नं च भैक्ष्यं पञ्चविधं स्मृतम्' इत्यादि गृह्यते । आविष्कुर्वन्निदं वाक्यमाहेति योजनीयम् । परोत्कर्षामर्षपूर्विका स्वस्योत्कर्षाभिवाञ्छा विगता यस्मादिति व्युत्पत्तिमाश्रित्य विवक्षितमर्थमाह—निर्वैरेति । संक्षेपतो दर्शितमर्थं विशदयति—य एवंभूत इति । तथापि प्रकृतस्य यतेर्भिक्षाटनादौ कर्तृत्वं प्रतिभाति तदभावे भिक्षाटनाद्यभावेन

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

त्यर्थः ॥ २१ ॥ ननु सपरिग्रहः कुटुम्बभरणव्यग्रतया कथं वित्तव्ययायाससाध्यान्यग्निहोत्रादीन्यनुतिष्ठेदित्याशङ्क्याह—यदृच्छेति । यदृच्छया अप्रार्थितोपनतो लाभो यदृच्छालाभस्तेन संतुष्टः । तथाहि ऋतामृताभ्यां जीवनं ब्राह्मणस्य विधाय व्याख्यातं 'ऋतमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम्' इति । द्वन्द्वातीतो बहुलाभेऽलाभे वा सुखदुःखाद्यतीतः । विमत्सरः परस्य लाभं दृष्ट्वा संतापहीनः । समो यदृच्छालाभेनैवेष्टिपशुचातुर्मास्यादेर्नित्यकर्मणः सिद्धाव-

४ मधुसूदनीव्याख्या ।

परत्वेऽप्येवमेव व्याघात इति भाष्य एव विस्तरः ॥ २१ ॥ त्यक्तसर्वपरिग्रहस्य यतेः शरीरस्थितिमात्रप्रयोजनं कर्माभ्यनुज्ञातं तत्रान्नाच्छादनादिव्यतिरेकेण शरीरस्थितेरसंभवाद्याच्ञादिनापि स्वप्रयत्नेनान्नादिकं संपाद्यमिति प्राप्ते नियमायाह—शास्त्रानुमतप्रयत्नव्यतिरेको यदृच्छा तयैव यो लाभोऽन्नाच्छादनादेः शास्त्रानुमतस्य स यदृच्छालाभस्तेन संतुष्टस्तदधिकतृष्णारहितः । तथाच शास्त्रं 'भैक्षं चरेत्' इति प्रकृत्य 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इति याच्ञासंकल्पादिप्रयत्नं वारयति । मनुरपि 'नचोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ॥' इति । यतयो भिक्षार्थं ग्रामं विशन्तीत्यादिशास्त्रानुमतस्तु प्रयत्नः कर्तव्य एव । एवं लब्धव्यमपि शास्त्रनियतमेव 'कौपीनयुगलं वासः कन्थां शीतनिवारिणीम् । पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ॥' इत्यादि । एवमन्यदपि विधिनिषेधरूपं शास्त्रमूह्यम् । ननु स्वप्रयत्नमन्तरेणालाभे शीतोष्णादिपीडितः कथं जीवेदत आह—द्वन्द्वातीतः द्वन्द्वानि क्षुत्पिपासाशीतोष्णवर्षादीनि अतीतोऽतिक्रान्तः समाधि-

५ भाष्योत्कर्षदीपिका ।

ध्यत इति स्वपरग्रन्थविरोधाच्चेति दिक् ॥ २१ ॥ ननु त्यक्तसर्वपरिग्रहस्य यतेः अन्नादेः शरीरस्थितिहेतोः परिग्रहाभावात् याचनादिना शरीरस्थितिः कर्तव्येत्याशङ्क्य 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इति वचनानुरोधेनोत्तरमाह—यदृच्छेति । अप्रार्थितोऽप्रयत्नो लाभो यदृच्छालाभः तेन संतुष्टः संजातालंप्रत्ययः । द्वन्द्वैः शीतोष्णादिभिः स्वप्रयत्नमन्तरेण वस्त्राद्यलाभे पीड्यमानोऽप्यखिन्नचित्तः द्वन्द्वातीतः अतएव परस्य कौपीनाच्छादनलाभेन परोत्कर्षासहनरूपमत्सरशून्यः । निर्वैर इत्यर्थः । समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च हर्षविषादरहित इत्यर्थः । यतयो भिक्षार्थं ग्रामं प्रविशन्ति 'विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने । अतीत-

६ श्रीधरीव्याख्या ।

निवेशरहितं कर्म कुर्वन्नपि किल्बिषं बन्धनं न प्राप्नोति । योगारूढपक्षे शरीरनिर्वाहमात्रोपयोगि स्वाभाविकं भिक्षाटनादि कर्म कुर्वन्नपि किल्बिषं विहिताकरणनिमित्तं दोषं न प्राप्नोतीति ॥ २१ ॥ किंच—यदृच्छेति । अप्रार्थितोपस्थितो लाभो यदृच्छालाभः । तेन संतुष्टः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

यदृच्छेति । कृत्वापि न निबध्यते । कर्मकर्तरिप्रयोगः । स्वयमेव ह्यात्मानं बध्नाति । फलवासनाकालुष्यमुपाददानो गृह्णान इत्यर्थः । अन्यथा जडानां

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

शरीरस्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्ये नैव किंचित्करोम्यहं 'गुणा गुणेषु वर्तन्ते' इत्येवं सदा संपरिचक्षाण आत्मनः कर्तृत्वाभावं पश्यन्नैव किंचिद्भिक्षाटनादिकं कर्म करोति, लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्मणि कर्ता भवति, भिक्षाटनादिचेष्टाख्यप्यकर्तृत्वाद्यनुसंधानमेव विदुषः स्वानुभवेन तु शास्त्रप्रमाणादिजनितेनाकर्तैव, स एवं पराध्यारोपितकर्तृत्वं शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कृत्वापि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वादित्यनुवाद एवैषः ॥ २२ ॥ त्यक्त्वा कर्मफलासङ्गमित्यनेन

२ आनन्दगिरिव्याख्या ।

जीवनाभावप्रसङ्गादित्याशङ्क्याह—**लोकेति** । लौकिकैरविवेकिभिः सह व्यवहारस्य स्नानाचमनभोजनादिलक्षणस्य विदुषापि सामान्येन दर्शनात्तदनुसारेण लौकिकैरध्यारोपितकर्तृत्वभोक्तृत्वाद्विद्वानपि लोकदृष्ट्या भिक्षाटनादौ कर्तृत्वमनुभवतीत्यर्थः । कथं तर्हि तस्याकर्तृत्वं तत्राह—**स्वानुभवेनेति** । यदृच्छेत्यादिपादत्रयं व्याख्याय कृत्वापीत्यादिचतुर्थपादं व्याचष्टे—**स एवमिति** । भिक्षाटनादिना प्रातिभासिकेन कर्मणा विदुषो बद्धत्वाभावेऽपि कर्मान्तरेण निबद्धत्वं भविष्यतीत्याशङ्क्याह—**बन्धेति** । ज्ञानाग्निदग्धत्वादित्येवं शारीरं केवलमित्यादावुक्तस्यायमनुवाद इति योजना । यथोक्तस्य कर्मणो युक्त्या महाविरोधाभ्युपगमसूचनार्थोऽपिशब्दः ॥ २२ ॥ गतसङ्गस्येत्यादिश्लोकस्य व्यवहितेन संबन्धं वक्तुं वृत्तं कीर्तयति—**त्यक्त्वेति** । अनेन श्लोकेन 'नैव किंचित्करोति सः' इत्यत्र कर्माभावः प्रदर्शित

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सिद्धौ वा समो निर्विकार एवंभूत इष्ट्यादीनि कृत्वापि तत्फलेन स्वर्गादिना न निबध्यते । अपिशब्दात्तज्जेन प्रत्यवायेन न निबध्यते । बन्धहेतोः कर्मणस्तत्त्वज्ञानेनैव दाहात् । तथाच स्मृतिः 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥' इति । भाष्ये त्वयं श्लोकः संन्यासिपरत्वेनैव व्याख्यातः ॥ २२ ॥ 'त्यक्त्वा कर्मफलासङ्गम्' इत्यादिना श्लोकत्रयेण विद्वान्कर्माणि कुर्वन्नपि न करोति अतो न लिप्यते लेपाभावाच्च न बध्यत इत्युक्तं, तत्किं कर्मणां फलदानशक्तिप्रतिबन्धो वा ज्ञानेन क्रियते उत निरन्वयोच्छेद एवेत्याशङ्क्याह

४ मधुसूदनीव्याख्या ।

दशायां तेषामस्फुरणात् । व्युत्थानदशायां स्फुरणेऽपि परमानन्दाद्वितीयाकर्त्रभोक्त्रात्मप्रत्ययेन बाधात् तैर्द्वन्द्वैरुपहन्यमानोऽप्यक्षुभितचित्तः । अतएव परस्य लाभे स्वस्यालाभे च विमत्सरः । परोत्कर्षासहनपूर्विका स्वोत्कर्षवाञ्छा मत्सरस्तद्रहितोऽद्वितीयात्मदर्शनेन निर्वैरबुद्धिः । अतएव समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च सिद्धौ न हृष्टः नाप्यसिद्धौ विषण्णः स स्वानुभवेनाकर्तैव परैरारोपितकर्तृत्वः शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिरूपं कर्म कृत्वापि न निबध्यते बन्धहेतोः सहेतुकस्य कर्मणो ज्ञानाग्निना दग्धत्वादिति पूर्वोक्तानुवादः ॥ २२ ॥ त्यक्तसर्वपरिग्रहस्य यदृच्छालाभसंतुष्टस्य यतेर्यच्छरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिरूपं कर्म तत्कृत्वा न निबध्यत इत्युक्तेर्गृहस्थस्य ब्रह्मविदो जनकादेर्यज्ञादिरूपं यत्कर्म तद्

५ भाष्योत्कर्षदीपिका ।

पात्रसंचारे भिक्षां लिप्सेत वै मुनिः ॥ कौपीनयुगुलं वासः कन्थां शीतनिवारिणीम् । पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ॥' इत्यादिशास्त्राल्लोकदृष्ट्या भिक्षाटनादिकं शरीरस्थितिमात्रप्रयोजनं कर्म कृत्वापि कर्मादावकर्मादिदर्शी यथा भूतात्मज्ञाननिष्ठः कृत्वापि न निबध्यते बन्धहेतोः सहेतुकस्य कर्मणः ज्ञानाग्निना दग्धत्वादित्युक्तानुवादः । यैस्त्वन्ये ननु सपरिग्रहः कुटुम्बभरणव्यग्रचित्ततया कथं व्यायायाससाध्याग्निहोत्रादीन्यनुतिष्ठेदित्याशङ्क्याह । यदृच्छालाभसंतुष्टः द्वन्द्वातीतो बहुलाभेऽलाभे वा सुखदुःखाद्यतीतः परस्य लाभं दृष्ट्वा संतापहीनः समः यदृच्छालाभेनैव इष्टिपशुचातुर्मास्यादेर्नित्यात्कर्मणः सिद्धावसिद्धौ च समः निर्विकारः एवंभूत इष्ट्यादीनि कृत्वापि तन्मूलेन स्वर्गादिना न निबध्यते । अपिशब्दात्तज्जेन प्रत्यवायेन न निबध्यते । बन्धहेतोः कर्मणस्तत्त्वज्ञानेनैव दाहात् । तथाच स्मृतिः 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥' इति व्याचख्युः तदसंगतम् । उक्तरीत्या त्यक्तसर्वपरिग्रहस्य यतेः पूर्वश्लोकेन वर्णनौचित्येनैवमुत्थापनस्यानौचित्यात् । शङ्कानुरूपस्य श्लोकाक्षरैरुत्तरस्याप्रतीतेश्च । तस्मादनेन श्लोकेन परिग्रहरहितस्यैव वर्णनं न्याय्यमिति दिक् ॥ २२ ॥ यस्तु प्रारब्धवशात्पूर्वं कर्मण्यभिप्रवृत्तोऽपि नैव

६ श्रीधरीव्याख्या ।

द्वन्द्वानि शीतोष्णादीन्यतीतोऽतिक्रान्तः । तत्सहनशील इत्यर्थः । विमत्सरो निर्वैरः । यदृच्छालाभस्यापि सिद्धावसिद्धौ च समो हर्षविषादरहितः । य एवंभूतः स पूर्वोत्तरभूमिकयोर्यथायथं विहितं स्वाभाविकं वा कर्म कृत्वापि न बन्धं प्राप्नोति ॥ २२ ॥ किंच—

१ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

श्लोकेन यः प्रारब्धकर्मा सन् यदा निष्क्रियब्रह्मात्मदर्शनसंपन्नः स्यात्तदा तस्यात्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते कुतश्चिन्निमित्तात्तदसंभवे सति पूर्ववत्तस्मिन्कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति स इति च कर्माभावः प्रदर्शितः, यस्यैवं कर्माभावो दर्शितस्तस्यैव गतसङ्गस्य सर्वतोऽनिवृत्तासक्तेर्मुक्तस्य निवृत्तधर्माधर्मादिबन्धस्य ज्ञानावस्थितचेतसो ज्ञाने एवावस्थितं चेतो यस्य सोऽयं ज्ञानावस्थितचेतास्तस्य यज्ञाय यज्ञनिर्वृत्त्यर्थमाचरतो निर्वर्तयतः कर्म समग्रं सहाग्रेण कर्म-

२ आनन्दगिरिव्याख्या ।

इति संबन्धः । कस्य कर्माभावप्रदर्शनमित्याशङ्क्याह—यः प्रारब्धेति । प्रारब्धकर्मा सन् योऽवतिष्ठते तस्य कर्माभावः प्रदर्शितश्चेद्विरोधः स्यादित्याशङ्क्यावस्थाविशेषे तत्प्रदर्शनान्मैवमित्याह—यदेति । ननु ज्ञानवतः क्रियाकारकफलाभावदर्शिनः कर्मपरित्यागध्रौव्यात्कर्माभाववचनमप्राप्तप्रतिषेधः स्यादित्याशङ्क्याह—आत्मन इति । लोकसंग्रहादिनिमित्तं प्रागेवोक्तमविद्यावस्थायामिव पूर्ववदित्युक्तम् । एवं वृत्तमनूद्योत्तरश्लोकमवतारयति—यस्येति । यथोक्तस्यापि विद्यावतो मुक्तस्य भगवत्प्रीत्यर्थं कर्मानुष्ठानोपलम्भात्ततो बन्धारम्भः संभाव्येतेत्याशङ्क्याह—यज्ञायेति । धर्माधर्मादीत्यादिशब्देन रागद्वेषादिसंग्रहः । तस्य बन्धनत्वं करणव्युत्पत्त्या प्रतिपत्तव्यम् । यज्ञनिर्वृत्त्यर्थं यज्ञशब्दितस्य भगवतोऽविष्णोर्नारायणस्य प्रीतिसंपत्त्यर्थमिति यावत् । ज्ञानमेव वाञ्छतो ज्ञानस्य प्रतिबन्धकं कर्म परिशङ्कितं परिहरति—कर्मेति । समग्रेणेत्यङ्गीकृत्य व्याचष्टे—सहेत्यादिना ॥ २३ ॥ 'नाभुक्तं क्षीयते कर्म' इति स्मृतिमाश्रित्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मुक्तस्यापि पुनः संसारप्रसक्तिं पश्यन् द्वितीयमभ्युपगच्छति—गतसङ्गस्येति । यतो विद्वान् गतसङ्गः कर्तृत्वाभिमानशून्योऽतो न करोतीत्युक्तम् । यतो मुक्तः फलकामनामुक्तः अतो न लिप्यत इत्युक्तम् । यतो यज्ञायैव यज्ञेश्वरप्रीत्यर्थमेवाचरति न फलान्तरार्थम् प्राप्याभावात् । अतस्तामेवोत्पाद्य कृतार्थैः कर्मभिर्न बध्यत इत्युक्तम् । यतोऽयं ज्ञाने सम्यग्दर्शनेऽवस्थितचेताः प्रतिष्ठितप्रज्ञः अत ईश्वरप्रीतिफलस्य ज्ञाननिष्ठाप्राप्तिरूपस्यापि प्रागेव लाभात् अस्य गतसङ्गस्य मुक्तस्य यज्ञाय कर्माचरतो ज्ञानावस्थितचित्तस्य सर्वं कर्म क्रियमाणादिकं सर्वप्रकारेण निष्प्रयोजनं सत्समग्रं अग्रेण फलेन वासनया वा सह समग्रं प्रकर्षेण निरन्वयं विलीयते नश्यत्यतो न कदाचिदपि प्रादुर्भवति । अयं च क्रियमाणकर्मप्रलयो विद्वद्दृष्ट्यैव । स्वाभाविकस्य तेषां फलजननसामर्थ्यस्य वह्न्यौष्ण्यवदप्रत्याख्येयत्वात् । अतएव ज्ञानेन पूर्वकर्मणां दाह उत्तरेषामश्लेषश्च श्रूयते नतूत्तरेषामपि दाहः । 'तद्यथैषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति । 'तं विदित्वा न कर्मणा लिप्यते पापकेन' इति च । 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । विदुषो धनस्येव कर्मणामप्यन्यत्र गमनदर्शनान्न तेषां वस्तुवृत्त्या

४ मधुसूदनीव्याख्या ।

बन्धहेतुः स्यादिति भवेत्कस्यचिदाशङ्का, तामपनेतुं त्यक्त्वा कर्मफलासङ्गमित्यादिनोक्तं विवृणोति—गतसङ्गस्य फलासङ्गशून्यस्य मुक्तस्य कर्तृत्वभोक्तृत्वाद्यध्यासशून्यस्य ज्ञानावस्थितचेतसः निर्विकल्पब्रह्मात्मैक्यबोध एव स्थितं चित्तं यस्य तस्य स्थितप्रज्ञस्येत्यर्थः । उत्तरोत्तरविशेषणस्य पूर्वपूर्वहेतुत्वेनान्वयो द्रष्टव्यः । गतसङ्गत्वं कुतः । यतोऽध्यासहीनत्वम्, तत्कुतः । यतः स्थितप्रज्ञत्वमिति ईदृशस्यापि प्रारब्धकर्मवशात् यज्ञाय यज्ञसंरक्षणार्थं ज्योतिष्टोमादियज्ञे श्रेष्ठाचारत्वेन लोकप्रवृत्त्यर्थं, यज्ञाय विष्णवे तत्प्रीत्यर्थमिति वा । आचरतः कर्म यज्ञदानादिकं समग्रं सहाग्रेण फलेन विद्यत इति समग्रं प्रविलीयते प्रकर्षेण कारणोच्छेदेन तत्त्वदर्शनाद्विलीयते । विनश्यतीत्यर्थः ॥ २३ ॥ ननु क्रियमाणं कर्म फलमजनयित्वैव कुतो नश्यति ब्रह्मबोधे

५ भाष्योत्कर्षदीपिका ।

किंचित्करोतीत्युक्तं तदेव विवृण्वन्नाह—गतसङ्गस्येति । गतः सर्वतो निवृत्तः सङ्ग आसक्तिर्यस्य तस्य मुक्तस्य निवृत्तधर्माधर्मादिबन्धनस्येति भाष्यम् । तत्रादिशब्देन कर्तृत्वभोक्तृत्वाद्यध्यासो रागादिश्च गृह्यत इत्यविरोधः । ज्ञान एवावस्थितं चेतो यस्य तस्य यज्ञायाग्निष्टोमादियज्ञनिर्वृत्त्यर्थं विष्णुप्रीतिनिर्वृत्त्यर्थमिति वा आचरतः कुर्वतः सहाग्रेण फलेन वर्तत इति समग्रं प्रकर्षेण कारणोच्छेदेन तत्त्वसाक्षात्काराद्विलीयते नश्यतीत्यर्थः ॥ २३ ॥ ननु 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं

६ श्रीधरीव्याख्या ।

गतसङ्गस्येति । गतसङ्गस्य निष्कामस्य रागादिभिर्मुक्तस्य । ज्ञानेऽवस्थितं चेतो यस्य । यज्ञाय परमेश्वरार्थं कर्माचरतः सतः समग्रं सवासनं कर्म प्रविलीयते अकर्मभावमापद्यते । आरूढयोगपक्षे यज्ञायेति । यज्ञसंरक्षणार्थं लोकसंग्रहार्थमेव कर्म कुर्वत इत्यर्थः ॥ २३ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

कर्मणां बन्धने स्वातन्त्र्यं न तथा हृदयंगमम् ॥ २२ ॥ गतसङ्ग इति । यज्ञायेति जातावेकवचनम् । यज्ञा वक्ष्यमाणलक्षणाः ॥ २३ ॥ यज्ञायेत्युक्तं

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**फलेन वर्तत इति समग्रं कर्म तत्समग्रं प्रविलीयते विनश्यतीत्यर्थः ॥ २३ ॥ ब्रह्मेति । कस्मात्पुनः कारणात्क्रियमाणं कर्म स्वकार्यारम्भमकुर्वत्समग्रं प्रविलीयत इत्युच्यते, यतो ब्रह्मार्पणं येन करणेन प्रकारेण ब्रह्मविद्धविरग्नावर्पयति तद्ब्रह्मैवेति पश्यति तस्यात्मव्यतिरेकेणाभावं पश्यति यथा शुक्तिकायां रजताभावं पश्यति तद्वदुच्यते ब्रह्मैवार्पणमिति । यथा यद्रजतं तच्छुक्तिकैवेति । ब्रह्म अर्पणमित्यसमस्ते पदे, यदर्पणबुद्ध्या गृह्यते लोके तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः । ब्रह्म हविस्तथा यद्धविर्बुद्ध्या गृह्यमाणं तद्ब्रह्मैवास्य । तथा ब्रह्माग्नाविति समस्तं पदम् । अग्निरपि ब्रह्मैव यत्र हूयते ब्रह्मणा**

२ आनन्दगिरिव्याख्या ।

शङ्कते—**कस्मादिति** । समस्तस्य क्रियाकारकफलात्मकस्य द्वैतस्य ब्रह्ममात्रत्वेन बाधितत्वाद्ब्रह्मविदा ब्रह्ममात्रस्य कर्म प्रविलीयते सर्वमिति युक्तमित्याह—**उच्यत इति** । ब्रह्मविदो ब्रह्मैव सर्वक्रियाकारकफलजातं द्वैतमित्यत्र हेतुत्वेनानन्तरश्लोकमवतारयति—**यत इति** । अर्पणशब्दस्य करणाविषयत्वं दर्शयन्नर्पणं ब्रह्मेति पदद्वयपक्षे सामानाधिकरण्यं साधयति—**येनेति** । यद्रजतं सा शुक्तिरितिवद्बाधायामिदं सामानाधिकरण्यमित्याह—**तस्येति** । तत्र दृष्टान्तमाह—**यथेति** । उक्तेऽर्थे पदद्वयमवतारयति—**तद्वदुच्यत इति** । उक्तमेवार्थं स्पष्टयति—**यथा यदिति** । समाससंख्यां व्यावर्तयति **ब्रह्मेति** । पदद्वयपक्षे विवक्षितमर्थं कथयति—**यदर्पणेति** । ब्रह्महविरिति पदद्वयमवतार्य व्याचष्टे—**ब्रह्मेत्यादिना** । यदर्पणबुद्ध्या गृह्यते तद्ब्रह्मविदो ब्रह्मैवेति यथोक्तं तथेहापीत्याह—**तथेति** । अस्येति षष्ठी ब्रह्मविदमधिकरोति । पर्ववदसमासमाशङ्क्य व्यावर्तयन्पदान्तरमवतार्य व्याकरोति—**तथेति** । प्रागुक्तासमासवदिति व्यतिरेकः । तत्र विवक्षितमर्थमाह—**अग्निरपीति** । ब्रह्मणेति पदस्याभिमतमर्थमाह—**ब्रह्मणेति** । कर्त्रा, हूयत इति संबन्धः । कर्ता ब्रह्मणः सकाशाद्व्यतिरिक्तो नास्तीत्येतदभिमतमित्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रलयोऽस्तीति ध्येयम् ॥ २३ ॥ कुतो विदुषां कर्माणि प्रविलीयन्त इत्याशङ्क्याह—**ब्रह्मार्पणमिति** । यतस्ते विद्वांसः सविकल्पसमाधौ सर्वं जगत्प्रत्यक्चितिशक्तिनिर्मितं पश्यन्ति । तथाच श्रुतिः 'किं कारणम्' इत्युपक्रम्य कालः स्वभाव इति कालादीनि लोकदृष्ट्यानेकानि कारणान्युपक्षिप्य कारणं निर्णीय 'ते ध्यानयोगानुगता अपश्यन्देवात्म-

४ मधुसूदनीव्याख्या ।

तत्कारणोच्छेदादित्याह—अनेककारकसाध्या हि यज्ञादिक्रिया भवति । देवतोद्देशेन हि द्रव्यत्यागो यागः । स एव त्यज्यमानद्रव्यस्याग्नौ प्रक्षेपाद्धोम इत्युच्यते । तत्रोद्देश्या देवता संप्रदानम् । त्यज्यमानं द्रव्यं हविःशब्दवाच्यं साक्षाद्धात्वर्थकर्म । तत्फलं तु स्वर्गादिव्यवहितं भावनाकर्म । एवं धारकत्वेन हविषोऽग्नौ प्रक्षेपे साधकतमतया जुह्वादि करणं प्रकाशकतया मन्त्रादीति करणमपि कारकज्ञापकभेदेन द्विविधम् । एवं त्यागोऽग्नौ प्रक्षेपश्च द्वे क्रिये । तत्राद्यायां यजमानः कर्ता, प्रक्षेपे तु यजमानपरिक्रीतोऽध्वर्युः, प्रक्षेपाधिकरणं चाग्निः । एवं देशकालादिकमप्यधिकरणं सर्वक्रियासाधारणं द्रष्टव्यम् ।

५ भाष्योत्कर्षदीपिका ।

कर्म शुभाशुभम्' इत्यादिवचनेभ्यः कर्मफलस्यावश्यंभावित्वकथनात् । कस्मात्पुनः कारणात्क्रियमाणं कर्म स्वकार्यारम्भं बन्धनमकुर्वत्समग्रं प्रविलीयत इत्याशङ्क्य सर्वक्रियाकारकफलजातं द्वैतं ब्रह्मैव ब्रह्मविद इति हेतोस्तस्य समग्रं कर्म विनश्यतीत्याह । ब्रह्म अर्पणमित्यसमस्ते पदे। अर्प्यतेऽनेन हस्तादिना करणेनेत्यर्पणम् । करणं कारकम् । अर्प्यतेऽस्मिन्निन्त्यर्पणमधिकरणं देशकालादि । अर्प्यतेऽस्मै इति संप्रदानं देवतारूपं । भाष्यस्योपलक्षणार्थतयाऽविरोधः । तद्ब्रह्मैवेति बाधायां सामानाधिकरण्यं यश्चोरः स स्थाणुरितिवत् । एवमग्रेऽपि यद्धविर्बुद्ध्या गृह्यमाणं घृतादिकं त्यागप्रक्षेपक्रिययोः साक्षात्कर्मकारकं तदपि ब्रह्मैव तत्त्वविदः, तथा ब्रह्माग्नाविति समस्तं पदम्। एतेन ब्रह्मणीति पदमध्याहर्तव्यमित्यपास्तम्। यस्मिन्हूयते सोऽग्निरधिकरणकारकमपि ब्रह्मैव। तथा येन यजमानेना-

६ श्रीधरीव्याख्या ।

तदेवं परमेश्वराराधनलक्षणं कर्म ज्ञानहेतुत्वेन बन्धकत्वाभावादकर्मैव । आरूढावस्थायां त्वकर्त्रात्मज्ञानेन बाधितत्वात्स्वाभाविकमपि कर्माकर्मैवेति 'कर्मण्यकर्म यः पश्येत्' इत्यनेनोक्तः कर्मप्रविलयः प्रपञ्चितः । इदानीं कर्मणि तदङ्गेषु च ब्रह्मैवानुस्यूतं पश्यतः कर्मप्रविलयमाह—**ब्रह्मार्पणमिति** । अर्प्यतेऽनेनेत्यर्पणं स्रुवादि तदपि ब्रह्मैव । अर्प्यमाणं हविरपि घृतादिकं ब्रह्मैव । ब्रह्मैवाग्निस्तस्मिन्ब्रह्मणा

७ अभिनवगुप्ताचार्यव्याख्या ।

तत्स्वरूपसामान्यं तावदाह—ब्रह्मार्पणमिति । ब्रह्मण्यर्पणं तत एव प्रवृत्तस्य पुनस्तत्रैवानुप्रवेशनं यस्य तद्ब्रह्म समग्रं विश्वात्मकं यदेतद्धविस्तद् ब्रह्मणि परमबोधे प्रशान्तेऽग्नौ ब्रह्मणा येनकेनचित्कर्मणा हुतं तद्दीप्त्यभिवृद्धये समर्पितं इतीदृशं ब्रह्मकर्मैव समाधिर्यस्य योगिनः तेन ब्रह्मैव

१ श्रीमच्छांकरभाष्यम्।

कर्त्रा। ब्रह्मैव कर्तेत्यर्थः। यत्तेन हुतं हवनक्रियापि तद्ब्रह्मैव, यत्तेन गन्तव्यं फलं तदपि ब्रह्मैव, ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म तस्मिन्समाधिर्यस्य स ब्रह्मकर्मसमाधिस्तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम्। एवं लोकसंग्रहं चिकीर्षुणापि क्रियमाणं कर्म परमार्थतोऽकर्म ब्रह्मबुद्ध्युपमृदितत्वात्। तदेवं सति निवृत्तकर्मणोऽपि सर्वकर्मसंन्यासिनः सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसंपादनं ज्ञानस्य सुतरामुपपद्यते यदर्पणाद्यधियज्ञे प्रसिद्धं तदस्याध्यात्मं ब्रह्मैव परमार्थदर्शिन इति। अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं, तस्माद्ब्रह्मैवेदं सर्वमित्यभिजानतो विदुषः सर्वकर्माभावः कारकबुद्ध्यभावाच्च। नहि कारकबुद्धिरहितं यज्ञाख्यं कर्म दृष्टं, सर्वमेवाग्निहोत्रादिकं कर्म शब्दसमर्पितदेवताविशेषसंप्रदानादिकारकबुद्धिमत्कर्त्रभिमानफलाभिसंधिमच्च दृष्टं

२ आनन्दगिरिव्याख्या।

ब्रह्मैवेति। हुतमित्यस्य विवक्षितमर्थमाह—यत्तेनेति। ब्रह्मैव तेनेत्यादि भागं विभजते—ब्रह्मैवेत्यादिना। ब्रह्म कर्मेत्याद्यवतार्य व्याकरोति—ब्रह्मेति। कर्मत्वं ब्रह्मणो ज्ञेयत्वात्प्राप्यत्वाच्च प्रतिपत्तव्यम्। एवं ब्रह्मार्पणमन्त्रस्याक्षरार्थमुक्त्वा तात्पर्यार्थमाह—एवमिति। निवृत्तकर्माणं संन्यासिनं प्रति कथमस्य मन्त्रस्य प्रवृत्तिरित्याशङ्क्याह—निवृत्तेति। यथा बाह्ययज्ञानुष्ठानासमर्थस्याज्ञस्य संकल्पात्मकयज्ञो दृष्टस्तथा ज्ञानस्य यज्ञत्वसंपादनं स्तुत्यर्थं सुतरामुपपद्यते तेन स्तुतिलाभात्कल्पनायाः स्वाधीनत्वाद्वेत्यर्थः। ज्ञानस्य यज्ञत्वसंपादनमभिनयति—यदर्पणादीति। केन प्रमाणेनात्र यज्ञत्वसंपादनमवगतमित्याशङ्क्य अर्पणादीनां विशेषतो ब्रह्मत्वाभिधानानुपपत्त्येत्याह—अन्यथेति। ज्ञानस्य यज्ञत्वे संपादिते फलितमाह—तस्मादिति। आत्मैवेदं सर्वमित्यात्मव्यतिरेकेण सर्वस्यावस्तुत्वं प्रतिपाद्यमानस्य कर्माभावे हेत्वन्तरमाह—कारकेति। कारकबुद्धेस्तेष्वभिमानस्याभावेऽपि किमिति कर्म न स्यादित्याशङ्क्याह—नहीति। उक्तमेवान्वयव्यतिरेकाभ्यां द्रढयति—सर्वमेवेति। इन्द्रायेत्यादिना शब्देन समर्पितो देवताविशेषः संप्रदानं कारकम्। आदिशब्दाद् व्रीह्यादिकरणकारकं तद्विषयबुद्धिमत्कर्तास्मीत्यभिमानपूर्वकं मोक्षफलमस्त्विति फलाभिसंधिमच्च कर्म दृष्टमिति योजना। अन्वयमुक्त्वा व्यतिरेकमाह—नेत्यादिना। उपमृदिता क्रियादिभेदविषया

३ नीलकण्ठव्याख्या (चतुर्धरी)।

शक्तिं स्वगुणैर्निगूढाम्' इति समाधिना दर्शयति। तथाच समाधिना सर्वस्य ब्रह्मणि कल्पितत्वं पश्यतां तेषां यदर्पणमर्पणसाधनं मन्त्रजुह्वादि तत् ब्रह्मैव। एवशब्दः सर्वत्रानुषञ्जनीयः। यदर्पणीयं हविस्तदपि ब्रह्मैव। यत् हुतं हवनक्रिया हुतं तर्पितं देवब्राह्मणादि वा तदपि ब्रह्मैव। यदग्नौ हुतं तदपि ब्रह्मण्येव हुतम्। अत्र ब्रह्मणीति पदमध्याहर्तव्यम्। यद्यजमानेन हुतं तद्ब्रह्मणैव हुतम्। यत्तेन कर्मणा गन्तव्यं प्राप्तव्यं फलं तदपि ब्रह्मैव। किं बहुना

४ मधुसूदनीव्याख्या।

तदेवं सर्वेषां क्रियाकारकादिव्यवहाराणां ब्रह्माज्ञानकल्पितानां रज्ज्वज्ञानकल्पितानां सर्पधारादण्डादीनां रज्जुतत्त्वज्ञानेनेव ब्रह्मतत्त्वज्ञानेन बाधे बाधितानुवृत्त्या क्रियाकारकादिव्यवहाराभासो दृश्यमानोऽपि दग्धपटन्यायेन न फलाय कल्पत इत्यनेन श्लोकेन प्रतिपाद्यते। ब्रह्मदृष्टिरेव च सर्वयज्ञात्मिकेति स्तूयते। तथाहि अर्प्यतेऽनेनेति करणव्युत्पत्त्याऽर्पणं जुह्वादि मन्त्रादि च। एवमर्प्यतेऽस्मा इति व्युत्पत्त्याऽर्पणं देवतारूपं संप्रदानम्। एवमर्प्यतेऽस्मिन्निति व्युत्पत्त्याऽर्पणमधिकरणं देशकालादि। तत्सर्वं ब्रह्मणि कल्पितत्वाद्ब्रह्मैव रज्जुकल्पितभुजङ्गवदधिष्ठानव्यतिरेकेणासदित्यर्थः। एवं हविस्त्यागप्रक्षेपक्रिययोः साक्षात्कर्म कारकं तदपि ब्रह्मैव। एवं यत्र प्रक्षिप्यतेऽग्नौ सोऽपि ब्रह्मैव। ब्रह्माग्नाविति समस्तं पदम्। तथा येन कर्त्रा यजमानेनाध्वर्युणा च त्यज्यते प्रक्षिप्यते च तदुभयमपि कर्तृकारकं कर्तरि विहितया तृतीययानूद्य ब्रह्मेति विधीयते ब्रह्मणेति। एवं हुतमिति हवनं त्यागक्रिया प्रक्षेपक्रिया च तदपि ब्रह्मैव। तथा तेन हवनेन यद्गन्तव्यं स्वर्गादिव्यवहितं कर्म तदपि

५ भाष्योत्कर्षदीपिका।

ध्वर्युणा च त्यज्यते क्षिप्यते च तदुभयमपि कर्तृ कारकं ब्रह्मैवेत्यर्थः। यत्तेन हुतं हवनक्रियापि ब्रह्मैव। अत्रत्य एवकारः सर्वत्र संबध्यते। ब्रह्मपदं च काकाक्षिगोलकन्यायेनोभयत्र ब्रह्मैव कर्म तत्र समाधिर्यस्य सः। तेन गन्तव्यं फलमपि ब्रह्मैव। एवं लोकसंग्रहचिकीर्षुणापि क्रियमाणं कर्म परमार्थतोऽकर्म ब्रह्मबुद्ध्युपमर्दितत्वात् निवृत्तकर्मणोऽपि यतेः सम्यग्दर्शिनः सम्यग्दर्शनस्तुत्यर्थं

६ श्रीधरीव्याख्या।

कर्त्रा च हुतं ब्रह्मैव। होमः अग्निश्च कर्ता च क्रिया च ब्रह्मैवेत्यर्थः। एवं ब्रह्मण्येव कर्मात्मके समाधिश्चित्तैकाग्र्यं यस्य तेन ब्रह्मैव

७ अभिनवगुप्ताचार्यव्याख्या।

गन्तव्यं ज्ञेयं नान्यत्किंचित् अन्याभावात्। यदिवा तदर्थेन यदर्थाक्षेपादेव संबन्धः। यत्खलु ब्रह्मस्वरूपेण यजमानेन ब्रह्माग्नौ ब्रह्महविर्हुतं ब्रह्मणि ब्रह्मस्वभावदेवतोद्देशेनार्पणं यस्य तदेवंभूतं यद्ब्रह्मकर्म तदेव समाधिरात्मस्वरूपलाभोपायत्वात् तेन ब्रह्मकर्मसमाधिना नान्यत्फल-

१ श्रीमच्छांकरभाष्यम् ।

**नोपमृदितक्रियाकारककर्मफलभेदबुद्धिमत् कर्तृत्वाभिमानफलाभिसंधिरहितं च, इदं तु ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धिमत् कर्मातोऽकर्मैव तत् । तथाच दर्शितं 'कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः । गुणा गुणेषु वर्तन्ते', 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिभिः, तथा च दर्शयंस्तत्र तत्र क्रियाकारकफलभेदबुद्ध्युपमर्दं करोति, दृष्टा च काम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानिस्तथा मतिपूर्वकामतिपूर्वकत्वादीनां कर्मणां कार्यविशेषस्यारब्धत्वं दृष्टं तथेहापि ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धेर्बाह्यचेष्टामात्रेण कर्मापि विदुषोऽकर्म संपद्यतेऽत उक्तं समग्रं प्रविलीयत इति । अत्र केचिदाहुर्यद्ब्रह्म तदर्पणादीनि ब्रह्मैव किलार्पणादिना पञ्चविधेन कारकात्मना व्यवस्थितं सत्तदेव कर्म करोति । तत्र नार्पणादिबुद्धिर्निवर्तते**

२ आनन्दगिरिव्याख्या ।

बुद्धिर्यस्य तत्कर्म, तथा कर्तृत्वाभिमानपूर्वको मोक्षे फलमस्येति योऽभिसंधिस्तेन रहितं च न कर्म दृष्टमित्यन्वयः । तथापि ब्रह्मविदो भासमानकर्माभावे किमायातमित्याशङ्क्याह—**इदमिति** । यदिदं ब्रह्मविदो दृश्यमानं कर्म तदहमस्मि ब्रह्मेति बुद्ध्या निराकृतकारकादिभेदविषयबुद्धिमदतश्च कर्मैव न भवति, तत्त्वज्ञाने सति व्यापकं कारकादिव्यावर्तमानं व्याप्यं कर्मापि व्यावर्तयति तत्त्वविदः शरीरादिचेष्टाकर्माभावः कर्म व्यापकरहितत्वात्सुषुप्तचेष्टावदित्यर्थः । ज्ञानवतो दृश्यमानं कर्माकर्मैवेत्यत्र भगवदनुमतिमाह—**तथाचेति** । ब्रह्मविदो दृष्टं कर्म नास्तीत्युक्तेऽपि तत्कारणानुपमर्दात्पुनर्भविष्यतीत्याशङ्क्याह—**तथाच दर्शयन्निति** । अविद्वानिव विद्वानपि कर्मणि प्रवर्तमानो दृश्यते तथापि तस्य कर्माकर्मैवेत्यत्र दृष्टान्तमाह—**दृष्टा चेति** । विद्वत्कर्मापि कर्मत्वाविशेषादितरकर्मवत्फलारम्भकमित्यपि शङ्का न युक्तेत्याह—**तथेति** । इदं कर्मैव कर्तव्यमस्य च फलं भोक्तव्यमिति मतिस्तत्पूर्वकाण्यतत्पूर्वकाणि च कर्माणि तेषामवान्तरभेदसंग्रहार्थमादिपदम् । दार्ष्टान्तिकमाह—**तथेति** । सप्तम्या विद्वत्प्रकरणं परामृष्टम् । षष्ठ्यौ समानाधिकरणे । उक्तेऽर्थे पूर्ववाक्यमनुकूलयति—**अत इति** । ब्रह्मार्पणमन्त्रस्य स्वव्याख्यानमुक्त्वा स्वयूथ्यव्याख्यानमनुवदति—**अत्रेति** । प्रसिद्धोद्देशेनाप्रसिद्धविधानस्य न्याय्यत्वादप्रसिद्धोद्देशेन प्रसिद्धविधानं कथमित्याशङ्क्याह—**ब्रह्मैवेति** । किलेत्यस्मिन्व्याख्याने सिद्धान्तिनोऽसंप्रतिपत्तिं सूचयति । कर्तृकर्मकरणसंप्रदानाधिकरणरूपेण पञ्चविधेन ब्रह्मैव व्यवस्थितं कर्म करोतीत्यङ्गीकारात्तदप्रसिद्ध्यभावात्तदनुवादेनार्पणादिष्वविरुद्धस्तद्दृष्टिविधिरित्यर्थः । दृष्टिविधिपक्षे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यत्किंचित्तस्य कर्म शयनासनादिकं तत्सर्वं ब्रह्मैव । तत्र कारणं समाधिना समाधिजेनात्मसाक्षात्कारेण । यतः सर्वमस्य ब्रह्मात्मकं ब्रह्म च प्रत्यगनन्यत् अतः प्रदेयस्य फलस्याभावात् कर्माणि प्रविलीयन्ते दाह्याभावाद्दहन इवेति भावः । यत्तु कर्मणि तदङ्गेषु च नामादिष्विव ब्रह्मदृष्टिरत्र विधीयत इति व्याख्यानं तदुपक्रमादिविरोधाद्ब्रह्मविद्यायाः प्रकृतत्वा-

४ मधुसूदनीव्याख्या ।

ब्रह्मैव । अत्रत्य एवकारः सर्वत्र संबध्यते । हुतमित्यत्रापीतएव ब्रह्मेत्यनुषज्यते । व्यवधानाभावात् साकाङ्क्षत्वाच्च 'चित्पतिस्त्वा पुनातु' इत्यादावच्छिद्रेणेत्यादिपरवाक्यशेषवत् । अनेन रूपेण कर्मणि समाधिर्ब्रह्मज्ञानं यस्य स कर्मसमाधिस्तेन ब्रह्मविदा कर्मानुष्ठात्रापि ब्रह्म परमानन्दाद्वयं गन्तव्यमित्यनुषज्यते । साकाङ्क्षत्वादव्यवधानाच्च 'या ते अग्ने रजाशया' इत्यादौ तनूर्वर्षिष्ठेत्यादिपूर्ववाक्यशेषवत् । अथवाऽर्प्यतेऽस्मै फलायेति व्युत्पत्त्याऽर्पणपदेनैव स्वर्गादिफलमपि ग्राह्यम् । तथाच 'ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिने'त्युत्तरार्धं ज्ञानफलकथनार्थैवेति समञ्जसम् । अस्मिन्पक्षे ब्रह्मकर्मसमाधिनेत्येकं वा पदम् ।

५ भाष्योत्कर्षदीपिका ।

ज्ञानस्य यज्ञत्वसंपादनं सुतरामुपपद्यते । यदर्पणादि यज्ञे प्रसिद्धं तदस्याध्यात्मं ब्रह्मैव अन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात् । यत्तु यद्ब्रह्म तदर्पणादीति ब्रह्मैव खल्वर्पणादिना पञ्चविधेन कारकात्मनावस्थितं सत् तदेव कर्म करोति नात्रार्पणादिबुद्धिर्निवर्त्यते किंत्वर्पणादिषु प्रतिमादौ विष्णुबुद्धिरिव ब्रह्मबुद्धिराधीयत इति तदसत् । ज्ञानयज्ञस्तुत्यर्थत्वादस्य प्रकरणस्य । अत्र सम्यग्दर्शनं ज्ञानयज्ञशब्दप्रतिपादितम् । अनेकान्क्रियाविशेषान्यज्ञशब्दितानुपन्यस्य 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' इति ज्ञानं स्तौतीति भाष्ये विस्तरः । एतेन 'कर्मण्यकर्म यः पश्येदि'त्यारभ्यारुरुक्षुपरत्वेन दृश्यमानमपरेषां[1] व्याख्यानमसंगतमिति ध्येयम् । यत्तु[2] अथवार्प्यतेऽस्मै फलायेति व्युत्पत्त्यार्पणपदेन स्वर्गादिफलमपि ग्राह्यम् । तथाच ब्रह्मैवेत्याद्युत्तरार्धं ज्ञानफलकथनार्थैवेति समञ्जसम् ।

७ अभिनवगुप्ताचार्यव्याख्या ।

लमवाप्यते अपितु ब्रह्मैवेति 'ये यथा मां प्रपद्यन्ते' इति निर्वाहितम् । मितस्वरूपा कृतमदात्मकयज्ञस्वभावा इति तादृशफलभागिन इत्यन्यत् । अपरिमितपरिपूर्णमदात्मकयज्ञस्वरूपवेदिनस्तु कथं परिमितफललवलांपट्यभागिनो भवेयुरिति तात्पर्यम् । इत्यनेन श्लोकेन

१ श्रीधरः. २ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम्।

किंत्वर्पणादिषु ब्रह्मबुद्धिराधीयते, यथा प्रतिमादौ विष्ण्वादिबुद्धिर्यथा च नामादौ ब्रह्मबुद्धिरेवं, सत्यमेवमपि स्याद् यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यात्, अत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितमनेकान्यज्ञशब्दितान्क्रियाविशेषानुपन्यस्य 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' इति ज्ञानं स्तौति। अत्र च समर्थमिदं वचनं ब्रह्मार्पणमित्यादि ज्ञानस्य यज्ञत्वसंपादनेऽन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात्। ये त्वर्पणादिषु प्रतिमायां विष्णुदृष्टिवद्ब्रह्मदृष्टिः क्षिप्यते नामादिष्विव चेति ब्रुवते न तेषां ब्रह्मविद्योक्तेह विवक्षिता स्यादर्पणादिविषयत्वाज्ज्ञानस्य। नच दृष्टिसंपादनज्ञानेन मोक्षफलं प्राप्यते 'ब्रह्मैव तेन गन्तव्यम्' इति चोच्यते। विरुद्धं च सम्यग्दर्शनमन्तरेण मोक्षफलं प्राप्यत इति। प्रकृतविरोधश्च। सम्यग्दर्शनं च प्रकृतं 'कर्मण्यकर्म यः पश्येत्' इत्यत्रान्ते च सम्यग्दर्शनं तस्यैवोपसंहारात्। 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः', 'ज्ञानं लब्ध्वा परां शान्तिम्' इत्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्यायः। तत्राकस्मादर्पणादौ ब्रह्मदृष्टिरप्रकरणे प्रतिमायामिव विष्णुदृष्टिरुच्यत इत्यनुपपन्नम्। तस्माद्यथाव्याख्यातार्थ एवायं श्लोकः॥ २४॥

२ आनन्दगिरिव्याख्या।

सिद्धान्ताद्विशेषं दर्शयति—तत्रेति। अर्पणादिषु कर्तव्यां ब्रह्मबुद्धिं दृष्टान्ताभ्यां स्पष्टयति—यथेत्यादिना। दृष्टिविधाने विधेयदृष्टेर्मानसक्रियात्वेन सम्यग्ज्ञानत्वाभावात्प्रकरणभङ्गः स्यादित्यभिप्रेत्य परिहरति—सत्यमेवमिति। विधित्सितदृष्टिस्तुतिपरमेव प्रकरणं न ज्ञानस्तुतिपरमित्याशङ्क्य प्रकरणपर्यालोचनया ज्ञानस्तुतिरेवात्र प्रतिभातीति प्रतिपादयति—अत्र त्विति। किंच ब्रह्मार्पणमन्त्रस्यापि सम्यग्ज्ञानस्तुतौ सामर्थ्यं प्रतिभातीत्याह—अत्र चेति। नन्वर्पणादिषु ब्रह्मदृष्टिं कुर्वतामपि ब्रह्मविद्यैवात्र विवक्षितेति पक्षभेदासिद्धिरिति चेत्तत्राह—येत्विति। यथा ब्रह्मदृष्ट्या नामादिकमुपास्यं तथार्पणादिषु ब्रह्मदृष्टिकरणे सत्यर्पणादिकमेव प्राधान्येन ज्ञेयमिति ब्रह्मविद्या यथोक्तेन वाक्येन विवक्षिता न स्यादित्यर्थः। किंच ब्रह्मैव तेन गन्तव्यमिति ब्रह्मप्राप्तिफलाभिधानादपि दृष्टिविधानमश्लिष्टमित्याह—नचेति। नचार्पणाद्यालम्बना दृष्टिर्ब्रह्म प्रापयत्यप्रतीकालम्बनान्नयतीति न्यायविरोधादिति भावः। दृष्टिविधानेऽपि नियोगबलादेव स्वर्गवददृष्टो मोक्षो भविष्यतीत्याशङ्क्याह—विरुद्धं चेति। ज्ञानादेव कैवल्यमुक्त्वा मार्गान्तरापवादिन्या श्रुत्या विरुद्धं मोक्षस्याविद्यानिवृत्तिलक्षणस्य दृष्टस्य नैयोगिकत्ववचनमित्यर्थः। दृष्टिनियोगान्मोक्षो भवतीत्येतत्प्रकरणविरुद्धं चेत्याह—प्रकृतेति। तदेव प्रपञ्चयति—सम्यग्दर्शनं चेति। अन्ते च सम्यग्दर्शनं प्रकृतमिति संबन्धः। तत्र हेतुः—तस्यैवेति। सम्यग्ज्ञानेनोपक्रम्य तेनैवोपसंहारेऽपि मध्ये किंचिदन्यदुक्तमिति प्रकरणस्यातद्विषयत्वमित्याशङ्क्याह—श्रेयानिति। प्रकरणे सम्यग्ज्ञानविषये सत्यनुपपन्नो दर्शनविधिरिति फलितमाह—तत्रेति। ब्रह्मार्पणमन्त्रे परकीयव्याख्यानासंभवे स्वकीयव्याख्यानं व्यवस्थितमित्युपसंहरति—तस्मादिति॥ २४॥ ज्ञानस्य

३ नीलकण्ठव्याख्या (चतुर्धरी)।

चासंगतमिति भाष्ये एव निरस्तम्। या हि ब्रह्मविदां कर्माङ्गेषु तात्त्विकी ब्रह्मदृष्टिः कीर्तिता सा स्थितप्रज्ञलक्षणवद्ब्रह्मविदामनुष्ठानायैव फलतो भवतीति न तत्र तस्यास्तात्पर्यं वर्णनीयमिति दिक्॥ २४॥ एवं सम्यग्दर्शनस्य

४ मधुसूदनीव्याख्या।

पूर्वं ब्रह्मपदं हुतमित्यनेन संबध्यते चरमं गन्तव्यपदेनेति भिन्नं वा पदम्। एवंच नानुषङ्गद्वयक्लेश इति द्रष्टव्यम्। ब्रह्म गन्तव्यमित्यभेदेनैव तत्प्राप्तिरुपचारात्। अतएव न स्वर्गादि तुच्छफलं तेन गन्तव्यं विद्यया आविद्यककारकव्यवहारोच्छेदात्। तदुक्तं वार्तिककृद्भिः 'कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते। शुद्धे वस्तुनि सिद्धे च कारकव्याप्टतिः कुतः॥' इति। अर्पणादिकारकस्वरूपानुपमर्देनैव तत्र नामादाविव ब्रह्मदृष्टिः क्षिप्यते संपन्मात्रेण फलविशेषायेति केषांचिद्व्याख्यानं भाष्यकृद्भिरेव निराकृतमुपक्रमादिविरोधाद्ब्रह्मविद्याप्रकरणे संपन्मात्रस्याप्रसक्तत्वादित्यादियुक्तिभिः॥ २४॥ अधुना सम्यग्दर्शनस्य

५ भाष्योत्कर्षदीपिका।

अस्मिन्पक्षे ब्रह्मकर्मसमाधिनेत्येकं वा पदम्। पूर्वं ब्रह्मपदं हुतमित्यनेन संबध्यते चरमं गन्तव्यमित्यनेनेति भिन्नं वा पदम्। एवंच नानुषङ्गद्वयक्लेश इति तच्चिन्त्यम्। श्रुतं गन्तव्यपदं विहाय क्लिष्टव्युत्पत्त्या तदानयनस्यान्याय्यत्वात्। ज्ञानप्रभावमुक्त्वा 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छती'ति ज्ञानयज्ञफलस्य वक्ष्यमाणत्वात्। भाष्ये तु ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यमिति तेन गन्तव्यं फलमपि ब्रह्मैवेत्यस्यानुवादो ब्रह्मेत्यादिपदस्यान्वयप्रदर्शनार्थः नतु ब्रह्मैव गन्तव्यमिति पदद्वयानुषङ्गेण ज्ञानफलप्रदर्शनम्। एतेन

७ अभिनवगुप्ताचार्यव्याख्या।

वक्ष्यमाणैश्च श्लोकैः परमं रहस्यमुपनिबद्धम्। तच्चास्माभिर्मितबुद्धिभिरपि यथाबुद्धि यथागुर्वाम्नायं च विवृतम्। मुख्यसंप्रदायक्रममन्तरेण नैतच्चमश्चित्रमिव चित्तमुपारोहतीति न वयमुपालम्भनीयाः। अत्र कैश्चिद्धविषोऽग्नेः करणानां च स्रुगादीनां क्रियायाश्च ब्रह्मविशेषणत्व-

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तत्राधुना सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते—दैवमेवेत्यादिना । दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो यज्ञस्तमेवापरे यज्ञं योगिनः कर्मिणः पर्युपासते कुर्वन्तीत्यर्थः । ब्रह्माग्नौ 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म', 'यत्साक्षादपरोक्षाद्ब्रह्म', 'य आत्मा सर्वान्तरः' इत्यादिवचनोक्तमशनायादिसर्वसंसारधर्मवर्जितं 'नेति नेति' इति निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते । ब्रह्म च तदग्निश्च स होमाधिकरणत्वविवक्षया ब्रह्माग्निस्तस्मिन्ब्रह्माग्नावपरेऽन्ये ब्रह्मविदो यज्ञं यज्ञशब्दवाच्य आत्मा आत्मनामसु यज्ञशब्दस्य पाठात्तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्वोपाधिधर्मकमाहुतिरूपं यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षि-

---

२ आनन्दगिरिव्याख्या ।

यज्ञत्वं संपाद्य पूर्वश्लोके स्थिते सत्यधुना तस्यैव ज्ञानस्य स्तुत्यर्थं यज्ञान्तरनिर्देशार्थमुत्तरग्रन्थप्रवृत्तिरित्याह—**तत्रेति** । सर्वस्य श्रेयःसाधनस्य मुख्यगौणवृत्तिभ्यां यज्ञत्वं दर्शयन्नादौ यज्ञद्वयमादर्शयति—**दैवमेवेत्यादिना** । प्रतीकमादाय दैवयज्ञं व्याचष्टे—**देवा इति** । सम्यग्ज्ञानाख्यं यज्ञं विभजते—**ब्रह्माग्नाविति** । तत्र ब्रह्मशब्दार्थं श्रुत्यवष्टम्भेन स्पष्टयति—**सत्यमिति** । यदजमनृतं विपरीतमपरिच्छिन्नं ब्रह्म तस्य परमानन्दत्वेन परमपुरुषार्थत्वमाह—**विज्ञानमिति** । तस्य ज्ञानाधिकरणत्वेन ज्ञानत्वमौपचारिकमित्याशङ्क्याह—**यत्साक्षादिति** । जीवब्रह्मविभागे कथमपरिच्छिन्नत्वमित्याशङ्क्य विशिनष्टि—**य आत्मेति** । परस्यैवात्मत्वं सर्वस्माद्देहादेरव्याकृतान्तादान्तरत्वेन साधयति—**सर्वान्तर इति** । विधिमुखं सर्वमेवोपनिषद्वाक्यं ब्रह्मविषयमादिशब्दार्थः । निषेधमुखं ब्रह्मविषयमुपनिषद्वाक्यमशेषमेवार्थतो निबध्नाति—**अशनायेति** । ब्रह्मण्यग्निशब्दप्रयोगे निमित्तमाह—**स होमेति** । बुद्ध्यारूढतया सर्वस्य दाहकत्वाद्विलयस्य वा हेतुत्वादिति द्रष्टव्यम् । यज्ञशब्दस्यात्मनि त्वंपदार्थे प्रयोगे हेतुमाह—**आत्मनामस्विति** । आधाराधेयभावेन वास्तवभेदं ब्रह्मात्मनोर्व्यावर्तयति—**परमार्थत इति** । कथं तर्हि होमो नहि तस्यैव तत्र होमः संभवतीत्याशङ्क्याह—**बुद्ध्यादीति** । उपाधिसंयोगफलं कथयति—**अध्यस्तेति** । उपाध्यध्यासद्वारा तद्धर्माध्यासे प्राप्तमर्थं निर्दिशति—**आहुतीति** । इत्थंभूतलक्षणां तृतीयामेव व्याकरोति—**उक्तेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यज्ञत्वं संपाद्य तत्स्तुत्यर्थं यज्ञान्तराण्युपक्षिपति—**दैवमेवेत्यादिना** । दैवं देवताप्रधानमेव दर्शपूर्णमासादियज्ञं नान्यं एके योगिनः कर्मयोगिनः पर्युपासते । अपरे तु ब्रह्मैव सत्यज्ञानानन्तानन्दात्मकमखण्डैकरसं वस्तु तदेव ज्ञातं

४ मधुसूदनीव्याख्या ।

यज्ञरूपत्वेन स्तावकतया ब्रह्मार्पणमन्त्रे स्थिते पुनरपि तस्य स्तुत्यर्थमितरान्यज्ञानुपन्यस्यति—देवा इन्द्राग्न्यादय इज्यन्ते येन स दैवस्तमेव यज्ञं दर्शपूर्णमासज्योतिष्टोमादिरूपमपरे योगिनः कर्मिणः पर्युपासते सर्वदा कुर्वन्ति न ज्ञानयज्ञम् । एवं कर्मयज्ञमुक्त्वाऽन्तःकरणशुद्धिद्वारेण तत्फलभूतं ज्ञानयज्ञमाह—ब्रह्माग्नौ सत्यज्ञानानन्तानन्दरूपं निरस्तसमस्तविशेषं ब्रह्म तत्पदार्थस्तस्मिन्नग्नौ

५ भाष्योत्कर्षदीपिका ।

पूर्वमित्यादि परास्तम् । काकाक्षिगोलकन्यायस्य प्रदर्शितत्वादिति दिक् ॥ २४ ॥ सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते – **दैवमेवेत्यादिना** । देवा एवेज्यन्तेऽनेनाग्निष्टोमादिनासौ दैवो यज्ञस्तमपरे कर्मयोगिनः पर्युपासते कुर्वन्ति ब्रह्माग्नौ 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुत्युक्तमसंसारिस्वरूपं ब्रह्म तदेव होमाधिकरणविवक्षयाऽग्निः तस्मिन्नपरे ब्रह्मविदः । आत्मनामसु यज्ञशब्दस्य पाठात् । यज्ञमात्मानं जीवमाहुतिरूपं यज्ञेन सत्यादिलक्षणेनोपजुह्वति सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मरूपेणैव ।

६ श्रीधरीव्याख्या ।

गन्तव्यं प्राप्यं नतु फलान्तरमित्यर्थः ॥ २४ ॥ एतदेव यज्ञत्वेन संपादितं सर्वत्र ब्रह्मदर्शनलक्षणं ज्ञानं सर्वयज्ञोपायप्राप्यत्वात्सर्वयज्ञेभ्यः श्रेष्ठमित्येवं स्तोतुं अधिकारिभेदेन ज्ञानोपायभूतान्बहून्यज्ञानाह—**दैवमित्यष्टभिः** । देवा इन्द्रवरुणादय इज्यन्ते यस्मिन् । एवकारेणेन्द्रादिषु ब्रह्मबुद्धिराहित्यं दर्शितम् । तं दैवं यज्ञं अपरे कर्मयोगिनः पर्युपासते श्रद्धयानुतिष्ठन्ति । अपरे तु ज्ञानयोगिनो ब्रह्मरूपेऽग्नौ

७ अभिनवगुप्ताचार्यव्याख्या ।

मित्युक्तं तदुपेक्ष्यमेव तेषां रहस्यसंप्रदायक्रमेऽक्षुण्णत्वात् ॥ २४ ॥ दैवमेवेति । श्रोत्रादीनीति । आत्मसंयम अपरे दैवानि क्रीडनशीलानीन्द्रियाण्याश्रित्य यः स्थितो यज्ञो निजविषयग्रहणलक्षणस्तमेव परित उपासते । आमूलाद्विमृशन्तः स्वात्मलाभं लभन्ते । अतएव ते योगिनः सर्वावस्थासु सततमेव योगयुक्तत्वात् । नित्ययोगे ह्यत्रायं मत्वर्थीयः । एनमेव च विषयग्रहणात्मकं यज्ञं यज्ञेनैव तेनैव लक्षणेनापरे पूरयितुमशक्ये ब्रह्माग्नौ जुह्वतीति कैश्चिद्व्याख्यातम् । मुनेस्तु पौर्वापर्याविरुद्धस्त्वाद्योऽर्थो हृदि स्थितस्तं प्रकाशयामः । केचि-

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

पन्ति । सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन्होमस्तं कुर्वन्ति । ब्रह्मात्मैकत्वदर्शननिष्ठाः संन्यासिन इत्यर्थः । सोऽयं सम्यग्दर्शनलक्षणो यज्ञो दैवयज्ञादिषु यज्ञेषूपक्षिप्यते ब्रह्मार्पणमित्यादिश्लोकैः 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप' इत्यादिस्तुत्यर्थम् ॥ २५ ॥ श्रोत्रादीनीति । श्रोत्रादीनीन्द्रियाण्यन्ये योगिनः संयमाग्निषु । प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम् । संयमा एवाग्नयस्तेषु जुह्वति । इन्द्रियसंयममेव कुर्वन्तीत्यर्थः । 'शब्दादीन्विषयानन्य इन्द्रियाग्निषु

२ आनन्दगिरिव्याख्या ।

अशनायादिसर्वसंसारधर्मवर्जितेन निर्विशेषेण स्वरूपेणेति यावत् । आत्मनो ब्रह्मणि होममेव प्रकटयति—**सोपाधिकस्येति** । अपर इत्यस्यार्थं स्फोरयति—**ब्रह्मेति** । उक्तस्य ज्ञानयज्ञस्य दैवयज्ञादिषु ब्रह्मार्पणमित्यादिश्लोकैरुपक्षिप्यमाणत्वं दर्शयति—**सोऽयमिति** । उपक्षेपप्रयोजनमाह—**श्रेयानिति** ॥ २५ ॥ संप्रति यज्ञद्वयमुपन्यस्यति—**श्रोत्रादीनीति** । बाह्यानां करणानां मनसि संयमस्यैकत्वात्कथं संयमाग्निष्विति बहुवचनमित्याशङ्क्याह—**प्रतीन्द्रियमिति** । संयमानां प्रत्याहाराधिकरणत्वेन व्यवस्थितानां मनोरूपाणां होमाधारत्वादग्नित्वं व्यपदिशति—**संयमा-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सत्सर्वकर्मदग्धृत्वादग्निरिवाग्निर्ब्रह्माग्निस्तत्र यज्ञं जीवम् । यज्ञशब्दस्यात्मनामसु पाठात् । सोपाधिं यज्ञेनैवात्मनैव निरुपाधिकेन रूपेण जुह्वति घटाकाशमिव महाकाशे उपाधिप्रहाणेन प्रविलापयन्ति सोऽयं ज्ञानयज्ञो मुख्यः ॥ २५ ॥ यज्ञान्तरमाह—**श्रोत्रादीनीति** । तत्र कंचिद्बाह्यमाभ्यन्तरं वा विशेषमुपादाय तत्र चेतसो नियमनं क्रियते । तेच संयमा अनेकविषयत्वादनेके पृथक्फलाश्च । तथाच योगसूत्रकृता प्रोक्तम् 'भुवनज्ञानं सूर्ये संयमाच्चन्द्रे तारा-

४ मधुसूदनीव्याख्या ।

यज्ञं प्रत्यगात्मानं त्वंपदार्थं यज्ञेनैव । यज्ञशब्द आत्मनामसु यास्केन पठितः । इत्थंभूतलक्षणे तृतीया । एवकारो भेदाभेदव्यावृत्त्यर्थः । त्वंपदार्थाभेदेनैवोपजुह्वति तत्स्वरूपतया पश्यन्तीत्यर्थः । अपरे पूर्वविलक्षणास्तत्त्वदर्शननिष्ठाः संन्यासिन इत्यर्थः । जीवब्रह्माभेददर्शनं यज्ञत्वेन संपाद्य तत्साधनयज्ञमध्ये पठ्यते 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञ' इत्यादिना स्तोतुम् ॥ २५॥ तदनेन मुख्यगौणौ द्वौ यज्ञौ दर्शितौ, यावद्धि किंचिद्वैदिकं श्रेयःसाधनं तत्सर्वं यज्ञत्वेन संपाद्यते—तत्र श्रोत्रादीनि ज्ञानेन्द्रियाणि तानि शब्दादिविषयेभ्यः प्रत्याहृत्यान्ये प्रत्याहारपराः संयमाग्निषु, धारणा ध्यानं समाधिरिति त्रयमेकविषयं संयमशब्देनोच्यते । तथाचाह भगवान्पतञ्जलिः 'त्रयमेकत्र संयमः' इति । तत्र हृत्पुण्डरीकादौ मनसश्चिरकालस्थापनं धारणा । एवमेकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोऽन्तराऽन्याकारप्रत्ययव्यवहितो ध्यानम् । सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः । सतु चित्तभूमिभेदेन द्विविधः संप्रज्ञातोऽसंप्रज्ञातश्च । चित्तस्य हि पञ्च भूमयो भवन्ति क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति । तत्र रागद्वेषादिवशाद्विषयेष्वभिनिविष्टं क्षिप्तं, तन्द्रादिग्रस्तं मूढं, सर्वदा विषयासक्तमपि कदाचिद्ध्याननिष्ठं क्षिप्ताद्विशिष्टतया

५ भाष्योत्कर्षदीपिका ।

यदवलोकनं स तस्मिन्होमस्तं कुर्वन्तीत्यर्थः । ब्रह्मरूपेऽग्नौ यज्ञेनैवोपायेन ब्रह्मार्पणमित्युक्तप्रकारेण यज्ञमुपजुह्वति । यज्ञादिसर्वकर्म प्रविलापयन्तीत्यर्थ इति वा । अस्मिन्पक्षे यज्ञं यज्ञेनेत्यनयोः स्वारस्यं श्रोत्रादीनीत्यादिनोक्तयज्ञानुगुण्यं चिन्त्यम् ॥ २५ ॥ श्रोत्रादीनि ज्ञानेन्द्रियाण्यन्ये योगिनः प्रत्याहारपराः प्रतीन्द्रियं संयम्यप्रत्याहारस्य सत्त्वाद्बहुवचनम् । संयमा एवाग्नयस्तेषु जुह्वति । इन्द्रियसंयमनमेव कुर्वन्तीत्यर्थः । यत्तु धारणाध्यानसमाधित्रितयमेकविषयं संयमशब्देनोच्यते तत्र हृत्पुण्डरीकादौ मनसश्चिरकालस्थापनं धारणा । एवमेकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोऽन्तरान्तराऽन्याकारप्रत्ययव्यवहितो ध्यानम् । सर्वथा विजातीय-

६ श्रीधरीव्याख्या ।

यज्ञेनैवोपायभूतेन ब्रह्मार्पणमित्युक्तप्रकारेण यज्ञमुपजुह्वति । यज्ञादिसर्वकर्माणि प्रविलापयन्तीत्यर्थः । सोऽयं ज्ञानयज्ञः ॥ २५ ॥ **श्रोत्रादीनीति** । अन्ये नैष्ठिकब्रह्मचारिणस्तत्तदिन्द्रियसंयमरूपेष्वग्निषु श्रोत्रादीनि जुह्वति प्रविलापयन्ति । इन्द्रियाणि निरुध्य संयम-

७ अभिनवगुप्ताचार्यव्याख्या ।

योगयुक्ताः सन्तो दैवं नानारूपेन्द्रादिदेवतोद्देशेनैव बाह्यद्रव्यमयं यज्ञमुपाचरन्ति । तं च क्रियमाणमेव यज्ञं कर्तव्यमिदमित्येव बुद्ध्या फलानपेक्षतया दुष्पूरे ब्रह्माग्नावर्पयन्तीति द्रव्ययज्ञा अपि परं ब्रह्म यान्ति । यतो वक्ष्यते 'सर्वेऽप्येते यज्ञविदः' इति । श्रुतिरपि 'यज्ञेन यज्ञ-

१ नीलकण्ठः. २ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

**जुह्वति' इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥२६॥**

२ आनन्दगिरिव्याख्या ।

**इति । विषयेभ्योऽन्तर्बाह्यानीन्द्रियाणि प्रत्याहरन्तीति संयमयज्ञं संक्षिप्य दर्शयति—इन्द्रियेति । श्रोत्रादीन्द्रियाग्निषु शब्दादिविषयहोमस्य तत्तदिन्द्रियैस्तत्तद्विषयोपभोगलक्षणस्य सर्वसाधारणत्वमाशङ्क्य प्रतिषिद्धान्वर्जयित्वा रागद्वेषरहितो भूत्वा प्राप्तान्विषयानुपभुङ्क्ते तैस्तैरिन्द्रियैरिति विवक्षितं होमं विशदयति—श्रोत्रादिभिरिति ॥ २६ ॥**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

व्यूहज्ञानं कण्ठकूपे क्षुत्पिपासानिवृत्ति'रित्यादि । त एवाग्नय इन्द्रियेन्धनसंहारहेतुत्वात् तेषु संयमाग्निषु श्रोत्रादीनि जुह्वति प्रक्षिपन्ति । तत्र श्रोत्रमनाहते ध्वनौ संनियम्य हंसोपनिषदुक्तरीत्या घण्टानादादीन्दश नादाननुभवन्ति । नहि तत्र सन्नियते चेतसि शब्दान्तरग्रहणं तदा भवति सोऽयं श्रोत्रस्य संयमाग्नौ होमो बोध्यः । एवमन्यत्रापि तद्द्वारा च निष्कलं तत्त्वं प्रतिपद्यन्ते । तथान्ये विषयेभ्यः प्रत्याहृतकरणाः धारणाध्यानसमाध्यात्मकं मनसः संयमं एकत्र मूलाधाराद्यन्यतमचक्रे कर्तुमशक्ताः समनस्केन्द्रियेषु विषयवियोगाद्दग्धेन्धनानलवत्स्वयं विलीनेषु येषां समाधिबुद्धिस्तैरिन्द्रियेषु विषया एवोपसंहृता न त्विन्द्रियादीनि मनआदिषु पूर्वोक्तरीत्या उपसंहृतानि । तानेतानिन्द्रियचिन्तकान्प्रकृत्योक्तं वायवीये 'दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः' इति ॥ २६ ॥ इतो विशिष्टं योगान्तरमाह—

४ मधुसूदनीव्याख्या ।

विक्षिप्तं, तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति । विक्षिप्ते तु चेतसि कादाचित्कः समाधिर्विक्षेपप्राधान्याद्योगपक्षे न वर्तते, किंतु तीव्रपवनविक्षिप्तप्रदीपवत्स्वयमेव नश्यति । एकाग्रं तु एकविषयकधारावाहिकवृत्तिसमर्थं सत्त्वोद्रेकेण तमोगुणकृततन्द्रादिरूपलयाभावादात्माकारवृत्तिः । सा च रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावादेकविषयैवेति शुद्धे सत्त्वे भवति चित्तमेकाग्रम् अस्यां भूमौ संप्रज्ञातः समाधिः । तत्र ध्येयाकारा वृत्तिरपि भासते । तस्या अपि निरोधे निरुद्धं चित्तमसंप्रज्ञातसमाधिभूमिः । तदुक्तं 'तस्या अपि निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधिः' इति । अयमेव सर्वतो विरक्तस्य समाधिफलमपि सुखमनपेक्षमाणस्य योगिनो दृढभूमिः सन् धर्ममेघ इत्युच्यते । तदुक्तं 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः, ततः क्लेशकर्मनिवृत्तिः' इति । अनेन रूपेण संयमानां भेदादग्निष्विति बहुवचनम् । तेषु इन्द्रियाणि जुह्वति धारणाध्यानसमाधिसिद्ध्यर्थं सर्वाणीन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याहरन्तीत्यर्थः । तदुक्तं—'स्वस्वविषयासंप्रयोगे चित्तरूपानुकार एवेन्द्रियाणां प्रत्याहारः' इति । विषयेभ्यो निगृहीतानीन्द्रियाणि चित्तरूपाण्येव भवन्ति । ततश्च विक्षेपाभावाच्चित्तं धारणादिकं निर्वहतीत्यर्थः । तदनेन प्रत्याहारधारणाध्यानसमाधिरूपं योगाङ्गचतुष्टयमुक्तम् । तदेवं समाध्यवस्थायां सर्वेन्द्रियवृत्तिनिरोधो यज्ञत्वेनोक्तः । इदानीं व्युत्थानावस्थायां रागद्वेषराहित्येन विषयभोगो यः सोऽप्यपरो यज्ञ इत्याह—शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति । अन्ये व्युत्थितावस्थाः श्रोत्रादिभिरविरुद्धविषयग्रहणं स्पृहाशून्यत्वेनान्यसाधारणं कुर्वन्ति स एव तेषां होमः ॥ २६ ॥

५ भाष्योत्कर्षदीपिका ।

प्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः अनेन रूपेण संयमानां भेदात् अग्निष्विति बहुवचनं तेष्विन्द्रियाणि जुह्वति धारणाध्यानसमाधिसिद्ध्यर्थं सर्वाणीन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याहरन्तीत्यर्थ इत्यादि तच्चिन्त्यम् । प्रत्याहाररूपेष्वग्निषु श्रोत्रादीन्द्रियाणां होमस्यात्र विवक्षितत्वादन्यथा होमाधिकरणस्यालाभात् ध्यानादीनां तु मनोहोमाधिकरणत्वादिति दिक् । एतेन तदनेन प्रत्याहारध्यानधारणासमाधिरूपं योगाङ्गचतुष्टयमुक्तमिति प्रत्युक्तम् । प्रत्याहारस्यैवात्राक्षरस्वारस्यात्प्रतीतेः । अतएव तत्र कंचित् बाह्यमाभ्यन्तरं वा विशेषमुपादाय तत्र चेतसो नियमनं क्रियते । ते च संयमा अनेकविषयत्वादनेके पृथक्फलाश्च । तथाच योगसूत्रकृता प्रोक्तं 'भुवनज्ञानं सूर्ये संयमात् चन्द्रे ताराव्यूहज्ञानं कण्ठकूपे क्षुत्पिपासानिवृत्तिः' इत्यादीति परास्तम् । अन्ये तत्त्वविदः प्रारब्धवशादुपलब्धान् शब्दादीन् शास्त्राविरुद्धान्विषयान् इन्द्रियाग्निषु जुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्त इत्यर्थः । यत्तु तथान्ये विषयेभ्यः प्रत्याहृतकरणाः धारणाध्यानसमाध्यात्मकं मनसः संयममेकत्र मूलाधाराद्यन्यतमचक्रे कर्तुमशक्ताः समनस्केन्द्रियेषु विषयवियोगाद्दग्धेन्धनानलवत्स्वयं विलीनेषु येषां समाधिबुद्धिस्तैः समनस्केन्द्रियेषु विषया एवोपसंहृता इत्याद्यन्ये वर्णयन्ति तदसत् । इन्द्रियप्रत्याहाररूपस्य यज्ञस्य श्रोत्रादीनीत्यादिनोक्तत्वेन यज्ञान्तरत्वाभावप्रसङ्गात् ।उक्तरीत्या विषयासन्निकर्षाग्नौ इन्द्रियाणि जुह्वतीति

६ श्रीधरीव्याख्या ।

प्रधानास्तिष्ठन्तीत्यर्थः । इन्द्रियाण्येवाग्नयस्तेषु शब्दादीनन्ये गृहस्था जुह्वति विषयान् । भोगसमयेऽप्यनासक्ताः सन्तोऽग्नित्वेन भाविते-

७ अभिनवगुप्ताचार्यव्याख्या ।

मयजन्त देवाः' इति ॥ २५ ॥ अन्ये तु संयमाग्निष्विन्द्रियाणीति । संयमं मनस्तस्य येऽग्नयः प्रतिपन्नभावभावनारूपा अभिलाषप्लोषका

१ मधुसूदनः. २ नीलकण्ठः. ३ नीलकण्ठः.

**सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**किंच—सर्वाणीति । सर्वाणीन्द्रियकर्माणीन्द्रियाणां कर्माणीन्द्रियकर्माणि तथा प्राणकर्माणि प्राणो वायुराध्यात्मिकस्तत्कर्माण्याकुञ्चनप्रसारणादीनि तानि चापर आत्मसंयमयोगाग्नावात्मनि संयम आत्मसंयमः स एव योगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौ जुह्वति प्रक्षिपन्ति ज्ञानदीपिते स्नेहेनेव प्रदीपिते**

२ आनन्दगिरिव्याख्या ।

यज्ञान्तरं कथयति—**किंचेति** । इन्द्रियाणां कर्माणि श्रवणवदनादीन्यात्मनि संयमो धारणाध्यानसमाधिलक्षणः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

**सर्वाणीति** । इन्द्रियाणां कर्माणि शब्दादिग्रहणानि, प्राणकर्माण्याकुञ्चनप्रसारणश्वासप्रश्वासादीनि । अपरे योगिनः आत्मनि बुद्धौ संयमः स एव योगोऽग्निश्च तस्मिन् ज्ञानेन देहेन्द्रियप्राणमनोव्यतिरिक्तात्मज्ञानेन दीपिते प्रकाशिते जुह्वति प्रविलापयन्ति । इन्द्रिययोगिनां हि सुप्ताविव प्राणोऽनुपसंहृत एवास्ते । तत्सहचरस्य मनसोऽनुपसंहारात् ।

४ मधुसूदनीव्याख्या ।

तदेवं पातञ्जलमतानुसारेण लयपूर्वकं समाधिं ततो व्युत्थानं च यज्ञद्वयमुक्त्वा ब्रह्मवादिमतानुसारेण बाधपूर्वकं समाधिं कारणोच्छेदेन व्युत्थानशून्यं सर्वफलभूतं यज्ञान्तरमाह—द्विविधो हि समाधिर्भवति लयपूर्वको बाधपूर्वकश्च । तत्र 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति न्यायेन कारणव्यतिरेकेण कार्यस्यासत्त्वात्पञ्चीकृतपञ्चभूतकार्यं व्यष्टिरूपं समष्टिरूपविराट्कार्यत्वात्तद्व्यतिरेकेण नास्ति । तथा समष्टिरूपमपि पञ्चीकृतपञ्चभूतात्मकं कार्यमपञ्चीकृतपञ्चमहाभूतकार्यत्वात्तद्व्यतिरेकेण नास्ति । तत्रापि पृथिवी शब्दस्पर्शरूपरसगन्धाख्यपञ्चगुणा गन्धेतरचतुर्गुणाप्कार्यत्वात्तद्व्यतिरेकेण नास्ति । ताश्चर्गुणा आपो गन्धरसेतरत्रिगुणात्मकतेजःकार्यत्वात्तद्व्यतिरेकेण न सन्ति । तदपि त्रिगुणात्मकं तेजो गन्धरसरूपेतरद्विगुणवायुकार्यत्वात्तद्व्यतिरेकेण नास्ति । सोऽपि द्विगुणात्मको वायुः शब्दमात्रगुणाकाशकार्यत्वात्तद्व्यतिरेकेण नास्ति । सच शब्दगुण आकाशो बहु स्यामिति परमेश्वरसंकल्पात्मकाहंकारकार्यत्वात्तद्व्यतिरेकेण नास्ति । सोऽपि संकल्पात्मकोऽहंकारो मायेक्षणरूपमहत्तत्त्वकार्यत्वात्तद्व्यतिरेकेण नास्ति । तदपीक्षणरूपं महत्तत्त्वं मायापरिणामत्वात्तद्व्यतिरेकेण नास्ति । तदपि मायाख्यं कारणं जडत्वेन चैतन्येऽध्यस्तत्वात्तद्व्यतिरेकेण नास्तीत्यनुसंधानेन विद्यमानेऽपि कार्यकारणात्मके प्रपञ्चे चैतन्यमात्रगोचरो यः समाधिः स लयपूर्वक उच्यते । तत्र तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाविद्यातत्कार्यस्याक्षीणत्वात् । एवं चिन्तनेऽपि कारणसत्त्वेन पुनः कृत्स्नप्रपञ्चोत्थानादयं सुषुप्तिवत्सबीजः समाधिर्न मुख्यः । मुख्यस्तु तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेणाविद्यायां निवृत्तौ सर्गक्रमेण तत्कार्यनिवृत्तेरनाद्यविद्यायाश्च पुनरुत्थानाभावेन तत्कार्यस्यापि पुनरुत्थानाभावान्निर्बीजो बाधपूर्वकः समाधिः । सएवानेन श्लोकेन प्रदर्श्यते । तथाहि—सर्वाणि निखिलानि स्थूलरूपाणि संस्काररूपाणि चेन्द्रियकर्माणीन्द्रियाणश्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चानां वाक्पाणिपादपायूपस्थाख्यानां च पञ्चानां बाह्यानामान्तरयोश्च मनोबुद्ध्योः कर्माणि शब्दश्रवणस्पर्शग्रहणरूपदर्शनरसग्रहणगन्धग्रहणानि वचनादानविहरणोत्सर्गानन्दाख्यानि च संकल्पाध्यवसायौ च, एवं प्राणकर्माणि च प्राणानां प्राणापानव्यानोदानसमानाख्यानां पञ्चानां कर्माणि बहिर्नयनमधोनयनमाकुञ्चनप्रसारणादि अशितपीतसमनयनमूर्ध्वनयनमित्यादीनि । अनेन पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च प्राणा मनो बुद्धिश्चेति सप्तदशात्मकं लिङ्गमुक्तम । तच्च सूक्ष्मभूतसमष्टिरूपं हिरण्यगर्भाख्यमिह विवक्षितमिति वदितुं सर्वाणीति विशेषणम् । आत्मसंयमयोगाग्नौ, आत्मविषयकः संयमो धारणाध्यानसंप्रज्ञातसमाधिरूपस्तत्परिपाके सति योगो निरोधसमाधिः । यं पतञ्जलिः

५ भाष्योत्कर्षदीपिका ।

वक्तव्यत्वापत्तेश्चेति दिक् ॥ २६ ॥ किंच सर्वाणीन्द्रियकर्माणि इन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां ज्ञानेन्द्रियाणां वाक्पाणिपादपायूपस्थाभिधानां कर्मेन्द्रियाणां कर्माणि शब्दस्पर्शरूपरसगन्धग्रहणात्मकानि वचनादानविहरणोत्सर्गानन्दाख्यानि च तथा प्राणानां प्राणापानव्यानोदानसमानाभिधानां कर्माणि बहिर्नयनमधोनयनमाकुञ्चनप्रसारणादि अशितपीतसमनयनमूर्ध्वनयनमित्यादीनि 'उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतं चापि सर्वव्यापी धनंजयः' इत्युक्तानि नागादिपञ्चप्राणकर्माणि चापरे आत्मनि संयमः प्रविलापनं सएव योगाग्निस्तस्मिन् तैलेन दीप इव ज्ञानेन

६ श्रीधरीव्याख्या ।

ष्विन्द्रियेषु हविष्ट्वेन भाविताञ्शब्दादीन्प्रक्षिपन्तीत्यर्थः ॥ २६ ॥ **सर्वाणीति** । अपरे ध्याननिष्ठाः बुद्धीन्द्रियाणां श्रोत्रादीनां कर्माणि श्रवणदर्शनादीनि । कर्मेन्द्रियाणां वाक्पाण्यादीनां कर्माणि वचनोपादानादीनि च प्राणानां दशानां कर्माणि । प्राणस्य बहिर्गमनम् ।

७ अभिनवगुप्ताचार्यव्याख्या ।

विस्फुलिङ्गास्तेष्विन्द्रियाण्यर्पयन्ति अतएव ते तपोयज्ञाः । इतरे ज्ञानपरिदीपितेषु फलदाहकेष्विन्द्रियाग्निषु विषयानर्पयन्ति भेदवासना-

**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**विवेकविज्ञानेनोज्ज्वलभावमापादिते प्रविलापयन्तीत्यर्थः ॥ २७ ॥ द्रव्येति । द्रव्ययज्ञास्तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञाः, तपोयज्ञास्तपो यज्ञो येषां तपस्विनां ते तपोयज्ञाः, योगयज्ञाः प्राणायामप्रत्याहारादिलक्षणो योगो यज्ञो येषां ते योगयज्ञास्तथापरे स्वाध्यायज्ञानयज्ञाश्च स्वाध्यायो यथाविधि ऋगाद्यभ्यासो यज्ञो येषां ते स्वाध्याययज्ञाः, ज्ञानयज्ञा ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञो**

२ आनन्दगिरिव्याख्या ।

सर्वमपि व्यापारं निरुध्यात्मनि चित्तसमाधानं कुर्वन्तीत्याह—**विवेकेति** ॥ २७ ॥ यज्ञषट्कमवतारयति—**द्रव्येति** । तत्र द्रव्ययज्ञान्पुरुषानुपादाय विभजते—**तीर्थेष्विति** । तपस्विनां यज्ञबुद्ध्या तपोऽनुतिष्ठन्तो नियमवन्त इत्यर्थः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बुद्धियोगिनां तु मनसोऽप्युपसंहारात्तदायत्तस्य प्राणस्याप्युपसंहारो भवतीति विशेषः । एतेषामपि बुद्धौ बोद्धव्याभावात्पूर्ववल्लीनायां समाधिबुद्धिरस्ति नत्वेतैर्बुद्धेरन्यत्वेन नात्मा ज्ञातो नापि तस्मिन्बुद्धिरुपसंहृता । अतएवैतान्प्रकृत्योक्तं वायवीये 'बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः' इति । बौद्धा बुद्धौ लीनाः दशसहस्राणि मन्वन्तराणीत्यनुषङ्गात् ॥ २७ ॥ एवं यज्ञपञ्चकं श्लोकत्रयेणोक्तम् । अथैकेनैव श्लोकेन पञ्चयज्ञानाह—**द्रव्येति** । द्रव्यसाध्याः वापीकूपारामाः तीर्थे बहिर्वेदिकादानं श्रौतयज्ञानां प्रागेव ग्रहणात् त एव यज्ञा येषां ते द्रव्ययज्ञाः । तथा तपः कृच्छ्र-

४ मधुसूदनीव्याख्या ।

सूत्रयामास 'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधलक्षणचित्तान्वयो निरोधपरिणामः' इति । व्युत्थानं क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयं तत्संस्काराः समाधिविरोधिनस्ते योगिना प्रयत्नेन प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते । तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति । ततश्च निरोधमात्रक्षणेन चित्तान्वयो निरोधपरिणाम इति । तस्य फलमाह ततः प्रशान्तवाहितासंस्कारादिति । तमोरजसोः क्षयाल्लयविक्षेपशून्यत्वेन शुद्धसत्त्वस्वरूपं चित्तं प्रशान्तमित्युच्यते । पूर्वपूर्वप्रशमसंस्कारपाटवेन तदाधिक्यं प्रशान्तवाहितेति । तत्कारणं च सूत्रयामास 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः' इति । विरामो वृत्त्युपरमस्तस्य प्रत्ययः कारणं वृत्त्युपरमार्थः पुरुषप्रयत्नस्तस्याभ्यासः पौनःपुन्येन संपादनं तत्पूर्वकस्तज्जन्योऽन्यः संप्रज्ञाताद्विलक्षणोऽसंप्रज्ञात इत्यर्थः । एतादृशो य आत्मसंयमयोगः स एवाग्निस्तस्मिञ्ज्ञानदीपिते ज्ञानं वेदान्तवाक्यजन्यो ब्रह्मात्मैक्यसाक्षात्कारस्तेनाविद्यातत्कार्यनाशद्वारा दीपिते अत्यन्तोज्ज्वलिते बाधपूर्वके समाधौ समष्टिलिङ्गशरीरमपरे जुह्वति । प्रविलापयन्तीत्यर्थः । अत्र च सर्वाणीति आत्मेति ज्ञानदीपित इति विशेषणैरग्नावित्येकवचनेन च पूर्ववैलक्षण्यं सूचितमिति न पौनरुक्त्यम् ॥ २७ ॥ एवं त्रिभिः श्लोकैः पञ्चयज्ञानुक्त्वाऽधुनैकेन श्लोकेन षड्यज्ञानाह—द्रव्यत्याग एव यथाशास्त्रं यज्ञो येषां ते द्रव्ययज्ञाः पूर्तदत्ताख्यरूपस्मार्तकर्मपराः । तथाच स्मृतिः 'वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ शरणागतसंत्राणं भूतानां चाप्यहिंसनम् । बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ॥' इति । इष्टाख्यं श्रौतं कर्म तु 'दैवमेवापरे यज्ञमि'त्यत्रोक्तम् । अन्तर्वेदि दानमपि तत्रैवान्तर्भूतम् । तथा कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषां ते तपोयज्ञास्तपस्विनः । तथा योगश्चित्तवृत्तिनिरोधोऽष्टाङ्गो यज्ञो येषां ते योगयज्ञा यमनियमासनादियोगाङ्गानुष्ठानपराः ।

५ भाष्योत्कर्षदीपिका ।

विवेकेन सर्वोपाधिनिरासेनोज्ज्वलतामापादिते जुह्वति । प्रविलापयन्तीत्यर्थः । अत्र भाष्यस्य समानरूपतया न तेन व्याख्यान्तराणां विरोध इति ध्येयम् ॥ २७ ॥ एवं त्रिभिः श्लोकैर्यज्ञपञ्चकमुक्त्वाथैकेन पञ्च यज्ञानाह—**द्रव्ययज्ञा इति** । तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या ये कुर्वन्ति ते द्रव्ययज्ञा इति भाष्यम् । तस्यैव विवरणं द्रव्ययज्ञाः पूर्तदत्ताख्यस्मार्तयज्ञपराः । तथाच स्मृतिः 'वापीकूप-

६ श्रीधरीव्याख्या ।

अपानस्याधोनयनम् । व्यानस्य व्यानयनाकुञ्चनप्रसारणादि । समानस्याशितपीतादीनां सम्यगुन्नयनम् । उदानस्योर्ध्वनयनम् । 'उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुतकृज्ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतं चापि सर्वव्यापी धनंजयः' इत्येवंरूपाणि जुह्वति । क । आत्मनि संयमो ध्यानैकाग्र्यं स एव योगः स एवाग्निस्तस्मिन् ज्ञानेन ध्येयविषयेण दीपिते प्रज्वलिते ध्येयं सम्यग्ज्ञात्वा तस्मिन्मनः संयम्य तानि सर्वाणि कर्माण्युपरमयन्तीत्यर्थः ॥ २७ ॥ किंच **द्रव्येति** । द्रव्यदानमेव यज्ञो येषां ते द्रव्य-

७ अभिनवगुप्ताचार्यव्याख्या ।

निरासायैव भोगानभिलषन्तीत्युपनिषत् ॥ २६ ॥ २७ ॥ तथाच मयैव लघ्व्यां प्रक्रियायामुक्तं 'न भोग्यं व्यतिरिक्तं हि भोक्तुस्त्वत्तो विभाव्यते । एष एव हि भोगो यत्तादात्म्यं भोक्तृभोग्ययोः ॥' इति । स्पन्देपि 'भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः' इति । ते च सर्वानिन्द्रियव्यापारान्मानसान्मुखनासिकानिर्गमनमूत्राद्यधोनयनादीन्वायवीयांश्चात्मनो मनसश्च संयमहेतौ योगनाम्न्यैकाग्र्यवह्नौ सम्य-

१ श्रीमच्छांकरभाष्यम् ।

**येषां ते ज्ञानयज्ञाश्च यतयो यतनशीलाः संशितव्रताः सम्यक् शितानि तनूकृतानि तीक्ष्णीकृतानि**

२ आनन्दगिरिव्याख्या ।

**प्रत्याहारादीत्यादिशब्देन यमनियमासनध्यानधारणासमाधयो गृह्यन्ते, यथाविधि प्राङ्मुखत्वपवित्रपाणित्वाद्यङ्गविधि-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चान्द्रायणमासोपवासादि तदेव यज्ञस्थानीयं येषां ते तपोयज्ञाः । तथा योगयज्ञाः सङ्गफलत्यागपूर्वकं संध्योपासनादिनिर्विकल्पसमाध्यन्तानां कर्मणामनुष्ठानं तृतीयाध्यायोक्तं योगः स एव यज्ञो येषां ते योगयज्ञाः । यद्वा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपोऽष्टाङ्गोपेतो 'योगश्चित्तवृत्तिनिरोधः' इति सूत्रितो योग एव यज्ञो येषां त इति । तथा स्वाध्याययज्ञाः नित्यं वेदाध्ययनरतास्ते स्वाध्याययज्ञाः । ज्ञानं स्वाध्यायार्थस्य पूर्वोत्तरमीमांसाविचारः स एव यज्ञो येषाम् । स्वाध्याययज्ञा ज्ञानयज्ञाश्चेति स्वाध्यायज्ञानयज्ञा इति समासः । यतयो यतनशीलाः

४ मधुसूदनीव्याख्या ।

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो हि योगस्याष्टावङ्गानि । तत्र प्रत्याहारः श्रोत्रादीनीन्द्रियाण्यन्य इत्यत्रोक्तः । धारणाध्यानसमाधय आत्मसंयमयोगाग्नावित्यत्रोक्ताः । प्राणायामोऽपाने जुह्वति प्राणमित्यनन्तरश्लोके वक्ष्यते । यमनियमासनान्यत्रोच्यन्ते । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः पञ्च । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः पञ्च । स्थिरसुखमासनं पद्मकस्वस्तिकाद्यनेकविधम् । अशास्त्रीयः प्राणिवधो हिंसा । सा च कृतकारितानुमोदितभेदेन त्रिविधा । एवमयथार्थभाषणमवध्यहिंसानुबन्धि यथार्थभाषणं चानृतम्, स्तेयमशास्त्रीयमार्गेण परद्रव्यस्वीकरणम्, अशास्त्रीयः स्त्रीपुंसव्यतिकरो मैथुनम्, शास्त्रनिषिद्धमार्गेण देहयात्रानिर्वाहकाधिकभोगसाधनस्वीकारः परिग्रहः । एतन्निवृत्तिलक्षणा उपरमा यमाः । 'यम उपरमे' इति स्मरणात् । तथा शौचं द्विविधं बाह्यमाभ्यन्तरं च । मृज्जलादिभिः कायादिक्षालनं हितमितमेध्याशनादि च बाह्यम् । मैत्रीमुदितादिभिर्मदमानादिचित्तमलक्षालनमान्तरम् । संतोषो विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपा चित्तवृत्तिः । तपः क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहनं काष्ठमौनाकारमौनादिव्रतानि च । इङ्गितेनापि स्वाभिप्रायाप्रकाशनं काष्ठमौनम्, अवचनमात्रमाकारमौनमिति भेदः । स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं सर्वकर्मणां तस्मिन्परमगुरौ फलनिरपेक्षतयाऽर्पणम् । एते विधिरूपा नियमाः । पुराणेषु येऽधिका उक्तास्त एष्वेव यमनियमेष्वन्तर्भाव्याः । एतादृशयमनियमाद्यभ्यासपरा योगयज्ञाः । स्वाध्याययज्ञानयज्ञाश्च यथाविधि वेदाभ्यासपराः स्वाध्याययज्ञाः । न्यायेन वेदार्थनिश्चयपरा ज्ञानयज्ञाः । यज्ञान्तरमाह—यतयो यत्नशीलाः संशितव्रताः सम्यक् शितानि तीक्ष्णीकृतान्यतिदृढानि व्रतानि येषां ते संशितव्रतयज्ञा इत्यर्थः । तथाच भगवान्पतञ्जलिः 'ते जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' इति । ये पूर्वमहिंसाद्याः पञ्च यमा उक्तास्त एव जात्याद्यनवच्छेदेन दृढभूमयो महाव्रतशब्दवाच्याः । तत्राहिंसा जात्यवच्छिन्ना यथा मृगयोर्मृगातिरिक्तान्न हनिष्यामीति । देशावच्छिन्ना न तीर्थे हनिष्यामीति । सैव कालावच्छिन्ना यथा न चतुर्दश्यां न पुण्येऽहनीति । सैव प्रयोजनविशेषरूपसमयावच्छिन्ना यथा क्षत्रियस्य देवब्राह्मणप्रयोजनव्यतिरेकेण न हनिष्यामि, युद्धं विना न हनिष्यामीति च । एवं विवाहादिप्रयोजनव्यतिरेकेणानृतं न वदिष्यामीति, एवमापत्कालव्यतिरेकेण क्षुद्भयायतिरिक्तस्तेयं न करिष्यामीति च । एवमृतुव्यतिरिक्तकाले पत्नीं न गमिष्यामीति, एवं गुर्वादिप्रयोजनमन्तरेण न परिग्रहीष्यामीति यथायोग्यमवच्छेदो द्रष्टव्यः । एतादृगवच्छेदपरिहारेण यदा सर्वजातिसर्वदेशसर्वकालसर्वप्रयोजनेषु भवाः सार्वभौमा अहिंसादयो भवन्ति महता प्रयत्नेन परिपाल्यमानत्वात्, तदा ते महाव्रतशब्देनोच्यन्ते । एवं काष्ठमौनादिव्रतमपि द्रष्टव्यम् । एतादृशव्रतदार्ढ्यं च

५ भाष्योत्कर्षदीपिका ।

तडागादिदेवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ शरणागतसंत्राणं भूतानां चाप्यहिंसनम् । बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ॥' इत्यादीति बोध्यम् । तथा पञ्चाग्निसेवनादि तप एव यज्ञो येषां ते तपोयज्ञाः । तथा यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिलक्षणो योग एव यज्ञो येषां ते योगयज्ञाः । तथा परे स्वाध्यायो विधिवद्वेदाभ्यासो यज्ञो येषां ते स्वाध्याययज्ञाः। ज्ञानं पूर्वोत्तरमीमांसाविचारेण शास्त्रार्थपरिज्ञानं यज्ञो येषां ते ज्ञानयज्ञाश्च यतयो यत्नशीलाः, सम्यक् शितानि सूक्ष्माणि तीक्ष्णीकृतानि च व्रतानि येषां ते । इति सर्वेषां विशेषणमन्यानां वा । केचित्त्वनेन विशेषणेन यज्ञान्तरं वर्णयन्ति व्रतयज्ञा इत्यर्थ इति तेषां

६ श्रीधरीव्याख्या ।

यज्ञाः । कृच्छ्रचान्द्रायणादितप एव यज्ञो येषां ते तपोयज्ञाः । योगश्चित्तवृत्तिनिरोधलक्षणः समाधिः स एव यज्ञो येषां ते योगयज्ञाः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

ज्ञानपरि(बोधि)दीपिते पूरयितव्ये निवेशयन्ति । गृह्यमाणं विषयं संकल्प्यमानं वा तदेकाग्रतयैव तत्परित्यक्तान्यव्यापारया बुद्ध्या गृह्णन्तीति तात्पर्यम् । तदुक्तं शिवोपनिषदि 'भावे त्यक्ते निरुद्धा चेन्नैव भावान्तरं व्रजेत् । तदा तन्मध्यभावेन विकासं याति भावना ॥' इति । एवं योग-

१ मधुसूदनः.

**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**व्रतानि येषां ते संशितव्रताः ॥ २८ ॥ किंच—अपान इति । अपानेऽपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिम् । पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणेऽपानं तथापरे जुह्वति रेचकाख्यं च प्राणायामं कुर्वन्तीत्येतत्, प्राणापानगती मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिस्तद्विपर्ययेणाधोगमनमपानस्य ते प्राणापानगती एते रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्यं**

२ आनन्दगिरिव्याख्या ।

मनतिक्रम्येति यावत्, व्रतानां तीक्ष्णीकरणमतिदृढत्वम् ॥ २८ ॥ प्राणायामाख्यं यज्ञमुदाहरति—**किंचेति** । प्राणायामपरायणाः सन्तो रेचकं पूरकं च कृत्वा कुम्भकं कुर्वन्तीत्याह—**प्राणेति** ॥ २९ ॥ प्राणापानयोर्गती श्वासप्रश्वासौ

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संशितव्रताः सम्यक् शितं तीक्ष्णं व्रतमहिंसादिकं येषां ते इति सर्वेषां विशेषणम् ॥ २८ ॥ एकादशं यज्ञमाह—**अपान इति** । अपरे अपानेऽपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिम् । पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । तथा प्राणे च अपानं प्रक्षिपन्ति । रेचकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणापानगती रुद्ध्वा मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः तद्विपर्ययेणाधोगमनमपानस्य गतिः ते प्राणापानगती एते निरुध्य प्राणायामपरायणाः प्राणायाम-

४ मधुसूदनीव्याख्या ।

कामक्रोधलोभमोहानां चतुर्णामपि नरकद्वारभूतानां निवृत्तिः । तत्राहिंसया क्षमया क्रोधस्य, ब्रह्मचर्येण वस्तुविचारेण कामस्य, अस्तेयापरिग्रहरूपेण संतोषेण लोभस्य, सत्येन यथार्थज्ञानरूपेण विवेकेन मोहस्य, तन्मूलानां च सर्वेषां निवृत्तिरिति द्रष्टव्यम् । इतराणि च फलानि सकामानां योगशास्त्रे कथितानि ॥ २८ ॥ प्राणायामयज्ञमाह सार्धेन—अपानेऽपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणवृत्तिम् । बाह्यवायोः शरीराभ्यन्तरप्रवेशेन पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणेऽपानं तथाऽपरे जुह्वति शारीरवायोर्बहिर्निर्गमनेन रेचकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । पूरकरेचककथनेन च तदविनाभूतो द्विविधः कुम्भकोऽपि कथित एव । यथाशक्ति वायुमापूर्यानन्तरं श्वासप्रश्वासनिरोधः क्रियमाणोऽन्तःकुम्भकः । यथाशक्ति सर्वं वायुं विरिच्यानन्तरं क्रियमाणो बहिःकुम्भकः । एतत्प्राणायामत्रयानुवादपूर्वकं चतुर्थं कुम्भकमाह—प्राणापानगती मुखनासिकाभ्यामान्तरस्य वायोर्बहिर्निर्गमः श्वासः प्राणस्य गतिः । बहिर्निर्गतस्यान्तःप्रवेशः प्रश्वासोऽपानस्य गतिः । तत्र पूरके प्राणगतिनिरोधः, रेचकेऽपानगतिनिरोधः, कुम्भके तूभयगतिनिरोध इति क्रमेण युगपच्च श्वासप्रश्वासाख्ये प्राणापानगती रुद्ध्वा प्राणायामपरायणाः सन्तोऽपरे पूर्वविलक्षणा नियताहाराः आहारनियमादियोगसाधनविशिष्टाः प्राणेषु बाह्याभ्यन्तरकुम्भकाभ्यासनिगृहीतेषु प्राणान् ज्ञानेन्द्रियकर्मेन्द्रियरूपान्जुह्वति, चतुर्थकुम्भकाभ्यासेन विलापयन्तीत्यर्थः । तदेतत्सर्वं भगवता पतञ्जलिना संक्षेपविस्तराभ्यां सूत्रितम् । तत्र संक्षेपसूत्रं 'तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः प्राणायामः' इति । तस्मिन्नासने स्थिरे सति प्राणायामोऽनुष्ठेयः । कीदृशः, श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः श्वासप्रश्वासयोः प्राणापानधर्मयोर्या गतिः पुरुषप्रयत्नमन्तरेण स्वाभाविकप्रवहणं क्रमेण युगपच्च पुरुषप्रयत्नविशेषेण तस्या विच्छेदो निरोध एव लक्षणं स्वरूपं यस्य स तथेति । एतदेव विवृणोति 'बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः' इति । बाह्यगतिनिरोधरूपत्वाद्बाह्यवृत्तिः पूरकः । आन्तरगतिनिरोधरूपत्वादान्तरवृत्ती रेचक; कैश्चित्तु बाह्यशब्देन रेचकः आन्तरशब्देन च पूरको व्याख्यातः । युगपदुभयगतिनिरोधस्तम्भस्तद्वृत्तिः कुम्भकः ।

५ भाष्योत्कर्षदीपिका ।

कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषामिति तपोयज्ञा इत्यस्य व्याख्यानकर्तॄणां मते पौनरुक्त्यं यज्ञानां च त्रयोदशत्वं चापततीत् । अपान इत्यादिसार्धश्लोकेनैकयज्ञवर्णनं तु आमादिकं अपर इत्यस्य वारद्वयमुपलब्धेरिति ज्ञेयम् ॥ २८ ॥ एकादशयज्ञमाह । अपानेऽपानवृत्तौ प्राणवृत्तिमपरे जुह्वति । पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । तथा प्राणेऽपानं जुह्वति रेचकाख्यं प्राणायामं कुर्वन्ति प्राणापानयोर्मुखनासिकाभ्यां वायोर्निर्गमनाधोगमनरूपे गती रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्य

६ श्रीधरीव्याख्या ।

स्वाध्यायेन वेदेन श्रवणमननादिना यत्तदर्थज्ञानं तदेव यज्ञो येषां ते । अथवा वेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेति द्विविधा यतयः प्रयत्नशीलाः । सम्यक् शितं निशितं तीक्ष्णीकृतं व्रतं येषां ते ॥ २८ ॥ किंच—**अपान इति** । अपाने अधोवृत्तौ प्राणमूर्ध्ववृत्तिं पूरकेण जुह्वति पूरककाले प्राणमपानेनैकीकुर्वन्ति । तथा कुम्भकेन प्राणापानयोरूर्ध्वाधोगती रुद्ध्वा रेचककालेऽपानं प्राणे जुह्वति । एवं पूरक-

७ अभिनवगुप्ताचार्यव्याख्या ।

यज्ञा व्याख्याताः ॥ २८ ॥ एवं द्रव्ययज्ञस्तपोयज्ञो योगयज्ञश्चोक्तलक्षणाः स्वाध्यायज्ञानयज्ञाश्च ये ते संप्रति लक्ष्यन्ते—अपान इति ।

**अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः॥ ३०॥**

१ श्रीमच्छांकरभाष्यम्।

**प्राणायामं कुर्वन्तीत्यर्थः॥ २९॥ किंच—अपर इति। अपरे नियताहारा नियतः परिमित आहारो येषां ते नियताहाराः सन्तः प्राणान्वायुभेदान्प्राणेष्वेव जुह्वति, यस्य यस्य वायोर्जयः क्रियत इतरा-**

२ आनन्दगिरिव्याख्या।

निरुध्य किं कुर्वन्तीत्यपेक्षायामाह—**किंचेति**। प्राणापानगतिनिरोधरूपं कुम्भकं कृत्वा पुनःपुनर्वायुजयं कुर्वन्तीत्यर्थः। आहारस्य परिमितत्वं हितत्वमेध्यत्वोपलक्षणार्थम्। प्राणानां प्राणेषु होममेव विभजते—**यस्येति**। जितेषु

३ नीलकण्ठव्याख्या (चतुर्धरी)।

तत्पराः कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः॥ २९॥ द्वादशं यज्ञमाह—**अपरे इति**। नियतो निगृहीत आहारो विषयभोगो यैस्ते नियताहाराः वैराग्यादिमन्तः प्राणान्। अत्र समनस्कानीन्द्रियाणि प्राणशब्देन गृह्यन्ते। तान्प्राणेषु मनश्चित्ताहंकारेष्वन्तःकरणवृत्तिभेदेषु। बुद्धेः प्राग्गृहीतत्वादग्रहणम्। जुह्वति प्रविलापयन्ति। इन्द्रियाणि संकल्पात्मके मनसि संहृत्य मनोऽपि स्मरणात्मके चित्ते संहृत्य तदप्यहंकारे संहरन्ति। स चाभिमानरूपोऽहंकारोऽभिमन्तव्याभावात्स्वयमेव दग्धेन्धनानलवद्विलीयते। तत्र येषां समाधिबुद्धिरस्ति ते आभिमानिका बुद्धि-

४ मधुसूदनीव्याख्या।

तदुक्तं 'यत्रोभयोः श्वासप्रश्वासयोः सकृदेव विधारकात्प्रयत्नादभावो भवति न पुनः पूर्ववदापूरणप्रयत्नौघविधारणं नापि रेचनप्रयत्नौघविधारणं किंतु यथा तप्त उपले निहितं जलं परिशुष्यत्सर्वतः संकोचमापद्यते एवमयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्नावरुद्धक्रियः शरीर एव सूक्ष्मभूतोऽवतिष्ठते नतु पूरयति येन पूरकः, नतु रेचयति येन रेचक इति। त्रिविधोऽयं प्राणायामो देशेन कालेन संख्यया च परीक्षितो दीर्घसूक्ष्मसंज्ञो भवति। यथा घनीभूतस्तूलपिण्डः प्रसार्यमाणो विरलतया दीर्घः सूक्ष्मश्च भवति तथा प्राणोऽपि देशकालसंख्याधिक्येनाभ्यस्यमानो दीर्घो दुर्लक्ष्यतया सूक्ष्मोऽपि संपद्यते। तथाहि हृदयान्निर्गत्य नासाग्रसंमुखे द्वादशाङ्गुलपर्यन्ते देशे श्वासः समाप्यते। ततएव च परावृत्त्य हृदयपर्यन्तं प्रविशतीति स्वाभाविकी प्राणापानयोर्गतिः। अभ्यासेन तु क्रमेण नाभेराधारद्वारा निर्गच्छति। नासान्तश्चतुर्विंशत्यङ्गुलपर्यन्ते षट्त्रिंशदङ्गुलपर्यन्ते वा देशे समाप्यते। एवं प्रवेशोऽपि तावानवगन्तव्यः। तत्र बाह्यदेशव्याप्तिर्निर्वाते देशे इषीकादिसूक्ष्मतूलक्रिययाऽनुमातव्या। अन्तरपि पिपीलिकास्पर्शसदृशेन स्पर्शेनानुमातव्या। सेयं देशपरीक्षा। तथा निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणस्तेषामियत्ताऽवधारणीया। स्वजानुमण्डलं पाणिना त्रिःपरामृश्य छोटिकावच्छिन्नः कालो मात्रा। ताभिः षट्त्रिंशतामात्राभिः प्रथम उद्घातो मन्दः, स एव द्विगुणीकृतो द्वितीयो मध्यः, स एव त्रिगुणीकृतस्तृतीयस्तीव्र इति। नाभिमूलात्प्रेरितस्य वायोर्विरिच्यमानस्य शिरस्यभिहननमुद्घात इत्युच्यते। सेयं कालपरीक्षा। संख्यापरीक्षा च प्रणवजपावृत्तिभेदेन वा संख्यापरीक्षा श्वासप्रवेशगणनया वा। कालसंख्ययोः कथंचिद्भेदविवक्षया पृथगुपन्यासः। यद्यपि कुम्भके देशव्याप्तिर्नावगम्यते तथापि कालसंख्याव्याप्तिरवगम्यत एव। स खल्वयं प्रत्यहमभ्यस्तो दिवसपक्षमासादिक्रमेण देशकालप्रचयव्यापितया दीर्घः परमनैपुण्यसमधिगमनीय-

५ भाष्योत्कर्षदीपिका।

प्राणायामं कुर्वन्तीत्यर्थः॥ २९॥ द्वादशयज्ञमाह—**अपर इति**। नियतः परिमित आहारो येषां ते नियताहाराः सन्तः प्राणानजितान्वायुभेदान् प्राणेषु जितेषु वायुभेदेषु जुह्वति। तेऽजिता अपि तत्र प्रविष्टा जिता इव भवन्तीत्यर्थः। यत्तु अपरे त्वाहारसंकोचमभ्यसन्तः स्वयमेव जीर्यमाणेष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः। यद्वा 'अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे' इत्यनेन पूरकरेचकयोरावर्तमानयोर्हंसः सोहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानाऽजपामन्त्रेण तत्त्वंपदार्थैक्यं व्यतिहारेण भावयन्तीत्यर्थः। प्राणापानगती इत्यनेन तु श्लोकेन प्राणायामयज्ञाः अपरे कल्प्यन्ते तत्रायमर्थः—'द्वौ भागौ पूरयेदन्नै-

६ श्रीधरीव्याख्या।

कुम्भकरेचकैः प्राणायामपरायणा अपरे इत्यर्थः॥ २९॥ किंच—**अपर इति**। अपरे त्वाहारसंकोचमभ्यस्यन्तः स्वयमेव जीर्यमाणेष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः। यद्वा अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे इत्यनेन पूरकरेचकयोरावर्त्यमानयोर्हंसः सोहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेनाऽजपामन्त्रेण तत्त्वंपदार्थैक्यं व्यतिहारेण भावयन्तीत्यर्थः। तदुक्तं योगशास्त्रे-

७ अभिनवगुप्ताचार्यव्याख्या।

अपरे। यज्ञशिष्टा इति। एवं बहुविधा यज्ञाः। प्राणमुदीयमानं (नादे ?) प्रणवादिमात्रालयान्तमपानेऽस्तं याति स्वानन्दान्तःप्रवेशात्मनि जुह्वतीति पिण्डस्थैर्यात्मा स्वाध्यायः शिष्यात्मना च नयानयग्रहणाय केचिदस्तं यान्तमुदीयमाने संवेश्य तदेकीकारेणापवर्गदानात्मनि शिष्यात्मनि च शोधनबोधनप्रवेशनयोजनरूपे स्वाध्याययज्ञाने स्वपरानन्दमये प्रतिष्ठितमनसः। अतएव पूरकः प्रथममुक्तश्चरमं रेचकः।

१ श्रीधरः

१ श्रीमच्छांकरभाष्यम् ।

**न्वायुभेदांस्तस्मिञ्जुह्वति ते तत्र प्रविष्टा इव भवन्ति । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषा यज्ञैर्यथोक्तैः क्षपितो नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषाः ॥ ३० ॥ एवं यथोक्तान्यज्ञान्निर्वर्त्य**

२ आनन्दगिरिव्याख्या ।

वायुभेदेष्वजितानां तेषां होमप्रकारं प्रकटयति—**ते तत्रेति** । प्रकृतान्यज्ञानुपसंहरति—**सर्वेऽपीति** ॥ ३० ॥ यथोक्तयज्ञनिर्वर्तनानन्तरं क्षीणे कल्मषे किं स्यादित्याशङ्क्याह—**एवमिति** । यथोक्तानां यज्ञानां मध्ये केनचिदपि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

योगिभ्यः पूर्वोक्तेभ्यो निकृष्टाः । अतएव एतान्प्रकृत्योक्तं वायवीये 'सहस्रं त्वाभिमानिकाः' इति । सहस्रं मन्वन्तराणीत्यनुषङ्गः । भौतिकस्तु योगोऽत्र नोक्तः यदनुष्ठातॄन्प्रकृत्य तत्रैवोक्तं 'भौतिकास्तु शतं पूर्णम्' इति । अत्रापि शतं मन्वन्तराणीत्यनुषञ्जनीयम् । सर्वेऽप्येते यज्ञविदो यज्ञलब्धारो यज्ञेन क्षपितं कल्मषं येषां ते तथाविधा भवन्ति

४ मधुसूदनीव्याख्या ।

तया च सूक्ष्म इति निरूपितस्त्रिविधः प्राणायामः । चतुर्थं फलभूतं सूत्रयतिस्म—'बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः' इति । बाह्यविषयः श्वासो रेचकः । अभ्यन्तरविषयः प्रश्वासः पूरकः । वैपरीत्यं वा । तावुभावपेक्ष्य सकृद्बलवद्विधारकप्रयत्नवशाद्भवति बाह्याभ्यन्तरभेदेन द्विविधस्तृतीयः कुम्भकः । तावुभावनपेक्ष्यैव केवलकुम्भकाभ्यासपाटवेनासकृत्तत्तत्प्रयत्नवशाद्भवति चतुर्थः कुम्भकः । तथाच बाह्याभ्यन्तरविषयाक्षेपीति तदनपेक्ष इत्यर्थः । अन्या व्याख्या—बाह्यो विषयो द्वादशान्तादिराभ्यन्तरो विषयो हृदयनाभिचक्रादिः तौ द्वौ विषयावाक्षिप्य पर्यालोच्य यः स्तम्भरूपो गतिविच्छेदः स चतुर्थः प्राणायाम इति । तृतीयस्तु बाह्याभ्यन्तरौ विषयावपर्यालोच्यैव सहसा भवतीति विशेषः । एतादृशश्चतुर्विधः प्राणायामेऽपाने जुह्वति प्राणमित्यादिना सार्धेन श्लोकेन दर्शितः ॥ २९ ॥ तदेवमुक्तानां द्वादशधा यज्ञविदां फलमाह—यज्ञान्विदन्ति जानन्ति विन्दन्ति लभन्ते वेति यज्ञविदो यज्ञानां ज्ञातारः कर्तारश्च । यज्ञैः पूर्वोक्तैः क्षपितं नाशितं कल्मषं पापं येषां ते यज्ञक्षपितकल्मषाः । यज्ञान्कृत्वाऽवशिष्टे कालेऽन्नममृतशब्दवाच्यं भुञ्जत इति यज्ञशिष्टामृतभुजः । ते सर्वेऽपि सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यान्ति ब्रह्म सनातनम् । नित्यं

५ भाष्योत्कर्षदीपिका ।

स्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् ॥' इत्येवमुक्तो नियतः आहारो येषां ते कुम्भकेन प्राणापानगती रुद्ध्वा प्राणायामपरायणाः सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति । कुम्भके सर्वे प्राणा एकीभवन्ति तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीति भाष्यविरुद्धं व्याचख्युस्तदुपेक्ष्यम् । प्रसिद्धार्थपरित्यागबीजभूतानुपपत्त्याद्यनुपलब्ध्या श्रोत्रादीन्द्रिहोमस्य प्रत्याहाररूपेष्वभिषूक्तत्वेन च पक्षान्तरे श्लोकोत्तरार्धस्य सत्यपि संभवे स्वपूर्वार्धेनान्वयं विहायापरपूर्वार्धेनान्वयस्यान्याय्यत्वेन पूरकरेचकयोरित्यादिग्रन्थस्याक्षरार्थत्वाभावेन च पूरकरेचककुम्भकरूपं प्राणायामं कुर्वन्तीति भाष्योक्तस्यैव सम्यक्त्वात् । एतेन प्राणानिन्द्रियाणीत्याद्यपि प्रत्युक्तम्, लोकाप्रसिद्धार्थकल्पनापत्तेः । अतएव प्राणेषु बाह्याभ्यन्तरकुम्भकाभ्यासनिगृहीतेषु प्राणान् ज्ञानेन्द्रियकर्मेन्द्रियरूपान् जुह्वति चतुष्कुम्भकाभ्यासेन विलापयन्तीत्यर्थ इत्यपास्तम् । इन्द्रियाणि जुह्वतीत्युक्त्या इन्द्रियनिरोधयज्ञस्याप्युपलब्ध्या प्राणायामयज्ञमाह सार्धेनेति स्वोक्तिविरोधाच्च । यदपि नियताहारा वैराग्यादिमन्तः प्राणानत्र समनस्कानीन्द्रियाणि प्राणशब्देन गृह्यन्ते । द्वितीयान्तप्राणशब्देन श्रोत्रादीनि वागादीनि च गृह्यन्ते तान्प्राणान्प्राणेषु समनश्चित्ताहंकारेष्वन्तःकरणवृत्तिभेदेषु जुह्वति प्रविलापयन्ति । इन्द्रियाणि संकल्पात्मके मनसि संहृत्य मनोऽपि स्मरणात्मके चित्ते संहृत्य तदप्यहंकारे संहरन्ति स चाभिमानरूपोऽहंकारोऽभिमन्तव्याभावात्स्वयमेव दग्धेन्धनानलवद्विलीयत इत्यन्ये । तदप्यसमञ्जसम् । लोकाप्रसिद्धार्थकल्पनादिदोषस्यात्रापि तुल्यत्वादितिदिक् । एते सर्वेऽपि यज्ञविदो यज्ञानां ज्ञातारः कर्तारश्च यज्ञैर्यथोक्तैः क्षपिता नाशिताः कल्मषाः पापानि येषां ते ॥ ३० ॥

६ श्रीधरीव्याख्या ।

'सकारेण बहिर्याति हकारेण विशेत्पुनः । प्राणस्तत्र स एवाहं हंस इत्यनुचिन्तयेत्' इति । प्राणापानगती रुद्ध्वेत्यनेन तु श्लोकेन प्राणायामयज्ञा अपरैः कथ्यन्ते तत्रायमर्थः-'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् ॥' इत्येवमादिवचनोक्तो नियत आहारो येषां ते । कुम्भकेन प्राणापानगती रुद्ध्वा प्राणायामपरायणाः सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति । कुम्भके हि सर्वे प्राणा एकीभवन्तीति तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीत्यर्थः । तदुक्तं योगशास्त्रे-'यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत् । वायुवाक्कायदृष्टीनां स्थिरता च तथा तथा ॥' इति । तदेवमुक्तानां द्वादशानां यज्ञविदां फलमाह—**सर्वे इति** । यज्ञान्विदन्ति

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रथमेन च भागेन विषयभोगान्तर्मुखीकरणं द्वितीयेन महाविदेहधारणाक्रमाद्विषयग्रहणाय विस्मरणं ध्वन्यते । अतश्च स्वाध्याययज्ञेभ्योऽन्ये ज्ञानयज्ञाः । एतदेवोक्तव्यापारपरिशीलनावशपरिपूरितस्वात्मशिष्यात्ममनोरथाः द्वे अप्येते गती निरुध्याहारं विषयभोगात्मकं नियम्य प्राणान्सकलचित्तवृत्त्युदयान्प्राणेषु परनिरानन्दोल्लासेषु जुह्वति कुम्भकप्रशान्त्या । सर्वे चैते द्रव्ययज्ञप्रभृति ज्ञानयज्ञान्तं यज्ञ

१ नीलकण्ठः।

**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम॥ ३१॥**
**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे॥ ३२॥**

१ श्रीमच्छांकरभाष्यम्।

यज्ञशिष्टामृतभुजो यज्ञानां शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तदमृतं च यज्ञशिष्टामृतं तद्भुञ्जत इति यज्ञशिष्टामृतभुजो यथोक्तान्यज्ञान्कृत्वा तच्छिष्टेन कालेन यथाविधि चोदितमन्नममृताख्यं भुञ्जत इति यज्ञशिष्टामृतभुजो यान्ति गच्छन्ति ब्रह्म सनातनं चिरंतनं, मुमुक्षवश्चेत्कालातिक्रमापेक्षयेति सामर्थ्याद्गम्यते। नायं लोकः सर्वप्राणिसाधारणोऽप्यस्ति यथोक्तानां यज्ञानामेकोऽपि यज्ञो यस्य नास्ति सोऽयज्ञस्तस्य कुतोऽन्यो विशिष्टसाधनसाध्यः कुरुसत्तम॥ ३१॥ एवमिति। एवं यथोक्ता बहुविधा

२ आनन्दगिरिव्याख्या।

यज्ञेनाविशेषितस्य पुरुषस्य प्रत्यवायं दर्शयति—**नायमिति**। कथं यथोक्तयज्ञानुष्ठायिनामवशिष्टेन कालेन विहितान्नभुजां ब्रह्मप्राप्तिरित्याशङ्क्य मुमुक्षुत्वे सति चित्तशुद्धिद्वारेत्याह—**मुमुक्षवश्चेदिति**। तत्किमिदानीं साक्षादेव मोक्षो विवक्षितः, तथाच गतिश्रुतिविरोधः स्यादित्याशङ्क्य गतिनिर्देशसामर्थ्यात्क्रममुक्तिरत्राभिप्रेतेत्याह—**कालातीति**। तृतीयं पादं व्याचष्टे—**नायमिति**। विवक्षितं कैमुतिकन्यायमाह—**कुत इति**। साधारणलोकाभावे पुनरसाधारणलोकप्राप्तिर्दूरनिरस्तेत्यर्थः। यथोक्तेऽर्थे बुद्धिसमाधानं कुरुकुलप्रधानस्यार्जुनस्यानायासलभ्यमिति वक्तुं कुरुसत्तमेत्युक्तम्॥ ३१॥ उक्तानां यज्ञानां वेदमूलकत्वेनोत्प्रेक्षानिबन्धनत्वं निरस्यति—**एवमिति**। आत्मव्यापारसाध्य-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

सर्वे यज्ञाः कल्मषक्षयायैव भवन्ति न पुनः साक्षान्मोक्षायेत्यर्थः॥ ३०॥ सर्वेषामेतेषां मध्येऽन्यतममप्यनुष्ठातुमशक्तं प्रति प्राह—**यज्ञेति**। यज्ञाः पञ्चमहायज्ञास्तेभ्यः शिष्टमवशिष्टमन्नममृताख्यं ये भुञ्जते तेऽपि चित्तशुद्धिद्वारा सनातनं ब्रह्म यान्ति प्राप्नुवन्ति। अयज्ञस्य पूर्वोक्तेषु द्वादशस्वन्यतमो वा नित्याः पञ्च वा यस्य यज्ञा न सन्ति सोऽयज्ञस्तस्यायमपि लोको नास्ति, अन्यः परलोक आत्मलोको वा कुतो भवेत्। न कुतश्चिदित्यर्थः॥ ३१॥ एव-

४ मधुसूदनीव्याख्या।

संसारान्मुच्यन्त इत्यर्थः॥ ३०॥ एवमन्वये गुणमुक्त्वा व्यतिरेके दोषमाहार्धेन—उक्तानां यज्ञानां मध्येऽन्यतमोऽपि यज्ञो यस्य नास्ति सोऽयज्ञस्तस्यायमल्पसुखोऽपि मनुष्यलोको नास्ति सर्वनिन्द्यत्वात्, कुतोऽन्यो विशिष्टसाधनसाध्यः परलोकः हे कुरुसत्तम॥ ३१॥ किं त्वया स्वोत्प्रेक्षामात्रेणैवमुच्यते, नहि, वेद एवात्र प्रमाणमित्याह—एवं यथोक्ता बहुविधा बहुप्रकारा यज्ञाः

५ भाष्योत्कर्षदीपिका।

एवं यथोक्तान्यज्ञान्निर्वर्त्य तच्छिष्टेन कालेन यथाविधिचोदितमन्नं अमृताख्यं भुञ्जत इति यज्ञशिष्टामृतभुजः। यत्त्वन्ये सर्वेषामप्येतेषां मध्येऽन्यतममप्यनुष्ठातुमशक्यं प्रति प्राह—**यज्ञेति**। यज्ञाः पञ्चमहायज्ञास्तेभ्यः शिष्टमवशिष्टमन्नममृताख्यं ये भुञ्जत इत्यादि तच्चिन्त्यम्। श्रुतहानेरश्रुतकल्पनायाश्चान्याय्यत्वात्। पञ्चयज्ञानामपि दैवादिश्रौतस्मार्तयज्ञेष्वन्तर्भावाच्च। ब्रह्म सनातनं मोक्षाख्यं यान्ति। यथोक्तानां यज्ञानामेकोऽपि यज्ञो यस्य नास्ति सोऽयज्ञः तस्यायं लोकः सर्वप्राणिसाधारणोऽपि नास्ति। शुद्धचित्तेन श्रवणादिविशिष्टसाधनलभ्योऽन्यः सर्वलोकातीत आत्मस्वरूपस्तस्य कुतः। कुरुसत्तमेति संबोधयन् कुरवोऽपि यज्ञविद आसन् त्वं तु तेषु सत्तमः श्रेष्ठोऽतः त्वया यज्ञवित्त्वमवश्यं संपादनीयमिति सूचयति॥ ३१॥ उक्तानां यज्ञानां वेदमूलत्वेनाप्रामाण्यशङ्कां वारयति—**एवमिति**। बहुविधा बहुप्रकारा यज्ञाः ब्रह्मणो वेदस्य मुखे द्वारे वितता विस्तीर्णाः वेदद्वारेणावगम्यमानाः तान्सर्वा-

६ श्रीधरीव्याख्या।

लभन्त इति यज्ञविदः। यज्ञज्ञा इति वा। यज्ञैः क्षपितं नाशितं कल्मषं यैस्ते॥ ३०॥ **यज्ञशिष्टेति**। यज्ञान्कृत्वाऽवशिष्टे कालेऽनिषिद्धमन्नममृतरूपं भुञ्जत इति तथा ते सनातनं नित्यं ब्रह्म ज्ञानद्वारेण प्राप्नुवन्ति। तदकरणे दोषमाह—**नायं लोक इति**। अयमल्पसुखोऽपि मनुष्यलोकोऽयज्ञस्य यज्ञानुष्ठानशून्यस्य नास्ति। कुतोऽन्यः परलोकः। अतो यज्ञाः सर्वथा कर्तव्या इत्यर्थः॥ ३१॥ ज्ञानयज्ञं स्तोतुमुक्तान्यज्ञानुपसंहरति—**एवमिति**। ब्रह्मणो वेदस्य मुखे वितताः। वेदेन साक्षाद्विहिता इत्यर्थः। तथापि तान्सर्वा-

७ अभिनवगुप्ताचार्यव्याख्या।

तत्त्वज्ञास्तेनैव च क्षपितकल्मषाः समूलोन्मूलितभेदवासनामयमहामोहाः यज्ञेन शिष्टमाहृतं यज्ञाश्च निजकरणतर्पणरूपादवशिष्टं स्वात्मविश्रान्तिरूपं परानन्दं निरानन्दात्मकममृतमुपभुञ्जाना इति यथेच्छं संसृज्यन्ते ब्रह्मतयेति तदुपरम्यते रहस्यस्फुटप्रकटनवाचालतायाः। अत्र बहुतरो रहस्यरसोन्तःसंलीनीकृतोऽपि निबिडतरभक्तिसेवासंप्रसादितगुरुवचनसंप्राप्तसंप्रदायमहौषधसमीकृतधातूनां चर्वणादिविषयता

१ नीलकण्ठः।

**श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

१ श्रीमच्छांकरभाष्यम्।

बहुप्रकारा यज्ञा वितता विस्तीर्णा ब्रह्मणो वेदस्य मुखे द्वारे, वेदद्वारेणावगम्यमाना ब्रह्मणो मुखे वितता उच्यन्ते, तद्यथा 'वाचि हि प्राणं जुहुमः' इत्यादयः। कर्मजान्कायिकवाचिकमानसकर्मोद्भवान्विद्धि तान्सर्वाननात्मजान्। निर्व्यापारो ह्यात्मा। अत एवं ज्ञात्वा विमोक्ष्यसेऽशुभात्, न मद्व्यापारा इमे निर्व्यापारोऽहमुदासीन इत्येवं ज्ञात्वास्मात्सम्यग्दर्शनान्मोक्ष्यसे संसारबन्धनादित्यर्थः ॥ ३२ ॥ ब्रह्मार्पणमित्यादिश्लोकेन सम्यग्दर्शनस्य यज्ञत्वं संपादितं यज्ञाश्चानेक उपदिष्टास्तैः सिद्धपुरुषार्थप्रयोजनैर्ज्ञानं स्तूयते। कथं—श्रेयानिति। श्रेयान्द्रव्यमयाद्द्रव्यसाधनसाध्याद्यज्ञाज्ज्ञानयज्ञो हे परंतप। द्रव्यमयो हि यज्ञः फलस्यारम्भको ज्ञानयज्ञो न फलारम्भकोऽतः श्रेयान्प्रशस्यतरः। कथं, यतः

२ आनन्दगिरिव्याख्या।

त्वमुक्तकर्मणामाशङ्क्य दूषयति—**कर्मजानिति**। आत्मनो निर्व्यापारत्वज्ञाने फलमाह—**एवमिति**। कथं यथोक्तानां यज्ञानां वेदस्य मुखे विस्तीर्णत्वमित्याशङ्क्याह—**वेदद्वारेणेति**। तेनावगम्यमानत्वमेवोदाहरति—**तद्यथेति**। 'एतद्ध स्म वै तत्पूर्वे विद्वांस आहुः' इत्युपक्रम्याध्ययनाद्याक्षिप्य हेत्वाकाङ्क्षायामुक्तं—**वाचि हीति**। ज्ञानशक्तिमद्विषये क्रियाशक्तिमदुपसंहारोऽत्र विवक्षितः, 'प्राणे वा वाचं यो ह्येव प्रभवः स एवाप्ययः' इति वाक्यमादिशब्दार्थः। ज्ञानशक्तिमतां क्रियाशक्तिमतां चान्यान्योत्पत्तिप्रलयत्वात्तदभावे नाध्ययनादिसिद्धिरित्यर्थः। कर्मणामात्मजन्यत्वाभावे हेतुमाह—**निर्व्यापारो हीति**। तस्य च निर्व्यापारत्वं फलवत्त्वाज्ज्ञातव्यमित्याह—**अत इति**। एवं ज्ञानमेव ज्ञापयन्नुक्तं व्यनक्ति—**नेत्यादिना** ॥ ३२ ॥ कर्मयोगेऽनेकधाभिहिते सर्वस्य श्रेयःसाधनस्य कर्मात्मकत्वप्रतिपत्त्या केवलं ज्ञानमनाद्रियमाणमर्जुनमालक्ष्य वृत्तानुवादपूर्वकमुत्तरश्लोकस्य तात्पर्यमाह—**ब्रह्मेत्यादिना**। **सिद्धेति**। सिद्धं पुरुषार्थभूतं पुरुषापेक्षितलक्षणं प्रयोजनं येषां यज्ञानां तैः। अनन्तरोपदिष्टैरिति यावत्। प्रश्नपूर्वकं स्तुतिप्रकारं प्रकटयति—**कथमित्यादिना**। ज्ञानयज्ञस्य द्रव्ययज्ञात्प्रशस्यतरत्वे हेतुमाह—**सर्वमिति**। द्रव्यसाधनसाध्यादित्युपलक्षणं स्वाध्यायादेरपि। ततोऽपि ज्ञानयज्ञस्य श्रेयस्त्वाविशेषाद्द्रव्यमयादियज्ञेभ्यो ज्ञानयज्ञस्य प्रशस्यतरत्वं प्रपञ्चयति—**द्रव्यमयो हीति**। फलस्याभ्युदयस्येत्यर्थः। न फलारम्भको न कस्यचित्फलस्योत्पादकः किंतु नित्यसिद्धस्य मोक्षस्याभिव्यञ्जक इत्यर्थः। तस्य प्रशस्यतरत्वे हेत्वन्तरमाह—**यत इति**। समस्तं कर्मेत्यग्निहोत्रादिकमुच्यते। अखिलमविद्यमानं खिलं शेषोऽस्येत्यनल्पम् महत्तरमिति यावत्। सर्वमखिलमिति पदद्वयोपादानमसंकोचार्थम्। सर्व

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

**मिति**। ब्रह्मणो वेदस्य मुखे द्वारे। वेदद्वारेणैव वितता विस्तारिताः। गुरुभिरुपदिष्टा इत्यर्थः। कर्मजान्कायिकवाचिकमानसिककर्मजान्नतु नैष्कर्म्यरूपान्। एवं ज्ञात्वास्मादशुभान्मोक्ष्यसे। तत्त्वज्ञानोत्पत्तिद्वारेणेत्यर्थः ॥ ३२ ॥ यदर्थमेते यज्ञा उपन्यस्तास्तं ज्ञानयज्ञं स्तौति—**श्रेयानिति**। द्रव्यं बाह्यमाभ्यन्तरं च देहेन्द्रियादि तत्साध्याद्द्रव्यमया-

४ मधुसूदनीव्याख्या।

सर्ववैदिकश्रेयःसाधनरूपा वितता विस्तृताः ब्रह्मणो वेदस्य मुखे द्वारे, वेदद्वारेणैव तेऽवगता इत्यर्थः। वेदवाक्यानि तु प्रत्येकं विस्तरभयान्नोदाह्रियन्ते। कर्मजान्कायिकवाचिकमानसकर्मोद्भवान्विद्धि जानीहि तान्सर्वान्यज्ञान्नात्मजान्। निर्व्यापारो ह्यात्मा न तद्व्यापारा एते किंतु निर्व्यापारोऽहमुदासीन इत्येवं ज्ञात्वा विमोक्ष्यसे। अस्मात्संसारबन्धनादिति शेषः ॥ ३२ ॥ सर्वेषां तुल्यवन्निर्दे-

५ भाष्योत्कर्षदीपिका।

न्कायिकवाचिकमानसकर्मोद्भवान् विद्धि। निर्व्यापारो ह्यात्मा न ममात्मस्वरूपस्योदासीनस्य व्यापारा एते इत्येवं ज्ञात्वाऽस्मात्संसारबन्धनान्मोक्ष्यसे ॥ ३२ ॥ कर्मजान्विद्धि तान्सर्वानित्युक्तया सर्वेषु ज्ञानयज्ञस्याप्युक्तत्वादितरसाम्यमाशङ्क्याह—**श्रेयानिति**।

६ श्रीधरीव्याख्या।

वाङ्मनःकायकर्मजनितानात्मस्वरूपसंस्पर्शरहितान्विद्धि जानीहि। आत्मनः कर्मागोचरत्वादेवं ज्ञात्वा ज्ञाननिष्ठः सन्संसाराद्विमुक्तो भविष्यसि ॥ ३२ ॥ कर्मयज्ञाज्ज्ञानयज्ञस्तु श्रेष्ठ इत्याह—**श्रेयानिति**। द्रव्यमयादनात्मव्यापारजन्याद्दैवादियज्ञाज्ज्ञानयज्ञः श्रेयान्श्रेष्ठः।

७ अभिनवगुप्ताचार्यव्याख्या।

भूतार्थास्वादहेतुतां च प्रतिपद्यते। अत्र व्याख्यान्तराणि टीकाकारैः प्रदर्शितानि तान्यस्मद्गुरुपादनिरुक्तानि च स्वयमेव सचेतसः संप्रधार्यन्तामिति किमन्येन हन्त व्याख्यातृवचनदूषणाविनोदेन तदुपक्रान्तमेवोपक्रम्यते—सर्वे एते यज्ञा ब्रह्मणो मुखे द्वारे उपायत्वे कथिताः तेषु कर्मणामनुगमोऽस्तीत्येवं ज्ञात्वा त्वमपि बन्धनान्मोक्षमेष्यसि ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ श्रेयानिति। तद्विद्धि। अत्रत्वयं विशेषः।

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सर्वं कर्म समस्तमखिलमप्रतिबद्धं पार्थ, ज्ञाने मोक्षसाधने सर्वतः संप्लुतोदकस्थानीये परिसमाप्यते । अन्तर्भवतीत्यर्थः । 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' इति श्रुतेः ॥ ३३ ॥ तदेतद्विशिष्टं ज्ञानं तर्हि केन प्राप्यत इत्युच्यते—**तद्विद्धीति** । तद्विद्धि विजानीहि येन विधिना प्राप्यत इत्याचार्यानभिगम्य प्रणिपातेन प्रकर्षेण

२ आनन्दगिरिव्याख्या ।

कर्म ज्ञानेऽन्तर्भवतीत्यत्र छान्दोग्यश्रुतिं प्रमाणयति—**यथेति** । चतुरायके हि द्यूते कश्चिदायश्चतुरङ्कः सन्कृतशब्देनोच्यते तस्मै विजिताय कृताय तादर्थ्येनाधरेयास्तस्मादधस्ताद्द्वाविनस्त्र्य्येकाङ्कास्त्रेताद्वापरकलिनामानः संयन्त्यायाः संगच्छन्ते, चतुरङ्के खल्वाये त्र्यद्व्येकाङ्कानामायानामन्तर्भावो भवति महासंख्यायामवान्तरसंख्यान्तर्भावावश्यंभावादेवमेनं विद्यावन्तं पुरुषं सर्वं तदाभिमुख्येन समेति संगच्छते । किं तत्सर्वं यद्विदुषि पुरुषेऽन्तर्भवति तदाह—**यत्किंचिदिति** । प्रजाः सर्वा यत्किमपि साधु कर्म कुर्वन्ति तत्सर्वमित्यर्थः । एनमभिसमेतीत्युक्तं तमेव विद्यावन्तं पुरुषं विशिनष्टि—**यस्तदिति** । किं तदित्युक्तं तदेव विशदयति—**यत्स इति** । स रैक्वो यत्तत्त्वं वेद तत्तत्त्वं योऽन्योऽपि जानाति तमेनं सर्वं साधु कर्माभिसमेतीति योजना ॥ ३३ ॥ यद्येवं प्रशस्यतरमिदं ज्ञानं तर्हि केनोपायेन तत्प्राप्तिरिति पृच्छति—**तदेतदिति** । ज्ञानप्राप्तौ प्रत्यासन्नमुपायमुपदिशति—**उच्यत इति** । तद्विज्ञानं गुरुभ्यो विद्धि गुरवश्च प्रणिपातादिभिरुपायैरावर्जितचेतसो वदिष्यन्तीत्याह—**तद्विद्धीति** । उपदेष्टृत्वमुपदेशकर्तृत्वम् ।

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

द्रव्ययज्ञात् ज्ञानयज्ञो निःशेषवाङ्मनःकायप्रवृत्त्युपरमात्मकः श्रेयान्प्रशस्यतरः । ईयसुन्प्रत्ययेन तेषामपि प्रशस्तत्वं द्योत्यते । तत्र हेतुः **सर्वमिति** । कर्म कर्मफलं सर्वमखिलं सर्वाङ्गोपसंहारयुक्तं ज्ञाने परिसमाप्यतेऽन्तर्भवति । 'यथा कृताय विजितायाधरेयाः संयन्त्येवमेवैनं सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद' इति ॥३३॥

४ मधुसूदनीव्याख्या ।

शास्त्रकर्मज्ञानयोः साम्यप्राप्तावाह—श्रेयान्प्रशस्यतरः साक्षान्मोक्षफलत्वात्, द्रव्यमयात्तदुपलक्षिताज्ज्ञानशून्यात्सर्वस्मादपि यज्ञात्संसारफलाज्ज्ञानयज्ञ एकएव हे परन्तप । कस्मादेवं, यस्मात् सर्वं कर्म इष्टिपशुसोमचयनरूपं श्रौतमखिलं निरवशेषं स्मार्तमुपासनादिरूपं च यत्कर्म तत् ज्ञाने ब्रह्मात्मैक्यसाक्षात्कारे समाप्यते प्रतिबन्धक्षयद्वारेण पर्यवस्यति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति, 'धर्मेण पापमपनुदति' इति च श्रुतेः । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति न्यायाच्चेत्यर्थः ॥ ३३ ॥ एतादृशज्ञानप्राप्तौ कोऽतिप्रत्यासन्न उपाय इति उच्यते—तत्सर्वकर्मफलभूतं ज्ञानं विद्धि लभस्व ।

५ भाष्योत्कर्षदीपिका ।

देहेन्द्रियादिद्रव्यसाध्यात्संसारफलात् द्रव्ययज्ञाज्ज्ञानयज्ञो मोक्षफलकोऽतिशयेन श्रेष्ठः । परंतपेति संबोधयन् चित्तशुद्ध्या ज्ञानं लब्ध्वाऽज्ञानात्मकं शत्रुं तापयितुं मारयितुं समर्थो भविष्यसि न कर्ममात्रेणेति सूचयति । तत्र हेतुमाह—सर्वमग्निहोत्रादिकं कर्मोक्तद्वादशयज्ञात्मकं सर्वमिति प्रकरणात्संकोचमाशङ्क्याह । अखिलमुक्तानुक्तं श्रौतस्मार्तमुपासनादिरूपं ज्ञाने तत्त्वसाक्षात्कारे मोक्षसाधने परिसमाप्यतेऽन्तर्भवति । 'यावानर्थ उदपाने सर्वतःसंप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' इत्युक्तत्वात् । यद्वा प्रतिबन्धक्षयद्वारेण पर्यवस्यति 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतेः 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति न्यायाच्चेत्यर्थः । अस्मिन्पक्षे निष्कामकर्मणामेव तत्र विनियोगात्सर्वं कर्माखिलमिति संकोचनिवारकयोः सर्वाखिलपदयोरन्यतरस्य प्रयोजनं चिन्त्यम् । यथा युधिष्ठिरभीमसेनयोरपि पार्थत्वसिद्ध्यन्तर्भावः तथा 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुत्या ज्ञानकाण्डफले तत्त्वसाक्षात्कारे इतरकाण्डफलस्यान्तर्भाव इति ध्वनयन्नाह—पार्थेति ॥३३॥ तदेतत्सर्वोत्तमं ज्ञानं तर्हि केन साधनेन लभ्यत इत्यत आह—**तदिति** । यत्र सर्वकर्मफलमन्तर्भवति तज्ज्ञानं विद्धि जानीहि । येन विधिना प्राप्यत

६ श्रीधरीव्याख्या ।

यद्यपि ज्ञानयज्ञस्यापि मनोव्यापाराधीनत्वमस्त्येव तथाप्यात्मरूपस्य ज्ञानस्य मनःपरिणामेऽभिव्यक्तिमात्रं नतु तज्जन्यत्वमिति द्रव्यमयाद्विशेषः । श्रेष्ठत्वे हेतुः । सर्वं कर्माखिलं फलसहितं ज्ञाने परिसमाप्यते । अन्तर्भवतीत्यर्थः । 'सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्ति' इति श्रुतेः ॥ ३३ ॥ एवंभूतात्मज्ञाने साधनमाह—**तद्विद्धीति** । तज्ज्ञानं विद्धि प्राप्नुहि । ज्ञानिनां प्रणिपातेन

७ अभिनवगुप्ताचार्यव्याख्या ।

द्रव्ययज्ञात्केवलाज्ज्ञानदीपितो यज्ञः श्रेष्ठः । केवलता च मयटा सूचिता । यतः सर्वं कर्म ज्ञाने निष्ठामेति । तच्च ज्ञानं प्रणिपातेन भक्त्या १

१ मधुसूदनः.

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥ ३५॥**

१ श्रीमच्छांकरभाष्यम्।

नीचैः पतनं प्रणिपातो दीर्घनमस्कारस्तेन, कथं बन्धः कथं मोक्षः का विद्या का चाविद्येति परिप्रश्नेन, सेवया गुरुशुश्रूषयैवमादिना प्रश्रयेणावर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनो ज्ञानवन्तोऽपि केचिद्यथावत्तत्त्वदर्शनशीला अपरे नातो विशिनष्टि—तत्त्वदर्शिन इति। ये सम्यग्दर्शिनस्तैरुपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरदिति। भगवतो मतम्॥ ३४॥ तथाच सतीदमपि समर्थं वचनं—यदिति। यज्ज्ञात्वा यज्ज्ञानं तैरुपदिष्टमधिगम्य प्राप्य पुनर्भूयो

२ आनन्दगिरिव्याख्या।

परोक्षज्ञानमात्रेण न भवतीत्याह—**उपदेक्ष्यन्तीति**। तदिति प्रेप्सितं ज्ञानसाधनं गृह्यते येन विधिनेति शेषदर्शनात्। यद्वा येनाचार्यावर्जनप्रकारेण तदुपदेशवशादपेक्षितं ज्ञानं लभ्यते तथा तज्ज्ञानमाचार्येभ्यो लभस्वेत्यर्थः। तदेव स्फुटयति—**आचार्या इति**। एवमादिनेत्यादिशब्देन शमादयो गृह्यन्ते, एवमादिना विद्धीति पूर्वेण संबन्धः। उत्तरार्धं व्याचष्टे—**प्रश्रयेणेति**। प्रश्रयो भक्तिश्रद्धापूर्वको निरतिशयो नतिविशेषः, यथोक्तविशेषणं पूर्वोक्तेन प्रकारेण प्रशस्ततममित्यर्थः। विशेषणस्य पौनरुक्त्यपरिहारार्थमर्थभेदं कथयति—**ज्ञानवन्तोऽपीति**। ज्ञानिन इत्युक्त्वा पुनस्तत्त्वदर्शिन इति ब्रुवतो भगवतोऽभिप्रायमाह—**ये सम्यगिति**। बहुवचनं चैतदाचार्यविषयं बहुभ्यः श्रोतव्यं बहुधा चेति सामान्यन्यायाभ्यनुज्ञानार्थं न त्वात्मज्ञानमधिकृत्याचार्यबहुत्वं विवक्षितम्, तस्य तत्त्वसाक्षात्कारवदाचार्यमात्रोपदेशादेवोदयसंभवात्॥ ३४॥ विशिष्टैराचार्यैरुपदिष्टे ज्ञाने कार्यक्षमे प्राप्ते सति समनन्तरवचनमपि योग्यविषयमर्थवद्भवतीत्याह—**तथाचेति**। अतस्तस्मिन्विशिष्टे ज्ञाने कार्यक्षमे त्वदीयमोहापोहहेतौ निष्ठावता भवितव्यमिति

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

**तद्विद्धीति**। ज्ञानिनः ग्रन्थज्ञाः। तत्त्वदर्शिनोऽनुभववन्तः। ज्ञानं ब्रह्म। स्पष्टार्थः श्लोकः॥ ३४॥ **यज्ज्ञात्वेति**।

४ मधुसूदनीव्याख्या।

आचार्यानभिगम्य तेषां प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारस्तेन। कोऽहं कथं बद्धोऽस्मि केनोपायेन मुच्येयमित्यादि[ना] परिप्रश्नेन बहुविषयेण प्रश्नेन। सेवया सर्वभावेन तदनुकूलकारितया। एवं भक्तिश्रद्धातिशयपूर्वकेणावनतिविशेषेणाभिमुखाः सन्तः उपदेक्ष्यन्ति उपदेशेन संपादयिष्यन्ति ते तुभ्यं ज्ञानं परमात्मविषयं साक्षान्मोक्षफलं ज्ञानिनः पदवाक्यन्यायादिमाननिपुणास्तत्त्वदर्शिनः कृतसाक्षात्काराः। साक्षात्कारवद्भिरुपदिष्टमेव ज्ञानं फलपर्यवसायि नतु तद्रहितैः पदवाक्यमाननिपुणैरपीति भगवतो मतम् 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति श्रुतिसंवादि। तत्रापि श्रोत्रियमधीतवेदं ब्रह्मनिष्ठं कृतब्रह्मसाक्षात्कारमिति व्याख्यानात्। बहुवचनं चेदमाचार्यविषयमेकस्मिन्नपि गौरवातिशयार्थं नतु बहुत्वविवक्षया। एकस्मादेव तत्त्वसाक्षात्कारवत आचार्यात्तत्त्वज्ञानोदये सत्याचार्यान्तरगमनस्य तदर्थमयोगादिति द्रष्टव्यम्॥ ३४॥ एवमतिनिर्बन्धेन ज्ञानोत्पादने किं स्यादत आह—यत्पूर्वोक्तं ज्ञानमाचार्यैरुपदिष्टं ज्ञात्वा प्राप्य।

५ भाष्योत्कर्षदीपिका।

इति विद्धि लभस्वेत्यर्थस्तु अदादेर्ज्ञानार्थत्वात् मुख्ये संभवति अमुख्यस्यान्याय्यत्वादाचार्यैर्न प्रदर्शितः। आचार्यानभिगम्य प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारः तेन 'कथं बन्धः कथं मोक्षः कस्य केन विमुच्यते। विद्याविद्ये कथंभूते कोऽहं दृश्यमिदं च किम्' इति 'परिप्रश्नेन सेवया' गुरुशुश्रूषा गुर्वाभिमुख्यसंपादिकया मायाविनिर्मुक्तया इत्येवमादिना प्रश्रयेण प्रसादिता गुरवो ज्ञानिनः न्यायविचारपूर्वकवेदार्थज्ञाः तत्त्वदर्शिनः तत्त्वसाक्षात्कारवन्तः ते ज्ञानमुपदेक्ष्यन्ति पदवाक्यप्रमाणज्ञैः सम्यक्कृतत्त्वविलोकिभिः 'उक्ताज्ज्ञानाद्भवेत्कार्यं नान्यैरिति हरेर्मतम्' तथाच श्रुतिः 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति। बहुवचनं त्वादरार्थमिति बोध्यम्॥ ३४॥ ज्ञानफलमाह—**यदिति**। यत्तैरुपदिष्टं ज्ञानं ज्ञात्वा लब्ध्वा। यत्तु यच्चिन्मात्रस्वरूपं ब्रह्म

६ श्रीधरीव्याख्या।

दण्डवन्नमस्कारेण, ततः परिप्रश्नेन कुतोऽयं मम संसारः कथं वा निवर्तेत इति प्रश्नेन, सेवया शुश्रूषया च ज्ञानिनः शास्त्रज्ञास्तत्त्वदर्शिनः अपरोक्षानुभवसंपन्नाश्च ते तुभ्यं ज्ञानमुपदेशेन संपादयिष्यन्ति॥ ३४॥ ज्ञानफलमाह—**यज्ज्ञात्वेतिसार्धैस्त्रिभिः**।

७ अभिनवगुप्ताचार्यव्याख्या।

परिप्रश्नेनोहापोहतर्कवितर्कादिभिः। सेवयाभ्यासेन जानीहि। यत एवंभूतस्य तव ज्ञानिनो निजा एव संवित्तिविषयानुगृहीता इन्द्रियविशेषास्तत्त्वं उप समीपे देक्ष्यन्ति प्रापयिष्यन्ति। तथाहि ते तत्त्वमेव दर्शयन्तीति तत्त्वदर्शिनः। उक्तं हि 'योग एव योगस्योपाध्यायः ऋतंभरा तत्र प्रज्ञा' इति। अन्ये ज्ञानिनः पुरुषा इति व्याख्यायमाने भगवान्स्वयमुपदिष्टवांस्तदसत्यमित्युक्तं स्यात्। एवमभिधाने प्रयोजनमन्येऽपि लोकाः प्रणिपातादिना ज्ञानिभ्यो ज्ञानं गृह्णीयुर्न यथाकथंचिदिति समयप्रतिपादनम्॥ ३४॥ यज्ज्ञात्वेति। आत्मनि मयि मत्स्व-

१ मधुसूदनः. २ नीलकण्ठः.

**अपिचेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मोहमेवं यथेदानीं मोहं गतोऽसि पुनरेवं न यास्यसि हे पाण्डव । किंच येन ज्ञानेन भूतान्यशेषेण ब्रह्मादीनि स्तम्बपर्यन्तानि द्रक्ष्यसि साक्षादात्मनि प्रत्यगात्मनि मत्संस्थानीमानि भूतानीति, अथो अपि मयि वासुदेवे परमेश्वरे चेमानीति क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥ ३५ ॥ किं चैतस्य ज्ञानस्य माहात्म्यम्—अपीति । अपिचेदसि पापेभ्यः पापकृद्भ्यः सर्वेभ्योऽतिशयेन पापकृत्पापकृत्तमः सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पापं संतरिष्यसि, धर्मोऽपीह

२ आनन्दगिरिव्याख्या ।

शेषः । तत्र निष्ठाप्रतिष्ठायै तदेव ज्ञानं पुनर्विशिनष्टि—येनेति । यज्ज्ञात्वेत्ययुक्तं ज्ञाने ज्ञानायोगादित्याशङ्क्य प्राप्यर्थत्वमधिपूर्वस्य गमेरङ्गीकृत्य व्याकरोति—अधिगम्येति । इतश्चाचार्योपदेशलभ्ये ज्ञाने फलवति प्रतिष्ठावता भवितव्यमित्याह—किंचेति । जीवे चेश्वरे चोभयत्र भूतानां प्रतिष्ठितत्वप्रतिनिर्देशे भेदवादानुमतिः स्यादित्याशङ्क्याह—क्षेत्रज्ञेति । मूलप्रमाणाभावे कथं तदेकत्वदर्शनं स्यादित्याशङ्क्याह--सर्वेति ॥ ३५ ॥ ज्ञानस्य प्रकारान्तरेण प्रशंसां प्रस्तौति—किंचेति । पापकारिभ्यः सर्वेभ्यः सकाशादतिशयेन पापकारित्वमेकस्मिन्नसंभावितमपि ज्ञानमाहात्म्यप्रसिद्ध्यर्थमङ्गीकृत्य ब्रवीति—अपिचेदिति । ब्रह्मात्मैक्यज्ञानस्य सर्वपापनिवर्तकत्वेन माहात्म्यमिदानीं प्रकटयति—सर्वमिति । अधर्मे निवृत्तेऽपि धर्मप्रतिबन्धाज्ज्ञानवतोऽपि मोक्षः संभवतीत्याशङ्क्याह—धर्मोऽपीति । इहे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यत् चिन्मात्रस्वरूपं ब्रह्म ज्ञात्वा एवमिदानीमिव पुनर्मोहं न यास्यसि । अथो अपिच येन ज्ञानेन भूतानि ब्रह्मादिस्तम्बपर्यन्तान्यात्मनि मयि त्वंपदलक्ष्यार्थादनन्यभूते परमेश्वरे द्रक्ष्यसि । 'नान्योऽतोऽस्ति द्रष्टा' इति प्रतीचोऽन्यस्य द्रष्टुर्निषेधात् । भाष्ये तु साक्षादात्मनि मत्स्थानीमानीति द्रक्ष्यसि । अथो अपि मयि वासुदेवे परमेश्वरे च इमानीति क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थ इति ॥ ३५ ॥ अपि चेदिति । वृजिनं वृजिनार्णवम् । धर्मो-

४ मधुसूदनीव्याख्या ।

ज्ञात्वा प्राप्य । ओदनपाकं पचतीतिवत्तस्यैव धातोः सामान्यविवक्षया प्रयोगः । न पुनर्मोहमेवं बन्धुवधादिनिमित्तं भ्रमं यास्यसि । हे पाण्डव, कस्मादेवं यस्मादेव ज्ञानेन भूतानि पितृपुत्रादीनि अशेषेण ब्रह्मादिस्तम्बपर्यन्तानि स्वाविद्याविजृम्भितानि आत्मनि त्वयि त्वंपदार्थे अथो अपि मयि भगवति वासुदेवे तत्पदार्थे परमार्थतो भेदरहितेऽधिष्ठानभूते द्रक्ष्यस्यभेदेनैव । अधिष्ठानातिरेकेण कल्पितस्याभावात् । मां भगवन्तं वासुदेवमात्मत्वेन साक्षात्कृत्य सर्वाज्ञाननाशे तत्कार्याणि भूतानि न स्थास्यन्तीति भावः ॥ ३५ ॥ किंच शृणु ज्ञानस्य माहात्म्यम्—अपिचेदित्यसंभाविताभ्युपगमप्रदर्शनार्थौ निपातौ । यद्यप्ययमर्थो न

५ भाष्योत्कर्षदीपिका ।

ज्ञात्वेति तन्न । पूर्वप्रस्तुतज्ञानपरामर्शेनार्थसंभवे यच्छब्देनाप्रस्तुतपरामर्शस्यान्याय्यत्वात् । एवमिदानीमिव पुनर्मोहं न यास्यसि न प्राप्स्यसि । किंच न केवलं स्वसंबन्धिनिबन्धनमेव मोहं यास्यस्यपि तु सर्वभूतनिबन्धनमित्याह । येन ज्ञानेनाशेषेण सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि मयि प्रत्यगात्मनि कल्पितानीति स्वस्मिन्साक्षाद्द्रक्ष्यसि अथो मयि वासुदेवे परमेश्वरे चेमानीति प्रत्यगात्मैकत्वं सर्ववेदान्तेषु प्रसिद्धं द्रक्ष्यसीत्यर्थः । अथो अनन्तरमात्मानं मयि परमात्मन्यभेदेनेति वा । अस्मिन्पक्षेऽध्याहारदोषः परिहर्तव्यः । यद्वाथो अपिच येन ज्ञानेन भूतान्यात्मनि मयि त्वंपदलक्ष्यार्थादनन्यभूते इति अस्मिन्पक्षे सति संभवेऽथोशब्दस्य दूरान्वयोऽयुक्त इति ध्येयम् । पाण्डवेति संबोधयन् यथाधुनाऽहं पाण्डुपुत्र एते मदीया इत्यहंकारममकाराभ्यां मोहं गतोऽसि तथा ज्ञानं तन्मूलोच्छेदकं लब्ध्वा न यास्यसीति द्योतयति ॥३५॥ किंच न केवलमेतावदेव किंत्वन्यज्ज्ञानमाहात्म्यमपि शृण्वित्याह—अपिचेदिति । असंभाविताभ्युपगमार्थं निपातद्वयम् । यदिचेत्त्वं सर्वेभ्यः पापकृद्भ्योऽतिशयेन पापकृदसि तथापि ज्ञानमेव प्लवं

६ श्रीधरीव्याख्या ।

यज्ज्ञानं ज्ञात्वा प्राप्य पुनर्बन्धुवधादिनिमित्तं मोहं न प्राप्स्यसि । तत्र हेतुः । येन ज्ञानेन भूतानि पितृपुत्रादीनि स्वाविद्यारचितानि स्वात्मन्येवाभेदेन द्रक्ष्यसि । अथो अनन्तरमात्मानं मयि परमात्मन्येवाभेदेन द्रक्ष्यसीत्यर्थः ॥ ३५ ॥ किंच—अपिचेदिति । सर्वेभ्यः

७ अभिनवगुप्ताचार्यव्याख्या ।

त्स्वरूपतां याते । आत्मनीति सामानाधिकरण्यम् । अथोशब्दः पादपूरणे । आत्मना ईश्वरस्य साम्ये कोऽपि विशेष उक्तः । असाम्ये विकल्पानुपपत्तिः ॥ ३५ ॥ सर्वं कर्माखिलमिति यदुक्तं तत्स्फुटयितुं प्रथमश्लोकेनाधर्मोऽपि नश्यतीतिवदन् सर्वं कर्मेति द्वितीयेन संस्कारलेशोऽपि नाव-

१ नीलकण्ठः. २ नीलकण्ठः,

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**मुमुक्षोः पापमुच्यते ॥ ३६ ॥ ज्ञानं कथं नाशयति पापमिति सदृष्टान्तमुच्यते—यथेति । यथैधांसि काष्ठानि समिद्धः सम्यगिद्धो दीप्तोऽग्निर्भस्मसाद्भस्मीभावं कुरुतेऽर्जुन एवं ज्ञानमेवाग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा । निर्बीजीकरोतीत्यर्थः । नहि साक्षादेव ज्ञानाग्निस्तानि कर्माणीन्धनवद्भस्मीकर्तुं शक्नोति, तस्मात्सम्यग्दर्शनं सर्वकर्मणां निर्बीजत्वे कारणमित्यभिप्रायः । सामर्थ्याद्येन कर्मणा**

२ आनन्दगिरिव्याख्या ।

त्यध्यात्मशास्त्रं गृह्यते ॥ ३६ ॥ ज्ञाने सत्यपि धर्माधर्मयोरुपलम्भात्कुतस्ततो निवृत्तिरित्याशङ्क्य ज्ञानस्य धर्माधर्मनिवर्तकत्वं दृष्टान्तेन दर्शयितुमनन्तरश्लोकमवतारयति—**ज्ञानमिति** । योग्यायोग्यविभागेन निवर्तकत्वानिवर्तकत्वविभागमुदाहरति—**यथेति** । दृष्टान्तानुरूपं दार्ष्टान्तिकमाचष्टे—**ज्ञानाग्निरिति** । योग्यविषयेऽपि दाहकत्वमग्नेरप्रतिबन्धापेक्षयेति विवक्षित्वा विशिनष्टि—**सम्यगिति** । दार्ष्टान्तिकं व्याचष्टे—**ज्ञानमेवेति** । ननु ज्ञानं साक्षादेव कर्मदाहकं किमिति नोच्यते, निर्बीजीकरोति कर्मेति किमिति व्याख्यानमित्याशङ्क्याह—**नहीति** । ज्ञानस्य स्वप्रमेयावरणाज्ञानापाकरणे सामर्थ्यस्य लोके दृष्टत्वादविक्रियब्रह्मात्मज्ञानमपि तदज्ञानं निवर्तयन् तज्जन्यकर्तृत्वभ्रमं कर्मबीजभूतं निवर्तयति । तन्निवृत्तौ च कर्माणि न स्थातुं पारयन्ति नतु साक्षात्कर्मणां निवर्तकं ज्ञानमज्ञानस्यैव निवर्तकमिति व्याप्तेस्तदनिवृत्तौ तु पुनरपि कर्मोद्भवसंभवादित्यर्थः । ज्ञानस्य साक्षात्कर्मनिवर्तकत्वाभावे फलितमाह—**तस्मादिति** । सम्यग्ज्ञानं मूलभूताज्ञाननिवर्तनेन कर्मनिवर्तकमिष्टं चेदारब्धफलस्यापि कर्मणो निवृत्तिप्रसङ्गाज्ज्ञानोदयसमकालमेव शरीरपातः स्यादित्याशङ्क्याह—**सामर्थ्यादिति** । ज्ञानोदयसमसमयमेव देहापोहे तत्त्वदर्शिभिरुपदिष्टं ज्ञानं फलवदिति भगवदभिप्रायस्य बाधितत्वप्रसङ्गादाचार्यलाभान्यथानुपपत्त्या प्रवृत्तफलकर्मसंपादकमज्ञानलेशं न नाशयति ज्ञानमित्यर्थः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पीह मुमुक्षोः पापमित्युच्यते ॥ ३६ ॥ **यथेति** । एधांसि काष्ठानि । कर्माणि प्रारब्धादन्यानि ॥ ३७ ॥

४ मधुसूदनीव्याख्या ।

संभवत्येव तथापि ज्ञानफलकथनायाभ्युपेत्योच्यते । यद्यपि त्वं पापकारिभ्यः सर्वेभ्योऽप्यतिशयेन पापकारी पापकृत्तमः स्यास्तथापि सर्वं वृजिनं पापम् अतिदुस्तरत्वेनार्णवसदृशं ज्ञानप्लवेनैव नान्येन ज्ञानमेव प्लवं पोतं कृत्वा संतरिष्यसि सम्यगनायासेन पुनरावृत्तिवर्जितत्वेन च तरिष्यस्यतिक्रमिष्यसि । वृजिनशब्देनात्र धर्माधर्मरूपं कर्म संसारफलमभिप्रेतं मुमुक्षोः पापवत्पुण्यस्याप्यनिष्टत्वात् ॥ ३६ ॥ ननु समुद्रवत्तरणे कर्मणां नाशो न स्यादित्याशङ्क्य दृष्टान्तान्तरमाह—यथा एधांसि काष्ठानि समिद्धः प्रज्वलितोऽग्निर्भस्मसात्कुरुते भस्मीभावं नयति हे अर्जुन, ज्ञानाग्निः सर्वकर्माणि पापानि पुण्यानि चाविशेषेण प्रारब्धफलभिन्नानि भस्मसात्कुरुते तथा तत्कारणाज्ञानविनाशेन विनाशयतीत्यर्थः । तथाच श्रुतिः 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते

५ भाष्योत्कर्षदीपिका ।

पोतं तरणसाधनं कृत्वा वृजिनार्णवं धर्माधर्मरूपदुःखसमुद्रं तरिष्यसि । मुमुक्षुं प्रति पुण्यस्यापि वृजिनरूपत्वात् । तथाच श्रुतिः 'तथा स यो ऽहमां वेद न ह वै तस्य केनच न कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया न साधुना कर्मणा भूयान् भवति नो एवासाधुना कनीयान् त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छम्' इत्याद्या ॥ ३६ ॥ ननु ज्ञानप्लवेन तरिष्यसीत्युक्त्या ज्ञानस्य पापनाशकत्वं नागतमित्याशङ्क्य पापं नाशयति ज्ञानं नावशेषयति तन्नाश एव तत्तरणमित्यभिप्रेत्य सदृष्टान्तमाह । यथैधांसि काष्ठानि सम्यग्दीप्तोऽग्निर्भस्मसाद्भस्मीभावं कुरुते । तथा ज्ञानमेवाग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मीभावं कुरुते । निर्बीजं करोतीत्यर्थः । अर्जुनेतिसंबोधयन् शुद्धचित्तैर्नैवेदृशं ज्ञानं लभ्यते नान्येनेति द्योतयति । यद्वा तच्च ज्ञानं सर्वकर्माणि दग्ध्वा शुद्धं ब्रह्म संपद्यत इति सूचयति । यद्वैवंभूतेन ज्ञानेन सर्वाणि कर्माणि भस्मसात्कृत्वाऽन्वर्थसंज्ञो भवेति सूचयन्नाहार्जुनेति । सम्यग्दर्शनं प्रारब्धकर्मव्यतिरिक्तानां सर्वकर्मणां निर्बीजत्वकारणमित्यभिप्रायः । प्रारब्धकर्मणां प्रवृत्तफलानां भोगेनैव क्षयात् । तस्माद्यान्यप्रवृत्तफलान्यतीतानेकजन्मार्जितानि ज्ञानोत्पत्तेः पूर्वमस्मिन्जन्मनि कृतानि ज्ञानाभिसाधनानुष्ठानकालिकानि च सर्वाणि भस्मसात्कुरुते । ज्ञानोत्तरभाविनामसंबन्धोऽपि बोध्यः । तथाच भगवतो बादरायणस्य सूत्राणि 'तदधिगम उत्तरपूर्वाघयोरश्लेष-

६ श्रीधरीव्याख्या ।

पापकारिभ्यो यद्यप्यतिशयेन पापकारी त्वमसि तथापि सर्वं पापसमुद्रं ज्ञानपोतेनैव सम्यगनायासेन तरिष्यसि ॥ ३६ ॥ समुद्रवत्स्थितस्यैव पापस्यातिलङ्घनमात्रं नतु पापस्य नाश इति भ्रान्तिं दृष्टान्तेन वारयन्नाह—**यथेति** । एधांसि काष्ठानि प्रदीप्तोऽग्निर्यथा

७ अभिनवगुप्ताचार्यव्याख्या ।

तिष्ठतीति सूचयन्नखिलमिति व्याचष्टे—अपिचेदिति ॥ ३६ ॥ यथैधांसि । नहि ज्ञानेन । श्रद्धावान् । संशयात्मन इत्यन्तम्—सुसमिद्धो-

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

१ श्रीमच्छांकरभाष्यम् ।

शरीरमारब्धं तत्प्रवृत्तफलत्वादुपभोगेनैव क्षीयतेऽतो यान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राकृतानि ज्ञानसहभावीनि चातीतानेकजन्मकृतानि च तान्येव सर्वाणि भस्मसात्कुरुते ॥ ३७ ॥ यत एवमतो— नहीति । नहि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरमिह विद्यते । तज्ज्ञानं स्वयमेव योगसं-

२ आनन्दगिरिव्याख्या ।

कथं तर्हि प्रारब्धफलं कर्म नश्यतीत्याशङ्क्याह—येनेति । तर्हि कथं ज्ञानाग्निः सर्वकर्माणि भस्मसात्करोतीत्युक्तं तत्राह—अत इति । ज्ञानादारब्धफलानां कर्मणां निवृत्त्यनुपपत्तेरनारब्धफलानि यानि कर्माणि पूर्वं ज्ञानोदयादस्मिन्नेव जन्मनि कृतानि ज्ञानेन च सह वर्तमानानि प्राचीनेषु चानेकेषु जन्मस्वर्जितानि तानि सर्वाणि ज्ञानं कारणनिवर्तनेन निवर्तयतीत्यर्थः ॥ ३७ ॥ नन्वन्येनैव परिशुद्धिकरेण केनचिदश्वमेधादिना परमपुरुषार्थसिद्धेरलमात्मज्ञानेनेत्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नहीति । योगेन निष्कामकर्मानुष्ठानेन समाधियोगेन वा संसिद्धः संस्कृतो योग्यतामापन्नः । कालेनेति चिरप्रयत्न-

४ मधुसूदनीव्याख्या ।

चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति, 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्', 'इतरस्याप्येवमसंश्लेषः पाते तु' इति च सूत्रे । अनारब्धे पुण्यपापे नश्यत एवेत्यत्र सूत्रं 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इति । ज्ञानोत्पादकदेहारम्भकाणां तु तद्देहान्तएव विनाशः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुतेः, 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति सूत्राच्च । आधिकारिकाणां तु यान्येव ज्ञानोत्पादकदेहारम्भकाणि तान्येव देहान्तरारम्भकाण्यपि । यथा वसिष्ठापान्तरतमःप्रभृतीनाम् । तथाच सूत्रम् 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इति । अधिकारोऽनेकदेहारम्भकं बलवत्प्रारब्धफलं कर्म । तच्चोपासकानामेव नान्येषाम् । अनारब्धफलानि नश्यन्ति आरब्धफलानि तु यावद्भोगसमाप्ति तिष्ठन्ति । भोगश्चैकेन देहेनानेकेन वेति न विशेषः । विस्तरस्त्वाकरे द्रष्टव्यः ॥ ३७ ॥ यस्मादेवं तस्मात्—नहि ज्ञानेन सदृशं पवित्रं पावनं शुद्धिकरमन्यदिह

५ भाष्योत्कर्षदीपिका ।

विनाशौ तद्व्यपदेशात्, इतरस्याप्येवमसंश्लेषः पाते तु, 'अनारब्धकार्ये एव तु पूर्वे तदवधेः', 'भोगेन त्वितरे क्षपयित्वा संपद्यते' इति फलार्थत्वात्कर्मणः फलमदत्त्वा क्षयासंभवात् । ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं न क्षीयत इति प्राप्ते राद्धान्तः । तदधिगमे ब्रह्मसाक्षात्कारे सति उत्तरस्याघस्य दुरितस्याश्लेषोऽसंबन्धः पूर्वस्य विनाशः । कस्मात्तद्व्यपदेशात् तयोरश्लेषविनाशयोः श्रुतिभिर्व्यपदेशात् । तथाच श्रुतयः 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते', 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयत एवꣳहास्य सर्वे पाप्मानः प्रदूयन्ते', 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्याह । इतरस्यापि पुण्यस्य कर्मणः एवमघवदसंश्लेषविनाशौ भवतः । कुतस्तस्यापि स्वफलहेतुत्वेन ज्ञानप्रतिबन्धित्वप्रसङ्गात् । 'उभे इहैवैष एते तरति' इत्यादिश्रुतिषु च दुष्कृतवत्सु कृतस्यापि विनाशव्यपदेशात् । अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् । 'क्षीयन्ते चास्य कर्माणी'ति चाविशेषश्रुतेः । यत्रापि केवल एव पाप्मशब्दः पठ्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम् । ज्ञानापेक्षया निकृष्टफलत्वात् । तुशब्द एवकारार्थः । एवं पुण्यपापयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्ध्या विदुषो देहपाते मुक्तिरवश्यमेव भवतीत्यर्थः । तत्र उभे इहैव एष एते तरतीत्यादिश्रुतिविशेषश्रवणात्, अविशेषेणारब्धकार्ययोरनारब्धकार्ययोश्च क्षय इति प्राप्ते प्रत्याह । अनारब्धकार्ये अप्रवृत्तफले एव तु पूर्वे जन्मान्तरसंचिते अस्मिन्नपि च जन्मनि प्राक् ज्ञानोत्पत्तेः संचिते पुण्यपापे तदधिगमात्क्षीयेते नत्वारब्धकार्ये याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम् कुतस्तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति शरीरपातावधिकरणात्क्षेमप्राप्तेः । ननु वस्तुबलेनाकर्त्रात्मावगत्या प्रारब्धकर्माण्यपि कुतो न क्षीयन्ते । अग्निसंबन्धे बीजशक्तिरिवेति चेदुच्यते । न तावदनाश्रित्यारब्धकार्यं

६ श्रीधरीव्याख्या ।

भस्मीभावं नयति तथा आत्मज्ञानरूपोऽग्निः प्रारब्धकर्मव्यतिरिक्तानि सर्वाणि कर्माणि भस्मीकरोतीत्यर्थः ॥ ३७ ॥ तत्र हेतुमाह— नहीति । पवित्रं शुद्धिकरं इह तपोयोगादिषु मध्ये ज्ञानतुल्यं नास्त्येव । तर्हि सर्वेऽप्यात्मज्ञानमेव किं नाभ्यस्यन्तीत्यत आह—

७ अभिनवगुप्ताचार्यव्याख्या ।

ऽभ्यासजातप्रतिपत्तिदार्ढ्यबन्धेन ज्ञानाग्निर्भवति यथा तथा प्रयतनीयमिति ॥ ३७ ॥ पवित्रं हि ज्ञानसमं नास्ति । अन्यस्य संवृत्त्या पवित्रत्वं न वस्तुत इत्यतिप्रसङ्गभयान्न प्रतायते । पवित्रत्वं चास्य स्वयं ज्ञास्यतीति सुबुद्धतायाम् । अत्रच श्रद्धागमस्तत्परत्वापारत्वं

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यतामापन्नो मुमुक्षुः कालेन महतात्मनि विन्दति । लभत इत्यर्थः ॥ ३८ ॥ येनैकान्तेन ज्ञानप्राप्तिर्भवति स उपाय उपदिश्यते—श्रद्धावानिति । श्रद्धावाञ्श्रद्धालुर्लभते ज्ञानम् । श्रद्धालुत्वेऽपि भवति कश्चिन्मन्दप्रस्थानोऽत आह । तत्परो गुरूपासनादावभियुक्तो ज्ञानलब्ध्युपाये श्रद्धावांस्तत्परोऽप्यजितेन्द्रियः स्यादित्यत आह । संयतेन्द्रियः संयतानि विषयेभ्यो निवर्तितानि यस्येन्द्रियाणि स संयतेन्द्रियः य एवंभूतः श्रद्धावांस्तत्परः संयतेन्द्रियश्च सोऽवश्यं ज्ञानं लभते । प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति मायावित्वादिसंभ-

२ आनन्दगिरिव्याख्या ।

शङ्क्याह—**यत इति** । पूर्वोक्तेन प्रकारेण ज्ञानमाहात्म्यं यतः सिद्धमतस्तेन ज्ञानेन तुल्यं परिशुद्धिकरं परमपुरुषार्थौपयिकमिह व्यवहारभूमौ नास्तीत्यर्थः । तत्पुनरात्मविषयं ज्ञानं सर्वेषां किमिति झटिति नोत्पद्यते तत्राह—**तत्स्वयमिति** । महता कालेन यथोक्तेन साधनेन योग्यतामापन्नस्तदधिकृतः स्वयं तदात्मनि ज्ञानं विन्दतीति योजना । सर्वेषां झटिति ज्ञानानुदयो योग्यतावैधुर्यादिति भावः ॥ ३८ ॥ कर्मयोगेन समाधियोगेन च संपन्नस्य ज्ञानोत्पत्तावन्तरङ्गं साधनमुपदिशति—**येनेति** । ज्ञानलाभप्रयोजनमाह—**ज्ञानमिति** । न केवलं श्रद्धालुत्वमेवासहायं ज्ञानलाभे हेतुरपि तु तात्पर्यमपीत्याह—**श्रद्धालुत्वेऽपीति** । मन्दप्रस्थानत्वं तात्पर्यविधुरत्वं, नच तस्योपदिष्टमपि ज्ञानमुत्पत्तुमीष्टे तेन तात्पर्यमपि तत्र कारणं भवतीत्याह—**अत आहेति** । अभियुक्तो निष्ठावान्, उपासनादावित्यादिशब्देन श्रवणादि गृह्यते । नच श्रद्धा तात्पर्यं चेत्युभयमेव ज्ञानकारणं किंतु संयतेन्द्रियत्वमपि तदभावे श्रद्धादेरकिंचित्करत्वादित्याशयेनाह—**श्रद्धावानिति** । उक्तसाधनानां ज्ञानेन सहैकान्तिकत्वमाह—**य एवंभूत इति** । 'तद्विद्धि प्रणिपातेन' इत्यादौ प्रागेव प्रणिपातादेर्ज्ञानहेतोरुक्तत्वात्किमितीदानीं हेत्वन्तरमुच्यते तत्राह—**प्रणिपातादिस्त्विति** । तद्धि बहिरङ्ग-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

साध्यत्वं ज्ञानस्योच्यते ॥ ३८ ॥ श्रद्धावान् ज्ञानं लभते । श्रद्धावानपि मन्दप्रयत्नो माभूदत आह—**तत्पर इति** । तत्परोऽप्यजितेन्द्रियो माभूदत आह—**संयतेन्द्रिय इति** । परां शान्तिं विदेहकैवल्यम् । अचिरेण प्रारब्धकर्मसमाप्तौ

४ मधुसूदनीव्याख्या ।

वेदे लोकव्यवहारे वा विद्यते, ज्ञानभिन्नस्याज्ञानानिवर्तकत्वेन समूलपापनिवर्तकत्वाभावात्, कारणसद्भावेन पुनः पापोदयाच्च । ज्ञानेन त्वज्ञाननिवृत्त्या समूलपापनिवृत्तिरिति तत्समयन्यन्न विद्यते । तदात्मविषयं ज्ञानं सर्वेषां किमिति झटिति नोत्पद्यते तत्राह—तज्ज्ञानं कालेन महता योगसंसिद्धो योगेन पूर्वोक्तकर्मयोगेन संसिद्धः संस्कृतो योग्यतामापन्नः स्वयमात्मन्यन्तःकरणे विन्दति लभते नतु योग्यतामापन्नोऽन्यदत्तं स्वनिष्ठतया न वा परनिष्ठं स्वीयतया विन्दतीत्यर्थः ॥ ३८ ॥ येनैकान्तेन ज्ञानप्राप्तिर्भवति स उपायः पूर्वोक्तप्रणिपाताद्यपेक्षयाप्यासन्नतर उच्यते । गुरुवेदान्तवाक्येष्विदमित्थमेवेति प्रमारूपास्तिक्यबुद्धिः श्रद्धा तद्वान्पुरुषो लभते ज्ञानम् । एतादृशोऽपि कश्चिदलसः स्यात्तत्राह—तत्परः गुरूपासनादौ ज्ञानोपायेऽत्यन्ताभियुक्तः ।

५ भाष्योत्कर्षदीपिका ।

कर्माशयं तत्त्वावगत्युत्पत्तिरुपपद्यते । आश्रिते च तस्मिन्कुलालचक्रवत्प्रवृत्तवेगस्यान्तराले प्रतिबन्धासंभवात् भवतिवेगक्षयपरिपालनं अकर्त्रात्मावगत्याबाधितमपि मिथ्याज्ञानं कर्माधिष्ठानं जले वृक्षज्ञानवत्संस्कारवशात्कंचित्कालमनुवर्तेत एव । अनारब्धकार्ययोः पुण्यपापयोः विद्यासामर्थ्यात्क्षय उक्तः इतरे त्वारब्धकार्ये ते उपभोगेन क्षपयित्वा ब्रह्म संपद्यते । तस्य तावदेवेत्यादि ब्रह्मैव सन्ब्रह्माप्येतीति चैवमादिश्रुतिभ्य इति ॥ ३७ ॥ यत एवमतो नहि ज्ञानेन तुल्यं पवित्रं पापनाशनं शुद्धिकरमिह दैवादियज्ञादौ विद्यते तस्य ज्ञानभिन्नस्याज्ञानानिवर्तकत्वेनात्यन्तशुद्धिकरत्वाभावात् । तर्हि किमन्यैर्यज्ञादिभिः मयाऽन्यैश्च ज्ञानमेव कुतो न संपाद्यमित्याशङ्क्याह । तत् ज्ञानं स्वयमेव योगेन निष्कामकर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतः योग्यतां प्राप्तः सन् मुमुक्षुर्महता कालेनात्मनि अखण्डात्मविषयं ज्ञानं विन्दति लभते । स्वयमेव स्वप्रयत्नेनैव योगसिद्धः स्वयमेव विन्दतीति वा । आत्मविषयसाक्षात्कारस्य स्वेनैव लभ्यत्वात् । गुर्वादेः परोक्षज्ञान एवोपयोगात् । यस्माद्योगसंसिद्धैरेवान्यैर्ज्ञानं लभ्यते, तस्मात्त्वमपि तथाभूतः सन् तल्लभस्वेत्याशयः ॥ ३८ ॥ योगेन योग्यतामापन्नस्य येनैकान्तेन तत्त्वज्ञानं भवति तमुपायमाह—**श्रद्धावानिति ।**

६ श्रीधरीव्याख्या ।

**तत्स्वयमिति** सार्धेन । तदात्मविषयं ज्ञानं कालेन महता कर्मयोगेन संसिद्धो योग्यतां प्राप्तः सन्स्वयमेवानायासेन लभते नतु कर्मयोगं विनेत्यर्थः ॥ ३८ ॥ किंच—**श्रद्धावानिति** । श्रद्धावान् गुरूपदिष्टेऽर्थे आस्तिक्यबुद्धिमान् । तत्परस्तदेकनिष्ठः । संयतेन्द्रियश्च तज्ज्ञानं लभते नान्यः । अतः श्रद्धादिसंपत्त्या ज्ञानलाभात्प्राक्कर्मयोग एव शुद्ध्यर्थमनुष्ठेयः । ज्ञानलाभानन्तरं तु न तस्य किंचित्कृत्य-

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

१ श्रीमच्छांकरभाष्यम् ।

वान्नतु तथा तच्छ्रद्धावत्त्वादावित्येकान्ततो ज्ञानलब्ध्युपायः । किं पुनर्ज्ञानलाभात्स्यादित्युच्यते । ज्ञानं लब्ध्वा परां मोक्षाख्यां शान्तिमुपरतिमचिरेण क्षिप्रमेवाधिगच्छति । सम्यग्दर्शनात्क्षिप्रं मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोऽर्थः ॥ ३९ ॥ अत्र संशयो न कर्तव्यः । पापिष्ठो हि संशयः कथमित्युच्यते—अज्ञश्चेति । अज्ञश्चानात्मज्ञोऽश्रद्दधानश्च संशयात्मा च विनश्यति, अज्ञाश्रद्दधानौ यद्यपि विनश्यतस्तथापि न तथा यथा संशयात्मा, संशयात्मा तु पापिष्ठः सर्वेषां, कथं, नायं साधा-

२ आनन्दगिरिव्याख्या ।

मिदं पुनरन्तरङ्गं, नच तत्र ज्ञाने प्रतिनियमो मनस्यन्यथा कृत्वा बहिरन्यथाप्रदर्शनात्मनो मायावित्वस्य संभवाद्विप्रलम्भकत्वादेरपि संभावनोपनीतत्वादित्यर्थः । मायावित्वादेः श्रद्धावत्त्वतात्पर्यादावपि संभवादनैकान्तिकत्वमविशिष्टमित्याशङ्क्याह—नत्विति । नहि मायया विप्रलम्भेन वा श्रद्धातात्पर्यसंयमाभियोगतोऽनुष्ठातुमर्हन्तीत्यर्थः । उत्तरार्धं प्रश्नपूर्वकमवतार्य व्याकरोति—किंपुनरित्यादिना । सम्यग्ज्ञानादभ्यासादिसाधनानपेक्षान्मोक्षो भवतीत्यत्र प्रमाणमाह—सम्यग्दर्शनादिति । शास्त्रशब्देन 'तमेव विदित्वा', 'ज्ञानादेव तु कैवल्यम्' इत्यादि विवक्षितम्, न्यायस्तु ज्ञानादज्ञानविवृत्ते रज्ज्वादौ प्रसिद्धत्वादात्मज्ञानादपि निरपेक्षादज्ञानतत्कार्यप्रक्षयलक्षणो मोक्षः स्यादित्येवंलक्षणः ॥ ३९ ॥ उत्तरश्लोकस्य पातनिकां करोति—अत्रेति । यथोक्तसाधनवानुपदेशमपेक्ष्याचिरेण ब्रह्म साक्षात्करोति साक्षात्कृतब्रह्मत्वेऽचिरेणैव मोक्षं प्राप्नोतीत्येषोऽर्थः सप्तम्या परामृश्यते । संशयस्याकर्तव्यत्वे हेतुमाह—पापिष्ठो हीति । उक्तं हेतुं प्रश्नपूर्वकमुत्तरश्लोकेन साधयति—कथमिति । अज्ञादश्रद्दधानाच्च संशयचित्तस्य विशेषमादर्शयति—नायमिति । द्वितीयविभागविभजनार्थं भूमिकां करोति—अज्ञेति । अज्ञादीनां मध्ये संशयात्मनो यत्पापिष्ठत्वं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सत्याम् ॥ ३९ ॥ अज्ञ इति । अज्ञः सुखेन चिकित्सितुं शक्यः । अश्रद्दधानो यत्नेन । संशयात्मा त्वसाध्य एव ।

४ मधुसूदनीव्याख्या ।

श्रद्धावांस्तत्परोऽपि कश्चिदजितेन्द्रियः स्यादत आह—संयतानि विषयेभ्यो निवर्तितानीन्द्रियाणि येन स संयतेन्द्रियः । य एवं विशेषणत्रययुक्तः सोऽवश्यं ज्ञानं लभते । प्रणिपातादिस्तु बाह्यो मायावित्वादिसंभवादनैकान्तिकोऽपि । श्रद्धावत्त्वादिस्त्वैकान्तिक उपाय इत्यर्थः । ईदृशेनोपायेन ज्ञानं लब्ध्वा परां चरमां शान्तिमविद्यातत्कार्यनिवृत्तिरूपां मुक्तिमचिरेण तदव्यवधानेनैवाधिगच्छति लभते । यथाहि दीपः स्वोत्पत्तिमात्रेणैवान्धकारनिवृत्तिं करोति नतु कंचित्सहकारिणमपेक्षते तथा ज्ञानमपि स्वोत्पत्तिमात्रेणैवाज्ञाननिवृत्तिं करोति नतु किंचित्प्रसंख्यानादिकमपेक्षत इति भावः ॥ ३९ ॥ अत्र च संशयो न कर्तव्यः, कस्मात्—अज्ञोऽनधीतशास्त्रत्वेनात्मज्ञानशून्यः । गुरुवेदान्तवाक्यार्थे इदमेवं न भवत्येवेति विपर्ययरूपा नास्तिक्यबुद्धिरश्रद्धा तद्वानश्रद्दधानः । इदमेवं भवति नवेति सर्वत्र संशयाक्रान्तचित्तः संशयात्मा विनश्यति स्वार्थाद्भ्रष्टो भवति । अज्ञश्चाश्रद्दधानश्च विनश्यतीति संशयात्मापेक्षया न्यूनत्वकथनार्थं चकाराभ्यां तयोः प्रयोगः । कुतः, संशयात्मा हि सर्वतः पापीयान् । यतो नायं मनुष्यलोको-

५ भाष्योत्कर्षदीपिका ।

गुरुवेदान्तवाक्येष्विदमित्थमित्यास्तिक्यं श्रद्धा तद्वान् । तत्रापि तत्परः गुरूपासनादावभियुक्तः । तत्रापि संयतानि विषयेभ्यो निवर्तितानि इन्द्रियाणि येन सः । एवं विशेषणत्रयविशिष्टश्चेदवश्यं ज्ञानं लभते । प्रणिपातादेर्माययापि संभवेन नैकान्तिकत्वमेतेषां न तथात्वमत एकान्तिकं ज्ञानं लब्ध्वा किं स्यादत आह । ज्ञानं लब्ध्वा परां शान्तिं मोक्षाभिधामचिरेण जन्मान्तरं लोकान्तरगमनं च विनैवाधिगच्छति प्राप्नोति ॥ ३९ ॥ अस्मिन्सर्वशास्त्रन्यायसिद्धे सुनिश्चितेऽर्थे संशयो न कर्तव्यः । तस्य पापिष्ठत्वादित्याशयेनाह—अज्ञ इति । अज्ञो गुरुमुखादनधीतशास्त्रत्वेनात्मज्ञानशून्यश्च पूर्वोक्तश्रद्धारहितश्च इदमेवं भवति न वेति सर्वत्र संशयाक्रान्तचेता विनश्यति स्वार्थलाभाद्भ्रश्यति । अज्ञाश्रद्दधानसंशयात्मापेक्षया चकारद्वयसूचितममुख्यत्वं स्फुटयति । संशयात्मा

६ श्रीधरीव्याख्या ।

मस्तीत्याह । ज्ञानं लब्ध्वा त्वचिरेण परां शान्तिं मोक्षं प्राप्नोति ॥ ३९ ॥ ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह—अज्ञश्चेति । अज्ञो गुरूपदिष्टार्थानभिज्ञः कथंचिज्ज्ञाने जातेऽप्यश्रद्दधानश्च जातायामपि श्रद्धायां ममेदं सिध्येद्वा न वेति संशयाक्रान्त-

७ अभिनवगुप्ताचार्यव्याख्या ।

झगित्येवास्तिकत्वादसंशयत्वे सत्युत्पद्यते । तस्मादसंशयवता गुर्वागमादतेन भाव्यं संशयस्य सर्वनाशकत्वात् । ससंशयो हि न किंचिज्जानाति

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

रणोऽपि लोकोऽस्ति तथा न परो लोको न सुखं तत्रापि संशयोपपत्तेः । संशयात्मनः संशयचित्तस्य । तस्मात्संशयो न कर्तव्यः ॥ ४० ॥ कस्मात्—योगेति । योगसंन्यस्तकर्माणं परमार्थदर्शनलक्षणेन योगेन संन्यस्तानि कर्माणि येन परमार्थदर्शिना धर्माधर्माख्यानि तं योगसंन्यस्तकर्माणम् । कथं योगसंन्यस्तकर्मेत्याह ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नः संशयो यस्य स ज्ञानसंछिन्नसंशयः । य एवं योगसंन्यस्तकर्मा तमात्मवन्तमप्रमत्तं गुणचेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्त्यनिष्टादिरूपं फलं नार-

२ आनन्दगिरिव्याख्या ।

तत्प्रश्नद्वारा प्रकटयति—**कथमिति** । लोकद्वयस्य तत्प्रयुक्तसुखस्य चाभावे हेतुमाह—**तत्रापीति** । संशयचित्तस्य सर्वत्र संशयप्रवृत्तेर्दुर्निवारत्वादित्यर्थः । संशयस्यानर्थमूलत्वे स्थिते फलितमाह—**तस्मादिति** ॥ ४० ॥ यद्यपि संशयः सर्वानर्थहेतुत्वात्कर्तव्यो न भवति तथापि निवर्तकाभावे तदकरणमस्वाधीनमिति शङ्कते—**कस्मादिति** । श्रुतियुक्तिप्रयुक्तमैक्यज्ञानं तन्निवर्तकमित्युत्तरमाह—**ज्ञानेति** । संशयरहितस्यापि कर्माण्यनर्थहेतवो भवन्तीत्याशङ्क्याह—**योगेति** । विषयपरवशस्य पुंसो योगायोगात्कुतो योगसंन्यस्तकर्मत्वमित्याशङ्क्याह—**आत्मवन्तमिति** । परमार्थदर्शनतः संशयोच्छित्तौ तदुच्छेदकज्ञानमाहात्म्यादेव कर्मणां च निवृत्तावप्रमत्तस्य प्रातिभासिकानि कर्माणि बन्धहेतवो न भवन्तीत्याह—**न कर्माणीति** । कर्मयोगादेव कर्मसंन्यासस्यानुपपत्तिमाशङ्क्याद्यं पादं विभजते—**परमार्थेति** । तच्च वैधसंन्यासपक्षे परोक्षं फलसंन्यासपक्षे त्वपरोक्षमिति विवेकः । यथोक्तज्ञानेन संन्यस्तकर्मत्वमेव सति संशये न सिध्यति संशयवतस्तदयोगादिति शङ्कते—**कथमिति** । द्वितीयं पादं व्याकुर्वन्परिहरति—**आहेत्यादिना** । पाठक्रमादर्थक्रमस्य बलीयस्त्वादादौ द्वितीयं पादं व्याख्याय पश्चादाद्यं पादं व्याचक्षीतेत्याह—**य एवमिति** । सर्वमिदं प्रमादवतो विषयपरवशस्य न सिध्यतीत्यभिसंधायात्मवन्तं व्याकरोति—**अप्रमत्तमिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यतो मित्रादिष्वपि संशयं कुर्वतोऽस्यायं लोकोऽपि नास्ति नापि परः । वेदवाक्येऽपि संशयात् । अतएव सर्वदा संशयाकुलत्वात्सुखमपि तस्य नास्ति । तस्मात्संशयो न कर्तव्यः ॥ ४० ॥ किंच—**योगेति** । योगेन कर्मण्यकर्मदर्शनात्मकेन संन्यस्तानि फलतः स्वरूपतो वा त्यक्तानि कर्माणि येन तं योगसंन्यस्तकर्माणम् । ज्ञानेन सम्यग्द-

४ मधुसूदनीव्याख्या ।

ऽस्ति वित्तार्जनाद्यभावात्, न परलोकः स्वर्गमोक्षादिः धर्मज्ञानाद्यभावात्, न सुखं भोजनादिकृतं संशयात्मनः सर्वत्र संदेहाक्रान्तचित्तस्य । अज्ञस्याश्रद्दधानस्य च परो लोको नास्ति, मनुष्यलोके भोजनादिसुखं च वर्तते । संशयात्मा तु त्रितयहीनत्वेन सर्वतः पापीयानित्यर्थः ॥ ४० ॥ एतादृशस्य सर्वानर्थमूलस्य संशयस्य निराकरणायात्मनिश्चयमुपायं वदन्नध्यायद्वयोक्तां पूर्वापरभूमिकाभेदेन कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति—योगेन भगवदाराधनलक्षणसमत्वबुद्धिरूपेण संन्यस्तानि भगवति समर्पितानि कर्माणि येन । यद्वा परमार्थदर्शनलक्षणेन योगेन संन्यस्तानि त्यक्तानि कर्माणि येन तं योगसंन्यस्तकर्माणम् । संशये सति कथं योगसंन्यस्तकर्मत्वमत आह—ज्ञानसंछिन्नसंशयं ज्ञानेनात्मनिश्चयलक्षणेन छिन्नः संशयो येन तम् । विषयपरवश-

५ भाष्योत्कर्षदीपिका ।

तु सर्वतः पापिष्ठः । यतस्तस्यायं मनुष्यलोको वित्तार्जनविवाहादिसाध्यो न । नच पर उपासनादिसाध्यो देवलोकः । नच तत्त्वज्ञानसाध्यजीवन्मुक्तिसुखं, सर्वत्रापि संशयस्य सत्त्वात् । अज्ञाश्रद्दधानयोः परलोकस्य जीवन्मुक्तिसुखस्य चाभावेऽपि मनुष्यलोकोऽस्त्येव । यद्वा अज्ञः कदाचिदभ्यासवशात्परलोकादिसाधनं देहात्मविवेकादिज्ञानं लभते । अश्रद्दधानोऽपि युक्तियुक्तं श्रुत्वा श्रद्धां लभते । ततश्च परलोकादिभाजौ भवतः । सदा सर्वत्र संशयग्रस्तस्तु न तथा किंत्वतिपापिष्ठ इत्यर्थः । तस्मात्संशयो न कर्तव्य इत्याशयः ॥ ४० ॥ ननु संशयनिवर्तकाभावे तदकरणमस्वाधीनमित्याशङ्क्य तन्निवृत्त्युपायमात्मज्ञाननिश्चयं ज्ञापयन् तत्त्वसाक्षात्कारसंछिन्नसंशयं कर्माणि न निबध्नन्तीत्याह—**योगेनेति** । योगेन परमार्थदर्शनलक्षणेन सम्यक् न्यस्तानि त्यक्तानि शक्तिप्रतिबन्धेन धर्मा-

६ श्रीधरीव्याख्या ।

चित्तश्च नश्यति स्वार्थाद्भ्रश्यति । एतेषु त्रिष्वपि संशयात्मा सर्वथा नश्यति यतस्तस्यायं लोको नास्ति, धनार्जनविवाहाद्यसिद्धेः । नच परलोकः, धर्मस्यानिष्पत्तेः । नच सुखं, संशयेनैव भोगस्याप्यसंभवात् ॥ ४० ॥ अध्यायद्वयोक्तां पूर्वापरभूमिकाभेदेन कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति—**योगेति** द्वाभ्याम् । योगेन परमेश्वराराधनरूपेण तस्मिन्संन्यस्तानि समर्पितानि कर्माणि

७ अभिनवगुप्ताचार्यव्याख्या ।

अश्रद्दधानत्वात् । तस्मान्निःसंशयेन भाव्यमिति वाक्यार्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ सकलाध्यायविस्फारितोऽर्थः श्लोकद्वयेन संक्षिप्योच्यते—

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत॥ ४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः॥ ४॥

१ श्रीमच्छांकरभाष्यम्।

भन्ते हे धनंजय॥ ४१॥ यस्मात् कर्मयोगानुष्ठानादशुद्धिक्षयहेतुकज्ञानसंछिन्नसंशयो न निबध्यते कर्मभिर्ज्ञानाग्निदग्धकर्मत्वादेव यस्माच्च ज्ञानकर्मानुष्ठानविषये संशयवान्विनश्यति—तस्मादिति। तस्मात्पापिष्ठमज्ञानसंभूतमज्ञानादविवेकाज्जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेवासिः खड्गस्तेन ज्ञानासिनात्मनः स्वस्यात्मविषयत्वात्संशयस्य। नहि परस्य

२ आनन्दगिरिव्याख्या।

न कर्माणीत्यादिफलोक्तिं व्याचष्टे—गुणचेष्टेति। अनिष्टादीत्यादिशब्देनेष्टं मिश्रं च गृह्यते॥ ४१॥ तस्मादित्यादि-समनन्तरश्लोकगततत्पदापेक्षितमर्थमाह—यस्मादिति। सतां कर्मणामसदादिषु फलारम्भकत्वोपलम्भाद्विदुष्यपि तेषां तद्भाव्यमनपवाधमित्याशङ्क्याह—ज्ञानाग्नीति। ननु संदिहानस्य तत्प्रतिबन्धान्न कर्मयोगानुष्ठानं नापि तद्धेतु-कज्ञानं तत्रापि संशयावतारादित्याशङ्क्याह—यस्माच्चेति। श्लोकाक्षराणि व्याचष्टे—तस्मादित्यादिना। पापिष्ठमिति संशयस्य सर्वानर्थमूलत्वेन त्याज्यत्वं सूच्यते। विवेकाग्रहप्रसूतत्वादपि तस्यावहेयत्वमविवेकस्यानर्थकरत्वप्रसिद्धेरि-त्याह—अविवेकादिति। नच तस्य चैतन्यवदात्मनिष्ठत्वादत्याज्यत्वं शङ्कितव्यमित्याह—हृदीति। शोकमोहाभ्या-मभिभूतस्य पुंसो मनसि प्रादुर्भवतः संशयस्य प्रबलप्रतिबन्धकाभावेनैव प्रध्वंसः सिध्येदित्याशङ्क्याह—ज्ञाना-सिनेति। स्वाश्रयस्य संशयस्य स्वाश्रयेणैव ज्ञानेन समुच्छेदसंभवात्किमिति स्वस्येति विशेषणमित्याशङ्क्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

र्शनेन सम्यक् छिन्नाः संशयाः—आत्मा देहोऽन्यो वा, अन्योऽपि विभुरविभुर्वा, विभुरपि कर्ताऽकर्ता वा, अकर्ता-प्येऽकोऽनेको वा, एकोऽपि सगुणो निर्गुणो वेत्येवमादयो यस्य स ज्ञानसंछिन्नसंशयस्तं आत्मवन्तं शमदमादिपरं कर्माणि कृतानि न निबध्नन्ति हे धनंजय॥ ४१॥ तस्मादिति। हृत्स्थं बुद्धिस्थम्। ज्ञानासिना ज्ञानखड्गेन।

४ मधुसूदनीव्याख्या।

त्स्वरूपप्रमादे सति कुतो ज्ञानोत्पत्तिरित्यत आह—आत्मवन्तमप्रमादिनं सर्वदा सावधानं एतादृशमप्रमादित्वेन ज्ञानवन्तं ज्ञानसं-छिन्नसंशयत्वेन योगसंन्यस्तकर्माणं कर्माणि लोकसंग्रहार्थानि वृथाचेष्टारूपाणि वा न निबध्नन्ति अनिष्टमिष्टं मिश्रं वा शरीरं नारभन्ते हे धनंजय॥ ४१॥ यस्मादेवं—अज्ञानादविवेकात्संभूतमुत्पन्नं हृत्स्थं हृदि बुद्धौ स्थितं करणस्याश्रयस्य च ज्ञाने शत्रुः

५ भाष्योत्कर्षदीपिका।

धर्माख्यानि संचितादीनि कर्माणि येन तम्। 'क्षीयन्ते चास्य कर्माणि' इति श्रुतेः। योगेन भगवदाराधनलक्षणसमत्वबुद्धिरूपेण संन्यस्तानि भगवति समर्पितानि कर्माणि येनेति वा। अस्मिन्पक्षे कर्मपदसंकोचाद्यापत्तिरूपाऽरुचिर्बोध्या। यद्वा भाष्यस्योपलक्षणार्थ-तया तन्त्रेणायमपि पक्षोऽस्तु। यस्मात्कर्मयोगानुष्ठानात् अशुद्धिक्षयहेतुकज्ञानसंछिन्नसंशयो न निबध्यते कर्मभिरित्यग्रिमभाष्यात्। तत्र हेतुमाह—ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन छिन्नः संशयः आत्मा देहाद्यभिन्नो भिन्नो वा, भिन्नोऽप्यविभुर्विभुर्वा, सोऽपि कर्ता-ऽकर्ता वा, कर्तापि भोक्ताऽभोक्ता वा, अभोक्ताप्यनेक एको वा, सोऽपि सविशेषो निर्विशेषो वा, निर्विशेषज्ञानात्केनचित्समुच्चितान्मोक्षः केवलाद्वा, केवलज्ञाननिवर्त्यः प्रपञ्चः सत्यो मिथ्याभूतो वेत्येवमादिरूपो यस्य तम्। अत्र हेतुमाह—आत्मवन्तमप्रमत्तं शमदमादिपरं कर्माणि गुणा गुणेषु वर्तन्त इति बुद्ध्या क्रियमाणानि न निबध्नन्ति अनिष्टादिरूपं फलं नारभन्ते राज्ञामतिप्रबलत्वात्तान्विजित्य धन-माहर्तुं मम सामर्थ्यमस्ति न वेति संशयमतिप्रबलात्मस्वरूपनिश्चयेन मुक्त्वा धनं जितवांस्त्वमेवात्र दृष्टान्त इति ध्वनयन्नाह—धनं-जयेति॥४१॥ यस्माच्चित्तशुद्धिलभ्यं ज्ञानमेवंभूतं, यस्माच्च संशयात्मा विनश्यति, यस्माच्च ज्ञानसंछिन्नसंशयः कर्मभिर्न निब-

६ श्रीधरीव्याख्या।

येन तं पुरुषं कर्माणि स्वफलैर्निबध्नन्ति। अतश्च ज्ञानेनाकर्त्रात्मबोधेन संछिन्नः संशयो देहाद्यभिमानलक्षणो यस्य तं चात्मवन्तमप्रमा-दिनं कर्माणि लोकसंग्रहार्थानि स्वाभाविकानि वा न निबध्नन्ति॥ ४१॥ तस्मादिति। यस्मादेवं तस्मादात्मनोऽज्ञानेन संभूतं हृदि

७ अभिनवगुप्ताचार्यव्याख्या।

योगसंन्यस्तेति। यत एवं तस्मादज्ञानेति योगेनैव कर्मणां संन्यास उपपद्यते नान्यथेति विचारितम्। विचारयिष्यते च। संशयं छित्त्वा योगं

१ मधुसूदनः।

१ श्रीमच्छांकरभाष्यम्।

**संशयः परेण छेत्तव्यतां प्राप्तो येन स्वस्येति विशेष्यतेऽत आत्मविषयोऽपि स्वस्यैव भवति। छित्त्वैनं संशयं स्वविनाशहेतुभूतं योगं सम्यग्दर्शनोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः। उत्तिष्ठ चेदानीं युद्धाय भारतेति॥ ४२॥**

**इति श्रीभगवद्गीताभाष्ये पूज्यपादश्रीशंकरभगवतः कृतौ ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः॥ ४॥**

२ आनन्दगिरिव्याख्या।

**आत्मविषयत्वादिति।** स्थाण्वादिविषयः संशयस्तद्विषयेण ज्ञानेन देवदत्तनिष्ठेन तन्निष्ठो व्यावर्त्यते, प्रकृते त्वात्मविषयस्तदाश्रयश्च संशयस्तथाविधेन ज्ञानेनापनीयते तेन विशेषणमर्थवदित्यर्थः। तदेव प्रपञ्चयति—**नहीति।** आत्माश्रयत्वस्य प्रकृते संशये सिद्धत्वेनाविवक्षितत्वात्तद्विषयस्य तद्विषयेणैव तस्य तेन निवृत्तिर्विवक्षितेत्युपसंहरति—**अत इति।** संशयसमुच्छित्त्यनन्तरं कर्तव्यमुपदिशति—**छित्त्वैनमिति।** अग्निहोत्रादिकं कर्म भगवदाज्ञया क्रमेण करिष्यामि युद्धात्पुनरुपरिरंसैवेत्याशङ्क्याह—**उत्तिष्ठेति।** भरतान्वये महति क्षत्रियवंशे प्रसूतस्य समुपस्थितसमरविमुखत्वमनुचितमिति मन्वानः सन्नाह—**भारतेति।** तदनेन योगस्य कृत्रिमत्वं भगवतोऽनीश्वरत्वं च निराकृत्य कर्मादावकर्मादिदर्शनादात्मनः सम्यग्ज्ञानात्प्रणिपातादेर्बहिरङ्गादन्तरङ्गाच्च श्रद्धादेरुद्भूतादशेषानर्थनिवृत्त्या ब्रह्मभावमभिदधता सर्वस्मादुत्कृष्टे तस्मिन्नसंशयानस्याधिकारादशेषदोषवन्तम्। संशयं हित्वोत्तमस्य ज्ञाननिष्ठापरस्य कर्मनिष्ठेति स्थापितम्॥ ४२॥॥ इत्यानन्दगिरिकृतगीताभाष्यटीकायां चतुर्थोऽध्यायः॥ ४॥

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

**योगं सम्यग्दर्शनोपायम्।** निष्कामकर्म आतिष्ठ कुरु। उत्तिष्ठ। युद्धायेति शेषः॥ ४२॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे चतुर्थोऽध्यायः॥ ४॥

४ मधुसूदनीव्याख्या।

सुखेन हन्तुं शक्यत इत्युभयोपन्यासः। एनं सर्वानर्थमूलभूतं संशयमात्मनो ज्ञानासिना आत्मविषयकनिश्चयखड्गेन छित्त्वा योगं सम्यग्दर्शनोपायं निष्कामकर्मातिष्ठ कुरु। अत इदानीमुत्तिष्ठ युद्धाय हे भारत, भरतवंशे जातस्य युद्धोद्यमो न निष्फल इति भावः॥ ४२॥ स्वस्यानीशत्वबाधेन भक्तिश्रद्धे दृढीकृते। धीहेतुः कर्मनिष्ठा च हरिणेहोपसंहृता॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां ज्ञानकर्मसंन्यासयोगो नाम चतुर्थोऽध्यायः॥ ४॥

५ भाष्योत्कर्षदीपिका।

ध्यते, तस्मात्पापिष्ठमात्मनः संशयं अज्ञानादविवेकाज्जातं बुद्धौ स्थितं शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेवासिः खड्गः तेनात्मनो ज्ञानासिना छित्त्वा योगमात्मज्ञानोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः। इदानीं तु स्वधर्मभूताय युद्धायोत्तिष्ठ। भारतेति तत्र योग्यतासूचकं संबोधनम्। तदनेन चतुर्थाध्यायेन योगस्य संप्रदायसिद्धत्वं भगवतो वासुदेवस्य सर्वज्ञत्वमीश्वरत्वं च प्रतिपाद्य योग्यतासंपत्तये कर्मनिष्ठां तत्साध्यां ज्ञाननिष्ठामत्युत्तमां तत्र प्रणिपातादीनि बहिरङ्गसाधनानि श्रद्धादीन्यन्तरङ्गाणि तस्याः फलं सर्वानर्थनिवृत्त्या ब्रह्मभावं अतिपापिष्ठं संशयं चाभिदधताऽशेषदोषवन्तं संशयं विहायोत्तमाधिकारिणो ज्ञाननिष्ठाऽपरस्य कर्मनिष्ठेति स्थापितम्॥ ४२॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां चतुर्थोऽध्यायः॥ ४॥

६ श्रीधरीव्याख्या।

स्थितमेनं संशयं शोकादिनिमित्तं देहात्मविवेकज्ञानखड्गेन छित्त्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठाश्रय। तत्र च प्रथमं प्रस्तुताय युद्धायोत्तिष्ठ। हे भारत, इति क्षत्रियत्वेन युद्धस्य स्वधर्मत्वं दर्शितम्॥ ४२॥ पुमवस्थादिभेदेन कर्मज्ञानमयी द्विधा। निष्ठोक्ता येन तं वन्दे शौरिं संशयसंच्छिदम्॥ १॥ इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां चतुर्थोऽध्यायः॥ ४॥

७ अभिनवगुप्ताचार्यव्याख्या।

कर्मसु कौशलमुक्तक्रमेणातिष्ठ। ततश्चोत्तिष्ठ त्वं स्वव्यापारं कर्तव्यतामात्रेण कुर्विति शिवम्॥ ४१॥ ४२॥ अत्रार्थे संग्रहः—विधत्ते कर्म यत्किंचिदक्षेच्छामात्रपूर्वकम्। तेनैव शुभभाजः स्युस्तृप्ताः कुरुत देवताः॥ इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे चतुर्थोऽध्यायः॥ ४॥



# पञ्चमोऽध्यायः ।

अर्जुन उवाच ।

**संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**'कर्मण्यकर्म यः पश्येत्' इत्यारभ्य 'स युक्तः कृत्स्नकर्मकृत्', 'ज्ञानाग्निदग्धकर्माणं', 'शारीरं केवलं कर्म कुर्वन्', 'यदृच्छालाभसंतुष्टो', 'ब्रह्मार्पणं ब्रह्म हविः', 'कर्मजान्विद्धि तान्सर्वान्', 'सर्वं कर्माखिलं पार्थ', 'ज्ञानाग्निः सर्वकर्माणि', 'योगसंन्यस्तकर्माणम्' इत्यन्तैर्वचनैः सर्वकर्मसंन्यासमवोचद्भगवान्**

२ आनन्दगिरिव्याख्या ।

पूर्वोत्तराध्याययोः संबन्धमभिदधानो वृत्तानुवादपूर्वकमर्जुनप्रश्नस्याभिप्रायं प्रदर्शयितुं प्रक्रमते—**कर्मणीत्यादिना** । इत्यारभ्य कर्मण्यकर्मदर्शनमुक्त्वा तत्प्रशंसा प्रसारितेत्याह—**स युक्त इति** । ज्ञानवन्तं सर्वाणि कर्माणि लोकसंग्रहार्थं कुर्वन्तं ज्ञानलक्षणेनाग्निना दग्धसर्वकर्माणं कर्मप्रयुक्तबन्धविधुरं विवेकवन्तो वदन्तीति ज्ञानवतो ज्ञानफलभूतं संन्यासं विवक्षन्विविदिषोः साधनरूपमपि संन्यासं भगवान्विवक्षितवानित्याह—**ज्ञानाग्नीति** । निराशीरित्यारभ्य शरीरस्थितिमात्रकारणं कर्म शरीरस्थितावपि सङ्गरहितः सन्नाचरन्धर्माधर्मफलभागी न भवतीत्यपि पूर्वोत्तराभ्यामध्यायाभ्यां द्विविधं संन्यासं सूचितवानित्याह—**शारीरमिति** । यदृच्छेत्यादावपि संन्यासः सूचितस्तद्धर्मफलायोपदेशादित्याह—**यदृच्छेति** । ज्ञानस्य यज्ञत्वसंपादनपूर्वकं प्रशंसावचनादपि कर्मसंन्यासो दर्शितो ज्ञाननिष्ठस्येत्याह—**ब्रह्मार्पणमिति** । ज्ञानयज्ञस्तुत्यर्थं नानाविधान्यज्ञाननूद्य तेषां देहादिव्यापारजन्यत्ववचनेनात्मनो निर्व्यापारत्वविज्ञानफलाभिलाषादपि यथोक्तमात्मानं विविदिषोः सर्वकर्मसंन्यासेऽधिकारो ध्वनित इत्याह—**कर्मजानिति** । समस्तस्यैवावशेषवर्जितस्य कर्मणो ज्ञाने पर्यवसानाभिधानाच्च जिज्ञासोः सर्वकर्मसंन्यासः सूचित इत्याह—**सर्वमिति** । तद्विद्धीत्यादिना ज्ञानप्राप्त्युपायं प्रणिपातादि प्रदर्श्य प्राप्तेन ज्ञानेनातिशयमाहात्म्यवता सर्वकर्मणां निवृत्तिरेवेति वदता च ज्ञानार्थिनः संन्यासेऽधिकारो दर्शितो भगवतेत्याह—**ज्ञानाग्निरिति** । ज्ञानेन समुच्छिन्नसंशयं तस्मादेव ज्ञानात्कर्माणि संन्यस्य व्यवस्थितमप्रमत्तं वशीकृतकार्यकरणसंघातवन्तं प्रातिभासिकानि कर्माणि न निबध्नन्तीत्यपि द्विविधः संन्यासो भगवतोक्त इत्याह—**योगेति** । कर्मणीत्यारभ्य योगसंन्यस्तकर्माणमित्यन्तैरुदाहृतैर्वचनैरुक्तं संन्यासमुपसंहरति—**इत्यन्तैरिति** । तर्हि कर्मसंन्यासस्यैव जिज्ञासुना ज्ञानवता चादरणीयत्वात्कर्मानुष्ठानमनादेयमापन्न-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

तृतीयेऽध्याये 'लोकेऽस्मिन्द्विविधा निष्ठा' इति विभिन्नाधिकारिकं निष्ठाद्वयं प्रस्तुत्य 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इत्यादिना कर्मनिष्ठाया ज्ञाननिष्ठाङ्गत्वेन भूयसा निर्बन्धेनानुष्ठेयत्वमुक्तम् 'कर्मण्येवाधिकारस्ते' इत्यादिना। चतुर्थे तूत्पन्नसम्यग्दर्शनैः कृतमपि कर्माकृतमेव भवति ज्ञानेन कर्तृत्वादिबाधात् । अतस्तैर्वृथाचेष्टावत्कर्म वा कर्तव्यं

४ मधुसूदनीव्याख्या ।

अध्यायाभ्यां कृतो द्वाभ्यां निर्णयः कर्मबोधयोः । कर्मतत्त्यागयोर्द्वाभ्यां निर्णयः क्रियतेऽधुना ॥

तृतीयेऽध्याये 'ज्यायसी चेत्कर्मणस्ते' इत्यादिनाऽर्जुनेन पृष्टो भगवाञ्ज्ञानकर्मणोर्विकल्पसमुच्चयासंभवेनाधिकारिभेदव्यवस्थया 'लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मया' इत्यादिना निर्णयं कृतवान् । तथाचाज्ञाधिकारिकं कर्म न ज्ञानेन सह समुच्चीयते तेजस्तिमिरयोरिव युगपदसंभवात्, कर्माधिकारहेतुभेदबुद्ध्यपनोदकत्वेन ज्ञानस्य तद्विरोधित्वात् । नापि विकल्प्यते एकार्थत्वाभावात्, ज्ञानकार्यस्याज्ञाननाशस्य कर्मणा कर्तुमशक्यत्वात् । 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः । ज्ञाने जाते तु कर्मकार्यं नापेक्ष्यत एवेत्युक्तं 'यावानर्थ उदपाने' इत्यत्र । तथाच ज्ञानिनः कर्मा-

५ भाष्योत्कर्षदीपिका ।

'निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् । यदृच्छालाभसंतुष्टः' इत्यादिना सर्वकर्मसंन्यासं 'छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत' इति कर्मयोगं च श्रुत्वोभयोश्च स्थितिगतिवत्परस्परविरोधादेकेन सह कर्तुमशक्य-

६ श्रीधरीव्याख्या ।

निवार्य संशयं जिष्णोः कर्मसंन्यासयोगयोः । जितेन्द्रियस्य च यतेः पञ्चमे मुक्तिमब्रवीत् ॥ १ ॥ अज्ञानसंभूतं संशयं ज्ञानासिना

१ श्रीमच्छांकरभाष्यम्।

**'छित्त्वैनं संशयं योगमातिष्ठ' इत्यनेन वचनेन योगं च कर्मानुष्ठानलक्षणमनुतिष्ठेत्युक्तवान्। तयोरुभयोश्च कर्मानुष्ठानकर्मसंन्यासयोः स्थितिगतिवत्परस्परविरोधादेकेन सह कर्तुमशक्यत्वात्कालभेदेन चानुष्ठानविधानाभावादर्थादेतयोरन्यतरकर्तव्यताप्राप्तौ सत्यां यत्प्रशस्यतरमेतयोः कर्मानुष्ठानकर्मसंन्यासयोस्तत्कर्तव्यं नेतरदित्येवं मन्यमानः प्रशस्यतरबुभुत्सयार्जुन उवाच—संन्यासं कर्मणां कृष्णे-**

२ आनन्दगिरिव्याख्या।

मित्याशङ्क्योक्तमर्थान्तरमनुवदति—**छित्त्वैनमिति**। कर्मतत्त्यागयोरुक्तयोरेकेनैव पुरुषेणानुष्ठेयत्वसंभवान्न विरोधोऽस्तीत्याशङ्क्य युगपद्वा क्रमेण वानुष्ठानमिति विकल्प्याद्यं दूषयति—**उभयोश्चेति**। द्वितीयं प्रत्याह—**कालभेदेनेति**। उक्तयोर्द्वयोरेकेन पुरुषेणानुष्ठेयत्वासंभवे कथं कर्तव्यत्वसिद्धिरित्याशङ्क्याह—**अर्थादिति**। द्वयोरुक्तयोरेकेन युगपत्क्रमाभ्यामनुष्ठानानुपपत्तेरित्यर्थः। अन्यतरस्य कर्तव्यत्वे कतरस्येति कुतो निर्णयो द्वयोः संनिधानाविशेषादित्याशङ्क्याह—**यत्प्रशस्यतरमिति**। भगवता कर्मणां संन्यासो योगश्चोक्तो नच तयोः समुच्चित्यानुष्ठानं तेनान्यतरस्य श्रेष्ठस्यानुष्ठेयत्वे तद्बुभुत्सया प्रश्नोपपत्तिरित्युपसंहरति—**इत्येवमिति**। नायं प्रष्टुरभिप्रायः कर्मसंन्यासकर्मयोगयोर्भिन्न-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

संन्यासो वा कर्तव्य इत्यनास्थया प्रोक्तम्। अथेदानीं पञ्चमषष्ठयोरज्ञानिना ज्ञानार्थिना वैराग्योत्पत्तेः प्राक्कर्मैवानुष्ठेयम्। संपन्ने तु वैराग्ये दृष्टविक्षेपनिवृत्त्यर्थं कर्मसंन्यासं कृत्वा ज्ञानोत्पत्त्यर्थं योगोऽनुष्ठेय इत्युच्यते। तत्र चतुर्थे 'त्यक्तसर्वपरिग्रहः' इति संन्यासो 'योगमातिष्ठ' इति कर्मयोगश्चैकं मां प्रति विहितः। नचैतयोः स्थितिगतिवद्युगप-

४ मधुसूदनीव्याख्या।

नधिकारे निश्चिते प्रारब्धकर्मवशाद्वृथाचेष्टारूपेण तदनुष्ठानं वा सर्वकर्मसंन्यासो वेति निर्विवादं चतुर्थे निर्णीतम्। अज्ञेन त्वन्तःकरणशुद्धिद्वारा ज्ञानोत्पत्तये कर्माण्यनुष्ठेयानि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुतेः, 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति भगवद्वचनाच्च। एवं सर्वाणि कर्माणि ज्ञानार्थानि, तथा सर्वकर्मसंन्यासोऽपि ज्ञानार्थः श्रूयते 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति', 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्', 'त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम्', 'सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' इत्यादौ। तत्र कर्मतत्त्यागयोरारादुपकारकसन्निपत्योपकारकयोः प्रयाजावघातयोरिव न समुच्चयः संभवति विरुद्धत्वेन यौगपद्याभावात्। नापि कर्मतत्त्यागयोरात्मज्ञानमात्रफलत्वेनैकार्थत्वादतिरात्रार्थयोः षोडशिग्रहणाग्रहणयोरिव विकल्पः स्यात्, द्वारभेदेनैकार्थत्वाभावात्। कर्मणो हि पापक्षयरूपमदृष्टमेव द्वारम्, संन्यासस्य तु सर्वविक्षेपाभावेन विचारावसरदानरूपं दृष्टमेव द्वारम्, नियमापूर्वं तु दृष्टसमवायित्वादवघातादाविव न प्रयोजकम्। तथा चादृष्टार्थदृष्टार्थयोरारादुपकारकसन्निपत्योपकारकयोरेकप्रधानार्थत्वेऽपि विकल्पो नास्त्येव। प्रयाजावघातादीनामपि तत्प्रसङ्गात्। तस्मात्क्रमेणोभयमप्यनुष्ठेयम्। तत्रापि संन्यासानन्तरं कर्मानुष्ठानं चेत्तदा परित्यक्तपूर्वाश्रमस्वीकारेणारूढपतितत्वात्कर्मानधिकारित्वं प्राक्तनसंन्यासवैयर्थ्यं च तस्यादृष्टार्थत्वाभावात्। प्रथमकृतसंन्यासेनैव ज्ञानाधिकारलाभे तदुत्तरकाले कर्मानुष्ठानवैयर्थ्यं च। तस्मादादौ भगवदर्पणबुद्ध्या निष्कामकर्मानुष्ठानादन्तःकरणशुद्धौ तीव्रेण वैराग्येण विविदिषायां दृढायां सर्वकर्मसंन्यासः श्रवणमननादिरूपवेदान्तवाक्यविचाराय कर्तव्य इति भगवतो मतम्। तथाचोक्तं 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इति। वक्ष्यते च 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते॥' इति। योगोऽत्र तीव्रवैराग्यपूर्विका विविदिषा। तदुक्तं वार्तिककारैः 'प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः। ब्रह्मावाप्त्यै तु तत्त्यागमीप्सन्तीति श्रुतेर्बलात्॥' इति। स्मृतिश्च 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते॥' इति। मोक्षधर्मे च 'कषायं पाचयित्वा च श्रेणीस्थानेषु च त्रिषु। प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम्॥ भावितैः करणैश्चायं बहुसंसारयोनिषु। आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे॥ तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः। त्रिष्वाश्रमेषु को न्वर्थो भवेत्परमभीप्सितः॥' इति। मोक्षं वैराग्यम्। एतेन क्रमाक्रमसंन्यासौ द्वावपि दर्शितौ। तथाच श्रुतिः 'ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेद्यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति। तस्मादज्ञस्याविरक्ततादशायां कर्मानुष्ठानमेव। तस्यैव विरक्ततादशायां संन्यासः श्रवणाद्यवसरदानेन ज्ञानार्थं इति दशाभेदेनाज्ञमधिकृत्यैव कर्मतत्त्यागौ व्याख्यातुं पञ्चमषष्ठावध्यायावारभ्येते। विद्वत्संन्यासस्तु ज्ञानबलादर्थसिद्ध एवेति संदेहाभावान्नात्र विचार्यते। तत्रैकमेव जिज्ञासुमज्ञं प्रति ज्ञानार्थत्वेन कर्मतत्त्यागयोर्विधानात्तयोश्च विरुद्धयोर्युगपदनुष्ठानासंभवान्मया जिज्ञासुना

५ भाष्योत्कर्षदीपिका।

त्वात् कालभेदेन विधानाभावादर्थात्तयोरन्यतरस्य कर्तव्यताप्राप्तौ सत्यामज्ञस्याशुद्धचेतस एतयोः संन्यासकर्मयोगयोः किं श्रेयस्कर-

१ श्रीमच्छांकरभाष्यम् ।

त्यादिना । ननु चात्मविदो ज्ञानयोगेन निष्ठां प्रतिपादयिष्यन्पूर्वोदाहृतैर्वचनैर्भगवान्सर्वकर्मसंन्यासमवोचन्न त्वनात्मज्ञस्य । अतश्च कर्मानुष्ठानकर्मसंन्यासयोर्भिन्नपुरुषविषयत्वादन्यतरस्य प्रशस्यतरत्वबुभुत्सया प्रश्नोऽनुपपन्नः । सत्यमेव त्वदभिप्रायेण प्रश्नो नोपपद्यते प्रष्टुः स्वाभिप्रायेण पुनः प्रश्नो युज्यत एवेति वदामः । कथं, पूर्वोदाहृतैर्वचनैर्भगवता कर्मसंन्यासस्य कर्तव्यतया विवक्षितत्वात्प्राधान्यमन्तरेण च कर्तारं तस्य कर्तव्यत्वासंभवादनात्मविदपि कर्ता पक्षे प्राप्तोऽनूद्यत इति न पुनरात्मवित्कर्तृकत्वमेव संन्यासस्य विवक्षितमित्येवं मन्वानस्यार्जुनस्य कर्मानुष्ठानकर्मसंन्यासयोरविद्वत्पुरुषकर्तृकत्वमप्यस्तीति पूर्वोक्तेन प्रकारेण तयोः परस्परविरोधादन्यतरस्य कर्तव्यत्वे प्राप्ते प्रशस्यतरं च कर्तव्यं नेतरदिति प्रशस्यतरविविदिषया प्रश्नो नानुपपन्नः । प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टुरभिप्राय एवमेवेति गम्यते । कथं संन्यासकर्मयोगौ निःश्रेयसकरौ, 'तयोस्तु—कर्मयोगो विशिष्यते' इति प्रतिवचनमेतन्निरूप्यं, किमनेनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोर्निःश्रेयसकरत्वं प्रयोजनमुक्त्वा तयोरेव कुतश्चिद्विशेषात्कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वमुच्यत आहोस्विदनात्मवित्कर्तृकयोः संन्यासकर्मयोगयोस्तदुभयमुच्यत इति । किंचातो यद्यात्मवित्कर्तृकयोः कर्मसंन्यासकर्मयोगयोर्निःश्रेयसकरत्वं तयोस्तु कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वमुच्यते यदि वानात्मवित्कर्तृकयोः

२ आनन्दगिरिव्याख्या ।

पुरुषानुष्ठेयत्वस्योक्तत्वादेकस्मिन्पुरुषे प्राप्त्यभावादिति शङ्कते—नन्विति । चोद्यमङ्गीकृत्य परिहरति—सत्यमेवेति । कीदृशस्तर्हि प्रष्टुरभिप्रायो येन प्रश्नप्रवृत्तिरिति पृच्छति—कथमिति । एकस्मिन्पुरुषे कर्मतत्त्यागयोरस्ति प्राप्तिरिति प्रष्टुरभिप्रायं प्रतिनिर्देष्टुं प्रारभते—पूर्वोदाहृतैरिति । यथा 'स्वर्गकामो यजेत' इति स्वर्गकामोद्देशेन यागो विधीयते नतु तस्यैवाधिकारो नान्यस्येत्यपि प्रतिपाद्यते वाक्यभेदप्रसङ्गात्तथानात्मवित्कर्ता संन्यासपक्षे प्राप्तोऽनूद्यते, नचात्मवित्कर्तृकत्वमेव संन्यासस्य नियम्यते वैराग्यमात्रेणाज्ञस्यापि संन्यासविधिदर्शनात् । तस्मात्कर्मतत्त्यागयोरविद्वत्कर्तृकत्वमस्तीति मन्वानस्यार्जुनस्य प्रश्नः संभवतीति भावः । भवतु संन्यासस्य कर्तव्यत्वविवक्षा तथापि कथं प्रशस्यतरबुभुत्सया प्रश्नप्रवृत्तिरित्याशङ्क्याह—प्राधान्यमिति । तथापि कथमेकस्मिन्पुरुषे तयोरप्राप्तावुक्ताभिप्रायेण प्रश्नवचनं प्रकल्प्यते तत्राह—अनात्मविदपीति । आत्मविदो विद्यासामर्थ्यात्कर्मत्यागध्रौव्यवदितरस्यापि सति वैराग्ये तत्त्यागस्यावश्यकत्वात्तत्र कर्तासौ प्राप्तोऽत्रानूद्यते । तथाच कर्मतत्त्यागयोरेकस्मिन्नविदुषि प्राप्तेर्व्यक्तत्वादुक्ताभिप्रायेण प्रश्नप्रवृत्तिरविरुद्धेत्यर्थः । संन्यासस्यात्मवित्कर्तृकत्वमेवात्र विवक्षितं किं न स्यादित्याशङ्क्य कर्त्रन्तरपर्युदासः संन्यासविधिश्चेत्यर्थभेदे वाक्यभेदप्रसङ्गान्मैवमित्याह—इति न पुनरिति । इतिशब्दो वाक्यभेदप्रसङ्गहेतुद्योतनार्थः । ततः किमित्याशङ्क्य फलितमाह—एवमिति । कर्मानुष्ठानकर्मसंन्यासयोरविद्वत्कर्तृकत्वमप्यस्तीत्येवं मन्वानस्यार्जुनस्य प्रशस्यतरविविदिषया प्रश्नो नानुपपन्न इति संबन्धः । तयोः समुच्चित्यानुष्ठानसंभवे कथं प्रशस्यतरविविदिषेत्याशङ्क्याह—पूर्वोक्तेनेति । उभयोश्चेत्यादावुक्तप्रकारेण कर्मतत्त्यागयोर्मिथो विरोधान्न समुच्चित्यानुष्ठानं सावकाशमित्यर्थः । भवतु तर्हि यस्य कस्यचिदन्यतरस्यानुष्ठेयत्वमिति कुत उक्ताभिप्रायेण प्रश्नप्रवृत्तिरित्याशङ्क्याह—अन्यतरस्येति । उभयप्राप्तौ समुच्चयानुपपत्तावन्यतरपरिग्रहे विशेषस्यान्वेष्यत्वादुक्ताभिप्रायेण प्रश्नोपपत्तिरित्यर्थः । इतश्चाविद्वत्कर्तृकयोः संन्यासकर्मयोगयोः कतरः श्रेयानिति प्रष्टुरभिप्रायो भातीत्याह—प्रतिवचनेति । किं तत्प्रतिवचनं कथं वा तन्निरूपणमिति पृच्छति—कथमिति । तत्र प्रतिवचनं दर्शयति—संन्यासेति । तन्निरूपणं कथयति—एतदिति । तदुभयमिति निःश्रेयसकरत्वं कर्मयोगस्य श्रेष्ठत्वं चेत्यर्थः । गुणदोषविभागविवेकार्थं पृच्छति—किंचेति । अतोऽस्मि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

देकेन मयानुष्ठानं कर्तुं शक्यते परस्परविरुद्धत्वादिति मन्वानोऽर्जुन उवाच—संन्यासमिति । हे कृष्ण पापकर्षण, मे मह्यं ज्ञानार्थिने संन्यासं कर्मयोगं चेति द्वयं परस्परविरुद्धं कथं शंससि कथयसि । पुनरित्यनेन प्रागपि त्वया

४ मधुसूदनीव्याख्या ।

किमिदानीमनुष्ठेयमिति संदिहानः अर्जुन उवाच—हे कृष्ण सदानन्दरूप, भक्तदुःखकर्षणेति वा । कर्मणां यावज्जीवादिश्रुतिविहितानां नित्यानां नैमित्तिकानां च संन्यासं त्यागं जिज्ञासुमज्ञं प्रति कथयसि, वेदमुखेन पुनस्तद्विरुद्धं योगं

५ भाष्योत्कर्षदीपिका ।

मिति बुभुत्सयार्जुन उवाच—संन्यासमिति । संन्यासं परित्यागं कर्मणां शास्त्रीयाणामनुष्ठानविशेषाणां पुनस्तेषामनुष्ठानं च ।

६ श्रीधरीव्याख्या ।

छित्वा कर्मयोगमातिष्ठेत्युक्तं तत्र पूर्वापरविरोधं मन्वानोऽर्जुन उवाच—संन्यासमिति । 'यस्त्वात्मरतिरेव स्यात्' इत्यादिना 'सर्वं

१ श्रीमच्छांकरभाष्यम्।

संन्यासकर्मयोगयोस्तदुभयमुच्यत इति। अत्रोच्यते—आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोरसंभवात्तयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वाभिधानमित्येतदुभयमनुपपन्नम्। यद्यनात्मविदः कर्मसंन्यासस्तत्प्रतिकूलश्च कर्मानुष्ठानलक्षणः कर्मयोगः संभवेतां तदा तयोर्निःश्रेयसकरत्वोक्तिः कर्मयोगस्य च कर्मसंन्यासाद्विशिष्टत्वाभिधानमित्येतदुभयमुपपद्येत, आत्मविदस्तु संन्यासकर्मयोगयोरसंभवात्तयोर्निःश्रेयसकरत्वाभिधानं कर्मसंन्यासाच्च कर्मयोगो विशिष्यत इति चानुपपन्नम्। अत्राह, किमात्मविदः संन्यासकर्मयोगयोरप्यसंभव आहोस्विदन्यतरस्यासंभवः, यदा चान्यतरस्यासंभवस्तदा किं कर्मसंन्यासस्योत कर्मयोगस्येत्यसंभवे कारणं च वक्तव्यमिति। अत्रोच्यते, आत्मविदो निवृत्तमिथ्याज्ञानत्वाद्विपर्ययज्ञानमूलस्य कर्मयोगस्यासंभवः स्याज्जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन यो वेत्ति तस्यात्मविदः सम्यग्दर्शनेनापास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्मसंन्यासमुक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलककर्तृत्वाभिमानपुरःसरस्य सक्रियात्मस्वरूपावस्थानरूपस्य कर्मयोगस्येह शास्त्रे तत्रतत्रात्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधादभावः प्रतिपाद्यते यस्मात्तस्मादात्मविदो निवृत्तमिथ्याज्ञानस्य विपर्ययज्ञानमूलः कर्मयोगो न संभवतीति युक्तमुक्तं स्यात्, केषु केषु पुनरात्मस्वरूपनिरूपणप्रदेशेष्वात्मविदः कर्माभावः प्रतिपाद्यत इति। अत्रोच्यते 'अविनाशि तु तद्विद्धि' इति प्रकृत्य 'य एनं वेत्ति हन्तारं', 'वेदाविनाशिनं नित्यम्' इत्यादौ तत्र तत्रात्मविदः कर्माभाव उच्यते। ननु च कर्मयोगोऽप्यात्मस्वरूपनिरूपणप्रदेशेषु तत्र तत्र प्रतिपाद्यत एव, तद्यथा 'तस्माद्युध्यस्व भारत', 'स्वधर्ममपि चावेक्ष्य', 'कर्मण्येवाधिकारस्ते' इत्यादावतश्च कथमात्मविदः कर्मयोगस्यासंभवः स्यादिति। अत्रोच्यते—

२ आनन्दगिरिव्याख्या।

आद्ये पक्षे किं दूषणमस्मिन्वा द्वितीये पक्षे किं फलमिति प्रश्नार्थः। तत्र सिद्धान्ती प्रथमपक्षे दोषमादर्शयति—अत्रेत्यादिना। तदेवानुपपन्नत्वं व्यतिरेकद्वारा विवृणोति—यदीत्यादिना। निःश्रेयसकरत्वोक्तिरित्यत्र पारम्पर्येणेति द्रष्टव्यम्, विशिष्टत्वाभिधानमिति प्रतियोगिनोऽसहायत्वादस्य च शुद्धिद्वारा ज्ञानार्थत्वादित्यर्थः। आत्मज्ञस्य कर्मसंन्यासकर्मयोगयोरसंभवे दर्शिते चोदयति—अत्राहेति। चोदयिता निर्धारणार्थं विमृशति—किमित्यादिना। अन्यतरासंभवेऽपि संदेहात्प्रश्नोऽवतरतीत्याह—यदा चेति। यस्य कस्यचिदन्यतरस्यासंभवो भविष्यतीत्याशङ्क्य कारणमन्तरेणासंभवो भवन्नतिप्रसङ्गः स्यादिति मन्वानः सन्नाह—असंभव इति। आत्मविदः सकारणं कर्मयोगासंभवं सिद्धान्ती दर्शयति—अत्रेति। संग्रहवाक्यं विवृण्वन्नात्मवित्त्वं विवृणोति—जन्मादीति। तस्य यदुक्तं निवृत्तमिथ्याज्ञानत्वं तदिदानीं व्यनक्ति—सम्यगिति। विपर्ययज्ञानमूलस्येत्यादिनोक्तं प्रपञ्चयति—निष्क्रियेति। यथोक्तसंन्यासमुक्त्वा ततो विपरीतस्य कर्मयोगस्याभावः प्रतिपाद्यत इति संबन्धः। वैपरीत्यं स्फोरयन्कर्मयोगमेव विशिनष्टि—मिथ्याज्ञानेति। मिथ्या च तदज्ञानं चेत्यनाद्यनिर्वाच्यमज्ञानं तन्मूलोऽहं कर्तेत्यात्मनि कर्तृत्वाभिमानस्तज्जन्यस्तस्येति यावत्। यथोक्तं संन्यासमुक्त्वा यथोक्तकर्मयोगस्यासंभवप्रतिपादने हेतुमाह—सम्यग्ज्ञानेति। कुत्र तदभावप्रतिपादनं तदाह—इहेति। उक्तं हेतुं कृत्वात्मज्ञस्य कर्मयोगसंभवे फलितमाह—यस्मादिति। इह शास्त्रे तत्र तत्रेत्यादावुक्तमेव व्यक्तीकर्तुं पृच्छति—केषु केष्विति। तानेव प्रदेशान्दर्शयति—अत्रेति। आत्मस्वरूपनिरूपणप्रदेशेषु संन्यासप्रतिपादनादात्मविदः संन्यासो विवक्षितश्चेत्तर्हि कर्मयोगोऽपि तस्य कस्मान्न भवति प्रकरणाविशेषादिति शङ्कते—ननु चेति। आत्मविद्याप्रकरणे कर्मयोगप्रतिपादनमुदाहरति—तद्यथेति। प्रकरणादात्मविदोऽपि कर्मयोगस्य संभवे फलितमाह—अतश्चेति। आत्मज्ञानोपायत्वेनापि प्रकरणपाठसिद्धौ ज्ञानादूर्ध्वं न्यायविरुद्धं कर्म कल्पयितुमशक्यमिति परिहरति—अत्रोच्यत इति। सम्यग्ज्ञानमिथ्याज्ञानयोस्तत्कार्ययोश्च भ्रमनिवृत्तिभ्रमसद्भावयोर्मिथो

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

वेदकर्त्रा इदं द्वयं विहितमस्तीति गम्यते। तथाच श्रुतिस्मृती भवतः 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति'

४ मधुसूदनीव्याख्या।

च कर्मानुष्ठानरूपं शंससि। 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति', 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन'

५ भाष्योत्कर्षदीपिका।

'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति', 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादि-

६ श्रीधरीव्याख्या।

कर्माखिलं पार्थ' इत्यादिना च ज्ञानिनः कर्मसंन्यासं कथयसि। ज्ञानासिना संशयं छित्त्वा योगमातिष्ठेति पुनर्योगं च कथयसि। न

१ श्रीमच्छांकरभाष्यम् ।

सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् । 'ज्ञानयोगेन सांख्यानाम्' इत्यनेन सांख्यानामात्मतत्त्वविदामनात्मवित्कर्तृककर्मयोगनिष्ठातो निष्क्रियात्मस्वरूपावस्थानलक्षणाया ज्ञानयोगनिष्ठायाः पृथक्करणात्कृतकृत्यत्वेनात्मविदः प्रयोजनान्तराभावात् 'तस्य कार्यं न विद्यते' इति कर्तव्यान्तराभाववचनाच्च 'न कर्मणामनारम्भात्', 'संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः' इत्यादिवचनाच्चात्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात्, 'योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचनात्, 'शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम्' इति च शरीरस्थितिकारणातिरिक्तस्य कर्मणो निवारणात् 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शनश्रवणादिकर्मस्वात्मयाथात्म्यविदः करोमीति प्रत्ययस्य समाहितचेतस्तया सदाऽकर्तव्यत्वोपदेशादात्मतत्त्वविदः सम्यग्दर्शनविरुद्धो मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेऽपि न संभावयितुं शक्यते यस्मात्तस्मादनात्मवित्कर्तृकयोरेव संन्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसंन्यासात्पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसंन्यासविलक्षणात्सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयाद्यमनियमादिसहितत्वेन च दुरनुष्ठेयत्वात्सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानमित्येवं प्रतिवचन-

२ आनन्दगिरिव्याख्या ।

विरोधात्कर्तृत्वादिभ्रममूलं कर्म सम्यग्ज्ञानादूर्ध्वं न संभवतीत्यर्थः । आत्मज्ञस्य कर्मयोगासंभवे हेत्वन्तरमाह—**ज्ञानयोगेनेति** । इतश्चात्मविदो ज्ञानादूर्ध्वं कर्मयोगो न युक्तिमानित्याह—**कृतकृत्यत्वेनेति** । ज्ञानवतो नास्ति कर्मेत्यत्र कारणान्तरमाह—**तस्येति** । तर्हि ज्ञानवता कर्मयोगस्य हेयत्ववज्जिज्ञासुनापि तस्य त्याज्यत्वं ज्ञानप्राप्त्या तस्यापि पुरुषार्थसिद्धेरित्याशङ्क्य जिज्ञासोरस्ति कर्मयोगापेक्षेत्याह—**न कर्मणामिति** । स्वरूपोपकार्यङ्गमन्तरेणाङ्गिस्वरूपानिष्पत्तेर्ज्ञानार्थिना कर्मयोगस्य शुद्ध्यादिद्वारा ज्ञानहेतोरादेयत्वमित्यर्थः । तर्हि ज्ञानवतामपि ज्ञानफलोपकारित्वेन कर्मयोगो मृग्यतामित्याशङ्क्याह—**योगारूढस्येति** । उत्पन्नसम्यग्ज्ञानस्य कर्माभावे शरीरस्थितिहेतोरपि कर्मणोऽसंभवान्न तस्य शरीरस्थितिस्तदस्थितौ च कुतो जीवन्मुक्तिस्तदभावे च कस्योपदेष्टृत्वमुपदेशाभावे च कुतो ज्ञानोदयः स्यादित्याशङ्क्याह—**शारीरमिति** । विदुषोऽपि शरीरस्थितिरास्थिता चेत्तन्मात्रप्रयुक्तेषु दर्शनश्रवणादिषु कर्तृत्वाभिमानोऽपि स्यादित्याशङ्क्याह—**नैवेति** । तत्त्वविदित्यनेन च समाहितचेतस्तया करोमीति प्रत्ययस्य सदैवाकर्तव्यत्वोपदेशादिति संबन्धः । यत्तु विदुषः शरीरस्थितिनिमित्तकर्माभ्यनुज्ञाने तस्मिन्कर्तृत्वाभिमानोऽपि स्यादिति तत्राह—**शरीरेति** । आत्मयाथात्म्यविदस्तेष्वपि नाहं करोमीति प्रत्ययस्य नैव किंचित्करोमीत्यादावकर्तृत्वोपदेशान्न कर्तृत्वाभिमानसंभावनेत्यर्थः । यथोक्तोपदेशानुसंधानाभावे विदुषोऽपि करोमीति स्वाभाविकप्रत्ययद्वारा कर्मयोगः स्यादित्याशङ्क्याह—**आत्मतत्त्वेति** । यद्यपि विद्वान्यथोक्तमुपदेशं कदाचिन्नानुसंधत्ते तथापि तत्त्वविद्याविरोधान्मिथ्याज्ञानं तन्निमित्तं कर्म वा तस्य संभावयितुमशक्यमित्यर्थः । आत्मवित्कर्तृकयोः संन्यासकर्मयोगयोरयोगात्तयोर्निःश्रेयसकरत्वमन्यतरस्य विशिष्टत्वमित्येतदयुक्तमिति सिद्धत्वाद्द्वितीयं पक्षमङ्गीकरोति—**यस्मादित्यादिना** । तदीयाच्च कर्मसंन्यासात्कर्मयोगस्य विशिष्टत्वाभिधानमिति संबन्धः । ननु कर्मयोगेन शुद्धबुद्धेः संन्यासो जायमानस्तस्मादुत्कृष्यते कथं तस्मात्कर्मयोगस्योत्कृष्टत्ववाचोयुक्तिर्युक्तेति तत्राह—**पूर्वोक्तेति** । वैलक्षण्यमेव स्पष्टयति—**सत्येवेति** । स्वाश्रमविहितश्रवणादौ कर्तृत्वविज्ञाने सत्येव पूर्वाश्रमोपात्तकर्मैकदेशविषयसंन्यासात्कर्मयोगस्य श्रेयस्त्ववचनं 'नैतादृशं ब्राह्मणस्यास्ति वित्तम्' इत्यादिस्मृतिविरुद्धमित्याशङ्क्याह—**यमनियमादीति** । 'आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम् । प्रीतिः प्रसादो माधुर्यमक्रोधश्च यमा दश ॥ दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ । व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥' इत्युक्तैर्यमनियमैरन्यैश्चाश्रमधर्मैर्विशिष्टत्वेनानुष्ठातुमशक्यत्वादुक्तसंन्यासा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'संसारमेवं निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमास्थिताः ॥' इति च । तथा 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति, 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इति च ।

४ मधुसूदनीव्याख्या ।

इत्यादिवाक्यद्वयेन । 'निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥', 'छित्त्वैनं संशयं

५ भाष्योत्कर्षदीपिका ।

वेदमूलकैः पूर्वोक्तैर्वचनैः शंससि कथयसि । कृष्णेति संबोधयन् मया त्यागः कर्तव्य उत कर्मानुष्ठेयमिति तत्रतत्र मच्चित्ताकर्षणं

६ श्रीधरीव्याख्या ।

च कर्मसंन्यासः कर्मयोगश्चैकस्यैकदैव संभवतः, विरुद्धस्वरूपत्वात् । तस्मादेतयोर्मध्ये एकस्मिन्ननुष्ठातव्ये सति मम यच्छ्रेयः श्रेष्ठं

**श्रीभगवानुवाच । संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

वाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयत इति स्थितम् । 'ज्यायसी चेत्कर्मणस्ते' इत्यत्र ज्ञानकर्मणोः सहाऽसंभवे 'यच्छ्रेय एतयोस्तन्मे ब्रूहि' इत्येवं पृष्टोऽर्जुनेन भगवान्सांख्यानां संन्यासिनां ज्ञानयोगेन निष्ठा पुनः कर्मयोगेन योगिनां निष्ठा प्रोक्तेति निर्णयं चकार । नच संन्यसनादेव केवलात्सिद्धिं समधिगच्छतीति वचनाज्ज्ञानसहितस्य तस्य सिद्धिसाधनत्वमिष्टं कर्मयोगस्य च विधानात् । ज्ञानरहितस्य संन्यासः श्रेयान्किं वा कर्मयोगः श्रेयानित्येतयोर्विशेषबुभुत्सयार्जुन उवाच—संन्यासं परित्यागं कर्मणां शास्त्रीयाणामनुष्ठानविशेषाणां शंससि कथयसीत्येतत् । पुनर्योगं च तेषामेवानुष्ठानमवश्यकर्तव्यं शंसस्यतो मे कतरच्छ्रेय इति संशयः किं कर्मानुष्ठानं श्रेयः किं वा तद्धानमिति प्रशस्यतरं चानुष्ठेयमतश्च यच्छ्रेयः प्रशस्यतरमेतयोः कर्मसंन्यासकर्मानुष्ठानयोर्यदनुष्ठानाच्छ्रेयोवाप्तिर्मम स्यादिति मन्यसे तदेकमन्यतरत्सहैकपुरुषानुष्ठेयत्वासंभवान्मे ब्रूहि सुनिश्चितमभिप्रेतं तवेति ॥ १ ॥ स्वाभिप्रायमाचक्षाणो निर्णयाय श्रीभगवानुवाच । संन्यासः कर्मणां परित्यागः

२ आनन्दगिरिव्याख्या ।

त्कर्मयोगस्य विशिष्टत्वोक्तिर्युक्तेत्यर्थः । नहि कश्चिदिति न्यायेन कर्मयोगस्येतरापेक्षया सुकरत्वाच्च तस्य विशिष्टत्ववचनं श्लिष्टमित्याह—**सुकरत्वेन चेति** । प्रतिवचनवाक्यार्थालोचनात्सिद्धमर्थमुपसंहरति—**इत्येवमिति** । संन्यासकर्मयोगयोर्मिथोविरुद्धयोः समुच्चित्यानुष्ठातुमशक्ययोरन्यतरस्य कर्तव्यत्वे प्रशस्यतरस्य तद्भावात्तद्भावस्य चानिर्धारितत्वात्तन्निर्दिधारयिषया प्रश्नः स्यादिति प्रश्नवाक्यार्थपर्यालोचनया प्रष्टुरभिप्रायो यथा पूर्वमुपदिष्टस्तथा प्रतिवचनार्थनिरूपणेनापि तस्य निश्चितत्वात्प्रश्नोपपत्तिः सिद्धेत्यर्थः । ननु तृतीये यथोक्तप्रश्नस्य भगवता निर्णीतत्वान्नात्र प्रश्नप्रतिवचनयोः सावकाशत्वमित्याशङ्क्य विस्तरेणोक्तमेव संबन्धं पुनः संक्षेपतो दर्शयति—**ज्यायसी चेदिति** । सांख्ययोगयोर्भिन्नपुरुषानुष्ठेयत्वेन निर्णीतत्वान्न पुनः प्रश्नयोग्यत्वमित्यर्थः । इतोऽपि न तयोः प्रश्नविषयत्वमित्याह—**नचेति** । एवकारविशेषणाज्ज्ञानसहितसंन्यासस्य सिद्धसाधनत्वं भगवतोऽभिमतं, 'छित्त्वैनं संशयं योगमातिष्ठ' इति च कर्मयोगस्य विधानात्तस्यापि सिद्धसाधनत्वमिष्टं, ततश्च निर्णीतत्वान्न प्रश्नस्तद्विषयः सिध्यतीत्यर्थः । केनाभिप्रायेण तर्हि प्रश्नः स्यादित्याशङ्क्य ज्ञानरहितसंन्यासात्कर्मयोगस्य प्रशस्यतरत्वबुभुत्सयेत्याह—**ज्ञानरहित इति** । प्रष्टुरभिप्रायमेवं प्रदर्श्य प्रश्नोपपत्तिमुक्त्वा प्रश्नमुत्थापयति—**संन्यासमिति** । तर्हि द्वयं त्वयानुष्ठेयमित्याशङ्क्य तदशक्तेरुक्तत्वात्प्रशस्यतरस्यानुष्ठानार्थं तदिदमिति निश्चित्य वक्तव्यमित्याह—**यच्छ्रेय इति** । काम्यानां प्रतिषिद्धानां च कर्मणां परित्यागो मयोच्यते न सर्वेषामित्याशङ्क्य कर्मण्यकर्मेत्यादौ विशेषदर्शनान्मैवमित्याह—**शास्त्रीयाणामिति** । अस्तु तर्हि शास्त्रीयाशास्त्रीययोरशेषयोरपि कर्मणोस्त्यागो नेत्याह—**पुनरिति** । तर्हि कर्मत्यागस्तद्योगश्चेत्युभयमाहर्तव्यमित्याशङ्क्य विरोधान्मैवमित्यभिप्रेत्याह—**अत इति** । द्वयोरेकेनानुष्ठानायोगस्योक्तत्वात्कर्तव्यत्वोक्तेश्च संशयो जायते तमेव संशयं विशदयति—**किं कर्मेति** । प्रशस्यतरबुभुत्सा किमर्थेत्याशङ्क्याह—**प्रशस्यतरं चेति** । तस्यैवानुष्ठेयत्वे प्रश्नस्य सावकाशत्वमाह—**अतश्चेति** । तदेव प्रशस्यतरं विशिनष्टि—**यदनुष्ठानादिति** । तदेकमन्यतरन्मे ब्रूहीति संबन्धः । उभयोरुक्तत्वे सति किमित्येकं वक्तव्यमिति नियुज्यते तत्राह—**सहेति** । कर्मतत्त्यागयोर्मिथो विरोधादित्यर्थः ॥ १ ॥ प्रश्नमेवमुत्थाप्य प्रतिवचनमुत्थापयति—**स्वाभिप्रायमिति** । निर्णयाय तद्द्वारेण परस्य संशयनिवृत्त्यर्थमित्यर्थः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ब्राह्मी ब्रह्मदर्शनयोग्या । अत एतयोः श्रुतिविहितत्वेन प्रशस्तयोर्मध्ये एकं श्रेयः प्रशस्यतरं यत्तन्मे सुनिश्चितं ब्रूहीति प्रश्नः ॥ १ ॥ अस्योत्तरं भगवानुवाच—**संन्यास इति** । निःश्रेयसकरौ ज्ञानोत्पत्तिहेतुतया । तथापि कर्म-

४ मधुसूदनीव्याख्या ।

योगमातिष्ठोत्तिष्ठ भारत' इति गीतावाक्यद्वयेन वा । तत्रैकमज्ञं प्रति कर्मतत्त्यागयोर्विधानाद्युगपदुभयानुष्ठानासंभवादेतयोः कर्मतत्त्यागयोर्मध्ये यदेकं श्रेयः प्रशस्यतरं मन्यसे कर्म वा तत्त्यागं वा तन्मे ब्रूहि सुनिश्चितं तव मतमनुष्ठानाय ॥ १ ॥

५ भाष्योत्कर्षदीपिका ।

करोषीति सूचयति । अतो मे कतरच्छ्रेय इति संशयो भवति तस्माद्यदेतयोरेकं प्रशस्यतरं सुनिश्चितं तन्मे ब्रूहि निःसंशयाय ॥ १ ॥

६ श्रीधरीव्याख्या ।

सुनिश्चितं तदेकं ब्रूहि ॥ १ ॥ अत्रोत्तरं श्रीभगवानुवाच—**संन्यास इति** । अयं भावः—नहि वेदान्तवेद्यात्मतत्त्वविदं प्रति कर्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

अर्जुन उवाच । संन्यासमिति । संन्यासः प्रधानं पुनर्योग इति ससंशयस्य प्रश्नः ॥ १ ॥ श्रीभगवानुवाच । संन्यास इति । संन्यासः कर्म च

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३॥

१ श्रीमच्छांकरभाष्यम्।

कर्मयोगश्च तेषामनुष्ठानं तावुभावपि निःश्रेयसकरौ निःश्रेयसं मोक्षं कुर्वाते ज्ञानोत्पत्तिहेतुत्वेनोभौ यद्यपि निःश्रेयसकरौ तथापि तयोस्तु निःश्रेयसहेत्वोः कर्मसंन्यासात्केवलात्कर्मयोगो विशिष्यत इति कर्मयोगं स्तौति॥२॥कस्मादित्याह—ज्ञेय इति। ज्ञेयो ज्ञातव्यः स कर्मयोगी नित्यसंन्यासीति यो

२ आनन्दगिरिव्याख्या।

एवं प्रश्ने प्रवृत्ते कर्मयोगस्य सौकर्यमभिप्रेत्य प्रशस्यतरत्वमभिधित्सुर्भगवान्प्रतिवचनं किमुक्तवानित्याशङ्क्याह—संन्यास इति। उभयोरपि तुल्यत्वशङ्कां वारयति—तयोस्त्विति। कथं तर्हि ज्ञानस्यैव मोक्षोपायत्वं विवक्ष्यते तत्राह—ज्ञानोत्पत्तीति। तर्हि द्वयोरपि प्रशस्यत्वमप्रशस्यत्वं वा तुल्यमित्याशङ्क्याह—उभाविति। ज्ञानसहायस्य कर्मसंन्यासस्य कर्मयोगापेक्षया विशिष्टत्वविवक्षया विशिनष्टि—केवलादिति ॥ २ ॥ कर्म हि बन्धकारणं प्रसिद्धं तत्कथं निःश्रेयसकरं स्यादिति शङ्कते—कस्मादिति। अकर्त्रात्मविज्ञानात्प्रागपि सर्वदासौ संन्यासी ज्ञेयो यो रागद्वेषौ क्वचिदपि न करोतीत्याह—इत्याहेति। यथानुष्ठीयमानानि कर्माणि संन्यासिनं न निबध्नन्ति कृतानि च वैराग्येन्द्रिय-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

संन्यासादविरक्तकृतात्कर्मयोग एव विशिष्यते। चित्तशुद्धिद्वारा वैराग्यादिहेतुत्वात् ॥ २ ॥ ननु प्रत्यक्षः कर्मयोगिनां विक्षेपः संन्यासिनां तु स नास्तीति कथमुच्यते कर्मयोगो विशिष्यत इत्याशङ्क्याह—ज्ञेय इति। यो रागद्वेषरहितः स कर्मसु स्वरूपतस्त्यक्तेष्वत्यक्तेषु वा नित्यं संन्यास्येव। एतेन साधनभूतयोः सांख्ययोगयोः रागद्वेषराहित्यकृतं

४ मधुसूदनीव्याख्या।

एवमर्जुनस्य प्रश्ने तदुत्तरं श्रीभगवानुवाच—निःश्रेयसकरौ ज्ञानोत्पत्तिहेतुत्वेन मोक्षोपयोगिनौ। तयोस्तु कर्मसंन्यासादनधिकारि-कृतात्कर्मयोगो विशिष्यते श्रेयानधिकारसंपादकत्वेन ॥ २ ॥ तमेव कर्मयोगं स्तौति त्रिभिः—स कर्मणि प्रवृत्तोऽपि नित्यं संन्यासीति ज्ञेयः। कोऽसौ। यो न द्वेष्टि भगवदर्पणबुद्ध्या क्रियमाणं कर्म निष्फलत्वशङ्कया न काङ्क्षति स्वर्गादिकम्। निर्द्वन्द्वो रागद्वेष-

५ भाष्योत्कर्षदीपिका।

अर्जुनसंशयनिवर्तकमुत्तरं श्रीभगवानुवाच—संन्यास इति। उभौ यद्यपि निःश्रेयसकरौ ज्ञानोत्पत्तिहेतुत्वेन मोक्षोपयोगिनौ तथापि तयोस्तु कर्मसंन्यासादशुद्धचित्तेनाविरक्तेन कृतात्कर्मयोगश्चित्तशुद्ध्या वैराग्यादिजनको विशिष्यत उत्कृष्टो भवतीति कर्मयोगं स्तौति ॥ २ ॥ तत्र हेतुमाह—ज्ञेय इति। स निष्कामकर्मयोगी नित्यं संन्यासी ज्ञातव्यः। यत्तु यदोयोगात्तदोऽध्याहारः। सनित्यसंन्यासीत्येकं पदम्। नित्यैः कर्मभिः सह वर्तत इति सनित्यः स चासौ संन्यासी चेति तन्न। स इत्यनेनैव नित्यादिकर्मानुष्ठा-तुर्लाभेनाध्याहारस्य क्लिष्टकल्पनायाश्च वैयर्थ्यात्। नित्यसंन्यासीति विवक्षितार्थालाभाच्च। कोऽसौ यो न द्वेष्टि दुःखं तत्साधनं च सुखं तत्साधनं च नाकाङ्क्षति रागद्वेषराहित्यरूपसंन्यासगुणयोगात् अयमपि संन्यासीति भावः। एतेन द्वेषमूलकानि श्येनादीनि नानुतिष्ठति स्वर्गादिफलाकाङ्क्षाप्रयुक्तानि ज्योतिष्टोमादीन्यपि। तस्मात्संन्यासगुणयोगादयमपि संन्यासीति भाव इति प्रत्युक्तम्। क्रियायाः कर्ममात्रसाकाङ्क्षत्वेनास्यार्थस्यार्थिकत्वात्। श्येनाद्यननुष्ठानमात्रेण सर्वत्र रागद्वेषानिवृत्त्या संन्यासिगुणयोगासिद्धेः। अत्रा-दिपदाभ्यां आभिचारिककर्मणां अग्निष्टोमादीनां चैव लाभः श्येनादिसमभिव्याहारात् द्वेषेत्यादिना विशेषितत्वाच्च। यद्यादिपदाभ्यां भाष्योक्तमपि लभ्यत इत्याग्रहस्तर्हि तेनैव निर्वाहे कृतमनया कुसृष्ट्या। यत्तु न द्वेष्टि भगवदर्पणबुद्ध्या क्रियमाणं कर्म निष्फलत्व-शङ्कयेति तच्चिन्त्यम्। संकोचे मानाभावात् संन्यासिगुणयोगालाभाच्च। हि यस्मात्सुखदुःखरागद्वेषशीतोष्णादिद्वन्द्ववर्जितः सुखमना-यासेनैव बन्धात्संसाराज्ज्ञानप्राप्त्या प्रमुच्यते यथा त्वं महाबाहुत्वादस्माद्युद्धादनायासेनैव मोक्ष्यसे तथेति द्योतयन्नाह—महाबाहो इति। यत्तु यद्यप्येवं तथापि हि प्रसिद्धं निर्द्वन्द्वः द्वन्द्वं सत्यानृतयोरात्मानात्मनोर्मिथुनं परस्पराध्यासः तद्रहितः सांख्यः रागाद्युदय-

६ श्रीधरीव्याख्या।

योगमहं ब्रवीमि, यतः पूर्वोक्तेन संन्यासेन विरोधः स्यात् अपितु देहात्माभिमानिनं त्वां बन्धुवधादिनिमित्तशोकमोहादिकृतमेनं संशयं देहात्मविवेकज्ञानासिना छित्त्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठेति ब्रवीमि। कर्मयोगेन शुद्धचित्तस्य चात्मतत्त्वज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन संन्यासः पूर्वमुक्तः। एवं सत्यङ्गप्रधानयोर्विकल्पायोगात्संन्यासः कर्मयोगश्चेत्येतावुभावपि भूमिकाभेदेन समुच्चितावेव निःश्रेयसं साधयतः तथापि तु तयोर्मध्ये कर्मसंन्यासात्सकाशात्कर्मयोगो विशिष्टो भवति ॥ २ ॥ कुत इत्यपेक्षायां संन्यासित्वेन कर्मयोगं स्तुवन् तस्य श्रेष्ठत्वं दर्शयति—ज्ञेय इति। रागद्वेषादिराहित्येन परमेश्वरार्थं कर्माणि योऽनुतिष्ठति स नित्यं

७ अभिनवगुप्ताचार्यव्याख्या।

नात्रैकोऽभिहितोऽपितूभौ संमिलितौ निःश्रेयसं दत्तः। योगेन विना संन्यासो न संभवतीति योगस्य विशेषः ॥ २ ॥ ज्ञेय इति। अतश्च

१ मधुसूदनः. २ श्रीधरः. ३ मधुसूदनः. ४ नीलकण्ठः.

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

न द्वेष्टि किंचिन्न काङ्क्षति दुःखसुखे तत्साधने चैवंविधो यः कर्मणि वर्तमानोऽपि स नित्यसंन्यासीति ज्ञातव्य इत्यर्थः । निर्द्वन्द्वो द्वन्द्ववर्जितो हि यस्मान्महाबाहो सुखं बन्धादनायासेन प्रमुच्यते ॥ ३ ॥ संन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्विरुद्धयोः फलेऽपि विरोधो युक्तो नतूभयोर्निःश्रेयसकरत्वमेवेति प्राप्त इदमुच्यते—सांख्ययोगाविति । सांख्ययोगौ पृथग्विरुद्धभिन्नफलौ बालाः प्रवदन्ति न पण्डिताः । पण्डितास्तु ज्ञानिन एकं फलमविरुद्धमिच्छन्ति । कथमेकमपि सांख्ययोगयोः सम्य-

२ आनन्दगिरिव्याख्या ।

संयमादिना निवर्तन्ते तथैवानभिसंहितफलानि नित्यनैमित्तिकानि योगिनमपि न निबध्नन्ति निवर्तयन्ति च संचितं दुरितमित्यभिप्रेत्याह—निर्द्वन्द्वो हीति । कर्मयोगिनो नित्यसंन्यासित्वज्ञानमन्यथाज्ञानत्वान्मिथ्याज्ञानमित्याशङ्क्याह—एवंविध इति । कर्मिणोऽपि रागद्वेषाभावेन संन्यासित्वं ज्ञातुमुचितमित्यर्थः । रागद्वेषरहितस्यानायासेन बन्धप्रध्वंससिद्धेश्च युक्तं तस्य संन्यासित्वमित्याह—निर्द्वन्द्व इति ॥ ३ ॥ यदुक्तं संन्यासकर्मयोगयोर्निःश्रेयसकरत्वं तदाक्षिपति—संन्यासेति । तत्रोत्तरत्वेनोत्तरश्लोकमवतारयति—इति प्राप्त इति । विवेकिनस्तर्हि कथं वदन्तीत्याकाङ्क्षायामाह—एकमिति । संख्यामात्मसमीक्षामर्हतीति सांख्यं संन्यासो योगस्तु कर्मयोगस्तावुभावपि पृथगित्यस्यार्थमाह—विरुद्धेति । शास्त्रार्थविवेकशून्यत्वं बालत्वम् । उत्तरार्धमवतारयितुं भूमिकां करोति—पण्डितास्त्विति । ज्ञानिनो योगिनश्चेति शेषः । द्वयोरविरुद्धफलत्वमेव प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना । एकं साधन-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

साम्यमुक्तम् । फलभूतयोस्तु सर्वविकल्पराहित्यरूपसाम्यमनन्तरश्लोकाभ्यामुच्यते । तथापि चित्तस्वाभाव्यात्कदाचित्संन्यासिनो रागोदये पाताशङ्कास्ति नेतरस्येति स एव श्रेयानिति भावः । यद्यप्येवं तथापि हि प्रसिद्धं निर्द्वन्द्वो द्वन्द्वं सत्यानृतयोरात्मानात्मनोर्मिथुनं परस्पराध्यासस्तद्रहितः सांख्यो रागाद्युदयहेतोरज्ञानस्यात्यन्तोच्छेदात् । सुखं कर्मकरणायासंविनापि बन्धात्संसारात्केवलज्ञानेनैव मुच्यते न कर्माण्यपेक्षते । यद्वा निर्द्वन्द्वो 'द्वन्द्वं वै मिथुनं तस्माद्द्वन्द्वान्मिथुनं प्रजायते' इति श्रुतेर्द्वन्द्वं स्त्रीपुंसयोर्मिथुनं तद्रहितः स्त्र्यादित्यागी संन्यासी अनायासेन मुच्यते । रागादिजयस्योभयत्र तुल्यत्वात् । अत्रच कुटुम्बभरणवैयग्र्याभावात्सुखं मुच्यत इत्यर्थः ॥ ३ ॥ नन्वेकत्र पाताशङ्का एकत्र कर्मश्रमस्तदनयोः पथोः कतरः श्रेयानित्याशङ्क्य द्वयोरपि फलतः साम्यमित्याह—सांख्ययोगाविति । सांख्यं

४ मधुसूदनीव्याख्या ।

रहितः, हि यस्मात्सुखमनायासेन हे महाबाहो, बन्धादन्तःकरणाशुद्धिरूपाज्ज्ञानप्रतिबन्धात्प्रमुच्यते नित्यानित्यवस्तुविवेकादिप्रकर्षेण मुक्तो भवति ॥ ३ ॥ ननु यः कर्मणि प्रवृत्तः स कथं संन्यासीति ज्ञातव्यः कर्मतत्त्यागयोः स्वरूपविरोधात् । फलैक्यात्तथेति चेत्, न, स्वरूपतो विरुद्धयोः फलेऽपि विरोधस्यौचित्यात् । तथाच निःश्रेयसकरावुभावित्यनुपपन्नमित्याशङ्क्याह—

५ भाष्योत्कर्षदीपिका ।

हेतोरज्ञानस्यात्यन्तोच्छेदात् सुखं कर्मकरणायासं विनापि बन्धात् केवलेन ज्ञानेनैव मुच्यते न कर्माण्यपेक्षते । यद्वा 'द्वन्द्वं वै मिथुनं तस्माद्द्वन्द्वान्मिथुनं प्रजायते' इति श्रुतेर्द्वन्द्वं स्त्रीपुंसयोर्मिथुनं तद्रहितः स्त्र्यादित्यागी संन्यासी अनायासेन मुच्यते । रागादिभयस्योभयत्र तुल्यत्वात्, अत्र च कुटुम्बभरणवैयग्र्याभावात्, सुखं मुच्यत इत्यर्थ इति व्याचख्युः तत्प्रकरणविरोधादुपेक्ष्यम् ॥ ३ ॥ ननूभयोर्निःश्रेयसकरत्वमेकफलकत्वं न युक्तं भिन्नपुरुषानुष्ठेययोः स्वरूपतोऽपि विरुद्धयोः फलतोऽपि विरोधस्योचितत्वात् । तस्मात्तयोर्यदेकं निःश्रेयसकरं तन्मे ब्रूहीत्यर्जुनाशङ्कामालक्ष्याह—सांख्येति । यत्त्वेकत्र पाताशङ्का एकत्र कर्मश्रमस्तदनयोः पथोः

६ श्रीधरीव्याख्या ।

कर्मानुष्ठानकालेऽपि संन्यासीत्येव ज्ञेयः । तत्र हेतुः—निर्द्वन्द्वो रागद्वेषादिशून्यो हि शुद्धचित्तो ज्ञानद्वारा सुखमनायासेन संसाराप्रमुच्यते ॥ ३ ॥ यस्मादेवमङ्गप्रधानत्वेनोभयोरवस्थाभेदेन क्रमसमुच्चयः । अतो विकल्पमङ्गीकृत्योभयोः कः श्रेष्ठ इति प्रश्नोऽज्ञानिनामेवोचितो न विवेकिनामित्याह—सांख्ययोगाविति । सांख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गं संन्यासं लक्षयति । संन्यासकर्मयोगा-

७ अभिनवगुप्ताचार्यव्याख्या ।

सएव सार्वकालिकः संन्यासी स एव येन मनसोऽभिलाषप्रद्वेषौ संन्यस्तौ । यतोऽस्य द्वन्द्वेभ्यः क्रोधमोहादिभ्यो निष्क्रान्ता धीः स सुखं प्रमुच्यत एव ॥ ३ ॥ सांख्ययोगाविति । यत्सांख्यैरिति । इदं सांख्यमयं च योग इति न भेदः । एतौ हि नित्यसंबद्धौ । ज्ञानं न योगेन

१ नीलकण्ठः. २ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

**गास्थितः सम्यगनुष्ठितवानित्यर्थः । उभयोर्विन्दते फलमुभयोस्तदेव हि निःश्रेयसं फलमतो न फले विरोधोऽस्ति । ननु संन्यासकर्मयोगशब्देन प्रस्तुत्य सांख्ययोगयोः फलैकत्वं कथमिहाप्रकृतं ब्रवीति । नैष दोषः । यद्यप्यर्जुनेन संन्यासं कर्मयोगं च केवलमभिप्रेत्य प्रश्नः कृतो भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतं च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ सांख्ययोगाविति । तावेव**

२ आनन्दगिरिव्याख्या ।

मनुष्ठितवतो द्वयोरपि फलं भवतीति विरुद्धमित्याशङ्क्याह—**उभयोरिति** । सांख्ययोगयोः संन्यासकर्मानुष्ठानयोस्तत्त्वज्ञानद्वारा निःश्रेयसफलत्वान्न विरुद्धफलत्वशङ्केत्यर्थः । सांख्ययोगयोरेकफलत्ववचनं प्रकरणाननुगुणमिति शङ्कते—**नन्विति** । अप्रकृतत्वमसिद्धमिति परिहरति—**नैष दोष इति** । संन्यासं कर्मणामित्यादिना संन्यासं कर्मयोगं चाङ्गीकृत्य प्रश्ने संन्यासः कर्मयोगश्चेत्यादिना तथैव प्रतिवचने च कथं सांख्ययोगयोरेकफलत्वमप्रकृतं न भवतीत्युच्यते तत्राह—**यद्यपीति** । प्रतिवचनमपि तदनुरूपमेव भगवता निरूपितमिति विशेषानुपपत्तिरित्याशङ्क्याह—**भगवांस्त्विति** । तदपरित्यागेनेत्यत्र तत्पदेन प्रष्ट्रा प्रतिनिर्दिष्टौ कर्मसंन्यासकर्मयोगावुच्येते । सांख्ययोगाविति शब्दान्तरवाच्यतया तयोरेव संन्यासकर्मयोगयोरत्यागेन स्वाभिप्रेतं च विशेषं संयोज्य भगवान्प्रतिवचनं ददाविति योजना । यदुक्तं स्वाभिप्रेतं च विशेषं संयोज्येति तदेतद्व्यक्तीकरोति—**तावेवेति** । समबुद्धित्वादीत्यादिशब्देन ज्ञानोपायभूतं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'समित्येकीभावे' इति यास्कः । एकीभावेनात्मानन्यत्वेन ख्यायते प्रकाश्यते वस्तुस्वरूपमनयेति संख्या स्थूलसूक्ष्मकारणप्रपञ्चस्य निर्विकल्पे प्रत्यगात्मनि प्रविलापनेनोदिता चेतोवृत्तिस्तत्साधनभूतो यः सांख्यः संन्यासः स च दारादिबुद्ध्यन्तानां पदार्थानामात्मन्येकीभावेन न्यसनं त्यागः प्रविलापनम्, तथा योगोऽप्यग्निहोत्रसंध्योपासनादिनिर्विकल्पसमाध्यन्तमनुष्ठानम् । तत्र मुख्यस्य योगस्य लक्षणं 'योगश्चित्तवृत्तिनिरोधः' इति । वृत्तयश्च 'प्रमाणविपर्ययविकल्पनिद्राऽस्मृतयः' इति पञ्च । तत्र प्रत्यक्षानुमानागमाः प्रमाणानि तेषु प्रत्यक्षमिन्द्रियं तज्जा वृत्तिः शुक्त्यादिविषयं याथार्थ्येन ज्ञानम् । विपर्ययस्तु तत्रैव रजतादिविषयं भ्रान्तिरूपं ज्ञानम् । संशयोऽपि इयं शुक्तिर्वा रजतं वेत्यनिर्धारितान्यतरकोटिकं ज्ञानम् । स च विपर्यय एवान्तर्भवति । विकल्पस्तु शब्दज्ञानानुपाती वस्तुशून्यः यथा पुरुषस्य चैतन्यं वन्ध्यापुत्र इति । नहि पुरुषचैतन्यतत्संबन्धानां पृथक्त्वमस्ति किंतु चैतन्यमेव हि शब्दत्रयेणोच्यते । नापि वन्ध्यासुतस्य स्वरूपमस्त्यथापि शब्देनाभिलप्यते । सोऽयं विकल्पः शब्दज्ञानानुपाती वस्तुशून्यः एकस्मिन्ननेकबुद्धिरसति च सद्बुद्धिरिति । निद्राऽस्मृती लोकप्रसिद्धे । एतासां निरोधेऽपि निर्विकल्पः प्रत्यगात्मैवावशिष्यते ।

४ मधुसूदनीव्याख्या ।

संख्या सम्यगात्मबुद्धिस्तां वहतीति ज्ञानान्तरङ्गसाधनतया सांख्यः संन्यासः । योगः पूर्वोक्तः कर्मयोगः । तौ पृथग्विरुद्धफलौ बालाः शास्त्रार्थज्ञानविवेकशून्याः प्रवदन्ति न पण्डिताः । किं तर्हि पण्डितानां मतम् । उच्यते—एकमपि संन्यासकर्मणोर्मध्ये

५ भाष्योत्कर्षदीपिका ।

कतरः श्रेयानित्याशङ्क्य द्वयोरपि फलतः साम्यमित्याहेति तच्चिन्त्यम् । उभयोरप्यश्रेष्ठतां मन्यमानस्य कतरः श्रेयानिति प्रश्नस्यानुपपत्तेः । संख्या सम्यगात्मबुद्धिस्तां वहतीति ज्ञानान्तरङ्गसाधनतया सांख्यः संन्यासः । एवं सांख्यशब्दवाच्यः शमदमादिभिर्ज्ञानेन च संयुक्तः संन्यासोऽत्र विवक्षितः प्रस्तुतः । तथा प्रस्तुत एव कर्मयोगः ज्ञानोपायसमबुद्धित्वादिसंयुक्तः योगशब्दवाच्यः । तावेव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादियुक्तौ सांख्ययोगशब्दवाच्याविति भाष्यात् । एतेन सांख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गं संन्यासं लक्षयतीति लक्षणा परास्ता । बाला अविवेकिनः तौ पृथक् भिन्नफलौ प्रवदन्ति न तु पण्डिताः शास्त्रज्ञा विवेकिनः । ते तु एकमपि कर्मयोगं संन्यासं वा सम्यक् चित्तशुद्धिसंपादकं शमदमादियुक्तं वाऽऽस्थितोऽनुष्ठितवानुभयोः फलं निःश्रेयसं मोक्षं परम्परया साक्षाद्वा विन्दते लभत इति प्रवदन्तीत्यर्थः । यत्तु 'समित्येकीभाव' इति यास्कः । एकीभावेनात्मानन्यत्वेन ख्यायते प्रकाश्यते वस्तुस्वरूपमनयेति संख्या स्थूलसूक्ष्मकारणप्रपञ्चस्य निर्विकल्पे प्रत्यगात्मनि प्रविलापनेनोदिता चेतोवृत्तिस्तत्साधनभूतो यः सांख्यः संन्यासः स च दारादिबुद्ध्यन्तानां पदार्थानामात्मन्येकीभावेन न्यसनं त्यागः प्रविलापनम्, तथा योगोऽप्यग्निहोत्रसंध्योपासनादिनिर्विकल्पसमाध्यन्तमनुष्ठानं तत्र मुख्ययोगस्य लक्षणं 'योगश्चित्तवृत्तिनिरोधः' इति । वृत्तयश्च 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इति पञ्च । तावेतौ फलभूतौ सांख्ययोगौ उत साधनभूतौ संन्यासकर्मयोगाख्यौ । तत्रान्त्ययोः साम्यं 'ज्ञेयः स नित्यसंन्यासी' इत्यनेन

६ श्रीधरीव्याख्या ।

वेकफलौ सन्तौ पृथक्स्वतन्त्राविति बाला अज्ञा एव प्रवदन्ति नतु पण्डिताः । तत्र हेतुः—अनयोरेकमपि सम्यगास्थित आश्रितः

१ श्रीधरः । २ नीलकण्ठः ।

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्याविति भगवतो मतमतो नाप्रकृतप्रक्रियेति ॥ ४ ॥ एकस्यापि सम्यगनुष्ठानात्कथमुभयोः फलं विन्दत इत्युच्यते—यदिति । यत्सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिः प्राप्यते स्थानं मोक्षाख्यं तद्योगैरपि ज्ञानप्राप्त्युपायत्वेनेश्वरे समर्प्य कर्माण्यात्मनः फलमनभिसंधायानुतिष्ठन्ति ये ते योगिनस्तैरपि परमार्थज्ञानसंन्यासप्राप्तिद्वारेण गम्यत इत्यभिप्रायोऽत एकं सांख्यं योगं च यः पश्यति फलैकत्वात्स सम्यक्पश्यतीत्यर्थः ॥ ५ ॥

२ आनन्दगिरिव्याख्या ।

शमादिरादीयते प्रकृतयोरेव संन्यासकर्मयोगयोरुपादाने फलितमाह—अत इति । सांख्ययोगावित्यादिश्लोकव्याख्यानसमाप्तिरितिशब्दार्थः ॥ ४ ॥ प्रश्नपूर्वकं श्लोकान्तरमवतारयति—एकस्यापीति । केचिदेव तयोरेकफलत्वं पश्यन्तीत्याशङ्क्य तेषामेव सम्यग्दर्शित्वं नेतरेषामित्याह—एकमिति । तिष्ठत्यस्मिन्न च्यवते पुनरिति व्युत्पत्तिमाश्रित्याह—**मोक्षाख्यमिति** । योगशब्दार्थमाह—**ज्ञानप्राप्तीति** । ये हि जिज्ञासवः सर्वाणि कर्माणि भगवत्प्रीत्यर्थत्वेन तेषां फलाभिलाषमकृत्वा ज्ञानप्राप्तौ बुद्धिशुद्धिद्वारेणोपायत्वेनानुतिष्ठन्ति तेऽत्र योगा विवक्ष्यन्ते । अच्प्रत्ययस्य मत्वर्थत्वं गृहीत्वोक्तं—**योगिन इति** । सर्वोऽपि द्वैतप्रपञ्चो न वस्तुभूतो मायाविलासत्वादात्मा त्वविक्रियोऽद्वितीयो वस्तुसन्निति प्रयोजकज्ञानं परमार्थज्ञानं तत्पूर्वकसंन्यासद्वारेण कर्मिभिरपि तदेव स्थानं प्राप्यमित्येकफलत्वं संन्यासकर्मयोगयोरविरुद्धमित्याह—**तैरपीति** । फलैकत्वे फलितमाह—**अत इति** ॥ ५ ॥ यदि यथोक्तज्ञानपूर्वकसंन्यास-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तावेतौ फलभूतौ सांख्ययोगौ । साधनभूतौ तावेव संन्यासकर्मयोगाख्यौ । तत्रान्त्ययोः साम्यं 'ज्ञेयः स नित्यसंन्यासी' इत्यनेन सूचितम् । आद्ययोस्त्वैक्यमत्रोच्यते । आस्थितोऽनुतिष्ठन् । फलं निर्विकल्पात्मनावस्थितिरूपम् ॥ ४ ॥ योगैर्योगिभिः । अर्शआद्यच्प्रत्ययान्तोऽयं योगशब्दः । स्थानं मोक्षाख्यम् । एकमभिन्नम् । स्पष्टा योजना श्लोक-

४ मधुसूदनीव्याख्या ।

सम्यगास्थितः स्वाधिकारानुरूपेण सम्यग्यथाशास्त्रं कृतवान्सन्नुभयोर्विन्दते फलं ज्ञानोत्पत्तिद्वारेण निःश्रेयसमेकमेव ॥ ४ ॥ एकस्यानुष्ठानात्कथमुभयोः फलं विन्दते तत्राह—सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिरैहिककर्मानुष्ठानशून्यत्वेऽपि प्राग्भवीयकर्मभिरेव संस्कृतान्तःकरणैः श्रवणादिपूर्विकया ज्ञाननिष्ठया यत्प्रसिद्धं स्थानं तिष्ठत्येवास्मिन्नतु कदापि च्यवत इति व्युत्पत्त्या मोक्षाख्यं प्राप्यते आवरणाभावमात्रेण लभ्यत इव नित्यप्राप्तत्वात् । योगैरपि भगवदर्पणबुद्ध्या फलाभिसंधिराहित्येन कृतानि कर्माणि शास्त्रीयाणि योगास्ते येषां सन्ति तेऽपि योगाः । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः । तैर्योगिभिरपि सत्त्वशुद्ध्या संन्यासपूर्वकश्रवणादिपुरःसरया ज्ञाननिष्ठया वर्तमाने भविष्यति वा जन्मनि संपत्स्यमानया तत्स्थानं गम्यते । अत एकफलत्वादेकं सांख्यं च योगं च यः पश्यति स एव सम्यक् पश्यति नान्यः । अयं भावः—येषां संन्यासपूर्विका ज्ञाननिष्ठा दृश्यते तेषां तयैव लिङ्गेन

५ भाष्योत्कर्षदीपिका ।

सूचितमाद्ययोस्त्वैक्यमत्रोच्यते । आस्थितोऽनुतिष्ठन् फलं निर्विकल्पात्मनाऽवस्थितिरूपमित्यन्ये व्याचख्युस्तदर्जुनप्रश्नाननुगुणत्वेनोपेक्ष्यम् । संन्यासकर्मयोगयोः किं श्रेयस्करमिति तेन पृष्टत्वात् । अतएव भाष्यकृद्भिस्तत्रतत्र योगशब्दार्थः कर्मयोग इत्येव प्रदर्शितः । एतेन वृत्तेः पञ्चधात्ववर्णनमप्यप्रासङ्गिकत्वादपास्तम् ॥ ४ ॥ एकस्यापि सम्यगनुष्ठानात्कथमुभयोः फलं लभन्त इत्यत आह—**यदिति** । सांख्यैः ज्ञाननिष्ठैः संन्यासिभिः विशुद्धान्तःकरणैर्यन्मोक्षाख्यं स्थानं च्युतिवर्जितं प्राप्यते तत्त्वसाक्षात्कारमात्रेण लभ्यत इति विस्मृतग्रैवेयकलाभवल्लब्धस्यैव लाभः । तद्योगैर्ज्ञानप्राप्त्युपायभूतानि ईश्वराराधनार्थानि फलाभिसंधिरहितानि शास्त्रीयाणि कर्माणि योगशब्दवाच्यानि तद्वद्भिः । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः । तदेव स्थानं परमार्थज्ञानं संन्यासप्राप्तिद्वारेण गम्यते प्राप्यत इत्यर्थः । आयुर्घृतमितिवत्साध्यसाधनयोरभेदाभिप्रायेण परमार्थज्ञानस्य मोक्षाभिन्नत्वात् मोक्षस्य तदभिन्नत्वाच्चैवमुक्तमित्यविरोधः । एतेन ननूभयोरेकं मोक्षाख्यं फलमस्तु नाम तत्साधनयोस्तु परस्परसापेक्षत्वं न युक्तं, प्राप्यग्रामस्यैकत्वेऽपि मार्गाणामिवेत्याशङ्क्याह—**यत्सांख्यैरिति** । अत्रेदं विकल्पनीयम् । किं व्यक्तिभेदमात्रेण संन्यासकर्मयोगयोरन्योन्यनिरपेक्षतां ब्रूषे, किंवा अपेक्षणीयान्तरा-

६ श्रीधरीव्याख्या ।

सन्नुभयोरपि फलं प्राप्नोति । तथाहि कर्मयोगं सम्यगनुतिष्ठन् शुद्धचित्तः सन् ज्ञानद्वारा यदुभयोः फलं कैवल्यं विन्दति । संन्यासं सम्यगास्थितोऽपि पूर्वमनुष्ठितस्य कर्मयोगस्यापि परम्परया ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दतीति न पृथक्फलत्वमनयोरित्यर्थः ॥ ४ ॥ एतदेव स्फुटयति—**यत्सांख्यैरिति** । सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिर्यत्स्थानं मोक्षाख्यं प्रकर्षेण साक्षादवाप्यते । योगैरित्यत्र अर्शआदित्वा-

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।**
**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**एवं तर्हि योगात्संन्यास एव विशिष्यते कथं तर्हीदमुक्तं तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यत इति । शृणु तत्र कारणम् । त्वया पृष्टं केवलं कर्मसंन्यासं कर्मयोगं चाभिप्रेत्य तयोरन्यतरः कः श्रेयान् तदनुरूपं प्रतिवचनं मयोक्तं कर्मसंन्यासात्कर्मयोगो विशिष्यत इति ज्ञानमनपेक्ष्य । ज्ञानापेक्षस्तु संन्यासः सांख्यमिति मयाभिप्रेतः । परमार्थयोगश्च स एव । यस्तु कर्मयोगो वैदिकः स च तादर्थ्याद्योगः संन्यास इति चोपचर्यते । कथं तादर्थ्यमित्युच्यते—संन्यासस्तु पारमार्थिको दुःखमाप्तुं प्राप्तुमयोगतो**

२ आनन्दगिरिव्याख्या ।

द्वारा कर्मिणामपि श्रेयोवाप्तिरिष्टा तर्हि संन्यासस्यैव श्रेयस्त्वं प्राप्तमिति चोदयति—**एवं तर्हीति** । संन्यासस्य श्रेष्ठत्वे कर्मयोगस्य प्रशस्यत्ववचनमनुचितमित्याह—**कथं तर्हीति** । पूर्वोक्तमेवाभिप्रायं स्मारयन्परिहरति—**शृण्विति** । कर्मयोगस्य विशिष्टत्ववचनं तत्रेति परामृष्टम् । तदेव कारणं कथयति—**त्वयेत्यादिना** । केवलं विज्ञानरहितमिति यावत् । तयोरन्यतरः कः श्रेयानितीतिशब्दोऽध्याहर्तव्यः । त्वदीयं प्रश्नमनुसृत्य तदनुगुणं प्रतिवचनं ज्ञानमनपेक्ष्य तद्रहितात्केवलादेव संन्यासाद्योगस्य विशिष्टत्वमिति यथोक्तमित्याह—**तदनुरूपमिति** । ज्ञानापेक्षः संन्यासस्तर्हि कीदृगित्याशङ्क्याह—**ज्ञानेति** । तर्हि कर्मयोगे कथं योगशब्दः संन्यासशब्दो वा प्रयुज्यते तत्राह—**यस्त्विति** । तादर्थ्यात्परमार्थज्ञानशेषत्वादिति यावत् । तदेव तादर्थ्यं प्रश्नपूर्वकं प्रसाधयति—**कथमित्यादिना** । कर्मानुष्ठानाभावे बुद्धिशुद्ध्यभावात्परमार्थसंन्यासस्य सम्यग्ज्ञानात्मनो न प्राप्तिरिति व्यतिरेकमुपन्यस्यान्वयमुपन्यस्यति—**योगेति** । पारमार्थिकः सम्यग्ज्ञानात्मकः । सामग्र्यभावे कार्यप्राप्तिरयुक्तेति मत्वाह—**दुःखमिति** । योग-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

द्वयस ॥ ५ ॥ नन्वेवं निर्विकल्पस्थानप्राप्तये द्वौ भागावुक्तौ स्यातां तच्च 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरुद्धमित्याशङ्क्याह—**संन्यासस्त्विति** । संन्यासो नैष्कर्म्यम् । अयोगतो योगंविना अवाप्तुं दुःखं हे महाबाहो ।

४ मधुसूदनीव्याख्या ।

प्राग्जन्मसु भगवदर्पितकर्मनिष्ठानुमीयते । कारणमन्तरेण कार्योत्पत्त्ययोगात् । तदुक्तम् 'यान्यतोऽन्यानि जन्मानि तेषु नूनं कृतं भवेत् । यत्कृत्यं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः ॥' इति । एवं येषां भगवदर्पितकर्मनिष्ठा दृश्यते तेषां तयैव लिङ्गेन भाविनी संन्यासपूर्वकज्ञाननिष्ठाऽनुमीयते सामग्र्याः कार्याव्यभिचारित्वात् । तस्मादङ्गेन मुमुक्षुणान्तःकरणशुद्धये प्रथमं कर्मयोगोऽनुष्ठेयो नतु संन्यासः । सतु वैराग्यतीव्रतायां स्वयमेव भविष्यतीति ॥ ५ ॥ अशुद्धान्तःकरणेनापि संन्यास एव प्रथमं कुतो न क्रियते ज्ञाननिष्ठाहेतुत्वेन तस्यावश्यकत्वादिति चेत्तत्राह—अयोगतो योगमन्तःकरणशोधकं शास्त्रीयं कर्मान्तरेण हठादेव

५ भाष्योत्कर्षदीपिका ।

भावात् । नाद्य इत्याह । बहुवचनेन यत्सांख्यैरिति संन्यासैस्तत्तत्कर्मत्यागरूपैरपि यथाऽन्योन्यसापेक्षैरेव फलं साध्यते तथा भिन्नाभ्यामेव संन्यासकर्मयोगाभ्यामन्योन्यसापेक्षाभ्यां भविष्यतीति भावः । नान्त्य इत्याह । यत्स्थानं प्राप्यत इति स्थानशब्देनात्र मोचकज्ञानमुच्यत इति प्रत्युक्तम् । पूर्वश्लोके परस्परसापेक्षत्वाप्रतिपादनात् कर्मयोगादिसाध्यात् ज्ञानान्निरपेक्षात्केवलान्मोक्ष इतिवत् शमदमादिविशिष्टस्य संन्यासस्य कर्मसाध्यत्वेऽपि तेन ज्ञाने जननीये कर्मापेक्षाया अभावादन्योन्यसापेक्षत्वासिद्धेः, एकमित्यादेः स्थाने सांख्यं योगं च परस्परसापेक्षमिति वक्तव्यत्वापत्तेश्च । अतः साक्षात्परम्परया वा एकफलजनकत्वात् एकं सांख्यं च योगं च यः पश्यति स सम्यक्पश्यतीत्यर्थ एव रम्यः ॥ ५ ॥ एवं तर्हि कर्मयोगात्संन्यास एव विशिष्यते कथमुक्तं तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते इत्याशङ्क्य ज्ञाननिष्ठारहितादशुद्धचित्तेन कृतात्केवलात्संन्यासात्कर्मत्यागाच्छुद्धिकरस्य संन्यासद्वारा ज्ञानप्राप्त्या मोक्षसंपादकस्य कर्मयोगस्य श्रैष्ठ्यं मया प्रतिपादितं नतु ज्ञाननिष्ठासहितात्सांख्यशब्दोदिताद्विशुद्धान्तःकरणेन कृतात् । तस्मात्तं प्रति साधनत्वात्कर्मयोगस्येत्याशयेनाह—**संन्यास इति** । संन्यासस्तु ज्ञाननिष्ठासहितस्तु परमार्थसंन्यासः । अयोगतः योगेन विनाप्तुं प्राप्तुं दुःखं दुर्घटमित्यर्थः । योगेन वैदिकेन कर्मयोगेनेश्वरसमर्पितरूपेण निष्कामेन युक्तः मुनिः सगुणेश्वरस्वरूपमननशीलः

६ श्रीधरीव्याख्या ।

न्मत्वर्थीयोऽच्प्रत्ययो द्रष्टव्यः । तेन कर्मयोगिभिरपि तदेव ज्ञानद्वारेण गम्यते । अवाप्यत इत्यर्थः । अतः सांख्यं च योगं चैकफलत्वेनैकं यः पश्यति स एव सम्यक्पश्यति ॥ ५ ॥ यदि कर्मयोगिनोऽप्यन्ततः संन्यासेनैव ज्ञाननिष्ठास्तर्ह्यादित एव संन्यासः कर्तुं युक्त इति मन्वानं प्रत्याह—**संन्यास इति** । अयोगतः कर्मयोगं विना संन्यासः प्राप्तुं दुःखहेतुः । अशक्य इत्यर्थः । चित्तशुद्ध्यभावेन

७ अभिनवगुप्ताचार्यव्याख्या ।

विना योगोऽपि न तेन विनेति । अत एकत्वमनयोः ॥ ४ ॥ ५ ॥ संन्यासस्त्विति । तुशब्दोऽवधारणे भिन्नक्रमः । योगरहितस्य संन्यासमाप्तुं

१ श्रीमच्छांकरभाष्यम् ।

योगेन विना । योगयुक्तो वैदिकेन कर्मयोगेनेश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तो मुनिर्मननादीश्वरस्वरूपस्य मुनिर्ब्रह्म परमात्मज्ञाननिष्ठालक्षणत्वात्प्रकृतः संन्यासो ब्रह्मोच्यते "न्यास इति ब्रह्म । ब्रह्म हि परः" इति श्रुतेः । ब्रह्म परमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणं नचिरेण क्षिप्रमेवाधि-

२ आनन्दगिरिव्याख्या ।

युक्तत्वं व्याचष्टे—**वैदिकेनेति** । ईश्वरस्वरूपस्य सविशेषस्येति शेषः । ब्रह्मेति व्याख्येयं पदमुपादाय व्याचष्टे—**प्रकृत इति** । तत्र ब्रह्मशब्दप्रयोगे हेतुमाह—**परमात्मेति** । लक्षणशब्दो गमकविषयः । संन्यासे ब्रह्मशब्दप्रयोगे तैत्तिरीयकश्रुतिं प्रमाणयति—**न्यास इति** । कथं संन्यासे हिरण्यगर्भवाची ब्रह्मशब्दः प्रयुज्यते द्वयोरपि परत्वाविशेषादित्याह—**ब्रह्म हीति** । ब्रह्मशब्दस्य संन्यासविषयत्वे फलितं वाक्यार्थमाह—**ब्रह्मेत्यादिना** । नद्याः स्रोतांसीव निम्नप्रवणानि कर्मभिरतितरां परिपक्वकषायस्य करणानि सर्वतो व्यावृत्तानि निरस्ताशेषकूटस्थप्रत्यगात्मान्वेषणप्रवणानि भवन्तीति । कर्मयोगस्य परमार्थसंन्यासप्राप्त्युपायत्वे फलितमाह—**अत इति** ॥ ६ ॥ ननु पारिव्राज्यं परिगृह्य श्रवणादिसाधनमसकृदनुतिष्ठतो लब्धसम्यग्बोधस्यापि यथापूर्वं कर्माण्युपलभ्यन्ते तानि च बन्धहेतवो भविष्यन्तीत्याशङ्क्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अयमर्थः—निर्विकल्पकसमाधिरपि तत्त्वमसीत्येतद्वाक्यार्थप्रतिपत्त्युपायभूत एव न स्वतः पुरुषार्थ इति द्वितीयमार्गस्याभावान्नोदाहृतश्रुतिविरोधः । 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति' इति श्रुत्यैव शमादिवत्समाधेरप्यात्मदर्शनार्थत्वस्य दर्शितत्वात् । तथाच समाहितपदं वार्तिककारैर्व्याख्यातम् । 'स्वातन्त्र्यं येषु कर्तुः स्यात्करणाकरणंप्रति । तान्येव तु निषिद्धानि कर्माणीह शमादिभिः ॥' शमादिश्रुत्या 'अस्वातन्त्र्यं तु येषु स्यात्करणाकरणंप्रति । समाहितोक्त्यायेदानीं तन्निरोधो विधीयते ॥' अस्वातन्त्र्यं गुरूपदेशापेक्षत्वम् । येषु मानमेयव्यवहारनिरोधेषु । 'पिण्डीकृत्येन्द्रियग्रामं बुद्धावारोप्य निश्चलम् । विषयांस्तत्स्मृतीस्त्यक्त्वा तिष्ठेच्चिदनुरोधतः ॥ एषोऽभ्युपायः सर्वत्र वेदान्तेषु प्रतिष्ठितः । तत्त्वमस्यादिवाक्यार्थज्ञानोत्पत्त्यर्थमादरात् ॥' इति । एवं व्यतिरेकमुक्त्वान्वयमाह—**योगयुक्त इति** । मुनिः संन्यासी नचिरेण शीघ्रमेव ब्रह्माधिगच्छति वाक्यश्रवणमात्रेण नतु केवलसंन्यासी । यथोक्तं 'नच

४ मधुसूदनीव्याख्या ।

यः कृतः संन्यासः स तु दुःखमाप्तुमेव भवति । अशुद्धान्तःकरणत्वेन तत्फलस्य ज्ञाननिष्ठाया असंभवात् शोधके च कर्मण्यनधिकारात्कर्मब्रह्मोभयभ्रष्टत्वेन परमसंकटापत्तेः । कर्मयोगयुक्तस्तु शुद्धान्तःकरणत्वान्मुनिर्मननशीलः संन्यासी भूत्वा ब्रह्म सत्यज्ञानादिलक्षणमात्मानं नचिरेण शीघ्रमेवाधिगच्छति साक्षात्करोति प्रतिबन्धकाभावात् । एतच्चोक्तं प्रागेव 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । नच संन्यसनादेव सिद्धिं समधिगच्छति' इति । अत एकफलत्वेऽपि 'कर्मसंन्यासात्कर्मयोगो विशिष्यते' इति यत्प्रागुक्तं तदुपपन्नम् ॥ ६ ॥ ननु कर्मणो बन्धहेतुत्वाद्योगयुक्तो मुनिर्ब्रह्माधिगच्छतीत्यनुपपन्नमित्यत

५ भाष्योत्कर्षदीपिका ।

ब्रह्म परमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणं नचिरेण क्षिप्रमेवाधिगच्छति प्राप्नोति । परमार्थज्ञानलक्षणत्वात्प्रकृतः संन्यासो ब्रह्मोच्यते 'न्यास इति ब्रह्म । ब्रह्म हि परः' इति श्रुतेः । अशुद्धचित्तेनापि संन्यास एव प्रथमं कुतो न क्रियते ज्ञाननिष्ठाहेतुत्वेन तस्यावश्यकत्वादितिचेत्तत्राह—**संन्यासस्त्विति** । योगमन्तरेण हठादेव यः कृतः संन्यासः स तु दुःखमाप्तुमेव भवति । अशुद्धान्तःकरणत्वेन तत्फलस्य ज्ञाननिष्ठाया असंभवात् । शोधके च कर्मण्यनधिकारात् कर्मब्रह्मोभयभ्रष्टत्वेन परमसंकटापत्तेः । यद्वाऽयोगत इति सप्तम्यर्थे तसिः । अयोगे तु संन्यासो दुःखमाप्तुमिति अयोगे योगाभावे प्रसिद्धसंन्यासाद्विलक्षणः 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः ॥' इतिवार्तिककारोक्तः संन्यासः । दुःखं नरकात्मकमाप्तुं भवतीति शेषः । नरकफलको नत्वनर्थनिवृत्त्यविनाभूतनिरतिशयानन्दरूपतापादक इति भावः । ननु तर्ह्यवश्यापेक्षिताद्योगादेवास्तु फलं, नेत्याह । योगयुक्तः सत्त्वशुद्ध्या मुनिर्मननशीलः संन्यासी भूत्वा ब्रह्म सत्यज्ञानादिलक्षणं नचिरेण शीघ्रमेवाधिगच्छति प्रतिबन्धकाभावात् । साक्षात्करोतीति तु सुगमत्वाद्भाष्यकारैरुपेक्षितम् । महाबाहो इति संबोधयन् महाबाहुसाध्ये युद्धरूपे कर्मण्येव तवाधिकारो न संन्यासे इति सूचयति ॥ ६ ॥ कस्यचिच्चित्तशुद्ध्या श्रवणादिना कृतसाक्षात्कारस्य प्रारब्धवशा-

६ श्रीधरीव्याख्या ।

ज्ञाननिष्ठाया असंभवात् । योगयुक्तस्तु शुद्धचित्ततया मुनिः संन्यासी भूत्वाऽचिरेणैव ब्रह्माधिगच्छत्यपरोक्षं जानाति । अतश्चित्तशुद्धेः प्राक्कर्मयोग एव संन्यासाद्विशिष्यत इति पूर्वोक्तं सिद्धम् । तदुक्तं वार्तिककृद्भिः—'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः' इति ॥ ६ ॥ कर्मयोगादिक्रमेण ब्रह्माधिगमे सत्यपि तदुपरितनेन कर्मणा बन्धः स्यादेवे-

**योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।**
**सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**गच्छति प्राप्नोत्यतो मयोक्तं कर्मयोगो विशिष्यत इति ॥ ६ ॥ योगेति । यदा पुनरयं सम्यग्दर्शनप्राप्त्युपायत्वेन योगेन युक्तो विशुद्धात्मा विशुद्धसत्त्वो विजितात्मा विजितदेहो जितेन्द्रियश्च सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादीनां स्तम्बपर्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य स सर्व-**

२ आनन्दगिरिव्याख्या ।

श्लोकान्तरमवतारयति—**यदा पुनरिति** । सम्यग्दर्शनप्राप्त्युपायत्वेन यदा पुनरयं पुरुषो योगयुक्तत्वादिविशेषणः सम्यग्दर्शी संपद्यते तदा प्रातिभासिकीं प्रवृत्तिमनुसृत्य कुर्वन्नपि न लिप्यत इति योजना । योगेन नित्यनैमित्तिककर्मानुष्ठानेनेति यावत् । आदौ नित्याद्यनुष्ठानवतो रजस्तमोमलाभ्यामकलुषितं सत्त्वं सिध्यतीत्याह—**विशुद्धेति** । बुद्धिशुद्धौ कार्यकरणसंघातस्यापि स्वाधीनत्वं भवतीत्याह—**विजितेति** । तस्य यथोक्तविशेषणवतो जायते सम्यग्दर्शित्वमित्याह—**सर्वभूतेति** । सम्यग्दर्शिनस्तर्हि कर्मानुष्ठानं कुतस्त्यं तदनुष्ठाने वा कुतो बन्धविश्लेषसिद्धिरित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संन्यसनादेव सिद्धिं समधिगच्छति' इति ॥ ६ ॥ **योगेति** । योगेन निर्विकल्पसमाधिना युक्तो योगयुक्तः । अत एव विशुद्धात्मा वृत्तिसारूप्यदोषेण हीनः आत्मा प्रत्यक्चेतनो यस्य । निर्विकल्पावस्थायां केवल एव चेतनोऽस्ति नान्यदेत्युक्तं तदा द्रष्टुः स्वरूपेऽवस्थानं वृत्तिसारूप्यमितरत्रेति तदा वृत्त्यभावे इतरत्र वृत्तिकाले इति सौत्रपदद्वयार्थः । अत्र हेतुः । यतोऽयं विजितात्मा विजितचित्तो जितेन्द्रियश्च । एवं शुद्धस्त्वंपदार्थ उक्तस्तस्य तत्पदार्थाभेदमाह—**सर्वभूतात्मेति** । सर्वेषां भूतानां ब्रह्मादिस्तम्बपर्यन्तानां वियदादीनां च चेतनाचेतनानामात्मभूतः उपादानत्वेन स्वरूपभूतः कनकमिव कुण्डलादीनां स्वरूपभूतम् । कारणानन्यत्वात्कार्यस्य । सर्वभूतात्मभूत आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्मा । यत्तु सर्वेषां भूतानामात्मभूत आत्मा यस्येति भाष्यं सर्वभूतात्मेत्येतावतैवार्थलाभादात्मभूत इत्यधिकमिति दूषितम् । स्वयं च सर्वभूत आत्मभूतश्चात्मा यस्येति विग्रहो दर्शितः, तत्र संकोचे कारणाभावात्सर्व-

४ मधुसूदनीव्याख्या ।

आह—भगवदर्पणफलाभिसंधिराहित्यादिगुणयुक्तं शास्त्रीयं कर्म योग इत्युच्यते । तेन योगेन युक्तः पुरुषः प्रथमं विशुद्धात्मा विशुद्धो रजस्तमोभ्यामकलुषित आत्मान्तःकरणरूपं सत्त्वं यस्य स तथा । निर्मलान्तःकरणः सन् विजितात्मा स्ववशीकृतदेहः । ततो जितेन्द्रियः स्ववशीकृतसर्वबाह्येन्द्रियः । एतेन मनूक्तस्त्रिदण्डी कथितः, 'वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च । यस्यैते नियता दण्डाः स त्रिदण्डीति कथ्यते ॥' इति । वागिति बाह्येन्द्रियोपलक्षणम् । एतादृशस्य तत्त्वज्ञानमवश्यं भवतीत्याह—सर्वभूतात्मभूतात्मा सर्वभूत आत्मभूतश्चात्मा स्वरूपं यस्य स तथा । जडाजडात्मकं सर्वमात्ममात्रं पश्यन्नित्यर्थः ।

५ भाष्योत्कर्षदीपिका ।

त्कर्मणि स्थितस्य यथापूर्वमुपलभ्यमानानि कर्माणि बन्धकानि न भवन्तीत्यत आह—**योगयुक्त इति** । योगेन पूर्वोक्तेन युक्तः अतएव विशुद्धान्तःकरणः अतएव विजितदेहः अतएव विजितानि वागादीनि इन्द्रियाणि येन सः । एवंभूतोऽधिकारी लक्षणसंपन्नः सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य सः । अखण्डात्मसाक्षात्कारवानित्यर्थः । यत्तु[1] कैश्चिद्भाष्योक्तं विग्रहं सर्वभूतात्मेत्येतावतैवार्थलाभादात्मभूतेत्यधिकं स्यादित्यापत्त्या दूषयित्वा सर्वभूतो जडभूत आत्मभूतोऽजडभूतश्च आत्मा यस्येति च विग्रहः प्रदर्शितस्तत्प्रामादिकम् । कृत्स्नवाचिनः सर्वपदादेव जडाजडग्रहे सर्वभूतात्मेत्येतावतैवेष्टलाभे आधिक्यस्य तुल्यत्वात् । सर्वमचेतनमात्मानश्चेतनास्तद्भूत आत्मा यस्येति विगृह्य सर्वात्मभूतात्मेत्येतावतैवेष्टार्थे सिद्धे प्रथमभूतपदवैयर्थ्यप्रसङ्गाच्च । किंच भाष्यमते ब्रह्मादीनां प्रत्यगात्मभूत आत्मा यस्येति श्रुत्यैवात्मपरमात्मनोरैक्यमुच्यते । तव मते तु उपादानत्वलिङ्गेन जडसाधारण्येनात्मनः परमात्माभेदो गम्यत इत्यत आचार्योक्तमेव रमणीयम् । स लोकसंग्रहार्थं कुर्वन्नपि न लिप्यते । योगयुक्तो न कर्मभिर्बध्यत इत्यर्थः । यत्तु[2] ननु योगयुक्तस्य सत्त्वशुद्धौ जातायामपि सर्वकर्मसंन्यासे कृते नित्याकरणजनितप्रत्यवायलक्षणो लेप आपद्येतेत्याशङ्क्याह—**योगयुक्त इति** । अकुर्वन्नपि न लिप्यते । नित्याकरणोत्थेन दोषेण न स्पृश्यत इत्यर्थः । तत्र

६ श्रीधरीव्याख्या ।

त्याशङ्क्याह—**योगयुक्त इति** । योगेन युक्तोऽतो विशुद्ध आत्मा चित्तं यस्यातएव विजित आत्मा शरीरं येन । अतएव विजितानी-

७ अभिनवगुप्ताचार्यव्याख्या ।

दुःखमेव । शाङ्कित्या कर्मणां दुःसंन्यासत्वात् । योगिभिस्तु सुलभमेवैतदित्युक्तं प्राक् ॥ ६ ॥ योगयुक्त इति । सर्वभूतानामात्मभूत आत्मा

---

१ मधुसूदनः. २ मधुसूदनः.

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।**
**पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥**
**प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

भूतात्मभूतात्मा । सम्यग्दर्शीत्यर्थः । स तत्रैवं वर्तमानो लोकसंग्रहाय कर्म कुर्वन्नपि न लिप्यते । न कर्मभिर्बध्यत इत्यर्थः ॥ ७ ॥ नैवेति । न चासौ परमार्थतः करोत्यतो नैव किंचित्करोमीति युक्तः समाहितः सन्मन्येत चिन्तयेत् । तत्त्वविदात्मनो याथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् । परमार्थदर्शीत्यर्थः ॥ ८ ॥ कदा कथं वा तत्त्वमवधारयन्मन्येतेत्युच्यते—पश्यन्निति । मन्येतेति पूर्वेण संबन्धः । यस्यैवं

२ आनन्दगिरिव्याख्या ।

शङ्कयाह—**स तत्रेति** । सम्यग्दर्शनं सप्तम्यर्थः ॥ ७ ॥ कर्माण्यङ्गीकृत्य तैरस्य विदुषो बन्धो नास्तीत्युक्तमिदानीं वस्तुतस्तस्य कर्माण्येव न सन्तीत्याह—**नचेति** । लोकदृष्ट्या विदुषोऽपि कर्माणि सन्तीत्याशङ्क्य स्वदृष्ट्या तदभावमभिप्रेत्याह—**नैवेति** ॥ ८ ॥ सार्धं समनन्तरश्लोकमाकाङ्क्षापूर्वकमुत्थापयति—**कदेत्यादिना** । चक्षुरादिज्ञानेन्द्रियै-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पदेनैव चिज्जडयोर्ग्रहे परस्याप्यात्मभूतेत्यधिकमेव । सर्वभूतश्चेतनाचेतनप्रपञ्चभूत आत्मा यस्येति तत्रापीष्टार्थलाभात् सर्वे च आत्मानश्च तद्भूत आत्मा यस्येति विगृह्य सर्वात्मभूतात्मेत्येतावतैव सिद्धे प्रथमभूतपदस्य वैयर्थ्यं च भाष्यमते ब्रह्मादीनां प्रत्यग्भूत आत्मा यस्येति श्रुत्यैव जीवेशाभेद उच्यते । परस्य तूपादानत्वलिङ्गेन जडसाधारण्येन जीवस्य ब्रह्माभेदोऽवगम्यत इति विद्वद्भिरविनयः क्षन्तव्यः । यतोऽयं सर्वेषां प्रत्यगात्मा अतोऽहमिव सोऽपि कुर्वन्नपि न लिप्यते असङ्गात्मज्ञानात्कर्त्रादेर्बाधितत्वाच्च । व्युत्थाने तत्प्रतीतावप्युत्खातदंष्ट्रोरगवदबाधकत्वाच्चेत्यर्थः ॥ ७ ॥ न लिप्यत इत्येतदुपपादयति—**नैवेति** द्वाभ्याम् । तत्त्ववित् अहं नैव किंचित्करोमीति मन्येत मन्यते । तत्र

४ मधुसूदनीव्याख्या ।

सर्वेषां भूतानामात्मभूत आत्मा यस्येति व्याख्याने तु सर्वभूतात्मेत्येतावतैवार्थलाभादात्मभूतेत्यधिकं स्यात् । सर्वात्मपदयोर्जडाजडपरत्वे तु समञ्जसम् । एतादृशः परमार्थदर्शी कुर्वन्नपि कर्माणि परदृष्ट्या न लिप्यते तैः कर्मभिः । स्वदृष्ट्या तदभावादित्यर्थः ॥ ७ ॥ एतदेव विवृणोति द्वाभ्यां—चक्षुरादिज्ञानेन्द्रियैर्वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेन च तत्तच्चेष्टासु क्रियमाणासु इन्द्रियाणि इन्द्रियादीन्येवेन्द्रियार्थेषु स्वस्वविषयेषु वर्तन्ते प्रवर्तन्ते नत्वहमिति धारयन्नवधारयन् नैव किंचित्करोमीति मन्येत मन्यते । तत्त्ववित्परमार्थदर्शी युक्तः समाहितचित्तः । अथवा आदौ युक्तः कर्मयोगेन पश्चादन्तःकरणशुद्धिद्वारेण

५ भाष्योत्कर्षदीपिका ।

हेतुमाह । सर्वेषां ब्रह्मादिस्थावरान्तानां भूतानां योऽनुस्यूत आत्माऽसङ्गोदासीनचिद्रूपस्तं भूतः प्राप्तस्तदैक्यज्ञानवानात्मान्तःकरणं यस्येति तदुपेक्ष्यम् । 'कथमसतः सज्जायत' इति श्रुतिमनुरुध्याकरणादभावरूपाद्भावरूपस्य प्रत्यवायस्यानुत्पत्तेराचार्यैरसकृदुक्तत्वात्सर्वेत्यादेरार्जवेन भाष्योक्तमार्गेणोक्तार्थलाभे संभवति क्लिष्टकल्पनाया अन्याय्यत्वात् । योगेन निर्विकल्पसमाधिना युक्त इत्याद्युपेक्ष्यं प्रकरणविरोधस्योक्तत्वात् ॥ ७ ॥ कुर्वन्नपि कुतो न लिप्यत इत्याशङ्क्य यतोऽसौ परमार्थतो न करोतीत्याह द्वाभ्याम्—**नैवेति** । युक्तः समाहितः सन्नादौ कर्मयोगयुक्त इति वाऽयं पक्षोऽध्याहारसापेक्षत्वादाचार्यैरुपेक्षितः । तत्त्ववित्परमार्थदर्शी नैव किंचित्करोमीति मन्येत मन्यते । कदेत्यपेक्षायामाह—पश्यन्नित्यादि । अपेः सर्वत्र संबन्धः । पश्यन्नित्यादिज्ञानेन्द्रियाणां व्यापारान्, गच्छन्निति पादयोर्व्यापारं, स्वपन्निति बुद्धेः, श्वसन्निति प्राणस्य, प्रलपन्निति वाचः, विसृजन्निति पायूपस्थयोः, गृह्णन्निति हस्तयोः, उन्मिषन्निमिषन्निति कूर्माख्यप्राणस्य, कुर्वन्नपीन्द्रियाणीन्द्रियार्थेषु वर्तन्ते नाहमसङ्ग आत्मेति धारयन् बुद्ध्या निश्चयं कुर्वन् नैव किंचित्करोमीति तत्त्वविन्मन्यतेऽतो न लिप्यत इत्यर्थः । यद्वा नन्वेवं कर्तृत्वाभिमानशून्य इन्द्रियैः प्रतिषिद्धमपि कुर्यादित्यत आह—**इन्द्रियाणीति** ।

६ श्रीधरीव्याख्या ।

न्द्रियाणि येन । ततश्च सर्वेषां भूतानामात्मभूत आत्मा यस्य सः । लोकसंग्रहार्थं स्वाभाविकं वा कर्म कुर्वन्नपि न लिप्यते तैर्न बध्यते ॥ ७ ॥ कर्म कुर्वन्नपि न लिप्यत इत्येतद्विरुद्धमित्याशङ्क्य कर्तृत्वाभिमानाभावान्न विरुद्धमित्याह—**नैवेति** द्वाभ्याम् । कर्मयोगेन युक्तः

७ अभिनवगुप्ताचार्यव्याख्या ।

यस्य स सर्वमपि कुर्वाणो न लिप्यते । करणप्रतिषेधरूढत्वात् । अतएव दर्शनादीनि कुर्वन्नप्यसावेव धारयति प्रतिपत्तिदार्ढ्येन निश्चिनुते ।

१ नीलकण्ठः. २ श्रीधरः. ३ मधुसूदनः.

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम् ।

तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मस्वकर्मैव पश्यतः सम्यग्दर्शिनस्तस्य सर्वकर्मसंन्यास एवाधिकारः कर्मणोऽभावदर्शनात् । नहि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञानेऽपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥ ९ ॥ यस्तु पुनस्तत्त्ववित्प्रवृत्तश्च कर्मयोगे ब्रह्मणीश्वर आधाय निक्षिप्य तदर्थं करोमीति भृत्य इव स्वाम्यर्थं सर्वाणि कर्माणि मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः

२ आनन्दगिरिव्याख्या ।

वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेन च तत्तच्चेष्टानिर्वर्तनावस्थायां तत्तदर्थेषु सर्वा प्रवृत्तिरिन्द्रियाणामेवेत्यनुसंदधानो नैव किंचित्करोमीति विद्वान्प्रतिपद्यत इत्यर्थः । यथोक्तस्य विदुषो विध्यभावेऽपि विद्यासामर्थ्यात्प्रतिपत्तिकर्मभूतं कर्मसंन्यासं फलात्मकमभिलषति—यस्येति । अज्ञस्येव विदुषोऽपि कर्मसु प्रवृत्तिसंभवात्कुतः संन्यासेऽधिकारः स्यादित्याशङ्क्याह—नहीति ॥ ९ ॥ तर्हि विद्वानिवाविद्वानपि कर्मणि न प्रवर्तेत पापोपहतिसंभवादित्याशङ्क्याह—यस्त्विति । यथा भृत्यः स्वाम्यर्थं कर्माणि करोति न स्वफलमपेक्षते तथैव यो विद्वान्मोक्षेऽपि सङ्गं त्यक्त्वा

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

हेतुः । इन्द्रियाणि उपलक्षणमिदं प्राणादेरपि । इन्द्रियादय इन्द्रियार्थेषु स्वेषु विषयेषु वर्तन्ते इति धारयन्निश्चिन्वन्नत्वहं विषयेषु वर्ते इति मन्यते । धारयन्निति हेतौ शतृप्रत्ययः । अत्र दर्शनादयः पञ्चज्ञानेन्द्रियाणां व्यापाराः । गमनविसर्गप्रलपनग्रहणानि कर्मेन्द्रियाणाम् । तानिच आनन्दस्योपलक्षणानि । श्वसन्निति प्राणस्य, स्वपन्निति बुद्धेः, उन्मेषणनिमेषणे कूर्माख्यप्राणस्येति विभागः । क्रमस्त्वविवक्षितः । एतानि कुर्वन्नप्यभिमानाभावान्न लिप्यत इत्यर्थः ॥ ८ ॥ ९ ॥ ब्रह्मणीति । यतो विद्वानसङ्गत्वात्कुर्वन्नपि न लिप्यते तस्मादविद्वानपि ब्रह्मणि सर्वान्तर्यामिणि

४ मधुसूदनीव्याख्या ।

तत्त्वविद्भूत्वा नैव किंचित्करोमीति मन्यत इति संबन्धः–॥ ८ ॥–तत्र दर्शनश्रवणस्पर्शनघ्राणाशनानि चक्षुःश्रोत्रत्वग्घ्राणरसनानां पञ्चज्ञानेन्द्रियाणां व्यापाराः पश्यन्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्नित्युक्ताः । गतिः पादयोः, प्रलापो वाचः, विसर्गः पायूपस्थयोः, ग्रहणं हस्तयोरिति पञ्च कर्मेन्द्रियव्यापाराः गच्छन्प्रलपन्विसृजन्गृह्णन्नित्युक्ताः । श्वसन्निति प्राणादिपञ्चकस्य व्यापारोपलक्षणम् । उन्मिषन्निमिषन्निति नागकूर्मादिपञ्चकस्य । स्वपन्नित्यन्तःकरणचतुष्टयस्य । अर्थक्रमवशात्पाठक्रमं भंक्त्वा व्याख्याताविमौ श्लोकौ । यस्मात्सर्वव्यापारेष्वप्यात्मनोऽकर्तृत्वमेव पश्यति अतः कुर्वन्नपि न लिप्यत इति युक्तमेवोक्तमिति भावः ॥ ९ ॥ तर्ह्यविद्वान्कर्तृत्वाभिमानाल्लिप्येतैव तथाच कथं तस्य संन्यासपूर्विका ज्ञाननिष्ठा स्यादिति तत्राह—ब्रह्मणि परमेश्वरे आधाय समर्प्य सङ्गं

५ भाष्योत्कर्षदीपिका ।

इन्द्रियाणीन्द्रियार्थैष्विष्टेषु विषयेषु वर्तन्त इति हेतोरन्याय्यमपि कुर्युरित्यत इन्द्रियाणि धारयन्त्स्वायत्तानि यथेष्टसंचारपराङ्मुखानि कुर्वन्निति । अस्मिन्पक्षे प्रकरणविरोधोऽनुषङ्गक्लेशश्च परिहर्तव्यः ॥ ८ ॥ ९ ॥ एवं तत्त्वविदो लौकिककर्मणा मुधा चेष्टामात्रेण लेपो नास्तीत्युक्तं, इदानीमतत्त्वविदो मुमुक्षोः का गतिरित्यपेक्षायामाह—**ब्रह्मणीति** । ब्रह्मणि परमेश्वरे भृत्यइव स्वामिने तदर्थं करोमीति समर्प्य मोक्षेऽपि फले सङ्गं त्यक्त्वा यः सर्वाणि कर्माणि करोति सोऽम्भसा पद्मपत्रमिव पापेन न संबध्यते। मुमुक्षुं प्रति पुण्यस्यापि प्रतिबन्धकत्वात्पापेनेत्युक्तं, इतरे तु विद्वत्परत्वेनैवं श्लोकं योजयन्ति । तथाहि तत्त्वविदो यो लेपः स किंस्वाभाविकेन्द्रियशरीरचेष्टाजन्य उत वैधेन्द्रियादिचेष्टाजन्यः । आद्यंप्रति द्वाभ्यामुक्त्वा द्वितीयं प्रत्याह—**ब्रह्मणीति** । स किंवा तत्तत्कर्मजन्यसुकृतापूर्वलक्षणः किंवा तत्तत्कर्मोपयोग्यर्थप्रतिग्रहादिजन्यदुरितापूर्वलक्षणः । नाद्य इत्याह —**ब्रह्मणीत्यादि** । ब्रह्मार्पणबुद्ध्या क्रियमाणेषु कर्मसु नापूर्वोत्पत्तिरिति भावः । न द्वितीय इत्याह—**सङ्गं त्यक्त्वेति** । सङ्गमैहिकधनादिफलासङ्गं ततश्च न दुरितापूर्वोत्पत्तिरिति भावः । तद्वि-

६ श्रीधरीव्याख्या ।

क्रमेण तत्त्वविद्भूत्वा दर्शनश्रवणादीनि कुर्वन्नपि इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्बुद्ध्या निश्चित्य किंचिदप्यहं न करोमीति मन्येत मन्यते । तत्र दर्शनश्रवणस्पर्शनावघ्राणाशनानि चक्षुरादिज्ञानेन्द्रियव्यापाराः, गतिः पादयोः, स्वापो बुद्धेः, श्वासः प्राणस्य, प्रलपनं वागिन्द्रियस्य, विसर्गः पायूपस्थयोः, ग्रहणं हस्तयोः, उन्मेषणनिमेषणे कूर्माख्यप्राणस्येति विवेकः । एतानि कर्माणि कुर्वन्नप्यनभिमानाद्ब्रह्मविन्न लिप्यते । तथाच पारमर्षं सूत्रं—'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति ॥ ८ ॥ ९ ॥ तर्हि यस्य करोमीत्यभिमानोऽस्ति तस्य कर्मलेपो दुर्वारः अविशुद्धचित्तत्वात्संन्यासोऽपि नास्तीति महत्संकटमापन्नमित्याशङ्क्याह—**ब्रह्मणीति** । ब्रह्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

चक्षुरादीनामिन्द्रियाणां यदि स्वविषयेषु प्रवृत्तिः मम किमायातम् । नह्यन्यस्य कृतेनापरस्य लेप इति । तदेव ब्रह्मणि कर्मणां समर्पणम् । अत्र

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**सर्वकर्माणि, लिप्यते न स पापेन न संबध्यते पद्मपत्रमिवाम्भसोदकेन ॥ १० ॥ केवलं सत्त्वशुद्धिमात्रफलमेव तस्य कर्मणः स्यात्, यस्मात्—कायेन देहेन मनसा बुद्ध्या च केवलैर्ममत्ववर्जितैरपीश्वरायैव कर्म करोमि न मम फलायेति ममत्वबुद्धिशून्यैरिन्द्रियैरपि । केवलशब्दः कायादिभिरपि प्रत्येकं संबध्यते सर्वव्यापारेषु ममतावर्जनाय, योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयमात्म-**

२ आनन्दगिरिव्याख्या ।

भगवदर्थमेव सर्वाणि कर्माणि करोति न स स्वकर्मणा बध्यते । नहि पद्मपत्रमम्भसा संबध्यते तद्वदित्यर्थः ॥ १० ॥ अविदुषस्तर्हि कृतेन कर्मणा किं स्यादित्याशङ्क्याह—**केवलमिति** । अज्ञस्येश्वरार्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धिफलमित्यत्रैव हेतुमाह—**यस्मादिति** । केवलशब्दस्य प्रत्येकं संबन्धे प्रयोजनमाह—**सर्वव्यापारेष्विति** । कर्मणश्चित्तशुद्धिफलत्वे तादर्थ्येन कर्मानुष्ठानमेव तव कर्तव्यमिति यस्मादित्यस्यापेक्षितं वदन्फलितमाह—**तस्मादिति** ॥ ११ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्माण्याधाय अयमेव कारयिता नत्वहं कर्तेति समर्प्य यः कर्माणि करोति सः पापेन न लिप्यतेऽम्भसा पद्मपत्रमिव ॥ १० ॥ **कायेनेति** । केवलैरिति विपरिणामेन सर्वत्र संबन्धनीयम् । केवलेन कायेन अहमयं ब्राह्मणो युवेत्यात्माध्यासशून्येन । एवमन्यत्रापि सङ्गं त्यक्त्वा देहादिभ्यो विविक्तेऽपि आत्मनि तार्किकादिवदहं करोमीत्यभिनिवेशं त्यक्त्वा योगिनः कर्म कुर्वन्ति । आत्मशुद्धये चित्तशुद्ध्यर्थम् । तस्मात्त्वापि तत्रैवाधिकारोऽस्तीति तदेव त्वं कुरु

४ मधुसूदनीव्याख्या ।

फलाभिलाषं त्यक्त्वेश्वरार्थं भृत्यइव स्वाम्यर्थं स्वफलनिरपेक्षतया करोमीत्यभिप्रायेण कर्माणि लौकिकानि वैदिकानि च करोति यो लिप्यते न स पापेन पापपुण्यात्मकेन कर्मणेति यावत् । यथा पद्मपत्रमुपरि प्रक्षिप्तेनाम्भसा न लिप्यते तद्वद्भगवदर्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धिफलमेव स्यात् ॥ १० ॥ तदेव विवृणोति—कायेन मनसा बुद्ध्येन्द्रियैरपि योगिनः कर्मिणः फलसङ्गं त्यक्त्वा कर्म कुर्वन्ति । कायादीनां सर्वेषां विशेषणं केवलैरिति । ईश्वरायैव करोमि न मम फलायेति ममताशून्यैरित्यर्थः । आत्मशुद्धये चित्तसत्त्वशुद्ध्यर्थम् ॥ ११ ॥ कर्तृत्वाभिमानसाम्येऽपि तेनैव कर्मणा कश्चिन्मुच्यते कश्चित्तु बध्यत इति वैषम्ये

५ भाष्योत्कर्षदीपिका ।

चार्यम् । ब्रह्मार्पणबुद्ध्या कर्मकरणेऽतत्त्वविदो मुमुक्षोरेवाधिकारादन्यथानन्तरश्लोकेनासंगत्यापत्तेः । ननु कानि चेदृशानि कर्माणि यानि धनार्जनतया विनानुष्ठातुं शक्यानि सन्ति सत्त्वविशुद्धये भवन्तीत्याशङ्कां परिहरन् कर्मयोगानुष्ठाने शिष्टाचारं प्रमाणयति कायेनेतीति स्वपरग्रन्थविरोधाच्च । अवशिष्टं तु भाष्यानुरोधेनोपादेयं, मोक्षफले सर्वफलानामन्तर्भावेन तदासक्तिवारणेन भाष्यकारैः सर्वफलासक्तेर्वारितत्वात् ॥ १० ॥ यस्मात्कायेन केवलेनाहंभावममभावविवर्जितेन तथा केवलेन मनसा केवलया बुद्ध्या केवलैरिन्द्रियैरपि कर्मयोगिनः कर्म कुर्वन्ति । केवलैरितिपदं मनसेत्यनेन, वचनस्य कायेन बुद्ध्येत्याभ्यां लिङ्गवचनयोर्व्यत्ययेन योजनीयम् । अत्रापरे केवलपदव्यावर्त्यं धनादि वर्णयन्ति । तथाहि केवलवाचालब्धधनादिलाभानपेक्षितता ततश्च केवलेन कायेन स्नानशौचद्विजोच्छिष्टमार्जनादीनि कर्माणि योगिनः कुर्वन्ति नतु तेषामतीतकालता नापि कदाचिद्धनापेक्षेति भावः । तथा केवलेन मनसा जगदीशध्यानं यथाशक्ति परोपकारसंकल्पनादीनि च, कर्णाभ्यामुत्तमश्लोकजन्मकर्माकर्णनादीनि, रसनया तीर्थनैवेद्यास्वादनादीनि, घ्राणेन तदुपभुक्तमाल्यामोदग्रहणादीनि, त्वचा पुण्यतीर्थोदकस्पर्शादीनि, पद्भ्यां तीर्थाटनादीनि हस्ताभ्यां परेशपूजादीनि, वाचा स्तुत्यादीनि, च कुर्वन्ति सङ्गं धनादिफलासङ्गं त्यक्त्वेति तैर्मानसादिकर्माणि धनाद्यपेक्षाऽप्रसक्तेस्तत्रापि स्वेन संबन्धितस्य केवलपदस्य वैयर्थ्यं परिहर्तव्यम् । तस्मात्सर्वव्यापारेषु ममतावर्जिता योगिनः कर्म कुर्वन्ति । सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये सत्त्व-

६ श्रीधरीव्याख्या ।

ण्याधाय परमेश्वरे समर्प्य तत्फले च सङ्गं त्यक्त्वा यः कर्माणि करोति असौ पापेन बन्धहेतुतया पापिष्ठेन पुण्यपापात्मकेन कर्मणा न लिप्यते । यथा पद्मपत्रमम्भसि स्थितमप्यम्भसा न लिप्यते तद्वत् ॥ १० ॥ बन्धकत्वाभावमुक्त्वा मोक्षहेतुत्वं सदाचारेण दर्शयति—**कायेनेति** । कायेन स्नानादि, बुद्ध्या तत्त्वनिश्चयादि, केवलैः कर्माभिनिवेशरहितैरिन्द्रियैश्च श्रवणकीर्तनादिलक्षणं कर्म फलसङ्गं त्यक्त्वा

७ अभिनवगुप्ताचार्यव्याख्या ।

चिह्नमस्य गतसङ्गत्वा । अतो न लिप्यते । योगिनश्च केवलैः सङ्गरहितैः परस्परानपेक्षिभिश्च कायादिभिः कुर्वन्ति कर्माणि सङ्गाभावात्

१ श्रीधरः.

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

१ श्रीमच्छांकरभाष्यम् ।

शुद्धये । सत्त्वशुद्धय इत्यर्थः । तस्मात्तत्रैव तवाधिकार इति कुरु कर्मैव ॥ ११ ॥ यस्माच्च—युक्त ईश्वराय कर्माणि करोमि न मम फलायेत्येवं समाहितः सन्कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः । यस्तु पुनरयुक्तोऽसमाहितः कामकारेण करणं कारः कामस्य कारः कामकारस्तेन कामकारेण । कामप्रेरिततयेत्यर्थः । मम फलायेदं करोमि कर्मेत्येवं फले सक्तो निबध्यतेऽतस्त्वं युक्तो भवेत्यर्थः ॥ १२ ॥ यस्तु परमार्थदर्शी सः । सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च सर्वकर्माणि तानि मनसा विवेकबुद्ध्या । कर्मादावकर्मसंदर्शनेन संत्यज्येत्यर्थः । आस्ते

२ आनन्दगिरिव्याख्या ।

इतश्च सङ्गं त्यक्त्वा कर्मानुष्ठानं त्वया कर्तव्यमित्याह—यस्माच्चेति । युक्तः सन्फलं त्यक्त्वा कर्म कुर्वन्मोक्षाख्यां शान्तिं यस्मादाप्नोति तस्माच्च त्वया सङ्गं त्यक्त्वा कर्म कर्तव्यमिति योजना । विपक्षे दोषमाह—अयुक्त इति । युक्तत्वं व्याकरोति—ईश्वरायेति । फलं परित्यज्य कर्म कुर्वन्निति शेषः । नैष्ठिकी शान्तिरित्येतदेव विशदयति—सत्त्वेति । द्वितीयमर्धं विभजते—यस्त्विति । असमाधाने दोषादर्जुनस्य नियोगं दर्शयति—अतस्त्वमिति ॥ १२ ॥ तर्हि फले सक्तिं त्यक्त्वा सर्वैरपि कर्तव्यमिति कर्मसंन्यासस्य निरवकाशत्वमित्याशङ्क्याऽविदुषः सकाशाद्विदुषो विशेषं दर्शयति—यस्त्विति । सर्वकर्मपरित्यागे प्राप्तं मरणं व्यावर्तयति—आस्त इति । वृत्तिं लभमानोऽपि शरीरतापे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ ११ ॥ किंच युक्त इति । युक्तो ब्रह्मण्याधाय कर्माणीत्यादिनोक्तलक्षणः कर्मणां फलं त्यक्त्वा ईश्वरे समर्प्य शान्तिं कैवल्यं नैष्ठिकीं सत्त्वशुद्ध्यादिक्रमप्राप्तब्रह्मनिष्ठाफलभूतां प्राप्नोति । अयुक्तस्तद्विपरीतः कामकारेण स्वैरवृत्त्या फले सक्तः सन् नितरां बध्यते ॥ १२ ॥ एवमविद्वान्फलासक्त्यनासक्तिवशात्कर्मभिर्बध्यते न बध्यते चेत्युक्तम्, विद्वांस्तु तद्विपरीत इत्याह—सर्वकर्माणीति । वशी जितचित्तः समाधिस्थो योगी नवद्वारे नवैव पञ्चज्ञानेन्द्रियाणि षष्ठः

४ मधुसूदनीव्याख्या ।

को हेतुरिति तत्राह—युक्तः ईश्वरायैवैतानि कर्माणि न मम फलायेत्येवमभिप्रायवान्कर्मफलं त्यक्त्वा कर्माणि कुर्वन् शान्तिं मोक्षाख्यामाप्नोति । नैष्ठिकीं सत्त्वशुद्धिं नित्यानित्यवस्तुविवेकसंन्यासज्ञाननिष्ठाक्रमेण जातामिति यावत् । यस्तु पुनरयुक्त ईश्वरायैवैतानि कर्माणि न मम फलायेत्यभिप्रायशून्यः स कामकारेण कामतः प्रवृत्त्या मम फलायैवेदं कर्म करोमीति फले सक्तो निबध्यते कर्मभिर्नितरां संसारबन्धं प्राप्नोति । यस्मादेवं तस्मात्त्वमपि युक्तः सन्कर्माणि कुर्विति वाक्यशेषः ॥ १२ ॥ अशुद्धचित्तस्य केवलात्संन्यासात्कर्मयोगः श्रेयानिति पूर्वोक्तं प्रपञ्च्याधुना शुद्धचित्तस्य सर्वकर्मसंन्यास एव श्रेयानित्याह—नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं चेति सर्वाणि कर्माणि मनसा 'कर्मण्यकर्म यः पश्येत्' इत्यत्रोक्तेनाकर्त्रात्मस्वरूपसम्यग्दर्शनेन

५ भाष्योत्कर्षदीपिका ।

शुद्धय इत्यर्थ इति भाष्यमेव रमणीयम् ॥११॥ न केवलं सत्त्वशुद्ध्यर्थमेव कर्माण्यनुष्ठेयान्यपितु परंपरया मोक्षायापीत्याह—युक्त इति । युक्तः परमेश्वराय कर्माणि न मम फलायेत्येवं समाहितः सन् कर्मफलं परित्यज्य शान्तिं मोक्षाख्यां नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेण प्राप्नोति । विपक्षे दोषमाह । यस्तु पुनरयुक्तोऽसमाहितः कामकारेण कामप्रेरणया फलार्थमिदं कर्म करोमीत्येवं फले सक्तः स निबध्यतेऽतस्त्वं युक्तः सन् कर्माणि कुर्वित्यभिप्रायः ॥ १२ ॥ एवमशुद्धचित्तस्याविदुषः संन्यासात्कर्मयोगो विशिष्यत इत्युपपादितम् । शुद्धचित्तः परमार्थदर्शी कथमास्त इत्यपेक्षायामाह—सर्वेति । सर्वाणि नित्यं

६ श्रीधरीव्याख्या ।

चित्तशुद्धये योगिनः कर्म कुर्वन्ति ॥ ११ ॥ ननु तेनैव कर्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इति व्यवस्था कथमत आह—युक्त इति । युक्तः परमेश्वरैकनिष्ठः सन्कर्मणां फलं त्यक्त्वा कर्माणि कुर्वन्नात्यन्तिकीं शान्तिं मोक्षं प्राप्नोति । अयुक्तस्तु बहिर्मुखः कामकारेण कामतः प्रवृत्त्या फले आसक्तो नितरां बन्धं प्राप्नोति ॥ १२ ॥ एवं तावच्चित्तशुद्धिशून्यस्य संन्यासात्कर्मयोगो विशिष्यत इत्येतत्प्रपञ्चितम् । इदानीं शुद्धचित्तस्य संन्यासः श्रेष्ठ इत्याह—सर्वकर्माणीति । वशी यतचित्तः । सर्वाणि कर्माणि विक्षेपकाणि मनसा विवेकयुक्तेन

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ युक्त इति । नैष्ठिकीमपुनरावर्तिनीम् ॥ १२ ॥ सर्वेति । यथा वेश्मान्तर्गतस्य पुंसो न गृहगतैर्जीर्णत्वादि-

१ श्रीमच्छांकरभाष्यम्।

**तिष्ठति सुखं त्यक्तवाङ्मनःकायचेष्टो यतिर्निरायासः प्रसन्नचित्त आत्मनोऽन्यत्र निवृत्तबाह्यसर्वप्रयोजन इति सुखमास्त इत्युच्यते। वशी जितेन्द्रिय इत्यर्थः। क्व कथमास्त इत्याह—नवद्वारे पुरे सप्त शीर्षण्यान्यात्मन उपलब्धिद्वाराण्यर्वाग्द्वे मूत्रपुरीषविसर्गार्थे तैर्द्वारैर्नवद्वारं पुरमुच्यते, शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं तस्मिन्नवद्वारे पुरे देही सर्वं कर्म संन्यस्यास्ते। किं विशेषणेन, सर्वो हि देही संन्यास्यसंन्यासी वा देह एवास्ते, तत्रानर्थकं विशेषणमिति। उच्यते, यस्त्वज्ञो देही देहेन्द्रियसंघातमात्रात्मदर्शी स सर्वोऽपि गेहे भूमावासने वास इति मन्यते। नहि देहमात्रात्मदर्शिनो गेह इव देह आस इति प्रत्ययः संभवति।**

२ आनन्दगिरिव्याख्या।

नाध्यात्मिकादिना तप्यमानस्तिष्ठतीति चेन्नेत्याह—**सुखमिति**। कार्यकरणसंघातपारवश्यं पर्युदस्यति—**वशीति**। आसनस्यापेक्षितमधिकरणं निर्दिशति—**नवेति**। देहसंबन्धाभिमानाभासवत्त्वमाह—**देहीति**। मनसा सर्वकर्मसंन्यासेऽपि लोकसंग्रहार्थं बहिः सर्वं कर्म कर्तव्यमिति प्राप्तं प्रत्याह—**नैवेति**। तान्येव सर्वाणि कर्माणि परित्याज्यानि विशिनष्टि—**नित्यमिति**। तेषां परित्यागे हेतुमाह—**तानीति**। यदुक्तं सुखमास्त इति तदुपपादयति—**त्यक्तेति**। जितेन्द्रियत्वं कायवशीकारस्याप्युपलक्षणम्, द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके वागेकेति सप्त शीर्षण्यानि शिरोगतानि शब्दाद्युपलब्धिद्वाराणि। अथापि कथं नवद्वारत्वमधोगताभ्यां पायूपस्थाभ्यां सहेत्याह—**अर्वागिति**। शरीरस्य पुरसाम्यं स्वामिना पौरैश्चाधिष्ठितत्वेन दर्शयति—**आत्मेत्यादिना**। यद्यपि देहे जीवनत्वाद्देहसंबन्धाभिमानाभासवानवतिष्ठते तथापि प्रवासीव परगेहे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन्व्यामोहादिरहितश्च तिष्ठतीति मत्वाह—**तस्मिन्निति**। विशेषणमाक्षिपति—**किमिति**। तदनुपपत्तिमेव दर्शयति—**सर्वो हीति**। सर्वसाधारणे देहावस्थाने संन्यस्य देहे तिष्ठति विद्वानिति विशेषणमकिंचित्करमिति फलितमाह—**तत्रेति**। विशेषणफलं दर्शयन्नुत्तरमाह—**उच्यत इति**। किमविवेकिनं प्रति विशेषणानर्थक्यं चोद्यते किं वा विवेकिनं प्रतीति विकल्प्याद्यमङ्गीकरोति—**यस्त्विति**। अज्ञत्वं देहित्वे हेतुः। तदेव देहित्वं स्फुटयति—**देहेति**। संघातात्मदर्शिनोऽपि देहे स्थितिप्रतिभासः

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

प्राणस्तेनैव तत्प्रवर्त्यानां कर्मेन्द्रियाणां संग्रहः। बुद्ध्यहंकारचित्तानीति नव। एतानि द्वाराणीव पुरपतेर्जीवस्य भोगार्थं विषयप्रवेशस्थानानि यस्मिन्नवद्वारे शरीराख्ये पुरे विचित्रवासनाकल्पितानन्तविषयवति अनेकैः कर्मसचिवैरधिष्ठिते

४ मधुसूदनीव्याख्या।

संन्यस्य परित्यज्य प्रारब्धकर्मवशादास्ते तिष्ठत्येव। किं दुःखेन, नेत्याह—सुखमनायासेन, आयासहेतुकायवाङ्मनोव्यापारशून्यत्वात्। कायवाङ्मनांसि स्वच्छन्दानि कुतो न व्याप्रियन्ते तत्राह—वशी स्ववशीकृतकार्यकरणसंघातः। क्वास्ते। नवद्वारे पुरे। द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके वागेकेति शिरसि सप्त द्वे पायूपस्थाख्ये अध इति नवद्वारविशिष्टे देहे। देही

५ भाष्योत्कर्षदीपिका।

नैमित्तिकं काम्यं प्रतिषिद्धं चेति तानि कर्माणि मनसा विवेकबुद्ध्या कर्मादावकर्मदर्शनेन संत्यज्य सुखमास्ते दुःखहेतुसर्वव्यापारोपरमात्। यतः वशी जितेन्द्रियः। क्व आस्त इत्यत आह। नवद्वारे पुरे। द्वे श्रोत्रे नेत्रे नासिके मुखं चेति सप्त शिरसि अवाक् द्वे मूत्रपुरीषविसर्गार्थे। एवं नवद्वारयुक्ते पुरे नगरस्थानीये आत्मैकस्वामिके इन्द्रियाणि परिचारकाः बुद्धिरमात्योऽहंकारो युवराजो मनःशिल्पीत्येवंरूपैरिन्द्रियादिभिः पौरैरधिष्ठिते आस्ते। यतो देही देहाद्यतिरिक्तात्मदर्शी। यस्त्वज्ञः सतु देहात्मदर्शी गेहादावास्तेऽतो युक्तं विशेषणम्। यद्यप्येवं तथाप्यात्मसमवायित्वेन कर्तृत्वकारयितृत्वे तस्य स्यातामित्यत आह। नैव कुर्वन्स्वयं न च कारयन् कार्यकरणानि क्रियासु प्रवर्तयन्नास्त इति संबन्धः। यत्तु वशी विवेकवैराग्यसंपन्नो नवद्वारे पुरे मानुषे शरीरे सुखमास्त इति संबन्धः। यद्यपि नवद्वारं श्वमार्जारादिशरीरमपि भवति तथापि वशिशब्दसंयोगान्मानुषमिति लभ्यते। सुखमिति क्रियाविशेषणम्। अनेनान्तःकरणस्य हर्षशोकादयः परिणामा निराकृताः। वशीत्यत्र वैराग्योक्त्या रागाद्यपरपर्यायकामतदवस्थाविशेषक्रोधरूपावन्तःकरणपरिणामौ वारितौ। विवेकोक्त्या चाहंकारतन्निबन्धनममकाराध्यासौ चिन्तनात्मकचित्तपरिणामं च निराकृत्य विशुद्धचिदाकारतया बुद्धेरवस्थानमुक्तम्। ततश्च विशुद्धचिदाकारबुद्धिपरिणाम एव निष्कृष्टो वशिशब्देनोक्तः। किं कृत्वेत्यत आह। मनसा सह सर्वकर्माणि संन्यस्य त्यागेन ज्ञानमप्युपलक्ष्यते। ततश्च संन्यस्यात्मानं ज्ञात्वा सुखमास्त इति ज्ञेयम्। वशिनं विशिनष्टि—**अदेहीति**। देहो लिङ्गशरीरं तद्रहितः। अयमाशयः—षोडशकलात्मा हि पुरुषः। तत्र भूतेन्द्रियप्राणाः प्रवर्त्याः। प्रवर्तक-

६ श्रीधरीव्याख्या।

संन्यस्य सुखं यथा भवत्येवं ज्ञाननिष्ठः सन्नास्ते। क्वास्त इत्यत आह। नवद्वारे नेत्रे नासिके कर्णौ मुखं चेति सप्त शिरोगतानि

१ मधुसूदनः।

१ श्रीमच्छांकरभाष्यम् ।

**देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु देह आस इति प्रत्यय उपपद्यते । परकर्मणां च परस्मिन्नात्मन्यविद्ययाध्यारोपितानां विद्यया विवेकज्ञानेन मनसा संन्यास उपपद्यते । उत्पन्नविवेकविज्ञानस्य सर्वकर्मसंन्यासिनोऽपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेर्देह एवास्त इत्यस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् । यद्यपि कार्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि संन्यस्यास्त इत्युक्तं तथाप्यात्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यादित्याशङ्क्याह नैव कुर्वन्स्वयं न कार्यकरणानि कारयन्क्रियासु प्रवर्तयन् । किं यत्तत्कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायि सत्संन्यासान्न संभवति यथा गच्छतो गतिर्गमनव्यापार-**

२ आनन्दगिरिव्याख्या ।

स्यादिति चेन्नेत्याह—**नहीति** । द्वितीयं दूषयति—**देहादीति** । गृहादिषु देहस्यावस्थानेनात्मावस्थानभ्रमव्यावृत्त्यर्थं देहे विद्वानास्त इति विशेषणमुपपद्यते विवेकवतो देहेऽवस्थानप्रतिभाससंभवादित्यर्थः । ननु विवेकिनो देहावस्थानप्रतिभानेऽपि वाङ्मनोदेहव्यापारात्मनां कर्मणां तस्मिन्प्रसङ्गाभावात्तत्त्यागेन कुतस्तस्य देहेऽवस्थानमुच्यते तत्राह—**परकर्मणां चेति** । ननु विवेकिनो दिगाद्यनवच्छिन्नबाह्याभ्यन्तराविक्रियब्रह्मात्मतां मन्यमानस्य कुतो देहेऽवस्थानमास्थातुं शक्यते तत्राह—**उत्पन्नेति** । तत्र हेतुमाह—**प्रारब्धेति** । यदि प्रारब्धफलं धर्माधर्मात्मकं कर्म तस्योपभुक्तस्य शेषादनुपभुक्ताद्देहादिसंस्कारोऽनुवर्तते तदनुवृत्त्या च तत्रैव देहे विशेषविज्ञानमवस्थानविषयमुपपद्यतेऽतो विवेकवतः संन्यासिनो देहेऽवस्थानव्यपदेशः संभवतीत्यर्थः । अविद्वत्प्रत्ययापेक्षया विशेषणासंभवेऽपि विद्वत्प्रत्ययापेक्षया विशेषणमर्थवदित्युपसंहरति—**देह एवेति** । देहे स्वावस्थानविषयो विद्वत्प्रत्ययस्तदविषयश्चाविद्वत्प्रत्ययस्तयोरेवं भेदे विद्वत्प्रत्ययापेक्षया विशेषणमर्थवदित्युपसंहरन्नेव हेतुं विशदयति—**विद्वदिति** । आरोपितकर्तृत्वाद्यभावेऽपि स्वगतकर्तृत्वादि दुर्वारमित्याशङ्कामनूद्य दूषयति—**यद्यपीत्यादिना** । क्रियासु प्रवर्तयन्नास्त इति पूर्वेण संबन्धः । पूर्वस्यापि शतुरेवमेव संबन्धः । कर्तृत्वं कारयितृत्वं चात्मनो नेत्यत्र विचारयति—**किमिति** । यत्कर्तृत्वं कारयितृत्वं

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सुखदुःखादिनानापण्यवति मनसा सर्वद्वारोद्घाटनकुञ्चिकया सह सर्वाणि कर्माणि पुरपतिरिव राजकार्याणि संन्यस्य सुखं निर्विकल्पसंविन्मात्ररूपेणास्ते । कर्माणि क्षेत्रस्यैव धर्मो नत्वात्मन इति क्षेत्रे त्यक्तुं शक्यान्येव । तथाच श्रुतिः 'शरीरे पाप्मनो हित्वा' इति । 'यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वाः स्वायाम्' इति च । देही सन् देहाभि-

४ मधुसूदनीव्याख्या ।

देहभिन्नात्मदर्शी प्रवासीव परगेहे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन्नहंकारममकारशून्यस्तिष्ठति । अज्ञो हि देहतादात्म्याभिमानाद्देह एव नतु देही । सच देहाधिकरणमेवात्मनोऽधिकरणं मन्यमानो गृहे भूमावासने वाहमास इत्यभिमन्यते नतु देहेऽहमास इति भेददर्शनाभावात् । संघातव्यतिरिक्तात्मदर्शी तु सर्वकर्मसंन्यासी भेददर्शनाद्देहेऽहमास इति प्रतिपद्यते । अतएव देहादि-

५ भाष्योत्कर्षदीपिका ।

मन्तःकरणम् । तच्च बुद्धिसंकल्पकतया । सर्वो हि बुद्ध्या निश्चित्य मनसा संकल्प्य प्रवर्तते । तत्र मनस्त्यागेन विज्ञानकर्मत्यागः संभवतीति क्वेदानीं लिङ्गदेहः । नहि शिरसि च्छिन्ने कबन्धो देहतां प्रतिपद्यते इति मनसेत्युक्तम् । बुद्धिस्तु सर्वाकारपरित्यागेन चिन्मात्र उपसंक्रान्ताहंकारादीनां तु कथापि विवेकेनोन्मूलितेतीतरे व्याचख्युः । तत्रेदं वक्तव्यम्—वशिशब्दयोगं विनापि सर्वकर्माणीत्यादेर्योगात् प्रकरणाच्च मानुषशरीरमेवोपलभ्यते । सर्वकर्माणि संन्यस्येत्यनेन निषिद्धादिमननरूपमानसकर्मत्यागे मनस्त्यागसिद्ध्या त्यागकरणस्यापेक्षितत्वेन च सहशब्दमध्याहृत्य पृथङ्मनस्त्यागवर्तनमसंगतम् । किंच विवेकयुक्तमेव मनस्त्यागोऽतो विवेकयुक्तेन मनसा सर्वकर्माणि संन्यस्येत्येव युक्तम् । एतेन वशिशब्देन विवेकवैराग्ययुक्तत्ववर्णनं प्रत्युक्तम् । वशिशब्दस्य स्वतन्त्रवाचित्वेन जितेन्द्रियत्वप्रतीत्या इतरोक्तार्थस्यार्थिकार्थत्वात् । यदप्यदेही लिङ्गशरीररहित इति तदपि न । भेदबोधकेनिप्रत्ययेन देहादितरात्मदर्शीति वर्णनस्यैव नवद्वारे पुरे आस्ते इत्यस्य योगेन स्वारसिकत्वेन प्रश्लेषेण क्लिष्टकल्पनाया अन्याय्यत्वात् । इमामेवारुचिं मनसि निधाय पक्षान्तरस्यैतद्व्याख्यानकर्तृभिर्दर्शितत्वाच्चेति दिक् । यद[1]प्यन्ये वशी जितचित्तः । समाधिस्थो योगी नवद्वारे नवैव पञ्च ज्ञानेन्द्रियाणि षष्ठः प्राणस्तेनैव तत्प्रवर्त्यानां कर्मेन्द्रियाणां संग्रहः । बुद्ध्यहंकारचित्तानीति नवैतानि द्वाराणीव पुरपतेर्जीवस्य भोगार्थं विषयप्रवेशस्थानानि यस्मिन्नवद्वारे पुरे शरीराख्ये विचित्रवासनाकल्पितानन्तविषयवति अनेकैः कर्मसचिवैरधिष्ठिते सुखदुःखादिनानापण्यवति

६ श्रीधरीव्याख्या ।

अधोगते द्वे पायूपस्थरूपे इत्येवं नव द्वाराणि यस्मिंस्तस्मिन्पुरे पुरवदहंभावशून्ये देहे देही अवतिष्ठते । अहंकाराभावादेव स्वयं तेन

---

१ नीलकण्ठः.

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

परित्यागे न स्यात्तद्वत्, किंवा स्वत एवात्मनो नास्तीति । अत्रोच्यते—नास्त्यात्मनः स्वतः कर्तृत्वं कारयितृत्वं च । उक्तं हि—'अविकार्योऽयमुच्यते', 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इति, 'ध्यायतीव लेलायतीव' इति श्रुतेः ॥ १३ ॥ न कर्तृत्वमिति । न कर्तृत्वं स्वतः कुर्विति नापि कर्माणि रथघटप्रासादादीनीप्सिततमानि लोकस्य सृजत्युत्पादयति प्रभुरात्मा नापि रथादिकृतवतस्तत्फलेन

२ आनन्दगिरिव्याख्या ।

च तत्किं देहिनः स्वात्मसमवायि सदेव संन्यासान्न भवतीत्युच्यते यथा गच्छतो देवदत्तस्य स्वगतैव गतिस्तत्स्थित्या त्यागान्न भवत्यथ वा स्वारस्येन कर्तृत्वं कारयितृत्वं चात्मनो नास्तीति वक्तव्यमाद्ये सक्रियत्वं द्वितीये कूटस्थत्वमित्यर्थः । द्वितीयं पक्षमाश्रित्योत्तरमाह—**अत्रेति** । उक्तेऽर्थे वाक्योपक्रममनुकूलयति—**उक्तं हीति** । तत्रैव वाक्यशेषमपि संवादयति—**शरीरस्थोऽपीति** । स्मृत्युक्तेऽर्थे श्रुतिमपि दर्शयति—**ध्यायतीवेति** । उपाधिगतैव सर्वा विक्रिया नात्मनि स्वतोऽस्तीत्यर्थः ॥ १३ ॥ आत्मनो यदुक्तं कारयितृत्वं नास्तीति तत्प्रपञ्चयति—**नेत्यादिना** । यद्यपि लोकस्य कर्तृत्वं न सृजतीति नास्ति कारयितृत्वं तथापि रथशकटादीनि कुर्वन्भवति कर्तेत्याशङ्क्याह—**न कर्माणीति** । तथापि भोजयितृत्वेन विक्रियावत्त्वं दुष्परिहरमित्याशङ्क्याह—**न कर्मेति** । कस्य तर्हि प्रवर्तकत्वं तदाह—**स्वभावस्त्विति** । कुर्विति कर्तृत्वं लोकस्य न सृजत्यात्मेति संबन्धः । रथादीनां कर्मत्वं साधयति—**ईप्सितेति** । आत्मनो देहादिस्वामि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मानकाले । व्युत्थानेऽपीत्यर्थः । तदापि नैव कुर्वन्नास्ते नापि कारयन्नास्ते राजेवामात्येषु निहितभारः । समाधौ क्षेत्रेण सहात्मनः संबन्धाभावदर्शनात् । यद्वा नवद्वाराणि चक्षुःश्रोत्रनासाबिलद्वन्द्वानि षट् सप्तमं मुखं अधस्तने द्वे इति । अस्मिन्पक्षे इन्द्रियाणि परिचारका बुद्धिरमात्योऽहंकारो युवराज इत्यादिकमूह्यम् । विदुषः कर्मसंबन्ध एव नास्ति दूरे तत्फलासक्त्यनासक्ती इति भावः ॥ १३ ॥ नन्वेवं भृत्यवत्कर्तृत्वं स्वामिवत्कारयितृत्वं वास्य मास्तु । अयस्कान्तवदविकारस्यैव सतः कर्त्रादिधर्मकाहंकारादिप्रवर्तकत्वमस्त्वित्याशङ्क्याह—**न कर्तृत्वमिति** । कर्तृत्वमहंकारस्य कर्मा-

४ मधुसूदनीव्याख्या ।

व्यापाराणामविद्ययात्मन्यक्रिये समारोपितानां विद्यया बाधएव सर्वकर्मसंन्यास इत्युच्यते । एतस्मादेवाज्ञवैलक्षण्याद्युक्तं विशेषणं नवद्वारे पुर आस्त इति । ननु देहादिव्यापाराणामात्मन्यारोपितानां नौव्यापाराणां तीरस्थवृक्ष इव विद्यया बाधेऽपि स्वव्यापारेणात्मनः कर्तृत्वं देहादिव्यापारेषु कारयितृत्वं च स्यादिति नेत्याह—नैव कुर्वन्न कारयन्, आस्त इति संबन्धः ॥१२॥ देवदत्तस्य स्वगतैव गतिर्यथा स्थितौ सत्यां न भवति एवमात्मनोऽपि कर्तृत्वं कारयितृत्वं च स्वगतमेव सत्संन्यासे सति न भवति, अथवा नभसि तलमलिनतादिवद्वस्तुवृत्त्या तत्र नास्त्येवेति संदेहापोहायाह—लोकस्य देहादेः कर्तृत्वं प्रभुरात्मा स्वामी न सृजति त्वं कुर्विति नियोगेन

५ भाष्योत्कर्षदीपिका ।

मनसा सर्वद्वारोद्घाटनकुञ्चिकया सह सर्वाणि कर्माणि पुरपतिरिव राज्यकार्याणि संन्यस्य सुखं निर्विकल्पसंविन्मात्ररूपेणास्ते इति तदपि असङ्गतमेव । चित्तस्य वृत्तिनिरोधरूपजयापेक्षया वस्त्रादित्यागवदितरत्यागाप्रसिद्ध्या मनसा सहेति सहशब्दाध्याहारेण वर्णनस्य पुनरुक्तिग्रस्तत्वात् । मृतशरीरस्य पुरस्य सत्त्वेऽपि परोक्तद्वाराणामभावेन नवद्वाराणि यस्मिन्नित्युक्तेरनुचितत्वात् । निर्विकल्पसमाधिस्थस्य भोगप्राप्तिद्वाराणां लयादहं देहाद्भिन्न इत्येतावन्मात्रभानस्याप्यभावात् । नवद्वारे पुरे आस्ते इत्यस्य वैयर्थ्यापत्तेश्चेतिदिक् ॥१३॥ नैव कुर्वन्न कारयन्नित्युक्तं प्रपञ्चयति—**नेति** । प्रभुरात्मा लोकस्य देहादेः कर्तृत्वं न सृजति न घटप्रासादादीनि कर्माणि नापि घटादिकृतवतस्तत्फलेन संयोगम् । अनेन भोजयितृत्वमप्यात्मनो वारितम् । उपलक्षणमेतत् भोक्तृत्वस्य । विविधनिषेधस्यापि तर्हि

६ श्रीधरीव्याख्या ।

देहेन नैव कुर्वन्ममकाराभावाच्च न कारयन्नित्यविशुद्धचित्ताद्व्यावृत्तिरुक्ता । अविशुद्धचित्तो हि संन्यस्य पुनः करोति कारयति च । नत्वयं तथा । अतः सुखमास्त इत्यर्थः ॥ १३ ॥ ननु 'एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते' इत्यादिश्रुतेः परमेश्वरेणैव शुभाशुभफलेषु कर्मसु कर्तृत्वेन प्रयुज्यमानोऽस्वतन्त्रः पुरुषः कथं तानि कर्माणि त्यजेत् । ईश्वरेणैव ज्ञानमार्गे प्रयुज्यमानः शुभान्यशुभानि च त्यक्ष्यतीति चेत्, एवं सति वैषम्यनैर्घृण्याभ्यां प्रयोजककर्तृत्वादीश्वरस्यापि पुण्यपापसंबन्धः स्यादित्याशङ्क्याह—**न कर्तृत्वमिति** द्वाभ्याम् । प्रभुरीश्वरः जीवलोकस्य कर्तृत्वादिकं न

७ अभिनवगुप्ताचार्यव्याख्या ।

भियोगः । एवं मम चक्षुरादिच्छिद्रगवाक्षनवकालंकृतदेहगेहगतस्य न तद्धर्मयोगः ॥ १३ ॥ न कर्तृत्वमिति । यत एष आत्मा न किंचित्कस्यचित्करोति । प्रवृत्तिस्त्वस्य स्वभावमात्रं न फलेप्सया । तथाहि संवेदनात्मनो भगवतः प्रकाशानन्दस्वातन्त्र्यपरमार्थस्वभावस्य स्वभावमात्रा-

१ श्रीमच्छांकरभाष्यम्।

**संयोगं न कर्मफलसंयोगम्। यदि किंचिदपि स्वतो न करोति न कारयति च देही कस्तर्हि कुर्वन्कारयंश्च प्रवर्तत इत्युच्यते। स्वभावस्तु स्वो भावः स्वभावोऽविद्यालक्षणा प्रकृतिर्माया प्रवर्तते दैवी**

२ आनन्दगिरिव्याख्या।

त्वेन प्रभुत्वं रथादिकृतवतो लोकस्य रथादिफलेन संबन्धमपि न सृजत्यात्मेत्यात्मनो भोजयितृत्वं प्रत्याचष्टे— **नापीति**। चतुर्थंपादं शङ्कोत्तरत्वेनावतारयति— **यदीत्यादिना**। स्वभाववादस्तर्हीत्याशङ्क्य व्याकरोति— **अविद्यालक्षणेति**। प्रकृतेर्विद्याभावत्वं व्युदसितुं मायेत्युक्तं सा च सप्तमे वक्ष्यते तेन प्रधानविलक्षणेत्याह— **दैवी हीति**॥ १४॥ कर्तृत्वभोक्तृत्वैश्वर्याण्यात्मनोऽविद्याकृतानीत्युक्तमिदानीमीश्वरे संन्यस्तसमस्तव्यापारस्य तदेकशरणस्य दुरितं सुकृतं वा तदनुग्रहार्थं भगवानादत्ते मदेकशरणो मत्प्रीत्यर्थं कर्म कुर्वाणो दुष्कृताद्यनुमोदनेनानुग्राह्यो मयेति प्रत्ययभाक्त्वादि-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

णीन्द्रियाणां वचनादानादीनि श्रवणदर्शनादीनि च। लोकस्य लोक्यते प्रकाश्यत इति लोको जडवर्गः प्रभुश्चिदात्मा सूर्य इवास्मदादीनां प्रकाशकोऽपि न कर्मादौ प्रवर्तकस्तद्वदस्य कर्मफलसंयोगं वा न सृजति किंतु यो यादृक् यस्य स्वभावः स तथा प्रवर्तते। यथा सूर्येऽभ्युदिते कमलानां विकसनं कुमुदानामुन्मुद्रणं चेति तद्वदेवमात्मनि प्रकाशमाने घटादयो न चेष्टन्ते मनुष्यादयस्तु चेष्टन्ते। नत्वात्मा कस्यचित्प्रवर्तको निवर्तको वा। लोहायस्कान्तयोरिव सत्यानृतयोरात्मानात्मनोः संबन्धाभावादिति भावः ॥ १४ ॥ ननु 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते' इति श्रुत्या परमेश्वरे कारयितृत्वं बोध्यते। तत्कथ-

४ मधुसूदनीव्याख्या।

तस्य कारयिता न भवतीत्यर्थः। नापि लोकस्य कर्माणीप्सिततमानि घटादीनि स्वयं सृजति कर्तापि न भवतीत्यर्थः। नापि लोकस्य कर्म कृतवतस्तत्फलसंबन्धं सृजति भोजयितापि भोक्तापि न भवतीत्यर्थः। 'स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव सुधीः' इत्यादिश्रुतेः। अत्रापि 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इत्युक्तेः, यदि किंचिदपि स्वतो न कारयति न करोति चात्मा कस्तर्हि कारयन्कुर्वंश्च प्रवर्तत इति तत्राह—स्वभावस्तु अज्ञानात्मिका दैवी माया प्रकृतिः प्रवर्तते॥१४॥ नन्वीश्वरः कारयिता जीवः कर्ता। तथाच श्रुतिः 'एष उ ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इत्यादिः। स्मृतिश्च 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा॥' इति। तथाच जीवेश्वरयोः कर्तृत्वकारयितृत्वाभ्यां भोक्तृत्वभोजयितृत्वाभ्यां च पापपुण्यलेप-

५ भाष्योत्कर्षदीपिका।

कस्य कर्तृत्वादिकमित्यपेक्षायामाह। स्वभावोऽविद्यालक्षणा प्रकृतिर्माया कुर्वन्कारयन्प्रवर्तते। यत्तु स्वस्मिन् भावस्यापि आरोपिता सत्ताऽस्येति स्वभावोऽन्तःकरणं तदेव प्रवर्तते कृत्यै मुक्त्यै वेत्यर्थ इति। तन्न। अन्तःकरणस्यापि प्रकृत्यधीनप्रवृत्तिकत्वेन साकाङ्क्षायाः क्लिष्टकल्पनाया अन्याय्यत्वात्। 'नन्वेष साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते' इत्यादिश्रुतेः 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः। ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा॥' इति-स्मृतेश्च परमेश्वरेणैव शुभाशुभफलेषु कर्मसु कर्तृत्वेन प्रयुज्यमानः अस्वतन्त्रः पुरुषः कथं तानि कर्माणि त्यजेत। ईश्वरेणैव ज्ञानमार्गे प्रयुज्यमानस्त्यक्ष्यतीति चेत्। एवंसति वैषम्यनैर्घृण्याभ्यां प्रयोजककर्तृत्वादीश्वरस्यापि पुण्यपापसंबन्धः स्यादित्याशङ्क्याह—**नेति**। द्वाभ्यामित्येवमुत्थाप्यायमपि श्लोको भाष्यकृद्भिरीश्वरत्वेन कुतो न व्याख्यात इति चेत्, अतीतानन्तरश्लोकेन क्लिष्टकल्पनां विनैव संगतिसंभवमभिप्रेत्येति गृहाण ॥ १४ ॥ ननु यः परमेश्वरैकशरणो ब्रह्मणि संन्यस्तसमस्तकर्मा यानि पुण्यपापानि करोति तानि क्व गच्छन्ति। 'लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इत्यनेन तस्य लेपाभावोक्तेः। तथाच स्वस्य भक्तस्य पुण्यं च पापं च तद-

६ श्रीधरीव्याख्या।

सृजति किंतु जीवस्यैव स्वभावोऽविद्यैव कर्तृत्वादिरूपेण प्रवर्तते। अनाद्यविद्याकामवशात्प्रवृत्तिस्वभावं जीवलोकमीश्वरः कर्मसु

७ अभिनवगुप्ताचार्यव्याख्या।

क्षिप्तसमस्तसृष्टिस्थितिसंहृतिप्रबन्धस्य स्वस्वभावान्न मनागप्यपायो जातुचिदिति न कर्त्रवस्थातिरिक्तं कर्तृत्वं किंचित्। तदभावात्कानि कर्माणि तदसत्त्वे कस्य फलं को वा कर्मफलसंबन्धः। कर्मात्र क्रिया। कर्मफलमपि च क्रियाफलमेव। तथाहि। दण्डचक्रपरिवर्तनादिक्रियानान्या। नच सा घटनिष्पादिता। संविदन्तर्वर्तित्वात्। अस्याचेतनः स्वतन्त्रः परमेश्वरएव तथातथा भातीति न तद्व्यतिरिक्तं क्रियातत्फलादिकमिति सिद्धान्तः॥ १४॥ अतएव क्रियातत्फलयोरभावे विधिफलस्यापि नादृष्टकृतता काचिदित्यर्थेनाभिधायार्थान्तरेण संसारिणः प्रति तत्समर्थनं

१ मधुसूदनः०

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**हीत्यादिना वक्ष्यमाणा ॥ १४ ॥ परमार्थतस्तु—नादत्ते नच गृह्णाति भक्तस्यापि कस्यचित्पापं न चैवादत्ते सुकृतं भक्तैः प्रयुक्तं विभुः । किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकं च सुकृतं प्रयुज्यत इत्याह—अज्ञानेनावृतं ज्ञानं विवेकविज्ञानं तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामीत्येवं मोहं**

२ आनन्दगिरिव्याख्या ।

त्याशङ्क्य सोऽपि परमार्थतो नास्यास्त्यविक्रियत्वादित्याह—**परमार्थतस्त्विति** । पूर्वार्धगतान्यक्षराणि व्याख्याया-काङ्क्षापूर्वकमुत्तरार्धमवतार्य व्याचष्टे—**किमर्थमित्यादिना** ॥ १५ ॥ तर्हि सर्वेषामनाद्यज्ञानावृतज्ञानत्वाद्यामोहा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मुच्यते 'स्वभावस्तु प्रवर्तते' इति तत्राह—**नादत्त इति** । कस्यचित्कर्तुः पापमयं नादत्ते नापि सुकृतम् । कारयितृत्वाभावात् । यतो विभुर्व्यापकः । निष्क्रिय इति यावत् । सक्रियो ह्यन्यं प्रवर्तयति तदीयं पापं पुण्यं वा लभते । अयं तु न तथा किंतु सूर्यवत् प्रकाशत एव नतु स्वप्रकाश्यानां कर्त्रादीनां कर्मणा संबध्यते इति भावः । कारयितृत्वमप्यस्य सत्तामात्रेण सूर्यवत् । यथा घटः प्रकाशते सविता प्रकाशयतीति नोदाहृतश्रुतिविरोधः । कथं तर्हि ईश्वराराधनार्थं कर्माणि कुर्वन्ति तदकरणाच्च बिभ्यतीत्याशङ्क्याह—**अज्ञानेनेति** । यथा हि महाराजस्य सार्वभौमस्याहं सर्वेश्वरो निर्वृतोऽस्मीति ज्ञानं अज्ञानेन सौषुप्तेनावृतं चेत्स्य तत्र विविधानि परचक्रादीनि महान्ति संकटशतानि पश्यति

४ मधुसूदनीव्याख्या ।

संभवात्कथमुक्तं स्वभावस्तु प्रवर्तत इति, तत्राह—परमार्थतः विभुः परमेश्वरः कस्यचिज्जीवस्य पापं सुकृतं च नैवादत्ते, परमार्थतो जीवस्य कर्तृत्वाभावात्, परमेश्वरस्य च कारयितृत्वाभावात् । कथं तर्हि श्रुतिः स्मृतिर्लोकव्यवहारश्च तत्राह—अज्ञा-

५ भाष्योत्कर्षदीपिका ।

नुग्रहार्थं भगवानादत्ते इति चेत्तत्राह—**नेति** । विभुः परमेश्वरः कस्यचित्स्वभक्तस्यापि पापं नादत्ते न गृह्णाति । तथा भक्तैः समर्पितं सुकृतं पूर्णकामत्वान्न चैवादत्ते । ननु परमार्थतो जीवस्यापीश्वराव्यतिरेकात्कर्तृत्वाद्यभावः ईश्वरस्य सुतरां अतः किमर्थमीश्वरात्स्वस्य भेदं प्रकल्प्य परमेश्वरो भजनीयोऽहं तस्य भक्तस्तदर्थं मया पूजायागदानहोमादिलक्षणं कर्मानुष्ठेयमिति बुद्ध्या परमेश्वरैकशरणैरन्यैश्चाहं कर्म करोमि कारयामि तस्य फलं भोक्ष्ये भोजयामीति बुद्ध्या कर्माण्यनुष्ठीयन्त इति चेत्तत्राह । अज्ञानेनावृतं कर्तृत्वादिविनिर्मुक्तोऽहमस्मीति विवेकज्ञानम् । वसिष्ठोऽप्याह 'विवेकमाच्छादयति जगन्ति जनयत्यलम्' इति । पूर्वप्रस्तुताऽविद्या तेन जन्तवो मुह्यन्ति मोहं गच्छन्ति । यथा शुक्तिज्ञानं शुक्त्यज्ञानेनावृतं तेन रजतमिदमिति पुरुषाणां मोहस्तथाहमुपासक ईश्वरार्थं कर्म करोम्यहं कर्ता कारयिता भोक्ता भोजयितेत्येवं मुह्यन्तीत्यर्थः । ज्ञानं जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूतं स्वप्रकाशं सच्चिदानन्दरूपं परमार्थमिति तु लोकप्रसिद्धज्ञानपदार्थत्यागे बीजाभावमभिप्रेत्याचार्यैर्न व्याख्यातमिति बोध्यम् । एतेन ननु भक्ताननुगृह्णतोऽभक्तान्निगृह्णतश्च वैषम्योपलम्भात्कथमाप्तकामत्वमत आह—**अज्ञानेनेति** । निग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्येवमज्ञानेन सर्वत्र समः परमेश्वर इत्येवंभूतं ज्ञानमावृतं तेन हेतुना जन्तवो जीवा मुह्यन्ति । भगवति वैषम्यं मन्यन्त इत्यर्थ इति प्रत्युक्तम् । ज्ञानं प्रकाशयति । ज्ञाननिर्धूतकल्मषा इत्यत्राभिमततद्व्यतिरिक्तज्ञानपदार्थकल्पनानुपपत्तेश्च । यत्त्वितरैः स्वभावस्तु प्रवर्तत इत्यत्रान्तःकरणं प्रवर्तत इति व्याख्याय··· नन्वेवंसति देवदत्तः पापी यज्ञदत्तः सुकृतीत्यादिव्यवहाराणां का गतिरित्यत आह—**नादत्ते इति** । चिचिदात्मा कस्य ज्ञानशक्तिक्रियाशक्त्याधारत्वगुणयोगात्कशब्दस्यान्तःकरणस्य पापं सुकृतं च नादत्ते नात्मसंबन्धि करोति । तत्र हेतुमाह—**विभुरिति** । अपरिणामीत्यर्थः । कथंतर्ह्ययं लोकव्यवहारस्तत्राह—**अज्ञानेनेति** । अज्ञानेनाज्ञानपरिणामरूपेणान्तःकरणेन ज्ञानं

६ श्रीधरीव्याख्या ।

नियुङ्क्ते न तु स्वयमेव कर्तृत्वादिकमुत्पादयतीत्यर्थः ॥ १४ ॥ यस्मादेवं तस्मात्—**नादत्त इति** । प्रयोजकोऽपि सन्प्रभुः कस्यचित्पापं सुकृतं च नैवादत्ते न भजते । तत्र हेतुः—विभुः परिपूर्णः । आप्तकाम इत्यर्थः । यदि हि स्वार्थकामनया कारयेत्तर्हि तथा स्यात्, नत्वेतदस्ति । आप्तकामस्यैवाचिन्त्यनिजमायया तत्तत्पूर्वकर्मानुसारेण प्रवर्तकत्वात् । ननु भक्ताननुगृह्णतोऽभक्तान्निगृह्णतश्च वैषम्योपलम्भात्कथमाप्तकामत्वमित्यत आह—**अज्ञानेनेति** । निग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्येवमज्ञानेन सर्वत्र समः परमेश्वर

७ अभिनवगुप्ताचार्यव्याख्या ।

कर्तुश्चाह—नादत्त इति । पापादीनि नैतत्कृतानि किंतु निजेनाज्ञानेन कृतानि शङ्कयेवामृते विषम् (?) ॥ १५ ॥ अतएव—ज्ञानेनदिवति । ज्ञानेन

---

१ नीलकण्ठः. २ मधुसूदनः.

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

गच्छन्त्यविवेकिनः संसारिणो जन्तवः ॥ १५ ॥ ज्ञानेनेति । ज्ञानेन तु येनाज्ञानेनावृता मुह्यन्ति जन्तवस्तदज्ञानं येषां जन्तूनां विवेकज्ञानेनात्मविषयेण नाशितमात्मनो भवति तेषामादित्यवद्यथादित्यः समस्तं रूपजातमवभासयति तद्वज्ज्ञानं ज्ञेयं च वस्तु सर्वं प्रकाशयति तत्परमार्थतत्त्वम् ॥ १६ ॥

२ आनन्दगिरिव्याख्या ।

भावाच्च कुतः संसारनिवृत्तिरिति तत्राह—ज्ञानेनेति । सर्वमिति पूर्णत्वमुच्यते, ज्ञेयस्यैव वस्तुनस्तत्परमिति विशेषणम् । तद्व्याचष्टे—परमार्थतत्त्वमिति ॥ १६ ॥ विदुषां विविदिषूणां चान्तरङ्गाणि विद्यापरिपाकसाधनानीत्युपदि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अहो अहं दीनोऽस्मि दुःख्यस्मीति च मुह्यति तद्वदेते जन्तवः स्वस्याहं ब्रह्मास्मीति प्रमाणेन ब्रह्मभावमजानन्त ईश्वरादात्मानं पृथङ्मन्यमाना ईशात्मनोः सेव्यसेवकभावं च पश्यन्तो मुह्यन्ति । तथाच श्रुतिः 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमिति न स वेद यथा पशुरेव स देवानाम्' इति । एष ह्येवेति श्रुतिरपि भ्रान्तजनव्यवहारविषयैवेति भावः ॥ १५ ॥ तदात्मन आवरकमज्ञानं येषां ज्ञानेन ब्रह्मास्मीति प्रमाणजेन नाशितं तेषां तज्ज्ञानं कर्तृ आदित्यवदादित्यो यथा कृत्स्नं दृश्यं प्रकाशयति तद्वत्परं परमार्थवस्तु प्रकाशयति । अज्ञानजानर्थनिवृत्त्यर्थं ज्ञानमेष्टव्यमिति

४ मधुसूदनीव्याख्या ।

नेनावरणविक्षेपशक्तिमता मायाख्येनानृतेन तमसा आवृतमाच्छादितं ज्ञानं जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूतं नित्यं स्वप्रकाशं सच्चिदानन्दरूपमद्वितीयं परमार्थसत्यं, तेन स्वरूपावरणेन मुह्यन्ति प्रमातृप्रमेयप्रमाणकर्तृकर्मकरणभोक्तृभोग्यभोगाख्यनवविधसंसाररूपं मोहमतस्मिंस्तदवभासरूपं विक्षेपं गच्छन्ति जन्तवो जननशीलाः संसारिणो वस्तुस्वरूपादर्शिनः । अकर्त्रभोक्तृपरमानन्दाद्वितीयात्मस्वरूपादर्शननिबन्धनो जीवेश्वरजगद्भेदभ्रमः प्रतीयमानो वर्तते मूढानाम् । तस्यां चावस्थायां मूढप्रत्ययानुवादिन्यावेते श्रुतिस्मृती वास्तवाद्वैतबोधिवाक्यशेषभूते इति न दोषः ॥ १५ ॥ तर्हि सर्वेषामनाद्यज्ञानावृतत्वात्कथं संसारनिवृत्तिः स्यादत आह—तदावरणविक्षेपशक्तिमदनाद्यनिर्वाच्यमनृतमनर्थव्रातमूलमज्ञानमात्माश्रयविषयमविद्यामायादिशब्दवाच्यमात्मनो ज्ञानेन गुरूपदिष्टवेदान्तमहावाक्यजन्येन श्रवणमननिदिध्यासनपरिपाकनिर्मलान्तःकरणवृत्तिरूपेण निर्विकल्पकसाक्षात्कारेण शोधिततत्त्वंपदार्थाभेदरूपशुद्धसच्चिदानन्दाखण्डैकरसवस्तुमात्रविषयेण नाशितं बाधितं कालत्रयेऽप्यसदेवासत्तया ज्ञातमधिष्ठानचैतन्यमात्रतां प्रापितं शुक्ताविव रजतं शुक्तिज्ञानेन येषां श्रवणमननादिसाधनसंपन्नानां भगवदनुगृहीतानां मुमुक्षूणां तेषां तज्ज्ञानं कर्तृ आदित्यवत्, यथादित्यः स्वोदयमात्रेणैव तमो निरवशेषं निवर्तयति नतु कंचित्सहायमपेक्षते, तथा ब्रह्मज्ञानमपि शुद्धसत्त्वपरिणामत्वाद्व्यापकप्रकाशरूपं स्वोत्पत्तिमात्रेणैव सहकार्यन्तरनिरपेक्षतया सकार्यमज्ञानं निवर्तयत्परं सत्यज्ञानानन्तानन्दरूपमेकमेवाद्वितीयं परमात्मतत्त्वं प्रकाशयति प्रतिच्छायाग्रहणमात्रेणैव कर्मतान्तरेणाभिव्यनक्ति । अत्राज्ञानेनावृतं ज्ञानेन नाशितमित्यज्ञानस्यावरणत्वज्ञाननाश्यत्वाभ्यां ज्ञानाभावरूपत्वं व्यावर्तितम् । नह्यभावः किंचिदावृणोति न वा ज्ञानाभावो ज्ञानेन नाश्यते स्वभावनाशरूपत्वात्तस्य । तस्मादहमज्ञो मामन्यं च न जानामीत्यादिसाक्षिप्रत्यक्षसिद्धं भावरूपमेवाज्ञानमिति भगवतो मतम् । विस्तरस्त्वद्वैतसिद्धौ द्रष्टव्यः । येषामिति बहुवचनेनानियमो दर्शितः । तथाच श्रुतिः 'तद्यो यो देवानां प्रत्यबुध्यत स एव

५ भाष्योत्कर्षदीपिका ।

स्वरूपमावृतम् । अन्योन्यतादात्म्याध्यासविषयभावं गमितमित्यर्थः । तेन कारणेन जन्तवोऽज्ञा मनुष्या मुह्यन्ति । आत्मगतत्वेन सुकृतदुष्कृतादिव्यवहरन्तीत्यर्थं इति व्याख्यातं तदुपेक्ष्यम् । मुख्यवृत्त्या सम्यक् वाक्यार्थसंभवे गौण्यादिवृत्त्याश्रयणस्य क्लिष्टकल्पनायाश्चान्याय्यत्वात् ॥ १५ ॥ तर्हि सर्वेषामनादिभावरूपाज्ञानावृतज्ञानत्वाद्व्यामोहस्य निवृत्त्यभावात्संसारनिवृत्तिः कथं स्यादिति तत्राह—**ज्ञानेनेति** । ज्ञानेन तु गुरूपदिष्टेन शास्त्रीयेण विवेकज्ञानेन स्वपरमार्थस्वरूपविषयेण तदज्ञानं कर्तृत्वादिविनिर्मुक्तं ब्रह्माहमस्मीति परमात्माभेदास्तित्वज्ञानावरकं येषां मुमुक्षूणां नाशितं तेषामादित्यवत् यथादित्योऽस्तित्वेन भान्तमपि घटादिवस्तु तद्गतसमस्तरूपाभानापादकं तमो निवर्त्य प्रकाशयति तथा गुरूपदिष्टं ज्ञानं भावनाप्रकर्षेण भानावरणमज्ञानमपि निवर्त्य तत् श्रुतिस्मृतीतिहास-

६ श्रीधरीव्याख्या ।

इत्येवंभूतं ज्ञानमावृतम् । तेन हेतुना जन्तवो जीवा मुह्यन्ति । भगवति वैषम्यं मन्यन्त इत्यर्थः ॥ १५ ॥ ज्ञानिनस्तु न मुह्यन्तीत्याह—**ज्ञानेनेति** । आत्मनो भगवतो ज्ञानेन येषां तद्वैषम्योपलम्भकज्ञानं नाशितं तज्ज्ञानं तेषामज्ञानं नाशयित्वा तत्परं

७ अभिनवगुप्ताचार्यव्याख्या ।

त्वज्ञाने नाशिते ज्ञानस्य स्वपरप्रकाशत्वं स्वतःसिद्धं यथादित्यस्य तमसि नष्टे विनिवार्तितायां हि शङ्कायां अमृतममृतकार्यं स्वयमेव करोति

**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

यत्परं ज्ञानं प्रकाशितं तस्मिन्गता बुद्धिर्येषां ते तद्बुद्धयस्तदात्मानस्तदेव परं ब्रह्मात्मा येषां ते तदात्मानस्तन्निष्ठाः निष्ठाभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि संन्यस्य ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठास्तत्परायणाश्च । तदेव परमयनं परा गतिर्येषां भवति ते तत्परायणाः । केवलात्मरतय इत्यर्थः । येषज्ञानेन नाशितमात्मनोऽज्ञानं ते गच्छन्त्येवंविधा अपुनरावृत्तिमपुनर्देहसंबन्धं ज्ञाननिर्धूतकल्मषा यथो-

२ आनन्दगिरिव्याख्या ।

दिक्षुरुत्तरश्लोकस्यापेक्षितं पूरयति—यत्परमिति । तस्मिन्परमार्थतत्त्वे परस्मिन्ब्रह्मणि बाह्यं विषयमपोह्य गता प्रवृत्ता श्रवणमनननिदिध्यासनैरसकृदनुष्ठितैर्बुद्धिः साक्षात्कारलक्षणा येषां ते तथेति प्रथमविशेषणं विभजते—तस्मिन्निति । तर्हि बोद्धा जीवो बोद्धव्यं ब्रह्मेति जीवब्रह्मभेदाभ्युपगमो नेत्याह—तदात्मान इति । कल्पितं बोद्धृबोद्धव्यत्वं वस्तुतस्तु न भेदोऽस्तीत्यङ्गीकृत्य व्याचष्टे—तदेवेति । ननु देहादावात्माभिमानमपनीय ब्रह्मण्येवाहमस्मीत्यवस्थानं तत्तदनुष्ठीयमानकर्मप्रतिबन्धान्न सिध्यतीत्याशङ्क्य विशेषणान्तरमादत्ते—तन्निष्ठा इति । तत्र निष्ठाशब्दार्थं दर्शयन्विवक्षितमर्थमाह—निष्ठेत्यादिना । तथापि पुरुषार्थान्तरापेक्षाप्रतिबन्धात्कथं यथोक्ते ब्रह्मण्येवावस्थानं सेद्धुं पारयति तत्राह—तत्परायणाश्चेति । यथोक्तानामधिकारिणां परमपुरुषार्थस्योक्तब्रह्मानतिरेकान्नान्यत्रासक्तिरिति तात्पर्यार्थमाह—केवलेति । ननु यथोक्तविशेषणवतां वर्तमानदेहपातेऽपि देहान्तरपरिग्रहव्यग्रतया कुतो यथोक्ते ब्रह्मण्यवस्थानमास्थातुं शक्यते तत्राह—ते गच्छन्तीति । सति संसारकारणे दुरितादौ संसारप्रसरस्य दुर्वारत्वान्ना-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भावः ॥ १६ ॥ तद्बुद्धय इति । यत् परं ब्रह्म प्रशान्तं तत्रैव बुद्धिरस्ति ब्रह्मेति निश्चयो येषामापाततः श्रुत्यर्थविदां ते तद्बुद्धयः, तदेव आत्मा प्रत्यक्तत्त्वं येषां श्रवणमननात्मकविचारेण प्रमाणप्रमेयगतासंभावनाविहीनानां ते तदात्मानः, तत्रैव निष्ठा विजातीयवृत्त्यनन्तरितसजातीयवृत्तिप्रवाहो येषां देहादावनात्मन्यात्मधीरूपविपरीतभावनारहितानां ते तन्निष्ठाः, तदेव परमयनमज्ञानरूपोपाधिनिरासेन प्राप्यं येषामखण्डानन्दमग्नानां ते तत्परायणाः, अपुनरा-

४ मधुसूदनीव्याख्या ।

तदभवत्तथर्षीणां तथा मनुष्याणां तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' इत्यादिर्यद्विषयं यदाश्रयमज्ञानं तद्विषयतदाश्रयप्रमाणज्ञानात्तन्निवृत्तिरिति न्यायप्राप्तनियमं दर्शयति । तत्राज्ञानगतमावरणं द्विविधम् । एकं सतोऽप्यसत्त्वापादकं अन्यत्तु भासतोऽप्यभानापादकम् । तत्राद्यं परोक्षापरोक्षसाधारणप्रमाणज्ञानमात्रान्निवर्तते । अनुमितेऽपि वह्न्यादौ पर्वते वह्निर्नास्तीत्यादिभ्रमादर्शनात् । तथा 'सत्यं ज्ञानमनन्तं ब्रह्मास्ति' इति वाक्यात्परोक्षनिश्चयेऽपि ब्रह्म नास्तीति भ्रमो निवर्तत एव । अस्त्येव ब्रह्म किंतु मम न भातीत्येवं भ्रमजनकं द्वितीयमभानावरणं साक्षात्कारादेव निवर्तते । स च साक्षात्कारो वेदान्तवाक्यैनैव जन्यते निर्विकल्पक इत्याद्यद्वैतसिद्धावनुसंधेयम् ॥ १६ ॥ ज्ञानेन परमात्मतत्त्वप्रकाशे सति—तस्मिञ्ज्ञानप्रकाशिते परमात्मतत्त्वे सच्चिदानन्दघन एव बाह्यसर्वविषयपरित्यागेन साधनपरिपाकात्पर्यवसिता बुद्धिरन्तःकरणवृत्तिः साक्षात्कारलक्षणा येषां ते तद्बुद्धयः । सर्वदा निर्बीजसमाधिभाज इत्यर्थः । तत्किं बोद्धारो जीवा बोद्धव्यं ब्रह्मतत्त्वमिति बोद्धृबोद्धव्यलक्षणभेदोऽस्ति, नेत्याह—तदात्मानः, तदेव परं ब्रह्म आत्मा येषां ते तथा । बोद्धृबोद्धव्यभावो हि मायाविजृम्भितो न वास्तवाभेदविरोधीति भावः । ननु तदात्मान इति विशेषणं व्यर्थं, अविद्व्द्यावर्तकं हि विद्वद्विशेषणम् । अज्ञा अपि हि वस्तुगत्या तदात्मान इति कथं तद्व्यावृत्तिरिति चेत् । न । इतरात्मत्वव्यावृत्तौ तात्पर्यात् । अज्ञा हि अनात्मभूते देहादावात्माभिमानिन इति न तदात्मान इति व्यपदिश्यन्ते । विज्ञास्तु निवृत्तदेहाद्यभिमाना इति विरोधिनिवृत्त्या

५ भाष्योत्कर्षदीपिका ।

पुराणादौ प्रसिद्धं परं परमार्थतत्त्वं प्रकाशयति सच्चिदानन्दानन्तात्मकं ब्रह्माहमस्मीति साक्षाद्व्यक्तीकरोतीत्यर्थः ॥ १६ ॥ तत्परमार्थतत्त्वं ज्ञानप्रकाशितं तस्मिन्गता बुद्धिर्येषां ते । ननु ते किं तस्माद्व्यतिरिक्ता नेत्याह । तदेव परंब्रह्मात्मा स्वरूपं येषां ते । तत्र हेतुमाह । यतस्तस्मिन्ब्रह्मणि निष्ठा निदिध्यासनात्मकोऽभिनिवेशो येषां ते । तत्रापि हेतुमाह । यतस्तदेव परमयनं परा गतिर्येषां

६ श्रीधरीव्याख्या ।

परिपूर्णमीश्वरस्वरूपं प्रकाशयति । यथा आदित्यस्तमो निरस्य समस्तं वस्तुजातं प्रकाशयति तद्वत् ॥ १६ ॥ एवंभूतेश्वरोपासनाफलमाह—तद्बुद्धय इति । तस्मिन्नेव बुद्धिर्निश्चयात्मिका येषाम्, तस्मिन्नेवात्मा मनो येषाम्, तस्मिन्नेव निष्ठा तात्पर्यं येषाम्, तदेव

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १६ ॥ एतच्च तद्गतबुद्धिमनसां त्यक्तान्यव्यापाराणां घटत इत्याशयं प्रकटयितुमाह—तद्बुद्धय इति । अत्रैतदधिकम् । 'स्मरन्तोऽपि

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

१ श्रीमच्छांकरभाष्यम् ।

**क्तेन ज्ञानेन निर्धूतो नाशितः कल्मषः पापादिसंसारकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषा यतय इत्यर्थः ॥ १७ ॥ येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः कथं तत्त्वं पश्यन्तीत्युच्यते— विद्येति । विद्याविनयसंपन्ने विद्या च विनयश्च विद्याविनयौ विनय उपशमस्ताभ्यां विद्याविनयाभ्यां संपन्नो विद्याविनयसंपन्नो विद्वान्विनीतश्च यो ब्राह्मणस्तस्मिन्ब्राह्मणे गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनो विद्याविनयसंपन्न उत्तमसंस्कारवति ब्राह्मणे सात्त्विके मध्यमायां च**

२ आनन्दगिरिव्याख्या ।

पुनरावृत्तिसिद्धिरित्याशङ्क्याह—**ज्ञानेति** । उक्तविशेषसंपत्त्या दर्शितफलशालित्वमाश्रमान्तरेष्वसंभावितमिति मन्वानो विशिनष्टि—**यतय इति** ॥ १७ ॥ यदपुनरावृत्तिसाधनं तत्त्वज्ञानं तदेव प्रश्नद्वारेण विवृणोति—**येषामित्यादिना** । विद्या वेदार्थविज्ञानमित्यङ्गीकृत्य विनयं व्याचष्टे—**विनय इति** । उपशमो निरहंकारत्वमनौद्धत्यम् । पदार्थमेवमुक्त्वा वाक्यार्थं दर्शयति—**विद्वानिति** । गवीत्याद्यनूद्य वाक्यार्थं कथयति—**विद्येति** । हस्त्यादौ पण्डिताः समदर्शिन इत्युत्तरत्र संबन्धः । तत्र तत्र प्राणिभेदेषु तत्तद्गुणैस्तत्तन्निमित्तसंस्कारैश्च संस्पृष्टत्वसंभवान्न ब्रह्मणः समत्वमित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वृत्तिं मोक्षं गच्छन्ति । यतो ज्ञानेन निर्धूतं कल्मषं मूलाज्ञानं संसारबीजभूतं येषां ते ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥ एतेषां जगति दृष्टिमाह—**विद्येति** । उत्तमब्राह्मणे चण्डालादौ वा समं ब्रह्मैव सद्रूपेण स्फुरणरूपेण च भासमानं द्रष्टुं

४ मधुसूदनीव्याख्या ।

तदात्मान इति व्यपदिश्यन्त इति युक्तं विशेषणम् । ननु कर्मानुष्ठानविक्षेपे सति कथं देहाद्यभिमाननिवृत्तिरिति तत्राह— तन्निष्ठाः तस्मिन्नेव ब्रह्मणि सर्वकर्मानुष्ठानविक्षेपनिवृत्त्या निष्ठा स्थितिर्येषां ते तन्निष्ठाः । सर्वकर्मसंन्यासेन तदेकविचारपरा इत्यर्थः । फलरागे सति कथं तत्साधनभूतकर्मत्याग इति तत्राह—तत्परायणाः । तदेव परमयनं प्राप्तव्यं येषां ते तत्परायणाः । सर्वतो विरक्ता इत्यर्थः । अत्र तद्बुद्धय इत्यनेन साक्षात्कार उक्तः । तदात्मान इत्यनात्माभिमानरूपविपरीतभावनानिवृत्तिफलको निदिध्यासनपरिपाकः । तन्निष्ठा इत्यनेन सर्वकर्मसंन्यासपूर्वकः प्रमाणप्रमेयगतासंभावनानिवृत्तिफलको वेदान्तविचारः श्रवणमननपरिपाकरूपः । तत्परायणा इत्यनेन वैराग्यप्रकर्ष इत्युत्तरोत्तरस्य पूर्वपूर्वहेतुत्वं द्रष्टव्यम् । उक्तविशेषणा यतयो गच्छन्त्यपुनरावृत्तिं पुनर्देहसंबन्धाभावरूपां मुक्तिं प्राप्नुवन्ति । सकृन्मुक्तानामपि पुनर्देहसंबन्धः कुतो न स्यादिति तत्राह—ज्ञाननिर्धूतकल्मषाः ज्ञानेन निर्धूतं समूलमुन्मूलितं पुनर्देहसंबन्धकारणं कल्मषं पुण्यपापात्मकं कर्म येषां ते तथा । ज्ञानेनानाद्यज्ञाननिवृत्त्या तत्कार्यकर्मक्षये तन्मूलकं पुनर्देहग्रहणं कथं भवेदिति भावः ॥ १७ ॥ देहपातादूर्ध्वं विदेहकैवल्यरूपं ज्ञानफलमुक्त्वा प्रारब्धकर्मवशात्सत्यपि देहे जीवन्मुक्तिरूपं तत्फलमाह—विद्या वेदार्थपरिज्ञानं ब्रह्मविद्या वा, विनयो निरहंकारत्वम्, अनौ-

५ भाष्योत्कर्षदीपिका ।

ते तदेव परां गतिं बुद्ध्वा इहामुत्रार्थभोगे विरज्य तच्छ्रवणतन्मननैकपरत्वेन तत्परायणा इत्यर्थः । एवंभूता अपुनरावृत्तिं मोक्षं गच्छन्ति । यतो ज्ञानेन ब्रह्मात्मसाक्षात्कारेण नितरां मूलोच्छेदेन धूतो नाशितः कल्मषः पुनरावृत्तिकारणीभूतो येषां ते ॥ १७ ॥ येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिता मोक्षगामिनः कथमात्मतत्त्वं पश्यन्तीति तत्राह—**विद्येति** । विद्या आत्मबोधः विनय उपशम औद्धत्याद्यभावः । दैन्यवारणाय विद्यापदमौद्धत्यादिवारणाय विनयपदं ताभ्यां संपन्ने युक्ते उत्तमसंस्कारवति सात्त्विके ब्राह्मणे, मध्यमायां राजस्यां गवि संस्काररहितायां, अधमे केवलतामसे हस्तिनि गजे, शुनि सारमेये, श्वपाके चाण्डाले । तामसानां बहूनामुपादानं तु सात्त्विकराजसापेक्षया तेषां बाहुल्यसूचनार्थम् । समं सत्त्वादिगुणैस्तज्जन्यसंस्कारैश्चास्पृष्टमेकमविक्रियं गङ्गाजले तडागोदके मूत्रादावच्छिन्नाकाशमिव ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिन इत्यर्थः । यत्तु ननु ज्ञानसंन्याससंपन्नानामेव जीवे कोऽयमतिशयो यत्परैक्यं नाम । नहि मनुष्याणां लोके उत्तममध्यमतया व्यवह्रियमाणानां पशूनां वा तादृशानां न जीवोऽस्ति सन्वा न परैक्यं प्रतिपद्यते । इत्याशङ्क्याह—**विद्येति** । अत्र गवि हस्तिनि शुनीति गोत्वादिजात्याधारपिण्डरूपोपाधी-

६ श्रीधरीव्याख्या ।

परमयनमाश्रयो येषाम्, ततश्च तत्प्रसादलब्धेनात्मज्ञानेन निर्धूतं निरस्तं कल्मषं येषां तेऽपुनरावृत्तिं मुक्तिं यान्ति ॥ १७ ॥ कीदृशास्ते ज्ञानिनो येऽपुनरावृत्तिं गच्छन्तीत्यपेक्षायामाह—**विद्याविनयसंपन्न इति** । विषमेष्वपि समं ब्रह्मैव द्रष्टुं शीलं येषां ते । पण्डिताः

७ अभिनवगुप्ताचार्यव्याख्या ।

मुहुस्त्वेतत्स्पृशन्तोऽपि स्वकर्मणि । सक्ता अपि न सज्जन्ति पङ्के रविकरा इव' इति ॥ १७ ॥ यत एवं स्वभावस्तु प्रवर्तते इति । अतो ध्वस्ताज्ञानानामित्थंस्थितिरित्याह—विद्येति । तथा तेषां योगिनां ब्राह्मणेऽन्यादृशी बुद्धिरस्य शुश्रूषादिनाहं पुण्यवान्भविष्यामीत्यादि । गवि न

१ श्रीमच्छांकरभाष्यम् ।

**राजस्यां गवि संस्कारहीनायामत्यन्तमेव केवलतामसे हस्त्यादौ च सत्त्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैस्तथा तामसैश्च संस्कारैरत्यन्तमेवास्पृष्टं सममेकमविक्रियं ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिनः ॥ १८ ॥ नन्वभोज्यान्नास्ते दोषवन्तः 'समासमाभ्यां विषमसमे पूजातः' इति स्मृतेर्न ते**

२ आनन्दगिरिव्याख्या ।

शङ्काह—**सत्त्वादीति** । तज्जैश्चेत्यत्र तच्छब्देन सत्त्वमेव गृह्यते । सात्त्विकसंस्कारैरिव राजससंस्कारैरपि सर्वथैवासंस्पृष्टं ब्रह्मेत्याह—**तथेति** । राजसैरिव तामसैरपि संस्कारैर्ब्रह्मात्यन्तमेवास्पृष्टमित्याह—**तथा तामसैरिति** । ब्रह्मणोऽद्वितीयत्वं कूटस्थत्वमसङ्गत्वं चोक्तेऽर्थे हेतुरिति मत्वा समशब्दार्थमाह—**सममिति** । समदर्शित्वमेव पाण्डित्यं तद्व्याचष्टे—**ब्रह्मेति** ॥ १८ ॥ सात्त्विकेषु राजसेषु तामसेषु च सत्त्वेषु समत्वदर्शनमनुचितमिति शङ्कते—**नन्विति** । सर्वत्र समदर्शिनस्तच्छब्देन परामृश्यन्ते । तेषां दोषवत्त्वादभोज्यान्नत्वमित्यत्र प्रमाणमाह—**समासमाभ्यामिति** । समानामध्ययनादिभिः । समानधर्मकाणां वस्त्रालंकारादिपूजया विषमे प्रतिपत्तिविशेषे क्रियमाणे सत्यसमानां चासमानधर्मकाणां कस्यचिदेकवेदत्वमपरस्य द्विवेदत्वमित्यादिधर्मवतां प्रागुक्ततया पूजया समे प्रतिपत्तिविशेषे पूजयिता पुरुषविशेषं ज्ञात्वा प्रतिपत्तिमकुर्वन्धनाद्धर्माच्च हीयते तेन सात्त्विके राजसतामसयोश्च समबुद्धिं कुर्वन्प्रत्यवैतीत्यर्थः । उत्तरत्वेनोत्तरश्लोकमवतारयति—**न ते दोषवन्त इति** । स्मृत्यवष्टम्भेन सर्वसत्त्वेषु समत्वदर्शिनां दोषवत्त्वमुक्तं कथं नास्तीति प्रतिज्ञामात्रेण सिध्यतीति शङ्कते—**कथमिति** । स्मृतेर्गतिमग्रे वदिष्यन्निर्दोषत्वं समत्वदर्शिनां विशदयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शीलं येषां ते समदर्शिनः । यथोक्तम् 'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥' इति । चराचरं जगद्ब्रह्मदृष्ट्यैव पश्यन्तीत्यर्थः ॥ १८ ॥ ननु 'समासमाभ्यां विषमसमे पूजातः' इति तुल्यश्रुतशीलाय ब्राह्मणद्वयाय विषमां पूजां प्रयुक्तवतः, तथा अतुल्यश्रुतशीलाय ब्राह्मणद्वयाय समां पूजां प्रयुक्तवतश्चाऽ-

४ मधुसूदनीव्याख्या ।

द्धृत्यमिति यावत् । ताभ्यां संपन्ने ब्रह्मविदि विनीते च ब्राह्मणे सात्त्विके सर्वोत्तमे । तथा गवि संस्कारहीनायां राजस्यां मध्यमायाम् । तथा हस्तिनि शुनि श्वपाके चात्यन्ततामसे सर्वाधमेऽपि सत्त्वादिगुणैस्तज्जैश्च संस्कारैरस्पृष्टमेव समं ब्रह्म द्रष्टुं शीलं येषां ते समदर्शिनः, पण्डिता ज्ञानिनः । यथा गङ्गातोये तडागे सुरायां मूत्रे वा प्रतिबिम्बितस्यादित्यस्य न तद्गुणदोषसंबन्धस्तथा ब्रह्मणोऽपि चिदाभासद्वारा प्रतिबिम्बितस्य नोपाधिगतगुणदोषसंबन्ध इति प्रतिसंदधानाः सर्वत्र समदृष्ट्यैव रागद्वेषराहित्येन परमानन्दस्फूर्त्या जीवन्मुक्तिमनुभवन्तीत्यर्थः ॥ १८ ॥ ननु सात्त्विकराजसतामसेषु स्वभावविषमेषु प्राणिषु समत्वदर्शनं धर्मशास्त्रनिषिद्धम् । तथाच 'तस्यान्नमभोज्यम्' इत्युपक्रम्य गौतमः स्मरति 'समासमाभ्यां विषमसमे पूजातः' इति । समासमाभ्यामिति चतुर्थीद्विवचनम् । विषमसमे इति द्वन्द्वैकवद्भावेन सप्तम्येकवचनम् । चतुर्वेदपारगाणामत्यन्तसदाचाराणां यादृशो वस्त्रालंकारान्नादिदानपुरःसरः पूजाविशेषः क्रियते तत्समायैवान्यस्मै चतुर्वेदपारगाय सदाचाराय विषमे तदपेक्षया न्यूने पूजाप्रकारे कृते, तथाल्पवेदानां हीनाचाराणां यादृशो हीनसाधनः पूजाप्रकारः क्रियते तादृशायैवासमाय पूर्वोक्तवेदपारगसदाचारब्राह्मणापेक्षया हीनाय तादृशहीनपूजाधिके मुख्यपूजासमे पूजाप्रकारे कृते, उत्तमस्य हीनतया हीनस्योत्तमतया पूजातो हेतोस्तस्य पूजयितुरन्नमभोज्यं भवतीत्यर्थः । पूजयिता प्रतिपत्तिविशेषमकुर्वन्धनाद्धर्माच्च हीयत इति च दोषान्तरम् । यद्यपि

५ भाष्योत्कर्षदीपिका ।

नामुत्तममध्यमाधमानामुक्तत्वान्मानुषपिण्डानामप्यात्मोपाधीनामेवं विवेको ज्ञेयः । ब्राह्मणस्योत्तमस्य पृथगभिधानात् । विद्यासंपन्नाववशिष्टौ क्षत्रियवैश्यपिण्डौ । विनयसंपन्नस्त्रैवर्णिकसेवामात्रधर्मकः शूद्रपिण्डः । पिण्डसमुदायाभिप्रायं चैकवचनम् । तथोत्तमो ब्राह्मणः क्षत्रियवैश्यौ मध्यमौ ततः किंचिन्निकृष्टः शूद्रः सर्वथाधमः श्वपाकः । एतेषु मानुषपशूत्तममध्यमाधमेषु पिण्डेष्वात्मोपाधिषु सत्स्वप्यनुपहितं सर्वत्राविशेषत्वात् समं ब्रह्मैव तत्रतत्र प्रविष्टं पण्डिताः पश्यन्ति नत्वात्मानमेव ब्रह्मात्मकं पश्यन्तीत्यर्थ इतीतरे व्याचख्युः । तन्मन्दम् । सर्वभूतात्मभूतब्रह्मदर्शिन इत्येतावतैवोक्तार्थे सिद्धेऽमूलोक्तानामुपाधिभेदानां क्लिष्टकल्पनया प्रदर्शितानां समपदस्य च वैयर्थ्यप्रसङ्गात् ॥ १८ ॥ ननु सात्त्विकादिषु समत्वदर्शनमनुचितं 'समासमाभ्यां विषमसमे पूजातः' इति तस्यान्नमभोज्यमित्युपक्रम्य स्मृत्या समदर्शिनोऽभोज्यान्नत्वप्रतिपादनात् समानामध्ययनादिभिस्तुल्यधर्मवतां वस्त्रालंकाररत्नादिदानपूर्वके विषमे पूजाविशेषे

६ श्रीधरीव्याख्या ।

ज्ञानिन इत्यर्थः । तत्र विद्याविनयाभ्यां युक्ते ब्राह्मणे च शुनो यः पचति तस्मिंश्च श्वपाके चेति कर्मणा वैषम्यम् । गवि हस्तिनि शुनि चेति जातितो वैषम्यं दर्शितम् ॥ १८ ॥ ननु विषमेषु समदर्शनं निषिद्धं कुर्वन्तोऽपि कथं ते पण्डिताः । यथाह गौतमः 'समास-

७ अभिनवगुप्ताचार्यव्याख्या ।

पावनीयमित्यादि । हस्तिनि नार्थादिधीः । शुनि चापवित्रापकारितादिनिश्चयः । श्वपाके च न पापापवित्रादिधिषणा । अतएव समं पश्य-

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥

१ श्रीमच्छांकरभाष्यम्।

दोषवन्तः। कथम्—इहैव जीवद्भिरेव तैः समदर्शिभिः पण्डितैर्जितो वशीकृतः सर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनोऽन्तःकरणं निर्दोषम्। यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषैर्दोषवदिव विभाव्यते तथापि तद्दोषैरसंस्पृष्टमिति निर्दोषं दोषवर्जितं, हि यस्मान्नापि स्वगुणभेदभिन्नं निर्गुणत्वाच्चैतन्यस्य। वक्ष्यति च भगवानिच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वादिति च। नाप्यन्त्या विशेषा आत्मनो भेदकाः सन्ति प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेरतः समं ब्रह्मैकं च। यस्माद्ब्रह्मण्येव ते स्थितास्तस्मान्न दोषगन्धमात्रमपि तान्स्पृशति देहादिसंघाता-

२ आनन्दगिरिव्याख्या।

इहैवेति। सर्वेषां चेतनानां साम्ये प्रवणमनसां ब्रह्मलोकगमनमन्तरेण तस्मिन्नेव देहे परिभूतजन्मनामशेषदोषराहित्ये हेतुमाह—निर्दोषं हीति। वर्तमानो देहः सप्तम्या परिगृह्यते। तानेव समदर्शिनो विशिनष्टि—येषामिति। ननु ब्रह्मणो निर्दोषत्वमसिद्धं दोषवत्सु श्वपाकादिषु तद्दोषैर्दोषवत्त्वोपलम्भसंभवात्तत्राह—यद्यपीति। यस्मात्तन्निर्दोषं तस्मात्तस्मिन्ब्रह्मणि स्थितैर्निर्दोषैः सर्गो जित इति संबन्धः। ब्रह्मणो गुणभूयस्त्वादल्पीयान्दोषोऽपि स्यादित्याशङ्क्याह—नापीति। चेतनस्य स्वगुणविशेषविशिष्टत्वमनिष्टं निर्गुणत्वश्रवणादित्ययुक्तमिच्छादीनां परिशेषादात्मधर्मत्वस्य कैश्चिन्निश्चितत्वादित्याशङ्क्याह—वक्ष्यति चेति। आत्मनो निर्गुणत्वे वाक्यशेषं प्रमाणयति—अनादित्वादिति। चकारो वक्ष्यतीत्यनेन संबन्धार्थः। गुणदोषवशादात्मनो भेदाभावेऽपि भेदोऽन्त्यविशेषेभ्यो भविष्यतीत्यतिप्रसङ्गादाशङ्क्य दूषयति—नापीति। प्रतिशरीरमात्मभेदसिद्धौ तद्धेतुत्वेन तेषां सत्त्वं तेषां च सत्त्वे प्रतिशरीरमात्मनो भेदसिद्धिरिति परस्पराश्रयत्वमभिप्रेत्य हेतुमाह—प्रतिशरीरमिति। आत्मनो भेदकाभावे फलितमाह—अत इति। समत्वमेव व्याकरोति—एकं चेति। ब्रह्मणो निर्विशेषत्वेनैकत्वाज्जीवानां च भेदकाभावेनैकत्वस्योक्तत्वादेकलक्षणत्वादेकत्वं जीवब्रह्मणोरेष्टव्यमित्याह—तस्मादिति। जीवब्रह्मणोरेकत्वे जीवानां ब्रह्मवन्निर्दोषत्वं सिध्यतीत्याह—तस्मान्नेति। तच्छब्दार्थमेव स्फोरयति—देहादीति। यदि सर्वसत्त्वेषु समत्वदर्शनमदुष्टमिष्टं तर्हि कथं गौतमसूत्रमित्या-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

भोज्यान्नत्वं गौतमेन स्मर्यते तत्कथं ब्राह्मणचण्डालयोः समदर्शित्वं युक्तमित्याशङ्क्याह—इहैवेति। येषां मनः सर्वभूतेषु साम्ये ब्रह्मभावे स्थितं निश्चलं तैरिहैव जीवद्भिरेव सर्गो जन्म जितो वशीकृतः। हि यस्मान्निर्दोषं समं सर्वत्राविषमं

४ मधुसूदनीव्याख्या।

यतीनां निष्परिग्रहाणां पाकाभावाद्धनाभावाच्चाभोज्यान्नत्वं धनहीनत्वं च स्वतएव विद्यते तथापि धर्महानिर्दोषो भवत्येव। अभोज्यान्नत्वं चाशुचित्वेन पापोत्पत्त्युपलक्षणम्। तपोधनानां च तपएव धनमिति तद्धानिरपि दूषणं भवत्येवेति कथं समदर्शिनः पण्डिता जीवन्मुक्ता इति प्राप्ते परिहरति—तैः समदर्शिभिः पण्डितैरिहैव जीवनदशायामेव जितोऽतिक्रान्तः सर्गः सृज्यत इति व्युत्पत्त्या द्वैतप्रपञ्चः। देहपातादूर्ध्वमतिक्रमितव्य इति किमु वक्तव्यम्। कैः। येषां साम्ये सर्वभूतेषु विषमेष्वपि वर्तमानस्य ब्रह्मणः समभावे स्थितं निश्चलं मनः। हि यस्मान्निर्दोषं समं सर्वविकारशून्यं कूटस्थनित्यमेकं च ब्रह्म तस्मात्ते समदर्शिनो ब्रह्मण्येव स्थिताः। अयं भावः—दुष्टत्वं हि द्वेधा भवति अदुष्टस्यापि दुष्टसंबन्धात्स्वतो दुष्टत्वाद्वा। यथा

५ भाष्योत्कर्षदीपिका।

क्रियमाणे सति असमानां च कस्यचित् द्विवेदाध्ययनमपरस्यैकवेदाध्ययनमित्येवमध्ययनादिभिरतुल्यधर्मवतां प्रागुक्ते समे पूजाविशेषे तस्याः पूजातो हेतोः पूजयिता पुरुषविशेषं ज्ञात्वा पूजाविशेषमकुर्वन्नभोज्यान्नो भवति धनाद्धर्माच्च हीयत इति स्मृतेरर्थः। तथाच सर्वसत्त्वेषु समत्वदर्शिनः दोषवत्त्वमित्याशङ्कायाः कार्यकरणसंघातात्मदर्शनाभिमानवत्कर्मठविषया तु गौतमस्मृतिः। पूजात इति पूजाविषयत्वेन विशेषणात्। इदं तु यः सर्वकर्मसंन्यासी निष्परिग्रहः पाकानधिकारी अभोज्यान्नो धनहीनो धर्मादिदत्तजलाञ्जलिः तत्त्ववित् तद्विषयमिति विषयभेदेनाविरोधमभिप्रेत्योत्तरमाह—इहेति। इहैव जीवद्भिरेव तैर्जितो वशीकृतः अतिक्रान्तो जन्मादिलक्षणः संसारः। कैरित्यपेक्षायामाह। येषां सर्वसत्त्वेषु ब्रह्मणः समभावे स्थितं स्थिरीभूतं मनोऽन्तःकरणम्। हि यस्मान्मनः-

६ श्रीधरीव्याख्या।

माभ्यां विषमसमे पूजातः' इति। अस्यार्थः-समाय पूजाया विषमे प्रकारे कृते सति, विषमाय च समे प्रकारे कृते सति स पूजक इह लोकात्परलोकाच्च हीयत इति। तत्राह—इहैवेति। इहैव जीवद्भिरेव तैः सृज्यत इति सर्गः संसारो जितो निरस्तः। कैः। येषां मनः

७ अभिनवगुप्ताचार्यव्याख्या।

स्तीति नतु व्यवहरन्तीति। तदुक्तं 'चिद्धर्मा सर्वदेहेषु विशेषो नास्ति कुत्रचित्। अतश्च तन्मयं सर्वं भावयन्भवभिज्जनः॥' अत्रापि भावय-

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्मदर्शनाभिमानाभावात् । देहादिसंघातात्मदर्शनाभिमानवद्विषयं तु तत्सूत्रं 'समासमाभ्यां विषमसमे पूजातः' इति पूजाविषयत्वविशेषणात् । दृश्यते हि ब्रह्मवित्षडङ्गविच्चतुर्वेदविदिति पूजादानादौ गुणविशेषसंबन्धः कारणं ब्रह्म तु सर्वगुणदोषसंबन्धवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तम् । कर्मिविषयं च समासमाभ्यामित्यादीदं तु सर्वकर्मसंन्यासिविषयं प्रस्तुतं सर्वकर्माणि मनसेत्यारभ्याध्यायपरिसमाप्तेः ॥ १९ ॥ यस्मान्निर्दोषं समं ब्रह्मात्मा तस्मात्—न प्रहृष्येन्न हर्षं कुर्यात्प्रिय-

२ आनन्दगिरिव्याख्या ।

शङ्काह—देहादिसंघातेति । सूत्रस्य यथोक्ताभिमानवद्विषयत्वे गमकमाह—पूजेति । यदि वा चतुर्वेदानामेव सतां पूजया वैषम्यं यदि वा चतुर्वेदानां षडङ्गविदां च पूजया साम्यं तदा तेषामुक्तपूजाविषयाणां केषांचिन्मनोविकारसंभवे कर्ता प्रत्यवैतीत्यविद्वद्विषयत्वं सूत्रस्य प्रतिभातीत्यर्थः । तत्रैव चानुभवमनुकूलत्वेनोदाहरति—दृश्यते हीति । देहादिसंघाताभिमानवतां गुणदोषसंबन्धसंभवात्तद्विषयं सूत्रमित्युक्तमिदानीं ब्रह्मात्मदर्शनाभिमानवतां गुणदोषासंबन्धान्न तद्विषयं सूत्रमित्यभिप्रेत्याह—ब्रह्म त्विति । इतश्च नेदं सूत्रं ब्रह्मविद्विषयमित्याह—कर्मीति । तत्रैव पूजापरिभवसंभवादित्यर्थः । ननु यत्र समत्वदर्शनं तत्रैव त्विदं सूत्रं ननु कर्मिण्यकर्मिणि वेति विभागोऽस्ति तत्राह—इदं त्विति । समत्वदर्शनस्य संन्यासिविषयत्वेन प्रस्तुतत्वे हेतुमाह—सर्वकर्माणीति । आऽध्यायपरिसमाप्तेः सर्वकर्माणीत्यारभ्य तत्र तत्र सर्वकर्मसंन्यासाभिधानात्तद्विषयमिदं समत्वदर्शनं गम्यते तत्र तन्निरहंकारे निरवकाशं सूत्रमित्यर्थः ॥ १९ ॥ नन्विष्टानिष्टप्राप्तिभ्यां हर्षविषादौ विद्वानपि कुर्वन्निर्दोषे ब्रह्मणि कथं स्थितिं लभेतेत्याशङ्काकाङ्क्षितं पूरयन्नुत्तरश्लोकमुत्थापयति—यस्मादिति । आत्मज्ञाननिष्ठावतो विदुषो हर्षविषादनिमित्ताभावान्न तावुचितावित्याह—स्थिरबुद्धिरिति । ननु हर्षविषादनिमित्तत्वं प्रियाप्रिययोः सिद्धमिति कथं तत्प्राप्त्या हर्षोद्वेगौ न

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ब्रह्मास्ति यथा हिरण्मययोर्देवतातत्पीठयोः स्वर्णदृक्साम्यं पश्यति पूजकस्तु आकारदृक्कृतारतम्यं पश्यति तद्वत् । पूजास्मृतिर्भ्रान्तिकृततारतम्यविषया । साम्यदृष्टिस्तु तत्त्वविषयेति भावः । यस्मादेवं ते साम्यं पश्यन्ति तस्माद्ब्रह्मण्यखण्डैकरसे ते द्रष्टारः स्थिता एकीभावेन समाप्तिं गताः ॥ १९ ॥ **न प्रहृष्येदिति** । यस्मान्निर्दोषं समं ब्रह्म तस्मात्

४ मधुसूदनीव्याख्या ।

गङ्गोदकस्य मूत्रगर्तपातात्, स्वतएव वा यथा मूत्रादेः । तत्र दोषवत्सु श्वपाकादिषु स्थितं तद्दोषैर्दुष्यति ब्रह्मेति मूढैर्विभाव्यमानमपि सर्वदोषासंस्पृष्टमेव ब्रह्म व्योमवदसङ्गत्वात् । 'असङ्गो ह्ययं पुरुषः', 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेः । नापि कामादिधर्मवत्तया स्वतएव कलुषितं कामादेरन्तःकरणधर्मत्वस्य श्रुतिस्मृतिसिद्धत्वात् । तस्मान्निर्दोषब्रह्मरूपा यतयो जीवन्मुक्ता अभोज्यान्नादिदोषदुष्टाश्चेति व्याहतम् । स्मृतिस्त्वविद्वद्गृहस्थविषयैव 'तस्यान्नमभोज्यम्' इत्युपक्रमात्, पूजात इति मध्ये निर्देशात्, 'धनाद्धर्माच्च हीयते' इत्युपसंहाराचेति द्रष्टव्यम् ॥ १९ ॥ यस्मान्निर्दोषं समं ब्रह्म तस्मात्तद्रूपमात्मानं साक्षात्कुर्वन्—'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः' इत्यत्र व्याख्यातं पूर्वार्धम् । जीवन्मुक्तानां स्वाभाविकं चरितमेव मुमुक्षुभिः प्रयत्नपूर्वकमनुष्ठेयमिति वदितुं लिङ्प्रत्ययौ । अद्वितीयात्मदर्शनशीलस्य व्यतिरिक्तप्रियाप्रियप्राप्त्ययोगान्न तन्निमित्तौ हर्षविषादावित्यर्थः । अद्वितीयात्मदर्शनमेव विवृणोति—स्थिरबुद्धिः स्थिरा निश्चला संन्यासपूर्वकवेदान्तवाक्यविचारपरिपाकेन सर्वसंशयशून्यत्वेन निर्विचिकित्सा निश्चिता ब्रह्मणि बुद्धिर्यस्य स तथा । लब्धश्रवणमननफल इति यावत् । एतादृशस्य सर्वासंभावनाशून्यत्वेऽपि विपरीतभावनाप्रतिबन्धात्साक्षात्कारो नोदेतीति निदिध्यासनमाह—असंमूढः निदिध्यासनस्य विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहस्य परिपाकेन

५ भाष्योत्कर्षदीपिका ।

स्थितिविषयो ब्रह्म निर्दोषं दोषवत्सु चाण्डालादिषु स्थितमप्याकाशवत्तद्दोषैरस्पृष्टमतएव समं सदैव सर्वत्रैकरूपम् । तस्मादेतादृशे ब्रह्मणि ते पण्डिताः स्थिताः अतो न दोषगन्धमात्रमपि तान्स्पृशतीत्यर्थः ॥ १९ ॥ समे निर्दोषे ब्रह्मणि स्थितो जीवन्मुक्तिसुखार्थं कीदृशः स्यादित्याकाङ्क्षायामाह–**नेति** । स्थिरा संशयवर्जिता सर्वभूतेष्वेकः समो निर्दोष आत्मेति बुद्धिर्यस्य । यतोऽसंमूढः संशयमूल-

६ श्रीधरीव्याख्या ।

साम्ये समत्वे स्थितम् । तत्र हेतुः—हि यस्मात् ब्रह्म समं निर्दोषं च तस्मात्ते समदर्शिनो ब्रह्मण्येव स्थिताः । ब्रह्मभावं प्राप्ता इत्यर्थः । गौतमोक्तस्तु दोषो ब्रह्मभावप्राप्तेः पूर्वमेव । पूजात इति पूजकावस्थाश्रवणात् ॥ १९ ॥ ब्रह्मप्राप्तस्य लक्षणमाह—**नेति** । यो ब्रह्मवि-

७ अभिनवगुप्ताचार्यव्याख्या ।

स्थिति ज्ञानस्यैवेयं धारोक्ता ॥ १८ ॥ १९ ॥ तस्य चेत्थं संभावनेत्याह—न प्रहृष्येदिति । एतस्य समदर्शिनः शत्रुमित्रादिविभागेऽपि उद्वे-

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ २१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मिष्टं प्राप्य लब्ध्वा नोद्विजेत्प्राप्यैव चाप्रियमनिष्टं लब्ध्वा । देहमात्रात्मदर्शिनां हि प्रियाप्रियप्राप्ती हर्षविषादस्थाने न केवलात्मदर्शिनस्तस्य प्रियाप्रियप्राप्त्यसंभवात् । किंच सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिरसंमूढः संमोहवर्जितश्च स्याद्यथोक्तब्रह्मविद्ब्रह्मणि स्थितोऽकर्मकृत्सर्वकर्मसंन्यासीत्यर्थः ॥ २० ॥ किंच ब्रह्मणि स्थितो बाह्यस्पर्शेषु बाह्याश्च ते

२ आनन्दगिरिव्याख्या ।

कर्तव्याविति नियुज्यते तत्राह—**देहेति** । विदुषोऽपि प्रियाप्रियप्राप्तिसामर्थ्यादेव हर्षविषादौ दुर्वारावित्याशङ्क्याह—**न केवलेति** । अद्वितीयात्मदर्शनशीलस्य व्यतिरिक्तप्रियाप्रियप्राप्त्ययोगान्न तन्निमित्तौ हर्षविषादावित्यर्थः । इत्यपि विदुषो हर्षविषादावसंभावितावित्याह—**किंचेति** । निर्दोषे ब्रह्मणि प्रागुक्ते दृढप्रतिपत्तिः संमोहेन हर्षादिहेतुना रहितो यथोक्ते सर्वदोषरहिते ब्रह्मण्यहमस्मीति विद्यावानशेषदोषशून्ये तस्मिन्नेव ब्रह्मणि स्थितस्तदनुरोधात्कर्माण्यमृष्यमाणो नैव हर्षविषादभागी भवितुमलमित्यर्थः ॥ २० ॥ शब्दादिविषयप्रीतिप्रतिबन्धान्न कस्यचिदपि ब्रह्मणि स्थितिः सिध्येदित्याशङ्क्याह—**किंचेति** । न केवलं पूर्वोक्तरीत्या ब्रह्मणि स्थितो हर्षविषादरहितः किंतु विधान्तरेणापीत्यर्थः । यावद्यावद्विषयेषु रागरूपमावरणं निवर्तते तावत्तावदात्मस्वरूपसुखमभिव्यक्तं भवतीत्याह—**बाह्येति** । न केवलम-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

प्रियं पुत्रादिं प्राप्य न प्रहृष्येत् । अप्रियं शत्रुं दुःखदं प्राप्य नोद्विजेत् । बुद्धस्थितिरबुद्धेनानुष्ठेयेति ज्ञापयितुमुभयत्र लिङ्प्रयोगः । स्थिरबुद्धिः प्रत्यगद्वैते श्रुतियुक्तिभ्यां स्थिरीकृतप्रज्ञः । असंमूढो ध्यानजसाक्षात्कारेण निर्गतमोहः । अतएव ब्रह्मविद्ब्रह्मभावस्य लब्धा । ब्रह्मभावं गत इत्यर्थः । ब्रह्मण्येव प्रत्यगद्वये व्युत्थानावस्थायामपि स्थितः । सर्वं ब्रह्मेत्येव पश्यन्नित्यर्थः ॥ २० ॥ नन्वननुभूतात्मसुखेप्सया प्रसिद्धं बाह्यं सुखं त्यक्तुमशक्यमतो न प्रहृष्येदित्यसंगतमत आह—**बाह्येति** । बहिर्भवाः बाह्याः स्पर्शा विषयेन्द्रियसंबन्धास्तेषु असक्तात्माऽनासक्तचित्तः सन्नात्मनि प्रत्यगद्वया-

४ मधुसूदनीव्याख्या ।

विपरीतभावनाख्यसंमोहरहितः, ततः सर्वप्रतिबन्धापगमाद्ब्रह्मविद्ब्रह्मसाक्षात्कारवान्, ततश्च समाधिपरिपाकेन निर्दोषे समे ब्रह्मण्येव स्थितो नान्यत्रेति ब्रह्मणि स्थितो जीवन्मुक्तः स्थितप्रज्ञ इत्यर्थः । एतादृशस्य द्वैतदर्शनाभावात्प्रहर्षोद्वेगौ न भवत इत्युचितमेव । साधकेन तु द्वैतदर्शने विद्यमानेऽपि विषयदोषदर्शनादिना प्रहर्षविषादौ त्याज्यावित्यभिप्रायः ॥ २० ॥ ननु बाह्यविषयप्रीतेरनेकजन्मानुभूतत्वेनातिप्रबलत्वात्तदासक्तचित्तस्य कथमलौकिके ब्रह्मणि दृष्टे सर्वसुखरहिते स्थितिः स्यात् । परमानन्दरूपत्वादिति चेत्, न तदानन्दस्याननुभूतचरत्वेन चित्तस्थितिहेतुत्वाभावात् । तदुक्तं वार्तिके 'अप्यानन्दः श्रुतः साक्षान्मानेनाविषयीकृतः । दृष्टानन्दाभिलाषं स न मन्दीकर्तुमप्यलम् ॥' इति । तत्राह—इन्द्रियैः स्पृश्यन्त इति स्पर्शाः शब्दादयः । तेच बाह्या अनात्मधर्मत्वात् । तेष्वसक्तात्माऽनासक्तचित्तस्तृष्णाशून्यतया विरक्तः सन्नात्मनि अन्तःकरणएव बाह्यविषयनिरपेक्षं यदुपशमात्मकं सुखं तद्विन्दति लभते निर्मलसत्त्ववृत्त्या । तदुक्तं भारते 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' इति । अथवा प्रत्यगात्मनि त्वंपदार्थे यत्सुखं स्वरूपभूतं सुषुप्तावनुभूयमानं बाह्यविषयासक्तिप्रतिबन्धादलभ्यमानं तदेव तदभावाल्लभते । न केवलं त्वंपदार्थसुखमेव लभते किंतु तत्पदार्थैक्यानुभवेन पूर्णसुखमपीत्याह—स तृष्णाशून्यो ब्रह्मणि परमात्मनि योगः समाधिस्तेन युक्तस्तस्मिन्व्यापृत आत्मान्तःकरणं यस्य

५ भाष्योत्कर्षदीपिका ।

भूतेन संमोहेन रहितः । यतस्तत्त्ववित् मोहनिवर्तकतत्त्वसाक्षात्कारवान् । तदपि कुतः । यतो ब्रह्मणि स्थितः सर्वं विक्षेपकारणं परित्यज्य श्रवणादिना तत्रैव स्थितः । तन्निष्ठ इतियावत् । एतादृशः प्रियं प्राप्य हर्षं न कुर्यात् । अप्रियं प्राप्योद्वेगं न कुर्यात् । एतादृशेनापि मनोनाशवासनाक्षयप्रयत्नेन हर्षविषादाभावत्वे यतितव्यं षष्ठ्यादिभूमिकायै इति सूचनार्थमुभयत्र लिङ्प्रयोगः ॥ २० ॥ किंच विषयसुखस्य ब्रह्मानन्दापेक्षयातितुच्छत्वात् ब्रह्मणि स्थितः । स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयाः तेष्वसक्तः प्रीतिवर्जितः आत्मान्तःकरणं यस्य स आत्मनि त्वंपदलक्ष्ये यत्सुखं तद्विन्दति लभते । स ब्रह्मणि तत्पदलक्ष्ये परमात्मनि योगः समाधिः त्वंपद-

६ श्रीधरीव्याख्या ।

भूत्वा ब्रह्मण्येव स्थितः स प्रियं प्राप्य न प्रहृष्येन्न प्रहृष्टो हर्षवान्स्यात् । अप्रियं च प्राप्य नोद्विजेत् । न विषीदेदित्यर्थः । यतः स्थिरबुद्धिः स्थिरा निश्चला बुद्धिर्यस्य । तत्कुतः । यतोऽसंमूढो निवृत्तमोहः ॥ २० ॥ मोहनिवृत्त्या बुद्धिस्थैर्यहेतुमाह—**बाह्यस्पर्शेष्विति** ।

७ अभिनवगुप्ताचार्यव्याख्या ।

हारमात्र एव नान्तः ब्रह्मनिष्ठत्वात् ॥ २० ॥ २१ ॥ बाह्यस्पर्शेष्विति । बाह्यस्पर्शे विषयात्मनि सक्तिर्यस्य नास्ति स ह्येवं मन्यत इत्याह—

**ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेष्वासक्त आत्मान्तःकरणं यस्य सोऽयमसक्तात्मा विषयेषु प्रीतिवर्जितः सन्विन्दति लभते आत्मनि यत्सुखं तद्विन्दतीत्येतत् । स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिर्ब्रह्मयोगस्तेन ब्रह्मयोगेन युक्तः समाहितस्तस्मिन्व्यापृत आत्मान्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते प्राप्नोति । तस्माद्बाह्यविषयप्रीतेः क्षणिकाया इन्द्रियाणि निवर्तयेदात्मन्यक्षयसुखार्थीत्यर्थः ॥ २१ ॥ इतश्च निवर्तयेत्—ये हि यस्मात्संस्पर्शजा विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगा भुक्तयो दुःखयोनय एव तेऽविद्याकृतत्वात् । दृश्यन्ते ह्याध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव । यथेह लोके तथा परलोकेऽपीति गम्यत एवशब्दात् । न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि**

२ आनन्दगिरिव्याख्या ।

सक्तात्मा शमवशादेव सुखं विन्दति किंतु ब्रह्मसमाधिना समाहितान्तःकरणः सुखमनन्तं प्राप्नोतीत्याह—**स ब्रह्मेति** । तत्र पूर्वार्धं व्याचष्टे—**बाह्यश्चेति** । समाधानाधीनसम्यग्ज्ञानद्वारा निरतिशयसुखप्राप्तिमुत्तरार्धव्याख्यानेन कथयति—**ब्रह्मणीत्यादिना** । शब्दादिविषयविमुखस्यानन्तसुखाप्तिसंभवात्तदर्थिना प्रयत्नेन विषयवैमुख्यं कर्तव्यमिति शिष्यशिक्षार्थमाह—**तस्मादिति** ॥ २१ ॥ तत्रैव हेत्वन्तरपरत्वेनोत्तरश्लोकमुदाहरति—**इतश्चेति** । विषयेभ्यः सकाशादिन्द्रियाणीति शेषः । वैराग्यार्थमेव वैषयिकाणि सुखानि दूषयति—**ये हीति** । ननु विषयेन्द्रियसंप्रयोगसंप्रसूतेषु भोगेषु

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नन्दे सुषुप्तिकाले स्थित्वा यत्सुखं विन्दति लभते स तदेव सुखम् । विधेयापेक्षं पुंस्त्वम् । कस्तत्सुखम् । यो ब्रह्मयोगे ब्रह्मणि योगः समाधिस्तत्र युक्तो योजित आत्मा बुद्धिर्येन स ब्रह्मयोगयुक्तात्मा । ब्रह्मविदित्यर्थः । 'ब्रह्मविद्ब्रह्मैव भवति' इति श्रुतेः । ब्रह्मयोगयुक्तात्मा तदेव सुखं विन्दतीति वक्तव्ये ब्रह्मविदेव तत्सुखमिति तस्य सुखाभिन्नत्वविवक्षयेदमुक्तम् । ननूभयत्रैकमेव सुखं चेत्कः सुप्तसमाधिस्थयोर्विशेष इत्याशङ्क्याह—**सुखमिति** । अक्षय्यं सुखं मोक्षस्तमश्नुते व्याप्नोति । द्वैतादर्शनस्य तुल्यत्वादुभयत्रैकमेव सुखं तत्रापि योगी मूलाविद्याया नष्टत्वादक्षय्यं सुखमश्नुते न सुप्तः । अविद्यानुच्छेदात् । तथाच मोक्षसुखस्य मुख्यस्याप्यनुभूतत्वात्तदर्थं बाह्यं सुखं सुत्यजमित्यर्थः ॥ २१ ॥ ननु सुषुप्तितुल्यस्य मोक्षसुखस्यार्थे कः प्राप्तमेव बाह्यं दिव्यरुच्यन्नपानगीतवाद्यादिसुखं त्यजेदित्याशङ्क्य बाह्यसुखमनित्यत्वान्निन्दति—**ये हीति** । संस्पर्शजा विषयसंबन्धजाः । दुःखयोनित्वे हेतुः आद्यन्तवन्त इति । जाते पुत्रे यत्सुखं

४ मधुसूदनीव्याख्या ।

स ब्रह्मयोगयुक्तात्मा । अथवा ब्रह्मणि तत्पदार्थे योगेन वाक्यार्थानुभवरूपेण समाधिना युक्त ऐक्यं प्राप्त आत्मा त्वंपदार्थः स्वरूपं यस्य स तथा । सुखमक्षय्यमनन्तं स्वस्वरूपभूतमश्नुते व्याप्नोति । सुखानुभवरूप एव सर्वदा भवतीत्यर्थः । नित्येऽपि वस्तुन्यविद्यानिवृत्त्यभिप्रायेण धात्वर्थयोग औपचारिकः । तस्मादात्मन्यक्षयसुखानुभवार्थी सन्बाह्यविषयप्रीतेः क्षणिकाया महानरकानुबन्धिन्याः सकाशादिन्द्रियाणि निवर्तयेत्तावतैव च ब्रह्मणि स्थितिर्भवतीत्यभिप्रायः ॥ २१ ॥ ननु बाह्यविषयप्रीतिनिवृत्तावात्मन्यक्षयसुखानुभवस्तस्मिंश्च सति तत्प्रसादादेव बाह्यविषयप्रीतिनिवृत्तिरितीतरेतराश्रयवशान्नैकमपि सिध्येदित्याशङ्क्य विषयदोषदर्शनाभ्यासेनैव तत्प्रीतिनिवृत्तिर्भवतीति परिहारमाह—हि यस्मात् ये संस्पर्शजा विषयेन्द्रियसंबन्धजा भोगाः क्षुद्रसुखलवानुभवाः इह वा परत्र वा रागद्वेषादिव्याप्तत्वेन दुःखयोनय एव ते, ते सर्वेऽपि ब्रह्मलोकपर्यन्तं दुःखहेतव

५ भाष्योत्कर्षदीपिका ।

लक्ष्यस्य तत्पदलक्ष्ये एकत्वापादनं तेन युक्त आत्मान्तःकरणमखण्डसाक्षात्कारलक्षणान्तःकरणवृत्तिर्यस्य स सुखं ब्रह्मानन्दमक्षय्यमश्नुते व्याप्नोति तस्मादात्मनि जीवन्नेवाक्षयसुखार्थी क्षणिकाया विषयप्रीतेरिन्द्रियाणि निवर्तयेदित्याशयः । अत्रत्यभाष्यस्य सामान्यरूपतया न व्याख्यानान्तरैर्विरोध इति ध्येयम् ॥ २१ ॥ विषयेष्वसक्ततां संपादयेदित्युक्तं तत् भोगानां दुःखरूपत्वप्रतिपादनेन द्रढयति—**ये हीति** । ये हि यस्माद्विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगास्ते दुःखानामाध्यात्मिकादीनां योनयः कारणानि । अविद्याकृत-

६ श्रीधरीव्याख्या ।

इन्द्रियैः स्पृश्यन्त इति स्पर्शा विषयाः बाह्येन्द्रियविषयेष्वसक्तात्मानासक्तचित्तः आत्मन्यन्तःकरणे यदुपशमात्मकं सात्त्विकं सुखं तद्विन्दति लभते । स चोपशमात्मकं सुखं लब्ध्वा ब्रह्मणि योगेन समाधिना युक्तस्तदैक्यं प्राप्त आत्मा यस्य सोऽक्षय्यं सुखमश्नुते प्राप्नोति ॥ २१ ननु प्रियविषयभोगानामपि निवृत्तेः कथं मोक्षः पुरुषार्थः स्यात्तत्राह—**ये हीति** । संस्पृश्यन्त इति संस्पर्शा विषयास्तेभ्यो

१ श्रीमच्छांकरभाष्यम् ।

**निवर्तयेत् । न केवलं दुःखयोनय आद्यन्तवन्तश्चादिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च तद्वियोग**

२ आनन्दगिरिव्याख्या ।

जन्तूनामभिरुचिदर्शनात्कुतस्तेषां दुःखयोनित्वमित्याशङ्क्याविवेकिनां तेष्वासङ्गेऽपि न विवेकिनामित्याह—**आद्यन्तवन्त इति** । यस्मादाधिव्याधिजरामरणादिसहितेभ्यः समागमनादिक्लेशरूपभागिभ्यश्च विषयेन्द्रियसंबन्धेभ्यो भोगाः सुखलवानुभवा जायन्ते तस्मात्ते दुःखहेतवो भवन्तीति योजना । अविद्याकार्यत्वाद्दुःखानां कुतो भोगजन्यत्वमित्याशङ्क्य भोगानामविद्याप्रयुक्तत्वात्तन्निबन्धनत्वं दुःखानां युक्तमित्यभिप्रेत्याह—**अविद्येति** । भोगानां दुःखयोनित्वे मानवमनुभवमुपन्यस्यति—**दृश्यन्ते हीति** । ऐहिकानां भोगानां दुःखनिमित्तत्वेऽपि नामुष्मिकाणां तथात्वमनुभवाभावादित्याशङ्क्यावधारणसामर्थ्यसिद्धमर्थमाह—**यथेति** । पूर्वार्धस्याक्षरार्थमुक्त्वा तात्पर्यार्थमाह—**नेत्यादिना** । इतश्च विषयेभ्यः सकाशादिन्द्रियाणि निवर्तयितव्यानीत्याह—**न केवलमिति** । आद्यन्तवत्त्वे मध्यक्षणवर्तित्वेन क्षणभङ्गुर-

४ मधुसूदनीव्याख्या ।

एव । तदुक्तं विष्णुपुराणे 'यावन्तः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥' इति । एतादृशा अपि न स्थिराः किंतु आद्यन्तवन्तः, आदिर्विषयेन्द्रियसंयोगोऽन्तश्च तद्वियोग एव तौ विद्येते येषां ते । पूर्वापरयोरसत्त्वान्मध्ये स्वप्नवदाविर्भूताः क्षणिका मिथ्याभूताः । तदुक्तं गौडपादाचार्यैः 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति । यस्मादेवं तस्मात्तेषु बुधो विवेकी न रमते प्रतिकूलवेदनीयत्वान्न प्रीतिमनुभवति । तदुक्तं भगवता पतञ्जलिना 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति । सर्वमपि विषयसुखं दृष्टमानुश्रविकं च दुःखमेव प्रतिकूलवेदनीयत्वात् । विवेकिनः परिज्ञातक्लेशादिस्वरूपस्य न त्वविवेकिनः । अक्षिपात्रकल्पो हि विद्वानल्पदुःखलेशेनाप्युद्विजते यथोर्णातन्तुरतिसुकुमारोऽप्यक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नेतरेष्वङ्गेषु तद्वद्विवेकिन एव मधुविषसंपृक्तान्नभोजनवत्सर्वमपि भोगसाधनं कालत्रयेऽपि क्लेशानुविद्धत्वाद्दुःखं विवेकिनः न मूढस्य बहुविधदुःखसहिष्णोरित्यर्थः । तत्र परिणामतापसंस्कारदुःखैरिति भूतवर्तमानभविष्यत्कालेऽपि दुःखानुविद्धत्वादौपाधिकं दुःखत्वं विषयसुखस्योक्तम् । गुणवृत्तिविरोधाच्चेत्यनेन स्वरूपतोऽपि दुःखत्वं, तत्र परिणामश्च तापश्च संस्कारश्च त एव दुःखानि तैरित्यर्थः । इत्थंभूतलक्षणे तृतीया । तथाहि रागानुविद्ध एव सर्वोऽपि सुखानुभवः । नहि तत्र न रज्यति तेन सुखी चेति संभवति । राग एव च पूर्वमुद्भूतः सन्विषयप्राप्त्या सुखरूपेण परिणमते । तस्य च प्रतिक्षणं वर्धमानत्वेन स्वविषयाप्राप्तिनिबन्धनदुःखस्यापरिहार्यत्वाद्दुःखरूपतैव । याहि भोगेष्विन्द्रियाणामुपशान्तिः परितृप्तत्वात्सुखम् । या लौल्यादनुपशान्तिस्तद्दुःखम् । नचेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम् । यतो भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणाम् । स्मृतिश्च 'न जातु कामः' इत्यादिः । तस्माद्दुःखात्मकरागपरिणामत्वाद्विषयसुखमपि दुःखमेव कार्यकारणयोरभेदादिति परिणामदुःखत्वम् । तथा सुखानुभवकाले तत्प्रतिकूलानि दुःखसाधनानि द्वेष्टि । नानुपहत्य भूतान्युपभोगः संभवतीति भूतानि च हिनस्ति । द्वेषश्च सर्वाणि दुःखसाधनानि मे माभूवन्निति संकल्पविशेषः । नच तानि सर्वाणि कश्चिदपि परिहर्तुं शक्नोति । अतः सुखानुभवकालेऽपि तत्परिपन्थिनं प्रति द्वेषस्य सर्वदैवावस्थितत्वात्तापदुःखं दुष्परिहरमेव । तापो हि द्वेषः । एवंच दुःखसाधनानि परिहर्तुमशक्तो मुह्यति चेति मोहदुःखतापि व्याख्येया । तथाचोक्तं योगभाष्यकारैः 'सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभवः' इति । तत्रास्ति द्वेषजः कर्माशयः । सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते । ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति । स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते । यथा वर्तमानः सुखानुभवः स्वविनाशकाले संस्कारमाधत्ते । सच सुखस्मरणं, तच्च रागं, सच मनःकायवचनचेष्टां, साच पुण्यापुण्यकर्माशयौ, तौ च जन्मादीनि संस्कारदुःखता । एवं तापमोहयोरपि संस्कारौ व्याख्येयौ । एवं कालत्रयेऽपि दुःखानुवेधाद्विषयसुखं दुःखमेवेत्युक्त्वा स्वरूपतोऽपि दुःखतामाह—गुणवृत्तिविरोधाच्च गुणाः सत्त्वरजस्तमांसि सुखदुःखमोहात्मकाः परस्परविरुद्धस्वभावा अपि तैलवर्त्यग्नय इव दीपं पुरुषभोगोपयुक्तत्वेन त्र्यात्मकमेकं कार्यमारभन्ते । तत्रैकस्य प्राधान्ये द्वयोर्गुणभावात्प्रधानमात्रव्यपदेशेन सात्त्विकं राजसं तामसमिति त्रिगुणमपि कार्यमेकेन गुणेन व्यपदिश्यते । तत्र सुखोपभोगरूपोऽपि प्रत्यय उद्भूतसत्त्वकार्यत्वेऽप्यनुद्भूतरजस्तमःकार्यत्वात्त्रिगुणात्मक एव । तथाच सुखात्मकत्ववद्दुःखात्मकत्वं विषादात्मकत्वं च तस्य ध्रुवमिति दुःखमेव सर्वं विवेकिनः । नचैतादृशोऽपि प्रत्ययः स्थिरः । यस्माच्चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम् । नन्वेकः प्रत्ययः कथं परस्परविरुद्धसुखदुःखमोहत्वान्येकदा प्रतिपद्यत इति चेत् न । उद्भूतानुद्भूतयोर्विरोधाभावात् । समवृत्तिकानामेव

५ भाष्योत्कर्षदीपिका ।

त्वात् । एवकारात्संसारे सुखस्य गन्धमात्रमपि नास्तीति ज्ञात्वा शुक्तिरजतनिभेभ्यो भोगेभ्य इन्द्रियाणि निवर्तयेत् । न केवलं दुःख-

६ श्रीधरीव्याख्या ।

ज्ञाता ये भोगाः सुखानि ते हि वर्तमानकालेऽपि स्पर्धासूयादिव्याप्तत्वाद्दुःखस्यैव योनयः कारणभूतास्तथादिमन्तोऽन्तवन्तश्च । अतो

१ श्रीमच्छांकरभाष्यम् ।

**एवात आद्यन्तवन्तोऽनित्या मध्यक्षणभावित्वादित्यर्थः । कौन्तेय, न तेषु रमते बुधो भोगेषु विवेक्य-**

२ आनन्दगिरिव्याख्या ।

**त्वादुपेक्षणीयत्वं भोगानां सिध्यति । अस्ति हि तेषां क्षणभङ्गुरत्वं क्षणिकविषयाकारमनोवृत्तिव्यङ्ग्यत्वादिति मन्वानः सन्नाह—अत इति । बुद्धिपूर्वकारिणां विवेकवतां भोगेषूपेक्षोपलब्धेश्च तेषामाभासत्वं प्रतिभातीत्याह—न तेष्विति ।**

४ मधुसूदनीव्याख्या ।

हि गुणानां युगपद्विरोधो न विषमवृत्तिकानाम् । यथा धर्मज्ञानवैराग्यैश्वर्याणि लब्धवृत्तिकानि लब्धवृत्तिकैरेवाधर्माज्ञानावैराग्यानैश्वर्यैः सह विरुध्यन्ते नतु स्वरूपसद्भिः । प्रधानस्य प्रधानेन सह विरोधो नतु दुर्बलेनेति हि न्यायः । एवं सत्त्वरजस्तमांस्यपि परस्परं प्राधान्यमात्रं युगपन्न सहन्ते नतु सद्भावमपि । एतेन परिणामतापसंस्कारदुःखेष्वपि रागद्वेषमोहानां युगपत्सद्भावो व्याख्यातः, प्रसुप्ततनुविच्छिन्नोदाररूपेण क्लेशानां चतुरवस्थत्वात् । तथाहि 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः । अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् । अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । दृग्दर्शनशक्त्योरेकात्मतैवास्मिता । सुखानुशयी रागः । दुःखानुशयी द्वेषः । स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः । ते प्रतिप्रसवहेयाः सूक्ष्माः । ध्यानहेयास्तद्वृत्तयः । क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः । सति मूले तद्विपाको जात्यायुर्भोगाः' इति पातञ्जलानि सूत्राणि । तत्रातस्मिंस्तद्बुद्धिर्विपर्ययो मिथ्याज्ञानमविद्येति पर्यायाः । तत्राशेषसंसारनिदानम् । तत्रानित्ये नित्यबुद्धिर्यथा—ध्रुवा पृथिवी ध्रुवा सचन्द्रतारका द्यौरमृता दिवौकस इति । अशुचौ परमबीभत्से काये शुचिबुद्धिर्यथा—नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयतीवेति कस्य केन संबन्धः—'स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि । कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥' इति च वैयासकः श्लोकः । एतेनापुण्ये पुण्यप्रत्ययोऽनर्थे चार्थप्रत्ययो व्याख्यातः । दुःखे सुखख्यातिरुदाहृता 'परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति । अनात्मन्यात्मख्यातिर्यथा—शरीरे मनुष्योऽहमित्यादिः । इयं चाविद्या सर्वक्लेशमूलभूता तम इत्युच्यते । बुद्धिपुरुषयोरभेदाभिमानोऽस्मिता मोहः । साधनरहितस्यापि सर्वं सुखजातीयं मे भूयादिति विपर्ययविशेषो रागः । स एव महामोहः । दुःखसाधने विद्यमानेऽपि किमपि दुःखं मे माभूदिति विपर्ययविशेषो द्वेषः । स तामिस्रः । आयुरभावेऽप्येतैः शरीरेन्द्रियादिभिरनित्यैरपि वियोगो मे माभूदित्यविद्वदङ्गनाबालं स्वाभाविकः सर्वप्राणिसाधारणो मरणत्रासरूपो विपर्ययविशेषोऽभिनिवेशः । सोऽन्धतामिस्रः । तदुक्तं पुराणे 'तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥' इति । एते च क्लेशाश्चतुरवस्था भवन्ति । तत्रासतोऽनुत्पत्तेरनभिव्यक्तरूपेणावस्थानं सुप्तावस्था । अभिव्यक्तस्यापि सहकार्यलाभभावात्कार्याजनकत्वं तन्ववस्था । अभिव्यक्तस्य जनितकार्यस्यापि केनचिद्बलवताभिभवो विच्छेदावस्था । अभिव्यक्तस्य प्राप्तसहकारिसंपत्तेरप्रतिबन्धेन स्वकार्यकरत्वमुदारावस्था । एतादृगवस्थाचतुष्टयविशिष्टानामस्मितादीनां चतुर्णां विपर्ययरूपाणां क्लेशानामविद्यैव सामान्यरूपा क्षेत्रं प्रसवभूमिः । सर्वेषामपि विपर्ययरूपत्वस्य दर्शितत्वात् । तेनाविद्यानिवृत्त्यैव क्लेशानां निवृत्तिरित्यर्थः । ते च क्लेशाः प्रसुप्ता यथा प्रकृतिलीनानां, तनवः प्रतिपक्षभावनया तनूकृता यथा योगिनाम् । त उभयेऽपि सूक्ष्माः प्रतिप्रसवेन मनोनिरोधेनैव निर्बीजसमाधिना हेयाः । ये तु सूक्ष्मवृत्तयस्तत्कार्यभूताः स्थूला विच्छिन्ना उदाराश्च विच्छिद्य विच्छिद्य तेन तेनात्मना पुनः प्रादुर्भवन्तीति विच्छिन्नाः । यथा रागकाले क्रोधो विद्यमानोऽपि न प्रादुर्भूत इति विच्छिन्न उच्यते । एवमेकस्यां स्त्रियां चैत्रो रक्त इति नान्यासु विरक्तः किंत्वेकस्यां रागो लब्धवृत्तिरन्यासु च भविष्यद्वृत्तिरिति स तदा विच्छिन्न उच्यते । ये यदा विषयेषु लब्धवृत्तयस्ते तदा सर्वात्मना प्रादुर्भूता उदारा उच्यन्ते । तत उभयेऽप्यतिस्थूलत्वाच्छुद्धसत्त्वमयेन भगवद्ध्यानेन हेया न मनोनिरोधमपेक्षन्ते । निरोधहेयास्तु सूक्ष्मा एव । तथाच परिणामतापसंस्कारदुःखेषु प्रसुप्ततनुविच्छिन्नरूपेण सर्वे क्लेशाः सर्वदा सन्ति । उदारता तु कादाचित्की स्यादिति विशेषः । एते च बाधनालक्षणं दुःखमुपजनयन्तः क्लेशशब्दवाच्या भवन्ति । यतः कर्माशयो धर्माधर्माख्यः क्लेशमूलक एव । सति च मूलभूते क्लेशे तस्य कर्माशयस्य विपाकः फलं जन्मायुर्भोगश्चेति । सच कर्माशय इह परत्र च स्वविपाकारम्भकत्वेन दृष्टादृष्टजन्मवेदनीयः । एवं क्लेशसंततिर्घटीयन्त्रवदनिशमावर्तते । अतः समीचीनमुक्तं 'ये हि संस्पर्शजा भोगा दुःखयोनय एव ते । आद्यन्तवन्तः' इति । दुःखयोनित्वं परिणामादिभिर्गुणवृत्तिविरोधाच्च आद्यन्तवत्त्वं गुणवृत्तस्य चलत्वादिति योगमते व्याख्या । औपनिषदानां तु अनादिभावरूपमज्ञानमविद्या । अहंकारधर्म्यध्यासोऽस्मिता । रागद्वेषाभिनिवेशास्तद्वृत्तिविशेषा इत्यविद्यामूलत्वात्सर्वेऽप्यविद्यात्मकत्वेन मिथ्याभूता रज्जुभुजङ्गाध्यासव-

५ भाष्योत्कर्षदीपिका ।

योनय एवापि त्वाद्यन्तवन्तश्च आदिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च एतद्वियोगएव । तस्माद्बुधो विवेकी दृग्दृश्यतत्त्ववित् तेषु भोगेषु न रमते । तदुक्तं वासिष्ठे 'संपदः प्रमदाश्चैव तरङ्गोत्सङ्गभङ्गुराः । कस्तास्वहिफणाच्छत्रच्छायासु रमते बुधः' इति । कौन्तेयेति संबोधयन् स्त्रीस्वभावोऽदीर्घदर्श्यत्यन्तमूढ एव भोगेषु रमते इति ध्वनयति । यद्वा विषयेषु रतिरहितायाः कुन्त्याः पुत्रस्त्वं तेषु रन्तु-

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**वगतपरमार्थतत्त्वोऽत्यन्तमूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनाम् ॥ २२ ॥ अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुर्दुर्निवार्यश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह भगवान्—शक्नोत्युत्सहत इहैव जीवन्नेव यः सोढुं प्रसहितुं प्राक्पूर्वं शरीरविमोक्षणादा मरणात्, मरणसीमाकरणं जीवतोऽवश्यंभावी हि कामक्रोधोद्भवो वेगोऽनन्तनिमित्तवान्हि स इति । यावन्मरणं तावन्न विश्रम्भणीय इत्यर्थः । काम इन्द्रियगोचरप्राप्त इष्टे विषये श्रूयमाणे**

२ आनन्दगिरिव्याख्या ।

प्रतीकोपादानमाद्यमिदं पुनर्व्याख्यानमिति न पुनरुक्तिः । ननु केषांचिद्भोगेष्वभिरुचिरुपलभ्यते तत्राह—**अत्यन्तेति** ॥ २२ ॥ उत्तरश्लोकस्य तात्पर्यमाह—**अयं चेति** । श्रेयोमार्गप्रतिपक्षत्वं कष्टतमत्वे हेतुस्तत्रैव हेत्वन्तरमाह—**सर्वेति** । प्रयत्नाधिक्यस्य कर्तव्यत्वे हेतुं सूचयति—**दुर्निवार्य इति** । प्रसिद्धं हि कामक्रोधोद्भवस्य वेगस्य दुर्निवारत्वं येन मातरमपि चाधिरोहति पितरमपि हन्ति तमवश्यं परिहर्तव्यं दर्शयति—**शक्नोतीति** । यथोक्तं वेगं बहिरनर्थरूपेण परिणामात्प्रागेव देहान्तरुत्पन्नं यः सोढुं क्षमते तं स्तौति—**स युक्त इति** । मरणसीमाकरणस्य तात्पर्यमाह—**मरणेति** । प्रसिद्धौ हिशब्दः । तत्र हेतुमाह—**अनन्तेति** । व्याध्युपहतानां वृद्धानां च कामादिवेगो न भवतीत्याशङ्क्याह—**यावदिति** । कामक्रोधोद्भवं वेगं व्याख्यातुमादौ कामं मनोविकारविशेषत्वेन व्याचष्टे—**काम इति** । कथमस्य मनोविकारविशेषत्वं तदाह—**इन्द्रियेति** । कामो गर्धिस्तृष्णेति पर्यायाः सन्तः शब्दा मनोविकारविशेषे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तत्तस्मिन्नष्टे नश्यति दुःखं च महत्प्रयच्छतीति तेषु भोगेषु बुधः परिपाकदर्शी न रमते ॥ २२ ॥ कः पुनर्मुख्यः सुखीत्याह—**शक्नोतीति** । इहैव जीवत्येव देहे प्राक्शरीरविमोक्षणाद्यावद्देहपातं मया कामक्रोधौ जिताविति विस्रम्भो न कर्तव्य इत्यर्थः । श्रुते दृष्टेऽनुमिते वा विषये यो गर्धस्तृष्णारूपोऽतृप्तिश्च स कामः क्रोधस्तादृशे एव विषये द्वेषस्तौ

४ मधुसूदनीव्याख्या ।

न्मिथ्यात्वेऽपि दुःखयोनयः स्वप्नादिवद्दृष्टिसृष्टिमात्रत्वेनाद्यन्तवन्तश्चेति बुधोऽधिष्ठानसाक्षात्कारेण निवृत्तभ्रमस्तेषु न रमते । मृगतृष्णिकास्वरूपज्ञानवानिव तत्रोदकार्थी न प्रवर्तते । न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा ततः सर्वाणीन्द्रियाणि निवर्तयेदित्यर्थः ॥ २२ ॥ सर्वानर्थप्राप्तिहेतुर्दुर्निवारोऽयं श्रेयोमार्गप्रतिपक्षः कष्टतमो दोषो महता यत्नेन मुमुक्षुणा निवारणीय इति यत्नाधिक्यविधानाय पुनराह—आत्मनोऽनुकूलेषु सुखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा तद्गुणानुसंधानाभ्यासेन यो रत्यात्मको गर्धोऽभिलाषस्तृष्णा लोभः स कामः । स्त्रीपुंसयोः परस्परव्यतिकराभिलाषे त्वत्यन्तनिरूढः कामशब्दः । एतदभिप्रायेण 'कामः क्रोधस्तथा लोभः' इत्यत्र धनतृष्णा लोभः, स्त्रीपुंसव्यतिकरस्तृष्णा कामः, इति कामलोभौ पृथगुक्तौ । इह तु तृष्णासामान्याभिप्रायेण कामशब्दः प्रयुक्त इति लोभः पृथङ्नोक्तः । एवमात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा तत्तद्दोषानुसंधानाभ्यासेन यः प्रज्वलनात्मको द्वेषो मन्युः स क्रोधः । तयोरुत्कटावस्था लोकवेदविरोधप्रतिसंधानप्रतिबन्धकतया लोकवेदविरुद्धप्रवृत्त्युन्मुखत्वरूपा नदीवेगसाम्येन वेग इत्युच्यते । यथा हि नद्या वेगो वर्षास्वतिप्रबलतया

५ भाष्योत्कर्षदीपिका ।

मयोग्योऽसीति सूचयति ॥ २२ ॥ अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुः दुर्निवार्यश्चेति तत्परिहारे यत्नाधिक्यविधानायाह—**शक्नोतीति** । यः इहैव जीवन्नेव इन्द्रियगोचरे प्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वा सुखहेतौ या तृष्णा स कामः । क्रोधश्चैवंभूतेऽनिष्टे विषये द्वेषः । तौ कामक्रोधावुद्भवो यस्य स रोमाञ्चनहृष्टनेत्रवदनलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः । गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रवक्त्रतादिलिङ्गः चित्तप्रक्षोभरूपः क्रोधोद्भवो वेगः । तं कामक्रोधोद्भवं वेगं शरीरविमोक्षणात्प्रागामरणात् सोढुं प्रसहितुं शक्नोति । मरणसीमाकरणं तु निमित्तानामनन्तत्वात् कामक्रोधोद्भवस्य वेगस्य जीवतोऽवश्यंभावित्वात् यावन्म-

६ श्रीधरीव्याख्या ।

वेकी तेषु न रमते ॥ २२ ॥ तस्मान्मोक्ष एव परः पुरुषार्थस्तस्य च कामक्रोधवेगोऽतिप्रतिपक्षोऽतस्तत्सहनसमर्थ एव मोक्षभागित्याह—**शक्नोतीति** । कामात्क्रोधाच्चोद्भवति यो वेगो मनोनेत्रादिक्षोभलक्षणस्तमिहैव तदुद्भवसमय एव यो नरः सोढुं प्रतिरोद्धुं शक्नोति । तदपि न क्षणमात्रं किंतु शरीरविमोक्षणात्प्राक् । यावद्देहपातमित्यर्थः । य एवंभूतः स एव युक्तः समाहितः सुखी च भवति नान्यः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

ये हीति । स ह्येवं भावयति । बाह्यविषयभोगाः सर्वे दुःखकारणरूपाः तथाविधा अप्यनित्याः ॥ २२ ॥ शक्नोतीति । न चैतदुःशकं शरीरान्त-

**योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

स्मर्यमाणे वानुभूते सुखहेतौ या गर्धिस्तृष्णा स कामः, क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो द्वेषः स क्रोधस्तौ कामक्रोधावुद्भवो यस्य वेगस्य स कामक्रोधोद्भवो वेगः, रोमाञ्चनहृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगो गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगस्तं कामक्रोधोद्भवं वेगं य उत्सहते सोढुं प्रसहितुं स युक्तो योगी सुखी चेह लोके नरः ॥ २३ ॥ कथंभूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह—योऽन्तः

२ आनन्दगिरिव्याख्या ।

पर्यवस्यन्तीत्यर्थः । क्रोधश्च मनोविकारविशेषस्तद्वदित्याह—क्रोधश्चेति । तमेव क्रोधं स्पष्टयति—आत्मन इति । एवं कामक्रोधौ व्याख्याय तयोरुत्कटत्वावस्थात्मनो वेगस्य ताभ्यामुत्पत्तिमुपन्यस्यति—ताविति । यथोक्तवेगावगमोपायमुपदिशति—रोमाञ्चनहृष्टनेत्रेत्यादिना । उभयविधवेगं यो जीवन्नेव सोढुं शक्नोति तं पुरुषधौरेयत्वेन स्तौति—तमित्यादिना ॥ २३ ॥ ज्ञानस्यात्यन्तमन्तरङ्गमात्मनिष्ठत्वं दर्शयन्प्रकृतं ब्रह्मविदमेव विशिनष्टि—कथंभूतश्चेति । यथान्तरेव सुखं न बाह्यैर्विषयैस्तथान्तरेव ज्योतिर्न श्रोत्रादिभिरतो विषयान्तरविज्ञानरहित इत्याह—तथेति । यथोक्त-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कामक्रोधावुद्भवो यस्य वेगस्य स रोमाञ्चहृष्टनेत्रवक्त्रलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः । गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगस्तं कामक्रोधोद्भवं वेगं सोढुं यः शक्नोति स एव युक्तो योगी मुख्यः सुखी च नान्यः ॥ २३ ॥ कोऽसौ योगी यो मुख्यः सुखीत्युक्तं तत्राह—य इति । सुखं विषयसङ्गजा प्रीतिः, आरामः

४ मधुसूदनीव्याख्या ।

लोकवेदविरोधप्रतिसंधानेनानिच्छन्तमपि गर्ते पातयित्वा मज्जयति चाधो नयति च, तथा कामक्रोधयोरपि वेगो विषयाभिध्यानाभ्यासेन वर्षाकालस्थानीयेनातिप्रबलो लोकवेदविरोधप्रतिसंधानेनानिच्छन्तमपि विषयगर्ते पातयित्वा संसारसमुद्रे मज्जयति चाधो महानरकान्नयति चेति वेगपदप्रयोगेण सूचितम् । एतच्चाथ केन प्रयुक्तोऽयमित्यत्र विवृतम् । तमेतादृशं कामक्रोधोद्भवं वेगमन्तःकरणप्रक्षोभरूपं स्तम्भस्वेदाद्यनेकबाह्यविकारलिङ्गमाशरीरविमोक्षणाच्छरीरविमोक्षणपर्यन्तमनेकनिमित्तवशात्सर्वदा संभाव्यमानत्वेनाविस्रम्भणीयमन्तरुत्पन्नमात्रमिहैव बहिरिन्द्रियव्यापाररूपाद्गर्तपतनात्प्रागेव यो यतिर्धीरस्तिमिङ्गिल इव नदीवेगं विषयदोषदर्शनाभ्यासजेन वशीकारसंज्ञकवैराग्येण सोढुं तदनुरूपकार्यसंपादनेनानर्थकं कर्तुं शक्नोति समर्थो भवति, स एव युक्तो योगी, स एव सुखी, स एव नरः पुमान्पुरुषार्थसंपादनात्, तदितरस्त्वाहारनिद्राभयमैथुनादिपशुधर्ममात्ररतत्वेन मनुष्याकारः पशुरेवेति भावः । प्राक्शरीरविमोक्षणादित्यत्रान्यद्व्याख्यानं यथा—मरणादूर्ध्वं विलपन्तीभिर्युवतीभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि प्राणशून्यत्वात्कामक्रोधवेगं सहते, तथा मरणात्प्रागपि जीवन्नेव यः सहते स युक्त इत्यादि । अत्र यदि मरणवज्जीवनेऽपि कामक्रोधानुत्पत्तिमात्रं ब्रूयात्तदैतद्युज्येत । यथोक्तं वसिष्ठेन 'प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ॥' इति । इह तूत्पन्नयोः कामक्रोधयोर्वेगसहने प्रस्तुते तयोरनुत्पत्तिमात्रं न दृष्टान्त

५ भाष्योत्कर्षदीपिका ।

रणं स न विश्वसनीय इति कथनार्थं यः सोढुं शक्नोति स युक्तो योगी सुखी चेह लोके नरः, स एव नर इति सूचनार्थं नरपदम् । यत्तु परे मरणादूर्ध्वं विलपन्तीभिर्युवतिभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते तथा मरणात्प्राक् जीवन्नेव यः सहते स एव युक्तः सुखी चेत्यर्थः । तदुक्तं वसिष्ठेन 'प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत्' इति तन्मन्दम् । प्राणशून्ये कामक्रोधोद्भववेगस्याभावादत्र तद्दृष्टान्तीकरणस्यानुचितत्वात् ॥ २३ ॥ न केवलं कामक्रोधोद्भववेगसहनमात्रेण जीवन्नेव मोक्षं प्राप्नोति अपितु योऽन्तरात्मनि सुखं यस्य स तथा अन्तरेवात्मन्यारमणं क्रीडा यस्य सः ।

६ श्रीधरीव्याख्या ।

यद्वा मरणादूर्ध्वं विलपन्तीभिर्युवतीभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते तथा मरणात्प्रागपि जीवन्नेव यः सहेत स एव युक्तः सुखी चेत्यर्थः । तदुक्तं वसिष्ठेन—'प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ॥' इति ॥ २३ ॥ न केवलं कामक्रोधवेगसंहरणमात्रेण मोक्षं प्राप्नोति, अपितु—योऽन्तरिति । अन्तः

७ अभिनवगुप्ताचार्यव्याख्या ।

कालं यावत्क्रोधकामजो वेगः क्षणमात्रं यदि सह्यते तदात्यन्तिकी सुखप्राप्तिः ॥ २३ ॥ योऽन्तरिति । अन्तस्तस्यान्तरेव बाह्यानपेक्षिसुखं

१ मधुसूदनः।

लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः॥ २५॥

१ श्रीमच्छांकरभाष्यम्।

सुखोऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखस्तथान्तरेवात्मन्यारामः आक्रीडा यस्य सोऽन्तरारामस्तथैवान्तरात्मैव ज्योतिः प्रकाशो यस्य सोऽन्तर्ज्योतिरेव। य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मणि निर्वृतिं मोक्षमिह जीवन्नेव ब्रह्मभूतः सन्नधिगच्छति प्राप्नोति॥ २४॥ किंच लभन्ते ब्रह्मनिर्वाणं मोक्षमृषयः सम्यग्दर्शिनः संन्यासिनः क्षीणकल्मषाः क्षीणपापादिदोषाश्छिन्नद्वैधाश्छिन्नसंशया यतात्मानः संयते-

२ आनन्दगिरिव्याख्या।

विशेषणसमाधिमाञ्जीवन्नेव मुक्तिमधिगच्छतीत्याह—स योगीति। आत्मन्यन्तःसुखमिति बाह्यविषयनिरपेक्षत्वं विवक्षितमन्तरारामत्वं च स्त्र्यादिविषयापेक्षामन्तरेण क्रीडाप्रयुक्तफलभाक्त्वमभिमतमिन्द्रियादिजन्यप्रकाशशून्यत्वमात्मज्योतिष्ट्वमिष्टम्। यथोक्तविशेषणसंपन्नः समाहितश्च जीवन्नेव ब्रह्मभावं प्राप्नोति। ब्रह्मणि परिपूर्णे निर्वृतिं सर्वानर्थनिवृत्त्युपलक्षितां स्थितिमनतिशयानन्दाविर्भावलक्षणां प्राप्नोतीत्याह—य ईदृश इति॥ २४॥ मुक्तिहेतोर्ज्ञानस्य साधनान्तरमाह—किंचेति। यज्ञादिनित्यकर्मानुष्ठानात्पापादिलक्षणं कल्मषं क्षीयते ततश्च श्रवणाद्यावृत्तेः सम्यग्दर्शनं जायते ततो मुक्तिरप्रयत्नेन भवतीत्याह—लभन्त इति। ज्ञानप्राप्त्युपायान्तरं दर्शयति—छिन्नेति। श्रवणादिना

३ नीलकण्ठव्याख्या (चतुर्धरी)।

प्रीतिहेतुः स्त्र्यादिभिः सह क्रीडा, ज्योतिः क्रीडोपकरणानां प्रकाशः, तदेतत्त्रयं यस्यान्तरेव सोऽन्तःसुखोऽन्तरारामोऽन्तर्ज्योतिश्च न त्विन्द्रियद्वारकमिति एवशब्दार्थः। य एवंभूतः स योगी किमतो यद्येवं ब्रह्मनिर्वाणं गत्यप्राप्यपरमानन्दं ब्रह्म इहैवाधिगच्छति। यतो ब्रह्मभूतो जीवन्नेव ब्रह्मदर्शने ब्रह्मभावं गतः॥ २४॥ लभन्त इति। ऋषयः सम्यग्दर्शिनः।

४ मधुसूदनीव्याख्या।

इति किमतिनिर्बन्धेन॥ २३॥ कामक्रोधवेगसहनमात्रेणैव मुच्यत इति न, किंतु अन्तर्बाह्यविषयनिरपेक्षमेव स्वरूपभूतं सुखं यस्य सोऽन्तःसुखः। बाह्यविषयजनितसुखशून्य इत्यर्थः। कुतो बाह्यसुखाभावस्तत्राह—अन्तरात्मन्येव नतु स्त्र्यादिविषये बाह्यसुखसाधने आराम आरमणं क्रीडा यस्य सोऽन्तरारामः। त्यक्तसर्वपरिग्रहत्वेन बाह्यसुखसाधनशून्य इत्यर्थः। ननु त्यक्तसर्वपरिग्रहस्यापि यतेर्यदृच्छोपनतैः कोकिलादिमधुरशब्दश्रवणमन्दपवनस्पर्शनचन्द्रोदयमयूरनृत्यादिदर्शनातिमधुरशीतलगङ्गोदकपानकेतकीकुसुमसौरभाघ्राणादिभिर्ग्राम्यैः सुखोत्पत्तिसंभवात्कथं बाह्यसुखतत्साधनशून्यत्वमिति तत्राह—तथान्तर्ज्योतिरेव यः। यथान्तरेव सुखं न बाह्यैर्विषयैस्तथान्तरेवात्मनि ज्योतिर्विज्ञानं न बाह्यैरिन्द्रियैर्यस्य सोऽन्तर्ज्योतिः श्रोत्रादिजन्यशब्दादिविषयविज्ञानरहितः। एवकारो विशेषणत्रयेऽपि संबध्यते। समाधिकाले शब्दादिप्रतिभासाभावात् व्युत्थानकाले तत्प्रतिभासेऽपि मिथ्यात्वनिश्चयान्न बाह्यविषयैस्तस्य सुखोत्पत्तिसंभव इत्यर्थः। य एवं यथोक्तविशेषणसंपन्नः स योगी समाहितो ब्रह्मनिर्वाणं ब्रह्म परमानन्दरूपं कल्पितद्वैतोपशमरूपत्वेन निर्वाणं तदेव कल्पिताभावस्याधिष्ठानात्मकत्वात्, अविद्यावरणनिवृत्त्याधिगच्छति नित्यप्राप्तमेव प्राप्नोति। यतः सर्वदैव ब्रह्मभूतो नान्यः 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः, 'अवस्थितेरिति काशकृत्स्नः' इति न्यायाच॥ २४॥ मुक्तिहेतोर्ज्ञानस्य साधनान्तराणि विवृण्वन्नाह—प्रथमं यज्ञादिभिः क्षीणकल्मषाः, ततोऽन्तःकरणशुद्ध्या

५ भाष्योत्कर्षदीपिका।

यस्य च स्त्र्यादौ सुखबुद्धिः स तत्रैवारमते। अयं तु यतोऽन्तःसुखोऽतोन्तरारामः। यतोऽन्तरात्मैव ज्योतिः प्रकाशो यस्य स आत्मैवैकोऽद्वितीयः। सर्वावस्थासु जाग्रदादिषु स्वप्रकाशः सत्योऽन्यत्सर्वमिन्द्रियविषयादिकं तत्र कल्पितमनृतमतः सुखहीनं दुःखरूपं क्रीडानास्पदमिति बोधवान्। यैस्त्वन्तरेव ज्योतिर्दृष्टिर्यस्य न गीतनृत्यादिष्विति। तत्र अन्तःसुखोन्तराराम इत्यनयोरन्यतरेणाप्यस्यार्थस्य लाभात्। य एतादृशः स योगी ब्रह्मभूतः सन्नपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं। ब्रह्मानन्दमिति यावत्। गच्छति प्राप्नोति प्राप्तमेव विस्मृतग्रैवेयकमिव प्राप्नोति। 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः 'अवस्थितेरिति काशकृत्स्नः' इतिन्यायाच्चास्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते। तथाच ब्राह्मणं 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति एवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयतीति तदर्थः॥२४॥ ब्रह्मनिर्वाणप्राप्तिहेतोर्ज्ञानस्य साधनान्तराण्याह-लभन्त इति। ऋषयः सूक्ष्मतत्त्वदर्शिनः 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुतेः। ब्रह्म-

६ श्रीधरीव्याख्या।

आत्मन्येव सुखं यस्य न विषयेषु, अन्तरेवारामः क्रीडा यस्य न बहिः, अन्तरेव ज्योतिर्दृष्टिर्यस्य न गीतनृत्यादिषु, स एव ब्रह्मणि भूतः स्थितः सन्ब्रह्मणि निर्वाणं लयमधिगच्छति प्राप्नोति॥ २४॥ किंच—लभन्त इति। ऋषयः सम्यग्दर्शिनः क्षीणं कल्मषं येषां, छिन्नं

७ अभिनवगुप्ताचार्यव्याख्या।

तत्रैव रमते तत्र चास्य प्रकाशः। व्यवहारे त्वमूढत्वमिव। उक्तंच 'जडइव विचरेदवादमतिः' इति॥ २४॥ लभन्ते इति। एतच्च तैः प्राप्यं

१ श्रीधरः।

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**न्द्रियाः सर्वभूतहिते रताः सर्वेषां भूतानां हित आनुकूल्ये रता अहिंसका इत्यर्थः ॥ २५ ॥ किंच कामक्रोधवियुक्तानां कामश्च क्रोधश्च कामक्रोधौ ताभ्यां वियुक्तानां यतीनां संन्यासिनां यतचेतसां संयतान्तःकरणानामभित उभयतो जीवतां मृतानां च ब्रह्मनिर्वाणं मोक्षो वर्तते, विदितात्मनां विदितो ज्ञात आत्मा येषां ते विदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः ॥ २६ ॥ सम्यग्दर्शननिष्ठानां संन्यासिनां सद्योमुक्तिरुक्ता कर्मयोगश्चेश्वरार्पितसर्वभावेनेश्वरे ब्रह्मण्याधाय क्रियमाणः सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासक्रमेण मोक्षायेति भगवान्पदे पदेऽब्रवीद्वक्ष्यति च । अथेदानीं**

२ आनन्दगिरिव्याख्या ।

संशयनिरसनं कार्यकरणनियमनं च दयालुत्वेनाहिंसकत्वमित्येतदपि सम्यग्ज्ञानप्राप्तौ कारणमित्यर्थः । अक्षरव्याख्यानं स्पष्टत्वान्न व्याख्यायते ॥ २५ ॥ पूर्वं कामक्रोधयोर्वेगः सोढव्यो दर्शितः, संप्रति तावेव त्याज्यावित्याह—**किंचेति** । ननु दर्शितविशेषणवतां मृतानामेव मोक्षो नतु जीवतामिति चेन्नेत्याह—**अभित इति** । अस्मदादीनामपि तर्हि प्रभूतकामादिप्रभावविधुराणां किमिति मोक्षो न भवतीत्याशङ्क्य सम्यग्दर्शनवैशेष्याभावादित्याह—**विदितेति** । उक्तेऽर्थे श्लोकाक्षराणामन्वयमाचष्टे—**कामक्रोधेत्यादिना** ॥ २६ ॥ वृत्तमनूद्योत्तरश्लोकत्रयस्य तात्पर्यार्थमाह—**सम्यग्दर्शनेति । ईश्वरार्पितसर्वभावेनेति** । भगवति परस्मिन्नीश्वरे समर्पितः सर्वेषां देहेन्द्रियमनसां भावश्चेष्टा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

छिन्नद्वैधाश्छिन्नसंशयाः । यतात्मानो जितचित्ताः ॥ २५ ॥ किंच **कामेति** । अभितो जीवतां मृतानां च विदितात्मनां ज्ञातात्मतत्त्वानाम् ॥ २६ ॥ एवं सम्यग्दर्शननिष्ठानां सद्योमुक्तिरुक्ता, कर्मयोगश्च सङ्गफलत्यागेन ईश्वरप्रीत्यर्थमनुष्ठितः सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण मोक्षाय भवतीत्यप्युक्तम्, अथेदानीं सम्यग्दर्शनस्यान्तरङ्गसाधनं ध्यान-

४ मधुसूदनीव्याख्या ।

ऋषयः सूक्ष्मवस्तुविवेचनसमर्थाः संन्यासिनः, ततः श्रवणादिपरिपाकेन छिन्नद्वैधा निवृत्तसर्वसंशयाः, ततो निदिध्यासनपरिपाकेन संयतात्मानः परमात्मन्येवैकाग्रचित्ताः, एतादृशाश्च द्वैतादर्शित्वेन सर्वभूतहिते रता हिंसाशून्या ब्रह्मविदो ब्रह्मनिर्वाणं लभन्ते । 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥' इति श्रुतेः । बहुवचनं 'तद्यो यो देवानाम्' इत्यादिश्रुत्युक्तनियमप्रदर्शनार्थम् ॥ २५ ॥ पूर्वं कामक्रोधयोरुत्पन्नयोरपि वेगः सोढव्य इत्युक्तमधुना तु तयोरुत्पत्तिप्रतिबन्ध एव कर्तव्य इत्याह—कामक्रोधयोर्वियोगस्तदनुत्पत्तिरेव तद्युक्तानां कामक्रोधवियुक्तानाम् । अतएव यतचेतसां संयतचित्तानां यतीनां यत्नशीलानां संन्यासिनां विदितात्मनां साक्षात्कृतपरमात्मनामभित उभयतो जीवतां मृतानां च तेषां ब्रह्मनिर्वाणं मोक्षो वर्तते नित्यत्वात्, नतु भविष्यति साध्यत्वाभावात् ॥ २६ ॥ पूर्वमीश्वरार्पितसर्वभावस्य कर्मयोगेनान्तःकरणशुद्धिस्ततः सर्वकर्मसंन्यासस्ततः श्रवणादिपरस्य तत्त्वज्ञानं मोक्षसाधनमुदेतीत्युक्तम्, अधुना 'स योगी ब्रह्मनिर्वाणम्' इत्यत्र सूचितं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गसाधनं विस्तरेण वक्तुं सूत्रस्थानीयांस्त्रीञ्श्लोकानाह भगवान् ।

५ भाष्योत्कर्षदीपिका ।

निर्वाणं लभन्त इत्यन्वयः। 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इतिवचनमनुरुध्याह । निष्कामकर्मणा ईश्वराराधनलक्षणेन क्षीणपापाः 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यात्मदर्शनसाधनं श्रवणादिकं कथयन्तीं श्रुतिमनुरुध्याह । श्रवणेन मननेन च च्छिन्नद्वैधाः च्छिन्नसंशयाः यतात्मानः संयतानि समनस्कानीन्द्रियाणि यैस्ते । अनेन विजातीयप्रत्ययतिरस्कारपुरःसरसजातीयप्रत्ययप्रवाहीकरणात्मकं निदिध्यासनमुक्तम् । एतादृशानां लक्षणमाह । सर्वेषां भूतानां हिते अनुकूले रताः । अहिंसका इत्यर्थः ॥ २५ ॥ पूर्वं कामक्रोधोद्भवो वेगः सोढव्य इत्युक्तं, इदानीं तावेव त्याज्यावित्याह । कामक्रोधाभ्यां वियुक्तानां यतीनां संन्यासिनां संयतचित्तात्मनां विदितात्मतत्त्वानां ब्रह्मनिर्वाणमभितः उभयतो जीवतां मृतानां च वर्तते ॥ २६ ॥ एवं तत्त्वज्ञान-

६ श्रीधरीव्याख्या ।

द्वैधं संशयो येषां, यत संयत आत्मा चित्तं येषां सर्वेषां भूतानां हिते रताः कृपालवस्ते ब्रह्मनिर्वाणं मोक्षं लभन्ते ॥ २५ ॥ किंच—**कामक्रोधवियुक्तानामिति** । कामक्रोधाभ्यां वियुक्तानां, यतीनां संन्यासिनां, संयतचित्तानां ज्ञातात्मतत्त्वानां अभित उभयतो मृतानां जीवतां च न देहान्तर एव तेषां ब्रह्मणि लयः, अपितु जीवतामपि वर्तत इत्यर्थः ॥ २६ ॥ स योगी ब्रह्मनिर्वाणमित्यादिषु

७ अभिनवगुप्ताचार्यव्याख्या ।

येषां भेदसंशयरूपौ ग्रन्थी विनष्टौ ॥ २५ ॥ कामक्रोधेति । तेषां सर्वतः सर्वास्ववस्थासु ब्रह्मसत्ता पारमार्थिकी न निरोधकालमपेक्षते ॥ २६ ॥

**स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गं विस्तरेण वक्ष्यामीति तस्य सूत्रस्थानीयाञ्श्लोकानुपदिशति स्म— स्पर्शाञ्शब्दादीन्कृत्वा बहिर्बाह्यान् श्रोत्रादिद्वारेणान्तर्बुद्धौ प्रवेशिताः शब्दादयो विषयास्तानचिन्तयतो बाह्या बहिरेव कृता भवन्ति । तानेवं बहिः कृत्वा चक्षुश्चैवान्तरे भ्रुवोः, कृत्वेत्यनुषज्यते । तथा**

२ आनन्दगिरिव्याख्या ।

विशेषो न क्वचिदपि बहिस्तेषां व्यापारस्तेनेत्यर्थः । कर्मयोगस्य तत्फलस्य चाभिधानानन्तरमित्यथशब्दार्थः । स्वतो बाह्यानां विषयाणां कुतो बहिष्करणमित्याशङ्क्याह—**श्रोत्रादीति** । तेषां बहिःकरणं कीदृगित्याशङ्क्याह—**तानिति** ॥२७॥

३ नीलकण्ठव्याख्या (चतुर्धरी)।

योगं विस्तरेण वक्ष्यामीति तत्सूत्रभूतांस्त्रीञ्श्लोकानुपदिशति—**स्पर्शानिति** । अत्रोत्तरार्धेन प्राणायाम उक्तः, स्पर्शान्कृत्वा बहिर्बाह्यानिति प्रत्याहार उक्तः, भ्रुवोरन्तरे चक्षुः कृत्वेति धारणोक्ता, विगतेच्छाभयक्रोध इति साधनभूताः फलभूताश्च द्विविधा यमा नियमाश्चोक्ताः, यतेन्द्रिय इति वितर्काख्यः संप्रज्ञातः, यतमना इति विचाराख्यः, यतबुद्धिरित्यानन्दास्मिताख्यौ, मोक्षपरायण इत्यसंप्रज्ञात उक्तः, शेषेण योगफलमिति विभागः । पाठक्रममननुरुध्यार्थक्रमेणाक्षरार्थः स्पष्टीक्रियते । तत्र विगतेच्छो विगतभयो विगतक्रोध इति संबन्धः । यो हि इच्छावान्स इष्टसिद्ध्यर्थं हिंसानृतस्तेयस्त्रीपरिग्रहानिच्छेत् । अतो विगतेच्छपदेन तद्विपर्ययान् 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति सूत्रोक्तान्यमाँल्लक्षयति । तथा भयं स्वोच्छेदशङ्का तया ह्युद्विग्नो न 'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति सूत्रोक्तान्नियमान्स्वीकर्तुमिच्छेदतो विगतभय इत्यनेन तेषां ग्रहणम् । तथा क्रोधाक्रान्तो मैत्र्यादीन्भावयितुमशक्तश्चित्तप्रसाधनं कर्तुं न शक्नोति । तच्च 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसाधनम्' इति सूत्रितम् । तत्र विगतक्रोधः शान्तप्रकृतित्वात्सुखितेषु मैत्रीं परस्येष्टे न ममैवेष्टमिदं जातमिति भावयेत् । तथा दुःखितेषु करुणां पुण्यवत्सु मुदितां पापवत्सूपेक्षां च भावयेत् । नचैतेन प्रसाधनेन विना चित्तादर्शस्य नैर्मल्यं भवति । एवं साधनावस्थायां यमनियमचित्तप्रसाधनानां सिद्ध्यर्थं विगतेच्छाभयक्रोधत्वमीप्सितम् । एवं फलावस्थायामपि तदीप्सितम् । तथाहि संप्रज्ञातसमाधिफलभूतायां मधुमत्यां योगभूमौ स्थितं योगिनं प्रति दिव्याः कामा उपतिष्ठन्ते तत्रापि विगतेच्छत्वमिष्टम् । तथाहि 'स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्' इति सूत्रम् । स्थानिनो देवास्तैरुपनिमन्त्रणे इहास्यतां इमे रम्यावसथाः इमा रम्या रामाः इमानि जरामरणहराणि रसायनानि इमे वयं किंकराः स्वपुण्यार्जितमिदं स्थानं त्वया भुज्यतामिति प्रार्थनायां क्रियमाणायां सङ्गो लिप्सा तत्र न कर्तव्या, नापि तल्लाभेनात्मनो महाभागत्वं देवप्रार्थ्यत्वं मत्वा गर्वोऽपि कर्तव्यस्तयोः सङ्गस्मययोर्भ्रंशहेतुत्वादिति सूत्रार्थः । तथा भयमपि द्विविधं योगान्तरायजं वितर्कजं च । तत्राद्यं 'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः','दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः' इति सूत्राभ्यामुक्तं । स्त्यानं अकर्मण्यता अविरतिरवैराग्यं अङ्गमेजयत्वं कम्पवायुः वितर्का हिंसादयस्तज्जं च भयं । आद्यस्य निवारणं ईश्वरप्रणिधानेन । तथाच सूत्रितं 'ततः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्च' इति । तत ईश्वरप्रणिधानात् । द्वितीयस्य प्रतिपक्षभावनेन । तथाच सूत्रितम् 'वितर्कबाधने प्रतिपक्षभावनम्' इति 'वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहमूला मृदुमध्याधिमात्रा दुःखाज्ञानानन्त-

४ मधुसूदनीव्याख्या ।

एतेषामेव वृत्तिस्थानीयः कृत्स्नः षष्ठोऽध्यायो भविष्यति । तत्रापि द्वाभ्यां संक्षेपेण योग उच्यते । तृतीयेन तु तत्फलं परमात्मज्ञानमिति विवेकः—स्पर्शाञ्शब्दादीन्बाह्यान्बहिर्भवानपि श्रोत्रादिद्वारा तत्तदाकारान्तःकरणवृत्तिभिरन्तःप्रविष्टान्पुनर्बहिरेव

५ भाष्योत्कर्षदीपिका ।

निष्ठानां यतीनां सद्योमुक्तिरुक्ता कर्मयोगिनां च सत्त्वशुद्ध्यादिक्रमेण । अथेदानीं ध्यानयोगस्य सम्यग्दर्शनान्तरङ्गसाधनस्य षष्ठाध्या-

६ श्रीधरीव्याख्या ।

योगी मोक्षमाप्नोतीत्युक्तं तमेव योगं संक्षेपेण दर्शयन्नाह—**स्पर्शानिति द्वाभ्याम्** । बाह्या एव स्पर्शा रूपरसादयो विषयाश्चिन्तिताः

७ अभिनवगुप्ताचार्यव्याख्या ।

**स्पर्शानिति** । बाह्यस्पर्शान्बहिः कृत्वानङ्गीकृत्य भ्रुवोर्वामदक्षिणदृष्ट्योः क्रोधरागात्मकयोरन्तरे तद्रहिते स्थानविशेषे चक्षुरुपलक्षितानि सर्वे-

**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥ २७ ॥ यतेन्द्रिय इति । यतेन्द्रियमनोबुद्धिर्यतानि**

२ आनन्दगिरिव्याख्या ।

विषयप्रावण्यं परित्यज्य चक्षुरपि भ्रुवोर्मध्ये विक्षेपपरिहारार्थं कृत्वा प्राणापानौ च नासाभ्यन्तरचरणशीलौ समौ न्यूनाधिकवर्जितौ कुम्भकेन निरुद्धौ कृत्वा करणानि सर्वाण्येवं संयम्य प्राणायामपरो भूत्वा किं कुर्यादित्यपेक्षायामाह—**यतेन्द्रियेति** । इन्द्रियादिसंयमं कृत्वा मोक्षमेवापेक्षमाणो मननशीलः स्यादित्यर्थः । ज्ञानातिशयनिष्ठस्य सर्वदेच्छादि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

फला इति प्रतिपक्षभावनम्' इति च । आदिपदादनृतस्तेयादयः । हिंसादयः प्रत्येकं कृतकारितानुमोदितभेदेन त्रिविधाः । तेऽपि प्रत्येकं लोहादिमूलकत्वेन त्रिविधाः । तेऽपि मृदुमध्यमाधिमात्रभेदेन प्रत्येकं त्रिविधाः । ते च मूलभूता वितर्काख्यश्चत्वारः पञ्च अधिका वा त्रिस्त्रिगुणिता एकाशीतिरष्टोत्तरशतं पञ्चत्रिंशदधिकं शतमधिका वा भवन्ति । शाखाप्रशाखाभेदेनानन्ताश्च । दुःखरूपमज्ञानरूपं चानन्तफलं येषां ते दुःखाज्ञानानन्तफला इत्यनया प्रतिपक्षभावनया ते निवर्तनीया इति । एवं यमनियमचित्तप्रसाधनप्रतिपक्षभावनैर्निरन्तरायं मृदूकृतचित्तो योगी विविक्ते देशे 'आसीनः संभवात्' इति न्यायेन स्थिरसुखमासनमध्यासीत । तत्र देशासने श्रूयेते 'समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले नतु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥ त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिरुध्य । ब्रह्मोडुपेन प्रतरेत विद्वान्स्रोतांसि सर्वाणि भयावहानि ॥' इति । चक्षुरित्यत्र विसर्गलोपश्छान्दसः । त्रिरुन्नतं कटिवक्षःकन्धराप्रदेशेषून्नतम् । ततो जितासनः प्राणायाममभ्यसेत् । तेन हि मन्दगतौ प्राणे सति तदनुसारि मनोऽपि चाञ्चल्यं त्यजति । नोचेद्वायुविक्षेपेण विक्षिप्यते । तत्र प्राणजयप्रमाणम् 'प्राणान्प्रपीड्येह सयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत' इति श्रुत्युक्तमेव संगृह्णाति । प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ इति । प्राणापानौ समौ तुल्यावूर्ध्वाधोगतिविच्छेदेन नासाभ्यन्तरचारिणौ कुम्भकेन कृत्वा ततो बाह्यान्बहिर्भवान्स्पर्शान्विषयसंबन्धानिन्द्रियद्वारा नित्यमन्तर्बुद्धौ क्रियमाणान् योगीन्द्रियाणां प्रत्याहरणेन तान्बहिरेव कुर्यात् । ततो विषयेभ्यो व्यावृत्तेषु करणेषु स्वप्नकाले इवान्तर्मनोमात्रेणावतिष्ठत इत्यर्थः । इमं प्रत्याहारं कर्तुमशक्तस्याविरक्तस्य का गतिरित्यत आह—**चक्षुश्चैवान्तरे भ्रुवोरिति** । चशब्दो वार्थे । चक्षुरेव वा भ्रुवोन्तरे कुर्यात् । खेचरीं मुद्रामभ्यसेदित्यर्थः । सा चोक्ता योगसारे 'लम्बिकोर्ध्वस्थिते गर्ते जिह्वां व्यावृत्य धारयेत् । दृढासनश्चिरं तिष्ठेन्मुद्रैषा खेचरी मता ॥ भ्रूमध्यदृष्टिरप्येषा महादेवेन कीर्तिता' इति । य एवं सर्वोऽपि बाह्ये विषये सूर्यादौ संयमो यथोक्तं प्रत्याहारमनुष्ठातुमशक्तान्प्रत्येवोपदिश्यत इति ज्ञेयम् ॥ २७ ॥ **यतेन्द्रियेति** । यस्मिन्कस्मिंश्चित्स्थूले

४ मधुसूदनीव्याख्या ।

कृत्वा परवैराग्यवशेन तत्तदाकारां वृत्तिमनुत्पाद्येत्यर्थः । यद्येते आन्तरा भवेयुस्तदोपायसहस्रेणापि बहिर्न स्युः स्वभावभङ्गप्रसङ्गात्, बाह्यानां तु रागवशादन्तःप्रविष्टानां वैराग्येण बहिर्गमनं संभवतीति वदितुं बाह्यानिति विशेषणम् । तदनेन वैराग्यमुक्त्वाभ्यासमाह—चक्षुश्चैवान्तरे भ्रुवोः, कृत्वेत्यनुषज्यते । अत्यन्तनिमीलने हि निद्राख्या लयात्मिका वृत्तिरेका

५ भाष्योत्कर्षदीपिका ।

ये विस्तरेण वक्ष्यमाणस्य सूत्रस्थानीयांस्त्रीन्श्लोकानाह । स्पर्शान् शब्दादीन्बाह्यानेव श्रोत्रादिद्वारेण अन्तर्बुद्धौ प्रविष्टान्विषयान् अचिन्तनेन बहिःकृत्वा चक्षुश्चैव भ्रुवोरन्तरे कृत्वा तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥ २७ ॥ यतानि संयतानि इन्द्रियादीनि येन स मुनिर्मननशीलः मोक्ष एव परमयनं परा गतिर्यस्य स मोक्षपरायणो मुमुक्षुः विगता इच्छादयो यस्मात्स य

६ श्रीधरीव्याख्या ।

सन्तोऽन्तः प्रविशन्ति तांस्तच्चिन्तात्यागेन बहिरेव कृत्वा चक्षुश्च भ्रुवोरन्तरे भ्रूमध्य एव कृत्वाऽत्यन्तं नेत्रयोर्निमीलने निद्रया मनो लीयते । उन्मीलनेन च बहिः प्रसरति । तदुभयदोषपरिहारार्थमर्धनिमीलनेन भ्रूमध्ये दृष्टिं निधायेत्यर्थः । उच्छ्वासनिःश्वासरूपेण नासिकयोरभ्यन्तरे च चरन्तौ प्राणापानावूर्ध्वाधोगतिनिरोधेन समौ कृत्वा । कुम्भयित्वेत्यर्थः । यद्वा प्राणो यथा बहिर्न निर्याति यथा चापानोऽन्तर्न प्रविशति किंतु नासामध्य एव द्वावपि यथा चरतः तथा मन्दाभ्यामुच्छ्वासनिःश्वासाभ्यां समौ कृत्वेति ॥ २७ ॥ **यत इति ।**

७ अभिनवगुप्ताचार्यव्याख्या ।

न्द्रियाणि विधाय प्राणापानौ धर्माधर्मौ चित्तवृत्त्यभ्यन्तरे साम्येनावस्थाप्यासीत । नसते कौटिल्येनासाम्येन क्रोधादिवशाद्यवहरतीति

१ श्रीमच्छांकरभाष्यम् ।

**संयतानीन्द्रियाणि मनो बुद्धिश्च यस्य स यतेन्द्रियमनोबुद्धिर्मननान्मुनिः संन्यासी मोक्षपरायण एवं देहसंस्थानो मोक्षपरायणो मोक्ष एव परमयनं परा गतिर्यस्य सोऽयं मोक्षपरायणो मुनिर्भवेत् । विगते-**

२ आनन्दगिरिव्याख्या ।

**शून्यस्य संन्यासिनो मुक्तेरनायाससिद्धत्वान्न तस्य किंचिदपि कर्तव्यमस्तीत्याह—विगतेति । पूर्वार्धाक्षराणि व्याक-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विषये सूर्ये तद्रश्मिषु वा विष्णुप्रतिमायां वाऽनाहतध्वनौ वान्यत्र वा चक्षुराद्यन्यतमद्वारा मनो धारयेत् । तच्च मनस्तद्विषयाकारतां प्राप्तं तत्रैव स्थिराभ्यासेन विश्रान्तं स्वदेहमपि न पश्यति सेयं महाविदेहा नाम धारणा । अस्यां सिद्धायामिन्द्रियगणः स्वंस्वं विषयं नतु गृह्णाति । सोऽयं बहिर्विषयप्रत्याहारः पूर्वोक्तस्त्वान्तर इति भेदः । अत-एव तयोस्तुल्यफलत्वं सूत्रितम् 'ततः क्षीयते प्रकाशावरणम्' इति । ततः अभ्यन्तरप्रत्याहारात् तथा बहिरकल्पिता वृत्तिर्महाविदेहा तत्संयमात्प्रकाशावरणक्षय इति । यदा चित्तं देहमविस्मृत्यैव हठेन पुरःस्थितमूर्त्याद्याकारं क्रियते तदा सा चित्तस्य मूर्त्याकारतारूपा वृत्तिः कल्पिता । यदा तु निरवशेषेण देहं विस्मृत्य चेतः केवलं ध्येयाकारमात्रं भवति तदा सा महाविदेहा नाम धारणा । तस्या अपि फलं तदेव । तत्संयमात्तस्यां चेतसो निग्रहात्प्रकाशावरणक्षयो भवति सोऽयं बाह्यविषयः समाधिः । वितर्काख्यो द्विविधः सवितर्कनिर्वितर्कभेदात् । तत्राद्यस्य लक्षणं सूत्रितं 'शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का' इति । सवितर्का नाम समापत्तिः समाधिरित्यर्थः । यदा विष्णुप्रतिमादौ पूर्वापरानुसंधानेन शब्दार्थोल्लेखेन च भावना प्रवर्तते तदा सवितर्का समापत्तिः । अस्मिन्नेवालम्बने पूर्वापरानुसंधानेन शब्दार्थोल्लेखनमन्तरेण भावना प्रवर्तते तदा निर्वितर्का नाम समापत्तिः । तथाच सूत्रं 'स्मृतिपरिशुद्धौ स्वरूपशून्ये वार्थमात्रनिर्भासा निर्वितर्का' इति । स्मृतेः शब्दार्थस्मरणस्य परिशुद्धौ वर्जने सति भावयितुः स्वरूपेण शून्या तदाहमिदं भावयामीत्येवमाकारा वृत्तिरपि भावयितुर्नास्तीवेति भाति । यतोऽर्थमात्रनिर्भासा ध्येयार्थमात्रमस्यां भासते नत्वन्यदिति सूत्रार्थः । अस्यां सिद्धायां योगी जितेन्द्रिय इत्युच्यते । जितमना इति आभ्यन्तरप्रत्याहारपूर्वकं यदा मनःकल्पिते सूक्ष्मे विषये पूर्ववच्छब्दार्थोल्लेखपूर्वकं तद्वर्जं च मनसो भावना प्रवर्तते तदा ते उभे समापत्ती सविचारनिर्विचाराख्ये भवतः । तथाच सूत्रं 'एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता' इति । अत्र सूक्ष्मविषयेति ग्रहणात्पूर्वेस्यां स्थूलविषयत्वं गम्यते । एतयैव द्विविधवितर्कसमापत्त्यैव निर्विचारसमापत्तौ दृढायां योगी जितमना इत्युच्यते । यदा पुनश्चेतसो मूर्त्याकारतां परित्यज्य सत्त्वोद्रेकात्समष्टिमनोमयविषया अहमेवेदं सर्वोऽस्मीत्येवमाकारा भावना प्रवर्तते सोऽयं सानन्दः समाधिः । यदातु तामपि भावनां परित्यज्य विषयवेदनमन्तरेणास्मीत्येतावन्मात्राकारा भावना प्रवर्तते साऽस्मिता । अस्मिताहंकारयोर्भेदस्तु क्रमेण विषयवैमुख्यतदाभिमुख्यमात्रकृतः । यथैक एव पूर्वाभिमुखः पश्चिमाभिमुखश्चेति तद्वत् । अस्यामवस्थायां योगी बुद्धितो विविक्तस्य त्वंपदार्थस्य साक्षात्काराज्जितबुद्धिरित्युच्यते । तदेतदुक्तं यतेन्द्रियमनोबुद्धिरिति । एतान्येव प्रसाधनानि गुणपर्वाण्युच्यन्ते । तथाच सूत्रम् 'विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि' इति । तत्र विशेषाः स्थूलभूतानि एकादशेन्द्रियाणि च । अविशेषाः पञ्चतन्मात्राणि अहंकारश्च । लिङ्गमात्रं महत्तत्त्वम् । अलिङ्गं प्रधानम् । तत्र विशेषादविशेषं प्रविविक्षतो योगिनो दैनंदिनलयाभ्यासात्समनस्कानीन्द्रियाणि लीयन्ते स लयः । बहिर्मुखान्येव वा भवन्ति स विक्षेपः । एवमविशेषेभ्यो लिङ्गमात्रं विविक्षतोऽपि लयविक्षेपौ स्तः । लिङ्गमात्रात्परं पुरुषं प्रविविक्षतोऽपि तौ स्तः । तावेतौ लयविक्षेपौ हेयौ श्रूयेते 'लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् । यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥' इति । एतेषु त्रिषु लीने-

४ मधुसूदनीव्याख्या ।

भवेत् । प्रसारणे तु प्रमाणविपर्ययविकल्पस्मृतयश्चतस्रो विक्षेपात्मिका वृत्तयो भवेयुः । पश्चापि तु वृत्तयो निरोद्धव्या इति अर्धनिमीलनेन भ्रूमध्ये चक्षुषो निधानम् । तथा प्राणापानौ समौ तुल्यावूर्ध्वाधोगतिविच्छेदेन नासाभ्यन्तरचारिणौ कुम्भकेन कृत्वा, अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य स तथा । मोक्षपरायणः सर्वविषयविरक्तो मुनिर्मननशीलो

५ भाष्योत्कर्षदीपिका ।

एवं वर्तते स मुमुक्षुरेव न तस्य मोक्षादन्यत्कर्तव्यमस्ति स्पर्शान्कृत्वा बहिर्बाह्यान् मोक्षपरायण इत्यनेन वैराग्यान्मुमुक्षुरधिकारी कथितः । चक्षुश्चैवान्तरे भ्रुवोरित्यनेनासनजयेन लयविक्षेपराहित्यमुक्तम् । प्राणेत्यादिना प्राणायामो निरूपितः । स्पर्शान्कृत्वा

६ श्रीधरीव्याख्या ।

अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य, मोक्ष एव परमयनं प्राप्यं यस्य, अतएव विगता इच्छाभयक्रोधा यस्य, य एवंभूतो

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

१ श्रीमच्छांकरभाष्यम् ।

**च्छाभयक्रोध इच्छा च भयं च क्रोधश्चेच्छाभयक्रोधास्ते विगता यस्मात्स विगतेच्छाभयक्रोधः । य एवं वर्तते सदा संन्यासी मुक्त एव सः । न तस्य मोक्षोऽन्यः कर्तव्योऽस्ति ॥ २८ ॥ एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते—भोक्तारं यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तमीश्वरं सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्ष-**

२ आनन्दगिरिव्याख्या ।

रोति—**यतेत्यादिना** । द्वितीयार्धाक्षराणि व्याचष्टे—**विगतेत्यादिना** ॥ २८ ॥ अधिकारिणो यथोक्तस्य कर्तव्याभावे ज्ञातव्यमपि नास्तीत्याशङ्क्य परिहरति—**एवमित्यादिना** । प्रसिद्धं भोक्तारं व्यवच्छिनत्ति—**सर्वलोकेति** । ततो ह्यस्य बन्धविपर्ययाविति न्यायेन सर्वफलदातृत्वं दर्शयति—**सुहृदमिति** । उक्तेश्वरज्ञाने फलं कथयति—**ज्ञात्वेति** । यज्ञेषु तपःसु च द्विधा भोक्तृत्वं व्यनक्ति—**कर्तृरूपेणेति** । हिरण्यगर्भादिव्यवच्छेदार्थं विशिनष्टि—**महान्तमिति** । स्वपरिकरोपकारिणं राजानं व्यावर्तयति—**प्रत्युपकारेति** । ईश्वरस्य ताटस्थ्यं व्युदस्यति—**सर्वभूतानामिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ष्वाद्यः सुप्त एव । द्वितीयो विगलितदेहाहंकारत्वाद्विदेहसंज्ञः । तृतीयः प्रकृतिलय इति । एतयोः समाधिर्गौणः । अतएव सूत्रितम् 'भवप्रत्ययो विदेहप्रकृतिलयानाम्' इति । भवप्रत्ययो जन्मान्तरहेतुरेषां समाधिर्भवति । यद्वा जन्मान्तरे एतेषां जन्मनैव समाधिसिद्धिः पक्षिणामाकाशगमनसिद्धिवद्भवतीति सूत्रार्थः । सर्वथापि तेषां सद्योमुक्तिर्नास्तीति सिद्धम् । यदा तु अस्मितामात्रस्यापि निर्विकल्पे चिन्मात्रे लयो भवति तदायं विद्वान्कैवल्यं धर्ममेव समाध्याख्यमनुभवति । यमधिकृत्य श्रूयते 'क्षणमेकं क्रतुशतस्य चतुःसप्तत्या यत्फलं तदवाप्नोति' इति । अयमेव मोक्षाख्यः परमयनं प्राप्यं स्थानं यस्य स मुनिर्मोक्षपरायण इत्युच्यते । यतोऽस्यामेवावस्थायां योगी जीवन्मुक्त इत्युच्यते । विगतेच्छाभयक्रोध इति पादः प्रागेव व्याख्यातः । य एवंभूतः स सदा मुक्तः बन्धप्रतीतिकालेऽपि स मुक्त एवास्ति । अज्ञानमात्रव्यवधानान्मुक्तः । एतेनाहंकारादेर्बन्धस्य कालत्रयेऽप्यसत्त्वोक्त्या मिथ्यात्वं दर्शितम् ॥ २८ ॥ एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते—**भोक्तारमिति** । सोपाधिकेन रूपेण यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च भोक्तारम् । तथा सर्वेषां भूतानां हिरण्यगर्भादीनामपि महान्तं व्यापकमीश्वरमीशितारमन्तर्यामिणम् । सुहृदं सर्व-

४ मधुसूदनीव्याख्या ।

भवेत् । विगतेच्छाभयक्रोध इति वीतरागभयक्रोध इत्यत्र व्याख्यातम् । एतादृशो यः संन्यासी सदा भवति मुक्त एव सः । नतु मोक्षः तस्य कर्तव्योऽस्ति । अथवा य एतादृशः स सदा जीवन्नपि मुक्त एव ॥ २७ ॥ २८ ॥ एवं योगयुक्तः किं ज्ञात्वा मुच्यत इति तदाह—सर्वेषां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च भोक्तारं भोगकर्तारं पालकमिति वा । 'भुज पालनाभ्यवहारयोः' इति धातुः । सर्वेषां लोकानां महान्तमीश्वरं हिरण्यगर्भादीनामपि नियन्तारं सर्वेषां प्राणिनां सुहृदं प्रत्युपकार-

५ भाष्योत्कर्षदीपिका ।

बहिर्वाह्यानित्यनेनैव 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इतिसूत्रोक्ता यमाः । 'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति सूत्रोक्ता नियमाश्च प्रदर्शिताः । यतेन्द्रिय इति प्रत्याहारः यतमना इति धारणाध्याने, यतबुद्धिरिति समाधिः कथितः, विगतेच्छाभयक्रोध इति मोक्षपरायणस्य योगिनः स्वरूपनिरूपणमिति विवेकः ॥ २८ ॥ एवं द्वाभ्यां ध्यानयोगं सूत्रयित्वाऽन्ते मुक्त एव स इत्युक्तं तत्किं साक्षाज्ज्ञानं विनैव मोक्षसाधनमुत ज्ञानद्वारेणेति संशयनिवृत्तये 'तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय', 'ज्ञानादेव तु कैवल्यं', 'ऋते ज्ञानान्न मोक्षः' इत्यादिश्रुत्यनुरोधेन द्वितीयपक्षं सिद्धान्तयति । तृतीयेन भोक्तारं यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च सर्वेषां ब्रह्मादिस्थावरपर्यन्तानां महान्तमीश्वरं सर्वभूतानां सुहृदं सर्वप्राणिनां प्रत्युपकार-

६ श्रीधरीव्याख्या ।

मुनिः स सदा जीवन्नपि मुक्त एवेत्यर्थः ॥ २८ ॥ नन्वेवमिन्द्रियादिसंयममात्रेण कथं मुक्तिः स्यान्न तावन्मात्रेण किंतु ज्ञानद्वारेणेत्याह—**भोक्तारमिति** । यज्ञानां तपसां च मद्भक्तैः समर्पितानां यदृच्छया भोक्तारं पालकमिति वा सर्वेषां लोकानां महान्तमीश्वरं

७ अभिनवगुप्ताचार्यव्याख्या ।

नासा चित्तवृत्तिः । एतदेव बाह्ये ॥ २७ ॥ यतेन्द्रिय इति । एवंविधो योगी सर्वव्यवहारान्वर्तयन्नपि मुक्तएव ॥ २८ ॥ भोक्तारमिति । यज्ञ-

१ श्रीमच्छांकरभाष्यम्।

**तथोपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोतीति ॥ २९ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत्पूज्यपादकृतौ श्रीमद्भगवद्गीताभाष्ये कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

२ आनन्दगिरिव्याख्या।

तर्हि तत्र तत्र व्यवस्थितकर्मतत्फलसंसर्गित्वं स्यादित्याशङ्क्याह—**सर्वकर्मेति** । नच तस्य बुद्धितद्वृत्तिसंबन्धोऽपि वस्तुतोऽस्तीत्याह—**सर्वप्रत्ययेति** । यथोक्तेश्वरपरिज्ञानफलमभिदधाति—**मां नारायणमिति** । तदेवं कर्मयोगस्या-मुख्यसंन्यासापेक्षया प्रशस्तत्वेऽपि ततो मुख्यसंन्यासस्याधिक्यात्तद्वतो बुद्धिशुद्ध्यादियुक्तस्य कामक्रोधोद्भवं वेगमिहैव सोढुं शक्तस्य शमदमादिमतो योगाधिकृतस्य त्वंपदार्थाभिज्ञस्य परमात्मानं प्रत्यक्त्वेन जानतो मुक्तिरिति सिद्धम् ॥ २९ ॥

इत्यानन्दगिरिकृतटीकायां पञ्चमोऽध्यायः ॥ ५ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

भूतानां प्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वप्रत्ययसाक्षिणं नारायणं मां प्रत्यगभेदेन ज्ञात्वा साक्षात्कृत्य तद्भावं प्राप्य शान्तिमनुपाध्यवस्थां निरुपाख्यां कैवल्यसंज्ञां ऋच्छति प्राप्नोति । एवंच सोपाधिब्रह्मभावप्राप्तिपूर्वकैव निरुपाधिप्राप्तिरिति गम्यते । यथोक्तं वार्तिकसारे 'सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते । सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिकः ॥ जक्षन्क्रीडन्रतिं प्राप्त इति सोपाधिकस्य तु । छान्दोग्ये सर्वकामाप्तिः सार्वात्म्यात्स्पष्टमीरिता ॥ अहमन्नं तथान्नादः श्लोककार्यप्यहो अहम् । इति तत्त्वविदः सामगाने सर्वात्मता श्रुता ॥ अत्रापि चक्रदृष्टान्ता-त्सोपाधिस्तत्त्वविच्छ्रुतः । अपूर्वानपराद्युक्त्या श्रोष्यते निरुपाधिकः ॥' इति ॥ २९ ॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे पञ्चमोऽध्यायः ॥ ५ ॥

४ मधुसूदनीव्याख्या।

निरपेक्षतयोपकारिणं सर्वान्तर्यामिणं सर्वभासकं परिपूर्णसच्चिदानन्दैकरसं परमार्थसत्यं सर्वात्मानं नारायणं मां ज्ञात्वा आत्म-त्वेन साक्षात्कृत्य शान्तिं सर्वसंसारोपरतिं मुक्तिमृच्छति प्राप्नोतीत्यर्थः । त्वां पश्यन्नपि कथं नाहं मुक्त इत्याशङ्कानिराकरणाय विशेषणानि । उक्तरूपेणैव मम ज्ञानं मुक्तिकारणमिति भावः ॥ २९ ॥

अनेकसाधनाभ्यासनिष्पन्नं हरिणेरितम् । स्वस्वरूपपरिज्ञानं सर्वेषां मुक्तिसाधनम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

५ भाष्योत्कर्षदीपिका।

निरपेक्षतया उपकारिणं सर्वभूतानां हृदयस्थं मां नारायणमात्मत्वेन ज्ञात्वा शान्तिं सर्वसंसारोपरतिं मोक्षाख्यामृच्छति प्राप्नोति । यत्तु चतुर्विंशतिश्लोकव्याख्यानानन्तरं एवं मुक्त उक्तः । मुमुक्षवस्त्रिविधाः श्रवणमनननिदिध्यासनरताः तेषु श्रवणनिरतो द्वितीयश्लोकेनोच्यते लभन्त इति, अथ मनननिरतस्तृतीयश्लोकेनोच्यते कामेति, अवशिष्टश्लोकद्वयेन निदिध्यासननिरत उच्यते स्पर्शानितीति वर्णयन्ति तच्चिन्त्यम् । लभन्ते ब्रह्म निर्वाणमिति मोक्षलाभस्य श्रवणमात्रेणानुपपत्तेः द्वारकल्पनाया गौणत्वकल्पनस्य च सतिसंभवेऽन्याय्यत्वात् । विदितात्मनामित्यस्य षष्ठाध्यायसूत्रस्थानीयस्य प्राणेत्यादिना स्पष्टतया प्रतीय-मानस्य ध्यानयोगस्य च बाधकप्रसङ्गादिति दिक् । तदनेन पञ्चमाध्यायेनाशुद्धचित्तेन कृताज्ज्ञाननिष्ठारहितात्संन्यासात्कर्मयोगस्य चित्तशुद्ध्यादिसंपादकस्य श्रैष्ठ्यमुक्त्वा शुद्धचित्तस्य संन्यासिनः शमदमादिसंपन्नस्य कामाद्युद्भवं वेगमिहैव सोढुं शक्तस्य योगाधि-कृतस्य त्वंपदार्थाभिज्ञस्य परमात्मानं प्रत्यक्त्वेन जानतो मुक्तिरित्युक्तम् ॥ २९ ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्री-पादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां पञ्चमोऽध्यायः ॥ ५ ॥

६ श्रीधरीव्याख्या।

सर्वेषां भूतानां सुहृदं निरपेक्षोपकारिणमन्तर्यामिणं मां ज्ञात्वा मत्प्रसादेन शान्तिं मोक्षमृच्छति प्राप्नोति ॥ २९ ॥ विकल्पशङ्कापोहेन येनैवं सांख्ययोगयोः । समुच्चयः क्रमेणोक्तः सर्वज्ञं नौमि तं हरिम् ॥ १ ॥ इति सुबोधिन्यां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

७ अभिनवगुप्ताचार्यव्याख्या।

फलेषु भोक्तात्यन्तफलत्वात् । एवं तपस्वीदृशं भगवत्तत्त्वं विन्दन्यथातथास्थितोऽपि मुच्यत इति शिवम् ॥ २९ ॥ अत्र संग्रहश्लोकः । सर्वा-ण्येवात्र भूतानि समत्वेनानुपश्यतः । जडवद्व्यवहारोऽपि मोक्षायैवावकल्पते ॥ इति श्रीमन्महामाहेश्वराचार्यराजानकाभिनवगुप्तविरचिते श्रीगीतार्थसंग्रहे पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः ।

श्रीभगवानुवाच ।

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनं प्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः स्पर्शान्कृत्वा बहिरित्यादय उपदिष्टास्तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते, तत्र ध्यानयोगस्य बहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणासमर्थस्तावद्गृहस्थेनाधिकृतेन कर्तव्यं कर्मेत्यतस्तत्स्तौति—अनाश्रित इति । ननु किमर्थं ध्यानयोगारोहणसीमाकरणं, यावतानुष्ठेयमेव विहितं कर्म यावज्जीवम् । नारुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इति विशेषणादारूढस्य च शमेनैव संबन्धकरणात् । आरुरुक्षोरारूढस्य च

२ आनन्दगिरिव्याख्या ।

ध्यानयोगप्रस्तावानन्तरं तद्योग्यताहेतुकर्मणः स्तुतिं भगवानुक्तवानित्याह—**श्रीभगवानिति** । पूर्वोत्तराध्याययोः सङ्गतिमभिदधानो वृत्तमनूद्याध्यायान्तरमवतारयति—**अतीतेति** । सम्यग्दर्शनप्रकरणे ध्यानयोगस्य प्रसङ्गाभावं व्युदस्यति—**सम्यगिति** । संग्रहविवरणयोरतीतानन्तराध्याययोर्युक्तं हेतुहेतुमत्त्वमिति भावः । अध्यायसंबन्धमभिधायानाश्रितः कर्मफलमित्यादिश्लोकद्वयस्य तात्पर्यमाह—**तत्रेति** । कर्मयोगस्य संन्यासहेतोर्मर्यादां दर्शयितुं साङ्गं च योगं विचारयितुमध्याये प्रवृत्ते सतीति सप्तम्यर्थः । संन्यासिना कर्तव्यं कर्मेत्येवं प्रतिभासं व्युदस्यति—**गृहस्थेनेति** । कर्तव्यत्वं स्तुतियोग्यत्वमतःशब्दार्थः । समुच्चयवादी सीमाकरणमाक्षिपति—**नन्विति** । यावज्जीवश्रुतिवशाद्ध्यानारोहणसामर्थ्ये सत्यपि कर्मानुष्ठानस्य दुर्वारत्वादिति हेतुमाह—**यावतेति** । भार्यावियोगादिप्रतिबन्धाद्यावज्जीवश्रुतिचोदितकर्माननुष्ठानवद्वैराग्यप्रतिबन्धादपि तदननुष्ठानसंभवाद्भगवतो विशेषवचनाच्च न यावज्जीवं कर्मानुष्ठानप्रसक्तिरिति परिहरति—**नारुरुक्षोरिति** । उक्तमेवार्थं व्यतिरेकद्वारेण विवृणोति—**आरुरुक्षोरित्यादिना** । आरोढुमिच्छती-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वाध्यायान्ते सूत्रितं ध्यानयोगं विवरीतुमिच्छंस्तत्राधिकारहेतुत्वात्कर्मयोगं तावत्स्तौति द्वाभ्याम्—**अनाश्रित इति** । यः कर्मणां फलमनाश्रितोऽनपेक्षमाणः कार्यमवश्यकर्तव्यं नित्यं कर्म करोति स एव फलसंकल्पत्यागा-

४ मधुसूदनीव्याख्या ।

योगसूत्रं त्रिभिः श्लोकैः पञ्चमान्ते यदीरितम् । षष्ठस्तत्रारभ्यतेऽध्यायस्तद्व्याख्यानाय विस्तरात् ॥

तत्र सर्वकर्मत्यागेन योगं विधास्यंस्त्याज्यत्वेन हीनत्वमाशङ्क्य कर्मयोगं स्तौति द्वाभ्याम्—श्रीभगवानुवाच—कर्मणां फलमनाश्रितोऽनपेक्षमाणः फलाभिसंधिरहितः सन्, कार्यं कर्तव्यतया शास्त्रेण विहितं नित्यमग्निहोत्रादि कर्म करोति यः स कर्म्यपि सन् संन्यासी योगी चेति स्तूयते । संन्यासो हि त्यागः । चित्तगतविक्षेपाभावश्च योगः । तौ चास्य विद्येते फलत्यागात् फलतृष्णारूपचित्तविक्षेपाभावाच्च । कर्मफलतृष्णात्याग एवात्र गौण्या वृत्त्या संन्यासयोगशब्दाभ्यामभिधीयते सकामानपेक्ष्य प्राशस्त्यकथनाय । अवश्यंभाविनौ हि निष्कामकर्मानुष्ठातुर्मुख्यौ संन्यासयोगौ । तस्मादयं

५ भाष्योत्कर्षदीपिका ।

पञ्चमाध्यायान्ते सम्यग्दर्शनं प्रत्यन्तरङ्गसाधनस्य ध्यानयोगस्य सूत्रस्थानीयास्त्रयः श्लोका उदाहृतास्तद्वृत्तिस्थानीयोऽयं षष्ठाध्याय आरभ्यते । तत्र तदधिकारसंपत्तये गृहस्थेनाधिकृतेन कर्तव्यमेव कर्मेत्यतस्तत्स्तौति—**अनाश्रित इति द्वाभ्याम्** । कर्मणः फलमनाश्रितः कर्मफलतृष्णारहितः सन् कार्यमवश्यकर्तव्यं काम्यविपरीतं नित्याग्निहोत्रादिकं यः करोति स संन्यासी च योगी चेति कर्मफलतृष्णावद्भ्य इतरकर्मिभ्य उत्कृष्ट इति गौणप्रयोगेण स्तूयते । तथाच संन्यासः परित्यागः सोऽस्यास्तीति सः । योगश्चित्त-

६ श्रीधरीव्याख्या ।

चित्ते शुद्धेऽपि न ध्यानं विना संन्यासमात्रतः । मुक्तिः स्यादिति षष्ठेऽस्मिन्ध्यानयोगो वितन्यते ॥ १ ॥ पूर्वाध्यायान्ते संक्षेपेणोक्तं योगं प्रपञ्चयितुं षष्ठाध्यायारम्भः । तत्र तावत्सर्वकर्माणि मनसेत्यारभ्य संन्यासपूर्विकाया ज्ञाननिष्ठायास्तात्पर्येणाभिधानाद्दुःखरूपत्वाच्च कर्मणः सहसा संन्यासातिप्रसङ्गं प्राप्तं वारयितुं संन्यासादपि श्रेष्ठत्वेन कर्मयोगं स्तौति । श्रीभगवानुवाच—**अनाश्रित इति**

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीभगवानुवाच । अनाश्रित इति । एवं प्राक्तनेनाध्यायगणेन साधितोऽर्थः श्लोकद्वयेन निगद्यते । कार्यं स्वजात्यादिविहितम् । संन्यासी

१ श्रीमच्छांकरभाष्यम् ।

शमः कर्म चोभयं कर्तव्यत्वेनाभिप्रेतं चेत्स्यात्तदारुरुक्षोरारूढस्य चेति शमकर्मविषयभेदेन विशेषणं विभागकरणं चानर्थकं स्यात् । तत्राश्रमिणां कश्चिद्योगमारुरुक्षुर्भवत्यारूढश्च कश्चिदन्ये नारुरुक्षवो न चारूढास्तानपेक्ष्यारुरुक्षोरारूढस्य चेति विशेषणं विभागकरणं चोपपद्यत एवेति चेत् । न । तस्यैवेति वचनात् । पुनर्योगग्रहणाच्च योगारूढस्येति य आसीत्पूर्वं योगमारुरुक्षुस्तस्यैवारूढस्य शम एव कर्तव्यं कारणं योगफलं प्रत्युच्यत इति । अतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः, योगविभ्रष्टवचनाच्च । गृहस्थस्य चेत्कर्मिणो योगो विहितः षष्ठेऽध्याये स योगविभ्रष्टोऽपि कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशाशङ्कानुपपन्ना स्यात् । अवश्यं हि कृतं कर्म काम्यं नित्यं वा मोक्षस्य नित्यत्वादनारभ्यत्वे स्वं फलमारभत एव । नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात्फलेन भवितव्यमित्यवोचाम, अन्यथा वेदस्यानर्थक्यप्रसङ्गादिति । नच कर्मणि सत्युभयविभ्रष्टवचनमर्थवत्, कर्मिणो

२ आनन्दगिरिव्याख्या ।

त्यारुरुक्षुरित्यत्रारोहणेच्छाविशेषणमारोहणं कृतवानित्यारूढ इत्यत्र पुनरिच्छाविषयभूतमारोहणं विशेषणमेवं शमकर्मविषययोर्भेदेन विशेषणं, मर्यादाकरणानङ्गीकरणे विरुद्धमापद्येत, तयोरेव विभागकरणं च भागवतसीमानङ्गीकारे न युज्येतेत्यर्थः । विशेषणविभागकारणयोरन्यथोपपत्तिमाशङ्कते—**तत्रेति** । व्यवहारभूमिः सप्तम्यर्थः । षष्ठी निर्धारणे । भवत्वधिकारिणां त्रैविध्यं तथापि प्रकृते विशेषणादौ किमायातमित्याशङ्क्य तृतीयापेक्षया तदुपपत्तिरित्याह—**तानपेक्ष्येति** । आरुरुक्षोरारूढस्य च भेदे तस्यैवेति प्रकृतपरामर्शानुपपत्तिरिति दूषयति—**न तस्येति** । यद्यनारुरुक्षुं पुरुषमपेक्ष्यारुरुक्षोरिति विशेषणं तस्य च कर्मारोहणकारणमनारूढं च पुरुषमपेक्ष्यारूढस्येति विशेषणं तस्य च शमः संन्यासो योगफलप्राप्तौ कारणमिति विशेषणविभागकरणयोरुपपत्तिस्तदारुरुक्षोरारूढस्य च भिन्नत्वात्प्रकृतपरामर्शिनस्तच्छब्दस्यानुपपत्तेर्न युक्तमित्थं विशेषणाद्युपपादनमित्यर्थः । किंच योगमारुरुक्षोस्तदारोहणे कारणं कर्मेत्युक्त्वा पुनर्योगारूढस्येति योगशब्दप्रयोगाद्यो योगं पूर्वमारुरुक्षुरासीत्तस्यैवापेक्षितं योगमारूढस्य तत्फलप्राप्तौ कर्मसंन्यासः शमशब्दवाच्यो हेतुत्वेन कर्तव्य इति वचनादारुरुक्षोरारूढस्य चाभिन्नत्वप्रत्यभिज्ञानान्न तयोर्भिन्नत्वं शङ्कितुं शक्यमित्याह—**पुनरिति** । यत्तु यावज्जीवश्रुतिविरोधाद्योगारोहणसीमाकरणं कर्मणोऽनुचितमिति तत्राह—**अत इति** । पूर्वोक्तरीत्या कर्मतत्त्यागयोर्विभागोपपत्तौ श्रुतेरन्यविषयत्वाद्योगमारूढस्य मुमुक्षोर्जिज्ञासमानस्य नित्यनैमित्तिककर्मस्वपि परित्यागसिद्धिरित्यर्थः । इतश्च यावज्जीवं कर्म कर्तव्यं न भवतीत्याह—**योगेति** । संन्यासिनो योगभ्रष्टस्य विनाशशङ्कावचनान्न यावज्जीवं कर्म कर्तव्यं प्रतिभातीत्यर्थः । ननु योगभ्रष्टशब्देन गृहस्थस्यैवाभिधानात्तस्यैवास्मिन्नध्याये योगविधानाद्योगारोहणयोग्यत्वे सत्यपि यावज्जीवं कर्म कर्तव्यमिति नेत्याह—**गृहस्थस्येति** । तेनापि मुमुक्षुणा कृतस्य कर्मणो मोक्षातिरिक्तफलानारम्भकत्वाद्योगभ्रष्टोऽसौ छिन्नाभ्रमिव नश्यतीति शङ्का सावकाशेत्याशङ्क्याह—**अवश्यं हीति** । अपौरुषेयान्निर्दोषाद्वेदात्फलदायिनी कर्मणः स्वाभाविकी शक्तिरवगता ब्रह्मभावस्य च स्वतःसिद्धत्वान्न कर्मफलवत्त्वमतो मोक्षातिरिक्तस्यैव फलस्य कर्मारम्भकमिति कर्मिणि योगभ्रष्टेऽपि कर्मगतिं गच्छतीति निरवकाशा शङ्केत्यर्थः । ननु मुमुक्षुणा काम्यप्रतिषिद्धयोरकरणात्कृतयोश्च नित्यनैमित्तिकयोरफलत्वात्कथं तदीयस्य कर्मणो नियमेन फलारम्भकत्वं तत्राह—**नित्यस्य चेति** । चकारेण नैमित्तिकं कर्मानुकृष्यते । वेदप्रमाणकत्वेऽपि नित्यनैमित्तिकयोरफलत्वे दोषमाह—**अन्यथेति** । कर्मणोऽनुष्ठितस्य फलारम्भकत्वध्रौव्याद्गृहस्थो योगभ्रष्टोऽपि कर्मगतिं गच्छतीति न तस्य नाशाशङ्केति शेषः । इतोऽपि गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीत्याह—**नचेति** । ज्ञानं कर्म चेत्युभयं ततो विभ्रष्टोऽयं नश्यतीति वचनं गृहस्थे कर्मणि सति नार्थवद्भवितुमलं तस्य कर्मनिष्ठस्य कर्मणो विभ्रंशे हेत्वभावात्तत्फलस्यावश्यकत्वादित्यर्थः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्संन्यासी च योगी च भवति नतु निरग्निर्यो विधितः श्रौतस्मार्तकर्मत्यागी स एव संन्यासी, नापि अक्रियस्त्यक्तवाङ्मनः-

४ मधुसूदनीव्याख्या ।

यद्यपि न निरग्निरग्निसाध्यश्रौतकर्मत्यागी न भवति, न चाक्रियोऽग्निनिरपेक्षस्मार्तक्रियात्यागी च न भवति, तथापि संन्यासी योगी चेति मन्तव्यः । अथवा न निरग्निर्न चाक्रियः संन्यासी योगी चेति मन्तव्यः, किंतु साग्निः सक्रियश्च निष्काम-

५ भाष्योत्कर्षदीपिका ।

समाधानं सोऽस्यास्तीति स योगी चेत्येवमुभयगुणसंपन्नोऽयं मन्तव्यः, न केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः । निर्गता अग्नयः कर्माङ्गभूता यस्मात्सः । अनग्निसाधना अप्यविद्यमानाः क्रियास्तपोदानादिका यस्य स नित्यसमाधिनिष्ठ इत्यर्थः ।

६ श्रीधरीव्याख्या ।

**द्वाभ्याम्** । कर्मफलमनाश्रितोऽनपेक्षमाणः अवश्यं कर्तव्यतया विहितं कर्म यः करोति स एव संन्यासी योगी च नतु निरग्निः अग्नि-

१ श्रीमच्छांकरभाष्यम्।

विभ्रंशकारणानुपपत्तेः कर्म कृतमीश्वरे संन्यस्येत्यतः कर्तरि कर्म फलं नारभत इति चेत्। नेश्वरे संन्यासस्याधिकतरफलहेतुत्वोपपत्तेः। मोक्षायैवेति चेत्स्वकर्मणां कृतानामीश्वरे न्यासो मोक्षायैव न फलान्तराय, योगसहितो योगाच्च विभ्रष्ट इत्यतस्तं प्रति नाशाशङ्का युक्तैवेति चेत्। न। 'एकाकी यतचित्तात्मा निराशीरपरिग्रहः', 'ब्रह्मचारिव्रते स्थितः' इति कर्मसंन्यासविधानात्। नचात्र ध्यानकाले स्त्रीसहायत्वाशङ्का येनैकाकित्वं विधीयते। नच गृहस्थस्य निराशीरपरिग्रह इत्यादिवचनमनुकूलम्। उभयविभ्रष्टप्रश्नानुपपत्तेश्च। अनाश्रित इत्यनेन कर्मिण एव संन्यासित्वं योगित्वं चोक्तं, प्रतिषिद्धं च निरग्नेरक्रियस्य च संन्यासित्वं योगित्वं चेति चेत्। न। ध्यानयोगं प्रति बहिरङ्गस्य सतः कर्मणः फलाकाङ्क्षा संन्यासस्तुतिपरत्वात्। न केवलं निरग्निरक्रिय एव संन्यासी योगी च किं तर्हि कर्म्यपि कर्मफलासङ्गं संन्यस्य कर्मयोगमनुतिष्ठन्सत्त्वशुद्ध्यर्थं संन्यासी योगी च भवतीति स्तूयते। नचैकेन वाक्येन कर्मफलासङ्गसंन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते। नच प्रसिद्धं निरग्नेरक्रियस्य परमार्थसंन्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रविहितं संन्यासित्वं योगित्वं च प्रतिषेधति भगवान्। स्ववचनविरोधाच्च। सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते मौनी संतुष्टो येन केनचिदनिकेतः स्थिरमतिर्विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः सर्वारम्भपरित्यागीति च तत्र तत्र भगवता स्ववचनानि दर्शितानि तैर्विरुध्येत चतुर्थाश्रमविप्रतिषेधः। तस्मान्मुनेर्योग-

२ आनन्दगिरिव्याख्या।

कृतस्य कर्मणो मुमुक्षुणा भगवति समर्पणात्कर्तरि फलानारम्भकत्वादस्ति विभ्रंशकारणमिति शङ्कते—कर्मेति। राजाराधनबुद्ध्या धनधान्यादिसमर्पणस्याधिकफलहेतुत्वोपलम्भादीश्वरे समर्पणं न भ्रंशकारणमिति दूषयति—नेत्यादिना। अधिकफलहेतुत्वेऽपि मोक्षहेतुत्वमिष्यतामिति शङ्कते—मोक्षायेति। तदेव चोद्यं विवृणोति—स्वकर्मणामिति। सहकारिसामर्थ्यात्तस्य फलान्तरं प्रत्युपायत्वासिद्धिरिति हेतुं सूचयति—योगेति। ध्यानसहितस्य संन्यासस्य मोक्षौपयिकत्वे कुतो योगभ्रष्टमधिकृत्य नाशाशङ्केत्याशङ्क्याह—योगाच्चेति। सहकार्यभावे सामग्र्यभावात्फलानुपपत्तेर्युक्ता नाशाशङ्केत्यर्थः। ध्यानसहितमीश्वरे कर्मसमर्पणं मोक्षायेत्यत्र प्रमाणाभावाद्गृहस्थो योगभ्रष्टशब्दवाच्यो न भवतीति दूषयति—नेति। गृहस्थस्य योगभ्रष्टशब्दवाच्यत्वाभावे हेत्वन्तरमाह—एकाकीति। न खल्वेतानि विशेषणानि गृहस्थसमवायीनि संभवन्ति तेन तस्य ध्यानयोगविध्यभावान्न तं प्रति योगभ्रष्टशब्दवचनमुचितमित्यर्थः। एकाकित्ववचनं गृहस्थस्यापि ध्यानकाले स्त्रीसहायत्वाभावाभिप्रायेण भविष्यतीत्याशङ्क्याग्निहोत्रादिवद्ध्यानस्य पत्नीसाध्यत्वाभावादप्राप्तप्रतिषेधान्मैवमित्याह—नचात्रेति। विशेषणान्तरपर्यालोचनयापि नायमेकाकिशब्दो गृहस्थपरो भवितुमर्हतीत्याह—नचेति। किंच गृहस्थस्यैवैकाकित्वादि विवक्षित्वा ध्यानयोगविधौ तं प्रत्युभयभ्रष्टप्रश्नो नोपपद्यत इत्याह—उभयेति। नहि गृहस्थं प्रत्युभयस्माज्ज्ञानात्कर्मणश्च विभ्रष्टत्वमुपेत्य प्रष्टुं युज्यते तस्य ज्ञानाद्भ्रंशेऽपि कर्मणस्तदभावादनुष्ठीयमानकर्मभ्रंशेऽपि प्रागनुष्ठितकर्मवशात्फलप्रतिलम्भादतो यथोक्तप्रश्नालोचनया न गृहस्थं प्रति ध्यानविधानोपपत्तिरित्यर्थः। ननु भगवता संन्यासस्य प्रतिषिद्धत्वाद्गृहस्थस्यैव योगविधानात्तस्यैव योगभ्रष्टशब्दवाच्यत्वमिति शङ्कते—अनाश्रित इत्यनेनेति। भगवद्वाक्यं न प्रतिषेधपरमिति परिहरति—न। ध्यानेति। स्तुतिपरत्वमेव स्फोरयति—न केवलमिति। सत्त्वशुद्ध्यर्थमनुतिष्ठन्निति संबन्धः। वाक्यस्योभयपरत्वमाशङ्क्य वाक्यभेदप्रसङ्गान्मैवमित्याह—नचेति। इतोऽपि भगवतः संन्यासाश्रमप्रतिषेधोऽभिप्रेतो न भवतीत्याह—नच प्रसिद्धमिति। तस्य प्रसिद्धं संन्यासित्वं योगित्वं चेति संबन्धः। प्रसिद्धत्वमेव व्याकरोति—श्रुतीति। इतोऽपि संन्यासाश्रमं भगवान्न प्रतिषेधतीत्याह—स्ववचनेति। विरोधमेव साधयति—सर्वकर्माणीत्यादिना। अनाश्रित इत्यादिवाक्यस्य यथाश्रुतार्थत्वानुपपत्तेः स्तुतिपरत्वमुपपादितमुपसंहरति—तस्मादिति। कर्मफलसंन्यासित्वमत्र मुनिशब्दार्थः।

४ मधुसूदनीव्याख्या।

कर्मानुष्ठायी संन्यासी योगी चेति मन्तव्य इति स्तूयते। 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गौअश्वान्' इत्यत्रेव प्रशंसालक्षणयानया नञन्वयोपपत्तिः। अत्र चाक्रिय इत्यनेनैव सर्वकर्मसंन्यासिनि लब्धे निरग्निरिति व्यर्थं स्यादित्यग्निशब्देन

५ भाष्योत्कर्षदीपिका।

एतेन कार्यं कर्म यः करोति स एव संन्यासी च योगी च नतु निरग्निः नचाक्रिय इति प्रत्युक्तम्। न केवलं निरग्निरग्नयो गार्हपत्याहवनीयान्वाहार्यपचनप्रभृतयः तानुद्वास्य स्थित एव संन्यासी। तथा अन्याश्च तपोदानाद्याः क्रियास्तद्रहितः समाधिनिष्ठ एव योगी चेति। न चेति यथासंख्यमुभयव्यतिरेको व्याख्येयः। एतेनाग्निशब्देन सर्वाणि कर्माण्युपलक्ष्य निरग्निरिति संन्यासी।

१ श्रीधरः.

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

१ श्रीमच्छांकरभाष्यम् ।

मारुरुक्षोः प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादि कर्मफलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं बुद्धिशुद्धिद्वारेण प्रतिपद्यत इति स संन्यासी च योगी चेति स्तूयते—अनाश्रितः न आश्रितोऽनाश्रितः किं कर्मफलं कर्मणः फलं कर्मफलं यत्तदनाश्रितः । कर्मफलतृष्णारहित इत्यर्थः । यो हि कर्मफले तृष्णावान्स कर्मफलमाश्रितो भवत्ययं तु तद्विपरीतोऽतोऽनाश्रितः कर्मफलम् । एवंभूतः सन्कार्यं कर्तव्यं नित्यं काम्यविपरीतमग्निहोत्रादिकं करोति निर्वर्तयति । यः कश्चिदीदृशः कर्मी स कर्म्यन्तरेभ्यो विशिष्यत इत्येवमर्थमाह स संन्यासी च योगी चेति । संन्यासः परित्यागः स यस्यास्ति स संन्यासी च योगी च । योगश्चित्तसमाधानं स यस्यास्ति स योगी चेत्येवंगुणसंपन्नोऽयं मन्तव्यो न केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः । निर्गता अग्नयः कर्माङ्गभूता यस्मात्स निरग्निः, अक्रियश्चानग्निसाधना अप्यविद्यमानाः क्रियास्तपोदानादिका यस्यासावक्रियः ॥ १ ॥ ननु च निरग्नेरक्रियस्यैव श्रुतिस्मृतियोगशास्त्रेषु संन्यासित्वं योगित्वं च प्रसिद्धं कथमिह साग्नेः सक्रियस्य संन्यासित्वं योगित्वं चाप्रसिद्धमुच्यते इति । नैष दोषः । कयाचिद्गुणवृत्त्योभयस्य संपिपादयिषितत्वात् । तत्कथं कर्मफलसंकल्पसंन्यासात्संन्यासित्वं योगाङ्गत्वेन च कर्मानुष्ठानात्कर्मफलसंकल्पस्य वा चित्तविक्षेपहेतोः परित्यागाद्योगित्वं चेति गौणमुभयं न पुनर्मुख्यं संन्यासित्वं योगित्वं चाभिप्रेतमित्येतमर्थं दर्शयितुमाह—यं संन्यासमिति । यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसंन्यासमिति प्राहुः

२ आनन्दगिरिव्याख्या ।

स्तुतिपरं वाक्यम् प्रयोजनार्थमुदाहरति—अनाश्रित इति । कर्मफलेऽभिलाषो नास्तीत्येतावता कथं तदनाश्रितत्ववाचोयुक्तिरित्याशङ्क्य व्यतिरेकमुखेन विशदयति—यो हीति । कार्यमित्यादि व्याकरोति—एवंभूतः सन्निति । कथं कर्मिणः संन्यासित्वं योगित्वं च कर्मित्वविरोधादित्याशङ्क्याह—ईदृश इति । स्तुतेरत्र विवक्षितत्वान्नानुपपत्तिश्चोदनीयेति मन्वानः सन्नाह—इत्येवमिति । न निरग्निरित्यादेरर्थमाह—न केवलमिति । अग्नयो गार्हपत्याहवनीयान्वाहार्यपचनप्रभृतयः । नन्वनग्नित्वे सिद्धमक्रियत्वमग्निसाध्यत्वात्क्रियाणां तथाच न निरग्निरित्येतावतैवापेक्षितसिद्धेर्न चाक्रिय इत्यनर्थकमर्थपुनरुक्तेरिति तत्राह—अनग्नीति ॥ १ ॥ उत्तरश्लोकस्य तात्पर्यं दर्शयितुं व्यावर्त्यामाशङ्कां दर्शयति—ननु चेति । प्रसिद्धिं परित्यज्याप्रसिद्धिरुपादीयमाना प्रसिद्धिविरुद्धेति चोद्यं दूषयति—नैष दोष इति । उभयस्य साग्नौ सक्रिये च संन्यासित्वस्य योगित्वस्य चेत्यर्थः । गुणवृत्त्योभयसंपादनं प्रश्नपूर्वकं प्रकटयति—तत्कथमित्यादिना । संभवति मुख्ये संन्यासित्वादौ किमिति गौणमुभयमभीष्टमित्याशङ्क्य मुख्यस्य कर्मण्यसंभवाद्गौणमेव स्तुतिसिद्ध्यर्थं तदिष्टमित्यभिप्रेत्याह—न पुनरिति । चित्तव्याकुलत्वहेतुकामनात्यागाच्चित्तसमाधानसिद्धे-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

कायक्रिय एव वा योगीति ॥ १ ॥ केन साम्येनायं संन्यासी योगी चेति स्तूयते अत आह—यमिति । यो हि

४ मधुसूदनीव्याख्या ।

सर्वाणि कर्माण्युपलक्ष्य निरग्निरिति संन्यासी क्रियाशब्देन चित्तवृत्तीरुपलक्ष्याक्रिय इति निरुद्धचित्तवृत्तिर्योगी च कथ्यते । तेन न निरग्निः संन्यासी मन्तव्यो न चाक्रियो योगी मन्तव्य इति यथासंख्यमुभयव्यतिरेको दर्शनीयः । एवं सति नञ्द्वयमप्युपपन्नमिति द्रष्टव्यम् ॥ १ ॥ असंन्यासेऽपि संन्यासशब्दप्रयोगे निमित्तभूतं गुणयोगं दर्शयितुमाह—यं सर्वकर्मतत्फल-

५ भाष्योत्कर्षदीपिका ।

क्रियाशब्देन चित्तवृत्तीरुपलक्ष्याक्रिय इति निरुद्धचित्तवृत्तिर्योगीति कथ्यते इति लक्षणया व्याख्याय उभयव्यतिरेकप्रदर्शनं प्रत्युक्तम् । एवं भाष्योक्तेनर्जुमार्गेणाविरोधस्य सम्यगुपपत्त्या पूर्वाध्यायान्ते श्लोकद्वयेन सूत्रितं ज्ञानयोगं प्राधान्येन षष्ठे प्रपञ्चयिष्यन् श्रीभगवाननुवाचेत्याद्यामूलतद्भाष्यतद्विरुद्धाः कल्पना उपेक्ष्याः ॥१॥ गौणप्रयोगे निमित्तभूतं गुणयोगमेव दर्शयितुमाह—यमिति ।

६ श्रीधरीव्याख्या ।

साध्येष्टाख्यकर्मत्यागी, न चाक्रियोऽनग्निसाध्यपूर्ताख्यकर्मत्यागी च ॥ १ ॥ कुत इत्यपेक्षायां कर्मयोगस्यैव संन्यासत्वं संपादयन्नाह—यमिति । यं संन्यासमिति प्राहुः प्रकर्षेण श्रेष्ठत्वेनाहुः 'संन्यास एवात्यरेचयत्' इत्यादिश्रुतेः केवलात्फलसंन्यसनाद्धेतोः योगमेव तं

७ अभिनवगुप्ताचार्यव्याख्या ।

योगीति पर्यायावेतौ । अतएवाह—यं संन्यासमिति । तथाच योगमन्तरेण संन्यासो नोपपद्यते । एवं संकल्पसंन्यासंविना योगो न युज्यते ।

१ श्रीमच्छांकरभाष्यम् ।

श्रुतिस्मृतिविदो, योगं कर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि जानीहि हे पाण्डव । कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसंन्यासेन कीदृशं सामान्यमङ्गीकृत्य तद्भाव उच्यत इत्यपेक्षायामिदमुच्यते । अस्ति परमार्थसंन्यासेन सादृश्यं कर्तृद्वारकं कर्मयोगस्य । यो हि परमार्थसंन्यासी स त्यक्तसर्वकर्मसाधनतया सर्वकर्मतत्फलविषयं संकल्पं प्रवृत्तिहेतुकामकारणं संन्यस्यति । अयमपि कर्मयोगी कर्म कुर्वाण एव फलविषयं संकल्पं संन्यस्यतीत्येतमर्थं दर्शयन्नाह । न हि यस्मादसंन्यस्तसंकल्पोऽसंन्यस्तोऽपरित्यक्तः फलविषयसंकल्पोऽभिसंधिर्येन सोऽसंन्यस्तसंकल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान्भवति । न संभवतीत्यर्थः । फलसंकल्पस्य चित्तविक्षेपहेतुत्वात् । तस्माद्यः कश्चन कर्मी स संन्यस्तफलसंकल्पो भवेत्स योगी समाधानवानविक्षिप्त-

२ आनन्दगिरिव्याख्या ।

योगित्वं कर्मिणोऽपि युक्तं संन्यासित्वं तु तस्य विरुद्धमिति शङ्कमानं प्रत्युक्तेऽर्थे श्लोकमवतारयति—**इत्येतमिति** । परमार्थसंन्यासं प्राहुरिति संबन्धः । इतीत्थं संन्यासस्य प्रामाणिकाभ्युपगतत्वादितीतिशब्दो योज्यः । योगं फलतृष्णां परित्यज्य समाहितचेतस्तयेति शेषः । यदुक्तं संन्यासित्वं योगित्वं च गृहस्थस्य गौणमिति तदुत्तरार्धयोजनया प्रकटयितुमुत्तरार्धमुत्थापयति—**कर्मयोगस्येति** । कर्मयोगस्य परमार्थसंन्यासेन कर्तृद्वारकं साम्यमुक्तं व्यक्तीकरोति—**यो हीति** । त्यक्तानि सर्वाणि कर्माणि साधनानि च येन स तथोक्तस्तस्य भावस्तत्ता तया सर्वकर्मविषयं तत्फलविषयं च संकल्पं त्यजतीत्यर्थः । संकल्पत्यागे तत्कार्यकामत्यागस्तत्यागे तज्जन्यप्रवृत्तित्यागश्च सिध्यतीत्यभिसंधाय विशिनष्टि—**प्रवृत्तीति** । कर्मिण्यपि यथोक्तसंकल्पसंन्यासित्वमस्तीत्याह—**अयमपीति** । तदपरित्यागे व्याकुलचेतस्तया कर्मानुष्ठानस्यैव दुःशकत्वादित्यर्थः । उक्तमेव साम्यं व्यक्तीकुर्वन्व्यतिरेकं दर्शयति—**इत्येतमिति** । फलसंकल्पापरित्यागे किमिति समाधानवत्त्वाभावस्तत्राह—**फलेति** । व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेनोपसंहरति—**तस्मादिति** । हिशब्दार्थस्य यस्मादित्युक्तस्य तस्मादित्यनेन संबन्धः । कर्मिणं प्रति यथोक्तविधौ हेतुहेतुमद्भावमभिप्रेत्य द्वितीयविधौ हेतुमाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्यक्तसर्वसंकल्पः स संन्यासी तादृशश्च ध्यानयोगी अतो न तयोर्भेदः । 'निःसंकल्पस्तटस्थस्तिष्ठेदेतन्मोक्षलक्षणम्' इति मैत्रायणीयोपनिषच्छ्रुतस्य मोक्षलक्षणस्य निःसंकल्पत्वस्योभयत्रापि तुल्यत्वात् । अतोऽयमपि कर्मयोगी

४ मधुसूदनीव्याख्या ।

परित्यागं संन्यासमिति प्राहुः श्रुतयः 'संन्यास एवात्यरेचयत्' इति, 'ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इत्याद्याः । योगं फलतृष्णाकर्तृत्वाभिमानयोः परित्यागेन विहितकर्मानुष्ठानं तं संन्यासं विद्धि । हे पाण्डव, अब्रह्मदत्तं ब्रह्मदत्तमित्याह तं वयं मन्यामहे ब्रह्मदत्तसदृशोऽयमिति न्यायात्परशब्दः परत्र प्रयुज्यमानः सादृश्यं बोधयति गौण्या वृत्त्या तद्भावारोपेण वा । प्रकृते तु किं सादृश्यमिति तदाह—**नहीति** । हि यस्मादसंन्यस्तसंकल्पोऽत्यक्तफलसंकल्पः कश्चन कश्चिदपि योगी न भवति, अपितु सर्वो योगी त्यक्तफलसंकल्प एव भवतीति फलत्यागसाम्यात्तृष्णारूपचित्तवृत्तिनिरोधसाम्याच्च गौण्या वृत्त्या कर्म्यैव संन्यासी च योगी च भवतीत्यर्थः । तथाहि 'योगश्चित्तवृत्तिनिरोधः', प्रमाणविपर्ययविकल्पनिद्रास्मृतय इति वृत्तयः पञ्चविधाः । तत्र प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्यभावाख्यानि प्रमाणानि षडिति वैदिकाः । प्रत्यक्षानुमानागमाः प्रमाणानि त्रीणीति योगाः । अन्तर्भावबहिर्भावाभ्यां संकोचविकासौ

५ भाष्योत्कर्षदीपिका ।

यं सर्वकर्मतत्फलत्यागलक्षणं परमार्थसंन्यासं श्रुतिस्मृतीतिहासपुराणानि प्राहुः योगं फलाभिसंधिरहितकर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि फलविषयसंकल्पत्यागरूपगुणयोगाज्जानीहि । यथा भवान् वस्तुत इन्द्रसुतोऽपि पाण्डुक्षेत्रे जातत्वात्पाण्डव इति लोकैरुच्यते तथेतिगूढाभिप्रायेण संबोधयति—**हे पाण्डवेति** । गुणयोगमेवाह । हि यस्मादसंन्यस्तसंकल्पः अत्यक्तफलाभिसंधिः कश्चन कश्चिदपि कर्मयोगी समाधानवान् न भवति, संन्यस्तसंकल्प एव योगी भवतीत्यर्थः । चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः । योगाङ्गत्वेन कर्मानुष्ठानात् कर्मफलसंकल्पस्य च चित्तविक्षेपहेतोः परित्यागात् योगित्वं संन्यासित्वं चोच्यते । यत्त्वपरे एवं कर्मयोगसंन्यासयोर्भेदमङ्गीकृत्याविरोधेन स्तुतिरुक्ता । इदानीं तयोरैक्येनैव स्तुतिमारभते—**यमिति** । इत्यतस्तं योगं कर्मयोगं

६ श्रीधरीव्याख्या ।

जानीहि । कुत इत्यपेक्षायामितिशब्दोक्तो हेतुर्योगेऽप्यस्तीत्याह—**नहीति** । न संन्यस्तः फलसंकल्पो येन सः कर्मनिष्ठो ज्ञाननिष्ठो वा

७ अभिनवगुप्ताचार्यव्याख्या ।

तस्मात्सदा सिद्धसंबन्धौ योगसंन्यासौ । न निरग्निरित्यादिनायमर्थो व्यज्यते । निरग्निश्च न भवति निष्क्रियश्च न भवतीति । अथच संन्यासी

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

चित्तो भवेच्चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः । एवं परमार्थसंन्यासकर्मयोगयोः कर्तृद्वारकं संन्याससामान्यमपेक्ष्य 'यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव' इति कर्मयोगस्य स्तुत्यर्थं संन्यासत्वमुक्तम् ॥ २ ॥ ध्यानयोगस्य फलनिरपेक्षः कर्मयोगो बहिरङ्गं साधनमिति तं संन्यासत्वेन स्तुत्वाधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति—आरुरुक्षोरिति । आरुरुक्षोरारोढुमिच्छतोऽनारूढस्य ध्यानयोगेऽवस्थातुमशक्तस्यैवेत्यर्थः । कस्यारुरुक्षोर्मुनेः कर्मफलसंन्यासिन इत्यर्थः । किमारुरुक्षोर्योगं कर्म कारणं साधनमुच्यते, योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधनमुच्यत इत्यर्थः । यावद्यावत्कर्मभ्य उपरमते तावत्ताव-

२ आनन्दगिरिव्याख्या ।

चित्तविक्षेपेति । पूर्वश्लोके पूर्वोत्तरार्धाभ्यामुक्तमनुवदति—एवमिति ॥ २ ॥ परमार्थसंन्यासस्य कर्मयोगान्तर्भावे कर्मयोगस्यैव सदा कर्तव्यत्वमापद्येत तेनेतरस्यापि कृतत्वसिद्धेरित्याशङ्कोक्तानुवादपूर्वकमुत्तरश्लोकतात्पर्यमाह—ध्यानयोगस्येति । भाविन्या वृत्त्या मुनेर्योगमारोढुमिच्छोरिष्यमाणस्य योगारोहणस्य कर्म हेतुश्चेदपेक्षितं योगमारूढस्यापि तत्फलप्राप्तौ तदेव कारणं भविष्यति तस्य कारणत्वे क्लृप्तशक्तित्वादित्याशङ्क्याह—योगारूढस्येति । अनारूढस्येत्येतस्यैवार्थं स्फुटयति—ध्यानेति । मुनित्वं कर्मफलसंन्यासिन्यौपचारिकमित्याह—कर्मफलेति । साधनं चित्तशुद्धिद्वारा ध्यानयोगप्राप्तीच्छायामिति शेषः । तस्येति प्रकृतस्य कर्मिणो ग्रहणम् । एवकारो भिन्नक्रमः शमशब्देन संबध्यते । कस्यान्ययोगव्यवच्छेदेन शमो हेतुरिति तत्राह—योगारूढत्वस्येति । सर्वव्यापारोपरमरूपोपशमस्य योगारूढत्वे कारणत्वं

३ नीलकण्ठव्याख्या ( चतुर्धरी )[1] ।

फलसंकल्पत्यागान्निःसंकल्पत्वसाम्यात्संन्यासी योगी च भवतीति स्तूयत इत्यर्थः । योगाधिकारसिद्धये निष्कामकर्माण्यनुष्ठेयानीति श्लोकद्वयतात्पर्यार्थः ॥ २ ॥ तत्र कर्मानुष्ठानस्यावधिमाह—आरुरुक्षोरिति । यावद्धि योगं

४ मधुसूदनीव्याख्या ।

द्रष्टव्यौ । अतएव तार्किकादीनां मतभेदाः । विपर्ययो मिथ्याज्ञानं तस्य पञ्च भेदा अविद्याऽस्मितारागद्वेषाभिनिवेशाः । तएव च क्लेशाः । शब्दज्ञानानुपाती वस्तुशून्योऽवभासो विकल्पः, प्रमाभ्रमविलक्षणोऽसदर्थव्यवहारः शशविषाणमसत्पुरुषस्य चैतन्यमित्यादिः । अभावप्रत्ययालम्बना वृत्तिर्निद्रा, चतसृणां वृत्तीनामभावस्य प्रत्ययः कारणं तमोगुणस्तदालम्बना वृत्तिरेव निद्रा न तु ज्ञानाद्यभावमात्रमित्यर्थः । अनुभूतविषयासंप्रमोषः प्रत्ययः स्मृतिः, पूर्वानुभवसंस्कारजं ज्ञानमित्यर्थः । सर्ववृत्तिजन्यत्वादन्ते कथनम् । लज्जादिवृत्तीनामपि पञ्चस्वेवान्तर्भावो द्रष्टव्यः । एतादृशां सर्वासां चित्तवृत्तीनां निरोधो योग इति च समाधिरिति च कथ्यते । फलसंकल्पस्तु रागाख्यस्तृतीयो विपर्ययभेदस्तन्निरोधमात्रमपि गौण्या वृत्त्या योग इति संन्यास इति चोच्यत इति न विरोधः ॥ २ ॥ तत्किं प्रशस्तत्वात्कर्मयोग एव यावज्जीवमनुष्ठेय इति, नेत्याह—योगमन्तःकरण-

५ भाष्योत्कर्षदीपिका ।

विद्धि यं संन्यासं प्रकर्षेणाहुः । प्रकर्षस्तु कर्मस्वरूपत्यागोऽलसस्यापि संभाव्यते । कर्मानुतिष्ठतः फलसंकल्पत्यागस्तु दुर्लभतर इत्येवंलक्षणो ज्ञेयः । अतः कुत इत्यत उक्तम् । हि यस्मात्कश्चन योगी कर्मयोगी ज्ञानयोगी वाऽसंन्यस्तसंकल्पो न भवति संन्यस्तसंकल्प एव योगितां प्रतिपद्यत इति भावः । अतस्तयोः स्त्रीयस्त्रीयस्वरूपवदन्योन्यव्यभिचाराभावादैक्यान्न विरोध इति भाव इति तन्मन्दम् । संन्यासनिष्कामकर्मयोगयोरैक्येनैव स्तुतिमारभत इत्युत्थानिकया तं कर्मयोगं विद्धि यं संन्यासमित्यादिव्याख्यानस्य संन्यासापेक्षया कर्मयोगप्रकर्षबोधकस्य विरोधात् । किंच संन्यासकर्मयोगयोः सिंहमाणवकयोरिवैक्यं न संभवति किंतु माणवके सिंहशब्दप्रयोग इव निष्कामकर्मयोगे संन्यासशब्दप्रयोगो गौण एवेति दिक् ॥ २ ॥ किं प्रशस्तत्वाद्यावज्जीवं कर्मयोग एवानुष्ठेय इत्याशङ्कायां ध्यानयोगाधिकारसंपत्तिपर्यन्तमवधिमभिप्रेत्य कर्मयोगस्य ध्यानयोगसाधनत्वप्रदर्शनेन उत्तरमाह—आरुरुक्षोरिति । योगं ध्यानयोगमारुरुक्षोरारोढुमिच्छोर्ध्यानयोगेऽवस्थातुमसमर्थस्य । यत्तु योगं ज्ञानयोगमिति तन्न । ध्यानयोगस्यैव प्रक्रा-

६ श्रीधरीव्याख्या ।

कश्चिदपि न हि योगी भवति । अतः फलसंकल्पत्यागसाम्यात्संन्यासात्संन्यासी च, फलसंकल्पत्यागादेव चित्तविक्षेपाभावाद्योगी च भवत्येव स इत्यर्थः ॥ २ ॥ तर्हि यावज्जीवं कर्मयोग एव प्राप्त इत्याशङ्क्य तस्यावधिमाह—आरुरुक्षोरिति । ज्ञानयोगमारोढुं प्राप्तु-

७ अभिनवगुप्ताचार्यव्याख्या ।

त्यद्भुतम् ॥ १ ॥ २ ॥ यद्यपि हतमसिंहासनं राज्यमिति युक्त्या केवलस्य निष्क्रियस्य संन्यासित्वं नोपपद्यत इत्युक्तं तथापि आरुरुक्षोरिति ।

---

१ नीलकण्ठः.

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते, तथा सति स झटिति योगारूढो भवति । तथाचोक्तं व्यासेन 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः' इति ॥ ३ ॥ अथेदानीं कदा योगारूढो भवतीत्युच्यते—यदेति । यदा**

२ आनन्दगिरिव्याख्या ।

विवृणोति—**यावद्यावदिति** । सर्वकर्मनिवृत्तावायासाभावाद्वशीकृतस्येन्द्रियग्रामस्य चित्तसमाधाने योगारूढत्वं सिध्यतीत्यर्थः । सर्वकर्मोपरमस्य पुरुषार्थसाधनत्वे पौराणिकीं संमतिमाह—**तथाचेति** । एकता सर्वेषु भूतेषु वस्तुतो द्वैताभावोपलक्षितत्वमिति प्रतिपत्तिः । समता तेष्वेवौपाधिकविशेषेऽपि स्वतो निर्विशेषत्वधीः । सत्यता तेषामेव हितवचनम् । शीलं स्वभावसंपत्तिः । स्थितिः स्थैर्यम् । दण्डनिधानमहिंसनम् । आर्जवमवक्रत्वम् । क्रियाभ्यः सर्वाभ्यः सकाशादुपरतिश्चेत्येतदुक्तं सर्वं यथा यादृशमेतादृशं नान्यद्ब्राह्मणस्य वित्तं पुमर्थसाधनमस्ति तस्मादेतदेवास्य निरतिशयं पुरुषार्थसाधनमित्यर्थः ॥ ३ ॥ योगप्राप्तौ कारणकथनानन्तरं तत्प्राप्तिकालं दर्शयितुं श्लोकान्तरमवतारयति—**अथेति** । समाधानावस्था यदेत्युच्यते । अतएवोक्तं समाधीयमानचित्तो योगीति । शब्दादिषु कर्मसु चानुषङ्गस्य योगारोहण-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यमनियमाद्यष्टाङ्गोपेतमत्यौत्कण्ठ्यादारोढुमिच्छति तावत्कर्माण्यनुतिष्ठेत् । तस्यारुरुक्षोर्मुनेरारुरुक्षाकारणं तीव्रवैराग्योत्पादनद्वारा कर्म भवति । तस्यैव योगारूढस्य योगाङ्गानुष्ठाने प्रवृत्तस्य विक्षेपासहस्य योगारोहे कर्मणां शमः संन्यासः कारणमुच्यते । नहि कर्मसु व्यापृतोऽनन्यचित्ततया योगमनुष्ठातुमीष्टे ॥ ३ ॥ ननु योगपदेन मुख्यया वृत्त्या निर्बीजः समाधिरुच्यते तमारूढस्य कर्मणां त्यागः स्वतःसिद्धत्वादविधेय इत्याशङ्क्य प्रकृते योगारूढपदस्यार्थमाह—**यदाहीति** । इन्द्रियार्थेषु शब्दादिषु रमणीयेषु कर्मसु च तत्प्राप्तिसाधनेषु तद्दर्शनमनु न सज्जते वैराग्यदार्ढ्यात्सक्तो न

४ मधुसूदनीव्याख्या ।

शुद्धिरूपं वैराग्यमारुरुक्षोरारोढुमिच्छोर्न त्वारूढस्य मुनेर्भविष्यतः कर्मफलतृष्णात्यागिनः कर्म शास्त्रविहितमग्निहोत्रादि नित्यं भगवदर्पणबुद्ध्या कृतं कारणं योगारोहणे साधनमनुष्ठेयमुच्यते वेदमुखेन मया । योगारूढस्य योगमन्तःकरणशुद्धिरूपं वैराग्यं प्राप्तवतस्तु तस्यैव पूर्वं कर्मिणोऽपि सतः शमः सर्वकर्मसंन्यासएव कारणमनुष्ठेयतया ज्ञानपरिपाकसाधनमुच्यते ॥ ३ ॥ कदा योगारूढो भवतीत्युच्यते—यदा यस्मिंश्चित्तसमाधानकाल इन्द्रियार्थेषु शब्दादिषु कर्मसु च नित्यनैमित्तिककाम्यलौकिकप्रतिषिद्धेषु नानुषजते तेषां मिथ्यात्वदर्शनेनात्मनोऽकर्त्रभोक्तृपरमानन्दाद्वयस्वरूपदर्शनेन च प्रयोजनाभावबुद्ध्या-

५ भाष्योत्कर्षदीपिका ।

न्तत्वात् । कस्यारुरुक्षोः मुनेः । कर्मफलसंन्यासिन इत्यर्थः । यत्तु मुनेर्निदिध्यासनाख्यज्ञानयोगवतः श्रवणमननक्रमेण योगमारुरुक्षोरिति तन्न । निदिध्यासनवतः पुनः श्रवणमननक्रमस्यानपेक्षणात् तयोर्निदिध्यासनार्थत्वात् । कर्मफलाभिसंधिरहितं कारणं साधनमुच्यते । तस्यैव पूर्वं कर्मिणः पश्चाद्योगारूढस्य प्राप्तध्यानयोगस्य शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढताया आत्मसाक्षात्कारनिर्विकल्पसमाधिपर्यन्तायाः साधनमुच्यते । एतेन योगमन्तःकरणशुद्धिरूपं वैराग्यं आरुरुक्षोर्नत्वारूढस्य मुनेर्भविष्यतः कर्मफलतृष्णात्यागिनः कर्म कारणं योगारोहणे साधनमनुष्ठेयमुच्यते । योगारूढस्य योगं पूर्वोक्तं प्राप्तवतस्तु तस्यैव शमः सर्वकर्मसंन्यास एव कारणमनुष्ठेयतया ज्ञानपरिपाकसाधनमुच्यत इति प्रत्युक्तम् । ध्यानयोगस्यैवास्मिन्नध्याये वर्णनीयत्वेन तत्पक्षे श्लोकस्य सम्यगुपपत्त्या वर्णनीयार्थम् । श्रौतं विहायाश्रौतार्थवर्णनस्यानुचितत्वात् । 'योगसूत्रं त्रिभिः श्लोकैः पञ्चमान्ते यदीरितम् । षष्ठ आरभ्यतेऽध्यायस्तद्व्याख्यानाय विस्तरात् ॥' तत्र सर्वकर्मत्यागेन योगं विधास्यंस्त्याज्यत्वेन हीनत्वमाशङ्क्य कर्मयोगं द्वाभ्यां स्तुतवानिति स्वपूर्वग्रन्थादप्यस्मिन् तृतीयश्लोके ध्यानयोगविधानवर्णनस्यावश्यकत्वात् । कदा योगारूढो भवतीत्युच्यत इत्युत्तरश्लोकमवतार्य योगं समाधिमारूढो योगारूढ इत्युच्यत इति योगारूढशब्दार्थप्रदर्शनपरस्वग्रन्थतन्मूलविरोधाच्च ॥ ३ ॥ कदा योगारूढो भवतीत्यपेक्षायामाह—**यदेति** । एतेन कीदृशोऽसौ योगारूढः यस्य शमः कारणमुच्यत इत्यत्राह । कः पुनर्योगारूढ इत्यत

६ श्रीधरीव्याख्या ।

मिच्छोः पुंसस्तदारोहे कारणं कर्मोच्यते चित्तशुद्धिकरत्वात् । ज्ञानयोगमारूढस्य तु तस्यैव ज्ञाननिष्ठस्य शमः समाधिश्चित्तविक्षेपकर्मोपरमो ज्ञानपरिपाके कारणमुच्यते ॥ ३ ॥ कीदृशोऽसौ योगारूढः यस्य शमः कारणमुच्यत इत्यत्राह—**यदा हीति** । इन्द्रियार्थेषु

७ अभिनवगुप्ताचार्यव्याख्या ।

मुनेर्ज्ञानवतः कर्म करणीयं । कारणं प्रापकं । शमः प्राप्तभूमावनुपरमः । कारणमत्र लक्षणम् ॥ ३ ॥ एष एवार्थः प्रकाश्यते—यदाहीति ।

१ श्रीधरः. २ नीलकण्ठः. ३ नीलकण्ठः.

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः॥ ५॥

१ श्रीमच्छांकरभाष्यम्।

समाधीयमानचित्तो योगी हीन्द्रियार्थेष्विन्द्रियाणामर्थाः शब्दादयस्तेष्विन्द्रियार्थेषु कर्मसु च नित्यनैमित्तिककाम्यप्रतिषिद्धेषु प्रयोजनाभावबुद्ध्या नानुषज्जतेऽनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः। सर्वसंकल्पसंन्यासी सर्वान्संकल्पानिहामुत्रार्थकामहेतून्संन्यसितुं शीलमस्येति स सर्वसंकल्पसंन्यासी योगारूढः प्राप्तयोग इत्येतत्तदा तस्मिन्काल उच्यते। सर्वसंकल्पसंन्यासीति वचनात्सर्वांश्च कामान्सर्वाणि च कर्माणि संन्यसेदित्यर्थः। संकल्पमूला हि सर्वे कामाः 'संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः'। 'काम जानामि ते मूलं संकल्पात्त्वं हि जायसे। न त्वां संकल्पयिष्यामि तेन मे न भवष्यसि' इत्यादिस्मृतेः। सर्वकामपरित्यागे च सर्वकर्मसंन्यासः सिद्धो भवति, 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते' इत्यादिश्रुतिभ्यो 'यद्यद्धि कुरुते कर्म तत्तत्कामस्य चेष्टितम्' इत्यादिस्मृतिभ्यश्च न्यायाच्च। नहि सर्वसंकल्पसंन्यासे कश्चित्स्पन्दितुमपि शक्तः तस्मात्सर्वसंकल्पसंन्यासीति वचनात्सर्वान्कामान्सर्वाणि कर्माणि च त्याजयति भगवान्॥ ४॥ यदैवं योगारूढस्तदा तेनात्मात्मनोद्धृतो भवति संसारादनर्थव्रातात्, अतः उद्धरेत्संसारसागरे निमग्नमात्मनात्मानं तत उद्धर्वं हरेदुद्धरेत्।

२ आनन्दगिरिव्याख्या।

प्रतिबन्धकत्वात्तदभावस्य तदुपायत्वं प्रसिद्धमिति द्योतयितुं हीत्युक्तम्। सर्वेषामपि संकल्पानां योगारोहणप्रतिबन्धकत्वमभिप्रेत्य सर्वसंकल्पसंन्यासीत्यत्र विवक्षितमर्थमाह—**सर्वानिति**। सर्वसंकल्पसंन्यासेऽपि सर्वेषां कामानां कर्मणां च प्रतिबन्धकत्वसंभवे कुतो योगप्राप्तिरित्याशङ्क्याह—**सर्वेति**। सर्वसंकल्पपरित्यागे यथोक्तविध्यनुष्ठानमयत्नसिद्धमिति मन्वानः सन्नाह—**संकल्पेति**। मूलोन्मूलने च तत्कार्यनिवृत्तिरयत्नसुलभेति भावः। तत्र प्रमाणमाह—**संकल्पमूल इति**। तत्रान्वयव्यतिरेकावभिप्रेत्योक्तमुपपादयति—**कामेति**। सर्वसंकल्पाभावे कामाभाववत्कर्माभावस्य सिद्धत्वेऽपि कर्मणां कामकार्यत्वात्तन्निवृत्तिप्रयुक्तामपि निवृत्तिमुपन्यस्यति—**सर्वकामेति**। यदुक्तं कर्मणां कामकार्यत्वं तत्र श्रुतिस्मृती प्रमाणयति—**स यथेति**। स पुरुषः स्वरूपमजानन्यत्फलकामो भवति तत्साधनमनुष्ठेयतया बुद्धौ धारयतीति तत्क्रतुर्भवति यच्चानुष्ठेयतया गृह्णाति तदेव कर्म बहिरपि करोतीति कामाधीनं कर्मोक्तमिति श्रुत्यर्थः। कामजन्यं कर्मेत्यन्वयव्यतिरेकसिद्धमिति द्योतयितुं स्मृतौ हिशब्दः। न्यायमेव दर्शयति—**नहि सर्वसंकल्पेति**। स्वापादावदर्शनादित्यर्थः। नित्यनैमित्तिककर्मानुष्ठानं दूरनिरस्तमिति वक्तुमपिशब्दः। श्रुतिस्मृतिन्यायसिद्धमर्थमुपसंहरति—**तस्मादिति**॥ ४॥ योगारूढस्य किं स्यादित्याशङ्क्याह—**यदैवमिति**। योगारोहस्य दृष्टादृष्टोपायैरवश्य-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

भवति। नापि मनसा इदं मे भूयादेतदर्थमहमिदं कर्म कुर्यामिति संकल्पयति। तादृशश्च सर्वसंकल्पसंन्यासी यदा भवति तदा योगारूढ इत्युच्यते। यथा तीव्रबुभुक्षयोपेतोऽन्यत्र नीरागो व्यासङ्गान्तरं त्यक्त्वा भोजनारूढ एव भवति तथा तीव्रारुरुक्षावान् सर्वत्र वीतरागस्त्यक्तसर्वकर्मा योगारूढ एव भवति। तावत्कर्माणि कर्तव्यानि ततः परं त्याज्यानीत्यर्थः॥ ४॥ **उद्धरेदिति**। एवं क्रमेण कर्मद्वारा चित्तशुद्धिं संपाद्य योगारूढोऽभ्यासवैराग्यबलेना-

४ मधुसूदनीव्याख्या।

ऽहमेतेषां कर्ता ममैते भोग्या इत्यभिनिवेशरूपमनुषङ्गं न करोति हि यस्मात्तस्मात्सर्वसंकल्पसंन्यासी सर्वेषां संकल्पानामिदं मया कर्तव्यमेतत्फलं भोक्तव्यमित्येवंरूपाणां मनोवृत्तिविशेषाणां तद्विषयाणां च कामानां तत्साधनानां च कर्मणां त्यागशीलः, तदा शब्दादिषु कर्मसु चानुषङ्गस्य तद्धेतोश्च संकल्पस्य योगारोहणप्रतिबन्धकस्याभावाद्योगं समाधिमारूढो योगारूढ इत्युच्यते॥ ४॥

५ भाष्योत्कर्षदीपिका।

उच्यत इत्यापातनिकाद्वयमपि प्रत्युक्तं यदातदापदयोः प्रत्यक्षमुपलब्धेर्भाष्योक्तापातनिकाया एव युक्तत्वाद्यदा यस्मिन्काले समाधीयमानचित्तो योगी इन्द्रियार्थेषु विषयेषु शब्दादिषु कर्मसु च नित्यादिषु प्रयोजनाभावबुद्ध्या नानुषज्जते। अनुषङ्गकर्तृत्वादिबुद्धिं न करोतीत्यर्थः। यतः सर्वान् संकल्पान् विषयविषयकमनोवृत्तिभेदान् कामान् सर्वाणि कर्माणि चेति सर्वसंकल्पान् इहामुत्रार्थकामहेतून् संन्यसितुं शीलमस्येति सर्वसंकल्पसंन्यासी तदा योगारूढः प्राप्तसमाधिरुच्यते॥ ४॥ यदैवं योगारूढस्तदा तेनात्मना-

६ श्रीधरीव्याख्या।

इन्द्रियभोग्येषु शब्दादिषु तत्साधनेषु च कर्मसु यदा नानुषज्जते आसक्तिं न करोति। तत्र हेतुः—आसक्तिमूलभूतान्सर्वान्भोगविषयान्कर्मविषयांश्च संकल्पान्संन्यसितुं त्यक्तुं शीलं यस्य सः। तदा योगारूढ उच्यते॥ ४॥ अतो विषयासक्तित्यागे मोक्षं तदासक्तौ च

१ श्रीमच्छांकरभाष्यम् ।

**योगारूढतामापादयेदित्यर्थः । नात्मानमवसादयेन्नाधो नयेन्नाधो गमयेत् । आत्मैव हि यस्मादात्मनो बन्धुः । नह्यन्यः कश्चिद्बन्धुर्यः संसारमुक्तये भवति । बन्धुरपि तावन्मोक्षं प्रति प्रतिकूल एव स्नेहादिबन्धनायतनत्वात् । तस्माद्युक्तमवधारणमात्मैव ह्यात्मनो बन्धुरिति । आत्मैव रिपुः शत्रुर्योऽन्योऽप-**

२ आनन्दगिरिव्याख्या ।

कर्तव्यतायै मुक्तिहेतुत्वं तद्विपर्ययस्याधःपतनहेतुत्वं च दर्शयति—**अत इति** । तत्र हेतुमाह—**आत्मैव हीति** । उद्धरणापेक्षामात्मनः सूचयति—**संसारेति** । संसारादूर्ध्वं हरणं कीदृगित्याशङ्क्याह—**योगारूढतामिति** । योगप्राप्त्यवनास्था तु न कर्तव्येत्याह—**नात्मानमिति** । योगप्राप्त्युपायश्चेन्नानुष्ठीयते तदा योगाभावे संसारपरिहारासंभवादात्माधो नीतः स्यादित्यर्थः । नन्वात्मानं संसारे निमग्नं तदीयो बन्धुस्तस्मादुद्धरिष्यति, नेत्याह—**आत्मैव हीति** । कुतोऽवधारणमन्यस्यापि प्रसिद्धस्य बन्धोः संभवात्तत्राह—**नहीति** । अन्यो बन्धुः सन्नपि संसारमुक्तये न भवतीत्येतदुपपादयति—**बन्धुरपीति** । स्नेहादीत्यादिशब्दात्तदनुगुणप्रवृत्तिविषयत्वं गृह्यते । आत्मातिरिक्तस्यापि शत्रोरपकारिणः सुप्रसिद्धत्वादवधारणमनुचितमित्याशङ्क्याह—**योऽन्य इति** ॥ ५ ॥ उक्तमनूद्य प्रश्नपूर्वकं श्लोकान्तर-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्मानमुद्धरेत् । हि यस्मादात्मैवात्मनो बन्धुर्न पुत्राद्य उद्धर्तुं क्षमाः । आत्मैव रिपुरात्मनः नत्वन्ये शत्रवः संसारे

४ मधुसूदनीव्याख्या ।

यो यदैवं योगारूढो भवति तदा तेनात्मनैवात्मोद्धृतो भवति संसारानर्थव्रातात्, अतः—आत्मना विवेकयुक्तेन मनसा आत्मानं स्वं जीवं संसारसमुद्रे निमग्नं तत् उद्धरेत्—उत् ऊर्ध्वं हरेत् । विषयासङ्गपरित्यागेन योगारूढतामापादयेदित्यर्थः । ननु विषयासङ्गेनात्मानमवसादयेत्संसारसमुद्रे मज्जयेत् । हि यस्मादात्मैवात्मनो बन्धुर्हितकारी संसारबन्धनान्मोचनहेतुर्नान्यः कश्चित् । लौकिकस्य बन्धोरपि स्नेहानुबन्धेन बन्धहेतुत्वात् । आत्मैव नान्यः कश्चित्, रिपुः शत्रुरहितकारिविषयबन्धनागारप्रवेशात्कोशकार

५ भाष्योत्कर्षदीपिका ।

त्मोद्धृतो भवति संसारानर्थसमूहात्, अतः संसारार्णवे निमग्नमात्मानमात्मनोद्धरेत् तत ऊर्ध्वं नयेद्योगारूढतामापादयेत् । आत्मानं नावसादयेन्नाधो नयेत् । हि यस्मादात्मैव बन्धुः संसारान्मोचको नान्यः कश्चन पुत्रादिः, प्रत्युत मोक्षं प्रति प्रतिकूलएव स्नेहादिबन्धनायतनत्वात् । 'बन्धवो दृढबन्धन'मित्युक्तत्वात् तथात्मैवात्मनो रिपुः नान्यो बाह्योऽपकारी । तस्यात्मप्रयुक्तत्वात् । तस्माद्युक्तमेवोभयत्रावधारणम् । आत्मैव बन्धुरात्मैव रिपुरात्मन इत्युक्तं तत्र किंलक्षण आत्मात्मनो बन्धुरात्मात्मनो रिपुश्चेति तत्राह—बन्धुरिति । तस्यात्मनः स आत्मा बन्धुः येनात्मना आत्मैव कार्यकरणसंघात एव जितः वशीकृतः श्रेयोऽभिमुखः जितेन्द्रिय इत्यर्थः । अनात्मनः अजितात्मनस्त्वजितकार्यकरणसंघातस्यात्मैव स्वयमेव शत्रुत्वे शत्रुभावे वर्तेत शत्रुवत् । यथात्मेतर आत्मनोपकारी तथात्मात्मनोपकारे वर्तेतेत्यर्थः । तथा चैतदनुरोधात्पुनःपुनरात्मशब्दस्वारस्याचोद्धरेदात्मनात्मानमित्यत्रापि स्वं स्वेनैवोद्धरेत् । हि यस्मात्स्वयमेव स्वस्य बन्धुः स्वयमेव स्वस्य शत्रुरित्यर्थः । एतेनात्मना विवेकयुक्तेन मनसा आत्मानं स्वं जीवं आत्मैव विवेकयुक्तं मनएवात्मनः स्वस्य बन्धुः येनात्मैवात्मना विवेकयुक्तेन मनसा जितो नतु शास्त्रादिनेति प्रत्युक्तम् । यत्तु नन्विन्द्रियार्थेष्वनासक्तौ तस्य सर्वसंकल्पसंन्यासिनः किं प्रयोजनं तत्राह—**उद्धरेदिति** । अत्रोत्तरार्धस्थमात्मेतिपदं पूर्वार्धेऽनुषञ्जनीयम् । तथाचायं संबन्धः—आत्मा पूर्वपूर्वापरिमितजन्मोपार्जितपुण्यपुञ्जपूर्णमन्तःकरणं कर्तृ आत्मानं प्रत्यञ्चं कर्म अन्तःकरणापरपर्यायजडाशयनिमग्नतया सकलानर्थभाजनतां गतं आत्मना विवेकवैराग्यादिसंपन्नेनोद्धरेदुक्तजडाशयात्पृथक् कुर्यात् न स्वधर्मैः कर्तृत्वादिभिस्तिरस्कुर्यात् । यत आत्मानं स्वस्य स्वधर्माणां च सत्तायाः प्रत्यगधीनत्वात् स्वजीवनभूतम्, तथा चेदृशमुपकारं कुर्वत उद्धरणं तिरस्काराकरणं चोचितमेव । एवंच यदीन्द्रियार्थेषु सक्तः स्यात्तर्हि हविषा कृष्णवर्त्मेवेत्यादिन्यायेन कामानुपरमात् तत्क्रोधाद्युपस्थितौ न कदाचित्प्रतीचः संसारादुद्धारः स्यादिति युक्तएवेन्द्रियार्थेष्वनासक्त इत्याकूतम् । यद्वा आत्मा प्रत्यगात्मान्तर्यामी आत्मना विवेकादिसंपन्नेनान्तःकरणेन कर्तृत्वाद्यभिमानकलुषमन्तःकरणं उद्धरेत् कण्टकेनेव कण्टकं दूरेणोत्सादयेत् । कुतएवं कर्तव्यमत आह—**नात्मानमवसादयेदिति** । आत्मानं प्रत्यग्रूपं स्वं नावसादयेत् न विशीर्णं परमात्मनो विभक्तरूपं कुर्यादित्यर्थः । ननु तदेवमेकमन्तःकरणमात्मन उपकारकमपकारकं च कथं भवतीत्याशङ्क्य स्वभावसहकारिवशात् विषस्येव मरणजीवनहेतुतया भेदं पुनरुक्तात्मपदप्रयोगात्सूचयन्नाह । आत्मैवान्तःकरणमेव विवेकादिसंपन्नं आत्मनो जीवस्य बन्धुः बन्धध्वंसहेतुः, तथा विवेका-

६ श्रीधरीव्याख्या ।

बन्धं पर्यालोच्य रागादिस्वभावं त्यजेदित्याह—**उद्धरेदिति** । आत्मना विवेकयुक्तेनात्मानं संसारादुद्धरेन्नत्ववसादयेदधो न नयेत् । हि यस्मादात्मैव मनःसङ्गादुपरत आत्मनः स्वस्य बन्धुरुपकारकः रिपुरपकारकश्च ॥ ५ ॥ कथंभूतस्यात्मैव बन्धुः कथंभूतस्य चात्मैव रिपु-

७ अभिनवगुप्ताचार्यव्याख्या ।

इन्द्रियार्था विषयास्तदर्थानि च कर्माणि विषयार्जनादीनि ॥ ४ ॥ अस्यां च बुद्धाववश्यमेवावधेयमित्याह—उद्धरेदिति । बन्धुरात्मेति । अत्र

१ श्रीधरः. मधुसूदनः. नीलकण्ठः. २ कश्चित्.

१ श्रीमच्छांकरभाष्यम् ।

**सा निर्वाणपरमा तां निर्वाणपरमां मत्संस्थां मदधीनामधिगच्छति प्राप्नोति ॥ १५ ॥ इदानीं योगिन**

२ आनन्दगिरिव्याख्या ।

**मत्संस्थामिति । मदधीनां मदात्मिकामित्यर्थः ॥ १५ ॥ आहारादीत्यादिशब्देन विहारजागरितादि चोच्यते, आत्म-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मधिगच्छति प्राप्नोति । ख्यातिफलं च सूत्रकृता दर्शितं 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः' इति, 'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्' इति', 'सत्त्वपुरुषान्यताख्यातिमात्रात्सर्वज्ञातृत्वं सर्वभावाधिष्ठातृत्वं च' इति सूत्रत्रयेण । प्रसंख्याने ध्याने । अकुसीदस्य वणिज इव फलानिच्छोः सर्वथा विवेकख्यातिरेव भवति, तस्याश्च फलं धर्ममेघः समाधिः सच प्रागेव व्याख्यातः । तत् वैराग्यं परं परसंज्ञं पुरुषख्यातेः फलम् । तस्य लक्षणं गुणेषु दिव्यादिव्यविषयेषु वैतृष्ण्यम् । एतस्यैव हि नान्तरीयकं फलं कैवल्यमिति योगा वदन्ति । तृतीयसूत्रोक्तं फलं सार्वज्ञ्यादिकं तु अभिप्रेत्य श्रूयते 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इत्यादि-

४ मधुसूदनीव्याख्या ।

न्तःकरणतादात्म्याध्यासादन्तःकरणवृत्तिसारूप्यं प्राप्नुवन्नभोक्तापि भोक्तेव दुःखानां भवति । तदुक्तं 'वृत्तिसारूप्यमितरत्र' । इतरत्र वृत्तिप्रादुर्भावे । एतदेव विवृतं 'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्' चित्तमेव द्रष्टृदृश्योपरक्तं विषयिविषयनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनमपि चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते । तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः—'तदसंख्येयवासनाभिश्चित्तमपि परार्थं संहत्यकारित्वात्' । यस्य भोगापवर्गार्थं तत्स एव परश्चेतनोऽसंहतः पुरुषो नतु घटादिवत्संहत्यकारि चित्तं चेतनमित्यर्थः । एवंच 'विशेषदर्शिन आत्मभावभावनानिवृत्तिः' । एवं योऽन्तःकरणपुरुषयोर्विशेषदर्शी तस्य यान्तःकरणे प्रागविवेकवशादात्मभावनासीत्सा निवर्तते । भेददर्शने सत्यभेदभ्रमानुपपत्तेः । सत्त्वपुरुषयोर्विशेषदर्शनं च भगवदर्पितनिष्कामकर्मसाध्यम् । तल्लिङ्गं च योगभाष्ये दर्शितम्–'यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते, तथा मोक्षमार्गश्रवणेन सिद्धान्तरुचिवशाद्यस्य लोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्तितमित्यनुमीयते । यस्य तु तादृशं कर्मबीजं नास्ति तस्य मोक्षमार्गश्रवणे पूर्वपक्षयुक्तिषु रुचिर्भवत्यरुचिश्च सिद्धान्तयुक्तिषु । तस्य कोऽहमासं कथमहमासमित्यादिरात्मभावभावना स्वाभाविकी प्रवर्तते । सा तु विशेषदर्शिनो निवर्तत इति । एवं सति किं स्यादिति तदाह—'तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्' । निम्नं जलप्रवहणयोग्यो नीचदेशः । प्राग्भारस्तदयोग्य उच्चप्रदेशः । चित्तं च सर्वदा प्रवर्तमानवृत्तिप्रवाहेण प्रवहज्जलतुल्यं, तत्प्रागात्मानात्मविवेकरूपविमार्गवाहिविषयभोगपर्यन्तमस्यासीत् । अधुना त्वात्मानात्मविवेकमार्गवाहिकैवल्यपर्यन्तं संपद्यत इति । अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायास्ते सहेतुका निवर्तनीया इत्याह सूत्राभ्याम् 'तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः', 'हानमेषां क्लेशवदुक्तम्' । तस्मिन्विवेकवाहिनि चित्ते छिद्रेष्वन्तरालेषु प्रत्ययान्तराणि व्युत्थानरूपाण्यहंममेत्येवंरूपाणि व्युत्थानानुभवजेभ्यः संस्कारेभ्यः क्षीयमाणेभ्योऽपि प्रादुर्भवन्ति । एषां च संस्काराणां क्लेशानामिव हानमुक्तं, यथा क्लेशा अविद्यादयो ज्ञानाग्निना दग्धबीजभावा न पुनश्चित्तभूमौ प्ररोहं प्राप्नुवन्ति, तथा ज्ञानाग्निना दग्धबीजभावाः संस्काराः प्रत्ययान्तराणि न प्ररोढुमर्हन्ति । ज्ञानाग्निसंस्कारास्तु यावच्चित्तमनुशेरत इति । एवंच प्रत्ययान्तरानुदयेन विवेकवाहिनि चित्ते स्थिरीभूते सति 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः' प्रसंख्यानं सत्त्वपुरुषान्यताख्यातिः, शुद्धात्मज्ञानमिति यावत् । तत्र बुद्धेः सात्त्विके परिणामे कृतसंयमस्य सर्वेषां गुणपरिणामानां स्वामिवदाक्रमणं सर्वाधिष्ठातृत्वम्, तेषामेव च शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां यथावद्विवेकज्ञानं सर्वज्ञातृत्वं च विशोका नाम सिद्धिः फलं तद्वैराग्याच्च कैवल्यमुक्तं, 'सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च', 'तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्' इति सूत्राभ्याम् । तदेतदुच्यते तस्मिन्प्रसंख्याने सत्यप्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये सर्वप्रकारैर्विवेकख्यातेः परिपोषाद्धर्ममेघः समाधिर्भवति । 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इति स्मृतेः धर्मं प्रत्यग्ब्रह्मैक्यसाक्षात्कारं मेहति सिंचतीति धर्ममेघः, तत्त्वसाक्षात्कारहेतुरित्यर्थः । 'ततः क्लेशकर्मनिवृत्तिः' । ततो धर्ममेघात्समाधेर्धर्माद्वा क्लेशानां पञ्चविधानामविद्यास्मितारागद्वेषाभिनिवेशानां कर्मणां च रक्तकृष्णशुक्लभेदेन त्रिविधानामविद्यामूलानामविद्याक्षये बीजक्षयादात्यन्तिकी निवृत्तिः कैवल्यं भवति । कारणनिवृत्त्या कार्यनिवृत्तेरात्यन्तिक्या उचितत्वादित्यर्थः । एवं स्थिते 'युञ्जन्नेवं सदात्मानम्' इत्यनेन संप्रज्ञातः समाधिरेकाग्रभूमावुक्तः । नियतमानसः इत्यनेन तत्फलभूतोऽसंप्रज्ञातसमाधिर्निरोधभूमावुक्तः । शान्तिमिति निरोधसमाधिजसंस्कारफलभूता प्रशान्तवाहिता । निर्वाणपरमामिति धर्ममेघस्य

५ भाष्योत्कर्षदीपिका ।

'तमेव विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः । तर्हि मच्चित्तो युक्त आसीत मत्पर इति किमर्थमुक्तमित्याशङ्क्याह—मत्संस्थां मदधीनां योगेनाराधितान्मत्तः सा लभ्यत इत्यर्थः । तथाच वक्ष्यति 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

आहारादिनियम उच्यते—नात्यश्नत इति । नात्यश्नत आत्मसंमितमन्नपरिमाणमतीत्याश्नतोऽत्यश्नतो न योगोऽस्ति, न चैकान्तमनश्नतो योगोऽस्ति 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति, यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति' इति श्रुतेः । तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयात् । अथवा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति । उक्तं हि 'अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादि परिमाणम् । तथा नचातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन ॥१६॥

२ आनन्दगिरिव्याख्या ।

संमितमन्नपरिमाणमष्टग्रासादि । आहारनियमे शतपथश्रुतिं प्रमाणयति—यदु ह वा इति । तदन्नं भुज्यमानं यदु ह वा इति प्रसिद्ध्यानूदितमवति अनुष्ठानयोग्यतामापाद्यानुष्ठानद्वारेण भोक्तारं रक्षति न पुनस्तदन्नमस्यानर्थाय भवतीत्यर्थः । यत्पुनरात्मसंमिताद्भूयोऽधिकतरं शास्त्रमतिक्रम्य भुज्यते तदात्मानं हिनस्ति भोक्तुरनर्थाय भवति । यच्चान्नं कनीयोऽल्पतरं शास्त्रनिश्चयाभावादद्यते तदन्नमनुष्ठानयोग्यतादिद्वारा न रक्षितुं क्षमते । तस्मादत्यधिकमत्यल्पं चान्नं योगमारुरुक्षता त्याज्यमित्यर्थः । श्रुतिसिद्धमर्थं निगमयति—**तस्मादिति** । नेत्यादेर्व्याख्यानान्तरमाह—**अथवेति** । किं तदन्नपरिमाणं योगशास्त्रोक्तं यदधिकं न्यूनं वाभ्यवहरतो योगानुपपत्तिरित्याशङ्क्याह—**उक्तं हीति** । 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥' इति वाक्यमादिशब्दार्थः । यथा अत्यन्तमश्नतोऽनश्नतश्च योगो न संभवति तथात्यन्तं स्वपतो जाग्रतश्च न योगः संभवतीत्याह—**तथेति** ॥ १६ ॥ आहारनिद्रा-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

कम् ॥ १५ ॥ एवं योगाभ्यासनिष्ठस्याहारादिनियममाह द्वाभ्याम्—**नात्यश्नत इति** । एकान्तमतिशयेन । अति-

४ मधुसूदनीव्याख्या ।

समाधेस्तत्त्वज्ञानद्वारा कैवल्यहेतुत्वम् । मत्संस्थामित्यनेनौपनिषदभिमतं कैवल्यं दर्शितम् । यस्मादेवं महाफलो योगस्तस्मात्तं महता प्रयत्नेन संपादयेदित्यभिप्रायः ॥ १५ ॥ एवं योगाभ्यासनिष्ठस्याहारादिनियममाह द्वाभ्याम्—यद्भुक्तं सज्जीर्यति शरीरस्य च कार्यक्षमतां संपादयति तदात्मसंमितमन्नं तदतिक्रम्य लोभेनाधिकमश्नतो न योगोऽस्ति । अजीर्णदोषेण व्याधिपीडितत्वात् । नचैकान्तमनश्नतो योगोऽस्ति अनाहारादत्यल्पाहाराद्वा रसपोषणाभावेन शरीरस्य कार्याक्षमत्वात् । 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति' इति शतपथश्रुतेः । तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयादित्यर्थः । अथवा 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥' इत्यादियोगशास्त्रोक्तपरिमाणादधिकं न्यूनं वाश्नतो योगो न संपद्यत इत्यर्थः । तथातिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति । हे अर्जुन, सावधानो भवेत्यभिप्रायः । एकश्चकार उक्ताहारातिक्रमसमुच्चयार्थः । अपरोऽत्रानुक्तदोषसमुच्चयार्थः । यथा मार्कण्डेयपुराणे 'नाध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः । युञ्जीत योगं राजेन्द्र योगी सिद्ध्यर्थमात्मनः ॥ नातिशीते न चैवोष्णे

५ भाष्योत्कर्षदीपिका ।

ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥' इति । अधिगच्छति प्राप्नोति ॥१५॥ योगिन आहारादिनियमं वक्तुं प्रथमं व्यतिरेकमाह—**नेति** । अत्यश्नतः आत्मसंमितादन्नादधिकमश्नतः योगो नास्ति । नचैकान्तमात्मसंमितमप्यनश्नतो योगोऽस्ति । उभयथापि व्याध्यादिना नाशप्रसङ्गात् । तथाच शतपथश्रुतिः 'यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति इति' तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयात् । योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रं न्यूनं वाश्नतो योगिनो योगो नास्तीति वा व्याख्येयम् । तदुक्तम् 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥' इति । एतादृशस्य योग एव न सिध्यति । तेन दुःखरूपसमूलसंसारपङ्कहान्या शुद्धत्वाविर्भावस्तु दूरनिरस्त इति सूचयन्संबोधयति हे

६ श्रीधरीव्याख्या ।

मद्रूपेणावस्थितिम् ॥ १५ ॥ योगाभ्यासनिष्ठस्याहारादिनियममाह—**नेति** द्वाभ्याम् । अत्यन्तमधिकं भुञ्जानस्य । एकान्तमत्यन्तमभुञ्जानस्यापि योगः समाधिर्न भवति । तथातिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति ॥ १६ ॥ तर्हि कथंभूतस्य योगो भवतीत्यत

७ अभिनवगुप्ताचार्यव्याख्या ।

समादधतः शान्तिर्जायते । यस्यां संस्थापर्यन्तं काष्ठा मत्प्राप्तिः ॥ १४ ॥ १५ ॥ नात्यश्नत इति । योऽपि आहारेष्वाह्रियमाणेषु विषयेषु विहार उपभोगाय प्रवृत्तिः । तस्याश्च युक्तत्वं नात्यन्तासक्तिर्नात्यन्तपरिवर्जनम् । एवं सर्वत्र । शिष्टं स्पष्टम् । जाग्रत इत्यादिमिनः

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥**
**यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कथं पुनर्योगो भवतीत्युच्यते—युक्तेति । युक्ताहारविहारस्य आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य, तथा युक्तचेष्टस्य युक्ता नियता चेष्टा यस्य कर्मसु, तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नश्चावबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा । सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः ॥ १७ ॥ अथाधुना कदा युक्तो भवतीत्युच्यते—यदेति । यदा**

२ आनन्दगिरिव्याख्या ।

दिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयमन्वाचष्टे—**कथं पुनरित्यादिना** । अन्नस्य नियतत्वमर्धमशनस्येत्यादि, विहारस्य नियतत्वं योजनान्न परं गच्छेदित्यादि, कर्मसु चेष्टाया नियतत्वं वाङ्नियमादि, रात्रौ प्रथमतो दशघटिकापरिमिते काले जागरणं मध्यतः स्वपनं पुनरपि दशघटिकापरिमिते जागरणमिति स्वप्नावबोधयोर्नियतकालत्वम् । एवं प्रयतमानस्य योगिनो भवतो योगस्य फलमाह—**दुःखहेति** । सर्वाणीत्याध्यात्मिकादिभेदभिन्नानीत्यर्थः । यथोक्तयोगमन्तरेणापि स्वप्नादौ दुःखनिवृत्तिरस्तीति विशिनष्टि—**सर्वेति** । विशुद्धविज्ञानद्वारेति शेषः ॥ १७ ॥ सफलस्य साङ्गस्य योगस्योक्त्यनन्तरं यदा हीत्यादावुक्तकालानुवादेन युक्तं लक्षयितुमनन्तरश्लोकप्रवृत्तिं दर्शयति—**अथाधुनेति** । विशेषेण संयतत्वमेव संक्षिपति—**एकाग्रतामिति** । आत्मन्येवेत्येवकारार्थं कथयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जाग्रत इत्यत्राप्यतिशब्दो योज्यः ॥ १६ ॥ युक्ताः परिमिता आहारादयो यस्य स तथा ॥ १७ ॥ निर्वाणपरमां शान्तिं प्राप्तस्य लक्षणान्याह—**यदेत्यादिभिः** षड्भिः । विनियतं विशेषेण एकाग्रताभूमेरपि निरुद्धमात्मनि प्रत्यगात्म-

४ मधुसूदनीव्याख्या ।

न द्वन्द्वे नानिलान्विते । कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः ॥' इत्यादि ॥ १६ ॥ एवमाहारादिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयमाह—आह्रियत इत्याहारोऽन्नं, विहरणं विहारः पादश्रमः, तौ युक्तौ नियतपरिमाणौ यस्य । तथाऽन्येष्वपि प्रणवजपोपनिषदावर्तनादिषु कर्मसु युक्ता नियतकाला चेष्टा यस्य, तथा स्वप्नो निद्रा, अवबोधो जागरणं, तौ युक्तौ नियतकालौ यस्य तस्य योगो भवति साधनपाटवात्समाधिः सिध्यति नान्यस्य । एवं प्रयत्नविशेषेण संपादितो योगः किंफल इति तत्राह—**दुःखहेति** । सर्वसंसारदुःखकारणाविद्योन्मूलनहेतुब्रह्मविद्योत्पादकत्वात्समूलसर्वदुःखनिवृत्तिहेतुरित्यर्थः । अत्राहारस्य नियतत्वम् 'अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥' इत्यादि प्रागुक्तम् । विहारस्य नियतत्वं 'योजनान्न परं गच्छेत्' इत्यादि । कर्मसु चेष्टाया नियतत्वं वागादिचापलपरित्यागः । रात्रेर्विभागत्रयं कृत्वा प्रथमान्त्ययोर्जागरणं मध्ये स्वपनमिति स्वप्नावबोधयोर्नियतकालत्वम् । एवमन्येऽपि योगशास्त्रोक्ता नियमा द्रष्टव्याः ॥१७॥ एवमेकाग्रभूमौ संप्रज्ञातं समाधिमभिधाय निरोधभूमावसंप्रज्ञातं समाधिं वक्तुमुपक्रमते—यदा यस्मिन्काले परवैराग्यवशाद्विनियतं विशेषेण नियतं सर्वशून्यतामापादितं चित्तं विगतरजस्तमस्कमन्तःकरणसत्त्वं स्वच्छत्वात्सर्वविषयाकारग्रहणसमर्थमपि सर्वतोनिरुद्ध-

५ भाष्योत्कर्षदीपिका ।

अर्जुनेति ॥ १६ ॥ अन्वयमाह—**युक्तेति** । आह्रियत इत्याहारः अन्नं विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्यान्नस्य युक्तत्वमुक्तमेव, पादक्रमस्य नियतत्वं तु योजनान्न परं गच्छेदित्युक्तरूपम् । तथा कर्मस्वितरव्यापारेषु युक्ता नियता चेष्टा यस्य सः, तथा युक्तौ स्वप्नावबोधौ निद्राजागरौ रात्रेराद्यन्तभागयोर्जागरो मध्ये निद्रेत्येवं नियतकालौ यस्य तस्य योगिनो योगो दुःखहा ज्ञानप्राप्त्या सर्वानर्थमूलभूताविद्यानिवृत्त्या सर्वसंसारदुःखक्षयकृद्भवतीत्यर्थः ॥ १७ ॥ एतादृशयोगयुक्तः कदा भवतीति तत्राह । यस्मिन्काले विशेषेण नियतं चित्तं संयतमेकाग्रतामापन्नं निरुद्धं चित्तं बाह्यविषयचिन्तां विहायात्मन्येव प्रत्यगभिन्ने केवलेऽ-

६ श्रीधरीव्याख्या ।

आह—**युक्तेति** । युक्तो नियत आहारो विहारश्च गतिर्यस्य, कर्मसु कार्येषु युक्ता नियतैव चेष्टा यस्य, युक्तौ नियतौ स्वप्नावबोधौ निद्राजागरौ यस्य तस्य दुःखनिवर्तको योगो भवति सिध्यति ॥ १७ ॥ कदा निष्पन्नयोगः पुरुषो भवतीत्यपेक्षायामाह—**यदेति** ।

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रमाणत्वाद्वेदवत् । एवमन्यत्रापि ॥ १६ ॥ १७ ॥ अस्य च योगिनश्चिह्नं आत्मन्येव नियतमना न किंचिदपि स्पृहयते ॥ १८ ॥ यथेति ।

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

विनियतं चित्तं विशेषेण नियतं संयतमेकाग्रतामापन्नं चित्तं हित्वा बाह्यचिन्तामात्मन्येव केवलेऽवतिष्ठते । स्वात्मनि स्थितिं लभत इत्यर्थः । निःस्पृहः सर्वकामेभ्यो निर्गता दृष्टादृष्टविषयेभ्यः स्पृहा तृष्णा यस्य योगिनः स युक्तः समाहित इत्युच्यते तदा तस्मिन्काले ॥ १८ ॥ तस्य योगिनः समाहितं यच्चित्तं तस्योपमोच्यते—यथेति । यथा दीपः प्रदीपो निवातस्थो निवाते वातवर्जिते देशे स्थितो नेङ्गते न चलति सोपमोपमीयतेऽनयेत्युपमा योगज्ञैश्चित्तप्रचारदर्शिभिः स्मृता चिन्तिता । योगिनो

२ आनन्दगिरिव्याख्या ।

हित्वेति । केवलत्वमद्वितीयत्वम् । तस्यात्मस्थितिं विवृणोति—स्वात्मनीति । चित्तस्य हि कल्पितस्यात्मैव तत्त्वं तत्पुनरन्यतः सर्वतो निवारितमधिष्ठाने निमग्नं तिष्ठतीति भावः । तस्यामवस्थायां सर्वेभ्यो विषयेभ्यो व्यावृत्ततृष्णो युक्तो व्यवह्रियत इत्याह—निःस्पृह इति ॥ १८ ॥ उपमा योगिनश्चित्तस्थैर्यस्योदाहरणमित्यर्थः । उपमाशब्दस्य प्रदीपविषयत्वसिद्ध्यर्थं करणव्युत्पत्तिं दर्शयति—उपमीयत इति । योगिनो यथोक्तविशेषणवतश्चित्तस्थैर्यस्येति शेषः

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

न्येवावतिष्ठते नत्वक्षिप्तादिरूपेणोद्रिच्यते तदा योगी सर्वेभ्यो जाग्रत्स्वप्नसबीजसमाधिषूपस्थितेभ्यः । ल्यब्लोपे पञ्चमी । सार्वात्म्यप्राप्त्यैव तान् प्राप्य तेषु निःस्पृहो भवति तदा युक्तो निर्विकल्पक इत्युच्यते ॥ १८ ॥ एकाग्रतावस्थायां योगिचित्तस्योपमामाह—यथेति । नेङ्गते न चलति तद्वत् । यतं च तच्चित्तं च यतचित्तं तस्य । एकाग्रतां

४ मधुसूदनीव्याख्या ।

वृत्तिकत्वादात्मन्येव प्रत्यक्चिति अनात्मानुपरक्ते वृत्तिराहित्येऽपि स्वतःसिद्धस्यात्माकारस्य वारयितुमशक्यत्वाच्चितेरेव प्राधान्यात्स्वरूपभूतं सदवतिष्ठते निश्चलं भवति, तदा तस्मिन्सर्ववृत्तिनिरोधकाले युक्तः समाहित इत्युच्यते । कः । यः सर्वकामेभ्यो निःस्पृहः, निर्गता दोषदर्शनेन सर्वेभ्यो दृष्टादृष्टविषयेभ्यः कामेभ्यः स्पृहा तृष्णा यस्येति परं वैराग्यमसंप्रज्ञातसमाधेरन्तरङ्गं साधनमुक्तम् । तथाच व्याख्यातं प्राक् ॥ १८ ॥ समाधौ निर्वृत्तिकस्य चित्तस्योपमानमाह—दीपचलनहेतुना वातेन रहिते देशे स्थितो दीपो यथा चलनहेत्वभावान्नेङ्गते न चलति सोपमा स्मृता स दृष्टान्तश्चिन्तितो योगज्ञैः । कस्य, योगिन एकाग्रभूमौ संप्रज्ञातसमाधिमतोऽभ्यासपाटवाद्यतचित्तस्य निरुद्धसर्वचित्तवृत्तेरसंप्रज्ञातसमाधिरूपं योगं निरोधभूमौ युञ्जतोऽनुतिष्ठतो य आत्मान्तःकरणं तस्य निश्चलतया सत्त्वोद्रेकेण प्रकाशकतया च निश्चलो दीपो दृष्टान्त इत्यर्थः । आत्मनो योगं युञ्जत इति व्याख्याने दार्ष्टान्तिकालाभः सर्वावस्थस्यापि चित्तस्य सर्वदात्माकारतयात्मपदवैयर्थ्यं च । नहि योगेनात्माकारता चित्तस्य संपाद्यते किंतु

५ भाष्योत्कर्षदीपिका ।

वतिष्ठते । स्थितिं लभत इत्यर्थः । सर्वकामेभ्यो दृष्टादृष्टविषयेभ्यः निर्गता निवृत्ता स्पृहा तृष्णा यस्य स तदा तस्मिन्काले युक्त इत्युच्यते ॥ १८ ॥ योगिनः समाहितचित्तस्योपमानमाह—यथेति । यथा प्रदीपो निवाते वायुवर्जिते देशे स्थितो नेङ्गते न चलति । उपमीयतेऽनयेत्युपमा सा योगज्ञैः चित्तप्रचारज्ञैः स्मृता चिन्तिता । योगिनो यतचित्तस्य संयतान्तःकरणस्यात्मनो योगं समाधिमनुतिष्ठतः । अत्रोत्थानिकायां समाहितं च तच्चित्तमिति कर्मधारयः । योगिनः समाहितचित्तस्येति व्यधिकरणे षष्ठ्यौ । एवं मूले तद्भाष्ये च ज्ञेयम् । एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सदित्युत्तरश्लोकस्थभाष्यात् । योगिनो यथोक्तविशेषणवतश्चित्तस्थैर्यस्येति शेष इति तु भाष्यटीकाकाराः । एतेनात्मनो योगं नियुञ्जत इति व्याख्याने दार्ष्टान्तिकलाभः सर्वावस्थस्यापि चित्तस्य सर्वदात्माकारतयात्मपदवैयर्थ्यं च । नहि योगेनात्माकारता चित्तस्य संपाद्यते किंतु स्वतएवात्माकारस्य सतो नात्माकारता निवर्त्यत इति तस्माद्दार्ष्टान्तिकलाभप्रतिपादनार्थमात्मपदमिति प्रत्युक्तम् । विवेकादियुक्तेन मनसाऽविद्यानिवृत्त्यात्मा स्वयमेव प्रकाशते इत्यर्थे मनसैवानुद्रष्टव्यमितिवत् योगेनानात्माकारतां चित्तस्य निवर्त्य स्वतःसिद्धामात्माकारतां स्फुरणरूपां समाधिमनुतिष्ठत इत्यर्थके आत्मनो योगं युञ्जत इति वाक्ये आत्मपदस्य सार्थक्यात् । अन्यथा आत्मसंस्थं मनः कृत्वेति वक्ष्यमाणात्मपदवैयर्थ्यप्रसङ्गात् । युञ्ज-

६ श्रीधरीव्याख्या ।

विनियतं विशेषेण निरुद्धं सच्चित्तमात्मन्येव यदा निश्चलं तिष्ठति । किंच सर्वकामेभ्य ऐहिकामुष्मिकभोगेभ्यो विगततृष्णो भवति तदा प्राप्तयोग इत्युच्यते ॥ १८ ॥ आत्मैकाकारतयावस्थितस्य चित्तस्योपमानमाह—यथेति । वातशून्ये देशे स्थितो दीपो यथा नेङ्गते न विचलति सा उपमा दृष्टान्तः । कस्य, आत्मविषयं योगं युञ्जतोऽभ्यसतो योगिनो यतं नियतं चित्तं यस्य निष्कम्पतया प्रकाशकतया

७ अभिनवगुप्ताचार्यव्याख्या ।

यथा निवातस्थो दीपो न चलति एवं योगी । चलनमस्य विषयादीनामर्जुनादयः प्रयासाः ॥ १९ ॥ इदानीं तस्य स्वस्वभावस्य ब्रह्मणो

१ मधुसूदनः.

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ।**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥१९॥ एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सत्—यत्र यस्मिन्काल उपरमते चित्तमुपरतिं गच्छति निरुद्धं सर्वतोनिवारितप्रचारं योगसेवया योगानुष्ठानेन यत्र चैव यस्मिंश्च काल आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं चैतन्यज्योतिःस्वरूपं पश्यन्नुपलभमानः स्व एवात्मनि तुष्यति तुष्टिं भजते

२ आनन्दगिरिव्याख्या ।

॥ १९ ॥ द्विविधः समाधिः संप्रज्ञातोऽसंप्रज्ञातश्च, ध्येयैकाकारसत्त्ववृत्तिभेदेन कथंचिज्ज्ञायमाना संप्रज्ञातः समाधिः, कथमपि पृथगज्ञायमाना सैव सत्त्ववृत्तिरसंप्रज्ञातः समाधिः, तत्र सामान्येन समाधिलक्षणमभिधायासंप्रज्ञातस्य समाधेरधुना लक्षणं विवक्षन्नाह—**एवमिति** । काले समाध्युपलक्षिते । एवकारस्तुष्यतीत्यनेन संबध्यते । चकारस्य संबन्धमाह—**यस्मिंश्चेति** । कालस्तु पूर्ववत् । कर्मकारकत्वेन निर्दिष्टमात्मानं तत्पदार्थत्वेन व्याचष्टे—**परमिति** । आत्मनीत्यस्य त्वंपदार्थविषयत्वमाह—**स्व एवेति** । परमात्मानं प्रतीच्येव तद्भावेनापरोक्षीकुर्वन्नतुष्टिहेत्वभावात्तुष्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्राप्तं चित्तं निवातप्रदीपवन्न चलतीत्यर्थः । आत्मनो योगं समाधिं युञ्जतोऽनुतिष्ठतः ॥ १९ ॥ **यत्रेति** । एवं चित्तमेकाग्रीभूतं सत् योगसेवया निरुद्धं यत्र यस्यामवस्थायामुपरमते विलीनं भवति यत्र वा आत्मना चित्तेनात्मानं

४ मधुसूदनीव्याख्या ।

स्वत एवात्माकारस्य सतो नात्माकारता निवर्त्यत इति । तस्माद्दार्ष्टान्तिकलाभप्रतिपादनार्थमेवात्मपदम् । यतचित्तस्येति भावपरो निर्देशः कर्मधारयो वा । यतस्य चित्तस्येत्यर्थः ॥१९॥ एवं सामान्येन समाधिमुक्त्वा निरोधसमाधिं विस्तरेण विवरीतुमारभते—यत्र यस्मिन्परिणामविशेषे योगसेवया योगाभ्यासपाटवेन जाते सति चित्तं निरुद्धमेकविषयकवृत्तिप्रवाहरूपामेकाग्रतां त्यक्त्वा निरिन्धनाग्निवदुपशाम्यन्निर्वृत्तिकतया सर्ववृत्तिनिरोधरूपेण परिणतं भवति, यत्र यस्मिंश्च परिणामे सति आत्मना रजस्तमोऽनभिभूतशुद्धसत्त्वमात्रेणान्तःकरणेनात्मानं प्रत्यक्चैतन्यं परमात्माभिन्नं सच्चिदानन्दघनमनन्तमद्वितीयं पश्यन् वेदान्तप्रमाणजया वृत्त्या साक्षात्कुर्वन्नात्मन्येव परमानन्दघने तुष्यति न देहेन्द्रियसंघाते न वा तद्भोग्येऽन्यत्र । परमात्मदर्शने सत्यतुष्टिहेत्वभावात्तुष्यत्येवेति वा । तमन्तःकरणपरिणामं सर्वचित्तवृत्तिनिरोधरूपं योगं विद्यादिति परेणान्वयः । यत्र काल इति तु व्याख्यानम-

५ भाष्योत्कर्षदीपिका ।

श्चेवं सदात्मानमितिवत् आत्मनोऽन्तःकरणस्य समाधिं निरोधमनुतिष्ठतोऽसंप्रज्ञातसमाध्यभिमुखस्येति भाष्यार्थसंभवेनात्मपदसार्थक्याच्च । अतएव योगिनो यतचित्तस्य निरुद्धसर्ववृत्तेरसंप्रज्ञातसमाधिरूपं योगं निरोधभूमौ युञ्जतोऽनुतिष्ठतः य आत्मान्तःकरणं तस्य निश्चलतया सत्त्वोद्रेकेण प्रकाशकतया च निश्चलो दीपो दृष्टान्त इत्यप्यपास्तम् । निश्चलताप्रतिपादकयतपदसमभिव्याहारात् समीपत्वाच्चान्वययोग्यं चित्तपदं विहायात्मपदस्य दार्ष्टान्तिकपरत्वानौचित्यात् असंप्रज्ञातसमाधौ चित्तस्य कथमपि पृथगज्ञायमानत्वात् असंप्रज्ञातसमाध्यभिमुखस्य योगिनस्तत्सिद्धिपूर्वकाले यदेकाग्रीभूतं चित्तं तस्यायं दृष्टान्तो नतु निरुद्धसर्ववृत्तेरसंप्रज्ञातसमाधिस्थस्य योगिनोऽन्तःकरणस्येति विद्वद्भिराकलनीयम् ॥१९॥ द्विविधः समाधिः संप्रज्ञातोऽसंप्रज्ञातश्चेति । तत्र ध्येयैकाकारसत्त्ववृत्तिभेदेन कथंचिज्ज्ञायमाना आद्यः । कथमपि पृथगज्ञायमाना सैव सत्त्ववृत्तिर्द्वितीयः । तत्राद्यं प्रदर्श्य इदानीं द्वितीयस्य लक्षणं विवक्षन्नाह—**यत्रेति** । एवं योगाभ्यासबलात् एकाग्रीभूतं निवातप्रदीपकल्पं सत् यत्र यस्मिन्काले उपरमते चित्तमुपरतिं गच्छतीति योगसेवया योगानुष्ठानेन निरुद्धं सर्वतो निवारितप्रचारं, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं तत्पदार्थं ज्योतिःस्वरूपं पश्यन्नुपलभमानः त्वंपदार्थं आत्मन्येव तुष्यति परमात्मानं प्रत्यक्चैतन्यएव तद्भावेनापरोक्षीकुर्वन् अतुष्टिनिदाना-

६ श्रीधरीव्याख्या ।

चञ्चलं यच्चित्तं तद्वत्तिष्ठतीत्यर्थः ॥ १९ ॥ यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डवेत्यादौ कर्मैव योगशब्देनोक्तं, नात्यश्नतस्तु योगोऽस्तीत्यादौ तु समाधिर्योगशब्देनोक्तः । तत्र मुख्यो योगः क इत्यपेक्षायां समाधिमेव स्वरूपतः फलतश्च लक्षयन्स एव मुख्यो योग इत्याह—**यत्रेति** सार्धैस्त्रिभिः । यत्र यस्मिन्नवस्थाविशेषे योगाभ्यासेन निरुद्धं चित्तमुपरतं भवतीति योगस्य स्वरूपलक्षणमुक्तम् । तथाच पातञ्जलं सूत्रम् 'योगश्चित्तवृत्तिनिरोधः' इति । इष्टप्राप्तिलक्षणेन फलेन तमेव लक्षयति । यत्र च यस्मिन्नवस्थाविशेषे आत्मना शुद्धेन मनसात्मानमेव पश्यति नतु देहादि, पश्यंश्चात्मन्येव तुष्यति नतु विषयेषु । यत्रेत्यादीनां यच्छब्दानां तं योगसंज्ञितं विद्या-

७ अभिनवगुप्ताचार्यव्याख्या ।

बहुतरविशेषणद्वारेण स्वरूपं निरूप्यते । तीर्थान्तरकल्पितेभ्यश्च रूपेभ्यो व्यतिरेकः—यत्रेति । यत्र मनो निरुद्धमुपरमते स्वयमेव

१ मधुसूदनः.

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**
**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**

१ श्रीमच्छांकरभाष्यम् ।

॥ २० ॥ किंच—सुखमिति । सुखमात्यन्तिकमत्यन्तमेव भवतीत्यात्यन्तिकम् । अनन्तमित्यर्थः । यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यमतीन्द्रियमिन्द्रियगोचरातीतमविषयजनितमित्यर्थः । वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन्काले न चैवायं विद्वानात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्त्वतः तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः ॥ २१ ॥ किंच यं लब्ध्वा यमात्मलाभं लब्ध्वा

२ आनन्दगिरिव्याख्या ।

त्येवेत्यर्थः । तस्मिन्काले योगसिद्धिर्भवतीति शेषः ॥ २० ॥ योगसिद्धिकालं प्रकारान्तरेण प्रकटयति—किंचेति । बुद्धिशब्दः स्वानुभवविषयः । इन्द्रियनिरपेक्षस्वानुभवगम्यत्वोक्तेरतीन्द्रियमिति पुनरुक्तमित्याशङ्क्याह—अविषयेति । पदच्छेदः—नचेत्यादि । अपेक्षितपूरणम्—आत्मस्वरूप इति । तस्मात्तत्त्वत इति संबन्धः, नैवेत्येवकारसंबन्धोक्तिः, चकारः सप्तम्या संबन्धनीयः । यत्रेति पूर्ववत्संबन्धः ॥ २१ ॥ प्रकारान्तरेण प्रकृतं योगं विशिनष्टि—किंचेति । आत्मलाभान्न परं विद्यत इति स्मृत्वा व्याचष्टे—यमात्मलाभमिति । लाभान्तरं पुरुषार्थभूतं, ततस्तस्मादात्मलाभा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

निर्विकल्पं पश्यन्नात्मनि तुष्यति न बाह्यार्थे तुष्टिं भजते ॥ २० ॥ किंच—सुखमिति । आत्यन्तिकमनन्तं यत्सुखं तत्केवलं बुद्धिग्राह्यं सौषुप्तसुखवद्यतोऽतीन्द्रियमिन्द्रियागोचरं यत्र सुखे स्थितोऽयं न वेत्ति वेद्याभावान्न किंचिदनुभवति नापि तत्त्वतश्चलति । बुद्धितादात्म्याध्यासकाले चलतीवेति भाति परंतु तत्त्वतो न चलति । तथाच श्रुतिः 'ध्यायतीव लेलायतीव' इतीवशब्दं प्रयुञ्जाना ध्यानादेरतात्त्विकत्वं दर्शयति । बुद्धौ ध्यायन्त्यां ध्यायतीवेति लेला-

४ मधुसूदनीव्याख्या ।

साधु तच्छब्दानन्वयात् ॥ २० ॥ आत्मन्येव तोषे हेतुमाह—यत्र यस्मिन्नवस्थाविशेष आत्यन्तिकमनन्तं निरतिशयं ब्रह्मस्वरूपमतीन्द्रियं विषयेन्द्रियसंप्रयोगानभिव्यङ्ग्यं बुद्धिग्राह्यं बुद्ध्यैव रजस्तमोमलरहितया सत्त्वमात्रवाहिन्या ग्राह्यं सुखं योगी वेत्ति अनुभवति । यत्र च स्थितोऽयं विद्वांस्तत्त्वत आत्मस्वरूपान्नैव चलति तं योगसंज्ञितं विद्यादिति परेणान्वयः समानः । अत्रात्यन्तिकमिति ब्रह्मसुखस्वरूपकथनम् । अतीन्द्रियमिति विषयसुखव्यावृत्तिः, तस्य विषयेन्द्रियसंयोगसापेक्षत्वात् । बुद्धिग्राह्यमिति सौषुप्तसुखव्यावृत्तिः, सुषुप्तौ बुद्धेर्लीनत्वात् । समाधौ निर्वृत्तिकायास्तस्याः सत्त्वात् । तदुक्तं गौडपादैः 'लीयते तु सुषुप्तौ तन्निगृहीतं न लीयते' इति । तथाच श्रूयते 'समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥' इति । अन्तःकरणेन निरुद्धसर्ववृत्तिकेनेत्यर्थः । वृत्त्या तु सुखास्वादनं गौडपादाचार्यैस्तत्र प्रतिषिद्धं 'नास्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत्' इति । महदिदं समाधौ सुखमनुभवामीति सविकल्पवृत्तिरूपा प्रज्ञा सुखास्वादः । तं व्युत्थानरूपत्वेन समाधिविरोधित्वाद्योगी न कुर्यात् । अतएवैतादृश्या प्रज्ञया सह सङ्गं परित्यजेत्, तां निरुन्ध्यादित्यर्थः । निर्वृत्तिकेन तु चित्तेन स्वरूपसुखानुभवस्तैः प्रतिपादितः 'स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम्' इति । स्पष्टं चैतदुपरिष्टात्करिष्यते ॥ २१ ॥ 'यत्र न चैवायं स्थितश्चलति तत्त्वतः' इत्युक्तमुपपादयति—यं च

५ भाष्योत्कर्षदीपिका ।

भावात्तुष्टिं लभत एवेत्यर्थः ॥ २० ॥ किंच सुखमत्यन्तमेव भवतीत्यात्यन्तिकं अनन्तमित्यर्थः । यदेतादृशं ब्रह्मानन्दरूपं सुखं तद्बुद्ध्यैव गृह्यत इति बुद्धिग्राह्यम् । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुतेः । अतीन्द्रियमिन्द्रियगोचरातीतम् । विषयाजन्यमित्यर्थः । यत्र यस्मिन्कालेऽयं विद्वान् आत्मस्वरूपेणावस्थितो वेत्ति अनुभवति तत्त्वतस्तत्त्वरूपान्नैव चलति । न प्रच्यवत इत्यर्थः ॥ २१ ॥ किंच यमात्मलाभं लब्ध्वा च ततोऽधिकमन्यल्लाभान्तरमस्तीति न मन्यते । किंच यस्मिन्नात्मतत्त्वे स्थितो गुरुणापि

६ श्रीधरीव्याख्या ।

दिति चतुर्थेनान्वयः ॥ २० ॥ आत्मन्येव तोषे हेतुमाह—सुखमिति । यत्र यस्मिन्नवस्थाविशेषे यत्तत्किमपि निरतिशयमात्यन्तिकं नित्यं सुखं वेत्ति । ननु तदा विषयेन्द्रियसंबन्धाभावात्कुतः सुखं स्यात्तत्राह । अतीन्द्रियं विषयेन्द्रियसंबन्धातीतम् । केवलं बुद्ध्यैवात्माकारतया ग्राह्यम् । अतएव च यत्र स्थितः संस्तत्त्वत आत्मस्वरूपान्नैव चलति ॥ २१ ॥ अचलत्वमेवोपपादयति—यमिति । यमात्मसुखरूपलाभं लब्ध्वा ततोऽधिकमपरं लाभं न मन्यते न चिन्तयति तस्यैव निरतिशयसुखत्वात्, यस्मिंश्च स्थितो महतापि

७ अभिनवगुप्ताचार्यव्याख्या ।

आत्यन्तिकं विषयकृतकालुष्याभावात्सुखं यत्र वेत्ति ॥ २० ॥ २१ ॥ अपरो लाभो धनदारापुत्रादीनां च संनियोगलब्धश्च योगः (?) अन्यत्र

**यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥**
**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

प्राप्य चापरमन्यल्लाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति । किंच यस्मिन्नात्मतत्त्वे स्थितो दुःखेन शस्त्रनिपातादिलक्षणेन गुरुणा महतापि न विचाल्यते ॥२२॥ यत्रोपरमत इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः—तं विद्याद्विजानीयाद्दुःखसंयोगवियोगं दुःखैः संयोगो दुःखसंयोगस्तेन वियोगो दुःखसंयोगवियोगस्तं दुःखसंयोगवियोगं योग इत्येवसंज्ञितं विपरीत-

२ आनन्दगिरिव्याख्या ।

दिति यावत् । तं विद्यादित्युत्तरत्र संबन्धः । यस्मिन्नित्याद्यवतारयति—किंचेति । अपरिपक्वयोगो यथा दर्शितेन दुःखेन प्रच्याव्यते न चैवं विचाल्यते यस्मिन्स्थितो योगी तं योगं विद्यादिति पूर्ववत् ॥ २२ ॥ तं विद्यादित्याद्यपेक्षितं पूरयन्नवतारयति—यत्रेति । तमित्यात्मावस्थाविशेषं परामृशति । दुःखसंयोगस्य वियोगो वियोगसंज्ञितो युज्यते स कथं योगसंज्ञितः स्यादित्याशङ्क्याह—विपरीतेति । इयं हि योगावस्था समुत्खातनिखिलदुःखभेदेति दुःखसंयोगा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यन्त्यां लेलायतीवेति श्रुत्यर्थः । यद्वा तत्सुखं यत्रायं न चैव वेत्ति किमपि नैवानुभवति । यत्रेत्यादि भिन्नं वाक्यम् ॥ २१ ॥ दुःखेन शस्त्रपातादिलक्षणेन । गुरुणा महता ॥ २२ ॥ **तमिति** । यत्रोपरमते चित्तमित्यादिनोक्तलक्षणं तं दुःखसंयोगस्याप्यन्तःकरणसंबन्धस्य वियोगमेव सन्तं विरुद्धलक्षणया योगसंज्ञितं विद्यात् । योगफलमुपसंहृत्य पुनर्निश्चयानिर्वेदयोः साधनत्वविधानपूर्वकं तमेव शतकृत्वोऽपि पथ्यं वदितव्यमिति न्यायेन विधत्ते—**स इत्यादिना** । स योगो निश्चयेनाध्यवसायेनानिर्विण्णं निर्वेदरहितं चेतो यस्य तेन योक्तव्योऽभ्यसनीयः । यद्वा 'शान्तो दान्त उप-

४ मधुसूदनीव्याख्या ।

निरतिशयात्मकसुखव्यञ्जकं निर्वृत्तिकचित्तावस्थाविशेषं लब्ध्वा संतताभ्यासपरिपाकेन संपाद्यापरं लाभं ततोऽधिकं न मन्यते, 'कृतं कृत्यं प्राप्तं प्रापणीयमित्यात्मलाभान्न परं विद्यते' इति स्मृतेः । एवं विषयभोगवासनया समाधेर्विचलनं नास्तीत्युक्त्वा शीतवातमशकाद्युपद्रवनिवारणार्थमपि तन्नास्तीत्याह—यस्मिन्परमात्मसुखमये निर्वृत्तिकचित्तावस्थाविशेषे स्थितो योगी गुरुणा महता शास्त्रनिपातादिनिमित्तेन महतापि दुःखेन न विचाल्यते किमुत क्षुद्रेणेत्यर्थः ॥ २२ ॥ यत्रोपरमत इत्यारभ्य बहुभिर्विशेषणैर्यो निर्वृत्तिकः परमानन्दाभिव्यञ्जकश्चित्तावस्थाविशेष उक्तस्तं चित्तवृत्तिनिरोधं चित्तवृत्तिमयसर्वदुःखविरोधित्वेन दुःखवियोगमिव सन्तं योगसंज्ञितं वियोगशब्दार्हमपि विरोधिलक्षणया योगशब्दवाच्यं विद्याज्जानीया-

५ भाष्योत्कर्षदीपिका ।

दुःखेन शस्त्रनिपातादिलक्षणेन न विचाल्यते । यत्तु गुरुणा बृहस्पतिनापि दुःखेनातिप्रयासेनापि न विचाल्यते न ततः परिभ्रष्टः क्रियत इति तदुपेक्ष्यम् । क्लिष्टकल्पनयाऽप्रसक्तप्रतिषेधस्यानुचितत्वात् ॥२२॥ यत्रोपरमत इत्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशिष्टो योग उक्तः तं योगसंज्ञितं विद्याज्जानीयात् । इति यत्र यस्मिन्काले इत्यादि भाष्यं, समाध्युपलक्षिते तस्मिन्काले योगसिद्धिर्भवतीति शेषः । यमात्मलाभं तं विद्यादित्युत्तरत्र संबन्धः । यस्मिंस्थितो योगी न विचाल्यते तं योगं विद्यादिति पूर्ववत् । तं विद्यादित्याद्यपेक्षितं पूरयन्नवतारयति—यत्रेति तमित्यात्मावस्थाविशेषं परामृशतीति भाष्यं तट्टीकाकृद्भिर्व्याख्यातम् । वस्तुतस्तु यत्रोपरमत इत्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तस्तमिति भाष्यानुरोधेन काले इत्यस्य चित्तोपरमविशिष्ट आत्मावस्थाविशेष इत्यर्थः । एवमग्रेऽपि । यमात्मलाभमित्यस्य आत्मनो लाभो यस्मिन् यस्मादिति वा, आत्मलाभरूपमिति वा, लब्ध्वेत्यादिविशेषणविशिष्टमात्मावस्थाविशेषमित्यर्थः । यस्मिन्नात्मतत्त्व इत्यस्यात्मतत्त्वमात्रोपलब्ध्या आत्मतत्त्वे स्थित इत्यादि-

६ श्रीधरीव्याख्या ।

शीतोष्णादिदुःखेन न विचाल्यते नाभिभूयते । एतेनेष्टनिवृत्तिफलेनापि योगलक्षणमुक्तं द्रष्टव्यम् ॥ २२ ॥ य एवंभूतोऽवस्थाविशेषस्तमाह—**तमित्यर्धेन** । दुःखशब्देन दुःखमिश्रितत्वाद्वैषयिकं सुखमपि गृह्यते । दुःखस्य संयोगेन स्पर्शमात्रेणापि वियोगो यस्मिंस्तमवस्थाविशेषं योगसंज्ञितं योगशब्दवाच्यं जानीयात् । परमात्मना क्षेत्रज्ञस्य योजनं योगः । यद्वा दुःखसंयोगेन वियोग एव शूरे कातरशब्दवद्विरुद्धलक्षणया योग उच्यते । कर्मणि तु योगशब्दस्तदुपायत्वादौपचारिक एवेति भावः । यस्मादेवं महाफलो योगस्तस्मात्स एव यत्नतोऽभ्यसनीय इत्याह—**स इति सार्धेन** । स यो निश्चयेन शास्त्राचार्योपदेशजनितेन योक्तव्योऽभ्यसनीयः । यद्यपि शीघ्रं न

७ अभिनवगुप्ताचार्यव्याख्या ।

सुखधीर्निवर्तते चेति वस्तुस्वभावोयमित्यर्थः । न विचाल्यते विशेषेण न चाल्यते अपितु संस्कारमात्रेणैवास्य प्रथमक्षणमात्रमेव चलनं कारुण्यादिवशान्नतु मूढतया ॥ २२ ॥ विनष्टो बताहं किं मया प्रतिपत्तव्यमित्यादिदुःखसंयोगस्य वियोगो यतः । स च निश्चयेनास्तिक-

१ श्रीमच्छांकरभाष्यम् ।

लक्षणेन विद्यात् । विजानीयादित्यर्थः । योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यतोच्यते निश्चयानिर्वेदयोर्योगसाधनत्वविधानार्थम् । स यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्योऽनि-

२ आनन्दगिरिव्याख्या ।

भावो योगसंज्ञामर्हतीत्यर्थः । उपसंहृते योगफले किमिति पुनर्योगस्य कर्तव्यत्वमुच्यते तत्राह—**योगफलमिति** । प्रकारान्तरेण योगस्य कर्तव्यत्वोपदेशारम्भोऽत्रान्वारम्भः योगं युञ्जानस्तल्लक्षणादुक्तां संसिद्धिमलभमानः संशयानो निवर्तेतेति तन्निवृत्त्यर्थं पुनः कर्तव्यत्वोपदेशोऽर्थवानिति मत्वाह—**निश्चयेति** । तयोः साधनत्वविधानमेवाक्षरयोजनया साधयति—**स यथेति** । इह जन्मनि जन्मान्तरे वा सेत्स्यतीत्यध्यवसायः । योक्तव्यः कर्तव्यः ॥ २३ ॥ इतश्च

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' इति श्रुतिविहितं श्रुत्यन्तरदृष्टं श्रद्धावित्तपदोपेतं शमादिषट्कमत्र क्रमतो विधीयते । तत्र निश्चयेनेति गुरुवेदवाक्यादौ फलावश्यंभावनिश्चयलक्षणा श्रद्धात्र निश्चयपदेन गृह्यते । तथा

४ मधुसूदनीव्याख्या ।

न्तु योगशब्दानुरोधात्कंचित्संबन्धं प्रतिपद्येतेत्यर्थः । तथाच भगवान्पतञ्जलिरसूत्रयत् 'योगश्चित्तवृत्तिनिरोधः' इति । 'योगो भवति दुःखहा' इति यत्प्रागुक्तं तदेतदुपसंहृतम् । एवंभूते योगे निश्चयानिर्वेदयोः साधनत्वविधानायाह— स यथोक्तफलो योगो निश्चयेन शास्त्राचार्यवचनतात्पर्यविषयोऽर्थः सत्य एवेत्यध्यवसायेन योक्तव्योऽभ्यसनीयः । अनिर्विण्णचेतसा, एतावतापि कालेन योगो न सिद्धः किमतः परं कष्टमित्यनुतापो निर्वेदस्तद्रहितेन चेतसा । इह जन्मनि जन्मान्तरे वा सेत्स्यति किं त्वरयेत्येवं धैर्ययुक्तेन मनसेत्यर्थः । तदेतद्गौडपादा उदाजहुः 'उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना । मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥' इति । उत्सेक उत्सेचनम्, शोषणाध्यवसायेन जलोद्धरणमिति यावत् । अत्र संप्रदायविद आख्यायिकामाचक्षते—कस्यचित्किल पक्षिणोऽण्डानि तीरस्थानि तरङ्गवेगेन समुद्रोऽपजहार । स च समुद्रं शोषयिष्याम्येवेति प्रवृत्तः स्वमुखाग्रेणैकैकं जलबिन्दुमुपरि प्रचिक्षेप । तदा च बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोऽपि नैवोपरराम । यदृच्छया च तत्रागतेन नारदेन निवारितोऽप्यस्मिञ्जन्मनि जन्मान्तरे वा येन केनाप्युपायेन समुद्रं शोषयिष्याम्येवेति प्रतिजज्ञे । ततश्च दैवानुकूल्यात्कृपालुर्नारदो गरुडं तत्साहाय्याय प्रेषयामास समुद्रस्त्वज्ज्ञातिद्रोहेण त्वामवमन्यत इति वचनेन । ततो गरुडपक्षवातेन शुष्यन्समुद्रो भीतस्तान्यण्डानि तस्मै पक्षिणे प्रददौ-इति । एवमखेदेन मनोनिरोधे परमधर्मे

५ भाष्योत्कर्षदीपिका ।

विशेषणविशिष्टे आत्मावस्थाविशेष इत्यर्थः । तथाच सर्वेषां यच्छब्दानां तत्तद्विशेषणविशिष्टावस्थाविशेषप्रतिपादकानां तच्छब्देनान्वय इति । एतेन यत्र काल इति व्याख्यानं त्वसाधु तच्छब्दानन्वयादिति प्रत्युक्तम् । यत्त्वसाधुवादिनोक्तं यत्र यस्मिन्परिणामविशेषे योगसेवया योगाभ्यासपाटवेन जाते सति चित्तं निरुद्धमेकविषयकवृत्तिप्रवाहरूपामेकाग्रतां त्यक्त्वा निरिन्धनाग्निवदुपशाम्य निर्वृत्तिकतया सर्ववृत्तिनिरोधरूपेण परिणतं भवति यत्र च यस्मिंश्च परिणामे सतीत्यादि—तत्रेदं वक्तव्यम् । स चित्तपरिणामः कः यस्मिन्सति चित्तं निरोधपरिणामं भजति । निरोधपरिणाम उतैकाग्रतापरिणामः । नाद्यः । यस्मिन्सति सर्ववृत्तिनिरोधरूपेण चित्तं परिणतं भवति इति तस्य ततः पृथगुक्तेः । न द्वितीयः । तमन्तःकरणपरिणामं सर्वचित्तवृत्तिनिरोधरूपं योगं विद्यादिति परेणान्वयादिति स्वपरग्रन्थविरोधात् । यस्मिंश्च परिणामे सतीति । अत्रापि विकल्पनीयम् । अयं परिणामः किं पूर्वोक्तादन्य उत स एव । आद्ये प्रथमयत्रपदार्थैकार्थताभावः । न द्वितीयः । उक्तदोषात् एकाग्रतापरिणामे सति निरोधपरिणामस्तस्मिंश्च सति आत्मनात्मानं पश्यन्नात्मनि तुष्यतीति क्रमस्यौचित्याच्चेति दिक् । दुःखैः संयोगः दुःखसंयोगः तेन वियोगो निखिलार्थनिवृत्तिरूपस्तं योगसंज्ञितं योगशब्दितं विपरीतलक्षणेन विद्याज्जानीयादित्यर्थः । योगस्य फलमुपसंहृत्य 'शतं कृत्वापि पथ्यं वदितव्यम्'इति न्यायेन निश्चयादेः साधनत्वविधानार्थं योगस्य कर्तव्यतामाह—**स इति** । स यथोक्तफलो योगः निश्चयेनाध्यवसायेनेह जन्मनि जन्मान्तरे वा सेत्स्यत्येवेत्यध्यवसायः । शास्त्राचार्योपदेशे यथार्थत्वनिश्चयो वा । अनिर्विण्णचेतसा खेदरहितेन चित्तेन दुःखबुद्ध्या प्रयत्नशैथिल्यकारणं खेदः । एतावतापि कालेन योगेनेति किमतः कष्टमित्येवंरूपः निश्चयेनानिर्विण्णचेतसा योक्तव्यः फलपर्यन्तमभ्यसनीयः । तदुक्तं गौडपादाचार्यैः 'उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना । मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥' इति । उत्सेको जलोद्धरणम् । एतेन निर्विण्णचेतसेत्येवंपदमुत्तरशेषभूतं द्रष्टव्यम् । तथा ह्यापातनिका—नन्वभ्यस्यतां नाम योगस्तत्रापि, यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते । स सर्वसंकल्पसंन्यासीत्यनेन स्वार्थं संकल्पमूलकामनात्यागे इन्द्रियनिग्रहे प्राप्तेऽपि प्राप्तयोगैश्वर्यो दीनानाथसंदर्शनजनितानुकम्पापरवशस्तेषां हितकामनया संकल्पपूर्वं बाह्यं कर्माचरेदित्याशङ्क्याह-**निर्विण्णेति** । सर्वान्कामान्स्त्रीयानिव परसंबन्धिनोऽपि संकल्पप्रभवान्, निर्विण्णेन चेतसा अशेषतः सहसंकल्पैः त्यक्त्वेति स्वसंसारनिर्वेदवतः परार्थाप्रवृत्तिरत्यन्तासंगतेति । तथा समन्ततः सर्वविषयेभ्यो मनसा सहेन्द्रियग्रामं नियम्यैव योगो योक्तव्य इति प्रत्युक्तम् । क्त्वाप्रत्ययेन कामत्यागादेः योगाभ्याससाधन-

१ मधुसूदनः. २ मधुसूदनः.

**संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥**
**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**विण्णचेतसा न निर्विण्णमनिर्विण्णं किं तच्चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः ॥ २३ ॥ किंच संकल्पप्रभवान्संकल्पः प्रभवो येषां कामानां ते संकल्पप्रभवाः कामास्तांस्त्यक्त्वा परित्यज्य सर्वानशेषतो निर्लेपेन । किंच मनसैव विवेकयुक्तेनेन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥ २४ ॥ शनैः शनैर्न सहसोपरमेदुपरतिं कुर्यात् । कया बुद्ध्या । किंविशिष्टया**

२ आनन्दगिरिव्याख्या ।

योगस्य कर्तव्यत्वमिति प्रतिजानीते—**किंचेति** । केन क्रमेण कर्तव्यत्वमित्यपेक्षायामाह—**संकल्पेति** । संकल्पः शोभनाध्यासः । सर्वानित्युक्त्वा पुनरशेषत इति पुनरुक्तिरित्याशङ्क्याह—**निर्लेपेनेति** । यथा शेषो न भवति तथा सर्वेषां कामानां शोभनाध्यासाधीनानां त्यागस्य योगानुष्ठानशेषत्ववद्विवेकयुक्तेन मनसा करणसमुदायस्य सर्वतो नियमनमपि तत्र शेषत्वेन कर्तव्यमित्याह—**किंचेति** ॥ २४ ॥ कामत्यागद्वारेणेन्द्रियाणि प्रत्याहृत्य किं कुर्यादिति शङ्कितारं प्रत्याह—**शनैः शनैरिति** । सहसा विषयेभ्यः सकाशादुपरमे मनसो न स्वास्थ्यं संभवतीत्यभिप्रेत्याह—**न सहसेति** । तत्र साधनं धैर्ययुक्ता बुद्धिरित्याह—**कयेत्यादिना** । भूम्यादीरव्याकृतपर्यन्ताः प्रकृतीरष्ट पूर्वपूर्वत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

निर्विण्णचेतसेति वैराग्येण द्वन्द्वसहिष्णुत्वलक्षणा तितिक्षा विधीयते इति ज्ञेयम् ॥ २३ ॥ अथ शमदमोपरमसमाधानानि क्रमेण श्लोकद्वयेन विधत्ते—**संकल्पेति** । संकल्प इदं मे भूयादिति चेतोवृत्तिस्तत उद्भवो येषां तान्कामान्काम्यमानान्विषयानशेषतो वासनोच्छेदपूर्वकं संकल्पनिरोधेन त्यक्त्वा । एतेनान्तरिन्द्रियनिग्रहलक्षणः शम उक्तः। बाह्येन्द्रियनिग्रहलक्षणं दममाह—**मनसैवेति** । विषयदोषदर्शिना मनसैव सर्वतः सर्वप्रकारेण श्रोत्रादिकमिन्द्रियग्रामं समन्ततः सर्वेभ्यो विषयेभ्यो विनियम्योपरमेदित्युत्तरेणान्वयः ॥ २४ ॥ **शनैः शनैरिति** । भूमिकाजयक्रमेण

४ मधुसूदनीव्याख्या ।

प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णाति । ततश्च पक्षिण इव तस्याभिमतं सिध्यतीति भावः ॥ २३ ॥ किंच कृत्वा योगोऽभ्यसनीयः—संकल्पो दुष्टेष्वपि विषयेष्वशोभनत्वादर्शनेन शोभनाध्यासः । तस्माच्च संकल्पादिदं मे स्यादिदं मे स्यादित्येवंरूपाः कामाः प्रभवन्ति । ताञ्शोभनाध्यासप्रभवान्विषयाभिलाषान्विचारजन्याशोभनत्वनिश्चयेन शोभनाध्यासबाधाद्दृष्टेषु स्रक्चन्दनवनितादिष्वदृष्टेषु चेन्द्रलोकपारिजाताप्सरःप्रभृतिषु श्ववान्तपायसवत्स्वत एव सर्वान्ब्रह्मलोकपर्यन्तानशेषतो निरवशेषान्सवासनांस्त्यक्त्वा, अतएव कामपूर्वकत्वादिन्द्रियप्रवृत्तेस्तदपाये सति विवेकयुक्तेन मनसैवेन्द्रियग्रामं चक्षुरादिकरणसमूहं विनियम्य समन्ततः सर्वेभ्यो विषयेभ्यः प्रत्याहृत्य शनैःशनैरुपरमेदित्यन्वयः ॥ २४ ॥—भूमिकाजयक्रमेण शनैःशनैरुपरमेत् ।

५ भाष्योत्कर्षदीपिका ।

त्वस्य स्पष्टप्रतीत्या योगसिद्ध्युत्तरभाव्यैश्वर्यवशादनुकम्पापरवशोऽपि स्वीयानिव परकीयानपि त्यक्त्वेत्यादिवर्णनस्यानौचित्यात् । शनैः शनैरित्यादिना मनस उपरमस्य वक्ष्यमाणत्वेनात्र मनसा विवेकादियुक्तेनेतिकरणपरत्ववर्णनस्यैवौचित्याच्च ॥ २३ ॥ साधनान्तराण्यपि विधत्ते—**संकल्पेति** । संकल्पोऽशोभनेऽपि इहामुत्रार्थभोगेऽविचारजनितः शोभनाध्यासः स प्रभवो येषां कामानां इदं मे स्यादिदं मे स्यादित्येवंरूपाणामिच्छाभेदानां ते तान्सर्वान्ब्रह्मलोकपर्यन्तानशेषतो निर्लेपेन लेपरूपेण शिष्टया वासनया सहितान् विचारेण शोभनाध्यासनिवृत्त्या त्यक्त्वा परित्यज्य । किंच मनसैवेन्द्रियग्रामं चक्षुरादीन्द्रियसमुदायं समन्ततः समन्ताद्विषयसमूहान्नियम्य नियमनं कृत्वा योगो योक्तव्य इति पूर्वेण, शनैः शनैरुपरमेदिति परेण वान्वयः॥२४॥ एवं कृत्वा किं कुर्यादित्यत आह—**शनैरिति**।

६ श्रीधरीव्याख्या ।

सिध्यति तथाप्यनिर्विण्णेन निर्वेदरहितेन चेतसा योक्तव्यः । दुःखबुद्ध्या प्रयत्नशैथिल्यं निर्वेदः ॥ २३ ॥ किंच—**संकल्पेति** । संकल्पात्प्रभवो येषां तान्योगप्रतिकूलान्सर्वान्कामानशेषतः सवासनांस्त्यक्त्वा मनसैव विषयदोषदर्शिना सर्वतः प्रसरन्तमिन्द्रियसमूहं विशेषेण नियम्य योगो योक्तव्य इति पूर्वेणान्वयः ॥ २४ ॥ यदि तु प्राक्तनकर्मसंस्कारेण मनो विचलेत्तर्हि धारणया स्थिरीकुर्यादित्याह—**शनै-**

७ अभिनवगुप्ताचार्यव्याख्या ।

ताजनितया श्रद्धया सर्वथा योक्तव्योऽभ्यसनीयः । अनिर्विण्णमुपेयप्राप्तौ दृढतरं संसारं दुःखबहुलमतिनिर्विण्णं चेतो यस्य ॥ २३ ॥ कामानामुपायत्यागे उपायः संकल्पत्याग इत्याह—संकल्पेति ॥ २४ ॥ शनैः शनैः मनसैव न व्यापारोपरमेण । धृतिं गृहीत्वा क्रमात्क्रम-

१ श्रीमच्छांकरभाष्यम् ।

**धृतिगृहीतया धृत्या धैर्येण गृहीतया धैर्येण युक्तयेत्यर्थः । आत्मसंस्थमात्मनि संस्थितमात्मैव सर्वं न त-**

२ आनन्दगिरिव्याख्या ।

**धारणं कृत्वोत्तरोत्तरक्रमेण प्रविलापयेदिति भावः । अव्यक्तमात्मनि प्रविलाप्यात्ममात्रनिष्ठं मनो विधाय चिन्तयितव्याभावादतिस्वस्थो भवेदित्याह—आत्मेति । तत्र संस्थितिमेव मनसो विवृणोति—आत्मैवेति । योगविधिमुप-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दिव्यादिव्यविषयेभ्य उपरमेद्व्यावृत्तो भवेत् । कथम् । धृतिगृहीतया बुद्ध्येति । धृतिः 'धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी' इत्युक्तलक्षणा तया गृहीतया वशीकृतया बुद्ध्योपरमेत् । तथा एवमुपरतं मनः आत्मनि स्वरूपे संस्था स्थितिर्यस्य नतु दृश्ये द्रष्टरि वा तत्तथा आत्मैकाकारमेकाग्रमित्यर्थः । द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थं 'सर्वार्थतैकार्थतयोः क्षयोदयौ चित्तस्यैकाग्रतापरिणामः' इति सूत्रितमैकाग्र्यं प्रापयेत् । सूत्रार्थस्तु अहमिदं पश्यामीत्यनुभवे हि द्रष्टा दृश्यं दर्शनं च भासते । तत्र दर्शनभानमप्रत्याख्येयमतो द्रष्टरि दृश्ये चोपरक्तं चित्तं सर्वार्थमिति । नतु दर्शनोपरक्ततापि सर्वार्थतायां गणिता । तदभावे चित्तस्य नाशापत्तेः । द्रष्टृदृश्योपरागाभावे तु एकार्थं तदुच्यते यथा स्वप्ने । तत्र हि दृश्यं नास्तीति पामराणामपि प्रसिद्धम् । द्रष्टापि नास्ति । तदा इन्द्रियाणामभावात् । 'आत्मेन्द्रियमनोयुक्तं भोक्ता' इतिश्रुत्यैव भोक्तृत्वस्येन्द्रियसंनियोगशिष्टत्वात् । किंतु द्रष्टृ-

४ मधुसूदनीव्याख्या ।

धृतिर्धैर्यमखिन्नता तया गृहीता या बुद्धिरवश्यकर्तव्यतानिश्चयरूपा तया यदा कदाचिदवश्यं भविष्यत्येव योगः किं त्वरयेत्येवंरूपया शनैःशनैर्गुरूपदिष्टमार्गेण मनो निरुन्ध्यात् । एतेनानिर्वेदनिश्चयौ प्रागुक्तौ दर्शितौ । तथाच श्रुतिः 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानं महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥' इति । वागिति वाचं लौकिकीं वैदिकीं च मनसि व्यापारवति नियच्छेत् । 'नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत्' इति श्रुतेः । वाग्वृत्तिनिरोधेन मनोवृत्तिमात्रशेषो भवेदित्यर्थः । चक्षुरादिनिरोधोऽप्येतस्यां भूमौ द्रष्टव्यः । मनसीति छान्दसं दैर्घ्यम् । तन्मनः कर्मेन्द्रियज्ञानेन्द्रियसहकारि नानाविधविकल्पसाधनं करणम् । ज्ञाने जानातीति ज्ञानमिति व्युत्पत्त्या ज्ञातर्यात्मनि ज्ञातृत्वोपाधावहंकारे नियच्छेत्, मनोव्यापारान्परित्यज्याहंकारमात्रं परिशेषयेत् । तच्च ज्ञानं ज्ञातृत्वोपाधिमहंकारमात्मनि महति महत्तत्त्वे सर्वव्यापके नियच्छेत् । द्विविधो ह्यहंकारो विशेषरूपः सामान्यरूपश्चेति । अयमहमेतस्य पुत्र इत्येवं व्यक्तमभिमन्यमानो विशेषरूपो व्यष्ट्यहंकारः । अस्मीत्येतावन्मात्रमभिमन्यमानः सामान्यरूपः समष्ट्यहंकारः । स च हिरण्यगर्भो महानात्मेति च सर्वानुस्यूतत्वादुच्यते । ताभ्यामहंकाराभ्यां विविक्तो निरुपाधिकः शान्तात्मा सर्वान्तरश्चिदेकरसस्तस्मिन्महान्तमात्मानं समष्टिबुद्धिं नियच्छेत् । एवं तत्कारणमव्यक्तमपि नियच्छेत् । ततो निरुपाधिकस्त्वंपदलक्ष्यः शुद्ध आत्मा साक्षात्कृतो भवति । शुद्धे हि चिदेकरसे प्रत्यगात्मनि जडशक्तिरूपमनिर्वाच्यमव्यक्तं प्रकृतिरुपाधिः । सा च प्रथमं सामान्याहंकाररूपं महत्तत्त्वं नाम धृत्वा व्यक्तीभवति । ततो बहिर्विशेषाहंकाररूपेण ततो बहिर्मनोरूपेण ततो बहिर्वागादीन्द्रियरूपेण । तदेतच्छ्रुत्याभिहितं 'इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' इति । तत्र गवादिष्विव वाङ्निरोधः प्रथमा भूमिः । बालमुग्धादिष्विव निर्मनस्त्वं द्वितीया । तन्द्रयामिवाहंकारराहित्यं तृतीया । सुषुप्ताविव महत्तत्त्वराहित्यं चतुर्थी । तदेतद्भूमिचतुष्टयमपेक्ष्य शनैःशनैरुपरमेदित्युक्तम् । यद्यपि महत्तत्त्वशान्तात्मनोर्मध्ये महत्तत्त्वोपादानमव्याकृताख्यं तत्त्वं श्रुत्योदाहारि, तथापि तत्र महत्तत्त्वस्य नियमनं नाभ्यधायि । सुषुप्ताविव [ जीवस्वरूपस्य 'सता सोम्य तदा संपन्नो भवति' इति श्रुतेः ] स्वरूपलयप्रसङ्गात् । तस्य च कर्मक्षये सति पुरुषप्रयत्नमन्तरेण स्वतएव सिद्धत्वात्तत्त्वदर्शनानुपयोगित्वाच्च 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति पूर्वमभिधाय सूक्ष्मत्वसिद्धये निरोधसमाधेरभिधानात् । सच तत्त्वविदृक्षोर्दर्शनसाधनत्वेन दृष्टतत्त्वस्य च जीवन्मुक्तिरूपक्लेशक्षयायापेक्षितः । ननु शान्तात्मन्यवरुद्धस्य चित्तस्य वृत्तिरहितत्वेन सुषुप्तिवददर्शनहेतुत्वमिति चेत् । न । स्वतःसिद्धस्य दर्शनस्य निवारयितुमशक्यत्वात् । तदुक्तम् 'आत्मानात्माकारं स्वभावतोऽवस्थितं सदा चित्तम् । आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत ॥' यथा घट उत्पद्यमानः स्वतो वियत्पूर्ण एवोत्पद्यते । जलतण्डुलादिपूरणं

५ भाष्योत्कर्षदीपिका ।

धृतिगृहीतया धैर्ययुक्तया बुद्ध्योपरमेन्मनस उपरतिं संपादयेत् । शनैःशनैः क्रमेण नतु सहसा । ननूपरतिं प्रापितमपि मनः पुनः

६ श्रीधरीव्याख्या ।

**रीति** । धृतिर्धारणा तया गृहीतया वशीकृतया बुद्ध्यात्मसंस्थमात्मन्येव सम्यक् स्थितं निश्चलं मनः कृत्वोपरमेत् । तच्च शनैःशनै-

७ अभिनवगुप्ताचार्यव्याख्या ।

मभिलाषदुःखं प्रतनूकृत्य किंचिदपि विषयाणां त्यागग्रहणादिकं न चिन्तयेत् । यत्त्वन्यैर्व्याख्यातं न किंचिदपि चिन्तयेदिति तन्नासम्भवं

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**तोऽन्यत्किंचिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् । एष योगस्य परमो विधिः ॥२५॥ तत्रैवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी—यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चरति निर्गच्छति**

२ आनन्दगिरिव्याख्या ।

कस्य किमिदमुक्तमित्याशङ्क्याह—**एष इति** । यन्मनसो नैश्चल्यमिति शेषः ॥ २५ ॥ ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादत्यन्तचञ्चलस्यास्थिरस्य तत्र तत्र स्वभावेन प्रवृत्तस्य कुतो नैश्चल्यं नैश्चिन्त्यं चेति तत्राह—**तत्रेति** । योगप्रारम्भः सप्तम्यर्थः । एवंशब्देन मनसैवेत्यादिरुक्तप्रकारो गृह्यते । स्वाभाविको दोषो मिथ्याज्ञानाधीनो रागादिः । शब्दादेर्मनसो नियमनं कथमित्याशङ्क्याह—**तत्तन्निमित्तमिति** । याथात्म्यनिरूपणं क्षयिष्णुत्वदुःखसंमिश्र-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दृश्यवासनावासितं चित्रपटसदृशमेकं मन एवास्ति । तच्च स्वयंजोतिषा पुरुषेण भास्यमानं जाग्रद्वत्स्वप्नेऽपि द्रष्टृदृश्योपरागं प्रकाशयति । तद्वासनावासितत्वात् । एवं सति यदा सर्वार्थतायाः क्षय एकार्थताया उदयश्च तदा चित्तस्यैकाग्रतारूपः परिणामो भवतीति । तदेवमात्मसंस्थं मनः कृत्वेति संप्रज्ञातसमाधिरुक्तः । तत्रापि पूर्वाभ्यासवशाच्चित्तस्य द्रष्टृदृश्योपरागो वासनामयो भातीति तन्निवारणेनासंप्रज्ञातसमाधिमाह—**न किंचिदपि चिन्तयेदिति** । ध्यातृध्यानध्येयविभागमपि न स्मरेत्किंतु अखण्डैकरससंविदात्मना सुषुप्तवत्तिष्ठेदित्यर्थः ॥ २५ ॥ शनैःशनैरित्येतं श्लोकं व्याचष्टे—**यतो यत इति त्रिभिः** । यतो यतो हेतोर्यं यं विषयं ग्रहीतुं मनो निश्चरति बहिर्गच्छति ततस्ततस्तत्रतत्र दोषदर्शनेन

४ मधुसूदनीव्याख्या ।

तूत्पन्ने घटे पश्चात्पुरुषप्रयत्नेन भवति । तत्र जलादौ निःसारितेऽपि वियन्निःसारयितुं न शक्यते । मुखपिधानेऽप्यन्तर्वियदवतिष्ठत एव, तथा चित्तमुत्पद्यमानं चैतन्यपूर्णमेवोत्पद्यते । उत्पन्ने तु तस्मिन्मूषानिषिक्तद्रुतताम्रवद्घटदुःखादिरूपत्वं भोगहेतुधर्माधर्मसहकृतसामग्रीवशाद्भवति । तत्र घटदुःखाद्यनात्माकारे विरामप्रत्ययाभ्यासेन निवारितेऽपि निर्निमित्तश्चिदाकारो वारयितुं न शक्यते । ततो निरोधसमाधिना निर्वृत्तिकेन चित्तेन संस्कारमात्रशेषतयातिसूक्ष्मत्वेन निरुपाधिकचिदात्ममात्राभिमुखत्वाद्वृत्तिं विनैव निर्विघ्नमात्मानुभूयते । तदेतदाह 'आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्' इति । आत्मनि निरुपाधिके प्रतीचि संस्था समाप्तिर्यस्य तदात्मसंस्थं सर्वप्रकारवृत्तिशून्यं स्वभावसिद्धात्माकारमात्रविशिष्टं मनः कृत्वा, धृतिगृहीतया विवेकबुद्ध्या संपाद्यासंप्रज्ञातसमाधिस्थः सन् किंचिदपि अनात्मानमात्मानं वा न चिन्तयेन्न वृत्त्या विषयीकुर्यात् । अनात्माकारवृत्तौ हि व्युत्थानमेव स्यात् । आत्माकारवृत्तौ च संप्रज्ञातः समाधिरित्यसंप्रज्ञातसमाधिस्थैर्याय कामपि चित्तवृत्तिं नोत्पादयेदित्यर्थः ॥ २५ ॥ एवं निरोधसमाधिं कुर्वन्योगी शब्दादीनां चित्तविक्षेपहेतूनां मध्ये यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्विषयाद्रागद्वेषादेश्च चञ्चलं विक्षेपाभिमुखं सन्मनो निश्चरति विक्षिप्तं सद्विषयाभिमुखीं प्रमाणविपर्ययविकल्पस्मृतीनामन्यतमामपि समाधिविरोधिनीं वृत्तिमुत्पादयति, तथा लयहेतूनां निद्राशेषबह्वशनश्रमादीनां मध्ये यतो यतो निमित्तादस्थिरं लयाभिमुखं सन्मनो निश्चरति, लीनं सत्समाधिविरोधिनीं निद्राख्यां वृत्तिमुत्पादयति, ततस्ततो विक्षेपनिमित्ताल्लयनिमित्ताच्च नियम्यैतन्मनो निर्वृत्तिकं कृत्वात्मन्येव स्वप्रकाशपरमानन्दघने वशं नयेन्निरुन्ध्यात् । यथा न विक्षिप्येत न वा लीयेतेति । एवकारो नात्मगोचरत्वं समाधेर्वारयति । एतच्च विवृतं गौडाचार्यपादैः 'उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः । सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥ दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् । अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः । सकषायं विजानीयात्समप्राप्तं न चालयेत् ॥

५ भाष्योत्कर्षदीपिका ।

पदार्थान्तरचिन्तनेनोपरतिं हास्यतीत्याशङ्क्याह । आत्मसंस्थमात्मैव सर्वं न ततोऽन्यत् किंचिदस्तीत्येवमात्मसंस्थं मनः कृत्वा आत्मेतरवस्त्वभावान्न किंचिदपि चिन्तयेत् । मनसो नैश्चल्यस्य परमयोगावधित्वात् ॥ २५ ॥ ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादतिचञ्चलस्यास्थिरस्य स्वभावादेव तत्रतत्र विषये प्रवृत्तस्य नैश्चल्यं नैश्चिन्त्यं वा कुत इत्याशङ्क्याह—**यत इति** । एव-

६ श्रीधरीव्याख्या ।

रभ्यासक्रमेण नतु सहसा । उपरमस्वरूपमाह । न किंचिदपि चिन्तयेत् । निश्चले मनसि स्वयमेव प्रकाशमानपरमानन्दस्वरूपो भूत्वात्मध्यानादपि न निवर्ततेत्यर्थः ॥ २५ ॥ एवमपि रजोगुणवशाद्यदि मनः प्रचलेत्तर्हि पुनः प्रत्याहारेण वशीकुर्यादित्याह—**यत इति** । स्वभावतश्चञ्चलं धार्यमाणमप्यस्थिरं मनो यं यं विषयं प्रति निर्गच्छति ततस्ततः प्रत्याहृत्यात्म्यन्येव स्थिरं कुर्यात् ॥ २६ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

रुचितम् । शून्यवादप्रसङ्गात् । नच विषयव्युपरममात्रमेव प्राप्तमित्युच्यते ॥ २५ ॥ यतो यत इति । यतो यतो मनो निवर्तते तन्निवर्तन-

**तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तरं पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥ ४२ ॥ यस्मात्—तत्रेति । तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं बुद्धिसंयोगं लभते पौर्वदेहिकं पूर्वस्मिन्देहे भवं पौर्वदेहिकम् । यतते च प्रयत्नं करोति ततस्तस्मात्पूर्वकृतात्संस्काराद्भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरु-

२ आनन्दगिरिव्याख्या ।

पूर्वमिति । यद्यपि विभूतिमतामपि शुचीनां गृहे जन्म दुःखलभ्यं तथापि तदपेक्षयेदं जन्म दुःखलभ्यतरं यदीदृशं शुचीनां दरिद्राणां विद्यावतामिति विशेषणोपेते कुले लोके जन्म वक्ष्यमाणमित्यर्थः ॥ ४२ ॥ यदुत्तमतरं जन्मोक्तं तस्योत्तमत्वे हेत्वन्तरमाह—यस्मादिति । बुद्ध्येत्यात्मविषययेति शेषः । पूर्वस्मिन्देहे भवं तत्रानुष्ठितसाधनविशेषयुक्तमित्यर्थः । तर्हि यथोक्तजन्मनि साधनानुष्ठानमन्तरेणैव बुद्धिसंबन्धः स्यादित्याशङ्क्याह—यतते चेति । प्रयत्नः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

द्विविधेऽपि जन्मनि पौर्वदेहिकं पूर्वदेहप्राप्तं बुद्धिसंयोगम् । यावती च योगभूमिः पूर्वजन्मनि जिता तत्र च यावान्बुद्धिलाभो जातस्तावन्तं बुद्धिसंयोगं पूर्वाभ्यासादल्पेनैवाभ्यासेन लभते । तस्मादपि भूयसां बह्वयां संसिद्धौ ऊर्ध्वभूमि-

४ मधुसूदनीव्याख्या ।

दरिद्राणां ब्राह्मणानां नतु श्रीमतां राज्ञां कुले भवति धीमतां ब्रह्मविद्यावताम् । एतेन योगिनामिति न कर्मिग्रहणम् । यच्छुचीनां श्रीमतां राज्ञां गृहे योगभ्रष्टजन्म तदपि दुर्लभमनेकसुकृतसाध्यत्वान्मोक्षपर्यवसायित्वाच्च । यत्तु शुचीनां दरिद्राणां ब्राह्मणानां ब्रह्मविद्यावतां कुले जन्म एतद्धि प्रसिद्धं शुकादिवद्दुर्लभतरं दुर्लभं लोके यदीदृशं लोके सर्वप्रमादकारणशून्यं जन्मेति द्वितीयः स्तूयते । भोगवासनाशून्यत्वेन सर्वकर्मसंन्यासार्हत्वात् ॥ ४२ ॥ एतादृशजन्मद्वयस्य दुर्लभत्वं कस्मात्—यस्मात् तत्र द्विप्रकारेऽपि जन्मनि पूर्वदेहे भवं पौर्वदेहिकं सर्वकर्मसंन्यासगुरूपसदनश्रवणमननिदिध्यासनानां मध्ये यावत्पर्यन्तमनुष्ठितं तावत्पर्यन्तमेव तं ब्रह्मात्मैक्यविषयया बुद्ध्या संयोगम् । तत्साधनकलापमिति यावत् । लभते प्राप्नोति । न केवलं लभत एव किंतु ततस्तल्लाभानन्तरं भूयोऽधिकं लब्धाया भूमेरग्रिमां भूमिं संपादयितुं संसिद्धौ संसिद्धिर्मोक्षस्तन्निमित्तं यतते च प्रयत्नं करोति च । यावन्मोक्षं भूमिकाः संपादयतीत्यर्थः । हे कुरुनन्दन, तवापि शुचीनां श्रीमतां कुले योगभ्रष्टजन्म जातमिति पूर्ववासनावशादनायासेनैव ज्ञानलाभो भविष्यतीति सूचयितुं महाप्रभावस्य कुरोः कीर्तनम् । अयमर्थो भगवद्वसिष्ठवचने व्यक्तः । यथा श्रीरामः 'एकामथ द्वितीयां वा तृतीयां भूमिकामुत । आरूढस्य मृतस्याथ कीदृशी भगवन्गतिः ॥' पूर्वं हि सप्त भूमयो व्याख्याताः । तत्र नित्यानित्यवस्तुविवेकपूर्वकादिहामुत्रार्थभोगवैराग्याच्छमदमश्रद्धातितिक्षासर्वकर्मसंन्यासादिपुरःसरा मुमुक्षा शुभेच्छाख्या प्रथमा भूमिका साधनचतुष्टयसंपदिति यावत् । ततो गुरुमुपसृत्य वेदान्तवाक्यविचारणात्मिका द्वितीया भूमिका श्रवणमननसंपदिति यावत् । ततः श्रवणमननपरिनिष्पन्नस्य तत्त्वज्ञानस्य निर्विचिकित्सतारूपा तनुमानसा नाम तृतीया भूमिका निदिध्यासनासंपदिति यावत् । चतुर्थी भूमिका तु तत्त्वसाक्षात्कार एव । पञ्चमषष्ठसप्तमभूमयस्तु जीवन्मुक्तेरवान्तरभेदा इति तृतीये प्राग्व्याख्यातम् । तत्र चतुर्थीं भूमिं प्राप्तस्य मृतस्य जीवन्मुक्त्यभावेऽपि विदेहकैवल्यं प्रति नास्त्येव संशयः । तदुत्तरभूमित्रयं प्राप्तस्तु जीवन्नपि मुक्तः किमु विदेह इति नास्त्येव भूमिकाचतुष्टये शङ्का । साधनभूतभूमिकात्रये तु कर्मत्यागाज्ज्ञानालाभाच्च भवति शङ्केति तत्रैव प्रश्नः । श्रीवसिष्ठः 'योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ।

५ भाष्योत्कर्षदीपिका ।

श्रीमतामित्युक्तत्वाच्च भाष्ये दरिद्राणामित्युक्तम् । अतएव तत्त्वविचारयोग्यबुद्धिमतां कुले भवति जायते । यदीदृशं जन्म तदेतल्लोके दुर्लभतरमतिदुर्लभं पुनः प्रतिबन्धकाभावात् । श्रीमतां कुलापेक्षया दरिद्राणां कुले जन्म श्रेष्ठतरमित्यर्थः ॥ ४२ ॥ एतादृशजन्मनो दुर्लभतरत्वं कस्मात् यस्मात्तत्र योगिनां कुले तं पौर्वदेहिकं पूर्वदेहे भवं बुद्धिसंयोगं बुद्ध्या निष्कामकर्मणा शुद्धया श्रवणादिसंपन्नया संयोगं लभते प्राप्नोति । ततस्तस्मात्पूर्वदेहाभ्याससंस्काराद्भूयो बहुतरं संसिद्धौ मोक्षार्थं यतते तत्त्वसाक्षात्कारं यत्नेन संपादयतीत्यर्थः । यत्त्वेतादृशजन्मद्वयदुर्लभत्वं कस्माद्यस्मात् तत्र द्विःप्रकारेऽपि जन्मनीति तदुपेक्ष्यम् । अथवेत्यादिनोक्तपक्षस्य श्रैष्ठ्यप्रतिज्ञाया हेतोरावश्यकत्वात् । अन्यथोभयोरपि साम्यप्रसङ्गे प्रतिज्ञाघातापत्तेः । योगिनां श्रीमतां कुले जातस्य यथा योगित्वं बुद्धिमत्त्वं च भवति तथा क्षात्रधर्मेऽतिकुशलस्य कुरोर्वंशे जातस्य तवापि स्वकुलोचितधर्मसंबन्ध आवश्यक इति सूचयन्नाह—हे कुरुनन्दनेति ॥ ४३ ॥

६ श्रीधरीव्याख्या ।

मोक्षहेतुत्वात् ॥ ४२ ॥ ततः किमत आह—तत्रेति सार्धेन । तत्र द्विःप्रकारेऽपि जन्मनि पूर्वदेहे भवं पौर्वदेहिकं तमेव ब्रह्मविषयया

७ अभिनवगुप्ताचार्यव्याख्या ।

दुर्लभतरमिति । श्रीमतां गेहे किलावश्यमेव विघ्नाः सन्ति संसिद्धौ मोक्षात्मिकायाम् ॥ ४२ ॥ ४३ ॥ अवशः परतन्त्र एव किल तेन

**पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।**
**जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नन्दन ॥ ४३ ॥ कथं पूर्वदेहबुद्धिसंयोग इति तदुच्यते—पूर्वेति । यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासस्तेनैव बलवता ह्रियते हि यस्मादवशोऽपि स योगभ्रष्टो न कृतं चेद्योगाभ्याससंस्काराद्बलवत्तरमधर्मादिलक्षणं कर्म तदा योगाभ्यासजनितेन संस्कारेण ह्रियते । अधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोऽपि संस्कारोऽभिभूयत एव । तत्क्षये तु योगजः संस्कारः स्वयमेव कार्यमारभते न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः । जिज्ञासुरपि योगस्य स्वरूपं ज्ञातुमिच्छन्योगमार्गे प्रवृत्तः संन्यासी

२ आनन्दगिरिव्याख्या ।

श्रवणाद्यनुष्ठानविषयः ॥ ४३ ॥ यदि पूर्वसंस्कारोऽस्येच्छामुपनयन्न प्रवर्तयति तथाच प्रवृत्तिरनिच्छया स्यादित्याशङ्क्याह—**पूर्वेति** । स हि योगभ्रष्टः समनन्तरजन्मकृतसंस्कारवशादुत्तरस्मिञ्जन्मनि अनिच्छन्नपि योगं प्रत्येवाकृष्टो भवतीत्यर्थः । तत्र कैमुतिकन्यायं सूचयति—**जिज्ञासुरिति** । पूर्वार्धं विभजते—यः **पूर्वेति** । तस्मान्नेच्छया तस्य प्रवृत्तिरिति शेषः । योगभ्रष्टस्याधर्मादिप्रतिबन्धेऽपि तर्हि पूर्वाभ्यासवशाद्बुद्धिसंबन्धः स्यादित्याशङ्क्याह—**नेत्यादिना** । यदि योगभ्रष्टेन योगाभ्यासजनितसंस्कारप्राबल्यात्प्रबलमधर्मप्रभेदरूपं कर्म न कृतं स्यात्तदा तेन संस्कारेण वशीकृतः सन्निच्छादिरहितोऽपि बुद्धिसंबन्धभाग्भवतीत्यर्थः । विपक्षे योगसंस्कारस्याभिभूतत्वान्न कार्यारम्भकत्वमित्याह—**अधर्मश्चेदिति** । योगजसंस्कारस्याधर्माभिभूतस्य कार्यमकृत्वैवाभिभावकप्राबल्ये प्रणाशः स्यादित्याशङ्क्याह—**तत्क्षये त्विति** । कालव्यवधानान्निवृत्तिं शङ्कित्वोक्तं—**नेति** । तृणजलायुकादृष्टान्तश्रुत्या संस्कारस्य दीर्घतायाः समधिगतत्वादिति भावः । कैमुतिकन्यायोक्तिपरमुत्तरार्धं विभजते—**जिज्ञासुरपीत्यादिना** । अत्रापि संन्यासीति विशेषणं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

लाभार्थमित्यर्थः । यतते यत्नं करोति ॥ ४३ ॥ कुतो यतते शिक्षितोऽपीत्यत आह—**पूर्वेति** । अवशोऽपि प्रह्लादा-

४ मधुसूदनीव्याख्या ।

भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ततः सुरविमानेषु लोकपालपुरेषु च । मेरूपवनकुञ्जेषु रमते रमणीसखः ॥ ततः सुकृतसंभारे दुष्कृते च पुराकृते । भोगक्षयात्परिक्षीणे जायन्ते योगिनो भुवि ॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् । जनित्वा योगमेवैते सेवन्ते योगवासिताः ॥ तत्र प्राग्भावनाभ्यस्तं योगभूमिक्रमं बुधाः । दृष्ट्वा परिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम् ॥' इति । अत्र प्रागुपचितभोगवासनाप्राबल्यादल्पकालाभ्यस्तवैराग्यवासनादौर्बल्येन प्राणोत्क्रान्तिसमये प्रादुर्भूतभोगस्पृहः सर्वकर्मसंन्यासी यः स एवोक्तः । यस्तु वैराग्यवासनाप्राबल्यात्प्रकृष्टपुण्यप्रकटितपरमेश्वरप्रसादवशेन प्राणोत्क्रान्तिसमयेऽनुद्भूतभोगस्पृहः संन्यासी भोगव्यवधानं विनैव ब्राह्मणानामेव ब्रह्मविदां सर्वप्रमादकारणशून्ये कुले समुत्पन्नस्तस्य प्राक्तनसंस्काराभिव्यक्तेरनायासेनैव संभवान्नास्ति पूर्वस्यैव मोक्षं प्रत्याशङ्केति स वसिष्ठेन नोक्तो भगवता तु परमकारुणिकेनाथवेति पक्षान्तरं कृत्वोक्त एव । स्पष्टमन्यत् ॥ ४३ ॥ ननु यो ब्रह्मविदां ब्राह्मणानां सर्वप्रमादकारणशून्ये कुले समुत्पन्नस्तस्य मध्ये विषयभोगव्यवधानाभावादव्यवहितप्राग्भवीयसंस्कारोद्बोधात्पुनरपि सर्वकर्मसंन्यासपूर्वको ज्ञानसाधनलाभो भवतु नाम । यस्तु श्रीमतां महाराजचक्रवर्तिनां कुले बहुविधविषयभोगव्यवधानेनोत्पन्नस्तस्य विषयभोगवासनाप्राबल्यात्प्रमादकारणसंभवाच्च कथमतिव्यवहितज्ञानसंस्कारोद्बोधः, क्षत्रियत्वेन सर्वकर्मसंन्यासानर्हस्य कथं वा ज्ञानसाधनलाभ इति । तत्रोच्यते—अतिचिरव्यवहितजन्मोपचितेनापि तेनैव पूर्वाभ्यासेन प्रागर्जितज्ञानसंस्कारेणावशोऽपि मोक्षसाधनायाप्रयतमानोऽपि ह्रियते स्ववशीक्रियते अकस्मादेव भोगवासनाभ्यो व्युत्थाप्य मोक्षसाधनोन्मुखः क्रियते ज्ञानवासनाया एवाल्पकालाभ्यस्ताया अपि वस्तुविषयत्वेनावस्तुविषयाभ्यो भोगवासनाभ्यः प्राबल्यात् । पश्य यथा त्वमेव युद्धे प्रवृत्तो ज्ञानायाप्रयतमानोऽपि पूर्व-

५ भाष्योत्कर्षदीपिका ।

कथंभूतं बुद्धिसंयोगं लभत इत्यपेक्षायां तेनैव पूर्वाभ्यासेनावशस्यापि योगभ्रष्टस्य बुद्धिं प्रत्येवाहरणरूपमित्याह—**पूर्वेति** । यः पूर्व-

६ श्रीधरीव्याख्या ।

बुद्ध्या संयोगं लभते । ततश्च भूयोऽधिकं संसिद्धौ मोक्षे प्रयत्नं करोति ॥ ४३ ॥ तत्र हेतुः—**पूर्वेति** । तेनैव पूर्वदेहकृताभ्यासेनावशोऽपि कुतश्चिदन्तरायादनिच्छन्नपि संह्रियते । विषयेभ्यः परावर्त्य ब्रह्मनिष्ठः क्रियते । तदेवं पूर्वाभ्यासवशेन प्रयत्नं कुर्वञ्शनैर्मुच्यत इतीममर्थं कैमुत्यन्यायेन स्फुटयति—**जिज्ञासुरिति सार्धेन** । योगस्य स्वरूपं जिज्ञासुरेव केवलं नतु प्राप्तयोगः । एवंभूतो

७ अभिनवगुप्ताचार्यव्याख्या ।

पूर्वाभ्यासेन बलादेव योगाभ्यासं प्रति नीयते । नचैतत्सामान्यं योगिजिज्ञासामात्रेणैव हि शब्दब्रह्मातिवृत्तिः मन्त्रस्वाध्यायादिरूपं च शब्दब्रह्म अतिवर्तते न स्वीकुरुते । ततो जिज्ञासानन्तरं यत्नवानभ्यासक्रमेण देहान्ते वासुदेवत्वं प्राप्नोति । नचासौ तेनैव देहेन सिद्ध

**प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**योगभ्रष्टः सामर्थ्यात्सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्ततेऽपाकरिष्यति किमुत बुद्धा यो योगं तन्निष्ठोऽभ्यासं कुर्यात् ॥ ४४ ॥ कुतश्च योगित्वं श्रेय इति—प्रयत्नादिति । प्रयत्नाद्यतमानोऽधिकं**

२ आनन्दगिरिव्याख्या ।

पूर्ववदवधेयमित्याह—**सामर्थ्यादिति** । नहि कर्मी कर्ममार्गे प्रवृत्तस्ततो भ्रष्टः शङ्कितुं शक्यते, अतः संन्यासी पूर्वोक्तैर्विशेषणैर्विशिष्टो योगभ्रष्टोऽभीष्टः सोऽपि वैदिकं कर्म तत्फलं चातिवर्तते किमुत योगं बुद्धा तन्निष्ठः सदाभ्यासं कुर्वन्कर्म तत्फलं चातिवर्तेत इति वक्तव्यमिति योजना । योगनिष्ठस्य कर्मतत्फलातिवर्तनं ततोऽधिकफलावाप्तिर्विवक्ष्यते ॥ ४४ ॥ योगनिष्ठस्य श्रेष्ठत्वे हेत्वन्तरं वक्तुमुत्तरश्लोकमवतारयति—**कुतश्चेति** । मृदुप्रयत्नोऽपि क्रमेण मोक्ष्यते चेदधिकप्रयत्नस्य क्लेशहेतोरकिंचित्करत्वमित्याशङ्क्य हेत्वन्तरमेव प्रकटयति—**प्रयत्नादिति** । तत्र योग-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दिवत्पित्रादिभिरन्यथा नीयमानोऽपि तेनैव पूर्वाभ्यासेन बलवता ह्रियते योगप्रवणः क्रियते । यतो योगस्य जिज्ञासुर्ज्ञानमात्रमिच्छन्यो भवति सोऽपि शब्दब्रह्म कर्मकाण्डं वेदमप्यतिक्रम्य वर्तते किंपुनः पित्राद्याज्ञाम् । इत्थं पूर्वाभ्यासबलं यन्महान्तमपि पित्रादियत्नं वृथा करोतीत्यर्थः ॥ ४४ ॥ एवं योगभ्रष्टगतिमुक्त्वा यो विषयैर्ह्रियमाणोऽपि प्रयत्नेन योगमेवाभ्यसितुं प्रवर्तते तस्य गतिमाह—**प्रयत्नादिति** । प्रयत्नात्प्रकृष्टाद्धठाद्वायुनिरोधादिरूपात्खेचर्यादिमुद्राविशेषा-

४ मधुसूदनीव्याख्या ।

संस्कारप्राबल्यादकस्मादेव रणभूमौ ज्ञानोन्मुखोऽभूरिति । अतएव प्रागुक्तं नेहाभिक्रमनाशोऽस्तीति । अनेकजन्मसहस्रव्यवहितोऽपि ज्ञानसंस्कारः स्वकार्यं करोत्येव सर्वविरोध्युपमर्देनेत्यभिप्रायः । सर्वकर्मसंन्यासाभावेऽपि हि क्षत्रियस्य ज्ञानाधिकारः स्थित एव । यथा पाटच्चरेण बहूनां रक्षिणां मध्ये विद्यमानमप्यश्वादिद्रव्यं स्वयमनिच्छदपि तान्सर्वानभिभूय स्वसामर्थ्यविशेषादेवापह्रियते, पश्चात्तु कदापहृतमिति विमर्शो भवति, एवं बहूनां ज्ञानप्रतिबन्धकानां मध्ये विद्यमानोऽपि योगभ्रष्टः स्वयमनिच्छन्नपि ज्ञानसंस्कारेण बलवता स्वसामर्थ्यविशेषादेव सर्वान्प्रतिबन्धकानभिभूयात्मवशीक्रियत इति हृञः प्रयोगेण सूचितम् । अतएव संस्कारप्राबल्याज्जिज्ञासुर्ज्ञातुमिच्छुरपि योगस्य मोक्षसाधनज्ञानस्य विषयं ब्रह्मज्ञानं प्रथमभूमिकायां स्थितः संन्यासीति यावत् । सोऽपि तस्यामेव भूमिकायां मृतोऽन्तराले बहून्विषयान्भुक्त्वा महाराजचक्रवर्तिनां कुले समुत्पन्नोऽपि योगभ्रष्टः प्रागुपचितज्ञानसंस्कारप्राबल्यात्तस्मिञ्जन्मनि शब्दब्रह्म वेदं कर्मप्रतिपादकमतिवर्ततेऽतिक्रम्य तिष्ठति । कर्माधिकारातिक्रमेण ज्ञानाधिकारी भवतीत्यर्थः । एतेनापि ज्ञानकर्मसमुच्चयो निराकृत इति द्रष्टव्यम् । समुच्चये हि ज्ञानिनोऽपि कर्मकाण्डातिक्रमाभावात् ॥ ४४ ॥ यदा चैवं प्रथमभूमिकायां मृतोऽपि अनेकभोगवासनाव्यवहितमपि विविधप्रमादकारणवति महाराजकुलेऽपि जन्म लब्ध्वापि योगभ्रष्टः पूर्वोपचितज्ञानसंस्कारप्राबल्येन कर्माधिकारमतिक्रम्य ज्ञानाधिकारी भवति तदा किमु वक्तव्यं द्वितीयायां तृतीयायां वा भूमिकायां मृतो विषयभोगान्ते लब्धमहाराजकुलजन्मा, यदि वा भोगमकृत्वैव लब्धब्रह्मविद्ब्राह्मणकुलजन्मा योगभ्रष्टः कर्माधिकारातिक्रमेण ज्ञानाधिकारी भूत्वा तत्साधनानि संपाद्य तत्फललाभेन संसारबन्धनान्मुच्यत इति, तदेतदाह—प्रयत्नात्पूर्व-

५ भाष्योत्कर्षदीपिका ।

जन्मनि कृतोऽभ्यासः तेनैव बलवता हि यस्मादवशः पित्राद्यधीनोऽपि सः योगभ्रष्टो ह्रियते स्ववशीक्रियते योगाभ्याससंस्कारात् बलवत्तरस्याधर्मस्य प्रतिबन्धकस्याभावात् प्रतिबन्धे सत्यपि पूर्वाभ्यासस्तत्क्षयं प्रतीक्षते । ननु तस्य नाशोऽस्ति । एतदेव कैमुत्येन द्रढयति । योगस्य जिज्ञासुर्ननु यतमानो योगी सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्तते मुञ्चति, किमुत यो योगं ज्ञात्वा तन्निष्ठोऽभ्यासं कुर्यात् । एतेन ननु योगिनां दरिद्राणां कुले जातस्य बुद्धिसंयोगोऽस्तु नाम, शुचीनां श्रीमतां कुले उत्पन्नस्य द्रव्यजनितभोगादिप्रतिबन्धवशाद्बुद्धिसंयोगो न भविष्यतीत्याशङ्कापि परास्ता ॥४४॥ इतश्च योगित्वं श्रेय इत्याह—**प्रयत्नादिति** । प्रयत्नादधिकयत्नात्प्रकर्षेण यत्नेन यतमानस्तु योगी संशुद्धकिल्बिषः संशुद्धपापोऽनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततः प्राप्ततत्त्वसाक्षात्कारः सन् परां मोक्षाख्यां गतिं याति । यत्तु तत इति तच्छब्देन प्रकृतं

६ श्रीधरीव्याख्या ।

योगे प्रविष्टमात्रोऽपि पापवशाद्योगभ्रष्टोऽपि शब्दब्रह्म वेदमतिवर्तते वेदोक्तकर्मफलान्यतिक्रामति । तेभ्योऽधिकं फलं प्राप्य मुच्यत इत्यर्थः ॥४४॥ यदैवं मन्दप्रयत्नोऽपि योगी परां गतिं याति तदा, यस्तु योगी प्रयत्नादुत्तरोत्तरमधिकं योगे यतमानो यत्नं कुर्वन्योगे-

७ अभिनवगुप्ताचार्यव्याख्या ।

इति मन्तव्यम् । अपितु बहूनि जन्मानि तेन तदभ्यस्तमिति मन्तव्यम् । अतएव यस्यानन्यव्यापारतया भगवद्व्यापारानुरागित्वं स

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥**

१ श्रीमच्छांकरभाष्यम्।

यतमान इत्यर्थः। तत्र योगी विद्वान्संशुद्धकिल्बिषो विशुद्धकिल्बिषः संशुद्धपापोऽनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततो लब्धसम्यग्दर्शनः सन्याति परां प्रकृष्टां गतिम् ॥ ४५ ॥ यस्मादेवं तस्मात्—तपस्विभ्य इति। तप-

२ आनन्दगिरिव्याख्या।

विषये प्रयत्नातिरेके सतीत्यर्थः। ततः संचितसंस्कारसमुदायादिति यावत्। समुत्पन्नसम्यग्दर्शनवशात्प्रकृष्टा गतिः संन्यासिना लभ्यते तेन शीघ्रं मुक्तिमिच्छन्नधिकप्रयत्नो भवेदल्पप्रयत्नस्तु चिरेणैव मुक्तिभागित्यर्थः ॥ ४५ ॥ सम्यग्ज्ञानद्वारा मोक्षहेतुत्वं योगस्योक्तमनूद्य योगिनः सर्वाधिकत्वमाह—**यस्मादिति**। योगस्य सर्वस्मादुत्कर्षादवश्यकर्तव्यत्वाय योगिनः सर्वाधिक्यं साधयति—**तपस्विभ्य इति**। योगिनो ज्ञानिनश्च पर्यायत्वात्कथं तस्य ज्ञानिभ्योऽधिकत्व-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

भ्यासाद्यो यतमानः संशुद्धकिल्बिषो निष्पापो भवति। यदाह मनुः 'प्राणायामैर्दहेद्देनः' इति। हठयोगानां सर्वेषां पापनिवृत्त्युपयोगित्वं न तत्त्वसाक्षात्कारे साक्षात्साधनत्वमित्यर्थः। अतएव सः अनेकैर्जन्मभिः संसिद्धः प्राप्तयोगो भूत्वा ततः परां गतिं मोक्षं याति। एतेन 'चक्षुश्चैवान्तरे भ्रुवोः' इति पञ्चमान्ते यत्सूत्रितं तद्व्याख्यातम् ॥ ४५ ॥ एवं योगिनं स्तौति—**तपस्विभ्य इति**। तपस्विनोऽत्र कृच्छ्रचान्द्रायणमासोपवासादिकर्तारः। ज्ञानिनश्च शास्त्रीय-

४ मधुसूदनीव्याख्या।

कृतादप्यधिकमधिकं यतमानः प्रयत्नातिरेकं कुर्वन् योगी पूर्वोपचितसंस्कारवांस्तेनैव योगप्रयत्नपुण्येन संशुद्धकिल्बिषो धौतज्ञानप्रतिबन्धकपापमलः, अतएव संस्कारोपचयात्पुण्योपचयाच्चानेकैर्जन्मभिः संसिद्धः संस्कारातिरेकेण पुण्यातिरेकेण च प्राप्तचरमजन्मा, ततः साधनपरिपाकाद्याति परां प्रकृष्टां गतिं मुक्तिम्। नास्त्येवात्र कश्चित्संशय इत्यर्थः ॥ ४५ ॥ इदानीं योगी स्तूयतेऽर्जुनं प्रति श्रद्धातिशयोत्पादनपूर्वकं योगं विधातुं—तपस्विभ्यः कृच्छ्रचान्द्रायणादितपःपरायणेभ्योऽप्यधिक उत्कृष्टो योगी तत्त्वज्ञानोत्पत्त्यनन्तरं मनोनाशवासनाक्षयकारी 'विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इति श्रुतेः। अतएव कर्मिभ्यो दक्षिणासहितज्योतिष्टोमादिकर्मानुष्ठायिभ्यश्चाधिको योगी। कर्मिणां तपस्विनां चाज्ञत्वेन मोक्षानर्हत्वात्। ज्ञानिभ्योऽपि परोक्षज्ञानवद्भ्योऽप्यपरोक्षज्ञानवानधिको मतो योगी। एवमपरोक्षज्ञानवद्भ्योऽपि मनोनाशवासनाक्षयाभावादजीवन्मुक्तेभ्यो मनोनाशवासनाक्षयवत्त्वेन जीवन्मुक्तो योग्यधिको मतः मम

५ भाष्योत्कर्षदीपिका।

चलितमानसत्वं परामृशति। ततश्चलितमानसत्वाद्धेतोः। अयंभावः—चलितत्वदशायां काम्यानि कर्माणि यानि कृतानि तेषां प्रत्येकं फलदातृत्वात्, युगपत्सर्वकर्मफलसंयोगासंभवात्, एकैकस्य फलमनुभूय शुचीनां श्रीमतां योगिनां वा गेहे जन्मानुभूय पुनः कर्मयोगे यतमानः तत्तत्काम्यकर्मसंख्याकजन्मान्यनुभूय ज्ञानसंपन्नः सन् मोक्षं प्रतिपद्यत इति। प्रयत्नादिति कर्मणि ल्यब्लोपे पञ्चमी। प्रयत्नं प्राप्येत्यर्थः। कर्मयोगी कर्मानुष्ठाता। योगिनं विशिनष्टि—यतमान इति। उज्झितदर्प इत्यर्थः। शुचीनां श्रीमतां योगिनां वा कुलेऽहमुत्पन्न इत्यभिमानवर्जित इति भाव इति तच्चिन्त्यम्। निरर्थकाया ल्यब्लोपकल्पनायाः प्रकृष्टपरामर्शकल्पनाया उत्तरश्लोकेन सर्वतः श्रैष्ठ्येन वर्ण्यमानस्य योगिनः कर्मयोगिपरत्वेन वर्णनस्य जिज्ञासुरपीत्यननुरोधेन यतमानपदव्याख्यानस्य चायुक्तत्वादिति दिक् ॥४५॥ योगस्यावश्यसंपादनार्थं सर्वाधिक्यं साधयति। तपस्विभ्यः शरीरादिकार्श्यकारिव्रतादिपरेभ्योऽप्यधिको योगी पूर्वोक्तः ज्ञानिभ्यः शास्त्रीयपरोक्षज्ञानवद्भ्योऽप्यधिको मतोऽभिमतः। कर्मिभ्योऽग्निहोत्रादिकर्मवद्भ्योऽप्यधिक उत्कृष्टः। तस्माद्योगी भव। स्वधर्माचरणेन शुद्धचित्तस्य तव योगिभावः सुगम इति सूचयन्नाह हे अर्जुनेति। योगेन शुद्धब्रह्मसाक्षात्कारं लब्ध्वैव त्वमन्वर्थसंज्ञो भविष्यसीति सूचनार्थं वा संबोधनम्। योगी अत्र ध्यानयोगी विवक्षितः पूर्वोत्तरग्रन्थानुरोधात्। ध्यानयोगस्यैवोपसंहार्यत्वाच्च। एतेन

६ श्रीधरीव्याख्या।

नैव संशुद्धकिल्बिषो विधूतपापः सोऽनेकेषु जन्मसूपचितेन योगेन संसिद्धः सम्यग्ज्ञानी भूत्वा ततः श्रेष्ठां गतिं यातीति किं वक्तव्यमित्यर्थः ॥ ४५ ॥ यस्मादेवं तस्मात्—**तपस्विभ्य इति**। कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्योऽपि, ज्ञानिभ्यः शास्त्रज्ञानवद्भ्योऽपि, कर्मिभ्य

७ अभिनवगुप्ताचार्यव्याख्या।

योगभ्रष्ट इति निश्चेयः ॥ ४४ ॥ ४५ ॥ योगस्यप्राधान्यमाह—तपस्विभ्य इति। तपस्विभ्योऽधिकत्वं पूर्वमेव सूचितम्। ज्ञानिभ्योऽधिकत्वं ज्ञानस्य योगफलत्वात्कर्मिभ्य उत्कर्षः। स एव कर्माणि कर्तुं वेत्ति। नच निरीश्वरं कर्मयोगमात्रं संसिद्धिदमित्युच्यते ॥ ४६ ॥

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

१ श्रीमच्छांकरभाष्यम् ।

**स्विभ्योऽधिको योगी ज्ञानिभ्योऽपि । ज्ञानमत्र शास्त्रार्थपाण्डित्यं तद्वद्भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठ इति, कर्मिभ्योऽग्निहोत्रादि कर्म तद्वद्भ्योऽधिको योगी विशिष्टो यस्मात्तस्माद्योगी भवार्जुन ॥ ४६ ॥ योगिनामिति । योगिनामपि सर्वेषां रुद्रादित्यादिध्यानपराणां मध्ये मद्गतेन मयि वासुदेवे समाहिते-**

२ आनन्दगिरिव्याख्या ।

मित्याशङ्क्याह—**ज्ञानमिति**। योगिनः सर्वाधिकत्वे फलितमाह—**तस्मादिति** ॥ ४६ ॥ नन्वादित्यो विराडात्मा सूत्रं कारणमक्षरमित्येतेषामुपासका भूयांसो योगिनो गम्यन्ते तेषां कतमः श्रेयानिष्यते तत्राह—**योगिनामिति** । यो भगवन्तं सगुणं निर्गुणं वा यथोक्तेन चेतसा श्रद्दधानः सन्ननवरतमनुसंधत्ते स युक्तानां मध्येऽतिशयेन युक्तः श्रेयानीश्वरस्याभिप्रेतो नहि तदीयोऽभिप्रायोऽन्यथा भवितुमर्हतीत्यर्थः । तदनेनाध्यायेन कर्मयोगस्य संन्यासहेतोर्मर्यादां

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पाण्डित्यवन्तः । कर्मिणोऽग्निहोत्राद्यनुष्ठातारः । तेभ्यः सर्वेभ्यो योगी यतोऽधिको मतस्तस्माद्योगी भवार्जुन ॥ ४६ ॥ समाप्तः कर्मप्रधानस्त्वंपदार्थविवेकः । अतःपरमुपासनाप्राधान्येन तत्पदार्थं निरूपयितुकामस्तदुपासनां महाफलत्वेन स्तौति—**योगिनामिति** । दैवमेवापरे यज्ञमित्यादिना चतुर्थाध्यायप्रोक्ता द्वादशयोगास्तद्वतां योगिनां सर्वेषां मध्ये

४ मधुसूदनीव्याख्या ।

संमतः । यस्मादेवं तस्मादधिकाधिकप्रयत्नबलात्त्वं योगभ्रष्ट इदानीं तत्त्वज्ञानमनोनाशवासनाक्षयैर्युगपत्संपादितैर्योगी जीवन्मुक्तो यः स योगी परमो मत इति प्रागुक्तः स तादृशो भव साधनपरिपाकात् । हे अर्जुनेति शुद्धेति संबोधनार्थः ॥ ४६ ॥ इदानीं सर्वयोगिश्रेष्ठं योगिनं वदन्नध्यायमुपसंहरति—योगिनां वसुरुद्रादित्यादिक्षुद्रदेवताभक्तानां सर्वेषामपि मध्ये मयि भगवति वासुदेवे पुण्यपरिपाकविशेषाद्गतेन प्रीतिवशान्निविष्टेन मद्गतेनान्तरात्मनान्तःकरणेन प्राग्भवीयसंस्कारपाटवात्साधुसङ्गाच्च मद्भजन एव श्रद्धावानतिशयेन श्रद्दधानः सन् भजते सेवते सततं चिन्तयति यो मां नारायणमीश्वरेश्वरं सगुणं निर्गुणं वा मनुष्योऽयमीश्वरान्तरसाधारणोऽयमित्यादिभ्रमं हित्वा स एव मद्भक्तो योगी युक्ततमः सर्वेभ्यः समाहितचित्तेभ्यो युक्तेभ्यः श्रेष्ठो मे मम परमेश्वरस्य सर्वज्ञस्य मतो निश्चितः । समानेऽपि योगाभ्यासक्लेशे समानेऽपि भजनायासे मद्भक्तिशून्येभ्यो मद्भक्तस्यैव श्रेष्ठत्वात्त्वं मद्भक्तः परमो युक्ततमोऽनायासेन भवितुं शक्ष्यसीति भावः । तदनेनाध्यायेन कर्मयोगस्य बुद्धिशुद्धिहेतोर्मर्यादां दर्शयता, ततश्च कृतसर्वकर्मसंन्यासस्य साङ्गं योगं विवृण्वता मनोनिग्रहोपायं चाक्षेपनिरासपूर्वकमुपदिशता, योगभ्रष्टस्य पुरुषार्थशून्यताशङ्कां च शिथिलयता, कर्मकाण्डं त्वंपदार्थनिरूपणं च समापितम् । अतःपरं श्रद्धावान्भजते यो

५ भाष्योत्कर्षदीपिका ।

ज्ञानिभ्योऽपि परोक्षज्ञानवद्भ्योऽप्यपरोक्षज्ञानवानधिको मतः । योगी एवमपरोक्षज्ञानवद्भ्योऽपि मनोनाशवासनाक्षयाभावादजीवन्मुक्तेभ्यो मनोवासनाक्षयवत्त्वेन जीवन्मुक्तो योग्यधिको मत इत्यादि प्रत्युक्तम् । योगी कर्मयोगीति व्याख्यानमपि प्रकरणविरोधादुपेक्ष्यम् ॥ ४६ ॥ योगिनामन्यदेवताध्यानयुक्तानामपि सर्वेषां मध्ये मद्गतेन मयि वासुदेवे समाहितेनान्तरात्मनान्तःकरणेन श्रद्धावान्वासुदेवान्न परं किंचिदिति श्रद्दधानः सन् यो मां भजते सेवते स मेऽतिशयेन युक्तो युक्ततमः सर्वोत्तमो ध्यानयोगी मतोऽभिप्रेतः । अतस्त्वमेतादृशो ध्यानयोगी भवेत्याशयः । तदनेन षष्ठाध्यायेन कर्मयोगस्य संन्यासहेतोर्मर्यादारूपं साङ्गं ध्यानयोगं मनोनिग्रहोपायं योगभ्रष्टस्य दुर्गत्यभावेन सुगत्या मोक्षाप्तिं वासुदेवभजनस्य श्रैष्ठ्यं च दर्शयताऽनेन साधनेन शुद्धत्वंपदार्थाभिज्ञस्य वाक्यार्थज्ञाना-

६ श्रीधरीव्याख्या ।

इष्टापूर्तादिकर्मकारिभ्योऽपि योगी श्रेष्ठोऽभिमतः, तस्मात्त्वं योगी भव ॥ ४६ ॥ योगिनामपि यमनियमादिपराणां मध्ये मद्भक्तः श्रेष्ठ इत्याह—**योगिनामिति** । मद्गतेन मय्यासक्तेनान्तरात्मना मनसा यो मां परमेश्वरं वासुदेवं श्रद्धायुक्तः सन्भजते स योगयुक्तेषु

७ अभिनवगुप्ताचार्यव्याख्या ।

योगिनामपीति । सर्वयोगिमध्ये यएव मामन्तःकरणे निवेश्य भक्तिश्रद्धातत्परो गुरुचरणसेवालब्धसंप्रदायक्रमेण मामेव नान्यं भजते

१ श्रीमच्छांकरभाष्यम् ।

नान्तरात्मनान्तःकरणेन श्रद्धावाञ्श्रद्दधानः सन्भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति ॥ ४७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

२ आनन्दगिरिव्याख्या ।

दर्शयता साङ्गं च योगं विवृण्वता मनोनिग्रहोपायोपदेशेन योगभ्रष्टस्यात्यन्तिकनाशशङ्कावकाशं शिथिलयता त्वंपदार्थाभिज्ञस्य ज्ञाननिष्ठत्वोक्त्या वाक्यार्थज्ञानान्मुक्तिरिति साधितम् ॥ ४७ ॥

इत्यानन्दगिरिकृतगीताभाष्यटीकायां षष्ठोऽध्यायः ॥ ६ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यो मद्गतेन मयि वासुदेवे समर्पितेनान्तरात्मना चित्तेन श्रद्धावान्सन् मां भजते स मे मम युक्ततमोऽतिशयेन युक्तः श्लाघ्यो मतोऽभिप्रेतः । तस्मान्मद्भक्तो भवेति भावः ॥ ४७ ॥

इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधुरनीलकण्ठकृतौ भारतभावदीपे भीष्मपर्वणि भगवद्गीतार्थप्रकाशे षष्ठोऽध्यायः ॥ ६ ॥

४ मधुसूदनीव्याख्या ।

मामिति सूत्रितं भक्तियोगं भजनीयं च भगवन्तं वासुदेवं तत्पदार्थं निरूपयितुमग्रिममध्यायषड्कमारभ्यत इति शिवम् ॥ ४७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

५ भाष्योत्कर्षदीपिका ।

न्मोक्ष इति प्रसाधितम् ॥ ईशाराधनतत्परेण मनसा कर्मादिसंतन्वता कर्तृत्वादिविवर्जितेन निगमैर्लब्धा विशुद्धात्मता । येनात्तं परमैकतां सुखघनां स्वं नौमि तं शाश्वतं प्रत्यञ्चं परमार्थतो भ्रमवशाज्जीवं स्वरूपाच्युतम् ॥ ४७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

६ श्रीधरीव्याख्या ।

श्रेष्ठो मम संमतः । अतो मद्भक्तो भवेति भावः ॥ ४७ ॥ आत्मयोगमवोचद्यो भक्तियोगशिरोमणिम् । तं वन्दे परमानन्दं माधवं भक्तसेवधिम् ॥ १ ॥ ॥ इति सुबोधिन्यां टीकायां षष्ठोऽध्यायः ॥ ६ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

स युक्ततमः परमेश्वरसमाविष्ट इति सेश्वरस्य ज्ञानस्य सर्वप्राधान्यमुक्तमिति शिवम् ॥ ४७ ॥ संग्रहोऽत्र—भगवन्नामसंप्राप्तिमात्रात्सर्वमवाप्यते । फलिताः शालयः सम्यग्वृष्टिमात्रेऽवलोकिते ॥ इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे षष्ठोऽध्यायः ॥ ६ ॥

समाप्तमत्र कर्मकाण्डाख्यं प्रथमषट्कम् ।

इत उपासनाषट्कमारभ्यते—

# सप्तमोऽध्यायः ।

श्रीभगवानुवाच ।

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

१ श्रीमच्छांकरभाष्यम् ।

'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मतः' इति प्रश्नबीजमुपन्यस्य स्वयमेवेदृशं मदीयं तत्त्वमेवं मद्गतान्तरात्मा स्यादित्येतद्विवक्षुर्भगवानुवाच—**मयीति** । मयि वक्ष्यमाणविशेषणे परमेश्वर आसक्तं मनो यस्य स मय्यासक्तमना हे पार्थ, योगं युञ्जन्मनःसमाधानं कुर्वन्मदाश्रयोऽहमेव परमेश्वर आश्रयो यस्य स मदाश्रयः । यो हि कश्चित्पुरुषार्थेन केनचिदर्थी भवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा किंचिदाश्रयं प्रतिपद्यते, अयं तु योगी मामेवाश्रयं प्रतिपद्यते हित्वान्यत्साधनान्तरं मय्येवासक्तमना भवति । यस्त्वमेवंभूतः सन्नसंशयं समग्रं

२ आनन्दगिरिव्याख्या ।

कर्मसंन्यासात्मकसाधनप्रधानं त्वंपदार्थप्रधानं च प्रथमषट्कं व्याख्याय मध्यमषट्कमुपास्तिनिष्ठं तत्पदार्थनिष्ठं च व्याख्यातुमारभमाणः समनन्तराध्यायमवतारयति—**योगिनामिति** । अतीताध्यायान्ते मद्गतेनान्तरात्मना यो भजते मामिति प्रश्नबीजं प्रदर्श्य कीदृशं भगवतस्तत्त्वं कथं वा मद्गतान्तरात्मा स्यादित्यर्जुनस्य प्रश्नद्वये जाते स्वयमेव भगवानपृष्टमेतद्वक्तुमिच्छन्नुक्तवानित्यर्थः । परमेश्वरस्य वक्ष्यमाणविशेषणत्वं सकलजगदायतनत्वादिनानाविधविभूतिभागित्वं तत्रासक्तिर्मनसो विषयान्तरपरिहारेण तन्निष्ठत्वम् । मनसो भगवत्येवासक्तौ हेतुमाह—**योगमिति** । विषयान्तरपरिहारे हि गोचरमालोच्यमाने भगवत्येव प्रतिष्ठितं भवतीत्यर्थः । तथापि स्वाश्रये पुरुषो मनः स्थापयति नान्यत्रेत्याशङ्क्याह—**मदाश्रय इति** । योगिनो यदीश्वराश्रयत्वेन तस्मिन्नेवासक्तमनस्त्वमुपन्यस्तं तदुपपादयति—**यो हीति** । ईश्वराख्याश्रयस्य प्रतिपत्तिमेव प्रकटयति—**हित्वेति** । अस्तु योगिनस्त्वदाश्रयप्रतिपत्त्या मनसस्त्वय्येवासक्तिस्तथापि मम किमायातमित्याशङ्क्य द्वितीयार्धं व्याचष्टे—**यस्त्वमेवमिति** । एवंभूतो यथोक्तध्याननिष्ठ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वाध्यायान्ते यो मां भजति स मे युक्ततमो मत इत्युक्तम्, तत्र कीदृशं पूर्वोक्तनिष्कामकर्मयोगापेक्षया विलक्षणं तव भजनं केन वा गुणेन पूर्वयोगापेक्षया तस्य युक्ततमत्वमित्येतामर्जुनस्याशङ्कां स्वयमेव परिहरन् भगवानुवाच—**मयीति** । कश्चिद्राजाश्रयो धनमानासक्तमना भवति । अयं तु मदाश्रयेण मामेव परमपुरुषार्थभूतं प्राप्तुमिच्छन्नि-

४ मधुसूदनीव्याख्या ।

यद्भक्तिं न विना मुक्तिर्यः सेव्यः सर्वयोगिनाम् । तं वन्दे परमानन्दघनं श्रीनन्दनन्दनम् ॥ १ ॥

एवं कर्मसंन्यासात्मकसाधनप्रधानेन प्रथमषट्केन ज्ञेयं त्वंपदलक्ष्यं सयोगं व्याख्यायाधुना ध्येयब्रह्मप्रतिपादनप्रधानेन मध्यमेन षट्केन तत्पदार्थो व्याख्यातव्यः । तत्रापि 'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मतः' इति प्रागुक्तस्य भगवद्भजनस्य व्याख्यानाय सप्तमोऽध्याय आरभ्यते । तत्र कीदृशं भगवतो रूपं भजनीयं कथं वा तद्गतोऽन्तरात्मा स्यादित्येतद्द्वयं प्रष्टव्यमर्जुनेनापृष्टमपि परमकारुणिकतया स्वयमेव विवक्षुः श्रीभगवानुवाच—मयि परमेश्वरे

५ भाष्योत्कर्षदीपिका ।

यतो जातं येन स्थितमिदमशेषं प्रविलयं प्रयात्यन्ते यस्मिञ्श्रुतिभिरुदिते जन्तव इमे ।
भवत्येकं ब्रह्मामलममृतमाराध्य यमहं शिवं रामं कृष्णं तमजमजरं नौम्यखिलगम् ॥ १ ॥

एवं त्वंपदार्थं निरूप्य तत्पदार्थं निरूपयितुं पूर्वाध्यायान्ते 'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मतः' इत्युक्तं तत्रेदृशं मदीयं तत्त्वमनेन प्रकारेण मद्गतान्तरात्मा स्यादित्येतद्वक्तुमिच्छुः श्रीभगवानुवाच । मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य सः । मयि मनआसक्तिसंपादनं तव सुलभमिति सूचयन्नाह—**पार्थेति** । योगं युञ्जन्मनः-

६ श्रीधरीव्याख्या ।

विज्ञेयमात्मनस्तत्त्वं सयोगं समुदाहृतम् । भजनीयमथेदानीमैश्वरं रूपमीर्यते ॥ १ ॥

पूर्वाध्यायान्ते मद्गतेनान्तरात्मना यो मां भजते स मे युक्ततमो मत इत्युक्तं, तत्र कीदृशस्त्वं यस्य भक्तिः कर्तव्येत्यपेक्षायां स्वस्वरूपं निरूपयिष्यन्श्रीभगवानुवाच—**मय्यासक्तमना इति** । मयि परमेश्वरे आसक्तमभिनिविष्टं मनो यस्य सः । मदाश्रयोऽहमे-

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

समस्तं विभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि संशयमन्तरेणैवमेव भगवानिति तच्छृणूच्यमानं मया ॥ १ ॥ तच्च मद्विषयं ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवसंयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कार्त्स्न्येन । तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभि-

२ आनन्दगिरिव्याख्या ।

पुरुषवदेव मय्यासक्तमना यस्त्वं स त्वं तथाविधः सन्नसंशयमविद्यमानः संशयो यत्र ज्ञाने तद्यथा स्यात्तथा मां समग्रं ज्ञास्यसीति संबन्धः । समग्रमित्यस्यार्थमाह—**समस्तमिति** । विभूतिर्नानाविधैश्वर्योपायसंपत्तिः । बलं शरीरगतं सामर्थ्यम् । शक्तिर्मनोगतं प्रागल्भ्यम् । ऐश्वर्यमीशितव्यविषयमीशनसामर्थ्यम् । आदिशब्देन ज्ञानेच्छादयो गृह्यन्ते । असंशयमितिपदस्य क्रियाविशेषणत्वं विशदयन् क्रियापदेन संबन्धं कथयति—**संशयमिति** । विना संशयं भगवत्तत्त्वपरिज्ञानमेव स्फोरयति—**एवमेवेति** । भगवत्तत्त्वे ज्ञातव्ये कथं मम ज्ञानमुपदेक्ष्यति, नहि त्वामृते तदुपदेष्टा कश्चिदस्तीत्याशङ्क्याह—**तच्छृणिवति** ॥ १ ॥ ज्ञास्यसीत्युक्त्या परोक्षज्ञानशङ्कायां तन्निवृत्त्यर्थं तदुक्तिप्रकारमेव विवृणोति—**तच्चेति** । इदमपरोक्षं ज्ञानं चैतन्यम् । तस्य सविज्ञानस्य प्रतिलम्भे किं स्यादित्याशङ्क्याह—**यज्ज्ञात्वेति** । इदमा चैतन्यस्य परोक्षत्वं व्यावर्त्यते । तदेव सविज्ञानमिति विशेषणेन स्फुटयति । अनवशेषेण तद्वेदनफलोपन्यासेन श्रोतारं तच्छ्रवणप्रवणं करोति—**तज्ज्ञानमिति** । एकविज्ञानेन सर्वविज्ञानश्रुतिमाश्रित्योत्तरार्धतात्पर्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्यर्थः । ईदृशो योगं युञ्जन्समाधिमनुतिष्ठन् त्वंपदार्थविवेककाले यद्यपि सार्वज्ञ्यमस्ति 'सर्वभूतस्थमात्मानम्' इत्यादिवचनात्तथापि स्वस्मादन्य ईश्वरोऽस्ति नवेति पातञ्जलकापिलयोस्तार्किकमीमांसकयोर्वा सेश्वरानीश्वरयोर्मतभेदात्संशयः कारणाज्ञानाचासमग्रं तत्सार्वज्ञ्यमिति मत्वा आह—**असंशयं समग्रमिति** । मां तत्पदार्थमीश्वरं यथा ज्ञास्यसि तत् तं प्रकारं शृणु । अत्र वक्ष्यमाणरीत्या सर्वं ब्रह्म वासुदेवात्मकमिति भजने वैलक्षण्यं कारणज्ञातृत्वमस्य योगिनः पूर्वयोग्यपेक्षयाधिक्यमिति भावः ॥ १ ॥ एतदेवाह—**ज्ञानमिति** । ज्ञानं शुद्धप्रज्ञानघनं ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेः । ते तुभ्यमहं वक्ष्यामि । अशेषतः साधनकलापसहितम् । किं वचनमात्रजेन परोक्षज्ञानेन शब्दस्य स्वविषये परोक्षज्ञानजनकत्वनियमादित्याशङ्क्याह—सविज्ञानमनुभवसहितम् । दशमस्त्वमसी-

४ मधुसूदनीव्याख्या ।

सकलजगदायतनत्वादिविविधविभूतिभागिन्यासक्तं विषयान्तरपरिहारेण सर्वदा निविष्टं मनो यस्य तव स त्वं, अतएव मदाश्रयो मदेकशरणः, राजाश्रयो भार्याद्यासक्तमनाश्च राजभृत्यः प्रसिद्धः, मुमुक्षुस्तु मदाश्रयो मदासक्तमनाश्च, त्वं त्वद्विधो वा योगं युञ्जन्मनःसमाधानं षष्ठोक्तप्रकारेण कुर्वन् असंशयं यथा भवत्येवं समग्रं सर्वविभूतिबलशक्त्यैश्वर्यादिसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि तच्छृणूच्यमानं मया ॥ १ ॥ ज्ञास्यसीत्युक्ते परोक्षमेव तज्ज्ञानं स्यादिति शङ्कां व्यावर्तयन्स्तौति श्रोतुराभिमुख्याय—इदं मद्विषयं स्वतोऽपरोक्षज्ञानम् असंभावनादिप्रतिबन्धेन फलमजनयत्परोक्षमित्युपचर्यते । असंभावानादिनिरासे तु

५ भाष्योत्कर्षदीपिका ।

समाधानं कुर्वन्मदाश्रयः अहमेव परमेश्वर आश्रयो यस्य नतु कस्मैचित्पुरुषार्थायेहामुत्रलभ्याय राज्यादिर्यज्ञदानादिर्वा आश्रयो यस्य सः त्वमप्यासक्तमना मदाश्रयः सन् असंशयं यथा स्यात्तथा मां यथा येन प्रकारेण ज्ञास्यसि तं वक्ष्यमाणप्रकारं शृणु । ननु मदग्रे भवान् स्थितोऽसंशयं मया ज्ञायत एवातः किमिदमुच्यत इत्याशङ्क्याह—**समग्रमिति** । समस्तविभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं सगुणं निर्गुणं च मामसंशयं यथा ज्ञास्यसि तच्छृणिवत्यर्थः ॥ १ ॥ ज्ञास्यसीत्युक्तं तत्र ज्ञानं स्तौति—**ज्ञानमिति** । अत्र भाष्ये तच्च मद्विषयं ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवेन संयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कार्त्स्न्येन । तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय । यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनर्ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नाव-

६ श्रीधरीव्याख्या ।

वाश्रयो यस्यानन्यशरणः सन्योगं युञ्जन्नभ्यसन् असंशयं यथा भवत्येवं मां समग्रं विभूतिबलैश्वर्यादिसहितं यथा ज्ञास्यसि तदिदं मया वक्ष्यमाणं शृणु ॥ १ ॥ वक्ष्यमाणं स्तौति—**ज्ञानमिति** । ज्ञानं शास्त्रीयं विज्ञानमनुभवस्तत्सहितम् । इदं मद्विषयम् । अशेषतः साकल्येन

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीभगवानुवाच । मय्यासक्त इति ॥ १ ॥ ज्ञानं तेऽहमिति । ज्ञानविज्ञाने ज्ञानक्रिये एव ततो न किंचिदवशिष्यते । सर्वस्य ज्ञेयस्य

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सुखीकरणाय । यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनर्ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नावशेषो भवतीति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः । अतो विशिष्टफलत्वाद्दुर्लभं ज्ञानम् ॥ २ ॥ कथमित्युच्यते—मनुष्याणामिति । मनुष्याणां मध्ये सहस्रेष्वनेकेषु कश्चिद्यतति प्रयत्नं करोति सिद्धये

२ आनन्दगिरिव्याख्या ।

माह—**यज्ज्ञात्वेति** । भगवत्तत्त्वज्ञानस्य विशिष्टफलत्वमुक्त्वा फलितमाह—**अत इति** ॥ २ ॥ ज्ञानस्य दुर्लभत्वं प्रश्नपूर्वकं प्रकटयति—**कथमित्यादिना** । सहस्रशब्दस्य बहुवाचकत्वमुपेत्य व्याकरोति—**अनेकेष्विति** । सिद्धये

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्यादौ शब्दादप्यपरोक्षज्ञानोत्पत्तिदर्शनात् 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्' इत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञां श्रौतीमेव वर्णयति—**यज्ज्ञात्वेति** । जगत्कारणाधिष्ठानस्य ज्ञानरूपस्य ब्रह्मणो ज्ञाने संशयोच्छेदात्सर्वस्यात्ममात्रत्वेन ज्ञातव्यानवशेषो युक्त इत्यर्थः ॥ २ ॥ एतदेव ज्ञानं दौर्लभ्यप्रदर्शनेन स्तौति—**मनुष्याणामिति** । यततां

४ मधुसूदनीव्याख्या ।

विचारपरिपाकान्ते तेनैव प्रमाणेन जनितं ज्ञानं प्रतिबन्धाभावात्फलं जनयदपरोक्षमित्युच्यते । विचारपरिपाकनिष्पन्नत्वाच्च तदेव विज्ञानं, तेन विज्ञानेन सहितमिदमपरोक्षमेव ज्ञानं शास्त्रजन्यं ते तुभ्यमहं परमाप्तो वक्ष्याम्यशेषतः साधनफलादिसहितत्वेन निरवशेषं कथयिष्यामि । श्रौतीमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञामनुसरन्नाह—यज्ज्ञानं नित्यचैतन्यरूपं ज्ञात्वा वेदान्तजन्यमनोवृत्तिविषयीकृत्येह व्यवहारभूमौ भूयः पुनरपि अन्यत्किंचिदपि ज्ञातव्यं नावशिष्यते । सर्वाधिष्ठानसन्मात्रज्ञानेन कल्पितानां सर्वेषां बाधे सन्मात्रपरिशेषात्तन्मात्रज्ञानेनैव त्वं कृतार्थो भविष्यसीत्यभिप्रायः ॥ २ ॥ अतिदुर्लभं चैतन्मदनुग्रहमन्तरेण महाफलं ज्ञानम्, यतः—मनुष्याणां शास्त्रीयज्ञानकर्मयोग्यानां सहस्रेषु मध्ये कश्चिदेकोऽनेकजन्मकृतसुकृतसमासादितनित्यानित्यवस्तुविवेकः सन् यतति यतते सिद्धये सत्त्वशुद्धिद्वारा ज्ञानोत्पत्तये । यततां यतमानानां ज्ञानाय सिद्धानां प्रागर्जितसुकृतानां साधकानामपि मध्ये कश्चिदेकः श्रवणमननिदिध्यासनपरिपाकान्ते मामीश्वरं वेत्ति साक्षात्करोति तत्त्वतः प्रत्यगभेदेन तत्त्वमसीत्यादि-

५ भाष्योत्कर्षदीपिका ।

शेषो भवतीति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थ इति । अस्मिन्भाष्ये ज्ञास्यसीत्युक्त्या परोक्षज्ञानशङ्कायां तन्निवृत्त्यर्थं तदुक्तिप्रकारमेव विवृणोति—**तच्चेति** । इदमपरोक्षज्ञानं चैतन्यम् । तस्य सविज्ञानस्य प्रतिलम्भे[1] किं स्यादित्याशङ्क्याह—**यज्ज्ञात्वेति** । इदमा चैतन्यस्य परोक्षत्वं व्यावर्त्यते तदेव सविज्ञानमिति विशेषणेन स्फुटयत इति तट्टीकाकृतः । तदेवाह—ज्ञानमिति । ज्ञानं शुद्धप्रज्ञानं 'शुद्धप्रज्ञानघनं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म' इति श्रुतं ते तुभ्यमहं वक्ष्यामि । अशेषतः साधनकलापसहितं किं वचनमात्रजेन परोक्षज्ञानेन शब्दस्य स्वविषये परोक्षज्ञानजनकत्वनियमादित्याशङ्क्याह । सविज्ञानमनुभवसहितं दशमस्त्वमसीत्यादौ शब्दादप्यपरोक्षज्ञानोत्पत्तिदर्शनादित्यन्ये । वस्तुतस्तु तच्च मद्विषयं ज्ञानमिति भाष्याद्भाष्यकृतामयमर्थो नाभिप्रेतः । सविज्ञानमिति मूलान्मूलानुगुणोऽपि न भवति । तस्मान्मूलतद्भाष्यानुरोधेन ज्ञानं शास्त्रजन्यं विज्ञानमनुभव इति व्याख्येयम् । यज्ज्ञात्वेत्यस्य तु 'यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव' इति श्लोकस्थभाष्यानुसारेण मद्विषयं ज्ञानं शास्त्रजन्यं सविज्ञानं लब्ध्वेत्यर्थ इत्यविरोधः । मद्विषयस्य ज्ञानस्य सकलाधिष्ठानविषयत्वात् । अन्यज्ज्ञातव्यं नावशिष्यते 'येनाश्रुतं श्रुतं भवति' इत्यादिश्रुतेरिति भावः । यैस्त्विदं[2] मद्विषयं विज्ञानेन सहितमपरोक्षमेव ज्ञानं शास्त्रजन्यं ते तुभ्यमहं वक्ष्यामि यज्ज्ञानं नित्यचैतन्यरूपं ज्ञात्वा वेदान्तजन्यमनोवृत्तिविषयीकृत्येति । तत्र यज्ज्ञानमित्याद्युपेक्ष्यं यच्छब्दस्य प्रस्तुतपरामर्शकत्वेन सविज्ञानस्य ज्ञानस्य यदा[3] परामृष्टस्य चैतन्यरूपार्थकत्वायोगात् ॥ २ ॥ अतो मद्विषयं तत्त्वज्ञानं सार्वज्ञ्यसंपादकत्वादतिदुर्लभमित्याह—**मनुष्याणामिति** । मनुष्याणामनेकयोनिषु पुण्यवशाल्लब्धदेहानां सहस्रेषु असंख्यातेषु 'शतं सहस्रं लक्षं च सर्वमक्षय्यवाचकम्' इत्युक्तेः । अक्षय्यमित्यस्यासंख्यातमित्यर्थः । कश्चिदनेकजन्मार्जितपुण्यपुञ्जवशाल्लब्धविवेकादिसाधनो यतते यत्नं श्रवणादिरूपं करोति । यततामपि यतमानानामपि सिद्धानां मुमुक्षूणाम् । साधकत्वेऽपि सिद्धत्वकथनं तेषामुत्कर्षद्योतनार्थम् । अपरे तु सिद्धये आत्मज्ञानाय यतते । यततामपि सहस्रेषु कश्चिदेव प्रकृष्टपुण्यवशादात्मानं वेत्ति तादृशानामप्यात्मज्ञानसिद्धानां सहस्रेषु कश्चिदेव मां परमात्मानं मत्प्रसादेन तत्त्वतो वेत्तीति वर्णयन्ति ।

६ श्रीधरीव्याख्या ।

वक्ष्यामि । यज्ज्ञात्वेह श्रेयोमार्गे वर्तमानस्य पुनरन्यज्ज्ञातव्यमवशिष्टं न भवति । तेनैव कृतार्थो भवतीत्यर्थः ॥ २ ॥ मद्भक्तिं विना तु मज्ज्ञानं दुर्लभमित्याह—**मनुष्याणामिति** । असंख्यातानां जीवानां मध्ये मनुष्यव्यतिरिक्तानां श्रेयसि प्रवृत्तिरेव नास्ति, मनुष्याणां तु सहस्रेषु

१ प्रतिलम्भोऽनुभवः. २ मधुसूदनः. ३ यदा यच्छब्देन.

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सिद्ध्यर्थं तेषां यततामपि सिद्धानां सिद्धा एव हि ते ये मोक्षाय यतन्ते तेषां कश्चिदेव मां वेत्ति तत्त्वतो यथावत् ॥ ३ ॥ श्रोतारं प्ररोचनेनाभिमुखीकृत्याह—भूमिरिति । भूमिरिति पृथिवीतन्मात्रमुच्यते न स्थूला। 'भिन्ना प्रकृतिरष्टधा' इति वचनात्। तथाबादयोऽपि तन्मात्राण्येवोच्यन्ते । आपोऽ-

२ आनन्दगिरिव्याख्या ।

सत्त्वशुद्धिद्वारा ज्ञानोत्पत्त्यर्थमित्यर्थः । सिद्ध्यर्थं यतमानानां कथं सिद्धत्वमित्याशङ्क्याह—**सिद्धा एवेति** । सर्वेषामेव तेषां ज्ञानोदयात्तस्य सुलभत्वमित्याशङ्क्याह—**तेषामिति** ॥ ३ ॥ ज्ञानार्थं प्रयत्नस्य तद्द्वारा ज्ञानलाभस्य तदुभयद्वारेण मुक्तेश्च दुर्लभत्वाभिधानस्य श्रोतृप्ररोचनं फलमिति मत्वाह—**श्रोतारमिति** । आत्मनः सर्वात्मकत्वेन परिपूर्णत्वमवतारयन्नादावपरां प्रकृतिमुपन्यस्यति—**आहेति** । भूमिशब्दस्य व्यवहारयोग्यस्थूलपृथिवीविषयत्वं व्यावर्तयति—**भूमिरितीति** । तत्र हेतुमाह—**भिन्नेति** । प्रकृतिसमभिव्याहाराद्गन्धतन्मात्रं स्थूलपृथिवीप्रकृतिरुत्तरविकारो भूमिरित्युच्यते न विशेष इत्यर्थः । भूमिशब्दवदबादिशब्दानामपि सूक्ष्मभूतविषयत्वमाह—**तथेति** । तेषामपि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यतमानानाम् ॥ ३ ॥ एवमेकविज्ञानात्सर्वविज्ञानं प्रतिज्ञाय तदुपपत्तये सर्वस्य जडाजडप्रपञ्चस्य ज्ञानात्मकब्रह्मप्रभवत्वमाह त्रिभिः—**भूमिरिति** । अत्र भूम्यादिपदैस्तत्तत्कारणान्येव गृह्यन्ते प्रकृतिरित्यधिकारात्, स्थूलभूम्यादेश्च विकृतिमात्रत्वात् । तथाच भूमिरिति गन्धतन्मात्रं, आप इति रसतन्मात्रं, अनल इति रूपतन्मात्रं, वायुरिति स्पर्शतन्मात्रं, खमिति शब्दतन्मात्रं, मन इति तत्कारणमहंकारः, बुद्धिरिति समष्टिबुद्धिर्महत्तत्त्वं, अहंकरोत्यनयेत्यहंकारो मूल-

४ मधुसूदनीव्याख्या ।

गुरूपदिष्टमहावाक्येभ्यः । अनेकेषु मनुष्येष्वात्मज्ञानसाधनानुष्ठायी परमदुर्लभः । साधनानुष्ठायिष्वपि मध्ये फलभागी परमदुर्लभ इति किं वक्तव्यमस्य ज्ञानस्य माहात्म्यमित्यभिप्रायः ॥ ३ ॥ एवं प्ररोचनेन श्रोतारमभिमुखीकृत्यात्मनः सर्वात्मकत्वेन परिपूर्णत्वमवतारयन्नादावपरां प्रकृतिमुपन्यस्यति—सांख्यैर्हि पञ्चतन्मात्राण्यहंकारो महानव्यक्तमित्यष्टौ प्रकृतयः पञ्च महाभूतानि पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि उभयसाधारणं मनश्चेति षोडशविकारा उच्यन्ते । एतान्येव चतुर्विंशतितत्त्वानि । तत्र भूमिरापोऽनलो वायुः खमिति पृथिव्यप्तेजोवाय्वाकाशाख्यपञ्चमहाभूतसूक्ष्मावस्थारूपाणि गन्धरसरूपस्पर्शशब्दात्मकानि पञ्चतन्मात्राणि लक्ष्यन्ते । बुद्ध्यहंकारशब्दौ तु स्वार्थावेव । मनःशब्देन च परिशिष्टमव्यक्तं लक्ष्यते प्रकृतिशब्दसामानाधिकरण्येन स्वार्थहानेरावश्यकत्वात् । मनःशब्देन वा स्वकारणमहंकारो लक्ष्यते पञ्चतन्मात्रसंनिकर्षात् । बुद्धिशब्दस्त्वहंकारकारणे महत्तत्त्वे मुख्यवृत्तिरेव । अहंकारशब्देन च सर्ववासनावासितमविद्यात्मकमव्यक्तं लक्ष्यते प्रवर्तकत्वाद्यसाधारणधर्मयोगाच्च । इत्युक्त-

५ भाष्योत्कर्षदीपिका ।

अस्मिन्पक्षे मुख्यसिद्धशब्दार्थालाभस्त्वस्त्येवात्मपदाध्याहारस्य कश्चिदित्यस्य वेत्तीत्यस्य चावृत्तेरध्याहारस्य वा क्लेशोऽतिरिच्यते इत्ययं पक्षश्चिन्त्यः । तेषां मध्ये कश्चिदेव मां परमेश्वरं तत्त्वतो यथावत्स्वाभिन्नत्वेन वेत्ति जानाति ॥ ३ ॥ यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यत इत्युक्तेन श्रोतारमभिमुखीकृत्य तदुपपत्तये चेतनाचेतनप्रपञ्चस्य स्वस्मिन्परमात्मन्यध्यस्तत्वबोधनायाह—**भूमिरिति** । आकाशादिभिः शब्दस्पर्शरूपरसगन्धाख्यानि तन्मात्राणि लक्ष्यन्ते । इतीयं मे भिन्ना प्रकृतिरष्टधेति वाक्यशेषात् । मनःशब्देन तत्कारणमहंकारो लक्ष्यते । बुद्धिरित्यहंकारकारणं महत्तत्त्वं गृह्यते । अहंकार इत्यविद्यासंमिश्रमव्यक्तं लक्ष्यते । यथा विषसंमिश्रमन्नं विषमित्युच्यते तथाहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते । यत्तु बुद्ध्यहंकारशब्दौ तु स्वार्थावेव मनःशब्देनावशिष्टमव्यक्तं लक्ष्यते इति यत्पक्षान्तरं कैश्चित्प्रदर्शितं तदरुचिग्रस्तम् । तद्बीजं तु क्रमत्यागप्रसङ्गादि । यत्तु भूम्यादिशब्दैः पञ्चम-

६ श्रीधरीव्याख्या ।

मध्ये कश्चिदेव प्रकृष्टपुण्यवशात्सिद्धये आत्मज्ञानाय प्रयतते, प्रयत्नं कुर्वतामपि सहस्रेषु कश्चिदेव प्रकृष्टपुण्यवशादात्मानं वेत्ति, तादृशानां चात्मज्ञानसिद्धानां सहस्रेषु कश्चिदेव मां परमात्मानं मत्प्रसादेन तत्त्वतो वेत्ति, तदेवमतिदुर्लभमपि मज्ज्ञानं तुभ्यमहं वक्ष्यामीत्यर्थः ॥ ३ ॥ एवं श्रोतारमभिमुखीकृत्येदानीं प्रकृतिद्वारा सृष्ट्यादिकर्तृत्वेनेश्वरतत्त्वं प्रतिज्ञातं निरूपयिष्यन्परापरभेदेन प्रकृतिद्वयमाह—**भूमिरिति द्वाभ्याम्** । भूम्यादिशब्दैः पञ्चगन्धादितन्मात्राण्युच्यन्ते, मनःशब्देन तत्कारणभूतोऽहंकारः, बुद्धिशब्देन तत्कारणभूतं महत्तत्त्वं,

७ अभिनवगुप्ताचार्यव्याख्या ।

ज्ञानक्रियानिष्ठत्वात् ॥ २ ॥ मनुष्याणामिति ॥ ३ ॥ अस्य च वस्तुनः सर्वो न योग्य इत्यनेन दुर्लभत्वाद्यत्नः सेव्यतामित्याह—भूमिरिति । अपरेयमिति प्रत्यक्षेण या संसारावस्थायां सर्वजनपरिदृश्यमाना सा चैकैव सती प्रकाराष्टकेन भिद्यत इति एकप्रकृत्यारब्धत्वादेकमेव विश्व-

१ मधुसूदनः. २ मधुसूदनः. ३ श्रीधरः.

१ श्रीमच्छांकरभाष्यम् ।

**नलो वायुः खं मन इति मनसः कारणमहंकारो गृह्यते । बुद्धिरित्यहंकारकारणं महत्तत्त्वम् । अहंकार इत्यविद्यासंयुक्तमव्यक्तम् । यथा विषसंयुक्तमन्नं विषमुच्यत एवमहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते प्रवर्तकत्वादहंकारस्य । अहंकार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके ।**

२ आनन्दगिरिव्याख्या ।

प्रकृतिसमानाधिकृतत्वाविशेषात्तन्मात्राणां पूर्वपूर्वप्रकृतीनामुत्तरोत्तरविकाराणां न विशेषत्वसिद्धिरित्यर्थः । मनःशब्दस्य संकल्पविकल्पात्मककरणविषयत्वमाशङ्क्याह—**मन इतीति** । न खल्वहंकाराभावे संकल्पविकल्पयोरसंभवात्तदात्मकं मनः संभवतीत्यर्थः । निश्चयलक्षणा बुद्धिरित्यभ्युपगमाद्बुद्धिशब्दस्य निश्चयात्मककरणाविषयत्वमाशङ्क्याह—**बुद्धिरितीति** । नहि हिरण्यगर्भसमष्टिबुद्धिरूपमन्तरेण व्यष्टिबुद्धिः सिध्यतीत्यर्थः । अहंकारस्याभिमानविशेषात्मकत्वेनान्तःकरणप्रभेदत्वं व्यावर्तयति—**अहंकार इतीति** । अविद्यासंयुक्तमित्यविद्यात्मकमित्यर्थः । कथं मूलकारणस्याहंकारशब्दत्वमित्याशङ्क्योक्तमर्थं दृष्टान्तेन स्पष्टयति—**यथेत्यादिना** । मूलकारणस्याहंकारशब्दत्वे हेतुमाह—**प्रवर्तकत्वादिति** । तस्य प्रवर्तकत्वं प्रपञ्चयति—**अहंकार एवेति** । सत्येवाहंकारे ममकारो भवति तयोश्च भावे सर्वा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रकृतिः । करणे घञो दुर्लभत्वेऽप्यगत्या बाहुलकात्तद्बोध्यम् । इयं मे मत्तो भिन्ना पृथक्सिद्धा शुक्तिशकलादिव रजतं अष्टधा अष्टप्रकारा प्रकृतिर्जडप्रपञ्चोपादानभूता । यद्वा नात्राव्यक्तमहदहंकारपञ्चतन्मात्राण्येवाष्टौ सांख्याभिमता एव प्रकृतयो ग्राह्या इति नियमोऽस्ति । 'मनसा ह्येव पश्यति मनसा शृणोति' इति मनस इन्द्रियान्तरप्रकृतित्वश्रवणेन सन्तु नवापि प्रकृतयः । तथाचैवं योज्यम् । इयं मे मदभिन्ना प्रकृतिरव्याकृताख्या भूम्यादिभेदेनाष्टधेति

४ मधुसूदनीव्याख्या ।

कारेणेयमपरोक्षा साक्षिभास्यत्वात्प्रकृतिर्मायाख्या पारमेश्वरी शक्तिरनिर्वचनीयस्वभावा त्रिगुणात्मिकाऽष्टधा भिन्नाऽष्टभिः प्रकारैर्भेदमागता । सर्वोऽपि जडवर्गोऽत्रैवान्तर्भवतीत्यर्थः । स्वसिद्धान्ते चेक्षणसंकल्पात्मकौ मायापरिणामावेव बुद्ध्यहंकारौ ।

५ भाष्योत्कर्षदीपिका ।

हाभूतानि सूक्ष्मैः सहैकीकृत्य गृह्यन्तेऽहंकारशब्देनैवाहंकारस्तेनैव तत्कार्याणीन्द्रियाण्यपि गृह्यन्ते बुद्धिरिति महत्तत्त्वं मनःशब्देन तु मनसैवोन्नेयमव्यक्तरूपं प्रधानमिति । अनेन रूपेण प्रकृतिर्मायाख्या शक्तिरष्टधा भिन्ना विभागं प्राप्ता । चतुर्विंशतिभेदभिन्नैवेत्यष्टास्वेवान्तर्भावविवक्षयाष्टधा भिन्नेत्युक्तम् । तथाच वक्ष्यमाणक्षेत्राध्याये इमामेव प्रकृतिं चतुर्विंशतितत्त्वात्मना प्रपञ्चयिष्यति 'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इत्यपरे वर्णयन्ति। तत्रेदमवधेयम् 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारः' इति सांख्योक्तप्रकारेणाष्टस्वेव प्रकृतित्वव्यवहारो न विकारेषु । अत्रापि इतीयं मे भिन्ना प्रकृतिरष्टधेति वचनादष्टौ प्रकृतय एव गृह्यन्ते । विकारस्य तु एतद्योनीनि भूतानीति भूतपदाभिधेयस्य सर्वस्याप्युपादानं क्षेत्राध्याये तु क्षेत्रनिरूपणावसरे इदमुक्तं तत्क्षेत्रमित्यारभ्य 'इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम्' इत्यन्तम् । यत्त्वन्ये नात्राव्यक्तमहदहंकारपञ्चतन्मात्राण्येवाष्टौ सांख्याभिमता एव प्रकृतयो ग्राह्या इति नियमोऽस्ति । 'मनसा ह्येव पश्यति मनसा शृणोति' इति मनस इन्द्रियान्तरप्रकृतित्वश्रवणेन नवापि प्रकृतयः । तथाचैवं योज्यम् । इयं मे मम मदभिन्ना प्रकृतिरव्याकृताख्या भूम्यादिभेदेनाष्टधेति । मूलप्रकृतेरत्र भूम्यादिसहपाठाज्जन्यत्वमवगम्यते न सांख्यानामिवाजन्यत्वम् 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति, 'अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते' इति तस्या अपि प्रभवप्रलययोः स्मरणादिति व्याचख्युस्तत्प्रकृताननुगुणम् । मे प्रकृतिर्भूम्यादिरूपेणाष्टधा भिन्नेति योजनायामितीयमित्यनूद्याङ्गुलिनिर्देशेन भूम्यादीनां प्रकृतित्वबोधनानुपपत्तेः । निर्देशानुसरणे तु मनःशब्देनोक्तश्रुत्या तस्य प्रकृतित्वात्तस्यैव ग्रहस्तदग्रहे मूलप्रकृतिग्रहे चोभयोरुपादाने वाष्टधेति विरोधापत्तेः मनसः प्रकृतित्ववर्णनमप्यसंगतम् । उदाहृतश्रुत्या तदलाभात् । मनसा करणेनेन्द्रियद्वारकेण पश्यतीति श्रुत्यर्थाभ्युपगमात् । करणं विना द्वारस्याकिंचित्करत्वात् । किंच विद्यारण्यादिभिराचार्यैर्मनसः श्रोत्राद्युत्पन्नमिति न प्रदर्शितं किंतु 'वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे । सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् । रजोंशैः पञ्चभिस्तेषां क्रमात्कर्मेन्द्रियाणि तु ॥' इति भूतेभ्य इन्द्रियाणामुत्पत्तिर्दर्शिता । पुराणेषु तु अहंकारादेव सात्त्विकादिरूपेण त्रिविधात्समनस्कानामिन्द्रियदेवतानां त्वगादीन्द्रियाणां भूतानां

६ श्रीधरीव्याख्या ।

अहंकारशब्देन तत्कारणमविद्येत्येवमष्टधा भिन्ना । यद्वा भूम्यादिशब्दैः पञ्चमहाभूतानि सूक्ष्मैः सहैकीकृत्य गृह्यन्ते, अहंकारशब्देनैवाहंकारस्तेनैव तत्कार्याणीन्द्रियाण्यपि गृह्यन्ते, बुद्धिरिति महत्तत्त्वं, मनःशब्देन मनसैवोन्नेयमव्यक्तरूपं प्रधानमित्यनेन प्रकारेण मे

७ अभिनवगुप्ताचार्यव्याख्या ।

मिति प्रकृतिवादेऽप्यद्वैतं प्रदर्शितम् । सैवं जीवत्वं पुरुषत्वं प्राप्ता परा । सापि ममैव नान्यस्य च सोभयरूपा वेद्यवेदकात्मकप्रपञ्चोपरचन-

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम्।

**इतीयं यथोक्ता प्रकृतिर्मे ममैश्वरी मायाशक्तिरष्टधा भिन्ना भेदमागता ॥ ४ ॥ अपरेति । अपरा न परा निकृष्टाऽशुद्धानर्थकरी संसारबन्धनात्मिकेयमितोऽस्या यथोक्तायास्त्वन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां हे महाबाहो, यया**

२ आनन्दगिरिव्याख्या।

प्रवृत्तिरिति प्रसिद्धमित्यर्थः। उक्तां प्रकृतिमुपसंहरति—**इतीयमिति**। इयमित्यपरोक्षा साक्षिदृश्येति यावत्। ऐश्वरी तदाश्रया तदैश्वर्योपाधिभूता। प्रक्रियते महदाद्याकारेणेति प्रकृतिः। त्रिगुणं जगदुपादानं प्रधानमिति मतं व्युदस्यति—**मायेति** । तस्यास्तत्कार्याकारेण परिणामयोग्यत्वं द्योतयति—**शक्तिरिति** । **अष्टधेति** । अष्टभिः प्रकारैरिति यावत् ॥ ४ ॥ अचेतनवर्गमेकीकर्तुं प्रकृतेरष्टधा परिणाममभिधाय विकारावच्छिन्नकार्यकल्पं चेतनवर्गमेकीकर्तुं पुरुषस्य चैतन्यस्याविद्याशक्त्यवच्छिन्नस्यापि प्रकृतित्वमुक्तां प्रकृतिमनूद्य दर्शयति—**अपरेति** । निकृष्टत्वं स्पष्टयति—**अनर्थकरीति**। अनर्थकरत्वमेव स्फोरयति—**संसारेति** । कथंचिदप्यनन्यत्वव्यावृत्त्यर्थस्तुशब्दः । अन्यामत्यन्तविलक्षणामिति यावत्। अन्यत्वमेव स्पष्टयति—**विशुद्धामिति** । प्रकृतिशब्दस्यान्यप्रयुक्तस्यार्थान्तरमाह—**ममेति**। प्रकृष्टत्वमेव भोक्तृत्वेन स्पष्टयति—**जीवभूतामिति** । प्रकृत्यन्तरादस्याः प्रकृतेरवान्तरविशेषमाह—**ययेति**। नहि

३ नीलकण्ठव्याख्या (चतुर्धरी)।

मूलप्रकृतेरत्र भूम्यादिभिः सह पाठाज्जन्यत्वमवगम्यते न सांख्यानामिवाजन्यत्वम् । 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति, 'अव्यक्तं पुरुषे ब्रह्मन्निष्कले प्रविलीयते' इति च तस्या अपि प्रभवप्रलययोः स्मरणात् ॥ ४ ॥ एवं क्षेत्रात्मिकां प्रकृतिमुक्त्वा क्षेत्रज्ञात्मिकां तामाह—**अपरेयमिति**। इयं प्रागुक्ता सा अपरा अश्रेष्ठा जडत्वात्। इतस्तु विलक्षणामन्यां परां चेतनत्वेन मदनन्यत्वादुत्कृष्टां मे मत्संबन्धिनीं प्रकृतिं जीवभूतां प्राणधारणनिमित्तभूतां

४ मधुसूदनीव्याख्या।

पञ्चतन्मात्राणि चापञ्चीकृतपञ्चमहाभूतानीत्यसकृदवोचाम ॥ ४ ॥ एवं क्षेत्रलक्षणायाः प्रकृतेरपरत्वं वदन्क्षेत्रज्ञलक्षणां परां प्रकृतिमाह—या प्रागष्टधोक्ता प्रकृतिः सर्वाचेतनवर्गरूपा सेयमपरा निकृष्टा जडत्वात्परार्थत्वात्संसारबन्धरूपत्वाच्च। इतस्त्वचेतनवर्गरूपायाः क्षेत्रलक्षणायाः प्रकृतेरन्यां विलक्षणां, तुशब्दाद्यथाकथंचिदप्यभेदायोग्यां जीवभूतां चेतनात्मिकां क्षेत्रलक्षणां मे ममात्मभूतां विशुद्धां परां प्रकृष्टां प्रकृतिं विद्धि। हे महाबाहो, यया क्षेत्रज्ञलक्षणया जीवभूतयाऽन्तरनुप्रविष्टया प्रकृत्येदं जगदचेतनजातं भाव्यते स्वतो विशीर्य उत्तभ्यते 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुतेः। नहि जीवरहितं

५ भाष्योत्कर्षदीपिका।

च क्रमात्सेति सर्वथापि मनस इन्द्रियंप्रति प्रकृतित्वं नास्ति। यत्र क्वापि मनसस्तत्कल्पकत्वं श्रूयते तत्रापि मनउपाधिकस्यात्मन उपाधिप्रधानस्येति द्रष्टव्यम्। 'वदन्वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रम्' इत्यादिश्रुतेः। यदपि प्रकृतेः सादित्वं साधितं तदपि सिद्धान्तविरुद्धम्। मायाविद्यारूपेण द्विविधाया अपि मूलप्रकृतेः सर्वैरपि वेदान्तिभिरनादित्वेन सिद्धान्तितत्वात्। तदुत्पत्तिलयवचनानि त्वाविर्भावतिरोभावपराणि। अन्यथा तत्कारणभूतायाः प्रकृतेरावश्यकत्वेनानवस्थापातादिति दिक्। इतीयं यथोक्ता प्रकृतिर्मे मम माया पारमेश्वरी अष्टधा अष्टभिः प्रकारैर्भिन्ना भेदमागता ॥ ४ ॥ अचेतनवर्गस्य स्वस्मिन्कल्पितत्वं वक्तुं प्रकृतेरष्टधा परिणाममभिधाय विकारावच्छिन्नस्य कार्यकल्पस्य तथात्वं वक्तुं चैतन्यस्याविद्यावच्छिन्नस्य प्रकृतित्वमुक्तां प्रकृतिमनूद्य दर्शयति—**अपरेति**। अपरा निकृष्टाऽशुद्धत्वात् अनर्थकरत्वात् संसारस्वरूपत्वात् बन्धनात्मकत्वात् इयमष्टप्रकारा इतोऽस्या अन्याम्। कथमप्यनन्यत्वव्यावृत्त्यर्थस्तुशब्दः। विशुद्धत्वात् प्रकृतिं परामुत्कृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां ममात्मभूतां विद्धि जानीहि। नहि जीवरहितं जगद्धारयितुं शक्यमित्याशयेन प्रकृत्यन्तरादस्याः प्रकृतेरवान्तरविशेषमाह। यया जगदन्तःप्रविष्टया 'अनेन जीवेनात्मनाऽ-

६ श्रीधरीव्याख्या।

प्रकृतिर्मायाख्या शक्तिरष्टधा भिन्ना विभागं प्राप्ता। चतुर्विंशतिभेदभिन्नाप्यष्टस्वेवान्तर्भावविवक्षयाष्टधा भिन्नेत्युक्तम् । तथाच वक्ष्यमाणक्षेत्राध्याये इमामेव प्रकृतिं चतुर्विंशतितत्त्वात्मना प्रपञ्चयिष्यति—'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इति ॥ ४ ॥ अपरामिमां प्रकृतिमुपसंहरन्परां प्रकृतिमाह—**अपरेति** । अष्टधोक्ता या प्रकृतिरियमपरा निकृष्टा

७ अभिनवगुप्ताचार्यव्याख्या।

विचित्रा । तत एव स्वात्मविमलमुकुरतलकलितसकलभावभूमिः स्वस्वभावात्मिका सततमव्यभिचारिणी प्रकृतिः । सोऽहमित्यनेन प्रकृतिपुरुषपुरुषोत्तमेभ्यो व्यतिरिक्तोऽपीश्वरः सर्वथा सर्वानुगतत्वेन स्थित इति सांख्ययोगयोर्नास्ति भेदवादइति प्रदर्शितम्। इदं जग-

१ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

**ऽतिक्रमणं यस्याः सा दुरत्यया । तत्रैवं सति सर्वधर्मान्परित्यज्य मामेव मायाविनं स्वात्मभूतं**

२ आनन्दगिरिव्याख्या ।

**दुरत्ययत्वं विभजते—दुःखेनेति । मामेवेत्यादि व्याचष्टे—तत्रेति ।** तस्मिन्मायारूपे यथोक्तरीत्या दुरत्यये सतीति यावत् । मामेवेत्येवकारेण मायाया वेद्यकोटिनिवेशाभावो विवक्ष्यते, सर्वात्मना कर्मानुष्ठानादिव्यग्रतामन्तरेणेत्यर्थः । मायातिक्रमे मोहातिक्रमो भवतीति मत्वा विशिनष्टि—**सर्वेति** । मायातत्प्रयुक्तमोहयोरतिक्रमेऽपि कथं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अयस्कान्तमनुरुध्येव लोहशलाका । इदमेव ईश्वराधीनत्वं मायायाः । ईश्वरस्य च मायाद्वारा सर्वस्रष्टृत्वमपि । तथाच श्रुतिः 'तस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' इति । तथाचैकैव माया जीवेश्वरयोरुपाधिर्दर्पण

४ मधुसूदनीव्याख्या ।

भिप्रायेण तु ममेति भगवतोक्तम् । यद्यप्यविद्याप्रतिबिम्ब एक एव जीवस्तथाप्यविद्यागतानामन्तःकरणसंस्काराणां भिन्नत्वात्तद्भेदेनान्तःकरणोपाधेस्तस्यात्र भेदव्यपदेशो 'मामेव ये प्रपद्यन्ते', 'दुष्कृतिनो मूढा न प्रपद्यन्ते', 'चतुर्विधा भजन्ते माम्' इत्यादिः । श्रुतौ च 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इत्यादिः । अन्तःकरणोपाधिभेदापर्यालोचने तु जीवत्वप्रयोजकोपाधेरेकत्वादेकत्वेनैवात्र व्यपदेशः । 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु', 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि', 'ममैवांशो जीवलोके जीवभूतः सनातनः' इत्यादिः । श्रुतौ च 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मा-

५ भाष्योत्कर्षदीपिका ।

अन्येतु जीव ईश्वरः शुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय वस्तुत एकस्यैवाकाशस्य घटाकाशजलाकाशमहाकाशमेघाकाशभेदाच्चातुर्विध्यमिवैकस्यैव चैतन्यस्य कूटस्थजीवब्रह्मेश्वरभेदेन चातुर्विध्यं परिकल्प्य धीवासनोपरक्ताज्ञानोपाधिरीश्वरः, अन्तःकरणोपाधिर्जीव इति दर्शयन्ति । अन्येतु 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति स्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागो नोभयोरपि प्रतिबिम्बभावेनोपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात् । तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वर इति । सच प्रतिबिम्बभूतो जीव एवाविद्योपाधिक एकमेव तदज्ञानं तदज्ञानकल्पितं च सर्वं जगत्तस्य स्वप्नदर्शनवद्यावदविद्यं सर्वो व्यवहारः । बद्धमुक्तव्यवस्थापि नास्ति जीवस्यैकत्वात् । शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितमिति वर्णयन्ति । परेतु रूपानुपहितप्रतिबिम्बो न युक्तः । सुतरां नीरूपे । ननु नीरूपस्य गगनस्य जलादौ प्रतिबिम्बानुभवान्नीरूपस्य न प्रतिबिम्ब इति नास्ति नियम इति चेन्न । आलोकप्रतिबिम्बे गगनप्रतिबिम्बत्वव्यवहारस्य भ्रममात्रमूलकत्वात् । ध्वनिधर्माणामुदात्तादिस्वराणां संनिधिमात्रेण व्यञ्जकतया वर्णेष्वारोपोपपत्त्या वर्णप्रतिबिम्बोपाधिकत्वकल्पनाया निष्प्रमाणकत्वेन ध्वनौ वर्णप्रतिबिम्बत्ववादोऽप्ययुक्तः । तस्माच्चाक्षुषस्यैव चाक्षुष एव प्रतिबिम्ब इति नियमस्य न क्वापि भङ्गोऽस्ति । चन्दनखण्डादिप्रतिबिम्बे चाक्षुषगुणानामेवानुभवात् । तदाघ्राणेऽपि सौरभाननुभवाच्च । मुखादिप्रतिबिम्बेऽपि चाक्षुषगुणानामेवोपलम्भो नतु मुखोच्चारितशब्दस्य । ननु गुहादिषु प्रतिध्वनिरूपस्य ध्वनिप्रतिबिम्बस्योपलम्भ इति चेन्न । पञ्चीकरणप्रक्रियायां दुन्दुभिसमुद्रदावानलझंझामारुतादिध्वनीनां पृथिव्यादिशब्दत्वेन प्रतिध्वनेरेवाकाशगुणत्वात्तस्यान्यशब्दप्रतिबिम्बत्वानुपपत्तेः । नच वर्णात्मकप्रतिशब्दस्य पूर्ववर्णप्रतिबिम्बत्वमिति वाच्यम् । मूलध्वनिवदेव प्रतिध्वनेरपि वर्णाभिव्यञ्जकत्वोपपत्तेः । तस्मात् घटाकाशवदन्तःकरणाद्यवच्छिन्नं चैतन्यं जीवः । तदनवच्छिन्न ईश्वर इति । नचैवं 'यो विज्ञाने तिष्ठन्विज्ञानमन्तरो यमयति' इत्यादिश्रुत्या ईश्वरस्यान्तर्यामिभावेन विकारान्तरावस्थानबोधकया विरोधः । ब्रह्माण्डान्तर्वर्तितत्तदन्तःकरणोपाधिभिस्तदन्तर्वर्तिचैतन्यस्य सर्वात्मना जीवभावेनावच्छेदात् तदवच्छेदरहितचैतन्यात्मकस्येश्वरस्य ब्रह्माण्डान्तःसत्त्वानापत्तेः । प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्र द्विगुणीकृत्य वृत्तिरुपपद्यत इति वाच्यम् । अविद्याश्रयत्वान्तःकरणसंवलितत्वाद्युपाधिकाज्जीवादविद्याविषयत्वान्तःकरणासंवलितत्वाद्युपाधिकस्यान्तर्यामिणो भेदेनावस्थानस्योपपत्त्या श्रुतिविरोधाभावात् । प्रतिबिम्बपक्षे तु अन्तर्यामिब्राह्मणस्यासामञ्जस्यं बहिस्थपाषाणादिवत् जलान्तर्वर्तिपाषाणादेः जले प्रतिबिम्बादर्शनादुपाध्यनन्तर्गतस्यैव चैतन्यस्य प्रतिबिम्ब इत्यवश्याङ्गीकर्तव्यत्वेन बिम्बभूतस्य विकारान्तरावस्थानायोगात् । एकत्र द्विगुणीकृत्यवृत्तिरित्यपि न । 'षडस्माकमनादयः' इति सिद्धान्ते जीवेश्वरभिन्नत्वेनाभ्युपगतस्य जीवादिसर्वप्रपञ्चविवर्ताधिष्ठानत्वेन सर्वगतस्य शुद्धचैतन्यस्याप्यन्तःकरणे सत्त्वस्यावर्जनीयत्वेन जीवोऽन्तर्यामी शुद्धचैतन्यं चेति एकत्र त्रिगुणीकृत्य वृत्तेरुपपादनीयत्वापत्तेः । नचावच्छेदपक्षे 'यथा स्वयंज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा', 'अतएव चोपमा सूर्यकादिवत्' इति श्रुतिसूत्रविरोध इति वाच्यम् । भाष्यकारैरेव 'अतएवे'ति सूत्रं व्याख्याय सूर्यादिवदात्मनः प्रतिबिम्बो न युज्यते इति तदाक्षेपकत्वेन 'अम्बुवदग्रहणात्तु न तथात्वम्' इति सूत्रं व्याख्याय 'ततो वृद्धि-

७ अभिनवगुप्ताचार्यव्याख्या ।

त्वम् । तच्च भेदात्मकं रूपं संसारिभिरनिर्वाच्यतया तान्प्रति मायारूपम् । अतो ये परमार्थब्रह्मप्रकाशविदस्ते तदनतिरिक्तं विश्वं पश्यन्तो

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

इव बिम्बप्रतिबिम्बयोर्बिम्बप्रतिबिम्बभावानाक्रान्तमुभयानुस्यूतं शुद्धचिन्मात्रमन्यत्ततीयं मुक्तप्राप्यम् । जीवेश्वरौ च उपाधिपक्षपातदशायामल्पज्ञत्वसर्वज्ञत्वशास्यत्वशासितृत्वादिभावं भजेते । तावेव तदभावे उपाधिप्रचारदर्शिनौ उदा-

४ मधुसूदनीव्याख्या।

स्मीति तस्मात्तत्सर्वमभवत्', 'एको देवः सर्वभूतेषु गूढः', 'अनेन जीवेनात्मनानुप्रविश्य', 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते ॥' इत्यादिः । यद्यपि दर्पणगतश्चैत्रप्रतिबिम्बः स्वं परं च न जानात्यचेतनांशस्यैव तत्र प्रतिबिम्बितत्वात्तथापि चित्प्रतिबिम्बश्चित्त्वादेव स्वं परं च जानाति । प्रतिबिम्बपक्षे बिम्बचैतन्य एवोपाधिस्थत्वमात्रस्य कल्पितत्वात् आभासपक्षे तस्यानिर्वचनीयत्वेऽपि जडविलक्षणत्वात् । स च यावत्स्वबिम्बैक्यमात्मनो न जानाति तावज्जलसूर्य इव जलगतकम्पादिकमुपाधिगतं विकारसहस्रमनुभवति । तदेतदाह—दुरत्ययेति । बिम्बभूतेश्वरै-

५ भाष्योत्कर्षदीपिका।

ह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' इति सूत्रेणोक्तानुपपत्त्या आत्मनः प्रतिबिम्बनमनुपपन्नमित्यङ्गीकृत्यैव श्रुतिषु सूर्यादिप्रतिबिम्बोपादानस्य तात्पर्यान्तरवर्णनपरताया उक्तत्वात् । तथाच भाष्यं 'यत एव चायमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमा दीयते शास्त्रेषु 'यथा ह्ययं ज्योतिः' इत्यादि । 'एक एव तु भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इतिचैवमादिषु । अत्र प्रत्यवस्थीयते—न जलसूर्यकादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात् सूर्यादिभ्यो मूर्तेभ्यः पृथग्भूतं विप्रकृष्टं देशम् । मूर्तं च जलं गृह्यते । तत्र युक्तः सूर्यादिप्रतिबिम्बोदयो न त्वात्मा मूर्तो न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः सर्वगतत्वात्सर्वानन्यत्वाच्च । तस्मादयुक्त उक्तोऽयं दृष्टान्त इति । अत्र प्रतिविधीयते—युक्त एव त्वयं दृष्टान्तो विवक्षितांशसंभवात् । नहि दृष्टान्तदार्ष्टान्तिकयोः कंचित्कंचिद्विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते, सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । नचेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनं, शास्त्रप्रणीतस्य त्वस्य प्रयोजकमात्रमुपन्यस्यते किं पुनरत्र विवक्षितं सारूप्यमिति । तदुच्यते वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यते इत्येवं जलधर्मानुविधायि भवति नतु परमार्थतः सूर्यस्य तथात्वमस्त्येवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान्वृद्धिह्रासादीनेवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोध इति । बृहदारण्यकभाष्येऽपि 'स एष इहानखाग्रेभ्यः' इति वाक्यव्याख्यानावसरे सर्वगतस्यात्मनः कः प्रवेशो नामेति विमृश्य प्रतिबिम्बनं प्रवेश इति पक्षं विप्रकृष्टदेशाद्यभावेनैव दूषयित्वा देहादावात्मन उपलभ्यमानत्वं प्रवेशः । नहि पाषाणादाविव देहादावात्मनोऽनुपलब्धिरस्तीति प्रवेशपदार्थस्यान्यथोपपादनेन प्रतिबिम्बपक्षदूषणं स्थिरीकृतम् । तैत्तिरीयकभाष्येऽपि 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति वाक्ये प्रवेशविचारावसरे जलसूर्यकादिप्रतिबिम्बवत्प्रवेशः स्यादितिचेन्न । अपरिच्छिन्नत्वादमूर्तत्वाच्च परिच्छिन्नस्य मूर्तस्यान्यस्यान्यत्र प्रसादस्वाभाविके जलादौ सूर्यकादिप्रतिबिम्बोदयः स्यात् । नत्वात्मनोऽमूर्तत्वादाकाशादिकारणस्यात्मनो व्यापकत्वात्तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वभावाच्च प्रतिबिम्बवत्प्रवेशो न युक्त इति प्रतिबिम्बभावेन प्रवेशनिराकरणं भाष्यकृद्भिः कृतम् । एवंच प्रतिबिम्बपक्षे श्रुतिसूत्रभाष्यविरोधोऽवच्छेदपक्षे तु तदभाव इति । अस्मिन्पक्षे श्रुतिसूत्रभाष्यानुग्रहोऽप्यस्ति । तथाहि 'घटसंवृतमाकाशं नीयमाने यथा घटे । घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः' इति जीवस्य नभोपमशब्देन घटसंवृताकाशतुल्यत्वमभिधायिन्या श्रुत्यावच्छिन्नचैतन्यस्यैव जीवरूपत्वमुक्तम् । 'अंशो नानाव्यपदेशात्' इति सूत्रेण जीव ईश्वरस्यांशो भवितुमर्हति । यथाग्नेर्विस्फुलिङ्गोंऽश इवांशः । नहि निरवयवस्य मुख्योंऽशः संभवति कस्मात्पुनर्निरवयवत्वात्स एव न भवति 'नानाव्यपदेशात्' । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इतिचैवमादिको भेदनिर्देशो नासति भेदे संभवतीति भाष्येण च जीवचैतन्यस्य घटाकाशवदन्तःकरणावच्छिन्नत्वरूपमंशत्वं विवक्षितम् । यद्यपि 'आभास एव च' इतिसूत्रेण आभास एव 'एष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः' इति तद्भाष्येण च प्रतिबिम्बपक्ष उक्त इति प्रतिभाति । तथापि परमाप्तयोः सूत्रकारभाष्यकारयोरेकत्र जीवस्य प्रतिबिम्बत्वस्वीकारोऽन्यत्र तन्निराकरणं च न संभवतीति किंचिदनुरोधेन कस्मिंश्चिद्व्याख्यातव्ये प्रतिबिम्बत्वनिराकरणस्य 'युक्तियुक्तत्वे न आभास' इति सूत्रे भाष्यकृद्भिरपि श्रुत्योपपत्त्या प्रतिबिम्बत्वस्यासमर्थितत्वात् । तदेव सूत्रं तद्भाष्यं च वृद्धिह्रासभाक्त्वमिति सूत्रोक्तन्यायात् । अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते एवं नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्ध इति तदधिकरणभाष्ये प्रतिबिम्बस्य दृष्टान्तत्वेनोक्तत्वाच्च प्रतिबिम्बसादृश्यप्रतिपादनपरं व्याख्येयम् । तस्मात्प्रतिबिम्बासंभवादवच्छेदपक्षे विरोधाभावात्साधकस्य सत्त्वाच्च अवच्छेद्यचैतन्यस्य प्रतिबिम्बपक्षेऽपि संमतत्वेनोभयसंप्रतिपन्नत्वेन लाघवात्तस्यैव जीवत्वकल्पनौचित्यात् । सर्वगतस्य चैतन्यस्यान्तःकरणादिनावच्छेदोऽवश्यंभावीत्यावश्यकत्वादवच्छेदो जीव इति । स चानेकः अन्तःकरणादीनां नानाभूतानां जीवोपाधित्वाभ्युपगमात् । 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' । 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे एत आत्मानो व्युच्चरन्ति' इत्यादिश्रुतेः प्रतिषेधादिति चेन्न । शारीरादित्यधिकरणे

७ अभिनवगुप्ताचार्यव्याख्या।

गुणानां सत्त्वादीनां गुणत्वलक्षणां भेदावभासस्वभावां मायामतितरन्तीति मामेवेत्येवकारस्याशयः । ये तु यथास्थितं भेदावभासमात्रं विदुस्ते

१ श्रीमच्छांकरभाष्यम् ।

**सर्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतमोहिनीं तरन्त्यतिक्रामन्ति । संसारबन्धनान्मुच्यन्त**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सीनबोधरूपतया जीवसाक्षीश्वरसाक्षीतिशब्दाभ्यां व्यवह्रियेते । एवंच जीव ईश्वराराधनावाप्तप्रत्यक्तत्त्वज्ञानेन मायायां

४ मधुसूदनीव्याख्या ।

क्यसाक्षात्कारमन्तरेणात्येतुं तरितुमशक्येति दुरत्यया । अतएव जीवोऽन्तःकरणावच्छिन्नत्वात्तत्संबन्धमेवाक्ष्यादिद्वारा भासयन् किंचिज्ज्ञो भवति । ततश्च जानामि करोमि भुञ्जे चेत्यनर्थशतभाजनं भवति । स चेद्बिम्बभूतं भगवन्तमनन्तशक्तिं मायानियन्तारं सर्वविदं सर्वफलदातारमनिशमानन्दघनमूर्तिमनेकानवतारान्भक्तानुग्रहार्थं विदधतमाराधयति परमगुरुमशेषकर्मसमर्पणेन तदा बिम्बसमर्पितस्य प्रतिबिम्बे प्रतिफलनात्सर्वानपि पुरुषार्थानासादयति । एतदेवाभिप्रेत्य प्रह्लादेनोक्तं 'नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥' इति । दर्पणप्रतिबिम्बितस्य मुखस्य तिलकादिश्रीरपेक्षिता चेद्बिम्बभूते मुखे समर्पणीया । सा स्वयमेव तत्र प्रतिफलति नान्यः कश्चित्तत्प्राप्त्युपायोऽस्ति यथा तथा बिम्बभूतेश्वरे समर्पितमेव तत्प्रतिबिम्बभूतो जीवो लभते नान्यः कश्चित्तस्य पुरुषार्थलाभेऽस्त्युपाय इति दृष्टान्तार्थः । तस्य यदा भगवन्तमनन्तमनवरतमाराधयतोऽन्तःकरणं ज्ञानप्रतिबन्धकपापेन रहितं ज्ञानानुकूलपुण्येन चोपचितं भवति, तदातिनिर्मले मुकुरमण्डल इव मुखमतिस्वच्छेऽन्तःकरणे सर्वकर्मत्यागशमदमादिपूर्वकगुरूपसदनवेदान्तवाक्यश्रवणमनननिदिध्यासनैः संस्कृते तत्त्वमसीति गुरूपदिष्टवेदान्तवाक्यकरणिकाहंब्रह्मास्मीत्यनात्माकारशून्या निरुपाधिचैतन्याकारा साक्षात्कारात्मिका वृत्तिरुदेति । तस्यां च प्रतिफलितं चैतन्यं सद्य एव स्वविषयाश्रयामविद्यामुन्मूलयति दीप इव तमः । ततस्तस्या नाशात्तया वृत्त्या सहाखिलस्य कार्यप्रपञ्चस्य नाशः । उपादाननाशादुपादेयनाशस्य सर्वतन्त्रसिद्धत्वात् । तदेतदाह भगवान् 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति । 'आत्मेत्येवोपासीत तदात्मानमेवावेत्', 'तमेव धीरो विज्ञाय', 'तमेव विदित्वाऽतिमृत्युमेति' इत्यादिश्रुतिष्विवेहापि मामेवेत्येवकारोऽन्यानुपरक्तप्रतिपत्त्यर्थः । मामेव सर्वोपाधिविरहितं चिदानन्दसदात्मानमखण्डं ये प्रपद्यन्ते वेदान्तवाक्यजन्यया निर्विकल्पकसाक्षात्काररूपया निर्वचनानर्हशुद्धचिदाकारस्वधर्मविशिष्टया सर्वसुकृतफलभूतया निदिध्यासनपरिपाकप्रसूतया चेतोवृत्त्या सर्वाज्ञानतत्कार्यविरोधिन्या विषयीकुर्वन्ति ये ते केचिदेतां दुरतिक्रमणीयामपि मायामखिलानर्थजन्मभुवमनायासेनैव तरन्ति अतिक्रामन्ति ।

५ भाष्योत्कर्षदीपिका ।

बद्धमुक्तत्वप्रतिपादकभाष्यस्य नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्ध इति 'आभास' इति सूत्रस्थस्य सच स्वात्मभूतानिव घटाकाशस्थानीयानविद्योपस्थापितनामरूपकृतकार्यकरणसंघातानुरोधिनो जीवाख्यान्विज्ञानात्मनः प्रतीष्टे इति । 'तदनन्यत्वं' इत्यधिकरणस्थस्य जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखभुक् प्रतिशरीरं प्रविभक्त इति जीवात्मनामुत्पत्तिप्रलयावुच्येते । इति नात्मेत्यधिकरणस्थस्य च भाष्यस्य 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यादिस्मृतेः । 'एवं जीवाश्रितो भावा भवभावनयोहिताः । ब्रह्मणः कलिताकाराल्लक्षशोऽप्यथ कोटिशः ॥ असंख्याताः पुरा जाता जायन्ते चापि चाद्य भोः । उत्पतिष्यन्ति चैवाम्बुकणौघा इव निर्झरात् ॥ स्ववासनावशावेशादाशाविवशतां गताः । दशास्वतिविचित्रासु स्वयं निगडिताशयाः ॥ भविष्यज्जातयः केचित्केचिद्भूतभवोद्भवाः । वर्तमानभवाः केचित्केचित्त्वभवतां गताः ॥ ( अभवतां विदेहमुक्तिमिति टीकाकाराः ) । जीवन्मुक्ता भ्रमन्तीह केचित्कल्याणभाजनाः । चिरमुक्ताः स्थिताः केचिन्नूनं परिणताः परे ॥ ( परे परमात्मनि परिणतास्तद्भावं प्राप्ता विदेहमुक्ता इति व्याख्यातारः ) । केचिच्चिरेण कालेन भविष्यन्मुक्तयः शिवाः । केचिद्विशन्ति चिद्भावाः केवलीभावमात्मनः ॥' केवलीभावं कैवल्यमित्यादीतिहासस्य चास्मिन्पक्षे एवाञ्जस्यं नत्वेकजीववादे । नच नानाजीववादेऽपि ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते इत्यर्थेन बृहदारण्यकभाष्यप्रतिपादितेन विरोध इति शङ्क्यम् । तद्भाष्यप्रतिपादितस्य ब्रह्मैव स्वाविद्यया नानान्तःकरणभावेन परिणतया नानाजीवभावं प्राप्य संसरति स्वविद्यया मुच्यत इत्यभिप्रायकत्वोपपत्तेः । नच जीवत्वोपाधिभूताया अविद्याया एकत्वाज्जीवैक्यसिद्धिरिति वाच्यम् । 'रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय' । 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुत्या अविद्याया नानात्वाभ्युपगमात् । तदेकत्वश्रुत्यादीनां जात्यभिप्रायकत्वोपपत्तेः । अविद्याया एकत्वेऽपि 'कार्योपाधिरयं जीवः' इतिश्रुत्यनुसारेणान्तःकरणानामेव जीवत्वोपाधित्वोपगमसंभवाच्च । अविद्याया नानात्वपक्षे विनिगमकाभावादनेकतन्त्वारब्धपटतुल्यः सर्वाविद्याकृतः प्रपञ्च इत्येके तत्तदज्ञानकृतप्रातिभासिकरजतवत्तत्तदविद्याकृतो वियदादिप्रपञ्चः प्रतिपुरुषं भिन्नः, ऐक्यप्रत्ययस्तु शुक्तिरूप्यैक्यप्रत्ययवदित्यन्ये जीवाश्रितादविद्यानिचयाद्भिन्ना परमेश्वराश्रिता मायैव प्रपञ्चकारणं जीवानामविद्यास्तु आवरणमात्रे प्रातिभासिकसृष्टौ चोपयुज्यन्ते । 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः' इत्यादिवचने मायापदं जीवचैतन्ये संसारघटिकाऽविद्यापरमित्यपरे । तथाचोदाहृतश्रुत्याद्यनुसारिभ्यः 'अशोच्यानन्वशोचस्त्वं', 'नचैव न भविष्यामः सर्वे वयमतःपरं', 'कामात्मानः स्वर्गपराः', 'भोगैश्वर्यप्रसक्तानां', 'कृपणाः फलहेतवः', 'कर्मजं बुद्धियुक्ता हि', 'या निशा सर्वभूतानां', 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां', 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः', 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं', 'एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः',

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।**
**माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

इत्यर्थः ॥ १४ ॥ यदि त्वां प्रपन्ना मायामेतां तरन्ति कस्मात्त्वामेव सर्वे न प्रपद्यन्त इत्युच्यते—न मामिति । न मां परमेश्वरं दुष्कृतिनः पापकारिणो मूढाः प्रपद्यन्ते नराधमा नराणां मध्येऽधमा

२ आनन्दगिरिव्याख्या ।

पुरुषार्थसिद्धिरित्याशङ्क्याह—**संसारेति** ॥ १४ ॥ भगवन्निष्ठाया मायातिक्रमहेतुत्वे तदेकनिष्ठत्वमेव सर्वेषामुचितमिति पृच्छति—**यदीति** । पापकारित्वेनाविवेकभूयस्तया हिंसानृतादिभूयस्त्वाद्भूयसां जन्तूनां न भगवन्निष्ठत्वसिद्धिरित्याह—**उच्यत इति** । मौढ्यं पापकारित्वे हेतुरतएव निकर्षः । संमुषितमिव तिरस्कृतं ज्ञानं स्वरूपचैतन्यमेषा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नष्टायां तत्कार्यस्यापि नाशेन साक्ष्याभावात्साक्षित्वमपि परित्यज्य बिम्बप्रतिबिम्बानुस्यूतं शुद्धं तृतीयं चैतन्यं प्राप्नोतीति तदिदमुक्तं दैवी मायेति । मम मायेति चैकस्या एव जीवेश्वरसंबन्धित्वं जीवस्येश्वरभजनेन मायातरणमिति च ॥ १४ ॥ कुतस्तर्हि सर्वे त्वां प्रपद्य मायां न तरन्तीत्याशङ्क्याह—**न मामिति** । यतो दुष्कृतिनोऽतश्चित्तशुद्ध्यभावान्मूढाः आत्मानात्मविवेकहीनाः । अतएव नराधमा मां न प्रपद्यन्ते । कुतो दुष्कृतिनः । यतो माययाऽपहृतं

४ मधुसूदनीव्याख्या ।

'तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति' इति श्रुतेः । सर्वोपाधिनिवृत्त्या सच्चिदानन्दघनरूपेणैव तिष्ठन्तीत्यर्थः । बहुवचनप्रयोगो देहेन्द्रियादिसंघातभेदनिबन्धनात्मभेदभ्रान्त्यनुवादार्थः । प्रपश्यन्तीति वक्तव्ये प्रपद्यन्त इत्युक्तेऽर्थे मदेकशरणाः सन्तो मामेव भगवन्तं वासुदेवमीदृशमनन्तसौन्दर्यसारसर्वस्वमखिलकलाकलापनिलयमभिनव [ पङ्कजशोभाधिकचरणकमलयुगलप्रभमनवरतवेणुवादननिरतवृन्दावनक्रीडासक्तमानसहेलोद्धृतगोवर्धनाख्यमहीधरं गोपालं निषूदितशिशुपालकंसादिदुष्टसंघमभिनव ]जलदशोभासर्वस्वहरणचरणपरमानन्दघनमयमूर्तिमतिवैरिञ्चप्रपञ्चमनवरतमनुचिन्तयन्तो दिवसानतिवाहयन्ति ते मत्प्रेममहानन्दसमुद्रमग्नमनस्तया समस्तमायागुणविकारैर्नाभिभूयन्ते, किंतु मद्विलासविनोदकुशला एते मदुन्मूलनसमर्था इति शङ्कमानेव माया तेभ्योऽपसरति वारविलासिनीव कोधनेभ्यस्तपोधनेभ्यः । तस्मान्मायातरणार्थी मामीदृशमेव सन्ततमनुचिन्तयेदित्यप्यभिप्रेतं भगवतः । श्रुतयः स्मृतयश्चात्रार्थे प्रमाणीकर्तव्याः ॥ १४ ॥ यद्येवं तर्हि किमिति निखिलानर्थमूलमायोन्मूलनाय भगवन्तं भवन्तमेव सर्वे न प्रतिपद्यन्ते चिरसंचितदुरितप्रतिबन्धादित्याह भगवान्—दुष्कृतिनो दुष्कृतेन पापेन सह नित्ययोगिनः । अतएव नरेषु मध्येऽधमा इह साधुभिर्गर्हणीयाः परत्र चानर्थसहस्रभाजः कुतो दुष्कृतमनर्थहेतुमेव सदा कुर्वन्ति, यतो मूढा इदमर्थसाधनमिदमनर्थसाधनमिति विवेकशून्याः । सति प्रमाणे कुतो न विविञ्चन्ति, यतो माययाऽपहृत-

५ भाष्योत्कर्षदीपिका ।

'यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते', 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः', 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः', 'पण्डिताः समदर्शिनः', 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः', 'लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः', 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते', 'न मां दुष्कृतिनो मूढाः', 'चतुर्विधा भजन्ते मां', 'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये, ते ब्रह्म तद्विदुः कृत्स्नं', 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः', 'मत्स्थानि सर्वभूतानि', 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः', 'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते', 'अन्ये त्वेवमजानन्तः', 'यज्ज्ञात्वा मुनयः सर्वे', 'निर्मानमोहा जितसङ्गदोषाः', 'विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः', 'यतन्तो योगिनश्चैनं', 'नष्टात्मानोऽल्पबुद्धयः', 'त्रिविधा भवति श्रद्धा देहिनाम्' इत्यादिभगवद्वचनेभ्योऽपि जीवानामनेकत्वमध्यवसीयते । 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत', 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि', 'ममैवांशो जीवलोके जीवभूतः सनातनः' इत्यादिवचनेष्वेकवचनं तु जात्यभिप्रायम् । 'एवमनेन जीवेनात्मनानुप्रविश्य', 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' इत्यादिश्रुतिष्वपि । 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुतिस्तु परमात्मैकत्वप्रतिपादिका, नतु जीवैकत्वप्रतिपादिका । 'केवलो निर्गुणश्च' इत्यादिविशेषणेभ्यस्तथा च भाष्यं 'भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः' । 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुतिभ्य इत्यलं प्रासङ्गिकेन ॥ १४ ॥ यदि त्वां प्रपन्ना एतां मायां तरन्ति तर्हि कस्मात्त्वामेव परमेश्वरं सर्वे न प्रपद्यन्त इत्याकाङ्क्षायामाह—**नेति** । दुष्कृतिनः पापकारिणो-

६ श्रीधरीव्याख्या ।

न्तीति भावः ॥ १४ ॥ किमिति तर्हि सर्वे त्वामेव न भजन्ति तत्राह— **न मामिति** । नरेषु येऽधमास्ते मां न प्रपद्यन्ते न भजन्ति । अधमत्वे हेतुः, मूढा विवेकशून्याः । तत्कुतः, दुष्कृतिनः पापशीलाः । अतो माययापहृतं निरस्तं शास्त्राचार्योपदेशाभ्यां जातमपि ज्ञानं

७ अभिनवगुप्ताचार्यव्याख्या ।

मायां नातिवर्तन्ते नातिक्रामन्ति तदुक्तमुक्तं नत्वहं तेष्विति ॥ १४ ॥ न मामिति । ये च मां सत्यप्यधिकारिणि काये नाद्रियन्ते ते दुष्कृतिनो

१ [ ] एवं कुण्डलितो भागः केषुचिदादर्शेषु नोपात्तः ।

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम्।

निकृष्टास्ते च माययापहृतज्ञानाः संमुषितज्ञाना आसुरं भावं हिंसानृतादिलक्षणमाश्रिताः ॥ १५ ॥ ये पुनर्नरोत्तमाः पुण्यकर्माणः-चतुर्विधाश्चतुःप्रकारा भजन्ते सेवन्ते मां जनाः सुकृतिनः पुण्यकर्माणो हेऽर्जुन, आर्त आर्तिपरिगृहीतस्तस्करव्याघ्ररोगादिनाभिभू(तोऽभिभवमा)त आपन्नो जिज्ञासुर्भगव-

२ आनन्दगिरिव्याख्या।

मिति ते तथा ॥ १५ ॥ केषां तर्हि तन्निष्ठता सुकरेति तत्राह—**ये पुनरिति**। ते भजन्ते भगवन्तमिति शेषः। ये त्वां भजन्ते ते किं सर्वे मायां तरन्ति, नैव प्रार्थनावैचित्र्यादित्याह—**चतुर्विधा इति**। आपन्नस्तन्निवृत्तिमिच्छन्निति शेषः। **तत्त्वविदिति**। शब्दज्ञानवानात्मतत्त्वसाक्षात्कारमात्रार्थी मुमुक्षुरित्यर्थः ॥ १६ ॥ चतुर्विधानां तेषां

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

तिरस्कृतं ज्ञानमखण्डसंविद्रूपं ब्रह्म येषां ते अपहृतज्ञानाः। एतेन मायाया आवरणशक्तिरुक्ता। किंच आसुरमसुराणां विरोचनादीनां भावं चित्ताभिप्रायं 'आत्मैवेह महय्यः' इत्यादिना श्रुतं देहेन्द्रियसंघात एव सम्यक्संतर्पणीय इत्येवंविधमाश्रिताः। एतेन मायाया विक्षेपशक्तिरुक्ता। तदेवं मायया स्वरूपानन्दमावृत्य देहात्मभ्रमे जनिते सति तदभिमानाद्देहादिपुष्ट्यर्थं दुष्कृतं कुर्वन्ति तेन च मूढाः सन्तो नराधमा मां न प्रपद्यन्ते। सर्वानर्थमूलं मायैवेत्यर्थः ॥ १५ ॥ येतु सत्यपि देहाद्यध्यासे मत्तो बिभ्यति मत्प्रीत्यर्थं सुकृतमेवाचरन्ति तेऽपि चतुर्विधा न केवलं सर्वे मदेककामा इत्याशयेनाह—**चतुर्विधा इति**। आर्तः पीडितः पीडापरिहारार्थी। जिज्ञासुः स्वाज्ञाननाशार्थी।

४ मधुसूदनीव्याख्या।

ज्ञानाः शरीरेन्द्रियसंघाततादात्म्यभ्रान्तिरूपेण परिणतया मायया पूर्वोक्तयापहृतं प्रतिबद्धं ज्ञानं विवेकसामर्थ्यं येषां ते तथा। अतएव ते 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादिनाग्रे वक्ष्यमाणमासुरं भावं हिंसानृतादिस्वभावमाश्रिता मत्प्रतिपत्त्ययोग्याः सन्तो न मां सर्वेश्वरं प्रपद्यन्ते न भजन्ते। अहो दौर्भाग्यं तेषामित्यभिप्रायः ॥ १५ ॥ ये त्वासुरभावरहिताः पुण्यकर्माणो विवेकिनस्ते पुण्यकर्मतारतम्येन चतुर्विधाः सन्तो मामेव भजन्ते क्रमेण च कामनाराहित्येन मत्प्रसादान्मायां तरन्तीत्याह—ये सुकृतिनः पूर्वजन्मकृतपुण्यसंचया जनाः सफलजन्मानस्त एव नान्ये ते मां भजन्ते सेवन्ते। हे अर्जुन, ते च त्रयः सकामा एकोऽकाम इत्येवं चतुर्विधाः। आर्तः आर्त्या शत्रुव्याध्याद्यापदा ग्रस्तस्तन्निवृत्तिमिच्छन्, यथा मखभङ्गेन कुपित इन्द्रे वर्षति व्रजवासी जनः, यथा वा जरासन्धकारागारवर्ती राजनिचयः, द्यूतसभायां वस्त्राकर्षणे द्रौपदी च, ग्राहग्रस्तो गजेन्द्रश्च। जिज्ञासुरात्मज्ञानार्थी मुमुक्षुः यथा मुचुकुन्दः, यथा वा मैथिलो जनकः श्रुतदेवश्च, निवृत्ते मौसले यथा चोद्धवः। अर्थार्थी इह वा परत्र वा यद्भोगोपकरणं तल्लिप्सुः। तत्रेह यथा सुग्रीवो बिभीषणश्च, यथा चोपमन्युः, परत्र यथा ध्रुवः। एते त्रयोऽपि भगवद्भजनेन मायां तरन्ति। तत्र जिज्ञासुर्ज्ञानोत्पत्त्या साक्षादेव मायां तरति, आर्तोऽर्थार्थी च जिज्ञासुत्वं प्राप्येति विशेषः। आर्तस्यार्थार्थिनश्च जिज्ञासुत्वसंभवाज्जिज्ञासोश्चार्तत्वज्ञानोपकरणार्थार्थित्वसंभवादुभयोर्मध्ये जिज्ञासुरुद्दिष्टः। तदेते त्रयः

५ भाष्योत्कर्षदीपिका।

ऽतएव विमूढाः संमोहं प्राप्ताः अतएव नराणां स्वधर्मपराणां मध्येऽधमा निकृष्टाः यतो माययापहृतं मुषितं विवेकज्ञानं येषां ते आसुरं भावं हिंसानृतादिलक्षणमाश्रिता मां परमेश्वरं न प्रतिपद्यन्ते ॥ १५ ॥ के पुनस्त्वां प्रतिपद्यन्ते इत्यपेक्षायामाह—**चतुर्विधा इति**। सुकृतिनः पुण्यकर्माणो जना नरोत्तमा मां भजन्ति। तेच पुण्यतारम्येन चतुर्विधाः। आर्तो रोगादिजनितपीडापरिगृहीतः, जिज्ञासुः भगवत्तत्त्वं ज्ञातुमिच्छुः, अर्थार्थी धनादिकामः, ज्ञानी विष्णुतत्त्ववित्। चकाराज्ज्ञानिनो निष्कामत्वं सूचयति। अर्जुनेति संबोधयन् सुकृतकर्मणा स्वच्छतामापन्नस्यैव मद्भजनभाजनतेति ध्वनयति। सुकृतं च स्ववर्णाश्रमाविरोधि स्वकुलपरंपरागतं तथाच मद्भजनाधिकारकारकं क्षत्रियस्य विहितं स्वकुलपरंपरागतं युद्धं कर्तुमर्हसीति द्योतयन्नाह—**भरतर्षभेति** ॥ १६ ॥ तेभ्यो

६ श्रीधरीव्याख्या।

येषां ते तथा, अतएव 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादिना वक्ष्यमाणमासुरं भावं स्वभावं प्राप्ताः सन्तो न मां भजन्ति ॥ १५ ॥ सुकृतिनस्तु मां भजन्ति ते च सुकृततारतम्येन चतुर्विधा इत्याह—**चतुर्विधा इति**। पूर्वजन्मसु ये कृतपुण्या जनास्ते मां भजन्ति। ते तु चतुर्विधाः—आर्तो रोगाद्यभिभूतः। स यदि पूर्वं कृतपुण्यस्तर्हि मां भजति अन्यथा क्षुद्रदेवताभजनेन संसरति। एवमुत्तरत्रापि द्रष्टव्यम्। जिज्ञासुरात्मज्ञानेच्छुः, अर्थार्थी अत्र वा परत्र वा भोगसाधनभूतार्थलिप्सुः, ज्ञानी च आत्मवित् ॥ १६ ॥

७ अभिनवगुप्ताचार्यव्याख्या।

नराधमा मूढा आसुरास्तामसा इति मायामहिमैवायम् ॥ १५ ॥ चतुर्विधा इत्यादि सुदुर्लभ इत्यन्तम्। ये तु मां भजन्ते ते सुकृतिनः।

**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तत्त्वं ज्ञातुमिच्छति योऽर्थार्थी धनकामो ज्ञानी विष्णोस्तत्त्ववित्च हे भरतर्षभ ॥१६॥ तेषामिति । तेषां चतुर्णां मध्ये ज्ञानी तत्त्ववित्तत्त्ववित्त्वान्नित्ययुक्तो भवत्येकभक्तिश्चान्यस्य भजनीयस्यादर्शनादतः स एकभक्तिर्विशिष्यते विशेषमाधिक्यमापद्यते । अतिरिच्यत इत्यर्थः । प्रियो हि यस्मादहमात्मा ज्ञानिनोऽतस्तस्याहमत्यर्थं प्रियः । प्रसिद्धं हि लोक आत्मा प्रियो भवतीति । तस्माज्ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः । स च ज्ञानी मम वासुदेवस्यात्मैवेति ममात्यर्थं प्रियः ॥ १७ ॥ न तर्ह्यार्तादयस्त्रयो

२ आनन्दगिरिव्याख्या ।

सुकृतिनां भगवदभिमुखानां तुल्यत्वमाशङ्क्याह—**तेषामिति** । तस्य विशिष्यमाणत्वे हेतुमाह—**प्रियो हीति** । नित्ययुक्तत्वं भगवत्यात्मनि सदा समाहितचेतस्त्वम् । असारे संसारे भगवानेव सारः सोऽहमस्मीत्येकस्मिन्नद्वितीये स्वस्मादत्यन्तमभिन्ने भगवति भक्तिः स्नेहविशेषोऽस्येत्येकभक्तिः । तस्याधिक्ये हेतुं विवृणोति—**प्रियो हीत्यादिना** । भगवतो ज्ञानिनश्च परस्परं प्रेमास्पदत्वे प्रसिद्धिं प्रमाणयति—**प्रसिद्धं हीति** । आत्मनो ज्ञानिनं प्रति प्रियत्वेऽपि भगवतो वासुदेवस्य कथं तं प्रति प्रियत्वमित्याशङ्क्याह—**तस्मादिति** । अहं ज्ञानिनो निरुपाधिकप्रेमास्पदं परमपुरुषार्थत्वेनात्मत्वेन च गृहीतत्वादित्यर्थः । ज्ञानिनोऽपि भगवन्तं प्रति प्रियत्वं प्रकटयति—**स चेति** ॥ १७ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अर्थार्थी धनाद्यर्थी । ज्ञानी चेति चतुर्विधा मां भजन्ते ॥ १६ ॥ किं सर्वेऽपि समा एते सुकृतिन इति साधारण्येन विशेषणादत आह—**तेषामिति** । तेषां मध्ये ज्ञानी विशिष्यते । यतो नित्ययुक्तः । आर्तादयो हि कामिनः कामपूर्तौ न मद्भजने युक्ता भवन्ति, अयंतु नित्ययुक्त एकभक्तिश्चैकभावेन भजनं करोति । तथाहि आर्ता रोगिणः सूर्यं भजन्ते, जिज्ञासवः सरस्वतीं, अर्थार्थिनः कुबेरादीनिति तेषां तत्तत्कामार्थित्वेनानेकभक्तित्वं दृश्यते । तस्य नित्ययुक्तत्वे एकभक्तित्वे च हेतुः हि यतः ज्ञानिनोऽहमत्यर्थं प्रियः आत्मत्वादेव । आत्मा च प्रियः निरुपाधिप्रेमगोचरत्वात् 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादान्तरो यदयमात्मा' इति श्रुतेश्च । सच ज्ञानी मम

४ मधुसूदनीव्याख्या ।

सकामा व्याख्याताः । निष्कामश्चतुर्थ इदानीमुच्यते ज्ञानी च, ज्ञानं भगवत्तत्त्वसाक्षात्कारस्तेन नित्ययुक्तो ज्ञानी तीर्णमायो निवृत्तसर्वकामः । चकारो यस्य कस्यापि निष्कामप्रेमभक्तस्य ज्ञानिन्यन्तर्भावार्थः । हे भरतर्षभ, त्वमपि जिज्ञासुर्वा ज्ञानी वेति कतमोऽहं भक्त इति माशङ्किष्ठा इत्यर्थः । तत्र निष्कामभक्तो ज्ञानी यथा सनकादिर्यथा नारदो यथा प्रह्लादो यथा पृथुर्यथा वा शुकः । निष्कामः शुद्धप्रेमभक्तो यथा गोपिकादिर्यथा वाऽक्रूरयुधिष्ठिरादिः । कंसशिशुपालादयस्तु भयाद्द्वेषाच्च संततभगवच्चिन्तापरा अपि न भक्ताः भगवदनुरक्तेरभावात् । भगवदनुरक्तिरूपायास्तु भक्तेः स्वरूपं साधनं भेदास्तथाऽभक्तानामपि भगवद्भक्तिरसायनेऽस्माभिः सविशेषं प्रपञ्चिता इतीहोपरम्यते ॥ १६ ॥ चतुर्विधानामपि सुकृतित्वे नियतेऽपि सुकृताधिक्येन निष्कामतया प्रेमाधिक्यात् – चतुर्विधानां तेषां मध्ये ज्ञानी तत्त्वज्ञानवान्निवृत्तसर्वकामो विशिष्यते सर्वतोऽतिरिच्यते । सर्वोत्कृष्ट इत्यर्थः । यतो नित्ययुक्तो भगवति प्रत्यगभिन्ने सदा समाहितचेता विक्षेपकाभावात् । अतएवैकभक्तिरेकस्मिन्भगवत्येव भक्तिरनुरक्तिर्यस्य स तथा, तस्यानुरक्तिविषयान्तराभावात् । हि यस्मात् प्रियो निरुपाधिप्रेमास्पदमत्यर्थमत्यन्तमतिशयेन ज्ञानिनोऽहं प्रत्यगभिन्नः परमात्मा सच तस्मादत्यर्थं मम परमेश्वरस्य प्रियः । आत्मा प्रियोऽतिशयेन भवतीति श्रुतिलोकयोः प्रसिद्धमेवेत्यर्थः

५ भाष्योत्कर्षदीपिका ।

ज्ञानिनः श्रैष्ठ्यमाह । तेषां चतुर्णां मध्ये ज्ञानी विशिष्यते आधिक्यं प्राप्नोति । यतस्तत्त्ववित्त्वान्नित्ययुक्तः कदापि मद्भजनं न त्यजति । यत 'एकमेवाद्वितीयं ब्रह्म', 'तत्त्वमसि' इत्यादि श्रुत्या निर्णीते प्रत्यगभिन्ने मयि भगवति वासुदेवे भक्तिर्वृत्तिसंततिरूपा यस्य सः । प्रेमास्पदे वस्तुनि भक्तिर्भवति प्रेमास्पदश्च श्रुत्या लोकप्रसिद्ध्या चात्मा । हि यस्मादहं ज्ञानिन आत्मत्वादत्यर्थं अत्यन्तं प्रियः । स च ज्ञानी

६ श्रीधरीव्याख्या ।

एतेषां मध्ये ज्ञानी श्रेष्ठ इत्याह—**तेषामिति** । तेषां मध्ये ज्ञानी विशिष्टः । तत्र हेतवः—नित्ययुक्तः । सदा मन्निष्ठः एकस्मिन्मय्येव भक्तिर्यस्य सः । ज्ञानिनो देहाद्यभिमानाभावेन चित्तविक्षेपाभावान्नित्ययुक्तत्वमेकान्तभक्तित्वं च संभवति नान्यस्य । अतएव हि तस्याहमत्यन्तं प्रियः स च मम । तस्मादेतैर्नित्ययुक्तत्वादिभिश्चतुर्भिर्हेतुभिः स उत्तम इत्यर्थः ॥ १७ ॥ तर्हि किमितरे त्रयस्त्वद्भक्ताः संसरन्ति

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**वासुदेवस्य प्रियाः । न, किं तर्हि—उदारा इति । उदारा उत्कृष्टाः सर्वे एवैते त्रयोऽपि मम प्रिया एवे-त्यर्थः । नहि कश्चिन्मद्भक्तो मम वासुदेवस्याप्रियो भवति, ज्ञानी त्वत्यर्थं प्रियो भवतीति विशेषः । तत्कस्मादित्याह । ज्ञानी त्वात्मैव नान्यो मत्त इति मे मम मतं निश्चयः । आस्थित आरोढुं प्रवृत्तः स ज्ञानी हि यस्मादहमेव भगवान्वासुदेवो नान्योऽस्मीत्येवं युक्तात्मा समाहितचित्तः सन्मामेव परं**

२ आनन्दगिरिव्याख्या ।

ज्ञानी चेदत्यर्थमीश्वरस्य प्रियो भवति तर्हि विशेषणसामर्थ्यादितरेषामप्रियत्वं प्राप्तमिति शङ्कते—**न तर्हीति** । तेषां भगवन्तं प्रति प्रियत्वमत्र विवक्षितमित्याह—**नेति** । अत्यर्थमिति विशेषणस्य तर्हि किं प्रयोजनमिति पृच्छति—**किं तर्हीति** । सर्वेषां भगवदभिमुखत्वादुत्कर्षेऽपि ज्ञानिनि तदतिरेकमङ्गीकृत्य विशेषणमित्याह—**उदारा इति** । किं तत्र प्रमाणमित्याशङ्क्येश्वरज्ञानमित्याह—**मे मतमिति** । ज्ञानी त्वात्मैवेत्यत्र हेतुमाह—**आस्थित इति** । सर्वशब्दस्य ज्ञानिव्यतिरिक्तविषयत्वमाह—**त्रयोऽपीति** । ज्ञानिव्यतिरिक्तानां भगवदभिमुखत्वेऽपि ज्ञानाभावाप-राधान्न भगवत्प्रीतिविषयतेत्याशङ्क्याह—**नहीति** । कस्तर्हि ज्ञानवति विशेषस्तत्राह—**ज्ञानी त्विति** । तमेव विशेषं प्रश्नपूर्वकं प्रकटयति—**तत्कस्मादित्यादिना** । सर्वमात्मानं पश्यतोऽपि तस्य तव कथं यथोक्तो निश्चयः स्यादि-त्याशङ्क्यास्थित इत्येतद्व्याकरोति—**आरोढुमिति** । आरोहे हेतुं सूचयति—**स ज्ञानीति** । आरोढुं प्रवृत्तत्वमेव स्फुट-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रियो भक्तानां दुर्लभत्वादिति भावः ॥ १७ ॥ **उदारा इति** । सर्वेऽप्येते उदारा उत्कृष्टा एव । ज्ञानी तु ममात्मै-वेति मम मतं निश्चितम् । हि यतः स युक्तात्मा अहमेव भगवान्वासुदेव इत्यभेदेन मयि समाहितचित्तो मामे-वानुत्तमां श्रेष्ठां गतिमास्थितो नतु मत्तोऽन्यदारोग्यादिकं कामयमानो मद्भक्तिं करोति । किंतर्हि मत्प्राप्त्यर्थमेव मां

४ मधुसूदनीव्याख्या ।

॥ १७ ॥ तत्किमार्तादयस्तव न प्रियाः, न, अत्यर्थमिति विशेषणादित्याह—एते आर्तादयः सकामा अपि मद्भक्ताः सर्वे त्रयोऽप्युदारा एव उत्कृष्टा एव पूर्वजन्मार्जितानेकसुकृतराशित्वात् । अन्यथा हि मां न भजेयुरेव । आर्तस्य जिज्ञासोरर्थार्थिनश्च मद्विमुखस्य क्षुद्रदेवताभक्तस्यापि बहुलमुपलम्भात् । अतो मम प्रिया एव ते । नहि ज्ञानवानज्ञो वा कश्चिदपि भक्तो ममाप्रियो भवति, किंतु यस्य यादृशी मयि प्रीतिर्ममापि तत्र तादृशी प्रीतिरिति स्वभावसिद्धमेवैतत् । तत्र सकामानां त्रयाणां काम्यमान-मपि प्रियमहमपि प्रियः । ज्ञानिनस्तु प्रियान्तरशून्यस्याहमेव निरतिशयप्रीतिविषयः । अतः सोऽपि मम निरतिशयप्रीतिविषय इति विशेषः । अन्यथा हि मम कृतज्ञता न स्यात् कृतघ्नता च स्यात् । अतएवात्यर्थमिति विशेषणमुपात्तं प्राक् । तथा हि 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इत्यत्र तरबर्थस्य विवक्षितत्वाद्विद्यादिव्यतिरेकेण कृतमपि कर्म वीर्यवद्भवत्येव, तथात्यर्थं ज्ञानी भक्तो मम प्रिय इत्युक्तेर्यो 'ज्ञानव्यतिरेकेण भक्तः सोऽपि प्रिय' इति पर्यवस्यत्येव, अत्यर्थमिति विशेषणस्य विवक्षितत्वात् । उक्तंहि 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति । अतो मामात्मत्वेन ज्ञान-वाञ्ज्ञानी आत्मैव न मत्तो भिन्नः किं त्वहमेव स इति मम मतं निश्चयः । तुशब्दः सकामभेददर्शित्रितयापेक्षया निष्काम-

५ भाष्योत्कर्षदीपिका ।

मम वासुदेवस्यात्मैवातो ममात्यन्तं प्रियः ॥१७॥ तर्हि किमार्तादयस्तवाप्रियाः, न, आत्मत्वेनात्यर्थमिति विशेषणादित्याह—**उदारा इति** । उदाराः सर्व एते त्रयोऽप्यन्येभ्य आर्तादिभ्यः । आर्त्यादिनिवृत्त्यर्थमितरदेवतादिभक्तेभ्य उत्कृष्टाः मम प्रिया एवेत्यर्थः । नहि कश्चिदार्तो वा जिज्ञासुर्वाऽर्थार्थी वा मद्भक्तो मम वासुदेवस्याप्रियो भवति । परंतु 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इत्युक्तत्वात् यो यदर्थं मां भजति तमहमपि तत्फलदानेन भजामि । यस्तु निष्कामी प्रेमातिशयेन मां भजति तमहमपि तथैव भजा-म्यतो ज्ञानी ह्यत्यर्थं प्रियो भवतीति विशेषः । तत्कुत इति तत्राह । ज्ञानी तु ममात्मैव नान्यो यत इति मे मतं निश्चयः । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः । तुशब्दस्तेभ्यो विशेषद्योतनार्थः । ज्ञानी त्वात्मैवेत्यत्र हेतुमाह—**आस्थित इति** । हि यस्मात्स ज्ञानी अहमेव भगवान्वासुदेवो नान्योऽहमस्मीत्येवं युक्तः समाहित आत्मा चित्तं यस्य सः मामेव परं ब्रह्मानुत्तमां गतिं निरतिशयं

६ श्रीधरीव्याख्या ।

नहि नहीत्याह—**उदारा इति** । सर्वेऽप्येत उदारा महान्तः । मोक्षभाज एवेत्यर्थः । ज्ञानी पुनरात्मैवेति मे मतं निश्चयः । हि यस्मात्

७ अभिनवगुप्ताचार्यव्याख्या ।

ते च चत्वारः । सर्वे चैते उदाराः । यतोऽन्ये कृपणबुद्धयः । आर्तिनिवारणमर्थादि च तुल्यपाणिपादोदरशरीरसत्त्वेभ्योऽधिकतरं वा आत्मन्यूनेभ्यो मार्गयन्ते । ज्ञान्यपेक्षया तु न्यूनसत्त्वाः । यतस्तेषां तावत्यपि भेदोऽस्ति भगवत इदमहमभिलषिष्यामीति । भेदस्य स्फुटप्रति-

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**ब्रह्म गन्तव्यमनुत्तमां गतिं गन्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥ ज्ञानी पुनरपि स्तूयते—बहूनामिति । बहूनां जन्मनां ज्ञानार्थसंस्काराश्रयाणामन्ते समाप्तौ ज्ञानवान्प्राप्तपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते । कथं, वासुदेवः सर्वमिति । य एवं सर्वात्मानं मां प्रतिपद्यते स महात्मा न तत्समोऽन्योऽस्त्यधिको वा, अतः सुदुर्लभो मनुष्याणां सहस्रेष्वित्युक्तम् ॥ १९ ॥ आत्मैव सर्वं**

२ आनन्दगिरिव्याख्या ।

यति—**मामेवेति** ॥ १८ ॥ उत्तरश्लोकस्य गतार्थत्वं परिहरति—**ज्ञानीति** । ज्ञानार्थसंस्कारो वासना तत्तज्जन्मनि पुण्यकर्मानुष्ठानजनिता बुद्धिशुद्धिस्तदाश्रयाणां तद्वतामनन्तानां जन्मनामिति यावत् । ज्ञानवत्त्वं प्राक्तनेष्वपि जन्मसु संभावितमित्याशङ्क्याह—**प्राप्तेति** । ज्ञानवतो भगवत्प्रतिपत्तिं प्रश्नद्वारा विवृणोति—**कथमिति** । यथोक्तज्ञानस्य तद्वतश्च दुर्लभत्वं सूचयति—**य एवमिति** । महत्सर्वोत्कृष्टमात्मशब्दितं वैभवमस्येति महात्मा । महात्मत्वे फलितमाह—**अत इति** । तत्र वाक्योपक्रमानुकूल्यं कथयति—**मनुष्याणामिति** ॥ १९ ॥ किमिति तर्हि सर्वेषां प्रत्यग्भूते भगवति यथोक्तज्ञानं नोदेतीत्याशङ्क्य न मामित्यत्रोक्तं हृदि निधाय ज्ञानानुदये हेत्वन्तरमाह—**आत्मैवेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भजत इत्यर्थः ॥ १८ ॥ किंच वासुदेवः सर्वमिति ज्ञानवान् यो बहूनां जन्मनामन्ते चरमजन्मनि मां प्रपद्यते

४ मधुसूदनीव्याख्या ।

त्वमेदादर्शित्वविशेषद्योतनार्थः । हि यस्मात्स ज्ञानी युक्तात्मा सदा मयि समाहितचित्तः सन् मां भगवन्तमनन्तमानन्दघनमात्मानमेवानुत्तमां सर्वोत्कृष्टां गतिं गन्तव्यं परमं फलमास्थितोऽङ्गीकृतवान्, नतु मद्भिन्नं किमपि फलं स मन्यत इत्यर्थः ॥ १८ ॥ यस्मादेवं तस्मात्—बहूनां जन्मनां किंचित्किंचित्पुण्योपचयहेतूनामन्ते चरमे जन्मनि सर्वसुकृतविपाकरूपे वासुदेवः सर्वमिति ज्ञानवान्सन्मां निरुपाधिप्रेमास्पदं प्रपद्यते सर्वदा समस्तप्रेमविषयत्वेन भजते । सकलमिदमहं च वासुदेव इति दृष्ट्या सर्वप्रेम्णां मय्येव पर्यवसायित्वात् । अतः स एव ज्ञानपूर्वकमद्भक्तिमान्महात्मात्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्तः सर्वोत्कृष्टो न तत्समोऽन्योऽस्ति, अधिकस्तु नास्त्येव, अतः सुदुर्लभो मनुष्याणां सहस्रेषु दुःखेनापि लब्धुमशक्यः, अतः स निरतिशयमत्प्रीतिविषय इति युक्तमेवेत्यर्थः ॥ १९ ॥ तदेवमार्तादिभक्तत्रयापेक्षया ज्ञानिनो भक्तस्योत्कर्षः 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्यत्र प्रतिज्ञातो व्याख्यातः । अधुना तु सकामत्वे भेददर्शित्वे च समेऽपि देवतान्तरभक्तापेक्षयार्तादीनां त्रयाणां स्वभक्तानामुत्कर्ष उदाराः सर्व एवैत इत्यत्र प्रतिज्ञातो भगवता व्याख्यायते यावदध्यायसमाप्ति । समानेऽप्यायासे सकामत्वे भेददर्शित्वे च मद्भक्ता भूमिकाक्रमेण सर्वोत्कृष्टं मोक्षाख्यं फलं लभन्ते । क्षुद्रदेवताभक्तास्तु क्षुद्रमेव पुनः पुनः संसरणरूपं फलम् । अतः सर्वेऽप्यार्ता जिज्ञासवोऽर्थार्थिनश्च मामेव प्रपन्नाः सन्तोऽनायासेन सर्वोत्कृष्टं मोक्षाख्यं फलं लभन्तामित्यभिप्रायः परमकारुणि-

५ भाष्योत्कर्षदीपिका ।

गन्तव्यं गन्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥ ज्ञानी अतिदुर्लभ इति पुनरपि तं स्तौति । बहूनां जन्मनां ज्ञानार्थं पुण्यसंस्काराश्रयाणामन्ते सर्वपुण्यसंस्कारपरिपाकरूपे चरमजन्मनि लब्धपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रपद्यते । कथं प्रपद्यत इत्यत आह । वासुदेवः सर्वमिति । यदिदं सर्वं चराचरात्मकं भ्रान्त्या भाति तत्सर्वं किमपि वासुदेवातिरिक्तं न भवति 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं', 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादिश्रुतिसूत्रेभ्यः सर्वाधिष्ठानं मां ज्ञात्वा मामेव परमात्मानं निरतिशयनिरुपाधिप्रेमविषयत्वेन भजति स महात्मा न तत्समोऽभ्यधिको वान्योऽस्तीत्यर्थः । अतः सुदुर्लभः अतिशयेन दुर्लभः । तदुक्तं 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इति ॥ १९ ॥ 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन' इति चतुर्धात्वं सुकृतिनामुक्त्वा तेषां मध्ये ज्ञानिन उत्कर्षं निरूप्येतरेषामपि तेषां स्वभक्तानां परंपरया मोक्षभाक्त्वादुदाराः सर्व एवैते इत्युक्तम् । तत्र वासुदेवः सर्वमिति आत्मैव सर्वमित्येवं साक्षात्परंपरया वाऽप्रतिपत्तौ कारणमाह । यथाकथंचिदपि स्वाभिमुखा-

६ श्रीधरीव्याख्या ।

स ज्ञानी युक्तात्मा मदेकचित्तः सन् न विद्यत उत्तमा यस्यास्तामनुत्तमां सर्वोत्तमां गतिं मामेवास्थित आश्रितवान् । मद्व्यतिरिक्तमन्यत्फलं न मन्यत इत्यर्थः ॥ १८ ॥ एवंभूतो मद्भक्तोऽतिदुर्लभ इत्याह—**बहूनामिति** । बहूनां जन्मनां किंचित्किंचित्पुण्योपचयेनान्ते चरमे जन्मनि ज्ञानवान्सन्सर्वमिदं चराचरं वासुदेव एवेति सर्वात्मदृष्ट्या मां प्रपद्यते भजति अतः स महात्माऽपरिच्छिन्नदृष्टिः सुदुर्लभः ॥ १९ ॥ तदेवं कामिनोऽपि सन्तः कामप्राप्तये परमेश्वरं मामेव भजन्ति ते कामान्प्राप्य शनैर्मुच्यन्त इत्युक्तम् । ये त्वत्यन्तं

७ अभिनवगुप्ताचार्यव्याख्या ।

आसत्वात् । ज्ञानी तु मामेवाभेदतयावलम्बत इति ततोऽहमभिन्न एव । तस्य चाहमेव प्रियो नतु फलम् । अतएव स वासुदेव

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**
**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते—**कामैरिति** । कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैर्हृतज्ञाना अपहृतविवेकविज्ञानाः प्रपद्यन्तेऽन्यदेवताः प्राप्नुवन्ति वासुदेवादात्मनोऽन्या देवतास्तं तं नियमं देवताराधने प्रसिद्धो यो यो नियमस्तं तमास्थायाश्रित्य प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियता नियमिताः स्वयात्मीयया ॥ २० ॥ तेषां च कामिनां—यो यः कामी यां यां देवतातनुं

२ आनन्दगिरिव्याख्या ।

कामैर्नानाविधैरपहृतविवेकविज्ञानस्य देवतान्तरनिष्ठत्वमेव प्रत्यग्भूतपरदेवताप्रतिपत्त्यभावे कारणमित्याह—**कामैरिति** । देवतान्तरनिष्ठत्वे हेतुमाह—**तं तमिति** । प्रसिद्धो नियमो जपोपवासप्रदक्षिणानमस्कारादिः । नियमविशेषाश्रयणे कारणमाह—**प्रकृत्येति** ॥ २० ॥ तत्तद्देवताप्रसादात्कामिनामपि सर्वेश्वरे सर्वात्मके वासुदेवे क्रमेण भक्तिर्भविष्यतीत्याशङ्क्याह—**तेषां चेति** । स्वभावतो जन्मान्तरीयसंस्कारवशादित्यर्थः । भगवद्विहितया स्थिरया श्रद्धया संस्काराधीनया देवताविशेषमाराधयतोऽपि भगवदनुग्रहादेव फलप्राप्तिरित्याह—**यो यो यां यामिति** ॥ २१ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सम्यग्दर्शनेनापरोक्षीकरोति स महात्मा ब्रह्मभूतः सुदुर्लभ इति योजना ॥ १९ ॥ अन्ये तु तैस्तैः कामैः पुत्रपश्वादिविषयैर्हृतज्ञानाः हृतं दूरीकृतं ज्ञानं विवेको येषां ते । अन्यदेवताः अहमेतस्या आराधनेनेदं फलमवाप्नवानीति भेदबुद्ध्या प्रपद्यन्ते इन्द्रादीन् तं तं नियमं चतुर्दश्युपवासादिकमास्थाय स्वया प्रकृत्या वक्ष्यमाणविधया दैव्या आसुर्या वा नियता निगृहीताः ॥ २० ॥ किंच यो यो भक्तः सात्त्विको राजसस्तामसो वा यां यां तनुं तादृशीमेव देवा-

४ मधुसूदनीव्याख्या ।

त्मकस्य भगवतः । तत्र परमपुरुषार्थफलमपि भगवद्भजनमुपेक्ष्य क्षुद्रफले क्षुद्रदेवताभजने पूर्ववासनाविशेष एवासाधारणो हेतुरित्याह—मोहनस्तम्भनाकर्षणवशीकरणमारणोच्चाटनादिविषयैर्भगवत्सेवया लब्धुमशक्यत्वेनाभिमतैस्तैस्तैः क्षुद्रैः कामैरभिलाषैर्हृतमपहृतं भगवतो वासुदेवाद्विमुखीकृत्य तत्तत्फलदातृत्वाभिमतक्षुद्रदेवताभिमुख्यं नीतं ज्ञानमन्तःकरणं येषां तेऽन्यदेवता भगवतो वासुदेवादन्याः क्षुद्रदेवतास्तं तं नियमं जपोपवासप्रदक्षिणानमस्कारादिरूपं तत्तद्देवताराधने प्रसिद्धं नियममास्थायाश्रित्य प्रपद्यन्ते भजन्ते तत्तत्क्षुद्रफलप्राप्तीच्छया क्षुद्रदेवतामध्येऽपि केचित्कांचिदेव भजन्ते स्वया प्रकृत्या नियता असाधारणया पूर्वाभ्यासवासनया वशीकृताः सन्तः ॥२०॥ तत्तद्देवताप्रसादात्तेषामपि सर्वेश्वरे भगवति वासुदेवे भक्तिर्भविष्यतीति न शङ्कनीयम् । यतः—तेषां मध्ये यो यः कामी यां यां तनुं देवतामूर्तिं श्रद्धया जन्मान्तरवासनाबलप्रादुर्भूतया भक्त्या संयुक्तः सन्न-

५ भाष्योत्कर्षदीपिका ।

न्नामुदारतासूचनाय । कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैरिति भाष्ये । आदिपदात्कीर्तिशत्रुजयमोहनस्तम्भनापकर्षणवशीकरणमारणोच्चाटनादयो गृह्यन्ते । तैस्तैः कामैः हृतमपहृतं विवेकज्ञानं येषां ते हृतं भगवतो वासुदेवाद्विमुखीकृत्य तत्तत्फलदातृत्वाभिमतक्षुद्रदेवताभिमुख्यं नीतं ज्ञानमन्तःकरणं येषामिति वा । अस्मिन्पक्षे उक्तार्थस्यान्यदेवताः प्रपद्यन्त इत्यनेन लाभात् । हृतज्ञाना इत्यस्य वैयर्थ्यमन्यदेवताप्रतिपत्तौ विवेकशून्यत्वस्य हेतोरलाभश्च बोध्यः । अन्यदेवता वासुदेवान्मत्तः प्रत्यगभिन्नादन्या देवता अन्यदेवता इति तेषां प्रतीतेरनुवादः । तं तं नियमं जपोपवासादिरूपं तत्तद्देवताराधने प्रसिद्धमास्थाय आश्रित्य इन्द्रादीन्प्रपद्यन्ते । तत्तन्नियमविशेषाश्रयणे हेतुमाह । प्रकृत्या स्वया स्वकीयया प्रकृतिः स्वभावः सच जन्मान्तरार्जितानेकदुष्कृतजन्यः संस्कारस्तया नियताः नियमिताः ॥ २० ॥ ननु तत्तत्कामैर्हृतज्ञानानामपि तेषां तत्तद्देवतानुग्रहात्क्रमेण विवेके लब्धे त्वयि वासुदेवे भक्तिर्भविष्यतीति चेत्तत्राह—**य इति** । यः कामी यां यां देवतातनुं श्रद्धया संयुक्तो भक्तः सन्नर्चितुं पूजयितुमिच्छति तस्य तस्य कामिनः श्रद्धां

६ श्रीधरीव्याख्या ।

राजसास्तामसाश्च कामाभिभूताः क्षुद्रदेवताः सेवन्ते ते संसरन्तीत्याह—**कामैरिति चतुर्भिः** । ये तु तैस्तैः पुत्रकीर्तिशत्रुजयादिविषयैः कामैरपहृतविवेकाः सन्तः अन्याः क्षुद्राः भूतप्रेतयक्षादिदेवता भजन्ति । किं कृत्वा तत्तद्देवताराधने यो यो नियम उपवासादिलक्षणस्तं तं नियमं स्वीकृत्य तत्रापि स्वकीयया प्रकृत्या पूर्वाभ्यासवासनया नियताः सन्तो देवताविशेषं भजन्ति ॥२०॥ **यो यो यां यामिति ।**

७ अभिनवगुप्ताचार्यव्याख्या ।

एव सर्वमित्येवं दृढप्रतिपत्तिपवित्रीकृतहृदयः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ कामैस्तैस्तैरित्यादिना मयीत्यन्तम् । ये पुनः स्वेन स्वेनो-

१ मधुसूदनः ।

स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥

१ श्रीमच्छांकरभाष्यम् ।

श्रद्धया संयुक्तो भक्तश्च सन्नर्चितुं पूजयितुमिच्छति तस्य तस्य कामिनोऽचलां स्थिरां श्रद्धां तामेव विदधामि स्थिरीकरोमि ययैव पूर्वं प्रवृत्तः स्वभावतो यो यां देवतातनुं श्रद्धयार्चितुमिच्छतीति ॥ २१ ॥ स तयेति । स तया मद्विहितया श्रद्धया युक्तः संस्तया देवतातन्वा राधनमाराधनमीहते चेष्टते लभते च ततस्तस्या आराधिताया देवतातन्वाः कामानीप्सितान्मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान्निर्मितांस्तान्, हि यस्मात्ते भगवता विहिताः कामास्तस्मात्तानवश्यं लभत इत्यर्थः । हितानिति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यम्, नहि कामा हिताः कस्यचित् ॥२२॥

२ आनन्दगिरिव्याख्या ।

ईहते निर्वर्तयतीत्यर्थः । आराधितदेवताप्रसादात्फलप्राप्तौ किमीश्वरेणेत्याशङ्क्य तस्य सर्वज्ञस्य कर्मफलविभागाभिज्ञस्य तत्तद्देवताधिष्ठातृत्वात्तस्यैव फलदातृत्वमित्याह—सर्वज्ञेनेति । 'एको बहूनां यो विदधाति कामान्' इत्यादिश्रुतिमाश्रित्य हि तानिति पदद्वयं व्याचष्टे—यस्मादिति । हितानित्येकं पदमिति पक्षं प्रत्याह—हितानिति । मुख्यत्वसंभवे किमित्यौपचारिकत्वमित्याशङ्क्याह—नहीति ॥ २२ ॥ प्रेक्षापूर्वकारिणि कामानां हितत्वाभावे हेतुमाह—

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

दिरूपां यक्षरक्षोरूपां भूतप्रेतरूपां वा मूर्तिं श्रद्धया तादृश्यैवार्चितुमिच्छति तस्य तस्य भक्तस्य तामेव श्रद्धां सात्त्विकीं राजसीं तामसीं वाहं सर्वेश्वरोऽचलां विदधामि ॥ २१ ॥ ततश्च स तया श्रद्धया युक्तः सन् तस्या मूर्तेराराधनं ससाधनं वशीकरणमीहते इच्छति । ततश्च कामान्विषयाँल्लभते । मयैव विहितानाज्ञापितान् । हितानीप्सितान् ।

४ मधुसूदनीव्याख्या ।

र्चितुं अर्चयितुमिच्छति प्रवर्तते । चौरादिकस्यार्चयतेर्णिजभावपक्षे रूपमिदम् । तस्य तस्य कामिनस्तामेव देवतातनुं प्रति श्रद्धां पूर्ववासनावशात्प्राप्तां भक्तिमचलां स्थिरां विदधामि करोम्यहमन्तर्यामी नतु मद्विषयां श्रद्धां तस्य तस्य करोमीत्यर्थः । तामेव श्रद्धामिति व्याख्याने यच्छब्दानन्वयः स्पष्टस्तस्मात्प्रतिशब्दमध्याहृत्य व्याख्यातम् ॥ २१ ॥ स कामी तया मद्विहितया स्थिरया श्रद्धया युक्तस्तस्या देवतातन्वा राधनं पूजनमीहते निर्वर्तयति । उपसर्गरहितोऽपि राधयतिः पूजार्थः । सोपसर्गत्वे ह्याकारः श्रूयेत । लभते च ततस्तस्या देवतातन्वाः सकाशात्कामानीप्सितांस्तान्पूर्वसंकल्पितान् । हि प्रसिद्धम् । मयैव सर्वज्ञेन सर्वकर्मफलदायिना तत्तद्देवतान्तर्यामिणा विहितांस्तत्तत्फलविपाकसमये निर्मितान्, हितान्मनःप्रियानित्येकपद्यं वा । अहितत्वेऽपि हिततया प्रतीयमानानित्यर्थः ॥ २२ ॥ यद्यपि सर्वा अपि देवताः सर्वात्मनो ममैव तनवस्तदाराधनमपि वस्तुतो

५ भाष्योत्कर्षदीपिका ।

यया भक्तः सन्नर्चितुमिच्छति तामेवाचलां स्थिरां विदधामि करोमि । यां यां तनुमिति यच्छब्दान्वयस्तु यो यां देवतातनुमर्चितुमिच्छतीत्यादिवदद्भिराचार्यैरुत्तरश्लोकस्थ तस्या इत्यनेन दर्शितः । एतेन यां देवतातनुं प्रति श्रद्धां विदधामि तामेव श्रद्धामिति व्याख्याने यच्छब्दान्वयः स्पष्टस्तस्मात्प्रतिशब्दमध्याहृत्य व्याख्यातमिति प्रत्युक्तम् । तामेव श्रद्धामिति भाष्यकृद्व्याख्याने प्रतिशब्दाध्याहारं विनैव उक्तरीत्या यच्छब्दान्वयस्य स्पष्टत्वेनैवंवदतामज्ञताया अतिस्फुटत्वात् ॥ २१ ॥ यो यां देवतातनुं अर्चितुमिच्छति स तया मद्विहितयाऽचलया श्रद्धया युक्तः तस्या देवतातन्वा राधनं आराधनमर्चनमीहते चेष्टते करोति । ततस्तस्या आराधितायाः देवतातन्वाः सकाशादवश्यं कामानीप्सितान् लभते च । हि यस्मान्मया कर्मफलविभागज्ञेन भगवता विहिताः निर्मिताः । अतस्तान् हि स्फुटमेतदिति तु तत्तद्देवतास्वातन्त्र्यप्रतिपादकशास्त्रे लोके चास्यास्फुटत्वादाचार्यैर्न व्याख्यातम् । हितानिति पदच्छेदे तु वस्तुतोऽहि-

६ श्रीधरीव्याख्या ।

तेषां मध्ये यो यो भक्तः यां यां तनुं देवतारूपां मदीयामेव मूर्तिं श्रद्धयार्चितुमिच्छति प्रवर्तते तस्य तस्य भक्तस्य तत्तन्मूर्तिविषयां तामेव श्रद्धामचलां दृढामहमन्तर्यामी विदधामि करोमि ॥ २१ ॥ ततश्च—स तयेति । स भक्तस्तया दृढया श्रद्धया तस्यास्तनोराराधनमीहते करोति । ततश्च ये संकल्पिताः कामास्तान्कामान् ततो देवताविशेषाल्लभते किंतु मयैव तत्तद्देवतान्तर्यामिणा विहितान्निर्मितान् हि स्फुटमेव तत्तद्देवतानामपि मदधीनत्वान्ममूर्तित्वाच्चेत्यर्थः ॥ २२ ॥ तदेव यद्यपि सर्वा अपि देवता ममैव मूर्तयः अतस्तदाराधन-

७ अभिनवगुप्ताचार्यव्याख्या ।

तमआदिकामनास्वभावेन विचित्रेण परिच्छिन्नमनसस्ते कामनापहृतचेतस्कास्तत्समुचितामेव ममैवावान्तरतनुं देवताविशेषमुपासते । अतो

१ मधुसूदनः. २ श्रीधरः.

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।**
**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**यस्मादन्तवत्साधनव्यापारा अविवेकिनः कामिनश्च तेऽतः–अन्तवद्विनाशि तु फलं तेषां तद्भवत्यल्पमेधसामल्पप्रज्ञानां। देवान्देवयजो यान्ति देवान्यजन्तीति देवयजस्ते देवान्यान्ति मद्भक्ता यान्ति मामपि। एवं समानेऽप्यायासे मामेव न प्रपद्यन्तेऽनन्तफलायाहो खलु कष्टं वर्तन्त इत्यनुक्रोशं दर्शयति**

२ आनन्दगिरिव्याख्या ।

**यस्मादिति** । किंच ये कामिनस्ते न विवेकिनस्ततश्चाविवेकपूर्वकत्वात्कामानां कुतो हितत्वाशङ्केत्याह—**अविवेकिन इति** । कामानामनन्तफलत्वेन हितत्वमाशङ्क्याह—**अत इति** । तेषामविवेकपूर्वकत्वमतःशब्दार्थः । तुशब्दोऽवधारणार्थः । कामफलस्य विनाशित्वे किमिति कामनिष्ठत्वं जन्तूनामित्याशङ्क्य प्रज्ञामान्द्यादित्याह—**अल्पेति** । किं तर्हि साधनमनन्तफलायेत्याशङ्क्य भगवद्भक्तिरित्याह—**मद्भक्ता इति** । अक्षरार्थमुक्त्वा श्लोकस्य तात्पर्यार्थमाह—**एवमिति** । देवताप्राप्तौ चेति शेषः । मामवेत्यादौ देवताविशेषं प्रपद्यन्तेऽन्तवत्फलायेति वक्तव्यम् । उक्तवैपरीत्ये कारणमविवेकातिरिक्तं नास्तीत्यभिप्रेत्याह—**अहो खल्विति** ॥ २३ ॥ भगवद्भजनस्योत्तमफलत्वेऽपि प्राणिनां प्रायेण

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एतेन सर्वासां देवतानां स्वाज्ञावशवर्तित्वं दर्शितम् ॥ २२ ॥ अल्पमेधसां 'अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यन्मनुतेऽन्यद्विजानाति तदल्पम्' इति श्रुतेः द्वैतमल्पं तत्रैव मेधा येषां ते । बाह्यार्थाभिलाषिणामित्यर्थः । तेषां तत्फलमन्तवत् सर्वस्य बाह्यार्थस्यान्तवत्त्वादेव । तुशब्दोऽभेदेनेश्वरभक्तेभ्यो विभेदार्थः । यतो देवयजो देवान्यजन्ते इति देवयजस्ते देवानन्तयुक्तानेव यान्ति । एवं यक्षरक्षोभक्ता यक्षादीनेव यान्ति । भूतप्रेतभक्ताश्च भूतादीनेवेत्यपि द्रष्टव्यम् । मद्भक्तास्तु मामेवानन्तं यान्ति । अतस्तेऽनन्तफलभाज इत्यर्थः ॥ २३ ॥ एवं तर्हि कुतस्त्वामेव सर्वे न प्रतिपद्यन्त

४ मधुसूदनीव्याख्या ।

मदाराधनमेव, सर्वत्रापि च फलदातान्तर्याम्यहमेव, तथापि साक्षान्मद्भक्तानां च तेषां च वस्तुविवेकाविवेककृतं फलवैषम्यं भवतीत्याह—अल्पमेधसां मन्दप्रज्ञत्वेन वस्तुविवेकासमर्थानां तेषां तत्तद्देवताभक्तानां तन्मया विहितमपि तत्तद्देवताराधनजं फलं अन्तवदेव विनाश्येव नतु मद्भक्तानां विवेकिनामिवानन्तं फलं तेषामित्यर्थः । कुत एवं, यतो देवानिन्द्रादीनन्तवत एव देवजयो मदन्यदेवताराधनपरा यान्ति प्राप्नुवन्ति । मद्भक्तास्तु त्रयः सकामाः प्रथमं मत्प्रसादादभीष्टान्कामान्प्राप्नुवन्ति । अपिशब्दप्रयोगात्ततो मदुपासनापरिपाकान्मामनन्तमानन्दघनमीश्वरमपि यान्ति प्राप्नुवन्ति । अतः समानेऽपि सकामत्वे मद्भक्तानामन्यदेवताभक्तानां च महदन्तरं, तस्मात्साधूक्तमुदाराः सर्व एवैत इति ॥ २३ ॥

५ भाष्योत्कर्षदीपिका ।

तानां कामानां हितत्वमौपचारिकं कल्पनीयम् ॥ २२ ॥ समानेऽप्यायासेऽन्तवत्फलसाधने तत्तद्देवताराधने प्रवर्तन्ते नतु मामेव भगवन्तं सर्वात्मानं तत्तत्कर्मफलप्रदं वासुदेवमनन्तफलाय प्रतिपद्यन्त इत्यहो तेषामल्पबुद्धितेत्यनुक्रोशं दर्शयन्नाह—**अन्तवदिति** । तेषां तत्तद्देवताराधनपराणामल्पमेधसां 'अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' इति श्रुतेरल्पे द्वैते मेधा बुद्धिर्येषां ते भेदबुद्धय इत्यर्थः । अल्पेऽन्तवत्फले बुद्धिर्येषामिति वा, अल्पे परिच्छिन्ने देवतान्तरे बुद्धिर्येषामिति वा, अनल्पानन्तफलाय वासुदेव एव भजनीयो नतु अन्तवत्फलाय देवतान्तरमिति विवेक्तुमक्षमत्वात्स्वल्पा बुद्धिर्येषामिति वा, फलमन्तवद्विनाशि तु एव भवति तन्मया दत्तमपि । तदेवाह । यतो देवयज इन्द्राद्यर्चका देवानन्तवतो यान्ति गच्छन्ति । मद्भक्तास्त्वार्तादयस्त्रयोऽपि तत्तदीप्सितं लब्ध्वा क्रमेण मां वासुदेवं सच्चिदानन्दघनमनन्तं परमात्मानं मोक्षाभिधेयमपि यान्ति गच्छन्ति ॥ २३ ॥ तर्हि सर्वेऽपि देवतान्तरभजनं

६ श्रीधरीव्याख्या ।

मपि वस्तुतो मदाराधनमेव तत्तत्फलदातापि चाहमेव तथापि साक्षान्मद्भक्तानां च तेषां फलवैषम्यं भवतीत्याह—**अन्तवत्त्विति** । अल्पमेधसां परिच्छिन्नदृष्टीनां मया दत्तमपि तत्फलमन्तवद्विनाशि भवति । तदेवाह । देवान्यजन्तीति देवयजः ते देवानन्तवतो यान्ति । मद्भक्तास्तु मामनाद्यन्तं तं परमानन्दं प्राप्नुवन्ति ॥ २३ ॥ ननु च समाने प्रयासे महति च फलविशेषे सति सर्वेऽपि किमिति देवान्तरं

७ अभिनवगुप्ताचार्यव्याख्या ।

मत्त एव कामफलमुपाददते किंतु तस्यान्तोऽस्ति । निजयैव वासनया परिमितीकृतत्वात् । अतएवेन्द्रादिभावनातात्पर्येण यागादि कुर्वन्तस्तथाविधमेव फलमुपाददते । मत्प्राप्तिपरास्तु मामेव ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ ननु सर्वगते भगवत्त्वे किमिति देवतान्तरोपास-

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥

१ श्रीमच्छांकरभाष्यम् ।

भगवान् ॥ २३ ॥ किंनिमित्तं मामेव न प्रपद्यन्त इत्युच्यते—अव्यक्तमिति । अव्यक्तमप्रकाशं व्यक्तिमापन्नं प्रकाशं गतमिदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तमबुद्धयोऽविवेकिनः परं भावं परमात्मस्वरूपमजानन्तोऽविवेकिनो ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः ॥ २४ ॥ तदीयमज्ञानं किंनिमित्तमित्युच्यते—नाहमिति । नाहं प्रकाशः सर्वस्य लोकस्य केषां-

२ आनन्दगिरिव्याख्या ।

तन्निष्ठत्वाभावे प्रश्नपूर्वकं निमित्तं निवेदयति—किंनिमित्तमित्यादिना । अप्रकाशं शरीरग्रहणात्पूर्वमिति शेषः । इदानीं लीलाविग्रहपरिग्रहावस्थायामित्यर्थः । प्रकाशस्य तर्हि कादाचित्कत्वं भगवति प्राप्तं, नेत्याह—नित्येति । कथं तर्हि भगवन्तमागन्तुकप्रकाशं मन्यन्ते तत्राबुद्धय इत्युत्तरम् । तद्विवृणोति—परमिति । परमनुत्तममिति विशेषणद्वयं सोपाधिकनिरुपाधिकभावार्थम् ॥ २४ ॥ अविवेकरूपमज्ञानं भगवन्निष्ठाप्रतिबन्धकमुक्तं तस्मिन्नपि निमित्तं प्रश्नपूर्वकमनाद्यज्ञानमुपन्यस्यति—तदीयमज्ञानमित्यादिना । त्रिभिर्गुणमयैरित्यनौपाधिकरूपस्याप्रतिपत्तौ कारण-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इत्याशङ्क्याज्ञानादित्याह—अव्यक्तमिति । अव्यक्तं सर्वोपाधिशून्यत्वेनास्पष्टमपि वासुदेवशरीरेण व्यक्तिमापन्नमस्मदादिवच्छरीराभिमानिनं मामबुद्धयो मन्यन्ते । यतो मम परं भावं परत्वमुत्कृष्टत्वमजानन्तः । उत्कृष्टत्वमेव विशिनष्टि । अव्ययं न व्येतीत्यव्ययमविनाशिनम् । अनुत्तमं यस्मादन्यदुत्कृष्टं च नास्ति । निरतिशयमखण्डैश्वर्यरूपमित्यर्थः ॥ २४ ॥ कुतस्त्वद्विषयमज्ञानं लोकस्येत्यत आह—नाहमिति । हे योग योगिन् । अर्शआद्यच्प्रत्ययान्तोऽयं योगशब्दः ।

४ मधुसूदनीव्याख्या ।

एवं भगवद्भजनस्य सर्वोत्तमफलत्वेऽपि कथं प्रायेण प्राणिनो भगवद्विमुखा इत्यत्र हेतुमाह भगवान्—अव्यक्तं देहग्रहणात्प्राक् कार्याक्षमत्वेन स्थितमिदानीं वसुदेवगृहे व्यक्तिं भौतिकदेहावच्छेदेन कार्यक्षमतां प्राप्तं किंचिज्जीवमेव मन्यन्ते मामीश्वरमप्यबुद्धयो विवेकशून्याः । अव्यक्तं सर्वकारणमपि मां व्यक्तिं कार्यरूपतां मत्स्यकूर्माद्यनेकावताररूपेण प्राप्तमिति वा । कथं ते जीवास्त्वां न विचिन्वन्ति । तत्राबुद्धय इत्युक्तं हेतुं विवृणोति—परं सर्वकारणरूपमव्ययं नित्यं मम भावं स्वरूपं सोपाधिकमजानन्तस्तथा निरुपाधिकमप्यनुत्तमं सर्वोत्कृष्टमनतिशयाद्वितीयपरमानन्दघनमनन्तं मम स्वरूपमजानन्तो जीवानुकारिकार्यदर्शनाज्जीवमेव कंचिन्मां मन्यन्ते, ततो मामीश्वरत्वेनाभिमतं विहाय प्रसिद्धं देवतान्तरमेव भजन्ते । ततश्चान्तवदेव फलं प्राप्नुवन्तीत्यर्थः । अग्रे च वक्ष्यते 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्' इति ॥ २४ ॥ ननु जन्मकालेऽपि सर्वयोगिध्येयं श्रीवैकुण्ठस्थमैश्वरमेव रूपमाविर्भावितवति संप्रति च श्रीवत्सकौस्तुभवनमालाकिरीटकुण्डलादिदिव्योपकरणशालिनि कम्बुकमलकौमोदकी-

५ भाष्योत्कर्षदीपिका ।

विहाय त्वामेव कुतो न प्रतिपद्यन्त इत्याशङ्क्य मदप्रतिपत्तौ मत्परमेश्वरभावाज्ञानमेव निमित्तमित्याह । अव्यक्तमप्रकाशं लीलाविग्रहग्रहणात्पूर्वं इदानीं तद्ग्रहणावस्थायां व्यक्तिमापन्नं प्रकाशमागतं मां मन्यन्ते अबुद्धयो विवेकहीनाः । अबुद्धय इत्येतदुक्तं विवृणोति । ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं परं भावं परमात्मस्वरूपं सोपाधिनिरुपाध्यात्मकमजानन्तोऽविवेकिनो नित्यसिद्धमीश्वरमपि सन्तं मां पूर्वमसन्तमधुनैवोत्पन्नं मन्यन्ते इत्यर्थः ॥ २४ ॥ स्वाज्ञाने निमित्तमाह—नेति । अहं परमेश्वरः सर्वस्य लोकस्य परमे-

६ श्रीधरीव्याख्या ।

हित्वा त्वामेव न भजन्ति तत्राह—अव्यक्तमिति । अव्यक्तं प्रपञ्चातीतं मां व्यक्तिं मनुष्यमत्स्यकूर्मादिभावं प्राप्तमल्पबुद्धयो मन्यन्ते । तत्र हेतुः । मम परं भावं स्वरूपमजानन्तः । कथंभूतम् । अव्ययं नित्यम् । न विद्यत उत्तमो यस्मात्तं भावं । अतो जगद्रक्षार्थं लीलयाविष्कृतनानाविशुद्धोर्जितसत्त्वमूर्तिं मां परमेश्वरं स्वकर्मनिर्मितभौतिकदेहं देवतान्तरसमं पश्यन्तो मन्दमतयो मां नातीवाद्रियन्ते प्रत्युत क्षिप्रफलं देवतान्तरमेव भजन्ति ते चोक्तप्रकारेणान्तवत्फलं प्राप्नुवन्तीत्यर्थः ॥ २४ ॥ तेषां स्वाज्ञाने हेतुमाह—नाहमिति । सर्वस्य लोकस्य

७ अभिनवगुप्ताचार्यव्याख्या ।

कानां मितं फलम् । उच्यते—अव्यक्तमिति । ते खल्वल्पबुद्धित्वान्मत्स्वरूपं पारमार्थिकमविद्यमानव्यक्तिकं न प्रत्यभिजानते अपितु निजकामनासमुचिताकारविशिष्टज्ञानस्वभावां व्यक्तिमेवापन्नं विदन्ति नान्यथा । अतएव न नाश्याकारे वा कश्चिद्ग्रहः किंतु सिद्धान्तोऽयमत्र यः कामनापरिहारेण यत्किंचिद्देवतारूपमालम्बते तस्य तच्छुद्धमुक्तभावेन पर्यवस्यति विपर्ययात्तु विपर्यय इति ॥ २४ ॥ नाहमिति ।

**वेदाहं समतीतानि वर्तमानानि चार्जुन ।**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**चिदेव मद्भक्तानां प्रकाशोऽहमित्यभिप्रायः । योगमायासमावृतः योगो गुणानां युक्तिर्घटनं सैव माया योगमाया तया योगमायया समावृतः संच्छन्न इत्यर्थः । अतएव मूढो लोकोऽयं नाभिजानाति मामजमव्ययम् ॥ २५ ॥ यया योगमायया समावृतं मां लोको नाभिजानाति नासौ योगमाया मदीया सती**

२ आनन्दगिरिव्याख्या ।

मुक्तमत्र तु सोपाधिकस्यापीति विशेषं गृहीत्वा व्याचष्टे—**नाहमिति** । तर्हि भगवद्भक्तिरनुपयुक्तेत्याशङ्क्याह—**केषांचिदिति** । सर्वस्य लोकस्य न प्रकाशोऽहमित्यत्र हेतुमाह—**योगेति** । अनाद्यनिर्वाच्याज्ञानाच्छन्नत्वादेव मद्विषये लोकस्य मौढ्यं ततश्च मदीयस्वरूपविवेकाभावान्मन्निष्ठत्वराहित्यमित्याह—**अतएवेति** ॥२५॥ मायया भगवानावृतश्चेत्तस्यापि लोकस्यैव ज्ञानप्रतिबन्धः स्यादित्याशङ्क्याह—**ययेति** । नहीयं माया मायाविनो विज्ञानं प्रतिबध्नाति माया-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अहं तत्पदार्थः सर्वस्य योगिनस्त्वंपदार्थमात्राभिज्ञस्य न प्रकाशोऽस्मि । तत्र हेतुः मायासमावृत इति । भाष्ये तु योगो युक्तिर्गुणानां घटनं सैव योगमाया चित्तसमाधिर्वा योगो भगवतस्तत्कृता मायेति । भगवत्संकल्पवशवर्तिनी मायेत्यर्थः । उत्तरार्धः स्पष्टार्थः ॥ २५ ॥ ननु त्वदभिन्नं लोकं त्वन्माया मोहयति चेत्त्वां कुतो न मोहयतीत्यत आह—**वेदाहमिति** । सत्यम् । सत्यपि लोकस्य मम चाभेदे औपाधिकभेदस्य सत्त्वादुपाधिधर्माभिमानित्वाल्लोको मूढः, तद्-

४ मधुसूदनीव्याख्या ।

चक्रवरधारिचतुर्भुजे श्रीमद्वैनतेयवाहने निखिलसुरलोकसंपादितराजराजेश्वराभिषेकादिमहावैभवे सर्वसुरासुरजेतरि विविधदिव्यलीलाविलासशीले सर्वावतारशिरोमणौ साक्षाद्वैकुण्ठनायके निखिललोकदुःखनिस्ताराय भुवमवतीर्णे विरिञ्चिप्रपञ्चासंभविनिरतिशयसौन्दर्यसारसर्वस्वमूर्तौ बाललीलाविमोहितविधातरि तरणिकिरणोज्ज्वलदिव्यपीताम्बरे निरुपमश्यामसुन्दरे करदीकृतपारिजातार्थपराजितपुरन्दरे बाणयुद्धविजितशशाङ्कशेखरे समस्तसुरासुरविजयिनरकप्रभृतिमहादैतेयप्रकरप्राणपर्यन्तसर्वस्वहारिणि श्रीदामादिपरमरङ्कमहावैभवकारिणि षोडशसहस्रदिव्यरूपधारिण्यपरिमेयगुणगरिमणि महामहिमनि नारदमार्कण्डेयादिमहामुनिगणस्तुते त्वयि कथमविवेकिनोऽपि मनुष्यबुद्धिर्जीवबुद्धिर्वेत्यर्जुनाशङ्कामपनिनीषुराह भगवान्—अहं सर्वस्य लोकस्य न प्रकाशः स्वेन रूपेण प्रकटो न भवामि, किंतु केषांचिन्मद्भक्तानामेव प्रकटो भवामीत्यभिप्रायः । कथं सर्वस्य लोकस्य न प्रकट इत्यत्र हेतुमाह—योगमायासमावृतः योगो मम संकल्पस्तद्वशवर्तिनी माया योगमाया तयाऽयमभक्तो जनो मां स्वरूपेण न जानात्विति-संकल्पानुविधायिन्या मायया सम्यगावृतः । सत्यपि ज्ञानकारणे ज्ञानविषयत्वायोग्यः कृतः । अतो यदुक्तं परं भावमजानन्त इति तत्र मम संकल्प एव कारणमित्युक्तं भवति । अतो मम मायया मूढ आवृतज्ञानः सन्नयं चतुर्विधभक्तविलक्षणो लोकः सत्यपि ज्ञानकारणे मामजमव्ययमनाद्यनन्तं परमेश्वरं नाभिजानाति, किंतु विपरीतदृष्ट्या मनुष्यमेव कंचिन्मन्यत इत्यर्थः । विद्यमानं वस्तुस्वरूपमावृणोत्यविद्यमानं च किंचिद्दर्शयतीति लौकिकमायायामपि प्रसिद्धमेतत् ॥ २५ ॥ अतो मायया स्वाधीनया सर्वव्यामोहकत्वात्स्वयं चाप्रतिबद्धज्ञानत्वात्—अहमप्रतिबद्धसर्वविज्ञानो मायया सर्वाँल्लोकान्मोहयन्नपि समतीतानि चिरविनष्टानि वर्तमानानि च भविष्याणि च । एवं कालत्रयवर्तीनि भूतानि स्थावरजङ्गमानि सर्वाणि वेद जानामि । हे अर्जुन, अतोऽहं सर्वज्ञः

५ भाष्योत्कर्षदीपिका ।

श्वरेण रूपेण प्रकटो न भवामि । किंतु केषांचित्स्वभक्तानां प्रकाशोऽहमित्यभिप्रायः । तत्र हेतुमाह—**योगेति** । योगो गुणानां युक्तिर्घटनं सैव माया तया । यद्वा योगो भगवतश्चित्तसमाधिस्तत्कृता माया । भगवत्संकल्पवशवर्तिनीति यावत् । उभयथाप्यनाद्यनिर्वाच्यमज्ञानं तया योगमायया समावृतः संच्छन्नः । आच्छादित इति यावत् । हे योग योगिन् । अर्शआद्यच्प्रत्ययान्तोऽयं योगशब्दः । अहं तत्पदार्थः सर्वस्य योगिनस्त्वंपदार्थमात्राभिज्ञस्य न प्रकाशोऽस्मि । तत्र हेतुः मायया समावृत इत्यन्येषां पक्षस्तु अगतिकगत्याश्रयणात्मिकयाऽरुच्या ग्रस्तः अतोऽनाद्यनिर्वाच्याज्ञानेन मूढो मोहं गतोऽयं लोको मद्विमुखः मामजमव्ययं नाभिजानाति ॥ २५ ॥ मायया त्वमावृतश्चेत्तवापि लोकस्येव ज्ञानप्रतिबन्धः स्यादित्याशङ्क्याह—**वेदेति** । अहमप्रतिबद्धज्ञानशक्तिः समतीतानि

६ श्रीधरीव्याख्या ।

नाहं प्रकाशः प्रकटो न भवामि किंतु मद्भक्तानामेव । यतो योगमायया समावृतः । योगो युक्तिः मदीयः कोऽप्यचिन्त्यप्रज्ञाविलासः स एव माया अघटमानघटनाचातुर्यं अनया संच्छन्नः अतएव मत्स्वरूपज्ञाने मूढः सन्नयं लोकः अजमव्ययं च मां न जानाति ॥ २५ ॥ सर्वोत्तमं मत्स्वरूपमजानन्त इत्युक्तम्, तदेव स्वस्य सर्वोत्तमत्वमनावृतज्ञानशक्तित्वेन दर्शयन्नन्येषामज्ञानमेवाह—**वेदेति** । समतीतानि

---
१ नीलकण्ठः.

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम्।

ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति यथान्यस्यापि मायाविनो मायाऽज्ञानं तद्वत्, यत एवमतः—वेदाहमिति। अहं तु वेद जाने समतीतानि समतिक्रान्तानि भूतानि वर्तमानानि चार्जुन, भविष्याणि च भूतानि वेदाहम्। मां तु वेद न कश्चन मद्भक्तं मच्छरणमेकं मुक्त्वा। मत्तत्त्ववेदनाभावादेव न मां भजते ॥ २६ ॥ केन पुनर्मत्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि मां न विदन्तीत्यपेक्षायामिदमाह—इच्छेति। इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्चेच्छाद्वेषौ ताभ्यां समु-

२ आनन्दगिरिव्याख्या।

त्वाल्लौकिकमायावत्, अथवा नेश्वरो मायाप्रतिबद्धज्ञानो मायावित्वाल्लौकिकमायाविवदित्यर्थः। भगवतो मायाप्रतिबद्धज्ञानत्वाभावेन सर्वज्ञत्वमप्रतिबद्धं सिद्धमित्याह—**यत इति**। लोकस्य मायाप्रतिबद्धविज्ञानत्वादेव भगवदाभिमुख्यशून्यत्वमित्याह—**मां त्विति**। कालत्रयपरिच्छिन्नसमस्तवस्तुपरिज्ञाने प्रतिबन्धो नेश्वरस्यास्तीति द्योतनार्थस्तुशब्दः। मां त्विति लोकस्य भगवत्तत्त्वविज्ञानप्रतिबन्धं द्योतयति। तर्हि तद्भक्तिर्विफलेत्याशङ्क्याह—**मद्भक्तमिति**। तर्हि सर्वोऽपि त्वद्भक्तिद्वारा त्वां ज्ञास्यति, नेत्याह—**मत्तत्त्वेति**। विवेकवतो मद्भजनं ननु विवेकशून्यस्य सर्वस्यापीत्यर्थः ॥ २६ ॥ भगवत्तत्त्वविज्ञानप्रतिबन्धकं मूलाज्ञानातिरिक्तं प्रश्नद्वारेणोदाहरति—**केनेत्यादिना**। पुनःशब्दात्प्रति-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

भावाचाहं सर्वज्ञ इति विशेषः। अक्षरार्थः स्पष्टः ॥२६॥ केन पुनर्निमित्तेनातीतादीनि भूतानि न जानन्तीत्याशङ्क्याह—**इच्छेति**। इच्छा रागः द्वेषस्ताभ्यां समुत्थितो द्वन्द्वमोहः शोभनाशोभनसत्यासत्यनित्यानित्यात्मानात्मसु विपर्ययः

४ मधुसूदनीव्याख्या।

परमेश्वर इत्यत्र नास्ति संशय इत्यर्थः। मां तु। तुशब्दो ज्ञानप्रतिबन्धद्योतनार्थः। मां सर्वदर्शनमपि मायाविनमिव मन्मायामोहितः कश्चन कोऽपि मदनुग्रहभाजनं मद्भक्तं विना न वेद मन्मायामोहितत्वात्। अतो मत्तत्त्ववेदनाभावादेव प्रायेण प्राणिनो मां न भजन्त इत्यभिप्रायः ॥ २६ ॥ योगमायां भगवत्तत्त्वविज्ञानप्रतिबन्धे हेतुमुक्त्वा देहेन्द्रियसंघाताभिमानातिशयपूर्वकं भोगाभिनिवेशं हेत्वन्तरमाह—इच्छाद्वेषाभ्यामनुकूलप्रतिकूलविषयाभ्यां समुत्थितेन शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तेन

५ भाष्योत्कर्षदीपिका।

समतिक्रान्तानि वर्तमानानि भविष्याणि च भूतानि चराचरात्मकानि सर्वाणि वेद जानामि। त्वमपि योगाद्यभ्यासेन स्वच्छान्तःकरणः सन् ज्ञातुं शक्तोऽसि। अहं तु नित्यशुद्धः सर्वोपाधिधर्माभिमानमलशून्यो जानामीति किमु वक्तव्यमिति सूचयन्संबोधयति अर्जुनेति। मां तु परमात्मानं मद्भक्तं मच्छरणमेकं त्यक्त्वा न कश्चन वेद जानाति। तथाच यया मायया समावृतं मां लोको नाभिजानाति नासौ मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति मायात्वात् लौकिकमायावत्। यद्वा नाहं मायया प्रतिबद्धज्ञानः मायावित्वात् लौकिकमायाविवदिति भावः ॥ २६ ॥ भगवत्तत्त्वापरिज्ञाने मूलाज्ञानं निमित्तमुक्त्वा तत्र प्रतिबन्धकान्तरमाह। इच्छाद्वेषाभ्यां रागद्वेषाभ्यामनुकूलप्रतिकूलविषयाभ्यामुत्थितेन शीतोष्णसुखदुःखनिमित्तेन मोहेन चित्तव्याकुलतापादकेन सर्वाणि भूतानि सर्गे उत्पत्तिकाले प्राप्ते संमोहमतिमूढतां यान्ति गच्छन्ति। इच्छाद्वेषवशीकृतचित्तस्य बाह्यपदार्थेष्वपि यथा भूतार्थविषयं ज्ञानं नोत्पद्यते ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे सति तन्नोत्पद्यत इति किमु वक्तव्यमिति भारत परंतपेति संबोधनद्वयेनोत्तमवंशोद्भवत्वात् स्वतः शत्रुतापनत्वेनोत्कृष्टशक्तिमत्त्वाच उक्तप्रतिबन्धेन संमोहं गन्तुमयोग्योऽसीति सूचयति। यत्तु केन पुनर्निमित्तेनातीतादीनि भूतानि न जानन्तीत्याशङ्क्याह—**इच्छेति**। इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन शोभनाशोभनसत्यासत्यनित्यानित्यात्मानात्मसु विपर्यय-

६ श्रीधरीव्याख्या।

विनष्टानि वर्तमानानि भावीनि च त्रिकालवर्तीनि भूतानि स्थावरजंगमानि सर्वाण्यहं वेद जानामि, मायाश्रयत्वान्मम तस्याः स्वाश्रयव्यामोहकत्वाभावादिति प्रसिद्धम्। मां तु न कोऽपि वेत्ति मन्मायामोहितत्वात्। प्रसिद्धं हि लोके मायायाः स्वाश्रयाधीनत्वमन्यमोहकत्वं च ॥ २६ ॥ तदेवं मायाविषयत्वेन जीवानां परमेश्वराज्ञानमुक्तम्, तस्यैवाज्ञानस्य दृढत्वे कारणमाह—**इच्छाद्वेषसमुत्थेनेति**।

७ अभिनवगुप्ताचार्यव्याख्या।

सर्वेषां नाहं गोचरतां प्राप्नोमि ॥ २५ ॥ २६ ॥ ननु च कर्माण्येव क्रियमाणानि प्रलयकाले मोक्षं प्रविदधति अन्यथा किमिति महाप्रलय उपजायत इत्याशङ्कायामिदमारभ्यते—इच्छेत्यादि। इच्छाद्वेषक्रोधमोहादिभिस्तावन्मोहात्मकएव स परं स्फीतीभावमुपनीयते। येन प्रति-

१ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

त्तिष्ठतीतीच्छाद्वेषसमुत्थस्तेनेच्छाद्वेषसमुत्थेन । केनेति विशेषापेक्षायामिदमाह—द्वन्द्वमोहेनेति । द्वन्द्वनिमित्तो मोहो द्वन्द्वमोहस्तावेवेच्छाद्वेषौ शीतोष्णवत्परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैः संबध्यमानौ द्वन्द्वशब्देनाभिधीयेते । तत्र यदेच्छाद्वेषौ सुखदुःखतद्धेतुसंप्राप्त्या लब्धात्मकौ भवतस्तदा तौ सर्वभूतानां प्रज्ञायाः स्ववशापादनद्वारेण परमार्थात्मतत्त्वविषयज्ञानोत्पत्तिप्रतिबन्धकारणं मोहं जनयतः । नहीच्छाद्वेषदोषवशीकृतचित्तस्य यथाभूतार्थविषयज्ञानमुत्पद्यते बहिरपि किमु वक्तव्यं ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे ज्ञानं नोत्पद्यत इति । अतस्तेनेच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत भरतान्वयज, सर्वभूतानि संमोहितानि सन्ति संमोहं संमूढतां सर्गे जन्मन्युत्पत्तिकाल इत्येतद्यान्ति गच्छन्ति हे परंतप, मोहवशान्येव सर्वभूतानि जायमानानि जायन्त इत्यभिप्रायः । यत एवमतस्तेन द्वन्द्वमोहेन प्रतिबद्धप्रज्ञानानि सर्वभूतानि संमोहितानि मामात्मभूतं न जानन्त्यतएवात्मभावेन मां न भजन्ते ॥ २७ ॥ के पुनरनेन द्वन्द्वमोहेन

२ आनन्दगिरिव्याख्या ।

बन्धकान्तरविवक्षा गम्यते । अपरोक्षमवान्तरप्रतिबन्धकमिदमा गृह्यते । विशेषमाकाङ्क्षापूर्वकं निक्षिपति—**केनेति** । **विशेषापेक्षायामिति** । द्वन्द्वशब्देन गृहीतयोरपीच्छाद्वेषयोर्ग्रहणं द्वन्द्वशब्दार्थोपलक्षणार्थमित्यभिप्रेत्याह—**तावेवेति** । तयोरपर्यायमेकत्रानुपपत्तिं गृहीत्वा विशिनष्टि—**यथाकालमिति** । नच तयोरनधिकरणं किंचिदपि भूतं संसारमण्डले संभवतीत्याह—**सर्वभूतैरिति** । तथापि कथं तयोर्मोहहेतुत्वमित्याशङ्क्याह—**तत्रेति** । तयोराश्रयः सप्तम्यर्थः । उक्तमेवार्थं कैमुतिकन्यायेन प्रपञ्चयति—**नहीति** । पूर्वभागानुवादपूर्वकमुत्तरभागेन फलितमाह—**अत इति** । प्रत्यगात्मन्यहंकारादिप्रतिबन्धप्रभावतो ज्ञानोत्पत्तेरसंभवोऽतःशब्दार्थः । कुलप्रसूत्यभिमानेन स्वरूपशक्त्या च युक्तस्यैव यथोक्तप्रतिबन्धप्रतिविधानसामर्थ्यमिति द्योतनार्थं भारत परंतपेति संबोधनद्वयम् । तत्त्वज्ञानप्रतिबन्धे प्रकृतभवान्तरकारणमुपसंहरति—**मोहेति** । जायमानभूतानां मोहपरतन्त्रत्वे फलितमाह—**यत इति** । भगवत्तत्त्ववेदनाभावे तन्निष्ठत्ववैधुर्यं फलतीत्याह—**अतएवेति** ॥ २७ ॥ यदि सर्वाणि भूतानि जन्मप्रतिपद्यमानानि संमूढानि सन्ति, भगवत्तत्त्वपरिज्ञानशून्यानि भगवद्भजनपराङ्मुखानि तर्हि शास्त्रानुरोधेन भगवद्भजनमुच्यमानमधिकार्यभावादनर्थकमापद्येतेति शङ्कते—**के पुनरिति** । अनेकेषु जन्मसु सुकृतवशादपाकृतदुरितानां द्वन्द्वप्रयुक्तमोह-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अशोभने शोभनबुद्धिः शोभने वा अशोभनबुद्धिरित्येवंरूपस्तेन । हे भारत भरतान्वय, सर्वभूतानि सर्गे सृष्टिविषये मोहमविवेकं यान्ति हे परंतप । अयं भावः—यो हि सृष्टेरुपादानं स्वरूपं च तत्त्वतो जानाति स ब्रह्मवित् सर्वज्ञत्वादतीतादीञ्जानाति, सृष्टौ च सर्वेषां मोहोऽस्ति अशोभने स्त्र्यादौ शोभनाध्यासात्, असत्ये प्रपञ्चे सत्यत्वाध्यासात्, सत्ये चात्मनोऽसङ्गत्वेऽसत्यत्वाध्यासात्, अनित्ये स्वर्गादौ नित्यत्वाध्यासात्, अनात्मनि देहादावात्माध्यासात् । अतो विपर्ययेण

४ मधुसूदनीव्याख्या ।

मोहेन अहं सुखी अहं दुःखीत्यादिविपर्ययेण सर्वाण्यपि भूतानि संमोहं विवेकायोग्यत्वं सर्गे स्थूलदेहोत्पत्तौ सत्यां यान्ति । हे भारत हे परंतपेति संबोधनद्वयस्य कुलमहिम्ना स्वरूपशक्त्या च त्वां द्वन्द्वमोहाख्यः शत्रुर्नाभिभवितुमलमिति भावः । नहीच्छाद्वेषरहितं किंचिदपि भूतमस्ति, नच ताभ्यामाविष्टस्य बहिर्विषयमपि ज्ञानं संभवति पुनरात्मविषयम् । अतो रागद्वेषव्याकुलान्तःकरणत्वात्सर्वाण्यपि भूतानि मां परमेश्वरमात्मभूतं न जानन्ति अतो न भजन्ते भजनीयमपि ॥ २७ ॥

५ भाष्योत्कर्षदीपिका ।

स्तेन सर्वभूतानि सर्गे सृष्टिविषये संमोहमविवेकं यान्ति । अयं भावः—यो हि सृष्टे रूपमानन्दस्वरूपं च तत्त्वतो जानाति स ब्रह्मवित् सर्वज्ञत्वादतीतादीञ्जानाति । सृष्टौ च सर्वेषां मोहोऽस्ति अशोभने स्त्र्यादौ शोभनाध्यासादसत्ये प्रपञ्चे सत्यत्वाध्यासात् सत्ये चात्मनोऽसङ्गत्वेऽसत्यत्वाध्यासात् अनित्ये स्वर्गादौ नित्यत्वाध्यासादनात्मनि देहादावात्मत्वाध्यासात् । अतो विपर्ययेण सृष्टिज्ञानं प्रतिबद्धम् । तेन च सार्वज्ञ्यं न जायतेऽस्मदादीनामिति तच्चिन्त्यम् । मां तु वेद न कश्चनेत्युक्त्या त्वदवेदनं केन प्रतिबन्धेनेति प्रश्नेनैवैतच्छ्लोकावतरणस्यौचित्येन तदनुसारिव्याख्यानस्यैव न्याय्यत्वात् । उत्तरश्लोके भजन्ते मां दृढव्रता इति वाक्यशेषविरोधाच्च ।

६ श्रीधरीव्याख्या ।

सृज्यत इति सर्गः सर्गे स्थूलदेहोत्पत्तौ सत्यां तदनुकूल इच्छा तत्प्रतिकूले च द्वेषः ताभ्यां समुत्थः समुद्भूतो यः शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तो मोहो विवेकभ्रंशः तेन सर्वभूतानि संमोहं च अहमेव सुखी दुःखी चेति गाढतरमभिनिवेशं प्राप्नुवन्ति, अतस्तानि

७ अभिनवगुप्ताचार्यव्याख्या ।

जठरान्तर्वर्ति समग्रमेव जगन्निजकार्यकारणमात्राक्षममेव प्रसुप्ततामवलम्बते अमोहं वासनानुभावात्प्रतिदिनं रात्रिसमयसौषुप्तवत् ननु

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥**
**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

निर्मुक्ताः सन्तस्त्वां विदित्वा यथाशास्त्रमात्मभावेन भजन्त इत्यपेक्षितमर्थं दर्शयितुमुच्यते—येषामिति । येषां तु पुनरन्तगतं समाप्तप्रायं क्षीणं पापं जनानां पुण्यकर्मणां पुण्यं कर्म येषां सत्त्वशुद्धिकारणं विद्यते ते पुण्यकर्माणस्तेषां पुण्यकर्मणां ते द्वन्द्वमोहनिर्मुक्ता यथोक्तेन द्वन्द्वमोहेन निर्मुक्ता भजन्ते मां परमात्मानं दृढव्रताः । एवमेव परमार्थतत्त्वं नान्यथेत्येवं [ सर्वपरित्यागव्रतेन ] निश्चितविज्ञाना दृढव्रता उच्यन्ते ॥ २८ ॥ ते किमर्थं भजन्त इत्युच्यते—जरेति । जरामरणमोक्षाय जरा-

२ आनन्दगिरिव्याख्या ।

विरहिणां ब्रह्मचर्यादिनियमवतां भगवद्भजनाधिकारित्वान्न शास्त्रविरोधोऽस्तीति परिहरति—उच्यत इति । तुशब्दद्योत्यमर्थमाह—पुनरिति । उक्तार्थमात्रसिद्ध्यर्थं समाप्तप्रायमित्युक्तम् । प्रकृतोपयोगं पुण्यस्य कर्मणो दर्शयितुं विशिनष्टि—सत्त्वेति । उभयविधशुद्धेर्द्वन्द्वनिमित्तमोहनिवृत्तिफलमाह—ते द्वन्द्वेति । मोहनिवृत्तेर्भगवन्निष्ठापर्यन्तत्वमाह—भजन्त इति । तेषां नानापरिग्रहवतां भगवद्भजनप्रतिहतिमाशङ्क्याह—दृढेति ॥ २८ ॥ यथोक्तानामधिकारिणां भगवद्भजनफलं प्रश्नद्वारा दर्शयति—ते किमर्थमिति । जरामरणादिलक्षणो यो बन्धस्तद्विश्लेषार्थं भगव-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सृष्टिज्ञानं प्रतिबद्धं तेन च सार्वज्ञ्यं न जायतेऽस्मदादीनामिति ॥ २७ ॥ केषां तर्हि सार्वज्ञ्यं भवतीत्याशङ्क्याह—येषां त्विति द्वाभ्याम् । येषां पुनर्जनानां पुण्यकर्मणां पापं अन्तगतं अन्तं नाशं प्राप्तम् । 'द्वितीया श्रिता—' इति समासः । ते द्वन्द्वमोह उक्तलक्षणस्तेन निर्मुक्ताः सन्तः प्रथमं दृढव्रताः शमदमादिदार्ढ्यभाजो भूत्वा मां भजन्ते ॥२८॥ ततश्च जरामरणयोः प्रवाहादात्मनो मोक्षाय मामाश्रित्य मयि समाहितचेतसो भूत्वा ये यतन्ति यतन्ते ज्ञानलाभाय

४ मधुसूदनीव्याख्या ।

यदि सर्वभूतानि संमोहं यान्ति कथं तर्हि 'चतुर्विधा भजन्ते मामि'त्युक्तम् । सत्यम् । सुकृतातिशयेन तेषां क्षीणपापत्वादित्याह—येषां त्वितरलोकविलक्षणानां जनानां सफलजन्मनां पुण्यकर्मणामनेकजन्मसु पुण्याचरणशीलानां तैस्तैः पुण्यैः कर्मभिर्ज्ञानप्रतिबन्धकं पापमन्तगतमन्तमवसानं प्राप्तं ते पापाभावेन तन्निमित्तेन द्वन्द्वमोहेन रागद्वेषादिनिबन्धनविपर्यासेन स्वत एव निर्मुक्ताः पुनरावृत्त्ययोग्यत्वेन त्यक्ताः दृढव्रता अचाल्यसंकल्पाः सर्वथा भगवानेव भजनीयः स चैवंरूप एवेति प्रमाणजनिताप्रामाण्यशङ्काशून्यविज्ञानाः सन्तो मां परमात्मानं भजन्तेऽनन्यशरणाः सन्तः सेवन्ते । एतादृशा एव चतुर्विधा भजन्ते मामित्यत्र सुकृतिशब्देनोक्ताः । अतः सर्वभूतानि संमोहं यान्तीत्युत्सर्गः । तेषां मध्ये ये सुकृतिनस्ते संमोहशून्या मां भजन्त इत्यपवाद इति न विरोधः । अयमेवोत्सर्गः प्रागपि प्रतिपादितस्त्रिभिर्गुणमयैर्भावैरित्यत्र । तस्मात्सत्त्वशोधकपुण्यकर्मसंचयाय सर्वदा यतनीयमिति भावः ॥ २८ ॥ अथेदानीमर्जुनस्य प्रश्नमुत्थापयितुं सूत्रभूतौ श्लोकावुच्येते । अनयोरेव वृत्तिस्थानीय उत्तरोऽध्यायो भविष्यति—ये संसारदुःखान्निर्विण्णा जरामरणमोक्षाय जरामरणादिविविधदुःसहसंसारदुःखनिरासाय तदेकहेतुं

५ भाष्योत्कर्षदीपिका ।

विष्णुतत्त्वज्ञानाज्ज्ञातव्यान्तरानवशेषेऽपि ईश्वरवत्त्रैकालिकाखिलज्ञानस्यालाभाच्चेति दिक् ॥ २७ ॥ के पुनस्त्वां विदित्वा यथाशास्त्रमात्मभावेन भजन्त इत्यपेक्षायामाह । येषां तु पुनर्जनानां पुण्यकर्मणां पुण्यं कर्म पापक्षयद्वारा सत्त्वशुद्धिकरं येषां ते पुण्यकर्माणस्तेषां पापमन्तं समाप्तिं गतं प्राप्तम्, ते यथोक्तद्वन्द्वमोहेन विनिर्मुक्ता वर्जिता अतएव दृढव्रताः एवमेवात्मतत्त्वं नान्यथेत्येवं सर्वपरित्यागेन निश्चितविज्ञाना मां परमात्मानं भजन्ते ॥ २८ ॥ किमर्थं भजन्तीत्यत आह—जरामरणमोक्षाय मां परमेश्वरं सगुणमाश्रित्य

६ श्रीधरीव्याख्या ।

मज्ज्ञानाभावान्न मां जानन्तीति भावः ॥ २७ ॥ कुतस्तर्हि केचन त्वां भजन्तो दृश्यन्ते तत्राह—येषामिति । येषां तु पुण्याचरणशीलानां सर्वं प्रतिबन्धकं पापमन्तगतं नष्टं ते द्वन्द्वनिमित्तेन मोहेन निर्मुक्ताः दृढव्रता एकान्तिनः सन्तो मां भजन्ते ॥ २८ ॥ एवं च मां भजन्तस्ते सर्वं विज्ञेयं विज्ञाय कृतार्था भवन्तीत्याह—जरामरणेति । जरामरणयोर्निरासार्थं मामाश्रित्य ये प्रयतन्ते ते

७ अभिनवगुप्ताचार्यव्याख्या ।

तावता विमुक्तरूपतामोहानुभवसमाप्तौ पुनर्विचित्रव्यापारसंसारदर्शनात् । ये तु विनष्टतामसाः पुण्यापुण्यपरिक्षयक्षमीकृतात्मानस्ते

**साधिभूताधिदैवं मां साधियज्ञं च ये विदुः।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः॥ ३०॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः॥ ७॥

१ श्रीमच्छांकरभाष्यम्।

मरणयोर्मोक्षार्थं मां परमेश्वरमाश्रित्य मत्समाहितचित्ताः सन्तो यतन्ति प्रयतन्ते ये ते यद्ब्रह्म परं तद्विदुः कृत्स्नं समस्तमध्यात्मं प्रत्यगात्मविषयं वस्तु तद्विदुः कर्म चाखिलं समस्तं विदुः॥ २९॥ साधीति। साधिभूताधिदैवमधिभूतं चाधिदैवं चाधिभूताधिदैवं सहाधिभूताधिदैवेन वर्तते

२ आनन्दगिरिव्याख्या।

द्भजनमित्यर्थः। संप्रति सगुणस्य सप्रपञ्चस्य मध्यमानुग्रहार्थं ध्येयत्वमाह—**मामाश्रित्येति**। जरादिसंसारनिवृत्त्यर्थं निर्गुणं निष्प्रपञ्चं मामुत्तमाधिकारिणो जानन्तीत्युक्तं 'मामेव ये प्रपद्यन्ते' इत्यादावित्याह—**जरेति**। मध्यमाधिकारिणः प्रत्याह—**मामेति**। परमेश्वराश्रयणं नाम विषयविमुखत्वेन भगवदेकनिष्ठत्वमित्याह—**मत्समाहितेति**। प्रयतनं भगवन्निष्ठासिद्ध्यर्थं बहिरङ्गाणां यज्ञादीनामन्तरङ्गाणां च श्रवणादीनामनुष्ठानम्। प्रागुक्तं जगदुपादानं परं ब्रह्म। कथं ब्रह्म विदुरित्यपेक्षायां समस्ताध्यात्मवस्तुत्वेन सकलकर्मत्वेन च तद्विदुरित्याह—**कृत्स्नमिति**॥ २९॥ न केवलं भगवन्निष्ठानां सर्वाध्यात्मिककर्मात्मकब्रह्मविरवमेव किंत्वधिभूतादिसहितं तद्वेदित्वमपि सिध्यतीत्याह—**साधिभूतेति**। अध्यात्मं कर्माधिभूतमधिदैवमधियज्ञश्चेति पञ्चकमेतद्ब्रह्म ये विदुस्तेषां यथोक्तज्ञानवतां समाहित-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

वेदान्तश्रवणादौ ते तत् सर्ववेदान्तप्रसिद्धं कृत्स्नं ब्रह्म विदुः। विराडाद्युपासका ह्यकृत्स्नब्रह्मविदः। सूत्रकारणयोर्निष्कलस्य चाज्ञानात् श्रीगोपालबालोपासकास्तु तत्पदलक्ष्यकृत्स्नब्रह्मविदोऽतस्तेऽध्यात्मादिकं कार्त्स्न्येन जानन्ति। सर्वविदो भवन्तीत्यर्थः। अनेन 'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' इत्येकविज्ञानात्सर्वविज्ञानप्रतिज्ञा या पूर्वं कृता तस्या उपसंहारो दर्शितः। अध्यात्मं आत्मनि शरीरे स्थितं प्रत्यगात्मविषयं वस्तु शुद्धं त्वंपदार्थमित्यर्थः। कर्म च तत्त्वंपदार्थज्ञानयोः साधनं श्रवणादिकं सर्वं विदुः॥ २९॥ एवं तत्पदार्थविवेकं सद्योमुक्तिहेतुं समाप्य तत्प्राप्त्युपायभूतान्युपासनानि क्रममुक्तिफलानि विस्तरेण वक्तुकामः संक्षेपेण सूत्रयति—**साधिभूतेति**। अधिभूतं च अधिदैवं

४ मधुसूदनीव्याख्या।

मां सगुणं भगवन्तमाश्रित्येतरसर्ववैमुख्येन शरणं गत्वा यतन्ति यतन्ते मदर्पितानि फलाभिसन्धिशून्यानि विहितानि कर्माणि कुर्वन्ति ते क्रमेण शुद्धान्तःकरणाः सन्तस्तज्जगत्कारणं मायाधिष्ठानं शुद्धं परं ब्रह्म निर्गुणं तत्पदलक्ष्यं मां विदुः। तथात्मानं शरीरमधिकृत्य प्रकाशमानं कृत्स्नमुपाध्यपरिच्छिन्नं त्वंपदलक्ष्यं विदुः। कर्म च तदुभयवेदनसाधनं गुरूपसदनश्रवणमननाद्यखिलं निरवशेषं फलाव्यभिचारि विदुर्जानन्तीत्यर्थः॥ २९॥ नचैवंभूतानां मद्भक्तानां मृत्युकालेऽपि विवशकरणतया मद्वि-

५ भाष्योत्कर्षदीपिका।

ये पापरहिताः पुण्यकर्माणो द्वन्द्वमोहविनिर्मुक्ताः दृढव्रताः सन्तो यतन्ति यतन्ते ते यत्परं ब्रह्म तद्विदुः। तथा कृत्स्नमध्यात्मं प्रत्यगात्मविषयं वस्तु कर्म च वक्ष्यमाणम्। यत्तु कर्म च तदुभयवेदनसाधनं गुरूपसदनश्रवणमननाद्यखिलं निरवशेषं फलाव्यभिचारीति केचित्। तन्न। 'भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः' इति मूलतद्भाष्यस्य यागदानहोमात्मकं वैदिकं कर्मेत्यादिस्वोक्तेश्च विरोधस्य स्पष्टत्वादखिलं प्रपञ्चं ब्रह्मानन्यं सर्वं विदुः। तथा चैवंज्ञानिनो जरामरणादिलक्षणात्संसारान्मुच्यन्त इति॥ २९॥ ननु मरणकाले तेषां त्वद्विस्मरणस्य संभवात्कथं संसारान्मोक्ष इत्याशङ्क्याह—**सेति**। अधिभूतं चाधिदैवं चाधिभूताधिदैवमिति समाहार-

६ श्रीधरीव्याख्या।

तत्परं ब्रह्म विदुः कृत्स्नमध्यात्मं च विदुः येन तत्प्राप्तव्यं तं देहादिव्यतिरिक्तं शुद्धमात्मानं च जानन्तीत्यर्थः। तत्साधनभूतमखिलं सरहस्यं कर्म च जानन्ति॥ २९॥ न चैवंभूतानां योगभ्रंशशङ्कापीत्याह—**साधिभूताधिदैवमिति**। अधिभूतादिशब्दानामर्थ

७ अभिनवगुप्ताचार्यव्याख्या।

विपाटितमहामोहवितानाः सर्वमेव भगवद्रश्मिखचितं जरामरणभयतमिस्रं, ते ब्रह्म विदन्ति। आध्यात्मिकाधिभौतिकाधिदैविकाधियज्ञिकानि च ममैव रूपान्तराणि। प्रयाणकाले च नित्यं भगवद्भावितान्तःकरणत्वान्मां जानन्ति। यतो येषां जन्म पूर्वमेव भगवत्तत्त्वं तेऽन्त-

१ मधुसूदन', नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

साधिभूताधिदैवं च मां ये विदुः साधियज्ञं च सहाधियज्ञेन साधियज्ञं ये विदुः प्रयाणकालेऽपि मरणकालेऽपि च ते मां विदुर्युक्तचेतसः समाहितचित्ता इति ॥ ३० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

२ आनन्दगिरिव्याख्या ।

चेतसामापदवस्थायामपि भगवत्तत्त्वज्ञानमप्रतिहतं तिष्ठतीत्याह—प्रयाणेति । अपिचेति निपाताभ्यां तस्यामवस्थायां करणग्रामस्य व्यग्रतया ज्ञानासंभवेऽपि मयि समाहितचित्तानायुक्तज्ञानवतां भगवत्तत्त्वज्ञानमयत्नलभ्यमिति द्योत्यते । तदनेन सप्तमेनोत्तममधिकारिणं प्रति ज्ञेयं निरूपयता तदर्थमेव सर्वात्मकत्वादिकमुपदिशता प्रकृतिद्वयद्वारेण सर्वकारणत्वादिति च वदता तत्पदवाच्यं तल्लक्ष्यं चोपक्षिप्तम् ॥ ३० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दज्ञान० सप्तमोऽध्यायः ॥ ७ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

च ताभ्यां सहितं साधिभूताधिदैवम् । तथाऽधियज्ञेन सहितं साधियज्ञं च मां ये विदुरुपासते ते युक्तचेतसः । यतो नित्यं समाहितचित्तास्ततो मां प्रयाणकालेऽपि सर्वजनव्यामोहके विदुरेव । भावनादार्ढ्यान्मरणकालेऽपि तस्य ज्ञानस्य प्रमोषो न भवत्यतो भगवति नैरन्तर्येण दृढा भावना कर्तव्येति भावः । अधिभूतादिपदार्थं तु भगवानेव व्याख्यास्यतीति नोक्तवन्तो वयम् ॥ ३० ॥

इति श्रीमत्पदवाक्यप्रमाणम० नीलकण्ठकृतौ भारतभावदीपे भगवद्गीतार्थप्रकाशे सप्तमोऽध्यायः ॥ ७ ॥

४ मधुसूदनीव्याख्या ।

स्मरणं शङ्कनीयम्, यतः साधिभूताधिदैवमधिभूताधिदैवाभ्यां सहितं, तथा साधियज्ञं चाधियज्ञेन च सहितं मां ये विदुश्चिन्तयन्ति ते युक्तचेतसः सर्वदा मयि समाहितचेतसः सन्तस्तत्संस्कारपाटवात्प्रयाणकाले प्राणोत्क्रमणकाले करणग्रामस्यात्यन्तव्यग्रतायामपि, चकारादयत्नेनैव मत्कृपया मां सर्वात्मानं विदुर्जानन्ति तेषां मृतिकालेऽपि मदाकारैव चित्तवृत्तिः पूर्वोपचितसंस्कारपाटवाद्भवति । तथाच ते मद्भक्तियोगात्कृतार्था एवेति भावः । अधिभूताधिदैवाधियज्ञशब्दानुत्तरेऽध्यायेऽर्जुनप्रश्नपूर्वकं व्याख्यास्यति भगवानिति सर्वमनाविलम् । तदत्रोत्तमाधिकारिणं प्रति ज्ञेयं मध्यमाधिकारिणं प्रति च ध्येयं लक्षणया मुख्यया च वृत्त्या तत्पदप्रतिपाद्यं ब्रह्म निरूपितम् ॥ ३० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां ज्ञानविज्ञानयोगोनाम सप्तमोऽध्यायः ॥ ७ ॥

५ भाष्योत्कर्षदीपिका ।

द्वन्द्वस्तेन सहवर्तत इति तम्, अधियज्ञेन सह वर्तत इति तं च मां ये विदुः प्रयाणकाले मरणकालेऽपि च मां ते युक्तचेतसो विदुरतस्तेषां मोक्षप्राप्तौ न कोऽपि संदेह इति । साधिभूतादिपदार्थस्तु मूलएव स्फुटीभविष्यति । तदनेन सप्तमाध्यायेनोत्तमाधिकारिणं प्रति ज्ञेयं निरूपयता तज्ज्ञानार्थं मध्यमाधिकारिणं प्रति तत्पदवाच्यं प्रतिपादयता तत्पदवाच्यं तल्लक्ष्यं च प्रदर्शितम् ॥ ३० ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां सप्तमोऽध्यायः ॥ ७ ॥

६ श्रीधरीव्याख्या ।

भगवानेवानन्तराध्याये व्याख्यास्यति । अधिभूतेनाधिदैवेन च सहाधियज्ञेन च सहितं ये मां भजन्ति ते युक्तचेतसः मय्यासक्तमनसः प्रयाणकालेऽपि मरणसमयेऽपि मां विदुर्जानन्ति नतु तदापि व्याकुलीभूय मां विस्मरन्ति । अतो मद्भक्तानां न योगभ्रंशशङ्केत्यर्थः ॥ ३० ॥ कृष्णभक्तैरयत्नेन ब्रह्मज्ञानमवाप्यते । इति विज्ञानयोगाख्ये सप्तमे संप्रकाशितम् ॥ १ ॥

इति श्रीधरस्वामीविरचितायां सुबोधिन्यां टीकायां सप्तमोऽध्यायः ॥ ७ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

काले परमेश्वरं संस्मरेयुः । किं जन्मासेवनयेति ये मन्यन्ते तेषां तूर्णींभाव एव शोभन इति शिवम् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ अत्र संग्रहश्लोकः—स्फुटं भगवतो भक्तिराहिता कल्पमञ्जरी । साधकेच्छासमुचितां येनाशां परिपूरयेत् ॥

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः ।

अर्जुन उवाच ।

**किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**ते ब्रह्म तद्विदुः कृत्स्नमित्यादिना भगवतार्जुनस्य प्रश्नबीजान्युपदिष्टान्यतस्तत्प्रश्नार्थमर्जुन उवाच**

२ आनन्दगिरिव्याख्या ।

सप्तमाध्यायान्ते 'येषां त्वन्तगतं पापम्' इत्यादिना येषां ब्रह्मादीनामनुसंधानमुक्तं यच्च प्रयाणकाले भगवतः स्मरणं दर्शितं तदिदं जिज्ञासमानः सन्पृच्छतीति प्रश्नसमुदायमवतारयति—**ते ब्रह्मेति** । प्रश्नबीजानि तद्विषयभूतानि ब्रह्मादीनि वस्तूनीति यावत् । बुभुत्सितविषयप्रतिलम्भानन्तरं तेषां प्रश्नद्वारा निर्णयार्थमाह—**अत इति** । यदुक्तं ते ब्रह्म तद्विदुरिति, तत्किं सोपाधिकं निरुपाधिकं वा ब्रह्मशब्दस्योभयत्रापि संभवादिति मत्वाह—**किं तदिति** । यच्चोक्तं कृत्स्नमध्यात्ममिति तत्रात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मशब्देन श्रोत्रादिकरणग्रामो वा प्रत्यग्भूतं ब्रह्मैव वा विवक्षितमित्याह—**किमध्यात्ममिति** । 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च' इति श्रुतौ कर्मणो द्वैविध्यनिर्धारणात्कर्म चाखिलमित्यत्र कीदृक्कर्म गृहीतमिति पृच्छति—**किमिति** । क्षराक्षराभ्यां कार्यकारणाभ्यामतीतस्य भगवतो न किंचिद्वेद्यमस्तीति सूचयति—**पुरुषोत्तमेति** । साधिभूताधिदैवमित्यत्राधिभूतशब्देन पृथिव्यादिषु भूतेषु वर्तमानं किंचिदेव गृह्यते किंवा समस्तमेव कार्यमिति निर्दिधारयिषया पृच्छति—**अधिभूतमिति** । अधिदैवमिति च दैवतविषयमनुध्यानं वा दैवतेष्वादित्यमण्डलादिषु वर्तमानं चैतन्यं वा जिघृक्षितमिति प्रश्नान्तरं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वस्मिन्नध्याये मायोपहितं ब्रह्म जगत्कारणमुक्तं तच्चोत्तमानामनुपाधिब्रह्मप्रतिपत्तावुपलक्षणं मध्यमानामुपास्यं चेति मत्वा प्रतिपत्तव्यं ब्रह्म तद्विषय एकः उपासनाविषयाश्च षट् एवं सप्त प्रश्नविषयास्ते ब्रह्म तद्विदुरित्यध्यायान्ते सार्धश्लोकेन भगवता सूत्रितास्तद्वृत्तिरूपोऽयमध्याय आरभ्यते । तत्र सूत्रितानां ब्रह्मादिशब्दानामर्थं बुभुत्सुरर्जुन उवाच ।

४ मधुसूदनीव्याख्या ।

चतुर्षु भगवत्प्रियेष्वपि मतोऽधिकं यः प्रभोरुदारपदतः परः समचकार तं मामयम् ।
परोपनिषदर्थदैरमलवाक्यदीपैस्तमो निवार्य परमं भजे तमिह काशिराजं गुरुम् ॥

पूर्वाध्यायान्ते 'ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्' इत्यादिना सार्धश्लोकेन सप्त पदार्था ज्ञेयत्वेन भगवता सूत्रितास्तेषां वृत्तिस्थानीयोऽयमष्टमोऽध्याय आरभ्यते । तत्र सूत्रितानि सप्त वस्तूनि विशेषतो बुभुत्समानः श्लोकाभ्यामर्जुन उवाच—तत् ज्ञेयत्वेनोक्तं ब्रह्म किं सोपाधिकं निरुपाधिकं वा, एवमात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मं किं श्रोत्रादिकरणग्रामो वा प्रत्यक्चैतन्यं वा, तथा कर्म चाखिलमित्यत्र किं कर्म यज्ञरूपमन्यद्वा, 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च' इति श्रुतौ द्वैविध्यश्रवणात् । तव मम च समत्वात्कथं त्वं मां पृच्छसीति शङ्कामपनुदन्सर्वपुरुषेभ्य उत्तमस्य सर्वज्ञस्य तव न किंचिदज्ञेयमिति संबोधनेन सूचयति हे पुरुषोत्तमेति । अधिभूतं च किं प्रोक्तं पृथिव्यादिभूतमधिकृत्य यत्किंचित्कार्यमधिभूतपदेन विवक्षितं किं वा समस्तमेव कार्यजातम् । चकारः सर्वेषां प्रश्नानां समुच्चयार्थः । अधिदैवं किमुच्यते

५ भाष्योत्कर्षदीपिका ।

सप्तमाध्यायान्ते ते ब्रह्म तद्विदुरित्यादिसार्धेनार्जुनस्य प्रश्नबीजानि भगवतोक्तानि अतस्तत्प्रश्नार्थमर्जुन उवाच—**किमित्यादिना** । ते ब्रह्म तद्विदुः कृत्स्नमिति यदुक्तं तत्किं सगुणमुत निर्गुणं । ब्रह्मशब्दस्योभयत्रापि संभवात् । यच्चोक्तं कृत्स्नमध्यात्ममिति तत्रात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मशब्देन किं त्वगादीन्द्रियसमुदायो विवक्षित उत प्रत्यगात्मैव । 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च' इति श्रुतौ कर्मद्वैविध्यश्रवणात्कर्म चाखिलमित्यत्रापि कीदृक्कर्म विवक्षितं किं लौकिकमुत वैदिकं यज्ञादिरूपं । पुरुषोत्तमस्य न किंचिदज्ञातमिति सूचयन्नाह—**पुरुषोत्तमेति** । अधिभूतं च किं प्रोक्तं भूतेष्वाकाशादिषु वर्तमानं किंचिदेव

६ श्रीधरीव्याख्या ।

ब्रह्मकर्माधिभूतादि विदुः कृष्णैकचेतसः । इत्युक्तं ब्रह्मकर्मादि स्पष्टमष्टम उच्यते ॥ १ ॥

पूर्वाध्यायान्ते भगवतोपक्षिप्तानां ब्रह्माध्यात्मादिसप्तानां पदार्थानां तत्त्वं जिज्ञासुरर्जुन उवाच—**किं तद्ब्रह्मेति** द्वाभ्याम् ।

७ अभिनवगुप्ताचार्यव्याख्या ।

अर्जुन उवाच । किं तदिति । अधियज्ञः कथं कोऽत्रेति । देहे तिष्ठतीति शेषः ॥ १ ॥ २ ॥ ते ब्रह्म तद्विदुरित्यादिना यद्भगवतोपक्षिप्तं

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन।**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः॥ २॥**
**श्रीभगवानुवाच। अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते।**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः॥ ३॥**

१ श्रीमच्छांकरभाष्यम्।

॥ १ ॥ २ ॥ एषां प्रश्नानां यथाक्रमं निर्णयाय श्रीभगवानुवाच—अक्षरमिति। अक्षरं न क्षरतीति पर

२ आनन्दगिरिव्याख्या।

प्रस्तौति—**अधिदैवमिति**॥ १॥ साधियज्ञं चेत्यत्राधियज्ञशब्देन यज्ञमधिकृतो विज्ञानात्मा वा परदेवता वेति प्रश्नान्तरं प्रकरोति—**अधियज्ञ इति**। स च कथं केन प्रकारेण ब्रह्मत्वेन चिन्तनीयः किं तादात्म्येन किं वात्यन्ताभेदेनेत्याह—**कथमिति**। सर्वथापि स किमस्मिन्देहे वर्तते ततो बहिर्वा, देहे चेत्स कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वेति जिज्ञासया ब्रूते—**कोऽत्रेति**। अधियज्ञः कथं कोऽत्रेति न प्रश्नभेदकः[दः] कथमिति तु प्रकारभेदविवक्षयेति द्रष्टव्यम्। यत्तु समाहितचित्तानामुक्तं यत्प्रयाणकालेऽपि भगवदनुसंधानं सिध्यतीति तदयुक्तमुत्क्रमणदशायां करणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तिरित्यभिप्रेत्याह—**प्रयाणेति**॥ २॥ व्याख्यातप्रश्नसप्तकस्य प्रतिवचनं भागवतमवतारयति—**एषामिति**। क्रमेण कृतानां प्रश्नानां क्रमेणैव प्रतिवचने प्रष्टुरभीष्टप्रतिपत्तिसौकर्यं सिध्यतीति बुध्यमानो विशिनष्टि—**यथाक्रममिति**। तत्र प्रश्नत्रयं निर्णेतुं भगवद्वचनमुदाहरति—**अक्षरमिति**। किं तद्ब्रह्मेति प्रश्नस्य प्रतिवचनम्—**अक्षरं ब्रह्म परममिति**। तत्राक्षरशब्दस्य निरुपाधिके परस्मिन्नात्मन्यविनाशित्वव्याप्तिमत्त्व-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

किं तत्कृत्स्नं ब्रह्मेति प्रथमः प्रश्नः। शेषः स्पष्टार्थः श्लोकः॥ १॥ अधियज्ञः कथं कोऽत्र। क इति स्वरूपप्रश्नः। कथं ज्ञेय इति पदापकर्षेण तत्तदुपासनाप्रकारप्रश्नश्चेति द्वयं मिलित्वा एकएव प्रश्नः। शेषं स्पष्टम्॥ २॥ क्रमेणैषां प्रश्नानामुत्तरमाह—**अक्षरमित्यादिभिस्त्रिभिः**। तत्र किं तद्ब्रह्मेत्यस्योत्तरमक्षरं परमं ब्रह्मेति। यत्परममक्षरं तद्ब्रह्मेति योजना।

४ मधुसूदनीव्याख्या।

देवताविषयमनुध्यानं वा सर्वदैवतेष्वादित्यमण्डलादिष्वनुस्यूतं चैतन्यं वा॥ १॥ अधियज्ञो यज्ञमधिगतो देवतात्मा परब्रह्म वा। स च कथं केन प्रकारेण चिन्तनीयः। किं तादात्म्येन किं वात्यन्ताभेदेन। सर्वथापि स किमस्मिन्देहे वर्तते ततो बहिर्वा। देहे चेत् स कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वा। अधियज्ञः कथं कोऽत्रेति न प्रश्नद्वयं किंतु सप्रकार एकएव प्रश्न इति द्रष्टव्यम्। परमकारुणिकत्वादनायासेनापि सर्वोपद्रवनिवारकस्य भगवतोऽनायासेन मत्संदेहोपद्रवनिवारणमीषत्करमुचितमेवेति सूचयन्संबोधयति हे मधुसूदनेति। प्रयाणकाले च सर्वकरणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तेः कथं केन प्रकारेण नियतात्मभिः समाहितचित्तैर्ज्ञेयोऽसीत्युक्तशङ्कासूचनार्थश्चकारः। एतत्सर्वं सर्वज्ञत्वात्परमकारुणिकत्वाच्च शरणागतं मांप्रति कथयेत्यभिप्रायः॥ २॥ एवं सप्तानां प्रश्नानां क्रमेणोत्तरं त्रिभिः श्लोकैः श्रीभगवानुवाच—प्रश्नक्रमेण हि निर्णये प्रष्टु-

५ भाष्योत्कर्षदीपिका।

गृह्यते उत सर्वमेव कार्यं। अधिदैवं किमुच्यते किं देवताविषयमनुध्यानमुतादित्यमण्डलादिषु वर्तमानं चैतन्यम्॥ १॥ अधियज्ञः कथं कोऽत्र यज्ञमधिगतो विज्ञानात्मा परमात्मा वा, स च कथं केन प्रकारेण चिन्तनीयः किं तादात्म्येनोताभेदेन। सर्वथापि स किमस्मिन्देहे वर्तते उतास्माद्बहिः, देहे चेत्स कोऽत्र बहिश्चेत्स किं कुड्यादिरुत तद्व्यतिरिक्त इति प्रकारादिजिज्ञासयोक्तं कथं कोत्रेऽति। मधुसूदनेति संबोधयन् मधुसूदनस्य तव मत्संशयसूदनमतिसुकरमिति द्योतयति। यत्तूक्तं 'प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः' इति तत्र पृच्छति—**प्रयाणेति**। प्राणोत्क्रमणदशायां करणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तेर्नियतात्मभिः प्रयाणकाले कथं ज्ञेयोऽसीति भाष्यटीकानुसारी सप्तमप्रश्नार्थः। भाष्यकृद्भिस्तु सुगमत्वान्न प्रदर्शितः॥ २॥ क्रमेण कृतानां प्रश्नानां तथैव प्रतिवचने प्रश्नकर्तुरिष्टं सुखेन प्रश्नोत्तरदानं सिध्यतीत्याशयवानर्जुनकृतप्रश्नानां क्रमेण निर्णयाय श्रीभगवानुवाच। तत्र 'ते ब्रह्म तद्विदुः कृत्स्नमि'त्यत्र निर्गुणं ब्रह्म विवक्षितमिति प्रथमप्रश्नस्योत्तरमाह—**अक्षरं ब्रह्मेति**। यदुक्तं किं तद्ब्रह्मेति तदक्षरं न क्षरतीत्यक्षरं विनाशरहितं अश्नुते

६ श्रीधरीव्याख्या।

स्पष्टोऽर्थः॥ १॥ किंच—**अधियज्ञ इति**। अत्र देहे यो यज्ञो वर्तते तस्मिन्कोऽधियज्ञः। अधिष्ठाता प्रयोजकः फलदाता च क इत्यर्थः। स्वरूपं पृष्ट्वा अधिष्ठानप्रकारं पृच्छति। कथं केन प्रकारेणासावस्मिन्देहे स्थितो यज्ञमधितिष्ठतीत्यर्थः। यज्ञग्रहणं सर्वकर्मणामुपलक्षणार्थम्। अन्तकाले च नियतचित्तैः पुरुषैः कथं केनोपायेन ज्ञेयोऽसि॥ २॥ प्रश्नक्रमेणोत्तरं श्रीभगवानुवाच—**अक्षरमिति** त्रिभिः।

७ अभिनवगुप्ताचार्यव्याख्या।

तत्प्रश्ननवकपूर्वकं निर्वर्णयति श्रीभगवान्—अक्षरमिति। बृहत्त्वाद्बृंहकत्वाच्च परं ब्रह्म। अतएवाध्यात्मशब्दवाच्यम्। यतः स्वो निर्वृत्ति-

१ श्रीमच्छांकरभाष्यम् ।

**आत्मा, 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति श्रुतेः । ओंकारस्य चोमित्येकाक्षरं ब्रह्मेति परेण विशेषणात्तद्ग्रहणम् । परममिति च निरतिशये ब्रह्मण्यक्षर उपपन्नतरं विशेषणम् । तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः । स्वभावोऽध्यात्ममुच्यते, आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्ममुच्यतेऽध्यात्मशब्देनाभिधीयते । भूतभावोद्भव-**

२ आनन्दगिरिव्याख्या ।

संबन्धात्प्रवृत्तिं व्युत्पादयति—**अक्षरमित्यादिना** । कथं पुनरक्षरशब्दस्य यथोक्ते परमात्मनि वृद्धप्रयोगमन्तरेण व्युत्पत्त्या प्रवृत्तिराश्रीयते व्युत्पत्तेरर्थान्तरेऽपि संभवादित्याशङ्क्य द्यावापृथिव्यादिविषयनिरङ्कुशप्रशासनस्य परस्मादन्यस्मिन्नसंभवात्तथाविधप्रशासनकर्तृत्वेन श्रुतमक्षरं ब्रह्मैवेत्याह—**एतस्येति** । रूढिर्योगमपहरतीति न्यायादोंकारे वर्णसमुदायात्मन्यक्षरशब्दस्य रूढ्या प्रवृत्तिराश्रयितुमुचितेत्याशङ्क्याह—**ओंकारस्येति** । प्रतिवचनोपक्रमे प्रक्रान्तमोंकाराख्यमक्षरमेवोत्तरत्र विशेषितं भविष्यतीत्याशङ्क्य परमविशेषणविरोधान्न तस्य प्रक्रमः संभवतीत्याह—**परममिति चेति** । किमध्यात्ममिति प्रश्नस्योत्तरं स्वभावोऽध्यात्ममित्यादि । तद्व्याचष्टे—**तस्यैवेति** । स्वकीयो भावः स्वभावः श्रोत्रादिकरणग्रामः स चात्मनि देहेऽहंप्रत्ययवेद्यो वर्तत इत्यमुं प्रतिभासं व्यावर्त्य स्वभावपदं गृह्णाति—**स्वो भाव इति** । एवं विग्रहपरिग्रहे स्वभावोऽध्यात्ममुच्यत इत्यस्यायमर्थो निष्पन्नो भवतीत्यनुवादपूर्वकं कथयति—**स्वभाव इति** । तस्यैव परस्येत्यादिनोक्तं न विस्मर्तव्यमिति विशिनष्टि—**परमार्थेति** । परमेव हि ब्रह्म देहादौ प्रविश्य प्रत्यगात्मभावमनुभवति 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेरित्यर्थः । किं कर्मेति प्रश्नस्योत्तरमुपादत्ते—**भूतेति** । भूतान्येव भावास्तेषा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अक्षरशब्दस्य वर्णेषु रूढत्वात् 'ओमित्येतदक्षरम्' इत्यादिश्रुतौ, 'ओमित्येकाक्षरं ब्रह्म' इति स्मृतौ च दर्शनेनात्रापि प्रणवस्याक्षरशब्देन ग्रहणे प्रसक्ते परममिति विशेषणं प्रणवस्य परब्रह्मत्वासंभवात् । अतश्च 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्' इति श्रुतिप्रसिद्धमखण्डैकरसं वस्तु अक्षरशब्दितं तद्ब्रह्मेति प्राञ्चः । यद्वा अक्षरशब्देन जीवः 'कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः' इति गीतासु, 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इति श्रुतौ च कूटस्थपदेनामृतपदेन च विशेषितस्याक्षरपदस्य जीववाचित्वदर्शनात् । अमृतोक्षरमित्यपेक्षिते उत्वाभावश्छान्दसः । तथाचाक्षरं जीवाख्यं परमं ब्रह्म । परममिति विशेषणेन सोपाधिकस्य पूर्वाध्यायोक्तस्य व्यावृत्तिः । नहि जीवस्य सोपाधिकस्य ब्रह्मभावः संभवति । व्यावर्तकोपाधौ मायादर्पणे जाग्रति तयो-

४ मधुसूदनीव्याख्या ।

रभीष्टसिद्धिरनायासेन स्यादित्यभिप्रायवान्भगवानत्र श्लोके प्रश्नत्रयं क्रमेण निर्धारितवान् । एवं द्वितीयश्लोकेऽपि प्रश्नत्रयं, तृतीयश्लोके त्वेकमिति विभागः । निरुपाधिकमेव ब्रह्मात्र विवक्षितं ब्रह्मशब्देन नतु सोपाधिकमिति प्रथमप्रश्नस्योत्तरमाह—अक्षरं न क्षरतीत्यविनाशि अश्नुते वा सर्वमिति सर्वव्यापकं [ अक्षरत्वात् ] 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' इत्याद्युपक्रम्य 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः', 'नान्यदतोऽस्ति द्रष्टृ' इत्यादिमध्ये परामृश्य 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्युपसंहृतं श्रुत्या । सर्वोपाधिशून्यं सर्वस्य प्रशासितृ अव्याकृताकाशान्तस्य कृत्स्नस्य प्रपञ्चस्य धारयितृ अस्मिंश्च शरीरेन्द्रियसंघाते विज्ञातृ निरुपाधिकं चैतन्यं तदिह ब्रह्मेति विवक्षितम् । एतदेव विवृणोति—परममिति । परमं स्वप्रकाशपरमानन्दरूपं प्रशासनस्य कृत्स्नजडवर्गधारणस्य च लिङ्गस्य

५ भाष्योत्कर्षदीपिका ।

व्याप्नोति सर्वमिति व्युत्पत्त्या वाक्षरं सर्वत्र व्यापकम् । रूढ्याक्षरशब्देनोंकारप्रतिपत्तिभ्रमं वारयति—**परममिति** । परत्वं निरतिशयं परमात्मन एव पृथिव्याद्याकाशान्तस्य विकारजातस्य धारणात् । तथाच सूत्रं 'अक्षरमम्बरान्तधृतेः' इति, 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति सहोवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' इत्यादि श्रूयते । तत्र संशयः किमक्षरशब्देन वर्ण उच्यते किंवा परमेश्वर इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात् प्रसिद्ध्यतिक्रमस्य चायुक्तत्वादोंकार एवेदं सर्वमित्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मत्वावधारणात् वर्ण एवाक्षरशब्दवाच्य इत्येवं प्राप्त उच्यते । परएव आत्माक्षरशब्दवाच्यः कस्मादम्बरान्तधृतेः पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि पृथिव्यादेः समस्तस्य विकारजातस्य कालत्रयप्रविभक्तस्याका-

६ श्रीधरीव्याख्या ।

न क्षरति न चलतीत्यक्षरम् । ननु जीवोऽप्यक्षरस्तत्राह—परमं यदक्षरं जगतां मूलकारणं तद्ब्रह्म 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति श्रुतेः । तस्यैव ब्रह्मण एवांशतो जीवरूपेण भवनं स्वभावः स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्तमानोऽध्यात्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

धर्मो चैतन्याख्यो भावः तस्य च चैतन्यस्वभावस्य ब्रह्मणोऽपरिच्छिन्नबाह्यलक्षणतया क्रोडीकृतविश्वशक्तेरैश्वर्यलक्षणात्स्वातन्त्र्याद्धि भावाव-

१ श्रीमच्छांकरभाष्यम् ।

**करो भूतानां भावो भूतभावस्तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इत्यर्थः। विसर्गो विसर्जनं देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागः स एष विसर्ग-**

२ आनन्दगिरिव्याख्या ।

मुद्भवः समुत्पत्तिस्तां करोतीति व्युत्पत्तिं सिद्धवत्कृत्य विधान्तरेण व्युत्पादयति—**भूतानामिति** । भावः सद्भावो वस्तुभावोऽतएव भूतवस्तूत्पत्तिकर इति वक्ष्यति। वैदिकं कर्मात्रोक्तविशेषणं कर्मशब्दितमिति विसर्गशब्दार्थं दर्शयन्विशदयति—**विसर्ग इत्यादिना**। कथं पुनर्यथोक्तस्य यज्ञस्य सर्वेषु भूतेषु सृष्टिस्थितिप्रलयहेतुत्वेन तदुद्भवकरत्वमित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रभेदायोगात्। 'किं तद्ब्रह्म' इति प्रश्ने परममिति विशेषणाभावेऽपि 'ते ब्रह्म तद्विदुः कृत्स्नम्' इति प्रश्नोत्थापके सूत्रे परमत्ववाचिना कृत्स्नपदेन ब्रह्मणो विशेषितत्वादुत्तरेऽपि ब्रह्मण एव परममिति विशेषणं युज्यत एव। प्रश्नेऽपि तच्छब्देन कृत्स्नत्वस्यैव ग्रहात्। ततश्च किं तत्कृत्स्नं ब्रह्मेति प्रश्ने यदक्षरं जीवाख्यं तदेवापेतोपाधिसंबन्धं सत् कृत्स्नं ब्रह्मेति तत्त्वमसीति महावाक्यार्थः प्रतीचो ब्रह्मभावः प्रतिपादितो भवतीति हृद्यम्। तथा स्वोऽनागन्तुको भावः स्वरूपं स्वभावः शुद्धस्त्वंपदार्थः सोऽध्यात्ममुच्यते। भाष्ये तु तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वो भावः स्वभावोऽध्यात्ममुच्यते अध्यात्मशब्देनाभिधीयत इति। विसर्गो देवतोद्देशेन द्रव्यत्यागात्मको यागः स कर्मसंज्ञितः। तमेव विशिनष्टि—**भूतेति**। भूतानां भावः सात्त्विकादिः स्वभावः उद्भवश्च तयोः करणात् भूतभावोद्भवकरः। तथाहि

४ मधुसूदनीव्याख्या ।

तत्रैवोपपत्तेः 'अक्षरमम्बरान्तधृतेः' इति न्यायात्। न लिङ्गाक्षरशब्दस्य वर्णमात्ररूढत्वाच्छ्रुतिलिङ्गाधिकरणन्यायमूलकेन 'रूढिर्योगमपहरति' इति न्यायेन रथकारशब्देन जातिविशेषवत्प्रणवाख्यमक्षरमेव ग्राह्यं तत्रोक्तलिङ्गासंभवात्, 'ओमित्येकाक्षरं ब्रह्म' इति च परेण विशेषणात्, 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायात्, 'वर्षासु रथकार आदधीत' इत्यत्र तु जातिविशेषे नास्त्यसंभव इति विशेषः। अनन्यथासिद्धेन तु लिङ्गेन श्रुतेर्बाधः 'आकाशस्तल्लिङ्गात्' इत्यादौ विवृतः। एतावांस्त्विह विशेषः। अनन्यथासिद्धेन लिङ्गेन श्रुतेर्बाधे यत्र योगः संभवति तत्र स एव गृह्यते मुख्यत्वात्, यथा 'आज्यैः स्तुवते, पृष्ठैः स्तुवते' इत्यादौ। यथा चात्रैवाक्षरशब्दे। यत्र तु योगोऽपि न संभवति तत्र गौणी वृत्तिर्यथाऽऽकाशप्राणादिशब्देषु। आकाशशब्दस्यापि ब्रह्मणि आसमन्तात्काशत इति योगः संभवतीति चेत्स एव गृह्यतामिति पद्मपादीकृतः। तथाच पारमर्षं सूत्रं 'प्रसिद्धेश्च' इति। कृतमत्र विस्तरेण। तदेवं किं तद्ब्रह्मेति निर्णीतम्। अधुना किमध्यात्ममिति निर्णीयते—यदक्षरं ब्रह्मेत्युक्तं तस्यैव स्वभावः स्वो भावः स्वरूपं प्रत्यक्चैतन्यं नतु स्वस्य भाव इति षष्ठीसमासः, लक्षणाप्रसङ्गात्। षष्ठीतत्पुरुषबाधेन कर्मधारयपरिग्रहस्य श्रुतपदार्थान्वयेन निषादस्थपत्यधिकरणसिद्धत्वात्। तस्माच्च ब्रह्मणः संबन्धि किंतु ब्रह्मस्वरूपमेव। आत्मानं देहमधिकृत्य भोक्तृतया वर्तमानमध्यात्ममुच्यतेऽध्यात्मशब्देनाभिधीयते न करणग्राम इत्यर्थः। यागदानहोमात्मकं वैदिकं कर्मैवात्र कर्मशब्देन विवक्षितमिति तृतीयप्रश्नोत्तरमाह। भूतानां भवनधर्मकाणां सर्वेषां स्थावरजङ्गमानां भावमुत्पत्तिमुद्भवं वृद्धिं च करोति यो विसर्गस्त्यागस्तत्तच्छास्त्रविहितो यागदानहोमात्मकः स इह कर्मसंज्ञितः, कर्मशब्देनोक्त इति यावत्। तत्र देवतोद्देशेन द्रव्यत्यागो याग उत्तिष्ठद्धोमो वषट्कारप्रयोगान्तः, स एव उपविष्टहोमः स्वाहाकारप्रयोगान्त आसेचनपर्यन्तो होमः। परस्वत्वापत्तिपर्यन्तः स्वत्वत्यागो दानं, सर्वत्र च त्यागांशोऽनुगतः तस्य च भूतभावोद्भवकरत्वम् 'अग्नौ प्रास्ताहुतिः

५ भाष्योत्कर्षदीपिका ।

शएव तदोतं च प्रोतं चेत्याकाशप्रतिष्ठत्वमुक्त्वा कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यनेन प्रश्नेनेदमक्षरमवतारितं। तथाचोपसंहृतमेतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति। नचेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र संभवति। यदप्योंकार एवेदं सर्वमिति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यम्। तस्मान्न क्षरत्यश्नुते वेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्मेति परममिति विशेषणादक्षरशब्देन जीवप्रधानप्रतिपत्तिभ्रमोऽपि वारितः॥ तृतीयप्रश्नस्योत्तरमाह—भूतभावोद्भवकरः भूतानां भावो भूतभावः तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इति। भाष्ये भूतान्येव भावास्तेषामुद्भवः समुत्पत्तिस्तां करोतीति व्युत्पत्तिं सिद्धवत्कृत्य विधान्तरेण व्युत्पादयति—**भूतानामिति**। भावः सद्भावो वस्तुभाव इति तट्टीकाकाराः। एवंच भूतानां भवनधर्मकाणां भाव उत्पत्तिः उद्भवो वृद्धिश्च तयोः करः भूतभावोद्भवकर इत्यादिव्युत्पत्तिसिद्धवत्कारोऽपि बोध्यः। विसर्जनं विसर्गः देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागः सएव विसर्गलक्षणो यज्ञादिरूपो वेदविहितः कर्म-

६ श्रीधरीव्याख्या ।

शब्देनोच्यत इत्यर्थः। भूतानां जरायुजादीनां भाव उत्पत्तिः उद्भवश्च उत्कृष्टत्वेन भवनमुद्भवः 'आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः

७ अभिनवगुप्ताचार्यव्याख्या ।

वभासनात्स बहिर्भूतभावान्तरावभासनात्मा यो विसर्गः क्रमेण भूतानां ब्रह्मादिप्रमातॄणां भावानां जडानामुद्भवकारी जडाजडवैचित्र्यनिर्भा-

१ क्षर इत्यश्नुतेवेति पाठः.

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

लक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्येतत् । एतस्माद्धि बीजभूताद्वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतान्युद्भवन्ति ॥३॥ अधिभूतमिति । अधिभूतं प्राणिजातमधिकृत्य भवतीति । कोऽसौ क्षरः क्षरतीति क्षरो विनाशी भावो यत्किंचिज्जनिमद्वस्त्वित्यर्थः । पुरुषः पूर्णमनेन सर्वमिति पुरि शयनाद्वा पुरुषः, आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः सोऽधिदैवतम् । अधियज्ञः सर्वयज्ञाभिमानिनी

२ आनन्दगिरिव्याख्या ।

शङ्क्य 'अग्नौ प्रास्ताहुतिः' इत्यादिस्मृतिमनुस्मृत्याह—**एतस्माद्धीति** ॥ ३ ॥ संप्रति प्रश्नत्रयस्योत्तरमाह—**अधिभूतमिति** । अधिभूतं च किं प्रोक्तमित्यस्य प्रतिवचनं अधिभूतं क्षरो भाव इति । तत्राधिभूतपदमनूद्य वाच्यमर्थं कथयति—**अधिभूतमित्यादिना** । तस्य निर्देशमन्तरेण निर्ज्ञातुमशक्यत्वात्प्रश्नद्वारा तन्निर्दिशति—**कोऽसाविति** । कार्यमात्रमत्र संगृहीतमिति वक्तुमुक्तमेव व्यनक्ति—**यत्किंचिदिति** । अधिदैवं किमिति प्रश्ने पुरुषश्चेत्यादिप्रतिवचनं तत्र पुरुषशब्दमनूद्य मुख्यमर्थं तस्योपन्यस्यति—**पुरुष इति** । तस्यैव संभावितमर्थान्तरमाह—**पुरि शयनाद्वेति** । वैराजं देहमासाद्यादित्यमण्डलादिषु दैवतेषु योऽन्तरवस्थितो लिङ्गात्मा व्यष्टिकरणानुग्राहकोऽत्र पुरुषशब्दार्थः स चाधिदैवतमिति स्फुटयति—**आदित्येति** । अधियज्ञः कथमित्यादिप्रश्नं परिहरन्नधियज्ञशब्दार्थ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'बुद्धिः कर्मानुसारिणी' इति कर्मानुसारित्वं भावस्य स्मर्यते । तथा उद्भवोऽपि कर्मत एव स्मर्यते 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति ॥ ३ ॥ क्षरो भावो जनिमद्वस्तु कर्मफलभूतं तत्साधनभूतं च तदधिभूतमित्युच्यते । अधिदैवतं पुरुषः सर्वासु पूर्षु वसतीति सर्वकरणानुग्राहकः सकलदेव-

४ मधुसूदनीव्याख्या ।

सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः । 'ते वा एते आहुती हुते उत्क्रामतः' इत्यादिश्रुतेश्च ॥ ३ ॥ संप्रत्यग्रिमप्रश्नत्रयस्योत्तरमाह—क्षरतीति क्षरो विनाशी भावो यत्किंचिज्जनिमद्वस्तु भूतं प्राणिजातमधिकृत्य भवतीत्यधिभूतमुच्यते । पुरुषो हिरण्यगर्भः समष्टिलिङ्गात्मा व्यष्टिसर्वकरणानुग्राहकः । 'आत्मैवेदमग्र आसीत्पुरुषविधः' इत्युपक्रम्य 'स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः' इत्यादि श्रुत्या प्रतिपादितः । चकारात् 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इत्यादिस्मृत्या च प्रतिपादितः । अधिदैवतं दैवतान्यादित्यादीन्यधिकृत्य चक्षुरादिकरणान्यनुगृह्णातीति तथोच्यते । अधियज्ञः सर्वयज्ञाधिष्ठाता सर्वयज्ञफलदायकश्च । सर्वयज्ञाभिमानिनी विष्णवाख्या देवता । 'यज्ञो वै विष्णुः' इति श्रुतेः । सच विष्णुरधियज्ञोऽहं वासुदेव एव न मद्भिन्नः कश्चित् । अतएव परब्रह्मणः सकाशादत्यन्ताभेदेनैव प्रतिपत्तव्य इति कथमिति व्याख्यातम् । सचात्रास्मिन्मनुष्यदेहे यज्ञरूपेण वर्तते बुद्ध्यादिव्यतिरिक्तो

५ भाष्योत्कर्षदीपिका ।

संज्ञितः कर्मशब्देन मयोक्त इत्यर्थः । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥' इति स्मृतिर्भूतानां चराचराणामुद्भवमेतस्मात्कर्मणो दर्शयति ॥ ३ ॥ अधिभूतं च किं प्रोक्तमिति चतुर्थप्रश्नस्योत्तरमाह—**अधिभूतमिति** । भूतं प्राणिजातमधिकृत्य भवतीत्यधिभूतम् । क्षरो भावः क्षरतीति क्षरो विनाशी भावो यत्किंचिज्जनिमद्वस्त्वित्यर्थः । अधिदैवं किमुच्यत इति पञ्चमप्रश्नस्योत्तरमाह । पुरुषश्चाधिदैवतं पूर्णमनेन सर्वमिति पुरुषः, सर्वासु पूर्षु शयनाद्वा पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानुग्राहकः सोऽधिदैवतं दैवतान्यादित्यादीन्यधिकृत्य चक्षुरादिकरणग्राममनुगृह्णातीत्यधिदैवतमुच्यते । अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदनेति षष्ठप्रश्नस्योत्तरमाह—**अधियज्ञ इति** । यज्ञो हि देहेनोत्पाद्योऽतो देहसमवायी । अतो देहस्तस्याधिकरणं भवति । अस्मिन्देहेऽधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्णवाख्या । 'यज्ञो वै विष्णुः' इति श्रुतेः । सोऽधियज्ञो विष्णुरहमेव कथमित्यवान्तरप्रकारप्रश्नोऽप्यनेनैव परिहृतः ।

६ श्रीधरीव्याख्या ।

प्रजाः' इत्युक्तक्रमेण वृद्धिः तौ भूतभावोद्भवौ करोति यः विसर्गः देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः । सर्वकर्मणामुपलक्षणमेतत् । स कर्मशब्दवाच्यः ॥ ३ ॥ किंच—**अधिभूतमिति** । क्षरो विनश्वरो भावो देहादिपदार्थो भूतं प्राणिमात्रमधिकृत्य भवतीत्यधिभूतमुच्यते । पुरुषो वैराजः सूर्यमण्डलमध्यवर्ती स्वांशभूतसर्वदेवतानामधिपतिरधिदैवतमुच्यते । अधिदैवतमधिष्ठात्री देवता 'स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति श्रुतेः । अत्रास्मिन्देहेऽन्तर्यामित्वेन स्थितोऽहमेवाधियज्ञो

७ अभिनवगुप्ताचार्यव्याख्या ।

सकः । तथा भूतभावस्य विगलितसकलवितथप्रपञ्चस्य सत्यत्वस्योद्भवं करोतीति ॥ ३ ॥ अधिभूतमिति । क्षरति स्रवति परिणामादिधर्मेणेति क्षरः घटादिः पदार्थग्राम उच्यते । पुरुष आत्मा स चाधिदैवतं तत्र सर्वदेवतानां परिनिष्ठितत्वात् । अतएवाशेषयज्ञभोक्तृत्वेन

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

१ श्रीमच्छांकरभाष्यम् ।

देवता विष्णवाख्या 'यज्ञो वै विष्णुः' इति श्रुतेः । स हि विष्णुरहमेवात्रास्मिन्देहे यो यज्ञस्तस्याहमधियज्ञो यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणो भवति देहभृतां वर ॥ ४ ॥ अन्तकाल इति । अन्तकाले च मरणकाले मामेव परमेश्वरं विष्णुं स्मरन्मुक्त्वा परित्यज्य कलेवरं शरीरं यः प्रयाति

२ आनन्दगिरिव्याख्या ।

माह—अधियज्ञ इति । कथमुक्तायां देवतायामधियज्ञशब्दः स्यादित्याशङ्क्य श्रुतिमनुसरन्नाह—यज्ञो वा इति । परैव देवताऽधियज्ञशब्देनोच्यते । सा च ब्रह्मणः सकाशादत्यन्ताभेदेन प्रतिपत्तव्येत्याह—स हि विष्णुरिति । शास्त्रीयव्यवहारभूमिरत्रेत्युक्ता । देहसामानाधिकरण्याद्वात्रेत्यस्य व्याख्यानम्—अस्मिन्निति । किमधियज्ञो बहिरन्तर्वा देहादिति संदेहो मा भूदित्याह—देह इति । ननु यज्ञस्य देहाधिकरणत्वाभावात्कथं तथाविधयज्ञाभिमानिदेवतात्वं भगवता विवक्ष्यते तत्राह—यज्ञो हीति । एतेन तस्य बुद्ध्यादिव्यतिरिक्तत्वमुक्तमवधेयम् । नहि परा देवता दर्शित-रीत्याधियज्ञशब्दिता बुद्ध्यादिष्वन्तर्भावमनुभावयितुमलम् । देहान्बिभ्रतीति देहभृतः सर्वे प्राणिनस्तेषामेव वरः श्रेष्ठः । युक्तं हि भगवता साक्षादेव प्रतिक्षणं संवादं विदधानस्यार्जुनस्य सर्वेभ्यः श्रैष्ठ्यम् ॥ ४ ॥ यत्तु प्रयाणकाले चेत्यादि चोदितं तत्राह—अन्तकाले चेति । मामेवेत्यवधारणेनाध्यात्मादिविशिष्टत्वेन स्मरणं व्यावर्त्यते । विशिष्टस्मरणे हि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तात्मा हिरण्यगर्भः । अधियज्ञो यज्ञाभिमानी विष्णुरन्तर्यामी सोऽहमेव देहस्मि । अत्रास्मिन्देहे देहभृतां वर ॥ ४ ॥ अत्र षट्प्रश्नोत्तरेषु प्रथमे जीवस्य ब्रह्मभाव उक्तः । तं जानतां प्रयाणमेव नास्ति । 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः । द्वितीये शुद्धस्त्वंपदार्थ उक्तस्तज्ज्ञानस्यापि वस्तुतत्त्वविषयत्वान्न तत्र भावनापेक्षास्तीति न भावनाफलभूतकाले तत्प्रत्ययोऽपेक्षते । तृतीयचतुर्थयोस्तु कर्मतत्साधनभूतं च जन्यं वस्तूक्तम् । तत्रापि न भावनापेक्षास्ति । अन्तकाले प्रबलेनैव कर्मणा चित्तस्यावरोधात्तत्साधनफलभूतस्यैव स्मरणावश्यंभावेन तत्र भावनाया वैयर्थ्यात् परिशेषादन्त्ययोरेव कार्यकारणब्रह्मणोः सोपाधिकनिरुपाधिकयोरन्यतरस्य भावना सुदृढा चेदन्त-काले तत्प्रत्ययोऽवश्यंभावीति तयोरन्यतरं रूपं परमात्मानं स्मरन् यः कलेवरं मुक्त्वार्चिरादिमार्गेण प्रयाति स ब्रह्म-लोकप्राप्तिद्वारा क्रमेण मद्भावं मोक्षं यातीत्याह—अन्तकाले चेति । स्पष्टा योजना । नास्त्यत्र संशय इति ।

४ मधुसूदनीव्याख्या ।

विष्णुरूपत्वात् । एतेन स किमस्मिन्देहे ततो बहिर्वा, देहे चेत्कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वेति संदेहो निरस्तः । मनुष्यदेहे च यज्ञस्यावस्थानं यज्ञस्य मनुष्यदेहनिर्वर्त्यत्वात् 'पुरुषो वै यज्ञः पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुते' इत्यादिश्रुतेः । हे देह-भृतां वर सर्वप्राणिनां श्रेष्ठेति संबोधयन् प्रतिक्षणं मत्संभाषणात्कृतकृत्यस्त्वमेतद्बोधयोग्योऽसीति प्रोत्साहयत्यर्जुनं भगवान् । अर्जुनस्य सर्वप्राणिश्रेष्ठत्वं भगवदनुग्रहातिशयभाजनत्वात्प्रसिद्धमेव ॥ ४ ॥ इदानीं प्रयाणकाले च कथं ज्ञेयोऽसीति सप्तमस्य प्रश्नस्योत्तरमाह—मामेव भगवन्तं वासुदेवमधियज्ञं सगुणं निर्गुणं वा परममक्षरं ब्रह्म न त्वध्यात्मादिकं स्मरन्सदा चिन्तयंस्त-

५ भाष्योत्कर्षदीपिका ।

अधियज्ञो बुद्ध्यादिव्यतिरिक्तः परमात्माभिन्नोऽस्मिन्देहे प्रतिपत्तव्य इति । देहान्बिभ्रतीति देहभृतस्तेषां सर्वेषां प्राणिनां वरः श्रेष्ठस्तस्य संबोधनं हे देहभृतां वरेति । उक्तंच भगवता प्रतिक्षणं संवादं संविदधानस्यार्जुनस्य सर्वेभ्यः प्राणिभ्यः श्रैष्ठ्यमिति भाष्यटीकाकाराः । एवंभूतं मां देहभृतां वरस्त्वं प्रतिपत्तुमर्हसीति सूचनार्थं वा संबोधनम् ॥ ४ ॥ प्रयाणकाले चेत्यादिसप्त-मप्रश्नस्योत्तरमाह—अन्तकाल इति । अन्तकाले च प्रयाणकाले । प्राणोत्क्रमणकाले इति यावत् । मामेव परमेश्वरं विष्णुं

६ श्रीधरीव्याख्या ।

यज्ञाधिष्ठात्री देवता यज्ञादिकर्मप्रवर्तकस्तत्फलदाता च कथमित्यस्योत्तरमनेनैवोक्तं द्रष्टव्यम् । अन्तर्यामिणोऽसङ्गत्वादिभिर्गुणैर्जीववैलक्ष-ण्येन देहान्तर्वर्तित्वस्य प्रसिद्धत्वात् । तथाच श्रुतिः—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्व-त्त्यनश्नन्नन्यो अभिचाकशीति' इति । देहभृतां मध्ये श्रेष्ठ इति संबोधयन् त्वमप्येवंभूतमन्तर्यामिणं पराधीनस्वप्रवृत्तिनिवृत्त्यन्वयव्यति-रेकाभ्यां बोद्धुमर्हसीति सूचयति ॥ ४ ॥ प्रयाणकाले च कथं ज्ञेयोऽसीत्यनेन पृष्टमन्तकालज्ञानोपायं तत्फलं च दर्शयति—अन्तकाल

७ अभिनवगुप्ताचार्यव्याख्या ।

यज्ञानवद्यकार्याणि कर्माण्यधिकृत्य यः स्थितः पुरुषोत्तमः सोऽहमेव । अहमेव च देहे स्थित इति प्रश्नद्वयमेकेन यत्नेन निर्णीतम् ॥ ४ ॥ अथ योऽवशिष्टः प्रश्नः कथं प्रयाणकाले ज्ञेयोऽसीति तं निर्णयति । अन्तकालेऽपीति असंशयभित्यन्तम् । न केवलं स्वस्थावस्थायां यावदन्त-

१ श्रीमच्छांकरभाष्यम् ।

**गच्छति स मद्भावं वैष्णवं तत्त्वं याति । नास्ति न विद्यतेऽत्रास्मिन्नर्थे संशयो याति वा न वेति ॥ ५ ॥**

२ आनन्दगिरिव्याख्या ।

चित्तविक्षेपान्न प्रधानस्मरणमपि स्यात् । नच मरणकाले कार्यकरणपारवश्याद्भगवदनुस्मरणासिद्धिः । सर्वदैव नैरन्तर्येणादरधिया भगवति समर्पितचेतसस्तत्कालेऽपि कार्यकरणजातमगणयतो भगवदनुसंधानसिद्धेः । शरीरे तस्मिन्नहंममाभिमानाभावादिति यावत् । प्रयातीत्यत्र प्रकृतशरीरमपादानम् । 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिमाश्रित्याह—नास्तीति । व्यासेध्यं संशयमेवाभिनयति—याति वेति ॥ ५ ॥ अन्तकाले भगवन्तमनुध्यायतो भगव-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सोपाधिकब्रह्मोपास्तिं प्रकृत्य 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति' इति तदुपासकस्य गतिपूर्वकस्यामृतत्वस्य श्रवणात् । यस्तु शुद्धत्वंपदार्थरूपमध्यात्मवस्तुमात्रं वेद असौ ब्रह्मात्मैक्यज्ञानाभावात् 'न तस्य प्राणा उत्क्रामन्ति' इत्येतद्वाक्यविषयो न भवति किंतु शतं चैकाचेत्येतस्यैव विषयः । ननु तस्यानुपासकत्वात्कथमेतदिति चेन्न । 'नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' इति न्यायेन तस्योभयभ्रष्टत्वासंभवात् । कठवल्लीषु निष्कलप्रत्यगात्मविदं केवलयोगिनं प्रकृत्य शतं चैकाचेत्याम्नानाच्च । 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति श्रुतेर्निश्चितार्थानां शोधितत्वंपदार्थानामेव क्रममुक्तिरवगम्यते । नचात्र सुनिश्चितार्था इत्यनेन ब्रह्मात्मैक्यनिश्चयवन्तो ग्रहीतुं शक्याः । तेषां गत्यभावस्य प्रोक्तत्वात् । नाप्युपासकाः असंभवात् । उपासना हि नाम अतस्मिंस्तद्बुद्धिः । यथा शालग्रामे विष्णुबुद्धिरेवं सूत्रविराडन्तर्यामिष्वात्मबुद्धिरिति न तद्वन्तः सुनिश्चितार्था इति वक्तुं शक्यम् । तस्माद्ध्यात्मविदां ब्रह्मात्मैक्यानवगमादनुपासकत्वेनान्त्यप्रत्ययाभावेऽप्यर्चिरादिगतिप्राप्तिरस्तीति सर्वमनवद्यम् ॥ ५ ॥ न

४ मधुसूदनीव्याख्या ।

त्संस्कारपाटवातसमस्तकरणग्रामवैयग्र्यवत्यन्तकालेऽपि स्मरन्कलेवरं मुक्त्वा शरीरेऽहंममाभिमानं त्यक्त्वा प्राणवियोगकाले यः प्रयाति, सगुणध्यानपक्षेऽ'ग्निर्ज्योतिरहः शुक्ल' इत्यादिवक्ष्यमाणेन देवयानमार्गेण पितृयानमार्गात्प्रकर्षेण याति स उपासको मद्भावं मद्रूपतां निर्गुणब्रह्मभावं हिरण्यगर्भलोकभोगान्ते याति आप्नोति । निर्गुणब्रह्मस्मरणपक्षे तु कलेवरं त्यक्त्वा प्रयातीति लोकदृष्ट्यभिप्रायं 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' इति श्रुतेस्तस्य प्राणोत्क्रमणाभावेन गत्यभावात्स मद्भावं साक्षादेव याति । 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः । नास्त्यत्र देहव्यतिरिक्त आत्मनि मद्भावप्राप्तौ वा संशयः । आत्मा देहाद्व्यतिरिक्तो न वा, देहव्यतिरेकेऽपि ईश्वराद्भिन्नो न वेति संदेहो न विद्यते । 'छिद्यन्ते सर्वसंशयाः' इति श्रुतेः । अत्र च कलेवरं मुक्त्वा प्रयातीति देहाद्भिन्नत्वं, मद्भावं यातीति चेश्वरादभिन्नत्वं जीवस्योक्तमिति द्रष्टव्यम् ॥ ५ ॥ अन्तकाले भगवन्तमनुध्यायतो भगवत्प्राप्ति-

५ भाष्योत्कर्षदीपिका ।

स्मरन् । चकारात्सदा भगवद्भावभावित इति ज्ञेयम् । मामेवेति विशेषणेनाध्यात्मादिविशिष्टत्वेन स्मरणं व्यावर्त्यते । विशिष्टस्मरणे हि चित्तविक्षेपान्न प्रधानस्मरणमपि स्यात् । कलेवरं शरीरं मुक्त्वा त्यक्त्वा यः प्रयाति गच्छति स मद्भावं वैष्णवं तत्त्वं याति सगुणब्रह्मचिन्तकश्चेत्क्रमेण, निर्गुणब्रह्मविच्चेत्सद्यः । अस्मिन्पक्षे कलेवरं मुक्त्वेति लोकदृष्ट्यभिप्रायम् । 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' इति श्रुतेः । अत्रास्मिन्नर्थे संशयः मद्भावं याति नवेति नास्ति न विद्यते 'स एतान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते', 'ब्रह्मविदाप्नोति परम्', 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतेः । अत्र केचिन्नास्त्यत्र देहव्यतिरिक्त आत्मनि मद्भावप्राप्तौ वा संशयः । आत्मा देहाद्व्यतिरिक्तो न वा, देहव्यतिरेकेऽपि ईश्वराद्भिन्नो न वेति संदेहो न विद्यते । 'छिद्यन्ते सर्वसंशयाः' इति श्रुतेः । अत्र च कलेवरं मुक्त्वा प्रयातीति देहाद्भिन्नत्वं मद्भावं यातीति चेश्वरादभिन्नत्वं जीवस्योक्तमिति द्रष्टव्यमिति । तत्रेदं वक्तव्यम्—'प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिरि'ति प्रश्नप्रतिवचने देहाद्व्यतिरिक्तो न वेति संशयनिराकरणवर्णनमकाण्डे ताण्डवम् । देहाद्व्यतिरिक्त आत्मेत्यर्थस्यासकृद्व्युत्पादितत्वेन संशयाप्रसक्त्याऽप्रसक्तप्रतिषेधश्च युक्तिभिर्निरूपितेऽर्थेऽपि पुनरुत्पन्नस्य संशयस्यार्थिकार्थेन निवृत्त्यसंभवश्च 'छिद्यन्ते सर्वसंशयाः' इति श्रुतिरपि परावरविद इति पदसत्त्वे उदाहर्तुं योग्येति दिक् ॥ ५ ॥ अन्तकाले मां स्मरन् मामेवैतीति नायं नियमः किंतु यं यं वापि

६ श्रीधरीव्याख्या ।

इति । मामेवोक्तलक्षणमन्तर्यामिरूपं परमेश्वरं स्मरन्देहं त्यक्त्वा यः प्रकर्षेणार्चिरादिमार्गेण याति स मद्भावं मद्रूपतां याति । अत्र च

७ अभिनवगुप्ताचार्यव्याख्या ।

कालेऽपीति मामेवेति व्यवच्छिन्नसकलोपाधिकं कथंचास्ववस्थावस्थायां विनिवृत्तसकलेन्द्रियचेष्टस्य भगवान्स्मृतिपथमुपेयादित्युपायमप्युपदिशति । सर्वावस्थासु व्यावहारिकीष्वपि यस्य भगवत्तत्त्वं न हृदयादपयाति तस्य भगवत्येव सकलकर्मन्यासिनः सततभगवन्मयस्यावश्यं स्वयमेव भगवत्तत्त्वं स्मृतिविषयतां यातीति सदा तद्भावभावितत्वं चात्र हेतुः । अतएवाह येनैव वस्तुना सदा भावितान्तःकरणभावस्तदेव

१ मधुसूदनः.

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥
तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥

१ श्रीमच्छांकरभाष्यम् ।

न मद्विषय एवायं नियमः किं तर्हि—यं यमिति । यं यं वापि यं यं भावं देवताविशेषं स्मरंश्चिन्तयं-स्त्यजति परित्यजत्यन्ते प्राणवियोगकाले कलेवरं तं तमेव स्मृतं भावमेवैति नान्यम् । कौन्तेय, सदा सर्वदा तद्भावभावितस्तस्मिन्भावस्तद्भावः स भावितः स्मर्यमाणतयाभ्यस्तो येन स तद्भावभावितः सन् ॥ ६ ॥ यस्मादेवमन्त्या भावना देहान्तरप्राप्तौ कारणं, तस्मात्सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं

२ आनन्दगिरिव्याख्या ।

प्राप्तिनियमवदन्यमपि तत्काले देवादिविशेषं ध्यायतो देहं त्यजतस्तत्प्राप्तिरवश्यंभाविनीति दर्शयति—नेत्यादिना । कथं पुनरन्तकाले परवशस्य नियतविषयस्मृतिर्भवितुमुत्सहते तत्राह—सदेति । देवादिविशेषस्तस्मिन्निति सप्तम्यर्थः । भावो भावना वासना स भावो भावितः संपादितो येन पुंसा स तथाविधः सन् यं यं भावं स्मरति तं तमेव देहत्या-गादूर्ध्वं गच्छतीति संबन्धः ॥ ६ ॥ सततभावना प्रतिनियतफलप्राप्तिनिमित्तान्त्यप्रत्ययहेतुरित्यङ्गीकृत्यानन्तरश्लोकमव-तारयति—तस्मादिति । विशेषणत्रयवतो भगवदनुस्मरणस्य भगवत्प्राप्तिहेतुत्वं तस्मादित्युच्यते । सर्वेषु कालेष्वादर-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

केवलं कार्यकारणब्रह्मणोरेव भावनान्त्यप्रत्ययवशात्तद्भावप्राप्तिहेतुरपि तु कीटस्य जीवत एव भावनाबलाद्भाव्यवस्तु-भावप्राप्तिर्दृश्यते । नन्दिकेश्वरस्य च स्मर्यते 'स हि महादेवं भावयंस्तत्सारूप्यं देहान्तरं विनैव प्राप्तः' इति योगशा-स्त्रेऽपि प्रसिद्धम् । तत्र किमु वक्तव्यमन्तप्रत्ययवशाद्देहान्तरे भाव्यभावप्राप्तिरस्तीति मत्वा तमेवार्थमन्यत्रापि दर्श-यति—यं यमिति । तद्भावभावितः भाव्याकारवासनया रञ्जित इत्यर्थः ॥ ६ ॥ यस्मादेवं तस्मात्सर्वेषु कालेषु माम-

४ मधुसूदनीव्याख्या ।

[१]नियतेति वदितुमन्यदपि यत्किंचित्काले ध्यायतो देहं त्यजतस्तत्प्राप्तिरवश्यंभाविनीति दर्शयति—न केवलं मां स्मरन्मद्भावं यातीति नियमः किं तर्हि यं यं वापि भावं देवताविशेषं, चकारादन्यदपि यत्किंचिद्वा स्मरंश्चिन्तयन्नन्ते प्राणवियोगकाले कलेवरं त्यजति स तं तमेव स्मर्यमाणं भावमेव नान्यमेति प्राप्नोति । हे कौन्तेयेति पितृष्वस्रपुत्रत्वेन स्नेहातिशयं सूचयति । तेन चाव-श्यानुग्राह्यत्वं तेन च प्रतारणाशङ्काशून्यत्वमिति । अन्तकाले स्मरणोद्यमासंभवेऽपि पूर्वाभ्यासजनिता वासनैव स्मृतिहेतुरित्याह—सदेति । सदा सर्वदा तस्मिन्देवताविशेषादौ भावो भावना वासना तद्भावः स भावितः संपादितो येन स तथा । भाविततद्भाव इत्यर्थः ।

५ भाष्योत्कर्षदीपिका ।

भावं देवताविशेषं स्मरन् चिन्तयन्नन्ते मरणकाले कलेवरं शरीरं त्यजति तं तमेव चिन्तितं भावमेवैति नान्यम् । यद्यपि यंयं चापीति पाठश्चकारादन्यदपि यत्किंचिद्वा स्मरन्निति कैश्चिद्व्याख्यातस्तथापि भाष्यकारैर्व्याख्यातो न भवतीत्युपेक्षणीयः । अन्तकाले विवशस्यापि स्मृतिभवने किं कारणमिति तत्राह । सदा तद्भावभावितः सदा सर्वदा तस्मिन्देवतादिविशेषे भावो भावना वासना स भावितोऽभ्यस्तो येन सः सन् सर्वदा तस्य भावो भावनानुचिन्तनं तेन भावितो वासितचित्त इति व्युत्पत्तिं सिद्धवत्कृत्याचार्यैस्तथा व्युत्पादितमित्यविरोधः । कौन्तेयेति संबोधयन् संबन्धप्रदर्शनेन स्वस्मिन्सर्वदा भावनाभ्याससौलभ्यं

६ श्रीधरीव्याख्या ।

संशयो नास्ति । स्मरणं ज्ञानोपायो मद्भावापत्तिश्च फलमित्यर्थः ॥ ५ ॥ न केवलं मां स्मरन्मद्भावं प्राप्नोतीति नियमः किं तर्हि—यं यमिति । यं यं भावं देवतान्तरं वाऽन्यमपि वाऽन्तकाले स्मरन्देहं त्यजति तं तमेव स्मर्यमाणं भावं प्राप्नोति अन्तकाले भावविशेष-

७ अभिनवगुप्ताचार्यव्याख्या ।

मरणसमये स्मर्यते तद्भाव एवच प्राप्यत इति सर्वथा मत्परम एव मत्प्रेप्सुः स्यादित्यत्र तात्पर्यं नतु यदेवान्ते स्मर्यते तत्तदेवाप्यते इति । एवं हि सति ज्ञानिनोऽपि यावच्छरीरभाविधातुदोषविकलितचित्तवृत्तेर्जडतां प्राप्तस्य तामसस्येव गतिः स्यात् । नचाभ्युपगमोऽत्र युक्तः । प्रमाणभूतश्रुतिविरोधात् । अस्ति हि 'तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् । ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥' इति । 'तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथवा । ज्ञानसंप्राप्तिसमये मुक्तोऽसौ विगतज्वरः ॥' इति । तस्मादेवं विध्यनु-वादौ सदा येन भावितमन्तःकरणं तदेवान्ते प्रयाणानन्तरं प्राप्यते । तच्च स्मर्यते न वेति नात्र निर्बन्धः । अन्वाचयश्चायमपिशब्देन सूचितः । यंयं वापीत्यत्र स्मरणस्यासर्वथाभावं वाशब्दः स्फुटयति । सदा च मत्परमो जनः सर्वथा स्यादिति तात्पर्यं मुनिरेव प्रकट-

१ मधुसूदनः. २ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

**युध्य च युद्धं च स्वधर्मं कुरु । मयि वासुदेवेऽर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिः सन्**

२ आनन्दगिरिव्याख्या ।

**नैरन्तर्याभ्यां सहेति यावत् । भगवदनुस्मरणे विशेषणत्रयसाहित्यं यथाशास्त्रमिति द्योत्यते । भगवदनुसंधानं कर्तव्यमुक्त्वा तेन सह स्वधर्ममपि कुरु युद्धमित्युपदिशता भगवता समुच्चयो ज्ञानकर्मणोरङ्गीकृतो भातीत्याशङ्क्याह— मयीति । मनोबुद्धिगोचरं क्रियाकारकफलजातं सकलमपि ब्रह्मैवेति भावयन्युध्यस्वेति ब्रुवता क्रियादिकलापस्य ब्रह्मातिरिक्तस्याभावाभिलापान्नात्र समुच्चयो विवक्षित इत्यर्थः । उक्तरीत्या स्वधर्ममनुवर्तमानस्य प्रयोजनमाह—मामे-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नुस्मर अन्तकाले मत्स्मृत्या मद्भावप्राप्त्यर्थं । युध्य चेति चकारात्कर्मोपास्त्योः समुच्चयोऽवगम्यते । ज्ञानकर्मसमुच्चयकर्तरीव तदुभयानुष्ठातर्येकस्मिन्नेवाधिकारिणि कर्तृत्वाकर्तृत्वप्रत्ययकृतविरोधाभावात् । मयि अर्पिते मदेकनिष्ठतां नीते मनोबुद्धी येन स मय्यर्पितमनोबुद्धिस्त्वं असंशयं मामेवैष्यसि प्राप्स्यसि । अन्तकाले स्मरणेनेति शेषः ॥ ७ ॥ एत-

४ मधुसूदनीव्याख्या ।

आहिताग्न्यादेराकृतिगणत्वाद्भावितपदस्य परनिपातः । तद्भावेन तच्चिन्तनेन भावितो वासितचित्त इति वा ॥ ६ ॥ यस्मादेवं पूर्वस्मरणाभ्यासजनिताऽन्त्या भावनैव तदानीं परवशस्य देहान्तरप्राप्तौ कारणम्, तस्मान्मद्विषयकार्यभावनोत्पत्त्यर्थं सर्वेषु कालेषु पूर्वमेवादरेण मां सगुणमीश्वरमनुस्मर चिन्तय । यद्यन्तःकरणाशुद्धिवशान्न शक्नोषि सततमनुस्मर्तुं ततोऽन्तःकरणशुद्धये युध्य च । अन्तःकरणशुद्ध्यर्थं युद्धादिकं स्वधर्मं कुरु । युध्येति युध्यस्वेत्यर्थः । एवंच नित्यनैमित्तिककर्मानुष्ठानेनाशुद्धिक्षयान्मयि भगवति वासुदेवेऽर्पिते संकल्पाध्यवसायलक्षणे मनोबुद्धी येन त्वया स त्वमीदृशः सर्वदा मच्चिन्तनपरः सन्मामेवैष्यसि प्राप्स्यसि । असंशयो नात्र संशयो विद्यते । इदं च सगुणब्रह्मचिन्तनमुपासकानामुक्तं तेषामन्त्यभावनासापेक्षत्वात् । निर्गुणब्रह्मज्ञानिनां तु ज्ञानसमकालमेवाज्ञाननिवृत्तिलक्षणाया मुक्तेः सिद्धत्वान्नास्त्यन्त्यभावनापेक्षेति द्रष्टव्यम् ॥ ७ ॥ तदेवं सप्तानामपि प्रश्नानामुत्तरमुक्त्वा प्रयाणकाले

५ भाष्योत्कर्षदीपिका ।

द्योतयति ॥ ६ ॥ यस्मादेवं सदाभ्यस्ता भावनान्तकालेऽपि सैवोद्भूता स्वविषयप्रापिकरी तस्मात् सर्वेषु कालेषु आदरनैरन्तर्याभ्यां मां सगुणं निर्गुणं वा यथाशास्त्रमनुस्मर युध्य च युध्यस्व स्ववर्णधर्मयुद्धं च कुरु । 'न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किंचिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम्' इति विष्णुपुराणे निजवर्णधर्मतोऽचलनं विष्णुभक्तलक्षणमुक्तम् । भगवता च युध्य चेत्युक्तं तेनोपासनाकर्मसमुच्चयः । मयि अर्पिते मनोबुद्धी यस्य तव स त्वमेतादृशः सन्मामेवैष्यसि आगमिष्यसि अत्र संशयो न विद्यते ॥ ७ ॥ किंच चित्तादिसमर्पणविषयभूते एकस्मिन्मयि वासुदेवे विजातीय-

६ श्रीधरीव्याख्या ।

स्मरणे हेतुः सदेति । सर्वदा तस्य भावो भावनानुचिन्तनं तेन भावितो वासितचित्तः ॥ ६ ॥ **तस्मादिति** । यस्मात्पूर्ववासनैवान्तकाले स्मृतिहेतुः, नहि तदा विवशस्य स्मरणोद्यमः संभवति तस्मात्सर्वदा मामनुस्मरानुचिन्तय । संततस्मरणं च चित्तशुद्धिं विना न भवति अतो युध्य च युध्यस्व । चित्तशुद्ध्यर्थं युद्धादिकं स्वधर्मं चानुतिष्ठेत्यर्थः । एवं मय्यर्पितं मनः संकल्पात्मकं बुद्धिश्च व्यवसायात्मिका येन त्वया स त्वं मामेव प्राप्स्यसि । असंशयः संशयोऽत्र नास्ति ॥ ७ ॥ संततस्मरणस्य चाभ्यासोऽन्तरङ्गसाधनमिति दर्श-

७ अभिनवगुप्ताचार्यव्याख्या ।

यति ॥ ५ ॥ ६ ॥ यदाह तस्मात्सर्वेषु कालेषु मामनुस्मरेति तेनेत्थमत्र पदसंगतिः-सदा यंयं भावं स्मरन्कलेवरं त्यजति अन्तेऽपि वा स्मरन् वाग्रहणादस्मरन्वा तंतमेवैति । यतोऽसौ सदा तद्भावेन भावितः । अन्ये तु कलेवरं त्यजति सति अन्ते कलेवरत्यागक्षणे बन्धुपुत्रादिप्रमात्रन्तरागोचरे श्वासायासहिक्कागद्गदादिचेष्टा चरमभाविनि क्षणे शरीरदार्ढ्यबन्धप्रतनूभावाद्देहकृतसुखदुःखमोहबन्धे कालांशे देहत्यजनशब्दवाच्ये यदेव स्मरति तदेव प्रथमसंविदनुगृहीतमस्य रूपं संपद्यते । तादृशि च काले स्मरणस्य कारणं सदा तद्भावभावितत्वमिति त्यजतीति सप्तमी योज्येति प्राक्तन एवार्थः । नन्वेवमन्तकाले किं प्रयोजनं तत्स्मरणेन । क एवमाह प्रयोजनमिति । किं वस्तु वृत्तोपनतमेव तद्भवति तस्मिन्नन्त्ये क्षणे । ननु पुत्रकलत्रबन्धुस्मृतेः शिशिरोदकपानादेर्वान्त्ये क्षणे दृष्टं स्मरणमिति तद्भावापत्तिः स्यात् । मैवम् । नहि सोऽन्त्यः क्षणः स्फुटदेहावस्थानात् । नह्यसावन्त्यः क्षणोऽस्मद्विवक्षितो भवादृशैर्लक्ष्यते । तत्र त्वन्त्ये क्षणे येनैव रूपेण भवितव्यं तत्संस्कारस्य दूरवर्तिनोऽपि देशकालव्यवहितानामप्यानन्तर्यमिति न्यायेन प्रबोधेन भाव्यम् । तद्वशात्तत्स्मरणं तत्स्मृत्या तद्भावप्राप्तिः । कस्यचित्तु देहस्य स्वस्थावस्थायामपि तदेव काकतालीयवशाद्व्यज्यते यथा मृगादेः पुराणे वर्णनं तत्कृतं तु मृगत्वम् । अतएव प्रयाणकालेऽपि च आभित्यादावपि चेति ग्रहणम् । ये हि सदा भगवन्तं भावयन्ति एवं भूत्वा भविष्याम इति तेषां तजः संस्कारोऽन्यसंस्कारप्रतिबन्धीति न्यायेन तस्यामलक्ष्यायामन्तर्दशायां संस्कारान्तरापहस्तनेन संस्कारकृते तत्तत्स्मरणे देहसद्भावक्षणकृते च तस्य स्मरणेऽनन्तरं देहविनिपातक्षणएव कालसंस्कारनिवृत्तेस्तदिदमित्यादिवेद्यविभागानवभासात्संविन्मात्रसतत्त्वपरमेश्वरस्वभावनैव भवतीति श्रीमदभिनवगुप्तगुरूणां

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मामेव यथास्मृतमेष्यस्यागमिष्यस्यसंशयो न संशयोऽत्र विद्यते ॥ ७ ॥ किंच—अभ्यासेति । अभ्यासयोगयुक्तेन मयि चित्तसमर्पणविषयभूत एकस्मिंस्तुल्यप्रत्ययावृत्तिलक्षणो विलक्षणप्रत्ययान्तरितोऽभ्यासः स चाभ्यासो योगस्तेन युक्तं तत्रैव व्यापृतं योगिनश्चेतस्तेन चेतसा नान्यगामिना नान्यत्र विषयान्तरे

२ आनन्दगिरिव्याख्या ।

वेति । उक्तसाधनवशात्फलप्राप्तौ प्रतिबन्धाभावं सूचयति—असंशय इति ॥ ७ ॥ इतश्च पूर्वश्लोकोक्तार्थानुष्ठायी भगवन्तमन्तकाले प्राप्नोतीत्याह—किंचेति । अभ्यासं विभजते—मयीति । नहि चित्तसमर्पणस्य विषयभूतं भगवतोऽर्थान्तरं वस्तु सदस्तीति मन्वानो विशिनष्टि—चित्तेति । अन्तरालकालेऽपि विजातीयप्रत्ययेषु विच्छिद्य विच्छिद्य जायमानेष्वपि सजातीयप्रत्ययावृत्तिरयोगिनोऽपि स्यादित्याशङ्क्याह—विलक्षणेति । अभ्यासाख्येन योगेन युक्तत्वं चेतसो विवृणोति—तत्रैवेति । तृतीयया परामृष्टोऽभ्यासयोगः सप्तम्यापि परामृश्यते । ननु (तु) प्राकृतानां चेतस्तथेत्याशङ्क्य विशिनष्टि—योगिन इति । तच्चेच्चेतो विषयान्तरं परामृशेन्न तर्हि परमपुरुषार्थप्राप्तिहेतुः स्यादि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

देव श्लोकत्रयेण विवृणोति—अभ्यासेति । अभ्यासयोगयुक्तेन 'तत्र स्थितौ यत्नोऽभ्यासः' इति सूत्रितोऽभ्यासः तत्र ध्येये वस्तुनि चित्तस्य स्थिरीकरणार्थो यतः । स च विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहीकरणरूपः सोऽत्राभ्यासः । तत्र भाव्यो विषयः सिद्धः विष्णुप्रतिमादिर्विराडादिर्वा । असिद्धस्तु मानसप्रतिमादिः । तत्रासिद्धे मनसः प्रतिमाकारतासंपादने तत्र स्थैर्यसंपादने चेति विषयभेदाद्विगुणो यत्नः कर्तव्यो भवति । सिद्धे तु चित्तस्थिरीकरणार्थ एक एव यत्नः । तत्र यथा स्वतः स्वच्छः स्फटिको जपाकुसुमोपरागाल्लोहितः स्फटिक इति तत्र लौहित्याध्यासः, तत्प्राबल्यात्तत्रैव स्फटिकधीप्रमोषे पद्मरागत्वाध्यासः, पद्मरागेऽपि चन्द्रिकायामिन्द्रनीलत्वाध्यासस्तत्रैव तदानीमेव किंचिद्दूरस्थे निहीनोपलत्वाध्यास इत्युत्तरोत्तराध्यासक्रमेण शुद्ध एक एव स्फटिकः पञ्चविधो भवति । एवं स्वतःशुद्धं चैतन्यं मायोपरागात्तदेवेश्वरः, मायाप्राबल्ये तस्यैवेश्वरत्वांशप्रमोषे तत्रैव सूत्रात्माध्यासः, सूत्रेऽप्यज्ञानदार्ढ्याद्विराडध्यासः, ततएव विराडेकदेशेषु शरीरादिषु आत्मत्वभ्रमः, तत्र यथा घटान्तर्गतः प्रदीपो घटमात्रं भासयति घटच्छिद्राद्बहिर्गतः किंचित्स्वप्रभया संसृष्टं विषयमवभासयति, सर्वात्मना घटाद्बहिर्गतस्तु कृत्स्नं भवनोदरवर्ति पदार्थजातं प्रकाशयति, तद्वद्देहान्तर्गता चितिर्देहमात्रं भासयति, देहच्छिद्राच्चक्षुरादेर्बहिर्गता सती तत्संनिकृष्टं कंचिद्विषयं रूपादिकमवभासयति, सर्वात्मना गुरूक्तयुक्त्या देहकृतपरिच्छेदाभिमाने त्यक्ते त्वपरिच्छिन्ना सती कृत्स्नं विराडात्मानमवभासयति । यथोक्तं बाह्यग्रन्थेष्वपि 'मणिहुतवहतारासोमसूर्यादयोऽपि क्षितिविषयमिहाल्पं बाह्यमुद्द्योतयन्ति । सहजलयसमुत्थं द्योतयेज्ज्योतिरन्तस्त्रिभुवनमपि सूक्ष्मस्थूलभेदक्रमेण ॥' इति । सहजलयसमुत्थं सहजः स्वाभाविको देहकृतपरिच्छेदाभिमानस्तस्य लयमात्रादेव उत्थितं क्रमेण संकल्पक्रमेण सदीक्षणमात्राभिनिर्वृत्तत्वात्सर्वस्य प्राक्संक-

४ मधुसूदनीव्याख्या ।

भगवदनुस्मरणस्य भगवत्प्राप्तिलक्षणं फलं विवरीतुमारभते—अभ्यासः सजातीयप्रत्ययप्रवाहो मयि विजातीयप्रत्ययानन्तरितः षष्ठे प्राग्व्याख्यातः, स एव योगः समाधिस्तेन युक्तं तत्रैव व्यापृतमात्माकारवृत्तीतरवृत्तिशून्यं यच्चेतस्तेन चेतसाऽभ्यास-

५ भाष्योत्कर्षदीपिका ।

प्रत्ययानन्तरितः सजातीयप्रत्ययावृत्तिलक्षणोऽभ्यासः स चासौ योगः समाधिस्तेन युक्तं तत्रैव व्यापृतम् । प्रत्ययावृत्तिव्यापाराविष्टमितिं यावत् । तेन योगिनश्चेतसाऽनन्यगामिना नान्यस्मिन्विषये गन्तुं शीलमस्य तेन अभ्यासयोगादनन्यगामितां तत्फलभूतां प्राप्तेनेत्याशयः । परमं निरतिशयं पुरुषं पूर्णं दिव्यं द्योतमाने सूर्ये भवं यथा शास्त्राचार्योपदेशमनुध्यायन् याति गच्छति मत्प्राप्त्यर्थं मय्यभ्यासयोगयुक्तेनानन्यगामिना चेतसा परमं दिव्यं पुरुषं वासुदेवं मामनुचिन्तय मच्चिन्तनं हि तव सुलभमिति ध्वनयन्नाह—हे पार्थेति ।

६ श्रीधरीव्याख्या ।

यत्नाह—अभ्यासेति । अभ्यासः सजातीयप्रत्ययप्रवाहः स एव योग उपायस्तेन युक्तेनैकाग्र्येण अतएव नान्यं विषयं गन्तुं शीलं

७ अभिनवगुप्ताचार्यव्याख्या ।

संमतमित्यलं बहुना । असंशयमिति नात्र संदेग्धव्यमिति ॥ ७ ॥ अभ्यासेति । अनुचिन्तयन्निति शरीरभेदानन्तरं विनिवृत्तकलेवरकृतव्यथः

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

गन्तुं शीलमस्येति नान्यगामि तेन नान्यगामिना परमं निरतिशयं पुरुषं दिव्यं दिवि सूर्यमण्डले भवं याति गच्छति, हे पार्थ, अनुचिन्तयञ्शास्त्राचार्योपदेशमनुध्यायन्नित्येतत् ॥ ८ ॥ किंविशिष्टं च पुरुषं यातीत्युच्यते—कविमिति । कविं क्रान्तदर्शिनं सर्वज्ञं पुराणं चिरंतनमनुशासितारं सर्वस्य

२ आनन्दगिरिव्याख्या ।

त्याशङ्क्याह—नान्यगामिनेति । प्रमादिकं विषयान्तरपारवश्यमभ्यनुज्ञातुं ताच्छील्यप्रत्ययस्तेन तात्पर्यादपरामृष्टार्थान्तरेण परमपुरुषनिष्ठेनेत्यर्थः । तदेव पुरुषस्य निरतिशयत्वं यदपरामृष्टाखिलानर्थत्वमनतिशयानन्दत्वं, तच्च प्रागेव व्याख्यातं नेह व्याख्यानमपेक्षते । 'यश्चासावादित्ये' इत्यादिश्रुतिमनुसृत्याह—दिवीति । तत्र विशेषतोऽभिव्यक्तिरेव भवनम् । पूर्वोक्तेन चेतसा यथोक्तं पुरुषमनुचिन्तयन्याति तमेवेति संबन्धः । अनुचिन्तयन्नित्यत्रानुशब्दार्थं व्याचष्टे—शास्त्रेति । चिन्तयन्निति व्याकरोति—ध्यायन्निति ॥ ८ ॥ पुरुषमनुचिन्तयन्निति संबन्धः । चकारात्कया वा नाड्योत्क्रामन्नित्यनुकृष्यते तत्र ध्यानद्वारा प्राप्यस्य पुरुषस्य विशेषणानि दर्शयति—उच्यत इति । क्रान्तदर्शित्वमतीतादेरशेषस्य वस्तुनो दर्शनशालित्वम् । तेन निष्पन्नमर्थमाह—सर्वज्ञमिति । चिरंतनमादिमतः सर्वस्य कार-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ल्पादस्त्वात् । तथाच श्रुतिः 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति । 'दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः' इत्यक्षपादसूत्राच्च । दोषा रागादयः । तदेवं प्रकाशमाने विराजि 'अहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः' इति शास्त्रप्रामाण्यादुपासकेन गृहीतोऽहंग्रहो यद्यपि वस्तुतत्त्वापेक्षया भ्रान्तिरूपस्तथापि स्वाभाविकाद्देहाहंग्रहात्सत्यरूपः यथा स्फटिके हीनोपलत्वग्रहापेक्षया इन्द्रनीलत्वग्रहस्तद्वत् । यथाच स्फटिके प्रणिधीयमाने चक्षुरुत्तरोत्तरपाटवविवृद्धाविन्द्रनीलत्वं बाधित्वा पद्मरागत्वं तद्बाधेन लोहितस्फटिकत्वं तद्बाधेन शुद्धत्वं चावगच्छति, एवं गुरूक्तयुक्त्या प्रत्यगात्मनि प्रणिधीयमानं मनोऽस्य बाह्यं बाह्यं रूपमपोह्य आन्तरे आन्तरे अवतिष्ठते । चरमं विशुद्धं रूपं प्राप्य तु स्वयमेव विलीयते । यथोक्तं 'येन त्यजसि तत्त्यज' इति । येन मनसा त्यजसि विराडादिभावं तदपि मनस्त्यजेत्यर्थः । तदेवं व्यवहारापेक्षया सिद्धेषु विराट्सूत्रान्तर्यामिषु मनसः स्थिरीकरणार्थो यत्नोऽभ्यासस्तत्फलभूतो योगः समाधिर्ध्येयवस्तुन्येव चेतसः स्थैर्यं तेन गुणेन युक्तं यच्चेतस्तेन । नान्यगामिना अनन्यगामिना । नैकधेतिवत्समासः । तेन चेतसा परमं सर्वोत्कृष्टं पुरुषं निरस्ताशेषदोषम् । 'यत्सर्वेषां पुरस्तात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः' इति निर्वचनात् । दिव्यं द्योतमानमनुचिन्तयन्नहमेव भगवान्सर्वात्मा वासुदेव इति सततमाचार्योपदेशमनुध्यायन् तमेव नदीसमुद्रन्यायेन याति हे पार्थ । तथाच श्रुतिः 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्पुण्यपापे विधूय परात्परं पुरुषमुपैति दिव्यम्' इति । परात्सूत्रात् परमन्तर्यामिणम् ॥ ८ ॥ तदेवमुपासनायाः स्वरूपमुक्त्वोपास्यस्य स्वरूपमाह—कविमिति । कविं क्रान्त-

४ मधुसूदनीव्याख्या ।

पाटवेन नान्यगामिना नान्यत्र विषयान्तरे निरोधप्रयत्नं विनापि गन्तुं शीलमस्येति तेन परमं निरतिशयं पुरुषं पूर्णं दिव्यं दिवि द्योतनात्मन्यादित्ये भवं 'यश्चासावादित्ये' इति श्रुतेः याति गच्छति । हे पार्थ, अनुचिन्तयन् शास्त्राचार्योपदेशमनुध्यायन् ॥ ८ ॥ पुनरपि तमेवानुचिन्तयितव्यं गन्तव्यं च पुरुषं विशिनष्टि—कविं क्रान्तदर्शिनं तेनातीताऽनागताद्य-

५ भाष्योत्कर्षदीपिका ।

॥ ८ ॥ किंविशिष्टं च पुरुषं चिन्तयन्यातीत्यत आह । कविं क्रान्तदर्शिनं तेनातीतादिवस्तुज्ञानात्सर्वज्ञं पुराणं सर्वस्य कार्यकारणस्य हेतुत्वेनानादित्वाच्चिरन्तनम् । अनुशासितारमन्तर्यामिरूपेण नियन्तारं अणोरणीयांसं अणोः सूक्ष्मादाकाशादेरप्यणीयांसमतिशयेन

६ श्रीधरीव्याख्या ।

यस्य तेन चेतसा दिव्यं द्योतनात्मकं परमं पुरुषं परमेश्वरमनुचिन्तयन् हे पार्थ, तमेव यातीति ॥ ८ ॥ पुनरप्यनुचिन्तनाय पुरुषं विशिनष्टि—कविमिति द्वाभ्याम् । कविं सर्वज्ञं सर्वविद्यानिर्मातारं पुराणमनादिसिद्धं अनुशासितारं नियन्तारं अणोः सूक्ष्माद-

७ अभिनवगुप्ताचार्यव्याख्या ।

पश्चाद्भगवन्तं चिन्तयतीति ॥ ८ ॥ एवमनुस्मरेदिति । आदित्येति । आदित्यवर्णत्वं वासुदेवतत्त्वस्य परिच्छेदकम् आकृतिकल्पनादिविभ्रान्ति-

१ श्रीमच्छांकरभाष्यम्।

जगतः प्रशासितारमणोः सूक्ष्मादप्यणीयांसं सूक्ष्मतरमनुस्मरेदनुचिन्तयेद्यः कश्चित्सर्वस्य कर्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारं विभज्य दातारमचिन्त्यरूपं नास्य रूपं नियतं विद्यमान-

२ आनन्दगिरिव्याख्या।

णत्वादनादिमित्यर्थः। सूक्ष्ममाकाशादि ततः सूक्ष्मतरं तदुपादानत्वादित्यर्थः। यो यथोक्तमनुचिन्तयेत्स तमेवानुचिन्तयन्यातीति पूर्वेणैव संबन्ध इति योजना। ननु विशिष्टजात्यादिमतो यथोक्तमनुचिन्तनं फलवद्भवति न त्वस्मदादीनामित्याशङ्क्याह—यः कश्चिदिति। 'फलमत उपपत्तेः' इति न्यायेनाह—सर्वस्येति। 'एतदप्रमेयं ध्रुवं' इति श्रुतिमाश्रित्याह—अचिन्त्यरूपमिति। नहि परस्य किंचिदपि रूपादि वस्तुतोऽस्ति अरूपवदेव हीति न्यायात् कल्पितमपि नास्मदादिभिः शक्यते चिन्तयितुमित्याह—नास्येति। मूलकारणादज्ञानात्तत्कार्याच्च पुरस्तादुपरिष्टाच्चव-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

दर्शिनं सर्वज्ञम्। पुराणं चिरन्तनम्। अनुशासितारं जगतोन्तर्यामिणम्। अणोः सूक्ष्मादप्याकाशादेरणीयांसं सूक्ष्मतरं

४ मधुसूदनीव्याख्या।

शेषवस्तुदर्शित्वेन सर्वज्ञं पुराणं चिरन्तनम्। सर्वकारणत्वादनादिमिति यावत्। अनुशासितारं सर्वस्य जगतो नियन्तारं अणोरणीयांसं सूक्ष्मादप्याकाशादेः सूक्ष्मतरं तदुपादानत्वात्। सर्वस्य कर्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारं 'फल-

५ भाष्योत्कर्षदीपिका।

सूक्ष्मं योऽनुचिन्तयेत् स तमेवानुचिन्तयन्यातीति पूर्वेण संबन्धः। य इत्यस्य यः कश्चिदित्यर्थः। एतेन ननु विशिष्टजात्यादिमतो यथोक्तचिन्तनं सफलं भवति नास्मदादेर्यस्य कस्यचिदिति शङ्का निरस्ता। सर्वस्य कर्मफलजातस्य धातारं विधातारं विचित्रतया प्राणिभ्यो विभज्य दातारम्। सहि सर्वाध्यक्षः देवगन्धर्वयक्षरक्षःपितृपिशाचभूतजरायुजाण्डजस्वेदजोद्भिज्जादिलक्षणस्य द्युवियत्पृथिव्यादित्यचन्द्रग्रहनक्षत्रविचित्रस्य विविधप्राण्युपभोगयोग्यस्थानसाधनसंबन्धिनोऽत्यन्तकुशलशिल्पिभिरपि मनसाप्यचिन्त्यनिर्माणस्य जगतः सृष्टिस्थितिसंहारान्विदधद्देशकालविशेषाभिज्ञतया कर्मिणां कर्मानुरूपं फलं संपादयति। ननु कर्मण एवाचिन्त्यप्रभावात्सर्वैश्च फलहेतुत्वेनाभ्युपगमात् तत्तत्फलप्राप्तिरभ्युपगन्तव्या, एवंच कृतं फलप्रदानायेश्वराधिकक्कल्पनयेति चेन्न। प्रत्यक्षविनाशिनोऽभावरूपात्मककर्मणो भावरूपस्य फलस्य प्राप्त्यसंभवात्। ननु कर्म विनश्यत्स्वकालमेव स्वानुरूपं फलमर्जयित्वा विनश्यति। तत्फलमुपात्तमपि भोक्तुरयोग्यत्वाद्वा कर्मान्तरप्रतिबन्धाद्वा भोक्त्रा न भुज्यते भोक्तुर्योग्यताप्राप्त्या प्रतिबन्धापगमे वा तेन भोक्ष्यते इति चेन्न। नहि स्वर्ग आत्मानं लभतामित्यधिकारिणः कामयन्ते किंतु स्वर्गो भोग्योऽस्माकं भवत्वित्यतो यादृशमधिकारिणा काम्यते तादृशस्य फलत्वमिति भोग्यस्य फलत्वेन प्राग्भोक्तृसंबन्धात् भोग्यत्वासिद्धया फलत्वानुपपत्तेः। यत्कालं हि यत्सुखं दुःखं वा आत्मना भुज्यते तस्यैव लोके फलत्वं प्रसिद्धम्। किंच स्वर्गनरकौ तीव्रतमे सुखदुःखे इति तद्विषयेणानुभवेन भोगापरनाम्नावश्यं भवितव्यम्। तस्मादनुभवयोग्ययोरननुभूयमानत्वेनाननुभूयमानशशशृङ्गवन्नास्तित्वं निश्चीयते। ननु कर्मजन्यादपूर्वात्फलमुत्पत्स्यत इति चेन्न। चेतनाऽप्रवर्तितस्य काष्ठलोष्टसमस्याचेतनस्य चेतनप्रवृत्तिंविना फलोत्पत्त्यर्थं प्रवृत्त्यनुपपत्तेः तत्सत्त्वे प्रमाणाभावाच्चार्थापत्तिः प्रमाणमितिचेन्न। ईश्वरसिद्धेरर्थापत्तिक्षयात् 'स वा एष महाजन आत्मान्नादो वसुदानः' इत्येवंजातीयकया श्रुत्यापीश्वर एव कर्मफलहेतुरिति निश्चीयते। ननु 'स्वर्गकामो यजेत' इत्येवमादिषु वाक्येषु धर्मस्य फलदातृत्वं श्रूयते विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इत्यवगम्यमानत्वात्। अन्यथा ह्यननुष्ठातृको योग आपद्येत। तत्रास्योपदेशवैयर्थ्यं स्यात्। श्रुतिप्रामाण्याच्च यथा कर्मफलसंबन्धः श्रुत उपपद्येत तथा कल्पयितव्यः। नचानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत्कालान्तरितं फलं दातुं शक्नोतीत्यतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्था वाऽपूर्वं नामास्तीति तर्क्यते। उपपद्यते चायमर्थ उक्तेन प्रकारेण ईश्वरः फलं ददातीत्यनुपपन्नम्। विचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेर्वैषम्यनैर्घृण्यप्रसङ्गाच्चानुष्ठानवैयर्थ्यापत्तेश्च। तस्माद्धर्मादेव फलमिति चेदुच्यते। 'एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष ह्येवासाधुकर्म कारयति तं यमेभ्यो लोकेभ्य अधो निनीषते' इत्यादिश्रुतिषु धर्माधर्मयोः कारयितृत्वेनेश्वरस्य हेतुत्वं फलदातृत्वं च व्यपदिश्यते। विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते। तथाचेश्वरसिद्धेः कर्मणो वेत्यादि न परिकल्प्यम्। 'स्वर्गकामो यजेत' इत्यादिश्रुतिरपि ईश्वरकारणवादिश्रुत्यनुरोधेन व्याख्येया। तथाच व्याससूत्राणि 'फलमत उपपत्तेः', 'श्रुतत्वाच्च धर्मं जैमिनिरतएव', 'पूर्वं तु बादरायणो हेतुव्यपदेशात्'। फलमत ईश्वरात्मकर्मभिराराधिताद्भवितुमर्हति। कुतः उपपत्तेः। न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः किं तर्हि श्रुतत्वादपीश्वरं फलहेतुं मन्यामहे। तथाहि श्रुतिर्भवति'सवा एष'इत्याद्या। सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति। जैमिनिराचार्यः फलस्य दातारं धर्म्यं मन्यते। अतएव हेतोः श्रुतेरुपपत्तेश्च बादरायणस्तु आचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते। केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलमित्ययं

६ श्रीधरीव्याख्या।

प्यणीयांसमतिसूक्ष्मम् आकाशकालदिग्भ्योऽप्यतिसूक्ष्मतरं सर्वस्य धातारं पोषकं अपरिमितमहिस्वादचिन्त्यरूपम् मलीमसयोर्मनोबुद्ध्यो-

१ श्रीमच्छांकरभाष्यम् ।

मपि केनचिच्चिन्तयितुं शक्यत इत्यचिन्त्यरूपस्तमादित्यवर्णमादित्यस्येव नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं तमसः परस्तादज्ञानलक्षणान्मोहान्धकारात्परं तमनुचिन्तयन्यातीति पूर्वेणैव

२ आनन्दगिरिव्याख्या ।

स्थितं परमार्थतो ज्ञानतत्कार्यास्पृष्टमित्याह—तमस इति ॥ ९ ॥ इतश्च भगवदनुस्मरणं सफलत्वादनुष्ठेयमित्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

योऽनुस्मरेदनुचिन्तयेत् । सर्वस्य कर्मफलस्य धातारं विभागेन प्रदातारम् । अचिन्त्यरूपं नास्य रूपं विद्यमानमपि केनचिच्चिन्तयितुं शक्यम् । आदित्यवर्णं आदित्यस्येव नित्यप्रकाशरूपो वर्णो दीप्यमानता यस्य तं आदित्यवर्णम् । सर्वजगदवभासकमित्यर्थः । तमसः देहेन्द्रियादावनात्मनि आत्माभिमानरूपाऽविद्यातः परस्तात्पराचीनम् । सति देहाभिमाने

४ मधुसूदनीव्याख्या ।

मत उपपत्तेः' इति न्यायात् । न चिन्तयितुं शक्यमपरिमितमहिमत्वेन रूपं यस्य तम्, आदित्यस्येव सकलजगदवभासको वर्णः प्रकाशो यस्य तम्, सर्वस्य जगतोऽवभासकमिति यावत् । अतएव तमसः परस्तात्तमसो मोहान्धकारादज्ञानलक्षणात्परस्तात्, प्रकाशरूपत्वेन तमोविरोधिनमिति यावत् । अनुस्मरेच्चिन्तयेद्यः कश्चिदपि स तं यातीति पूर्वेणैव संबन्धः । स तं परं

५ भाष्योत्कर्षदीपिका ।

पक्षस्तुशब्देन व्यावर्तते। नहि मृत्पिण्डदण्डादयोऽचेतनाश्चेतनकुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय प्रभवन्तो दृष्टाः। कल्पना च दृष्टानुसारिण्येव युक्ता । तस्मादचेतनाधिष्ठितात्केवलादचेतनात्कर्मणस्तथाभूतादपूर्वाद्वा फलमित्यनुपपन्नम् । ननु 'कर्मादि चेतनाधिष्ठितमचेतनत्वान्मृदादिवत्' इत्यनुमानेन सिद्धस्य कर्मादेर्जीवचैतन्याधिष्ठितत्वस्य साधनमिति चेन्न । कर्मस्वरूपसामान्यनियोगादिविशेषविज्ञानशून्यचैतन्यमात्रजीवस्य फलोत्पत्तावनुपयोगात् । फलसिद्धिपूर्वक्षणे शुभस्य कर्मणः सुखमितरस्य दुःखं ज्योतिष्टोमात्स्वर्ग इत्यादिसाक्षात्कारवदधिष्ठितत्वमस्माभिः साध्यते इति सिद्धसाधनस्याभावात् । किंच देवपूजात्मको यागो देवतां न प्रसादयन् फलं प्रसूते इत्यपि दृष्टविरुद्धम् । राजसेवात्मकमाराधनं राजानं प्रसाद्य फलाय कल्पत इति लोके दृष्टत्वात् । तस्माद्दृष्टानुगुण्याय यागादिभिः दानपरिचरणप्रणामाञ्जलिकरणस्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिश्चेश्वरप्रसत्तिरुत्पाद्यते । तथाचेश्वरप्रसादादेव स्थायिनः ( कर्मणः ) फलोत्पत्तेः कृतमपूर्वेण । एवमशुभेनापि कर्मणेश्वरविरोधनं श्रुतिस्मृतिप्रसिद्धं ततः स्थायिनोऽनिष्टफलोत्पत्तिः यथा राजा साधुकारिणमनुगृह्णाति पापकारिणं निगृह्णाति तेन च द्विष्टो रक्तो वा न भवति तथेश्वरोऽपि । ननु प्रधानप्रयोगेणेश्वरः प्रसीदतु अङ्गानुष्ठानं तर्हि किमर्थमिति चेत् । यथाच परमापूर्वे कर्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः । एवं प्रधानाराधनेऽङ्गाराधनानामुपयोगः स्वाम्याराधनइव तदमात्यतत्प्रणयिजनाराधनानामिवेति सर्वं समानम् । तस्माद्दृष्टाविरोधेनेश्वराराधनात्फलं नत्वपूर्वात्कर्मणो वा केवलात् । हेतुव्यपदेशः श्रौतः स्मार्तश्च व्याख्यातः । अचिन्त्यरूपं, 'अरूपवदेव हि तत्प्रधानत्वात्प्रकाशवच्चावैयर्थ्यं, आह च चिन्मात्रम्'इति सूत्रोक्तप्रकारेण वस्तुतः परमेश्वरस्य किंचिदपि रूपं नास्ति । अरूपवदेव हि रूपादिरहितमेव हि ब्रह्मावधारयितव्यं न रूपादिमत् । कस्मात्तत्प्रधानत्वात् । 'अस्थूलमनण्वह्रस्वमदीर्घमशब्दमरूपमव्ययं', 'तदेतद्ब्रह्मापूर्वमनपरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः' इत्येवमादीनां वाक्यानां निराकारब्रह्मप्रधानत्वात् । तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम् । यद्याकाररहितं ब्रह्म तर्ह्याकारवद्विषयाणां श्रुतीनां का गतिरित्यत आह । प्रकाशवच्च । यथा सौरादिप्रकाशो वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धादृजुवक्रादिभावमापन्ने सूर्यादौ तद्भावमिव प्रतिपद्यते तथा ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात्तदाकारतामिव प्रतिपद्यते । तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते । अत आकारवद्विषयाणां श्रुतीनामवैयर्थ्यम् । आहच श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति । यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथा ब्रह्मणश्चैतन्यमेव तु निरन्तरं स्वरूपं नतु चैतन्यादन्यदन्तर्बहिर्वा । दर्शयति च श्रुतिः परप्रतिषेधेन ब्रह्मणो निर्विशेषत्वं 'अथात आदेशो नेतिनेतीति', 'अन्यदेव तद्विदितादथो अविदितादधि', 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्येवमाद्या । बाष्कलिना च बाध्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते । 'सहोवाचाधीहि भो इति स ह तूष्णींबभूव तं ह द्वितीये वा तृतीये वाऽवचन उवाच ब्रूमः खलु त्वं तु न विजानास्युपशान्तोऽयमात्मा'इति । अपिच स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते । 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते । अनादिमत्परंब्रह्म न सत्तन्नासदुच्यते' । 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैव मां ज्ञातुमर्हसि' इति । एवं च न वास्तवं परमात्मनि रूपादिकं किंचिदस्ति । उपासनार्थं विद्यमानमपि परमेश्वरस्य काल्पनिकं रूपं न केनचिच्चिन्तयितुं शक्यत इत्यचिन्त्यरूपं स्वयंप्रकाशस्यादित्यस्येव नित्यचैतन्यस्वप्रकाशरूपो वर्णो यस्य तं तमसोऽज्ञानलक्षणान्मोहान्धकारात्परस्तादुपरिष्टाद्वा-

६ श्रीधरीव्याख्या ।

रगोचरं आदित्यवत्स्वपरप्रकाशात्मको वर्णः स्वरूपं यस्य तं तमसः प्रकृतेः परस्ताद्वर्तमानं 'वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः

प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्स तं परं पुरुषमुपैति दिव्यम् ॥ १० ॥

१ श्रीमच्छांकरभाष्यम् ।

संबन्धः ॥ ९ ॥ किंच प्रयाणकाले मरणकाले मनसाऽचलेन प्रचलनवर्जितेन भक्त्या युक्तो भजनं भक्तिस्तया युक्तो योगबलेन चैव योगस्य बलं योगबलं तेन समाधिजसंस्कारप्रचयजनितचित्तस्थैर्यलक्षणं योगबलं तेन च युक्त इत्यर्थः । पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं तत ऊर्ध्वगामिन्या नाड्या

२ आनन्दगिरिव्याख्या ।

किंचेति । कदा तदनुस्मरणे प्रयत्नातिरेकोऽभ्यर्थ्यते तत्राह—प्रयाणकाल इति । कथं तदनुस्मरणमित्युपकरणकलापमपेक्ष्यमाणं प्रत्याह—मनसेति । योऽनुस्मरेत्स किमुपैति तत्राह—स तमिति । मरणकाले क्लेशबाहुल्येऽपि प्राचीनाभ्यासप्रसादासादितबुद्धिवैभवो भगवन्तमनुस्मरन्यथास्मृतमेव देहाभिमानविगमानन्तरमुपागच्छतीत्यर्थः । भगवदनुस्मरणस्य साधनं मनसैवानुद्रष्टव्यमिति श्रुत्युपदिष्टमाचष्टे—मनसेति । तस्य चञ्चलत्वान्न स्थैर्यमीश्वरे सिध्यति तत्कथं तेन तदनुस्मरणमित्याशङ्क्याह—अचलेनेति । ईश्वरानुस्मरणे प्रयत्नेन प्रवर्तितं विषयविमुखं तस्मिन्नेवानुस्मरणयोग्यपौनःपुन्येन प्रवृत्त्या निश्चलीकृतं ततश्चलनविकलं तेनेति व्याचष्टे—अचलेनेति । संप्रत्यनुस्मरणाधिकारिणं विशिनष्टि—भक्त्येति । परमेश्वरे परेण प्रेम्णा सहितो विषयान्तरविमुखोऽनुस्मर्तव्य इत्यर्थः । योगबलमेव स्फोरयति—समाधिजेति । योगः समाधिश्चित्तस्य विषयान्तरवृत्तिनिरोधेन परस्मिन्नेव स्थापनं तस्य बलं संस्कारप्रचयो ध्येयैकाग्र्यकरणं तेन तत्रैव स्थैर्यमित्यर्थः । चकारसूचितमन्वयमन्वाचष्टे—तेन चेति । यत्तु कया नाड्योत्क्रामन्यातीति । तत्राह—पूर्वमिति । चित्तं हि स्वभावतो विषयेषु व्यापृतं तेभ्यो विमुखीकृत्य हृदये पुण्डरीकाकारे परमात्मस्थाने यत्नतः स्थापनीयम् । 'अथ यदिदमस्मिन्ब्रह्मपुरे' इत्यादिश्रुतेस्तत्र चित्तं वशीकृत्यादावनन्तरं कर्तव्यमुपदिशति—तत इति । इडापिङ्गले दक्षिणोत्तरे नाड्यौ हृदयान्निःसृते निरुध्य तस्मादेव हृदयाग्राहूर्ध्वगमनशीलया सुषुम्नया नाड्या हार्दं प्राणमानीय कण्ठावलम्बितस्तनसदृशं मांसखण्डं प्रापय्य तेनाध्वना भ्रुवोर्मध्ये तमावेश्याप्रमाद-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

न प्रकाशते, योगयुक्त्या त्यक्ते तु तस्मिन् स्वयमेव प्रकाशत इत्यर्थः ॥ ९ ॥ उपासनायाः फलमाह—प्रयाणेति । प्रयाणकाले मनसाऽचलेन वृत्त्यन्तरवर्जितेन भक्त्या भगवति वासुदेवे आराध्यत्वबुद्ध्या युक्तो योगबलेन योगो मनःप्राणेन्द्रियक्रियानिरोधो हृदयपुण्डरीके तेषां वशीकरणमित्यर्थः । तस्यैव बलेन च युक्तो भूमिकाजयक्रमेण प्रागेव मूलाधारादिब्रह्मरन्ध्रान्तस्थानेषु आरोहावरोहक्रमेण संचारितपवनोऽन्तकाले भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्य सुषुम्नया नाड्या मूलाधारादुत्थापनपूर्वकं सम्यक् निवेश्य स्थापयित्वा । स्थापनप्रयोजनं तु अन्यविस्मरणपूर्वकं दिव्यपुरुषचिन्तनम् । तच्च भ्रूमध्यादुपर्युन्नीयमाने वायौ मनो मूर्च्छामापद्यत इति तस्यामवस्थायां न भवतीत्यन्त्यप्रत्ययस्तत्रैव संपाद्यस्ततोऽर्चिरादिमार्गपर्वणा अमानवस्य पुरुषस्य स्थानविशेषप्रापकस्य प्राप्यस्थानस्य च तस्मिन्नेव स्मरणं कर्तव्यम् । तद्वासनावासितं मनो भ्रूमध्याद्योगिना ऊर्ध्वया नाड्या उत्क्षिप्ते प्राणे मुक्तेषुवद्ब्रह्माण्डखर्परं भित्त्वा प्रचलिते सति लब्धवृत्तिकं भूत्वा पूर्वसंस्कारप्राबल्याद्योगमाहात्म्याच्च दिव्योपाध्युपेतमर्चिरादिपर्वदेवताभिरभिपूज्यमानमुत्तरोत्तरं स्थानं प्रत्यतिवाह्यमानममानवेन च पुरुषेण संगच्छमानं तेन च यथाभिलषितं स्थानं प्रापितमात्मानं पश्यति । तदिदमुक्तं भ्रुवोर्मध्ये सम्यक् प्राणमावेश्येति । स एवं कृत्वा योगी कविं पुराणमित्युक्तलक्षणं परं पुरुषं हिरण्यगर्भाख्यं

४ मधुसूदनीव्याख्या ।

पुरुषमुपैति दिव्यमिति परेण वा संबन्धः ॥ ९ ॥ कदा तदाऽनुस्मरणे प्रयत्नातिरेकोऽभ्यर्थ्यते तदाह—प्रयाणकालेऽन्तकाले अचलेन एकाग्रेण मनसा तं पुरुषं, योऽनुस्मरेदित्यनुवर्तते । कीदृशः । भक्त्या परमेश्वरविषयेण परमेण प्रेम्णा युक्तः । योगस्य समाधेर्बलेन तज्जनितसंस्कारसमूहेन व्युत्थानसंस्कारविरोधिना च युक्तम् । एवं प्रथमं हृदयपुण्डरीके वशीकृत्य तत ऊर्ध्वगामिन्या सुषुम्नया नाड्या गुरूपदिष्टमार्गेण भूमिजयक्रमेण भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तो ब्रह्मरन्ध्रा-

५ भाष्योत्कर्षदीपिका ।

वस्थितम् । परमिति यावत् । परमार्थतो मूलाज्ञानतत्कार्यास्पृष्टमित्यर्थः ॥ ९ ॥ एवं चिन्तनाभ्यासी प्रयाणकाले मरणकाले अचलेन तत्तद्विषयंप्रति गमनं चलनं तद्वर्जितेन भगवतो वासुदेवस्योक्तविशेषणविशिष्टस्य भजनं भक्तिस्तया युक्तो योगबलं

६ श्रीधरीव्याख्या ।

परस्तात्' इति श्रुतिः ॥ ९ ॥ सप्रपञ्चप्रकृतिं भित्त्वा यस्तिष्ठति एवंभूतं पुरुषमन्तकाले भक्तियुक्तो निश्चलेन विक्षेपरहितेन मनसा योऽनु-

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम् ।

भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः सन्स एवं बुद्धिमान्योगी कविं पुराणमित्यादिलक्षणं तं परं पुरुषमुपैति प्रतिपद्यते । दिव्यं द्योतनात्मकम् ॥ १० ॥ योगमार्गानुगमनेनैव ब्रह्मविद्यामन्तरेणापि ब्रह्म प्राप्यत इत्येवं प्राप्त इदमुच्यते । पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्याभिधानं करोति भगवान्—यदक्षरमिति । यदक्षरं

२ आनन्दगिरिव्याख्या ।

वान्ब्रह्मरन्ध्राद्विनिष्क्रम्य कविं पुराणमित्यादिविशेषणं परमपुरुषमुपगच्छतीत्यर्थः । भूमिजयक्रमेणेत्यत्र भूम्यादीनां पञ्चानां भूतानां जयो वशीकरणं तस्य तस्य भूतस्य स्वाधीनचेष्टावैशिष्ट्यं तद्वारेणेत्येतदुच्यते । स तमित्यादि व्याचष्टे—स एवमिति ॥ १० ॥ येन केनचिन्मन्त्रादिना ध्यानकाले भगवदनुस्मरणे प्राप्ते सत्यभिधानत्वे नियन्तुं स्मर्तव्यत्वेन प्रकृतपरमपुरुषस्य त्रैविद्यवृद्धप्रसिद्ध्या प्रामाणिकत्वमाह—पुनरपीति । उपायो वक्ष्यमाण ओङ्कारः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सर्वस्य भूतजातस्य जनयितारं नारायणादिशब्दप्रतिपाद्यमुपैति समीपे प्राप्नोति । तल्लोकं प्राप्नोतीत्यर्थः । नहि पौराणिकानामिव वैदिकानां मते ब्रह्मविष्णुरुद्रलोकानामुपर्युपरि कल्पनास्ति किंतर्हि सर्वे हिरण्यगर्भलोकाख्ये सत्यलोक एवान्तर्भवन्ति । 'पराहि सोपासनकर्मोर्जितिर्हिरण्यगर्भप्राप्यता' इति बृहदारण्यके तद्भाष्यादौ च स्पष्टम् ॥ १० ॥ भ्रुवोर्मध्ये प्राणमावेश्येत्युक्तं तत्किं कृत्वा कर्तव्यं, तत्कृत्वा च किं कर्तव्यमित्येतद्द्वयं वदिष्यंस्तत्र प्रतीकत्वेन चिन्त्यं प्रणवं तावद्वाच्यवाचकयोरभेदविवक्षया स्तौति—यदक्षरं प्रणवाख्यं वाचकं वेदविदो वेदादौ वदन्ति । यद्वा यदक्षरं ब्रह्म तद्वाच्यं 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्' इत्येवंलक्षणं वा वेदविद उपनिषद्विदो वदन्ति, यच्च यतयो विशन्ति ब्रह्मप्रतीकत्वेन शरणीकुर्वन्ति, पक्षे सम्यग्दर्शने सति सरित्सागरन्यायेन यत्प्रविशन्ति यतयः । यत्

४ मधुसूदनीव्याख्या ।

दुत्क्रम्य स एवमुपासकस्तं 'कविं पुराणमनुशासितारम्' इत्यादिलक्षणं परं पुरुषं दिव्यं द्योतनात्मकमुपैति प्रतिपद्यते ॥ १० ॥ इदानीं येनकेनचिदभिधानेन ध्यानकाले भगवदनुस्मरणे प्राप्ते 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यादिश्रुतिप्रतिपादितत्वेन प्रणवेनैवाभिधानेन तदनुस्मरणं कर्तव्यं नान्येन मन्त्रादिनेति नियन्तुमुपक्रमते—यदक्षरमविनाशि ओंकाराख्यं ब्रह्म वेदविदो वदन्ति 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्' इत्यादिवचनैः सर्वविशेषनिवर्तनेन प्रतिपादयन्ति । न केवलं प्रमाणकुशलैरेव प्रतिपन्नं किंतु मुक्तोपसृप्यतया तैरप्यनुभूतमित्याह—विशन्ति स्वरूपतया सम्यग्दर्शनेन यदक्षरं यतयो यत्नशीलाः संन्यासिनो वीतरागा निस्पृहाः । न केवलं सिद्धैरनुभूतं साधकानामपि सर्वोऽपि प्रयासस्तदर्थ इत्याह—यदिच्छन्तो ज्ञातुं नैष्ठिका ब्रह्मचारिणो ब्रह्मचर्यं गुरुकुलवासादि तपश्चरन्ति यावज्जीवं तदक्षराख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संक्षेपेणाहं प्रवक्ष्ये प्रकर्षेण कथ-

५ भाष्योत्कर्षदीपिका ।

समाधिजसंस्कारजनितं चित्तस्थैर्यलक्षणं तेन च युक्तः पूर्वं हृदयपुण्डरीके चित्तं वशीकृत्य तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः सन् स एवंविद्वान् यः कविं पुराणमित्यादिलक्षणः तं परं पुरुषमुपैति प्रतिपद्यते ॥ १० ॥ इदानीं येन केनचिन्मन्त्रादिना ध्यानकाले भगवदनुस्मरणे प्राप्ते 'स यो ह वैतद्भगवन्मनुष्येष्वाप्रायणं तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयति तस्मै सहोवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत', 'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' । 'अन्यत्र धर्मादन्यत्राधर्मात्' इतिचोपक्रम्य 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यादिवचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च परब्रह्मप्राप्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योंकारोपासनस्य कालान्तरमुक्तिफलं यदुक्तं तदेवेहापीत्योंकारेण भगवान्स्मर्तव्य इत्याशयेनाह—यदित्यादिना । यदक्षरं न क्षरतीत्यक्षरं अविनाशि वेदविदो

६ श्रीधरीव्याख्या ।

स्मरेत् । मनोनैश्चल्ये हेतुः योगबलेन सम्यक्सुषुम्नामार्गेण भ्रुवोर्मध्ये प्राणमावेश्येति । स तं परं पुरुषं परात्मस्वरूपं दिव्यं द्योतनात्मकं प्राप्नोति ॥ १० ॥ केवलादभ्यासयोगादपि प्रणवाधारमभ्यासमन्तरङ्गं विधित्सुः प्रतिजानीते—यदक्षरमिति । यदक्षरं वेदान्तज्ञा

७ अभिनवगुप्ताचार्यव्याख्या ।

भयमोहतमसोऽतीतत्वाद्रविरवेनोपमानमित्याशयः ॥ ९ ॥ प्रयाण इति । भ्रुवोर्मध्ये इति प्राग्वत् ॥ १० ॥ यदक्षरमिति । संग्रहेणा-

१ श्रीमच्छांकरभाष्यम्।

न क्षरतीत्यक्षरमविनाशि वेदविदो वेदार्थज्ञा वदन्ति 'तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति श्रुतेः। सर्वविशेषनिवर्तकत्वेनाभिवदन्त्यस्थूलमनणिवत्यादि। किंच विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यद्यतयो यतनशीलाः संन्यासिनो वीतरागा विगतो रागो येभ्यस्ते वीतरागाः। यच्चाक्षरमिच्छन्तो ज्ञातुमिति वाक्यशेषः। ब्रह्मचर्यं गुरौ चरन्ति तत्ते पदं तदक्षराख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संग्रहः संक्षेपस्तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥ ११ ॥ 'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति तस्मै सहोवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इत्यादिना वचनेन 'अन्यत्र धर्मादन्यत्राधर्मात्' इति चोपक्रम्य 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्यो-

२ आनन्दगिरिव्याख्या।

अविषये प्रतीचि ब्रह्मणि वेदार्थविदामपि कथं वचनमित्याशङ्क्याविषयत्वमत्यक्त्वैवेति मत्वा श्रुतिमुदाहरति—**तद्वेति**। तथापि तस्मिन्नविषये सर्वविशेषशून्ये वचनमनुचितमित्याशङ्क्याह—**सर्वेति**। न केवलं विद्वदनुभवसिद्धं यथोक्तं ब्रह्म किंतु मुक्तोपसृप्यतया मुक्तानामपि प्रसिद्धमित्याह—**किंचेति**। केषां पुनः संन्यासित्वं तदाह—**वीतरागा इति**। ज्ञानार्थं ब्रह्मचर्यविधानादपि ब्रह्म ज्ञेयत्वेन प्रसिद्धमित्याह—**यच्चेति**। कथं तर्हि यथोक्तं ब्रह्म मम ज्ञातुं शक्यमित्याकुलितचेतसमर्जुनं प्रत्याह—**तत्ते पदमिति** ॥ ११ ॥ वक्ष्यमाणेनोपायेनेत्युक्तं व्यक्तीकुर्वन्नोंकारद्वारा ब्रह्मोपासनं श्रुत्युक्तमनुक्रामति—**स यो हेति**। सत्यकामेनाभिध्यानफलं जिज्ञासुना भगवन्निति पिप्पलादः संबोध्याभिमुखीक्रियते। निपातौ तु प्रसिद्धमर्थमेव द्योतयन्तावभिध्यानस्य फलत्वेन कर्तव्यत्वमावेदयतः। मनुष्येषु मध्ये स योऽधिकृतो मनुष्यस्तत्प्रसिद्धमभिध्यानं यथा सिध्यति तथा सर्ववेदसारभूतमोङ्कारमाभिमुख्येन ध्यायीत। तच्चाभिध्यानमाप्रयाणादिति न्यायेन मरणान्तमनुष्ठेयम्। स चैवमनुतिष्ठन्प्रकृतेनाभिध्यानेन लोकानां जेतव्यानां बहुत्वात्कतमं लोकं जयतीति प्रश्नं पृष्टवते सत्यकामाय पिप्पलादनामा किलाचार्यः प्रतिवचनं प्रोवाच। तत्र प्रथममभिध्येयमोंकारं परापरब्रह्मत्वेन महीकरोति—**एतद्वा इति**। त्रिमात्रेणाकारोकारमकारात्मकेनेति यावत्। योऽभिध्यायीत तमेव यथाभिध्यातं पुरुषमधिगच्छतीत्यादिवचनेनोपासनमोंकारस्योक्तमित्यर्थः। प्रश्नश्रुतिवत्कठवल्ली च तत्रैवार्थे प्रवृत्तेत्याह—**अन्यत्रेति**। अव्यवधानेनोपनिषदां व्यवधानेन च कर्मश्रुतीनां परस्मिन्नात्मनि पर्यवसानं दर्शयति—**सर्वे इति**। तपसामपि सर्वेषां चित्तशुद्धिद्वारा तत्रैव पर्यवसानमित्याह—**तपांसीति**।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

अक्षरमिच्छन्तो ब्रह्मचर्यं चरन्तीति पक्षद्वयेऽपि समानम्। तत्ते पदं वर्णत्रयात्मकं पदनीयं वा स्थानं विष्णोः परमं पदं संग्रहेण प्रवक्ष्ये। अयं च वाच्यवाचकयोरभेदः श्रुतिच्छायया गम्यते। 'अन्यत्र धर्मादन्यत्राधर्मात्' इति सर्वधर्मातीतं ब्रह्म प्रकृत्य 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्योंकारेणोपसंहारात्। तत्फलं च प्रतीकभावात्। ओंकारं प्रतीकत्वेन प्रकल्प्य तद्द्वारा शुद्धं शबलं वा ब्रह्म प्रतिपत्तव्यम्। तथाच श्रुत्यन्तरे 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्युपक्रम्य 'तस्मा-

४ मधुसूदनीव्याख्या।

यिष्यामि यथा तव बोधो भवति तथा। अतस्तदक्षरं कथं मया ज्ञेयमित्याकुलो माभूरित्यभिप्रायः। अत्र च परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तमधिगच्छति' इत्यादिवचनैर्मन्दमध्यमबुद्धीनां क्रममुक्तिफलकमुपासनमुक्तं तदेवेहापि विवक्षितं भगवता। अतो योगधारणासहितमोंकारोपासनं तत्फलं

५ भाष्योत्कर्षदीपिका।

वेदार्थज्ञा वदन्ति। 'तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति श्रुतेः। 'अस्थूलमनण्वह्रस्वमदीर्घम्', 'अशब्दमस्पर्शमरूपमव्ययम्' इत्यादिना सर्वविशेषनिवृत्तत्वेनाभिवदन्तीत्यर्थः। न केवलमभिवदन्त्येवापि तु सम्यग्दर्शनप्राप्तौ यतयो यत्नशीलाः संन्यासिनो वीतः अपगतो राग इति उपलक्षणं रागादिर्येभ्यस्ते वीतरागाः। रागस्यैवोपादानं तु द्वेषादीनां मूलभूतो राग एवेत्यभिप्रायेण। यद्विशन्ति प्रविशन्ति सम्यग्ज्ञानप्राप्तौ सत्यां यदिच्छन्तो ज्ञातुमिति शेषः। ब्रह्मचर्यं गुरौ चरन्ति 'तदे-

६ श्रीधरीव्याख्या।

वदन्ति 'एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इति श्रुतेः। वीतो रागो येभ्यस्ते वीतरागा यतयः प्रयत्नवन्तो यद्विशन्ति। यच्च ज्ञातुमिच्छन्तो गुरुकुले ब्रह्मचर्यं चरन्ति। तत्ते तुभ्यं पदं पद्यते गम्यत इति पदं प्राप्यं संग्रहेण संक्षेपेण

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मित्येतत्' इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योंकारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्तदेवेहापि 'कविं पुराणमनुशासितारं', 'यदक्षरं वेदविदो वदन्ति' इति चोपन्यस्तस्य च परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योंकारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यं प्रसक्तानुप्रसक्तं च यत्किंचिदित्येवमर्थ उत्तरो ग्रन्थ आरभ्यते—सर्वेति । सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराण्युपलब्धौ तानि सर्वाणि संयम्य संयमनं कृत्वा मनो हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा निष्प्रचारमापाद्य तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वमारुह्य

२ आनन्दगिरिव्याख्या ।

तस्यैव च ज्ञानार्थमष्टाङ्गं ब्रह्मचर्यं तत्र तत्र विहितमित्याह—यदिच्छन्त इति । तस्य पदनीयस्य ब्रह्मणः संक्षेपेण कथनमोंकारद्वारकमिति कथयति—ओमित्येतदिति । उदाहृतवचनानां तात्पर्यं दर्शयति—परस्येति । तस्य वाचकरूपेण वा तस्यैव प्रतीकरूपेण वा विवक्षितस्योपासनं यथोक्तैर्वचनैरुक्तमिति संबन्धः । ननु परस्मिन्ब्रह्मणि तत्त्वमस्यादिवाक्यादेवं प्रतिपत्तिरधिकारिणो भविष्यति किमित्युपासनमोङ्कारस्योपन्यस्यते तत्राह—परेति । यद्यपि विशिष्टस्याधिकारिणो विनैवोपासनमुपनिषद्भ्यो ब्रह्मणि प्रतिपत्तिरुत्पद्यते तथापि मन्दानां मध्यमानां च तद्धीहेतुत्वेनोङ्कारो विवक्षितस्तच्चोपासनं ब्रह्मदृष्ट्या श्रुतिभिरुपदिष्टमित्यर्थः । तस्य क्रममुक्तिफलत्वादनुष्ठेयत्वं सूचयति—कालान्तरेति । भवत्वेवं श्रुतीनां प्रवृत्तिस्तावता प्रकृते किमायातमित्याशङ्क्याह—उक्तं यदिति । तदेवेहापि वक्तव्यमित्युत्तरेण संबन्धः । उपासनमेवोपास्योपन्यासद्वारा स्फोरयति—कविमित्यादिना । पूर्वोक्तरूपेणेत्यभिधानत्वेन प्रतीकत्वेन चेत्यर्थः । श्रौतस्योपासनस्यानूद्यमानस्य सोपस्करत्वं संगिरते—योगेति । तर्हि कथम्—'अनन्यचेताः सततम्' इत्यादि वक्ष्यते तत्राह—प्रसक्तेति । ओंकारोपासनं प्रसक्तं तदनन्तरं तत्फलमनुप्रसक्तं तद्द्वारा चापुनरावृत्त्यादि वक्तव्यकोटिनिविष्टमित्यर्थः । उक्तेऽर्थे समनन्तरग्रन्थमुत्थापयति—इत्येवमर्थ इति । श्रोत्रादीनां कुत्र द्वारत्वं तत्राह—उपलब्धाविति । तेषां संयमनं विषयेषु प्रवृत्तानां दोषदर्शनद्वारा तेभ्यो वैमुख्यापादनम् । कोऽयं मनसो हृदये निरोधस्तत्राह—निष्प्रचारमिति । मनसो विषयाकारवृत्तिं निरुध्य हृदि वशीकृतस्य कार्यं दर्शयति—तत्रेति । ऊर्ध्वमित्यत्रापि हृदयादिति संबध्यते । सर्वाण्युपलब्धिद्वाराणि श्रोत्रादीनि संनिरुध्य वायुमपि सर्वतो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

देवंविद्वानेतेनैवायतनेनैकतरमन्वेति' इति दृष्टम् । आयतनं शालग्रामवत्प्रतीकं तेन ॥ ११ ॥ भ्रुवोर्मध्ये कथं प्राणमावेशयेदित्यत आह—सर्वेति । सर्वाणि शब्दादिविषयग्रहणद्वाराणीन्द्रियाणि संयम्य निगृह्य तथा हृदि मनोऽपि निरुध्य तेषां कञ्चुकभूतं प्राणं मूर्धन्यनाड्या सुषुम्नाख्यया मूर्ध्नि भ्रुवोर्मध्ये आधाय कथं योगधारणां योगशास्त्रोक्तां

४ मधुसूदनीव्याख्या ।

स्वस्वरूपं ततोऽपुनरावृत्तिस्तन्मार्गश्चेत्यर्थजातमुच्यते यावदध्यायसमाप्ति ॥ ११ ॥ तत्र प्रवक्ष्य इति प्रतिज्ञातमर्थं सोपकरणमाह द्वाभ्याम्—सर्वाणीन्द्रियद्वाराणि संयम्य स्वस्वविषयेभ्यः प्रत्याहृत्य विषयदोषदर्शनाभ्यासात्तत्तद्विमुखतामापादितैः श्रोत्रादिभिः शब्दादिविषयग्रहणमकुर्वन् । बाह्येन्द्रियनिरोधेऽपि मनसः प्रचारः स्यादित्यत आह—मनो हृदि निरुध्य च अभ्यासवैराग्याभ्यां षष्ठे व्याख्याताभ्यां हृदयदेशे मनो निरुध्य निर्वृत्तिकतामापाद्य च । अन्तरपि विषयचिन्तामकुर्वन्नित्यर्थः । एवं बहिरन्तरुप-

५ भाष्योत्कर्षदीपिका ।

तद्वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इतिश्रुतेः तत्पदं ते संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥ ११ ॥ सर्वाणि च शब्दादिविषयोपलब्धौ द्वाराणि श्रोत्रादीनीन्द्रियाणि संयम्य तत्तद्विषयेभ्यः संयमनं प्रत्याहरणं कृत्वा हृदि हृत्कमले मनो निरुध्य तत्तद्विषयस्मरणान्निरोधनं च कृत्वा । निष्प्रचारमापाद्येतियावत् । तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वं भूमिकाजयक्रमेणा-

६ श्रीधरीव्याख्या ।

प्रवक्ष्ये । तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥ प्रतिज्ञातमुपायं साङ्गमाह—सर्वेति द्वाभ्याम् । सर्वाणीन्द्रियद्वाराणि संयम्य प्रत्याहृत्य । चक्षुरादिभिर्बाह्यविषयग्रहणमकुर्वन्नित्यर्थः । मनश्च हृदि निरुध्य । बाह्यविषयस्मरणमकुर्वन्नित्यर्थः । मूर्ध्नि भ्रुवोर्मध्ये प्राणमाधाय

७ अभिनवगुप्ताचार्यव्याख्या ।

भिधास्य इति । सम्यग्गृह्यते निश्चीयतेऽनेनेति संग्रह उपायस्तेनोपायेनैतत्पदमभिधास्ये उपायमत्र सतताभ्यासाय वक्ष्ये ॥ ११ ॥ सर्वेति । द्वाराणीन्द्रियाणि । हृदीत्यनेन विषयसङ्गाभाव उच्यते नतु विष्ठास्थानाधिष्ठानम् । आत्मनः प्राणमात्मसारथिमिच्छाशक्त्यात्मनि मूर्ध्नि

**ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।**
**यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मूर्धन्याधायात्मनः प्राणमास्थितः प्रवृत्तो योगधारणां धारयितुम् ॥ १२ ॥ तत्रैव च धारयन्—ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमोंकारं व्याहरन्नुच्चारयंस्तदर्थभूतं मामीश्वरमनुस्मरन्ननुचिन्तयन्यः प्रयाति म्रियते स त्यजन्परित्यजन्देहं शरीरम् । त्यजन्देहमिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमा-

२ आनन्दगिरिव्याख्या ।

निगृह्य हृदयमानीय ततो निर्गतया सुषुम्नया कण्ठभ्रूमध्यललाटक्रमेण प्राणं मूर्धन्याधाय योगधारणामारूढो ब्रह्म व्याहरन्मां च तदर्थमनुस्मरन्परमां गतिं यातीति संबन्धः ॥ १२ ॥ यथोक्तयोगधारणार्थं प्रवृत्तो मूर्धनि प्राणमाधाय धारयन्किं कुर्यादित्याशङ्क्यानन्तरश्लोकमवतारयति—तत्रैवेति । एकं च तदक्षरं चेत्येकाक्षरमोमित्येवंरूपं तत्कथं ब्रह्मेति विशिष्यते तत्राह—ब्रह्मण इति । यः प्रयातीति मरणमुक्त्वा त्यजन्देहमिति ब्रुवता पुनरुक्तिराश्रिता स्यादित्याशङ्क्य विशेषणार्थं विवृणोति—देहेति । एवमोंकारमुच्चारयन्नर्थं चाभिध्यायन्ध्याननिष्ठः स पुमानित्यर्थः । परमा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

धारणां मनसो देशविशेषनिबन्धिनीं आस्थितः अनुतिष्ठन्सन् ॥ १२ ॥ मूर्ध्नि प्राणमाधाय किं कुर्यादत आह—ओंकाररूपं एकाक्षरं एकं च तदक्षरं च वर्णो ब्रह्म च तद्व्याहरन्नुच्चरन् मां च ब्रह्मभूतमनुस्मरन्, यो हि देवदत्तं स्मृत्वा तन्नाम व्याहरति तस्मै देवदत्तोऽभिमुखो भवत्येवं ब्रह्मणो नामोच्चारणेन संनिहिततरं व्यापकं ब्रह्म साधकस्य संनिधीयते । संनिहिते च ब्रह्मणि यो देहं त्यजन् म्रियमाणः प्रयाति ऊर्ध्वनाड्या उत्क्रामति स परमां गतिं संनिकृष्टब्रह्मरूपां याति । ब्रह्मैव प्रकृत्य श्रूयते 'एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परम आनन्दः' इति । तामेव गतिं शुद्धं

४ मधुसूदनीव्याख्या ।

लब्धिद्वाराणि सर्वाणि संनिरुध्य क्रियाद्वारं प्राणमपि सर्वतो निगृह्य भूमिजयक्रमेण मूर्ध्न्याधाय भ्रुवोर्मध्ये तदुपरि च गुरूपदिष्टमार्गेणावेश्यात्मनो योगधारणामात्मविषयसमाधिरूपां धारणामास्थितः । आत्मन इति देवतादिव्यावृत्त्यर्थम् ॥ १२ ॥ ओमित्येकमक्षरं ब्रह्मवाचकत्वात्प्रतिमावद्ब्रह्मप्रतीकत्वाद्वा ब्रह्म व्याहरन्नुच्चरन् । ओमिति व्याहरन्नित्येतावतैव निर्वाहे एकाक्षरमित्यनायासकथनेन स्तुत्यर्थम् । ओमिति व्याहरन्नेकाक्षरमेकमद्वितीयमक्षरमविनाशि सर्वव्यापकं ब्रह्म मां, ओमित्यस्यार्थं स्मरन्निति वा । तेन प्रणवं जपंस्तदभिधेयभूतं च मां चिन्तयन्मूर्धन्यया नाड्या देहं त्यजन् यः प्रयाति स याति देवयानमार्गेण ब्रह्मलोकं गत्वा तद्भोगान्ते परमां प्रकृष्टां गतिं मद्रूपाम् । अत्र पतञ्जलिना 'तीव्रसंवेगानामासन्नः समाधिलाभः' इत्युक्त्वा 'ईश्वरप्रणिधानाद्वा' इत्युक्तम् । प्रणिधानं च व्याख्यातं 'तस्य वाचकः प्रणवः', 'तज्जपस्तदर्थभावनम्' इति । 'समाधिसिद्धिरीश्वरप्रणिधानात्' इति च । इहतु साक्षादेव ततः परमगतिलाभ इत्युक्तम् । तस्मादविरोधायोमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्नात्मनो

५ भाष्योत्कर्षदीपिका ।

रुद्ध्यात्मनः स्वस्य प्राणं मूर्धन्याधाय संस्थाप्य योगधारणां धारयितुमास्थितः प्रवृत्तः सन् आत्मनो योगधारणामिति वान्वयः ॥ १२ ॥ ओमिति । एकं च तदक्षरं एकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतम् । अभिधायकमितियावत् । ॐकारं व्याहरन्नुच्चारयन् तदभिधेयं परमात्मानं मामनुस्मरन्ननुचिन्तयन् । यत्तु ओमितिव्याहरन् एकाक्षरं एकमक्षरं एकमद्वितीयमक्षरमविनाशि सर्वव्यापकं ब्रह्म मां ओमित्यस्यार्थं स्मरन्नितिकेचित् । तन्न । 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इतिश्रुत्यननुसरणेन तद्विस्मरणस्य स्पष्टत्वात् । श्रुतिस्थत्रिमात्रशब्दस्यैकशब्देन व्याख्यानं भगवता क्रियते । श्रुतौ त्रिमात्रेणेत्यस्य प्रथममकारेणाभिध्यायीत तत उकारेण ततो मकारेणेति भ्रमो माभूदित्येतदर्थम् । ओमिति त्रिमात्रमेकमेवाक्षरं व्याहरन् नतु मात्राभेदेनाक्षरत्रयं पृथक्पृथग्व्याहरन्नित्यर्थः । किंच रूढिर्योगमपहन्तीति न्यायात् अक्षरशब्द ओंकारेणैव संबध्यते तस्य वर्णे रूढत्वात् । योगाश्रयणं तु रूढ्यसंभवे । तस्मात् श्रुत्यनुसारि व्यवहितान्वयरहितं रूढिपरित्यागदोषाग्रस्तं सर्वज्ञानां भाष्यकृतां व्याख्यानमेव हृद्यमिति दिक् । यः प्रयाति म्रियते । देहं त्यजन् प्रयातीत्यनेनैव प्रयाणकालो मरणकाल उक्तः । देहं त्यजन्निति तद्विशेषणार्थं प्रयाणकाल आत्मनो देहत्यागमात्रं प्रयाणं नतु स्वरूपनाशेनेत्यर्थः । देहं त्यजन्यः प्रयाति स परमां उत्कृष्टामबाध्यां गतिं स्थानं मोक्षाख्यं ब्रह्मलोकप्राप्तिक्रमेण याति

६ श्रीधरीव्याख्या ।

योगस्य धारणां स्थैर्यमास्थित आश्रितवान्सन् ॥ १२ ॥ ओमिति । ओमित्येकं यदक्षरं तदेव ब्रह्मवाचकत्वाद्वा प्रतिमादिवद्ब्रह्मप्रतीकत्वाद्वा ब्रह्म तद्व्याहरन्नुच्चारयन् तद्वाच्यं च मामनुस्मरन्नेव देहं त्यजन्यः प्रकर्षेण याति अर्चिरादिमार्गेण स परमां श्रेष्ठां मद्गतिं याति प्राप्नोति

७ अभिनवगुप्ताचार्यव्याख्या ।

सकलतत्त्वातीते धारयन्तीति कायनियमः ॥ १२ ॥ ॐमिति जपतीति वाङ्नियमः । मामनुस्मरन्निति चेतसोऽनन्यगामिता । यः प्रयाति दिनंदिनमपुनरावृत्तये गच्छति । तथाच देहं त्यजन्कथमपुनरावृत्तये गच्छति इदं सकलापरस्थानं शरीरं माभूयादिति । एवं यो मामनन्य-

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्मनो न स्वरूपनाशेनेत्यर्थः । स एवं त्यजन्याति गच्छति परमां प्रकृष्टां गतिम् ॥ १३ ॥ किंच—अनन्येति । अनन्यचेता नान्यविषये चेतो यस्य सोऽयमनन्यचेता योगी सततं सर्वदा यो मां परमेश्वरं स्मरति नित्यशः । संततमिति नैरन्तर्यमुच्यते । नित्यश इति दीर्घकालत्वमुच्यते । न षण्मासं संवत्सरं वा किं तर्हि यावज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः । तस्य योगिनोऽहं सुलभः सुखेन लभ्यः । पार्थ, नित्ययुक्तस्य सदा समाहितस्य योगिनः । यत एवमतोऽनन्यचेताः सन्मयि

२ आनन्दगिरिव्याख्या ।

मिति गतिविशेषणं क्रममुक्तिविवक्षया द्रष्टव्यम् ॥ १३ ॥ ननु वायुनिरोधविधुराणामुदीरितया रीत्या स्वेच्छाप्रयुक्तोत्क्रमणासंभवाद्दुर्लभा परमा गतिरापतेदिति तत्राह—किंचेति । इतश्च भगवदनुस्मरणे प्रयतितव्यमित्यर्थः । सततं नित्यश इति विशेषणयोरपुनरुक्तत्वमाह—सततमित्यादिना । उक्तमेवापौनरुक्त्यं व्यक्तीकरोति—नेत्यादिना । जितासुरिच्छया देहं त्यजति तदितरस्तु कर्मक्षयेणैवेति विशेषं विवक्षयन्नाह—यत इति । अनन्यचेतसं समाहितचेतसं प्रतीश्वरस्य सौलभ्यमेवमित्युच्यते ॥ १४ ॥ किं त्वां प्राप्तास्त्वय्येवावतिष्ठन्ते किं वा पुनरावर्तन्ते चन्द्रलोकादिवेति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ब्रह्मैव प्राप्नोति ब्रह्मलोकप्राप्तिद्वारा ॥ १३ ॥ इयं मतिरतीव दुर्लभेति मामंस्था इत्याह—अनन्येति । नास्ति अन्यत्र चेतो यस्यासौ अनन्यचेता इत्यनेन स्मरणे आदर उच्यते । सततमिति नैरन्तर्यम् । यो मां स्मरति नित्यश इति दीर्घकालत्वम् । यावज्जीवं स्मरतीत्यर्थः । तस्याहं सुलभः पार्थ, नित्ययुक्तस्य नित्ये योगिनामावश्यके युक्ताहारविहारादौ यमनि-

४ मधुसूदनीव्याख्या ।

योगधारणामास्थित इति व्याख्येयम् । विचित्रफलत्वोपपत्तेर्वा न विरोधः ॥ १३ ॥ य एवं वायुनिरोधवैधुर्येण भ्रुवोर्मध्ये प्राणमावेश्य मूर्धन्यया नाड्या देहं त्यक्तुं स्वेच्छया न शक्नोति किंतु कर्मक्षयेणैव परवशो देहं त्यजति तस्य किं स्यादिति तदाह—न विद्यते मदन्यविषये चेतो यस्य सोऽनन्यचेताः सततं निरन्तरं नित्यशो यावज्जीवं यो मां स्मरति तस्य स्ववशतया परवशतया वा देहं त्यजतोऽपि नित्ययुक्तस्य सततसमाहितचित्तस्य योगिनः सुलभः सुखेन लभ्योऽहं परमेश्वरः इतरेषामतिदुर्लभोऽपि हे पार्थ, तवाहमतिसुलभो मा भैषीरित्यभिप्रायः । अत्र तस्येति षष्ठी शेषे संबन्धसामान्ये कर्तरि 'न लोका–' इत्यादिना निषेधात् । अत्र चानन्यचेतस्त्वेन सत्कारोऽत्यादरः, सततमिति नैरन्तर्यं, नित्यश इति दीर्घकालत्वं, स्मरणस्योक्तम् । तेन 'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' इति पातञ्जलं मतमनुसृतं भवति । तत्र स इत्यभ्यास उक्तोऽपि स्मरणपर्यवसायी । तेन यावज्जीवं प्रतिक्षणं विक्षेपान्तरशून्यतया भगवदनुचिन्तनमेव परमगतिहेतुर्मूर्धन्यया नाड्या तु स्वेच्छया

५ भाष्योत्कर्षदीपिका ।

अधिगच्छति ॥ १३ ॥ किंचान्तकाले मत्स्मरणं मत्प्राप्तिकरं न सर्वस्य सुलभं किंतु योगी मां वासुदेवमनन्यचेता नान्यस्मिन्विषये चेतो यस्य सः । अनेनात्यादर उक्तः, सततं सर्वदेति नैरन्तर्यमुक्तं, नित्यश इति दीर्घकालत्वम् । तथाचात्यादरेण यावज्जीवं नतु षण्मासं वत्सरं वा नैरन्तर्येण यो मां परमेश्वरं स्मरति तस्य योगिनो नित्ययुक्तस्य सदा समाहितचित्तस्याहं सुलभः सुखेनानायासेन लभ्योऽन्तकालेऽनायासलब्धमत्स्मरणेनेति । यत एवमतोऽनन्यचेताः सन्मयि समाहितो भवेदित्याशयः । पार्थेति संबोधयन् तव तूक्तसाधनसौलभ्येन मत्प्राप्तिः सुलभेति सूचयति ॥ १४ ॥ किं त्वां प्राप्ताश्चन्द्रलोकादिव पुनरावर्तन्ते

६ श्रीधरीव्याख्या ।

॥ १३ ॥ एवं चान्तकाले धारणया मत्प्राप्तिर्नित्याभ्यासवशत एव भवति नान्यस्येति पूर्वोक्तमेवानुसारयति—अनन्येति । नास्त्यन्यस्मिंश्चेतो यस्य तथाभूतः सन् यो मां सततं निरन्तरं नित्यशः प्रतिदिनं स्मरति तस्य नित्ययुक्तस्य समाहितस्याहं सुखेन लभ्योऽस्मि नान्यस्य

७ अभिनवगुप्ताचार्यव्याख्या ।

चेताः स्मरति सततमेव याति जानाति स मद्भावं मत्स्वरूपम् ॥ १३ ॥ नन्वत्र मुनेः परब्रह्माद्वैतपदोपक्षेपविरोधी उत्क्रान्तौ भरः । तथाचोक्तं 'व्यापिन्यां शिवसत्तायामुत्क्रान्तिर्नाम निष्फला । आव्यापिनि शिवे नाम नोत्क्रान्तिः शिवदायिनि ॥' इति । यदि वा सतताभ्यासोऽपि यैर्न कृतस्तथापि कुतश्चिरस्वतन्त्रेश्वरेच्छादेर्निमित्तादन्त्य एव क्षणे यदा तादृग्भावो जायते तदायमुत्क्रान्तिलक्षण उपायः संस्कारान्तरप्रतिबन्धक उक्तः । अतएव यदक्षरमित्यादिनाऽभिधास्ये इत्यन्तेन प्रतिज्ञा कृता । क्षणमात्रस्यापि भगवदनुचिन्तनमयस्य सकलसंस्कारविध्वंसनलक्षणामद्भुतवृत्तिं प्रतिपादयितुं यदाहुराचार्यवर्याः 'निमेषमपि यद्येकं क्षीणदोषे करिष्यसि । पदं चित्ते तदा शंभोः किं न संपादयिष्यसि ॥' इति । अतएव प्रयाणकाले स्मरणेन विना खण्डनेति(?) येषां शङ्का तान्वीतशङ्कान्कर्तुमुक्तमनन्यचेताः सततमिति । अन्यत्र फलादौ साध्ये यस्य न चेत इत्यर्थः । तस्याहं सुलभ इति । तस्य न कश्चित् किंचित्प्रयाणकालौचित्यपर्येषणं तीर्थसेवा उत्तरायणमावर्तनसंशयः सत्त्वविशुद्धिः सचित्तकत्वं विषुवदादिपुण्यकालो दिनं अकृत्रिमपवित्रभूपरिग्रहः स्नेहमलविहीनदेहता शुद्धवस्त्रादिग्रह

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सदा समाहितो भवेत् ॥ १४ ॥ तव सौलभ्येन किं स्यादित्युच्यते शृणु तन्मम सौलभ्येन यद्भवति—मामुपेत्य मामीश्वरमुपेत्य मद्भावमापद्य पुनर्जन्म पुनरुत्पत्तिं न प्राप्नुवन्ति । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्ति तद्विशेषणमाह—दुःखालयं दुःखानामाध्यात्मिकादीनामालयमाश्रयमालीयन्ते यस्मिन्दुःखानीति दुःखालयं जन्म । न केवलं दुःखालयमशाश्वतमनवस्थितस्वरूपं च नाप्नुवन्तीदृशं पुनर्जन्म महात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां

२ आनन्दगिरिव्याख्या ।

संदेहात्पृच्छति—**तवेति** । तत्रोत्तरश्लोकेन निश्चयं दर्शयति—**उच्यत इति** । ईश्वरोपगमनं न सामीप्यमात्रमिति व्याचष्टे—**मद्भावमिति** । पुनर्जन्मनोऽनिष्टत्वं प्रश्नद्वारा स्पष्टयति—**किमित्यादिना** । महात्मत्वं प्रकृष्टसत्त्ववैशिष्ट्यम् । यतयस्तस्मिन्नेवेश्वरे समुत्पन्नसम्यग्दर्शिनो भूत्वेति शेषः । भगवन्तमुपगतानामपुनरावृत्तौ ततो विमुखानामनुप-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यमादौ च युक्तस्यावहितस्य योगिनः । योगमनुतिष्ठतः ॥ १४ ॥ त्वल्लाभेऽपि किं स्यादत आह—**मामिति** । मामुपेत्य पुनर्द्वितीयवारं जन्म नाप्नुवन्ति । यज्जन्म दुःखानामालयभूतं मूढदृष्ट्या किंचित्सुखालयत्वेऽप्यशाश्वतं नश्वरम् । तुच्छमित्यर्थः । के नाप्नुवन्ति । महात्मानो योगेन जितचित्ताः । अतएव परमां संसिद्धिं मोक्षं गताः । अगता अपि प्रत्यासन्नत्वाद्गता एव । तथा ब्रह्मलोकगतान्प्रकृत्य स्मर्यते 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति । प्रतिसंचरे ब्राह्मे प्रलये । परस्य चतुर्मुखस्य । अन्ते नाशे ॥ १५ ॥ त्वदलाभेऽपि किं स्यादत

४ मधुसूदनीव्याख्या ।

प्राणोत्क्रमणं भवतु न वेति नातीवाग्रहः ॥ १४ ॥ भगवन्तं प्राप्ताः पुनरावर्तन्ते न वेति संदेहे नावर्तन्त इत्याह—मामीश्वरं प्राप्य पुनर्जन्म मनुष्यादिदेहसंबन्धम् । कीदृशम् । दुःखालयं गर्भवासयोनिद्वारनिर्गमनाद्यनेकदुःखस्थानं अशाश्वतमस्थिरं दृष्टनष्टप्रायं नाप्नुवन्ति । पुनर्नावर्तन्त इत्यर्थः । यतो महात्मानः रजस्तमोमलरहितान्तःकरणाः शुद्धसत्त्वाः समुत्पन्नसम्यग्दर्शना मल्लोकभोगान्ते परमां सर्वोत्कृष्टां संसिद्धिं मुक्तिं गतास्ते । अत्र मां प्राप्य सिद्धिं गता इति वदतोपासकानां क्रममुक्ति-

५ भाष्योत्कर्षदीपिका ।

उत नेति संदिहानं प्रत्याह—**मामिति** । मामीश्वरमुपेत्य मद्भावं मत्सारूप्यादिकमापद्य पुनर्जन्म पुनरुत्पत्तिं पुनरावृत्तिमितियावत् । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्तीति तद्विशेषणमाह । दुःखालयं दुःखानामाध्यात्मिकाधिभौतिकाधिदैविकानामालयमालीयन्ते दुःखान्यस्मिन्निति दुःखालयम् । दुःखाश्रयमिति यावत् । तत्राध्यात्मिकं द्विविधं शारीरं मानसं च । वातपित्तश्लेष्मणां वैषम्यनिमित्तं शारीरं, कामक्रोधलोभमोहभयेर्ष्याविषयविशेषादर्शनादिनिबन्धनं मानसं । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं मनुष्यपशुमृगपक्षिसरीसृपस्थावरनिमित्तमाधिभौतिकं, यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनमाधिदैविकं । आधिभौतिकमाधिदैविकं च दुःखं बाह्योपायसाध्यं पुनर्जन्मनो दुःखानां चालयं स्थानमिति । अस्मिन्पक्षे 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति वक्ष्यमाणाननुरोधो विशेष्याध्याहारापत्त्यादिदोषश्चापतत्यत आचार्यैरयं पक्ष उपेक्षितः । गर्भवासयोनिद्वारनिर्गमनादिदुःखानां दुःखत्रयेष्वन्तर्भावो बोध्यः । न केवलं दुःखालयं अशाश्वतं अशश्वद्भवमनवस्थितरूपं चेदृशं पुनर्जन्म नाप्नुवन्ति । यतः महात्मानः विशुद्धचित्ताः तस्मिन्परमेश्वरे समुत्पन्नसम्यग्दर्शनाः संसिद्धिं परमां प्रकृष्टां मोक्षाभिधां गताः प्राप्ताः परमां सिद्धिं मोक्षं गता अगता अपि प्रत्यासन्नत्वाद्गता एव । तथा ब्रह्मलोकगतान्प्रकृत्य स्मर्यते 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥' इति । प्रतिसंचरे ब्रह्मप्रलये । परस्य चतुर्मुखस्यान्ते नाशे इत्यन्ये । अस्मिन्पक्षे आब्रह्मभुवनादित्युत्तरश्लोकवि-

६ श्रीधरीव्याख्या ।

॥ १४ ॥ यद्यप्येवं त्वं सुलभोऽसि ततः किमत आह—**मामिति** । उक्तलक्षणा महात्मानो मद्भक्ता मां प्राप्य पुनर्दुःखाश्रयमनित्यं च जन्म न प्राप्नुवन्ति । यतस्ते परमां सम्यक्सिद्धिं मोक्षमेव प्राप्ताः पुनर्जन्म दुःखानां चालयं स्थानं ते मामुपेत्य न प्राप्नुवन्तीति वा

७ अभिनवगुप्ताचार्यव्याख्या ।

इत्यादिः क्लेशोऽभ्यर्थनीय इत्यर्थः । यत्प्रागुक्तं तीर्थे श्वपचगृहे वेत्यादि ॥ १४ ॥ ननु मद्भावं यातीत्युक्तं तत्र किं प्राप्तेऽपि पुनरावृत्तिरस्तीत्याशङ्क्याह—मामुपेत्येति । अन्यतस्तु सर्वत एव पुनरावृत्तिरस्तीति समनन्तरेण श्लोकेन प्रतिपादयिष्यते । मां तु प्राप्य न पुनर्योगिनो जन्मा-

१ श्रीधरः २ नीलकण्ठः.

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

गताः प्राप्ताः । ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते ॥ १५ ॥ के किं पुनस्त्वत्तोऽन्यत्प्राप्ताः पुनरावर्तन्त इत्युच्यते—आब्रह्मेति । आब्रह्मभुवनाद्भवन्ति यस्मिन्भूतानीति भुवनं ब्रह्मभुवनं ब्रह्मलोक इत्यर्थः । आब्रह्मभुवनात्सह ब्रह्मभुवनेन लोकाः सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावाः हे अर्जुन, मामेकमुपेत्य तु कौन्तेय पुनर्जन्म पुनरुत्पत्तिर्न विद्यते ॥ १६ ॥ ब्रह्मलोकसहिता लोकाः

२ आनन्दगिरिव्याख्या ।

जातसम्यग्धियां पुनरावृत्तिरर्थसिद्धेत्याह—**ये पुनरिति** ॥ १५ ॥ 'अपाम सोमममृता अभूम' इति श्रुतेः स्वर्गादिगतानामपि समानैवानावृत्तिरित्याशङ्क्यते—**किं पुनरिति** । अर्थवादश्रुतौ कर्मिणाममृतत्वस्यापेक्षिकत्वं विवक्षित्वा परिहरति—**उच्यत इति** । एतेन भूरादिलोकचतुष्टयं प्रविष्टानां पुनरावृत्तावपि जनआदिलोकत्रयं प्राप्तानामपुनरावृत्तिरिति विभागोक्तिरप्रामाणिकत्वादेव हेयेत्यवधेयम् । तर्हि तद्वदेवेश्वरं प्राप्तानामपि पुनरावृत्तिः शङ्क्यते नेत्याह—**मामिति** । यावत्संपातश्रुतिवदीश्वरं प्राप्तानां निवृत्ताविद्यानां पुनरावृत्तिरप्रामाणिकीत्यर्थः । यस्य स्वाभाविकी वंशप्रयुक्ता च शुद्धिस्तस्यैवोक्तेऽर्थे बुद्धिरुदेतीति मत्वा संबुद्धिद्वयम् ॥ १६ ॥ ब्रह्मलोकसहितानां पुनरावृत्तौ

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आह—**आब्रह्मेति** । आब्रह्मभुवनाद्ब्रह्मलोकमभिव्याप्य । ब्रह्मलोकेन सहैवेत्यर्थः । लोकाः पुनरावर्तिनः पुनरावृत्तिस्वभावाः । हे अर्जुन, शेषं स्पष्टम् । अत्रेयं व्यवस्था । ये क्रममुक्तिफलाभिर्दहरादिविद्याभिर्ब्रह्मलोकं गतास्ते तत्रैव ज्ञानं प्राप्य ब्रह्मणा सह मुच्यन्ते । येतु पञ्चाग्निविद्याभिर्ब्रह्मलोकं गतास्तेऽनुपासितपरमेश्वराः पुनरावर्तन्त इति ॥ १६ ॥

४ मधुसूदनीव्याख्या ।

दर्शिता ॥ १५ ॥ भगवन्तमुपागतानां सम्यग्दर्शिनामपुनरावृत्तौ कथितायां ततो विमुखानामसम्यग्दर्शिनां पुनरावृत्तिरर्थसिद्धेत्याह—आब्रह्मभुवनात्, भवन्त्यत्र भूतानीति भुवनं लोकः । अभिविधावाकारः । ब्रह्मलोकेन सह सर्वेऽपि लोका मद्विमुखानामसम्यग्दर्शिनां भोगभूमयः पुनरावर्तिनः पुनरावर्तनशीलाः । ब्रह्मभवनादिति पाठे भवनं वासस्थानमिति स एवार्थः । हे अर्जुन स्वतःप्रसिद्धमहापौरुष । किं तद्वदेव त्वां प्राप्तानामपि पुनरावृत्तिर्नेत्याह—मामीश्वरमेकमुपेत्य तु । तुशब्दो लोकान्तरवैलक्षण्यद्योतनार्थोऽवधारणार्थो वा । मामेव प्राप्य निर्वृतानां हे कौन्तेय मातृतोऽपि प्रसिद्धमहानुभाव, पुनर्जन्म न विद्यते । पुनरावृत्तिर्नास्तीत्यर्थः । अत्रार्जुन कौन्तेयेति संबोधनद्वयेन स्वरूपतः कारणतश्च शुद्धिर्ज्ञानसंपत्तये सूचिता । अत्रेयं व्यवस्था—ये क्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकं प्राप्तास्तेषामेव तत्रोत्पन्नसम्यग्दर्शनानां ब्रह्मणा सह मोक्षः । येतु पञ्चाग्निविद्यादिभिरतत्क्रतवोऽपि तत्र गतास्तेषामवश्यंभावि पुनर्जन्म । अतएव क्रममुक्त्यभिप्रायेण 'ब्रह्मलोकमभिसंपद्यते नच पुनरावर्तते', 'अनावृत्तिः शब्दात्' इति श्रुतिसूत्रयोरुपपत्तिः । इतरत्र तेषामिह न पुनरावृत्तिः 'इमं मानवमावर्तं नावर्तन्ते' इति 'इहेमम्' इतिच विशेषणाद्गमनाधिकरणकल्पादन्यत्र पुनरावृत्तिः प्रतीयते ॥ १६ ॥ ब्रह्मलोकसहिताः सर्वे लोकाः पुनरावर्तिनः कस्मात्कालपरिच्छि-

५ भाष्योत्कर्षदीपिका ।

रोधोमुख्यार्थपरित्यागश्च बोध्यः ॥१५॥ ये पुनर्मां न प्राप्नुवन्ति ब्रह्मलोकादिकं प्राप्ता अपि पुनरावर्तन्ते इत्याह—**आब्रह्मभुवनादिति** । ब्रह्मलोकसहिताः सर्वे लोकाः पुनरावर्तिनः पुनरावर्तनस्वभावाः मामीश्वरमेकमुपेत्य तु पुनर्जन्म पुनरुत्पत्तिः । पुनरावृत्तिरिति यावत् । न विद्यते । अर्जुन कौन्तेयेति संबोधनद्वयेन साक्षान्मद्भक्ताः मामुपेत्य न निवर्तन्ते इत्यत्र तु नास्ति संशयः । ब्रह्मलोकं गता अपि ये अश्वमेधादिकर्मणा विगतपापत्वात्स्वच्छतामापन्नास्तत्र गतास्ते पुनरावर्तन्ते । ये तु मत्संबन्धिहिरण्यगर्भाद्युपासकास्ते

६ श्रीधरीव्याख्या ।

॥ १५ ॥ एतदेव सर्वेष्वपि लोकेषु पुनरावृत्तिं दर्शयन्निर्धारयति—**आब्रह्मेति** । ब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य सर्वे लोकाः पुनरावर्तनशीलाः ब्रह्मलोकस्यापि विनाशित्वात्तत्प्राप्तानामनुत्पन्नज्ञानानामवश्यंभावि पुनर्जन्म । य एवं क्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकं प्राप्तास्तेषामेव तत्रोत्पन्नज्ञानानां ब्रह्मणा सह मोक्षो नान्येषाम् । तथाच 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' । परस्यान्ते ब्रह्मणः परमायुषोऽन्ते कृतात्मानो ब्रह्मभावापादितमनोवृत्तयः कर्मीद्वारेण येषां ब्रह्मलोकप्राप्तिस्तेषां न मोक्ष इति परिनिष्ठितिः । मामुपेत्य वर्तमानानां तु पुनर्जन्म नास्त्येवेत्यर्थः ॥ १६ ॥ ननु च

७ अभिनवगुप्ताचार्यव्याख्या ।

दित्रासं प्राप्नुवन्ति 'न स पुनरावर्तते' इति श्रुतेः । 'यं प्राप्य न निवर्तन्ते' इत्यग्रेऽपि ॥ १५ ॥ आब्रह्मेति । ब्रह्मलोकप्राप्तानामपि पुनरावृत्तिरस्तीति सर्वैर्व्याख्यातं । एतदभ्युपगमे च तदुपरितनलोकगतिर्मुक्तिरित्यभिहितं स्यात् तच्च न हृदयंगममिति संशयमहामोहकलुषीकृतान्तर्दृशामस्माकं प्रतिभातीयमागमाधिगता व्याख्यावर्तिः । आब्रह्म यावद्ब्रह्मपदं प्राप्तं तावद्यस्मात्कस्माच्चित्तिर्यगूर्ध्वाधस्ताद्भुवना-

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कस्मात्पुनरावर्तिनः कालपरिच्छिन्नत्वात्कथम्—सहस्रेति । सहस्रयुगपर्यन्तं सहस्रं युगानि पर्यन्तं पर्यवसानं यस्याह्नस्तदहः सहस्रयुगपर्यन्तं ब्रह्मणः प्रजापतेर्विराजो विदुः, रात्रिमपि युगसहस्रान्तामहःपरिमाणामेव । के विदुरित्याह तेऽहोरात्रविदः । कालसंख्याविदो जना इत्यर्थः । यत एवं कालपरिच्छिन्नास्तेऽतः पुनरावर्तिनो लोकाः ॥ १७ ॥ प्रजापतेरहनि यद्भवति रात्रौ च तदु-

२ आनन्दगिरिव्याख्या ।

हेतुं प्रश्नद्वारा दर्शयति—**ब्रह्मेति** । उक्तमेव हेतुमाकाङ्क्षापूर्वकमुत्तरश्लोकेन साधयति—**कथमित्यादिना** । यथोक्ताहोरात्रावयवमासर्त्वयनसंवत्सरावयवशतसंख्यायुरवच्छिन्नत्वात्प्रजापतेस्तदन्तर्वर्तिनामपि लोकानां यथायोग्यकालपरिच्छिन्नत्वेन पुनरावृत्तिरित्यभिप्रेत्य व्याचष्टे—**सहस्रेत्यादिना** । अक्षरार्थमुक्त्वा तात्पर्यार्थमाह—**यत इति** ॥ १७ ॥ यतः प्रजापतेरहस्तद्युगसहस्रपरिमितं या च तस्य रात्रिः सापि तथेति कालविदामभिप्रायमनुसृत्य ब्राह्मस्याहोरात्रस्य कालपरिमाणं दर्शयित्वा तत्रैव विभज्य कार्यं कथयति—**प्रजापतेरिति** । अव्यक्तमव्याकृतमिति शङ्कां वारयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आवृत्तिभाजां कालपरिच्छेदमाह—**सहस्रेति** । युगशब्दोऽत्र चतुर्युगपर्यायः । 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति पुराणान्तरदर्शनात् सहस्रं चतुर्युगानि पर्यन्तोऽवसानं यस्य । चतुर्युगसहस्रं ब्रह्मणो दिनं रात्रिरपि तावतीत्याह—**रात्रिमिति** । अत्रापि चतुर्युगसहस्राणां अन्तो भवति तां चतुर्युगसहस्रान्ताम् । ते प्रसिद्धा अहोरात्रविदो

४ मधुसूदनीव्याख्या ।

जनादित्याह—मनुष्यपरिमाणेन सहस्रयुगपर्यन्तं सहस्रं युगानि चतुर्युगानि पर्यन्तोऽवसानं यस्य तत् । 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति हि पौराणिकं वचनम् । तादृशं ब्रह्मणः प्रजापतेरहर्दिनं तत् ये विदुः । तथा रात्रिं युगसहस्रान्तां चतुर्युगसहस्रपर्यन्तां, ये विदुरिति वर्तते । तेऽहोरात्रविदस्त एवाहोरात्रविदो योगिनो जनाः । ये तु चन्द्रार्कगत्यैव विदुस्ते नाहोरात्रविदः स्वल्पदर्शित्वादित्यभिप्रायः ॥ १७ ॥ यथोक्तैरहोरात्रैः पक्षमासादिगणनया पूर्णं वर्षशतं प्रजापतेः परमायुरिति कालपरि-

५ भाष्योत्कर्षदीपिका ।

तत्रोत्पन्नसम्यग्दर्शनाः न पुनरावर्तन्ते इति व्यवस्थां सूचयति ॥ १६ ॥ ब्रह्मलोकसहिता लोकाः पुनरावर्तिन इत्युक्तं तेषां कालपरिच्छिन्नत्वादिति हेतुनोपपादयति । सहस्रं युगानि पर्यन्तं पर्यवसानं यस्याह्नस्तदहः सहस्रयुगपर्यन्तम् । युगशब्दोऽत्र चतुर्युगपरः । 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति पुराणोक्तेः । चतुर्युगपरिमाणं तु मनुष्याणां यद्वर्षं तदेव देवानामहोरात्रं तादृशैरहोरात्रैः पक्षादिक्रमेण द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति । तत्र वर्षचतुःसहस्रं कृतयुगं, त्रिसहस्रं त्रेता, द्विसहस्रं द्वापरं, एकसहस्रं कलिः, अष्टशतं कृतयुगस्य पूर्वोत्तरसंध्ये, एवमग्रेपि युगक्रमेण षट्चतुर्द्विशतसंख्याकसंध्याक्रमो बोध्यः । सहस्रयुगपर्यन्तं ब्रह्मणः प्रजापतेर्विराजोऽहर्दिनं विदुः । रात्रिमपि सहस्रयुगमन्तो यस्यास्तामहःपरिमाणामेव विदुः । के विदुरित्याह । तेऽहोरात्रविदो ब्रह्मणो दिनरात्रिकालसंख्याविदो जनाः नतु मनुष्यदिनरात्रिकालविद इत्यर्थः । यतएवं यथोक्ताहोरात्रावयवमासर्त्वयनसंवत्सरावयवशतसंख्यायुरवच्छिन्नः प्रजापतिस्तदन्तर्वर्तिलोका अपि यथायोग्यकालपरिच्छिन्ना अतो ब्रह्मलोकसहिताः सर्वे लोकाः पुनरावर्तिन इत्याशयः ॥१७॥

६ श्रीधरीव्याख्या ।

'तपस्विनो दानशीला वीतरागास्तितिक्षवः । त्रिलोक्या उपरि स्थानं लभन्ते शोकवर्जितम्' इत्यादिपुराणवाक्यैस्त्रिलोक्याः सकाशान्महर्लोकादीनामुत्कृष्टत्वं गम्यते । विनाशित्वे च सर्वेषामवैशिष्ट्ये कथमसौ विशेषः स्यादित्याशङ्क्य बहुकल्पकालावस्थायित्वनिमित्तोऽसौ विशेष इत्याशयेन स्वमानेन शतवर्षायुषो ब्रह्मणोऽहन्यहनि त्रिलोक्या उत्पत्तिर्निशिनिशि च लयो भवतीति दर्शयिष्यन् ब्रह्मणोऽहोरात्रयोः प्रमाणमाह—**सहस्रेति** । सहस्रं युगानि पर्यन्तोऽवसानं यस्य तद्ब्रह्मणो यदहस्तद्ये विदुः युगसहस्रमन्तो यस्यास्तां रात्रिं च योगबलेन ये विदुस्त एव सर्वज्ञजना अहोरात्रविदः । येषां तु केवलं चन्द्रार्कगत्यैव ज्ञानं ते तथाहोरात्रविदो न भवन्ति, अल्पदर्शित्वात् । युगशब्देनात्र चतुर्युगमभिप्रेतम् 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति विष्णुपुराणोक्तेः । ब्रह्मण इति च महर्लोकादिवासिनामप्युपलक्षणार्थम् । तत्रायं कालगणनाप्रकारः । मनुष्याणां यद्वर्षं तद्देवानामहोरात्रं । तादृशैरहोरात्रैः पक्षमासादिकल्पनया द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति । चतुर्युगसहस्रं च ब्रह्मणो दिनम् । तावत्परिमाणैव रात्रिः । तादृशैश्चाहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः

७ अभिनवगुप्ताचार्यव्याख्या ।

रपुनरावर्तन्ते चक्रवत्स्थानान्तरमविरतं आम्यन्तो विपरिवर्तन्त इति ॥ १६ ॥ ननु क एवं जानाति यत्सर्वभुवनेभ्यः पुनरावृत्तिर्ब्रह्मादय एव तावच्चिरतरस्थायिनः श्रूयन्ते । अतएव तावत्कथं पुनरावर्तिनः । पुनरावर्तित्वे हि तेऽपि स्युः प्रभवाप्ययधर्माण इत्याह—सहस्रेत्यादिना । ये खल्वदीर्घदृश्वानस्ते ब्रह्मणोऽपि रात्रिंदिनं पश्यन्ति प्रलयोदयतया । तथा चाहरहस्त एव विबुध्य निजांनिजामेव चेष्टामनुरुध्यन्ते ।

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

च्यते—अव्यक्तेति । अव्यक्तादव्यक्तं प्रजापतेः स्वापावस्था तस्मादव्यक्ताद् व्यक्तयो व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणाः सर्वाः प्रजाः प्रभवन्त्यभिव्यज्यन्ते अह्न आगमोऽहरागमस्तस्मिन्नहरागमे काले ब्रह्मणः प्रबोधकाले, तथा रात्र्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वा व्यक्तयस्तत्रैव पूर्वोक्तेऽ-

२ आनन्दगिरिव्याख्या ।

**अव्यक्तमित्यादिना** । जातिप्रतियोगिभूता व्यक्तीर्व्यावर्तयति—**स्थावरेति** । असदुत्पत्तिप्रसक्तिं प्रत्यादिशति—**अभिव्यज्यन्त इति** । पूर्वोक्तमव्यक्तसंज्ञकं स्वापावस्थं ब्रह्म प्रजापतिशब्दितं तस्मिन्निति यावत् ॥ १८ ॥ ननु

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जना विदुः ॥ १७ ॥ किं ब्रह्मणोऽह्नि जायते किंवा रात्रावित्यत आह—**अव्यक्तादिति** । अत्र दैनंदिनसृष्टिप्रलययोः प्रकृतत्वादव्यक्तशब्देन नाव्याकृतं वियदादिकारणमिह ग्राह्यम् । तदा आकाशादीनां सत्त्वात् । किं तर्हि प्रजापतेः स्वापावस्थैवेहाव्यक्तशब्दार्थः । अयं भावः—प्रजापतेः स्वापकाले तत्कल्पितः स्थावरजंगमप्रपञ्चः सर्वोऽपि तदीयेऽज्ञानेऽव्याकृताख्ये लीयते रात्र्यागमे । तथा दिवसागमे पुनस्तत एव यथापूर्वमाविर्भवति । एवं दृष्टिसृष्टिन्यायेनास्मत्कल्पितोऽप्ययं वियदादिप्रपञ्चोऽस्मत्सुषुप्तौ लीयते अस्मत्प्रबोधे यथापूर्वं प्रादुर्भवतीति ॥ १८ ॥ कृतहानाकृताभ्या-

४ मधुसूदनीव्याख्या ।

च्छिन्नत्वेनानित्योऽसौ । तेन तल्लोकात्पुनरावृत्तिर्युक्तैव । ये तु ततोऽर्वाचीनास्तेषां तदहर्मात्रपरिच्छिन्नत्वात्तत्तल्लोकेभ्यः पुनरावृत्तिरिति किमु वक्तव्यमित्याह—अत्र दैनंदिनसृष्टिप्रलययोरेव वक्तुमुपक्रान्तत्वात्तत्र चाकाशादीनां सत्त्वादव्यक्तशब्देनाव्याकृतावस्था नोच्यते, किंतु प्रजापतेः स्वापावस्थैव । स्वापावस्थः प्रजापतिरिति यावत् । अहरागमे प्रजापतेः प्रबोधसमयेऽव्यक्तात्तत्स्वापावस्थारूपाद्व्यक्तयः शरीरविषयादिरूपा भोगभूमयः प्रभवन्ति व्यवहारक्षमतयाऽभिव्यज्यन्ते । रात्र्यागमे तस्य स्वापकाले पूर्वोक्ताः सर्वा अपि व्यक्तयः प्रलीयन्ते तिरोभवन्ति यत आविर्भूतास्तत्रैवाव्यक्तसंज्ञके कारणे प्रागुक्ते स्वापावस्थे प्रजापतौ ॥ १८ ॥ एवमाशुविनाशित्वेऽपि संसारस्य न निवृत्तिः क्लेशकर्मादिभिरवशतया पुनःपुनः प्रादुर्भावात्प्रादुर्भूतस्य च पुनः क्लेशादिवशेनैव

५ भाष्योत्कर्षदीपिका ।

प्रजापतेरहोरात्रे यद्भवति तदाह—**अव्यक्तादिति** । अत्राव्यक्तशब्देन नाव्याकृतं गृह्यते दैनंदिनसृष्टिप्रलययोः प्रस्तुतत्वात्तत्र चाकाशादेरुत्पत्तिनाशानुक्तेस्तस्मादव्यक्तं प्रजापतेः स्वापावस्था तस्माद्व्यज्यन्त इति व्यक्तयश्चराचरलक्षणा निखिलाः प्रजा भवन्ति आविर्भवन्ति नत्वसन्त्य उत्पद्यन्ते प्रलीयन्ते इत्यनुरोधात् । युक्तियुक्तत्वाच्च सत्कार्यवादस्तावद्युक्तियुक्तो नत्वसत्कार्यवादः । तथाहि कारणव्यापारात्प्रागपि सत्कार्यं कारणव्यापारेण तर्हि किं साध्यत इतिचेत्पूर्वं सत एव कार्यस्याविर्भाव इति ब्रूमः । यत्तु मृत्पिण्डादिध्वंसानन्तरं घटाद्युत्पत्तिर्दृश्यते न तत्र प्रध्वंसः कारणमपितु भाव एव मृदाद्यवयवरूपः । अन्यथाऽभावस्य सर्वत्र सुलभत्वेन सर्वत्र सर्वदा कार्योत्पत्तिः प्रसज्येत । कारणव्यापारादसत्कार्यवादे तु असतः कार्यस्य सत्त्वं केनापि कर्तुमशक्यम् । नहि शिल्पिलक्षेणापि सिकताभ्यस्तैलं कुड्यादेरङ्कुरमुत्पादयितुं शक्यम् । किंच कार्येण संबद्धं ह्युपादानकारणं कार्यस्य जनकं संबन्धश्चासतः कार्यस्य कारणेन न संभवति । ननु मास्तु संबन्धोऽसंबद्धमेव कारणैः कार्यं कस्मान्न जन्यते तथाचासदेव कार्यमुत्पत्स्यत इतिचेन्न । तथात्वेऽसंबद्धत्वाविशेषेण सर्वस्य कार्यजातस्य सर्वस्मात्कारणादुत्पत्तिप्रसङ्गात् । नन्वसंबद्धमपि सत्कारणं तदेव करोति यत्कारणं यत्र शक्तं शक्तिश्च कार्यदर्शनादवगम्यते । अतो नाव्यवस्थेति चेत्सा शक्तिः कारणाश्रया सर्वत्र उत शक्यमात्रे । आद्ये तदवस्थैवाव्यवस्था । न द्वितीयः । असत्कार्यवादिनस्तव मते शक्यस्य कार्यस्यासत्त्वात् । ननु शक्तिभेद एवैतादृशो यतः यत्किंचिदेव कार्यमुत्पादयेत् न सर्वमितिचेत् । स शक्तिविशेषः किं कार्यसंबद्धः कार्यमुत्पादयति उतासंबद्धः । नाद्यः । असता संबन्धायोगात् । न द्वितीयः । अव्यवस्थातादवस्थ्यादित्यन्यत्र विस्तरः । ब्रह्मणोऽह्नः आगमे तस्य प्रबोधकालेऽव्यक्ताद्व्यक्तयो भवन्ति तथा रात्र्यागमे

६ श्रीधरीव्याख्या ।

परमायुरिति ॥ १७ ॥ ततः किमत आह—**अव्यक्तादिति** । कार्यस्याव्यक्तं रूपं कारणात्मकं तस्मादव्यक्तात्कारणरूपाद्व्यज्यन्तेऽभिव्यज्यन्त इति व्यक्तयश्चराचराणि भूतानि प्रादुर्भवन्ति । कदा । अहरागमे ब्रह्मणो दिनस्योपक्रमे । तथा रात्रेरागमे ब्रह्मशयने तस्मिन्नेवाव्यक्तसंज्ञके कारणरूपे प्रलयं यान्ति । यद्वा तेऽहोरात्रविद इत्येतन्न विधीयते किंतु ते प्रसिद्धा अहोरात्रविदो जना यद्ब्रह्मणोऽहर्विदुस्तस्याह्न आगमे अव्यक्ताद्व्यक्तयः प्रभवन्ति, यां च रात्रिं विदुस्तस्या रात्रेरागमे प्रलीयन्त इति द्वयोरन्वयः ॥ १८ ॥ तत्र च कृतना-

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रतिरात्रि च तेषामेव निवृत्तपरिस्पन्दानां शक्तिमात्रत्वेनोपस्थानम् । एवं सृष्टौ प्रलये च पुनःपुनर्भावः नान्येन्ये उपसृज्यन्ते अपितु तएव

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**राज्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

व्यक्तसंज्ञके ॥ १८ ॥ अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं बन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थमविद्यादिक्लेशमूलकर्माशयवशाच्चावशो भूतग्रामो भूत्वा भूत्वा प्रलीयत इत्यतः संसारे वैराग्यप्रदर्शनार्थं चेदमाह—भूतग्राम इति । भूतग्रामो भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन्कल्प आसीत्स एवायं नान्यो भूत्वा भूत्वा पुनरहरागमे प्रलीयते पुनः पुना राज्यागमेऽह्नः क्षयेऽवशो-

२ आनन्दगिरिव्याख्या ।

प्रबोधकाले ब्रह्मणो यो भूतग्रामो भूत्वा तस्यैव स्वापकाले विलीयते तस्मादन्यो भूयो ब्रह्मणोऽहरागमे भूत्वा पुना राज्यागमे परवशो विनश्यति तदेवं प्रलयवान्तरकल्पं भूतग्रामविभागो भवेदित्याशङ्क्यानन्तरश्लोकतात्पर्यमाह—अकृतेति । प्रतिकल्पं प्राणिनिकायस्य भिन्नत्वे सत्यकृताभ्यागमादिदोषप्रसङ्गात्तत्परिहारार्थं भूतग्रामस्य प्रतिकल्पमैक्यमास्थेयमित्यर्थः । यदि स्थावरजङ्गमलक्षणप्राणिनिकायस्य प्रतिकल्पमन्यथात्वं तदेकस्य बन्धमोक्षान्वयिनोऽभावात्काण्डद्वयात्मनो बन्धमोक्षार्थस्य शास्त्रस्य प्रवृत्तिरफला प्रसज्येतातस्तत्साफल्यार्थमपि प्रतिकल्पं प्राणिवर्गस्य नवीनत्वानुपपत्तिरित्याह—बन्धेति । कथं पुनर्भूतसमुदायोऽस्वतन्त्रः सन्नवशो भूत्वा प्रविलीयते तत्राह—अविद्यादीति । आदिशब्देनास्मितारागद्वेषाभिनिवेशा गृह्यन्ते । यथोक्तं क्लेशपञ्चकं मूलं प्रतिलभ्य धर्माधर्मात्मककर्मराशिरुद्भवति तद्वशादेवास्वतन्त्रो भूतसमुदायो जन्मविनाशावनुभवतीत्यर्थः । प्राणिनिकायस्य जन्मनाशाभ्यासोक्तेरर्थमाह—इत्यत इति । संसारे विपरिवर्तमानानां प्राणिनामस्वातन्त्र्यादवशानामेव जन्ममरणप्रबन्धादलमनेन संसारेणेति वैतृष्ण्यं तस्मिन्प्रदर्शनीयं तदर्थं चेदं भूतानामहोरात्रमावृत्तिवचनमित्यर्थः । समनन्तरवाक्यमिदमा परामृश्यते । राज्यागमे प्रलयमनुभवतोऽहरागमे च प्रभवं प्रतिपद्यमानस्य प्राणिवर्गस्य तुल्यं पारवश्यमित्याशयवानाह—अह्न इति ॥ १९ ॥ अक्षरं ब्रह्म परममित्युपक्रम्य तदनुपयुक्तं किमिदमन्यदुक्तमित्याशङ्क्य वृत्तमनूद्यानन्तरग्रन्थसंगतिमाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

गमदोषापनुत्तये बन्धमोक्षशास्त्रप्रवृत्तिसाफल्याय च अविद्यादिवशादवशोऽयं भूतग्रामः पुनःपुनर्भूत्वा पुनःपुनः प्रलीयत इत्याह वैराग्योत्पादनार्थम्—**भूतग्राम इति** । अहरागमे भूत्वाभूत्वा राज्यागमे प्रलीयत इति योजना । सएव भूत्वा प्रलीयते नान्योऽभिनवो भवतीत्यर्थः । कुतः । यतोऽवशः अविद्याकामकर्माधीनस्तस्मात्सर्वानर्थबीजभूताया अवि-

४ मधुसूदनीव्याख्या ।

तिरोभावात्, संसारे विपरिवर्तमानानां सर्वेषामपि प्राणिनामस्वातन्त्र्यादवशानामेव जन्ममरणादिदुःखप्रबन्धसंबन्धादलमनेन संसारेणेति वैराग्योत्पत्त्यर्थं समाननामरूपत्वेन च पुनःपुनः प्रादुर्भावात्कृतनाशाकृताभ्यागमपरिहारार्थं वाह—भूतग्रामो भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन्कल्पे स्थितः स एवायमेतस्मिन्कल्पे जायमानोऽपि ननु प्रतिकल्पमन्योन्यश्च । असत्कार्यवादानभ्युपगमात् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो स्वः' इति श्रुतेः, 'समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च' इति न्यायाच्च । अवश इत्यविद्याकामकर्मादिपरतन्त्रः । हे पार्थ, स्पष्टमितरत् ॥ १९ ॥

५ भाष्योत्कर्षदीपिका ।

ब्रह्मणः स्वापकाले सर्वा व्यक्तयोऽव्यक्तसंज्ञिके पूर्वोक्ते प्रलीयन्ते ॥ १८ ॥ पूर्वकल्पीया एव प्रजा राज्यागमे अव्यक्ते प्रलीना अहरागमेऽव्यक्तादाविर्भवन्ति नतु ता विनष्टा अन्या एवास्मिन्कल्पे उत्पद्यन्ते इतीममर्थं स्फुटमाह—**भूतग्राम इति** । भूतसमुदायश्चराचरलक्षणो यः पूर्वस्मिन्कल्पे आसीत्स एवायं नान्यः अहरागमे पुनःपुनर्भूत्वा राज्यागमे पुनःपुनर्लीयते पुनरहरागमे प्रभवति प्रादुर्भवति । अवशो विद्यादिपरतन्त्रः । पार्थेति संबोधयन् कुन्तिभोजसंबन्धेन यथा पृथैव कुन्ती संपन्ना नतु पृथान्यैव स्थितान्यैव कुन्ती जातेति ध्वनयति । अयमाशयः—प्रतिकल्पं भूतग्रामस्याभिनवत्वेऽकृताभ्यागमकृतविप्रणाशदोषो बन्धमोक्षान्वयिन एकस्याभावात् । बन्धमोक्षार्थस्य शास्त्रस्य प्रवृत्तिनिष्फलता चापतति तन्निरासार्थं भूतग्रामस्य प्रतिकल्पमैक्यमभ्युपेयम् । अविद्यास्मितारागद्वेषाभिनिवेशक्लेशमूलधर्माधर्माशयवशाच्चावशो भूतग्रामो भूत्वा भूत्वा प्रलीयत इत्यतोऽलमनेन संसारेणेति विरक्तो भूत्वा ज्ञानेन

६ श्रीधरीव्याख्या ।

शाकृताभ्यागमशङ्कां वारयन्वैराग्यार्थं सृष्टिप्रलयप्रवाहस्याविच्छेदं दर्शयति—**भूतेति** । भूतानां चराचरप्राणिनां ग्रामः समूहो यः प्रागासीत्स एवायमहरागमे भूत्वा रात्रिरागमे प्रलीयते । प्रलीय पुनरप्यहरागमेऽवशः कर्मादिपरतन्त्रः प्रभवति । नान्य इत्यर्थः ॥ १९ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

जीवाः । कालकृतस्तु चिरक्षिप्रप्रलयात्मा विशेषः । एव च परिच्छेदः प्रजापतीनामप्यस्ति । ततश्च तेऽपि प्रभवाप्ययधर्माण एवेति

**परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

ऽस्वतन्त्र एव पार्थ, प्रभवति अवश एवाहरागमे ॥ १९ ॥ यदुपन्यस्तमक्षरं तस्य प्राप्त्युपायो निर्दिष्ट ओमित्येकाक्षरं ब्रह्मेत्यादिना । अथेदानीमक्षरस्यैव स्वरूपनिर्दिदिक्षयेदमुच्यतेऽनेन योगमार्गेणेदं गन्तव्यमिति—परस्तस्मादिति । परो व्यतिरिक्तो भिन्नः । कुतः । तस्मात्पूर्वोक्तात् । तुशब्दोऽक्षरस्य विवक्षितस्याव्यक्ताद्वैलक्षण्यविशेषणार्थः । भावोऽक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थमाह—अन्य इति । अन्यो विलक्षणः स चाव्यक्तोऽनिन्द्रियगोचरः । परस्तस्मादित्युक्तं, कस्मात्पुनः परः पूर्वोक्ताद्भूतग्रामबीजभूतादविद्यालक्षणादव्यक्तात् । सनातनश्चिरंतनः यः

२ आनन्दगिरिव्याख्या ।

**यदुपन्यस्तमिति** । अक्षरस्वरूपे निर्दिदिक्षिते तस्मिन्पूर्वोक्तयोगमार्गस्य कथमुपयोगः स्यादित्याशङ्क्य तत्प्राप्त्युपायत्वेनेत्याह—**अनेनेति** । गन्तव्यमिति योगमार्गोक्तिरुपयुक्तेति शेषः । पूर्वोक्तादव्यक्तादिति संबन्धः । परशब्दस्य व्यतिरिक्तविषयत्वे तुशब्देन वैलक्षण्यमुक्त्वा पुनरन्यशब्दप्रयोगात्पौनरुक्त्यमित्याशङ्क्याह—**व्यतिरिक्तत्व इति** । तुना द्योतितं वैलक्षण्यमन्यशब्देन प्रकटितम् । यतो भिन्नेष्वपि भावभेदेषु सालक्षण्यमालक्ष्यते ततश्चाव्यक्ताद्भिन्नत्वेऽपि ब्रह्मणस्तेन सादृश्यमाशङ्कते तन्निवृत्त्यर्थमन्यपदमित्यर्थः । यद्वा परशब्दस्य प्रकृष्टवाचिनो भावविशेषणार्थत्वे पुनरुक्तिश-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

द्याया विद्यया उच्छेदे जन्ममरणप्रवाहविच्छेदायावश्यं यतितव्यमित्यर्थः ॥ १९ ॥ एवं ब्रह्मभुवनान्तानामावृत्तिं व्याख्याय यत्प्राप्तानामावृत्तिर्नास्ति तदक्षरं परमं ब्रह्मेत्युपक्रान्तं वस्तु लक्षयति—**परस्तस्मादिति** त्रिभिः । पर इति । तस्मादव्यक्ताद्भूतग्रामबीजभूतादविद्यालक्षणादनृतात् अन्योऽत्यन्तविलक्षणो भावः सत्ता । तुशब्दात्पराभिमतं सत्तासामान्यं वारयति । तस्य सामान्यादिभ्यो व्यावृत्तत्वात् । अस्य च सर्वानुगतत्वात् । सनातनो नित्यैकरूपः । उपाधिमान् हि उपाधिविक्रियया नित्यं विक्रियत इव भाति । अयं त्वनुपाधित्वान्नित्यैकरूप एव यः स भावः सर्वेषु

४ मधुसूदनीव्याख्या ।

एवमवशानामुत्पत्तिविनाशप्रदर्शनेन 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनः' इत्येतद्व्याख्यातं, अधुना 'मामुपेत्य पुनर्जन्म न विद्यते' इत्येतद्व्याचष्टे द्वाभ्याम्—तस्माच्चराचरस्थूलप्रपञ्चकारणभूताद्धिरण्यगर्भाख्यादव्यक्तात्परो व्यतिरिक्तः श्रेष्ठो वा तस्यापि कारणभूतः । व्यतिरेकेऽपि सालक्षण्यं स्यादिति नेत्याह—अन्योऽत्यन्तविलक्षणः । 'न तस्य प्रतिमा अस्ति' इति श्रुतेः । अव्यक्तो रूपादिहीनतया चक्षुराद्यगोचरो भावः कल्पितेषु सर्वेषु कार्येषु सद्रूपेणानुगतः । अतएव सनातनो नित्यः । तुशब्दो हेयादनित्यादव्यक्तादुपादेयत्वं नित्यस्याव्यक्तस्य वैलक्षण्यं सूचयति । एतादृशो यो भावः स हिरण्यगर्भ इव सर्वेषु भूतेषु नश्यत्स्वपि न विनश्यति

५ भाष्योत्कर्षदीपिका ।

संसारोपरमं संपादयेदिति ॥ १९ ॥ अक्षरं ब्रह्म परममित्युपक्रम्योमित्येकाक्षरं ब्रह्मेत्यादिना तत्प्राप्त्युपाय उपदिष्टः, अथेदानीमक्षरस्य प्राप्यस्य स्वरूपमाह—**पर इत्यादिना** । तस्मात्त्वव्यक्ताद्भूतग्रामबीजभूताविद्यालक्षणात्परो व्यतिरिक्तो भिन्नः । अव्यक्तात् हिरण्यगर्भादिति वा । अस्मिन्पक्षे 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति श्रुत्या हिरण्यगर्भान्महानात्मेत्यनेन प्रतिपादितात्परत्वमव्यक्तशब्दप्रतिपादिताया मूलप्रकृतेरुक्तं तदनुरोधेनात्रापि हिरण्यगर्भात्परस्य मूलप्रकृतिबोधकस्याव्यक्तशब्दस्य ग्रहणं प्राप्नोतीति । इमं पक्षं विहायाचार्यैरव्यक्तात्पुरुषः परः इति श्रुतिरनुसृता । तुशब्दः संसारबीजभूतान्मूलप्रकृतिशब्दवाच्यादव्यक्तान्मोक्षाख्यस्य सकलप्रपञ्चशून्यस्य परमानन्दैकघनस्य परमात्मनोऽव्यक्तस्याक्षरस्य वैलक्षण्यद्योतनार्थः । भावः सत्तास्वरूपः अक्षराख्यं परं ब्रह्म । स्वरूपतो व्यतिरिक्तत्वेऽपि लक्षणैक्यव्यावृत्त्यर्थं तुना द्योतितमर्थं तद्वाचकेनाप्याहान्य इति । विलक्षण इत्यर्थः । यद्वा परशब्दस्य प्रकृष्टवाचिनो भावे विशेषणार्थत्वेन पुनरुक्तिशङ्कैव नास्तीत्येके । आचार्यैस्तु निकृष्टात्प्रकृष्टस्य विलक्षणत्वव्य-

६ श्रीधरीव्याख्या ।

लोकानामनित्यत्वं प्रपञ्च्य परमेश्वरस्वरूपस्य नित्यत्वं प्रपञ्चयति—**पर इति द्वाभ्याम्** । तस्माच्चराचरकारणभूतादव्यक्तात्परः तस्यापि कारणभूतो योऽन्यस्तद्विलक्षणोऽव्यक्तश्चक्षुराद्यगोचरो भावः सनातनोऽनादिः स तु सर्वेषु कार्यकारणलक्षणेषु भूतेषु नश्यत्स्वपि न

७ अभिनवगुप्ताचार्यव्याख्या ।

स्थितम् ॥ १७ ॥ १८ ॥ १९ ॥ सर्वतो लोकेभ्यः पुनरावृत्तिर्न तु मां परमेश्वरं प्राप्येति स्फुटयति—अव्यक्त इत्यादि परस्तस्मादित्या-

---

१ मधुसूदनः.

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥**
**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।**

१ श्रीमच्छांकरभाष्यम्।

स भावः सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥ २० ॥ अव्यक्त इति। योऽसावव्यक्तोऽक्षर इत्युक्तस्तमेवाक्षरसंज्ञकमव्यक्तं भावमाहुः परमां प्रकृष्टां गतिम्। यं भावं प्राप्य गत्वा न निवर्तन्ते संसाराय तद्धाम स्थानं परमं प्रकृष्टं मम विष्णोपरमं पदमित्यर्थः ॥ २१ ॥ तल्लब्धेरुपाय उच्यते—

२ आनन्दगिरिव्याख्या।

क्वैव नास्तीति द्रष्टव्यम्। अनादिभावस्याक्षरस्याविनाशित्वमर्थसिद्धं समर्थयते—**यः स भाव इति**। सर्वं हि विनश्यद्विकारजातं पुरुषान्तं विनश्यति स तु विनाशहेत्वभावान्न विन(नं)ष्टुमर्हतीत्यर्थः ॥ २० ॥ यथोक्तेऽव्यक्ते भावे श्रुतिसंमतिमाह—**अव्यक्त इति**। तस्य परमगतित्वं साधयति—**यं प्राप्येति**। योऽसावव्यक्तो भावोऽत्र दर्शितः स 'येनाक्षरं पुरुषं वेद सत्यम्' इत्यादिश्रुतावक्षर इत्युक्तस्तं वाक्षरं भावं परमां गतिं 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्याद्याः श्रुतयो वदन्तीत्याह—**योऽसाविति**। परमपुरुषस्य परमगतित्वमुक्तं व्यनक्ति—**यं भावमिति**। 'तद्विष्णोः परमं पदम्' इति श्रुतिमत्र संवादयति—**तद्धामेति** ॥ २१ ॥ नन्वव्यक्तादतिरिक्तस्य तद्वि-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

भूतेषु वियदादिषु नश्यत्सु न विनश्यति केवलसत्तारूपत्वात्। एतेन तस्य कालत्रयाबाध्यत्वं नित्यत्वं चोक्तम् ॥ २० ॥ अव्यक्तो न व्यज्यत इति दृश्यत्वं निरस्तम्। अक्षरोऽश्नुते व्याप्नोतीति त्रिविधपरिच्छेदशून्यत्वमुक्तम्। तं भावं परमां गतिम्। ब्रह्मलोकान्ता गतिरपरमा। कार्यत्वात्। इयं तु परमा। कार्यकारणातीतत्वात्। आहुः 'एषास्य परमा गतिः' इत्यादयः श्रुतयः। यं भावं प्राप्य न निवर्तन्ते पुनः संसारे न पतन्ति तदिति विधेयापेक्षं क्लीबत्वम्। स एव मम विष्णोः परममुपाध्यस्पृष्टं धाम प्रकाशः 'तद्विष्णोः परमं पदम्' इति श्रुतिप्रसिद्धं निष्कलं ब्रह्म ॥ २१ ॥ एवं ज्ञेयं प्रत्यगभिन्नं ब्रह्मोक्त्वा जगत्कारणमुपासनीयमितोऽन्यदित्याह—**पुरुष इति**। तुशब्दः पूर्ववैलक्षण्यद्योत-

४ मधुसूदनीव्याख्या।

उत्पद्यमानेष्वपि नोत्पद्यत इत्यर्थः। हिरण्यगर्भस्य तु कार्यस्य भूताभिमानित्वात्तदुत्पत्तिविनाशाभ्यां युक्तावेवोत्पत्तिविनाशौ नतु तदनभिमानिनोऽकार्यस्य परमेश्वरस्येति भावः ॥ २० ॥ यो भाव इहाव्यक्त इत्यक्षर इति चोक्तोऽन्यत्रापि श्रुतिषु स्मृतिषु च तं भावमाहुः श्रुतयः स्मृतयश्च 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्याद्याः। परमामुत्पत्तिविनाशशून्यस्वप्रकाशपरमानन्दरूपां गतिं पुरुषार्थविश्रान्तिम्। यं भावं प्राप्य न पुनः निवर्तन्ते संसाराय तद्धाम स्वरूपं मम विष्णोः परमं सर्वोत्कृष्टम्। मम धामेति राहोः शिर इतिवद्भेदकल्पनया षष्ठी। अतोऽहमेव परमा गतिरित्यर्थः ॥ २१ ॥ इदानीम् 'अनन्य-

५ भाष्योत्कर्षदीपिका।

तिरिक्तत्वध्रौव्यात्तुशब्दयोरुभयोरपि वैयर्थ्यमभिप्रेत्य सुगमत्वाद्वायं पक्षस्त्यक्तः। वैलक्षण्यं स्फुटयति। सनातनः चिरंतनः यः सर्वेषु भूतेषु हिरण्यगर्भादिषु विनश्यत्सु न विनश्यति स भावः परमात्मेत्यर्थः। तथाच सनातनत्वे सति अनश्वरत्वं परमात्मलक्षणं नाव्यक्त इति भावः ॥२०॥ योऽसौ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति', 'अस्थूलमनणु','एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च', 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यादिश्रुतयस्तमेवाक्षरसंज्ञकं अव्यक्तं भावं परमां प्रकृष्टां गतिं प्राप्यमाहुः। यं प्राप्यं भावं प्राप्य गत्वा पुनः संसाराय न निवर्तन्ते। जन्ममरणादिरूपां संसृतिं न प्राप्नुवन्ति। मम विष्णोः परब्रह्मणः तत्परमं सर्वोत्कृष्टं धाम स्थानं 'तद्विष्णोः परमं पदम्' इति श्रुतेः। श्रुतावत्र च राहोः शिर इतिवदभेदेऽपि भेदकल्पनया षष्ठी। अतोऽहमेव मोक्षाख्यं परमं स्थानमित्यर्थः ॥ २१ ॥ तत्प्राप्तेरव्यभिचारि साधनमाह। स परः पुरुषः सर्वोत्तमः पुरिशयनात्पूर्णत्वाद्वा पुरुषः। अनन्यया

६ श्रीधरीव्याख्या।

विनश्यति ॥ २० ॥ अविनाशे प्रमाणं दर्शयन्नाह—**अव्यक्त इति**। यो भावः अव्यक्तोऽतीन्द्रियोऽक्षरः प्रवेशनाशशून्य इति 'तथाऽक्षरात्संभवतीह विश्वम्' इत्यादिश्रुतिष्वक्षर इत्युक्तः तं परमां गतिं गम्यं पुरुषार्थमाहुः 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यादिश्रुतयः। परमगतित्वमेवाह—यं प्राप्य न निवर्तन्त इति। तच्च ममैव धाम स्वरूपम्। ममैवेत्युपचारे षष्ठी राहोः शिर इतिवत्। अतोऽहमेव परमा गतिरित्यर्थः ॥ २१ ॥ तत्प्राप्तौ च भक्तिरन्तरङ्गोपाय इत्युक्तमेवाह—**पुरुष इति**। स चाहं परः

७ अभिनवगुप्ताचार्यव्याख्या।

दिना। उक्तप्रकारं कालसंकलनाविवर्जितं तु वासुदेवतत्त्वं व्यक्तं सर्वानुगतं तच्चैष्यव्यक्तं दुष्प्रापत्वात्। तच्च भक्तिलभ्यमित्यावेदितं प्राक् तत्रस्थं चैतद्विश्वं यत्खल्वविनाशिरूपं सदा तथाभूतं तत्र कः पुनःशब्दस्यावृत्तिशब्दस्य चार्थः। सद्धि मध्ये तत्स्वभावविच्छेदापेक्षः।

**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**पुरुष इति । पुरुषः पुरि शयनात्पूर्णत्वाद्वा स परः पार्थ, परो निरतिशयो यस्मात्पुरुषान्न परं किंचित्स भक्त्या लभ्यस्तु ज्ञानलक्षणयानन्ययात्मविषयया । यस्य पुरुषस्यान्तःस्थानि मध्यस्थानि कार्यभूतानि भूतानि । कार्यं हि कारणस्यान्तर्वर्ति भवति । येन पुरुषेण सर्वमिदं जगत्ततं व्याप्तमाकाशेनेव**

२ आनन्दगिरिव्याख्या ।

लक्षणस्य परमपुरुषस्य प्राप्तौ कश्चिदसाधारणो हेतुरेषितव्यो यस्मिन्प्रेक्षापूर्वकारी तत्प्रेक्षया प्रवृत्तो निर्वृणोति तत्राह—**तल्लब्धेरिति** । परस्य पुरुषस्य सर्वकारणत्वं सर्वव्यापकत्वं च विशेषणद्वयमुदाहरति—**यस्येति** । निरतिशयत्वं विशदयति—**यस्मादिति** । तुशब्दोऽवधारणार्थः । भक्तिर्भजनम् सेवा प्रदक्षिणप्रणामादिलक्षणा तां व्यावर्तयति—**ज्ञानेति** । उक्ताया भक्तेर्विषयतो वैशिष्ट्यमाह—**अनन्ययेति** । कोऽसौ पुरुषो यद्विषया भक्तिस्तत्प्राप्तौ पर्याप्तेत्याशङ्क्योत्तरार्धं व्याचष्टे—**यस्येति** । कथंभूतानां तदन्तःस्थत्वं तत्राह—**कार्यं हीति** । 'स पर्यगात्' इति श्रुतिमाश्रित्याह—**येनेति** ॥ २२ ॥ ननु ज्ञानायत्ता परमपुरुषप्राप्तिरुक्ता । नच ज्ञानं मार्गमपेक्ष्य फलाय कल्पते विदुषो गत्युत्क्रान्तिनिषेधश्रुतेस्तथाच मार्गोक्तिरयुक्तेत्याशङ्क्य सगुणशरणानां तदुपदेशोऽर्थवानित्यभिप्रेत्याह—**प्रकृ-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नार्थः । हे पार्थ, योऽयं भक्त्या आराधनेन । उपासनेनेतियावत् । कीदृश्या । अनन्यया नास्त्यन्यो यस्यां सा तया । उपास्योपासकभेदमन्तरेणाहंग्रहरूपयेत्यर्थः । तया भक्त्या यो लभ्यः स परः पूर्वोक्तादव्यावृत्ताननुगतादक्षरादन्यः कारणात्मेति यावत् । लभ्यत्वादेवास्यान्यत्वमपि । नह्यात्मा च लभ्यश्चेति युज्यते । अस्य कारणत्वमेवाह—**यस्येति** । यस्य पुरुषस्यान्तःस्थानि बीजे द्रुम इव सर्वाणि वियदादीनि स्थावरजंगमानि च येन इदं सर्वं ततं व्याप्तमुपादान-

४ मधुसूदनीव्याख्या ।

चेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः' इति प्रागुक्तं भक्तियोगमेव तत्प्राप्त्युपायमाह—स परो निरतिशयः पुरुषः परमात्माहमेव । अनन्यया न विद्यतेऽन्यो विषयो यस्यां तया प्रेमलक्षणया भक्त्यैव लभ्यो नान्यथा । स क इत्यपेक्षायामाह—यस्य पुरुषस्यान्तःस्थान्यन्तर्वर्तीनि भूतानि सर्वाणि कार्याणि । कारणान्तर्वर्तित्वात्कार्यस्य । अतएव येन पुरुषेण सर्वमिदं कार्यजातं ततं व्याप्तम् 'यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं', 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः', 'सपर्यगाच्छुक्रम्' इत्यादिश्रुतिभ्यश्च ॥ २२ ॥ सगुणब्रह्मोपासकास्तत्पदं प्राप्य न निवर्तन्ते किंतु क्रमेण मुच्यन्ते । तत्र तल्लोक-

५ भाष्योत्कर्षदीपिका ।

न विद्यतेऽन्यो विषयो यस्यां तया । आत्मविषययेति यावत् । भक्त्या ज्ञानलक्षणयोत्तमभक्त्या । तदुक्तं 'सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च । प्रेम मैत्री दयोपेक्षा यः करोति स मध्यमः ॥ अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः' इति । 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' । 'यो वै अन्यां देवतामुपास्ते अहमन्योऽसावन्य इति न स वेदेति तस्मात्स परः पुरुष अहमेव न तदभिन्नात्मनः किंचित्पृथगस्ति' इत्यनन्यया भक्त्या लभ्यः लब्धुं शक्यः । ननु सतु सदैव प्राप्त इत्याशङ्क्य द्विविधो हि लाभोऽलब्धलाभो लब्धलाभश्चेति । तत्रालब्धस्य ग्रामादे राजसेवादिना लाभ आद्यः । लब्धस्यैव ग्रैवेयकादेराप्तवाक्याल्लाभो द्वितीयः । तत्रान्त्यलाभोऽत्राभिप्रेत इत्याशयेन शङ्कामङ्गीकरोति । यस्य परस्य पुरुषस्यान्तर्मध्ये स्थानि स्थितानि भूतानि सर्वाणि कार्यजातानि यस्मिन्नधिष्ठाने कल्पितानीत्यर्थः । कल्पितं ह्यधिष्ठानस्यान्तर्भवति न व्यतिरिक्तं येन पुरुषेणेदं सर्वं जगत्ततं सत्तास्फूर्तिभ्यां व्याप्तं त्वमपि मत्प्राप्त्यव्यभिचारिसाधनभूतां भक्तिं यत्नेन संपादय नतु पृथातनयोऽहं मम तु भक्तिं विनैवेश्वरलाभो भविष्यतीति विश्रम्भाश्रयणं कुर्विति ध्वनयन् संबोधयति—**हे पार्थेति** । मद्विषयानन्या भक्तिस्तवानायासलभ्येति सूचनार्थं वा संबोधनम् ॥ २२ ॥ यद्यपीहैवात्मसाक्षात्कारवतां 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' इति श्रुत्या गत्युत्क्रान्तिनिषेधाद्वक्ष्यमाणमार्गोपदेशस्तदर्थं नोपयुज्यते, तथापि प्रणवावेशितबुद्धीनां प्रकृतानां योगिनां सगुणोपासकानां क्रममुक्तिभाजां केन क्रमेण ब्रह्म-

६ श्रीधरीव्याख्या ।

पुरुषोऽनन्यया न विद्यते अन्यः शरणत्वेन यस्यास्तया एकान्तभक्त्यैव लभ्यो नान्यथा । परत्वमेवाह । यस्य कारणभूतस्यान्तर्मध्ये भूतानि स्थितानि । येन च कारणभूतेन सर्वमिदं जगत्ततं व्याप्तम् ॥ २२ ॥ तदेवं परमेश्वरोपासकाः तत्पदं प्राप्य न निवर्तन्ते अन्ये

७ अभिनवगुप्ताचार्यव्याख्या ।

नच सदातनविश्वोत्तीर्णविश्वाध्यतिरिक्तविश्वनिष्ठात्मकपरबोधस्वातन्त्र्यस्वभावस्य श्रीपरमेश्वरस्य तद्भावप्राप्तस्य येन स्वभावविच्छेदः कोऽपि कदाप्यस्ति । अतो युक्तमुक्तं मामुपेत्यदिवति । एवंच सतताभ्यासेन येषां क्लेशं विनैव भगवदाप्तिस्तेषां वृत्तमुक्तम् ॥ २० ॥ २१ ॥ २२ ॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

घटादि ॥ २२ ॥ प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां ब्रह्मप्रतिपत्तय उत्तरो मार्गो वक्तव्य इति यत्र काल इत्यादि विवक्षितार्थसमर्पणार्थमुच्यते । आवृत्तिमार्गोपन्यास इतरमार्गस्तुत्यर्थः—यत्रेति । यत्र काले प्रयाता इति व्यवहितेन संबन्धः । यत्र यस्मिन्काले त्वनावृत्तिमपुनर्जन्मावृत्तिं तद्विपरीतां चैव । योगिन इति योगिनः कर्मिणश्चोच्यन्ते । कर्मिणस्तु गुणतः 'कर्मयोगेन(ण)योगिनाम्' इति विशेषणाद्योगिनः यत्र काले प्रयाता मृता योगिनोऽनावृत्तिं यान्ति यत्र काले च प्रयाता

२ आनन्दगिरिव्याख्या ।

तानामिति । वक्तव्य इति यत्र काल इत्याद्युच्यत इति संबन्धः । स चेद्वक्तव्यस्तर्हि किमित्यध्यात्मादिभावेन सविशेषं ब्रह्म ध्यायतां फलाप्तये मूर्धन्यनाडीसंबद्धे देवयाने पथ्युपास्यत्वाय वक्तव्ये कालो निर्दिश्यते तत्राह—**विवक्षितेति** । सोऽर्थो मार्गस्तदुक्तिशेषत्वेन कालोक्तिरित्यर्थः । पितृयाणमार्गोपन्यासस्तर्हि किमिति क्रियते तत्राह—**आवृत्तीति** । मार्गान्तरस्यावृत्तिफलत्वादस्य चानावृत्तिफलत्वात्तदपेक्षया महीयानयमिति स्तुतिर्विवक्षितेति भावः । योगिन इति ध्यायिनां कर्मिणां च तन्त्रेणाभिधानमित्याह—**योगिन इति** । कथं कर्मिषु योगिशब्दो वर्तेतामित्याशङ्क्यानुष्ठानगुणयोगादित्याह—**कर्मिणस्त्विति** । गुणतो योगिन इति संबन्धः । तत्रैव वाक्योपक्रमस्यानुकूल्यमाह—**कर्मयोगेने(णे)ति** । अवशिष्टान्यक्षराणि व्याचक्षाणो वाक्यार्थमाह—**यत्रेति** । योगिनो ध्यायिनोऽत्र विवक्षिताः, आवृत्तावधिकृता योगिनः कर्मिण इति विभागः । कालप्राधान्येन मार्गद्वयोपन्यासमुपक्रम्य तमेव प्रधानीकृत्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्वात् स भक्त्या लभ्यत इति योजना ॥ २२ ॥ पूर्वोक्तानामोंकारद्वारा सगुणब्रह्मविदां क्रममुक्तिभाजां ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्य इत्यत आह—**यत्रेति** । आवृत्तिमार्गोपन्यासोऽनावृत्तिमार्गस्तुत्यर्थः । योगिन इति । योगिनः

४ मधुसूदनीव्याख्या ।

भोगात्प्रागनुत्पन्नसम्यग्दर्शनानां तेषां मार्गापेक्षा विद्यते ननु सम्यग्दर्शिनामिव तदनपेक्षेत्युपासकानां तल्लोकप्राप्तये देवयानमार्ग उपदिश्यते । पितृयाणमार्गोपन्यासस्तु तस्य स्तुतये—प्राणोत्क्रमणानन्तरं यत्र यस्मिन्काले कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिनो ध्यायिनः कर्मिणश्च अनावृत्तिमावृत्तिं च यान्ति देवयाने पथि प्रयाता ध्यायिनोऽनावृत्तिं यान्ति । पितृयाणे पथि प्रयाताश्च कर्मिण आवृत्तिं यान्ति । यद्यपि देवयानेऽपि पथि प्रयाताः पुनरावर्तन्त इत्युक्तं 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनः' इत्यत्र, तथापि पितृयाणे पथि गता आवर्तन्त एव न केऽपि तत्र क्रममुक्तिभाजः । देवयाने पथि गतास्तु यद्यपि केचिदावर्तन्ते प्रतीकोपासकास्तडिल्लोकपर्यन्तं गता हिरण्यगर्भपर्यन्तममानवपुरुषनीता अपि पञ्चाग्निविद्याद्युपासका अतत्क्रतवो भोगान्ते निवर्तन्त एव तथापि दहराद्युपासकाः क्रमेण मुच्यन्ते भोगान्त इति न सर्वे एवावर्तन्ते । अतएव पितृयाणः पन्था नियमेनावृत्तिफलत्वान्निकृष्टः । अयं तु देवयानः पन्था अनावृत्तिफलत्वादतिप्रशस्त इति स्तुतिरुपपद्यते । केषांचिदावृत्तावप्यनावृत्तिफलत्वस्यानपायात् । तं देवयानं पितृयाणं च कालं कालाभिमानिदेवतोपलक्षितं मार्गं वक्ष्यामि हे भरतर्षभ, अत्र कालशब्दस्य मुख्यार्थत्वे अग्निर्ज्योतिर्धूमशब्दानामनुपपत्तिर्गतिसृतिशब्दयोश्चेति तदनुरोधेनैकस्मिन्कालपद

५ भाष्योत्कर्षदीपिका ।

प्राप्तिरित्याकाङ्क्षायामुत्तरमार्गे निरूपितव्ये उत्तरमार्गेण गता न निवर्तन्ते दक्षिणेन गतास्तु पुनरावृत्तिभाज इति वक्तव्यस्तुत्यर्थं पितृयाणमार्गोपदेशः । **यत्रेति** । यत्र काले प्रयाता मृता योगिनो ध्यानयोगिन उपासका अनावृत्तिमपुनरावृत्तिं यान्ति कर्मयोगिनश्चावृत्तिं पुनरावृत्तिं यान्ति तं कालं वक्ष्यामि । कर्मिणः योगित्वमनुष्ठानयोगात् 'कर्मयोगेन योगिनाम्' इत्युक्तत्वात् योगिन इत्यनेन प्रक्रान्ता ओमित्येकाक्षरमित्यादिनोक्ता ग्राह्यास्तेन पञ्चाग्निविद्योपासकानां देवयानमार्गेण ब्रह्मलोकं गतानामपि ततो निवृत्तौ न क्षतिः । कर्मयोगिनोऽप्युपासनासमुचितकर्मयोगिनो ग्राह्याः । भरतर्षभेति संबोधयन् भरता अपि निष्कामकर्मयोगसमुचितेनोपासने-

६ श्रीधरीव्याख्या ।

त्वावर्तन्त इत्युक्तम् । तत्र केन मार्गेण गता नावर्तन्ते, केन वा गताश्चावर्तन्त इत्यपेक्षायामाह—**यत्रेति** । यत्र यस्मिन्काले प्रयाता योगिनोऽनावृत्तिं यान्ति, यस्मिंश्च काले प्रयाता आवृत्तिं यान्ति, तं कालं वक्ष्यामीत्यन्वयः । अत्र च रश्म्यनुसारी अतश्चायनेऽपि दक्षिण इति सूचितन्यायेनोत्तरायणादिकालविशेषसरणस्य विवक्षितत्वात्कालशब्देन कालाभिमानिनीभिरातिवाहिकीभिर्देवताभिः प्राप्यो मार्ग उपलक्ष्यते, अतोऽयमर्थः—यस्मिन्कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिन उपासकाः कर्मिणश्च यथाक्रममनावृत्तिमावृत्तिं

७ अभिनवगुप्ताचार्यव्याख्या ।

इदानीं पुनः उत्क्रान्त्या येऽपवर्गं भोगं चेच्छन्ति तेषां कश्चिद्विशेष उच्यते—यत्रकालेत्वित्यादिना । अनावृत्तिर्मोक्षः । आवृत्तिर्भोगाय ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

आवृत्तिं यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥ तं कालमाह—अग्निर्ज्योतिरिति । अग्निः कालाभिमानिनी देवता तथा ज्योतिर्देवतैव कालाभिमानिनी । अथवाऽग्निज्योतिषी यथाश्रुते एव देवते । भूयसां तु निर्देशो यत्र काले तं कालमित्याम्रवणवत् । यथाहर्देवताऽहः शुक्लः शुक्लपक्षदेवता षण्मासा उत्तरायणं तत्रापि देवतैव मार्गभूतेति स्थितोऽन्यत्र न्यायः । तत्र तस्मिन्मार्गे प्रयाता मृता गच्छन्ति ब्रह्म ब्रह्मविदो ब्रह्मोपासनपरा जनाः । क्रमेणेति वाक्यशेषः । नहि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां

२ आनन्दगिरिव्याख्या ।

देवयानं पन्थानमवतारयति—**तं कालमिति** ॥ २३ ॥ यथोपक्रमं व्याख्याय यथाश्रुतं व्याख्याति—**अथवेति** । कथं तर्हि देवतानामतिनेत्रीणां ग्रहणे कालप्राधान्येन निर्देशः श्लिष्यते तत्राह—**भूयसां त्विति** । मार्गद्वयेऽपि कालाद्यभिमानिन्यो देवताः कालशब्देनोच्यन्ते । कालाभिमानिनीनां भूयस्त्वात्कालशब्देन सर्वासां देवतानामुपलक्षणत्वं विवक्षित्वा कालकथनमित्यर्थः । यथाम्राणां भूयस्त्वाद्विद्यमानेष्वपि द्रुमान्तरेषु आम्रैरेव वनं निर्दिश्यते तद्वदित्युदाहरणमाह—**आम्रेति** । ननु मार्गचिह्नानां भोगभूमीनां वा तत्तच्छब्दैरुपादानसंभवे किमिति देवताग्रहणमित्याशङ्क्यातिवाहिकास्तल्लिङ्गादिति न्यायेनोत्तरमाह—**इति स्थित इति** । तेषामग्न्यादीनां समीपमिति सामीप्ये तत्रेति सप्तमी । ब्रह्म कार्योपाधिकं परं वा ब्रह्म परंपरया मुक्त्यालम्बनम् । अतएव क्रमेणेत्युक्तम् । निर्गुणमप्रपञ्चं ब्रह्मास्मीति विद्यावतो व्यवच्छिनत्ति—**ब्रह्मोपासनेति** । ननु ब्रह्मशब्दस्य मुख्यार्थत्वार्थं परब्रह्मविदामेवेयं गतिरुच्यते न बादर्यधिकरण-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मिणश्चोच्यन्ते तेषां यथायोगं मार्गद्वयविभागः । शेषं स्पष्टम् ॥ २३ ॥ तत्रोपासकानां देवयानं पन्थानमाह—**अग्निरिति** । अग्निर्ज्योतिरित्यर्चिरभिमानिनी देवता लक्ष्यते । एवमहरित्यहरभिमानिनी । एवं शुक्लपक्षस्य षष्ठमास-

४ मधुसूदनीव्याख्या ।

एव लक्षणाश्रिता कालाभिमानिदेवतानां मार्गद्वयेऽपि बाहुल्यात्, अग्निधूमयोस्तदितरयोः सतोरप्यग्निहोत्रशब्दवदेकदेशेनाप्युपलक्षणं कालशब्देन । अन्यथा प्रातरग्निदेवताया अभावात्तत्प्रख्यं चान्यशास्त्रमित्यनेन तस्य तस्य नामधेयता न स्यात् । आम्रवणमिति च लौकिको दृष्टान्तः ॥ २३ ॥ तत्रोपासकानां देवयानं पन्थानमाह—अग्निर्ज्योतिरित्यर्चिरभिमानिनी देवता लक्ष्यते । अहरित्यहरभिमानिनी । शुक्लपक्ष इति शुक्लपक्षाभिमानिनी । षण्मासा उत्तरायणमिति उत्तरायणरूपषण्मासाभिमानिनी देवतैव लक्ष्यते । 'आतिवाहिकास्तल्लिङ्गात्' इति न्यायात् । एतच्चान्यासामपि श्रुत्युक्तानां देवतानामुपलक्षणार्थम् । तथाच श्रुतिः 'तेऽर्चिरभिसंभवन्त्यर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षड्डुदङ्ङेति मासांस्तान्मासेभ्यः

५ भाष्योत्कर्षदीपिका ।

नात्रैव साक्षात्कारं लब्ध्वा साक्षान्मुक्तिं देवयानमार्गेण गत्वा क्रमेण वा प्राप्तास्त्वं तु तेभ्यः ऋषभः श्रेष्ठस्तथैव भवितुं योग्योऽसीति सूचयति ॥ २३ ॥ तं कालं वक्ष्यामीति प्रतिज्ञानुरोधेनाग्निः कालाभिमानिनी देवता एवं ज्योतिरपि कालाभिमानिनी देवतैव । अथवाग्निरग्निदेवता ज्योतिर्ज्योतिर्देवतेति यथाश्रुते एव देवते । ननु यत्र काले तं कालं वक्ष्यामीति कथं युज्यते इति चेत् कालाभिमानिनीनां देवतानां मार्गद्वयेऽपि भूयसां वक्तव्यत्वेन कालशब्देन सर्वासां देवतानामुपलक्ष्यत्वं विवक्षित्वा तथा निर्देशः । यथाऽन्येषां गन्तॄणां सत्त्वेऽपि छत्रिणां भूयस्त्वे छत्रिणो यान्तीति निर्देशः । यथावा वृक्षान्तराणां सत्त्वेऽप्याम्राणां भूयस्त्वादाम्रैरेव वनमिति निर्दिश्यते तद्वत् । एतेन कालाभिमानिदेवतोपलक्षितं मार्गं वक्ष्यामि । कालशब्दस्य मुख्यार्थत्वेऽग्निज्योतिर्धूमशब्दानामनुपपत्तिः गतिसृतिशब्दयोश्चेति [१]प्रत्युक्तम् । यतोऽत्र किं यस्मिन्मार्गे जनाः सुखेन गच्छन्ति तं मार्गं वक्ष्यामीति प्रतिज्ञाय यथा कश्चिदुपदिशति आदौ गिरिस्ततो न्यग्रोधस्ततो नदीति तथा मार्गोपदेश उत यत्र सुखेन नगरं ग्रामं वा गच्छन्ति तं वक्ष्यामीति प्रतिज्ञाय कश्चिदुपदिशति आदौ वृषयानं ततोऽश्वयानं ततो नरयानं ततः पादयानमिति तद्वत् । आद्ये 'आतिवाहिकास्तल्लिङ्गात्' इत्यधिकरणविरोधः । द्वितीये उक्तरीत्याग्न्यादिशब्दानां सम्यगुपपत्त्या लक्षणावैयर्थ्यं श्रुतावतिवाहिका इतिन्यायेनार्चिरादीनामतिवाहिकत्वस्थापनादप्यग्न्यादीनामतिवाहिकत्वेन ग्राह्यत्वावश्यकत्वेन तं कालं वक्ष्यामीति प्रतिज्ञावाक्येऽपि कालाभिमानिन्यो देवता वक्ष्या-

६ श्रीधरीव्याख्या ।

च यान्ति तं कालाभिमानिदेवतोपलक्षितं मार्गं कथयिष्यामीति । अग्निज्योतिषोः कालाभिमानित्वाभावेऽपि भूयसामहरादिशब्दोक्तानां कालाभिमानित्वात्तत्साहचर्यादाम्रवनमित्यादिवत्कालशब्देनोपलक्षणमविरुद्धम् ॥ २३ ॥ तत्रानावृत्तिमार्गमाह—**अग्निरिति** । अग्निज्योतिःशब्दाभ्यां 'तेऽर्चिषमभिसंभवन्ति' इति श्रुत्युक्तार्चिरभिमानिनी देवतोपलक्ष्यते । अहरिति दिवसाभिमानिनी । शुक्ल इति

१ मधुसूदनः.

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

गतिरागतिर्वा क्वचिदस्ति 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः । ब्रह्मसंलीनप्राणा एव ते ब्रह्ममया ब्रह्मभूता एव ते । क्रमेण तु गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥ धूम इति । धूमो रात्रिर्धूमाभिमा-

२ आनन्दगिरिव्याख्या ।

विरोधादित्याह—नहीति ॥ २४ ॥ प्रकृतं देवयानं पन्थानं स्तोतुं पितृयाणमुपन्यस्यति—धूम इति । अत्रापि मार्ग-चिह्नानि भोगभूमीश्च व्यवच्छिद्यातिवाहिकदेवताविषयत्वं धूमादिपदानां विभजते—धूमेत्यादिना । तत्रेति सप्तमी

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संमितोत्तरायणस्य चाभिमानिन्यौ देवते एव । एतच्चान्यासामप्युपलक्षणम् । तत्र प्रयाता उत्क्रान्ता ब्रह्मकार्यं ब्रह्मत-द्वारा परं च गच्छन्ति । ब्रह्मविदो ब्रह्मोपासका जनाः ॥ २४ ॥ एतेन च धूमो रात्रिरित्येषोऽपि धूमादिमार्गः कर्मि-

४ मधुसूदनीव्याख्या ।

संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति । अत्र श्रुत्यन्तरानुसारात्संवत्सरानन्तरं देवलोकदेवता ततो वायुदेवता तत आदित्य इत्याकरे निर्णीतम् । एवं विद्युतोऽनन्तरं वरुणेन्द्रप्रजापतयस्तावता मार्गपरिपूर्तिः । तत्रार्चिरहःशुक्लपक्षोत्तरायणदे-वता इहोक्ताः । संवत्सरो देवलोको वायुरादित्यश्चन्द्रमा विद्युद्वरुण इन्द्रः प्रजापतिश्चेत्यनुक्ता अपि द्रष्टव्याः । तत्र देवयानमार्गे प्रयाता गच्छन्ति ब्रह्मकार्योपाधिकं 'कार्यं बादरिरस्य गत्युपपत्तेः' इति न्यायात् । निरुपाधिकं तु ब्रह्म तद्द्वारैव क्रममुक्तिफलत्वात् । ब्रह्मविदः सगुणब्रह्मोपासका जनाः अत्र 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इति श्रुताविममिति विशेषणात्कल्पान्तरे केचिदावर्तन्त इति प्रतीयते । अतएवात्र भगवतोदासितं श्रौतमार्गकथनेनैव व्याख्यानात् ॥ २४ ॥ देवयानमार्गस्तुत्यर्थं पितृ-याणमार्गमाह—अत्रापि धूम इति धूमाभिमानिनी देवता, रात्रिरिति रात्र्यभिमानिनी, कृष्ण इति कृष्णपक्षाभिमानिनी, षण्मासा दक्षिणायनमिति दक्षिणायनाभिमानिनी लक्ष्यते । एतदप्यन्यासां श्रुत्युक्तानामुपलक्षणम् । तथाहि श्रुतिः 'ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृ-

५ भाष्योत्कर्षदीपिका ।

मीत्यर्थस्यैव सम्यक्त्वं च । यथागमनाधिकरणे पृथिवीप्रदेशेऽस्मिन्मार्गे एते गच्छन्तीति व्यवहारस्तथा योगिगमनाधिकरणरूपासु कालाभिमानिनीष्वह्न्यादिषु देवतासु इति न वक्ष्यमाणगतिसृतिशब्दयोरनुपपत्तिः । यद्वा भाष्येऽपि कालशब्देन कालाभिमानिदेव-तोपलक्षितं मार्गं वक्ष्यामीति व्याख्याय यथाकथंचिदविरोधः संपाद्यः । एतच्चान्यासामपि श्रुत्युक्तानां देवतानामुपलक्षणार्थम् । तथाच श्रुतिः 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्स-रादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान्ब्रह्म गमयत्येष ब्रह्मपथो देवपथ इमं मानवमावर्तं नावर्तन्ते' इति । अत्र श्रुतावपि श्रुत्यन्तरानुसारेण संवत्सराद्देवलोकं देवलोकाद्वायुं वायोरादित्यमिति विद्युतोऽनन्तरं च विद्युतो वरुणं वरुणादिन्द्रमिन्द्रात्प्रजापतिमिति बोध्यम् । तत्र तस्मिन्देवयाने प्रयाता मृता ब्रह्मविदः क्रमेण ब्रह्म गच्छन्ति । ब्रह्मविद इति ब्रह्मोपासका ग्राह्या न तु सम्यग्दर्शननिष्ठाः सद्योमुक्तिभाजः । 'न तस्य प्राणा उत्क्रामन्ति' इत्यादिश्रुत्या तेषां गतिमागतिं च प्रतिषिध्य ब्रह्मसंलीनप्राणत्वब्रह्मभूतत्वप्रतिपादनात् । तथाच भगवतो व्यासस्य सूत्रम् 'कार्यं बादरिरस्य गत्युपपत्तेः' इति । स एतान्ब्रह्म गमयतीत्यत्र विचिकित्स्यते किं कार्यमपरं ब्रह्म गमयति आहोस्वित्परमेवाऽविकृतं मुख्यं ब्रह्मेति । कुतः संशयः । ब्रह्म-शब्दप्रयोगात् गतिश्रुतेश्च । तत्र कार्यमेव सगुणमपरं ब्रह्म नयत्येतानमानवः पुरुष इति बादरिराचार्यो मन्यते । कुतः गत्युपप-त्तेरस्य हि कार्यस्य ब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्त्वात् नतु परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वावकल्पते सर्वगतत्वात् प्रत्यगात्मत्वाच्च गन्तॄणामिति ॥ २४ ॥ देवयानस्तुतये पितृयाणमुपन्यस्यति—धूम इति । धूमादिशब्दैस्तत्तदभिमानिन्यो देवता आतिवाहिकाः पूर्ववद्ग्राह्याः नतु मार्गचिह्नानि भोगभूमयो वा । तत्र प्रयाता इति विभक्तिं विपरिणम्यानुषज्जते । तस्मिन्मार्गे मृत

६ श्रीधरीव्याख्या ।

शुक्लपक्षाभिमानिनी । उत्तरायणरूपाः षण्मासा इत्युत्तरायणाभिमानिनी । एतच्चान्यासामपि श्रुत्युक्तानां संवत्सरदेवलोकादिदेवतानामुप-लक्षणार्थम् । एवंभूतो यो मार्गस्तत्र प्रयाता गता भगवदुपासका जनाः ब्रह्म प्राप्नुवन्ति । यतस्ते ब्रह्मविदः । तथाच श्रुतिः 'तेऽर्चिषम-भिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकम्' इति । नहि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिर्वा क्वचिदस्ति 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः ॥ २४ ॥ आवृत्तिमार्गमाह—धूम इति ।

७ अभिनवगुप्ताचार्यव्याख्या ।

उत्तरेणोर्ध्वेनायनं षाण्मासिकम् । तच्च प्रकाशादिधर्मकत्वादहनादिकैः शब्दैरुपचर्यते ॥ २४ ॥ अतो विपरीतं विपर्ययेण तत्र चन्द्रमसं

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

निनी रात्र्यभिमानिनी च देवता । तथा कृष्णः कृष्णपक्षदेवता । षण्मासा दक्षिणायनमिति च पूर्ववद्देवतैव । तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिः फलमिष्टादिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयान्निवर्तते ॥ २५ ॥ शुक्लेति । शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे । ज्ञानप्रकाशकत्वाच्छुक्ला तदभावात्कृष्णा । एते शुक्लकृष्णे हि गती जगत इत्यधिकृतानां ज्ञानकर्मणोर्न जगतः सर्वस्यैवैते गती संभवतः । शाश्वते नित्ये संसारस्य नित्यत्वान्मतेऽभिप्रेते । तत्रैकया शुक्लया यात्यनावृत्तिमन्ययेतर-

२ आनन्दगिरिव्याख्या ।

पूर्ववदेव सामीप्यार्थो, इष्टादीत्यादिशब्देन पूर्तदत्ते गृह्येते । कृतात्ययेऽनुशयवानिति न्यायं सूचयति—**तत्क्षयादिति** ॥ २५ ॥ आरोहावरोहयोरभ्यासवाचिना पुनःशब्देन संसारस्यानादित्वं सूच्यते । रात्र्यादौ मृतानां ब्रह्मविदामब्रह्मप्राप्तिशङ्कानिवृत्त्यर्थमभिमानिदेवताग्रहणाय मार्गयोर्नित्यत्वमाह—**शुक्लेति** । ज्ञानप्रकाशकत्वाद्विद्याप्राप्यत्वादर्चिरादिप्रकाशोपलक्षितत्वाच्च शुक्ला देवयानाख्या गतिस्तदभावाज्ज्ञानप्रकाशकत्वाभावाद्धूमाद्यप्रकाशोपलक्षितत्वादविद्याप्राप्यत्वाच्च कृष्णा पितृयाणलक्षणा गतिस्तयोर्गत्योः श्रुतिस्मृतिप्रसिद्ध्यर्थो हिशब्दः । जगच्छब्दस्य ज्ञानकर्माधिकृतविषयत्वेन संकोचे हेतुमाह—**न जगत इति** । अन्यथा ज्ञानकर्मोपदेशानर्थक्यादित्यर्थः । तयोर्नित्यत्वे हेतुमाह—**संसारस्येति** । मार्गयोर्यावत्संसारभावित्वे फलितमाह—**तत्रेति** । क्रममुक्तिरनावृत्तिः । भूयो भोक्तव्यकर्म-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

णामपक्वयोगिनां चोचित आवृत्तिफलश्च व्याख्यातः ॥ २५ ॥ उक्तौ मार्गावुपसंहरति—**शुक्लेति** । शुक्ला ज्ञानहेतु-

४ मधुसूदनीव्याख्या ।

लोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इति । तत्र धूमरात्रिकृष्णपक्षदक्षिणायनदेवता इहोक्ताः । पितृलोक आकाशश्चन्द्रमा इत्यनुक्ता अपि द्रष्टव्याः । तत्र तस्मिन्पथि प्रयाताश्चान्द्रमसं ज्योतिः फलं योगी कर्मयोगीष्टापूर्तदत्तकारी प्राप्य यावत्संपातमुषित्वा निवर्तते । संपतत्यनेनेति संपातः कर्म । तस्मादेतस्मादावृत्तिमार्गादनावृत्तिमार्गः श्रेयानित्यर्थः ॥ २५ ॥ उक्तौ मार्गावुपसंहरति—शुक्ला अर्चिरादिगतिर्ज्ञानप्रकाशमयत्वात् । कृष्णा धूमादिगतिर्ज्ञानहीनत्वेन तमोमयत्वात् । ते एते शुक्लकृष्णे गती मार्गौ हि प्रसिद्धे सगुणविद्याकर्माधिकारिणोः, जगतः सर्वस्यापि शास्त्रज्ञस्य शाश्वते अनादी मते संसारस्यानादित्वात् । तयोरेकया शुक्लया यात्यनावृत्तिं कश्चित्, अन्यया कृष्णया पुनरावर्तते सर्वोऽपि ॥ २६ ॥ गतेरुपास्यत्वाय

५ भाष्योत्कर्षदीपिका ।

इत्यर्थः । योगी इष्टापूर्तदत्तकारी कर्मयोगी चन्द्रमसि चन्द्रे भवं चान्द्रमसं ज्योतिः फलं प्राप्य भुक्त्वा तत्क्षयात्पुनर्निवर्तते । एतदप्यन्यासां श्रुत्युक्तानामुपलक्षणार्थम् । तथाच श्रुतिः 'ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तानेते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तते' इति । तथाच पुनःपुनरावृत्तिलक्षणादस्मान्मार्गात्पूर्वोक्तोऽपुनरावृत्तिलक्षणो मार्गो ज्यायानित्यभिप्रायः ॥ २५ ॥ शुक्ला ज्ञानप्रकाशहेतुत्वात्तदभावात्कृष्णा । एते शुक्लकृष्णे गती मार्गौ जगतः उपासनायां कर्मणि चाधिकृतस्य शाश्वते नित्ये अनादिरूपे मते अभिप्रेते संसारस्यानादित्वात् । तत्रैकया शुक्लया गत्या अनावृत्तिं

६ श्रीधरीव्याख्या ।

धूमाभिमानिनी देवता । रात्र्यादिशब्दैश्च पूर्ववदेव रात्रिकृष्णपक्षदक्षिणायनरूपषण्मासाभिमानिन्यस्तिस्रो देवता उपलक्ष्यन्ते । एताभिर्देवताभिरुपलक्षितो यो मार्गस्तत्र प्रयातः कर्मयोगी चान्द्रमसं ज्योतिस्तदुपलक्षितं स्वर्गलोकं प्राप्य तत्रेष्टापूर्तकर्मफलं भुक्त्वा पुनरावर्तते । अत्रापि श्रुतिः 'ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति' इत्यादिः । तदेवं निवृत्तिकर्मसहितोपासनया क्रममुक्तिः, काम्यकर्मभिश्च स्वर्गभोगानन्तरमावृत्तिः, निषिद्धकर्मभिस्तु नरकभोगानन्तरमावृत्तिः, क्षुद्रकर्मणां जन्तूनां तत्रैव पुनः पुनर्जन्मेति द्रष्टव्यम् ॥ २५ ॥ उक्तौ मार्गावुपसंहरति—**शुक्लेति** । शुक्लाऽर्चिरादिगतिः प्रकाशमयत्वात्, कृष्णा धूमादिगतिस्तमोमयत्वात् । एते गती मार्गौ ज्ञानकर्माधिकारिणो जगतः शाश्वतेऽनादी संमते, संसारस्यानादित्वात् । तयोरेकया शुक्लया निवृत्तिं मोक्षं याति । अन्यया कृष्णया तु पुनरावर्तते ॥ २६ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

भोग्यांशानुप्रवेशाद्भोगायावृत्तिः । अनयोर्गत्योर्मध्यादाद्ययोरनावृत्तिर्मोक्षः । अन्यथा भोगः ॥ २५ ॥ एते सृती यो वेत्ति आभ्यन्तरेण

**नैते सृती पार्थ जानन्योगी मुह्यति कश्चन।**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**
**वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम्।**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
महापुरुषयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

१ श्रीमच्छांकरभाष्यम्।

**यावर्तते पुनर्भूयः ॥ २६ ॥ नैते इति। नैते यथोक्ते सृती मार्गौ पार्थ, जानन्संसारायैकान्या मोक्षाय चेति योगी न मुह्यति न कश्चन कश्चिदपि। तस्मात्सर्वेषु कालेषु योगयुक्तः समाहितो भवार्जुन ॥२७॥ शृणु योगस्य माहात्म्यम्—वेदेष्विति। वेदेषु सम्यगधीतेषु यज्ञेषु च साद्गुण्येनानुष्ठितेषु तपःसु च**

२ आनन्दगिरिव्याख्या।

क्षये शेषकर्मवशादित्यर्थः ॥ २६ ॥ गतेरुपास्यत्वाय तद्विज्ञानं स्तौति—**नैते इति**। योगस्य मोहापोहकत्वे फलितमाह—**तस्मादिति**। ज्ञानप्रकारमनुवदति—**संसारायेति**। मोक्षाय क्रममुक्त्यर्थमित्यर्थः। योगी ध्याननिष्ठो गतिमपि ध्यायन्नैव मुह्यति केवलं कर्म दक्षिणमार्गप्रापकं कर्तव्यत्वेन प्रत्येतीत्यर्थः। योगस्यापुनरावृत्तिफलत्वे नित्यकर्तव्यत्वं सिद्धमित्युपसंहरति—**तस्मादिति** ॥ २७ ॥ श्रद्धाविवृद्ध्यर्थं योगं स्तौति—**शृण्विति**। पवित्रपाणित्वप्राङ्मुखत्वादि-साहित्यमध्ययनस्य सम्यक्त्वम्। अङ्गोपाङ्गोपेतत्वमनुष्ठानस्य साद्गुण्यम्। तपसां सुतप्तत्वं मनोबुद्ध्याद्यैकाग्र्यपूर्वकत्वम्। दानस्य च सम्यक्त्वं देशकालपात्रानुगुणत्वम्। इदं विदित्वेत्यत्रेदंशब्दार्थमेव स्फुटयति—**सप्तेति**। यद्यपि 'किं तद्ब्रह्म' इत्यादौ, 'अधियज्ञः कथं कोऽत्र' इत्यत्र प्रश्नद्वयं प्रतिभासानुसारेण कैश्चिदुक्तं तथापि प्रतिवचनालोचनायां द्वित्वप्रतीत्यभावात्प्रकारभेदविवक्षया चशब्दद्वयस्य प्रतिनियतत्वान्न सप्तेति विरुध्यते। न चेदं वेदनमापातिकं

३ नीलकण्ठव्याख्या (चतुर्धरी)।

त्वादर्चिरादिगतिः तदभावात्कृष्णा धूमादिगतिः। एकया शुक्लया। अन्यया कृष्णया ॥ २६ ॥ एते सृती मार्गौ आवृत्त्यनावृत्तिफले जानन् योगी न मुह्यति। योगभ्रष्टोऽयतिरल्पप्रयत्नश्च योगी न भवति कश्चन कोऽपि। यस्मादेवं तस्मात्सर्वेष्वित्यादि स्पष्टम् ॥ २७ ॥ पुनः श्रद्धाभिवृद्धये योगं स्तौति—**वेदेष्विति**। वेदेषु सम्यगधीतेषु यज्ञेषु तपःसु च सम्यगनुष्ठितेषु दानेषु च सम्यग्दत्तेषु यत्पुण्यं तत्फलं चेति पुण्यफलं सर्वेषु समुच्चितेषु यत्प्रदिष्टं शास्त्रेषु

४ मधुसूदनीव्याख्या।

तद्विज्ञानं स्तौति—एते सृती मार्गौ हे पार्थ, जानन् क्रममोक्षायैका पुनः संसारायापरेति निश्चिन्वन् योगी ध्याननिष्ठो न मुह्यति। केवलं कर्म धूमादिमार्गप्रापकं कर्तव्यत्वेन न प्रत्येति कश्चन कश्चिदपि। तस्माद्योगस्यापुनरावृत्तिफलत्वात्सर्वेषु कालेषु योगयुक्तः समाहितचित्तो भवापुनरावृत्तये हे अर्जुन ॥ २७ ॥ पुनः श्रद्धावृद्ध्यर्थं योगं स्तौति—वेदेषु दर्भपवित्र-पाणित्वप्राङ्मुखत्वगुर्वधीनत्वादिभिः सम्यगधीतेषु यज्ञेष्वङ्गोपाङ्गसाहित्येन श्रद्धया सम्यगनुष्ठितेषु, तपस्सु शास्त्रोक्तेषु मनोबुद्ध्या-

५ भाष्योत्कर्षदीपिका।

याति अन्यया कृष्णया गत्या पुनर्भूय आवर्तते ॥ २६ ॥ एते सृती मार्गौ जानन्। पुनरावृत्तिलक्षणसंसारायैका अपुनरावृत्ति-लक्षणमोक्षायान्येति निश्चयवान्योगी ध्यानयोगी कश्चिदपि न मुह्यति। तस्मात्त्वमपि गतिद्वयं ज्ञात्वा मोहरहितः सर्वेषु कालेषु योगयुक्तः समाहितो भव। हे अर्जुन, पूर्वार्धे पार्थेति संबोधनस्य मार्गद्वयज्ञाता योगाभ्यासेन क्रमेण मुच्यते नतु मातुर्गर्भे पुन-रायातीत्यभिप्रायः। उत्तरार्धेऽर्जुनेति संबोधनस्य तु सर्वेषु कालेषु समाधानेनैव स्वस्वरूपं शुद्धं परं ब्रह्मावाप्स्यसीति ॥ २७ ॥ श्रद्धाविवृद्ध्यर्थं योगस्य माहात्म्यं श्रावयति। वेदेषु सम्यगधीतेषु। अध्ययनस्य सम्यक्त्वं च पवित्रपाणित्वप्राङ्मुखत्वगुर्वधीनत्व-

६ श्रीधरीव्याख्या।

मार्गज्ञानफलं दर्शयन् भक्तियोगमुपसंहरति—**नैते इति**। एते सृती मार्गौ हे पार्थ, मोक्षसंसारप्रापकौ जानन्कश्चिदपि योगी न मुह्यति। सुखबुद्ध्या स्वर्गादिफलं न कामयते किंतु परमेश्वरनिष्ठ एव भवतीत्यर्थः। स्पष्टमन्यत् ॥ २७ ॥ अध्यायार्थमष्टप्रश्नार्थनिर्णयं सफलमुपसंहरति—**वेदेष्विति**। वेदेष्वध्ययनादिभिः, यज्ञेष्वनुष्ठानादिभिः, तपःसु कायशोषणादिभिः, दानेषु सत्पात्रार्पणादिभिः,

७ अभिनवगुप्ताचार्यव्याख्या।

क्रमेण योगाभ्यासस्वीकृतेनेत्यर्थः। एतच्च वितत्यप्रकाशमानं ग्रन्थं विस्तारयतीत्यलम् ॥ २६ ॥ तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुनेति। सर्वे ये काला अभ्यन्तरास्तद्विषयं योगमभ्यस्येः। अस्मद्गुरवस्त्वाहुः—सर्वानुग्राहकतया मध्ये आभ्यन्तरकालकृतमुत्क्रान्तिभेदमभिधाय प्रकृतमेव बाह्यकालविषयं मुख्यप्रमेयमुपसंहृतं तस्मात्सर्वेषु कालेष्वित्यादिना ॥२७॥ अत्येति अभिभवति। सर्वकर्मसंस्काराणां भगवत्स्मृत्या

१ श्रीमच्छांकरभाष्यम् ।

सुतप्तेषु दानेषु च सम्यग्दत्तेषु यदेतेषु पुण्यफलं पुण्यस्य फलं पुण्यफलं प्रदिष्टं शास्त्रेणात्येत्यतीत्य गच्छति तत्सर्वं फलजातमिदं विदित्वा सप्तप्रश्ननिर्णयद्वारेणोक्तं सम्यगवधार्यानुष्ठाय योगी परं प्रकृष्टमैश्वरं स्थानमुपैति प्रतिपद्यते, आद्यमादौ भवं कारणं ब्रह्मेत्यर्थः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत्पूज्यपादकृतौ श्रीमद्भगवद्गीताभाष्ये ब्रह्माक्षरनिर्देशो नामाष्टमोऽध्यायः ॥ ८ ॥

२ आनन्दगिरिव्याख्या ।

किंत्वनुष्ठानपर्यन्तमित्याह—**सम्यगिति** । प्रकृतो ध्याननिष्ठो योगीत्युच्यते । ऐश्वर्यं विष्णोः परमं पदं तदेव तिष्ठत्यस्मिन्नशेषमिति स्थानं योगानुष्ठानादशेषफलातिशायिमोक्षलक्षणं फलं क्रमेण लब्धुं शक्यमिति भावः । तदनेन सप्तप्रश्नप्रतिवचनेन योगमार्गं दर्शयता ध्येयत्वेन तत्पदार्थो व्याख्यातः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृत० अष्टमोऽध्यायः ॥ ८ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तत्सर्वं योगी अत्येत्यतिक्रामति कार्यब्रह्मलोकं प्राप्नोतीत्यर्थः । किंकृत्वा । इदं पूर्वोक्तमुपासनं विदित्वा ज्ञात्वानुष्ठाय च । ततश्च किमित्यत आह—यत्स्थानं निर्विशेषं ब्रह्मोपैति प्राप्नोति च क्रमेणेत्यर्थः । आद्यं न तु केनचिन्निर्मितम् । तदनेनाध्यायेन ध्येयस्तत्पदार्थो व्याख्यातः अग्रिमेऽध्याये ज्ञेयं ब्रह्म व्याख्यास्यति ॥ २८ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीण० नीलकण्ठकृतौ भारतभावदीपे भीष्मपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

४ मधुसूदनीव्याख्या ।

चैकाग्र्येण श्रद्धया सुतप्तेषु, दानेषु तुलापुरुषादिषु, देशे काले पात्रे च श्रद्धया सम्यग्दत्तेषु यत्पुण्यफलं पुण्यस्य धर्मस्य फलं स्वर्गस्वाराज्यादि प्रदिष्टं शास्त्रेण अत्येत्यतिक्रामति तत्सर्वं इदं पूर्वोक्तसप्तप्रश्ननिरूपणद्वारेणोक्तं विदित्वा सम्यगनुष्ठानपर्यन्तमवधार्यानुष्ठाय च योगी ध्याननिष्ठः न केवलं तदतिक्रामति परं सर्वोत्कृष्टमैश्वरं स्थानमाद्यं सर्वकारणं उपैति च प्रतिपद्यते च । सर्वकारणं ब्रह्मैव प्राप्नोतीत्यर्थः । तदनेनाध्यायेन ध्येयत्वेन तत्पदार्थो व्याख्यातः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां अक्षरपरब्रह्मयोगो नाम अष्टमोऽध्यायः ॥ ८ ॥

५ भाष्योत्कर्षदीपिका ।

ब्रह्मचर्यपालनत्वादिसाहित्यम्, यज्ञेषु श्रद्धयाङ्गोपाङ्गसाहित्येन साद्गुण्येनानुष्ठितेषु, तपःसु च शास्त्रोक्तेषु श्रद्धया मनोबुद्ध्याद्यैकाग्र्यपूर्वकं सुतप्तेषु, दानेषु च सम्यग्दत्तेषु । सम्यक्त्वं च गोदानादीनां श्रद्धया पुण्यकाले पुण्यदेशे च पात्रेभ्यो दीयमानत्वम् । स तेषु यत्पुण्यस्य फलं स्वर्गादि शास्त्रे प्रदिष्टमुपदिष्टं तत्सर्वं निखिलं फलं अत्येति अतीत्य गच्छति । इदं सप्तप्रश्ननिर्णयेनोक्तं तत्त्वं विदित्वा सम्यगवधार्यानुष्ठाय ध्यानयोगी परमैश्वरं स्थानं आद्यं सर्वकरणं ब्रह्मोपैति प्रतिपद्यते । यत्तु इदमष्टप्रश्ननिर्णयेनोक्तं तत्त्वं विदित्वेति तन्न । ते ब्रह्मेत्यादिना प्रश्नबीजानां सप्तत्वदर्शनात्प्रश्नसमाधाने चाष्टमप्रश्नोत्तरदानस्यादर्शनात्पूर्वाध्यायान्ते भगवतोपक्षिप्तानां ब्रह्माध्यात्मादिसप्तानां पदार्थानां तत्त्वं जिज्ञासुरर्जुन उवाचेति स्वपूर्वग्रन्थविरोधाच्च । एतेनाध्यायार्थमष्टप्रश्ननिर्णयार्थमुपसंहरतीत्यपि प्रत्युक्तम् । योगी ध्यानयोगी आद्यं परं क्रमेणोपैतीति बोध्यम् । तदनेनाष्टमाध्यायेन सप्तप्रश्ननिर्णये ध्येयं ब्रह्म प्रतिपादयता ध्यानयोगमार्गं च कर्मयोगमार्गादुत्कृष्टं दर्शयता ध्येयत्वेन तत्पदार्थो व्याख्यातः ॥ २८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां अष्टमोऽध्यायः ॥ ८ ॥

६ श्रीधरीव्याख्या ।

यत्पुण्यफलमुपदिष्टं शास्त्रेषु तत्सर्वमत्येति ततोऽपि श्रेष्ठं योगैश्वर्यं प्राप्नोति । किं कृत्वा । इदमष्टप्रश्नार्थनिर्णयेनोक्तं तत्त्वं विदित्वा ततश्च योगी ज्ञानी भूत्वा परमुत्कृष्टमाद्यं जगन्मूलभूतस्थानं विष्णोः परमं पदं प्राप्नोति ॥ २८ ॥

अष्टमेष्टविशिष्टेष्टसंपृष्टार्थाष्टनिर्णयैः । अक्लिष्टमष्टधा प्राप्तिः स्पष्टिताष्टमवर्त्मना ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां अष्टमोऽध्यायः ॥ ८ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

विफलीकरणात् सर्वकर्मपरिक्षये चासौ सुखेनैव विन्दति परं शिवमिति शिवम् ॥ २८ ॥ अत्र संग्रहश्लोकः ।

सर्वसत्त्वगतत्वेन विज्ञाते परमेश्वरे । अन्तर्बहिर्न सावस्था न यस्यां भासते विभुः ॥

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे अष्टमोऽध्यायः ॥ ८ ॥

---

१ श्रीधरः. २ श्रीधरः.

# नवमोऽध्यायः ।

श्रीभगवानुवाच ।

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

१ श्रीमच्छांकरभाष्यम् ।

अष्टमे नाडीद्वारेण धारणायोगः सगुण उक्तः। तस्य च फलमग्न्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेवानावृत्तिरूपं निर्दिष्टम् । तत्रानेनैव प्रकारेण मोक्षप्राप्तिफलमधिगम्यते नान्यथेति तदाशङ्काव्याविवृत्सया भगवानुवाच—इदमिति। इदं ब्रह्मज्ञानं वक्ष्यमाणमुक्तं च पूर्वेष्वध्यायेषु तद्बुद्धौ संनिधी-

२ आनन्दगिरिव्याख्या ।

अतीतेनागामिनोऽध्यायस्यागतार्थत्वं वक्तुं वृत्तमनुवदति—अष्टम इति । नाडी सुषुम्नाख्या । धारणाख्येनाङ्गेन युक्तो योगो धारणायोगः । सगुणः सर्वद्वारसंयमनादिगुणस्तेन सहित इत्यर्थः । तत्फलोक्त्यर्थमनन्तराध्यायारम्भमाशङ्क्याह—तस्य चेति । अग्निरर्चिरित्यादिनोपलक्षितेन क्रमवता देवयानेन पथेति यावत् । ज्ञानानन्तरमेव यथोक्तफललाभादलमनेन मार्गेणेत्याशङ्क्याह—कालान्तर इति । आर्चिरादिमार्गेण ब्रह्मप्राप्तौ मुक्तेर्मार्गायत्तत्वात् न तस्य इत्यादिश्रुतिविरोधः स्यादित्याशयेन शङ्क्यते—तत्रेति । वृत्तोऽर्थः सप्तम्यर्थः । उक्ताशङ्कानिवृत्त्यर्थमनन्तराध्यायमुत्थापयति—तदाशङ्केति । संप्रयुक्तत्वेनापरोक्षत्वाभावेऽपि पूर्वोत्तरग्रन्थालोचनया बुद्धिसंनिधानादिदंशब्देन ब्रह्म-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वाध्याये किंतद्ब्रह्मेत्यादिसप्तप्रश्न्यां अक्षरं ब्रह्म परममित्यादिना संक्षिप्य व्याख्यातायां तज्ज्ञानस्य पृथक्प्रयोजनाकाङ्क्षायां कर्मविद आधिभौतिकं धूमादिमार्गप्राप्यं स्थानमिति निरूपणेन प्राप्यप्रापकादिविभागो दर्शितः । येन कर्माधिभूते व्याख्याते । तथा सूत्रान्तर्यामिणोरुपासकस्यार्चिरादिमार्गेण क्रममुक्तिस्थानप्राप्तिरित्युक्तं तेनाधिदैवाधियज्ञौ व्याख्यातौ । ओमित्येकाक्षरमित्यादिना अन्तकाले कथं ज्ञेयोऽसीत्यस्योत्तरं व्याख्यातम् । तदेवं ध्येयब्रह्मविद्या साङ्गा निरूपिता, परिशिष्टमाद्यं ज्ञेयब्रह्मविषयं प्रश्नद्वयं किं तद्ब्रह्म किमध्यात्ममिति तद्विवरणाय नवमोऽध्याय आरभ्यते । न केवलमार्चिरादिगतिप्राप्या कालान्तर एव मुक्तिरस्ति किंत्विहैव सद्योमुक्तिरस्तीति विशेषं वक्तुं श्रीभगवानुवाच—इदं तु ते इति । इदं वक्ष्यमाणं तु पूर्वस्माद्ध्येयाद्विलक्षणं ज्ञेयं ते तुभ्यं गुह्यतममतिगोप्यं प्रवक्ष्यामि । अनसूयवे

४ मधुसूदनीव्याख्या ।

मामक्षरं यः परमक्षरं हि परोपदेशेन चिदक्षरेण । चकार विभ्रान्त्यपनोदवियस्तं काशिराजं गुरुराजमीडे ॥

पूर्वाध्याये मूर्धन्यनाडीद्वारकेण हृदयकण्ठभ्रूमध्यादिधारणासहितेन सर्वेन्द्रियद्वारसंयमगुणकेन योगेन स्वेच्छयोत्क्रान्तप्राणस्यार्चिरादिमार्गेण ब्रह्मलोकं प्रयातस्य तत्र सम्यग्ज्ञानोदयेन कल्पान्ते परब्रह्मप्राप्तिलक्षणा क्रममुक्तिर्व्याख्याता । तत्र चानेनैव प्रकारेण मुक्तिर्लभ्यते नान्यथेत्याशङ्क्य 'अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः' इत्यादिना भगवत्तत्त्वविज्ञानात्साक्षान्मोक्षप्राप्तिरभिहिता । तत्र चानन्या भक्तिरसाधारणो हेतुरित्युक्तं 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इति । तत्र पूर्वोक्तयोगधारणापूर्वकप्राणोत्क्रमणार्चिरादिमार्गगमनकालविलम्बादिक्लेशमन्तरेणैव साक्षान्मोक्षप्राप्तये भगवत्तत्त्वस्य तद्भक्तेश्च विस्तरेण ज्ञापनाय नवमोऽध्याय आरभ्यते । अष्टमे ध्येयब्रह्मनिरूपणेन तद्ध्याननिष्ठस्य गतिरुक्ता, नवमे तु ज्ञेयब्रह्मनिरूपणेन ज्ञाननिष्ठस्य गतिरुच्यत इति संक्षेपः । तत्र वक्ष्यमाणज्ञानस्तुत्यर्थांस्त्रीन् श्लोकान् श्रीभगवानुवाच—इदं त्वित्यादिना ।

५ भाष्योत्कर्षदीपिका ।

अष्टमे देवयानमार्गेणापुनरावृत्तिं मोक्षं गच्छन्तीत्युक्तम्, तत्र तेनैव प्रकारेण मोक्षप्राप्तिर्नान्यथेति शङ्कामपनुदन् श्रीभगवानुवाच—इदमिति । पूर्वोक्तेष्वध्यायेषूक्तं वक्ष्यमाणं च ब्रह्मज्ञानं बुद्धौ संनिधीकृत्येदमित्युक्तम् । तुशब्दो ध्यानाज्ज्ञानस्य वैलक्षण्य-

६ श्रीधरीव्याख्या ।

परेशः प्राप्यते शुद्धभक्त्येति स्थितमष्टमे । नवमे तु तदैश्वर्यमत्याश्चर्यं प्रपञ्च्यते ॥ १ ॥

एवं तावत्सप्तमाष्टमयोः स्वीयं पारमेश्वरं तत्त्वं भक्त्यैव सुलभं नान्यथेत्युक्त्वेदानीमचिन्त्यं स्वकीयमैश्वर्यं भक्तेश्चासाधारणप्रभावं प्रपञ्चयिष्यन् श्रीभगवानुवाच—इदंत्विति । विशेषेण ज्ञायतेऽनेनेति विज्ञानमुपासनं तत्सहितं ज्ञानमीश्वरविषयमिदं अनसूयवे

१ श्रीमच्छांकरभाष्यम्।

**कृत्येदमित्याह। तुशब्दो विशेषनिर्धारणार्थः। इदमेव सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं 'वासुदेवः सर्वमिति', 'आत्मैवेदं सर्वम्', 'एकमेवाद्वितीयम्' इत्यादिश्रुतिस्मृतिभ्यः। नान्यत्। 'अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति' इत्यादिश्रुतिभ्यश्च। ते तुभ्यं गुह्यतमं गोप्यतमं प्रवक्ष्यामि कथयिष्याम्यनसूयवेऽसूयारहिताय। किं तत्। ज्ञानम्। किंविशिष्टम्। विज्ञानसहितमनुभवयुक्तम्।**

२ आनन्दगिरिव्याख्या।

ज्ञानं गृहीतमित्याह—**तद्बुद्धाविति**। प्रकृताज्ञानाज्ज्ञानस्य वैशिष्ट्यावद्योती तुशब्द इत्याह—**तुशब्द इति**। निपातार्थमेव स्फुटयति—**इदमेवेति**। तस्मिन्नर्थे संवादकत्वेन श्रुतिस्मृती दर्शयति—**वासुदेव इति**। अद्वैतज्ञानवद्द्वैतज्ञानमपि केषांचिन्मोक्षहेतुरित्याशङ्क्याह—**नान्यदिति**। द्वैतज्ञानं मोक्षाय न क्षममित्यत्र श्रुतिमुदाहरति—**अथेति**। अविद्याप्रकरणोपक्रमार्थोऽथशब्दः। अतोऽद्वैतादन्यथा। भिन्नत्वेनेत्यर्थः। विदुस्तत्त्वमिति शेषः। द्वैतस्य दुर्निरूपत्वेन कल्पितत्वात्तज्ज्ञानं रज्जुसर्पादिज्ञानतुल्यत्वान्न क्षेमप्राप्तिहेतुरिति चकारार्थः। असूया गुणेषु दोषाविष्करणं तद्रहिताय। ज्ञानाधिकृतायेत्यर्थः। ज्ञानं ब्रह्मचैतन्यं तद्विषयं वा प्रमाणज्ञानं तस्य तेनैव विशेषितत्वानुपपत्तिमाशङ्क्य व्याकरोति—**अनुभवेति**। विज्ञानमनुभवः साक्षात्कारस्तेन सहितमित्यर्थः। उक्तज्ञानं प्राप्तस्य किं स्यादित्याश-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

असूया गुणेषु दोषाविष्करणं तद्रहिताय। ज्ञानं ज्ञप्तिमात्रस्वरूपं ब्रह्म। विज्ञानेनानुभवेन सहितं नतु केवलं पारोक्ष्येण। यज्ज्ञानं ज्ञात्वा साक्षात्कृत्य अशुभात्संसारान्मोक्ष्यसे। अत्र यत्सप्तमादौ 'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः' इति प्रतिज्ञातं, यस्य च विज्ञानाय शाखाचन्द्रन्यायेनोपलक्षणीभूतं जगत्कारणं ब्रह्म तत्रैव निरूपितम्, यद्विज्ञानेऽधिकारसंपत्त्यर्थं तस्यैव सगुणस्योपासनमुक्तं तदिह सर्वशेषीभूतं ब्रह्म वक्तव्यमिति तथैव प्रतिजानीते वचनमात्रेणैवात्राप-

४ मधुसूदनीव्याख्या।

इदं प्रागबहुधोक्तमग्रे च वक्ष्यमाणमधुनोच्यमानं ज्ञानं शब्दप्रमाणकं ब्रह्मतत्त्वविषयकं ते तुभ्यं प्रवक्ष्यामि। तुशब्दः पूर्वाध्यायोक्ताद्ध्यानाज्ज्ञानस्य वैलक्षण्यमाह। इदमेव सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं नतु ध्यानं तस्याज्ञानानिवर्तकत्वात्। तत्त्वन्तःकरणशुद्धिद्वारेदमेव ज्ञानं संपाद्य क्रमेण मोक्षं जनयतीत्युक्तम्। कीदृशं ज्ञानम्। गुह्यतमं गोपनीयतमम्। अतिरहस्यत्वात्। यतो विज्ञानसहितं ब्रह्मानुभवपर्यन्तं ईदृशमतिरहस्यमप्यहं शिष्यगुणाधिक्याद्वक्ष्यामि ते तुभ्यं अनसूयवे। असूया गुणेषु दोषदृष्टिस्तदाविष्करणादिफला। सर्वदायमात्मैश्वर्यख्यापनेनात्मानं प्रशंसति मत्पुरस्तादित्येवंरूपा तद्रहिताय। अनेनार्जवसंयमावपि शिष्यगुणौ व्याख्यातौ। पुनः कीदृशं ज्ञानम्। यज्ज्ञात्वा प्राप्य मोक्ष्यसे सद्य एव संसारबन्धनादशुभात्सर्वदुःखहेतोः

५ भाष्योत्कर्षदीपिका।

द्योतनार्थः। ज्ञानस्य सविज्ञानस्य साक्षान्मोक्षसाधनत्वात्। इदं तु ते ज्ञानं प्रवक्ष्यामीति संबन्धः। तच्च प्रत्यगभिन्नपरमात्मज्ञानं 'वासुदेवः सर्वमिति', 'आत्मैवेदं सर्वं', 'अहं ब्रह्मास्मि', 'सर्वं खल्विदं ब्रह्म', एकमेवाद्वितीयं, 'नेहनानास्ति किंचन', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिश्रुतिस्मृत्युक्तं विज्ञानेनानुभवेन सहितं युक्तं गुह्यतमम्। अयमर्थः—धर्मज्ञानं हि गुह्यम्, उपास्यज्ञानं गुह्यतरम्, अखण्डार्थज्ञानं गुह्यतममतिगोप्यम्। ननु गुह्यतमं किमर्थं वदसीति चेत्त्वानसूयागुणेन वशीकृतो वक्ष्यामीत्याह—अनसूयव इति। गुणेषु दोषाविष्करणमसूया। साक्षान्मोक्षसाधनं परमात्मज्ञानं तु तत्तल्लोकविषयभोगविरोधीति परमपुरुषार्थसाधने तत्त्वज्ञाने दोषदृष्टिस्तद्रहिताय सर्वदायमात्मैश्वर्यख्यापनेनात्मानं प्रशंसति मत्पुरस्तादित्येवंरूपासूयेति वाभ्यसूयति आत्मप्रशंसादिदोषाध्यारोपणेन ईश्वरत्वमजानन्न सहते इति भाष्यात्। यज्ज्ञानमुक्तविशेषणविशिष्टं ज्ञात्वा लब्ध्वा अशुभात्संसारबन्धनान्मोक्ष्यसे। मुक्तो भविष्यसीत्यर्थः। यत्तु इदं वक्ष्यमाणं तु पूर्वस्मात् ध्येयाद्विलक्षणं ज्ञेयं ज्ञानं ज्ञप्तिमात्रस्वरूपं ब्रह्म विज्ञानेनानुभवेन सहितं नतु केवलं पारोक्ष्येण यज्ज्ञानं ज्ञात्वा साक्षात्कृत्येत्यादि तदुपेक्ष्यम्। विज्ञानसहितं 'राजविद्या राजगुह्यं', 'अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप' इति मूलेन इदं ब्रह्मज्ञानं विद्यानां राजा दीप्त्यतिशयवत्त्वाद्दीप्यते हीयमतिशयेन ब्रह्मविद्या। आत्मज्ञानस्य धर्मस्या-

६ श्रीधरीव्याख्या।

पुनःपुनः स्वमाहात्म्यमेवोपदिशतीत्येवं परमकारुणिके मयि दोषदृष्टिरहिताय ते तुभ्यं वक्ष्यामि। तुशब्दो वैशिष्ट्ये। तदेवाह—गुह्यतममित्यादिना। गुह्यं धर्मज्ञानं, ततो देहादिव्यतिरिक्तात्मज्ञानं गुह्यतरं, ततोऽपि परमात्मज्ञानमतिरहस्यत्वाद्गुह्यतमम्। यज्ज्ञात्वाऽशुभा-

७ अभिनवगुप्ताचार्यव्याख्या।

श्रीभगवानुवाच—इदं तु त इति। अनसूयुत्वं ज्ञानसंक्रान्तौ कारणं मुख्यम्। ज्ञानविज्ञाने प्राग्वत्॥ १॥ राजते सर्वविद्यामध्ये

१ नीलकण्ठः।

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

यज्ज्ञानं ज्ञात्वा प्राप्य मोक्ष्यसेऽशुभात्संसारबन्धनात् ॥ १ ॥ तच्च स्तौति—राजविद्येति । राजविद्या विद्यानां राजा दीप्त्यतिशयत्वात् । दीप्यते हीयमतिशयेन ब्रह्मविद्या सर्वविद्यानाम् । तथा राजगुह्यं गुह्यानां राजा । पवित्रं पावनमिदमुत्तमं सर्वेषां पावनानां शुद्धिकारणमिदं ब्रह्मज्ञानमुत्कृष्टतमम् । अनेकजन्मसहस्रसंचितमपि धर्माधर्मादि समूलं कर्म क्षणमात्राद्भस्मीकरोति यतोऽतः किं तस्य पावनत्वं वक्तव्यम् । किंच प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्य तत्प्रत्यक्षावगमम् । अनेकगुणवतोऽपि धर्मविरुद्धत्वं दृष्टं ( श्येनयाग इव ) न तथात्मज्ञानं धर्मविरोधि किंतु धर्म्यं धर्मादन-

२ आनन्दगिरिव्याख्या ।

ज्ञाह—**यज्ज्ञानमिति** ॥ १ ॥ तदाभिमुख्यसिद्धये तज्ज्ञानं स्तौति—**तच्चेति** । ब्रह्मविद्या विद्यानां राजा श्रेष्ठेत्यत्र हेतुमाह—**दीप्तीति** । कुतो ब्रह्मविद्याया विद्यान्तरेभ्यो दीप्त्यतिशयवत्त्वं तदाह—**दीप्यते हीति** । दृश्यते हि विद्वदन्तरेभ्यो लोके पूजातिरेको ब्रह्मविदामिति भावः । उत्कृष्टतमं शुद्धिकारणं ब्रह्मज्ञानमित्येतदुपपादयति—**अनेकेति** । तत्र च श्रुतिस्मृती प्रमाणयितव्ये । न शास्त्रैकगम्यमिदं ज्ञानं किंतु प्रत्यक्षप्रमेयमित्याह—**किंचेति** । प्रत्यक्षमवगमो मानमस्मिन्निति तथा, यद्वावगम्यत इत्यवगमः फलं प्रत्यक्षोऽवगमोऽस्येति दृष्टफलत्वं ज्ञानस्योच्यते । धर्म्यमित्येत-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रोक्षं ज्ञानं जायत इति । तच्च तत्रैव व्युत्पादितं न विस्मर्तव्यम् ॥१॥ एतदेव स्तौति—**राजविद्येति** । विद्यानां राजा इति राजविद्या अध्यात्मविद्या । गुह्यानां राजा इति राजगुह्यम् । 'राजदन्तादिषु परम्' इत्युपसर्जनस्य परनिपातः । पवित्रं पावनम् । उत्तमं पूर्वापरदुरितनाशाश्लेषहेतुत्वात्प्रायश्चित्ताद्यपेक्षया श्रेष्ठम् । प्रत्यक्षावगमं प्रत्यक्षं नित्यापरोक्षं यत्प्रत्यगात्मवस्तु तदेव याथात्म्येनावगम्यतेऽनेनेति प्रत्यक्षावगमं, प्रत्यक्षेण सुखादिवद्गमो यस्येति वा । अस्मिन्पक्षे

४ मधुसूदनीव्याख्या ।

॥ १ ॥ पुनस्तदाभिमुख्याय तज्ज्ञानं स्तौति—राजविद्या सर्वासां विद्यानां राजा, सर्वाविद्यानाशकत्वात्, विद्यान्तरस्याविद्यैकदेशविरोधित्वात् । तथा राजगुह्यं सर्वेषां गुप्तानां राजा, अनेकजन्मकृतसुकृतसाध्यत्वेन बहुभिरज्ञातत्वात् । राजदन्तादित्वादुपसर्जनस्य परनिपातः । पवित्रमिदमुत्तमम् । प्रायश्चित्तैर्हि किंचिदेकमेव पापं निवर्त्यते । निवृत्तं च तत्स्वकारणे सूक्ष्मरूपेण तिष्ठत्येव । यतः पुनस्तत्पापमुपचिनोति पुरुषः । इदं त्वनेकजन्मसहस्रसंचितानां सर्वेषामपि पापानां स्थूलसूक्ष्मावस्थानां तत्कारणस्य चाज्ञानस्य सद्य एवोच्छेदकम् । अतः सर्वोत्तमं पावनमिदमेव । नचातीन्द्रिये धर्म इवात्र कस्यचित्संदेहः, स्वरूपतः फलतश्च प्रत्यक्षत्वादित्याह—प्रत्यक्षावगमं अवगम्यतेऽनेनेत्यवगमो मानं, अवगम्यते प्राप्यत इत्यवगमः फलं, प्रत्यक्षमवगमो मानमस्मिन्निति स्वरूपतः साक्षिप्रत्यक्षत्वं, प्रत्यक्षोऽवगमोऽस्येति फलतः साक्षिप्रत्यक्षत्वं, मयेदं विदितमतो नष्टमिदानीमत्र ममाज्ञानमिति हि सार्वलौकिकः साक्ष्यनुभवः । एवं लोकानुभवसिद्धत्वेऽपि तज्ज्ञानं धर्म्यं धर्मादनपेतं अनेकजन्मसंचितनिष्कामधर्मफलम् । तर्हि दुःसंपादं स्यान्नेत्याह—सुसुखं कर्तुं गुरूपदर्शितविचारसहकृतेन वेदान्तवाक्येन सुखेन कर्तुं शक्यं न देशकालादिव्यवधानमपे-

५ भाष्योत्कर्षदीपिका ।

त्येति तद्भाष्येण च विरोधस्य स्पष्टत्वादिति दिक् ॥१॥ तज्ज्ञानं स्तौति—**राजेति** । राजविद्या विद्यानां सर्वासां राजा । ब्रह्मविद्यावतः पूजातिशयदर्शनेन तस्या अतिशयेन देदीप्यमानत्वात् । तथाच श्रुतिः 'तस्मादात्मज्ञमर्चयेद्भूतिकामः' इति । भगवद्वचनं च 'निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥' इति । तथा सर्वेषां गुह्यानामुत्कर्षवत्त्वेन गोप्यानां राजाऽत्युत्कर्षवत्त्वात् 'राजदन्तादिषु परम्' इत्युपसर्जनस्य परनिपातः । इदं ब्रह्मज्ञानमुत्तमं पवित्रं सर्वेषां पावनानामपि शुद्धिकरत्वात् । अन्यद्धि प्रायश्चित्तादिरूपं पवित्रं यथाकथंचित्किंचित्पापं नाशयति । इदं तु सर्वं धर्माधर्मादिलक्षणं अनेकजन्मसंचितं समूलं कर्म नाशयति । क्रियमाणं चाश्लिष्टं करोति । तथाच व्याससूत्रे 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्', 'इतरस्याप्येवमसंश्लेषः पाते तु' इति । तस्मात्किं तस्य ब्रह्मज्ञानस्य परमपावनत्वं वक्तव्यमेतत्त्वसदृशस्यान्यस्य पावन-

६ श्रीधरीव्याख्या ।

त्संसारान्मोक्ष्यसे सद्य एव मुक्तो भविष्यति ॥१॥ किंच—**राजविद्येति** । इदं ज्ञानं राजविद्या विद्यानां राजेति राजविद्या च । गुह्यानां राजेति राजगुह्यं विद्यासु गोप्येषु च रहस्यम् । अतिश्रेष्ठमित्यर्थः । राजदन्तादित्वादुपसर्जनस्य परत्वम् । राज्ञां विद्या राज्ञां गुह्य-

७ अभिनवगुप्ताचार्यव्याख्या ।

दीप्यते या इहैव शुध्यते अध्यात्मविद्या विद्यानामिति । राज्ञां जनकादीनामत्राधिकारस्तेषां रहस्यमतिगुप्तत्वात् क्षत्रियसुलभेन

१ इतरस्य पुण्यस्य.

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

पेतम् । एवमपि स्याद् दुःसंपाद्यमित्यत आह । सुसुखं कर्तुं यथा रत्नविवेकविज्ञानम् । तत्राल्पायासानां कर्मणां सुखसंपाद्यानामल्पफलत्वं दुष्कराणां च महाफलत्वं दृष्टमितीदं तु सुखसंपाद्यत्वात्फलक्षयाद्व्येतीति प्राप्तमत आह । अव्ययं नास्य फलतः कर्मवद्व्ययोऽस्तीत्यव्ययमतः श्रद्धेयमात्मज्ञानम् ॥ २ ॥ अश्रद्दधाना इति । ये पुनरश्रद्दधानाः श्रद्धाविरहिता आत्मज्ञानस्य धर्मस्यास्य

२ आनन्दगिरिव्याख्या ।

व्याकरोति—**अनपेतमिति** । धर्मस्येव तस्य क्लेशसाध्यत्वमाशङ्क्याह—**एवमपीति** । तत्र रत्नविषयं विवेकज्ञानं संप्रयोगादुपदेशापेक्षादनायासेन दृष्टं तथेदं ब्रह्मज्ञानमित्याह—**तथेति** । अव्ययमिति विशेषणमाशङ्कापूर्वकं विवृणोति—**तत्रेत्यादिना** । व्यवहारभूमिः सप्तम्यर्थः । ज्ञानस्याक्षयफलत्वे फलितमाह—**अत इति** ॥ २ ॥ आत्मज्ञानाख्ये धर्मे श्रद्धावतां तन्निष्ठानां परमपदप्राप्तिमुक्त्वा ततो विमुखानां संसारप्राप्तिमाह—**ये पुनरिति** । आत्मज्ञानतत्फलयो-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विज्ञानसहितमिति विशेषणस्य श्लोकान्तरस्थत्वान्न तेन पौनरुक्त्यदोषः । तर्हि अपूर्वत्वाभावान्निष्फलं स्यादत आह—धर्म्यं धर्मादनपेतम् । तथाहि क्षणमपि प्रत्यगात्माकारवृत्तौ सत्यां श्रूयते 'क्षणमेकं क्रतुशतस्य चतुःसप्तत्या यत्फलं तदाप्नोति' इति । तर्हि दुःसाध्यं स्यान्नेत्याह —सुसुखं कर्तुमिति । कर्तुं संपादयितुमाविष्कर्तुं सुसुखमनायाससाध्यम् । अज्ञानापनयमात्रसिद्धत्वात् । तर्हि आशुविनाशिफलं चेत् । अव्ययं, वस्तुमात्रविषयत्वात् । अन्तफलं ननु कर्मफलवन्नश्यति ॥ २ ॥ तर्हि कुतएतज्ज्ञानं सर्वे न संपादयन्तीत्याह—**अश्रद्दधाना इति** । स्पष्टार्थः श्लोकः ॥ ३ ॥

४ मधुसूदनीव्याख्या ।

क्षते प्रमाणवस्तुपरतन्त्रत्वाज्ज्ञानस्य । एवमनायाससाध्यत्वे स्वल्पफलत्वं स्यादत्यायाससाध्यानामेव कर्मणां महाफलत्वदर्शनादिति नेत्याह—अव्ययम् । एवमनायाससाध्यस्याप्यस्य फलतो व्ययो नास्तीत्यव्ययम् । अक्षयफलमित्यर्थः । कर्मणां त्वतिमहतामपि क्षयिकफलत्वमेव 'यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति' इति श्रुतेः । तस्मात्सर्वोत्कृष्टत्वाच्छ्रद्धेयमेवात्मज्ञानम् ॥ २ ॥ एवमप्यस्य सुकरत्वे सर्वोत्कृष्टत्वे च सर्वेऽपि कुतोऽत्र न प्रवर्तन्ते । तथाच न कोऽपि संसारी स्यादित्यत आह—अस्यात्मज्ञानाख्यस्य धर्मस्य स्वरूपे साधने फले च शास्त्रप्रतिपादितेऽपि अश्रद्-

५ भाष्योत्कर्षदीपिका ।

स्यानिरूपणात् । किंच न केवलं धर्मवच्छास्त्रगम्यं परोक्षमेवापितु प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्येति भाष्यम् । प्रत्यक्षोऽवगमो मानमस्मिन्निति तथा । यद्वावगम्यत इत्यवगमः फलं प्रत्यक्षोऽवगमोऽस्येति दृष्टफलत्वं ज्ञानस्योच्यत इति तट्टीका । प्रथमपक्षेऽवगम्यतेऽनेनेत्यवगमो मानं प्रत्यक्षं तदस्मिन्निति स्वरूपतः साक्षिप्रत्यक्षत्वं । द्वितीयपक्षे फलतः तत्प्रत्यक्षत्वं मयेदं विदितमतो नष्टमिदानीं ममात्राज्ञानमिति सार्वजनीनः साक्ष्यनुभव इति तदर्थः । प्रत्यक्षं नित्यापरोक्षं यत्प्रत्यगात्मवस्तु तदेव याथात्म्येनावगम्यतेऽनेनेत्यपि केचित्तदेतत्पक्षत्रयमपि भाष्यस्योपलक्षणार्थत्वेनोपादेयम् । नन्वनेकगुणवतोऽपि मांसभक्षणादेर्धर्मविरुद्धत्वं दृष्टम्, तथा आत्मज्ञानमपि किं न स्यादिति तत्राह—धर्म्यं धर्मादनपेतम् । अनेकजन्मार्जितसुकृतसाध्यत्वात् । नन्वेवमपि दुःसंपाद्यं स्यादिति तत्राह—सुसुखं कर्तुं गुरूपदिष्टवेदान्तवाक्यैरज्ञाननिवृत्त्या सुखेनैव संपादयितुं शक्यं न देशकालक्रत्विगाद्यपेक्षास्तीति । ननु लोके यन्महत्फलं तद्बह्वायाससाध्यकर्मसाध्यम् । अल्पं त्वल्पायाससाध्यकर्मसाध्यं दृष्टम् । तद्वज्ज्ञानमपि कर्तुं सुखं अल्पफलं भविष्यतीत्याशङ्क्य रत्नविवेकज्ञानस्याल्पायाससाध्यस्यापि महाफलदर्शनान्नेत्याह । अव्ययं नास्य ज्ञानस्य लोकवत्फलतो व्ययो नाशोऽस्तीत्यव्ययम् । अतः श्रद्धयावश्यं संपाद्यमिति भावः ॥ २ ॥ श्रद्धया ज्ञाननिष्ठानां ज्ञानप्राप्त्या मोक्षप्राप्तिरित्यन्वयमुखेन ज्ञानं स्तुत्वा व्यतिरेकमुखेन तत्स्तौति—**अश्रद्दधाना इति** । ये पुनरस्य धर्मस्य ब्रह्मज्ञानलक्षणस्य स्वरूपे फले वा श्रद्धाहीना

६ श्रीधरीव्याख्या ।

मितिवा उत्तमं पवित्रमत्यन्तपावनमिदं ज्ञानिनां प्रत्यक्षावगमं च प्रत्यक्षः स्पष्टोऽवगमोऽवबोधो यस्य तत्प्रत्यक्षावगमम् । दृष्टफलमित्यर्थः । धर्म्यं च धर्मादनपेतं, सर्वधर्मफलत्वात् । कर्तुं सुसुखं च । सुखेन कर्तुं शक्यमित्यर्थः । अव्ययमक्षयफलत्वात् ॥ २ ॥ नन्वेवमस्यातिसुकरत्वे के नाम संसारिणः स्युस्तत्राह—**अश्रद्दधाना इति** । अस्य भक्तिलक्षणज्ञानसहितस्य धर्मस्येति कर्मणिषष्ठ्यौ । इमं धर्ममश्र-

७ अभिनवगुप्ताचार्यव्याख्या ।

वीरभावेनाविकम्पत्वात्, कर्तुमनुष्ठानं सुसुखं । नचास्य ब्रह्मोपासनात्मनः कर्मणोऽन्यकर्मवदुपभोगादिना व्ययोऽस्ति ॥ २ ॥ अश्रद्दधाना

१ नीलकण्ठः।

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः॥ ४॥**

१ श्रीमच्छांकरभाष्यम्।

**स्वरूपे तत्फले च नास्तिकाः पापकारिणोऽसुराणामुपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्ना असुतृपः पुरुषाः परंतप, अप्राप्य मां परमेश्वरं मत्प्राप्तौ नैवाशङ्केति मत्प्राप्तिमार्गसाधनभेदभक्तिमात्रमप्यप्राप्येत्यर्थः। निवर्तन्ते निश्चयेनावर्तन्ते। क। मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारो मृत्युसंसारस्तस्य वर्त्म नरकतिर्यगादिप्राप्तिमार्गस्तस्मिन्नेव वर्तन्त इत्यर्थः॥ ३॥ ज्ञानस्तुत्यार्जुनमभिमुखीकृत्याह—मयेति। मया मम यः परो भावस्तेन ततं व्याप्तं सर्वमिदं जगदव्यक्तमूर्तिना न व्यक्ता मूर्तिः स्वरूपं यस्य मम**

२ आनन्दगिरिव्याख्या।

नास्तिकानेव विशिनष्टि—**पापेति**। उक्तानामात्मंभरीणां भगवत्प्राप्तिसंभावनाभावादप्राप्य मामित्यप्रसक्तप्रतिषेधः स्यादित्याशङ्क्याह—**मत्प्राप्ताविति**॥ ३॥ स्तुतिनिन्दाभ्यां ज्ञाननिष्ठां महीकृत्य ज्ञानं व्याख्यातुमारभते—**स्तुत्येति**। सोपाधिकस्य व्याप्त्यसंभवमभिप्रेत्य विशिनष्टि—**ममेति**। अनवच्छिन्नस्य भगवद्रूपस्य निरुपाधिकत्वमेव साधयति—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

एवं स्तुत्याभिमुखीकृत्य यद्वक्तव्यं तदाह—**मयेति**। मया इदं सर्वं जगत् ततं व्याप्तं उपादानत्वात् कनकेनेव कुण्डलादीनि। ननु प्रागेवैतदुक्तं 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इति। तथाच 'राजविद्या' इत्यादिस्तुतिरस्थाने एव कृता स्यात्। वक्तव्यविशेषाभावादितिचेत्। अत्र ब्रूमः—यथा 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति' इति ज्ञेयस्य ब्रह्मणो लक्षणं जगज्जन्मादिहेतुत्वमुक्त्वा तस्यानुगमं अन्नादिशब्दशब्दितेषु विराडादिषु दर्शयसि 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते' 'प्राणाद्ध्येव' इत्यादिना। तस्य निर्णयवाक्यं तु 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति 'सैषा भार्गवी वारुणी विद्या' इति तत्रैव विद्यायाः पर्यवसानाभिधानात्, एवमिहापि सप्तमे 'भूमिरापोऽनलो वायुः' इत्यादिना सर्वभूतात्मकस्य विराजो जगज्जन्मादिहेतुत्वं प्रदर्श्य पश्चात् 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' इत्यनेन मायाशबलेऽपि तत्प्रदर्श्य इदानीं शुद्धे प्रत्यगात्मन्येव तद्दर्शयति स्थूलारुन्धतीन्यायेन प्रतिपत्तिसौकर्यार्थमिति गम्यते। राजविद्येत्यादिना स्तुत-

४ मधुसूदनीव्याख्या।

धानाः वेदविरोधिकुहेतुदर्शनदूषितान्तःकरणतया प्रामाण्यममन्यमानाः पापकारिणोऽसुरसंपदमारूढाः स्वमतिकल्पितेनोपायेन कथंचिद्यतमाना अपि शास्त्रविहितोपायाभावादप्राप्य मां मत्प्राप्तिसाधनमप्यलब्ध्वा निवर्तन्ते निश्चयेन वर्तन्ते। क। मृत्युयुक्ते संसारवर्त्मनि। सर्वदा जननमरणप्रबन्धेन नारकितिर्यगादियोनिष्वेव भ्रमन्तीत्यर्थः॥३॥ तदेवं वक्तव्यतया प्रतिज्ञातस्य ज्ञानस्य विधिमुखेनेतरनिषेधमुखेन च स्तुत्याभिमुखीकृतमर्जुनं प्रति तदेवाह द्वाभ्याम्—इदं जगत्सर्वं भूतभौतिकतत्कारणरूपं दृश्यजातं मदज्ञानकल्पितं मयाधिष्ठानेन परमार्थसता सद्रूपेण स्फुरणरूपेण च ततं व्याप्तं रज्जुखण्डेनेव तदज्ञानकल्पितं सर्पधारादि। त्वया वासुदेवेन परिच्छिन्नेन सर्वं जगत्कथं व्याप्तं प्रत्यक्षविरोधादिति, नेत्याह—अव्यक्ता सर्वकरणागोचरीभूता स्वप्रकाशाद्वयचैतन्य-

५ भाष्योत्कर्षदीपिका।

नास्तिकाः अनेकजन्मार्जितपापैः पाप एव प्रवर्तिता देहमात्रात्मदर्शनमेव प्रतिपन्नाः केवलमसुतर्पणनिष्ठाः। केनचिदुत्कटेन पुण्यलवेन मनुष्ययोनिं प्राप्ताः पुरुषा मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि नरकतिर्यगादिप्राप्तिलक्षणे निवर्तन्ते। निश्चयेन वर्तन्त इत्यर्थः। मामप्राप्येत्यस्य मत्प्राप्तिमार्गसाधनविशेषभक्तिमार्गमप्राप्येत्यर्थः। अन्यथा तेषां परमेश्वरप्राप्तिसंभावनाया अप्यभावादप्रसक्तप्रतिषेध आपद्येत। परंतपेति संबोधयन् परानश्रद्धादीन् शत्रून् तापयन् ब्रह्मज्ञाने श्रद्धां कर्तुं योग्योऽसि न त्वश्रद्धयाभिभूतः एतत्पङ्क्तौ निवेष्टुमिति सूचयति॥ ३॥ एवमन्वयमुखेन व्यतिरेकमुखेन च ज्ञानं स्तुत्वा श्रोतारमभिमुखीकृत्य तत्स्वरूपमाह—**मयेति**। मया परमात्मना सच्चिदानन्दघनेनाव्यक्तमूर्तिना न व्यक्ता इन्द्रियागोचरा मूर्तिः स्वरूपं यस्य मम तेन मया इदं सर्वं जगत् ब्रह्मादिस्तम्बपर्यन्तं चराचरात्मकं ततं व्याप्तं शुक्त्या तत्र कल्पितं रूप्यमिव, अतएवाव्यक्तस्वरूपे

६ श्रीधरीव्याख्या।

दधाना आस्तिक्येनास्वीकुर्वन्तः, उपायान्तरेण मत्प्राप्तये कृतप्रयत्ना अपि मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि निवर्तन्ते। मृत्युव्याप्ते संसारमार्गे परिभ्रमन्तीत्यर्थः॥ ३॥ तदेवं वक्तव्यतया प्रस्तुतस्य ज्ञानस्य स्तुत्या श्रोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति—**मयेति द्वाभ्याम्**। अव्यक्ता अतीन्द्रिया मूर्तिः स्वरूपं यस्य तादृशेन मया कारणभूतेन सर्वमिदं जगत्ततं व्याप्तम् 'तत्सृष्ट्वा तदेवानुप्राविशत्'

७ अभिनवगुप्ताचार्यव्याख्या।

इति। निवर्तन्ते पुनःपुनर्जायन्ते म्रियन्ते च॥ ३॥ मत्स्थानि भूतानीति सुचिरमपि गत्वान्यस्य प्रतिष्ठाधाम्नो विद्यमानत्वात्। भूतरू

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**सोऽहमव्यक्तमूर्तिस्तेन मयाऽव्यक्तमूर्तिना । कारणागोचरस्वरूपेणेत्यर्थः । तस्मिन्मय्यव्यक्तमूर्तौ स्थितानि मत्स्थानि सर्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि । नहि निरात्मकं किंचिद्भूतं व्यवहारायावकल्पतेऽतो मत्स्थानि मयात्मनात्मवत्त्वेन स्थितान्यतो मयि स्थितानीत्युच्यन्ते तेषां भूतानामहमेवात्मेत्यतस्तेषु स्थित इति मूढबुद्धीनामवभासतेऽतो ब्रवीमि न चाहं तेषु भूतेष्ववस्थितो मूर्तवत्संश्लेषाभावेनाकाशस्याप्यन्तरतमो ह्यहम् । नह्यसंसर्गि वस्तु क्वचिदाधेयभावेनावस्थितं भवति ॥ ४ ॥ अतएवासंसर्गित्वान्मम—नच मत्स्थानि भूतानि ब्रह्मादीनि, पश्य मे योगं युक्तिं घटनं मे**

२ आनन्दगिरिव्याख्या ।

**करणेति** । व्याप्यव्यापकत्वेन जगतो भगवतश्च परिच्छेदमाशङ्क्याह—**तस्मिन्निति** । तथापि भगवतो भूतानां चाधाराधेयत्वेन भेदः स्यादित्याशङ्क्याह—**नहीति** । निरात्मकस्य व्यवहारानर्हत्वे फलितमाह—**अत इति** । ईश्वरस्य भूतात्मत्वे तेषु स्थितिः स्यादित्याशङ्क्याह—**तेषामिति** । तस्य तेषु स्थित्यभावं व्यवस्थापयति—**मूर्तवदिति** । संश्लेषाभावेऽपि किमिति नाधेयत्वमत आह—**नहीति** ॥ ४ ॥ परमेश्वरस्य भूतेषु स्थित्यभावेऽपि भूतानां तत्र स्थितिरास्थितेति कुतोऽसङ्गत्वं तत्राह—**अतएवेति** । नचेत्यत्र चकारोऽवधारणार्थः । भूतानामीश्वरे नैव स्थितिरित्यत्र हेतुमाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्वात् । यथा कश्चिद्दुर्लक्ष्यां सूक्ष्मामरुन्धतीं दिदर्शयिषुस्तत्समीपस्थां स्थूलां तारामरुन्धतीति ग्राहयति, प्रतिपद्यते चानेनैव क्रमेण प्रतिपत्ता, एवमिहापि कार्यकारणप्रतिपत्तिद्वारा अकार्यकारणस्य शुद्धस्य प्रतिपत्तिर्युक्ता । अतएव भगवान्भाष्यकारो मया ततमिदं सर्वमित्यत्र मया मम यः परो भावस्तेन ततं व्याप्तमिति व्याचख्यौ । नत्वहं सर्वस्य जगतः प्रभव इत्यत्र मम यः परो भावः स सर्वस्य जगतः प्रभव इति । सच भागवतः कारणात्मनः परो भावः परमानन्द एव तेनैव चेदं ततम् । आनन्दाद्ध्येवेत्युदाहृतश्रुतेस्तस्यैव जगदुपादानत्वेन तदीयसत्तास्फूर्तिभ्यां जगतो व्याप्तत्वात् । अतएवाव्यक्तमूर्तिनेति विशेषणम् । मायाशबलं हि कारणं बुद्धिग्राह्यत्वात्करणगोचरः, शुद्धं हि बुद्धेः परत्वात्करणागोचर इति । किंभूताकारेणानन्दः परिणमत इत्यत आह—**मत्स्थानीति** । मयि प्रत्यगानन्दे रज्ज्वां स्रक्सर्पदण्डधारादय इव सर्वभूतानि स्थितानि अतो मत्स्थानीत्युपचारादुच्यन्ते । अधिष्ठानाध्यस्तयोर्वास्तवसंबन्धायोगात् । एतदेवाह—**नचेति** । नचाहं परमानन्दस्तेषु भूतेष्ववस्थितोऽस्मि घटादाविव मृत् । अपरिणामित्वादेव ॥ ४ ॥ एवमभ्युपगतमानन्दस्य जगद्विवर्ताधिष्ठानत्वं तदप्यपवदति—**नच मत्स्थानीति** । अयंभावः—'अस्य

४ मधुसूदनीव्याख्या ।

सदानन्दरूपा मूर्तिर्यस्य तेन मया व्याप्तमिदं सर्वं न त्वनेन देहेनेत्यर्थः । अतएव सन्तीव स्फुरन्तीव मद्रूपेण स्थितानि मत्स्थानि सर्वभूतानि स्थावराणि जङ्गमानि च । परमार्थतस्तु नच नैवाहं तेषु कल्पितेषु भूतेष्ववस्थितः । कल्पिताकल्पितयोः संबन्धायोगात् । अतएवोक्तं यत्र यदध्यस्तं तत्कृतेन गुणेन दोषेण वाणुमात्रेणापि न स संबध्यत इति ॥ ४ ॥ अतएव दिविष्ठ इवादित्ये

५ भाष्योत्कर्षदीपिका ।

सच्चिदानन्दघने परमात्मनि अधिष्ठानरूपे मयि स्थितानि कल्पितानि सर्वभूतानि । अधिष्ठानमेव हि अध्यस्तस्य स्वरूपं भवति । नहि रूप्यस्य शुक्त्यतिरिक्तं स्वरूपं केनचिन्निरूपयितुं शक्यम् । अहं च तेषामधिष्ठानत्वादात्मा स्वरूपं निरात्मकं च किंचिद्भूतं व्यवहारयोग्यं न भवति । अतो मयात्मनात्मवत्त्वेन स्थितानि सर्वेषां भूतानामधिष्ठानत्वादात्मनि स्वरूपभूते मयि सर्वाणि भूतानि स्थितानि नान्यत्रेत्यर्थः । तेषामात्मत्वेन परमात्मापि तेष्ववस्थित इति मूर्खाणामवभासतेऽतो ब्रवीमि । नचाहं तेषु मयि कल्पितेषु सर्वभूतेष्ववस्थितः । अमूर्तस्य मम केनापि संबन्धेन तत्रावस्थितेरनिरूपणात् ॥ ४ ॥ अतएव सर्वसङ्गविवर्जिते मयि परमात्मनि वस्तुतस्तु भूतान्यपि सर्वाणि नच स्थितानि । पश्य मे योगमैश्वरम् । योगं युक्तिं घटनां ममैश्वरं याथात्म्यभावम् । तथाच श्रुतिः

६ श्रीधरीव्याख्या ।

इति श्रुतेः । अतएव कारणभूते मयि तिष्ठन्तीति मत्स्थानि सर्वाणि चराचराणि भूतानि । एवमपि घटादिषु स्वकार्येषु मृत्तिकेव तेषु भूतेषु नाहमवस्थित आकाशवदसङ्गत्वात् ॥ ४ ॥ किंच—**नचेति** । नच मयि स्थितानि भूतान्यसङ्गत्वादेव मम । ननु तर्हि व्याप-

७ अभिनवगुप्ताचार्यव्याख्या ।

यबोध्यात्मकप्रसिद्धत्वीयजडरूपपुरःसरीकारेण तदवभासे तत्तद्विपरीतबोधकस्वभावतिरोधानमित्येतदाह—नचाहं तेष्विति ॥ ४ ॥ मम

१ श्रीमच्छांकरभाष्यम्।

**ममैश्वरमीश्वरस्येदमैश्वरं योगमात्मनो याथात्म्यमित्यर्थः। तथाच श्रुतिरसंसर्गित्वादसङ्गतां दर्शयति "असङ्गो नहि सज्जते" इति। इदं चाश्चर्यमन्यत्पश्य। भूतभृदसङ्गोऽपि सन्भूतानि बिभर्ति नच भूतस्थो यथोक्तेन न्यायेन दर्शितत्वाद् भूतस्थत्वानुपपत्तेः। कथं पुनरुच्यते असौ ममात्मेति, विभज्य देहादिसंघातं तस्मिन्नहंकारमध्यारोप्य लोकबुद्धिमनुसरन्व्यपदिशति ममात्मेति, न पुनरात्मन**

२ आनन्दगिरिव्याख्या।

**पश्येति।** आत्मनोऽसङ्गत्वं स्वरूपमित्यत्र प्रमाणमाह—**तथाचेति**। असङ्गश्चेदीश्वरस्तर्हि कथं मत्स्थानि भूतानीत्युक्तं कथं च तथोक्त्वा नच मत्स्थानीति तद्विरुद्धमुदीरितमित्याशङ्क्याह—**इदं चेति**। तर्हि भूतसंबन्धः स्यादिति नेत्याह—**नचेति**। यथोक्तेन न्यायेन। असङ्गत्वेनेति यावत्। असङ्गतया वस्तुतो भूतासंबन्धेऽपि कल्पनया तदविरोधान्न मिथोविरोधोऽस्तीति भावः। आत्मनः सकाशादात्मनोऽन्यत्वायोगात्कुतः संबन्धोक्तिरित्याशङ्क्याह—**असाविति**। (विभज्येति)। यथा लोको वस्तुतत्त्वमजानन्भेदमारोप्य ममायमिति संबन्धमनुभवति न तथेह संबन्धव्यपदेश आत्मनि स्वतो भेदाभावादतो भेदेऽसत्येव लोके संबन्धबुद्धिदर्शनमनुसरन्भगवानात्मनो देहादिसंघातं विभज्याहंकारं तस्मिन्नारोप्य असौ ममात्मेति भेदं व्यपदिशति। तथाच संघातस्य ममेति व्यपदेशात्ततो नि(कृ)ष्कृष्टस्य स्वरूपस्यात्मशब्देन निर्देशान्न

३ नीलकण्ठव्याख्या (चतुर्धरी)।

द्वैतेन्द्रजालस्य यदुपादानकारणम्। अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते' इति वार्तिकोक्तेरज्ञानमेव जगत्कारणं तच्च तुच्छम्। अहं चासङ्गः। ततश्च तुच्छतरेण तत्कार्येण भूतसंघेन न ममासङ्गस्याधाराधेयभावसंबन्धोऽनिर्वचनीयोऽप्यस्ति। आवृतं हि रज्ज्वादिकमनिर्वचनीयेन सर्पादिना संबध्यते। अहं तु सर्वदानावृतः साक्षिरूपत्वात्तत्संबन्धशून्य इति नच मत्स्थानि भूतानीत्युक्तमिति। ननु साक्षिणस्तव ब्रह्मणो युवा सुखी चेति प्रतीत्येव भूतसंबन्धानुभवात्कथं नच मत्स्थानीत्युक्तिरित्याशङ्क्याह—**पश्य मे योगमैश्वरमिति**। मे मम भूतैः सह योगं युक्तिघटनां पश्य। ऐश्वरं ईश्वरेण मायाविना निर्मितं गगने गन्धर्वनगरमिव। अतएव मम कारणशरीरस्यात्मा प्रत्यगानन्दे भूतभृदपि भूतस्थो न। चकारोऽप्यर्थे भिन्नक्रमश्च। खमिव गन्धर्वनगरभृदपि तत्स्थं न। तस्य तदाकारेण परिणामासंभवात्। एवंरूपोऽपि परानन्दरूपो ममात्मा स भूतभावनः भूतानां वृद्धिकरः। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति। को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इत्यादिश्रुतिभ्यः। आकाशेऽव्याकृताख्ये स्वाधिष्ठानभूत आनन्दोऽनुस्यूतो न स्यात्तर्हि प्राणापानक्रियां कश्चिदपि न कुर्यात् कारणगतं जाड्यं कार्येऽपि स्यात्। आकाशे आनन्दानुबन्धे तु कारणस्य चेतनत्वात्कार्यमपि चेतनावत्स्यादिति श्रुत्यर्थः। बृहदारण्यकेऽपि 'यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं च' इति मायाविनि सर्वस्योतप्रोतत्वमुक्त्वा 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यस्योत्तरम् 'एतस्मिन्खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च' इत्यस्थूलादिलक्षणस्याक्षरस्याकाशाधारत्वमुक्तम्। तस्माद्युक्तमुक्तमाकाशशरीरेण भगवता

४ मधुसूदनीव्याख्या।

कल्पितानि जलचलनादीनि मयि कल्पितानि भूतानि परमार्थतो मयि न सन्ति। त्वमर्जुनः प्राकृतीं मनुष्यबुद्धिं हित्वा पश्य पर्यालोचय। मे योगं प्रभावमैश्वरं अघटनघटनाचातुर्यं मायाविन इव ममावलोकयेत्यर्थः। नाहं कस्यचिदाधेयो नापि कस्यचिद्राधारस्तथाप्यहं सर्वेषु भूतेषु मयि च सर्वाणि भूतानीति महतीयं माया। यतो भूतानि सर्वाणि कार्याण्युपादानतया बिभर्ति धारयति पोषयतीति च भूतभृत् भूतानि सर्वाणि कर्तृतयोत्पादयतीति भूतभावनः। एवमभिन्ननिमित्तोपादानभूतोऽपि ममात्मा

५ भाष्योत्कर्षदीपिका।

'असङ्गो नहि सज्जते' इति। इदं चान्ययोगमघटितघटनापटीयस्त्वं पश्य। भूतभृन्नच भूतस्थो ममात्माऽसङ्गित्वात् भूतेषु न तिष्ठतीति तथा वस्तुत एतादृशोऽपि सन् भूतानि स्थावरजङ्गमादीनि बिभर्ति धारयति पोषयतीति। तथा भूतभावनः भूतानि

६ श्रीधरीव्याख्या।

कत्वमाश्रयत्वं च पूर्वोक्तं विरुद्धमित्याशङ्क्याह—**यथेति**। म ऐश्वरमसाधारणं योगं युक्तिमघटितघटनाचातुर्यं पश्य। मदीययोगमायावैभवस्यावितर्क्यत्वान्न विरुद्धं किंचिदित्यर्थः। अन्यदप्याश्चर्यं पश्येत्याह—भूतेति। भूतानि बिभर्ति धारयतीति भूतभृत्। भूतानि भावयति पालयतीति भूतभावनः। एवंभूतोऽपि ममात्मा परं स्वरूपं भूतस्थो न भवति। अयंभावः—यथा जीवो देहं बिभ्रत्पालयंश्चाहं-

७ अभिनवगुप्ताचार्यव्याख्या।

मत्स्थानि। अविद्यान्धानां तत्त्वादृष्टेः। नहि मूढा अविच्छिन्नसंवित्स्वभावं परमेश्वरं समस्तवस्तुपरिच्छेदप्रतिष्ठास्थानं मन्यन्ते अपितु कृशो देवदत्तोऽहमिदं वेद्मि भूतले इदं स्थितमिति मितमेव स्वभावं प्रतिष्ठानस्थानतया पश्यन्ति। ननु कथमेतद्विरुद्धमित्याह—पश्य मे

**यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**आत्मान्य इति लोकवदजानन् । तथा भूतभावनो भूतानि भावयत्युत्पादयति वर्धयति वा भूतभावनः ॥ ५ ॥ यथोक्तेन श्लोकद्वयेनोक्तमर्थं दृष्टान्तेनोपपादयन्नाह—यथेति । यथा लोके आकाशस्थित आकाशे स्थितो नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगो महान्परिमाणतस्तथाकाशवत्सर्वगते**

२ आनन्दगिरिव्याख्या ।

भूतस्थोऽसावित्यर्थः । पूर्वोक्तासङ्गत्वाङ्गीकारेणैवात्मा भूतानि भावयतीत्याह—**तथेति** ॥ ५ ॥ सृष्टिस्थितिसंहाराणामसङ्गात्माधारत्वं 'मया ततमिदम्' इत्यादिश्लोकद्वयेनोक्तोऽर्थस्तं दृष्टान्तेनोपपादयन्नादौ दृष्टान्तमाहेति योजना । सदेत्युत्पत्तिस्थितिसंहारकालो गृह्यते । आकाशादेर्महतोऽन्याधारत्वं कथमित्याशङ्क्याह—**महानिति** । यथा सर्वगामित्वात्परिमाणतो महान्वायुराकाशे सदा तिष्ठति तथाकाशादीनि महान्त्यपि सर्वाणि भूतान्याकाशकल्पे पूर्णे प्रतीचयसङ्गे पर-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कारणोपाधिनिष्कृष्टचिन्मात्राभिप्रायेण ममात्मा भूतभावन इति ॥ ५ ॥ श्लोकद्वयोक्तेऽर्थे दृष्टान्तमाह—**यथेति** । यथा लोके आकाशे स्थितो नित्यं सदा वायुः सर्वत्रगः परिमाणतश्च महान्, तथा सर्वाणि भूतानि सर्वगते मयि असंश्लेषेणैव स्थितानीत्येवमुपधारयेति प्राञ्चः । किंतद्ब्रह्मेति प्रश्नस्योत्तरमुक्तं अक्षरं परमं ब्रह्मेति । अक्षरसंज्ञ शुद्धस्त्वंपदार्थएव निरुपाधिकं ब्रह्मेत्युक्तम् । तत्र निरुपाधिकं ब्रह्म श्लोकद्वयेन व्याख्यातम् । इदानीं तस्याक्षराख्येन जीवेनाभेदं सदृष्टान्तमाह—**यथेति** । वायुः सूत्रात्मा 'वायुर्वै गोतम तत्सूत्रम्' इतिश्रुतेः । सर्वतगतिसमष्टिलिङ्गत्वात्तस्य सर्वगतत्वम् । महानिति बाह्यवायुव्यावृत्त्यर्थम् । स यथा आकाशस्थितः अव्याकृताकाशे स्वकारणे स्थितः । नित्यमिति कालत्रयेऽपि तस्याकाशसंबन्ध उक्तः । सर्वाणि भूतान्युपाधिनिष्कृष्टत्वंपदार्थरूपी चेतनवर्गः । बहुत्वं लोकाभिप्रायेण । यथा कार्यं सर्वमुत्पत्तेः प्राक् नाशादूर्ध्वं मध्ये च स्वकारण एवाभेदेन तिष्ठति, एवं सर्वोऽपि जीववर्ग उपाध्युत्पत्तेः

४ मधुसूदनीव्याख्या ।

मम परमार्थस्वरूपभूतः सच्चिदानन्दघनोऽसङ्गाद्वितीयस्वरूपत्वान्न भूतस्थः परमार्थतो न भूतसंबन्धी स्वप्नदृगिव न परमार्थतः स्वकल्पितसंबन्धीत्यर्थः । ममात्मेति राहोः शिर इतिवत्कल्पनया षष्ठी ॥ ५ ॥ असंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेनाह—यथैवासङ्गस्वभाव आकाशे स्थितो नित्यं सर्वदोत्पत्तिस्थितिसंहारकालेषु वातीति वायुः सर्वदा चलनस्वभावः । अतएव सर्वत्र गच्छतीति सर्वत्रगः । महान् परिमाणतः । एतादृशोऽपि न कदाप्याकाशेन सह संसृज्यते । तथैवासङ्गस्वभावे मयि संश्लेषमन्तरे-

५ भाष्योत्कर्षदीपिका ।

भावयत्युत्पादयतीति तथा ममात्मेति तु भेदमारोप्य राहोः शिर इतिवत्प्रयोगः ॥ ५ ॥ सर्वसङ्गविवर्जितेऽपि सर्वाणि भूतानि स्थितानीत्युक्तं श्लोकद्वयेन तत्र दृष्टान्तमाह । यथा लोके वायुः सर्वत्र गच्छतीति सर्वत्रगः परिमाणतो महान् । एवंभूतोऽपि नित्यं सदा आकाशेऽसङ्गिनि तिष्ठतीति आकाशस्थः । तथा सर्वाणि महान्ति सूक्ष्माणि च मयि असङ्गिनि स्थितानीत्युपधारय निश्चयेन जानीहि । यत्तु किंतद्ब्रह्मेति प्रश्नस्योत्तरमुक्तं, अक्षरं परमं ब्रह्मेत्यक्षरसंज्ञः शुद्धस्त्वंपदार्थ एव निरुपाधिकं ब्रह्मेत्युक्तं, तत्रानिरुपाधिकं ब्रह्म श्लोकद्वयेन व्याख्यातम् । इदानीं तस्याक्षराख्येन जीवेनाभेदं सदृष्टान्तमाह—**यथेति** । वायुः सूत्रात्मा समष्टिलिङ्गत्वात् सर्वत्रगः । महानित्यनेन बाह्यवायोर्व्यावृत्तिः । स यथा नित्यं कालत्रयेऽप्युत्पत्तेः प्राक्, नाशादूर्ध्वं मध्ये च स्वकारणे आकाशेऽव्याकृते अभेदेन तिष्ठति तथा सर्वाणि भूतानि उपाधिनिष्कृष्टत्वंपदार्थरूपी चेतनवर्गः । बहुत्वं लोकाभिप्रायेण । एतेन जीवब्रह्माभेदकथनेन स्वभावोऽध्यात्ममुच्यत इति प्रागुक्तं ब्रह्मैव जीव इति विवृतमित्यन्ये । तत्रेदं वक्तव्यं निरुपाधिकस्याक्षरस्य परब्रह्मणस्तत्त्वंपदलक्ष्यत्वेनोभयपदलक्ष्यत्वात् त्वंपदलक्ष्यत्वबोधकोपपदादेरभावाच्च शुद्धः त्वंपदार्थ एवेत्याद्यसंगतं तत्रेत्यादिना विभागोऽप्यनुपपन्नः । मत्स्थानि सर्वभूतानीत्यस्य पूर्वमपि विद्यमानत्वात् । सर्वाणि भूतानीत्यस्योपाधिनिष्कृष्टत्वंपदार्थरूपी चेतनवर्ग इति व्याख्यानमप्यसंगतम् । पूर्वोत्तरश्लोकेषु सर्वभूतानीत्यस्य स्थावरजंगमपरत्वेनात्रैवंपरत्वेऽसङ्गततायाः स्पष्टत्वात् । एवं सर्वोऽपि जीववर्ग

६ श्रीधरीव्याख्या ।

कारेण तत्संश्लिष्टस्तिष्ठत्येवमहं भूतानि धारयन्पालयन्नपि न तेषु तिष्ठामि, निरहंकारत्वादिति ॥ ५ ॥ असंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेनाह—**यथेति** । अवकाशं विनाऽवस्थानानुपपत्तेर्नित्यमाकाशस्थितो वायुः सर्वत्रगोऽपि महानपि नाकाशेन संश्लिष्यते निरव-

७ अभिनवगुप्ताचार्यव्याख्या ।

योगमैश्वरमिति । योगः शक्तिर्युज्यमानत्वात् । एतदेव ममैश्वर्यं यदेवं निरतिशयाद्भुतवृत्तित्वस्वातन्त्र्यमित्यर्थः ॥ ५ ॥ यथेति । यद्वदाकाश-

१ नीलकण्ठः.

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**
**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मय्यसंश्लेषेणैव स्थितानीत्येवमुपधारय जानीहि ॥ ६ ॥ एवं वायुराकाश इव मयि स्थितानि सर्वभूतानि स्थितिकाले तानि—सर्वभूतानि कौन्तेय, प्रकृतिं त्रिगुणात्मिकामपरां निकृष्टां यान्ति मामिकां मदीयां कल्पक्षये प्रलयकाले । पुनर्भूयस्तानि भूतान्युत्पत्तिकाले कल्पादौ विसृजाम्युत्पादयाम्यहं पूर्ववत् ॥ ७ ॥ एवमविद्यालक्षणां प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः

२ आनन्दगिरिव्याख्या ।

स्विन्नात्मनि संश्लेषमन्तरेण स्थितानीत्यर्थः ॥ ६ ॥ आकाशे वाय्वादिस्थितिवदाकाशादीनि भूतानि स्थितिकाले परमेश्वरे स्थितानि चेत्तर्हि प्रलयकाले ततोऽन्यत्र तिष्ठेयुरित्याशङ्क्याह—**एवमिति** । प्रकृतिशब्दस्य स्वभाववचनत्वं व्यावर्तयति—**त्रिगुणात्मिकामिति** । सा चापरेयमिति प्रागेव सूचितेत्याह—**अपरामिति** । तस्याश्चेश्वराधीनत्वेनात्स्वात्त्र्यमाह—**मदीयामिति** । प्रलयकाले भूतानि यथोक्तां प्रकृतिं यान्ति चेदुत्पत्तिकालेऽपि ततस्तेषामुत्पत्तेरीश्वराधीनत्वं भूतस्रष्टेर्न स्यादित्याशङ्क्याह—**पुनरिति** ॥ ७ ॥ तर्हि कीदृशी प्रकृतिः सा च कथं सृष्टावुपयुक्तेत्याशङ्क्याह—**एवमिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्राक् तन्नाशादूर्ध्वं मध्ये वा घटाकाशो महाकाशादिव परस्माद्ब्रह्मणः कालत्रयेऽपि नातिरिच्यत इत्यर्थः । एतेन जीवब्रह्माभेदकथनेन 'स्वभावोऽध्यात्ममुच्यते' इति यत्प्रागुक्तं ब्रह्मैव जीव इति तद्विवृतम् ॥ ६ ॥ नन्वेवमुपाधिरहितस्यैव ब्रह्मणि लयश्चेदुपाधेः का गतिरित्याशङ्क्याह—**सर्वेति** । सर्वाणि भूतानि स्थावरजंगमशरीराणि मामिकां मम माया-

४ मधुसूदनीव्याख्या ।

णैव सर्वाणि भूतान्याकाशादीनि महान्ति सर्वत्रगाणि च स्थितानीत्युपधारय विमृश्यावधारय ॥ ६ ॥ एवमुत्पत्तिकाले स्थितिकाले च कल्पितेन प्रपञ्चेनासङ्गस्यात्मनोऽसंश्लेषमुक्त्वा प्रलयेऽपि तमाह—सर्वाणि भूतानि कल्पक्षये प्रलयकाले मामिकां मच्छक्तित्वेन कल्पितां प्रकृतिं त्रिगुणात्मिकां मायां स्वकारणभूतां यान्ति । तत्रैव सूक्ष्मरूपेण लीयन्त इत्यर्थः । हे कौन्तेयेत्युक्तार्थम् । पुनस्तानि कल्पादौ सर्गकाले विसृजामि प्रकृतावविभागापन्नानि विभागेन व्यनज्मि । अहं सर्वज्ञः सर्वशक्तिरीश्वरः ॥ ७ ॥ किंनिमित्ता परमेश्वरस्येयं सृष्टिर्न तावत्स्वभोगार्था तस्य सर्वसाक्षिभूतचैतन्यमात्रस्य भोक्तृत्वाभावात्तथात्वे वा संसारित्वेनेश्वरत्वव्याघातात् । नाप्यन्यो भोक्ता यदर्थेयं सृष्टिश्चेतनान्तराभावात् । ईश्वरस्यैव सर्वत्र जीवरूपेण स्थितत्वात् । अचेतनस्य चाभोक्तृत्वात् । अतएव नापवर्गार्थापि सृष्टिः, बन्धाभावादपवर्गाविरोधित्वाच्चेत्याद्यनुपपत्तिः । सृष्टेर्मायामयत्वं साधयन्ती नास्माकं

५ भाष्योत्कर्षदीपिका ।

इति स्वग्रन्थविरोधाच्च । एतेन नन्वेवं जीवस्य उपाधिरहितस्यैव ब्रह्मणि लयश्चेदुपाधेः का गतिरित्याशङ्क्याह सर्वेतीति प्रत्युक्तमिति दिक् ॥ ६ ॥ आकाशे वायुरिवाकाशादीनि समस्तभूतानि स्थितिकाले मयि स्थितानीत्युक्तम्, इदानीं लयकाले उत्पत्तिकाले च मयि तिष्ठन्तीति वक्तुं स्वाधीनप्रकृतौ सर्वेषां भूतानां लयं स्वस्मादुत्पत्तिं चाह—**सर्वेति** । सर्वभूतानि प्रकृतिं त्रिगुणात्मिकामपरां मायां मामिकां मदीयाम् । मदधीनामितियावत् । नतु स्वतन्त्रां कल्पक्षये यान्ति तस्यां लीयन्त इत्यर्थः । कल्पक्षय इत्यस्य सर्वभूतानि प्रकृतिमिति स्वारस्यात् ब्राह्मे प्रलयकाले इत्यर्थः । पुनर्भूयस्तानि ब्रह्मादीनि सर्वभूतानि कल्पादावुत्पत्तिकालेऽहं सृजामि पूर्ववदुत्पादयामि । एतादृशोऽहं त्वन्मातृभ्रातृपुत्ररूपेणाविर्भूत इत्यहो तव भाग्यमिति कौन्तेयेति संबोधनाशयः ॥ ७ ॥ ननु सृजाम्यहमित्युक्त्या किं प्रकृतिं स्वामनधिष्ठायैव सृजसि नेत्याह—प्रकृतिमविद्यालक्षणां त्रिगुणात्मिकां मायां स्वां स्वाधीनामवष्टभ्याधिष्ठायेमं प्रत्यक्षा-

६ श्रीधरीव्याख्या ।

यवत्त्वेन संश्लेषायोगात्तथा सर्वाणि भूतानि मयि स्थितानीति जानीहि ॥ ६ ॥ तदेवमसङ्गस्य योगमायया स्थितिहेतुत्वमुक्तम् तयैव सृष्टिप्रलयहेतुत्वं चाह—**सर्वेति** । कल्पक्षये प्रलयकाले सर्वाणि भूतानि मदीयां प्रकृतिं यान्ति त्रिगुणात्मिकायां मायायां लीयन्ते, पुनः कल्पादौ सृष्टिकाले तानि विसृजामि विशेषेण सृजामि ॥ ७ ॥ नन्वसङ्गो निर्विकारश्च त्वं कथं सृजसीत्यपेक्षायामाह—**प्रकृति-**

७ अभिनवगुप्ताचार्यव्याख्या ।

वाय्वोरविनाभाविन्यपि संबन्धे न जातुचिन्नभःस्पृशता श्रूयते । एवं सकलसंसारविसार्यपि भगवत्तत्त्वं न सर्वविषयम् ॥ ६ ॥ प्रकृतिमव्यक्तरूपाम् ॥ ७ ॥ प्रकृतिमिति । स्वां प्रकृतिमवष्टभ्येति । एतावता जडोऽपि स्वतोऽयं भावग्रामः परप्रकृतिचयात्प्रकाशतां प्राप्तः । नच

१ नीलकण्ठः. २ जीवस्य.

**न च मां तानि कर्माणि निबध्नन्ति धनंजय।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम्।

प्रकृतितो जातं भूतग्रामं भूतसमुदायमिमं वर्तमानं कृत्स्नं समग्रमवशमस्वतन्त्रमविद्यादिदोषैः परवशीकृतं प्रकृतेर्वशात्स्वभाववशात् ॥ ८ ॥ तर्हि तस्य ते परमेश्वरस्य भूतग्रामं विषमं विदधतस्तन्निमित्ताभ्यां धर्माधर्माभ्यां संबन्धः स्यादितीदमाह भगवान्—नच मामिति। नच मामीशं तानि भूतग्रामस्य विषमविसर्गनिमित्तानि कर्माणि निबध्नन्ति धनंजय। तत्र कर्मणामसंबद्धत्वे कारणमाह—उदासीनवदासीनं यथोदासीन उपेक्षकः कश्चित्तद्वदासीनमात्मनोऽविक्रियत्वादसक्तं फलसङ्गरहित-

२ आनन्दगिरिव्याख्या।

संसारस्यानादित्वद्योतनार्थं पुनःपुनरित्युक्तम्। भूतसमुदायस्याविद्यास्मितादिदोषपरवशत्वे हेतुमाह—स्वभाववशादिति ॥ ८ ॥ यदि प्राकृतं भूतग्रामं स्वभावादविद्यादितन्त्रं विषमं विदधासि तर्हि तव विषमसृष्टिप्रयुक्तं धर्मादिमत्त्वमित्यनीश्वरत्वापत्तिरिति शङ्कते—तर्हीति। तत्रेति सप्तम्या परमेश्वरो निरुच्यते। ईश्वरस्य फलासङ्गाभावात्कर्तृत्वाभि-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

विनः प्रकृतिं त्रिगुणात्मिकामपरां सूक्ष्मभूम्याद्यात्मिकां यान्ति प्रविशन्ति। कदा यान्ति कल्पक्षये। पुनश्च तान्येव भूतानि प्रकृतौ सुप्ताविव संस्कारात्मना स्थितानि एकतां गतानि कल्पादौ विसृजामि विविधरूपेण सृजाम्यहं कारणात्मा मायावी ॥ ७ ॥ एतदेवाह—प्रकृतिमिति। एवमविद्यालक्षणां स्वां प्रकृतिमवष्टभ्य आश्रित्य तां विना केवलस्य स्रष्टृत्वासंभवात्। इमं भूतग्रामं पुनःपुनर्विविधं सृजामि। किंभूतम्। प्रकृतेर्वशात्स्वभाववशात्। अवशं रागद्वेषाद्यधीनम् ॥ ८ ॥ ननु विषमां सृष्टिं कुर्वतस्तव वैषम्यनैर्घृण्ये स्यातामत आह—नचेति। तानि विषमसृष्टिरूपाणि कर्माणि मां न निबध्नन्ति। तत्र हेतुः उदासीनवदासीनमिति। यथा पर्जन्यो बीजविशेषेषु रागं केषुचिद्द्वेषं चाकृत्वा उदासीनः सन् वर्षति एवमीश्वरोऽपि पुण्यवत्सु रागं पापिषु द्वेषं चाकुर्वञ्जगत्सृजति। तत्तदसाधारणकर्मबीजवशात्ते ते विभिन्नं फलं प्राप्नुवन्तीति नेश्वरवैषम्यादीत्यर्थः। ननु विसृजामि। उदासीनवदासीनमिति परस्पर-

४ मधुसूदनीव्याख्या।

प्रतिकूलेति न परिहर्तव्येत्यभिप्रेत्य मायामयत्वान्मिथ्यात्वं प्रपञ्चस्य वक्तुमारभते त्रिभिः—प्रकृतिं मायाख्यामनिर्वचनीयां स्वां स्वस्मिन्कल्पितामवष्टभ्य स्वसत्तास्फूर्तिभ्यां दृढीकृत्य तस्याः प्रकृतेर्मायाया वशादविद्याऽस्मितारागद्वेषाभिनिवेशकारणावरणविक्षेपात्मकशक्तिप्रभावाज्जायमानमिमं सर्वप्रमाणसंनिधापितं भूतग्राममाकाशादिभूतसमुदायमहं मायावीव पुनः पुनर्विसृजामि विविधं सृजामि। कल्पनामात्रेण स्वप्नदृगिव च स्वप्नप्रपञ्चम् ॥ ८ ॥ अतः नच नैव सृष्टिस्थितिप्रलयाख्यानि तानि मायाविनेव स्वप्नदृशेव च मया क्रियमाणानि मां निबध्नन्ति अनुग्रहनिग्रहाभ्यां न सुकृतदुष्कृतभागिनं कुर्वन्ति मिथ्याभूतत्वात्। हे धनंजय, युधिष्ठिरराजसूयार्थं सर्वान्राज्ञो जित्वा धनमाहृतवानिति महान्प्रभावः सूचितः प्रोत्साहनार्थम्। तानि कर्माणि कुतो न बध्नन्ति तत्राह—उदासीनवदासीनं, यथा कश्चिदुपेक्षको द्वयोर्विवदमानयोर्जयपराजयासंसर्गी तत्कृतहर्षविषादाभ्यामसंसृष्टो

५ भाष्योत्कर्षदीपिका।

दिसन्निधापितं भूतानां ग्रामं समुदायं कृत्स्नं निखिलं प्रकृतेः स्वभावस्य वशादवशं अविद्यादिदोषैः परवशीकृतं पुनःपुनः सृजामि। अनेन संसारस्यानादित्वं सूचितम् ॥ ८ ॥ ननु यथा जीवो विषमस्वभावत्वाद्बध्यते तथा त्वामपि देवनरतिर्यगादिरूपविषमसृष्टिकर्तारं वैषम्यावश्यंभावाद्धर्माधर्मादिकर्माणि कुतो न निबध्नन्तीत्याशङ्क्यास्य शुभं दास्याम्यस्याशुभमिति तत्तच्छुभाशुभदानात्मकेषु कर्मस्वसक्तं यथा कल्पवृक्षादिकमुदासीनं तत्तत्पुरुषस्य तत्तत्कर्मजन्यतत्तत्संकल्पानुसारितत्तत्फलोत्पत्तिकर्तारं तानि तानि कर्माणि न निबध्नन्ति तथा मामपीत्याह—नचेति। मामीश्वरं तानि भूतसमुदायस्य विष्टम्भ[1]विसर्गनिमित्तानि कर्माणि न निबध्नन्ति यथा युधिष्ठिरराजसूयार्थं धनं जेतुं प्रवृत्तं त्वां तत्र तत्र कृतानि निग्रहानुग्रहादीनि कर्माणि न निबध्नन्ति तत्तद्राज्ञः कर्मानुसारेण निग्रहानुग्रहादीनां त्वया संपादितत्वादिति धनंजयेति संबोधनाभिसंधिः। कर्माणि मां न निबध्नन्तीत्युक्तं तत्र हेतुमाह—उदासीनवदासीन-

६ श्रीधरीव्याख्या।

मिति द्वाभ्याम्। स्वां स्वाधीनां प्रकृतिमवष्टभ्याधिष्ठाय प्रलये लीनं सन्तं चतुर्विधमिमं सर्वं भूतग्रामं कर्मादिपरवशं पुनःपुनर्विविधं सृजामि विशेषेण सृजामीति वा। कथम्। प्रकृतेर्वशात्प्राचीनकर्मनिमित्ततत्स्वभाववलात् ॥८॥ ननु एवं नानाविधानि कर्माणि कुर्वतस्तव जीववद्बन्धः कथं न स्यादित्याशङ्क्याह—नचेति। तानि सृष्ट्यादीनि कर्माणि मां न निबध्नन्ति। कर्मासक्तिर्हि बन्धहेतुः सा चास्-

१ विष्टम्भ उत्पत्तिः।

**मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम् ।

मभिमानवर्जितमहं करोमीति तेषु कर्मसु । अतोऽन्यस्यापि कर्तृत्वाभिमानाभावः फलसङ्गाभावश्चाबन्धकारणमन्यथा कर्मभिर्बध्यते मूढः कोशकारवदित्यभिप्रायः ॥ ९ ॥ तत्र भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च विरुद्धमुच्यत इति तत्परिहारार्थमाह—मयेति । मया सर्वतो दृशिमात्रस्वरूपेणाविक्रियात्मनाध्यक्षेण मम माया त्रिगुणात्मिकाऽविद्यालक्षणा प्रकृतिः सूयत उत्पादयति सचराचरं जगत् । तथाच मन्त्रवर्णः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति । हेतुना निमित्तेनानेनाध्यक्षत्वेन कौन्तेय,

२ आनन्दगिरिव्याख्या ।

मानाभावाच्च कर्मासंबन्धवदीश्वरादन्यस्यापि तदुभयाभावो धर्माद्यसंबन्धे कारणमित्याह—**अतोऽन्यस्येति** । यदि कर्मसु कर्तृत्वाभिमानो वा कस्यचित्कर्मफलसङ्गो वा स्यात्तत्राह—**अन्यथेति** ॥ ९ ॥ ईश्वरे स्रष्टृत्वमौदासीन्यं च विरुद्धमिति शङ्कते—**तत्रेति** । पूर्वग्रन्थः सप्तम्यर्थः । विरोधपरिहारार्थमुत्तरश्लोकमवतारयति—**तदिति** । तृतीयाद्वयं समानाधिकरणमित्यभ्युपेत्य व्याचष्टे—**मयेत्यादिना** । प्रकृतिशब्दार्थमाह—**ममेति** । तस्या अपि ज्ञानत्वं व्यावर्तयति—**त्रिगुणेति** । पराभिप्रेतं प्रधानं व्युदस्यति—**अविद्येति** । साक्षित्वे प्रमाणमाह—**तथाचेति** । मूर्तित्रयात्मना भेदं वारयति—**एक इति** । अखण्डं जाड्यं प्रत्याह—**देव इति** । आदित्यवत्ताटस्थ्यं प्रत्यादिशति—**सर्वभूतेष्विति** । किमिति तर्हि सर्वैर्नोपलभ्यते तत्राह—**गूढ इति** । बुद्ध्यादिवत्परिच्छिन्नत्वं व्यवच्छिनत्ति—**सर्वव्यापीति** । तर्हि नभोवदनात्मत्वं नेत्याह—**सर्वभूतेति** । तर्हि तत्र तत्र कर्मतत्फलसंबन्धित्वं स्यात्तत्राह—**कर्मेति** । सर्वाधिष्ठानत्वमाह—**सर्वेति** । सर्वेषु भूतेषु सत्तास्फूर्तिप्रदत्वेन संनिधिर्वा(सो)त्रोच्यते । न केवलं कर्मणामेवायमध्यक्षोऽपि तु तद्वतामपीत्याह—**साक्षीति** । दर्शनकर्तृत्वशङ्कां शातयति—**चेतेति** । अद्वितीयत्वं केवलत्वम् । धर्माधर्मादिराहित्यमाह—**निर्गुण इति** । किं बहुना सर्वविशेषशून्य इति चकारार्थः । उदासीनस्यापीश्वरस्य साक्षित्वमात्रं निमित्तीकृत्य जगदेतत्पौनःपुन्येन सर्गसंहारावनुभवतीत्याह—**हेतुनेति** । कार्यवत्कारणस्यापि साक्ष्यधीना

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विरुद्धमुच्यत इत्याशङ्क्याह—**मयेति** । मया कूटस्थेन अध्यक्षेण अयस्कान्तकल्पेन प्रवर्तकेन प्रकृतिश्चराचरं जगत् सूयते उत्पादयति । अनेनाध्यक्षत्वेनैव हेतुना हे कौन्तेय, जगद्विपरिवर्तते जन्माद्यवस्थासु भ्रमति । अयस्कान्तवदह-

४ मधुसूदनीव्याख्या ।

निर्विकार आस्ते तद्वन्निर्विकारतयाऽऽसीनम् । द्वयोर्विवदमानयोरीहाभावादुपेक्षकत्वमात्रसाधर्म्येण वतिप्रत्ययः । अतएव निर्विकारत्वात्तेषु सृष्ट्यादिकर्मस्वसक्तं अहं करोमीत्यभिमानलक्षणेन सङ्गेन रहितं मां न निबध्नन्ति कर्माणीति युक्तमेव । अन्यस्यापि हि कर्तृत्वाभावे फलसङ्गाभावे च कर्माणि न बन्धकारणानीत्युक्तमनेन, तदुभयसत्त्वे तु कोशकार इव कर्मभिर्बध्यते मूढ इत्यभिप्रायः ॥ ९ ॥ भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च परस्परविरुद्धमिति शङ्कापरिहारार्थं पुनर्मायामयत्वमेव प्रकटयति—मया सर्वतो दृशिमात्रस्वरूपेणाविक्रियेणाध्यक्षेण नियन्त्रा भासकेनावभासिता प्रकृतिस्त्रिगुणात्मिका सत्त्वासत्त्वादिभिरनिर्वाच्या माया सूयते उत्पादयति सचराचरं जगत् मायाविनाधिष्ठितेव मायाकल्पितगजतुरगादिकम्, न त्वहं स्वकार्यमायाभासन-

५ भाष्योत्कर्षदीपिका ।

मित्यादिना । तथाच फलासक्तिरहितस्याहंकरोमीत्यभिमानवर्जितस्य न तत्तत्कर्मभिर्बन्धः अतोऽन्यस्यापि फलासक्तिकर्तृत्वाभावोऽबन्धस्य हेतुरन्यथा कोशकारवन्मूढः कर्मभिर्बध्यत इत्यभिप्रायः ॥ ९ ॥ ननु भूतग्राममिमं कृत्स्नं विसृजामि । उदासीनवदासीनमिति च विरुद्धमिदमुच्यते इति चेत्तत्राह—**मयेति** । मया चेतनरूपेण सर्वविक्रियाशून्येनाध्यक्षेण स्वामिना सन्निधिमात्रेण सत्तास्फूर्तिप्रदानेन प्रवर्तकेन प्रवर्तिता प्रकृतिस्त्रिगुणात्मिकाऽविद्यालक्षणा मायाशब्दवाच्याऽनिर्वचनीया सचराचरं व्यक्ताव्यक्तात्मकं जगदुत्पादयति । तथाच मन्त्रवर्णः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति मूर्तित्रयात्मना भेदव्यावृत्त्यर्थं एक इति । जाड्यव्यावृत्त्यर्थमुक्तं देव इति । आदित्यवत्ताटस्थ्यं वारयति सर्वभूतेषु गूढ इति । बुद्ध्यादिवत्परिच्छिन्नत्वं निराकरोति सर्वव्यापीति । आकाशवदनात्मत्वं वारयति सर्वभूतान्तरात्मेति । जीववत्कर्मपराधीनत्वं तस्य

६ श्रीधरीव्याख्या ।

कामत्वान्मम नास्त्यत उदासीनवद्वर्तमानस्य मे बन्धनं नापादयन्ति, उदासीनत्वे कर्तृत्वानुपपत्तेरुदासीनवत्स्थितमित्युक्तम् ॥ ९ ॥ तदेवोपपादयति—**मयेति** । मयाध्यक्षेणाधिष्ठात्रा निमित्तभूतेन प्रकृतिः सचराचरं विश्वं सूयते जनयति । अनेन मदधिष्ठानेन हेतुना

१ श्रीमच्छांकरभाष्यम्।

जगत्सचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु। दृशिकर्मत्वापत्तिनिमित्ता हि जगतः सर्वा प्रवृत्तिरहमिदं भोक्ष्ये पश्यामीदं शृणोमीदं सुखमनुभवामि दुःखमनुभवामि तदर्थमिदं करिष्याम्येतदर्थमिदं करिष्य इदं ज्ञास्यामीत्याद्यावगतिनिष्ठाऽवगत्यवसानैव। 'यो अस्याध्यक्षः परमे व्योमन्' इत्यादयश्च मन्त्रा एतमर्थं दर्शयन्ति। ततश्चैकस्य देवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्य परमार्थतः सर्वभोगानभिसंबन्धिनोऽन्यस्य चेतनान्तरस्याभावे भोक्तुरन्यस्याभावात्किंनिमित्तेयं सृष्टिरित्यत्र प्रश्नप्रतिवचने अनुपपन्ने। 'को अद्धा वेद क इह प्रवोचत्कुत आ जाता कुत इयं विसृष्टिः' इत्यादिमन्त्रवर्णेभ्यः।

२ आनन्दगिरिव्याख्या।

प्रवृत्तिरिति वक्तुं व्यक्ताव्यक्तात्मकमित्युक्तम्। सर्वावस्थास्वित्यनेन सृष्टिस्थितिसंहारावस्था गृह्यन्ते। तथापि जगतः सर्गादिभ्यो भिन्ना प्रवृत्तिः स्वाभाविकी नेश्वरायत्तेत्याशङ्क्याह—**दृशीति**। नहि दृशि व्याप्यत्वं विना जडवर्गस्य कापि प्रवृत्तिरिति हिशब्दार्थः। तामेव प्रवृत्तिमुदाहरति—**अहमित्यादिना**। भोगस्य विषयोपलम्भाभावेऽसंभवान्नानाविधां विषयोपलब्धिं दर्शयति—**पश्यामीति**। भोगफलमिदानीं कथयति—**सुखमिति**। विहितप्रतिषिद्धाचरणनिमित्तं सुखं दुःखं चेत्याह—**तदर्थमिति**। नच विमर्शपूर्वकं विज्ञानं विनानुष्ठानमित्याह—**इदमिति**। इत्याद्या प्रवृत्तिरिति संबन्धः। सा च प्रवृत्तिः सर्वा दृक्कर्मत्वमुररीकृत्यैवेत्युक्तं निगमयति—**अवगतीति**। तत्रैव च प्रवृत्तेरवसानमित्याह—**अवगत्यवसानेति**। परस्याध्यक्षत्वमात्रेण जगच्चेष्टेत्यत्र प्रमाणमाह—**यो अस्येति**। अस्य जगतो योऽध्यक्षो निर्विकारः स परमे प्रकृष्टे हार्दे व्योम्नि स्थितो दुर्विज्ञेय इत्यर्थः। ईश्वरस्य साक्षित्वमात्रेण स्रष्टृत्वे स्थिते फलितमाह—**ततश्चेति**। किंनिमित्तापरस्येयं सृष्टिर्न तावद्भोगार्था परस्य परमार्थतो भोगासंबन्धित्वात्तस्य सर्वसाक्षिभूतचैतन्यमात्रत्वान्न चान्यो भोक्ता चेतनान्तराभावादीश्वरस्यैकत्वादचेतनस्याभोक्तृत्वान्न च स्रष्टुरपवर्गार्था तद्विरोधित्वान्नैवं प्रश्नो वा तदनुरूपं प्रतिवचनं वा युक्तं परस्य मायानिबन्धने सर्गे तस्यानवकाशत्वादित्यर्थः। परस्यात्मनो दुर्विज्ञेयत्वे श्रुतिमुदाहरति—**को अद्धेति**। तस्मिन्प्रवक्तापि संसारमण्डले नास्तीत्याह—**क इहेति**। जगतः सृष्टिकर्तृत्वेन परस्य ज्ञेयत्वमाशङ्क्य कूटस्थत्वात्ततो न सृष्टिर्जातेत्याह—**कुत इति**। नहीयं विविधा सृष्टिरन्यस्मादपि कस्मा-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

मुदासीनश्च सृष्टिप्रवर्तकश्च भवामीति भावः। तथाच मन्त्रवर्णः 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्त-

४ मधुसूदनीव्याख्या।

मन्तरेण करोमि व्यापारान्तरम्। हेतुना निमित्तेनानेनाध्यक्षत्वेन हे कौन्तेय, जगत्सचराचरं विपरिवर्तते विविधं परिवर्तते। जन्मादिविनाशान्तं विकारजातमनवरतमासादयतीत्यर्थः। अतो भासकत्वमात्रेण व्यापारेण विसृजामीत्युक्तम्। तावता चादित्या-

५ भाष्योत्कर्षदीपिका।

निराचष्टे कर्माध्यक्षः कर्मणां तत्तत्फलप्रदानाय प्रवर्तकः। न केवलं कर्माध्यक्ष एवापितु सर्वाधिष्ठानं कर्मवतां साक्षी चेत्याह सर्वभूताधिवासः साक्षीति। सर्वभूतेषु सत्तास्फूर्तिप्रदानायाधिवसति सन्निहित इत्यर्थः। यद्वा सर्वाणि भूतानि अधिवसन्ति यस्मिन्नधिष्ठाने सः। दर्शनकर्तृत्वं वारयति चेता इति। विजातीयकृतं भेदं व्यवच्छिनत्ति केवल इति। अद्वितीय इत्यर्थः। स्वगतभेदं प्रत्याचष्टे निर्गुण इति। तथाच सूर्यवत्प्रकृतिसत्तास्फूर्तिप्रदानेन जगत्कर्तृत्वेऽप्युदासीनत्वमविरुद्धमिति भावः। अनेनाध्यक्षत्वेन हेतुना निमित्तेन सचराचरं जगद्विपरिवर्तते सर्वावस्थासु जाग्रदादिषु बाल्यादिषु चेदमहं भोक्ष्ये इदं पश्यामि इदं शृणोमीदं स्पृशामीदमास्वादयामीदं जिघ्रामीदं सुखदुःखमनुभवामि तदर्थमिदं धर्माधर्मलक्षणं कर्म करिष्ये इत्यादिसर्वापि जगतः प्रवृत्तिः चेतनव्याप्तिं विना जडवर्गस्य न संभवति। तथाच मन्त्रवर्णः 'यो अस्याध्यक्षः परमे व्योमन्' इत्यादिः। अस्य प्रत्यक्षादिसन्निधापितस्य जगतो योऽध्यक्षः सत्तास्फूर्तिप्रदानेन प्रवर्तकः सूर्यवन्निर्विकारः सः परमे प्रकृष्टे हार्दे व्योम्न्याकाशे स्थितो दुर्विज्ञेय इत्यर्थः। एतेनेदं फलितम्। ननु किंनिमित्तेयं परस्येश्वरस्य सृष्टिः किं स्वभोगार्था, उत चेतनान्तरभोगार्था, उताचेतनार्था, उतापवर्गार्था। नाद्यः। एकस्य देवस्य सर्वाध्यक्षभूतचैतन्यस्य परमार्थसत आप्तकामस्य पूर्णस्य सर्वभोगास्पृष्टत्वात्। न द्वितीयः। तद्व्यतिरिक्तचेतनान्तरस्याभावात्। 'एकमेवाद्वितीयम्' इति श्रुतेः। नापि तृतीयः। अचेतनसत्त्वस्य निरूपयितुमशक्यत्वात्। 'नेह नानास्ति किंचन' इति श्रुतेरचेतनस्य भोक्तृत्वायोगाच्च। नापि चतुर्थः। सृष्टेरपवर्गविरोधित्वात्। किंच कस्य मोक्षार्थो स्वस्योतान्यस्य। नाद्यः। स्वस्य नित्यमुक्तत्वात्। नान्त्योऽन्यस्यानिरूपणादित्यादिशङ्का तदनुरूपं प्रतिवचनं च न युक्तं, परस्य ब्रह्मणः मायानिबन्धने सर्गे उक्तशङ्कानवकाशत्वेन प्रतिवचनयोग्यताया अभावात्। किंच मायासर्गमभ्युपगच्छतां परत्र ब्रह्मणि नानाभावो वास्तवो न संभवतीति वदतामौपनिषदानामियमुक्तिरिष्टैव। तथाच मन्त्रवर्णः 'को अद्धा वेद क इह प्रवोचत्कुत आ जाता कुत इयं विसृष्टिः' इत्यादिः। परमात्मनो दुर्विज्ञेयत्वं प्रतिपादयन् सृष्टिकर्तृत्वं तस्मिन्नाक्षिपति परमात्मानमद्धा साक्षात् को वेद घटमिव तदिदमिति। न कोऽपि जानातीत्यर्थः। तस्मिन्परमात्मनि प्रवक्तापि संसारमण्डले नास्तीत्याह—**क इहेति**। शुद्धस्य परमात्मनः सर्वशब्दावाच्यत्वान्न कोऽपि प्रावोच-

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।**
**परं भावमजानन्तो मम भूतमहेश्वरम्॥ ११॥**

१ श्रीमच्छांकरभाष्यम्।

**दर्शितं च भगवता 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति॥ १०॥ एवं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानमपि सन्तं—अवजानन्त्यवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनो**

२ आनन्दगिरिव्याख्या।

चिदुपपद्यतेऽन्यस्य वस्तुनोऽभावादित्याह—**कुत इति**। कथं तर्हि सृष्टिरित्याशङ्क्याज्ञानाधीनेत्याह—**दर्शितं चेति** ॥ १०॥ सर्वाध्यक्षः सर्वभूताधिवासो नित्यमुक्तश्चेत्त्वं तर्हि किमिति त्वामेवात्मत्वेन भेदेन वा सर्वे न भजन्ते तत्राह—**एवमिति**। विपर्यस्तबुद्धित्वं भगवदवज्ञायां कारणमित्याह—**मूढा इति**। भगवतो मनुष्यदेहसंबन्धात्त-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

रात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति एकस्यैव देवस्य सर्वाध्यक्षत्वं साक्षित्वं च प्रतिपादयति॥ १०॥ एवंभूतं मां सन्तं मूढाः अवजानन्ति। यतो मानुषीं तनुमाश्रितं मनुष्यदेहेन व्यवहरन्तम्।

४ मधुसूदनीव्याख्या।

देरिव कर्तृत्वाभावादुदासीनवदासीनमित्युक्तमिति न विरोधः। तदुक्तं 'अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम्। अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते' इति श्रुतिस्मृतिवादाश्चात्रार्थे सहस्रश उदाहार्याः॥ १०॥ एवं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानमानन्दघनमनन्तमपि सन्तं अवजानन्ति मां साक्षादीश्वरोऽयमिति नाद्रियन्ते निन्दन्ति वा मूढा अविवेकिनो

५ भाष्योत्कर्षदीपिका।

दित्यर्थः। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः। तर्हि ब्रह्मज्ञानाय श्रवणादौ प्रवृत्तिबोधकानां 'ब्रह्म वेद ब्रह्मैव भवति' 'तरति शोकमात्मवित्' इत्यादिकानां च श्रुतीनामप्रामाण्यमिति चेन्नैष दोषः। फलव्याप्तिप्रतिषेधेनाज्ञाननिबर्हणाय वृत्तिव्याप्तिस्वीकारेण चाविरोधात्। शब्दोऽपि साक्षान्न ब्रह्म प्रतिपादयति किंतु अज्ञाननिबर्हण एव तस्याचिन्त्या शक्तिरिति स्वीक्रियते। तथाच सुप्ते देवदत्ते देवदत्तेतिशब्दो यथा तन्निद्रां नाशयति एवं तत्त्वमसीतिवाक्यमपि नाहं ब्रह्मेत्यज्ञानं निराकरोति। तदुक्तं सुरेश्वराचार्यैः 'दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः। शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः। अगृहीत्वैव संबन्धमभिधानाभिधेययोः। हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः। जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन। ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम्। अविद्याघातिनः शब्दाद्याहं ब्रह्मेति धीर्भवेत्। नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम्' इति। ननु जगतः सृष्टिकर्तृत्वेन परमात्मनो ज्ञेयत्वमिति चेत्तत्राह। कुत आजातेति कूटस्थस्य तस्य स्वतःसृष्टिकर्तृत्वासंभवात्। ननु अन्यस्मान्निमित्ताद्भविष्यतीति चेत्तत्राह—**कुत इति**। अन्यस्य वस्तुनो भावादियं विविधा सृष्टिर्न कुतश्चिन्निमित्तादुत्पद्यत इत्यर्थः। ननु 'यतो वा इमानि भूतानि जायन्ते', 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे', 'जन्माद्यस्य यतः' इत्यादिश्रुतिस्मृतिसूत्राणामप्रामाण्यप्रसङ्ग इति चेन्नैष दोषः। ब्रह्मणः सृष्टेरुत्पत्त्यादिप्रतिपादने श्रुत्यादीनां तात्पर्याभावात्। 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इतिन्यायात्। तथाच ब्रह्म नास्तीत्यसत्त्वापादकावरणनिवृत्त्यर्थमध्यारोपनिरूपणम्। किंचाध्यारोपस्यापि प्रपञ्चात्यन्तासत्त्वप्रतिपादने एव तात्पर्यं जगतः परमात्मसकाशादुत्पत्त्यादिप्रतिपादनेन तदत्यन्तासत्त्वस्य निरपवादादन्यथा वायौ रूपं नास्तीत्यपवादमात्रेण तेजसि रूपस्य सत्तानपायान्न तस्यासत्त्वं प्रतीयते। तथा ब्रह्मणि जगन्नास्तीत्यपवादमात्रेण प्रधानादौ तत्सत्त्वापत्त्या तदसिद्धेः। कथं तर्हि मिथ्याभूते प्रपञ्चे इदमुत्पन्नमिदं नष्टमिति वैदिकलौकिकव्यवहार इति चेत् अनाद्यनिर्वचनीयाज्ञानकल्पितं लौकिकमपवदितुं श्रुतिभिरनूद्यते इति गृहाण। तदुक्तं 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति। यथा पाण्डुनाध्यक्षेण कुन्ती त्वामुत्पादितवती तथा मयाध्यक्षेण प्रकृतिः सचराचरं जगदुत्पादयतीति कौन्तेयेति संबोधनस्य गूढाभिसंधिः॥१०॥ नन्वेवंभूतं शुद्धबुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानं त्वां किमिति सर्वे आत्मत्वेन भेदेन वा न प्रतिपद्यन्ते प्रत्युतावजानन्तीतिचेत्तत्राह—**अवजानन्तीति**। एवंभूतमपि मां अवजानन्ति अवज्ञां परिभवं अपरोक्षं परोक्षं च तिरस्कारं निन्दां च कुर्वन्तीति यावत्। भगवदवज्ञायां कारणमाह—**मूढा इति**। विपरीतज्ञानाः। विपरीतज्ञाने निमित्तमाह। मानुषीं तनुमाश्रितं मनुष्यसंबन्धिनं देहमाश्रितं

६ श्रीधरीव्याख्या।

इदं जगद्विपरिवर्तते पुनःपुनर्जायते। संनिधिमात्रेणाधिष्ठातृत्वात्कर्तृत्वमुदासीनत्वं चाविरुद्धमिति भावः॥ १०॥ नन्वेवंभूतं परमेश्वरं त्वां किमिति केचिन्नाद्रियन्ते तत्राह—**अवजानन्तीति द्वाभ्याम्**। सर्वभूतमहेश्वररूपं मदीयं परं भावं तत्त्वमजानन्तो मूढा मूर्खा

७ अभिनवगुप्ताचार्यव्याख्या।

मेऽस्ति कर्मबन्ध औदासीन्येन वर्तमानोऽहं यतोऽत एवाहं जगन्निर्माणेनाश्रितव्यापारत्वाद्धेतुः॥ ८॥ ९॥ १०॥ अवजानन्तीति। सोऽहं

१ स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविषयत्वं फलव्याप्तिः.

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मानुषीं मनुष्यसंबन्धिनीं तनुं देहमाश्रितं मनुष्यदेहेन व्यवहरन्तमित्येतत् । परं प्रकृष्टं भावं परमात्मतत्त्वमाकाशकल्पमाकाशादप्यन्तरतममजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वमात्मानम् । ततश्च तस्य ममावज्ञानभावनेनाहता वराकास्ते ॥ ११ ॥ कथं—मोघाशा इति । मोघाशा वृथाशा आशिषो येषां ते मोघाशाः । तथा मोघकर्माणो यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि

२ आनन्दगिरिव्याख्या ।

स्मिन्विपर्यासः संभवतीत्याह—**मानुषीमिति** । अस्मदादिवद्देहतादात्म्याभिमानं भगवतो व्यावर्तयति—**मनुष्येति** । भगवन्तमवजानतामविवेकमूलाज्ञानं हेतुमाह—**परमिति** । ईश्वरावज्ञानात्किं भवतीत्यपेक्षायां तदवज्ञानप्रतिबद्धबुद्धयः शोच्या भवन्तीत्याह—**ततश्चेति** । भगवदवज्ञानादेव हेतोरवजानन्तस्ते जन्तवो वराकाः शोच्याः सर्वपुरुषार्थबाह्याः स्युरिति संबन्धः । तत्र हेतुं सूचयति—**तस्येति** । प्रकृतस्य भगवतोऽवज्ञानमनादरणं निन्दनं वा तस्य भावनं पौनःपुन्यं तेनाहतास्तज्जनितदुरितप्रभावात् प्रतिबद्धबुद्धय इत्यर्थः ॥ ११ ॥ भगवन्तमवजानतां प्रश्नपूर्वकं शोच्यत्वं विशदयति—**कथमिति** । भगवन्निन्दापराणां न काचिदपि प्रार्थनार्थवतीत्याह—**वृथेति** । ननु भगवन्तं निन्दन्तोऽपि नित्यं नैमित्तिकं वा कर्मानुतिष्ठन्ति, तदनुष्ठानाच्च तेषां प्रार्थनाः सार्था भविष्यन्तीति नेत्याह—**तथेति** । परिभवस्तिरस्करणम्, अवज्ञानमनादरणम् । तेषामपि शास्त्रार्थज्ञानवतां तद्द्वारा प्रार्थनार्थवत्त्वमित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मम परं प्रकृष्टं भावं तत्त्वमजानन्तः भूतानां महेश्वरं मामवजानन्तीति संबन्धः ॥ ११ ॥ मदवज्ञानाच्च ते मोघाशाः वृथैव आशा आशिषो येषां ते मोघाशाः । तथा मोघकर्माणो निष्फलोद्योगाः । मोघज्ञानाः निष्फलज्ञानाः । यतो विचे-

४ मधुसूदनीव्याख्या ।

जनास्तेषामवज्ञाहेतुं भ्रमं सूचयति । मानुषीं तनुमाश्रितं मनुष्यतया प्रतीयमानां मूर्तिमात्मेच्छया भक्तानुग्रहार्थं गृहीतवन्तम् । मनुष्यतया प्रतीयमानेन देहेन व्यवहरन्तमिति यावत् । ततश्च मनुष्योऽयमिति भ्रान्त्या आच्छादितान्तःकरणा मम परं भावं प्रकृष्टं पारमार्थिकं तत्त्वं सर्वभूतानां महान्तमीश्वरमजानन्तो यन्नाद्रियन्ते निन्दन्ति वा तदनुरूपमेव मूढत्वस्य ॥ ११ ॥ ते च भगवदवज्ञाननिन्दनजनितमहादुरितप्रतिबद्धबुद्धयो निरन्तरं निरयनिवासार्हा एव—ईश्वरमन्तरेण कर्माण्येव नः फलं दास्य-

५ भाष्योत्कर्षदीपिका ।

मनुष्यदेहेन व्यवहरन्तमितियावत् । तथाच मनुष्यवद्देहाभिमानशून्ये साधकानुग्रहार्थं गृहीतमायामयलीलाविग्रहे मयि परब्रह्मणि-देहसंबन्धदर्शनं विपर्ययबुद्धौ निमित्तमिति भावः । देहादिसंबन्धशून्ये परमात्मनि देहादिसंसर्गावलोकने हेतुमाह—**परमिति** । मम सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां महान्तमीश्वरं परं सर्वोत्कृष्टं भावं परमात्मतत्त्वमाकाशवत्सर्वसङ्गविवर्जितमाकाशस्यापि मूलकारणभूतं स्वात्मस्वरूपमजानन्त इत्यर्थः । तथाच मम वास्तवस्वरूपाज्ञानमेव तत्र हेतुरित्याशयः ॥११॥ ततश्च तेषामनादरणेन तिरस्करणेन निन्दया च हतानां सर्वपुरुषार्थभ्रष्टानां अतिक्षुद्राणां केनापि कापि प्रार्थना न सिध्यतीत्याह—**मोघाशा इति** । मोघा व्यर्था आशा आशिषस्तत्तद्वस्तुप्रार्थना येषां ते । ननु तेषां प्रार्थना अग्निहोत्रादिकर्मानुष्ठानात्सार्था भविष्यतीतिचेत्, भगवन्तमात्मानमवजानतामग्निहोत्रादिकर्मणां श्रममात्रत्वेन नैष्फल्यान्नेत्याह—**मोघकर्माण इति** । मोघानि निष्फलान्येव श्रमहेतुभूतानि अग्निहोत्रादीनि कर्माणि येषां ते । तदुक्तम् 'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्' इति । ननु भगवन्तमवजानन्तोऽपि ज्ञानिनो दृश्यन्ते ज्ञानाच्च तेषां मोक्षप्रार्थना सार्था भविष्यतीतिचेत् । भगवदवज्ञानसहितस्य तस्य साक्षात्काराहेतुत्वेन मोक्षाहेतुत्वान्नेत्याह । मोघज्ञाना मोघं निष्फलं ज्ञानं येषां ते । तदुक्तं 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम्' इति । विगतचेतसो विगतविवेकाश्चेति भाष्ये चो हेतौ । यतो भगवदवज्ञानेन कर्मादीनि निष्फलानि तद्भक्त्या तु सफलानीति विवेकशून्या

६ श्रीधरीव्याख्या ।

मामवजानन्त्यवमन्यन्ते । अवज्ञाने हेतुः शुद्धसत्त्वमयीमपि तनुं भक्तेच्छावशान्मनुष्याकारामाश्रितवन्तम् ॥ ११ ॥ किंच—**मोघाशा इति** । मत्तोऽन्यद्देवतान्तरं क्षिप्रं फलं दास्यतीत्येवंभूता मोघा निष्फलैवाशा येषां ते । अतएव मद्विमुखत्वान्मोघानि व्यर्थानि कर्माणि

७ अभिनवगुप्ताचार्यव्याख्या ।

सर्वस्यान्तःशायी सर्वस्यात्मरूपतयावज्ञास्पदम् । यन्मानुषादिचतुर्दशविधसर्गव्यतिरिक्त ईश्वरो नोपलभ्यते स कथमस्तीति ॥ ११ ॥ मोघेति । तेषां च कर्मज्ञानमाकांक्षाश्च सर्वं निष्फलमवस्तुविषयत्वात् । आसुरीं राक्षसीं चेति उद्रिक्तरजस्तमोधर्माण इति ॥ १२ ॥ महा-

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**तानि च तेषां भगवत्परिभवात् स्वात्मभूतस्यावज्ञानान्मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माणः। तथा मोघज्ञाना मोघं निष्फलं ज्ञानं येषां ते मोघज्ञानाः ज्ञानमपि तेषां निष्फलमेव स्यात् । विचेतसो विगतविवेकाश्च ते भवन्तीत्यभिप्रायः । किंच ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावम् आसुरीमसुराणां च प्रकृतिं मोहिनीं मोहकरीं देहात्मवादिनीं श्रिता आश्रिताश्छिन्धि भिन्धि पिब खाद परस्वमपहरेत्येवंवदनशीलाः क्रूरकर्माणो भवन्तीत्यर्थः । 'असुर्या नाम ते लोकाः' इति श्रुतेः ॥१२॥ महेति ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः—महात्मानस्त्वक्षुद्रचित्ता मामीश्वरं पार्थ, दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो भजन्ति सेवन्तेऽ-**

२ आनन्दगिरिव्याख्या ।

शङ्क्याह—**तथा मोघेति** । तथापि यौक्तिकविवेकवशात्तत्प्रार्थनासाफल्यमित्याशङ्क्याह—**विचेतस इति** । न केवलमुक्तविशेषणवत्त्वमेव तेषां किंतु वर्तमानदेहपातादनन्तरं तत्तदतिक्रूरयोनिप्राप्तिश्च निश्चितेत्याह—**किंचेति** । मोहकरीमिति प्रकृतिद्वयेऽपि तुल्यं विशेषणं, छिन्धि भिन्धि पिब खादेति प्राणिहिंसारूपो रक्षसां स्वभावः, असुराणां स्वभावस्तु न देहि न जुहुधि परस्वमेवापहरेत्यादिरूपः, मोहो मिथ्याज्ञानम् । उक्तमेव स्फुटयति—**छिन्धीति** ॥ १२ ॥ के पुनर्भगवन्तं भजन्ते तानाह—**ये पुनरिति** । महान्प्रकृष्टो यज्ञादिभिः शोधित आत्मा सत्त्वं येषामिति व्युत्पत्तिमाश्रित्याह—**अक्षुद्रेति** । तुशब्दोऽवधारणे । प्रकृतिं विशिनष्टि—**शमेति** । अनन्यस्मिन् प्रत्यग्भूते मयि

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

तसो निर्विवेकाः । यतो राक्षसीमासुरीं च रजस्तमःप्रधानां मोहिनीं मोहकरीं प्रकृतिं श्रिताः । छिन्धि भिन्धि पिब खाद परस्वमपहरेत्येवंवादशीलाः क्रूरकर्माणो भवन्तीत्यर्थः ॥ १२ ॥ तथा ये महात्मानोऽक्षुद्रचित्ताः । तु पूर्वेभ्योऽत्यन्तं विलक्षणाः मां भजन्ति । यतो दैवीं प्रकृतिं सत्त्वप्रधानामाश्रिताः । अनन्यमनसः एकाग्रचेतसः । किं गतानुगतिकतया

४ मधुसूदनीव्याख्या ।

न्तीत्येवंरूपा मोघा निष्फलैवाशा फलप्रार्थना येषां ते । अतएवेश्वरविमुखत्वान्मोघानि श्रममात्ररूपाण्यग्निहोत्रादीनि कर्माणि येषां ते । तथा मोघमीश्वराप्रतिपादककुतर्कशास्त्रजनितं ज्ञानं येषां ते । कुत एवं । यतो विचेतसो भगवदवज्ञानजनितदुरितप्रतिबद्धविवेकविज्ञानाः । किंच ते भगवदवज्ञानवशात् राक्षसीं तामसीं अविहितहिंसाहेतुद्वेषप्रधानां आसुरीं च राजसीं शास्त्रानभ्यनुज्ञातविषयभोगहेतुरागप्रधानां च । मोहिनीं शास्त्रीयज्ञानभ्रंशहेतुं प्रकृतिं स्वभावमाश्रिता एव भवन्ति । ततश्च 'त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभः' इत्युक्तनरकद्वारभागितया नरकयातनामेव ते सततमनुभवन्तीत्यर्थः ॥१२॥ भगवद्विमुखानां फलकामनायास्तत्प्रयुक्तस्य नित्यनैमित्तिककाम्यकर्मानुष्ठानस्य तत्प्रयुक्तस्य शास्त्रीयज्ञानस्य च वैयर्थ्यात्पारलौकिकफलतत्साधनशून्यास्ते । नाप्यैहलौकिकं किंचित्फलमस्ति तेषां विवेकविज्ञानशून्यतया । विचेतसो हि ते । अतः सर्वपुरुषार्थबाह्याः शोच्या एव सर्वेषां ते वराका इत्युक्तम् । अधुना के सर्वपुरुषार्थभाजोऽशोच्याः ये भगवदेकशरणा इत्युच्यते—महाननेकजन्मकृतसुकृतैः संस्कृतः

५ भाष्योत्कर्षदीपिका ।

अत एतादृशास्ते भवन्तीत्यभिप्रायः । किंच यतो राक्षसीं रक्षसां प्रकृतिं स्वभावं च्छिन्धि भिन्धि पिब खादेत्येवंरूपाम्, आसुरीमसुराणां च प्रकृतिं न देहि न जुहुधि परस्वमपहरेत्येवंरूपां मोहिनीं मोहकरीं देहात्माभिमानरूपां श्रिता आश्रिताः क्रूरकर्माणस्ते भवन्ति अतोऽपि तेषामुक्तविशेषणवत्त्वमित्यर्थः । यद्वा किंच न केवलमुक्तविशेषणवत्त्वमेव तेषामपि तु एतादृशा अपीत्याह—**राक्षसीमिति** । अथवा न केवलं वर्तमानदेह एवैतादृशाः किंतु वर्तमानदेहपातानन्तरमेतेषां तत्तदतिक्रूरयोनिप्राप्तिश्च निश्चितेत्याह—**राक्षसीमिति** । तथाच श्रुतिः 'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः' इति ॥१२॥ के पुनस्त्वां भजन्त इति तत्राह—**महात्मान इति** । तुशब्दोऽवधारणार्थः । पूर्वेभ्योऽत्यन्तवैलक्षण्यद्योतनार्थ इति वा । ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः महान्प्रकृष्टोऽनेकजन्मार्जितयज्ञदानादिभिः शोधित आत्मा चित्तं येषां

६ श्रीधरीव्याख्या ।

येषां ते । मोघमेव नानाकुतर्काश्रितं शास्त्रज्ञानं येषां ते । अतएव विचेतसो विक्षिप्तचित्ताः । सर्वत्र हेतुः । राक्षसीं तामसीं हिंसादिप्रचुराम् आसुरीं च राजसीं कामदर्पादिबहुलाम् मोहिनीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावं श्रिताः आश्रिताः सन्तो मामवजानन्तीति पूर्वेणान्वयः ॥ १२ ॥ के तर्हि त्वामाराधयन्तीत्यत आह—**महात्मानस्त्विति** । महात्मानः कामाद्यनभिभूतचित्ताः यतोऽभयं सत्त्व-

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**नन्यमनसोऽनन्यचित्ता ज्ञात्वा मां भूतादिं भूतानां वियदादीनां प्राणिनां चादिकारणमव्ययम् ॥ १३ ॥ कथं—सततमिति । सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तो यजन्तश्चेन्द्रियोपसंहारशमदमदयाऽहिंसादिलक्षणैर्धर्मैः प्रयतन्तश्च दृढव्रता दृढं स्थिरमचाञ्चल्यं व्रतं येषां**

२ आनन्दगिरिव्याख्या ।

परस्मिन्नेव मनो येषामिति व्युत्पत्त्या व्याकरोति—**अनन्यचित्ता इति** । अज्ञाते सेवानुपपत्तेः शास्त्रोपपत्तिभ्यामादौ ज्ञात्वा ततः सेवन्त इत्याह —**ज्ञात्वेति** । अव्ययमविनाशिनम् ॥ १३ ॥ भजनप्रकारं पृच्छति—**कथमिति** । तत्प्रकारमाह—**सततमिति** । सर्वदेति श्रवणावस्था गृह्यन्ते, कीर्तनं वेदान्तश्रवणं प्रणवजपश्च, व्रतं ब्रह्मचर्यादि,

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दम्भेन वा भजन्ति । न । किं तर्हि मां भूतादिं सर्वभूतकारणमव्ययं ज्ञात्वा मत्वा भजन्ति ॥ १३ ॥ भजनस्वरूपमाह—**सततमिति** । यतन्तः इन्द्रियोपसंहारशमदमादिषु प्रयतमानाः दृढान्यहिंसादीनि व्रतानि येषां ते दृढव्रताः

४ मधुसूदनीव्याख्या ।

क्षुद्रकामाद्यनभिभूत आत्मान्तःकरणं येषां ते अतएव 'अभयं सत्त्वसंशुद्धिः' इत्यादिवक्ष्यमाणां दैवीं सात्त्विकीं प्रकृतिमाश्रिताः । अतएवान्यस्मिन्मद्व्यतिरिक्ते नास्ति मनो येषां ते । भूतादिं सर्वजगत्कारणमव्ययमविनाशिनं च मामीश्वरं ज्ञात्वा भजन्ति सेवन्ते ॥ १३ ॥ ते केन प्रकारेण भजन्तीत्युच्यते द्वाभ्याम्—सततं सर्वदा ब्रह्मनिष्ठं गुरुमुपसृत्य वेदान्तवाक्यविचारेण गुरूपसदनेतरकाले च प्रणवजपोपनिषदावर्तनादिभिर्मां सर्वोपनिषत्प्रतिपाद्यं ब्रह्मस्वरूपं कीर्तयन्तः । वेदान्तशास्त्राध्ययनरूपश्रवणव्यापारविषयीकुर्वन्त इति यावत् । तथा यतन्तश्च गुरुसंनिधावन्यत्र वा वेदान्ताविरोधितर्कानुसंधानेनाप्रामाण्यशङ्कानास्कन्दितगुरूपदिष्टमत्स्वरूपावधारणाय यतमानाः । श्रवणनिर्धारितार्थबाधकशङ्कापनोदककुतर्कानुसंधानरूपमननपरायणा इति यावत् । तथा दृढव्रताः दृढानि प्रतिपक्षैश्चालयितुमशक्यानि अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहादीनि व्रतानि येषां ते । शमदमादिसाधनसंपन्ना इति यावत् । तथा चोक्तं पतञ्जलिना 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः', ते तु 'जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' इति । जात्या ब्राह्मणत्वादिकया, देशेन तीर्थादिना, कालेन चतुर्दश्यादिना, समयेन यज्ञाद्यन्यत्वेनानवच्छिन्ना अहिंसादयः सार्वभौमाः क्षिप्तमूढविक्षिप्तभूमिष्वपि भाव्यमानाः, कस्यामपि जातौ कस्मिन्नपि देशे कस्मिन्नपि काले यज्ञादिप्रयोजनेऽपि हिंसां न करिष्यामीत्येवंरूपेण किंचिदप्यपर्युदस्य सामान्येन प्रवृत्ता एते महाव्रतमित्युच्यन्त इत्यर्थः । तथा नमस्यन्तश्च मां कायवाङ्मनोभिर्नमस्कुर्वन्तश्च मां भगवन्तं वासुदेवं सकलकल्याणगुणनिधानमिष्टदेवतारूपेण गुरुरूपेण च स्थितम् । चकारात् 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इति वन्दनसहचरितं श्रवणाद्यपि बोद्धव्यम् ।

५ भाष्योत्कर्षदीपिका ।

तेऽक्षुद्रचित्ताः । अतएव दैवीं प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो मां परमेश्वरं भूतानामाकाशादीनामादिं कारणम् । ननु यदि दधिकारणदुग्धवत् वियदादिरूपेण परिणतत्वात् भूतादिः परमेश्वरस्तर्हि परिणामी स्यादित्याशङ्क्य शुक्तिरूप्यस्य शुक्तिरिव कारणमतः परिणामशून्योऽविनाशीत्याह—**अव्ययमिति**।ज्ञात्वाऽनन्यमनसः अन्यस्मिन्परमेश्वराद्व्यतिरिक्ते विषयादौ न विद्यते मनो येषां ते, अनन्यस्मिन्प्रत्यगभिन्ने मनो येषामिति वा ते अनन्यमनसः सन्तो मां भजन्ति सेवन्ते । पार्थेति संबोधयन् त्वं त्वतिपुण्यशीलायाः पृथाया अपत्यत्वान्महात्मत्वादिविशेषणविशिष्टोऽसीति सूचयति ॥१३॥ भजन्तीत्युक्तं तत्र भजनप्रकारजिज्ञासायामाह द्वाभ्याम् **—सततमिति ।** निरन्तरं सर्वदा ब्रह्मस्वरूपं मां कीर्तयन्तः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसंगम्य तन्मुखादुपनिषच्छ्रवणानन्तरमुपनिषद्भिः हरे गोविन्द वासुदेव दामोदर माधव मुकुन्देत्यादिनामभिश्च कीर्तयन्तः यतन्तश्च शमदमदयाऽहिंसाऽस्तेयब्रह्मचर्यापरिग्रहादिभिर्यत्नं कुर्वन्तः । अतएव दृढं स्थिरं केनापि चालयितुमशक्यं व्रतं शमदमादिरूपं येषां ते भक्त्या परप्रेम्णा मां हृदयेशयमन्तर्यामिरूपेण प्रत्यक्चेतनरूपेण च हृद्गुहावासिनमात्मानं नित्ययुक्ता उद्युक्ताः सन्त उपासते सेवन्ते । सततमित्यनेन कीर्तनादिव्यतिरिक्तकालव्यावृत्तिः । अत्र केचित्[1] । गुरूपसदनोत्तरकाले प्रणवजपोपनिषदावर्तनादिभिर्मां सर्वोपनिषत्प्रतिपाद्यं ब्रह्मस्वरूपं कीर्तयन्तः

६ श्रीधरीव्याख्या ।

संशुद्धिरित्यादिना वक्ष्यमाणां दैवीं प्रकृतिं स्वभावमाश्रिताः । अतएव मद्व्यतिरेकेण नास्त्यन्यस्मिन्मनो येषां ते भूतादिं जगत्कारणमव्ययं नित्यं च मां ज्ञात्वा भजन्ति ॥ १३ ॥ तेषां भजनप्रकारमाह—**सततमिति द्वाभ्याम् ।** सततं सर्वदा स्तोत्रमन्त्रादिभिः

७ अभिनवगुप्ताचार्यव्याख्या ।

त्मान इति । दैविकीं सात्त्विकीं यजन्तो बाह्यद्रव्यादियागैः । अन्ये तु मां ज्ञानयज्ञेनैवोपासते । अतः केचिदेकतया ज्ञानतः केचिद्बहुधा

---

[1] मधुसूदनः ।

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**ते दृढव्रता नमस्यन्तश्च मां हृदयेशयमात्मानं भक्त्या नित्ययुक्ताः सन्त उपासते सेवन्ते ॥ १४ ॥ ते केन केन प्रकारेणोपासत इत्युच्यते—ज्ञानेति । ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञस्तेन ज्ञानयज्ञेन**

२ आनन्दगिरिव्याख्या ।

नमस्यन्तो मांप्रति चेतसा प्रह्वीभवन्तो भक्त्या परेण प्रेम्णा नित्ययुक्ताः सन्तः सदा संयुक्ताः ॥ १४ ॥ उपासनप्रकारभेदप्रतिपित्सया पृच्छति—**ते केनेति** । तत्प्रकारभेदोदीरणार्थं श्लोकमवतारयति—**उच्यत इति** । इज्यते पूज्यते परमेश्वरोऽनेनेति प्रकृते ज्ञाने यज्ञशब्दः । ईश्वरं चेति चकारोऽवधारणे । देवतान्तरध्यानत्यागमपिशब्दसूचितं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नमस्यन्तश्च मां हृदयेशयं प्रतिमादिरूपं वा भक्त्या । नित्ययुक्ताः नित्यमवहिताः सन्त उपासते ॥ १४ ॥ ज्ञानयज्ञेन निर्विकल्पसमाधिना पातञ्जलाः । एकत्वेन अहमेव भगवान्वासुदेव इत्यभेदेनौपनिषदाः । पृथक्त्वेन अयमीश्वरो मम

४ मधुसूदनीव्याख्या ।

अर्चनं पादसेवनमित्यपि गुरुरूपे तस्मिन्सुकरमेव । अत्र मामिति पुनर्वचनं सगुणरूपपरामर्शार्थम् । अन्यथा वैयर्थ्यप्रसङ्गात् । तथा भक्त्या मद्विषयेण परेण प्रेम्णा नित्ययुक्ताः सर्वदा संयुक्ताः । एतेन सर्वसाधनपौष्कल्यं प्रतिबन्धकाभावश्च दर्शितः । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्रुतेः । पतञ्जलिना चोक्तम् 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति । तत ईश्वरप्रणिधानात्प्रत्यक्चेतनस्य त्वंपदलक्ष्यस्याधिगमः साक्षात्कारो भवति, अन्तरायाणां विघ्नानां चाभावो भवतीति सूत्रस्यार्थः । तदेवं शमदमादिसाधनसंपन्ना वेदान्तश्रवणमननपरायणाः परमेश्वरे परमगुरौ प्रेम्णा नमस्कारादिना च विगतविघ्नाः परिपूर्णसर्वसाधनाः सन्तो मामुपासते विजातीयप्रत्ययानन्तरितेन सजातीयप्रत्ययप्रवाहेण श्रवणमननोत्तरभाविना सततं चिन्तयन्ति महात्मानः । अनेन निदिध्यासनं चरमसाधनं दर्शितम् । एतादृशसाधनपौष्कल्ये सति यद्वेदान्तवाक्यजमखण्डगोचरं साक्षात्काररूपमहं ब्रह्मास्मीति ज्ञानं तत्सर्वशङ्काकलङ्कास्पृष्टं सर्वसाधनफलभूतं स्वोत्पत्तिमात्रेण दीप इव तमः सकलमज्ञानं तत्कार्यं च नाशयतीति निरपेक्षमेव साक्षान्मोक्षहेतुर्नतु भूमिजयक्रमेण भ्रूमध्ये प्राणप्रवेशनं मूर्धन्यया नाड्या प्राणोत्क्रमणमर्चिरादिमार्गेण ब्रह्मलोकगमनं तद्भोगान्तकालविलम्बं वा प्रतीक्षते । अतो यत्प्राक्प्रतिज्ञातं 'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे । ज्ञानम्' इति तदेतदुक्तम्, फलं चास्याशुभान्मोक्षणं प्रागुक्तमेवेतीह पुनर्नोक्तम् । एवमत्रायं गम्भीरो भगवतोऽभिप्रायः, उत्तानार्थस्तु प्रकट एव ॥ १४ ॥ इदानीं य एवमुक्तश्रवणमनननिदिध्यासनासमर्थास्तेऽपि त्रिविधा उत्तमा मध्यमा मन्दाश्चेति सर्वेऽपि स्वानुरूप्येण मामुपासत इत्याह—अन्ये पूर्वोक्तसा-

५ भाष्योत्कर्षदीपिका ।

वेदान्तशास्त्राध्ययनरूपश्रवणव्यापारविषयीकुर्वन्त इतियावत् । तथा यतन्तश्च गुरुमुखाच्छ्रुतमतत्स्वरूपावधारणाय यतमानाः श्रवणगृहीतार्थबाधकशङ्कानिवर्तकतर्कानुसंधानरूपं मननं यत्नेन संपादयन्त इतियावत् । तथा दृढानि अहिंसादिव्रतानि येषां ते दृढव्रताः । शमदमादिसाधनसंपन्ना इतियावत् । तथा नमस्यन्तश्च मां भगवन्तं वासुदेवमिष्टदेवतारूपेण गुरुरूपेण च स्थितं कायवाङ्मनोभिर्नमस्कुर्वन्तश्च । चकारात् 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इति वन्दनसहचरितं श्रवणाद्यपि बोध्यम् । पादसेवनमित्यपि गुरुरूपे परमात्मनि सुकरमेव । अत्र मामिति पुनर्वचनं सगुणरूपपरामर्शार्थम् । अन्यथैकस्य वैयर्थ्यप्रसङ्गात् । तथा भक्त्या मद्विषयेण परप्रेम्णा नित्ययुक्ताः । एतेन सर्वसाधनपौष्कल्यं प्रतिबन्धकाभावश्च दर्शितः । तथाच श्रुतिः 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति । तदेवं शमदमादिसाधनसंपन्नाः वेदान्तश्रवणमननपरायणाः परमेश्वरे परमगुरौ परप्रेम्णा नमस्कारादिना च विगतविघ्नाः परिपूर्णसाधनाः सन्तो मामुपासते विजातीयप्रत्ययानन्तरितेन सजातीयप्रत्ययप्रवाहेण श्रवणमननोत्तरभाविना सततं चिन्तयन्ति महात्मानोऽनेन निदिध्यासनं चरमसाधनं दर्शितमित्यादि वर्णयन्ति तदेतद्भाष्यस्य सामान्यरूपस्याविरोधेनोपादेयम् ॥ १४ ॥ एवमुपासनाप्रकारः सर्वोपासकसाधारणो दर्शितः । तत्रासाधारणं तमाह—**ज्ञानयज्ञेन** । ज्ञानमेव परमात्मविषयं तत्पूजनरूपत्वाद्यज्ञस्तेन ज्ञानयज्ञेन यजन्तः पूज-

६ श्रीधरीव्याख्या ।

कीर्तयन्तः केचिन्मामुपासते सेवन्ते दृढानि व्रतानि नियमा येषां तादृशाः सन्तो यतन्तश्चेश्वरपूजादिषु इन्द्रियोपसंहारादिषु प्रयत्नं कुर्वन्तश्च केचिद्भक्त्या नमस्यन्तः प्रणमन्तश्चान्ये नित्ययुक्ता अनवरतमवहिताः सर्वे सेवन्ते भक्त्येति नित्ययुक्ता इति च कीर्तनादिष्वपि द्रष्टव्यम् ॥ १४ ॥ किंच—**ज्ञानेति** । वासुदेवः सर्वमित्येवं सर्वात्मत्वदर्शनं ज्ञानं तदेव यज्ञस्तेन ज्ञानयज्ञेन मां यजन्तः पूज-

७ अभिनवगुप्ताचार्यव्याख्या ।

कर्मयोगान्मत्परा एव सर्वे ॥ १३ ॥ १४ ॥ १५ ॥ ननु कर्म तावत्कारककलापव्याप्तभेदोद्रेकि कथमभिन्नं भगवत्पदं प्रापयतीति ।

---

१ मधुसूदनः.

**अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

यजन्तः पूजयन्तो मामीश्वरं चाप्यन्येऽन्यामुपासनां परित्यज्योपासते तच्च ज्ञानमेकत्वेनैकमेव परं ब्रह्मेति परमार्थदर्शनेन यजन्त उपासते । केचिच्च पृथक्त्वेनादित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरादित्यादिरूपेणावस्थित इत्युपासते । केचिद् बहुधावस्थितः स एव भगवान् सर्वतोमुखो विश्वरूप इति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते ॥ १५ ॥ यदि बहुभिः प्रकारैरुपासते कथं त्वामेवोपासत इत्यत आह—अहमिति । अहं क्रतुः श्रौतकर्मभेदोऽहमेवाहं यज्ञः स्मार्तः । किं च स्वधान्नमहं

२ आनन्दगिरिव्याख्या ।

दर्शयति—**अन्यामिति** । अन्ये ब्रह्मनिष्ठामिति यावत् । ज्ञानयज्ञमेव विभजते—**तच्चेति** । उत्तमाधिकारिणामुपासनमुक्त्वा मध्यमानामधिकारिणामुपासनप्रकारमाह—**केचिच्चेति** । तेषामेव प्रकारान्तरेणोपासनमुदीरयति—**केचिदिति** । बहुप्रकारेणाऽऽदित्यादिरूपेणेति यावत् ॥ १५ ॥ भगवदेकविषयमुपासनं तर्हि न सिध्यतीति शङ्कते—**यदीति** । प्रकारभेदमादाय ध्यायन्तोऽपि भगवन्तमेव ध्यायन्ति तस्य सर्वात्मकत्वादित्याह—**अत आहेति** । क्रतुयज्ञशब्दयोरपौ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्वामीति बुद्ध्या प्राकृताः । अन्ये पुनर्बहुधा बहुप्रकारं विश्वतोमुखं सर्वैर्द्वारैर्यत्किंचिद्दृष्टं तद्भगवत्स्वरूपमेव, यच्छ्रुतं तत्तन्नामैव, यद्दत्तं भुक्तं वा तत्तदर्पितमेवेत्येवं विश्वतोमुखं यथा स्यात्तथा मामुपासते ॥ १५ ॥ इदमेवोपासनं विवृणोति—**अहमिति** । क्रतुः संकल्पो देवताध्यानरूपः । यज्ञः श्रौतः स्मार्तश्च देवतोद्देशेन द्रव्यत्यागः । स्वधा पितृ-

४ मधुसूदनीव्याख्या ।

धनानुष्ठानासमर्थाः ज्ञानयज्ञेन 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यादिश्रुत्युक्तमहंग्रहोपासनं ज्ञानं स एव परमेश्वरयजनरूपत्वाद्यज्ञस्तेन । चकार एवार्थे । अपिशब्दः साधनान्तरत्यागार्थः । केचित्साधनान्तरनिस्पृहाः सन्त उपास्योपासकाभेदचिन्तारूपेण ज्ञानयज्ञेनैकत्वेन भेदव्यावृत्त्या मामेवोपासते चिन्तयन्त्युत्तमाः । अन्ये तु केचिन्मध्यमाः पृथक्त्वेनोपास्योपासकयोर्भेदेन 'आदित्यो ब्रह्मेत्यादेशः' इत्यादिश्रुत्युक्तेन प्रतीकोपासनरूपेण ज्ञानयज्ञेन मामेवोपासते । अन्येत्वहंग्रहोपासने प्रतीकोपासने वाऽसमर्थाः केचिन्मन्दाः कांचिदन्यां देवतां चोपासीनाः कानिचित्कर्माणि वा कुर्वाणा बहुधा तैस्तैर्बहुभिः प्रकारैर्विश्वरूपं सर्वात्मानं मामेवोपासते । तेन तेन ज्ञानयज्ञेनेति उत्तरोत्तराणां क्रमेण पूर्वपूर्वभूमिलाभः ॥ १५ ॥ यदि बहुधोपासते तर्हि कथं त्वामेवेत्याशङ्क्यात्मनो विश्वरूपत्वं प्रपञ्चयति चतुर्भिः—सर्वस्वरूपोऽहमिति वक्तव्ये तत्तदेकदेशकथनमवयुत्यानुवादेन वैश्वानरे द्वादशकपालेऽष्टाकपालत्वादिकथनवत् । क्रतुः श्रौतोऽग्निष्टोमादिः, यज्ञः स्मार्तो वैश्वदेवादिर्महायज्ञत्वेन श्रुतिस्मृतिप्रसिद्धः, स्वधान्नं पितृभ्यो दीयमानम्, औषधं ओषधिप्रभवमन्नं सर्वैः प्राणिभिर्भुज्यमानं भेषजं वा । मन्त्रो याज्या-

५ भाष्योत्कर्षदीपिका ।

यन्तः मां परमात्मानमन्ये उत्तमाः । चकार उक्तानामनुक्तानां च साधारणानामुपासनाप्रकाराणां समुच्चयार्थः । अपिशब्द इन्द्रादिदेवतोपासनापरित्यागार्थः । तथाचान्यामुपासनां परित्यज्य मामुपासत इत्यर्थः । तच्च ज्ञानमेकमेव परं ब्रह्मेति परमार्थदर्शनं तेन यजन्ते । यत्तु अन्ये पूर्वोक्तसाधनानुष्ठानासमर्था ज्ञानयज्ञेन 'त्वं वाहमस्मि भगवो देवतेऽहं वै त्वमसि' इत्यादिश्रुत्युक्तमहंग्रहोपासनं ज्ञानमिति तच्चिन्त्यम् । मुख्यामुख्ययोर्मुख्ये संभवत्यमुख्यग्रहणस्यान्याय्यत्वात् । एतेन ज्ञानयज्ञेन निर्विकल्पसमाधिना पातञ्जला इति प्रत्युक्तम् । केचिच्च पृथक्त्वेन स एव भगवान्विष्णुरादित्यचन्द्रादिरूपेण पृथक्पृथगवस्थित इत्युपासते मध्यमाः । केचिच्च स एव भगवान् बहुधा व्यवस्थितो विश्वतोमुखो विश्वरूपस्तं बहुधा बहुप्रकारेण उपासते मन्दाः ॥ १५ ॥ ननु बहुभिः प्रकारैः यदि उपासते तर्हि कथं तेषां त्वदेकविषयमुपासनं सिध्यतीत्याशङ्क्य तत्तत्प्रकारभेदेन ध्यायन्तोऽपि मामेव ध्यायन्ति सर्वात्मकत्वान्ममेत्याशयेनाह—**अहमित्यादिना** । अहं क्रतुः श्रौतः कर्मभेदोऽहमेव । ननु क्रतुः संकल्पो देवताध्यानरूप इति भाष्यकृद्भिः कुतो न व्याख्यातमितिचेत्, यज्ञादिसमभिव्याहारादिति गृहाण । यज्ञः स्मार्तकर्मभेदो वैश्वदेवादिः सोऽप्यहमेव । पितृभ्यो

६ श्रीधरीव्याख्या ।

यन्तोऽन्येऽप्युपासते, तत्रापि केचिदेकत्वेन एकमेव परं ब्रह्मेति परमार्थदर्शनरूपाभेदभावनया, केचित्पृथक्त्वेन दासोऽहमिति पृथग्भावनया, केचित्तु विश्वतोमुखं सर्वात्मकं मां बहुधा ब्रह्मरुद्रादिरूपेणोपासते ॥ १५ ॥ सर्वात्मतां प्रपञ्चयति—**अहमिति चतुर्भिः** । क्रतुः

७ अभिनवगुप्ताचार्यव्याख्या ।

उच्यते—अहं क्रतुरिति । एकस्यैव निर्भागस्य ब्रह्मतत्त्वस्य परिकल्पितसाधनाधीनं कर्म पुनरेकत्वं निर्वर्तयति क्रियायाः सर्वकारकात्मता-

१ मधुसूदनः । २ नीलकण्ठः । ३ नीलकण्ठः ।

**पिताहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७ ॥**
**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

पितृभ्यो यद्दीयते अहमौषधं सर्वप्राणिभिर्यदद्यते तदौषधशब्दवाच्यम् । अथवा स्वधेति सर्वप्राणिसाधारणमन्नमौषधमिति व्याध्युपशमार्थं भेषजं । मन्त्रोऽहं येन पितृभ्यो देवताभ्यश्च हविर्दीयते । अहमेवाज्यं हविश्चाहमग्निर्यस्मिन् हूयते सोऽग्निरहमेवाहं हुतं हवनकर्म च ॥ १६ ॥ किंच पितेति । पिता जनयिताहमस्य जगतो माता जनयित्री धाता कर्मफलस्य प्राणिभ्यो विधाता पितामहः पितुः पिता वेद्यं वेदितव्यं पवित्रं पावनमोङ्कारश्च ऋक्साम यजुरेव च ॥ १७ ॥ किंच गतिरिति । गतिः कर्मफलं, भर्ता पोष्टा, प्रभुः स्वामी साक्षी प्राणिनां कृताकृतस्य, निवासो यस्मिन् प्राणिनो निवसन्ति, शरणमार्तानां

२ आनन्दगिरिव्याख्या ।

नरुक्त्यं दर्शयन् व्याचष्टे—**श्रौत इति** । क्रियाकारकफलजातं भगवदतिरिक्तं नास्तीति समुदायार्थः ॥ १६ ॥ इतश्च भगवतः सर्वात्मकत्वमनुमन्तव्यमित्याह—**किंचेति** । पवित्रं पूयतेऽनेनेति व्युत्पत्त्या परिशुद्धिकारणं पुण्यं कर्मेत्याह—**पावनमिति** । वेदितव्ये ब्रह्मणि वेदनसाधनमोङ्कारस्तत्र प्रमाणमृगादि । चकारादथर्वाङ्गिरसो गृह्यन्ते ॥ १७ ॥ भगवतः सर्वात्मकत्वे हेत्वन्तरमाह—**किंचेति** । गम्यत इति प्रकृतिविलयान्तं कर्मफलं गतिरित्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

णामन्नम् । औषधं मनुष्याणामन्नम् । मन्त्रो येन दीयते सः । आज्यं हविः । अग्निः । हुतं प्रक्षेपक्रिया । इदं सर्वं यस्मादहमेवातस्तेषां विश्वतोमुखमुपासनं युक्ततरमित्यर्थः ॥ १६ ॥ धाता कर्मफलानां विकर्ता । वेद्यं वेदितव्यं ब्रह्म । पवित्रं पावनं तपआदिकम् ॥ १७ ॥ गतिर्मुक्तप्राप्यं स्थानम् । भर्ता कर्मफलदानेन पोषकः । प्रभुः अन्तर्यामी । साक्षी

४ मधुसूदनीव्याख्या ।

पुरोनुवाक्यादिर्येनोद्दिश्य हविर्दीयते देवेभ्यः । आज्यं घृतम् । सर्वहविरुपलक्षणमिदम् । अग्निराहवनीयादिर्हविप्रक्षेपाधिकरणम् । हुतं हवनं हविःप्रक्षेपः । एतत्सर्वमहं परमेश्वर एव । एतदेकैकज्ञानमपि भगवदुपासनमिति कथयितुं प्रत्येकमहंशब्दः । क्रियाकारकफलजातं किमपि भगवदतिरिक्तं नास्तीति समुदायार्थः ॥ १६ ॥ किंच—अस्य जगतः सर्वस्य प्राणिजातस्य पिता जनयिता माता जनयित्री धाता पोषयिता तत्तत्कर्मफलविधाता वा । पितामहः पितुः पिता, वेद्यं वेदितव्यं वस्तु पूयतेऽनेनेति पवित्रं पावनं शुद्धिहेतुर्गङ्गास्नानगायत्रीजपादि । वेदितव्ये ब्रह्मणि वेदनसाधनमोङ्कारः । नियताक्षरपादा ऋक् । गीतिविशिष्टा सैव साम । सामपदं तु गीतिमात्रस्यैवाभिधायकमित्यन्यत् । गीतिरहितमनियताक्षरं यजुः । एतत्त्रिविधं मन्त्रजातं कर्मोपयोगि । चकारादथर्वाङ्गिरसोऽपि गृह्यन्ते । एवकारोऽहमेवेत्यवधारणार्थः ॥ १७ ॥ किंच—गम्यत इति गतिः कर्मफलम् 'ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः' इत्येवं मन्वाद्युक्तम् । भर्ता पोष्टा

५ भाष्योत्कर्षदीपिका ।

दीयतेऽन्नं तत्स्वधाशब्देन ग्राह्यम् । सर्वप्राणिभिर्यदद्यतेऽन्नं तदौषधम् । यद्वा स्वधाशब्देन साधारणमन्नं गृह्यते । औषधशब्देन व्याधिनिवर्तकमौषधम् । येन पितृभ्यो देवेभ्यश्च हविर्दीयते स मन्त्रः आज्यं हविः यस्मिन्हूयते सोऽग्निः हुतं हवनकर्मक्रियाकारकफलजातं मद्यतिरिक्तं नास्तीति समुदायार्थः ॥ १६ ॥ किंचास्य प्रत्यक्षादिसन्निधापितस्य जगतः स्थावरजंगमात्मकस्याहं पितोत्पादयिता माता जनयित्री धाता कर्मफलस्य प्राणिभ्यो विधाता पितुः पिता पितामहः वेद्यं वेदितव्यं ब्रह्मादि तद्वेदनसाधनमपि अहमेवेत्याह—पवित्रमित्यादि । पूयतेऽनेनेति पवित्रं पावनं यज्ञदानादि । ॐकारः प्रणवः । ऋक् ऋग्वेदः एवमग्रेऽपि । चकारादथर्वाङ्गिरसो गृह्यन्ते ॥ १७ ॥ किंच गतिः कर्मणः साक्षात्परंपरया च फलं स्वर्गादि । भर्ता कर्मफलप्रदानेन पोषणकर्ता । प्रभुः सर्वस्य

६ श्रीधरीव्याख्या ।

श्रौतोऽग्निष्टोमादिः, यज्ञस्तु स्मार्तः पञ्चयज्ञादिः, स्वधा पित्रर्थं श्राद्धादिः, औषधमोषधिप्रभवमन्नं भेषजं वा, मन्त्रो याज्यापुरोनुवाक्यादिः, आज्यं होमादिसाधनम्, अग्निराहवनीयादिः, हुतं होमः, एतत्सर्वमहमेव ॥ १६ ॥ किंच—**पितेति** । धाता कर्मफलविधाता, वेद्यं ज्ञेयं वस्तु, पवित्रं शोधकं प्रायश्चित्तात्मकं वा, ओंकारः प्रणवः, ऋग्वेदादयो वेदाश्च अहमेव, स्पष्टमन्यत् ॥ १७ ॥ किंच—**गति-**

७ अभिनवगुप्ताचार्यव्याख्या ।

क्षात्कारेणावस्थाने भगवत्पदप्राप्तिं प्रत्यविदूरत्वात् । उक्तंच 'सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी । बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥' इति । मयाप्युक्तं 'उपक्रमे यैव बुद्धिर्भावाभावानुयायिनी । उपसंहृतिकाले सा भावाभावानुयायिनी ॥' इति यत्रतत्र

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मत्प्रपन्नानामार्तिंहरः, सुहृत् प्रत्युपकारानपेक्षः सन् उपकारी, प्रभव उत्पत्तिर्जगतः, प्रलयः प्रलीयते यस्मिन्निति । तथा स्थानं तिष्ठत्यस्मिन्निति । निधानं निक्षेपः कालान्तरोपभोग्यं प्राणिनां, बीजं प्ररोहकारणं प्ररोहधर्मिणाम् । अव्ययं यावत्संसारभावित्वादव्ययम् । नह्यबीजं किंचित्प्ररोहति । नित्यं च प्ररोहदर्शनाद्बीजसंततिर्न व्येतीति गम्यते ॥ १८ ॥ किंच—तपामीति । तपाम्यहमादित्यो भूत्वा कैश्चिद्रश्मिभिरुल्बणैरहं वर्षं कैश्चिद्रश्मिभिरुत्सृजाम्युत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टभिर्मासैः पुनरुत्सृजामि प्रावृषि । अमृतं चैव देवानां मृत्युश्च

२ आनन्दगिरिव्याख्या ।

कर्मेति । पोष्टा कर्मफलस्य प्रदाता । कार्यकरणप्रपञ्चस्याधिष्ठानमित्याह—निवास इति । शीर्यते दुःखमस्मिन्निति व्युत्पत्तिमाश्रित्याह—शरणमिति । प्रभवत्यस्माज्जगदिति व्युत्पत्तिमादायोक्तम्—उत्पत्तिरिति । कारणस्य कथमव्ययत्वमित्याशङ्क्याह—यावदिति । कारणमन्तरेणापि कार्यं कदाचिदुदेष्यति किं कारणेनेत्याशङ्क्याह—नहीति । मा भूत्तर्हि संसारदशायामेव कदाचित्कार्योत्पत्तिरित्याशङ्क्याह—नित्यं चेति । कारणव्यक्तेर्नाशमङ्गीकृत्य तदन्यतमव्यक्तिशून्यत्वं पूर्वकालस्य नास्तीति सिद्धवत्कृत्य विशिनष्टि—बीजेति ॥ १८ ॥ इतश्च सर्वात्मत्वे भगवतो न विवदितव्यमित्याह—किंचेति । 'आदित्याज्जायते वृष्टिः' इति स्मृतिमवष्टभ्य व्याचष्टे—कैश्चिदिति ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कृताकृतावेक्षकः । निवसन्त्यस्मिन्निति निवास आश्रयो यजमानादिः । शरणं रक्षकः । सुहृदुपकारमनपेक्ष्योपकर्ता । प्रभव उत्पत्तिस्थानम् । प्रलयो लयस्थानम् । स्थानं स्थितिस्थानम् । निधानं कर्मफलसमर्पणस्थानम् । कालान्तरे फलप्रसवार्थं बीजं प्ररोहकारणं प्ररोहधर्मिणाम् । अव्ययं यावत्संसारभावित्वात् ॥ १८ ॥ अहं तपामि आदित्यो भूत्वा । अहं वर्षं

४ मधुसूदनीव्याख्या ।

सुखसाधनस्यैव दाता । प्रभुः स्वामी मदीयोऽयमिति स्वीकर्ता । साक्षी सर्वप्राणिनां शुभाशुभद्रष्टा । निवसन्त्यस्मिन्निति निवासो भोगस्थानम् । शीर्यते दुःखमस्मिन्निति शरणम् । प्रपन्नानामार्तिहृत् । सुहृत् प्रत्युपकारानपेक्षः सन्नुपकारी । प्रभव उत्पत्तिः प्रलयो विनाशः स्थानं स्थितिः । यद्वा प्रकर्षेण भवन्त्यनेनेति प्रभवः स्रष्टा । प्रकर्षेण लीयन्तेऽनेनेति प्रलयः संहर्ता । तिष्ठन्त्यस्मिन्निति स्थानमाधारः । निधीयते निक्षिप्यते तत्कालभोगायोग्यतया कालान्तरोपभोग्यं वस्त्वस्मिन्निति निधानं सूक्ष्मरूपसर्ववस्त्वधिकरणं प्रलयस्थानमिति यावत् । शङ्खपद्मादिनिधिर्वा । बीजमुत्पत्तिकारणम् । अव्ययमविनाशि नतु व्रीह्यादिवद्विनश्वरम् तेनानाद्यनन्तं यत्कारणं तदप्यहमेवेति पूर्वेणैव संबन्धः ॥ १८ ॥ किंच—तपाम्यहमादित्यः सन् । ततश्च तापवशादहं वर्षं पूर्ववृष्टिरूपं रसं पृथिव्या

५ भाष्योत्कर्षदीपिका ।

नियन्ता स्वामीतियावत् । साक्षी प्राणिनां शुभाशुभयोः पक्षपातविनिर्मुक्तमनुद्रष्टा । निवसन्ति प्राणिनोऽस्मिन्निवासः । प्राणिवासस्थानमित्यर्थः । निवसन्ति भोगाय प्राणिनोऽस्मिन्निति निवासो भोगस्थानमिति वा । शीर्यते दुःखमस्मिन्निति शरणमार्तानां मत्प्रपन्नानां पीडाहरः । सुहृत्प्रत्युपकारनिरपेक्षः सन्नुपकारकर्ता । प्रभवनमिति प्रभव उत्पत्तिः । प्रलीयते विश्वमस्मिन्निति प्रलयः । यद्वा प्रकर्षेण भवत्यनेनेति प्रभवः स्रष्टा । प्रलीयतेऽनेनेति प्रलयः संहर्ता । भाष्यस्योपलक्षणार्थत्वादविरोधः । तिष्ठत्यस्मिन्स्थितिकाले विश्वमिति स्थानम् । निधीयते निक्षिप्यते कालान्तरोपभोग्यं प्राणिनां कर्मफलमस्मिन्निति निधानं शङ्खपद्मादिनिधिर्वा । भाष्यं तूपलक्षणार्थमित्युक्तमेव । बीजं प्ररोहधर्मिणां वस्तूनां प्ररोहकारणम् । अव्ययं यावत्संसारभावित्वात् । नह्यबीजं किंचित्प्ररोहति । प्ररोहदर्शनाद्बीजसंततेर्नित्यत्वमिति गम्यते । अव्ययमविनाशि नतु व्रीह्यादिबीजवद्विनश्वरमिति वा । आचार्यैस्तु बीजशब्देन भगवतः सार्वात्म्यप्रतिपादकप्रकरणे पठितेन बीजमात्रं गृह्यत इत्यभिप्रायेणाव्ययपदस्य तत्रोपपत्तिर्दर्शिता । बीजशब्देन जगद्बीजस्य ब्रह्मण उपादाने तु अव्ययपदस्योपपन्नत्वेन सुगमत्वात् । ब्रह्मणः परमकारणतया उक्तत्वाचार्य पक्ष उपेक्षित इति ध्येयम् । गत्यादिकं सर्वमहमेवेत्यर्थः ॥ १८ ॥ किंचाहमादित्यो भूत्वा कैश्चित्किरणैः ग्रीष्मर्तौ तपामि । कैश्चित्किरणैरहं वर्षं पूर्वं मयैव त्यक्तं अष्टसु

६ श्रीधरीव्याख्या ।

रिति । गम्यत इति गतिः । फलम्, भर्ता पोषणकर्ता, प्रभुः नियन्ता, साक्षी शुभाशुभद्रष्टा, निवासः भोगस्थानम्, शरणं रक्षकः, सुहृद्धितकर्ता, प्रकर्षेण भवत्यनेनेति प्रभवः स्रष्टा, प्रलीयतेऽनेनेति प्रलयः संहर्ता, तिष्ठन्त्यस्मिन्निति स्थानमाधारः, निधीयतेऽस्मिन्निति निधानं लयस्थानम्, बीजं कारणम्, तथाप्यव्ययमविनाशि नतु व्रीह्यादिबीजवन्नश्वरमित्यर्थः ॥ १८ ॥ किंच—तपामीति । आदि॰

७ अभिनवगुप्ताचार्यव्याख्या ।

वितत्य विचारितचरमेतदितीहोपरम्यते ॥ १६ ॥ १७ ॥ १८ ॥ तपाम्यहमित्यादि अद्वैतकथाप्रसङ्गेनोक्तम् ॥ १९ ॥ नन्वेवं यदि बाह्यया-

१ श्रीधरः. २ मधुसूदनः.

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान्॥ २०॥**

१ श्रीमच्छांकरभाष्यम्।

मर्त्यानां। सद् यस्य संबन्धितया विद्यमानं तद्विपरीतमसच्चैवाहमर्जुन। न पुनरत्यन्तमेवासद्भगवान् स्वयं कार्यकारणे वा सदसती। ये पूर्वोक्तैरनुवृत्तिप्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजयन्त उपासते ज्ञानविदस्ते यथाविज्ञानं मामेव प्राप्नुवन्ति॥१९॥ ये पुनरज्ञाः कामकामास्त्रैविद्या ऋग्यजुःसामविदो मां वस्वा-

२ आनन्दगिरिव्याख्या।

वर्षोत्सर्गनिग्रहावेकस्यैकस्मिन्काले विरुद्धावित्याशङ्क्याह—**अष्टभिरिति**। ऋतुभेदेन वर्षस्य निग्रहोत्सर्गावेककर्तृकावविरुद्धावित्यर्थः। यस्य कारणस्य संबन्धित्वेन यत्कार्यमभिव्यज्यते तदिह सदित्युच्यते, कारणसंबन्धेनानभिव्यक्तं कारणमेवानभिव्यक्तनामरूपमसदिति व्यवह्रियते तदेतदाह—**सदिति**। शून्यवादं व्युदस्यति—**न पुनरिति**। भगवतोऽत्यन्तासत्त्वे कार्यकारणकल्पना निरधिष्ठाना न तिष्ठतीत्यर्थः। तर्हि यथाश्रुतं कार्यस्य सत्त्वं कारणस्य चासत्त्वमास्थेयमित्याशङ्क्य वाशब्देन निषेधति—**कार्येति**। नहि कार्यस्यात्यन्तिकं सत्त्वं वाचारम्भणश्रुतेर्नापीतरस्यात्यन्तिकमसत्त्वं 'कुतस्तु खलु' इत्यादिश्रुतेरित्यर्थः। उक्तैर्ज्ञानयज्ञैर्भगवदभिनिविष्टबुद्धीनां किं फलमित्याशङ्क्य सद्यो वा क्रमेण वा मुक्तिरित्याह—**य इति**॥ १९॥ भगवद्भक्तानामपि निष्कामाना(णा)मेव मुक्तिरिति दर्शयितुं सकामानां पुंसां संसारमवतारयति—**ये पुनरिति**। तिस्रो विद्या अधीयते विदन्तीति वा त्रैविद्या वेदविदस्तदाह—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

वृष्टिस्तां निगृह्णामि अष्टसु मासेषु कैश्चिद्रश्मिभिः। उत्सृजामि च चतुर्षु मासेषु कैश्चिदिति। अमृतं जीवनं मृत्युर्मरणम्। अमृतं देवान्नं वा। सत् साधु, असत् असाधु। एतत्सर्वमहमेव। अतस्तेषां विश्वतोमुखं मम भजनं कुर्वतां सर्वरूपेणाहमनुग्रहं करोमीति भावः॥ १९॥ ये पुनरुक्तेषु प्रकारेष्वन्यतमेनापि मां न भजन्ते ते केवलकर्मठाः कां गतिं प्राप्नुवन्तीति शृणु—**त्रैविद्या इति**। तिस्रः ऋग्यजुःसामरूपाः विद्या येषां ते त्रिविद्याः त एव त्रैविधाः सोमपाः

४ मधुसूदनीव्याख्या।

निगृह्णाम्याकर्षामि कैश्चिद्रश्मिभिरष्टसु मासेषु। पुनस्तमेव निगृहीतं रसं चतुर्षु मासेषु कैश्चिद्रश्मिभिरुत्सृजामि च वृष्टिरूपेण प्रक्षिपामि च भूमौ। अमृतं च देवानां सर्वप्राणिनां जीवनं वा। एवकारस्याहमित्यनेन संबन्धः। मृत्युश्च मर्त्यानां सर्वप्राणिनां विनाशो वा। सत्, यत्संबन्धितया यद्विद्यते तत्तत्र सत्। असच्च यत्संबन्धितया यन्न विद्यते तत्तत्रासत्। एतत्सर्वमहमेव हे अर्जुन, तस्मात्सर्वात्मानं मां विदित्वा स्वस्वाधिकारानुसारेण बहुभिः प्रकारैर्मामेवोपासत इत्युपपन्नम्॥ १९॥ एवमेकत्वेन पृथक्त्वेन बहुधा चेति त्रिविधा अपि निष्कामाः सन्तो भगवन्तमुपासीनाः सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण क्रमेण मुच्यन्ते। ये तु सकामाः सन्तो न केनापि प्रकारेण भगवन्तमुपासते किंतु स्वस्वकामसाधनानि काम्यान्येव कर्माण्यनु-

५ भाष्योत्कर्षदीपिका।

मासेषु निगृह्णामि। कैश्चित्किरणैरहं वर्षं पुनर्वर्षासूत्सृजामि। अमृतं चैवाहमेव मर्त्यानां मृत्युश्चाहमेव। सदसच्चाहमेव यस्य कारणस्य संबन्धितया यत्कार्यं नामरूपाभ्यां व्यज्यते तदत्र सच्छब्देनोपादीयते। कारणासंबन्धेन नामरूपाभ्यामनभिव्यक्तं कारणात्मना स्थितमसदित्युच्यते। ननु सदसच्छब्दयोर्मुख्योऽर्थः कुतो नाङ्गीक्रियते इतिचेत् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं', 'तदनन्यत्वमारम्भणशब्दादिभ्यः'। विमतं मिथ्यादृश्यत्वात् परिच्छिन्नत्वात् जडत्वात् शुक्तिरूप्यवत्। 'तरति शोकमात्मवित्' इति श्रुत्युक्तबन्धोपलक्षितसंसारनिवृत्तेः प्रपञ्चमिथ्यात्वं विनानुपपत्तिरिति श्रुतिसूत्रानुमानार्थापत्तिभ्यः कार्यजातस्यासत्त्वावधारणात् सर्वाधिष्ठानस्य शून्यत्वायोगाच्चेति गृहाण। एवंभूतः सन्नपि वस्तुतः सर्वोपाधिविनिर्मुक्तः स्वच्छ एवास्मीति ध्वनयन् संबोधयति—हे अर्जुनेति॥१९॥ 'एवं ये सततं कीर्तयन्तः यतन्तश्च दृढव्रताः। नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते। ज्ञानयज्ञेन एकत्वेन पृथक्त्वेन बहुधा चोपासते' इति पूर्वोक्तैर्वृत्तिप्रकारैः मां पूजयन्तस्ते साक्षात्परंपरया च मामेव प्राप्नुवन्तीत्यर्थादुक्तम्

६ श्रीधरीव्याख्या।

त्यात्मना स्थितत्वान्निदाघसमये तपामि जगतस्तापं करोमि वृष्टिसमये च वर्षमुत्सृजामि विमुञ्चामि कदाचित्तु वर्षं निगृह्णामि आकर्षामि अमृतं जीवनं मृत्युश्च नाशः सत्स्थूलं दृश्यम् असच्च सूक्ष्ममदृश्यम् एतत्सर्वमहमेवेति मत्वा मामेव बहुधा उपासत इति पूर्वेणैवान्वयः॥ १९॥ तदेवम् 'अवजानन्ति मां मूढा' इत्यादिश्लोकद्वयेन क्षिप्रफलाशया देवतान्तरं भजन्तो मां नाद्रियन्त इत्यभक्ता दर्शिताः। 'महात्मानस्तु मां पार्थ' इत्यादिना च भक्ता उक्तास्तत्रैकत्वेन पृथक्त्वेन वा परमेश्वरं श्रीवासुदेवं ये न भजन्ति तेषां जन्म-

७ अभिनवगुप्ताचार्यव्याख्या।

गादिनापि ब्रह्मप्राप्तिस्तर्ह्यग्निष्टोमादिष्वपि किमन्यो याज्यः अभ्युपगमे भेदवादः। वासुदेव एवेति चेत्कथं नापवर्गस्तैस्तदर्थमुच्यते—त्रैविद्या

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ २१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

द्दिदेवरूपिणं सोमपाः सोमं पिबन्तीति सोमपास्तेनैव सोमपानेन पूतपापाः शुद्धकिल्बिषा यज्ञैरग्निष्टोमादिभिरिष्ट्वा पूजयित्वा स्वर्गतिं स्वर्गगमनं स्वर्गतिस्तां प्रार्थयन्ते । ते च पुण्यं पुण्यफलमासाद्य संप्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानमश्नन्ति भुञ्जते दिव्यान्दिवि भवानप्राकृतान्देवभोगान्देवानां भोगास्तान् ॥ २० ॥ ते तमिति । ते तं भुक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकमिमं विशन्त्याविशन्ति । एवं हि यथोक्तेन प्रकारेण त्रैधर्म्यं केवलं वैदिकं कर्मानुप्रपन्ना गतागतं गतं चागतं च

२ आनन्दगिरिव्याख्या ।

ऋगिति । वस्वादीत्यादिशब्देन सवनद्वयेशानादित्यारुद्राश्च गृह्यन्ते । शुद्धकिल्बिषाः निरस्तपापा इति यावत् ॥ २० ॥ तर्हि स्वर्गप्राप्तिरपि भगवत्प्राप्तितुल्येत्याशङ्क्याह—ते तमिति । पुण्ये स्वर्गप्राप्तिहेताविति यावत् । प्रसिद्ध्यर्थो हिशब्दः । त्रयाणां हौत्रादीनां वेदत्रयविहितानां धर्माणां समाहारस्त्रिधर्मं तदेव त्रैधर्म्यं तदनुप्रपन्नाः । तदनुगता इति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सोमपायिनो याज्ञिकाः यज्ञैर्मामिष्ट्वा स्वर्गतिं फलं प्रार्थयन्ते । दिव्यानप्राकृतान्संकल्पमात्रोपनतान्दुःखासंभिन्नान् ॥२०॥ त्रयी वेदत्रयी तस्यामुक्तं धर्मं त्रयीधर्मं काम्ययज्ञं कामकामाः विषयकामुकाः गतागतं यातायातं सातत्येन लभन्ते । तथाच श्रुतिः 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते

४ मधुसूदनीव्याख्या ।

तिष्ठन्ति ते सत्त्वशोधकाभावेन ज्ञानसाधनमनधिरूढाः पुनःपुनर्जन्ममरणप्रबन्धेन सर्वदा संसारदुःखमेवानुभवन्तीत्याह द्वाभ्यां । ऋग्वेदयजुर्वेदसामवेदलक्षणा हौत्राध्वर्यवौद्गात्रप्रतिपत्तिहेतवस्तिस्रो विद्या येषां ते त्रिविद्याः त्रिविद्या एव स्वार्थिकतद्धितेन त्रैविद्यास्तिस्रो विद्या विदन्तीति वा वेदत्रयविदो याज्ञिकाः यज्ञैरग्निष्टोमादिभिः क्रमेण सवनत्रये वसुरुद्रादित्यरूपिणं मामीश्वरमिष्ट्वा तद्रूपेण मामजानन्तोऽपि वस्तुवृत्तेन पूजयित्वा अभिषुत्य हुत्वा च सोमं पिबन्तीति सोमपाः सन्तस्तेनैव सोमपानेन पूतपापा निरस्तस्वर्गभोगप्रतिबन्धकपापाः सकामतया स्वर्गतिं प्रार्थयन्ते नतु सत्त्वशुद्धिज्ञानोत्पत्त्यादि । ते दिवि स्वर्गे लोके पुण्यं पुण्यफलं सर्वोत्कृष्टं सुरेन्द्रलोकं शतक्रतोः स्थानमासाद्य दिव्यान्मनुष्यैरलभ्यान् देवभोगान्देवदेहोपभोग्यान्कामानश्नन्ति भुञ्जते ॥२०॥ ततः किमनिष्टमिति तदाह—ते सकामास्तं काम्येन पुण्येन प्राप्तं विशालं विस्तीर्णं स्वर्गलोकं भुक्त्वा, तद्भोगजनके पुण्ये क्षीणे सति तद्देहनाशात्पुनर्देहग्रहणाय मर्त्यलोकं विशन्ति । पुनर्गर्भवासादियातना अनुभवन्तीत्यर्थः । पुनःपुनरेवमुक्तप्रकारेण । हि प्रसिद्ध्यर्थः । त्रैधर्म्यं हौत्राध्वर्यवौद्गात्रधर्मत्रयार्हं ज्योतिष्टोमादिकं काम्यं कर्म । त्रयीधर्ममिति पाठेऽपि त्रय्या वेदत्रयेण प्रतिपादितं धर्ममिति स एवार्थः । अनुप्रपन्नाः अनादौ संसारे पूर्वप्रतिपत्त्यपेक्षयाऽनुशब्दः, पूर्वप्रतिपत्त्यनन्तरं मनु-

५ भाष्योत्कर्षदीपिका ।

इदानीमज्ञानां भगवद्भक्तिवर्जितानां केवलकर्मजडानां स्वर्गप्राप्त्यापि संसारानिवृत्तिरित्याह—**त्रैविद्या इत्यादिना** । ऋग्यजुःसामवेदप्रतिपादितकर्ममात्रज्ञाः याज्ञिकाः सोमं पिबन्तीति सोमपास्तेनैव सोमपानेन पूतानि पापानि स्वर्गप्रतिबन्धकानि येषां ते शुद्धकिल्बिषाः धूतपापा इतियावत् । यज्ञैरग्निष्टोमादिभिर्मामिन्द्रवस्वादिरूपिणमजानन्तोऽपि वस्तुवृत्त्या तद्रूपिणं मामिष्ट्वा पूजयित्वा ये स्वर्गतिं स्वर्गगमनं गम्यत इति गतिः फलं स्वरेव गतिरिति वा तां प्रार्थयन्ते च पुण्यं पुण्यफलं सुरेन्द्रस्य देवराजस्य पुरंदरस्य लोकं स्वर्गलोकं आसाद्य संप्राप्य दिवि स्वर्गे दिव्यान् दिविभवान् देवभोगान् देवैर्भोक्तुं योग्यान् भोगानश्नन्ति भुञ्जते ॥२०॥ एतादृशस्याप्यतिकष्टेनासादितस्यापि स्वर्गलोकस्य सान्तत्वादनिष्टतां बोधयति—**ते इति** । ते त्रैविद्याः तं स्वर्गलोकं विशालं विस्तीर्णं भुक्त्वा पुण्ये यज्ञादिरूपे भोगप्रदे भोगं दत्त्वा क्षीणे सति मर्त्यलोकं विशन्त्याविशन्ति । गर्भवासादिदुःखमनुभवन्तीत्यर्थः । एवं यथोक्तेन प्रकारेण हि प्रसिद्धं त्रयाणां धर्माणां हौत्राध्वर्यवौद्गात्राणां ऋग्यजुःसमाख्यवेदत्रयबोधितानां समाहारस्त्रिधर्मं तदेव त्रैध-

६ श्रीधरीव्याख्या ।

मृत्युप्रवाहो दुर्वार इत्याह—**त्रैविद्या मामिति द्वाभ्याम्** । ऋग्यजुःसामलक्षणास्तिस्रो विद्या येषां ते त्रिविद्याः त्रिविद्या एव त्रैविद्याः स्वार्थे तद्धितः । तिस्रो विद्या अधीयन्ते जानन्तीति वा त्रैविद्याः । वेदत्रयोक्तकर्मतत्परा इत्यर्थः । वेदत्रयविहितैर्यज्ञैर्मामिष्ट्वा ममैव रूपं देवतान्तरमित्यजानन्तोऽपि वस्तुत इन्द्रादिरूपेण मामेवेष्ट्वा संपूज्य यज्ञशेषं सोमं पिबन्तीति सोमपाः तेनैव पूतपापाः शोधितकल्मषाः सन्तः स्वर्गतिं स्वर्गं प्रति गतिं ये प्रार्थयन्ते ते पुण्यफलरूपं सुरेन्द्रस्य लोकं स्वर्गमासाद्य प्राप्य दिवि स्वर्गे दिव्यानुत्तमान्देवानां भोगानश्नन्ति भुञ्जते ॥ २० ॥ ततश्च—**ते तं भुक्त्वेति** । ते स्वर्गकामास्तं प्रार्थितं विपुलं स्वर्गलोकं तत्सुखं भुक्त्वा भोगप्रापके पुण्ये

७ अभिनवगुप्ताचार्यव्याख्या ।

इति ॥ २० ॥ ते तं भुक्त्वेति । यद्यपि ते मामेव यजन्ते तथापि स्वर्गमात्रप्रार्थनयामितकर्मनिजसत्त्वदुर्बलतया स्वर्गादिमात्रेणैव फलेना-

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२॥**

१ श्रीमच्छांकरभाष्यम्।

गतागतं गमनागमनं कामकामाः कामान्कामयन्त इति कामकामा लभन्ते गतागतमेव नतु स्वातन्त्र्यं क्वचिल्लभन्त इत्यर्थः ॥ २१ ॥ ये पुनर्निष्कामाः सम्यग्दर्शिनः अनन्या अपृथग्भूताः परं देवं नारायणमात्मत्वेन गताः सन्तश्चिन्तयन्तो मां ये जनाः संन्यासिनः पर्युपासते तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं योगोऽप्राप्तस्य प्रापणं क्षेमस्तद्रक्षणं तदुभयं वहामि प्रापयाम्यहम्।

२ आनन्दगिरिव्याख्या।

यावत्। कामकामानां गमनागमनद्वारा कामितफलाप्तिश्चेदिष्टमेव चेष्टितमित्याशङ्क्याह—**गतेति** ॥ २१ ॥ फलमनभिसंधाय त्वामेवाराधयतां सम्यग्दर्शननिष्ठानामत्यन्तनिष्कामानां(णां) कथं योगक्षेमौ स्यातामित्याशङ्क्याह—**ये पुनरिति**। तेषां योगक्षेमं वहामीत्युत्तरत्र संबन्धः। येभ्योऽन्यो न विद्यत इति व्युत्पत्तिमाश्रित्याह—**अपृथगिति**। कार्यस्येव कारणे तादात्म्यं व्यावर्तयति—**परमिति**। अहमेव वासुदेवः सर्वात्मा न मत्तोऽन्यत्किंचिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं सदा ध्यायन्त इत्याह—**चिन्तयन्त इति**। प्राकृतान्व्यावर्त्य मुख्यानधिकारिणो निर्दिशति—**संन्यासिन इति**। पर्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः। **नित्याभियुक्तानां** नित्यमनवरतमादरेण ध्याने व्यापृतानामित्याह—**सततेति**। योगश्च क्षेमश्च योगक्षेमम्। तत्रापुनरुक्तमर्थमाह—**योग इति**। किमर्थं

३ नीलकण्ठव्याख्या (चतुर्धरी)।

पुनरेवापि यन्ति' इति। अष्टादशेति षोडशर्त्विजः यजमानः पत्नी चेति द्वौ ॥ २१ ॥ एवं कर्मिणामावृत्तिं फलं चोक्त्वा भक्तानामपि मद्भजनेनैव सर्वसिद्धिरित्याह—**अनन्या इति**। नास्ति अन्य उपास्यो येषाम्। अहमेव भगवान्वासुदेव इत्यभेदेन चिन्तयन्त इत्यर्थः। ये जनाः पर्युपासते परितः साकल्येन कार्त्स्न्येनाद्वैतदृष्ट्येत्यर्थः। उपासते तेषां नित्याभियुक्तानां सतताभियोगिनां। योगः अप्राप्तस्यान्नादेर्योगभूमिकाया वा प्रापणं। क्षेमः तस्यैव प्राप्तस्य संरक्षणं।

४ मधुसूदनीव्याख्या।

घ्यलोकमागत्य पुनः प्रतिपन्नाः, कामकामा दिव्यान्भोगान्कामयमाना एव गतागतं लभन्ते। कर्म कृत्वा स्वर्गं यान्ति तत आगत्य पुनः कर्म कुर्वन्तीत्येवं गर्भवासादियातनाप्रवाहस्तेषामनिशमनुवर्तत इत्यभिप्रायः ॥ २१ ॥ निष्कामाः सम्यग्दर्शिनस्तु अन्यो भेददृष्टिविषयो न विद्यते येषां तेऽनन्याः सर्वाद्वैतदर्शिनः सर्वभोगनिःस्पृहाः। अहमेव भगवान्वासुदेवः सर्वात्मा न मद्व्यतिरिक्तं किंचिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं सदा चिन्तयन्तो मां नारायणमात्मत्वेन ये जनाः साधनचतुष्टयसंपन्नाः संन्यासिनः परि सर्वतोऽनवच्छिन्नतया पश्यन्ति ते मदनन्यतया कृतकृत्या एवेति शेषः। अद्वैतदर्शननिष्ठानामत्यन्तनिष्कामानां(णां) तेषां स्वयमप्रयतमानानां कथं योगक्षेमौ स्यातामित्यत आह—तेषां नित्याभियुक्तानां नित्यमनवरतमादरेण ध्याने व्यापृतानां

५ भाष्योत्कर्षदीपिका।

र्म्यमिति। त्रयीधर्ममिति वा पाठः। त्रय्या वेदत्रयेण प्रतिपादितमित्यर्थः। अयं पाठः कैश्चिद्व्याख्यातोऽपि भाष्यकृद्भिरव्याख्यातत्वान्नादर्तव्यः। अनुप्रपन्नाः प्रकर्षेणानुसृतवन्तः कामान्विषयान् कामयन्त इति कामकामाः गतागतं गमनागमनं मरणवेदनामनुभूय क्षणिकं स्वर्गादिकंप्रति गमनं ततः जन्मादिवेदनामनुभवितुमागमनं च लभन्ते नतु स्वातन्त्र्यं क्वचिदपि कर्माधीनत्वात्तेषाम् ॥२१॥ ननु कामकामानां तु तत्तत्कामनया कर्मानुष्ठाने कृते सति भोगादिकं सिध्यति, ये पुनर्निष्कामाः तत्त्वदर्शिनस्त्वां पर्युपासते तेषां भोगकामनारहितानामपि शरीरस्थितिहेतुभूतौ योगक्षेमौ कथं स्यातामिति तत्राह—**अनन्या इति**। मत्तोऽपृथग्भूताः परं देवं वासुदेवं मामात्मत्वेन प्रतिपन्नाः सन्तो जना मां चिन्तयन्तोऽहमेव वासुदेव इति ज्ञात्वा प्रत्यगभिन्नं मां ध्यायन्तः पर्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः। तेषां सम्यग्दर्शिनां नित्याभियुक्तानां नित्यं सततमत्यादरेण मच्चिन्तने व्यापृतानां योगक्षेमं वहाम्यहं योगश्च क्षेमश्चेति समाहारद्वन्द्वः। अलब्धस्य प्रापणं योगः। लब्धस्य परिपालनं क्षेमस्तदुभयं वहामि प्रापयामि।

६ श्रीधरीव्याख्या।

क्षीणे सति मर्त्यलोकं विशन्ति। पुनरप्येवमेव वेदत्रय्या विहितं धर्ममनुसृताः कामकामा भोगान्कामयमाना गतागतं यातायातं लभन्ते ॥ २१ ॥ मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह—**अनन्या इति**। अनन्या नास्ति मद्व्यतिरेकेणान्यत्काम्यं भजनीयं देवतान्तरं

७ अभिनवगुप्ताचार्यव्याख्या।

वच्छिन्दन्ति। अतएवैषां पुनरावर्तको धर्मः। एवं ते गतागतं लभन्ते ॥ २१ ॥ ननु यागस्य पुनरावृत्तिप्रसवधर्मा स्वभावः। तथाहि—अनन्या इति। तेभ्योऽन्ये मां चिन्तयन्तः कथमनन्या अविद्यमानमन्यन्मद्व्यतिरिक्तं कामनीयं फलं येषामिति। योगोऽप्रतिलब्धमतत्स्वरूप-

१ श्रीधर-मधुसूदन-नीलकण्ठैः.

**येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

ज्ञानी त्वात्मैव मे मतं स च मम प्रियो यस्मात्तस्मात्ते ममात्मभूताः प्रियाश्चेति । नन्वन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान् । सत्यमेवं वहत्येव । किं त्वयं विशेषोऽन्ये ये भक्तास्ते स्वात्मार्थं स्वयमपि योगक्षेममीहन्ते । अनन्यदर्शिनस्तु नात्मार्थं योगक्षेममीहन्ते । नहि ते जीविते मरणे वात्मनो गृद्धिं कुर्वन्ति केवलमेव भगवच्छरणास्ते। अतो भगवानेव तेषां योगक्षेमं वहतीति ॥२२॥ नन्वन्या अपि देवतास्त्वमेव चेत्तद्भक्ताश्च त्वामेव यजन्ते। सत्यमेवम्—येऽप्यन्यदेवताभक्ता अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तो यजन्ते पूजयन्ति श्रद्धयास्तिक्यबुद्ध्यान्विता अनुगतास्तेऽपि मामेव कौन्तेय

२ आनन्दगिरिव्याख्या ।

परमार्थदर्शिनो योगक्षेमं वहसीत्याशङ्क्याह—**ज्ञानीत्विति** । अतस्तेषां योगक्षेमं वहामीति संबन्धः । सम्यग्दर्शननिष्ठानामेव योगक्षेमं वहति भगवानिति विशेषणममृष्यमाणः शङ्कते—**नन्विति** । अन्येषामपि भक्तानां भगवान्योगक्षेमं वहतीत्येतदङ्गीकरोति—**सत्यमिति** । तर्हि भक्तेषु ज्ञानिषु च विशेषो नास्तीति पृच्छति—**किंत्विति** । तत्र विशेषं प्रतिज्ञाय विवृणोति—**अयमित्यादिना** । योगक्षेममुद्दिश्य स्वयमीहन्ते चेष्टां कुर्वन्तीति यावत् । आत्मविदो स्वार्थं योगक्षेममुद्दिश्य चेष्टाभावं स्पष्टयति—**नहीति** । गृद्धिरपेक्षा कामना तामित्येतत् । ज्ञानिनां तर्हि सर्वत्रानास्थेत्याशङ्क्याह—**केवलमिति** । तेषां तदेकशरणत्वे फलितमाह **अत इति** । इतिशब्दो विशेषशब्देन संबध्यते ॥ २२ ॥ तत्तद्देवतात्मना परस्यैवात्मनः स्थित्यभ्युपगमाद्देवतान्तरपराणामपि भगवच्छरणत्वाविशेषात्तदेकनिष्ठत्वमकिंचित्करमिति मन्वानः शङ्कते—**नन्विति** । उक्तमङ्गीकृत्य परिहरति—**सत्यमित्यादिना** । देवतान्तरयाजिनां

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तद्द्वयमहमेव वहामि निर्वहामि । तैरन्नाद्यर्थं वा योगभूमिषूर्ध्वोर्ध्वभूमिलाभार्थं वा चिन्ता न कर्तव्येत्यर्थः । अनन्यचेतसां तेषां मदभिन्नत्वात्सर्वं सेत्स्यतीत्यर्थः । तथाचोक्तं 'ज्ञानी त्वात्मैव मे मतम्' इति ॥ २२ ॥ अविधिपूर्वकं

४ मधुसूदनीव्याख्या ।

देहयात्रामात्रार्थमप्यप्रयतमानानां योगं च क्षेमं च अलब्धस्य लाभं लब्धस्य परिरक्षणं च शरीरस्थित्यर्थं योगक्षेममकामयमानानामपि वहामि प्रापयाम्यहं सर्वेश्वरः। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानीत्वात्मैव मे मतम्' इति ह्युक्तम् । यद्यपि सर्वेषामपि योगक्षेमं वहति भगवान् तथाप्यन्येषां प्रयत्नमुत्पाद्य तद्द्वारा वहति, ज्ञानिनां तु तदर्थं प्रयत्नमनुत्पाद्य वहतीति विशेषः ॥ २२ ॥ नन्वन्या अपि देवतास्त्वमेव तद्व्यतिरिक्तस्य वस्त्वन्तरस्याभावात् तथाच देवतान्तरभक्ता अपि त्वामेव भजन्त इति न कोऽपि विशेषः स्यात् । तेन गतागतं कामकामा वसुरुद्रादित्यादिभक्ता लभन्ते । अनन्याश्चिन्तयन्तो मां तु कृतकृत्या इति कथमुक्तं तत्राह—**येऽप्यन्येति** । यथा मद्भक्ता मामेव यजन्ति तथा येऽन्यदेवतानां वस्वादीनां भक्ता यजन्ते ज्योतिष्टोमादिभिः श्रद्धया आस्तिक्यबुद्ध्या अन्विताः **तेऽपि** मद्भक्ता एव हे कौन्तेय, तत्तद्

५ भाष्योत्कर्षदीपिका ।

यतः कारणात् ज्ञानिनो ममात्मभूतत्वादतिप्रियाः । तदुक्तम् 'उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतं', 'स च मम प्रियः' इति । यद्यप्यन्येषामपि भक्तानां योगक्षेमं भगवान्वहत्येव तथाप्यन्ये ये भक्तास्ते आत्मार्थं स्वयमपि योगक्षेममीहन्ते अनन्यदर्शिनस्तु नेति विशेषः ॥२२॥ नन्वन्या अपि देवतास्त्वामेव त्वद्व्यतिरिक्तस्य देवतान्तरादेरभावात्तथा च तद्भक्ता अपि त्वामेव भजन्ते इति चेत्सत्यम्। तथापि इन्द्रादिदेवा वासुदेवाभिन्ना इति ज्ञानाभावात्तेषां मद्भक्तेभ्यो विशेष इत्याह—**येऽपीति** । येप्यन्यासु इन्द्रादिदेवतासु भक्ताः सन्तः श्रद्धया आस्तिक्यबुद्ध्या अन्विता युक्ता अन्यदेवतां यजन्ते पूजयन्ति **तेऽपि** वस्तुगत्या मामेव यजन्ति। यथा

६ श्रीधरीव्याख्या ।

येषां तथाभूता ये जना मां चिन्तयन्तः सेवन्ते, तेषां नित्याभियुक्तानां सर्वदा मदेकनिष्ठानां योगं धनादिलाभं क्षेमं च तत्पालनं मोक्षं वा तैरप्रार्थितमप्यहमेव वहामि प्रापयामि ॥ २२ ॥ ननु च त्वद्व्यतिरेकेण वस्तुतो देवतान्तरस्याभावादिन्द्रादिसेविनोऽपि त्वद्भक्ता एवेति कथं ते गतागतं लभेरंस्तत्राह—**येऽपीति** । श्रद्धयोपेता भक्ताः सन्तो येऽपि जना यज्ञेनान्यदेवता इन्द्रादिरूपा यजन्ते

७ अभिनवगुप्ताचार्यव्याख्या ।

लाभः । क्षेमं प्राप्तभगवत्स्वरूपप्रतिष्ठालाभपरिरक्षणं । येन योगभ्रष्टत्वशङ्कापि न भवेदित्यर्थः ॥ २२ ॥ येपि च नामधेयान्तरैरुपासते तेऽपि मामेवोपासते । नहि ब्रह्मव्यतिरेकि किंचिदुपास्यमस्ति किंत्वविधिनेति विशेषः । अविधिरन्यो विधिः । नानाप्रकारैर्विधिभिरहमेव परब्रह्म सत्तास्वभावो याज्य इति ननु यथान्यैर्दर्शनान्तरदूषणसमुपार्जितमहापातकमलीमसैर्व्याख्यातमविधिना दुष्टविधिनेति । एवं हि सति मामेव यजन्ते सर्वयज्ञानां चाहमेव भोक्तेति दृश्यमानमेतदसमञ्जसी भवेदित्यलंकल्मषकलिलैः साकं संलापेन । अस्मद्गुरवस्तु निरूपयन्ति । अन्या स्वात्मव्यतिरिक्ता भेदवादनयेन ब्रह्मस्वभावहीनैव काचिद्देवतेति गृहीत्वा तामेव भजन्ते तेऽपि वस्तुतो मामेव स्वात्मरूपं यजन्ते

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

यजन्त्यविधिपूर्वकमविधिरज्ञानं तत्पूर्वकमज्ञानपूर्वकं यजन्त इत्यर्थः ॥ २३ ॥ कस्मात्तेऽविधिपूर्वकं यजन्त इत्युच्यते यस्माद्—अहमिति । अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्मत्वेन भोक्ता च प्रभुरेव च । मत्स्वामिको हि यज्ञोऽधियज्ञोऽहमेवात्रेति ह्युक्तम् । तथा न तु मामभिजानन्ति तत्त्वेन यथावत् । अतश्चाविधिपूर्वकमिष्ट्वा यागफलाच्च्यवन्ति प्रच्यवन्ते ते ॥ २४ ॥

२ आनन्दगिरिव्याख्या ।

भगवद्याजिभ्यो विशेषमाह—**अविधीति** । तद्याकरोति—**अविधिरिति** ॥ २३ ॥ ननु वस्वादित्येन्द्रादिज्ञानपूर्वकमेव तद्भक्तास्तद्याजिनो भवन्तीति कथमविधिपूर्वकं तेषां यजनमिति शङ्कते—**कस्मादिति** । देवतान्तरयाजिनां यजनमविधिपूर्वकमित्यत्र हेत्वर्थत्वेन श्लोकमुत्थापयति—**उच्यत इति** । सर्वेषां द्विविधानां यज्ञानां वस्वादिदेवतात्वेनाहमेव भोक्ता स्वेनान्तर्यामिरूपेण प्रभुश्चाहमेवेति प्रसिद्धमेतदिति हिशब्दः । प्रभुरेव चेत्युक्तं विवृणोति—**मत्स्वामिको हीति** । तत्र पूर्वाध्यायगतवाक्यं प्रमाणयति—**अधियज्ञोऽहमिति** । तथापि देवतान्तरयाजिनां यजनमविधिपूर्वकमिति कुतः सिद्धं तत्राह—**तथेति** । ममैव यज्ञेषु भोक्तृत्वे प्रभुत्वे च सतीति यावत् । तयोर्भोक्तृप्रभ्वोर्भावस्तत्त्वं तेन भोक्तृत्वेन प्रभुत्वेन च मां यथावद्यतो न जानन्त्यतो भोक्तृत्वादिना ममाज्ञानान्मय्यनर्पितकर्माणश्च्यवन्ते कर्मफलादित्याह—**अतश्चेति** ॥ २४ ॥ यद्यन्यदेवताभक्ता भगवत्तत्त्वाज्ञानात्कर्मफलाच्च्यवन्ते तर्हि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विधिरभेदबुद्धिस्तद्राहित्यादविधिपूर्वकत्वं तदीयभजनस्य ॥ २३ ॥ हि यतः सर्वयज्ञानामहमेव सर्वदेवतारूपेण भोक्ता प्रभुः फलदाता च । एवंसति ते मां प्रत्यगभिन्नं तत्त्वेन याथातथ्येन न जानन्ति अतश्च्यवन्ति ज्ञाननिष्ठा-

४ मधुसूदनीव्याख्या ।

वतारूपेण स्थितं मामेव यजन्ति पूजयन्ति । अविधिपूर्वकं अविधिरज्ञानं तत्पूर्वकं सर्वात्मत्वेन मामज्ञात्वा मद्भिन्नत्वेन वस्वादीन्कल्पयित्वा यजन्तीत्यर्थः ॥ २३ ॥ अविधिपूर्वकत्वं विवृण्वन्फलप्रच्युतिममीषामाह—अहं भगवान्वासुदेव एव सर्वेषां यज्ञानां श्रौतानां स्मार्तानां च तत्तद्देवतारूपेण भोक्ता च स्वेनान्तर्यामिरूपेण अधियज्ञत्वात्प्रभुश्च फलदाता चेति प्रसिद्धमेतत् । देवतान्तरयाजिनस्तु मामीदृशं तत्त्वेन भोक्तृत्वेन प्रभुत्वेन च भगवान्वासुदेव एव वस्वादिरूपेण यज्ञानां भोक्ता स्वेन रूपेण च फलदाता न तदन्योऽस्ति कश्चिदाराध्य इत्येवंरूपेण न जानन्ति। अतो मत्स्वरूपापरिज्ञानान्महतायासेनेष्ट्वापि मय्यनर्पितकर्माणस्तत्तद्देवलोकं धूमादिमार्गेण गत्वा तद्भोगान्ते च्यवन्ति प्रच्यवन्ते । तद्भोगजनककर्मक्षयात्तद्देहादिवियुक्ताः पुनर्देहग्रहणाय मनुष्यलोकं प्रत्यावर्तन्ते । ये तु तत्तद्देवतासु भगवन्तमेव सर्वान्तर्यामिणं पश्यन्तो यजन्ते ते भगवदर्पितकर्माणस्तद्विद्यासहितकर्मवशादर्चिरादिमार्गेण ब्रह्मलोकं गत्वा तत्रोत्पन्नसम्यग्दर्शनास्तद्भोगान्ते मुच्यन्त इति विवेकः ॥ २४ ॥ देवतान्तरयाजिनामनावृत्तिफलाभावेऽपि तत्तद्देवतायागानुरूपक्षुद्रफलावाप्तिर्ध्रुवेति वदन्भगवद्याजिनां तेभ्यो वैलक्षण्यमाह—अविधिपूर्वकयाजिनो हि त्रिविधाः अन्तः-

५ भाष्योत्कर्षदीपिका ।

कुन्तीसुतोऽपि त्वं वस्तुवृत्त्यास्मत्पितामहदौहित्र एवेति संबोधनाशयः । तथापि मद्भजने वासुदेवव्यतिरिक्तं वस्तु नास्तीति ज्ञानं विधिस्तदभावोऽविधिस्तत्पूर्वकं यजन्त इत्यर्थः ॥ २३ ॥ एतदेव स्फोरयति—**अहमिति** । सर्वयज्ञानां श्रौतानां स्मार्तानां च देवतारूपेण भोक्तान्तर्यामिरूपेण फलप्रदातृरूपेण प्रभुरेव चाहं हि प्रसिद्धमेतत् । तथा चैतादृशं मां यतस्तत्त्वेन ये नाभिजानन्ति अतोऽविधिपूर्वकमिष्ट्वा यागफलभोगान्ते च्यवन्ति ते मर्त्यलोकं विशन्ति ॥ २४ ॥ अविधिपूर्वकं यजतामपि फलमवश्यंभावी-

६ श्रीधरीव्याख्या ।

तेऽपि मामेव यजन्तीति सत्यम्, किंत्वविधिपूर्वकं मोक्षप्रापकं विधिं विना यजन्त्यतस्ते पुनरावर्तन्ते ॥ २३ ॥ एतदेव विवृणोति—**अहं हीति** । सर्वेषां यज्ञानां तत्तद्देवतारूपेणाहमेव भोक्ता प्रभुश्च स्वामी फलदातापि चाहमेवेत्यर्थः । एवंभूतं मां ते तत्त्वेन यथावन्नाभिजानन्ति अतश्च्यवन्ति प्रच्यवन्ते पुनरावर्तन्ते । येतु सर्वदेवतासु मामेवान्तर्यामिणं पश्यन्तो यजन्ति ते तु नावर्तन्ते ॥ २४ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

किंत्वविधिना दुष्टेन विधिना भेदग्रहणरूपेणेति । अतएवाह न तु मां स्वात्मानं तत्त्वेन देवतारूपतया भोक्तृत्वेन जानन्ति । अतः च्यवन्ते मद्रूपात् ॥ २३ ॥ किं देवव्रतत्वेन देवान्यान्तीत्यादि । एतदेव च्यवनमिति यावत् ॥ २४ ॥ येतु मत्स्वरूपभेदेन विदुस्ते देवभूतपितृयागा-

**यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**यान्तीति । येऽप्यन्यदेवताभक्तिमत्त्वेनाविधिपूर्वकं यजन्ते तेषामपि यागफलमवश्यंभावि, कथम्— यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता देवान्यान्ति । पितॄनग्निष्वात्तादीन्यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः । भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या भूतानां पूजकाः । यान्ति मद्याजिनो मद्यजनशीला वैष्णवा मामेव । समानेऽप्यायासे मामेव न भजन्तेऽज्ञानात्तेन तेऽल्पफलभाजो भवन्तीत्यर्थः ॥ २५ ॥ न केवलं मद्भक्तानाम-**

२ आनन्दगिरिव्याख्या ।

तेषां देवतान्तरयजनमकिंचित्करमित्याशङ्क्याह—**येऽपीति** । देवतान्तरयाजिनामनावृत्तिफलाभावेऽपि तत्तद्देवतायागानुरूपफलप्राप्तिध्रौव्यान्न तदकिंचित्करमित्यर्थः । देवतान्तरयाजिनामावश्यकं तत्फलमाशङ्कापूर्वकमुदाहरति—**कथमित्यादिना** । नियमो बल्युपहारप्रदक्षिणप्रह्वीभावादिरित्यर्थः । देवतान्तराराधनस्यान्तवत्फलमुक्त्वा भगवदाराधनस्यानन्तफलत्वमाह—**यान्तीति** । भगवदाराधनस्यानन्तफलत्वे देवतान्तराराधनं त्यक्त्वा भगवदाराधनमेव युक्तमायाससाम्यात्फलातिरेकाच्चेत्याशङ्क्याह—**समानेऽपीति** । अज्ञानाधीनत्वेन देवतान्तराराधनवतां फलतो न्यूनतां दर्शयति—**तेनेति** ॥ २५ ॥ अनन्तफलत्वाद्भगवदाराधनमेव कर्तव्यमित्युक्तं सुकरत्वाच्च तथेत्याह—**न केवलमिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मलब्ध्वा संसारगर्ते पतन्ति ॥ २४ ॥ सर्वे भक्ता यथाभजनं प्राप्नुवन्ति स्वाराध्यसांनिध्यमित्याह—**यान्तीति** । भूतार्थमिज्या येषां ते भूतेज्याः ॥ २५ ॥ मद्भक्तिरतिसुकरा देवतान्तरभक्तिस्तु बहुवित्तव्ययायाससाध्येत्याशये-

४ मधुसूदनीव्याख्या ।

करणोपाधिगुणत्रयभेदात् । तत्र सात्त्विका देवव्रताः, देवा वसुरुद्रादित्यादयस्तत्संबन्धिव्रतं बल्युपहारप्रदक्षिणप्रह्वीभावादिरूपं पूजनं येषां ते तानेव देवान्यान्ति । 'तं यथायथोपासते तदेव भवति' इति श्रुतेः । राजसास्तु पितृव्रताः श्राद्धादिक्रियाभिरग्निष्वात्तादीनां पितॄणामाराधकास्तानेव पितॄन्यान्ति । तथा तामसा भूतेज्या यक्षरक्षोविनायकमातृगणादीनां भूतानां पूजकास्तान्येव भूतानि यान्ति । अत्र देवपितृभूतशब्दानां तत्संबन्धिलक्षणयोष्ट्रमुखन्यायेन समासः । मध्यमपदलोपीसमासानङ्गीकारात्प्रकृतिविकृतिभावाभावेन च तादर्थ्यचतुर्थीसमासायोगात् । अन्ते च पूजावाचीज्याशब्दप्रयोगात्पूर्वपर्यायद्वयेऽपि व्रतशब्दः पूजापर एव । एवं देवतान्तराराधनस्य तत्तद्देवतारूपत्वमन्तवत्फलमुक्त्वा भगवदाराधनस्य भगवद्रूपत्वमनन्तं फलमाह—मां भगवन्तं यष्टुं पूजयितुं शीलं येषां ते मद्याजिनः सर्वासु देवतासु भगवद्भावदर्शिनो भगवदाराधनपरायणा मां भगवन्तमेव यान्ति । समानेऽप्यज्ञानात् भगवन्तमन्तर्यामिणमनन्तफलदमनाराध्य देवतान्तरमाराध्यान्तवत्फलं यान्तीत्यहो दुर्दैववैभवमज्ञानामित्यभिप्रायः ॥ २५ ॥ तदेवं देवतान्तराणि परित्यज्यानन्तफलत्वाद्भगवत एवाराधनं कर्तव्यमतिसुकरत्वाच्चेत्याह—पत्रं पुष्पं फलं

५ भाष्योत्कर्षदीपिका ।

त्याह—**यान्तीति** । देवव्रता देवेषु व्रतं बल्युपहारप्रदक्षिणाप्रह्वीभावादिरूपो नियमो भक्तिश्च येषां ते देवानुपास्यानिन्द्रवरुणादीन् यान्ति गच्छन्ति 'तं यथायथोपासते तदेव भवति' इति श्रुतेः । तथा पितृष्वग्निष्वात्तादिषु व्रतं श्राद्धादिक्रियानियमो भक्तिश्च येषां ते पितॄन्यान्ति । तथा भूतेषु विनायकमातृगणचतुःषष्टियोगिन्यादिषु इज्या पूजा येषां ते भूतयाजका भूतानि यान्ति । तथा मद्यजने मम पूजने शीलं येषां ते मामेव भगवन्तं वासुदेवं यान्ति आयासस्य समानत्वेऽप्यज्ञानान्मद्यजनमनल्पफलदं विहायान्यदेवादियजनमङ्गीकुर्वन्ति तेनाल्पफलभाजो भवन्तीत्यहो लोकानां मौढ्यमित्यभिप्रायः ॥ २५ ॥ न केवलं मम पूजकानां मत्प्राप्तिरूपमना-

६ श्रीधरीव्याख्या ।

तदेवोपपादयति—**यान्तीति** । देवेष्विन्द्रादिषु व्रतं नियमो येषां ते अन्तवन्तो देवान्यान्ति अतः पुनरावर्तन्ते । पितृषु व्रतं येषां श्राद्धादिक्रियापराणां ते पितॄन्यान्ति । भूतेषु विनायकमातृकादिष्विज्या पूजा येषां ते भूतानि यान्ति । मां यष्टुं शीलं येषां ते मद्याजिनस्ते तु मामक्षयं परमानन्दरूपं नारायणं यान्ति ॥ २५ ॥ तदेवं स्वभक्तानामक्षयफलत्वमुक्तम् । अनायासत्वं स्वभक्तेर्दर्शयति—

७ अभिनवगुप्ताचार्यव्याख्या ।

दिनापि मामेव यजन्ति ते च मद्याजिनो मामेव गच्छन्तीत्युपसंहरिष्यति । ननु द्रव्यत्यागार्थमुद्दिष्टा देवतेत्युच्यते तत्कथनमनुद्दिश्य स्वात्मतत्त्वस्य याज्यत्वं 'आदित्यः प्रापणीयश्चरु'रिति विधिशेषभूतदेवतोद्देशात्मकविध्यन्तरप्रभावितो ह्यसावुद्देशः । नच स्वात्मविधिरस्तीत्यभिप्रायेणाह—अविधिपूर्वकं मामिति । स्वात्मव्यतिरिक्तायां देवतायामस्त्यपेक्ष्यो विधिः अप्राप्तप्रापणरूपत्वात् । स्वात्मा तु परमेश्वरो न विधिपूर्वको विधिपरिप्राप्यत्वाभावात् । नहि तदनुद्देशेन किंचित्प्रवर्तते । तेन विधिपरिप्रापितेन्द्रादिदेवतोद्देशेषु सर्वेषु स स्वात्मा विश्वावभासनस्वभावः तदुद्देश्यदेवतावभासमितिस्थानीयतयैवाहमहमिकया सततावभासमानः स्रक्सूत्रकल्पः सततोद्दिष्ट इति । युक्तिसिद्धमेतन्मा-

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**
**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नावृत्तिलक्षणमनन्तफलं सुखाराधनश्चाहं, कथम्—पत्रं पुष्पं फलं तोयमुदकं यो मे मह्यं भक्त्या प्रयच्छति तदहं पत्रादि भक्त्योपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतमश्नामि गृह्णामि प्रयतात्मनः शुद्धबुद्धेः ॥ २६ ॥ यत एवमतः—यत्करोषि स्वतः प्राप्तं यदश्नासि यच्च जुहोषि हवनं निर्वर्तयसि श्रौतं

२ आनन्दगिरिव्याख्या ।

भगवदाराधनस्य सुकरत्वमेव प्रश्नपूर्वकं प्रपञ्चयति—**कथमित्यादिना** । यद्धि पुष्पादिकं भक्तिपूर्वकं मदर्थमर्पितं तेनायं शुद्धचेतास्तपस्वी मामाराधयतीत्यहमवधारयामीत्याह—**पत्रमित्यादिना** ॥ २६ ॥ तदाराधनस्य सुकरत्वे तदेवावश्यकमित्याह—**यत इति** । स्वतः शास्त्रादृते प्राप्तं गमनादीति यावत् । यदश्नासि यं कंचिद्भोगं भुङ्क्षे । हवनस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नाह—**पत्रमिति** । भक्तिरेव केवलं ममापेक्षिता नान्यदिति भावः । भक्त्युपहृतं भक्त्या समर्पितम् ॥ २६ ॥ अतः सर्वं मदर्पणं कुर्वित्याह—**यदिति** । यत्करोषि गमनादिकं तद्भगवत एव प्रदक्षिणादिकं करोमीति मत्प्री-

४ मधुसूदनीव्याख्या ।

तोयमन्यद्वाऽनायासलभ्यं यत्किंचिद्वस्तु यः कश्चिदपि नरो मे मह्यमनन्तमहाविभूतिपतये परमेश्वराय भक्त्या 'न वासुदेवात्परमस्ति किंचित्' इति बुद्धिपूर्विकया प्रीत्या प्रयच्छति ईश्वराय भृत्यवदुपकल्पयति । मत्स्वत्वानास्पदद्रव्याभावात्सर्वस्यापि जगतो मयैवार्जितत्वात् अतो मदीयमेव सर्वं मह्यमर्पयति जनः तस्य प्रीत्या प्रयच्छतः प्रयतात्मनः शुद्धबुद्धेस्तत्पत्रपुष्पादि तुच्छमपि वस्तु अहं सर्वेश्वरोऽश्नामि अशनवत्प्रीत्या स्वीकृत्य तृप्यामि । अत्र वाच्यस्यात्यन्ततिरस्कारादर्शनलक्षितेन स्वीकारविशेषेण प्रीत्यतिशयहेतुत्वं व्यज्यते । 'न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' इति श्रुतेः । कस्मात्तुच्छमपि तदश्नामि, यस्मात् भक्त्युपहृतं भक्त्या प्रीत्या समर्पितम् । तेन प्रीत्या समर्पणं मत्स्वीकारनिमित्तमित्यर्थः । अत्र भक्त्या प्रयच्छतीत्युक्त्वा पुनर्भक्त्युपहृतमिति वदन्नभक्तस्य ब्राह्मणत्वतपस्वित्वादि मत्स्वीकारनिमित्तं न भवतीति परिसंख्यां सूचयति । श्रीदामब्राह्मणानीततण्डुलकणभक्षणवत्प्रीतिविशेषप्रतिबद्धभक्ष्याभक्ष्यविज्ञानो बाल इव मात्राद्यर्पितं पत्रपुष्पादि भक्तार्पितं साक्षादेव भक्षयामीति वा । तेन भक्तिरेव मत्परितोषनिमित्तं नतु देवतान्तरवद्बल्युपहारादि बहुवित्तव्ययायाससाध्यं किंचिदिति देवतान्तरमपहाय मामेव भजेतेत्यभिप्रायः ॥ २६ ॥ कीदृशं ते भजनं तदाह—यत्करोषि शास्त्रादृतेऽपि रागात्प्राप्तं गमनादि । यदश्नासि स्वयं तृप्त्यर्थं कर्मसिद्ध्यर्थं वा । तथा यज्जुहोषि शास्त्रबलान्नित्यमग्निहोत्रादिहोमं निर्वर्तयसि ।

५ भाष्योत्कर्षदीपिका ।

वृत्तिलक्षणमनन्तफलमपि तु मत्पूजनसाधनानामतिसौलभ्यान्मद्यजनमतिसुलभमित्याह । पत्रं तुलसीपत्रं, पुष्पं, फलं, तोयं जलं, यो मे मह्यं भक्त्या परप्रेम्णा प्रयच्छति अर्पयति । प्रयतात्मनः तत् पत्रादि भक्त्या उपहृतं समर्पितं अश्नामि गृहीत्वा तृप्यामीत्यर्थः । सुदाम्नोपाहृततन्दुलवद्भक्षयामीति वा । तस्माद्देवतान्तरादिपूजनं विहायाल्पायासलभ्यवस्तुसाध्यमनन्तफलदं मद्यजनमतिभक्त्या कर्तव्यमित्यभिप्रायः ॥ २६ ॥ यतः पत्रादिकमपि भक्त्युपहृतं गृह्णामि अतः सर्वमपि कर्म मय्यर्पितं यथा भवेत्तथा कर्तव्यमिदमेव चातिसुलभं मद्यजनमित्याह । यत्करोषि यद्रागादाचरसि, यच्चाश्नासि, यच्च जुहोषि श्रौतं स्मार्तं वा हवनं संपादयसि, यच्च हिर-

६ श्रीधरीव्याख्या ।

**पत्रमिति** । पत्रपुष्पादिमात्रमपि मह्यं भक्त्या प्रीत्या यः प्रयच्छति तस्य प्रयतात्मनः शुद्धचित्तस्य निष्कामभक्तस्य तत्पत्रपुष्पादिकं तेन भक्त्योपहृतं समर्पितमहमश्नामि प्रीत्या गृह्णामि । नहि महाविभूतिपतेः परमेश्वरस्य मम क्षुद्रदेवतानामिव बहुवित्तसाध्ययागादिभिः परितोषः स्यात् किंतु भक्तिमात्रेण । अतो भक्तेन समर्पितं यत्किंचित्पत्रादिमात्रमपि तदनुग्रहार्थमेवाश्नामीति भावः ॥ २६ ॥ नच पत्रपुष्पादिकमपि यज्ञार्थं पशुसोमादिद्रव्यवन्मदर्थमेवोद्यमैरापाद्य समर्पणीयम्, किं तर्हि—**यदिति** । स्वभावतो वा शास्त्रतो वा यत्कि-

७ अभिनवगुप्ताचार्यव्याख्या ।

मेव यजन्त्यविधिपूर्वकत्वात् मुख्यभूतमत्प्राप्तिफलस्य । तान्प्रति कर्त्रभिप्रायत्वं नास्ति अपितु परिमितदक्षिणास्थानीयेन्द्रपदादिमात्रप्राप्तएव याजकवच्चरितार्थत्वमेषामिति प्रथयितुं परस्मैपदम् । यदुक्तं मयैव 'वेदान्वेद न वेद शांभवपदं दूयेत निर्वेदवान्स्वर्गार्थी यजमानतां प्रतिजहज्जातो यजन्याजकः । सर्वाः कर्मरसप्रवाहविसराः संवित्स्रवन्त्योऽखिलास्त्वामानन्दमहाम्बुधिं विदधते नाप्राप्य पूर्णां स्थितिम् ॥' इति ॥ २५ ॥ २६ ॥ एवं यः उक्तक्रमेण वेत्ति तस्येन्द्रादिदेवतायागोऽपि परमेश्वरयाग इति । यदप्यन्यत्कर्म तदपि महेश्वरस्वात्मार्चनरूपं तस्यैव सर्वत्रोद्देशादित्याह—यत्करोषीति । देवतान्तरयाजिनो यतोऽमितमनोरथाः फलं लघयन्ति अतस्त्वं सर्वं मागु-

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

स्मार्तं वा । यद्ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्यान्नाज्यादि यत्तपस्यसि तपश्चरसि कौन्तेय, तत्कुरुष्व मदर्पणं मत्समर्पणम् ॥ २७ ॥ एवं कुर्वतस्तव यद्भवति तच्छृणु—शुभाशुभफलैरिति । शुभाशुभफलैरेवं शुभाशुभे इष्टानिष्टे फले येषां तानि शुभाशुभफलानि कर्माणि तैः शुभाशुभफलैः कर्मबन्धनैः कर्माण्येव बन्धनानि तैः कर्मबन्धनैरेवं मत्समर्पणं कुर्वन्मोक्ष्यसे । सोऽयं संन्यासयोगो नाम संन्यासश्चासौ मत्समर्पणतया कर्मत्वाद्योगश्चासाविति तेन संन्यासयोगेन युक्त आत्मान्तःकरणं यस्य तव स त्वं संन्यासयोगयुक्तात्मा सन् विमुक्तः कर्मबन्धनैर्जीवन्नेव, पतिते चास्मिञ्शरीरे मामु-

२ आनन्दगिरिव्याख्या ।

स्वतस्त्वं वारयति श्रौतमिति । मत्समर्पणं तत्सर्वं मह्यं समर्पयेत्यर्थः ॥ २७ ॥ किमतो भवति तदाह—एवमिति । भगवदर्पणबुद्ध्या सर्वकर्म कुर्वतो जीवन्मुक्तस्य प्रारब्धकर्मावसाने विदेहकैवल्यमावश्यकमित्याह—शुभेत्यादिना । भगवदर्पणकरणान्मुक्तिः संन्यासयोगाच्चेति साधनद्वयशङ्कां शातयति—सोऽयमिति ॥ २८ ॥ भग-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्यर्थमेव तदर्पणं कुर्विति । एवं वचनादिष्वपि नामकीर्तनादिदृष्ट्या ऊह्यम् ॥ २७ ॥ एवं कुर्वतः फलमाह—शुभाशुभेति । शुभाशुभफलैरिष्टानिष्टफलैः कर्मरूपैर्बन्धनैरेवं कुर्वन् त्वं मोक्ष्यसे भगवदर्पणबुद्ध्या यत्किंचित्कर्म कुर्वतः कर्मलेपो नास्तीत्यर्थः । अयमेवोक्तलक्षणः कर्मफलसंन्यासरूपो मार्गस्तत्र युक्तात्मा समाहितचित्तः सन् विमुक्तः कर्म-

४ मधुसूदनीव्याख्या ।

श्रौतस्मार्तसर्वहोमोपलक्षणमेतत् । तथा यद्ददासि अतिथिब्राह्मणादिभ्योऽन्नहिरण्यादि । तथा यत्तपस्यसि प्रतिसंवत्सरमज्ञातप्रामादिकपापनिवृत्तये चान्द्रायणादि चरसि उच्छृङ्खलप्रवृत्तिनिरासाय शरीरेन्द्रियसंघातं संयमयसीति वा । एतच्च सर्वेषां नित्यनैमित्तिककर्मणामुपलक्षणम् । तेन यत्तव प्राणिस्वभाववशाद्विनापि शास्त्रमवश्यंभावि गमनाशनादि यच्च शास्त्रवशादवश्यंभावि होमदानादि हे कौन्तेय, तत्सर्वं लौकिकं वैदिकं च कर्मान्येन निमित्तेन क्रियमाणं मदर्पणं मय्यर्पितं यथा स्यात्तथा कुरुष्व । आत्मनेपदेन समर्पकनिष्ठमेव समर्पणफलं नतु मह्यं किंचिदिति दर्शयति । अवश्यंभाविनां कर्मणां मयि परमगुरौ समर्पणमेव मद्भजनं नतु तदर्थं पृथग्व्यापारः कश्चित्कर्तव्य इत्यभिप्रायः ॥ २७ ॥ एतादृश्यस्य भजनस्य फलमाह—एवमनायाससिद्धेऽपि सर्वकर्मसमर्पणरूपे मद्भजने सति शुभाशुभे इष्टानिष्टे फले येषां तैः कर्मबन्धनैर्बन्धरूपैः कर्मभिर्मोक्ष्यसे मयि समर्पितत्वात्तव तत्संबन्धानुपपत्तेः कर्मभिस्तत्फलैश्च न संस्रक्ष्यसे । ततश्च संन्यासयोगयुक्तात्मा संन्यासः सर्वकर्मणां भगवति समर्पणं स एव योग इव चित्तशोधकत्वाद्योगस्तेन युक्तः शोधित आत्मान्तःकरणं यस्य स त्वं त्यक्तसर्वकर्मा वा । कर्मबन्धनैर्जीवन्नेव विमुक्तः सन्सम्यग्दर्शनेनाज्ञानावरणनिवृत्त्या मामुपैष्यसि साक्षात्करिष्यस्यहं ब्रह्मास्मीति । ततः प्रारब्धक-

५ भाष्योत्कर्षदीपिका ।

ण्यादि ब्राह्मणादिभ्यो ददासि प्रयच्छसि, यत्तपस्यसि तपश्चरसि, तन्मदर्पणं कुरुष्वेश्वरप्रेरणया तदर्थमेव सर्वं करोमीति बुद्ध्या मयि वासुदेवेऽर्पितं यथा भवति तथा कुरुष्व मत्संबन्धित्वात्तवैतदतिसुलभमिति सूचयन्नाह—**कौन्तेयेति**। यद्वा यथा कुन्ती भर्तुराज्ञया भवदादीनिन्द्रादिसङ्गेनोत्पाद्यापि तत्कर्मसंबन्धवर्जिता तथा त्वमप्येवं कुर्वन् कर्मबन्धनैर्मोक्ष्यसे इति संबोधनस्य गूढाभिप्रायः ॥ २७ ॥ एवं मदर्पणं कुर्वतस्तव यत्फलं भविष्यति तच्छृणु । शुभाशुभे इष्टानिष्टे फले येषां कर्मणां तान्येव बन्धनानि शुभाशुभफलैः कर्मरूपैर्बन्धनैरितियावत् । एवं मदुक्तं कुर्वन् मोक्ष्यसे । कर्मभिर्न बध्यस इत्यर्थः । सोऽयं मदर्पणबुद्ध्या क्रियमाणकर्मसंन्यासयोगो नाम फलत्यागात्संन्यासश्चासौ कर्मत्वाद्योगश्च तेन युक्त आत्मा अन्तःकरणं यस्य स त्वं संन्यासः स्वरूपतः सर्वकर्मत्यागः स एव युज्यते ब्रह्मणानेनेति योगस्तेन युक्तस्तस्मिन्युक्तः समाहितो वा आत्मान्तःकरणं यस्य स त्वमित्यर्थस्तु सर्वकर्मत्यागरूपे मुख्यसंन्यासेऽर्जुनाधिकारो भगवतोऽनभिप्रेत इत्यभिप्रेत्याचार्यैर्न प्रदर्शितः । संन्यासयोगयुक्तात्मा सन् ज्ञानप्राप्त्या जीवन्नेव कर्मबन्धनैर्विमुक्तः

६ श्रीधरीव्याख्या ।

त्विकर्म करोषि, तथा यदश्नासि यज्जुहोषि, यद्ददासि, यत्तपस्यसि तपः करोषि तत्सर्वं मय्यर्पितं यथा भवत्येवं कुरुष्व ॥ २७ ॥ एवं च यत्फलं प्राप्स्यसि तच्छृणु—**शुभेति** । एवं कुर्वन्कर्मबन्धनैः कर्मनिमित्तैरिष्टानिष्टैः फलैर्मुक्तो भविष्यसि । कर्मणां मयि समर्पितत्वेन

७ अभिनवगुप्ताचार्यव्याख्या ।

क्तोपदेशक्रमेण मदर्पणं सन्मयत्वेन भावनं कुरु । एष एव च संन्यासयोग इति विस्तीर्णं विस्पष्टप्रायं पुरस्तादेव प्रतिजाने इति युक्तियुक्तो-

१ मधुसूदनः ।

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

पैष्यस्यागमिष्यसि ॥ २८ ॥ रागद्वेषवांस्तर्हि भगवान्यतो भक्काननुगृह्णाति नेतरानिति तन्न—समोऽहमिति । समस्तुल्योऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियोऽग्निवदहं दूरस्थानां यथाग्निः शीतं नापनयति समीपमुपसर्पतामपनयति तथाहं भक्काननुगृह्णामि नेतरान् । ये भजन्ति तु मामीश्वरं भक्त्या मयि ते स्वभावत एव न मम रागनिमित्तं मयि वर्तन्ते । तेषु चाप्यहं स्वभावत एव वर्ते नेतरेषु

२ आनन्दगिरिव्याख्या ।

वतो रागद्वेषवत्त्वेनानीश्वरत्वमाशङ्क्य परिहरति—रागेत्यादिना । तर्हि भगवद्भजनमकिंचित्करमित्याशङ्क्याह—अग्निवदिति । तत्प्रपञ्चयति—यथेति । भक्तानभक्तांश्चानुगृह्णतोऽननुगृह्णतश्च भगवतो न कथं रागादिमत्त्वमित्याशङ्क्याह—ये भजन्तीति । ये वर्णाश्रमादिधर्मैर्मां भजन्ति ते तेनैव भजनेनाचिन्त्यमाहात्म्येन परिशुद्धबुद्धयो मयि मत्समीपे वर्तन्ते मदभिव्यक्तियोग्यचित्ता भवन्ति । तुशब्दोऽस्य विशेषस्य द्योतनार्थः । तेषु च समीपे तेषामहमपि स्वभावतो वर्तमानस्तदनुग्रहपरो भवामि । यथा व्यापकमपि सावित्रं तेजः स्वच्छे दर्पणादौ प्रतिफलति तथा परमेश्वरो-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बन्धनैर्विमुक्तः सन् मां सर्वेषां प्रत्यगात्मानमुपैष्यसि ॥ २८ ॥ यतो भक्तानेवानुगृह्णाति नेतरानित्यतो रागद्वेषवान्भगवानित्यत आह—समोऽहमिति । यथाग्निः रागादिशून्योऽपि समीपस्थानामेव शीतं नाशयति न दूरस्थानां तद्वत्सर्वत्र समोऽप्यहं शरणागतानामेव बन्धं नाशयामि नान्येषामित्यर्थः । अतो मम न रागद्वेषाविति भावः । मयि ते तेषु चाप्यहम् । भक्ता अनन्यशरणतया मय्येव वर्तन्ते अहमपि तेष्वेव वर्ते । अभक्तचित्तानां रागाद्याक्रान्तत्वेन

४ मधुसूदनीव्याख्या ।

मेक्षयात्पतितेऽस्मिञ्शरीरे विदेहकैवल्यरूपं मामुपैष्यसि । इदानीमपि मद्रूपः सन्सर्वोपाधिनिवृत्त्या मायिकभेदव्यवहारविषयो न भविष्यसीत्यर्थः ॥ २८ ॥ यदि भक्तानेवानुगृह्णाति नाभक्तान् ततो रागद्वेषवत्त्वेन कथं परमेश्वरः स्यादिति नेत्याह—सर्वेषु प्राणिषु समस्तुल्योऽहं सद्रूपेण स्फुरणरूपेणानन्दरूपेण च स्वाभाविकेनौपाधिकेन चान्तर्यामिरूपेण । अतो न मम द्वेषविषयः प्रीतिविषयो वा कश्चिदस्ति सावित्रस्येव गगनमण्डलव्यापिनः प्रकाशस्य । तर्हि कथं भक्ताभक्तयोः फलवैषम्यं तत्राह—ये भजन्ति तु ये तु भजन्ति सेवन्ते मां सर्वकर्मसमर्पणरूपया भक्त्या । अभक्तापेक्षया भक्तानां विशेषद्योतनार्थस्तुशब्दः । कोऽसौ, मयि ते ये मदर्पितैर्निष्कामैः कर्मभिः शोधितान्तःकरणास्ते निरस्तसमस्तरजस्तमोमलस्य सत्त्वोद्रेकेणातिस्वच्छस्यान्तःकरणस्य सदा मदाकारां वृत्तिमुपनिषन्मानेनोत्पादयन्तो मयि वर्तन्ते । अहमप्यतिस्वच्छायां तदीयचित्तवृत्तौ प्रतिबिम्बितस्तेषु वर्ते । चकारोऽवधारणार्थः त एव मयि तेष्वेवाहमिति । स्वच्छस्य हि द्रव्यस्यायमेव स्वभावो येन संबध्यते तदाकारं गृह्णातीति । स्वच्छद्रव्यसंबद्धस्य च वस्तुन एष एव स्वभावो यत्तत्र प्रतिफलतीति । तथा अस्वच्छद्रव्यस्याप्येष एव स्वभावो यत्स्वसंबद्धस्याप्याकारं न गृह्णातीति । अस्वच्छद्रव्यसंबद्धस्य च वस्तुन एष एव स्वभावो यत्तत्र न प्रतिफलतीति । यथा हि सर्वत्र विद्यमानोऽपि सावित्रः प्रकाशः स्वच्छे दर्पणादावेवाभिव्यज्यते न त्वस्वच्छे घटादौ । तावता न दर्पणे रज्यति न वा द्वेष्टि घटम् । एवं सर्वत्र समोऽपि स्वच्छे भक्तचित्तेऽभिव्यज्यमानोऽस्वच्छे चाभक्तचित्तेऽनभिव्यज्यमानोऽहं न रज्यामि कुत्रचित् । न वा

५ भाष्योत्कर्षदीपिका ।

पतिते च देहे मां परमात्मानं सच्चिदानन्दघनं मोक्षाख्यमुपैष्यसि प्राप्स्यसि ॥ २८ ॥ ननु मोक्षादिदानेन भक्ताननुगृह्णतस्तददानेनाभक्ताननुगृह्णतस्तव वैषम्यमिति चेत्तत्राह—सम इति । अहं परमात्मा सच्चिदानन्दघनः सर्वभूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु समः समानः । यतो मम द्वेषविषयः कश्चिदपि न भवति रागविषयश्च । एवं तर्हि कथं भक्ताननुगृह्णासि नेतरानिति तत्राह—य इति । तुशब्दः शङ्काव्यवच्छेदार्थः । यथा सवितृप्रकाशः स्वच्छास्वच्छदर्पणेषु समोऽपि स्वच्छेषु विशेषेण वर्तते नास्वच्छेषु । यथा वह्निः सर्वसमोऽपि सन्निहितानां शीतं नाशयति नासन्निहितानाम् । यथावा कल्पवृक्षो भक्तानुगृह्णाति नाभक्तान् । एवं ये तु भक्त्या मां भजन्ते सेवन्ते ते स्वभावतो मयि वर्तन्ते । मदाकाराकारितचित्तवृत्तयोऽनुग्रहभाजो

६ श्रीधरीव्याख्या ।

तव तत्फलसंबन्धानुपपत्तेः । तैश्च विमुक्तः सन्संन्यासयोगयुक्तात्मा संन्यासः कर्मणां मदर्पणं स एव योगस्तेन युक्त आत्मा चित्तं यस्य तथाभूतस्त्वं मां प्राप्स्यसि ॥ २८ ॥ यदि भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यश्च तर्हि तवापि किं रागद्वेषादिकृतं वैषम्यमस्ति, नेत्याह—सम इति । समोऽहं सर्वेष्वपि भूतेषु । अतो मे मम प्रियश्च द्वेष्यश्च नास्त्येव । एवंसत्यपि ये मां भजन्ति ते भक्ता मयि

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥**
**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नैतावता तेषु द्वेषो मम ॥ २९ ॥ शृणु मद्भक्तेर्माहात्म्यम्—अपिचेदिति । अपि चेद्यद्यपि सुष्ठु दुराचारः सुदुराचारोऽतीव कुत्सिताचारोऽपि भजते मामनन्यभागनन्यभक्तिः सन्साधुरेव सम्यग्वृत्त एव स मन्तव्यो ज्ञातव्यः । सम्यग्यथावद् व्यवसितो हि यस्मात्साधुनिश्चयः सः ॥ ३० ॥ क्षिप्रमिति । उत्सृज्य च बाह्यां दुराचारतामन्तःसम्यग्व्यवसायसामर्थ्यात्—क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव शश्वन्नित्यं शान्तिं चोपशमं निगच्छति प्राप्नोति । शृणु परमार्थं कौन्तेय, प्रतिजानीहि निश्चितां

२ आनन्दगिरिव्याख्या ।

ऽवर्जनीयतया भक्तिनिरस्तसमस्तकलुषसत्त्वेषु पुरुषेषु संनिधत्ते दैवीं प्रकृतिमाश्रिता मां भजन्तीत्युक्तत्वादित्यर्थः ॥ २९ ॥ प्रकृतां भगवद्भक्तिं स्तुवन्पापीयसामपि तत्राधिकारोऽस्तीति सूचयति—**शृण्विति** । सम्यग्वृत्त एव भगवद्भक्तो ज्ञातव्य इत्यत्र हेतुमाह—**सम्यगिति** ॥ ३० ॥ हेत्वर्थमेव प्रपञ्चयति—**उत्सृज्येति** । भगवन्तं भजमानस्य कथं दुराचारता परित्यक्ता भवतीत्याशङ्क्याह—**क्षिप्रमिति** । सति दुराचारे कथं धर्मचित्तत्वं तदाह—**शश्वदिति** । उपशमो दुराचारादुपरमः । किमिति त्वद्भक्तस्य दुराचारादुपरतिरुच्यते दुराचारोपहतचेतस्तया किमित्यसौ न नङ्क्ष्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तत्र मम विशेषतोऽभिव्यक्तिर्नास्तीति भावः ॥ २९ ॥ भक्तेर्माहात्म्यमाह—**अपिचेदिति** । अत्यन्तपापिष्ठोऽपि मां यद्यनन्यचेताः सन् भजते तथापि स साधुरेव मन्तव्यः । हि यतः स सम्यग्व्यवसितः सम्यग्वृत्तः ॥ ३० ॥ सम्यग्व्यवसितत्वादेव क्षिप्रं धर्मात्मा भवति । शान्तिं च शश्वन्निगच्छति प्राप्नोति । हे कौन्तेय, त्वमेव मदाज्ञया प्रति-

४ मधुसूदनीव्याख्या ।

द्वेष्मि कंचित् । सामग्रीमर्यादया जायमानस्य कार्यस्यापर्यनुयोज्यत्वात् वह्निवत्कल्पतरुवच्चावैषम्यं व्याख्येयम् ॥ २९ ॥ किंच मद्भक्तेरेवायं महिमा यत्समेऽपि वैषम्यमापादयति शृणु तन्महिमानम् । यःकश्चित्सुदुराचारोऽपि चेदजामिलादिरिवानन्यभाक्सन्मां भजते कुतश्चिद्भाग्योदयात्सेवते स प्रागसाधुरपि साधुरेव मन्तव्यः । हि यस्मात्सम्यग्व्यवसितः साधुनिश्चयवान्सः ॥ ३० ॥ अस्मादेव सम्यग्व्यवसायात्स हित्वा दुराचारतां-चिरकालमधर्मात्मापि मद्भजनमहिम्ना क्षिप्रं शीघ्रमेव भवति धर्मात्मा धर्मानुगतचित्तः । दुराचारत्वं झटित्येव त्यक्त्वा सदाचारो भवतीत्यर्थः । किंच शश्वन्नित्यं शान्तिं विषयभोगस्पृहानिवृत्तिं निगच्छति नितरां प्राप्नोत्यतिनिर्वेदात् । कश्चित्त्वद्भक्तः प्रागभ्यस्तं दुराचारत्वमत्यजन्नभवेदपि धर्मात्मा । तथाच स नश्येदेवेति, नेत्याह—भक्तानुकम्पापरवशतया कुपित इव भगवान् । नैतदाश्चर्यं मन्वीथाः हे कौन्तेय, निश्चितमेवेदृशं मद्भक्तेर्माहात्म्यम्, अतो विप्रतिपन्नानां पुरस्तादपि त्वं प्रतिजानीहि सावज्ञं सगर्वं च प्रतिज्ञां कुरु । न मे वासुदेवस्य भक्तोऽ-

५ भाष्योत्कर्षदीपिका ।

भवन्तीत्यर्थः । अहंच तेषु स्वभावत एव वर्ते तेषां चित्तवृत्तौ स्वभावादेव प्रतिफलितोऽनुग्राहको भवामीत्यर्थः ॥ २९ ॥ शृणु मद्भक्तेर्महिमानं दुराचारानपि यया युक्तानुगृह्णामीत्याह । अपिचेत् यद्यपि सुदुराचारः सुष्ठु अत्यन्तं दुष्ट आचारः आचरणं यस्य स पूर्वं सुदुराचारोऽपि यो मां परमेश्वरं अनन्यभाक् न विद्यतेऽन्यस्मिन्भक्तिर्यस्य सः भजते सेवते स साधुरेव मन्तव्यः । हि यस्मात्सम्यग्व्यवसितः सम्यक् यथावत् व्यवसायं निश्चयं प्राप्तः ॥ ३० ॥ ननु किं त्वामनन्यभाक् भजन्नपि सुदुराचार एव तिष्ठति, नेत्याह—**क्षिप्रमिति** । अतः मद्भजनरूपसम्यग्व्यवसायसामर्थ्याद्बाह्यतां दुराचारतां च विहाय क्षिप्रं शीघ्रं धर्मात्मा धर्मे आत्मा चित्तं यस्य स धर्मचित्त एव भवति । तत एव शश्वन्नित्यं शान्तिमुपशमं नितरां गच्छति प्राप्नोति । अस्मिन्नर्थेऽसंभावनां निरस्यन्नाह । हे कौन्तेय, मे मम भक्तो न प्रणश्यतीति प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु । यथा

६ श्रीधरीव्याख्या ।

वर्तन्ते । अहमपि तेष्वनुग्राहकतया वर्ते । अयं भावः—यथाग्नेः स्वसेवकेष्वेव तमःशीतादिदुःखमपाकुर्वतोऽपि न वैषम्यं, यथावा कल्पवृक्षस्य, तथैव भक्तपक्षपातिनोऽपि मम न वैषम्यं किंतु मद्भक्तेरेवं महिमेति ॥ २९ ॥ अपिच मद्भक्तेरवितर्क्यः प्रभाव इति दर्शयन्नाह—**अपिचेदिति** । अत्यन्तं दुराचारोऽपि यद्यप्यपृथक्त्वेन पृथग्देवता अपि वासुदेव एवेति बुद्ध्या नरो देवतान्तरभक्तिमकुर्वन्मामेव श्रीनारायणं भजते तर्हि साधुः श्रेष्ठ एव स मन्तव्यः । यतोऽसौ सम्यग्व्यवसितः परमेश्वरभजनेनैव कृतार्थो भविष्यामीति शोभनमध्यवसायं कृतवान् ॥ ३० ॥ ननु कथं समीचीनाध्यवसायमात्रेण साधुर्मन्तव्यस्तत्राह—**क्षिप्रमिति** । दुराचारोऽपि मां भजञ्छीघ्रं धर्मचित्तो भवति । ततश्च शश्वच्छान्तिं शाश्वतीमुपशान्तिं चित्तोपप्लवोपरमरूपां परमेश्वरनिष्ठां नितरां गच्छति प्राप्नोति ।

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**
**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

प्रतिज्ञां कुरु न मे मम भक्तो मयि समर्पितान्तरात्मा मद्भक्तो न प्रणश्यतीति ॥ ३१ ॥ किंच—मां हीति । मां हि यस्मात्पार्थ, व्यपाश्रित्य मामाश्रयत्वेन गृहीत्वा येऽपि स्युर्भवेयुः पापयोनयः पापा योनिर्येषां ते पापयोनयः पापजन्मानः । के त इत्याह—स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति गच्छन्ति परां गतिं प्रकृष्टां गतिम् ॥ ३२ ॥ किं पुनरिति । किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयो भक्ता राजर्षयस्तथा राजानश्च त ऋषयश्चेति राजर्षयः । यत एवमतोऽनित्यं क्षणभङ्गुरमसुखं च सुखवर्जितमिमं

२ आनन्दगिरिव्याख्या ।

तीत्याशङ्क्याह—**शृण्विति** ॥ ३१ ॥ इतश्च भगवद्भक्तिर्विधातव्येत्याह—**किंचेति** । न मे भक्तः प्रणश्यतीत्यत्र हेतुमाचक्षाणो भक्त्यधिकारे जातिनियमो नास्तीत्याह—**मां हीति** ॥ ३२ ॥ यदि पापयोनिः पापाचारश्च त्वद्भक्त्या परां गतिं गच्छति तर्हि किमुत्तमजातिनिमित्तेन संन्यासादिना किं वा सद्वृत्तेनेत्याशङ्क्याह—**किं पुनरिति** । उत्तमजातिमतां ब्राह्मणादीनामतिशयेन परा गतिर्यतो लभ्यतेऽतो भगवद्भजनं तैरेकान्तेन विधातव्यमित्याह—**यत इति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जानीहि प्रतिज्ञां कुरु मे मम भगवतो हरेर्भक्तो न नश्यतीति ॥ ३१ ॥ किंच हे पार्थ, हि प्रसिद्धं मां व्यपाश्रित्य आश्रित्य येऽत्यन्तं पापयोनयः स्त्र्यादयस्तेऽपि परां गतिं यान्ति ॥ ३२ ॥ ब्राह्मणादयः पुनः पुण्याः मदाश्रयेण परां गतिं यान्तीत्यत्र किं चित्रम् । अतस्त्वमिमं मर्त्यलोकं अनित्यं नश्वरं असुखं सुखलेशहीनं प्राप्य मां परमात्मानं भजस्व । लोकान्तरे भजनं न भविष्यतीत्यर्थः । तथाच श्रुतिः—'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती

४ मधुसूदनीव्याख्या ।

तिदुराचारोऽपि प्राणसंकटमापन्नोऽपि सुदुर्लभमयोग्यः सन्प्रार्थयमानोऽपि अतिमूढोऽशरणोऽपि न प्रणश्यति किंतु कृतार्थ एव भवतीति । दृष्टान्ताश्चाजामिलप्रह्लादध्रुवगजेन्द्रादयः प्रसिद्धा एव । शास्त्रं च 'न वासुदेवभक्तानामशुभं विद्यते क्वचित्' इति ॥ ३१ ॥ एवमागन्तुकदोषदुष्टानां भगवद्भक्तिप्रभावान्निस्तारमुक्त्वा स्वाभाविकदोषदुष्टानामपि तदाह—हि निश्चितं हे पार्थ, मां व्यपाश्रित्य शरणमागत्य येऽपि स्युः पापयोनयोऽन्त्यजास्तिर्यञ्चो वा जातिदोषेण दुष्टाः, तथा वेदाध्ययनादिशून्यतया निकृष्टाः स्त्रियो वैश्याः कृष्यादिमात्ररताः । तथा शूद्राः जातितोऽध्ययनाद्यभावेन च परमगत्ययोग्यास्तेऽपि यान्ति परां गतिम् । अपिशब्दात्प्रागुक्तदुराचारा अपि ॥ ३२ ॥ एवं चेत्—पुण्याः सदाचारा उत्तमयोनयश्च ब्राह्मणास्तथा राजर्षयः सूक्ष्मवस्तुविवेकिनः

५ भाष्योत्कर्षदीपिका ।

कुन्ती इन्द्रादिसंसर्गं कृत्वापि मद्भक्तिमहिम्ना सर्वोत्तमा सतीत्वेन परिगणिता नाधर्मसंबन्धेन नाशयोग्या तथेति कौन्तेयेति संबोधनस्य गूढाभिप्रायः ॥ ३१ ॥ किंच हे पार्थ, येऽपि पापं योनिर्येषां ते पापयोनयः पापजन्मानस्तेऽपि मां वासुदेवं व्यपाश्रित्य ईश्वर एव भक्त्या प्रसादितोऽस्माकमुद्धर्तेत्याश्रयत्वेन गृहीत्वा परां प्रकृष्टां गतिं यान्ति गच्छन्ति । के ते पापयोनय इत्यत आह—**स्त्रियो वैश्यास्तथा शूद्रा इति** । तत्र स्त्रीशूद्राणां वेदाध्ययनादावनधिकृतानां पापबाहुल्याल्लब्धस्त्रीशूद्रजन्मनां

६ श्रीधरीव्याख्या ।

कुतर्ककर्कशवादिनो नैतन्मन्येरन्निति शङ्काव्याकुलचित्तमर्जुनं प्रोत्साहयति । हे कौन्तेय, पटहकाहलादिमहाघोषपूर्वकं विवदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु । कथं, मे परमेश्वरस्य भक्तः सुदुराचारोऽपि न प्रणश्यति अपितु कृतार्थ एव भवतीति । ततश्च ते त्वत्प्रौढिविजृम्भाद्विध्वंसितकुतर्का निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन् ॥ ३१ ॥ आचारभ्रष्टं मद्भक्तिः पवित्रीकरोतीति किमत्र चित्रम्, यतो मद्भक्तिर्दुष्कुलानप्यनधिकारिणोऽपि संसारान्मोचयतीत्याह—**मां हीति** । येऽपि पापयोनयः स्युः निकृष्टजन्मानोऽन्त्यजादयो भवेयुः, येऽपि वैश्याः केवलं कृष्यादिनिरताः, स्त्रियः, शूद्रादयश्चाध्ययनादिरहिताः, तेऽपि मां व्यपाश्रित्य संसेव्य परां गतिं यान्ति । हि निश्चितम् ॥ ३२ ॥ यदेवं तदा सत्कुलाः सदाचाराश्च मद्भक्ताः परां गतिं यान्तीति किं वक्तव्यमित्याह—**किमिति** । पुण्याः सुकृतिनो ब्राह्मणाः । तथा राजानश्च ते ऋषयश्च क्षत्रियाः । एवंभूताः परां गतिं यान्तीति किं वक्त-

७ अभिनवगुप्ताचार्यव्याख्या ।

यमर्थो भगवत्प्रतिज्ञातत्वात्सुष्ठुतमां दृढो भवति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ मां हीति । पापयोनयः पशुपक्षिसरीसृपादयः, स्त्रिय इत्यज्ञाः, वैश्या इति कृष्यादिकर्मान्तररताः, शूद्रा इति कारुत्वेन वैदिकक्रियानधिकृताः परतन्त्रवृत्तयश्च तेऽपि मदाश्रिता मामेव यजन्ते

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

१ श्रीमच्छांकरभाष्यम् ।

**लोकं मनुष्यलोकं प्राप्य पुरुषार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम् ॥ ३३ ॥ कथम्—मन्मना इति । मयि मनो यस्य तव स त्वं मन्मना भव । तथा मद्भक्तो भव । मद्याजी मद्यजन-**

२ आनन्दगिरिव्याख्या ।

मनुष्यदेहातिरिक्तेषु पश्वादिदेहेषु भगवद्भजनयोग्यताभावात्प्राप्ते मनुष्यत्वे तद्भजने प्रयतितव्यमित्याह—**दुर्लभमिति** ॥ ३३ ॥ भगवद्भक्तेरित्थंभावं पृच्छति—**कथमिति** । ईश्वरभजन इतिकर्तव्यतां दर्शयति—**मन्मना इति** । एवं भगवन्तं भजमानस्य मम किं स्यादित्याशङ्क्याह—**मामेवेति** । समाधाय भगवत्येवेति शेषः । एवमात्मानमित्येतद्विवृ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विनष्टिः' इति ॥ ३३ ॥ भजनप्रकारं दर्शयति—**मन्मना इति** । मय्येव मनो यस्य न पुत्रादौ स मन्मनाः । ममैव भक्तो न राजादेर्धनाद्यर्थं स मद्भक्तः । मद्याजी मदर्थमेव यजते न स्वर्गाद्यर्थं स मद्याजी तादृशो भव । मामेव नमस्कुरु शरणं व्रज नत्वन्यान् । एवमनेन प्रकारेण युक्त्वा योगं कृत्वा मामेवात्मानं सर्वान्तरं एष्यसि प्राप्स्यसि ।

४ मधुसूदनीव्याख्या ।

क्षत्रिया मम भक्ताः परां गतिं यान्तीति किं पुनर्वाच्यम् । अत्र कस्यचिदपि संदेहाभावादित्यर्थः । यतो मद्भक्तेरीदृशो महिमा अतो महता प्रयत्नेनेमं लोकं सर्वपुरुषार्थसाधनयोग्यमतिदुर्लभं च मनुष्यदेहमनित्यमाशुविनाशिनमसुखं गर्भवासाद्यनेकदुःख-बहुलं लब्ध्वा यावदयं न नश्यति तावदतिशीघ्रमेव भजस्व मां शरणमाश्रयस्व । अनित्यत्वादसुखत्वाच्चास्य विलम्बं सुखार्थ-मुद्यमं च मा कार्षीस्त्वं च राजर्षिरतो मद्भजनेनात्मानं सफलं कुरु । अन्यथा ह्येतादृशं जन्म निष्फलमेव ते स्यादित्यर्थः ॥ ३३ ॥ भजनप्रकारं दर्शयन्नुपसंहरति—राजभक्तस्यापि राजभृत्यस्य पुत्रादौ मनस्तथा स तन्मना अपि न तद्भक्त

५ भाष्योत्कर्षदीपिका ।

पापयोनित्वं स्पष्टमेव । वैश्या अपि पूर्वजन्मनि ब्राह्मणाः क्षत्रिया वा पापकर्मणा वैश्ययोनिमापन्नाः कृष्यादिरता ग्राह्याः । ननु येऽपि स्युः पापयोनयोऽन्त्यजास्तिर्यञ्चो वा जातिदोषेण दुष्टाः तथा स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिमित्याचार्यैः कुतो न व्याख्यातमिति चेदुच्यते । निकृष्टा अपि मां व्यपाश्रित्य परां गतिं यान्ति किं पुनरुत्कृष्टा इति ह्यर्थोऽत्र विवक्षितः । तत्र पापनिबन्धना निकृष्टता पुण्यनिमित्ता चोत्कृष्टता । तथाच स्त्रियादीनां निकृष्टत्वेन पापयोनित्वावश्यकत्वेनेदमेव पापयोनय इति-पदं स्त्रियादौ संबध्यते । अन्यथा पापयोनयोऽन्त्यजादयोऽपि ये स्युस्तेऽपि मामुपाश्रित्य परां गतिं यान्तीत्येतावतैव निर्वाहे स्त्रिया-द्युपादानस्य वैयर्थ्यं स्यादिति दिक् । त्वं तु मत्पैतृष्वस्रेयत्वादत्युत्कृष्ट इति सूचयन्त्संबोधयति पार्थेति ॥ ३२ ॥ किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयः शमादिसंपन्नाः तथा पुण्ययोनयो राजानश्च ते ऋषयः सूक्ष्मदर्शिनो मद्भक्ताः क्षत्रियाः मां व्यपाश्रित्य परां गतिं यान्तीति किमु वक्तव्यमित्यर्थः । यस्मान्मद्भजनमेव परमपुरुषार्थसाधनं अतोऽनित्यमसुखमिमं मनुष्यलोकं पुरुषार्थसाधनं प्राप्य मां वासुदेवं परमात्मानं भजस्व । अनित्यमित्यनेन कालान्तरे त्वद्भजनं करिष्यामीति वारितम् । सुखवर्जितमिति तद्भजनेन सुखत्यागो भविष्यतीति । इममित्यनेन राजर्षिदेहं मत्संनिधियोग्यमतिदुर्लभमित्युक्तम् ॥ ३३ ॥ भजनप्रकारमाह—मन्मना भव मयि परमेश्वरे एव मनो यस्य न स्त्र्यादौ स तथा भव । मम भक्तो नतु भूतादेः । तथा मद्यजनशीलो भव नत्विन्द्रादेः । मामेव

६ श्रीधरीव्याख्या ।

व्यमित्यर्थः । अतस्त्वमिमं राजर्षिरूपं लोकं देहं प्राप्य लब्ध्वा मां भजस्व । किंच अनित्यमध्रुवमसुखं सुखरहितमिमं मर्त्यलोकं प्राप्या-नित्यत्वाद्विलम्बमकुर्वन्, असुखत्वाच्च सुखार्थोद्यमं हित्वा मामेव भजस्वेत्यर्थः ॥ ३३ ॥ भजनप्रकारं दर्शयन्नुपसंहरति—**मन्मना इति** । मय्येव मनो यस्य स मन्मनास्त्वं भव । तथैव ममैव भक्तः मत्सेवको भव । मद्याजी मद्यजनशीलो भव । मामेव च नम-

७ अभिनवगुप्ताचार्यव्याख्या ।

गजेन्द्रमोक्षणादीनि हि चरितानि परमकारुणिकस्य भगवतः सहस्रशः श्रूयन्ते किमङ्ग पुनरेतद्विपरीतवृत्तयः । केचिदाचक्षते द्विजराजन्यप्रशं-सापरमेतद्वाक्यं ननु स्त्र्यादिष्वपवर्गप्राप्तितात्पर्येणेति । ते भगवतः सर्वानुग्राहिणीं शक्तिं मितविषयतया खण्डयन्तः तथा परमेश्वरस्य परमकृपालुत्वमसहमानाः 'न मे द्वेष्योऽस्ति न प्रियः', 'अपि चेत्सुदुराचारः' इत्यादीन्यन्यानि चैवंप्रकारस्फुटार्थप्रतिपादकानि वाक्यानि विरोधयन्तो निरतिशययुक्तिप्रपञ्चसाधिताद्वैतभगवत्तत्त्वं भेदभङ्गबलादेवानयन्तोऽन्यांश्चागमविरोधानचेतयमानाः कथमिदं कथ-

१ श्रीधरः. २ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम् ।

शीलो भव । मामेव च नमस्कुरु मामेवेश्वरमेष्यस्यागमिष्यसि । युक्त्वा समाधाय चित्तम् । एवमात्मानमहं हि सर्वेषां भूतानामात्मा परा च गतिः परमयनं तं मामेवंभूतमेष्यसीत्यतीतेन पदेन संबन्धः । मत्परायणः सन्नित्यर्थः ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशंकरभगवत्पूज्यपादकृतौ श्रीमद्भगवद्गीताभाष्ये राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

२ आनन्दगिरिव्याख्या ।

णोति—अर्हहीति । अहमेव परमयनं तवेति मत्परायणस्तथाभूतः सन्मामेवात्मानमेष्यसीति संबन्धः । तदेवं मध्यमानां ध्येयं निरूप्य नवमेनाधमानामाराध्याभिधानमुखेन निजेन पारमार्थिकेन रूपेण प्रत्युक्तेन ज्ञानं परमेश्वरस्य परमाराधनमित्यभिदधता सोपाधिकं तत्पदवाच्यं निरुपाधिकं च तत्पदलक्ष्यं व्याख्यातम् ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ नवमोऽध्यायः ॥ ९ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अभेदेन घटाकाश इव महाकाशम् । यतो मत्परायणः अहमेव सर्वोपाधिशून्यश्चिदात्मा परं सर्वोत्कृष्टमयनं प्राप्यं यस्य स मत्परायणः । तथाच श्रूयते 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति ॥ ३४ ॥

इति नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे नवमोऽध्यायः ॥ ९ ॥

४ मधुसूदनीव्याख्या ।

इत्यत उक्तं मन्मना भव मद्भक्त इति । तथा मद्याजी मत्पूजनशीलो मां नमस्कुरु मनोवाक्कायैः । एवमेभिः प्रकारैर्मत्परायणो मदेकशरणः सन्नात्मानमन्तःकरणं युक्त्वा मयि समाधाय मामेव परमानन्दघनं स्वप्रकाशं सर्वोपद्रवशून्यमभयमेष्यसि प्राप्स्यसि ॥ ३४ ॥

श्रीगोविन्दपदारविन्दमकरन्दास्वादशुद्धाशयाः संसाराम्बुधिमुत्तरन्ति सहसा पश्यन्ति पूर्णं महः ।
वेदान्तैरवधारयन्ति परमं श्रेयस्त्यजन्ति भ्रमं द्वैतं स्वप्नसमं विदन्ति विमलां विन्दन्ति चानन्दताम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

५ भाष्योत्कर्षदीपिका ।

च नमस्कुरु नतु मद्व्यतिरिक्तबुद्ध्यान्यान् । तथाचैवमात्मानमन्तःकरणं समाधाय मद्भजनप्रकारेण मत्परायणः सन्मामेवैष्यसि प्राप्स्यसीत्यर्थः । एवमुक्तप्रकारं भक्तियोगं विधाय आत्मानं समस्तभूतप्रत्यगात्माभिन्नपरमात्मानं मामेवैष्यसीति वा संबन्धः । तदनेन नवमाध्यायेन तत्पदलक्ष्यं ज्ञेयं ब्रह्म निरूपयता तदुपायभूतं भगवद्भजनमत्युत्तमफलदमतिसुलभं पापजन्मनामप्युद्धारकमत एवावश्यकमिति दर्शितम् ॥ ३४ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां नवमोऽध्यायः ॥ ९ ॥

६ श्रीधरीव्याख्या ।

स्कुरु । एवमेभिः प्रकारैर्मत्परायणः सन्नात्मानं मनो मयि युक्त्वा समाधाय मामेव परमानन्दरूपमेष्यसि प्राप्स्यसि ॥ ३४ ॥

निजमैश्वर्यमाश्चर्यं भक्तेश्चाद्भुतवैभवम् । नवमे राजगुह्याख्ये कृपयाऽवोचदच्युतः ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां नवमोऽध्यायः ॥ ९ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

मिदमिति पर्यनुयुज्यमाना यदि परमन्तर्गर्भीकृतजात्यादिमहाग्रहगृहीताविष्टान्तःकरणा मात्सर्यावहितथलज्जाजिह्मीकृतावाङ्मुखहृदयः समग्रस्य जनस्यासत्प्रलापिन इति हास्यरसविषयभावमात्मन्यारोपयन्ति यत्पूर्वैव व्याख्या सर्वस्य करोति शिवम् ॥ ३२ ॥ ३३ ॥ ३४ ॥

अत्र संग्रहश्लोकः—अद्वैते ब्रह्मणि परा सर्वानुग्रहशालिनी । शक्तिर्विजृम्भते तेन यतनीयं तदाप्तये ॥

इति श्रीमद्राजानकाचार्याभिनवगुप्तविरचिते श्रीभगवद्गीतार्थसंग्रहे नवमोऽध्यायः ॥ ९ ॥



# दशमोऽध्यायः ।

## श्रीभगवानुवाच ।

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

### १ श्रीमच्छांकरभाष्यम् ।

**सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च, अथेदानीं येषु येषु भावेषु चिन्त्यो भगवांस्ते ते भावा वक्तव्याः । तत्त्वंच भगवतो वक्तव्यमुक्तमपि दुर्विज्ञेयत्वादित्यतो ( भगवानुवाच )—भूय इति । भूय एव भूयः पुनर्हे महाबाहो, शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचो**

### २ आनन्दगिरिव्याख्या ।

अध्यायद्वये सिद्धमर्थं संक्षेपतोऽनुभाषते—**सप्तम इति** । तत्त्वं सोपाधिकं निरुपाधिकं च । विभूतयः सविशेषनिर्विशेषरूपप्रतिपत्त्युपयोगिन्यः । उत्तराध्यायस्याध्यायद्वयेन संबन्धं वदन्नध्यायान्तरमवतारयति—**अथेति** । वक्तव्याः सविशेषध्याने निर्विशेषप्रतिपत्तौ च शेषत्वेनेति शेषः । ननु सविशेषं निर्विशेषं च भगवतो रूपं प्रागेव तत्र तत्रोक्तं तत्किमिति पुनरुच्यते तत्राह—**उक्तमपीति** । यद्यपि तत्र तत्र तत्त्वमुक्तं तथापि पुनर्वक्तव्यं दुर्विज्ञेयत्वादिति यतो मन्यतेऽत इति योजना । प्रकृष्टत्वं वचसः स्पष्टयति—**निरतिशयेति** । तदेव वचो विशिनष्टि—

### ३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सप्तमे त्वंपदवाच्योऽर्थो निरूपितः, तदुपासनाच्च क्रममुक्तिरित्यष्टमे प्रोक्तं, नवमे तत्पदलक्ष्यार्थ उक्तस्तत्प्राप्तये च विश्वतोमुखं सर्वत्र भगवद्भावभावनात्मकं भगवद्भजनमुक्तम्, तद्रागद्वेषकलुषितमनसामशक्यमिति मन्वानो भगवांस्तत्सिद्धये स्वविभूतीः केषुचिदेव पदार्थेषु भगवद्बुद्धिविधानार्थास्तावद्दर्शयति दशमे । तत्फलभूतं विश्वतोमुखस्योपासनं तेन च विश्वरूपदर्शनमेकादशे । द्वादशे पुनस्तत्पदलक्ष्यस्याव्यक्तस्योपासनं तदुपासकलक्षणानि चोक्त्वा उपासनाकाण्डं तत्पदार्थशोधनार्थं समापयिष्यति तत्र वात्सल्यात्स्वयमेव श्रीभगवानुवाच—**भूय एवेति** । हे महाबाहो, भूयः प्रागुक्तमपि पुनर्मे परमं निरतिशयवस्तुनः प्रकाशकं वचः शृणु । प्रीयमाणाय अमृतपानादिवन्मद्वचनात्प्रीतिमनु-

### ४ मधुसूदनीव्याख्या ।

यद्राजविद्या किल राजगुह्यं पवित्रमेकं निजरूपरूपम् । येनोपदिष्टं श्रुतिवाक्यमाद्यं तं काशिराजं गुरुराजमीडे ॥

एवं सप्तमाष्टमनवमैस्तत्पदार्थस्य भगवतस्तत्त्वं सोपाधिकं निरुपाधिकं च दर्शितं, तस्य च विभूतयः सोपाधिकस्य ध्याने निरुपाधिकस्य ज्ञाने चोपायभूताः 'रसोऽहमप्सु कौन्तेय' इत्यादिना सप्तमे, 'अहं क्रतुरहं यज्ञः' इत्यादिना नवमे च सङ्क्षेपेणोक्ताः । अथेदानीं तासां विस्तरो वक्तव्यो भगवतो ध्यानाय, तत्त्वमपि दुर्विज्ञेयत्वात्पुनस्तस्य वक्तव्यं ज्ञानायेति दशमोऽध्याय आरभ्यते । तत्र प्रथममर्जुनं प्रोत्साहयितुं श्रीभगवानुवाच—भूयएव पुनरपि हे महाबाहो, शृणु मे मम परमं प्रकृष्टं वचः ।

### ५ भाष्योत्कर्षदीपिका ।

सप्तमेऽध्यायेऽष्टमे च भगवतस्तत्त्वं सोपाधिकं विभूतयः सविशेषबोधोपयोगिन्यः प्रकाशिताः, नवमे च तत्त्वं निरुपाधिकं विभूतयो निर्विशेषबोधोपयोगिनः । अथेदानीं सविशेषध्याने निर्विशेषज्ञाने चोपायभूता येषु येषु भावेषु चिन्त्यः परमेश्वरस्ते ते भावा वक्तव्याः, तत्त्वं च यद्यप्युक्तं तथापि दुर्विज्ञेयत्वात्पुनरपि वक्तव्यमिति मन्यमानो भगवानुवाच—**भूय इति** । भूयएव पुनरपि हे महाबाहो, मे मम परमं प्रकृष्टं वचो वचनं शृणु । वचसः प्रकृष्टत्वं च प्रकृष्टवस्तुप्रकाशकत्वेन यत् परमं वचस्ते तुभ्यं अहं वक्ष्यामि ।

### ६ श्रीधरीव्याख्या ।

उक्ताः संक्षेपतः पूर्वं सप्तमादौ विभूतयः । दशमे ता वितन्यन्ते सर्वत्रेश्वरदृष्टये ॥ १ ॥ एवं तावत्सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयं परमेश्वररूपं निरूपितम् । तद्विभूतयश्च सप्तमे 'रसोऽहमप्सु कौन्तेय' इत्यादिना संक्षेपतो दर्शिताः । अष्टमे च 'अधियज्ञोऽहमेवात्र' इत्यादिना, नवमे च 'अहं क्रतुरहं यज्ञः' इत्यादिना । अथेदानीं ता एव विभूतीः प्रपञ्चयिष्यन्, स्वभक्तेश्चावश्यंकरणीयत्वं वर्णयिष्यन् श्रीभगवानुवाच—**भूय एवेति** । महान्तौ युद्धादिस्वधर्मानुष्ठाने महत्परिचर्यायां वा कुशलौ बाहू यस्य हे महाबाहो, भूयएव पुनरपि

### ७ अभिनवगुप्ताचार्यव्याख्या ।

प्राक्तनैर्नवभिरध्यायैर्य एवार्थो लक्षितः स एव प्रतिपदपाठैरस्मिन्नध्याये प्रतायते । तथा चाह—भूय एवेति । उक्तमेवार्थं विस्पष्टीकर्तुं पुनः कथ्यमानं शृण्विति । अर्जुनोऽप्येवमेवाभिधास्यति भूयः कथयेतीत्यध्यायतात्पर्यम् । शिष्टं निगदव्याख्यातमिति किं पुनरुक्तेन ।

**न मे विदुः सुरगणाः प्रभवं न महर्षयः।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**
**यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम्।

वाक्यम्। यत्परमं ते तुभ्यं प्रीयमाणाय मद्वचनात्प्रीयसे त्वमतीवामृतमिव पिबंस्ततो वक्ष्यामि हितकाम्यया हितेच्छया ॥ १ ॥ किमर्थमहं वक्ष्यामीत्यत आह— न म इति। मे विदुर्न जानन्ति सुरगणाः ब्रह्मादयः। किं ते न विदुः, मम प्रभवं प्रभावं प्रभुशक्त्यतिशयम्, अथवा प्रभवं प्रभवनमुत्पत्तिम्। नापि महर्षयो भृग्वादयो विदुः। कस्मात्ते न विदुरित्युच्यते। अहमादिः कारणं हि यस्माद्देवानां महर्षीणां च सर्वशः सर्वप्रकारैः ॥ २ ॥ किंच—यो मामिति। यो मामजमनादिं च यस्मादहमादिर्देवानां महर्षीणां च न ममान्य आदिर्विद्यतेऽतोऽहमजोऽनादिश्चानादित्वमजत्वे हेतुस्तं मामजमनादिं

२ आनन्दगिरिव्याख्या।

यत्परममिति। सकृदुक्तेरर्थसिद्धेरसकृदुक्तिरनर्थिकेत्याशङ्क्याह—प्रीयमाणायेति। ततो वक्ष्यामि तुभ्यमिति पूर्वेण संबन्धः। हितं दुर्विज्ञेयं तत्त्वज्ञानम् ॥ १ ॥ कश्चिदन्योऽपि परमं वचो मह्यं वक्ष्यति तेन च मम तत्त्वज्ञानं भविष्यत्यतो भगवद्वचनमकिंचित्करमिति शङ्कित्वा परिहरति—किमर्थमित्यादिना। इन्द्रादयो भृग्वादयश्च भगवत्प्रभावं न विदन्तीत्यत्र प्रश्नपूर्वकं हेतुमाह—कस्मादिति। निमित्तत्वेनोपादानत्वेन च यतो देवादीनां भगवानेव हेतुरतस्तद्विकारास्ते न तस्य प्रभावं विदुरित्यर्थः ॥ २ ॥ इतश्च कश्चिदेव भगवत्प्रभावं वेत्तीत्याह—किंचेति। कोऽसौ प्रभावो भगवतो यं बहवो न विदुरित्यपेक्षायां पारमार्थिकं प्रभावं तद्धीफलं च कथयति—यो

३ नीलकण्ठव्याख्या (चतुर्धरी)।

भवते वक्ष्यामि। हितकाम्यया तव हितेच्छया ॥ १ ॥ दुर्ज्ञेयत्वाच्च मत्स्वरूपस्याहं त्वां ब्रवीमीत्याह—न मे इति। प्रभवं प्रकृष्टं भवमैश्वर्यं वियदादिसृष्टिसामर्थ्यं न विदुः। तत्र हेतुराह—अहमिति। अयं भावः देहोत्पत्त्यनन्तरं हि देवादीनां बुद्ध्यादिलाभो न चार्वाचीनैर्बुद्ध्यादिभिः स्वोत्पत्तिप्राक्कालीनोऽर्थः परिच्छेत्तुं शक्यत इति। पदार्थः स्पष्टः ॥ २ ॥ कस्तर्हि त्वां वेत्तीत्यत आह—य इति। योऽसंमूढः स मां वेत्ति। स एव सर्वपापैः प्रमुच्यत इति संबन्धः।

४ मधुसूदनीव्याख्या।

यत्ते तुभ्यं प्रीयमाणाय मद्वचनादमृतपानादिव प्रीतिमनुभवते वक्ष्याम्यहं परमाप्तस्तव हितकाम्ययेष्टप्राप्तीच्छया ॥ १ ॥ प्राग्बहुधोक्तमेव किमर्थं पुनर्वक्ष्यसीत्यत आह—प्रभवं प्रभावं प्रभुशक्त्यतिशयं, प्रभवनमुत्पत्तिमनेकविभूतिभिराविर्भावं वा। सुरगणा इन्द्रादयो महर्षयश्च भृग्वादयः सर्वज्ञा अपि न मे विदुः। तेषां तदज्ञाने हेतुमाह—अहं हि यस्मात्सर्वेषां देवानां महर्षीणां च सर्वशः सर्वैः प्रकारैरुत्पादकत्वेन बुद्ध्यादिप्रवर्तकत्वेन च निमित्तत्वेनोपादानत्वेन चेति वा कारणम्। अतो मद्विकारास्ते मत्प्रभावं न जानन्तीत्यर्थः ॥ २ ॥ महाफलत्वाच्च कश्चिदेव भगवतः प्रभावं वेत्तीत्याह—सर्वकारणत्वान्न विद्यते आदिः कारणं यस्य

५ भाष्योत्कर्षदीपिका।

कुत इत्यतआह। प्रीयमाणाय यतस्त्वं मद्वचनं शृण्वन्नमृतमिव पिबन्नत्यन्तं प्रीयसेऽतस्तव हितकाम्यया हितकामनया यद्वक्ष्यामि तच्छृणिवत्यर्थः। श्रुत्वा च महाबाहुत्वं सार्थकं कुर्विति संबोधनाशयः ॥ १ ॥ ननु किमर्थं वक्ष्यसि त्वया वक्ष्यमाणस्य सुरादिभिर्ज्ञातत्वात्तत एव ममापि ज्ञानसंभवादितिचेत्तत्राह—नेति। मे मम प्रभवं प्रभुत्वातिशयं उत्पत्तिं वा सुरगणा इन्द्रादयो न विदुः न जानन्ति। नापि भृग्वादयो महर्षयः। कुत इत्याह। हि यस्मादहं देवानां महर्षीणां च सर्वशः सर्वप्रकारैरुपादानत्वादिभिरादिः कारणं तस्मादित्यर्थः ॥ २ ॥ अजत्वेन सर्वभूतमहेश्वरत्वेन च मज्ज्ञानं केषांचिदसंमूढानां सुरादीनां भवति ननु एतावानीश्वरप्रभावः इदं परमेश्वरस्य जन्मेत्यतस्तावज्ज्ञानेन केवलं सर्वपापैः प्रमुच्यन्ते ननु प्रभववर्णने शक्ता भवन्तीत्यतः स्वप्रभवमहमेव वक्ष्यामीत्यभिप्रायेणाह—य इति। यो मामीश्वरं सर्वकारणं कारणवर्जितमतएवाजमुत्पत्तिरहितं लोकानां महान्तमीश्वरं निरति-

६ श्रीधरीव्याख्या।

मे वचः शृणु। कथंभूतम्। परमं परमात्मनिष्ठं मद्वचनामृतेनैव प्रीतिं प्राप्नुवते ते तुभ्यं हितकाम्यया हितेच्छया यदहं वक्ष्यामि तत् ॥ १ ॥ उक्तस्यापि पुनर्वचने दुर्ज्ञेयत्वं हेतुमाह—न म इति। मे मम प्रकृष्टं भवं जन्मरहितस्यापि नानाविभूतिभिराविर्भावं सुरगणा अपि महर्षयो भृग्वादयोऽपि न जानन्ति। तत्र हेतुः-अहं हि देवानां महर्षीणां चादिः कारणम्, सर्वशः सर्वप्रकारैरुत्पादकत्वेन बुद्ध्यादिप्रवर्तकत्वेन च। अतो मदनुग्रहं विना मां केऽपि न जानन्तीत्यर्थः ॥ २ ॥ एवंभूतात्मज्ञाने फलमाह—यो मामिति।

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥ ४ ॥

१ श्रीमच्छांकरभाष्यम् ।

च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरं तुरीयमज्ञानतत्कार्यवर्जितमसंमूढः संमोहवर्जितः स मर्त्येषु मनुष्येषु सर्वपापैः सर्वैः पापैर्मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोक्ष्यते ॥ ३॥ इतश्चाहं महेश्वरो लोकानां—बुद्धिरिति । बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यम् । तद्वन्तं बुद्धिमानिति हि वदन्ति । ज्ञानमात्मादिपदार्थानामवबोधः । असंमोहः प्रत्युत्पन्नेषु बोद्धव्येषु विवेकपूर्विका प्रवृत्तिः क्षमा आक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता । सत्यं यथादृष्टस्य यथाश्रुतस्य चात्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोच्चार्यमाणा वाक्सत्यमुच्यते । दमो बाह्येन्द्रियोपशमः । शमोऽन्तःकरणस्य । सुखमाह्लादः । दुःखं संतापः । भव उद्भवोऽभावस्तद्विपर्ययः । भयं च त्रासोऽभयमेव च

२ आनन्दगिरिव्याख्या ।

मामिति । पदद्वयापौनरुक्त्यमाह—अनादित्वमिति ॥ ३ ॥ भगवतो लोकमहेश्वरत्वे हेत्वन्तरमाह—इतश्चेति । मुमुक्षुभिराराध्यत्वसिद्धये बन्धमोक्षसाधनं पुरस्कृत्याशेषजगत्प्रकृत्यधिष्ठातृत्वलक्षणं सोपाधिकं भगवत्प्रभावमभिधत्ते—बुद्धिरिति । सूक्ष्मादीत्यादिशब्देन सूक्ष्मतरः सूक्ष्मतमश्चार्थो गृह्यते । उक्तं सामर्थ्यं बुद्धिरित्यस्मिन्नर्थे प्रसिद्धिं प्रमाणयति—तद्वन्तमिति । आत्मादीति । तदवबोधवन्तं हि ज्ञानिनं वदन्ति । अन्तःकरणस्योपशमो विषयेभ्यो व्यावृ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जडाजडयोर्बुद्ध्यात्मनोरेकीभावेनान्योन्याध्यासलक्षणेन मूढः संमूढस्तद्विपरीतोऽसंमूढस्तत्त्वज्ञानेन बाधिताध्यासः स एवात्मवित्त्वादितरस्य जनिमनुभवन् मां प्रत्यगात्मानं लोकमहेश्वरमनादिं आदिः कारणं तच्छून्यमत एवाजमजातं वेत्ति स सर्वैः कृतैः क्रियमाणैर्वा पापैः प्रमुच्यते मर्त्येषु मध्ये ॥ ३ ॥ मम महेश्वरत्वादेव मत्तो बुद्ध्यादयो भवन्तीत्याह—बुद्धिरिति । बुद्धिरन्तःकरणस्य सूक्ष्मार्थावबोधने सामर्थ्यम्, ज्ञानमात्मानात्मादिपदार्थावबोधः । असंमोहः प्रत्युत्पन्नेषु बोद्धव्येष्वव्याकुलतया विवेकपूर्विका प्रतिपत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता । सत्यं प्रमाणेनावगतस्यार्थस्य यथार्थत्वेन भाषणं । दमो बाह्येन्द्रियनियमः । शमो मनोनिग्रहः । सुखमाह्लादः । दुःखं तापः । भव उत्पत्तिः । भावः सत्ता अभावस्तद्विपर्ययः । भयं त्रासः । अभयमेव च तद्विपरीतम् ॥ ४ ॥ अहिंसा

४ मधुसूदनीव्याख्या ।

तमनादिं अनादित्वादजं जन्मशून्यं लोकानां महान्तमीश्वरं च मां यो वेत्ति स मर्त्येषु मनुष्येषु मध्ये असंमूढः सन्मोहवर्जितः सर्वैः पापैर्मतिपूर्वकृतैरपि प्रमुच्यते प्रकर्षेण कारणोच्छेदात्तत्संस्काराभावरूपेण मुच्यते मुक्तो भवति ॥ ३ ॥ आत्मनो लोकमहेश्वरत्वं प्रपञ्चयति—बुद्धिरन्तःकरणस्य सूक्ष्मार्थविवेकसामर्थ्यम् । ज्ञानमात्मानात्मसर्वपदार्थावबोधः । असंमोहः प्रत्युत्पन्नेषु बोद्धव्येषु कर्तव्येषु वाऽव्याकुलतया विवेकेन प्रवृत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा निर्विकारचित्तता । सत्यं प्रमाणेनावबुद्धस्यार्थस्य तथैव भाषणम् । दमो बाह्येन्द्रियाणां स्वविषयेभ्यो निवृत्तिः । शमोऽन्तःकरणस्य सा । सुखं धर्मासाधारणकारणकमनुकूलवेदनीयम् । दुःखमधर्मासाधारणकारणकं प्रतिकूलवेदनीयम् । भवः उत्पत्तिः । भावः सत्ता । अभावोऽसत्तेति

५ भाष्योत्कर्षदीपिका ।

शयैश्वर्यवन्तं वेत्ति परमात्मानादित्वेनाजः सर्वलोकमहेश्वर इति यो जानाति स मर्त्येषु असंमूढः । संमोहो नाम देहेन्द्रियादिविलक्षण ईश्वरादभिन्नोऽकर्ताऽभोक्ता चाहमिति स्वस्वरूपास्फुरणं तेन मत्कृपया रहितः सर्वैः ज्ञाताज्ञातैः संचितक्रियमाणैः प्रकर्षेणाविद्यानिवृत्तिपूर्वकमुच्यते ॥ ३ ॥ स्वस्य लोकमहेश्वरत्वं देवादिबुद्ध्यगोचरत्वेन साधितं तदेव प्रपञ्चयति । बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यम् । ज्ञानमात्मादिपदार्थावबोधः । असंमोहः प्रत्युत्पन्नेषु ज्ञातव्येषु विवेकपुरःसरा बुद्धिप्रवृत्तिः । आक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता क्षमा । प्रमाणावगतार्थस्य यथार्थभाषणं सत्यं । बाह्येन्द्रियोपशमो दमः । अन्तःकरणशान्तिः शमः । आह्लादः

६ श्रीधरीव्याख्या ।

सर्वकारणत्वादेव न विद्यते आदिः कारणं यस्य तमनादिम् । अतएवाजं जन्मशून्यं लोकानां महेश्वरं च मां यो वेत्ति स मनुष्येष्वसंमूढः संमोहरहितः सन्सर्वपापैः प्रमुच्यते ॥ ३ ॥ लोकमहेश्वरतामेव स्फुटयति—बुद्धिरिति त्रिभिः । बुद्धिः सारासारविवेकनैपुण्यम्, ज्ञानमात्मविषयम्, असंमोहो व्याकुलत्वाभावः, क्षमा सहिष्णुत्वम्, सत्यं यथार्थभाषणम्, दमो बाह्येन्द्रियसंयमः, शमोऽन्तःकरणसंयमः, सुखमनुकूलसंवेदनीयम्, दुःखं च तद्विपरीतम्, भव उद्भवः, अभावस्तद्विपरीतः, भयं त्रासः, अभयं तद्विपरीतम् । अस्य

७ अभिनवगुप्ताचार्यव्याख्या ।

संदिग्धं तु निर्णेष्यते । श्रीभगवानुवाच—भूय एवेति ॥ १ ॥ २ ॥ ३ ॥ बुद्धिरिति । असंमोह उत्साहः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥**
**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तद्विपरीतम् ॥ ४ ॥ अहिंसेति । अहिंसाऽपीडा प्राणिनाम् । समता समचित्तता । तुष्टिः संतोषः पर्याप्तबुद्धिर्लाभेषु । तप इन्द्रियसंयमपूर्वकं शरीरपीडनम् । दानं यथाशक्ति संविभागः । यशो धर्मनिमित्ता कीर्तिः । अयशस्त्वधर्मनिमित्ता कीर्तिः । भवन्ति भावा यथोक्ता बुद्ध्यादयो भूतानां प्राणिनां मत्त एवेश्वरात्पृथग्विधा नानाविधाः स्वकर्मानुरूपेण ॥ ५ ॥ किंच—महर्षय इति । महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसंबन्धिनश्चत्वारो मनवस्तथा सावर्णा इति प्रसिद्धाः । ते च मद्भावा मद्गतभावना वैष्ण-

२ आनन्दगिरिव्याख्या ।

त्तिरिति शेषः ॥ ४ ॥ यथाशक्तीति । पात्रे श्रद्धया स्वशक्तिमनतिक्रम्यार्थानां देशकालानुगुण्येन प्रतिपादनमित्यर्थः । उक्तानां बुद्ध्यादीनां साश्रयाणामीश्वरादुत्पत्तिं प्रतिजानीते—भवन्तीति । नानाविधत्वे हेतुमाह—स्वकर्मेति । कथंचिदपि तेषामात्मातिरेकेणाभावान्मत्त एवेत्युक्तम् ॥ ५ ॥ न केवलं भगवतः सर्वप्रकृतित्वमेव किंतु सर्वज्ञत्वसर्वेश्वरत्वरूपमधिष्ठातृत्वमपीत्याह—किंचेति । आद्या भृग्वादयो वसिष्ठान्ताः सर्वज्ञा विद्यासंप्रदायप्रवर्तकाः । तथेति मनूनामपि पूर्वत्वेनाद्यत्वमनुकृष्यते । के ते मनवस्तत्राह—सावर्णा इतीति । प्रसिद्धाः पुराणेषु प्रजानां पालकाः स्वयमीश्वराश्चेति शेषः । महर्षीणां मनूनां च तुल्यं विशेषणं—ते चेति । मयि सर्वज्ञे सर्वेश्वरे गता भावना येषां ते तथा । भावनाफलमाह—वैष्णवेनेति । वैष्णव्या शक्त्याधिष्ठितत्वेन ज्ञानैश्वर्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्राणिनामपीडा । समता मित्रामित्रादौ समचित्तता । तुष्टिः संतोषो लब्धे पर्याप्तबुद्धिः । तप इन्द्रियसंयमपूर्वकं शरीरपीडनम् । दानं यथाशक्ति संविभागः । यशो धर्मनिमित्ता कीर्तिः । अयशोऽधर्मनिमित्ता अकीर्तिः । एते बुद्ध्यादयो विंशतिर्भावा मत्त एव प्राणिनां भवन्ति । पृथग्विधाः प्रत्येकं नानाप्रकाराः । तत उत्तमगुणलाभायाहमेव त्वया शरणीकरणीय इति भावः ॥ ५ ॥ एतदेव शिष्टाचारप्रदर्शनेन द्रढयति—महर्षय इति । सप्त भृग्वाद्याश्चत्वारः

४ मधुसूदनीव्याख्या ।

वा । भयं च त्रासस्तद्विपरीतमभयम् । एवंच एकश्चकार उक्तसमुच्चयार्थः । अपरोऽनुक्तबुद्ध्यज्ञानादिसमुच्चयार्थः । एवेत्येते सर्वलोकप्रसिद्धा एवेत्यर्थः । मत्तएव भवन्तीत्युत्तरेणान्वयः ॥ ४ ॥ अहिंसा प्राणिनां पीडाया निवृत्तिः । समता चित्तस्य रागद्वेषादिरहितावस्था । तुष्टिर्भोग्येष्वेतावताऽलमिति बुद्धिः । तपः शास्त्रीयमार्गेण कायेन्द्रियशोषणम् । दानं देशे काले श्रद्धया यथाशक्त्यर्थानां सत्पात्रे समर्पणम् । यशो धर्मनिमित्ता लोकश्लाघारूपा प्रसिद्धिः । अयशस्त्वधर्मनिमित्ता लोकनिन्दारूपा प्रसिद्धिः । एते बुद्ध्यादयो भावाः कार्यविशेषाः सकारणकाः पृथग्विधा धर्माधर्मादिसाधनवैचित्र्येण नानाविधा भूतानां सर्वेषां प्राणिनां मत्तः परमेश्वरादेव भवन्ति नान्यस्मात् । तस्मात्किं वाच्यं मम लोकमहेश्वरत्वमित्यर्थः ॥ ५ ॥ इतश्चैतदेवमाह—महर्षयो वेदतदर्थद्रष्टारः सर्वज्ञा विद्यासंप्रदायप्रवर्तका भृग्वाद्याः सप्त पूर्वे सर्गाद्यकालाविर्भूताः । तथाच पुराणं 'भृगुं मरिचि-

५ भाष्योत्कर्षदीपिका ।

सुखम् । तापो दुःखम् । भव उत्पत्तिः । अभावो नाशः । भयं त्रासः । अभयमत्रासः ॥ ४ ॥ अहिंसा प्राणिनामपीडा । समता समचित्तता । तुष्टिः संतोषोऽलंबुद्धिः । इन्द्रियसंयमपुरःसरं शास्त्रीयं देहपीडनं तपः । देशकालानुरोधेन शक्तिमतिक्रम्य श्रद्धया पात्रेऽर्थानामर्पणं दानम् । धर्मनिदाना कीर्तिर्यशः । अधर्मनिदानाऽपकीर्तिरपयशः । एते यथोक्ता भावाः पृथग्विधा नानाप्रकारा भूतानां स्वकर्मानुसारेण मत्तएवेश्वराद्भवन्ति । अतोऽहमेव सर्वलोकमहेश्वरः सर्वैर्भोगमोक्षार्थं शरणीकरणीय इति भावः ॥ ५ ॥ स्वसामर्थ्ययुक्तानां स्वेनोत्पादितानां भृग्वादीनामपि लोकेश्वरत्वं प्रसिद्धं किं वक्तव्यं मम लोकमहेश्वरत्वमित्याह—महर्षय इति ।

६ श्रीधरीव्याख्या ।

लोकस्य मत्त एव भवन्तीत्युत्तरेणान्वयः ॥ ४ ॥ किंच—अहिंसेति । अहिंसा परपीडानिवृत्तिः, समता रागद्वेषादिराहित्यं, मित्रामित्रतुल्यता च, तुष्टिर्दैवलब्धेन संतोषः, तपः शारीरादि वक्ष्यमाणम्, दानं न्यायार्जितधनादेः सत्पात्रार्पणम्, यशः सत्कीर्तिः, अयशोऽपकीर्तिः, एते बुद्धिर्ज्ञानमित्यादयस्तद्विपरीताश्चाबुद्ध्यादयो नानाविधा भावाः प्राणिनां मत्तः सकाशादेव भवन्ति ॥ ५ ॥ किंच—महर्षय इति । सप्त महर्षयो 'भृग्वादयः सप्त ब्राह्मणा इत्येते पुराणे निश्चयं गता' इत्यादि पुराणप्रसिद्धाः । तेभ्योऽपि पूर्वेऽन्ये चत्वारो महर्षयः सनकादयः, तथा मनवः स्वायंभुवादयः मद्भावा मदीयो भावः प्रभावो येषु ते हिरण्यगर्भात्मनो ममैव मनसः संकल्प-

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**वेन सामर्थ्येनोपेता मानसा मनसैवोत्पादिता मया जाता उत्पन्नाः येषां मनूनां महर्षीणां च सृष्टिर्लोक इमाः स्थावरजङ्गमाः प्रजाः ॥ ६ ॥ एतामिति । एतां यथोक्तां विभूतिं विस्तारं योगं च युक्तिं चात्मनो घटनमथवा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योग उच्यते । मम मदीयं यो वेत्ति तत्त्वतस्तत्त्वेन यथावदित्येतत् । सोऽविकम्पेनाप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते संबध्यते ।**

२ आनन्दगिरिव्याख्या ।

वन्त इत्यर्थः । तेषां जन्मनो वैशिष्ट्यमाचष्टे—**मानसा इति** । मन्वादीनेव विशिनष्टि—**येषामिति** । विद्यया जन्मना च संततिभूता मन्वादीनामस्मिँल्लोके सर्वाः प्रजा इत्यर्थः ॥ ६ ॥ सोपाधिकं प्रभावं भगवतो दर्शयित्वा तज्ज्ञानफलमाह—**एतामिति** । बुद्ध्याद्युपादानत्वेन विविधा भूतिर्भवनं वैभवं सर्वात्मकत्वं तदाह—**विस्तारमिति ।** ईश्वरस्य तत्तदर्थसंपादनसामर्थ्यं योगस्तदाह—**आत्मन इति** । योगस्तत्फलमैश्वर्यं सर्वज्ञत्वं सर्वेश्वरत्वं च मदीयं शक्तिज्ञानलेशमाश्रित्य मन्वादयो भृग्वादयश्चेशते जानते च तदाह—**अथवेति** । यथा तौ विभूतियोगौ तथा वेदनस्य निरङ्कुशत्वं दर्शयति—**यथावदिति** । सोपाधिकं ज्ञानं निरुपाधिकज्ञाने द्वारमित्याह—**सोऽविकम्पेनेति ।**

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सनकादयश्च पूर्वे प्रसिद्धा महर्षय इति संबन्धः । तथा मनवश्चतुर्दश प्रसिद्धाः । ते सर्वे मानसा हिरण्यगर्भरूपस्य मम मनस एवोद्भूता अयोनिजा जाता उत्पन्नाः । इमाः प्रजाश्चतुर्विधा अयं लोकश्च तदाधारभूतः तदुभयं येषां यत्संबन्धि संततिर्येषां संततिरित्यर्थः । यद्वा येषामिति षष्ठी पञ्चम्यर्थे । येभ्य इमाः प्रजा अयं लोकश्च जाता इत्यर्थः । तेऽपि मद्भावा मय्येव भावो मनो येषां ते । प्रसिद्धमहिमानोऽप्येते यतो मामेवोपासतेऽतस्त्वमपि मामुपास्वेति भावः ॥ ६ ॥ उपास्तावधिकारिणमाह—**एतामिति** । एतां वक्ष्यमाणां विभूतिं योगं च विश्वतोमुखे भगवति मनःसमाधानं यस्तत्त्वतो वेत्ति सम्यगनुष्ठातुं ज्ञातुं च समर्थो भवति सोऽविकम्पेनाचलेन निर्विकल्पकेन

४ मधुसूदनीव्याख्या ।

मत्रिं च पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान् । सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः’ इति । तथा चत्वारो मनवः सावर्णा इति प्रसिद्धाः । अथवा महर्षयः सप्त भृग्वाद्याः, तेभ्योऽपि पूर्वे प्रथमाश्चत्वारः सनकाद्या महर्षयो, मनवस्तथा स्वायंभुवाद्याश्चतुर्दश मयि परमेश्वरे भावो भावना येषां ते मद्भावा मच्चिन्तनपराः । मद्भावनावशादाविर्भूतमदीयज्ञानैश्वर्यशक्तय इत्यर्थः । मानसाः मनःसंकल्पादेवोत्पन्ना नतु योनिजाः । अतो विशुद्धजन्मत्वेन सर्वप्राणिश्रेष्ठा मत्तएव हिरण्यगर्भात्मनो जाताः सर्गाद्यकाले प्रादुर्भूताः । येषां महर्षीणां सप्तानां भृग्वादीनां चतुर्णां च सनकादीनां मनूनां च चतुर्दशानां अस्मिँल्लोके जन्मना च विद्यया च सन्ततिभूता इमा ब्राह्मणाद्याः सर्वाः प्रजाः ॥ ६ ॥ एवं सोपाधिकस्य भगवतः प्रभावमुक्त्वा तज्ज्ञानफलमाह—एतां प्रागुक्तां बुद्ध्यादिमहर्ष्यादिरूपां विभूतिं विविधभावं तत्तद्रूपेणावस्थितिं

५ भाष्योत्कर्षदीपिका ।

महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसंबन्धिनो ‘भृगुं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुं । वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान्’ इत्युक्ताः ‘चत्वारो मनवस्तथा, सावर्णिस्तु मनुर्योऽसौ मैत्रेय भविता ततः । नवमो दक्षसावर्णिर्मैत्रेय भविता मनुः । एकादशश्च भविता धर्मसावर्णिको मनुः । रुद्रपुत्रस्तु सावर्णो भविता द्वादशो मनुः ॥’ इति विष्णुपुराणादौ सावर्णा इति प्रसिद्धाः । महर्षयः सप्त भृग्वादयः । तेभ्योऽपि पूर्वे प्रथमाश्चत्वारः सनकाद्या महर्षयः मनवस्तथा स्वयंभुवाद्याश्चतुर्दशेति वा । अस्मिन्पक्षे सनकाद्याश्चतुर्दशेत्यध्याहारदोषमभिप्रेत्याचार्यैरयं पक्षो न प्रदर्शितः । ते च मद्भावा मद्गतभावना मयि परमात्मनि भावना येषामतो वैष्णवेन सामर्थ्येन युक्ता मानसा मया मनसैवोत्पादिताः सन्तो जाताः उत्पन्ना यथायथं योनितोऽयोनितश्च येषां महर्षीणां मनूनां च लोके इमा विद्यया च जन्मना च सन्ततिभूताः प्रजाः स्थावरजंगमलक्षणाः ॥ ६ ॥ स्वप्रभावमुक्त्वा तज्ज्ञानफलमाह—**एतामिति** । एतां यथोक्तां विभूतिं विविधभावं विस्तारमितियावत् । परमात्मनस्तदर्थघटनसामर्थ्यं योगः यल्लेशसंबन्धेन भृग्वादयो

६ श्रीधरीव्याख्या ।

मात्राज्जाताः । प्रभावमेवाह—**येषामिति** । येषां भृग्वादीनां च सनकादीनां चेमा ब्राह्मणाद्या लोके वर्धमाना यथायथं पुत्रपौत्रादिरूपाः शिष्यादिरूपाश्च प्रजा जाता वर्तन्ते ॥ ६ ॥ यथोक्तविभूत्यादितत्त्वज्ञानस्य फलमाह—**एतामिति** । एतां भृग्वादिलक्षणां मम

१ श्रीधरः, मधुसूदनः, नीलकण्ठः.

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**
**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**नात्र संशयो नास्मिन्नर्थे संशयोऽस्ति ॥ ७ ॥ कीदृशेनाविकम्पेन योगेन युज्यत इत्युच्यते—अहमिति ।** अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिर्मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं सर्वं जगत्प्रवर्तत इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगततत्त्वार्थाः भावसमन्विता भावो भावना परमार्थतत्त्वाभिनिवेशस्तेन समन्विताः संयुक्ता इत्यर्थः ॥ ८ ॥ किंच—

२ आनन्दगिरिव्याख्या ।

उक्तेऽर्थे प्रतिबन्धाभावमाह—**नास्मिन्निति** ॥ ७ ॥ कथं तावकविभूत्यैश्वर्यज्ञानमुक्तयोगस्य हेतुरिति मत्वा पृच्छति—**कीदृशेनेति** । उक्तज्ञानमाहात्म्यात्प्रतिष्ठिता भगवन्निष्ठा सिद्ध्यतीत्याह—**उच्यत इति** । प्रभवत्यस्मादिति प्रभवः सर्वप्रकृतिः सर्वात्मेत्याह—**उत्पत्तिरिति** । सर्वज्ञात्सर्वेश्वरान्मत्तो निमित्तात्स्थितिनाशादि भवति मया चान्तर्यामिणा प्रेर्यमाणं सर्वं यथास्वं मर्यादामनतिक्रम्य चेष्टते तदाह—**मत्त इति** । इत्थं मम सर्वात्मत्वं सर्वप्रकृतित्वं सर्वेश्वरत्वं सर्वज्ञत्वं च महिमानं ज्ञात्वा मय्येव निष्ठावन्तो भवन्तीत्याह—**इत्येवमिति** । संसारासारताज्ञानवतां भगवद्भजनेऽधिकारं द्योतयति—**अवगतेति** । परमार्थतत्त्वे पूर्वोक्तरीत्या ज्ञाते प्रेमादरावभिनिवेशाख्यौ भवतस्तेन संयुक्तत्वं च भगवद्भजने भवति हेतुरित्याह—**भावेति** ॥ ८ ॥ न केवलमुक्तमेव भगवद्भजने साधनं साधनान्तरं चास्तीत्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

षष्ठाध्यायोक्तेन योगेन मद्विषयेण समाधिना युज्यते ततश्च कृतकृत्यो भवति । नात्र संशय इति प्रवृत्त्यतिशयार्थमुच्यते । भगवद्वचसि संशयासंभवात् ॥ ७ ॥ उपासनास्वरूपमाह द्वाभ्याम्—**अहमिति** । बुधः मां प्रत्यगात्मानमिति मत्वा भजन्ते इति कथम् । अहमेव सर्वस्य जगतः प्रभव उत्पत्तिः । मत्तो मदनुग्रहं प्राप्येव सर्वं बुद्ध्यादिकं स्वस्वकार्याय प्रवर्तते । अहमेव जगतः कर्तान्तर्यामी चेत्यहंग्रहेणात्मानमुपासीतेति भावः । भावसमन्विताभावनायुक्ताः । एतच्चोत्तरार्थम् ॥ ८ ॥ एवं ध्याने भावनाप्रकारमुक्त्वा व्युत्थाने तमाह—**मच्चित्ता इति** । अहमेव

४ मधुसूदनीव्याख्या ।

योगं च तत्तदर्थनिर्माणसामर्थ्यं । परमैश्वर्यमिति यावत् । मम यो वेत्ति तत्त्वतः यथावत्सोऽविकम्पेनाप्रचलितेन योगेन सम्यग्ज्ञानस्थैर्यलक्षणेन समाधिना युज्यते । नात्र संशयः प्रतिबन्धः कश्चित् ॥ ७ ॥ यादृशेन विभूतियोगयोर्ज्ञानेनाविकम्पयोगप्राप्तिस्तद्दर्शयति चतुर्भिः—अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिकारणमुपादानं निमित्तं च । स्थितिनाशादि च सर्वं मत्त एव प्रवर्तते भवति । मयैवान्तर्यामिणा सर्वज्ञेन सर्वशक्तिना प्रेर्यमाणं स्वस्वमर्यादामनतिक्रम्य सर्वं जगत्प्रवर्तते चेष्टत इति वा । इत्येवं मत्वा बुधा विवेकेनावगततत्त्वाभावेन परमार्थतत्त्वग्रहणरूपेण प्रेम्णा समन्विताः

५ भाष्योत्कर्षदीपिका ।

ज्ञानादिमन्तो भवन्ति । यद्वा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजन्यं योगशब्देनाभिधीयते । तं यस्तत्त्वतो यथावद्वेत्ति जानाति सोऽप्रकम्पेनाप्रचलितेन योगेन निरुपाधिब्रह्मसम्यग्ज्ञानलक्षणेन युज्यते युक्तो भवति । अस्मिन्नर्थे संशयो नास्ति ॥ ७ ॥ ननु कथं तावकविभूतियोगज्ञानेनाविकम्पयोगप्राप्तिस्त्वदुपासनायास्तत्प्राप्तिसाधनत्वादित्याशङ्क्य विभूतियोगज्ञानमहिम्ना प्राप्तया मदुपासनया मद्गतेनाविकम्पयोगेन युज्यते इत्याह—**अहमिति चतुर्भिः** । अहं परमात्मा वासुदेवाभिधः सर्वस्य ब्रह्मादिस्थावरान्तस्य प्रभवः प्रभवत्यस्मादिति प्रभवः प्रकृतिरभिन्ननिमित्तोपादानं मत्त एव सर्वज्ञात्सर्वेश्वरात्सर्वं स्थितिनाशक्रियाफलोपभोगलक्षणं जगत्प्रवर्तते इति मत्वा वासुदेवएव सर्वात्मा सर्वेश्वरः सर्वज्ञः सर्वोपादानं सर्वनियन्ता भजनीय इति श्रुत्वा मननेन निश्चित्य भजन्ते सेवन्ते । के ते इत्यत आह—बुधा अवगतसंसारतत्त्वाः । संसारासारज्ञानवतामेव भगवद्भजनेऽधिकार इति भावः । भावो भावना अयमेव भगवान्वासुदेवः परमार्थतत्त्वं इत्यभिनिवेशस्तेन सम्यक् युक्ताः ॥ ८ ॥ किं चैवं भजन्तीत्याह—मच्चित्ता मयि वासुदेवे चित्तं येषां

६ श्रीधरीव्याख्या ।

विभूतिं, योगं चैश्वर्यलक्षणं तत्त्वतो यो वेत्ति सोऽविकम्पेन निःसंशयेन योगेन सम्यग्दर्शनेन युक्तो भवति । नास्त्यत्र संशयः ॥ ७ ॥ यथा च विभूतियोगयोर्ज्ञानेन सम्यग्ज्ञानावाप्तिस्तद्दर्शयति—**अहमित्यादिचतुर्भिः** । अहं सर्वस्य जगतः प्रभवो भृग्वादिरूपविभूतिद्वारेणोत्पत्तिहेतुः । मत्त एव चास्य सर्वस्य 'बुद्धिर्ज्ञानमसंमोहः' इत्यादि सर्वं प्रवर्तत इति, एवं मत्वाऽवबुध्य बुधा विवेकिनो भावसमन्विताः प्रीतियुक्ता मां भजन्ते ॥ ८ ॥ प्रीतिपूर्वकं भजनमेवाह—**मच्चित्ता इति** । मय्येव चित्तं येषां ते मच्चित्ताः । मामेव गताः

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम्।

**मच्चित्ता इति। मच्चित्ता मयि चित्तं येषां ते मच्चित्ताः। मद्गतप्राणा मां गताः प्राप्ताश्चक्षुरादयः प्राणा येषां ते मद्गतप्राणाः। मय्युपसंहृतकरणा इत्यर्थः। अथवा मद्गतप्राणा मद्गतजीवना इत्येतत्। बोधयन्तोऽवगमयन्तः परस्परमन्योन्यं कथयन्तो ज्ञानबलवीर्यादिधर्मैर्विशिष्टं मां तुष्यन्ति च परितोषमुपयान्ति रमन्ति च रतिं च प्राप्नुवन्ति प्रियसङ्गत्येव ॥ ९ ॥ ये यथोक्तप्रकारैर्भजन्ते मां भक्ताः सन्तः—तेषां सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां भजतां सेवमानानां, किमर्थित्वादिना कारणेन नेत्याह—प्रीतिपूर्वकं प्रीतिः स्नेहस्तत्पूर्वकं मां भजतामित्यर्थः। ददामि प्रयच्छामि**

२ आनन्दगिरिव्याख्या।

**किंचेति**। ईश्वरात्प्रतीचः प्रागुक्तादन्यत्र चित्तप्रचाराराहित्यं भगवद्भजनोपायमाह—**मयीति**। चक्षुरादीनां भगवत्प्राप्तिस्तदगोचरत्वात्तस्येत्याशङ्क्याह—**मय्युपसंहृतेति**। भगवदतिरेकेण जीवनेऽपि नादरस्तदपि मय्येवार्पितं भक्तानामित्याह—**अथवेति**। आचार्येभ्यः श्रुत्वा वादकथया परस्परं भगवन्तं सब्रह्मचारिणो बोधयन्ति तदपि भगवद्भजनसाधनमित्याह—**बोधयन्त इति**। आगमोपपत्तिभ्यां भगवन्तमेव विशिष्टधर्माणं शिष्येभ्यो गुरवो व्यपदिशन्ति तदपि भगवद्भजनमेवेत्याह—**कथयन्त इति**। भक्तानां तुष्टिरती स्वरसतः स्यातामित्याह—**तुष्यन्तीति**। मनोरथपूर्त्या रतिप्राप्तौ कामुकसंमतमुदाहरणमाह—**प्रियेति** ॥ ९ ॥ यदुक्तं सोऽविकम्पेनेत्यादि तदर्थं भूमिकां कृत्वा तदिदानीमुदाहरति—**ये यथोक्तेति**। नित्याभियुक्तानामनवरतं भगवत्यैकाग्र्यसंपन्नानामित्यर्थः। पुत्रादिलोकत्रयहेत्वर्थित्वेन वा गर्भदासत्वेन वा प्रत्यहं जीवनोपायसिद्धये वा भजनमिति शङ्कित्वा दूषयति—**किमित्यादिना**। प्रागुक्तां ज्ञानाख्यां भक्तिं स्नेहेन कुर्वतामित्यर्थः। तेभ्योऽहं तत्त्वज्ञानं प्रयच्छामीत्याह—**ददामीति**। उक्तबुद्धिसंबन्धस्य फल-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

चित्तं येषां ते मच्चित्ताः। तथाहमेव गतो विद्यमानो येषु ते मद्गतास्तथाविधाः प्राणा इन्द्रियाणि येषां ते मद्गतप्राणाः। चित्तेनेन्द्रियैर्वा यद्गृह्यते सत्सर्वं प्रत्यगात्मा वासुदेव इति भावयन्त इत्यर्थः। इममेवार्थं परस्परं बोधयन्तः श्रुतियुक्तिप्रदर्शनेन समानानां समुदायं ज्ञापयन्तः। कथयन्तश्च शिष्यान्प्रति। तुष्यन्ति तेनैव ज्ञानेन नतु मिष्टान्नादिना। रमन्ति च तत्रैव नतु स्त्र्यादावित्यर्थः ॥ ९ ॥ उपासनायाः फलमाह—**तेषामिति**। सततयुक्तानां

४ मधुसूदनीव्याख्या।

सन्तो मां भजन्ते ॥ ८ ॥ प्रेमपूर्वकं भजनमेव विवृणोति—मयि भगवति चित्तं येषां ते मच्चित्ताः। तथा मद्गता मां प्राप्ताः प्राणाश्चक्षुरादयो येषां ते मद्गतप्राणाः, मद्भजननिमित्तचक्षुरादिव्यापारा मय्युपसंहृतसर्वकरणा वा। अथवा मद्गतप्राणा मद्भजनार्थजीवनाः। मद्भजनातिरिक्तप्रयोजनशून्यजीवना इति यावत्। विद्वद्गोष्ठीषु परस्परमन्योन्यं श्रुतिभिर्युक्तिभिश्च मामेव बोधयन्तः तत्त्वबुभुत्सुकथया ज्ञापयन्तः। तथा स्वशिष्येभ्यश्च मामेव कथयन्त उपदिशन्तश्च। मयि चित्तार्पणं तथा बाह्यकरणार्पणं तथा जीवनार्पणमेवं समानामन्योन्यं मद्बोधनं स्वन्यूनेभ्यश्च मदुपदेशनमित्येवंरूपं यन्मद्भजनं तेनैव तुष्यन्ति च। एतावतैव लब्धसर्वार्था वयमलमन्येन लब्धव्येनेत्येवंप्रत्ययरूपं संतोषं प्राप्नुवन्ति च। तेन संतोषेण रमन्ति च रमन्ते च। प्रियसङ्गमेनेवोत्तमं सुखमनुभवन्ति च। तदुक्तं पतञ्जलिना 'संतोषादनुत्तमः सुखलाभः' इति। उक्तंच पुराणे 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति। तृष्णाक्षयः संतोषः ॥ ९ ॥ ये यथोक्तेन प्रकारेण भजन्ते मां—तेषां सततं सर्वदा युक्तानां भगवत्यैकाग्रबुद्धीनां। अतएव लाभपूजाख्यात्याद्यनभिसंधाय

५ भाष्योत्कर्षदीपिका।

ते मां गताः प्राप्ताः प्राणाश्चक्षुरादयो येषां ते मय्युपसंहृतसर्वकरणाः, मद्गतजीवना इति वा। आचार्यात् श्रुत्वा वादकथया समानेषु परस्परं बोधयन्तः मां ज्ञानबलादियुक्तं शिष्येभ्यः कथयन्तः मद्भजनेनैव तुष्यन्ति संतोषमुपयान्ति तेनैव च रमन्ति रतिं प्राप्नुवन्ति न स्त्र्यादिना ॥९॥ तेषां सततयुक्तानां सततं निरन्तरमभियुक्तानाम्। किमर्थित्वादिपूर्वकं नेत्याह। प्रीतिः स्नेहस्तत्पूर्वकं भजताम्।

६ श्रीधरीव्याख्या।

प्राप्ताः प्राणा इन्द्रियाणि येषां ते मद्गतप्राणाः मदर्पितजीवना इति वा। एवंभूतास्ते बुधाः अन्योन्यं मां न्यायोपेतैः श्रुत्यादिप्रमाणैर्बोधयन्तः, बुद्ध्या च मां कथयन्तः संकीर्तयन्तः सन्तो नित्यं तुष्यन्त्यनुमोदनेन तुष्टिं यान्ति। रमन्ति च निर्वृतिं यान्ति ॥ ९ ॥ एवंभूतानां च सम्यग्ज्ञानमहं ददामीत्याह—**तेषामिति**। एवं सततयुक्तानां मय्यासक्तानां प्रीतिपूर्वकं भजतां तेषां तं बुद्धिरूपं

७ अभिनवगुप्ताचार्यव्याख्या।

मच्चित्ता इति बोधयन्तः परस्परमिति परस्परबोधनयान्योन्यबोधस्फारसंक्रमणात्सर्व एव हि प्रमातार एक ईश्वर इति वितत्यव्याख्या

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम् ।

बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगस्तं बुद्धियोगम् । येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरमात्मभूतमात्मत्वेनोपयान्ति प्रतिपद्यन्ते । के ते । ये मच्चित्तादिप्रकारैर्मां भजन्ते ॥ १० ॥ किमर्थं कस्य वा त्वत्प्राप्तिप्रतिबन्धहेतोर्नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददासीत्याकाङ्क्षायामाह—तेषामिति । तेषामेव कथं नाम श्रेयः स्यादित्यनुकम्पार्थं दयाहेतोरहमज्ञानजमविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमो नाशयाम्यात्मभावस्थ आत्मनो भावोऽन्तःकरणाशयस्तस्मिन्नेव स्थितः सन् । ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भाव-

२ आनन्दगिरिव्याख्या ।

माह—येनेति । ध्यानजन्यप्रकर्षकाष्ठागतान्तःकरणपरिणामे निरस्ताशेषविशेषभगवद्रूपप्राप्तिहेतौ बुद्धियोगे प्रश्नपूर्वकमुक्तानधिकारिणो दर्शयति—के त इति ॥ १० ॥ भगवत्प्राप्तेर्बुद्धिसाध्यत्वे सत्यनित्यत्वापत्तेस्त्वमपि भक्तेभ्यो बुद्धियोगं ददासीत्ययुक्तमिति शङ्कते—किमर्थमिति । तेषां बुद्धियोगं किमर्थं ददासीति संबन्धः । भगवत्प्राप्तिप्रतिबन्धकनाशको बुद्धियोगस्तेन नास्ति तत्प्राप्तेरनित्यत्वमित्याशङ्क्याह—कस्येति । भक्तानां तत्प्राप्तिप्रतिबन्धकं विविच्य दर्शयति—इत्याकाङ्क्षायामिति । अविवेको नामाज्ञानं ततो जातं मिथ्याज्ञानं तदुभयमेकीकृत्य तमो विवक्ष्यते । नच तन्नाशकत्वं जडस्य कस्यचित्तदन्तर्भूतस्य युक्तं तेनाहं नाशयामीत्युक्तम् । केवलचैतन्यस्य जडबुद्धिवृत्तेरिवाज्ञानाद्यनाशकत्वमाशङ्क्य विशिनष्टि—आत्मेति । तस्याशयस्तन्निष्ठो वृत्तिविशेषः । वाक्योत्थबुद्धिवृत्त्यभिव्यक्तश्चिदात्मा सहायसामर्थ्यादज्ञानादिनिवृत्तिहेतुरित्यर्थः । बुद्धीद्धबोधस्याज्ञानादिनिवर्तकत्वमुक्त्वा बोधेद्धबुद्धेस्तन्निवर्तकत्वमिति पक्षान्तरमाह—ज्ञानेति । देहाद्यव्यक्तान्तानात्मवर्गातिरिक्तवस्तुगोचरत्वमाह—विवेकेति । भगवति सदा विहितया भक्त्या तस्य प्रसादोऽनुग्रहः स एव स्नेहस्तेनासेचनद्वाराऽस्योत्पत्तिमाह—भक्तीति । मय्येव भावनायामभिनिवेशो वातस्तेन प्रेरितोऽयं जायते, नहि वातप्रेरणमन्तरेणादौ दीपस्योत्पत्तिरित्याह—मद्भावनेति । ब्रह्मचर्यमष्टा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नित्योत्साहवताम् । प्रीतिः प्रेमा तत्पूर्वकं भजतां सेवमानानां तेभ्यो ददामि तं बुद्धियोगं ज्ञानरूपं योगं समाधिम् । ज्ञाननिष्ठामित्यर्थः । तां ददामि येन यया निष्ठया ते मामुपयान्ति समुद्रमिव नद्योऽभेदेन प्रविशन्ति ॥ १० ॥ किंच तेषां भक्तानामुपर्यनुकम्पार्थं न स्वप्रयोजनसिद्ध्यर्थं राजवत् । बुद्धियोगप्रदानेनाज्ञानजमविवेकादुत्थितं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमोनामकं सर्वानर्थनिदानमूलाज्ञाननाशेन नाशयामि । आत्मभावस्थ आत्मनो भावोऽन्तःकरणगृहं तत्स्थः । ज्ञानरूपेण दीपेन । भास्वता प्रबलेन । अयं भावः—तत्त्वमसीति वाक्यजा ब्रह्माकारान्तःकरणवृत्तिः स्वोत्पत्तये श्रवणमननध्यानानि शमादीनि कर्माणि चापेक्षते । यथा दीपः स्वोत्पत्तये तैलवर्त्यग्न्यादीन् । उत्पन्ना

४ मधुसूदनीव्याख्या ।

प्रीतिपूर्वकमेव भजतां सेवमानानां तेषां अविकम्पेन योगेनेति यः प्रागुक्तस्तं बुद्धियोगं मत्तत्त्वविषयसम्यग्दर्शनं ददामि उत्पादयामि । येन बुद्धियोगेन मामीश्वरमात्मत्वेनोपयान्ति ये मच्चित्तत्वादिप्रकारैर्मां भजन्ते ते ॥ १० ॥ दीयमानस्य बुद्धियोगस्यात्मप्राप्तौ फले मध्यवर्तिनं व्यापारमाह—तेषामेव कथं श्रेयः स्यादित्यनुग्रहार्थं आत्मभावस्थ आत्माकारान्तःकरणवृत्तौ विषयत्वेन स्थितोऽहं स्वप्रकाशचैतन्यानन्दाद्वयलक्षण आत्मा तेनैव मद्विषयान्तःकरणपरिणामरूपेण ज्ञानदीपेन दीपसदृशेन ज्ञानेन भास्वता चिदाभासयुक्तेनाप्रतिबद्धेनाज्ञानजमज्ञानोपादानकं तमो मिथ्याप्रत्ययलक्षणं स्वविषयावरणमन्धकारं तदुपादानाऽज्ञाननाशेन नाशयामि । सर्वभ्रमोपादानस्याज्ञानस्य ज्ञाननिवर्त्यत्वादुपादाननाशनिवर्त्यत्वाच्चोपादेयस्य । यथा दीपेनान्धकारे

५ भाष्योत्कर्षदीपिका ।

प्रेमलक्षणभक्तिमतामित्यर्थः । तं सम्यग्ज्ञानलक्षणमविकम्पबुद्धियोगं ददामि । येन बुद्धियोगेन मां परमात्मानमात्मत्वेनोपयान्ति प्रतिपद्यन्ते । साक्षात्कुर्वन्तीत्यर्थः । ते ये मां मच्चित्तत्वादिप्रकारैर्भजन्ते ॥ १० ॥ मत्प्राप्तिप्रतिबन्धकनाशकं बुद्धियोगं ददामीत्याशयेनाह । तेषामेव मच्चित्तत्वादिप्रकारैर्भजतामनुकम्पार्थं दयाहेतोरहमज्ञानजं मूलाज्ञानाज्जातं मिथ्याप्रत्ययलक्षणं तमो मोहान्धकारं ज्ञानदीपेन नाशयामि । अचेतनस्य नाशकत्वासंभवादहमित्युक्तं निखिलभ्रमाधिष्ठानत्वेनाखिलभासकस्य केवलचैतन्यस्यापि तद-

६ श्रीधरीव्याख्या ।

योगमुपायं ददामि । तमिति कम् । येनोपायेन ते भक्ता मां प्राप्नुवन्ति ॥ १० ॥ बुद्धियोगं दत्त्वा च तस्यानुभवपर्यन्तं तमापाद्याविद्याकृतं संसारं नाशयामीत्याह—तेषामिति । तेषामनुकम्पार्थमनुग्रहार्थमेवाज्ञानाज्जातं तमः संसाराख्यं नाशयामि । कुत्र वा

**अर्जुन उवाच ।**

**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥ ११ ॥ यथोक्तां भगवतो विभूतिं योगं च श्रुत्वार्जुन उवाच—परमिति । परं ब्रह्म पर-

२ आनन्दगिरिव्याख्या ।

शमादिशब्देन शमादिग्रहः । तेन हेतुनाहितसंस्कारवती या प्रज्ञा तथाविधवर्तिनिष्ठश्चायं नहि वर्त्यतिरेकेण दीपो निर्वर्त्यते तदाह—**ब्रह्मचर्येति** । न चाधारादृते दीपस्योत्पत्तिरदृष्टत्वादित्याह—**विरक्तेति** । यद्विषयेभ्यो व्यावृत्तं चित्तं रागाद्यकलुषितं तदेव निवातमपवारकं तत्र स्थितत्वमस्य दर्शयति—**विषयेति** । भास्वतेति विशेषणं विशदयति—**नित्येति** । सदातनं चित्तैकाग्र्यं तत्पूर्वकं ध्यानं तेन जनितं सम्यग्दर्शनं फलं तदेव भास्वद्वता तत्पर्यन्तेनेत्यर्थः । तेनाज्ञाने सकार्ये निवृत्ते भगवद्भावः स्वयमेव प्रकाशीभवतीति मत्वा व्याख्यातमेव पदमनुवदति—**ज्ञानेति** ॥ ११ ॥ निरस्ताशेषविशेषं निरुपाधिकं सोपाधिकं च सर्वात्मत्वादि भगवतो रूपं तद्धीफलं च श्रुत्वा निरुपाधिकरूपस्य प्राकृतबुद्ध्यनवगाह्योक्तिपूर्वकं मन्दानुग्रहार्थं सर्वदा सर्वबुद्धिग्राह्यं सोपाधिकं रूपं विस्तरेण श्रोतुमिच्छन्पृच्छतीत्याह—**यथोक्तामिति** । परं ब्रह्म भवानिति लक्ष्यनिर्देशः । तस्य लक्षणार्थं परं धामेत्यादिविशेषणत्रयम् । धामशब्दस्य स्थान-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तु तमोनाशेन स्वविषयप्रकाशनार्थं प्रत्ययावृत्तिलक्षणं प्रसंख्यानं च कर्मभिरुपकारं वा नापेक्षते । नहि ज्ञाते घटे तदाकारप्रत्ययावृत्तिर्वा कर्मापेक्षा वा तज्ज्ञानदार्ढ्यायापेक्षते । प्रमाणव्याप्तिमात्रसापेक्षत्वात् ज्ञानस्य । तस्माद्ये उत्पन्नज्ञानानामपि प्रसंख्यानापेक्षां कर्मभिरुपकारापेक्षां च वदन्ति ते बलादेव मोक्षस्य कृतकतामनित्यतां च प्रार्थयन्त इति दिक् ॥ ११ ॥ एवं एतां विभूतिं योगं चेत्यादिना विभूतिज्ञानस्य फलोदर्कं श्रुत्वा तत्प्राप्त्युत्सुकः प्रथमं स्तुत्या भगवन्तमावर्जयन्नर्जुन उवाच—**परमिति** । परं ब्रह्म नत्वपरमुपास्यम् । 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतेः । परं धाम ज्योतिः नत्वपरं वृत्तिरूपं ज्ञानम् । एतस्य 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेर्वृत्तिरूपत्वात् ।

४ मधुसूदनीव्याख्या ।

निवर्तनीये दीपोत्पत्तिमन्तरेण न कर्मणोऽभ्यासस्य वापेक्षा विद्यमानस्यैव च वस्तुनोऽभिव्यक्तिस्ततो नानुत्पन्नस्य कस्यचिदुत्पत्तिस्तथा ज्ञानेनाज्ञाने निवर्तनीये न ज्ञानोत्पत्तिमन्तरेणान्यस्य कर्मणोऽभ्यासस्य वापेक्षा विद्यमानस्यैव च ब्रह्मभावस्य मोक्षस्याभिव्यक्तिस्ततो नानुत्पन्नस्योत्पत्तिर्येन क्षयित्वं कर्मादिसापेक्षत्वं वा भवेदिति रूपकालंकारेण सूचितोऽर्थः । भास्वतेत्यनेन तीव्रपवनादेरिवासंभवनादेः प्रतिबन्धकस्याभावः सूचितः । ज्ञानस्य च दीपसाधर्म्यं स्वविषयावरणनिवर्तकत्वं स्वव्यवहारेण सजातीयपरानपेक्षत्वं स्वोत्पत्त्यतिरिक्तसहकार्यनपेक्षत्वमित्यादिरूपकबीजं द्रष्टव्यम् ॥ ११ ॥ एवं भगवतो विभूतिं योगं च श्रुत्वा परमोत्कण्ठितः अर्जुन उवाच—परं ब्रह्म परं धाम आश्रयः प्रकाशो वा । परमं पवित्रं पावनं च भवानेव । यतः

५ भाष्योत्कर्षदीपिका ।

संभवात् । आत्मभावस्थो ज्ञानदीपेन भास्वतेत्युक्तं । आत्मनो भावोऽन्तःकरणाशयस्तस्मिन्नवस्थितः तत्त्वमस्यादिमहावाक्योत्थान्तःकरणवृत्त्यभिव्यक्तः सन् तेनैव वृत्तिज्ञानदीपेन भक्त्यादिना भास्वता देदीप्यमानेन समूलाज्ञानं मत्प्राप्तिप्रतिबन्धकं मिथ्याप्रत्ययलक्षणं तमो नाशयामीत्यर्थः ॥ ११ ॥ मच्चित्तत्वादिप्रकारकभक्तिद्वाराऽविकम्पयोगसाधनभूतौ विभूतियोगौ संक्षेपतः श्रुत्वा विस्तरश्रवणोत्सुकः अर्जुन उवाच—**परमिति** । भवान् वासुदेवः परं अक्षरं निरञ्जनं निर्गुणं ब्रह्म । परस्य ब्रह्मणो लक्षणमाह । परं धाम परं तेजः सूर्यादितेजसामपि तेजः । 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः । अस्यार्थस्य निरञ्जने ब्रह्मणि सामञ्जस्यमभिप्रेत्य परं धाम परं स्थानमित्यर्थ आचार्यैरुपेक्षितः । पवित्रं पावनं परमं प्रकृष्टं ज्ञानमात्रेण सवासनाऽविद्याकामकर्मभ्यो मोचकत्वात् ।

६ श्रीधरीव्याख्या ।

स्थितः सन्केन साधनेन तमो नाशयसीत्यत आह । आत्मभावस्थः बुद्धिवृत्तौ स्थितः सन् भास्वता विस्फुरता ज्ञानलक्षणेन दीपेन नाशयामि ॥ ११ ॥ संक्षेपेणोक्ता विभूतीर्विस्तरेण जिज्ञासुर्भगवन्तं स्तुवन्नर्जुन उवाच—**परं ब्रह्मेति सप्तभिः** । परं ब्रह्म च, परं

१ श्रीधरः. मधुसूदनः.

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥**
**सर्वमेतदृतं मन्ये यन्मां वदसि केशव।**
**न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम्।

मात्मा परं धाम परं तेजः पवित्रं पावनं परमं प्रकृष्टं भवान्पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवमादिदेवं सर्वदेवानामादौ भवं देवमजं विभुं विभवनशीलम् ॥ १२ ॥ ईदृशं—आहुः कथयन्ति त्वामृषयो वसिष्ठादयः सर्वे, देवर्षिर्नारदस्तथासितो देवलोऽप्येवमेवाह व्यासश्च, स्वयं चैव त्वं चैव ब्रवीषि मे ॥ १३ ॥ सर्वमिति। सर्वमेतद्यथोक्तमृषिभिस्त्वया च तदृतं सत्यमेव मन्ये यन्मां प्रति वदसि भाषसे

२ आनन्दगिरिव्याख्या।

वाचित्वं व्यावर्तयन्व्याचष्टे—**तेज इति**। तस्य चैतन्यस्य परमत्वं जन्मादिराहित्येन कौटस्थ्यम्। प्रकृष्टं पावनमत्यन्तशुद्धत्वमुच्यते। यदेवंलक्षणं परं ब्रह्म तद्भवानेव नान्य इत्यर्थः। कुतस्त्वमेवमज्ञासीरित्याशङ्क्याप्तवाक्यादित्याह—**पुरुषमिति**। दिवि परमे व्योम्नि भवतीति दिव्यस्तं सर्वप्रपञ्चातीतं दीव्यति द्योतत इति देवः स चादिः सर्वमूलत्वादत एवाजस्तं त्वां सर्वगतमाहुरिति संबन्धः ॥ १२ ॥ उक्तविशेषणं त्वामृषयः सर्वे यस्मादाहुस्तस्मात्तद्वचनात्त्वोक्तं ब्रह्मत्वं युक्तमित्याह—**ईदृशमिति**। ऋषिग्रहणेन गृहीतानामपि नारदादीनां विशिष्टत्वात्पृथग्ग्रहणम्। असितो देवलस्य पिता। किमन्यैस्त्वं स्वयमेवात्मानमुक्तरूपं मह्यमुक्तवानित्याह—**स्वयं चेति** ॥ १३ ॥ ऋषिभिस्त्वया चोक्तत्वादुक्तं सर्वं सत्यमेवेति मम मनीषेत्याह—**सर्वमिति**। किं तदित्याशङ्क्यात्मरूपमित्याह—**यन्मामिति**। देवादिभिः सर्वै-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

परमं पवित्रं नतु तीर्थादिवदपरमं भवान्। तत्र मानमाह—**पुरुषमिति** सार्धेन। पुरुषं देहान्तरस्थम्। शाश्वतं नित्यं। दिव्यं दिवि हार्दाकाशे आविर्भूतम्। आदिदेवं सूत्रात्मनोऽप्याद्यम्। अतएव अजं विभुं व्यापकम्। त्वां ऋषय

४ मधुसूदनीव्याख्या।

पुरुषं परमात्मानं शाश्वतं सर्वदैकरूपं दिवि परमे व्योम्नि स्वस्वरूपे भवं दिव्यं सर्वप्रपञ्चातीतमादि च सर्वकारणं देवं च द्योतनात्मकं स्वप्रकाशमादिदेवं अतएवाजं विभुं सर्वगतं त्वामाहुरिति संबन्धः ॥ १२ ॥ आहुः कथयन्ति त्वामनन्तमहिमानं ऋषयस्तत्त्वज्ञाननिष्ठाः सर्वे भृगुवसिष्ठादयः। तथा देवर्षिर्नारदः असितो देवलश्च धौम्यस्य ज्येष्ठो भ्राता व्यासश्च भगवान् कृष्णद्वैपायनः। एतेऽपि त्वां पूर्वोक्तविशेषणं मे मह्यमाहुः साक्षात्किमन्यैर्वक्तृभिः। स्वयमेव त्वं च मह्यं ब्रवीषि। अत्र ऋषित्वेऽपि साक्षाद्वक्तॄणां नारदादीनामतिविशिष्टत्वात्पृथग्ग्रहणम् ॥ १३ ॥ सर्वमेतदुक्तमृषिभिश्च त्वया च तदृतं सत्यमेवाहं मन्ये यन्मां प्रति वदसि केशव। नहि त्वद्वचसि मम कुत्राप्यप्रामाण्यशङ्का। तच्च सर्वज्ञत्वात्त्वं जानासीति केशौ ब्रह्मरुद्रौ सर्वेशावप्यनुकम्प्यतया वात्यवगच्छतीति व्युत्पत्तिमाश्रित्य निरतिशयैश्वर्यप्रतिपादकेन केशवपदेन सूचितम्। अतो यदुक्तं 'न मे विदुः सुरगणाः प्रभवं न महर्षयः' इत्यादि तत्तथैव—हि यस्मात् हे भगवन् समग्रैश्वर्यादिसंपन्न, ते तव व्यक्तिं प्रभावं ज्ञानातिशयशालिनोऽपि

५ भाष्योत्कर्षदीपिका।

एतादृशं परं ब्रह्म भवानेव नान्यः। नन्वेतत्त्वया कुतो ज्ञातमिति चेदाप्तवाक्यादित्याह। पुरुषं पुरि शयं पूर्णं परमात्मानं अतएव शाश्वतं सर्वदैकरसं दिव्यं दिवि परमे व्योम्नि हृदयाकाशे भवं दिव्यम्। आदिदेवं सर्वेषां ब्रह्मादिदेवानामादिभवं अतएवाजं। विभुं विभवनशीलं। विभवनमित्यस्य विविधं भवनमिति व्यापनमिति वार्थः ॥ १२ ॥ ईदृशं त्वामेव ऋषयो मन्त्रद्रष्टारः सर्वे आहुः। नारदादीनां श्रैष्ठ्यद्योतनार्थं पृथग्ग्रहणम्। किमन्यैरिति सूचयन्नाह—स्वयं चैव ब्रवीषीति ॥ १३ ॥ एतत्सर्वं सत्यं मन्ये यन्मां वदसि केशव ब्रह्मादीन्प्रत्यन्तर्यामितया गच्छतीति सः तस्य संबोधनं हे केशवेति। ब्रह्मादिमुखेनापि त्वमेव वदसीति भावः। हि यस्मात्ते तव व्यक्तिं प्रभावं देवा न विदुः 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। वैराग्यस्य च ज्ञानस्य षण्णां भग इतीङ्गना' इत्युक्तो भगवांस्त्वमेव स्वप्रभावं कथयितुं समर्थोऽसि नत्वन्यः स्वसामर्थ्येनेति सूचयन्नाह—हे भगवन्निति ॥१४॥

६ श्रीधरीव्याख्या।

धाम च आश्रयः, परमं च पवित्रं भवानेव। कुत इत्यत आह। यतः शाश्वतं नित्यं पुरुषं तथा दिव्यं द्योतनात्मकं स्वप्रकाशं च आदिश्चासौ देवश्च तं। देवानामादिभूतमित्यर्थः। तथा अजमजन्मानं विभुं व्यापकं त्वामेवाहुः ॥ १२ ॥ के त इत्यत आह—**आहुरिति**। ऋषयः भृग्वादयः सर्वे देवर्षिर्नारदः असितश्च देवलश्च व्यासश्च स्वयं त्वमेव साक्षान्मे मह्यं ब्रवीषि ॥ १३ ॥ अतो ममेदानीं त्वदैश्वर्येऽसंभावना निवृत्तेत्याह—**सर्वमिति**। एतद्भवानेव परं ब्रह्मेत्यादि सर्वमप्यृतं सत्यं मन्ये यन्मां प्रति त्वं कथयसि 'न मे विदुः सुरगणा' इत्यादि तदपि सत्यमेव मन्य इत्याह—**न हीति**। हे भगवन्, तव व्यक्तिं देवा न विदुः। असदनुग्रहार्थ-

**स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।**
**भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥**
**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

हे केशव, नहि ते तव भगवन्व्यक्तिं प्रभवं विदुर्न देवा न दानवाः ॥ १४ ॥ यतस्त्वं देवादीनामादिरतः—स्वयमिति । स्वयमेवात्मनात्मानं वेत्थ त्वं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरम् । पुरुषोत्तम, भूतानि भावयतीति भूतभावनो हे भूतभावन, भूतेश भूतानामीशितः, हे देवदेव जगत्पते॥१५॥ वक्तुमिति । वक्तुं कथयितुमर्हस्यशेषेण दिव्या ह्यात्मविभूतय आत्मनो विभूतयो यास्ता वक्तुमर्हसि ।

२ आनन्दगिरिव्याख्या ।

रुच्यमानतया त्वद्रूपे विशिष्टवक्तृग्रहणमनर्थकमित्याशङ्क्याह—नहीति । प्रभवो नाम प्रभावो निरुपाधिकस्वभावः, यदा देवादीनामपि दुर्विज्ञेयं तव रूपं तदा का कथा मनुष्याणामित्यर्थः ॥ १४ ॥ कश्चिदेव महता कष्टेनानेकजन्मसंसिद्धो जानाति त्वदनुगृहीतस्त्वद्रूपमित्यभिप्रेत्याह—यत इति । स्वयमेवोपदेशमन्तरेणेत्यर्थः । आत्मना प्रत्यक्त्वेनाविषयतयेति यावत् । आत्मानं निरुपाधिकं रूपम् । नच तव सोपाधिकमपि रूपमन्यस्य गोचरे तिष्ठतीत्याह—निरतिशयेति । पुरुषश्चासावुत्तमश्चेति क्षराक्षरातीतपूर्णचैतन्यरूपत्वं संबोधनेन बोध्यते । सर्वप्रकृतित्वं सर्वकर्तृत्वं च कथयति—भूतानीति । सर्वेश्वरत्वमाह—भूतानामिति । उक्तं ते सोपाधिकं रूपं देवादीनामाराध्यतामधिगच्छतीत्याह—देवेति । जगतः सर्वस्य स्वामित्वेन पालयितृत्वमाह—जगदिति ॥ १५ ॥ यस्मादस्मादृशामगोचरस्तवात्मा जिज्ञासितश्च तस्मात्त्वयैव तद्रूपं वक्तव्यमित्याह—वक्तुमिति । दिव्यत्वमप्राकृतत्वम् । संप्रत्यन्वयमन्वाचष्टे—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आहुरिति संबन्धः ॥ १२ ॥ १३ ॥ व्यक्तिं प्रभवम् ॥ १४ ॥ हे भूतभावन भूतानां भावक ॥ १५ ॥ एवं स्तुत्वा-

४ मधुसूदनीव्याख्या ।

देवा न विदुर्नापि दानवा न महर्षय इत्यपि द्रष्टव्यम् ॥ १४ ॥ यतस्त्वं तेषां सर्वेषामादिरशक्यज्ञानश्चातः—स्वयमेव अन्योपदेशादिकमन्तरेणैव त्वमेवात्मना स्वरूपेणात्मानं निरुपाधिकं सोपाधिकं च, निरुपाधिकं प्रत्यक्त्वेनाविषयतया सोपाधिकं च निरतिशयज्ञानैश्वर्यादिशक्तिमत्त्वेन वेत्थ जानासि नान्यः कश्चित् । अन्यैर्ज्ञातुमशक्यमहं कथं जानीयामित्याशङ्कामपनुदन्प्रेमौत्कण्ठ्येन बहुधा संबोधयति । हे पुरुषोत्तम, त्वदपेक्षया सर्वेऽपि पुरुषा अपकृष्टा एव । अतस्तेषामशक्यं सर्वोत्तमस्य तव शक्यमेवेत्यभिप्रायः । पुरुषोत्तमत्वमेव विवृणोति पुनश्चतुर्भिः संबोधनैः—भूतानि सर्वाणि भावयत्युत्पादयतीति हे भूतभावन सर्वभूतपितः । पितापि कश्चिन्नेष्टस्तत्राह हे भूतेश सर्वभूतनियन्तः । नियन्तापि कश्चिन्नाराध्यस्तत्राह हे देवदेव देवानां सर्वाराध्यानामप्याराध्य । आराध्योऽपि कश्चिन्न पालयितृत्वेन पतिस्तत्राह हे जगत्पते हिताहितोपदेशकवेदप्रणेतृत्वेन सर्वस्य जगतः पालयितः । एतादृशसर्वविशेषणविशिष्टस्त्वं सर्वेषां पिता सर्वेषां गुरुः सर्वेषां राजा अतः सर्वैः प्रकारैः सर्वेषामाराध्य इति किं वाच्यं पुरुषोत्तमत्वं तवेति भावः ॥ १५ ॥ यस्मादन्येषां सर्वेषां ज्ञातुमशक्या अवश्यं ज्ञातव्याश्च तव विभूतयः, तस्मात्—याभिर्विभूतिभिरिमान्सर्वांल्लोकान्व्याप्य त्वं तिष्ठसि तास्तवासाधारणा विभूतयो दिव्या असर्वज्ञैर्ज्ञातुमशक्या हि

५ भाष्योत्कर्षदीपिका ।

अतः सर्वेषामादिस्त्वं स्वयमेवान्योपदेशमन्तरेणात्मना नत्वन्तःकरणादिकरणेनात्मानं निरुपाधिकं सोपाधिकं च निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तं जानासि नत्वन्यस्त्वदननुगृहीतः । भगवतः निरुपाधिकात्मज्ञानसामर्थ्यं संबोधनेनाप्याह—**हे पुरुषोत्तमेति ।** निरुपाधिकः परमात्मा त्वं निरुपाधिकं स्वस्वरूपं वेत्थेति भावः । सोपाधिकोऽपि जगत्कर्तृत्वादिमांस्त्वमेवातस्तमपि त्वमेव जानासीति ध्वनयन् चतुर्धा संबोधयति । भूतभावनेत्यादिना । भूतोत्पादक, भूतेश भूतनियन्तः । देवदेव देवानां सूर्यादीनामपि द्योतक, जगत्पते जगत्पालक । तथाच जगत उत्पत्तिस्थितिनियमनकर्ता त्वमेव । ननु ब्रह्मादयः सूर्यादयो रुद्रादय एतत्कर्तारो दृश्यन्ते इत्याशङ्क्य देवानां ब्रह्मादीनामपि देव, त्वदधिष्ठिता एव ते उत्पत्त्यादिकर्तारो न स्वतन्त्रा इति भावः ॥ १५ ॥ अतोऽप्राकृता हि आत्मनो

६ श्रीधरीव्याख्या ।

मियमभिव्यक्तिरिति न जानन्ति । दानवाश्चासन्निग्रहार्थमिति न विदुरेवेति ॥ १४ ॥ किं तर्हि—**स्वयमिति ।** स्वयमेव त्वमात्मानं वेत्थ जानासि नान्यः तदप्यात्मना स्वेनैव वेत्थ न साधनान्तरेण । अत्यादरेण बहुधा संबोधयति हे पुरुषोत्तम । पुरुषोत्तमत्वे हेतुगर्भाणि संबोधनानि । हे भूतभावन भूतोत्पादक भूतानामीश नियन्तः, देवानामादित्यादीनां देव प्रकाशक, जगत्पते विश्वपालक ॥ १५ ॥ यस्मात्तवाभिव्यक्तिं त्वमेव वेत्सि न देवादयस्तस्माद्वक्तुमर्हसीति या आत्मनस्तव दिव्या अत्यद्भुता विभूतयस्ताः

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥**
**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमाँल्लोकांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥ कथमिति । कथं विद्यां विजानीयामहं हे योगिंस्त्वां सदा परिचिन्तयन् । केषु केषु च भावेषु वस्तुषु चिन्त्योऽसि ध्येयोऽसि भगवन्मया ॥ १७ ॥ विस्तरेणेति । विस्तरेणात्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां हे जनार्दन, अर्दतेर्गतिकर्मणो रूपम् । असुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वाज्जनार्दनः । अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यत इति वा । भूयः

२ आनन्दगिरिव्याख्या ।

आत्मन इति । वक्तव्या विभूतीर्विशिनष्टि—याभिरिति । यद्द्वारा लोकान्पूरयित्वा वर्तसे ता विभूतीरशेषेण वक्तुमर्हसीत्यर्थः ॥ १६ ॥ किमर्थं विभूतीः श्रोतुमिच्छसीत्याशङ्क्य ध्यानसौकर्यप्रकारप्रश्नेन फलं कथयति—कथमिति । योगो नामैश्वर्यं तदस्यास्तीति योगी हे योगिन्, अहं स्थविष्ठमतिस्त्वां केन प्रकारेण सततमनुसंदधानो विशुद्धबुद्धिर्भूत्वा निरुपाधिकं त्वां विजानीयामिति प्रश्नः । प्रश्नान्तरं प्रस्तौति—केषु केष्विति । चेतनाचेतनभेदादुपाधिबहुत्वाच्च बहुवचनम् ॥ १७ ॥ प्रकृतं प्रश्नमुपसंहरति—विस्तरेणेति । अर्दतेर्गतिकर्मणो जनार्दनेति रूपम्, तद्व्युत्पादयति—असुराणामिति । प्रकारान्तरेण शब्दार्थं व्युत्पादयति—अभ्युदयेति । ननु पूर्वमेव सप्तमे नवमे च विभूतिरैश्वर्यं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्मनो बुभुत्सितमाह—वक्तुमिति ॥ १६ ॥ योग ऐश्वर्यं तद्वन् हे योगिन्, त्वां कथं चर्मचक्षुषां विद्यां न कथमपीति विश्वरूपदर्शनस्य दौर्लभ्यं मन्वानः कतिपयेष्वेव स्थानेषु भगवन्तं चिन्तयिष्यामि विश्वरूपदर्शनेऽधिकारसिद्ध्यर्थमित्याशयेनाह—केष्विति ॥ १७ ॥ योगं वैश्वरूप्यम् । विभूतिं ध्यानालम्बनम् । अमृतं अमृतस्य मोक्षस्य

४ मधुसूदनीव्याख्या ।

यस्मात्तस्मात्सर्वज्ञस्त्वमेव ता अशेषेण वक्तुमर्हसि ॥ १६ ॥ किं प्रयोजनं तत्कथनस्य तदाह द्वाभ्याम्—योगो निरतिशयैश्वर्यादिशक्तिः सोऽस्यास्तीति हे योगिन्निरतिशयैश्वर्यादिशक्तिशालिन्, अहमतिस्थूलमतिस्त्वां देवादिभिरपि ज्ञातुमशक्यं कथं विद्यां जानीयाम् । सदा परिचिन्तयन्सर्वदा ध्यायन् । ननु मद्विभूतिषु मां ध्यायन् ज्ञास्यसि तत्राह—केषु केषु च भावेषु चेतनाचेतनात्मकेषु वस्तुषु त्वद्विभूतिभूतेषु मया चिन्त्योऽसि हे भगवन् ॥ १७ ॥ अतः आत्मनस्तव योगं सर्वज्ञत्वसर्वशक्तित्वादिलक्षणमैश्वर्यातिशयं विभूतिं च ध्यानालम्बनं विस्तरेण संक्षेपेण सप्तमे नवमे चोक्तमपि भूयः पुनः कथय । सर्वैर्जनैरभ्युदयनिःश्रेयसप्रयोजनं याच्यस इति हे जनार्दन, अतो ममापि याञ्चा त्वय्युचितैव । उक्तस्य पुनः कथनं कुतो याचसे तत्राह—

५ भाष्योत्कर्षदीपिका ।

विभूतयः माहात्म्यविस्ताराः यास्ताः वक्तुमर्हसि । याभिर्विभूतिभिस्त्वमिमाँल्लोकान्व्याप्य तिष्ठसि ॥ १६ ॥ हे योगिन्, अहं स्थूलबुद्धिस्त्वां केन प्रकारेण परि समन्ताच्चिन्तयन् सूक्ष्मबुद्धिर्भूत्वा जानीयाम् । अघटितघटनं योगस्तद्वान् त्वम् । मामपि त्वां ज्ञातुमयोग्यं योग्यं कर्तुमर्हसीति संबोधनाशयः । केषुकेषु च भावेषु पदार्थेषु मया ध्येयोऽसि तत्तत्पदार्थेषु स्वैश्वर्यादिमत्पदार्थं वदेति द्योतयन्नाह—हे भगवन्निति ॥ १७ ॥ ननु सप्तमे नवमे च विभूतिरैश्वर्यं च दर्शितं तत्किमिति पुनः पृच्छसि तत्राह—विस्तरेणेति । स्वस्य योगैश्वर्यशक्तिविशेषं विभूतिं च पूर्वोक्तमपि योगादि भूयो विस्तरेण कथय । हे जनार्दन देवशत्रुजनानां असुराणां प्राणवियोगनरकादिगमयितृत्वात् । तथा चास्मच्छत्रुजनानां रागद्वेषादीनां नाशनाय ध्येययोगविभूति-

६ श्रीधरीव्याख्या ।

सर्वा वक्तुं त्वमेवार्हसि योग्यो भवसि । याभिरिति विभूतीनां विशेषणं स्पष्टार्थम् ॥ १६ ॥ कथनप्रयोजनं दर्शयन्प्रार्थयते—कथमिति द्वाभ्याम् । हे योगिन्, कथं कैर्विभूतिभेदैः सदा परिचिन्तयन्नहं त्वां विद्यां जानीयाम् । विभूतिभेदेन चिन्त्योऽपि त्वं केषु केषु पदार्थेषु मया चिन्तनीयोऽसि ॥ १७ ॥ तदेवं बहिर्मुखेऽपि चित्ते तत्र तत्र विभूतिभेदेन त्वच्चिन्तैव यथा भवेत्तथा विस्तरेण कथयेत्याह—विस्तरेणेति । आत्मनस्तव योगं सर्वज्ञत्वसर्वशक्तित्वादिलक्षणं योगैश्वर्यं विभूतिं च विस्तरेण पुनः कथय । हि यस्मात्त्वद्वाक्यममृत-

७ अभिनवगुप्ताचार्यव्याख्या ।

सुखेनैव सर्वशक्तिकसर्वगतस्वात्मरूपताधिगमेन माहेश्वर्यमेषामिति भावः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

**श्रीभगवानुवाच—हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥**
**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

पूर्वमुक्तमपि कथय तृप्तिर्हि परितोषो यस्मान्नास्ति मे मम शृण्वतस्त्वन्मुखनिःसृतवाक्यामृतम् ॥१८॥ हन्त त इति । हन्तेदानीं ते तव दिव्या दिवि भवा आत्मविभूतय आत्मनो मम विभूतयो यास्ताः कथयिष्यामीत्येतत्प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिस्तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ, अशेषतस्तु वर्षशतेनापि न शक्या वक्तुम् । यतो नास्त्यन्तो विस्तरस्य मे मम विभूतीनामित्यर्थः ॥ १९ ॥ तत्र प्रथममेव तावच्छृणु—अहमिति । अहमात्मा प्रत्यगात्मा गुडाकेश

२ आनन्दगिरिव्याख्या ।

चेश्वरस्य दर्शितं तत्किमिति श्रोतुमिष्यते तत्राह—भूय इति । अमृतममृतप्रख्यमित्यर्थः ॥ १८ ॥ प्रष्टारं विश्रम्भयितुं भगवानुक्तवानित्याह—**श्रीभगवानिति** । हन्तेत्यनुमतिं व्यावर्त्य जिज्ञासावच्छिन्नं कालं दर्शयति—**इदानीमिति** । दिवि भवत्वमप्राकृतत्वमस्मदगोचरत्वम् । वाक्यान्वयं द्योतयति—**यास्ता इति** । सर्वविभूतीनां वक्तव्यत्वप्राप्तावुक्तम्—**यत्रेति** । किमित्यनवशेषतो विभूतयो नोच्यन्ते तत्राह—**अशेषतस्त्विति** । तत्र हेतुर्यत इति ॥ १९ ॥ विभूतिप्रदर्शने प्रस्तुते सत्यादावेव पारमार्थिकं पारमेश्वरं रूपं दर्शयितुं श्रोतुरर्जुनस्य मनःसमाधानार्थं यतते—**तत्रेति** । सोपाधिकमपि काल्पनिकं परस्य रूपं पश्चाद्वक्ष्यमाणं श्रोतुं चित्तसमाधानं कर्तव्यमेवेत्याह—**तावदिति** । आशे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

साधनम् ॥ १८ ॥ अत्रोत्तरं श्रीभगवानुवाच—**हन्तेति** । हन्त इदानीम् । हन्तेत्यनुमतौ वा । दिव्याः पुराणान्तरेष्वपि श्रेष्ठत्वेन प्रसिद्धाः या आत्मविभूतयस्ताः कथयामीति योजना । **प्राधान्यत इति** । योगोपकारित्वेन विभूतय इह प्राधान्येन, योगस्तु संक्षेपेणैवोच्यते । तस्याग्रे वक्ष्यमाणत्वादिति भावः । अन्यथा योगं विभूतिं च कथयेति पृष्टे विभूतिमात्रकथनेनानवहितचित्तत्वं भगवतः स्यात् । नास्त्यन्तो विस्तरस्य मे विभूतीनामिति विपरिणामेनानुषञ्जनीयम् ॥ १९ ॥ संक्षेपेण योगमाह—**अहमिति** । हे गुडाकेश हे जितनिद्र घनकेशेति वा । अहं वासु-

४ मधुसूदनीव्याख्या ।

तृप्तिरलंप्रत्ययेनेच्छाविच्छित्तिर्नास्ति । हि यस्माच्छृण्वतः श्रवणेन पिबतस्त्वद्वाक्यामृतममृतवत्पदे पदे स्वादु स्वादु । अत्र त्वद्वाक्यमित्यनुक्तेरपह्नुत्यतिशयोक्तिरूपकसंकरोऽयं माधुर्यातिशयानुभवेनोत्कण्ठातिशयं व्यनक्ति ॥ १८ ॥ अत्रोत्तरं श्रीभगवानुवाच—हन्तेत्यनुमतौ । यत्त्वया प्रार्थितं तत्करिष्यामि मा व्याकुलोभूरित्यर्जुनं समाश्वास्य तदेव कर्तुमारभते । कथयिष्यामि प्राधान्यतस्ता विभूतीर्या दिव्या हि प्रसिद्धा आत्मनो ममासाधारणा विभूतयः हे कुरुश्रेष्ठ, विस्तरेण तु कथनमशक्यम् । यतो नास्त्यन्तो विस्तरस्य मे विभूतीनां, अतः प्रधानभूताः काश्चिदेव विभूतीर्वक्ष्यामीत्यर्थः ॥ १९ ॥ तत्र प्रथमं तावन्मुख्यं चिन्तनीयं शृणु—सर्वभूतानामाशये हृद्देशेऽन्तर्यामिरूपेण प्रत्यगात्मरूपेण च स्थित आत्मा चैतन्यानन्दघनस्त्वयाहं वासुदेव एवेति ध्येयः । हे

५ भाष्योत्कर्षदीपिका ।

कथनं तव नामानुरूपत्वायोग्यमित्याशयः । यद्वाभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यते इति तथा संबोधयन् ममापि याञ्चा त्वयि युक्तैवेति सूचयति । हि यस्मात्तव वाक्यामृतं शृण्वतो मम तृप्तिर्नास्ति । नीरसत्वप्रयुक्ततृप्तिव्यावृत्तयेऽमृतमित्युक्तम् । रसाज्ञानप्रयुक्ततृप्तिव्यावर्तनाय मे रसज्ञस्येत्युक्तम् । उदरे पूर्णेऽमृतेऽप्यलंबुद्धिर्भवतीति तद्व्यवच्छेदाय शृण्वत इत्युक्तम् । आकाशात्मकस्य श्रोत्रस्य शब्देन गुणेन पूर्णताया असंभवात्तृप्तिर्नास्तीति ॥ १८ ॥ एवं पृष्टो भगवानुवाच । हन्तेदानीं या आत्मनो विभूतयस्ताः कथयिष्यामि प्राधान्यतः । प्रधानां तां तां विभूतिमित्यर्थः । कुरुश्रेष्ठेति संबोधयन् त्वमधिकारीति सूचयति । विस्तरेण कथयेत्युक्तं तत्राह । मे विभूतीनां विस्तरस्यान्तो नास्ति ॥ १९ ॥ योगं विभूतिं च कथयेति त्वया पृष्टं तत्र प्रथमं तावन्मदीयं योगं शृणु । अहं वासुदेव आत्मा प्रत्यगात्मा सर्वेषां भूतानामाशयेऽन्तःकरणे स्थितः । एतज्जिताज्ञाननिद्रैरेव ज्ञातव्यमिति द्योतयन् संबोधयति—**हे गुडाकेशेति** । एतदशक्तस्याह । अहमादिः कारणं भूतानां मध्यः स्थितिरन्तः

६ श्रीधरीव्याख्या ।

रूपं शृण्वतो मम तृप्तिरलंबुद्धिर्नास्ति ॥ १८ ॥ एवं प्रार्थितः सन् श्रीभगवानुवाच—**हन्तेति** । हन्तेत्यनुकम्पासंबोधनम् । दिव्या या मम विभूतयस्ताः प्राधान्येन तुभ्यं कथयिष्यामि । यतोऽवान्तरस्य विभूतिविस्तरस्य मदीयस्यान्तो नास्त्यतः प्रधानभूताः कतिचिद्वर्णयिष्यामि ॥ १९ ॥ तत्र प्रथममैश्वरं रूपं कथयति—**अहमिति** । हे गुडाकेश, सर्वेषां भूतानामाशयेष्वन्तःकरणेषु सर्वज्ञत्वादिगुणै-

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

गुडाका निद्रा तस्या ईशो गुडाकेशो जितनिद्र इत्यर्थः । घनकेश इति वा । सर्वेषां भूतानामाशयेऽन्तर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयस्तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहं चिन्तयितुं शक्यो यस्मादहमेवादिर्भूतानां कारणं तथा मध्यं च स्थितिरन्तः प्रलयश्च ॥ २० ॥ एवंच ध्येयोऽहम्—आदित्यानामिति । आदित्यानां द्वादशानां विष्णुर्नामादित्योऽहम् । ज्योतिषां रविः प्रकाशयितृणामंशुमा-

२ आनन्दगिरिव्याख्या ।

रतेऽस्मिन्विद्याकर्मपूर्वप्रज्ञा इत्याशयो हृदयं सर्वेषां भूतानां हृदयेऽन्तःस्थितो यः प्रत्यगात्मा सोऽहमेवेति वाक्यार्थमाह—**सर्वेषामिति** । यस्तु मन्दो मध्यमो वा परमात्मानमात्मत्वेन ध्यातुं नालं तं प्रत्याह—**तदशक्तेनेति** । वक्ष्यमाणादित्यादिषु परस्य न ध्येयत्वमन्यदेव कारणं किंचित्तत्र तत्र ध्येयमित्याशङ्क्याह—**यस्मादिति** । सर्वकारणत्वेन सर्वज्ञत्वेन सर्वेश्वरत्वेन च परस्य ध्येयत्वमत्रेप्सितं नान्यस्य कस्यचित्कारणस्यादित्यादिषु ध्येयतेत्यर्थः ॥ २० ॥ उक्तध्यानाशक्तेभ्यो व्यस्तं विभूतियोगमुपदिशति—**एवंचेति** । तत्र तत्र प्रधानत्वेन परस्य ध्येयत्वम् । एवंशब्दार्थमेव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

देव आत्मा अततीत्यात्मा व्यापकः । अतएव सर्वेषां भूतानामाशयः एकीभावस्थानं जलानामिव कासारो जलाशयस्तद्वदहं सर्वभूताशयः । स्थितः अचलः । 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' इति वार्तिकेन पक्षे विसर्गलोपः । भाष्ये तु सर्वेषां भूतानामाशयेऽन्तर्हृदि स्थित इति व्याख्यातम् । सर्वभूताशयत्वादेवाहं आदिर्जन्मकारणम् । मध्यं स्थितिकारणम् । भूतानामन्तः लयस्थानम् । सर्वमिदं ब्रह्माण्डं मय्येवास्तीति भावः ॥ २० ॥ योगमुक्त्वा विभूतीराह—**आदित्यानामित्यादिना** यावदध्यायसमाप्ति । आदित्यानां द्वादशानां मध्ये विष्णुनामादित्योऽहं, वामनावतारो वा । ज्योतिषामग्न्यादीनां मध्ये रविः अंशुमान् अत्यन्तं प्रतपनशीलो निदाघमध्याह्ने तीव्रातपवान्नविरहमेवेत्यर्थः । मरुतां सप्तसप्तकानां मध्ये मरीचिरहम् । नक्षत्राणां ताराणाम् । अत्र प्रायेण निर्धारणे षष्ठी ।

४ मधुसूदनीव्याख्या ।

गुडाकेश जितनिद्रेति ध्यानसामर्थ्यं सूचयति । एवं ध्यानासामर्थ्ये तु वक्ष्यमाणानि ध्यानानि कार्याणि । तत्राप्यादौ ध्येयमाह—अहमेवादिश्चोत्पत्तिः भूतानां प्राणिनां चेतनत्वेन लोके व्यवह्रियमाणानां, मध्यं च स्थितिः, अन्तश्च नाशः । सर्वचेतनवर्गोणामुत्पत्तिस्थितिनाशरूपेण तत्कारणरूपेण चाहमेव ध्येय इत्यर्थः ॥ २० ॥ एतदशक्तेन बाह्यानि ध्यानानि कार्याणीत्याह यावदध्यायसमाप्ति—आदित्यानां द्वादशानां मध्ये विष्णुर्विष्णुनामादित्योऽहं, वामनावतारो वा । ज्योतिषां प्रकाशकानां मध्येऽहं रविरंशुमान्विश्वव्यापी प्रकाशकः । मरुतां सप्तसप्तकानां मध्ये मरीचिनामाहम् । नक्षत्राणामधिपतिरहं शशी चन्द्रमाः । निर्धारणे षष्ठी । अत्र प्रायेण निर्धारणे षष्ठी । क्वचित्संबन्धेऽपि यथा भूतानामस्मि चेतनेत्यादौ । वामनरामादयश्चावताराः सर्वैश्वर्यशालिनोऽप्यनेन रूपेण ध्यानविवक्षया विभूतिषु पठ्यन्ते । वृष्णीनां वासुदेवोऽस्मीति तेन रूपेण ध्यानविवक्षया स्वस्यापि स्वविभूति-

५ भाष्योत्कर्षदीपिका ।

प्रलयश्च । तथाच सर्वभूतान्तरात्मत्वेन ध्यातुमशक्तेनोत्पत्त्यादिकर्तृत्वेनाहं ध्येय इत्याशयः ॥ २० ॥ एवमात्मनो योगमुक्त्वा तत्र तत्र ध्येया विभूतीराह । आदित्यानां विष्णुः शक्रोऽर्यमा धाता त्वष्टा पूषा विवस्वान् सविता मित्रो वरुणः अंशो भगश्चेत्युक्तानां द्वादशानां विष्णुर्नामादित्योहऽम् । वामनावतारो वेति व्याख्यानस्यापि विष्णुर्नामादित्यो वामनावतारोऽहमित्यर्थावगमेनाचार्योक्तव्याख्यानान्तर्भूतत्वाद्वेत्युक्तिरपार्था । यद्वा अरुणः सूर्यो भानुस्तपनश्चन्द्रमा मित्रो हिरण्यवीर्यो रविरर्यमा गभस्तिर्दिवाकरो विष्णुरित्युक्तानामादित्यानां विष्णुरित्यभिप्रायेणाचार्यैरेवमुक्तमिति बोध्यम् । प्रकाशयितॄणां जगद्व्यापी रश्मिवान्सूर्यः । मरुतां देवता-

६ श्रीधरीव्याख्या ।

नियन्तृत्वेनावस्थितः परमात्माहम् । आदिर्जन्म, मध्यं स्थितिः, अन्तः संहारः, सर्वभूतानां जन्मादिहेतुश्चाहमेवेत्यर्थः ॥ २० ॥ इदानीं विभूतीः कथयति—**आदित्यानामित्यादिना** यावदध्यायसमाप्ति । आदित्यानां द्वादशानां मध्ये विष्णुर्वामनोऽहम् । ज्योतिषां प्रकाशानां मध्येंऽशुमान्विश्वव्यापकरश्मियुक्तो रविः सूर्योऽहम् । मरुतां देवविशेषाणां मध्ये मरीचिनामाहमस्मि । यद्वा सप्त मरुद्गणा वायवस्तेषां मध्य इति । ते च आवहः, प्रवहः, विवहः, परावहः, उद्वहः, संवहः, परिवह इति मरुद्गणाः । नक्षत्राणां मध्ये चन्द्रो-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १८ ॥ १९ ॥ तेषां सततयुक्तानामित्यतःप्रभृति अध्यायान्ता टीकोट्टङ्किता युगपद्धि वेद्या ॥ तेषामेवानु च अर्जुनप्रश्नपद्यानि षड्डुल्लिखति

१ श्रीधर—मधुसूदन—नीलकण्ठाः.

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**
**रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥**
**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

न्रश्मिमान् । मरीचिर्नाम मरुतां मरुद्देवताभेदानामस्मि । नक्षत्राणामहं शशी चन्द्रमाः ॥ २१ ॥ वेदानामिति । वेदानां मध्ये सामवेदोऽस्मि । देवानां रुद्रादित्यादीनां वासव इन्द्रोऽस्मि । इन्द्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि संकल्पविकल्पात्मकं मनश्चास्मि । भूतानामस्मि चेतना कार्यकरणसंघातेऽनित्याभिव्यक्ता बुद्धिवृत्तिश्चेतना ॥ २२ ॥ रुद्राणामिति । रुद्राणामेकादशानां शंकरश्चास्मि । वित्तेशः कुबेरो यक्षरक्षसां यक्षाणां रक्षसां च । वसूनामष्टानां पावकश्चास्म्यग्निः । मेरुः शिखरिणां शिखरवतामहम् ॥ २३ ॥ पुरोधसामिति । पुरोधसां राजपुरोहितानां मुख्यं प्रधानं मां विद्धि जानीहि हे पार्थ बृहस्पतिम् । स हीन्द्रस्येति मुख्यः स्यात्पुरोधाः । सेनानीनां सेनापतीनामहं स्कन्दो देवसे-

२ आनन्दगिरिव्याख्या ।

दर्शयति—आदित्यानामित्यादिना ॥ २१ ॥ मन्त्रब्राह्मणसमुदायानामृगादीनां मध्ये सामवेदोऽस्मीति । ध्यानान्तरमुदाहरति—वेदानामिति । संघाते जीवाधिष्ठिते यावत्पञ्चत्वं सर्वत्र व्यापिनी चैतन्याभिव्यञ्जिकेति शेषः ॥ २२ ॥ २३ ॥ पुरोहितेषु बृहस्पतेर्मुख्यत्वे हेतुमाह—स हीति ॥ २४ ॥ एकमित्योंकारस्य ब्रह्मप्रतीकत्वेन तदभि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भूतानामस्मि चेतनेत्यादौ संबन्धेऽपि । शशी चन्द्रमाः ॥ २१ ॥ सामवेदो गानेन रमणीयत्वात् । वासवो देवराजत्वात् । मन इन्द्रियान्तरप्रवर्तकत्वात् । चेतना धीवृत्तिः । चिदभिव्यक्तिहेतुत्वात् । एते वेदादीनां मध्ये श्रेष्ठाः ॥ २२ ॥ रुद्राणामेकादशानां, वसूनामष्टानां, शिखराणि रत्नविशेषास्तद्वतां मध्ये मेरुरहम् ॥ २३ ॥ पुरोधसां पुरोहितानां बृहस्पतिं देवराजपुरोहितत्वात् । सेनानीनां सेनापतीनां स्कन्दः कार्तिकेयः । सरसां जलाशयानाम्

४ मधुसूदनीव्याख्या ।

मध्ये पाठवत् । अतः परं च प्रायेणायमध्यायः स्पष्टार्थ इति क्वचित्किंचिद्व्याख्यास्यामः ॥ २१ ॥ चतुर्णां वेदानां मध्ये गानमाधुर्येणातिरमणीयः सामवेदोऽहमस्मि । वासव इन्द्रः सर्वदेवाधिपतिः इन्द्रियाणामेकादशानां प्रवर्तकं मनः । भूतानां सर्वप्राणिसंबन्धिनां परिणामानां मध्ये चिदभिव्यञ्जिका बुद्धेर्वृत्तिश्चेतनाहमस्मि ॥ २२ ॥ रुद्राणामेकादशानां मध्ये शंकरः वित्तेशो धनाध्यक्षः कुबेरः । यक्षरक्षसां यक्षाणां राक्षसानां च । वसूनामष्टानां पावकोऽग्निः । मेरुः सुमेरुः शिखरिणां शिखरवतामत्युच्छ्रितानां पर्वतानां च ॥ २३ ॥ इन्द्रस्य सर्वराजश्रेष्ठत्वात्तत्पुरोधसं बृहस्पतिं सर्वेषां पुरोधसां राजपुरोहितानां मध्ये मुख्यं श्रेष्ठं मामेव हे पार्थ, विद्धि जानीहि । सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दो गुहोऽहमस्मि । सरसां देवखातजला-

५ भाष्योत्कर्षदीपिका ।

भेदानां मरीचिनामास्मि । नक्षत्राणामधिपतिश्चन्द्रोऽहमस्मि ॥ २१ ॥ वासवः इन्द्रः । चेतना कार्यकरणसंघातेऽभिव्यक्ता बुद्धिवृत्तिः ॥ २२ ॥ रुद्राणां वीरभद्रशंभुगिरिशाजैकपादाहिर्बुध्न्यपिनाकिभवानीशकपालिदिक्पतिस्थाणुरुद्रसंज्ञानामेकादशानां शं करोतीति शंकरः । शंभुश्चास्मि शं भवत्यस्मादिति व्युत्पत्तेः । वित्तेशः कुबेरः । वसूनां ध्रुवाध्वरापसोमानलानिलप्रत्यूषप्रभाससंज्ञानामष्टानामग्निरस्मि । शिखरवतामत्युच्छ्रितानां मेरुरहम् ॥ २३ ॥ पुरोधसां राजपुरोहितानां इन्द्रपुरोहितत्वान्मुख्यं पुरोहितं बृहस्पतिं जानीहि ।

६ श्रीधरीव्याख्या ।

ऽहम् । अत्र च 'आदित्यानामहं विष्णुः' इत्यादिषु प्रायशो निर्धारणे षष्ठी । क्वचिच्च 'भूतानामस्मि चेतना' इत्यादिना संबन्धे षष्ठी । तच्च तत्र तत्रैव दर्शयिष्यामः । विष्णुरित्याद्यवतारोऽपि प्रभावातिशयमात्रविवक्षया विभूतित्वेन निर्दिश्यते । अतः परं चाध्यायस्य स्पष्टार्थत्वेऽपि क्वचित्किंचिद्व्याख्यास्यामः ॥ २१ ॥ वेदानामिति । वासव इन्द्रः । भूतानां संबन्धिनी चेतना ज्ञानशक्तिरहमस्मि ॥ २२ ॥ रुद्राणामिति । यक्षरक्षसामिति । राक्षसानामपि क्रूरत्वादिसाम्याद्यक्षैः सहैकीकृत्य निर्देशः । तेषां मध्ये वित्तेशः कुबेरोऽस्मि । पावकोऽग्निः । शिखरिणां शिखरवतामुच्छ्रितानां मध्ये मेरुः ॥ २३ ॥ पुरोधसामिति । पुरोधसां मध्ये देवपुरोहितत्वान्मुख्यं बृहस्पतिं

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**
**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**
**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नापतिः । सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥ २४ ॥ महर्षीणामिति । महर्षीणां भृगुरहं गिरां वाचां पदलक्षणानामेकमक्षरमोंकारोऽस्मि । यज्ञानां जपयज्ञोऽस्मि स्थावराणां स्थितिमतां हिमालयः ॥ २५ ॥ अश्वत्थ इति । अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदो देवा एव सन्त ऋषित्वं प्राप्ता मन्त्रदर्शित्वात्ते देवर्षयस्तेषां नारदोऽस्मि । गन्धर्वाणां चित्ररथो नाम गन्धर्वोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥ २६ ॥ उच्चैरिति । उच्चैःश्रवसमश्वानां उच्चैःश्रवा नामाश्वस्तं मां विद्धि जानीह्यमृतोद्भवममृतनिमित्तमथनोद्भवम् । ऐरावतमिरावत्या अपत्यं गजेन्द्राणां हस्तीश्वराणां तं मां विद्धीत्यनुवर्तते । नराणां मनुष्याणां

२ आनन्दगिरिव्याख्या ।

धानत्वेन च प्रधानत्वमुच्यते । जपयज्ञस्य यज्ञान्तरेभ्यो हिंसादिराहित्येन प्राधान्यमुपेत्याह—**यज्ञानामिति** । शिखरवतामुच्छ्रितानां पर्वतानां मध्ये मेरुरहमित्युक्तेऽपि स्थितिशीलानां तेषामेव हिमवान्पर्वतराजोऽस्मीत्यर्थभेदं गृहीत्वाह—**स्थितिमतामिति** ॥ २५ ॥ सर्ववृक्षाणामित्यत्र सर्वशब्देन वनस्पतयो गृह्यन्ते ॥ २६ ॥ २७ ॥ प्रजनयतीति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ २४ ॥ एकमक्षरमोंकाराख्यम् । जपयज्ञो हिंसाशून्यत्वात् । स्थावराणां स्थितिमताम् ॥ २५ ॥ २६ ॥ अमृ-

४ मधुसूदनीव्याख्या ।

शयानां मध्ये सागरः सगरपुत्रैः खातो जलाशयोऽहमस्मि ॥ २४ ॥ महर्षीणां सप्त ब्रह्मणां मध्ये भृगुरतितेजस्वित्वादहम् । गिरां वाचां पदलक्षणानां मध्ये एकमक्षरं पदमोंकारोऽहमस्मि । यज्ञानां मध्ये जपयज्ञो हिंसादिदोषशून्यत्वेनात्यन्तशोधकोऽहमस्मि । स्थावराणां स्थितिमतां मध्ये हिमालयोऽहम् । शिखरवतां मध्ये हि मेरुरहमित्युक्तमतः स्थावरत्वेन शिखरवत्त्वेन चार्थभेदाददोषः ॥ २५ ॥ सर्वेषां वृक्षाणां वनस्पतीनामन्येषां च । देवा एव सन्तो ये मन्त्रदर्शित्वेन ऋषित्वं प्राप्तास्ते देवर्षयस्तेषां मध्ये नारदोऽहमस्मि । गन्धर्वाणां गानधर्मिणां देवगायकानां मध्ये चित्ररथोऽहमस्मि । सिद्धानां जन्मनैव विनाप्रयत्नं धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानामधिगतपरमार्थानां मध्ये कपिलो मुनिरहम् ॥ २६ ॥ अश्वानां मध्ये उच्चैःश्रवसममृतमथनोद्भवमश्वं मां विद्धि । ऐरावतं गजममृतमथनोद्भवं गजेन्द्राणां मध्ये मां विद्धि । नराणां च मध्ये नराधिपं राजानं मां

५ भाष्योत्कर्षदीपिका ।

यथा त्वं पार्थानां मुख्य इति सूचयन्नाह—पार्थेति । सेनापतीनां कार्तिकेयः देवसेनापतिः । सरसां देवखातजलाशयानां सागरोऽस्मि ॥ २४ ॥ गिरां वाक्यपदलक्षणानां एकमक्षरमोंकारोऽस्मि । स्थावराणां स्थितिमताम् ॥ २५ ॥ देवानामेव सतां मन्त्रदर्शित्वात् ऋषित्वं प्राप्तानां नारदोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानादिनिरतिशयं प्राप्तानाम् ॥ २६ ॥ अमृतोद्भवममृतमथनोद्भवम् । इदं

६ श्रीधरीव्याख्या ।

मां विद्धि । सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दोऽहमस्मि । सरसां स्थिरजलाशयानां मध्ये समुद्रोऽस्मि ॥ २४ ॥ **महर्षीणामिति** । गिरां वाचां पदात्मिकानां मध्य एकमक्षरमोंकाराख्यं पदमस्मि । यज्ञानां श्रौतस्मार्तानां मध्ये जपरूपो यज्ञोऽहमस्मि ॥ २५ ॥ **अश्वत्थ इति** । देवा एव सन्तो मन्त्रदर्शनेन य ऋषित्वं प्राप्तास्तेषां मध्ये नारदोऽस्मि । सिद्धानामुत्पत्तित एवाधिगतपरमार्थतत्त्वानां मध्ये कपिलाख्यो मुनिरस्मि ॥ २६ ॥ **उच्चैःश्रवसमिति** । अमृतार्थं क्षीराब्धिमथनादुद्भूतमुच्चैःश्रवसं नामाश्वं

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीभगवान् । अथवा बह्वीतःपर्यन्तानि पद्यानि वक्ति । अहमात्मेत्यनेन व्यवच्छेदं वारयति । अन्यथा स्थावराणां हिमालय इत्यादिवाक्येषु हिमालय एव भगवान्नान्य इति व्यवच्छेदेन निर्विभागत्वाभावाद्ब्रह्मदर्शनं खण्डितमभविष्यत् । यतो यस्याखण्डाकारव्याप्तिस्तथा चेतसि

आयुधानामहं वज्रं धेनूनामस्मि कामधुक्।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥
अनन्तश्चास्मि नागानां वरुणो यादसामहम्।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम्।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम्।

१ श्रीमच्छांकरभाष्यम्।

च नराधिपं राजानं मां विद्धि जानीहि ॥ २७ ॥ आयुधानामिति। आयुधानामहं वज्रं दधीच्यस्थिसंभवम्। धेनूनां दोग्ध्रीणामस्मि कामधुक्। वसिष्ठस्य सर्वकामानां दोग्ध्री सामान्या वा कामधुक्। प्रजनः प्रजनयितास्मि कन्दर्पः कामः। सर्पाणां सर्पभेदानामस्मि वासुकिः सर्पराजः ॥ २८ ॥ अनन्त इति। अनन्तश्चास्मि नागानां नागविशेषाणां नागराजश्चास्मि। वरुणो यादसामहमब्देवतानां राजाहम्। पितॄणामर्यमा नाम पितृराजश्चास्मि। यमः संयमतां संयमनं कुर्वतामहम् ॥ २९ ॥ प्रह्लाद इति। प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानाम्। कालः कलयतां कलनं गणनं कुर्वतामहम्। मृगाणां च मृगेन्द्रः सिंहो व्याघ्रो वाहम्। वैनतेयश्च गरुत्मान्विनतासुतः पक्षिणां पतत्रिणाम् ॥ ३० ॥ पवन इति। पवनो वायुः पवतां पावयितॄणामस्मि। रामः शस्त्रभृतामहं शस्त्राणां धारयितॄणां दाश-

२ आनन्दगिरिव्याख्या।

व्युत्पत्तिमाश्रित्याह—प्रजनयितेति। सर्पा नागाश्च जातिभेदाद्भिद्यन्ते ॥ २८ ॥ २९ ॥ ३० ॥ अहमादिश्चेत्यादावुक्तमेव पुनरिहोच्यते। तथाच न पुनरुक्तिरित्याशङ्क्याह—भूतानामिति। सर्गशब्देन सृज्यन्त इति सर्वाणि कार्याणि

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

तोद्भवममृतमथनावसरे उद्भवो यस्य तम् ॥ २७ ॥ प्रजनोऽपत्यजनयिता कंदर्पः कामो नतु वृथामैथुनरूप ॥ २८ ॥ नागानां सर्पावान्तरभेदानाम्। यादसां जलचराणाम्। संयमतां नियमनकर्तॄणाम् ॥ २९ ॥ कलयतां गणनं कुर्वताम् ॥ ३० ॥ पवतां पावयितॄणां वेगवतां वा। रामो दाशरथिः। रामादीनां परमेश्वराणामपि विभूति-

४ मधुसूदनीव्याख्या।

विद्धीत्यनुषज्यते ॥ २७ ॥ आयुधानामस्त्राणां मध्ये वज्रं दधीचेरस्थिसंभवमस्त्रमहमस्मि। धेनूनां दोग्ध्रीणां मध्ये कामं दोग्धीति कामधुक् समुद्रमथनोद्भवा वसिष्ठस्य कामधेनुरहमस्मि। कामानां मध्ये प्रजनः प्रजनयिता पुत्रोत्पत्त्यर्थो यः कन्दर्पः कामः सोऽहमस्मि। चकारस्त्वर्थो रतिमात्रहेतुकामव्यावृत्त्यर्थः। सर्पाश्च नागाश्च जातिभेदाद्भिद्यन्ते तत्र सर्पाणां मध्ये तेषां राजा वासुकिरहमस्मि ॥ २८ ॥ नागानां जातिभेदानां मध्ये तेषां राजाऽनन्तश्च शेषाख्योऽहमस्मि। यादसां जलचराणां मध्ये तेषां राजा वरुणोऽहमस्मि। पितॄणां मध्येऽर्यमा नाम पितृराजश्चाहमस्मि। संयमतां संयमं धर्माधर्मफलदानेनानुग्रहं निग्रहं च कुर्वतां मध्ये यमोऽहमस्मि ॥ २९ ॥ दैत्यानां दितिवंश्यानां मध्ये प्रकर्षेण ह्लादयत्यानन्दयति परमसात्त्विकत्वेन सर्वानिति प्रह्लादश्चास्मि। कलयतां संख्यानं गणनं कुर्वतां मध्ये कालोऽहम्। मृगेन्द्रः सिंहः मृगाणां पशूनां मध्येऽहम्। वैनतेयश्च पक्षिणां विनतापुत्रो गरुडः ॥ ३० ॥ पवतां पावयितॄणां वेगवतां वा मध्ये पवनो वायुरहमस्मि। शस्त्रभृतां शस्त्रधारिणां

५ भाष्योत्कर्षदीपिका।

ऐरावतेऽपि संबन्धनीयम्। नराधिपं राजानम् ॥ २७ ॥ वज्रं दधीच्यस्थिसंभवम्। प्रजनश्च पुत्रप्रजननहेतुः कामः ॥ २८ ॥ अनन्तः शेषः। यादसां जलदेवतानाम्। संयमतां सम्यङ्नियमनं कुर्वताम् ॥ २९ ॥ कलयतां वशीकुर्वतां संख्यां कुर्वतां वा। मृगेन्द्रः सिंहः व्याघ्रो वा। विनतासुतो वैनतेयो गरुडः ॥ ३० ॥ पवतां पावयितॄणाम्। रामः श्रीरामचन्द्रः। झषाणां मत्स्यादीनां

६ श्रीधरीव्याख्या।

मद्विभूतिं विद्धि। अमृतोद्भवमित्येतदैरावतेऽपि संबध्यते। नराधिपं राजानं मां विद्धि ॥ २७ ॥ **आयुधानामिति**। आयुधानां मध्ये वज्रम्। कामान्दोग्धीति कामधुक्। प्रजनः प्रजोत्पत्तिहेतुः कंदर्पः कामोऽस्मि। न केवलं संभोगप्रधानः कामो मद्विभूतिः अशास्त्रीयत्वात्। सर्पाणां सविषाणां राजा वासुकिरस्मि ॥ २८ ॥ **अनन्त इति**। नागानां निर्विषाणां राजा अनन्तः शेषोऽस्मि। यादसां जलचराणां राजा वरुणोऽस्मि। पितॄणां राजा अर्यमास्मि। संयमतां नियमनं कुर्वतां मध्ये यमोऽस्मि ॥ २९ ॥ **प्रह्लाद इति**। कलयतां वशीकुर्वतां गणयतां वा मध्ये कालोऽहम्। मृगेन्द्रः सिंहः। पक्षिणां मध्ये गरुडोऽस्मि ॥ ३० ॥ **पवन इति**। पवतां पाव-

**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥**
**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

रथी रामोऽहम् । झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहम्, स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥ ३१ ॥ सर्गाणामिति । सर्गाणां सृष्टीनामादिरन्तश्च मध्यं चैवाहमुत्पत्तिस्थितिलया अहमर्जुन । भूतानां जीवाधिष्ठितानामेवादिरन्तश्चेत्याद्युक्तमुपक्रमे, इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः । अध्यात्मविद्या विद्यानां मोक्षार्थत्वात्प्रधानमस्मि । वादोऽर्थनिर्णयहेतुत्वात्प्रवदतां प्रधान-

२ आनन्दगिरिव्याख्या ।

गृह्यन्ते—अध्यात्मविद्येति । आत्मन्यन्तःकरणपरिणतिरविद्यानिवर्तिका गृहीता । प्रवदतां संबन्धी वादो वीत-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

मध्ये गणनं ध्यानार्थम् । झषाणां मत्स्यादीनां मकरो जातिभेदः । स्रोतसां नदीनाम् ॥ ३१ ॥ सर्गाणां भौतिकानां भूतानामादिरन्त इति प्रागेवोक्तत्वात् । विद्यानां चतुर्दशसंख्यानां मध्ये अध्यात्मविद्या बन्धच्छेदहेतुत्वात् । प्रवदतां

४ मधुसूदनीव्याख्या ।

युद्धकुशलानां मध्ये रामो दाशरथिरखिलराक्षसकुलक्षयकरः परमवीरोऽहमस्मि । साक्षात्स्वरूपस्याप्यनेन रूपेण चिन्तनार्थं वृष्णीनां वासुदेवोऽस्मीतिवदत्र पाठ इति प्रागुक्तम् । झषाणां मत्स्यानां मध्ये मकरो नाम तज्जातिविशेषः । स्रोतसां वेगेन चलज्जलानां नदीनां मध्ये सर्वनदीश्रेष्ठा जाह्नवी गङ्गाहमस्मि ॥ ३१ ॥ सर्गाणामचेतनसृष्टीनामादिरन्तश्च मध्यं चोत्पत्तिस्थितिलया अहमेव । हे अर्जुन, भूतानां जीवाविष्टानां चेतनत्वेन प्रसिद्धानामेवादिरन्तश्च मध्यं चेत्युक्तमुपक्रमे । इह त्वचेतनसर्गाणामिति न पौनरुक्त्यम् । विद्यानां मध्येऽध्यात्मविद्या मोक्षहेतुरात्मतत्त्वविद्याहम् । प्रवदतां प्रवदत्संबन्धिनां कथाभेदानां वादजल्पवितण्डात्मकानां मध्ये वादोऽहम् । भूतानामस्मि चेतनेत्यत्र यथा भूतशब्देन तत्संबन्धिनः परिणामा लक्षितास्तथेह प्रवदच्छब्देन तत्संबन्धिनः कथाभेदा लक्ष्यन्ते । अतो निधारणोपपत्तिः । यथाश्रुतेतूभयत्रापि संबन्धे षष्ठी । तत्र तत्त्वबुभु-

५ भाष्योत्कर्षदीपिका ।

मकरो नाम जातिविशेषः । स्रोतसां स्रवन्तीनां नदीनां जाह्नवी गङ्गा ॥ ३१ ॥ सर्गाणां सृष्टीनामुत्पत्तिस्थितिप्रलयानाम् । अहं एतादृशोऽपि परमार्थतः शुद्ध एवेति द्योतयन्नाह—**हे अर्जुनेति** । एतज्ज्ञानं शुद्धात्मज्ञानसाधनमिति वा संबोधनाशयः । 'अहमादिश्च मध्यं च भूतानामन्त एव च' इत्युपक्रमे भूतानां जीवाविष्टानामहमाद्यादिरित्युक्तम् । इह तु सर्वस्यैव सर्गमात्रस्येति न पौनरुक्त्यम् । नन्वहमादिश्च मध्यं चेत्यत्र सृष्ट्यादिकर्तृत्वं परमैश्वर्यमुक्तं, अत्र तूत्पत्तिप्रलयस्थितयो मद्विभूतित्वेन ध्येया इत्युच्यते इति विशेष इत्यनेनैं प्रकारेण विशेष आचार्यैः कुतो नोक्त इतिचेत् आद्यादिशब्दानामुभयत्रैकरूपत्वेन विशेषाश्रुतत्वात् । उपक्रमे पूर्वार्धभूतशब्दानुरोधेन भूतशब्दस्य जीवाविष्टभूतबोधकत्वेन सृज्यमात्रबोध+सर्गशब्दे च विशेषस्य श्रुतत्वात् श्रुतहान्यश्रुतकल्पनाभयादिति गृहाण । विद्यानामध्यात्मविद्याहमस्मि मोक्षार्थत्वादध्यात्मविद्यायाः । प्रवदतामित्यनेनेन वादजल्पवितण्डानां ग्रहणम् । वादादिस्वरूपबोधकानि गौतमसूत्राणि । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । सपक्षस्थापनहीना वितण्डेति । पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी तयोः परिग्रहो वादः साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसंदर्भः । ननु तावन्मात्रं कथान्तरसाधारणमत आह—**प्रमाणेत्यादिना** । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः । अत्र कारणस्याव्याप्यस्योपपत्तित आरोपादूह इत्यन्वयः । उपालम्भः दूषणं प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां साधनोपालम्भौ यत्र स तथा । ज्ञानमत्रानाहार्यं विवक्षितं सिद्धान्तेनाविरुद्धः पञ्चावयवैरुपपन्न इत्येतद्विशेषणद्वयं निग्रहस्थानविशेषनियमार्थम् । जल्पं लक्षयति—**यथेति** । यथोक्तेषु यदु-

६ श्रीधरीव्याख्या ।

पितॄणां वेगवतां वा मध्ये वायुरस्मि । शस्त्रभृतां वीराणां रामो दाशरथिः । यद्वा परशुरामः । झषाणां मत्स्यानां मकरो मत्स्यविशेषस्तिमिंगिलः । स्रोतसां प्रवाहोदकानां मध्ये भागीरथी ॥ ३१ ॥ **सर्गाणामिति** । सृज्यन्त इति सर्गा आकाशादयस्तेषामादिरन्तश्च मध्यं चैवाहम् । अहमादिश्च मध्यं चेत्यत्र सृष्ट्यादिकर्तृत्वं पारमैश्वर्यमुक्तम् । अत्र तूत्पत्तिस्थितिलया मद्विभूतित्वेन ध्येया इत्युच्यत इति विशेषः । अध्यात्मविद्या आत्मविद्या प्रवदतां वादिनां संबन्धिन्यो वादजल्पवितण्डाख्यास्तिस्रः कथाः प्रसिद्धास्तासां मध्ये वादोऽहम् ।

७ अभिनवगुप्ताचार्यव्याख्या ।

नोपारोहन्ति तां च जिज्ञासन्ति तस्यायमुपदेशग्रन्थः ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

१ श्रीधरः.

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मतः सोऽहमस्मि । प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति ॥ ३२ ॥ अक्षराणामिति । अक्षराणां वर्णानामकारो वर्णोऽस्मि । द्वन्द्वः समासोऽस्मि सामासिकस्य समाससमूहस्य । किंचाहमेवाक्षयोऽक्षीणः कालः प्रसिद्धः क्षणलवाख्यः । अथवा परमेश्वरः

२ आनन्दगिरिव्याख्या ।

रागकथा तत्त्वनिर्णयावसाना । यदा प्रवदतामिति लक्षणया कथाभेदोपादानं तदा निर्धारणे षष्ठीत्याह—प्रवक्त्रिति ॥ ३१ ॥ ३२ ॥ सर्वहरशब्दस्य मुख्यमर्थान्तरमाह—अथवेति । भाविकल्याणानामित्युक्तमेव स्पष्टयति—उत्क-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रवक्तृद्वारेण वदनभेदा एव वादजल्पवितण्डा इह गृह्यन्ते । तेषां मध्ये वादस्तत्त्वनिर्णयार्थत्वादहम् ॥ ३२ ॥ अक्षराणां मध्ये अकारः । 'अकारो वै सर्वा वाक्' इति श्रुतेः । सामासिकस्य समाससमुदायस्य मध्येऽहं द्वन्द्वोऽस्मि । उभयपदार्थप्रधानत्वादिति प्राञ्चः । समं एकत्रासनं समासो विदुषां वा गुरुशिष्याणां वा मन्त्रार्थकथनार्थं वा एकत्रावस्थानं तत्र विदितमर्थजातं सामासिकम् । चातुरर्थिकष्ठक् 'ठस्येकः' इतीकादेशः । 'यस्येति च' इत्यलोपः । तस्य मध्ये द्वन्द्वो रहस्योर्थोऽहम् । 'द्वन्द्वं रहस्–' इति सूत्रे द्वन्द्वशब्दस्य रहस्यवाचित्वं शाब्दिकप्रसिद्धम् । अक्षयः क्षयहीनः कालः क्षणादिः परो वा ईश्वरः कालस्यापि कालोऽस्मि । धाता कर्मफलप्रदः । विश्वतोमुखः सर्वप्राणितृप्त्या

४ मधुसूदनीव्याख्या ।

त्स्योर्वीतरागयोः सब्रह्मचारिणोर्गुरुशिष्ययोर्वा प्रमाणेन तर्केण च साधनदूषणात्मा सपक्षप्रतिपक्षपरिग्रहस्तत्त्वनिर्णयपर्यन्तो वादः । तदुक्तं 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः' इति । वादफलस्य तत्त्वनिर्णयस्य दुर्दुरूढवादिनिराकरणेन संरक्षणार्थं विजिगीषुकथे जल्पवितण्डे जयपराजयमात्रपर्यन्ते । तदुक्तं 'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखाप्रावरणवत्' इति छलजातिनिग्रहस्थानैः परपक्षो दूष्यत इति जल्पे वितण्डायां च समानम् । तत्र वितण्डायामेकेन स्वपक्षः स्थाप्यत एव । अन्येन च स दूष्यत एव । जल्पेतूभाभ्यामपि स्वपक्षः स्थाप्यत उभाभ्यामपि परपक्षो दूष्यत इति विशेषः । तदुक्तं 'यथोक्तोपपन्नछलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः', 'स प्रतिपक्षस्थापनाहीनो वितण्डा' इति, अतो वितण्डाद्वयशरीरत्वाज्जल्पोनाम नैका कथा किंतु शक्त्यतिशयज्ञानार्थं समयबन्धमात्रेण प्रवर्तत इति खण्डनकाराः । तत्त्वाध्यवसायपर्यवसायित्वेन तु वादस्य श्रेष्ठत्वमुक्तमेव ॥ ३२ ॥ अक्षराणां सर्वेषां वर्णानां मध्ये अकारोऽहमस्मि । 'अकारो वै सर्वा वाक्' इति श्रुतेस्तस्य श्रेष्ठत्वं प्रसिद्धम् । द्वन्द्वः समास उभयपदार्थप्रधानः सामासिकस्य

५ भाष्योत्कर्षदीपिका ।

पपन्नं तेनोपपन्न इत्यर्थः । तथाच प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः । प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां नतु ज्ञानेऽनाहार्यत्वं विवक्षितम् । आरोपितप्रमाणभावेनापि जल्पस्य निर्वाहात् । छलादिभिः साधनस्य परकीयानुमानस्योपालम्भो यत्रेत्यर्थः । छलेत्यादिना विजिगीषुकथात्वं बोध्यते । विजिगीषुर्हि छलादिकं करोति । तथा चोभयपक्षस्थापनवती विजिगीषुकथा जल्प इत्यर्थः । वितण्डां लक्षयति—**सेति** । स जल्पः स्थापनद्वयवत्त्वं विहाय जल्पैकदेशः । प्रतिपक्षो द्वितीयः पक्षस्तथाच प्रतिपक्षस्थापनहीना विजिगीषुकथा वितण्डेति । तथाचार्थनिर्णयहेतुत्वाद्वादस्य श्रेष्ठत्वाद्वादोऽहमस्मि ॥ ३२ ॥ अक्षराणामकारो वर्णोऽस्मि 'अकारो वै सर्वा वाक्', 'अकारो वासुदेवः स्यात्' इत्युक्तेः । सामासिकस्याव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वसमाससमुदायस्य द्वन्द्वः समासोऽस्मि । तस्योभयपदप्रधानत्वेन श्रेष्ठत्वात् । ननु सममेकत्र आसनं समासो विदुषां वा गुरुशिष्याणां वा मन्त्रार्थ कथार्थं वा एकत्रावस्थानं तत्र विदितमर्थजातं सामासिकं चातुर्थिकष्ठक् । 'ठस्येकः' इतीकादेशः । 'यस्येति च' इत्यलोपः ।

६ श्रीधरीव्याख्या ।

यत्र द्वाभ्यामपि प्रमाणतस्तर्कतश्च स्वपक्षः स्थाप्यते, परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यते स जल्पो नाम । यत्र त्वेकः स्वपक्षं स्थापयत्यन्यस्तु छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति नतु स्वपक्षं साधयति सा वितण्डा नाम कथा । तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले, वादस्तु वीतरागयोः शिष्याचार्ययोरन्ययोर्वा तत्त्वनिर्णयफलश्च । अतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः ॥ ३२ ॥ **अक्षरेति** । अक्षराणां वर्णानां मध्येऽकारोऽस्मि, तस्य सर्ववाङ्मयत्वेन श्रेष्ठत्वात् । तथाच श्रुतिः 'अकारो हि सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति' इति । सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः रामकृष्णावित्यादिसमासोऽस्मि, उभय-

१ नीलकण्ठः.

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥**
**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कालस्यापि कालोऽस्मि । धाताहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥ ३३ ॥ मृत्युरिति । मृत्युर्द्विविधो धनादिहरः प्राणहरश्च सर्वहर उच्यते सोऽहमित्यर्थः । अथवा पर ईश्वरः प्रलये सर्वहरणात्सर्वहरः सोऽहम् । उद्भव उत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुश्चाहं, केषां, भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानामित्यर्थः । कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमेत्येता उत्तमाः स्त्रीणामहमस्मि यासामाभासमात्रसंबन्धेनापि लोकः कृतार्थमात्मानं मन्यते ॥ ३४॥ बृहत्सा-**

२ आनन्दगिरिव्याख्या ।

**र्षेति** । कीर्तिर्धार्मिकत्वनिमित्ता ख्यातिः । श्रीर्लक्ष्मीः, कान्तिः शोभा, वाग्वाणी सर्वस्य प्रकाशिका, स्मृतिश्चिरानुभूतस्मरणशक्तिः, मेधा ग्रन्थधारणशक्तिः, धृतिर्धैर्यम्, क्षमा मानापमानयोरविकृतचित्तता । स्त्रीषु कीर्त्यादीनामुत्तमत्वमुपपादयति—**यासामिति** ॥ ३३ ॥ ३४ ॥ वेदानां सामवेदोऽस्मीत्युक्तं तत्रावान्तरविशेषमाह—**बृहदिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तृप्यामीत्यर्थः ॥ ३३ ॥ सर्वहरः प्रलयकालिको मृत्युरस्मि । भविष्यतां भाविकल्याणानामुद्भव ऐश्वर्योत्कर्षोऽहम् । कीर्त्यादिसप्तकमप्यहं यासां संश्रयमात्रेण मनुष्येषु कृतार्थताबुद्धिर्भवति ॥ ३४॥ बृहत्साम 'त्वामिद्धि हवामहे'

४ मधुसूदनीव्याख्या ।

समाससमूहस्य मध्येऽहमस्मि । पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिरिति तेषामुभयपदार्थसाम्याभावेनापकृष्टत्वात् । क्षयिकालाभिमानी अक्षयः परमेश्वराख्यः कालः 'ज्ञः कालकालो गुणी सर्वविद्यः' इत्यादिश्रुतिप्रसिद्धोऽहमेव । कालः कलयतामहमित्यत्र तु क्षयी काल इति उक्तभेदः । कर्मफलविधातॄणां मध्ये विश्वतोमुखः सर्वतोमुखो धाता सर्वकर्मफलदातेश्वरोऽहमित्यर्थः ॥ ३३ ॥ संहारकारिणां मध्ये सर्वहरः सर्वसंहारकारी मृत्युरहम् । भविष्यतां भाविकल्याणानां य उद्भव उत्कर्षः स चाहमेव । नारीणां मध्ये कीर्तिः श्रीर्वाक् स्मृतिर्मेधा धृतिः क्षमेति च सप्त धर्मपत्न्योऽहमेव । तत्र कीर्तिर्धार्मिकत्वनिमित्ता प्रशस्तत्वेन नानादिग्देशीयलोकज्ञानविषयतारूपा ख्यातिः । श्रीर्धर्मार्थकामसंपत् शरीरशोभा वा कान्तिर्वा । वाक् सरस्वती सर्वस्यार्थस्य प्रकाशिका संस्कृता वाणी । चकारान्मूर्त्यादयोऽपि धर्मपत्न्यो गृह्यन्ते । स्मृतिश्चिरानुभूतार्थस्मरणशक्तिः । अनेकग्रन्थार्थधारणाशक्तिर्मेधा । धृतिरवसादेऽपि शरीरेन्द्रियसंघातोत्तम्भनशक्तिः । उच्छृङ्खलप्रवृत्तिकारणेन चापलप्राप्तौ तन्निवर्तनशक्तिर्वा । क्षमा हर्षविषादयोरविकृतचित्तता । यासामाभासमात्रसंबन्धेनापि जनः

५ भाष्योत्कर्षदीपिका ।

तस्य मध्ये द्वन्द्वो रहस्योर्थोऽहं 'द्वन्द्वं रहस्य—' इति सूत्रे द्वन्द्वशब्दस्य रहस्यवाचित्वं शाब्दिकप्रसिद्धमिति भाष्यकारैः कुतो न व्याख्यातमितिचेत् समासशब्दस्याव्ययीभावादौ द्वन्द्वशब्दस्य द्वन्द्वसमासे च योगरूढेः केवलं योगापेक्षया प्रबलत्वात् प्रकृते द्वन्द्वशब्दस्य पुंस्त्वेन निर्देशात् । अक्षराणामकारोऽस्मीतिसमभिव्याहाराच्चेति गृहाण । अन्यथाक्षराणां 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'प्राणा वै सत्यम्' इत्यादिनाऽक्षयत्वेन प्रतिपादितानां न करोतीत्यकारः कर्तृत्वादिवर्जितः परमात्माहं तस्य परमार्थसत्यत्वात् । यद्वाक्षराणां व्यापकानां करोतीति करः कर एव कारः स्वार्थिकः प्रज्ञाद्यण्प्रत्ययः नकारोऽकारः आकाशोऽहम् । एकत्र रणभूमौ आसनमासोऽवस्थानं तत्र भवं युद्धजातं सामासिकं तस्य मध्ये द्वन्द्वः द्वन्द्वयुद्धमहं इत्यादि यत्किंचित्कल्पयितुं शक्यम् । तस्मादाचार्योक्तमेव सम्यक् इति दिक् । अक्षयः क्षयवर्जितः कालोऽहमेव । यद्वा कालस्यापि कालः परमेश्वरोऽहमेव । फलदातॄणां मध्ये सर्वस्य विश्वस्य कर्मफलस्य विधाता सर्वतोमुखोऽहमेवेत्यर्थः ॥ ३३ ॥ मृत्युः सर्वहरः प्राणहरस्तस्य सर्वहरत्वात् । धनादिहरस्तु न सर्वहरः । यद्वा प्रलयकाले सर्वहरः परमेश्वररूपो मृत्युरहम् । भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानां मध्ये उत्कर्षाभ्युदयप्राप्तिहेतुरहम् । नारीणां कीर्त्यादयो नार्योऽहं यासामाभासमात्रेणापि लोकः

६ श्रीधरीव्याख्या ।

पदप्रधानत्वेन श्रेष्ठत्वात् । अक्षयः प्रवाहरूपः कालोऽहमेव । कालः कलयतामित्यत्रायुर्गणनात्मकः संवत्सरशताद्यायुःस्वरूपकाल उक्तः स च तस्मिन्नायुषि क्षीणे सति क्षीयते, अत्र तु प्रवाहात्मकोऽक्षयः काल उच्यत इति विशेषः । कर्मफलविधातॄणां मध्ये विश्वतोमुखो धाता । सर्वकर्मफलविधाताहमित्यर्थः ॥ ३३ ॥ **मृत्युरिति** । संहारकारिणां मध्ये सर्वहरो मृत्युरहम् । भविष्यतां भाविकल्याणानां प्राणिनामुद्भवोऽभ्युदयोऽहम् । नारीणां स्त्रीणां मध्ये कीर्त्याद्याः सप्त देवतारूपाः स्त्रियोऽहम् । यासामाभासमात्रयोगेन प्राणिनः श्लाघ्या भवन्ति ताः कीर्त्याद्याः स्त्रियो मद्विभूतयः ॥ ३४ ॥ **बृहत्सामेति** । 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीयमानं बृहत्साम तेन

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥**
**वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।**
**मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**मेति । बृहत्साम तथा साम्नां प्रधानमस्मि । गायत्री छन्दसामहं गायत्र्यादिच्छन्दोविशिष्टानामृचां गायत्र्यृगहमित्यर्थः । मासानां मार्गशीर्षोऽहम् । ऋतूनां कुसुमाकरो वसन्तः ॥३५॥ द्यूतमिति । द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि । तेजस्विनां तेजोऽहं । जयोऽस्मि जेतॄणां । व्यवसायोऽस्मि व्यवसायिनां । सत्त्वं सत्त्ववतां सात्त्विकानामहम् ॥ ३६ ॥ वृष्णीनामिति । वृष्णीनां वासुदे-**

२ आनन्दगिरिव्याख्या ।

छन्दसां मध्ये गायत्री नाम यच्छन्दस्तदहमित्युक्तं छन्दसामृग्भ्योऽतिरेकेण स्वरूपभावादित्याशङ्क्याह—**गायत्र्यादीति** । द्विजातेर्द्वितीयजन्मजननीत्वादित्यर्थः । मार्गशीर्षो मृगशीर्षेण युक्ता पौर्णमास्यस्मिन्निति मार्गशीर्षो मासः सोऽहं पक्वसस्याढ्यत्वादित्याह—**मासानामिति** । वसन्तो रमणीयत्वादिति शेषः ॥ ३५ ॥ द्यूतमुक्तलक्षणं सर्वस्वापहारकारणमन्यापदेशेन पराभिप्रेतं निघ्नतां स्वाभिप्रेतं वा संपादयतामित्याह—**छलस्येति** । तेजोऽप्रतिहताज्ञा, उत्कर्षो जयः, व्यवसायः फलहेतुरुद्यमः, धर्मज्ञानवैराग्यादि सत्त्वकार्यं सत्त्वम् ॥ ३६ ॥ उशना शुक्रः, कविशब्दोऽत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

इत्यस्यामृचि गीयमानं साम पृष्ठ्यस्तोत्रे विनियुक्तमिन्द्रदेवत्यं तत् साम्नां मध्येऽहमस्मि । छन्दसां मध्ये गायत्री द्विजत्वसंपादनात्सोमाहरणाच्च श्रेष्ठाहमस्मि । कुसुमाकरो वसन्तः ॥ ३५ ॥ व्यवसायो निश्चय उद्यमो वा ॥ ३६ ॥

४ मधुसूदनीव्याख्या ।

सर्वलोकादरणीयो भवति तासां सर्वस्त्रीभूत्तमत्वमिति प्रसिद्धमेव ॥ ३४ ॥ वेदानां सामवेदोऽस्मीत्युक्तं तत्रायमन्यो विशेषः । साम्नामृगक्षरारूढानां गीतिविशेषाणां मध्ये 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीतिविशेषो बृहत्साम । तच्चातिरात्रे पृष्ठस्तोत्रं सर्वेश्वरत्वेनेन्द्रस्तुतिरूपमन्यतः श्रेष्ठत्वादहम् । छन्दसां नियताक्षरपादत्वरूपच्छन्दोविशिष्टानामृचां मध्ये द्विजातेर्द्वितीयजन्महेतुत्वेन प्रातःसवनादिसवनत्रयव्यापित्वेन त्रिष्टुब्जगतीभ्यां सोमाहरणार्थं गताभ्यां सोमो न लब्धोऽक्षराणि च हारितानि जगत्या त्रीणि त्रिष्टुभैकमिति चत्वारि तैरक्षरैः सह सोमस्याहरणेन च सर्वश्रेष्ठा गायत्री ऋगहम् । 'चतुरक्षराणि ह वा अग्रे छन्दांस्यासुस्ततो जगती सोममच्छापतत्सा त्रीण्यक्षराणि हित्वा जगाम ततस्त्रिष्टुप्सोममच्छापतत्सैकमक्षरं हित्वापतत्ततो गायत्रीसोममच्छापतत्सा तानि चाक्षराणि हरन्त्यागच्छत्सोमं च तस्मादष्टाक्षरा गायत्री'त्युपक्रम्य 'तदाहुर्गायत्राणि वै सर्वाणि सवनानि गायत्री ह्येवैतदुपसृजामो नैतत्' इति शतपथश्रुतेः 'गायत्री वा इदं सर्वं भूतम्' इत्यादिछान्दोग्यश्रुतेश्च । मासानां द्वादशानां मध्येऽभिनवशालिवास्तूकशाकादिशाली शीतातपशून्यत्वेन च सुखहेतुर्मार्गशीर्षोऽहम् । ऋतूनां षण्णां मध्ये कुसुमाकरः सर्वसुगन्धिकुसुमानामाकरोऽतिरमणीयो वसन्तः । 'वसन्ते ब्राह्मणमुपनयीत', 'वसन्ते ब्राह्मणोऽग्नीनादधीत', 'वसन्तेवसन्ते ज्योतिषा यजेत', 'तद्वै वसन्त एवाभ्यारभेत', 'वसन्तो वै ब्राह्मणस्यर्तुः' इत्यादिशास्त्रप्रसिद्धोऽहमस्मि ॥ ३५ ॥ छलयतां छलस्य परवञ्चनस्य कर्तॄणां संबन्धि द्यूतमक्षदेवनादिलक्षणं सर्वस्वापहारकारणमहमस्मि । तेजस्विनामत्युग्रप्रभावानां संबन्धि तेजोऽप्रतिहताज्ञत्वमहमस्मि । जेतॄणां पराजितापेक्षयोत्कर्षलक्षणो जयोऽस्मि । व्यवसायिनां व्यवसायः फलाव्यभिचार्युद्यमोऽहमस्मि । सत्त्ववतां सात्त्विकानां धर्मज्ञानवैराग्यैश्वर्यलक्षणं सत्त्वकार्यमेवात्र सत्त्वमहम् ॥ ३६ ॥ साक्षादीश्वरस्यापि विभूतिमध्ये पाठस्तेन रूपेण

५ भाष्योत्कर्षदीपिका ।

कृतार्थमात्मानं मन्यते ॥ ३४ ॥ साम्नां गीतिविशेषाणां बृहत्साम 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीतिविशेषे सर्वेश्वरत्वेनेन्द्रस्तुतिरूपं अतिरात्रे पृष्ठस्तोत्रं श्रेष्ठत्वादहम् । नियताक्षरपादरूपच्छन्दोविशिष्टानामृचां मध्ये द्विजत्वादिहेतुर्गायत्री ऋगहम् । मासानां मार्गशीर्षः सस्यादिसंपन्नत्वेन सुखजनकत्वात् । कुसुमाकरो वसन्तः पुष्पाकरत्वेन शोभनत्वात् ॥ ३५ ॥ छलस्य परवञ्चनस्य कर्तॄणां मध्ये द्यूतं अक्षदेवनादिरूपम् । जेतॄणां जयस्य कर्तॄणाम् । व्यवसायो निश्चयः फलहेतुरुद्यमो वा ॥ ३६ ॥ मुनीनां मौनशीलानां सकलपदार्थविदां कवीनां क्रान्तदर्शिनां उशना शुक्रः ॥ ३७ ॥ दण्डोऽदान्तदमनकारणं दमयतां

६ श्रीधरीव्याख्या ।

चेन्द्रः सर्वेश्वरत्वेन स्तूयत इति श्रेष्ठ्यं दर्शितम् । छन्दोविशिष्टानां मन्त्राणां मध्ये गायत्र्यहम्, द्विजत्वापादकत्वेन सोमाहरणेन च श्रेष्ठत्वात् । कुसुमाकरो वसन्तः ॥ ३५ ॥ द्यूतमिति । छलयतामन्योन्यवञ्चनपराणां संबन्धि द्यूतमस्मि । तेजस्विनां प्रभाववतां तेजः प्रभावोऽस्मि । जेतॄणां जयोऽस्मि । व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि । सत्त्ववतां सात्त्विकानां सत्त्वमहम् ॥ ३६ ॥ वृष्णी-

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥**
**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥**
**नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।**

१ श्रीमच्छांकरभाष्यम् ।

वोऽस्म्ययमेवाहं त्वत्सखा। पाण्डवानां धनंजयस्त्वमेव। मुनीनां मननशीलानां सर्वपदार्थज्ञानिनामप्यहं व्यासः। कवीनां क्रान्तदर्शिनामुशना कविरस्मि ॥ ३७ ॥ दण्ड इति। दण्डो दमयतां दमयितृणामस्म्यदान्तानां दमकारणम्। नीतिरस्मि जिगीषतां जेतुमिच्छताम्। मौनं चैवास्मि गुह्यानां गोप्यानां। ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥ यच्चापीति। यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमर्जुन, प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह। न तदस्ति भूतं चराचरं चरमचरं वा मया विना यत्स्याद्भवेन्मयापकृष्टं परित्यक्तं निरात्मकं शून्यं हि तत्स्यादतो मदात्मकं सर्वमित्यर्थः ॥ ३९ ॥ नान्तोऽस्तीति। नान्तोऽस्ति

२ आनन्दगिरिव्याख्या ।

यौगिको न रूढः पौनरुक्त्यात् ॥ ३७ ॥ अदान्तानुत्पथान्पथि प्रवर्तयतां दण्डोऽहमुत्पथप्रवृत्तौ निग्रहहेतुरित्यर्थः । नीतिर्न्यायो धर्मस्य जयोपायस्य प्रकाशकः। मौनं वाचंयमत्वमुत्तमा वा चतुर्थाश्रमप्रवृत्तिः । श्रवणादिद्वारा परिपक्वसमाधिजन्यं सम्यग्ज्ञानं ज्ञानम् ॥ ३८ ॥ जाड्यमात्रप्रतिबिम्बितं चैतन्यं बीजम्। किमिति स्थावरं जङ्गमं वा त्वदतिरेकेण न भवति तत्राह—**मयेति**। तस्यापि स्वरूपेण सत्त्वमाशङ्क्योक्तं—**शून्यं हीति** । आत्मनोऽपकर्षादित्यर्थः। मयैव सच्चिदानन्दस्वरूपेण सर्वस्य सिद्धेरित्यतःशब्दार्थः ॥ ३९ ॥ दिव्यानां विभूतीनां परिमितत्वशङ्कां वारयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वृष्णीनां यादवानाम्। उशना शुक्रः ॥ ३७ ॥ दमयतां राजादीनां दमनसाधनं दण्डोऽहमस्मि। जिगीषतां जेतुमिच्छतां जयसाधनं नीतिरस्मि। मौनं वाचोनिग्रहः ॥ ३८ ॥ सर्वभूतानां बीजमित्यनेन सर्वभूतानि मद्विभूतिरिति दर्शितम्, तदेवोपपादयति—**न तदस्तीति**। मया विना भूतं किमपि नास्ति। उपादेयस्योपादानमन्तरेण स्थित्य-

४ मधुसूदनीव्याख्या ।

चिन्तनार्थं इति प्रागेवोक्तम्। वृष्णीनां मध्ये वासुदेवो वसुदेवपुत्रत्वेन प्रसिद्धस्त्वदुपदेष्टायमहम्। तथा पाण्डवानां मध्ये धनंजयस्त्वमेवाहम्। मुनीनां मननशीलानामपि मध्ये वेदव्यासोऽहम्। कवीनां क्रान्तदर्शिनां सूक्ष्मार्थविवेकिनां मध्ये उशना कविरिति ख्यातः शुक्रोऽहम् ॥ ३७ ॥ दमयतामदान्तानुत्पथान्पथि प्रवर्तयतामुत्पथप्रवृत्तौ निग्रहहेतुर्दण्डोऽहमस्मि । जिगीषतां जेतुमिच्छतां नीतिर्न्यायो जयोपायस्य प्रकाशकोऽहमस्मि । गुह्यानां गोप्यानां गोपनहेतुर्मौनं वाचंयमत्वमहमस्मि । नहि तूष्णींस्थितस्याभिप्रायो ज्ञायते। गुह्यानां गोप्यानां मध्ये संन्यासश्रवणमननपूर्वकमात्मनो निदिध्यासनलक्षणं मौनं वाहमस्मि। ज्ञानवतां ज्ञानिनां यच्छ्रवणमनननिदिध्यासनपरिपाकप्रभवमद्वितीयात्मसाक्षात्काररूपं सर्वाज्ञानविरोधि ज्ञानं तदहमस्मि ॥ ३८ ॥ यदपि च सर्वभूतानां प्ररोहकारणं बीजं तन्मायोपाधिकं चैतन्यमहमेव। हे अर्जुन, मया विना यत्स्याद्भवेच्चरमचरं वा भूतं वस्तु तन्नास्त्येव। यतः सर्वं मत्कार्यमेवेत्यर्थः ॥ ३९ ॥ प्रकरणार्थमुपसंहरन् विभूतिं संक्षिपति—हे परंतप परेषां

५ भाष्योत्कर्षदीपिका ।

दमनकर्तॄणाम्। जिगीषतां जेतुमिच्छतां जयहेतुर्नीतिरहम्। गुह्यानां गोप्यानां मौनं तूष्णींभावोऽहम् ॥ ३८ ॥ बीजं प्ररोहकारणम्। एतन्मद्विभूतिज्ञानमन्तःकरणशोधकमिति सूचयन्नाह—**हे अर्जुनेति**। प्रकृतमुपसंहरन्विभूतिसंक्षेपमाह—**नेति**। स्थावरजंगमं भूतं मयाविना यद्भवेत् तन्नास्ति, मया त्यक्तस्य निरात्मकस्य शून्यत्वापत्तेर्मदात्मकं सर्वमित्यर्थः ॥ ३९ ॥ मम दिव्यानामन्तो नास्ति परमेश्वरविभूतीनामियत्तारहितानामियत्ता केनचिद्वक्तुं ज्ञातुं वा न शक्या। एष तूद्देशत एकदेशेन

६ श्रीधरीव्याख्या ।

**नामिति**। वासुदेवो योऽहं त्वामुपदिशामि। धनंजयस्त्वमेव मद्विभूतिः। मुनीनां वेदार्थमननशीलानां वेदव्यासोऽहमस्मि। कवीनां काव्यदर्शिनां मध्ये उशनानाम कविः शुक्रः ॥ ३७ ॥ **दण्ड इति**। दमयतां दमनकर्तॄणां संबन्धी दण्डोऽस्मि येनासंयता अपि संयता भवन्ति स दण्डो मद्विभूतिः। जेतुमिच्छतां संबन्धिनी सामाद्युपायरूपा नीतिरस्मि। गुह्यानां गोप्यानां गोपनहेतुर्मौनमवचनमहमस्मि, नहि तूष्णींस्थितस्याभिप्रायो ज्ञायते। ज्ञानवतां तत्त्वज्ञानिनां यज्ज्ञानं तदहम् ॥ ३८ ॥ **यदिति**। यदपि च सर्वभूतानां बीजं प्ररोहकारणं तदहम् । तत्र हेतुः मया विना यत्स्याद्भवेत् तच्चराचरं भूतं नास्त्येवेति ॥ ३९ ॥ प्रकरणार्थमुपसंहरति—

**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**
**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ४१ ॥**
**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

१ श्रीमच्छांकरभाष्यम् ।

मम दिव्यानां विभूतीनां विस्तराणां परंतप । नहीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनामियत्ता शक्या वक्तुं ज्ञातुं वा केनचित् । एष तूद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥ यद्यदिति । यद्यल्लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तु श्रीमदूर्जितमेव वा श्रीर्लक्ष्मीस्तया सहितमुत्साहोपेतं वा तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोंशसंभवं तेजसोंऽश एकदेशः संभवो यस्य तत्तेजोंशसंभवमित्यवगच्छ त्वम् ॥ ४१ ॥ अथवेति । अथवा बहुनैतेनैवमादिना किं ज्ञातेन

२ आनन्दगिरिव्याख्या ।

नेत्यादिना । तदेवोपपादयति—नहीति । कथं तर्हि विभूतेर्विस्तरो दर्शितस्तत्राह—एष त्विति ॥ ४० ॥ अनुक्ता अपि परस्य विभूतीः संग्रहीतुं लक्षणमाह—यद्यदिति । वस्तु प्राणिजातं, श्रीमत्समृद्धिमद्वा कान्तिमद्वा । सप्राणं बलवदूर्जितं तदाह—उत्साहेति । संभवत्यस्मादिति संभवः । तेजसश्चैतन्यस्येश्वरशक्तेर्वांशस्तेजोंशः संभवोऽस्येति तेजोंशसंभवम् । तदाह—तेजस इति ॥ ४१ ॥ सर्वेषां सुगमत्वायावयवशो विभूतिमुक्त्वा भक्तानुग्रहार्थं साकल्येन तामाह—अथवेति । पक्षान्तरपरिग्रहार्थमथवेत्युक्तम् । बहुधा विस्तीर्णेनैतेन ग्रन्थेन संज्ञातेन सावशेषेण तव शक्तस्य न

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संभवात् ॥ ३९ ॥ नान्तोऽस्तीति । उद्देशत एकदेशेन विभूतेर्विस्तरो विस्तारो मया प्रोक्तः ॥ ४० ॥ सर्वभूतानां बीजमहमित्युक्त्या स्वस्य सार्वात्म्योक्तेः सर्वं स्वविभूतिरित्युक्तमेव तथापि तद्ग्रहणाशक्तं प्रति प्राह—यद्यदिति । यद्यत्सत्त्वं प्राणि विभूतिमदैश्वर्ययुक्तम् । श्रीर्लक्ष्मीः शोभा वा तद्युक्तम् । ऊर्जितं बलाद्यतिशययुक्तम् । तत्तत्सर्वं मम तेजसश्चिच्छक्तेरंशसंभवमंशात्संभूतं त्वमवगच्छ जानीहि । लोके यदतिरमणीयं तद्भगवतो रूपमिति ध्यायेदित्यर्थः ॥ ४१ ॥ उत्तमाधिकारिणमुद्दिश्याह—अथवेति । मूढान्प्रत्येतदुक्तं, त्वं तु एतावदेव विद्धि । एकांशेन

४ मधुसूदनीव्याख्या ।

शत्रूणां कामक्रोधलोभादीनां तापजनक, मम दिव्यानां विभूतीनामन्त इयत्ता नास्ति । अतः सर्वज्ञेनापि सा शक्यते ज्ञातुं वक्तुं वा । सन्मात्रविषयत्वात्सर्वज्ञतायाः । एष तु त्वां प्रत्युद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो विस्तारो मया ॥ ४० ॥ अनुक्ता अपि भगवतो विभूतीः संग्रहीतुमुपलक्षणमिदमुच्यते । यद्यत्सत्त्वं प्राणि विभूतिमदैश्वर्ययुक्तं तथा श्रीमत् श्रीर्लक्ष्मीः संपत् शोभा कान्तिर्वा तया युक्तं तथा ऊर्जितं बलाद्यतिशयेन युक्तं तत्तदेव मम तेजसः शक्तेरंशेन संभूतं त्वमवगच्छ जानीहि ॥ ४१ ॥ एवमवयवशो विभूतिमुक्त्वा साकल्येन तामाह—अथवेति पक्षान्तरे । बहुनैतेन सावशेषेण ज्ञातेन

५ भाष्योत्कर्षदीपिका ।

विभूतीनां विस्तरो मया प्रोक्तः । उक्तविभूतिपरिचिन्तनेन परान् रागद्वेषादीन् शत्रून्तापयेति संबोधनाशयः ॥ ४० ॥ इदं त्वबधेयमित्याह । यद्यत्सत्त्वं वस्तु विभूतिरैश्वर्यं तद्युक्तं, श्रीर्लक्ष्मीस्तया युक्तं, ऊर्जितमेव वा उत्साहयुक्तमेव वा तत्तन्मत्तेजसोंश एकदेशः संभवो यस्य तदवगच्छ त्वं विजानीहि ॥ ४१ ॥ एवं संक्षेपविस्तराभ्यां विभूतीरुक्त्वाऽशक्तं प्रत्याह—अथवेति । एतेन बहुन

६ श्रीधरीव्याख्या ।

नान्त इति । अनन्तत्वाद्विभूतीनां ताः साकल्येन वक्तुं न शक्यन्ते, एष तु विभूतेर्विस्तर उद्देशतः संक्षेपतः प्रोक्तः ॥ ४० ॥ पुनश्च साकाङ्क्षं प्रति कथंचित्साकल्येन कथयति—यद्यदिति । विभूतिमदैश्वर्ययुक्तम् श्रीमत्संपत्तियुक्तम् ऊर्जितं केनचित्प्रभावबलादिना गुणेनातिशयितं यद्यत्सत्त्वं वस्तुमात्रं तत्तदेव मम तेजसः प्रभावस्यांशेन संभूतं जानीहि ॥ ४१ ॥ अथवा किमनेन परिच्छिन्नशानेन सर्वत्र

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ यद्यदिति । तथा ह्युपसंहारे भेदाभेदवादं यद्यद्विभूतिमत्सत्त्वमित्यनेनाभिधाय पश्चादभेदमेवोपसंहरति—अथवा किं बहुनैतेन विष्टभ्याहमित्येकेनांशेन जगत्स्थित इति । उक्तं हि 'पादोऽस्य विश्वा भूतानि

१ श्रीमच्छांकरभाष्यम् ।

**तवार्जुन स्यात्सावशेषेण । अशेषतस्त्वसिममुच्यमानमर्थं शृणु । विष्टभ्य विशेषतः स्तम्भनं दृढं कृत्वेदं कृत्स्नं जगदेकांशेनैकावयवेनैकपादेन सर्वभूतस्वरूपेणेत्येतत् । तथाच मन्त्रवर्णः 'पादोऽस्य सर्वा भूतानि' इति स्थितोऽहमिति ॥ ४२ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥**

२ आनन्दगिरिव्याख्या ।

किंचित्फलं स्यादित्याह—**बहुनेति** । नहि विभूतिषूक्तासु ज्ञातासु सर्वं ज्ञायते कासांचिदेव विभूतीनामुक्तत्वादित्यर्थः । तर्हि केनोपदेशेनाल्पाक्षरेण सर्वोऽर्थो ज्ञातुं शक्यते तत्राह—**अशेषत इति** । विशेषतः स्तंभनं विधरणं सर्वभूतस्वरूपेण सर्वप्रपञ्चोपादानशक्त्युपाधिकेनैकेन पादेन कृत्स्नं जगद्विधृत्य स्थितोऽस्मीति संबन्धः । तत्रैव श्रुतिं प्रमाणयति—**तथाचेति** । तदनेन भगवतो नानाविधा विभूतीर्ध्येयत्वेन ज्ञेयत्वेन चोपदिश्यन्ते । सर्वप्रपञ्चात्मकं ध्येयं रूपं दर्शयित्वा 'त्रिपादस्यामृतं दिवि' इति प्रपञ्चाधिकं निरुपाधिकं तत्त्वमुपदिशता परिपूर्णसच्चिदानन्दैकतानस्तत्पदलक्ष्योऽर्थो निर्धारितः ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ दशमोऽध्यायः ॥ १० ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एकदेशेनाहमिदं विष्टभ्य व्याप्य स्थितोऽस्मि । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः । तस्मात्परिच्छिन्नं दर्शनं त्यक्त्वा सर्वत्र ब्रह्मबुद्धिमेव कुर्वित्याशयः ॥ ४२ ॥

इति नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे दशमोऽध्यायः ॥ १० ॥

४ मधुसूदनीव्याख्या ।

किं तव स्यात् हे अर्जुन, इदं कृत्स्नं सर्वं जगदेकांशेन एकदेशमात्रेण विष्टभ्य विधृत्य व्याप्य वाहमेव स्थितो न मद्यतिरिक्तं किंचिदस्ति 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुतेः । तस्मात्किमनेन परिच्छिन्नदर्शनेन सर्वत्र मद्दृष्टिमेव कुर्वित्यभिप्रायः ॥ ४२ ॥

कुर्वन्ति केऽपि कृतिनः क्वचिदप्यनन्ते स्वान्तं विधाय विषयान्तरशान्तिमेव ।
त्वत्पादपद्मविगलन्मकरन्दबिन्दुमास्वाद्य माद्यति मुहुर्मधुभिन्मनो मे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

५ भाष्योत्कर्षदीपिका ।

ज्ञातेन तव किं चित्तशोधकस्यैतज्ज्ञानस्य शुद्धचित्ते शक्ते त्वयि प्रयोजनाभावादिति ध्वनयन्संबोधयति—**हे अर्जुनेति** । तर्हि मया किं चिन्तनीयमित्यपेक्षायामाह । इदं सर्वं जगत् एकांशेनावष्टभ्य स्तम्भनं कृत्वाहं स्थितः । तथाच श्रुतिः 'पादोऽस्य विश्वा भूतानी'ति । अथवाऽनेन श्लोकेनार्जुनपृष्टो योग उक्तः । एवं दशमाध्यायेन ज्ञेयं ज्ञानोपायभूतं योगविभूतिमत् ध्येयज्ञानं प्रदर्शयता तत्पदार्थो निरूपितः ॥ ४२ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां दशमोऽध्यायः ॥ १० ॥

६ श्रीधरीव्याख्या ।

समदृष्टिमेव कुर्वित्याह—**अथवेति** । बहुना पृथग्ज्ञातेन किं तव कार्यं । यदिदं सर्वं जगदेकांशेनैकदेशमात्रेण विष्टभ्य धृत्वा व्याप्येति वाहमेव स्थितः न मद्यतिरिक्तं किंचिदस्ति 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः ॥ ४२ ॥

इन्द्रियद्वारतश्चित्ते बहिर्धावति सत्यपि । ईषद्दृष्टिविधानाय विभूतीर्दशमेऽब्रवीत् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां दशमोऽध्यायः ॥ १० ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

त्रिपादस्यामृतं दिवि' इति । प्रजानां सृष्टिहेतुः सर्वमिदं भगवत्तत्त्वमेतैस्तैर्विचित्रै रूपैर्भाव्यमानं सकलमस्य विषयतां यातीति शिवम् ॥ ४१ ॥ ४२ ॥ संग्रहश्लोकः ॥ इच्छायामिन्द्रिये वापि यदेवायाति गोचरम् । हठाद्विलापयंस्तत्तत्प्रशान्तं ब्रह्महा भवेत् ॥

इति श्रीमद्राजानकाचार्याभिनवगुप्तविरचिते श्रीभगवद्गीतार्थसंग्रहे दशमोऽध्यायः ॥ १० ॥

# एकादशोऽध्यायः ।

## अर्जुन उवाच ।

**मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

भगवतो विभूतय उक्तास्तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति भगवताभिहितं श्रुत्वा यज्जगदात्मरूपमाद्यमैश्वरं तत्साक्षात्कर्तुमिच्छन्नर्जुन उवाच—मदनुग्रहाय ममानुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचो वाक्यं तेन ते

२ आनन्दगिरिव्याख्या ।

तेन तेनात्मना भगवदनुसंधानार्थमुक्ता विभूतीरनुवदति—**भगवत इति** । परस्य सोपाधिकं निरुपाधिकं च चिद्रूपं ध्येयत्वेन ज्ञेयत्वेन चोक्तमित्यर्थः । सोपाधिकमैश्वरं रूपमशेषजगदात्मकं विश्वरूपाख्यमधिकृत्याध्यायान्तरमवतारयन्ननन्तरप्रश्नोपयोगित्वेन वृत्तं कीर्तयति—**तत्र चेति** । यदेतदशेषप्रपञ्चात्मकमखिलस्यैतस्य जगतः कारणं सर्वज्ञं सर्वैश्वर्यवद्रूपमुक्तं तदिदं श्रुत्वा तस्य साक्षात्कारं यियाचिषुरादौ पृष्टवानित्याह—**श्रुत्वेति** । मयि करुणां निमित्तीकृत्योपकारोऽनुग्रहस्तदर्थमिति वचसो विशेषणम् । निरतिशयत्वं परमपुरुषार्थसाधनत्वम् । अशोच्यानित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वस्मिन्नध्याये योगो विभूतिश्च व्याख्येयत्वेन प्रतिज्ञातौ 'एतां विभूतिं योगं च मम यो वेत्ति' इति । 'आत्मनो योगं विभूतिं च जनार्दन । भूयः कथय' इतीतरेण च श्रोतव्यत्वेन प्रार्थितौ । तत्र 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इति संक्षेपेण योगो भगवता सर्वभूताधारत्वलक्षण उक्तः प्राग्विभूतिकथनात् । तदन्ते च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति कुसूलेन धान्यमिव मयेदं जगद्विष्टब्धमित्युक्तया स एव स्मारितस्तदेव भगवतः सर्वभूताधारत्वं साक्षात्कर्तुकामोऽर्जुन उवाच—**मदनुग्रहायेति** । मयि अनुग्रहोऽनुकम्पा तदर्थं मदनुग्रहाय । परमं सद्यः शोकमोहनिवर्तकत्वेनोत्कृष्टं गुह्यं गोप्यं अध्यात्मसंज्ञितमात्मानात्मविवेकार्थं शास्त्रमध्यात्मं तत्संज्ञितं यत्त्वया वचः 'अशोच्यानन्वशोचः' इत्यादिना षष्ठाध्यायपर्यन्तं त्वंपदार्थशुद्धिप्रधानं 'नायं हन्ति न हन्यते'

४ मधुसूदनीव्याख्या ।

न नेत्राकृतिर्यत्र यस्या न चान्तो न चादिश्च तैरन्यता नो विभूतेः ।
ममामेदता येन दत्ताऽव्यवाया गुरुं काशिराजं भजेऽजं स्वराजम् ॥

पूर्वाध्याये नानाविभूतीरुक्त्वा 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति विश्वात्मकं पारमेश्वरं रूपं भगवतान्तेऽभिहितं श्रुत्वा परमोत्कण्ठितस्तत्साक्षात्कर्तुमिच्छन्पूर्वोक्तमभिनन्दन्नर्जुन उवाच—ममानुग्रहाय शोकनिवृत्त्युपकाराय परमं निरतिशयपुरुषार्थपर्यवसायि गुह्यं गोप्यं यस्मैकस्मैचिद्वक्तुमनर्हमपि अध्यात्मसंज्ञितमध्यात्ममितिशब्दितमात्मानात्मविवेकविषयमशोच्यानन्वशोचस्त्वमित्यादिषष्ठाध्यायपर्यन्तं त्वंपदार्थप्रधानं यत्त्वया परमकारुणिकेन सर्वज्ञेनोक्तं वचो वाक्यं तेन वाक्येनाहमेषां हन्ता मयैते हन्यन्त इत्यादिविविधविपर्यासलक्षणो मोहोऽयमनुभवसाक्षिको विगतो विनष्टो मम । तत्रासकृदात्मनः

५ भाष्योत्कर्षदीपिका ।

एवं विभूतीर्निरतिशयैश्वर्यं च श्रुत्वा साक्षात्कर्तुमिच्छन्नर्जुन उवाच मदनुग्रहार्थं परममुत्कृष्टं परमपुरुषार्थसाधनत्वात् गोप्यमध्यात्मसंज्ञितं वचस्त्वंपदार्थप्रधानमशोच्यानित्यादि यत्त्वयोक्तं तेन ममायं मोहोऽहंममेतिप्रत्ययजनकः कर्तृत्वादिरहितात्मस्वरूपावरको

६ श्रीधरीव्याख्या ।

विभूतिवैभवं प्रोच्य कृपया परया हरिः । दिदृक्षोरर्जुनस्याथ विश्वरूपमदर्शयत् ॥ १ ॥

पूर्वाध्यायान्ते 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति विश्वात्मकं पारमेश्वरं रूपमुपक्षिप्तं तद्दिदृक्षुः पूर्वोक्तमभिनन्दन्नर्जुन उवाच—**मदनुग्रहायेति चतुर्भिः** । ममानुग्रहाय शोकनिवृत्तये परमं परमार्थनिष्ठं गुह्यं गोप्यमप्यध्यात्ममितिसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचः 'अशोच्यानन्वशोचस्त्वम्' इत्यादि षष्ठाध्यायपर्यन्तं यद्वाक्यं तेन ममायं मोहोऽहं हन्ता एते हन्यन्त

७ अभिनवगुप्ताचार्यव्याख्या ।

समनन्तरेणाध्यायेन यदुवाच उक्तस्तमेव प्रत्यक्षीकर्तुमर्जुनः पृच्छति—स एव चायमुत्तमः यो ह्युपदेशक्रमे( ण मोहो गतः )णार्थोऽवगतः

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**
**एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

वचसा मोहोऽयं विगतो ममाविवेकबुद्धिरपगतेत्यर्थः ॥ १ ॥ किंच—**भवेति** । भव उत्पत्तिरप्ययः प्रलयो भूतानां तौ भवाप्ययौ श्रुतौ विस्तरशो मया न संक्षेपतस्त्वत्तस्त्वत्सकाशात्कमलपत्राक्ष कमलस्य पत्रं कमलपत्रं तद्वदक्षिणी यस्य तव स त्वं कमलपत्राक्षः हे कमलपत्राक्ष, माहात्म्यमपि चाव्ययमक्षयं श्रुतमित्यनुवर्तते ॥ २ ॥ **एवमेति** । एवमेतन्नान्यथा यथा येन प्रकारेणात्थ कथयसि

२ आनन्दगिरिव्याख्या ।

दित्वंपदार्थप्रधानं वाक्यम् । मोहस्यायमित्यात्मसाक्षिकत्वं दर्शयति । अविवेकबुद्धिरज्ञानविपर्यासात्मिका ॥ १ ॥ सप्तमादारभ्य तत्पदार्थनिर्णयार्थमपि भगवदुक्तं वचो मया श्रुतमित्याह—**किंचेति** । त्वत्तो भूतानामुत्पत्तिप्रलयौ त्वत्तः श्रुतावित्याभ्यां संबध्यते, महात्मनस्तव भावो माहात्म्यं पारमार्थिकं सोपाधिकं वा सर्वात्मत्वादिरूपं श्रुतमिति परिणम्यानुवृत्तिं द्योतयितुमपिचेत्युक्तम् ॥ २ ॥ त्वदुक्तेऽर्थे विश्वासाभावान्न तस्य दिदृक्षा किंतु कृतार्थीबुभूषयेत्याह—**एवमेतदिति** । येन प्रकारेण सोपाधिकेन निरुपाधिकेन चेत्यर्थः । यदि ममाप्तत्वं निश्चित्य मद्वाक्यं ते मानं तर्हि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इत्यात्मनोऽकर्तृत्वाभोक्तृत्वप्रतिपादकं तेन मम मोहोऽविवेकोऽयं विशेषेण गतो नष्टः । अत्र प्रथमे पादेऽक्षराधिक्यमार्षम् ॥ १ ॥ **भवेति** । तथा सप्तमाध्यायमारभ्य दशमपर्यन्तं त्वया भूतानां भवाप्ययावप्युक्तौ 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इति तावपि मया विस्तरशस्त्वत्तः श्रुतौ । हे कमलपत्राक्ष, अव्ययं माहात्म्यमपि 'नच मां तानि कर्माणि लिम्पन्ति' इति विषमसृष्टिकर्तुरपि वैषम्यनैर्घृण्यदोषो नास्ति जगत्कर्तुरपि विकारगन्धो नास्ति इत्येवमादिरूपतत्पदार्थशुद्धिप्रधानं श्रुतमित्यनुषङ्गः ॥ २ ॥ **एवमिति** । यच्च त्वं 'विष्टभ्याहमिदं कृत्स्नमेकांशेन

४ मधुसूदनीव्याख्या ।

सर्वविक्रियाशून्यत्वोक्तेः ॥ १ ॥ तथा सप्तमादारभ्य दशमपर्यन्तं तत्पदार्थनिर्णयप्रधानमपि भगवतो वचनं मया श्रुतमित्याह—भूतानां भवाप्ययावुत्पत्तिप्रलयौ त्वत्त एव भवन्तौ त्वत्त एव विस्तरशो मया श्रुतौ नतु संक्षेपेणासकृदित्यर्थः । कमलस्य पत्रे इव दीर्घे रक्तान्ते परममनोरमे अक्षिणी यस्य तव स त्वं हे कमलपत्राक्ष । अतिसौन्दर्यातिशयोल्लेखोयं प्रेमातिशयात् । न केवलं भवाप्ययौ त्वत्तः श्रुतौ । महात्मनस्तव भावो माहात्म्यमनतिशयैश्वर्यं विश्वसृष्ट्यादिकर्तृत्वेऽप्यविकारित्वं शुभाशुभकर्मकारयितृत्वेऽप्यवैषम्यं बन्धमोक्षादिविचित्रफलदातृत्वेऽप्यसङ्गौदासीन्यमन्यदपि सर्वात्मत्वादि सोपाधिकं निरुपाधिकमपि चाव्ययमक्षयं मया श्रुतमिति परिणतमनुवर्तते चकारात् ॥ २ ॥ हे परमेश्वर, यथा येन प्रकारेण सोपाधिकेन निरुपाधिकेन च निरतिशयैश्वर्येणात्मानं त्वमात्थ कथयसि त्वं एवमेतन्नान्यथा । त्वद्वचसि कुत्रापि ममाविश्वासशङ्का नास्त्येवेत्यर्थः । यद्यप्येवं

५ भाष्योत्कर्षदीपिका ।

विगतो विशेषेण निवृत्तः ॥ १ ॥ किंचायं वासुदेवो मम मातुलेय इति त्वयि मनुष्यत्वप्रतीत्युत्पादकस्येश्वरस्वरूपावरकस्य मोहस्य निवर्तकमपि वचो मया श्रुतमित्याशयवानाह । भवाप्ययौ उत्पत्तिप्रलयौ भूतानां त्वत्तो भवत इति त्वत्तो मया श्रुतौ । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यादिना तदपि न संक्षेपतोऽपि त्वसकृदित्याह—**विस्तरश इति** । कमलपत्रे इव विशाले रक्तान्ते अक्षिणी यस्य सः कमलपत्राक्ष इत्यङ्गीकृतकमलपत्राक्षरूपात्त्वत्तएव भूतानां पालनमिति द्योतनाय तथा संबोधनम् । महात्मनो भावो माहात्म्यमपि त्वदीयमव्ययमपक्षयरहितमैश्वर्यं मया श्रुतमिति विपरिणामेनानुषज्जते ॥ २ ॥ त्वदुक्तं सर्वं यथार्थमित्यभिनन्दन् अभीष्टमाविष्करोति—**एवमिति** । यथा येन प्रकारेण त्वं कथयसि एतदेवमेव न ममासंभावनाविपरीतभावना वा परमेश्वरे

६ श्रीधरीव्याख्या ।

इत्यादिलक्षणो भ्रमो विगतो विनष्टः, आत्मनः कर्तृत्वाद्यभावोक्तेः ॥ १ ॥ किंच **भवाप्ययाविति** । भूतानां भवाप्ययौ सृष्टिप्रलयौ त्वत्तः सकाशादेव भवत इति श्रुतौ मया 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यादौ विस्तरशः पुनः पुनः । कमलपत्रे इव सुप्रसन्ने विशाले अक्षिणी यस्य सः हे कमलपत्राक्ष, माहात्म्यमपि चाव्ययमक्षयं श्रुतम् । विश्वसृष्ट्यादिकर्तृत्वेऽपि शुभाशुभकर्मकारयितृत्वेऽपि बन्धमोक्षादिविचित्रफलदातृत्वेऽप्यविकारावैषम्यासङ्गौदासीन्यादिलक्षणमपरिमितं महत्त्वं श्रुतम् 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते', 'मया ततमिदं सर्वं', 'न च मां तानि कर्माणि निबध्नन्ति', 'समोऽहं सर्वभूतेषु' इत्यादिना । अतस्त्वत्परतन्त्रत्वादपि जीवानामहं कर्तेत्यादिर्मदीयो मोहो विगत इति भावः ॥ २ ॥ किंच—**एवमिति** । 'भवाप्ययौ हि भूतानाम्' इत्यादि मया श्रुतं यथा चेदा-

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥**
**श्रीभगवानुवाच । पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**

१ श्रीमच्छांकरभाष्यम् ।

त्वमात्मानं परमेश्वर तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम ॥ ३ ॥ मन्यस इति । मन्यसे चिन्तयसि यदि मयार्जुनेन तच्छक्यं द्रष्टुमिति प्रभो स्वामिन्योगेश्वर योगिनो योगास्तेषामीश्वरो योगेश्वरः हे योगेश्वर, यस्मादहमतीवार्थी द्रष्टुं ततस्तस्मान्मे मदर्थं दर्शय त्वमात्मानमव्ययम् ॥ ४ ॥ एवं चोदितोऽर्जुनेन भगवानुवाच—पश्य म इति ।

२ आनन्दगिरिव्याख्या ।

किमिति मदुक्तं दिदृक्षते कृतार्थोबुभूषयेत्युक्तं मत्वाह—**तथापीति** । चतुर्भुजादिरूपनिवृत्त्यर्थमाह—**ऐश्वरमिति** । तद्व्याचष्टे—**ज्ञानेत्यादिना** ॥ ३ ॥ द्रष्टुमयोग्ये कुतो दिदृक्षेत्याशङ्क्याह—**मन्यस इति** । प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेभ्य इति प्रभुः । लक्षणया योगशब्दार्थमाह—**योगिन इति** । तत इत्यादि व्याचष्टे—**यस्मादिति**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्थितो जगत्' इति आत्मानं जगदाधारमात्थ तदपि इत्थमेव न ममात्रासंभावनास्ति । हे परमेश्वर, ते तव रूपं ऐश्वरमीश्वरस्येदं विश्वात्मकं मायामयमित्यर्थः । हे पुरुषोत्तम क्षराक्षरातीत, विश्वरूपं मायामयं, वास्तवं तु रूपं मायातीतमित्यैश्वरमिति पुरुषोत्तमेति च पदाभ्यां लभ्यते । तथाच वक्ष्यति 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि' इति । उक्तं च शुद्धं रूपमभिप्रेत्य 'अव्यक्तोऽयमचिन्त्योऽयम्' इति ॥ ३ ॥ **मन्यस इति** । हे योगेश्वर योगानां योगिनामीश्वर, तद्रूपं यदि मया द्रष्टुं शक्यमिति मन्यसे यदि मयि तद्दर्शनाधिकारं पश्यसि ततस्तर्हि मे मह्यमव्ययं मायामयमात्मानं दर्शय । मायामयत्वादेवास्याव्ययत्वम् । मायायां हि सर्वं सर्वात्मकं सर्वदास्तीति प्रसिद्धम् । यथोक्तं वसिष्ठेन 'वर्तमानमतीतं च भविष्यत्स्थूलमण्वपि । तथा दूरमदूरं च निमेषः कल्प इत्यपि । चिदात्मनि स्थितान्येव पश्य मायाविजृम्भितम्' इति । नहि मरुमरीचिसरसी क्रमशः शुष्यति । अतो मायामयत्वादेवास्यैश्वरस्य रूपस्याप्यव्ययत्वम् ॥ ४ ॥ एवं प्रार्थितः सन् भगवानुवाच—**पश्येति** ।

४ मधुसूदनीव्याख्या ।

तथापि कृतार्थोबुभूषया द्रष्टुमिच्छामि ते तव रूपमैश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमद्भुतम् । हे पुरुषोत्तम इति । संबोधनेन त्वद्वचस्यविश्वासो मम नास्ति दिदृक्षा च महती वर्तत इति सर्वज्ञत्वात्त्वं जानासि सर्वान्तर्यामित्वाच्चेति सूचयति ॥ ३ ॥ द्रष्टुमयोग्ये कुतस्ते दिदृक्षेत्याशङ्क्याह—प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेष्विति प्रभुः हे प्रभो सर्वस्वामिन्, तत्तवैश्वरं रूपं मयार्जुनेन द्रष्टुं शक्यमिति यदि मन्यसे जानासीच्छसि वा हे योगेश्वर सर्वेषामणिमादिसिद्धिशालिनां योगानां योगिनामीश्वर, ततस्त्वदिच्छावशादेव मे मह्यमत्यर्थमर्थिने त्वं परमकारुणिको दर्शय चाक्षुषज्ञानविषयीकारय आत्मानमैश्वररूपविशिष्टमव्ययमक्षयम् ॥ ४ ॥

५ भाष्योत्कर्षदीपिका ।

त्वयि वक्तरि असंभावनादेरसंभवादिति सूचयन्संबोधयति—**हे परमेश्वरेति** । यद्यप्येवं तथापि कृतार्थोबुभूषया ते रूपं द्रष्टुमिच्छामि । निरुपाधिकदर्शनासंभवमभिप्रेत्य रूपं विशिनष्टि । ऐश्वरं ऐश्वर्यशक्त्यादिसंपन्नम् । पुरुषोत्तमेतिसंबोधयन् वस्तुतः क्षराक्षरातीतस्य तव क्षराक्षरात्मकमैश्वरं रूपमत्यद्भुतमिति तद्दर्शने ममोत्कण्ठा महती वर्तत इति ध्वनयति ॥ ३ ॥ यदि मया द्रष्टुं शक्यं त्वं मन्यसे चिन्तयसि ततो मे मह्यं मदर्थमात्मानमव्ययमपक्षयरहितं दर्शय दृष्टिगोचरं कुरु । नत्वाज्ञां करोमि किंतु प्रार्थयामि । ब्रह्मादिप्रभौ त्वय्याज्ञाया अयुक्तत्वादिति सूचयन्नाह—**हे प्रभो इति** । मम दर्शनासामर्थ्येऽपि त्वं दर्शयितुं समर्थोऽसीति वा संबोधनाशयः । यतो योगानां मत्वर्थलक्षणया योगिनामैश्वररूपदर्शने समर्थानां त्वमीश्वरस्तस्मान्मामपि योगिनं विधायात्मानं दर्शयेति ध्वनयन्संबोधयति—**हे योगेश्वरेति** ॥ ४ ॥ एवं प्रेरितो भगवानुवाच । पश्य मम शतशोऽथ सहस्रशः असंख्यातानि

६ श्रीधरीव्याख्या ।

नीमात्मानं त्वमात्थ 'विष्टभ्याहमिदं कृत्स्नम्' इत्येवं कथयसि हे परमेश्वर, एवमेतत् । अत्राप्यविश्वासो मम नास्तीत्यर्थः । तथापि हे पुरुषोत्तम, तवैश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नं त्वद्रूपं कौतूहलादहं द्रष्टुमिच्छामि ॥ ३ ॥ न चाहं द्रष्टुमिच्छामीत्येतावतैव त्वया तद्रूपं दर्शयितव्यम् । किं तर्हि—**मन्यस इति** । योगिन एव योगास्तेषामीश्वर, मयार्जुनेन तद्रूपं द्रष्टुं शक्यमिति यदि मन्यसे ततस्तर्हि तद्रूपवन्तमात्मानमव्ययं नित्यं मम दर्शय ॥ ४ ॥ एवं प्रार्थितः सन्नत्यद्भुतं रूपं दर्शयिष्यन्सावधानो भवेत्येवमर्जुनमभिमुखी-

७ अभिनवगुप्ताचार्यव्याख्या ।

सएव प्रत्यक्षसंविदोपारुरुक्षमाणः स्फुटीभवति तदर्थमेवेमे उक्तिप्रत्युक्ती उच्येते—अर्जुन उवाच । मदनुग्रहायेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**
**पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥**
**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

पश्य मे मम पार्थ, रूपाणि शतशोऽथ सहस्रशोऽनेकश इत्यर्थः । तानि च नानाविधान्यनेकप्रकाराणि दिवि भवानि दिव्यान्यप्राकृतानि नानावर्णाकृतीनि च नाना विलक्षणा नीलपीतादिप्रकारा वर्णास्तथाकृतयोऽवयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ॥ ५ ॥ पश्यादित्यानिति । पश्या दित्यान्द्वादश वसूनष्टौ रुद्रानेकादशाश्विनौ द्वौ मरुतः सप्तसप्तगणा ये तांस्तथा च बहून्यन्यान्यप्यदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित्पश्याश्चर्याण्यद्भुतानि भारत ॥ ६ ॥ न केवलमेतावदेव—इहैकस्थमिति । इहैकस्थमेकस्मिन्स्थितं जगत्कृत्स्नं समस्तं पश्याद्येदानीं

२ आनन्दगिरिव्याख्या ।

॥ ४ ॥ अर्जुनमतिभक्तं सखायं प्रार्थितप्रतिश्रवणेनाश्वासयितुमाह—**एवमिति** ॥ ५ ॥ दिव्यानि रूपाणि पश्येत्युक्तं तान्येव लेशतोऽनुक्रामति—**पश्यादित्यानिति** । तान्मरुतस्तथा पश्येति संबन्धः । नानाविधानीत्युक्तं तदेव स्फुटयति—**बहूनीति** । अदृष्टपूर्वाणि पूर्वमदृष्टानि । नानावर्णाकृतीनीत्युक्तं व्यनक्ति—**आश्चर्याणीति** ॥ ६ ॥ न केवलमादित्यवस्वाद्येव मद्रूपं त्वया द्रष्टुं शक्यं किंतु समस्तं जगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह—**नेत्यादिना** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शतश इत्यादिनानन्तानीत्युक्तम् । नानावर्णानि नानाकृतीनि च ॥ ५ ॥ दिव्यानि तावदाह—**पश्यादित्यानिति** । अदृष्टपूर्वाण्याश्चर्याणि अद्भुतानि चतुर्मुखपञ्चमुखषण्मुखादीनि ॥ ६ ॥ हे गुडाकेश जितनिद्र, इह मम देहे एकस्थं एकस्मिन्नेवावयवे नखाग्रमात्रे स्थितं कृत्स्नं वर्तमानं जगत्पश्य । यच्चान्यत् । अतीतमनागतं विप्रकृष्टं व्यवहितं स्थूलं

४ मधुसूदनीव्याख्या ।

एवमत्यन्तभक्तेनार्जुनेन प्रार्थितः सन् श्रीभगवानुवाच—अत्र क्रमेण श्लोकचतुष्टयेऽपि पश्येत्यावृत्त्यात्यद्भुतरूपाणि दर्शयिष्यामि त्वं सावधानो भवेत्यर्जुनमभिमुखीकरोति भगवान् । शतशोऽथ सहस्रश इत्यपरिमितानि । तानि च नानाविधान्यनेकप्रकाराणि दिव्यान्यत्यद्भुतानि नाना विलक्षणा वर्णा नीलपीतादिप्रकारास्तथा आकृतयश्चावयवसंस्थानविशेषा येषां तानि नानावर्णाकृतीनि च मे मम रूपाणि पश्य । अर्हे लोट् । द्रष्टुमर्हो भव हे पार्थ ॥ ५ ॥ दिव्यानि रूपाणि पश्येत्युक्त्वा तान्येव लेशतोऽनुक्रामति द्वाभ्याम्—पश्यादित्यान्द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुतः सप्तसप्तकानेकोनपञ्चाशत्, तथान्यानपि देवानित्यर्थः । बहून्यन्यान्यदृष्टपूर्वाणि पूर्वमदृष्टानि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित्पश्याश्चर्याण्यद्भुतानि हे भारत, अत्र शतशोऽथ सहस्रशः नानाविधानीत्यस्य विवरणं बहूनीति आदित्यानित्यादि च । अदृष्टपूर्वाणीति दिव्यानीत्यस्य, आश्चर्याणीति नानावर्णाकृतीनीत्यस्येति द्रष्टव्यम् ॥ ६ ॥ न केवलमेतावदेव समस्तं जगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह—इहास्मिन्मम देह एकस्थमेकस्मिन्नेवावयवरूपेण स्थितं जगत् कृत्स्नं समस्तं सचराचरं जङ्गमस्थावरसहितं तत्र तत्र परिभ्रमता वर्षकोटिसहस्रेणापि

५ भाष्योत्कर्षदीपिका ।

रूपाणि नानाविधानि अनेकप्रकाराणि दिव्यानि अप्राकृतानि नाना नीलपीतादिप्रकारा वर्णास्तथा आकृतयोऽवयवसन्निवेशविशेषा येषां तानि यतस्त्वं पृथापुत्रः मम प्रेमास्पदः सखा अतः पश्येति द्योतयन् संबोधयति हे पार्थेति ॥ ५ ॥ आदित्यान्द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुत एकोनपञ्चाशत् । तथा बहून्यन्यानि मनुष्यलोके त्वया अन्येन वा पूर्वं न दृष्टानि । उत्तमवंशोद्भवत्वात्तव दर्शनेऽधिकार इति सूचयन्नाह—**भारतेति** । यस्मिन् वंशे त्वमुत्पन्नः तत्रोत्पन्नैः कैश्चिदप्येतन्न दृष्टमिति वा संबोधनाशयः ॥ ६ ॥ न केवलमेतावदेवापितु इह मम देहे एकस्थं एकस्मिन्नवयवे स्थितं सर्वं जगत्स्थावरजंगमसहितमद्येदानीं पश्य । यच्चान्यज्जयपराजयादि द्रष्टुमिच्छति तदपि । यद्वा जयेम यदि वा नो जयेयुरिति संदेहापनुत्तये पश्य । यच्चान्यज्जगदाश्रय-

६ श्रीधरीव्याख्या ।

करोति—**श्रीभगवानुवाच** । **पश्येति चतुर्भिः** । रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनम् । अपरिमितान्यनेकप्रकाराणि दिव्यान्यलौकिकानि मम रूपाणि पश्य । वर्णाः शुक्लकृष्णादयः । आकृतयोऽवयवसन्निवेशविशेषाः । नाना अनेकवर्णा आकृतयश्च येषां तानि नानावर्णाकृतीनि ॥ ५ ॥ तान्येवाह—**पश्येति** । आदित्यादीन्मम देहे पश्य । मरुत एकोनपञ्चाशदेवविशेषान् । अदृष्टपूर्वाणि त्वया वान्येन वा पूर्वमदृष्टानि रूपाणि आश्चर्याण्यत्यद्भुतानि ॥ ६ ॥ किंच—**इहेति** । तत्र तत्र परिभ्रमता वर्षकोटिभिरपि द्रष्टुम-

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥**

**संजय उवाच ।**

**एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**सचराचरं सह चरेणाचरेण च वर्तते मम देहे गुडाकेश, यच्चान्यज्जयपराजयादि यच्छङ्कसे 'यद्वा जयेम यदि वा नो जयेयुः' इति यदवोचस्तदपि द्रष्टुं यदीच्छसि ॥ ७ ॥ किंतु—नतु मामिति । नतु मां विश्वरूपधरं शक्यसे द्रष्टुमनेन प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा । येन तु शक्यसे द्रष्टुं दिव्येन तद्दिव्यं ददामि ते तुभ्यं चक्षुस्तेन पश्य मे योगमैश्वरमीश्वरस्य ममैश्वरं योगम् । योगशक्त्यतिशयमित्यर्थः ॥ ८ ॥ एवं यथोक्तप्रकारेणोक्त्वा ततोऽनन्तरं राजन्धृतराष्ट्र, महायोगेश्वरो महांश्चासौ**

२ आनन्दगिरिव्याख्या ।

सप्तमीद्वयं मिथः संबध्यते । समासान्तर्गतापि सप्तमी तत्रैवान्विता । यदीच्छसि तर्हीहैव पश्येति संबन्धः ॥ ७ ॥ मन्यसे यदीत्युक्तमनुवदति—**किंत्विति** । सप्रपञ्चमनवच्छिन्नं मां स्वचक्षुषा न शक्नोषि द्रष्टुमित्याह—**नत्विति** । कथं तर्हि त्वां द्रष्टुं शक्नुयामित्याशङ्क्याह—**येनेति** । दिव्यस्य चक्षुषो वक्ष्यमाणयोगशक्त्यतिशयदर्शने विनियोगं दर्शयति—**तेनेति** ॥ ८ ॥ इमं वृत्तान्तं धृतराष्ट्राय संजयो निवेदितवानित्याह—**संजय इति** । मदीयं विश्वरूपाख्यं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सूक्ष्मं वा तत्सर्वमिह पश्य ॥ ७ ॥ यत्तूक्तं 'मन्यसे यदि तच्छक्यं मया द्रष्टुम्' इति तत्राह—**नत्विति** । शक्यसे शक्नोषि । पदविकरणव्यत्यय आर्षः । अनेन प्राकृतेन । दिव्यमप्राकृतम् । ऐश्वरं ईश्वरसंबन्धिनं योगं विश्वाश्रयत्वलक्षणं सामर्थ्यम् ॥ ८ ॥ एवमुक्त्वा भगवानर्जुनाय दिव्यं रूपं दर्शितवान्, सच दृष्ट्वा विस्मयाविष्टो भगवन्तं विज्ञापितवानितीमं वृत्तान्तमेवमुक्त्वेत्यादिषड्भिः श्लोकैर्धृतराष्ट्रं प्रति संजय उवाच—**एव-**

४ मधुसूदनीव्याख्या ।

द्रष्टुमशक्यं अद्याधुनैव पश्य । हे गुडाकेश, यच्चान्यज्जयपराजयादिकं द्रष्टुमिच्छसि तदपि संदेहोच्छेदाय पश्य ॥ ७ ॥ यत्तूक्तं 'मन्यसे यदि तच्छक्यं मया द्रष्टुम्' इति तत्र विशेषमाह—अनेनैव प्राकृतेन स्वचक्षुषा स्वभावसिद्धेन चक्षुषा मां दिव्यरूपं द्रष्टुं नतु शक्यसे न शक्नोषि तु एव । 'शक्ष्यस' इति पाठे शक्तो न भविष्यसीत्यर्थः । सौवादिकस्यापि शक्नोतेर्दैवादिकः श्यन् छान्दस इति वा दिवादौ पाठोवेत्येव सांप्रदायिकम् । तर्हि त्वां द्रष्टुं कथं शक्नुयामत आह—दिव्यमप्राकृतं मम दिव्यरूपदर्शनक्षमं ददामि ते तुभ्यं चक्षुस्तेन दिव्येन चक्षुषा पश्य मे योगमघटनघटनासामर्थ्यातिशयमैश्वरमीश्वरस्य ममासाधारणम् ॥ ८ ॥ भगवानर्जुनाय दिव्यं रूपं दर्शितवान् स च तद्दृष्ट्वा विस्मयाविष्टो भगवन्तं विज्ञापितवानितीमं वृत्तान्तमेवमुक्त्वेत्यादिभिः षड्भिः

५ भाष्योत्कर्षदीपिका ।

भूतं कारणस्वरूपं जगतश्चावस्थाविशेषादिकं अतीतमनागतं विप्रकृष्टं व्यवहितं स्थूलं सूक्ष्मं चेति आदिशब्दार्थः । हे गुडाकेशेति संबोधयन् द्रष्टुं सावधानो भवेति सूचयति ॥ ७ ॥ एवमुक्ते स्वचक्षुषा द्रष्टुं प्रवृत्तं न किमपि दृष्टवन्तं अतो खिन्नमर्जुनमालक्ष्याह—**नेति** । मां विश्वरूपधरं परमप्राकृतमनेनैव प्राकृतेन स्वचक्षुषा द्रष्टुं नतु शक्यसे तर्हि किमर्थं पश्येति त्वयोक्तमिति तत्राह । दिव्यमप्राकृतं ऐश्वररूपदर्शनयोग्यं चक्षुस्तुभ्यं ददामि तेन चक्षुषा ममैश्वरं योगं शक्त्यतिशयं पश्य ॥ ८ ॥ एतादृशो भगवतो वासुदेवस्य महिमार्जुनपक्षपातश्चेति सूचयन् धृतराष्ट्रं प्रति संजय उवाच । एवं यथोक्तेन प्रकारेणोक्त्वा ततोऽनन्तरं महांश्चासौ योगेश्वरो हरिः

६ श्रीधरीव्याख्या ।

शक्यं कृत्स्नमपि चराचरसहितं जगदिहास्मिन्मम देहेऽवयवरूपेणैकत्रैव स्थितमद्याधुनैव पश्य । यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपम् । जगतश्चावस्थाविशेषादिकम् । जयपराजयादिकं च यदप्यन्यद्द्रष्टुमिच्छसि तत्सर्वं पश्य ॥ ७ ॥ यदुक्तमर्जुनेन 'मन्यसे यदि तच्छक्यम्' इति तत्राह—**नत्विति** । अनेनैव तु स्वीयेन चर्मचक्षुषा मां द्रष्टुं न शक्यसे शक्तो न भविष्यसि । अतोऽहं दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं ददामि । ममैश्वरमसाधारणं योगं युक्तिमघटितघटनासामर्थ्यं पश्य ॥ ८ ॥ एवमुक्त्वा भगवानर्जुनाय रूपं दर्शितवान् । तच्च रूपं दृष्ट्वार्जुनः श्रीकृष्णं विज्ञापितवानितीममर्थं एवमुक्त्वेत्यादिभिः षड्भिः श्लोकैर्धृतराष्ट्रं प्रति संजय उवाच—**एवमिति** ।

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ५ ॥ श्रीभगवानुवाच—पश्य मे इत्यादि ॥ ६ ॥ ७ ॥ ८ ॥ संजय उवाच—एवमित्यादि ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

१ श्रीमच्छांकरभाष्यम् ।

योगेश्वरश्च हरिर्नारायणो दर्शयामास दर्शितवान्पार्थाय पृथासुताय परमं रूपं विश्वरूपमैश्वरम् ॥ ९ ॥ अनेकेति । अनेकवक्त्रनयनमनेकानि वक्त्राणि नयनानि च यस्मिन्रूपे तदनेकवक्त्रनयनम् । अनेकाद्भुतदर्शनमनेकान्यद्भुतानि विस्मापकानि दर्शनानि यस्मिन्रूपे तदनेकाद्भुतदर्शनं । तथानेकदिव्याभरणमनेकानि दिव्यान्याभरणानि यस्मिंस्तदनेकदिव्याभरणं । तथा दिव्यानेकोद्यतायुधं दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तद्दिव्यानेकोद्यतायुधं दर्शयामासेति पूर्वेण संबन्धः ॥ १० ॥ किंच— दिव्येति । दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाण्यम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरं । दिव्यगन्धानुलेपनं दिव्यं गन्धानुलेपनं यस्य तं । सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं

२ आनन्दगिरिव्याख्या ।

रूपं न प्राकृतेन चक्षुषा निरीक्षितुं क्षमं किंतु दिव्येनेत्यादि यथोक्तप्रकारः । अनन्तरं दिव्यचक्षुषः प्रदानादिति शेषः । हरत्यविद्यां सकार्यामिति हरिः । यदीश्वरस्य मायोपहितस्य परममुत्कृष्टं रूपं तद्दर्शयांबभूवेत्याह—परममिति ॥ ९ ॥ तदेव रूपं विशिनष्टि—अनेकेति । दिव्यान्याभरणादीनि हारकेयूरादीनि भूषणानि उद्यतान्युच्छ्रितानि ॥ १० ॥ उक्तरूपवन्तं भगवन्तं प्रकारान्तरेण विशिनष्टि—किंचेति । 'अर्जुन इति' अध्याहारेऽपि पदसंघटनासंभवात् ॥ ११ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मुक्त्वेत्यादि । ततः दिव्यचक्षुःप्रदानानन्तरम् । राजन् हे धृतराष्ट्र, महांश्चासौ योगेश्वरश्चेति विग्रहः । महतो योगस्य वा ईश्वरः । परमं दिव्यं रूपं ऐश्वरं मायाविसंबन्धि नतु मायातीतं दर्शयामास ॥ ९ ॥ तदेव रूपं विशिनष्टि द्वाभ्याम्—अनेकेत्यादिना । अनेकान्यनन्तानि वक्त्राणि नयनानि च यस्मिंस्तदनेकवक्त्रनयनम् । अनेकान्यद्भुतानि दर्शनानि यस्मिंस्तदनेकाद्भुतदर्शनम् । अनेकानि दिव्यान्याभरणानि यस्मिन् । दिव्यान्यनेकानि चोद्यतान्यायुधानि चक्रादीनि यस्मिन् ॥ १० ॥ विश्वतोमुखमिति पूर्वोक्तस्य 'एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्'

४ मधुसूदनीव्याख्या ।

श्लोकैर्धृतराष्ट्रं प्रति संजय उवाच—एवं नतु मां शक्यसे द्रष्टुमनेन चक्षुषाऽतो दिव्यं ददामि ते चक्षुरित्युक्त्वा ततो दिव्यचक्षुःप्रदानादनन्तरं हे राजन् धृतराष्ट्र, स्थिरो भव श्रवणाय । महान्सर्वोत्कृष्टश्चासौ योगेश्वरश्चेति महायोगेश्वरो हरिर्भक्तानां सर्वक्लेशापहारी भगवान् दर्शनायोग्यमपि दर्शयामास पार्थाय एकान्तभक्ताय परमं दिव्यं रूपमैश्वरम् ॥ ९ ॥ तदेवं रूपं विशिनष्टि— अनेकानि वक्त्राणि नयनानि च यस्मिन्रूपे । अनेकानामद्भुतानां विस्मयहेतूनां दर्शनं यस्मिन् । अनेकानि दिव्यान्याभरणानि भूषणानि यस्मिन् । दिव्यान्यनेकान्युद्यतान्यायुधानि अस्त्राणि यस्मिन् तत्तथा रूपम् ॥ १० ॥ दिव्यानि माल्यानि पुष्पमयानि रत्नमयानि च तथा दिव्याम्बराणि वस्त्राणि च ध्रियन्ते येन तद्दिव्यमाल्याम्बरधरम् । दिव्यो गन्धोऽस्येति दिव्यगन्धस्तदनुलेपनं

५ भाष्योत्कर्षदीपिका ।

पार्थाय परमप्रेमास्पदाय परममैश्वररूपं दर्शयामास । हरिरित्यनेन स्वभक्तानां पार्थानां दुःखहरण उद्यत इत्युक्तम् । महायोगेश्वर इत्यनेन विश्वरूपप्रदर्शनादिना येनकेनापि प्रकारेण तद्धरणेऽतिसमर्थ इति सूचितम् । एतादृशकृष्णानुगृहीतैः पाण्डवैस्त्वं संधिं न कृतवान् न करोषि चातो राजनीतिहीनो नाममात्रेण राजासीति हे राजन्निति संबोधनेन ध्वनितम् ॥ ९ ॥ परममैश्वरं रूपं विशिनष्टि । अनेकानि मुखानि नेत्राणि च यस्मिंस्तत् । अनेकानि विस्मापकानि दर्शनानि यस्मिन् तत् । तथानेकानि दिव्यान्यलौकिकानि भूषणान्यङ्गदादीनि यस्मिन्तत् । तथा दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तत् । दर्शयामासेति पूर्वेण संबन्धः ॥ १० ॥ उक्तरूपवन्तं भगवन्तं विशिनष्टि । दिव्यानि पुष्पाणि वस्त्राणि ध्रियन्ते येन तं दिव्यगन्धस्यानुलेपनं यस्य तं सर्वाश्चर्यप्रायं देवमनन्तं सर्वभूतात्मकत्वात्सर्वतोमुखं दर्शयामासार्जुनो ददर्शेत्यध्याहारो वा । अत्र यद्यप्येतानि रूपविशेषणानि प्रतिभान्ति तथापि देवशब्द-

६ श्रीधरीव्याख्या ।

हे राजन् धृतराष्ट्र, महांश्चासौ योगेश्वरश्च हरिः परममैश्वरं रूपं दर्शितवान् ॥ ९ ॥ कथंभूतं तदित्यत आह—अनेकेति । अनेकानि वक्त्राणि नयनानि च यस्मिंस्तत्, अनेकानामद्भुतानां दर्शनं यस्मिंस्तत्, अनेकानि दिव्याभरणानि यस्मिंस्तत, दिव्यान्यनेकानि उद्यतान्यायुधानि च यस्मिंस्तत् ॥ १० ॥ किंच—दिव्येति । दिव्यानि माल्याम्बराणि च धारयन्तीति तथा, दिव्यो गन्धो यस्य तादृशमनुलेपनं यस्य तत, सर्वाश्चर्यमयमनेकाश्चर्यप्रायम्, देवं द्योतनात्मकम्, अनन्तमपरिच्छिन्नम्, विश्वतः सर्वतो मुखानि यस्मिंस्तत् ॥ ११ ॥

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥**
**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

देवमनन्तं नास्यान्तोऽस्तीत्यनन्तस्तं विश्वतोमुखं सर्वतोमुखं सर्वभूतात्मत्वात्तं दर्शयामासार्जुनो ददर्शेति वाध्याह्रियते ॥ ११ ॥ या पुनर्भगवतो विश्वरूपस्य भास्तस्या उपमोच्यते—दिवीति । दिव्यन्तरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य या युगपदुत्थिता भाः सा यदि सदृशी स्यात्तस्य महात्मनो विश्वरूपस्यैव भासो यदि वा न स्यात्ततोऽपि विश्वरूपस्यैव भा अतिरिच्यत इत्यभिप्रायः ॥ १२ ॥ किंच—तत्रैकस्थमिति । तत्र तस्मिन्विश्वरूप एकस्मिन्स्थितमेकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यद्दृष्टवान्देवदेवस्य हरेः शरीरे पाण्डवोऽर्जुन-

२ आनन्दगिरिव्याख्या ।

ननु प्रकृष्टस्य भगवतो रूपस्य दीप्तिरस्ति न वा, न चेत्काष्ठादिसाम्यं, यद्यस्ति कीदृशी सेत्याशङ्क्याह—या पुनरिति । सा यदि स्यात्तद्भासः सदृशी सेति योजना । असंभाविताभ्युपगमार्थो यदिशब्दः । स्याच्छब्दो निश्चयार्थः । सा कथंचित्सदृशी संभवति नतु भवत्येवेति विवक्षित्वाह—यदि वेति ॥ १२ ॥ न केवलमुक्तमेवार्जुनो दृष्टवान्किंतु तत्रैव विश्वरूपे सर्वं जगदेकस्मिन्नवस्थितमनुभूतवानित्याह—किंचेति । तदा विश्वरूपस्य भगवद्रूपस्य दर्शनदशायामित्यर्थः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इत्यस्यायं परामर्शः । अनन्तं सर्वतः परिच्छेदरहितम् ॥ ११ ॥ दिवि अन्तरिक्षे । भाः दीप्तिः । भासः दीप्तेः । अभूतोपमेयम् । निरुपमतामेव तस्य दीप्तेर्दर्शयति 'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यादिवत् ॥ १२ ॥ इहैकस्थं जगत्कृत्स्नं पश्येति यत्प्राक् भगवतोक्तं तदप्यपश्यदित्याह—तत्रेति । अनेकधा प्रविभक्तमित्येतद्वर्षासूत्थिततिंतिणीबीजे सूक्ष्मरूपेण तरुर्दृश्यते तद्वन्माभूदिति दर्शयितुं सावकाशं अनेकधा विभागयुक्तं विविक्तमपश्यत् । एकस्थमेकावयवस्थम् । अयमर्थः–यदा भगवतश्चतुर्भुजं रूपं चिन्त्यते तत्र च चेतसि लब्धपदे सति क्रमशस्तदीयावयवांस्त्यक्त्वा मुखे स्मिते वा पदनखे वा चित्तं ध्रियते । तत्रापि लब्धपदे तस्मिंस्तदपि त्यक्त्वा विश्वरूपमारोहति । दिव्यं चक्षुरपि एवं सूक्ष्मतामापादितं मन एव । 'मनोऽस्य दैवं चक्षुः स एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते' इति श्रुतेः । कामान्विषयान् एतान्हार्दाकाशाख्यसगुणब्रह्मगतानिति श्रुतिपदयोरर्थः । यथोक्तं

४ मधुसूदनीव्याख्या ।

यस्य तत् । सर्वाश्चर्यमयमनेकाद्भुतप्रचुरं, देवं द्योतनात्मकं अनन्तमपरिच्छिन्नं, विश्वतः सर्वतो मुखानि यस्मिन् तद्रूपं दर्शयामासेति पूर्वेण संबन्धः । अर्जुनो ददर्शेत्यध्याहारो वा ॥ ११ ॥ देवमित्युक्तं विवृणोति—दिवि अन्तरिक्षे सूर्याणां सहस्रस्यापरिमितसूर्यसमूहस्य युगपदुदितस्य युगपदुत्थिता भाः प्रभा यदि भवेत् तदा सा तस्य महात्मनो विश्वरूपस्य भासो दीप्तेः सदृशी तुल्या यदि स्याद्यदि वा न स्यात् ततोऽपि नूनं विश्वरूपस्यैव भा अतिरिच्येतेत्यहं मन्ये । अन्या तूपमा नास्त्येवेत्यर्थः । अत्राविद्यमानाध्यवसायात्तदभावेनोपमाभावपरादभूतोपमारूपेयमतिशयोक्तिरुत्प्रेक्षां व्यञ्जयन्ती सर्वथा निरुपमत्वमेव व्यनक्ति । 'उभौ यदि व्योम्नि पृथक्प्रवाहौ' इत्यादिवत् ॥ १२ ॥ 'इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्' इति भगवदाज्ञप्तमप्यनुभूतवानर्जुन इत्याह—एकस्थमेकत्र स्थितं जगत्कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिनानाप्रकारैरपश्यद्देवदेवस्य भगवतः

५ भाष्योत्कर्षदीपिका ।

स्वेश्वरवाचकस्य विशेष्यत्वमभिप्रेत्याचार्यैरित्थं व्याख्यातम् ॥ ११ ॥ तत्र दृष्टान्ताकाङ्क्षायामाह । दिवि अन्तरिक्षे स्वर्गे वा सूर्याणां सहस्रस्य युगपदुत्थितस्य युगपदुत्थिता भा यदि भवेत् सा तस्य महात्मनो विश्वरूपस्य भासः दीप्तेः सदृशी तुल्या स्यात् यदि वा न स्यादिति विश्वरूपस्य भा अतिरिच्यत इत्याशयः ॥ १२ ॥ न केवलं विश्वरूपधरं देवमर्जुनो दृष्टवानपि तु देवस्य देहे एकस्थं सर्वं जगदनुभूतवानित्याह । तत्र तस्मिन् विश्वरूपे देवदेवस्य शरीरे एकत्र स्थितं सर्वं जगद्देवपितृमनुष्यादिभेदैरनेकप्रकारेण प्रकर्षेण

६ श्रीधरीव्याख्या ।

विश्वरूपदीप्तेर्निरुपमत्वमाह—दिवीति । दिव्याकाशे सूर्यसहस्रस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः प्रभा भवेत् तर्हि सा तदा महात्मनो विश्वरूपस्य भासः प्रभायाः कथंचित्सदृशी स्यात् । नान्योपमास्तीत्यर्थः । तथाभूतं रूपं दर्शयामासेति पूर्वेणान्वयः ॥ १२ ॥ ततः किं वृत्तमित्यपेक्षायामाह संजयः—तत्रेति । अनेकधा प्रविभक्तं नानाविभागेनावस्थितं कृत्स्नं जगद्देवदेवस्य शरीरे

**ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥**

**अर्जुन उवाच।**

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान्।**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम्।

**स्तदा ॥ १३ ॥ तत इति। ततस्तं दृष्ट्वा स विस्मयेनाविष्टो विस्मयाविष्टो हृष्टानि रोमाणि यस्य सोऽयं हृष्टरोमा चाभवद्धनंजयः प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृताञ्जलिर्नमस्कारार्थं संपुटीकृतहस्तः सन्नभाषतोक्तवान् ॥ १४ ॥ कथं यत्त्वया दर्शितं विश्वरूपं तदहं पश्यामीति स्वानुभवमाविष्कुर्वन् अर्जुन उवाच—पश्यामीति। पश्याम्युपलभे हे देव, तव देहे देवा-**

२ आनन्दगिरिव्याख्या।

॥ १३ ॥ विश्वरूपधरस्य भगवतस्तस्मिन्नेकीभूतजगतश्चोक्तविशेषणस्य दर्शनानन्तरं किमकरोदित्यपेक्षायामाह—**तत इति**। आश्चर्यबुद्धिर्विस्मयः, रोम्णां हृष्टत्वं पुलकितत्वं, प्रकर्षो भक्तिश्रद्धयोरतिशयः ॥ १४ ॥ कथं भगवन्तं प्रत्यर्जुनो भाषितवानिति पृच्छति—**कथमिति**। तत्प्रश्नमपेक्षितं पूरयन्नवतारयति—**यत्त्वयेति**। भूतविशेषसङ्घेषु

३ नीलकण्ठव्याख्या (चतुर्धरी)।

श्रीभागवते 'तत्र लब्धपदं चित्तमाकृष्यैकत्र धारयेत्। नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम्। तत्र लब्धपदं चित्तमाकृष्य व्योम्नि धारयेत्। तच्च त्यक्त्वा मदारोहो न किंचिदपि चिन्तयेत्' इति। तत्र मूर्तौ एकत्र अङ्गे। व्योम्नि कारणे। मदारोहो निर्विकल्पे ब्रह्मण्यारूढः। तदिदमुक्तं देवदेवस्य शरीरे कृत्स्नं जगदेकस्थं पाण्डवोऽपश्यदिति ॥ १३ ॥ हृष्टरोमा रोमाञ्चितगात्रः ॥ १४ ॥ देवानादित्यादीन्। भूतविशेषाश्चतुर्विधा जरायुजादयस्तेषां

४ मधुसूदनीव्याख्या।

तत्र विश्वरूपे शरीरे पाण्डवोऽर्जुनस्तदा विश्वरूपाश्चर्यदर्शनदशायाम् ॥ १३ ॥ एवमद्भुतदर्शनेऽप्यर्जुनो न बिभयांचकार, नापि नेत्रे संचचार, नापि संभ्रमात्कर्तव्यं विसस्मार, नापि तस्माद्देशादपससार, किंत्वतिधीरत्वात्तत्कालोचितमेव व्यवजहार महति चित्तक्षोभेऽपीत्याह—ततस्तद्दर्शनादनन्तरं विस्मयेनाद्भुतदर्शनप्रभवेनालौकिकचित्तचमत्कारविशेषेणाविष्टो व्याप्तः। अतएव हृष्टरोमा पुलकितः सन् स प्रख्यातमहादेवसंग्रामादिप्रभावो धनंजयो युधिष्ठिरराजसूये उत्तरगोग्रहे च सर्वान् राज्ञो जित्वा धनमाहृतवानिति प्रथितमहापराक्रमोऽतिधीरः साक्षादग्निरिति वा महातेजस्वित्वात् देवं तमेव विश्वरूपधरं नारायणं शिरसा भूमिलग्नेन प्रणम्य प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा नमस्कृत्य कृताञ्जलिः संपुटीकृतहस्तयुगः सन्नभाषतोक्तवान्। अत्र विस्मयाख्यस्थायिभावस्यार्जुनगतस्यालम्बनविभावेन भगवता विश्वरूपेणोद्दीपनविभावेनासकृत्तद्दर्शनेनानुभावेन सात्त्विकरोमहर्षेण नमस्कारेणाञ्जलिकरणेन च व्यभिचारिणा चानुभावाक्षिप्तेन वा धृतिमतिहर्षवितर्कादिना परिपोषात्सवासनानां श्रोतॄणां तादृशश्चित्तचमत्कारोऽपि तद्भेदानध्यवसायात्परिपोषं गतः परमानन्दास्वादरूपेणाद्भुतरसो भवतीति सूचितम् ॥ १४ ॥ यद्भगवता दर्शितं विश्वरूपं तद्भगवद्दत्तेन दिव्येन चक्षुषा सर्वलोकादृश्यमपि पश्याम्यहो मम भाग्यप्रकर्ष इति स्वानुभवमाविष्कुर्वन् अर्जुन उवाच—पश्यामि चाक्षुषज्ञानविषयीकरोमि। हे देव, तव देहे विश्वरूपे देवान्वस्वादीन्सर्वान्। तथा

५ भाष्योत्कर्षदीपिका।

विभागयुक्तं पाण्डवोऽर्जुनो दृष्टवान्। अहो भगवद्भक्तस्यार्जुनस्य पितुः पाण्डोर्भाग्यातिशयः ईश्वरविमुखस्य दुर्योधनस्य पितुस्तवाभाग्यातिशयश्चेति पाण्डवपदेन ध्वनितम् ॥१३॥ ततः किमकरोदित्यपेक्षायामाह। तत एकस्थकृत्स्नजगद्दर्शनानन्तरं सः प्रथितप्रभावो धनंजयोऽर्जुनो विस्मयाविष्टः। आश्चर्यबुद्धियुक्तः। तल्लिङ्गमाह। हृष्टानि पुलकितानि रोमाणि यस्य। प्रणम्य प्रकर्षेणोत्कटभक्त्या नमनं कृत्वा शिरसा देवं विश्वरूपधरं नमस्कारार्थं संपुटीकृतहस्तः सन् उक्तवान्। विश्वरूपदर्शनात्पूर्वमपि खाण्डवदाहादिना प्रथितप्रभावो राजसूये गोग्रहे च राजभ्यो धनस्य भीष्मादिभ्यो गोधनस्य च हरणात् धनंजयोऽधुना पुनर्दृष्टविश्वरूप इति राज्याशां त्वं मा कुर्विति स धनंजय इति पदाभ्यां ध्वनितम् ॥ १४ ॥ स्वानुभवमाविष्कुर्वन्नर्जुन उवाच। हे देव, तव देहे देवानिन्द्रादीन्सर्वान्पश्यामि। तथा भूतविशेषाणां चराचराणां समूहान्पश्यामि। किंच ब्रह्माणं प्रजानां नियन्तारं पद्मासनस्थं ऋषींश्च वसिष्ठा-

६ श्रीधरीव्याख्या।

तदवयवत्वेनैकत्रैव स्थितं तदा पाण्डवोऽर्जुनोऽपश्यत् ॥ १३ ॥ एवं दृष्ट्वा किं कृतवानित्यत आह—**तत इति**। ततो दर्शनानन्तरं विस्मयेनाविष्टो व्याप्तः सन्हृष्टान्युत्पुलकितानि रोमाणि यस्य स धनंजयो देवं तमेव शिरसा प्रणम्य कृताञ्जलिः संपुटीकृतहस्तो भूत्वाभाषत उक्तवान् ॥ १४ ॥ भाषणमेवाह—**पश्यामीति सप्तदशभिः**। हे देव, तव देहे देवानादित्यादीन्पश्यामि। तथा सर्वा-

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥**
**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।**

१ श्रीमच्छांकरभाष्यम् ।

न्सर्वांस्तथा भूतविशेषसङ्घान् भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां सङ्घा भूतविशेषसङ्घास्तान् । किंच ब्रह्माणं चतुर्मुखमीशमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः । ऋषींश्च वसिष्ठादीन्, सर्वानुरगांश्च वासुकिप्रभृतीन्दिव्यान्दिवि भवान् ॥ १५ ॥ किंच—अनेकेति । अनेकबाहूदरवक्त्रनेत्रमनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रस्तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्रानन्तरूपमनन्तानि रूपाण्यस्येत्यनन्तरूपस्तमनन्तरूपं नान्तमन्तोऽवसानं न मध्यं मध्यं नाम द्वयोः कोट्योरन्तरं न पुनस्तवादिं तव देवस्य नान्तं पश्यामि न मध्यं पश्यामि न पुनरादिं पश्यामि हे विश्वेश्वर हे विश्वरूप ॥ १६ ॥ किंच—किरीटिनमिति । किरीटिनं किरीटं नाम शिरोभूषणविशेषस्तद्यस्यास्ति स किरीटी तं

२ आनन्दगिरिव्याख्या ।

देवानामन्तर्भावेऽपि पृथक्करणमुत्कर्षात् । ब्रह्मणः सर्वदेवतात्मत्वेऽपि तेभ्यो भेदकथनं तदुत्पादकत्वादिति मत्वाह—किंचेति । ऋषीणामुरगाणां च किंचिद्वैषम्यात्पृथक्त्वम् । दिव्यानित्युभयेषां विशेषणम् ॥ १५ ॥ यत्र भगवद्देहे सर्वमिदं दृष्टं तमेव विशिनष्टि—अनेकेति । आदिशब्देन मूलमुच्यते । नान्तं न मध्यमित्यत्रापि पश्यामीत्यस्य प्रत्येकं संबन्धं सूचयति—नान्तं पश्यामीति ॥ १६ ॥ विश्वरूपवन्तं भगवन्तमेव प्रकारान्तरेण प्रपञ्चयति—किंचेति । परि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संघान्समूहान् । ब्रह्माणं चतुर्मुखम् । ईशमीशितारम् । कमलासनस्थमित्यनेन दूरदर्शनमुक्तम् । उरगान्पातालस्थाननन्तादीन् । दिव्यान्कैलासादौ स्थितान्वासुकिप्रमुखान् । एतेन व्यवहितदर्शनमुक्तम् ॥ १५ ॥ अनेके अनन्ता बाहव उदराणि वक्त्राणि नेत्राणि च यस्मिंस्तदनेकबाहूदरवक्त्रनेत्रम् । सर्वतश्चतुर्दिक्षूर्ध्वधश्चानन्तमपरिच्छिन्नं रूपमस्य तम् । अनन्तत्वमेवाह—नान्तमिति । दीर्घरज्ज्वा इव तवाद्यन्तौ दैशिकौ न स्त इत्यर्थः ॥ १६ ॥ किरीटगदाचक्रधारिणम् । दीप्तिमत्त्वादेव दुर्निरीक्ष्यं द्रष्टुमशक्यम् । समन्तात्सर्वतो ये दीप्ता अनला अर्काश्च तद्वद्द्युतिर्यस्य तं,

४ मधुसूदनीव्याख्या ।

भूतविशेषाणां स्थावराणां जङ्गमानां च नानासंस्थानानां संघान्समूहान् । तथा ब्रह्माणं चतुर्मुखमीशमीशितारं सर्वेषां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थं, भगवन्नाभिकमलासनस्थमिति वा । तथा ऋषींश्च सर्वान्वसिष्ठादीन्ब्रह्मपुत्रान् । उरगांश्च दिव्यानप्राकृतान्वासुकिप्रभृतीन्पश्यामीति सर्वत्रान्वयः ॥ १५ ॥ यत्र भगवद्देहे सर्वमिदं दृष्टवान् तमेव विशिनष्टि—बाहव उदराणि वक्त्राणि नेत्राणि चानेकानि यस्य तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्र । अनन्तानि रूपाणि यस्येति तम् । तव तु पुनर्नान्तमवसानं न मध्यं नाप्यादिं पश्यामि सर्वगतत्वात् । हे विश्वेश्वर हे विश्वरूप । संबोधनद्वयमतिसंभ्रमात् ॥ १६ ॥ तमेव विश्वरूपं भगवन्तं प्रकारान्तरेण विशिनष्टि—किरीटगदाचक्रधारिणं च सर्वतो दीप्तिमन्तं तेजोराशिं च । अतएव दुर्निरीक्ष्यं दिव्येन चक्षुषा विना निरीक्षितुमशक्यम् । सयकारपाठे दुःशब्दोऽपह्नववचनः ।

५ भाष्योत्कर्षदीपिका ।

दीन् सर्वानुरगांश्च वासुकिप्रभृतीन् दिव्यान् पश्यामीति सर्वत्र संबन्धनीयम् । देवादीनां भूतविशेषान्तर्भूतत्वेऽपि तेषामुत्कर्षात्पृथगुपादानम् । ब्रह्मणो देवत्वेऽपि तज्जनकत्वात्पृथग्ग्रहणम् ॥ १५ ॥ यस्य देहे सर्वं दृष्टं तं देहवन्तं विशिनष्टि । अनेकानि बाह्वादीनि यस्य तं त्वां, सर्वत्रानन्तानि रूपाण्यस्येति तं पश्यामि । तवादिमन्तं मध्यं पुनर्न पश्यामि विश्वदर्शनं तव देहे युक्तं विश्वरूपत्वात्तवेति सूचनार्थम् । हे विश्वरूपेतिसंबोधनम् । विश्वस्याद्यन्तमध्यवत्त्वेऽपि तव तद्वत्त्वं नास्ति विश्वरूपत्वेऽपि विश्वेश्वरत्वात्तवेति द्योतनार्थं विश्वेश्वरेति संबोधनम् ॥ १६ ॥ किंच किरीटिनं शिरोभूषणविशेषवन्तम् । गदास्यास्तीति गदी तम् । चक्रमस्यास्तीति चक्री तम् । अतएव

६ श्रीधरीव्याख्या ।

न्भूतविशेषाणां जरायुजाण्डजादीनां सङ्घांश्च, तथा दिव्यानृषीन्वसिष्ठादीन्, उरगांश्च तक्षकादीन्, तथा देवानामीशं स्वामिनं ब्रह्माणं च । कथंभूतम् । कमलासनस्थं पृथ्वीपद्मकर्णिकायां मेरौ स्थितम्, यद्वा त्वन्नाभिपद्मासनस्थम् ॥ १५ ॥ किंच—अनेकेति । अनेकानि बाह्वादीनि यस्य तादृशं पश्यामि । अनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्यामि । तव तु अन्तं मध्यमादिं च न पश्यामि सर्वगतत्वात् ॥ १६ ॥ किंच—किरीटिनमिति । किरीटिनं मुकुटवन्तं गदिनं गदावन्तं चक्रिणं चक्रवन्तं सर्वतो दीप्तिमन्तं तेजःपुञ्ज-

**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥**
**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शा[1]श्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

किरीटिनं तथा गदिनं गदा यस्य विद्यत इति गदी तं गदिनं तथा चक्रिणं चक्रमस्यास्तीति चक्री तं चक्रिणं च तेजोराशिं तेजःपुञ्जं सर्वतोदीप्तिमन्तं सर्वतो दीप्तिर्यस्यास्ति स सर्वतोदीप्तिमांस्तं सर्वतोदीप्तिमन्तं पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यस्तं दुर्निरीक्ष्यं समन्तात्समन्ततः सर्वत्र दीप्तानलार्कद्युतिमनलश्चार्कश्चानलार्कौ दीप्तावनलार्कौ दीप्तानलार्कौ तयोर्दीप्तानलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिस्तं त्वां दीप्तानलार्कद्युतिं । अप्रमेयं न प्रमेयमप्रमेयम् । अशक्यपरिच्छेदमित्यर्थः ॥ १७ ॥ इतएव ते योगशक्तिदर्शनादनुमिनोमि—त्वमिति । त्वमक्षरं न क्षरतीति परमं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः । त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानं पर आश्रय इत्यर्थः । किंच त्वमव्ययो न तव व्ययो विद्यत इत्यव्ययः शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्मस्तस्य गोप्ता शाश्वतधर्मगोप्ता सनातनश्चिरंतनस्त्वं पुरुषः

२ आनन्दगिरिव्याख्या ।

च्छिन्नत्वं व्यावर्तयति—सर्वत इति । दुर्निरीक्ष्यं पश्यामीत्यधिकारिभेदादविरुद्धम् । पुरतो वा पृष्ठतो वा पार्श्वतो वा नास्य दर्शनं किंतु सर्वत्रेत्याह—समन्तत इति । दीप्तिमत्त्वं दृष्टान्तेन स्पष्टयति—दीप्तेति ॥ १७ ॥ सप्रपञ्चे भगवद्रूपे प्रकृते प्रकरणविरुद्धं त्वमक्षरमित्यादिनिरुपाधिकवचनमित्याशङ्क्याह—इतएवेति । योगशक्तिरैश्वर्यातिशयः । न क्षरतीति निष्प्रपञ्चत्वमुच्यते । परमपुरुषार्थत्वात्परमार्थत्वाच्च ज्ञातव्यत्वम् । यस्मिन्द्यौः पृथिवीत्यादौ प्रपञ्चायतनस्यैव ततो निकृष्टस्य ज्ञातव्यत्वश्रवणात् । कुतो ब्रह्मणो ज्ञातव्यत्वं तत्राह—त्वमस्येति । निष्प्रपञ्चस्य ब्रह्मणो ज्ञेयत्वे हेत्वन्तरमाह—किंचेति । अविनाशित्वात्तस्यैव ज्ञातव्यत्वादतिरिक्तस्य नाशित्वेन हेयत्वादित्यर्थः । ज्ञानकर्मा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

समन्ताद्दीप्तानलार्कद्युतिमित्येकं पदम् । अतएवाप्रमेयं द्रष्टुमशक्यपरिच्छेदम् ॥ १७ ॥ एवं तव योगैश्वर्यदर्शनात्त्वामेवमवैमीति वदन्नप्रमेयत्वमेव विवृणोति—त्वमिति । परममक्षरमस्थूलादिलक्षणम् । 'अक्षरं ब्रह्म परमम्' इत्यत्र प्रागुक्तं निष्कलं ब्रह्म तदेव त्वमसि । एतेन सगुणरूपस्य निर्गुणज्ञापकत्वमुक्तम् । शाखाग्रस्येव चन्द्रज्ञापकत्वम् । अतएव वेदितव्यं वेदान्तप्रमाणेन ज्ञातुं योग्यं नतूपासनीयम् । सगुणं ब्रह्मापि त्वमेवेत्याह—त्वमस्येति । निधानं लयस्थानम् । एतेन कारणत्वमुक्तम् । अव्ययः अमृतः देवत्वात् । शाश्वतस्य वैदिकस्य धर्मस्य गोप्तेत्यनेन कार्यब्रह्मभूतहिरण्यगर्भरूपत्वमुक्तम् । सनातनश्चिरन्तनोऽनादिपुरुषो जीवात्मा सोऽपि त्वमेव मे मम मतः । एवं

४ मधुसूदनीव्याख्या ।

अनिरीक्ष्यमिति यावत् । दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तमप्रमेयमित्थमयमिति परिच्छेत्तुमशक्यं त्वां समन्तात्सर्वतः पश्यामि दिव्येन चक्षुषा । अतोऽधिकारिभेदाद्दुर्निरीक्ष्यं पश्यामीति न विरोधः ॥ १७ ॥ एवं तवातर्क्यनिरतिशयैश्वर्यदर्शनादनुमिनोमि—त्वमेवाक्षरं परमं ब्रह्म वेदितव्यं मुमुक्षुभिर्वेदान्तश्रवणादिना । त्वमेवास्य विश्वस्य परं प्रकृष्टं निधीयतेऽस्मिन्निति निधानमाश्रयः । अतएव त्वमव्ययो नित्यः शाश्वतस्य नित्यवेदप्रतिपाद्यतयाऽस्य धर्मस्य गोप्ता पालयिता । शाश्वतेति संबोधनं वा । तस्मिन्पक्षेऽव्ययो विनाशरहितः । अतएव सनातनश्चिरन्तनः पुरुषो यः परमात्मा स एव त्वं

५ भाष्योत्कर्षदीपिका ।

समन्ततः सर्वत्र दीप्ताग्निसूर्ययोः कान्तिरिव कान्तिर्यस्य तम् । अतएव दुर्निरीक्ष्यं दुःखेन निरीक्ष्यं किरीटादिमत्त्वेऽप्यप्रमेयमशक्यपरिच्छेदं त्वां पश्यामि ॥ १७ ॥ दृष्ट्वा चानुमिनोमि । त्वमक्षरं न क्षरतीत्यक्षरं परमं ब्रह्म श्रवणादिना मुमुक्षुभिर्वेदितव्यं ज्ञातव्यं त्वमेव । यतोऽस्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानं परः आश्रयस्त्वमेव । किंच त्वमव्ययो विनाशरहितः पुनश्च शश्व-

६ श्रीधरीव्याख्या ।

रूपम्, तथा दुर्निरीक्ष्यं द्रष्टुमशक्यम् । तत्र हेतुः—दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तम् । अत एवाप्रमेयमेवंभूत इति निश्चेतुमशक्यं त्वां समंततः पश्यामि ॥ १७ ॥ यस्मादेवं तवातर्क्यमैश्वर्यं तस्मात्—त्वमिति । त्वमेवाक्षरं परमं ब्रह्म । कथंभूतम् । वेदितव्यं मुमुक्षुभिर्ज्ञातव्यम् । त्वमेवास्य विश्वस्य परं निधानं निधीयतेऽस्मिन्निति निधानं प्रकृष्टाश्रयः । अतएव त्वमव्ययो नित्यः शाश्व-

७ अभिनवगुप्ताचार्यव्याख्या ।

अर्जुन उवाच—पश्यामीति ॥ १५ ॥ १६ ॥ १७ ॥ त्वमक्षरमिति । सात्वतधर्मगोप्ता इति यतस्त्वं क्रियाज्ञानयोरुभयोरपि भेदाप्रतिभासा-

[1] सात्वतधर्मगोतेत्यभिनवगुप्ताहतपाठः

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**
**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

परो मतोऽभिप्रेतो मे मम ॥ १८ ॥ किंच—अनादीति । अनादिमध्यान्तमादिश्च मध्यं चान्तश्च न विद्यते यस्य सोऽयमनादिमध्यान्तस्तं त्वामनादिमध्यान्तमनन्तवीर्यं न तव वीर्यस्यान्तोऽस्तीत्यनन्तवीर्यस्तं त्वामनन्तवीर्यं तथानन्तबाहुमनन्ता बाहवो यस्य तव स त्वमनन्तबाहुस्तं त्वामनन्तबाहुं शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव स त्वं शशिसूर्यनेत्रस्तं त्वां शशिसूर्यनेत्रं चन्द्रादित्यनयनं पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च सः वक्त्रं यस्य तव स त्वं दीप्तहुताशवक्त्रस्तं त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तं तापयन्तम् ॥ १९ ॥ द्यावापृथिव्योरिति । द्यावापृथिव्योरिदमन्तरं ह्यन्तरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वा व्याप्ता दृष्ट्वोपलभ्याद्भुतं विस्मापकं रूपमिदं तवोग्रं क्रूरं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं

२ आनन्दगिरिव्याख्या ।

त्मनो धर्मस्य नित्यत्वं वेदप्रमाणकत्वं धर्मसंस्थापनार्थाय संभवामीत्युक्तत्वाद् गोप्ता रक्षिता ॥ १८ ॥ भगवतो विश्वरूपाख्यं रूपमेव पुनर्विवृणोति—किंचेति । हुतमश्नातीति हुताशो वह्निः ॥ १९ ॥ प्रकृतभगवद्रूपस्य व्याप्तिं व्यनक्ति—द्यावापृथिव्योरिति । तस्यैव भयंकरत्वमाचष्टे—दृष्ट्वेति ॥ २० ॥ अमी हीत्यादि समनन्तरग्रन्थस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विश्वरूपदर्शने जीवब्रह्मणोरैक्यं शाखया चन्द्र इवाधिगम्यत इत्युक्तम् ॥ १८ ॥ एतदेवाह—**अनादीति** । देशतः कालतश्चादिमध्यान्तहीनत्वादनादिमध्यान्तम् । दीप्तो हुताशो वक्त्रे यस्येति भास्वरदन्तत्वं व्यज्यते । स्वतेजसा चैतन्यज्योतिषा इदं विश्वं विश्वरूपं तपन्तं प्रकाशयन्तम् । अनादित्वादिसर्वविशेषणविशिष्टं विश्वं तपिकर्मीभूतं तापयन्तं त्वां परज्योतीरूपं पश्यामि जानामि । चित्रपटस्थानीयं विश्वरूपं सकलकारकात्मकधीवासनोपेतं येन ज्योतिषा प्रकाशते तदेव त्वमसीति जानामीति भावः ॥ १९ ॥ एवं स्वयंकृतविश्वरूपदर्शनेन कृतकृत्यो भूत्वा तदुपसंहारमिच्छन्स्तौति—**द्यावापृथिव्योरिति** । हे महात्मन्, हि प्रत्यक्षं त्वयैकेनेदं द्यावापृथिव्योरन्तरं मध्यं

४ मधुसूदनीव्याख्या ।

मे मतो विदितोऽसि ॥ १८ ॥ किंच—आदिरुत्पत्तिर्मध्यं स्थितिरन्तो विनाशस्तद्रहितं अनादिमध्यान्तम् । अनन्तं वीर्यं प्रभावो यस्य तम् । अनन्ता बाहवो यस्य तम् । उपलक्षणमेतन्मुखादीनामपि । शशिसूर्यौ नेत्रे यस्य तम् । दीप्तो हुताशो वक्त्रं यस्य, वक्त्रेषु यस्येति वा तम् । स्वतेजसा विश्वमिदं तपन्तं संतापयन्तं त्वा त्वां पश्यामि ॥ १९ ॥ प्रकृतस्य भगवद्रूपस्य व्याप्तिमाह—द्यावापृथिव्योरिदमन्तरमन्तरिक्षं हि एव त्वयैवैकेन व्याप्तं दिशश्च सर्वा व्याप्ताः । दृष्ट्वाद्भुतमत्यन्तविस्मयकरमिदमुग्रं दुरधिगमं महातेजस्वित्वात्तव रूपमुपलभ्य लोकत्रयं प्रव्यथितं अत्यन्तभीतं जातम् । हे

५ भाष्योत्कर्षदीपिका ।

द्धवस्य नित्यस्य नित्यवेदबोधितस्य धर्मस्य गोप्ता रक्षकोऽतस्त्वं चिरंतनः पुरुषो ममाभिमतः ॥ १८ ॥ भगवतः परमपुरुषत्वं प्रकारान्तरेण निरूपयति—**अनादीति** । आदिमध्यान्तवर्जितं अनन्तवीर्यं अपरिमितपराक्रमं यतोऽनन्ता बाहवो यस्य चन्द्रसूर्यौ नेत्रे यस्य दीप्तश्चासौ वह्निश्च वक्त्रं यस्य तम् । अतः स्वतेजसा इदं विश्वं संतापयन्तं त्वां पश्यामि ॥ १९ ॥ द्यावापृथिव्योरन्तरमन्तरिक्षं त्वयैकेन विश्वरूपधरेण व्याप्तं दिशश्च सर्वाः त्वया व्याप्ताः । हि यस्मात्तस्मात्तवेदमुग्रं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितं पीडितम् । अत इदमुपसंहर । महात्मनोऽक्षुद्रस्वभावस्य तव निर्दोषलोकपीडनं नोचितमित्याशयेनाह—हे महात्मन्निति ॥२०॥

६ श्रीधरीव्याख्या ।

तस्य नित्यस्य धर्मस्य गोप्ता पालकः सनातनश्चिरंतनः पुरुषो मे मतः संमतोऽसि ॥ १८ ॥ किंच—**अनादीति** । अनादिमध्यान्तमुत्पत्तिस्थितिप्रलयरहितम् । अनन्तं वीर्यं प्रभावो यस्य तम् । अनन्तबाहुं अनन्ता बाहवो यस्य तम् । शशिसूर्यौ नेत्रे यस्य तम् तादृशं त्वां पश्यामि । तथा दीप्तो हुताशोऽग्निर्वक्त्रेषु यस्य तम् स्वतेजसा इदं विश्वं तपन्तं संतापयन्तं पश्यामि ॥ १९ ॥ किंच—**द्यावापृथिव्योरिति** । द्यावापृथिव्योरिदमन्तरं हि अन्तरिक्षं त्वयैकेन व्याप्तम् । दिशश्च सर्वा व्याप्ताः । अद्भुतमदृष्टपूर्वं त्वदीयमिदमुग्रं

७ अभिनवगुप्ताचार्यव्याख्या ।

त्मकं परमगुरौ महादेवेऽर्पणं तथा सत्तात्मकं प्रकाशरूपं सतत्त्वं विद्यते येषां ते सात्त्वताः तेषां धर्मोऽनवरतग्रहणसंन्यासपरत्वात्सृष्टिसंहार-

**अमी हि [1]त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः २१**
**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

वा हे महात्मन्नक्षुद्रस्वभाव ॥ २० ॥ अथाधुना पुरा यद्वा जयेम यदि वा नो जयेयुरित्यर्जुनस्य संशय आसीत्तन्निर्णयाय पाण्डवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवांस्तं पश्यन्नाह—अमी हीति । किंच अमी हि युध्यमाना योद्धारस्त्वा सुरसङ्घा येऽत्र भूभारावतारायावतीर्णा वस्वादिदेवसङ्घा मनुष्यसंस्थानास्त्वां विशन्ति प्रविशन्तो दृश्यन्ते तत्र केचिद्भीताः प्राञ्जलयः सन्तो गृणन्ति स्तुवन्ति त्वामन्ये पलायनेऽप्यशक्ताः सन्तः । युद्धे प्रत्युपस्थित उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा महर्षिसिद्धसङ्घा महर्षीणां सिद्धानां च सङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः संपूर्णाभिः ॥ २१ ॥ किंचान्यत्—रुद्रेति । रुद्रादित्या वसवो ये च साध्या रुद्रादयो गणाः विश्वेऽश्विनौ

२ आनन्दगिरिव्याख्या ।

तात्पर्यमाह—**अथेति** । तं भगवन्तं पाण्डवजयमैकान्तिकं दर्शयन्तं पश्यन्नर्जुनो ब्रवीतीत्याह—**तं पश्यन्निति** । विश्वरूपस्यैव प्रपञ्चनार्थमनन्तरग्रन्थजातमिति दर्शयति—**किंचेति** । असुरसङ्घा इति पदं छित्त्वा भूभारभूता दुर्योधनादयस्त्वां विशन्तीत्यपि च वक्तव्यम् । उभयोरपि सेनयोरवस्थितेषु योद्धुकामेष्ववान्तरविशेषमाह—**तत्रेति** । समरभूमौ समागतानां द्रष्टुकामानां नारदप्रभृतीनां विश्वविनाशमाशङ्कमानानां तं परिजिहीर्षतां स्तुतिपदेषु भगवद्विषयेषु प्रवृत्तिप्रकारं दर्शयति—**युद्ध इति** ॥ २१ ॥ दृश्यमानस्य भगवद्रूपस्य विस्मयकरत्वे हेत्वन्तरमाह—**किंचेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सर्वाः दिशश्च व्याप्ताः । अतस्त्वेदमद्भुतमुग्रं रूपं दृष्ट्वा लोकत्रयं प्रकर्षेण व्यथितम् । अतः परमिदमुपसंहरेत्यभिप्रायः ॥ २० ॥ व्यथामेवाह—**अमीति** । हि यतः अमी त्वा त्वां असुरसङ्घा असुरांशा दुर्योधनादयस्त्वां पतङ्गाः पावकमिवादृष्टप्रेरिता विशन्ति मरणायेत्यर्थः । केचिद्भीताः प्राञ्जलयो बद्धाञ्जलयो गृणन्ति स्तुवन्ति ॥ २१ ॥ किंच ये त्वदनुगृहीता रुद्रादयस्तेऽपि विस्मिताः सन्तः सर्वे त्वां वीक्षन्त इत्याह—**रुद्रादित्या इति** । साध्याः विश्वे च

४ मधुसूदनीव्याख्या ।

महात्मन्साधूनामभयदायक, इतः परमिदमुपसंहरेत्यभिप्रायः ॥ २० ॥ अधुना भूभारसंहारकारित्वमात्मनः प्रकटयन्तं भगवन्तं पश्यन्नाह—अमी हि सुरसङ्घा वस्वादिदेवगणा भूभारावतारार्थं मनुष्यरूपेणावतीर्णा युध्यमानाः सन्तस्त्वा त्वां विशन्ति प्रविशन्तो दृश्यन्ते । एवमसुरसङ्घा इति पदच्छेदेन भूभारभूता दुर्योधनादयस्त्वां विशन्तीत्यपि वक्तव्यम् । एवमुभयोरपि सेनयोः केचिद्भीताः पलायनेऽप्यशक्ताः सन्तः प्राञ्जलयो गृणन्ति स्तुवन्ति त्वाम् । एवं प्रत्युपस्थिते युद्धे उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु सर्वस्य जगत इत्युक्त्वा महर्षिसिद्धसङ्घा नारदप्रभृतयो युद्धदर्शनार्थमागता विश्वविनाशपरिहाराय स्तुवन्ति त्वां स्तुतिभिर्गुणोत्कर्षप्रतिपादिकाभिर्वाग्भिः पुष्कलाभिः परिपूर्णाभिः ॥ २१ ॥ किंचान्यत्—रुद्राश्चादित्याश्च वसवो ये च साध्या नाम देवगणा विश्वे तुल्यविभक्तिकविश्वदेवशब्दाभ्यामुच्यमाना देवगणा अश्विनौ नासत्यदस्रौ मरुत एकोनपञ्चाशद्देवगणा

५ भाष्योत्कर्षदीपिका ।

इदानीं यद्वा जयेम यदि वा नो जयेयुरित्यर्जुनसंशयनिर्णयाय पाण्डवानां जयमैकान्तिकं दर्शयितुं प्रवृत्तं भूभारहरणार्थिनं भगवन्तं पश्यन्नाह । अमी हि युध्यमानाः भूभारहरणार्थं मनुष्यरूपेणावतीर्णा वस्वादिदेवसङ्घास्त्वां प्रविशन्तीति त्वामिति पाठ आचार्यैर्व्याख्यात इति भाति । अन्यथा त्वा त्वामिति भाष्यपाठोऽपेक्षितः । असुरसङ्घा इति पदं च्छित्वा भूभारभूता दुर्योधनादयस्त्वां विशन्तीत्यपि वक्तव्यमिति तट्टीकाकारोक्तिस्तु त्वेतिपाठे संगच्छत इति ज्ञेयम् । तत्र केचिद्भीताः पलायनेऽप्यशक्ताः सन्तः प्राञ्जलयः सन्तो गृणन्तः स्तुवन्ति । किंच युद्धदर्शनार्थमागता महर्षिसिद्धसङ्घा नारदादयो युद्धे प्रत्युपस्थिते तु जगत्क्षयहेतूत्पातादीनि उपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा संपूर्णाभिः स्तुतिभिः स्तुवन्ति ॥ २१ ॥ किंचैतद्रूपं दृष्ट्वा नाहमेव विस्मयाविष्टः, अपि तु रुद्रादयोऽपीत्याह—**रुद्रेति** । ऊष्माणं पिबन्तीत्यूष्मपाः पितरः । 'ऊष्मभागा हि पितरः' ।

६ श्रीधरीव्याख्या ।

घोरं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमतिभीतं पश्यामीति पूर्वस्यैवानुषङ्गः ॥ २० ॥ किंच—**अमी हीति** । अमी सुरसङ्घा भीताः सन्तः त्वां विशन्ति शरणं प्रविशन्ति । तेषां मध्ये केचिदतिभीताः दूरत एव स्थित्वा कृतसंपुटकरयुगुलाः सन्तो गृणन्ति जयजय रक्षरक्षेति प्रार्थयन्ते । स्पष्टमन्यत् ॥ २१ ॥ किंच—**रुद्रेति** । रुद्राश्चादित्याश्च वसवश्च ये च साध्यानाम देवाः, विश्वेदेवा अश्विनौ

७ अभिनवगुप्ताचार्यव्याख्या ।

विषयः सकलमार्गोत्तीर्णस्तं संगोपायते एतदेवात्राध्याये रहस्यं प्रायशो देवीस्तोत्रविवृतौ मया प्रकाशितं तत्सहृदयैः सोपदेशैः स्वयमेवाव-

[1] त्वाऽसुरसङ्घा इति पाठः.

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥
नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो २४

१ श्रीमच्छांकरभाष्यम् ।

च देवौ मरुतश्च वायव, ऊष्मपाश्च पितरो गन्धर्वयक्षासुरसिद्धसङ्घा गन्धर्वा हाहाहूहूप्रभृतयो यक्षाः कुबेरप्रभृतयोऽसुरा विरोचनप्रभृतयः सिद्धाः कपिलादयस्तेषां सङ्घा गन्धर्वयक्षासुरसिद्धसङ्घास्ते वीक्षन्ते पश्यन्ति त्वा त्वां विस्मिता विस्मयमापन्नाः सन्तस्त एव सर्वे ॥ २२ ॥ यस्मात्— रूपमिति । रूपं महदतिप्रमाणं ते तव बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिंस्तद्रूपं बहुवक्त्रनेत्रं हे महाबाहो बहुबाहूरुपादं बहवो बाहव ऊरवः पादाश्च यस्मिन् रूपे तद्बहुबाहूरुपादं, किंच बहूदरं बहून्युदराणि यस्मिन्निति तद्बहूदरं बहुदंष्ट्राकरालं बह्वीभिर्दंष्ट्राभिः करालं विकृतं तद्बहुदंष्ट्राकरालं दृष्ट्वा रूपमीदृशं लोका लौकिकाः प्राणिनः प्रव्यथिताः प्रचलिता भयेन तथाहमपि ॥ २३ ॥ तत्रेदं कारणं—नभःस्पृशमिति । नभःस्पृशं द्युस्पर्शमित्यर्थः । दीप्तं प्रज्वलितमनेक-

२ आनन्दगिरिव्याख्या ।

त एवोक्ता रुद्रादयः सर्वे विस्मयमापन्नास्त्वां पश्यन्तीति संबन्धः ॥ २२ ॥ लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति—यस्मादिति । ईदृशं यस्मात्ते रूपं तस्मात्तं दृष्ट्वेति योजना । भयेन लौकिकवदहमपि व्यथितो व्यथां पीडां देहेन्द्रियप्रचलनं प्राप्तोऽस्मीत्याह—तथेति ॥ २३ ॥ अर्जुनस्य विश्वरूपदर्शनेन व्यथितत्वे हेतुमाह—तत्रेति ।

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

देवगणविशेषौ रुद्रादित्यवज्ज्ञेयौ । ऊष्मपाः पितरः । गन्धर्वाणां यक्षाणामसुराणां सिद्धानां जातिभेदानां सङ्घाः समूहाः । शेषं स्पष्टम् ॥ २२ ॥ पुनर्लोकानामात्मनश्च व्यथामाह—रूपमिति । महत् आदिमध्यान्तहीनम् । हे महाबाहो, ते तव करालं महारूपं दृष्ट्वा लोका व्यथितास्तथाहं च व्यथित इति योजना ॥ २३ ॥ करालत्वप्रपञ्चनेन स्वव्यथामेवाह—नभ इति । नभःस्पृशं व्योमव्यापिनम् । दीप्तमग्निवज्जाज्वल्यमानम् । व्यात्ताननं विस्तारितमुखम् ।

४ मधुसूदनीव्याख्या ।

ऊष्मपाश्च पितरो गन्धर्वाणां यक्षाणामसुराणां सिद्धानां च जातिभेदानां सङ्घाः समूहा वीक्षन्ते पश्यन्ति त्वा त्वाम् । तादृशाद्भुतदर्शनात्ते सर्वे एव विस्मिताश्च । विस्मयलौकिकचमत्कारविशेषमापद्यन्ते च ॥ २२ ॥ लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति—हे महाबाहो, ते तव रूपं दृष्ट्वा लोकाः सर्वेऽपि प्राणिनः प्रव्यथितास्तथाऽहं प्रव्यथितो भयेन । कीदृशं ते रूपम् । महत् अतिप्रमाणम् । बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत् । बहवो बाहवः ऊरवः पादाश्च यस्मिंस्तत् । बहून्युदराणि यस्मिंस्तत् । बहुभिर्दंष्ट्राभिः करालमतिभयानकम् । दृष्ट्वैव मत्सहिताः सर्वे लोका भयेन पीडिता इत्यर्थः ॥ २३ ॥ भयानक-

५ भाष्योत्कर्षदीपिका ।

'यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः' इति श्रुतिस्मृतिभ्याम् । गन्धर्वा हाहाहूहूप्रभृतयः, यक्षाः कुबेरादयः, असुरा विरोचनादयः, सिद्धाः कपिलादयः, तेषां सङ्घाः समूहास्त्वां पश्यन्ति । सर्वे विस्मिता विस्मयं प्राप्ता एव च ॥२२॥ रुद्रादयः किमर्थं विस्मयापन्ना इति चेत् यस्मात्सर्वे लोकाः करालं तव रूपं दृष्ट्वा पीडिता इत्याह—रूपमिति । तव रूपं महदतिप्रमाणम् । तदेवाह । बहूनि मुखानि चक्षूंषि च यस्मिन् तत्, बहूनि बाह्वादीनि यस्मिन्तत्, अतएव हे महाबाहो, बहूनि उदराणि यस्मिन्तत्, बहुभिर्दंष्ट्राभिः करालं विकृतं तत् दृष्ट्वा लौकिकाः प्राणिनः प्रव्यथिता भयेन प्रचलिताः । ननु प्रव्यथितैर्लोकैः किं तव त्वं तु न व्यथित इत्यत आह । तथाहमपि व्यथितः ॥ २३ ॥ स्वव्यथायां कारणमाह—नभ इति । नभःस्पृशं द्युस्पृशं, दीप्तं ज्वलितं, अनेके नाना भयंकरा वर्णा यस्मिन् तं, व्यात्तानि विवृतानि भयंकराणि

६ श्रीधरीव्याख्या ।

देवौ, मरुतो मरुद्गणाः, ऊष्माणं पिबन्तीत्यूष्मपाः पितरः, 'ऊष्मभागा हि पितरः' इत्यादिश्रुतेः । स्मृतिश्च-'यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥' इति । गन्धर्वाश्च यक्षाश्चासुराश्च विरोचनादयः, सिद्धानां सङ्घाश्च ते सर्वे एव विस्मिताः सन्तः त्वां वीक्षन्त इत्यन्वयः ॥ २२ ॥ किंच—रूपमिति । हे महाबाहो, महदत्यूर्जितं तव रूपं दृष्ट्वा लोकाः सर्वे प्रव्यथिता अतिभीताः, तथाहं प्रव्यथितोऽस्मि । कीदृशं रूपं दृष्ट्वा । बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत्, बहवो बाहव ऊरवः पादाश्च यस्मिंस्तत्, बहूनि उदराणि यस्मिंस्तत्, बहुभिर्दंष्ट्राभिः करालं विकृतं । रौद्रमित्यर्थः ॥ २३ ॥ न केवलं भीतोऽहमित्येतावदेव अपि तु—नभःस्पृशमिति । नभः स्पृशतीति नभःस्पृक्तं । अन्तरिक्षव्यापिनमित्यर्थः । दीप्तं तेजोयुक्तम् । अनेके वर्णा यस्य तमने-

**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥ २५ ॥**
**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।**

१ श्रीमच्छांकरभाष्यम् ।

वर्णमनेकवर्णा भयंकरा नानासंस्थाना यस्मिंस्त्वयि तं त्वामनेकवर्णं व्यात्ताननं व्यात्तानि विवृतान्याननानि मुखानि यस्मिंस्त्वयि तं त्वां व्यात्ताननं दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि विशालानि विस्तीर्णानि नेत्राणि यस्मिंस्त्वयि तं त्वां दीप्तविशालनेत्रं दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मा सन् धृतिं धैर्यं न विन्दामि न लभे शमं चोपशमं मनस्तुष्टिं हे विष्णो ॥ २४ ॥ कस्माद्—दंष्ट्राकरालानीति । दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैवोपलभ्य कालानलसंनिभानि प्रलयकाले लोकानां दाहकोऽग्निः कालानलस्तत्संनिभानि कालानलसदृशानि दृष्ट्वेत्येतद्दिशः पूर्वापरविवेकेन न जाने दिङ्मूढो जातोस्म्यतो न लभे च नोपलभे च शर्म सुखमतः प्रसीद प्रसन्नो भव हे देवेश जगन्निवास ॥ २५ ॥ येभ्यो मम पराजयशङ्काऽऽसीत् सा चापगता यतः—अमी चेति । अमी च त्वां धृतराष्ट्रस्य पुत्रा दुर्यो-

२ आनन्दगिरिव्याख्या ।

॥ २४ ॥ दृश्यमानेऽपि भगवद्देहे परितोषाद्यभावे कारणान्तरं प्रश्नपूर्वकमाह—कस्मादिति । दृष्ट्वेत्येवकारेण प्राप्तिर्व्यावर्त्यते ॥ २५ ॥ अस्माकं जयं परेषां पराजयं च दिदृक्षन्तं [ दिदृक्षुं ] त्वां पश्यामीत्याह—येभ्य इति । तत्र हेतुत्वेन श्लोकमवतारयति—यत इति । न केवलं दुर्योधनादीनामेव पराजयः किंतु भीष्मादीनामपीत्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दीप्तविशालनेत्रं रक्तनेत्रमित्यर्थः । हि प्रत्यक्षं त्वा त्वां दृष्ट्वा प्रव्यथितान्तरात्मा प्रकर्षेण व्यथितचित्तो धृतिं धैर्यं न विन्दामि न लभे शमं च शान्तिं स्वास्थ्यं च न लभे हे विष्णो व्यापक, भयानकं त्वदाक्रान्तं देशं त्यक्त्वान्यत्र गन्तुमशक्यं तव व्यापकत्वादिति भावः ॥ २४ ॥ कालानलः प्रलयाग्निस्तत्तुल्यानि । प्रसीद प्रसन्नः सुखदो भवेत्यर्थः ॥ २५ ॥

४ मधुसूदनीव्याख्या ।

त्वमेव प्रपञ्चयति—न केवलं प्रव्यथित एवाहं त्वां दृष्ट्वा किंतु प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्यं देहेन्द्रियादिधारणसामर्थ्यं शमं च मनःप्रसादं न विन्दामि न लभे । हे विष्णो, त्वां कीदृशम् । नभःस्पृशमन्तरिक्षव्यापिनं दीप्तं प्रज्वलितं अनेकवर्णं भयंकरनानासंस्थानयुक्तम् व्यात्ताननं विवृतमुखं दीप्तविशालनेत्रं प्रज्वलितविस्तीर्णचक्षुषं त्वां दृष्ट्वा हि एव प्रव्यथितान्तरात्माहं धृतिं शमं च न विन्दामीत्यन्वयः ॥ २४ ॥ दंष्ट्राभिः करालानि विकृतत्वेन भयंकराणि प्रलयकालानलसदृशानि च ते मुखानि दृष्ट्वैव नतु तानि प्राप्य भयवशेन दिशः पूर्वापरादिविवेकेन न जाने । अतो न लभे च शर्म सुखं त्वद्रूपदर्शनेऽपि । अतो हे देवेश, हे जगन्निवास, प्रसीद प्रसन्नो भव मां प्रति । यथा भयाभावेन त्वद्दर्शनजं सुखं प्राप्नुयामिति शेषः ॥ २५ ॥ अस्माकं जयं परेषां पराजयं च सर्वदा द्रष्टुमिष्टं पश्य । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसीति भगवदा-

५ भाष्योत्कर्षदीपिका ।

मुखानि यस्मिन्तं प्रज्वलितानि विस्तीर्णानि नेत्राणि यस्मिन्तं, त्वां दृष्ट्वा प्रव्यथितश्चलितोऽन्तरात्मा मनो यस्य सोऽहं धैर्यं न लभे अतएव शमं मनस्तुष्टिं न लभे । व्यापनशीलता तव मया दृष्टाऽधुना द्रष्टुमसमर्थोऽस्मीति सूचयन्नाह हे विष्णो इति, व्यापनशीलस्त्वं मनोगतमपि जानासीति वा संबोधनाशयः ॥ २४ ॥ दंष्ट्राभिः करालानि विकृतानि प्रलयकालाग्निसदृशानि च दृष्ट्वैव नतु प्राप्य दिशः पूर्वापरविवेकेन न जानामि । शर्म सुखं च न लभे अतो हे देवेश हे जगन्निवास, प्रसीद प्रसन्नो भव । तव देवेशत्वं जगन्निवासत्वं च प्रत्यक्षेण मयोपलब्धं यदर्थं मम प्रार्थना आसीदिति द्योतनार्थं संबोधनद्वयम् ॥ २५ ॥ पराजयाशङ्कापि मम निवृत्ता इत्याशयेनाह । अमी च त्वा त्वां धृतराष्ट्रस्य पुत्रा दुर्योधनादयस्त्वरमाणा विशन्तीति परेणान्वयः । सर्वे युयुत्सुव्यतिरिक्ता

६ श्रीधरीव्याख्या ।

कवर्णम्, व्यात्तानि विवृतान्याननानि यस्य तम्, दीप्तानि विशालानि नेत्राणि यस्य तम् एवंभूतं त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहम् धृतिं धैर्यमुपशमं च न लभे ॥ २४ ॥ किंच—दंष्ट्रेति । भो देवेश, तव मुखानि दृष्ट्वा भयावेशेन दिशो न जानामि । शर्म च सुखं न लभे । भो जगन्निवास प्रसन्नो भव । कीदृशानि मुखानि । दंष्ट्राभिः करालानि कालानलः प्रलयाग्निस्तत्सदृशानि ॥ २५ ॥ यच्चान्यद्द्रष्टुमिच्छसीत्यनेनास्मिन्संग्रामे भाविजयपराजयादिकं च मम देहे पश्येति यद्भगवतोक्तं तदिदानीं पश्यन्नाह—**अमी चेति पञ्चभिः** । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वे अवनिपालानां जयद्रथादीनां राज्ञां सङ्घैः सहैव तव वक्त्राणि विश-

**भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥**
**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥**
**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

धनप्रभृतयस्त्वरमाणा विशन्तीति व्यवहितेन संबन्धः । सर्वे सहैव संहता अवनिपालसङ्घैरवनिं पृथ्वीं पालयन्तीत्यवनिपालास्तेषां सङ्घैः । किंच भीष्मो द्रोणः सूतपुत्रः कर्णस्तथासौ सहास्मदीयैरपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैर्योधानां मुख्यैः प्रधानैः सह ॥ २६ ॥ किंच—वक्त्राणीति । वक्त्राणि मुखानि ते तव त्वरमाणास्त्वरायुक्ताः सन्तो विशन्ति । किंविशिष्टानि मुखानि । दंष्ट्राकरालानि भयानकानि भयंकराणि । किंच केचिन्मुखानि प्रविष्टानां मध्ये विलग्ना दशनान्तरेषु दन्तान्तरेषु मांसमिव भक्षितं संदृश्यन्त उपलभ्यन्ते चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिः ॥ २७ ॥ कथं प्रविशन्ति मुखानीत्याह—यथा नदीनामिति । यथा नदीनां स्रवन्तीनां बहवोऽनेकेऽम्बूनां वेगा अम्बुवेगास्त्वरा-

२ आनन्दगिरिव्याख्या ।

**किंचेति** ॥ २६ ॥ भगवद्रूपस्योग्रत्वे हेत्वन्तरमाह—**किंचेति** । प्रविष्टानां मध्ये केचिदिति संबन्धः ॥ २७ ॥ उभयोरपि सेनयोरवस्थितानां राज्ञां भगवन्मुखप्रवेशं निदर्शनेन विशदयति—**कथमित्यादिना** ॥ २८ ॥ प्रवेश-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अमी त्वां विशन्तीत्यग्रिमश्लोकादपकृष्यते ॥ २६ ॥ ते भीष्मादयः । उत्तमाङ्गैः शिरोभिः । अयं भावः—धृतराष्ट्रस्य पुत्राः पापिष्ठाः भवन्तमेव त्रैलोक्यशरीरं विशन्ति । पापानुरूपं तस्य पायुस्थानस्थितान्नरकानेव गच्छन्तीति तत्र त्वां विशन्तीत्येवोक्तम् । भीष्मादयस्तु भक्ता यतोऽग्निर्ब्राह्मणा वेदाश्च प्रसूतास्तद्भगवतो मुखं प्रविशन्तीति वैषम्यगति-सूचनार्थं त्वां धृतराष्ट्रस्य पुत्रा विशन्ति भीष्मादयस्ते वक्त्राणि विशन्तीति विभागदर्शनं युक्तमिति ॥ २७ ॥ इदमेव सदृष्टान्तमाह—**यथेति** । तव वक्त्राणि विशन्तीति संबन्धः । अभिविज्वलन्ति सर्वतः जाज्वल्यमानानि ॥ २८ ॥

४ मधुसूदनीव्याख्या ।

दिष्टमधुना पश्यामीत्याह पञ्चभिः—अमी च धृतराष्ट्रस्य पुत्रा दुर्योधनप्रभृतयः शतं सोदरा युयुत्सुं विना सर्वे त्वां त्वरमाणा विशन्तीत्यग्रेतनेनान्वयः । अतिभयसूचकत्वेन क्रियापदन्यूनत्वमत्र गुण एव । सहैवावनिपालानां शल्यादीनां राज्ञां सङ्घैस्त्वां विशन्ति । न केवलं दुर्योधनादय एव विशन्ति किंतु अजेयत्वेन सर्वैः संभावितोऽपि भीष्मो द्रोणः सूतपुत्रः कर्णस्तथासौ सर्वदा मम विद्वेष्टा । सहास्मदीयैरपि परकीयैरिव धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैस्त्वां विशन्तीत्यन्वयः ॥ २६ ॥ अमी धृतराष्ट्रपुत्रप्रभृतयः सर्वेऽपि ते तव दंष्ट्राकरालानि भयानकानि वक्त्राणि त्वरमाणा विशन्ति । तत्र च केचिच्चूर्णितैरुत्तमाङ्गैः शिरोभिर्विशिष्टा दशनान्तरेषु विलग्ना विशेषेण संलग्ना दृश्यन्ते मया सम्यगसंदेहेन ॥ २७ ॥ राज्ञां भगवन्मुखप्र-वेशने निदर्शनमाह—यथा नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां जलानां वेगा वेगवन्तः प्रवाहाः समुद्राभिमुखाः

५ भाष्योत्कर्षदीपिका ।

अवनिपालानां राज्ञां जयद्रथादीनां समूहैः सहैव । किंच येषु परेषां जयाशा तेऽपि भीष्मादयः सूतपुत्रः कर्णोऽसौ ममातीव शत्रुः अस्मदीयैरपि योधानां प्रधानैः शिखण्डिधृष्टद्युम्नादिभिः सहैव ॥ २६ ॥ किंच तव मुखानि दंष्ट्राकरालानि अतएव भयंकराणि त्वरायुक्ता विशन्ति । तत्र प्रविष्टानां मध्ये केचिद्दन्तान्तरेषु चूर्णितैः शिरोभिर्विलग्ना भक्षितमांसमिव संदृश्यन्ते उपलभ्यन्ते ॥ २७ ॥ तत्र दृष्टान्तमाह । यथा नदीनां स्रवन्तीनां बहवो जलानां वेगाः समुद्रमेवाभिमुखाः प्रतिमुखा द्रवन्ति विशन्ति तथामी नरलो-

६ श्रीधरीव्याख्या ।

न्तीत्युत्तरेणान्वयः । तथा भीष्मश्च द्रोणश्चासौ सूतपुत्रः कर्णश्च । न केवलं त एव विशन्ति अपितु प्रतियोद्धारो येऽस्मदीया योध-मुख्याः शिखण्डिधृष्टद्युम्नादयः तैः सह ॥ २६ ॥ **वक्त्राणीति** । एते सर्वे त्वरमाणा धावन्त इव दंष्ट्राभिः करालानि भयंकराणि वक्त्राणि विशन्ति । तेषां मध्ये केचिच्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिरुपलक्षिता दन्तसंधिषु संश्लिष्टाः संदृश्यन्ते ॥ २७ ॥ प्रवेशमेव दृष्टान्ते-नाह—**यथेति** । नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां वारीणां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तो यथा समुद्रमेव द्रवन्ति

७ अभिनवगुप्ताचार्यव्याख्या ।

गम्यते इति पुनःपुनः स्फुटतरप्रकाशनवाचालतया ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥**
**लेलिह्यसे ग्रसमानः समन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३० ॥**

१ श्रीमच्छांकरभाष्यम् ।

विशेषाः समुद्रमेवाभिमुखाः प्रतिमुखा द्रवन्ति प्रविशन्ति तथा तद्वत्तवामी भीष्मादयो नरलोकवीरा मनुष्यलोकशूरा विशन्ति वक्त्राण्यभितो ज्वलन्ति प्रकाशमानानि ॥ २८ ॥ ते किमर्थं प्रविशन्ति कथं चेत्याह—यथेति । यथा प्रदीप्तं ज्वलनमग्निं पतङ्गाः पक्षिणो विशन्ति नाशाय विनाशाय समृद्धवेगाः समृद्ध उद्भूतो वेगो गतिर्येषां ते समृद्धवेगास्तथैव नाशाय विशन्ति लोकाः प्राणिनस्तवापि वक्त्राणि समृद्धवेगाः ॥ २९ ॥ त्वं पुनः—लेलिह्यस इति । लेलिह्यसे आस्वादयसि ग्रसमानोऽन्तः प्रवेशयन् समन्तान्समन्ततो लोकान्समग्रान्समस्तान् वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैस्तेजोभिरापूर्य संव्याप्य जगत्समग्रं सहाग्रेण समस्तमित्येतत् । किंच भासो दीप्तयस्तवोग्राः क्रूराः प्रतपन्ति

२ आनन्दगिरिव्याख्या ।

प्रयोजनं तत्प्रकारविशेषं चोदाहरणान्तरेण स्फोरयति—**ते किमर्थमित्यादिना** ॥ २९ ॥ योद्धुकामानां राज्ञां भगवन्मुखप्रवेशप्रकारं प्रदर्श्य तस्यां दशायां भगवतस्तद्भासां च प्रवृत्तिप्रकारं प्रत्याययति—**त्वं पुनरिति** । भगवत्प्रवृत्तिमेव प्रत्याय्य तदीयभासां प्रवृत्तिं प्रकटयति—**किंचेति** ॥ ३० ॥ भगवद्रूपस्यार्जुनेन दृष्टपूर्वत्वात्तस्य तस्मिन्न

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बुद्धिपूर्वकमेव ते त्वद्वक्त्राणि प्रविशन्तीति सदृष्टान्तमाह—**यथा प्रदीप्तमिति** ॥ २९ ॥ ये च पतन्तस्तांस्त्वं करुणावानपि न वारयसि प्रत्युत ग्रसितुमिच्छस्येवेत्याह—लेलिह्यसे भूयोभूयोऽतिशयेन वा आस्वादयसि । कीदृशस्त्वम् । समन्ताज्ज्वलद्भिर्वदनैर्लोकान्समग्रान्ग्रसमानः । एवं निर्घृणस्यापि तव तेजो न हीयते प्रत्युत वर्धत एवेत्याह—**तेजोभिरिति** । हे विष्णो व्यापनशील, समग्रं जगत्तेजोभिरापूर्य तव उग्राः स्प्रष्टुमशक्या भासो दीप्तयः प्रतपन्तीति

४ मधुसूदनीव्याख्या ।

सन्तः समुद्रमेव द्रवन्ति विशन्ति तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितः सर्वतो ज्वलन्ति । 'अभिविज्वलन्तिः इति वा पाठः ॥ २८ ॥ अबुद्धिपूर्वकप्रवेशे नदीवेगं दृष्टान्तमुक्त्वा बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह—यथा पतङ्गाः शलभा' समृद्धवेगाः सन्तो बुद्धिपूर्वं प्रदीप्तं ज्वलनं विशन्ति नाशाय मरणायैव तथैव नाशाय विशन्ति लोका एते दुर्योधनप्रभृतयः सर्वेऽपि तव वक्त्राणि समृद्धवेगा बुद्धिपूर्वमनायत्या ॥ २९ ॥ योद्धुकामानां राज्ञां भगवन्मुखप्रवेशप्रकारमुक्त्वा तदा भगवतस्तद्भासां च प्रवृत्तिप्रकारमाह —एवं वेगेन प्रविशतो लोकान्दुर्योधनादीन्समग्रान्सर्वान्ग्रसमानोऽन्तःप्रवेशयन्ज्वलद्भिर्वदनैः समन्तात्सर्वतस्त्वं लेलिह्यसे आस्वादयसि तेजोभिर्भाभिरापूर्य जगत्समग्रं यस्मात्त्वं भाभिर्जगदापूरयसि तस्मात्तवोग्रास्तीव्रा भासो दीप्तयः प्रज्वलतो ज्वलनस्येव प्रतपन्ति संतापं जनयन्ति हे विष्णो व्यापनशील ॥ ३० ॥ यस्मादेवं तस्मात्-एवमुग्ररूपः

५ भाष्योत्कर्षदीपिका ।

कवीरास्तव मुखान्यभिविज्वलन्ति प्रकाशमानानि विशन्ति ॥ २८ ॥ अम्बुवेगाः समुद्रं विशन्ति ननु जलभावविनाशं प्राप्नुवन्ति । एते तु नाशाय प्रविशन्तीत्यतो दृष्टान्तान्तरमाह । यथा प्रदीप्तमग्निं पतङ्गाः क्षुद्रपक्षिविशेषाः समृद्धवेगा विनाशाय विशन्ति तथैव समृद्धवेगा लोकाः प्राणिनः तवापि मुखानि विनाशाय विशन्ति ॥ २९ ॥ सर्वे स्वनाशाय तव वक्त्राणि विशन्ति त्वं पुनः समन्ततः समग्रांल्लोकाञ्ज्वलद्भिर्वदनैर्ग्रसमानोऽन्तः प्रवेशयन् लेलिह्यसे आस्वादयसि । किंच तवोग्रा अतिक्रूरा भासो दीप्तयः सर्वं जगत्तेजोभिरापूर्य संव्याप्य प्रतपन्ति प्रतापं कुर्वन्ति । यतस्त्वं व्यापनशीलोऽतस्ता अपि तादृशा इति द्योतयन्संबोधयति—हे विष्णो इति

६ श्रीधरीव्याख्या ।

प्रविशन्ति तथा अमी ये नरलोकवीरास्तेऽभिविज्वलन्ति सर्वतः प्रदीप्यमानानि वक्त्राणि प्रविशन्ति ॥ २८ ॥ अवशत्वेन प्रवेशे नदीवेगो दृष्टान्त उक्तः । बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह—**यथेति** । प्रदीप्तं ज्वलनमग्निं पतङ्गाः सूक्ष्मपक्षिविशेषाः बुद्धिपूर्वकं समृद्धो वेगो येषां ते यथा नाशाय मरणायैव विशन्ति तथैव लोका एते जना अपि तव मुखानि प्रविशन्ति ॥ २९ ॥ ततः किमत आह—**लेलिह्यस इति** । ग्रसमानो गिलन् समग्रांल्लोकान्सर्वानेतान्वीरान् समन्तात्सर्वतो लेलिह्यसेऽतिशयेन भक्षयसि । कैः ज्वलद्भिर्वदनैः । किंच हे विष्णो, तव भासो दीप्तयस्तेजोभिर्विस्फुरणैः समस्तं जगद्व्याप्योग्रास्तीव्राः सत्यः प्रतपन्ति संतापयन्ति ॥ ३० ॥ यत

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥**

**श्रीभगवानुवाच ।**

**कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

प्रतापं कुर्वन्ति । हे विष्णो व्यापनशील ॥ ३० ॥ यत एवमुग्रस्वभावोऽतः—**आख्याहीति** । आख्याहि कथय मे मह्यं को भवानेवमुग्ररूपोऽतिक्रूराकारः । नमोऽस्तु ते तुभ्यं हे देववर देवानां प्रधान, प्रसीद प्रसादं कुरु । विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यमादौ भवमाद्यं न हि यस्मात्प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टाम् ॥ ३१ ॥ **कालोऽस्मीति** । कालोऽस्मि लोकक्षयकृत् लोकानां क्षयं करोतीति लोकक्षयकृत् प्रवृद्धो वृद्धिं गतः । यदर्थं प्रवृद्धस्तच्छृणु । लोकान्समाहर्तुं संहर्तुमिहास्मिन्काले प्रवृत्तः । ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयः सर्वे येभ्यस्तवा-

२ आनन्दगिरिव्याख्या ।

जिज्ञासेत्याशङ्क्याह—**यत इति** । उपदेशं शुश्रूषमाणेनोपदेशकर्तुः प्रह्वीभवनं कर्तव्यमिति सूचयति—**नमोऽस्त्विति** । क्रौर्यत्यागमर्थयते—**प्रसादमिति** । त्वमेव मां जानीषे किमर्थमित्थमिदानीमर्थयसे मदीयां चेष्टां दृष्ट्वा तथैव प्रतिपद्यस्वेत्याशङ्क्याह—**न हीति** ॥ ३१ ॥ स्वयं यदर्थां च स्वप्रवृत्तिः तत्सर्वं भगवानुक्तवानित्याह—**श्रीभगवानिति** । कालः क्रियाशक्त्युपहितः परमेश्वरः, अस्मिन्निति वर्तमानयुद्धोपलक्षितत्वं कालस्य विवक्षितम् । लोकसंहारार्थं त्वत्प्रवृत्तावपि नासावर्थवती प्रतिपक्षाणां भीष्मादीनां मत्प्रवृत्तिं विना संहर्तुमशक्यत्वादित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

योजना । पदार्थः स्पष्टः ॥ ३० ॥ एवं दीप्त्याकुलीभूतोऽर्जुनो भगवानयमिति विस्मृत्याह—**आख्याहीति** । एवमुग्ररूपः क्रूरकर्मा भवान् कोऽसीत्याख्याहि अमुकोऽस्मीति कथय । प्रसीद शान्तो भव । त्वामहं विज्ञातुमिच्छामि । यतस्तव प्रवृत्तिं चेष्टां न जानामि ॥ ३१ ॥ एवमर्जुनेन प्रार्थितो भगवानुवाच—**काल इति** । इहास्मिन्संग्रामे लोकान्समाहर्तुं भक्षितुं प्रवृत्तः प्रवृद्धो महान् लोकक्षयकृत् कालो नाम परमेश्वरोऽस्मि । यस्मादेवं तस्मात् ऋतेऽपि त्वा

४ मधुसूदनीव्याख्या ।

क्रूराकारः को भवानित्याख्याहि कथय मे मह्यमत्यन्तानुग्राह्याय । अतएव नमोऽस्तु ते तुभ्यं सर्वगुरवे हे देववर, प्रसीद प्रसादं क्रौर्यत्यागं कुरु । विज्ञातुं विशेषेण ज्ञातुमिच्छामि भवन्तमाद्यं सर्वकारणम्, न हि यस्मात्तव सखापि सन् प्रजानामि तव प्रवृत्तिं चेष्टाम् ॥ ३१ ॥ एवमर्जुनेन प्रार्थितो यः स्वयं यदर्था च स्वप्रवृत्तिस्तत्सर्वं त्रिभिः श्लोकैः श्रीभगवानुवाच—कालः क्रियाशक्त्युपहितः सर्वस्य संहर्ता परमेश्वरोऽस्मि भवामीदानीं प्रवृद्धो वृद्धिं गतः । यदर्थं प्रवृत्तस्तच्छृणु–लोकान्दुर्योधनादीन्समाहर्तुं सम्यगाहर्तुं भक्षयितुं प्रवृत्तोऽहमिहास्मिन्काले । मत्प्रवृत्तिं विना कथमेवं स्यादिति चेन्नेत्याह—ऋतेऽपि त्वा त्वामर्जुनं

५ भाष्योत्कर्षदीपिका ।

॥ ३० ॥ यतएवमुग्रस्वभावोऽत आख्याहि कथय को भवान् शुद्धसत्त्वप्रधानः सौम्यस्वभावस्त्वं विष्णुर्मया पूर्वं ज्ञात इदानीं तमःप्रधान उग्रस्वभाववान् क इत्यर्थः । नाहमाज्ञां करोमि अपितु नम्रीभूय पृच्छामीत्याशयवान्नमस्करोति । ते तुभ्यं नमोऽस्तु हे देववर देवानां मुख्य, प्रसीद प्रसादं कुरु । देववरस्य तवैव प्रसादो ममापेक्षितो नतु देवानामिति संबोधनाशयः । भवन्तमाद्यं आदिकारणं विशेषेण ज्ञातुमिच्छामि । ननु स्वयमेव जानीहि किमर्थं पृच्छसीति तत्राह । हि यस्मात्त्वदीयां चेष्टां न जानामि ॥ ३१ ॥ एवं पृष्टः श्रीभगवानुवाच । लोकक्षयं करोतीति लोकक्षयकृत्कालोऽस्मि । प्रवृद्धः प्रवृद्धिं प्राप्तः । इहास्मिन्काले । नन्विहास्मिंल्लोके संग्रामे वेला-

६ श्रीधरीव्याख्या ।

एवं तस्मात्—**आख्याहीति** । भवानुग्ररूपः क इत्याख्याहि कथय । तुभ्यं नमोऽस्तु । हे देववर, प्रसीद प्रसन्नो भव । भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि । यतस्तव प्रवृत्तिं चेष्टां किमर्थमेवं प्रवृत्तोऽसीति न जानामि । एवंभूतस्य तव प्रवृत्तिं वार्तामपि न जानामीति वा ॥ ३१ ॥ एवं प्रार्थितः सन् श्रीभगवानुवाच—**कालोऽस्मीति** त्रिभिः । लोकानां क्षयकर्ता प्रवृद्धोऽत्युग्रः कालो-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ २९ ॥ ३० ॥ आख्याहीति । न हि प्रजानामीति । तव प्रवृत्तिं न वेद्मि केनाशयेनेदृशीयमुग्रतेति तदत्र भवतोत्तरं । जगतो विद्याविद्या-

१ श्रीधरः, नीलकण्ठः ।

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

शङ्का येऽवस्थिताः प्रत्यनीकेष्वनीकमनीकं प्रति प्रत्यनीकेषु प्रतिपक्षभूतेष्वनीकेषु योधा एव योद्धारः ॥ ३२ ॥ यस्मादेवं—तस्मात्त्वमिति । तस्मात्त्वमुत्तिष्ठ भीष्मद्रोणप्रभृतयोऽतिरथा अजेया देवैरप्यर्जुनेन जिता इति यशो लभस्व । केवलं पुण्यैर्हि तत्प्राप्यते । जित्वा शत्रून्दुर्योधनप्रभृतीन् भुङ्क्ष्व राज्यं समृद्धमसपत्नमकंटकं । मयैवैते निहता निश्चयेन हताः प्राणैर्वियोजिताः पूर्वमेव । निमित्तमात्रं भव

२ आनन्दगिरिव्याख्या ।

शङ्काह—ऋतेऽपीति ॥ ३२ ॥ तवौदासीन्येऽपि प्रतिकूलानीकस्था मत्प्रातिकूल्यादेव न भविष्यन्तीत्येवं यस्मान्निश्चितं तस्मात्त्वदौदासीन्यमकिंचित्करमित्याह—यस्मादिति । उत्तिष्ठ युद्धायोन्मुखीभवेत्यर्थः । यशोलाभमभिनयति—भीष्मेति । किं तेनापुमर्थेनेत्याशङ्क्याह—पुण्यैरिति । राज्यभोगेऽपेक्षिते किमनपेक्षितेनेत्याशङ्क्याह—जित्वेति । भीष्मादिष्वतिरथेषु सत्सु कुतो जयाशङ्केत्याशङ्क्याह—मयैवैत इति । तर्हि मृतमारणार्थं न मे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्वां विनापि सर्वे न भविष्यन्ति मरिष्यन्ति । के ते सर्वे । प्रत्यनीकेषु शत्रुसैन्येषु योधाः शूरा भीष्मादयोऽवस्थितास्ते ॥ ३२ ॥ तस्मादिति । यस्मात्त्वां विनाप्येते मरिष्यन्ति तस्मात्त्वमुत्तिष्ठ युद्धाय । शेषं स्पष्टम् ॥ ३३ ॥

४ मधुसूदनीव्याख्या ।

योद्धारं विनापि त्वद्व्यापारं विनापि मद्व्यापारेणैव न भविष्यन्ति विनङ्क्ष्यन्ति सर्वे भीष्मद्रोणकर्णप्रभृतयो योद्धुमनर्हत्वेन संभाविता अन्येऽपि येऽवस्थिताः प्रत्यनीकेषु प्रतिपक्षसैन्येषु योधा योद्धारः सर्वेऽपि मया हतत्वादेव न भविष्यन्ति । तत्र तव व्यापारोऽकिंचित्कर इत्यर्थः ॥ ३२ ॥ यस्मादेवं तस्मात्त्वद्व्यापारमन्तरेणापि यस्मादेते विनङ्क्ष्यन्त्येव तस्मात्त्वमुत्तिष्ठ उद्युक्तो भव युद्धाय देवैरपि दुर्जया भीष्मद्रोणादयोऽतिरथा झटित्येवार्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व । महद्भिः पुण्यैरेव हि यशो लभ्यते । अयत्नतश्च जित्वा शत्रून्दुर्योधनादीन् भुङ्क्ष्व स्वोपसर्जनत्वेन भोग्यतां प्रापय समृद्धं राज्यमकण्टकम् । एते च तव शत्रवो मयैव कालात्मना निहताः संहृतायुषस्त्वदीययुद्धात्पूर्वमेव केवलं तव यशोलाभाय रथान्न पातिताः । अतस्त्वं निमित्तमात्रं अर्जुनेनैते निर्जिता इति सार्वलौकिकव्यपदेशास्पदं भव हे सव्यसाचिन् सव्येन वामेन हस्तेनापि शरान्सचितुं संधातुं शीलं यस्य तादृशस्य तव भीष्मद्रोणादिजयो नासंभावितस्तस्मात्त्वद्व्यापारानन्तरं मया रथा-

५ भाष्योत्कर्षदीपिका ।

न्चार्यैः कुतो न व्याख्यातमितिचेत् कालस्यैव प्रकृतत्वात् प्रधानत्वाच्च सर्वनाम्नश्च प्रधानपरामर्शित्वनियमात् लोकान्समाहर्तुं प्रवृत्तः । किं सर्वे लोका न भविष्यन्तीत्यत आह । ये सैन्यं प्रत्यवस्थिता भीष्मद्रोणादयस्ते सर्वे न भविष्यन्ति । ननु मां युद्धकर्तारं विना कथं सर्वेषां नाश इतिचेत्तत्राह । ऋतेऽपि त्वां त्वां त्वयि त्यक्तयुद्धव्यापारे सत्यपि मया कालरूपेणावश्यं विनाशनीया इति भावः ॥ ३२ ॥ यस्मात्त्वां विनाप्येते न भविष्यन्त्येव तस्मात्त्वमुत्तिष्ठ स्थित्वा युध्यस्व । ननु मामृतेऽपि कार्यनिर्वाहे किमर्थं युद्धाय मां नियोजयसीतिचेत् त्वदीययशःप्रख्यापनायेत्याशयेनाह । यशो लभस्व देवैरपि जेतुमशक्या भीष्मादयोऽतिरथा अर्जुनेन जिता इति यशः मदाराधनादिजन्यपुण्यजनितं लभस्व । शत्रून्दुर्योधनादीन् जित्वा समृद्धं असपत्नमकण्टकं राज्यं भुङ्क्ष्व । एतेषां विजये तव परिश्रमो नास्तीत्याशयेनाह । एते तव शत्रवः पूर्वमेव मयैव निश्चयेन हताः । ननु कथं स्थिता इतिचेत्तव यशोदानाय त्वां निमित्तीकर्तुमित्याशयेनाह । निमित्तमात्रं त्वं भव । हे सव्यसाचिन् सव्येन वामेन हस्तेनापि बाणान्सचितुं संधातुं शीलमस्येति तथा तं संबोधयन् । निमित्तमात्रं भूत्वा सव्यसाचित्वं सार्थकं कुर्विति सूचयति ॥ ३३ ॥ येषु येषु योधेष्वर्जुनस्याशङ्का तांस्तान्व्यपदिशति । द्रोणं

६ श्रीधरीव्याख्या ।

ऽसि । लोकान्प्राणिनः संहर्तुमिह लोके प्रवृत्तोऽसि । अतः । ऋतेऽपि त्वामिति । त्वां हन्तारं विनापि न भविष्यन्ति न जीविष्यन्ति । यद्यपि त्वया न हन्तव्या एते तथापि मया कालात्मना ग्रस्ताः सन्तो मरिष्यन्त्येव । के ते । प्रत्यनीकेषु अनीकान्यनीकानि प्रति भीष्मद्रोणादीनां सर्वासु सेनासु ये योद्धारोऽवस्थितास्ते सर्वेऽपि ॥ ३२ ॥ तस्मादिति । यस्मादेवं तस्मात्त्वं युद्धायोत्तिष्ठ । देवैरपि दुर्जयाः भीष्मद्रोणादयोऽर्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व प्राप्नुहि । अयत्नेन शत्रूञ्जित्वा समृद्धं राज्यं भुङ्क्ष्व । एते च तव शत्रवस्त्वदीययुद्धात्पूर्वमेव मयैव कालात्मना निहतप्रायास्तथापि त्वं निमित्तमात्रं भव । हे सव्यसाचिन् सव्येन वामहस्तेन सचितुं

७ अभिनवगुप्ताचार्यव्याख्या ।

स्मनः शुद्धाशुद्धमिश्रसंविद्वलग्रासीकारादभिधीयते इति प्रायशः सूत्रितमत्राध्याये रहस्यमुद्दङ्कितमात्रं संविचित्तिसमर्थेभ्योस्तु कियत्पङ्क्ति लेखनायासदौःस्थित्यमालम्बेमहि । अत्र यदुक्तं मया हतेषु त्वं निमित्तं यशस्वी भवेति भगवता तत्प्रत्युक्तम् । यदुक्तं प्रागर्जुनेन नचैत-

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्वं हे सव्यसाचिन् सव्येन वामेनापि हस्तेन शराणां क्षेप्तात्सव्यसाचीत्युच्यतेऽर्जुनः ॥ ३३ ॥ द्रोणं चेति । द्रोणं च येषु येषु योधेष्वर्जुनस्याशङ्कासीत्तांस्तान्सर्वान्व्यपदिशति भगवान्मया हतानिति । तत्र द्रोणभीष्मयोस्तावत्प्रसिद्धमाशङ्काकारणं द्रोणो धनुर्वेदाचार्यो दिव्यास्त्रसंपन्नः आत्मनश्च विशेषतो गुरुर्गरिष्ठः, भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वन्द्वयुद्धमगमन्न च पराजितः, तथा जयद्रथो यस्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ पातयिष्यति यस्तस्यापि शिरः पतिष्यतीति, कर्णोऽपि वासवदत्तया शक्त्या त्वमोघया संपन्नः सूर्यपुत्रः कानीनो यतोऽतस्तन्नाम्नैव निर्देशः । मया हतांस्त्वं जहि निमित्तमात्रेण । मा व्यथिष्ठास्तेभ्यो भयं मा कार्षीः । युध्यस्व जेतासि दुर्योधन-

२ आनन्दगिरिव्याख्या ।

प्रवृत्तिस्तत्राह—**निमित्तेति** । सव्यसाचीपदं विभजते—**वामेनेति** ॥ ३३ ॥ मयैवेत्यादिनोक्तं प्रपञ्चयति—**द्रोणं चेति** । किमिति कतिचिदेवात्र द्रोणादयो गण्यन्ते तत्राह—**येष्विति** । द्रोणादिषु कुतः शङ्केत्याशङ्क्य द्वयोः शङ्कानिमित्तमाह—**तत्रेत्यादिना** । जयद्रथेऽपि शङ्कानिमित्तमाह—**तथेति** । दिव्यास्त्रसंपन्न इति संबन्धः । तत्र शङ्कायां कारणान्तरमाह—**यस्येति** । कर्णेऽपि तत्कारणत्वं कथयति—**कर्णोऽपीति** । पूर्ववदेव संबन्धः । हेत्वन्तरमाह—**वासवेति** । सा खल्वमोघा पुरुषमेकमत्यन्तसमर्थं घातयित्वैव निवर्तते । जन्मनापि तस्य शङ्कनीयत्वमाह—**सूर्येति** । कुन्ती हि कन्यावस्थायांमन्त्रप्रभावं ज्ञातुमादित्यमाजुहाव ततस्तस्यामेवावस्थायामयमुद्बभूव तदाह—**कानीन इति** । एतदेवाभिप्रेत्य कर्णग्रहणमित्याह—**यत इति** । उक्तेष्वन्येषु च न त्वया शङ्कितव्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मा व्यथिष्ठाः एते महान्तः कथं हन्तुं शक्या इत्याकुलीभावं मागा इत्यर्थः । जेतासि जेष्यसि सपत्नाञ्शत्रून्

४ मधुसूदनीव्याख्या ।

त्पात्यमानेष्वेतेषु तवैव कर्तृत्वं लोकाः कल्पयिष्यन्तीत्यभिप्रायः ॥ ३३ ॥ ननु द्रोणो ब्राह्मणोत्तमो धनुर्वेदाचार्यो मम गुरुर्विशेषेण च दिव्यास्त्रसंपन्नः तथा भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वन्द्वयुद्धमुपगम्यापि न पराजितः । तथा यस्य पिता वृद्धक्षत्रस्तपश्चरति मम पुत्रस्य शिरो यो भूमौ पातयिष्यति तस्यापि शिरस्तत्कालं भूमौ पतिष्यतीति स जयद्रथोऽपि जेतुमशक्यः स्वयमपि महादेवाराधनपरो दिव्यास्त्रसंपन्नश्च तथा कर्णोऽपि स्वयं सूर्यसमस्तदाराधनेन दिव्यास्त्रसंपन्नश्च वासवदत्तया चैकपुरुषघातिन्या मोघीकर्तुमशक्यया शक्त्या विशिष्टः तथा कृपाश्वत्थामभूरिश्रवःप्रभृतयो महानुभावाः सर्वथा दुर्जया एव एतेषु सत्सु कथं जित्वा शत्रून्राज्यं भोक्ष्ये कथं वा यशो लप्स्य इत्याशङ्कामर्जुनस्यापनेतुमाह तदाशङ्काविषयान्नामभिः कथयन्—द्रोणादींस्त्वदाशङ्काविषयीभूतान्सर्वानेव योधवीरान्कालात्मना मया हतानेव त्वं जहि । हतानां हनने को वा परिश्रमः । अतो मा व्यथिष्ठाः कथमेवं शक्ष्यामीति व्यथां भयनिमित्तां पीडां मा गाः । भयं त्यक्त्वा युध्यस्व, जेतासि जेष्यस्यचिरेणैव रणे संग्रामे सपत्नान् सर्वानपि शत्रून् । अत्र द्रोणं च भीष्मं च जयद्रथं चेति चकारत्रयेण पूर्वोक्ताजेयत्वशङ्कानूद्यते । तथाशब्देन कर्णेऽपि अन्यानपि योधवीरानित्यत्रापिशब्देन । तस्मात् कुतोऽपि स्वस्य पराजयं वधनिमित्तं पापं च मा शङ्किष्ठा इत्यभिप्रायः । 'कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन । इषुभिः प्रतियोत्स्यामि पूजार्हौ' इत्यत्रेवात्रापि समुदायान्वयानन्तरं प्रत्येकान्वयो द्रष्टव्यः ॥ ३४ ॥ द्रोणभीष्मजयद्रथकर्णेषु जयाशाविषयेषु हतेषु निराश्रयो दुर्योधनो हत एवेत्यनुसंधाय जयाशां

५ भाष्योत्कर्षदीपिका ।

च धनुर्वेदाचार्यं दिव्यास्त्रसंपन्नं आत्मनश्च विशेषतो गुरुं, भीष्मं च स्वच्छन्दमृत्युं दिव्यास्त्रसंपन्नं परशुरामेणापि द्वन्द्वयुद्धेऽपराजितं, जयद्रथं च यस्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ यः पातयिष्यति तस्यापि शिरः पतिष्यतीति तं, कर्णं च कन्यया कुन्त्या संतुष्टाद्दुर्वाससो लब्धेन मन्त्रेणाहूतात्सूर्यादुत्पादितं इन्द्रदत्तया शक्त्या त्वमोघया दिव्यास्त्रैश्च संपन्नं, तथान्यानपि योधमुख्यान्भगदत्तादीन्मया कालरूपेण हतान् निमित्तमात्रेण त्वं जहि । अतो मा व्यथिष्ठास्तेभ्यो भयं मा कार्षीः । भयं त्यक्त्वा च युध्यस्व । यतः सपत्नान् शत्रून्दुर्योधनादीन् रणे युद्धे निःसंशयं जेतासि ॥ ३४ ॥ भीष्मस्य पतनमुक्तमेव द्रोणादीनामपि ईश्वरेण निहतानां पतनं

६ श्रीधरीव्याख्या ।

शरान्संधातुं शीलं यस्येति व्युत्पत्त्या वामेनापि बाणक्षेपात्सव्यसाचीत्युच्यते ॥ ३३ ॥ 'न चैतद्विद्मः कतरन्नो गरीयः' इत्यादिर्या शङ्का सापि न कार्येत्याह—**द्रोणं चेति** । येभ्यस्त्वं शङ्कसे तान्द्रोणादीन्मयैव हतांस्त्वं जहि घातय । मा व्यथिष्ठाः शोकं मा कार्षीः । सप-

संजय उवाच ।

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**प्रभृतीन् रणे युद्धे सपत्नान्शत्रून् ॥ ३४ ॥ एतच्छ्रुत्वेति । एतच्छ्रुत्वा वचनं केशवस्य पूर्वोक्तं कृताञ्जलिः सन् वेपमानः कम्पमानः किरीटी नमस्कृत्वा भूयः पुनरेवाहोक्तवान् कृष्णं सगद्गदं भयाविष्टस्य दुःखाभिघातात्स्नेहाविष्टस्य च हर्षोद्भवादश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः ततश्च वाचोऽपाटवं मन्दशब्दत्वं यत् स गद्गदस्तेन सह वर्तत इति सगद्गदं वचनमाहेति वचनक्रियाविशेषणमेतत् । भीतभीतः पुनर्भयाविष्टचेताः सन् प्रणम्य प्रह्वीभूत्वाहेति व्यवहितेन संबन्धः । अत्रावसरे संजयवचनं साभिप्रायम् । कथं द्रोणादिष्वर्जुनेन निहतेष्वजेयेषु चतुर्षु निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रो जयं प्रति निराशः सन्संधिं करिष्यति ततः शान्तिरुभयेषां भविष्यतीति**

२ आनन्दगिरिव्याख्या ।

मित्याह—**मयेति** ॥ ३४ ॥ पराजयभयात्करिष्यति सन्धिमिति बुद्ध्या संजयो राज्ञे वृत्तान्तमुक्तवानित्याह—**संजय इति** । पूर्वोक्तवचनं कालोऽस्मीत्यादि । विश्वरूपदर्शनदशायामर्जुनस्य भगवता संवादवचनं किमिति संजयो राज्ञे व्यजिज्ञपदित्याशङ्क्य तदुक्तेस्तात्पर्यमाह—**अत्रेति** । तमेवाभिप्रायं प्रश्नद्वारा विशदयति—**कथमित्यादिना** । तर्हि संजयवचनं श्रुत्वा किमिति राजा संधिं न कारयामासेति तत्राह—**तदपीति** ॥ ३५ ॥ किं तदर्जुनो भगवन्तं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ ३४ ॥ भगवतैवमुक्ते सति पश्चात्किंवृत्तमित्यपेक्षायां संजय उवाच । अत्र कृताञ्जलिरित्यादिना चिह्नेन भगवद्वाक्योल्लङ्घनं किरीटी न करिष्यतीति सूच्यते । सगद्गदं भयहर्षाद्यावेशेन गद्गदेन कण्ठकम्पनेन सह वर्तत इति सगद्गदं यथा भवति तथा आह उक्तवान् । भीतभीतोऽत्यन्तं भीतः सन्नाहेति संबन्धः । अत्राहेति पदच्छेदे पुनरर्जुन उवाचेति पुनरुक्तं स्यात् । अतः प्रणम्य अर्जुन उवाचेत्येव संबन्धो नतु प्रणम्य आहेति । का तर्हि

४ मधुसूदनीव्याख्या ।

परित्यज्य यदि धृतराष्ट्रः संधिं कुर्यात्तदा शान्तिरुभयेषां भवेदित्यभिप्रायवान् ततः किं वृत्तमित्यपेक्षायां संजय उवाच—एतत्पूर्वोक्तं केशवस्य वचनं श्रुत्वा कृताञ्जलिः किरीटी इन्द्रदत्तकिरीटः परमवीरत्वेन प्रसिद्धः वेपमानः परमाश्चर्यदर्शनजनितेन संभ्रमेण कम्पमानोऽर्जुनः कृष्णं भक्ताघकर्षणं भगवन्तं नमस्कृत्वा नमस्कृत्य भूयः पुनरप्याह उक्तवान् सगद्गदं भयेन हर्षेण चाश्रुपूर्णनेत्रत्वे सति कफरुद्धकण्ठतया वाचो मन्दत्वसकम्पत्वादिर्विकारः सगद्गदस्तद्युक्तं यथा स्यात् । भीतभीतः अतिशयेन भीतः सन् पूर्वं नमस्कृत्य पुनरपि प्रणम्यात्यन्तनम्रो भूत्वाऽऽहेति संबन्धः ॥ ३५ ॥ एकादशभिः—अर्जुन उवाच स्थान

५ भाष्योत्कर्षदीपिका ।

भविष्यत्येवेति श्रुत्वा द्रोणादिषु जयाशाविषयभूतेषु चतुर्षु अजेयेष्वपि अर्जुनेन निहतेषु निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रः जयंप्रति निराशः सन् संधिं करिष्यति ततः शान्तिरुभयेषां भविष्यतीत्याशयेन संजय उवाच—**एतदिति** । एतत्पूर्वोक्तं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीटी अर्जुनः कृताञ्जलिः सन् नमस्कृत्वा भयाविष्टस्य दुःखेनाभिघातात्स्नेहाविष्टस्य हर्षोद्भवात् अश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधात् गद्गदया मन्दया वाचा सह वर्तते इति सगद्गदं यथा स्यात्तथा भूय एव कृष्णमाह उक्तवान् । भीतभीतः पुनःपुनर्भयाविष्टचित्तः प्रणम्य नम्रीभूयाहेति संबन्धः । यत्तु अत्राहेति पदच्छेदे पुनरर्जुन उवाचेति पुनरुक्तं स्यात् अतः प्रणम्यार्जुन उवाचेत्येव संबन्धः नतु प्रणम्याहेति । का तर्हि आहेति क्रियायाः गतिः । नेयं क्रिया अहेति प्रसिद्ध्यर्थमव्ययमित्यदोषः इति तत्प्रामादिकम् । 'ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः । प्रणम्य शिरसा देवं कृताञ्जलिरभाषत । अर्जुनउवाच' इत्यादौ एवमेव शैलीदर्शनेन पुनरुक्त्यापादनस्य तत्समाधानस्य चाकिंचित्करत्वात् ॥ ३५ ॥ हे हृषी-

६ श्रीधरीव्याख्या ।

तान् शत्रून्रणे युद्धे निश्चितं जेतासि जेष्यसि ॥ ३४ ॥ ततो यद्वृत्तं तद्धृतराष्ट्रं प्रति संजय उवाच—**एतदिति** । एतत्पूर्वं श्लोकत्रयात्मकं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीट्यर्जुनः कृताञ्जलिः संपुटीकृतहस्तः कृष्णं नमस्कृत्य पुनरप्याह उक्तवान् । कथमाह भयहर्षाद्यावेशवशाद्गद्गदेन कण्ठकम्पनेन सह वर्तत इति सगद्गदं यथा भवति तथा । किंच भीतादपि भीतः सन्प्रणम्यावनतो

७ अभिनवगुप्ताचार्यव्याख्या ।

द्विजाः कतरदित्यादि ॥ ३१ ॥ श्रीभगवानुवाच—कालोऽस्मीत्यादि ॥ ३२ ॥ ३३ ॥ ३४ ॥ संजय उवाच—एतच्छ्रुत्वेति ॥ ३५ ॥ अर्जुन

१ नीलकण्ठः

अर्जुन उवाच ।

**स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ३६ ॥**
**कस्माच्च ते न नमेरन्महात्मन्गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**

१ श्रीमच्छांकरभाष्यम् ।

तदपि नाश्रौषीद्धृतराष्ट्रो भवितव्यवशात् ॥ ३५ ॥ स्थान इति । स्थाने युक्तम् किं तत्, तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन श्रुतेन हे हृषीकेश यज्जगत्प्रहृष्यति प्रहर्षमुपैति तत्स्थाने युक्तमित्यर्थः । अथवा विषयविशेषणं स्थान इति, युक्तो हर्षादिविषयः भगवान् । यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्चेति । तथानुरज्यतेऽनुरागं चोपैति तच्च विषय इति व्याख्येयम् । किंच रक्षांसि भीतानि भयाविष्टानि दिशो द्रवन्ति गच्छन्ति तच्च स्थाने विषये । सर्वे नमस्यन्ति नमस्कुर्वन्ति च सिद्धसङ्घाः सिद्धानां समुदायाः कपिलादीनां तच्च स्थाने ॥ ३६ ॥ भगवतो हर्षादिविषयत्वे हेतुं दर्शयति—कस्माच्चेति ।

२ आनन्दगिरिव्याख्या ।

प्रति सगद्गदं वचनमुक्तवानिति तदाह—**अर्जुन इति** । विषयविशेषणत्वमेव व्यनक्ति—**युक्त इति** । भगवतो हर्षादिविषयत्वं युक्तमित्यत्र हेतुमाह—**यत इति** । तव प्रकीर्त्या हर्षवदनुरागं च गच्छति जगदित्याह—**तथेति** । तच्चेत्यनुरागगमनम् । रक्षःसु जगदेकदेशभूतेषु प्रतिपक्षेषु कुतो जगतो भवति हर्षानुरागावित्याशङ्क्याह—**किंचेति** । इतश्च जगतो भगवति हर्षादि युक्तमित्याह—**सर्वे इति** ॥ ३६ ॥ उक्तेऽर्थे हेत्वर्थत्वेनोत्तरश्लोकमवतारयति—**भगवत इति** । महात्मत्वमक्षुद्रचेतस्त्वम् । गुरुतरत्वान्नमस्कारादियोग्यत्वमाह—**गुरुतरायेति** । तत्रैव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आहेति क्रियाया गतिः । नेयं क्रिया किंतु अहेति प्रसिद्ध्यर्थमव्ययमित्यदोषः ॥ ३५ ॥ एकादशभिः श्लोकैरर्जुन उवाच—**स्थाने इति** । हे हृषीकेश सर्वेन्द्रियप्रवर्तक अन्तर्यामिन्, तव प्रकीर्त्या नामसंकीर्तनेन जगत्प्रहृष्यति यत्तत् स्थाने युक्तम् । स्थाने इत्यव्ययं युक्तमित्यर्थे । यत्तव प्रकीर्त्या जगदनुरज्यते तदपि स्थाने युक्तम् । यत्तव प्रकीर्त्या रक्षांसि भीतानि सन्ति दिशो द्रवन्ति पलायन्ते तदपि स्थाने युक्तम् । यच्च त्वां सर्वे सिद्धसङ्घाः कपिलादीनां समुदायाः नमस्यन्ति तदपि स्थाने । अयं श्लोको रक्षोघ्नमन्त्रत्वेन मन्त्रशास्त्रे प्रसिद्धः । सच नारायणाष्टाक्षरसुदर्शनास्त्रमन्त्राभ्यां संपुटितो ज्ञेय इति रहस्यम् ॥ ३६ ॥ कुतो मां सिद्धसङ्घा नमस्यन्ति यतस्तेऽप्यहमिव ब्रह्माण्डशतानि स्रष्टुमर्हन्तीत्यत आह—**कस्मादिति** । हे महात्मन्, कस्माद्धेतोस्ते त्वां न नमेरन्नपितु नमेरन्नेव । तत्र हेतुः

४ मधुसूदनीव्याख्या ।

इत्यव्ययं युक्तमित्यर्थे । हे हृषीकेश सर्वेन्द्रियप्रवर्तक, यतस्त्वमेवमत्यन्ताद्भुतप्रभावो भक्तवत्सलश्च ततस्तव प्रकीर्त्या प्रकृष्टया कीर्त्या निरतिशयप्राशस्त्यस्य कीर्तनेन श्रवणेन च न केवलमहमेव प्रहृष्यामि किंतु सर्वमेव जगच्चेतनमात्रं रक्षोविरोधि प्रहृष्यति प्रकृष्टं हर्षमाप्नोति इति यत्तत् स्थाने युक्तमेवेत्यर्थः । तथा सर्वं जगदनुरज्यते च तद्विषयमनुरागमुपैतीति च यत्तदपि युक्तमेव । तथा रक्षांसि भीतानि भयाविष्टानि सन्ति दिशो द्रवन्ति गच्छन्ति सर्वासु दिक्षु पलायन्त इति यत्तदपि युक्तमेव । तथा सर्वे सिद्धानां कपिलादीनां सङ्घा नमस्यन्ति चेति यत्तदपि युक्तमेव । सर्वत्र तव प्रकीर्त्येत्यस्यान्वयः स्थान इत्यस्य च । अयं श्लोको रक्षोघ्नमन्त्रत्वेन मन्त्रशास्त्रे प्रसिद्धः ॥ ३६ ॥ भगवतो हर्षादिविषयत्वे हेतुमाह—कस्माच्च हेतोस्ते तुभ्यं न नमेरन्न नमस्कुर्युः सिद्धसङ्घाः सर्वेऽपि । हे महात्मन्परमोदारचित्त, हे अनन्त सर्वपरिच्छेदशून्य, हे देवेश हिरण्यगर्भादीनामपि

५ भाष्योत्कर्षदीपिका ।

केश, तव माहात्म्यप्रकीर्तनेन यज्जगत् प्रहर्षं प्राप्नोत्यनुरागं चोपैति तत्स्थाने युक्तमित्यर्थः । यद्वा तव प्रकीर्त्या यज्जगत्प्रहृष्यत्यनुरज्यते च तत् स्थाने हर्षादिस्थितियोग्यविषये । यतस्त्वं हृषीकेशः सर्वेन्द्रियनियन्ता सर्वान्तर्यामी सर्वसुहृदिति सूचनार्थं संबोधनम् । किंच यद्रक्षांसि भयाविष्टानि दिशो द्रवन्ति पलाय गच्छन्ति यच्च सिद्धानां कपिलादीनां समुदायाः नमस्कुर्वन्ति तच्च स्थाने इति पूर्ववत् ॥ ३६ ॥ इदं भगवतो हर्षादिविषयत्वं युक्तमेवेत्याशयेनाह । कस्माच्च ते तुभ्यं न नमेरन् न नमस्कुर्युः । नमस्काराकरणे

६ श्रीधरीव्याख्या ।

भूत्वा ॥ ३५ ॥ **स्थान इत्येकादशभिरर्जुनस्योक्तिः** । स्थान इत्यव्ययं युक्तमित्यस्मिन्नर्थे । हे हृषीकेश, यत एवं त्वमद्भुतप्रभावो भक्तवत्सलश्च अतस्तव प्रकीर्त्या माहात्म्यसंकीर्तनेन न केवलमहमेव प्रहृष्यामि किंतु जगत्सर्वं प्रहृष्यति प्रकर्षेण हर्षं प्राप्नोति एतत्तु स्थाने युक्तमित्यर्थः । तथा जगदनुरज्यतेऽनुरागं चोपैति इति यत्, तथा रक्षांसि भीतानि सन्ति, दिशःप्रति द्रवन्ति पलायन्त इति यत्, सर्वे योगतपोमन्त्रादिसिद्धानां सङ्घा नमस्यन्ति प्रणमन्तीति यत्, एतच्च स्थाने युक्तमेव । न चित्रमित्यर्थः ॥ ३६ ॥ तत्र हेतुमाह—**कस्मादिति** । हे महात्मन्, हे अनन्त, हे देवेश, हे जगन्निवास । कस्माद्धेतोस्ते तुभ्यं न नमेरन्नमस्कारं न कुर्युः । कथं-

**अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥**
**त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।**

१ श्रीमच्छांकरभाष्यम् ।

कस्माच्च हेतोस्ते तुभ्यं न नमेरन् न नमस्कुर्युर्हे महात्मन्, गरीयसे गुरुतराय यतो ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्ता कारणमतस्तस्मादादिकर्त्रे कथमे(व)ते न नमस्कुर्युरतो हर्षादीनां नमस्कारस्य च स्थानं त्वमर्हो विषय इत्यर्थः । हे अनन्त देवेश, हे जगन्निवास, त्वमक्षरं तत्परं यद्वेदान्तेषु श्रूयते किं तत्सदसद्विद्यमानं सच्च यत्र नास्तीति बुद्धिस्ते उपधानभूते सदसती यस्याक्षरस्य यद्वारेण सदसदित्युपचर्यते । परमार्थतस्तु सदसतः परं तद्यदक्षरं वेदविदो वदन्ति तत्त्वमेव नान्यदित्यभिप्रायः ॥ ३७ ॥ पुनरपि स्तौति—त्वमिति । त्वमादिदेवो जगतः स्रष्टृत्वात्, पुरुषः पुरि शयनात्, पुराणश्चिरन्तनस्त्व-

२ आनन्दगिरिव्याख्या ।

हेत्वन्तरमाह—**यत इति** । महात्मत्वादिहेतूनां मुक्तानां फलमाह—**अत इति** । तत्रैव हेत्वन्तराणि सूचयति—**हे अनन्तेति** । अनवच्छिन्नत्वं सर्वदेवनियन्तृत्वं सर्वजगदाश्रयत्वं च तव नमस्कारादियोग्यत्वे कारणमित्यर्थः । तत्रैव हेत्वन्तरमाह—**त्वमिति** । तत्र मानमाह—**यदिति** । कथमेकस्यैव सदसद्रूपत्वं तत्राह—**ते इति** । कथं सतोऽसतश्चाक्षरं प्रत्युपाधित्वं तदाह—**यद्वारेणेति** । तत्परं यदित्येतद्व्याचष्टे—**परमार्थतस्त्विति** । अनन्तत्वादिना भगवतो नमस्कारादियोग्यत्वमुक्तम् ॥ ३७ ॥ संप्रति जगत्स्रष्टृत्वादिनापि तद्योग्यत्वमस्तीति स्तुतिद्वारा दर्शयति—**पुनरपीति** । जगतः स्रष्टा पुरुषो हिरण्यगर्भ इति पक्षं प्रत्याह—**पुराण इति** । स्रष्टृत्वं निमित्तमेवेति तटस्थेश्वर-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

गरीयसे । तेऽपि गुरवस्त्वमपि गुरुस्तथापि त्वमतिशयितो गुरुरसीत्यर्थः । कुतो ममैवातिशयस्तेषां मम च समानेऽपि सत्यसंकल्पत्वादौ सत्यतश्चाह । ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्त्रे पितामहाय पञ्चमहाभूतसृष्टिद्वारा ब्रह्माणं सृजत इत्यर्थः । 'जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च' इतिन्यायेन नित्यसिद्धेश्वरस्य तवाज्ञया ते सर्वेऽप्यैश्वर्यभाजो भवन्ति नतु त्वत्समास्ते । अतएव हे अनन्त हे देवानां ईश जगन्निवास जगतामालयभूत, त्वं अक्षरं शुद्धं ब्रह्म । कीदृशमक्षरम् । यत् सदसत्तत्परं सच्च असच्च सदसती ताभ्यां परं च सदसत्तत्परम् कार्यं कारणं तदुभयातीतं चेति त्रिविधमित्यर्थः ॥ ३७ ॥ पुनरपि स्तौति—**त्वमिति** । आदिदेवो जगतः स्रष्टृत्वात् । पुरुषः सर्वशरीरशायी ।

४ मधुसूदनीव्याख्या ।

देवानां नियन्तः, हे जगन्निवास सर्वाश्रय तुभ्यं कीदृशाय । ब्रह्मणोऽपि गरीयसे गुरुतराय आदिकर्त्रे ब्रह्मणोऽपि जनकाय । नियन्तृत्वमुपदेष्टृत्वं जनकत्वमित्यादिरेकैकोऽपि हेतुर्नमस्कार्यताप्रयोजकः । किं पुनर्महात्मत्वानन्तत्वजगन्निवासत्वादिनानाकल्याणगुणसमुच्चित इत्यनाश्चर्यतासूचनार्थं नमस्कारस्य । कस्माच्चेति वाशब्दार्थश्चकारः । किंच सत् विधिमुखेन प्रतीयमानमस्तीति, असन्निषेधमुखेन प्रतीयमानं नास्तीति, अथवा सत् व्यक्तं असत् अव्यक्तं त्वमेव । तथा तत्परं ताभ्यां सदसद्भ्यां परं मूलकारणं यदक्षरं ब्रह्म तदपि त्वमेव । त्वद्भिन्नं किमपि नास्तीत्यर्थः । तत्परं यदित्यत्र यच्छब्दात्प्राक्चकारमपि केचित्पठन्ति । एतैर्हेतुभिस्त्वां सर्वे नमन्तीति न किमपि चित्रमित्यर्थः ॥ ३७ ॥ भक्त्युद्रेकात्पुनरपि स्तौति—**त्वमिति** । त्वमादिदेवो जगतः सर्गहेतुत्वात्

५ भाष्योत्कर्षदीपिका ।

हेतुर्नास्तीत्यर्थः । नमस्कारादिकरणे तु हेतुर्वर्तते इत्याशयेनाह । हे महात्मन् परमात्मन्, महात्मत्वं लक्षयति । गरीयसे गुरुतराय यतो ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्त्रे आदिकारणाय अभिन्ननिमित्तोपादानत्वद्योतनायादिपदं । भगवतो गुरुतरत्वं ब्रह्मण आदिकर्तृत्वं च प्रतिपादयन्नाह । हे अनन्त, यस्य देशकालवस्तुकृतः परिच्छेदो नास्ति तस्य तवैव गुरुतरत्वमुपपद्यत इति भावः । हे देवेश देवानां ब्रह्मादीनामीश, जगन्निवास जगदधिष्ठान । तथाच सर्वनियन्ता सर्वाधिष्ठानं त्वमेवादिकर्तेत्याशयः । एवं तत्पदवाच्यं निरूप्य लक्ष्यं निरूपयति—त्वमक्षरमिति । यद्वेदान्तप्रतिपाद्यं किं तत् । सदसत् । सद्यद्विद्यमानं वियत इति विधिमुखेन प्रतीयमानं व्यक्तं कार्यमिति यावत् । असच्च यन्नास्तीति बुद्धिः निषेधमुखेन प्रतीयमाना अव्यक्तविषया कारणबुद्धिरिति यावत् । सदसदुपाधिकत्वादक्षरत्वमपि सदसत् । तत्त्वतस्तु सदसद्भ्यां परं तत्त्वमेवातः ते कस्मान्न नमेरन्नित्यर्थः ॥ ३७ ॥ पुनरपि स्तौति । त्वमादिदेवः ब्रह्मा-

६ श्रीधरीव्याख्या ।

भूताय । ब्रह्मणोऽपि गरीयसे गुरुतराय आदिकर्त्रे च ब्रह्मणोऽपि जनकाय । किंच सत् । व्यक्तं असदव्यक्तं च ताभ्यां परं मूलकारणं यदक्षरं ब्रह्म तच्च त्वमेव । एतैर्नवभिर्हेतुभिस्त्वां सर्वे नमस्यन्तीति न चित्रमित्यर्थः ॥ ३७ ॥ किंच—**त्वमिति** । त्वमादिदेवो देवाना-

७ अभिनवगुप्ताचार्यव्याख्या ।

उवाच—स्थाने हृषीकेशेति । प्रकीर्त्या प्रकीर्तनेन ॥ ३६ ॥ सदसत्तत्परं यदिति । सत् पदार्थत्वेन असत् उपलम्भप्रत्ययविषयत्वात् । अथवा अभावोऽपि धियि निजनिजविशिष्टवाचकवशसंश्लेषितो ज्ञानाकारमश्नुवानो न परब्रह्मसत्ताव्यतिरिक्तः सदसद्रूपाभ्यां परं तदुभयबुद्धितिरो-

**वेत्ताऽसि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥**
**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मेवास्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिञ्जगत्सर्वं महाप्रलयादाविति । किंच वेत्तासि वेदितासि सर्वस्यैव वेद्यजातस्य । यच्च वेद्यं वेदनार्हं तच्चासि । परं च धाम परमं पदं वैष्णवम् । त्वया ततं व्याप्तं विश्वं समस्तं अनन्तरूप अन्तो न विद्यते तव रूपाणाम् ॥ ३८ ॥ किंच—वायुरिति । वायुस्त्वं यमश्चाग्निर्वरुणोपांपतिः शशाङ्कश्चन्द्रमाः प्रजापतिस्त्वं कश्यपादिः प्रपितामहश्च पितामहस्यापि पिता प्रपितामहो ब्रह्मणोऽपि पितेत्यर्थः । नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो

२ आनन्दगिरिव्याख्या ।

वादिनस्तान्प्रत्युक्तं—**त्वमेवेति** । महाप्रलयादावित्यादिपदमवान्तरप्रलयार्थम् । ईश्वरस्योभयथा कारणत्वं सर्वज्ञत्वेन साधयति—**किंचेति** । वेद्यवेदितृभावेनाद्वैतानुपपत्तिमाशङ्क्याह—**यच्चेति** । मुक्त्यालम्बनस्य ब्रह्मणोऽर्थान्तरत्वमाशङ्क्योक्तं—**परं चेति** । यत्परमं पदं तदपि च त्वमेवेति संबन्धः । तस्य पूर्णत्वमाह—**त्वयेति** । व्याप्यव्यापकत्वेन भेदं शङ्कित्वा कल्पितत्वात्तस्य मैवमित्याह—**अनन्तेति** ॥ ३८ ॥ तस्य सर्वात्मत्वे हेत्वन्तरमाह—**किंचेति** । कश्यपादिरित्यादिशब्देन विराड्दक्षादयो गृह्यन्ते । पितामहो ब्रह्मा तस्य पिता सूत्रात्मान्तर्यामी चेत्याह—**ब्रह्मणोऽपीति** । सर्वदेवतास्त्वमेवेत्युक्ते फलितमाह—**नम इति** । सहस्रकृत्व इति कृत्वसुचो विवक्षितमर्थमाह—**बहुश इति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पुराणः शरीरनाशादिनाप्यविनश्यन् । विश्वस्यास्य त्वं परं निधानं निधीयतेऽस्मिन्निति लयस्थानम् । सांख्यानां जडां प्रकृतिं वारयति । वेत्ता ज्ञाता । वेद्यं तद्दृश्यं च त्वमेव । परं वेत्तृवेद्याभ्यामन्यत् धाम चैतन्यम् । त्वया विश्वं ततं व्याप्तं स्वसत्तास्फूर्तिभ्याम् । हे अनन्तरूप त्रिविधपरिच्छेदशून्यस्वरूप ॥ ३८ ॥ सर्वदेवतात्मत्वेन स्तौति—**वायु-**

४ मधुसूदनीव्याख्या ।

पुरुषः पूरयिता पुराणोऽनादिः त्वमस्य विश्वस्य परं निधानं लयस्थानत्वात् निधीयते सर्वमस्मिन्निति । एवं सृष्टिप्रलयस्थानत्वेनोपादानत्वमुक्त्वा सर्वज्ञत्वेन प्रधानं व्यावर्तयन्निमित्ततामाह—**वेत्तेति** । वेत्ता वेदिता । सर्वस्यापि द्वैतापत्तिं वारयति । यच्च वेद्यं तदपि त्वमेवासि । वेदनरूपे वेदितरि परमार्थसंबन्धाभावेन सर्वस्य वेद्यस्य कल्पितत्वात् अतएव परं च धाम यत्सच्चिदानन्दघनमविद्यातत्कार्यनिर्मुक्तं विष्णोः परमं पदं तदपि त्वमेवासि । त्वया सद्रूपेण स्फुरणरूपेण च कारणेन ततं व्याप्तमिदं स्वतः सत्तास्फूर्तिशून्यं विश्वं कार्यं मायिकसंबन्धेनैव स्थितिकाले । हे अनन्तरूप अपरिच्छिन्नस्वरूप ॥ ३८ ॥—**वायुरिति** । वायुर्यमोऽग्निर्वरुणः शशाङ्कः । सूर्यादीनामप्युपलक्षणमेतत् । प्रजापतिर्विराट् हिरण्यगर्भश्च । प्रपितामहश्च पितामहस्य हिरण्यगर्भस्यापि पिता च त्वम् । यस्मादेवं सर्वदेवात्मकत्वात्त्वमेव सर्वैर्नमस्कार्योऽसि तस्मान्ममापि वराकस्य नमो नमस्ते तुभ्य-

५ भाष्योत्कर्षदीपिका ।

दिजनकत्वात् । भगवतस्ताटस्थ्यं वारयति । पुरि शयनात्पुरुष इति । पुरि विनाशान्नाशाशङ्कां वारयति । पुराणः चिरंतनः त्वमस्य विश्वस्य परं निधानं महाप्रलयादौ सर्वं जगन्निधीयतेऽस्मिन्निति परं प्रकृष्टं निधानं लयस्थानमतो न कर्तृमात्रमपि तु प्रकृतिरपीति भावः । किंच वेत्तासि ज्ञातासि । सर्वस्यैव वेद्यजातस्य भेदं वारयति । वेद्यं च यच्च ज्ञातुं योग्यं वस्तु तच्चासि । प्राप्यमपि परं त्वमेवेत्याह । परं च धाम परमं वैष्णवपदं मोक्षाख्यं सच मोक्षाख्यस्त्वं न क्वचिन्मेरुपृष्ठादौ तिष्ठसि किंतु त्वया परमधाम्ना ततं व्याप्तं समस्तं विश्वं यतस्तव रूपाणां कैवल्यादीनामन्तः परिच्छेदो न विद्यते इति हेऽनन्तरूप ॥ ३८ ॥ किंच वाय्वादिस्त्वं शशाङ्कश्चन्द्रः प्रजापतिः कश्यपादिर्हिरण्यगर्भान्तः पितामहस्य हिरण्यगर्भस्यापि पिता । तथाच 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' इत्यादिमन्त्रब्राह्मणवादाः । यत एतादृशस्त्वं जगदुत्पत्त्यादिकर्ता सर्वे-

६ श्रीधरीव्याख्या ।

मादिः । यतः पुराणोऽनादिः पुरुषस्त्वम् । अतएव त्वमस्य विश्वस्य परं निधानं लयस्थानम्, तथा विश्वस्य वेत्ता वेदिता ज्ञाता च त्वम्, यच्च वेद्यं वस्तुजातं परं च धाम वैष्णवं पदं तदपि त्वमेवासि । अतएव हे अनन्तरूप, त्वयैव विश्वमिदं ततं व्याप्तम् । एतैश्च सप्तभिर्हेतुभिस्त्वमेव नमस्कार्य इति भावः ॥ ३८ ॥ इतश्च त्वमेव सर्वैर्नमस्कार्यः सर्वदेवात्मकत्वादिति स्तुवन्स्वयमपि नमस्करोति—**वायुरिति** । वाय्वादिरूपस्त्वमिति सर्वदेवतात्मकत्वोपलक्षणार्थमुक्तम् । प्रजापतिः पितामहस्तस्यापि जनकत्वात्प्रपितामहस्त्वम् । अतस्ते तुभ्यं सहस्रकृत्वः सहस्रशो नमोऽस्तु । भूयोपि पुनरपि सहस्रकृत्वो नमो नम इति भक्तिश्रद्धाभरातिरेकेण नमस्कारेषु तृप्तिमनधिग-

७ अभिनवगुप्ताचार्यव्याख्या ।

धाने तद्रूपोपलब्धेः ॥ ३७ ॥ त्वमादि । वायुरिति ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ श्रीभगवानुवाच—

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४० ॥**
**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।**

१ श्रीमच्छांकरभाष्यम् ।

**नमस्ते** । बहुशः नमस्कारक्रियाभ्यासावृत्तिगणनं कृत्वमुचोच्यते । पुनश्च भूयोऽपीति श्रद्धाभक्त्यतिशयादपरितोषमात्मनो दर्शयति ॥ ३९ ॥ तथा—नम इति । नमः पुरस्तात्पूर्वस्यां दिशि तुभ्यमथ पृष्ठतोऽपि च नमोऽस्तु ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्वानन्तवीर्यामितविक्रमोऽनन्तं वीर्यमस्याऽमितो विक्रमोऽस्य । वीर्यं सामर्थ्यं । विक्रमः पराक्रमः । वीर्यवानपि कश्चिच्छस्त्रादिविषये न पराक्रमते मन्दपराक्रमो वा । त्वं त्वनन्तवीर्योऽमितविक्रमश्चेत्यनन्तवीर्यामितविक्रमः सर्वं समस्तं जगत् समाप्नोषि सम्यगेकेनात्मना व्याप्नोषि यतस्तस्मादसि भवसि सर्वस्त्वया विना भूतं न किंचिदस्तीत्यर्थः ॥ ४० ॥ यतोऽहं त्वन्माहात्म्यापरिज्ञानापराधी अतः—सखेति । सखा समानवया इति

२ आनन्दगिरिव्याख्या ।

पुनरुक्तितात्पर्यमाह—**पुनश्चेति** । श्रद्धाभक्त्योरतिशयात्कृतेऽपि नमस्कारे परितोषाभावो बुद्धेरात्मनोऽलंप्रत्ययराहित्यं तद्दर्शनार्थं पुनरुक्तिरित्यर्थः ॥ ३९ ॥ विधान्तरेण भगवन्तं स्तुत्या नमस्कुर्वन्नभिमुखीकरोति—**तथेति** । यस्यां दिशि सवितोदेति सा पूर्वा दिगुच्यते । तस्यां व्यवस्थितं सर्वं त्वमेव तस्मै ते तुभ्यं नमोऽस्त्वित्याह—**नम इति** । अथशब्दः समुच्चये । पश्चादपि स्थितं सर्वं त्वमेव तस्मै ते तुभ्यं नमोऽस्त्वित्याह—**अथेति** । किं बहुना यावन्त्यो दिशस्तत्र सर्वत्र यद्वर्तते तदशेषं त्वमेव तस्मै तुभ्यं प्रह्वीभावः स्यादित्याह—**नमोऽस्त्विति** । फलितं सर्वात्मत्वं सूचयति—**हे सर्वेति** । वीर्यविक्रमयोर्न पौनरुक्त्यमित्याह—**वीर्यमित्यादिना** । वीर्यवतो विक्रमाव्यभिचारादर्थपौनरुक्त्यमाशङ्क्याह—**वीर्यवानिति** । भगवति लोकतो विशेषमाह—**त्वं त्विति** । उक्तं सर्वात्मत्वं प्रपञ्चयति—**सर्वमिति** । सप्रपञ्चत्वं वारयति—**त्वयेति** ॥ ४० ॥ अज्ञाननिमित्तमपराधं क्षमापयति—**यत इति** । इदं शब्दार्थमाह—**विश्व-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

**रिति** । प्रजापतिर्दक्षादिश्चतुर्मुखो वा । प्रपितामहश्चतुर्मुखपिता ॥ ३९ ॥ हे अनन्तवीर्य, यतः सर्वं समाप्नोषि एकीभावेनासमन्ताद्व्याप्नोषि ततो हेतोः सर्व इति तव नाम । पुरस्तात्कर्मणामादौ । पृष्ठतस्तेषां समाप्तौ । सर्वतो मध्येऽपि ते नमोऽस्तु ॥ ४० ॥ एवं स्तुत्वा स्वापराधान्क्षमापयते—**सखेतीति** । अयं मम सखा इति मत्वा प्रसभं स्वोत्कर्षा-

४ मधुसूदनीव्याख्या ।

मस्तु सहस्रकृत्वः, पुनश्च भूयोऽपि पुनरपि नमो नमस्ते । भक्तिश्रद्धातिशयेन नमस्कारेष्वलंप्रत्ययाभावोऽनया नमस्कारवृत्त्या सूच्यते ॥ ३९ ॥ तुभ्यं पुरस्तात् अग्रभागे नमोस्तु, तुभ्यं पुरो नमःस्तादिति वा । अथशब्दः समुच्चये । पृष्ठतोऽपि तुभ्यं नमःस्यात् । नमोस्तु ते तुभ्यं सर्वत एव सर्वासु दिक्षु स्थिताय हे सर्व । वीर्यं शारीरबलं विक्रमः शिक्षा शस्त्रप्रयोगकौशलं 'एकं वीर्याधिकं मन्य उतैकं शिक्षयाधिकम्' इत्युक्तेर्भीमदुर्योधनयोरन्येषु च एकैकं व्यवस्थितं । त्वं तु अनन्तवीर्यश्चामितविक्रमश्चेति समस्तमेकं पदं । अनन्तवीर्येति संबोधनं वा । सर्वं समस्तं जगत्समाप्नोषि सम्यगेकेन सद्रूपेणाप्नोषि सर्वात्मना व्याप्नोषि ततस्तस्मात्सर्वोऽसि त्वदतिरिक्तं किमपि नास्तीत्यर्थः ॥ ४० ॥ यतोऽहं त्वन्माहात्म्यापरिज्ञानादपराधानजस्रमकार्षं

५ भाष्योत्कर्षदीपिका ।

श्वरः सर्वज्ञः सर्वगम्यः सर्वात्माऽपरिच्छिन्नः सर्वैर्नमस्कार्योऽतोऽपरिमितनमस्कारेणापि मम तृप्तिर्नास्तीत्याशयेनाह—नमोनमस्त इत्यादिना ॥ ३९ ॥ पुरस्तात् पूर्वस्यां दिशि तत्तद्रूपेण स्थिताय ते तुभ्यम् । अथ पृष्ठतस्ते तुभ्यं नमोस्तु । सर्वत एव सर्वासु दिक्षु स्थिताय । हे सर्व । यद्वा पुरस्तात्कर्मणामादौ पृष्ठतस्तेषां समाप्तौ सर्वतः मध्येऽपि ते नमोस्त्विति । अस्मिन्पक्षे कर्मणामित्यध्याहारदोषः सर्वत इत्यादि संकोचे मानाभावश्च बोध्यः । हे सर्वेत्युक्तं निरूपयति । अनन्तं सामर्थ्यं यस्य, अमितः पराक्रमः शस्त्रादिविषये यस्य अनन्तवीर्यश्चासौ अमितविक्रमश्च सः त्वं हेऽनन्तवीर्येति व्यस्तपक्षस्त्वाचार्यैः गौरवात् विशेषाभावाच्च न प्रदर्शितः । सर्वमखिलं विश्वं सम्यगाप्नोषि व्याप्नोषि । यतस्ततोऽसि सर्वः । त्वया विना भूतं न किंचिदस्तीत्यर्थः ॥४०॥ एवं स्तुत्वा स्वापराधमज्ञानकृतं क्षमापयते । सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभं प्रसह्याभिभूय यदुक्तं हे कृष्ण हे यादव हे सखेति । सखेति

६ श्रीधरीव्याख्या ।

च्छन्बहुशः प्रणमति ॥ ३९ ॥ किंच—**नम इति** । हे सर्व सर्वात्मन्, सर्वास्वपि दिक्षु तुभ्यं नमोऽस्तु । सर्वात्मकत्वमुपपादयन्नाह । अनन्तं वीर्यं सामर्थ्यं यस्य, तथाप्यमितो विक्रमः पराक्रमो यस्य सः, एवंभूतस्त्वं सर्वं विश्वं सम्यगन्तर्बहिश्च समाप्नोषि व्याप्नोषि सुवर्णमिव कटककुण्डलादि स्वकार्यं व्याप्य वर्तसे ततः सर्वरूपोऽसि ॥ ४० ॥ इदानीं भगवन्तं क्षमापयति—**सखेति द्वाभ्याम्** । त्वां

१ नीलकण्ठः. २ श्रीधरः. मधुसूदनः. नीलकण्ठः.

**अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥**
**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ।**
**एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभमभिभूय प्रसह्य यदुक्तं हे कृष्ण हे यादव हे सखेति चाजानता-ज्ञानिना मूढेन । किमजानतेत्याह । महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपम् । तवेदं महिमान-मजानतेति वैयधिकरण्येन संबन्धः । तवेममिति पाठो यद्यस्ति तदा सामानाधिकरण्यमेव । मया प्रमा-दाद्विक्षिप्तचित्ततया, प्रणयेन वापि प्रणयो नाम स्नेहनिमित्तो विश्रम्भस्तेनापि कारणेन यदुक्तवा-नस्मि ॥ ४१ ॥ यच्चेति । यच्चावहासार्थं परिहासप्रयोजनायासत्कृतः परिभूतोऽसि भवसि । क विहारश-य्यासनभोजनेषु विहरणं विहारः पादव्यायामः शयनं शय्या आसनमास्थायिका भोजनमदनमित्येतेषु विहारशय्यासनभोजनेष्वेकः परोक्षः सन्नसत्कृतोऽसि परिभूतोऽस्यथवापि हेऽच्युत तत्समक्षं । तच्छ-

२ आनन्दगिरिव्याख्या ।

रूपमिति । नहीदमित्यस्य महिमानमित्यस्य च सामानाधिकरण्यं लिङ्गव्यत्ययादित्याह—**तवेति** । पाठान्तरसंभाव-नायां सामानाधिकरण्योपपत्तिमाह—**तवेत्यादिना** । यदुक्तवानस्मि तदहं क्षामये त्वामिति संबन्धः ॥ ४१ ॥ यद्युक्तमुक्तं तत्क्षन्तव्यमित्येव न किंतु यत्परीहासार्थं क्रीडादिषु त्वयि तिरस्करणं कृतं तदपि सोढव्यमित्याह—**यच्चेति** । विहरणं क्रीडा व्यायामो वा । शयनं तल्पादिकमासनमास्थायिका सिंहासनादेरुपलक्षणम् । एतेषु विषयभूते-ष्विति यावत् । एकशब्दो रहसि स्थितमेकाकिनं कथयतीत्याह—**परोक्षः सन्निति** । प्रत्यक्षं परोक्षं वा तदसत्करणं परिभवनं यथा स्यात्तथा यन्मया त्वमसत्कृतोऽसि तत्सर्वमिति योजनामङ्गीकृत्याह—**तच्छब्द इति** । क्षमा कार-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विष्करणपूर्वकं यत् मयोक्तं हे कृष्ण हे यादव हे सखे इति । इतिशब्देन संधिरार्षः । कुत उक्तम् । तव इदमेवंविधं महिमानं माहात्म्यमजानता कदाचित्प्रमादाच्चित्तविक्षेपात्कदाचित्प्रणयेन स्नेहेन च ॥ ४१ ॥ तथा यच्च अवहासार्थं विहारादिष्वसत्कृतोऽसि परिभूतोऽसि । एको वा सखीनां वियोगकाले वा तत्समक्षं सखिजनसमक्षं वाऽसत्कृतोऽसि तत्क्षामये क्षमापये । यतस्त्वमप्रमेयोऽचिन्त्यस्वभावः करुणापरः । यतः शत्रुभ्योऽपि शिशुपालादिभ्य उत्तमां गतिं

४ मधुसूदनीव्याख्या ।

ततः परमकारुणिकं त्वां प्रणम्यापराधक्षमां कारयामीत्याह द्वाभ्यां—त्वं मम सखा समानवया इति मत्वा प्रसभं स्वोत्कर्षख्या-पनरूपेणाभिभवेन यदुक्तं मया तवेदं विश्वरूपं तथा महिमानमैश्वर्यातिशयमजानता, पुंलिङ्गपाठ इमं विश्वरूपात्मकं महिमानम-जानता प्रमादाच्चित्तविक्षेपात्प्रणयेन स्नेहेन वापि किमुक्तमित्याह हे कृष्ण हे यादव हे सखे इति ॥ ४१ ॥ यच्चावहासार्थं परिहासार्थं विहारशय्यासनभोजनेषु विहारः क्रीडा व्यायामो वा शय्या तूलिकाद्यास्तरणविशेषः, आसनं सिंहासनादि, भोजनं बहूनां पङ्क्तावशनं तेषु विषयभूतेषु असत्कृतोऽसि मया परिभूतोऽसि एकः सखीन्विहाय रहसि स्थितो वा त्वं । अथवा तत्समक्षं तेषां सखीनां परिहसतां समक्षं वा । हे अच्युत सर्वदा निर्विकार, तत्सर्वं वचनरूपमसत्करणरूपं चापराधजातं क्षामये क्षामयामि त्वामप्रमेयं अचिन्त्यप्रभावं । अचिन्त्यप्रभावेन निर्विकारेण च परमकारुणिकेन भगवता त्वन्माहात्म्यानभिज्ञस्य

५ भाष्योत्कर्षदीपिका ।

संधिरार्षः । तत्त्वां क्षामये इत्युत्तरेण संबन्धः । क्षमायोग्यतां सूचयन् अपराधस्याज्ञानपूर्वकत्वमाह । अजानता तव महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपमजानता अज्ञानिना मूढेन । इममिति पाठे तु इमं महिमानमिति सामानाधिकरण्यम् । आविर्भूतैश्वर्यस्याप्य-ज्ञाने हेतुमाह । प्रमादात् विक्षिप्तचित्ततया प्रणयेन स्नेहनिमित्तविश्रम्भेण वापि मया यदुक्तमिति संबन्धः ॥४१॥ यच्चावहासार्थं परि-हासप्रयोजनायासत्कृतोऽसि परिभूतोऽसि । विहरणं विहारः क्रीडा पादव्यायामो वा, शयनं शय्या, आसनमास्थायिका सिंहासनादि, भोजनमदनमित्येतेषु विहारादिषु असत्करणं चोत्कृष्टेन सह निकृष्टस्य समानतया प्रवृत्तिः । एकः परोक्षः रहसि सन्नसत्कृतोऽसि । अथवा समक्षं प्रत्यक्षमपि यत् असत्कृतोसि परोक्षं वा प्रत्यक्षं वा तदसत्करणं यन्मया परिभूतोऽसि तत्सर्वमपराधजातं त्वामहं क्षामये क्षमां कारये । पूर्वं मातुलेयं स्वसमानं ज्ञात्वाऽसत्कृत्येदानीमप्रमेयं बुद्ध्वा क्षामय इत्याशयेनाह—**अप्रमेयमिति** । असत्कृतोऽहं क्षमां

६ श्रीधरीव्याख्या ।

प्राकृतः सखेति मत्वा प्रसभं हठेन तिरस्कारेण यदुक्तं तत्क्षामये त्वामित्युत्तरेणान्वयः । किं तत् । हे कृष्ण, हे यादव, हे सखेति । संधिरार्षः । प्रसभोक्तौ हेतुः—तव महिमानमिदं च विश्वरूपमजानता मया प्रमादात्प्रणयेन स्नेहेनापि वा यदुक्तमिति ॥ ४१ ॥ किंच— **यच्चेति** । हे अच्युत, यच्च परिहासार्थं क्रीडादिषु तिरस्कृतोऽसि । एकः केवलः । सखीन्विना रहसि स्थित इत्यर्थः । अथवा

**पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥**
**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**

१ श्रीमच्छांकरभाष्यम् ।

द्वः क्रियाविशेषणार्थः । प्रत्यक्षं वा तत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतम् ॥ ४२ ॥ यतस्त्वं—पितासीति । पितासि जनयितासि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य । न केवलं त्वमस्य जगतः पिता पूज्यश्च पूजार्हो यतो गुरुर्गरीयान्गुरुतरः । कस्माद्गुरुतरस्त्वमित्याह । नच त्वत्समस्त्वत्तुल्योऽन्योऽस्ति । नहीश्वरद्वयं संभवत्यनेकेश्वरत्वे व्यवहारानुपपत्तेः त्वत्सम एव तावदन्यो न संभवामि कुत एवान्योऽभ्याधिकः स्यात् । लोकत्रयेऽपि सर्वस्मिन्नप्रतिमप्रभाव प्रतिमीयते यया सा प्रतिमा न विद्यते प्रतिमा यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावः हेऽप्रतिमप्रभाव निरतिशयप्रभावेत्यर्थः ॥ ४३ ॥ यत एवं—तस्मात्प्रणम्य नमस्कृत्य प्रणिधाय प्रकर्षेण नीचै-

२ आनन्दगिरिव्याख्या ।

यितव्येत्यत्रापरिमितत्वं हेतुमाह—**अप्रमेयमिति** ॥ ४२ ॥ वाचनिकं मदीयमपराधजातं त्वया क्षन्तव्यमित्युक्तमिदानीं मदीयोऽपराधो न त्वया गृहीतव्यो गृहतोऽपि सोढव्य इत्याह—**यत इति** । गुणाधिक्यात्पूजार्हत्वं धर्मात्मज्ञानसंप्रदायप्रवर्तकत्वेन शिक्षयितृत्वाद्गुरुत्वं गुरूणामपि सूत्रादीनां गुरुत्वाद्गरीयस्त्वं तदेव प्रश्नद्वारा साधयति—**कस्मादिति** । ईश्वरान्तरं तुल्यं भविष्यतीत्याशङ्क्याह—**नहीति** । ईश्वरभेदे प्रत्येकं स्वातन्त्र्यात्तदैकमत्ये हेत्वभावान्नानामतित्वे चैकस्य सिसृक्षायामन्यस्य संजिहीर्षासंभवाद्व्यवहारलोपादयुक्तमीश्वरनानात्वमित्यर्थः । अभ्यधिकासत्त्वं कैमुतिकन्यायेन दर्शयति—**त्वत्सम इति** । तत्र हेतुमवतार्य व्याकरोति—**अप्रतिमेत्यादिना** ॥ ४३ ॥ निरतिशयप्रभावं हेतूकृत्याप्रतिमेत्यादिना प्रसादये प्रणामपूर्वकं त्वामित्याह—**यत इति** । प्रसादनानन्तरं भगवता

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दत्तवानसीत्यर्थः ॥ ४२ ॥ अप्रमेयत्वमेवाह—**पितासीति** । यतस्त्वमस्माकं पितासि अतोऽस्माभिः शिशुभिः कृता अपराधास्त्वया क्षन्तव्या एवेति भावः ॥ ४३ ॥ एतदेवाह—**तस्मादिति** । यस्मात्त्वं पिता गुरुश्च तस्मात्कायं

४ मधुसूदनीव्याख्या ।

ममापराधाः क्षन्तव्या इत्यर्थः ॥ ४२ ॥ अचिन्त्यप्रभावतामेव प्रपञ्चयति—अस्य चराचरस्य लोकस्य पिता जनकस्त्वमसि पूज्यश्चासि सर्वेश्वरत्वात् । गुरुश्चासि शास्त्रोपदेष्टा । अतः सर्वैः प्रकारैर्गरीयान् गुरुतरोऽसि । अतएव न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽपि हे अप्रतिमप्रभाव, यस्य समोऽपि नास्ति द्वितीयस्य परमेश्वरस्याभावात्तस्याधिकोऽन्यः कुतः स्यात् सर्वथा न संभाव्यत एवेत्यर्थः ॥ ४३ ॥ यस्मादेवं तस्मात्प्रणम्य नमस्कृत्य त्वां प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं दण्डवद्भूमौ पातयित्वेति यावत् । प्रसादये त्वामीशमीड्यं सर्वस्तुत्यमहमपराधी । अतो हे देव, पितेव पुत्रस्यापराधं सखेव सख्युरपराधं प्रियः

५ भाष्योत्कर्षदीपिका ।

न करोमीति न वाच्यम् । यतोऽसत्करणेन स्वपदात्सर्वोत्तमात् सदैवाप्रच्युत इति ध्वनयन् संबोधयति—हेऽच्युतेति ॥ ४२ ॥ मथातीवानुचितमेव कृतं क्षमापनं च कर्तव्यमेव त्वया च क्षन्तव्यमेव । यतस्त्वं प्राणिनिकायस्य स्थावरजंगमस्य पिता जनकोऽसि पूज्यः पूजार्हश्चासि । यतो गुरुर्धर्मब्रह्मोपदेष्टा गरीयान् गुरुतरोसि । भगवतो गुरुतरत्वे हेतुमाह । न त्वत्समस्तुल्योऽस्ति द्वितीयस्येश्वरस्याभावात् ईश्वरसत्त्वे प्रत्येकमैकमत्ये कारणाभावात् नानामतित्वे चैकस्य संजिहीर्षायामपरस्य सिसृक्षासंभवात् अपरस्य पालनेच्छायामेकस्य संजिहीर्षासंभवात् व्यवहारलोपप्रसङ्गापत्त्यानेकेश्वरवादस्यायुक्तत्वादिति भावः । त्वत्तुल्य एवान्यो न संभवति । कुतएव लोकत्रयेऽपि सर्वस्मिन्लोकेऽन्योऽभ्यधिकः कुतोऽन्यो लोकत्रयेऽपीति वा हेतुहेतुमद्भावः । भाष्यस्योपलक्षणार्थत्वादविरोधः । हेऽप्रतिमप्रभाव, प्रतिमीयते यया सा प्रतिमा उपमा न विद्यते उपमा यस्य स चासौ प्रभावो यस्य स तथा । अतस्त्वमेव सर्वेषां पित्रादिरिति भावः ॥ ४३ ॥ यस्मादेवं तस्मात्कायं शरीरं प्रणिधाय प्रकर्षेण नीचैः कृत्वा दण्डवद्भूमौ पातयित्वा प्रणम्य त्वामहं

६ श्रीधरीव्याख्या ।

तत्समक्षं तेषां परिहसतां सखीनां समक्षं पुरतोऽपि तत्सर्वमपराधजातं त्वामप्रमेयमचिन्त्यप्रभावं क्षामये क्षमां कारयामि ॥ ४२ ॥ अचिन्त्यप्रभावमेवाह—**पितेति** । न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमः तथाविधः प्रभावो यस्य तव हे अप्रतिमप्रभाव, त्वमस्य चराचरस्य लोकस्य पिता जनकोऽसि । अतएव पूज्यश्च गुरुश्च गुरोरपि गरीयान् गुरुतरः अतो लोकत्रयेऽपि त्वत्सम एव तावदन्यो नास्ति परमेश्वरस्यान्यस्याभावात्, त्वत्तोऽभ्यधिकः पुनः कुतः स्यात् ॥ ४३ ॥ यस्मादेवं—**तस्मादिति** । तस्मात्त्वामीशं जगतः स्वामिनमीड्यं स्तुत्यं प्रसादये प्रसादयामि । कथम् । कायं प्रणिधाय दण्डवन्निपात्य प्रणम्य प्रकर्षेण नत्वा । अतस्त्वं ममापराधं सोढुं क्षन्तु-

**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥**
**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥**
**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।**

१ श्रीमच्छांकरभाष्यम् ।

धृत्वा कायं शरीरं प्रसादये प्रसादं कारये त्वामहमीशमीशितारमीड्यं स्तुत्यं । त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते सर्वं सखेव च सख्युरपराधं यथा वा प्रियः प्रियाया अपराधं क्षमत एवमर्हसि हे देव, सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥ ४४ ॥ अदृष्टपूर्वमिति । अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयान्यैर्वा तदहं दृष्ट्वा हृषितोऽस्मि भयेन च प्रव्यथितं मनो मेऽतस्तदेव मे मम दर्शय हे देव, रूपं यन्मत्सखं । प्रसीद देवेश जगन्निवास जगतो निवासो जगन्निवासो हे जगन्निवास ॥ ४५ ॥ किंच—किरीटिनमिति । किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्व-

२ आनन्दगिरिव्याख्या ।

कर्तव्यं प्रार्थयते—**त्वं पुनरिति** । प्रिय इव प्रियाया इतीवकारोऽनुषज्यते । प्रियायार्हसीति छान्दसः सन्धिः । क्षन्तुं मदपराधजातमिति शेषः ॥ ४४ ॥ हेतूक्तिपूर्वकं विश्वरूपोपसंहारं प्रार्थयते—**अदृष्टेति** । हृषितो हृष्टस्तुष्ट इति यावत् । भयेन तद्धेतुविकृतदर्शनेनेत्यर्थः ॥ ४५ ॥ तदेव दर्शयेत्युक्तं किं तदित्यपेक्षायामाह—**किरीटिनमिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शरीरं प्रणिधाय भूमौ कृत्वा दण्डवत्प्रणम्य त्वां प्रसादये । ईड्यं स्तुत्यम् । स्पष्टमन्यत् ॥ ४४ ॥ एवं स्तुत्वा स्वेष्टं प्रार्थयते—**अदृष्टपूर्वमिति** । हे देव, कदाचिदपि पूर्वं न दृष्टं तादृशमदृष्टपूर्वं तव रूपं दृष्ट्वा हृषित उत्फुल्लोऽस्मि । तथा विकरालरूपदर्शनजेन भयेन च मे मम मनः प्रव्यथितम् । अतस्तदेव धारणाविषयभूतं रूपं मे मह्यं दर्शय ॥ ४५ ॥ तदेव रूपमाह—**किरीटिनमिति** । एतेनार्जुनस्य चक्रगदाकिरीटोपेतं चतुर्भुजं भगवतो रूपं धारणा-

४ मधुसूदनीव्याख्या ।

पतिरिव प्रियायाः पतिव्रताया अपराधं ममापराधं त्वं सोढुं क्षन्तुमर्हसि अनन्यशरणत्वान्मम । प्रियायार्हसीत्यत्रेवशब्दलोपः सन्धिश्च छान्दसः ॥ ४४ ॥ एवमपराधक्षमां प्रार्थ्य पुनः प्राग्रूपदर्शनं विश्वरूपोपसंहारेण प्रार्थयते द्वाभ्यां—कदाप्यदृष्टपूर्वं पूर्वमदृष्टं विश्वरूपं दृष्ट्वा हृषितो हृष्टोऽस्मि । तद्विकृतरूपदर्शनजेन भयेन च प्रव्यथितं व्याकुलीकृतं मनो मे । अतस्तदेव प्राचीनमेव मम प्राणापेक्षयापि प्रियं रूपं मे दर्शय । हे देव हे देवेश, हे जगन्निवास, प्रसीद प्राग्रूपदर्शनरूपं प्रसादं मे कुरु ॥ ४५ ॥ तदेव रूपं विवृणोति—किरीटवन्तं गदावन्तं चक्रहस्तं च त्वा त्वां द्रष्टुमिच्छाम्यहं तथैव पूर्ववदेव । अतस्तेनैव

५ भाष्योत्कर्षदीपिका ।

प्रसादये । प्रसादं कारये । इदमत्यावश्यकमित्यत्रान्यदपि हेतुद्वयमाह । ईशं ईशितारं सर्वनियन्तारमीड्यं स्तोतुं योग्यं त्वं च पिता यथा पुत्रस्यापराधं क्षमते यथाच सख्युः सखा यथाच प्रियायाः भार्यायाः प्रियः भर्तेति तद्वत्क्षन्तुं योग्योसि जगज्जनकत्वात् पितृत्वम् । सयुजौ सखायाविति मन्त्रवर्णात्सखित्वं निखिलप्रपञ्चपोषकत्वात् भर्तृत्वं च तवास्तीति पित्रादिवन्मुख्यपित्रादिस्त्वं अवश्यं सोढुमर्हसीति सूचयन्दृष्टान्तत्रयोपादानम् । प्रियायार्हसीति संधिरार्षः । किंच नरनाट्यात्मकक्रीडाविधानार्थं मम बुद्ध्यावरणं त्वयैव कृतमिति ध्वनयन्संबोधयति—**हे देवेति** ॥ ४४ ॥ एवमपराधक्षमां प्रार्थ्याभिलषितं प्रार्थयते—**अदृष्टेति** द्वाभ्याम् । मयान्यैर्वा कदाचिदपि न दृष्टपूर्वं इदं तव विश्वरूपं दृष्ट्वा हृषितोस्मि हर्षं प्राप्तोस्मि । अदृष्टपूर्वत्वादेव भयेन च व्यथितं दुःखितं मे मनः । अतो यस्मिन्निदं विश्वरूपं त्वया प्रदर्शितं तदेव मुख्यरूपं मम प्रदर्शय । प्रदर्शनं चैतद्रूपाधिष्ठानत्वेन स्थितस्यैव प्रद्योतनमात्रं त्वया कर्तव्यमस्ति नतूत्पाद्य प्रदर्शयितव्यमिति देवेति संबोधनस्य गूढाभिसंधिः । देवरूपं द्योतनात्मकं रूपमित्येकं वा पदं । तव देवेश त्वं जगन्निवास त्वं च मया प्रत्यक्षीकृतमतो मज्जिज्ञासासमाप्त्या मदर्थस्यैतद्रूपस्य तिरोधानमेवोचितमिति द्योतनार्थं संबोधनद्वयं हे देवेश हे जगन्निवासेति ॥ ४५ ॥ तदेवेत्युक्तं विशदयति । किरीटवन्तं तथा गदावन्तं चक्रं सुदर्शनं हस्ते यस्य तादृशं त्वामहं द्रष्टुमिच्छामि

६ श्रीधरीव्याख्या ।

मर्हसि । कस्य क इव । पुत्रस्यापराधं कृपया पिता यथा सहते, सख्युर्मित्रस्यापराधं सखा निरुपाधिबन्धुर्यथा, प्रियश्च प्रियाया अपराधं तत्प्रियार्थं यथा तद्वत् ॥ ४४ ॥ एवं क्षमापयित्वा प्रार्थयते—**अदृष्टपूर्वमिति द्वाभ्याम्** । हे देव, पूर्वमदृष्टं तव रूपं दृष्ट्वा हृषितो हृष्टोऽस्मि । तथा भयेन च मे मनः प्रव्यथितं प्रचलितं । तस्मान्मम व्यथानिवृत्तये तदेव रूपं दर्शय । हे देवेश, हे जगन्निवास, प्रसन्नो भव ॥ ४५ ॥ तदेव रूपं विशेषयन्नाह—**किरीटिनमिति** । किरीटिनं गदावन्तं चक्रहस्तं च त्वां द्रष्टुमिच्छामि पूर्वं यथा

**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥**

**श्रीभगवानुवाच ।**

**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

वदित्यर्थः । यत एवं तस्मात्तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन सहस्रबाहो वार्तमानिकेन विश्वरूपेण भव विश्वमूर्ते उपसंहृत्य विश्वरूपं तेनैव रूपेण वसुदेवपुत्ररूपेण भवेत्यर्थः ॥ ४६ ॥ अर्जुनं भीतमुपलभ्योपसंहृत्य विश्वरूपं प्रियवचनेनाश्वासयन् श्रीभगवानुवाच—मयेति । मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिस्तद्वता प्रसन्नेन मया तव हेऽर्जुन इदं परं रूपं विश्वरूपं दर्शितमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तमन्तरहितमादौ भवमाद्यं यद्रूपं मे मम त्वदन्येन

२ आनन्दगिरिव्याख्या ।

चक्रं हस्ते यस्य तमिति व्युत्पत्तिं गृहीत्वाह—**चक्रेति** । मदीयेच्छा फलपर्यन्ता कर्तव्येत्याह—**यत इति** । चतुर्भुजत्वे कथं सहस्रबाहुत्वं तत्राह—**वार्तमानिकेनेति** । सति विश्वरूपे कथं पूर्वरूपभाक्त्वं तत्राह—**उपसंहृत्येति** ॥ ४६ ॥ अर्जुनेन स्थाने हृषीकेशेत्यादिनोक्तस्य भगवतो वचनमवतारयति—**अर्जुनमिति** । भगवत्प्रसादे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विषय इति दर्शितम् । हे सहस्रबाहो हे विश्वमूर्ते सहस्रबाहुत्वादिकमुपसंहृत्य तेनैव रूपेण भव प्रकटो भव ॥ ४६ ॥ एवमर्जुनेन प्रार्थितस्तं स्तुवन्भगवानुवाच—**मयेति त्रिभिः** । हे अर्जुन, प्रसन्नेन मया तव तुभ्यमिदं परं रूपं दर्शितम् । आत्मयोगात्स्वसामर्थ्यात् । करुणया नतु तद्दर्शनेऽधिकारोऽस्ति । तथाच प्रागुक्तम् 'कर्मण्येवाधिकारस्ते' इति । तेजोमयं चिद्रूपं दिव्यं विश्वं विश्वात्मकं आद्यमनादि अनन्तं च यत् रूपं त्वदन्येन कदाचिदपि न पूर्वं दृष्टं

४ मधुसूदनीव्याख्या ।

रूपेण चतुर्भुजेन वसुदेवात्मजत्वेन भव हे इदानीं सहस्रबाहो, हे विश्वमूर्ते उपसंहृत्य विश्वरूपं पूर्वरूपेणैव प्रकटो भवेत्यर्थः । एतेन सर्वदा चतुर्भुजादिरूपमर्जुनेन भगवतो दृश्यत इत्युक्तम् ॥ ४६ ॥ एवमर्जुनेन प्रसादितो भयबाधितमर्जुनमुपलभ्योपसंहृत्य विश्वरूपमुचितेन वचनेन तमाश्वासयंस्त्रिभिः—श्रीभगवानुवाच हे अर्जुन, माभैषीः । यतो मया प्रसन्नेन त्वद्विषयकृपातिशयवता इदं विश्वरूपात्मकं परं श्रेष्ठं रूपं तव दर्शितमात्मयोगात् असाधारणान्निजसामर्थ्यात् । परत्वं विवृणोति । तेजोमयं तेजःप्रचुरं विश्वं सम-

५ भाष्योत्कर्षदीपिका ।

तस्मान्मदिच्छानुसारेणैव हे सहस्रबाहो, हे विश्वमूर्ते, मदिच्छापरिसमाप्त्या पुनरपि विश्वमूर्तित्वं तिरोधाय तेनैव रूपेण वसुदेवपुत्रमूर्तिरूपेण सहस्रबाहुत्वं तिरोधाय चतुर्भुजेन तथैव पूर्वरूपेण प्रकटीभवेत्यर्थः ॥ ४६ ॥ अर्जुनं भीतमुपलक्ष्य विश्वरूपं तिरोधाय प्रियवचसा आश्वासयन् श्रीभगवानुवाच—मया प्रसन्नेन त्वय्यनुग्रहबुद्धिमता इदं परं पारमेश्वरं रूपं तव दर्शितं । यतस्त्वं फलाभिसंधिरहितत्वात् शुद्धो मद्भक्त इति ध्वनयन्संबोधयति हेऽर्जुनेति । आत्मनो योगैश्वर्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वं समस्तं सर्वात्मकं अनन्तमन्तविधुरं आदिभवमाद्यं सर्वादौ सत् यन्मे विश्वरूपमिदं त्वदन्येन केनचित्पूर्वं न दृष्टम् ॥ ४७ ॥ मम विश्वरूपदर्शनेन

६ श्रीधरीव्याख्या ।

दृष्टोऽसि तथैव । अतो हे सहस्रबाहो, विश्वमूर्ते, इदं विश्वरूपं संहृत्य तेनैव किरीटादियुक्तेन चतुर्भुजेन रूपेण भवाविर्भव । तदनेन श्रीकृष्णमर्जुनः पूर्वमपि किरीटादियुक्तमेव पश्यतीति गम्यते । यत्तु पूर्वमुक्तं विश्वरूपदर्शने 'किरीटिनं गदिनं चक्रिणं च पश्यामि' इति तद्बहुकिरीटाद्यभिप्रायेण । यद्वा । एतावन्तं कालं यं त्वां किरीटिनं गदिनं चक्रिणं च सुप्रसन्नमपश्यं तमेवेदानीं तेजोराशिं दुर्निरीक्ष्यं पश्यामीत्येवं तत्र बहुवचनव्यक्तिरित्यविरोधः ॥ ४६ ॥ एवं प्रार्थितः सन् तमाश्वासयन् श्रीभगवानुवाच—**मयेति त्रिभिः** । हे अर्जुन, किमिति बिभेषि । यतो मया प्रसन्नेन कृपया तवेदं परमुत्तमं रूपं दर्शितम् । आत्मनो मम योगाद्योगमायासामर्थ्यात् । परत्वमेवाह । तेजोमयं विश्वं विश्वात्मकमनन्तमाद्यं च यन्मम रूपं त्वदन्येन त्वादृशाद्भक्तादन्येन न पूर्वं दृष्टं तत् ॥ ४७ ॥ एतद्दर्शनमतिदुर्लभं

७ अभिनवगुप्ताचार्यव्याख्या ।

मयेति नमोनम इत्यनेन पौनःपुन्यं भक्त्यतिशयाविष्कारकं यदेव भगवतातिक्रान्ताध्यायैरभ्यधायि स्वस्वरूपं तदेवार्जुनः प्रत्यक्षोपलम्भविषयापन्नं स्तोत्रद्वारेण प्रकटयतीति तद्व्याख्यानं केवलं पौनरुक्त्यप्रसङ्गायेति विरम्यते ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

**न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः।**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**
**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम्।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥**

१ श्रीमच्छांकरभाष्यम्।

त्वत्तोऽन्येन केनचिन्न दृष्टिपूर्वम् ॥ ४७ ॥ आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति ततः स्तौति—न वेदेति। न वेदयज्ञाध्ययनैर्न दानैश्चतुर्णामपि वेदानामध्ययनैर्यथावद्यज्ञाध्ययनैश्च। वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात्पृथग्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम्। तथा न दानैस्तुलापुरुषादिभिर्न च क्रियाभिरग्निहोत्रादिभिः श्रौतादिभिर्नापि तपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैर्घोरैरेवंरूपो यथा दर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः शक्यो न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥ मा ते व्यथेति। मा ते व्यथा माभूत्ते भयं मा च विमूढभावो विमूढचित्तता दृष्ट्वोपलभ्य रूपं घोर-

२ आनन्दगिरिव्याख्या।

कोपायलभ्यं तद्दर्शनमित्याशयेनाह—मयेति ॥ ४७ ॥ तच्छब्देन प्रकृतं दर्शनं परामृश्यते। वेदाध्ययनात्पृथग्यज्ञाध्ययनग्रहणं पुनरुक्तेरयुक्तमित्याशङ्क्याह—न वेदेति। नच वेदाध्ययनग्रहणादेव यज्ञविज्ञानमपि गृहीतमध्ययनस्यार्थावबोधान्तत्वादिति वाच्यं, तस्याक्षरग्रहणान्ततया वृद्धैः साधितत्वादिति भावः। श्लोकपूरणार्थमसंहितकरणं, त्वत्तोऽन्येन मदनुग्रहविहीनेनेति शेषः ॥ ४८ ॥ विश्वरूपदर्शनमेवं स्तुत्वा यद्यस्माद्दृश्यमानाद्बिभेषि तर्हि तदुपसंहरामीत्याह—मा ते व्यथेति। बहुविधमनुभूतत्वमभिप्रेत्येदृगित्युक्तमिदमिति प्रत्यक्षयोग्यत्वम्। तदेवेत्युक्तं इद-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

दृष्टपूर्वम् ॥ ४७ ॥ योगैकगम्यमेतत्कर्मिणां दुष्प्रापमित्याह—न वेदेति। वेदानां यज्ञानां चाध्ययनैरधिगमैः नच दानैर्नच क्रियाभिः स्मृत्युक्ताभिरापूर्तादिभिर्वापीकूपारामादिभिस्तपोभिः कृच्छ्रचान्द्रायणाद्यैः। उग्रैर्मासोपवासाद्यैः। नृलोके एवंरूपोऽहं द्रष्टुं न शक्यः। रोरुत्वाभाव आर्षः। त्वदन्येन कुरुप्रवीर ॥ ४८ ॥ इदमतिदुर्लभदर्शनं रूपं दृष्ट्वापि चेद्व्यथसे तर्ह्युपसंहरामीदमित्याशयेनाह—मा ते इति। ममेदं ईदृक् घोरं रूपं दृष्ट्वा ते तव व्यथा माभूदिति

४ मधुसूदनीव्याख्या।

त्वमनन्तमाद्यं च यन्मम रूपं त्वदन्येन केनापि न दृष्टपूर्वं पूर्वं न दृष्टम् ॥४७॥ एतद्रूपदर्शनात्मकमतिदुर्लभं मत्प्रसादं लब्ध्वा कृतार्थ एवासि त्वमित्याह—वेदानां चतुर्णामपि अध्ययनैरक्षरग्रहणरूपैः, तथा मीमांसाकल्पसूत्रादिद्वारा यज्ञानां वेदबोधितकर्मणामध्ययनैरर्थविचाररूपैर्वेदयज्ञाध्ययनैः, दानैस्तुलापुरुषादिभिः, क्रियाभिरग्निहोत्रादिश्रौतकर्मभिः, तपोभिः कृच्छ्रचान्द्रायणादिभिरुग्रैः कायेन्द्रियशोषकत्वेन दुष्करैः एवंरूपोऽहं न शक्यः नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन मदनुग्रहहीनेन हे कुरुप्रवीर, शक्योहमिति वक्तव्ये विसर्गलोपश्छान्दसः। प्रत्येकं नकाराभ्यासो निषेधदार्ढ्याय। नच क्रियाभिरित्यत्र चकारादनुक्तसाधनान्तरसमुच्चयः ॥४८॥ एवं त्वदनुग्रहार्थमाविर्भूतेन रूपेणानेन चेत्तवोद्वेगस्तर्हि—इदं घोरं ईदृक् अनेकबाह्वादियुक्तत्वेन भयंकरं मम रूपं दृष्ट्वा स्थितस्य ते तव या व्यथा भयनिमित्ता पीडा सा माभूत्। तथा मद्रूपदर्शनेऽपि यो विमूढभावो व्याकुलचित्तत्वमपरितोषः सोपि माभूत्। किंतु व्यपेतभीरपगतभयः प्रीतमनाश्च सन् पुनस्त्वं तदेव चतुर्भुजं वासुदेवत्वादिविशिष्टं त्वया सदा पूर्वदृष्टं रूपमिदं विश्वरूपोपसं-

५ भाष्योत्कर्षदीपिका।

कृतार्थ एव त्वं संपन्न इत्याशयेनाह—नेति। न वेदानां चतुर्णामप्यध्ययनैः गुरूच्चारणानूच्चारणलक्षणैः। यज्ञाध्ययनैर्यज्ञविज्ञानस्य मीमांसाकल्पसूत्रादेरध्ययनैर्न दानैर्गोदानादिभिर्न च क्रियाभिः श्रौतस्मार्तक्रियाकलापैर्न तपोभिश्चान्द्रायणादिभिरुग्रैः घोरैर्देहशोषणैरेवं यथा प्रदर्शितं विश्वरूपं यस्य स एवंरूपोऽहं त्वदन्येन मदनुग्रहवर्जितेन द्रष्टुं शक्यः। अन्ये कुरवः केचित्कुरुवीराश्च। त्वं तु मे तद्रूपदर्शनलब्धप्रकर्षः कुरुप्रवीरः संपन्न इति सूचयन्नाह हे कुरुप्रवीर ॥ ४८ ॥ तव प्रसन्नतायै प्रदर्शितेन विश्वरूपेण तव व्यथादिकं चेत्तर्हि तदेव मे रूपं पश्येत्याह—मा त इति। ईदृक् घोरं ममेदं रूपं दृष्ट्वा तव व्यथा भयं माभूत्। मा च विमूढभावो व्याकुलचित्तता। तथाच व्यपेतभीः व्यथारहितः प्रीतमनाश्च सन् तदेव स्वेष्टं चतुर्भुजं शङ्खचक्रगदापद्मधरं श्यामघनं

६ श्रीधरीव्याख्या।

लब्ध्वा त्वं कृतार्थोऽसीत्याह—नेति। वेदाध्ययनातिरेकेण यज्ञाध्ययनस्याभावात्। यज्ञशब्देन यज्ञविद्यायाः कल्पसूत्राद्या लक्ष्यन्ते। वेदानां यज्ञविद्यानां चाध्ययनैरित्यर्थः। नच दानैर्न च क्रियाभिरग्निहोत्रादिभिर्न चोग्रैस्तपोभिश्चान्द्रायणादिभिरेवंरूपोऽहं त्वदन्येन मनुष्यलोके द्रष्टुं शक्यः, अपितु त्वमेव केवलं मत्प्रसादेन दृष्टवा कृतार्थोऽसि ॥ ४८ ॥ एवमपि चेत्तवेदं रूपं घोरं दृष्ट्वा व्यथा भवति तर्हि तदेव रूपं दर्शयामीत्याह—मा त इति। ईदृगीदृशं मदीयं घोरं रूपं दृष्ट्वा ते व्यथा मास्तु। विमूढभावो विमूढत्वं च मास्तु।

संजय उवाच ।

**इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥**

अर्जुन उवाच ।

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मीदृग्यथादर्शितं ममेदं व्यपेतभीर्विगतभयः प्रीतमनाश्च सन्पुनर्भूयस्त्वं तदेव चतुर्भुजं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥ ४९ ॥ इत्यर्जुनमिति । इत्येवमर्जुनं वासुदेवस्तथाभूतं वचनमुक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान् । भूयः पुनराश्वासयामास चाश्वासितवांश्च भीतमेनं भूत्वा पुनः सौम्यवपुः प्रसन्नदेहो महात्मा ॥ ५० ॥ दृष्ट्वेदमिति । दृष्ट्वेदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दन, इदानीमधुनास्मि संवृत्तः संजातः । किम् । सचेताः प्रसन्नचित्तः प्रकृतिं

२ आनन्दगिरिव्याख्या ।

मिति ॥ ४९ ॥ तदिदं वृत्तं राज्ञे सूतो निवेदितवानित्याह—संजय इति । तथाभूतं वचनं मया प्रसन्नेनेत्यादिचतुर्भुजं रूपं । किं तस्य रूपस्य परिचितपूर्वस्य प्रदर्शनेन प्रसन्नदेहत्वेन चार्जुनं प्रत्याश्वासनं भगवतो युक्तमित्यत्र हेतुमाह—महात्मेति ॥ ५० ॥ एवं भगवदाश्वासितः सन्नर्जुनस्तं प्रत्युक्तवानित्याह—अर्जुन इति ॥ ५१ ॥ उपा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शेषः । विमूढभावो मोहश्च ते माभूत् । व्यपेतभीर्निर्भयः प्रीतमनाश्च पुनस्त्वं भूत्वा तदेव यत्त्वया द्रष्टुं प्रार्थितं मे ममेदं रूपं प्रपश्य ॥ ४९ ॥ संजय उवाच—इतीति । वासुदेवोऽर्जुनं प्रति इति पूर्वोक्तरीत्योक्त्वा यथा पूर्वमासीत्तथा स्वकं मानुषं रूपं भूयः पुनर्दर्शयामास । यदर्जुनेन प्रार्थितं चतुर्भुजं धारणाविषयविषयं रूपं तदपि तिरोदधे इत्यर्थः । तथा महात्मा व्यापकोऽपि सन् सौम्यवपुरनुग्रदेहो भूत्वा भीतमेनमाश्वासयामास च ॥ ५० ॥ ततो निर्भयः सन्नर्जुन उवाच—दृष्ट्वेति । सचेता अव्याकुलः । प्रकृतिं गतः स्वास्थ्यं प्राप्तः । संवृत्तो जातोऽस्मि ॥ ५१ ॥ अस्य

४ मधुसूदनीव्याख्या ।

द्वारेण प्रकटीक्रियमाणं प्रपश्य प्रकर्षेण भयराहित्येन संतोषेण च पश्य ॥ ४९ ॥ वासुदेवोऽर्जुनमिति प्रागुक्तमुक्त्वा यथा पूर्वमासीत्तथा स्वकं रूपं किरीटमकरकुण्डलगदाचक्रादियुक्तं चतुर्भुजं श्रीवत्सकौस्तुभवनमालापीताम्बरादिशोभितं दर्शयामास भूयः पुनः आश्वासयामास च भीतमेनमर्जुनं भूत्वा पुनः पूर्ववत्सौम्यवपुरनुग्रशरीरः महात्मा परमकारुणिकः सर्वेश्वरः सर्वज्ञ इत्यादिकल्याणगुणाकरः ॥ ५० ॥ ततो निर्भयः सन् अर्जुन उवाच—इदानीं सचेताः भयकृतव्यामोहाभावेनाव्याकुलचित्तः संवृत्तोऽस्मि तथा प्रकृतिं भयकृतव्यथाराहित्येन स्वास्थ्यं गतोस्मि । स्पष्टमन्यत् ॥ ५१ ॥ स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन्

५ भाष्योत्कर्षदीपिका ।

मम रूपमिदं मया प्रत्यक्षीकृतं प्रकर्षेण विश्वरूपदर्शनजनितव्यथादिनिवृत्त्यर्थं पश्य ॥ ४९ ॥ एतद्वृत्तान्तं धृतराष्ट्राय संजयो निवेदितवानित्याह—संजय उवाच । इत्येवमर्जुनं वासुदेवस्तथाभूतं वचनमुक्त्वा । वासुदेव इत्यनेन स्वकमित्यस्य वसुदेवगृहे जातं स्वकीयं रूपमित्यर्थं सूचयति । दर्शयामास दर्शितवान् पुनःपुनराश्वासितवान् । च पुनः सौम्यवपुः प्रसन्नदेहो भूत्वा । नन्वेवं क्षणिकचित्तेऽर्जुने क्षोभं कुतो न कृतवानित्याशङ्कानिवृत्त्यर्थमाह । महात्मा कारुण्यादिगुणगणाकरस्तस्य भगवतो युक्तमेव पूर्वपरिचितसौम्यवपुःप्रदर्शनेनार्जुनाश्वासनमिति भावः ॥ ५० ॥ स्वाभिलषितं रूपं दृष्ट्वार्जुन उवाच । दृष्ट्वेदं प्रत्यक्षं मानुषं नराकारं मत्सखं सौम्यं प्रसन्नं तव रूपं इदानीं सचेताः प्रसन्नमनाः प्रकृतिं स्वभावं गतः प्राप्तः संवृत्तः संजातोऽस्मि । जनार्दनेति संबोधयन् जनानसुरानर्दयति पीडयतीति जनार्दनस्तद्दर्शनजन्यं भयमिदानीं सौम्यरूपदर्शनेन निवृत्तमिति सूचयति ॥ ५१ ॥ एवं श्रुत्वा स्व-

६ श्रीधरीव्याख्या ।

व्यपगतभयः प्रीतमनाश्च सन्पुनस्त्वं तदेवेदं मम रूपं प्रकर्षेण पश्य ॥ ४९ ॥ एवमुक्त्वा प्राक्तनमेव रूपं दर्शितवानिति संजय उवाच—इतीति । श्रीवासुदेवोऽर्जुनमेवमुक्त्वा यथा पूर्वमासीत्तथैव किरीटादियुक्तं चतुर्भुजं स्वीयं रूपं पुनर्दर्शयामास । एनमर्जुनं भीतमेव प्रसन्नवपुर्भूत्वा पुनरप्याश्वासितवान् । महात्मा विश्वरूपः कृपालुरिति वा ॥ ५० ॥ ततो निर्भयः सन्नर्जुन उवाच—दृष्ट्वेति । सचेताः प्रसन्नचित्त इदानीं संवृत्तः जातोऽस्मि । प्रकृतिं स्वास्थ्यं च प्राप्तोऽस्मि । शेषं स्पष्टम् ॥ ५१ ॥ स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं

श्रीभगवानुवाच ।

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**
**नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥**
**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

स्वभावं गतश्चास्मि ॥ ५१ ॥ सुदुर्दर्शमिति । सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवा अप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः ॥ ५२ ॥ कस्मात्—नाहमिति । नाहं वेदैर्ऋग्यजुःसामाथर्ववेदैश्चतुर्भिरपि न तपसोग्रेण चान्द्रायणादिना न दानेन गोभूहिरण्यादिना न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुं दृष्टवानसि मां यथा त्वम् ॥ ५३ ॥ कथं पुनः शक्य इत्युच्यते—भक्त्येति । भक्त्या तु किंविशिष्टयेत्याह—अनन्ययाऽपृथग्भूतया भगवतोऽन्यत्र पृथङ् न कदाचिदपि या भवति सा त्वनन्या भक्तिः सर्वैरपि करणैर्वासुदेवादन्यन्नोपलभ्यते यया सानन्या

२ आनन्दगिरिव्याख्या ।

स्वत्वाय विश्वरूपं स्तोतुं भगवदुक्तिमुत्थापयति—भगवानिति । त्वद्व्यतिरिक्तानामिदं रूपं द्रष्टुमशक्यमित्येतद्विशदयति—देवादय इति ॥ ५२ ॥ दर्शनोपायाभावाद्दुर्दर्शत्वमिति शङ्क्यते—कस्मादिति । वेदादिषूपायेषु सत्स्वपि भगवानुक्तरूपो न शक्यो द्रष्टुमित्याह—नाहमिति । तर्हि दर्शनायोग्यत्वाद्द्रष्टुमशक्यत्वमित्याशङ्क्याह—दृष्टवानिति ॥ ५३ ॥ केनोपायेन तर्हि द्रष्टुं शक्यो भगवानिति पृच्छति—कथमिति । शास्त्रीयज्ञानद्वारा तद्दर्शनं सफलं सिध्यतीत्याह—उच्यत इति । न भक्तिमात्रं तत्र हेतुरिति तुशब्दार्थं स्फुटयति—किमित्यादिना । अनन्यां

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विश्वरूपदर्शनस्य दौर्लभ्यं दर्शयन् श्रीभगवानुवाच–सुदुर्दर्शमिति । दर्शनकाङ्क्षिणः दर्शनं काङ्क्षन्ते एव नतु लभन्ते ॥ ५२ ॥ नाहमिति । न वेदयज्ञाध्ययनैरित्यनेनोक्त एवार्थः पुनरुच्यते विश्वरूपदर्शनस्यातिदौर्लभ्यसूचनाय । स्पष्टार्थश्च श्लोकः ॥ ५३ ॥ कथं तर्हि द्रष्टुं शक्यस्त्वमत आह—भक्त्येति । भक्त्या आराधनेन । अनन्ययाव्य-

४ मधुसूदनीव्याख्या ।

चतुर्भिः श्रीभगवानुवाच—मम यद्रूपमिदानीं त्वं दृष्टवानसि इदं विश्वरूपं सुदुर्दर्शं अत्यन्तं द्रष्टुमशक्यं । यतो देवा अप्यस्य रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो नतु त्वमिव पूर्वं दृष्टवन्तो न वाऽग्रे द्रक्ष्यन्तीत्यभिप्रायः । दर्शनाकाङ्क्षया नित्यत्वोक्तेः ॥५२॥ कस्माद्देवा एतद्रूपं न दृष्टवन्तो न वा द्रक्ष्यन्ति मद्भक्तिशून्यत्वादित्याह—न वेदयज्ञाध्ययनैरित्यादिना गतार्थः श्लोकः परमदुर्लभत्वख्यापनायाभ्यस्तः ॥ ५३ ॥ यदि वेदतपोदानेज्याभिर्द्रष्टुमशक्यस्त्वं तर्हि केनोपायेन द्रष्टुं शक्योऽसीत्यत आह—साधनान्तरव्यावृत्त्यर्थस्तुशब्दः । भक्त्यैवानन्यया मदेकनिष्ठया निरतिशयप्रीत्या एवंविधो दिव्यरूपधरोऽहं ज्ञातुं शक्यः शास्त्रतो हे अर्जुन, शक्य अहमिति

५ भाष्योत्कर्षदीपिका ।

कृतस्यातिदुर्लभस्यानुग्रहस्य वैयर्थ्यपरिहाराय श्रीभगवानुवाच । यन्मम रूपं मदनुग्रहेण त्वं दृष्टवानसि तदिदमन्येषां सुष्ठु दुःखेनात्यन्तकष्टेन दर्शनमस्येति सुदुर्दर्शं यतोत्युत्तमाः सात्त्विकास्तद्दर्शनार्थिनश्च देवा इन्द्रादयोऽपि न तत्त्वमिव दृष्टवन्तो न च द्रक्ष्यन्तीत्याशयेनाह—**देवा इति** ॥५२॥ तत्र हेत्वाकाङ्क्षायामाह—**नेति** । यथा विश्वरूपं मां त्वं दृष्टवानसि । एवंविधोऽहं न वेदैः ऋगादिभिः न तपसोग्रेण चान्द्रायणादिना न दानेन गोदानादिना नचेज्यया यज्ञेन पूजया वाऽन्यैर्मदत्यन्तानुग्रहरहितैर्द्रष्टुं शक्यः ॥ ५३ ॥ उक्तसाधनैस्त्वं द्रष्टुमशक्यस्तर्हि केनोपायेन द्रष्टुं शक्य इत्यत आह । भक्त्या तु भक्तीतरसाधनव्यवच्छेदार्थस्तुशब्दः । किं भक्तिमात्रं त्वद्दर्शनहेतुरित्यतस्तां विशिनष्टि । अनन्यया भगवतो वासुदेवादन्यत्र पृथक्कदाचिदपि या न भवति तया ईश्वरे परानुर-

६ श्रीधरीव्याख्या ।

दर्शयन् श्रीभगवानुवाच—**सुदुर्दर्शमिति** । यन्मम विश्वरूपं त्वं दृष्टवानसि इदं सुदुर्दर्शमत्यन्तं द्रष्टुमशक्यम् । अतो देवा अप्यस्य रूपस्य सर्वदा दर्शनमिच्छन्ति न केवलं पुनरिदं पश्यन्ति ॥ ५२ ॥ तत्र हेतुः—**नाहमिति** । स्पष्टार्थः ॥ ५३ ॥ केनोपायेन तर्हि द्रष्टुं शक्य इति तत्राह—**भक्त्येति** । अनन्यया मदेकनिष्ठया भक्त्या त्वेवंभूतो विश्वरूपोऽहं तत्त्वेन परमार्थतो ज्ञातुं शक्यः शास्त्रतो

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥

१ श्रीमच्छांकरभाष्यम् ।

भक्तिस्तया भक्त्या शक्योऽहमेवंविधो विश्वरूपप्रकारो हेऽर्जुन, ज्ञातुं शास्त्रतो न केवलं ज्ञातुं शास्त्रतो द्रष्टुं च साक्षात्कर्तुं तत्त्वेन तत्त्वतः प्रवेष्टुं च मोक्षं च गन्तुं परन्तप ॥ ५४ ॥ अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते—मत्कर्मकृदिति । मत्कर्मकृन्मदर्थं कर्म मत्कर्म तत्करोतीति मत्कर्मकृत् मत्परमः करोति भृत्यः स्वामिकर्म न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते, अयं तु मत्कर्मकृन्मामेव परमां गतिं प्रतिपद्यत इति मत्परमोऽहं परमः परा गतिर्यस्य सोऽयं मत्परमस्तथा मद्भक्तो मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन भजत इति मद्भक्तः सङ्गवर्जितो धनमित्रपुत्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेहस्तद्वर्जितो निर्वैरो निर्ग-

२ आनन्दगिरिव्याख्या ।

भक्तिमेव व्यनक्ति—**सर्वैरिति** ॥ ५४ ॥ भक्त्या त्विति विशेषणादन्येषामहेतुत्वमाशङ्क्याह—**अधुनेति** । समुच्चित्य संक्षिप्य पुञ्जीकृत्येति यावत् । मत्कर्मकृदित्युक्ते मत्परमत्वमार्थिकमिति पुनरुक्तिरित्याशङ्क्याह—**करोतीति** । भगवानेव परमा गतिरिति निश्चयवतस्तत्रैव निष्ठा सिध्यतीत्याह—**तथेति** । न तत्रैव सर्वप्रकारैर्भजनं धनादिस्नेहाकृष्टत्वादित्याशङ्क्याह—**सङ्गेति** । द्वेषपूर्वकानिष्टाचरणं वैरमनपकारिषु तदभावेऽपि भवत्येवापकारिष्विति शङ्कित्वाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भिचरितया । अखण्डयेत्यर्थः । अहमेवंविधो ज्ञातुं शक्यस्त्वंपदार्थशोधकशास्त्रतः । द्रष्टुं शक्यो ध्यानतः । तत्त्वेन याथात्म्येन प्रवेष्टुं शक्यस्तत्त्वमसिवाक्यार्थजज्ञानतः । हे परमज्ञानशत्रुं तापयतीति परंतप ॥ ५४ ॥ शास्त्रसर्वस्वं संगृह्णाति—**मत्कर्मकृदिति** । मदर्थमेव कर्माणि करोतीति मत्कर्मकृत् । अहमेव परमो निष्कलः प्राप्यो यस्येति स मत्परमः । एतेन कृत्स्नः कर्मयोगो ध्यानयोगश्च त्वंपदार्थशोधक उक्तः । मम भक्त आराधनकृदित्युपासनाका-

४ मधुसूदनीव्याख्या ।

छान्दसो विसर्गलोपः पूर्ववत् । न केवलं शास्त्रज्ञो ज्ञातुं शक्योऽनन्यया भक्त्या किंतु तत्त्वेन द्रष्टुं च स्वरूपेण साक्षात्कर्तुं च शक्यो वेदान्तवाक्यश्रवणमनननिदिध्यासनपरिपाकेण । ततश्च स्वरूपसाक्षात्कारादविद्यातत्कार्यनिवृत्तौ तत्त्वेन प्रवेष्टुं च मद्रूपतयैवाप्तुं चाहं शक्यो हे परंतप, अज्ञानशत्रुदमनेऽतिप्रवेशयोग्यतां सूचयति ॥ ५४ ॥ अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थिनामनुष्ठानाय पुञ्जीकृत्योच्यते—मदर्थं कर्म वेदविहितं करोतीति मत्कर्मकृत् । स्वर्गादिकामनायां सत्यां कथमेवमिति नेत्याह । मत्परमः अहमेव परमः प्राप्तव्यत्वेन निश्चितो नतु स्वर्गादिर्यस्य सः । अतएव मत्प्राप्त्याशया मद्भक्तः सर्वैः प्रकारैर्मम भजनपरः । पुत्रादिषु स्नेहे सति कथमेवं स्यादिति नेत्याह—सङ्गवर्जितः बाह्यवस्तुस्पृहा शून्यः । शत्रुषु द्वेषे सति कथमेवं

५ भाष्योत्कर्षदीपिका ।

क्तिलक्षणया वासुदेवादन्यत्र सर्वकरणप्रवृत्तिनिवारकया अहमेवंविधो विश्वरूपधरः शास्त्रेणासंभावनादिनिवृत्तिपुरःसरं द्रष्टुं च लमिव साक्षात्कर्तुं च तत्त्वेन तत्त्वतः प्रवेष्टुं च । श्रवणादिना तत्त्वसाक्षात्कारेण मोक्षमेकीभावलक्षणं जीवन्मुक्तिं विदेहकैवल्याख्यं च गन्तुमित्यर्थः । ननु 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या साधनत्वेन बोधितानां वेदानुवचनादीनां का गतिरित्याशङ्क्य साङ्गैस्तैरेतजन्मनि जन्मान्तरे वा कृतैश्चित्तशुद्ध्यामप्यनन्या मनआदिशत्रुतापनशमदमादिसंपन्ना भक्तिस्ततो मत्स्वरूपज्ञानादीति भक्तिद्वारा तेषां साधनत्वाददोष इत्याशयेन संबोधनाभ्यां समाधत्ते हेऽर्जुन हे परंतपेति ॥५४॥ इदानीं शास्त्रसारभूतस्य गीताशास्त्रस्य सारभूतमर्थं निःश्रेयसप्रयोजनकं संगृह्यावश्यमनुष्ठानायातिकारुणिको भगवानाह । मदर्थं मत्प्रीत्यर्थं वेदविहितं कर्म करोतीति मत्कर्मकृत् । यतोऽहमेव परमः प्रकृष्टः प्राप्यो यस्य नतु स्वर्गादिः स तथा मत्प्राप्तिसाधनेन सर्वात्मना सर्वप्रकारैः सर्वोत्साहेन मद्भजनेन युक्तः धनाद्यासक्त्या भगवद्भजनं न सिध्यत्यत आह । धनपुत्रमित्रकलत्रादिषु सङ्ग-

६ श्रीधरीव्याख्या ।

द्रष्टुं प्रत्यक्षतः प्रवेष्टुं च तादात्म्येन शक्यः नान्यैरुपायैः ॥ ५४ ॥ अतः सर्वशास्त्रसारं परमं रहस्यं शृण्वित्याह—**मत्कर्मकृदिति** ।

७ अभिनवगुप्ताचार्यव्याख्या ।

भक्त्या त्वनन्ययेत्यादि ॥ ५४ ॥ मत्कर्मकृदिति । सकलोपसंहारान्ते परमप्रशान्तरूपां ब्रह्मतत्त्वस्थितिं ददातीत्युपसंहारे भगवतः सौम्यता अविद्यमानान्यज्ञेयरमणीया येषां भक्तिः परिस्फुरति तेषां वासुदेवः सर्वमित्यादिपूर्वाभिहितोपदेशचमत्काराद्विश्वात्मकं वासुदेवतत्त्व-

१ श्रीमच्छांकरभाष्यम् ।

**तवैरोऽतः सर्वभूतेषु शत्रुभावरहित आत्मनोऽत्यन्तापकारप्रवृत्तेष्वपि य ईदृशो मद्भक्तः स मामेति अहमेव तस्य परा गतिर्नान्या कदाचिद्भवत्ययं तवोपदेश इष्टो मयोपदिष्टो हे पाण्डवेति ॥ ५५ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥ ११ ॥**

२ आनन्दगिरिव्याख्या ।

**आत्मन इति** । एतच्च सर्वं संक्षिप्यानुष्ठानार्थमुक्तमेवमनुतिष्ठतो भगवत्प्राप्तिरवश्यंभाविनीत्युपसंहरति—**अयमिति** । तदेवं भगवतो विश्वरूपस्य सर्वात्मनः सर्वज्ञस्य सर्वेश्वरस्य मत्कर्मकृदित्यादिन्यायेन क्रममुक्तिफलमभिध्यानमभिवदता तत्पदवाच्योऽर्थो व्यवस्थापितः ॥ ५५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ एकादशोऽध्यायः ॥ ११ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ण्डार्थसंग्रहः । सङ्गवर्जित इत्यनेन एकान्तभगवद्ध्याननिष्ठ इत्युक्तम् । निर्वैर इति विश्वं भगवदात्मना पश्येदित्युक्तम् । अन्यथा भेदबुद्धिमतो निर्वैरत्वासंभवात् । एवंभूतो यः स मां तत्पदलक्ष्यार्थभूतमखण्डानन्दैकघनमेति प्राप्नोति प्रत्यगभेदेन । हे पाण्डव विशुद्धवंशज । त्वमेवैतज्ज्ञातुं शक्नोषीति भावः ॥ ५५ ॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे एकादशोऽध्यायः ॥ ११ ॥

४ मधुसूदनीव्याख्या ।

स्यादिति नेत्याह—निर्वैरः सर्वभूतेषु अपकारिष्वपि द्वेषशून्यो यः स मामेत्यभेदेन हे पाण्डव, अयमर्थस्त्वया ज्ञातुमिष्टो मयोपदिष्टो नातःपरं किंचित्कर्तव्यमस्तीत्यर्थः ॥ ५५ ॥

दृशः कर्मभूतं हि यत्तच्च विश्वं स्वयं रूप्यते नान्यतस्तच्च रूपम् ।
जगद्यः स्वभासा निरस्यात्मरूपं ददावादरात्काशिराजं भजे तम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां विश्वरूपदर्शननिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥

५ भाष्योत्कर्षदीपिका ।

वर्जित आसक्तिरहितः भूतेषु सवैरस्य मदनन्या भक्तिरतिदूरतरेत्याह । सर्वभूतेषु निर्वैरः साधारणेषु स्वस्यात्यन्तापकारकेषु अपि शत्रुभाववर्जितः य ईदृशो दम्भरहितो मद्भक्तः स मामेति । अभेदेन साक्षात्करोति । अहमेव तस्य परा गतिर्नान्येत्यर्थः । अयं सारसंग्रहो मया तवोपदिष्टः । यतो भवान् मत्पितृभामापत्यत्वादतिप्रेमास्पद इत्याशयेनाह—पाण्डवेति ॥ ५५ ॥ तदनेनैकादशाध्यायेन विश्वरूपप्रतिपादकेन सर्वेश्वरस्य सर्वात्मनः सर्वज्ञस्यानन्यया भक्त्या तत्स्वरूपज्ञानादिप्रदर्शकेन तत्पदवाच्योऽर्थो निरूपितः ॥

चिदानन्दे यत्रादितिजनरयक्षासुरयुतं विभातं त्रैलोक्यं सति भवति नाश्चर्यजनकम् ।
अनन्ताण्डाधारे तमजमजरात्मानममृतं शिवं कृष्णं वन्दे निखिलहृदिगं द्रष्टुमभयम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां एकादशोऽध्यायः ॥ ११ ॥

६ श्रीधरीव्याख्या ।

मदर्थं कर्म करोतीति मत्कर्मकृत्, अहमेव परमः पुरुषार्थो यस्य सः, ममैव भक्तो मामेवाश्रितः, पुत्रादिषु सङ्गवर्जितो, निर्वैरश्च सर्वभूतेषु एवंभूतो यः स मां प्राप्नोति नान्य इति ॥ ५५ ॥

देवैरपि सुदुर्दर्शं तपोज्ञानादिकोटिभिः । भक्ताय भगवानेवं विश्वरूपमदर्शयत् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां एकादशोऽध्यायः ॥ ११ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

मयन्नत एव बोधपदवीमवतरतीति शिवम् ॥ ५५ ॥ अत्र संग्रहश्लोकः । शुद्धाशुद्धविमिश्रार्थसंविदैक्यप्रकाशनात् । भूर्भुवःस्वस्त्रयीं पश्यन्समत्वेन समो मुनिः ॥ इति श्रीमद्राजानकाचार्याभिनवगुप्तविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे एकादशोऽध्यायः ॥ ११ ॥



# द्वादशोऽध्यायः ।

अर्जुन उवाच ।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥

१ श्रीमच्छांकरभाष्यम् ।

द्वितीयप्रभृतिष्वध्यायेषु विभूत्यन्तेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषणस्योपासनमुक्तं सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्रतत्रोक्तं विश्वरूपाध्याये त्वैश्वरमाद्यं समस्तजगदात्मरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया, तच्च दर्शयित्वोक्तवानसि मत्कर्मकृदित्याद्यतोऽहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीत्यर्जुन उवाच—

२ आनन्दगिरिव्याख्या ।

अशोच्यानित्यादिषु विभूत्यध्यायावसानेष्वध्यायेषु निरुपाधिकस्य ब्रह्मणो ज्ञेयत्वेनानुसंधानमुक्तमिति वृत्तं कीर्तयति—**द्वितीयेति** । अतिक्रान्तेषु तत्तदध्यायेषु सोपाधिकस्यापि ब्रह्मणो ध्येयत्वेन प्रतिपादनं कृतमित्याह—**सर्वेति** । सर्वस्यापि प्रपञ्चस्य योगो घटना जन्मस्थितिभङ्गप्रवेशनियमनाख्या तत्रैश्वर्यं सामर्थ्यं तेन सर्वत्र ज्ञेये प्रतिबन्धविधुरया ज्ञानशक्त्या विशिष्टस्य सत्त्वाद्युपहितस्य भगवतो ध्यानं तत्र तत्र प्रसङ्गमापाद्य मन्दमध्यमयोरनुग्रहार्थमुक्तमित्यर्थः । एकादशे वृत्तमनुवदति—**विश्वरूपेति** । अध्यायान्ते भगवदुपदेशमनुवदति—**तच्चेति** । ( अतीतानन्तरश्लोकेनोक्त-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सप्तममारभ्यैतावता ग्रन्थेन तत्पदवाच्यार्थो निरूपितः । इदानीं तत्पदार्थशोधनमुपासनाकाण्डं च समापयिष्यन्निहार्थतः प्राधान्येन तत्पदलक्ष्यमर्थं तद्विदां लक्षणानि च प्रदर्श्यन्ते । शब्दतस्तु लौकिकबुद्ध्यनुसारेण तत्पदवाच्य-

४ मधुसूदनीव्याख्या ।

पूर्वाध्यायान्ते 'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव' इत्युक्तं । तत्र मच्छब्दार्थे संदेहः किं निराकारमेव सर्वस्वरूपं वस्तु मच्छब्देनोक्तं भगवता किं वा साकारमिति । उभयत्रापि । प्रयोगदर्शनात् 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इत्यादौ निराकारं वस्तु व्यपदिष्टं । विश्वरूपदर्शनानन्तरं च 'नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा' इति साकारं वस्तु ।

५ भाष्योत्कर्षदीपिका ।

यत्कृपालवमात्रेण मूर्खो भवति पण्डितः । तं वन्दे परमानन्दं विष्णुं जिष्णुं शिवं गुरुम् ॥ १ ॥

द्वितीयाद्यध्यायेषु विभूत्यध्यायान्तेषु 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन । निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् । यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः । यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते । नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः । यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा । नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति । तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः । योऽन्तः सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः । स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति । यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति । सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः । सर्वथा वर्तमानोऽपि स योगी मयि वर्तते । तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ।' 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । परं भावमजानन्तो ममाव्ययमनुत्तमम् । परस्तस्मात्तु भावोऽन्योऽव्यक्तो व्यक्तात्सनातनः ७' 'यः सर्वेषु भूतेषु नश्यत्सु न

६ श्रीधरीव्याख्या ।

निर्गुणोपासनस्यैवं सगुणोपासनस्य च । श्रेयः कतरदित्येवं निर्णेतुं द्वादशोद्यमः ॥ १ ॥

पूर्वाध्यायान्ते 'मत्कर्मकृन्मत्परमः' इत्येवं भक्तिनिष्ठस्य श्रेष्ठत्वमुक्तम् । 'कौन्तेय प्रतिजानीहि' इत्यादिना तत्र तस्यैव श्रेष्ठत्वं वर्णितम्, तथा 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्यादिना 'सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' इत्यादिना च ज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम् । एवमुभयोः श्रेष्ठ्येऽपि विशेषजिज्ञासया भगवन्तं प्रत्यर्जुन उवाच—**एवमिति** । एवं सर्वकर्मार्पणादिना सततं युक्तास्त्व-

१ श्रीमच्छांकरभाष्यम् ।

**एवमिति। एवमित्यतीतानन्तरश्लोकेनोक्तमर्थं परामृशति—मत्कर्मकृदित्यादिना। एवं सततयुक्ता नैरन्तर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहिताः सन्तः प्रवृत्ता इत्यर्थः। ये भक्ता अनन्यशरणाः सन्तस्त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति ये चान्येऽपि त्यक्तसर्वैषणाः संन्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमकरणगोचरं। यद्धि लोके करणगोचरं तद्व्यक्तमुच्यते। अश्नोतेर्धातोस्तत्कर्मकत्वादिदं त्वक्षरं तद्विपरीतं शिष्टैश्चोच्यमानैर्विशेषणैर्विशिष्टं तद् ये चापि**

२ आनन्दगिरिव्याख्या ।

मर्थं परामृशति—**मत्कर्मकृदिति**।) यथाधिकारं तारतम्योपेतानि साधनानि नियन्तुमध्यायान्तरमवतारयन्नादौ प्रश्नमुत्थापयति—**अत इति**। सोपाधिकध्यानस्य निरुपाधिकज्ञानस्य चोक्तत्वादित्यर्थः। एवं शब्दार्थमुक्त्वा तमनूद्य सततयुक्ता इति भागं विभजते—**एवमिति**। ये भक्ता इत्यनूद्य व्याचष्टे—**अनन्येति**। मन्दमध्यमाधिकारिणः सगुणशरणानुक्त्वा निर्गुणनिष्ठानुत्तमाधिकारिणो निर्दिशति—**ये चेति**। यथाविशेषितमनिर्देश्यं सर्वत्रगमचिन्त्यं कूटस्थमित्यादिवक्ष्यमाणविशेषणविशिष्टमित्यर्थः। न क्षरत्यश्नुते वेत्यक्षरम्। अव्यक्तमित्येतद्व्याचष्टे—**निरस्तेति**। करणागोचरत्वं व्यतिरेकद्वारा स्फोरयति—**यद्धीति**। यथाविशेषितमित्युक्तं स्पष्टयति—**शिष्टैश्चेति**। पूर्वार्धगतक्रियापदस्यानुषङ्गं सूचयति—**तदिति**। सर्वे तावदेते योगं समाधिं विन्दन्तीति योगविदः। के पुनरतिशयेनैषां

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

स्यैवोपासनादिकं प्रपञ्चयते। तत्र पूर्वाध्यायान्ते 'मत्कर्मकृन्मत्परमः' इत्यादिना स्वभजनमुक्तम्। तत्र मच्छब्दार्थः किं सगुणमुत निर्गुणं ब्रह्म। उभयत्राप्यस्मच्छब्दस्य पूर्वं प्रयोगदर्शनात्संदिहानः पृच्छति—**एवमिति**। एवमित्य-

४ मधुसूदनीव्याख्या ।

उभयोश्च भगवदुपदेशयोरधिकारिभेदेनैव व्यवस्थया भवितव्यम्। अन्यथा विरोधात्। तत्रैवं सति मया मुमुक्षुणा किं निराकारमेव वस्तु चिन्तनीयं किंवा साकारमिति स्वाधिकारनिश्चयाय सगुणनिर्गुणविद्ययोर्विशेषबुभुत्सया अर्जुन उवाच—एवं मत्कर्मकृदित्याद्यनन्तरोक्तप्रकारेण सततयुक्ता नैरन्तर्येण भगवत्कर्मादौ सावधानतया प्रवृत्ता भक्ताः साकारवस्त्वेकशरणाः सन्त-

५ भाष्योत्कर्षदीपिका ।

विनश्यति। अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ८' 'राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्। प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्। अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप। अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ९' 'न मे विदुः सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां महर्षीणां च सर्वशः। यो मामजमनादिं च वेत्ति लोकमहेश्वरम्। असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते १०' इत्यादिना परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषस्योपासनमुक्तम्। 'एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मत्तः परतरं नान्यत्किंचिदस्ति धनंजय। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ११' 'कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः। सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्। प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव। भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ८' 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः। मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च १०' इत्यादिना तत्रतत्र सर्वयोगैश्वर्यादिमत्सत्त्वोपाधिकस्येश्वरस्योपासनमुक्तम्। विश्वरूपाध्याये च ऐश्वर्यं परमेश्वरस्योपासनार्थं प्रदर्शितम्। तच्च दर्शयित्वा 'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः। निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव'इत्युक्तम्। अतः अनयोर्निर्विशेषसविशेषोपासनरूपयोः पक्षयोः को वा विशिष्टतर इति ज्ञातुकामोऽर्जुन उवाच—**एवमिति**। एवं मत्कर्मकृदित्याद्युक्तप्रकारेण सततयुक्ताः नैरन्तर्येण भगवत्कर्मादौ समाधानतया प्रवृत्ता ये भक्ता अनन्यशरणाः सन्तस्त्वां तत्र तत्र प्रदर्शितं सर्वयोगैश्वर्यज्ञानशक्तिमत्सत्त्वोपाधिमीश्वरं विश्वरूपं पर्युपासते ध्यायन्ति ये च त्यक्तपुत्रवित्तलोकैषणाः संन्यस्तसर्वकर्माणो द्वितीयप्रभृतिष्वध्यायेषूक्तमक्षरं न क्षरतीत्यश्नुते वेत्यक्षरं ब्रह्माद्वयं परमात्मानं विध्वस्तसर्वविशेषमव्यक्तं इन्द्रियैर्न व्यज्यत इति अव्यक्तमकरणगोचरं पर्युपासते प्रत्यगभिन्नत्वेनानुसंधानं कुर्वन्ति तेषामुभयेषां मध्ये केऽतिशयेन योगज्ञा इत्यर्थः। अत्र केचित्पूर्वाध्यायान्ते मत्कर्मकृदित्युक्तं तत्र मच्छब्दार्थे संदेहः किं निराकारमेव सर्वस्वरूपं वस्तु मच्छब्देनोक्तं भगवता, किंवा साकारमिति। उभयत्रापि पूर्वं प्रयोगदर्शनात्। उभयोश्च भगवदुपदेशयोरधिकारिभेदेनैव व्यवस्थया भवितव्यम्। तत्रैवंसति मया मुमुक्षुणा किं निराकारमेव वस्तु चिन्तनीयं किंवा साकारमिति निश्चयाय सगुणनिर्गुणविद्ययोर्विशेषबुभुत्सयाऽर्जुन आह—**एवमिति**। एवं मत्कर्मकृदित्याद्यनन्तरोक्तप्रकारेणेत्यादि

६ श्रीधरीव्याख्या ।

त्रिष्ठाः सन्तो ये भक्तास्त्वां विश्वरूपं सर्वज्ञं सर्वशक्तिं पर्युपासते ध्यायन्ति, ये चाप्यक्षरं ब्रह्माव्यक्तं निर्विशेषमुपासते तेषामुभयेषां

१ नीलकण्ठः.

श्रीभगवानुवाच।

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥ २॥**

१ श्रीमच्छांकरभाष्यम्।

**पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः केऽतिशयेन योगविद इत्यर्थः॥ १॥ श्रीभगवानुवाच। ये त्वक्षरोपासकाः सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु तान्प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः। ये त्वितरे—मयि विश्वरूपे परमेश्वर आवेश्य समाधाय मनो ये भक्ताः सन्तो मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ता अतीतानन्तराध्यायान्तोक्तश्लो-**

२ आनन्दगिरिव्याख्या।

मध्ये योगविदो योगिन इति पृच्छति—**केऽतिशयेनेति**॥ १॥ किमनयोर्योगयोर्मध्ये सुशक्यो योगो वा पृच्छयते किं वा साक्षान्मोक्षहेतुरिति विकल्प्य क्रमेणोत्तरं भगवानुक्तवानित्याह—**श्रीभगवानिति**। यदि द्वितीयस्तथाविधयोगस्य वक्ष्यमाणत्वान्न प्रष्टव्यतेत्याह—**ये त्वक्षरेति**। यद्याद्यस्तत्राह—**ये त्विति**। सर्वयोगेश्वराणां सर्वेषां योगमधितिष्ठतां योगिनामित्यर्थः। विमुक्ता त्यक्ता रागाद्याख्या क्लेशनिमित्तभूता तिमिरशब्दितानाद्यज्ञानकृता दृष्टिरविद्या मिथ्या धीर्यस्य तमिति विशिनष्टि—**विमुक्तेति**। नित्ययुक्तत्वं साधयति—**अतीतेति**। तत्रोक्तो योऽर्थो

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

व्यवहितं मत्कर्मकृदित्यादिनोक्तं प्रकारं परामृशति। अनेन प्रकारेण ये सततयुक्ता नित्यं समाहितचित्ता भक्ताः सगुणवेदिनस्त्वां पर्युपासते, ये चाप्यक्षरमस्थूलादिलक्षणमव्यक्तं बुद्ध्याद्यगोचरमुपासते तेषां मध्ये योगवित्तमाः के कतरे इत्यर्थः॥ १॥ निर्गुणस्य दुष्प्रापत्वोक्त्यैव श्रेष्ठत्वं सूचयन् सगुणप्राशस्त्यं च शब्दतो दर्शयन् श्रीभगवानुवाच—**मयीति**। मयि सगुणे ब्रह्मणि मन आवेश्य प्रवेश्य ये नित्ययुक्ताः सदोद्युक्ता मां परमेश्वरमुपासते चिन्तयन्ति श्रद्धया आस्तिक्यबुद्ध्या परया सात्त्विक्या अवश्यं परमात्मायमाराधितोऽस्मांस्तारयिष्यतीत्येवं निश्चय-

४ मधुसूदनीव्याख्या।

स्त्वामेवंविधं साकारं ये पर्युपासते सततं चिन्तयन्ति ये चापि सर्वतो विरक्तास्त्यक्तसर्वकर्माणोऽक्षरं न क्षरत्यश्नुते वेत्यक्षरं 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्' इत्यादिश्रुतिप्रतिषिद्धसर्वोपाधिरहितं निर्गुणं ब्रह्म। अतएवाव्यक्तं सर्वकरणागोचरं निराकारं त्वां पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमा अतिशयेन योगविदो योगं समाधिं विन्दति विदन्तीति वा योगविद उभयेऽपि। तेषां मध्ये के श्रेष्ठा योगिनः। केषां ज्ञानं मयानुसरणीयमित्यर्थः॥ १॥ तत्र सर्वज्ञो भगवानर्जुनस्य सगुणविद्यायामेवाधिकारं पश्यंस्तं प्रति तां विधास्यति, यथाधिकारं तारतम्योपेतानि च साधनानि। अतः प्रथमं साकारब्रह्मविद्यां प्ररोचयितुं स्तुवन् प्रथमाः श्रेष्ठा इत्युत्तरं श्रीभगवानुवाच—मयि भगवति वासुदेवे परमेश्वरे सगुणे ब्रह्मणि मन आवेश्यानन्यशरणतया निरतिशयप्रियतया च प्रवेश्य हिङ्गुलरङ्ग इव जतु तन्मयं कृत्वा ये मां सर्वयोगेश्वराणामीश्वरं

५ भाष्योत्कर्षदीपिका।

वर्णयन्ति तद्विचार्यम्। एवं सततयुक्ता ये भक्ता इत्यत्र एवमित्यव्यवहितं मत्कर्मकृदित्यादिनोक्तं प्रकारं परामृशन्नर्जुनः मच्छब्दार्थे संदेहवानिति वक्तुमशक्यत्वात्। नचैवं सततयुक्ता ये भक्तास्त्वां सगुणं पर्युपासते, ये चाप्येवं सततयुक्ता अक्षरमव्यक्तं पर्युपासते तेषामुभयेषां के योगवित्तमाः। मत्कर्मकृदित्यत्र भगवतो मच्छब्दार्थः को वाभिप्रेत इत्यर्थेनादोष इति वाच्यम्। येऽपि सर्वतो विरक्तास्त्यक्तसर्वकर्माणोऽक्षरमिति स्वपरग्रन्थविरोधात् एवमित्यस्योत्तरार्धेनान्वेतुमशक्यत्वात्। किंच संनिहितेन सगुणप्रतिपादकप्रकरणेन मत्कर्मकृदिति लिङ्गेन च निर्णयस्य सत्त्वात्संदेह एव न घटते प्रत्युत्तरं चैतत्संशयानुरूपं न भवतीतिदिक्॥ १॥ सविशेषनिर्विशेषोपासनयोः सुशकत्वगुणेन किमुपासनं श्रेष्ठमिति पृच्छते किंवा साक्षान्मोक्षहेतुत्वेन गुणेनेति विकल्प्य, साक्षान्मोक्षहेतुत्वेन श्रैष्ठ्यं निर्विशेषोपासनस्योक्तं वक्ष्यमाणं च सुशकत्वेन तु प्रथमस्य शृण्वित्याशयवान् श्रीभगवानुवाच। मयि विश्वरूपे परमेश्वरे त्रिगुणमायानटीनर्तके सर्वात्मनि परमप्रेमास्पदे ये मन आवेश्य समाधाय भक्ताः सन्तो मां समस्तयोगादीश्वराधीश्वरं सर्वज्ञं त्यक्तरागादिरूपक्लेशनिमित्तभूतानाद्यज्ञानाविद्यालक्षणमिथ्यादृष्टिं नित्ययुक्ताः 'मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः। निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव' इत्येवं सततयुक्ताः श्रद्धया परया प्रकृष्टया ईश्वरभजनादेवोद्धार इति निश्चयापन्ना उपासते ते मम युक्ततमाः

६ श्रीधरीव्याख्या।

मध्ये अतिशयेन के योगविदः। श्रेष्ठा इत्यर्थः॥ १॥ तत्र प्रथमाः श्रेष्ठा इत्युत्तरं श्रीभगवानुवाच—**मयीति**। मयि परमेश्वरे सर्व-

७ अभिनवगुप्ताचार्यव्याख्या।

एवमुक्तेन नयेन ये सेश्वरब्रह्मोपासकाः ये च केवलमात्ममात्रमुपासते तेषां विशेषाख्यानाय प्रश्नः श्रीभगवानुवाच—मय्यावेश्येति।

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कार्थन्यायेन सततयुक्ताः सन्त उपासते श्रद्धया परया प्रकृष्टयोपेतास्ते मे मम मता अभिप्रेता युक्ततमा इति । नैरन्तर्येण हि ते मच्चित्ततयाऽहोरात्रमतिवाहयन्त्यतो युक्तं तान्प्रति युक्ततमा इति वक्तुम् ॥ २॥ किमितरे युक्ततमा न भवन्ति न किंतु तान्प्रति यद्वक्तव्यं तच्छृणु ये त्वक्षरमनिर्देश्यमव्यक्तमव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यतेऽतोऽनिर्देश्यमव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तादुपासते । उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत्समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तदुपासनमाचक्षते । अक्षरस्य विशेषणमाह सर्वत्रगं व्योमवद्व्याप्यचिन्त्यं चाव्यक्तत्वादचिन्त्यम् । यद्धि करणगोचरं तन्मनसापि चिन्त्यं तद्विपरीतत्वा-

२ आनन्दगिरिव्याख्या ।

मत्कर्मकृदित्यादि तस्मिन्निश्चयेनायनमायो गमनं तस्य नियमेनानुष्ठानं तेनेत्यर्थः । उपासते मयि स्मृतिं सदा कुर्वन्तीत्यर्थः । उक्तोपासकानां युक्ततमत्वं व्यनक्ति—**नैरन्तर्येणेति** । तदेव स्फुटयति —**अहोरात्रमिति** । अह्नि च रात्रौ चातिमात्रमतिशयेन मामेव विषयान्तरविमुक्ताश्चिन्तयन्तीत्यर्थः ॥ २ ॥ वक्ष्यामस्तदुपरिष्टादित्युक्तं प्रश्नपूर्वकं प्रकटयति—**किमित्यादिना** । पूर्वेभ्यः फलतो विशेषार्थस्तुशब्दः । अव्यक्तत्वमनिर्देश्यत्वे हेतुरित्याह—**अव्यक्तत्वादिति** । यतोऽव्यक्तमतोऽनिर्देश्यमिति योजना । निरुपाधिकेऽक्षरे कथमुपासनेति पृच्छति—**उपासनमिति** । शास्त्रतोऽक्षरं ज्ञात्वा तदुपेत्यात्मत्वेनोपगम्योपासते तथैव तिष्ठन्ति पूर्णचिदेकतानमक्षरमात्मानमेव सदा भावयन्तीत्येतदिह विवक्षितमित्याह—**यथेति** । अव्यक्तत्वमेवाचिन्त्यत्वेऽपि हेतुरित्याह—**यद्धीति** । कूटस्थशब्दस्यो-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रूपया श्रद्धया उपेतास्ते मे मम 'ज्ञानी त्वात्मैव मे मतम्' इति ज्ञानिनमात्मत्वेनैव पश्यतो मूर्खेष्वपि कारुण्यात्पक्षपातवतः सर्वज्ञस्य युक्ततमा मताः ॥ २ ॥ एवमुपासकांस्तुत्वा अव्यक्तविदां ज्ञानिनां दौर्लभ्यं श्लोकत्रयेणाह—**येत्विति** । तुशब्दः सगुणाद्वैलक्षण्यार्थः । अक्षरं 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्' इत्यादिश्रुत्या सर्वधर्मशून्यं निरूपितम् । अतएवानिर्देश्यं निर्देष्टुमशक्यं वाचा । अव्यक्तं च वाचामगोचरत्वाद्बुद्धेरप्यविषय इत्यर्थः । तथाच श्रुतिः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति । ब्रह्मणो वाङ्मनसातीतत्वं दर्शयति ।

४ मधुसूदनीव्याख्या ।

सर्वज्ञं समस्तकल्याणगुणनिलयं साकारं नित्ययुक्ताः सततोद्युक्ताः श्रद्धया परया प्रकृष्टया सात्त्विक्योपेताः सन्त उपासते सदा चिन्तयन्ति ते युक्ततमा मे मम मता अभिप्रेताः । ते हि सदा मदासक्तचित्ततया मामेव विषयान्तरविमुखाश्चिन्तयन्तोऽहोरात्राण्यतिवाहयन्ति । अतस्त एव युक्ततमा मता अभिमताः ॥ २ ॥ निर्गुणब्रह्मविदपेक्षया सगुणब्रह्मविदां कोऽतिशयो येन त एव युक्ततमास्त एवाभिमता इत्यपेक्षायां तमतिशयं वक्तुं तन्निरूपकान्निर्गुणब्रह्मविदः प्रस्तौति द्वाभ्यां—येऽक्षरं मामुपासते तेऽपि मामेव प्राप्नुवन्तीति द्वितीयगतेनान्वयः । पूर्वेभ्यो वैलक्षण्यद्योतनाय तुशब्दः । अक्षरं निर्विशेषं ब्रह्म वाचक्नवीब्राह्मणे प्रसिद्धं

५ भाष्योत्कर्षदीपिका ।

श्रेष्ठतमा मता अभिप्रेताः यतो विषयान्तरविमुखा नैरन्तर्येण मयि मन आवेश्य मामेवाहर्निशं चिन्तयन्तीत्यत इति भावः । येतु मे मतमिति ज्ञानिनमात्मत्वेनैव पश्यतो मूर्खेष्वपि कारुण्यात्पक्षपातवतः सर्वज्ञस्य युक्ततमा मता इति वदन्ति तेषां पक्षेऽस्मिन्प्रकरणे एतदुक्ते सामञ्जस्यं चिन्त्यम् । भगवता कारुण्यात्पक्षपातेन युक्ततमत्वेनाभिमतानां भगवद्भक्तानां सुशकोपासने प्रवृत्ता अतो युक्ततमा इति वस्तुवृत्त्याऽभिप्रेतस्य श्रेष्ठतमत्वस्यासिद्धेः स्पष्टत्वात् ॥ २ ॥ निर्गुणोपासनस्य साक्षान्मोक्षहेतुत्वेनातिश्रैष्ठ्यं बोधयन् सुशकत्वेन सगुणोपासनस्य श्रेष्ठतां बोधयति—**येत्विति** । तुशब्दो निर्विशेषोपासनस्य सविशेषोपासनफलत्वात्पूर्वेभ्यः श्रैष्ठ्यद्योतनार्थः । ये तु अक्षरं न क्षरत्यश्नुते वेत्यक्षरं 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमपूर्वमनपरम्' इत्यादिश्रुत्या सर्व-

६ श्रीधरीव्याख्या ।

ज्ञत्वादिगुणविशिष्टे मन आवेश्यैकाग्र्यं कृत्वा नित्ययुक्ता मदर्थकर्मानुष्ठानादिना मन्निष्ठाः सन्तः श्रेष्ठया श्रद्धया युक्ता ये मामाराधयन्ति ते युक्ततमा ममाभिमताः ॥ २ ॥ तर्हि इतरे किं न श्रेष्ठा इत्यत आह—**ये त्विति द्वाभ्याम्** । ये त्वक्षरं पर्युपासते ध्यायन्ति तेऽपि

७ अभिनवगुप्ताचार्यव्याख्या ।

माहेश्वर्यविषयो येषां समावेशोऽकृत्रिमस्तन्मयो भावस्ते युक्ततमा मम मता इत्यनेन प्रतिज्ञा क्रियते—ये त्वक्षरमित्यादि ॥ १ ॥ २ ॥ संनियम्येति । ये पुनरक्षरं ब्रह्मोपासते आत्मानं सर्वत्रगमित्यादिभिर्विशेषणैरात्मनः सर्वेश्वरधर्मा आरोप्यन्ते । अतो ब्रह्मोपासका अपि मामेव

१ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम्।

**दचिन्त्यमक्षरं कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटं कूटरूपं कूटसाक्ष्यमित्यादौ कूटशब्दः प्रसिद्धो लोके। तथा चाविद्याद्यनेकसंसारबीजमन्तर्दोषवन्मायाऽव्याकृतादिशब्दवाच्यतया 'मायां**

२ आनन्दगिरिव्याख्या।

क्तार्थत्वं वृद्धप्रयोगतः साधयति—**कूटरूपमिति**। आदिपदमनृतार्थम्। प्रकृते किं तदनृतं कूटशब्दितमित्याशङ्क्याह—**तथाचेति**। उक्तरीत्या कूटशब्दस्यानृतार्थत्वे सिद्धे यदनेकस्य संसारस्य बीजं निरूप्यमाणं नानाविधदोषोपेतं

३ नीलकण्ठव्याख्या (चतुर्धरी)।

पर्युपासते सर्वप्रकारेणोपासते। उपासनमिहानात्मनामदर्शनमेव। यथोक्तं 'अनात्मादर्शनेनैव परात्मानमुपास्महे' इति। ननु तर्ह्येवंविधस्य शून्यकल्पस्य सत्त्वे किं मानमत आह—**सर्वत्रगमिति**। सत्तारूपेण स्फुरणरूपेण च सर्वत्र गतम्। यत्सत्तथा सर्वं सत्तावद्भवति कथं तस्यासत्त्वं वाच्यमिति भावः। नन्वेवं तार्किकाभिमतं सत्तासामान्यमुक्तं स्यात्। तद्धि घटः सन्पटः सन्निति सर्वत्रानुगतं दृश्यत इत्याशङ्क्याह—**अचिन्त्यमिति**। सत्तासामान्यं हि प्रत्यक्षं तदपि ब्रह्मसत्तानुवेधेनैवात्मानं लभते न स्वतःसिद्धं सामान्यं सत् जातिः सती घटत्वं सदिति प्रत्ययात् सामान्यस्य। सदिति प्रत्ययागोचरत्वे तु तस्यासत्त्वापत्त्या पदार्थत्वमेव न स्यात्। तस्मात्सर्वाधिष्ठानभूतं ब्रह्मरूपादिहीनत्वाचिन्तयितुमशक्यं, दूरे तस्य सर्वगतत्वेन प्रत्यक्षगोचरत्वमित्यर्थः। ननु सत्सदिति प्रत्ययस्यान्यथाप्युपपत्तौ सत्तासामान्यवादिनं प्रति तेनाधिष्ठानभूतं ब्रह्म न साधयितुं शक्यमत आह—**कूटस्थमिति**। वस्तुतोऽसदपि सदिवावभासमानं कूटम्। यथा कूटकार्षापणं कूटतुलेति तद्वत्कूटः अहंकारः प्रतीच्यभेदेन भासमानत्वे सति कादाचित्कत्वाद्यो यदभेदेन कदाचिद्भाति स तत्र मिथ्याकल्पितो यथा रज्जूरगस्तथा चायमहंकारो मिथ्यात्वात् कूटसंज्ञस्तत्र तिष्ठति तद्भासकत्वेनेति कूटस्थं चैतन्यम्। अहमनुभवे हि अहंकारो दृश्यतया भाति तद्भासकं च

४ मधुसूदनीव्याख्या।

तस्य समर्पणाय सप्त विशेषणानि। अनिर्देश्यं शब्देन व्यपदेष्टुमशक्यं यतोऽव्यक्तं शब्दप्रवृत्तिनिमित्तैर्जातिगुणक्रियासंबन्धै रहितं, जातिं गुणं क्रियां संबन्धं वा द्वारीकृत्य शब्दप्रवृत्तेर्निर्विशेषे प्रवृत्त्ययोगात्। कुतो जात्यादिराहित्यमत आह—सर्वत्रगं सर्वव्यापि सर्वकारणं। अतो जात्यादिशून्यं परिच्छिन्नस्य कार्यस्यैव जात्यादियोगदर्शनात्, आकाशादीनामपि कार्यत्वाभ्युपगमाच। अतएवाचिन्त्यं शब्दप्रवृत्तेरिव मनोवृत्तेरपि न विषयः, तस्या अपि परिच्छिन्नविषयत्वात्। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः। तर्हि कथं 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति, 'दृश्यते त्वग्र्यया बुद्ध्या' इति च श्रुतिः। 'शास्त्रयोनित्वात्' इति सूत्रं च। उच्यते, अविद्याकल्पितसंबन्धेन शब्दजन्यायां बुद्धिवृत्तौ चरमायां परमानन्दबोधरूपे शुद्धे वस्तुनि प्रतिबिम्बितेऽविद्यातत्कार्ययोः कल्पितयोर्निवृत्त्युपपत्तेरुपचारेण विषयत्वाभिधानात्। अतस्तत्र कल्पितमविद्यासंबन्धं प्रतिपादयितुमाह—कूटस्थं, यन्मिथ्याभूतं सत्यतया प्रतीयते तत्कूटमिति लोकैरुच्यते। यथा कूटकार्षापणः कूटसाक्षित्वमित्यादौ। अज्ञानमपि मायाख्यं सहकार्यप्रपञ्चेन मिथ्याभूतमपि लौकिकैः सत्यतया प्रतीयमानं कूटं तस्मिन्नाध्यासिकेन संबन्धेनाधिष्ठानतया तिष्ठतीति कूटस्थमज्ञानतत्कार्याधिष्ठानमित्यर्थः। एतेन सर्वानुपपत्तिपरिहारः कृतः। अतएव सर्वविकाराणाम-

५ भाष्योत्कर्षदीपिका।

धर्मशून्यत्वेन बोधितं ब्रह्मणो निर्विशेषं स्वरूपं लक्षयति। निर्देष्टुं न शक्यते। शब्दाप्रतिपाद्यमित्यर्थः। यतोऽव्यक्तं प्रत्यक्षादिप्रमाणैर्न व्यज्यत इत्यव्यक्तं रूपादिभिः शब्दप्रवृत्तिनिमित्तैः संज्ञाजातिगुणक्रियासंबन्धैश्च रहितत्वादित्यर्थः। यतोऽनिर्देश्यमतोऽव्यक्तं रूपादिहीनमिति वा। अस्मिन्पक्षे हेतुहेतुमद्भावासामञ्जस्यमभिप्रेत्यायं पक्ष आचार्यैरुपेक्षितः। अव्यक्तत्वं कुत इत्यत आह। सर्वत्रगं सर्वाधिष्ठानत्वात्सर्वस्मिन्नाकाशवद्व्यापकमतः केनापि प्रमाणेन परिच्छेत्तुमशक्यमव्यक्तमित्यर्थः। यद्वा ननु एवं तर्हि शून्यत्वमेव ब्रह्मण आगतमिति तत्राह। सर्वत्रगं सर्वेषु व्यभिचरत्सु घटपटादिष्वव्यभिचरितसद्रूपेण व्यापकं सर्वस्य सत्तास्फूर्तिप्रदातुः शून्यत्वासंभवादिति भावः। अव्यक्तत्वादचिन्त्यं करणागोचरस्य मनसा चिन्तयितुमशक्यत्वात्। तथाच श्रुतिः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति। एतेन सर्वत्रगं चेत्सर्वैः कुतो नावगम्यत इति शङ्का निरस्ता। सर्वप्रमाणापरिच्छेद्यस्यातिकुशलेनापि चिन्तयितुमप्यशक्यस्य सर्वावगतिविषयताया दूरनिरस्तत्वात्। नन्वेवं चेत् 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'दृश्यते त्वग्र्यया

६ श्रीधरीव्याख्या।

मामेव प्राप्नुवन्तीति द्वयोरन्वयः। अक्षरस्य लक्षणमनिर्देश्यमित्यादि। अनिर्देश्यं शब्देन निर्देष्टुमशक्यम्, यतोऽव्यक्तं रूपादिहीनं, सर्व-

७ अभिनवगुप्ताचार्यव्याख्या।

यद्यपि यान्ति तथाप्यधिकतरस्तेषां क्लेशः। आत्मनि किलापहतपाप्मत्वादिगुणाष्टकारोपं विधाय पश्चात्तमेवोपासत इति स्वतःसिद्ध गुणग्राम-

१ श्रीधरः.

**संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' 'मम माया दुरत्यया' इत्यादौ प्रसिद्धं यत्तत्कूटं तस्मिन्कूटे स्थितं कूटस्थं तदध्यक्षतयाथवा राशिरिव स्थितं कूटस्थमतएवाचलं यस्मादचलं तस्माद्ध्रुवं नित्यमित्यर्थः ॥३॥ संनियम्येति । संनियम्य सम्यङ्नियम्य संहृत्येन्द्रियग्राममिन्द्रियसमुदायं सर्वत्र सर्वस्मिन्काले**

२ आनन्दगिरिव्याख्या ।

'तद्धेदं तर्ह्यव्याकृतं', 'मायां तु प्रकृतिं', 'मम माया' इत्यादौ मायाशब्दिततया प्रसिद्धमविद्यादि तदिह कूटशब्दितमित्यर्थः । तत्रावस्थानं केन रूपेणेत्याशङ्कायामाह—**तदध्यक्षतयेति** । कूटस्थशब्दस्य निष्क्रियत्वमर्थान्तरमाह—**अथवेति** । पूर्वमुपजीव्यानन्तरविशेषणद्वयप्रवृत्तिमाह—**अतएवेति** ॥ ३ ॥ कथमक्षरमुपासते तदुपासने वा किं स्यादिति तदाह—**संनियम्येति** । तुल्या हर्षविषादरागद्वेषादिरहिता सम्यग्ज्ञानेनाज्ञानस्यापनीतत्वात् । क्रमपरम्परापे·

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चैतन्यं ततोऽन्यत् । यथा घटभासकोऽर्को घटादन्यस्तद्वत् । एतेन नित्यापरोक्षत्वं ब्रह्मणः साधितम् । नन्वहमनुभव एवात्मविषयोऽतोऽहमर्थ एवात्मा न ततोऽन्य आत्मास्तीत्याशङ्क्याह—**अचलमिति** । अहमर्थो हि सुखी दुःखी परिणाम्याविर्भावतिरोभावशीलश्चातश्चञ्चलः । आत्मा तु न तथा । तस्य तथात्वेऽनिर्मोक्षापत्तेः वह्न्यौष्ण्यवद्दुःखादिधर्मिण आत्यन्तिकदुःखनाशस्य मोक्षस्य धर्मिनाशमन्तरेणासंभवात् । घटे यावद्रूपनाशादर्शनात् । आत्मनस्तिरोभावे च जगदान्ध्यं प्रसज्येत । सुषुप्तावपि तत्रत्यसुखाज्ञानसाक्षित्वेनाविर्भूतस्वरूप एवात्मास्ति । अन्यथा सुप्तोत्थितस्य सुखमहमस्वाप्समिति परामर्शायोगात् । ननु सुषुप्तौ सन्नप्यात्मा न प्रकाशते तत्प्रकाशकस्य मनःसंयोगस्याभावात् । कर्त्रा व्याप्रियमाणं हि करणं क्रियां साधयति । नच सुषुप्तौ करणव्यापारोऽस्ति । तस्मान्नयस्तवास्यस्तक्षेवात्मा(?) सुषुप्तौ ज्ञानादिगुणहीनोऽप्रकाशमानोऽस्त्येवेत्याशङ्क्याह—**ध्रुवमिति** । ननु आत्मा किं सत्तामात्रेणायस्कान्तवत्करणानि प्रवर्तयति उत व्यापाराविष्टः सन् । नाद्यः । इष्टापत्तेः । त्वन्मते च आत्मनः कर्तृत्वासिद्धेः । नान्त्यः । अनित्यत्वापत्तेः । व्यापारो हि स्पन्दः । स च परिच्छिन्नस्यैव युज्यते न विभोः । विभुत्वहाने चाणुत्वानभ्युपगमात् । मध्यमपरिमाणत्वे घटादिवदनित्यतापत्तिः । तस्माद्ध्रुवमप्रच्युतस्वभावमक्षरमित्यर्थः ॥ ३ ॥ एवंविधमक्षरं कथमुपासनीयमित्यत आह—**संनियम्येति** । सर्वत्र काले सर्वदा । एतेन ध्यानस्य नैरन्तर्यमुक्तम् । इन्द्रियग्रामं समनस्का-

४ मधुसूदनीव्याख्या ।

विद्याकल्पितत्वात्तदधिष्ठानं साक्षिचैतन्यं निर्विकारमित्याह—अचलं, चलनं विकारः अचलत्वादेव ध्रुवं अपरिणामि नित्यं । एतादृशं शुद्धं ब्रह्म मां पर्युपासते श्रवणेन प्रमाणगतामसंभावनामपोह्य मननेन च प्रमेयगतामनन्तरं विपरीतभावनानिवृत्तये ध्यायन्ति विजातीयप्रत्ययतिरस्कारेण तैलधारावदविच्छिन्नसमानप्रत्ययप्रवाहेण निदिध्यासनसंज्ञकेन ध्यानेन विषयीकुर्वन्तीत्यर्थः ॥ ३ ॥ कथं पुनर्विषयेन्द्रियसंयोगे सति विजातीयप्रत्ययतिरस्कारोऽत आह—संनियम्य स्वविषयेभ्य उपसंहृत्येन्द्रियग्रामं करण·

५ भाष्योत्कर्षदीपिका ।

बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः', 'मनसैवानुद्रष्टव्यं', 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यः' 'अनन्याश्चिन्तयन्तो मां', 'शास्त्रयोनित्वात्' इत्यादिश्रुतिस्मृतिसूत्राणां का गतिरितिचेत्तत्राह । कूटस्थं दृश्यमानगुणकमन्तर्दोषं वस्तु कूटशब्दप्रतिपाद्यम् । कूटरूपकं कौटसाक्ष्यं कूटकार्षापण इत्यादौ तथाभूते कूटशब्दस्य प्रयोगदर्शनात् । 'तद्धेदं तर्ह्यव्याकृतमासीत्', 'मायाचाविद्या च स्वयमेव भवति', 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं', 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इत्यादौ मायादिशब्दिततया प्रसिद्धमविद्यादि तदिहानेकसंसारबीजमन्तर्दोषं कूटशब्देन ग्राह्यम् । तस्मिन्कूटेऽध्यक्षतयाधिष्ठानतया तिष्ठतीति कूटस्थम् । भाष्येऽविद्यादीति आदिपदात् अहंकारादिकं ग्राह्यम् । तथाच ब्रह्मण्यारोपितस्याविद्यादेर्निवृत्तये उपचारेण निर्विशेषस्य शास्त्रविषयत्वमिति भावः । यद्वा अतएव राशिरिव स्थितं कूटस्थं निर्विकारम् । अतएवाचलं अध्यस्तस्याविद्यादेर्गुणदोषाभ्यां गुणदोषवत्त्वेन स्वस्वरूपान्न चलतीत्यचलमित्यर्थः। अतएव ध्रुवं नित्यम् । सदैकरसमिति यावत् । एतादृशं अक्षरं ये पर्युपासते परि समन्तादुपासते श्रवणमननाभ्यां उपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्यानवच्छिन्नतैलधारावत्समानप्रत्ययप्रवाहेण दीर्घकालमासनं निदिध्यासनं कुर्वन्तीत्यर्थः ॥ ३ ॥ उपासनस्य प्रकारं फलं चाह । इन्द्रियग्राममिन्द्रियसमूहं संनियम्य स्वविषयेभ्य उपसंहृत्य सर्वत्र समबुद्धयः सर्वस्मिन्काले इष्टानि·

६ श्रीधरीव्याख्या ।

त्रगं सर्वव्यापि, अव्यक्तत्वादेवाचिन्त्यं कूटस्थं कूटे मायाप्रपञ्चे स्थितमधिष्ठानत्वेन स्थितम्, अचलं स्पन्दनरहितं, अतएव ध्रुवं नित्यम्

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम्।

समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयस्ते य एवंविधास्ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः। नतु तेषां वक्तव्यं किंचिन्मां ते प्राप्नुवन्तीति। ज्ञानी त्वात्मैव मे मतमिति ह्युक्तम्। नहि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम् ॥ ४ ॥ किंतु क्लेशोऽधिकतरो यद्यपि मत्कर्मादिपराणां क्लेशो अधिक एव क्लेशोऽधिकतरस्त्वक्षरात्मनां परमार्थदर्शिनां देहाभिमानपरित्यागनिमित्तोऽव्यक्तासक्तचेतसामव्यक्त आसक्तं चेतो येषां तेऽव्यक्तासक्तचेतसस्तेषामव्यक्तासक्तचे-

२ आनन्दगिरिव्याख्या।

क्षयोरसंभवं विवक्षित्वाह—ते य इति। सर्वेभ्यो भूतेभ्यो हिते रताः सर्वेभ्यो भूतेभ्यो हितमेव चिन्तयन्तस्तदेवाचरन्ति। ज्ञानवतां यथाज्ञानं भगवत्प्राप्तेरर्थसिद्धत्वादनुवादमात्रमित्याह—नत्विति। ज्ञानिनो भगवत्प्राप्तिः सिद्धैवेत्यत्र प्रमाणमाह—ज्ञानी त्विति। ज्ञानवतां भगवत्प्राप्तौ त एव युक्ततमा वक्तव्याः कथं सगुणब्रह्मोपासकान्युक्ततमानुक्तवानसीत्याशङ्क्याह—नहीति ॥ ४ ॥ सगुणोपासकेष्वपि कथमित्याह—किंत्विति। अक्षरोपासनस्य दुष्करत्वादुपासनान्तरस्य सुकरत्वादित्यभिप्रेत्याह—क्लेश इति। अधिक एवेतरेभ्यो द्वैतदर्शिभ्यः कामिभ्य इति शेषः। तेषां क्लेशस्याधिकतरत्वे हेतुं मत्वा विशिनष्टि—देहेति। अव्यक्तमत्यन्तसूक्ष्मं निर्विशेषमक्षरं तस्मिन्नासक्तमभिनिविष्टं चेतो

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

नीन्द्रियाणि संनियम्य एकीभावेनात्मनि वशे कृत्वा। स्वकारणे प्रविलाप्येत्यर्थः। समा चाञ्चल्यहीना बुद्धिर्येषां ते समबुद्धयो ये भवन्ति तेऽपि मामेव निर्विकल्पं परं ब्रह्म परां काष्ठां प्राप्नुवन्ति। श्रुतिश्च—'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥' इति। सर्वभूतहिते रता इत्यनेन सर्वभूताभयदानेन संन्यासोऽपि ध्यानाङ्गमिति विधीयते ॥ ४ ॥ अस्या गतेर्दुष्प्रापत्वमाह—क्लेश इति। यद्यपि सगुणविदामधिकः क्लेशोऽस्त्येव तथापि ते सालम्बना ध्यायन्ति सोपानारोहक्रमेण परां काष्ठां प्रविशन्ति। येषां तु निरालम्बं ध्यानमाकाशयुद्धसमं तेषां निर्विषये चेतःस्थिरीकरणेऽधिकतरः क्लेशोऽस्ति। तत्र क्रमिकध्यानप्रयोगः शुद्धे चिन्मात्रे विश्वरूपं माययाध्यस्तम्। तत्र च केवलमातिवाहिकं कृत्स्नं जडमाधिभौतिकमध्यस्तम्। यथोक्तं वसिष्ठेन 'आतिवाहिक एवायं त्वादृशैश्चित्तदेहकः। आधिभौतिकया बुद्ध्या गृहीतश्चिरभावनात् ॥' इति। अतिक्रम्य पाषाणादीन्वहति इष्टदेशं नयत्यभिमानिनमित्यतिवाहि सर्वत्राप्रतिहतगतिकं भूतसूक्ष्मं तेन निर्वृत्त अतिवाहिकोऽयं कृत्स्नः प्रपञ्चो यतश्चित्तदेहकः

४ मधुसूदनीव्याख्या।

समुदायम्। एतेन शमदमादिसंपत्तिरुक्ता। विषयभोगवासनायां सत्यां कुत इन्द्रियाणां ततो निवृत्तिस्तत्राह—सर्वत्र विषये समा तुल्या हर्षविषादाभ्यां रागद्वेषाभ्यां च रहिता मतिर्येषाम् सम्यग्ज्ञानेन तत्कारणस्याज्ञानस्यापनीतत्वाद्विषयेषु दोषदर्शनाभ्यासेन स्पृहाया निरसनाच्च ते सर्वत्र समबुद्धयः। एतेन वशीकारसंज्ञावैराग्यमुक्तं। अतएव सर्वत्रात्मदृष्ट्या हिंसाकारणद्वेषरहितत्वात्सर्वभूतहिते रताः 'अभयं सर्वभूतेभ्यो मत्तः स्वाहा' इति मन्त्रेण दत्तसर्वभूताभयदक्षिणाः कृतसंन्यासा इति यावत्। 'अभयं सर्वभूतेभ्यो दत्त्वा संन्यासमाचरेत्' इति स्मृतेः। एवंविधाः सर्वसाधनसंपन्नाः सन्तः स्वयं ब्रह्मभूता निर्विचिकित्सेन साक्षात्कारेण सर्वसाधनफलभूतेन मामक्षरं ब्रह्मैव ते प्राप्नुवन्ति। पूर्वमपि मद्रूपा एव सन्तोऽविद्यानिवृत्त्या मद्रूपा एव तिष्ठन्तीत्यर्थः। 'ब्रह्मैव सन्ब्रह्माप्येति', 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिभ्यः। इहापि च 'ज्ञानी त्वात्मैव मे मतम्' इत्युक्तम् ॥ ३ ॥ ४ ॥ इदानीमेतेभ्यः पूर्वेषामतिशयं दर्शयन्नाह—'पूर्वेषामपि विषयेभ्य' आहृत्य सगुणे ब्रह्मणि मनआवेशे सततं

५ भाष्योत्कर्षदीपिका।

ष्टप्राप्तौ समा रागद्वेषरहिता बुद्धिर्येषां ते, अतएव सर्वेषां भूतानां हिते रताः प्रीतिमन्तः ये एवंप्रकारेणाक्षरमुपासते ते मां परमात्मानं प्राप्नुवन्ति। एवकारेणैषामेव साक्षान्मोक्षप्राप्तियोग्यतां बोधयति। प्राप्तिरप्यत्र विस्मृतग्रैवेयकस्य प्राप्तस्य प्राप्तिरिव बोध्या नत्वप्राप्तस्य ग्रामादेः प्राप्तिरिव। 'विमुक्तश्च विमुच्यते' इति श्रुतेः। 'ज्ञानी त्वात्मैव मे मतम्' इति स्मृतेश्च ॥ ४ ॥ एवं चेत्तर्हि एतेषां सत्तमतां कुतो न ब्रूषे कुतश्च सगुणोपासकान् सत्तमानुक्तवानसीत्याशङ्क्य स्वस्वरूपाणां सतां युक्ततमत्वस्यायुक्ततमत्वस्य वा वक्तव्यत्वात्सगुणोपासने क्लेशाधिकतराभावाच्चेत्याशयेनाह—क्लेश इति। यद्यपि सगुणोपासकानां मत्कर्मपरायणतादौ क्लेशोऽधिको-

६ श्रीधरीव्याख्या।

वृद्ध्यादिरहितम् ॥ ३ ॥ संनियम्येति। स्पष्टम् ॥ ४ ॥ ननु च तेऽपि त्वामेव प्राप्नुवन्ति तर्हीतरेषां युक्ततमत्वं कुत इत्यपेक्षायां क्लेशाक्लेशकृतं विशेषमाह—क्लेश इति त्रिभिः। अव्यक्ते निर्विशेष अक्षर आसक्तं चेतो येषां तेषां क्लेशोऽधिकतरः। हि यस्मादव्य-

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तसाम् । अव्यक्ता हि यस्माद्या गतिरक्षरात्मिका दुःखं सा देहवद्भिर्देहाभिमानवद्भिरवाप्यतेऽतः क्लेशोऽधिकतरः । अक्षरोपासकानां यद्वर्तनं तदुपरिष्टाद्वक्ष्यामः ॥५॥ ये त्विति । ये तु सर्वाणि कर्माणि मयीश्वरे

२ आनन्दगिरिव्याख्या ।

येषां तेषामिति यावत् । अक्षरोपासकानां क्लेशस्याधिकतरत्वे भगवानेव हेतुमाह—**अव्यक्तेति** । दुःखं दुःखेन कृच्छ्रेणेति यावत्, अतो देहाभिमानत्यागादित्यर्थः । ते कथं वर्तन्ते तत्राह—**अक्षरेति** ॥ ५ ॥ यद्यक्षरोपासका मामेवाप्नुवन्तीति विशिष्यन्ते तर्किं सगुणोपासकास्त्वां नाप्नुवन्ति न तेषामपि क्रमेण मत्प्राप्तिरित्याह—**ये त्विति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चित्तमेव देहः स्वरूपमस्येति स्वप्नतुल्य एव सन् चिरभावनात् वज्रपञ्जरवत्काठिन्येनोपेत आधिभौतिकया स्थूलभूतप्रभवया बुद्ध्या गृहीत इति श्लोकार्थः । एवं च यथा तीव्राभिनिवेशेन निरीक्ष्यमाणो रज्जूरगः स्वयं शाम्यति तदधिष्ठानभूता रज्जुश्चाविर्भवति तथा वस्तुतश्चिद्रूपायामपि माधवादिमूर्तौ जाड्यमध्यस्तं तामेवाभिनिवेशेन चिरकालं चर्मचक्षुषैव पश्यतस्तस्या मूर्तेर्जाड्यं तिरोधीयते चैतन्यमाविर्भवति । अतएव बाणादयः स्वाराध्यैः सार्धं स्वामिभृत्यन्यायेन व्यवहरन्तीति सर्वत्रोपाख्यायते । एवमचेतनाया मूर्तेरपि तत्त्वं विश्वरूपमेवेति मूर्तिमेवात्यादरेण पश्यंस्तस्यास्तत्त्वं विश्वरूपमवगच्छति यदपश्यदर्जुनो वासुदेवदेहे एतदेव वितर्कजं प्रत्यक्षं प्रकृत्योक्तं भगवता योगभाष्यकारेण बादरायणेन 'तत्परं प्रत्यक्षं तच्च श्रुतानुमानयोर्बीजम्' इति । स्थूलालम्बनः समाधिर्वितर्कः । विश्वरूपस्याप्यस्मितामात्रेऽध्यासात्तस्यावलोकनेऽस्मितामात्रमवशिष्यते । अस्मिताया अपि शुद्धायां चितावध्यस्तत्वात्तस्यामपि समाहिते मनसि सहैव मनसाऽस्मिता तिरोधीयते शुद्धा चितिरेवावशिष्यते इति । एवं व्यक्तासक्ताः सोपानारोहक्रमेण परां काष्ठां प्रतिपद्यन्ते । ये तु अव्यक्तासक्ताः पक्षिवदकस्मादूर्ध्वं पदमारुरुक्षन्ति ते लयेन विक्षेपेण च भृशं बाध्यन्ते । लयमेव च कदाचित्समाधित्वेनाभ्युपगच्छन्तीति तेषां पराभवसंभावनाप्यस्तीत्यत उक्तं क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामिति । हि यस्मादव्यक्ता निरालंबना गतिः पदप्राप्तिर्देहवद्भिर्देहाभिमानिभिर्दुःखं यथा स्यात्तथा अवाप्यते नतु सा सुखप्राप्येति भावः ॥ ५ ॥ ननु अव्यक्तासक्तचेतसां क्लेशाधिक्येऽपि क्लेशान्ते सद्यः कैवल्यसिद्धिरस्तीति किं विलम्बसाध्येन व्यक्तभावनेनेत्याशङ्क्याह—**ये त्विति द्वाभ्याम्** । सर्वाणि नित्यनैमित्तिकस्वाभाविकादीनि संन्यस्य समर्प्य मत्परा अहमेव परः

४ मधुसूदनीव्याख्या ।

तत्कर्मपरायणत्वे च परश्रद्धोपेतत्वे च क्लेशोऽधिको भवत्येव । किंतु अव्यक्तासक्तचेतसां निर्गुणब्रह्मचिन्तनपराणां तेषां पूर्वोक्तसाधनवतां क्लेश आयासोऽधिकतरोऽतिशयेनाधिकः । अत्र स्वयमेव हेतुमाह भगवान्—अव्यक्ता हि गतिः, हि यस्मादक्षरात्मकं गन्तव्यं फलभूतं ब्रह्म दुःखं यथा स्यात्तथा कृच्छ्रेण देहवद्भिर्देहमानिभिरवाप्यते । सर्वकर्मसंन्यासं कृत्वा गुरुमुपसृत्य वेदान्तवाक्यानां तेन तेन विचारेण तत्तद्भ्रमनिराकरणे महान् प्रयासः प्रत्यक्षसिद्धस्ततः क्लेशोऽधिकतरस्तेषामित्युक्तं । यद्यप्येकमेव फलं तथापि ये दुष्करेणोपायेन प्राप्नुवन्ति तदपेक्षया सुकरेणोपायेन प्राप्नुवन्तो भवन्ति श्रेष्ठा इत्यभिप्रायः ॥ ५ ॥ ननु फलैक्ये क्लेशाल्पत्वाधिक्याभ्यामुत्कर्षनिकर्षौ स्यातां, तदेव तु नास्ति निर्गुणब्रह्मविदां हि फलमविद्यातत्कार्यनिवृत्त्या निर्विशेषपरमानन्दबोधब्रह्मरूपता, सगुणब्रह्मविदां त्वधिष्ठानप्रमाया अभावेनाविद्यानिवृत्त्यभावादैश्वर्यविशेषः कार्यब्रह्मलोकगतानां फलम् । अतः

५ भाष्योत्कर्षदीपिका ।

ऽस्त्येव तथाप्यक्षरोपासकानां देहाभिमानपरित्यागनिबन्धनोऽधिकतरः क्लेशः अव्यक्ते करणागोचरे तत्प्राप्त्यर्थमासक्तं चेतश्चित्तं येषां तेषामव्यक्तासक्तचेतसां हि यस्मादव्यक्ताक्षरात्मिका गतिर्देहवद्भिर्देहाभिमानवद्भिर्दुःखं यथा स्यात्तथा । अतिकष्टेनेति यावत् । अवाप्यतेऽतः क्लेशोऽधिकतर इत्युक्तम् ॥ ५ ॥ अक्षरोपासका मामेव प्राप्नुवन्तीत्युक्त्या तेषां साक्षात्स्वप्राप्तियोग्यत्वमुक्तं ये तु पूर्वे ते तु बहुश्रवणादिनाधिकतरक्लेशमन्तरेणैव मद्दत्तज्ञानेन संसारान्मुच्यन्त इत्याशयेनाह—**ये त्विति द्वाभ्याम्** । ये तु सगुणोपासकाः

६ श्रीधरीव्याख्या ।

क्तविषया गतिर्निष्ठा देहाभिमानिभिः दुःखं यथाभवत्येवमवाप्यते । देहाभिमानिनां नित्यं प्रत्यक्प्रवणत्वस्य दुर्घटत्वादिति भावः ॥ ५ ॥ मद्भक्तानां मत्प्रसादादनायासत एव सिद्धिर्भवतीत्याह—**ये त्विति द्वाभ्याम्** । मयि परमेश्वरे सर्वाणि कर्माणि संन्यस्य समर्प्य

७ अभिनवगुप्ताचार्यव्याख्या ।

गरिमणीश्वरेऽयत्नसाध्ये स्थितेऽपि द्विगुणमायासं विन्दन्ति ॥ ३ ॥ ४ ॥ ५ ॥ ये त्वित्यादि । प्रागुक्तोपदेशेन ये तु सर्वं मयि संन्यस्यन्ति तेषामहं

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**संन्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तोऽनन्येनैवाविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनानन्येनैव ( केवलेन ) केन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते ॥ ६ ॥ तेषां किं—तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्ता । कुत इत्याह मृत्युसंसारसागरात् मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागर इव सागरो दुरुत्तरत्वात्तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्ता भवामि न चिरात् किं तर्हि क्षिप्रमेव हे पार्थ, मय्यावेशितचेतसां मयि**

२ आनन्दगिरिव्याख्या ।

तुशब्दः शङ्कानिवृत्त्यर्थः ॥ ६ ॥ तेषां भगवद्ध्यायिनां किं फलतीति शङ्कामनुभाष्य फलमाह—**तेषामित्यादिना** । समुद्धर्ता सम्यगूर्ध्वं नेता ज्ञानावष्टम्भदानेनेत्यर्थः । मृत्युरज्ञानं मरणाद्यनर्थहेतुत्वात्तेन कार्यतया युक्तः संसारः ॥ ७ ॥ भगवदुपासना विशिष्टफलेत्येवं यतः सिद्धमतो भगवन्निष्ठायां प्रयतितव्यमित्याह—**यत इति** । असंहिता-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सर्वकर्मभिः प्राप्यो येषां ते मत्पराः मद्ध्यानपरा वा । अनन्येन भेदशून्येन अहमेव भगवान्वासुदेव इति परमेश्वरेऽहंग्रहलक्षणेन योगेन चेतःसमाधानेन मां ध्यायन्त उपासते तत्रैव ध्याने स्थैर्यं लभन्ते ॥ ६ ॥ तेषां ध्यायिनां नचिराच्छीघ्रमेवाहं समुद्धर्ता समुद्धरणकर्ता । यतस्ते मयि सगुणे विश्वरूपे आवेशितचेतसो भवन्ति अतो व्यक्तासक्ता अपि शीघ्रमेव परं पद-

४ मधुसूदनीव्याख्या ।

फलाधिक्यार्थमायासाधिक्यं न न्यूनतामापादयतीति चेत्, न, सगुणोपासनया निरस्तसर्वप्रतिबन्धानां विना गुरूपदेशं विना च श्रवणमननिदिध्यासनाद्यावृत्तिक्लेशं स्वयमाविर्भूतेन वेदान्तवाक्येनेश्वरप्रसादसहकृतेन तत्त्वज्ञानोदयादविद्यातत्कार्यनिवृत्त्या ब्रह्मलोक एवैश्वर्यभोगान्ते निर्गुणविद्याफलपरमकैवल्योपपत्तेः 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति श्रुतेः । स प्राप्तहिरण्यगर्भैश्वर्यो भोगान्त एतस्माज्जीवघनात्सर्वजीवसमष्टिरूपात्पराच्छ्रेष्ठात् हिरण्यगर्भात्परं विलक्षणं श्रेष्ठं च पुरिशयं स्वहृदयगुहानिविष्टं पुरुषं पूर्णं प्रत्यगभिन्नमद्वितीयं परमात्मानमीक्षते स्वयमाविर्भूतेन वेदान्तप्रमाणेन साक्षात्करोति, तावता च मुक्तो भवतीत्यर्थः । तथाच विनापि प्रागुक्तक्लेशेन सगुणब्रह्मविदामीश्वरप्रसादेन निर्गुणब्रह्मविद्याफलप्राप्तिरितीममर्थमाह द्वाभ्याम्—तुशब्द उक्ताशङ्कानिवृत्त्यर्थः । ये सर्वाणि कर्माणि मयि संन्यस्य सगुणे वासुदेवे समर्प्य मत्परा अहं भगवान् वासुदेव एव परः प्रकृष्टप्रीतिविषयो येषां ते तथा सन्तोऽनन्येनैव योगेन न विद्यते मां भगवन्तं मुक्त्वाऽन्यदालम्बनं यस्य तादृशेनैव योगेन समाधिना एकान्तभक्तियोगापरनाम्ना मां भगवन्तं वासुदेवं सकलसौन्दर्यसारनिधानमानन्दघनविग्रहं द्विभुजं चतुर्भुजं वा समस्तजनमनोमोहिनीं मुरलीमतिमनोहरैः सप्तभिः स्वरैरापूरयन्तं वा दरकमलकौमोदकीरथाङ्गसङ्गिपाणिपल्लवं वा नरसिंहराघवादिरूपं वा परमकारुणिकं सुन्दरसुन्दरं श्रीमद्रघुनन्दनरूपं वराहादिरूपं वा यथादर्शितविश्वरूपं वा ध्यायन्तश्चिन्तयन्त उपासते समानाकारमविच्छिन्नं चित्तवृत्तिप्रवाहं संतन्वते समीपवर्तितया आसते तिष्ठन्ति वा तेषां मय्यावेशितचेतसां मयि यथोक्ते आवेशितमेकाग्रतया प्रवेशितं चेतो यैस्तेषामहं सततोपासितो भगवान् मृत्युसंसारसागरात् मृत्युयुक्तो यः संसारः मिथ्याज्ञानतत्कार्यप्रपञ्चः स एव सागर इव दुरुत्तरस्तस्मात्समुद्धर्ता सम्यगनायासेन उद्धर्ध्वं सर्वबाधावधिभूते शुद्धे ब्रह्मणि धर्ता धारयिता ज्ञानावष्टम्भदानेन भवामि नचिरात् क्षिप्रमेव तस्मिन्नेव जन्मनि । हे पार्थेति संबोधनमाश्वासार्थम् ॥ ६ ॥ ७ ॥

५ भाष्योत्कर्षदीपिका ।

सर्वाणि कर्माणि मयि परमेश्वरे संन्यस्य समर्प्य अहं परः परमपुरुषार्थत्वेनोपास्यो येषां ते मत्पराः न स्वर्गादिपरा एतादृशाः सन्तोऽनन्येनैव योगेन न विद्यते विश्वरूपं देवमात्मानमीश्वरमनन्तगुणनिधिं तत्तद्रूपेण भूतलेऽवतीर्णं मुक्त्वान्यदालम्बनं यस्य तेन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते मयि परमेश्वरे विश्वरूपे आवेशितं प्रवेशितं चित्तं येषां तेषां नचिरात् शीघ्रमेव मृत्युयुक्तात्संसारसमुद्रादहमुद्धर्ता भवामि । अनन्यभक्त्या संतुष्टः सन् बुद्धियोगं दत्त्वा मूलाज्ञानसहिततत्कार्यरूपात्संसारादुद्धरामीत्यभिप्रायः । तदुक्तं 'मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते' । हे पार्थेति संबोधयन् यथा पृथासुतानां भवतां भक्त्या वशीकृतस्त-

६ श्रीधरीव्याख्या ।

मत्परा भूत्वा मां ध्यायन्त अनन्येन न विद्यतेऽन्यो भजनीयो यस्मिंस्तेनैव । एकान्तभक्तियोगेनोपासत इत्यर्थः ॥ ६ ॥ **तेषामिति** ।

७ अभिनवगुप्ताचार्यव्याख्या ।

समुद्धर्ता सकलविघ्नादिक्लेशेभ्यश्चेतस आवेशनं व्याख्यातम् । तथाचैष एवोत्तमो योगोऽकृत्रिमत्वात् । तथाच मम स्तोत्रे—'विशिष्टकरणासनस्थितिसमाधिसंभावनाविभाविततया यदा कमपि बोधमुल्लासयेत् । न सा तव सदोदिता स्वरसवाहिनी या चितिर्यतस्त्रितयसंनिधौ

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥ ८ ॥**
**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**विश्वरूप आवेशितं प्रवेशितं समाहितं चेतो येषां ते मय्यावेशितचेतसस्तेषाम् ॥७॥ यत एवं तस्मात्— मय्येवेति । मय्येव विश्वरूप ईश्वरे मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय मय्येव व्यवसायं कुर्वतीं बुद्धिमाधत्स्व निवेशय । ततस्ते किं स्यादिति शृणु निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं करिष्यस्येवातः शरीरपातादूर्ध्वं न संशयः संशयोऽत्र न कर्तव्यः ॥ ८ ॥ अथेति । अथैवं यथावोचाम तया मयि चित्तं समाधातुं स्थापयितुं स्थिरमचलं कर्तुं न शक्नोषि चेत्ततः पश्चा-**

२ आनन्दगिरिव्याख्या ।

करणं श्लोकपूरणार्थम् । मनोबुद्ध्योर्भगवत्यवस्थापने प्रश्नपूर्वकं फलमाह—**तत इति** । भगवन्निष्ठस्य तत्प्राप्तौ प्रतिबन्धाभावं सूचयति—**संशयोऽत्रेति** ॥ ८ ॥ मतप्रदर्शनपूर्वकं भगवत्प्राप्तावुपायान्तरमाह—**अथेत्यादिना** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मारोढुमर्हा इति नाव्यक्तेऽत्यन्ताभिनिवेष्टव्यमिति भावः ॥ ७ ॥ यस्मादेवं तस्मान्मय्येव विश्वरूप ईश्वरे मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय मय्येवाध्यवसायं कुर्वतीं बुद्धिं निवेशय तत्फलं च । निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि वासं करिष्यसि । अतः शरीरपातादूर्ध्वं । न संशयः कर्तव्यः ॥ ८ ॥ विश्वरूपधारणायामशक्तं प्रति प्राह— **अथेति** । मयि विश्वेश्वरे विश्वरूपे अथ यदि चित्तं समाधातुं निवेशितुमचलं धारयितुं न शक्नोषि ततस्तर्ह्यभ्यास-

४ मधुसूदनीव्याख्या ।

तदेवमियता प्रबन्धेन सगुणोपासनां स्तुत्वेदानीं साधनातिरेकं विधत्ते—मय्येव सगुणे ब्रह्मणि मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय सर्वा मनोवृत्तीर्मद्विषया एव कुरु । एवकारानुषङ्गेण मय्येव बुद्धिमध्यवसायलक्षणां निवेशय, सर्वा बुद्धिवृत्तीर्मद्विषया एव कुरु, विषयान्तरपरित्यागेन सर्वदा मां चिन्तयेत्यर्थः । ततः किं स्यादित्यत आह—निवसिष्यसि निवत्स्यसि । लब्धज्ञानः सन्मदात्मना मय्येव शुद्धे ब्रह्मण्येव । अत ऊर्ध्वं एतद्देहान्ते न संशयः नात्र प्रतिबन्धशङ्का कर्तव्येत्यर्थः । एव अत ऊर्ध्वमित्यत्र संध्यभावः श्लोकपूरणार्थः ॥ ८ ॥ इदानीं सगुणब्रह्मध्यानाशक्तानामशक्तितारतम्येन प्रथमं प्रतिमादौ बाह्ये भगवद्ध्यानाभ्यासस्तदशक्तौ भागवतधर्मानुष्ठानं तदशक्तौ सर्वकर्मफलत्याग इति त्रीणि साधनानि त्रिभिः श्लोकैर्विधत्ते—अथ पक्षान्तरे स्थिरं यथा स्यात्तथा चित्तं समाधातुं स्थापयितुं मयि न शक्नोषि चेत्तत एकस्मिन्प्रतिमादावालम्बने सर्वतः समाहृत्य चेतसः पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधिस्तेनाभ्यासयोगेन मामाप्तुमिच्छ यतस्व । हे धनंजय, बहून् शत्रून् जित्वा

५ भाष्योत्कर्षदीपिका ।

तत्संकटादुद्धर्ता तथेति ध्वनयति ॥ ६ ॥ ७ ॥ यतोऽधिकतरक्लेशमन्तरेण भगवदुपासकानामुद्धारस्तस्मान्मय्येव विश्वरूपे परमात्मनि एवकारेणोपास्यान्तरस्य फलस्य च व्यवच्छेदः । मनः संकल्पविकल्पात्मकं स्थापय । मय्येव निश्चयं कुर्वन्तीं बुद्धिं निवेशय । ततः किं स्यादत आह । अतः शरीरपातादूर्ध्वं मय्येव निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि वासं करिष्यस्येव । अस्मिन्नर्थे संशयो न कर्तव्यः ॥ ८ ॥ एतत्कर्तुमशक्तस्य स्वप्राप्तावुपायान्तरमाह । अथैवमुक्तप्रकारेण मयि चित्तमचलं यथा स्यात्तथा समाधातुं स्थापयितुमसमर्थोऽसि चेत्ततश्चित्तस्यैकस्मिन्नालम्बने आभ्यन्तरे बाह्ये वा प्रतिमादौ सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेन मां विश्वरूपमाप्तुं प्राप्तुं इच्छ प्रार्थयस्व । धनंजयेति संबोधयन् यथा धनुर्विद्याभ्यासबलाद्राजभ्यो

६ श्रीधरीव्याख्या ।

एवं मय्यावेशितं चेतो यैस्तेषां मृत्युयुक्तात्संसारसागरादहं सम्यगुद्धर्ता अचिरेणैव भवामि ॥ ७ ॥ यस्मादेवं तस्मात् । **मय्येवेति** । मय्येव संकल्पविकल्पात्मकं मन आधत्स्व स्थिरीकुरु । बुद्धिमपि व्यवसायात्मिकां मय्येव निवेशय । एवं कुर्वन्मत्प्रसादेन लब्धज्ञानः सन्नत ऊर्ध्वं देहान्ते मरणान्तरं मय्येव निवसिष्यसि निवत्स्यसि मदात्मना वासं करिष्यसि नात्र संशयः । तथाच श्रुतिः—'देहान्ते देवस्तारकं परब्रह्म व्याचष्टे' इति ॥ ८ ॥ अत्राशक्तं प्रति सुगमोपायमाह—**अथेति** । स्थिरं यथाभवत्येवं मयि चित्तं धारयितुं यदि

७ अभिनवगुप्ताचार्यव्याख्या ।

स्फुटमिहापि संवेद्यते ॥ यदा तु विगतेन्धनः स्ववशवर्तितां संश्रयन्नकृत्रिमसमुल्लसत्पुलककम्पबाष्पानुगः । शरीरनिरपेक्षतां स्फुटमुपाददानश्चितः स्वयं झगिति बुध्यते युगपदेव बोधानलः ॥ तदैव तव देवि तद्वपुरुपाश्रयैर्वर्जितं ( श्रितैर्वर्णितं ) महेशमवबुध्यते विवशपाशसंक्षोभकम् ॥' इत्यादि ॥६॥७॥८॥ अथेति । समाधातुमावेशयितुम् ॥ ९ ॥ अभ्यासेऽपीति । अथैतदपीत्यारभ्य अवाप्स्यसीत्यन्तम् । तीव्रतरभगवच्छक्तिपातं

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**
**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम् ।

दभ्यासयोगेन चित्तस्यैकस्मिन्नालम्बने सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमिच्छ प्रार्थयस्वाप्तुं प्राप्तुं हे धनंजय ॥ ९ ॥ अभ्यासेऽपीति । अभ्यासेऽप्यसमर्थोऽस्यशक्तोऽसि तर्हि मत्कर्मपरमो भव मदर्थं कर्म मत्कर्म तत्परमो मत्कर्मप्रधान इत्यर्थः । अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन्सिद्धिं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारेणावाप्स्यसि ॥ १० ॥ अथैतदिति । अथ पुनरेतदपि यदुक्तं मत्कर्मपरमत्वं तत्कर्तुमशक्तोऽसि मद्योगमाश्रितो मयि क्रियमाणानि कर्माणि संन्यस्य यत्करणं तेषामनुष्ठानं स मद्योगस्तमाश्रितः सन्सर्व-

२ आनन्दगिरिव्याख्या ।

एकमालम्बनं स्थूलं प्रतिमादि समाधानं ततोऽभ्यन्तरे विश्वरूपे चित्तैकाग्र्यम् ॥ ९ ॥ द्वैताभिनिवेशादभ्यासाधीने योगेऽपि सामर्थ्याभावे पुनरुपायान्तरमाह—**अभ्यासेऽपीति** । अभ्यासयोगेन विना भगवदर्थं कर्माणि कुर्वाणस्य किं स्यादित्याशङ्क्याह—**अभ्यासेनेति** । सिद्धिर्ब्रह्मभावः । अपिरुक्तव्यवधिसूचनार्थः ॥ १० ॥ भगवत्कर्मपरत्वमप्यशक्यमिति शङ्कते—**अथेति** । बहिर्विषयाकृष्टचेतस्त्वादित्यर्थः । तर्हि भगवत्प्राप्त्युपायत्वेन संयतचित्तो भूत्वा

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

योगेन चित्तस्यैकस्मिन्नाभ्यन्तरे बाह्ये वा प्रतिमादावालम्बने सर्वतः समाहृत्य पुनःपुनःस्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमाप्तुं प्राप्तुमिच्छ प्रार्थयस्व हे धनंजय ॥ ९ ॥ **अभ्यासेऽपीति ।** अभ्यासे पूर्वश्लोकोक्ते । मत्कर्म 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इति नवविधभजनात्मकं भगवत्प्रीत्यर्थं कर्म मत्कर्मशब्दितं तदेव परममावश्यकं यस्य तादृशो भव । कर्माणि श्रवणादीनि । सिद्धिं सत्त्वशुद्धिम् ॥ १० ॥ मद्योगं श्रवणादौ निष्ठाम् । तर्हि पूर्वोक्तं श्रौतस्मार्तसर्वकर्मफलत्यागं

४ मधुसूदनीव्याख्या ।

धनमाहृतवानसि राजसूयाद्यर्थमेवं मनःशत्रुं जित्वा तत्त्वज्ञानधनमाहरिष्यसीति न तवाश्चर्यमिति संबोधनार्थः ॥ ९ ॥ मत्प्रीणनार्थं कर्म मत्कर्म श्रवणकीर्तनादिभागवतधर्मस्तत्परमस्तदेकनिष्ठो भव । अभ्यासासामर्थ्ये मदर्थं भागवतधर्मसंज्ञकानि कर्माण्यपि कुर्वन्सिद्धिं ब्रह्मभावलक्षणां सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेणावाप्स्यसि ॥ १० ॥ अथ बहिर्विषयाकृष्टचेतस्त्वादेतन्मत्कर्मपरत्वमपि कर्तुं न शक्नोषि ततो मद्योगं मदेकशरणत्वमाश्रितः मयि सर्वकर्मसमर्पणं मद्योगस्तं वाश्रितः सन् यतात्मवान् यतः संयत-

५ भाष्योत्कर्षदीपिका ।

धनं भीष्मादिभ्यो गोधनं चाहृतवानसि तथाभ्यासयोगेन मामप्याहर्तुं योग्योऽसीति सूचयति ॥ ९ ॥ सर्वतश्चित्तमाहृत्यैकात्मालम्बने पुनः पुनः स्थापनेऽशक्तं प्रत्युपायान्तरमाह । अभ्यासेऽप्यसमर्थोऽसि चेत् मदर्थमपि कर्म मत्प्रीत्यर्थं यत्कर्म तत्परमस्तत्प्रधानो भव । अभ्यासेन विना मदर्थमपि केवलं कुर्वन् सिद्धिं ब्रह्मस्वभावं मोक्षं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारा प्राप्स्यसीत्यर्थः ॥१०॥ तर्हि विषयाकृष्टचित्तत्वाद्भगवत्कर्मपरतायामशक्तं प्रत्युपायान्तरमाह—अथैतदपि कर्तुमशक्तोऽसि चेत्तर्हि मद्योगमाश्रितः मयि सर्वाणि कर्माणि संन्यस्य तेषामनुष्ठानं मद्योगस्तमाश्रितः मदेकशरणत्वमाश्रितः सन् तदनन्तरं सर्वेषां कर्मणां फलसंन्यासं कुरु विवेकसं-

६ श्रीधरीव्याख्या ।

शक्तो न भवसि तर्हि विक्षिप्तं चित्तं पुनः प्रत्याहृत्य ममानुस्मरणलक्षणो योगाभ्यासस्तेन मां प्राप्तुमिच्छ प्रयत्नं कुरु ॥ ९ ॥ यदि पुनर्नैवं तत्राह—**अभ्यास इति** । अभ्यासेऽपि यद्यशक्तोऽसि तर्हि मत्प्रीत्यार्थानि यानि कर्माण्येकादश्युपवासव्रतचर्यानामसंकीर्तनादीनि तदनुष्ठानमेव परमं यस्य तादृशो भव । एवंभूतानि कर्माण्यपि मदर्थं कुर्वन्मोक्षं प्राप्स्यसि ॥ १० ॥ अत्यन्तं भगवद्धर्मपरिनिष्ठायामशक्तस्य पक्षान्तरमाह—**अथैतदपीति** । अथैतदपि कर्तुमशक्तोऽसि तर्हि मद्योगं मदेकशरणत्वमाश्रितः सर्वेषां दृष्टादृष्टार्थानामावश्यकानां चाग्निहोत्रादिकर्मणां फलानि नियतचित्तो भूत्वा परित्यज । एतदुक्तं भवति । मया तावदीश्वराज्ञया यथाशक्ति कर्माणि कर्तव्यानि, फलं पुनर्दृष्टमदृष्टं वा परमेश्वराधीनमित्येवं मयि भारमारोप्य फलासक्तिं परित्यज्य वर्तमानो मत्प्रसादेन कृतार्थो भविष्य-

७ अभिनवगुप्ताचार्यव्याख्या ।

चिरतरप्रसादितगुरुचरणानुग्रहं च विना दुर्लभ आवेश इत्यभ्यासः । अभ्यासोऽपि न शक्यते विघ्नाद्यभिभवादतस्तन्नाशाय कर्म पूजाजपस्वाध्यायहोमादीन्कुरु ॥ १० ॥ अथैतदपीति । यदि च भगवत्कर्म कर्तुं न शक्नोषि(क्तोसि) अज्ञत्वाच्छास्त्रोक्तकमावेदनात् तत्सर्वं मयि संन्यस्य-

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कर्मफलत्यागं सर्वेषां कर्मणां फलसंन्यासं सर्वकर्मफलत्यागं ततोऽनन्तरं कुरु यतात्मवान्संयतचित्तः सन्नित्यर्थः ॥ ११ ॥ इदानीं सर्वकर्मफलत्यागं स्तौति—श्रेयो हि प्रशस्यतरं ज्ञानं कस्मादविवेकपूर्वकादभ्यासात्तस्मादपि ज्ञानाज्ज्ञानपूर्वकं ध्यानं विशिष्यते । ज्ञानवतो ध्यानादपि कर्मफलत्यागो विशिष्यत इत्यनुषज्यते । एवं कर्मफलत्यागात्पूर्वविशेषणवतः शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरमेव स्यान्नतु कालान्तरमपेक्षते । अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयःसाधनमुपदिष्टं न प्रथममेव । अतश्च श्रेयो हि ज्ञानमभ्यासादुत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते संपन्नसाधनानुष्ठानाशक्तावनुष्ठेयत्वेन श्रुतत्वात् । केन साधर्म्येण स्तुतित्वं 'यदा सर्वे प्रमुच्यन्ते' इति सर्वकामप्रहाणादमृतत्वमुक्तं तत्प्रसिद्धम् । कामाश्च सर्वे श्रौतस्मार्तसर्व-**

२ आनन्दगिरिव्याख्या ।

कर्मफलसंन्यासं कुर्वित्याह—**मद्योगमिति** ॥ ११ ॥ उत्तरश्लोकतात्पर्यमाह—**इदानीमिति** । ज्ञानं शब्दयुक्तिभ्यामात्मनिश्चयः । अभ्यासो ज्ञानार्थश्रवणाभ्यासो निश्चयपूर्वको ध्यानाभ्यासो वा । तस्य विशिष्यमाणत्वे साक्षात्कारहेतुत्वं हेतुः । त्यागस्य विशिष्टत्वे हेतुमाह—**एवमिति** । प्रीणातु भगवानिति तस्मिन्कर्मसंन्यासपूर्वकमित्यर्थः । पूर्वविशेषणवतो नियतचित्तस्य पुंसो यथोक्तत्यागादित्यर्थः । अनन्तरमेवेत्युक्तं व्यनक्ति—**नत्विति** । ननु कर्मफलत्यागस्य सद्यःशान्तिकरत्वे सम्यग्धीरेव तथेति श्रुतिस्मृतिप्रसिद्धिर्विरुध्येत तत्राह—**अज्ञस्येति** । दीर्घेण कालेनादरनैरन्तर्यानुष्ठिताद्ध्यानाद्वस्तुसाक्षात्कारद्वारा संसारदुःखोपशान्तेस्तथाविधाद्ध्यानात्त्यागस्य विशिष्टत्वोक्तेस्तदीयस्तुतिरत्रेष्टेत्याह—**अतश्चेति** । तत्र हेतुमाह—**संपन्नेति** । संपन्नानि प्राप्तानि साधनान्यक्षरोपासनादीनि तेषां मध्ये पूर्वपूर्वस्यानुष्ठानाशक्तावुत्तरोत्तरस्यानुष्ठेयत्वेनोपदेशात्त्यागे चोपदेशपर्यवसानादित्यर्थः । त्यागे विशिष्टत्ववचनस्य केन साधर्म्येण तं प्रति स्तुतित्वमिति पृच्छति—**केनेति** । उत्तरमाह—**यदेति** । अमृतत्वमुक्तम् 'अथ मर्त्योऽमृतो भवति' इति शेषादिति शेषः । कामप्रहाणस्यामृतत्वार्थत्वमथाकामयमान इत्यादावपि सिद्धमित्याह—**तदिति** । कामत्यागस्यामृतत्वहेतुत्वेऽपि कथं कर्मफलत्यागस्य तद्धेतुत्वमित्याशङ्क्याह—**कामाश्चेति** । कर्मफलत्यागादेव शान्ति-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कुर्वित्यर्थः । यतात्मवान् यतश्च नियमादिमांश्च आत्मवान् जितचित्तश्चेति यतात्मवान् ॥ ११ ॥ इममेव त्यागं सर्वपुरुषार्थमूलत्वात्स्तौति—**श्रेयो हीति** । अभ्यासान्निदिध्यासनाज्ज्ञानं श्रवणमननजं परोक्षं श्रेयः । ज्ञानादपि

४ मधुसूदनीव्याख्या ।

सर्वेन्द्रियः आत्मवान् विवेकी च सन् सर्वकर्मफलत्यागं कुरु फलाभिसन्धिं त्यजेत्यर्थः ॥ ११ ॥ इदानीमत्रैव साधनविधानपर्यवसानादिमं सर्वकर्मफलत्यागं स्तौति—श्रेयः प्रशस्यतरं हि एव ज्ञानं शब्दयुक्तिभ्यामात्मनिश्चयोऽभ्यासाज्ज्ञानार्थश्रवणाभ्यासाज्ज्ञानाच्छ्रवणमननपरिनिष्पन्नादपि ध्यानं निदिध्यासनसंज्ञं विशिष्यते अतिशयितं भवति साक्षात्काराव्यवहितहेतुत्वात् । तदेवं सर्वसाधनश्रेष्ठं ध्यानं ततोऽप्यतिशयितत्वेनाज्ञकृतः कर्मफलत्यागः स्तूयते—ध्यानात्कर्मफलत्यागो विशिष्यत इत्यनुषज्यते । त्यागान्नियतचित्तेन पुंसा कृतात्सर्वकर्मफलत्यागात् शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरं अव्यवधानेन

५ भाष्योत्कर्षदीपिका ।

यतचित्तः सन्नित्यर्थः ॥ ११ ॥ इदानीमवश्यकर्तव्यतायै सर्वकर्मफलसंन्यासं स्तौति—**श्रेयो हीति** । विवेकपूर्वकाज्ज्ञानार्थाच्छ्रवणाभ्यासाच्छ्रुतियुक्तिभ्यामात्मनिश्चयरूपं ज्ञानं श्रेयः प्रशस्यतरं, ज्ञानादपि निदिध्यासनशून्याज्ज्ञानपूर्वकं ध्यानं विशिष्यते प्रशस्यं भवति, ध्यानादपि कर्मफलत्यागो विशिष्यते । यद्वाभ्यासान्निदिध्यासनाज्ज्ञानं श्रवणमननजं परोक्षं श्रेयः, ज्ञानादपि ध्यानं विष्णोः श्रवणकीर्तनादि विशिष्यते ततोऽपि कर्मफलत्याग इति तदेतदरुचिग्रस्तम् । अरुचिबीजं तु परोक्षादेर्निदिध्यासनस्य श्रैष्ठ्य-

६ श्रीधरीव्याख्या ।

सीति तात्पर्यम् ॥ ११ ॥ तमिमं फलत्यागं स्तौति—**श्रेयो हीति** । सम्यग्ज्ञानरहितादभ्यासाद्युक्तिसहितोपदेशपूर्वकं ज्ञानं श्रेष्ठं । तस्मा-

७ अभिनवगुप्ताचार्यव्याख्या ।

आत्मनिवेदनद्वारेणेत्याशयः । अमुमेवाशयमाश्रित्य लघुप्रक्रियायां मयैवोक्तम्—'ऊनाधिकमविज्ञातं पौर्वापर्यविवर्जितम् । यच्चावधानरहितं बुद्धेर्विस्खलितं च यत् ॥ तत्सर्वं मम सर्वेश भक्तस्यार्तस्य दुर्मतेः । क्षन्तव्यं कृपया शंभो यतस्त्वं करुणापरः ॥ अनेन स्तोत्रयोगेन तवात्मानं निवेदये । पुनर्निष्कारणमहं दुःखानां नैमि पात्रताम्' इति । पारमेश्वरेषु हि सिद्धान्तशास्त्रेष्वात्मनिवेदनेऽयमेवाभिप्रायः ॥ ११ ॥ तदिदं तात्पर्यमुपसंहियते—श्रेयो हीत्यादि । श्रेयो हि ज्ञानमावेशात्मा अभ्यासाच्छ्रेयान् अभ्यासस्य तत्फलत्वात् । तस्मादेवावेशाद्ध्यानं

१ नीलकण्ठः.

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कर्मणां फलानि । तत्त्यागे च विदुषो ज्ञाननिष्ठस्यानन्तरैव शान्तिरिति सर्वकामत्यागसामान्यमन्य-कर्मफलत्यागस्यास्तीति तत्सामान्यात्सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था । यथागस्त्येन ब्राह्मणेन समुद्रः पीत इतीदानींतना अपि ब्राह्मणा ब्राह्मणत्वसामान्यात्स्तूयन्ते । एवं कर्मफलत्यागात्कर्मयोगस्य श्रेयःसाधनत्वमभिहितम् ॥ १२ ॥ अत्र चात्मेश्वरभेदमाश्रित्य विश्वरूप ईश्वरे चेतःसमाधानलक्षणो

२ आनन्दगिरिव्याख्या ।

श्रेज्ज्ञाननिष्ठोपेक्षितेत्याशङ्क्याह—तत्त्यागे चेति । तथापि कथमज्ञस्य कर्मफलत्यागस्तुतिरित्याशङ्क्याह—इति सर्वेति । विद्यावतस्त्यागवदविद्वत्त्यागस्यापि त्यागत्वाविशेषाद्विशिष्टत्वोक्तिर्युक्तेति स्तुतिमुपसंहरति—इति तत्सामान्यादिति । किमर्था स्तुतिरित्याशङ्क्य त्यागे रुचिमुत्पाद्य प्रवर्तयितुमित्याह—प्ररोचनार्थेति । त्यागस्तुतिं दृष्टान्तेन स्पष्टयति—यथेति । फलत्यागः श्रेयोहेतुश्चेत्कर्मत्यागादपि फलत्यागसिद्धेरलं कर्मानुष्ठानेनेत्याशङ्क्याह—एवं कर्मेति । फलाभिलाषं त्यक्त्वा कर्मानुष्ठानस्यार्पितस्येश्वरे श्रेयोहेतुतया विवक्षितत्वान्नानुष्ठानानर्थक्यमित्यर्थः ॥ १२ ॥ संप्रत्यद्वेष्टेत्याद्यवतारयितुं वृत्तं कीर्तयति—अत्र चेति । तयोश्चेदात्यन्तिकोऽभेदो न तर्हीश्वरे मनः-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ध्यानं विष्णोः श्रवणकीर्तनादि विशिष्यते । ततोऽपि कर्मफलत्यागः श्रेयान् । यस्मादनन्तरमव्यवधानेन शान्तिर्मोक्षोऽस्ति चित्तशुद्ध्याद्युत्पादनद्वारेण । अत्र बाह्यं साधनं सुकरत्वात्पूर्वपूर्वापेक्षया प्रशस्तमित्युच्यते तत्रैव प्रवृत्त्यतिशयाय । यद्वा श्रवणाद्यभ्यासात्तज्जं ज्ञानं तत्त्वनिश्चयात्मकं श्रेयः । ततोऽपि ज्ञातस्यार्थस्य साक्षात्कारार्थं ध्यानं श्रेयः । ततोऽपि कर्मफलत्यागः । योगी हि सर्वकर्मत्यागी 'प्रजहाति यदा कामान्' इति प्रोक्तः । अयमपि कर्मफलत्यागेन कामाञ्जहात्येवेति तेन सम इति स्तूयते ॥ १२ ॥ परमप्रकृतस्याक्षरस्योपासकं स्तौति तद्गुणकथने हि साधकानां तेषु गुणेष्वादरो

४ मधुसूदनीव्याख्या ।

ननु कालान्तरमपेक्षते । अत्र 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इत्यादिश्रुतिषु, प्रजहाति यदा कामान्सर्वानित्यादिस्थितप्रज्ञलक्षणेषु च सर्वकामत्यागस्यामृतत्वसाधनत्वमवगतं, कर्मफलानि च कामास्तत्त्यागोऽपि कामत्यागत्वसामान्यात्सर्वकामत्यागफलेन स्तूयते यथागस्त्येन ब्राह्मणेन समुद्रः पीत इति, यथा वा जामदग्न्येन ब्राह्मणेन निःक्षत्रा पृथिवी कृतेति ब्राह्मणत्वसामान्यादिदानींतना अपि ब्राह्मणा अपरिमेयपराक्रमत्वेन स्तूयन्ते तद्वत् ॥ १२ ॥ तदेवं मन्दमधिकारिणं प्रत्यतिदुष्करत्वेनाक्षरोपासननिन्दया सुकरं सगुणोपासनं विधायाशक्तितारतम्यानुवा-

५ भाष्योत्कर्षदीपिका ।

प्रसिद्धिः । एवं मद्योगमाश्रितस्यात्मवतः सर्वकर्मफलत्यागात्सहेतुकस्य संसारस्य शान्तिरुपशमोऽनन्तरमेव स्यान्नतु कालान्तरमपेक्षते । नन्वेवं 'तरति शोकमात्मवित्', 'तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय', 'ज्ञानादेव तु कैवल्यं', 'ऋते ज्ञानान्न मोक्षः', 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति', 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते', 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' इत्यादिश्रुतिस्मृतिप्रसिद्धिर्विरुध्यत इतिचेन्न । प्रकृतवचनस्य स्तुतिपरत्वात् । अक्षरोपासनादीनां साधनानां मध्ये पूर्वपूर्वानुष्ठानाशक्तावुत्तरोत्तरस्यानुष्ठेयत्वेनोपदेशात्त्यागे चोपदेशपर्यवसानादज्ञस्य कर्मणि प्रवृत्तस्य पूर्वपूर्वोपदिष्टसाधनेऽशक्तस्य सर्वकर्मफलत्याग उपदिष्टः स्तूयते प्रवृत्त्यर्थम् । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते', 'प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते' इत्यादिश्रुतिस्मृतिभ्यां विदुषो ध्याननिष्ठस्य कामानां सर्वकर्मफलानां त्यागादनन्तरं शान्तेरुक्तत्वादज्ञकृतसर्वकर्मत्यागस्यापि सर्वकाम्यकर्मत्यागसामान्यात्कर्मफलसंन्यासस्तुतिः प्ररोचनार्था । यथागस्त्येन ब्राह्मणेन समुद्रः पीतः । यथा वा परशुरामेण ब्राह्मणेनैकविंशतिवारं निःक्षत्रा पृथिवी कृतेति ब्राह्मणत्वसामान्यादिदानींतना ब्राह्मणाः स्तूयन्ते ॥१२॥ 'ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः' इत्यनेनाक्षरोपासकानां मोक्षप्राप्तौ स्वातन्त्र्यमुक्त्वा 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसां' इत्यादिनाऽक्षरोपासनायां

६ श्रीधरीव्याख्या ।

दपि तत्पूर्वकं ध्यानं श्रेष्ठं । 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति श्रुतेः । तस्मादप्युक्तलक्षणः कर्मफलत्यागः श्रेष्ठः, तस्मादेवंभूतात्कर्मफलत्यागात्कर्मसु तत्फलेषु चासक्तिनिवृत्त्या मत्प्रसादेन च समनन्तरमेव संसारशान्तिर्भवति ॥ १२ ॥ एवंभूतस्य भक्तस्य

७ अभिनवगुप्ताचार्यव्याख्या ।

भगवन्मयत्वं विशिष्यते विशेषत्वं याति । अभिमतप्राप्त्यासक्तिध्यानेन भगवन्मयत्वे कर्मफलानि संन्यसितुं युज्यन्ते । अन्यथाऽज्ञातरूपत्वे क संन्यासः । कर्मफलत्यागे चात्यन्तिकी शान्तिः । अतः सर्वमूलत्वादावेशात्मकं ज्ञानमेव प्रधानम् ॥ १२ ॥ अद्वेष्टेति । मैत्री अमत्सरता

१ श्रीमच्छांकरभाष्यम् ।

**योग उक्त ईश्वरार्थं कर्मानुष्ठानादि च । 'अथैतदप्यशक्तोऽसि' इत्यज्ञानकार्यसूचनान्नाभेददर्शिनोऽक्षरोपासकस्य कर्मयोग उपपद्यत इति दर्शयति । तथा कर्मयोगिनोऽक्षरोपासनानुपपत्तिं दर्शयति भगवान् 'ते प्राप्नुवन्ति मामेव' इति । अक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यमुक्त्वेतरेषां पारतन्त्र्यमीश्वराधीनतां दर्शितवांस्तेषामहं समुद्धर्तेति । यदि हीश्वरस्यात्मभूतास्ते मता अभेददर्शित्वादक्षररूपा एव त इति समुद्धरणकर्मवचनं तान्प्रत्यपेशलं स्यात् । यस्माच्चार्जुनस्यात्यन्तमेव हितैषी भगवांस्तस्य सम्यग्दर्शनानन्वितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति । न चात्मानमीश्वरं प्रमाणतो बुध्वा कस्यचिद्गुणभावं जिगमिषति कश्चिद्विरोधात् । तस्मादक्षरोपासकानां सम्यग्दर्शननिष्ठानां संन्यासिनां त्यक्तसर्वैषणानाम् 'अद्वेष्टा सर्वभूतानाम्' इत्यादिधर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्तते—अद्वे-**

२ आनन्दगिरिव्याख्या ।

समाधानरूपो योगोऽत्यन्ताभेदे ध्यातृध्येयत्वाभावात् नचात्यन्ताभेदे कर्मानुष्ठानं तत्फलत्यागो वा परस्परं तदयोगादित्यर्थः । भगवदुक्तिसामर्थ्यादपि कर्मयोगादिनाभेददृष्टिमतो भवतीत्याह—**अथेति** । अक्षरोपासकस्य कर्मयोगायोगवत्कर्मयोगिनोऽक्षरोपासनानुपपत्तिरपि दर्शितेत्याह—**तथेति** । अक्षरोपासकाः सम्यग्धीनिष्ठा यथाज्ञानं भगवन्तमेवाप्नुवन्ति न तथा कर्मिणः साक्षात्तदाप्तावुचितास्तथा च कर्मिणो नाक्षरोपासनसिद्धिरित्यर्थः । इतश्चाक्षरोपासनं कर्मानुष्ठानं न चैकत्र युक्तमित्याह—**अक्षरेति** । नन्वक्षरोपासकवदन्येषामपीश्वरात्मत्वाविशेषात्कुतस्तदधीनत्वं तत्राह—**यदीति** । कर्मयोगस्याक्षरोपास्तेश्च युगपदेकत्रायोगे हेत्वन्तरमाह—**यस्माच्चेति** । 'कुरु कर्मैवे'त्यादाविति शेषः । किंचाक्षरोपासको वाक्यादीश्वरमात्मानं वेत्ति नासौ क्रियायां गुणत्वेन कर्तृत्वमनुभवति गुणत्वेश्वरत्वयोरेकत्र व्याघातादतोऽपि नाक्षरोपासनं कर्मानुष्ठानं चैकत्र युक्तमित्याह—**नचेति** । अक्षरोपास्तिकर्मयोगयोरेकत्र पर्यायायोगे फलितमाह—**तस्मादिति** । अज्ञानां कर्मिणां वक्ष्यमाणधर्मजातस्य साकल्येनायोगादक्षरनिष्ठानामेवेदमुच्यतेऽविरुद्धं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भविष्यतीति बुद्ध्याह—**अद्वेष्टेति** । अद्वेष्टा चेदुदासीनः स्यान्नेत्याह । मैत्रः मित्रमेव मैत्रो नतूदासीनः कदाचिदपि । नन्वन्यस्मिन् शत्रौ सति कथं मैत्रत्वं स्यात्तत्राह—**करुण इति** । दुःखदातारमपि करुणया न बाधितुमीष्टे अपितु

४ मधुसूदनीव्याख्या ।

देनान्यान्यपि साधनानि विदधौ भगवान्वासुदेवः कथं नु नाम सर्वप्रतिबन्धरहितः सन्नुत्तमाधिकारितया फलभूतायामक्षरविद्यायामवतरेदित्यभिप्रायेण साधनविधानस्य फलार्थत्वात् । तदुक्तं 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥' इति । भगवता पतञ्जलिना चोक्तं 'समाधिसिद्धिरीश्वरप्रणिधानात्' इति । 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति च । तत इतीश्वरप्रणिधानादित्यर्थः । तदेवमक्षरोपासननिन्दा सगुणोपासनस्तुतये नतु हेयतया, उदितहोमविधावनुदितहोमनिन्दावत् । 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुं' इति न्यायात् । तस्मादक्षरोपासका एव परमार्थतो योगवित्तमाः 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इत्यादिना पुनः पुनः प्रशस्ततमतयोक्तास्तेषामेव ज्ञानं धर्मजातं चानुसरणीयमधिकारमासाद्य त्वयेत्यर्जुनं बुबोधयिषुः परमहितैषी भगवानभेददर्शिनः कृतकृत्यानक्षरोपासकान्प्रस्तौति सप्तभिः—सर्वाणि भूतान्यात्मत्वेन पश्यन्नात्मनो दुःखहेतावपि प्रतिकूलबुद्ध्यभावान्न द्वेष्टा सर्वभूतानां किंतु मैत्रो मैत्री

५ भाष्योत्कर्षदीपिका ।

मन्दमतित्वादनधिकारिणामुद्धाराय करुणानिधिना भगवताऽधिकतरक्लेशं तत्र प्रदर्श्य आत्मेश्वरभेदमाश्रित्य विश्वरूपे परमेश्वरे चित्तसमाधानलक्षणयोगादिकमुक्तम् । तथाच 'अन्तस्तद्धर्मोपदेशात्' इति सूत्रस्थे कल्पतरौ 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्' इति । एवमत्रापि भगवानभेददर्शित्वात्स्वात्मभूतानामक्षररूपाणां समुद्धरणकर्मवचनमयुक्तं मन्वानः सविशेषोपासकानामुद्धरणं स्वाधीनं मन्यमान अक्षरोपासनायामधिकारसंपत्त्यर्थं सगुणोपासनां स्तौति नतु मोक्षस्यानन्यसाधनत्वेन श्रुतिस्मृतिन्यायेतिहासपुराणैस्तत्र तत्र प्रतिपादिताया इतरसाधनफलभूताया अक्षरोपासनाया हेयत्वायै । तस्मादस्मिन् जन्मनि जन्मान्तरे वा पूर्वपूर्वसाधनानुष्ठानक्रमेण प्राप्ताक्षरोपासनानां सम्यग्ज्ञाननिष्ठानां संन्यासिनां त्यक्तपुत्रदारवित्तैषणानां अद्वेष्टृत्वादिधर्मसमुदायः साक्षात्स्वातन्त्र्येण मोक्षसाधनं वक्तुकाम आह भगवान्—**अद्वेष्टेति** । सर्वभूतानां यथायथं स्वस्मादुत्कृष्टेषु स्वस्मिन्द्वेषकर्तृषु च द्वेषवर्जितः

६ श्रीधरीव्याख्या ।

क्षिप्रमेव परमेश्वरप्रसादहेतून्धर्मानाह—**अद्वेष्टेत्यष्टभिः** । सर्वभूतानां यथायथमद्वेष्टा, मैत्रः, करुणश्च उत्तमेषु द्वेषशून्यः, समेषु

७ अभिनवगुप्ताचार्यव्याख्या ।

यस्मादस्तीति । एवं करुणा ममामी इत्यादि ममकारः अहमुदारोऽहं तेजस्वी असहन इत्यादिरहंकार एतौ यस्य न स्तः । क्षमा अपकारिणं

**संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**ष्टेति । अद्वेष्टा सर्वभूतानां न द्वेष्टात्मनो दुःखहेतुमपि न किंचिद्द्वेष्टि सर्वाणि भूतान्यात्मत्वेन हि पश्यति । मैत्रो मित्रभावो मैत्री मित्रतया वा वर्तत इति मैत्रः । करुण एव च करुणा कृपा दुःखितेषु दया तद्वान्करुणः सर्वभूताभयप्रदः संन्यासीत्यर्थः । निर्ममो ममेतिप्रत्ययवर्जितो निरहंकारो निर्गताहंप्रत्ययः । समदुःखसुखः समे दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य स समदुःखसुखः क्षमी क्षमावानाक्रुष्टोऽभिहतो वाविक्रिय एवास्ते ॥ १३ ॥ संतुष्ट इति । संतुष्टः सततं नित्यं देहस्थितिकारणस्य लाभेऽलाभे चोत्पन्नालंप्रत्ययस्तथा गुणवल्लाभे विपर्यये च संतुष्टः सततं योगी समाहितचित्तो यतात्मा**

२ आनन्दगिरिव्याख्या ।

शस्य तु सर्वार्थत्वमिष्टमेवेत्यर्थः । सर्वेषां भूतानां मध्ये यो दुःखहेतुस्तं विद्वानपि द्वेष्ट्येवेत्याशङ्क्याह—**आत्मन इति** । तत्र हेतुः—**सर्वाणीति** । सर्वभूतानामित्युभयतः संबध्यते । ममप्रत्ययवर्जितो देहेऽपीति शेषः । वृत्तस्वाध्यायकृताहंकारान्निष्क्रान्तत्वमाह— **निर्गतेति** ॥ १३ ॥ अक्षरोपासकस्य ज्ञानवतो विशेषणान्तराण्याह—**संतुष्ट इति** । सततमिति सर्वत्र संबध्यते । कार्यकरणसंघातः स्वभावशब्दार्थः । स्थिरत्वं कुतर्कादिनानभिभवनीयत्वम् ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्रातुमेवेच्छति । एतेन सर्वभूताभयप्रदः संन्यासी उक्तः । अतएव तस्य निर्मम इति विशेषणं युज्यते । मुख्यमक्षरविदो लक्षणं निरहंकार इति । अहंकारो हि सर्वानर्थनिदानं स एव निर्गतो यस्मात्स निरहंकारः । अतएव समे दुःखसुखे यस्य । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति श्रुतेः । क्षमी क्षमावान्परिभवप्राप्तावपि स्वस्थचित्तः । अन्योऽपि मुमुक्षुरेतान्धर्माननुतिष्ठेदित्यर्थः ॥ १३ ॥ संतुष्टो यदृच्छालाभेनैव संजातालंप्रत्ययः । सततं सर्वदा । योगी श्रवणादौ समाहितचित्तः । यतात्मा संयतशरीरेन्द्रियादिसंघातः । दृढः स्थिर आत्मतत्त्वविषये निश्चयो यस्य स दृढनिश्चयोऽसंभावनाशून्यो दृढश्रद्धावान् । मयि निर्गुणे ब्रह्मण्यर्पिते निहिते प्रविलापिते वा मनः संकल्पादिरूपं बुद्धिरध्यवसायस्ते उभे येन स मय्यर्पितमनोबुद्धिः । एतादृशो यो मे मम भक्तः स मे मम प्रियः आत्मत्वादेव स

४ मधुसूदनीव्याख्या ।

स्निग्धता तद्वान् । यतः करुणः करुणा दुःखितेषु दया तद्वान् सर्वभूताभयदाता परमहंसपरिव्राजक इत्यर्थः । निर्ममः देहेऽपि ममेतिप्रत्ययरहितः निरहंकारः वृत्तस्वाध्यायादिकृताहंकारान्निष्क्रान्तः । द्वेषरागयोरप्रवर्तकत्वेन समे दुःखसुखे यस्य सः । अतएव क्षमी, आक्रोशनताडनादिनापि न विक्रियामापद्यते ॥ १३ ॥ तस्यैव विशेषणान्तराणि । सततं शरीरस्थितिकारणस्य लाभेऽलाभे च संतुष्ट उत्पन्नालंप्रत्ययः । तथा गुणवल्लाभे विपर्यये च । सततमिति सर्वत्र संबध्यते । योगी समाहितचित्तः ।

५ भाष्योत्कर्षदीपिका ।

समानेषु मित्रतया वर्तत इति मैत्रः । अज्ञेषु दुःखितेषु करुणा दया तद्वान्यतः सर्वाणि भूतान्यात्मत्वेनानुपश्यति । यद्वा सर्वाणि भूतान्यात्मत्वेन पश्यन्नात्मनो दुःखहेतावपि प्रतिकूलबुद्ध्यभावादद्वेष्टा सर्वभूतानां, न केवलमद्वेष्टा सर्वभूतानां किंतु मैत्रः स्नेहवान् । यतः करुणः । यद्वा सर्वभूतानामद्वेष्टा तर्हि द्वेषवर्जित उदासीनः स्यान्नेत्याह । मैत्रः । तर्हि उपकारमपेक्ष्योपकारकर्ता । बन्धनहेतुस्नेहयुक्तश्च स्यान्नेत्याह । करुणः कृपावान् । सर्वभूताभयप्रदः संन्यासीत्यर्थः । दुःखितेषु कृपया मैत्रः नतु रागादुपकारापेक्षया वा । ममत्वेन गृहीतस्य गेहादेः अहंकारास्पदत्वेन कल्पितस्य च देहादेः प्रतिकूलेषु द्वेषोऽनुकूलेषु रागश्च लोकस्य दृश्यते, तत्त्वविदः संन्यासिनस्त्वेतन्नास्तीत्याह । निर्ममो निरहंकारः ममेतिप्रत्ययवर्जितः ममतास्पदानां गेहादीनां त्यागात् वृत्तस्वाध्यायकृतादहंकारप्रत्ययान्निर्गतः । अतएव समे द्वेषरागयोरप्रवर्तके सुखदुःखे यस्य । अतएव क्षमी क्षमावान् आक्रुष्टोऽपि ताडितोऽप्यविक्रिय एवास्त इत्यर्थः ॥ १३ ॥ अक्षरोपासकं ज्ञानवन्तं विशेषणान्तरैर्विशिनष्टि—**संतुष्ट इति** ।

६ श्रीधरीव्याख्या ।

मित्रतया वर्तत इति मैत्रः । हीनेषु कृपालुरित्यर्थः । निर्ममो निरहंकारश्च । कृपालुत्वादेवान्यैः सह समे दुःखसुखे यस्य सः । क्षमी क्षमावान् ॥ १३ ॥ **संतुष्ट इति** । सततं लाभेऽलाभे च संतुष्टः प्रसन्नचित्तो योग्यप्रमत्तो यतात्मा संयतस्वभावः दृढो मद्विषयो निश्चयो

७ अभिनवगुप्ताचार्यव्याख्या ।

शत्रुंप्रत्यद्वेषबुद्धिः । सततं योगी व्यवहारावस्थायामपि प्रशान्तान्तःकरणत्वात् । अनिकेतः इदमेव मया कर्तव्यमिति यस्य नास्ति प्रतिज्ञा

१ मधुसूदनः, २ नीलकण्ठः.

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**संयतस्वभावो दृढनिश्चयो दृढः स्थिरो निश्चयोऽध्यवसायो यस्यात्मतत्त्वविषये स दृढनिश्चयो मय्यर्पितमनोबुद्धिः संकल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिस्ते मय्येवार्पिते स्थापिते यस्य संन्यासिनः स मय्यर्पितमनोबुद्धिर्य ईदृशो मद्भक्तः स मे प्रियः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति सप्तमेऽध्याये सूचितं तदिह प्रपञ्च्यते ॥ १४ ॥ यस्मादिति । यस्मात् संन्यासिनो नोद्विजते नोद्वेगं गच्छति न संतप्यते न संक्षुभ्यते लोकः । तथा लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैः हर्षश्चामर्षश्च भयं चोद्वेगश्च तैर्हर्षामर्षभयोद्वेगैर्मुक्तः । हर्षः प्रियलाभेऽन्तःकरणस्योत्कर्षो रोमाञ्चनाश्रुपातादिलिङ्गः,**

२ आनन्दगिरिव्याख्या ।

मद्भक्तो मद्भजनपरो ज्ञानवानिति यावत् । ज्ञानवतो भगवत्प्रियत्वे प्रमाणमाह—**प्रियो हीति** । किमर्थं तर्हि पुनरुच्यते तत्राह—**तदिहेति** ॥ १४ ॥ उद्वेगादिराहित्यमपि ज्ञानवतो विशेषणमित्याह—**यस्मादिति** । न केवलमुद्वेगं प्रत्यपादानत्वमेव संन्यासिनोऽनुपपन्नं किंतु तत्कर्तृत्वमपीत्याह—**तथेति** । असहिष्णुता परकीयप्रकर्षस्येति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

परमप्रेमास्पदम् 'ज्ञानी त्वात्मैव मे मतम्' इत्युक्तम् । एतेन पूर्वश्लोकोक्ताया निरहंकारतायाः साधनान्युक्तानि ॥ १४ ॥ स च निरहंकारो द्विविधः । समाधिस्थो व्युत्थितश्च । तयोर्लक्षणं क्रमेणाह द्वाभ्याम्—**यस्मादिति** । यस्मात्समाधिस्थत्वेन काष्ठसमाल्लोको नोद्विजते न त्रसति । लोकादपि यो निर्मनस्कत्वान्नोद्विजते । अतएव हर्ष इष्टलाभे सति मनस उत्फुल्लता । अमर्षोऽसहिष्णुता । भयमात्मोच्छेदशङ्का । उद्वेगस्तत्कृतैव व्याकुलता । एतैर्निर्मन-

४ मधुसूदनीव्याख्या ।

यतात्मा संयतशरीरेन्द्रियादिसङ्घातः । दृढः कुतार्किकैरभिभवितुमशक्यतया स्थिरो निश्चयोऽहमस्म्यकर्त्रभोक्तृसच्चिदानन्दाद्वितीयब्रह्मेत्यध्यवसायो यस्य स दृढनिश्चयः । स्थितप्रज्ञ इत्यर्थः । मयि भगवति वासुदेवे शुद्धे ब्रह्मणि अर्पितमनोबुद्धिः समर्पितान्तःकरणः । ईदृशो यो मद्भक्तः शुद्धाक्षरब्रह्मवित्स मे प्रियः मदात्मत्वात् ॥ १४ ॥ पुनस्तस्यैव विशेषणानि—यस्मात्सर्वभूताभयदायिनः संन्यासिनो हेतोर्नोद्विजते न संतप्यते लोको यः कश्चिदपि जनः । तथा लोकान्निरपराधोद्वेजनैकव्रतात् खलजनान्नोद्विजते च यः अद्वैतदर्शित्वात्, परमकारुणिकत्वेन क्षमाशीलत्वाच्च । किंच हर्षः स्वस्य प्रियलाभे रोमाञ्चाश्रुपातादिहेतुरानन्दाभिव्यञ्जकश्चित्तवृत्तिविशेषः, अमर्षः परोत्कर्षासहनरूपश्चित्तवृत्तिविशेषः, भयं व्याघ्रादिदर्शनाधीनश्चित्तवृत्तिविशेषस्त्रासः । उद्वेग एकाकी कथं विजने सर्वपरिग्रहशून्यो जीविष्यामीत्येवंविधो व्याकुलतारूपश्चित्तवृत्तिविशेषस्तैर्हर्षामर्षभयोद्वेगैर्मुक्तो यः, अद्वैत-

५ भाष्योत्कर्षदीपिका ।

सततमिति सर्वत्र संबध्यते । देहस्थितिकारणस्य लाभे अलाभे च सततं संतुष्टः नित्यं जातालंप्रत्ययः । समुपसर्गेण तुष्टेः परिपक्वता बोध्यते । तथा गुणवल्लाभेऽपि तद्विपर्यये च संतुष्टः । यतः सततं योगी योगाभ्यासेन समाहितान्तःकरणः । यतः सततं संयतात्मा संयतकार्यकरणसंघातः अतएव संयतात्मेति वा । यतः सततं दृढः कुतर्कवादिना नाभिभवनीयः स्थिरः निश्चयोऽध्यवसाय आत्मतत्त्वविषयो यस्य सः अतएव दृढनिश्चय इति वा । यतः सततं मयि परमात्मनि संकल्पविकल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिश्च ते मय्येव स्थापिते यस्य स यतो मय्यर्पितमनोबुद्धिरिति वा । य ईदृशो मद्भक्तः शुद्धाक्षरात्मज्ञानवान् मद्भजनपरो मे मम प्रियः । 'उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति सप्तमाध्याये सूचितस्यार्थस्यायं प्रपञ्चः ॥ १४ ॥ तमेव विशेषणान्तरैर्विशिनष्टि । यस्मात्तत्त्वविदः संन्यासिनो लोकः सर्वो जनो नोद्विजते उद्वेगं संतापं संक्षोभं न गच्छति । लोकान्नोद्विजते च यः । अतएव हर्षामर्षभयोद्वेगैर्मुक्तः प्रियलाभेऽन्तःकरणस्योत्कर्षो रोमाञ्चाश्रुपातादिलिङ्गो हर्षः, अभिलषितप्रतिघातेऽसहिष्णुताऽमर्षः, व्याघ्रादिदर्शननिबन्धनस्त्रासो भयं, दुर्जनैराक्रुष्टे ताडितेऽपि चित्तस्योद्विग्नता उद्वेगस्तै-

६ श्रीधरीव्याख्या ।

यस्य मय्यर्पिते मनोबुद्धी येन एवंभूतो यो मद्भक्तः स मे प्रियः ॥ १४ ॥ किंच—**यस्मादिति** । यस्मात्सकाशाल्लोको जनो नोद्विजते भयशङ्कया संक्षोभं न प्राप्नोति यश्च लोकान्नोद्विजते यश्च स्वाभाविकैर्हर्षादिभिर्मुक्तः । तत्र हर्षः स्वस्येष्टार्थलाभे उत्साहः, अमर्षः

७ अभिनवगुप्ताचार्यव्याख्या ।

यथाप्राप्तदेवाकितया सुखदुःखादिकमुपभुञ्जानः परमेश्वरविषयसमावेशितहृदयः सुखेनैव प्राप्नोति परमकैवल्यमिति शिवम् ॥ १३ ॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥ १६॥**
**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।**

१ श्रीमच्छांकरभाष्यम्।

अमर्षोऽभिलषितप्रतिघातेऽसहिष्णुता भयं त्रास उद्वेग उद्विग्नता तैर्मुक्तो यः स च मे प्रियः॥ १५॥ अनपेक्ष इति। देहेन्द्रियविषयसंबन्धादिष्वपेक्षाविषयेष्वनपेक्षो निःस्पृहः शुचिर्बाह्येनाभ्यन्तरेण च शौचेन संपन्नो दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यो यथावत्प्रतिपत्तुं समर्थः। उदासीनो न कस्यचिन्मित्रादेः पक्षं भजते यः स उदासीनो यतिर्गतव्यथो गतभयः। सर्वारम्भपरित्यागी आरभ्यन्त इत्यारम्भा इहामुत्रफलभोगार्थानि कामहेतूनि कर्माणि सर्वारम्भास्तान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः॥ १६॥ किंच—यो नेति। यो न हृष्यतीष्टप्राप्तौ न द्वेष्ट्यनिष्टप्राप्तौ न

२ आनन्दगिरिव्याख्या।

शेषः। त्रासस्तस्करादिदर्शनाधीनः। उद्विग्नत्वमचेतनाचेतनाधीनस्य लोकादगतित्वादिति यावत्॥ १५॥ निरपेक्षत्वादिकमपि ज्ञानिनो विशेषणमित्याह—अनपेक्ष इति। आदिपदमपेक्षणीयसर्वसंग्रहार्थं, प्रतिपत्तव्येषु प्रतिपत्तुं कर्तव्येषु कर्तुं चेत्यर्थः। परैस्ताडितस्यापि गता व्यथा भयमस्येति व्युत्पत्तिमाश्रित्याह—गतेति। नच क्षमीत्यनेन पौनरुक्त्यं प्रत्युत्पन्नायामपि व्यथायामपकर्तृष्वनपकर्तृत्वं क्षमित्वमित्यभ्युपगमात्॥ १६॥ द्वेषहर्षादिराहित्यमपि ज्ञानिनो लक्षणमित्याह—किंचेति। सर्वारम्भपरित्यागीत्यनेन विहितकाम्यत्यागस्योक्तत्वाद्विहितादन्यत्र मासङ्कोचीति

३ नीलकण्ठव्याख्या (चतुर्धरी)।

स्कत्वादेव स्वयमेव मुक्तस्त्यक्तः। नत्वेतान्स्वयं त्यक्तुं यतते साधकवत्। ईदृशो यो मद्भक्तः स च मे प्रियः॥ १५॥ अस्यैव व्युत्थानावस्थामाह—अनपेक्ष इति। सुखप्राप्तौ दुःखहाने वा तत्साधने वा लिप्साशून्योऽनपेक्षः। शुचिः बाह्याभ्यन्तरशौचवान् पुण्यापुण्याभ्यामलिप्तो वा। दक्षः भगवद्भजनादावनलसः। उदासीनो मानापमानादौ समवृत्तिः। अतएव गता व्यथा चेतःपीडा यस्य स गतव्यथः। सर्वारम्भपरित्यागी संन्यासित्वादेव। यो मद्भक्तः

४ मधुसूदनीव्याख्या।

दर्शितया तदयोग्यत्वेन तैरेव स्वयं परित्यक्तो नतु तेषां त्यागाय स्वयं व्यापृत इति यावत्। चेन मद्भक्त इत्यनुकृष्यते। ईदृशो मद्भक्तो यः स मे प्रिय इति पूर्ववत्॥ १५॥ किंच—निरपेक्षः सर्वेषु भोगोपकरणेषु यदृच्छोपनीतेष्वपि निःस्पृहः शुचिर्बाह्याभ्यन्तरशौचसंपन्नः, दक्ष उपस्थितेषु ज्ञातव्येषु कर्तव्येषु च सद्य एव ज्ञातुं कर्तुं च समर्थः, उदासीनो न कस्यचिन्मित्रादेः पक्षं भजते, यो गतव्यथः परैस्ताड्यमानस्यापि गता नोत्पन्ना व्यथा पीडा यस्य सः, उत्पन्नायामपि व्यथायामनपकर्तृत्वं क्षमित्वं, व्यथाकारणेषु सत्स्वप्यनुत्पन्नव्यथत्वं गतव्यथत्वमिति भेदः। ऐहिकामुष्मिकफलानि सर्वाणि कर्माणि सर्वारम्भास्तान्परित्यक्तुं शीलं

५ भाष्योत्कर्षदीपिका।

मुक्तो यः स च मे प्रियः॥ १५॥ निरपेक्षत्वादिकमपि ज्ञानिनो विशेषणमित्याशयेनाह। अनपेक्षः देहेन्द्रियविषयसंबन्धेषु सर्वेष्वपेक्षणीयेषु यदृच्छयोपलब्धेष्वपेक्षाशून्यो निस्पृहः। शुचिः मृदम्ब्वादिनिमित्तेन बाह्येन दयादिनाभ्यन्तरेण च शौचेन संपन्नः पुण्यापुण्याभ्यामलिप्त इति वा। अस्मिन्पक्षे प्रकरणविरोधः। पुण्यापुण्ये न करोत्यतस्ताभ्यामलिप्त इत्यर्थे तु शुभाशुभपरित्यागीत्यनेन पौनरुक्त्यं बोध्यम्। दक्षः प्रत्युत्पन्नेषु कर्तव्येषु यथावज्ज्ञातुं कर्तुं च कुशलो नत्वलसः। कस्यचिन्मित्रादेः पक्षपातं न भजत इत्युदासीनः। यैत्तु मानापमानादौ समवृत्तिरुदासीन इति तन्न। तथा मानापमानयोरित्यादिना पौनरुक्त्यापत्तेः। ताडितुमुद्यतादपि व्यथानिमित्तं गतं भयं यस्मात्। नच क्षमीत्यनेन पौनरुक्त्यं परैस्ताडितस्य प्रत्युत्पन्नायामपि पीडायां तन्निमित्तं ताडनकर्तृषु ताडनाकर्तृत्वं क्षमित्वमित्यभ्युपगमात्। अतएवैहिकामुष्मिकदुःखनिवृत्तितत्सुखप्राप्त्यर्थानि कर्माणि आरभ्यन्त इत्यारम्भास्तान् परित्यक्तुं शीलमस्य स सर्वारम्भपरित्यागी। यतो भयहेतुभूतसर्वारम्भपरित्यागी अतो गतव्यथ इति वा। यो मद्भक्तः स मे प्रियः

६ श्रीधरीव्याख्या।

परस्य लाभेऽसहनम्, भयं त्रासः, उद्वेगो भयादिनिमित्तचित्तक्षोभः एतैर्विमुक्तो यो मद्भक्तः स मे प्रियः॥ १५॥ किंच—अनपेक्ष इति। अनपेक्षो यदृच्छोपस्थितेऽप्यर्थे निस्पृहः, शुचिर्बाह्याभ्यन्तरशौचसंपन्नः, दक्षोऽनलसः, उदासीनः पक्षपातरहितः, गतव्यथ आधिशून्यः सर्वान्दृष्टादृष्टार्थानारम्भानुद्यमान्परित्यक्तुं शीलं यस्य स एवंभूतः सन् यो मद्भक्तः स मे प्रियः॥ १६॥ किंच—येनेति। प्रियं प्राप्य यो न हृष्यति, अप्रियं प्राप्य यो न द्वेष्टि, इष्टार्थनाशे सति यो न शोचति, अप्राप्तमर्थं न काङ्क्षति,

१नीलकण्ठः. २ नीलकण्ठः.

**शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥**
**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥**
**तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

शोचति प्रियवियोगे न चाप्राप्तं काङ्क्षति शुभाशुभे पुण्यपापे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥ सम इति । समः शत्रौ च मित्रे तथा मानापमानयोः पूजापरिभवयोः शीतोष्णसुखदुःखेषु समः सर्वत्र च सङ्गवर्जितः ॥ १८ ॥ किंच—तुल्यनिन्देति । तुल्यनिन्दास्तुतिः निन्दा च स्तुतिश्च निन्दास्तुती ते तुल्ये यस्य स तुल्यनिन्दास्तुतिर्मौनी मौनवा-

२ आनन्दगिरिव्याख्या ।

विशिनष्टि—**शुभाशुभेति** ॥ १७ ॥ **सम इति** । अद्वेष्टेत्यादिना द्वेषादिविशेषाभाव उक्तः, संप्रति सर्वत्रैवाविकृतचित्तत्वमुच्यते । सर्वत्र चेतने स्त्र्यादावचेतने च चन्दनादावित्यर्थः ॥ १८ ॥ वाग्यतत्वादिविशेषणमपि ज्ञाननिष्ठस्यास्तीत्याह—**किंचेति** । निन्दा दोषसंकीर्तनं, स्तुतिर्गुणगणनम्, देहस्थितिमात्रफलेनान्नादिना ज्ञानिनः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स मे प्रियः ॥ १६ ॥ एतमेव श्लोकं व्याचष्टे त्रिभिः श्लोकैः—**यो नेति** । इष्टलाभे सति न हृष्यति । अनिष्टप्राप्तौ न द्वेष्टि । इष्टवियोगे सति न शोचति । इष्टसंयोगमनिष्टपरिहारं वा न काङ्क्षति । अनपेक्षत्वात् । शुभं कल्याणं पुण्यं अशुभममङ्गलं पापं च ते उभे परित्यक्तुं शीलमस्य स शुभाशुभपरित्यागी । एतेन शुचित्वं व्याख्यातम् । भक्तिमान्भक्तौ सततोद्युक्त इति दक्ष इत्यर्थः ॥ १७ ॥ उदासीनत्वं व्याचष्टे—**सम इति** । गतव्यथत्वमुपपादयति—**सङ्गविवर्जित इति** । सङ्गी हि व्यथते नतु तद्वर्जित इत्यर्थः ॥ १८ ॥ सर्वारम्भपरित्यागीत्येतद्व्याचष्टे—**तुल्येति** ।

४ मधुसूदनीव्याख्या ।

यस्य स सर्वारम्भपरित्यागी संन्यासी यो मद्भक्तः स मे प्रियः ॥ १६ ॥ किंच समदुःखसुख इत्येतद्विवृणोति—यो न हृष्यति इष्टप्राप्तौ, न द्वेष्टि अनिष्टप्राप्तौ, न शोचति प्राप्तेष्टवियोगे, न काङ्क्षति अप्राप्तेष्टसंयोगे । सर्वारम्भपरित्यागीत्येतद्विवृणोति—शुभाशुभे सुखसाधनदुःखसाधने कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥ किंच पूर्वस्यैव प्रपञ्चः । सङ्गविवर्जितः चेतनाचेतनसर्वविषयशोभनाध्यासरहितः । सर्वदा हर्षविषादशून्य इत्यर्थः । स्पष्टमन्यत् ॥ १८ ॥ किंच—निन्दा दोषकथनम् । स्तुतिर्गुणकथनम् । ते दुःखसुखजनकतया तुल्ये यस्य स तथा । मौनी संयतवाक् ।

५ भाष्योत्कर्षदीपिका ।

॥ १६ ॥ किंच हर्षादिराहित्यमपि तत्त्वविदो विशेषणमित्याशयेनाह—**य इति** । यत्तु एतमेव श्लोकं व्याचष्टे त्रिभिः श्लोकैर्य इति तदुपेक्ष्यम् । भाष्योक्तरीत्याऽपौनरुक्त्यसंभवे व्याख्यानव्याख्येयकल्पनाया अन्याय्यत्वात् । यः इष्टप्राप्तौ न हृष्यति हर्षं न प्राप्नोति । अनिष्टप्राप्तौ न द्वेष्टि द्वेषं न करोति । अद्वेष्टा सर्वभूतानामित्यत्र सर्वभूतेषु सामान्यद्वेषाभावः स्वाभाविक उक्तः, अत्र त्वनिष्टप्राप्तौ तत्प्रयुक्तद्वेषविशेषाभाव इत्यपौनरुक्त्यम् । प्रियवियोगे न शोचति शोकं मानसं तापं नाङ्गीकरोति । अप्राप्तं च न काङ्क्षति । शुभाशुभे पुण्यपापे कर्मणी परित्यक्तुं शीलमस्येति तथा सर्वारम्भपरित्यागीत्यनेन वेदोक्तनित्यनैमित्तिककाम्यकर्मातिरिक्तसर्वारम्भपरित्यागीति सर्वपदसंकोचो माभूदित्यत उक्तं शुभाशुभपरित्यागीति । भक्तिमान् यः स मे प्रियः ॥ १७ ॥ किंच समः शत्रौ च मित्रे च तथा मानापमानयोः पूजापरिभवयोः शीतोष्णसुखदुःखेषु समः समदुःखसुख इत्यत्र सामान्यसुखदुःखयोर्ग्रहणम् । अत्र तु शीतोष्णनिबन्धनयोरित्यपौनरुक्त्यम् । एतत्सर्वं कुत इत्यत आह । यतः सर्वत्र सङ्गेन संसर्गेण विवर्जितः सङ्गस्यैव सर्वदोषजनकत्वान्न कस्यापि सङ्गं करोतीत्यर्थः । अद्वेष्टेत्यादिना द्वेषादिविशेषाभाव उक्तः । संप्रति सर्वत्रैवाविकृतचित्तत्वमुच्यते । सर्वत्र चेतने स्त्र्यादावचेतने चन्दनादावित्यर्थं इति भाष्यटीकाकृतः ॥ १८ ॥ किंचैतदपि तत्त्वविदो विशेषणमित्याह—**तुल्येति** । दोषानुवर्णनं

६ श्रीधरीव्याख्या ।

शुभाशुभे पुण्यपापे परित्यक्तुं शीलं यस्य एवंभूतो भूत्वा यो मद्भक्तिमान्स मे प्रियः ॥ १७ ॥ किंच—**सम इति** । शत्रौ च मित्रे च सम एकरूपः, मानापमानयोरपि तथा सम एव । हर्षविषादशून्य इत्यर्थः । शीतोष्णयोः सुखदुःखयोश्च समः सङ्गविवर्जितः क्वचिदप्यनासक्तः ॥ १८ ॥ **तुल्य इति** । तुल्ये निन्दास्तुती यस्य, मौनी संयतवाक्, येन केनचिद्यथालब्धेन संतुष्टः, अनिकेतो नियत-

---

१ नीलकण्ठः,

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

१ श्रीमच्छांकरभाष्यम् ।

न्संयतवाक्संतुष्टो येन केनचिच्छरीरस्थितिमात्रेण । तथाचोक्तं 'येनकेनचिदाच्छन्नो येनकेनचिदाशितः । यत्रक्कचनशायी स्यात्तं देवा ब्राह्मणं विदुः ॥' इति । किंचानिकेतो निकेत आश्रयो निवासो नियतो न विद्यते यस्य सोऽयमनिकेतोऽनागार इत्यादि स्मृत्यन्तरात् । स्थिरमतिः स्थिरा परमार्थवस्तुविषया मतिर्यस्य स स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥ अद्वेष्टा सर्वभूतानामित्यादिनाक्षरस्योपासकानां निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तमुपसंह्रियते— ये त्विति । ये तु संन्यासिनो धर्म्यामृतं धर्मादनपेतं धर्म्यं च तदमृतं तदमृतत्वहेतुत्वादिदं यथोक्त-

२ आनन्दगिरिव्याख्या ।

संतुष्टत्वे स्मृतिं प्रमाणयति—**तथाचेति** । नियतनिवासराहित्यमपि ज्ञानवतो विशेषणमित्याह—**किंचेति** । 'न कुड्यां नोदके सङ्गो न चैले न त्रिपुष्करे । नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः' इति स्मृतिमुक्तेऽर्थे प्रमाणयति—**नेत्यादिना** । पुनःपुनर्भक्तेर्ग्रहणमपवर्गमार्गस्य परमार्थज्ञानस्योपायत्वार्थम् ॥ १९ ॥ अद्वेष्टेत्यादिधर्मजातं ज्ञानवतो लक्षणमुक्तं तदुपपादितमनूद्योपसंहारश्लोकमवतारयति—**अद्वेष्टेत्यादिना** । चतुर्थपादस्य तात्पर्यमाह—

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

शिष्टेषु विगीतो न स्यामिति वा लोकेषु प्रख्यातः स्यामिति वा इदं मे भूयादिति वा कामयमानः किंचिदारभते नत्वयम् । तुल्यनिन्दास्तुतित्वात्संतुष्टत्वाच्च । मौनी संन्यासी । अतएवानिकेतो गृहशून्यः । कुटीमपि वासार्थं नारभते । यतः स्थिरमतिः स्थितप्रज्ञो भक्तिमान्योगी मे मम प्रियो नरः पुरुषः ॥ १९ ॥ मुक्तलक्षणान्येव मुमुक्षोः साधनत्वेन विधत्ते—**ये त्विति** । ये मुमुक्षवः तु पूर्वोक्तमुक्तापेक्षया विलक्षणाः । इदं 'अद्वेष्टा सर्वभूतानाम्' इत्यादिना ग्रन्थेन

४ मधुसूदनीव्याख्या ।

ननु शरीरयात्रानिर्वाहाय वाग्व्यापारोऽपेक्षित एव नेत्याह—संतुष्टो येनकेनचित् । स्वप्रयत्नमन्तरेणैव बलवत्प्रारब्धकर्मोपनीतेन शरीरस्थितिहेतुमात्रेणाशनादिना संतुष्टो निवृत्तस्पृहः । किंच—अनिकेतो नियतनिवासरहितः । स्थिरा परमार्थवस्तुविषया मतिर्यस्य स स्थिरमतिः । ईदृशो यो भक्तिमान् स मे प्रियो नरः । अत्र पुनःपुनर्भक्तेरुपादानं भक्तिरेवापवर्गस्य पुष्कलं कारणमिति द्रढयितुम् ॥ १९ ॥ अद्वेष्टेत्यादिनाऽक्षरोपासकादीनां जीवन्मुक्तानां संन्यासिनां लक्षणभूतं स्वभावसिद्धं धर्मजातमुक्तं । यथोक्तं वार्तिके 'उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः । अयत्नतो भवन्त्येव नतु साधनरूपिणः ॥' इति । एतदेव च पुरा स्थितप्रज्ञलक्षणरूपेणाभिहितम् । तदिदं धर्मजातं प्रयत्नेन संपाद्यमानं मुमुक्षोर्मोक्षसाधनं भवतीति प्रतिपादयन्नुपसंहरति—ये तु संन्यासिनो मुमुक्षवो धर्म्यामृतं धर्मरूपममृतं अमृतत्वसाधनत्वात् अमृतवदास्वाद्यत्वाद्वा, इदं यथोक्तमद्वेष्टा

५ भाष्योत्कर्षदीपिका ।

निन्दा । गुणानुकीर्तनं स्तुतिः । तुल्ये निन्दास्तुती यस्य सः निन्दास्तुतिभ्यां विषादं हर्षं च न प्राप्नोतीत्यर्थः । अतएव स्वयमपि कस्यचिन्निन्दां स्तुतिं वा न करोतीत्याह । मौनी यतवाक् । ननु वाग्व्यापारस्य चित्तानुकूलपदार्थलाभार्थमपेक्षितत्वात्कथं मौनीति चेत्तत्राह । संतुष्टो येनकेनचित् प्रारब्धवशादागतेन शरीरस्थितिहेतुमात्रेण समीचीनेनासमीचीनेन वा सम्यक् तुष्टः तदतिरिक्ते तृष्णाशून्यस्तदभावाच्च विषयप्राप्त्यर्थवाग्व्यापारादिवर्जित इत्यर्थः । तथाच स्मृतिः—'येनकेनचिदाच्छन्नो येनकेनचिदाशितः । यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः ॥' इति । वासस्थानमपि तस्य नियतं नास्तीत्याह । अनिकेतः निकेत आश्रयो निवासो नियतो न विद्यते यस्य सः । तथाच स्मृत्यन्तरं 'न कुड्यां नोदके सङ्गो न चैले न त्रिपुष्करे । नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः' ॥ इति । एतत्सर्वं कुत इत्यत आह । स्थिरमतिः स्थिरा परमार्थविषया मतिर्यस्य सः दृढतया परमात्मनि यस्य मतिः स्थिता स इति

६ श्रीधरीव्याख्या ।

वासशून्यः, स्थिरमतिर्व्यवस्थितचित्तः, एवंभूतो मद्भक्तिमान्यः स मे प्रियो नरः ॥ १९ ॥ उक्तं धर्मजातं सफलमुपसंहरति— ये त्विति । यथोक्तमुक्तप्रकारं धर्मं एवामृतममृतत्वसाधनत्वात् । धर्म्यामृतमिदमिति केचित्पठन्ति । तच्च उपासतेऽनुतिष्ठन्ति श्रद्धां

१ धर्मामृतम् इति नीलकण्ठ-श्रीधरसंमतः पाठः.

१ श्रीमच्छांकरभाष्यम् ।

**मद्वेष्टा सर्वभूतानामित्यादिना पर्युपासतेऽनुतिष्ठन्ति श्रद्दधानाः सन्तो मत्परमा यथोक्तोऽहमक्षरात्मा परमो निरतिशया गतिर्येषां ते मत्परमा मद्भक्ताश्चोत्तमां परमार्थज्ञानलक्षणां भक्तिमाश्रितास्तेऽतीव मे प्रियाः। प्रियो हि ज्ञानिनोऽत्यर्थमिति यत्सूचितं तद्व्याख्यायेहोपसंहृतं भक्तास्तेऽतीव मे**

२ आनन्दगिरिव्याख्या ।

**प्रियो हीति ।** यद्यपि यथोक्तं धर्मजातं ज्ञानवतो लक्षणं तथापि जिज्ञासूनां ज्ञानोपायत्वेन यत्नादनुष्ठेयमिति वाक्यार्थमुपसंहरति—**यस्मादिति ।** तदेवं सोपाधिकाभिध्यानपरिपाकान्निरुपाधिकमनुसंदधानस्याद्वेष्टा सर्वभूतानामित्यादि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रतिपादितं धर्मजातं तदेवामृतस्य मोक्षस्य साधनत्वादमृतं धर्मामृतम् । यथोक्तमुक्तानतिक्रमेण पर्युपासते साकल्येनानुतिष्ठन्ति । श्रद्दधानाः श्रद्धायुक्ताः मत्परमाः अहमेव भगवान्वासुदेवोऽक्षराख्यः सर्वविशेषरहितः परमानन्दरूपः परमः पार्यन्तिकः प्राप्यो येषां ते मत्परमाः भक्ताः शान्तिदान्त्यादिमन्तो मद्भजनशीलास्तेऽतीव मे मम प्रियाः। ज्ञानी तु भगवत आत्मैव । परिशेषादतीव प्रियत्वं भक्तेष्वेव पर्यवसन्नम् । यो मुक्तानां स्वाभाविको धर्मः स मुमुक्षुणा यत्नतोऽनुष्ठेय इत्यर्थः । यथोक्तं वार्तिके 'उत्पन्नात्मप्रबोधस्य ह्यद्वेष्टृत्वादयो गुणाः। अयत्नतो भवन्त्येव न तु साध-

४ मधुसूदनीव्याख्या ।

सर्वभूतानामित्यादिना प्रतिपादितं पर्युपासतेऽनुतिष्ठन्ति प्रयत्नेन श्रद्दधानाः सन्तो मत्परमा अहं भगवानक्षरात्मा वासुदेव एव परमः प्राप्तव्यो निरतिशया गतिर्येषां ते मत्परमा भक्ता मां निरुपाधिकं ब्रह्म भजमानास्तेऽतीव मे प्रियाः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति पूर्वसूचितस्यायमुपसंहारः । यस्माद्धर्म्यामृतमिदं श्रद्धयानुतिष्ठन्भगवतो विष्णोः परमेश्वरस्यातीव प्रियो भवति तस्मादिदं ज्ञानवतः स्वभावसिद्धतया लक्षणमपि मुमुक्षुणात्मतत्त्वजिज्ञासुनात्मज्ञानोपायत्वेन यत्नादनुष्ठेयं विष्णोः परमं पदं जिगमिषुणेति वाक्यार्थः । तदेवं सोपाधिब्रह्माभिध्यानपरिपाकान्निरुपाधिकं ब्रह्मानुसंदधानस्याद्वेष्टृत्वादिधर्मविशिष्टस्य मुख्यस्याधिकारिणः श्रवणमनननिदिध्यासनान्यावर्तयतो वेदान्तवाक्यार्थतत्त्वसाक्षात्कार-

५ भाष्योत्कर्षदीपिका ।

यावत् । यत एवमतः स्थिरमतिरिति वा । एतादृशो भक्तिमान्नरो मे प्रियः । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति तत्त्वविदो भक्तस्य श्रैष्ठ्यमुपक्षिप्तं तदेव द्रढयितुं पुनःपुनस्तस्यैवान्येषां विशेषणानां विशेष्यत्वेन स्वप्रेमास्पदत्वेन च ग्रहणम् । तथाच भाष्यं 'उत्तमां परमार्थज्ञानलक्षणां भक्तिमास्थितास्तेऽतीव मे प्रिया' इत्यादि । पुनःपुनर्भक्तेर्ग्रहणमपवर्गमार्गस्य परमार्थज्ञानस्योपायत्वार्थमिति तु भाष्यटीकाकृतः ॥ १९ ॥ अद्वेष्टा सर्वभूतानामित्यादिनाक्षरोपासकानां निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातमुपपाद्योपसंहरति—**ये त्विति ।** येतु इदमद्वेष्टा सर्वभूतानामित्यादिना यथोक्तं धर्मामृतं धर्मश्च तदमृतत्वसाधनत्वादमृतं नतु स्वरूपतः । कष्टात्मकत्वात्साधनजातस्य । येतु श्रद्दधानाः परया श्रद्धया युक्ताः सन्तो मत्परमा अहमेवाक्षरात्मा परमो निरतिशया गतिर्येषां ते पर्युपासतेऽनुतिष्ठन्ति मद्भक्ताः उत्तमां परमार्थज्ञानलक्षणां भक्तिमास्थितास्ते मे मम वासुदेवस्य परमात्मनोऽतिशयेन प्रियाः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं सच मम प्रियः' इति यत्सूचितं तत्प्रतिपाद्योपसंहृतं भक्तास्तेऽतीव मे प्रिया इति । यस्माद्यथोक्तमिदं धर्मामृतमनुतिष्ठन् भगवतो वासुदेवस्यातिशयेन प्रियो भवति तस्माद्वासुदेवस्य विष्णोः प्रियं धाम जिगमिषुणा मुमुक्षुणा इदं धर्मामृतं यथावद्यत्नतोऽनुष्ठेयमिति वाक्यार्थः । एवं द्वादशाध्यायेन सोपाधिकध्यानपरिपाकान्निरुपाधिकमक्षरमनुसंदधानस्याद्वेष्टा सर्वभूतानामित्यादिधर्मविशिष्टस्य श्रवणाद्यावर्तनेन परमार्थज्ञानवतो मुख्याधिकारिणः साक्षान्मोक्षप्राप्तियोग्यत्वं निरूपयता सोपाधिकनिरुपाधिकस्तत्पदार्थः प्रदर्शितः ॥ २० ॥

यं संराध्य दुरत्ययां प्रकृतिमुन्मुच्याप्नुवन्त्यक्षरं ध्येयं ज्ञेयमनेकयोगविभवैर्युक्तं परं कारणम् ।
विश्वाकारमनाद्यनन्तममलं भक्तप्रियं माधवं देवेशं शुभमध्यषट्कविदितं तं तत्पदार्थं भजे ॥ १ ॥

६ श्रीधरीव्याख्या ।

कुर्वन्तो मत्परमाश्च सन्तो मद्भक्ता अतीव मे प्रिया इति ॥ २० ॥

दुःखमन्यक्तवर्त्मैतद्यद्बुविभ्रमतो बुधः । सुखं कृष्णपदाम्भोजभक्तिसत्पथमाभजेत् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां द्वादशोऽध्यायः ॥ १२ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ अत्र संग्रहश्लोकः—परमानन्दवैवश्यसंजातावेशसंपदः । स्वयं सर्वास्ववस्थासु ब्रह्मसत्ता ह्ययत्नतः ॥ इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे द्वादशोऽध्यायः ॥ १२ ॥

१ श्रीमच्छांकरभाष्यम् ।

प्रिया इति । यस्माद्धर्म्यामृतमिदं यथोक्तमनुतिष्ठन्भगवतो विष्णोः परमेश्वरस्यातीव मे प्रियो भवति तस्मादिदं धर्म्यामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं विष्णोः प्रियं परं धाम जिगमिषुणेति वाक्यार्थः ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

२ आनन्दगिरिव्याख्या ।

धर्मविशिष्टस्य मुख्यस्याधिकारिणः श्रवणाद्यावर्तयतस्तत्त्वसाक्षात्कारसंभवात्ततो मुक्त्युपपत्तेस्तद्धेतुवाक्यार्थधीविष-(योऽन्व)ययोग्यस्तत्पदार्थोऽनुसंधेय इति सिद्धम् ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ द्वादशोऽध्यायः ॥ १२ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नरूपिणः ॥' इति । समाप्त उपासनाप्रधानस्तत्पदार्थविवेकः । अतःपरं वाक्यार्थविचारो जीवब्रह्माभेदप्रतिपादको भविष्यति ॥ २० ॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे द्वादशोऽध्यायः ॥ १२ ॥

४ मधुसूदनीव्याख्या ।

संभवात्ततो मुक्त्युपपत्तेर्मुक्तिहेतुवेदान्तमहावाक्यार्थान्वययोग्यस्तत्पदार्थोऽनुसंधेय इति मध्यमेन षट्केन सिद्धम् ॥
जीवन्मुक्तेर्निर्विकल्पाद्विशिष्टा निष्ठोक्तातोऽजेन भक्तेर्वरिष्ठा । तत्रानन्दाब्धौ कृता मे प्रतिष्ठा येनातस्तं काशिराजं भजेऽहम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थ-दीपिकायां भक्तियोगविवरणं नाम द्वादशोऽध्यायः ॥ १२ ॥

५ भाष्योत्कर्षदीपिका ।

सुधाधाराधारं विधुरमधराद्यैरघहरं धराधाराधारं निखिलजगदाधारमजरम् ।
निराधारं सारं जलजजमुखैर्ध्येयचरणं शिवं कृष्णं वन्दे सकलजनकं भक्तिसुलभम् ॥ २ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां द्वादशोऽध्यायः ॥ १२ ॥



ज्ञानषट्कमारभ्यते—

# त्रयोदशोऽध्यायः ।

*श्रीभगवानुवाच ।

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**सप्तमेऽध्याये सूचिते द्वे प्रकृती ईश्वरस्य । त्रिगुणात्मिकाष्टधा भिन्नाऽपरा संसारहेतुत्वात्परा चान्या जीवभूता क्षेत्रज्ञलक्षणेश्वरात्मिका । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिलयहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारेण तद्वत ईश्वरस्य तत्त्वनिर्धारणार्थं क्षेत्राध्याय आरभ्यते ।**

२ आनन्दगिरिव्याख्या ।

प्रथममध्यमयोः षट्कयोस्त्वंतत्पदार्थावुक्तौ, अन्तिमस्तु षट्को वाक्यार्थनिष्ठः सम्यग्धीप्रधानोऽधुनारभ्यते । तत्र क्षेत्राध्यायमन्तिमषट्काद्यमवतितारयिषुर्व्यवहितं वृत्तं कीर्तयति—**सप्तम इति** । प्रकृतिद्वयस्य स्वातन्त्र्यं वारयति—**ईश्वरस्येति** । भूमिरित्यादिनोक्ता सत्त्वादिरूपा प्रकृतिरपरेत्यत्र हेतुमाह—**संसारेति** । इतस्त्वन्यामित्यादिनोक्तां प्रकृतिमनुक्रामति—**परा चेति** । परत्वे हेतुं सूचयति—**ईश्वरात्मिकेति** । किमर्थमीश्वरस्य प्रकृतिद्वयमित्याशङ्क्य कारणत्वार्थमित्याह—**याभ्यामिति** । वृत्तमनूद्य वर्तिष्यमाणाध्यायारम्भप्रकारमाह—**तत्रेति** । व्यवहितेन संबन्ध-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ननु 'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते । नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' इति द्वितीये त्वंपदार्थस्वरूपमुक्तम् । तथा द्वादशे 'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते । सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्' इति तत्पदार्थस्वरूपमुक्तम् । नच तयोर्भेदः संभवति । लक्षणैक्यात् । लक्षणं हि तयोरव्यक्तत्वमचिन्त्यत्वमचलत्वं

४ मधुसूदनीव्याख्या ।

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं ज्योतिः किंचन योगिनो यदि परं पश्यन्ति पश्यन्तु ते ।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं कालिन्दीपुलिनोदरे किमपि यन्नीलं महो धावति ॥ १ ॥

प्रथममध्यमषट्कयोस्तत्त्वंपदार्थावुक्तावुत्तरस्तु षट्को वाक्यार्थनिष्ठः सम्यग्धीप्रधानोऽधुनारभ्यते । तत्र 'तेषामहं समुद्धर्ता मृत्यु-

५ भाष्योत्कर्षदीपिका ।

यो मायां जगदेकमोहनकरीमाश्रित्य सृष्ट्वालयं देहं जीवतयानुविश्य मतिभिः संयाति नानात्मताम् ।
वन्दे तं परमार्थतः सुखघनं ब्रह्माद्वयं केवलं कृष्णं वेदशिरोभिरेव विदितं श्रीशंकरं शाश्वतम् ॥ १ ॥
आकाशस्य यथा घटादिभिरसौ भेदो नचास्त्यर्थत एवं ब्रह्मणि निर्गुणेऽतिविमले बुद्ध्यादिभिः कल्पितः ।
यस्मिन्नेकरसे विमायममितं तं वासुदेवं भजे सत्यानन्दचिदात्मकं गुरुगुरुं शर्वं तमोनाशकम् ॥ २ ॥
देवीं भक्तजनार्थसार्थजननीं प्रत्यूहदैत्यार्दिनीं भानुं भानुमृगेन्द्रसूदितमहद्विघ्नौघनागं प्रभुम् ।
शुण्डावज्रनिरस्तसर्वदुरितागं पावनं मङ्गलं ध्येयं नौमि गजाननं सुरगणैरिन्द्रं गणानां विभुम् ॥ ३ ॥

एवं षट्कद्वयेन त्वंपदार्थं तत्पदार्थं च प्रतिपाद्याखण्डार्थप्रतिपादनाय तृतीयषट्कमारभ्यते । तत्र 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते

६ श्रीधरीव्याख्या ।

भक्तानामहमुद्धर्ता संसारादित्यवादि यत् । त्रयोदशेऽथ तत्सिद्ध्यै तत्त्वज्ञानमुदीर्यते ॥ १ ॥

'तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि' इति पूर्वं प्रतिज्ञातं तच्च चात्मज्ञानं विना संसारादुद्धरणं संभवति इति तत्त्व-

७ अभिनवगुप्ताचार्यव्याख्या ।

क्वचिच्छ्रुतौ क्षेत्रज्ञ उपास्य इति श्रूयते सच किमात्मा उतेश्वरः अथ तृतीयः कश्चिदन्य एवेति प्रश्नाशङ्कायां श्रीभगवानादिशति—प्रकृतिं

* अत्रादौ अर्जुन उवाच—प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च । एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ १ ॥ इति श्लोकं केचित्पठन्ति स भाष्यकारादिभिरव्याख्यातत्वान्निर्मूल इत्युपेक्ष्यः.

१ श्रीमच्छांकरभाष्यम् ।

**अतीतानन्तराध्याये चाद्वेष्टा सर्वभूतानामित्यादिना यावदध्यायपरिसमाप्तिस्तावत्तत्त्वज्ञानिनां संन्यासिनां निष्ठा यथा ते वर्तन्ते इत्येतदुक्तं, केन पुनस्ते तत्त्वज्ञानेन युक्ता यथोक्तधर्माचरणाद्भगवतः प्रिया भवन्तीत्येवमर्थश्चायमध्याय आरभ्यते । प्रकृतिश्च त्रिगुणात्मिका सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गार्थकर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते सोऽयं संघात इदं शरीरं तदेतद् श्रीभगवानुवाच—इदमिति । इदमिति सर्वनाम्नोक्तं विशिनष्टि—शरीरमिति । हे कौन्तेय क्षतत्राणा-**

२ आनन्दगिरिव्याख्या ।

मुक्त्वाऽव्यवहितेन तं विवक्षुरव्यवहितमनुवदति—**अतीतेति** । निष्ठोक्तेति संबन्धः । निष्ठामेव व्याचष्टे—**यथेति** । वर्तन्ते धर्मजातमनुतिष्ठन्ति तथा पूर्वोक्तेन प्रकारेण सर्वमुक्तमिति योजना । अव्यवहितमेवानूद्य तेनोत्तरस्य संबन्धं संगिरते—**केनेति** । तत्त्वज्ञानोक्तेरुक्तार्थेन समुच्चयार्थश्चकारः । जीवानां सुखदुःखादिभेदभाजां प्रतिक्षेत्रं भिन्नानां नाक्षरेणैक्यमित्याशङ्क्य संसारस्यात्मधर्मत्वं निराकृत्य संघातनिष्ठत्वं वक्तुं संघातोत्पत्तिप्रकारमाह—**प्रकृतिश्चेति** । भोगश्चापवर्गश्चार्थौ तयोरेव कर्तव्यतयेति यावत् । नन्वनन्तरश्लोके शरीरनिर्देशात्तस्योत्पत्तिर्वक्तव्या किमिति संघातस्योच्यते तत्राह—**सोऽयमिति** । उक्तेऽर्थे भगवद्वचनमवतारयति—**तदेतदिति** । तत्र द्रष्टृत्वेन संघातदृश्यादन्यमात्मानं निर्दिशति—**इदमिति** । उक्तं प्रत्यक्षदृश्यविशिष्टं किंचिदिति शेषः । शरीरस्यात्मनोऽन्यत्वं क्षेत्रनामनिरुक्त्या

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सर्वगतत्वं चेत्यादि समानम् । नच द्वयोः सर्वगतत्वं संभवति । अन्योन्यव्यावृत्तत्वेनासर्वगतत्वापत्तेः । नच लक्षणभेदाभावेऽपि तत्तदात्मगतविशेषाः सन्ति ये मुक्तात्मनां जीवेशयोश्चान्योन्यं भेदमावहन्ति स्वात्मानं च स्वाश्रयात्स्वयमेव व्यावर्तयन्तीति वाच्यम् । विशेषाणां सत्त्वे प्रमाणाभावात् । ननु मा सन्तु विशेषाः बन्धमोक्षादिव्यवस्थान्यथानुपपत्त्या तु निर्विशेषेष्वपि पुरुषेषु भेदः सिध्यति । यथोक्तं सांख्यवृद्धैः 'जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव' इति । जन्मादिव्यवस्थातो युगपत्प्रवृत्त्यदर्शनात् सात्त्विकराजसादिभेदाच्च न पुरुषैक्यमित्यर्थ इति चेन्न । व्यापकानेकात्मवादे भोगसांकर्यप्रसङ्गात् । नह्येकत्रान्तःकरणे सुखादिरूपेण परिणते तत्प्रतिसंवेदी एक एव चेतन इति नियन्तुं शक्यम् । सर्वेषां सान्निध्याविशेषेण प्रतिसंवेदनापत्तेरवर्जनीयत्वात् । श्रोत्रस्यैकस्यापि कर्णशष्कुलीरूपोपाधिभेदादिवान्तःकरणरूपोपाधिभेदादेकस्याप्यात्मनः शब्दग्रहव्यवस्थावज्जन्मादिव्यवस्थापि सेत्स्यतीति न पुरुषबहुत्वं वक्तव्यम् । ततश्च जीवेशयोर्लक्षणैक्यादभेदे सिद्धे किमुत्तरग्रन्थेन तत्प्रतिपादनार्थेनेति चेत्सत्यम् । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति श्रुतेर्विद्यावस्थायां भेदाभावेऽपि अविद्यावस्थायां 'अन्तःप्रविष्टः शास्ता जनानाम्' 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते' इतिव्यवहारदशायां शास्यशासितृभावेन कर्तृकारयितृभावेन च प्रसक्तस्य जीवेश्वरयोर्भेदस्य निरासार्थत्वादुत्तरग्रन्थस्यारम्भ उपपद्यते । तत्रानुपदोक्तेन तत्पदार्थेन सहास्याभेदं वक्तुं योग्यतायै भास्यभासकभावेन क्षेत्रात्क्षेत्रज्ञस्य कुम्भाद्भास्वत इव विवेकं दर्श-

४ मधुसूदनीव्याख्या ।

संसारसागराद्भवामि' इति प्रागुक्तं । नचात्मज्ञानलक्षणान्मृत्योरात्मज्ञानं विनोद्धरणं संभवति । अतो यादृशेनात्मज्ञानेन मृत्युसंसारनिवृत्तिर्येन च तत्त्वज्ञानेन युक्ता अद्वेष्टृत्वादिगुणशालिनः संन्यासिनः प्राग्व्याख्यातास्तदात्मतत्त्वज्ञानं वक्तव्यम् । तच्चाद्वितीयेन परमात्मना सह जीवस्याभेदमेव विषयीकरोति तद्भेदभ्रमहेतुकत्वात्सर्वानर्थस्य । तत्र जीवानां संसारिणां प्रतिक्षेत्रं भिन्नानामसंसारिणैकेन परमात्मना कथमभेदः स्यादित्याशङ्कायां संसारस्य भिन्नत्वस्य चाविद्याकल्पितानात्मधर्मत्वान्न जीवस्य संसारित्वं भिन्नत्वं चेति वचनीयं । तदर्थं देहेन्द्रियान्तःकरणेभ्यः क्षेत्रेभ्यो विवेकेन क्षेत्रज्ञः पुरुषो जीवः प्रतिक्षेत्रमेक एव निर्विकार इति प्रतिपादनाय क्षेत्रक्षेत्रज्ञविवेकः क्रियतेऽस्मिन्नध्याये । तत्र ये द्वे प्रकृती भूम्यादिक्षेत्ररूपतया जीवरूपक्षेत्रज्ञतया

५ भाष्योत्कर्षदीपिका ।

जगत् । एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥' इति सप्तमेऽध्याये त्रिगुणात्मिका क्षेत्रलक्षणा संसारहेतुत्वादपरैका, अन्या च जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मकत्वात्परेतीश्वरस्य द्वे प्रकृती सूचिते । याभ्यामीश्वरो जगदुत्पत्त्यादिहेतुत्वं प्रतिपद्यते । तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारा तद्वत ईश्वरस्य तत्त्वनिर्णयार्थं द्वादशाध्याये च 'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च' इत्यादितत्त्वज्ञविशेषणान्युक्तानि । येन पुनस्तत्त्वज्ञानेन संपन्ना यथोक्तविशेषणविशिष्टा मम प्रिया

६ श्रीधरीव्याख्या ।

ज्ञानोपदेशार्थं प्रकृतिपुरुषविवेकाध्याय आरभ्यते । तत्र यत्सप्तमेऽध्याये अपरा परा चेति प्रकृतिद्वयमुक्तं तयोरविवेकाज्जीवभावमापन्नस्य निर्दिशस्यायं संसारः याभ्यां च जीवोपभोगार्थमीश्वरः सृष्ट्यादिषु प्रवर्तते तदेव प्रकृतिद्वयमुक्तं क्षेत्रक्षेत्रज्ञशब्दवाच्यं परस्परं विविक्तं

## क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।

१ श्रीमच्छांकरभाष्यम् ।

**त्क्षयात्क्षरणात्क्षेत्रवद्वास्मिन्कर्मफलनिर्वृत्तेः क्षेत्रमिति । इतिशब्द एवंशब्दपदार्थकः क्षेत्रमित्येवमभिधीयते कथ्यते । एतच्छरीरं क्षेत्रं यो वेत्ति विजानात्यापादतलमस्तकं ज्ञानेन विषयीकरोति स्वाभाविकेनौपदेशिकेन वा वेदनेन विषयीकरोति विभागशस्तं वेदितारं प्राहुः कथयन्ति क्षेत्रज्ञ इति । इतिशब्द एवंशब्दपदार्थक एव पूर्ववत्क्षेत्रज्ञ इत्येवमाहुः । के । तद्विदस्तौ क्षेत्रक्षेत्रज्ञौ ये विदन्ति तद्विदः ॥ १ ॥ एवं क्षेत्रक्षेत्रज्ञावुक्तौ किमेतावन्मात्रेण ज्ञानेन ज्ञातव्याविति नेत्युच्यते—क्षेत्रज्ञमिति । क्षेत्रज्ञं**

२ आनन्दगिरिव्याख्या ।

भूते—**क्षतेति** । क्षयो नाशः क्षरणमपक्षयः । यथा क्षेत्रे बीजमुप्तं फलति तद्वदित्याह—**क्षेत्रवद्वेति** । क्षेत्रपदादुपस्थितमितिपदं क्षेत्रशब्दविषयमन्यथा वैयर्थ्यादित्याह—**इतिशब्द इति** । क्षेत्रमित्येवमनेन क्षेत्रशब्देनेत्यर्थः । दृश्यं देहमुक्त्वा ततोऽतिरिक्तं द्रष्टारमाह—**एतदिति** । स्वाभाविकं मनुष्योऽहमिति ज्ञानमौपदेशिकं देहो नात्मा दृश्यत्वादित्यादिविभागशः स्वतोऽतिरिक्तत्वेनेत्यर्थः । क्षेत्रमित्यत्रेतिशब्दवदत्रापीतिशब्दस्य क्षेत्रज्ञशब्दविषयत्वमाह—**इतिशब्द इति** । क्षेत्रज्ञ इत्येवं क्षेत्रज्ञशब्देन तं प्राहुरिति संबन्धः । प्रवक्तृन्प्रश्नपूर्वकमाह—**क इत्यादिना** ॥ १ ॥ दृश्यानां दुःखादीनां भेदकानां यावद्देहभाविनामनात्मधर्मत्वसिद्धये द्रष्टारं देहादन्यमुक्त्वा सांख्यानामिव तन्मात्रेण मुक्तिनिवृत्तये तस्य सर्वदेहेष्वैक्योक्तिपूर्वकं स्वेन परमार्थेनाक्षरेणैक्यं वृत्तमनूद्य प्रश्नद्वारा दर्शयति—**एवमित्यादिना** । यथोक्तलक्षणं दृश्याद्देहान्निष्कृष्टं द्रष्टारमित्यर्थः । चापीतिनिपातौ जीवस्याक्षरत्वज्ञानस्य देहादन्यत्व-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यति—**इदमिति** । इदमनात्मत्वेन भास्यं घटाद्यहंकारान्तं शरीरं विशरणधर्मि हे कौन्तेय, क्षेत्रं क्षिणोत्यात्मानमविद्यया त्रायते च विद्ययेति क्षेत्रं कर्मबीजप्ररोहस्थानं क्षेत्रशब्देनोच्यते । एतद्यो वेत्ति भासयति तं चिदात्मानं क्षेत्रज्ञ इत्यन्वर्थसंज्ञं प्राहुः । के प्राहुः । तद्विदः क्षेत्रक्षेत्रज्ञविदः । एतेन गच्छामि पश्यामि भुञ्जे इत्यनुभवाद्देहेन्द्रियाहंकाराः प्रतीतितो भासककोटिनिविष्टा इव भान्ति तथापि तेषां तत्त्वतो भास्यत्वलक्षणोऽनात्मभावः सिद्धः ॥ १ ॥ तमेवंलक्षणमुपाधितो निष्कृष्टं क्षेत्रज्ञं चात्क्षेत्रमपि मां परमेश्वरमेवोभयरूपेण सन्तं विद्धि । 'तत्त्वमस्यहं ब्रह्मास्मि ब्रह्मैवेदं

४ मधुसूदनीव्याख्या ।

चापरपरशब्दवाच्ये सप्तमाध्याये सूचिते तद्विवेके तत्त्वं निरूपयिष्यन् श्रीभगवानुवाच—इदं इन्द्रियान्तःकरणसहितं भोगायतनं शरीरं हे कौन्तेय, क्षेत्रमित्यभिधीयते । सस्यस्येवास्मिन्नसक्तत्कर्मणः फलस्य निर्वृत्तेः । एतद्यो वेत्ति अहं ममेत्यभिमन्यते तं क्षेत्रज्ञमिति प्राहुः कृषीवलवत्तत्फलभोक्तृत्वात् । तद्विदः क्षेत्रक्षेत्रज्ञयोर्विवेकविदः । अत्र चाभिधीयत इति कर्मणिप्रयोगेण क्षेत्रस्य जडत्वात्कर्मत्वं क्षेत्रज्ञशब्दे च द्वितीयां विनैवेति शब्दमाहरन् स्वप्रकाशत्वात्कर्मत्वाभावमभिप्रैति । तत्रापि क्षेत्रं यैः कश्चिदप्यभिधीयते न तत्र कर्तृगतविशेषापेक्षा । क्षेत्रज्ञं तु कर्मत्वमन्तरेणैव विवेकिन एवाहुः स्थूलदृशामगोचरत्वादिति कथयितुं विलक्षणवचनव्यक्त्यैकत्र कर्तृपदोपादानेन च निर्दिशति भगवान् ॥ १ ॥ एवं देहेन्द्रियादि-

५ भाष्योत्कर्षदीपिका ।

भवन्तीत्यतस्तत्त्वज्ञानावधारणार्थं च श्रीभगवानुवाच—**इदमित्यादिना** । इदं प्रत्यक्षादिनोपलभ्यमानं दृश्यम् । इदमोक्तं विशिनष्टि शरीरं । त्रिगुणात्मिका प्रकृतिः सर्वकार्यकारणविषयाकारेण परिणता पुरुषस्य भोगापवर्गयोरर्थयोरेव कर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते सोयं संघातः शरीरशब्देनोच्यते । इदं शरीरं हे कौन्तेय क्षतात्त्राणात्क्षेत्रं, क्षिणोत्यात्मानमविद्यया त्राति तं विद्यया, क्षीयते नश्यति क्षरति अपक्षीयतेऽतोपि क्षेत्रमित्यभिधीयते । क्षेत्रवदस्मिन्कर्मफलं निष्पद्यते इति वा । यथा कुन्ती त्वत्प्रादुर्भावस्थानत्वात्क्षेत्रं तथात्मनोऽभिव्यक्तिस्थानत्वादपीदं क्षेत्रमिति संबोधनाशयः । अनेन शरीरस्यात्मनोऽन्यत्वं बोधितं क्षेत्रशब्दादुपस्थितमितिपदं क्षेत्रशब्दविषयमन्यथावैयर्थ्यात्क्षेत्रमित्येवमनेन क्षेत्रशब्देनाभिधीयते कथ्यत इत्यर्थः । दृश्यं शरीरं प्रदर्श्य ततोऽतिरिक्तं द्रष्टारमात्मानं दर्शयति । एतच्छरीरं क्षेत्रं यो वेत्ति आपादतलमस्तकं मनुष्योऽहं ममेदं शरीरमिति स्वाभाविकेन, शरीरं नात्मा दृश्यत्वात् घटवदित्यौपदेशिकेन स्वातिरिक्तत्वेन वा ज्ञानेन जानाति विषयीकरोति तं तद्विदस्तौ क्षेत्रक्षेत्रज्ञौ दृश्यत्वेन द्रष्टृत्वेन विदन्तीति तथा तं क्षेत्रज्ञ इति प्राहुः क्षेत्रज्ञ इत्येवम् । क्षेत्रज्ञशब्देन तं कथयन्तीत्यर्थः ॥ १ ॥ एवं दृश्यानां

६ श्रीधरीव्याख्या ।

तत्त्वतो निरूपयिष्यन् श्रीभगवानुवाच—**इदमिति** । इदं भोगायतनं शरीरं क्षेत्रमित्यभिधीयते, संसारस्य प्ररोहभूमित्वात् । एतद्यो वेत्ति अहं ममेति मन्यते तं क्षेत्रज्ञ इति प्राहुः, कृषीवलवत्तत्फलभोक्तृत्वात् । तद्विदः क्षेत्रक्षेत्रज्ञयोर्विवेकज्ञाः ॥१॥ तदेवं संसारिणः स्वप-

**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**यथोक्तलक्षणं चापि मां परमेश्वरमसंसारिणं विद्धि जानीहि। सर्वक्षेत्रेषु यः क्षेत्रज्ञो ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तस्तं निरस्तसर्वोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं विद्धीत्यभिप्रायः। हे भारत, यस्मात्क्षेत्रक्षेत्रज्ञेश्वरयाथात्म्यव्यतिरेकेण न ज्ञानगोचरमन्यदवशिष्टमस्ति तस्मात्क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानं क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन विषयीक्रियेते तज्ज्ञानं सम्यग्ज्ञानमिति मतमभिप्रायो ममेश्वरस्य विष्णोः । ननु सर्वक्षेत्रेष्वेक एवेश्वरो नान्यस्तद्व्यतिरिक्तो भोक्ता विद्यते चेत्तत ईश्वरस्य संसारित्वं प्राप्तमीश्वरव्यतिरेकेण वा संसारिणोऽन्यस्याभावात्संसाराभावप्रसङ्गस्तच्चोभयमनिष्टं बन्धमोक्षतद्धेतुशास्त्रानर्थक्यप्रसङ्गात्प्रत्यक्षादिप्रमाणविरोधाच्च। प्रत्यक्षेण तावत्सुखदुःखतद्धेतुलक्षणः संसार उपलभ्यते। जगद्वैचित्र्योपलब्धेश्च धर्माधर्मनिमित्तः संसारोऽनुमीयते।**

---

२ आनन्दगिरिव्याख्या ।

ज्ञानेन समुच्चयार्थौ भिन्नक्रमौ न क्षेत्रज्ञं सांख्यवद्दृश्यादन्यमेव विद्धि किंतु मां चापि विद्धीति संबध्येते। यः सर्वक्षेत्रेष्वेकः क्षेत्रज्ञस्तं मामेव विद्धीति संबन्धं सूचयति—**सर्वेति**। तत्तत्क्षेत्रोपाधिकभेदभाजस्तत्तच्छब्दधीगोचरस्य कथं तद्विपरीतब्रह्मत्वधीरित्याशङ्क्याह—**ब्रह्मादीति** । उत्तरार्धं विभजते—**यस्मादिति** । तदेव विशिनष्टि—**क्षेत्रेति**। नच भेदविषयत्वान्न सम्यग्ज्ञानं तदिति युक्तं, तस्य विवेकज्ञानस्य वाक्यार्थज्ञानद्वारा मोक्षौपयिकत्वेन सम्यक्त्वसिद्धेरिति भावः। जीवेश्वरयोरेकत्वमुक्तमाक्षिपति—**नन्विति**। जीवेश्वरयोरेकत्वे जीवस्येश्वरे वा तस्य जीवे वान्तर्भावः। नाद्यः । जीवस्य परस्मादन्यत्वाभावे संसारस्य निरालम्बनत्वानुपपत्त्या परस्यैव तदाश्रयत्वप्रसङ्गादित्यर्थः। 'अनश्नन्नन्यो अभिचाकशीति' इति श्रुतेर्न तस्य संसारितेत्याशङ्क्य द्वितीयं दूषयति—**ईश्वरेति**। जीवे चेदीश्वरोऽन्तर्भवति तदापि ततोऽन्यसंसार्यभावात्तस्य च संसारोऽनिष्ट इति संसारो जगत्यस्तं गच्छेदित्यर्थः। प्रसङ्गद्वयस्येष्टत्वं निराचष्टे—**तच्चेति** । संसाराभावे 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यादिबन्धशास्त्रस्य तद्धेतुकर्मविषयकर्मकाण्डस्य चानर्थक्यमीश्वराश्रिते च संसारे तदभोक्तृत्वश्रुतेर्ज्ञानकाण्डस्य मोक्षतद्धेतुज्ञानार्थस्यानर्थक्यमतो न प्रसङ्गयोरिष्टतेत्यर्थः। संसाराभावप्रसङ्गस्यानिष्टत्वे हेत्वन्तरमाह—**प्रत्यक्षादीति**। तत्र प्रत्यक्षविरोधं प्रकटयति—**प्रत्यक्षेणेति** । आदिशब्दोपात्तमनुमानविरोधमाह—**जगदिति** । विमतं विचित्रहेतुकं विचित्रकार्यत्वात्प्रासादा-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सर्वं सर्वं खल्विदं ब्रह्म' इति शास्त्रात्। यस्मादुभयात्माहं तस्मात्क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं क्षेत्रस्य बाध्यत्वेन क्षेत्रज्ञस्य सर्व-

४ मधुसूदनीव्याख्या ।

विलक्षणं स्वप्रकाशं क्षेत्रज्ञमभिधाय तस्य पारमार्थिकं तत्त्वमसंसारि परमात्मनैक्यमाह—सर्वक्षेत्रेषु य एकः क्षेत्रज्ञः

५ भाष्योत्कर्षदीपिका ।

दुःखादीनामनात्मधर्मत्वसिद्धये द्रष्टारं शरीराद्व्यतिरिक्तं प्रदर्श्य किमेतावन्मात्रेण ज्ञानेन ज्ञातव्यौ एतावन्मात्रेणैव ज्ञानेन मोक्षस्य सांख्याभिमतत्वादित्याशङ्कानिरासायात्मनः सर्वदेहेष्वैक्योक्तिपूर्वकं स्वेन परमार्थेनाक्षरेण परब्रह्मणा भेदं दर्शयति—**क्षेत्रज्ञं चापीति**। क्षेत्रज्ञं क्षेत्रज्ञातारं दृश्यात्क्षेत्राच्छरीरान्निष्कृष्टं द्रष्टारम्। चापीति निपातौ जीवस्याक्षरत्वज्ञानस्य शरीरादन्यत्वज्ञानेन समुच्चयार्थौ भिन्नक्रमौ। न सांख्यवद्दृश्यादन्यमेव क्षेत्रज्ञं विद्धि जानीहि किंतु मां मदभिन्नं चापि क्षेत्रज्ञं विद्धीति संबन्धः। यद्वा चकारः क्षेत्रज्ञज्ञानं समुच्चिनोति। अपिरेवार्थः। सर्वक्षेत्रेषु द्रष्टारं क्षेत्रज्ञमन्यं विद्धि तं च मामसंसारिणं परमेश्वरमेव विद्धीत्यर्थः। सर्वक्षेत्रेषु यः क्षेत्रज्ञः ब्रह्मादिस्तम्बपर्यन्तानेकक्षेत्रोपाधिप्रविभक्तस्तं निरस्तसमस्तोपाधिभेदं सदसदादिशब्दप्रत्यय[1]यागोचरं मां विद्धीत्यभिप्रायः। यथा भरतवंशोद्भवत्वाद्भारतस्त्वं तथा मयि कल्पितः क्षेत्रज्ञोऽहमेवेति ध्वनयन्संबोधयति—**भारतेति**। उत्तमवंश्यत्वादेतज्ज्ञातुं योग्योऽसीति वा संबोधनाशयः। नन्वेतत्किमर्थं ज्ञातव्यमित्यपेक्षायां मोक्षानन्यसाधनसम्यग्ज्ञानत्वेन मदभिप्रेतत्वादित्याह—**क्षेत्रेति**। यस्माद्दृश्यद्रष्टृप्रत्यगभिन्नपरमात्मयाथात्म्यव्यतिरेकेण ज्ञानगोचरस्यावशिष्टस्यान्यस्यासत्वात् क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानं क्षेत्रमात्मनि कल्पितं दृश्यं क्षेत्रज्ञश्च परमेश्वराभिन्नः प्रत्यगात्मा तौ क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन गोचरीक्रियेते तज्ज्ञानं सम्यग्ज्ञानमिति मम वासुदेवस्य परमेश्वरस्य विष्णोः शास्त्रयोनेरभिप्रेतमित्यर्थः। ननु जीवेश्वरयोरेकत्वे सर्वक्षेत्रेष्वेक ईश्वरो नान्य-

६ श्रीधरीव्याख्या ।

पमुक्तं, इदानीं तस्यैव पारमार्थिकमसंसारिस्वरूपमाह—**क्षेत्रज्ञमिति**। तं च क्षेत्रज्ञं संसारिणं जीवं वस्तुतः सर्वक्षेत्रेष्वनुगतं मामेव

७ अभिनवगुप्ताचार्यव्याख्या ।

पुरुषमिति ॥ १ ॥—संसारिणां शरीरं क्षेत्रं यत्र कर्मबीजप्ररोहः । अतएव तेषामात्मा आगन्तुककालुष्यरूषितः क्षेत्रज्ञ उच्यते। प्रबुद्धानां

---

१ प्रत्ययो विषयः।

१ श्रीमच्छांकरभाष्यम् ।

**सर्वमेतदनुपपन्नमात्मेश्वरैकत्वे । न ज्ञानाज्ञानयोरन्यत्वेनोपपत्तेः 'दूरमेते विपरीते । विषूची अविद्या या च विद्येति ज्ञाता' । तथाच तयोर्विद्याविद्याविषययोः फलभेदोऽपि विरुद्धो निर्दिष्टः श्रेयश्च प्रेयश्चेति । विद्याविषयः श्रेयः प्रेयस्त्वविद्याकार्यमिति । तथाच व्यासः 'द्वाविमावथ पन्थानौ' इत्यादि, 'इमौ द्वावेव पन्थानौ' इत्यादि च । इह च द्वे निष्ठे उक्ते अविद्या च सह कार्येण विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते । श्रुतयस्तावत् 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः, तमेवं विद्वानमृत इह भवति, नान्यः पन्था विद्यतेऽयनाय, आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन, अविदुषस्तु-'अथ तस्य भयं भवति, अविद्यायामन्तरे वर्तमानाः, ब्रह्म वेद ब्रह्मैव भवति' अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्, आत्मविद्यः स इदं सर्वं भवति, यदा चर्मवद्' इत्याद्याः सहस्रशः । स्मृतयश्च 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' 'इहैव तैर्जितः**

२ आनन्दगिरिव्याख्या ।

दिवदित्यर्थः । प्रत्यक्षानुमानागमविरोधादयुक्तमैक्यमित्युपसंहरति—**सर्वमिति** । ऐक्येऽपि संसारित्वमविद्यातो विद्यातोऽसंसारित्वमिति विभागान्नानुपपत्तिरित्युत्तरमाह—**नेत्यादिना** । तयोः स्वरूपतो विलक्षणत्वे श्रुतिमाह—**दूरमिति** । ( अविद्या या च विद्येति प्रसिद्धे एते विद्याविद्ये दूरं विपरीते । अत्यन्तविरुद्धे इत्यर्थः । विषूची नानागती भिन्नफले इत्यर्थः । ) स्वरूपतो विरोधवत्फलतोऽपि सोऽस्तीत्याह—**तथेति** । फलभेदोक्तिमेव व्यनक्ति—**विद्येति** । तयोर्द्विधाविलक्षणत्वे वेदव्यासस्यापि संमतिमाह—**तथाचेति** । उक्तेऽर्थे भगवतोऽपि संमतिमुदाहरति—**इहचेति** । द्वयोरपि निष्ठयोस्तुल्यमुपादेयत्वमिति शङ्कां शातयति—**अविद्या चेति** । अविद्या सकार्या हातव्येत्यत्र श्रुतीरुदाहरति—**श्रुतयस्तावदिति** । इहेति जीवदवस्थोच्यते, चेच्छब्दो विद्योदयदौर्लभ्यद्योती, अवेदीदहं ब्रह्मेति विदितवानित्यर्थः । अथ विद्यानन्तरमेव सत्यमवितथं पुनरावृत्तिवर्जितं कैवल्यं स्यादित्याह—**अथेति** । अविद्याविषयेऽपि श्रुतिमाह—**न चेदिति** । जन्ममरणादिरूपा संसृतिर्विनष्टिस्तस्य महत्त्वं सम्यग्ज्ञानं विना निवर्तयितुमशक्यत्वम् । विद्याविषये श्रुत्यन्तरमाह—**तमेवमिति** । परमात्मानं प्रत्यक्त्वेन यः साक्षात्कृतवान्स देही जीवन्नेव मुक्तो भवतीत्यर्थः । विद्यां विनापि हेत्वन्तरतो मुक्तिमाशङ्क्याह—**नेति** । भयहेतुमविद्यां निराकुर्वती तज्जं भयमपि निरस्यति—**विद्येति** । अत्र वाक्यान्तरमाह—**विद्वानिति** । अविद्याविषये वाक्यान्तरमाह—**अविदुष इति** । प्रतीच्येकरसे स्वल्पमपि भेदं मन्यमानस्य भेददृष्ट्यनन्तरमेव संसारध्रौव्यमित्यर्थः । तत्रैव श्रुत्यन्तरमाह—**अविद्यायामिति** । तन्मध्ये तत्परवशतया स्थितास्तत्त्वमजानन्तो देहाद्यभिमानवन्तो मूढाः संसरन्तीत्यर्थः । विद्याविषये श्रुत्यन्तरमाह—**ब्रह्मेति** । अविद्याविषये श्रुत्यन्तरमाह—**अन्योऽसाविति** । भेददृष्टिमनूद्य तन्निदानमविद्येत्याह—**नेति** । स च मनुष्याणां पशुवद्देवादीनां प्रेष्यतां प्राप्नोतीत्याह—**यथेति** । विद्याविषये वाक्यान्तरमाह—**आत्मविदिति** । इदं सर्वं प्रत्यग्भूतं पूर्णं ब्रह्मेत्यर्थः । ज्ञानादेव तु कैवल्यमित्यत्र श्रुत्यन्तरमाह—**यदेति** । न खल्वाकाशं चर्मवन्मानवो वेष्टयितुमीष्टे तथा परमात्मानं प्रत्यक्त्वेनाननुभूय न मुच्यत इत्यर्थः । आदिशब्देनानुक्ता विद्याविद्याफलभेदार्थाः श्रुतयो गृह्यन्ते । तासां भूयस्त्वेन प्रामाण्यं सूचयति—**सहस्रश इति** । विद्याविद्याविषये स्मृतीरुदाहरति—**स्मृतयश्चेति** । तत्राविद्याविषयं वाक्यमाह—**अज्ञानेनेति** । विद्याविषयं वाक्यद्वयं दर्शयति—**इहेत्या-**

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

बाधावधिभूतत्वेन च यज्ज्ञानमापरोक्ष्येण तत्त्वनिश्चयस्तदेव ज्ञानं मम मद्विषयं सम्यग्ज्ञानं एतयोरेव ज्ञानं ब्रह्मज्ञानमिति मतं निश्चितं ब्रह्मविद्भिः 'नेह नानास्ति किंचन' इति क्षेत्रस्य बाधात् 'नान्योतोऽस्ति द्रष्टा' इति क्षेत्रज्ञादन्यस्य द्रष्टुर्निषे-

४ मधुसूदनीव्याख्या ।

स्वप्रकाशचैतन्यरूपो नित्यो विभुश्च तमविद्याध्यारोपितकर्तृत्वभोक्तृत्वादिसंसारधर्मं क्षेत्रज्ञमाविद्यकरूपपरित्यागेन मामी-

५ भाष्योत्कर्षदीपिका ।

स्वव्यतिरिक्तो भोक्तेति जीवस्येश्वरेन्तर्भावो न वक्तुं शक्यः । संसारालम्बनस्य जीवस्येश्वरादन्यस्याभावे संसारस्य निरालम्बनत्वानुपपत्त्या परस्यैव संसारित्वप्रसङ्गात् । संसारिणि जीवे ईश्वरस्यान्तर्भावोऽपि न शक्यते वक्तुम् । संसारिणोऽन्यस्याभावात् तस्य चापहतपाप्मत्वादिगुणकस्य विपरीतगुणकत्वेन ग्रहणानुपपत्त्या संसारित्वस्यानिष्टत्वेन संसाराभावप्रसङ्गात् । नच प्रसङ्गद्वयमपीष्टमिति वाच्यम् । संसाराभावे 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यादिबन्धशास्त्रस्य तद्धेतुकर्मविषयककर्मकाण्डस्य चानर्थक्यापत्तेः ईश्वराश्रिते च संसारे 'अनश्नन्नन्यो अभिचाकशीति' इतीश्वरासंसारित्वबोधकस्य शास्त्रस्य मोक्षतद्धेतुज्ञानप्रतिपादकस्य च ज्ञानकाण्डस्य वैय-

६ श्रीधरीव्याख्या ।

विद्धि, 'तत्त्वमसि' इति श्रुत्युपलक्षितेन चिदंशेन मद्रूपस्योक्तत्वात् । आदरार्थमेव तज्ज्ञानं स्तौति । क्षेत्रक्षेत्रज्ञयोर्यद्वैलक्षण्येन ज्ञानं

१ श्रीमच्छांकरभाष्यम् ।

सर्गो येषां साम्ये स्थितं मनः' 'समं पश्यन्हि सर्वत्र' इत्याद्याः । न्यायतश्च 'सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति । अज्ञानतस्तत्र पतन्ति केचिज्ज्ञाने फलं पश्य यथा विशिष्टम्' । तथाच देहादिष्वात्मबुद्धिरविद्वान्रागद्वेषादिप्रयुक्तो धर्माधर्मानुष्ठानकृज्जायते म्रियते चेत्यवगम्यते देहादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमान्मुच्यन्त इति न केनचित्प्रत्याख्यातुं शक्यं न्यायतः । तत्रैवं सति क्षेत्रज्ञस्येश्वरस्यैव सतोऽविद्याकृतोपाधिभेदतः संसारित्वमिव

२ आनन्दगिरिव्याख्या ।

दिना । विद्याफलमनर्थध्वस्तिरविद्याफलमनर्थाप्तिरित्येतदन्वयव्यतिरेकाख्यन्यायादपि सिध्यतीत्याह—**न्यायतश्चेति** । तत्रैव पुराणसंमतिमाह—**सर्पानिति** । उदपानं कूपम्, यथात्मज्ञाने विशिष्टं फलं स्यात्तथा पश्येति योजना । न्यायतश्चेत्यन्वयव्यतिरेकाख्यं न्यायमुक्तं विवृणोति—**तथाचेति** । तत्रादावन्वयमाचष्टे—**देहादिष्विति** । अनाद्यनिर्वाच्याविद्यावृतश्चिदात्मा देहादावनात्मन्यात्मबुद्धिमादधाति तद्युक्तो रागादिना प्रेर्यते तत्प्रयुक्तश्च कर्मानुतिष्ठति तत्कर्ता च यथाकर्म नूतनं देहमादत्ते पुरातनं त्यजतीत्येवमविद्यावत्त्वे संसारित्वं सिद्धमित्यर्थः । व्यतिरेकमिदानीं दर्शयति—**देहादीति** । श्रुतियुक्तिभ्यां भेदे ज्ञाते रागादिध्वस्त्या कर्मोपरमादशेषसंसारासिद्धिरित्यविद्याराहित्ये बन्धध्वस्तिरित्यर्थः । उक्तान्वयादेरन्यथासिद्धिं शिथिलयति—**इति नेति** । उक्तमन्वयादिवादिना केनचिदपि न्यायतो न शक्यं प्रत्याख्यातुं तदन्यथासिद्धिसाधकाभावादित्यर्थः । अन्वयादेरनन्यथासिद्धत्वे चोद्यमपि प्राचीनं प्रतिनीतमित्याह—**तत्रेति** । ज्ञानाज्ञानयोरुक्तन्यायेन स्वरूपभेदे कार्यभेदे च स्वारस्येन परापरयोरैक्येऽपि बुद्ध्याद्युपाधिभेदादाविद्यकमात्मनः संसारित्वमाभासरूपं प्रातिभासिकं सिध्यतीत्यर्थः । आत्मनो ब्रह्मता स्वतश्चेदहमित्यात्मभावेन

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

धाच्च । यद्यपि सर्वस्य ब्रह्माभिन्नत्वाद्यत्किंचिदपि ज्ञानं तत्सर्वं ब्रह्मविषयमेव भवति । तथापि रज्जुं सर्पात्मना पश्यतो नतु रज्जुविषयं सर्पविषयं वा सम्यग्ज्ञानमस्ति । नापि तस्य ज्ञानस्य रज्जुव्यतिरेकेण विषयान्तरं वास्तवमस्ति । किंतु

४ मधुसूदनीव्याख्या ।

श्वरमसंसारिणमद्वितीयब्रह्मानन्दरूपं विद्धि जानीहि हे भारत । एवंच क्षेत्रं मायाकल्पितं मिथ्या । क्षेत्रज्ञश्च परमार्थसत्यस्तद्भ-

५ भाष्योत्कर्षदीपिका ।

र्थ्यप्रसङ्गाच्च । किंच प्रत्यक्षादिविरोधादपि संसारभावप्रसङ्गस्यानिष्टत्वं सुखदुःखतद्धेतुलक्षणस्य संसारस्य प्रत्यक्षेणोपलभ्यमानत्वात् । संसारः विचित्रहेतुकः विचित्रकार्यत्वात् प्रासादादिवदित्यनुमानाच्च संसाराभावप्रसङ्गस्यानिष्टत्वं तस्मादात्मेश्वरैकत्वमनुपपत्तिग्रस्तत्वान्न युक्तम् । अपिच जीवेश्वरयोरैक्यमेव न संभवति परोक्षापरोक्षत्वादिविरुद्धधर्मवत्त्वात् ईश्वराद्भिन्नोऽहं कर्ता भोक्ता चेति सर्वप्रमाणोपजीव्येन ज्येष्ठेन प्रत्यक्षेण गृहीतस्य प्रत्ययस्य वाक्यप्रमाणजन्यज्ञानेन बाधायोगाच्च । तस्मात्क्षेत्रज्ञं चापि मां विद्धीत्यादिवदतो भगवतो नात्मेश्वरैकत्वबोधने तात्पर्यं किंतु प्रतिमादिषु विष्ण्वादिदर्शनमिव क्षेत्रज्ञे मद्दृष्टिर्विधेयेति चेन्न । ज्ञानाज्ञानयोः स्वरूपतः फलतश्चान्यत्वोपपत्त्या जीवेश्वरयोरैक्येऽप्यज्ञानकृतं संसारित्वं ज्ञानकृतमसंसारित्वमिति विभागेनानुपपत्त्यभावात् विरुद्धधर्माणां ब्रह्मण्यध्यस्तत्वात् शुद्धचैतन्ययोरभेदस्याविरुद्धत्वाच्च । तथा च 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । विद्याभीप्सितं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्तः । श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ[1] संपरीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते' इति श्रुतिभ्यां स्वरूपतः फलतश्च विलक्षणत्वेन विद्याविद्ये निर्दिष्टे । दूरं दूरेण महतान्तरेण विपरीते विवेकाविवेकात्मत्वात् तमःप्रकाशवत्परस्परव्यावृत्तात्मिके विषूची विषूच्यौ नानागती बन्धमोक्षहेतुत्वाद्भिन्नफले । के ते इत्यत आह । अविद्या या च विद्येति । ज्ञातावगता पण्डितैस्तत्र विद्याभीप्सितं विद्यार्थिनं नचिकेतसं त्वा त्वामहं मन्ये । यस्मादविद्वद्विप्रलोभिनः कामा अप्सरःप्रभृतयो बहवोऽपि त्वां न लोलुपन्तः श्रेयोमार्गाद्विच्छेदं न कृतवन्तः साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपत्वात् । व्यामिश्रीभूते इव श्रेयश्च प्रेयश्च मनुष्यं आ इतः प्राप्नुतः । अतो हंस इवाम्भसः पयस्तौ श्रेयःप्रेयःपदार्थौ संपरीत्य सम्यक् परिगम्य मनसालोक्य धीरो धीमान् गुरुलाघवं विविनक्ति पृथक्करोति विविच्य च धीरः श्रेयो हि श्रेयो मोक्षलक्षणमेवाभिवृणीते प्रेयसोऽभ्यर्हितत्वात् । यस्तु मन्दोऽल्पबुद्धिः सदसद्विवेकासामर्थ्याद्योगक्षेमात् योगक्षेमनिमित्तं शरीराद्युपचयरक्षणनिमित्तं प्रेयः पशुपुत्रादिलक्षणं वृणीते इति श्रुत्योरर्थः । किंच 'द्वाविमावथ पन्थानौ' इत्यादिवदता

६ श्रीधरीव्याख्या ।

तदेव मोक्षहेतुत्वान्मम ज्ञानं मतं अन्यत्तु वृथा पाण्डित्यम् । बन्धहेतुत्वादित्यर्थः । तदुक्तं—'तत्कर्म यन्न बन्धाय सा विद्या या विमु-

७ अभिनवगुप्ताचार्यव्याख्या ।

तदेव क्षेत्रं । अन्वर्थभेदस्तु तद्यथा क्षिणोति कर्मबन्धमुपभोगेन त्रायते जन्ममरणभयादिति तांश्च प्रति परमात्मा वासुदेवः क्षेत्रज्ञ एतत्क्षेत्रं

1 एतः प्राप्नुतः.

१ श्रीमच्छांकरभाष्यम् ।

**भवति । यथा देहाद्यात्मत्वमात्मनः । सर्वजन्तूनां हि प्रसिद्धो देहादिष्वनात्मस्वात्मभावो निश्चितो ऽविद्याकृतः । यथा स्थाणौ पुरुषनिश्चयो न चैतावता पुरुषधर्मः स्थाणोर्भवति स्थाणुधर्मो वा पुरुषस्य तथा न चैतन्यं धर्मो देहस्य देहधर्मो वा चैतन्यस्य । सुखदुःखमोहात्मकत्वादिरात्मनो न युक्तोऽविद्याकृतत्वाविशेषाज्जरामृत्युवत् । नातुल्यत्वादिति चेत्, स्थाणुपुरुषौ ज्ञेयावेव सन्तौ ज्ञात्रान्योन्यस्मिन्नध्यस्तावविद्यया देहात्मनोस्तु ज्ञेयज्ञात्रोरेवेतरेतराध्यास इति न समो दृष्टान्तो देहधर्मो ज्ञेयोऽपि ज्ञातुरात्मनो भवतीति चेत् । नाचैतन्यादिप्रसङ्गात् । यदि हि ज्ञेयस्य देहादेः क्षेत्रस्य धर्माः सुखदुःख-**

२ आनन्दगिरिव्याख्या ।

ब्रह्मतापि मायादित्याशङ्क्याह—**यथेति** । देहाद्यतिरिक्तस्यात्मनो वैदिकपक्षे स्वतस्त्वेऽपि तस्मिन्नहमिति भात्येव तदतिरिक्तत्वं न भाति किं त्वविद्यातो देहाद्यात्मत्वमेव विपरीतं भासते तथात्मनो ब्रह्मत्वे स्वाभाविकेऽपि तस्मिन्भात्येव ब्रह्मत्वं न भात्यविद्यातोऽब्रह्मत्वमेव त्वस्य भास्यतीत्यर्थः । आत्मनो देहाद्यात्मत्वमाविद्यं भातीत्युक्तमनुभवेन स्पष्टयति—**सर्वेति** । अतस्मिंस्तद्बुद्धिरविद्याकृतेत्यत्र दृष्टान्तमाह—**यथेति** । पुरःस्थिते वस्तुनि स्थाणावविद्यया पुमानिति निश्चयो जायते तथा देहादावनात्मन्यात्मधीरविद्यातो निश्चितेत्यर्थः । देहात्मनोरैक्यज्ञाने देहधर्मस्य जरादेरात्मन्यात्मधर्मस्य च चैतन्यस्य देहे विनियमः स्यादित्याशङ्क्याह—**नचेति** । स्थाणौ पुरुषत्वं भ्रान्त्या भातीत्येतावता पुरुषधर्मः शिरःपाण्यादिर्न स्थाणोर्भवति तद्धर्मो वा वक्रत्वादिर्न पुंसो दृश्यते मिथ्याध्यस्ततादात्म्याद्वस्तुतो धर्माव्यतिकरादिति । दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—**तथेति** । जरादेरनात्मधर्मत्वेऽपि सुखादेरात्मधर्मत्वमिति केचित्तान्प्रत्याह—**सुखेति** । कामसंकल्पादिश्रुतेरनात्मधर्मत्वज्ञानादित्यर्थः । किंच विमतो नात्मधर्मोऽविद्याकृतत्वाज्जरादिवन्न च हेत्वसिद्धिरतस्मिंस्तद्बुद्धिविषयत्वेन स्थाणौ पुरुषत्ववदविद्याकृतत्वस्योक्तत्वादिति मत्वाह—**अविद्येति** । स्थाणौ पुरुषत्ववदाविद्यत्वं देहादेरयुक्तं दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादिति शङ्कते—**नेति** । तदेव प्रपञ्चयति—**स्थाणिवत्यादिना** । ज्ञेयस्य ज्ञेयान्तरेऽध्यासादत्र चोभयोर्ज्ञेयत्वं व्यापकव्यावृत्त्या व्याप्याध्यासस्यापि व्यावृत्तिरित्यर्थः । देहात्मबुद्धेर्भ्रमत्वाभावे फलितमाह—**अत इति** । उपाधिधर्माणां सुखादीनामुपहिते जीवे वस्तुत्वमयुक्तमतिप्रसङ्गादिति परिहरति—**नेत्यादिना** । अतिप्रसङ्गमेव प्रकटयति—**यदीति** । सुखादीनामात्म-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यदा सर्पबाधेन रज्जुतत्त्वमधिगच्छति तदैव सर्पं मिथ्यायमिति सम्यग्जानाति रज्जुं च । तद्वदिहाप्युभयविदेव सम्य-

४ मधुसूदनीव्याख्या ।

माधिष्ठानमिति क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं तदेव मोक्षसाधनत्वाज्ज्ञानं अविद्याविरोधि प्रकाशरूपं मम मतं अन्यत्त्वज्ञानमेव तद-

५ भाष्योत्कर्षदीपिका ।

वेदव्यासेनात्र च निष्ठाद्वयं दर्शयता भगवता ते विलक्षणेऽभिहिते । अत्राविद्या च संसारहेतुभूता सहकार्येण मोक्षहेतुभूतया विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते । तथाच श्रुतयः 'इह चेदवेदीदथ सत्यमस्ति नचेदिहावेदीन्महती विनष्टिः' 'तमेवं विद्वानमृत इह भवति' 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'विद्वान्न बिभेति कुतश्चन' 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दंद्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः' 'असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः' 'तरति शोकमात्मवित्' 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति' 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव स देवानाम्' 'आत्मवित् यः स इदं सर्वं भवति' 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' । 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' इत्याद्याः सहस्रशः । स्मृतयश्च 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' 'अन्यथा सन्तमात्मानं योऽन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा' 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परं । इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः । समं पश्यन्हि सर्वत्र' इत्याद्याः अनर्थनिवृत्तिर्ज्ञानफलमनर्थप्राप्तिरज्ञानफलमित्येतदन्वयव्यतिरेकन्यायादपि सिध्यति । तदुक्तं पुराणे 'सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति । अज्ञानतस्तं च पतन्ति केचिज्ज्ञाने फलं पश्य यथा विशिष्टम्' इति । इह जीवदवस्थायाम् । चेच्छब्देन विद्योदयदौर्लभ्यं द्योत्यते । अवेदीदहं ब्रह्मेति ज्ञातवान् । अथ ज्ञानानन्तरमेव सत्यमवितथमबाध्यं कैवल्यमस्ति स्यात् । नचेदिहावेदीत् इह चेन्न विजानीयात् तर्हि महती विनष्टिः जन्ममरणादिलक्षणा संसृतिरस्ति । तमेव परमात्मानमेव विदित्वा ज्ञात्वा विदित्वैवेति वा अतिमृत्युमेति मृत्युमत्येति अतिक्रामति मुच्यते । अयनाय मोक्षाय । उदरमल्पमपि । अविद्यायामन्तरे मध्ये घनीभूत इव तमसि वर्तमानाः पुत्रधनादितृष्णापाशशतैरावेष्ट्यमानाः स्वयं धीरा धीमन्तो नत्वन्यैर्धीरत्वेनाभिमता अपण्डितमात्मानं पण्डितं शास्त्रकुशलं मन्यमाना ये एतादृशास्ते दंद्रम्यमाणा अत्यन्तं कुटि-

१ श्रीमच्छांकरभाष्यम् ।

**मोहेच्छादयो ज्ञातुर्भवन्ति तर्हि ज्ञेयस्य क्षेत्रस्य धर्माः केचनात्मनो भवन्त्यविद्याध्यारोपिता जरामरणादयस्तु न भवन्तीति विशेषहेतुर्वक्तव्यः। न भवन्तीत्ययमनुमानमविद्याध्यारोपितत्वाज्जरादिवदिति हेयत्वादुपादेयत्वाच्चेत्यादि । तत्रैवं सति कर्तृत्वभोक्तृत्वलक्षणः संसारो ज्ञेयस्थो ज्ञातर्यविद्याध्यारोपित इति न तेन ज्ञातुः किंचिद्दुष्यति । यथा बालैरध्यारोपितेनाकाशस्य तलमलवत्त्वादिना । एवं च सति सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञस्येश्वरस्य संसारित्वगन्धमात्रमपि नाशङ्क्यम् । नहि क्वचिदपि लोकेऽविद्याध्यस्तेन धर्मेण कस्यचिदुपकारोऽपकारो वा दृष्टः । यत्तूक्तं न समो दृष्टान्त इति । तदसत् । कथम् । अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितम् । तन्न व्यभिचरति । यत्तु ज्ञातरि व्यभिचरतीति मन्यसे तस्याप्यनैकान्तिकत्वं दर्शितं जरादिभिः अविद्याव-**

२ आनन्दगिरिव्याख्या ।

धर्मत्वं चेदुपाधिधर्मत्वादचैतन्यं जरादिकं चात्मनो दुर्वारं स्यादित्यर्थः । सुखादिरात्मधर्मो नेति पक्षेऽपि नास्ति विशेषहेतुरित्याशङ्क्याह—**नेति** । तदेवानुमानं साधयति—**अविद्येति** । विमतं नात्मधर्मः आगमापायित्वात्संसारवदित्यनुमानान्तरमाह—**हेयत्वादिति** । आदिशब्दाद्दृश्यत्वजडत्वादिति गृह्यते । सुखादीनां जरादिवदात्मधर्मत्वाभावे तस्य वस्तुतोऽसंसारितेति फलितमाह—**तत्रेति** । आरोपितेनाधिष्ठानस्य वस्तुतोऽस्पर्शे दृष्टान्तमाह—**यथेति** । पराभिन्नस्यात्मनः संसारित्वमध्यस्तमिति स्थिते यत्परस्य संसारित्वापादनं तदयुक्तमित्याह—**एवंचेति** । आत्मनि संसारस्यारोपितत्वात्तदभिन्ने परस्मिन्नाशङ्कैव तस्यायुक्तेत्येतदुपपादयति—**नहीति** । स्थाणौ पुरुषनिश्चयवदात्मनो देहाद्यात्मत्वनिश्चयस्याध्यस्ततेत्ययुक्तम् । दृष्टान्तस्य ज्ञेयमात्रविषयत्वादितरस्य ज्ञेयज्ञातृविषयत्वादित्युक्तमनुवदति—**यत्त्विति** । वैषम्यं दूषयति—**तदसदिति** । तर्हि केन साधर्म्यमिति पृच्छति—**कथमिति** । अभीष्टं साधर्म्यं दर्शयति—**अविद्येति** । तस्योभयत्रानुगतिमाह—**तन्नेति** । ज्ञेयान्तरे ज्ञेयस्यारोपनियमाज्ज्ञातरि नारोपः स्यादित्याशङ्क्याह—**यत्त्विति** । नायं नियमो ज्ञातरि जराद्यारोपस्योक्तत्वादित्याह—**तस्यापीति** । ज्ञेयस्यैव ज्ञेयान्तरेऽ-

५ भाष्योत्कर्षदीपिका ।

लामनेकरूपां गतिं गच्छन्तः परियन्ति जरामरणादिदुःखे परिगच्छन्ति । यतो मूढा अविवेकिनः । तत्र दृष्टान्तः । अन्धेनैव दृष्टिहीनेनैव विषमे पथि नीयमाना यथान्धाः महान्तमनर्थं प्राप्नुवन्ति तद्वदिति कठिनश्लोक्षरार्थः । तथाच देहेन्द्रियाद्यनात्मसु आत्मबुद्धिमतोऽज्ञस्य रागद्वेषादिप्रयुक्तस्य धर्माधर्मानुष्ठानकर्तुः जन्ममरणादिलक्षणसंसारभाक्त्वं देहेन्द्रियादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमात् मोक्षभाक्त्वं श्रुतिस्मृतिन्यायादवगतं न केनचित् वादिना कयाचिदपि युक्त्या वारयितुं शक्यम् । एवंचोक्तप्रकारेण ज्ञानाज्ञानयोः स्वरूपतः कार्यतश्च भेदे सति वस्तुतः क्षेत्रज्ञस्यैवेश्वरस्य सतोऽविद्याकृतबुद्ध्याद्युपाधिभेदात्संसारित्वमाविद्यकमाभासरूपं प्रातिभासिकं सिध्यति । यथा पुरःस्थिते वस्तुतः स्थाणावविद्याकृतेऽतस्मिंस्तद्बुद्धिलक्षणे पुरुष इति निश्चये जातेपि पुरुषधर्मः शिरःपाण्यादिमत्त्वं न स्थाणोर्भवति तद्धर्मो वक्रत्वादिमत्त्वं वा न पुरुषस्य दृश्यते । तथा देहाद्यनात्मस्वात्मभावनिश्चयेऽविद्याकृते सर्वजन्तुप्रसिद्धे जाते न चैतन्यं देहादिधर्मो देहादेर्धर्मो न वा जाड्यजरामरणादिचैतन्यस्य । ननु जाड्यादेरनात्मधर्मत्वेऽपि सुखादेरात्मधर्मत्वं किं न स्यादितिचेन्न । 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मनएव' इति श्रुत्या विमतं सुखदुःखमोहात्मकत्वादिरात्मनो धर्मो न भवति अविद्याकृतत्वाविशेषात् जरामृत्युवदिति युक्त्या च सुखदुःखादीनामनात्मधर्मत्वसिद्धेः । ननु स्थाणुपुरुषयोर्ज्ञेययोरेव सतोर्ज्ञात्राऽविद्ययान्योन्यस्मिन्नध्यस्तत्वाद्देहात्मनोस्तु ज्ञेयज्ञात्रोरेवाध्यासात् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येण स्थाणौ पुरुषत्ववदाविद्यकत्वं देहादेरयुक्तम् । अध्यासव्यापकस्योभयोर्ज्ञेयत्वस्य व्यावृत्त्या व्याप्यस्याध्यासस्यापि व्यावृत्तेः । तस्माद्देहधर्मो ज्ञेयोऽपि सुखादिरात्मनो भवतीति चेदुच्यते । अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितं उभयोर्ज्ञेयत्वं तु नाध्यासव्यापकम् । स्वप्ने ज्ञातरि ज्ञेयाध्यासदर्शनात् सुखदुःखमोहेच्छादीनां देहादेः क्षेत्रस्य धर्माणामात्मधर्मत्वं चेत्तर्हि विशेषहेत्वभावादचैतन्यं जरामरणादिकं चात्मनो दुर्वारं स्यात् । सुखादेरात्मधर्मत्वाभावे तु विमतं सुखादिकमात्मधर्मो न भवति अविद्यारोपितत्वात् आगमापायित्वात् दृश्यत्वाज्जडत्वाज्जरादिवदित्यस्ति हेतुरतः सुखादीनां क्षेत्रधर्मत्वमेव युक्तं नात्मधर्मत्वम् । एवं च सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञात्मकस्येश्वरस्य संसारित्वगन्धमात्रापि न शङ्कनीया । यथा बालैरध्यारोपितेन तलमलिनत्वादिना आकाशस्यास्पर्शस्तथा कर्तृत्वभोक्तृत्वलक्षणेन संसारेण ज्ञेयस्थेन ज्ञातर्यविद्यारोपितेन ज्ञातुर्वस्तुतः स्पर्शाभावात् । नन्वविद्यावत्त्वात्क्षेत्रज्ञस्य तदध्यस्तं संसारित्वमपि स्वाभाविकं स्यादितिचेन्न । तामसे आवरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धेर्विवेकप्रकाशात्मके क्षेत्रज्ञे तामसत्वेनावरणात्मिकाया अविद्याया अभावेनाग्रहणविपरीतग्रहणसंशयानामप्यनुपपत्त्या तस्य स्वाभाविकसंसारित्वस्याभावात् । नन्वेवं तर्हि आत्मानं न जानामि मनुष्योऽहमित्यादिप्रत्ययदर्शनात् । ज्ञातुर्धर्मोऽविद्या तद्धर्मवत्त्वं च ज्ञातुः संसारित्वं तथाचेश्वर एव क्षेत्रज्ञोऽसंसारी चेति विप्रतिषिद्धमितिचेन्न । यतो यथा चक्षुषि तैमिरिकत्वादिदोषे सति विपरीतग्रहणादिकं दृश्यते दोषापगमे च न दृश्यते इत्यन्वयव्यतिरेकाभ्यां निमित्तनैमित्तिकं च करणस्य चक्षुष

१ श्रीमच्छांकरभाष्यम्।

त्त्वात्क्षेत्रज्ञस्य संसारित्वमिति चेत् न, अविद्यायास्तामसत्वात्। तामसो हि प्रत्यय आवरणात्मकत्वादविद्याविपरीतग्राहकः संशयोपस्थापको वाऽग्रहणात्मको वा। विवेकप्रकाशभावे तदभावात्। तामसे चावरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धेः। अत्राहैवं तर्हि ज्ञातृधर्मोऽविद्या। न, करणे चक्षुषि तैमिरिकत्वादिदोषोपलब्धेः। यत्तु मन्यसे ज्ञातृधर्मोऽविद्या तदेव चाविद्याधर्मवत्त्वं क्षेत्रज्ञस्य संसारित्वम्। तत्र यदुक्तमीश्वर एव क्षेत्रज्ञो न संसारीत्येतदयुक्तमिति। तन्न। यथा करणे चक्षुषि विपरीतग्राहकादिदोषस्य दर्शनान्न विपरीतादिग्रहणं तन्निमित्तो वा तैमिरिकत्वादिदोषो

२ आनन्दगिरिव्याख्या।

ध्यासनियमस्येति यावत्। अतो ज्ञातरि नारोपव्यभिचारशङ्केत्यर्थः। आत्मन्यविद्याध्यासे तत्राविद्यायाः स्वाभाविकत्वात्तदधीनत्वं संसारित्वमपि तथा स्यादिति शङ्कते—अविद्यावत्त्वादिति। काऽविद्या विपरीतग्रहादिर्वाऽनाद्यनिर्वाच्याज्ञानं वा, नाद्यो विपरीतग्रहादेस्तमःशब्दितानिर्वाच्याज्ञानकार्यत्वात्तन्निष्ठस्यात्मधर्मत्वायोगादित्याह—नेत्यादिना। तदेव प्रपञ्चयति—तामसो हीति। आवरणात्मकत्वं वस्तुनि सम्यक्प्रकाशप्रतिबन्धकत्वम्। विपरीतग्रहणादेरविद्याकार्यत्वं विद्यापोह्यत्वेन साधयति—विवेकेति। नच कारणाविद्याऽनाद्यनिर्वाच्यात्मधर्मः स्यादिति युक्तमनिर्वाच्यत्वादेव तस्यास्तद्धर्मत्वस्य दुर्वचत्वादिति भावः। किंच विपरीतग्रहादेरन्वयव्यतिरेकाभ्यां दोषजन्यत्वावगमादपि नात्मधर्मतेत्याह—तामसे चेति। तमःशब्दिताज्ञानोत्थवस्तुप्रकाशप्रतिबन्धकस्तिमिरकाचादिदोषस्तस्मिन्सत्यज्ञानं मिथ्याधीः संशयश्चेति त्रयस्योपलम्भादसति तस्मिन्नप्रतीतेरन्वयव्यतिरेकाभ्यां विपरीतज्ञानादेर्दोषाधीनत्वाधिगमान्न केवलात्मधर्मतेत्यर्थः। दोषस्य निमित्तत्वाद्भावकार्यस्योपादाननियमादनिर्वाच्याविद्यायाश्चासंमतेस्तस्यैव विपर्ययादेरुपादानमिति चोदयति—अत्राहेति। विपरीतग्रहादेर्दोषोत्थत्वं सप्तम्यर्थः। अग्रहादित्रितयमविद्या। विपर्ययादेः सत्योपादानत्वे सत्यत्वप्रसङ्गान्नात्मा तदुपादानं किंतु दोषस्य चक्षुरादिधर्मकत्वग्रहणादग्रहणादेरपि दोषत्वात्करणधर्मत्वे कारणमविद्योत्थमन्तःकरणं नच तद्धेतुरविद्याऽसिद्धेति वाच्यमज्ञोऽहमित्यनुभवात्स्वापे चाज्ञानपरामर्शात्तदवगमात्कार्यलिङ्गकानुमानादागमाच्च तत्प्रसिद्धेरिति परिहरति—नेत्यादिना। संगृहीतचोद्यपरिहारयोश्चोद्यं विवृणोति—यत्त्विति। अविद्यावत्त्वेऽपि ज्ञातुरसंसारित्वादुत्खातदंष्ट्रोरगवदविद्या किं करिष्यतीत्याशङ्क्याह—तदेवेति। मिथ्याज्ञानादिमत्त्वमेवात्मनः संसारित्वमिति स्थिते फलितमाह—तत्रेति। न करणे चक्षुषीत्यादिनोक्तमेव परिहारं प्रपञ्चयति—तत्रेत्यादिना। तिमिरादिदोषस्तत्कृतो विपरीतग्रहादिश्च न ग्रहीतुरात्मनोऽ-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

ज्ञानीत्यर्थः। नह्यन्यतरस्य तत्त्वे ज्ञाते कृतकृत्यतास्ति। नहि सांख्यो निर्विशेषात्मविदपि प्रपञ्चमबाधमानः शून्यवादी

५ भाष्योत्कर्षदीपिका।

एव नतु गृहीतृधर्मस्तथा सर्वत्राग्रहणादिप्रत्ययास्तद्धेतवश्च दोषाः कस्यचित्करणस्यैव भवितुमर्हन्ति। तथा चावरणात्मिकाविद्या अन्तःकरणस्य धर्मो नतु क्षेत्रज्ञस्य। तथाचायं प्रयोगः—निमित्तनैमित्तिकाऽविद्या तत्त्वतो न ज्ञातृधर्मो दोषत्वात्तत्कार्यत्वाद्वा तिमिरादिदोषवत् तज्जन्यविपरीतग्रहणवद्वा। किंचाग्रहणादिस्तद्धेतुर्दोषश्च तत्त्वतो न ज्ञातृधर्मः ज्ञेयत्वात् प्रदीपप्रकाशवत्। यज्ज्ञेयं तत्स्वातिरिक्तज्ञेयं यथा प्रदीपप्रकाश इति व्याप्त्याऽग्रहणादेरपि ज्ञेयत्वेन स्वातिरिक्तज्ञेयत्वावश्यंभावात्। ज्ञाता न ज्ञेयधर्मवान् ज्ञातृत्वात् यथा देवदत्तो न स्वज्ञेयघटादिरूपादिमान् सर्वकरणवियोगे च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात्। अविद्यादिस्तत्त्वतो न ज्ञातृधर्मो व्यभिचारित्वात् स्थूलत्वकृशत्वादिवत्। अपिचाविद्यादिरात्मनो ज्ञातुर्धर्मः किमग्न्यौष्ण्यवत्स्वाभाविकः किंवा आगन्तुकः। नाद्यः स्वाभाविकेन धर्मेण कदाचिदपि वियोगाभावेनानिर्मोक्षप्रसङ्गात्। आगन्तुकोऽपि किं स्वतः उत परतः। नाद्यः अनिर्मोक्षप्रसङ्गादेव। न द्वितीयः विभुत्वादविक्रियत्वात् निरवयवत्वादसङ्गत्वादद्वयत्वाच्चात्मनः व्योमवत्केनचित्क्वचित्संयोगानुपपत्त्या परतस्तस्मिन्नग्रहणादेर्वक्तुमशक्यत्वात्। तस्मात्सिद्धं क्षेत्रज्ञस्य कालत्रयेऽपीश्वरत्वम् 'अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः। शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते। यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते' इत्यादीश्वरवचनात्। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं नेह नानास्ति किंचन', 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति', 'अन्तःकरणव्यतिरिक्तोऽहमितिप्रतीयमानो जीवः परस्मान्न भिद्यते चेतनत्वाद्ब्रह्मवत्' इत्यादिश्रुतियुक्तिभ्यश्च। ननु सर्वप्रमाणोपजीव्यतया श्रेष्ठेन ज्येष्ठेन नाहमीश्वर इत्येवंरूपेण प्रत्यक्षेण भेदस्योपलभ्यमानत्वात् तद्विरुद्धं क्षेत्रज्ञेश्वरयोरैक्यं श्रुतियुक्तिभिर्बोधयितुं न शक्यते। ननु प्रत्यक्षस्य व्यावहारिकभेदविषयत्वेन श्रुत्यादिजन्यज्ञानेन बाधसंभवादविरोध इति चेन्न। भेदग्राहिप्रत्यक्षस्याहमीश्वर इति तद्विरोधिप्रत्ययाभावेन बाधासंभवात्। ननु क्षेत्रज्ञेश्वरभेदप्रत्यक्षे किं बहिरिन्द्रियं चक्षुरादि हेतुः किंवा मनः। नाद्यः बाह्येन्द्रियाणां रूपादिरहितात्मग्रहणसामर्थ्याभावेन तद्गतभेदग्रहणेऽप्यसामर्थ्यात्। न द्वितीयः। 'प्रमाणान्तरसहकारिणो मनसः पृथक्प्रमाणत्वायोगात्। तस्मात् क्लृप्तकारणाभावाद्भेदप्रत्यक्षं भ्रान्तिरितिचेन्न। सुखादिप्रत्यक्षस्य प्रमाणान्तराजन्यत्वेन मनस-

१ श्रीमच्छांकरभाष्यम् ।

**ग्रहीतुः । चक्षुषः संस्कारेण तिमिरेऽपनीते ग्रहीतुरदर्शनान्न ग्रहीतुर्धर्मो यथा तथा सर्वत्रैवाग्रहणविपरीतसंशयप्रत्ययास्तन्निमित्ताः करणस्यैव कस्यचिद्भवितुमर्हन्ति न ज्ञातुः क्षेत्रज्ञस्य । संवेद्यत्वाच्च तेषां प्रदीपप्रकाशवन्न ज्ञातृधर्मत्वम् । संवेद्यत्वादेव स्वात्मव्यतिरिक्तसंवेद्यत्वम् । सर्वकरणवियोगे च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात् । आत्मनो यदि क्षेत्रज्ञस्याग्न्युष्णवत्स्वो धर्मस्ततो न कदाचिदपि तेन वियोगः स्यात् । अविक्रियस्य च व्योमवत्सर्वगतस्यामूर्तस्यात्मनः केनचित्संयोगवियोगानुपपत्तेः । सिद्धं क्षेत्रज्ञस्य नित्यमेवेश्वरत्वम् । अनादित्वान्निर्गुणत्वादित्यादीश्वरवचनाच्च । नन्वेवं सति संसारसंसारित्वाभावे शास्त्रानर्थक्यादिदोषः स्यादिति । न सर्वैरभ्युपगतत्वात् । सर्वैर्ह्यात्मवादिभिरभ्युपगतो दोषो नैकेन परिहर्तव्यो भवति । कथमभ्युपगत इति मुक्तात्मनां संसारसंसारित्वव्यवहाराभावः सर्वैरेवात्मवादिभिरिष्यते । नच तेषां शास्त्रानर्थक्यादिदोषप्राप्तिरभ्युपगता ।**

२ आनन्दगिरिव्याख्या ।

स्तीत्यत्र हेतुमाह—**चक्षुष इति** । तद्गतेनाञ्जनादिसंस्कारेण तिमिरादौ पराकृते देवदत्तस्य ग्रहीतुर्दोषाद्यनुपलम्भान्न तस्य तद्धर्मत्वमतो विमतं तत्त्वतो नात्मधर्मो दोषत्वात्तत्कार्यत्वाद्वा संमतवदित्यर्थः । किंच विपरीतग्रहादिस्तत्त्वतो नात्मधर्मो वेद्यत्वात्संप्रतिपन्नवदित्याह—**संवेद्यत्वाच्चेति** । किंच यद्वेद्यं तत्स्वातिरिक्तवेद्यं यथा दीपादीति व्याप्तेर्विपरीतग्रहादीनामपि वेद्यत्वादतिरिक्तवेद्यत्वे संवेदिता न संवेद्यधर्मवान्वेदितृत्वाद्यथा देवदत्तो न स्वसंवेद्यरूपादिमानित्यनुमानान्तरमाह—**संवेद्यत्वादेवेति** । किंच विपरीतग्रहादयस्तत्त्वतो नात्मधर्मा व्यभिचारित्वात्कृशत्वादिवदित्याह—**सर्वेति** । उक्तमेव विवृण्वन्नात्मनो विपरीतग्रहादिः स्वाभाविको वागन्तुको वेति विकल्प्याद्यं दूषयति—**आत्मन इति** । अतो निर्मोक्षोऽविद्यातज्जध्वस्तेरसद्भावादिति भावः । आगन्तुकोऽपि स्वतश्चेदमुक्तिः परतश्चेत्तत्राह—**अविक्रियस्येति** । विभुत्वादविक्रियत्वादमूर्तत्वाच्चात्मा व्योमवन्न केनचित्संयोगविभागावनुभवति—नहि विक्रियाभावे व्योम्नि वस्तुतः संयोगविभागावसङ्गत्वाच्चात्मनस्तदसंयोगान्न परतोऽपि तस्मिन्विपरीतग्रहादित्यर्थः । तस्यात्मधर्मत्वाभावे फलितमाह—**सिद्धमिति** । आत्मनो निर्धर्मकत्वे भगवदनुमतिमाह—**अनादित्वादिति** । ईश्वरत्वे सत्यात्मनोऽसंसारित्वे विधिशास्त्रस्याध्यक्षादेश्चानर्थक्यात्तात्त्विकमेव तस्य संसारित्वमिति शङ्कते—**नन्विति** । विद्यावस्थायामविद्यावस्थायां वा शास्त्रानर्थक्यमिति विकल्प्याद्यं प्रत्याह—**न सर्वैरिति** । विदुषो मुक्तस्य संसारतदाधारत्वयोरभावस्य सर्ववादिसंमतत्वात्तत्र शास्त्रानर्थक्यादि चोद्यं मयैव न प्रतिविधेयमित्यर्थः । संग्रहवाक्यं विवृणोति—**सर्वैरिति** । अभिप्रायाज्ञानात्प्रश्ने स्वाभिप्रायमाह—**कथमित्यादिना** । तर्हि मुक्तान्प्रति विधिशास्त्रस्याध्यक्षादेश्चानर्थक्यमित्याशङ्क्याह—**नचेति** । नहि व्यवहारातीतेषु तेषु गुणदोषाशङ्केत्यर्थः । द्वैतिनां मते मुक्तात्मस्विवास्मत्पक्षेऽपि क्षेत्रज्ञस्ये-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वा प्रपञ्चं तुच्छत्वेन पश्यन्नधिष्ठानं ब्रह्म नास्तीति ब्रुवाणः कृतकृत्यो भवतीति वक्तुं युक्तम् । अतो द्वयोरपि तत्त्वं बोध्यमेव

५ भाष्योत्कर्षदीपिका ।

एव तत्प्रमाणत्वे आत्मनोऽपि तत्प्रमाणत्वेन तद्गतभेदस्यापि तत्प्रमाणत्वात् । नन्वतीन्द्रियेश्वरप्रतियोगिकभेदस्याप्यतीन्द्रियत्वात् ईश्वरभेदः कथं प्रत्यक्षः अभावप्रत्यक्षस्य प्रतियोगिप्रत्यक्षतन्त्रत्वादितिचेन्न । मनस्त्वे घटत्वाभावस्याप्रत्यक्षत्वात् घटत्वे मनस्त्वाभावस्य प्रत्यक्षत्वाच्च प्रतियोगिप्रत्यक्षस्याभावप्रत्यक्षे तन्त्रत्वाभावात् । तथाच यत्र घटत्वादौ यस्य मनस्त्वादेः सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः । ततश्च क्षेत्रज्ञे ईश्वराभेदो यदि स्यात्तर्हि उपलभ्येत । यतो नोपलभ्यते तस्मात्तद्भेदः प्रत्यक्षः । नच स्थूलोहमित्यादिप्रत्ययगोचरः स्थौल्यादिर्यथा शरीराद्युपाधिकतयात्मनि कल्पितस्तथा शरीरविशिष्टस्यैवेश्वरभेदानुभवात् भेदप्रत्ययोऽप्यौपाधिकत्वात्कल्पित इति वाच्यम् । जाग्रत्स्वप्नयोरेकशरीरानवभासेपि योहं स्वप्ने सोहमिदानीं मनुष्यः खट्वारूढ इत्यहंप्रत्ययस्यैकरूपस्यानुवर्तमानत्वेन देहातिरिक्तात्मनोऽहमिति प्रत्यक्षप्रत्ययगोचरत्वाभ्युपगमावश्यकत्वेन तत्र प्रतीयमानस्येश्वरप्रतियोगिकभेदस्यौपाधिकत्वायोगेनाकल्पितत्वादितिचेदुच्यते । मनो न प्रमाणं किंचित्प्रमाणसहकारित्वात्[1]कालादिवद्व्यतिरेके चक्षुरादिवत्, अनन्यथासिद्धप्रमेयशून्यत्वात् च मनो न प्रमाकरणं तदाश्रयत्वात्प्रमातृवत् । तदुक्तं 'प्रमाणसहकारित्वाद्विषयस्याप्यभावतः । न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः' । यदपि सुखादिप्रत्यक्षस्येत्यादि तदपि न । सुखादिव्यवहारः स्वविषयज्ञानजन्यः अर्थज्ञापनेच्छाधीनजडव्यवहारत्वात् संमतवदित्यनुमानात् । किंच मनो न भेदे प्रमाणमसन्निकृष्टत्वात्संमतवत् मनसो भेदेन संयोगसमवायतादात्म्यानामन्यतमो न भवति इति सुप्रसिद्धम् । अन्यश्चेन्द्रियसंनिकर्षोऽप्रसिद्धः असंनिकृष्टं चेन्द्रियमर्थं नैव गृह्णाति । तदुक्तं 'संयोगादेरयुक्तत्वात्तदन्यस्याप्रसिद्धितः । संनिकर्षस्य तेनेदं भेदा[2]संग्येव मानसम्' इति । यत्तु मनस्त्वे घटत्वप्रतियोगिकाभावस्येत्यादि तदपि न । प्रतियोगिसत्त्वस्यानुपलब्धिविरोधित्वं तत्प्रतियोग्युपलब्धिव्याप्यत्वेनैव वक्तव्यम् । एवं चान्यत्र प्रतियोगिसत्त्वस्याभावस्थलीयोपलम्भाव्याप्तत्वेन

१ कालोऽदृष्टेश्वरेच्छा. २ भेदासंगि भेदसंबन्धशून्यम्.

१ श्रीमच्छांकरभाष्यम् ।

तथा नः क्षेत्रज्ञानामीश्वरैकत्वे सति शास्त्रानर्थक्यं भवतु । अविद्याविषये चार्थवत्त्वम् । यथा द्वैतिनां सर्वेषां बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं न मुक्तावस्थायामेवम् । नन्वात्मनो बन्धमुक्तावस्थे परमार्थत एव वस्तुभूते द्वैतिनां नः सर्वेषामतो हेयोपादेयतत्साधनसद्भावे शास्त्राद्यर्थवत्त्वं स्याद्द्वैतिनां पुनर्द्वैतस्यापरमार्थत्वादविद्याकृतत्वाद्बन्धावस्थायाश्चात्मनोऽपरमार्थत्वे निर्विषयत्वाच्छास्त्राद्यानर्थक्यमिति चेत् । न, आत्मनोऽवस्थाभेदानुपपत्तेः । यदि तावदात्मनो बन्धमुक्तावस्थे युगपत्स्यातां क्रमेण वा । युगपत्तावद्विरोधान्न संभवतः स्थितिगती इवैकस्मिन् । क्रमभावित्वे च निर्निमित्तत्वेऽनिर्मोक्षप्रसङ्गोऽन्यनिमित्तत्वे च स्वतोऽभावादपरमार्थत्वप्रसङ्गः । तथा च सत्यभ्युपगमहानिः । किंच बन्धमुक्तावस्थयोः पौर्वापर्यनिरूपणायां बन्धावस्था पूर्वं प्रकल्प्याऽनादिमत्यन्तवती च तच्च प्रमाणविरुद्धं तथा मोक्षावस्थादिमत्यनन्ता च प्रमाणविरुद्धैवाभ्युपगम्यते । न चावस्थावतोऽवस्थान्तरं गच्छतो नित्य-

२ आनन्दगिरिव्याख्या ।

श्वरत्वे तंप्रति च शास्त्राद्यानर्थक्यं विद्यावस्थायामास्थितमिति फलितमाह—**तथेति** । द्वितीयं दूषयति—**अविद्येति** । तदेव दृष्टान्तेन विवृणोति—**यथेति** । एवमद्वैतिनामपि विद्योदयात्प्रागर्थवत्त्वं शास्त्रादेरिति शेषः । द्वैतिभिरद्वैतिनां न साम्यमिति शङ्कते—**नन्विति** । अवस्थयोर्वस्तुत्वे तन्मते शास्त्राद्यर्थवत्त्वं फलितमाह—**अत इति** । सिद्धान्ते तु नावस्थयोर्वस्तुतेति वैषम्यमाह—**अद्वैतिनामिति** । व्यावहारिकं द्वैतं तन्मतेऽपि स्वीकृतमित्याशङ्क्याह—**अविद्येति** । कल्पितद्वैतेन व्यवहारान्न तस्य वस्तुतेत्यर्थः । बन्धावस्थाया वस्तुत्वाभावे दोषान्तरमाह—**बन्धेति** । आत्मनस्तत्त्वतोऽवस्थाभेदो द्वैतिनामपि नास्तीति परिहरति—**नेति** । अनुपपत्तिं दर्शयितुं विकल्पयति—**यदीति** । तत्राद्यं दूषयति—**युगपदिति** । द्वितीयेऽपि क्रमभाविन्योरवस्थयोर्निर्निमित्तत्वं सनिमित्तत्वं वेति विकल्प्याद्ये सदा प्रसङ्गाद्बन्धमोक्षयोरव्यवस्था स्यादित्याह—**क्रमेति** । कल्पान्तरं निरस्यति—**अन्येति** । बन्धमोक्षावस्थे न परमार्थे अस्वाभाविकत्वात्स्फटिकलौहित्यवदिति स्थिते फलितमाह—**तथाचेति** । वस्तुत्वमिच्छतावस्थयोर्वस्तुत्वोपगमादित्यर्थः । इतश्चावस्थयोर्न वस्तुत्वमित्याह—**किंचेति** । अवस्थयोर्वस्तुत्वमिच्छता तयोर्यौगपद्यायोगाद्वाच्ये क्रमे बन्धस्य पूर्वत्वं मुक्तेश्च पाश्चात्यमिति स्थिते बन्धस्यादित्वकृतं दोषमाह—**बन्धेति** । तस्याश्चाकृताभ्यागमकृतविनाशनिवृत्तयेऽनादित्वमेष्टव्यमन्तवत्त्वं च मुक्त्यर्थमास्थेयं तच्च यदनादिभावरूपं तन्नित्यं यथात्मेति व्याप्तिविरुद्धमित्यर्थः । मोक्षस्य पाश्चात्त्यकृतं दोषमाह—**तथेति** । सा हि ज्ञानादिसाध्यत्वादादिमती पुनरावृत्त्यनङ्गीकारादनन्ता च । तच्च यत्सादिभावरूपं तदन्तवद्यथा पटादीतिव्याप्त्यन्तरविरुद्धमित्यर्थः । किंच क्रमभाविनीभ्यामवस्थाभ्यामात्मा संबध्यते न वा, प्रथमे पूर्वावस्थया सहैवोत्तरावस्थां गच्छति चेदुत्तरावस्थायामपि पूर्वावस्थावस्थानादनिर्मोक्षः, यदि पूर्वावस्थां त्यक्त्वोत्तरावस्थां गच्छति तदा पूर्वत्यागोत्तराप्त्योरात्मनः सातिशयत्वान्नित्यत्वानुपपत्तिरित्याह—**नचेति** ।

४ मधुसूदनीव्याख्या ।

विरोधित्वादित्यभिप्रायः । अत्र जीवेश्वरयोराविद्यको भेदः पारमार्थिकस्त्वभेद इत्यत्र युक्तयो भाष्यकृद्भिर्वर्णिताः । अस्मा-

५ भाष्योत्कर्षदीपिका ।

तत्रत्यानुपलब्धिविरोधित्वायोगात् । यत्रेत्यादिवकुरभावाधिकरण एव प्रतियोगिसत्त्वतदुपलम्भयोर्वाच्यत्वापत्तेः । किंच यथा लौकिकोपदेशस्य सहकारिणोऽभावाद्ब्राह्मणत्वाद्यनुपलम्भस्तदभावं विनोपपन्नस्तथा 'आचार्यवान्पुरुषो वेद', 'नावेदविन्मनुते तं बृहन्तं', 'श्रोतव्यो मन्तव्यः' इत्यादिना बोधितस्य सहकार्यन्तरस्याभावेन क्षेत्रज्ञे ब्रह्माभेदानुपलम्भोऽप्यभावं विनोपपद्यते । अपि च तमसावृतस्य घटस्य सत्त्वं यथा नानुपलब्धिविरोधि तथा 'नीहारेण प्रावृताजल्प्या च', 'अनृतेन हि प्रत्यूढा', 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः', 'भवत्यभेदो भेदश्च तस्याज्ञानकृतो भवेत्' इत्यादिश्रुतिस्मृतिभ्योऽज्ञानेनावृतत्वप्रतीतेर्ज्ञातृब्रह्माभेदसत्त्वं नानुपलब्धिविरोधि । किंच यथा मनसानुपलम्भान्न धर्माद्यभावसिद्धिस्तथा 'यन्मनसा न मनुते', 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुत्या मनोगम्यस्य प्रत्यगभिन्नस्य ब्रह्मणः मनसानुपलम्भादभावो न सिध्यति । यदपि जाग्रत्स्वप्रयोरित्यादि तदपि न । नाहमीश्वर इति भेदानुभवस्याहमिहेति परिच्छिन्नतयानुभूयमाने जीवेऽनुभूयमानत्वात् निरुपाध्यात्मनश्च परिच्छेदासंभवाद्घटाकाशवत्परिच्छेदस्यौपाधिकत्वेन तद्गतभेदस्याप्यौपाधिकत्वात् प्रत्यक्षस्य व्यावहारिकसत्तामुपजीव्य प्रवृत्तं श्रुत्यादि तस्य पारमार्थिकसत्तां निराकरोत्यतो नोपजीव्यविरोधः । ज्येष्ठत्वमपि तस्य बाध्यत्वे हेतुर्नतु बाधकत्वे । कनीयसा शुक्तिज्ञानेन ज्येष्ठस्य रजतज्ञानस्य बाधदर्शनात् । प्रत्यक्षं श्रुत्यादिबाध्यं ज्येष्ठत्वात् रजतज्ञानवत् । ननु क्षेत्रज्ञस्येश्वराभिन्नत्वे सति संसारसंसारित्वाभावे शास्त्रस्य प्रत्यक्षादेश्चानर्थक्यात् वास्तवत्वमेव संसारसंसारित्वयोरिति चेत् किं विद्यावस्थायां शास्त्राद्यानर्थक्यमुताविद्यावस्थायाम् । आद्ये मुक्तात्मनां संसारसंसारित्वव्यवहारस्य सर्वैरप्यात्मवादिभिरनिष्टत्वेन तैर्यथाशास्त्राद्यानर्थक्यदोषो नैवाभ्युपगतस्तथास्माभिरपि, द्वितीये च यथा सर्वेषां द्वैतिनां मते बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं न मुक्तावस्थायामेवम् । ननु द्वैतिनां मते आत्मनो बन्ध-

१ श्रीमच्छांकरभाष्यम् ।

**त्वमुपपादयितुं शक्यम् । अथानित्यत्वदोषपरिहाराय बन्धमुक्तावस्थाभेदो न कल्प्यतेऽतो द्वैतिनामपि शास्त्रानर्थक्यादिदोषोऽपरिहार्य एवेति समानत्वान्नाद्वैतवादिना परिहर्तव्यो दोषः । नच शास्त्रानर्थक्यं यथा प्रसिद्धाविद्वत्पुरुषविषयत्वाच्छास्त्रस्य । अविदुषां हि फलहेत्वोरनात्मनोरात्मदर्शनं न विदुषाम् । विदुषां हि फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयोरहमित्यात्मदर्शनानुपपत्तेः । न ह्यत्यन्तमूढ उन्मत्तादिरपि जलाग्न्योश्छायाप्रकाशयोर्वैकात्म्यं पश्यति किमुत विवेकी । तस्मान्न विधिप्रतिषेधशास्त्रं तावत्फलहेतुभ्यामात्मनोऽन्यत्वदर्शिनो भवति । नहि देवदत्त, त्वमिदं कुर्विति कस्मिंश्चित्कर्मणि नियुक्ते विष्णुमित्रोऽहं नियुक्त इति तत्रस्थो नियोगं शृण्वन्नपि प्रतिपद्यते । नियोगविषयविवेकाग्रहणात्तूपपद्यते प्रतिपत्तिस्तथा फलहेत्वोरपि । ननु प्राकृतसंबन्धापेक्षया युक्तैव प्रतिपत्तिः शास्त्रार्थविषया । फलहेतुभ्यामन्यात्मत्वदर्शनेऽपि सतीष्टफलहेतौ प्रवर्तितोऽस्म्यनिष्ट-**

२ आनन्दगिरिव्याख्या ।

आत्मनोऽवस्थाद्वयसंबन्धो नास्तीति द्वितीयमनूद्य दूषयति—**अथेत्यादिना** । तर्हि पक्षद्वयेऽपि दोषाविशेषान्नाद्वैतमतानुरागे हेतुरित्याशङ्क्याविद्याविषये चेत्युक्तं विवृणोति—**नचेति** । तदेव स्फुटयति—**अविदुषां हीति** । फलं भोक्तृत्वं कर्तृत्वं हेतुः, यद्वा फलं देहविशेषो हेतुरदृष्टं तयोरनात्मनोर्भोक्ताहं कर्ताहं मनुष्योऽहमित्याद्यात्मदर्शनमधिकारकारणं तेनाविद्वद्विषयं विधिनिषेधशास्त्रमित्यर्थः । विदुषामपि मनुष्योऽहमित्यादिव्यवहारात्तद्विषयं शास्त्रं किं न स्यादित्याशङ्क्याह—**नेति** । भोक्तृत्वकर्तृत्वाभ्यां ब्राह्मण्यादिमतो देहाद्धर्माधर्माभ्यां चात्मनोऽन्यत्वं पश्यतो न विधिनिषेधाधिकारित्वमुक्तफलादावात्मीयाभिमानासंभवादित्यर्थः । आत्मनो देहादेरन्यत्वदर्शिनो न देहादावात्मधीरित्येतदुपपादयति—**नहीति** । विदुषो न विधिनिषेधाधिकारितेत्युक्तमुपसंहरति—**तस्मादिति** । शास्त्रस्याविद्वद्विषयत्वमिव विद्वद्विषयत्वमपि मन्तव्यमुभयोरपि शास्त्रश्रवणाविशेषादित्याशङ्क्याह—**नहीति** । तत्रस्थो यस्मिन्देशे देवदत्तः स्थितस्तत्रैव वर्तमानः सन्नित्यर्थः । ननु देवदत्ते नियुक्ते विष्णुमित्रोऽपि कदाचिन्नियुक्तोऽस्मीति प्रतिपद्यते, सत्यं नियोगविषयान्नियोज्यादात्मनो विवेकाग्रहणान्नियोज्यत्वभ्रान्तेरित्याह—**नियोगेति** । अविवेकिनो नियोगधीर्भवतीति दृष्टान्तमुक्त्वा फले हेतौ चात्मदृष्टिविशिष्टस्याविदुषः संभवत्येव विधिनिषेधाधिकारित्वमिति दार्ष्टान्तिकमाह—**तथेति** । विधिनिषेधशास्त्रमविद्वद्विषयमिति वदता शास्त्रानर्थक्यं समाहितं, संप्रति शास्त्रस्य विद्वद्विषयत्वेनैवार्थवत्त्वं शक्यसमर्थनमिति शङ्कते—**नन्विति** । प्रकृतिरविद्या ततो जातो यो देहादावभिमानात्मा संबन्धो विद्योदयात्प्रागनुभूतस्तदपेक्षया विधिना प्रवर्तितोऽस्मि निषेधेन निवर्तितोऽस्मीति विधिनिषेधविषया सत्यामपि विद्यायां धीर्युक्तैवेत्यर्थः । विदुषोऽपि पूर्वमाविद्यं संबन्धमपेक्ष्य विधिनिषेधविषयां धियमुक्तामेव व्यक्तीकरोति—**इष्टेति** । नन्वविदुषो मिथ्याभिमानवन्न विदुषः सोऽनुवर्तते तथाचाविद्यासंबन्धापेक्षया न युक्ता विदुषो यथोक्ता धीरिति तत्राह—

५ भाष्योत्कर्षदीपिका ।

मुक्त्यवस्थयोर्वास्तवत्वेन हेयोपादेयसाधनसद्भावेन शास्त्रादेरर्थवत्त्वं सिध्यति नत्वद्वैतिनामविद्याकृतत्वात् द्वैतस्यापरमार्थत्वेनात्मनो बन्धावस्थाया अवास्तवत्वादितिचेत् आत्मनो वास्तवे बन्धमुक्त्यवस्थे युगपत्स्यातां क्रमेण वा । नाद्यः । एककालीनस्थितिगतिवदेकस्मिन् युगपद्विरोधात् । द्वितीयेऽपि तयोर्निर्निमित्तत्वं सनिमित्तत्वं वा । नाद्यः । अनिर्मोक्षप्रसङ्गात् । द्वितीये स्वतोभावादपरमार्थत्वप्रसङ्गेन बन्धमोक्षावस्थे न वास्तवेऽस्वाभाविकत्वात् स्फटिकलौहित्यवदित्यभ्युपगमहानापत्तेः । किंचावस्थयोर्वास्तवत्वमिच्छता तयोर्यौगपद्यासंभवेन क्रमनिरूपणार्थं बन्धावस्थापूर्वं प्रकल्प्यानादिमत्यन्तवती तथा मोक्षावस्था पश्चात्प्रकल्प्या आदिमत्यनन्ता तच्च यदनादिभावरूपं तन्नित्यं यथात्मा । यत्सादिभावरूपं तदन्तवद्यथा घटादीति व्याप्तिद्वयविरुद्धम् । अपि च क्रमभाविनीभ्यामवस्थाभ्यामात्मा संबध्यते न वा । आद्ये किं पूर्वावस्थया सहैवोत्तरावस्थया संबध्यते किंवा पूर्वावस्थां विहाय । आद्येऽनिर्मोक्षप्रसङ्गः । द्वितीये आत्मनः सातिशयत्वापत्त्या नित्यत्वमुपपादयितुमशक्यम् । अन्त्ये द्वैतिनामपि शास्त्राद्यानर्थक्यदोषस्यापरिहार्यत्वान्नाद्वैतवादिना परिहर्तव्यम् । तर्हि पक्षद्वयेपि दोषाविशेषान्नाद्वैतमतानुरागे हेतुरिति चेन्न । अद्वैतमते शास्त्राद्यानर्थक्याभावात् । भोक्तृत्वकर्तृत्वयोर्देहादृष्टयोर्वा फलहेत्वोरनात्मनोरहं कर्ताहं भोक्ताहं मनुष्य इत्याद्यात्मदर्शनवतोऽविदुषोऽधिकारिणः संभवात् न शास्त्राद्यानर्थक्यम् । ननु विद्वद्विषयं शास्त्रं किं न स्यादितिचेन्न । विदुषां फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयोरहमित्यात्मदर्शनानुपपत्तेः । नहि जलाग्न्योश्छायातपयोर्वा भेददर्शी अत्यन्तमूढोऽपि तयोरेकात्मतां पश्यति किमुत विवेकी । तस्माद्विधिनिषेधशास्त्रं न विद्वद्विषयम् । नहि देवदत्त त्वमिदं कुर्विति देवदत्ते नियुक्ते तत्रस्थो नियोगं शृण्वन्नपि विष्णुमित्रोऽहं नियुक्त इति

७ अभिनवगुप्ताचार्यव्याख्या ।

यो वेदयति । वेदेत्यन्तर्भावितण्यर्थोऽत्र विदिः । तेन यत्प्रसादादचेतनमिदं चेतनीभावमायाति स एव क्षेत्रज्ञो नान्यः कश्चित् । विशेषस्तु

---

१ विशिष्टत्वम्.

१ श्रीमच्छांकरभाष्यम् ।

फलहेतोश्च निवर्तितोऽस्मीति । यथा पितृपुत्रादीनामितरेतरात्मान्यत्वदर्शने सत्यप्यन्योन्यनियोगप्रतिषेधार्थप्रतिपत्तिः । न व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोरात्माभिमानस्य सिद्धत्वात् । प्रतिपन्ननियोगप्रतिषेधार्थो हि फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यते न पूर्वं । तस्माद्विधिप्रतिषेधशास्त्रमविद्वद्विषयमिति सिद्धम् । ननु स्वर्गकामो यजेत कलञ्जं न भक्षयेदित्यादावात्मव्यतिरेकदर्शिनामप्रवृत्तौ केवलदेहाद्यात्मदृष्टीनां च । अतः कर्तुरभावाच्छास्त्रानर्थक्यमिति चेत् । न, यथाप्रसिद्धित एव प्रवृत्तिनिवृत्त्युपपत्तेः । ईश्वरक्षेत्रज्ञैकत्वदर्शी ब्रह्मवित्तावन्न प्रवर्तते । तथा नैरात्म्यवाद्यपि नास्ति परलोक इति न प्रवर्तते । यथाप्रसिद्धितस्तु विधिप्रतिषेधशास्त्रश्रवणान्यथानुपपत्त्यानुमितात्मास्तित्व आत्मविशेषानभिज्ञः कर्मफलसंजाततृष्णः श्रद्दधानतया च प्रवर्तत इति सर्वेषां नः प्रत्यक्षमतो न शास्त्रानर्थक्यम् । विवेकिनामप्रवृत्तिदर्शनात्तदनुगामिनामप्रवृत्तौ शास्त्रानर्थक्यमिति चेत् । न, कस्यचि-

२ आनन्दगिरिव्याख्या ।

यथेति । पिता पुत्रो भ्रातेत्यादीनां मिथोऽन्यत्वदृष्टावप्यन्योन्यनियोगार्थस्य निषेधार्थस्य च धीर्दृष्टा पितरमधिकृत्य विधौ निषेधे वा तस्य तदनुष्ठानाशक्तौ पुत्रस्य तद्विषया धीरिष्टा 'अथातः संप्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोकः' इत्यादिसंप्रत्तिश्रुत्याशेषानुष्ठानस्य पुत्रकार्यताप्रतिपादनात् । पुत्रं चाधिकृत्य विधिनिषेधप्रवृत्तौ तस्य तदशक्तौ पितुस्तदर्था धीरुपगता तथा भ्रात्रादिष्वपि द्रष्टव्यम् । एवं विदुषो हेतुफलाभ्यामन्यत्वदर्शनेऽपि प्राक्कालीनाविद्यदेहादिसंबन्धादविरुद्धा विधिनिषेधा धीरित्यर्थः । पुत्रादीनां मिथ्याभिमानान्मिथो नियोगधीर्युक्ता तत्त्वदर्शिनस्तु तदभावान्न देहादिसंबन्धाधीना नियोगधीरिति परिहरति—नेत्यादिना । किंच 'सर्वापेक्षया यज्ञादिश्रुतेरश्ववत्' इति सर्वापेक्षाधिकरणे सम्यग्ज्ञानस्यादृष्टसाध्यत्वोक्तेर्विधिनिषेधार्थानुष्ठानं सम्यग्ज्ञानात्पूर्वमिति कुतो विदुषस्तदनुष्ठानमित्याह—प्रतिपन्नेति । सत्यदृष्टे सम्यग्धीदृष्टेरसति चाशुद्धबुद्धेस्तदभावादन्वयव्यतिरेकाभ्यां विविदिषावाक्याच्च विधिनिषेधानुष्ठानात्पूर्वं न सम्यग्धीरित्याह—न पूर्वमिति । विधिनिषेधयोर्विद्वद्विषयत्वायोगे फलितमाह—तस्मादिति । शास्त्रस्याविद्वद्विषयत्वेनोक्तमर्थवत्त्वमाक्षेपसमाधिभ्यां प्रपञ्चयितुमाक्षिपति—नन्विति । चकारादूर्ध्वमप्रवृत्तिरिति संबध्यते । आत्मनो देहाद्व्यतिरेकं पश्यतां देहाद्यभिमानरूपाधिकारहेत्वभावाद्विधितो यागादावप्रवृत्तिर्निषेधाच्चाभक्ष्यभक्षणादेर्न निवृत्तिरतस्तेषां प्रवृत्तिनिवृत्त्योरभावे देहादावात्मत्वमनुभवतामपि न ते युक्ते तेषां पारलौकिकभोक्तृप्रतिपत्त्यभावादित्यर्थः । विदुषामविदुषां च प्रवृत्तिनिवृत्त्यभावे फलितमाह—अत इति । आत्मनो देहाद्यतिरेकं परोक्षमपरोक्षं च देहाद्यात्मत्वं पश्यतः शास्त्रानुरोधादेव प्रवृत्तिनिवृत्त्युपपत्तेर्न शास्त्रानर्थक्यमित्युत्तरमाह—नेत्यादिना । प्रसिद्धिरत्र शास्त्रीयाभिमता । एतदेव विवृण्वन्ब्रह्मविदो वा नैरात्म्यवादिनो वा परोक्षज्ञानवतो वा प्रवृत्तिनिवृत्ती विवक्षसीति विकल्प्याद्यं दूषयति—ईश्वरेति । न निवर्तते चेत्यपि द्रष्टव्यम् । द्वितीयं निरस्यति—तथेति । पूर्ववदत्रापि संबन्धः । तृतीयमङ्गीकरोति—यथेति । विधिनिषेधाधीनां प्रसिद्धमनुरुन्धानः सन्निति यावत् । चकारान्निवर्तते चेत्यनुकृष्यते । ब्रह्मविदं नैरात्म्यवादिनं च त्यक्त्वा देहाद्यतिरिक्तमात्मानं परोक्षमपरोक्षं च देहाद्यात्मत्वं पश्यतो विधिनिषेधाधिकारित्वे सिद्धे फलमाह—अत इति । विधान्तरेण शास्त्रार्थानर्थक्यं चोदयति—विवेकिनामिति । दृष्टा हि तेषां विधिनिषेधयोरप्रवृत्तिर्नहि देहादिभ्यो निकृष्टमात्मानं दृष्टवतां तयोरधिकारस्तेन तान्प्रति शास्त्रं नार्थवन्न च देहाद्यात्मत्वदृशस्तत्राधिक्रियन्ते तेषां यद्यदाचरतीति न्यायेन विवेकिनोऽनुगच्छतां विध्यादावप्रवृत्तेरतोऽधिकार्यभावाद्विध्यादिशास्त्रस्य तदनुसारिशिष्टाचारस्य चानर्थक्यमित्यर्थः । किं सर्वेषां विवेकित्वादधिकार्यभावादानर्थक्यं शास्त्रस्योच्यते किंवा कस्यचिदेव विवेकित्वेऽपि तदनुवर्तित्वादन्येषामप्रवृत्तेरानर्थक्यं चोद्यते तत्र प्रथमं प्रत्याह—न कस्यचिदिति । मनुष्याणां सहस्रेष्विति

५ भाष्योत्कर्षदीपिका ।

नियोगं प्रतिपद्यते । ननु देवदत्ते नियुक्ते कदाचिद्विष्णुमित्रो विनियुक्तोऽस्मीति प्रतिपद्यत इति चेत्सत्यम् । नियोगविषयान्नियोज्यादात्मनो विवेकाग्रहणात् । भ्रान्त्या प्रतिपत्त्युत्पत्तेः । तथा फलहेत्वोरप्यात्मनो विवेकाग्रहणात् अविद्वान्संभवत्येव विधिनिषेधशास्त्राधिकारी । ननु यो विद्योदयात्पूर्वमनुभूतोऽविद्योत्पन्नदेहाद्यभिमानसंबन्धस्तदपेक्षया सत्यपि फलहेत्वोरात्मान्यत्वदर्शने इष्टफलहेत्वोः प्रवर्तितोऽस्म्यनिष्टफलहेत्वोर्निवर्तितोऽस्मीति शास्त्रार्थविषया प्रवृत्तिर्युक्तैव । यथा पितृपुत्रभ्रात्रादीनामितरेतरात्मान्यत्वदर्शने सत्यपि पितरमधिकृत्य विधौ निषेधे वा तस्य तदनुष्ठानाशक्तौ पुत्रस्य तद्विषया धीरिष्टा, एवं पुत्रस्यानुष्ठानाशक्तस्य पितुरित्यन्योन्यनियोगप्रतिषेधार्था प्रतिपत्तिरिति चेन्न । पुत्रादीनां मिथ्याभिमानात् । मिथो नियोगादिप्रतिपत्तिसत्त्वेऽपि व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव

७ अभिनवगुप्ताचार्यव्याख्या ।

परिमितव्याप्तिकं रूपमालम्ब्य आत्मेति भण्यते । अपरिच्छिन्नसर्वक्षेत्रव्याप्त्या परमात्मा भगवान्वासुदेवः । ममेति कर्मणि षष्ठी । अहमनेन

१ श्रीमच्छांकरभाष्यम् ।

देव विवेकोपपत्तेः । अनेकेषु हि प्राणिषु कश्चिदेव विवेकी स्याद्यथेदानीम् । नच विवेकिनमनुवर्तन्ते मूढा रागादिदोषतन्त्रत्वात्प्रवृत्तेः । अभिचरणादौ च प्रवृत्तिदर्शनात् । स्वाभाव्याच्च प्रवृत्तेः । स्वभावस्तु प्रवर्तत इति ह्युक्तम् । तस्मादविद्यामात्रं संसारो यथादृष्टविषय एव । न क्षेत्रज्ञस्य केवलस्याविद्या तत्कार्यं च । नच मिथ्याज्ञानं परमार्थवस्तु दूषयितुं समर्थम् । नह्यूषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोति मरीच्युदकं तथाऽविद्या क्षेत्रज्ञस्य न किंचित्कर्तुं शक्नोति । अतश्चेदमुक्तं 'क्षेत्रज्ञं चापि मां विद्धि' 'अज्ञानेनावृतं ज्ञानम्' इति च । अथ किमिदं संसारिणामिवाहमेवं ममैवेदमिति पण्डितानामपि । शृण्विदं तत्पाण्डित्यं यत्क्षेत्र एवात्मदर्शनम् । यदि पुनः क्षेत्रज्ञमविक्रियं पश्येयुस्ततो न भोगं कर्म वाकाङ्क्षेयुर्मम स्यादिति । विक्रियैव भोगकर्मणी । अथैवं सति फलार्थित्वादविद्वान्प्रवर्तते । विदुषः पुनरविक्रियात्मदर्शिनः फलार्थित्वाभावात्प्रवृत्त्यनुपपत्तौ कार्यकरणसंघातव्यापारोपरमे निवृत्तिरुपचर्यते । इदं चान्यत्पाण्डित्यं कस्यचिदस्तु क्षेत्रज्ञ ईश्वर एव क्षेत्रं चान्यत्क्षेत्रज्ञस्य विषयः ।

२ आनन्दगिरिव्याख्या ।

न्यायेनोक्तमेव स्फुटयति—**अनेकेष्विति** । तत्रानुभवानुरोधेन दृष्टान्तमाह—**यथेति** । द्वितीयं दूषयति—**नचेति** । किंच विवेकिनामप्रवृत्तावन्येषामप्यप्रवृत्तिरित्याशङ्कां निरसितुं श्येनादौ तदप्रवृत्तावपीतरप्रवृत्तेरित्याह—**अभिचरणादौ चेति** । अविवेकिनां रागादिद्वारा प्रवृत्त्यास्पदं सर्वं संग्रहीतुमादिपदम् । इतश्च विवेकिनां प्रवृत्त्यभावेऽपि नाज्ञस्याप्रवृत्तिरित्याह—**स्वाभाव्याच्चेति** । प्रवृत्तेः स्वभावाख्याज्ञानकार्यत्वे भगवद्वाक्यमनुकूलयति—**स्वभावस्त्विति** । प्रवृत्तेरज्ञानजत्वे विधिनिषेधाधीनप्रवृत्तिनिवृत्त्यात्मकबन्धस्याविद्यामात्रत्वादविद्वद्विषयत्वं शास्त्रस्य सिद्धमिति फलितमाह—**तस्मादिति** । दृष्टमेवानुसरन्नविद्वान्यथा दृष्टस्तद्विषयस्तदाश्रयः संसारस्तथाच प्रवृत्तिनिवृत्त्यात्मकसंसारस्याविद्वद्विषयत्वात्तद्धेतुविधिशास्त्रस्यापि तद्विषयत्वमित्यर्थः । नन्वविद्या क्षेत्रज्ञमाश्रयन्ती स्वकार्यं संसारमपि तस्मिन्नाधत्ते तेन तस्यैव शास्त्राधिकारित्वं नेत्याह—**नेति** । अविद्यादेः शुद्धे क्षेत्रज्ञे वस्तुतोऽसंबन्धेऽपि तस्मिन्नारोपितं तमेव दुःखीकरोतीत्यत्राह—**नचेति** । तदेव दृष्टान्तेन स्पष्टयति—**नहीति** । क्षेत्रज्ञस्य वस्तुतोऽविद्यासंबन्धे भगवद्वचोऽपि द्योतकमित्याह—**अत इति** । क्षेत्रज्ञेश्वरयोरैक्ये किमित्यसावात्मानमहमिति बुध्यमानोऽपि स्वस्येश्वरत्वमीश्वरोऽस्मीति न बुध्यते तत्राह—**अज्ञानेनेति** । आत्मनो वस्तुतः संसारासंस्पर्शे विद्वदनुभवविरोधः स्यादिति चोदयति—**अथेति** । एवमित्याभिजात्यादिवैशिष्ट्यमुक्तम्, इदमा क्षेत्रकलत्रादि, पण्डितानामपि प्रतीतं संसारित्वमिति शेषः । किं पाण्डित्यं देहादावात्मदर्शनं किंवा कूटस्थात्मदृष्टिराहो संसारित्वादिधीरिति विकल्प्याद्यं निराकुर्वन्नाह—**शृण्विति** । तच्च वस्तुतो संसारित्वविरोधि प्रातिभासिकं तु संसारित्वमिष्टमिति शेषः । द्वितीयं दूषयति—**यदीति** । नहि कूटस्थात्मविषयं संसारित्वं प्रतीयते येन वस्तुतोऽसंसारित्वं विरुध्येत कूटस्थात्मधीविरुद्धायाः संसारित्वबुद्धेरनवकाशित्वादित्यर्थः । आत्मानमक्रियं पश्यतोऽपि कुतो भोगकर्मणी न स्यातामित्याशङ्क्याह—**विक्रियेति** । अविक्रियात्मबुद्धेर्भोगकर्माकाङ्क्षयोरभावे कस्य शास्त्रे प्रवृत्तिरित्याशङ्क्याह—**अथेति** । फलार्थित्वाभावाद्विदुषो न कर्मणि प्रवृत्तिरित्येवं स्थिते सत्यनन्तरमविद्वान्फलार्थित्वात्तदुपाये कर्मणि प्रवर्तते शास्त्राधिकारीत्यर्थः । विदुषो वैधप्रवृत्त्यभावेऽपि निषेधाधीननिवृत्तेरपि दुर्वचत्वात्तस्य निवृत्तिनिष्ठत्वासिद्धिरित्याशङ्क्याह—**विदुष इति** । तृतीयमुत्थापयति—**इदं चेति** । सिद्धान्तादविशेषमाशङ्क्य क्षेत्रस्य क्षेत्रज्ञाद्वस्तुतो भिन्नत्वेन तद्विषयत्वाङ्गीकारान्मैवमित्याह—**क्षेत्रं चेति** । अहंधीवेद्यस्यात्मनो वस्तुतः संसारित्वस्वीकाराच्च सिद्धान्ताद्भेदोऽस्ती-

५ भाष्योत्कर्षदीपिका ।

फलहेतोरात्माभिमानस्य प्रसिद्धत्वेन विदुषस्तदयोगात् । किंच 'सर्वापेक्षा च यज्ञादिश्रुतेः' इत्यधिकरणे सम्यग्ज्ञानस्यादृष्टसाध्यत्वोक्त्या अनुष्ठितविधिनिषेधार्थो हि फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यते । सत्यदृष्टे सम्यग्ज्ञानदर्शनात्, असति च तस्मिञ्छुद्धचित्तस्य तददर्शनादन्वयव्यतिरेकाभ्यां 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या च विधिनिषेधानुष्ठानात्पूर्वं ताभ्यामात्मनोऽन्यत्वं न प्रतिपद्यते । तस्मादविद्वद्विषयं विधिनिषेधशास्त्रमिति सिद्धम् । ननु 'स्वर्गकामो यजेत', 'न कलञ्जं भक्षयेत्' इत्यादावात्मनो देहाद्यतिरेकं पश्यतां देहाद्यभिमानरूपाधिकारहेत्वभावात् देहादावात्मत्वमनुभवतामपि पारलौकिकप्रतिपत्त्यभावात् प्रवृत्तिनिवृत्त्यभावेन कर्तुरभावात् शास्त्रानर्थक्यमितिचेन्न । प्रत्यगभिन्नब्रह्मविदः परलोकाभावविदश्चानात्मवादिनः प्रवृत्तिनिवृत्त्यभावेऽपि विधिनिषेधशास्त्रान्यथानुपपत्त्यानुमितात्मास्तित्वस्य निर्विशेषात्मस्वरूपानभिज्ञस्य कर्मफले स्वर्गादौ नरकादौ

७ अभिनवगुप्ताचार्यव्याख्या ।

ज्ञानेन ज्ञेय इत्यर्थः । येन विकारं गच्छति यद्विकारि । समासेनेत्यविभागेनैव एतान्प्रश्नान्साधारणोत्तरेण परिच्छिनत्ति । यद्यपि च ऋषि-

१ विषाक्तबाणहतमृगमांसं कलञ्जम्.

१ श्रीमच्छांकरभाष्यम् ।

**अहं तु संसारी सुखी दुःखी च[1] । संसारोपरमश्च मम कर्तव्यः क्षेत्रक्षेत्रज्ञविज्ञानेन ध्यानेन चेश्वरं क्षेत्रज्ञं साक्षात्कृत्वा तत्स्वरूपावस्थानेनेति । यश्चैवं बुध्यते यश्च बोधयति नासौ क्षेत्रज्ञ इति । एवं मन्वानो यः स पण्डितापसदः संसारमोक्षयोः शास्त्रस्य चार्थवत्त्वं करोमीति । आत्महा स्वयं मूढोऽन्यांश्च व्यामोहयति शास्त्रार्थसंप्रदायरहितत्वात् श्रुतहानिमश्रुतकल्पनां च कुर्वन् । तस्मादसंप्रदायवित्सर्वशास्त्रविदपि मूर्खवदेवोपेक्षणीयः । यत्तूक्तमीश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानां चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसङ्ग इति । एतौ दोषौ प्रत्युक्तौ विद्याविद्ययोर्वैलक्षण्याभ्युपगमादिति**

२ आनन्दगिरिव्याख्या ।

त्याह—**अहंत्विति** । संसारित्वमेव स्फोरयति—**सुखीति** । संसारित्वस्य वस्तुत्वे तदनिवृत्त्या पुमर्थासिद्धिरित्याशङ्क्याह—**संसारेति** । कथं तदुपरमस्य हेतुं विना कर्तव्यत्वमित्याशङ्क्याह—**क्षेत्रेति** । क्षेत्रं ज्ञात्वा ततो निष्कृष्टस्य क्षेत्रज्ञस्य ज्ञानं कथं संसारोपरतिमुत्पादयेदित्याशङ्क्याह—**ध्यानेनेति** । संसारित्वमात्मनो बुध्यमानस्य तद्रहितादीश्वरादन्यत्वमिति वक्तुमितिशब्दः । तदेवान्यत्वमुपपादयति—**यश्चेति** । मम संसारिणोऽसंसारीश्वरत्वं कर्तव्यमित्येवं यो बुध्यते यो वा तथाविधं ज्ञानं तव कर्तव्यमित्युपदिशति स क्षेत्रज्ञादीश्वरादन्यो ज्ञेयोऽन्यथोपदेशानर्थक्यादित्यर्थः । आत्मा संसारी परस्मादात्मनोऽन्यस्तस्य ध्यानाधीनज्ञानेनेश्वरत्वं कर्तव्यमित्येतज्ज्ञानं पाण्डित्यमिति मतं दूषयति—**एवमिति** । 'अयमात्मा ब्रह्म' इत्यात्मनो ब्रह्मत्वश्रुतिविरोधादित्यर्थः । ननु संसारस्य वस्तुत्वाङ्गीकारात्तत्प्रतीत्यवस्थायां कर्मकाण्डस्यार्थवत्त्वं संसारित्वनिरासेनात्मनो ब्रह्मत्वे ध्यानादिना साधिते मोक्षावस्थायां ज्ञानकाण्डस्यार्थवत्त्वं तत्कथं यथोक्तज्ञानवान्पण्डितापसदत्वेनाक्षिप्यते तत्राह—**संसारेति** । करोमीति मन्यमानो यः स पण्डितापसद इति पूर्वेण संबन्धः । कर्मकाण्डं हि कल्पितं संसारित्वमधिकृत्य साध्यसाधनसंबन्धं बोधयदर्थवदिष्टं ज्ञानकाण्डमपि तथाविधं संसारित्वं पराकृत्याखण्डैकरसे प्रत्यग्ब्रह्मणि पर्यवस्यदर्थवद्भवेदित्यर्थः । किंचात्मनः शास्त्रसिद्धं ब्रह्मत्वं त्यक्त्वाऽब्रह्मत्वं कल्पयन्नात्महा भूत्वा लोकद्वयबहिर्भूतः स्यादित्याह—**आत्महेति** । ननु क्षेत्रज्ञं चापि मां विद्धीत्यनेन सर्वत्रान्तर्यामी परो जीवादन्यो निरुच्यते न जीवस्येश्वरत्वमत्र प्रतिपाद्यते तत्कथमित्थमाक्षिप्यते तत्राह—**स्वयमिति** । किंच तत्त्वमसीतिवत्प्रसिद्धक्षेत्रज्ञानुवादेनाप्रसिद्धं तस्येश्वरत्वमिहोपदेशतः श्रुतं तस्य हानिमश्रुतस्य च जीवेश्वरयोस्तात्त्विकभेदस्य कल्पनां कुर्वन्कथं व्यामूढो न स्यादित्याह—**श्रुतेति** । ननु केचन व्याख्यातारो यथोक्तं पाण्डित्यं पुरस्कृत्य क्षेत्रज्ञं चापीत्यादिश्लोकं व्याख्यातवन्तस्तत्कथमुक्तं पाण्डित्यमास्थातुर्व्यामूढत्वं तत्राह—**तस्मादिति** । क्षेत्रज्ञं चापीत्यत्र क्षेत्रज्ञेश्वरयोरैक्यं स्वाभीष्टं स्पष्टयितुं प्रत्युक्तमेव चोद्यमनुद्रवति—**यत्तूक्तमिति** । तात्त्विकमेकत्वमतात्त्विकं संसारित्वमित्यङ्गीकृत्योक्तमेव समाधिं स्मारयति—**एताविति** । ईश्वरस्य संसारित्वं संसार्यभावेन संसाराभावश्चेत्युक्तौ दोषौ विद्याविद्ययोर्वैलक्षण्येऽपि कथं प्रत्युक्ताविति

५ भाष्योत्कर्षदीपिका ।

च संजाततृष्णस्योत्पन्नत्रासस्य च श्रद्दधानस्य प्रवृत्तिनिवृत्त्योः सर्वप्रत्यक्षसिद्धत्वेन शास्त्रानर्थक्याभावात् । ननु विवेकिनां देहादिभ्यो निष्कृष्टमात्मानं दृष्टवतां विधिनिषेधयोरधिकाराभावेन प्रवृत्तिनिवृत्त्यभावे 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते' इति न्यायेन तदनुगच्छतां तेषां विधिनिषेधशास्त्रेऽप्रवृत्तिदर्शनात्तत्राप्रवृत्तौ शास्त्रानर्थक्यमितिचेत् किं सर्वेषां विवेकित्वाच्छास्त्रानर्थक्यमुच्यत उत कस्यचित् । नाद्यः 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इतिन्यायेन सर्वेषां विवेकित्वाभावात् । न द्वितीयः । मूढानां प्रवृत्तिनिवृत्त्यो रागादिदोषाधीनत्वेन विवेक्यनुगमित्वाभावात् । श्येनाद्यभिचारादिकर्मणि विवेकिनामप्रवृत्तावपि इतरेषां प्रवृत्तिदर्शनेन तदप्रवृत्ताविवेतरेषामप्यप्रवृत्तिरिति नियन्तुमशक्यत्वात् । 'स्वभावस्तु प्रवर्तते' इत्युक्तत्वेन प्रवृत्तेः स्वभावाख्याज्ञानकार्यत्वाद्विवेकिनां प्रवृत्त्यभावेऽप्यज्ञानां प्रवृत्त्यभावायोगात् । तस्मादविद्यामात्रः विधिनिषेधाधीनप्रवृत्तिनिवृत्त्यात्मको बन्धः यथा दृष्टाविद्वद्विषयः । न केवलस्य क्षेत्रज्ञस्याविद्यातत्कार्यं च यथा मिथ्याभूतं मरीच्युदकमूषरदेशं मृद्वीकर्तुं न शक्नोति तथा मिथ्याज्ञानस्य परमार्थवस्तुदूषणेऽसामर्थ्यमतो भगवतेदमुक्तं 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इति । नन्वीश्वरोस्मीति स्वस्येश्वरत्वं कुतो न बुध्यत इतिचेत् ज्ञानस्याज्ञानेनावृतत्वात् । तदुक्तं 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति । एवंचोक्तयुक्त्या 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि अहं ब्रह्मास्मि तत्सत्यं स आत्मा तत्त्वमसि' इत्यादिश्रुत्या असकृदुपदेशाच्च प्रतिमायां विष्णुबुद्धिरिव क्षेत्रज्ञ ईश्वरबुद्धिरिति बालविमोहनमात्रं गौणत्वप्रपञ्चात् वाक्यवैरूप्याच्च । 'अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽन्योऽहमस्मीति न स वेद' । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' । 'सर्वं तं परादा-

७ अभिनवगुप्ताचार्यव्याख्या ।

भिर्बहुधा वेदैश्चोक्तमेतत्तथापि समासेनाहं व्याचक्ष इति । अव्यक्तं प्रकृतिः । इन्द्रियाणि मनसा सहैकादश । इन्द्रियगोचरा रूपादयः पञ्च ।

[1] मूढो जातो मृतो वियुक्तः क्षीणो वृद्धोऽहं ममैवेत्येवमादयः सर्वे आत्मन्यध्यारोप्यन्ते.

१ श्रीमच्छांकरभाष्यम् ।

**कथम् । अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु पारमार्थिकं न दुष्यतीति । तथाच दृष्टान्तो दर्शितो मरीच्यम्भसोषरदेशो न पङ्कीक्रियत इति । संसारिणोऽभावात्संसाराभावप्रसङ्गदोषोऽपि संसारसंसारिणोरविद्याकल्पितत्वोपपत्त्या प्रत्युक्तः । नन्वविद्यावत्त्वमेव क्षेत्रज्ञस्य संसारित्वदोषस्तत्कृतं च दुःखित्वादि प्रत्यक्षमुपलभ्यते । न ज्ञेयस्य क्षेत्रज्ञधर्मत्वाज्ज्ञातुः क्षेत्रज्ञस्य तत्कृतदोषानुपपत्तेः । यावत्किंचित्क्षेत्रज्ञस्य दोषजातमविद्यमानमासंजयति तस्य ज्ञेयत्वोपपत्तेः क्षेत्रधर्मत्वमेव न क्षेत्रज्ञधर्मत्वम् । नच तेन क्षेत्रज्ञो दुष्यति ज्ञेयेन ज्ञातुः संसर्गानुपपत्तेः यदि हि संसर्गः स्याज् ज्ञेयत्वमेव नोपपद्येत । यद्यात्मनो धर्मोऽविद्यावत्त्वं दुःखित्वादि च कथं भोः प्रत्यक्षमुपलभ्यते । कथं वा क्षेत्रज्ञधर्मः । ज्ञेयं च सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ इत्यवधारितेऽविद्यादुःखित्वादेः क्षेत्रज्ञविशेषणत्वं क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वमिति विरुद्धमुच्यतेऽविद्यामात्रावष्टम्भात्केवलम् ।**

२ आनन्दगिरिव्याख्या ।

पृच्छति—**कथमिति** । कल्पितसंसारेण कल्पनाधिष्ठानमद्वयं वस्तु वस्तुतो न संबद्धमिति परिहरति—**अविद्येति** । तद्विषयं कल्पनास्पदमधिष्ठानमिति यावत् । कल्पितेनाधिष्ठानस्य वस्तुतोऽसंस्पर्शे दृष्टान्तं स्मारयति—**तथाचेति** । ईश्वरस्य संसारित्वाप्रसङ्गं प्रकटीकृत्य प्रसङ्गान्तरनिरासमनुस्मारयति—**संसारिण इति** । न तावदविद्या संसारं संसारिणं च कल्पयति स्वतन्त्रा तत्त्वव्याघातात्पारतन्त्र्ये चाश्रयान्तराभावात्क्षेत्रज्ञस्य तद्वत्त्वे संसारित्वमिति शङ्कते—**नन्विति** । न चाविद्यावत्त्वमविद्याकृतमनवस्थानादिति भावः । यत्तूत्खातदंष्ट्रोरगवदविद्या किं करिष्यतीति तत्राह—**तत्कृतं चेति** । अविद्यातज्जयोर्ज्ञेयत्वान्नात्मधर्मतेत्युत्तरमाह—**नेत्यादिना** । तदेव प्रपञ्चयति—**यावदिति** । ज्ञेयस्य क्षेत्रधर्मत्वेऽपि क्षेत्रद्वारा क्षेत्रज्ञस्य तत्कृतदोषवत्तेत्याशङ्क्याह—**नचेति** । क्षेत्रस्यापि ज्ञेयत्वान्न तेन चितो वस्तुतः स्पर्शोऽस्तीत्युपपादयति—**यदीति** । धर्मधर्मित्वेन संसर्गेऽपि ज्ञेयत्वे का क्षतिरित्याशङ्क्याह—**यदीति** । आत्मधर्मस्यात्मना ज्ञेयत्वे स्वस्यापि ज्ञेयत्वापत्त्या कर्तृकर्मविरोधः स्यादित्यर्थः । किंच विमतं न क्षेत्रज्ञाश्रितं तद्वेद्यत्वाद्रूपादिवदित्याह—**कथंवेति** । किंच महाभूतानीत्यादिना ज्ञेयमात्रस्य क्षेत्रान्तर्भावान्नाविद्यादेर्ज्ञातृधर्मतेत्याह—**ज्ञेयं चेति** । किंचैतद्यो वेत्तीत्युक्तत्वात्क्षेत्रज्ञस्य ज्ञातृत्वनिर्णयान्न तत्र ज्ञेयं किंचित्प्रविशतीत्याह—**ज्ञातैवेति** । क्षेत्रक्षेत्रज्ञयोरेवंस्वाभाव्ये सिद्धे सिद्धं क्षेत्रधर्मत्वमविद्यादेरिति फलितमाह—**इत्यवधारित इति** । विरोधाच्च न क्षेत्रज्ञधर्मत्वमविद्यादेरित्याह—**क्षेत्रज्ञेति** । विरुद्धवादित्वे मूलं दर्शयति— **अविद्येति** । मात्रपदस्य व्यावर्त्यं मानयुक्त्याख्यमवष्टम्भान्तरमिति वक्तुं केवलपदम् । ययाऽविद्यया विरुद्धमपि निर्वोढुं शक्यते तस्याः स्वातन्त्र्याभावा-

५ भाष्योत्कर्षदीपिका ।

योन्यत्रात्मनः सर्वं वेद' इत्यादिश्रुतिभिर्भेददर्शनस्य निषिद्धत्वाच्च । यत्पुनरुक्तं विरुद्धधर्मवत्त्वादैक्यं न संभवतीति तदपि न । विरुद्धधर्मताया मिथ्यात्वोपपत्त्या जहदजहल्लक्षणया सोऽयं देवदत्त इतिवदैक्यस्य सुवचत्वात् । तस्मात्क्षेत्रज्ञस्येश्वराभिन्नस्य न संसारसंस्पर्शः। ननु संसारिणामिवाहं ब्राह्मण एवमाभिजात्यादिविशिष्टः इदं पुत्रक्षेत्रकलत्रादिकं ममेति पण्डितानामपि संसारित्वप्रतीतेः क्षेत्रज्ञस्य वस्तुतः संसारासंस्पर्शे विद्वदनुभवो विरुध्येदिति चेन्नेदं पाण्डित्यं कूटस्थासंसार्यात्मदर्शनं किंतु क्षेत्रज्ञ एवात्मदर्शनं क्षेत्रज्ञं कूटस्थं पश्यतां अयमहं कर्ता ममेदं भोग्यं स्यान्ममानेन कर्मणेदं फलं सेत्स्यतीति प्रत्ययो न संभवति । कूटस्थात्मधीविरुद्धत्वादस्य प्रत्ययस्य। नन्वविक्रियात्मदर्शिनो भोगकर्माकाङ्क्षयोरभावे कः शास्त्राधिकारीतिचेत् फलार्थित्वादविद्वानधिकारीति गृहाण । ननु विदुषः कूटस्थात्मदर्शिनः फलार्थित्वाभावात्प्रवृत्त्यनुपपत्तौ निषेधाधीननिवृत्तेरपि दुर्वचत्वात्तस्य निवृत्तिनिष्ठत्वं न सिध्यतीति चेत्सत्यम् । तथापि कार्यकरणसंघातव्यापारोपरमे निवृत्तिरुपचर्यते । इदं चान्यत्पाण्डित्यं कस्यचित्पण्डितंमन्यस्य। क्षेत्रज्ञ ईश्वर एव क्षेत्रं चान्यत् । क्षेत्रज्ञविषयः अहं तु वस्तुतः संसारी सुखी दुःखी च । ननु संसारित्वस्य वास्तवत्वे तदनिवृत्त्या पुरुषार्थासिद्धिरिति चेन्न । क्षेत्रं ज्ञात्वा ततो निष्कृष्टस्य क्षेत्रज्ञस्य ज्ञानेन मम संसारोपरमस्य कर्तव्यत्वात् । ननु क्षेत्रज्ञज्ञानं कथं संसारोपरत्युत्पादकमितिचेत् । ध्यानेनेश्वरं क्षेत्रज्ञं साक्षात्कृत्य तत्स्वरूपावस्थानेनेति गृहाण । तथाचाहं वस्तुतः संसारी असंसारिणः क्षेत्रज्ञादीश्वरादन्यस्तस्मान्मम संसारिणोऽसंसारीश्वरत्वं कर्तव्यमित्येवं यो वुध्यते यो वा तथाविधं ज्ञानं त्वया संपादनीयमिति बोधयति नासौ क्षेत्रज्ञः । अन्यथोपदेशानर्थक्यमित्येवं मन्यमानो पण्डितापसदः । अयमात्मा ब्रह्मेत्याद्यात्मनो ब्रह्मत्वबोधकश्रुत्या प्रतिपादितोपपत्त्या च विरोधात् । ननु संसारस्य वस्तुत्वाभ्युपगमात्संसारावस्थायां कर्मकाण्डस्यार्थवत्त्वं संसारनिरासेनात्मनो ब्रह्मत्वे ध्यानादिना साधिते मोक्षावस्थायां ज्ञानकाण्डस्यार्थवत्त्वं तत्कथं यथोक्तज्ञानवान्पण्डितापसद इत्युच्यत इति चेत् । उच्यते । संसारमोक्षयोः शास्त्रस्य चार्थवत्त्वं करोमीति मन्यमानः पण्डितापसद एव । यतः कल्पितं संसारित्वमधिकृत्य साध्यसाधनसंबन्धं बोधयतः कर्मकाण्डस्य तथाविधं संसारित्वं

७ अभिनवगुप्ताचार्यव्याख्या ।

चेतना दृक्शक्तिः । पुरुषः धृतिरिति । अत्रान्ते किल सर्वस्य आब्रह्मणः कृमिपर्यन्तस्य प्रारब्धे निष्पन्ने वा कार्ये कामक्रोधादिषु चेयतैव मम

१ श्रीमच्छांकरभाष्यम्।

अत्राह साऽविद्या कस्येति। यस्य दृश्यते तस्यैव कस्य दृश्यत इति। अत्रोच्यते अविद्या कस्य दृश्यत इति प्रश्नो निरर्थकः। कथं, दृश्यते चेदविद्या तद्वन्तमपि पश्यसि। नच तद्वत्युपलभ्यमाने सा कस्येति प्रश्नो युक्तः। नहि गोमत्युपलभ्यमाने गावः कस्येति प्रश्नोऽर्थवान्भवेत्। ननु विषमो दृष्टान्तो गवां तद्वतश्च प्रत्यक्षत्वात्संबन्धोऽपि प्रत्यक्ष इति प्रश्नो निरर्थको न तथाऽविद्या तद्वांश्च प्रत्यक्षौ यतः प्रश्नो निरर्थकः स्यात्। अप्रत्यक्षेणाविद्यावताऽविद्यासंबन्धे ज्ञाते किं तव स्यात्। अविद्याया अनर्थहेतुत्वात्परिहर्तव्या स्यात्। यस्याविद्या स तां परिहरिष्यति। ननु ममैवाविद्या। जानासि तर्ह्यविद्यां तद्वन्तं चात्मानम्। जानामि नतु प्रत्यक्षेण। अनुमानेन चेज्जानासि कथं संबन्धग्रहणम्। नहि तव ज्ञातुर्ज्ञेयभूतयाऽविद्यया तत्काले संबन्धो ग्रहीतुं शक्यते। अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वात्। नच ज्ञातुरविद्यायाश्च संबन्धस्य यो ग्रहीता ज्ञानं चान्यत्तद्विषयं संभवत्यनवस्थाप्राप्तेः। यदि ज्ञातापि ज्ञेयसंबन्धो ज्ञायेतान्यो ज्ञाता कल्प्यः स्यात्तस्याप्यन्यस्तस्याप्यन्य इत्यनवस्थाऽपरिहार्या। यदि पुनरविद्या ज्ञेयान्यद्वा ज्ञेयं ज्ञेयमेव तथा ज्ञातापि ज्ञातैव न ज्ञेयं भवति। यदा

२ आनन्दगिरिव्याख्या।

चितोऽन्यस्याविद्यमानत्वेनातदाश्रयत्वात्तस्या विद्यास्वभावतया तदाश्रयत्वव्याघातादाश्रयजिज्ञासया पृच्छति—अत्राहेति। आश्रयमात्रं पृच्छ्यते तद्विशेषो वा, प्रथमे प्रश्नस्यानवकाशत्वं मत्वाह—यस्येति। अविद्या दृश्याऽदृश्या वा, दृश्यत्वे पारतन्त्र्यात्किंचिन्निष्ठत्वेनैव तद्दृष्टेर्नाश्रयमात्रं प्रष्टव्यमदृश्यत्वे वाऽप्रकाशत्वादसिद्धिरेव स्यादित्यर्थः। द्वितीयमालम्बते—कस्येति। अविद्याया दृश्यमानत्वादाश्रयविशेषस्यात्मनोऽपि स्वानुभवसिद्धत्वात्प्रश्नस्य निरवकाशतेत्युत्तरमाह—अत्रेति। प्रश्नानर्थक्यं प्रश्नद्वारा स्फोरयति—कथमित्यादिना। तथापि कथं प्रश्नासिद्धिस्तत्राह—नचेति। तदेव दृष्टान्तेन स्पष्टयति— नहीति। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं चोदयति—नन्विति। अज्ञानाश्रयस्य परोक्षत्वेऽपि प्रश्नैरर्थक्यमित्याह—अप्रत्यक्षेणेति। अविद्यावतोऽप्रत्यक्षत्वेऽपि तेनाविद्यासंबन्धे सिद्धे प्रष्टुस्तव प्रश्नानर्थक्यसमाधिर्न कश्चिदित्यर्थः। अबुद्धपराभिसन्धिः शङ्कते—अविद्याया इति। अविद्यावतस्तत्परिहारान्नान्येन प्रयतितव्यमित्याह—यस्येति। ममैवाविद्यावत्त्वात्तत्परिहारे मया प्रयतितव्यमिति शङ्कते—नन्विति। तर्हि प्रश्नानर्थक्यमिति सिद्धान्ती स्वाभिसंधिमाह—जानासीति। आत्मानमविद्यावन्तं जानन्नपि तद्विषयाध्यक्षाभावात्पृच्छामीति शङ्कते—जानामीति। अविद्यावतोऽप्रत्यक्षत्वं वदता तस्याहमविद्यावानविद्याकार्यवत्त्वाद्व्यतिरेकेण मुक्तात्मवदित्यनुमेयत्वमिष्टमित्यभ्युपेत्य दूषयति—अनुमानेनेति। आत्मनोऽविद्यासंबन्धग्रहे कानुपपत्तिरित्याशङ्क्य ज्ञातैवात्मा स्वस्याविद्यासंबन्धं बुध्यतेऽन्यो वा ज्ञातेति विकल्प्याद्यं दूषयति—नहीति। तत्काले स्वस्याविद्यां प्रति ज्ञातृत्वावस्थायामिति यावत्। अविद्यां विषयत्वेन गृहीत्वा तज्ज्ञातृत्वेनैवोपयुक्तस्यात्मनस्तस्याः स्वात्मनि कुतः संबन्धज्ञातृत्वमेकस्य कर्मकर्तृत्वविरोधादित्याह—अविद्याया इति। द्वितीयं निरस्यति—नचेति। यो ग्रहीता स न संभवतीति संबन्धः। तद्विषयमिति ज्ञातुरविद्यायाश्च संबन्धस्तच्छब्दार्थः। अनवस्थामेव प्रपञ्चयति—यदीति। आत्मनः स्वपरज्ञेयत्वायोगात्तस्मिन्नविद्यासंबन्धस्याप्रामाणिकत्वान्नित्यानुभवगम्यत्वे स्थिते फलितमाह—यदि पुनरिति। यदा

५ भाष्योत्कर्षदीपिका।

पराक्रत्याखण्डैकरसे प्रत्यग्ब्रह्मणि पर्यवस्यतः ज्ञानकाण्डस्य चार्थवत्त्वं आत्मनः शास्त्रसिद्धं ब्रह्मत्वं च त्यक्त्वा संसारित्वस्य वास्तवत्वमात्मनोऽब्रह्मत्वं च कल्पयन्नात्महा भूत्वा शास्त्रार्थसंप्रदायरहितत्वात् तत्त्वमसीतिवत्प्रसिद्धक्षेत्रज्ञानुवादेनाप्रसिद्धं तस्येश्वरत्वं क्षेत्रज्ञं चापि मां विद्धीत्युपदेशतः श्रुतं तस्य हानिमश्रुतस्य जीवेश्वरयोर्भेदस्य कल्पनां च कुर्वन्स्वयं मूढः क्षेत्रज्ञं चापि मां विद्धीत्यनेन सर्वक्षेत्रान्तर्यामी परो जीवादन्यो निरूप्यते नतु जीवस्येश्वरत्वं बोध्यते इत्यन्यांश्च व्यामोहयति। तस्मादसंप्रदायविद्यथोक्तं पाण्डित्यं पुरस्कृत्य सर्वशास्त्रार्थविदपि मूर्खवदुपेक्षणीयः। तथाच विद्याविद्ययोर्वैलक्षण्याभ्युपगमात् ईश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानां चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसङ्ग इत्येतौ दोषौ प्रत्युक्तौ। अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु न दुष्यतीत्यत्र दृष्टान्तस्योक्तत्वात्। संसारसंसारिणोरविद्याकल्पितत्वेनोपपत्तेः। नन्वविद्या संसारसंसारिणौ कल्पयन्ती(?) आश्रयान्तराभावात्क्षेत्रज्ञाश्रया तस्य च तद्वत्त्वमेव संसारित्वम्। नचाविद्यावत्त्वमविद्याकृतमनवस्थाप्रसङ्गात्। ननूत्खातदन्तोरगवदविद्या किं करिष्यतीतिचेन्नाहं दुःख्यहं सुखीति तत्कृतस्य दुःखित्वादेः प्रत्यक्षसिद्धत्वादिति चेन्न। क्षेत्रज्ञ आपाद्यमानस्य दोषजातस्य ज्ञेयत्वोपपत्त्या क्षेत्रधर्मत्वेन क्षेत्रज्ञधर्मत्वाभावात्। नच क्षेत्रद्वारा क्षेत्रज्ञस्तत्कृतदोषवत्तया दुष्यति ज्ञेयेन ज्ञातुः संसर्गे ज्ञेयत्वाभावप्रसंगेन तेन ज्ञातुः संसर्गानुपपत्तेः। ननु धर्मधर्मित्वेन संसर्गेऽपि ज्ञेयत्वे का क्षतिरितिचेत्। अविद्यावत्त्वदुःखित्वादेरात्मधर्मत्वे स्वधर्मस्य च स्वज्ञेयत्वे स्वस्यापि स्वज्ञेयत्वापत्त्या कर्मकर्तृविरोध इति गृहाण। किंच विमतं नात्माश्रितं तज्ज्ञेयत्वात् रूपादिवदित्यनुमानात्। दुःखित्वादेः प्रत्यक्षेणोपलभ्यमानत्वेन ज्ञेयत्वेनात्मधर्मत्वं न संभवति तद्धर्मत्वे वा ज्ञेयत्वम्। किंच महाभूतानीत्यादिना ज्ञेय-

१ श्रीमच्छांकरभाष्यम् ।

चैवमविद्यादुःखित्वाद्यैर्न ज्ञातुः क्षेत्रज्ञस्य किंचिद्दुष्यति । नन्वयमेव दोषो यद्दोषवत्क्षेत्रविज्ञातृत्वम् । न विज्ञानस्वरूपस्यैवाविक्रियस्य विज्ञातृत्वोपचारात् । यथोष्णतामात्रेणाग्नेस्तप्तिक्रियोपचारस्तद्वत् । यथात्र भगवता क्रियाकारकफलात्मत्वाभाव आत्मनि स्वत एव दर्शितोऽविद्याध्यारोपितैरेव क्रियाकारकाद्यात्मन्युपचर्यते तथा तत्र तत्र 'य एनं वेत्ति हन्तारं', 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः', 'नादत्ते कस्यचित्पापम्' इत्यादिप्रकरणेषु दर्शितस्तथैव च व्याख्यातमस्माभिः । उत्तरेषु च प्रकरणेषु दर्शयिष्यामः । हन्त तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावेऽविद्यया चाध्यारोपितत्वे कर्माण्यविद्वत्कर्तव्यान्येव न विदुषामिति प्राप्तम् । सत्यमेवं प्राप्तम् । एतदेव च 'न हि देहभृता शक्यम्' इत्यत्र दर्शयिष्यामः । सर्वशास्त्रार्थोपसंहारप्रकरणे च 'समासेनैव कौन्तेय निष्ठा ज्ञानस्य यापरा' इत्यत्र विशेषतो दर्शयिष्यामः । अलमिह बहुप्रपञ्चेनेत्युपसंह्रियते ॥ २ ॥ इदं शरीर-

२ आनन्दगिरिव्याख्या ।

चैवं तदेत्यध्याहार्यम् । ज्ञातुरात्मनो न किंचिद्दुष्यतीत्येतदमृष्यमाणः शङ्कते—**नन्विति** । किं ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं ज्ञानस्वरूपत्वं वा, नाद्यस्तदनभ्युपगमात्तत्प्रयुक्तदोषाभावात्, द्वितीये ज्ञातृत्वस्यौपचारिकत्वान्न तत्कृतो दोषोऽस्तीत्याह—**नेत्यादिना** । असत्यामपि क्रियायां क्रियोपचारं दृष्टान्तेन स्फुटयति—**यथेति** । आत्मनि वस्तुतो विक्रियाभावे भगवदनुमतिं दर्शयति—**यथात्रेति** । गीताशास्त्रं सप्तम्यर्थः । स्वत एवात्मनि क्रियाद्यात्मत्वाभावो भगवता शास्त्रे यथोक्तस्तथैव व्याख्यातमस्माभिरिति संबन्धः । कथं तर्हि क्रियादिरात्मनि भाति तत्राह—**अविद्येति** । यथा वस्तुतो नास्त्यात्मनि क्रियादिरुपचारात्तु भाति तथा तत्र तत्रातीतप्रकरणेषु भगवता कृतो यत्न इत्याह—**तथेति** । न केवलमतीतेष्वेव प्रकरणेषु वास्तवक्रियाद्यभावादात्मन्याध्यासिकी तद्धीरुक्ता किंतु वक्ष्यमाणप्रकरणेष्वपि तथैव भगवदभिप्रायदर्शनं भविष्यतीत्याह—**उत्तरेषु चेति** । आत्मनि वास्तवक्रियाद्यभावेऽध्यासाच्च तत्सिद्धौ कर्मकाण्डस्याविद्वदधिकारित्वप्राप्तौ विद्वान्यजेत ज्ञात्वा कर्मारभेतेत्यादिशास्त्रविरोधः स्यादिति शङ्कते—**हन्तेति** । शास्त्रस्य व्यतिरेकविज्ञानाभिप्रायत्वादशनायाद्यतीतात्मधीविधुरस्यैव कर्मकाण्डाधिकारितेत्यङ्गीकरोति—**सत्यमिति** । कथमज्ञस्यैव कर्माधिकारित्वमुपपन्नमित्याशङ्क्याह—**एतदेव चेति** । ज्ञानिनो ज्ञाननिष्ठायामेवाधिकारो निष्ठान्तरे त्वज्ञस्यैवेत्युपसंहारप्रकरणे विशेषतो भविष्यतीत्याह—**सर्वेति** । तदेवानुक्रामति—**समासेनेति** । जीवब्रह्मणोरैक्याभ्युपगमे न किंचिदवद्यमित्युपसंहरति—**अलमिति** ॥ २ ॥ एवं श्लोकद्वयं व्याख्याय

५ भाष्योत्कर्षदीपिका ।

मात्रस्य क्षेत्रान्तर्भावकथनात् एतद्यो वेत्तीत्युक्त्या क्षेत्रज्ञस्य ज्ञातृत्वनिर्णयाज्ज्ञेयं सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ इत्यवधार्यते । तस्मात्प्रमाणयुक्त्याख्यावष्टम्भान्तराभावात् केवलाविद्यावष्टम्भात् अविद्यादुःखित्वादेः क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वमिति विरुद्धमुच्यते । ननु यया अविद्यया विरुद्धमपि निर्वोढुं शक्यते तस्याः स्वातन्त्र्याभावात् चितोऽन्यस्य वास्तववस्तुनोऽविद्यमानत्वात् आविद्यकस्य च विद्यमानत्वेऽपि तस्य तत्कार्यतया तदाश्रयत्वासंभवात् अविद्या कस्येति चेत् । किमाश्रयमात्रं पृच्छसि तद्विशेषं वा । आद्ये तस्यादृश्यत्वेन पारतन्त्र्यात् किंचिन्निष्ठैव दृश्यते । तथाच यमाश्रयते तस्यैव सेत्यतो नाश्रयमात्रं प्रष्टव्यं तस्योपलभ्यमानत्वात् । आश्रयविशेषस्योपलभ्यमानत्वादेव । न द्वितीयः । नहि गोमत्युपलभ्यमाने गावः कस्येति प्रश्नो युज्यते । ननु गवां तद्वतश्च प्रत्यक्षत्वात्तत्संबन्धोऽपि प्रत्यक्ष इति तत्प्रश्नो यथा निरर्थकः तथाऽविद्यातद्वतोश्च प्रत्यक्षत्वाभावात्प्रश्नानर्थक्याभावात् । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति चेदप्रत्यक्षेणाविद्यावताऽविद्यासंबन्धे ज्ञाते तव किं स्यात् । नन्वविद्याया अनर्थहेतुत्वात् परिहर्तव्या स्यादितिचेत् यस्यास्ति सा स तां परिहरिष्यति । ननु ममैवाविद्या तत्परिहारे मयैव प्रयतितव्यमितिचेत् तर्ह्यविद्यां तद्वन्तं चात्मानं जानासीत्यतः प्रश्नानर्थक्यम् । ननु जानन्नपि तद्विषयप्रत्यक्षाभावात्पृच्छामीतिचेत् अहमविद्यावानविद्याकार्यवत्त्वात् व्यतिरेकेण मुक्तात्मवदित्यनुमानेन चेज्जानासि तर्हि संबन्धग्रहणं कथं । ज्ञातैवात्मा स्वस्याविद्यासंबन्धं जानाति किंवान्यो ज्ञाता । नाद्यः । स्वस्याविद्यां प्रति ज्ञातृत्वकालेऽविद्याश्रयत्वेन गृहीतत्वात् तज्ज्ञातृत्वेनैवोपयुक्तस्यात्मनः कर्मकर्तृविरोधात्तस्याः स्वात्मनि संबन्धग्रहासंभवात् । न द्वितीयः । अनवस्थाप्रसङ्गात् । तथा चाविद्यादिकं ज्ञेयं ज्ञेयमेव ज्ञाता च ज्ञातैवातोऽविद्यादुःखित्वाद्यैर्न ज्ञातुः क्षेत्रज्ञस्य किंचिद्दुष्यति । ननु दोषवत्क्षेत्रज्ञातृत्वमेवात्मनो दोष इतिचेत् किं ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वं उत ज्ञानस्वरूपत्वम् । नाद्यः । तदनभ्युपगमेन तत्प्रयुक्तदोषाभावात् । द्वितीये यथोष्णतामात्रेण वह्नेस्तापे तापयितृत्वोपचारस्तथा विज्ञानस्वरूपस्याऽविक्रियात्मनो विज्ञातृ-

६ श्रीधरीव्याख्या ।

त्तये । आयासायापरं कर्म विद्यान्याशिल्पनैपुणम्' इति ॥ २ ॥ अत्र यद्यपि चतुर्विंशतिभेदैर्भिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतं तथापि

७ अभिनवगुप्ताचार्यव्याख्या ।

पर्याप्तं किमन्येन । ईदृशश्चाहं नित्यमेव भूयासमिति प्राणसंधारणी धृतिराश्वासनात्मिका पररहस्यशासनेषु रागशब्दवाच्या जायते ॥ २ ॥

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकोऽयमुपन्यस्यते—तत्क्षेत्रं यच्चेत्यादि व्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति यन्निर्दिष्टमिदं शरीरमिति तत् तच्छब्देन परामृशति । यच्चेदं निर्दिष्टं क्षेत्रं तद् यादृग् यादृशं स्वकीयैर्धर्मैः । चशब्दः समुच्चयार्थः । यद्विकारि यो विकारोऽस्य तद्यद्विकारि यतो यस्माच्च यत्कार्यमुत्पद्यत इति वाक्यशेषः । स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावो ये प्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथा विशेषितं समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वावधारयेत्यर्थः ॥ ३ ॥ तत्क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं

२ आनन्दगिरिव्याख्या ।

श्लोकान्तरमवतारयति—**इदमिति** । कुत्र संग्रहोक्तिरुपयुज्यते—तत्राह—**व्याचिख्यासितस्येति** । प्रतिपत्तिसौकर्यार्थं संग्रहोक्तिरर्थवतीत्यर्थः । वक्ष्यमाणेऽर्थे श्रोतुर्मनःसमाधानार्थं सूत्रितवाक्यार्थोपायविवरणप्रतिज्ञामभिप्रेत्याह—**यन्निर्दिष्टमिति** । इदं शरीरमिति यन्निर्दिष्टं तच्छरीरं तच्छब्देन परामृशति प्रकृतार्थत्वात्तस्येति योजना । तत्क्षेत्रं ज्ञातव्यमित्यध्याहारः । यच्चेति येन रूपेण रूपवदिति तदेव क्षेत्रं विशेष्यते । तस्य क्षेत्रस्य स्वकीया धर्मा जन्माद्यस्तैर्विशिष्टस्य ज्ञेयत्वे हेयत्वं फलति । चशब्दपञ्चकस्येतरेतरसमुच्चयार्थत्वमाह—**चशब्द इति** । विकारित्वेनापि हेयत्वं सूचयति—**यद्विकारीति** । यत्कार्यं तत्सर्वं यस्मादुत्पद्यते तत्कारणत्वाज्ज्ञातव्यमित्याह—**यत इति** । क्षेत्रमिव क्षेत्रज्ञं ज्ञातव्यं दर्शयति—**स चेति** । स ज्ञातव्य इति संबन्धः । चक्षुराद्युपाधिकृतद्रष्टृत्वादिशक्तिवशात्तस्य ज्ञातव्यत्वं सूचयति—**यत्प्रभाव इति** । तेनोक्तेन प्रभावेण तस्य ज्ञातव्यतेति शेषः । कथं यथाविशेषितं क्षेत्रं क्षेत्रज्ञो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ २ ॥ क्षेत्रक्षेत्रज्ञपदे विवरीतुमारभते—**तदिति** । यच्चेदं क्षेत्रं निर्दिष्टं तत् यादृक् यादृशं स्वकीयैर्धर्मैरस्ति । यद्विकारि ये च तस्य विकाराः यतश्च यत् यस्माद्विकाराद्यज्जायत इति प्राञ्चः । तत्पूर्वोक्तं क्षेत्रं यच्च यत्स्वरूपं यादृक् यत्प्रकारकं यद्विकारि ये च तस्य विकाराः यतश्च क्षेत्रावयवाद्यज्जायते तत् शृणु । तथा सच क्षेत्रज्ञः यो यत्स्वरूपः

४ मधुसूदनीव्याख्या ।

भिस्तु ग्रन्थविस्तरभयात्प्रागेव बहुधोक्तत्वाच्च नोपन्यस्ताः ॥ २ ॥ संक्षेपेणोक्तमर्थं विवरीतुमारभते—तदिदं शरीरमिति प्रागुक्तं जडवर्गरूपं क्षेत्रं यच्च स्वरूपेण जडदृश्यपरिच्छिन्नादिस्वभावं यादृक् चेच्छादिधर्मकं यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं यतश्च कारणात् यत्कार्यमुत्पद्यत इति शेषः । अथवा यतः प्रकृतिपुरुषसंयोगाद्भवति । यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः । अत्रानियमेन चकारप्रयोगात्सर्वसमुच्चयो द्रष्टव्यः । स च क्षेत्रज्ञो यः स्वरूपतः स्वप्रकाशचैतन्यानन्दस्वभावः । यत्प्रभावश्च ये प्रभावा उपाधिकृताः शक्तयो यस्य तत् क्षेत्रक्षेत्रज्ञयाथात्म्यं सर्वविशेषणविशिष्टं समासेन संक्षेपेण मे मम वचनाच्छृणु । श्रुत्वा-

५ भाष्योत्कर्षदीपिका ।

त्वोपचाराददोष इत्यलं विस्तरेण ॥ २ ॥ इदं शरीरमित्यादिनोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकं प्रतिपत्तिसौकर्यार्थमुपन्यस्यति—**तदिति** । इदं शरीरमिति यन्निर्दिष्टं तत्तदा परामृशति । यच्चेदं निर्दिष्टं क्षेत्रं स्वरूपतो जडं स्थावरजंगमादिभेदैर्भिन्नं दृश्यत्वादिस्वभावं तत् । यादृक् च स्वकीयैर्धर्मैः यादृशं यत्प्रकारकं च यद्विकारि ये विकारा अस्य तत् । यतो यस्माच्च यत्कार्यमुत्पद्यत इति शेषः । यतश्च प्रकृतिपुरुषसंयोगाद्भवति । यदिति यैः स्थावरजंगमादिभेदैर्भिन्नमिति त्वाचार्यैर्यच्चेत्यस्मिन्नुक्तस्य यत्पदार्थस्यान्तर्भावाद्यत्पदवैयर्थ्यमभिप्रेत्य न व्याख्यातम् । अत्र चकाराः सर्वे समुच्चयार्थाः । सच क्षेत्रज्ञो यः निर्दिष्टः स्वरूपतः सच्चिदानन्दस्वभावः यत्प्रभावः प्रभावा उपाधिकृताः शक्तयो यस्य स तद्यथोक्तविशेषणविशिष्टक्षेत्रज्ञयाथात्म्यं समासेन संक्षेपेण मे मम वाक्यात्

६ श्रीधरीव्याख्या ।

देहरूपेण परिणतायामेव तस्यामहंभावेनाविवेकः स्फुट इति तद्विवेकार्थमिदं शरीरं क्षेत्रमित्याद्युक्तं, तदेतत्प्रपञ्चयिष्यन्प्रतिजानीते—**तत्क्षेत्रमिति** । यदुक्तं मया तत्क्षेत्रं यत्स्वरूपतो जडं दृश्यादिस्वभावं यादृग्यादृशं चेच्छादिधर्मकं यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं यतश्च प्रकृतिपुरुषसंयोगाद्भवति । यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः । स च क्षेत्रज्ञो यः स्वरूपतः, यत्प्रभावश्च अचिन्त्यैश्वर्ययो-

---

१ तदातच्छब्देन. २ मधुसूदनः, श्रीधरः.

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**विवक्षितं स्तौति श्रोतृबुद्धिप्ररोचनार्थम्—ऋषिभिरिति । ऋषिभिर्वसिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं । छन्दोभिश्छन्दांसि ऋगादीनि तैर्मन्त्रच्छन्दोभिर्विविधैर्नानाप्रकारैः पृथग्विवेकतो गीतम् । किंच ब्रह्मसूत्रपदैश्चैव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते । तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमित्यनुवर्तते । 'आत्मेत्येवोपासीत' इत्यादिभिर्हि**

२ आनन्दगिरिव्याख्या ।

वा शक्यो ज्ञातुमित्याशङ्क्य भगवद्वाक्यादित्याह—**तदिति** ॥ ३ ॥ श्लोकान्तरस्य तात्पर्यमाह—**तदित्यादिना**। विवक्षितं जिज्ञासितमित्यर्थः । स्तुतिफलमाह—**श्रोत्रिति** । न केवलमाप्तोक्तेरेव क्षेत्रादियाथात्म्यं संभावितं किंतु वेदवाक्यादपीत्याह—**छन्दोभिश्चेति** । ऋगादीनां चतुर्णामपि वेदानां नानाप्रकारत्वं शाखाभेदादिष्टम् । न केवलं श्रुतिस्मृतिसिद्धमुक्तं याथात्म्यं किंतु यौक्तिकं चेत्याह—**किंचेति** । कानि तानि सूत्राणीत्याशङ्क्याह—**आत्मेत्येवेति** । आदिपदेन 'ब्रह्मविदाप्नोति परम्', 'अथ योऽन्यां देवताम्' इत्यादीनि विद्याविद्यासूत्राण्युक्तानि । आत्मेति क्षेत्रज्ञोपादानं तच्च क्षेत्रोपलक्षणम् । 'अथातो ब्रह्मजिज्ञासा' इत्यादीन्यपि सूत्राण्यत्र गृहीतान्यन्यथा छन्दोभि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यत्प्रभावश्च तदपि मत्तः शृणु ॥ ३ ॥ वक्ष्यमाणेऽर्थे प्रमाणमाह—**ऋषिभिरिति** । ऋषिभिर्वसिष्ठाद्यैर्बहुधा गीतं योगवासिष्ठादौ प्रतिपादितम् । छन्दोभिर्वेदैर्मन्त्रैर्वा पृथक् प्रतिशाखमनेकप्रकारं गीतम् । ब्रह्मसूत्रपदैः ब्रह्मणः सूचकानि पदानि समुच्चित्य वाक्यभावमापन्नानि तैर्ब्रह्मसूचकैर्ब्राह्मणवाक्यैः । तत्त्वमसीत्याद्यैरित्यर्थः । हेतुमद्भिः 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः' इत्यादिना कार्यलिङ्गान्यनुमानानि ब्रह्माधिगमाय प्रदर्शयन्तो हेतवस्तद्वद्भिः । विनिश्चितैरसकृदभ्या-

४ मधुसूदनीव्याख्या ।

वधारयेत्यर्थः ॥ ३ ॥ कैर्विस्तरेणोक्तस्यायं संक्षेप इत्यपेक्षायां श्रोतृबुद्धिप्ररोचनार्थं स्तुवन्नाह—ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रेषु धारणाध्यानविषयत्वेन बहुधा गीतं निरूपितम् । एतेन योगशास्त्रप्रतिपाद्यत्वमुक्तम् । विविधैर्नित्यनैमित्तिककाम्यकर्मादिविषयैः छन्दोभिर्ऋगादिमन्त्रैर्ब्राह्मणैश्च पृथग्विवेकतो गीतम् । एतेन कर्मकाण्डप्रतिपाद्यत्वमुक्तम् । ब्रह्मसूत्रपदैश्चैव ब्रह्म सूत्र्यते सूच्यते किंचिद्व्यवधानेन प्रतिपाद्यत एभिरिति ब्रह्मसूत्राणि । 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति' इत्यादीनि तटस्थलक्षणपराण्युपनिषद्वाक्यानि । तथा पद्यते ब्रह्म साक्षात्प्रतिपाद्यत एभिरिति पदानि स्वरूपलक्षणपराणि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि तैर्ब्रह्मसूत्रैः पदैश्च हेतुमद्भिः । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्युपक्रम्य 'तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेत' इति नास्तिकमतमुपन्यस्य 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेत' इत्यादियुक्तीः प्रतिपादयद्भिर्विनिश्चितैः उपक्रमोपसंहारैकवाक्यतया संदेहशून्यार्थप्रतिपादकैः

५ भाष्योत्कर्षदीपिका ।

शृणु श्रुत्वाऽवधारयेत्यर्थः ॥३॥ श्रोतृप्ररोचनाय क्षेत्रक्षेत्रज्ञयाथात्म्यं स्तौति-**ऋषिभिरिति** । ऋषिभिर्वसिष्ठादिभिर्वासिष्ठादौ बहुधा बहुप्रकारं गीतं कथितम् । न केवलमाप्तोक्तमेव क्षेत्रादियाथात्म्ये प्रमाणमपितु छन्दांसीत्याह । छन्दोभिर्ऋगादिभिर्विविधैः शाखाभेदेन नानाप्रकारैः पृथग्विवेकतो गीतम् । उक्तार्थे श्रुतिस्मृती प्रमाणमभिधाय युक्तिमाह-**ब्रह्मेति** । ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते तैरेवं क्षेत्रक्षेत्रज्ञयाथात्म्यं गीतं इत्यनुवर्तते । आत्मेत्येवोपासीतेत्येवमादिभिर्हि ब्रह्मसूत्रपदैः आत्मा ज्ञायते हेतुमद्भिर्युक्तियुक्तैः विनिश्चितैः न संशयरूपैः निश्चितप्रत्ययोत्पादकैः इति भाष्ये । आदिपदात् 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति, सत्यं ज्ञानमनन्तं ब्रह्म, तत्त्वमसि, ब्रह्मविदाप्नोति परं, न स वेद यथा पशुः' इत्यादीनि सूत्रपदानि गृह्यन्ते । तथाच ब्रह्मसूत्राणि च तानि पदानीति भाष्योक्तलघुभूतकर्मधारयं विहाय ब्रह्म-

६ श्रीधरीव्याख्या ।

गेन यैः प्रभावैः संपन्नः तत्सर्वं संक्षेपतो मत्तः शृणु ॥ ३ ॥ कैर्विस्तरेणोक्तस्यायं संक्षेप इत्यपेक्षायामाह—**ऋषिभिरिति** । ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रेषु ध्यानधारणादिविषयत्वेन वैराजादिरूपेण बहुधा गीतं निरूपितम्, विविधैर्विचित्रैश्च नित्यनैमित्तिककाम्यविषयैश्छन्दोभिर्वेदैर्नानायजनीयदेवतादिरूपेण गीतं, ब्रह्मणः सूत्रैः पदैश्च । ब्रह्म सूत्र्यते सूच्यत एभिरिति ब्रह्मसूत्राणि 'यतो वा इमानि भूतानि जायन्ते' इत्यादीनि तटस्थलक्षणपराण्युपनिषद्वाक्यानि, तथाच ब्रह्म पद्यते गम्यते साक्षाज्ज्ञायत एभिरिति पदानि स्वरूपलक्षणपराणि

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

ब्रह्मसूत्रपदैरात्मा ज्ञायते । हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्न संशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ॥ ४ ॥ स्तुत्याभिमुखीभूतायार्जुनायाह भगवान्—महाभूतानीति । महान्ति च तानि सर्वविकारव्यापकत्वाद्भूतानि च सूक्ष्माणि । स्थूलानि त्विन्द्रियगोचरशब्देनाभिधायिष्यन्ते । अहंकारो महाभूतकारणमहंप्रत्ययलक्षणः । अहंकारकारणं बुद्धिरध्यवसायलक्षणा । तत्कारणमव्यक्तमेव च न व्यक्तमव्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिर्मम माया दुरत्ययेत्युक्तम् । एवशब्दः प्रकृत्यवधारणार्थः ।

२ आनन्दगिरिव्याख्या ।

रित्यादिना पौनरुक्त्यादिति मत्वा विशिनष्टि—हेतुमद्भिरिति ॥ ४ ॥ क्षेत्रादियाथात्म्यस्तुत्या प्रलोभिताय किं तदिति जिज्ञासवे यथोद्देशं क्षेत्रं निर्दिशति—स्तुत्येति । महत्त्वे हेतुमाह—सर्वेति । भूतशब्देन स्थूलानामपि विशेषाभावाद्ग्रहे का हानिरित्याशङ्क्याह—स्थूलानीति । अहंकारोऽहंप्रत्ययलक्षण इति संबन्धः । भूतानां प्रातीतिकत्वेनाभिमानमात्रात्मत्वं मत्वाहंकारं विशिनष्टि—महाभूतेति । महतः परमित्यादौ प्रसिद्धं महच्छब्दार्थमहंकारहेतुमाह—अहंकारेति । ईश्वरशक्तिरित्युक्ते चैतन्यमपि शङ्क्येत तदर्थमाह—ममेति । अवधारणरूपमर्थमेव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सेन सकलशङ्कापङ्कक्षालनेन निश्चितार्थैः क्षेत्रक्षेत्रज्ञयोः स्वरूपमेतैः सर्वैर्यद्गीतं तच्छृणिवति पूर्वेण संबन्धः ॥ ४ ॥ तच्च यच्च यादृक् च यद्विकारि चेत्येतद्व्याचष्टे—महाभूतानीति । चकारो भिन्नक्रमो बुद्धिश्चेति बुद्धिपदादुपरि द्रष्टव्यः । यत्क्षेत्रं शरीराख्यमुक्तं तदव्यक्तमेव । 'शरीरं रथमेव तु' इति श्रुतौ अव्यक्तपदेन पञ्चतन्मात्रा उच्यन्ते । अहंकारो तत्प्रकारमाह—महाभूतान्यहंकारो बुद्धिश्चेति सप्तप्रकारैरङ्कुरितम् । महाभूतशब्देन पञ्चतन्मात्रा उच्यन्ते । अहंकारो बुद्धिरिति महत्तत्त्वमुच्यते । स्वप्ने हि एतान्येव करणानि भासन्ते तत्प्रकारक एव भूतगण इति तावत्प्रकारकमेव क्षेत्रमित्युक्तम् । यद्विकारीत्यस्योत्तरमाह—इन्द्रियाणीति । इन्द्रियाणि दशैकं चेत्येकादश । पञ्च ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुरसनघ्राणानि पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि मनश्चेत्येकादश । इन्द्रियाणां गोचरा

४ मधुसूदनीव्याख्या ।

बहुधा गीतं च । एतेन ज्ञानकाण्डप्रतिपाद्यत्वमुक्तम् । एवमेतैरतिविस्तरेणोक्तं क्षेत्रक्षेत्रज्ञयाथात्म्यं संक्षेपेण तुभ्यं कथयिष्यामि तच्छृणिवत्यर्थः । अथवा ब्रह्मसूत्राणि च तानि पदानि चेति कर्मधारयः । तत्र विद्यासूत्राणि 'आत्मेत्येवोपासीत' इत्यादीनि, अविद्यासूत्राणि 'न स वेद यथा पशुः' इत्यादीनि तैर्गीतमिति ॥ ४ ॥ एवं प्ररोचितायार्जुनाय क्षेत्रस्वरूपं तावदाह द्वाभ्याम्—महान्ति भूतानि भूम्यादीनि पञ्च अहंकारस्तत्कारणभूतोऽभिमानलक्षणः, बुद्धिरहंकारकारणं महत्तत्त्वमध्यवसायलक्षणं, अव्यक्तं तत्कारणं सत्त्वरजस्तमोगुणात्मकं प्रधानं सर्वकारणं न कस्यापि कार्यम् । एवकारः प्रकृत्यवधारणार्थः । एतावत्येवाष्टधा

५ भाष्योत्कर्षदीपिका ।

सूत्राणि च पदानि चेति समासो न प्रदर्शनीयः फलाभावात् । हेतुमद्भिर्युक्तियुक्तैः 'सदेव सोम्येदमग्र आसीत्', 'कथमसतः सज्जायेत' इति । तथा 'को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयति', 'अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छ अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः' इत्यादिभिः । यद्वा 'अथातो ब्रह्मजिज्ञासा' इत्यादीन्यपि सूत्राण्यत्र गृहीतानि । अन्यथा छन्दोभिरित्यादिना पौनरुक्त्यादिति मत्वा विशिनष्टि । हेतुमद्भिरिति । यत् ऋष्यादिभिर्गीतं तत्सामासेन शृण्वित्यन्वयः ॥ ४ ॥ एवं क्षेत्रादियाथात्म्यस्तुत्याभिमुखीकृतायार्जुनाय किं तदिति जिज्ञासवे यथोद्देशं क्षेत्रं निर्दिशति—महाभूतानीति । सर्वविकारव्यापकत्वान्महान्ति च तानि भूतानि सूक्ष्माणि अहंप्रत्ययरूपोऽहंकारः महा-

६ श्रीधरीव्याख्या ।

'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादीनि तैश्च बहुधा गीतम् । किंच हेतुमद्भिः 'सदेव सोम्येदमग्र आसीत्' 'कथमसतः सज्जायेत' इति तथा 'को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयति' इत्यादियुक्तिमद्भिः । अन्यादपानचेष्टां कः कुर्यात्, प्राण्यात्प्राणानां व्यापारं को वा कुर्यात् इति पदयोरर्थः । विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया असंदिग्धार्थप्रतिपादकैरित्यर्थः । तदेवमेतैर्विस्तरेणोक्तं दुःसंग्रहं संक्षेपतस्तुभ्यं कथयिष्यामि तच्छृणिवत्यर्थः । यद्वा 'अथातो ब्रह्मजिज्ञासा' इत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते, तान्येव ब्रह्म पद्यते निश्चीयत एभिरिति पदानि, तैर्हेतुमद्भिः 'ईक्षतेर्नाशब्दम्' 'आनन्दमयोऽभ्यासात्' इत्यादिभिर्युक्तिमद्भिर्विनिश्चितार्थैः । शेषं समानम् ॥ ४ ॥ तत्र क्षेत्रस्वरूपमाह—महाभूतानीति द्वाभ्याम् । महाभूतानि भूम्यादीनि पञ्च, अहंकारस्तत्कारण-

१ मधुसूदनः, श्रीधरः. २ कार्येण.

**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

एतावत्येवाष्टधा भिन्ना प्रकृतिः । चशब्दो भेदसमुच्चयार्थः । इन्द्रियाणि दश श्रोत्रादीनि पञ्च बुद्ध्युत्पादकत्वाद्बुद्धीन्द्रियाणि वाक्पाण्यादीनि पञ्च कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि तानि दश । एकं च किं तन्मन एकादशं संकल्पाद्यात्मकम् । पञ्च चेन्द्रियगोचराः शब्दादयो विषयाः । तान्येतानि संख्यातश्चतुर्विंशतितत्त्वान्याचक्षते ॥ ५ ॥ अथेदानीमात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव नतु क्षेत्रज्ञस्येत्याह भगवान्—इच्छा द्वेष इति । इच्छा यज्जातीयं सुखहेतुमर्थमुपल-

२ आनन्दगिरिव्याख्या ।

स्फुटयति—**एतावत्येवेति** । पञ्चतन्मात्राण्यहंकारो महदव्याकृतमित्यष्टधा भिन्नत्वम् । मूलप्रकृत्या सह तन्मात्रादिभेदानां समुच्चयश्चकारार्थः । दशेन्द्रियाण्येव विभज्य व्युत्पादयति—**श्रोत्रेत्यादिना** । तदेव प्रश्नद्वारा स्फुटयति—**किं तदिति** । शब्दादिविषयशब्देन स्थूलानि भूतानि गृह्यन्ते । उक्तेषु तन्मात्रादिषु तन्त्रान्तरीयसंमतिमाह—**तानीति** । 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारः' इति पठन्ति ॥ ५ ॥ अव्यक्ताहंकारादीनां त्रैगुण्याभिमानादिधर्मकत्वं प्रसिद्धमिति शब्दादीनामेव ग्रहणे कर्मेन्द्रियाणां विषयानुक्तेर्वैरूप्यप्रसङ्गात्क्षेत्रनिरूपणस्य च प्रकृतत्वात्स्वरूपनिर्देशेनैव तत्क्षेत्रं यच्च यादृक्चेति व्याख्यातमिदानीमिच्छादीनामात्मविकारत्वनिवृत्तये क्षेत्रविकारत्वनिरूपणेन यद्विकारीत्येतन्निरूपयन्मतान्तरनिवृत्तिपरत्वेन श्लोकमवतारयति—**अथेति** । सर्व-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विषयाः स्थूला वियदादयः पञ्च अयं षोडशको विकार एव । एतान्येव सांख्यैश्चतुर्विंशतितत्त्वानि गण्यन्ते । एतावांस्त्वस्माकं विशेषः । तैः स्वतन्त्रा सत्या च प्रकृतिरुच्यते अस्माभिर्मायारूपा मिथ्या ईश्वराधीना चोच्यत इति । तथाच श्रुतिः 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति । तस्मात्सांख्यप्रक्रियात्र भगवताश्रितेति न भ्रमितव्यम् ॥ ५ ॥ यतश्च विकाराद्यजायत इत्युक्तं तदाह—**इच्छेति** । इच्छा सुखे तत्साधने वा स्पृहारूपा चित्तवृत्तिरिदं मे

४ मधुसूदनीव्याख्या ।

प्रकृतिः । चशब्दो भेदसमुच्चयार्थः । तदेवं सांख्यमतेन व्याख्यातम् । औपनिषदानां तु अव्यक्तमव्याकृतमनिर्वचनीयं मायाख्या पारमेश्वरी शक्तिः । मम माया दुरत्ययेत्युक्तम् । बुद्धिः सर्गादौ तद्विषयमीक्षणं अहंकार ईक्षणानन्तरमहं बहु स्यामिति संकल्पः । तत आकाशादिक्रमेण पञ्चभूतोत्पत्तिरिति । न ह्यव्यक्तमहदहंकाराः सांख्यसिद्धा औपनिषदैरुपगम्यन्ते । अशब्दत्वादिहेतुभिरिति स्थितं । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' । 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतिप्रतिपादितमव्यक्तम् । तदैक्षतेतीक्षणरूपा बुद्धिः । 'बहु स्यां प्रजायेय' इति बहुभवनसंकल्परूपोऽहंकारः 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' इति पञ्चभूतानि श्रौतानि । अयमेव पक्षः साधीयान् । इन्द्रियाणि दशैकं च श्रोत्रत्वक्चक्षुरसनघ्राणाख्यानि पञ्च बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणीति । तानि एकं च मनः संकल्पविकल्पात्मकं, पञ्च चेन्द्रियगोचराः शब्दस्पर्शरूपरसगन्धास्ते बुद्धीन्द्रियाणां ज्ञाप्यत्वेन विषयाः कर्मेन्द्रियाणां तु कार्यत्वेन । तान्येतानि सांख्याश्चतुर्विंशतितत्त्वान्याचक्षते ॥ ५ ॥ इच्छा सुखे तत्साधने चेदं मे भूयादिति स्पृहात्मा चित्तवृत्तिः काम इति राग इति चोच्यते । द्वेषो दुःखे तत्साधने चेदं मे

५ भाष्योत्कर्षदीपिका ।

भूतकारण बुद्धिरध्यवसायलक्षणाहंकारकारणं न व्यक्तमव्यक्तं अव्याकृतमीश्वरशक्तिर्माया 'मायां तु प्रकृतिं विद्यात्, 'मम माया दुरत्यया' इत्युक्ता । एवशब्दोऽवधारणार्थः । एतावत्येवाष्टधा भिन्ना प्रकृतिरित्यर्थः । चकारः मूलप्रकृत्या सह तन्मात्रादिभेदानां समुच्चयार्थः । इन्द्रियाणि दश श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि ज्ञानोत्पादकत्वाज्ज्ञानेन्द्रियाणि पञ्च, वाक्पाणिपादपायूपस्थाख्यानि कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि पञ्च एकं एकादशं संकल्पविकल्पात्मकं मनः पञ्चेन्द्रियाणां गोचराः विषयाः शब्दस्पर्शरूपरसगन्धाख्यगुणविशिष्टानि स्थूलभूतानीत्यर्थः । तान्येतानि 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारः' इति वादिनः सांख्याश्चतुर्विंशतितत्त्वानि व्याचक्षते ॥ ५ ॥ एवं क्षेत्रस्वरूपनिर्देशेनैव तत्क्षेत्रं यच्च यादृक्चेति व्याख्यायेच्छादीनामात्मविकारत्वनिवृत्तये क्षेत्रविकारत्वनिरूपणेन यद्विकारीत्येतन्निरूपयन्नात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव नतु

६ श्रीधरीव्याख्या ।

भूतः, बुद्धिर्विज्ञानात्मकं महत्तत्त्वं, अव्यक्तं मूलप्रकृतिः, इन्द्रियाणि बाह्यानि दश 'श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः' इति, एकं च मनः, इन्द्रियगोचराश्च पञ्चतन्मात्ररूपा एव शब्दादय आकाशादिविशेषगुणतया व्यक्ताः सन्त इन्द्रियविषयाः पञ्च, तदेवं चतुर्विंशतितत्त्वान्युक्तानि ॥ ५ ॥ **इच्छेति** । इच्छादयः प्रसिद्धाः, संघातः शरीरं, चेतना ज्ञानात्मिका मनोवृत्तिः, धृतिर्धैर्यम्, एत-

१ श्रीमच्छांकरभाष्यम् ।

ब्धवान्पूर्वं पुनस्तज्जातीयमुपलभमानस्तमादातुमिच्छति सुखहेतुरिति सेयमिच्छान्तःकरणधर्मो ज्ञेयत्वात्क्षेत्रम् । तथा द्वेषो यज्जातीयमर्थं दुःखहेतुत्वेनानुभूतवान् पुनस्तज्जातीयमुपलभमानस्तं द्वेष्टि सोऽयं द्वेषो ज्ञेयत्वात्क्षेत्रमेव । तथा सुखमनुकूलं प्रसन्नं सत्त्वात्मकं ज्ञेयत्वात्क्षेत्रमेव । दुःखं प्रतिकूलात्मकं ज्ञेयत्वात्तदपि क्षेत्रम् । संघातो देहेन्द्रियाणां संहतिः । तस्यामभिव्यक्तान्तःकरणवृत्तिस्तप्त इव लोहपिण्डेऽग्निरात्मचैतन्याभासरसविद्धा चेतना सा च क्षेत्रं ज्ञेयत्वात् । धृतिर्यथावसाद-

२ आनन्दगिरिव्याख्या ।

ज्ञोक्तिविरोधाद्वेयं वैशेषिकं मतमिति मत्वोक्तं—भगवानिति । उपलब्धजातीयस्योपलभ्यमानस्यादानेच्छायां हेतुमाह—सुखेति । इतिशब्दो हेत्वर्थः । सुखहेतुत्वात्तस्मिन्निच्छेत्यर्थः । इच्छां सुखतद्धेतुविषयत्वेन व्याख्यायात्मधर्मत्वं तस्या व्युदस्यति—सेयमिति । तथापि कथं क्षेत्रान्तर्भूतत्वं तत्राह—ज्ञेयत्वादिति । इच्छावद्द्वेषोऽपि धर्मो बुद्धेरित्याह—तथेति । कोऽसौ द्वेषो यस्य बुद्धिधर्मत्वं तत्राह—यज्जातीयमिति । तस्यापीच्छावत्क्षेत्रान्तर्भावमाह—सोऽयमिति । इच्छाद्वेषवद्बुद्धिधर्मः सुखमपीत्याह—तथेति । तस्यापि स्वरूपोक्त्या क्षेत्रान्तःपातित्वमाह—अनुकूलमिति । दुःखस्यापि स्वरूपोक्त्या क्षेत्रमध्यवर्तित्वमाह—दुःखमिति । देहेन्द्रियात्मवादौ व्युदसितुं क्षेत्रान्तर्भूतमेव संघातं विभजते—देहेति । विज्ञानवादं प्रत्याह—तस्यामिति । तप्ते लोहपिण्डे वह्नेरभिव्यक्तिवदुक्तसंहतौ बुद्धिवृत्तिरभिव्यज्यते । तत्र चाग्निरभिव्यक्तो लोहपिण्डमेवाग्निबुद्ध्या ग्राहयति । तथात्मचैतन्यं बुद्धिवृत्तावभिव्यक्तं तामेवात्मतया बोधयत्यतस्तदाभासानुविद्धा सैव चेतनेत्युच्यते । सा च मुख्यचेतनं प्रति ज्ञेयत्वादतद्रूपत्वात्क्षेत्रमेवेत्यर्थः । धृतिस्वरूपोक्त्या क्षेत्रत्वं तस्या दर्शयति—धृतिरित्यादिना । नन्वन्येऽपि संकल्पादयो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भूयादिति सा काम इति राग इति चोच्यते । द्वेषो दुःखे तत्साधने चेदं मे माभूदिति स्पृहाविरोधिनी चेतोवृत्तिः । सुखदुःखे प्रसिद्धे । संघातः 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुतेरिन्द्रियमनश्चिदात्मनामेकलोलीभावरूपो भोक्ता । चेतना या पूर्वोक्ता बुद्धिः सैव शुद्धा सत्त्वमयत्वाद्विमलादर्शवच्चित्प्रतिबिम्बग्राहिणी तप्तायःपिण्डे वह्नित्वमिव स्वयमचेतनापि चेतनात्वं प्राप्ता यया व्याप्तः स्थूलपिण्डोऽपि चेतन एव प्रतीयते सेयं चेतना मनःसंज्ञिता सैव इच्छादिरूपा परिणमते । तथाच श्रुतिः—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति कामादीनां मनोवृत्तित्वमाह—एतत्क्षेत्रमव्यक्ताख्यं विकारं विकारेण महदादिना तद्विकारेण चेच्छादिना सहितमुदाहृतमुक्तम् । नन्विच्छादयोऽहंप्रत्ययविषयस्यात्मनो धर्मा इति काणादा वदन्ति । सत्यमेव वदन्ति ते परंतु सोऽस्माकं मुख्य आत्मैव न भवति, तस्य शुद्धायां चित्यभेदेनाध्यस्तत्वादिति प्रागेवोक्तम् । अतः क्षेत्रान्त-

४ मधुसूदनीव्याख्या ।

भूयादिति स्पृहाविरोधिनी चित्तवृत्तिः क्रोध इतीर्ष्येति चोच्यते । सुखं निरुपधीच्छाविषयीभूता धर्मासाधारणकारणिका चित्तवृत्तिः परमात्मसुखव्यञ्जिका । दुःखं निरुपधिद्वेषविषयीभूता चित्तवृत्तिरधर्मासाधारणकारणिका । संघातः पञ्चमहाभूतपरिणामः सेन्द्रियं शरीरं । चेतना स्वरूपज्ञानव्यञ्जिका प्रमाणासाधारणकारणिका चित्तवृत्तिर्ज्ञानाख्या । धृतिरवसन्नानां देहेन्द्रियाणामवष्टम्भहेतुः प्रयत्नः । उपलक्षणमेतदिच्छादिग्रहणं सर्वान्तःकरणधर्माणाम् । तथाच श्रुतिः—'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति मृद्घट इतिवदुपादानाभेदेन कार्याणां कामादीनां मनोधर्मत्वमाह—एतत्परिदृश्यमानं सर्वं महाभूतादिधृत्यन्तं जडं क्षेत्रज्ञेन साक्षिणावभास्यमानत्वात्तदनात्मकं क्षेत्रं भास्यमचेतनं समासेनोदाहृतमुक्तम् । ननु शरीरेन्द्रियसंघात एव चेतनः क्षेत्रज्ञ इति लोकायतिकाः । चेतना क्षणिकं ज्ञानमेवात्मेति सुगताः । इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति नैयायिकाः । तत्कथं क्षेत्रमेवैतत्सर्वमिति तत्राह—सविकारमिति । विकारो जन्मादिर्नाशान्तः परिणामो नैरुक्तैः पठितस्तत्सहितं सविकारमिदं महाभूतादिधृत्यन्तमतो न विकारसाक्षि स्वोत्पत्तिविनाशयोः स्वेन द्रष्टुमशक्य-

५ भाष्योत्कर्षदीपिका ।

क्षेत्रज्ञस्येत्याशयेनाह—इच्छेति । इच्छा पूर्वोपलब्धसुखहेतुसजातीये हेतौ उपलभमाने इदं मे स्यादिति स्पृहा । तथानुभूतदुःखहेतुसजातीये हेतावुपलभमाने इदं मे मा भूदिति चित्तवृत्तिर्द्वेषः । तथा प्रसन्नत्वात्मकमनुकूलं सुखं प्रतिकूलात्मकं दुःखं देहेन्द्रियाणां संहतिः संघातः । तस्मिन्नभिव्यक्तान्तःकरणवृत्तिरात्मचैतन्याभासानुविद्धा चेतना ययावसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा धृतिः । इच्छादिग्रहणं संकल्पविकल्पाद्यन्तःकरणधर्मोपलक्षणार्थम् । तथाच श्रुतिः–'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धी-

६ श्रीधरीव्याख्या ।

इच्छादयो दृश्यत्वान्नात्मधर्मा अपितु मनोधर्मा एव अतः क्षेत्रान्तःपातिन एव । उपलक्षणं चैतत्संकल्पादीनाम् । तथाच श्रुतिः–'कामः

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

प्राप्तानि देहेन्द्रियाणि भ्रियन्ते सा च ज्ञेयत्वात्क्षेत्रम् । सर्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणं यत उक्तं तदुपसंहरति—एतत्क्षेत्रं समासेन सविकारं सह विकारेण महदादिनोदाहृतमुक्तम् । यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तं तत्क्षेत्रं व्याख्यातं महाभूतादिभेदभिन्नं धृत्यन्तम् ॥ ६ ॥ क्षेत्रज्ञो वक्ष्यमाणविशेषणो यस्य सप्रभावस्य क्षेत्रज्ञस्य परिज्ञानादमृतत्वं भवति तं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना सविशेषणं स्वयमेव वक्ष्यति भगवान् । अधुना तु तज्ज्ञानसाधनगणममानित्वादिलक्षणं यस्मिन्सति तज्ज्ञेयविज्ञाने योग्योऽधिकृतो भवति यत्परः संन्यासी ज्ञाननिष्ठ उच्यते, तममानित्वादिगणं ज्ञानसाधनत्वाज्ज्ञानशब्दवाच्यं विदधाति भगवान्—अमानित्वमिति । अमा-

२ आनन्दगिरिव्याख्या ।

मनोधर्माः सन्ति ते किमित्यत्र क्षेत्रत्वेन नोच्यन्ते तत्राह—सर्वेति । तस्योपलक्षणार्थत्वे हेतुमाह— यत इति । इच्छादिवदस्मिन्नवसरे संकल्पादीनामपि दर्शितत्वं सिद्धवत्कृत्य प्रकरणविभागार्थं यतो भगवदुक्तं क्षेत्रमुपसंहरत्यतो युक्तमिच्छादिग्रहस्य सर्वानुक्तबुद्धिधर्मोपलक्षणार्थत्वमित्यर्थः । विरक्तस्य ज्ञानाधिकाराय वैराग्यार्थं क्षेत्रं व्याख्यातमित्यनुवदति—यस्येति । क्षेत्रभेदजातस्य व्यष्टिदेहविभागस्य सर्वस्येत्यर्थः । संहतिः समष्टिशरीरम् ॥ ६ ॥ ननूक्ते क्षेत्रे क्षेत्रज्ञो वक्तव्यस्तं हित्वा किमित्यन्यदुच्यते तत्राह—क्षेत्रज्ञ इति । अनादिमदित्यादिना वक्ष्यमाणविशेषणं क्षेत्रज्ञं स्वयमेव भगवान्विवक्षितविशेषणसहितं ज्ञेयं यत्तदित्यादिना वक्ष्यतीति संबन्धः । किमिति क्षेत्रज्ञो वक्ष्यते तत्राह—यस्येति । ज्ञेयं यत्तदित्यतः प्राक्तनग्रन्थस्य तात्पर्यमाह—अधुनेति । अमानित्वादिलक्षणं विदधातीत्युत्तरत्र संबन्धः । ज्ञानसाधनसमुदायबोधनं कुत्रोपयुज्यते तत्राह—यस्मिन्निति । योग्यमधिकृतमेव विवृणोति—यत्पर इति । एतज्ज्ञानमिति वचनात्कथमिदं ज्ञानसाधनमित्याशङ्क्याह—तमिति । तद्विधानस्य वक्तृद्वारा दार्ढ्यं सूचयति—भगवानिति । अमानित्वादिनिष्ठस्यान्तर्धियो ज्ञानमिति नियमार्थमाह—अमानित्वमिति । मानस्तिरो-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

गतस्याहमर्थस्य दृश्यस्य तादृशा एव दृश्या इच्छादयो धर्माः सन्तु न नः किंचिच्छिन्नम् । आत्मनोऽसङ्गत्वमहंकारस्यानृतत्वं चानुभवसिद्धं श्रुती अप्यनुवदतः 'असङ्गो ह्ययं पुरुषः' इति, 'अमृतेन हि प्रत्यूढाः' इति ॥६॥ इदानीं ज्ञानसाधनानि विधत्ते—अमानित्वमिति । अमानित्वादयोऽपि चेतोवृत्तिविशेषा दृश्यत्वाच्च तत्क्षेत्रविकारा एव सन्तः सत्त्वगुणकार्यत्वात् ज्ञानस्य साधनभूता अप्युपचाराज्ज्ञानपदवाच्या भवन्ति । 'एतज्ज्ञानमिति प्रोक्तम्' इत्युपसंहा-

४ मधुसूदनीव्याख्या ।

रात् । अन्येषामपि स्वधर्माणां स्वदर्शनमन्तरेण दर्शनानुपपत्तेः स्वेनैव स्वदर्शने च कर्तृकर्मविरोधात् निर्विकार एव सर्वविकारसाक्षी । तदुक्तं 'नर्ते स्याद्विक्रियां दुःखी साक्षिता काविकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥' इति । तेन विकारित्वमेव क्षेत्रचिह्नं नतु परिगणनमित्यर्थः ॥ ६ ॥ एवं क्षेत्रं प्रतिपाद्य तत्साक्षिणं क्षेत्रज्ञं क्षेत्राद्विवेकेन विस्तरात्प्रतिपादयितुं तज्ज्ञानयोग्यत्वायामानित्वादिसाधनान्याह ज्ञेयं यत्तदित्यतः प्राक्तनैः पञ्चभिः—विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघनं मानित्वम् ।

५ भाष्योत्कर्षदीपिका ।

भीरित्येतत्सर्वं मन एव' इति । तथा चेच्छादीनां ज्ञेयत्वाज्ज्ञेयान्तःकरणधर्मत्वप्रतिपादनेन श्रुत्या सर्वज्ञेन भगवता च वैशेषिकमतस्य हेयत्वं बोधितम् । क्षेत्रनिरूपणमुपसंहरति । एतत्क्षेत्रं सविकारं विकारेण महदादिना तद्विकारेण चेच्छादिना सहितं समासेन संक्षेपेणोदाहृतमुक्तं । यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तं तत्क्षेत्रं महाभूतादिभेदभिन्नं धृत्यन्तं विरक्तस्य ज्ञानाधिकाराय वैराग्यार्थं व्याख्यातमित्यर्थः ॥६॥ सप्रभावं क्षेत्रज्ञं ज्ञेयं यत्तदित्यादिना निरूपयितुं यस्मिन्सत्यमृतत्वसाधनक्षेत्रज्ञज्ञानयोग्योऽधिकृतो भवति तं तत्त्वज्ञानसाधनगणं आयुर्वै घृतमितिवज्ज्ञानममानित्वादिलक्षणं विदधाति—**अमानित्वमित्यादिना** ।

६ श्रीधरीव्याख्या ।

संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति । अनेन च यादृगिति प्रतिज्ञाता क्षेत्रधर्मा दर्शिताः । एतत्क्षेत्रं सविकारमिन्द्रियादिविकारसहितं संक्षेपेण तुभ्यं मयोक्तमिति क्षेत्रोपसंहारः ॥ ६ ॥ इदानीमुक्तलक्षणात्क्षेत्राद्विविक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यंस्तज्ज्ञानसाधनान्याह—अमानित्वमिति पञ्चभिः । अमानित्वं स्वगुणश्लाघाराहित्यम् , अदम्भित्वं दम्भ-

---

१ आयुरायुःसाधनं.

इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

१ श्रीमच्छांकरभाष्यम् ।

नित्वं मानिनो भावो मानित्वमात्मनः श्लाघनं तदभावोऽमानित्वम् । अदम्भित्वं स्वधर्मप्रकटीकरणं दम्भित्वं तदभावोऽदम्भित्वम् । अहिंसाऽहिंसनं प्राणिनामपीडनम् । क्षान्तिः परापराधप्राप्तावविक्रिया । आर्जवमृजुभावोऽवक्रत्वम् । आचार्योपासनं मोक्षसाधनोपदेष्टुराचार्यस्य शुश्रूषादिप्रयोगेण सेवनम् । शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनमन्तश्च मनसः प्रतिपक्षभावनया रागादिमलानामपनयनं शौचम् । स्थैर्यं स्थिरभावो मोक्षमार्ग एव कृताध्यवसायत्वम् । आत्मविनिग्रह आत्मनोऽपकारकस्यात्मशब्दवाच्यस्य कार्यकरणसंघातस्य विनिग्रहः स्वभावेन सर्वतः प्रवृत्तस्य सन्मार्ग एव निरोध आत्मविनिग्रहः ॥ ७ ॥ किंच—इन्द्रियेति । इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु

२ आनन्दगिरिव्याख्या ।

हितोऽवलेपः । स चात्मन्युत्कर्षारोपहेतुः सोऽस्येति मानी न मान्यमानी तस्य भावोऽमानित्वमिति व्याकरोति—अमानित्वमित्यादिना । प्रतियोगिमुखेनादम्भित्वं विवृणोति—अदम्भित्वमिति । वाङ्मनोदेहैरपीडनं प्राणिनामहिंसनम्, तदेवाहिंसेत्याह—अहिंसेति । परापराधस्य चित्तविकारकारणस्य प्राप्तावेवाविकृतचित्तत्वेनापकारसहिष्णुत्वं क्षान्तिरित्याह—क्षान्तिरिति । अवक्रत्वमकौटिल्यं यथाहृदयव्यवहारः सदैकरूपप्रवृत्तिनिमित्तत्वं चेत्यर्थः । 'उपनीय तु यः शिष्यम्' इत्यादिनोक्तमाचार्यं व्यवच्छिनत्ति—मोक्षेति । शुश्रूषादीत्यादिपदं नमस्कारादिविषयम् । बाह्यमाभ्यन्तरं च द्विप्रकारं शौचं क्रमेण विभजते—शौचमित्यादिना । मनसो रागादिमलानामिति संबन्धः । तापनयोपायमुपदिशति—प्रतिपक्षेति । रागादिप्रतिकूलस्य भावनाविषयेषु दोषदृष्ट्या वृत्तिस्तयेति यावत् । स्थिरभावमेव विशदयति—मोक्षेति । आत्मनो नित्यसिद्धस्यानाधेयातिशयस्य कुतो विनिग्रहस्तत्राह—आत्मन इति ॥ ७ ॥ न केवलममानित्वादीन्येव ज्ञानस्यान्तरङ्गसाधनानि किंतु वैराग्यादीन्यपि तथाविधानि सन्तीत्याह—किंचेति ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रात् । तत्र विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघित्वं मानित्वम् । लाभपूजाख्यात्यर्थं स्वधर्मस्य प्रकटीकरणं दम्भित्वम् । कायवाङ्मनोभिः प्राणिनां पीडनं हिंसा । तेषां वर्जनममानित्वमदम्भित्वमहिंसा च । परेणापकृतेऽपि चित्तस्य निर्विकारत्वं क्षान्तिः । आर्जवमकौटिल्यम् । आचार्योपासनं स्पष्टम् । शौचं मृज्जलाभ्यां बाह्यं भावशुद्धिरान्तरम् । स्थैर्यं मोक्षसाधने प्रवृत्तस्य विघ्नसद्भावेऽपि तदगणनम् । आत्मविनिग्रहो देहेन्द्रियादिप्रचारसंकोचः

४ मधुसूदनीव्याख्या ।

लाभपूजाख्यात्यर्थं स्वधर्मप्रकटीकरणं दम्भित्वम् । कायवाङ्मनोभिः प्राणिनां पीडनं हिंसा । तेषां वर्जनममानित्वमदम्भित्वमहिंसेत्युक्तम् । परापराधे चित्तविकारहेतौ प्राप्तेऽपि निर्विकारचित्ततया तदपराधसहनं क्षान्तिः । आर्जवमकौटिल्यं यथाहृदयं व्यवहरणम् परप्रतारणाराहित्यमिति यावत् । आचार्यो मोक्षसाधनस्योपदेष्टाऽत्र विवक्षितो नतु मनूक्त उपनीयाध्यापकः । तस्य शुश्रूषानमस्कारादिप्रयोगेण सेवनमाचार्योपासनम् । शौचं बाह्यकायमलानां मृज्जलाभ्यां क्षालनमाभ्यन्तरं च मनोमलानां रागादीनां विषयदोषदर्शनरूपप्रतिपक्षभावनयाऽपनयनम् । स्थैर्यं मोक्षसाधने प्रवृत्तस्यानेकविधविघ्नप्राप्तावपि तदपरित्यागेन पुनःपुनर्यत्नाधिक्यम् । आत्मविनिग्रहः आत्मनो देहेन्द्रियसंघातस्य स्वभावप्राप्तां मोक्षप्रतिकूले प्रवृत्तिं निरुध्य मोक्षसाधन एव

५ भाष्योत्कर्षदीपिका ।

विद्यमानाविद्यमानगुणैरात्मनः श्लाघनं मानित्वं तद्वर्जितत्वममानित्वं, पूजालाभार्थं स्वधर्मानुष्ठानप्रकटीकरणं दम्भित्वं तस्याभावोऽदम्भित्वं, कायादिभिः प्राणिनामपीडनं अहिंसा, परापराधप्राप्तौ चित्तस्याविकृतता क्षान्तिः, आर्जवं ऋजुभावोऽवक्रत्वं, आचार्यस्य मोक्षसाधनोपदेष्टुः कायादिना शुश्रूषादिप्रयोगेण सेवनमाचार्योपासनं, शौचं कायमलानां मृज्जलाभ्यां प्रक्षालनं, अन्तश्च रागादिमलानां मोक्षप्रतिपक्षभावनयापनयः शौचम् । तथाच स्मृतिः 'शौचं हि द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरं' इति । मोक्षमार्गे प्रवृत्तस्यानेकान्तरायप्राप्तावपि तन्निवृत्त्यर्थं प्रयत्नपुरःसरं तत्रैव कृतव्यवसायित्वं स्थैर्यम्, आत्मोपकारकत्वादात्मनो देहेन्द्रियादिसंघातस्य स्वभावेन सर्वतः प्रवृत्तस्य सर्वस्मान्मोक्षप्रतिकूलमार्गात्प्रतिरुध्य सन्मार्गे स्थापनमात्मविनिग्रहः । अमानित्वादीनामेतज्ज्ञानमिति प्रोक्तमित्यनेन संबन्धः ॥ ७ ॥ किंचैहिकामुष्मिकेन्द्रियार्थेषु शब्दादिविषयेषु रागाभावो

६ श्रीधरीव्याख्या ।

राहित्यम्, अहिंसा परपीडावर्जनम्, क्षान्तिः सहिष्णुत्वम्, आर्जवमवक्रता, आचार्योपासनं सद्गुरुसेवा, शौचं बाह्यमाभ्यन्तरं च, तत्र बाह्यं मृज्जलादिना, आभ्यन्तरं च रागादिमलक्षालनम् । तथाच स्मृतिः–'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरं' इति । स्थैर्यं सन्मार्गे प्रवृत्तस्य तदेकनिष्ठता, आत्मविनिग्रहः शरीरसंयमः, एतज्ज्ञानमिति प्रोक्तमिति

१ श्रीमच्छांकरभाष्यम् ।

**विरागभावो वैराग्यम्—अनहंकारोऽहंकाराभाव एव च । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्म च मृत्युश्च जरा च व्याधयश्च दुःखानि च तेषु जन्मादिदुःखान्तेषु प्रत्येकं दोषानुदर्शनम्, जन्मनि गर्भवासयोनिद्वारा निःसरणं दोषस्तस्यानुदर्शनमालोचनम्, तथा मृत्यौ दोषानुदर्शनं, तथा जरायां प्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं परिभूतता चेति । तथा व्याधिषु शिरोरोगादिषु दोषानुदर्शनं, तथा दुःखेष्वध्यात्माधिभूताधिदैवनिमित्तेषु अथवा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मादिषु पूर्ववदनुदर्शनम् । दुःखं जन्म दुःखं मृत्युः दुःखं जरा दुःखं व्याधयः । दुःखनिमित्तत्वाज्जन्मा-**

२ आनन्दगिरिव्याख्या ।

दृष्टादृष्टेष्वनेकार्थेषु रागे तत्प्रतिबद्धं ज्ञानं नोत्पद्येतेति मत्वा व्याकरोति—**इन्द्रियेति** । आविर्भूतो गर्वोऽहंकारस्तदभावोऽपि ज्ञानहेतुरित्याह—**अनहंकार इति** । इन्द्रियार्थेषु वैराग्यमुक्तमुपपादयति—**जन्मेति** । प्रत्येकं दोषानुदर्शनमित्युक्तं तत्र जन्मनि दोषानुदर्शनं विशदयति—**जन्मनीति** । यथा जन्मनि दोषानुसंधानं तथा मृत्यौ दोषस्य सर्वमर्मनिकृन्तनादेरालोचनं कार्यमित्याह—**तथेति** । जन्मनि मृत्यौ च दोषानुसंधानवज्जरादिष्वपि दोषानुसंधानं कर्तव्यमित्याह—**तथेति** । व्याधिषु दोषस्यासह्यतारूपस्यानुसंधानं, दुःखेषु त्रिविधेष्वपि दोषानुसंधानं प्रसिद्धम् । व्याख्यानान्तरमाह—**अथवेति** । यथा जन्मादिषु दुःखान्तेषु दोषदर्शनमुक्तं तथा तेष्वेव दुःखाख्यदोषस्य दर्शनं स्फुटयति—**दुःखमित्यादिना** । कथं जन्मादीनां बाह्येन्द्रियग्राह्याणां दुःखत्वं तत्राह—**दुःखेति** । जन्मादिषु

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ ७ ॥ इन्द्रियार्थेषु दृष्टेषु आनुश्रविकेषु वा शब्दादिषु वैराग्यं रागाभावः । अनहंकारो दर्पराहित्यम् । अयोग-

४ मधुसूदनीव्याख्या ।

व्यवस्थापनम् ॥ ७ ॥ किंच इन्द्रियार्थेष्विति । इन्द्रियार्थेषु शब्दादिषु दृष्टेष्वानुश्रविकेषु वा भोगेषु रागविरोधिन्यस्पृहात्मिका चित्तवृत्तिर्वैराग्यम् । आत्मश्लाघनाभावेऽपि मनसि प्रादुर्भूतोऽहं सर्वोत्कृष्ट इति गर्वोऽहंकारस्तदभावोऽनहंकारः । अयोगव्यवच्छेदार्थ एवकारः । समुच्चयार्थश्चकारः । तेनामानित्वादीनां विंशतिसंख्याकानां समुच्चितो योग एव ज्ञानमिति प्रोक्तं न त्वेकस्याप्यभाव इत्यर्थः । जन्मनो गर्भवासयोनिद्वारा निस्सरणरूपस्य मृत्योः सर्वमर्मच्छेदनरूपस्य जरायाः प्रज्ञाशक्तितेजोनिरोध-

५ भाष्योत्कर्षदीपिका ।

वैराग्यम् । अहं सर्वोत्तम इति मनसि प्रादुर्भूतो गर्वोऽहंकारस्तदभावोऽनहंकारः । गर्वस्योक्तानुक्तनाशकत्वादनहंकारस्यावश्यसंपाद्यत्वद्योतनार्थं अयोगव्यवच्छेदार्थं एवकारः । समुच्चयार्थश्चकारः । तेनामानित्वादीनां विंशतिसंख्याकानां समुच्चितो योग एव ज्ञानमिति प्रोक्तं नत्वेकस्याप्यभाव इत्यर्थ इति केचित् । आचार्यैस्तु सुगमत्वादव्ययार्थः सर्वत्र न प्रदर्श्यते । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्मादिषु दुःखान्तेषु प्रत्येकं दोषानुदर्शनम् । यद्वा दुःखान्येव दोषो दुःखदोषस्तस्य जन्मादिषु दर्शनमालोचनं जन्मादयो दुःखनिमित्तत्वाद्दुःखं दुःखानि पुनः स्वरूपेणैव दुःखमित्येवं जन्मादिषु दुःखदोषानुदर्शनाद्देहेन्द्रियादिविषयाणां भोगेषु वैराग्यमुपजायते । ततश्चात्मदर्शनाय प्रत्यगात्मनि करणानां प्रवृत्तिर्भवतीत्येवं ज्ञानहेतुत्वाज्जन्मादिषु दुःखदोषानुदर्शनं ज्ञानमुच्यते । तथाचोक्तं विष्णुपुराणे—'आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् । आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा । शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः । शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः । गुल्मार्शःश्वासश्वयथुच्छर्द्यादिभिरनेकधा । तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञिकैः । भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि । कामक्रोधभयद्वेषलोभमोहविषादजः । शोकासूयावमानेर्ष्यामात्सर्यादिभवस्तथा । मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा । इत्येवमादिकैर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः । मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः । सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः । शीतोष्णवातवर्षाम्बुविद्युदादिसमुद्भवः । तापो द्विजवरश्रेष्ठ कथ्यते चाधिदैविकः । गर्भजन्मजराज्ञानमृत्युनारकजं तथा । दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम । सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते । उल्बसंवेष्टितो भग्नपृष्ठग्रीवास्थिसंहतिः । अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः । अतितापिभिरत्यर्थं वर्धमानातिवेदनः । प्रसारणाकुञ्चनादेर्नाङ्गानां प्रभुरात्मनः । शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः । निरुच्छ्वासः सचैतन्यः स्मरञ्जन्मशतान्यथ । आस्ते गर्भेऽतिदुःखेन निजकर्मनिबन्धनः । जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः । प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः । अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः । क्लेशैर्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः । मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना । विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम । कण्टकैरिव तुन्नाङ्गः क्रकचैरिव दारितः । पूतिव्रणान्निःपतितो धरायां कृमिको यथा । जराजर्जरदेहश्च शिथिलावयवः पुमान् । विगलच्छीर्णदशनो वलीस्नायुशिरावृतः ।

६ श्रीधरीव्याख्या ।

पञ्चमेनान्वयः ॥ ७ ॥ किंच—**इन्द्रियार्थेष्विति** । जन्मादिषु दुःखदोषयोरनुदर्शनं पुनःपुनरालोचनम् । दुःखरूपस्य दोषस्यानुद-

१ मधुसूदनः ।

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥ ९॥**

१ श्रीमच्छांकरभाष्यम्।

दयो दुःखं न पुनः स्वरूपेणैव दुःखमिति। एवं जन्मादिषु दुःखदोषानुदर्शनाद्देहेन्द्रियविषयभोगेषु वैराग्यमुपजायते। ततः प्रत्यगात्मनि प्रवृत्तिः करणानामात्मदर्शनाय। एवं ज्ञानहेतुत्वाज्ज्ञानमुच्यते जन्मादिदुःखदोषानुदर्शनम्॥ ८॥ किंच—असक्तिरिति। असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रं तदभावोऽसक्तिः। अनभिष्वङ्गोऽभिष्वङ्गाभावः, अभिष्वङ्गो नाम सक्तिविशेष एवानन्यात्मभावनालक्षणः। यथान्यस्मिन्सुखिनि दुःखिनि वाहमेव सुखी दुःखी च जीवति मृते वाहमेव जीवामि मरिष्यामि चेति। क्केत्याह पुत्रदारगृहादिषु। पुत्रेषु दारेष्वादिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु।

२ आनन्दगिरिव्याख्या।

दोषानुदर्शनकृतं फलमाह—**एवमिति**। वैराग्ये सत्यात्मदृष्ट्यर्थं करणानां तदाभिमुख्येन प्रवृत्तिरिति वैराग्यफलमाह—**तत इति**। जन्मादिदुःखदोषानुदर्शनं ज्ञानहेतुषु किमित्युपसंख्यातमित्याशङ्क्य वैराग्यद्वारा धीहेतुत्वादित्याह—**एवमिति**॥ ८॥ ज्ञानस्यान्तरङ्गमेव हेत्वन्तरमाह—**किंचेति**। नन्वसक्तिरेवाभिष्वङ्गाभावस्तथाच पुनरुक्तिरित्याशङ्क्याभिष्वङ्गोक्तिद्वारा निरस्यति—**अभिष्वङ्गो नामेति**। अन्यस्मिन्नेव पुत्रादावन्यत्वधिया तद्गते सुखादावात्मनि तद्भावनाख्यं शक्तिविशेषमेवोदाहरति—**यथेति**। उक्तविशेषणयोराकाङ्क्षाद्वारा विषयमाह—**क्केत्या-**

३ नीलकण्ठव्याख्या (चतुर्धरी)।

व्यवच्छेदार्थ एवकारः। समुच्चयार्थश्चकारः। जन्मादिषु जायमानं दुःखं परस्य व्यथादोषाश्च दैन्यादयस्तेषामनुदर्शनम्॥ ८॥ **असक्तिरिति**। सक्तिः पुत्रादौ ममतामात्रम्। अभिष्वङ्गस्तेन सह तादात्म्याभिमानोऽयमेवाहमिति

४ मधुसूदनीव्याख्या।

परपरिभवादिरूपायाः व्याधीनां ज्वरातिसारादिरूपाणां, दुःखानामिष्टवियोगानिष्टसंयोगजानामध्यात्माधिभूताधिदैवनिमित्तानां दोषस्य वातपित्तश्लेष्ममलमूत्रादिपरिपूर्णत्वेन कायजुगुप्सितत्वस्य चानुदर्शनं पुनःपुनरालोचनं जन्मादिदुःखान्तेषु दोषस्यानुदर्शनं, जन्मादिव्याध्यन्तेषु दुःखरूपदोषस्यानुदर्शनमिति वा। इदं च विषयवैराग्यहेतुत्वेनात्मदर्शनस्योपकरोति॥ ८॥ किंच—सक्तिर्ममेदमित्येतावन्मात्रेण प्रीतिः। अभिष्वङ्गस्त्वहमेवायमित्यनन्यत्वभावनया प्रीत्यतिशयः अन्यस्मिन् सुखिनि दुःखिनि वाऽहमेव सुखीदुःखीचेति तद्राहित्यमसक्तिरनभिष्वङ्ग इति चोक्तम्। कुत्र सक्त्यभिष्वङ्गौ वर्जनीयावत आह—पुत्रदारगृहादिषु पुत्रेषु दारेषु गृहेषु आदिग्रहणादन्येष्वपि भृत्यादिषु सर्वेषु स्नेहविषयेष्वित्यर्थः। नित्यं च सर्वदा समचित्तत्वं हर्षविषादशून्य-

५ भाष्योत्कर्षदीपिका।

दूरप्रनष्टनयनो व्योमान्तर्गततारकः। नासाविवरनिर्यातलोमपुञ्जश्चलद्वपुः। प्रकटीकृतसर्वास्थिर्नतपृष्ठास्थिसंहतिः। उत्सन्नजठराग्नित्वादल्पाहारो विचेष्टितः। कृच्छ्रचंक्रमणोत्थानशयनासनचेष्टितः। मन्दीभवच्छ्रोत्रनेत्रः स्रवल्लालाविलाननः। आपन्नैस्तैः समस्तैश्च करणैर्मरणोन्मुखः। तत्क्षणेऽप्यनुभूतानामस्मर्ताखिलवस्तुनाम्। सकृदुच्चरिते वाक्ये समुद्भूतमहाश्रमः। श्वासकासमहायाससमुद्भूतप्रजागरः। अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी। भृत्यात्मपुत्रदाराणामवमानास्पदीकृतः। प्रक्षीणाखिलशौचश्च विहाराहारसंस्पृहः। हास्यः परिजनस्यापि निर्घृणाशेषबान्धवः। अनुभूतमिवान्यस्मिञ्जन्मन्यात्मविचेष्टितम्। संस्मरन्यौवने दीर्घं निश्वसत्यतितापितः। एवमादीनि दुःखानि जरायामनुभूय वै। मरणे यानि दुःखानि प्राप्नोति श्रृणु तान्यपि। श्लथग्रीवाङ्घ्रिहस्तोऽथ व्याप्तो वेपथुना भृशम्। मुहुर्ग्लान्या परवशो मुहुर्ज्ञानलवान्वितः। हिरण्यधान्यतनयभार्याभृत्यगृहादिषु। एते कथं भविष्यन्ति ममेति ममताकुलः। मर्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः। शरैरिवान्तकास्योग्रैश्छिद्यमानास्थिबन्धनः। विवर्तमानताराक्षिर्हस्तं पादं मुहुः क्षिपन्। संशुष्यमाणताल्वौष्ठकण्ठो घुरघुरायते। निरुद्धकण्ठो दोषौघैरुदानश्वासपीडितः। तापेन महता व्याप्तस्तृषा चार्तस्तथा क्षुधा। क्लेशादुत्क्रान्तिमाप्नोति याम्यकिंकरपीडितः। ततश्च यातनादेहं क्लेशेन प्रतिपद्यते। एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम्॥ ३५॥' इत्यादि भाष्यस्योपलक्षणार्थत्वेन जन्मादिषु दुःखदोषयोरनुदर्शनं जन्ममृत्युजराव्याधिदुःखदोषाणामनुदर्शनमिति वा। दोषश्च वातपित्तश्लेष्ममलमूत्रादिपरिपूर्णत्वेन कायजुगुप्सितत्वरूपः दैन्यादिरूपश्चेत्यपि बोध्यम्॥ ८॥ किंचासक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रस्याभावः। अनभिष्वङ्गः अन्यस्मिन्पुत्रादौ सुखिनि दुःखिनि वा जीवति मृते वाहमेव सुखी दुःखी च जीवामि मरिष्यामीति चेति। पुत्रादिषु तादात्म्यभावनालक्षणस्याभिष्वङ्गस्याभावः। आदिपदादन्यदप्यत्यन्तेष्टं दासपश्वादिकं गृह्यते। इष्टा-

६ श्रीधरीव्याख्या।

र्शनमिति वा। स्पष्टमन्यत्॥ ८॥ किंच—**असक्तिरिति**। असक्तिः पुत्रादिपदार्थेषु प्रीतित्यागः, अनभिष्वङ्गः पुत्रादीनां सुखे

१ श्रीधरः। २ मधुसूदनः। नीलकण्ठः।

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम् ।

तच्चोभयं ज्ञानार्थत्वाज्ज्ञानमुच्यते । नित्यं च समचित्तत्वं तुल्यचित्तता, क्व, इष्टानिष्टोपपत्तिषु इष्टानामनिष्टानां चोपपत्तयः संप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता, इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु । तच्चैतन्नित्यं समचित्तत्वं ज्ञानम् ॥ ९ ॥ किंच—मयि चेति । मयि चेश्वरेऽनन्ययोगेनापृथक्समाधिना नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगस्तेन भजनं भक्तिर्न व्यभिचरणशीलाऽव्यभिचारिणी । सा च ज्ञानम् । विविक्तदेशसेवित्वं विविक्तः स्वभावतः संस्कारेण वाऽशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितोऽरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशस्तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदेशसेवित्वम् । विविक्तेषु हि देशेषु चित्तं प्रसीदति यतस्तत आत्मादिभावना विविक्त उपजायतेऽतो विविक्तदेशसेवित्वं ज्ञानमुच्यते । अरतिररमणं क्व जनसंसदि जनानां प्राकृ-

२ आनन्दगिरिव्याख्या ।

दिना । उक्तविशेषणयोर्ज्ञानशब्दस्योपपत्तिमाह—तच्चेति । सदा हर्षविषादशून्यमनस्त्वमपि ज्ञानहेतुरित्याह—नित्यं चेति । तदेव विभजते—इष्टेति । तस्य ज्ञानहेतुत्वं निगमयति—तच्चैतदिति ॥ ९ ॥ साधनान्तरमाह—किंचेति । अनन्ययोगमेव संक्षिप्तं व्यनक्ति—नेत्यादिना । उक्तधीद्वारा जाताया भक्तेर्भगवति स्थैर्यं दर्शयति—नेति । तत्रापि ज्ञानशब्दस्तद्धेतुत्वादित्याह—सा चेति । देशस्य विविक्तत्वं द्विविधमुदाहरति—विविक्त इति । तदेव स्पष्टयति—अरण्येति । उक्तदेशसेवित्वं कथं ज्ञाने हेतुस्तत्राह—विविक्तेष्विति । आत्मादीत्यादिशब्देन

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

च । पुत्रादेः सुखेऽहमेव सुखी तस्य दुःखेऽहमेव दुःखीति सङ्गाभिष्वङ्गौ तद्वर्जनमित्यर्थः । समचित्तत्वं हर्षविषादराहित्यम् । कुत्र इष्टानिष्टोपपत्तिषु इष्टप्राप्तौ हर्षाभावोऽनिष्टप्राप्तौ विषादाभावः ॥ ९ ॥ मयीतिश्लोकः स्पष्टार्थः

४ मधुसूदनीव्याख्या ।

मनस्त्वम् । इष्टानिष्टोपपत्तिषु उपपत्तिः प्राप्तिः । इष्टोपपत्तिषु हर्षाभावोऽनिष्टोपपत्तिषु विषादाभाव इत्यर्थः । चः समुच्चये ॥ ९ ॥ किंच—मयि च भगवति वासुदेवे परमेश्वरे भक्तिः सर्वोत्कृष्टत्वज्ञानपूर्विका प्रीतिः । अनन्ययोगेन नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चयेनाव्यभिचारिणी केनापि प्रतिकूलेन हेतुना निवारयितुमशक्या । सापि ज्ञानहेतुः प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावदित्युक्तेः । विविक्तः स्वभावतः संस्कारतो वा शुद्धोऽशुचिभिः सर्पव्याघ्रादिभिश्च रहितः सुरधुनीपुलिनादिश्चित्तप्रसादकरो देशस्तत्सेवनशीलत्वं विविक्तदेशसेवित्वम् । तथाच श्रुतिः 'समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाशयादिभिः । मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्' इति । जनानामात्मज्ञानविमुखानां विषयभोगलम्पटतोपदेशकानां संसदि समवाये तत्त्वज्ञानप्रतिकूलायामरतिररमणम् । साधूनां तु

५ भाष्योत्कर्षदीपिका ।

नामनिष्टानां चोपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वं इष्टोपपत्तिषु हर्षस्यानिष्टोपपत्तिषु कोपस्य च वर्जनं तच्चैतत्त्रयमपि ज्ञानान्तरङ्गसाधनत्वाज्ज्ञानमित्यर्थः ॥ ९ ॥ किंच मयि च परमेश्वरेऽनन्ययोगेन नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगोऽपृथक्समाधिस्तेन भजनं भक्तिः केनापि कारणेन न व्यभिचरणशीलाऽव्यभिचारिणी । सा च ज्ञानान्तरङ्गसाधनत्वाज्ज्ञानम् । 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते' । 'वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम्' इत्युक्तेः । विविक्तं स्वभावतः संस्कारेण वा अशुच्यादिभिः सर्पव्याघ्रादिभिश्च वर्जितं वननदीतटदेवालयादिदेशं सेवितुं शीलमस्येति विविक्तदेशसेवी तस्य भावो विविक्तदेशसेवित्वम् । यतो विविक्तात्मभावनाचित्तप्रसादहेतुभूतेषु विविक्तदेशेषु सिध्यत्यतो विविक्तदेशसेवित्वं ज्ञानसाधनत्वाज्ज्ञानम् । तथाच श्रुतिः 'समे शुचौ शर्करवह्निवालुकाविवर्जिते शब्दजलाशयादिभिः । मनोनुकूले नतु चक्षुपीडने गुहानिवाताश्र-

६ श्रीधरीव्याख्या ।

दुःखे वाऽहमेव सुखी दुःखी चेत्यध्यासातिरेकाभावः, इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वम् ॥ ९ ॥ किंच—मयि चेति । मयि परमेश्वरे अनन्ययोगेन सर्वात्मदृष्ट्या अव्यभिचारिणी एकान्तभक्तिः, विविक्तः शुद्धिश्चित्तप्रसादकरः तं देशं सेवितुं शीलं

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ एवं क्षेत्रं व्याख्यातं क्षेत्रज्ञश्च । इदानीं ज्ञानमुच्यते—अमानित्वमित्यादिना ॥ ७ ॥ ८ ॥ ९ ॥ अनन्ययोगेनेति परमात्मनो महेश्वरादन्यदपरं न किंचिदस्तीत्यनन्यरूपो यो निश्चयः स एव योगस्तेन निश्चयेन मयि भक्तिः । अतएव सा न कदाचिद्व्यभिचरति ।

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तानां संस्कारशून्यानामविनीतानां ( कलहोन्मुखितचित्तानां ) संसत्समवायो जनसंसन्न संस्कारवतां विनीतानां संसत्तस्या ज्ञानोपकारकत्वादतः प्राकृतजनसंसद्यरतिर्ज्ञानार्थत्वाज्ज्ञानम् ॥ १० ॥ किंच—अध्यात्मेति । अध्यात्मज्ञाननित्यत्वमात्मादिविषयं ज्ञानमध्यात्मज्ञानं तस्मिन्नित्यभावो नित्यत्वममानित्वादीनां ज्ञानसाधनानां भावनापरिपाकनिमित्तं तत्त्वज्ञानं तस्यार्थो मोक्षः संसारोपरमस्तस्यालोचनं तत्त्वज्ञानार्थदर्शनम् । तत्त्वज्ञानफलालोचने हि तत्साधनानुष्ठाने प्रवृत्तिः स्यादिति ।

२ आनन्दगिरिव्याख्या ।

परमात्मा वाक्यार्थश्चोच्यते । नन्वरतिविषयत्वेनाविशेषतो जनसंसन्मात्रं किमिति न गृह्यते तत्राह—तस्या इति । सतः सङ्गस्य भेषजमित्युपालम्भादित्यर्थः ॥ १० ॥ साधनान्तरमाह—किंचेति । आत्मादीत्यादिशब्दोऽनात्मार्थस्तद्विषयं ज्ञानं विवेकस्तन्नित्यत्वं तत्रैव निष्ठावत्त्वं, विवेकनिष्ठो हि वाक्यार्थज्ञानसमर्थो भवति । तेषां भावनापरिपाको नाम यत्नेन साधितानां प्रकर्षपर्यन्तत्वं तन्निमित्तं तत्त्वज्ञानमैक्यसाक्षात्कारः । तत्फलालोचनं किमर्थमित्याशङ्क्याह—तत्त्वेति । प्रवृत्तिः स्यादित्यतस्तत्त्वज्ञानार्थदर्शनमर्थवदिति शेषः । ज्ञानस्यान्तरङ्गहेतुमुक्तमुपसंहरति—एतदिति ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ १० ॥ अध्यात्मशास्त्रजे ज्ञाने निष्ठावहमध्यात्मज्ञाननित्यत्वम् । तत्त्वज्ञानस्यार्थः प्रयोजनमविद्यानिवृत्तिरानन्दावाप्तिश्च तयोर्दर्शनम् । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तं विंशकं ज्ञानं ज्ञानसाधनमिति प्रोक्तं वेदेषु । अज्ञानं

४ मधुसूदनीव्याख्या ।

संसदि तत्त्वज्ञानानुकूलायां रतिरुचितैव । तथाचोक्तम् 'सङ्गः सर्वात्मना हेयः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सतः सङ्गो हि भेषजम्' इति ॥ १० ॥ किंच—अध्यात्मं आत्मानमधिकृत्य प्रवृत्तमात्मानात्मविवेकज्ञानमध्यात्मज्ञानं तस्मिन्नित्यत्वं तत्रैव निष्ठावत्त्वम् । विवेकनिष्ठो हि वाक्यार्थज्ञानसमर्थो भवति । तत्त्वज्ञानस्याहं ब्रह्मास्मीति साक्षात्कारस्य वेदान्तवाक्यकरणकस्य अमानित्वादिसर्वसाधनपरिपाकफलस्यार्थः प्रयोजनं अविद्यातत्कार्यात्मकनिखिलदुःखनिवृत्तिरूपः परमानन्दात्मावाप्तिरूपश्च मोक्षस्तस्य दर्शनमालोचनम् । तत्त्वज्ञानफलालोचने हि तत्साधने प्रवृत्तिः स्यात् । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तं विंशतिसंख्याकं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् । अतोऽन्यथास्माद्विपरीतं मानित्वादि यत्तदज्ञानमिति प्रोक्तं ज्ञानविरोधित्वात् ।

५ भाष्योत्कर्षदीपिका ।

यणे प्रयोजयेत्' इति । जनानां प्राकृतानां विषयलम्पटानां अविनीतानां कलहोन्मिषितचित्तानां संसत्समवायस्तत्रारतिरप्रीतिर्नतु संस्कारवतां विनीतानां तत्त्वविदां संसदि । तस्याः ज्ञानोपकारकत्वात् । तथाचोक्तं 'सङ्गः सर्वात्मना हेयः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम्' इति ॥ १० ॥ किंचात्मानमधिकृत्य प्रवृत्तमात्मानात्मविवेकज्ञानमध्यात्मज्ञानं तस्मिन्नित्यभावो नित्यत्वं सततं तत्रैव निष्ठावत्त्वमध्यात्मज्ञाननित्यत्वम् । अमानित्वादिसाधनानां यत्नेन साधितानां प्रकर्षपर्यन्तत्वनिमित्तं तत्त्वज्ञानम् । तदिति सर्वनाम । सर्वं च ब्रह्म तस्य नाम तदिति तस्य ब्रह्मणो भावो याथात्म्यं तस्य ज्ञानं तत्त्वज्ञानं 'सत्यं ज्ञानमनन्तं ब्रह्म, एकमेवाद्वितीयं, नेह नानास्ति किंचन, वाचारम्भणं विकारो नामधेयम्' इति श्रुत्युक्तस्य ब्रह्मजगतो याथात्म्यस्य ज्ञानं तत्त्वज्ञानमिति वा तस्यार्थः प्रयोजनं सर्वानर्थनिवृत्तिपरमानन्दप्राप्तिस्वरूपो मोक्षस्तस्य दर्शनम् । 'न स पुनरावर्तते' इति श्रुत्या 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति स्मृत्या च तस्यैव नित्यत्वबोधनात् । 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रुत्या प्रत्यक्षादिना च धर्मार्थकामानामनित्यत्वावगमाच्च मोक्षएव सर्वोत्कृष्टत्वात्परमपुरुषार्थः स च तत्त्वज्ञानस्य फलं नान्यस्य । 'तरति शोकमात्मवित्' 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतेरित्येवं तत्त्वज्ञानार्थालोचने हि तत्साधनानुष्ठाने प्रवृत्तिर्भवति । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तं विंशतिसंख्याकं ज्ञानसाधनत्वाज्ज्ञानमिति प्रोक्तं श्रुतिस्मृतीतिहासपुराणादिषु प्रकर्षेणोक्तं कथितम् । अतोऽस्माद्यथोक्तादन्यथा विपरीतं 'हिंसामानित्वदम्भित्वमक्षमानार्जवं तथा । आचार्यासेवनाशौचास्थैर्यमात्माविनिग्रहः । इन्द्रियार्थेष्ववैराग्यमहंकारस्तथैव च । जन्ममृत्युजराव्याधिदुःखदोषाप्रदर्शनम् । तथासक्तिरभिष्वङ्गः पुत्रदारगृहादिषु । नित्यं चासमचित्तत्वमिष्टानिष्टोपपत्तिषु । मयि नानन्ययोगेन भक्ति-

६ श्रीधरीव्याख्या ।

यस्य तस्य भावस्तत्त्वम्, प्राकृतानां जनानां संसदि सभायामरती रत्यभावः ॥ १० ॥ किंच—अध्यात्मेति । आत्मानमधिकृत्य वर्तमानमध्यात्मज्ञानं तस्मिन्नित्यत्वं नित्यभावः । त्वंपदार्थशुद्धिनिष्ठत्वमित्यर्थः । तत्त्वज्ञानस्यार्थः प्रयोजनं मोक्षः तस्य दर्शनम् । मो-

७ अभिनवगुप्ताचार्यव्याख्या ।

व्यभिचारहेतुत्वाभिगतानां कामनानामभावात् तासामपि वा चित्तवृत्त्यन्तररूपाणां तदेकमयत्वात् । एवं सर्वत्रानुसंधेयम् । एतद्विपरी-

**ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्तं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् । अज्ञानं यदतोऽस्माद्यथोक्तादन्यथा विपर्ययेण मानित्वं दम्भित्वं हिंसाऽक्षान्तिरनार्जवमित्याद्यज्ञानं विज्ञेयं परिहरणाय संसारप्रवृत्तिकारणत्वादिति ॥ ११ ॥ यथोक्तेन ज्ञानेन ज्ञातव्यं किमित्याकाङ्क्षायामाह—ज्ञेयं यत्तदित्यादि । ननु यमा नियमाश्चामानित्वादयो न तैर्ज्ञेयं ज्ञायते । न ह्यमानित्वादि कस्यचिद्वस्तुनः परिच्छेदकं दृष्टम् । सर्वत्रैव च यद्विषयं ज्ञानं तदेव तस्य ज्ञेयस्य परिच्छेदकं दृश्यते । न ह्यन्यविषयेण ज्ञानेनान्यदुपलभ्यते । यथा घटविषयेण ज्ञानेनाग्निः । नैष दोषो ज्ञाननिमित्तत्वाज्ज्ञानमुच्यत इति ह्यवोचाम । ज्ञानसहकारिकारणत्वाच्च—ज्ञेयमिति । ज्ञेयं ज्ञातव्यं यत्तत्प्रवक्ष्यामि प्रकर्षेण यथाव-

२ आनन्दगिरिव्याख्या ।

किमिति तस्य विज्ञेयत्वमित्याशङ्क्याह—परिहरणायेति । तत्र हेतुः—संसारेति । तस्य प्रवृत्तिरुत्पत्तिस्तद्धेतुत्वान्मानित्वादि त्याज्यं ज्ञाते च त्याज्यत्वे तेन तस्य ज्ञेयतेत्यर्थः । इतिशब्दः साधनाधिकारसमाप्त्यर्थः ॥ ११ ॥ उत्तरग्रन्थमवतारयति—यथोक्तेति । अमानित्वादीनां ज्ञानत्वमाक्षिपति—नन्विति । वस्तुपरिच्छेदकत्वाज्ज्ञानत्वमाशङ्क्याह—नहीति । परिच्छेदकत्वाज्ज्ञानत्वं ज्ञानत्वात्परिच्छेदकत्वमित्यन्योन्याश्रयादित्यभिप्रेत्याह—सर्वत्रेति । स्वार्थस्यैव ज्ञानं परिच्छेदकमित्येतद्व्यतिरेकद्वारा विशदयति—नहीति । व्यतिरेकदृष्टान्तमाह—यथेति । अमानित्वादीनां ज्ञानत्वमाक्षिप्तं प्रतिक्षिपति—नैष दोष इति । तत्र हेतुत्वेनोक्तं स्मारयति—ज्ञानेति । तेषु ज्ञानशब्दे हेत्वन्तरमाह—ज्ञानेति । अमानित्वादीनां ज्ञानत्वमुक्त्वा ज्ञातव्यमवतारयति—ज्ञेयमिति । प्रश्नद्वारा ज्ञेयप्रवचनस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ज्ञानविरोधि इतोऽन्यथा यत्तत् मानित्वादिकमित्यर्थः । तस्मात्तत्परित्यागेनामानित्वादिकमेवोपादेयमिति भावः ॥ ११ ॥ एवं क्षेत्रं व्याख्याय स च यो यत्प्रभावश्चेत्युक्तं क्षेत्रज्ञस्वरूपं तस्य मायिकं प्रभावं व्याचष्टे—ज्ञेयमिति । एतैर्ज्ञानसाधनैर्यज्ज्ञेयं तत्प्रवक्ष्यामि । यज्ज्ञेयं ज्ञात्वा अमृतं मोक्षमश्नुते प्राप्नोति । तस्य स्वरूपं तावदाह—अनादिमदिति । आदिमत् अव्यक्तम् 'तस्मादव्यक्तमुत्पन्नम्' इति तदुत्पत्तिस्मरणात् । तदन्यदनादिमत् । अनादीत्येतावत्युक्ते

४ मधुसूदनीव्याख्या ।

तस्मादज्ञानपरित्यागेन ज्ञानमेवोपादेयमिति भावः ॥ ११ ॥ एभिः साधनैर्ज्ञानशब्दितैः किं ज्ञेयमित्यपेक्षायामाह—यत् ज्ञेयं मुमुक्षुणा तत्प्रवक्ष्यामि प्रकर्षेण स्पष्टतया वक्ष्यामि । श्रोतुरभिमुखीकरणाय फलेन स्तुवन्नाह—यद् वक्ष्यमाणं ज्ञेयं ज्ञात्वाऽमृतममृतत्वमश्नुते । संसारान्मुच्यत इत्यर्थः । किं तत् । अनादिमत् आदिमन्न भवतीत्यनादिमत् । परं निरतिशयं ब्रह्म सर्वतोऽनवच्छिन्नं परमात्मवस्तु । अत्रानादीत्येतावतैव बहुव्रीहिणार्थलाभेऽप्यतिशायने नित्ययोगे वा मतुपः प्रयोगः । अनादीति च मत्परमिति च पदं केचिदिच्छन्ति । मत् सगुणाद्ब्रह्मणः परं निर्विशेषं रूपं ब्रह्मेत्यर्थः । अहं वासुदेवाख्या परा शक्तिर्यस्येति त्वपव्याख्यानम् ।

५ भाष्योत्कर्षदीपिका ।

रव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि । नाध्यात्मज्ञाननित्यत्वं ज्ञानार्थादर्शनं तथा । इत्येतज्ज्ञेयमज्ञानं हेयं संसारकारणम् ।' तथा चैतत्परित्यागेन संसारोपरमायामानित्वादिकमुपेयमिति भावः ॥ ११ ॥ यथोक्तज्ञानसाधनेन ज्ञानशब्दितेन ज्ञेयं किमित्याकाङ्क्षायामाह—ज्ञेयमिति । उक्तज्ञानसाधनपरिपाकलब्धसाक्षात्कारवृत्तिविषयं ज्ञेयं । नचैवमन्तःकरणवृत्तिविषयत्वेन ब्रह्मणो दृश्यत्वं तस्य वृत्तिविषयत्वेन ज्ञेयत्वेऽपि फलविषयत्वाभावेन दृश्यत्वाभावात् । तथाच श्रुतिः 'स वेत्ति वेद्यं न च तस्यास्ति वेत्ता, विज्ञातारमरे केन विजानीयात्' इत्याद्या । ज्ञेयं यत्तत्प्रकर्षेण यथावत् वक्ष्यामि । फलप्रदर्शनेन श्रोतारं रोचयन्नभिमुखीकरोति । यज्ज्ञेयं ज्ञात्वाऽमृतमपुनरावृत्तिलक्षणं मोक्षमश्नुते । मुक्तो भवतीत्यर्थः । किं तदित्यत आह । अनादिमत् आदिरस्यास्तीत्यादिमत् नादिमदनादिमत् परं निरतिशयं ब्रह्म ज्ञेयमित्यर्थः । यत्तु अनादिमदिति च्छेदे बहुव्रीहिणोक्तेऽर्थे मतुप

६ श्रीधरीव्याख्या ।

क्षस्य सर्वोत्कृष्टतालोचनमित्यर्थः । एतदमानित्वमदम्भित्वमित्यादिविंशतिसंख्यात्मकं यदुक्तमेतज्ज्ञानमिति प्रोक्तं, ज्ञानसाधनत्वात् । अतोऽन्यथास्माद्विपरीतं मानित्वादि यदेतदज्ञानमिति प्रोक्तं वसिष्ठादिभिः, ज्ञानविरोधित्वात् । अतः सर्वथा त्याज्यमित्यर्थः ॥ ११ ॥ एभिः साधनैर्यज्ज्ञेयं तदाह—ज्ञेयमितिषड्भिः । यज्ज्ञेयं तत्प्रवक्ष्यामि । श्रोतुरादरसिद्धये ज्ञानफलं दर्शयति । यद्वक्ष्यमाणं

७ अभिनवगुप्ताचार्यव्याख्या ।

तमज्ञानं यथा मानित्वादीनि ॥ १० ॥ ११ ॥ एतेन ज्ञानेन यज्ज्ञेयं तदुच्यते—ज्ञेयं यत्तदित्यादिना । अनादिमदित्यादिभिर्विशेषणैर्ब्रह्मस्व-

१ श्रीमच्छांकरभाष्यम्।

क्ष्यामि। किं फलं तदिति प्ररोचनेन श्रोतुरभिमुखीकरणायाह। यज्ज्ञेयं ज्ञात्वामृतममृतत्वमश्नुते न पुनर्म्रियत इत्यर्थः। अनादिमदादिरस्यास्तीत्यादिमन्नादिमदनादिमत्। किं तत्परं निरतिशयं ब्रह्म ज्ञेयमिति प्रकृतम्। अत्र केचिदनादिमत्परमिति पदं छिन्दन्ति बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यमनिष्टं स्यादिति। अर्थविशेषं च दर्शयन्ति अहं वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमिति। सत्यमेवमपुनरुक्तं स्यादर्थश्चेत्संभवति, न त्वर्थः संभवति ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वान्न सत्तन्नासदुच्यत इति। विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धम्। तस्मान्मतुपो बहुव्रीहिणा समानार्थत्वेऽपि प्रयोगः श्लोकपूरणार्थः। अमृतत्वफलं ज्ञेयं मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह न सत्तज्ज्ञेयमुच्यत इति नाप्यसत्तदुच्यते। ननु महता परिकर-

२ आनन्दगिरिव्याख्या।

फलमुक्त्वा प्ररोचनं कृत्वा तेन श्रोतुरभिमुख्यमापादयितुं प्ररोचनफलोक्तिपरमनन्तरवाक्यमित्याह—**किमित्यादिना**। तदेव विशिनष्टि—**अनादिमदिति**। आदिमत्त्वराहित्यमव्याकृतस्याप्यस्त्यतो विशेषं दर्शयति—**किं तदिति**। भोक्तुरपि भोग्यात्परत्वमित्यतो विशिनष्टि—**ब्रह्मेति**। अनादीत्येकं पदं मत्परमिति चापरमिति पदच्छेदान्न पुनरुक्तिरिति मतान्तरमुत्थापयति—**अत्रेति**। एकपदत्वसंभवे किमिति पदद्वयमित्याशङ्क्याह—**बहुव्रीहिणेति**। आदिरस्य नास्तीति यो बहुव्रीहिणोक्तोऽर्थस्तस्मिन्नादिमत्त्वनिषेधे नास्ति मतुपोऽर्थवत्त्वमिति मतुबानर्थक्यमनिष्टं स्यादिति मत्वा पदं छिन्दन्तीति पूर्वेण संबन्धः। आदिरस्य नास्तीत्यनादीत्युक्त्वा मत्परमित्युच्यमाने कोऽर्थः स्यादित्याशङ्क्याह—**अर्थेति**। उक्तव्याख्यानस्यायुक्तत्वान्नायं पुनरुक्तिसमाधिरित्याह—**सत्यमिति**। अर्थासंभवं समर्थयते—**ब्रह्मण इति**। तथापि विशिष्टशक्तिमत्त्वं किं न स्यादित्याशङ्क्याह—**विशिष्टेति**। तथापि मतुपो बहुव्रीहिणा तुल्यस्यार्थस्य कथं नानर्थक्यं तत्राह—**तस्मादिति**। अनादिमत्परं ब्रह्मेत्यत्र पक्षान्तरं प्रतिक्षिप्य स्वपक्षः समर्थितः, संप्रति ब्रह्मणो ब्रह्मत्वादेव कार्यकारणात्मकत्वप्राप्तावुक्तानुवादद्वारा न सदित्याद्यवतारयति—**अमृतत्वेति**। सत्कार्यमभिव्यक्तनामरूपत्वात्, असत्कारणं तद्विपर्ययादिति विभागः। ज्ञेयप्रवचनमनिर्वाच्यविषयत्वात्प्रक्रमप्रतिकूलमित्याक्षिपति—**नन्विति**। निर्विशेषस्य वस्तुनो ज्ञेयत्वात्तद्विषयं प्रवचनं प्रक्रमानुकूलमित्युत्तरमाह—**नेत्यादिना**।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

प्रवाहनित्यत्वमव्यक्तादीनामप्यस्तीति तेषामप्यनादितायां प्राप्तायां तत्प्रतिषेधार्थमनादिमदित्युक्तम्। यद्वा आदिमच्च ततः परं चादिमत्परे कार्यकारणे ताभ्यामन्यदनादिमत्परमिति। अतएव परं निर्विशेषं नत्वपरं सविशेषम्। ब्रह्म

४ मधुसूदनीव्याख्या।

निर्विशेषस्य ब्रह्मणः प्रतिपाद्यत्वेन तत्र शक्तिमत्त्वस्यावक्तव्यत्वात्। निर्विशेषत्वमेवाह न सत्तन्नासदुच्यते इति। विधिमुखेन प्रमाणस्य विषयः सच्छब्देनोच्यते निषेधमुखेन प्रमाणस्य विषयस्त्वसच्छब्देन। इदं तु तदुभयविलक्षणं निर्विशेषत्वात् स्वप्रकाशचैतन्यरूपत्वाच्च। 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतेः। यस्मात्तत् ब्रह्म न सत् भावत्वाश्रयः नासत् अभावत्वाश्रयः अतो नोच्यते केनापि शब्देन मुख्यया वृत्त्या। शब्दप्रवृत्तिहेतूनां तत्रासंभवात्। तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबन्धतोऽर्थं प्रत्याययति शब्दः। अत्र क्रियागुणसंबन्धेभ्यो विलक्षणः सर्वोपि धर्मो जातिरूप उपाधिरूपो वा जातिपदेन संगृहीतो यदृच्छाशब्दोऽपि डित्थड-

५ भाष्योत्कर्षदीपिका।

आनर्थक्यप्रसङ्गादुक्तार्थानामप्रयोगादितिन्यायात् मत्परमिति च्छेदः। अहं वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमित्यर्थ इति तन्न। न सत्तन्नासदुच्यत इति सर्वविशेषप्रतिषेधेन विजिज्ञापयितत्वेन विशिष्टशक्तिमत्त्वप्रदर्शनस्य विप्रतिषिद्धत्वेनोक्तार्थासंभवात्। तस्मान्मतुपो बहुव्रीहिसमानार्थत्वेऽप्यतिशायने नित्ययोगे वा श्लोकपूरणार्थः प्रयोगः। ननु मम विष्णोः परं निर्विशेषं रूपं मत्तः सगुणात् ब्रह्मणः परमिति वा। यद्वा आदिमच्च ततः परं चादिमत्परे कार्यकारणे ताभ्यामन्यदनादिमत्परमित्येवं मतुपः सार्थकत्वसंभवे किमित्याचार्यैरेवमुक्तमिति चेत् परमिति विशेषणादेव सगुणात्परस्य निर्विशेषस्य लाभेन मत्पदवैयर्थ्यं मत्तः परतरं नान्यदित्यादिना विरोधं परपदस्य पूर्वनिपातापत्तिं कार्यकारणान्यत्वस्य न सदित्यादिविशेषणेऽन्तर्भावं चाभिप्रेत्येति गृहाण। एतेनानादिमत्परमित्येकं पदम्। अनादिर्माया तद्वतो मायावच्छिन्नादनाद्यज्ञानवतो जीवात्परं निर्मायमज्ञानकृतजीवत्वोपाधिरहितं चेत्येवमादि यत्किंचित्कल्पनमस्मदादिभिः क्रियमाणमपि हेयं परमिति विशेषणेनैवोक्तार्थस्य लाभेनानादिमत्पदस्य वैयर्थ्यात्।

६ श्रीधरीव्याख्या।

ज्ञात्वाऽमृतं मोक्षं प्राप्नोति। किं तत् अनादिमत् आदिमन्न भवतीत्यनादिमत्। परं निरतिशयं ब्रह्म। अनादीत्येतावतैव बहुव्रीहिणा

१ श्रीधरः। २ नीलकण्ठः।

१ श्रीमच्छांकरभाष्यम् ।

बन्धेन कण्ठरवेणोद्धुष्य ज्ञेयं प्रवक्ष्यामीत्यननुरूपमुक्तं न सत्तन्नासदुच्यत इति । न, अनुरूपमेवोक्तम् । कथं सर्वासु ह्युपनिषत्सु ज्ञेयं ब्रह्म 'नेति नेत्यस्थूलमनणु' इत्यादिविशेषप्रतिषेधेनैव निर्दिश्यते नेदं तदिति वाचोऽगोचरत्वात् । ननु न तदस्ति यद्वस्त्वस्तिशब्देन नोच्यते । अथास्तिशब्देन नोच्यते नास्ति तज्ज्ञेयम् । विप्रतिषिद्धं च ज्ञेयं तदस्तिशब्देन नोच्यत इति च । न तावन्नास्ति नास्तिबुद्ध्यविषयत्वात् । ननु सर्वा बुद्धयोऽस्तिनास्तिबुद्ध्यनुगता एव । तत्रैवं सति ज्ञेयमप्यस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । नातीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययाविषयत्वात् । यद्धीन्द्रियगम्यं वस्तु घटादिकं तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यात् । इदं तु ज्ञेयमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयमित्यतो न सत्तन्नासदित्युच्यते । यत्तूक्तं विरुद्धमुच्यते ज्ञेयं तन्न सत्तन्नासदुच्यत इति । न विरुद्धम् 'अन्यदेव तद्विदितादथो अविदितादधि' इति श्रुतेः । श्रुतिरपि विरुद्धार्थेति चेद्यथा यज्ञाय शालामारभ्य

२ आनन्दगिरिव्याख्या ।

अनिर्वाच्यत्वे न सत्तन्नासदित्युच्यमाने कथमिदमनुरूपमिति पृच्छति—**कथमिति** । ब्रह्मात्मप्रकाशस्य सिद्धत्वात्तदर्थं विधिमुखेनोपदेशायोगादध्यस्ततद्धर्मनिवृत्तये निषेधद्वारोपदेशस्य वेदान्तेषु प्रसिद्धेरारोपितविशेषनिषेधरूपमिदं प्रवचनमुचितमिति परिहरति—**सर्वास्विति** । ज्ञेयस्य ब्रह्मणो विधिमुखोपदेशायोगे हेतुमाह—**वाच इति** । ब्रह्मणोऽस्तिशब्दावाच्यत्वे नरविषाणवन्नास्तित्वमित्यनिष्टमाशङ्कते—**नन्विति** । एवमुत्सर्गेऽपि ब्रह्मणि किमायातमित्याशङ्क्याह—**अथेति** । ज्ञेयस्यास्तिशब्दावाच्यत्वे व्याघातश्चेत्याह—**विप्रतिषिद्धं चेति** । अस्तिशब्दावाच्यत्वादवस्तु ब्रह्मेत्यत्राप्रयोजकत्वमाह—**न तावदिति** । नास्तिबुद्धिविषयत्वमेवावस्तुत्वे निमित्तमतस्तदभावाद्ब्रह्मणो नावस्तुतेत्येतदेव व्यक्तीकर्तुं चोदयति—**नन्विति** । सर्वासां धियामस्तिधीत्वेन नास्तिधीत्वेन वानुगतत्वेऽन्यतरधीगोचरत्वाभावे ब्रह्मणोऽनिर्वाच्यत्वं दुर्वारमिति फलितमाह—**तत्रेति** । ब्रह्मणो घटादिवैलक्षण्यादुभयबुद्ध्यविषयत्वेऽपि नानिर्वाच्यतेत्याह—**नेत्यादिना** । घटादेरिन्द्रियग्राह्यस्योभयबुद्धिविषयत्वेऽपि ब्रह्मणस्तदग्राह्यस्य नोभयधीविषयत्वं तथापि नानिर्वाच्यत्वं सच्चिदेकतानस्य शब्दप्रमाणादविषयत्वेन दृष्टत्वादित्युक्तमेव प्रपञ्चयति—**यद्धीति** । परोक्तं विरोधमनुवदति—**यत्त्विति** । श्रुत्यवष्टम्भेन निराचष्टे—**न विरुद्धमिति** । सापि विरुद्धार्थत्वानुमानं बोधकस्याविरोधापेक्षत्वादिति शङ्कते—**श्रुतिरिति** । तस्या विरुद्धार्थत्वेनाप्रामाण्ये दृष्टान्तमाह—**यथेति** । प्राचीनवंशं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्रिविधपरिच्छेदशून्यम् । न सत् प्रधानपरमाण्वादिवत्सदिति नोच्यते । नाप्यसत् शून्यवदसदपि नोच्यते । तथाच श्रुतिः 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्' इति । असच्छब्दितस्य शून्यस्य

४ मधुसूदनीव्याख्या ।

पित्थादिर्यं कंचनधर्मं स्वात्मानं वा प्रति निमित्तीकृत्य प्रवर्तेत इति सोपि जातिशब्दः । एवमाकाशशब्दोपि तार्किकाणां शब्दाश्रयत्वादिरूपं यं कंचिद्धर्मं पुरस्कृत्य प्रवर्तते । स्वमते तु पृथिव्यादिवदाकाशव्यक्तीनां जन्यानामनेकत्वादाकाशत्वमपि जातिरेवेति सोपि जातिशब्दः । आकाशातिरिक्ता च दिङ् नास्त्येव कालश्च नेश्वरादतिरिच्यते । अतिरेके वा दिक्कालशब्दावप्युपाधिविशेषप्रवृत्तिनिमित्तकाविति जातिशब्दावेव । तस्मात्प्रवृत्तिनिमित्तचातुर्विध्याच्चतुर्विध एव शब्दः । तत्र न सत्तन्नासदिति जातिनिषेधः क्रियागुणसंबन्धानामपि निषेधोपलक्षणार्थः । एकमेवाद्वितीयमिति जातिनिषेधस्तस्या अनेकव्यक्तिवृत्तेरेकस्मिन्न-

५ भाष्योत्कर्षदीपिका ।

अनादिमत्परं ब्रह्म ज्ञेयममृतत्वफलं मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह । सत् कार्यमभिव्यक्तनामरूपत्वात् असत् कारणं तद्विपर्ययात् । तथा च तज्ज्ञेयं सन्नोच्यते नाप्यसदुच्यते । ननु ज्ञेयं वक्ष्यामीति महता कण्ठरवेणोद्धुष्य न सत्तन्नासदुच्यत इत्यननुरूपमुक्तमितिचेन्न । स्वयंज्योतीरूपस्य परब्रह्मणः विधिमुखेनोपदेशायोगादध्यस्तातद्धर्मनिवृत्तये निषेधद्वारोपदेशस्य श्रुतिषु प्रसिद्धेरारोपितविशेषनिषेधरूपस्य प्रवचनस्य प्रतिज्ञानुरूपत्वात् । तथाच श्रुतयः 'अथात आदेशो नेतिनेति, अस्थूलमनणु, अपूर्वमनपरम्' इत्यादयः । एवंच ज्ञेयस्य ब्रह्मणो वाचो गोचरत्वात् श्रुत्यादौ निषेधमुखेनैवोपदेशो नत्विदं तदिति विधिमुखेनेति भावः । ननु ब्रह्मणोऽस्तिशब्दावाच्यत्वे नास्तिशब्दवाच्यशशविषाणवन्नास्तित्वप्रसङ्ग इति चेन्न । शशशृङ्गवद्ब्रह्मणो नास्तिधीविषयत्वाभावात् । ननु सर्वासां बुद्धीनामस्तिनास्तित्वानुगतत्वेन ब्रह्मणोऽन्यतरबुद्ध्यविषयत्वेनानिर्वाच्यत्वं दुर्वारमितिचेन्न ।

६ श्रीधरीव्याख्या ।

अनादिमत्त्वे सिद्धेऽपि पुनर्मतुपः प्रयोगश्छान्दसः । यद्वा अनादीति मत्परमिति च पदद्वयम् । मम विष्णोः परं निर्विशेषं रूपं ब्रह्मेत्यर्थः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

रूपाक्षेपानुग्राहकं सर्वप्रवादान्तराभिहितविज्ञानापृथग्भावकमुच्यते । एतानि च विशेषणानि पूर्वमेव व्याख्यातानीति किं निष्फलया पुन-

१ श्रीमच्छांकरभाष्यम् ।

को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेतीत्येवमिति चेत् । न, विदिताविदिताभ्यामन्यत्वश्रुतेरवश्यविज्ञेयार्थप्रतिपादनपरत्वात् । यद्यमुष्मिन्नित्यादि तु विधिशेषोऽर्थवादः । उपपत्तेश्च सदादिशब्दैर्ब्रह्म नोच्यत इति । सर्वो हि शब्दोऽर्थप्रकाशनाय प्रयुक्तः श्रूयमाणश्च श्रोतृभिर्जातिक्रियागुणसंबन्धद्वारेण संकेतग्रहणं सव्यपेक्षोऽर्थं प्रत्याययति । नान्यथाऽदृष्टत्वात् । तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबन्धतः, नतु ब्रह्म जातिमदतो न सदादिशब्दवाच्यं नापि गुणवद्येन गुणशब्देनोच्येत निर्गुणत्वान्नापि क्रियाशब्दवाच्यं निष्क्रियत्वात् 'निष्कलं निष्क्रियं शान्तम्' इति श्रुतेः । नच संबन्ध्येकत्वादद्वयत्वादविषयत्वादात्मत्वाच्च न केनचिच्छब्देनोच्यत इति युक्तं 'यतो वाचो निवर्तन्ते' इत्यादि श्रुतिभ्यश्च ॥ १२ ॥ सच्छब्द-

२ आनन्दगिरिव्याख्या ।

करोतीति पारलौकिकफलयज्ञानुष्ठानार्थं शालानिर्माणं प्रस्तुत्य को हि तद्वेदेत्याद्या परलोकसत्त्वे संदिहाना यथा विरुद्धार्था श्रुतिरप्रमाणमेवं विदिताविदितान्यत्वश्रुतिरपीत्यर्थः । नेयं श्रुतिर्विरुद्धत्वेनामानतया हातव्या ब्रह्मण्यद्वितीये प्रत्यक्त्वाप्रतिपादनेन मानत्वादित्युत्तरमाह—**न विदितेति** । यत्तु विरुद्धार्थत्वे को हीत्युदाहृतं तदसदर्थवादस्य विधिशेषस्य स्वार्थेऽतात्पर्यादित्याह—**यदीति** । यत्र जात्यादिमत्त्वं तत्र वाच्यत्वं यथा गवादौ न ब्रह्मणि जात्यादिमत्त्वमतस्तस्यावाच्यत्वान्निषेधेनैव बोध्यत्वमित्याह—**उपपत्तेश्चेति** । नोच्यत इति निषेधेनैव तस्योपदेश इति शेषः । जात्यादिमतोऽर्थस्यैव वाच्यत्वं तत्रैव संगतिग्रहादिति प्रपञ्चयति—**सर्वो हीति** । अश्रुतस्य जात्यादिद्वारेणाज्ञातसङ्गतेर्वा शब्दस्य न बोधकत्वमदृष्टेरित्याह—**नान्यथेति** । जात्यादेः सच्छब्दविषयत्वमुदाहरति—**तद्यथेत्यादिना** । ब्रह्मणस्त्वगोत्रत्वमवर्णत्वमित्यादिश्रुतेर्जात्यादिमत्त्वाभावान्न शब्दवाच्यतेत्याह—**नत्विति** । केवलो निर्गुणश्चेति श्रुतेर्गुणद्वारा ब्रह्मणो न वाच्यतेत्याह—**नापीति** । निष्क्रियत्वे मानमाह—**निष्कलमिति** । ब्रह्मणोऽद्वितीयत्वस्याशेषोपनिषत्सु सिद्धत्वाद्विशिष्टस्य संबन्धस्य तस्मिन्नसिद्धेर्न तद्द्वारापि तस्य वाच्यतेत्याह—**नचेति** । ब्रह्मण्यभिधावृत्त्या शब्दाप्रवृत्तौ हेत्वन्तराण्याह—**अद्वयत्वादिति** । ब्रह्मणोऽवाच्यत्वे श्रुतमपि संवादयति—**यत इति** ॥ १२ ॥ सर्वविशेषरहितस्यावाङ्मनसगोचरस्यादृष्टेर्दृष्टेश्च विपरीतस्य प्राप्ते ब्रह्मणः शून्यत्वे प्रत्यक्त्वेनेन्द्रियप्रवृत्त्यादिहेतुत्वेन

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सच्छब्दितस्य प्रधानस्य रजःशब्दितानां परमाणूनां परव्योमशब्दितस्य अस्मदभिमतस्याव्यक्तस्यापि सृष्टेः प्राक् निषेधं

४ मधुसूदनीव्याख्या ।

संभवात् निर्गुणं निष्क्रियं शान्तमिति गुणक्रियासंबन्धानां क्रमेण निषेधः । 'असङ्गो ह्ययं पुरुषः' इति च । 'अथात आदेशो नेति नेति' इति च सर्वनिषेधः । तस्मात् ब्रह्म न केनचिच्छब्देनोच्यत इत्युक्तं युक्तं । तर्हि कथं प्रवक्ष्यामीत्युक्तं कथं वा 'शास्त्रयोनित्वात्' इति सूत्रं, यथाकथंचिल्लक्षणया शब्देन प्रतिपादनादिति गृहाण । प्रतिपादनप्रकारश्चाश्चर्यवत्पश्यति कश्चिदेन-

५ भाष्योत्कर्षदीपिका ।

इन्द्रियग्राह्यघटादेरुभयबुद्धिविषयाद्विलक्षणस्यातीन्द्रियस्य ब्रह्मणस्तदविषयत्वेति शब्दैकप्रमाणगम्यत्वेन ज्ञेयत्वानपायात् । किंच गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतो, धनी गोमानिति वा संबन्धतः सर्वो गवादिशब्दोऽर्थं प्रत्याययति । ननु ब्रह्म जात्यादिमदतो न सदादिशब्दवाच्यं । तथाच श्रुतयः 'अगोत्रमवर्णं, निष्क्रियं शान्तं, केवलो निर्गुणश्च, एकमेवाद्वितीयम्' इत्याद्याः । तथाचाविषयत्वादात्मत्वात्केनापि शब्देन मुख्यया वृत्त्या ब्रह्म नोच्यत इति युक्तम् । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतिभ्यश्च । 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यत्र तु निषेधमुखोपदेशेनोपनिषत्प्रतिपाद्यमित्यर्थ इत्यविरोधः । यत्तु पूरणार्थात्पृ इत्यस्माद्धातो परशब्दव्युत्पत्तेः परं पूर्णं त्रिविधपरिच्छेदशून्यं । ननु देशकालवस्तूनामद्वैतमतेऽसत्त्वात्कुतस्तत्कृतच्छेद इत्याशङ्क्याविद्याविलासत्वं तेषां वक्तुं ब्रह्म विशिनष्टि—**अनादिमदिति** । अनादि अज्ञानं तद्वत्तत्संबन्धीत्यर्थः । तेन देशादीनां संभव इति भावः । नन्वयं शान्तिकर्मणि वेतालोदयः यदज्ञानमेवानादिद्वितीयमङ्गीक्रियत इत्याशङ्क्याज्ञानं विशिनष्टि—**न सदिति** । तदज्ञानं न सदुच्यते बाध्यतया सत्त्वेनानिरूपणात् । तथा नासदुच्यते अपरोक्षतया प्रतीतेरस्तस्यानिर्वचनात् । भुजंगेनेव रज्जुर्नाज्ञानेन ब्रह्म सद्वितीयमिति भावः । यद्वास्मिन्व्याख्याने द्वितीयनकारवैयर्थ्याद्ब्रह्मैव विशेषणीयं तद्ब्रह्म न सन्नासदिति नोच्यतेऽनिर्वचनीयं न भवति । सत्त्वेन निरूपणादतोऽर्थादनाद्यज्ञानमेवानिर्वचनीयमित्यर्थ इति तच्चिन्त्यम् । ज्ञेयप्रवचनं प्रतिज्ञायाज्ञाननिरूपणस्यानौचित्यात् । अज्ञानवतो जीवस्य ज्ञातत्वेन ज्ञेयत्वाभावात् ब्रह्म विशेषणीयमिति पक्षे तत्सदुच्यते इत्येतावतैव निर्वाहेऽवशिष्टस्य वैयर्थ्यापत्तेः 'नासदासीन्नो सदासीत्' इत्यादिश्रुत्या विरोधापत्तेश्चेति दिक् ॥ १२ ॥ ननु सर्व-

६ श्रीधरीव्याख्या ।

तदेवाह । न सत् न चासदुच्यते । विधिमुखेन प्रमाणस्य विषयः सच्छब्देनोच्यते । निषेधस्य विषयस्त्वसच्छब्देनोच्यते । इदं तु

**सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**प्रत्ययाविषयत्वादसत्त्वाशङ्कायां ज्ञेयस्य सर्वप्राणिकरणोपाधिद्वारेण तदस्तित्वं प्रतिपादयंस्तदाशङ्कानिवृत्त्यर्थमाह—सर्वत इति। सर्वतःपाणिपादं सर्वतः पाणयः पादाश्चास्येति सर्वतःपाणिपादं तज्ज्ञेयम्। सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते। क्षेत्रज्ञश्च क्षेत्रोपाधित उच्यते क्षेत्रं च पाणिपादादिभिरनेकधा भिन्नम्। क्षेत्रोपाधिभेदकृतं विशेषजातं मिथ्यैव क्षेत्रज्ञस्येति तदपनयनेन ज्ञेयत्वमुक्तं न सत्तन्नासदुच्यत इति। उपाधिकृतं मिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेय धर्मवत्परिकल्प्योच्यते सर्वतःपाणिपादमित्यादि। तथाहि संप्रदायविदां वचनम् 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति। सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयशक्तिसद्भावनिमित्तस्वकार्या इति ज्ञेयसद्भावे**

२ आनन्दगिरिव्याख्या ।

कल्पितद्वैतसत्तास्फूर्तिप्रदत्वेनेश्वरत्वेन च सत्त्वं दर्शयन्नादौ देहादीनां प्रवृत्तिमतां रथादिवदचेतनानां प्रेक्षापूर्वकप्रवृत्तिमत्त्वाच्चेतनाधिष्ठितत्वमनुमिमानस्तत्प्रत्यक्चेतनं ब्रह्मेत्याह—**सच्छब्देति**। तदस्तित्वमिति तच्छब्दो ज्ञेयब्रह्मार्थः। तदाशङ्केति तच्छब्देनासत्त्वमुच्यते। ननु सर्वदेहेषु पाणिपादमस्येति कथं पाणीनां च पादानां च देहस्थत्वेनात्मधर्मत्वं तत्राह—**सर्वेति**। करणप्रवृत्ती रथादिप्रवृत्तितत्प्रेक्षापूर्वकप्रवृत्तिमत्त्वाच्चेतनाधिष्ठातृपूर्विकेत्यर्थः। उक्तप्रवृत्त्या चेतनास्तित्वसिद्धावपि कथं क्षेत्रज्ञास्तित्वमित्याशङ्क्य चेतनस्यैव क्षेत्रोपाधिना क्षेत्रज्ञत्वाच्चेतनास्तित्वं तदस्तित्वमेवेत्याह—**क्षेत्रज्ञश्चेति**। तस्य क्षेत्रोपाधित्वेऽपि कथं पाणिपादाक्षिशिरोमुखादिमत्त्वमित्याशङ्क्याह—**क्षेत्रं चेति**। अतश्चोपाधितस्तस्मिन्विशेषोक्तिरिति शेषः। कथं तर्हि न सत्तन्नासदिति निर्विशेषत्वोक्तिरित्याशङ्क्याह—**क्षेत्रेति**। पाणिपादादिमत्त्वमौपाधिकं मिथ्या चेज्ज्ञेयप्रवचनाधिकारे कथं तदुक्तिरित्याशङ्क्याह—**उपाधीति**। मिथ्यारूपमपि ज्ञेयवस्तुज्ञानोपयोगीत्यत्र वृद्धसंमतिमाह—**तथाहीति**। पाणिपादादीनामन्यगतानामात्मधर्मत्वेनारोप्य व्यपदेशे को हेतुरिति चेत्तत्राह—**सर्वत्रेति**। ज्ञेयस्य ब्रह्मणः शक्तिः संनिधिमात्रेण प्रवर्तनसामर्थ्यं तत्सत्त्वं निमित्तीकृत्य स्वकार्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दर्शयति ॥ १२ ॥ एवं स च य इत्येतत्क्षेत्रज्ञस्वरूपमपास्तसमस्तविशेषमुपपाद्य यत्प्रभाव इति प्रतिज्ञातं तस्य प्रभाव वैश्वरूप्यलक्षणमुपपादयति—**सर्वत इति**। सर्वतः सर्वासु दिक्षु अन्तर्बहिश्च पाणयः पादाश्चास्य सन्तीति सर्वतःपाणिपादम्। एवं सर्वतः अक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोऽक्षिशिरोमुखम्। सर्वतःश्रुतिमत् श्रवणवत्। लोके सर्वं आवृत्य व्याप्य तिष्ठति। यथा स्वप्नदृक् तैजसो वासनामयेनैव पाणिपादादिना स्वाप्नं प्रपञ्चमनुभवति। तस्य च जाग्रत्काले उपाधिभूतं पिण्डगतमेव पाणिपादादिकं तदेव स्थूलप्रपञ्चानुभवसंस्काराधानद्वारा वासनामयस्य

४ मधुसूदनीव्याख्या ।

मित्यत्र व्याख्यातः। विस्तरस्तु भाष्ये द्रष्टव्यः ॥ १२ ॥ एवं निरुपाधिकस्य ब्रह्मणः सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां नासदित्यनेनापास्तायामपि विस्तरेण तदाशङ्कानिवृत्त्यर्थं सर्वप्राणिकरणोपाधिद्वारेण चेतनक्षेत्रज्ञरूपतया तदस्तित्वं प्रतिपादयन्नाह सर्वतः। सर्वेषु देहेषु पाणयः पादाश्चाचेतनाः स्वस्वव्यापारेषु प्रवर्तनीया यस्य चेतनस्य क्षेत्रज्ञस्य तत्सर्वतःपाणिपादं ज्ञेयं ब्रह्म सर्वाचेतनप्रवृत्तीनां चेतनाधिष्ठानपूर्वकत्वात्तस्मिन्क्षेत्रज्ञे चेतने ब्रह्मणि ज्ञेये सर्वाचेतनवर्गप्रवृत्तिहेतौ न नास्तिताशङ्केत्यर्थः। एवं सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य प्रवर्तनीयानि सन्ति तत्सर्वतोऽक्षिशिरोमुखं। एवं सर्वतः श्रुतयः श्रवणेन्द्रियाणि यस्य

५ भाष्योत्कर्षदीपिका ।

विशेषरहितस्य वागाद्यगोचरस्य सच्छब्दाविषयत्वादसत्त्वाशङ्कायां न सदित्यनेन संक्षेपतः समाहितायामपि प्रत्यक्त्वेनेन्द्रियप्रवृत्त्यादिहेतुत्वेन कल्पितद्वैतसत्तास्फूर्तिप्रदत्वेन च ज्ञेयस्यास्तित्वं प्रतिपादयन्नादौ यथाऽचेतनानां रथादीनां चेतनाधीना प्रवृत्तिस्तथा सर्वप्राणिकरणानामचेतनानां तच्च प्रत्यक्चैतन्यं ब्रह्मैवेति विस्तरेण तदाशङ्कानिवृत्त्यर्थमाह। सर्वतः सर्वत्र पाणयो हस्ताः पादाश्च यस्य तत् ज्ञेयं तथा यद्यपि पाण्यादीनां देहस्थत्वेनात्मधर्मत्वं तथापि करणप्रवृत्तिश्चेतनाधिष्ठानपूर्विका प्रेक्षापूर्वकप्रवृत्तित्वात् रथादिप्रवृत्तिवदिति सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते। ननूक्तरीत्या चेतनास्तित्वसिद्धावपि कथं क्षेत्रज्ञास्ति-

६ श्रीधरीव्याख्या ।

तदुभयविलक्षणं, अविषयत्वादित्यर्थः ॥ १२ ॥ नन्वेवं ब्रह्मणः सदसद्विलक्षणत्वे सति 'सर्वं खल्विदं ब्रह्म' 'ब्रह्मैवेदं सर्वम्' इत्यादिश्रुतिभिर्विरुध्येतेत्याशङ्क्य 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतिप्रसिद्धयाऽचिन्त्यशक्त्या सर्वात्मतां तस्य दर्शयन्नाह—**सर्वत इति पञ्चभिः**। सर्वतः सर्वत्र पाणयः पादाश्च यस्य तत्, सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्,

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

लिङ्गानि ज्ञेयस्येत्युपचारत उच्यन्ते तथा व्याख्येयमन्यत्सर्वतःपाणिपादं तज्ज्ञेयम् । सर्वतोऽक्षिशिरोमुखं सर्वत्राक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतःश्रुतिमच्छ्रुतिः श्रवणेन्द्रियं तद्यस्य तच्छ्रुतिमल्लोके प्राणिनिकाये सर्वमावृत्य संव्याप्य तिष्ठति स्थितिं लभते ॥ १३ ॥ उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणाज्ज्ञेयस्य तद्वत्ताशङ्का माभूदित्येवमर्थः श्लोकारम्भः—सर्वे-

२ आनन्दगिरिव्याख्या ।

वन्तो भवन्ति पाण्यादय इति कृत्वेति योजना । सर्वतोऽक्षीत्यादावुक्तमतिदिशति—**तथेति** । तज्ज्ञेयं यथा सर्वतःपाणिपादमिति व्याख्यातं तथेत्युक्तमेव स्फुटयति—**सर्वत इति** । सर्वतोऽक्षीत्यादेरक्षरार्थमाह—**सर्वतोऽक्षीति** । अक्षिश्रवणवत्त्वमवशिष्टज्ञानेन्द्रियवत्त्वस्य पाणिपादमुखवत्त्वं चावशिष्टकर्मेन्द्रियवत्त्वस्य मनोबुद्ध्यादिमत्त्वस्य चोपलक्षणम् । एकस्य सर्वत्र पाण्यादिमत्त्वं साधयति—**सर्वमिति** ॥ १३ ॥ आरोपाद्वते साक्षादेव ज्ञेयस्य पाण्यादिमत्त्वमाशङ्क्याह—**उपाधीति** । इन्द्रियविशेषणीभूतसर्वशब्दाज्ज्ञेयोपाधित्वन्यायाविशेषाच्चात्र बुद्ध्यादेरपि ग्रहण-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रपञ्चस्य कारणम् । वासनामयश्च स्थूलप्रपञ्चस्य कारणमिति बीजाङ्कुरन्यायेनानयोरन्योन्यस्मिन्नन्योन्यसद्भावोऽन्योन्यकारणत्वं चास्तीति । एवं सकलप्राणिधीवासनोपरक्ताज्ञानोपाधिकं चैतन्यं सकलप्राणिधीवासनामयं समष्टिसूक्ष्मप्रपञ्चमवभासयति । अस्य चोपाधिभूतं ब्रह्माण्डगतसकलप्राणिपाणिपादादिकमेव । एवं च पूर्ववत्स्थूलसूक्ष्मयोरपि समष्टिप्रपञ्चयोरन्योन्यं बीजाङ्कुरन्यायेन कार्यकारणभावमन्योन्यस्यान्योन्यस्मिन्सद्भावं चाभिप्रेत्योक्तं भगवता भाष्यकारेण सकलप्राणिकरणोपाधिद्वारेण ज्ञेयब्रह्मणोऽस्तित्वं प्रतिपाद्यत इति । कार्यद्वारा करणास्तित्वसिद्धौ च कारणाभावोऽप्यपोद्यते 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इति । ननु 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेन व्यर्थस्तर्हि कारणोपन्यास इति चेन्न । तं विना शुद्धाधिगमायोगात् । शाखाचन्द्रन्यायेन हि सगुणं निर्गुणस्य वस्तुनो ज्ञापकम् । यथोक्तं भाष्ये उपाधिकृतमिथ्यारूपमप्यस्तित्वाधिगमाय ज्ञेयधर्मवत्परिकल्प्योच्यते सर्वतःपाणिपादमित्यादि । तथाहि संप्रदायविदां वचनम् 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति ॥ १३ ॥ ननु यूपाहवनी-

४ मधुसूदनीव्याख्या ।

प्रवर्तनीयत्वेन सन्ति तत् सर्वतः श्रुतिमल्लोके सर्वप्राणिनिकाये । एकमेव नित्यं विभु च सर्वमचेतनवर्गं आवृत्य स्वसत्तया स्फूर्त्या चाध्यासिकेन संबन्धेन व्याप्य तिष्ठति निर्विकारमेव स्थितिं लभते नतु स्वाध्यस्तस्य जडप्रपञ्चस्य दोषेण गुणेन वाणुमात्रेणापि संबध्यत इत्यर्थः । यथाच सर्वेषु देहेष्वेकमेव चेतनं नित्यं विभु च न प्रतिदेहं भिन्नं तथा प्रपञ्चितं प्राक् ॥ १३ ॥ 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायमनुसृत्य सर्वप्रपञ्चाध्यारोपेणानादिमत्परं ब्रह्मेति व्याख्यातम् ।

५ भाष्योत्कर्षदीपिका ।

त्वमितिचेत् चेतन एव क्षेत्रोपाधितः क्षेत्रज्ञ इत्युच्यते इत्यतस्तदस्तित्वं क्षेत्रज्ञास्तित्वमेव । ननु क्षेत्रोपाधितश्चैतन्यस्य क्षेत्रज्ञत्वेऽपि पाण्यादिमत्त्वं कथमितिचेत् । क्षेत्रस्य पाण्यादिभिरनेकधाभिन्नत्वेन तदुपाधितः क्षेत्रज्ञस्यापि पाण्यादिमत्तायाः सुवचत्वात् । न सत्तन्नासदुच्यत इति निर्विशेषत्वेन ज्ञेयत्वोक्तिस्तु क्षेत्रोपाधिकृतस्य विशेषजातस्य मिथ्यात्वात् । क्षेत्रज्ञस्य तदपनयेन सुवचा । ननु पाण्यादिमत्त्वस्यैवोपाधिकृतस्य मिथ्यात्वात् ज्ञेयप्रवचनाधिकारे तदुक्तिरपार्थेति चेन्न । ज्ञेयास्तित्वबोधनाय ज्ञेयधर्मवत्परिकल्प्य तथाभूतपाण्याद्युक्तेः सार्थकत्वात् । तदुक्तं संप्रदायविद्भिः 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति । सर्वतोक्षीणि शिरांसि मुखानि च यस्य तत् । सर्वतः श्रुतिः श्रवणेन्द्रियमस्त्यस्य तत् पाणिपादमुखवत्त्वमवशिष्टकर्मेन्द्रियवत्त्वस्याक्षिश्रुतिमत्त्वं चावशिष्टज्ञानेन्द्रियवत्त्वस्य मनोबुद्ध्यादिमत्त्वस्य चोपलक्षणम् । सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयस्य परमात्मनः सन्निधिमात्रेण प्रवर्तनसमर्थस्य सत्त्वं निमित्तीकृत्य स्वकार्यवन्तो भवन्तीत्यतो ज्ञेयसद्भावलिङ्गानि ज्ञेयस्येत्युपचारत उच्यते । लोके सर्वप्राणिसमुदाये सर्वं चराचरं सत्तादिनाध्यासिकसंबन्धेनावृत्य संव्याप्य तिष्ठति निर्विशेषामेव स्थितिं लभते नतु चलति । अध्यारोपितसविशेषप्रपञ्चेन स विशेषत्वं नैव लभत इत्यर्थः ॥ १३ ॥ उपाधिभूतपाण्यादीन्द्रियाध्यारोपणं विना ज्ञेयस्य साक्षादेव तद्वत्ताभ्रमनिरासायाह—**सर्वेति** । सर्वाणि च तानीन्द्रियाणि श्रोत्रवागादीनि बुद्धीन्द्रियकर्मेन्द्रियाणि ज्ञेयोपाधित्वस्य तुल्यत्वात् अन्तः-

६ श्रीधरीव्याख्या ।

सर्वतःश्रुतिमच्छ्रवणेन्द्रियैर्युक्तं सल्लोके सर्वमावृत्य व्याप्य तिष्ठति । सर्वप्राणिप्रवृत्तिभिः पाण्यादिभिरुपाधिभिः सर्वव्यवहारास्पदत्वे तिष्ठतीत्यर्थः ॥ १३ ॥ किंच—**सर्वेन्द्रियेति** । सर्वेषां चक्षुरादीनामिन्द्रियाणां गुणेषु रूपाद्याकारासु वृत्तिषु तत्तदाकारेण भासत

१ श्रीमच्छांकरभाष्यम्।

**न्द्रियेति।** सर्वेन्द्रियगुणाभासं सर्वाणि च तानीन्द्रियाणि श्रोत्रादीनि बुद्धीन्द्रियकर्मेन्द्रियाख्यान्यन्तःकरणे च बुद्धिमनसी ज्ञेयोपाधित्वस्य तुल्यत्वात्सर्वेन्द्रियग्रहणेन गृह्यते। अपि चान्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वमित्यतोऽन्तःकरणबहिष्करणोपाधिभूतैः सर्वेन्द्रियगुणैरध्यवसायसंकल्पश्रवणवचनादिभिरवभासत इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयमित्यर्थः। 'ध्यायतीव लेलायतीव' इति श्रुतेः। कस्मात्पुनः कारणान्न व्यापृतमेवेति गृह्यत इत्यत आह। **सर्वेन्द्रियविवर्जितं** सर्वकरणरहितमित्यर्थः। अतो न करणव्यापारैर्व्यापृतं तज्ज्ञेयम्। यस्त्वयं मन्त्रः—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिः स सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत्तज्ज्ञेयमित्येवंप्रदर्शनार्थो नतु साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनार्थः। 'अन्धो मणिमविन्दत्' इत्यादिमन्त्रार्थवत्तस्य मन्त्रस्यार्थः। यस्मात्सर्वकरणवर्जितं ज्ञेयं तस्मादसक्तं सर्वसंश्ले-

२ आनन्दगिरिव्याख्या।

मित्याह—**अन्तःकरणे चेति।** श्रोत्रादीनां ज्ञेयोपाधित्वस्य मनोबुद्धिद्वारत्वादपि तयोरिह ग्रहणमित्याह—**अपि चेति।** तयोरपीहोपादाने फलितमाह—**इत्यत इति।** अक्षरार्थमुक्त्वा वाक्यार्थमाह—**सर्वेति।** उपाधिद्वारा कल्पितव्यापारवत्त्वे मानमाह—**ध्यायतीति।** कल्पितमेवास्य व्यापारवत्त्वं न वास्तवमित्यत्र भगवतोऽपि संमतिमाकाङ्क्षाद्वारा दर्शयति—**कस्मादित्यादिना।** सर्वकरणराहित्ये फलमाह—**अत इति।** साक्षादेव ज्ञेयस्य वेगवद्विहरणादिक्रियावत्ताया मान्त्रवर्णिकत्वात्कुतोऽस्य करणव्यापारैरव्यापृतत्वमित्याशङ्क्यानुवादपूर्वकं मन्त्रस्य प्रकृतानुगुणत्वमाह—**यस्त्विति।** करणगुणानुगुण्यभजनमन्तरेण साक्षादेव जवनादिक्रियावत्त्वप्रदर्शनपरत्वे मन्त्रस्य मुख्यार्थत्वं स्यादित्याशङ्क्य तदसंभवान्नैवमित्याह—**अन्ध इति।** अर्थवादस्य श्रुतेऽर्थे तात्पर्याभावान्न प्रकृतप्रतिकूलतेत्यर्थः। सर्वकरणराहित्यं तद्व्यापारराहित्यस्योपलक्षणमित्यङ्गीकृत्योक्तमेव हेतुं कृत्वा वस्तुतः सर्वसङ्गवर्जितत्वमाह—**यस्मा-**

३ नीलकण्ठव्याख्या (चतुर्धरी)।

यादिवदलौकिकमपि ब्रह्म कार्यकारणप्रपञ्चविशिष्टं चित्रमेव सर्वतःपाणिपादं तदित्यादिना शास्त्रेण कार्यशेषतया समर्थ्यते। नच वाच्यं उपासनापरं शास्त्रं न ब्रह्मणो वैचित्र्यं प्रतिपादयितुमीष्टे इति। देवताधिकरणन्यायेन देवताविग्रहादिवत्तद्वैचित्र्यस्याप्यवान्तरतात्पर्यविषयतयासिद्धेः। नच देवताविग्रहादेर्व्यावहारिकमेव सत्त्वं न पारमार्थिकं ब्रह्मज्ञानेन तस्य बाधादिति वाच्यम्। सत्ताद्वैविध्यस्याप्रसिद्धेः। तस्मात्सर्वतःपाणिपादत्वादिकं ब्रह्मणो वास्तवमेवेति नापवादमर्हतीत्याशङ्क्याह—**सर्वेन्द्रियेति।** सर्वाणि आन्तराणि बाह्यानि च इन्द्रियाणि मनोबुद्ध्यहंकारचित्ताख्यानि श्रोत्रादीनि चेति ग्राहकमात्रसंगृहीतम्। गुणाश्च विषयाः तेन ग्राह्यमात्रं गृह्यते। समस्तग्राह्यग्राहकवदाभासते नतु ग्राह्यग्राहकस्वरूपं विचित्रम्। यथा जलसूर्योऽधस्थइव कम्पत इवाभासते नतु वस्तुतोऽधस्थः कम्पते वा तद्वत् आत्मनो ग्राह्यग्राहकाकारत्वं मिथ्येत्यर्थः। कुत एतत्। यतः सर्वेन्द्रियविवर्जितं इन्द्रियेति गुणानामप्युपलक्षणम्। नहि ब्रह्मणि किंचित् ग्राह्यं रूपादि ग्राहकं वा मनआदि वर्तते। 'अशब्दमस्पर्शमरूपमव्ययं' 'अप्राणो ह्यमनाः शुभ्रः' 'यत्तदद्रेश्यमग्राह्यमचक्षुःश्रोत्रं तदपाणिपादम्' इत्यादिशास्त्रात्। तस्मान्न प्रपञ्चविशिष्टं विचित्रं ब्रह्म। कथं तर्हि सर्वं ब्रह्मेति शास्त्रमित्याशङ्क्याह—**असक्तं सर्वभृच्चैवेति।** अत्र सर्वभृदिति सर्वाधारत्वोक्त्या सर्वस्मात्पृथग्भूतमित्युक्तम्। सर्वस्य ब्रह्मणा सहाधाराधेयभावोऽपि किं घटरूपयोरिव समवायसंबन्धेन, कुण्डबदरयोरिव संयोगसंबन्धेन वेत्याशङ्क्य संबन्धं विनैव सर्वभृत्त्वं ब्रह्मणा इत्याह—**असक्तमिति।** ननु व्याहतमेतत् असक्तमिति सर्वभृदिति चेति।

४ मधुसूदनीव्याख्या।

अधुना तदपवादेन न सत्तन्नासदुच्यत इति व्याख्यातुमारभते निरुपाधिस्वरूपज्ञानाय—**सर्वेन्द्रियेति।** परमार्थतः सर्वेन्द्रियविवर्जितं तन्मायया सर्वेन्द्रियगुणाभासं सर्वेषां बहिःकरणानां श्रोत्रादीनामन्तःकरणयोश्च बुद्धिमनसोर्गुणैरध्यवसायसंकल्पश्रवणवचनादिभिस्तत्तद्विषयरूपतयाऽवभासत इव सर्वेन्द्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयं ब्रह्म 'ध्यायतीव

५ भाष्योत्कर्षदीपिका।

करणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वाच्च सर्वेन्द्रियग्रहणेनान्तःकरणे बुद्धिमनसी अपि गृह्येते। तथाचान्तःकरणबहिःकरणोपाधिभूतैः सर्वेन्द्रियाणां गुणैरध्यवसायसंकल्पश्रवणवदनादिभिरवभासते तत् ज्ञेयं सर्वेन्द्रियव्यापारैर्व्यावृत्तमिव भवतीत्यर्थः। 'ध्यायतीव लेलायतीव' इति श्रुतेः बुद्धौ ध्यायन्त्यां ध्यायतीव चलन्त्यां च तस्यां चलतीव चिन्तनचलनाभ्यामन्तःकरणबहिःकरणव्यापार

६ श्रीधरीव्याख्या।

इति तथा। सर्वाणीन्द्रियाणि गुणांश्च तत्तद्विषयानाभासयतीति वा। सर्वेन्द्रियैर्विवर्जितं च, तथाच श्रुतिः—'अपाणिपादो जवनोऽग्र-

१ श्रीमच्छांकरभाष्यम् ।

**षवर्जितम् । यद्यप्येवं तथापि सर्वभृच्चैव । सदास्पदं हि सर्वं सर्वत्र सद्बुद्ध्यनुगमात् । नहि मृगतृष्णिकादयोऽपि निरास्पदा भवन्ति । अतः सर्वभृत्सर्वं बिभर्तीति । स्यादिदं चान्यज्ज्ञेयस्य सत्त्वाधिगमद्वारं निर्गुणं सत्त्वरजस्तमांसि गुणास्तैर्वर्जितं तज्ज्ञेयं तथापि गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारेण सुखदुःखमोहाकारपरिणतानां भोक्तृ चोपलब्धृ तज्ज्ञेयमित्यर्थः ॥ १४ ॥**

२ आनन्दगिरिव्याख्या ।

**दिति** । वस्तुतः सर्वसङ्गाभावेऽपि सर्वाधिष्ठानत्वमाह—**यद्यपीति** । स्वसत्तामात्रेणाधिष्ठानतया सर्वं पुष्णातीत्येतदुपपादयति—**सदिति** । विमतं सति कल्पितं प्रत्येकं सदनुविद्धधीबोध्यत्वात्प्रत्येकं चन्द्रभेदानुविद्धधीबोध्यचन्द्रभेदवदित्यर्थः । सर्वं सदास्पदमित्ययुक्तं मृगतृष्णिकादीनां तदभावादित्याशङ्क्याह—**नहीति** । तेषामपि कल्पितत्वे निरधिष्ठानत्वायोगान्निरूप्यमाणे तदधिष्ठानं सदेवेति सर्वस्य सति कल्पितत्वमविरुद्धमित्यर्थः । सर्वाधिष्ठानत्वेन ज्ञेयस्य ब्रह्मणोऽस्तित्वमुक्तमुपसंहरति—**अत इति** । इतश्च ज्ञेयं ब्रह्मास्तीत्याह—**स्यादिदं चेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नैष दोषः नह्यूषरभूमिर्मरीचिकोदकेन संसक्ता अथच तदाधारभूतापि भवति तद्वदेतद्भविष्यति । नन्वेवं प्रपञ्चस्य मिथ्यात्वमापततीति । तथाच कर्मोपास्तिविधय उपरुध्येरन् । न । ब्रह्मात्मैकत्वज्ञानेन यावद्द्वैतं न बाध्यते तावत्क्रियाकारकादिसर्वव्यवहारस्य सत्यत्वोपगमात् 'प्राणा वै सत्यं तेषामेष सत्यम्' इति श्रुत्यापि प्राणोपलक्षितस्य कृत्स्नस्य प्रपञ्चस्य व्यावहारिकं सत्यत्वमुक्त्वा ततोप्यधिकं परमार्थसत्यं ब्रह्म दर्शितम् । सत्यत्वं चाबाध्यत्वं तत्किंचित्कालं प्राणानामस्ति ब्रह्मणस्तु सार्वत्रिकमिति यथा भूपतीनां भूपतिरित्युक्ते ऐश्वर्याल्पत्वभूयस्त्वकृतो भेदः स्पष्ट एवमिहापि द्रष्टव्यम् । तस्माद्ब्रह्मणः सविशेषत्वं निष्कलात्मबोधात्प्रागेव नतूर्ध्वमित्यवश्यं तत्त्वज्ञानेन बाधितुं शक्यमित्यनुपाधिकं ब्रह्म न केनचित्कार्यशेषतां नेतुं शक्यम् । तदधिगमे क्रियाकारकादिद्वैतोपमर्दादुपास्योपासकोपासनाभेदस्य बाधितत्वात् । तस्माद्युक्तमुक्तमुपाधिकृतं रूपं मिथ्येति । किंच निर्गुणं गुणभोक्तृ च ग्राह्यग्राहकसंबन्धशून्यमपि ग्राहकेषु बुद्ध्यादिषु ग्राह्यसंबन्धात्सुखाद्याकारेण परिणतेषु सत्सु केवलं तत्प्रकाशकत्वमात्रेण गुणभोक्तृत्वमप्यस्य चिदाभासरूपस्योपपद्यते । यथा प्रतिबिम्बरूपे रवावुपाधिकृतं चलनादिकम् । तथाच श्रुतिः 'ध्यायतीव लेलायतीवेति' । बुद्धौ ध्यायन्त्यां तत्र प्रविष्टश्चिदाभासो ध्यायतीव विषयान् । बुद्धौ लेलायन्त्यां विषयप्रदेशं गच्छन्त्यां सोऽपि लेलायतीव नतु स्वतो ध्यायति लेलायति वेति प्रतिपादयति । एतेन 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यपि ब्रह्मण उपाधिगुणानुगुण्यभजनशक्तिमत्त्वेनैव व्याख्येयम् । अयमपादोऽपि पादे जववति जववान् भवतीति । अन्धो मणिमविन्ददित्यादिकं वचनजातं चात्रानुसंधेयम् । तस्माद्युक्तमुक्तं निर्गुणं गुणभोक्तृ

४ मधुसूदनीव्याख्या ।

लेलायतीव' इति श्रुतेः । अत्र ध्यानं बुद्धीन्द्रियव्यापारोपलक्षणम् । लेलायनं चलनं कर्मेन्द्रियव्यापारोपलक्षणार्थम् । तथा परमार्थतोऽसक्तं सर्वसंबन्धशून्यमेव मायया, सर्वभृच्च सदात्मना सर्वं कल्पितं धारयति पोषयतीति च सर्वभृत् निरधिष्ठानभ्रमायोगात् । तथा परमार्थतो निर्गुणं सत्त्वरजस्तमोगुणरहितमेव गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारा सुख-

५ भाष्योत्कर्षदीपिका ।

उपलक्ष्यते इति श्रुत्यर्थः । व्यापृतमेव ब्रह्मेति भ्रमनिराकरणायाह । सर्वेन्द्रियविवर्जितं विशेषेण कालत्रयेऽपि सर्वकरणरहितमतो न करणव्यापारैः वस्तुतो व्यापृतं तज्ज्ञेयमित्यर्थः । ननु 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं नच तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्' इत्यादिमन्त्रेण साक्षादेव ज्ञेयस्य वेगवद्विहरणादिक्रियावत्त्वप्रतीत्या कुतोऽस्य करणव्यापारैः व्यापृतत्वमेव न व्याख्यायत इतिचेत् । ध्यायतीवेतिश्रुत्यनुसारेण मन्त्रस्यापि सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत् ज्ञेयमस्त्येव प्रदर्शनार्थत्वेनान्धो मणिमविन्ददित्यादिमन्त्रार्थवादवदस्यार्थवादस्य श्रुतेः साक्षादेव जवनादिक्रियावत्त्वरूपेऽर्थे तात्पर्याभावेन प्रकृतेः प्रतिकूलताया अभावात् । सर्वकरणविवर्जितत्वादसक्तं सर्वसङ्गविनिर्मुक्तं 'असङ्गो ही'ति श्रुतेः । वस्तुतः सर्वसङ्गविवर्जितमपि सर्वाधिष्ठानमित्याह । सर्वभृच्चैव स्वसत्तामात्रेणाधिष्ठानतया सर्वं पुष्णातीत्यर्थः । तथाचायं प्रयोगः । विमतं सत्यध्यस्तं प्रत्येकं सदनुविद्धधीबोध्यत्वात् प्रत्येकं चन्द्रानुविद्धधीबोध्यचन्द्रभेदवदिति । तथाच सर्वस्यापि व्यावहारिकप्रातिभासिकपदार्थजातस्य निरास्पदत्वाभावात् विचार्यमाणे तस्य सदास्पदत्वात् सर्वभृज्ज्ञेयमित्यर्थः । सर्वाधिष्ठानत्वेऽपि वस्तुतस्तस्य निर्गुणत्वमाह । निर्गुणं गुणैः सत्त्वरजस्तमोभिः शून्यं तज्ज्ञेयम् । यद्यप्येवं तथापि मायया गुणभोक्तृ च । गुणानां सत्त्वादीनां शब्दादिद्वारेण सुखदुःखमोहाकारेण

६ श्रीधरीव्याख्या ।

हीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादि । असक्तं सङ्गशून्यम् । तथापि सर्वं बिभर्तीति सर्वभृत्सर्वस्याधारभूतम् । तदेव निर्गुणं

**बहिरन्तश्च भूतानामचरं चरमेव च।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥ १५॥**

१ श्रीमच्छांकरभाष्यम्।

**किंच—बहिरन्तरिति।** बहिस्त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते। तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वान्तरुच्यते। बहिरन्तश्चेत्युक्ते मध्येऽभावे प्राप्त इदमुच्यते **अचरं चरमेव च** यच्चराचरं देहाभासमपि तदेव ज्ञेयं यथा रज्जुसर्पाभासः। यद्यचरं चरमेव च व्यवहारविषयं सर्वं ज्ञेयं किमर्थमिदमिति सर्वैर्न विज्ञेयमिति। उच्यते, सत्यं सर्वाभासं तत्तथापि

२ आनन्दगिरिव्याख्या।

नहि तस्योपलब्धृत्वमसत्त्वे सिध्यतीत्यर्थः॥ १४॥ इतोऽपि ज्ञेयं ब्रह्मास्तीत्याह—**किंचेति।** बहिरिति व्याख्येयमादाय व्याचष्टे—**त्वगिति।** भूतेभ्यो बहिर्बाह्यविषयाद्यात्मकमित्यर्थः। कथमनात्मन एवात्मत्वं कल्पनयेत्याह—**आत्मत्वेनेति।** अन्तःशब्दार्थमाह—**तथेति।** भूतानां चराचराणामन्तर्मध्ये प्रत्यग्भूतमित्यर्थः। द्वितीयं पादमवतार्य व्याचष्टे—**बहिरित्यादिना।** यन्मध्ये भूतात्मकं नानाविधदेहात्मना भासमानं तदपि ज्ञेयान्तर्भूतं तत्त्वं सदित्यर्थः। कथं चराचरात्मनो भूतजातस्य ज्ञेयत्वं तत्राह—**यथेति।** अधिष्ठाने रज्ज्वां कल्पितसर्पादेरन्तर्भाववद्देहाभासस्यापि ज्ञेयान्तर्भावान्नासत्त्वं मध्ये ज्ञेयस्य शङ्कितव्यमित्यर्थः। सर्वात्मकं चेज्ज्ञेयं सर्वैरिदमिति किमिति न गृह्येतेति शङ्कते—**यदीति।** इदमिति ग्राह्यत्वयोग्यत्वाभावान्नेत्याह—**उच्यत इति।** सर्ववस्त्वात्मना भासते

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

चेति। भाष्येतु निर्गुणं सत्त्वादिगुणरहितमपि तेषां गुणानां सुखदुःखमोहात्मकत्वेन परिणतानां भोक्तृ च उपलब्धृ चेति व्याख्यातम्॥ १४॥ नन्वसक्तमसंबद्धं चेत्कथमुपलब्धं स्यादित्याशङ्क्याह—**बहिरिति।** भूतानां प्राणिनामेकादशेन्द्रियाणि स्थूलभूतानि च केवलविकारत्वेन व्यवहितत्वात् बहिरित्युच्यन्ते। महदहंकारपञ्चतन्मात्राव्यक्तानि प्रकृतिरूपत्वेन संनिहितत्वादन्तरित्युच्यन्ते। चराचरमिति। उभयनिकृष्टाश्चराचरोपाध्युपलक्षिता अवधिभूताः पुरुषाश्चरमचरं चेत्यनेनोच्यन्ते। तत्र चराचरं ज्ञेयमिति सामानाधिकरण्यात्पुरुषाणां ज्ञेयब्रह्मभाव उक्तः। बहिरन्तश्च ज्ञेयमिति षोडशसु विकारेष्वष्टासु प्रकृतिषु च ज्ञेयस्य संबन्ध उक्तः। सच संबन्धो यादृशो यक्षस्तादृशो बलिरितिन्यायेनाध्यस्तप्रकृतिविकृतिनिरूपितत्वेनाध्यस्त एव। एवंच पुरुषस्योपलब्धिमात्रशरीरस्य गुणैः सहाध्यासिकसंबन्धसत्त्वात् गुणोपलब्धृत्वं युज्यते। यथा प्रकाशमात्रस्वरूपस्य रवेः प्रकाश्यसंबन्धापेक्षं प्रकाशयितृत्वं तद्वदित्यर्थः। ननु नित्यापरोक्षः पुरुषप्रकृतिविकारसंबद्धश्च तर्हि कुतो न सर्वैर्गृह्यत इत्याशङ्क्याह। सूक्ष्मत्वात् दुर्लक्ष्यत्वात्तज्ज्ञेयम्। अविज्ञेयं दुर्विज्ञेयम्। यथा जपाकुसुमोपहितस्य स्फटिकस्य शौक्ल्यं सन्निहितमपि रूपान्तरविक्षेपेण तिरोहितं सन्न गृह्यते एवं नित्यापरोक्षमप्यसङ्गं ब्रह्मोपाध्युपधानाद्विविक्ततया न ग्रहीतुं शक्यं किंत्वौपाधिकधर्मोपेतमेव गृह्यते मूढैः। विद्वद्भिस्तूपाधिप्रविलापनेन सुग्रहमित्याशयः। एतदेवाह—दूरस्थं चान्तिके च तदिति। यथा मूढो जलसूर्यं बिम्बसूर्याद्दूरस्थं मन्यते विद्वांस्तु उपाधिप्रतिहतनयनरश्मीनामुपर्युत्प्लुत्य गतानां बिम्बग्राहित्वं स्पष्टम्।

४ मधुसूदनीव्याख्या।

दुःखमोहाकारेण परिणतानां भोक्तृ उपलब्धृ च तज्ज्ञेयं ब्रह्मेत्यर्थः॥ १४॥ भूतानां भवनधर्माणां सर्वेषां कार्याणां कल्पितानामकल्पितमधिष्ठानमेकमेव। बहिरन्तश्च रज्जुरिव स्वकल्पितानां सर्पधारादीनां सर्वात्मना व्यापकमित्यर्थः। अतएव अचरं स्थावरं चरं जङ्गमं च भूतजातं तदेव अधिष्ठानात्मकत्वात्। कल्पितानां न ततः किंचिद्व्यतिरिच्यत इत्यर्थः। एवं सर्वात्म-

५ भाष्योत्कर्षदीपिका।

परिणतानां भोक्तृ उपलब्धृ ज्ञेयं ब्रह्मेत्यन्वयः॥१४॥ इतोऽपि ज्ञेयस्य ब्रह्मणोऽस्तित्वं ज्ञातव्यमित्याशयेनाह—**बहिरिति।** त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते। तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वान्तरुच्यते। तथाच भूतेभ्यो बहिर्बाह्यं विषयाद्यात्मकं भूतानां चराचराणामन्तर्मध्ये प्रत्यग्भूतं ज्ञेयमित्यर्थः। मध्ये प्राप्तमभावं वारयति। अचरं चरमेव च। यन्मध्ये भूतात्मकनानाविधदेहात्मना भासमानमपि तदेव ज्ञेयं यथा रज्जौ भासमानः सर्पो रज्जुरेव तथासति ज्ञेये भासमानं ज्ञेयमेवेत्यर्थः। यद्येवं तर्हि सर्वैरिदमिति किमर्थं न विज्ञेयमिति चेत्तत्राह। सूक्ष्मत्वात्तदविज्ञेयं। यथा आम्रादिगते रूपे चक्षुषा

६ श्रीधरीव्याख्या।

सत्त्वादिगुणरहितम्। गुणभोक्तृ गुणानां सत्त्वादीनां भोक्तृ च पालकम्॥ १४॥ किंच—**बहिरिति।** भूतानां चराचराणां स्वकार्याणां बहिश्चान्तश्च तदेव सुवर्णमिव कटककुण्डलादीनाम्, जलतरङ्गाणामन्तर्बहिश्च जलमिव, अचरं स्थावरं चरं जङ्गमं यद्भूतजातं तदेव, कारणात्मकत्वात्कार्यस्य, एवमपि सूक्ष्मत्वाद्रूपादिहीनत्वात्तदविज्ञेयमिदं तदिति स्पष्टज्ञानार्हं न भवति। अतएवाविदुषां योजन-

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

व्योमवत्सूक्ष्ममतः सूक्ष्मत्वात्स्वेन रूपेण तज्ज्ञेयमप्यविज्ञेयमविदुषाम् । विदुषां त्वात्मैवेदं सर्वं ब्रह्मैवेदं सर्वमित्यादिप्रमाणतो नित्यं विज्ञातमविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वादन्तिके च तदात्मत्वाद्विदुषाम् ॥ १५ ॥ किंच—अविभक्तमिति । अविभक्तं च प्रतिदेहं व्योमवत्तदेकं भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं देहेष्वेव विभाव्यमानत्वाद्भूतभर्तृ च भूतानि

२ आनन्दगिरिव्याख्या ।

तदयोग्यत्वं कथमित्याशङ्क्याह—**सत्यमिति** । सूक्ष्मत्वेऽपि किं स्यादित्याशङ्क्याह—**अत इति** । सूक्ष्मत्वमतीन्द्रियत्वम् । तस्याविज्ञेयत्वे कुतस्तज्ज्ञानान्मुक्तिस्तत्राह—**अविदुषामिति** । विशेषणफलमाह—**विदुषां त्विति** । तेषामात्मत्वेन ज्ञातं चेत्कथं दूरस्थत्वमित्याशङ्क्याह—**अविज्ञाततयेति** । कथं तर्हि तस्य प्रत्यक्त्वं तत्राह—**अन्तिके चेति** । विद्वदविद्वद्भेदापेक्षया 'दूरात्सुदूरे तदिहान्तिके च' इति श्रुतिस्तदर्थोऽत्र प्रसङ्गादनूदित इत्यर्थः ॥ १५ ॥ ज्ञेयस्यास्तित्वे हेत्वन्तरमाह—**किंचेति** । तद्धि प्रतिदेहं नभोवदेकं तद्भेदे मानाभावाद्भिन्नत्वे च घटवदनात्मत्वापातादतोऽद्वितीयं सर्वत्र प्रत्यग्भूतं ज्ञेयं नास्तीत्यतिसाहसमित्याह—**अविभक्तं चेति** । कथं तर्हि देहादेर्भेदधीरित्याशङ्क्य कल्पनयेत्याह—**भूतेष्विति** । तत्र हेतुः—**देहेष्विति** । कार्याणां स्थितिहेतुत्वाच्च ज्ञेयमस्तीत्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विम्बस्याधस्थत्वग्रहणं तु पूर्वप्रवृत्ताधोमुखवृत्तिसंस्कारापेक्षमिति जानन् बिम्बदेशे एव प्रतिबिम्बं पश्यति । बिम्बे एव जलस्थत्वमध्यस्य तेन तु जले प्रतिबिम्ब इति । उपाधौ धर्म्यध्यासकल्पनातो विषयस्योपाधिसंसर्गमात्राध्यासकल्पने लाघवात् । एवं बिम्बभूतं ब्रह्म प्रतिबिम्बभूताज्जीवान्मूढानां विप्रकृष्टं विदुषां त्वत्यन्तं संनिकृष्टमिति ॥ १५ ॥ एतदेवोपपादयत्यर्धेन—**अविभक्तं चेति** । 'एक एव तु भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति श्रुतेर्भूतेषु कार्यकारणसंघातापन्नेषु जलपात्रेषु चन्द्रस्येव ब्रह्मणः प्रतिबिम्बा जीवास्ते चोक्तरीत्या बिम्बादनन्या इति तद्रूपेण भूतेष्वविभक्तं च विभागमप्राप्तमपि ज्ञेयवस्तु मूढदृष्ट्या विभक्तमिव दूरदेशस्थमिव चाद्भिभिन्नमिव च स्थितम् । एवं तर्हि चन्द्रादुदपात्राणामिव भूतानां पृथक्सत्त्वापत्तिरित्याशङ्क्याह—**भूतभर्तृचेति** । अधिष्ठानत्वेन सर्वाणि भूतानि धारयतीति न ततस्तेषां पृथक्सत्तास्ति रज्जुत इव तदध्यस्तानां

४ मधुसूदनीव्याख्या ।

कत्वेपि सूक्ष्मत्वाद्रूपादिहीनत्वात्तदविज्ञेयं इदमेवमिति स्पष्टज्ञानार्हं न भवति । अतएवात्मज्ञानसाधनशून्यानां वर्षसहस्रकोट्याप्यप्राप्यत्वात् । दूरस्थं च योजनलक्षकोट्यन्तरितमिव तत् । ज्ञानसाधनसंपन्नानां तु अन्तिके च तदत्यन्तव्यवहितमेव आत्मत्वात् । 'दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्' इत्यादिश्रुतिभ्यः ॥ १५ ॥ यदुक्तमेकमेव सर्वमावृत्य तिष्ठतीति तद्विवृणोति प्रतिदेहमात्मभेदवादिनां निरासाय—भूतेषु सर्वप्राणिषु अविभक्तमभिन्नमेकमेव तत् नतु प्रतिदेहं भिन्नं व्योमवत्सर्वव्यापकत्वात् । तथापि देहतादात्म्येन प्रतीयमानत्वात्प्रतिदेहं विभक्तमिव च स्थितं औपाधिकत्वेनापारमार्थिको व्योम्नीव तत्र भेदावभास इत्यर्थः । ननु भवतु क्षेत्रज्ञः सर्वव्यापक एको ब्रह्म तु जगत्कारणं ततो भिन्नमेवेति नेत्याह—**भूतभर्तृ** च भूतानि सर्वाणि स्थितिकाले बिभर्तीति, तथा प्रलयकाले ग्रसिष्णु ग्रसनशीलं, उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं ।

५ भाष्योत्कर्षदीपिका ।

दृश्यमानेऽप्ययोग्यत्वात्तत्स्थितं रसादि तेन न दृश्यते तथा सर्वात्मकमपि ज्ञेयं सर्वस्मिञ्ज्ञातेप्याकाशवदतीन्द्रियत्वात् तज्ज्ञेयमविज्ञेयम् । एतेन घटादिज्ञानेन ब्रह्मज्ञानमपि स्यात् घटाद्यात्मकत्वाद्ब्रह्मण इति शङ्कापि निरस्ता । अतएवाविदुषां तत्प्राप्तिसाधनशून्यानामविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यप्राप्यत्वात् । अन्तिके च तत् । विदुषां तु 'आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वम्' इत्यादिप्रमाणतो नित्यविज्ञाततया स्वात्मभूतत्वाद्व्यवधानरहितमित्यर्थः । तथाच श्रुतिः 'तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः । दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्' इत्याद्या ॥१५॥ किंचेतोऽपि ज्ञेयास्तित्वमित्याह । अविभक्तं विभागशून्यं प्रतिदेहं व्योमवदेकं तद्भेदे मानाभावाद्भिन्नत्वे च घटवदनात्मत्वापातात् । तथाच श्रुतिः 'एकमेवाद्वितीयं नेह

६ श्रीधरीव्याख्या ।

लक्षान्तरितमिव, दूरस्थं च, सविकारायाः प्रकृतेः परत्वात् । विदुषां पुनः प्रत्यगात्मत्वादन्तिके च तन्नित्यं संनिहितम् । तथाच मन्त्रः-'तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः' इति । एजति चलति नैजति न चलति तत् उ अन्तिके इति च्छेदः ॥ १५ ॥ किंच—**अविभक्तमिति** । भूतेषु स्थावरजङ्गमात्मकेषु अविभक्तं कारणात्मना अभिन्नं, कार्यात्मना

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

बिभर्तीति तज्ज्ञेयं भूतभर्तृ च स्थितिकाले । प्रलयकाले ग्रसिष्णु ग्रसनशीलम् । उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्ज्वादिः सर्पादेर्मिथ्याकल्पितस्य ॥ १६ ॥ किंच सर्वत्र विद्यमानं सन्नोपलभ्यते चेज्ज्ञेयं तमस्तर्हि । न, किं तर्हि—ज्योतिषामपीति । ज्योतिषामादित्यादीनामपि तज्ज्ञेयं ज्योतिः । आत्मचैतन्यज्योतिषेद्धानि ह्यादित्यादीनि ज्योतींषि दीप्यन्ते 'येन सूर्यस्तपति तेजसेद्धः', 'तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिभ्यः । स्मृतेश्चेहैव 'यदादित्यगतं तेजः'

२ आनन्दगिरिव्याख्या ।

**भूतेति** । निमित्तोपादानतया तेषां प्रलये प्रभवे च कारणत्वाच्च तदस्तीत्याह—**प्रलयेति** । तर्हि कार्यकारणत्वस्य वस्तुत्वान्नाद्वैतमित्याशङ्क्याह—**यथेति** ॥ १६ ॥ इतोऽपि ज्ञेयस्यास्तित्वमित्याह—**किंचेति** । हेत्वन्तरमेव स्फोरयितुं शङ्कते—**सर्वत्रेति** । न तत्तमो मन्तव्यमित्याह—**नेति** । तर्हि किं तस्य रूपमिति पृच्छति—**किं तर्हीति** । तत्रोत्तरं—**ज्योतिषामिति** । सूर्यादीनां बुद्ध्यादीनां च प्रकाशकत्वादस्ति ज्ञेयं ब्रह्मेत्याह—**ज्योतिषामिति** । तदेवोपपादयति—**आत्मेति** । तत्र श्रुतिद्वयं प्रमाणयति—**येनेति** । उक्तेऽर्थे वाक्यशेषमपि दर्शयति—**स्मृतेश्चेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सर्पदण्डधारादीनामित्यर्थः । एतदेवाह—ग्रसिष्णु प्रभविष्णु च । यथा रज्जुस्तज्ज्ञानदशायां सर्पादीन् ग्रसति अज्ञानदशायां च तानेव प्रसूते तद्वत् ज्ञातं ब्रह्म सर्वभूतानि ग्रसिष्णु ग्रसनशीलमज्ञातं च सर्वभूतानां प्रभविष्णु उत्पादनशीलम् ॥ १६ ॥ एवं ज्ञेयस्य तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह—**ज्योतिषामिति** । ज्योतिषां बाह्यानामादित्यादीनामान्तराणां च बुद्ध्यादीनामितरावभासकानामपि तज्ज्ञेयं ब्रह्म ज्योतिरवभासकं । चैतन्यज्योतिषो जडज्योतिरवभासकत्वोपपत्तेः । तथाच श्रुतयः 'येन सूर्यस्तपति तेजसेद्धः' 'तस्य भासा सर्वमिदं विभाति' इत्याद्याः । वक्ष्यति च 'यदादित्यगतं तेजः' इत्यादि । तमसोऽज्ञानात् भूतग्रासप्रसवहेतोः परं दूरस्थं तदुच्यते । ननु यथा चान्द्रस

४ मधुसूदनीव्याख्या ।

सर्वस्य यथा रज्ज्वादिः सर्पादेर्मायाकल्पितस्य । तस्माद्यज्जगतः स्थितिलयोत्पत्तिकारणं ब्रह्म तदेव क्षेत्रज्ञं प्रतिदेहमेकं ज्ञेयं न ततोऽन्यदित्यर्थः ॥ १६ ॥ ननु सर्वत्र विद्यमानमपि तन्नोपलभ्यते चेत्तर्हि जडमेव स्यात् न स्यात्स्वयंज्योतिषोऽपि तस्य रूपादिहीनत्वेनेन्द्रियाद्यग्राह्यत्वोपपत्तेरित्याह—तज्ज्ञेयं ब्रह्म ज्योतिषामवभासकानामादित्यादीनां बुद्ध्यादीनां च बाह्यानामान्तराणामपि ज्योतिरवभासकं चैतन्यज्योतिषो जडज्योतिरवभासकत्वोपपत्तेः 'येन सूर्यस्तपति तेजसेद्धः' 'तस्य भासा सर्वमिदं विभाति' इत्यादि श्रुतिभ्यश्च । वक्ष्यति च 'यदादित्यगतं तेज' इत्यादि । स्वयं जडत्वाभावेऽपि जडसंसृष्टं स्यादिति नेत्याह—**तमस इति** । तमसो जडवर्गात्परं अविद्यातत्कार्याभ्यामपारमार्थिकाभ्यामसंस्पृष्टं पारमार्थिकं तद् ब्रह्म सदसतोः संबन्धायोगात् । उच्यते 'अक्षरात्परतः परः'

५ भाष्योत्कर्षदीपिका ।

नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्याद्या । तेन प्रतिदेहं भिन्न आत्मेति सांख्यादिमतं श्रुतिस्मृतिविरुद्धं नादर्तव्यम् । कथं तर्हि देहभेदे भेदबुद्धिरित्याशंक्य कल्पनयेत्याह । भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं मिथ्याभूतभेदवत्प्रतीतं जलमात्रेषु चन्द्रवद्देहेष्वेव विभाव्यमानत्वात् । 'एकएव तु भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इतिश्रुतेः । एवं ज्ञेयस्य प्रत्यगात्मत्वेनास्तित्वमभिधाय परमेश्वरात्मनास्तित्वमाह । भूतभर्तृ च स्थितिकाले तज्ज्ञेयं । भूतानि बिभर्ति धारयति पालयति चेति तत्प्रलयकाले तदेव ग्रसिष्णु ग्रसनशीलं उत्पत्तिकाले प्रभविष्णु प्रभवनशीलं यथा कल्पितसर्पादीनां स्थितिकाले रज्ज्वादिरेव तान्बिभर्ति । बाधकाले च ग्रसिष्णुरुत्पत्तिकाले च प्रभविष्णुरित्यर्थः । तेन कार्यकारणत्वस्य वस्तुत्वाद्वैतमिति न शङ्कनीयम् ॥ १६ ॥ सर्वत्र विद्यमानं सन्नोपलभ्यते चेज्ज्ञेयं तर्हि तम इति भ्रमनिवृत्त्यर्थमाह—**ज्योतिषामिति** । ज्योतिषामादित्यादीनां बुद्ध्यादीनामपि तज्ज्ञेयं ज्योतिस्तेषामात्मचैतन्यज्योतिरिद्धदीप्तिमत्त्वात् । 'येन सूर्यस्तपति तेजसेद्धः', 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' ।

६ श्रीधरीव्याख्या ।

विभक्तं च भिन्नमिवावस्थितं च । समुद्राज्जातं फेनादि समुद्रादन्यन्न भवति तत्पूर्वोक्तं स्वरूपं च ज्ञेयम् । भूतानां भर्तृ च पोषकं स्थितिकाले, प्रलयकाले च ग्रसिष्णु ग्रसनशीलम्, सृष्टिकाले च प्रभविष्णु नानाकार्यात्मना प्रभवनशीलम् ॥ १६ ॥ किंच—**ज्योतिषामिति** । ज्योतिषां चन्द्रादित्यादीनामपि तज्ज्योतिः प्रकाशकं ततो 'येन सूर्यस्तपति तेजसेद्धः' 'न तत्र सूर्यो भाति न

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**इत्यादेः । तमसोऽज्ञानात्परमस्पृष्टमुच्यते । ज्ञानादेर्दुःसंपादनबुद्ध्या प्राप्तावसादस्योत्तम्भनार्थमाह ज्ञानममानित्वादि । ज्ञेयं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिनोक्तम् । ज्ञानगम्यं ज्ञेयमेव ज्ञातं सज्ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञानमानं तु ज्ञेयम् । तदेतत्त्रयमपि हृदि बुद्धौ सर्वस्य प्राणिजातस्य विष्ठितं विशेषेण स्थितम् । तत्रैव हि त्रयं विभाव्यते ॥ १७ ॥ यथोक्तार्थोपसंहारार्थोऽयं श्लोक आरभ्यते—इति क्षेत्र-**

२ आनन्दगिरिव्याख्या ।

ज्ञेयस्यातमस्त्वेऽपि तमःस्पृष्टत्वमाशङ्क्योक्तं—**तमस इति** । उत्तरार्धस्य तात्पर्यमाह—**ज्ञानादेरिति** । उत्तम्भनमुद्दीपनं प्रकटीकरणमिति यावत् । ज्ञानममानित्वादि करणव्युत्पत्त्येति शेषः । ज्ञानगम्यं ज्ञेयमिति पुनरुक्तिं शङ्कित्वोक्तं—**ज्ञेयमिति** । उक्तत्रयस्य बुद्धिस्थतया प्राकट्यं प्रकटयति—**तदेतदिति** । तत्रानुभवमनुकूलयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ज्योतिषोऽवभासकं तत्सजातीयं सौरं ज्योतिरिति ज्योतिःशास्त्रे प्रसिद्धम् । एवं सौरादिज्योतिषामप्यवभासकं किंचित्तत्सजातीयं ज्योतिरलौकिकं स्यादित्याशङ्क्याह—**ज्ञानमिति** । केवलज्ञप्तिमात्रशरीरं यज्ज्योतिर्नतु भौतिकं तदेव ज्ञेयं वस्तु आवृतत्वाज्ज्ञानेन प्राप्तुमिष्टतमम् । कुतस्तर्हि तज्ज्ञानमत आह—**ज्ञानगम्यमिति** । यतस्तज्ज्ञानेनामानित्वादिना ज्ञानसाधनेन गम्यं प्राप्यम् । किं तर्हि ग्रामान्तरवद्देशव्यवहितं वा बाल्ययौवनाद्यवस्थान्तरवत्कालव्यवहितं वा तत्प्राप्यमस्तीत्यतआह—**हृदि सर्वस्य विष्ठितमिति** । स्वात्मभूतमेव तदन्तर्दृष्टीनां सम्यक्प्रकाशत इत्यर्थः ॥ १७ ॥

४ मधुसूदनीव्याख्या ।

इत्यादिश्रुतिभिर्ब्रह्मवादिभिश्च । तदुक्तं 'निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा । आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते' 'आदित्यवर्णं तमसः परस्तात्' इत्यादिश्रुतेश्च । आदित्यवर्णमिति स्वभाने प्रकाशान्तरानपेक्षम् सर्वस्य प्रकाशकमित्यर्थः । यस्मात्तत्स्वयंज्योतिर्जडासंस्पृष्टं अतएव तज्ज्ञानं प्रमाणजन्यचेतोवृत्त्यभिव्यक्तसंविद्रूपम् अतएव तदेव ज्ञेयं ज्ञातुमर्हमज्ञातत्वाज्जडस्याज्ञातत्वाभावेन ज्ञातुमनर्हत्वात् । कथं तर्हि सर्वैर्न ज्ञायते तत्राह—ज्ञानगम्यं पूर्वोक्तेनामानित्वादिना तत्त्वज्ञानार्थदर्शनान्तेन साधनकलापेन ज्ञानहेतुतया ज्ञानशब्दितेन गम्यं प्राप्यं नतु तद्विनेत्यर्थः । ननु साधनेन गम्यं चेत्तत्किं देशान्तरव्यवहितं नेत्याह—हृदि सर्वस्य धिष्ठितं सर्वस्य प्राणिजातस्य हृदि बुद्धौ धिष्ठितं सर्वत्र सामान्येन स्थितमपि विशेषरूपेण तत्र स्थितमभिव्यक्तं जीवरूपेणान्तर्यामिरूपेण च सौरं तेज इवादर्शसूर्यकान्तादौ अव्यवहितमेव वस्तुतो भ्रान्त्या व्यवहितमिव सर्वभ्रमकारणाज्ञाननिवृत्त्या प्राप्यत इवेत्यर्थः ॥ १७ ॥ उक्तं क्षेत्रादिकमधिकारिणं फलं च वदन्नुपसंहरति—इति अनेन पूर्वोक्तेन

५ भाष्योत्कर्षदीपिका ।

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इत्यादिश्रुतिस्मृतिभ्यः ज्ञेयस्य ज्योतिःस्वरूपत्वेऽपि तमःस्पृष्टत्वभ्रमं वारयति । तमसो ज्ञानातपरमसंस्पृष्टमुच्यते । 'आदित्यवर्णं तमसः परस्तात्' इत्यादिश्रुतिभिः कथ्यत इत्यर्थः । किंच ज्ञायतेऽनेनेति ज्ञानममानित्वादि । ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिनोक्तं ज्ञेयमेव सत् ज्ञातं ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञायमानं तु ज्ञेयम् । अतो ज्ञेयपदेन ज्ञानगम्यत्वान्न पौनरुक्त्यम् । ज्ञानं ज्ञेयं ज्ञानगम्यमित्येतत्त्रयं सर्वस्य प्राणिजातस्य हृदि बुद्धौ विष्ठितं विशेषेण स्थितं । धिष्ठितमिति पाठस्त्वाचार्यैरनादृतत्वादपपाठः । दुःसंपादनबुद्ध्या प्राप्तावसादस्य ज्ञानादेः प्रकटीकरणार्थं ज्ञानादेः दुःसंपादनबुद्ध्या प्राप्तावसादस्यार्जुनस्याश्वासनार्थं वा ज्ञेयप्रवचनोत्तरं भगवतेदमुक्तं हृदि विष्ठितमिति । बुद्धावेव तेषामनुभूयमानत्वात् । ननु तदेवं वृत्तावभिव्यक्तं संविद्रूपं ज्ञानं रूपाद्याकारेण ज्ञेयं सर्वस्य प्राणिजातस्य हृदि बुद्धौ विष्ठितं सर्वत्र सामान्येन स्थितमपि विशेषरूपेण तत्र स्थितमभिव्यक्तजीवरूपेणान्तर्यामिरूपेण चेत्याचार्यैः कुतो न व्याख्यातमिति चेत्सुगमत्वात्स्वोक्तार्थे स्वरसाधिक्यादुक्तार्थस्य बहिरन्तश्च भूतानामित्यादावन्तर्भावाच्चेति गृहाण । अन्तर्भावप्रकारश्च बहिर्भूतेभ्यो बाह्यं रूपाद्याकारमन्तर्भूतानां हृदि अभिव्यक्तजीवरूपेणान्तर्यामिरूपेण च स्थितं ज्योतिषामपि तज्ज्योतिर्वृत्त्यभिव्यक्तसंविदादिरूपेण बुद्ध्या-

६ श्रीधरीव्याख्या ।

चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतेः । अतएव तमसोऽज्ञानात्परं तेनासंस्पृष्टमुच्यते । 'आदित्यवर्णं तमसः परस्तात्' इत्यादिश्रुतेः । ज्ञानं च तदेव बुद्धिवृत्तावभिव्यक्तं, तदेव रूपाद्याकारेण ज्ञेयं च ज्ञानेन गम्यं च 'अमानित्वमदम्भित्वम्' इत्यादिलक्षणेन पूर्वोक्तेन ज्ञानसाधनेन प्राप्यमित्यर्थः । ज्ञानगम्यं विशिनष्टि । सर्वस्य प्राणिमात्रस्य हृदि विष्ठितं विशेषेणाप्रच्युतस्वरूपेण नियन्तृतया स्थितम् । धिष्ठितमिति पाठेऽधिष्ठाय स्थितमित्यर्थः ॥ १७ ॥

१ नीलकण्ठः, २ श्रीधरः, ३ मधुसूदनः,

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**मिति । इत्येवं क्षेत्रं महाभूतादि धृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञेयं च 'ज्ञेयं यत्तद्' इत्यादि 'तमसः परमुच्यते' इत्येवमन्तमुक्तं समासतः संक्षेपतः । एतावान्सर्वो हि वेदार्थो गीतार्थश्चोपसंहृत्योक्तः । अस्मिन्सम्यग्दर्शने कोऽधिक्रियत इत्युच्यते । मद्भक्तो मयीश्वरे सर्वज्ञे परमगुरौ वासुदेवे समर्पितसर्वात्मभावो यत्पश्यति शृणोति स्पृशति वा सर्वमेव भगवान्वासुदेव इत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः स एतद्यथोक्तं सम्यग्दर्शनं विज्ञाय मद्भावाय मम भावो मद्भावः परमात्मभावस्तस्मै मद्भावायोपपद्यते मोक्षं गच्छति ॥ १८ ॥ तत्र सप्तमे ईश्वरस्य द्वे प्रकृती उपन्यस्ते परापरे क्षेत्रक्षेत्रज्ञ-**

२ आनन्दगिरिव्याख्या ।

**तत्रैवेति** ॥ १७ ॥ त्वमर्थशुद्ध्यर्थं सविकारं क्षेत्रं पदवाक्यार्थविवेकसाधनं चामानित्वादि तत्पदार्थं च शुद्धं तद्भावोक्त्यर्थमुक्त्वा तेषां फलमुपसंहरति—**यथोक्तेति** । पूर्वार्धं विभजते—**इत्येवमिति** । वक्तव्यान्तरे सति किमिति त्रितयमेव संक्षिप्योपसंहृतं तत्राह—**एतावानिति** । उत्तरार्धमाकाङ्क्षाद्वारावतारयति—**अस्मिन्निति** । ईश्वरे समर्पितसर्वात्मभावमेवाभिनयति—**यत्पश्यतीति** । विज्ञाय लब्ध्वेत्यर्थः ॥ १८ ॥ प्रकृतिमित्यादि वक्ष्यमाणमनन्तरपूर्वग्रन्थसंबन्धीत्याशङ्क्य व्यवहितेन संबन्धार्थं व्यवहितमनुवदति—**तत्रेति** । तयोश्च प्रकृत्योरुक्तं भूतकारण-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

उक्तमर्थजातमुपसंहरति—**इतीति** । क्षेत्रं महाभूतादिधृत्यन्तम् । ज्ञानं ज्ञानसाधनममानित्वादि तत्त्वज्ञानार्थदर्शनान्तम् । ज्ञेयमनादिमत्परमित्यादि धिष्ठितमित्यन्तम् । श्रुतिभ्यः स्मृतिभ्यश्च समासतः संक्षेपत उक्तम् । मद्भक्त एतत्त्रयं विज्ञाय मद्भावाय ब्रह्मभावायोपपद्यते युक्तो भवति । भक्त्यैव प्राप्यं ब्रह्म यत्प्राप्य ब्रह्मैव भवति । तथाच श्रुतिः 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति । 'ब्रह्म वेद ब्रह्मैव भवति' इति च ॥ १८ ॥ एवं क्षेत्रं शरीराख्यमव्यक्तमुक्तं तत्प्रकाराश्च महदाद्यास्त्रयोविंशतिस्तद्विकारा इच्छादयो

४ मधुसूदनीव्याख्या ।

प्रकारेण क्षेत्रं महाभूतादिधृत्यन्तं, तथा ज्ञानं अमानित्वादितत्त्वज्ञानार्थदर्शनान्तं, ज्ञेयं च अनादिमत्परं ब्रह्म धिष्ठितमित्यन्तं, श्रुतिभ्यः स्मृतिभ्यश्चाकृष्य त्रयमपि मन्दबुद्ध्यनुग्रहाय मया संक्षेपेणोक्तम् । एतावानेव हि सर्वो वेदार्थो गीतार्थश्च । अस्मिंश्च पूर्वोध्यायोक्तलक्षणो मद्भक्त एवाधिकारीत्याह—मद्भक्तः मयि भगवति वासुदेवे परमगुरौ समर्पितसर्वात्मभावो मदेकशरणः स एतद्यथोक्तं क्षेत्रं ज्ञानं ज्ञेयं च विज्ञाय विवेकेन विदित्वा मद्भावाय सर्वानर्थशून्यपरमानन्दभावाय मोक्षायोपपद्यते मोक्षं प्राप्तुं योग्यो भवति । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्रुतेः । तस्मात्सर्वदा मदेकशरणः सन्नात्मज्ञानसाधनान्येव परमपुरुषार्थलिप्सुरनुवर्तेत तुच्छविषयभोगस्पृहां हित्वेत्यभिप्रायः ॥ १८ ॥ तदनेन ग्रन्थेन तत्क्षेत्रं यच्च यादृक्चेत्येतद्व्याख्यातम् । इदानीं यद्विकारि यतश्च यत् स च यो यत्प्रभावश्चेत्येतद्व्याख्यातव्यम् । तत्र

५ भाष्योत्कर्षदीपिका ।

दीनां प्रकाशकमित्येवंरीत्या बोध्यः ॥ १७ ॥ प्रतिज्ञातार्थमुपपाद्योपसंहरति—**इतीति** । इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं, तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनावसानं, ज्ञेयं च ज्ञेयं यत्तदित्यादि तमसः परमुच्यत इत्येवमन्तमुक्तं । हृदि सर्वस्य विष्ठितमित्यन्तमित्याद्युनिकानामुक्तिस्तु नादर्तव्या । ज्ञानादेर्ज्ञेयप्रवचनपरत्वेऽस्वरसस्योक्तत्वात् । वसिष्ठादिभिर्यद्विस्तरेण गीतं तत्समासतः संक्षेपतो मया प्रतिपादितं एतावानेव सर्ववेदार्थो गीतार्थश्चातः संक्षिप्य भगवतोपसंहृत्योक्तः । यथोक्तसम्यग्दर्शने कोऽधिकारीत्यत आह । मयि सर्वेश्वरे सर्वज्ञे परमगुरौ भगवति वासुदेवे यच्छृणोति स्पृशति पश्यति आस्वादयति जिघ्रति वा सर्वमेव श्रीभगवान्वासुदेव इत्येवं ग्रहाविष्टबुद्धितया समर्पितसर्वात्मभावो मद्भक्तः एतादृशः सन्नेतद्यथोक्तं क्षेत्रज्ञानज्ञेयानां याथात्म्यं विज्ञाय मद्भावाय परमात्मभावाय मोक्षायोपपद्यते योग्यो भवतीत्यर्थः ॥ १८ ॥ सप्तमे ईश्वरस्य द्वे प्रकृती परापरे क्षेत्रक्षेत्रज्ञलक्षणे उपन्यस्य

६ श्रीधरीव्याख्या ।

उक्तं क्षेत्रादिकमधिकारिफलसहितमुपसंहरति—**इतीति** । इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं तथा ज्ञानं च अमानित्वादितत्त्वज्ञानार्थ-

७ अभिनवगुप्ताचार्यव्याख्या ।

त्तया । एतत्क्षेत्रं ज्ञानज्ञेयात्मकं त्रयं यो वेत्ति स एव मद्भक्तः सच मद्भावमेति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ एतल्लक्षणं कृत्वा परीक्षा क्रियते—प्रकृतिमित्यादिना । कार्यकरणप्रकृतिरप्यनादिः कारणान्तराभावात् । विकाराः पटादयः । प्रकृति-

१ श्रीधरः, मधुसूदनः, नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम् ।

लक्षणे । एतद्योनीनि भूतानीति चोक्तम् । क्षेत्रक्षेत्रज्ञप्रकृतिद्वययोनित्वं कथं भूतानामित्ययमर्थोऽधुनोच्यते—प्रकृतिमिति । प्रकृतिं पुरुषं चैवेश्वरस्य प्रकृती तौ प्रकृतिपुरुषावुभावप्यनादी विद्धि । न विद्यत आदिर्ययोस्तावनादी । नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम् । प्रकृतिद्वयवत्त्वमेव हीश्वरस्येश्वरत्वम् । याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थितिप्रलयहेतुस्ते द्वे अनादी सत्यौ संसारस्य कारणम् । न आदी अनादी इति तत्पुरुषसमासं केचिद्वर्णयन्ति । तेन हि किलेश्वरस्य कारणत्वं सिध्यति । यदि पुनः प्रकृतिपुरुषावेव नित्यौ स्यातां तत्कृतमेव जगन्नेश्वरस्य जगतः कर्तृत्वम् । तदसत्, प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात् । संसारस्य

२ आनन्दगिरिव्याख्या ।

त्वमित्याह—एतदिति । भूतानामिव प्रकृत्योरपि प्रकृत्यन्तरापेक्षयानवस्थानान्न भूतयोनितेति शङ्कते—क्षेत्रेति । तत्राकृताभ्यागमादिवारणाय बन्धस्य निदानज्ञानार्थमात्मनो विक्रियावत्त्वादिदोषनिरासार्थं च प्रकृतिपुरुषयोरनादित्वं क्षेत्रत्वेनोक्तानां प्रकृतिंप्रति विकारभावं च दर्शयति—अयमर्थ इति । स च यो यत्स्वभावश्चेत्युद्दिष्टं व्याचष्टे—प्रकृतिमिति । ईश्वरस्यापरा प्रकृतिरत्र प्रकृतिशब्देनोक्ता परा तु प्रकृतिर्जीवाख्या पुरुषशब्देन विवक्षितेति व्याकरोति—ईश्वस्येति । तयोरनादित्वं व्युत्पादयति—नेत्यादिना । तत्र युक्तिमाह—नित्यत्वादीश्वरस्येति । ईश्वरस्योक्तप्रकृतिद्वयवत्त्वं कथमित्याशङ्क्याह—प्रकृतीति । तस्य जगज्जन्मादौ स्वातन्त्र्यमेवेश्वरत्वं न प्रकृतिद्वयवत्त्वमित्याशङ्क्याह—याभ्यामिति । प्रकृत्योरनादित्वं कुत्रोपयुक्तमित्याशङ्क्याह—ते इति । मतान्तरमाह—नेत्यादिना । तयोर्मूलकारणत्वाभावे कस्य तदेष्टव्यमित्याशङ्क्याह—तेन हीति । प्रकृत्योरेव मूलकारणत्वे श्रुतिस्मृतिसिद्धमीश्वरस्य तथात्वं न स्यादित्याह—यदीति । प्रकृतिद्वयस्य कार्यत्वपक्षं प्रत्याह—तदसदिति । किंच प्रकृति-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

ज्ञानाज्ञानशब्दिता अमानित्वमानित्वादयः पुरुषश्च उक्तः । इदानीं क्षेत्रक्षेत्रज्ञयोर्मध्ये यस्माद्यज्जायते तच्च क्षेत्रज्ञस्य प्रभावश्चेति द्वयं वक्तव्यं तत्राद्यं विवृणोति त्रिभिः—प्रकृतिमिति । सप्तमाध्यायेऽष्टधा या प्रकृतिरपरा उक्ता सात्र

४ मधुसूदनीव्याख्या ।

प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन यद्विकारि यतश्च यदिति प्रकृतिमित्यादि द्वाभ्यां प्रपञ्च्यते । स च यो यत्प्रभावश्चेति तु पुरुष इत्यादिद्वाभ्यामिति विवेकः । तत्र सप्तमे ईश्वरस्य द्वे प्रकृती परापरे क्षेत्रक्षेत्रज्ञलक्षणे उपन्यस्य एतद्योनीनि भूतानीत्युक्तं, तत्रापरा प्रकृतिः क्षेत्रलक्षणा परा तु जीवलक्षणेति तयोरनादित्वमुक्त्वा तदुभययोनित्वं भूतानामुच्यते । प्रकृतिमिति प्रकृतिर्मायाख्या त्रिगुणात्मिका पारमेश्वरी शक्तिः क्षेत्रलक्षणा या प्रागपरा प्रकृतिरित्युक्ता । या तु परा प्रकृतिर्जीवाख्या प्रागुक्ता स इह पुरुष इत्युक्त इति न पूर्वापरविरोधः । प्रकृतिं पुरुषं च उभावपि अनादी एव विद्धि । न विद्यत आदिः कारणं ययोस्तौ । तथा

५ भाष्योत्कर्षदीपिका ।

एतद्योनीनि भूतानीत्युक्तं तत्र प्रकृतिद्वयनिरूपणार्थमारब्धेऽस्मिन्नध्याये इदं शरीरमिति द्वाभ्यां क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयस्वरूपं निर्दिश्य तत्क्षेत्रं यच्च यादृक्चेत्यादिना तत्प्रतिपादितं प्रतिज्ञातं, ततो महाभूतानीत्यादिना यच्च यादृक्चेति प्रतिपाद्य सच यो यत्प्रभावश्चेति पुरुष इति द्वाभ्यां प्रतिपादयितुमादौ एतद्योनीनि भूतानीति निरूपणाय प्रतिज्ञातं यद्विकारि यतश्च यदिति प्रतिपादयति—प्रकृतिमिति द्वाभ्याम् । प्रकृतिरीश्वरस्य हि विकारकारणशक्तिस्त्रिगुणात्मिका माया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं'। 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति श्रुतिस्मृतिभ्यां पुरुषः क्षेत्रज्ञलक्षणा परा प्रकृतिः तौ प्रकृतिपुरुषावुभावपि अनादी एव नतु सादी इति विद्धि । नैकस्यापि सादित्वमिति द्रढयितुमुभावपीत्युक्तं । न विद्यते आदिः कारणं ययोस्तावनादी । ईश्वरस्य नित्यत्वात्तत्प्रकृत्योरपि तथात्वेन भवितुं युक्तम् । संसारोत्पादनोपयुक्तमनादित्वं ययोस्ताभ्यां प्रकृतिभ्यामीश्वरस्य जगदुत्पत्तिस्थितिप्रलयहेतुत्वसंपत्त्या तद्द्वयवत्त्वमेव तस्येश्वरत्वम् । ननु प्रकृतिपुरुषयोरनादित्वे तयोरेव जगत्कर्तृत्वं नेश्वरस्य तयोरादिमत्त्वे त्वीश्वरस्य तत्कर्तृत्वं सिध्यतीत्यतो न अनादीति तत्पुरुषसमासो वक्तव्य इतिचेन्न । प्रकृतिपुरुषयोरुत्पत्तेः प्रागीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात् । संसारस्य निर्निमित्तत्वे मुक्तानामपि संसारापत्तेरनिषेधादनिर्मोक्षप्रसङ्गेन शास्त्रानर्थक्यप्रसङ्गात् । तदुदयात्पूर्वं बन्धस्याभावेन तन्निवृत्त्यात्मनो मोक्षस्याभावात् बन्धमोक्षाभावप्रसङ्गाच्च । प्रकृतिपुरुषयोरनादित्वे विकाराणां गुणानां च प्रकृतिकार्यत्वादात्म-

६ श्रीधरीव्याख्या ।

दर्शनान्तम् । ज्ञेयं च 'अनादिमत्परं ब्रह्म' इत्यादि 'विष्ठितम्' इत्यन्तम् । वसिष्ठादिभिर्विस्तरेणोक्तं सर्वमपि मया संक्षेपेणोक्तम् । एतच्च पूर्वाध्यायोक्तलक्षणो मद्भक्तो विज्ञाय मद्भावाय ब्रह्मत्वायोपपद्यते योग्यो भवति ॥ १८ ॥ तदेवं 'तत्क्षेत्रं यच्च यादृक्' इत्येतावत्प्रपञ्चितम् । इदानीं तु 'यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च' इत्येतत्पूर्वं प्रतिज्ञातमेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति—प्रकृतिमिति पञ्चभिः । तत्र प्रकृतिपुरुषयोरादिमत्त्वे तयोरपि प्रकृत्यन्तरेण भाव्यमित्यनवस्थापत्तिः स्यात् । अतस्तावु-

कार्यकरणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

१ श्रीमच्छांकरभाष्यम् ।

**निर्निमित्तत्वेऽनिर्मोक्षत्वप्रसङ्गाच्छास्त्रानर्थक्यप्रसङ्गाद्बन्धमोक्षाभावप्रसङ्गाच्च । नित्यत्वे पुनरीश्वरस्य प्रकृत्योः सर्वमेतदुपपन्नं भवेत् । कथं, विकारांश्च गुणांश्चैव वक्ष्यमाणान्विकारान्बुद्ध्यादिदेहेन्द्रियान्तान्गुणांश्च सुखदुःखमोहप्रत्ययाकारपरिणतान्विद्धि जानीहि प्रकृतिसंभवान्प्रकृतिरीश्वरस्य विकारकारणशक्तिस्त्रिगुणात्मिका माया सा संभवो येषां विकाराणां गुणानां च तान्विकारान्गुणांश्च विद्धि प्रकृतिसंभवान्प्रकृतिपरिणामान् ॥१९॥ के पुनस्ते विकारा गुणाश्च प्रकृतिसंभवाः—कार्येति । कार्यकर-**

२ आनन्दगिरिव्याख्या ।

द्वयमनपेक्ष्येश्वरस्य संसारहेतुत्वे स्वातन्त्र्यान्मुक्तानामपि ततः संसाराप्तेरनिषेधान्मोक्षशास्त्राप्रामाण्यान्न तस्यैव संसारहेतुतेत्याह—**संसारस्येति** । निर्निमित्तत्वं प्रकृतिद्वयापेक्षामृते परस्यैव निमित्तत्वमिति यावत् । किंच कार्यत्वे प्रकृत्योस्तदुदयात्पूर्वं बन्धाभावे तद्विश्लेषात्मनो मोक्षस्याभावात्कदाचिदुभयाभावे पुनस्तदप्रसङ्गान्न प्रकृतिद्वयस्य कार्यतेत्याह—**बन्धेति** । प्रकृत्योर्मूलकारणत्वे नानुपपत्तिरित्याह—**नित्यत्व इति** । स्वपक्षे दोषाभावं प्रश्नपूर्वकं प्रपञ्चयति—**कथमित्यादिना** । संभवः सत्ताप्रापको हेतुः प्रकृतेरनादित्वे विकाराणां गुणानां च तत्कार्यत्वादात्मनो निर्विकारत्वं निर्गुणत्वं च सिध्यतीति भावः ॥ १९ ॥ विकाराणां गुणानां प्रकृतेश्च स्वरूपमाकाङ्क्षाद्वारा निर्णेतुमुत्तरश्लोकपूर्वार्धं पातयति—**के पुनरिति** । पुरुषस्यानादित्वकृतं बन्धहेतुत्वमाह—**पुरुष इति** । पूर्वार्धं व्याचष्टे—**कार्यमित्या-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रकृतिः । या तु जीवभूता परा प्रकृतिरुक्ता सात्र पुरुषशब्देनोच्यते । एतौ हि संपृक्तौ संसारं जनयतः । वियोगश्च तयोर्मोक्षः । तत्र तावुभावप्यनादी विद्धि । तयोरादिमत्त्वे संसारस्याकस्मिकत्वापातात् कृतहानाकृताभ्यागमप्रसङ्गश्चेत्यन्यत्र विस्तरः । विकारान् इच्छादीन् गुणान् बुद्धीन्द्रियादींश्च प्रकृतिसंभवान् विद्धि ॥ १९ ॥ उभयोरपि संसारंप्रति कारणत्वे द्वारमाह—**कार्येति** । कार्यं शरीरं तदारम्भकाणि भूतानि विषयाश्च । कारणं त्रयोदशेन्द्रियाणि तदाश्रिताश्च सुखदुःखमोहात्मका गुणाश्च । करणेतिपाठेऽपि सएवार्थः । एतयोः कार्यकारणयोः कर्तृत्वे निमित्ते

४ मधुसूदनीव्याख्या ।

प्रकृतेरनादित्वं सर्वजगत्कारणत्वात्, तस्या अपि कारणसापेक्षत्वेऽनवस्थाप्रसङ्गात्, पुरुषस्यानादित्वं तद्धर्माधर्मप्रयुक्तत्वात्, कृत्स्नस्य जगतः जातस्य हर्षशोकभयसंप्रतिपत्तेः अन्यथा कृतहान्यकृताभ्यागमप्रसङ्गात् । यतः प्रकृतिरनादिः अतस्तस्या भूतयोनित्वमुक्तं प्रागुपपद्यत इत्याह—विकारांश्च षोडश पञ्चमहाभूतान्येकादशेन्द्रियाणि च, गुणांश्च सत्त्वरजस्तमोरूपान् सुखदुःखमोहान् प्रकृतिसंभवानेव प्रकृतिकारणकानेव विद्धि जानीहि ॥ १९ ॥ विकाराणां प्रकृतिसंभवत्वं विवेचयन् पुरुषस्य संसारहेतुत्वं दर्शयति—कार्यं शरीरं करणानीन्द्रियाणि तत्स्थानि त्रयोदश देहारम्भकाणि भूतानि । विषयाश्चेह कार्यग्रहणेन

५ भाष्योत्कर्षदीपिका ।

नो निर्विकारत्वं निर्गुणत्वं च सिध्यति । इदमेवाभिप्रेत्याह । विकारान्वक्ष्यमाणान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणांश्चैव सुखदुःखमोहप्रत्ययाकारपरिणतान् सत्त्वरजस्तमःसंज्ञान् प्रकृतिसंभवान् त्रिगुणात्मिकमायापरिणामान् विद्धि जानीहि । पुरुषं च वित् हि विद्धीति पुरुषादिशब्दावृत्त्या उत्तरार्धस्थविद्धीत्यस्य संबन्धेन योज्यम् । तेन नित्यज्ञानस्वरूपस्य विवक्षितत्वात्पुरुषशब्दस्य कार्यकरणसंघाते प्रसिद्धेस्तस्य च सादित्वात्कथमनादित्वमिति शङ्का न प्रभवतीति क्लिष्टकल्पना तु पूर्वं महता प्रयत्नेन संघातात्पुरुषवैलक्षण्यप्रतिपादनादस्याः शङ्काया एवाभावात्सर्वज्ञैराचार्यैः कथं कर्तव्येति तदकरणात्तेषां न्यूनता न शङ्कनीया ॥ १९ ॥ के पुनर्विकारा गुणाश्च प्रकृतिसंभवा इत्याकाङ्क्षायां तान्दर्शयन् प्रकृतेः संसारहेतुत्वं दर्शयति—**कार्येति** । कार्यं शरीरम् । कार्यग्रहणेन शरीरारम्भकाणि भूतानि विषयाश्च गृह्यन्ते । करणानि देहस्थानि । ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनो बुद्धिरहंकारश्चेति त्रयोदश । करणग्रहणेन करणाश्रितत्वात्सुखदुःखमोहात्मका गुणा गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वे उत्पादकत्वे प्रकृतिरारम्भकत्वेन हेतुः कारणमुच्यते । एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिरुक्ता । कार्यकारणकर्तृत्वे इति पाठेऽप्ययमेवार्थः ।

६ श्रीधरीव्याख्या ।

भावनादी विद्धि । अनादेरीश्वरस्य शक्तित्वात्प्रकृतिरनादिः, पुरुषोऽपि तदंशत्वादनादिरेव, अत्र च परमेश्वरस्य तच्छक्तीनां चानादित्वं नित्यत्वं च श्रीमच्छंकरभगवद्भाष्यकृद्भिरतिप्रबन्धेनोपपादितमिति ग्रन्थबाहुल्यान्नास्माभिः प्रतन्यते । विकारांश्च देहेन्द्रियादीन्, गुणांश्च गुणपरिणामान्सुखदुःखमोहादीन्प्रकृतेः संभवान्संभूतान्विद्धि ॥ १९ ॥ विकाराणां प्रकृतिसंभवत्वं दर्शयन्पुरुषस्य संसारहेतुत्वं दर्शयति—**कार्यकारणेति** । कार्यं शरीरम्, कारणानि सुखदुःखसाधनानीन्द्रियाणि, तेषां कर्तृत्वे तदाकारपरिणामे प्रकृतिर्हेतुरु-

१ 'कारण०' इति पाठः.

१ श्रीमच्छांकरभाष्यम् ।

**णकर्तृत्वे कार्यं शरीरं करणानि तत्स्थानि त्रयोदश । देहस्यारम्भकाणि भूतानि विषयाश्च प्रकृतिसंभवा विकाराः पूर्वोक्ता इह कार्यग्रहणेन गृह्यन्ते । गुणाश्च प्रकृतिसंभवाः सुखदुःखमोहात्मकाः करणाश्रयत्वात्करणग्रहणेन गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वमुत्पादकत्वं यत्तत्कार्यकरणकर्तृत्वं तस्मिन्कार्यकरणकर्तृत्वे हेतुः कारणमारम्भकत्वेन प्रकृतिरुच्यते । एवं कार्यकरणकर्तृत्वेन संसारस्य करणं प्रकृतिः कार्यकारणकर्तृत्व इत्यस्मिन्नपि पाठे कार्यं यद्यस्य विपरिणामस्तत्तस्य कार्यं विकारो विकारि कारणं तयोर्विकारविकारिणोः कार्यकारणयोः कर्तृत्व इति । अथवा षोडश विकाराः कार्यं, सप्त प्रकृतिविकृतयः कारणं, तान्येव कार्यकारणान्युच्यन्ते । तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यत आरम्भकत्वेनैव । पुरुषश्च संसारस्य कारणं, यथा स्यात्तदुच्यते । पुरुषो जीवः क्षेत्रज्ञो भोक्तेति पर्यायः सुखदुःखानां भोग्यानां भोक्तृत्व उपलब्धृत्वे हेतुरुच्यते । कथं पुनरनेन कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च प्रकृतिपुरुषयोः संसारकारणत्वमुच्यत इति । अत्रोच्यते कार्यकरणसुखदुःखरूपेण**

२ आनन्दगिरिव्याख्या ।

**दिना** । ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनो बुद्धिरहंकारश्चेति त्रयोदश करणानि । तथापि भूतानां विषयाणां च ग्रहणात्कथं तेषां प्रकृतिकार्यतेत्याशङ्क्याह—**देहेति** । तथापि गुणानामिहाग्रहणान्न प्रकृतिकार्यत्वं तत्राह—**गुणाश्चेति** । उक्तरीत्या निष्पन्नमर्थमाह—**एवमिति** । पाठान्तरमनूद्य व्याख्यापूर्वकमर्थाभेदमाह—**कार्येत्यादिना** । व्याख्यान्तरमाह—**अथवेति** । एकादशेन्द्रियाणि पञ्च विषया इति षोडशसंख्याकविकारोऽत्र कार्यशब्दार्थः, महानहंकारो भूततन्मात्राणीति प्रकृतिविकृतयः सप्त कारणं, तेषामारम्भकत्वेन कर्तृत्वेन हेतुराश्रयो मूलप्रकृतिरित्यर्थः । उत्तरार्धस्य तात्पर्यमाह—**पुरुषश्चेति** । तस्य परमात्मत्वं व्यवच्छिनत्ति—**जीव इति** । तस्य प्राणधारणनिमित्तस्य तदर्थं चेतनत्वमाह—**क्षेत्रज्ञ इति** । तस्यानौपाधिकत्वं वारयति—**भोक्तेति** । तयोः संसारकारणत्वमुपपादयितुं शङ्कते—**कथमिति** । अन्वयव्यतिरेकाभ्यां तयोस्तथात्वमित्याह—**अत्रेति** । तत्र व्यतिरेकं दर्शयति—**कार्येति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सति कर्तृत्वेनेत्यर्थः । हेतुः संसारस्य कारणं प्रकृतिर्भवति । तथा पुरुषः सुखदुःखानां भोक्तृत्वेन संसारस्य हेतुरिति । यदि हि कार्यकारणसुखदुःखस्वरूपहेतुफलात्मना प्रकृतिर्न परिणमेत तदा पुरुषः किमुपलभेत । अनुपलब्ध्वा वा कथं संसारी स्यात् । अनुपलब्धृका वा प्रकृतिः कुत्रोपयुज्येत । तस्मादुपलभ्योपलब्धृसंयोगः संसारकारणमिति यथाभाष्यं व्याख्यातम् । यद्वा पुरुषस्य कार्यत्वे कारणत्वे कर्तृत्वे च प्रकृतिरेव पुरुषतादात्म्यं प्राप्ता हेतुर्भवति । वह्नितादात्म्यं प्राप्तं लोहं वह्नेश्चतुष्कोणत्वादाविव हेतुर्भवति, तथा प्रकृतेः सुखदुःखभोक्तृत्वे स्वच्छायाप्रदानेन

४ मधुसूदनीव्याख्या ।

गृह्यन्ते । गुणाश्च सुखदुःखमोहात्मकाः करणाश्रयत्वात्करणग्रहणेन गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वे तदाकारपरिणामे हेतुः कारणं प्रकृतिरुच्यते महर्षिभिः । कार्यकारणेति दीर्घपाठेपि स एवार्थः । एवं प्रकृतेः संसारकारणत्वं व्याख्याय पुरुषस्यापि

५ भाष्योत्कर्षदीपिका ।

यद्वा एकादशेन्द्रियाणि पञ्चविषयाः षोडशविकाराः कार्यं महानहंकारो भूततन्मात्राणि पञ्चेति सप्तप्रकृतिविकृतयः कारणं तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते इत्यर्थः । एवमपरप्रकृतेः संसारकारणत्वं प्रदर्श्य परप्रकृतेस्तत्कारणत्वं दर्शयति । पुरुषः जीवः क्षेत्रज्ञः सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते । तथाच कार्यकारणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य च चेतनस्य तदुपलब्धृत्वेऽसति संसारो न संभवतीत्यतः प्रकृतिपुरुषयोः कार्यकारणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमिति । संसारश्च सुखदुःखभोगः पुरुषस्य च सुखदुःखानां भोक्तृत्वं संसारित्वम् । अन्ये तु यथाभाष्यं व्याख्यातमित्युक्त्वा वर्णयन्ति । यद्वा पुरुषस्य कार्यत्वे कारणत्वे कर्तृत्वे च प्रकृतिरेव पुरुषतादात्म्यं प्राप्ता हेतुर्भवति । तथा प्रकृतेः सुखदुःखभोक्तृत्वे स्वच्छायाप्रदाने पुरुषः कारणं कार्यत्वादयः प्राकृतदेहेन्द्रियबुद्धिधर्माः सन्तश्चिदात्मन्यारोप्यन्ते गौरोहममुष्य पुत्रोऽहं काणोऽहं खञ्जोऽहं करोम्यहमकार्षमहमिति तथा चिच्छायापन्ना बुद्धिः चेतयाम्यहं सुखदुःखादीनुपलभे इति मन्यते । सोयं प्रकृतिपुरुषयोरन्योन्यधर्माध्यासः संसारस्य कारणमित्युपपादितं भवति । सांख्याभिमतं पुरुषस्य भोक्तृत्वमपि निरस्तं भवति । अन्यथा प्रकृतिः कर्त्री पुरुषो भोक्तेति कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यमापद्येत । नच भोक्तुर्निर्विकारित्वमपि वक्तुं शक्यमिति । अत्रे-

६ श्रीधरीव्याख्या ।

च्यते कपिलादिभिः । पुरुषो जीवस्तत्कृतसुखदुःखानां भोक्तृत्वे हेतुरुच्यते । अयं भावः—यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं न संभवति, तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न संभवति, तथापि कर्तृत्वं नाम क्रियानिर्वर्तकत्वम् तच्चाचेतनस्यापि चेतनाद्दृष्टव-

---

१ नीलकण्ठः.

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य चेतनस्यासति तदुपलब्धृत्वे कुतः संसारः स्यात् । यदा पुनः कार्यकरणसुखदुःखरूपेण हेतुफलात्मना परिणतया प्रकृत्या भोग्यया पुरुषस्य तद्विपरीतस्य भोक्तृत्वेनाविद्यारूपः संयोगः स्यात्तदा संसारः स्यादिति । अतो यत्प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमुक्तं तद्युक्तमुक्तम् । कः पुनरयं संसारो नाम, सुखदुःखसंभोगः संसारः पुरुषस्य च सुखदुःखानां संभोक्तृत्वं संसारित्वमिति ॥ २० ॥ यत्पुरुषस्य सुखदुःखानां भोक्तृत्वं संसारित्वमित्युक्तं तस्य तत्किंनिमित्तमित्युच्यते—पुरुष इति । पुरुषो भोक्ता प्रकृ-**

२ आनन्दगिरिव्याख्या ।

नहि नित्यमुक्तस्यात्मनः स्वतः संसारोऽस्तीत्यर्थः । इदानीमन्वयमाह—**यदेति** । अन्वयादिफलमुपसंहरति—**अत इति** । आत्मनोऽविक्रियस्य संसरणं नोचितमित्याक्षिपति—**कः पुनरिति** । सुखदुःखान्यतरसाक्षात्कारो भोगः स चाविक्रियस्यैव द्रष्टुः संसारस्तथाविधभोक्तृत्वमस्य संसारित्वमित्युत्तरमाह—**सुखेति** । श्लोकव्याख्यासमाप्तावितिशब्दः ॥ २० ॥ श्लोकान्तरं प्रश्नोत्तरत्वेनावतारयति—**यदिति** । निमित्तं वक्तुमादौ संसारित्वमस्याविद्यैक्याध्यासादित्याह—**पुरुष इति** । यस्मात्प्रकृतिमात्मत्वेन गतस्तस्माद्भुङ्क्त इति योजना । गुणविषयं भोगमभिनयति—**सुखीति** । अवि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पुरुषः कारणम् वह्निरिव लोहस्य स्वच्छायाप्रदानेन दग्धृत्वे । तथाहि कार्यत्वादयः प्राकृतदेहेन्द्रियबुद्धिधर्माः सन्तश्चिदात्मन्यारोप्यन्ते गौरोऽहममुष्यपुत्रोऽहं काणोऽहं खञ्जोऽहं करोम्यहमकार्षमहमिति । तथा चिच्छायापन्ना बुद्धिश्चेतयाम्यहं सुखदुःखादीनुपलभे इति मन्यते । सोऽयं प्रकृतिपुरुषयोरन्योन्यधर्माध्यासः संसारस्य कारणमित्युपपादितं भवति । सांख्याभिमतं पुरुषस्य भोक्तृत्वमपि निरस्तं भवति । अन्यथा प्रकृतिः कर्त्री पुरुषो भोक्तेति कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यमापद्येत । नच भोक्तुः पुरुषस्य निर्विकारत्वमपि वक्तुं शक्यमित्यन्यत्र विस्तरः । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इति त्वप्रत्ययस्य पूर्वाभ्यामपि संबन्धे कार्यत्वं कारणत्वं कर्तृत्वं चेति विग्रहः द्वन्द्वैकवद्भावश्च 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' इत्यादिवत् ॥ २० ॥ ननु यथा बौद्धं कर्तृत्वं पुंस्यारोप्यते एवं पौंस्नं भोक्तृत्वं बुद्धावस्त्वित्येतं भ्रमं वारयति—**पुरुष इति** । हि प्रसिद्धम् । प्रकृतिस्थः

४ मधुसूदनीव्याख्या ।

यादृशं तत्तदाह—पुरुषः क्षेत्रज्ञः परा प्रकृतिरिति प्राग्व्याख्यातः स सुखदुःखानां सुखदुःखमोहानां भोग्यानां सर्वेषामपि भोक्तृत्वे वृत्त्युपरक्तोपलम्भे हेतुरुच्यते ॥ २० ॥ यत्पुरुषस्य सुखदुःखभोक्तृत्वं संसारित्वमित्युक्तं तस्य किं निमित्तमित्युच्यते—

५ भाष्योत्कर्षदीपिका ।

दमवधेयम् । यथा मूलं व्याख्यानकर्तॄणां सर्वेज्ञानां भाष्यकृतां व्याख्याने सांख्यमतस्येश्वरानधिष्ठितं जडं प्रधानं कर्तृ चेतनश्च भोक्तेत्येवंरूपस्य नास्ति प्रवेशः प्रकृतिरीश्वरस्य हि विकारकारणशक्तिस्त्रिगुणात्मिका माया पुरुषः जीवः क्षेत्रज्ञ इत्येवं तैरुक्तत्वात् । उत्तरश्लोके पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां स्थित इत्यादिवक्ष्यमाणत्वाच्च । तथाचाविद्यैक्याध्यासादात्मनो भोक्तृत्वेन संसारित्वमिति वस्तुतो निर्विकारत्वं दुर्निवारम् । यद्यपि प्रकृतिस्थस्य कर्तृत्वभोक्तृत्वे तथापि कर्तृत्वे उपाधिप्राधान्यात्प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वे तूपहितस्य प्राधान्याज्जीवस्य भोक्तृत्वमतो न वैयधिकरण्यदोषोऽपीत्यादिसर्वं भाष्यादेव लभ्यत इत्यतोऽध्याहारेण क्लिष्टकल्पनया च भाष्यातिरिक्तव्याख्यानप्रदर्शनं नोचितमिति । एतेन कार्यं यज्ञब्रह्महत्यादि कारणं पुरोडाशखड्गादि कर्तृत्वं साधनप्रयोक्तृत्वं तच्च तच्च तच्चेति द्वन्द्वे एकवद्भावः । हेतुः प्रकृतिरुच्यते एवं चेत्प्रकृतेरेव स्वर्गनरकादि भवेन्न जीवस्य । तथाच बन्धाभावान्न मोक्षे जीवानां प्रयत्नः स्यादित्यत आह । पुरुषइत्यादिकाः पूर्वोत्तरप्रकरणानुरोधविनिर्मुक्ता भाष्यबहिर्भूताः कल्पना निराकृता वेदितव्याः ॥ २० ॥ पुरुषस्य सुखदुःखभोक्तृत्वलक्षणसंसारित्वं किंनिमित्तमितिचेत् अविद्यैक्याध्यासनिमित्तमित्याह—**पुरुष इति** । हि यस्मात्पुरुषो भोक्ता प्रकृतावविद्यालक्षणायां स्थितस्तदैक्याध्यासं प्राप्तस्तस्मात्सुखी दुःखी मूढः

६ श्रीधरीव्याख्या ।

श्चाचैतन्याधिष्ठितत्वात्संभवति । यथा वह्नेरूर्ध्वज्वलनम्, वायोस्तिर्यग्गमनम्, वत्सादृष्टवशात्स्तन्यपयसः क्षरणमित्यादि । अतः पुरुषसंनिधानात्प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वं च सुखदुःखसंवेदनम् । तच्चेतनधर्म एवेति संनिधानात्पुरुषस्य भोक्तृत्वमुच्यत इति ॥ २० ॥ तथाप्यविकारिणो जन्मरहितस्य भोक्तृत्वं कथमित्यत आह—**पुरुष इति** । हि यस्मात्प्रकृतिस्थः तत्कार्यदेहे तादात्म्येन

१ श्रीमच्छांकरभाष्यम् ।

**तिस्थः प्रकृतावविद्यालक्षणायां कार्यकारणरूपेण परिणतायां स्थितः प्रकृतिस्थः प्रकृतिमात्मत्वेन गत इत्येतद्धि यस्मात्तस्माद्भुङ्क्त उपलभत इत्यर्थः । प्रकृतिजान्प्रकृतितो जातान्सुखदुःखमोहाकाराभिव्यक्तान्गुणान्सुखी दुःखी मूढः पण्डितोऽहमित्येवम् । सत्यामप्यविद्यायां सुखदुःखमोहेषु गुणेषु भुज्यमानेषु यः सङ्ग आत्मभावः संसारस्य स प्रधानं कारणं जन्मनः "स यथाकामो भवति तत्क्रतुर्भवति" इत्यादिश्रुतेः । तदेतदाह कारणं हेतुर्गुणसङ्गो गुणेषु सङ्गोऽस्य पुरुषस्य भोक्तुः, सदसद्योनिजन्मसु सत्यश्चासत्यश्च योनयः सदसद्योनयस्तासु सदसद्योनिषु जन्मानि सदसद्योनिजन्मानि तेषु सदसद्योनिजन्मसु विषयभूतेषु कारणं गुणसङ्गः । अथवा सदसद्योनिजन्मसस्य संसारस्य कारणं गुणसङ्ग इति संसारपदमध्याहार्यम् । सद्योनयो देवादियोनयोऽसद्योनयः पश्वादियोनयः । सामर्थ्यात्सदसद्योनयो मनुष्ययोनयोऽप्यविरुद्धा द्रष्टव्याः । एतदुक्तं भवति । प्रकृतितत्त्वाख्याऽविद्या गुणेषु**

२ आनन्दगिरिव्याख्या ।

च्छाया भोगहेतुत्वात्किं कारणान्वेषणयेत्याशङ्क्याह—**सत्यमपीति** । सङ्गस्य जन्मादौ संसारे प्रधानहेतुत्वे मानमाह—**स यथेति** । उक्तेऽर्थे द्वितीयार्धमवतार्य व्याचष्टे—**तदेतदित्यादिना** । साध्याहारं योजनान्तरमाह—**अथवेति** । सदसद्योनीर्विविच्य व्याचष्टे—**सद्योनय इति** । योनिद्वयनिर्देशान्मध्यवर्तिन्यो मनुष्ययोनयोऽपि ध्वनिता इत्याह—**सामर्थ्यादिति** । सङ्गस्य संसारकारणत्वे नाविद्यायास्तत्कारणत्वमेकस्मादेव हेतोस्तदुपपत्तेरित्याशङ्क्याह—**एतदिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

देहेन्द्रियमनःसंघातमध्यारूढस्तत्तादात्म्यं गत इत्यर्थः । प्रकृतिजान् सुखदुःखमोहात्मकान् गुणान् भुङ्क्ते उपलभते । यदा तु सुप्तिसमाधिमूर्च्छादौ प्रकृतिस्थत्वं नास्ति तदा न सुखादीनुपलभते तेनोपाधिगतान्येव सुखादीनि तदभावेन प्रतीयन्त इति सिद्धम् । श्रुतिरपि 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इतीन्द्रियमनोयोगादेवात्मनि भोक्तृत्वं दर्शयन्ती शुद्धस्य केवलस्य भोक्तृत्वं नास्तीति दर्शयति । कुतस्तर्ह्यभोक्तुरप्यस्य प्राकृतो बन्ध इति तत्राह—**कारणमिति** । अस्य पुरुषस्य सदसद्योनिजन्मसु तत्र सद्योनिजन्मानो देवाः असद्योनिजन्मभाजस्तिर्यञ्चः स्थावराश्च । सदसद्योनिजन्मानो मनुष्याः । एतेषु त्रिष्वपि जन्मसु प्राप्येषु अस्य पुंसो गुणसङ्गः सुखादिष्वभिष्वङ्गः कारणं हेतुः । तथाहि सात्विका देवा भवन्ति राजसा मनुष्यास्तामसाश्च पशवस्तेषां तत्तद्योनिप्राप्तौ तद्गुणप्राधान्यमेव कारणम् । वक्ष्यति च 'ऊर्ध्वं गच्छन्ति सत्वस्थाः' इत्यादि । यद्वा प्रकृतिस्थो विद्वानविद्वान्वा गुणान्भुङ्क्ते । 'पश्वादिभिश्चाविशेषात्' इति न्यायात् । तत्किं विद्वानिवाविद्वानपि कुतो न मुच्यते अविद्वानिव विद्वान्वा कुतो न बध्यत इत्याशङ्क्याह—**कारणमिति** । गुणेषु देहेन्द्रियविषयेषु सङ्गः अहमिदं ममेदमित्यभिनिवेशः सएव जन्मकारणम् । विदुषां

४ मधुसूदनीव्याख्या ।

प्रकृतिर्माया तां मिथ्यैव तादात्म्येनोपगतः प्रकृतिस्थो हि एव पुरुषो भुङ्क्ते उपलभते प्रकृतिजान्गुणान् । अतः प्रकृतिजगुणोपलम्भहेतुषु सदसद्योनिजन्मसु सद्योनयो देवाद्यास्तेषु हि सात्त्विकमिष्टं फलं भुज्यते, असद्योनयः पश्वाद्यास्तेषु हि तामसमनिष्टं फलं भुज्यते, सदसद्योनयो धर्माधर्ममिश्रत्वाद्ब्राह्मणाद्या मनुष्यास्तेषु हि राजसं मिश्रं फलं भुज्यते । अतस्तत्रास्य पुरुषस्य गुणसङ्गः

५ भाष्योत्कर्षदीपिका ।

पण्डितोऽहमित्येवं प्रकृतेः जातान्सुखदुःखमोहाकाराभिव्यक्तान् गुणान्सत्त्वादीन् भुङ्क्ते उपलभते । प्रकृतिस्थस्तत्कार्ये देहे तादात्म्येन स्थित इति त्वाचार्यैः देहतादात्म्यस्याप्यविद्यातादात्म्याध्यासायत्तत्वं मुख्यार्थत्यागापत्तिं चाभिप्रेत्य न व्याख्यातम् । भोक्तृत्वलक्षणे संसारित्वे प्रकृतिस्थत्वं कारणमुक्त्वा जन्मनः प्रधानं कारणमाह—**कारणमिति** । अस्य पुरुषस्य भोक्तुः सत्यश्चासत्यश्च योनयः सद्योनयो देवादियोनयः असद्योनयः पश्वादियोनयः । योनिद्वयनिर्देशसामर्थ्यान्मध्यवर्तिन्यः सदसद्योनयो मनुष्ययोनयोपि द्रष्टव्याः । तासु जन्मानि तेषु विषयभूतेषु गुणेषु गुणसङ्गः गुणेषु सुखदुःखमोहात्मकेषु विषयेषु भुज्यमानेषु यस्तादात्म्यभाव आसक्तिर्वा स एव सत्यायामप्यविद्यायां प्रधानं कारणमित्यर्थः । 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते' इति श्रुतेः । सदसद्योनिजन्मनस्तस्य संसारस्य गुणसङ्गः कारणमिति संसारपदमध्याहृत्य वा व्याख्येयम् । गुणसङ्गः सत्त्वरजस्तमोगुणात्मकप्रकृतितादात्म्याभिमान इति तु प्रकृतिमात्मत्वेन गतः प्रकृतिस्थ इत्यनेन पौनरुक्त्यमभिप्रेत्याचार्यैर्न व्याख्यातम् । गुणैः शुभाशुभकर्मकारिभिरिन्द्रियैः सङ्गस्य विषयसङ्गाधीनत्वमभिप्रेत्य न प्रदर्शितम् । 'इन्द्रियेभ्यः परा ह्यर्था' इति श्रुतेः ।

६ श्रीधरीव्याख्या ।

स्थितः पुरुषः । अतस्तज्जनितान्सुखादीन्भुङ्क्ते । अस्य च पुरुषस्य सतीषु देवादियोनिषु, असतीषु तिर्यगादियोनिषु यानि जन्मानि तेषु

१ नीलकण्ठः, २ श्रीधरः,

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

च सङ्गः कामः संसारस्य कारणमिति । तच्च परिवर्जनायोच्यते । अस्य च निवृत्तिकारणं ज्ञानं वैराग्ये ससंन्यासं गीताशास्त्रे प्रसिद्धम् । तच्च ज्ञानं पुरस्तादुपन्यस्तं क्षेत्रक्षेत्रज्ञविषयम् । यज्ज्ञात्वामृतमश्नुत इत्युक्तं चान्यापोहेनातद्धर्माध्यारोपेण च ॥ २१ ॥ तस्यैव पुनः साक्षान्निर्देशः क्रियते—उपद्रष्टेति । उपद्रष्टा समीपस्थः सन्द्रष्टा स्वयमव्यापृतो यथर्त्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्योव्या-

२ आनन्दगिरिव्याख्या ।

अविद्योपादानं सङ्गो निमित्तमित्युभयोरपि कारणत्वं सिध्यतीत्यर्थः । द्विविधहेतूक्तेर्विवक्षितं फलमाह—तच्चेति । सासङ्गस्याज्ञानस्य स्वतोऽनिवृत्तेस्तन्निवर्तकं वाच्यमित्याशङ्क्याह—अस्येति । वैराग्ये सति संन्यासस्तत्पूर्वकं च ज्ञानं सासङ्गाज्ञाननिवर्तकमित्यर्थः । उक्ते ज्ञाने मानमाह—गीतेति । अध्यायादौ चोक्तं ज्ञानमुदाहृतमित्याह—तच्चेति । तदेव ज्ञानं यज्ज्ञात्वेत्यादिना न सत्तन्नासदित्यन्तेनान्यनिषेधेन सर्वतःपाणिपादमित्यादिना चातद्धर्माध्यासेनोक्तमित्याह—यज्ज्ञात्वेति ॥ २१ ॥ प्रकृतस्यैव मोक्षहेतोर्ज्ञानस्य साक्षान्निर्देशायोत्तरश्लोकमुत्थापयति—तस्येति । कार्यकारणानां व्यापारवतां समीपे स्थितः संनिधिमात्रेण तेषां साक्षीत्येवमर्थत्वेनोपद्रष्टेति पदं व्याचष्टे—समीपस्थ इति । लौकिकस्येव द्रष्टुरस्यापि स्वव्यापारविशिष्टतया निष्क्रियत्वविरोधमाशङ्क्याह—स्वयमिति । स्वव्यापाराद्दते संनिधिरेव द्रष्टृत्वं । दृष्टान्तेन स्पष्टयति—यथेति । उपद्रष्टेत्यस्यार्थान्तरमाह—अथवेति । बहूनां द्रष्टृत्वेऽपि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तु तदभावान्न जन्म । समानेऽपि देहसंबन्धे यदा यक्षो देहाभिमानं धत्ते तदा स एव देहपीडया पीड्यते नतु देहपतिर्जीवः यदा त्वयं देहाभिमानं धत्ते तदा नेतर इति प्रसिद्धम् । सङ्गस्य बन्धकत्वं नतु सांनिध्यमात्रं बन्धकम् । अतो विद्वदविदुषोः समानेऽपि देहसंबधे सङ्गतदभावकृतो महान् विशेष इति भावः ॥ २१ ॥ सच यो यत्प्रभावश्चेति क्षेत्रज्ञतत्प्रभावौ व्याख्येयत्वेन प्रतिज्ञातौ तत्र क्षेत्रज्ञः प्रागेव वर्णितः तस्येदानीं प्रभावमाह—उपद्रष्टेति । तत्र पूर्वं गुणसङ्गो जन्मकारणमित्युक्तम् । तत्र सङ्गश्चतुर्विधः पुरुषापलापेन गुणमात्रप्राधान्येन वा

४ मधुसूदनीव्याख्या ।

सत्त्वरजस्तमोगुणात्मक प्रकृतितादात्म्याभिमान एव कारणं न त्वसङ्गस्य तस्य स्वतः संसार इत्यर्थः । अथवा गुणसङ्गो गुणेषु शब्दादिषु सुखदुःखमोहात्मकेषु सङ्गोऽभिलाषः काम इति यावत् । स एवास्य सदसद्योनिजन्मसु कारणम् । 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते' इति श्रुतेः । अस्मिन्नपि पक्षे मूलकारणत्वेन प्रकृतितादात्म्याभिमानो द्रष्टव्यः ॥ २१ ॥ तदेवं प्रकृतिमिथ्यातादात्म्यात्पुरुषस्य संसारो न स्वरूपेणेत्युक्तं, कीदृशं पुनस्तस्य स्वरूपं यत्र न संभवति संसार इत्याकाङ्क्षायां तस्य स्वरूपं साक्षान्निर्दिशन्नाह—उपद्रष्टेति । अस्मिन्प्रकृतिपरिणामे देहे जीवरूपेण वर्तमानोऽपि

५ भाष्योत्कर्षदीपिका ।

अन्ये तु यद्वा प्रकृतिस्थो विद्वान्वा गुणान् भुङ्क्ते । पश्वादिभिश्चाविशेषादितिन्यायात् । तत्किं विद्वानिवाविद्वानपि कुतो न मुच्यते । अविद्वानिव विद्वानपि कुतो न बध्यत इत्याशङ्क्याह—कारणमिति । गुणेषु देहेन्द्रियविषयेषु सङ्गः अहमिदं ममेदमित्यभिनिवेशः स एव जन्म कारणं विदुषां तु तदभावान्न जन्म । समानेऽपि देहसंबन्धे यदा यक्षो देहाभिमानं धत्ते तदा स एव देहपीडया पीड्यते नतु देहपतिर्जीवः । यदात्वयं देहभिमानं धत्ते तदा नेतर इति प्रसिद्धम् । सङ्गस्य बन्धकत्वं नतु सांनिध्यमात्रं बन्धकं अतो विद्वदविदुषोः समानेपि देहसंबन्धे संगतदभावकृतो महाविशेष इति भाव इति वर्णयन्ति । भाष्यकारैस्तु प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीत्युपक्रमानुरोधेन पुरुषशब्दार्थप्रदर्शनसामञ्जस्यमभिप्रेत्यायमर्थो न प्रदर्शितः ॥ २१ ॥ पुरुषमेव साक्षान्निर्दिशति—उपद्रष्टेति । यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्यो व्यापृतो यज्ञविद्याकुशलस्तद्व्यापारगुणदोषाणामीक्षिता तथा कार्यकरणानां व्यापारवतां समीपे स्थितः सन् स्वयमव्यापृतो द्रष्टा सन्निधिमात्रेण तेषां साक्षी । यद्वा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारः

६ श्रीधरीव्याख्या ।

गुणसङ्गः । गुणैः शुभाशुभकर्मकारिभिरिन्द्रियैः सङ्गः कारणमित्यर्थः ॥ २१ ॥ तदनेन प्रकारेण प्रकृत्यविवेकात्पुरुषस्य संसारो न तु स्वरूपत इत्याशयेन तस्य स्वरूपमाह—उपद्रष्टेति । अस्मिन्प्रकृतिकार्ये देहे च वर्तमानोऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः । तत्र हेतवः–यस्मादुपद्रष्टा पृथग्भूत एव समीपे स्थित्वा द्रष्टा, तथाऽनुमन्ता अनुमोदितैव संनिधिमात्रेणानुग्राहकः

७ अभिनवगुप्ताचार्यव्याख्या ।

रिति कार्यकारणभावे हेतुः । पुरुषस्तु प्राधान्याद्भोक्ता पुरुष इत्यादि ॥१९॥२०॥२१॥ उपद्रष्टेति । प्रकृतिपुरुषयोः पङ्ग्वन्धवदिकलान्योन्या-

१ श्रीमच्छांकरभाष्यम् ।

पृतो यज्ञविद्याकुशल ऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत्कार्यकरणव्यापारेष्वव्यापृतोऽन्यो विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां सामीप्येन द्रष्टोपद्रष्टा । अथवा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारस्तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक्समीप आत्मा द्रष्टा । यतः परोऽन्तरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात् । यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा । अनुमन्ता चानुमोदनमनुमननं कुर्वत्सु तत्क्रियासु परितोषस्तत्कर्तानुमन्ता च । अथवानुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेनानुमन्ता । अथवा प्रवृत्तान्स्वव्यापारेषु तत्साक्षिभूतः कदाचिदपि न निवारयतीत्यनुमन्ता । भर्ता भरणं नाम देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां यत्स्वरूपधारणं तच्चैतन्यात्मकृतमेवेति भर्तात्मेत्युच्यते । भोक्ताऽग्युष्णवन्नित्यचैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहा-

२ आनन्दगिरिव्याख्या ।

कस्योपद्रष्टृत्वं तत्राह—**तेषामिति** । उपोपसर्गस्य सामीप्यार्थत्वेन प्रत्यगर्थत्वात्तत्रैव सामीप्यावसानात्प्रत्यगात्मा च द्रष्टा चेत्युपद्रष्टा सर्वसाक्षी प्रत्यगात्मेत्यर्थः । उक्तमेव व्यनक्ति—**यत इति** । यथा यजमानस्य ऋत्विजां च यज्ञकर्मणि गुणं दोषं वा सर्वयज्ञाभिज्ञः सन्नुपद्रष्टा विषयीकरोति तथायमात्मा चिन्मात्रस्वभावः सर्वं गोचरयतीत्युपद्रष्टेति पक्षान्तरमाह—**यज्ञेति** । अनुमन्ता चेत्येतद्व्याकरोति—**अनुमन्तेति** । ये स्वयं कुर्वन्तो व्यापारयन्तो भवन्ति तेषु कुर्वत्सु सत्सु यास्तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननं तच्चानुमोदनं तस्य संनिधिमात्रेण कर्ता यः सोऽनुमन्तेत्यर्थः । व्याख्यान्तरमाह—**अथवेति** । तदेव स्फुटयति—**कार्येति** । अर्थान्तरमाह—**अथवेत्यादिना** । भर्तेति पदमादाय किं भरणं नामेति पृच्छति—**भर्तेति** । तद्रूपं निरूपयन्नात्मनो भर्तृत्वं साधयति—**देहेति** । भोक्तेत्युक्ते क्रियावत्त्वे प्राप्ते भोगश्चिदवसानतेति न्यायेन विभजते—**अग्नीति** । विशेषणान्तरमादाय

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तमन्तर्भाव्य गुणप्राधान्येन वा, गुणानां समप्राधान्येन वा, अप्राधान्येन वेति । तत्राद्ये देहेन्द्रियमनआदिरूपं गुणसंघातमेव आत्मत्वेन पश्यन् भोक्ता भवति यथा चार्वाकादिः । द्वितीये गुणानां प्राधान्यादात्मनि वास्तवकर्तृत्वाद्यभिमानेन कर्मफलानां भर्ता संचेता भवति यथा तार्किकादिः । तृतीये गुणानां समप्राधान्येन गुणगतमपि भोक्तृत्वमसंगेऽप्यात्मनि वस्त्रे भल्लातकाङ्कमदनुमन्यते यथा सांख्यः । चतुर्थे सर्वथापि गुणधर्माणामात्मनि संक्रममपश्यन्नुदासीनबोधरूपत्वेन गुणप्रचारदर्शी उपद्रष्टा भवति यथास्माकं साक्षी । एतेषु चतुर्ष्वपि गुणसंगिषूपद्रष्टोत्तमः । अनुमन्ता मध्यमः । भर्ता अधमः । भोक्ता अधमाधमः । सएव गुणान्वशीकृत्य यदा क्रीडति तदा महेश्वर इत्युच्यते । यः सर्गस्थित्यन्तकर्ता प्रभुर्जगदन्तर्यामी सएव गुणानपहाय स्थितः परमात्मेति चाप्युक्तो भवति ।

४ मधुसूदनीव्याख्या ।

पुरुषः परः प्रकृतिगुणासंसृष्टः परमार्थतोऽसंसारी स्वेन रूपेणेत्यर्थः । यत उपद्रष्टा यथर्त्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तत्समीपस्थोऽन्यः स्वयमव्यापृतो यज्ञविद्याकुशलत्वादृत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत्कार्यकरणव्यापारेषु स्वयमव्यापृतो विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां समीपस्थो द्रष्टा नतु कर्ता पुरुषः । 'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः' इति श्रुतेः । अथवा देहचक्षुर्मनोबुद्ध्यात्मसु दृश्येषु मध्ये बाह्यान्देहादीनपेक्ष्यात्यव्यवहितो द्रष्टात्मा पुरुष उपद्रष्टा । उपशब्दस्य सामीप्यार्थत्वात्तस्य चाव्यवधानरूपस्य प्रत्यगात्मन्येव पर्यवसानात् । अनुमन्ता च कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव संनिधिमात्रेण तदनुकूलत्वादनुमन्ता । अथवा स्वव्यापारेषु प्रवृत्तान्देहे-

५ भाष्योत्कर्षदीपिका ।

तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक्समीप आत्मा द्रष्टा यतः परतरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात् । यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा । ये स्वयं कुर्वन्तो व्यापारवन्तो भवन्ति तेषु कुर्वत्सु यास्तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननमनुमोदनं तस्य संनिधिमात्रेण कर्ता अनुमन्ता, कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेन वानुमन्ता, स्वव्यापारेषु प्रवृत्तान् तत्साक्षिभूतः कदाचिदपि न निवारयतीति वाऽनुमन्ता, देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां स्वरूपावधारणस्य चैतन्यात्मकृतत्वात् भर्तात्मोच्यते । भोक्ता नित्य-

६ श्रीधरीव्याख्या ।

'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतेः । तथा ऐश्वरेण रूपेण भर्ता विधारक इति चोक्तः, भोक्ता पालक इति च, महांश्चासा-

७ अभिनवगुप्ताचार्यव्याख्या ।

पेक्षावृत्तिः । अतएवास्य शास्त्रकृद्भिर्नानाकारैर्नामभिरभिधीयते रूपमुपद्रष्टेत्यादिभिः । अयमत्र तात्पर्यार्थः-प्रकृतिस्तद्विकारः चतुर्दशविधः

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्मकाः प्रत्ययाः सर्वविषयविषयाश्चैतन्यात्मग्रस्ता इव जायमाना विभक्ता विभाव्यन्त इति भोक्तात्मोच्यते । महेश्वरः सर्वात्मत्वात्स्वतन्त्रत्वाच्च महानीश्वरश्चेति महेश्वरः । परमात्मा देहादीनां बुद्ध्यन्तानां प्रत्यगात्मत्वेन कल्पितानामविद्यया परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा सोऽन्तः परमात्मेत्यनेन शब्देन चाप्युक्तः कथितः श्रुतौ। क्कासावस्मिन्देहे पुरुषः परोऽव्यक्तात्। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति यो वक्ष्यमाणः 'क्षेत्रज्ञं चापि मां विद्धि' इत्युपन्यस्तो व्याख्यायोपसंहृतश्च ॥ २२ ॥ तमेवं यथोक्तलक्षणमात्मानम्—य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादात्म-

२ आनन्दगिरिव्याख्या ।

व्याचष्टे—**महेश्वर इति** । परमात्मत्वमुपपादयति—**देहादीनामिति** । अविद्यया कल्पितानामिति संबन्धः। परमत्वं प्रकृष्टत्वम् । स पूर्वोक्तविशेषणवानिति यावत् । परमात्मशब्दस्य प्रकृतात्मविषयत्वे श्रुतिमनुकूलयति—**अन्त इति** । तस्य ताटस्थ्यं प्रश्नद्वारा प्रत्याचष्टे—**क्केति** । कस्मात्परत्वं तदाह—**अव्यक्तादिति** । तत्रैव वाक्यशेषानुकूल्यमाह—**उत्तम इति** । सोऽस्मिन्देहे परः पुरुष इति संबन्धः । शोधितार्थयोरैक्यज्ञानं प्रागुक्तं फलोक्त्या स्तौति—**क्षेत्रज्ञं चेति** ॥ २२ ॥ यथोक्तप्रकारेण जीवेश्वरादिसर्वकल्पनाधिष्ठानत्वेनेत्यर्थः । साक्षादपरोक्षत्वेनेति यावत् । यथोक्तामनाद्यनिर्वाच्यां सर्वानर्थोपाधिभूतामित्यर्थः । विद्यया प्रागुक्तैकत्वगोचरया प्रकृतिमविद्यारूपां सकार्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यद्यप्युपद्रष्टापि गुणानपहाय तत्साक्षित्वेन स्थितो भवति तथापि तस्यैव संघातोपहितस्य संघातान्तरप्रचारदर्शित्वाभावादयं सकलसंघातप्रचारदर्शीति सर्वोत्कृष्टत्वात्परमोयमात्मा । तमेनं वक्ष्यति 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इति । एतावपि गुणसङ्गिनौ । एवमेक एव देहेऽस्मिन्विद्यमानः परो गुणातीतः स्वात्मनि गुणान्प्रविलाप्य स्थितोऽखण्डैकरस आत्मा गुणसङ्गेन षड्विधो भवति । अयमेवास्य प्रभावः । तत्र अनुमन्तृभर्तृभोक्तृभिस्त्रिभी रूपैरयं बध्यते । उपद्रष्टृमहेश्वरपरमात्मरूपैस्तु नित्यमुक्त एकएवेति ज्ञेयम् । अत्र भाष्यार्थोऽप्यनुसंधेयो विस्तरभयात्तु न प्रदर्शितः ॥ २२ ॥ एवं यथोक्तलक्षणात्मज्ञाने फलमाह—**य एवमिति** । गुणैः स्वविकारैः सर्वथा विहितेन निषिद्धेन वा कर्मणा वर्तमानोऽपि न स भूयोऽभिजायते पुनर्जन्म

४ मधुसूदनीव्याख्या ।

न्द्रियादीन्न निवारयति कदाचिदपि तत्साक्षिभूतः पुरुष इति 'अनुमन्ता साक्षी च' इति श्रुतेः । भर्ता देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्याभासविशिष्टानां स्वसत्तया स्फुरणेन च धारयिता पोषयिता च । भोक्ता बुद्धेः सुखदुःखमोहात्मकान्प्रत्ययान्स्वरूपचैतन्येन प्रकाशयतीति निर्विकार एवोपलब्धा । महेश्वरः सर्वात्मत्वात्स्वतन्त्रत्वाच्च महानीश्वरश्चेति महेश्वरः परमात्मा देहादिबुद्ध्यन्तानामचेतनानामविद्ययात्मत्वेन कल्पितानां परमः प्रकृष्ट उपद्रष्टृत्वादिपूर्वोक्तविशेषणविशिष्ट आत्मा परमात्मा इत्यनेन शब्देनाप्युक्तः कथितः श्रुतौ चकारादुपद्रष्टेत्यादिशब्दैरपि स एव पुरुषः परः । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इत्यग्रेपि वक्ष्यते ॥ २२ ॥ तदेवं स च यो यत्प्रभावश्चेति व्याख्यातं, इदानीं यज्ज्ञात्वाऽमृतमश्नुत इत्युक्तमुपसंहरति—**य एवमिति** । य एवमुक्तेन प्रकारेण वेत्ति पुरुषमयमहमस्मीति साक्षात्करोति प्रकृतिं चाविद्यां गुणैः

५ भाष्योत्कर्षदीपिका ।

चैतन्यस्वरूपेण बुद्धेः सुखदुःखमोहात्मिकान् प्रत्ययान्सर्वविषयविषयान् विभक्ततयोपलब्धातो भोक्ता आत्मोच्यते सर्वात्मत्वात्स्वतन्त्रत्वाच्च । महांश्चासावीश्वरश्चेति महेश्वरः देहादिबुद्ध्यन्तानां प्रत्यगात्मत्वेनाविद्यया प्रकल्पितानां परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा इत्यनेन शब्देन चाप्युक्तः श्रुतौ कथितः । यः परमात्मा श्रुतावुक्तः स एव देहेस्मिन् पुरुषः परः अव्यक्तादुत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति वक्ष्यमाणः । श्रुतिः 'साक्षी चेता केवलो निर्गुणश्च' 'एष भूताधिपतिरेष लोकेश्वर एष लोकपालः' 'ईशानं भूतभव्यस्य' 'तत्सृष्ट्वा तदेवानुप्राविशत्', 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'अव्यक्तात्पुरुषः परः' इत्याद्या ॥ २२ ॥ क्षेत्रज्ञं चापि मां विद्धीत्युपन्यस्तमात्मतत्त्वं व्याख्यायोपसंहृतमिदानीं शुद्धार्थयोरैक्यरूपात्मतत्त्वस्य प्रागुक्तस्य

६ श्रीधरीव्याख्या ।

वीश्वरश्चेति, स ब्रह्मादीनामधिपतिरिति च, परमात्मान्तर्यामीति चोक्तः श्रुत्या । तथाच श्रुतिः—'एष भूताधिपतिरेष लोकेश्वर एष लोकपालः' इत्यादिः ॥ २२ ॥ एवं प्रकृतिपुरुषविवेकज्ञानिनं स्तौति—**य एवमिति** । एवमुपद्रष्टृत्वादिरूपेण पुरुषं यो वेत्ति, प्रकृतिं

७ अभिनवगुप्ताचार्यव्याख्या ।

सर्गः । तथा पुरुषः एतत्सधर्मनादि नित्यं च । ब्रह्मतत्त्वाच्छुरितत्वे सति तदनन्यत्वात् ॥ २२ ॥ तथाचाह—य एवं वेत्तीति । एवमनेन सर्वा-

१ श्रीमच्छांकरभाष्यम् ।

**भावेनायमहमिति प्रकृतिं च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्तितामभावमापादितां विद्यया सर्वथा सर्वप्रकारेण वर्तमानोऽपि स भूयः पुनः पतितेऽस्मिन्विद्वच्छरीरे देहान्तराय नाभिजायते । नोत्पद्यते । देहान्तरं न गृह्णातीत्यर्थः । अपिशब्दात्किमु वक्तव्यं स्ववृत्तस्थो न जायत इत्यभिप्रायः । ननु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तस्तथापि प्राग्ज्ञानोत्पत्तेः कृतानां कर्मणामुत्तरकालभाविनां च यानि चातिक्रान्तान्यनेकजन्मकृतानि तेषां फलमदत्त्वा नाशो न युक्त इति स्युस्त्रीणि जन्मानि । कृतविप्रणाशो हि न युक्त इति । यथा फले प्रवृत्तानामारब्धजन्मनां कर्मणाम् । नच कर्मणां विशेषोऽवगम्यते । तस्मात्त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मान्यारभेरन्संहतानि वा सर्वाण्येकं जन्मारभेरन् । अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यं च स्यादित्यत इदमयुक्तमुक्तं न स भूयोऽभिजायत इति । न, 'क्षीयन्ते चास्य कर्माणि', 'ब्रह्म वेद ब्रह्मैव भवति', 'तस्य तावदेव चिरमिषीकातूलवत्सर्वकर्माणि प्रदूयन्ते' इत्यादिश्रुतिशतेभ्य उक्तो**

२ आनन्दगिरिव्याख्या ।

मभावमापादितां यो वेत्तीति संबन्धः । सर्वप्रकारेण विहितेन निषिद्धेन चेत्यर्थः । पुनर्नकारोऽन्वयार्थः । निपातसूचितं न्यायमाह—**अपीति** । न स भूयोऽभिजायत इत्युक्तमाक्षिपति—**नन्विति** । ज्ञानोत्पत्त्यनन्तरं जन्माभावस्योक्तत्वात्पुनर्देहारम्भमुपेत्य नाक्षेपः स्यादित्याशङ्क्याह—**यद्यपीति** । तथापि स्युस्त्रीणि जन्मानीति संबन्धः । वर्तमानदेहे ज्ञानात्पूर्वोत्तरकालानां कर्मणां फलमदत्त्वा नाशायोगाज्जन्मद्वयमावश्यकमतीतानेकदेहेष्वपि कृतकर्मणां 'नाभुक्तं क्षीयते कर्म' इत्येव स्मृतेरदत्त्वा फलमनाशादस्ति तृतीयमपि जन्मेत्याह—**प्रागिति** । फलदानं विनापि कर्मनाशे दोषमाह—**कृतेति** । न युक्त इति कृत्वा फलमदत्त्वा कर्मनाशो नेति शेषः । विमतानि कर्माणि फलमदत्त्वा न क्षीयन्ते वैदिककर्मत्वादारब्धकर्मवदिति मत्वाह—**यथेति** । नाशो न ज्ञानादिति शेषः । नन्वनारब्धकर्मणां ज्ञानान्नाशो युक्तोऽप्रवृत्तफलवत्त्वादारब्धकर्मणां तु प्रवृत्तफलवत्त्वेन बलवत्त्वान्न ज्ञानात्तन्निवृत्तिरित्याह—**नचेति** । अज्ञानोत्थत्वेन ज्ञानविरोधित्वाविशेषात्प्रवृत्ताप्रवृत्तफलत्वमनुपयुक्तमिति भावः । कर्मणां फलमदत्त्वा नाशाभावे फलितमाह—**तस्मादिति** । ननु कर्मणां बहुत्वात्तत्फलेषु जन्मसु कुतस्त्रित्वमारम्भकर्मणां त्रिप्रकारत्वादिति चेन्नानारब्धत्वेनैकप्रकारकत्वसंभवात्तत्राह—**संहतानीति** । नास्ति ज्ञानस्यैकान्तिकफलत्वमिति शेषः । उक्तकर्मणां जन्मानारम्भकत्वे प्रागुक्तं दोषमनुभाष्य तस्यातिप्रसञ्जकत्वमाह—**अन्यथेति** । सर्वत्रेत्यारब्धकर्मस्वपीति यावत् । फलजनकत्वानिश्चयोऽनाश्वासः । कर्मणां जन्मानारम्भकत्वे कर्मकाण्डानर्थक्यं दोषान्तरमाह—**शास्त्रेति** । अनारब्धकर्मणां सत्यपि ज्ञाने जन्मान्तरारम्भकत्वध्रौव्ये फलितमाह—**इत्यत इति** । श्रुत्यवष्टम्भेन परिहरति—**नेत्यादिना** ।

४ मधुसूदनीव्याख्या ।

स्वविकारैः सह मिथ्याभूतामात्मविद्यया बाधितां वेत्ति निवृत्ते ममाज्ञानतत्कार्ये इति स सर्वथा प्रारब्धकर्मवशादिन्द्रवद्विधिमतिक्रम्य वर्तमानोऽपि भूयो न जायते । पतितेऽस्मिन्विद्वच्छरीरे पुनर्देहग्रहणं न करोति । अविद्यायां विद्यया

५ भाष्योत्कर्षदीपिका ।

ज्ञानं फलोक्त्या स्तौति—**यइति** । एवं यथोक्तेन प्रकारेण पुरुषं जीवेश्वरादिसर्वकल्पनाधिष्ठानं यो वेत्ति उक्तलक्षणः पुरुषोऽहमिति साक्षाज्जानाति प्रकृतिं चानाद्यनिर्वाच्यां सर्वानर्थोपाधिभूतां गुणैः स्वविकारैः सह प्रागुक्तैकत्वगोचरया विद्ययाऽभावमापादितां यो वेत्तीति संबन्धः । स सर्वथा वर्णाश्रमधर्मानुल्लङ्घ्य प्रवर्तमानोऽपि भूयः पुनः पतितेऽस्मिञ्शरीरे देहान्तराय न जायते नोत्पद्यते । आवर्तमानो जन्ममालावानपि सर्वथा भूयो नाभिजायत इति कल्पना तु भाष्यबहिर्भूता नादर्तव्या । आवर्तमान इत्याद्युक्तेः फलाभावात् । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' 'ब्रह्म वेद ब्रह्मैव भवति' 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' 'इषीकातूलवच्च सर्वकर्माणि प्रदह्यन्ते,' 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥' 'अविद्याकामक्लेशबीजनिमित्तानां फलारम्भकाणां जन्मान्तराङ्कुरारम्भसामर्थ्यवतां कर्मणां ज्ञानाग्निनोक्तबीजदाहे सति जन्माङ्कुरारम्भसामर्थ्यं न घटते' इति श्रुतिस्मृतियुक्तिभिरुक्तम् । विदुषो जन्माभावमभिप्रेत्य भगवतोक्तं न स भूयोभिजायत इति । एतेन ज्ञानोत्पत्तेः प्राकृतानां कर्मणामुत्तरकालभाविनामतिक्रान्तानेकजन्मकृतानां च फलमदत्त्वा प्रारब्धकर्मवन्नाशो न युक्तः । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिवचनात् । तस्मा-

६ श्रीधरीव्याख्या ।

च गुणैः सुखदुःखादिपरिणामैः सहितां यो वेत्ति, स पुरुषः सर्वथा विधिमतिलङ्घ्य वर्तमानोऽपि पुनर्नाभिजायते । मुच्यत एवेत्यर्थः

७ अभिनवगुप्ताचार्यव्याख्या ।

भेदरूपेण ब्रह्मदर्शनेन यो योगी प्रकृतिं पुरुषं गुणांश्च तद्विकारान् जानाति सर्वेण प्रकारेण यथातथा वर्तमानोऽपि स मुक्त एवेत्यर्थः । ईदृशं

१ श्रीमच्छांकरभाष्यम् ।

विदुषः सर्वकर्मदाहः । इहापि चोक्तो यथैधांसीत्यादिना सर्वकर्मदाहः । वक्ष्यति चोपपत्तेश्च । अविद्याकर्मक्लेशबीजनिमित्तानि हि कर्माणि जन्मान्तराङ्कुरमारभन्ते । इहापि च साहंकाराभिसंधीनि कर्माणि फलारम्भकाणि नेतराणीति तत्र तत्र भगवतोक्तं 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः' इति च । अस्तु तावज्ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात् । न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानामतीतानेकजन्मान्तरकृतानां च दाहो युक्तः । न, सर्वकर्माणीति विशेषणात् । ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेत् । न, संकोचत्वे कारणानुपपत्तेः । यत्तूक्तं यथा वर्तमानजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथाऽनारब्धफलानामपि कर्मणां क्षयो न युक्त इति तदसत् । कथं तेषां मुक्तेषुवत्प्रवृत्तफलत्वात् । यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमप्यारब्धवेगक्षयात्पतनेनैव निवर्तत एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽप्यासंस्कारवेगक्षयात्पूर्ववद्वर्तत एव । स एवेषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तोऽप्युपसंह्रियते तथानारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्त इति पतिते

२ आनन्दगिरिव्याख्या ।

ज्ञानादनारब्धकर्मदाहे भगवतोऽपि संमतिमाह—**इहापीति** । ज्ञानाधीनसर्वकर्मदाहे सर्वधर्मान्परित्यज्येति वाक्यशेषोऽपि प्रमाणीभवतीत्याह—**वक्ष्यति चेति** । ज्ञानादनारब्धाशेषकर्मक्षये युक्तिरपि वक्तुं शक्येत्याह—**उपपत्तेश्चेति** । तामेव विवृणोति—**अविद्येति** । अज्ञस्याविद्यास्मितारागद्वेषाभिनिवेशाख्यक्लेशात्मकानि सर्वानर्थबीजानि तानि निमित्तीकृत्य यानि धर्माधर्मकर्माणि तानि जन्मान्तरारम्भकाणि यानि तु विदुषो विद्यादग्धक्लेशबीजस्य प्रतिभासमात्रशरीराणि कर्माणि न तानि शरीरारम्भकाणि दग्धपटवदर्थक्रियासामर्थ्याभावादित्यर्थः । प्रतीतिमात्रदेहानां कर्माभासानां न फलारम्भकतेत्यस्मिन्नर्थे भगवतोऽपि संमतिमाह—**इहापीति** । तत्त्वज्ञानादूर्ध्वं प्रातीतिकक्लेशानां कर्मद्वारा देहानारम्भकत्वे वाक्यान्तरमपि प्रमाणयति—**बीजानीति** । ज्ञानानन्तरभाविकर्मणां ज्ञानेन दाहमङ्गीकरोति—**अस्त्विति** । विरोधिग्रस्तानामेवोत्पत्तिरिति हेतुमाह—**ज्ञानेति** । अस्मिञ्जन्मनि जन्मान्तरे वा ज्ञानात्पूर्वभाविकर्मणां न ततो दाहो विरोधिनं विना प्रवृत्तेरित्याह—**नत्विति** । श्रुतिस्मृतिविरोधान्नैवमिति परिहरति—**नेत्यादिना** । सर्वशब्दश्रुतेः । संकोचं शङ्कते—**ज्ञानेति** । प्रकरणादिसंकोचकाभावान्नैवमित्याह—**नेति** । आक्षेपदशायामुक्तमनुमानमनुवदति—**यत्विति** । आभासत्वादिदमसाधकमिति दूषयति—**तदसदिति** । व्याप्त्यादिसत्त्वे कथमाभासत्वमिति पृच्छति—**कथमिति** । प्रवृत्तफलत्वोपाधिना हेतोर्व्याप्तिभङ्गादाभासत्वधीरित्याह—**तेषामिति** । तदेव प्रपञ्चयति—**यथेत्यादिना** । धनुषः सकाशादिषुर्मुक्तो बलवत्प्रतिबन्धकाभावे मध्ये न पतति तथा प्रबलप्रतिबन्धकं विना प्रवृत्तफलानां कर्मणां भोगादृते न क्षयो नच तत्त्वज्ञानं तादृक्प्रतिबन्धकमुत्पत्तावेव पूर्वप्रवृत्तेन कर्मणा प्रतिबद्धशक्तित्वादित्यर्थः । यत्र ज्ञानेनादाह्यत्वं तत्र प्रवृत्तफलत्वमित्यन्वयेऽपि यत्राप्रवृत्तफलत्वं तत्र ज्ञानदाह्यत्वमिति न व्यतिरेकसिद्धिरित्याशङ्क्याह—**स एवेति** । प्रवृत्तौ निमित्तभूतोऽनारब्धो वेगोऽनेनेति विग्रहः । स्वाश्रयस्थानि साभासान्तःकरणनिष्ठानीति यावत् । विमतानि तत्त्वधीनिमित्तनिवृत्तीनि तत्कृतकारणनिवृत्तित्वाद्रज्जुसर्पादिवदिति व्यतिरेकसिद्धिरिति भावः । विदुषो वर्तमानदेहपाते देहहेत्वभावात्तत्त्वधीरैकान्तिकफलेत्युपसंहरति—**पतित इति** ॥ २३ ॥ ज्ञेयं यत्तदित्यादिना तत्पदार्थस्त्वंपदार्थश्चानन्तरमेव शोधितौ तयोरैक्यं च

४ मधुसूदनीव्याख्या ।

नाशितायां तत्कार्यासंभवस्य बहुधोक्तत्वात् । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायात् । अपिशब्दाद्विधिमनतिक्रम्य वर्तमानः स्ववृत्तस्थो भूयो न जायत इति किमु वक्तव्यमित्यभिप्रायः ॥ २३ ॥ अत्रात्मदर्शने साध-

५ भाष्योत्कर्षदीपिका ।

त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मानि संहतानि वा सर्वाण्येकं जन्मारभेरन् । अन्यथा कृतविप्रणाशे सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यं च स्यादिति शङ्का प्रत्युक्ता । सर्वकर्माणीति विशेषणात् । सर्वेषां कर्मणां दाहस्य वक्तुं युक्तत्वात् । ननु ज्ञानोत्पत्त्युत्तरकालकृतानां सर्वकर्मणां ज्ञानसहभावित्वात्तेन दाहोऽस्तु नत्वन्येषाम् । तथाच न विशेषणवैयर्थ्यमिति चेन्न । संकोचे मानाभावात् । प्रारब्धकर्मणां मुक्तेषुवत्प्रवृत्तफलत्वात्तत्साम्यमनारब्धवेगेषुवदन्येषां कर्मणां न युज्यत इत्यतः पतितेऽस्मिन्विद्वच्छरीरे न स भूयो-

७ अभिनवगुप्ताचार्यव्याख्या ।

च ज्ञानं प्रधानं कैश्चिदात्मतयोपास्यते । अन्यैः प्रागुक्तेन सांख्यनयेन । अपरैः कर्मणा । इतरैरपि स्वयमीदृग्ज्ञानमजानद्भिरपि श्रवणप्रवणैर्यथा श्रुतमेवोपास्यते तेऽपि मृत्युं संसारं तरन्ति । येनकेनचिदुपायेन भगवत्तत्त्वमुपास्यमानमुत्तारयत्यतः सर्वथैवमासीतेत्युक्तम् ॥ २३ ॥

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

ऽस्मिन्विद्वच्छरीरे 'न स भूयोऽभिजायते' इति युक्तमेवोक्तमिति सिद्धम् ॥ २३ ॥ अत्रात्मदर्शन उपायविकल्पा इमे ध्यानादय उच्यन्ते—ध्यानेनेति । ध्यानेन ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यक्चेतयितर्येकाग्रतया यच्चिन्तनं तद्ध्यानम् । तथा ध्यायतीव बको ध्यायतीव पृथिवी ध्यायन्तीव पर्वता इत्युपमोपादानात्तैलधारावत्संततोऽविच्छिन्नप्रत्ययो ध्यानं तेन ध्यानेनात्मनि बुद्धौ पश्यन्त्यात्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन केचिद्योगिनः । अन्ये सांख्येन योगेन सांख्यं नाम—इमे सत्त्वरजस्तमांसि गुणा मया दृश्या अहं तेभ्योऽन्यस्तद्व्यापारसाक्षिभूतो नित्यो गुणविलक्षण आत्मेति चिन्तनमेष सांख्यो योगस्तेन पश्यन्त्यात्मानमात्मनेति वर्तते । कर्मयोगेन कर्मैव योग ईश्वरार्पणबुद्ध्यानुष्ठीयमानं घटनरूपं योगार्थत्वाद्योग

२ आनन्दगिरिव्याख्या ।

'क्षेत्रज्ञं चापि मां विद्धि' इत्युक्तमिदानीं तद्दृष्टिहेतूत्यथाधिकारं कथयति—अत्रेति । ध्यानाख्यं साधनं किंरूपमिति पृच्छति—ध्यानं नामेति । तद्रूपं वदन्नुत्तरमाह—शब्दादिभ्य इति । एकाग्रतयोपसंहृत्येति संबन्धः । यच्चिन्तनं प्रत्यक्चेतयितरीति पूर्वेणान्वयः । किं तच्चिन्तनमित्युक्ते दृष्टान्तद्वारा श्रुत्यवष्टम्भेन ध्यानं प्रपञ्चयति—तथेति । विवक्षितध्यानानुरोधेनेति यावत्, आत्मानं पश्यन्ति परमात्मतयेति शेषः । केचिदित्युत्तमाधिकारिणो गृह्यन्ते । मध्यमाधिकारिणो निर्दिशति—अन्य इति । सांख्यशब्दितं साधनं किं नामेत्युक्ते विचारजन्यं ज्ञानं तदेव ज्ञानं हेतुतया योगतुल्यत्वाद्योगशब्दितमित्याह—सांख्यमिति । अधमानधिकारिणः संगिरते—कर्मेति । चित्तैकाग्र्यं योगस्तादर्थ्यं कर्मणः शुद्धिहेतोरस्ति तेन गौण्या वृत्त्या योगशब्दितं कर्मेत्याह—गुणत इति । अपरे पश्यन्त्यात्मान-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

न लभते मुक्तो भवतीत्यर्थः ॥ २३ ॥ एवंविधात्मदर्शनेऽधिकारिभेदेनोपायविकल्पानाह—ध्यानेनेति । अत्र ये आत्मानं विविदिषन्ति ते निष्कामकर्मणा परमेश्वरमाराधयन्ति ते कर्मयोगिनः । तत एवोत्पन्नविविदिषा वेदान्तश्रवणे प्रवर्तन्ते । ततः प्रमाणगतासंभावनानिवृत्तौ सत्यां तस्यैवार्थस्य मनने प्रवर्तन्ते प्रमेयगतासंभावनानिवृत्त्यर्थं ते सांख्याः । ततः प्रमाणप्रमेयगतासंभावनाया निवृत्त्यनन्तरं अनात्मनि देहादावात्मबुद्धिरूपाया विपरीतभावनाया निवृत्त्यर्थं निदिध्यासनं विजातीयप्रत्ययतिरस्कारपूर्वकसजातीयप्रत्ययप्रवाहीकरणलक्षणं कर्तुं प्रवर्तन्ते । ततस्तत्परिपाके आत्मनि बुद्धिवृत्तौ आत्मानं परमेश्वरं पश्यन्ति ते ध्यायिनः । तत्र ये कर्मसांख्ययोर्निष्णातास्ते ध्यानेनात्मनि देहे

४ मधुसूदनीव्याख्या ।

नविकल्पा इमे कथ्यन्ते—इह हि चतुर्विधा जनाः केचिदुत्तमाः केचिन्मध्यमाः केचिन्मन्दाः केचिन्मन्दतरा इति तत्रोत्तमानामात्मज्ञानसाधनमाह—ध्यानेन विजातीयप्रत्ययानन्तरितेन सजातीयप्रत्ययप्रवाहेण श्रवणमननफलभूतेनात्मचिन्तनेन निदिध्यासनशब्दोदितेन आत्मनि बुद्धौ पश्यन्ति साक्षात्कुर्वन्ति आत्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन केचिदुत्तमा योगिनः । मध्यमानामात्मज्ञानसाधनमाह । अन्ये मध्यमाः सांख्येन योगेन निदिध्यासनपूर्वभाविना श्रवणमननरूपेण नित्यानित्यविवेकादिपूर्वकेण इमे गुणत्रयपरिणामा अनात्मानः सर्वे मिथ्याभूतास्तत्साक्षिभूतो नित्यो विभुर्निर्विकारः सत्यः समस्तजडसंबन्धशून्य आत्माहमित्येवं वेदान्तवाक्यविचारजन्येन चिन्तनेन पश्यन्त्यात्मानमात्मनीति वर्तते । ध्यानोत्पत्तिद्वारेणे-

५ भाष्योत्कर्षदीपिका ।

भिजायत इति युक्तमेवोक्तमिति सिद्धम् ॥ २३ ॥ एवं तत्त्वंपदार्थौ संशोध्य तयोरैक्यं प्रतिपादितमिदानीमात्मदर्शनोपायविकल्पान्यथाधिकारं प्रतिपादयति—ध्यानेनेति । केचिदुत्तमाधिकारिणो योगिनः एतज्जन्मनि जन्मान्तरे वा कृताभ्यां श्रवणमननाभ्यामसंभावनादिदोषनिर्मुक्ताः शब्दादिविषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यगात्मन्येकाग्रं विधाय तैलधारावत्संततविच्छिन्नप्रत्ययेन निदिध्यासनापरपर्यायेण ध्यानेनात्मनि बुद्धौ आत्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन पश्यन्ति साक्षात्कुर्वन्ति । आत्मनि देहे इति व्याख्याने तूक्तार्थापेक्षया सामञ्जस्यं चिन्त्यम् । अन्ये मध्यमाधिकारिणः । श्रवणमननपरायणा इमे सत्त्वरजस्तमांसि गुणाः सविकाराः अनात्मानः मिथ्याभूतास्तद्व्यापारसाक्षिभूतोऽपरिणामी नित्यो गुणविलक्षणो विभुः

६ श्रीधरीव्याख्या ।

॥ २३ ॥ एवंभूतविविक्तात्मज्ञाने साधनविकल्पानाह—ध्यानेनेति द्वाभ्याम् । ध्यानेन आत्माकारप्रत्ययावृत्त्या । आत्मनि देहे

१ श्रीधरः, नीलकण्ठः.

**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**उच्यते । गुणतस्तेन सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण चापरे ॥ २४ ॥ अन्ये त्विति । अन्ये त्वेषु विकल्पेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वेदमेव चिन्तयतेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति तेऽपि चातितरन्त्येवातिक्रामन्त्येव मृत्युं मृत्युयुक्तं संसारमित्येतत् । श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं गमनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां ते श्रुतिपरायणाः केवलपरोपदेशप्रमाणाः स्वयं विवेकरहिता इत्यभिप्रायः । किमु वक्तव्यं प्रमाणं प्रति स्वतन्त्रा विवे-**

२ आनन्दगिरिव्याख्या ।

मात्मनेति पूर्ववदनुषङ्गमङ्गीकृत्याह—**तेनेति** ॥ २४ ॥ अधमतमानधिकारिणो मोक्षमार्गे प्रवृत्तिं प्रतिलम्भयति—**अन्ये त्विति** । आचार्याधीनां श्रुतिमेवाभिनयति—**इदमिति** । उपासनमेव विवृणोति—**श्रद्दधाना इति** । परोपदेशात्प्रवृत्तानामपि प्रवृत्तेः साफल्यमाह—**तेऽपीति** । तेषां मुख्याधिकारित्वं व्यावर्तयति—**श्रुतीति** । तेऽपीत्यपिना सूचितमर्थमाह—**किमिति** ॥ २५ ॥ ऐक्यधीर्मुक्तिहेतुरिति प्रागुक्तमनूद्य प्रश्नपूर्वकं जिज्ञासितहेतु-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

आत्मानं परमेश्वरं आत्मना बुद्ध्या पश्यन्ति । अन्ये त्वकृतकर्माणः सांख्येन योगेन विचारात्मकेन योगेन ध्यानद्वारा पश्यन्ति । अन्ये पुनः कर्मयोगेनैव पूर्वोक्तलक्षणेन सांख्या ध्यानद्वारा पश्यन्तीति साधनत्रयस्य समुच्चयो नतु विकल्पः ॥ २४ ॥ पक्षान्तरमाह—**अन्येत्विति** । अन्ये ऊहापोहकौशलहीनाः । तुशब्देन पूर्वोक्तेभ्यो विलक्षणाः । एवं पूर्वोक्तप्रकारमजानन्तोऽन्येभ्य आचार्येभ्यः श्रुत्वा आत्मनो निर्विशेषब्रह्मचैतन्यरूपत्वं तदुपासनामार्गं चाधिगत्य उपासते यथोक्तप्रकारेण ध्यायन्ति तेऽपि च मृत्युं संसारं तरन्त्येव । अपिशब्दात्पूर्वश्लोकोक्तास्तरन्तीत्यत्र किमाश्चर्यमिति गम्यते । एवशब्दात्तेषां मुख्यक्रमाभावेऽपि तरणे संशयो नास्ति । यतस्ते श्रुतिपरायणाः श्रुतिः श्रवणं तदेव परं अयनं मोक्षसाधनं येषां ते तथा । ध्याने प्रवृत्त्यतिशयान्न तेषां चित्तशुद्ध्यर्थं कर्मापेक्षा । वेदोक्ततत्त्वे दृढनिश्चयाच्चासंभावनानिवृत्त्यर्थं श्रवणमननापेक्षेति भावः । अयंच ब्रह्मसाक्षात्कारः संवादिभ्रमरूप इति केचित् । प्रमारूप इत्यन्ये । तथाहि यथा कश्चिन्मणिप्रभां मणिबुद्ध्या पश्यन् भ्रान्तएव तथापि तद्ग्रहणकाले मणिं लभतेऽतः स संवादिभ्रमः । एवं त्वंपदार्थे तत्पदार्थमणिप्रभाभूतं तत्पदार्थबुद्ध्या भावयन् व्यवहारतो भ्रान्तएव तथापि तत्साक्षात्कारकाले तदनन्यस्य तत्पदार्थस्य साक्षात्कारोऽपि संवादिभ्रमन्यायेन जायत इति । तथाच वसिष्ठः 'असत्ये सत्यता साधो शाश्वती परिदृश्यते । शून्येन ध्यानयोगेन शाश्वतं प्राप्यते पदम्' इति । व्यवहारतो निर्विशेषस्वरूपत्वेनासत्ये आत्मनि तत्र

४ मधुसूदनीव्याख्या ।

त्यर्थः । मन्दानां ज्ञानसाधनमाह—कर्मयोगेन ईश्वरार्पणबुद्ध्या क्रियमाणेन फलाभिसन्धिरहितेन तत्तद्वर्णाश्रमोचितेन वेदविहितेन कर्मकलापेन चापरे मन्दाः पश्यन्त्यात्मानमात्मनीति वर्तते । सत्त्वशुद्ध्या श्रवणमननध्यानोत्पत्तिद्वारेणेत्यर्थः ॥ २४ ॥ मन्दतराणां ज्ञानसाधनमाह—अन्ये तु मन्दतराः । तुशब्दः पूर्वश्लोकोक्तत्रिविधाधिकारिवैलक्षण्यद्योतनार्थः । एषूपायेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्यः कारुणिकेभ्य आचार्येभ्यः श्रुत्वेदमेवं चिन्तयतेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति तेऽपि चातितरन्त्येव मृत्युं संसारं श्रुतिपरायणाः स्वयं विचारासमर्था अपि श्रद्दधानतया गुरूपदेशश्रवणमात्र-

५ भाष्योत्कर्षदीपिका ।

सच्चिदानन्दघन आत्मेति वेदान्तविचारजन्येन चिन्तनात्मकेन सांख्येन योगेन ध्यानोत्पत्तिद्वारा आत्मन्यात्मानमात्मना पश्यन्तीति पूर्ववत् । अपरे मन्दाधिकारिणः कर्मैव योगार्थत्वगुणेन योगस्तेन कर्मयोगेन ईश्वरार्पणबुद्ध्यानुष्ठीयमानेन सत्त्वशुद्धिश्रवणमननध्यानापरोक्षज्ञानोत्पत्तिद्वारेणात्मन्यात्मानमात्मना पश्यन्तीति पूर्ववत् ॥ २४ ॥ मन्दतरानाह । अन्येतु । तुशब्दः पूर्वेभ्यो वैलक्षण्यद्योतनार्थः । एषु विकल्पेषु अन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तः श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां केवलं परोपदेशप्रमाणाः स्वयं विवेकरहिताः अन्येभ्य आचार्येभ्य इदमेव चिन्तयतेति वदद्भ्यः श्रुत्वा श्रद्दधानाः सन्तस्तदेवोपासते चिन्तयन्ति तेऽपि च मृत्युयुक्तं संसारं अतितरन्त्येवातिक्रामन्त्येव । चकारः पूर्वोक्तसमुच्चयार्थः । तेप्यतितरन्ति

६ श्रीधरीव्याख्या ।

आत्मना मनसा एवमात्मानं केचित्पश्यन्ति । अन्ये तु सांख्येन प्रकृतिपुरुषवैलक्षण्यालोचनेन, योगेनाष्टाङ्गेन, अपरे च कर्मयोगेन पश्यन्तीति सर्वत्रानुषङ्गः । एतेषां च ध्यानादीनां यथायोगं क्रमसमुच्चये सत्यपि तत्तन्निष्ठाभेदाभिप्रायेण विकल्पोक्तिः ॥ २४ ॥ अतिमन्दाधिकारिणां निस्तारोपायमाह—**अन्य इति** । अन्ये तु सांख्ययोगादिमार्गेणैवंभूतमुपद्रष्टृत्वादिलक्षणमात्मानं साक्षात्कर्तुमजा-

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

किनो मृत्युमतितरन्तीत्यभिप्रायः ॥ २५ ॥ क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं यज्ज्ञात्वामृतमश्नुत इत्युक्तं तत्कस्माद्धेतोरिति तद्धेतुप्रदर्शनार्थं श्लोक आरभ्यते—यावदिति । यावद्यत्किंचित्संजायते समुत्पद्यते सत्त्वं वस्तु किमविशेषेणेत्याह स्थावरजङ्गमं स्थावरं जङ्गमं च क्षेत्रक्षेत्रज्ञसंयोगात्तज्जायत इत्येवं विद्धि जानीहि हे भरतर्षभ । कः पुनरयं क्षेत्रक्षेत्रज्ञयोः संयोगोऽभिप्रेतः । न तावद्रज्ज्वेव घटस्यावयवसंश्लेषद्वारकः संबन्धविशेषः संयोगः क्षेत्रेण क्षेत्रज्ञस्य संभवत्याकाशवन्निरवयवत्वात् । नापि समवायलक्षणस्तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमादिति । उच्यते, क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वभावयोरितरेतरतद्धर्माध्यासलक्षणः संयोगः क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनो रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् । सोऽयमध्यासस्वरूपः क्षेत्रक्षेत्रज्ञसंयोगो मिथ्याज्ञानलक्षणः । यथाशास्त्रं क्षेत्रक्षेत्रज्ञ-

२ आनन्दगिरिव्याख्या ।

परत्वेन श्लोकमवतारयति—क्षेत्रेति । सर्वस्य प्राणिजातस्य क्षेत्रक्षेत्रज्ञसंबन्धाधीना यस्मादुत्पत्तिस्तस्मात्क्षेत्रज्ञात्मकपरमात्मातिरेकेण प्राणिनिकायस्याभावादैक्यज्ञानादेव मुक्तिरित्याह—कस्मादिति । क्षेत्रक्षेत्रज्ञसंबन्धमुक्तमाक्षिपति—कः पुनरिति । क्षेत्रज्ञस्य क्षेत्रेण संबन्धः संयोगो वा समवायो वेति विकल्प्याद्यं दूषयति—न तावदिति । द्वितीयं निरस्यति—नापीति । वास्तवसंबन्धाभावेऽपि तयोरध्यासस्वरूपः सोऽस्तीति परिहरति—उच्यत इति । भिन्नस्वभावत्वे हेतुमाह—विषयेति । इतरेतरवत्क्षेत्रे क्षेत्रज्ञे वा तद्धर्मस्य क्षेत्रानधिकरणस्य क्षेत्रज्ञगतस्य चैतन्यस्य क्षेत्रज्ञानाधारस्य च क्षेत्रनिष्ठस्य जाड्यादेरारोपरूपो योगस्तयोरित्याह—इतरेति । तत्र निमित्तमाह—क्षेत्रेति । अविवेकादारोपितसंयोगे दृष्टान्तमाह—रज्ज्विति । उक्तं संबन्धं निगमयति—सोऽयमिति । तस्य निवृत्तियोग्यत्वं सूचयति—मिथ्येति । कथं तर्हि मिथ्याज्ञानस्य निवृत्तिरित्याशङ्क्याह—यथेति । 'योऽयं विज्ञानमयः प्राणेषु'

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

निर्विशेषत्वभावनं शून्यो निर्विषयोऽयं ध्यानयोगो योषित्यग्निध्यानवत् तथापि तेन शाश्वती सत्यता प्राप्यते दृश्यत इति वसिष्ठवाक्यार्थः । कल्पद्रुमाचार्यास्तु 'वेदान्तवाक्यजध्यानभावनाजाऽपरोक्षधीः । मूलप्रमाणदार्ढ्येन भ्रमत्वं प्रतिपद्यते' इति प्राहुः ॥ २५ ॥ पूर्वं कार्यकारणकर्तृत्वे इत्यत्र चिदचितोः पुंप्रकृत्योरन्योन्यधर्माध्यास उक्तस्तस्यैव गुणसङ्गरूपस्य कारणं गुणसङ्गोऽस्येति नानाजन्महेतुत्वं चोक्तं तद्विशदयति—यावदिति । सत्त्वं जीवरूपम् । गुणस-

४ मधुसूदनीव्याख्या ।

परायणाः । तेऽपीत्यपिशब्दाद्ये स्वयं विचारसमर्थास्ते मृत्युमतितरन्तीति किमु वक्तव्यमित्यभिप्रायः ॥ २५ ॥ संसारस्याविद्यकत्वाद्विद्यया मोक्ष उपपद्यत इत्येतस्यार्थस्यावधारणाय संसारतन्निवर्तकज्ञानयोः प्रपञ्चः क्रियते यावदध्यायसमाप्ति । तत्र 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्येतत्प्रागुक्तं विवृणोति—यावत्किमपि सत्त्वं वस्तु संजायते स्थावरं जङ्गमं वा तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगादविद्यातत्कार्यात्मकं जडमनिर्वचनीयं सदसत्त्वं दृश्यजातं क्षेत्रं तद्विलक्षणं तद्भासकं स्वप्रकाशपरमार्थं सच्चैत-

५ भाष्योत्कर्षदीपिका ।

पूर्वोक्तान्वयः तरन्तीति किमु वक्तव्यमिति कैमुत्यन्यायबोधनार्थोऽपिशब्दः तेषामुत्तमादित्वाभावेऽपि संसारातितरणे संशयो नास्तीत्यवधारणार्थः ॥ २५ ॥ अत्र क्षेत्रज्ञं चापि मां विद्धीति क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं यज्ज्ञात्वामृतमश्नुत इत्युक्तं तत्र हेतुमाह—यावदिति । यत्किंचित्सत्त्वं वस्तु स्थावरजंगमं संजायते समुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोः संयोगाज्जायत इत्येवं विद्धि जानीहि । एतज्ज्ञातुं योग्योऽसीति सूचयन्नाह—हे भरतर्षभेति । ननु क्षेत्रक्षेत्रज्ञयोः संयोगादिति भगवतोक्तं न संगच्छते क्षेत्रज्ञस्याकाशवन्निरवयवत्वेन क्षेत्रेण रज्ज्वेव घटस्यावयवसंश्लेषद्वारकस्य संबन्धविशेषस्य संयोगस्यासंभवात् । तन्तुपटयोरिव क्षेत्र-

६ श्रीधरीव्याख्या ।

नन्तोऽन्येभ्य आचार्येभ्य उपदेशेन श्रुत्वा उपासते ध्यायन्ति । ते च श्रद्धयोपदेशश्रवणपरायणाः सन्तो मृत्युं संसारं शनैरतितरन्त्येव ॥ २५ ॥ तत्र कर्मयोगस्य तृतीयचतुर्थपञ्चमेषु प्रपञ्चितत्वात्, ध्यानयोगस्य च षष्ठाष्टमयोः प्रपञ्चितत्वात्, ध्यानादेश्च सांख्यविविक्तात्मविषयत्वात्सांख्यमेव प्रपञ्चयन्नाह—यावदित्यादि । यावदध्यायसमाप्ति । यावत्किंचिद्वस्तुमात्रं सत्त्वमुत्पद्यते तत्सर्वं क्षेत्रक्षे-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ २४ ॥ २५ ॥ यावदिति यत्किंचिच्चरमचरं च तत्सर्वं क्षेत्रज्ञातिरेकि न संभवतीत्यत एव सर्वत्रैव समबुद्धिर्योगी आत्मानं न हिनस्ति न

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**लक्षणभेदपरिज्ञानपूर्वकं प्राग्दर्शितरूपात्क्षेत्रान्मुञ्जादिवेषीकां यथोक्तलक्षणं क्षेत्रज्ञं प्रविभज्य न सत्तन्नासदुच्यत इत्यनेन निरस्तसर्वोपाधिविशेषं ज्ञेयं ब्रह्म स्वरूपेण यः पश्यति क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवदसदेव सदिवावभासत इत्येवं निश्चितविज्ञानो यस्तस्य यथोक्तसम्यग्दर्शनविरोधादपगच्छति मिथ्याज्ञानं तस्य जन्महेतोरपगमात् । 'य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह' इत्यनेन विद्वान्भूयो नाभिजायत इति यदुक्तं तदुपपन्नमुक्तम् ॥ २६ ॥ न स भूयोऽभिजायत इति सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः जन्मकारणं चाविद्यानिमित्तकः क्षेत्रक्षेत्रज्ञसंयोग उक्तः । अतस्तस्या अविद्याया निवर्तकं सम्यग्दर्शनमुक्तमपि पुनः शब्दान्तरेणोच्यते—समं सर्वेष्वित्यादि । समं निर्विशेषं तिष्ठन्तं स्थितिं कुर्वन्तं क्व सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु कं परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्य परमेश्वरस्तं सर्वेषु**

२ आनन्दगिरिव्याख्या ।

इत्यादि त्वंपदार्थविषयं शास्त्रमनुसृत्य विवेकज्ञानमापाद्य महाभूतादिधृत्यन्तात्क्षेत्रादुपद्रष्टृत्वादिलक्षणं प्रागुक्तं क्षेत्रज्ञं मुञ्जेषीकान्यायेन विविच्य सर्वोपाधिविनिर्मुक्तं ब्रह्म स्वरूपेण ज्ञेयं योऽनुभवति तस्य मिथ्याज्ञानमपगच्छतीति संबन्धः । कथमस्य निर्विशेषत्वं क्षेत्रज्ञस्य सविशेषत्वहेतोः सत्त्वादित्याशङ्क्याह—**क्षेत्रं चेति** । बहुदृष्टान्तोक्तेर्बहुविधत्वं क्षेत्रस्य द्योत्यते । उक्तज्ञानान्मिथ्याज्ञानापगमे हेतुमाह—**यथोक्तेति** । तथापि कथं पुरुषार्थसिद्धिः कालान्तरे तुल्यजातीयमिथ्याज्ञानोदयसंभवादित्याशङ्क्याह—**तस्येति** । सम्यग्ज्ञानादज्ञानतत्कार्यनिवृत्त्या मुक्तिरिति स्थिते फलितमाह—**य एवमिति** ॥ २६ ॥ उत्तरग्रन्थमवतारयितुं व्यवहितं वृत्तं कीर्तयति—**नेत्यादिना** । अविद्यानाद्यनिर्वाच्यमज्ञानं मिथ्याज्ञानं तत्संस्कारश्चादिशब्दार्थः । व्यवहितमनूद्याव्यवहितमनुवदति—**जन्मेति** । व्यवधानाव्यवधानाभ्यां सर्वानर्थमूलत्वादज्ञानस्य तन्निवर्तकं सम्यग्ज्ञानं वक्तव्यमित्याह—**अत इति** । तस्यासकृदुक्तत्वात्तदुक्तार्थप्रवृत्तिर्वृथेत्याशङ्क्यातिसूक्ष्मार्थस्य शब्दभेदेन पुनःपुनर्वचनमधिकारिभेदानुग्रहायेति मत्वाह—**उक्तमिति** । सर्वत्र परस्यैकत्वाद्वोत्कर्षापकर्षवत्त्वमित्याह—**सममिति** । परमत्वमीश्वरत्वं चोपपादयति—**देहेति** । आत्मा जीवस्तमित्यादीनान्व-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ज्ञोऽत्र रूपाद्यासक्तिर्न किंतु क्षेत्रक्षेत्रज्ञयोः संयोगोऽन्योन्यस्मिन्नन्योन्यात्मकताध्यासलक्षणो बोध्यः । शेषं स्पष्टम् ॥२६॥ तन्नाशोपायमाह—**सममिति** । सममपरिणामिनं कूटस्थं नित्यं सर्वेषु भूतेषु देहाद्याकारेण परिणतेषु तिष्ठन्तम् ।

४ मधुसूदनीव्याख्या ।

न्यमसङ्गोदासीनं निर्धर्मकमद्वितीयं क्षेत्रज्ञं तयोः संयोगो मायावशादितरेतराविवेकनिमित्तो मिथ्यातादात्म्याध्यासः सत्यानृतमिथुनीकरणात्मकः तस्मादेव संजायते तत्सर्वं कार्यजातमिति विद्धि हे भरतर्षभ । अतः स्वरूपाज्ञाननिबन्धनः संसारः स्वरूपज्ञानाद्विनष्टुमर्हति स्वप्नादिवदित्यभिप्रायः ॥२६॥ एवं संसारमविद्यात्मकमुक्त्वा तन्निवर्तकविद्याकथनाय य एवं वेत्ति पुरुषमिति प्रागुक्तं विवृणोति—सर्वेषु भूतेषु भवनधर्मकेषु स्थावरजङ्गमात्मकेषु प्राणिषु अनेकविधजन्मादिपरिणामशीलतया गुणप्रधानभावापत्त्या

५ भाष्योत्कर्षदीपिका ।

क्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमेन लक्षणया समवायलक्षणस्याप्यसंभवात् । तमःप्रकाशवद्विरुद्धस्वभावयोस्तादात्म्यासंभवाच्चेति, चेन्न । रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् विषयविषयिणोर्भिन्नस्वभावयोः क्षेत्रक्षेत्रज्ञयोरितरेतरतद्धर्माध्यासलक्षणस्य संयोगस्य क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनस्य संभवात् । तथाच यथाशास्त्रं मुञ्जादिवेषीकां यथोक्तलक्षणात्क्षेत्रात् यथोक्तलक्षणं क्षेत्रज्ञं विभज्य निरस्तसर्वोपाधिमीश्वराभिन्नं यः पश्यति क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरद्विचन्द्ररज्जूरगवदसदेव सदिवाभासत इत्येवं निश्चितविज्ञानी यस्तस्य सम्यग्दर्शनेन जन्महेतोः मिथ्याज्ञानस्यापगमान्मोक्ष उपपद्यते नत्वन्यस्येत्यतो युक्तमुक्तं य एवं वेत्तीत्यादि ॥ २६ ॥ न स भूयोभिजायत इत्यनेन सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तो जन्मकारणं चाविद्यानिमित्तकक्षेत्रक्षेत्रज्ञसंयोग उक्तः । अतः सर्वथापि सर्वानर्थमूलभूतस्याज्ञानस्य निवर्तकं सम्यग्दर्शनमुक्तमप्यतिसूक्ष्मार्थस्य पुनः पुनर्वचनेनाधिकारिभेदानुग्रहं मत्वा शब्दान्तरेण पुनराह—**सममिति** । सर्वेषु ब्रह्मादिस्थावरान्तेषु भूतेषु भवनधर्मकेषु प्राणिषु परस्परमत्यन्तविषमेष्वनेकेषु समं तिष्ठन्तं निर्विशेषमेवं स्थितिं कुर्वन्तं पर-

६ श्रीधरीव्याख्या ।

त्रज्ञयोर्योगात् अविवेककृतात्तादात्म्याध्यासाद्भवतीति जानीहि ॥ २६ ॥ अविवेककृतं संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं सम्यग्दर्शनमाह—**सममिति** । स्थावरजङ्गमात्मकेषु भूतेषु निर्विशेषं सद्रूपेण समं यथा भवत्येवं तिष्ठन्तं परमात्मानं यः पश्यति,

१ श्रीमच्छांकरभाष्यम् ।

भूतेषु समं तिष्ठन्तम् । तानि विशिनष्टि—विनश्यत्स्विति । तं च परमेश्वरमविनश्यन्तमिति भूतानां परमेश्वरस्य चात्यन्तवैलक्षण्यप्रदर्शनार्थम् । कथं सर्वेषां हि भावविकाराणां जनिलक्षणो भावविकारो मूलं जन्मोत्तरभाविनोऽन्ये सर्वे भावविकारा विनाशान्ताः । विनाशात्परो न कश्चिदस्ति भावविकारो भावाभावात् । सति हि धर्मिणि धर्मा भवन्त्यतोऽन्त्यभावविकाराभावानुवादेन पूर्वभाविनः सर्वे भावविकाराः प्रतिषिद्धा भवन्ति सह कार्यैः । तस्मात्सर्वभूतैर्वैलक्षण्यमत्यन्तमेव परमेश्वरस्य सिद्धं निर्विशेषत्वमेकत्वं च । य एवं यथोक्तं परमेश्वरं पश्यति स पश्यति । ननु सर्वोऽपि लोकः पश्यति किं विशेषणेनेति, सत्यं पश्यति किंतु विपरीतं पश्यत्यतो विशिनष्टि स एव पश्यतीति । यथा तिमिरदृष्टिरनेकं चन्द्रं पश्यति तमपेक्ष्यैकचन्द्रदर्शी विशिष्यते स एव पश्यतीति तथैवेहाप्येकमविभक्तं यथोक्तमात्मानं यः पश्यति स विभक्तानेकात्मविपरीतदर्शिभ्यो विशिष्यते स एव पश्यतीति । इतरे पश्यन्तोऽपि न पश्यन्ति विपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः ॥ २७ ॥ यथो-

२ आनन्दगिरिव्याख्या ।

योक्तिः आश्रयनाशादाश्रितस्यापि नाशमाशङ्क्याह—**तं चेति** । अविनश्यन्तमिति विशिनष्टीति संबन्धः । उभयत्र विशेषणद्वयस्य तात्पर्यमाह—**भूतानामिति** । नाशानाशाभ्यां वैलक्षण्येऽपि कथमत्यन्तवैलक्षण्यं सविशेषत्वभिन्नत्वयोस्तुल्यत्वादिति शङ्कते—**कथमिति** । भूतानां सविशेषत्वादिभावेऽपि परस्य तदभावादत्यन्तवैलक्षण्यमिति वक्तुं जन्मनो भावविकारेष्वादित्वमाह—**सर्वेषामिति** । तत्र हेतुमाह—**जन्मेति** । नहि जन्मान्तरेणोत्तरे विकारा युज्यन्ते जन्मवतस्तदुपलम्भादित्यर्थः । विनाशानन्तरभाविनोऽपि विकारस्य कस्यचिदुपपत्तेर्न तस्यान्त्यविकारत्वमित्याशङ्क्याह—**विनाशादिति** । तस्यान्त्यविकारत्वे सिद्धे फलितमाह—**अत इति** । तेषां जन्मादीनां कार्याणि कादाचित्कसत्त्वानि तदधिकरणानि तैः सहेति यावत् । परमेश्वरस्य भूतेभ्योऽत्यन्तवैलक्षण्यमुक्तमुपसंहरति—**तस्मादिति** । निर्विशेषत्वं सर्वभावविकारविरहितत्वं कूटस्थत्वमेकत्वमद्वितीयत्वम् । यः पश्यतीत्यादि व्याचष्टे—**य एवमिति** । उक्तविशेषणमीश्वरं पश्यन्नेव पश्यतीत्युक्तमाक्षिपति—**नन्विति** । ईश्वरपराङ्मुखस्यानात्मनिष्ठस्य तद्दर्शित्वेऽपि विपरीतदर्शित्वादीश्वरप्रवणस्यैव सम्यग्दर्शित्वमिति विवक्षित्वा विशेषणमिति परिहरति—**सत्यमिति** । उक्तमेव दृष्टान्तेन विवृणोति—**यथेत्यादिना** । यः पश्यतीत्यादेरर्थमुपसंहरति—**इतर इति** । परवस्तुनिष्ठेभ्यो व्यतिरिक्ता इत्यर्थः ॥ २७ ॥ प्रकृतसम्यग्ज्ञानेन किमित्यपेक्षायां तत्फलोक्त्या तस्यैव स्तुत्या तद्धेतौ पुरुषं प्रवर्तयितुं श्लोकान्तरमित्याह—**यथोक्तस्येति** । यस्मादित्यस्य ततःशब्देन संबन्धः । सर्वभूतेषु तुल्यतयावस्थितं पूर्वोक्तलक्षणमीश्वरं निर्विशेषं पश्यन्नात्मानमात्मना यस्मान्न हिनस्ति ततस्तस्मान्मोक्षाख्यां परां गतिं यातीति योजना । तत्र पादत्रयेण ज्ञानादज्ञानध्वस्त्या ध्वस्तिरनर्थस्योक्ता । अज्ञानमिथ्याज्ञानयोरावरणयोर्नाशे सर्वोत्कृष्टां गतिं परमपुरुषार्थं परमानन्दमनुभवति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एतेन देहएव तदधिगमस्थानमित्युक्तम् । परमेश्वरमन्तर्यामिणं सर्गस्थित्यन्तकर्तारम् । अतएवान्तर्मुखदृष्ट्या विनश्यत्सु तेषु भूतेषु रज्जूरगादिवत्कल्पितत्वाददर्शनम् गच्छत्सु विभुत्वादात्मत्वान्नित्यदृग्रूपत्वाच्चाविनश्यन्तं सर्वास्वप्यवस्था-

४ मधुसूदनीव्याख्या ।

च विषमेषु अतएव चञ्चलेषु प्रतिक्षणपरिणामिनो हि भावा नापरिणम्य क्षणमपि स्थातुमीशते । अतएव परस्परबाध्यबाधकभावापन्नेषु एवमपि विनश्यत्सु दृष्टनष्टस्वभावेषु मायागन्धर्वनगरादिप्रायेषु समं सर्वत्रैकरूपं प्रतिदेहमेकं जन्मादिपरिणामशून्यतया च तिष्ठन्तमपरिणममानं परमेश्वरं सर्वजडवर्गसत्तास्फूर्तिप्रदत्वेन बाध्यबाधकभावशून्यं सर्वदोषानास्कन्दितं अविनश्यन्तं दृष्टनष्टप्रायसर्वद्वैतबाधेऽप्यबाधितम् । एवं सर्वप्रकारेण जडप्रपञ्चविलक्षणमात्मानं विवेकेन यः शास्त्रचक्षुषा पश्यति स एव पश्यत्यात्मानं जाग्रद्बोधेन स्वप्नभ्रमं बाधमान इव । अज्ञस्तु स्वप्नदर्शीव भ्रान्त्या विपरीतं पश्यन्नपश्यत्येव, अदर्शनात्मकत्वाद्भ्रमस्य । नहि रज्जुं सर्पतया पश्यन् पश्यतीति व्यपदिश्यते, रज्ज्वदर्शनात्मकत्वात्सर्पदर्शनस्य । एवंभूतान्यानुपरक्तशुद्धात्मदर्शनात्तददर्शनात्मिकाया अविद्याया निवृत्तिस्ततस्तत्कार्यसंसारनिवृत्तिरित्यभिप्रायः । अत्रात्मानमिति विशेष्यलाभो विशेषणमर्यादया । परमेश्वरमित्येव वा विशेष्यपदम् । विषमत्वचञ्चलत्वबाध्यबाधकरूपत्वलक्षणं जडगतं वैधर्म्यं समत्वतिष्ठत्त्वपरमेश्वरत्वरूपात्मविशेषणवशादर्थात्प्राप्तमन्यत्कण्ठोक्तमिति विवेकः ॥ २७ ॥ तदेतदात्मदर्शनं फलेन स्तौति रुच्युत्पत्तये—

५ भाष्योत्कर्षदीपिका ।

मेश्वरं देहेन्द्रियाद्यात्मानमपेक्ष्य परमश्चासावीशनशीलश्च तं विनश्यत्सु सर्वेषां भावविकाराणां जन्मोत्तरभावित्वात् नाशेन षड्भावविकारा गृह्यन्ते । सर्वभावविकारवत्सु अविनश्यन्तं सर्वविकाररहितं । तथाच सर्वभूतेभ्योऽत्यन्तविलक्षणं प्रत्यगभिन्नं परमेश्वरं यः पश्यति स एव पश्यति नतु विपरीतदर्शी । यथाऽनेकचन्द्रदर्श्यपेक्षया एकचन्द्रदर्शी विशिष्यते तथा विभक्तानेकात्मविपरीतद-

**समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम्।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्॥ २८॥**

१ श्रीमच्छांकरभाष्यम्।

**कस्य सम्यग्दर्शनस्य फलवचनेन स्तुतिः कर्तव्येति श्लोक आरभ्यते—समं पश्यन्निति। समं पश्यन्नुपलभमानो हि यस्मात्सर्वत्र सर्वभूतेषु समवस्थितं तुल्यतयावस्थितमीश्वरमतीतानन्तरश्लोकोक्तलक्षणमित्यर्थः। समं पश्यन्कि न हिनस्ति हिंसां न करोत्यात्मना स्वेनैव स्वमात्मानं ततस्तदहिंसनाद्याति परां प्रकृष्टां गतिं मोक्षाख्याम्। ननु नैव कश्चित्प्राणी स्वयं स्वमात्मानं हिनस्ति कथमुच्यतेऽप्राप्तं न हिनस्तीति। यथा न पृथिव्यामग्निश्चेतव्यो नान्तरिक्ष इत्यादि। नैष दोषः, अज्ञानात्मतिरस्करणोपपत्तेः। सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षादात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्ते नवं तं चैवं हत्वान्यमेवं तमपि हत्वान्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञः। यस्तु परमार्थात्माऽसावपि सर्वदाऽविद्यया हत इव विद्यमानफलाभावादिति सर्वे आत्महन एवाविद्वांसः। यस्त्वि-**

२ आनन्दगिरिव्याख्या।

विद्वानिति चतुर्थपादार्थः। न हिनस्त्यात्मनात्मानमिति यथाश्रुतमादाय चोदयति—**नन्विति**। न पृथिव्यामिति प्राप्तिद्वारा निषेधवन्नान्तरिक्षे न दिवीति प्राप्त्यभावाचायं निषेधो मुख्यो नेष्यते तथेहापि प्राप्तिं विना निषेधो न युक्तिमानित्याह—**यथेति**। अज्ञानामात्मनैवात्महिंसासंभवाद्विदुषां तदभावोक्तिर्युक्तेति समाधत्ते—**नैष दोष इति**। संग्रहवाक्यं विवृणोति—**सर्वो हीति**। अनात्मशब्दो देहादिविषयः। अविदुषामारोपितात्महन्तृत्वं निगमयति—**इत्यात्महेति**। तथापि पारमार्थिकस्यात्मनो हननाभावान्न तेषां सर्वेषामात्महन्तृत्वमित्याशङ्क्याह—**यस्त्विति**। उक्तरीत्या सर्वेषामविदुषामात्महन्तृत्वं सिद्धमित्युपसंहरति—**सर्वे इति**। आत्मनैवात्महननमविदुषां दृष्टं तदिह

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

स्वदर्शनमगच्छन्तं यः पश्यति सएव पश्यति अन्येऽन्धा इत्यर्थः॥ २७॥ दर्शनफलमाह—**सममिति**। स्वदेहे इव सर्वत्र देहमात्रे समवस्थितं सम्यगवस्थितमीश्वरं समं समतया पश्यन् हि यतः स सर्वाभेददर्शी आत्मना देहादिना आत्मानं ईश्वरं न हिनस्ति नानायोनिसंकटेषु पातनेन न पीडयति किंतु ततः परां गतिं मोक्षं याति।

४ मधुसूदनीव्याख्या।

समवस्थितं जन्मादिविनाशान्तभावविकारशून्यतया सम्यक्तयावस्थितमित्यविनाशित्वलाभः। अन्यत्प्राग्व्याख्यातम्, एवं पूर्वोक्तविशेषणमात्मानं पश्यन् अयमहमस्मीति शास्त्रदृष्ट्या साक्षात्कुर्वन् न हिनस्त्यात्मनात्मानम्। सर्वो ह्यज्ञः परमार्थसन्तमेकमकर्त्रभोक्तृपरमानन्दरूपमात्मानमविद्यया सति भात्यपि वस्तुनि नास्ति न भातीति प्रतीतिजननसमर्थया स्वयमेव तिरस्कुर्वन्नसन्तमिव करोतीति हिनस्त्येव तम्। तथाऽविद्ययात्मत्वेन परिगृहीतं देहेन्द्रियसंघातमात्मानं पुरातनं हत्वा नवमादत्ते कर्मवशादिति हिनस्त्येव तम्। अत उभयथाप्यात्महैव सर्वोप्यज्ञः, यमधिकृत्येयं शकुन्तलावचनरूपा स्मृतिः—'किं तेन न कृतं पापं चोरेणात्मापहारिणा। योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते'। इति। श्रुतिश्च 'असुर्या नाम ते लोका अन्धेन तमसावृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति। असुर्या असुरस्य स्वभूता असुर्या संपदा भोग्या इत्यर्थः। आत्महन इत्यनात्मन्यात्माभिमानिन इत्यर्थः। अतो य आत्मज्ञः सोऽनात्मन्यात्माभिमानं शुद्धात्मदर्शनेन बाधते। अतः स्वरूपलाभान्

५ भाष्योत्कर्षदीपिका।

शिभ्यो यथोक्तात्मदर्श्यपीत्यर्थः॥ २७॥ श्रोतृप्ररोचनाय यथोक्तं सम्यग्दर्शनं फलवचनेन स्तौति—**सममिति**। सर्वत्र समं तुल्यतयावस्थितं ईश्वरमुक्तलक्षणं समं पश्यन् उपलभमानः। हि यस्मादात्मना स्वेनैव स्वात्मानं न हिनस्ति हिंसां न करोति ततस्तस्मात्परां प्रकृष्टां मोक्षाख्यां गतिं याति प्राप्नोति। मुच्यत इत्यर्थः। अयमर्थः—सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षमप्यात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वाऽन्यमात्मानमुपादत्ते तमपि हत्वाऽन्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा उच्यते। 'असुर्या नाम ते लोका अन्धेन तमसावृताः। तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः'। 'अन्यथा सन्तमात्मानं योऽन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारिणा' इत्यादि श्रुतिस्मृतिभ्यां परमार्थात्माप्यविद्वद्भिरविद्यया हत इव। अतः सर्वेऽप्यविद्वांस आत्महन एवोच्यन्ते। यस्त्वितरो यथोक्तात्मदर्शी स उभयथाप्यात्मना आत्मानं न हिनस्ति ततो याति परां गतिम्। एतेन कश्चिदपि प्राणी स्वयं स्वमात्मानं नैव हिनस्तीत्यतो प्राप्तं हननं किमिति

६ श्रीधरीव्याख्या।

अतएव तेषु विनश्यत्स्वप्यविनश्यन्तं यः पश्यति स एव सम्यक्पश्यति नान्यः॥ २७॥ कुत इत्यत आह—**सममिति**। सर्वत्र भूतमात्रे समं सम्यगप्रच्युतस्वरूपेणावस्थितं परमात्मानं पश्यन् हि यस्मादात्मना स्वेनैवात्मानं न हिनस्ति अविद्यया सच्चि-

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।**
**यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तरो यथोक्तात्मदर्शी स उभयथाप्यात्मनात्मानं न हिनस्ति ततो याति परां गतिम् । यथोक्तं फलं तस्य भवतीत्यर्थः ॥ २८ ॥ सर्वभूतस्थमीशं समं पश्यन्न हिनस्त्यात्मनात्मानमित्युक्तं तदनुपपन्नं स्वगुणकर्मवैलक्षण्यभेदभिन्नेष्वात्मस्वित्येतदाशङ्क्याह—प्रकृत्यैवेति । प्रकृत्या प्रकृतिर्भगवतो माया त्रिगुणात्मिका 'मायां तु प्रकृतिं विद्यात्' इति मन्त्रवर्णात्तया प्रकृत्यैव च नान्येन महदादिकार्यकारणाकारपरिणतया कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि निर्वर्त्यमानानि सर्वशः सर्वप्रकारैर्यः पश्यत्युपलभते तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितं पश्यति स परमार्थदर्शीत्यभिप्रायः ।

२ आनन्दगिरिव्याख्या ।

विद्वद्विषये शक्यं निषेद्धुमित्याह—**यस्त्वितर इति** । **उभयथापीति** । आरोपानारोपाभ्यामित्यर्थः । ज्ञानादनर्थभ्रमभ्रंशे पूर्वोक्तपरमानन्दप्राप्त्या परितृप्तत्वं युक्तमित्याह—**तत इति** ॥ २८ ॥ श्लोकान्तरं शङ्कोत्तरत्वेनावतारयितुमनुवदति—**सर्वेति** । प्रतिदेहं धर्माधर्मादिमत्त्वेनात्मनो भेदभानान्न सम्यग्दर्शनमिति शङ्कते—**तदिति** । स्वगुणैः सुखदुःखादिभिः स्वकर्मभिश्च धर्माधर्माख्यैर्वैलक्षण्यात्प्रतिदेहं भेदे तद्विशिष्टेष्वात्मसु कथं साम्येन दर्शनमित्येतदाशङ्क्य परिहरतीत्याह—**एतदिति** । प्रकृतिशब्दस्य स्वभाववाचित्वं व्यावर्तयति—**प्रकृतिरिति** । मायाशब्दस्य संवित्पर्यायत्वं प्रत्याह—**त्रिगुणेति** । उक्ता परस्य शक्तिर्मायेत्यत्र श्रुतिसंमतिमाह—**मायां त्विति** । अन्येन केनचित्क्रियमाणानि न भवन्ति कर्माणीत्येवकारार्थमाह—**नान्येनेति** । किं तदन्यन्निषेध्यमित्युक्ते सांख्याभिप्रेता प्रधानाख्या प्रकृतिरित्याह—**महदादीति** । सर्वप्रकारत्वं काम्यत्वनिषिद्धत्वादिना प्रकारबाहुल्यमात्मानमुक्तविशेषणं यः पश्यतीति पूर्वेण संबन्धः । स पश्यतीत्ययुक्तं पुनरुक्तेरित्याशङ्क्याह—**स परमार्थेति** । आत्मनां प्रतिदेहं भिन्नत्वे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यद्वा ऐकात्म्यदर्शित्वात्स्वात्मानमिवान्यमपि न हिनस्ति । सर्वत्र दयालुर्भवतीति भावः । ततश्च परां गतिं याति ॥ २८ ॥ ननु विषमस्वभावानि भूतानि कः समबुद्ध्या पश्यत्यग्निमिव शीतबुद्ध्येत्याशङ्क्याह—**प्रकृत्यैवेति** । सर्वशः सर्वप्रकारेण कर्माणि वाङ्मनःकायैरारब्धानि प्रकृत्यैव क्रियमाणानीति यः पश्यति तथा आत्मानं चाकर्तारं

४ मधुसूदनीव्याख्या ।

हिनस्त्यात्मनात्मानं ततो याति परां गतिम् । तत आत्महननाभावादविद्यातत्कार्यनिवृत्तिलक्षणां मुक्तिमधिगच्छतीत्यर्थः ॥ २८ ॥ ननु शुभाशुभकर्मकर्तारः प्रतिदेहं भिन्ना आत्मानो विषमाश्च तत्तद्विचित्रफलभोक्तृत्वेनेति कथं सर्वभूतस्थमेकमात्मानं समं पश्यन्न हिनस्त्यात्मनात्मानमित्युक्तमत आह—कर्माणि वाङ्मनःकायारभ्याणि सर्वशः सर्वैः प्रकारैः प्रकृत्यैव देहेन्द्रियसंघाताकारपरिणतया सर्वविकारकारणभूतया त्रिगुणात्मिकया भगवन्माययैव क्रियमाणानि नतु पुरुषेण सर्वविकारशून्येन यो विवेकी पश्यति, एवं क्षेत्रेण क्रियमाणेष्वपि कर्मसु आत्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितमसङ्गमेकं सर्वत्र समं यः पश्यति तथाशब्दः पश्यतीति क्रियाकर्षणार्थः । स पश्यति स परमार्थदर्शीति पूर्ववत् । सविकारस्य क्षेत्रस्य तत्तद्विचित्र-

५ भाष्योत्कर्षदीपिका ।

प्रतिषिध्यत इति शङ्का प्रत्युक्ता । आत्मशब्दस्य स्वस्मिन्मुख्यत्वादुक्तार्थे स्वरसाधिक्याच्चात्मना देहादिनात्मानं । यद्वा ऐक्यात्मदर्शित्वात्स्वात्मानमिवान्यमप्यात्मानं न हिनस्ति सर्वत्र दयालुर्भवतीति व्याख्यानमाचार्यैर्न प्रदर्शितम् ॥ २८ ॥ ननु सुखदुःखादिभिः गुणैर्धर्माधर्माख्यैः स्वकर्मभिश्च वैलक्षण्यात्प्रतिदेहं भेदे तद्विशिष्टेष्वात्मसु साम्यदर्शनमनुपपन्नमिति चेत्तत्राह । प्रकृतिस्त्रिगुणात्मिका भगवतो माया । 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः । तयैव च कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि सर्वशः सर्वप्रकारैः । सर्वप्रकारत्वे च काम्यत्वनिषिद्धत्वादिना प्रकारबाहुल्यं यः पश्यति तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिशून्यमेकं यः

६ श्रीधरीव्याख्या ।

दानन्दरूपमात्मानं तिरस्कृत्य न विनाशयति । ततश्च परां गतिं मोक्षमाप्नोति । यस्त्वेवं न पश्यति स हि देहात्मदर्शी देहेन सहात्मानं हिनस्ति । तथाच श्रुतिः—'असुर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्त्येके चात्महनो जनाः' इति ॥ २८ ॥ ननु शुभाशुभकर्मकर्तृत्वेन वैषम्ये दृश्यमाने कथमात्मनः समत्वमित्याशङ्क्याह—**प्रकृत्यैवेति** । प्रकृत्यैव देहेन्द्रियाकारेण परिणतया सर्वशः सर्वैः प्रकारैः क्रियमाणानि कर्माणि यः पश्यति, तथात्मानं, चाकर्तारं देहाभिमानेनैवात्मनः कर्तृत्वं न स्वतः

७ अभिनवगुप्ताचार्यव्याख्या ।

दुस्तरे संसारार्णवे पातयति ॥ २६ ॥ २७ ॥ २८ ॥ प्रकृत्यैवहीत्यादि । यस्यहीदृशी स्थिरतरा बुद्धिर्भवति प्रकृतिरेवेदं करोति नाहं किंचि-

---

१ नीलकण्ठः

**यदा भूतपृथग्भावमेकस्थमनुपश्यति।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा॥ ३०॥**

१ श्रीमच्छांकरभाष्यम्।

निर्गुणस्याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तिरित्यर्थः॥ २९॥ पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति—यदेति। यदा यस्मिन्काले भूतपृथग्भावं भूतानां पृथग्भावं पृथक्त्वमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यति शास्त्राचार्योपदेशतो मत्वात्मप्रत्यक्षत्वेन पश्यत्यात्मैवेदं सर्वमिति। तत एव च तस्मादेव च विस्तारमुत्पत्तिं विकाशमात्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतो भूरात्मनोऽन्नमित्येवमादिप्रकारैर्विस्तारं यदा पश्यति ब्रह्म संपद्यते ब्रह्मैव भवति तदा। तस्मिन्काल इत्यर्थः॥ ३०॥ एक-

२ आनन्दगिरिव्याख्या।

तेषु समदर्शनमयुक्तमित्युक्तस्य कः समाधिरित्याशङ्क्याह—**निर्गुणस्येति**॥ २९॥ प्रकृतेर्विकाराणां च सांख्यवत्पुरुषादन्यत्वप्रसक्तौ प्रत्याह—**पुनरपीति**। उपदेशजनितं प्रत्यक्षदर्शनमनुवदति—**आत्मैवेति**। भूतानां विकाराणां नानात्वं प्रकृत्या सहात्ममात्रतया प्रलीनं पश्यति नहि भूतपृथक्त्वं सत्यां प्रकृतौ केवले परस्मिन्विलापयितुं शक्यत इत्यर्थः। परिपूर्णादात्मन एव प्रकृत्यादेर्विशेषान्तस्य स्वरूपलाभमुपलभ्य तन्मात्रतां पश्यतीत्याह—**तत एवेति**। उक्तमेव विस्तारं श्रुत्यवष्टम्भेन स्पष्टयति—**आत्मत इति**। ब्रह्मसंपत्तिर्नाम पूर्णत्वेनाभिव्यक्तिरपूर्णत्वहेतोः सर्वस्यात्मसात्कृतत्वादित्याह—**ब्रह्मैवेति**। ज्ञानसमानकालैव मुक्तिरिति सूचयति—**तदेति**॥ ३०॥

३ नीलकण्ठव्याख्या (चतुर्धरी)।

यः पश्यति पूर्वोक्तरीत्या सएव सर्वत्र समं पश्यतीति पूर्वेणान्वयः॥ २९॥ ननु कथं प्रकृतेरेव कर्तृत्वं नत्वात्मन इत्याशङ्क्याह—**यदेति**। भूतानां वियदादीनां जरायुजादीनां च पृथग्भावं नानाभावेनावस्थानं परिदृश्यमानमिदं यदा एकस्थं एकस्मिन्नात्मनि स्थितं रज्ज्वां सर्पादिवत्, कनके वा कुण्डलादिवत् विलीनं शास्त्राचार्योपदेशमनुपश्यति। ततएवैकस्मात् विस्तारं च भूतपृथग्भावस्य व्युत्थानावस्थामनु स्वप्नादिवत् पश्यति तदा ब्रह्म संपद्यते ब्रह्मैव भवति। अयं भावः। कर्तृत्वं हि क्रियावत्त्वं क्रिया च परिस्पन्दः सच परिच्छिन्नस्य पृथग्भूतस्य प्राकृतस्य

४ मधुसूदनीव्याख्या।

कर्मकर्तृत्वेन प्रतिदेहं भेदेऽपि वैषम्येऽपि न निर्विशेषस्याकर्तुराकाशस्येव न भेदे प्रमाणं किंचिदात्मन इत्युपपादितं प्राक्॥ २९॥ तदेवमापाततः क्षेत्रभेददर्शनमभ्यनुज्ञाय क्षेत्रज्ञभेददर्शनमपाकृतम्। इदानीं तु क्षेत्रभेददर्शनमपि मायिकत्वेनापाकरोति—यदा यस्मिन्काले भूतानां स्थावरजङ्गमानां सर्वेषामपि जडवर्गाणां पृथग्भावं पृथक्त्वं परस्परभिन्नत्वं एकस्थं एकस्मिन्नेवात्मनि सद्रूपे स्थितं कल्पितं कल्पितस्याधिष्ठानादनतिरेकात् सद्रूपात्मस्वरूपादनतिरिक्तं अनु पश्यति शास्त्राचार्योपदेशमनु स्वयमालोचयति आत्मैवेदं सर्वमिति। एवमपि मायावशात्तत एकस्मादात्मन एव विस्तारं भूतानां पृथग्भावं च स्वप्नमायावदनुपश्यति ब्रह्म

५ भाष्योत्कर्षदीपिका।

पश्यति स पश्यति परमार्थदर्शीति पूर्ववत्। निर्गुणस्याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तेरित्यर्थः॥ २९॥ प्रकृतेर्विकाराणां च सांख्यवत्पुरुषादन्यत्वप्रसक्तिं निराकुर्वन्पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति—**यदेति**। यदा यस्मिन्काले भूतानां पृथग्भावः पृथक्त्वमेकस्थमेकस्मिन्नात्मनि प्रकृत्यादिसमस्तप्रपञ्चाधिष्ठाने प्रत्यगभिन्ने ब्रह्मणि सद्रूपे स्थितं कल्पितस्याधिष्ठानानतिरेकादात्मानतिरिक्तमनु शास्त्राचार्योपदेशात्पश्चात्पश्यति 'आत्मैवेदं सर्वं, सर्वं खल्विदं ब्रह्म नेहनानास्ति किंचन, अहं ब्रह्मास्मि' इति साक्षात्करोति ततएव परमात्मन एव विस्तारं 'यतो वा इमानि भूतानि जायन्ते, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, तस्माद्वा एतस्मादात्मन आकाशः संभूतः, तदैक्षत, तत्तेजोऽसृजत' इति सर्वप्रपञ्चविस्तारमनुपश्यति तदा तस्मिन्काले ब्रह्म संपद्यते। ब्रह्मैव भवतीत्यर्थः। 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः। एकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ स्थितं प्रलयेऽनुपश्यति। तत एव च

६ श्रीधरीव्याख्या।

इत्येवं यः पश्यति, स एव सम्यक्पश्यति नान्य इत्यर्थः॥ २९॥ इदानीं तु भूतानां प्रकृतितावन्मात्रत्वेनाभेदाद्भूतभेदकृतमप्यात्मनो भेदमपश्यन्ब्रह्मत्वमुपैतीत्याह—**यदेति**। यदा भूतानां स्थावरजङ्गमानां पृथग्भावं भेदं पृथक्त्वं एकस्थं एकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ स्थितं प्रलयेऽनुपश्यत्यालोचयति, तत एव च तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमयेऽनुपश्यति, तदा प्रकृति-

७ अभिनवगुप्ताचार्यव्याख्या।

दिति। स सर्वं कुर्वाणोपि न करोति। एवमकर्तृत्वम्॥ २९॥ यदि वा विस्तीर्णत्वेन सर्वव्याप्तया यदा भूतानां पृथक्तां भिन्नतामात्मन्येव

१ श्रीधरः।

**अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥**

१ श्रीमच्छांकरभाष्यम्।

स्यात्मनः सर्वदेहात्मत्वे तद्दोषसंबन्धे प्राप्त इदमुच्यते—अनादीति । अनादित्वादनादेर्भावोऽनादित्वमादिः कारणं तद्यस्य नास्ति तदनादि। यद्ध्यादिमत्तत्स्वेनात्मना व्येत्ययं त्वनादित्वान्निरवयव इति कृत्वा न व्येति । तथा निर्गुणत्वात्सगुणो हि गुणव्ययाद् व्येत्ययं तु निर्गुणत्वान्न व्येतीति परमात्मायमव्ययो नास्य व्ययो विद्यत इत्यव्ययः। यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते तथापि न करोति। तदकरणादेव तत्फलेन न लिप्यते। यो हि कर्ता स कर्मफलेन लिप्यतेऽयं त्वकर्ताऽतो न फलेन लिप्यत इत्यर्थः। कः पुनर्देहेषु करोति लिप्यते च। यदि तावदन्यः परमात्मनो देही करोति लिप्यते च तत इदमनुपपन्नमुक्तं क्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञं चापि मां विद्धीत्यादि। अथ नास्तीश्वरादन्यो देही कः करोति लिप्यते चेति वाच्यं परो वा

२ आनन्दगिरिव्याख्या।

परिपूर्णत्वेन सर्वात्मत्वे प्राप्तमात्मनो देहादि तेन कर्तृत्वादिना तद्वत्त्वं दृष्टं हि पवित्रस्यापि पञ्चगव्यादेरपवित्रसंसर्गात्तद्दोषेण दुष्टत्वमित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति—**एकस्येति**। अनादित्वमेव साधयति—**आदिरिति**। तथापि किं स्यादित्याशङ्क्य कार्यत्वकृतव्ययाभावः सिध्यतीत्याह—**यद्धीति**। तथापि गुणापकर्षद्वारको व्ययो भविष्यति नेत्याह—**तथेति**। निरवयवत्वादेव सावयवद्वारकस्य निर्गुणत्वाद्गुणद्वारकस्य च व्ययस्याभावेऽपि स्वभावतो व्ययः स्यादित्याशङ्क्याह—**परमात्मेति**। परमात्मनः स्वतः परतो वा व्ययाभावे फलितमाह—**यत इति**। स्वमहिमप्रतिष्ठस्य कथं शरीरस्थत्वं तत्राह—**शरीरेष्विति**। सर्वगतत्वेन सर्वात्मत्वेन च देहादौ स्थितोऽपि स्वतो देहाद्यात्मना वा न करोति कूटस्थत्वाद्देहादेश्च कल्पितत्वादित्यर्थः। कर्तृत्वाभावेऽपि भोक्तृत्वं स्यादित्याशङ्क्याह—**तदकरणादिति**। तदेवोपपादयति—**यो हीति**। परस्य कर्तृत्वादेरभावे कस्य तदिष्टमिति पृच्छति—**कः पुनरिति**। परस्मादन्यस्य कस्यचिज्जीवस्य कर्तृत्वादीत्याशङ्कामनुवदति—**यदीति**। तस्मिन्पक्षे प्रक्रमभङ्गः स्यादिति दूषयति—**तत इति**। ईश्वरातिरिक्तजीवानङ्गीकारान्नोपक्रमविरोधोऽस्तीति शङ्कते—**अथेति**। तर्हि प्रतीतकर्तृत्वादेरधिकरणं वक्तव्यमिति पूर्ववाद्याह—**क इति**। परस्यैव कर्तृत्वाद्याधारत्वान्नास्ति वक्तव्यमित्याशङ्क्याह—**परो वेति**। नास्तीति वाच्यमिति पूर्वेण संबन्धः। नहि कर्तृत्वादिभाक्त्वे परस्यासदादिवदीश्वरत्वमिति भावः। परस्यान्यस्य वा कर्तृत्वादावविशिष्टे शरीरस्थोऽपीत्यादिश्रुतिमूलमपि ज्ञातुं वक्तुं चाशक्यत्वात्त्याज्यमेवेति परीक्षकसंमत्योपसंहरति—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

बुद्ध्यादेरेव संभवति नतु व्यापकस्य सर्वभूतपृथग्भावग्रसिष्णोरात्मन इति ॥ ३० ॥ नन्वात्मनो विभुत्वेन रूपेण कर्तृत्वं मास्वीकारि देहाद्यवच्छिन्नेन तु रूपेण तद्वक्तव्यमन्यथानुभवविरोधादित्याशङ्क्याह—**अनादित्वादिति**। अयं सर्वेषां प्राणिनां नित्यापरोक्षः परमो देहादिभ्योऽपरमेभ्य आत्मभ्योऽन्यः कोशपञ्चकातीत आत्मा परमात्मा।

४ मधुसूदनीव्याख्या।

संपद्यते तदा सजातीयविजातीयभेददर्शनाभावात् ब्रह्मैव सर्वानर्थशून्यं भवति। तस्मिन्काले 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति श्रुतेः। प्रकृत्यैव चेत्यत्रात्मभेदो निराकृतः, यदा भूतपृथग्भावमित्यत्र त्वनात्मभेदोऽपीतिविशेषः ॥ ३० ॥ आत्मनः स्वतोऽकर्तृत्वेऽपि शरीरसंबन्धादौपाधिकं कर्तृत्वं स्यादित्याशङ्कामपनुदन् यः पश्यति तथात्मानमकर्तारं स पश्यतीत्येतद्विवृणोति—**अनादित्वादिति**। अयमपरोक्षः परमात्मा परमेश्वराभिन्नः प्रत्यगात्मा अव्ययो न व्येतीत्यव्ययः सर्वविकारशून्य इत्यर्थः। तत्र व्ययो द्विधा धर्मिणः स्वरूपस्यैवोत्पत्तिमत्तया वा, धर्मिस्वरूपस्यानु-

५ भाष्योत्कर्षदीपिका।

तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमयेऽनुपश्यतीति तूक्तप्रसक्त्यनिरासं ब्रह्म संपद्यते इति कथनानुपपत्तिं चाभिप्रेत्याचार्यैर्न व्याख्यातम् ॥ ३० ॥ नन्वेकस्यात्मनः सर्वत्र समवस्थितत्वेन देहादिगतकर्तृत्वादिमत्त्वं प्राप्तं पवित्रस्यापि गङ्गाजलादेः अपवित्रप्राण्युदरान्तरदोषेण दोषवत्त्ववदिति तत्राह—**अनादित्वादिति**। अयं परमात्माव्ययोऽपक्षयरहितः कूटस्थ इत्यर्थः।

६ श्रीधरीव्याख्या।

तावन्मात्रत्वेन भूतानामप्यभेदं पश्यन्परिपूर्णं ब्रह्म संपद्यते । ब्रह्मैव भवतीत्यर्थः ॥ ३० ॥ तथापि परमेश्वरस्य संसारावस्थायां देहकर्मसंबन्धनिमित्तैः कर्मभिस्तत्फलैश्च सुखदुःखादिवैषम्यं दुष्परिहरमिति कुतः समदर्शनं तत्राह—**अनादित्वादिति**। यदुत्पत्ति-

७ अभिनवगुप्ताचार्यव्याख्या।

पश्यति आत्मन एव चोदितां तां मन्यते तदापि सर्वकर्तृत्वान्न लेपभाक्। यतोऽसौ परमात्मैव शरीरस्थोऽपि न लिप्यते आकाशवत् ॥ ३० ॥

१ श्रीमच्छांकरभाष्यम् ।

**नास्तीति । सर्वथा दुर्विज्ञेयं दुर्वाच्यं चेति भगवत्प्रोक्तमौपनिषदं दर्शनं परित्यक्तं वैशेषिकैः सांख्यार्हतबौद्धैश्च । तत्रायं परिहारो भगवता स्वेनैवोक्तः 'स्वभावस्तु प्रवर्तते' इति । अविद्यामात्रस्वभावो हि करोति लिप्यत इति व्यवहारो भवति नतु परमार्थत एकस्मिन्परमात्मनि तदस्ति अत एकस्मिन्परमार्थसांख्यदर्शने स्थितानां ज्ञाननिष्ठानां परमहंसपरिव्राजकानां तिरस्कृताविद्याव्यवहाराणां**

२ आनन्दगिरिव्याख्या ।

**सर्वथेति** । परस्य वस्तुनोऽकर्तुरभोक्तुश्चाविद्यया तदारोपादादेयमेव भगवन्मतमिति परिहरति—**तत्रेति** । तमेव परिहारं प्रपञ्चयति—**अविद्येति** । व्यावहारिके कर्तृत्वादाविष्टे पारमार्थिकमेव किं नेष्यते तत्राह—**नत्विति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अव्ययः न व्येति परिच्छिद्यते देशतः कालतो वस्तुतश्चेत्यव्ययः । अव्ययत्वे हेतुः—**अनादित्वादिति** । यद्धि आदिमदाकाशादि तद्व्येति न त्वयं व्येति अनादित्वात् । नन्वनादिभावस्यानन्त्यनियमेनात्मनः कालतः परिच्छेदो मास्तु । तथा देशतः परिच्छिन्नस्य नाशावश्यंभावादनादित्वायोगाच्च देशतोऽपि परिच्छेदो ब्रह्मणो मास्तु । ननु परमाणुवद्भविष्यतीतिचेन्न । दशदिगवच्छेद्यप्रदेशभेदवतो द्रव्यस्य निरवयवत्वरूपाणुत्वासिद्धेः । नहि परमाणोः पूर्वदिगवच्छिन्नो भागः पश्चिमया व्यवच्छेत्तुं शक्यते अनुभवविरोधात् । देशतः परिच्छेदाभावादेव सजातीयविजातीयवस्तुसद्भावकृतः परिच्छेदोऽपि मास्तु तथापि विचित्रशक्तियुक्तस्याभिनवप्रपञ्चरचनापटीयसः परस्य सर्वेश्वरत्वसर्वज्ञत्वादिगुणयुक्तस्य स्वगतभेदोऽवश्यंभावी । स्वशक्तिमायावच्छिन्नेन रूपेण जगत्कर्तृत्वं देहावच्छेदेनाग्निहोत्रादिकर्तृत्वं चावश्यं वक्तव्यमित्याशङ्क्याह—**निर्गुणत्वादिति** । यो हि गुणवानाकाशादिः स संयोगं विभागं वोपाधिं प्राप्य स्वगुणं शब्दमाविष्करोति नतु स्वस्मिन्नसन्तं स्पर्शं केनचिदप्युपाधिना दर्शयितुमीष्टे । एवं आत्मा सर्वगुणहीनः सत्यप्यवच्छेदलाभे कर्तृत्वादिकं गुणमाविष्कर्तुं न समर्थ इति ।

४ मधुसूदनीव्याख्या ।

त्पाद्यत्वेऽपि धर्माणामेवोत्पत्त्यादिमत्तया वा, तत्राद्यमपाकरोति—आदिः प्रागसत्त्वावस्था । सा च नास्ति सर्वदा सत आत्मनः । अतस्तस्य कारणाभावाज्जन्माभावः । नह्यनादेर्जन्म संभवति । तदभावे च तदुत्तरभाविनो भावविकारा न संभवन्त्येव । अतो न स्वरूपेण व्येतीत्यर्थः । द्वितीयं निराकरोति—**निर्गुणत्वादिति** । निर्धर्मकत्वादित्यर्थः । नहि धर्मिणमधिकृत्य कश्चिद्धर्म उपैत्यपैति वा धर्मधर्मिणोस्तादात्म्यात् अयं तु निर्धर्मकोऽतो न धर्मद्वारापि व्येतीत्यर्थः । 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' इति श्रुतेः । यस्मादेष जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीत्येवं षड्भावविकारशून्य आध्यासिकेन संबन्धेन शरीरस्थोपि तस्मिन्कुर्वत्ययमात्मा न करोति । यथाध्यासिकेन संबन्धेन जलस्थः सविता तस्मिंश्चलत्यपि न चलत्येव तद्वत् । यतो न करोति किंचिदपि कर्म अतः केनापि कर्मफलेन न लिप्यते । यो हि यत्कर्मकरोति स तत्फलेन लिप्यते न त्वयम् । अकर्तृत्वादित्यर्थः । इच्छा द्वेषः सुखं दुःखमित्यादीनां क्षेत्रधर्मत्वकथनात् प्रकृत्यैव च कर्माणि क्रियमाणानीति मायाकार्यत्वव्यपदेशाच्च । अतएव परमार्थदर्शिनां सर्वकर्माधिकारनिवृत्तिरिति प्राग्व्याख्यातम् । एतेनात्मनो निर्धर्मकत्वकथनात्स्वगतभेदोऽपि निरस्तः । प्रकृत्यैव च कर्माणीत्यत्र सजातीयभेदो निवारितः, यदा भूतपृथग्भावमित्यत्र विजातीयभेदः,

५ भाष्योत्कर्षदीपिका ।

तत्र व्ययस्त्रिविधः स्वभावतो वा, अवयवद्वारको वा गुणद्वारको वा । स्वतस्तु परब्रह्मणो न संभवतीति कथयितुं परमात्मेत्युक्तम् । द्वितीयासंभवे हेतुमाह—**अनादित्वादिति** । आदिः कारणं यस्य नास्ति तदनादि । घटादेरादिमत्त्वेन सावयवत्वाद्व्ययो दृष्टः, आत्मनस्त्वनादित्वेन निरवयवत्वादवयवद्वारको व्ययो न संभवतीत्यर्थः । तृतीयं निराकरोति—**निर्गुणत्वादिति** । तथा सगुणो गुणव्ययाद्व्येति अयंतु निर्गुणत्वान्न व्येति । गुणद्वारकोऽस्य व्ययो न संभवतीत्यर्थः । यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते । सर्वगतत्वेन सर्वात्मत्वेन च देहादौ स्थितोऽपि स्वतो देहात्मना वा न करोति कूटस्थत्वाद्देहादेश्च तस्मिन्कल्पितत्वादित्यर्थः । कर्तृत्वाभावादेव कर्मफलेन न लिप्यते । कुन्त्युत्पन्नशरीरस्थस्यापि तव कर्तृत्वं लेपश्च नास्तीति संबोधनाशयः । ननु एवं यः शरीरस्थः करोति लिप्यते च स कः किमुक्तलक्षणादकर्तुरलिप्तादात्मनोऽन्यः किंवाऽनन्यः । नाद्यः तत्त्वमसि, क्षेत्रज्ञं चापि मां विद्धीति क्षेत्रज्ञेश्वरैकत्वप्रतिपादनानुपपत्तिप्रसङ्गात् । द्वितीये परमात्मनः कर्तृत्वाद्यभावेन प्रतीयमानस्य कर्तृत्वादेरधिकरणं वाच्यम् । तथाच सर्वथेदं दुरुपपादमितिचेन्न । स्वभावस्तु प्रवर्तत इत्यविद्यामात्रस्वभावो हि करोति लिप्यत इति व्यवहारदशायामाविद्यकस्य कर्तृत्वादेर्भगवतैव निरूपितत्वात् । एवंच प्रत्यगभिन्ने ब्रह्मण्याविद्यकं कर्तृत्वादि न पारमार्थिकमिति भगवता प्रोक्ते औपनिषदे परमार्थसांख्यदर्शने दुर्विज्ञेयत्वात् सांख्यवैशेषिकादिभिर्भ्रान्तिजन्यया पूर्वोक्तशङ्कया परित्यक्ते स्थितानां ज्ञाननिष्ठानामविद्यापरिकल्पितकर्तृत्वाद्यपगमेन मोक्षप्राप्तिः नत्वन्यस्मिन् शुक्तिरूप्यकल्पे सांख्यादिप-

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥**
**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कर्माधिकारो नास्तीति तत्र तत्र दर्शितं भगवता ॥ ३१ ॥ किमिव न करोति न लिप्यत इत्यत्र दृष्टान्तमाह—यथा सर्वगतमिति । यथा सर्वगतं व्याप्यपि सत्सौक्ष्म्यात्सूक्ष्मभावादाकाशं खं नोपलिप्यते न संबध्यते सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥ किंच—यथा प्रकाशयतीति । यथा प्रकाशयत्यवभासयत्येकः कृत्स्नं लोकमिमं रविः सवितादित्यस्तथा तद्वन्महाभूतादि-

२ आनन्दगिरिव्याख्या ।

वास्तवकर्तृत्वाद्यभावे लिङ्गमुपन्यस्यति—**अत इति** ॥ ३१ ॥ सूक्ष्मभावात् अप्रतिहतस्वभावत्वादित्यर्थः । न संबध्यते पङ्कादिभिरिति शेषः ॥ ३२ ॥ न करोति न लिप्यते चेत्यत्र द्रष्टृत्वेन दृश्यधर्मशून्यत्वं हेतुमाह—**किंचेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

फलितमाह—**शरीरस्थोऽपीति** । स्पष्टार्थमेतत् ॥ ३१ ॥ निर्गुणत्वान्न करोतीति सिद्धम् । असङ्गत्वान्नोपलिप्यत इत्याह—**यथेति** । यथा आकाशो धूमादिना न लिप्यते सौक्ष्म्यादसङ्गस्वभावत्वात् । एवमात्मा पुण्यपापादिना नोपलिप्यत इत्यर्थः ॥ ३२ ॥ न करोति न लिप्यत इति द्वयमपि दृष्टान्तान्तरेण प्रतिपादयति—**यथेति** । यथा सूर्यः स्वसत्तामात्रेण विश्वं प्रकाशयति नतु व्यापाराविष्टतया कुविन्दइव पटम् । यथा चैष प्रकाश्यधर्मैर्दुर्गन्धादिभिर्न लिप्यते एवमयं क्षेत्री क्षेत्रज्ञः सूर्यवदेक एव सन्ननेकधा भूतं क्षेत्रं महाभूतानीत्यादिना चतुर्विंशतितत्त्वात्मकमिच्छाद्वेषादिविकारयुक्तमुक्तं तत्स्वसत्तामात्रेण प्रकाशयति हेभारत, नतु व्यापारविष्टतया तत्संपादयति । तद्धर्मैर्वा पुण्यपापादिभिर्न लिप्यते । सूर्यदृष्टान्तेनैकत्वमकर्तृत्वप्रयुक्तमलेपत्वं च दर्शितम् । तथाच श्रुतयः 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुरूपोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन

४ मधुसूदनीव्याख्या ।

अनादित्वान्निर्गुणत्वादित्यत्र स्वगतो भेद इत्यद्वितीयं ब्रह्मैवात्मेति सिद्धम् ॥ ३१ ॥ शरीरस्थोऽपि तत्कर्मणा न लिप्यते स्वयमसङ्गत्वादित्यत्र दृष्टान्तमाह—**यथेति** । सौक्ष्म्यादसङ्गस्वभावत्वात् आकाशं सर्वगतमपि नोपलिप्यते पङ्कादिभिर्यथेति दृष्टान्तार्थः । स्पष्टमितरत् ॥ ३२ ॥ न केवलमसङ्गस्वभावत्वादात्मा नोपलिप्यते प्रकाशकत्वादपि प्रकाश्यधर्मैर्न लिप्यत इति सदृष्टान्तमाह—**यथेति** । यथा रविरेक एव कृत्स्नं सर्वमिमं लोकं देहेन्द्रियसंघातम् । रूपवद्वस्तुमात्रमिति यावत् । प्रकाशयति नच प्रकाश्यधर्मैर्लिप्यते न वा प्रकाश्यभेदाद्भिद्यते । तथा क्षेत्री क्षेत्रज्ञ एक एव कृत्स्नं क्षेत्रं प्रकाशयति हे भारत, अतएव न प्रकाश्यधर्मैर्लिप्यते न वा प्रकाश्यभेदाद्भिद्यत इत्यर्थः । 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा

५ भाष्योत्कर्षदीपिका ।

रिकल्पितमते निष्ठावतामिति ॥ ३१ ॥ कर्तृत्वाभावान्न लिप्यत इत्युक्तं तत्र दृष्टान्तमाह—**यथेति** । सर्वत्र देहादौ गतं स्थितमप्याकाशं खं यथा सौक्ष्म्यात् सूक्ष्मत्वादसङ्गस्वभावत्वात् देहादिगतकर्तृत्वादिभिर्न लिप्यते न संबध्यते तथा सर्वत्र सर्वस्मिन्नवस्थितः आत्मा देहे देहधर्मैर्न लिप्यत इत्यर्थः ॥ ३२ ॥ प्रकाशरूपत्वाच्च प्रकाश्यधर्मैर्न लिप्यत इति दृष्टान्तेनाह—**यथेति** । यथा एको रविः सूर्यः कृत्स्नं सर्वमिमं प्रत्यक्षादिनानुभूयमानं लोकं प्रकाशयति अवभासयंश्चावभास्यधर्मैर्न लिप्यते । तथा महाभूतादिधृत्यन्तं सर्वं क्षेत्रमेकः क्षेत्री प्रत्यगभिन्नः परमात्मा प्रकाशयति प्रकाशयंश्च प्रकाश्यधर्मैरेकः परमात्मा न लिप्यत

६ श्रीधरीव्याख्या ।

मत्तदेव हि व्येति विनाशमेति । यच्च गुणवद्वस्तु तस्य गुणनाशे व्ययो भवति । अयं तु परमात्मा अनादिर्निर्गुणश्चातोऽव्ययः । अविकारीत्यर्थः । तस्माच्छरीरे स्थितोऽपि किंचिन्न करोति, नच कर्मफलैर्लिप्यत इति ॥ ३१ ॥ तत्र दृष्टान्तमाह—**यथेति** । यथा सर्वत्र पङ्कादिष्वपि स्थितमाकाशं सौक्ष्यादसङ्गत्वात्पङ्कादिभिर्नोपलिप्यते तथा सर्वत्र उत्तमे मध्यमेऽधमे वा देहेऽवस्थितोऽप्यात्मा नोपलिप्यते । दैहिकैर्गुणदोषैर्न युज्यत इत्यर्थः ॥ ३२ ॥ असङ्गत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेनोक्तम्, प्रकाशकत्वाच्च प्रकाश्यधर्मैर्न

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ३१ ॥ ३२ ॥ यथा प्रकाशयतीति । नन्वेकः परमात्मा कथमनेकानि क्षेत्राणि व्याप्नोतीत्याशङ्क्य प्रसिद्धेन रविणा दृष्टान्तेनापाकृता ।

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
प्रकृतिपुरुषविवेकयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

१ श्रीमच्छांकरभाष्यम् ।

**धृत्यन्तं क्षेत्रमेकः सन्प्रकाशयति कः क्षेत्री परमात्मेत्यर्थः । रविदृष्टान्तोऽत्रात्मन उभयार्थोऽपि भवति रविवत्सर्वक्षेत्रेष्वेक आत्माऽलेपकश्चेति ॥ ३३ ॥ समस्ताध्यायार्थोपसंहारार्थोऽयं श्लोकः—क्षेत्रक्षेत्रज्ञयोरिति । क्षेत्रक्षेत्रज्ञयोर्यथाव्याख्यातयोरेवं यथाप्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितमात्मप्रत्ययिकं ज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतप्रकृतिमोक्षं च भूतानां प्रकृतिरविद्यालक्षणाऽव्यक्ताख्या तस्या भूतप्रकृतेर्मोक्षणमभावगमनं च ये विदुर्विजानन्ति, यान्ति गच्छन्ति ते परं परमार्थतत्त्वं ब्रह्म न पुनर्देहमाददत इत्यर्थः ॥ ३४ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये प्रकृतिपुरुषविवेको नाम त्रयोदशोऽध्यायः ॥ १३ ॥**

---

२ आनन्दगिरिव्याख्या ।

दृष्टान्तेन विवक्षितमर्थं दर्शयति—**रवीति** । उभयविधमर्थमेव स्फुटयति—**रविवदिति** ॥ ३३ ॥ अध्यायार्थं सफलमुपसंहरति—**समस्तेति** । विशेषं कौटस्थ्यपरिणामादिलक्षणं तदेवममानित्वादिनिष्ठतया क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वानर्थनिवृत्त्या परिपूर्णपरमानन्दाविर्भावलक्षणपुरुषार्थसिद्धिरिति सिद्धम् ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ त्रयोदशोऽध्यायः ॥ १३ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बाह्यः' इति ॥ ३३ ॥ अध्यायार्थं कृत्स्नमुपसंहरति—**क्षेत्रेति** । क्षेत्रक्षेत्रज्ञयोः पूर्वोक्तयोरेवमुक्तरीत्या अन्तरं भेदं जडत्वाजडत्वकर्तृत्वाकर्तृत्वविकारित्वाविकारित्वकृतं वैलक्षण्यं ज्ञानचक्षुःशास्त्राचार्योपदेशात्मप्रत्ययजनितेन ज्ञानचक्षुषा ये विदुस्ते परं मोक्षं यान्ति प्राप्नुवन्ति । किं सांख्यानामिवास्माकमपि गुणपुरुषान्तरज्ञानादेव कैवल्यमुच्यत इत्याशङ्क्याह—**भूतप्रकृतिमोक्षमिति** । भूतानां वियदादीनां प्रकृतिरुपादानं त्रिगुणात्मिका अविद्या तस्या विद्यया मोक्षं निरन्वयोच्छेदं च ये विदुस्त एव परं यान्ति नतु क्षेत्रक्षेत्रज्ञयोरन्तरमात्रविद इत्यर्थः । यद्येका सत्या विभ्वी च प्रकृतिस्तर्हि विभूनामलिप्तदृशां बहूनां पुरुषाणां मुक्तानामपि तद्दर्शनमपरिहार्यम् । तथाच तेषामपि बन्धप्रसक्तिः । यदितु मिथ्या तर्हि यस्यैवात्मसाक्षात्कारो जातस्तद्दृष्ट्या सर्वथैव रज्जूरगवद्बाधिता कालत्रयेऽपि

४ मधुसूदनीव्याख्या ।

सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति श्रुतेः ॥ ३३ ॥ इदानीमध्यायार्थं सफलमुपसंहरति—क्षेत्रक्षेत्रज्ञयोः प्राग्व्याख्यातयोरेवमुक्तेन प्रकारेणान्तरं परस्परवैलक्षण्यं जाड्यचैतन्यविकारित्वनिर्विकारत्वादिरूपं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितात्मज्ञानरूपेण चक्षुषा ये विदुः भूतप्रकृतिमोक्षं च भूतानां सर्वेषां प्रकृतिरविद्या मायाख्या तस्याः

५ भाष्योत्कर्षदीपिका ।

इत्यर्थः । तथाच श्रुतिः 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' इति । यथा एकएव भरतः स्वनाम्ना भवदादीन्प्रकाशयति तथेति सूचयन्नाह—भारतेति ॥३३॥ अध्यायार्थं सफलमुपसंहरति । क्षेत्रक्षेत्रज्ञयोरुक्तप्रकारेण व्याख्यातयोरेवं यथा प्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं कौटस्थ्यपरिणामादिलक्षणं शास्त्राचार्योपदेशजनितमात्मप्रत्यक्षं ज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतानां प्रकृतिरविद्यालक्षणाऽव्यक्ताख्या तस्या भूतप्रकृतेः परमार्थात्मविद्यया मोक्षमभावगमनं ये विदुर्जानन्ति ते परं परमार्थतत्त्वं ब्रह्म यान्ति गच्छन्ति पुनर्देहं नाददत इत्यर्थः । तदनेन त्रयोदशाध्यायेनामानित्वादिकं निरूपयता तन्निष्ठस्य क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वानर्थनिवृत्त्या परिपूर्णपुरुषार्थसिद्धिरिति वदता

६ श्रीधरीव्याख्या ।

युज्यत इति रविदृष्टान्तेनाह—**यथेति** । स्पष्टार्थः ॥ ३३ ॥ अध्यायार्थमुपसंहरति—**क्षेत्रक्षेत्रज्ञयोरिति** । एवमुक्तप्रकारेण क्षेत्र-

७ अभिनवगुप्ताचार्यव्याख्या ।

कृत्स्नं क्षेत्रं चराचराणि क्षेत्राणीत्यर्थः ॥ ३३ ॥ क्षेत्रक्षेत्रज्ञयोरिति । एवमध्यायेन यदुक्तं ज्ञेयं ज्ञानं क्षेत्रक्षेत्रज्ञयोरन्तरं भूतप्रकृतेरन्तरं भूत-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नास्ति इतरेषां त्वनादिरनन्तास्त्येवेति वक्तुं शक्यम् । तस्मान्न प्रकृतिपुरुषान्तरज्ञानमात्रात्कैवल्यं किंतु प्रकृतिबाधेन पुरुषज्ञानात् सर्पबाधेन रज्जुदर्शनाद्भयनिवृत्तिवद्बन्धनिवृत्तिरिति सिद्धम् ॥ ३४ ॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे त्रयोदशोऽध्यायः ॥ १३ ॥

४ मधुसूदनीव्याख्या ।

परमार्थात्मविद्यया मोक्षमभावगमनं च ये विदुर्जानन्ति यान्ति ते परं परमार्थात्मवस्तुस्वरूपं कैवल्यं न पुनर्देहमाददत इत्यर्थः । तदेवममानित्वादिसाधननिष्ठस्य क्षेत्रक्षेत्रज्ञविवेकविज्ञानवतः सर्वानर्थनिवृत्त्या परमपुरुषार्थसिद्धिरिति सिद्धम् ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां प्रकृतिपुरुषविवेकयोगविवरणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

५ भाष्योत्कर्षदीपिका ।

तत्त्वंपदयोरैक्यं प्रतिपादितम् ॥ ३४ ॥

क्षेत्रक्षेत्रज्ञयाथात्म्यं सम्यग्येन प्रकाशितम् । वन्दे तं परमात्मानं शंकरं कृष्णमद्वयम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

६ श्रीधरीव्याख्या ।

क्षेत्रज्ञयोरन्तरं भेदं विवेकज्ञानलक्षणेन चक्षुषा ये विदुः, तथा चेयमुक्ता भूतानां प्रकृतिस्तस्याः सकाशान्मोक्षं मोक्षोपायं ध्यानादिकं च ये विदुस्ते परं पदं यान्ति ॥ ३४ ॥

विविक्तौ येन तत्त्वेन मिश्रौ प्रकृतिपूरुषौ । तं वन्दे परमानन्दनन्दं नन्दनमीश्वरम् ॥ १ ॥

इति सुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां त्रयोदशोऽध्यायः ॥ १३ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रकृतेश्च स्वरूपात्परिणामधर्मत्वान्मोचनं तथेन ज्ञानलक्षणेन सर्वत्राप्रतिहतेनालौकिकेन चक्षुषा पश्यन्ति ते वासुदेवतां प्राप्य लभन्त एव परं शिवम् ॥ ३४ ॥

अत्र संग्रहश्लोकः—पुमान्प्रकृतिरित्येष भेदः संमूढचेतसाम् । परिपूर्णास्तु मन्यन्ते निर्मलात्ममयं जगत् ॥ १ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचिते गीतातात्पर्यसंग्रहे त्रयोदशोऽध्यायः ॥ १३ ॥



# चतुर्दशोऽध्यायः ।

श्रीभगवानुवाच ।

**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इत्युक्तं तत्कथमिति तत्प्रदर्शनार्थं 'परं भूयः' इत्यादिरध्याय आरभ्यते, अथवेश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं नतु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तं कस्मिन्गुणे कथं सङ्गः के वा गुणाः कथं वा ते बध्नतीति गुणेभ्यश्च मोक्षणं कथं स्यान्मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थं च श्रीभगवानुवाच—परमिति । परं ज्ञानमिति व्यवहितेन संबन्धः । भूयः पुनः पूर्वेषु सर्वेष्वध्यायेष्वसकृदुक्तमपि**

२ आनन्दगिरिव्याख्या ।

क्षेत्रक्षेत्रज्ञसंयोगस्य सर्वोत्पत्तिनिमित्तत्वमज्ञातं ज्ञापयितुमध्यायान्तरमवतारयन्नध्याययोरुत्थाप्योत्थापकत्वरूपां संगतिमाह—**सर्वमिति** । विधान्तरेणाध्यायारम्भं सूचयति—**अथवेति** । तदेव वक्तुमुक्तमनुवदति—**ईश्वरेति** । प्रकृतिस्थत्वं पुरुषस्य प्रकृत्या सहैक्याध्यासस्तस्यैव गुणेषु शब्दादिविषयेषु सङ्गोऽभिनिवेशः । षड्विधामाकाङ्क्षां निक्षिप्य तदुत्तरत्वेनाध्यायारम्भे पूर्ववदेव पूर्वाध्यायसंबन्धसिद्धिरित्याह—**कस्मिन्निति** । पूर्वोक्तेनार्थेनास्याध्यायस्य समुच्चयार्थश्चकारः । परमित्यस्य भाविकालार्थत्वं व्यावर्तयितुं सङ्गतिमाह—**परमिति** । भूयःशब्दस्याधिकार्थत्वमिह नास्तीत्याह—**पुनरिति** । पुनःशब्दार्थमेव विवृणोति—**पूर्वेष्विति** । पुनरुक्तिस्तर्हीत्याशङ्क्य सूक्ष्मत्वेन दुर्बोधत्वात्पुनर्वचनमर्थ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वाध्यायान्ते भूतप्रकृतिमोक्षं च ये विदुस्ते परं यान्तीत्युक्तं तत्र का वा भूतप्रकृतिः किमाश्रयेण तस्या भूतजकत्वं कथंवा बन्धकत्वं कथं च ततो मोक्षः किंच मुक्तानां लक्षणमित्येतदर्थजातं विवरीतुं चतुर्दशोऽध्याय आरभ्यते । तत्र रुच्युत्पादनार्थं परं ज्ञानं स्तुवन् श्रीभगवानुवाच—**परमिति** । परं सर्वोत्कृष्टं ब्रह्मविषयत्वात् ज्ञानं भूयः पुनः असकृदुक्तमपि प्रवक्ष्यामि । किं तत्स्वरूपं आह । ज्ञानानाममानित्वादीनां यज्ञादीनां ज्ञानसाधनानां मध्ये यदुत्तमं

४ मधुसूदनीव्याख्या ।

पूर्वाध्याये 'यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि' इत्युक्तं, तत्र निरीश्वरसांख्यनिराकरणेन क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वं वक्तव्यम्, एवं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्युक्तं तत्र कस्मिन्गुणे कथं सङ्गः के वा गुणाः कथं वा ते बध्नन्तीति वक्तव्यम्, तथा 'भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम्' इत्युक्तं तत्र भूतप्रकृतिशब्दितेभ्यो गुणेभ्यः कथं मोक्षणं स्यान्मुक्तस्य च किं लक्षणमिति वक्तव्यं, तदेतत्सर्वं विस्तरेण वक्तुं चतुर्दशोऽध्याय आरभ्यते । तत्र वक्ष्यमाणमर्थं द्वाभ्यां स्तुवन् श्रोतॄणां रुच्युत्पत्तये श्रीभगवानुवाच—ज्ञायतेऽनेनेति ज्ञानं परमात्मज्ञानसाधनं परं श्रेष्ठं परवस्तुविषयत्वात् । कीदृशं तत् । ज्ञानानां ज्ञानसाधनानां बहिरङ्गाणां यज्ञादीनां मध्ये उत्तमं

५ भाष्योत्कर्षदीपिका ।

'यावत्संजायते किंचित्सत्त्वं स्थावरजंगमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ' इत्युक्तं तत्कथमिति प्रकाशनार्थं ईश्वरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोः जगत्कारणत्वं नतु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं च । तथा 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्युक्तं । कस्मिन् गुणे कथं रागः के वा गुणाः कथं ते बध्नन्ति गुणेभ्यश्च मोक्षणं कथं स्यात् मुक्तस्य च लक्षणं वक्तव्यं इत्येवमर्थं चाध्यायमारभमाण आदौ श्रोतृरुच्युत्पत्तये श्रीभगवानुवाच—**परमिति** । ज्ञानानां यज्ञादिज्ञेयवस्तुविषयाणां सर्वेषामुत्तमफल-

६ श्रीधरीव्याख्या ।

पुंप्रकृत्योः स्वतन्त्रत्वं वारयन्गुणसङ्गतः । प्राह संसारवैचित्र्यं विस्तरेण चतुर्दशे ॥ १ ॥

'यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ' इत्युक्तम् । स च क्षेत्रक्षेत्रज्ञयोः संयोगो निरीश्वरसांख्यानामिव न स्वातन्त्र्येण किं त्वीश्वरेच्छयैवेति कथनपूर्वकं 'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इत्यनेनोक्तं सत्त्वादिगुणकृतं संसारवैचित्र्यं प्रपञ्चयिष्यन्नेवंभूतं वक्ष्यमाणमर्थं स्तौति । श्रीभगवानुवाच—**परं भूय इति** द्वाभ्याम् । परं परमार्थनिष्ठं,

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीभगवानुवाच—परं भूय इति । यदेव पूर्वोक्तं ज्ञानं तदेव पुनः प्रकर्षेण प्रत्येकं गुणस्वरूपनिरूपणाय वैतत्येन वक्ष्यामि । यज्ज्ञात्वे-

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम्।

प्रवक्ष्यामि। तच्च परं परवस्तुविषयत्वात्। किं तत्, ज्ञानं सर्वेषां ज्ञानानामुत्तममुत्तमफलत्वात्। ज्ञानानामिति नामानित्वादीनां किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति। तानि न मोक्षायेदं तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थम्। यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यामितोऽस्माद्देहबन्धनादूर्ध्वं गताः प्राप्ताः ॥ १ ॥ अस्याश्च सिद्धेरैकान्तिकत्वं दर्शयति—इदमिति। इदं ज्ञानं यथोक्तमुपाश्रित्य ज्ञानसाधनमनुष्ठायेत्येतत्। मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो नतु समानधर्मतां

२ आनन्दगिरिव्याख्या।

वदित्याह—तच्चेति। विशेष्यं प्रश्नद्वारा निर्दिशति—किं तदिति। निर्धारणार्थां षष्ठीमादाय तस्य प्रकर्षं दर्शयति—सर्वेषामिति। परमुत्तममिति पुनरुक्तिमाशङ्क्य विषयफलभेदान्मैवमित्याह—उत्तमेति। ज्ञानं ज्ञेयमित्यादौ ज्ञानशब्देनामानित्वादीनामुक्तत्वात्तन्मध्ये च ज्ञानस्य साधयत्वेनोत्तमत्वान्न तस्य वक्तव्यतेत्याशङ्क्याह—ज्ञानानामिति। नामानित्वादीनां ग्रहणमिति शेषः। इतिशब्दादूर्ध्वं पूर्ववदेव शेषो द्रष्टव्यः। यथोक्तज्ञानापेक्षया कुतस्तज्ज्ञानस्य प्रकर्षस्तत्राह—तानीति। स्तुतिफलमाह—श्रोतृबुद्धीति। ज्ञानं ज्ञात्वा ज्ञानस्य ज्ञेयत्वोपगमादनवस्थेत्याशङ्क्याह—प्राप्येति। मुनिशब्दस्य चतुर्थाश्रमविषयत्वे तन्मात्रादेव ज्ञानायोगात्कुतस्तेषां मुक्तिरित्याशङ्क्याह—मननेति। सिद्धेर्ज्ञानत्वं परामिति विशेषणाद्व्यावर्त्य मुक्तित्वमाह—मोक्षाख्यामिति। देहाख्यस्य बन्धनस्याध्यक्षत्वमाह—अस्मादिति ॥ १ ॥ ज्ञानफलस्य कर्मफलवैलक्षण्यमाह—अस्याश्चेति। कथं ज्ञानाश्रयणं तद्धेतुश्रवणादिसामग्रीसंपत्तिद्वारेत्याह—ज्ञानेति। साधर्म्ये गोगवययोरिव विद्वदीश्वरयोरपि भेदः स्यादित्याशङ्क्याह—मत्स्वरूपतामिति। साधर्म्यस्य मुख्यत्वे भेदध्रौव्याद्गीताशास्त्रविरोधः स्यादित्याह—नत्विति। ज्ञानस्तुतये तत्फलस्य

३ नीलकण्ठव्याख्या (चतुर्धरी)।

मोक्षफलत्वादन्तरङ्गं तदेव तत्। अहं घटं जानामीत्यत्राहमर्थस्य घटाकारवृत्तेर्घटस्य च ज्ञानमस्तीति विषयभेदात् ज्ञानत्रयमस्ति। तत्राद्यद्वयं नान्तरीयकं, यच्च उत्तमं चरमं घटप्रकाशफलरूपं ज्ञानं तदेव परं ब्रह्मेत्यर्थः। यथोक्तं वार्तिककारैः 'परागर्थप्रमेयेषु या फलत्वेन संमता। संवित्सैवेह ज्ञेयोऽर्थो वेदान्तोक्तिप्रमाणतः' इति। यत् ज्ञानं ज्ञात्वा वेदान्तवाक्यजन्यया धीवृत्त्या अपरोक्षीकृत्य परां सिद्धिं मोक्षमितः संसारात्संसारं विहाय गताः प्राप्ताः ॥ १ ॥ इदं ज्ञानं विषयविषयिरूपविकल्पविनिर्मुक्तं उपाश्रित्य मम ईश्वरस्य साधर्म्यं सर्वात्मत्वं सर्वनियन्तृत्वं सर्वभावा-

४ मधुसूदनीव्याख्या।

उत्तमफलत्वात्। नत्वमानित्वादीनाम्। तेषामन्तरङ्गत्वेनोत्तमफलत्वात्। परमित्यनेनोत्कृष्टविषयत्वमुक्तं, उत्तममित्यनेन तूत्कृष्टफलत्वमिति भेदः। ईदृशं ज्ञानमहं प्रवक्ष्यामि भूयः पुनः। पूर्वेष्वध्यायेष्वसकृदुक्तमपि यज्ज्ञानं ज्ञात्वाऽनुष्ठाय मुनयो मननशीलाः संन्यासिनः सर्वे परां सिद्धिं मोक्षाख्यां इतो देहबन्धनाद्गताः प्राप्ताः ॥ १ ॥ तस्याः सिद्धेरैकान्तिकत्वं दर्शयति—इदं यथोक्तं ज्ञानं ज्ञानसाधनमुपाश्रित्यानुष्ठाय मम परमेश्वरस्य साधर्म्यं मद्रूपतामत्यन्ताभेदेनागताः प्राप्ताः सन्तः सर्गेऽपि हिरण्यगर्भादिषूत्पद्यमानेष्वपि नोपजायन्ते। प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च न व्यथन्ते।

५ भाष्योत्कर्षदीपिका।

त्वादुत्तमं नैत्वमानित्वादीनां तत्त्वज्ञानान्तरङ्गसाधनानां एतादृशं परमात्मसाक्षात्कारसाधनं ज्ञानं पूर्वेष्वध्यायेष्वसकृदुक्तमपि ब्रह्मणः सूक्ष्मत्वेन दुर्बोधत्वात् भूयः पुनरहं प्रकर्षेण वक्ष्यामि। यज्ज्ञानं ज्ञात्वा लब्ध्वा सर्वे मुनयो मननशीलाः परां सिद्धिं मोक्षाख्यां इतोऽस्माद्देहबन्धनादूर्ध्वं गताः प्राप्ताः ॥ १ ॥ मोक्षाख्यसिद्धेः कर्मफलापेक्षया परमत्वे तत्साधनस्य ज्ञानस्य चोत्तमत्वे हेत्वाकाङ्क्षायां सिद्धेरैकान्तिकत्वं दर्शयति—इदमिति। इदं यथोक्तं वक्ष्यमाणं च ज्ञानमुपाश्रित्य श्रवणादिज्ञानसाधनमनुष्ठाय मम पर-

६ श्रीधरीव्याख्या।

ज्ञायतेऽनेनेति ज्ञानमुपदेशं भूयोऽपि तुभ्यं प्रकर्षेण वक्ष्यामि। कथंभूतम्। ज्ञानानां तपःकर्मादिविषयाणां मध्ये उत्तमम्, मोक्षहेतुत्वात्। तदेवाह। यज्ज्ञात्वा प्राप्य मुनयो मननशीलाः सर्वे इतो देहबन्धनात्परां सिद्धिं गताः प्राप्ताः ॥ १ ॥ किंच—इदमिति। इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य इदं ज्ञानसाधनमनुष्ठाय मम साधर्म्यं मद्रूपत्वं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते

७ अभिनवगुप्ताचार्यव्याख्या।

त्यनेनास्य ज्ञानस्य दृष्टप्रत्ययतां प्रसिद्धिं चाह ॥ १ ॥ इदं ज्ञानमिति। व्यथन्तीति छान्दसत्वाधात्विङ्प्रत्ययः। एवमन्यत्रापि सुप्तिङ्प्रत्यये

१ नीलकण्ठः.

**मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमाद्गीताशास्त्रे । फलवादश्चायं स्तुत्यर्थमुच्यते । सर्गेऽपि सृष्टिकालेऽपि नोपजायन्ते नोत्पद्यन्ते, प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च व्यथां नापद्यन्ते । न च्यवन्तीत्यर्थः ॥ २ ॥ क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमित्याह—ममेति । मम स्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां सर्वकार्येभ्यो महत्त्वाद्भरणाच्च स्वविकाराणां महद्ब्रह्मेति योनिरेव विशिष्यते । तस्मिन्महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भस्य जन्मनो बीजं सर्वभूतज-

२ आनन्दगिरिव्याख्या ।

विवक्षितत्वाच्च नात्र सारूप्यमिष्टमित्याह—**फलेति** । सारूप्ये धीफलं हित्वा ध्यानफलमप्रस्तुतं प्रसज्येतेत्यर्थः । ईश्वरात्मतां गतानामेवावान्तरसर्गादौ जन्माद्यभावेऽपि महासर्गादौ तद्भविष्यतीत्याशङ्क्याह—**सर्गेऽपीति** ॥ २ ॥ ज्ञानस्तुत्या तदभिमुखायावहितचेतसे विवक्षितमर्थमाह—**क्षेत्रेति** । स्वरूपत्वेन स्वभूतत्वं वारयति—**मदीयेति** । ईश्वरीं चिच्छक्तिं व्यावर्तयति—**त्रिगुणात्मिकेति** । सांख्यीयप्रकृतिरपि मदीयेति व्यावर्तिता । योनिशब्देन सर्वाणि भवनयोग्यानि कार्याणि प्रत्युपादानत्वमभिप्रेतमित्याह—**सर्वभूतानामिति** । प्रकृतेर्महत्त्वं साधयति—**सर्वेति** । सर्वकार्यव्याप्तिमादाय योनावेव ब्रह्मशब्दः । लिङ्गवैषम्यान्महद्ब्रह्मेत्यर्थान्तरं किंचिदित्याशङ्क्याह—**योनिरिति** । तस्मिन्नित्यादि व्याचष्टे—**तस्मिन्निति** । ईदृशस्य क्षेत्रक्षेत्रज्ञसंयोगस्य भूतकारणत्वमिति वक्तुमुपक्रम्य किमिदमन्यदा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

धिष्ठातृत्वमित्यादिधर्मसाम्यं साधर्म्यमागताः । तथाच श्रुतयः 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' । 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः', 'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्' इति ज्ञानफलं ईश्वरसाधर्म्यप्राप्तिमाहुः । किंच भुशुण्डीप्रभृतयो ज्ञानबलादेव सर्गेऽपि न जायन्ते, प्रलयकाले च तत्तद्भूतभावं गच्छन्तो न प्रलयाग्न्यादिभिर्व्यथन्ते व्यथां प्राप्नुवन्ति । इदं श्लोकद्वयं भाष्ये वक्ष्यमाणज्ञानस्तुत्यर्थत्वेनैव व्याख्यातम् । तज्ज्ञानमुपाश्रित्य ज्ञानसाधनमनुष्ठायेति पदार्थः । शेषं स्पष्टम् ॥ २ ॥ अथेदानीं का वा भूतप्रकृतिः किमाश्रयेण तस्या भूतजनकत्वं तदाह—**ममेति** । मम शुद्धचिन्मात्रस्य योनिः प्रवेशस्थानम् । महद्ब्रह्म महत्तरस्य

४ मधुसूदनीव्याख्या ।

नच लीयन्त इत्यर्थः ॥ २ ॥ तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिंप्रति हेतुत्वं नतु सांख्यसिद्धान्तवत्स्वतन्त्रयोरितीमं विवक्षितमर्थमाह द्वाभ्याम्—सर्वकार्यापेक्षयाऽधिकत्वात्कारणं महत्, सर्वकार्याणां

५ भाष्योत्कर्षदीपिका ।

मात्मनः साधर्म्यं स्वरूपतामागताः प्राप्ता इत्यर्थः । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः नतु समानधर्मता साधर्म्यमिति भ्रमितव्यम् । गीताशास्त्रे क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमात्, प्रस्तुतं ज्ञानफलं विहाय अप्रस्तुतध्यानफलस्वीकारप्रसङ्गाच्च । सर्गेऽपि ब्रह्माद्युत्पत्तिकालेऽपि नोपजायन्ते, प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति व्यथां नापद्यन्ते न चलन्तीत्यर्थः । अवान्तरसर्गादौ जन्मादिकं न प्राप्नुवन्तीति किमु वक्तव्यमित्यपिशब्दार्थः । परं सर्वोत्कृष्टं ब्रह्म तत्स्वरूपमाह । ज्ञानानाममानित्वादीनां यज्ञादीनां ज्ञानसाधनानां मध्ये यदुत्तमं ज्ञानं मोक्षफलत्वादन्तरङ्गम् । अहं घटं जानामीत्यत्राहमर्थस्य घटाकारवृत्तेर्घटस्य च ज्ञानमस्तीति विषयभेदाज्ज्ञानत्रयमस्ति तत्राद्यद्वयं नान्तरीयकम् । यच्चोत्तमं चरमं घटप्रकाशकफलरूपं ज्ञानं तदेव परं ब्रह्मेत्यर्थः । यथोक्तं वार्तिककारैः 'परागर्थप्रमेयेषु या फलत्वेन संगता । संविमेत्सैवेह ज्ञेयोऽर्थो वेदान्तोक्तिप्रमाणतः' इति । यज्ज्ञानं ज्ञात्वा वेदान्तवाक्यजन्यया धीवृत्त्या अपरोक्षीकृत्य इदं ज्ञानं विषयविषयीरूपविकल्पविनिर्मुक्तमुपाश्रित्येत्यन्ये । अस्मिन्व्याख्याने ज्ञानानामिति निर्धारणषष्ठ्याः सामञ्जस्यं चिन्त्यम् । साधनापेक्षया साधनोत्तमतायाः प्रतिपादनस्यैव सम्यक्त्वात् । किंच तत्स्वरूपमाह । ज्ञानं मोक्षफलत्वादन्तरङ्गं अहं घटं जानामीत्यादिपरस्परमसंगतमिति दिक् ॥ २ ॥ ज्ञानस्तुत्या तदभिमुखाय समाहितचित्ताय क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमिति विवक्षितमर्थमाह—**ममेति** । मम मदीया मदधिष्ठिता नतु स्वतन्त्रा माया त्रिगुणात्मिका प्रकृतिः

६ श्रीधरीव्याख्या ।

तथा प्रलयेऽपि न व्यथन्ति प्रलये दुःखानि नानुभवन्ति । पुनर्नावर्तन्त इत्यर्थः ॥ २ ॥ तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिं प्रति हेतुत्वं नतु स्वतन्त्रयोरितीमं विवक्षितमर्थं कथयति—**ममेति** । देशतः कालतश्चा-

७ अभिनवगुप्ताचार्यव्याख्या ।

वाच्यम् ॥ २ ॥ तत्रादौ संसृतौ क्रममाह—मम योनिरिति । सर्वयोनिष्विति । हातव्ये ज्ञाते तत्कारणे च सुकरं हि हानं । मम तावद्व्यप-

१ नीलकण्ठः. २ नीलकण्ठः.

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

न्मकारणं बीजं दधामि निक्षिपामि । क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः । संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भोत्पत्तिद्वारेण ततस्तस्माद्गर्भाधानाद्भवति हे भारत ॥ ३ ॥ सर्वयोनिष्विति । देवपितृमनुष्यपशुमृगादिसर्वयोनिषु कौन्तेय, मूर्तयो देहसंस्थानलक्षणा मूर्च्छिताङ्गावयवा मूर्तयः संभवन्ति यास्तासां मूर्तीनां

२ आनन्दगिरिव्याख्या ।

दर्शितमित्याशङ्क्याह—**क्षेत्रेति** । गर्भशब्देनोक्तसंयोगस्य फलं दर्शयति—**संभव इति** । 'आदिकर्ता स भूतानाम्' इति स्मृत्या हिरण्यगर्भकार्यत्वावगमाद्भूतानां कथं यथोक्तगर्भाधाननिमित्तत्वमित्याशङ्क्याह—**हिरण्यगर्भेति** ॥ ३ ॥ ननु कथमुक्तकारणानुरोधेन हिरण्यगर्भोद्भवमभ्युपेत्य भूतानामुत्पत्तिरुच्यते देवादिजातिविशेषेषु देहविशेषाणां कारणान्तरस्य संभवात्तत्राह—**सर्वयोनिष्विति** । तत्र तत्र हेत्वन्तरप्रतिभासे कुतोऽस्य हेतुत्वमित्याशङ्क्य तद्रूपेणा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रथमकार्यस्य ब्रह्म बृंहकं कारणमव्यक्ताव्याकृतापरपर्यायं त्रिगुणात्मकमायाख्यं तस्मिन् गर्भं स्वप्रतिबिम्बरूपं दधाम्यर्पयामि अहं चिदात्मा । ततो मत्प्रतिबिम्बगर्भिता या माया ततः सर्वेषां भूतानां भवनधर्माणां महदादीनां हिरण्यगर्भादीनां च संभव उत्पत्तिर्भवति हे भारत । एतेन चित्प्रतिबिम्बसापेक्षत्वोपपादनेन प्रकृतेः सांख्याभिमतं स्वातन्त्र्यं निरस्तम् ॥ ३ ॥ किंच सर्वेषु भूतेषु योनिषु उपादानभूतेषु पृथिव्यामोषधयइव या मूर्तयः शरीराणि सुरनरतिर्यक्स्थावरात्मकानि चतुर्विधानि संभवन्ति तासां मूर्तीनां ब्रह्ममहत्पूर्वोक्तं महतो ब्रह्म ब्रह्ममहत् । राजदन्ता-

४ मधुसूदनीव्याख्या ।

वृद्धिहेतुत्वरूपाद्बृंहणत्वाद्ब्रह्म अव्याकृतं, प्रकृतिस्त्रिगुणात्मिका माया, महद्ब्रह्म तच्च ममेश्वरस्य योनिर्गर्भाधानस्थानम् । तस्मिन्महति ब्रह्मणि योनौ गर्भं सर्वभूतजन्मकारणं अहं 'बहुस्यां प्रजायेय' इतीक्षणरूपं संकल्पं दधामि धारयामि । तत्संकल्पविषयीकरोमीत्यर्थः । यथाहि कश्चित्पिता पुत्रमनुशयिनं व्रीह्याद्याहाररूपेण स्वस्मिन् लीनं शरीरेण योजयितुं योनौ रेतःसेकपूर्वकं गर्भमाधत्ते तस्माच्च गर्भाधानात्स पुत्रः शरीरेण युज्यते तदर्थं च मध्ये कललाद्यवस्था भवन्ति, तथा प्रलये मयि लीनमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण कार्यकरणसंघातेन योजयितुं चिदाभासाख्यरेतःसेकपूर्वकं मायावृत्तिरूपं गर्भमहमादधामि । तदर्थं च मध्ये आकाशवायुतेजोजलपृथिव्याद्युत्पत्त्यवस्थाः । ततो गर्भाधानात्संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भादीनां भवति हे भारत, नत्वीश्वरकृतगर्भाधानं विनेत्यर्थः ॥ ३ ॥ ननु कथं सर्वभूतानां ततः संभवो देवादिदेहविशेषाणां कारणान्तरसंभवादित्याशङ्क्याह—**सर्वयोनिष्विति** । देवपितृमनुष्यपशुमृगादिसर्वयोनिषु या मूर्तयो जरायुजाण्ड-

५ भाष्योत्कर्षदीपिका ।

सर्वभूतानां योनिः कारणम् । मम योनिः गर्भाधानस्थानमिति तु सुगमत्वादाचार्यैर्न व्याख्यातम् । योनिमेव विशिनष्टि । सर्वकार्येभ्यो महत्त्वात्स्वविकाराणां भरणाच्च महद्ब्रह्म । महत्तत्त्वस्य प्रथमकार्यस्य ब्रह्म बृंहकं कारणमिति तु ब्रह्मशब्दस्य कारणरूपामुख्यार्थपरत्वं लघुभूतकर्मधारयत्यागं ब्रह्म महदिति वक्ष्यमाणानुरोधे चासमञ्जसमभिप्रेत्याचार्यैर्न व्याख्यातम् । तस्मिन्महति ब्रह्मणि योनौ गर्भं हिरण्यगर्भादिसर्वभूतानां जन्मकारणं बीजमहं दधामि निक्षिपामि । क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः । ततस्तस्माद्गर्भाधानात्सर्वभूतानां हिरण्यगर्भादिस्तम्बपर्यन्तानां संभव उत्पत्तिर्भवति । ननु हिरण्यगर्भस्य ततः संभवेऽपि सर्वेषां कथं ततः संभवः स्वस्वमातृपित्रादेस्तत्तद्भूतसंभवदर्शनादितिचेत्त्राह—**भारतेति** । यथा पित्रादेरुत्पन्नानामपि भवदादीनां भरतोद्भवत्वेन भारतत्वं तथेति संबोधनाशयः ॥ ३ ॥ न केवलं सृष्ट्युपक्रमे एव प्रकृतिः योनिरहं च गर्भाधानकर्ता अपितु सर्वदैवेत्याह—**सर्वयोनिष्विति** । देवपितृमनुष्यमृगादिसर्वयो-

६ श्रीधरीव्याख्या ।

नवच्छिन्नत्वान्महत्, बृंहणत्वात्स्वकार्याणां वृद्धिहेतुत्वाद्वा ब्रह्म । प्रकृतिरित्यर्थः । तन्महद्ब्रह्म मम परमेश्वरस्य योनिर्गर्भाधानस्थानं, तस्मिन्नहं गर्भं जगद्विस्तारहेतुं चिदाभासं दधामि निक्षिपामि । प्रलये मयि लीनं सन्तमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण संयोजयामीत्यर्थः । ततो गर्भाधानात्सर्वभूतानां ब्रह्मादीनां संभव उत्पत्तिर्भवतीति ॥ ३ ॥ न केवलं सृष्ट्युपक्रम एव मदधिष्ठिताभ्यां प्रकृतिपुरुषाभ्यामयं भूतोत्पत्तिप्रकारः अपितु सर्वदैवेत्याह—**सर्वयोनिष्विति** । सर्वासु योनिषु मनुष्याद्यासु

७ अभिनवगुप्ताचार्यव्याख्या ।

देशयपरमानन्दरूपस्य महद्ब्रह्म बृंहकात्मीयशक्तिरूपं ब्रह्म आत्मीयामेव हि विमर्शशक्तिमालम्ब्य अहमनादीनात्माणूननुग्रहार्थं संसारयामि ।

१ श्रीधरः, २ नीलकण्ठः.

**सत्त्वं रजस्तम इति गुणाःप्रकृतिसंभवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

ब्रह्ममहत् सर्वावस्थं योनिः कारणमहमीशो बीजप्रदो गर्भाधानस्य कर्ता पिता ॥ ४ ॥ के गुणाः कथं बध्नन्तीत्युच्यते—सत्त्वमिति । सत्त्वं रजस्तम इत्येवंनामानो, गुणा इति पारिभाषिकः शब्दो न रूपादिवद्द्रव्याश्रिताः । नच गुणगुणिनोरन्यत्वमत्र विवक्षितम् । तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रत्यविद्यात्मकत्वात्क्षेत्रज्ञं निबध्नन्तीव तमास्पदीकृत्यात्मानं प्रतिलभन्त इति निबध्नन्तीत्युच्यते । ते च प्रकृतिसंभवा भगवन्मायासंभवा निबध्नन्तीव हे महाबाहो, महान्तौ समर्थतरावा-

२ आनन्दगिरिव्याख्या ।

स्यैवावस्थानादित्याह—**सर्वावस्थमिति** ॥ ४ ॥ एवं क्षेत्रक्षेत्रज्ञसंयोगाज्जगदुत्पत्तिं दर्शयता ब्रह्मैवाविद्यया संसरतीत्युक्तमिदानीमध्यायादावुक्तमाकाङ्क्षाद्वयं पूर्वमनूद्यानन्तरश्लोकेनोत्तरमाह—**के गुणा इति** । सत्त्वादिषु कथं गुणशब्दप्रवृत्तिरित्याशङ्क्य परतन्त्रत्वादित्याह—**गुणा इति** । रूपादिष्विव गुणशब्दः सत्त्वादिषु द्रव्याश्रितत्वं निमित्तीकृत्य किं न स्यादित्याशङ्क्य प्रकृत्यात्मकानां तेषां सर्वाश्रयत्वान्नैवमित्याह—**न रूपादिवदिति** । गुणानां प्रकृतेश्च पृथगुक्तेरन्यत्वे कुतस्तेषां प्रकृत्यात्मत्वमित्याशङ्क्याह—**नच गुणेति** । अत्यन्तभेदे गवाश्ववत्तद्भावासंभवादित्यर्थः । भेदाभेदे च तद्भावासंभवाद्विशेषात्कुतस्तेषु गुणपरिभाषेत्याशङ्क्याह—**तस्मादिति** । क्षेत्रज्ञं प्रति नित्यपारतन्त्र्ये हेतुमाह—**अविद्येति** । के गुणा इत्यस्योत्तरमुक्तं, कथं बध्नन्तीत्यस्योत्तरमाह—**क्षेत्रज्ञमिति** । तदेवोपपादयति—**तमास्पदीकृत्येति** । प्रकृतानां गुणानां प्रकृत्यात्मकत्वमाह—**ते चेति** । संभवत्यस्मादिति संभवः प्रकृतिः संभवो येषां ते तथेति । सांख्यीयां प्रकृतिं प्रधानाख्यां व्यावर्तयति—**भगवदिति** । इवकारानुबन्धेन नितरां बध्नन्ति स्वविकारवत्तयोपदर्शयन्तीति क्रियापदं व्याख्याय महाबाहुशब्दं व्याचष्टे—**महान्ताविति** । देहवन्तं देहमात्मानं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दित्वादुपसर्जनस्य परनिपातः । मायैव योनिरित्यर्थः । अहंतु तासां बीजप्रदः पिता तास्वपि स्वप्रतिबिम्बस्यार्पयिता । यथा पुरुषो भार्यायामनुशयिसंपृक्तं रेतो निषिञ्चति ततो भार्यातः पिण्डोत्पत्तिः रेतोंशतस्तत्र चैतन्योत्पत्तिरिति चैतन्यविशिष्टस्य पिण्डस्य पिताऽहं माता च मायेत्यर्थः ॥ ४ ॥ एवं ईश्वराश्रयेण प्रकृतिर्भूतानि सृजतीत्युक्तम्, इदानीं सा कथंभूता निबध्नातीति तदुच्यते—**सत्त्वमिति** । प्रकृतिः सत्त्वरजस्तमसां साम्यावस्था । ततः सकाशा-

४ मधुसूदनीव्याख्या ।

जस्वेदजोद्भिज्जादिभेदेन विलक्षणविविधसंस्थानास्तनवः संभवन्ति हे कौन्तेय, तासां मूर्तीनां तत्तत्कारणभावापन्नं महत् ब्रह्मैव योनिर्मातृस्थानीया । अहं परमेश्वरो बीजप्रदो गर्भाधानस्य कर्ता पिता । तेन महतो ब्रह्मण एवावस्थाविशेषाः कारणान्तराणीति युक्तमुक्तं संभवः सर्वभूतानां ततो भवतीति ॥ ४ ॥ तदेवं निरीश्वरसांख्यनिराकरणेन क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वमुक्तं, इदानीं कस्मिन्गुणे कथं सङ्गः के वा गुणाः कथं वा ते बध्नन्तीत्युच्यते—सत्त्वमित्यादिनान्यमित्यतः प्राक्चतुर्दशभिः—सत्त्वं रजस्तम इत्येवंनामानो गुणा नित्यपरतन्त्राः पुरुषंप्रति सर्वेषामचेतनानां चेतनार्थत्वात् नतु वैशेषिकाणां रूपादिवद्द्रव्याश्रिताः ।

५ भाष्योत्कर्षदीपिका ।

निषु या मूर्तयो देहसंस्थानलक्षणाः संभवन्ति हे कौन्तेय, यथा तव कुन्ती तथा तासां ब्रह्म महत्तत्रतत्र तत्तत्कारणरूपेणावस्थितं योनिः कारणमहमीशो बीजप्रदः गर्भाधानस्य कर्ता पिता । तथाच प्रकृतेरेवावस्थाविशेषेषु कारणान्तरेषु गर्भाधानकर्तुः परमेश्वरस्यैव सर्वत्र सत्त्वात् युक्तमुक्तं संभवः सर्वभूतानां ततो भवति भारतेति ॥ ४ ॥ एवं द्वाभ्यां प्रकृतिपुरुषयोरीश्वरपारतन्त्र्यप्रतिपादनेन सांख्याभिमतं तयोः स्वातन्त्र्यं निरस्तम्, इदानीं के गुणाः कथं वा ते बध्नन्ति कस्मिन् गुणे कथं वा सङ्ग इति निरूपयति—**सत्त्वमित्यादि** चतुर्दशभिः । सत्त्वं रजस्तम इत्येवंनामानो गुणाः । इतिशब्दो न रूपादिवत्पारिभाषिकः सत्त्वादीनां द्रव्याश्रितत्वबोधकः । प्रकृत्यात्मकानां तेषां सर्वाश्रयत्वात् । नापि गुणगुणिनोरन्यत्वमत्र विवक्षितम् । अत्यन्तभेदे गवाश्ववत्तद्भावासंभवात् ।

६ श्रीधरीव्याख्या ।

या मूर्तयः स्थावरजङ्गमात्मिका उत्पद्यन्ते तासां मूर्तीनां महद्ब्रह्म प्रकृतिः योनिर्मातृस्थानीया । अहं च बीजप्रदः गर्भाधानादिकर्ता पिता ॥ ४ ॥ तदेवं परमेश्वराधीनाभ्यां प्रकृतिपुरुषाभ्यां सर्वभूतोत्पत्तिं निरूप्य इदानीं प्रकृतिसंयोगेन पुरुषस्य संसारं प्रपञ्चयति—**सत्त्वमित्यादि** चतुर्दशभिः । सत्त्वं रजस्तम इति त्रयो गुणाः प्रकृतिसंभवाः प्रकृतितः संभव उद्भवो येषां ते तथोक्ताः । गुणसाम्यं प्रकृति-

७ अभिनवगुप्ताचार्यव्याख्या ।

अतएव सर्वासु योनिष्वादिकारणतया बृंहिका( ता ) भगवच्छक्तिः सकलसंसारजननस्वभावा माता । पितात्वहं शक्तिमानव्यपदेश्यः ॥३॥४॥

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

जानुप्रलम्बौ बाहू यस्य स महाबाहुः हे महाबाहो, देहे शरीरे देहिनं देहवन्तमव्ययं । अव्ययत्वं चोक्तमनादित्वादित्यादिश्लोके । ननु देही न लिप्यत इत्युक्तं तत्कथमिह निबध्नन्तीत्यन्यथोच्यते, परिहृतमस्माभिरिवशब्देन निबध्नन्तीवेति ॥ ५ ॥ तत्र सत्त्वमिति । तत्र सत्त्वादीनां सत्त्वस्यैव तावल्लक्षणमुच्यते निर्मलत्वात्स्फटिकमणिरिव प्रकाशकमनामयं निरुपद्रवं सत्त्वं तन्निबध्नाति । कथं सुखसङ्गेन सुख्यहमिति विषयभूतस्य सुखस्य विषयिण्यात्मनि संश्लेषापादनं मृषैव सुखे सञ्जनमिति । सैषाऽविद्या । नहि विषयधर्मो विषयिणो भवति । इच्छादि च धृत्यन्तं क्षेत्रस्यैव विषयस्य धर्म इत्युक्तं भगवता । अतोऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे सञ्जयतीव

२ आनन्दगिरिव्याख्या ।

मन्यमानं देहस्वामिनमित्यर्थः । कूटस्थस्य कथं बध्यमानत्वमित्याशङ्क्य 'कुर्यान्मेरावणुधियम्' इतिन्यायेन मायामाहात्म्यमिदमित्याह—अव्ययमिति । स्वतो धर्मतो वा व्ययराहित्यमित्यपेक्षायामाह—अव्ययत्वं चेति । लिप्यते न स पापेनेत्यनेन विरुद्धमिदं निबध्नन्तीति वचनमिति शङ्कते—नन्विति । इवकारानुबन्धेन क्रियापदं व्याचक्षाणैरस्माभिरस्य चोद्यस्य परिहृतत्वान्नैवमित्याह—परिहृतमिति ॥ ५ ॥ किंलक्षणो गुणः केन बध्नातीत्यपेक्षायामाह—तत्रेति । निर्धारणार्थतया सप्तमीं व्याचष्टे—तत्र सत्त्वादीनामिति । पुनस्तत्रेत्यनुवादमात्रं, निर्मलत्वं स्वच्छत्वमावरणवारणक्षमत्वं, तस्मात्प्रकाशकं, चैतन्याभिव्यञ्जकं, निरुपद्रवमिति निर्मलं सत्सुखस्यातिव्यञ्जकमित्यर्थः । केन द्वारेण तदात्मानं निबध्नातीति पृच्छति—कथमिति । सुखसङ्गेन बध्नातीत्युत्तरं तदेव विवृणोति—सुख्यहमित्यादिना । मुख्यसुखस्याभिव्यञ्जकसत्त्वपरिणामोऽत्र विषयसंभूतं सुखमुच्यते—संश्लेषापादनमेव विशदयति—मृषैवेति । किमिति मृषैवेति विशेषणं सङ्गस्य वस्तुत्वसंभवादित्याशङ्क्याह—सैषेति । नन्विच्छा सङ्गोऽभिनिवेशश्चेत्येकोऽर्थस्तत्रेच्छादेरात्मधर्मत्वात्किमविद्ययेत्याशङ्क्य मनोधर्मत्वादिच्छादेर्नात्मधर्मतेत्याह—नहीति । इच्छादेरनात्मधर्मत्वे किं प्रमाणमित्याशङ्क्याह—इच्छादि चेति । तस्यात्मधर्मत्वासंभवे फलितमाह—अत इति । संजयतीव सत्त्वमिति शेषः । इवकार-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्परस्पराङ्गाङ्गिभावेन वैषम्येण उद्रिच्यमानाः प्रकृतिसंभवा इत्युच्यन्ते नतु प्रकृतितो वैशेषिकाणामिव द्रव्याद्गुणा अन्ये एते हे महाबाहो, देहे अव्ययमविकारिणमपि देहिनं स्थूणायां वत्समिव रशनाभूता गुणा निबध्नन्ति ॥ ५ ॥ तत्र कः केन सङ्गेन बध्नातीत्युच्यते—तत्रेति । तत्र तेषु गुणेषु सत्त्वं निर्मलत्वाद्दुःखमोहाख्यमलराहित्यात्

४ मधुसूदनीव्याख्या ।

नच गुणगुणिनोरन्यत्वमत्र विवक्षितम् गुणत्रयात्मकत्वात्प्रकृतेः । तर्हि कथं प्रकृतिसंभवा इत्युच्यन्ते-त्रयाणां गुणानां साम्यावस्था प्रकृतिर्माया भगवतस्तस्याः सकाशात्परस्पराङ्गाङ्गिभावेन वैषम्येण परिणताः प्रकृतिसंभवा इत्युच्यन्ते । ते च देहे प्रकृतिकार्ये शरीरेन्द्रियसंघाते देहिनं देहतादात्म्याध्यासापन्नं जीवं परमार्थतः सर्वविकारशून्यत्वेनाव्ययं निबध्नन्ति निर्विकारमेव सन्तं स्वविकारवत्तयोपदर्शयन्तीव भ्रान्त्या जलपात्राणीव दिवि स्थितमादित्यं प्रतिबिम्बाध्यासेन स्वकम्पादिमत्तया । यथाच पारमार्थिको बन्धो नास्ति तथा व्याख्यातं प्राक् 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इति ॥ ५ ॥ तत्र को गुणः केन सङ्गेन बध्नातीत्युच्यते—तत्रेति । तत्र तेषु गुणेषु मध्ये सत्त्वं प्रकाशकं चैतन्यस्य तमोगुणकृतावरणतिरोधायकं

५ भाष्योत्कर्षदीपिका ।

तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रति तमास्पदीकृत्यैव तेषां प्रतिलम्भात्प्रकृतिसंभवाः त्रयाणां गुणानां साम्यावस्था प्रकृतिर्भगवतो माया संभवोऽभिव्यक्तिकारणं येषां ते देहे देहिनं देहमात्मानं देहवन्तं मन्यमानं जीवं वस्तुतोऽनादित्वादिति श्लोकेन प्रतिपादितं अव्ययं निर्विकारं निबध्नन्ति 'कुर्यान्मेरावणुधियम्' इति न्यायेन मायामाहात्म्यमिदं, यदव्ययस्य बन्धनं तदपि मायिकत्वान्मिथ्याभूतमेव नतु वास्तवं तेन न करोति न लिप्यते, लिप्यते न स पापेनेत्यादिना देही न लिप्यत इति पूर्वमुक्तं तत्कथमिह निबध्नन्तीत्यन्यथोच्यत इति न शङ्कनीयम् । महान्तौ समर्थौ वा जानुप्रलम्बौ बाहू यस्य स महाबाहुस्तस्य संबोधनं हे महाबाहो इति । अहमव्यय इति ज्ञानमेव गुणकृतबन्धान्मुक्तिसाधनं नतु महाबाहुरहमिति बाहुसामर्थ्यस्यात्रानुपयोगात्प्रत्युत देहाभिमानस्य बन्धनसाधनत्वाच्चेति द्योतनार्थम् ॥५॥ किंलक्षणो गुणः केन सङ्गेन बध्नातीत्यपेक्षायामाह—तत्रेति । तेषु सत्त्वादिगुणेषु सत्त्वं निर्मलत्वात्स्फटिक-

६ श्रीधरीव्याख्या ।

तस्याः सकाशात्पृथक्त्वेनाभिव्यक्ताः सन्तः प्रकृतिकार्ये देहे तादात्म्येन स्थितं देहिनं चिदंशं वस्तुतोऽव्ययं निर्विकारमेव सन्तं निबध्नन्ति । स्वकार्यैः सुखदुःखमोहादिभिः संयोजयन्तीत्यर्थः ॥ ५ ॥ तत्र सत्त्वस्य लक्षणं बन्धकत्वप्रकारं चाह—तत्रेति । तत्र तेषां

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**सक्तमिव करोत्यसुखिनं सुखिनमिव । तथा ज्ञानसङ्गेन च । ज्ञानमिति सुखसाहचर्यात्क्षेत्रस्यै-वान्तःकरणस्य धर्मो नात्मनः । आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धानुपपत्तेश्च । सुख इव ज्ञानादौ सङ्गो मन्तव्यो हेऽनघाव्यसन ॥ ६ ॥ रजो रागात्मकमिति । रजो रागात्मकं रञ्जनाद्रागो गैरिकादिव-द्रागात्मकं विद्धि जानीहि । तृष्णासङ्गसमुद्भवं तृष्णाऽप्राप्ताभिलाष आसङ्गः प्राप्ते विषये मनसः**

२ आनन्दगिरिव्याख्या ।

प्रयोगे हेतुमाह—**अविद्ययेति** । तस्या वस्तुतो नात्मसंबन्धस्तथापि संबन्धयन्तराभावादस्यातत्त्वयाचात्मधर्मत्व-मापाद्य दृष्टत्वमाचष्टे—**स्वकीयेति** । वृत्तिमदन्तःकरणस्य विषयत्वादात्मनः साधकत्वेन तद्विषयत्वेऽपि तदविवेकरूपा-विद्येति तत्स्वरूपमाह—**विषयेति** । यथोक्ताविद्यामाहात्म्यमिदं यदस्वरूपेऽतद्धर्मे च सक्तिसंपादनमित्याह—**अस्वेति** । तदेव स्फुटयति—**सक्तमिवेति** । प्रकारान्तरेण सत्त्वस्य निबन्धनत्वमाह—**तथेति** । ज्ञायतेऽनेनेति सत्त्वपरिणामो ज्ञानं तेन ज्ञान्यहमिति विपरीताभिमानेन सत्त्वमात्मानं निबध्नातीत्याह—**ज्ञानमित्यादिना** । विपक्षे दोषमाह—**आत्मेति** । स्वाभाविकत्वेन प्राप्तत्वात्तत्र स्वतः संयोगात्तद्द्वारा बन्धे च तन्निवृत्त्यनुपपत्तेर्नात्मधर्मत्व-मित्यर्थः । ज्ञानैश्वर्यादावपि क्षेत्रधर्मे सङ्गस्य पूर्ववदाविद्यकत्वं सूचयति—**सुख इवेति** । पापादिदोषहीनस्यैवात्र शास्त्रेऽधिकार इति द्योतयति—**अनघेति** ॥ ६ ॥ रजस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नातीत्याशङ्क्याह—**रज इति** । रज्यते संसृज्यतेऽनेन पुरुषो दृश्यैरिति रागोऽसावात्मास्येति रागात्मकं रजो जानीहीत्याह—**रञ्जनादिति** । समुद्भवत्यस्मादिति समुद्भवस्तृष्णा चासङ्गश्च तृष्णासङ्गौ तयोः समुद्भवस्तमिति विग्रहं गृहीत्वा कार्यद्वारा रजो

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रकाशकं आलोकवत्सर्वार्थावद्योतकम् । यतोऽनामयं रजस्तमोभ्यामनभिभूतम् । तत्सुखसङ्गेन ज्ञानसङ्गेन च नरं अविद्यया तिरोहितस्वरूपज्ञानानन्दं अहं सुखी अहं ज्ञानीत्यभिमानेन अन्तःकरणवृत्तिधर्मयोः सुखज्ञानयोरात्मनि आरोपेण बध्नाति । हे अनघ अव्यसनिन् ॥ ६ ॥ रजोगुणो रागो रञ्जना तदात्मकं विद्धि । तृष्णा प्राप्यमाणेष्व-

४ मधुसूदनीव्याख्या ।

निर्मलत्वात्स्वच्छत्वात् । चिद्बिम्बग्रहणयोग्यत्वादिति यावत् । न केवलं चैतन्याभिव्यञ्जकं किंत्वनामयम् । आमयो दुःखं तद्विरोधिसुखस्यापि व्यञ्जकमित्यर्थः । तत् बध्नाति सुखसङ्गेन ज्ञानसङ्गेन च देहिनम् हे अनघाव्यसन । सर्वत्र संबोधनानाम-भिप्रायः प्रागुक्तः स्मर्तव्यः । अत्र सुखज्ञानशब्दाभ्यामन्तःकरणपरिणामौ तद्व्यञ्जकावुच्येते । 'इच्छा द्वेषः सुखं दुःखं संघातश्चे-तना धृतिः' इति सुखचेतनयोरपीच्छादिवत्क्षेत्रधर्मत्वेन पाठात् । तत्रान्तःकरणधर्मस्य सुखस्य ज्ञानस्य चात्मन्यध्यासः सङ्गः अहं सुखी अहं जान इति च । नहि विषयधर्मो विषयिणो भवति । तस्मादविद्यामात्रमेतदिति शतश उक्तं प्राक् ॥ ६ ॥

५ भाष्योत्कर्षदीपिका ।

वत्स्वच्छत्वात् प्रकाशकं चैतन्याभिव्यञ्जकमनामयं निरुपद्रवम् । एतादृशं सत्त्वं सुख्यहमिति विषयभूतस्य सुखस्य विषयिणि प्रत्य-गात्मनि मृषैव संश्लेषापादनेन सुखसङ्गेन बध्नाति अविद्ययैव ह्यन्यधर्मोऽन्यस्मिन्नारोप्यते इच्छादिकं धृत्यन्तं क्षेत्रस्य धर्म इत्युक्तं भगवतातोऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे संजयतीवासङ्गं सक्तमिव करोति । असु-खिनं सुखिनमिव । तथाच यथोक्ताविद्यामाहात्म्यमिदं यदस्वरूपेऽतद्धर्मे च सक्तिसंपादनम् । प्रकारान्तरेण सत्त्वस्य निबन्धनहेतुत्व-माह—**ज्ञानसङ्गेनचेति** । ज्ञायतेऽनेनेति सत्त्वपरिणामो ज्ञानं तेन ज्ञान्यहमिति विपरीताभिमानेन सत्त्वमात्मानं निबध्नाति ज्ञानमिति । सुखसाहचर्यात् । क्षेत्रस्यैवान्तःकरणस्य धर्मो नात्मनः आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धानुपपत्तेश्च सुखइव ज्ञानादौ सङ्गो मन्तव्यो हेऽनघाघशून्याव्यसन, अनघेति संबोधयन् सुखादिव्यसनाभावसंपत्त्या सत्त्वप्रयुक्तं बन्धनं नार्हसीति सूचयति । पापादिदो-षहीनस्यैवात्र शास्त्रेऽधिकार इति द्योतयतीत्येके ॥ ६ ॥ रजः किंलक्षणं कथं वा देहिनं बध्नातीत्यपेक्षायां तस्य लक्षणं बन्धकत्वं चाह—**रज इति** । रजः रागात्मकं रज्यते संसज्यतेऽनेन पुरुषो दृश्यैरिति रागो दृष्टादृष्टसुखं तत्साधनविषयकः कामः गंधः

६ श्रीधरीव्याख्या ।

गुणानां मध्ये सत्त्वं निर्मलत्वात्स्वच्छत्वात् स्फटिकवत् प्रकाशकं भास्वरम्, अनामयं च निरुपद्रवम् । शान्तमित्यर्थः । अतः शान्त-त्वात्स्वकार्येण सुखेन यः सङ्गस्तेन बध्नाति । प्रकाशकत्वाच्च स्वकार्येण ज्ञानेन यः सङ्गस्तेन च बध्नाति । हे अनघ निष्पाप, अहं सुखी ज्ञानी चेति मनोधर्मास्तदभिमानिनि क्षेत्रज्ञे संयोजयतीत्यर्थः ॥ ६ ॥ रजसो लक्षणं बन्धकत्वं चाह—**रजोरागेति** । रजः-

७ अभिनवगुप्ताचार्यव्याख्या ।

सत्त्वमिति । देही चायमात्मतया सत्त्वरजस्तमोभिर्धर्मैरपवर्गपर्यन्ताय भोगाय निबध्यते ॥ ५ ॥ तत्र सत्त्वमिति । रजो रागात्मकं । तम-

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**प्रीतिलक्षणः संश्लेषः, तृष्णासङ्गयोः समुद्भवं तृष्णासङ्गसमुद्भवं तन्निबध्नाति तद्रजः हे कौन्तेय कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु सञ्जनं तत्परता कर्मसङ्गस्तेन निबध्नाति रजो देहिनम् ॥ ७ ॥ तमस्त्विति । तमस्तृतीयो गुणोऽज्ञानजमज्ञानाज्जातमज्ञानजं विद्धि । मोहनं मोहकरमविवेककरं सर्वदेहिनां सर्वेषां देहवतां । प्रमादालस्यनिद्राभिः प्रमादश्चालस्यं च निद्रा च प्रमादालस्यनिद्रास्ताभि-**

२ आनन्दगिरिव्याख्या ।

विवक्षुस्तृष्णासङ्गयोरर्थभेदमाह—**तृष्णेत्यादिना** । रजसो लक्षणमुक्त्वा निबन्धृत्वप्रकारमाह—**तद्रज इति** । कर्मसङ्गं विभजते—**दृष्टेति** । अकर्तारमेव पुरुषं करोमीत्यभिमानेन प्रवर्तयतीत्यर्थः ॥ ७ ॥ तमस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नाति तत्राह—**तमस्त्विति** । गुणानां प्रकृतिसंभवत्वाविशेषेऽपि तमसोऽज्ञानजत्वविशेषणं तद्विपरीतस्वभावानापत्तेरिति मत्वाह—**अज्ञानादिति** । मुह्यत्यनेनेति मोहनं विवेकप्रतिबन्धकमिति कार्यद्वारा तमो निर्दिशति—**मोहनमित्यादिना** । लक्षणमुक्त्वा तमसो बन्धनकरत्वं दर्शयति—**प्रमादेति** । कार्यान्तरासक्ततया चिकीर्षितस्य कर्तव्यस्याकरणं प्रमादः, निरीहतयोत्साहप्रतिबन्धस्त्वालस्यं, स्वापो निद्रा ताभिरात्मानमविकारमेव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्यर्थेष्वतृप्तिः । सङ्गः प्राप्ते विषये मनसः प्रीतिलक्षणः संश्लेषस्तयोः समुद्भवं निदानभूतं तद्रजो हे कौन्तेय, कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु सङ्गस्तत्परता तेन निबध्नाति देहिनं देहाभिमानिनम् ॥ ७ ॥ तमोगुणस्तु पूर्वाभ्यां विलक्षणः । अज्ञानं मायाया आवरणशक्तिस्तत उद्भूतं अज्ञानजं विद्धि । अतः सर्वेषां देहिनां मोहनं भ्रान्तिहेतुः । प्रमादोऽनवहितत्वं सच सत्त्वकार्यप्रकाशविरोधी । आलस्यं जडता तच्च रजःकार्यप्रवृत्तिविरोधि । उभयकार्यनिरोधिनी

४ मधुसूदनीव्याख्या ।

रज्यते विषयेषु पुरुषोऽनेनेति रागः, कामो गर्धः स एवात्मा स्वरूपं यस्य धर्मधर्मिणोस्तादात्म्यात् तद्रागात्मकं रजो विद्धि । अतएव अप्राप्ताभिलाषस्तृष्णा, प्राप्तस्योपस्थितेऽपि विनाशे संरक्षणाभिलाष आसङ्गस्तयोस्तृष्णासङ्गयोः संभवो यस्मात्तद्रजो निबध्नाति हे कौन्तेय, कर्मसङ्गेन कर्मसु दृष्टादृष्टार्थेषु अहमिदं करोम्येतत्फलं भोक्ष्य इत्यभिनिवेशविशेषेण देहिनं वस्तुतोऽकर्तारमेव कर्तृत्वाभिमानिनम् । रजसः प्रवृत्तिहेतुत्वात् ॥ ७ ॥ तुशब्दः सत्त्वरजोपेक्षया विशेषद्योतनार्थः । अज्ञानादावरणशक्तिरूपात्तदुद्भूतमज्ञानजं तमो विद्धि । अतः सर्वेषां देहिनां मोहनं अविवेकरूपत्वेन भ्रान्तिजनकं । प्रमादेनालस्येन निद्रया च तत्तमो निबध्नाति देहिनमित्यनुषज्यते । हे भारत, प्रमादो वस्तुविवेकासामर्थ्यं सत्त्वकार्यप्रकाशविरोधी, आलस्यं प्रवृत्त्यसामर्थ्यं

५ भाष्योत्कर्षदीपिका ।

स एवात्मा यस्य तद्रागात्मकं विद्धि जानीहि । अप्राप्ताभिलाषस्तृष्णा । प्राप्तविषये मनसः प्रीतिलक्षणः संश्लेष आसङ्गः समुद्भवत्यस्मादिति समुद्भवः । तृष्णासङ्गयोः समुद्भवं निदानं एतादृशं तद्रजः । कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु सञ्जनं तत्परता कर्मसङ्गस्तेन देहिनं निबध्नाति । अकर्तारमेव करोमीत्यभिमानेन प्रवर्तयतीत्यर्थः । बध्वा च जननीजठरवासादिरूपां संसृतिं विस्तारयतीति ध्वनयन्नाह—हे कौन्तेयेति ॥ ७ ॥ तमस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नातीत्यपेक्षायां तस्य लक्षणं बन्धकत्वं चाह—**तमस्त्विति** । तुशब्दो विशेषद्योतनार्थः । अज्ञानाज्जातमज्ञानजम् । यद्यपि त्रयाणामज्ञानजत्वं समानं तथापि तमसोऽज्ञानजत्वं विशेषणं तद्विपरीतस्वभावाऽनापत्तेः विद्धि विजानीहि । सर्वदेहिनां सर्वेषां देहवतां मोहनं हिताहितादिविवेकप्रतिबन्धकं कार्यान्तरासक्ततया चिकीर्षितस्य कर्तव्यस्याकरणं प्रमादः । यत्तु प्रमादो वस्तुविवेकासामर्थ्यमिति तदुपेक्ष्यम् । उक्तार्थस्य मोहनमित्यस्मिन्नन्तर्भावसंभवात् । निरीहतयोत्साहप्रतिबन्धकं त्वालस्यं । स्वापो निद्रा । प्रमादालस्यनिद्राभिस्तत्तमो निबध्नाति निर्विकारमेवा-

६ श्रीधरीव्याख्या ।

रंजकं गुणं रागात्मकमनुरञ्जनरूपं विद्धि । अतएव तृष्णासङ्गसमुद्भवम् । तृष्णा अप्राप्तेऽर्थेऽभिलाषः, सङ्गः प्राप्तेऽर्थे प्रीतिविशेषेणासक्तिस्तयोस्तृष्णासङ्गयोः समुद्भवो यस्मात्तद्रजो देहिनं दृष्टादृष्टार्थेषु कर्मसु सङ्गेनासक्तया नितरां बध्नाति । तृष्णासङ्गाभ्यां हि कर्मस्वासक्तिर्भवति ॥ ७ ॥ तमसो लक्षणं बन्धकत्वं चाह—**तम इति** । तमस्तु अज्ञानाज्जातं आवरणशक्तिप्रधानात्प्रकृत्यंशादुद्भूतं विद्धीत्यर्थः । अतः सर्वेषां देहिनां मोहनं भ्रान्तिजनकं । अतएव प्रमादेनालस्येन निद्रया च तत्तमो देहिनं निबध्नाति । तत्र प्रमादोऽनवधानं,

७ अभिनवगुप्ताचार्यव्याख्या ।

स्त्वज्ञानजमित्यादि क्रमेणैषां रूपमुच्यते । सत्त्वं निर्मलम् । तृष्णासङ्गस्य समुद्भवो यतः ॥ ६ ॥ ७ ॥ तमस्त्विति । प्रमादालस्येति । दुर्लभस्यापि चिरतरसंचितपुण्यशतलब्धस्यापवर्गप्राप्त्येककारणस्य मानुष्यकस्य वृथातिवाहनं प्रमादः । तथाभ्युक्तम् 'आयुषः क्षण एकोऽपि

१ मधुसूदनः.

**सत्त्वं सुखे संजयति रजः कर्मणि भारत ।**
**ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥**
**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**स्तत्तमो निबध्नाति भारत ॥ ८ ॥ पुनर्गुणानां व्यापारः संक्षेपत उच्यते—सत्त्वमिति । सत्त्वं सुखे संजयति संश्लेषयति । रजः कर्मणि हे भारत, संजयतीति वर्तते । ज्ञानं सत्त्वकृतं विवेकमावृत्याच्छाद्य तु तमः स्वेनावरणात्मना प्रमादे संजयत्युत । प्रमादो नाम प्राप्तकर्तव्याकरणम् ॥ ९ ॥ उक्तं कार्यं**

२ आनन्दगिरिव्याख्या ।

तमोऽपि विकारयतीत्यर्थः ॥ ८ ॥ उक्तानां मध्ये कस्मिन्कार्ये कस्य गुणस्योत्कर्षस्तत्राह—**पुनरिति** । सुखे साध्ये विषये समुत्कृष्यते सत्त्वमित्याह—**सत्त्वमिति** । संजयतीत्यस्यार्थमाह—**संश्लेषयतीति** । कर्मणि साध्ये रजः समुत्कृष्यत इत्याह—**रज इति** । प्रमादे प्राधान्यं तमसो दर्शयति—**ज्ञानमिति** ॥ ९ ॥ इतरेतराविरोधेन वा सत्त्वादयो गुणा युगपदुत्कृष्यते विरोधेन वा क्रमेण वेति संदेहात्पृच्छति—**उक्तमिति** । सत्त्वोत्कर्षार्थिनामितराभि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तमोगुणालम्बना वृत्तिर्निद्रा ताभिस्तत्तमो नितरां बध्नाति । हे भारत, देहिनमित्यनुवर्तते ॥ ८ ॥ सत्त्वमुत्कृष्टं सत सुखे दुःखकारणमभिभूय संजयति संश्लेषं जनयति । एवमुत्तरत्रापि । ज्ञानं प्रकाशं आवृत्य प्रमादे अवश्यकर्तव्यस्याकरणे ॥ ९ ॥ सत्त्वादयः कदा स्वस्वकार्ये प्रभवन्तीत्याशङ्क्येतरेतरयोरभिभवे सतीत्याह—**रज इति** । रजस्तमसी

४ मधुसूदनीव्याख्या ।

रजःकार्यप्रवृत्तिविरोधि, उभयविरोधिनी तमोगुणालम्बना वृत्तिर्निद्रेति विवेकः ॥ ८ ॥ उक्तानां मध्ये कस्मिन्कार्ये कस्य गुणस्योत्कर्ष इति तत्राह—सत्त्वमुत्कृष्टं सत् सुखे संजयति दुःखकारणमभिभूय सुखे संश्लेषयति । सर्वदेहिनमित्यनुषज्यते । एवं रज उत्कृष्टं सत्सुखकारणमभिभूय कर्मणि, संजयतीत्यनुषज्यते । तमस्तु प्रमादबलेनोत्पद्यमानमपि सत्त्वकार्यं ज्ञानमावृत्य आच्छाद्य प्रमादे प्राप्तज्ञायमानताकस्याप्यज्ञाने संजयति । उत अपि प्राप्तकर्तव्यताकस्याप्यकरणे आलस्ये तामस्यां च निद्रायां संजयतीत्यर्थः ॥ ९ ॥ उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते—रजस्तमश्च युगपदुभावपि गुणावभिभूय सत्त्वं भवत्युद्भवति वर्धते

५ भाष्योत्कर्षदीपिका ।

त्मानं विकारयतीत्यर्थः । त्वं तु भरतवंशोद्भवत्वात्तमःकर्तृकबन्धनायोग्योसीति सूचयन्संबोधयति—भारतेति ॥ ८ ॥ पुनः संक्षेपेण गुणानां व्यापारमाह—**सत्त्वमिति** । सत्त्वं सुखे संजयति संश्लेषयति । रजः कर्मणि संजयतीत्यनुवर्तते । रजसा कर्मासक्तस्य भरतस्य वंशे समुद्भूतस्त्वं स्वकर्मण्यासक्तो न भवसीत्यतिचित्रमिति ध्वनयन्नाह—**हे भारतेति** । तमस्तु स्वेनावरणात्मना ज्ञानं सत्त्वकृतं विवेकमाच्छाद्य प्रमादे प्राप्तकर्तव्यताऽकरणे संजयति । अप्यर्थादुतशब्दादालस्यादिकं गृह्यते । प्राप्तज्ञायमानताकस्याप्यज्ञानं प्रमाद इति तु ज्ञानमावृत्येत्यस्मिन्नन्तर्भावमभिप्रेत्याचार्यैर्न व्याख्यातम् । तथाच सुखे साध्ये सत्त्वस्य कर्मणि साध्ये रजसः प्रमादादौ तमस उत्कर्ष इति भावः ॥ ९ ॥ इतराविरोधेन सत्त्वादयो गुणा युगपदुत्कृष्यन्ते विरोधेन वा क्रमेण वेत्यपेक्षायां सत्त्वोत्कर्षार्थिनामितराभिभवार्थं क्रमपक्षमाश्रित्याह—**रज इति** । रजस्तमश्चोभावप्यभिभूय तिरोधाय सत्त्वं भव-

६ श्रीधरीव्याख्या ।

आलस्यमनुद्यमः, निद्रा चित्तस्यावसादो लयः ॥ ८ ॥ सत्त्वादीनामेवं स्वकार्यकरणे सामर्थ्यातिशयमाह—**सत्त्वमिति** । सत्त्वं सुखे संजयति संश्लेषयति । दुःखशोकादिकारणे सत्यपि सुखाभिमुखमेव देहिनं करोतीत्यर्थः । एवं सुखादिकारणे सत्यपि रजः कर्मण्येव संजयति । तमस्तु महत्सङ्गेनोत्पद्यमानमपि ज्ञानमावृत्याच्छाद्य प्रमादे संजयति महद्भिरुपदिश्यमानस्यार्थस्यानवधाने योजयति । उत अपि आलस्यादावपि संयोजयतीत्यर्थः ॥ ९ ॥ तत्र हेतुमाह—**रज इति** । रजस्तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य सत्त्वं

७ अभिनवगुप्ताचार्यव्याख्या ।

सर्वरत्नैर्न लभ्यते । स वृथा नीयते येन स प्रमादी नराधमः ॥' इति । यथावा श्रीमद्भागवते 'निद्रया ह्रियते नक्तं व्यवायेन च वा वयः । दिवा चार्थेहया राजन्कुटुम्बभरणेन वा ॥ देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि । तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति ॥' तथा । 'किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह । वरं मुहूर्तं विदितं घटते श्रेयसे यतः । अयमेव प्रमादः ॥' तत्रैवैकादशस्कन्धे आत्महत्याशब्दवाच्यो निर्णीतो भगवता यथा 'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयानुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥' इति । आलस्यं शुभकरणीयेषु । निःशेषेण द्राणं कुत्सिता गतिर्निद्रा ॥ ८ ॥ सत्त्वमिति । संजयति योजयति ॥ ९ ॥ रजस-

१ मधुसूदनः,

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते।**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत॥ ११॥**

१ श्रीमच्छांकरभाष्यम्।

कदा कुर्वन्ति गुणा इत्युच्यते—रज इति। रजस्तमश्चोभावप्यभिभूय सत्त्वं भवत्युद्भवति वर्धते यदा तदा लब्धात्मकं सत्त्वं स्वकार्यं ज्ञानसुखाद्यारभते हे भारत। तथा रजोगुणः सत्त्वं तमश्चैवोभावप्यभिभूय वर्धते यदा तदा कर्म तृष्णादि स्वकार्यमारभते। तमआख्यो गुणः सत्त्वं रजश्चोभावप्यभिभूय तथैव वर्धते यदा तदा ज्ञानावरणादि स्वकार्यमारभते॥ १०॥ यदा यो गुण उद्भूतो भवति तदा तस्य किं लिङ्गमित्युच्यते—सर्वद्वारेष्विति। सर्वद्वारेष्वात्मन उपलब्धिद्वाराणि श्रोत्रादीनि सर्वाणि करणानि तेषु सर्वद्वारेष्वन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशो देहेऽस्मिन्नुपजायते तदेव ज्ञानम्। यदैवं प्रकाशो ज्ञानाख्य उपजायते तदा ज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धमुद्भूतं सत्त्व-

२ आनन्दगिरिव्याख्या।

भवार्थं क्रमपक्षमाश्रित्योत्तरमाह—उच्यत इति। सत्त्वाभिवृद्धिमेव विवृणोति—तदेति। रजस्तमसोस्तिरोधानदशायामिति यावत्। रजसो वृद्धिप्रकारं तत्कार्यं च कथयति—तथेति। तमसोऽपि विवृद्धिं तत्कार्यं च निर्दिशति—तम इति॥ १०॥ उत्तरश्लोकत्रयस्याकाङ्क्षां दर्शयति—यदेति। सत्त्वोद्भवलिङ्गदर्शनार्थमनन्तरं श्लोकमुत्थापयति—उच्यत इति। सर्वद्वारेष्वित्यादिसप्तमी निमित्ते नेतव्या। उतशब्दोऽपिशब्दपर्यायोऽप्यतिशयार्थः॥ ११॥

३ नीलकण्ठव्याख्या (चतुर्धरी)।

अभिभूय सत्त्वं भवति वर्धते। एवं रजोऽपि सत्त्वतमसी अभिभूय भवति। तथा तमोऽपि सत्त्वरजसी अभिभूय भवतीत्यर्थः॥ १०॥ तत्तद्गुणोद्भवलिङ्गान्याह त्रिभिः—सर्वेति। अस्मिन्देहे यदा सर्वेषु द्वारेषु बाह्याभ्यन्तरविषयोपलब्धिसाधनेषु बाह्याभ्यन्तरकरणेषु। प्रकाशः स्वस्वविषयावरणविरोधी परिणामविशेषो जायते तेन च ज्ञानं शब्दादिविषयस्य याथात्म्येन प्रकाशो यदा जायते तदा सत्त्वं विवृद्धमिति विद्याज्जानीयात्। उत अपि सुखादिलिङ्गेनापि

४ मधुसूदनीव्याख्या।

यदा तदा स्वकार्यं प्रागुक्तमसाधारण्येन करोतीति शेषः। एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति यदा तदा स्वकार्यं प्रागुक्तं करोति। तथा तद्वदेव तमोऽपि सत्त्वं रजश्चेत्युभावपि गुणावभिभूय उद्भवति यदा तदा स्वकार्यं प्रागुक्तं करोतीत्यर्थः॥ १०॥ इदानीमुद्भूतानां तेषां लिङ्गान्याह त्रिभिः—अस्मिन्नात्मनो भोगायतने देहे सर्वेष्वपि द्वारेषूपलब्धिसाधनेषु श्रोत्रादिकरणेषु यदा प्रकाशः बुद्धिपरिणामविशेषो विषयाकारः स्वविषयावरणविरोधी दीपवत्, तदेव ज्ञानं शब्दादिविषय उपजायते तदाऽनेन शब्दादिविषयज्ञानाख्यप्रकाशेन लिङ्गेन प्रकाशात्मकं सत्त्वं विवृद्धमुद्भूतमिति विद्याज्जानीयात् उत अपि

५ भाष्योत्कर्षदीपिका।

त्युद्भवति वर्धते यदा तदा रजस्तमसोस्तिरोधानदशायां लब्धात्मकं सत्त्वं स्वं कार्यं ज्ञानसुखाद्यारभत इति शेषः। भारतेति संबोधयन् भायां ब्रह्मविद्यायां रतेन रजस्तमसोस्तिरोधायिका सत्त्ववृद्धिः संपाद्येति द्योतयति। तथा रजोगुणो यदा सत्त्वं तमश्चैवोभावभिभूय वर्धते तदा कर्म तृष्णादि स्वं कार्यमारभते। एवं तमआख्योऽपि गुणो यदा सत्त्वं रजश्चैवोभावभिभूय वर्धते तदा ज्ञानावरणप्रमादादि स्वं कार्यमारभत इत्यर्थः॥ १०॥ यदा यो गुण उद्भूतो भवति तदा तस्य किं लिङ्गमित्याकाङ्क्षायामाह—**सर्वद्वारेष्विति**। सर्वाण्यात्मन उपलब्धिद्वाराणि श्रोत्रादीनि करणानि सर्वद्वाराणि तेषु निमित्तभूतेषु अस्मिन्देहेऽन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशस्तदेव ज्ञानं यदैवं प्रकाशः शब्दादिविषयज्ञानाख्य उपजायते तदा ज्ञानप्रकाशलिङ्गेन सत्त्वं विवृद्धं उद्भूतं विद्याद्विजानीयात्। अप्यर्थक उतशब्दः सुखादिलिङ्गसमुच्चयार्थः॥ ११॥ सत्त्वस्योद्भूतस्य चिह्नमुक्त्वा तथाभूतस्य रजसस्तदाह।

६ श्रीधरीव्याख्या।

भवत्यदृष्टवशादुद्भवति। ततः स्वकार्ये सुखज्ञानादौ संयोजयतीत्यर्थः। एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति। ततः स्वकार्ये तृष्णाकर्मादौ संयोजयति। एवं तमोऽपि सत्त्वं रजश्चाभिभूयोद्भवति। ततश्च स्वकार्ये प्रमादालस्यादौ संयोजयतीत्यर्थः॥ १०॥ इदानीं सत्त्वादीनां वृद्धानां लिङ्गान्याह त्रिभिः—सर्वद्वारेष्विति। अस्मिन्नात्मनो भोगायतने देहे सर्वेष्वपि द्वारेषु श्रोत्रादिषु यदा शब्दादिज्ञानात्मकः प्रकाश उपजायते उत्पद्यते तदा अनेन प्रकाशलिङ्गेन सत्त्वं विवृद्धं विद्याज्जानीयात्। उतशब्दात्सुखादिलिङ्गेनापि

७ अभिनवगुप्ताचार्यव्याख्या।

मश्चेति। रजस्तमसी अभिभूय सत्त्वं वर्धते। रजस्तु सत्त्वतमसी। तमः सत्त्वरजसी। उक्तंहि 'अन्योन्याभिभवेन गुणवृद्धिः' इति॥ १०॥ सर्वेति। सर्वद्वारेषु सर्वेन्द्रियेषु लोभादयः क्रमेणैव रजस्युद्रिच्यमाने जायन्ते। एवमप्रकाशादयः क्रमेणैव तमोविवृद्धावाविर्भवन्ति॥ ११॥

**लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।**
**रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥**
**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

मित्युतापि ॥ ११ ॥ रजस उद्भूतस्येदं चिह्नम्—लोभ इति । लोभः परद्रव्यादित्सा, प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा, आरम्भ उद्यमः, कस्य, कर्मणाम् । अशमोऽनुपशमः, हर्षरागादिप्रवृत्तिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे भरतर्षभ ॥१२॥ अप्रकाश इति । अप्रकाशोऽविवेकोऽत्यन्तमप्रवृत्तिश्च प्रवृत्त्यभावस्तत्कार्यं प्रमादो मोह एव चाविवेको मूढतेत्यर्थः । तमसि गुणे विवृद्ध एतानि लिङ्गानि जायन्ते हे कुरुनन्दन ॥ १३ ॥ मरणद्वारेणापि

२ आनन्दगिरिव्याख्या ।

अतिशयेनोद्भूतस्य रजसो लिङ्गमाह—**रजस इति** । उपक्रमपर्यायस्यारम्भस्य विषयं पृच्छति—**कस्येति** । काम्यानि निषिद्धानि च लौकिकानि कर्माणि विषयत्वेन निर्दिशति—**कर्मणामिति** । अनुपशमो बाह्यान्तःकरणानामिति शेषः । लोभाद्युपलम्भाद्रजोवृद्धिर्बोद्धव्येति भावः ॥ १२ ॥ उद्भूतस्य तमसो लिङ्गमाह—**अप्रकाश इति** । सर्वथैव ज्ञानकर्मणोरभावो विशेषणाभ्यामुक्तः । तत्कार्यमिति तच्छब्दो दर्शिताविवेकार्थः । प्रमादो व्याख्यातः । मोहो वेदितव्यस्यान्यथावेदनम् । तस्यैव मौढ्यान्तरमाह—**अविवेक इति** । अविवेकातिशयादिना प्रवृद्धं तमो ज्ञेयमिति भावः ॥ १३ ॥ सात्त्विकादीनां भावानां पारलौकिकं फलविभागमुदाहरति—**मरणेति** । सङ्गः सक्ती रागस्तृष्णा तद्बलाद्-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जानीयादित्यर्थः ॥ ११ ॥ लोभः प्राप्ताधिके गर्धः । प्रवृत्तिः अग्निहोत्रादौ । आरम्भो गृहादेः । कर्मणां अशमः सतामसतां वा कार्याणामनुपरमः । स्पृहा दृष्टे परधनादावुपादित्सा । रजसि विवृद्धे सति एतानि लिङ्गानि जायन्ते हे भरतर्षभ ॥ १२ ॥ सत्यपि बोधके गुर्वादौ अप्रकाशः सत्त्वकार्यप्रकाशानुदयः । अप्रवृत्तिः सत्यपि प्रवृत्तिनिमित्ते रजः-

४ मधुसूदनीव्याख्या ।

सुखादिलिङ्गेनापि जानीयादित्यर्थः ॥ ११ ॥ महति धनागमे जायमानेऽप्यनुक्षणं वर्धमानस्तदभिलाषो लोभः । स्वविषयप्राप्यनिवर्त्य इच्छाविशेष इति यावत् । प्रवृत्तिर्निरन्तरं प्रयतमानता । आरम्भः कर्मणां बहुवित्तव्ययायासकराणां काम्यनिषिद्धलौकिकमहागृहादिविषयाणां व्यापाराणामुद्यमः । अशम इदं कृत्वेदं करिष्यामीति संकल्पप्रवाहानुपरमः । स्पृहा उच्चावचेषु परधनेषु दृष्टमात्रेषु येनकेनाप्युपायेनोपादित्सा । रजसि रागात्मके विवृद्धे एतानि रागात्मकानि लिङ्गानि जायन्ते । हे भरतर्षभ, एतैर्लिङ्गैर्विवृद्धं रजो जानीयादित्यर्थः ॥ १२ ॥ अप्रकाशः सत्यप्युपदेशादौ बोधकारणे सर्वथा बोधायोग्यत्वम् । अप्रवृत्तिश्च सत्यप्यग्निहोत्रं जुहुयादित्यादौ प्रवृत्तिकारणे जनितबोधेऽपि शास्त्रे सर्वथा तत्प्रवृत्त्ययोग्यत्वम् । प्रमादस्तत्कालकर्तव्यत्वेन प्राप्तस्यार्थस्यानुसंधानाभावः । मोह एवच मोहो निद्राविपर्ययो वा । चौ समुच्चये । एवकारो व्यभिचारवारणार्थः । तमस्येव विवृद्धे

५ भाष्योत्कर्षदीपिका ।

लोभः स्वकीयधनादिबाहुल्येऽपि परद्रव्यादिषु लुब्धता प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा । आरम्भः काम्यनिषिद्धलौकिकविषयाणां व्यापाराणामुद्यमः । अशमः हर्षरागादिप्रवृत्तेरनुपरमः । सर्वसामान्यवस्तुविषया तृष्णा स्पृहा । रजसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते । लोभाद्युपलम्भाद्रजोविवृद्धिं विद्यादिति भावः । भरतेभ्यः ऋषभः श्रेष्ठस्त्वं रजसश्चिह्नान्याश्रयितुमयोग्योऽसीति सूचयन्नाह हे भरतर्षभेति ॥ १२ ॥ उद्भूतस्य तमसश्चिह्नमाह । अप्रकाशः कर्तव्याकर्तव्यविवेकाभावः । अप्रवृत्तिः पूर्वोक्तप्रवृत्त्यभावः । प्रमादो व्याख्यातोऽविवेककार्यं । मोहो ज्ञातव्याविवेको मूढतेत्यर्थः । च आलस्यादिसमुच्चयार्थः । एवकारो व्यभिचारवारणार्थः । तमस्येव विवृद्धे एतानि लिङ्गानि जायन्ते । एतान्येवेति वा । अप्रकाशातिशयादिना विवृद्धं तमो विजानीयादिति भावः । त्वं तूत्तमवंशोद्भवस्त-

६ श्रीधरीव्याख्या ।

जानीयादित्युक्तम् ॥ ११ ॥ किंच—**लोभ इति** । लोभो धनाद्यागमे बहुधा जायमानेऽपि पुनः पुनर्वर्धमानोऽभिलाषः, प्रवृत्तिर्नित्यं कुर्वद्रूपता, कर्मणामारम्भो गृहादिनिर्माणोद्यमः, अशमः इदं कृत्वा इदं करिष्यामीत्यादिसंकल्पविकल्पानुपरमः, स्पृहा उच्चावचेषु दृष्टमात्रेषु वस्तुष्वितस्ततो जिघृक्षा, रजसि प्रवृद्धे सति एतानि लिङ्गानि जायन्ते । एतैर्लिङ्गै रजोगुणस्य वृद्धिं विद्यादित्यर्थः ॥ १२ ॥ किंच—**अप्रकाश इति** । अप्रकाशो विवेकभ्रंशः, अप्रवृत्तिरनुद्यमः, प्रमादः कर्तव्यार्थानुसंधानराहित्यं, मोहो मिथ्याभिनिवेशः, तमसि प्रवृद्धे एतानि लिङ्गानि चिह्नानि जायन्ते । एतैस्तमसो वृद्धिं जानीयादित्यर्थः ॥ १३ ॥ मरणसमय एव वृद्धानां

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥**
**रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते।**
**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥**
**कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।**

१ श्रीमच्छांकरभाष्यम्।

यत्फलं प्राप्यते तदपि सङ्गरागहेतुकं सर्वं गौणमेवेति दर्शयन्नाह—यदेति। यदा सत्त्वे प्रवृद्ध उद्भूते तु प्रलयं मरणं याति प्रतिपद्यते देहभृदात्मा तदोत्तमविदां महदादितत्त्वविदामित्येतत्। लोकानमलान्मलरहितान्प्रतिपद्यते प्राप्नोतीत्येतत् ॥ १४ ॥ रजसि गुणे विवृद्धे प्रलयं मरणं गत्वा प्राप्य कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते। तथा तद्वदेव प्रलीनो मृतस्तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते ॥ १५ ॥ अतीतश्लोकार्थस्यैव संक्षेप उच्यते—कर्मणः सुकृतस्य सात्त्विकस्ये-

२ आनन्दगिरिव्याख्या।

नुष्ठानद्वारा लभ्यमानमित्यर्थः। गौणं सत्त्वादिगुणप्रयुक्तमिति यावत्। तत्र सत्त्वगुणवृद्धिकृतफलविशेषमाह—**यदेति**। मलरहितान्रजस्तमसोरन्यतरस्योद्भवो मलं तेन रहितानागमसिद्धान्ब्रह्मलोकादीनित्यर्थः ॥ १४ ॥ रजःसमुद्रेके मृतस्य फलविशेषं दर्शयति—**रजसीति**। जायते शरीरं गृह्णातीत्यर्थः। यथा सत्त्वे रजसि च प्रवृद्धे मृतो ब्रह्मलोकादिषु मनुष्यलोके च देवादिषु मनुष्येषु च जायते तथैवेत्याह—**तद्वदिति** ॥ १५ ॥ भावानां फलमुक्त्वा सात्त्विकादीनां कर्मणां फलमाह—**अतीतेति**। सुकृतस्य शोभनस्य कृतस्य पुण्यस्येत्यर्थः। सात्त्विकस्याशुद्धिरहि-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

कार्यप्रवृत्त्यनुदयः। प्रमादः कार्याकार्यविवेकराहित्यम्। मोहो निद्रालस्यादिरूपः ॥ १३ ॥ प्रलयं मरणम्। उत्तमविदां हिरण्यगर्भाद्युपासकानां देवानां वा लोकान्। अमलान्निर्दुःखान् ॥ १४ ॥ कर्मसङ्गिषु श्रौतस्मार्तकर्मानुष्ठातृषु मनुष्येषु। मूढयोनिषु तिर्यक्स्थावरचाण्डालादिषु ॥ १५ ॥ सुकृतस्य सात्त्विकस्य कर्मणः फलं निर्मलं दुःखाज्ञानमलशून्यं

४ मधुसूदनीव्याख्या।

एतानि लिङ्गानि जायन्ते। हे कुरुनन्दन, अत एतैर्लिङ्गैरव्यभिचारिभिर्विवृद्धं तमो जानीयादित्यर्थः ॥ १३ ॥ इदानीं मरणसमये विवृद्धानां सत्त्वादीनां फलविशेषमाह द्वाभ्याम्—सत्त्वे प्रवृद्धे सति यदा प्रलयं मृत्युं याति प्राप्नोति देहभृत् देहाभिमानी जीवस्तदोत्तमा ये हिरण्यगर्भादयस्तद्विदां तदुपासकानां लोकान्देवसुखोपभोगस्थानविशेषानमलान् रजस्तमोमलरहितान्प्रतिपद्यते प्राप्नोति ॥ १४ ॥ रजसि प्रवृद्धे सति प्रलयं मृत्युं गत्वा प्राप्य कर्मसङ्गिषु श्रुतिस्मृतिविहितप्रतिषिद्धकर्मफलाधिकारिषु मनुष्येषु जायते। तथा तद्वदेव तमसि प्रवृद्धे प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते ॥ १५ ॥ इदानीं स्वानुरूपकर्मद्वारा सत्त्वादीनां

५ भाष्योत्कर्षदीपिका।

मसश्चिह्नान्याश्रयितुं नार्हसीति द्योतयितुमाह हेकुरुनन्दनेति ॥ १३ ॥ मरणद्वारेणापि यत्पारलौकिकं फलं प्राप्यते तदपि सहेतुकं सर्वं सत्त्वादिगुणप्रयुक्तमेवेति दर्शयन्नाह—**यदेति द्वाभ्याम्**। तत्र सत्त्ववृद्धिकृतं फलविशेषमाह। यदा सत्त्वे विवृद्धे उद्भूते देहभृज्जीवः प्रलयं मरणं याति प्राप्नोति तदा उत्तमविदां महत्तत्त्वहिरण्यगर्भादितत्त्वविदां तदुपासकानां लोकानागमसिद्धान् ब्रह्मलोकादीनमलान् रजस्तमसोरन्यतरदुद्भूतं मलं तेन रहितान्प्रतिपद्यते प्राप्नोतीत्यर्थः ॥ १४ ॥ रजःप्रवृद्धिकृतं फलविशेषमाह। रजसि प्रवृद्धे प्रलयं मरणं गत्वा प्राप्य देहभृत् कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते। यथा सत्त्वे रजसि च प्रवृद्धे मृतो देहभृत् ब्रह्मलोकादिषु मनुष्यलोके च देवादिषु मनुष्येषु च जायते। तथा तमसि प्रवृद्धे प्रलीनो मृतो देही मूढानां पश्वादीनां

६ श्रीधरीव्याख्या।

सत्त्वादीनां फलविशेषमाह—**यदेति द्वाभ्याम्**। सत्त्वे प्रवृद्धे सति यदा जीवो मृत्युं प्राप्नोति तदा उत्तमान् हिरण्यगर्भादीन्विदन्ति उपासत इत्युत्तमविदस्तेषां ये अमलाः प्रकाशमया लोकाः सुखोपभोगस्थानविशेषास्तान्प्रतिपद्यते प्राप्नोति ॥ १४ ॥ किंच—**रजसीति**। रजसि प्रवृद्धे सति मृत्युं प्राप्य कर्मासक्तेषु मनुष्येषु जायते। तथा तमसि प्रवृद्धे सति प्रलीनो मृतो मूढयोनिषु

७ अभिनवगुप्ताचार्यव्याख्या।

॥ १२ ॥ १३ ॥ यदेति। यदा समग्रेणैव जन्मनानवरतसात्त्विकव्यापाराभ्यासात्सत्त्वं विवृद्धं भवति तदा प्राप्तप्रलयस्य शुभलोकावाप्तिः। एवं जन्माभ्यस्तराजसकर्मणः प्रयाणाद्धि( शिष्टो )मिश्रोपभोगाय मानुष्याप्तिः। तथा तेनैव क्रमेण यदा समग्रेण जन्मना तामसमेव कर्माभ्यस्यते तदा नरकतिर्यग्वृक्षादिदेहेषूत्पद्यते। ये तु व्याचक्षते मरणकाल एव सत्त्वादौ विवृद्धे एतानि फलानीति तेन सम्यक् शारीरेऽनुभवे प्रविष्टाः। यतः सर्वस्यैव सर्वथान्त्ये क्षणे मोह एवोपजायते। अस्मद्व्याख्यायां च संवादीनीमानि श्लोकान्तराणि ॥ १४ ॥ १५ ॥

**रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥**
**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्यर्थः । आहुः शिष्टाः सात्त्विकमेव निर्मलं फलमिति । रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः । कर्माधिकारात्फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव । तथाऽज्ञानं तमसस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत् ॥ १६ ॥ किंच गुणेभ्यो भवति—सत्त्वादिति । सत्त्वाल्लब्धात्मकात्संजायते समुत्पद्यते ज्ञानं । रजसो लोभ एव च । प्रमादमोहौ चोभौ तमसो भवतोऽज्ञानमेव च भवति ॥ १७ ॥

२ आनन्दगिरिव्याख्या ।

तस्येति यावत् । सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं रजस्तमःसमुद्भवान्मलान्निष्क्रान्तम् । रजश्शब्दस्य राजसे कर्मणि कुतो वृत्तिस्तत्राह—कर्मेति । दुःखमेव दुःखबहुलं सुखमेवेत्यर्थः । कथमित्थं व्याख्यायते तत्राह—कारणेति । पापमिश्रस्य पुण्यस्य रजोनिमित्तस्य कारणत्वात्तदनुरोधात्फलमपि रजोनिमित्तं यथोक्तं युक्तमित्यर्थः । अज्ञानमविवेकप्रायं दुःखं तामसाधर्मफलमित्याह—तथेति ॥ १६ ॥ विहितप्रतिषिद्धज्ञानकर्माणि सत्त्वादीनां लक्षणानि संक्षिप्य दर्शयति—किंचेति । ज्ञानं सर्वकरणद्वारकम् । अज्ञानं विवेकाभावः ॥ १७ ॥ सात्त्विकादिज्ञानकर्मफला-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सात्त्विकं ज्ञानवैराग्यादिकम् । रजसो राजसस्य कर्मणः फलं दुःखम् । तमसस्तामसस्य कर्मणः फलं अज्ञानम् । सात्त्विकादिकर्मलक्षणं च 'नियतं सङ्गरहितम्' इत्यादिनाऽष्टादशे वक्ष्यति ॥१६॥ एतादृशफलवैचित्र्ये पूर्वोक्तमेव हेतु-

४ मधुसूदनीव्याख्या ।

विचित्रफलतां संक्षिप्याह—सुकृतस्य सात्त्विकस्य कर्मणो धर्मस्य सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं रजस्तमोमलामिश्रितं सुखं फलमाहुः परमर्षयः । रजसो राजसस्य तु कर्मणः पापमिश्रस्य पुण्यस्य फलं राजसं दुःखं दुःखबहुलमल्पसुखं । कारणानुरूप्यात्कार्यस्य । अज्ञानमविवेकप्रायं दुःखं तामसं तमसस्तामसस्य कर्मणोऽधर्मस्य फलमाहुरित्यनुषज्यते । सात्त्विकादिकर्मलक्षणं च 'नियतं सङ्गरहितम्' इत्यादिनाष्टादशे वक्ष्यति । अत्र रजस्तमःशब्दौ तत्कार्ये कर्मणि प्रयुक्तौ कार्यकरणयोरभेदोपचारात् 'गोभिः श्रीणीत मत्सरम्' इत्यत्र यथा गोशब्दस्तत्प्रभवे पयसि, यथावा 'धान्यमसि धिनुहि देवान्' इत्यत्र धान्यशब्दस्तत्प्रभवे तण्डुले, तत्र पयस्तण्डुलयोरिवात्रापि कर्मणः प्रकृतत्वात् ॥ १६ ॥ एतादृशे फलवैचित्र्ये पूर्वोक्तमेव हेतुमाह—सर्वकरणद्वारकं प्रकाशरूपं ज्ञानं सत्त्वात्संजायते, अतस्तदनुरूपं सात्त्विकस्य कर्मणः प्रकाशबहुलं सुखं फलं भवति । रजसो लोभो विषयकोटिप्राप्त्यापि निवर्तयितुमशक्योऽभिलाषविशेषो जायते । तस्य च निरन्तरमुपचीयमानस्य पूरयितुमशक्यस्य सर्वदा । दुःखहेतुत्वात्तत्पूर्वकस्य राजसस्य कर्मणो दुःखं फलं भवति । एवं प्रमादमोहौ तमसः संकाशाद्भवतो जायेते । अज्ञानमेव च

५ भाष्योत्कर्षदीपिका ।

योनिषु जायते उत्पद्यत इत्यर्थः ॥ १५ ॥ अतीतश्लोकयोः सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वस्य प्रतिपादकयोरर्थं संक्षिप्याह । कर्मणः सुकृतस्य पुण्यस्य सात्त्विकस्य सत्त्वकार्यस्याशुद्धिरहितस्येत्यर्थः । सात्त्विकं सत्त्वेन निर्वृत्तमेव निर्मलं रजस्तमःसमुद्भवान्मलाद्रहितं स्वर्गलोकादिषु भोग्यं सुखं फलमाहुः शिष्टाः । रजसस्तु राजसस्य कर्मण इत्यर्थः । कर्मण इति प्रकान्तत्वात् मर्त्यलोके भुज्यमानं कारणानुरूपं राजसं दुःखमेव आहुः । तथा तमसस्तामसस्य कर्मणोऽधर्मस्य पश्वादियोनिषु परिदृश्यमानमज्ञानं फलमाहुः ॥ १६ ॥ किंच गुणेभ्यो भवति एतादृशफलवैचित्र्यमित्यपेक्षायामाह—**सत्त्वादिति** । रजस्तमसी अभिभूय लब्धात्मकात्सत्त्वाज्ज्ञानं संजायते । रजसा सत्त्वं तमश्चाभिभूय लब्धस्वरूपाल्लोभः संजायते । चः प्रवृत्त्यादिसमुच्चयार्थः । एवकारो व्यभिचारवारणार्थः । एवं रजःसत्त्वं चाभिभूयोद्भूतात्तमसः प्रमादमोहौ भवतोऽज्ञानं च भवति । अव्ययार्थः प्राग्वत् ।

६ श्रीधरीव्याख्या ।

पश्वादिषु जायते ॥ १५ ॥ इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वमाह—**कर्मण इति** । सुकृतस्य सात्त्विककर्मणः सात्त्विकं सत्त्वप्रधानं निर्मलं प्रकाशबहुलं सुखं फलमाहुः कपिलादयः । रजस इति राजसस्य कर्मण इत्यर्थः । कर्मफलकथनस्य प्राकृतत्वात्तस्य दुःखं फलमाहुः । तमस इति तामसस्य कर्मण इत्यर्थः । तस्याज्ञानं मूढत्वं फलमाहुः । सात्त्विकादिकर्मलक्षणं च 'नियतं सङ्गरहितं' इत्यादिनाऽष्टादशे वक्ष्यति ॥ १६ ॥ तत्रैव हेतुमाह—**सत्त्वादिति** । सत्त्वाज्ज्ञानं संजायते । अतः सात्त्विकस्य कर्मणः प्रकाशबहुलं सुखं फलं भवति । रजसो लोभो जायते । तस्य च दुःखहेतुत्वात्, तत्पूर्वकस्य कर्मणो दुःखं फलं भवति ।

७ अभिनवगुप्ताचार्यव्याख्या ।

कर्मण इति । अत्र केचिदसंबद्धाः श्लोकाः कल्पिताः पुनरुक्तत्वात्ते त्याज्या एव । एतद्गुणातीतश्रुतिस्तु मोक्षायैव कल्पते ॥ १६ ॥ १७॥ १८ ॥

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।**
**जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

किंच—ऊर्ध्वमिति । ऊर्ध्वं गच्छन्ति देवलोकादिषूत्पद्यन्ते सत्त्वस्थाः सत्त्वगुणवृत्तस्थाः । मध्ये तिष्ठन्ति मनुष्येषूत्पद्यन्ते राजसाः । जघन्यगुणवृत्तस्था जघन्यश्चासौ गुणश्च जघन्यगुणस्तमस्तस्य वृत्तं निद्रालस्यादि तस्मिन्स्थिता जघन्यगुणवृत्तस्था मूढा अधो गच्छन्ति पश्वादिषूत्पद्यन्ते तामसाः ॥ १८ ॥ पुरुषस्य प्रकृतिस्थत्वरूपेण मिथ्याज्ञानेन युक्तस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपो यः सङ्गस्तत्कारणं पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्येति समासेन पूर्वाध्याये यदुक्तं तदिह 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः' इत्यत आरभ्य गुणस्वरूपं गुणवृत्तं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबद्धस्य च पुरुषस्य या गतिरित्येतत्सर्वं मिथ्याज्ञानमज्ञान-

२ आनन्दगिरिव्याख्या ।

न्युक्त्वानुक्तसंग्रहार्थं सामान्येनोपसंहरति—किंचेति । वक्ष्यमाणफलद्वारापि सत्त्वादिज्ञानमित्यर्थः । सत्त्वगुणस्य वृत्तं शोभनं ज्ञानं कर्म वा तत्र तिष्ठन्तीति तथा । राजसा रजोगुणनिमित्ते ज्ञाने कर्मणि वा निरताः ॥ १८ ॥ कस्मिन्गुणे कथमित्यादिप्रश्नान्प्रत्याख्याय गुणेभ्यो मोक्षणं कथमिति प्रत्याख्यानार्थं वृत्तानुवादपूर्वकं मिथ्याज्ञाननिवर्तकं सम्यग्ज्ञानं प्रस्तौति—पुरुषस्येत्यादिना । पुरुषस्य या गतिः सा चेति शेषः । मोक्षो गुणेभ्यो विश्लेषपूर्वको ब्रह्मभावः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

माह—सत्त्वादिति ॥१७॥ यतः सत्त्वादिभ्यो ज्ञानादीनि जायन्तेऽतः सत्त्वादिवृद्धिकाले प्रलयं गच्छन्तः । क्रमेणोत्तममध्यमाधमासु योनिषु जायन्त इत्याह—ऊर्ध्वमिति । ऊर्ध्वं देवभावे । मध्ये मानुषभावे । अधः नरकतिर्यक्स्थावरभावे । जघन्यं निन्द्यं यद्गुणवृत्तं निद्रालस्यप्रमादादि तत्स्थास्तामसाः ॥ १८ ॥ कथं प्रकृतिः पुरुषं बध्नातीत्य-

४ मधुसूदनीव्याख्या ।

भवति । एवकारः प्रकाशप्रवृत्तिव्यावृत्त्यर्थः । अतस्तामसस्य कर्मणस्तामसज्ञानादिप्रायमेव फलं भवतीति युक्तमेवेत्यर्थः । अत्र चाज्ञानमप्रकाशः प्रमादो मोहश्चाप्रकाशोऽप्रवृत्तिश्चेत्यत्र व्याख्यातौ ॥१७॥ इदानीं सत्त्वादिवृत्तस्थानां प्रागुक्तमेव फलमूर्ध्वमध्याधोभावेनाह—अत्र तृतीये गुणे वृत्तशब्दप्रयोगादाद्ययोरपि वृत्तमेव विवक्षितं, तेन सत्त्वस्थाः सत्त्ववृत्ते शास्त्रीये ज्ञाने कर्मणि च निरता ऊर्ध्वं सत्यलोकपर्यन्तं देवलोकं गच्छन्ति ते देवेषूत्पद्यन्ते ज्ञानकर्मतारतम्येन । तथा मध्ये मनुष्यलोके पुण्यपापमिश्रे तिष्ठन्ति नतूर्ध्वं गच्छन्त्यधो वा मनुष्येषूत्पद्यन्ते । राजसा रजोगुणवृत्ते लोभादिपूर्वके राजसे कर्मणि निरताः । जघन्यगुणवृत्तस्था जघन्यस्य गुणद्वयापेक्षया पश्चाद्भाविनो निकृष्टस्य तमसो गुणस्य वृत्ते निद्रालस्यादौ स्थिता अधो गच्छन्ति पश्वादिषूत्पद्यन्ते । कदाचिज्जघन्यगुणवृत्तस्थाः सात्त्विका राजसाश्च भवन्त्यत आह—तामसाः सर्वदा तमःप्रधाना इतरेषां कदाचित्तद्वृत्तस्थत्वेऽपि न तत्प्रधानतेति भावः ॥ १८ ॥ अस्मिन्नध्याये वक्तव्यत्वेन प्रस्तुतमर्थत्रयं । तत्र क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वं के वा गुणाः कथं वा ते बध्नन्तीत्यर्थद्वयमुक्तम् । अधुना तु गुणेभ्यः कथं मोक्षणं, मुक्तस्य च किं लक्षणमिति वक्तव्यमवशिष्यते ।

५ भाष्योत्कर्षदीपिका ।

तथाच प्रकाशजनकसत्त्वकार्यस्य कर्मणः प्रकाशबहुलं सुखमेव फलमनुरूपं लोभादिजनकरजःकार्यस्य कर्मणः दुःखबहुलमेव फलमनुरूपं प्रमादादिजनकं तमःकार्यस्य कर्मणोऽज्ञानबहुलमेव फलं उचितमिति भावः ॥ १७ ॥ तस्मात्सत्त्व एव स्थैर्यं नतु रजसि तमसि वेति बोधनाय सत्त्वादिगुणवृत्तस्थितानां फलभेदं वदन्नुपसंहरति—ऊर्ध्वमिति । अत्र तमसि वृत्तशब्दप्रयोगात् सत्त्वरजसोरपि वृत्तमेव विवक्षितं सत्त्वस्थाः । सत्त्ववृत्ते शास्त्रीयोपासनायां कर्मणि च निरताः ऊर्ध्वं उपासनादितारतम्येन ब्रह्मलोकपर्यन्तं गच्छन्ति देवेषु उत्पद्यन्ते । तथा राजसाः रजोगुणवृत्ते लोभादिपूर्वके काम्यनिषिद्धादिराजसे कर्मणि स्थिताः मध्ये दुःखबहुलेऽल्पसुखे मनुष्यलोके तिष्ठन्ति मनुष्येषूत्पद्यन्ते । जघन्यः गुणद्वयापेक्षया निकृष्टः स चासौ गुणश्च तस्य जघन्यगुणस्य तमसः वृत्ते निद्रालस्यादौ स्थिता जघन्यगुणवृत्तस्था मूढाः सदैव तामसाः अधो गच्छन्ति पश्वादिषूत्पद्यन्ते ॥ १८ ॥ प्रकृतिस्थस्वरूपेण मिथ्याज्ञानेन युक्तस्य पुरुषस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपः सङ्गः पुरुषस्य सदसद्यो-

६ श्रीधरीव्याख्या ।

तमसस्तु प्रमादमोहाज्ञानानि भवन्ति । ततस्तामसस्य कर्मणोऽज्ञानप्रापकं फलं भवतीति युक्तमेवेत्यर्थः ॥ १७ ॥ इदानीं सत्त्वादिवृत्तिशीलानां फलभेदमाह—ऊर्ध्वमिति । सत्त्वस्थाः सत्त्ववृत्तिप्रधाना ऊर्ध्वं गच्छन्ति । सत्त्वोत्कर्षतारतम्यादुत्तरोत्तरशतगुणानन्दान्मनुष्यगन्धर्वपितृदेवादिलोकान्सत्यलोकपर्यन्तान्प्राप्नुवन्तीत्यर्थः । राजसास्तु तृष्णाद्याकुला मध्ये तिष्ठन्ति मनुष्यलोक एवोत्पद्यन्ते । जघन्योऽतिनिकृष्टस्तमोगुणस्तस्य वृत्तिः प्रमादमोहादिस्तत्र स्थिता अधो गच्छन्ति । तमोवृत्तितारतम्यात्तामिस्रादिषु निरयेषूत्पद्यन्ते

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥**
**गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।**
**जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

मूलं च बन्धकारणं विस्तरेणोक्त्वाधुना सम्यग्दर्शनान्मोक्षो वक्तव्य इत्याह भगवान्—**नान्यमिति** । नान्यं कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं यदा द्रष्टा विद्वान्सन्नानुपश्यति । गुणा एव सर्वावस्थाः सर्वकर्मणां कर्तार इत्येवं पश्यति । गुणेभ्यश्च परं गुणव्यापारसाक्षिभूतं वेत्ति मद्भावं मम भावं द्रष्टाधिगच्छति ॥ १९ ॥ कथमधिगच्छतीत्युच्यते—**गुणानिति** । गुणानेतान्यथोक्तानतीत्य जीवन्नेवातिक्रम्य मायोपाधिभूतांस्त्रीन्देही देहसमुद्भवान्देहोत्पत्तिबीजभूतान्, जन्म-

२ आनन्दगिरिव्याख्या ।

सम्यग्ज्ञानोक्तिपरं श्लोकं व्याख्यातुं प्रतीकमादत्ते—**नान्यमिति** । सत्त्वादिकार्यविषयस्य गुणशब्दस्य विवक्षितमर्थमाह—**कार्येति** । विद्यानन्तर्यमनुशब्दार्थः । अक्षरार्थमुक्त्वा पूर्वार्धस्यार्थिकमर्थमाह—**गुणा एवेति** । सर्वावस्थास्तत्तत्कार्यकरणाकारपरिणता इति यावत् । सर्वकर्मणां कायिकवाचिकमानसानां विहितप्रतिषिद्धानामित्यर्थः । परं व्यतिरिक्तम् । व्यतिरेकमेव स्फोरयति—**गुणेति** । निर्गुणब्रह्मात्मानमित्यर्थः । मद्भावं ब्रह्मात्मतामसौ प्राप्नोति । ब्रह्मभावोऽस्याभिव्यज्यत इत्यर्थः ॥ १९ ॥ अनर्थव्रातरूपमपोह्य विद्वान्ब्रह्मत्वं प्राप्नोतीत्येतत्प्रश्नद्वारा विवृणोति—**कथमित्यादिना** । यथोक्तानित्येतदेव व्याचष्टे—**मायेति** । मायैवोपाधिस्तद्भूतांस्तदात्मनः सत्त्वादीननर्थरूपानित्यर्थः । एभ्यः समुद्भवन्तीति समुद्भवा देहस्य समुद्भवा देहसमुद्भवास्तानिति व्युत्पत्तिं गृहीत्वा व्याचष्टे—**देहोत्पत्तीति** । यो विद्वान्विद्यामयान्गुणाञ्जीवन्नेवातिक्रम्य स्थितस्तमेव विशिनष्टि—**जन्मेति** । पुरस्ताद्विस्तरेणोक्तस्य प्रसङ्गादत्र संक्षिप्तस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्योत्तरमुक्तम् । कथं वा ततोऽस्य मुक्तिरित्यस्योत्तरमाह—**नान्यमिति** । गुणेभ्यः कार्यकारणविषयाकारपरिणतेभ्योऽन्यं दृशिमात्रं आत्मानं द्रष्टा जीवः कर्तारं नानुपश्यति विवेकमनु न पश्यति । किंतु गुणा एव कर्तार इत्येव पश्यति न त्वहं कर्तेति । तथा गुणेभ्यः परं गुणव्यापारसाक्षिभूतं मां यदा वेत्ति तदा स वेदिता मद्भावं ब्रह्मभावं गच्छति । अन्यदा तु गुणभावं गतो भवति ॥ १९ ॥ कथं त्वद्भावं गच्छतीति तत्राह—**गुणानिति** । एतान्गुणान् महदादित्रयो-

४ मधुसूदनीव्याख्या ।

तत्र मिथ्याज्ञानात्मकत्वाद्गुणानां सम्यग्ज्ञानात्तेभ्यो मोक्षणमित्याह—गुणेभ्यः कार्यकरणविषयाकारपरिणतेभ्योऽन्यं कर्तारं यदा द्रष्टा विचारकुशलः सन्नानुपश्यति विचारमनु न पश्यति गुणा एवान्तःकरणबहिष्करणशरीरविषयभावापन्नाः सर्वकर्मणां कर्तार इति पश्यति । गुणेभ्यश्च तत्तदवस्थाविशेषेण परिणतेभ्यः परं गुणतत्कार्यासंस्पृष्टं तद्भासकमादित्यमिव जलतरङ्गाद्यसंस्पृष्टं निर्विकारं सर्वसाक्षिणं सर्वत्र समं क्षेत्रज्ञमेकं वेत्ति मद्भावं मद्रूपतां स द्रष्टाधिगच्छति ॥ १९ ॥ कथमधिगच्छतीत्युच्यते—

५ भाष्योत्कर्षदीपिका ।

निजन्मप्राप्तिलक्षणस्य संसारस्य कारणमिति 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति पूर्वाध्याये संक्षेपेण यदुक्तं तदस्मिन्नध्याये 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवा' इत्यारभ्य गुणस्वरूपं गुणवृत्तं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबद्धस्य पुरुषस्य विविधा गतिरित्येतत्सर्वं मिथ्याऽज्ञानमूलं संसारकारणं विस्तरेण प्रतिपादितं । कस्मिन् गुणे कथं सङ्गः के वा गुणाः कथं ते बध्नन्तीत्याकाङ्क्षानिवृत्तयेऽधुना गुणेभ्यो मोक्षणं च कथं स्यादित्याकाङ्क्षानिरासाय सम्यग्दर्शनं तेभ्यो मोक्षस्य साधनमित्याह—**नान्यमिति** । यदा द्रष्टा विविक्तात्मदर्शी विद्वान्सन् कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं नानुपश्यति गुणा एव कार्यकरणाकारपरिणताः सर्वकर्मणां कर्तार इत्येवं पश्यति गुणेभ्यश्च परं व्यतिरिक्तं गुणव्यापारसाक्षिभूतमात्मानं वेत्ति जानातीत्यर्थः ॥ १९ ॥ कथमधिगच्छतीत्यपेक्षायामाह । गुणानेतान्यथोक्तान्मायात्मकांस्त्रीन्सत्त्वरजस्तमः-

६ श्रीधरीव्याख्या ।

॥ १८ ॥ तदेवं प्रकृतिगुणसङ्गकृतं संसारं प्रपञ्चमुक्त्वा इदानीं तद्विवेकतो मोक्षं दर्शयति—**नान्यमिति** । यदा तु द्रष्टा विवेकी भूत्वा बुद्ध्याद्याकारपरिणतेभ्यो गुणेभ्योऽन्यं कर्तारं नानुपश्यति, अपितु गुणा एव कर्माणि कुर्वन्तीति पश्यति, गुणेभ्यश्च परं व्यतिरिक्तं तत्साक्षिणमात्मानं वेत्ति स तु मद्भावं ब्रह्मत्वमधिगच्छति प्राप्नोति ॥ १९ ॥ ततश्च गुणकृतसर्वानर्थनिवृत्त्या कृतार्थो भवतीत्याह—**गुणानिति** । देहाद्याकारः समुद्भवः परिणामो येषां ते देहसमुद्भवाः तानेतांस्त्रीनपि गुणानतीत्यातिक्रम्य तत्कृतैर्ज-

अर्जुन उवाच । कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥
श्रीभगवानुवाच । प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।

१ श्रीमच्छांकरभाष्यम् ।

मृत्युजरादुःखैः, जन्म च मृत्युश्च जरा च दुःखानि च तैर्जीवन्नेव विमुक्तः सन्विद्वानमृतमश्नुते । एवं मद्भावमधिगच्छतीत्यर्थः ॥ २० ॥ जीवन्नेव गुणानतीत्यामृतमश्नुत इति प्रश्नबीजं प्रतिलभ्यार्जुन उवाच—कैरिति । कैर्लिङ्गैश्चिह्नैस्त्रीनेतान्व्याख्यातान्गुणानतीतोऽतिक्रान्तो भवति प्रभो, किमाचारः कोऽस्याचार इति किमाचारः । कथं केन च प्रकारेणैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥ गुणातीतस्य

२ आनन्दगिरिव्याख्या ।

सम्यग्ज्ञानस्य फलमुपसंहरति—एवमिति ॥ २० ॥ सम्यग्धीफलं गुणातिक्रमपूर्वकममृतत्वमुक्तं श्रुत्वा मुक्तस्य लक्षणं वक्तव्यमिति प्रकृतं विवक्षित्वा प्रश्नमुत्थापयति—जीवन्नेवेति । ये व्याख्याताः सत्त्वादयो गुणास्तत्परिणामभूतानध्यासानतिक्रान्तः सन्कैर्लिङ्गैर्ज्ञातो भवतीति तानि वक्तव्यानि सिद्ध्यर्थं पूर्वमनुष्ठेयानि पश्चादयत्नलभ्यानि लिङ्गानि, कानि तानीति पृच्छति—कैरिति । यथेष्टचेष्टाव्यावृत्त्यर्थं प्रश्नान्तरं—किमाचार इति । ज्ञानस्य गुणात्ययोपायस्योक्तत्वादुपायप्रकारजिज्ञासया प्रश्नान्तरं—कथमिति ॥ २१ ॥ प्रश्नस्वरूपमनूद्य तदुत्तरं दर्शयति—गुणातीतस्येति । पृष्टो भगवानिति संबन्धः । किंवृत्तस्य त्रिधा प्रयोगदर्शनात्प्रश्नद्वयार्थमित्युपलक्षणं प्रश्नत्रयार्थ-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विंशतिविकारात्मना परिणतान् देहसमुद्भवान् स्थूलदेहस्य समुद्भवो येभ्यस्तानतीत्य जीवन्नेवातिक्रम्य निर्विकल्पकसमाध्यभ्यासेन बाधित्वाऽमृतं मोक्षमश्नुते प्राप्नोति । एतेनानन्दावाप्तिर्गुणात्ययप्रयोजनमुक्तम् । यतो मुक्तो जन्ममृत्युजरादुःखैर्विमुक्तः सन्निति त्वनर्थनिवृत्तिरुक्ता ॥ २० ॥ प्रकृतितो मुक्तिप्रकारे उक्तेऽथ मुक्तलक्षणानि पृच्छन्नर्जुन उवाच—कैरिति । कैर्लिङ्गैश्चिह्नैस्त्रीन्गुणानेतान्व्याख्यातानतीतो भवति पुमान् हे प्रभो, सच किमाचारः

४ मधुसूदनीव्याख्या ।

गुणानेतान्मायात्मकांस्त्रीन्सत्त्वरजस्तमोनाम्नः देहसमुद्भवान्देहोत्पत्तिबीजभूतान् अतीत्य जीवन्नेव तत्त्वज्ञानेन ( नाधिगत्य ) बाधित्वा जन्ममृत्युजरादुःखैर्जन्मना मृत्युना जरया दुःखैश्चाध्यात्मिकादिभिर्मायामयैर्विमुक्तो जीवन्नेव तत्संबन्धशून्यः सन् विद्वानमृतं मोक्षं मद्भावमन्ते प्राप्नोति ॥ २० ॥ गुणानेतानतीत्य जीवन्नेवामृतमश्नुत इत्येतच्छ्रुत्वा गुणातीतस्य लक्षणं चाचारं गुणातीतत्वोपायं च सम्यग्बुभुत्समानः अर्जुन उवाच—एतान्गुणानतीतो यः स कैर्लिङ्गैर्विशिष्टो भवति यैर्लिङ्गैः स ज्ञातुं शक्यस्तानि मे ब्रूहीत्येकः प्रश्नः । प्रभुत्वाद्भृत्यदुःखं भगवतैव निवारणीयमिति सूचयन्संबोधयति प्रभो इति । क आचारोऽस्येति किमाचारः किं यथेष्टचेष्टः किंवा नियन्त्रित इति द्वितीयः प्रश्नः । कथंच केन च प्रकारेण एतांस्त्रीन्गुणानतिवर्ततेऽतिक्रमतीति गुणातीतत्वोपायः क इति तृतीयः प्रश्नः ॥ २१ ॥'स्थितप्रज्ञस्य का भाषा' इत्यादिना पृष्टमपि 'प्रजहाति यदा कामान्' इत्यादिना दत्तोत्तरमपि

५ भाष्योत्कर्षदीपिका ।

संज्ञकान् समुद्भवन्त्येभ्य इति समुद्भवाः देहस्य समुद्भवाः तान् देहसमुद्भवान् देहोत्पत्तिबीजभूतान् देही अतीत्य विद्वान् जीवन्नेवातिक्रम्य जन्ममृत्युजरादुःखैः जन्म च मृत्युश्च जरा च दुःखानि च तैः जीवन्नेव मुक्तः सर्वानर्थविनिर्मुक्तः अमृतं ब्रह्मानन्दं मद्भावं मोक्षमश्नुते प्राप्नोतीत्यर्थः ॥ २० ॥ गुणातिक्रमेण सर्वानर्थनिवृत्तिपूर्वकामृतप्राप्तिलक्षणं सम्यग्ज्ञानफलं भगवतोक्तं श्रुत्वा प्रश्नबीजं प्रतिलभ्य गुणातीतस्य लक्षणमाचारं गुणातिक्रमेणोपायं च सम्यक् बुभुत्सुरर्जुन उवाच—कैरिति । एतानुक्तान् त्रीन् गुणान् कैर्लिङ्गैश्चिह्नैरतीतोऽतिक्रान्तो भवति कैश्चिह्नैर्गुणातिक्रमणे प्रभुः समर्थो भवतीति सूचयन्संबोधयति प्रभो इति । अस्मदादिप्रश्नसमाधानेऽतिसमर्थोऽसीति वा संबोधनाशयः । कोऽस्याचार इति किमाचारः कथं च केन प्रकारेणैतान् त्रीन् गुणान् अतिवर्तते लिङ्गैराचारेण च गुणातीतस्य लक्षणं गुणातिक्रमोपायं च वदेत्यर्थः ॥ २१ ॥ एवं पृष्टः श्रीभगवानुवाच । तत्र कैर्लिङ्गैर्गुणातीतो

६ श्रीधरीव्याख्या ।

न्मादिभिर्विमुक्तः सन्नमृतमश्नुते ब्रह्मानन्दं प्राप्नोति ॥ २० ॥ गुणानेतानतीत्यामृतमश्नुत इत्येतच्छ्रुत्वा, गुणातीतस्य लक्षणमाचारं गुणात्ययोपायं च सम्यग्बुभुत्सुरर्जुन उवाच—कैर्लिङ्गैरिति । हे प्रभो, कैर्लिङ्गैः कीदृशैरात्मन्युत्पन्नैश्चिह्नैर्गुणातीतो देही भवतीति लक्षणप्रश्नः । क आचारो यस्येति किमाचारः । कथं वर्तत इत्यर्थः । कथं च केनोपायेनैतांस्त्रीनपि गुणानतीत्य वर्तते तत्कथयेति ॥ २१ ॥ 'स्थितप्रज्ञस्य का भाषा' इत्यादिना द्वितीयाध्याये पृष्टमपि दत्तोत्तरमपि पुनर्विशेषबुभुत्सया पृच्छतीति ज्ञात्वा प्रकारान्तरेण

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १९ ॥ २० ॥ ननु देही कथं गुणातीतो भवति । सर्वथैव हि कयाचिच्चित्तवृत्त्या वर्तते सा च त्रैगुण्यादन्यतमावश्यं भवति । अनेनाभिप्रायेणार्जुनः पृच्छति—कैर्लिङ्गैरिति ॥ २१ ॥ अत्रोत्तरं भगवानुवाच—प्रकाशंचेति । यद्यपि प्रकाशादिकाः सर्वधर्मेषु वर्तन्ते तथापि

न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

१ श्रीमच्छांकरभाष्यम् ।

लक्षणं गुणातीतत्वोपायं चार्जुनेन पृष्टोऽस्मिञ्श्लोके प्रश्नद्वयार्थं प्रतिवचनं भगवानुवाच । यत्तावत्कैर्लिङ्गैर्युक्तो गुणातीतो भवति तच्छृणुष्व—प्रकाशमिति । प्रकाशं च सत्त्वकार्यं प्रवृत्तिं च रजःकार्यं मोहमेव च तमःकार्यमित्येतानि न द्वेष्टि संप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि । मम तामसः प्रत्ययो जातस्तेनाहं मूढस्तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात्कष्टं मम वर्तते योऽयं मत्स्वरूपावस्थानाद्भ्रंशस्तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन्सुखे च संजयन्बध्नातीति तानि द्वेष्ट्यसम्यग्दर्शित्वेन । तदेवं गुणातीतो न द्वेष्टि संप्रवृत्तानि । यथाच सात्त्विकादिपुरुषः सात्त्विकादिकार्याण्यात्मानं प्रति प्रकाश्य निवृत्तानि काङ्क्षति न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः । एतन्न परप्रत्यक्षं लिङ्गं किं तर्हि स्वात्मप्रत्य-

२ आनन्दगिरिव्याख्या ।

मिति द्रष्टव्यम् । उत्तरमवतार्यानन्तरश्लोकतात्पर्यमाह—यत्तावदिति । तानि सम्यग्दर्शी न द्वेष्टीत्युक्तमेव स्पष्टयितुं निषेध्यमसम्यग्दर्शिनो द्वेषं तेषु प्रकटयति—ममेत्यादिना । सम्यग्दर्शिनः संप्रवृत्तेषु प्रकाशादिषु द्वेषाभावमुपसंहरति—तदेवमिति । न निवृत्तानीत्यादि व्याचष्टे—यथाचेति । तेषामनात्मीयत्वं सम्यक्पश्यन्नात्मानुकूलप्रतिकूलतारोपणेन नोद्विजते तेभ्यश्च न स्पृहयतीत्यर्थः । स्वानुभवसिद्धं गुणातीतस्य लक्षणमुक्तमित्याह—एतन्नेति ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कोऽस्याचारः कथं केन च प्रकारेणैतांस्त्रीन्गुणानतिक्रम्य वर्तते ॥ २१ ॥ तत्राद्यस्योत्तरमाह—प्रकाशमिति । प्रकाशप्रवृत्तिमोहाः सत्त्वरजस्तमसां कार्याणि । व्युत्थानावस्थायां तानि सम्यक् प्रवृत्तानि । सामान्ये नपुंसकम् । तान्संप्रवृत्तान्न द्वेष्टि । नापि समाध्यवस्थायां तानि निवृत्तानि सन्ति काङ्क्षति । सोऽयं नित्यसमाधिस्थो ब्रह्मविद्वरिष्ठः यं प्रकृत्य श्रीभागवते स्मर्यते 'देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति' इति । अत्र वासिष्ठे सप्तयोगभूमय उक्ताः 'ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता । विचारणा द्वितीया तु तृतीया तनुमानसा । सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका । पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता' इति । तत्र यथोक्ता साधनसंपत् मुमुक्षान्ता प्रथमा । श्रवणमननाख्यविचारात्मिका द्वितीया । निदिध्यासनरूपा तृतीया । एताः साधनभूमयः । सत्त्वापत्तिर्ब्रह्मसाक्षात्काररूपा चतुर्थी फलभूता । यस्यां योगी कृतार्थोऽपि जीवन्मुक्तिसुखं पुष्कलं नानुभवति । परास्तिस्रो जीवन्मुक्तेरवान्तरभेदाः । तत्रापि पञ्चम्यां भूमौ स्वयं स्थितः स्वयमेव व्युत्तिष्ठति । षष्ठ्यां परप्रयत्नेन सप्तम्यां तु न स्वतः

४ मधुसूदनीव्याख्या ।

पुनः प्रकारान्तरेण बुभुत्समानः पृच्छतीत्यवधाय प्रकारान्तरेण तस्य लक्षणादिकं पञ्चभिः श्लोकैः श्रीभगवानुवाच—यस्तावत्कैर्लिङ्गैर्युक्तो गुणातीतो भवतीति प्रश्नस्तस्योत्तरं शृणु— प्रकाशं च सत्त्वकार्यं, प्रवृत्तिं च रजःकार्यं, मोहं च तमःकार्यम् । उपलक्षणमेतत् । सर्वाण्यपि गुणकार्याणि यथायथं संप्रवृत्तानि स्वसामग्रीवशादुद्भूतानि सन्ति दुःखरूपाण्यपि दुःखबुद्ध्या यो न द्वेष्टि, तथा विनाशसामग्रीवशान्निवृत्तानि तानि सुखरूपाण्यपि सन्ति सुखबुद्ध्या न काङ्क्षति न कामयते स्वप्नवन्मिथ्यात्वनिश्चयात्, एतादृशद्वेषरागशून्यो यः स गुणातीत उच्यत इति चतुर्थश्लोकगतेनान्वयः । इदं च स्वात्मप्रत्यक्षं लक्षणं स्वार्थमेव न

५ भाष्योत्कर्षदीपिका ।

भवतीति प्रश्नस्योत्तरमाह । प्रकाशं च सत्त्वकार्यं, प्रवृत्तिं च रजःकार्यं, मोहमेव च तमः कार्यं । चकाराः सत्त्वादिसर्वकार्याणां समुच्चयार्थाः । इत्येतानि संप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि न द्वेष्टि यथाऽविद्वान् । मम तामसः प्रत्ययो जातः तेनाहं मूढः तथा राजसी प्रवृत्तिर्ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात् कष्टं मम वर्तते योऽयं स्वरूपावस्थानात् भ्रंशः । तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन् सुखेन च संजयन् बध्नातीति संप्रवृत्तं सत्त्वादिकार्यं द्वेष्टि न तथा सम्यग्दर्शित्वेन गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः । सर्वतः यथाचाविद्वान् सात्त्विकादिः पुरुषः सत्त्वादिकार्याण्यात्मानं प्रति प्रकाशादीनि निवृत्तानि काङ्क्षति न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः । एवंविधो यः स गुणातीत उच्यत इति चतुर्थस्थेनान्वयः । एता-

६ श्रीधरीव्याख्या ।

तस्य लक्षणादिकं श्रीभगवानुवाच—प्रकाशं चेत्यादिषड्भिः । तत्रैकेन लक्षणमाह । प्रकाशं चेति । प्रकाशं च 'सर्वद्वारेषु देहेऽस्मिन्' इति पूर्वोक्तं सत्त्वकार्यं, प्रवृत्तिं च रजःकार्यम्, मोहं च तमसः कार्यम् । उपलक्षणमेतत्सत्त्वादीनाम् । सर्वाण्यपि कार्याणि यथायथं संप्रवृत्तानि स्वतःप्राप्तानि सन्ति दुःखबुद्ध्या यो न द्वेष्टि, निवृत्तानि च सन्ति सुखबुद्ध्या न काङ्क्षति, गुणातीतः स

७ अभिनवगुप्ताचार्यव्याख्या ।

योगिनस्तेषु प्रकाशादिषु न रज्यन्ते न द्वेषवन्तो भवन्ति अपितु केवलपिण्डधर्मतयैते स्थिता न मां क्षोभयितुमलमिति मन्वाना गुणातीता

**उदासीनवदासीनो गुणैर्यो न विचाल्यते ।**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

क्षत्वादात्मविषयमेवैतल्लक्षणम् । नहि स्वात्मविषयं द्वेषमाकाङ्क्षां वा परः पश्यति ॥ २२ ॥ अथेदानीं गुणातीतः किमाचार इति प्रश्नस्य प्रतिवचनमाह—उदासीनेति । उदासीनवद्यथोदासीनो न कस्यचित्पक्षं भजते तथायं गुणातीतत्वोपायमार्गेऽवस्थित आसीन आत्मविद्गुणैर्यः संन्यासी न विचाल्यते विवेकदर्शनावस्थातः । तदेतत्स्फुटीकरोति । गुणाः कार्यकारणविषयाकारपरिणता अन्योऽन्यस्मिन्वर्तन्त इति योऽवतिष्ठति । छन्दोभङ्गभयात्परस्मैपदप्रयोगः । योऽनुतिष्ठतीति पाठान्तरम् ।

२ आनन्दगिरिव्याख्या ।

परप्रत्यक्षत्वाभावं प्रपञ्चयति—**नहीति** । आश्रयो विषयः ॥ २२ ॥ कैर्लिङ्गैरित्यादि परिहृत्य द्वितीयं प्रश्नं परिहरति—**अथेति** । दृष्टान्तं व्याचष्टे—**यथेति** । उपेक्षकस्य पक्षपाते तत्त्वायोगादित्यर्थः । आत्मविदात्मकौटस्थ्यज्ञानेनासीनो निवृत्तकर्तृत्वाभिमानोऽप्रयतमानो भवतीति दार्ष्टान्तिकमाह—**तथेति** । गुणातीतत्वोपायमार्गो ज्ञानमेव । शब्दादिभिर्विषयैरस्य कूटस्थत्वज्ञानात्प्रच्यवनमाशङ्क्याह—**गुणैरिति** । उपनतानां विषयाणां रागद्वेषद्वारा प्रवर्तकत्वमित्येतत्प्रपञ्चयति—**तदेतदिति** । योऽवतिष्ठति स गुणातीत इत्युत्तरत्र संबन्धः । अवपूर्वस्य तिष्ठतेरात्मनेपदे प्रयोक्तव्ये कथं परस्मैपदमित्याशङ्क्याह—**छन्दोभङ्गेति** । पाठान्तरे तु बाधितानुवृत्तिमात्रमनुष्ठानम् । करणाकारपरिणतानां गुणानां विषयाकारपरिणतेषु तेषु प्रवृत्तिर्न ममेति पश्यन्नचलतया कूटस्थदृष्टिमात्मनो न जहाती-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

परतो वा व्युत्तिष्ठति । सोयं नित्यसमाधिस्थः प्रकाशमित्यनेन श्लोकेनोक्तः ॥ २२ ॥ अथ षष्ठ्यां पदार्थाभावन्यां गतो ब्रह्मविद्वरीयानुच्यते—**उदासीनवदिति** । योयं समाधावुदासीन इवास्ते व्युत्थाने किमपि प्रयोजनमपश्यन् । इदं मम कर्तव्यमस्तीति वासनाशून्यत्वात् । य आस्ते एव नतु परप्रयत्नमन्तरेण कदाचिदपि गुणैर्विचाल्यते । परेण व्युत्थापितोऽपि गुणान्पश्यन् गुणा वर्तन्त इत्येव ज्ञात्वा योऽवतिष्ठति स्तब्धएव वर्तते नतु गुणकृतैरिष्टानिष्टस्पर्शैरिङ्गते चलति । अयमर्थः—यथा कश्चिद्भुञ्जानो रसनामौढ्यात्स्वयं शाकादिरसं न विन्दति । परेण ज्ञापितोऽपि कंचिद्रसविशेषमुपलभ्यापि तत्रोदासीन एवास्ते । झटित्येव विशेषदर्शनस्य तिरोधानान्न तत्कृतं सुखं दुःखं वा पश्यति तद्वदयं

४ मधुसूदनीव्याख्या ।

परमार्थम् । नहि स्वाश्रितौ द्वेषतदभावौ रागतदभावौ च परः प्रत्येतुमर्हति ॥ २२ ॥ एवं लक्षणमुक्त्वा गुणातीतः किमाचार इति द्वितीयप्रश्नस्य प्रतिवचनमाह त्रिभिः—यथोदासीनो द्वयोर्विवदमानयोः कस्यचित्पक्षमभजमानो न रज्यति न वा द्वेष्टि तथायमात्मविद्रागद्वेषशून्यतया स्वस्वरूप एवासीनो गुणैः सुखदुःखाद्याकारपरिणतैर्यो न विचाल्यते न प्रच्याव्यते स्वरूपावस्थानात् किंतु गुणा एवैते देहेन्द्रियविषयाकारपरिणताः परस्परस्मिन्वर्तन्ते ममत्वादित्यस्येवैतत्सर्वभासकस्य न केनापि भास्यधर्मेण संबन्धः, स्वप्नवन्मायामात्रश्चायं भास्यप्रपञ्चो जडः, स्वयंज्योतिः स्वभावस्त्वहं परमार्थसत्यो निर्विकारो द्वैतशून्यश्चेत्येवं निश्चित्य यः स्वरूपेऽ-

५ भाष्योत्कर्षदीपिका ।

दृशस्यैव जनकसंबन्धो नास्ति नलन्यस्येति ध्वनयन्संबोधयति हे पाण्डवेति । एतच्चिह्नवत्त्वं गुणातीतस्य लक्षणं स्वार्थमेव स्वात्मप्रत्यक्षत्वात् । न परप्रत्यक्षं स्वात्मविषयस्य द्वेषस्याकाङ्क्षायाश्च परैरदृश्यत्वात् ॥२२॥ कैर्लिङ्गैरित्यादिप्रश्नं समाधायाथेदानीं किमाचार इति प्रश्नस्योत्तरमाह त्रिभिः । उदासीनवत् यथोदासीनो न कस्यचित्पक्षं भजते तथा कौटस्थ्यज्ञानेन निवृत्तकर्तृत्वाभिमान आत्मवित् गुणातिक्रमणोपायमार्गे तत्त्वज्ञानेऽवस्थित आसीनः आत्मविवेकदर्शनावस्थातो गुणैर्न विचाल्यते न प्रच्याव्यते तदेतत्स्पष्टयति । गुणाः कार्यकरणविषयाकारपरिणता अन्योन्यस्मिन्वर्तन्ते नाहमित्येवं निश्चित्य यः कूटस्थज्ञानेऽवतिष्ठति तेन नेङ्गते न चलति स्वरूपावस्थ एव भवतीत्यर्थः । अवपूर्वस्य तिष्ठतेरात्मनेपदे प्रयोक्तव्ये छन्दोभङ्गभयात्परस्मैपदप्रयोगः कृतः । अनुष्टुप्छन्दसि

६ श्रीधरीव्याख्या ।

उच्यत इति चतुर्थेनान्वयः ॥ २२ तदेवं स्वसंवेद्यं तस्य लक्षणमुक्त्वा परसंवेद्यं तस्य लक्षणं वक्तुं किमाचार इति द्वितीयप्रश्नस्योत्तरमाह—**उदासीनवदिति त्रिभिः** । उदासीनवत्साक्षितया आसीनः स्थितः सन् गुणैर्गुणकार्यैः सुखदुःखादिभिर्यो न विचाल्यते स्वरूपान्न प्रच्याव्यते अपितु गुणा एव स्वकार्येषु वर्तन्ते, एतैर्मम संबन्ध एव नास्तीति विवेकज्ञानेन यस्तूष्णीमवतिष्ठति । परस्मैप-

७ अभिनवगुप्ताचार्यव्याख्या ।

भवन्ति । अत एवाह—यः अज्ञो निर्विवेकस्तिष्ठति स एव ज्ञः सम्यग्ज्ञानात् । तथाहि नेङ्गते न स्वरूपाच्च्यवते । अत्र चोपायः सर्वेषामा-

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥**
**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**

१ श्रीमच्छांकरभाष्यम् ।

नेङ्गते न चलति । स्वरूपावस्थ एव भवतीत्यर्थः ॥ २३ ॥ किंच—समदुःखेति । समदुःखसुखः समे दुःखसुखे यस्य स समदुःखसुखः । स्वस्थः स्वात्मनि स्थितः प्रसन्नः । समलोष्टाश्मकाञ्चनो लोष्टं चाश्मा च काञ्चनं च समानि यस्य स समलोष्टाश्मकाञ्चनः । तुल्यप्रियाप्रियः प्रियं चाप्रियं च प्रियाप्रिये समे यस्य सोऽयं तुल्यप्रियाप्रियः । धीरो धीमान् । तुल्यनिन्दात्मसंस्तुतिः निन्दा चात्मसंस्तुतिश्च तुल्ये निन्दात्मसंस्तुती यस्य यतेः स तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥ किंच—मानापमानयोरिति । मानापमानयोस्तुल्यः समो निर्विकारः । तुल्यो मित्रारिपक्षयोः, यद्यप्युदासीना

२ आनन्दगिरिव्याख्या ।

स्याह—नेङ्गत इति ॥ २३ ॥ गुणातीतस्य लिङ्गान्तरमाह—किंचेति । तयोः समत्वं रागद्वेषानुत्पादकतया स्वकीयत्वाभिमानानास्पदत्वं प्रसन्नत्वं स्वास्थ्यादप्रच्युतिरविक्रियत्वम् । विद्वद्दृष्ट्या प्रियाप्रिययोरसंभवेऽपि लोकदृष्टिमाश्रित्याह—प्रियं चेति । प्रियाप्रियग्रहणेन गृहीतानां काञ्चनादीनां ब्राह्मणपरिव्राजकवत्पृथग्ग्रहणम् । निन्दा दोषोक्तिरात्मसंस्तुतिरात्मनो गुणकीर्तनम् ॥ २४ ॥ इतश्च गुणातीतः शक्यो ज्ञातुमित्याह—किंचेति । मानः सत्कारस्तिरस्कारोऽपमानः । परदृष्ट्या यौ सखिशत्रू तयोः पक्षयोर्निर्विशेषो न कस्यचित्पक्षे तिष्ठतीत्याह—तुल्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ज्ञेयः ॥ २३ ॥ अथ पञ्चम्यां भूमावसंसक्तिनामिकायां स्थितो ब्रह्मविद्वर उच्यते—समेति । समाधौ समे दुःखसुखे यस्य स समदुःखसुखः । स्वस्थः स्वेनैव स्वेच्छयैव तिष्ठतीति स्वस्थः । यदा तु न समाधाविच्छा तदा स्वयमेव व्युत्तिष्ठतीति भावः । सोऽपि व्युत्थानावस्थायां समलोष्टाश्मकाञ्चनो विरक्त इत्यर्थः । तुल्यप्रियाप्रियः तुल्यनिन्दात्मसंस्तुतिश्च । प्रियाप्रिययोर्निन्दास्तुत्योश्च प्राप्तौ तुल्यो हर्षविषादशून्यः । अत्र हेतुर्धीर इति । यथा कश्चिच्छूरस्तीव्रप्रहारवेदनार्तोऽपि न व्यामुह्यति धैर्याद्वेदनां चानुभवति तद्वदयं हर्षविषादावनुभवन्नपि धैर्यान्न चलति । पूर्वस्य तु जातायामपि वेदनायां हर्षाद्युदय एव नास्ति । तत्पूर्वस्य तु वेदनैव नास्तीति भेदः । एतेन श्लोकत्रयेण सर्वेषां जीवन्मुक्तानां समाधौ लिङ्गानि तत्संवेद्यान्याचाराश्च परसंवेद्यानि लिङ्गान्युक्तानि ॥ २४ ॥ अथ चतुर्थ्यां भूमौ सत्त्वापत्तिसंज्ञायां स्थितस्य योगिनः समाधिसुखाभावेन स्वसंवेद्यलिङ्गाभावात्तत्त्वनिश्चयेन द्वैतस्य बाधाल्लिङ्गमाचारश्च परसं-

४ मधुसूदनीव्याख्या ।

वतिष्ठत्यवतिष्ठते । 'यो नु तिष्ठति' इति वा पाठस्तत्र नुः पृथक्कार्यः । नेङ्गते नानुव्याप्रियते कुत्रचित् गुणातीतः स उच्यत इति तृतीयगतेनान्वयः ॥ २३ ॥ समे दुःखसुखे द्वेषरागशून्यतयानात्मधर्मतयाऽनृततया च यस्य स समदुःखसुखः । कस्मादेवं यस्मात्स्वस्थः स्वस्मिन्नात्मन्येव स्थितो द्वैतदर्शनशून्यत्वात् । अतएव समानि हेयोपादेयभावरहितानि लोष्टाश्मकाञ्चनानि यस्य स तथा । लोष्टः पांसुपिण्डः । अतएव तुल्ये प्रियाप्रिये सुखदुःखसाधने यस्य हितसाधनत्वाहितसाधनत्वबुद्धिविषयत्वाभावेनोपेक्षणीयत्वात् । धीरो धीमान् धृतिमान्वा । अतएव तुल्ये निन्दात्मसंस्तुती दोषकीर्तनगुणकीर्तने यस्य स गुणातीत उच्यत इति द्वितीयगतेनान्वयः ॥ २४ ॥ मानः सत्कार आदरापरपर्यायः, अपमानस्तिरस्कारोऽनादरापरपर्यायस्तयोस्तुल्यो

५ भाष्योत्कर्षदीपिका ।

पञ्चमस्य लघुत्वनियमात् । 'अनुतिष्ठति' इति वा पाठान्तरम् ॥ २३ ॥ किंच समे रागद्वेषानुत्पादकतया स्वीयत्वाभिमानानास्पदे दुःखसुखे यस्य स समदुःखसुखः स्वस्मिन्नविक्रिये आत्मनि स्थितः स्वरूपान्न कदापि प्रच्युतः । समानि अहेयोपादेयानि लोष्टादीनि यस्य स यतस्तुल्ये समे प्रियाप्रिये यस्य स धीरो धीमान् । अतएव तुल्ये निन्दात्मसंस्तुती यस्य स गुणातीत उच्यत इति परेणान्वयः ॥ २४ ॥ मानः सत्कारोऽपमानस्तिरस्कारस्तयोर्मानापमानयोस्तुल्यः समो निर्विकारः परदृष्ट्या यौ मित्रशत्रू तयोः पक्षयोस्तुल्यो न

६ श्रीधरीव्याख्या ।

दमार्थम् । नेङ्गते न चलति ॥ २३ ॥ अपिच—समेति । समे सुखदुःखे यस्य । यतः स्वस्थः स्वरूप एव स्थितः । अतएव समानि लोष्टाश्मकाञ्चनानि यस्य । तुल्ये प्रियाप्रिये सुखदुःखहेतुभूते यस्य । धीरो धीमान् । तुल्या निन्दा च आत्मस्तुतिश्च यस्य ॥ २४ ॥ अपिच—मानापमानयोरिति । मानेऽपमाने च तुल्यः, मित्रपक्षेऽरिपक्षे च तुल्यः, सर्वान्दृष्टादृष्टार्थानारम्भानुत्-

७ अभिनवगुप्ताचार्यव्याख्या ।

रम्भाणां शरीरारम्भकेन्द्रियादिस्वभाव एव यत्प्रवर्तते न तु फलं किंचिदहमभिसंदध इति स्थिरबुद्धिः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥**
**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥ २६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

भवन्ति केचित्स्वाभिप्रायेण तथापि पराभिप्रायेण मित्रारिपक्षयोरिव भवन्तीति तुल्यो मित्रारिपक्षयोरित्याह । सर्वारम्भपरित्यागी दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भाः सर्वानारम्भान्परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी देहधारणमात्रनिमित्तव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । गुणातीतः स उच्यते । उदासीनवदित्यादि गुणातीतः स उच्यत इत्येतदन्तमुक्तं यावद्यत्नसाध्यं तावत्संन्यासिनानुष्ठेयं गुणातीतत्वसाधनं मुमुक्षोः स्थिरीभूतं तु स्वसंवेद्यं सद्गुणातीतस्य यतेर्लक्षणं भवतीति ॥ २५ ॥ अधुना कथं च त्रीन्गुणानतिवर्तत इति प्रश्नस्य प्रतिवचनमाह—मां चेति । मां चेश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वाऽव्यभिचारेण न कदाचिद्यो व्यभिचरति

२ आनन्दगिरिव्याख्या ।

इति । विदुषो मित्रादिबुद्ध्यभावात्तुल्यो मित्रारिपक्षयोरित्ययुक्तमित्याशङ्क्याह—**यद्यपीति** । सर्वकर्मत्यागे देहधारणमपि निमित्ताभावान्न स्यादित्याशङ्क्याह—**देहेति** । उक्तविशेषणो गुणातीतो ज्ञातव्य इत्याह—**गुणेति** । यदुक्तमुपेक्षकत्वादि तद्विद्योदयात्पूर्वं यत्नसाध्यं विद्याधिकारिणा ज्ञानसाधनत्वेनानुष्ठेयमुत्पन्नायां तु विद्यायां जीवन्मुक्तस्योक्तधर्मजातं स्थिरीभूतं स्वानुभवसिद्धलक्षणत्वेन तिष्ठतीत्युक्ते धर्मजाते विभागं दर्शयति—**उदासीनवदित्यादिना** ॥ २५ ॥ प्रश्नद्वयमेवं परिहृत्य तृतीयं प्रश्नं परिहरति—**अधुनेति** । मच्छब्दस्य संसारिविषयत्वं व्यावर्तयति—**ईश्वरमिति** । तत्रैव नारायणशब्दान्मूर्तिभेदो व्यावर्त्यते । तस्य ताटस्थ्यं व्यवच्छिनत्ति—**सर्वेति** । मुख्यामुख्याधि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वेद्यएव तदाह—**मानेति** । यथाहि परीक्षकः कूटकार्षापणस्य लाभे विनाशे वा हर्षविषादशून्यो नच तल्लाभार्थं यत्नमारभते, मूढस्तु ताभ्यां बाध्यते तल्लाभार्थं यत्नं चारभते, एवं विद्वान् द्वैतं मरुमरीचिकाहृदसमानं पश्यन् तत्र मानापमानयोर्वा मित्रारिपक्षयोर्वा तुल्यएव नत्वन्यतरलाभाय परिहाराय वा यत्नमारभते अतो गुणातीत इत्युच्यते । सर्वत्र पदार्थः स्पष्टः ॥ २५ ॥ अथ कथं त्रीन्गुणानतिवर्तत इत्यस्योत्तरं विवक्षन् साधनभूतासु तिसृषु भूमिषु तृतीयां तनुमानसामाह—**मांचेति** । यश्च साधको मां प्रत्यगात्मानम् । चकारस्त्वर्थे पूर्वभूमिस्थापेक्षयास्य वैल-

४ मधुसूदनीव्याख्या ।

हर्षविषादशून्यो निन्दास्तुती शब्दरूपे मानापमानौ तु शब्दमन्तरेणापि कायमनोव्यापारविशेषाविति भेदः । अत्र पकारवकारयोः पाठविकल्पेऽप्यर्थः स एव । तुल्यो मित्रारिपक्षयोर्मित्रपक्षस्येवारिपक्षस्यापि द्वेषाविषयः स्वयं तयोरनुग्रहनिग्रहशून्य इति वा । सर्वारम्भपरित्यागी आरभ्यन्त इत्यारम्भाः कर्माणि तान्सर्वान्परित्यक्तुं शीलं यस्य स तथा । देहयात्रामात्रव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । उदासीनवदासीन इत्याद्युक्तप्रकाराचारो गुणातीतः स उच्यते । यदुक्तमुपेक्षकत्वादि तद्विद्योदयात्पूर्वं यत्नसाध्यं विद्याधिकारिणा साधनत्वेनानुष्ठेयमुत्पन्नायां तु विद्यायां जीवन्मुक्तस्य गुणातीतस्योक्तं धर्मजातमयत्नसिद्धं लक्षणत्वेन तिष्ठतीत्यर्थः ॥ २५ ॥ अधुना कथमेतान्गुणानतिवर्तत इति तृतीयप्रश्नस्य प्रतिवचनमाह—चस्त्वर्थः । मामेवेश्वरं नारायणं सर्वभूतान्तर्यामिणं मायया क्षेत्रज्ञतामागतं परमानन्दघनं भगवन्तं वासुदेवमव्यभिचारेण परमप्रेमलक्षणेन भक्तियोगेन द्वादशा-

५ भाष्योत्कर्षदीपिका ।

कस्यचित्पक्षं भजतीत्यर्थः । दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भास्तान्सर्वारम्भांस्त्यक्तुं शीलं यस्येति देहधारणमात्रनिमित्तव्यतिरेकेण सर्वारम्भपरित्यागीत्यर्थः । एतादृशो यः स गुणातीत उच्यते सर्वारम्भपरित्यागीत्येतदन्तं यावद्यत्नसाध्यं तावद्गुणातीतत्वसाधनं विरक्तेन मुमुक्षुणानुष्ठेयं स्थिरीभूतं तु जीवन्मुक्तस्य गुणातीतस्य स्वभावभूतत्वादयत्नसिद्धं लक्षणं भवति ॥ २५ ॥ प्रश्नद्वयं समाधायेदानीं कथमेतान् त्रीन् गुणानतिवर्तते इति तृतीयप्रश्नस्य प्रतिवचनमाह—**मामिति** । चः पूर्वोक्तगुणातीतलक्षणस्य मुमुक्षुणा प्रयत्नसाध्यस्य समुच्चयार्थः । मामीश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वाऽव्यभिचारेण व्यभिचारशून्येन निष्कामेण

६ श्रीधरीव्याख्या ।

मान्परित्यक्तुं शीलं यस्य । स एवंभूताचारयुक्तो गुणातीत उच्यते ॥ २५ ॥ कथं चैतांस्त्रीन्गुणानतिवर्तत इत्यस्य प्रश्नस्योत्तरमाह—**मांचेति** । चशब्दोऽवधारणार्थः । मामेव परमेश्वरं श्रीनारायणमव्यभिचारेणैकान्तभक्तियोगेन यः सेवते स एतान्गुणान्समतीत्य

७ अभिनवगुप्ताचार्यव्याख्या ।

अनेन मूलभूतमुपायमुपदिशति—मांचेति । चशब्दोऽवधारणे । यो मामेव सेवते । अनेन फलादिसाकाङ्क्षो मामङ्गत्वेनाश्रयति फलं प्रधानतयेति निरस्तः । अतएव नास्याव्यभिचारिणी भक्तिः फलं प्रति ह्यसावारथावानिति । यस्तु फलं किंचिदप्यनभिलष्यन्किमिति तदली-

**ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

१ श्रीमच्छांकरभाष्यम् ।

भक्तियोगेन भजनं भक्तिः सैव योगस्तेन विवेकज्ञानात्मकेन भक्तियोगेन सेवते स गुणान्समतीत्यैतान्यथोक्तान्ब्रह्मभूयाय भवनं भूयो ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते । समर्थो भवतीत्यर्थः ॥ २६ ॥ कुत एतदित्युच्यते—ब्रह्मणः परमात्मनो हि यस्मात्प्रतिष्ठाहं प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठाहं प्रत्यगात्मा । कीदृशस्य ब्रह्मणोऽमृतस्याविनाशिनोऽव्ययस्याविकारिणः शाश्वतस्य च नित्यस्य

२ आनन्दगिरिव्याख्या ।

कारिभेदेन विकल्पः । भक्तियोगस्य यादृच्छिकत्वं व्यवच्छेत्तुमव्यभिचारेणेत्युक्तम् । तद्व्याचष्टे—**नेति** । भजनं परमप्रेमा स एव युज्यतेऽनेनेति योगः सेवते पराक्चित्ततां विना सदानुसंदधातीत्यर्थः । स भगवदनुकृतसम्यग्धीसंपन्नो विद्वाञ्जीवन्नेवेत्यर्थः ॥ २६ ॥ विद्वान् ब्रह्मैवेत्यत्र हेतुं पृच्छति—**कुत इति** । तत्रोत्तरमाह—**उच्यत इति** । ब्रह्मशब्दस्यासति बाधके मुख्यार्थग्रहणमभिप्रेत्याह—**परमात्मन इति** । तं प्रति प्रत्यगात्मनो यत्प्रतिष्ठात्वं तदुपपादयति—**प्रतितिष्ठतीति** । यद्ब्रह्म प्रत्यगात्मनि प्रतितिष्ठति तत्किंविशेषणमित्यपेक्षायामुक्तम्—**अमृतस्येत्यादि** । तत्रामृतशब्देनाव्ययशब्दस्य पुनरुक्तिं परिहरति—**अविकारिण इति** । नित्यत्वमपक्षयराहित्यं तेन पूर्वाभ्यामपौन-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

क्षण्यं द्योतयति । अव्यभिचारेण वृत्त्यन्तरानन्तरितेन भक्तियोगेन मयि भगवति तैलधारावदविच्छिन्नवृत्तिप्रवाहिमनःप्रणिधानरूपेण योगेन सेवते ध्यायति स एवं सूक्ष्मीकृतचित्त एतान् गुणान् समतीत्य ध्यानपरिपाकान्ते सत्त्वमपि बाधित्वा ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति । 'भुवो भावे' इति भवतेर्भावे क्यप् ॥ २६ ॥ विषयप्रदर्शनद्वारा विचारणाख्यां द्वितीयां भूमिमाह—**ब्रह्मणो हीति** । ब्रह्मणो वेदस्य प्रतिष्ठा तात्पर्येण पर्यवसानस्थानमहमेव । अमृतस्य कर्मब्रह्मोभयदर्शनद्वाराऽमृतसाधनस्य । अव्ययस्य अनादित्वादनन्तत्वाच्चापौरुषेयत्वेनाप्रामाण्यशङ्काकलङ्कशून्यस्य । स्वतःप्रमाणभूतस्येत्यर्थः । एतेनोपक्रमोपसंहारादिपर्यालोचनया वेदाविरुद्धतर्कोपकरणया कृत्स्नस्य

४ मधुसूदनीव्याख्या ।

क्ष्यायोक्तेन यः सेवते सदा चिन्तयति स मद्भक्त एतान् प्रागुक्तान् गुणान् समतीत्य सम्यगतिक्रम्य द्वैतदर्शनेन बाधित्वा ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवति । सर्वदा भगवच्चिन्तनमेव गुणातीतत्वोपाय इत्यर्थः ॥ २६ ॥ अत्र हेतुमाह—ब्रह्मणस्तत्पदवाच्यस्य सोपाधिकस्य जगदुत्पत्तिस्थितिलयहेतोः प्रतिष्ठा पारमार्थिकं निर्विकल्पकं सच्चिदानन्दात्मकं निरुपाधिकं तत्पदलक्ष्यमहं निर्विकल्पको वासुदेवः प्रतितिष्ठत्यत्रेति प्रतिष्ठा कल्पितरूपरहितमकल्पितं रूपमतो यो मामनुपाधिकं

५ भाष्योत्कर्षदीपिका ।

परमप्रेमलक्षणेन भजनं भक्तिः सैव युज्यतेऽनेनेति योगः तेन भक्तियोगेन तत्त्वज्ञानोत्पादकेन सेवते विषयचिन्तां विहाय सदानुसंदधाति स भगवदनुग्रहकृतसम्यग्ज्ञानसंपन्नो जीवन्नेवैतान्गुणान्यथोक्तान्समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥ २६ ॥ योऽव्यभिचारेण भक्तियोगेन मां सेवते स गुणान्समतीत्य ब्रह्मभूयाय कल्पत इत्यत्र हेतुमाह—**ब्रह्मणो हीति** । हि यस्माद्ब्रह्मणः परमात्मनोऽहं प्रत्यगात्मा प्रतिष्ठा प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठा यत् ब्रह्म प्रत्यगात्मनि प्रतितिष्ठति । तद्विशिनष्टि । अमृतस्याविनाशिनः अव्ययस्याविकारिणः । शाश्वतस्य नित्यस्यापक्षयरहितस्य । तेन न पौनरुक्त्यम् । धर्मस्य धर्मज्ञानस्येत्यर्थः । सुखस्य ज्ञानयोगधर्मप्राप्यस्यानन्दरूपस्येन्द्रियसंबन्धोत्थं सुखं व्यावर्तयितुमाह । ऐकान्तिकस्याव्यभिचारिणः । अमृतादिस्वभावस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा यस्मात्तस्मात्सम्यग्ज्ञानेन स परमात्मेति निश्चीयते तदेतद्ब्रह्म भूयाय कल्पते इत्युक्तं । यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रवर्तते सा शक्तिः ब्रह्मैवाहं शक्तिशक्तिमतोरभेदादित्यभिप्रायः । यद्वा ब्रह्मशब्दवाच्यत्वात्सविकल्पकं ब्रह्म ब्रह्मशब्देनाभिधीयते तस्य ब्रह्मणो निर्विकल्पकोऽहमवाच्यः प्रतिष्ठाश्रयः । सविकल्पकं ब्रह्म

६ श्रीधरीव्याख्या ।

सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय मोक्षाय कल्पते योग्यो भवति ॥ २६ ॥ तत्र हेतुमाह—**ब्रह्मणो हीति** । हि यस्माद्ब्रह्मणोऽहं

७ अभिनवगुप्ताचार्यव्याख्या ।

कमनुतिष्ठसीति पर्यनुयुज्यमानोऽपि निरन्तरभगवद्भक्तिवेधविद्रुतान्तःकरणतया कण्टकितरोमवान्वेपमानतनुर्विस्फारितरनयनयुगुलपरि-

१ श्रीमच्छांकरभाष्यम्।

धर्मस्य ज्ञानयोगधर्मप्राप्यस्य सुखस्यानन्दरूपस्यैकान्तिकस्याव्यभिचारिणः। अमृतादिस्वभावस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा सम्यग्ज्ञानेन परमात्मतया निश्चीयते। तदेतद्ब्रह्मभूयाय कल्पत इत्युक्तम्। यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रतिष्ठते प्रवर्तते सा शक्तिर्ब्रह्मैवाहं शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायः। अथवा ब्रह्मशब्दवाच्यत्वात्सविकल्पकं ब्रह्म तस्य ब्रह्मणो

२ आनन्दगिरिव्याख्या।

रुत्तयम्। प्रसिद्धार्थस्य धर्मशब्दस्य ब्रह्मण्यनुपपत्तिमाशङ्क्याह—ज्ञानेति। अर्थेन्द्रियसंबन्धोत्थं सुखं व्यावर्तयितुमैकान्तिकस्येत्युक्तम्। अक्षरार्थमुक्त्वा वाक्यार्थमाह—अमृतादीति। प्रतिष्ठा यस्मादिति पूर्वेण संबन्धः। तस्मात्प्रत्यगात्मा परमात्मतया निश्चीयते सम्यग्ज्ञानेनेति योजना। अस्य श्लोकस्य पूर्वश्लोकेनैकवाक्यतामाह—तदेतदिति। विवक्षितं वाक्यार्थं प्रपञ्चयति—ययेति। सा शक्तिर्ब्रह्मैवेति कथं सामानाधिकरण्यं तत्राह—शक्तीति। व्याख्यानान्तरमाह—अथवेति। विशेषणानि पूर्ववदपौनरुक्त्यानि नेतव्यानि। तदनेनाध्यायेन क्षेत्रक्षेत्रज्ञसंयोगस्य संसार-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

वेदस्य तात्पर्यं मद्दर्शनकामेन निर्णेतव्यमिति विचारणाख्या द्वितीया भूमिरुक्ता। हेतुफलोपदर्शनमुखेन शुभेच्छाख्यां प्रथमां भूमिमाह—शाश्वतस्येति। काम्यधर्मवत्फलदानेन नाशाभावात् भगवत्यर्पितो नित्यो धर्मः शाश्वतः। विविदिषादिपारम्पर्येण मोक्षाख्यशाश्वतफलहेतुत्वात्। शाश्वतस्य च धर्मस्य प्रतिष्ठा परमं प्राप्यं फलमहमेव। तथा ऐकान्तिकं विषयसङ्गजन्यसुखव्यभिचारि स्वरूपभूतं मोक्षसुखं तस्यापि प्रतिष्ठा पराकाष्ठा अहमेव। एवं निष्कामधर्मेण विशुद्धचित्तस्यैकान्तिकसुखेच्छा भवति सेयं शुभेच्छाख्या प्रथमा भूमिः। अत्र परां परां भूमिमारोढुमशक्तस्य

४ मधुसूदनीव्याख्या।

ब्रह्म सेवते स ब्रह्मभूयाय कल्पत इति युक्तमेव। कीदृशस्य ब्रह्मणः प्रतिष्ठाहमित्याकाङ्क्षायां विशेषणानि। अमृतस्य विनाशरहितस्य अव्ययस्य विपरिणामरहितस्य च शाश्वतस्यापक्षयरहितस्य च धर्मस्य ज्ञाननिष्ठालक्षणधर्मप्राप्यस्य सुखस्य परमानन्दरूपस्य। सुखस्य विषयेन्द्रियसंयोगजत्वं वारयति—ऐकान्तिकस्याव्यभिचारिणः सर्वस्मिन्देशे काले च विद्यमानस्य। ऐकान्तिकसुखरूपस्येत्यर्थः। एतादृशस्य ब्रह्मणो यस्मादहं वास्तवं स्वरूपं तस्मान्मद्भक्तः संसारान्मुच्यत इति भावः। तथाचोक्तं ब्रह्मणा भगवन्तं श्रीकृष्णंप्रति 'एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः। नित्योऽक्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः' इति। सर्वोपाधिशून्य आत्मा ब्रह्म त्वमित्यर्थः। शुकेनापि स्तुतिमन्तरेणैवोक्तं 'सर्वेषामेव वस्तूनां भावार्थो भवति स्थितः। तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम्' इति। सर्वेषामेव कार्यवस्तूनां भावार्थः सत्तारूपः परमार्थो भवति कार्याकारेण जायमाने सोपाधिके ब्रह्मणि स्थितः कारणसत्तातिरिक्तायाः कार्यसत्ताया अनभ्युपगमात्। तस्यापि भवतः कारणस्य सोपाधिकस्य ब्रह्मणो भावार्थः सत्तारूपोऽर्थो भगवान्कृष्णः सोपाधिकस्य निरुपाधिके कल्पितत्वात्,

५ भाष्योत्कर्षदीपिका।

विशिनष्टि। अमृतस्य मरणधर्मरहितस्याव्ययस्य व्ययरहितस्य किंच शाश्वतस्यच नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य च जनितस्यैकान्तिकस्यैकान्तनियतस्य च प्रतिष्ठाहं इति वर्तते। अतो मत्सेवया युक्तैव ब्रह्मभावप्राप्तिरित्यर्थः। हि यस्माद्ब्रह्मणोऽहं प्रतिष्ठा प्रतिमास्थानिभूतं ब्रह्मैवाहं यथा घनीभूतप्रकाश एव सूर्यमण्डलं तद्वदित्यर्थः। तथाव्ययस्यामृतस्य नित्यस्य मोक्षस्य नित्यमुक्तत्वात्। तथा तत्साधनस्य शाश्वतस्य च धर्मस्य शुद्धसत्त्वात्मकत्वात्। तथैकान्तिकस्य सुखस्य च प्रतिष्ठाहं परमानन्दरूपत्वात् इत्यपरे। त्वद्भक्तस्त्वद्भावमाप्नोतुनाम कथंतु ब्रह्मभावाय कल्पते ब्रह्मणः सकाशात्त्वान्यत्वादिति तत्राह। ब्रह्मणः परमात्मनः प्रतिष्ठा पर्याप्तिरहमेव नतु मद्भिन्नं ब्रह्मेत्यर्थः। तथामृतस्याव्ययस्य प्रतिष्ठाहमेव मय्येव मोक्षः पर्यवसितः। मत्प्राप्तिरेव मोक्ष इत्यर्थः। तथा शाश्वतस्य नित्यस्य मोक्षफलस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य च पर्याप्तिरहमेव। ज्ञाननिष्ठालक्षणो धर्मो मय्येव पर्यवसितस्ततो न तेन मद्भिन्नं किंचित्प्राप्यमित्यर्थः। तथा ऐकान्तिकस्य सुखस्य च पर्याप्तिरहमेव परमानन्दत्वात्। न मद्भिन्नं किंचित्सुखं प्राप्यमस्तीत्यर्थः। इति केचित्। अन्ये तु वासिष्ठोक्तं ज्ञानभूमिसप्तकं प्रकाशमित्यादिश्लोकैर्दर्शयन्ति। तथाहि 'ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता। विचारणा द्वितीया तु तृतीया तनुमानसा। सत्त्वापत्तिश्चतुर्थी स्यात्ततो संसक्तिनामिका। पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता' इति। तत्र यथोक्तसाधनसंपन्नमुमुक्षुता प्रथमा, श्रवणमननविचारात्मिका द्वितीया, निदिध्यासनरूपा तृतीया, एताः साधनभूमयः। ब्रह्मसाक्षात्काररूपा चतुर्थी फलभूता। अस्यां योगी कृतार्थोऽपि जीवन्मुक्तिसुखं पुष्कलं नानुभवति। पराख्यिस्तो

६ श्रीधरीव्याख्या।

प्रतिष्ठा प्रतिमा, घनीभूतं ब्रह्मैवाहम्। यथा घनीभूतः प्रकाश एव सूर्यमण्डलं तद्वदेवेत्यर्थः। तथाव्ययस्य नित्यस्यामृतस्य मोक्षस्य

७ अभिनवगुप्ताचार्यव्याख्या।

वर्तमानसलिलसंपातस्तूष्णींभावेनैवोत्तरं प्रयच्छति सएवाव्यभिचारिण्या भगवतो महेश्वरस्योग्रशक्त्या भक्त्या पवित्रीकृतो नान्य इति

१ श्रीधरः। २ मधुसूदनः। ३ नीलकण्ठः।

१ श्रीमच्छांकरभाष्यम् ।

**निर्विकल्पकोऽहमेव नान्यः प्रतिष्ठाश्रयः किंविशिष्टस्यामृतस्यामरणधर्मकस्याव्ययस्य व्ययरहितस्य । किंच शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य तज्जनितस्यैकान्तिकनियतस्य च प्रतिष्ठाहमिति वर्तते ॥ २७ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥**

२ आनन्दगिरिव्याख्या ।

कारणत्वं पञ्चप्रश्ननिरूपणद्वारेण च सम्यग्ज्ञानस्य सकलसंसारनिवर्तकत्वमित्येतदुपपादयता मुमुक्षोर्यत्नसाध्यं गुणैरचाल्यत्वादि मुक्तस्यायत्नसिद्धं लक्षणमिति निर्धारितम् ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ चतुर्दशोऽध्यायः ॥ १४ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वा पूर्वा भूमिरुपदिश्यते । यथा ध्यानेनात्मनि पश्यन्तीत्यत्र निदिध्यासनाशक्तस्य सांख्यनामा विचारस्तत्राप्यशक्तस्य कर्मयोग उपदिश्यते तद्वत् ॥ २७ ॥ इति भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे चतुर्दशोऽध्यायः ॥ १४ ॥

४ मधुसूदनीव्याख्या ।

कल्पितस्य चाधिष्ठानानतिरेकाद्भगवतः कृष्णस्य च सर्वकल्पनाधिष्ठानत्वेन परमार्थसत्यनिरुपाधिब्रह्मरूपत्वात् । अतः किमतद्वस्तु तस्माच्छ्रीकृष्णादन्यद्वस्तु पारमार्थिकं किं निरूप्यताम् । तदेवैकं पारमार्थिकं नान्यत्किमपीत्यर्थः । तदेतदिहाप्युक्तं ब्रह्मणो हि प्रतिष्ठाहमिति । अथवा त्वद्भक्तस्त्वद्भावमाप्नोतु नाम कथं नु ब्रह्मभावाय कल्पते । ब्रह्मणः सकाशात्तवान्यत्वादित्याशङ्क्याह—ब्रह्मणः परमात्मनः प्रतिष्ठा पर्याप्तिरहमेव नतु मद्भिन्नं ब्रह्मेत्यर्थः । तथामृतस्यामृतत्वस्य मोक्षस्य चाव्ययस्य सर्वथानुच्छेद्यस्य च प्रतिष्ठाहमेव । मय्येव मोक्षः पर्यवसितो मत्प्राप्तिरेव मोक्ष इत्यर्थः । तथा शाश्वतस्य नित्यमोक्षफलस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य च पर्याप्तिरहमेव । ज्ञाननिष्ठालक्षणस्य पर्याप्तिरेव मोक्ष इत्यर्थः । ज्ञाननिष्ठालक्षणो धर्मो मय्येव पर्यवसितो न तेन मद्भिन्नं किंचित्प्राप्यमित्यर्थः । तथैकान्तिकस्य सुखस्य च पर्याप्तिरहमेव परमानन्दरूपत्वान्न मद्भिन्नं किंचित्सुखं प्राप्यमस्तीत्यर्थः । तस्माद्युक्तमेवोक्तं मद्भक्तो ब्रह्मभूयाय कल्पत इति ॥ २७ ॥

पराकृतनमद्बन्धं परं ब्रह्म नराकृति । सौन्दर्यसारसर्वस्वं वन्दे नन्दात्मजं महः ॥

इति श्रीमत्परमहंस० मधुसूदनसरस्वती० गुणत्रयविभागयोगविवरणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

५ भाष्योत्कर्षदीपिका ।

जीवन्मुक्तेरवान्तरभेदाः । तत्रापि पञ्चम्यामसंसक्तिनामिकायां स्थितो योगी ब्रह्मविद्वरः स्वयमेवोत्तिष्ठते । षष्ठ्यां पदार्थाभाविन्यां स्थितो ब्रह्मविद्वरीयान् परप्रयत्नेन व्युत्तिष्ठते । सप्तम्यां तुर्यगायां ब्रह्मविद्वरिष्ठः न स्वतः परतो वा व्युत्तिष्ठति । तत्र नित्यसमाधिस्थोऽत्यभूमिगः प्रकाशमिति श्लोकेनोक्तः । उदासीन इत्यनेनोपान्त्यभूमिगः समदुःखसुखः इति पञ्चम्यां स्थितो मानापमानयोरिति चतुर्थ्यां मां चेति तृतीयायां स्थितो योगी उक्तः । विषयप्रदर्शनद्वारा विचारणाख्यां द्वितीयां भूमिमाह—**ब्रह्मणोहीति** । ब्रह्मणो वेदस्य प्रतिष्ठा तात्पर्येण पर्यवस्थानं अहमेवामृतस्य कर्मब्रह्मोपदर्शनद्वाराऽमृतसाधनस्याव्ययस्यानादित्वादनन्तत्वाचापौरुषेयत्वेनाप्रामाण्यशङ्काकलङ्कशून्यस्य स्वतःप्रमाणभूतस्येत्यर्थः । एतेनोपक्रमोपसंहारादितात्पर्यालोचनया वेदाविरुद्धतर्कोपकरणया कृत्स्नस्य वेदस्य तात्पर्यप्रदर्शनकामेन निर्णेतव्यमिति विचारणाख्या द्वितीया भूमिरुक्ता । हेतुफलोपदर्शनमुखेन शुभेच्छाख्यां प्रथमां भूमिमाह—**शाश्वतस्येति** । काम्यधर्मवत्फलदानेन नाशाभावात् । भगवत्यर्पितो नित्यो धर्मः शाश्वतः । विविदिषादिपारंपर्येण मोक्षाख्यशाश्वतफलत्वात् । तस्य च प्रतिष्ठा परमं प्राप्यमहमेव । तथा सुखस्यैकान्तिकस्य मोक्षसुखस्य च प्रतिष्ठा अहमेव । सेयं प्रथमा भूमिरुक्ता । अत्र परां परां भूमिमारोढुमशक्तस्य पूर्वा पूर्वा भूमिरुपदिश्यते इति तदेतद्यत्किंचित्कल्पनं सर्वज्ञानां मार्गप्रदर्शकानामाचार्याणां न शोभतेऽत एतदनुक्त्या तेषां न्यूनता नापादनीया । तदनेन चतुर्दशाध्यायेन सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगाद्यथोत्पद्यते यस्मिन्गुणे च यथा सङ्गः ये वा गुणाः यथा वा बध्नन्ति गुणेभ्यश्च मोक्षणं यथा स्यात् मुक्तस्य च यल्लक्षणं तत्सर्वं प्रतिपादयता तत्त्ववित्प्राप्यं प्रत्यगभिन्नं ब्रह्म प्रदर्शितम् ॥ २७ ॥ इति श्रीमत्परमहंस० श्रीगीताभाष्योत्कर्षदीपिकायां चतुर्दशोऽध्यायः ॥ १४ ॥

६ श्रीधरीव्याख्या ।

च नित्यमुक्तत्वात् । तथा तत्साधनस्य शाश्वतस्य च धर्मस्य, शुद्धसत्त्वात्मकत्वात् । तथा ऐकान्तिकस्याखण्डितस्य सुखस्य च प्रतिष्ठाऽहं, परमानन्दैकरूपत्वात् । अतो मत्सेविनो मद्भावस्यावश्यंभावित्वाद्युक्तमेवोक्तं ब्रह्मभूयाय कल्पत इति ॥ २७ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

ज्ञेयम् । अहमेव हि ब्रह्मणः प्रतिष्ठा । मयि सेव्यमाने ब्रह्म भवति । अन्यथा जडरूपतया ब्रह्म उपास्यमानं मोक्षमपि सौषुप्तादविशिष्टमेव प्रापयेदिति शिवम् ॥ २६ ॥ २७ ॥ अत्र संग्रहः—लसद्भक्तिरसावेशहीनाहंकारविभ्रमः । स्थितेऽपि गुणसंमर्दे गुणातीतसमो यतः ॥

इति श्रीमदाचार्याभिनवगुप्तविरचिते गीतातात्पर्यसंग्रहे चतुर्दशोऽध्यायः ॥ १४ ॥

# पञ्चदशोऽध्यायः ।

श्रीभगवानुवाच ।

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनां च ज्ञानफलमतो भक्तियोगेन मां ये सेवन्ते ते मत्प्रसादाज्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्ति किमु वक्तव्यमात्मनस्तत्त्वमेव सम्यग्विजानन्त इत्यतो भगवानर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुरुवाच—ऊर्ध्वमूलमित्यादि । तत्र तावद्वृक्षरूपक-

२ आनन्दगिरिव्याख्या ।

ज्ञानेन गुणात्यये दर्शिते नाशित्वे तेषां विना ज्ञानेनानत्ययादनाशित्वे तेनापि तद्योग्यत्वान्न ज्ञानं गुणात्ययहेतुरित्याशङ्कां निरस्य साक्षादेव श्रवणादिहेतुं संन्यासं विधित्सुर्ब्रह्मत्वस्य परमपुरुषार्थतां च विवक्षुरध्यायान्तरमारभते—**यस्मादिति** । कर्मिणो ज्ञानिनश्च शास्त्रेऽधिकृतास्तत्र कर्मिणां कर्मानुकूलं फलमीश्वरायत्तं 'फलमत उपपत्तेः' इति न्यायाज्ज्ञानिनामपि तत्फलमीश्वरायत्तमेव 'ततो ह्यस्य बन्धविपर्ययौ' इत्युक्तत्वाद्, यस्मादेवं तस्माद्ये भक्त्याख्येन योगेन मामेव सेवन्ते ते मत्प्रसादद्वारा ज्ञानं प्राप्य गुणातीताः मुक्ता भवन्तीति स्थितमित्यर्थः । ये त्वात्मनस्तत्त्वमेव संदेहाद्यपोहेन जानन्ति ते तेन ज्ञानेन गुणातीताः सन्तो मुक्तिं गच्छन्तीति किमु वक्तव्यमित्यर्थसिद्धमर्थमाह—**किमु वक्तव्यमिति** । आत्मतत्त्वाज्ञानं यतः संसारहेतुः, ज्ञानं मोक्षानुकूलमतोऽर्जुनेन किं तदित्यपृष्टमपि तत्त्वं भगवानुक्तवान्प्रश्नाभावेऽपि तस्य तद्व्युत्पादनाभिमानादित्याह—**अत इति** । तत्त्वे विवक्षिते किमिति संसारो वर्ण्यते तत्राह—**तत्रेति** । अध्यायादिः सप्तम्यर्थः । वैराग्यमपि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वाध्यायान्ते सुखस्यैकान्तिकस्य प्रतिष्ठा पराकाष्ठाहमित्युक्तं तत्र किंलक्षणं तत्सुखं केन वा आवृतं केन वा साधनेनास्यावरणभङ्गः केन वाधिकारिणा तत्प्राप्यमित्यादि वर्णयितुं पञ्चदशोऽध्याय आरभ्यते—**ऊर्ध्वमूलमिति** ।

४ मधुसूदनीव्याख्या ।

पूर्वाध्याये भगवता संसारबन्धहेतून्गुणान्व्याख्याय तेषामत्ययेन ब्रह्मभावो मोक्षो मद्भजनेन लभ्यत इत्युक्तं 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते' इति । तत्र मनुष्यस्य तव भक्तियोगेन कथं ब्रह्मभाव इत्याकाङ्क्षायां स्वस्य ब्रह्मरूपताज्ञापनाय सूत्रभूतोऽयं श्लोको भगवतोक्तः 'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च' इत्यस्य सूत्रस्य वृत्तिस्थानीयोऽयं पञ्चदशोध्याय आरभ्यते । भगवतः श्रीकृष्णस्य हि तत्त्वं ज्ञात्वा तत्प्रेम भजनेन गुणातीतः सन्ब्रह्मभावं कथमाप्नुयाल्लोक इति, तत्र ब्रह्मणो हि प्रतिष्ठाहमित्यादिभगवद्वचनमाकर्ण्य मम तुल्यो मनुष्योऽयं कथमेवं वदतीति विस्मयाविष्टमतिभयाल्लज्जया च किंचिदपि प्रष्टुमशक्नुवन्तमर्जुनमालक्ष्य कृपया स्वस्वरूपं विवक्षुः श्रीभगवानुवाच—तत्र विरक्तस्यैव संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो नान्यथेति पूर्वाध्यायोक्तं परमेश्वराधीनप्रकृतिपुरुषसंयोगकार्यं संसारवृक्षरूपकल्पनया वर्णयति वैराग्याय । प्रस्तुतगुणातीतत्वोपायत्वात्तस्य—ऊर्ध्वमुत्कृष्टं मूलं कारणं स्वप्रकाशपरमानन्दरूपत्वेन नित्यत्वेन च ब्रह्म, अथवोर्ध्वं सर्वसंसारबाधेऽप्यबाधितं

५ भाष्योत्कर्षदीपिका ।

यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनां ज्ञानफलं च 'फलमत उपपत्तेः' 'ततो ह्यस्य बन्धविपर्ययौ' इतिन्यायाभ्यामतो भक्तियोगेन मां सेवन्ते ते मत्प्रसादाज्ज्ञानप्राप्तिक्रमेण गुणातीता मोक्षं गच्छन्तीति आत्मनस्तत्त्वमेव सम्यग्जानन्ति ते तेन ज्ञानेन गुणातीताः सन्तः मुक्तिं गच्छन्तीति किमु वक्तव्यमित्यतोऽर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुर्भगवानुवाच—**ऊर्ध्वमूलमित्यादि** ।

६ श्रीधरीव्याख्या ।

वैराग्येण विना ज्ञानं न च भक्तिरतः स्फुटम् । वैराग्योपस्कृतं ज्ञानमीशः पञ्चदशेऽदिशत् ॥ १ ॥

पूर्वाध्यायान्ते 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते' इत्यादिना परमेश्वरमेकान्तभक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवतीत्युक्तम्, नचैकान्तभक्तिर्ज्ञानं वाऽविरक्तस्य संभवतीति वैराग्यपूर्वकं ज्ञानमुपदेष्टुकामः प्रथमं तावत्सार्धश्लोकाभ्यां संसारस्वरूपं

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीभगवानुवाच । ऊर्ध्वमूलमित्यादि पदमव्ययमित्यन्तम् । अनेन शास्त्रान्तरेषु यदुच्यते अश्वत्थः सर्वः(वं) स एवोपासनीय इत्यादि

१ श्रीमच्छांकरभाष्यम् ।

कल्पनया वैराग्यहेतोः संसारस्वरूपं वर्णयति, विरक्तस्य हि संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो नान्यस्येति—ऊर्ध्वमूलमिति । ऊर्ध्वमूलं कालतः सूक्ष्मत्वात्कारणत्वान्नित्यत्वान्महत्त्वाच्चोर्ध्वमुच्यते ब्रह्माव्यक्तमायाशक्तिमत्तन्मूलस्येति सोऽयं संसारवृक्ष ऊर्ध्वमूलः । श्रुतेश्च 'ऊर्ध्वमूलोऽवाक्शाखः' इति । पुराणे च 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ आजीव्यः सर्वभूतानां

२ आनन्दगिरिव्याख्या ।

किमिति मृग्यते तत्राह—विरक्तस्येति । इति वैराग्याय संसारवर्णनमिति शेषः । नाशसंभावनायै वृक्षरूपकं बन्धहेतोर्दर्शयति—ऊर्ध्वमूलमिति । कथं कालतः सूक्ष्मत्वं तदाह—कारणत्वादिति । तदेव कथं कार्यापेक्षया नियतपूर्वभावित्वादित्याह—नित्यत्वादिति । सर्वव्यापित्वाच्चोत्कर्षं संभावयति—महत्त्वाच्चेति । ऊर्ध्वमुच्छ्रितमुत्कृष्टमिति यावत् । तस्य कूटस्थस्य कथं मूलत्वमित्याशङ्क्याह—अव्यक्तेति । स्मृतिमूलत्वेन श्रुतिमुदाहरति—श्रुतेश्चेति । अवाञ्चो निकृष्टाः शाखा इव महदाद्या यस्य स तथा । प्रकृते संसारवृक्षे पुराणसंमतिमाह—पुराणे चेति । अव्यक्तमव्याकृतं तदेव मूलं तस्मात्प्रभवनं प्रभवो यस्य स तथा तस्यैव मूलस्याव्यक्तस्यानुग्रहाददतिदृढत्वादुत्थितः संवर्धितः । तस्य लौकिकवृक्षसाधर्म्यमाह—बुद्धीत्यादिना । वृक्षस्य हि शाखाः स्कन्धादुद्भवन्ति संसारस्य च बुद्धेः सकाशान्नानापरिणामा जायन्ते तेन बुद्धिरेव स्कन्धस्तन्मयस्तत्प्रचुरोऽयं संसारतरुरिन्द्रियाणामन्तराणि छिद्राणि कोटराणि यस्य स तथा । महान्ति भूतानि पृथिव्यादीन्याकाशान्तानि विशाखाः स्तम्भा यस्य स तथा । आजीव्यत्वमुपजीव्यत्वं, ब्रह्मणाधिष्ठितो वृक्षो ब्रह्मवृक्षस्तथापि ज्ञानं विना छेत्तुमशक्यतया सनातनश्चिरंतनः । एतच्च ब्रह्मणः परस्यात्मनो वनं वननीयं संभजनीयमत्र हि ब्रह्म प्रतिष्ठितं वृक्षस्य तस्य संसाराख्यस्य तदेव ब्रह्म सारभूतमथवास्य ब्रह्मवृक्षस्यानवच्छिन्नस्य संसारमण्डलस्य तदेतद्ब्रह्म वनमिव वनं वननीयं संभजनीयं नहि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति श्रुतिप्रसिद्धं मानुषानन्दमारभ्योत्तरोत्तरशतगुणविवृद्धानन्दसोपानपङ्क्तेरुपरिस्थितं परमानन्दाद्वयं वस्तु ऊर्ध्वं तदेव मूलं मूलकारणमस्य संसाराश्वत्थस्य तमूर्ध्वमूलम् । अधःशाखं ऊर्ध्वादधोऽधः सोपानस्थानीयाः शाखा इव शाखाः अव्यक्तमहदहंकारपञ्चतन्मात्राषोडशविकारहिरण्यगर्भविराट्प्रजापति-

४ मधुसूदनीव्याख्या ।

सर्वसंसारभ्रमाधिष्ठानं ब्रह्म तदेव मायया मूलमस्येत्यूर्ध्वमूलम् । अध इत्यर्वाचीनाः कार्योपाधयो हिरण्यगर्भाद्या गृह्यन्ते । ते नानादिक्प्रसृतत्वाच्छाखा इव शाखा अस्येत्यधःशाखं आशुविनाशित्वेन न श्वोऽपि स्थातेति विश्वासानर्हमश्वत्थं मायामयं संसारवृक्षमव्ययमनाद्यनन्तदेहादिसन्तानाश्रयमात्मज्ञानमन्तरेणानुच्छेद्यमनन्तमव्ययमाहुः श्रुतयः स्मृतयश्च । श्रुतयस्तावत् 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इत्याद्याः कठवल्लीषु पठिताः, अवाञ्चो निकृष्टाः कार्योपाधयो महदहंकारतन्मात्रादयो वा शाखा अस्येत्यवाक्शाख इत्यधःशाखपदसमानार्थं । सनातन इत्यव्ययपदसमानार्थम् । स्मृतयश्च 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः । एतद्ब्रह्मवनं चैव ब्रह्माचरति साक्षिवत् ॥ एत-

५ भाष्योत्कर्षदीपिका ।

तत्रादौ वृक्षरूपककल्पनया वैराग्यार्थं संसारस्वरूपं वर्णयति । भगवत्तत्त्वज्ञाने संसाराद्विरक्तस्यैवाधिकारात् । यत्तु केचित्पूर्वाध्यायेन भगवता संसारबन्धहेतून्गुणान् व्याख्याय तेषामत्ययेन ब्रह्मभावो मोक्षो मद्भजनेन लक्ष्यत इति मां चेत्यादिनोक्तं तत्र मनुष्यस्य तव भक्तियोगेन कथं ब्रह्मभाव इत्याकाङ्क्षायां स्वस्य ब्रह्मरूपताज्ञापनाय सूत्रभूतो ब्रह्मणो हीति श्लोको भगवतोक्तः । अस्य सूत्रस्य वृत्तिस्थानीयोयं पञ्चदश आरभ्यते । भगवतः श्रीकृष्णस्य हि तत्त्वं ज्ञात्वा तत्प्रेमभजनेन गुणातीतः सन् ब्रह्मभावं कथमाप्नुयात् लोक इति । तत्र ब्रह्मणो हि प्रतिष्ठाहमित्यादिभगवद्वचनमाकर्ण्य मत्तुल्यो मनुष्योऽयं कथमेवं वदतीति विस्मयाविष्टमप्रतिमया लज्जया च किमपि प्रष्टुमशक्नुवन्तमर्जुनमालक्ष्य कृपया स्वस्वरूपं विवक्षुः श्रीभगवानुवाचेत्यवतारयन्ति तन्नादर्तव्यम् । 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोपि सन्' । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' । 'मूढोयं नाभिजानाति लोको मामजमव्ययं' । 'मामुपेत्य

६ श्रीधरीव्याख्या ।

वृक्षरूपकालंकारेण वर्णयन्श्रीभगवानुवाच—ऊर्ध्वमूलमिति । ऊर्ध्वमुत्तमः क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तम् । अध इति

७ अभिनवगुप्ताचार्यव्याख्या ।

तस्य भगवद्रूपोपासातात्पर्यमित्युच्यते । मूलं प्रशान्तरूपं । तदूर्ध्वं सर्वतो हि निवृत्तस्य तदाप्तिः । छन्दांसि यस्य पर्णानीति । यथा वृक्षस्य मान-

१ मधुसूदनः ।

१ श्रीमच्छांकरभाष्यम्।

**ब्रह्मवृक्षः सनातनः। एतद्ब्रह्मवनं चैव ब्रह्माचरति नित्यशः॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना। ततश्चात्मरतिं प्राप्य यस्मान्नावर्तते पुनः॥' इत्यादि। तमूर्ध्वमूलं संसारं मायामयं वृक्षमधःशाखं महदहंकारतन्मात्रादयः शाखा इवास्याधो भवन्तीति सोऽयमधःशाखस्तमधःशाखं न श्वोऽपि स्थातेत्यश्वत्थस्तं क्षणप्रध्वंसिनमश्वत्थं प्राहुः कथयन्ति। अव्ययं संसारमायामयमनादिकालप्रवृत्तत्वात्सोऽयं संसारवृक्षोऽव्ययोऽनाद्यनन्तदेहादिसंतानाश्रयो हि सुप्रसिद्धस्तमव्ययम्। तस्यैव संसारवृक्षस्येदमन्यद्विशेषणं छन्दांसि छादनादृग्यजुःसामलक्षणानि यस्य संसारवृक्षस्य**

२ आनन्दगिरिव्याख्या।

ब्रह्मातिरिक्तं संसारस्यास्पदमस्ति ब्रह्मैवाविद्यया संसरतीत्यभ्युपगमादित्यर्थः। अहं ब्रह्मेति दृढज्ञानेनोक्तं संसारवृक्षं छित्वा प्रतिबन्धकाभावादात्मनिष्ठो भूत्वा पुनरावृत्तिरहितं कैवल्यं प्राप्नोतीत्याह—**एतदिति**। अधःशाखमित्येतद्व्याचष्टे—**महदिति**। आदिशब्देनेन्द्रियादिसंग्रहः। संसारवृक्षस्यातिचञ्चलत्वे प्रमाणमाह—**प्राहुरिति**। क्षणध्वंसिनोऽव्ययत्वं विरुद्धमित्याशङ्क्याह—**संसारेति**। तदेवोपपादयति—**अनादीति**। छादनं रक्षणं प्रावरणं वा कर्मकाण्डानि खल्वारोहावरोहफलानि नानाविधार्थवादयुक्तानि संसारवृक्षं रक्षन्ति तच्छिद्रं दोषं चावृण्वन्ति ते तानि

३ नीलकण्ठव्याख्या (चतुर्धरी)।

सुरगन्धर्वासुरनरतिर्यक्स्थावररूपा यस्य सोऽधःशाखस्तम्। न श्वोऽपि स्थातुं योग्यमनृतत्वादश्वत्थं संसारवृक्षम्। तथाप्यव्ययं मूढानामनाद्यनन्तं प्राहुर्वेदाः। 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इत्यादयः। छन्दांसि वेदा-

४ मधुसूदनीव्याख्या।

च्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना। ततश्चात्मगतिं प्राप्य तस्मान्नावर्तते पुनः' इत्यादयोऽव्यक्तमव्याकृतं मायोपाधिकं ब्रह्म तदेव मूलं कारणं तस्मात्प्रभवो यस्य स तथा। तस्यैव मूलस्याव्यक्तस्यानुग्रहादतिदृढत्वादुत्थितः संवर्धितः। वृक्षस्य हि शाखाः स्कन्धादुद्भवन्ति, संसारस्य च बुद्धेः सकाशान्नानाविधाः परिणामा भवन्ति तेन साधर्म्येण बुद्धिरेव स्कन्धस्तन्मयस्तत्प्रचुरोऽयम्। इन्द्रियाणामन्तराणि छिद्राण्येव कोटराणि यस्य स तथा। महान्ति भूतान्याकाशादीनि पृथिव्यन्तानि विविधाः शाखा यस्य विशाखस्तम्भो यस्येति वा। आजीव्य उपजीव्यः। ब्रह्मणा परमात्मनाऽधिष्ठितो वृक्षो ब्रह्मवृक्षः। आत्मज्ञानं विना छेत्तुमशक्यतया सनातनः। एतद्ब्रह्मवनमस्य ब्रह्मणो जीवरूपस्य भोग्यं वननीयं संभजनीयमिति वनं ब्रह्म साक्षिवदाचरति न त्वेतत्कृतेन लिप्यत इत्यर्थः। एतद्ब्रह्मवनं संसारवृक्षात्मकं छित्त्वा च भित्त्वाचाहं ब्रह्मास्मीत्यतिदृढज्ञानखड्गेन समूलं निकृत्येत्यर्थः। आत्मरूपां गतिं प्राप्य तस्मादात्मरूपान्मोक्षान्नावर्तत इत्यर्थः। स्पष्टमितरत्। अत्र गङ्गातरङ्गनुद्यमानोत्तुङ्गतीरतिर्यङ्निपतितमर्धोन्मूलितं मारुतेन महान्तमश्वत्थमुपमानीकृत्य जीवन्तमियं रूपककल्पनेति द्रष्टव्यं, तेन नोर्ध्वमूलत्वाधः-

५ भाष्योत्कर्षदीपिका।

पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः'। 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरं' 'न मे विदुः सुरगणाः प्रभवं न महर्षयः'। 'अहमादिर्हि देवानां महर्षीणां च सर्वशः'। 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यादिबहुशः श्रुतवतः। 'परं ब्रह्म परं धाम पवित्रं परमं भवान्' 'नहि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः' 'त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम्। त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे' 'अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत्' 'त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्। वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप' इत्याद्युक्तवतो विश्वरूपं दृष्टवतश्चार्जुनस्य एवमभिप्रायवर्णनानौचित्यात्। ऊर्ध्वं कालतः सूक्ष्मत्वात् कारणत्वात् नित्यत्वात् महत्त्वाच्चोच्छ्रितमुत्कृष्टं मायाशक्तिमत् ब्रह्म मूलं यस्य सोऽयं संसार ऊर्ध्वमूलस्तमधः सर्वकारणान्मायाशक्तिमतो ब्रह्मणो निकृष्टा महदहंकारतन्मात्रादयः शाखाः यस्य सोऽधःशाखस्तं श्वोऽपि न स्थास्यतीत्यश्वत्थः क्षणभङ्गुरस्तमश्वत्थं मायामयं संसारवृक्षं अव्ययं संसारमायाया अनादिकालप्रवृत्तत्वादनाद्यनन्तदेहादिसंतानाश्रयः तत्त्वज्ञानमन्तरेणानुच्छेद्यो यः सोऽव्ययः संसारवृक्षस्तं प्राहुः श्रुतिस्मृतिवादाः कथयन्ति। तथाहि 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इत्यादिश्रुतिवादाः 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः। बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा। धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः। एतद्ब्रह्मवनं चैव ब्रह्मवृक्षस्य तस्य तत्॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना। ततश्चात्मगतिं प्राप्य तस्मान्नावर्तते पुनः' इत्यादयः स्मृतिवादाः। आजीव्य उपजीव्यः ब्रह्माधिष्ठितत्वात्। ब्रह्मवृक्षः ज्ञानं विना छेत्तुमशक्यत्वेनानादित्वाच्च। सनातनश्चिरंतनः। तच्च ब्रह्मणः परस्यात्मनो वनं वननीयं संभजनीयमत्र हि

६ श्रीधरीव्याख्या।

ततोऽर्वाचीनाः कार्योपाधयो हिरण्यगर्भादयो गृह्यन्ते, ते तु शाखा इव शाखा यस्य तम्। विनश्वरत्वेन श्वः प्रभातपर्यन्तमपि न स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः। प्रवाहरूपेणाविच्छेदादव्ययं च प्राहुः 'ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः' इत्याद्याः श्रुतयः।

## अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।

१ श्रीमच्छांकरभाष्यम् ।

**पर्णानीव पर्णानि । यथा वृक्षस्य परिरक्षणार्थानि पर्णानि तथा वेदाः संसारवृक्षपरिरक्षणार्थाः धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात् । यथाव्याख्यातं संसारवृक्षं समूलं यस्तं वेद स वेदवित्वेदार्थविदित्यर्थः । नहि संसारवृक्षादस्मात्समूलाज्ज्ञेयोऽन्योऽणुमात्रोऽप्यवशिष्टोऽस्ति । अतः सर्वज्ञः स यो वेदार्थविदिति समूलवृक्षज्ञानं स्तौति ॥ १ ॥ तस्यैव संसारवृक्षस्यापरावयवकल्पनो-**

२ आनन्दगिरिव्याख्या ।

छन्दांसि पर्णानीव भवन्तीत्यर्थः । तदेव प्रपञ्चयति—**यथेति** । उक्तेऽर्थे हेतुमाह—**धर्मेति** । कर्मकाण्डानां वेदानामिति शेषः । कर्मब्रह्माख्यसर्ववेदार्थस्य तत्रान्तर्भावमुपेत्य व्याचष्टे—**वेदार्थेति** । समूलसंसारवृक्षज्ञाने-(कुतूहलं)ऽमूलं हित्वा मूलमेव निष्कृष्य ज्ञातुं शक्यमिति तज्ज्ञानार्थं प्रयतितव्यमिति मत्वा तज्ज्ञानस्तुतिरत्र विवक्षितेत्याह—**नहीति** ॥ १ ॥ अवयवसंबन्धिन्यपरा प्रागुक्तादतिरिक्ता कल्पनेति यावत् । आमनुष्यलोकादा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्तदुपलक्षिता यज्ञादयस्तएव पर्णानि पर्णसंघातवच्छोभाहेतवो यस्य तरोस्तमश्वत्थं यो वेद मिथ्यात्वेन स एव वेदवित् विदितवेद्य इत्यर्थः । अत्राश्वत्थरूपकेण संसारो वर्ण्यते ॥ १ ॥ अधश्च मानुषेभ्यस्तिर्यक्स्थावरादयोऽवीच्यन्ताः ।

४ मधुसूदनीव्याख्या ।

शाखत्वाद्यनुपपत्तिः । यस्य मायामयस्याश्वत्थस्य छन्दांसि छादनात्तत्त्ववस्तुप्रावरणात्संसारवृक्षरक्षणाद्वा कर्मकाण्डानि ऋग्यजुःसामलक्षणानि पर्णानीव पर्णानि । यथा वृक्षस्य परिरक्षणार्थानि पर्णानि भवन्ति तथा संसारवृक्षस्य परिरक्षणार्थानि कर्मकाण्डानि । धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात्तेषाम् । यस्तं यथाव्याख्यातं समूलं संसारवृक्षं मायामयमश्वत्थं वेद जानाति स वेदवित् । कर्मब्रह्माख्यवेदार्थवित्स एवेत्यर्थः । संसारवृक्षस्य हि मूलं ब्रह्म । हिरण्यगर्भादयश्च जीवाः शाखास्थानीयाः । स च संसारवृक्षः स्वरूपेण विनश्वरः प्रवाहरूपेण चानन्तः । स च वेदोक्तैः कर्मभिः सिच्यते ब्रह्मज्ञानेन च छिद्यत इत्येतावानेव हि वेदार्थः । यश्च वेदार्थवित्स एव सर्वविदिति समूलवृक्षज्ञानं स्तौति स वेदविदिति ॥ १ ॥ तस्यैव संसारवृक्षस्याव-

५ भाष्योत्कर्षदीपिका ।

सर्वं प्रतिष्ठितं तस्य वृक्षस्य संसाराख्यस्य तदेव सारभूतं, अथवास्य वृक्षस्यानवच्छिन्नस्य संसारमण्डलस्य तदेव ब्रह्मवनमिव वनं वननीयं संभजनीयं । नहि ब्रह्मातिरिक्तं संसारस्यास्पदमस्ति । ब्रह्मैवाविद्यया संभवतीत्यभ्युपगमादित्यर्थः । तस्माद्ब्रह्मगतिरूपान्मोक्षात् । स्पष्टमन्यत् । असेव्यफलमश्नुतां वीनां सुपर्णानां जीवानामज्ञानामयो गतिर्यस्मिन्नसौ व्ययः न विद्यते व्ययो यस्मादिव्ययः । 'तयोरन्यः पिप्पलम्' इति श्रुतेरित्यर्थः । अनेन सुज्ञैरसेव्यफलत्वं ध्वन्यते । यद्वा पक्षिसामान्यवाचकविशब्देन पक्षिविशेषा हंसा लक्ष्यन्ते तेषामयः प्रचारस्तद्रहितः । नहि हंसा अश्वत्थे व्याप्रियन्ते संन्यासिनो वा जगद्विषय इति कल्पना तु श्रुत्याद्यननुगुणा सर्वज्ञानां न शोभते इत्यत आचार्यैर्न प्रदर्शिता । अत्र ऊर्ध्वमूलमधः शाखं मिथ्याभूतं जले प्रतिबिम्बितं पुनःपुनः परिदृश्यमानत्वादव्ययमैन्द्रजालिकोपदर्शितमेतादृशं वाश्वत्थम् । संसारवृक्षस्य मिथ्यात्वबोधनायोपमानीकृत्येयं रूपककल्पना । तेनोर्ध्वमूलस्याधःशाखस्य क्षणभङ्गुरस्य मायामयस्याव्ययस्याश्वत्थस्यैवाभावाद्रूपकासंगतिरिति न शङ्कनीयम् । केचित्तु गङ्गातरङ्गनुद्यमानोत्तुङ्गतीरतिर्यङ्निपतितः प्रबलतरपवनोन्मूलितः कतिपयमूलव्याप्तपातालः ऊर्ध्वस्थितबहुमूलो भूमिस्थकतिपयशाखः उपरिस्थितबहुशाखः अधोमूलबलेन स्थितत्वात् अव्ययस्तादृशमश्वत्थमुपमानीकृत्येयं रूपककल्पनेति वर्णयन्ति । यस्य संसारवृक्षस्य च्छादनाद्रक्षणात् छन्दांसि ऋग्यजुःसामलक्षणानि पर्णानीव पर्णानि, यथा वृक्षस्य परिरक्षणार्थानि पर्णानि तथा कर्मकाण्डानि च्छन्दांसि धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात् संसारवृक्षस्य परिरक्षणार्थानीत्यर्थः । छादनं प्रावरणमित्यर्थे त्वर्थवादयुक्तानां छन्दसां तन्निष्ठदोषप्रावरणार्थत्वं बोध्यम् । तं यथोक्तं संसारवृक्षं भङ्गुरं मायामयं साधिष्ठानं यो वेद जानाति स वेदवित् वेदार्थज्ञः । समूले संसारवृक्षे सर्वं ज्ञेयमन्तर्भवतीति तस्य ज्ञाता वेदार्थवित्त्वात् सर्वज्ञो भवतीति समूलसंसारवृक्षज्ञानं यत्नेन संपाद्यमिति बोधनाय तज्ज्ञानं स्तौति ॥ १ ॥ तस्यैव वृक्षस्या-

६ श्रीधरीव्याख्या ।

छन्दांसि वेदाः यस्य पर्णानि, धर्माधर्मप्रतिपादनद्वारेण छायास्थानीयैः कर्मफलैः संसारवृक्षस्य सर्वजीवाश्रयणीयत्वापादनात्पर्णस्थानीया वेदाः । यस्तमेवंभूतमश्वत्थं वेद स एव वेदार्थवित् संसारप्रपञ्चवृक्षस्य मूलमीश्वरः श्रीनारायणः, ब्रह्मादयस्तदंशाः शाखास्थानीयाः, स च संसारवृक्षो विनश्वरः प्रवाहरूपेण नित्यश्च वेदोक्तैः कर्मभिः सेव्यतामापादितश्चेत्येतावानेव हि वेदार्थः । अतएव विद्वान्वेदविदिति स्तूयते ॥ १ ॥ किंच—**अधश्चेति** । हिरण्यगर्भादयः कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्ताः, तेषु च ये दुष्कृति-

७ अभिनवगुप्ताचार्यव्याख्या ।

स्वफलवत्त्वसरसतादयः पर्णैः सूच्यन्ते । एवं ब्रह्मतत्त्वस्य वेदोपलक्षितशास्त्रद्वारिका प्रतीतिरित्याख्यायते ॥ १ ॥ गुणैः सत्त्वादिभिः प्रवृद्धाः

१ मधुसूदनः.

**अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**च्यते—अधो मनुष्यादिभ्यो यावत्स्थावरमूर्ध्वं च यावद्ब्रह्मा विश्वसृजो धर्म इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रगताः गुणप्रवृद्धा गुणैः सत्त्वरजस्तमोभिः प्रवृद्धाः स्थूलीकृता उपादानभूतैर्विषयप्रवाला विषयाः शब्दादयः प्रवाला इव देहादिकर्मफलेभ्यः शाखाभ्योऽङ्कुरीभवन्तीव तेन विषयप्रवालाः शाखाः । संसारवृक्षस्य परममूलमुपादानं कारणं पूर्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासना मूलानीव धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तान्यधश्च देहाद्यपेक्षया मूलान्यनुसंततान्यनुप्रविष्टानि कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावी येषामुद्भूतिमनुभवन्तीति तानि कर्मानुबन्धीनि मनुष्यलोके । विशेषतोऽत्र**

---

२ आनन्दगिरिव्याख्या ।

विरिञ्चेरित्यधःशब्दार्थमाह—**मनुष्यादिभ्य इति** । तस्मादेवारभ्य आसत्यलोकादित्यूर्ध्वशब्दार्थमाह—**यावदिति** । शाखाशब्दार्थं दर्शयति—**ज्ञानेति** । तेषां हेत्वनुगुणत्वेन बहुविधत्वं सूचयति—**यथेति** । प्रत्यक्षाणां शब्दादिविषयाणां प्रवालत्वं शाखासु पल्लवत्वम् । अङ्कुरत्वं स्फोरयति—**देहादीति** । ऊर्ध्वमूलमित्यत्र संसारवृक्षस्य मूलमुक्तं किमिदानीमधश्च मूलानीत्युच्यते तत्राह—**संसारेति** । अनुप्रविष्टत्वं सर्वेषु लिङ्गेष्वनुगततया संततत्वमविच्छिन्नत्वम् । रागादीनां कर्मफलजन्यत्वं प्रकटयति—**कर्मेति** । कर्मणां रागादीनां मिथो हेतुहेतुमत्त्वम् । तेषां तथात्वेनानवच्छिन्नतया प्रवृत्तिर्विशेषतो मनुष्यलोके भवतीत्यत्र हेतुमाह—**अत्र हीति** । कर्मण्युत्पत्त्या प्राणिनिकायो लोकः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ऊर्ध्वं च मानुषेभ्य एवोपरि च गन्धर्वयक्षादिहिरण्यगर्भपर्यन्तं प्रसृताः प्रसरं प्राप्तास्तस्य शाखाः गुणैः सत्त्वादिभिः प्रकर्षेण वृद्धाः गुणप्रवृद्धाः । विषया एव रञ्जकतया कोमलपल्लवरूपाणि प्रवालानि यासां ताः । संसारवृक्षस्योपरिमूलं ब्रह्म उक्तम् । अधश्च इह मनुष्यलोके च तस्य मूलानि वासनारूपाणि अवान्तरमूलानि अनुसन्ततानि प्रवाहनित्यानि ।

४ मधुसूदनीव्याख्या ।

यवसंबन्धिन्यपरा कल्पनोच्यते—**अधश्चेति** । पूर्वं हिरण्यगर्भादयः कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्ताः, इदानीं तु तद्गतो विशेष उच्यते । तेषु ये कपूयचरणा दुष्कृतिनस्तेऽधः पश्वादियोनिषु प्रसृता विस्तारं गताः । येतु रमणीयचरणाः सुकृतिनस्ते ऊर्ध्वं देवादियोनिषु प्रसृताः । अतोऽधश्च मनुष्यत्वादारभ्य विरिंचिपर्यन्तं ऊर्ध्वं च तस्मादेवारभ्य सत्यलोकपर्यन्तं प्रसृतास्तस्य संसारवृक्षस्य शाखाः । कीदृश्यस्ताः । गुणैः सत्त्वरजस्तमोभिर्देहेन्द्रियविषयाकारपरिणतैर्जलसेचनैरिव प्रवृद्धाः स्थूलीभूताः । किंच विषयाः शब्दादयः प्रवालाः पल्लवा इव यासां संसारवृक्षशाखानां तास्तथा शाखाग्रस्थानीयाभिरिन्द्रियवृत्तिभिः संबन्धाद्रागाधिष्ठानत्वाच्च । किंचाधश्च शब्दादूर्ध्वं च मूलान्यवान्तराणि तत्तद्भोगजनितरागद्वेषादिवासनालक्षणानि मूलानीव धर्माधर्मप्रवृत्तिकारणानि तस्य संसारवृक्षस्यानुसंततान्यनुस्यूतानि । मुख्यं मूलं ब्रह्मैवेति न दोषः । कीदृशान्यवान्तरमूलानि । कर्म धर्माधर्मलक्षणमनुबद्धुं पश्चाज्जनयितुं शीलं येषां तानि कर्मानुबन्धीनि । कुत्र मनुष्यलोके मनुष्यश्चासौ लोकश्चेत्यधिकृतो ब्राह्मण्यादिविशिष्टो देहो मनुष्यलोकस्तस्मिन् बाहुल्येन कर्मानुबन्धीनि मनुष्याणां

५ भाष्योत्कर्षदीपिका ।

वयवसंबन्धिनीं प्रागुक्तादन्यां कल्पनामाह—**अधश्चेति** । मनुष्यलोकमारभ्याऽवीचिपर्यन्तमधः तत एवारभ्य सत्यलोकपर्यन्तमूर्ध्वं यस्य संसारवृक्षस्य शाखा इव शाखाः कर्मोपात्तिफलानि नानाविधानि । यथाकर्म यथाश्रुतमित्युक्तत्वात् प्रसृताः प्रकर्षेण व्याप्ताः । गुणैरुपादानभूतैः सत्त्वादिभिः प्रवृद्धाः प्रकर्षेण स्थूलीकृताः विषयाः शब्दादयः प्रवालाः पल्लवशाखाग्रोद्भूताङ्कुरस्थानीयाः यासां शाखानां ताः विषयप्रवालाः संसारवृक्षस्य परमं मूलमुपादानं पूर्वमूर्ध्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीव मूलानि धर्माधर्मप्रवृत्तिकारणान्येवान्तर्भावीनि तानि देवाद्यपेक्षया अधः मूलानि प्रसृतानि संततानि अनुप्रविष्टानि सर्वेष्वनुगततयाऽनवच्छिन्नानि । मूलानि विशिनष्टि । कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावि येषां येषां उद्भवात्पश्चात्कर्माणि भवन्तीत्यर्थः । तानि कर्मानुबन्धीनि । क्वेत्यपेक्षायामाह । मनुष्यलोके लोक्यत इति लोकः प्राणिनिकायः मनुष्यश्चासौ लोकश्चेत्यधिकृतो ब्राह्मण्यादिविशिष्टो देहो मनुष्यलोकः तस्मिन्मनुष्यस्य लोके भूलोक इति वा । विशेषतो मनुष्याणां कर्माधिकारस्य

६ श्रीधरीव्याख्या ।

नस्तेऽधः पश्वादियोनिषु प्रसृताः विस्तरं गताः, सुकृतिनश्चोर्ध्वं देवादियोनिषु प्रसृतास्तस्य संसारवृक्षस्य शाखाः । किंच गुणैः सत्त्वादिवृत्तिभिर्जलसेचनैरिव यथायथं प्रवृद्धाः वृद्धिं प्राप्ताः । किंच विषया रूपादयः प्रवालाः पल्लवस्थानीया यासां ताः, प्रशाखास्थानीयाभिरिन्द्रियवृत्तिभिः संयुक्तत्वात् । किंच अधश्च चशब्दादूर्ध्वं च मूलानि अनुसंततानि विरूढानि । मुख्यं मूलं ईश्वर एक एव । इमानि त्ववान्तरमूलानि तत्तद्भोगवासनालक्षणानि । तेषां कार्यमाह । मनुष्यलोके कर्मानुबन्धीनि कर्म एवानुबन्धि अनन्तर-

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**हि मनुष्याणां कर्माधिकारः प्रसिद्धः ॥ २ ॥ यस्त्वयं वर्णितः संसारवृक्षः—न रूपेति । न रूपमस्येह यथा वर्णितं तथा नैवोपलभ्यते स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वाद्दृष्टनष्टस्वरूपो हि स इत्यत एव नान्तो न पर्यन्तो निष्ठा समाप्तिर्वा विद्यते । तथा न चादिरित आरभ्यायं प्रवृत्त इति न केन-**

२ आनन्दगिरिव्याख्या ।

मनुष्यश्चासौ लोकश्चेत्यधिकृतो ब्राह्मण्यादिविशिष्टो देहो मनुष्यलोकः ॥ २ ॥ पुनःपुना रागादिना प्रवृत्तत्वेनानादित्वान्न संसारवृक्षः स्वयमुच्छिद्यते न चोच्छेत्तुं शक्यते केनापीत्याशङ्क्याह—**यस्त्विति** । यथा पूर्वं वर्णितं यथा च लोके प्रसिद्धं तथास्य रूपमिह शास्त्रादनुमीयते तथाचास्य ज्ञानापनोद्यत्वं युक्तमित्याह—**यथेति** । तस्याप्रमितत्वे हेतुमाह—**स्वप्नेति** । तस्य स्वप्नादिसमत्वे दृष्टनष्टस्वरूपत्वं हेतुं करोति—**दृष्टेति** । इत्यमेयतेति शेषः । तमेवामेयत्वं हेतुं कृत्वावसानमपि तस्य न भातीत्याह—**अत एवेति** । ज्ञानं विना भ्रान्तिवासनाकर्मणामन्योन्यनिमित्तत्वान्नावसानमस्तीत्यर्थः । इदंप्रथमत्वमपि नास्य परिच्छेत्तुं शक्यमित्याह—**तथेति** । आद्यन्तवन्मध्यमपि नास्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यतः कर्मानुबन्धीनि कर्मैव धर्माधर्माख्यं अनुबन्धः पश्चाद्भावि येषां तानि कर्मानुबन्धीनि वासनाभ्यः कर्माणि कर्मभ्यो वासना इत्यनवरतसंतानोऽयं वृक्ष इत्यर्थः ॥ २ ॥ ननु श्वोऽपि स्यातुमनर्हश्चाव्ययश्चेत्युक्ते प्रतिक्षणविनाशिविज्ञानसंतानरूपो वा व्रीह्यादिवत्प्रवाहनित्यो वायं संसारस्तर्हि दुरुच्छेद्यो वासनानां कर्मणां च बीजाङ्कुरवदन्योन्यजन्महेतुत्वस्यावर्जनीयत्वादित्याशङ्क्य सत्त्वासत्त्वाभ्यामनिर्वचनीयोयमित्येवं पक्षमाश्रित्य परिहरति—**न रूपमिति** । रज्जूरगस्येवास्य रूपं सम्यग्दृशा वीक्ष्यमाणं सन्नोपलभ्यते इह जीवत्येव देहे । यथा पूर्वमज्ञानदशायां तथा नोपलभ्यते ज्ञानदशायाम् । तेनास्य मृषात्वमनुभवैकवेद्यमित्युक्तम् । एतेनानुपलभ्यरूपत्ववचनेन स्वप्रकाशानां विज्ञानानां रूपवतां बीजादीनां च सादृश्यस्य व्यावृत्तिः । तर्हि शशविषाणवत्तुच्छ एवायं स्यादित्यत आह—**नान्तो नचादिरिति** । उपादानस्य मूलाज्ञानस्याद्यन्तशून्यत्वादयमप्याद्यन्तशून्य इत्यर्थः । तर्हि आत्मवदपरिहार्यः स्यादित्याशङ्क्याह—**नच संप्रतिष्ठा** । अस्य प्रतिष्ठाख्यं लयस्थानं वृक्षस्य भूमिरिव नास्ति । नचायं ब्रह्मणो विकारो येन तत्रैव लीयेत । नचेष्टापत्तिः ब्रह्मणः कौटस्थ्यभङ्गापत्तेः । किं तर्हि तुच्छमज्ञानमस्योपादानं तस्मिंश्च ज्ञानेन विनष्टे समूलस्यास्योच्छेदो भवति । अज्ञानस्य च तुच्छत्वं 'तुच्छयेनाभ्वपिहितं यदासीत्' इत्यादिश्रुत्या । तत्कार्यस्य रज्जूरगादेः प्रलये तदनुपलम्भस्यानुभवेन च सिद्धम् । तस्मादस्य प्रतिष्ठा नोपलभ्यत इति युक्तमेवोक्तम् । तमेनमश्वत्थं वासनानां दार्ढ्यात् सुविरूढमूलं दृढतरमूलमपि असङ्गशस्त्रेण सङ्गो देहादितादात्म्यबुद्धिस्तद्वर्जनमसङ्गः सएव शस्त्रं तेन दृढेन परिपक्वेन छित्त्वा । ततः पदं तत्परिमार्गितव्यमित्युत्तरेणान्वयः । यद्यपि स्थूलसूक्ष्मयोः संसा-

४ मधुसूदनीव्याख्या ।

हि कर्माधिकारः प्रसिद्धः ॥ २ ॥ यस्त्वयं संसारवृक्षो वर्णित इह संसारे स्थितैः प्राणिभिरस्य संसारवृक्षस्य यथावर्णितमूर्ध्वमूलत्वादि तथा तेन प्रकारेण रूपं नोपलभ्यते स्वप्नमरीच्युदकमायागन्धर्वनगरवन्मृषात्वेन दृष्टनष्टस्वरूपत्वात्तस्य । अतएव तस्यान्तोऽवसानं नोपलभ्यते एतावता कालेन समाप्तिं गमिष्यतीत्यपर्यन्तत्वात् । न चास्यादिरुपलभ्यते इत आरभ्य प्रवृत्त

५ भाष्योत्कर्षदीपिका ।

प्रसिद्धत्वात् ॥ २ ॥ 'को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव' इत्यादिश्रुतिबोधितं संसारस्यानिर्वचनीयत्वं वदन्नास्य ज्ञानायोग्यत्वं युक्तमपितूच्छेद्यते बोधयति—**नेति** । अस्य वर्णितस्य संसारवृक्षस्य रूपमिह शास्त्रे यथा वर्णितं तथा नैवोपलभ्यते । इह संसारे स्थितैः प्राणिभिरूर्ध्वमूलत्वादि यथा वर्णितं तथा नोपलभ्यत इति वा । दृष्टनष्टस्वरूपत्वेन स्वप्नमरीच्युदकमायागन्धर्वनगररज्जूरगशुक्तिरूप्यद्विचन्द्रसमत्वात् । एवंच यथा सत्त्वा-

६ श्रीधरीव्याख्या ।

भावि येषां तानि ऊर्ध्वाधोलोकेषु यदुपभुक्तं तत्तद्भोगवासनादिभिर्हि कर्मक्षयेण मनुष्यलोकं प्राप्तानां तत्तदनुरूपेषु कर्मसु प्रवृत्तिर्भवति । एतस्मिन्नेव हि कर्माधिकारो नान्येषु लोकेषु । अतो मनुष्यलोके इत्युक्तम् ॥ २ ॥ किंच—**न रूपमस्येति** । इह संसारे स्थितैः प्राणिभिरस्य संसारवृक्षस्य तथोर्ध्वमूलत्वादिप्रकारेण रूपं नोपलभ्यते । न चान्तोऽवसानं, अपर्यन्तत्वात् । न चादिरनादि-

७ अभिनवगुप्ताचार्यव्याख्या ।

देवादिस्थावरान्ततया तस्य च शुभाशुभात्मकानि कर्माण्यधस्तनमूलानि यस्य ॥ २ ॥ तं छित्त्वेति विशेषणे क्रियाभिधीयमाना सामर्थ्यादत्र

**ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम्।

चिद्गम्यते। नच संप्रतिष्ठा स्थितिर्मध्यमस्य न केनचिदुपलभ्यते। अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्ठु विरूढानि विरोहं गतानि मूलानि यस्य तमेनं सुविरूढमूलमसङ्गशस्त्रेणासङ्गः पुत्रवित्तलोकैषणादिभ्यो व्युत्थानं तेनासङ्गशस्त्रेण दृढेन परमात्माभिमुखनिश्चयदृढीकृतेन पुनःपुनर्विवेकाभ्यासाश्मनिशितेन छित्त्वा संसारवृक्षं सबीजमुद्धृत्य ॥ ३ ॥ तत इति। ततः पश्चात्पदं वैष्णवं तत्परिमार्गितव्यं। परिमार्गणमन्वेषणं। ज्ञातव्यमित्यर्थः। यस्मिन्पदे गताः प्रविष्टा न निवर्तन्ति नावर्तन्ते भूयः पुनः संसाराय। कथं परिमार्गितव्यमित्याह। तमेव च यः पदशब्देनोक्त आद्यमादौ भवं पुरुषं प्रपद्य

२ आनन्दगिरिव्याख्या।

प्रामाणिकमित्याह—**मध्यमिति**। संसारवृक्षस्याश्वत्थशब्दितस्य क्षणभङ्गुरस्य स्वयमेवोच्छेदसंभवात्तदुच्छेदार्थं न प्रयतितव्यमित्याशङ्क्याह—**अश्वत्थमिति**। व्युत्थानं वैराग्यपूर्वकं पारिव्राज्यम्। दृढीकृतत्वमेव विवेकपूर्वकत्वेन स्फुटयति—**पुनःपुनरिति** ॥ ३ ॥ उद्धृत्य किं कर्तव्यं तदाह—**तत इति**। पश्चादश्वत्थादूर्ध्वं व्यवस्थितमित्यर्थः। किं तत्पदं यदन्विष्य ज्ञातव्यं तदाह—**यस्मिन्निति**। येन सर्वं पूर्णं पूर्षु वा शयानं पुरुषं प्रपद्ये शरणं गतो-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

रयोरसङ्गः सुषुप्तौ स्वयमेव जायते तेन तन्मूलवासनाभिरप्यात्मनोऽसङ्गोऽनुमीयते तथापि वासनामूलस्याज्ञानस्य ज्ञानेनानुच्छेदान्नासङ्गधीर्दृढा भवति तस्मान्निर्विकल्पसमाध्यभ्यासेन कारणशरीरस्याप्यसङ्गः साध्यः। तेन चासङ्गशस्त्रेणास्य छेदो मूलोच्छेदो लवणोदकवद्रज्जूरगवद्वा प्रविलापनरूपः कर्तव्यः। नतु सांख्यानामिव स्वरूपेण सतः परिवर्जनमात्रम् ॥ ३ ॥ तमिममश्वत्थं छित्त्वा किं कर्तव्यमत आह—**तत इति**। न केवलं निर्विकल्पसमाधिना तदस-

४ मधुसूदनीव्याख्या।

इत्यनादित्वात्। नच संप्रतिष्ठा स्थितिर्मध्यस्योपलभ्यते आद्यन्तप्रतियोगिकत्वात्तस्य। यस्मादेवंभूतोऽयं संसारवृक्षो दुरुच्छेदः सर्वानर्थकरश्च तस्मादनाद्यज्ञानेन सुविरूढमूलमत्यन्तबद्धमूलं प्रागुक्तमश्वत्थमेनमसङ्गशस्त्रेण सङ्गः स्पृहा असङ्गः सङ्गविरोधि वैराग्यं पुत्रवित्तलोकैषणात्यागरूपं तदेव शस्त्रं रागद्वेषमयसंसारविरोधित्वात् तेनासङ्गशस्त्रेण दृढेन परमात्माज्ञानौत्सुक्यदृढीकृतेन पुनः पुनर्विवेकाभ्यासनिशितेन छित्त्वा समूलमुद्धृत्य वैराग्यशमदमादिसंपत्त्या सर्वकर्मसंन्यासं कृत्वेत्येतत् ॥ ३ ॥ ततो गुरुमुपसृत्य ततोऽश्वत्थादूर्ध्वं व्यवस्थितं तद्वैष्णवं पदं वेदान्तवाक्यविचारेण परिमार्गितव्यं मार्गयितव्यमन्वेष्टव्यम्। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति श्रुतेः। तत्पदं श्रवणादिना ज्ञातव्यमित्यर्थः। किं तत्पदम्। यस्मिन्पदे गताः प्रविष्टा ज्ञानेन न निवर्तन्ति नावर्तन्ते भूयः पुनः संसाराय। कथं तत् परिमार्गितव्यमित्याह—यः पदशब्देनोक्तस्तमेव चाद्यमादौ भवं पुरुषं येनेदं सर्वं पूर्णं तं पुरिषु पूर्षु वा शयानं प्रपद्ये शरणं गतोऽस्मीत्येवं तदेकशरणतया तदन्वेष्टव्यमित्यर्थः। तं कं पुरुषम्। यतो

५ भाष्योत्कर्षदीपिका।

सत्त्वाभ्यामनिर्वाच्यत्वात्स्वप्नादिकममेयं तथायं संसारोऽपीति भावः। अमेयत्वादेवास्य संसारस्यान्तः कदायं समाप्यत इति परिसमाप्तिर्नोपलभ्यते ज्ञानं विनाऽनन्तत्वात्। तथेत आरभ्यायं प्रवृत्त इत्यादिरस्य न चोपलभ्यते कैश्चिन्न गम्यते अनादित्वात्। नच संप्रतिष्ठा संस्थितिः। मध्यमस्य केनचिदुपलभ्यते। आद्यन्तज्ञानाधीनत्वादस्य तस्मादेनं यथोक्तमश्वत्थं संसारवृक्षं सर्वानर्थकरं सुष्ठु विरूढानि विरोहं गतानि सुदृढानि मूलान्यविद्याकामकर्मवासनारूपाणि यस्य तं सुविरूढमूलत्वाद्दुरुच्छेदमसङ्गशस्त्रेण सङ्गस्य पुत्रवित्तलोकैषणादिरूपस्य परित्यागोऽसङ्गः स एव शस्त्रं संसारवृक्षच्छेदनसाधनं तेन दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनः पुनर्विवेकाभ्यासशिलापादिततैक्ष्ण्येन छित्त्वा संसारवृक्षं समूलमुत्कृत्य ततः पदं तत्परिमार्गितव्यमित्यपरेणान्वयः ॥ ३ ॥ ततः संसारवृक्षच्छेदनात्पश्चाद्यत्सकलवेदान्तप्रसिद्धं सच्चिदानन्दघनं यद्विष्णोः परमं पदं तत्परिमार्गितव्यमन्विष्य ज्ञातव्यमित्यर्थः। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' इति श्रुतेः। किं तदिति तत्राह। यस्मिन्पदे गताः प्रविष्टा भूयः पुनर्न निवर्तन्ते संसाराय नावर्तन्ते 'न स पुनरावर्तते न स पुनरावर्तते' इति श्रुतेः। तत्कथं परिमार्गितव्यमित्याकाङ्क्षायामाह—**तमिति**। यः यच्छब्देनोक्त-

६ श्रीधरीव्याख्या।

त्वात्। नच संप्रतिष्ठा स्थितिः कथं तिष्ठतीति न चोपलभ्यते। यस्मादेवंभूतोऽयं संसारवृक्षो दुरुच्छेद्योऽनर्थकरश्च तस्मादेनं दृढेन वैराग्येण शस्त्रेण छित्त्वा तत्त्वज्ञाने यतेतेत्याह—अश्वत्थमेनमिति सार्धेन। एनमश्वत्थं सुविरूढमूलमत्यन्तं बद्धमूलं सन्तमसङ्गः सङ्गराहित्यं अहंममतात्यागस्तेन दृढेन शस्त्रेण सम्यग्विचारेण छित्त्वा पृथक्कृत्य ॥ ३ ॥ **तत इति**। ततस्तस्य मूलभूतं तत्पदं वस्तु

७ अभिनवगुप्ताचार्यव्याख्या।

विशेषणपदमुपादत्ते 'दण्डी प्रैषानन्वाह' इति विधिवत्। तेनाधो रूढानि मूलान्यस्य छिन्द्यादिति ॥ ३ ॥ तत्परं प्रशान्तं अव्ययं पदं

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

इत्येवं परिमार्गितव्यं तच्छरणतयेत्यर्थः । कोऽसौ पुरुष इत्युच्यते यतो यस्मात्पुरुषात्संसारमायावृक्षप्रवृत्तिः प्रसृता निःसृतैन्द्रजालिकादिव माया पुराणी चिरंतनी ॥ ४ ॥ कथंभूतास्तत्पदं गच्छन्तीत्युच्यते—निर्मानेति । निर्मानमोहा मानश्च मोहश्च मानमोहौ तौ निर्गतौ येभ्यस्ते निर्मानमोहा मानमोहवर्जिताः जितसङ्गदोषाः सङ्ग एव दोषः सङ्गदोषः जितः सङ्गदोषो यैस्ते जितसङ्गदोषाः अध्यात्मनित्याः परमात्मस्वरूपालोचननित्यास्तत्पराः विनिवृत्तकामाः विशेषतो निर्लेपेन निवृत्ताः

२ आनन्दगिरिव्याख्या ।

ऽस्मीत्यर्थः । विवर्तवादानुरोधिनं दृष्टान्तमाह—ऐन्द्रेति ॥ ४ ॥ परिमार्गणपूर्वकं वैष्णवं पदं गच्छतामङ्गान्तराण्याकाङ्क्षापूर्वकं कथयति—कथमित्यादिना । मानोऽहंकारः, मोहस्त्वविवेकः, जितसङ्गदोषाः शत्रुमित्रसंनिधावपि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ङ्गमात्रेण कृतार्थता किं तर्हि ततोऽसङ्गान्तरं तत् श्रुतिप्रसिद्धं पदनीयं ब्रह्म परिमार्गितव्यं श्रुतियुक्तिबलेनाहमेव ब्रह्मास्मीति ज्ञातव्यम् । यस्मिन्पदे निर्विकल्पे गताः प्राप्ताः सन्तो न निवर्तन्ति न पुनर्निवर्तन्ते । तमेव प्रत्यगानन्दमाद्यं पुरुषं पुरि शरीरे शयानमहमपि प्रपद्ये शरणागतोऽस्मीति भावयेत् । भगवत एव वा इदं वचनं लोकशिक्षार्थं वर्त एव च कर्मणीतिवत् । कोऽसौ पुरुषः यतः पुराणी आद्या प्रवृत्तिः 'सोऽकामयत बहु स्यां प्रजायेय' इत्येवंरूपा प्रसृता अस्मास्वपि प्रवृत्ता । यतो वयमपि इदानीं कामयामहे धनादिना वयं भूयांसः स्याम प्रजया प्रजायेमहीति चेति । येनेयं प्रवृत्तिर्दर्शिता तत्प्रणामेनैव सा निवर्तिष्यत इत्यर्थः ॥ ४ ॥ एवमैकान्तिकस्य सुखस्याच्छादकं संसाराश्वत्थं तच्छेदकमसङ्गशस्त्रं चोक्त्वा तस्य सुखस्य प्राप्तावधिकारिणं तस्य स्वरूपं चाह द्वाभ्याम्—**निर्मानेति** । मानो दर्पः । मोहो विपर्ययस्तद्रहिताः निर्मानमोहाः । जितः सङ्गः कर्ताहमित्यभिमानः दोषो रागादिश्च

४ मधुसूदनीव्याख्या ।

यस्मात्पुरुषात्प्रवृत्तिर्मायामयसंसारवृक्षप्रवृत्तिः पुराणी चिरंतन्यनादिरेषा प्रसृता निःसृतैन्द्रजालिकादिव मायाहस्त्यादि तं पुरुषं प्रपद्य इत्यन्वयः ॥ ४ ॥ परिमार्गणपूर्वकं वैष्णवं पदं गच्छतामङ्गान्तराण्याह—मानोऽहंकारो गर्वो मोहस्त्वविवेको विपर्ययो वा ताभ्यां निष्क्रान्ता निर्मानमोहास्तौ निर्गतौ येभ्यस्ते वा । तथाहंकाराविवेकाभ्यां रहिता इति यावत् । जितसङ्गदोषाः प्रियाप्रियसंनिधावपि रागद्वेषवर्जिता इति यावत् । अध्यात्मनित्याः परमात्मस्वरूपालोचनतत्पराः । विनिवृत्तकामाः विशेषतो निरवशेषेण निवृत्ताः कामा विषयभोगा येषां ते । विवेकवैराग्यद्वारा त्यक्तसर्वकर्माण इत्यर्थः । द्वन्द्वैः शीतोष्णक्षुत्पिपासादिभिः सुखदुःखसंज्ञैः

५ भाष्योत्कर्षदीपिका ।

त्वमेवादौ भवमाद्यं पुरुषं पूर्णं प्रपद्ये शरणं गतोस्मीत्येवं तच्छरणतया परिमार्गितव्यमित्यर्थः । तथाच श्रुतिः 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' । 'परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश' इत्याद्या । सर्वेषु भूतेष्वहमस्मि सर्वाणि भूतानि च मयि सन्तीति परिज्ञाय । एवमग्रेऽपि प्रथमजां वाचं ऋतस्य श्रीविष्णोरात्मानं स्वरूपमभिसंविवेश आश्रितवानित्यर्थः । कोऽसौ पुरुष इति तत्राह । यतो यस्मान्मायामयस्य संसारवृक्षस्य प्रवृत्तिः प्रसृता निःसृता ऐन्द्रजालिकादिव मायामयवृक्षप्रवृत्तिः । इतआरभ्य प्रवृत्ता इति तु वक्तुं न शक्यत इत्याशयेनाह । पुराणी चिरंतनी । यत्तु संसारिणां मोक्षप्रवृत्तिसिद्धये स्वयमसंसार्यपि भगवान्साक्षात्कर्तव्यं प्राप्यं चाविद्यातीतमात्मानं स्वस्यापि प्राप्यस्थानत्वेनाऽऽकारेण प्रकटयति तमेवेति । यतः यत्र अपुराणी नूतनेति तन्नोपादेयम् । 'मत्तः परतरं नान्यत्किंचिदस्ति धनंजय' । 'ब्रह्मणो हि प्रतिष्ठाहं—शाश्वतस्यामृतस्य' च । 'नान्तो न चादिः' इत्यादिभगवद्वचनाननुरूपत्वात् ॥ ४ ॥ कथंभूतास्तत्पदं गच्छन्तीत्याकाङ्क्षायां परिमार्गणपूर्वकं तद्वैष्णवं पदं गच्छतां लक्षणान्याह—**निर्मानमोहा इति** । अमूढाः मोहेनानाद्यज्ञानेन रहिताः सम्यग्ज्ञानवन्तः तद्यथोक्तमावृत्तिरहितं वैष्णवं पदं मोक्षाख्यं गच्छन्ति मुक्ता

६ श्रीधरीव्याख्या ।

वैष्णवं पदं परिमार्गितव्यमन्वेष्टव्यम् । कीदृशम् । यस्मिन्गता यत्पदं प्राप्ताः सन्तो भूयो न निवर्तन्ति । नावर्तन्त इत्यर्थः । अन्वेषणप्रकारमाह । यत एषा पुराणी चिरंतनी संसारप्रवृत्तिः प्रसृता विस्तृता तमेव चाद्यं पुरुषं प्रपद्ये शरणं व्रजामीत्येवमेकान्तभक्त्यान्वेष्टव्यमित्यर्थः ॥ ४ ॥ तत्प्राप्तौ साधनान्तराणि दर्शयन्नाह—**निर्मानेति** । निर्गतौ मानमोहावहंकारमिथ्याभिनिवेशौ येभ्यस्ते, जितः पुत्रादिसङ्गरूपो दोषो यैस्ते, अध्यात्मे आत्मज्ञाने नित्याः परिनिष्ठिताः, विशेषेण निवृत्तः कामो येभ्यस्ते, सुखदुःखहेतुत्वात्

**न तद्भासयते सूर्यो न शशाङ्को न पावकः।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम॥ ६॥**

१ श्रीमच्छांकरभाष्यम्।

**कामा येषां ते विनिवृत्तकामा यतयः संन्यासिनो द्वन्द्वैः प्रियाप्रियादिभिर्विमुक्ताः सुखदुःखसंज्ञैः परित्यक्ता गच्छन्त्यमूढा मोहवर्जिताः पदमव्ययं तद्यथोक्तम्॥ ५॥ तदेव पदं पुनर्विशिष्यते—नेति। तद्धामेति व्यवहितेन धाम्ना संबन्धः। धाम तेजोरूपं पदं न भासयते सूर्य आदित्यः सर्वावभासनशक्तिमत्त्वेऽपि सति। तथा न शशाङ्कश्चन्द्रो न पावको नाग्निरपि। यद्धाम वैष्णवं पदं गत्वा प्राप्य**

२ आनन्दगिरिव्याख्या।

द्वेषप्रीतिवर्जिता इत्यर्थः। तत्परत्वं श्रवणादिनिष्ठत्वं, संन्यासिनो वैराग्यद्वारा त्यक्तसर्वकर्माण इत्यर्थः। आदिशब्देन तद्धेतुग्रहः। मोहवर्जितत्वमुक्तहेतुतः संजातसम्यग्धीत्वम्॥ ५॥ तच्चेत्पदं वेद्यं कर्तुरन्यत्कर्मेति द्वैतापातोऽवेद्यं

३ नीलकण्ठव्याख्या (चतुर्धरी)।

यैस्ते जितसङ्गदोषाः। अध्यात्मं आत्मनि नित्याः निष्ठावन्तः आत्मध्यानपरा इतियावत्। विनिवृत्तकामाः त्यक्तसर्वपरिग्रहाः। द्वन्द्वैः सुखदुःखेत्युपलक्षणं शीतोष्णादीनामपि। तैर्विमुक्तास्तितिक्षावन्त इत्यर्थः। अमूढाः विद्ययाऽविद्यानाशं कृतवन्तः। तत्पदं अव्ययं अपुनरावृत्ति गच्छन्ति॥ ५॥ ननु यदि तदूर्ध्वं पदं गच्छन्ति तर्हि ततः पातोऽप्यवश्यंभावी 'पतनान्ताः समुच्छ्रयाः' इतिन्यायात्। ततश्च यस्मिन् गता न निवर्तन्तीत्यनुपपन्नमित्याशङ्क्य तस्य पदस्य स्वरूपमाह—**न तदिति**। तत्पदं सूर्यो न भासयति। रूपादिहीनत्वेन चक्षुरयोग्यत्वात्। एतेन

४ मधुसूदनीव्याख्या।

सुखदुःखहेतुत्वात्सुखदुःखनामकैः। 'सुखदुःखसञ्ज्ञैः'इति पाठान्तरे सुखदुःखाभ्यां सङ्गः संबन्धो येषां तैः सुखदुःखसङ्गैर्द्वन्द्वैर्विमुक्ताः परित्यक्ता अमूढा वेदान्तप्रमाणसंजातसम्यग्ज्ञाननिवारितात्मज्ञानाः तदव्ययं यथोक्तं पदं गच्छन्ति॥ ५॥ तदेव गन्तव्यं पदं विशिनष्टि—यद्वैष्णवं पदं गत्वा योगिनो न निवर्तन्ते तत्पदं सर्वावभासनशक्तिमानपि सूर्यो न भासयते। सूर्यास्तमयेऽपि चन्द्रो भासको दृष्ट इत्याशङ्क्याह—**न शशाङ्कः**। सूर्याचन्द्रमसोरुभयोरप्यस्तमयोरप्यस्तमयेऽग्निः प्रकाशको दृष्ट इत्याशङ्क्याह—**न पावकः**। भासयत इत्युभयत्राप्यनुषज्यते। कुतः सूर्यादीनां तत्र प्रकाशनासामर्थ्यमित्यत आह—तद्धाम ज्योतिः स्वयंप्रकाशमादित्यादिसकलजडज्योतिरवभासकं परमं प्रकृष्टं मम विष्णोः स्वरूपात्मकं पदम्। नहि यो यद्भास्यः स स्वभासकं तं भासयितुमीष्टे। तथाच श्रुतिः 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति। एतेन तत्पदं वेद्यं न वा आद्ये वेद्यभिन्नवेदितृत्वसापेक्षपेक्षत्वेन द्वैतापत्तिः।

५ भाष्योत्कर्षदीपिका।

भवन्ति। मानोऽहंकारो मोहोऽविवेकः तौ निर्गतौ येभ्यः। अतएव जितसङ्गदोषाः जितः पुत्रादिसङ्गएव दोषो यैः। यत इति वा। शत्रुमित्रादिसन्निधावपि द्वेषप्रीतिवर्जिता इति भाष्यटीकाकृतः। अतएव यतो वाध्यात्मनित्याः अध्यात्मनि परमात्मस्वरूपालोचने नित्यास्तत्पराः 'ब्रह्मसंस्थोऽमृतत्वमेति' 'तन्निष्ठस्य मोक्षोपदेशात्' इति श्रुतिसूत्राभ्याम्। अतएव यतो वा विनिवृत्तकामा विशेषतो वासनारहिताः निवृत्ताः कामा विषयाभिलाषा येषां ते। विनिवृत्तकामानां परत्ववेद्यलक्षणमाह। द्वन्द्वैः प्रियाप्रियादिभिः सुखदुःखसंज्ञैः विमुक्ताः स्वयमेवानायासेनैव परित्यक्ता एतादृशैर्लक्षणैः संपन्ना अमूढा वैष्णवं पदं गच्छन्ति। अतः तत्पदप्राप्तिमिच्छतामेतानि तत्प्राप्त्यङ्गानि यत्नेनाभ्यसनीयानीति भावः॥५॥ ननु गच्छन्तीत्यस्यासन्निहितं देशान्तरं गत्वा प्राप्नुवन्तीत्यर्थं उत सन्निकृष्टं तमसावृतघटमिवावरणनिवृत्त्या प्राप्नुवन्तीति। नाद्यः। येन सर्वमिदं ततमित्याद्युक्तिविरोधात्। द्वितीये सूर्यादिप्रकाशे सत्यपि कुतो न प्रकाशत इति तत्राह—**न तदिति**। यद्वा तच्चेत्पदं वेद्यं तर्हि कर्तुः कर्मणोऽन्यत्वावश्यकत्वात् द्वैतापत्तिरवेद्यं चेदपुरुषार्थत्वात् प्रेप्सितत्वासिद्धिरित्याशङ्क्य सूर्याद्यभास्यत्वेनावेद्यमपि धाम तेजोरूपं सर्वावभासकत्वादतन्निरासे सति स्वयमेव प्रकाशत इति पुरुषार्थत्वान्नाप्रेप्सितमिति निरसितुं तदेव पदं पुनर्विशिनष्टि—**नेति**। तद्धाम तेजोरूपं सूर्याद्यवभासकं सूर्यादयो न प्रकाशयन्ति तत्प्रकाश्यानां तत्प्रकाशकत्वायोगात्। शशाङ्कश्चन्द्रः। पावकोऽग्निः। तथाच श्रुतिः 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति'। यद्वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते यच्च सूर्यादिभिर्नावभास्यते तद्धाम स्वप्रकाशरूपं सर्वावभासकं परमं प्रकृष्टं सर्वोत्तमं मम श्रीविष्णोः। षष्ठी तु 'तद्विष्णोः परमं पदं'

६ श्रीधरीव्याख्या।

सुखदुःखसंज्ञानि शीतोष्णादीनि द्वन्द्वानि तैर्विमुक्ताः, अतएवामूढाः निवृत्ताविद्याः सन्तस्तदव्ययं पदं वैष्णवं गच्छन्ति॥ ५॥ तदेव गन्तव्यं पदं विशिनष्टि—**न तदिति**। यत्पदं सूर्यादयो न प्रकाशयन्ति, यत्प्राप्य न निवर्तन्ते योगिनः, तद्धाम स्वरूपं परमं मम।

७ अभिनवगुप्ताचार्यव्याख्या।

तदेव॥ ४॥ ५॥ न तदिति। सूर्यादीनां तत्रानवकाशः तेषां कालाद्यवच्छेदात् वेद्यत्वात्करणोपकारकत्वात्। तस्य तु दिक्कालाद्यनवच्छे-

१ श्रीमच्छांकरभाष्यम् ।

**न निवर्तन्ते यच्च सूर्यादिर्न भासयते तद्धाम पदं परमं मम विष्णोः ॥ ६ ॥ यद्गत्वा न निवर्तन्त इत्युक्तम् । ननु सर्वा हि गतिरागत्यन्ता, 'संयोगा विप्रयोगान्ताः' इति हि प्रसिद्धं, कथमुच्यते**

२ आनन्दगिरिव्याख्या ।

चेदपुमर्थत्वात्प्रेप्सितत्वासिद्धिरित्याशङ्क्याह—**तदेवेति** ॥ ६ ॥ उक्तमनूद्याक्षिपति—**यद्गत्वेति** । तत्र प्रसिद्धिं प्रमाणयति—**संयोगा इति** । गमनस्यागमनान्तत्वप्रसिद्धेरयुक्तं यद्गत्वेत्याद्युपसंहरति—**कथमिति** । आक्षेपं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सर्वेषां बाह्येन्द्रियाणां निवृत्तिः । यद्धि रूपवच्चक्षुर्योग्यं तत्सूर्येण चक्षुरनुग्राहकेण भास्यं इदं तु न तथेत्यर्थः । न शशाङ्कश्चन्द्रोऽपि भासयति । यन्मनोग्राह्यं वस्तु तच्चन्द्रेण मनोनुग्राहकेण भास्यं इदं तु न तथा । 'यन्मनसा न मनुते' इति श्रुत्याऽस्य मनोग्राह्यत्वनिषेधात् । नापि पावकः भासयति । यद्धि वाचा ग्राह्यं तत्तदनुग्राहकेण पावकेन भास्यं इदं तु न तथा । 'यद्वाचानभ्युदितम्' इति श्रुत्यास्य वाग्गोचरत्वनिषेधात् । 'न चक्षुषा गृह्यते नापि वाचा' इत्यादि श्रुत्यन्तरं च । यतश्चक्षुर्मनोवाचामगम्यं तेन स्थूलसूक्ष्मकारणप्रपञ्चातीतं प्रत्यगद्वयम् 'नान्तःप्रज्ञं न बहिःप्रज्ञं' 'अस्थूलमनणु' इत्यादिश्रुतिभिः सर्वविशेषरहितं यत्प्रतिपादितं तत् मम परमं धाम वृत्तिरूपज्ञानादपरमादन्यज्ज्योतिश्चिन्मात्रम् । ममेति संबन्धो राहोः शिर इतिवदुपचारात् । मदभिन्नं ज्योतिः स्वयंप्रकाशमित्यर्थः । अतएव यद्गत्वा प्राप्य ज्ञात्वेत्यर्थः । न निवर्तन्ते निवृत्तिकारणस्य मूलाज्ञानस्याभावात् । एवं व्याख्याने हि 'यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति' इति श्रुत्यर्थानुगमो दृश्यते । अदृश्ये इति दृग्योग्यत्वेन सूर्यभास्यत्वं पर्युदस्यते । अनात्म्ये आत्मनो मनसो योग्यं आत्म्यं तदन्यत्र अनात्म्ये इति मनसोऽप्ययोग्यत्वेन चन्द्रमोभास्यत्वं निरस्यते । अनिलयने निलीयतेऽस्मिन्सर्वं स्थूलसूक्ष्ममिति निलयनं कारणं तद्भिन्ने । अतएवानिरुक्ते निर्वचनायोग्ये । वाचामगोचर इत्यर्थः । तेन पावकाप्रकाश्ये इति सिद्धम् । येतु सूर्याद्यप्रकाश्यमर्चिरादिमार्गगम्यं सत्यलोकादप्युपरितनमप्राकृतं वैष्णवं पदं नित्यं देशान्तरेऽस्ति तद्गत्वा पुनर्न निवर्तन्त इति व्याचक्षते तेषां 'न रूपमस्येह तथोपलभ्यत' इति दृश्यस्य तुच्छत्वादेव तादृशस्यापि तुच्छत्वमपरिहार्यम् दृश्यत्वाविशेषात् । तस्माद्यथोक्तएव श्लोकार्थः ॥ ६ ॥ ननु यदि सूर्याद्यभास्यज्योतीरूपस्त्वं 'क्षेत्रज्ञं चापि मां विद्धि' इति स्वस्यैव क्षेत्रज्ञत्वं ब्रूषे तर्हि क्षेत्रज्ञस्य सततत्र घटादिप्रकाशे किमिति सूर्याद्यपेक्षा दृश्यते । नहि स्वयं ज्योतीरूपः स्वविष-

४ मधुसूदनीव्याख्या ।

द्वितीये त्वपुरुषार्थत्वापत्तिरित्यपास्तम् । अवेद्यत्वे सत्यपि स्वयमपरोक्षत्वात् । तत्रावेद्यत्वं सूर्याद्यभास्यत्वेनात्रोक्तं, सर्वभासकत्वेन तु स्वयमपरोक्षत्वं यदादित्यगतं तेज इत्यत्र वक्ष्यति । एवमुभाभ्यां श्लोकाभ्यां श्रुतेर्दलद्वयं व्याख्यातमिति द्रष्टव्यम् ॥ ६ ॥ ननु यद्गत्वा न निवर्तन्त इत्युक्तं यदि गच्छन्ति तर्ह्यावर्तन्त एव स्वर्गवत् । अथ नावर्तन्ते तर्हि न गच्छन्ति तेन गत्वेति न निवर्तन्त इति च परस्परविरुद्धं 'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्' इति हि शास्त्रे लोके च प्रसिद्धम् । अनात्मप्राप्तिः पुनरावृत्तिपर्यवसाना न त्वात्मप्राप्तिरितिचेत् न । सुषुप्तौ 'सता सोम्य तदा संपन्नो भवति' इति श्रुतिप्रतिपादिताया अप्यात्मप्राप्तेः पुनरावृत्तिपर्यन्तत्वदर्शनादन्यथा सुषुप्तस्य मुक्तत्वेन पुनरुत्थानं न स्यात् तस्मादात्मप्राप्तौ गत्वेति नोपपद्यते तस्यौपचारिकत्वेप्यनिवृत्तिर्नोपपद्यत इत्येवं प्राप्ते ब्रूमः । गन्तुर्जीवस्य गन्तव्यब्रह्माभिन्नत्वाद्गत्वेत्यौपचारिकम् । अज्ञानमात्रव्यवहितस्य तस्य ज्ञानमात्रेणैव प्राप्तिव्यपदेशात् । यदि ब्रह्मणः प्रतिबिम्बो जीवस्तदा यथा जल-

५ भाष्योत्कर्षदीपिका ।

'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति श्रुत्यनुरोधेन राहोः शिर इतिवदौपचारिकसंबन्धविवक्षया ननु भेदविवक्षया । 'एकमेवाद्वितीयं' 'विज्ञानमानन्दं ब्रह्म' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिश्रुतेः । केचित्तु तत्रावेद्यत्वं सूर्याद्यभास्यत्वेनात्रोक्तं सर्वभासकत्वेन तु स्वयमपरोक्षत्वं 'यदादित्यगतं तेज' इत्यत्र वक्ष्यति । एवमुभाभ्यां श्लोकाभ्यां श्रुतेर्दलद्वयं व्याख्यातमिति द्रष्टव्यमिति वर्णयन्ति । सूर्यो न भासयते इत्यनेन रूपादिहीनत्वेन चक्षुषाद्ययोग्यत्वात्सर्वेषां बाह्येन्द्रियाणां निवृत्तिः । न शशाङ्क इत्यनेन मनोनुग्राहकचन्द्रनिषेधेन मनसः । न पावक इति वाचो निवृत्तिः । 'न चक्षुषा गृह्यते, यन्मनसा न मनुते, यद्वाचानभ्युदितम्' इति श्रुतेरित्यन्येषां व्याख्याने तु लक्षणादोषो द्रष्टव्यः ॥ ६ ॥ ननु यद्गत्वा न निवर्तन्त इति नोपपद्यते गतेरागत्यन्तत्वात् । तदुक्तं

६ श्रीधरीव्याख्या ।

अनेन सूर्यादिप्रकाशाविषयत्वेन जडत्वशीतोष्णादिदोषप्रसङ्गो निरस्तः ॥ ६ ॥ ननु च त्वदीयं धाम प्राप्ताः सन्तो यदि न निवर्तन्ते तर्हि 'सति संपद्य न विदुः सति संपद्यामहे' इत्यादिश्रुतेः सुषुप्तिप्रलयसमये त्वत्प्राप्तिः सर्वेषामस्तीति को नाम संसारी स्यादित्याशङ्क्य

१ मधुसूदनः । २ नीलकण्ठः ।

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

तद्धामगतानां नास्ति निवृत्तिरिति, शृणु तत्र कारणम्—ममैवेति । ममैव परमात्मनोंऽशो भागोऽवयव एकदेश इत्यनर्थान्तरम् । जीवलोके जीवानां लोके संसारे जीवभूतो भोक्ता कर्तेति प्रसिद्धः सनातनः । यथा जलसूर्यकः । सूर्यांशो जलनिमित्तापाये सूर्यमेव गत्वा न निवर्तते तथाऽयमप्यंशस्तेनैवात्मना संगच्छत्येवमेव, यथावा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन्घटादिनिमित्तापाये आकाशं प्राप्य न निवर्तत इत्येवमत उपपन्नमुक्तं यद्गत्वा न निवर्तन्त इति । ननु

२ आनन्दगिरिव्याख्या ।

परिहरति—शृण्विति । भगवत्प्राप्तेर्निवृत्त्यन्तत्वाभावः सप्तम्यर्थः । जीवस्य परांशत्वेऽपि कथमुक्तदोषसमाधिरित्याशङ्क्य प्रतिबिम्बपक्षमादाय दृष्टान्तेन प्रत्याचष्टे—यथेति । अवच्छेदपक्षमाश्रित्य दृष्टान्तान्तरेणोक्तदोषसमाधिं दर्शयति—यथा वेति । आक्षेपसमाधिमुपसंहरति—अत इति । परस्य निरवयवत्वात्तदंशत्वं जीवस्यायुक्तमिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यावभासने ज्योतिरन्तरमपेक्षते दीपादिष्वदर्शनादित्याशङ्क्याह त्रिभिः—ममैवेति । यद्यस्मादीश्वरो जगत्स्रष्टा शरीरं अवाप्नोति 'स एष इह प्रविष्ट आनखाग्रेभ्यः', 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यादिश्रुतिभ्य ईश्वरएव शरीरधारी तथा यद्यस्माद्धेतोः । अपिशब्दोऽवधारणार्थे । चः समुच्चयार्थे । 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रति-

४ मधुसूदनीव्याख्या ।

प्रतिबिम्बितसूर्यस्य जलापाये बिम्बभूतसूर्यगमनं ततो नावृत्तिश्च । यदि च बुद्ध्यवच्छिन्नो ब्रह्मभागो जीवस्तदा यथा घटाकाशस्य घटापाये महाकाशं प्रति गमनं ततो नावृत्तिश्च तथा जीवस्याप्युपाध्यपाये निरुपाधिस्वरूपगमनं ततोऽनावृत्तिश्चेत्युपचारादुच्यते । एकस्वरूपत्वाद्भेदभ्रमस्य चोपाधिनिवृत्त्या निवृत्तेः । सुषुप्तौ त्वज्ञाने स्वकारणे भावनाकर्मपूर्वप्रज्ञासहितस्यान्तःकरणस्य जीवोपाधेः सूक्ष्मरूपेणावस्थानात्तत एवाज्ञानात्पुनरुद्भवः संभवति । ज्ञानादज्ञाननिवृत्तौ तु कारणाभावात्कुतः कार्योदयः स्यादज्ञानप्रभवत्वादन्तःकरणाद्युपाधीनाम् । तस्माज्जीवस्याहं ब्रह्मास्मीति वेदान्तवाक्यजन्यसाक्षात्कारादहं न ब्रह्मेत्यज्ञाननिवृत्तिर्गत्वेत्युच्यते । निवृत्तस्य चानाद्यज्ञानस्य पुनरुत्थानाभावेन तत्कार्यसंसाराभावो न निवर्तन्त इत्युच्यत इति न कोऽपि विरोधः । जीवस्य तु पारमार्थिकं स्वरूपं ब्रह्मैवेत्यसकृदावेदितम् । तदेतत्सर्वं प्रतिपाद्यत उत्तरेण ग्रन्थेन । तत्र जीवस्य ब्रह्मरूपत्वादज्ञाननिवृत्त्या तत्स्वरूपं प्राप्तस्य ततो न प्रच्युतिरिति प्रतिपाद्यते ममैवांश इति श्लोकार्धेन । सुषुप्तौ तु सर्वकार्यसंस्कारसहिताज्ञानसत्त्वात्ततः पुनः संसारो जीवस्येति मनःषष्ठानीति श्लोकार्धेन प्रतिपाद्यते । ततस्तस्य वस्तुतोऽसंसारिणोऽपि मायया संसारं प्राप्तस्य मन्दमतिभिर्देहतादात्म्यं प्रापितस्य देहाद्व्यतिरेकः प्रतिपाद्यते शरीरमित्यादिना श्लोकार्धेन । श्रोत्रं चक्षुरित्यादिना तु यथायथं स्वविषयेष्विन्द्रियाणां प्रवर्तकस्य तस्य तेभ्यो व्यतिरेकः प्रतिपाद्यते । एवं देहेन्द्रियादिविलक्षणमुत्क्रान्त्यादिसमये स्वात्मरूपत्वात्किमिति सर्वे न पश्यन्तीत्याशङ्कायां विषयविक्षिप्तचित्तादर्शनयोग्यमपि तं न पश्यन्तीत्युत्तरमुच्यत उत्क्रामन्तमित्यादिना श्लोकेन । तं ज्ञानचक्षुषः पश्यन्तीति विवृतं यतन्तो योगिन इति श्लोकार्धेन । विमूढा नानुपश्यन्तीत्येतद्विवृतं यतन्तोऽपीति श्लोकार्धेनेति पञ्चानां श्लोकानां संगतिः । इदानीमक्षराणि व्याख्यास्यामः । ममैव परमात्मनोंऽशः निरंशस्यापि मायया कल्पितः सूर्यस्येव जले, नभस इव च घटे, मृषाभेदवानंश इवांशो जीवलोके संसारे । स च प्राणधारणोपाधिना जीवभूतः कर्ता भोक्ता संसारीति मृषैव प्रसिद्धिमुपगतः सनातनो नित्यः । उपाधिपरिच्छेदेऽपि वस्तुतः परमात्मस्वरूपत्वात् ।

५ भाष्योत्कर्षदीपिका ।

'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्' इत्याशङ्क्याह—ममैवेति । जीवलोके संसारे जीवभूतो भोक्ता कर्तेति प्रसिद्धः । मम परमात्मन एवांशोऽवयवो नान्यस्य । अतएव सनातनः पुरातनः । एवंच यथा जलसूर्यकः सूर्यांशको जलनिमित्तापाये सूर्यं प्राप्य न निवर्तते, यथावा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन् घटा-

६ श्रीधरीव्याख्या ।

संसारिणं दर्शयति—ममेति पञ्चभिः । ममैवांशो योऽयमविद्यया जीवभूतः सनातनः सर्वदा संसारित्वेन प्रसिद्धः असौ सुषुप्तिप्रलययोः प्रकृतौ लीनतया स्थितानि मनः षष्ठं येषां तानीन्द्रियाणि पुनर्जीवलोके संसारे भोगार्थमाकर्षति । एतच्च कर्मेन्द्रियाणां प्राणस्य चोपलक्षणार्थम् । अयं भावः—सत्यं सुषुप्तिप्रलययोरपि मदंशत्वात्सर्वस्यापि जीवमात्रस्य मयि लयादस्त्येव मत्प्राप्तिः तथाप्य-

७ अभिनवगुप्ताचार्यव्याख्या ।

दाद्भेदकत्वात्करणप्रवर्तकत्वात्तदतीतत्वात् ॥ ६ ॥ ममैवांश इति । ब्रह्मण एवायमंश इत्यज्ञानधर्मतया परिपूर्णस्यासंवेदनाच्चेतनतानि-

१ श्रीमच्छांकरभाष्यम् ।

**निरवयवस्य परमात्मनः कुतोऽवयव एकदेशोंऽश इति । सावयवत्वे च विनाशप्रसङ्गोऽवयवविभागात् । नैष दोषोऽविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽश इव कल्पितो यतः । दर्शितश्चायमर्थः क्षेत्राध्याये विस्तरशः । स च जीवो मदंशत्वेन कल्पितः कथं संसरत्युत्क्रामतीति चेत्युच्यते, मनःषष्ठानीन्द्रियाणि श्रोत्रादीनि प्रकृतिस्थानि स्वस्थाने कर्णशष्कुल्यादौ प्रकृतौ स्थितानि कर्षत्या-**

२ आनन्दगिरिव्याख्या ।

शङ्कते—**नन्विति** । तस्य निरवयवत्वं साधयति—**सावयवत्वे चेति** । वस्तुतो निरंशस्यापि परस्य कल्पनया जीवोंऽशो भविष्यतीति परिहरति—**नैष दोष इति** । वस्तुतस्तु जीवस्य नांशत्वं परमात्मना तावन्मात्रताया दर्शितत्वादित्याह—**दर्शितश्चेति** । यदि परस्यांशत्वेन कल्पितो जीवो वस्तुतस्तदात्मैव न तर्हि तस्य संसारित्वमुत्क्रान्तिर्वेति शङ्कते—**कथमिति** । जीवस्य संसरणमुत्क्रमणं चोपपादयितुमुपक्रमते—**उच्यत इति** ॥ ७ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत' इति श्रुतेः । प्राणधारणेनोपाधिना ईश्वरएव च उत्क्रामति । ततो हेतुद्वयाजीवलोके संसारे यो जीवभूतः प्राणी स सनातनः सर्वदैकरूपोऽहमेवेति वक्तव्ये 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे एत आत्मानो व्युचरन्ति' इति वह्निविस्फुलिङ्गन्यायेन स ममैवांश इत्यंशांशिभावोक्तिः । यद्यपि वह्नौ भेदः परिमाणं च स्वगतं न दृश्यते तथापि तूपाधिगतमेव तदुभयं तत्राप्युपचर्यते अयमग्निरस्मादग्नेर्भिन्नः अयमस्य स्फुलिङ्गः अयमस्मादल्प इति । 'एवमस्थूलमनण्वह्रस्वमदीर्घम्' इति श्रुतेश्चतुर्विधपरिमाणशून्ये ब्रह्मणि ममैवांश इत्यंशांशिभावेन भेदोल्पत्वमहत्त्वे चोपचारादौपाधिके ध्येये । तथाच श्रुतिः 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्टः' इति 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः' इति च । तथाच विस्फुलिङ्गो वह्निरेव नतु वन्ह्यंशः, एवं जीवोऽपि ब्रह्मैव नतु ब्रह्मांशः 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत' इति दाशादिष्वपि पिण्डेषु गोत्वस्येव कात्स्र्न्येन एकैकस्मिन् ब्रह्मभावपरिसमाप्तिदर्शनात् । निरंशेंऽशांशिकल्पनाया अयोग्यत्वाच्च स एवं जीवभूत ईश्वरो ममैवांश इवांशो रूपभेदो मनः षष्ठं येषु तानि मनसा सह षडिन्द्रियाणि प्रकृतिस्थानि इन्द्रियाणां प्रकृतिः स्वभावो विषयप्रावण्यं तत्र स्थितानि । कर्षति सुप्तिप्रलयसमकालेषु संको-

४ मधुसूदनीव्याख्या ।

अतो ज्ञानादज्ञाननिवृत्त्या स्वस्वरूपं ब्रह्म प्राप्य ततो न निवर्तन्त इति युक्तम् । एवंभूतोऽपि सुषुप्तात्कथमावर्तत इत्याह—**मनः** षष्ठं येषां तानि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्चेन्द्रियाणि इन्द्रस्यात्मनो विषयोपलब्धिकरणतया लिङ्गानि जाग्रत्स्वप्नभोगजनककर्मक्षये प्रकृतिस्थानि प्रकृतावज्ञाने सूक्ष्मरूपेण स्थितानि पुनर्जाग्रद्भोगजनककर्मोदये भोगार्थं कर्षति कूर्मोऽङ्गानीव प्रकृतेरज्ञानादाकर्षति विषयग्रहणयोग्यतयाविर्भावयतीत्यर्थः । अतो ज्ञानादनावृत्तावप्यज्ञानादा-

५ भाष्योत्कर्षदीपिका ।

दिनिमित्तापाये आकाशं प्राप्य नावर्तते तद्वज्जीवोऽपि मदंशः मां गत्वा पुनरावृत्तिशून्य एवेत्यतो युक्तमेव यद्गत्वा न निवर्तन्त इति । तथाचाविद्याकृतोपाधिपरिच्छिन्न एकदेशोंश इव कल्पितस्तत्त्वज्ञानेनाविद्यापगम उपाधेर्निमित्तभूतस्यापगमात् स्वस्वरूपेणावतिष्ठते नतु निरवयवस्य मुख्योऽवयवः संभवति सावयवत्वे च विनाशप्रसङ्गोऽनिष्टः स्यात् । यदि परस्यांशत्वेन कल्पितो जीवो वस्तुतः परमात्मैव तर्हि कथं संसरत्युत्क्रामति वेत्यपेक्षायामाह—**मन इति** । मनःषष्ठानि श्रोत्रादीनीन्द्रियाणि प्रकृतिस्थानि स्वस्वप्रकृतौ कर्णशष्कुल्यादौ स्थाने स्थितानि कर्षति आकर्षति यदा पूर्वशरीराच्छरीरान्तरं प्राप्नोतीत्युत्तरेण संबन्धः । यत्त्वेवंभूतोऽपि सुषुप्तात्कथमावर्तत इत्यत आह । मनः षष्ठं येषां तानि श्रोत्रादीनि पञ्चेन्द्रियाणि । इन्द्रस्यात्मनो विषयोपलब्धिकरणतया लिङ्गानि जाग्रत्स्वप्नभोगजनककर्मक्षये प्रकृतिस्थानि प्रकृतावज्ञाने सूक्ष्मरूपेण स्थितानि पुनर्जाग्रद्भोगजनककर्मोदये भोगार्थं कर्षति । कूर्मोऽङ्गानीव प्रकृतेरज्ञानादाकर्षति । विषयग्रहणयोग्यतयाविर्भावयतीत्यर्थः । अतो ज्ञानादनावृत्तावज्ञानादनावृत्तिर्नोपपद्येति भाव इतिव्याख्यानं तत्तु बह्वध्याहारसापेक्षमुत्तरश्लोकाननुबद्धम् । कस्मिन्काले कर्षतीत्युच्यत इति स्वग्रन्थाननुगुणं चात उपेक्ष्यमेवमन्येषामपि

६ श्रीधरीव्याख्या ।

विषयावृतस्य सानुशयस्य सप्रकृतिके मयि लयो न तु शुद्धे । तदुक्तम्—'अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्ति' इत्यादिना । अतश्च पुनः संसाराय निर्गच्छन्नविद्वान् प्रकृतौ लीनतया स्थितानि स्वोपाधिभूतानीन्द्रियाण्याकर्षति । विदुषां तु शुद्धस्वरूपप्राप्तेर्नावृत्तिरिति ॥ ७ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

वृत्तेश्चांशत्वमुपचरितं पुनर्वस्तुतोंशवत्तोपपद्यते । 'प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तः' इति श्रुतेः । एषैव चौपचारिकता यथावसरं

१ श्रीधरः मधुसूदनः.

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**
**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कर्षति ॥ ७ ॥ कस्मिन्काले—शरीरमिति । यच्चापि यदा चाप्युत्क्रामतीश्वरो देहादिसंघातस्वामी जीवस्तदा कर्षतीति श्लोकस्य द्वितीयपादोऽर्थवशात्प्राथम्येन संबध्यते । यदा च पूर्वस्माच्छरीराच्छरीरान्तरमाप्नोति तदा गृहीत्वैतानि मनःषष्ठानीन्द्रियाणि संयाति सम्यग्याति गच्छति । किमिवेत्याह । वायुः पवनो गन्धानिवाशयात्पुष्पादेः ॥ ८ ॥ कानि पुनस्तानीति—श्रोत्रमिति । श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं च घ्राणमेव च मनश्च षष्ठं प्रत्येकमिन्द्रियेण सहाधिष्ठाय देहस्थो विष-

२ आनन्दगिरिव्याख्या ।

स्वस्थाने स्थितानामिन्द्रियाणां जीवेनाकर्षणस्य कालं पृच्छति—**कस्मिन्निति** । जीवस्योत्क्रान्तिर्नैश्वरस्येत्याशङ्क्येश्वरशब्दार्थमाह—**देहादीति** । उत्क्रान्त्यनन्तरभाविनी गतिरित्येतदर्थवशादित्युक्तम् । अवशिष्टानि श्लोकाक्षराण्याचष्टे—**यदाचेति** ॥ ८ ॥ मनःषष्ठानीन्द्रियाण्येव प्रश्नद्वारा विशेषतो दर्शयति—**कानीति** ॥ ९ ॥ **शरीरमित्यादिश्लोके**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चयति ॥ ७ ॥ तथैतान्येव आशयात् स्वलयस्थानात् गृहीत्वा संयाति विषयदेशं प्रतिगच्छति प्रबोधसर्गव्युत्थानकालेषु । तत्र दृष्टान्तः । वायुर्गन्धानिवाशयात् गन्धाशयात्पुष्पात् ॥ ८ ॥ कानि तानि मनःषष्ठानि । तानि गृहीत्वा गत्वा चायं किं करोतीत्यत आह—**श्रोत्रमिति** । अधिष्ठाय व्यापारवन्ति कृत्वा विषयान् शब्दादीनुपसेवते प्रकाशयति । यथा दीपः स्वस्य वृत्तिलाभाय तैलवर्त्याद्यपेक्षमाणोऽपि स्वविषयावभासने स्वयमेव प्रभुः एवं जीवोऽपि घटाकारत्वलाभाय मनःषष्ठानीन्द्रियाणि सूर्यादींश्चापेक्षते तथापि घटावभासं स्वयमेव करोति नेतराणि इन्द्रिय-

४ मधुसूदनीव्याख्या ।

वृत्तिर्नानुपपन्नेति भावः ॥ ७ ॥ कस्मिन्काले कर्षतीत्युच्यते—यत् यदा उत्क्रामति बहिर्निर्गच्छति ईश्वरो देहेन्द्रियसंघातस्य स्वामी जीवस्तदा यतो देहादुत्क्रामति ततो मनःषष्ठानीन्द्रियाणि कर्षतीति द्वितीयपादस्य प्रथममन्वयः । उत्क्रमणोत्तरभावित्वाद्गमनस्य । न केवलं कर्षत्येव किंतु यत् यदा च पूर्वस्माच्छरीराच्छरीरान्तरमवाप्नोति तदैतानि मनःषष्ठानीन्द्रियाणि गृहीत्वा संयात्यपि सम्यक् पुनरागमनराहित्येन गच्छत्यपि शरीरे सत्येवेन्द्रियग्रहणे दृष्टान्तः । आशयात्कुसुमादेः स्थानाद्गन्धान्गन्धात्मकान्सूक्ष्मानंशान्गृहीत्वा यथा वायुर्याति तद्वत् ॥८॥ तान्येवेन्द्रियाणि दर्शयन् यदर्थं गृहीत्वा गच्छति तदाह—श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च चकारात्कर्मेन्द्रियाणि प्राणं च मनश्च षष्ठमधिष्ठायैव आश्रित्यैव विषयान् शब्दादीनयं जीव

५ भाष्योत्कर्षदीपिका ।

कुकल्पना भाष्यविरुद्धा नोपादेया ॥ ७ ॥ कस्मिन्काले कर्षतीत्यपेक्षायां स्वस्थाने स्थितानां इन्द्रियाणां जीवेनाकर्षणस्य कालमाह—**शरीरमिति** । 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेनेश्वरो देहादिसंघातस्वामी जीवो यत् यदाप्युत्क्रामति शरीराद्बहिर्निर्गच्छति तदा मनःषष्ठानीन्द्रियाणि कर्षतीति श्लोकस्य द्वितीयः पादोऽर्थवशात्प्राथम्येन संबध्यते । यदाच पूर्वस्माच्छरीराच्छरीरान्तरं प्राप्नोति तदा एतानि मनःषष्ठेन्द्रियाणि गृहीत्वा संयाति सम्यग्गच्छति । तत्र दृष्टान्तः । आशयात्पुष्पादेः स्थानाद्गन्धान्गृहीत्वा यथा वायुः पवनः संयाति तद्वत् ॥ ८ ॥ कानि पुनस्तानि किमर्थं च तानि गृहीत्वा संयातीति चेत्तत्राह । श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं घ्राणमेवच । चकारात्प्राणादिसमुच्चयः । मनः षष्ठं प्रत्येकमिन्द्रियेण सह अधिष्ठाय देहस्थोऽयं जीवो विषयान् शब्दा-

६ श्रीधरीव्याख्या ।

तान्याकृष्य किं करोतीत्यत्राह—**शरीरमिति** । यदा शरीरान्तरं कर्मवशादवाप्नोति यतश्च शरीरादुत्क्रामति ईश्वरो देहादीनां स्वामी तदा पूर्वस्माच्छरीरादेतानि गृहीत्वा तच्छरीरान्तरं सम्यग्याति । शरीरे सत्यपीन्द्रियग्रहणे दृष्टान्तः । आशयात्स्वस्थानात्कुसुमादेः सकाशात् गन्धान्गन्धवतः सूक्ष्मानंशान्गृहीत्वा यथा वायुर्गच्छति तद्वत् ॥ ८ ॥ तान्येवेन्द्रियाणि दर्शयन्यदर्थं गृहीत्वा गच्छति तदाह—**श्रोत्रमिति** । श्रोत्रादीनि बाह्येन्द्रियाणि मनश्चान्तःकरणमधिष्ठायाश्रित्य शब्दादीन्विषयानयं जीव उपभुङ्क्ते ॥ ९ ॥ ननु च

७ अभिनवगुप्ताचार्यव्याख्या ।

योजनीयेति न विप्रतिपत्तव्यम् ॥ ७ ॥ अवाप्नोति गृह्णाति । उत्क्रामति त्यजति । एतैः सह यथा वायुः सर्वगतो विश्रान्तिधाम पार्थिवं प्राप्य ततो गन्धमानीय स्थानान्तरे तत्सहित एव संक्रामति, एवं जीवः पुर्यष्टकेन सह । एवं सृष्टौ संहारे चैतैः साहित्यमस्योक्त्वा स्थितावपि स्थानासनममतादिरूपायां विषयग्रहणात्मिकायां तत्सहितस्यैवास्य व्यापार इति निश्चीयते ॥ ८ ॥ श्रोत्रमिति । मन इत्यनेनान्तःकरणमुपलक्ष्यते । अतएव शरीरस्थितियोगात्तिष्ठन्तं शरीरान्तरग्रहणायोत्क्रामन्तं विषयान्वा भुञ्जानं मूढा न पश्यन्ति अप्रबुद्धत्वात् ।

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥**
**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**

१ श्रीमच्छांकरभाष्यम् ।

**याञ्शब्दादीनुपसेवते ॥ ९ ॥ एवं देहगतं देहात्—उत्क्रामन्तं परित्यजन्तं देहं पूर्वोपात्तं स्थितं वा देहे तिष्ठन्तं भुञ्जानं वा शब्दादींश्चोपलभमानं गुणान्वितं सुखदुःखमोहाख्यैर्गुणैरन्वितमनुगतं संयुक्तमित्यर्थः । एवंभूतमप्येनमत्यन्तदर्शनगोचरप्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयानेकधा मूढा नानुपश्यन्त्यहो कष्टं वर्तत इत्यनुक्रोशति च भगवान् । ये तु पुनः प्रमाणजनितज्ञानचक्षुषस्त एनं पश्यन्ति ज्ञानचक्षुषो विविक्तदृष्टय इत्यर्थः ॥ १० ॥ केचित्तु—यतन्तः प्रयत्नं कुर्वन्तो योगिनश्च समाहित-**

२ आनन्दगिरिव्याख्या ।

देहादात्मनोऽतिरेकमुक्त्वा श्रोत्रं चक्षुरित्यादौ स्वाभिलषिते विषये यथायथं करणानां प्रवर्तकत्वात्तेभ्योऽतिरिक्तश्चात्मेत्युक्तं तर्हि तमुत्क्रान्त्यादि कुर्वन्तं स्वरूपत्वात्किमिति सर्वे न पश्यन्तीत्याशङ्क्याह—**एवमिति** । संनिहिततमत्वेन दर्शनयोग्यमपि विषयपरवशादात्मानं सर्वे न पश्यन्तीति भगवतोऽनुक्रोशं दर्शयति—**एवंभूतमिति** । तर्हि केषामात्मदर्शनं तदाह—**ये तु पुनरिति** ॥ १० ॥ ज्ञानचक्षुःशब्देन न्यायानुगृहीतं शास्त्रं ज्ञानसाधनमुक्तं तत्किमिदानीं शास्त्रमात्रेण न्यायानुगृहीतेनात्मानं पश्यन्ति नेत्याह—**केचित्त्विति** । प्रयत्नः श्रवणमननात्मकः शास्त्रादिप्रमाणैर्य-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सूर्यादीनि स्वभासत्वात्तैलवर्त्यादिवदित्याशयः ॥ ९ ॥ तमेवंभूतं मनःषष्ठानीन्द्रियाणि प्राणं चाधिष्ठाय तेषामुत्क्रमणेनोत्क्रामन्तं तेषां स्थित्या स्थितं तेषां भोगेन भुञ्जानं तेषां सत्त्वरजस्तमोगुणयुक्तत्वेन गुणान्वितं घटसूर्यमिव घटाकाशमिव वा घटगमनादिना गमनादिमन्तं स्वतस्तूत्क्रमणादिशून्यमपि विमूढास्तात्त्विकरूपं नानुपश्यन्ति ज्ञानचक्षुषस्तु पश्यन्ति । उपाधेरेवोत्क्रमणादिकं नतूपहितस्यात्मन इति जानन्त्येवेत्यर्थः ॥ १० ॥ यतन्तो यत्नशीला योगिनश्च

४ मधुसूदनीव्याख्या ।

उपसेवते भुङ्क्ते ॥ ९ ॥ एवं देहगतं दर्शनयोग्यमपि देहादुत्क्रामन्तं देहान्तरं गच्छन्तं पूर्वस्मात्स्थितं वापि तस्मिन्नेव देहे भुञ्जानं वा विषयान् शब्दादीन् गुणान्वितं सुखदुःखमोहात्मकैर्गुणैरन्वितमेवं सर्वास्ववस्थासु दर्शनयोग्यमप्येनं विमूढा दृष्टादृष्टविषयभोगवासनाकृष्टचेतस्तयात्मानात्मविवेकायोग्या नानुपश्यन्ति अहो कष्टं वर्तत इत्यज्ञाननुक्रोशति भगवान् । ये तु प्रमाणजनितज्ञानचक्षुषो विवेकिनस्त एव पश्यन्ति ॥ १० ॥ ज्ञानचक्षुष इत्येतद्विवृणोति—आत्मनि स्वबुद्धाववस्थितं प्रतिफलितमेनमात्मानं यतन्तो ध्यानादिभिः प्रयतमाना योगिन एव पश्यन्ति । चोऽवधारणे । यतमाना अप्यकृतात्मानो यज्ञादिभिर-

५ भाष्योत्कर्षदीपिका ।

दीनुपसेवते भुङ्क्ते ॥ ९ ॥ शरीरमित्यादिश्लोकेन देहाद्यतिरेकमात्मनोऽभिधाय श्रोत्रमित्यादौ श्रोत्रादिप्रवर्तकस्तेभ्यो भिन्न इति तस्य भेद उक्तस्तर्हि तमुत्क्रान्त्यादिकुर्वन्तं देहादिव्यतिरिक्तं स्वस्वरूपं किमिति सर्वे न पश्यन्ति इतिचेत्तत्राह—**उत्क्रामन्तमिति** । एवं देहादुत्क्रामन्तं पूर्वोपात्तं देहं परित्यजन्तं स्थितं देहे तिष्ठन्तं वापि भुञ्जानं शब्दादींश्चोपलभमानं वा गुणान्वितं सुखदुःखमोहसंज्ञकैर्गुणैरनुगतं संयुक्तमेवंभूतमप्येवमत्यन्तदर्शनगोचरतां प्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयानेकधा मूढा मोहिता नानुपश्यन्त्यहो कष्टं वर्तत इति अनुक्रोशति भगवान् । तर्ह्यात्मानं के कथं पश्यन्तीति तत्राह । ज्ञानं न्यायानुगृहीतशास्त्रजन्यमात्मदर्शनसाधनं चक्षुर्येषां ते प्रमाणजनितज्ञानचक्षुषो विविक्तदृष्ट्या एनं सर्वविलक्षणं सर्वाधिष्ठानं सर्वसत्तास्फूर्तिप्रदं पश्यन्ति साक्षात्कुर्वन्ति ॥ १० ॥ न्यायानुगृहीतशास्त्रेऽनिशं श्रवणादिना यत्नं कुर्वतामपि केचित्पश्यन्ति केचिन्नेति तत्र को हेतुरित्यपेक्षायामाह । यतन्तः क्वचिद्यत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमात्मानमात्मनि स्वस्यां बुद्धाववस्थितं पश्यन्त्ययमहमस्मीत्युपलभन्ते ।

६ श्रीधरीव्याख्या ।

कार्यकारणसंघातव्यतिरेकेणैवंभूतमात्मानं सर्वेऽपि किं न पश्यन्ति तत्राह—**उत्क्रामन्तमिति** । उत्क्रामन्तं देहाद्देहान्तरं गच्छन्तम् । तस्मिन्नेव देहे स्थितं वा विषयान्भुञ्जानं वा गुणान्वितमिन्द्रियादियुक्तं जीवं विमूढा नानुपश्यन्ति नालोकयन्ति । ज्ञानमेव चक्षुर्येषां ते विवेकिनः पश्यन्ति ॥ १० ॥ दुर्ज्ञेयश्चायं यतो विवेकिष्वपि केचिदेव पश्यन्ति केचिन्न पश्यन्तीत्याह—**यतन्त इति** । यतन्तः

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रबुद्धास्तु सर्वत्रैव बोधरूपमनुसंदधाना जानन्त्येवेत्यलुप्तसमाधयस्तेषां यत्नपरत्वात् । अकृतात्मनां तु यत्नोऽपि न फलाय अपरिपक्वकषायत्वात् । नहि शरदि सलिलादिसामग्रीसंमर्देऽपि धान्यबीजान्युप्यमानानि फलसंपदेऽलम् । अतएव सामग्र्येव सास्य न भवति । अन्यदेव किल मधुमाससंभृतजलधरपटलीप्रेरितमम्भः काचिदेव च सा भूर्यस्यां शिशिर( वश )विवशीकृतायां रविकरस्पर्शेनैव कान्तिः एवमकृतात्मनां यत्नो न सकलाङ्गपरिपूर्णः कर्तुमायाति । अतएव प्राप्याप्युपायं पारमेश्वरदीक्षादि ये तथाविधक्रोधमोहादिग्रन्थिसं-

**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥**
**यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम्।

चित्ता एनं प्रकृतमात्मानं पश्यन्त्ययमहमस्मीत्युपलभन्त आत्मनि स्वस्यां बुद्धाववस्थितं यतन्तोऽपि शास्त्रादिप्रमाणैरकृतात्मानोऽसंस्कृतात्मानस्तपसेन्द्रियजयेन च दुश्चरितादनुपरता अशान्तदर्पात्मानः प्रयत्नं कुर्वन्तोऽपि नैनं पश्यन्त्यचेतसोऽविवेकिनः ॥ ११ ॥ यत्पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते, यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्यांशास्तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह भगवान्—यदिति। यदादित्यगतमादित्याश्रयं। किं तत् तेजो दीप्तिः प्रकाशो जगद्भासयते प्रकाशयत्यखिलं समस्तं यच्चन्द्रमसि शशभृति तत्तेजो-

२ आनन्दगिरिव्याख्या।

तन्तोऽपीति संबन्धः। असंस्कृतात्मत्वं प्रकटयति—**तपसेति**। दुश्चरितादविरतिफलं कथयति—**अशान्तेति**। अशुद्धबुद्धीनामविवेकिनां सदपि श्रवणादि न फलवदिति मत्वाह—**प्रयत्नमिति** ॥ ११ ॥ अनन्तरश्लोकचतुष्टयस्य वृत्तानुवादद्वारा तात्पर्यार्थमाह—**यत्पदमिति**। जीवात्मत्वेन चिद्रूपत्वमुक्त्वा तदीयचैतन्येनादित्यादीनामवभासकत्वाच्च ब्रह्मणश्चिद्रूपत्वमित्याह—**यदादित्येति**। चिद्रूपस्यैव ब्रह्मणः सर्वात्मकत्वप्रतिपादकत्वेन श्लोकं व्याचष्टे—**यदित्यादिना**। आदित्यादौ तत्र तत्र स्थितं ब्रह्मचैतन्यज्योतिः सर्वावभासकमित्यर्थः। ब्रह्मणः सर्वज्ञत्वेन चिद्रूपत्व-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

एनं आत्मनि बुद्धाववस्थितं विभुमुत्क्रान्त्यादिहीनमसङ्गं पश्यन्ति। यतन्तोऽपि अकृतात्मानः ये यज्ञादिभिरशोधितचित्ताः एनं न पश्यन्ति। यतः अचेतसोऽनिर्जितचित्ताः। पाषाणतुल्या इत्यर्थः ॥ ११ ॥ कथं तर्हि सूर्यादीनामपि भासकत्वं लोके दृश्यते तदपि मदावेशादेवेत्याह—**यदादित्येति**। अत्राप्यादित्यादिपदैः करणाधिष्ठात्र्यो देवतास्तदधिष्ठेयानि करणानि च तन्त्रेणैव गृह्यन्ते। यदादित्यादिषु बाह्यकरणाधिष्ठातृषु तत्तदधिष्ठेयेषु बाह्यकरणेषु च गतं विद्यमानं तेजो

४ मधुसूदनीव्याख्या।

शोधितान्तःकरणा अतएवाचेतसो विवेकशून्या नैनं पश्यन्तीति मूढा नानुपश्यन्तीत्येतद्विवरणम् ॥ ११ ॥ इदानीं यत्पदं सर्वावभासनक्षमा अप्यादित्यादयो भासयितुं न क्षमन्ते यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराय नावर्तन्ते यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्य कल्पितांशा मृषैव संसारमनुभवन्ति तस्य पदस्य सर्वात्मत्वसर्वव्यवहारास्पदत्वप्रदर्शनेन ब्रह्मणो हि प्रतिष्ठाहमिति प्रागुक्तं विवरीतुं चतुर्भिः श्लोकैरात्मनो विभूतिसंक्षेपमाह भगवान्—'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' इति श्रुत्यर्थं प्राग्व्याख्यातं न तद्भासयते सूर्य इत्यादिना 'तमेव भान्तमनु

५ भाष्योत्कर्षदीपिका।

यतन्तोऽपि शास्त्रादिप्रमाणैर्यत्नं कुर्वन्तोऽप्यकृतात्मानस्तपसेन्द्रियजयेन च दुश्चरितादनुपरता अशुद्धान्तःकरणा अचेतसोऽविवेकिन एनमात्मानमुक्तविशेषणं न पश्यन्ति यत्नसाम्येप्यात्मदर्शने तददर्शने च चित्तशुद्धेस्तदशुद्धेश्च हेतुत्वमिति भावः ॥ ११ ॥ यत्पदं सर्वावभासकमादित्यादिकं ज्योतिर्नावभासयते, यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते, यस्य च पदस्यानुविधीयमाना जीवा घटाकाशादयो यथाकाशस्यांशास्तथांश इवांशा बुद्ध्यादितादात्म्याध्यासेन मृषैवोत्क्रान्त्यादिकं प्राप्नुवन्तीति न तद्भासयते सूर्य इत्यादिनोक्तमिदानीं तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह—**यदिति**। यदादित्यगतं सूर्याश्रयं तेजो दीप्तिः प्रकाशः अखिलं सर्वं जगद्भासयते प्रकाशयति यत्समस्तावभासकं चन्द्रमसि तेजो वर्तते यच्चाग्नौ तत्तेजो

६ श्रीधरीव्याख्या।

ध्यानादिभिः प्रयतमाना योगिनः केचिदेनमात्मानं आत्मनि देहेऽवस्थितं विविक्तं पश्यन्ति। शास्त्राभ्यासादिभिः प्रयत्नं कुर्वाणा अपि अकृतात्मानोऽविशुद्धचित्ताः अतएवाचेतसो मन्दमतय एनं न पश्यन्ति ॥ ११ ॥ तदेवं 'न तद्भासयते सूर्यः' इत्यादिना पारमेश्वरं परं धामोक्तं, तत्प्राप्तानां चापुनरावृत्तिरुक्ता, तत्र च संसारिणोऽभावमाशङ्क्य संसारिस्वरूपं देहादिव्यतिरिक्तं दर्शितम्, इदानीं तदेव पारमेश्वरं रूपमनन्तशक्तित्वेन निरूपयति—**यदेत्यादिचतुर्भिः**। आदित्यादिषु स्थितं यदनेकप्रकारं तेजो विश्वं प्रकाशयति तत्सर्वं

७ अभिनवगुप्ताचार्यव्याख्या।

दर्भगर्भीकृतान्तर्देशस्तेपूपाय एव साकल्यं न भजतीति मन्तव्यम्। तदुक्तम् 'क्रोधादौ दृश्यमाने हि दीक्षितोऽपि न मुक्तिभाक्' इति ॥ ९ ॥ १० ॥ ११ ॥ यदादित्येति। अर्कादितेजस्त्रयरूपतया दशमाध्यायसूचितसृष्टिस्थितिसंहारप्रकटीकरणे श्रीगुरवस्त्वाहुः। भूतपञ्च-

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

ऽवभासकं वर्त्तते यच्चाग्नौ हुतवहे तत्तेजो विद्धि विजानीहि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । अथवा यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकं मदीयं मम विष्णोस्तज्ज्योतिः । ननु स्थावरेषु जङ्गमेषु च तत्समानं चैतन्यात्मकं ज्योतिस्तत्र कथमिदं विशेषणं यदादित्यगतमित्यादि । नैष दोषः सत्त्वाधिक्यादाधिक्योपपत्तेः । आदित्यादिषु हि सत्त्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाविस्तरं ज्योतिरिति तद्विशिष्यते, नतु तत्रैव तदधिकमिति । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवत्यादर्शादौ तु स्वच्छे स्वच्छतरे च तारतम्येनाविर्भवति तद्वत् ॥ १२ ॥ किंच—गामिति । गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यां प्रविष्टं येन गुर्वी

२ आनन्दगिरिव्याख्या ।

मत्र विवक्षितमिति व्याख्यान्तरमाह—**अथवेति** । चैतन्यज्योतिषः सर्वत्राविशेषादादित्यादिगतत्वविशेषणमयुक्तमिति शङ्कते—**नन्विति** । सर्वत्र सत्त्वेऽपि क्वचिदेवाभिव्यक्तिविशेषाद्विशेषणमिति परिहरति—**नैष दोष इति** । तदेव प्रपञ्चयति—**आदित्यादिष्विति** । सर्वत्र चैतन्यज्योतिषस्तुल्यत्वेऽपि क्वचिदेवाभिव्यक्त्या विशेषणोपपत्तिं दृष्टान्तेन स्पष्टयति—**यथाहीति** ॥ १२ ॥ इतश्च सर्वात्मत्वं प्रकृतपदस्य युक्तमित्याह—**किंचेति** । ईश्वरो हि पृथिवीदेवतारूपेण पृथिवीं प्रविश्य भूतशब्दितं जगदैश्वरेणैव बलेन बिभर्ति । ततो गुर्व्यपि पृथिवी विदीर्य नाधो निपततीत्यत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विषयप्रकाशनसामर्थ्यं सर्वं जगद्भासयते तत्तेजो मामकं मदीयं विद्धि । 'येन सूर्यस्तपति तेजसेद्धः', 'येन चक्षूंषि पश्यन्ति' इत्यादिश्रुतिभ्यः । एवं मनश्चन्द्रमसोर्यदान्तरप्रपञ्चप्रकाशनसामर्थ्यं तदपि मामकमेव तथा यद्वाग्ग्न्योरव्याकृतादिविषयप्रकाशनसामर्थ्यं तदपि मामकमेवेत्यर्थः । अक्षरयोजना स्पष्टा ॥१२॥ न केवलमादित्यादिगतप्रकाशनसामर्थ्यं मामकमपि तु पृथिव्यादिगतं भूतधारणव्यापनसामर्थ्यमपि मदीयमेवेत्याह—**गामिति** । गां पृथिवीमाविश्य तां पृथिवीं दृढां कृत्वा भूतान्यहमेव धारयामि ओजसा बलेन । अन्यथा पृथिवी सिकतामुष्टिवद्विशीर्येत । तथाच मन्त्रवर्णः 'येन

४ मधुसूदनीव्याख्या ।

भाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुत्यर्थमनेन व्याख्यायते । यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि यच्चाग्नौ स्थितं तेजो जगदखिलमवभासयते तत्तेजो मामकं मदीयं विद्धि । यद्यपि स्थावरजङ्गमेषु समानं चैतन्यात्मकं ज्योतिस्तथापि सत्त्वोत्कर्षेणादित्यादीनामुत्कर्षात्तत्रैवाविस्तरां चैतन्यज्योतिरिति तैर्विशेष्यते यदादित्यगतमित्यादि । यथा तुल्येऽपि मुखसंनिधाने काष्ठकुड्यादौ न मुखमाविर्भवति आदर्शादौ स्वच्छे स्वच्छतरे च तारतम्येनाविर्भवति तद्वद्यदादित्यगतं तेज इत्युक्त्वा पुनस्तत्तेजो विद्धि मामकमिति तेजोग्रहणात् यदादित्यादिगतं तेजः प्रकाशः परप्रकाशसमर्थं सितभास्वररूपं जगदखिलं रूपवद्वस्त्ववभासयते एवं यच्चन्द्रमसि यच्चाग्नौ जगदवभासकं तेजस्तन्मामकं विद्धीति विभूतिकथनाय द्वितीयोऽप्यर्थो द्रष्टव्यः अन्यथा तन्मामकं विद्धीत्येतावद्ब्रूयात्तेजोग्रहणमन्तरेणैवेति भावः ॥ १२ ॥ किंच गां पृथिवीं पृथिवीदेवतारूपेणाविश्य ओजसा निजेन बलेन पृथिवीं धूलिमुष्टितुल्यां दृढीकृत्य भूतानि पृथिव्याधेयानि वस्तून्यहमेव धारयामि । अन्यथा पृथिवी सिकतामुष्टि-

५ भाष्योत्कर्षदीपिका ।

मामकं मदीयं विद्धि जानीहि । यद्वा ब्रह्मणः सर्वज्ञत्वेन चिद्रूपत्वमत्र विवक्षितम् । तथाचायमर्थः । यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिः यच्चन्द्रमसि यच्चाग्नौ वर्तते तत्तेजो मामकं विद्धि । ननु चैतन्यज्योतिषः सर्वत्राविशेषात्कथमिदं विशेषणं यदादित्यगतमित्यादि । नैष दोषः । चैतन्यज्योतिषः सर्वत्र तुल्यत्वेऽपि क्वचिदेव सत्त्वाधिक्यप्रयुक्ताभिव्यक्त्या विशेषणोपपत्तेः । यथाहि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति आदर्शादौ तु स्वच्छे स्वच्छतरे स्वच्छतमे च तारतम्येनाविर्भवतीति तद्वत् ॥ १२ ॥ किंच यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यामाविष्टं येन गुर्वी पृथ्वी नाधः पतति नापि सिकतामुष्टिवज्जलोपरिस्थितापि विशीर्यते । तथाच मन्त्रवर्णः 'येन द्यौरुग्रा पृथिवी च दृढा' इति, 'स दाधार पृथिवीं' इति च, तेनौजसा

६ श्रीधरीव्याख्या ।

तेजो मदीयमेव जानीहि ॥ १२ ॥ किंच—**गामाविश्येति** । गां पृथ्वीमोजसा बलेनाधिष्ठाय अहमेव चराचराणि भूतानि धारयामि,

७ अभिनवगुप्ताचार्यव्याख्या ।

कस्य समस्तव्यस्ततया यल्लोकधारकत्वं तद्भगवत एव माहेश्वर्यमित्येतदनेन । तथाहि रवितेजसः प्रकाशकत्वं धारकत्वं च तेजोधाराद्वयतादात्म्यात् । तदेतदुक्तं यदादित्यगतमिति ॥ १२ ॥ गामाविश्येति चार्धद्वयेन । चान्द्रं तेजः प्रकाशकं पोषकं च धरा जलतेजोयोगात् । तदुक्तं

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

पृथिवी नाधः पतति न विदीर्यते च । तथाच मन्त्रवर्णः 'येन द्यौरुग्रा पृथिवी च दृढा' इति 'स दाधार पृथिवीम्' इत्यादिश्च । अतो गामाविश्य च भूतानि चराचराणि धारयामीति युक्तमुक्तम् । किंच पृथिव्यां जाता ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमती रसस्वादुमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सर्वरसात्मको रसस्वभावः सर्वरसानामाकरः सोमः । स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति ॥ १३ ॥ किंच—अहमिति । अहमेव वैश्वानर उदरस्थोऽग्निर्भूत्वा 'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते' इत्यादिश्रुतेर्वैश्वानरः सन्प्राणिनां प्राणवतां देहमाश्रितः प्रविष्टः प्राणापानसमायुक्तः प्राणापानाभ्यां समायुक्तः संयुक्तः पचामि पक्तिं करोमि

२ आनन्दगिरिव्याख्या ।

प्रमाणमाह—तथाचेति । परस्यैव हिरण्यगर्भात्मनावस्थानान्न मन्त्रयोरन्यपरतेति भावः । देवतात्मना द्यावापृथिव्योरुग्रत्वमुद्धरणसामर्थ्यं तथापीश्वरायत्तमेव स्वरूपधारणं तदपेक्षया दुर्बलत्वादिति द्रष्टव्यम् । ईश्वरस्य सर्वात्मत्वे हेत्वन्तरमाह—किंचेति । रसात्मकसोमरूपतापत्तावपि कथमोषधीरीश्वरः सर्वाः पुष्णातीत्याशङ्क्याह—सर्वेति ॥ १३ ॥ भगवतः सर्वात्मत्वे हेत्वन्तरमाह—किंचेति । अहमेवेत्यहंशब्देन परो लक्ष्यते, भूत्वा पचामीति संबन्धः । परस्यैव जाठरात्मना स्थितौ श्रुतिं प्रमाणयति—अयमिति । बाह्यं भौममग्निं व्यावर्तयति—योऽयमिति । देहान्तरारम्भकं तृतीयं भूतं व्यवच्छिनत्ति—येनेति । जाठरात्मना परः स्थितश्चेत्तस्य देहाश्रितत्वं सिद्धमिति न पृथग्वक्तव्यमित्याशङ्क्य 'पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति श्रुतिमाश्रित्याह—प्रविष्ट इति । परस्य

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

द्यौरुग्रा पृथिवी च दृढा' इति । 'स दाधार पृथिवीं' इति । च तथाहमेव सोमो रसात्मको जलात्मकः 'रसो जलं रसो हर्षः' इत्यनेकार्थमञ्जरी । जलमयो भूत्वा सर्वा ओषधीः पुष्णामि च रसवतीः पुष्टाश्च करोमि । सोमो हि स्वात्मरसानुप्रवेशेन सर्वा ओषधीः पुष्णातीति प्रसिद्धम् ॥ १३ ॥ अहं वैश्वानरसंज्ञ उदरस्थोऽग्निर्भूत्वा प्राणिनां सर्वेषां देहमाश्रितः सन् प्राणापानाभ्यां वायुभ्यां समायुक्तः समुद्दीपितश्चतुर्विधमन्नमदनीयं भक्ष्यं दन्तव्यापारापेक्षमपूपादि ।

४ मधुसूदनीव्याख्या ।

वह्निशीर्येताधो निमज्जेद्वा । 'येन द्यौरुग्रा पृथिवी च दृढा' इति मन्त्रवर्णात् 'स दाधार पृथिवीं' इति च हिरण्यगर्भभावापन्नं भगवन्तमेवाह । किंच रसात्मकः सर्वरसस्वभावः सोमो भूत्वा ओषधीः सर्वा व्रीहियवाद्याः पृथिव्यां जाता अहमेव पुष्णामि पुष्टिमतीः स्वादुमतीश्च करोमि ॥ १३ ॥ किंचाहमीश्वर एव वैश्वानरो जाठराग्निर्भूत्वा 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते' इत्यादिश्रुतिप्रतिपादितः सन् प्राणिनां सर्वेषां देहमाश्रितोऽन्तःप्रविष्टः प्राणापानाभ्यां तदुद्दीपकाभ्यां संयुक्तः संधुक्षितः सन् पचामि पक्तिं नयामि । प्राणिभिर्भुक्तमन्नं चतुर्विधं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति । तत्र यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यतेऽपूपादि तद्भक्ष्यं चर्व्यमिति चोच्यते । यत्तु केवलं जिह्वया विलोड्य निगीर्यते सूपौदनादि तद्भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादेन निगीर्यते किंच द्रवीभूतगुडरसालशिखरिण्यादि तल्लेह्यम् । यत्तु दन्तैर्निष्पीड्य रसांशं

५ भाष्योत्कर्षदीपिका ।

बलेन गां पृथिवीमाविश्य प्रविश्य भूतानि चराचराणि धारयामि । किंच रसात्मकः सर्वरसस्वभावः सोमो भूत्वा स्वात्मरसावेशेन पृथिव्या जाता ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमती रसस्वादवतीश्च करोमि ॥ १३ ॥ किंचाहं परमात्मा वैश्वानर उदरस्थोऽग्निर्भूत्वा प्राणिनां प्राणवतां देहमाश्रितः शरीरं प्रविष्टः प्राणापानाभ्यामुद्दीपकाभ्यां समायुक्तः भोज्यं भक्ष्यं चोष्यं लेह्यं चेति चतुर्विधमन्नं पचामि पक्तिं करोमि । तत्र यत्पायसादि केवलं जिह्वया विलोड्य निगीर्यते तद्भोज्यम् । यत्त्वपूपादि दन्तैरवखण्ड्यावखण्ड्य भक्ष्यते तद्भक्ष्यम् । यत्त्विक्षुदण्डादि दंष्ट्राभिर्निपीड्य सारांशं निगीर्यावशिष्टं त्यज्यते तच्चोष्यम् । यद्द्रवीभूतं गुडादि जिह्वायां निक्षिप्य रसास्वादितं निगीर्यते तल्लेह्यम् । तथाच श्रुतिः 'अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते' इत्याद्या ।

६ श्रीधरीव्याख्या ।

अहमेव रसमयः सोमो भूत्वा व्रीह्याद्यौषधीः सर्वाः संवर्धयामि ॥ १३ ॥ किंच—अहमिति । वैश्वानरो जाठरो भूत्वा प्राणिनां देहस्यान्तः प्रविश्य प्राणापानाभ्यां तदुद्दीपकाभ्यां सहितः प्राणिभिर्भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि । तत्र यद्दन्तैरवखण्ड्या-

७ अभिनवगुप्ताचार्यव्याख्या ।

यच्चन्द्रमसीत्यनेन भागेन पुष्णामीति चार्धश्लोकेन । वाहं तु तेजः प्रकाशनपोषणदहनस्वेदनपचनात्मकं पृथिव्यप्तेजोवायुयोगात्तद्देहोक्तं

**सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**चतुर्विधं चतुष्प्रकारमन्नमशनं भोज्यं भक्ष्यं चोष्यं लेह्यं च भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवति ॥ १४ ॥ किंच—सर्वेति । सर्वस्य प्राणिजातस्याहमात्मा सन्हृदि बुद्धौ संनिविष्टोऽतो मत्त आत्मनः सर्वप्राणिनां स्मृतिर्ज्ञानं तदपोहनं च । येषां पुण्यकर्मिणां च पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतस्तथा पापकर्मिणां पापकर्मानु-**

२ आनन्दगिरिव्याख्या ।

जाठरात्मनोऽन्नपाके सहकारिकारणमाह—**प्राणेति** । संयुक्तत्वं संधुक्षितत्वम् । अन्नस्य चातुर्विध्यं प्रकटयति—**भोज्यमिति** । भोक्तरि वैश्वानरदृष्टिर्भोज्ये सोमदृष्टिरेवं भोक्तृभोज्यरूपं सर्वं जगदग्नीषोमात्मना भुक्तिकाले ध्यायतो भोक्तुरन्नकृतो दोषो नेति प्रासङ्गिकं सफलं ध्यानं दर्शयति—**भोक्तेति** ॥ १४ ॥ इतश्च सर्वात्मत्वेन सर्वव्यवहारास्पदत्वमीश्वरस्येत्याह—**किंचेति** । प्राणिजातं ब्रह्मादिपुत्तिकान्तम् । आत्मतया बुद्धौ संनिविष्टत्वं तद्गुणदोषाणामशेषेण द्रष्टृत्वम् । अतो बुद्धिमध्यस्थस्य गुणदोषद्रष्टृत्वादिति यावत् । मत्तः सर्वकर्माध्यक्षाज्जगद्यन्त्रसूत्रधारादित्यर्थः । प्राणिनां स्मृतिज्ञानयोस्तदुपायस्य च भगवदधीनत्वे भगवतो वैषम्यं स्यादित्याशङ्क्याह—**येषामिति** । स्मृतिर्जन्मान्तरादावनुभूतस्य परामर्शः । देशकालस्वभावविप्रकृष्टस्यापि ज्ञानमनुभवः । धर्माधर्माभ्यां विचित्रं कुर्वतो नेश्वरस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भोज्यं तदनपेक्षं पायसादि । लेह्यं गुडशर्करादि । चोष्यं निश्चोष्य त्यज्यमानमिक्षुदण्डादि । एतेन सर्वत्र सर्वा शक्तिर्या दृश्यते सा मदीयैवेति भावः । तदेवं भोक्ता वैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतमुभयमग्नीषोमौ सर्वमिति पश्यतोऽन्नदोषलेपो न भवतीत्यपि द्रष्टव्यम् ॥ १४ ॥ किंच सर्वस्य प्राणिजातस्याहं हृदि संनिविष्ट आत्मेत्यर्थः । अतो मत्त आत्मनस्तेषां स्मृतिर्ज्ञानं च पुण्यवताम् । पापिनां तु तयोरपोहनं विस्मरणमज्ञानं च भवति । तथाच

४ मधुसूदनीव्याख्या ।

निगीर्यावशिष्टं त्यज्यते यथेक्षुदण्डादि तच्चोष्यमिति भेदः । भोक्ता यः सोऽग्निर्वैश्वानरो यद्भोज्यमन्नं स सोमस्तदेतदुभयमग्नीषोमौ सर्वमिति ध्यायतोऽन्नदोषलेपो न भवतीत्यपि द्रष्टव्यम् ॥ १४ ॥ किंच सर्वस्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ संनिविष्टः 'स एष इह प्रविष्टः' इति श्रुतेः 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति च । अतो मत्त आत्मन एव हेतोः प्राणिजातस्य यथानुरूपं स्मृतिरेतज्जन्मनि पूर्वानुभूतार्थविषया वृत्तिर्योगिनां च जन्मान्तरानुभूतार्थविषयापि । तथा मत्त एव ज्ञानं विषयेन्द्रियसंयोगजं भवति । योगिनां च देशकालविप्रकृष्टविषयमप्येवं कामक्रोधशोकादिव्याकुलचेतसामपोहनं च स्मृतिज्ञानयोरपायश्च मत्त एव भवति । एवं स्वस्य जीवरूपतामुक्त्वा ब्रह्मरूपतामाह । वेदैश्च सर्वैरिन्द्रादिदेवताप्रकाशकैरप्यहमेव वेद्यः सर्वात्मत्वात् । 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो

५ भाष्योत्कर्षदीपिका ।

भोक्ता वैश्वानरोऽग्निरग्नेर्भोज्यमन्नं सोमशब्देनोदितम् । एवं भोक्तृभोज्यरूपं सर्वं जगदग्नीषोमात्मना भुक्तिकाले ध्यायतो भोक्तुरन्नकृतो दोषो न भवतीति प्रासङ्गिकं सफलं ध्यानं द्रष्टव्यम् ॥ १४ ॥ एवं तत्पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं विवक्षुर्विभूतिवर्णनमुपसंहरन्संकोचं परित्यजति—**सर्वस्येति** । सर्वस्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्य हृदि संनिविष्टः जीवात्मनान्तर्यामितया च । बुद्धौ संनिविष्टत्वं बुद्धितादात्म्यापन्नत्वं तद्गुणदोषाणामशेषेण द्रष्टृत्वं च । 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' । 'यो विज्ञाने तिष्ठन् विज्ञानमन्तरः' इत्यादिश्रुतेरतो बुद्धौ चिदाभासरूपेण स्थितत्वात्, तन्मध्यस्थगुणदोषद्रष्टृत्वाच्च । मत्त आत्मनः सर्वप्राणिनां स्मृतिर्जन्मान्तरादावनुभूतस्य परामर्शः देशकालस्वभावविप्रकृष्टस्याप्यनुभवो ज्ञानं तदपोहनं च । यथा पुण्यकर्मिणां पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतः, तथा पापकर्मिणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनमपगमनं च । तत्सर्वं कर्माध्यक्षान्मत्त एव भवतीत्यर्थः ।

६ श्रीधरीव्याख्या ।

वखण्ड्य भक्ष्यतेऽपूपादि तद्भक्ष्यम् । यत्तु केवलं जिह्वया विलोड्य निगीर्यते पायसादि तद्भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादेन क्रमशो निगीर्यते द्रवीभूतं गुडादि तल्लेह्यम् । यत्तु दंष्ट्रादिभिर्निष्पीड्य रसांशं निगीर्यावशिष्टं त्यज्यत इक्षुदण्डादि तच्चोष्यमिति चतुर्विधभेदः ॥ १४ ॥ किंच—**सर्वस्येति** । सर्वस्य प्राणिजातस्य हृदि सम्यगन्तर्यामिरूपेण प्रविष्टोऽहम् । अतश्च मत्त एव हेतोः

७ अभिनवगुप्ताचार्यव्याख्या ।

यच्चाग्नावित्यनेन, अहं वैश्वानर इति श्लोकेन च । नभस्तु बोधावकाशरूपतया सर्वगतमेव ॥ १३ ॥ १४ ॥ अतएव बोध्यरूपत्वमुक्त्वा तद्बोध्यस्वरूपपृष्ट(?)पतितस्वातन्त्र्यबोधस्वभावमात्मानं परस्वभावं परमेश्वरस्वरूपं सर्वज्ञानस्वतन्त्रं सर्वकर्तारं दर्शयितुमाह—सर्वस्येति । सर्वस्य वेद्यस्य यदत्समस्ताहरणस्वतन्त्रबोधस्वभावं तत्राहमिति यो विमर्शस्ततएवापूर्वावभासनामयं ज्ञानं विश्वमहास्तृष्टिरूपमयं घट एवेति

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम्।

रूपेण स्मृतिज्ञानयोरपोहनं चापायनमपगमनं च। वेदैश्च सर्वैरहमेव परमात्मा वेद्यो वेदितव्यो वेदान्तकृद्वेदान्तार्थसंप्रदायकृदित्यर्थः। वेदविद्वेदार्थविदेव चाहम् ॥ १५ ॥ भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेप उक्तो विशिष्टोपाधिकृतो यदादित्यगतं तेज इत्यादिना, अथाधुना तस्यैव क्षराक्षरोपाधिप्रविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्दिधारयिषयोत्तरश्लोका आरभ्यन्ते। तत्र सर्वमेवातीतानागतानन्तराध्यायार्थजातं त्रिधा राशीकृत्याह—द्वाविमाविति। द्वाविमौ पृथग्राशीकृतौ पुरुषावित्युच्येते लोके संसारे। क्षरश्च क्षरतीति क्षरो विनाश्येको राशिरपरः पुरुषो-

२ आनन्दगिरिव्याख्या।

वैषम्यमिति भावः। वेदवेद्यं परं ब्रह्म भगवतोऽन्यदिति शङ्कां वारयति—वेदैरिति। वेदान्तानां पौरुषेयत्वं परिहरति—वेदेति। तदर्थसंप्रदायप्रवर्तकत्वार्थं तदर्थयाथातथ्यज्ञानवत्त्वमाह—वेदार्थेति ॥ १५ ॥ उत्तरश्लोकानां तात्पर्यं वक्तुं वृत्तं कीर्तयति—भगवत इति। विशिष्टोपाधिराहित्यादिः। संप्रत्यध्यायसमाप्तेरुत्तरसंदर्भस्य तात्पर्यमाह—अथेति। न केवलं निरुपाधिकात्मस्वरूपनिर्धारणायोत्तरग्रन्थः किंतु सर्वस्यैव गीताशास्त्रस्यार्थनिर्णयार्थमित्याह—तत्रेति। क्षराक्षरोपाधिभ्यां परमात्मना च राशित्रयमुक्तेन सर्वात्मत्वेनाशुद्ध्यादिदोषप्रसक्तावुक्तं—द्वाविमाविति। पुरुषोपाधित्वात्पुरुषत्वं न साक्षादिति विवक्षितत्वादाह—पुरुषाविति। परं पुरुषं व्यावर्तयति—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

सर्वैर्वेदैः कर्मोपास्तिज्ञानकाण्डात्मकैरहमेव परमात्मा वेद्यो वेदान्तकृत् वेदान्तोक्तविद्यासंप्रदायकृत् वेदविद्वेदार्थविच्चाहमेव। एतेन वेदान्तविद्वेदविच्च स्वविभूतिरित्युक्तं भवति ॥ १५ ॥ सर्वशास्त्रहृदयं संगृह्णाति—द्वाविमाविति। लोके प्रसिद्धौ इमौ द्वावेव पुरुषौ। क्षरो विनाशी सच सर्वाणि भूतानि प्राणवन्ति कर्मक्षये सुषुप्तिप्रलयकैवल्यादावुपाधिनाशमनु विनाशशीलो जीवो ब्रह्मप्रतिबिम्बभूतो जलार्कोपमः। 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्ये-

४ मधुसूदनीव्याख्या।

गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः' इति मन्त्रवर्णात्। 'एष उह्येव सर्वे देवाः' इति च श्रुतेः। वेदान्तकृत् वेदान्तार्थसंप्रदायप्रवर्तको वेदव्यासादिरूपेण। न केवलमेतावदेव वेदविदेव चाहं कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकमन्त्रब्राह्मणरूपसर्ववेदार्थविच्चाहमेव। अतः साधूक्तं ब्रह्मणो हि प्रतिष्ठाहमित्यादि ॥ १५ ॥ एवं सोपाधिकमात्मानमुक्त्वा क्षराक्षरशब्दवाच्यकार्यकारणोपाधिद्वयवियोगेन निरुपाधिकं शुद्धमात्मानं प्रतिपादयति कृपया भगवानर्जुनाय त्रिभिः श्लोकैः—द्वाविमौ पृथग्राशीकृतौ पुरुषौ पुरुषोपाधित्वेन पुरुषशब्दव्यपदेश्यौ लोके संसारे। कौ तावित्याह। क्षरश्चाक्षर एव च क्षरतीति क्षरो विनाशी कार्यराशिरेकः पुरुषः। न क्षरतीत्यक्षरो विनाशरहितः। क्षराख्यस्य पुरुषस्योत्पत्तिबीजं भगवतो

५ भाष्योत्कर्षदीपिका।

अतः कारणात्सर्वैर्वेदैः कर्मकाण्डादिलक्षणैश्चकारात्स्मृतीतिहासपुराणादिभिश्चाहमेव परमात्मा सर्वरूपो वेद्यो वेदितव्यः, अहमेव वेदान्तकृत् वेदान्तार्थसंप्रदायकृत् सर्ववेदार्थविच्चाहमेव ॥ १५ ॥ एवं यदादित्यगतं तेज इत्यादिना भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेपवर्णनेन सोपाधिकं स्वरूपमुक्त्वाथेदानीं तस्यैव परमात्मनः क्षराक्षरोपाधिविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्धारणाय सर्वमेवातीतानागताध्यायार्थजातं त्रिधा राशीकृत्याह—द्वाविति। क्षराक्षरोपाधिभ्यां परमात्मना च राशित्रयं इमौ प्रत्यक्षादिना लोकेऽनुभूयमानौ पुरुषौ द्वौ। कौ तौ पुरुषाविति तत्राह क्षरश्चाक्षर एव चेति क्षराक्षरशब्दार्थं स्वयमेवाह भगवान्। क्षरः

६ श्रीधरीव्याख्या।

प्राणिमात्रस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति। ज्ञानं च विषयेन्द्रियसंयोगजं भवति। अपोहनं च तयोः प्रमोषो भवति। वेदैश्च सर्वैस्तत्तद्देवतादिरूपेणाहमेव वेद्यः। वेदान्तकृत्तत्संप्रदायप्रवर्तकश्च ज्ञानदो गुरुरहमित्यर्थः। वेदविदेव च वेदार्थविदहमेव ॥ १५ ॥ इदानीं 'तद्धाम परमं मम' इति यदुक्तं तत्स्वकीयं सर्वोत्तमत्वं दर्शयति—द्वाविमाविति त्रिभिः। क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ

७ अभिनवगुप्ताचार्यव्याख्या।

सर्वात्मकभावखण्डनासारं विकल्पनाज्ञानात्मकमपोहनं पाशवस्वदृष्टिरूपमायामयप्रमातृचितं स्मरणं च संस्कारशेषतां नीतस्य संहृतस्य पुनरवभासनात्मकमितीयता समस्तज्ञानानि संहृतानीति सर्वज्ञतापूर्वकं स्वातन्त्र्यरूपं कर्तृत्वमुक्तम्। सर्वैरिति संभूय किल सर्वशास्त्राणां परमेशतत्त्वमेव निरूप्यं। वेदवेदान्तकर्तृत्वेन कर्मफलतत्संबन्धाद्धि(?)द्वारतयाऽशेषविश्वनिर्माणे तदुन्मूलनेन पुनः स्वरूपप्रतिष्ठापने भगवत एव स्वातन्त्र्यमिति विश्वकर्तृत्वमुक्तम्। अन्ये तु अपोहनमन्येनाकृतेनेदं भवतीति व्यतिरेकबुद्धिः वेदान्तं करोतीत्यात्मसद्भावेन एतं वेदम् ॥ १५ ॥ द्वाविमावित्यादिभारतेत्यन्तं द्वाविमौ पुरुषावितिग्रन्थेनेदमुच्यते। लोके तावदप्रबुद्धस्वभावोऽपि सर्वः पृथिव्या-

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

ऽक्षरस्तद्विपरीतो भगवतो मायाशक्तिः क्षराख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षरः पुरुष उच्यते । कौ तौ पुरुषावित्याह स्वयमेव भगवान् क्षरः सर्वाणि भूतानि समस्तं विकारजातमित्यर्थः । कूटस्थः कूटो राशिरिव स्थितः, अथवा कूटो माया वञ्चना जिह्मता कुटिलतेति पर्यायाः, अनेकमायादिप्रकारेण स्थितः कूटस्थः संसारबीजानन्त्यान्न क्षरतीत्यक्षर उच्यते ॥ १६ ॥ आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः—उत्तम उत्कृष्टतमः पुरुषस्त्वन्योऽत्यन्तविलक्षण आभ्यां परमात्मेति परमश्चासौ देहाद्यविद्या-

२ आनन्दगिरिव्याख्या ।

**भगवत इति ।** तत्र कार्यलिङ्गकमनुमानं सूचयति—**क्षराख्यस्येति ।** मायाशक्तिं विना भोक्तॄणां कर्मादिसंस्कारादेवोक्तकार्योत्पत्तिरित्याशङ्क्य तस्य निमित्तत्वेऽपि मायाशक्तिरुपादानमिति मत्वाह—**अनेकेति ।** कामकर्मादीत्यादिशब्देन ज्ञानं गृह्यते । प्रकृतिं पुरुषं चैवेति प्रकृतयोरिह ग्रहणमिति शङ्कामाकाङ्क्षाद्वारा वारयति—**कौ ताविति ।** कूटशब्दार्थमुक्त्वा तेन स्थितस्य कूटस्थतेति संपिण्डितमर्थमाह—**अनेकेति ।** तस्य कथमक्षरत्वं विना ब्रह्मज्ञानमनाशादित्याह—**संसारेति** ॥ १६ ॥ कार्यकारणाख्यौ राशी दर्शयित्वा राश्यन्तरं दर्शयति—**आभ्यामिति ।** वैलक्षण्यफलमाह—**क्षरेति ।** उपाधिद्वयकृतगुणदोषास्पर्शं फलितमाह—**नित्येति ।** आभ्यां क्षराक्षराभ्यामिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वानुविनश्यति' इति श्रुतेः । कूटस्थो निर्विकारो मायोपाधिरक्षरः । तदुपाधेरकर्मत्वेन नाशासंभवात् । उपाधिदोषेणावशीकृतत्वाच्चासौ न क्षरति स्वरूपान्न च्यवत इत्यक्षरः ॥ १६ ॥ एताभ्यां कार्यकारणोपाधिभ्यामन्यो निरुपाधिरुत्तमः पुरुषः योऽसौ परमात्मेत्युदाहृतः शास्त्रे । योऽसौ मायया ईश्वरो भूत्वा लोकत्रयमुत्तममध्यमाधमशरीररूपमाविश्य

४ मधुसूदनीव्याख्या ।

मायाशक्तिर्द्वितीयः पुरुषः । तौ पुरुषौ व्याचष्टे स्वयमेव भगवान् । क्षरः सर्वाणि भूतानि समस्तं कार्यजातमित्यर्थः । कूटस्थः कूटो यथार्थवस्त्वाच्छादनेनायथार्थवस्तुप्रकाशनं वञ्चनं मायेत्यनर्थान्तरं । तेनावरणविक्षेपशक्तिद्वयरूपेण स्थितः कूटस्थः भगवान्मायाशक्तिरूपः कारणोपाधिः संसारबीजत्वेनानन्त्यादक्षर उच्यते । केचित्तु क्षरशब्देनाचेतनवर्गमुक्त्वा कूटस्थोऽक्षर उच्यत इत्यनेन जीवमाहुस्तत्र सम्यक् क्षेत्रज्ञस्यैवेह पुरुषोत्तमत्वेन प्रतिपाद्यत्वात् तस्मात्क्षराक्षरशब्दाभ्यां कार्यकारणोपाधी उभावपि जडावेवोच्येते इत्येवमुक्तम् ॥ १६ ॥ आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभाव—उत्तम उत्कृष्टतमः पुरुषस्त्वन्यः अन्य एवात्यन्तविलक्षण आभ्यां क्षराक्षराभ्यां जडराशिभ्यामुभयभासकस्तृतीयश्चेतनराशिरित्यर्थः । परमात्मेत्युदाहृतः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेभ्यः पञ्चभ्योऽविद्या कल्पितात्मभ्यः परम-

५ भाष्योत्कर्षदीपिका ।

सर्वाणि भूतानि सर्वं विकारजातं क्षरतीति क्षरो विनाशी कूटस्थः कूटो राशिरिव स्थितः । यद्वा कूटात्मनाऽनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः । संसारबीजानन्त्यान्न क्षरतीत्यक्षरो भगवतो मायाशक्तिः क्षराख्यस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षर उच्यते। यत्त्वपरे कूटः शिलाराशिः पर्वत इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति कूटस्थश्चेतनो भोक्ता स तु अक्षरः पुरुष इत्युच्यते विवेकिभिरिति वर्णयन्ति तन्नोपादेयम् क्षेत्रज्ञस्यैवेह पुरुषोत्तमत्वेन प्रतिपाद्यत्वात् । अन्यथा क्षेत्रज्ञं चापि मां विद्धीत्यनेनोत्तमः पुरुषस्त्वन्य इत्यस्य विरोधापत्तेः ॥ १६ ॥ कार्यकारणाख्यौ राशी दर्शयित्वा ताभ्यां विलक्षणं राश्यन्तरं परमात्माख्यं दर्शयति—**उत्तम इति ।** आभ्यां क्षराक्षराभ्यां अन्यो विलक्षणः उपाधिद्वयदोषेणासंस्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः उत्तमः

६ श्रीधरीव्याख्या ।

लोके प्रसिद्धौ । तावेवाह । तत्र क्षरः पुरुषो नाम सर्वाणि भूतानि ब्रह्मादिस्थावरान्तानि शरीराणि, अविवेकिलोकस्य शरीरेष्वेव पुरुषत्वप्रसिद्धेः । कूटः शिलाराशिः पर्वत इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति कूटस्थश्चेतनो भोक्ता । स तु अक्षरः पुरुष इत्युच्यते विवेकिभिः ॥ १६ ॥ यदर्थमेतौ लक्षितौ तमाह—**उत्तम इति ।** एताभ्यां क्षराक्षराभ्यामन्यो विलक्षणस्तूत्तमः पुरुषः ।

७ अभिनवगुप्ताचार्यव्याख्या ।

दिभूतारब्धशरीरमात्मानं चेतनं क्षररूपं जानातीति लोकस्य मूढत्वाद्द्वैतधीर्न निवर्तते । अहं तु सकलानुग्राही द्वैतग्रन्थिं विभिद्य सकललोकव्यापकतया वेद्य इति क्षरमतीतो भूतानां जडत्वात्, अक्षरमतीत आत्मनोऽप्रबुद्धत्वे सर्वव्यापकत्वखण्डनात् । पुरुषोत्तमो लोके वेदेऽपि 'स उत्तमः पुरुष' इत्यादिभिर्वाक्यैः स एव परमात्माद्वय एवमुच्यते । एवं जानानः सर्वमयं मामेव ब्रह्मतत्त्वमुपासीनः सर्वं मन्मयत्वेन विदन्सर्वेण भावेन मूर्तिक्रियाज्ञानात्मकेन मामेव भजते । यत्पश्यति तद्भगवन्मूर्तितयेत्यादि । तथाच मयैव शिवशक्त्यविनाभाव-

१ श्रीधरः।

**यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कृतात्मभ्य आत्मा च सर्वभूतानां प्रत्यक्चेतनइत्यतः परमात्मेत्युदाहृत उक्तो वेदान्तेषु । स एव विशेष्यते यो लोकत्रयं भूर्भुवःस्वराख्यं स्वकीयया चैतन्यबलशक्त्याविश्य प्रविश्य बिभर्ति स्वरूपसद्भावमात्रेण विभर्ति धारयत्यव्ययो नास्य व्ययो विद्यत इत्यव्यय ईश्वरः सर्वज्ञो नारायणाख्य ईशनशीलः ॥ १७ ॥ यथाव्याख्यातस्येश्वरस्य पुरुषोत्तम इत्येतन्नाम प्रसिद्धं तस्य नामनिर्वचनप्रसिद्ध्याऽर्थवत्त्वं नाम्नो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान्—यस्मादिति । यस्मात्क्षरमतीतोऽहं संसारमायावृक्षमश्वत्थाख्यमतिक्रान्तोऽहमक्षरादपि संसारवृक्षबीजभूतादपि चोत्तम उत्कृष्टतम ऊर्ध्वतमो

२ आनन्दगिरिव्याख्या ।

यावत् । उत्तमोऽन्य इति पदद्वयं वस्तुतः सर्वथैव क्षराक्षरात्मत्वाभावद्योतनार्थम् । जडवर्गस्यान्यत्वकृतं स्वातन्त्र्यं निरस्यति—**स एवेति** । लोकत्रयमित्युपलक्षणं सर्वं जगदपि विवक्षितम् । चैतन्यमेव बलं तत्र शक्तिर्माया तयेति यावत् । जगद्धारणे परस्य व्यापारान्तरं वारयति—**स्वरूपेति** । नचास्यान्यो धारयिता स्वतोऽचलत्वादित्याह—**अव्यय इति** । 'संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः' इति श्रुत्यर्थं गृहीत्वाह—**ईश्वर इति** ॥ १७ ॥ किंच लोकवेदयोर्भगवतो नामप्रसिद्ध्या सिद्धमप्रपञ्चत्वमित्याह—**यथेति** । अश्वकर्णादिवदस्य नाम्नो रूढत्वादर्थविशेषाभावाद्भगवतोऽपि लौकिकेश्वरवदीश्वरत्वं सातिशयमिति नेत्याह—**तस्येति** । यस्मादित्यस्यापेक्षितं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रविश्य धारयति शरीरत्रयम् । अथापि अव्ययः सर्वज्ञत्वेन ईश्वरधर्मेण अल्पज्ञत्वेन जीवधर्मेण वा न व्येति वर्धते क्षीयते वेत्यर्थः ॥१७॥ **यस्मादिति** । क्षरं उपाधिं अक्षरं च उपाधिं अतीतोऽतिक्रम्य स्थितोहमतोऽक्षरादपि चेति चशब्दात् क्षरादपि उत्तम उत्कृष्टतमः । जडात्क्षररूपादुपाधेरुत्कृष्टस्तदुपहितो जीवश्चेतनत्वात्, ततोऽप्युत्कृष्टतरो मायोपाधिः

४ मधुसूदनीव्याख्या ।

प्रकृष्टोऽकल्पितो 'ब्रह्मपुच्छं प्रतिष्ठा' इत्युक्त आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मेत्युक्तो वेदान्तेषु यः परमात्मा लोकत्रयं भूर्भुवःस्वराख्यं सर्वं जगदिति यावत् आविश्य स्वकीयया मायाशक्त्याऽधिष्ठाय बिभर्ति सत्तास्फूर्तिप्रदानेन धारयति पोषयति च । कीदृशः, अव्ययः सर्वविकारशून्य ईश्वरः सर्वस्य नियन्ता नारायणः स उत्तमः पुरुषः परमात्मेत्युदाहृत इत्यन्वयः । 'स उत्तमः पुरुषः' इति श्रुतेः ॥१७॥ इदानीं यथाव्याख्यातेश्वरस्य क्षराक्षरविलक्षणस्य पुरुषोत्तम इत्येतत्प्रसिद्धनामनिर्वचनेन ईदृशः परमेश्वरोऽहमेवेत्यात्मानं दर्शयति भगवान् ब्रह्मणो हि प्रतिष्ठाहं तद्धाम परमं ममेत्यादिप्रागुक्तनिजमहिमनिर्धारणाय—यस्मात् क्षरं कार्यत्वेन विनाशिनं मायामयं संसारवृक्षमश्वत्थाख्यमतीतोऽतिक्रान्तोऽहं परमेश्वरोऽक्षरादपि मायाख्यादव्याकृतात् 'अक्षरात्परतः परः' इति पञ्चम्यन्ताक्षरपदेन श्रुत्या प्रतिपादितात्संसारवृक्षबीजभूतात्सर्वकारणादपि चोत्तम उत्कृष्टतमः । अतः क्षराक्षराभ्यां पुरुषोपाधिभ्यामध्यासेन पुरुषपदव्यपदेश्याभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इति स उत्तमः पुरुष इति वेद उदाहृत एव । लोके च कविकाव्यादौ 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इत्यादिप्रसिद्धं 'कारुण्यतो नरवदाचरतः परार्था-

५ भाष्योत्कर्षदीपिका ।

उत्कृष्टतमः पुरुषः अविद्यात्मभ्यो देहादिभ्यः परश्चासौ सर्वभूतानामात्मा च प्रत्यक्चेतन इत्यतः परमात्मेत्युदाहृतः वेदान्तेषु प्रतिपादितः । परमात्मानमेव विशिनष्टि । यो लोकत्रयं भूर्भुवःस्वराख्यं त्रिलोकीपक्षाश्रयेण समस्तं जगत् स्वकीयया मायया चैतन्यबलशक्त्या आविश्य प्रविश्य स्वरूपसद्भावमात्रेण बिभर्ति धारयति पोषयति प्रकाशयति । न विद्यते व्ययो यस्य सोऽव्ययः ईश्वरः ईशनशीलो नारायणाख्यः परमेश्वर इत्यर्थः ॥ १७ ॥ अतएव क्षराक्षराभ्यामुत्तम इति । मम नाम्नो निर्वचनप्रसिद्धिरर्थवतीत्याह । यस्मात्क्षरं संसारमायावृक्षं अश्वत्थाख्यमतीतोऽहमक्षरादपि तद्बीजभूतान्मायासंज्ञकादपि चोत्तमः उत्कृष्टतमः ऊर्ध्वतमो वा, अतः

६ श्रीधरीव्याख्या ।

वैलक्षण्यमेवाह । परमश्चासावात्मेति चोदाहृत उक्तः श्रुतिभिः । आत्मत्वेन क्षरादचेतनाद्विलक्षणः परमत्वेनाक्षराच्चेतनाद्भोक्तुर्विलक्षण इत्यर्थः । परमात्मत्वमेव दर्शयति यो लोकत्रयमिति । य ईश्वर ईशनशीलः, अव्ययश्च निर्विकार एव सन् लोकत्रयं कृत्स्नमाविश्य बिभर्ति पालयति ॥ १७ ॥ एवंभूतं पुरुषोत्तमत्वमात्मनो नामनिर्वचनेन दर्शयति—**यस्मादिति** । यस्मात्क्षरं जडवर्गमतिक्रान्तोऽहं

७ अभिनवगुप्ताचार्यव्याख्या ।

स्तोत्रे 'तव च का किल न स्तुतिरम्बिके सकलशब्दमयी किल ते तनुः । निखिलमूर्तिषु मेऽभवदन्वयो मनसिजासु बहिःप्रसरासु च ॥ इति विचिन्त्य शिवे शमिताशिवे जगति जातमयत्नवशादिदम् । स्तुतिजपार्चनचिन्तनवर्जिता न खलु काचन कालकलास्ति मे ॥' इति ॥ १६ ॥

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥**
**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।**
**एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

१ श्रीमच्छांकरभाष्यम् ।

**वातः क्षराक्षराभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इत्येवं मां भक्तजना विदुः कवयः काव्यादिषु चेदं नाम निबध्नन्ति पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति ॥१८॥ अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते—यो मामिति । यो मामीश्वरं यथोक्तविशेषणमेवं यथोक्तेन प्रकारेणासंमूढः संमोहवर्जितः सन् जानात्ययमहमस्मीति पुरुषोत्तमं स सर्ववित्सर्वात्मना सर्वं वेत्तीति सर्वज्ञः सर्वभूतस्थं भजति मां सर्वभावेन सर्वात्मचित्ततया हे भारत ॥१९॥ अस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलमुक्त्वाथेदानीं तत्स्तौति—इति गुह्यतममिति । इत्येतद्गुह्यतमं**

२ आनन्दगिरिव्याख्या ।

**निक्षिपति—अत इति** । उत्तमः पुरुष इति वाक्यशेषः ॥ १८ ॥ आत्मनोऽप्रपञ्चत्वं ज्ञानफलोक्त्या स्तौति—**अथेति** । यथोक्तविशेषणं सर्वात्मत्वादिविशेषणोपेतमिति यावत् । क्षराक्षरातीतत्वं यथोक्तप्रकारः । **संमोहवर्जितः** संमोहेन देहादिष्वात्मात्मीयत्वबुद्ध्या रहित इत्यर्थः । भगवन्तं जानतः सर्ववित्त्वं तस्यैव सर्वात्मना मेयत्वादित्याह—**स सर्वविदिति** । सर्वात्मनि मय्येवासक्तचित्तत्वेनेत्यर्थः ॥ १९ ॥ अध्यायार्थमनूद्योपसंहारश्लोकमवतारयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्वतन्त्रत्वात्, ततोऽप्युत्कृष्टतमोऽनुपाधिरनागन्तुकरूपत्वात्, अक्षरार्थः स्पष्टः ॥ १८ ॥ एतद्विज्ञानफलमपि भक्तिरेवेत्याह—**यो मामिति** । असंमूढः मम पुरुषोत्तमत्वे संशयविपर्यासादिहीनः स एव सर्ववित् । यतो मां पुरुषोत्तमं जानाति तत्फलं च मां सर्वभावेन सर्वात्मना सर्वैः प्रकारैर्भजति ॥ १९ ॥ अस्मिन्नध्याये भगवत्तत्त्वज्ञानस्य मोक्षफ-

४ मधुसूदनीव्याख्या ।

न्पार्थाय बोधितवतो निजमीश्वरत्वम् । सच्चित्सुखैकवपुषः पुरुषोत्तमस्य नारायणस्य महिमा न हि मानमेति' । 'केचिन्निगृह्य करणानि विसृज्य भोगमास्थाय योगममलात्मधियो यतन्ते । नारायणस्य महिमानमनन्तपारमास्वादयन्नमृतसारमहं तु मुक्तः' ॥ १८ ॥ एवं नामनिर्वचनज्ञाने फलमाह—**यो मामेवमिति** । यो मामीश्वरमेवं यथोक्तनामनिर्वचनेनासंमूढो मनुष्य एवायं कश्चित्कृष्ण इति संमोहवर्जितो जानात्ययमीश्वर एवेति पुरुषोत्तमं प्राग्व्याख्यातं स मां भजति सेवते सर्ववित् मां सर्वात्मानं वेत्तीति स एव सर्वज्ञः सर्वभावेन प्रेमलक्षणेन भक्तियोगेन हे भारत, अतो यदुक्तं 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते' इति तदुपपन्नम् । यच्चोक्तं 'ब्रह्मणो हि प्रतिष्ठाहम्' इति तदप्युपपन्नतरम् । 'चिदानन्दाकारं जलदरुचिसारं श्रुतिगिरां व्रजस्त्रीणां हारं भवजलधिपारं कृतधियाम् । विहन्तुं भूभारं विदधदवतारं

५ भाष्योत्कर्षदीपिका ।

क्षराक्षराभ्यामुत्तमत्वाद्धेतोर्लोके कविकाव्यादौ वेदे च पुरुषोत्तमः प्रथितः प्रख्यातः 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' 'स उत्तमः पुरुषः' इत्यादिलोकवेदप्रसिद्ध्या पुरुषोत्तम इति मां भक्तजना विदुः ॥ १८ ॥ अधुना यथानिरुक्तमात्मानं ज्ञातुः फलमाह—**य इति** । मामीश्वरं सर्वात्मत्वसर्वव्यवहारास्पदत्वादिविशेषणोपेतं यथोक्तेन क्षराक्षरातीतत्वेन प्रकारेण योऽसंमूढः संमोहेन देहगेहादिष्वात्मात्मीयप्रत्ययेन वर्जितः सन् पुरुषोत्तमं जानाति अयमहमस्मीति साक्षात्पश्यति स सर्ववित् सर्वात्मब्रह्मज्ञानात्सर्वज्ञः सर्वभावेन सर्वत्रात्मवित्तया मां सर्वभूतस्थं पुरुषोत्तमं भजति । त्वमप्युत्तमवंशोद्भवत्वादेतादृशज्ञानयोग्योऽसीति सूचयन्संबोधयति भारतेति ॥ १९ ॥

६ श्रीधरीव्याख्या ।

नित्यमुक्तत्वात्, अक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वात्, अतो लोके वेदे च पुरुषोत्तम इति प्रथितः प्रख्यातोऽसि । तथाच श्रुतिः—'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' इत्यादिः ॥ १८ ॥ एवंभूतेश्वरस्याज्ञातुः फलमाह—**यो मामिति** । एवमुक्तप्रकारेणासंमूढो निश्चितमतिः सन् यो मां पुरुषोत्तमं जानाति स सर्वभावेन सर्वप्रकारेण मामेव भजति ततः

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १७ ॥ १८ ॥ १९ ॥ इतीति । गुह्यतमं सर्वाद्वयप्रतिपादकत्वात् । एतदेव बुद्ध्वा बुद्धिमत्त्वं नतु व्यवहारबुद्ध्या । एतेन च ज्ञातेनैव

१ श्रीमच्छांकरभाष्यम् ।

**गोप्यतममत्यन्तरहस्यमित्येतत् । किं तच्छास्त्रम् । यद्यपि गीताख्यं समस्तं शास्त्रमुच्यते तथाप्ययमेवाध्याय इह शास्त्रमित्युच्यते स्तुत्यर्थं प्रकरणात् । सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तो न केवलं, सर्वश्च वेदार्थ इह परिसमाप्तो 'यस्तं वेद स वेदवित्', 'वेदैश्च सर्वैरहमेव वेद्यः' इति चोक्तम् । इदमुक्तं कथितं मया हेऽनघापाप । एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान्स्याद्भवेन्नान्यथा । कृतकृत्यश्च भारत कृतं कृत्यं कर्तव्यं येन स कृतकृत्यो विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । न चान्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति चोक्तम् 'एतद्धि जन्मसामग्र्यं**

२ आनन्दगिरिव्याख्या ।

**अस्मिन्निति** । सर्वस्यां गीतायां शास्त्रशब्दे वक्तव्ये कथमस्मिन्नध्याये तत्प्रयोगः स्यादित्याशङ्क्याह—**यद्यपीति** । संनिहितमध्यायं स्तोतुमपि कुतस्तत्र शास्त्रशब्दस्तदर्थाभावात्तत्राह—**सर्वो हीति** । गीताशास्त्रार्थस्य सर्वस्यात्र संक्षिप्तत्वादेव केवलं शास्त्रशब्दो न भवति किंतु वेदार्थस्यापि सर्वस्यात्रसमाप्तेर्युक्तं शास्त्रपदमित्याह—**नेति** । तत्र गमकमाह—**यस्तमिति** । भगवत्तत्त्वज्ञाने कृतकृत्यतेत्येतदुपपादयति—**विशिष्टेति** । नान्यथेत्युक्तं प्रपञ्चयति—**नचेति** । सत्यपि तत्त्वज्ञाने कर्मणां कर्तव्यत्वान्न कर्तव्यसमाप्तिरित्याशङ्क्याह—**सर्वमिति** । तत्त्वज्ञाने कृतार्थतेति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्वमुक्त्वाऽथेदानीं तत्स्तौति—**इतीति** । इति एतद्गुह्यतमं अत्यन्तरहस्यं शास्त्रम् । यद्यपि इयमष्टादशाध्यायी कृत्स्ना शास्त्रं तथाप्यस्मिन्नध्याये कृत्स्नस्य शास्त्रार्थस्य प्रदर्शनादयमपि शास्त्रम् । अत्र हि कार्यकारणविभागः संसारवृक्षस्यानित्यत्वं भगवतो विभूतयः 'यस्तं वेद स वेदवित्', 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिना सर्वः शास्त्रार्थो दर्शितोऽस्ति । **इदं मया उक्तं हे अनघ निर्व्यसन, एतत् रहस्यं बुद्ध्वा बुद्धिमान् ज्ञानी स्यादात्मविद्भवेत्** । तावता कृतकृत्यः । सर्वं

४ मधुसूदनीव्याख्या ।

मुहुरहो महो वारंवारं भजत कुशलारम्भकृतिनः' ॥ १९ ॥ इदानीमध्यायार्थं स्तुवन्नुपसंहरति—इति अनेन प्रकारेण गुह्यतमं रहस्यतमं संपूर्णं शास्त्रमेव संक्षेपेणेदमस्मिन्नध्याये मयोक्तं हे अनघ अव्यसन, एतद्बुद्ध्वान्योऽपि यः कश्चिद्बुद्धिमानात्मज्ञानवान्स्यात् कृतं सर्वं कृत्यं येन न पुनः कृत्यान्तरं यस्यास्ति स कृतकृत्यश्च स्यात् । विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेत् न त्वन्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः । हे भारत, त्वं तु महाकुलप्रसूतः स्वयं च व्यसनरहित इति कुलगुणेन स्वगुणेन चैतद्बुद्ध्वा कृतकृत्यो भविष्यसीति किमु वक्तव्यमित्यभिप्रायः ॥ २० ॥

५ भाष्योत्कर्षदीपिका ।

एवमस्मिन्नध्याये भगवत्तत्त्वज्ञानं मोक्षफलकमुक्तमुपसंहरन् तत्स्तौति—**इतीति** । इत्येद्गुह्यतमं गोप्यं कर्मतत्त्वं गुह्यतरमुपासनातत्त्वं इदं तु परमात्मतत्त्वं गोप्यतममत्यन्तरहस्यं शास्त्रं समस्तस्य गीताख्यशास्त्रस्य सर्वस्य वेदस्य चार्थोऽस्मिन्नध्याये संक्षेपेणोक्तः 'यस्तं वेद स वेदवित्' । 'वेदैश्च सर्वैरहमेव वेद्यः'इति च । अतोऽस्याध्यायस्य सकलशास्त्ररूपत्वादिदं शास्त्रमुक्तं मया कथितम् । हेऽनघाव्यसन निष्पाप, अनघस्य त्वादृशस्यैवास्मिन् शास्त्रेऽधिकारित्वादिति भावः । एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान्स्यान्नान्यथा । कृतकृत्यश्च कृतं कृत्यं येन स विशिष्टजन्मना ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः । नचान्यथा कस्यचिदपि कर्तव्यता परिसमाप्यत इत्याशयः । तथाचोक्तं 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' । मनुरप्याह 'एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इति । यत एतत्परमार्थतत्त्वं मत्तः श्रुतवानस्यतः कृतार्थस्त्वं उत्तमवंशोद्भवत्वं सार्थकं कृतवानसीति ध्वनयन्संबोधयति भारतेति ॥ २० ॥ तदनेन पञ्चदशाध्यायेन वैराग्यार्थं संसारस्य मिथ्यात्वं निरूपयता भगवद्भक्तिलभ्यतत्त्वज्ञानानां अमानित्वादिविशेषणोपेतानां प्राप्यं सूर्याद्यभास्यं पदं तदज्ञानेनोत्क्रान्त्यादिकं च निरूप-

६ श्रीधरीव्याख्या ।

सर्ववित् सर्वज्ञो भवति ॥ १९ ॥ अध्यायार्थमुपसंहरति—**इतीति** । इत्यनेन प्रकारेण गुह्यतमं अतिरहस्यं संपूर्णं शास्त्रमेव मयोक्तम्

७ अभिनवगुप्ताचार्यव्याख्या ।

कृतकृत्यता नतु कृतेनापि शत्रुविजयाऽर्थाहरण-स्त्र्युपभोगादिना । चकारोऽद्भुतद्योतकः । एतेन हि कृतकृत्यता दृष्टा । एतेन तु ज्ञानेनैवेति चित्रम् । इतिशब्देन शास्त्रस्य समाप्तिः सूचिता । वक्तव्यस्य परिपूर्णतया समाप्तत्वात् । तथाहि षोडशाध्यायेन शिष्यस्यार्जुनस्य योग्यता केवलं प्रतिपाद्यते नतूपदिश्यते किंचित् । दैवीह्येवंविधा संपदासुरी चाविद्यामय्यैतादृशी संपत् । त्वं च विद्यामयीं दैवीं संपदमभिप्राप्त इत्येतावति हि तात्पर्यम् । यद्वक्ष्यति—मा शुचः संपदं दैवीमिति । अतएव पूर्वं विद्याविद्यासंघर्ष(र्षे?)निरूपणावसरे देवासुरसंग्रामच्छलेन विद्याविद्ययोः संघर्ष इति सूचितम् । एवंच शिष्यस्वरूपे प्राधान्येन निरूप्यमाणे प्रसङ्गतोऽन्यदप्युक्तमित्यध्यायद्वयं भविष्यति । उपदे-

१ श्रीमच्छांकरभाष्यम् ।

**ब्राह्मणस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इति च मानवं वचनम् । यत एतत्परमार्थतत्त्वं मत्तः श्रुतवानसि ततः कृतार्थस्त्वं भारतेति ॥ २० ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥**

---

२ आनन्दगिरिव्याख्या ।

तत्र मनोरपि संमतिमाह—एतद्धीति । भारतेति संबोधनतात्पर्यमाह—यत इति । तदनेनात्मनो देहाद्यतिरिक्तत्वं चिद्रूपत्वं सर्वात्मत्वं कार्यकारणविनिर्मुक्तत्वेनाप्रपञ्चत्वं तस्याखण्डैकरसब्रह्मात्मत्वज्ञानादशेषपुरुषार्थपरिसमाप्तिरित्युक्तम् ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ पञ्चदशोऽध्यायः ॥ १५ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

हि कृत्यं परमात्मावगतिपर्यन्तं तत्रैव कृत्स्नपुरुषार्थसमाप्तेः । चात्प्राप्तप्रापणीयश्च स्यात् भवति नातःपरं कर्तव्यमवशिष्यते इत्यर्थः ॥ २० ॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे पञ्चदशोऽध्यायः ॥ १५ ॥

४ मधुसूदनीव्याख्या ।

वंशीविभूषितकरान्नवनीरदाभात्पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने ॥ १ ॥
सदा सदानन्दपदे निमग्नं मनो मनोभावमपाकरोति । गतागतायासमपास्य सद्यः परापरातीतमुपैति तत्त्वम् ॥ २ ॥
शैवाः सौराश्च गाणेशा वैष्णवाः शक्तिपूजकाः । भवन्ति यन्मयाः सर्वे सोहमस्मि परः शिवः ॥ ३ ॥
प्रमाणतोऽपि निर्णीतं कृष्णमाहात्म्यमद्भुतम् । न शक्नुवन्ति ये सोढुं ते मूढा निरयं गताः ॥ ४ ॥

इति श्रीमत्परमहंसप० मधुसूदनसरस्वतीविर० पुरुषोत्तमयोगविवरणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

५ भाष्योत्कर्षदीपिका ।

यता आत्मनो देहाद्यतिरिक्तत्वं तत्त्वेन शुद्धचित्तैकगम्यत्वं सर्वावभासकत्वं चिद्रूपत्वं सर्वज्ञत्वं सर्वात्मत्वं सर्वव्यवहारास्पदत्वं क्षराक्षरातीतत्वं च प्रतिपादयता तत्त्वज्ञानैकप्राप्यमखण्डैकरसत्वं प्रकाशितम् ॥

आधारं जगतां गतिं गतिमतां सूर्याद्यभास्यं सतां सारं सारवतां गतागतवतां चिन्तामसंजानताम् ।
संसारं विततां नतिं कृतवतां सर्वार्थदं देवतां शौरिं सर्वततां परां भज सितां चेतो न चासाधुताम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

६ श्रीधरीव्याख्या ।

न पुनर्विंशतिश्लोकमध्यायमात्रम् । हे अनघ व्यसनशून्य, अत एतन्मदुक्तं शास्त्रं बुद्ध्वा बुद्धिमान् सम्यग्ज्ञानी कृतकृत्यश्च स्याद्योऽपि कोऽपि । हे भारत, त्वं कृतकृत्योसीति किं वक्तव्यमिति भावः ॥ २० ॥

संसारशाखिनं छित्त्वा स्पष्टं पञ्चदशे प्रभुः ॥ पुरुषोत्तमयोगाख्ये परं पदमुपादिशत् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

शास्त्रिवत एव परिसमाप्तः । सर्वभावेन हि परमेश्वरभजनमावेशरूपं प्राप्यं तदर्थं चान्यत्सर्वमिरयुक्तं प्राक् । सर्वमाहेश्वरस्वरूपावेश एव हि परमं शिवमिति शुभम् ॥ २० ॥

अत्र संग्रहः—हित्वा द्वैतं महामोहं कृत्वा ब्रह्ममयीं चितिम् । लौकिके व्यवहारेऽपि मुनिर्नित्यं समाविशेत् ॥ १ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचिते गीतातात्पर्यसंग्रहे पञ्चदशोऽध्यायः ॥ १५ ॥



# षोडशोऽध्यायः ।

श्रीभगवानुवाच ।

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचितास्तासां विस्तरेण प्रदर्शनायाभयं सत्त्वसंशुद्धिरित्यादिरध्याय आरभ्यते, तत्र संसारमोक्षाय दैवी प्रकृतिर्निबन्धनायासुरी राक्षसी चेति दैव्या आदानाय प्रदर्शनं क्रियत इतरयोः परिवर्जनाय श्रीभगवानुवाच—अभयमिति । अभ-**

२ आनन्दगिरिव्याख्या ।

व्यवहितेन संबन्धं वदन्नध्यायान्तरमवतारयति—**दैवीति** । दैवी सूचिता राक्षसीमासुरीं चैव प्रकृतिं मोहिनी-मित्यादाविति शेषः । प्रकृतीनां विस्तरेण दर्शनं कुत्रोपयोगीत्याशङ्क्य विभज्योपयोगमाह—**संसारेति** । अतीते चाध्याये कर्मानुबन्धीन्यधश्च मूलान्यनुसंततानीत्यत्र कर्मव्यङ्ग्या वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ता मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमानाः सात्त्विकादिभेदेन दैव्यादिप्रकृतित्रयत्वेन विभक्ता विस्तितीर्षुर्भगवानुक्तवानि-त्याह—**भगवानिति** । अभीरुता शास्त्रोपदिष्टेऽर्थे संदेहं हित्वानुष्ठाननिष्ठत्वं, परवञ्चना परस्य व्याजेन वशीकरणम्,

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नवमाध्याये राक्षसी आसुरी दैवी चेति तिस्रः संपद उक्तास्तासु राक्षसीमासुर्यामेवान्तर्भाव्य द्वे एव संपदावत्र व्युत्पाद्येते 'द्वया ह प्राजापत्या देवाश्चासुराश्च' इति श्रुतावभयसत्त्वशुद्ध्यादिधीवृत्तयो देवाः दम्भदर्पादिधीवृत्तयो-ऽसुरा इति द्वैराश्यस्यैव दर्शनात् । पूर्वाध्यायान्ते इदमुक्तं मयानघेत्यर्जुनं संबोधयताऽनघत्वं दैवीसंपत्तिमत्त्वं तद्विपर्य-

४ मधुसूदनीव्याख्या ।

अनन्तराध्याये 'अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके' इत्यत्र मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमाना वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ताश्च दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचिताः । तत्र वेदबोधित-कर्मात्मज्ञानोपायानुष्ठानप्रवृत्तिहेतुः सात्त्विकी शुभवासना दैवी प्रकृतिरित्युच्यते । एवं वैदिकनिषेधातिक्रमेण स्वभावसिद्धराग-द्वेषानुसारिसर्वानर्थप्रवृत्तिहेतुभूता राजसी तामसी चाशुभवासनासुरी राक्षसी च प्रकृतिरुच्यते । तत्र च विषयभोगप्राधान्येन रागप्राबल्यादासुरीत्वं, हिंसाप्राधान्येन द्वेषप्राबल्याद्राक्षसीत्वमिति विवेकः । संप्रति तु शास्त्रानुसारेण तद्विहितप्रवृत्तिहेतुभूता सात्त्विकी शुभवासना दैवी संपत्, शास्त्रातिक्रमेण तन्निषिद्धविषयप्रवृत्तिहेतुभूता राजसी, तामसी चाशुभवासना राक्षस्यासुर्योरे-कीकरणेनासुरीसंपदिति द्वैराश्येन शुभाशुभवासनाभेदं 'द्वया ह प्राजापत्या देवाश्चासुराश्च' इत्यादिश्रुतिप्रसिद्धं शुभानामादानाया-

५ भाष्योत्कर्षदीपिका ।

'मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ महात्मानस्तु मां पार्थ दैवीं प्रकृति-माश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्' । इति दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचिताः । अतीतानन्तराध्याये च 'अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके' इत्यत्र कर्मव्यङ्ग्या वासनाः संसारस्यावान्तर्मूलत्वे-नोक्ताः ता मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमानाः सात्त्विकराजसतामसभेदेन दैव्यादिप्रकृतित्वेन विभक्ता आविश्चिकीर्षुर्द्वै आह 'द्वया ह प्राजापत्या देवाश्चासुराश्च' इत्यादिश्रुत्यनुसारेण राक्षसीमासुर्यामन्तर्भाव्य मोक्षहेतुभूताया दैव्याः प्रकृतेरुपादानायेतरयो-

६ श्रीधरीव्याख्या ।

आसुरीं संपदं त्यक्त्वा दैवीमेवाश्रिता नराः । मुच्यन्त इति निर्णेतुं तद्विवेकोऽथ षोडशे ॥ १ ॥

पूर्वाध्यायान्ते 'एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' इत्युक्तम् तत्र क एतत्तत्त्वं बुध्यते को वा न बुध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्च विवेकार्थं षोडशाध्यायारम्भः । निरूपिते हि कार्यार्थेऽधिकारिजिज्ञासा भवति । तदुक्तं भट्टैः—'भारो यो येन वोढव्यः स प्रागान्दोलितो यदा । तदा कस्तस्य वोढेति शक्यं कर्तुं निरूपणम्' इति । तत्राधिकारिविशेषणभूतां दैवीं

७ अभिनवगुप्ताचार्यव्याख्या ।

एतद्बुद्ध्वेत्युक्तम् । बोधश्च नाम श्रुतिमयज्ञानान्तरमिदमित्थमित्येवंभूतयुक्तिचिन्ताभावनामयज्ञानान्तरमिदमित्थमित्येवंभूतयुक्तिचिन्ताम-यज्ञानोदयेन विचारविमर्शपरामर्शादिरूपेण विजातीयन्यक्कारविरहिततद्भावनामयः स्वभ्यस्ताकारविज्ञानलाभे सति भवति, तद्वक्ष्यति 'वि-मृश्यैतदशेषेण यथेच्छसि तथा कुरु' इति । तत्र श्रुतिमये ज्ञाने गुरुशास्त्रे एव प्राधान्येन प्रभवतः । युक्तिचिन्ताभावनामये तु विमर्श-

१ श्रीमच्छांकरभाष्यम् ।

**यमभीरुता, सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संव्यवहारेषु परवञ्चनमायानृतादिपरिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः। ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रत आचार्यतश्चात्मादिपदार्थानामवगमः, अवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसंवेद्यतापादनं योगस्तयोर्ज्ञानयोगयोर्व्यवस्थितिर्व्यवस्थानं तन्निष्ठतैषा प्रधाना दैवी सात्त्विकी संपत्। यत्र च येषामधिकृतानां या प्रकृतिः संभवति सात्त्विकी सोच्यते। दानं यथाशक्ति संविभागोऽन्नादीनां, दमश्च बाह्यकरणानामुपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति, यज्ञश्च श्रौतोऽग्निहोत्रादिः, स्मार्तश्च देवयज्ञादिः, स्वाध्याय ऋग्वेदाद्यध्ययनमदृष्टार्थं,**

२ आनन्दगिरिव्याख्या ।

माया हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणम्, अनृतमयथादृष्टकथनम्। आदिपदेन विप्रलम्भादिग्रहः। उक्तमर्थं संक्षिप्याह—**शुद्धेति**। एषेत्यभयाद्या ज्ञानादिस्थित्यन्ता त्रिधोक्तेति यावत्। तामेव सात्त्विकीं प्रकृतिं प्रकटयति—**यत्रेति**। ज्ञाने कर्मणि वाधिकृतानामभीरुताद्या या प्रकृतिः सा तेषां तत्र सात्त्विकी संपदित्यर्थः। महाभाग्यानामत्युत्तमा दैवी संपदुक्ता, संप्रति सर्वेषां यथासंभवं संपदं व्यपदिशति—**दानमिति**। बाह्यकरणविशेषे कारणमाह—**अन्तःकरणस्येति**। देवयज्ञादिरित्यादिशब्देन पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति त्रयमुक्तम्। ब्रह्म-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

यस्त्वासुरीसंपदिति दर्शयितुं श्रीभगवानुवाच—**अभयमिति**। अभयं स्वोच्छेदबुद्ध्यभावः । सत्त्वसंशुद्धिः चित्तनैर्मल्यम्। ज्ञानं श्रवणादिजन्यं, योगो ज्ञातेऽर्थे चित्तप्रणिधानं तयोर्व्यवस्थितिः। निर्दिष्टैषा मुख्या दैवीसंपत्। दानं

४ मधुसूदनीव्याख्या ।

*शुभानां हानाय* च प्रतिपादयितुं षोडशोऽध्याय आरभ्यते। तत्रादौ श्लोकत्रयेणादेयां दैवीं संपदं श्रीभगवानुवाच—शास्त्रोपदिष्टेऽर्थे संदेहं विनाऽनुष्ठाननिष्ठत्वं एकाकी सर्वपरिग्रहशून्यः कथं जीविष्यामीति भयराहित्यं वाऽभयम्, सत्त्वस्यान्तःकरणस्य शुद्धिर्निर्मलता तस्याः सम्यक्ता भगवत्तत्त्वस्फूर्तियोग्यता सत्त्वसंशुद्धिः परवञ्चनमायानृतादिपरिवर्जनं वा परस्य व्याजेन वशीकरणं परवञ्चनं, हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणं माया, अयथादृष्टकरणमनृतमित्यादि, ज्ञानं शास्त्रादात्मतत्त्वस्यावगमः, चित्तैकाग्रतया तस्य स्वानुभवारूढत्वं योगस्तयोर्व्यवस्थितिः सर्वदा तन्निष्ठता ज्ञानयोगव्यवस्थितिः। यदा तु अभयं सर्वभूताभयदानसंकल्पपालनं,। एतच्चान्येषामपि परमहंसधर्माणामुपलक्षणम्। सत्त्वसंशुद्धिश्रवणादिपरिपाकेणान्तःकरणस्यासंभावनाविपरीतभावनादिमलराहित्यं। ज्ञानमात्मसाक्षात्कारः। योगो मनोनाशवासनाक्षयानुकूलः पुरुषप्रयत्नस्ताभ्यां विशिष्टा संसारिविलक्षणावस्थितिर्जीवन्मुक्तिर्ज्ञानयोगव्यवस्थितिरित्येवं व्याख्यायते तदा फलभूतैव दैवी संपदियं द्रष्टव्या । भगवद्भक्तिं विनान्तःकरणसंशुद्धेरयोगात्तया सापि कथिता 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्' इति नवमे दैव्यां संपदि भगवद्भक्तेरुक्तत्वाच्च भगवद्भक्तेरतिश्रेष्ठत्वादभयादिभिः सह पाठो न कृत इति द्रष्टव्यम्। महाभाग्यानां परमहंसानां फलभूतां दैवीं संपदमुक्त्वा ततो न्यूनानां गृहस्थादीनां साधनभूतामाह—दानं स्वस्वत्वास्पदानामन्नादीनां यथाशक्ति शास्त्रोक्तः संविभागः। दमो बाह्येन्द्रियसंयमः ऋतुकालाद्यतिरिक्तकाले मैथुनाद्यभावः। चकारोऽनुक्तानां निवृत्तिलक्षणधर्माणां

५ भाष्योत्कर्षदीपिका ।

हानाय च श्रीभगवानुवाच। तत्रादावादानाय दैवीं संपदमाह—**अभयमित्यादि**त्रिभिः। अभयमभीरुता शास्त्रोपदिष्टेऽर्थे संदेहं विहायानुष्ठाननिष्ठता एकाकी सर्वपरिग्रहशून्यः कथं जीविष्यामीति भयरहितता वा आत्मचिन्तनाय गिरिदर्यादिनिवासेऽपि भयाभाव इति वा। सत्त्वस्यान्तःकरणस्य शुद्धिः परस्य व्याजेन वशीकरणरूपस्य वञ्चनस्य हृदयेऽन्यथाकृत्वा बहिरन्यथा व्यवहरणरूपाया मायाया अयथादृष्टकथनात्मकस्यानृतस्य विप्रलम्भभ्रमादेश्च परिवर्जनं शुद्धस्वभावेन व्यवहार इत्यर्थः। ज्ञानं शास्त्रादाचार्याच्चात्मादिपदार्थानामवगमः, इन्द्रियाद्युपसंहारेणैकाग्रतयावगतानां स्वात्मसंवेद्यतापादनं योगस्तयोर्व्यवस्थितिः व्यवस्थानं तन्निष्ठता। दानं यथाशक्ति अन्नादीनां संविभागः। दमश्च बाह्यकरणानामुपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति । यज्ञश्च श्रौतोऽग्निहोत्रादिः देवयज्ञः स्मार्तश्च पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति त्रिविधः। स्वाध्यायोऽदृष्टार्थं ऋग्वेदाद्यध्ययनं तदध्यापनं च ब्रह्मयज्ञः। तपो वक्ष्यमाणं शारीरादि। आर्जवं सर्वदा ऋजुत्वं। यत्तु सत्त्वानां दुष्टप्राणिनां व्याघ्रादीनां संशुद्धिः स्वभावपरित्यागो यस्मादितीदृशः प्रभावविशेषः। अन्तःकरणशुद्धेः शान्तिरिति च वक्ष्यमाणत्वादिति तन्नादर्तव्यम्। उक्तान्तःकरणशुद्ध्यपेक्षया तदुपशमस्य विलक्षणतायाः सुवचत्वेन

६ श्रीधरीव्याख्या ।

संपदमाह—श्रीभगवान्—**अभयमिति त्रिभिः**। अभयं भयाभावः, सत्त्वस्य चित्तस्य संशुद्धिः सुप्रसन्नता, ज्ञानयोगे आत्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

क्षमता असाधारणशिष्यगुणसंपत्प्रधानभूता। अतोऽर्जुनस्यास्येवासावित्यभिप्रायेण वक्ष्यमाणं विमृश्यैतदिति वाक्यं सविषयं कर्तुं परिकरबन्धयोजनाभिप्रायेणाह भगवान्गुरुः श्रीभगवान्—अभयमिति । आसुरभागसंनिविष्टा तामसी किलाविद्या सा प्रबुद्ध्या दिव्यां-

१ मधुसूदनः.

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**तपो वक्ष्यमाणं शारीरादि, आर्जवमृजुत्वं सर्वदा ॥ १ ॥ किंच—अहिंसेति । अहिंसाऽहिंसनं प्राणिनां पीडावर्जनं, सत्यमप्रियानृतवर्जितं यथाभूतार्थवचनम्, अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं, त्यागः संन्यासः पूर्वं दानस्योक्तत्वात्, शान्तिरन्तःकरणस्योपशमः, अपैशुनमपिशुनता परस्मै पररन्ध्रप्रकटीकरणं पैशुनं तदभावोऽपैशुनं, दया कृपा भूतेषु दुःखितेषु, अलोलुप्त्वमिन्द्रियाणां विषयसंनिधावविक्रिया, मार्दवं मृदुताऽक्रौर्यं, ह्रीर्लज्जा, अचापलमसति प्रयोजने**

२ आनन्दगिरिव्याख्या ।

यज्ञस्य स्वाध्यायेन पृथक्करणात् ॥ १ ॥ दैवीं संपदमभिजातस्य विशेषणान्तराणि दर्शयति—**किंचेति** । त्यागशब्देन दानं कस्मान्नोच्यते तत्राह—**पूर्वमिति** । लज्जाऽकार्यनिवृत्तिहेतुगर्हानिमित्ता मनोवृत्तिः ॥ २ ॥ दैवीं संपदं प्राप्तस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यथाशक्ति संविभागोऽन्नादीनाम् । दमो बाह्येन्द्रियनियमः । यज्ञः श्रौतस्मार्तादिः । स्वाध्यायो वेदाध्ययनम् । तपो वक्ष्यमाणलक्षणं शारीरादित्रिविधम् । आर्जवं ऋजुत्वं सर्वदा ॥ १ ॥ किंच अहिंसा प्राणिपीडावर्जनम् । सत्यमप्रियानृतवर्जनं यथाभूतार्थभाषणम् । अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनम् । त्यागः सर्वकर्मसंन्यासः पूर्वं दानस्योक्तत्वात् । शान्तिरन्तःकरणस्योपरमः । अपैशुनं परदोषप्रकाशनं पैशुनं तद्वर्जनम् । दया दुःखितेषु भूतेषु

४ मधुसूदनीव्याख्या ।

समुच्चयार्थः । यज्ञश्च श्रौतोऽग्निहोत्रदर्शपूर्णमासादिः, स्मार्तो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञ इति चतुर्विधः । ब्रह्मयज्ञस्य स्वाध्यायपदेन पृथगुक्तेः । चकारोऽनुक्तानां प्रवृत्तिलक्षणधर्माणां समुच्चयार्थः । एतत्रयं गृहस्थस्य । स्वाध्यायो ब्रह्मयज्ञः अदृष्टार्थमृग्वेदाद्यध्ययनरूपो यज्ञशब्देन पञ्चविधमहायज्ञोक्तिसंभवेऽप्यसाधारण्येन ब्रह्मचारिधर्मत्वकथनार्थं पृथगुक्तिः । तपस्त्रिविधं शारीरादि सप्तदशे वक्ष्यमाणं वानप्रस्थस्यासाधारणो धर्मः । एवं चतुर्णामाश्रमाणामसाधारणान्धर्मानुक्त्वा चतुर्णां वर्णानामसाधारणधर्मानाह—आर्जवं अवक्रत्वं श्रद्दधानेषु श्रोतृषु स्वज्ञातार्थासंगोपनम् ॥ १ ॥ प्राणिवृत्तिच्छेदो हिंसा तदहेतुत्वमहिंसा । सत्यमनर्थाननुबन्धि यथाभूतार्थवचनम् । परैराक्रोशे ताडने वा कृते सति प्राप्तो यः क्रोधस्तस्य तत्कालमुपशमनमक्रोधः । दानस्य प्रागुक्तेस्त्यागः संन्यासः । दमस्य प्रागुक्तेः शान्तिरन्तःकरणस्योपशमः । परस्मै परोक्षे परदोषप्रकाशनं पैशुनं तदभावोऽपैशुनम् । दया भूतेषु दुःखितेष्वनुकम्पा । अलोलुप्त्वं इन्द्रियाणां विषयसंनिधानेप्यविक्रियत्वम् । मार्दवमक्रूरत्वं वृथापूर्वपक्षादिष्वपि शिष्यादिष्वप्रियभाषणादिव्यतिरेकेण बोधयितृत्वम् । ह्रीरकार्यप्रवृत्त्यारम्भे तत्प्रतिबन्धिका लोकलज्जा । अचापलं

५ भाष्योत्कर्षदीपिका ।

कुकल्पनानौचित्यात् । ज्ञानमात्मचिन्तनं योगो नित्यकर्मयोगः तयोर्व्यवस्थितिः रात्रौ ज्ञानं दिवा यथाकालं कर्मयोग इत्येवंलक्षणा व्यवस्था । दानं तेषां कर्मणामीश्वरेर्पणम् । पात्रे त्यागस्योत्तरत्र त्यागशब्देन गृहीतत्वात् । यदा त्वभयं सर्वभूताभयदानसंकल्पपरिपालनं एतच्चान्येषामपि परमहंसधर्माणामुपलक्षणम् । सत्त्वसंशुद्धिः श्रवणादिपरिपाकेनान्तःकरणस्यासंभावनाविपरीतभावनादिमलराहित्यम् । ज्ञानमात्मसाक्षात्कारः, योगो मनोनाशवासनाक्षयानुकूलः पुरुषप्रयत्नस्ताभ्यां विशिष्टा संसारविलक्षणावस्थितिर्जीवन्मुक्तिर्ज्ञानयोगव्यवस्थितिरित्येवं व्याख्यायेत तदा फलभूतैव दैवी संपदियं द्रष्टव्येत्यादिव्याख्यानेषु सम्यग्विचार्य समीचीनभाष्यस्योपलक्षणार्थंतयोपादेयमन्यत्तु हेयम् ॥ १ ॥ किंचाऽहिंसा वृत्तिच्छेदादिना प्राणिनां पीडायाः वर्जनं अहिंसनम् । अप्रियानृतादिहितवर्जितं यथाभूतार्थभाषणं सत्यम् । परैः कृतेनाक्रोशेन ताडनेन वा प्राप्तस्य क्रोधस्योपशमनमक्रोधः । त्यागः संन्यासः । पूर्वं दानस्योक्तत्वात् । एतेनोपात्तवित्तादेः पात्रेऽर्पणं त्याग इति प्रत्युक्तम् । दानत्यागशब्दयोरुक्तार्थे एव प्रसिद्धेः । शान्तिरन्तःकरणस्योपशमः परस्मै पररन्ध्र-

६ श्रीधरीव्याख्या ।

ज्ञानोपाये व्यवस्थितिः परिनिष्ठा, दानं स्वभोज्यस्यान्नादेर्यथोचितं संविभागः, दमो बाह्येन्द्रियसंयमः, यज्ञो यथाधिकारं दर्शपूर्णमासादिः, स्वाध्यायो ब्रह्मयज्ञादिर्जपयज्ञः, तप उत्तराध्याये वक्ष्यमाणं शारीरादि, आर्जवमवक्रता ॥ १ ॥ किंच—**अहिंसेति** । अहिंसा परपीडावर्जनम्, सत्यं यथार्थभाषणम्, अक्रोधस्ताडितस्यापि चित्ते क्षोभानुत्पत्तिः, त्याग औदार्यम्, शान्तिश्चित्तोपरतिः,

७ अभिनवगुप्ताचार्यव्याख्या ।

शम्राहिण्या विद्यया बध्यत इति वस्तुस्वभाव एषः । त्वं च विद्यात्मानं दिव्यमंशं सात्त्विकमभिप्रपन्नः तस्मादान्तरीं मोहलक्षणामविद्यां विहाय बाह्यविद्यात्मशत्रुहननलक्षणं शास्त्रीयव्यापारमनुतिष्ठेत्यध्यायारम्भः ॥ १ ॥ तथाहि । दिव्यांशस्येमानि चिह्नानि तानि स्फुटमे-

१ मधुसूदनः.

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥ २ ॥ किंच—तेज इति । तेजः प्रागल्भ्यं न त्वग्गता दीप्तिः, क्षमाऽऽक्रुष्टस्य ताडितस्य वान्तर्विक्रियानुत्पत्तिरुत्पन्नायां विक्रियायां प्रशमनमक्रोध इत्यवोचाम, इत्थं क्षमाया अक्रोधस्य च विशेषः, धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति, शौचं द्विविधं, मृज्जलकृतं बाह्यमाभ्यन्तरं च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभाव एवं द्विविधं शौचम् , अद्रोहः परजिघांसाभावोऽहिंसनं, नातिमानितात्यर्थं मानोऽतिमानः स यस्य विद्यते सोऽतिमानी तद्भावोऽतिमानिता तदभावो नातिमानिता, आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः । भवन्त्यभयादीन्येतदन्तानि संपदमभिजातस्य ।

२ आनन्दगिरिव्याख्या ।

विशेषणान्तराण्यपि सन्तीत्याह—**किंचेति** । व्यावर्त्यं कीर्तयति—**नेति** । अध्यात्माधिकारादिति शेषः । क्षमाक्रोधयोरेकार्थत्वेन पौनरुक्त्यमाशङ्क्य परिहरति—**उत्पन्नायामिति** । तयोरेवं विशेषादपौनरुक्त्यं फलतीत्याह—**इत्थमिति** । वृत्तिविशेषमेव विशदयति—**येनेति** । शौचस्य द्वैविध्यमेव प्रकटयति—**मृज्जलेत्यादिना** । नैर्मल्यमेव स्फोरयति—**मायेति** । उक्तमुपसंहरति—**एवमिति** । अतिमानित्वाभावमेव व्यनक्ति—**आत्मन इति** । कस्यैतानि विशेषणानीत्यपेक्षायामाह—**भवन्तीति** । साधकस्य मनुष्यदेहस्थस्यैव कथं दैवीं संपदमभिलक्ष्य जातत्वमित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कृपा । अलोलुप्त्वं इन्द्रियाणां विषयसंनिधावप्यविक्रिया । मार्दवं मृदुता । ह्रीर्लज्जा । अचापलं असति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वम् ॥ २ ॥ किंच तेजः प्रागल्भ्यं नतूग्रता । क्षमा आक्रुष्टस्य ताडितस्य वान्तर्विक्रियानुत्पत्तिः । उत्पन्नाया विक्रियायाः प्रशमनमक्रोध इत्युक्तम् । धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तः-

४ मधुसूदनीव्याख्या ।

प्रयोजनं विनापि वाक्पाण्यादिव्यापारयितृत्वं चापलं तदभावः । आर्जवादयोऽचापलान्ता ब्राह्मणस्यासाधारणा धर्माः ॥ २ ॥ तेजः प्रागल्भ्यं स्त्रीबालकादिभिर्मूढैरनभिभाव्यत्वम् । क्षमा सत्यपि सामर्थ्ये परिभवहेतुंप्रति क्रोधस्यानुत्पत्तिः । धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेष्वपि तदुत्तम्भकः प्रयत्नविशेषः । येनोत्तम्भितानि करणानि शरीरं च नावसीदन्ति । एतत्त्रयं क्षत्रियस्यासाधारणम् । शौचमाभ्यन्तरं *अर्थप्रयोगादौ मायानृतादिराहित्यं* नतु मृज्जलादिजनितं बाह्यमत्र ग्राह्यम् । तस्य शरीरशुद्धिरूपतया बाह्यत्वेनान्तःकरणवासनाशोधकत्वाभावात् तद्वासनानामेव सात्त्विकादिभेदभिन्नानां दैव्यासुर्यादिसंपद्रूपत्वेनात्र प्रतिपिपादयिषितत्वात् । स्वाध्यायादिवत्केनचिद्रूपेण वासनारूपत्वे तदप्यादेयमेव । द्रोहः परजिघांसया शस्त्रग्रहणादि तदभावोऽद्रोहः । एतद्द्वयं वैश्यस्यासाधारणम् । अत्यर्थं मानितात्मनि पूज्यत्वातिशयभावनातिमानिता तदभावो नातिमानिता पूज्येषु नम्रता । अयं शूद्रस्यासाधारणो धर्मः । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रुत्या विविदिषौपयिकतया विनियुक्ता असाधारणाः साधारणाश्च वर्णाश्रमधर्मा इहोपलक्ष्यन्ते । एते धर्मा भवन्ति निष्पद्यन्ते दैवीं शुद्धस-

५ भाष्योत्कर्षदीपिका ।

प्रकटीकरणं पैशुनं तदभावोऽपैशुनम् । दुःखितेषु कृपा दया । विषयसंनिधानेपीन्द्रियाणामविक्रियत्वमलोलुप्त्वम् । मार्दवमक्रौर्यम् । ह्रीरकार्येषु लोकलज्जा । असति प्रयोजने वाक्पाणिपादानामव्यापारयितृत्वमचापलम् ॥ २ ॥ किंच तेजः प्रागल्भ्यं मूढैरभिभवितुमशक्यत्वम् । सत्यपि विक्रियाकारणाक्रोशादौ विक्रियानुत्पत्तिः क्षमा । उत्पन्नाया विक्रियाया उपशमनक्रोध इत्यक्रोधेनापौनरुक्त्यम् । धृतिर्धैर्यमन्तःकरणस्य वृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्चावसादकारणे सत्यपि नावसीदति । शौचं द्विविधं बाह्यमाभ्यन्तरं च मृज्जलाभ्यां कृतं बाह्यं मायारागादिकालुष्याभावेन मनोबुद्ध्योर्नैर्मल्यमाभ्यन्तरम् । स्वाध्यायादिवद्बाह्यशौचस्यापि सात्त्विकवासनाधीनत्वेन बाह्यं शौचमत्र न ग्राह्यं तस्य शरीरशुद्धिरूपतया बाह्यत्वेनान्तःकरणवासनाशोधकत्वाभावादिति प्रत्युक्तम् । परिजिघां-

६ श्रीधरीव्याख्या ।

पैशुनं परोक्षे परदोषप्रकाशनम्, तद्वर्जनमपैशुनम्, भूतेषु दीनेषु दया, अलोलुप्त्वं लोभाभावः, अवर्णलोप आर्षः । मार्दवं मृदुत्वमक्रूरता, ह्रीः अकार्यप्रवृत्तौ लोकलज्जा, अचापलं व्यर्थक्रियाराहित्यम् ॥ २ ॥ किंच—**तेज इति** । तेजः प्रागल्भ्यं, क्षमा परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः, धृतिर्दुःखादिभिरवसीदतश्चित्तस्य स्थिरीकरणम्, शौचं बाह्याभ्यन्तरशुद्धिः, अद्रोहो जिघांसाराहित्यं,

७ अभिनवगुप्ताचार्यव्याख्या ।

चापलक्ष्यन्ते । इन्द्रियजयः । चापलं पूर्वापरमविमृश्य यत्करणं तदभावोऽचापलम् ॥ २ ॥ तेज आत्मनि उत्साहग्रहणेन भितत्वापाकरणम्

---

१ मधुसूदनः।

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**किंविशिष्टां संपदं, दैवीं देवानां संपदमभिलक्ष्य जातस्य दैवविभूत्यर्हस्य भाविकल्याणस्येत्यर्थः, हे भारत ॥ ३ ॥ अथेदानीमासुरी संपदुच्यते—दम्भो धर्मध्वजित्वम्, दर्पो धनस्वजनादिनिमित्त उत्सेकोऽतिमानः पूर्वोक्तः क्रोधश्च, पारुष्यमेव परुषवचनं यथा काणं चक्षुष्मान्, विरूपं रूपवान्, हीनाभिजनमुत्तमाभिजन इत्यादि । अज्ञानं चाविवेकज्ञानं मिथ्याप्रत्ययः कर्तव्याकर्तव्यादिविषयमभिजातस्य पार्थ । किमभिजातस्येत्याह—असुराणां संपदासुरी तामभिजातस्येत्यर्थः ॥ ४ ॥**

२ आनन्दगिरिव्याख्या ।

शङ्काह—**दैवीति** ॥ ३ ॥ आदेयत्वेन दैवीं संपदमुक्त्वा हेयत्वेनासुरीं संपदमाह—**अथेति** । उत्सेको मदो महदवधीरणाहेतुः, आत्मन्युत्कृष्टत्वाध्यारोपोऽतिमानः, क्रोधस्तु कोपापरपर्यायः स्वपरापकारप्रवृत्तिहेतुर्नेत्रादिविकारलिङ्गोऽन्तःकरणवृत्तिविशेषः । परुषो निष्ठुरः प्रत्यक्षरूक्षवाक् तस्य भावः पारुष्यं । तदुदाहरति—**यथेति** । तामभिजातस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

करणवृत्तिविशेषो येनोत्तम्भितानि देहादीनि नावसीदन्ति । शौचं द्विविधं मृज्जलाभ्यां बाह्यम्, आन्तरं मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभावः । अद्रोहः परजिघांसाया अभावः । नातिमानिता अत्यन्तं मानराहित्यम् । एतानि अभयादीनि दैवीं सत्त्वप्रधानां संपदं अभिलक्ष्य जातस्य स्वभावतो भवन्ति हे भारत ॥ ३ ॥ अथेदानीं रजस्तमोमयी आसुरीसंपदुच्यते—**दम्भ इति** । दम्भो धर्मध्वजित्वम् । दर्पः धनाभिजननिमित्त उत्सेकः । अभिमान आत्मनि पूज्यताबुद्धिः । क्रोधः प्रसिद्धः । पारुष्यं निष्ठुरभाषणम् । अज्ञानं अविवेकजनितो मिथ्याप्रत्ययः । एते आसुरीं संप-

४ मधुसूदनीव्याख्या ।

त्त्वमयीं संपदं वासनासन्ततिं शरीरारम्भकाले पुण्यकर्मभिरभिव्यक्तामभिलक्ष्य जातस्य पुरुषस्य 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन' इत्यादिश्रुतिभ्यः । हे भारतेति संबोधयन् शुद्धवंशोद्भवत्वेन पूतत्वात्त्वमेतादृशधर्मयोग्योऽसीति सूचयति ॥ ३ ॥ आदेयत्वेन दैवीं संपदमुक्त्वेदानीं हेयत्वेनासुरीं संपदमेकेन श्लोकेन संक्षिप्याह—दम्भो धार्मिकतयात्मनः ख्यापनं तदेव धर्मध्वजित्वम् । दर्पो धनस्वजनादिनिमित्तो महदवधीरणाहेतुर्गर्वविशेषः । अतिमान आत्मन्यत्यन्तपूज्यत्वातिशयाध्यारोपः 'देवाश्च वा असुराश्चोभये प्राजापत्याः तं स्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य ह्येतन्मुखं यदतिमानः' इति शतपथश्रुत्युक्तः । क्रोधः स्वपरापकारप्रवृत्तिहेतुरभिज्वलनात्मकोऽन्तःकरणवृत्तिविशेषः । पारुष्यं प्रत्यक्षरूक्षवदनशीलत्वम् । चकारोऽनुक्तानां भावभूतानां चापलादिदोषाणां समुच्चयार्थः । अज्ञानं कर्तव्याकर्तव्यादिविषयविवेकाभावः । चशब्दोऽनुक्तानामभावभूतानामधृत्यादिदोषाणां समुच्चयार्थः । आसुरीमसुररमणहेतुभूतां रजस्तमोमयीं संपदमशुभवासनासन्ततिं शरीरारम्भकाले पापकर्मभिरभिव्यक्तामभिलक्ष्य जातस्य कुपुरुषस्य दम्भाद्या अज्ञानान्ता दोषा एव भवन्ति न त्वभयाद्या गुणा इत्यर्थः । हे

५ भाष्योत्कर्षदीपिका ।

साभावोऽद्रोहः । आत्मनः पूज्यतातिशयभावनाऽतिमानिता तदभावो नातिमानिता । एतान्यभयादीनि एतदन्तानि सात्त्विकीं सत्त्वप्रधानां दैवीं देवानां संपदमभिलक्ष्य जातस्य दैवीविभूत्यर्हस्य भाविकल्याणस्य भवन्ति । त्वमपि उत्तमवंशोद्भवत्वाद्दैवीं संपदमभिलक्ष्य जातोऽसीति सूचयन्नाह भारतेति ॥३॥ उपादेयां दैवीं संपदमुक्त्वा हेयामासुरीं तामाह । दम्भः धर्मध्वजित्वं धार्मिकतया आत्मनः ख्यापनम् । दर्पः विद्यास्वाभिजनादिनिमित्तो महदवज्ञाहेतुरुत्सेको मदः । आत्मन्युत्कृष्टत्वारोपोऽभिमानः । क्रोधः परापकारप्रवृत्तिहेतुर्नेत्रादिविकारलिङ्गोऽन्तःकरणस्य वृत्तिविशेषः । परुषो निष्ठुरः काणं चक्षुष्मानित्यादिप्रत्यक्षरूक्षवाक् परुषस्य भावः पारुष्यम् । अज्ञानं कर्तव्याकर्तव्यविषयविवेकाभावः । चकारावमुक्तानां चापल्याधृत्यादिदोषाणां समुच्चयार्थौ । आसुरीमसुराणां संपदमभिलक्ष्य जातस्य दम्भादीन्यज्ञानान्तानि भवन्तीत्यनुषज्यते । पार्थेति संबोधयन्नासुर्यां संपद्यन्तर्गतौ स्त्रीस्वभावौ शोकमोहौ मोक्षार्थिना

६ श्रीधरीव्याख्या ।

अतिमानिता आत्मन्यतिपूज्यत्वाभिमानस्तदभावो नातिमानिता, एतान्यभयादीनि षड्विंशतिप्रकाराणि दैवीं संपदमभिजातस्य भवन्ति । देवयोग्यां सात्त्विकीं संपदमभिलक्ष्य तदाभिमुख्येन जातस्य भाविकल्याणस्य पुंसो भवन्तीत्यर्थः ॥ ३ ॥ आसुरीं संपदमाह—**दम्भ इति** । दम्भो धर्मध्वजित्वम्, दर्पो धनविद्यादिनिमित्तश्चित्तस्योत्सेकः, अभिमानो व्याख्यातः, क्रोधः प्रसिद्धः, पारुष्यं निष्ठुरत्वम्, अज्ञानमविवेकः, आसुरीमित्युपलक्षणम् । असुराणां राक्षसानां च या संपत् तामासुरीमभिलक्ष्य जातस्यैतानि दम्भादीनि भवन्तीत्यर्थः

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥**
**द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च।**
**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम्।

**अनयोः संपदोः कार्यमुच्यते—दैवीति। दैवी संपद् या सा विमोक्षाय संसारबन्धनात्, निबन्धाय नियतो बन्धो निबन्धस्तदर्थमासुरी संपन्मताभिप्रेता तथा राक्षसी। तत्रैवमुक्तेऽर्जुनस्यान्तर्गतं भावं किमहमासुरसंपद्युक्तः किंवा दैवीसंपद्युक्त इत्येवमालोचनारूपमालक्ष्याह भगवान्-मा शुचः शोकं मा कार्षीः। संपदं दैवीमभिजातोऽस्यभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमसीत्यर्थः। हे पाण्डव ॥ ५ ॥ द्वौ भूतेति। द्वौ द्विसंख्याकौ भूतसर्गौ भूतानां मनुष्याणां सर्गौ सृष्टी भूतसर्गौ सृज्येते इति सर्गौ भूतान्येव सृज्यमानानि दैवासुरसंपद्युक्तानि द्वौ भूतसर्गावित्युच्येते, 'द्वया ह प्राजापत्या**

२ आनन्दगिरिव्याख्या।

दम्भादीन्यज्ञानान्तानि भवन्तीत्यनुषज्यते ॥ ४ ॥ कार्यं फलविभागः। आसुरीत्युपलक्षणं राक्षसी चेति द्रष्टव्यमित्याह—**तथेति**। फलविभागे संपदोरेवमुक्ते प्रतीत्यार्जुनस्याभिप्रायं भगवतो वचनमित्याह—**तत्रेति**। तत्राभिजात्यं हेतुं करोति—**पाण्डवेति** ॥ ५ ॥ निर्दयानां रक्षसां संपत्तृतीयास्ति सा कस्मान्नोक्तेत्याशङ्क्यासुर्यामन्तर्भावादित्याह—**द्वाविति**। भूतानां द्वैविध्ये मानत्वेनोद्गीथब्राह्मणमुदाहरति—**द्वया हेति**। संपद्द्वययुतेभ्योऽतिरिक्ता-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

दमभिलक्ष्य जातस्य भवन्ति हे पार्थ ॥ ४ ॥ अनयोः संपदोः कार्यमाह—**दैवीति**। दैवी पूर्वोक्ता। अर्जुनस्य शङ्का किमहमासुर्यां संपदि जातोऽस्मीति तामपनुदति माशुच इति ॥ ५ ॥ द्वौ द्विसंख्यौ भूतसर्गौ भूतानां स्वभावौ मे मद्व-

४ मधुसूदनीव्याख्या।

पार्थेति संबोधयन्विशुद्धमातृकत्वेन तदयोग्यत्वं सूचयति ॥ ४ ॥ अनयोः संपदोः फलविभागोऽभिधीयते—यस्य वर्णस्य यस्याश्रमस्य च या विहिता सात्त्विकी फलाभिसन्धिरहिता क्रिया सा तस्य दैवी संपत्। सा सत्त्वशुद्धिभगवद्भक्तिर्ज्ञानयोगस्थितिपर्यन्ता सती संसारबन्धनाद्विमोक्षाय कैवल्याय भवति अतः सैवोपादेया श्रेयोर्थिभिः। या तु यस्य शास्त्रनिषिद्धा फलाभिसन्धिपूर्वा साहंकारा च राजसी तामसी क्रिया तस्य सा सर्वाप्यासुरी संपत् अतो राक्षस्यपि तदन्तर्भूतैव । सा निबन्धाय नियताय संसारबन्धाय मता संमता शास्त्राणां तदनुसारिणां च अतः सा हेयैव श्रेयोऽर्थिभिरित्यर्थः। तत्रैवंसत्यहं कया संपदा युक्त इति संदिहानमर्जुनमाश्वासयति भगवान्—मा शुच इति। मा शुचोऽहमासुर्या संपदा युक्त इति शङ्कया शोकमनुतापं मा कार्षीः, दैवीं संपदमभिलक्ष्य जातोऽसि प्रागर्जितकल्याणो भाविकल्याणश्च त्वमसि हे पाण्डव, पण्डुपुत्रेष्वन्येष्वपि दैवी संपत्प्रसिद्धा किं पुनस्त्वयीति भावः ॥ ५ ॥ ननु भवतु राक्षसी प्रकृतिरासुर्यामन्तर्भूता शास्त्रनिषिद्धक्रियोन्मुखत्वेन सामान्यात्कामोपभोगप्राधान्यप्राणिहिंसाप्राधान्याभ्यां क्वचिद्भेदेन व्यपदेशोपपत्तेः। मानुषी तु प्रकृतिस्तृतीया पृथगस्ति । 'त्रया ह प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुराः' इति श्रुतेः। अतः सापि हेयकोटावुपादेयकोटौ वा वक्तव्येत्यत आह—अस्मिँल्लोके सर्वस्मिन्नपि संसारमार्गे द्वौ द्विप्रकारावेव भूतसर्गौ मनुष्यसर्गौ भवतः। कौ तौ दैव आसुरश्च ननु राक्षसो

५ भाष्योत्कर्षदीपिका।

त्वयावश्यं परित्याज्याविति ध्वनयति ॥ ४ ॥ अनयोः संपदोः फलविभागमाह। दैवी संपत्संसारबन्धनात् विमोक्षायासुरीसंपन्निबन्धाय नियमेन बन्धाय मताभिप्रेता। एवमुक्ते किमहं दैव्या संपदा युक्तः किंवासुर्या युक्त इत्यालोचनरूपमर्जुनस्यान्तर्गतभावमुपलक्ष्याह। मा शुचः शोकं मा कार्षीः। दैवीं संपदमभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमित्यर्थः। पाण्डवेति संबोधयन्नासुर्यां संपद्यन्तर्गतौ शोकमोहावतिशूरस्य दैव्या संपदा युक्तस्य शोकादिविनिर्मुक्तस्य पाण्डोः पुत्रः दैवीं संपदमभिजातस्त्वमङ्गीकर्तुमयोग्योऽसीति द्योतयति ॥ ५ ॥ निर्दयानां रक्षसां संपदमासुर्यामन्तर्भाव्य देवासुरलक्षणं सर्गद्वयमनुवदति—**द्वाविति**।

६ श्रीधरीव्याख्या।

॥ ४ ॥ एतयोः संपदोः कार्यं दर्शयन्नाह—**दैवी संपदिति**। दैवी या संपत्तया युक्तो मयोक्ते तत्त्वज्ञानेऽधिकारी, आसुर्या संपदा युक्तस्तु नित्यं संसारीत्यर्थः । एतच्छ्रुत्वा किमहमत्राधिकारी न वेति संदेहव्याकुलचित्तमर्जुनमाश्वासयति । हे पाण्डव, मा शुचः शोकं मा कार्षीः। यतस्त्वं दैवीं संपदमभिजातोऽसि ॥ ५ ॥ आसुरीसंपत्सर्वात्मना वर्जयितव्येत्येतदर्थमासुरीं संपदं प्रपञ्चयितुमाह—**द्वाविति** । द्वौ द्विप्रकारौ भूतानां सर्गौ मे मद्वचनाच्छृणु । आसुरराक्षसप्रकृत्योरेकीकरणेन द्वावित्युक्तम्। अतो 'राक्षसीमासुरीं

७ अभिनवगुप्ताचार्यव्याख्या।

॥ ३ ॥ ४ ॥ दैवी संपदेषा । सा च तव मोक्षाय कामनापरिहारात् । अतस्त्वं शोकं मा कार्षीः भ्रात्रादीन्हत्वा सुखं कथमश्नुवीयेति।

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

देवाश्चासुराश्च' इति श्रुतेः । लोकेऽस्मिन्संसार इत्यर्थः । सर्वेषां द्वैविध्योपपत्तेः । कौ तौ भूतसर्गावित्युच्येते प्रकृतावेव दैव आसुर एव च । उक्तयोरेव पुनरनुवादे प्रयोजनमाह–दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितो न त्वासुरो विस्तरशोऽतस्तत्परिवर्जनार्थमासुरं पार्थ, मे मम वचनादुच्यमानं विस्तरशः शृण्ववधारय ॥ ६ ॥ अध्यायपरिसमाप्तेरासुरी संपत्प्राणिविशेषणत्वेन प्रदर्श्यते प्रत्यक्षीकरणेन च शक्यतेऽस्याः परिवर्जनं कर्तुमिति—प्रवृत्तिमिति । प्रवृत्तिं च प्रवर्तनं यस्मिन्पुरुषार्थसाधने कर्तव्ये प्रवृत्तिस्तां, निवृत्तिं च तद्विपरीतां यस्मादनर्थहेतोर्निवर्तितव्यं सा निवृत्तिस्तां च जना आसुरा न विदुर्न जानन्ति । न केवलं प्रवृत्तिनिवृत्ती एव न विदुर्न शौचं नापि चाचारो न सत्यं तेषु विद्यते । अशौचा अनाचारा मायाविनोऽनृत-

२ आनन्दगिरिव्याख्या ।

नामपि प्राणिभेदानां संभवात्कुतो भूतानां द्वित्वनियतिरित्याशङ्क्याह—**सर्वेषामिति** ॥ ६ ॥ नन्वध्यायशेषेणासुरसंपद्दर्शनमयुक्तं तस्यास्त्याज्यत्वेन पङ्कप्रक्षालनन्यायावतारादित्याशङ्क्याह—**प्रत्यक्षीकरणेनेति** । वर्जनीयामासुरीं संपदं विवृणोति—**प्रवृत्तिं चेति** । तां विहितां प्रवृत्तिं न जानन्तीत्यर्थः । तां च निषिद्धां क्रियां न जानन्तीति संबन्धः । न शौचमित्यादेस्तात्पर्यमाह—**अनाचारा इति** । शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चनाच्छृणु ॥ ६ ॥ प्रवृत्तिं विधिवाक्यं निवृत्तिं निषेधवाक्यं न विदुः । धर्माधर्मयोरिष्टानिष्टहेतुत्वज्ञानरहिता इत्यर्थः ।

४ मधुसूदनीव्याख्या ।

मानुषो वाऽधिकः सर्गोऽस्तीत्यर्थः । यो यदा मनुष्यः शास्त्रसंस्कारप्राबल्येन स्वभावसिद्धौ रागद्वेषावभिभूय धर्मपरायणो भवति स तदा देवः, यदा तु स्वभावसिद्धरागद्वेषप्राबल्येन शास्त्रसंस्कारमभिभूयाधर्मपरायणो भवति स तदाऽसुर इति द्वैविध्योपपत्तेः । नहि धर्माधर्माभ्यां तृतीया कोटिरस्ति । तथाच श्रूयते 'द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरा इति दमदानदयाविधिः' इति । अपरे तु वाक्ये 'त्रया ह प्राजापत्या' इत्यादौ दमदानदयारहिता मनुष्या असुरा एव सन्तः केनचित्साधर्म्येण देवा मनुष्या असुरा इत्युपचर्यन्त इति नाधिक्यावकाशः । एकेनैव दइत्यक्षरेण प्रजापतिना दमरहितान्मनुष्यान्प्रति दमोपदेशः कृतः, दानरहितान्प्रति दानोपदेशः, दयारहितान्प्रति दयोपदेशो नतु विजातीया एव देवासुरमनुष्या इह विवक्षिताः । मनुष्याधिकारत्वाच्छास्त्रस्य । तथाचान्त उपसंहरति 'तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्ददद इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेद्दमं दानं दयामिति' । तस्माद्राक्षसी मानुषी च प्रकृतिरासुर्यामेवान्तर्भवतीति युक्तमुक्तं द्वौ भूतसर्गाविति । तत्र दैवो भूतसर्गो मया त्वां प्रति विस्तरशो विस्तरप्रकारैः प्रोक्तः स्थितप्रज्ञलक्षणे द्वितीये, भक्तिलक्षणे द्वादशे, ज्ञानलक्षणे त्रयोदशे, गुणातीतलक्षणे चतुर्दशे, इह चाभयमित्यादिना । इदानीमासुरं भूतसर्गं मे मद्वचनैर्विस्तरशः प्रतिपाद्यमानं त्वं शृणु हानार्थमवधारय । सम्यक्तया ज्ञातस्य हि परिवर्जनं शक्यते कर्तुमिति हे पार्थेति संबन्धसूचनेनानुपेक्षणीयतां दर्शयति ॥ ६ ॥ वर्जनीयामासुरीं संपदं प्राणिविशेषणतया तानहमित्यतः प्राक्तनैर्द्वादशभिः

५ भाष्योत्कर्षदीपिका ।

द्वौ द्विसंख्याकौ भूतानां मनुष्याणां सर्गौ लोकेऽस्मिन्संसारे इत्यर्थः । कौ तावित्यत आह । प्रकृतावेव दैव आसुर एव च । तथाच सृज्यत इति सर्गो भूतान्येव सृज्यमानानि दैव्या संपदा युक्तानि दैवो भूतसर्ग इत्युच्यते । तान्येवासुर्या संपदा युक्तानि आसुरो भूतसर्ग इति । तथाच श्रुतिः 'द्वया ह प्राजापत्या देवाश्चासुराश्चेति' । उक्तयोरेव पुनरनुवादे प्रयोजनमाह । दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितः नत्वासुरोऽतस्तत्परिवर्जनार्थमासुरं भूतसर्गं मे मम वचनादुच्यमानं विस्तरशः शृणु अवधारय श्रुत्वा च शोकमोहौ परित्यजेति ज्ञापनाय संबोधयति पार्थेति ॥ ६ ॥ ज्ञानं विना परिवर्जनासंभवादासुरीं संपदं प्राणिविशेषणविषयत्वेन प्रदर्शयति—**प्रवृत्तिं चेति** । आसुरा जनाः प्रवृत्तिं प्रवृत्तिविषयं पुरुषार्थसाधनं चकारा-

६ श्रीधरीव्याख्या ।

चैव प्रकृतिं मोहिनीं श्रिताः' इत्यादिना नवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः । स्पष्टमन्यत् ॥ ६ ॥ आसुरीं विस्तरतो निरूपयति—**प्रवृत्तिं चेत्यादिद्वादशभिः** । धर्मे प्रवृत्तिं, अधर्मान्निवृत्तिं च आसुरस्वभावा जना न जानन्ति । अतः शौचमाचारः सत्यं च तेषु

७ अभिनवगुप्ताचार्यव्याख्या ।

शिष्टं स्पष्टम् ॥ ५ ॥ द्वाविति । एषा दैवी संपदुक्ता अभयमित्यादिना ॥ ६ ॥ आसुरीमाह—प्रवृत्तिंचेत्यादिना । प्रवृत्तिः कुत इदमुत्पन्न-

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**वादिनो ह्यासुराः ॥ ७ ॥ किंच—असत्येति । असत्यं यथा वयमनृतप्रायास्तथेदं जगत्सर्वमसत्यमप्रतिष्ठं च नास्य धर्माधर्मौ प्रतिष्ठातोऽप्रतिष्ठं चेति त आसुरा जनाः जगदाहुरनीश्वरं नच धर्माधर्मसव्यपेक्षकोऽस्य शासितेश्वरो विद्यत इत्यतोऽनीश्वरं जगदाहुः । किंचापरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसंयोगाज्जगत्सर्वं संभूतम् । किमन्यत्कामहैतुकं कामहेतुकमेव कामहैतुकं किमन्यज्जगतः कारणं न किंचिददृष्टं धर्माधर्मादि कारणान्तरं विद्यते जगतः काम एव प्राणिनां**

२ आनन्दगिरिव्याख्या ।

**पृथगुपादानम् ॥ ७ ॥** असुराणां जनानां विशेषणान्तराण्यपि सन्तीत्याह—**किंचेति** । विद्यत इत्याहुरिति पूर्वेण संबन्धः । शास्त्रैकगम्यमदृष्टं निमित्तीकृत्य प्रकृत्यधिष्ठात्रात्मकेन ब्रह्मणा रहितं जगदिष्यते चेत्कथं तदुत्पत्तिरित्याशङ्क्याह—**किंचेति** । किमन्यदित्यादेराक्षेपस्य तात्पर्यमाह—**न किंचिदिति** ॥ ८ ॥ यथोक्ता दृष्टिर्ब्रह्मदृष्टिविदिष्टै-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ ७ ॥ असत्यं सत्यवर्जितं जगत्प्राणिजातम् । तथाऽप्रतिष्ठं धर्माधर्माख्या प्रतिष्ठा आश्रयस्तच्छून्यम् । अनीश्वरं अनियन्तृकं आहुः । अपरस्परसंभूतं 'अपरस्पराः क्रियासातत्ये' इति सुट् । बीजाङ्कुरवत्परस्परकारणीभूतानां धर्माधर्मतद्वासनानां यत्सातत्यं तस्मात्संभूतं । किमन्यल्लोकेऽस्ति न किंचिदपि धर्माद्यपेक्षया उत्पद्यते, किंतु सर्वं कामहैतुकं

४ मधुसूदनीव्याख्या ।

श्लोकैर्विवृणोति—प्रवृत्तिं प्रवृत्तिविषयं धर्मं चकारात्तत्प्रतिपादकं विधिवाक्यं च एवं निवृत्तिविषयमधर्मं चकारात्तत्प्रतिपादकं निषेधवाक्यं च आसुरस्वभावा जना न जानन्ति । अतस्तेषु न द्विविधं शौचं नाप्याचारो मन्वादिभिरुक्तः । न सत्यं च प्रियहितयथार्थभाषणं विद्यते । शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानम् । अशौचा अनाचारा अनृतवादिनो ह्यसुरा मायाविनः प्रसिद्धाः ॥ ७ ॥ ननु धर्माधर्मयोः प्रवृत्तिनिवृत्तिविषययोः प्रतिपादकं वेदाख्यं प्रमाणमस्ति निर्दोषं भगवदाज्ञारूपं सर्वलोकप्रसिद्धं तदुपजीवीनि च स्मृतिपुराणेतिहासादीनि सन्ति तत्कथं प्रवृत्तिनिवृत्तितत्प्रमाणाद्यज्ञानं, ज्ञाने वाज्ञोल्लङ्घिनां शासितरि भगवति सति कथं तदननुष्ठानेन शौचाचारादिरहितत्वं दुष्टानां शासितुर्भगवतोऽपि लोकवेदप्रसिद्धत्वादत आह—सत्यमबाधिततात्पर्यविषयं तत्त्वावेदकं वेदाख्यं प्रमाणं तदुपजीवि पुराणादि च नास्ति यत्र तदसत्यम् । वेदस्वरूपस्य प्रत्यक्षसिद्धत्वेऽपि तत्प्रामाण्यानभ्युपगमाद्विशिष्टाभावः । अतएव नास्ति धर्माधर्मरूपा प्रतिष्ठा व्यवस्थाहेतुर्यस्य तदप्रतिष्ठम् । तथा नास्ति शुभाशुभयोः कर्मणोः फलदातेश्वरो नियन्ता यस्य तदनीश्वरं ते आसुरा जगदाहुः । बलवत्पापप्रतिबन्धाद्वेदस्य प्रामाण्यं ते न मन्यन्ते । ततश्च तद्बोधितयोर्धर्माधर्मयोरीश्वरस्य चानङ्गीकाराद्यथेष्टाचरणेन ते पुरुषार्थभ्रष्टा इत्यर्थः । शास्त्रैकसमधिगम्यधर्माधर्मसहायेन प्रकृत्यधिष्ठात्रा परमेश्वरेण रहितं जगदिष्यते चेत्कारणाभावात्कथं तदुत्पत्तिरित्याशङ्क्याह—अपरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुंसयोरन्योन्यसंयोगात्संभूतं जगत्कामहैतुकं कामहेतुकमेव कामहैतुकं कामातिरिक्तकारणशून्यम् । ननु धर्माद्यप्यस्ति कारणं नेत्याह—अन्यददृष्टं कारणं किमस्ति नास्त्येवेत्यर्थः । अदृष्टाङ्गीकारेऽपि क्वचिद्दृत्वा स्वभावे

५ भाष्योत्कर्षदीपिका ।

तद्बोधकं शास्त्रं च । निवृत्तिं निवृत्तिविषयमनर्थसाधनं तद्बोधकं शास्त्रं च न विदुः । न केवलमेतावदेव किंतु न शौचं नापि चाचारो न सत्यं तेषु आसुरेषु विद्यते । अशौचाः अनाचारा मायाविनोऽनृतवादिनो यत आसुरा अत इत्यर्थः । शौचसत्ययोः मन्वाद्युक्ताचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानम् ॥ ७ ॥ किंच असत्यं यथा वयमनृतप्रायास्तथेदं जगदप्यसत्यमबाधितप्रमाणशून्यत्वादनृतप्रायम् । अप्रतिष्ठं न विद्यते धर्माधर्मौ प्रतिष्ठा व्यवस्थाहेतुर्यस्य तत्तथा धर्माधर्मसापेक्षोऽस्य शासितेश्वरो न विद्यते इत्यनीश्वरमाहुः । ननु धर्माधर्मतदध्यक्षाभावे जगदुत्पत्तिं कथमाहुरिति तत्राह । अपरस्परसंभूतं परापरशब्दावन्यशब्दपर्यायौ । कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसङ्गाज्जातं काम एव हेतुर्यस्य तत्कामहेतुकं किमन्यत्कामादन्यत् किंचिददृष्टं धर्मादिकारणान्तरं जगतो न विद्यते किंतु काम एव स्त्रीपुरुषयोः सङ्गहेतुः सर्वस्य जगतः कारणमिति लौकायतिकदृष्टिरियम् । यत्तु 'अपरस्पराः क्रियासा-

६ श्रीधरीव्याख्या ।

नास्त्येव ॥ ७ ॥ ननु वेदोक्तयोर्धर्माधर्मयोः प्रवृत्तिं निवृत्तिं च कथं न विदुः, कुतो वा धर्माधर्मयोरनङ्गीकारे जगतः सुखदुःखादिव्यवस्था स्यात्, कथं वा शौचाचारादिविषया ईश्वराज्ञामतिवर्तेरन्, ईश्वरानङ्गीकारे च कुतो जगदुत्पत्तिः स्यादतआह—**असत्यमिति** । नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिंस्तादृशं जगदाहुः । वेदादीनां प्रामाण्यं न मन्यन्त इत्यर्थः । तदुक्तम्—'त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः' इत्यादि । अत एव नास्ति धर्माधर्मरूपा प्रतिष्ठा व्यवस्थाहेतुर्यस्य तत् । स्वाभाविकं जगद्वैचित्र्यमाहुरित्यर्थः । अत एव

१ नीलकण्ठः.

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**
**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कारणमिति लोकायतिकदृष्टिरियम् ॥ ८ ॥ एतामिति । एतां दृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा विभ्रष्टपरलोकसाधना अल्पबुद्धयोऽल्पविषयविषयाल्पैव बुद्धिर्येषां तेऽल्पबुद्धयः प्रभवन्त्युद्भवन्त्युग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः क्षयाय जगतः प्रभवन्तीति संबन्धः । जगतोऽहिताः शत्रव इत्यर्थः ॥ ९ ॥ ते च—काममिति । काममिच्छाविशेषमाश्रित्यावष्टभ्य दुष्पूरमशक्यपूरणं दम्भमानमदान्विता दम्भश्च मानश्च मदश्च दम्भमानमदास्तैरन्विता दम्भमानमदान्विताः मोहाद्-**

२ आनन्दगिरिव्याख्या ।

वेत्याशङ्क्याह—**एतामिति** । प्रागुपदिष्टामेतां लोकयतिकदृष्टिमवलम्ब्येति यावत् । **नष्टस्वभावत्वमेव स्पष्टयति—विभ्रष्टेति** । विषयबुद्धेरल्पत्वं दृष्टमात्रोद्देशेन प्रवृत्तत्वं, जगतः प्राणिजातस्येति यावत् ॥ ९ ॥ तानेव दुराचारानासुरान्प्रकारान्तरेण विशिनष्टि—**ते चेति** ॥ १० ॥ तानेव विधान्तरेण विशिनष्टि—**किंचेति** । चिन्तामात्मीययोगक्षेमोपायालोचनात्मिकामपरिमेयविषयत्वात्परिमातुमशक्यामाश्रिता इति संबन्धः । एष कामोपभोगः परमयनं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्त्रीपुंसयोर्मिथुनीभावः कामस्तदुत्थस्वभावादेव जन्तुर्जायते न त्वदृष्टादित्यर्थः ॥ ८ ॥ एतामनुपदोक्तां लोकायतिकानामभिप्रेतां दृष्टिमवष्टभ्य तामाश्रित्य नष्टात्मानः कामादिवशेन नष्टधैर्याः । यतोऽल्पे क्षुद्रे दृष्टसुखे एव बुद्धिर्येषां तेऽल्पबुद्धयः । अहिताः हिंस्राः ॥ ९ ॥ असद्ग्राहान् वश्याकर्षणनिध्यञ्जनकायसिद्ध्यादिसाधनेषु असत्सु असमीचीनेषु ग्राहा निर्बन्धा अत्यन्ताभिनिवेशास्तान् गृहीत्वा अशुचीनि मद्यमांसादिसापेक्षाणि व्रतानि नियमविशेषा येषां ते तथा-

४ मधुसूदनीव्याख्या ।

पर्यवसानात्स्वाभाविकमेव जगद्वैचित्र्यमस्तु दृष्टे संभवत्यदृष्टकल्पनानवकाशात् । अतः काम एव प्राणिनां कारणं नान्यददृष्टेश्वरादीत्याहुरिति लोकायतिकदृष्टिरियम् ॥ ८ ॥ इयं दृष्टिः शास्त्रीयदृष्टिवदिष्टैवेत्याशङ्क्याह—एतां प्रागुक्तां लोकायतिकदृष्टिमवष्टभ्यालम्ब्य नष्टात्मानो भ्रष्टपरलोकसाधनाः अल्पबुद्धयो दृष्टमात्रोद्देशप्रवृत्तमतयः उग्रकर्माणो हिंस्रा अहिताः शत्रवो जगतः प्राणिजातस्य क्षयाय व्याघ्रसर्पादिरूपेण प्रभवन्त्युत्पद्यन्ते । तस्मादियं दृष्टिरत्यन्ताधोगतिहेतुतया सर्वात्मना श्रेयोर्थिभिर्हेयैवेत्यर्थः ॥ ९ ॥ ते च यदा केनचित्कर्मणा मनुष्ययोनिमापद्यन्ते तदाह—कामं तत्तद्दृष्टविषयाभिलाषं दुःपूरं पूरयितुमशक्यं दम्भेनाधार्मिकत्वेऽपि धार्मिकत्वख्यापनेन मानेनापूज्यत्वेऽपि पूज्यत्वख्यापनेन, मदेनोत्कर्षरहितत्वेऽप्युत्कर्षविशेषाध्यारोपेण महदवधी-

५ भाष्योत्कर्षदीपिका ।

तत्वे' इति श्रुट् । बीजाङ्कुरवत्परस्परकारणीभूतानां धर्माधर्मवासनानां यत्सातत्यं तस्मात्संभूतं किमन्यल्लोकेऽस्ति । न किंचिदपि धर्माद्यपेक्षया उत्पद्यते किंतु सर्वं कामहेतुकं स्त्रीपुरुषयोर्मिथुनीभावः कामस्तदुत्थस्वभावादेव जन्तुर्जायते न त्वदृष्टादित्यन्ये तदुपेक्ष्यम् । अप्रतिष्ठमित्यनेन पौनरुक्त्यापादकस्य क्लिष्टकल्पनस्यान्याय्यत्वात् ॥ ८ ॥ एतामुदाहृतां लोकायतिकदृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा भ्रष्टपरलोकसाधना अल्पबुद्धयोऽल्पविषयविषयाल्पैव बुद्धिर्येषां ते दृष्टमात्रोद्देशप्रवृत्तमतय उग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः जगतोऽहिताः शत्रवो जगतः क्षयाय प्रभवन्ति उद्भवन्ति । तथाचैतादृशदोषैर्दुष्टेयं दृष्टिः श्रेयोर्थिभिः सर्वथा नाश्रयणीयेति भावः ॥ ९ ॥ तानेव दुराचारान्प्रकारान्तरेण विशिनष्टि—ते च कामं तत्तदृष्टक्षुद्रविषयाभिलाषं दुःखेन पूरणं यस्याशक्यपूरणं अधार्मिकत्वेऽपि धार्मिकत्वख्यापनं दम्भः । अपूज्यत्वेऽपि पूज्यत्वाभिनिवेशो मानः । निकृष्टत्वेऽप्युत्कृष्टत्वारोपो महदवज्ञानहेतुर्मदस्तैरन्विता

६ श्रीधरीव्याख्या ।

नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः । तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत आह—**अपरस्परसंभूतमिति** । अपरश्च परश्चेत्यपरस्परं अपरस्परतोऽन्योन्यतः स्त्रीपुरुषमिथुनात्संभूतं जगत् किमन्यत्कारणमस्य, नास्त्यन्यत्किंचित्, किंतु कामहैतुकम् । स्त्रीपुरुषयोः काम एव प्रवाहरूपेण हेतुरस्येत्याहुरित्यर्थः ॥ ८ ॥ किंच—**एतामिति** । एतां लोकायतिकानां दृष्टिं दर्शनमाश्रित्य नष्टात्मानो मलिनचित्ताः सन्तोऽल्पबुद्धयो दृष्टार्थमात्रमतयः अतएव उग्रं हिंस्रं कर्म येषां तेऽहिता वैरिणो भूत्वा, जगतः क्षयाय प्रभवन्ति । उद्भवन्तीत्यर्थः ॥ ९ ॥ अपिच—**काममिति** । दुष्पूरं पूरयितुमशक्यं काममाश्रित्य दम्भादिभिर्युक्ताः सन्तः क्षुद्र-

१ नीलकण्ठः.

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥**
**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**

१ श्रीमच्छांकरभाष्यम् ।

विवेकतो गृहीत्वोपादायासद्ग्राहानशुभनिश्चयान्प्रवर्तन्ते लोकेऽशुचिव्रता अशुचीनि व्रतानि येषां तेऽशुचिव्रताः ॥ १० ॥ किंच—चिन्तेति । चिन्तामपरिमेयां च न परिमातुं शक्यतेऽस्याश्चिन्ताया इयत्ता साऽपरिमेया तामपरिमेयां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः । कामोपभोगपरमाः, काम्यन्त इति कामाः शब्दादयस्तदुपभोगपरमाः, अयमेव परमः पुरुषार्थो यः कामोपभोग इत्येवं निश्चितात्मान एतावदिति निश्चिताः ॥ ११ ॥ आशापाशेति । आशापाशशतैराशा एव पाशास्तच्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वत आकृष्यमाणाः कामक्रोधपरायणाः काम-

२ आनन्दगिरिव्याख्या ।

सुखस्येत्येतावत्पारत्रिकं तु नास्ति सुखमिति निश्चयवन्त इत्याह—एतावदितीति ॥ ११ ॥ आसुरानेव पुनर्विशिनष्टि—आशेति । अशक्योपायार्थविषयाऽनवगतोपायार्थविषया वा प्रार्थना आशास्ताः पाशा इव पाशास्तैषां

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भूताः सन्तः कुमार्गप्रवर्तनेन प्रवर्तन्ते जगतः क्षयायेति संबन्धः ॥ १० ॥ चिन्तां योगक्षेमविषयाम् । प्रलयान्तां मरणावधिम् । एतावत् देह एवात्मा कामभोग एव पुरुषार्थ इतोऽन्यन्नास्ति इति निश्चिताः निश्चयवन्तः । तथाच बार्हस्पत्यं सूत्रं 'चैतन्यविशिष्टः कामः पुरुषः, काम एवैकः पुरुषार्थः' इतिच ॥ ११ ॥ अन्यायेन परवञ्चनादिना अर्थ-

४ मधुसूदनीव्याख्या ।

रणाहेतुनान्विता असद्ग्राहानशुभनिश्चयाननेन मन्त्रेणेमां देवतामाराध्य कामिनीनामाकर्षणं करिष्यामोऽनेन मन्त्रेणेमां देवतामाराध्य महानिधीन्साधयिष्याम इत्यादिदुराग्रहरूपान् मोहादविवेकाद्गृहीत्वा नतु शास्त्रात् । अशुचिव्रताः अशुचीनि श्मशानादिदेशोच्छिष्टत्वाद्यवस्थानाद्यशौचसापेक्षाणि वामागमाद्युपदिष्टानि व्रतानि येषां तेऽशुचिव्रताः प्रवर्तन्ते यत्र कुत्राप्यवैदिके दृष्टफले । क्षुद्रदेवताराधनादाविति शेषः । एतादृशाः पतन्ति नरकेऽशुचावित्यग्रिमेणान्वयः ॥१०॥ तानेव पुनर्विशिनष्टि—चिन्तामात्मीययोगक्षेमोपायालोचनात्मिकामपरिमेयामपरिमेयविषयत्वात्परिमातुमशक्यां प्रलयो मरणमेवान्तो यस्यास्तां प्रलयान्ताम् । यावज्जीवमनुवर्तमानामिति यावत् । न केवलमशुचिव्रताः प्रवर्तन्ते किंत्वेतादृशीं चिन्तां चोपाश्रिता इति समुच्चयार्थश्चकारः । सदानन्तचिन्तापरा अपि न कदाचित्पारलौकिकचिन्तायुताः किंतु कामोपभोगपरमाः काम्यन्त इति कामा दृष्टाः शब्दादयो विषयास्तदुपभोग एव परमः पुरुषार्थो न धर्मादिर्येषां ते तथा । पारलौकिकमुत्तमं सुखं कुतो न कामयन्ते तत्राह—एतावद्दृष्टमेव सुखं नान्यदेतच्छरीरवियोगे भोग्यं सुखमस्त्येतत्कायातिरिक्तस्य भोक्तुरभावादिति निश्चिता एवं निश्चयवन्तः । तथाच बार्हस्पत्यं सूत्रं 'चैतन्यविशिष्टः कामः पुरुषः, काम एवैकः पुरुषार्थः' इति च ॥ ११ ॥ त ईदृशा असुराः—अशक्योपायार्थ-

५ भाष्योत्कर्षदीपिका ।

युक्ताः मोहादविवेकादसद्ग्राहानशुभनिश्चयान् । अनेन मन्त्रेणेमां देवतां वशीकृत्य कामिनीनामाकर्षणं शत्रुमारणं चावश्यं करिष्याम इत्यादिरूपान्दुराग्रहान् गृहीत्वा अशुचिव्रताः अशुचीनि श्मशानादिदेशोच्छिष्टावस्थानाद्यशौचसापेक्षाणि वामागमाद्युपदिष्टानि व्रतानि येषां ते इह लोके प्रवर्तन्ते एतादृशा असुरा जना इह लोके सन्तीत्यर्थः ॥ १० ॥ आसुरानेव विधान्तरेण पुनर्विशिनष्टि । चिन्तां योगक्षेमोपायालोचनात्मिकामपरिमेयविषयत्वात् यस्याश्चिन्ताया इयत्ता न परिमातुं शक्यते सा परिमातुमशक्या तां प्रलयान्तां मरणपर्यन्तामुपाश्रिताः । सदाचिन्तापरा इत्यर्थः । काम्यन्त इति कामाः शब्दादयस्तदुपभोगः परमपुरुषार्थो येषामयमेव परमः पुरुषार्थो यः कामोपभोगः पारत्रिकं तु सुखं नास्त्येवेत्येवं निश्चितात्मानः एतत्कायातिरिक्तस्य भोक्तुरभावात् । तथाच बार्हस्पत्ये सूत्रे 'चैतन्यविशिष्टः कामः पुरुषः, काम एवैकः पुरुषार्थः' इति च ॥ ११ ॥ आसुरानेव पुनर्विशिनष्टि । आशा अशक्योपायार्थविषया

६ श्रीधरीव्याख्या ।

देवताराधनादौ प्रवर्तन्ते । कथम् । असद्ग्राहान्गृहीत्वाऽनेन मन्त्रेणैतां देवतामाराध्य महानिधीन्साधयिष्याम इत्यादिदुराग्रहान्मोहमात्रेण स्वीकृत्य प्रवर्तन्ते । अशुचिव्रता अशुचीनि मद्यमांसादिविषयाणि व्रतानि येषां ते ॥ १० ॥ किंच—**चिन्तामिति** । प्रलयो मरणमेवान्तो यस्यास्ताम् । अपरिमेयां परिमातुमशक्यां चिन्तामाश्रिताः । नित्यचिन्तापरायणा इत्यर्थः । कामोपभोग एव परमो येषां ते, एतावदिति कामोपभोग एव परमः पुरुषार्थो नान्यदस्तीति कृतनिश्चयाः, अर्थसंचयानीहन्त इत्युत्तरेणान्वयः । तथाच बार्हस्पत्यं

७ अभिनवगुप्ताचार्यव्याख्या ।

मिति । निवृत्तिः क्व प्रलीयत इति । न किंचिद्दृष्टादन्यत्कार्यं विद्यते यत्रेत्यकिंचित्कं ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ चिन्ता तेषां प्रल-

**ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥**
**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**
**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

क्रोधौ परमयनं पर आश्रयो येषां ते कामक्रोधपरायणाः, ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न तु धर्मार्थमन्यायेनार्थसंचयानर्थप्रचयानन्यायेन परस्वापहरणादिनेत्यर्थः ॥१२॥ ईदृशश्च तेषामभिप्रायः—इदमिति । इदं द्रव्यमद्येदानीं मया लब्धमिदमन्यत्प्राप्स्ये मनोरथं मनस्तुष्टिकरमिदं चास्तीदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥ असौ मयेति । असौ देवदत्तनामा मया हतो दुर्जयः शत्रुः, हनिष्ये चान्यान्वराकानपरानपि, किमेते

२ आनन्दगिरिव्याख्या ।

शतैर्बद्धा इव श्रेयसः प्रच्याव्येत ततो नीयमाना इत्याह—आशा एवेति ॥ १२ ॥ तेषामभिप्रायोऽपि विवेकविरोधीत्याह—ईदृशश्चेति । द्रव्यं गोहिरण्यादि । इदमन्यद्बुद्धौ प्रार्थ्यमानत्वेन विपरिवर्तमानमित्येतत् ॥ १३ ॥ यथोक्ते मदभिप्राये प्रतिबन्धकः शत्रुरपि न संभवतीत्याह—असाविति । त्वत्तो विहीनानां त्वया परिभवेऽपि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संचयान् धनराशीन् ईहन्ते लिप्सन्ते ॥ १२ ॥ आशापाशान्विवृणोति—इदमद्येति ॥ १३ ॥ क्रोधपरायणत्वं कामपरायणत्वं च पूर्वोत्तराभ्यामर्धाभ्यामाह—असाविति । ईश्वरः समर्थः सर्वेषां निग्रहे । सिद्धः लब्धाखिलभोग-

४ मधुसूदनीव्याख्या ।

विषया अनवगतोपायार्थविषया वा प्रार्थना आशास्ता एव पाशा इव बन्धनहेतुत्वात्पाशास्तेषां शतैः समूहैर्बद्धा इव श्रेयसः प्रच्याव्येतस्तत आकृष्य नीयमानाः कामक्रोधौ परमयनमाश्रयो येषां ते कामक्रोधपरायणाः । स्त्रीव्यतिकराभिलाषपरानिष्टाभिलाषाभ्यां सदा परिगृहीता इति यावत् । ईहन्ते कर्तुं चेष्टन्ते कामभोगार्थं नतु धर्मार्थमन्यायेन परस्वहरणादिनार्थसंचयान्धनराशीन् । संचयानिति बहुवचनेन धनप्राप्तावपि तत्तृष्णानुवृत्तेर्विषयप्राप्तिवर्धमानतृष्णत्वरूपो लोभो दर्शितः ॥ १२ ॥ तेषामीदृशीं धनतृष्णानुवृत्तिं मनोराज्यकथनेन विवृणोति—इदं धनमद्य इदानीमनेनोपायेन मया लब्धमिदं तदन्यत् मनोरथं मनस्तुष्टिकरं शीघ्रमेव प्राप्स्ये, इदं पुरैव संचितं मम गृहेऽस्ति इदमपि बहुतरं भविष्यत्यागामिनि संवत्सरे पुनर्धनम् । एवं धनतृष्णाकुलाः पतन्ति नरकेऽशुचावित्यग्रिमेणान्वयः ॥ १३ ॥ एवं लोभं प्रपञ्च्य तदभिप्रायकथनेनैव तेषां क्रोधं प्रपञ्चयति—असौ देवदत्तनामा मया हतः शत्रुरतिदुर्जयः अत इदानीमनायासेन हनिष्ये च हनिष्याम्यपरान्सर्वानपि शत्रून् । न कोऽपि मत्सकाशाज्जीविष्यतीत्यपेरर्थः । चकारान्न केवलं हनिष्यामि तान् किंतु तेषां दारधनादिकमपि ग्रहीष्यामीत्यभिप्रायः । कुतस्तवैतादृशं सामर्थ्यं त्वत्तुल्यानां त्वदधिकानां वा शत्रूणां संभवादित्यत आह—ईश्वरोऽहं न केवलं मानुषो येन मत्तुल्योऽधिको वा

५ भाष्योत्कर्षदीपिका ।

अनवगतोपायार्थविषया वा प्रार्थनास्ता एव बन्धनहेतुत्वात्पाशाः । आशापाशानां शतैर्बद्धा एव सन्तः श्रेयसः प्रच्याव्येतस्तत आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परमयनं आश्रयो येषां ते । कामभोगार्थं कामभोगप्रयोजनाय नतु धर्मार्थमन्यायेन परस्वापहरणादिनार्थसंचयानर्थप्रचयान् ईहन्ते चेष्टन्ते ॥ १२ ॥ विवेकविरोधिनामासुराणामभिप्रायमाह । इदं द्रव्यं गोहिरण्याद्यद्य इदानीं मया लब्धमिदमन्यन्मनोरथं मनस्तुष्टिकरं प्राप्स्ये प्राप्स्यामि । इदमस्ति पुरैव संचितं इदमपि मे पुनर्धनमागामिनि संवत्सरे भविष्यति तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥ यथोक्ते मदभिप्राये प्रतिबन्धकः शत्रुरपि न संभवतीत्याह । असौ देवदत्तो दुर्जयः शत्रुर्मया हतः हनिष्ये चापरानन्यान्वराकान् । ननु तपस्विनां सत्त्वे कथं सर्वेषां पराभवे तव सामर्थ्यमित्याशङ्क्य

६ श्रीधरीव्याख्या ।

सूत्रम्-'काम एवैकः पुरुषार्थः' इति, 'चैतन्यविशिष्टः कामः पुरुषः' इति च ॥ ११ ॥ अतएव—आशेति । आशा एव पाशास्तेषां शतानि तैर्बद्धा इतस्तत आकृष्यमाणाः, कामक्रोधौ परमयनमाश्रयो येषां ते, कामभोगार्थमन्यायेन चौर्यादिनाऽर्थानां संचयान्राशीनीहन्ते इच्छन्ति ॥ १२ ॥ तेषां मनोराज्यं कथयन्नरकप्राप्तिमाह—इदमद्येति चतुर्भिः । प्राप्स्ये प्राप्स्यामि । मनोरथं मनसः प्रियम् । शेषं स्पष्टम् । एषां त्रयाणां श्लोकानामित्यज्ञानविमोहिताः सन्तो नरके पतन्तीति चतुर्थेनान्वयः ॥ १३ ॥ किंच—असा-

७ अभिनवगुप्ताचार्यव्याख्या ।

यान्ता अविरतं संसृतिप्रलयाद्युपरमात् । एतावदिति । कामोपभोग एव परं कृत्यं तन्नाशाच्च परं क्रोधः ॥ ११ ॥ अतएवाह कामक्रोध-

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**
**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

करिष्यन्ति तपस्विनः सर्वथापि नास्ति मत्तुल्य ईश्वरोऽहमहं भोगी सर्वप्रकारेण च सिद्धोऽहं संपन्नः पुत्रैः पौत्रैर्नप्तृभिर्न केवलं मानुषोऽहं बलवान्सुखी चाहमेवान्ये तु भूमिभारायावतीर्णाः ॥ १४ ॥ आढ्य इति । आढ्यो धनेनाभिजनेनाभिजनवान्सप्तपुरुषं श्रोत्रियत्वादिसंपन्नस्तेनापि न मम तुल्योऽस्ति कश्चित्कोऽन्योऽस्ति सदृशस्तुल्यो मया, किंच यक्ष्ये यागेनाप्यन्यानभिभविष्यामि दास्यामि नटादिभ्यो मोदिष्ये हर्षं चातिशयं प्राप्स्यामीत्येवमज्ञानेन विमोहिता अज्ञानविमोहिता विविधमविवेकभावमापन्नाः ॥ १५ ॥ अनेकेति । अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ता

२ आनन्दगिरिव्याख्या ।

त्वत्तुल्यानां शत्रूणां परिभवो निश्चितो न भवतीत्याशङ्क्याह—**सर्वथेति** । ऐश्वर्यातिरेकेऽपि कुतस्ते भोगसामर्थ्यमित्याशङ्क्याह—**अहमिति** । सिद्धत्वमेव स्फुटयति—**संपन्न इति** । बलवानोजस्वी, सुखी रोगरहितः ॥ १४ ॥ विद्यावृत्तधनाभिजनैर्मत्तुल्यो नास्तीत्याह—**आढ्य इति** । तथापि यागदानाभ्यां तत्फलेन वा कश्चिदधिको भविष्यतीत्याशङ्क्याह—**किंचेति** । नच तेषामेषोऽभिप्रायः साधीयानित्याह—**इत्येवमिति** ॥ १५ ॥ उक्तप्रकारविपर्ययेण कृत्याकृत्यविवेकविकलानां किं स्यादित्यपेक्षायामाह—**अनेकेति** । कामा विषयास्तेषां भोगेषु तत्प्रयुक्तेषूपभोगेष्विति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

साधनः । बलवान् विषयोपभोगे समर्थः । अतएव सुखी ॥ १४ ॥ आढ्यो धनी । अभिजनवान् कुलीनः अज्ञानेन अविवेकेन मोहिताः विविधं भ्रमं प्रापिताः ॥ १५ ॥ अनेकं नास्ति एकं चिन्तनीयं यस्य तदनेकं बहुषु विषयेषु पूर्वोक्तेषु लग्नं चित्तं येषां ते अनेकचित्तास्ते च ते विभ्रान्ताश्च किमिदमादौ साधनीयमिदमादौ साधनीयमिति विशे-

४ मधुसूदनीव्याख्या ।

कश्चित्स्यात् किमेते करिष्यन्ति वराकाः सर्वथा नास्ति मत्तुल्यः कश्चिदित्यनेनाभिप्रायेणेश्वरत्वं विवृणोति—यस्मादहं भोगी सर्वैर्भोगोपकरणैरुपेतः, सिद्धोऽहं पुत्रभृत्यादिभिः सहायैः संपन्नः, स्वतोऽपि बलवानत्योजस्वी, सुखी सर्वथा निरोगः ॥ १४ ॥ ननु धनेन कुलेन वा कश्चित्त्वत्तुल्यः स्यादित्यत आह–आढ्यो धनी अभिजनवान् कुलीनोऽप्यहमेवास्मि अतः कोऽन्योऽस्ति सदृशो मया न कोपीत्यर्थः । यागेन दानेन वा कश्चित्तुल्यः स्यादित्यत आह–यक्ष्ये यागेनाप्यन्यानभिभविष्यामि, दास्यामि धनं स्तावकेभ्यो नटादिभ्यश्च । ततश्च मोदिष्ये मोदं हर्षं लप्स्ये नर्तक्यादिभिः सहेत्येवमज्ञानेनाविवेकेन विमोहिता विविधं मोहं भ्रमपरंपरां प्रापिताः ॥१५॥ –उक्तप्रकारैरनेकैश्चित्तैस्तत्तद्दुष्टसंकल्पैर्विविधं भ्रान्ताः यतो मोहजालसमावृताः मोहो हिताहितवस्तुविवेकासामर्थ्यं तदेव जालमा-

५ भाष्योत्कर्षदीपिका ।

किमेते करिष्यन्ति तपस्विनो यतः सर्वथापि मत्तुल्यो नास्तीत्याह । ईश्वरोऽहम् । ऐश्वर्यातिरेकमेव प्रकटयति । भोगी सर्वभोगोपकरणवानहम् । सिद्धोऽहं पुत्रादिभिः संपन्नः । बलवान् न केवलं मानुषबलवान्सुखी चाहमेव ॥ १४ ॥ पुनरप्यासुराणामभिप्रायं वर्णयति । आढ्यो धनेन । अभिजनवान् सप्तपुरुषं श्रोत्रियत्वादिसंपन्नोऽहमस्मि तस्मान्मया धनाढ्येन कुलीनेन सदृशस्तुल्योऽन्यः कोऽस्ति । न कोऽपीत्यर्थः । किंच यागदानाभ्यां तत्फलेन चान्येभ्योऽधिको भविष्यामीत्याह । यक्ष्ये यागेनाप्यन्यानभिभविष्यामि । दास्यामि नटस्तावकादिभ्यः । मोदिष्ये हर्षं चातिशयं यागदानफलं प्राप्स्यामि । दानादिना चापरानभिभविष्यामीत्येवमज्ञानेन विमोहिताः विविधं मोहिताः अविवेकभावमापन्नास्तथा चैतेषामभिप्रायोऽसाधीयान् कदापि नोपादेय इति भावः ॥ १५ ॥ एवमभिप्रायवन्त आसुराः कृत्याकृत्यविवेकहीनाः कस्मिँल्लोके गच्छन्तीत्याकाङ्क्षायामाह । अनेकचित्तविभ्रान्ताः उक्तप्रकारैरनेकैश्चित्तैस्तद्दुष्टसंकल्पैर्विभ्रान्ताः विविधं भ्रान्ताः मोहजालसमावृताः कार्याकार्यहिताहितसारासारहेयोपादेयाविवेको मोहः स एव जाल-

६ श्रीधरीव्याख्या ।

**विति** । सिद्धः कृतकृत्यः । स्पष्टमन्यत् ॥ १४ ॥ किंच—**आढ्य इति** । आढ्यो धनादिसंपन्नः अभिजनवान्कुलीनः । यक्ष्ये यागाद्यनुष्ठानेनापि दीक्षितान्तरेभ्यः सकाशान्महतीं प्रतिष्ठां प्राप्स्यामि । दास्यामि स्तावकेभ्यश्च । मोदिष्ये हर्षं प्राप्स्यामीत्येवमज्ञानेन विमोहिताः मिथ्याभिनिवेशं प्रापिताः ॥ १५ ॥ एवंभूता यत्प्राप्नुवन्ति तच्छृणु—**अनेकेति** । अनेकेषु मनोरथेषु प्रवृत्तं चित्तमनेक-

७ अभिनवगुप्ताचार्यव्याख्या ।

परायणा इति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ अनेकचित्तविभ्रान्ता इति । निश्चयाभावात् । अशुचौ निरयेऽवीच्यादौ जन्ममरणसंताने

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**
**अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः।**

१ श्रीमच्छांकरभाष्यम्।

अनेकचित्तविभ्रान्ता मोहजालसमावृता मोहोऽविवेकोऽज्ञानं तदेव जालमिवावरणात्मकत्वात्तेन समावृताः प्रसक्ताः कामभोगेषु तत्रैव निषण्णाः सन्तस्तेनोपचितकल्मषाः पतन्ति नरकेऽशुचौ वैतरण्यादौ ॥ १६ ॥ आत्मेति । आत्मसंभाविताः सर्वगुणविशिष्टतयात्मनैव संभाविता आत्मसंभाविता न साधुभिः, स्तब्धा अप्रणतात्मानो धनमानमदान्विता धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्यामन्विता यजन्ते नामयज्ञैर्नाममात्रैर्यज्ञैस्ते दम्भेन धर्मध्वजितयाऽविधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितैः ॥ १७ ॥ अहमिति । अहंकारमहंकरणमहंकारो विद्यमानैरविद्यमानैश्च

२ आनन्दगिरिव्याख्या।

यावत् ॥ १६ ॥ ननु तेषामपि केषांचिद्वैदिके कर्मणि यागदानादौ प्रवृत्तिप्रतिपत्तेरयुक्तं वैतरण्यादौ पतनमिति चेत्तत्राह—आत्मेति ॥ १७ ॥ आसुरीं संपदमभिजातैरधर्मजातमेव संचीयते प्रवृत्तेरपि वैदिके वर्त्मनि नैव पुण्यमित्युक्तम् । ब्रह्मज्ञानात्पुनरासुरा दूरादेवोद्विजन्त इत्याह—अहंकारमिति । अहंकारमेव स्फोरयति—

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

षेण भ्रान्त्याकुला अनेकचित्तविभ्रान्ताः। मोहः असत्स्वपि सद्बुद्धिस्तदेव जालं तेन सम्यगावृताः। प्रसक्ताः प्रकर्षेण लग्नाः। अशुचौ विण्मूत्रादिमये ॥ १६ ॥ आत्मनैवात्मानं महान्तं मन्यन्ते ते आत्मसंभाविताः। स्तब्धाः अप्रणताः। धननिमित्तो मानो गर्वो मद उन्मत्तता ताभ्यामन्विताः धनमानमदान्विताः। नामयज्ञैर्नामसमात्रैर्यज्ञैः। दम्भेन धर्म-

४ मधुसूदनीव्याख्या।

वरणात्मकत्वेन बन्धहेतुत्वात्तेन सम्यगावृताः सर्वतो वेष्टिताः। मत्स्या इव सूत्रमयेन जालेन परवशीकृता इत्यर्थः। अतएव स्वानिष्टसाधनेष्वपि कामभोगेषु प्रसक्ताः सर्वथा तदेकपराः प्रतिक्षणमुपचीयमानकल्मषाः पतन्ति नरके वैतरण्यादौ अशुचौ विण्मूत्रश्लेष्मादिपूर्णे ॥ १६ ॥ ननु तेषामपि केषांचिद्वैदिके कर्मणि यागदानादौ प्रवृत्तिदर्शनादयुक्तं नरके पतनमिति नेत्याह—सर्वगुणविशिष्टा वयमित्यात्मनैव संभाविताः पूज्यतां प्रापिताः नतु साधुभिः कैश्चित्। स्तब्धा अनम्राः। यतो धनमानमदान्विताः धननिमित्तो यो मान आत्मनि पूज्यत्वातिशयाध्यासस्तन्निमित्तश्च यो मदः परस्मिन्गुर्वादावप्यपूज्यत्वाभिमानस्ताभ्यामन्वितास्ते नामयज्ञैर्नाममात्रैर्यज्ञैर्न तात्त्विकैर्दीक्षिताः सोमयाजीत्यादिनाममात्रसंपादकैर्वा यज्ञैरविधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितैर्दम्भेन धर्मध्वजितया नतु श्रद्धया यजन्ते अतस्तत्फलभाजो न भवन्तीत्यर्थः ॥ १७ ॥ यक्ष्ये दास्यामीत्यादिसंकल्पेन दम्भाहंकारादिप्रधानेन प्रवृत्तानामासुराणां बहिरङ्गसाधनमपि यागदानादिकं कर्म न सिध्यत्यन्तरङ्गसाधनं तु

५ भाष्योत्कर्षदीपिका।

मिवावरणात्मकत्वात् तेन सम्यगावृताः पक्षिण इव सूत्रमयेन जालेन बन्धनं गताः प्रसक्ताः कामभोगेषु कामानां विषयाणामुपभोगेषु प्रकर्षेण सक्ता आसक्तिं गताः तत्रैव निषण्णाः एतादृशाः सन्तस्तेनोपचीयमानकल्मषा अशुचौ विण्मूत्रादिपूर्णे वैतरण्यादिरूपे नरके पतन्ति ॥ १६ ॥ ननु तेषामपि केषांचिद्वैदिककर्मणि यागादौ प्रवृत्तिदर्शनात्कथं सर्वेषां वैतरण्यादौ पतनमिति चेत्तत्राह। आत्मसंभाविताः सर्वगुणविशिष्टा वयमित्यात्मनैवात्मनि संभाविताः पूज्यतां गताः नतु साधुभिः। स्तब्धाः अप्रणतात्मानोऽनम्राः। धनमानमदान्विताः धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्यां अन्विताः इदं भाष्यमुपलक्षणं धनमाननिमित्तो यो मदः तेनान्विता इत्यस्यापि। नामयज्ञैर्नाममात्रैर्यज्ञैस्ते यजन्ते। यतो दम्भेन धर्मध्वजितयाऽविधिपूर्वकं विहिताङ्गेतिकर्तव्यतापूर्वकं यथा न भवति तथेत्यर्थः ॥ १७ ॥ न केवलं दम्भेनाविधिपूर्वकं यजन्त इत्येतावदेवापि त्वहंकारं विद्यमानैरविद्य-

६ श्रीधरीव्याख्या।

चित्तं तेन विभ्रान्ताः विक्षिप्ताः तेनैव मोहमयेन जालेन समावृताः, मत्स्या इव सूत्रमयेन जालेन यन्त्रिताः । एवं कामभोगेषु सक्ता अभिनिविष्टाः सन्तोऽशुचौ कश्मले नरके पतन्ति ॥ १६ ॥ यक्ष्य इति च यस्तेषां मनोरथ उक्तः स केवलं दम्भाहंकारादिप्रधान एव नतु सात्त्विक इत्यभिप्रायेणाह—आत्मसंभाविता इति द्वाभ्याम् । आत्मनैव संभाविताः पूज्यतां नीताः नतु साधुभिः कैश्चित्। अतएव स्तब्धा अनम्राः, धनेन यो मानो मदश्च ताभ्यामन्विताः सन्तो नाममात्रेण ये यज्ञास्ते नामयज्ञाः। यद्वा 'दीक्षितः सोमयाजी' इत्येवमादिना नाममात्रप्रसिद्धये ये यज्ञास्तैर्यजन्ते । कथम्। दम्भेन नतु श्रद्धया। अविधिपूर्वकं च यथा भवति तथा

७ अभिनवगुप्ताचार्यव्याख्या।

च ॥ १६ ॥ यज्ञैर्यजन्ते नाम । निष्फलमित्यर्थः। क्रोधेन हि सर्वं नश्यतीत्यर्थः । यद्वा नामयज्ञैः संज्ञामात्रेणैव ये यज्ञास्तैः। अथवा नामार्थं प्रसिद्ध्यर्थं ये यज्ञाः येन यज्ञयाजययमिति व्यपदेशो जायते ते दम्भपूर्वका एव नतु फलन्ति ॥ १७ ॥ क्रोधादिरूपितत्वादेव लोका

**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहंकारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनां च तथा बलं पराभिभवनिमित्तं कामरागान्वितं दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामति सोऽयमन्तःकरणाश्रयो दोषविशेषः, कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयमेतानन्यांश्च महतो दोषान्संश्रिताः । किंच ते मामीश्वरमात्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिभूतं मां प्रद्विषन्तो मच्छासनातिवर्तित्वं प्रद्वेषस्तं कुर्वन्तोऽभ्यसूयकाः सन्मार्गस्थानां गुणेष्वसहमानाः ॥ १८ ॥**

२ आनन्दगिरिव्याख्या ।

**विद्यमानैरिति** । अध्यारोपितवैशिष्ट्यविषयत्वादहंकारस्याविद्यामूलत्वेनाविद्यात्वमाह—**अविद्याख्य इति** । विवेकिभिस्तस्यातियत्नादेव हेयत्वं सूचयति—**कष्टतम इति** । तदेव स्पष्टयति—**सर्वेति** । तं संश्रिता इति संबन्धः । कार्यकरणसामर्थ्यमुक्तविशेषणं बलम् । अहंकार एव महदवधीरणापर्यन्तत्वेन परिणतो दर्पस्तं व्याकरोति—**दर्पो नामेत्यादिना** । अन्यांश्च दोषान्मात्सर्यादीन् । न केवलमुक्तमेव तेषां विशेषणं किंतु कष्टतममस्ति विशेषणान्तरमित्याह—**किंचेति** । यद्यपीश्वरं प्रति द्वेषस्तेषां संभाव्यते तथापि कथं स्वदेहे परदेहेषु च तं प्रति द्वेषो नहि तत्र भोक्तारमन्तरेणेश्वरस्यावस्थानमित्याशङ्क्याह—**तद्बुद्धीति** । तेषामीश्वरं प्रति द्वेषमेव प्रकटयति— **मच्छासनेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ध्वजितया अविधिपूर्वकं यथोक्तधनज्ञानस्वयमृत्विक्पत्न्यादिशुद्धिरहितं यजन्ते ॥ १७ ॥ अहंकारोऽहमेव सर्वश्रेष्ठ इति बुद्धिः । बलं शारीरं धनाभिजननिमित्तं च । दर्पं परावज्ञाम् । कामं क्रोधं च संश्रिताः । मां सर्वदेहेषु प्रविष्टम् । आत्मदेहे स्वदेहशोषणेन 'कर्षयन्तः शरीरस्थं भूतग्राममचेतसः । मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान्' इति वक्ष्यमाणदिशा परदेहे च हिंसादिना प्रद्विषन्तः । अभ्यसूयकाः सर्वत्र गुणेषु वेदोक्तेषु शमादिषु अशक्तत्वादिलक्षणं

४ मधुसूदनीव्याख्या ।

ज्ञानवैराग्यभगवद्भजनादि तेषां दूरापास्तमेवेत्याह—अहमभिमानरूपो योऽहंकारः स सर्वसाधारणः एतैरारोपितैर्गुणैरात्मनो महत्त्वाभिमानमहंकारं तथा बलं परपरिभवनिमित्तं शरीरगतसामर्थ्यविशेषं दर्पं परावधीरणारूपं गुरुनृपाद्यतिक्रमकारणं चित्तदोषविशेषं काममिष्टविषयाभिलाषं क्रोधमनिष्टविषयद्वेषं, चकारात्परगुणासहिष्णुत्वरूपं मात्सर्यं एवमन्यांश्च महतो दोषान् संश्रिताः । एतादृशा अपि पतितास्तव भक्त्या पूताः सन्तो नरके न पतिष्यन्तीति चेन्नेत्याह । मामीश्वरं भगवन्तमात्मपरदेहेष्वात्मनां तेषामासुराणां परेषां च तत्पुत्रभार्यादीनां देहेषु प्रेमास्पदेषु तत्तद्बुद्धिकर्मसाक्षितया सन्तमतिप्रेमास्पदमपि दुर्दैवपरिपाकात्प्रद्विषन्तः ईश्वरस्य मम शासनं श्रुतिस्मृतिरूपं तदुक्तार्थानुष्ठानपराङ्मुखतया तदतिवर्तनं मे प्रद्वेषस्तं कुर्वन्तो नृपाद्याज्ञालङ्घनमेव हि तत्प्रद्वेष इति प्रसिद्धं लोके । ननु गुर्वादयः कथं तान्नानुशासति तत्राह—अभ्यसूयकाः गुर्वादीनां वैदिकमार्गस्थानां कारुण्यादिगुणेषु प्रतारणादिदोषारोपकाः । अतस्ते सर्वसाधनशून्या नरक एव पतन्तीत्यर्थः । मामात्मपरदेहेष्वित्यस्यापरा व्याख्या । स्वदेहेषु परदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते । दम्भयज्ञेषु श्रद्धाया अभावाद्दीक्षादिनात्मनो वृथैव पीडा भवति । तथा पश्वादीनामप्यविधिना हिंसया चैतन्यद्रोहमात्रमवशिष्यत इति । अपरा व्याख्या । आत्मदेहे । जीवानाविष्टे भगवल्लीलाविग्रहे वासुदेवादिसमाख्ये मनुष्यत्वादिभ्रमान्मां प्रद्विषन्तस्तथा परदेहेषु भक्तदेहेषु प्रह्लादादिसमाख्येषु सर्वदाविर्भूतं मां प्रद्विषन्त इति योजना । उक्तंहि नवमे 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इति 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः' इति चान्यत्र । तथाच भजनीयद्वेषान्न भक्त्या पूतता तेषां संभवतीत्यर्थः ॥ १८ ॥ तेषां

५ भाष्योत्कर्षदीपिका ।

मानैश्च गुणैरात्मन्यध्यारोपितैरात्मनो विशिष्टत्वाभिमानमविद्याख्यं कष्टतमं सर्वदोषाणां सर्वानर्थप्रवृत्तीनां च मूलं तथा बलं पराभिभवनिमित्तं शरीरादिसामर्थ्यं कामरागान्वितं दर्पं धर्मातिक्रमहेतुमन्तःकरणाश्रयं दोषविशेषं कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयं चादेतानन्यांश्च मात्सर्यादीन्महतो दोषान् संश्रिताः । किंच न केवलमहंकारादीनेव संश्रिताः किंतु तदाश्रयणेन मामीश्वरमात्मपरदेहेषु स्वदेहेषु परदेहेषु च तद्बुद्धिकर्मसाक्षिणं मां प्रद्विषन्तः श्रुतिस्मृतिरूपमच्छासनातिवर्तित्वं तदुक्तार्थानुष्ठानपराङ्मुखत्वं मद्वेषस्तं कुर्वन्तः दम्भेनाविधिपूर्वकं यजनं स्वदेहपीडनमहंकारादिकं मदवज्ञानं च श्रुतिस्मृतिप्रतिषिद्धं समाश्रिता मदाज्ञातिवर्तिन इत्यर्थः । ननु सत्कर्मस्थानामनुवृत्तिं किमिति न कुर्वन्तीतिचेत्तत्राह । तेषां गुणेष्वभ्यसूयकाः समत्सरा दोषाविष्करणशीलाः

६ श्रीधरीव्याख्या ।

॥ १७ ॥ अविधिपूर्वकत्वमेव प्रपञ्चयति—**अहंकारमिति** । अहंकारादिसंश्रिताः सन्त आत्मपरदेहेषु स्वदेहेषु परदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते । दम्भयज्ञेषु श्रद्धाया अभावादात्मनो वृथैव पीडा भवति । तथा पश्वादीनामपि अविधिना हिंसायां चैत-

**तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**
**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

**तानहमिति । तानहं सर्वान्सन्मार्गप्रतिपक्षभूतान्साधुद्वेषिणो द्विषतश्च मां क्रूरान्संसारेष्वेव नरकसंसरणमार्गेषु नराधमानधर्मदोषवत्त्वात्क्षिपामि प्रक्षिपाम्यजस्रं संततमशुभानशुभकर्मकारिण आसुरीष्वेव क्रूरकर्मप्रायासु व्याघ्रसिंहादियोनिषु क्षिपामीत्यनेन संबन्धः ॥ १९ ॥ आसुरीमिति । आसुरीं**

२ आनन्दगिरिव्याख्या ।

ईश्वरस्य शासनं श्रुतिस्मृतिरूपं तदतिवर्तित्वं तदुक्तार्थज्ञानानुष्ठानपराङ्मुखत्वम् ॥ १८ ॥ तेषामुक्तविशेषणवतामासुराणां किं स्यादिति तदाह—**तानिति** । भगवतो नैर्घृण्यप्रसङ्गं प्रत्यादिशति—**अधर्मेति** ॥ १९ ॥ ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति नेत्याह—**असुरीमिति** । तेषामीश्वरप्राप्तिशङ्काभावे कथं तन्निषेधः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दोषमारोपयन्तः ॥ १८ ॥ तेषां फलमाह—**तानिति** । सर्वभूतसमोऽप्यहं तान् वेदोक्तशासनातिगान् भूतद्रोहकर्तॄन् । अहमन्तरात्मा नतु तटस्थो येन मम वैषम्यं स्यात् । पूर्वसंस्कारात्ते तथैव पापं कुर्वन्ति तदनुरूपं फलं च प्राप्नुवन्तीत्यर्थः ॥ १९ ॥ आसुरयोनिप्राप्तेरपि फलमाह—**आसुरीमिति** । अधमां नारकीम् । तिर्यक्स्थावरादिरूपां

४ मधुसूदनीव्याख्या ।

त्वत्कृपया कदाचिन्निस्तारः स्यादिति नेत्याह—तान्सन्मार्गप्रतिपक्षभूतान् द्विषतः साधून् मां च क्रूरान् हिंसापरानतो नराधमानतिनिन्दितानजस्रं सन्ततमशुभानशुभकर्मकारिणः अहं सर्वकर्मफलदातेश्वरः संसारेष्वेव नरकसंसरणमार्गेषु क्षिपामि पातयामि । नरकगतश्चासुरीष्वेवातिक्रूरासु व्याघ्रसर्पादियोनिषु तत्तत्कर्मवासनानुसारेण क्षिपामीत्यनुषज्यते । एतादृशेषु द्रोहिषु नास्ति ममेश्वरस्य न कृपेत्यर्थः । तथाच श्रुतिः 'अथ ( य इह ) कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वेति' । कपूयचरणाः कुत्सितकर्माणः अभ्याशो ह शीघ्रमेव कपूयां कुत्सितां योनिमापद्यन्त इति श्रुतेरर्थः । अत एव पूर्वपूर्वकर्मानुसारित्वान्नेश्वरस्य वैषम्यं नैर्घृण्यं वा । तथाच पारमर्षं सूत्रं 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' इति । एवं च पापकर्माण्येव तेषां कारयति भगवान् तेषु तद्बीजसत्त्वात्कारुणिकत्वेऽपि तानि न शातयति तन्नाशकपुण्योपचयाभावात्, पुण्योपचयं न कारयति तेषामयोग्यत्वात् । न हीश्वरः पाषाणेषु यवाङ्कुरान्करोतीश्वरत्वादयोग्यस्यापि योग्यतां संपादयितुं शक्नोतीति चेत् शक्नोत्येव सत्यसंकल्पत्वात् । यदि संकल्पयेत् नतु संकल्पयति आज्ञालङ्घिषु स्वभक्तद्रोहिषु दुरात्मस्वप्रसन्नत्वात् । अत एव श्रूयते 'एष उ ह्येव साधुकर्म कारयति तं यमुन्निनीषत एष उ एवासाधुकर्म कारयति तं यमधो निनीषते' इति । येषु प्रसादकारणमस्त्याज्ञापालनादि तेषु प्रसीदति । येषु तु तद्वैपरीत्यं तेषु न प्रसीदति सति कारणे कार्यं कारणाभावे कार्याभाव इति किमत्र वैषम्यं 'परात्तु तच्छ्रुतेः' इति न्यायाच्च अन्ततो गत्वा किंचिद्वैषम्यापादने मायामयत्वाददोषः ॥ १९ ॥ ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति नेत्याह—ये कदाचिदासुरीं योनिमापन्नास्ते जन्मनि

५ भाष्योत्कर्षदीपिका ।

॥ १८ ॥ उक्तविशेषणवतामासुराणां गतिमाह—तान्सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणो द्विषन्तश्च मां क्रूरान् व्याघ्रादिक्रूरजन्तुतुल्यान् अजस्रं सततं अशुभानशुभकर्मकारिणोऽतो नराधमान्नरेष्वतिनिकृष्टानहं धर्माधर्मफलप्रदाता परमेश्वरोऽधर्मदोषवत्त्वात्संसारेषु नरकसंसरणमार्गेषु आसुरीष्वेव क्रूरकर्मप्रायासु सिंहव्याघ्रादियोनिषु क्षिपामि संसारेऽस्मिँल्लोके इषवः परमर्मभेदकत्वात्संसारेषवः ते च ते नराधमाश्चेति विग्रहस्तु फलशून्यकुकल्पनालभ्यत्वादाचार्यैः परित्यक्तः ॥१९॥ ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति नेत्याह—**आसुरीमिति** । मूढा अविवेकिनो जन्मनि जन्मनि प्रतिजन्मासुरीं योनिमापन्नाः प्राप्ता

६ श्रीधरीव्याख्या ।

न्यद्रोहमात्रमेवावशिष्यत इति प्रद्विषन्त इत्युक्तम् । अभ्यसूयकाः सन्मार्गवर्तिनां गुणेषु दोषारोपकाः ॥ १८ ॥ तेषां कदाचिदप्यासुरस्वभावप्रच्युतिर्न भवतीत्याह—**तानिति द्वाभ्याम्** । तानहं मां द्विषतः क्रूरान्संसारेषु जन्ममृत्युमार्गेषु, तत्रापि आसुरीष्वेवातिक्रूरासु व्याघ्रादियोनिषु अजस्रमनवरतं क्षिपामि । तेषां पापकर्मणां तादृशं फलं ददामीत्यर्थः ॥ १९ ॥ किंच—**आसुरीमिति** । ते च माम-

७ अभिनवगुप्ताचार्यव्याख्या ।

न्द्विषन्तो मामेव द्विषन्ति ॥ १८ ॥ अहं वासुदेवो हि सर्वावासः आत्मनि च द्वेषवन्तः आत्मनो अहितं निरयपातहेतुमाचरन्ति तांश्च-

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

योनिमापन्नाः प्रतिपन्ना मूढा जन्मनि जन्मन्यविवेकिनः प्रतिजन्म तमोबहुलास्वेव योनिषु जायमाना अधो गच्छन्तो मूढाः मामीश्वरमप्राप्यानासाद्यैव हे कौन्तेय ततस्तस्मादपि यान्त्यधमां निकृष्टतमां गतिम् । मामप्राप्यैवेति न मत्प्राप्तौ काचिदप्याशङ्कास्त्यतो मच्छिष्टसाधुमार्गमप्राप्येत्यर्थः ॥ २० ॥ सर्वस्या आसुर्याः संपदः संक्षेपोऽयमुच्यते, यस्मिंस्त्रिविधे सर्वे आसुरीसंपद्भेदोऽनन्तोऽप्यन्तर्भवति यत्परिहारेण परिहृतश्च भवति, यन्मूलं सर्वस्यानर्थस्य तदेतदुच्यते—त्रिविधमिति । त्रिविधं त्रिप्रकारं नरकद्वारं नरकस्य प्राप्ताविदं द्वारं नाशनमात्मनो यद्द्वारं प्रविशन्नेव नश्यत्यात्मा कस्मैचित्पुरुषार्थाय योग्यो न भवतीत्येतदुच्यते द्वारं नाशनमात्मन इति किं तत्, कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् । यत एतद्द्वारं नाशनमात्मनस्तस्मात्कामादित्रयमेतत्त्यजेत् । त्यागस्तुति-

२ आनन्दगिरिव्याख्या ।

स्यादित्याशङ्क्याह—**मामित्यादिना** । यस्मादासुरी संपदनर्थपरंपरया सर्वपुरुषार्थपरिपन्थिनी तस्माद् यावत्पुरुषः स्वतन्त्रो न कांचित्पारवश्यकरीं योनिमापन्नस्तावदेव तेनासौ परिहरणीयेति समुदायार्थः ॥ २० ॥ कथमासुरीसंपदनन्तभेदवती पुरुषायुषेणापि परिहर्तुं शक्येतेत्याशङ्क्याह—**सर्वस्या इति** । संक्षेपोक्तिफलमाह—**यस्मिन्निति** । कामादौ त्रिविधे सर्वस्यासुरसंपद्भेदस्यान्तर्भावेऽपि कथमसौ परिह्रियते तत्राह—**यत्परिहारेणेति** । कामादिपरिहारेणासुरीसंपद्भेदपरिहारेऽपि कथं सर्वानर्थपरिवर्जनमित्याशङ्क्याह—**यन्मूलमिति** । कथमात्मनो नित्यस्य नाशशङ्केति तत्राह—**कस्मैचिदिति** । त्रिविधमपि सामान्यतो दर्शितमाकाङ्क्षाद्वारा विशेषतो दर्शयति—**किं तदिति** । तस्मादिति व्याचष्टे—**यत इति** । कामादित्यागे सत्यनर्थाचरणश्रेयःप्रतिबन्धानिवृत्ती स्यातामिति भावः ।

४ मधुसूदनीव्याख्या ।

जन्मनि प्रतिजन्म मूढास्तमोबहुलत्वेनाविवेकिनस्ततस्तस्मादपि यान्त्यधमां गतिं निकृष्टतमां गतिम् । मामप्राप्येति न मत्प्राप्तौ काचिदाशङ्काप्यस्त्यतो मदुपदिष्टं वेदमार्गमप्राप्येत्यर्थः । एवकारस्तिर्यक्स्थावरादिषु वेदमार्गप्राप्त्यस्वरूपायोग्यतां दर्शयति । तेनात्यन्ततमोबहुलत्वेन वेदमार्गप्राप्तिस्वरूपायोग्या भूत्वा पूर्वपूर्वनिकृष्टयोनितो निकृष्टतमामधमां योनिमुत्तरोत्तरं गच्छन्तीत्यर्थः । हे कौन्तेयेति निजसंबन्धकथनेन त्वमितो निस्तीर्ण इति सूचयति । यस्मादेकदासुरीं योनिमापन्नानामुत्तरोत्तरं निकृष्टतरनिकृष्टतमयोनिलाभो न तु तत्प्रतीकारसामर्थ्यमत्यन्ततमोबहुलत्वात्, तस्माद्यावन्मनुष्यदेहलाभोऽस्ति तावन्महतापि प्रयत्नेनासुर्याः संपदः परमकष्टतमायाः परिहाराय त्वरयैव यथाशक्ति दैवी संपदनुष्ठेया श्रेयोर्थिभिः । अन्यथा तिर्यगादिदेहप्राप्तौ साधनानुष्ठानायोग्यत्वान्न कदापि निस्तारोऽस्तीति महत्संकटमापद्येतेति समुदायार्थः । तदुक्तं 'इहैव नरकव्याधेश्चिकित्सां न करोति यः । गत्वा निरौषधं स्थानं सरुजः किं करिष्यति' इति ॥ २० ॥ नन्वासुरी संपदनन्तभेदवती कथं पुरुषायुषेणापि परिहर्तुं शक्येतेत्याशङ्क्य तां संक्षिप्याह—**इदं त्रिविधं त्रिप्रकारं नरकस्य प्राप्तौ द्वारं साधनं सर्वस्या आसुर्याः संपदो** मूलभूतमात्मनो नाशनं सर्वपुरुषार्थायोग्यतासंपादनेनात्यन्ताधमयोनिप्रापकं । किं तदित्यत आह । कामक्रोधस्तथा लोभ इति प्राग्व्याख्यातम् । यस्मादेतत्त्रयमेव सर्वानर्थमूलं तस्मादेतत्त्रयं त्यजेत् । एतत्त्रयत्यागेनैव सर्वाप्यासुरीसंपत्त्यक्ता भवति । एतत्त्रयत्यागश्च उत्पन्नस्य विवेकेन कार्यप्रतिबन्धस्ततः परं चानुत्पत्तिरिति द्रष्टव्यम् ॥ २१ ॥ एतत्त्रयं त्यजतः किं स्यादिति

५ भाष्योत्कर्षदीपिका ।

मामीश्वरमप्राप्यैवानासाद्यैव मत्प्राप्तिशङ्काया अप्यभावात् । मच्छिष्टसाधुमार्गप्राप्तिमप्राप्येत्येवकारेण सूचितम् । तत आसुर्या योनितोऽप्यधमां निकृष्टां गतिं यान्ति तेषां श्रेयः कदापि न भविष्यतीति भावः । कौन्तेयेति संबोधयन् त्वं तु मत्पितृष्वसृपुत्रत्वान्मां प्राप्यासुर्यादियोनिषु गन्तुमयोग्योऽसीति मा शुच इति द्योतयति । यस्मादासुरी संपदनर्थपरम्परारूपा सर्वपुरुषार्थपरिपन्थिनी तस्माद्दैवानुग्रहान्मानुषीं योनिमापन्नैः सर्वथैवेयं परिहरणीयेति समुदायार्थः ॥ २० ॥ नन्वनन्तभेदवतीयमासुरी संपत्पुरुषायुषेणापि परिहर्तुमशक्येत्याशङ्क्य सर्वं आसुरीसंपद्भेदोऽनन्तोऽपि यस्मिन्नन्तर्भवति यत्परिहारेण परिहृतश्च भवति तत्सर्वानर्थमूलभूतं दर्शयति । त्रिविधं त्रिप्रकारमिदं नरकस्य प्राप्तौ द्वारमात्मनो नाशनं यद्द्वारं प्रविशन्नेवात्मा नश्यति न कस्मैचित्पुरुषार्थाय योग्यो भवति । किं तत् कामः क्रोधस्तथा लोभः इति त्रिविधं नरकस्य द्वारं नाशनमात्मनः तस्मादेतत्कामादित्रयं श्रेयोर्थी त्यजेत् ॥ २१ ॥ एतै-

६ श्रीधरीव्याख्या ।

प्राप्यैवेत्येवकारेण मत्प्राप्तिशङ्का कुतस्तेषां । मत्प्राप्त्युपायं सन्मार्गमप्यप्राप्य ततोऽप्यधमां गतिं कृमिकीटादियोनिं यान्तीत्युक्तम् । शेषं स्पष्टम् ॥ २० ॥ उक्तानामासुरदोषाणां मध्ये सकलदोषमूलभूतं दोषत्रयं सर्वथा वर्जनीयमित्याह—**त्रिविधमिति** । कामः क्रोधो लोभश्चेतीदं त्रिविधं नरकस्य द्वारम् । अतएवात्मनो नाशनं नीचयोनिप्रापकम् । तस्मादेतत्त्रयं सर्वात्मना त्यजेत् ॥ २१ ॥ त्यागे च

**एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥**
**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

रियम् ॥ २१ ॥ एतैरिति । एतैर्विमुक्तः कौन्तेय तमोद्वारैस्तमसो नरकस्य दुःखमोहात्मकस्य द्वाराणि कामादयस्तैरेतैस्त्रिभिर्विमुक्तो नर आचरत्यनुतिष्ठति । किमात्मनः श्रेयो यत्प्रतिबद्धः पूर्वं नाचरति तदपगमादाचरति ततस्तदाचरणाद्याति परां गतिं मोक्षमपीति ॥ २२ ॥ सर्वस्यैतस्यासुरीसंपत्परिवर्जनस्य श्रेयआचरणस्य शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्तुं नान्यथातो—यः शास्त्रेति । यः शास्त्रविधिं शास्त्रं वेदस्तस्य विधिं कर्तव्याकर्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा

२ आनन्दगिरिव्याख्या ।

॥ २१ ॥ न केवलं श्रेयः समाचरन्नासुरीं च संपदं वर्जयन्मोक्षमेव सम्यग्धीद्वारा लभते किंतु लौकिकमपि सुखमित्यपेरर्थः ॥ २२ ॥ आसुर्याः संपदो वर्जने श्रेयसश्च करणे किं कारणं तदाह—**सर्वस्येति** । तस्य कारणत्वं साधयति—**शास्त्रेति** । उक्तमुपजीव्यानन्तरश्लोकं प्रवर्तयति—**अत इति** । शिष्यतेऽनुशिष्यते बोध्यतेऽनेनापूर्वोऽर्थ इति शास्त्रं तच्च विधिनिषेधात्मकमित्युपेत्य व्याचष्टे—**कर्तव्येति** । कामस्य करणं कामकारस्तस्माद्धेतोरित्युपेत्य

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

वा ॥ २० ॥ संक्षेपमासुर्याः संपत्तेराह—**त्रिविधमिति** ॥ २१ ॥ कामादित्रयत्यागे किं स्यादत आह—**एतैरिति** । तमोद्वारैः तमसो नरकस्य दुःखमोहात्मकस्य द्वारभूतैर्विमुक्तः सन् । आत्मनः श्रेयः कल्याणं भगवदाराधनादिकमाचरति । ततः परां गतिं मोक्षं याति तस्मात्कामादित्रयं त्यजेदिति ॥ २२ ॥ न केवलं काष्ठतपस्विवत्कामादित्यागमात्रेणोच्छास्त्रवर्ती सिध्यतीत्याह—**य इति** । शास्त्रविधिं शास्त्रेण इष्टसाधनतयाऽनिष्टसाधनतया च ज्ञापितं 'ब्राह्मणो यजेत', 'न सुरां पिबेत्' इत्यादिना विहितं निषिद्धं च उत्सृज्य विहितमकरणेन निषिद्धमाचरणेन च उत्सृज्य यो

४ मधुसूदनीव्याख्या ।

तत्राह—एतैः कामक्रोधलोभैस्त्रिभिस्तमोद्वारैर्नरकसाधनैर्विमुक्तो विरहितः पुरुष आचरत्यात्मनः श्रेयो यद्धितं वेदबोधितं हे कौन्तेय, पूर्वं हि कामादिप्रतिबद्धः श्रेयो नाचरति येन पुरुषार्थः सिध्येत् अश्रेयश्चाचरति येन निरयपातः स्यात्, अधुना तत्प्रतिबन्धरहितः सन्नश्रेयो नाचरति श्रेयश्चाचरति तत ऐहिकं सुखमनुभूय सम्यग्धीद्वारा याति परां गतिं मोक्षम् ॥ २२ ॥ यस्मादश्रेयोनाचरणस्य श्रेयआचरणस्य च शास्त्रमेव निमित्तं तयोः शास्त्रैकगम्यत्वात्तस्मात्—शिष्यतेऽनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेनेति शास्त्रं वेदस्तदुपजीविस्मृतिपुराणादि च, तत्संबन्धी विधिर्लिङादिशब्दः कुर्यान्न कुर्यादित्येवं प्रवर्तनानिवर्तनात्मकः कर्तव्याकर्तव्यज्ञानहेतुर्विधिनिषेधाख्यस्तं शास्त्रविधिं विधिनिषेधातिरिक्तमपि ब्रह्मप्रतिपादकं शास्त्रमस्तीति सूचयितुं विधिशब्दः । उत्सृज्याश्रद्धया परित्यज्य कामकारतः स्वेच्छामात्रेण वर्तते विहितमपि नाचरति निषिद्धमप्याचरति यः स

५ भाष्योत्कर्षदीपिका ।

विमुक्तो लौकिकसुखोपभोगपूर्विकां परां गतिं यातीत्याह । एतैः कामादिभिस्त्रिभिस्तमसो नरकस्य दुःखमोहात्मकस्य द्वारैः श्रेयःप्रवृत्तिप्रतिबन्धकैर्विमुक्तो नर आत्मनः श्रेयः साधनं मदाराधनादिकं आचरत्यनुतिष्ठति । ततस्तदाचरणात् लौकिकसुखं भुक्त्वा परां गतिं मोक्षमपि याति गच्छति । यः कामादिभिर्विमुक्तः स एव नरः सार्थकनरजन्मा च इतरे पशवो निरर्थकनरजन्मानश्चेति सूचयितुं नर इत्युक्तम् । त्वं तु कामादिविनिर्मुक्तायाः कुन्त्याः पुत्रत्वात्तैर्विमुक्तः सन् लौकिकं सुखं भुक्त्वा परां गतिं गन्तुं योग्योऽसीति द्योतयन्नाह कौन्तेयेति ॥ २२ ॥ आसुर्याः संपदः परिवर्जनस्य श्रेयआचरणस्य च किं कारणमित्यपेक्षायामुभयं शास्त्रप्रमाणाच्छक्यं कर्तुं नान्यथाऽत उभयोः शास्त्रं कारणमिति बोधयितुं शास्त्रविधित्यागेऽनर्थमाह—**य इति** । शिष्यतेऽनुशिष्यते बोध्यतेऽनेनाज्ञातोऽर्थ इति शास्त्रं वेदस्तदुपजीविस्मृतीतिहासपुराणादि च तस्य विधिः कुर्यान्न कुर्यादिति कर्तव्याकर्तव्यज्ञानकारणं शास्त्र-

६ श्रीधरीव्याख्या ।

विशिष्टफलमाह—**एतैरिति** । तमसो नरकस्य द्वारभूतैरेतैस्त्रिभिः कामादिभिर्विमुक्तो नरः आत्मनः श्रेयःसाधनं तपोयोगादि कर्माचरति ततश्च मोक्षं प्राप्नोति ॥ २२ ॥ कामादित्यागश्च स्वधर्माचरणं विना न भवतीत्याह—**य इति** । शास्त्रविधिं वेदविहितं धर्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

इमासुरीष्वेव योनिषु क्षिपामि । यतः कामादिकं त्रितयं नरकस्यैव द्वारं तस्मादेतत्त्यजेत् ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ नचैतत्पुरुषवचनमित्यनादरणीयं अपितुवेदादिशास्त्रमत्र प्रमाणमित्युच्यते—यः शास्त्रविधिमिति । शास्त्रविधिं त्यजतः स्वमनीषयैव कार्याकार्यवि-

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

१ श्रीमच्छांकरभाष्यम् ।

**वर्तते कामकारतः कामप्रयुक्तः सन्न स सिद्धिं पुरुषार्थयोग्यतामाप्नोति । नाप्यस्मिँल्लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥ तस्मादिति । तस्माच्छास्त्रं प्रमाणं ज्ञानसाधनं ते तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायामतो ज्ञात्वा बुद्ध्वा शास्त्रविधानोक्तं विधिर्विधानं**

२ आनन्दगिरिव्याख्या ।

कामाधीना शास्त्रविमुखस्य प्रवृत्तिरित्याह—**कामेति** । कामाधीनप्रवृत्तेः सदा पुमर्थायोग्यस्य सर्वपुरुषार्थासिद्धिरित्याह—**नापीति** ॥ २३ ॥ शास्त्रादृते कर्मणो निष्फलत्वे फलितमाह—**तस्मादिति** । कर्तव्याकर्तव्यौ धर्माधर्मौ तत्र शास्त्रस्य प्रमाणत्वेऽपि मम किं कर्तव्यमित्याशङ्क्याह—**अत इति** । स्वकर्म क्षत्रियस्य युद्धादि, इतिशब्दोऽध्यायसमाप्त्यर्थः । तदनेनाध्यायेन प्राग्भवीयकर्मवासनानुसारेणाभिव्यज्यमानसात्त्विकादिप्रकृतित्रयविभागेन दैव्यासु-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वर्तते कामकारत इच्छया स सिद्धिं चित्तशुद्धिं सुखं वैराग्यादिजनितां तृप्तिं परां गतिं मोक्षं च नावाप्नोति ॥ २३ ॥ यस्माच्छास्त्रातिगः शुद्ध्यादिकं त्रयं नाप्नोति तस्मात्ते तव शुद्ध्यादिकामस्य शास्त्रमेव प्रमाणं किं कार्यं किं न कार्यमित्यस्यां व्यवस्थायाम् । एवं ज्ञात्वा शास्त्रं इदं कर्तव्यमिदं न कर्तव्यमिति शासनं वेदाज्ञारूपं, विधानं च तदुल्लङ्घने प्रतिसमाधानम् । अग्निहोत्राद्यकरणेऽयं दोषस्तत्परिहारार्थमिदं कृच्छ्रादिकं प्रायश्चित्तम् । ब्रह्महत्यादिकरणेऽयं दोषस्तत्परिहारार्थ-

४ मधुसूदनीव्याख्या ।

संसिद्धिं पुरुषार्थप्राप्तियोग्यामन्तःकरणशुद्धिं कर्माणि कुर्वन्नपि नाप्नोति, न सुखमैहिकं, नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥ यस्मादेवं—यस्माच्छास्त्रविमुखतया कामाधीनप्रवृत्तिरैहिकपारत्रिकसर्वपुरुषार्थायोग्या तस्मात्ते तव श्रेयोऽर्थिनः कार्याकार्यव्यवस्थितौ किं कार्यं किमकार्यमिति विषये शास्त्रं वेदतदुपजीविस्मृतिपुराणादिकमेव बोधकं प्रमाणं नान्यत् स्वोत्प्रेक्षाबुद्धवाक्यादीत्यभिप्रायः । एवंचेह कर्माधिकारभूमौ शास्त्रविधानेन कुर्यान्न कुर्यादित्येवंप्रवर्तनानिवर्तनारूपेण वैदिकलिङादिपदेनोक्तं कर्म विहितं प्रतिषिद्धं च ज्ञात्वा निषिद्धं वर्जयन् विहितं क्षत्रियस्य युद्धादिकर्म त्वं कर्तुमर्हसि सत्त्वशुद्धिपर्यन्तमित्यर्थः ।

५ भाष्योत्कर्षदीपिका ।

संबन्धिविधिनिषेधाख्यस्तं यः शास्त्रविधिमुत्सृज्य विहाय कामकारतः स्वेच्छानुसारेण वर्तते कामस्य करणं कामकारस्तस्माद्धेतोः शास्त्रविधिमुत्सृज्येति वा संबन्धः । संसिद्धिं पुरुषार्थयोग्यतां चित्तशुद्ध्यादिलक्षणां नावाप्नोति नास्मिँल्लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं चाप्नोति ॥ २३ ॥ यस्माच्छास्त्रविधिमुत्सृज्य कामकारतः प्रवृत्तानां पुरुषार्थहानिरनर्थावाप्तिश्च तस्मात्ते दैवीं संपदमभिजातस्य तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायां शास्त्रं प्रमाणं ज्ञानसाधनमतः शास्त्रेण विधानं कुर्यादित्येवंलक्षणं शास्त्रविधानं तेनोक्तं स्वस्य क्षत्रियस्य यत्कर्म तदिह कर्माधिकारभूमौ कर्तुमर्हसि योग्योऽसि । इदं कर्तव्यमिदं नेति शासनं वेदाज्ञारूपं शास्त्रं तदतिक्रमे प्रायश्चित्तं विधानं शास्त्रं च विधानं च ताभ्यामुक्तमिति तूक्तविधानपदार्थस्य शास्त्रतेनेनेति व्युत्पत्त्या शास्त्रपदार्थेऽन्तर्भावमभिप्रेत्याचार्यैर्नोक्तं तदनेन षोडशाध्यायेन संपद्द्वयं निरूपयता सर्वस्या आसुर्याः संपदो मूलभूतान् सर्वानर्थप्रापकान् सर्वार्थप्रतिबन्धकान्महादोषान्कामादीन् त्रीनपरित्यज्य तत्परिवर्जनं श्रेयआचरणकारणं शास्त्रविध्युल्लङ्घनं च विहाय श्रेयोऽर्थिना

६ श्रीधरीव्याख्या ।

मुत्सृज्य यः कामकारतो यथेच्छं वर्तते स सिद्धिं तत्त्वज्ञानं न प्राप्नोति । नच सुखमुपशमं नच परां गतिं मुक्तिं प्राप्नोति ॥ २३ ॥ फलितमाह—**तस्मादिति** । इदं कार्यमिदमकार्यमित्यस्यां व्यवस्थायां ते तव शास्त्रं श्रुतिस्मृतिपुराणादिकमेव प्रमाणम् । अतः शास्त्र-

७ अभिनवगुप्ताचार्यव्याख्या ।

चारं कुर्वतः प्रत्युत नरकपातः । तस्मादात्मबुद्ध्या शास्त्रमननुसृत्य कार्याकार्यव्यवस्थां माकार्षीरिति तात्पर्यम् ॥ २३ ॥ २४ ॥ अत्र

१ नीलकण्ठः ।

१ श्रीमच्छांकरभाष्यम् ।

शास्त्रेण विधानं शास्त्रविधानं कुर्यान्न कुर्यादित्येवलक्षणं तेनोक्तं स्वकर्म यत्तत्कर्तुमिहार्हसि । इहेति कर्माधिकारभूमिप्रदर्शनार्थमिति ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

२ आनन्दगिरिव्याख्या ।

रीतिसंपद्द्वयमादानहानाभ्यामुपदिश्य कामक्रोधलोभानपहाय पुरुषार्थिना शास्त्रप्रवणेन तदुक्तकारिणा भवितव्यमिति निर्धारितम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ षोडशोऽध्यायः ॥ १६ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मिदमश्वमेधादि अन्यद्वा प्रायश्चित्तम् । शास्त्रं च विधानं च ताभ्यामुक्तं कर्म इह मनुष्यलोके कर्तुमर्हसि । लोकान्तरे कर्मस्वनधिकारं दर्शयितुमिहेत्युक्तम् तदेवं शास्त्रानुवर्तिन एव चित्तशुद्ध्यादिकं नान्यस्येति सिद्धम् ॥ २४ ॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे षोडशोऽध्यायः ॥ १६ ॥

४ मधुसूदनीव्याख्या ।

तदेवमस्मिन्नध्याये सर्वस्या आसुर्याः संपदो मूलभूतान्सर्वाश्रेयःप्रापकान्सर्वश्रेयःप्रतिबन्धकान्महादोषान्कामक्रोधलोभानपहाय श्रेयोर्थिना श्रद्दधानतया शास्त्रप्रवणेन तदुपदिष्टार्थानुष्ठानपरेण भवितव्यमिति संपद्द्वयविभागप्रदर्शनमुखेन निर्धारितम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

५ भाष्योत्कर्षदीपिका ।

श्रद्दधानतया शास्त्रोपदिष्टार्थानुष्ठानपरेण भवितव्यमिति दर्शयता आसुर्याः परिवर्जनेन दैव्या उपादानेन च लभ्यमखण्डं मोक्षाख्यं ब्रह्म प्रकाशितम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां षोडशोऽध्यायः ॥ १६ ॥

६ श्रीधरीव्याख्या ।

विधानोक्तं कर्म ज्ञात्वा इह कर्माधिकारे वर्तमानो यथाऽधिकारं कर्म कर्तुमर्हसि । तन्मूलत्वात्सत्त्वशुद्धिसम्यग्ज्ञानमुक्तीनामित्यर्थः ॥ २४ ॥

देवदैतेयसंपत्तिसंविभागेन षोडशे । तत्त्वज्ञानेऽधिकारस्तु सात्त्विकस्येति दर्शितम् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां षोडशोऽध्यायः ॥ १६ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

संग्रहः—अबोधे स्वात्मबुद्ध्यैव कार्यं नैव विचारयेत् । किंतु शास्त्रोक्तविधिना शास्त्रं बोधविवर्धनम् ॥ १ ॥

इति श्रीमदाचार्याभिनवगुप्तविरचिते गीतातात्पर्यसंग्रहे षोडशोऽध्यायः ॥ १६ ॥



# सप्तदशोऽध्यायः ।

अर्जुन उवाच ।
ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

१ श्रीमच्छांकरभाष्यम् ।

तस्माच्छास्त्रं प्रमाणं त इति भगवद्वाक्याल्लब्धप्रश्नबीजोऽर्जुन उवाच—ये शास्त्रेति । ये केचिदविशेषिताः शास्त्रविधिं शास्त्रविधानं श्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य यजन्ते देवादीन्पूजयन्ति श्रद्धयान्विताः श्रद्धयास्तिक्यबुद्ध्यान्विताः संयुक्ताः सन्तः श्रुतिलक्षणं स्मृतिलक्षणं वा कंचिच्छास्त्रविधिमपश्यन्तो वृद्धव्यवहारदर्शनादेव ये श्रद्धानतया देवादीन्पूजयन्ति त इह ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता इत्येवं गृह्यन्ते । ये पुनः कंचिच्छास्त्रविधिमुपलभमाना एव तमुत्सृज्य यथाविधि देवादीन्पूजयन्ति त इह ये शास्त्रविधिमुत्सृज्य यजन्ते इति न परिगृह्यन्ते । कस्माच्छ्रद्धयान्वितत्वविशेषणात् देवादिपूजाविधिपरं किंचिच्छास्त्रं पश्यन्त एव तदुत्सृज्याश्रद्-

२ आनन्दगिरिव्याख्या ।

आस्तिकानां नास्तिकानां च शास्त्रैकचक्षुषां गतिरुक्ता संप्रत्यास्तिकानामेव शास्त्रानभिज्ञानां गतिजिज्ञासया पृच्छतीत्याह—तस्मादिति । यजन्त इति यागग्रहणं दानादेरुपलक्षणम् । यदि वेदोक्तं विधिमपश्यन्तस्तमुत्सृजन्ति कथं तर्हि श्रद्धाना यागादि कुर्वन्ति, नहि मानं विना श्रद्धया यागादि कर्तुं शक्यमित्याशङ्क्याह—श्रुतीति । ननु शास्त्रीयं विधिं पश्यन्तोऽपि केचित्तमुपेक्ष्य स्वोत्प्रेक्षया यागादि कुर्वन्तो दृश्यन्ते तेषामिह ये शास्त्रविधिमुत्सृज्य इति ग्रहो भविष्यति नेत्याह—ये पुनरिति । तेषामत्रापरिग्रहे प्रश्नपूर्वकं हेतुमाह—कस्मादिति । शास्त्रज्ञानं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'तस्माच्छास्त्रं प्रमाणं ते' इति प्रश्नबीजमुपलभ्यार्जुन उवाच—य इति । ये पुरुषाः शास्त्रविधिम् । शास्त्रपदेनात्र श्रुतिसदाचारकुलाचारा गृह्यन्ते । सर्वेषां तेषां धर्मे प्रमाणत्वात् । तत्र योऽधिगतो विधिर्विधेयं तदुत्सृज्य सर्वात्मना परित्यज्य यजन्ते पूजयन्ति तातकूपादीन् । मत्पित्रा कृतोऽयं कूपो गङ्गाशतादप्यधिकोऽत्रैव स्नानपानावगाहनपरि-

४ मधुसूदनीव्याख्या ।

त्रिविधाः कर्मानुष्ठातारो भवन्ति केचिच्छास्त्रविधिं ज्ञात्वाप्यश्रद्धया तमुत्सृज्य कामकारमात्रेण यत्किंचिदनुतिष्ठन्ति ते सर्वपुरुषार्थायोग्यत्वादसुराः । केचित्तु शास्त्रविधिं ज्ञात्वा श्रद्धानतया तदनुसारेणैव निषिद्धं वर्जयन्तो विहितमनुतिष्ठन्ति ते सर्वपुरुषार्थयोग्यत्वाद्देवा इति पूर्वाध्यायान्ते सिद्धम् । ये तु शास्त्रीयं विधिमालस्यादिवशादुपेक्ष्य श्रद्धानतयैव वृद्धव्यवहारमात्रेण निषिद्धं वर्जयन्तो विहितमनुतिष्ठन्ति ते शास्त्रीयविध्युपेक्षालक्षणेनासुरसाधर्म्येण श्रद्धापूर्वकानुष्ठानलक्षणेन च देवसा-

५ भाष्योत्कर्षदीपिका ।

गीताभाष्यप्रकाशेन जगदुद्धारकौ परौ । वन्दे परस्परात्मानौ देवौ श्रीकृष्णशंकरौ ॥ 'यः शास्त्रविधिमुत्सृज्य', 'तस्माच्छास्त्रं प्रमाणं ते' इति भगवद्वाक्यात् ये शास्त्रविधिं परित्यज्य कामकारतः प्रवृत्तास्ते नास्तिका असुराः, ये तु शास्त्रविधिमनुरुध्य विहितानुष्ठानाय प्रतिषिद्धप्रहाणाय च श्रद्धानतया प्रवृत्तास्ते आस्तिकाः सुरा इति ज्ञात्वा श्रद्धावतां शास्त्रानभिज्ञानां निष्ठां जिज्ञासुरर्जुन उवाच । ये केचिदसुराणां देवानां च विशेषणैरविशेषिताः शास्त्रविधिं श्रुतिस्मृत्यादिशास्त्रविधानमुत्सृज्यालस्यादिनाऽपश्यन्तो वृद्धव्यवहारादेव श्रद्धया आस्तिक्यबुद्ध्यान्विताः संयुक्ताः सन्तो देवादीन्यजन्ति पूजयन्ति । ये तु किंचिच्छास्त्रविधिमुपलभमाना एवाश्रद्धानतया तमुत्सृज्यायथाविधि देवादीन्पूजयन्ति तेत्र न गृह्यन्ते । श्रद्धयान्विता इति विशेषणात् । तेषामेवंभूतानां निष्ठा तु का किं सत्त्वम-

६ श्रीधरीव्याख्या ।

उक्ताधिकारहेतूनां श्रद्धा मुख्या तु सात्त्विकी । इति सप्तदशे गौणश्रद्धाभेदस्त्रिधोच्यते ॥ १ ॥

पूर्वाध्यायान्ते 'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति' इत्यनेन शास्त्रोक्तविधिमुत्सृज्य कामकारेण वर्तमानस्य ज्ञानेऽधिकारो नास्तीत्युक्तम् । तत्र शास्त्रविधिमुत्सृज्य कामकारं विना श्रद्धया वर्तमानानां किमधिकारोऽस्ति नास्ति वेति बुभुत्सया अर्जुन उवाच—य इति । अत्र शास्त्रविधिमुत्सृज्य यजन्ते इत्यनेन शास्त्रार्थं बुध्वा तमुल्लङ्घ्य वर्तमानाश्च गृह्यन्ते, तेषां

७ अभिनवगुप्ताचार्यव्याख्या ।

अर्जुन उवाच—ये शास्त्रविधिमिति । शास्त्रविधिमनालक्ष्य ये व्यवहारमाचरन्ति तेषां का गतिरिति प्रश्नः ॥ १ ॥ तदत्रोत्तरं श्रद्धा-

श्रीभगवानुवाच ।

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

धानतया तद्विहितायां देवादिपूजायां श्रद्धयान्विताः प्रवर्तन्त इति न शक्यं कल्पयितुं यस्मात्तस्मात्पूर्वोक्ता एव 'ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः' इत्यत्र गृह्यन्ते । तेषामेवंभूतानां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः किं सत्त्वनिष्ठावस्थानमाहोस्विद्रजोऽथ वा तमः । एतदुक्तं भवति—या तेषां देवादिविषया पूजा सा किं सात्त्विक्याहोस्विद्राजस्युत तामसीति ॥ १ ॥ सामान्यविषयोऽयं प्रश्नो नाप्रविभज्य प्रतिवचनमर्हतीति श्रीभगवानुवाच—त्रिविधेति । त्रिविधा

२ आनन्दगिरिव्याख्या ।

तदुपेक्षावतां ग्रहेऽपि विशेषणमविरुद्धमित्याशङ्क्य व्याघातान्मैवमित्याह—**देवादीति** । अश्रद्दधानतया तदुत्सृज्येति संबन्धः । शास्त्रोक्तं विधिमधिगच्छतामपि तमवधीर्य स्वेच्छया देवपूजादौ प्रवृत्तानामासुरेष्वेवान्तर्भावो यस्मादनन्तराध्याये सिद्धस्तस्मादास्तिकाधिकारे तेषां प्रसङ्गो नास्तीत्युपसंहरति—**यस्मादिति** । पूर्वोक्ताः शास्त्रानभिज्ञाः । वृद्धव्यवहारानुसारिण इति यावत् । तैः श्रद्धया क्रियमाणं कर्म कुत्र पर्यवस्यतीति पृच्छति—**तेषामिति** । का निष्ठेत्येतद्विवृणोति—**सत्त्वमिति** । कार्याणां कारणैर्व्यपदेशमाश्रित्य तात्पर्यमाह—**एतदिति** ॥ १ ॥ विशेषनिष्ठमुत्तरं सामान्येन वक्तुं न शक्यमित्याशयेन परिहरति—**सामान्येति** । किमिति श्रद्धात्रैविध्यं प्रश्नानुपयुक्तमुच्यते तत्राह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चर्याप्रदक्षिणप्रक्रमणरूपादेतत्सेवनादहमिष्टं फलमवश्यं प्राप्स्यामीति तत्र दृढतरया श्रद्धयान्विताः सन्तस्तेषां निष्ठा इयं का कीदृशी किं सत्त्वं सात्त्विकी वा पित्र्ये कूपे श्रद्धाधिक्यदर्शनात् । किं रजः राजसी वा तेषां निष्ठा शास्त्रातिक्रमेण कामकाररूपत्वात् । आहो इति प्रश्ने । किं तमः तामसी वा सा निष्ठा रङ्गे रजतधीरिवाशास्त्रीयाया अल्पे महत्त्वबुद्धेर्विपर्यासरूपाया दर्शनात् । यदपि तु भाष्ये वृद्धव्यवहारदर्शनादेव श्रद्दधानतया देवादीन्यजन्त इत्युक्तं, तत्राप्यविगीत एव वृद्धव्यवहारो ग्राह्यः । अविगीतेऽस्मिंस्तामसत्वादिशङ्काया अयोगात् ॥ १ ॥ एवं सामान्यतः पृष्टे सामा-

४ मधुसूदनीव्याख्या ।

धर्म्येणान्विताः किमसुरेष्वन्तर्भवन्ति किंवा देवेष्वित्युभयधर्मदर्शनादेककोटिनिश्चायकादर्शनाच्च संदिहानोऽर्जुन उवाच—ये पूर्वाध्याये न निर्णीताः कोटिद्वयविलक्षणास्ते न देववच्छास्त्रानुसारिणः किंतु शास्त्रविधिं श्रुतिस्मृतिचोदनामुत्सृज्यालस्यादिवशादनादृत्य नासुरवदश्रद्दधानाः किं वृद्धव्यवहारानुसारेण श्रद्धयान्विता यजन्ते देवपूजादिकं कुर्वन्ति तेषां तु शास्त्रविध्युपेक्षाश्रद्धाभ्यां पूर्वनिश्चितदेवासुरविलक्षणानां निष्ठा का कीदृशी तेषां शास्त्रविध्यनपेक्षा श्रद्धापूर्विका च सा यजनादिक्रियाव्यवस्थितिर्हे कृष्ण भक्ताघकर्षण, किं सत्त्वं सात्त्विकी । तथा सति सात्त्विकत्वात्ते देवाः । आहो इति पक्षान्तरे । किं रजस्तमः राजसी तामसी च । तथा सति राजसत्वात्तामसत्वादसुरास्ते सत्त्वमित्येका कोटिः, रजस्तम इत्यपरा कोटिरिति विभागज्ञापनायाहोशब्दः ॥ १ ॥ ये शास्त्रविधिमुत्सृज्य श्रद्धया यजन्ते ते श्रद्धाभेदाद्भिद्यन्ते । तत्र ये सात्त्विक्या श्रद्धयान्वितास्ते देवाः

५ भाष्योत्कर्षदीपिका ।

वस्थानं श्रद्धायाः सात्त्विकत्वात् । आहो रजः किंवा तमः । क्लेशबुद्ध्या आलस्येन च शास्त्रादर्शनस्य राजसतामसत्वात् । एतदुक्तं भवति । या तेषां देवादिविषया पूजा सा किं सात्त्विकी आहोस्विद्राजस्युत तामसीति, 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति निरुक्तिमभिप्रेत्य सर्वत्र सत्तास्फूर्त्यादिना स्थितस्य परमात्मनस्तव किंचिदप्यविदितं न भवतीति सूचयन्संबोधयति—कृष्णेति । मम संशयापकर्षणेति वा संबोधनार्थः ॥ १ ॥ प्रश्नानुरूपमुत्तरं

६ श्रीधरीव्याख्या ।

श्रद्धया यजनानुपपत्तेः । आस्तिक्यबुद्धिर्हि श्रद्धा । न चासौ शास्त्रज्ञानवतां शास्त्रविरुद्धेऽर्थे संभवति । तानेवाधिकृत्य 'त्रिविधा भवति श्रद्धा', 'यजन्ते सात्त्विका देवान्' इत्याद्युत्तरानुपपत्तेश्च । अतो नात्र शास्त्रातिलङ्घिनो गृह्यन्ते अपितु क्लेशबुद्ध्या आलस्याद्वा शास्त्रार्थज्ञाने प्रयत्नमकृत्वा केवलमाचारपरम्परावशेन श्रद्धया क्वचिद्देवताराधनादौ प्रवर्तमाना गृह्यन्ते । अतोऽयमर्थः—ये शास्त्रविधिमुत्सृज्य दुःखबुद्ध्या आलस्याद्वा अनादृत्य केवलमाचारप्रामाण्येन श्रद्धयान्विताः सन्तो यजन्ते तेषां तु का निष्ठा का स्थितिः क आश्रयः तामेव विशेषेण पृच्छति किं सत्त्वं, आहो किं वा रजः, अथवा तम इति । तेषां तादृशी देवपूजादिप्रवृत्तिः किं सत्त्वसंश्रिता रजःसंश्रिता वा तमःसंश्रिता वेत्यर्थः । श्रद्धायाः सात्त्विकत्वात्, क्लेशबुद्ध्या आलस्येन च शास्त्रानादरस्य च राजसतामसत्वात्त्रेधा संदेहः । यदि सत्त्वभावसंश्रितास्तर्हि तेषामपि सात्त्विकत्वाद्यथोक्तारम्भज्ञानेऽधिकारः स्यात् अन्यथा नेति प्रश्नतात्पर्यार्थः

७ अभिनवगुप्ताचार्यव्याख्या ।

नुसारेण दीयते श्रीभगवता—त्रिविधेति । तत्र चायमाशयः । शास्त्रंनाम किल पक्षपातादूषितबुद्धिपूर्वकत्वविहीनं तथा परामर्श-

१ श्रीमच्छांकरभाष्यम्।

**त्रिप्रकारा भवति श्रद्धा। यस्यां निष्ठायां त्वं पृच्छसि देहिनां सा स्वभावजा। जन्मान्तरकृतो धर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते ततो जाता स्वभावजा। सात्त्विकी सत्त्वनिर्वृत्ता देवपूजाविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजादिविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषयैवं त्रिविधा तामुच्यमानां श्रद्धां शृणु॥ २॥ सैवं त्रिविधा**

२ आनन्दगिरिव्याख्या।

**यस्यामिति**। श्रद्धापूर्विकायां क्रियायामिति यावत्। श्रद्धात्रैविध्ये हेतुमाह—**सा स्वभावजेति**। स्वभावशब्दार्थं प्रकृतोपयोगितया कथयति—**जन्मान्तरेति**। कथं त्रिविधेत्यपेक्षायामाह—**सात्त्विकीत्यादिना**। कथमुक्ता श्रद्धा स्वभावजेति तत्राह—**तामिति**॥ २॥ प्राचीनकर्मोद्बोधिता त्रिविधा वासना स्वभावशब्दिता त्रिविधायाः श्रद्धाया

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

न्यमेवोत्तरं श्रीभगवानुवाच—**त्रिविधेति**। स्वभावः प्राग्भवीयौ धर्माधर्मौ ततो जाता स्वभावजा। यदि प्राग्भवे सात्त्विको देवतापूजादिधर्मोऽनेनानुष्ठितस्तर्हि तस्य शुद्धसात्त्विक्येव श्रद्धा भवति। यदि राजसो यक्षादिपूजारूपस्तर्हि राजस्येव। यदि तामसो भूतप्रेतादिपूजारूपस्तर्हि तामसी श्रद्धा भवति। एवं त्रिविधा श्रद्धा देहिनां देहाभिमानवतां भवति तां मया व्याख्यास्यमानां शृणु॥ २॥ ननु 'श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्' इति श्रद्धाया आत्मदर्शने

४ मधुसूदनीव्याख्या।

शास्त्रोक्तसाधनेऽधिक्रियन्ते तत्फलेन च युज्यन्ते। ये तु राजस्या तामस्या च श्रद्धयान्वितास्तेऽसुरा न शास्त्रीयसाधनेऽधिक्रियन्ते नवा तत्फलेन युज्यन्त इति विवेकेनार्जुनस्य संदेहमपनिनीषुः श्रद्धामेदं यथा श्रद्धयान्विताः शास्त्रविधिमुत्सृज्य यजन्ते सा देहिनां स्वभावजा, जन्मान्तरकृतो धर्माधर्मादिशुभाशुभसंस्कार इदानींतनजन्मारम्भकः स्वभावः। स त्रिविधः। सात्त्विको राजसस्तामसश्चेति। तेन जनिता श्रद्धा त्रिविधा भवति सात्त्विकी राजसी तामसी च, कारणानुरूपत्वात्कार्यस्य। या त्वारब्धे जन्मनि शास्त्रसंस्कारमात्रजा विदुषां सा कारणैकरूपत्वादेकरूपा सात्त्विक्येव, न राजसी तामसी चेति प्रथमश्चकारार्थः। शास्त्रनिरपेक्षा तु प्राणिमात्रसाधारणी स्वभावजा। सैव स्वभावत्रैविध्यात्त्रिविधेत्येवकारार्थः। उक्तविधात्रयसमुच्चयार्थश्चरमश्चकारः। यतः प्राग्भवीयवासनाख्यस्वभावस्याभिभावकं शास्त्रीयं विवेकविज्ञानमनादृतशास्त्राणां देहिनां नास्ति अतस्तेषां स्वभाववशात्त्रिधा भवन्तीं तां श्रद्धां शृणु। श्रुत्वा च देवासुरभावं स्वयमेवावधारयेत्यर्थः॥ २॥ प्राग्भवीयान्तःकरणगतवास-

५ भाष्योत्कर्षदीपिका।

श्रीभगवानुवाच। त्रिविधा त्रिप्रकारा श्रद्धा भवति, ययान्वितानां निष्ठां त्वं पृच्छसि सा देहिनां देहवतां जीवानां स्वभावजा। जन्मान्तरकृतधर्माधर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते। तस्माज्जाता जीवानां त्रिविधात्स्वभावाज्जातत्वात् श्रद्धा त्रिविधा भवतीत्यर्थः। या तु अस्वभावजा असूनामभावोऽस्वभावः मरणमित्यर्थस्तस्मिन्समीपे सति जाता। मरणसमये व्यस्तानां समस्तानां वा गुणानामुद्भवे जन्मान्तरे तत्संस्कारवशात्तद्गुणाधिक एव भवतीति व्यवस्था कारणमितीतरेषां व्याख्या। सा तु 'मुखमस्तीति वक्तव्यं' इतिन्यायविजृम्भितत्वादुपेक्ष्या। श्रद्धायास्त्रैविध्यमाह। सात्त्विकी सत्त्वनिर्वृत्ता देवादिपूजाविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजाविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषया। एवं त्रिविधां तां श्रद्धां मयोच्यमानां शृणु॥ २॥ प्राचीनकर्मोद्बोधिता त्रिविधा वासना स्वभावशब्दिता त्रिविधायाः श्रद्धायाः निमित्तमित्युक्तम्। इदानीं तस्या उपादाना-

६ श्रीधरीव्याख्या।

॥ १॥ अत्रोत्तरं श्रीभगवानुवाच—**त्रिविधेति**। अयमर्थः—शास्त्रतत्त्वज्ञानतः प्रवर्तमानानां परमेश्वरपूजाविषया सात्त्विकी एकविधैव श्रद्धा। लोकाचारमात्रेण तु प्रवर्तमानानां देहिनां या श्रद्धा सा तु सात्त्विकी राजसी तामसी चेति त्रिविधा भवति। तत्र हेतुः। स्वभावजा स्वभावः पूर्वकर्मसंस्कारस्तस्माज्जाता स्वभावजा। स्वभावमन्यथा कर्तुं समर्थं हि शास्त्रोक्तं विवेकज्ञानं तत्तु तेषां नास्ति, अतः केवलं स्वभावेनैव भवतीति श्रद्धा त्रिविधा भवति, तामिमां त्रिविधां श्रद्धां शृणु। तदुक्तम् 'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन' इत्यादिना॥ २॥ ननु च श्रद्धा सात्त्विक्येव सत्त्वकार्यत्वेन त्वयैव भगवता उद्धवं प्रति निर्दिष्टत्वात्।

७ अभिनवगुप्ताचार्यव्याख्या।

दार्ढ्यरूपं बोधस्वातन्त्र्यादेव दृढपरामृश्यतया फलादिस्वभावं शुद्धविमर्शनिष्पन्दवाक्तत्त्वपरब्रह्मस्वभावं स्वतन्त्रप्रसरतया आन्तराद्बोधस्वभावाद्बहिःप्रसरपर्यन्तं तच्च सुसूक्ष्मप्रधनादिरूपव्यवहारप्रसिद्धप्रवाहपरम्परापर्यन्तम्। यदाह 'तद्विदां च स्मृतिशीले' इति। तच्च स्वत एव हिताहितोपदेशाय कार्याकार्यविवेचकम्। यस्य स्वभावत एव सत्त्वातिरेकसुकुमारहृदयं तेनाचरितं शास्त्रितमेव। अन्यस्तु रजस्तमःकलुषीकृतः शास्त्रोक्तमप्याचरन्नाचरति शास्त्रार्थस्य कारस्त्र्येनाननुष्ठानात्। शास्त्रं हि सत्त्ववतामेव फलवदिति। शास्त्रमेवाह 'यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्। विद्या तपश्च शीलं च स तीर्थफलमश्नुते॥' नान्यः असंयतत्वात्। तस्माच्छास्त्रार्थः परित्यक्तकामक्रोधमोहेषु सफल इति तात्पर्यमस्याध्यायस्य। तदेवैतत्प्रतायते स्पष्टार्थत्वान्न विव्रियते केवलं किंतु पाठविप्रतिपत्तिनिवारणायैव लिख्यते

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**भवति—सत्त्वेति** । सत्त्वानुरूपा विशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्य प्राणिजातस्य श्रद्धा भवति भारत । यद्येवं ततः किं स्यादित्युच्यते । श्रद्धामयः श्रद्धाप्रायोऽयं पुरुषः संसारी जीवः । कथं यो यच्छ्रद्धो या श्रद्धा यस्य जीवस्य स यच्छ्रद्धः स एव तच्छ्रद्धानुरूप एव स जीवः ॥ ३ ॥ ततश्च

२ आनन्दगिरिव्याख्या ।

निमित्तमित्युक्तमिदानीमुपादानं तस्या दर्शयति—**सैवमिति** । विशिष्टचित्तोपादाना श्रद्धा तत्त्रैविध्ये त्रिविधेति पूर्वार्धस्यार्थः । कथं निष्ठायाः सात्त्विकादिप्रश्नद्वारा श्रद्धायास्त्रैविध्यनिरूपणमुपयुक्तमिति मन्वानः शङ्कते—**यद्येवमिति** । श्रद्धेयं विषयमभिध्यायंस्तया तन्मैव वर्तेत इति मन्वानः परिहरति—**उच्यत इति** । श्रद्धामयत्वं प्रश्नपूर्वकं कथयति—**कथमिति** । श्रद्धा खल्वधिकृते पुरुषे प्राचुर्येण प्रकृतेति तस्य श्रद्धामयत्वसिद्धिरित्यर्थः ॥ ३ ॥ तथापि

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

साधनेष्वन्तरङ्गत्वमुच्यते कथं तस्या राजसत्वं तामसत्वं चोच्यत इत्यत आह—**सत्त्वेति** । प्राक्कर्मसंस्कारोपेतं यादृशं बुद्धिसत्त्वं सात्त्विकं राजसं तामसं वा तदनुरूपैव सात्त्विक्यादिरूपा देवतादिपूजा सुफलावश्यंभावनिश्चयात्मिका श्रद्धापि भवति । तथायं पुरुषोऽपि श्रद्धामयः श्रद्धाप्रधानो यो यच्छ्रद्धो यो यया श्रद्धयोपेतः स एव स इति सात्त्विक्या श्रद्धयोपेतः सात्त्विक एव राजस्या राजसस्तामस्या तामस इति । एवंसति यदि तातकूपभक्तः पूर्वपुण्यवशात्तातं देववन्मन्यते तर्हि तं सात्त्विकं पुण्डरीकमिव देवा अनुगृह्णन्ति नित्यकर्मत्यागनिमित्तमपि दोषमस्यापनुदन्ति । यदि त्वेनं मन्त्रादिना सिद्धं पूर्ववासनावशाद्यक्षादिरूपं मन्यते तदा तं राजसं राजसा यक्षा एवानुगृह्णन्ति नास्य कामकारवतो नित्यकर्मत्यागजं दोषमपनेतुमर्हन्ति । नहि देवतापराधी यक्षैस्त्रातुं शक्यते । यदि त्वयं प्रेतः पिता मत्कुटुम्बं माबाधिष्टेति सर्वे धर्मे त्यक्त्वा एनमस्य प्रियं कूपं पूजयामीति मन्यते तदा तं पितरि प्रेतत्वबुद्धियोगाद्विपर्यस्तं

४ मधुसूदनीव्याख्या ।

नारूपनिमित्तकारणवैचित्र्येण श्रद्धावैचित्र्यमुक्त्वा तदुपादानकारणान्तःकरणवैचित्र्येणापि तद्वैचित्र्यमाह—**सत्त्वं** प्रकाशशीलत्वात्सत्त्वप्रधानत्रिगुणपञ्चीकृतपञ्चमहाभूतारब्धमन्तःकरणं । तच्च क्वचिदुद्रिक्तसत्त्वमेव यथा देवानां । क्वचिद्रजसाभिभूतसत्त्वं, यथा यक्षादीनां । क्वचित्तमसाभिभूतसत्त्वं, यथा प्रेतभूतादीनाम् । मनुष्याणां तु प्रायेण व्यामिश्रमेव । तच्च शास्त्रीयविवेकज्ञानेनोद्भूतसत्त्वं रजस्तमसी अभिभूय क्रियते । शास्त्रीयविवेकविज्ञानशून्यस्य तु सर्वस्य प्राणिजातस्य सत्त्वानुरूपा श्रद्धा सत्त्ववैचित्र्याद्विचित्रा भवति, सत्त्वप्रधानेऽन्तःकरणे सात्त्विकी, रजःप्रधाने तस्मिन् राजसी, तमःप्रधाने तु तस्मिंस्तामसीति । हे भारत महाकुलप्रसूत ज्ञाननिरतेति वा शुद्धसात्त्विकत्वं द्योतयति । यत्त्वया पृष्टं तेषां निष्ठा केति तत्रोत्तरं शृणु—अयं शास्त्रीयज्ञानशून्यः कर्माधिकृतः पुरुषः त्रिगुणान्तःकरणसंपिण्डितः श्रद्धामयः प्राचुर्येणास्मिन् श्रद्धा प्रस्तुतेति 'तत्प्रस्तु(कृ)तवचने मयट्' अन्नमयो यज्ञ इतिवत् । अतो यो यच्छ्रद्धो या सात्त्विकी राजसी तामसी वा श्रद्धा यस्य स एव श्रद्धानुरूप

५ भाष्योत्कर्षदीपिका ।

गुरुपलेन त्रैविध्यं ज्ञापयन् तन्मयस्य पुरुषस्य त्रैविध्यं ज्ञापयति—**सत्त्वानुरूपेति** । सर्वस्य प्राणिजातस्य सत्त्वानुरूपा सात्त्विकादिसंस्कारोपेतान्तःकरणानुरूपा त्रिविधसंस्कारोपेतचित्तोपादाना श्रद्धा त्रिविधा भवतीत्यर्थः । श्रद्धामयः श्रद्धाप्रायोऽयं पुरुषो जीवः कथं यो यच्छ्रद्धः यस्य जीवस्य या श्रद्धा स यच्छ्रद्धः स एव स श्रद्धानुरूप एव स जीवः । श्रद्धायास्त्रैविध्यात्तन्मयो जीवोऽपि त्रिविध

६ श्रीधरीव्याख्या ।

यथोक्तम्-'शमो दमस्तितिक्षेज्या तपः सत्यं दया स्मृतिः । तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः' ॥ इत्येताः सत्त्वस्य वृत्तयः इति । अतः कथं तस्यास्त्रैविध्यमुच्यते । सत्यम् । तथापि रजस्तमोयुक्तपुरुषाश्रयत्वेन रजस्तमोमिश्रत्वेन सत्त्वस्य त्रैविध्याच्छ्रद्धाया अपि त्रैविध्यं घटत इत्याह—**सत्त्वानुरूपेति** । सत्त्वानुरूपा सत्त्वतारतम्यानुसारिणी सर्वस्य विवेकिनोऽविवेकिनो वा लोकस्य श्रद्धा भवति । तस्मादयं पुरुषो लौकिकः श्रद्धामयः श्रद्धाविकारः । त्रिविधया श्रद्धया विक्रियत इत्यर्थः । तदेवाह—यो यच्छ्रद्धः यादृशी श्रद्धा यस्य स एव सः तादृश्या श्रद्धया युक्त एव सः । यः पूर्वं सत्त्वोत्कर्षेण सात्त्विकश्रद्धया युक्तः पुरुषः स पुनस्तादृशसत्त्वसंस्कारेण सात्त्विकश्रद्धया युक्त एव भवति । यस्तु रजस उत्कर्षेण राजसश्रद्धायुक्तः स पुनस्तादृश एव भवति । यस्तु तमस उत्कर्षेण तामसश्रद्धया युक्तः स पुनस्तादृश एव भवति इति लोकाचारमात्रेण प्रवर्तमानेष्वेवं सात्त्विकराजसतामसश्रद्धाव्यवस्था । शास्त्रज-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ २ ॥ श्रीभगवानुवाच—सत्त्वानुरूपेति अत्र सत्त्वशब्दः स्वभावपर्यायः । अयं पुरुष आत्मा श्रद्धयान्यव्यापारोपरिवर्तिन्यावश्यं

**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः ।**
**प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**
**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कार्येण लिङ्गेन देवादिपूजया सत्त्वादिनिष्ठानुमेयेत्याह—**यजन्त इति** । यजन्ते पूजयन्ति सात्त्विकाः सत्त्वनिष्ठा देवान्, यक्षरक्षांसि राजसाः, प्रेतान् भूतगणांश्च सप्तमातृकादींश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥ एवं कार्यतो निर्णीताः सत्त्वादिनिष्ठाः शास्त्रविध्युत्सर्गे तत्र कश्चिदेव सहस्रेषु देवपूजादितत्परः सत्त्वनिष्ठो भवति, बाहुल्येन तु रजोनिष्ठास्तमोनिष्ठाश्चैव प्राणिनो भवन्ति, कथम्—**अशास्त्रेति** ।

२ आनन्दगिरिव्याख्या ।

कथं सत्त्वादिनिष्ठा यथोक्तस्य पुरुषस्य ज्ञातुं शक्येत्याशङ्क्याह—**ततश्चेति** । अधिकृतस्य पुरुषस्य श्रद्धाप्रधानत्वादिति यावत्, देवा वस्वादयः, यक्षाः कुबेरादयः, रक्षांसि नैर्ऋतादयः, स्वधर्मात्प्रच्युता विप्रादयो देहपातादूर्ध्वं वायुदेहमापन्नाः प्रेताः । एभ्यश्च यथायथमाराध्यदेवादयः सात्त्विकराजसतामसान्प्रकामान्प्रयच्छन्तीति सामर्थ्यादवगन्तव्यम् ॥ ४ ॥ ननु सत्त्वादिनिष्ठाः शास्त्रेण ज्ञातुं शक्यन्ते कुतः कार्यलिङ्गकानुमानेनेति तत्राह—**एवमिति** । सत्त्वादिनिष्ठानां जन्तूनामवान्तरविशेषं प्रचुरत्वाप्रचुरत्वरूपं दर्शयति—**तत्रेत्यादिना** । राजसानां तामसानां च प्राचुर्यं प्रश्नद्वारा विवृणोति—**कथमित्यादिना** । कामश्च काम्यमानविषयो रागश्च तद्विषयभोगाभिलाषस्तत्कृतं तत्प्रयुक्तम् ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तामसं प्रेता एवानुगृह्णन्ति क्षुद्रभोगैर्देवाश्च नरके पातयन्ति ॥ ३ ॥ कुत एतदेवं कल्प्यते यस्मात्सात्त्विकादयो देवादीनेव यजन्ते इत्याह—**यजन्त इति** । यजन्ते पूजयन्ति ॥ ४ ॥ सात्त्विकानां दौर्लभ्यमभिप्रेत्याह—**अशास्त्रेति** । शास्त्रं वेदादि तद्विरोधिना कौलिकाद्यागमेन विहितं घोरं स्वमांसहोमेन ब्राह्मणलोहितादिना वा देवतासंतर्प-

४ मधुसूदनीव्याख्या ।

एव स सात्त्विको राजसस्तामसो वा । श्रद्धयैव निष्ठा व्याख्यातेत्यभिप्रायः ॥ ३ ॥ श्रद्धा ज्ञाता सती निष्ठां ज्ञापयिष्यति केनोपायेन सा ज्ञायतामित्यपेक्षिते देवपूजादिकार्यलिङ्गेनानुमेयेत्याह—जनाः शास्त्रीयविवेकहीनाः ये स्वाभाविक्या श्रद्धया देवान् वसुरुद्रादीन् सात्त्विकान् यजन्ते तेऽन्ये सात्त्विका ज्ञेयाः । ये च यक्षान्कुबेरादीन् रक्षांसि च राक्षसान्निर्ऋतिप्रभृतीन् राजसान्यजन्ते तेऽन्ये राजसा ज्ञेयाः । ये च प्रेतान् विप्रादयः स्वधर्मात्प्रच्युता देहपातादूर्ध्वं वायवीयं देहमापन्ना उल्कामुखकटपूतनादिसंज्ञाः प्रेता भवन्तीति मनूक्तान्पिशाचविशेषान्वा, भूतगणांश्च सप्तमातृकादींश्च तामसान् ये यजन्ते तेऽन्ये तामसा ज्ञेयाः । अन्य इति पदं त्रिष्वपि वैलक्षण्यद्योतनार्थं संबध्यते ॥ ४ ॥ एवमनादृतशास्त्राणां सत्त्वादिनिष्ठा कार्यतो निर्णीता । तत्र केचिद्राजसतामसा अपि प्राग्भवीयपुण्यपरिपाकात्सात्त्विका भूत्वा शास्त्रीयसाधनेऽधिक्रियन्ते । ये तु दुराग्रहेण दुर्दैवपरिपाकप्राप्तदुर्जनसङ्गादिदोषेण च राजसतामसतां न मुञ्चन्ति ते शास्त्रीयमार्गाद्भ्रष्टा असन्मार्गानुसरणेनेह लोके परत्र च दुःखभागिन एवेत्याह द्वाभ्याम्—अशास्त्रविहितं शास्त्रेण वेदेन प्रत्यक्षेणानुमितेन वा न विहितं अशास्त्रेण बुद्धाद्यागमेन बोधितं वा

५ भाष्योत्कर्षदीपिका ।

इत्यर्थः । यथा त्वं भरतवंशोद्भवत्वाद्भारतस्तथेति संबोधनाशयः ॥ ३ ॥ एवं श्रद्धायास्त्रैविध्येन पुरुषाणां त्रैविध्यं निरूप्य यथोक्तानां पुरुषाणां सत्त्वादिनिष्ठा कथं ज्ञातुं शक्येत्याकाङ्क्षापनुत्तये देवादिपूजारूपकार्येण लिङ्गेन सानुमेयेत्याशयेनाह—**यजन्त इति** । सात्त्विका सात्त्विकश्रद्धामयाः सत्त्वनिष्ठाः देवान्वस्वादीन्सात्त्विकान्यजन्ते पूजयन्ति । राजसाः कुबेरनिर्ऋतिप्रमुखान्यक्षरक्षांसि राजसान्यजन्ते । अन्ये तामसा जना प्रेतान् । विप्रादयः स्वधर्मात्प्रच्युता देहपातादूर्ध्वं वायवीयं देहमापन्ना उल्कामुखकटपूतनादिसंज्ञाः प्रेता भवन्तीति मनूक्तान्पिशाचविशेषान् वा भूतगणांश्च सप्तमातृकादींश्च तामसान्यजन्ते । एवं पूजात्रैविध्येन जीवानां निष्ठात्रैविध्यं ज्ञातव्यमित्यर्थः ॥ ४ ॥ एवं कार्यतो निर्णीतानां सत्त्वादिनिष्ठानां मध्ये देवपूजादितत्परस्य सत्त्वनिष्ठस्य दौर्लभ्यं रजस्तमोनिष्ठानां

६ श्रीधरीव्याख्या ।

नितविवेकज्ञानयुक्तानां तु स्वभावविजयेन सात्त्विक्यैकैव श्रद्धेति प्रकरणार्थः ॥ ३ ॥ सात्त्विकादिभेदमेव कार्यभेदेन प्रपञ्चयति—**यजन्त इति** । सात्त्विका जनाः सत्त्वप्रकृतीन्देवानेव यजन्ते पूजयन्ति । राजसास्तु रजःप्रकृतीन्यक्षान्राक्षसांश्च यजन्ते । एतेभ्योऽन्ये तु विलक्षणास्तामसा जनास्तामसानेव प्रेतान्भूतगणांश्च यजन्ते । सत्त्वादिप्रकृतीनां तत्तद्देवतानां तु पूजारुचिभिस्तत्पूजकानां सात्त्विकत्वादि ज्ञातव्यमित्यर्थः ॥ ४ ॥ राजसतामसेषु पुनर्विशेषान्तरमाह—**अशास्त्रविहितमिति द्वाभ्याम्** ।

७ अभिनवगुप्ताचार्यव्याख्या ।

संबद्धः सच तन्मय एव बोद्धव्यः 'अशास्त्रविहितं घोरं तपस्तप्यन्ति तामसाः' इति । अतएव ते स्वबुद्धिविचारिताः तपश्चर्यां कुर्वाणाः

**कर्शयन्तः[1] शरीरस्थं भूतग्राममचेतसः[2] ।**
**मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**अशास्त्रविहितं न शास्त्रविहितमशास्त्रविहितं घोरं पीडाकरं प्राणिनामात्मनश्च तपस्तप्यन्ते निर्वर्तयन्ति ये तपो जनास्ते च दम्भाहंकारसंयुक्ता दम्भश्चाहंकारश्च दम्भाहंकारौ ताभ्यां संयुक्ता दम्भाहंकारसंयुक्ताः कामरागबलान्विताः कामश्च रागश्च कामरागौ तत्कृतं बलं कामरागबलं तेनान्विताः कामरागबलैर्वान्विताः ॥५॥ कर्शयन्त इति । कर्शयन्तः कृशीकुर्वन्तः शरीरस्थं भूतग्रामं करणसमुदायमचेतसोऽविवेकिनो मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्शयन्तो मदनुशासनाकरणमेव मत्कर्शनं**

२ आनन्दगिरिव्याख्या ।

**तन्निमित्तमिति यावत् ॥ ५ ॥ रजोनिष्ठान्प्राधान्येन प्रदर्श्य तमोनिष्ठान्प्राधान्येन दर्शयति—कर्शयन्त इति । कथं शरीरादिसाक्षिणमीश्वरं प्रति कृशीकरणं प्राणिनां प्रकल्प्यते तत्राह—मदनुशासनेति । तेषां विपर्यासनिश्चयवतां**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

णाद्यात्मकं ये जनास्तपस्तप्यन्ते तानासुरनिश्चयान्विद्धीति द्वयोः संबन्धः । दम्भो धर्मध्वजित्वम्, अहंकारः स्वस्मिन्पूज्यताबुद्धिः ताभ्यां संयुक्ताः । कामरागो विषयाभिलाषः, बलं साहसेनापि विषयसाधने उत्साहस्ताभ्यामन्विताः ॥ ५ ॥ कर्शयन्तः कृशं कुर्वन्तः । भूतग्रामं करणसमूहम् । अचेतसो मूढाः । मां चान्तःशरीरस्थं भोक्तृरूपेण शरीरान्तःस्थं मां परमेश्वरं वा भोग्यस्य शरीरस्य कृशीकरणेन मदाज्ञालङ्घनेन वा कृशीकुर्वन्तः तान्विद्ध्यासुरनिश्च-

४ मधुसूदनीव्याख्या ।

घोरं परस्यात्मनः पीडाकरं तपस्तप्तशिलारोहणादि तप्यन्ते कुर्वन्ति ये जनाः, दम्भो धार्मिकत्वख्यापनं, अहंकारोऽहमेव श्रेष्ठ इति दुरभिमानस्ताभ्यां सम्यग्युक्ताः, योगस्य सम्यक्त्वमनायासेन योगजननासामर्थ्यं कामे काम्यमानविषये यो रागस्तन्निमित्तं बलमत्युग्रदुःखसहनसामर्थ्यं तेनान्विताः, कामो विषयेऽभिलाषः, रागः सदा तदभिनिविष्टत्वरूपोऽभिष्वङ्गः, बलमवश्यमिदं साधयिष्यामीत्याग्रहस्तैरन्विता इति वा । अतएव बलवद्दुःखदर्शनेऽप्यनिवर्तमानाः कर्शयन्तः कृशीकुर्वन्तो वृथोपवासादिना शरीरस्थं भूतग्रामं देहेन्द्रियसङ्घाताकारेण परिणतं पृथिव्यादिभूतसमुदायं अचेतसो विवेकशून्याः, मां चान्तःशरीरस्थं भोक्तृरूपेण स्थितं भोग्यस्य शरीरस्य कृशीकरणेन कृशीकुर्वन्त एव, मामन्तर्यामित्वेन शरीरान्तःस्थितं बुद्धितद्वृत्तिसाक्षिभूतमीश्वरमाज्ञालङ्घनेन कर्शयन्त इति वा । तानैहिकसर्वभोगविमुखान् परत्र चाधमगतिभागिनः सर्वपुरुषार्थभ्रष्टानासुरनिश्चयानासुरो विपर्यासरूपो वेदार्थविरोधी निश्चयो येषां तान् मनुष्यत्वेन प्रतीयमानानप्यसुरकार्यकारित्वादसुरान्विद्धि जानीहि परिहरणाय । निश्चयस्यासुरत्वात्तत्पूर्विकाणां सर्वासामन्तःकरणवृत्तीनामासुरत्वं । असुरत्वजातिरहितानां च मनुष्याणां कर्मणैवासुरत्वात्तान-

५ भाष्योत्कर्षदीपिका ।

बाहुल्यं च ज्ञापयितुं आह । अशास्त्रविहितं शास्त्रविहितं श्रुतिस्मृत्यादिरूपेण शास्त्रेण विहितं न भवति तत्, शास्त्रं न भवतीत्यशास्त्रं तेन बुद्धाद्यागमेन बोधितमिति वा । घोरं प्राणिनामात्मनश्च पीडाकरं तपो ये जनास्तप्यन्ते निर्वर्तयन्ति । जनान्विशिनष्टि । दम्भाहंकारसंयुक्ताः दम्भो धर्मध्वजित्वं, अहंकारोऽहमेव सर्वोत्तम इति दुरभिमानस्ताभ्यां सम्यग्युक्ताः । कामरागबलान्विताः कामो विषयाभिलाषः कामस्य कारणीभूतो विषयाभिरञ्जनात्मको रागः कामरागाभ्यां कृतं बलं विषयसंपादनोत्साहस्तेनान्विताः, कामरागबलैरन्विता इति वा ॥ ५ ॥ रजोनिष्ठान्प्राधान्येन प्रदर्श्य तमोनिष्ठान्प्राधान्येन विशिनष्टि—**कर्शयन्त इति**। शरीरस्थं भूतग्रामं करणसमुदायरूपेण परिणतं कर्शयन्तः कृशीकुर्वन्तः यतोऽचेतसोऽविवेकिनो मूढाः मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्शयन्तो मदनुशासनातिक्रमणं कुर्वन्तो भोक्तृरूपेणान्तःशरीरस्थम् । भोग्यस्य शरीरस्य कर्शनेन कृशीकुर्वन्त इति तु भोग्यस्य

६ श्रीधरीव्याख्या ।

शास्त्रविधिमजानन्तोऽपि केचित्प्राचीनपुण्यसंस्कारेणोत्तमाः सात्त्विका एव भवन्ति । केचित्तु मध्यमा राजसा भवन्ति । अधमास्तु तामसा भवन्ति । ये पुनरत्यन्तं मन्दभाग्याः गतानुगत्या पाखण्डसङ्गेन च तदाचारानुवर्तिनः सन्तः अशास्त्रविहितं घोरं भयंकरं तपस्तप्यन्ते कुर्वन्ति । तत्र हेतवः–दम्भाहंकाराभ्यां संयुक्ताः तथा कामोऽभिलाषः, राग आसक्तिः, बलमाग्रहः, एतैरन्विताः सन्तः, तानासुरनिश्चयान्विद्धीत्युत्तरेणान्वयः ॥ ५ ॥ किंच—**कर्शयन्त इति** । शरीरस्थं प्रारम्भकत्वेन देहे स्थितं भूतानां पृथिव्यादीनां ग्रामं समूहं कर्शयन्तः वृथैवोपवासादिभिः कृशं कुर्वन्तोऽचेतसोऽविवेकिनः मां च अन्तर्यामितया अन्तःशरीरस्थं

७ अभिनवगुप्ताचार्यव्याख्या ।

प्रत्युत तामसाः । भूतग्राममचेतनमिति । अचेतनमविवेकित्वात् ॥ ३ ॥ ४ ॥ ५ ॥ मां च कर्शयन्तः शास्त्रार्थानामननुष्ठानात् ॥ ६ ॥

१ कर्षयन्त इति पाठः. २ अचेतनम् इत्यभिनवगुप्ताहतः पाठः. ३ मधुसूदनः. नीलकण्ठः.

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः।**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**
**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।**

१ श्रीमच्छांकरभाष्यम्।

तान्विद्ध्यासुरनिश्चयान् आसुरो निश्चयो येषां त आसुरनिश्चयास्तान्परिहरणार्थं विद्धीत्युपदेशः ॥ ६ ॥ आहाराणां च रस्यस्निग्धादिवर्गत्रयरूपेण भिन्नानां यथाक्रमं सात्त्विकराजसतामसपुरुषप्रियत्वदर्शनमिह क्रियते रस्यस्निग्धादिष्वाहारविशेषेष्वात्मनः प्रीत्यतिरेकेण लिङ्गेन सात्त्विकत्वं राजसत्वं तामसत्वं च बुद्ध्वा रजस्तमोलिङ्गानामाहाराणां परिवर्जनार्थं सत्त्वलिङ्गानां चोपादानार्थं तथा यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वप्रतिपादनमिह राजसतामसान्बुद्ध्वा कथं नु नाम परित्यजेत्सात्त्विकानेवानुतिष्ठेदित्येवमर्थमाह—आहारस्त्विति। आहारस्त्वपि सर्वस्य भोक्तुस्त्रिविधो भवति प्रिय इष्टः। तथा यज्ञस्तपस्तथा दानं तेषामाहारादीनां भेदमिमं वक्ष्यमाणं शृणु ॥ ७ ॥ आयुरिति। आयुश्च

२ आनन्दगिरिव्याख्या।

परिज्ञानं कुत्रोपयुज्यते तत्राह—**परिहरणार्थमिति** ॥ ६ ॥ उत्तरश्लोकपूर्वार्धतात्पर्यमाह—**आहाराणामिति**। रस्यादिवर्गस्य सात्त्विकपुरुषप्रियत्वं, कट्वादिवर्गस्य राजसप्रियत्वं, यातयामादिवर्गस्य तामसप्रियत्वमिति दर्शनं कुत्रोपयुज्यते तत्राह—**रस्येति**। श्लोकोत्तरार्धतात्पर्यमाह—**तथेति**। आहारत्रैविध्यवदिति यावत्। कथमेतेषां प्रत्येकं त्रैविध्यं तत्राह—**तेषामिति** ॥ ७ ॥ सात्त्विकप्रीतिविषयमाहारविशेषमुदाहरति—**आयुरिति**। आयुर्जीवनं, सत्त्वं चित्त-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

यान् ॥ ६ ॥ अत्र सात्त्विकानां श्रद्धाराध्याहारयज्ञतपोदानानां परिग्रहार्थं राजसतामसानां वर्जनार्थं च तेषां प्रत्येकं त्रैविध्यं विधीयते। तत्रापि श्रद्धात्रैविध्यं आराध्यत्रैविध्यं च प्रागेवोक्तम्। आहारादीनां त्रैविध्यं प्रतिज्ञापूर्वकमाह—**आहारस्त्विति**। आह्रियत इत्याहारोऽन्नं। अतः परं प्रायेण पदार्थः स्पष्टस्तथापि क्वचित्क्वचित्किंचित्किंचिद्व्याख्यायते ॥ ७ ॥ आयुर्जीवनम्। सत्त्वमुत्साहः। बलं शक्तिः। आरोग्यं रोगराहित्यम्। सुखं चित्तप्रसादः। प्रीतिरभिरुचिः।

४ मधुसूदनीव्याख्या।

सुरान्विद्धीति साक्षान्नोक्तमिति च द्रष्टव्यम् ॥ ५ ॥ ६ ॥ ये सात्त्विकास्ते देवा ये तु राजसास्तामसाश्च ते विपर्ययत्वादसुरा इति स्थिते सात्त्विकानामादानाय राजसतामसानां हानाय चाहारयज्ञतपोदानानां त्रैविध्यमाह—न केवलं श्रद्धैव त्रिविधा, आहारोऽपि सर्वस्य प्रियस्त्रिविध एव भवति। सर्वस्य त्रिगुणात्मकत्वेन चतुर्थ्या विधाया असंभवात्। यथा दृष्टार्थ आहारस्त्रिविधस्तथा यज्ञतपोदानान्यदृष्टार्थान्यपि त्रिविधानि। तत्र 'यज्ञं व्याख्यास्यामो द्रव्यं देवता त्यागः' इति कल्पकारैर्देवतोद्देशेन द्रव्यत्यागो यज्ञ इति निरुक्तः। 'स च यजतिना जुहोतिना च चोदितत्वेन यागो होमश्चेति द्विविध उत्तिष्ठद्धोमा वषट्कारप्रयोगान्ता याज्यापुरोनुवाक्यावन्तो यजतय उपविष्टहोमाः स्वाहाकारप्रयोगान्ता याज्यापुरोनुवाक्यारहिता जुहोतयः' इति कल्पकारैर्व्याख्यातो यज्ञशब्देनोक्तः। तपः कायेन्द्रियशोषणं कृच्छ्रचान्द्रायणादि। दानं परस्वत्वापत्तिफलकः स्वस्वत्वत्यागः। तेषामाहारयज्ञतपोदानानां सात्त्विकराजसतामसभेदं मया व्याख्यायमानमिमं शृणु ॥ ७ ॥ आहारयज्ञतपोदानानां भेदः पञ्चदशभिर्व्याख्यायते। तत्राहारभेदस्त्रिभिः—आयुश्चिरंजीवनं, सत्त्वं चित्तधैर्यं बलवति दुःखेऽपि निर्विकारत्वापादकं, बलं

५ भाष्योत्कर्षदीपिका।

कृशीकरणेनापि निरवयवस्य भोक्तुः वास्तवं कार्श्यं न संभवतीत्यभिप्रेत्याचार्यैः नोक्तम्। य एवंविधास्तान् आसुरो निश्चयो येषां ते आसुरनिश्चयाः तान्परिहरणार्थं विद्धि विजानीहीति करुणानिधिर्भगवानुपदिशति ॥ ६ ॥ तत्तदाहारेषु प्रीत्यतिरेकेण सात्त्विकत्वादिकं यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वं च बुद्ध्वा सात्त्विका आहारादयो ग्राह्याः राजसास्तामसाश्च परिवर्ज्या इति बोधयितुमारभते—**आहार इत्यादिना**। आह्रियते इत्याहारो भक्ष्यादिरूपः सर्वस्य सात्त्विकादिभेदभिन्नस्य प्राणिजातस्य भोक्तुराहारोऽपि त्रिविधस्त्रिप्रकारः प्रिय इष्टो भवति। तथा यज्ञस्त्रिविधः तथा दानं तेषामाहारादीनामिमं वक्ष्यमाणं भेदं शृणु ॥ ७ ॥ तत्र सात्त्विकप्रीतिविषयानाहारानादावुदाहरति—**आयुरिति**। आयुश्चिरजीवनं, सत्त्वमन्तःकरणधैर्यवीर्योत्साहात्मकं, बलं कार्य-

६ श्रीधरीव्याख्या।

देहमध्ये स्थितं मदाशात्वङ्गनेनैव कर्शयन्तः सन्त एवं ये तपश्चरन्ति तानासुरनिश्चयानासुरोऽतिक्रूरो निश्चयो येषां तान् विद्धि ॥ ६ ॥ आहारादिभेदादपि सात्त्विकादिभेदं दर्शयितुमाह—**आहारस्त्वित्यादित्रयोदशभिः**। सर्वस्यापि जनस्य य आहारोऽन्नादिः स तु यथायथं त्रिविधः प्रियो भवति। तथा यज्ञतपोदानानि च त्रिविधानि भवन्ति। तेषां च वक्ष्यमाणमिमं भेदं शृणु। एतच्च राजसतामसाहारयज्ञादिपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृद्धौ यत्नः कर्तव्य इत्येतदर्थं कथ्यते ॥ ७ ॥ तत्राहारत्रैविध्यमाह—**आयुरिति त्रिभिः**। आयुर्जीवितम्, सत्त्वमुत्साहः, बलं शक्तिः, आरोग्यं रोगराहित्यम्, सुखं चित्तप्रसादः, प्रीतिरभिरुचिः,

**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥**
**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**
**यातयामं गतरसं पूति पर्युषितं च यत् ।**

१ श्रीमच्छांकरभाष्यम् ।

सत्त्वं च बलं चारोग्यं च सुखं च प्रीतिश्च तासां विवर्धना आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनास्ते च रस्या रसोपेताः स्निग्धाः स्नेहवन्तः स्थिराश्चिरकालस्थायिनो देहे, हृद्या हृदयप्रिया आहाराः सात्त्विकप्रियाः सात्त्विकस्येष्टाः ॥ ८ ॥ कट्विति । कटुरम्लो लवणोऽत्युष्णः । अतिशब्दः कट्वादिषु सर्वत्र योज्योऽतिकटुरतितीक्ष्ण इत्येवं कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन एवंविधा आहारा राजसस्येष्टा दुःखशोकामयप्रदा दुःखं च शोकं चामयं च प्रयच्छन्तीति दुःखशोकामयप्रदाः ॥ ९ ॥ यातयाममिति ।

२ आनन्दगिरिव्याख्या ।

स्थैर्यं, वीर्यं वा बलं कार्यकरणसामर्थ्यम्, आरोग्यं नीरोगता, सुखमन्तराह्लादः, प्रीतिः परेषामपि संपन्नानां दर्शनात्परमो हर्षस्तासां विवर्धनाः विवर्धयन्तीति व्युत्पत्तेः । रसोपेता रसयितव्याः सरसाः । देहे चिरकालस्थायित्वं चिरतरं शरीरोपकारहेतुत्वम् ॥ ८ ॥ राजसप्रीतिविषयमाहारविशेषं दर्शयति—**कट्विति** । कटुस्तिक्तः कटुकस्य तीक्ष्णशब्देनोक्तत्वात्, रूक्षो विस्नेहः, विदाही संतापकः । अतिशब्दस्य सर्वत्र योजनमेवाभिनयति—**अतिकटुरिति** । दुःखं तात्कालिकी पीडा, इष्टवियोगजं दुःखं शोकः, आमयो रोगः ॥ ९ ॥ तामसप्रियमाहारमुदाहरति—**यात-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एतेषां विवर्धनाः वृद्धिकराः ते आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः, रस्याः रसोपेताः, स्निग्धाः स्नेहवन्तः, स्थिराः देहे रसांशेन चिरकालस्थायिनः, हृद्याः दृष्टमात्रा एव हृदयप्रियाः, आहाराः घृतक्षीरसितादयः सात्त्विकप्रियाः ॥ ८ ॥ **कट्विति** । अतिशब्दः सर्वत्र संबध्यते । अतिकटु निम्बादि, अत्यम्लातिलवणात्युष्णाः प्रसिद्धाः, अतितीक्ष्णो मरीचादि, अतिरूक्षः स्नेहशून्यः कङ्गुकोद्रवादिः, अतिविदाही राजिकादिः, दुःखं तात्कालिकी पीडा, शोकः

४ मधुसूदनीव्याख्या ।

शरीरसामर्थ्यं स्वोचिते कार्ये श्रमाभावप्रयोजकं, आरोग्यं व्याध्यभावः, सुखं भोजनानन्तराह्लादस्तृप्तिः, प्रीतिर्भोजनकालेऽनभिरुचिराहित्यमिच्छैतकव्यं तेषां विवर्धना विशेषेण वृद्धिहेतवः, रस्या आस्वाद्या मधुररसप्रधानाः, स्निग्धाः सहजेनागन्तुकेन वा स्नेहेन युक्ताः, स्थिरा रसायंशेन शरीरे चिरकालस्थायिनः, हृद्या हृदयंगमा दुर्गन्धाशुचित्वादिदृष्टादृष्टदोषशून्याः आहाराश्चर्व्यचोष्यलेह्यपेयाः, सात्त्विकानां प्रियाः, एतैर्लिङ्गैः सात्त्विका ज्ञेयाः सात्त्विकत्वमभिलषद्भिश्चैत आदेया इत्यर्थः ॥ ८ ॥ अतिशब्दः कट्वादिषु सप्तस्वपि योजनीयः, कटुस्तिक्तः कटुरसस्य तीक्ष्णशब्देनोक्तत्वात् । तत्रातिकटुर्निम्बादिः । अत्यम्लातिलवणात्युष्णाः प्रसिद्धाः अतितीक्ष्णो मरीचादिः अतिरूक्षः स्नेहशून्यः कङ्गुकोद्रवादिः । अतिविदाही संतापको राजिकादिः, दुःखं तात्कालिकीं पीडां, शोकं पश्चाद्भाविदौर्मनस्यमामयं रोगं च धातुवैषम्यद्वारा प्रददतीति तथाविधा आहारा राजसस्येष्टाः । एतैर्लिङ्गै राजसा

५ भाष्योत्कर्षदीपिका ।

करणे शरीरसामर्थ्यं, आरोग्यं नीरोगता, सुखमन्तराह्लादः दर्शनमात्रेण संतोषजन्यः, प्रीतिः परेषामभिसंपन्नानां दर्शनात्परमो हर्षोऽभिरुचिर्वा । यद्वा प्रीतिस्तृप्तिजन्या प्रसन्नता । आयुःसत्त्वबलारोग्यसुखप्रीतीनां विवर्धना विशेषेण वृद्धिकराः, रस्याः रसोपेताः शर्करादयः, स्निग्धाः स्नेहवन्तो दुग्धादयः, स्थिराः देहे चिरकालस्थायिनः चिरतरशरीरोपकारहेतवः, हृद्याः दृष्टादृष्टदोषशून्या हृदयप्रियाः एवंविधा आहाराः सात्त्विकस्य प्रियाः इष्टाः । एतादृशाहारप्रीतिमन्तः सात्त्विकाः ज्ञेयाः सात्त्विकत्वमभिलषद्भिश्चैत आदेया इत्यर्थः ॥ ८ ॥ राजसप्रियाहारानुदाहरति—**कट्विति** । अतिशब्दः कट्वादिषु सर्वेषु संबन्धनीयः । अतिकटुर्निम्बादिः, अत्यम्लं जम्बीरादि, अतिलवणं बहुक्षिप्तसैन्धवादि, अत्युष्णं मुखादिदाहकं, अतितीक्ष्णं मरीचादि, अतिरूक्षः स्नेहलेशेनापि रहितः कङ्गुकोद्रवादिः, अतिविदाही संतापकः सर्षपादिः, एवंविधा अतिकट्वादयो दुःखं तात्कालिकी पीडा, पश्चादुत्पन्नरोगे तज्जन्यं दौर्म-

६ श्रीधरीव्याख्या ।

आयुरादीनां विवर्धनाः विशेषेण वृद्धिकरास्ते च रस्या रसवन्तः, स्निग्धाः स्नेहयुक्ताः, स्थिरा देहे सारांशेन चिरकालावस्थायिनः, हृद्या दृष्टमात्रा एव हृदयंगमाः एवंभूता आहारा भक्ष्यभोज्यादयः सात्त्विकप्रियाः ॥ ८ ॥ तथा—**कट्विति** । अतिशब्दः कट्वादिषु सप्तस्वपि संबध्यते । अतिकटुर्निम्बादिः । अत्यम्लोऽतिलवणोऽत्युष्णश्च प्रसिद्धः, अतितीक्ष्णो मरीचादिः, अतिरूक्षः कङ्गुकोद्रवादिः,

७ अभिनवगुप्ताचार्यव्याख्या ।

आहारोऽपि सत्त्वादिभेदात्त्रिधा तथा ( श्रद्धावत्तथा ) यज्ञतपोदानानि । तदुच्यते—आहारस्त्वपीत्यादिना ॥ ७ ॥ ८ ॥ ९ ॥ यातयामेति

**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**
**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।**

१ श्रीमच्छांकरभाष्यम् ।

**यातयामं मन्दपक्कं निर्वीर्यस्य गतरसेनोक्तत्वाद्गतरसं रसवियुक्तं पूति दुर्गन्धि पर्युषितं च पक्कं सद् रात्र्यन्तरितं च यद् उच्छिष्टमपि च भुक्तशिष्टमप्यमेध्यमयज्ञार्हं भोजनमीदृशं तामसप्रियम् ॥ १० ॥ अथेदानीं यज्ञस्त्रिविध उच्यते—अफलेति । अफलाकाङ्क्षिभिरफलार्थिभिर्यज्ञो विधिदृष्टः शास्त्रचोदनदृष्टो यो यज्ञ इज्यते निर्वर्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्वर्तनमेव कार्यमिति मनःसमाधाय नानेन**

२ आनन्दगिरिव्याख्या ।

**याममिति** । ननु निर्वीर्यं यातयाममुच्यते न पुनः सामिपक्वमिति नेत्याह—**निर्वीर्यस्येति** ॥ १० ॥ हानादानार्थमाहारत्रैविध्यमेवं विभज्य क्रमप्राप्तं यज्ञत्रैविध्यं कथयति—**अथेति** । तत्र सात्त्विकं यज्ञं ज्ञापयति—**अफलेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पश्चाद्भाविदौर्मनस्यम्, आमयो धातुवैषम्यापादनेन रोगस्तत्प्रदाः ॥ ९ ॥ यातयामं प्रहरात्प्राक्कृतं शीतलतां गतमित्यर्थः । यातयामं अर्धपक्कं निर्वीर्यस्य गतरसेनैवोक्तत्वादिति भाष्यम् । गतरसं रसवियुक्तम्, पूति दुर्गन्धि, पर्युषितं पक्कं सद्रात्र्यन्तरितम्, उच्छिष्टं भुक्तावशिष्टम्, अमेध्यं यज्ञानर्हम्, भोजनं अन्नं तामसप्रियम् ॥ १० ॥ यज्ञत्रैविध्यमाह—**अफलेति** । विधिदृष्टः आवश्यकतया विहितः । यष्टव्यमेव नतु यज्ञाद्दृष्टमदृष्टं वा फलं

४ मधुसूदनीव्याख्या ।

ज्ञेयाः सात्त्विकैश्चैत उपेक्षणीया इत्यर्थः ॥ ९ ॥ यातयायमर्धपक्कम् । निर्वीर्यस्य गतरसपदेनोक्तत्वादिति भाष्यम् । गतरसं विरसतां प्राप्तं शुष्कं, यातयामं पक्कं सत्प्रहरादिव्यवहितमोदनादि शैत्यं प्राप्तम्, गतरसमुद्धृतसारम्, मथितदुग्धादीत्यन्ये । पूति दुर्गन्धं, पर्युषितं पक्कं सद्रात्र्यन्तरितं, चेतसस्तत्कालोन्मादकरं धत्तूरादिसमुच्चीयते । यदतिप्रसिद्धं दुष्टत्वेन उच्छिष्टं भुक्तावशिष्टम् अमेध्यमयज्ञार्हमशुचि मांसादि । अपिचेति वैद्यकशास्त्रोक्तमपथ्यं समुच्चीयते । एतादृशं यद्भोजनं भोज्यं तत्तामसस्य प्रियं सात्त्विकैरतिदूरादुपेक्षणीयमित्यर्थः । एतादृशभोजनस्य दुःखशोकामयप्रदत्वमतिप्रसिद्धमिति कण्ठतो नोक्तम् । अत्र च क्रमेण रस्यादिवर्गः सात्त्विकः, कट्वादिवर्गो राजसः, यातयामादिवर्गस्तामस इत्युक्तमाहारवर्गत्रयं, तत्र सात्त्विकवर्गविरोधित्वमितरवर्गद्वये द्रष्टव्यम् । तथा ह्यतिकटुत्वादिकं रस्यत्वविरोधि, तादृशस्यानास्वाद्यत्वात् । रूक्षत्वं स्निग्धत्वविरोधि, तीक्ष्णत्वविदाहित्वे धातुपोषणविरोधित्वात्स्थिरत्वविरोधिनी, अत्युष्णत्वादिकं हृद्यत्वविरोधि, आमयप्रदत्वमायुःसत्त्वबलारोग्यविरोधि, दुःखशोकप्रदत्वं सुखप्रीतिविरोधि, एवं सात्त्विकवर्गविरोधित्वं राजसवर्गे स्पष्टम् । तथा तामसवर्गेऽपि गतरसत्वयातयामत्वपर्युषितत्वानि यथासंभवं रस्यत्वस्निग्धत्वस्थिरत्वविरोधीनि, पूतित्वोच्छिष्टत्वामेध्यत्वानि हृद्यत्वविरोधीनि, आयुःसत्त्वादिविरोधित्वं तु स्पष्टमेव । राजसवर्गे दृष्टविरोधमात्रं, तामसवर्गे तु दृष्टादृष्टविरोध इत्यतिशयः ॥ १० ॥ इदानीं क्रमप्राप्तं त्रिविधं यज्ञमाह—अग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धज्योतिष्टोमादिर्यज्ञो द्विविधः काम्यो नित्यश्च । फलसंयोगेन चोदितः काम्यः । सर्वाज्ञो-

५ भाष्योत्कर्षदीपिका ।

नस्यं शोकः आमयो रोगः तान्प्रयच्छन्तीति दुःखशोकामयप्रदाः आहारा राजसप्रिया राजसस्येष्टा एतादृशाहारप्रीतिमन्तो राजसा ज्ञातव्याः श्रेयोर्थिभिश्चैवंविधा आहाराः परिहरणीया इत्यर्थः ॥९॥ तामसप्रीतिविषयं भोजनमुदाहरति । यातयामं मन्दपक्कं निर्वीर्यस्य गतरसपदेनोक्तत्वात् । यातो यामः प्रहरो यस्य पक्कस्योदनादेः तद्यातयाममिति तु पाकानन्तरं किंचित्कालातिक्रान्त्या निर्वीर्यतां प्राप्तमन्नं यातयाममुच्यते नतु याममात्रातिक्रान्त्या । अतएवायातयामत्वं वेदानामपि विशेषणं संगच्छत इत्यभिप्रेत्याचार्यैर्न व्याख्यातम् । गतरसं रसविमुक्तं निर्वीर्यमोदनादि । पूतिर्दुर्गन्धि लशुनपलाण्ड्वादि, पर्युषितं स्नेहानक्तं पक्कंसत् रात्र्यन्तरितं च, 'अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्' इति याज्ञवल्क्यस्मृत्या स्नेहाक्तस्य चिरसंस्थितस्याप्यन्नस्य भक्ष्यत्वप्रतिपादनात् । उच्छिष्टं स्वपरभुक्तावशिष्टमपि चेति वैद्यकशास्त्रोक्तमपथ्यं समुच्चीयते । अमेध्यमपवित्रमयज्ञार्हं कलञ्जकलिङ्गादि ईदृशं भोजनं तामसस्य प्रियमिष्टम् । एवंविधभोजनप्रीतिमन्तस्तामसा ज्ञेयाः श्रेयोर्थिभिश्च तामसं भोजनं हेयमित्यर्थः । तामसभोजनकृतदोषास्तु प्रसिद्धत्वादसंख्यत्वाच्च नोक्ताः ॥ १० ॥ एवमाहारत्रैविध्यं विभज्य क्रमप्राप्तं यज्ञत्रैविध्यं विभजन्नादावुपादेयं सात्त्विकं यज्ञमाह ।

६ श्रीधरीव्याख्या ।

अतिविदाही सर्षपादिः, अतिकट्वादय आहारा राजसस्येष्टाः प्रियाः । दुःखं तात्कालिकं हृदयसंतापादि, शोकः पश्चाद्भाविदौर्मनस्यं, आमयो रोगः, एतान् प्रददति प्रयच्छन्तीति तथा ॥ ९ ॥ तथा—**यातयाममिति** । यातो यामः प्रहरो यस्य पक्कस्योदनादेस्तद्यातयामम्, शैत्यावस्थां प्राप्तमित्यर्थः । गतरसं निष्पीडितसारम्, पूति दुर्गन्धं, पर्युषितं दिनान्तरपक्कम्, उच्छिष्टमन्यभुक्तावशिष्टम्, अमेध्यमभक्ष्यं कलञ्जादि, एवंभूतं भोजनं भोज्यं तामसस्य प्रियम् ॥ १० ॥ यज्ञोऽपि त्रिविधः तत्र सात्त्विकं यज्ञमाह—अफला-

---

१ नीलकण्ठः, श्रीधरः.

**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥**
**अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥**
**विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।**
**श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**पुरुषार्थो मम कर्तव्य इत्येवं निश्चित्य स सात्त्विको यज्ञ उच्यते ॥ ११ ॥ अभिसंधायेति । अभिसंधायोद्दिश्य फलं दम्भार्थमपि चैव यदिज्यते भरतश्रेष्ठ, तं यज्ञं विद्धि राजसं रजोगुणनिर्वर्त्यं राजसं जानीहि ॥ १२ ॥ विधिहीनमिति । विधिहीनं यथाचोदितविधिविपरीतम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न दत्तमन्नं यस्मिन्यज्ञे सोऽसृष्टान्नस्तमसृष्टान्नम्, मन्त्रहीनं मन्त्रतः स्वरतो वर्णतश्च वियुक्तं मन्त्र-**

२ आनन्दगिरिव्याख्या ।

फलाभिसन्धिं विना यज्ञस्वरूपमेव भाव्यमिति बुद्ध्या शास्त्रतोऽनुष्ठीयमानो यज्ञः सात्त्विक इत्यर्थः ॥ ११ ॥ राजसं यज्ञं हानार्थं दर्शयति—**अभिसंधायेति** । स्वर्गाद्युद्दिश्य धार्मिकत्वख्यापनार्थं च यद्यजनं क्रियते तं यज्ञं रजसा निर्वृत्तं त्याज्यमवगच्छेत्यर्थः ॥ १२ ॥ तामसं यज्ञं हानार्थमेवोदाहरति—**विधीति** ॥ १३ ॥ सात्त्विकादिभावं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्राप्तव्यमिति मनः समाधाय समाहितं कृत्वा यो यज्ञ इज्यते स सात्त्विकः ॥ ११ ॥ राजसं यज्ञमाह—**अभिसंधायेति** ॥ १२ ॥ विधिहीनं शास्त्रोक्तविधिहीनम् । असृष्टं न दत्तमन्नं यस्मिन् तं असृष्टान्नम् ॥ १३ ॥ देवा:

४ मधुसूदनीव्याख्या ।

पसंहारेणैव मुख्यकल्पेनानुष्ठेयः । फलसंयोगं विना जीवनादिनिमित्तसंयोगेन चोदितसर्वाङ्गोपसंहारासंभवे प्रतिनिध्याद्युपादानेनामुख्यकल्पेनाप्यनुष्ठेयो नित्यः, तत्र सर्वाङ्गोपसंहारासंभवेऽपि प्रतिनिधिमुपादायावश्यं यष्टव्यमेव प्रत्यवायपरिहारायावश्यकजीवनादिनिमित्तेन चोदितत्वादिति मनः समाधाय निश्चित्याफलाकाङ्क्षिभिरन्तःकरणशुद्ध्यर्थितया काम्यप्रयोगविमुखैर्विधिदृष्टो यथाशास्त्रं निश्चितो यो यज्ञ इज्यतेऽनुष्ठीयते स यथाशास्त्रमन्तःकरणशुद्ध्यर्थमनुष्ठीयमानो नित्यप्रयोगः सात्त्विको ज्ञेयः ॥ ११ ॥ फलं काम्यं स्वर्गाद्यभिसंधायोद्दिश्य नत्वन्तःकरणशुद्धिं तुर्नित्यप्रयोगवैलक्षण्यसूचनार्थः । दम्भो लोके धार्मिकत्वख्यापनं तदर्थमपि चैवेति विकल्पसमुच्चयाभ्यां त्रैविध्यसूचनार्थं । पारलौकिकं फलमभिसंधायैव दम्भार्थत्वेऽपि पारलौकिकफलानभिसंधानेऽपि दम्भार्थमेवेति विकल्पेन द्वौ पक्षौ । पारलौकिकफलार्थमप्यैहिकलौकिकदम्भार्थमपीति समुच्चयेनैकः पक्षः । एवं दृष्टादृष्टफलाभिसन्धिनान्तःकरणशुद्धिमनुद्दिश्य यदिज्यते यथाशास्त्रं यो यज्ञोऽनुष्ठीयते तं यज्ञं राजसं विद्धि हानाय । हे भरतश्रेष्ठेति योग्यत्वसूचनम् ॥ १२ ॥ **विधिहीनमिति** । यथाशास्त्रबोधितविपरीतमन्नदानहीनं स्वरतो वर्णतश्च मन्त्रहीनं यथोक्तदक्षिणाही-

५ भाष्योत्कर्षदीपिका ।

अफलाकाङ्क्षिभिः फलकाङ्क्षावर्जितैरग्निष्टोमादिः विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञो यष्टव्यमेव यज्ञस्वरूपनिर्वर्तनमेव कर्तव्यमिति बुद्ध्या मनःसमाधाय नानेन पुरुषार्थो मम कर्तव्य इति निश्चित्येज्यते निर्वर्त्यते स सात्त्विको यज्ञ उच्यते । स एव श्रेयोर्थिभिरुपादेय इत्यर्थः ॥ ११ ॥ राजसं यज्ञं ज्ञापयति—अभिसंधाय तु फलं स्वर्गादिफलमुद्दिश्य दम्भार्थमपि चैव इह धार्मिकत्वख्यापनार्थं च यदिज्यते यद्यजनं क्रियते तं यज्ञं राजसं रजसा निवृत्तं परिहरणार्थं विद्धि जानीहि । भरतश्रेष्ठेति संबोधयन् राजसयज्ञे तव योग्यता नास्तीति सूचयति ॥ १२ ॥ एवं फलाभिसंधिपूर्वकमनुष्ठीयमानत्वात् चित्तशुद्ध्यजनकत्वेऽपि यथाशास्त्रमनुष्ठीयमानत्वात् स्वर्गादिफलोत्पादकं लोके धार्मिकत्वख्यातिकरं च राजसयज्ञमुक्त्वा दृष्टादृष्टफलशून्यमयथाशास्त्रमनुष्ठीयमानं सर्वथा हेयं तामसं यज्ञमाह—विधिहीनं यथाचोदितविपरीतं शास्त्रोक्तविधितो विपर्ययेणानुष्ठीयमानं, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न निष्पादितमन्नं

६ श्रीधरीव्याख्या ।

**काङ्क्षिभिरिति त्रिभिः** । फलाकाङ्क्षारहितैः पुरुषैर्विधिना दृष्ट आवश्यकतया विहितो यो यज्ञ इज्यतेऽनुष्ठीयते स सात्त्विको यज्ञः । कथमिज्यते यष्टव्यमेवेति यज्ञानुष्ठानमेव कार्यं नान्यत्फलं साधनीयमित्येवं मनः समाधाय । एकाग्रं कृत्वेत्यर्थः ॥ ११ ॥ राजसं यज्ञमाह—**अभिसंधायेति** । फलमभिसंधायोद्दिश्य यस्त्विज्यते यज्ञः क्रियते, दम्भार्थं स्वमहत्त्वख्यापनार्थं, यज्ञं राजसं विद्धि ॥ १२ ॥ तामसं यज्ञमाह—**विधिहीनमिति** । विधिहीनं शास्त्रोक्तविधिशून्यम् । असृष्टान्नं ब्राह्मणादिभ्यो न सृष्टं न निष्पादितमन्नं यस्मिंस्तम् ।

७ अभिनवगुप्ताचार्यव्याख्या ।

याता यामा यस्य ॥ १० ॥ मनःसमाधाय निश्चयेनानुसंधाय ॥ ११ ॥ दम्भार्थमपीति । दम्भो लोके मामेवंविधं जानीयादिति ॥ १२ ॥

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**
**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।**

१ श्रीमच्छांकरभाष्यम् ।

**हीनम्, अदक्षिणमुक्तदक्षिणारहितं, श्रद्धाविरहितं यज्ञं तामसं परिचक्षते तमोनिर्वृत्तं कथयन्ति ॥ १३ ॥ अथेदानीं तपस्त्रिविधमुच्यते—देवेति । देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च देवद्विजगुरुप्राज्ञास्तेषां पूजनं देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवमृजुत्वं ब्रह्मचर्यमहिंसा च शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कार्यकारणैः कर्त्रादिभिः साध्यं शारीरं तप उच्यते । पञ्चैते तस्य हेतव इति हि वक्ष्यति ॥ १४ ॥ अनुद्वेगेति । अनुद्वेगकरं प्राणिनामदुःखकरं वाक्यं सत्यं प्रियहितं च यत् । प्रियहिते दृष्टा-**

२ आनन्दगिरिव्याख्या ।

निरूपयितुं सर्वस्य तपसः स्वरूपं त्रिविधं निरूपयति—**अथेति** । तत्र शारीरं तपो निर्दिशति—**देवेति** । देवा ब्रह्मविष्णुशिवादयः, द्विजाः पूज्यपूज्यत्वाद्द्विजोत्तमाः, गुरवः पित्रादयः, प्राज्ञाः पण्डिता विदितवेदितव्यास्तेषां पूजनं प्रणामशुश्रूषादि शौचं मृज्जलाभ्यां शरीरशोधनम्, आर्जवमृजुत्वं विहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिमत्त्वं, ब्रह्मचर्यं मैथुनासमाचरणम्, अहिंसा प्राणिनामपीडनम् । शरीरमात्रनिर्वर्त्यत्वमस्य तपसः संभवतीति मत्वा विशिनष्टि—**शारीरेति** । कथं कर्त्रादिसाध्यत्वे तपसः शारीरत्वं शारीरत्वे वा कथं कर्त्रादिसाध्यत्वमित्याशङ्क्याह—**पञ्चेति** । ॥ १४ ॥ संप्रति वाङ्मयं तपो व्यपदिशति—**अनुद्वेगकरमिति** । सत्यं यथादृष्टार्थवचनं, प्रियं श्रुतिसुखं, हितं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विष्ण्वाद्याः, द्विजा ब्राह्मणाः, गुरवो मातृपित्राचार्यादयः, प्राज्ञाः ब्रह्मनिष्ठाः, तेषां पूजनम् । आर्जवमकौटिल्यम्,

४ मधुसूदनीव्याख्या ।

नम्रत्विद्वेषादिना श्रद्धाविरहितं तामसं यज्ञं परिचक्षते शिष्टाः । विधिहीनत्वाद्येकैकविशेषणः पञ्चविधः सर्वविशेषणसमुच्चयेन चैकविध इति षट् द्वित्रिचतुर्विशेषणसमुच्चयेन च बहवो भेदास्तामसयज्ञस्य ज्ञेयाः । राजसे यज्ञेऽन्तःकरणशुद्ध्यभावेऽपि फलोत्पादकमपूर्वमस्ति यथाशास्त्रमनुष्ठानात्, तामसे त्वयथाशास्त्रानुष्ठानान्न किमप्यपूर्वमस्तीत्यतिशयः ॥ १३ ॥ क्रमप्राप्तस्य तपसः सात्त्विकादिभेदं कथयितुं शारीरवाचिकमानसभेदेन तस्य त्रैविध्यमाह त्रिभिः—देवा ब्रह्मविष्णुशिवसूर्याग्निदुर्गादयः, द्विजा द्विजातयो ब्राह्मणाः, गुरवः पितृमात्राचार्यादयः, प्राज्ञाः पण्डिता विदितवेदतदुपकरणार्थाः, तेषां पूजनं प्रणामशुश्रूषादि यथाशास्त्रं, शौचं मृज्जलाभ्यां शरीरशोधनं, आर्जवमकौटिल्यं भावसंशुद्धिशब्देन मानसे तपसि वक्ष्यति, शारीरं त्वार्जवं विहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिशालित्वं, ब्रह्मचर्यं निषिद्धमैथुननिवृत्तिः, अहिंसाऽशास्त्रप्राणिपीडनाभावः । चकारादस्तेयापरिग्रहावपि । शारीरं शरीरप्रधानैः कर्त्रादिभिः साध्यं नतु केवलेन शरीरेण । पञ्चैते तस्य हेतव इति हि वक्ष्यतीत्थं शारीरं तप उच्यते ॥ १४ ॥ अनुद्वेगकरं न कस्यचिद्दुःखकरं, सत्यं प्रमाणमूलमबाधितार्थं, प्रियं श्रोतुस्तत्कालश्रुतिसुखं, हितं परि-

५ भाष्योत्कर्षदीपिका ।

यस्मिंस्तं, मन्त्रहीनं स्वरतो वर्णतश्च मन्त्रैर्वियुक्तं, अदक्षिणं यथोक्तदक्षिणावर्जितं श्रद्धया भक्त्यास्तिक्यलक्षणया विरहितं यज्ञं तामसं परिचक्षते शिष्टाः कथयन्ति ॥ १३ ॥ एवं हानादानार्थं यज्ञत्रैविध्यं विभज्य तपसः सात्त्विकादिभावं निरूपयितुं सर्वस्य तस्य त्रिविधं स्वरूपं प्रथममाह त्रिभिः । देवाः ब्रह्मविष्णुशिवादयः, द्विजाः पूज्यत्वात् द्विजोत्तमाः, गुरवः पित्राचार्यादयः, प्राज्ञाः पण्डिताः विदितवेद्याः तेषां प्रणामशुश्रूषादिना पूजनम्, शौचं मृज्जलाभ्यां शरीरशोधनं, आर्जवं ऋजुत्वं विहितनिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तित्वम्, ब्रह्मचर्यं प्रतिषिद्धमैथुनासमाचरणम्, अहिंसा प्राणिनामपीडनम् । चकारोऽस्तेयादिसमुच्चयार्थः । शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कर्त्रादिभिः साध्यं शारीरं तप उच्यते । 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः' इति वक्ष्यमाणत्वात् ॥ १४ ॥ शारीरं तप उक्त्वा वाक्प्रधानैः कर्त्रादिभिः साध्यं तदाह—**अनुद्वेगकरमिति** । कस्याप्युद्वेगकरं दुःखजनकं न भव-

६ श्रीधरीव्याख्या ।

मन्त्रहीनं यथोक्तदक्षिणारहितं च श्रद्धाशून्यं यज्ञं तामसं परिचक्षते कथयन्ति शिष्टाः ॥ १३ ॥ तपसः सात्त्विकादिभेदं दर्शयितुं प्रथमं तावच्छरीरादिभेदेन तस्य त्रैविध्यमाह—**देवद्विजेति त्रिभिः** । प्राज्ञा गुरुव्यतिरिक्ता अन्येऽपि तत्त्वविदः । देवब्राह्मणादिपूजनं शौचादिकं शारीरं शरीरनिवर्त्यं तप उच्यते ॥ १४ ॥ वाचिकं तप आह—**अनुद्वेगेति** । उद्वेगं भयं न करोतीत्यनुद्वेगकरं वाक्यं,

७ अभिनवगुप्ताचार्यव्याख्या ।

विधिहीनमिति शास्त्रोक्तक्रियाहीनं तदेवासृष्टान्नादिभिर्विशेषणैर्वितन्यते ॥ १३ ॥ देवद्विजेत्यादि । आर्जवमृजुता । अगोप्यविषया धृष्टता ॥१४॥सत्यमित्यस्यैव स्वरूपनिरूपणं प्रियहितमित्यनेन क्रियते। प्रियं च तत्काले हितं च कालान्तरे ईदृशं वाक्यं सत्यमित्युच्यते नतु यथा न-

**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥**
**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

दृष्टार्थे । अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशेष्यते । विशेषणधर्मसमुच्चयार्थश्चशब्दः । परप्रत्ययार्थं प्रयुक्तस्य वाक्यस्य सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनता स्याद्यदि न तद्वाङ्मयं तपः । तथा सत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा विहीनतायां न वाङ्मयतपस्त्वम् । तथा प्रियवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनस्य न वाङ्मयतपस्त्वम् । तथा हितवाक्यस्यापीतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा वियुक्तस्य न वाङ्मयतपस्त्वम् । किं पुनस्तत्तपो यत् सत्यं वाक्यमनुद्वेगकरं प्रियहितं च तत् परमं तपो वाङ्मयम् । यथा शान्तो भव वत्स स्वाध्यायं योगं चानुतिष्ठ, तथा ते श्रेयो भविष्यति । स्वाध्यायाभ्यसनं चैव यथाविधि वाङ्मयं तप उच्यते ॥ १५ ॥ मन इति । मनःप्रसादो मनसः प्रशान्तिः स्वच्छतापादनं मनसः प्रसादः । सौम्यत्वं यत् सौमनस्यमाहु-

२ आनन्दगिरिव्याख्या ।

परिणामपथ्यम् । प्रियहितयोर्विधान्तरेण विभागमाह—**प्रियेति** । कथमत्र विशेषणविशेष्यत्वं तदाह—**अनुद्वेगेति** । विशेषणानां धर्माणामनुद्वेगकरत्वादीनां विशेषेणवाक्येन समुदितानां परस्परमपि समुच्चयद्योती चकार इत्याह—**विशेषणेति** । किमिति वाक्यमेतैर्विशेष्यते किमिति वा तेषां मिथः समुच्चयस्तत्राह—**परेति** । यद्यपि (विधायक)वाक्यमात्रस्याविशेषितस्य वाङ्मयतपस्त्वानुपपत्तिस्तथापि सत्यवाक्यस्य विशेषणान्तराभावेऽपि वाङ्मयतपस्त्वमित्याशङ्क्याह—**तथेति** । तथापि परिणामपथ्यं वाक्यमात्रं तथा भविष्यति नेत्याह—**तथा हितेति** । कीदृक् तर्हि तपोवाङ्मयमिति प्रश्नपूर्वकं विशदयति—**किं पुनरिति** । विशिष्टे वाङ्मये तपसि दृष्टान्तमाह—**यथेति** । प्राङ्मुखत्वं पवित्रपाणित्वमित्यादिविधानमनतिक्रम्य स्वाध्यायस्यावर्तनमपि वाङ्मये तपस्यन्तर्भवतीत्याह—**स्वाध्यायेति** । वाक्प्राचुर्येण प्रस्तुतास्मिन्निति वाङ्मयं वाक्प्रधानमित्यर्थः ॥ १५ ॥ मानसं तपः संक्षिपति—**मन इति** । प्रशान्तिफलमेव व्यनक्ति—**स्वच्छतेति** । मनसः स्वाच्छ्यमनाकुलता । नैश्चिन्त्यमित्यर्थः । सौमनस्यं सर्वेभ्यो हितैषि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ १४ ॥ प्रियं च तत् हितं च प्रियहितम् । श्रवणकाले परिणामे च सुखदमित्यर्थः ॥ १५ ॥ मनःप्रसादः रागद्वेषादिराहित्यम् । सौम्यत्वं परहितैषित्वम् । मौनं वाक्संयमः । आत्मविनिग्रहो मनोनिरोधः । भावशुद्धिः परैर्व्यवहा-

४ मधुसूदनीव्याख्या ।

णामे सुखकरं, चकारो विशेषणानां समुच्चयार्थः । अनुद्वेगकरत्वादिविशेषणचतुष्टयेन विशिष्टं नत्वेकेनापि विशेषणेन न्यूनं यद्वाक्यं यथा—शान्तो भव वत्स स्वाध्यायं योगं चानुतिष्ठ तथा ते श्रेयो भविष्यतीत्यादि तद्वाङ्मयं वाचिकं तपः शारीरवत्, स्वाध्यायाभ्यसनं च यथाविधिवेदाभ्यासश्च वाङ्मयं तप उच्यते । एवकारः प्राक् विशेषणसमुच्चयावधारणे व्याख्यातः ॥ १५ ॥ मनसः प्रसादः स्वच्छता विषयचिन्ताव्याकुलत्वराहित्यं, सौम्यत्वं सौमनस्यं सर्वलोकहितैषित्वं प्रतिषिद्धाचिन्तनं च, मौनं

५ भाष्योत्कर्षदीपिका ।

तीति तत् सत्यं यथादृष्टार्थप्रतिपादकं प्रियं दृष्टार्थं उच्चारणकाले श्रोतुः श्रुतिसुखं, हितमदृष्टार्थं परिणामपथ्यं विशेषणधर्माणामनुद्वेगकरत्वादीनां विशेष्येण वाक्येन समुच्चितानां परस्परसमुच्चयद्योतनार्थश्चकारः । सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतारहितं सत्यत्वादिविशेषणचतुष्टयेन विशिष्टं वाक्यं यथा—शान्तो भव वत्स स्वाध्यायं योगं चानुतिष्ठ तथा ते श्रेयो भविष्यतीति । स्वाध्यायाभ्यसनं चैव प्राङ्मुखत्वं पवित्रपाणित्वमित्यादिविधानमनतिक्रम्य स्वाध्यायस्यावर्तनं च वाङ्मयं वाक्प्राचुर्येण प्रस्तुतास्मिन्निति वाङ्मयं वाक्प्रधानमित्यर्थः ॥ १५ ॥ एवं वाक्प्रधानं तप उक्त्वा मनःप्रधानं तदाह—मनःप्रसादो मनसः शान्तिः स्वच्छतापादनं चिन्ताव्याकुलत्वादिहीनतासंपादनमितियावत्, सौम्यत्वं, सुखादिप्रसादकार्यगम्यं सौमनस्यं, मौनं वाक्संयमस्य मनसः संयमपूर्वकत्वात् । वाग्विषयो मनसः संयमो मौनं, सर्वतः सामान्यरूपो मनोनिरोध आत्मविनिग्रह इति विशेषः । ननु मुनेर्भावो मौनमेकाग्रतया आत्मचिन्तनं निदिध्यासनाख्यमिति मौनशब्दार्थं आचार्यैः कुतो न दर्शित इतिचेत्त्वदुक्तमुनि-

६ श्रीधरीव्याख्या ।

सत्यं च श्रोतुःप्रियं च हितं च परिणामे सुखकरम्, स्वाध्यायाभ्यसनं वेदाभ्यासश्च वाङ्मयं वाचा निर्वर्त्यं तपः ॥ १५ ॥ मानसं तप आह—**मनःप्रसाद इति** । मनसः प्रसादः स्वस्थता, सौम्यत्वमक्रूरता, मौनं मुनेर्भावः । मननमित्यर्थः । आत्मनो मनसो

**श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः।**
**अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥**
**सत्कारमानपूजार्थं तपो दम्भेन चैव यत्।**

१ श्रीमच्छांकरभाष्यम्।

मुखादिप्रसादकार्यान्तःकरणस्य वृत्तिः, मौनं वाक्संयमोऽपि मनःसंयमपूर्वको भवतीति कार्येण कारणमुच्यते मनःसंयमो मौनमिति। आत्मविनिग्रहो मनोनिरोधः सर्वतः सामान्यरूप आत्मविनिग्रहो वाग्विषयस्यैव मनसः संयमो मौनमिति विशेषः। भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥ यथोक्तं कायिकं वाचिकं मानसं च तपस्तप्तं नरैः सत्त्वादिभेदेन कथं त्रिविधं भवतीत्युच्यते—श्रद्धयास्तिक्यबुद्ध्या परया प्रकृष्टया तप्तमनुष्ठितं तपः स्तत् प्रकृतं त्रिविधं त्रिप्रकारम्। अधिष्ठानं नरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैर्युक्तैः समाहितैर्यदीदृशं तपस्तत्सात्त्विकं सत्त्वनिर्वृत्तं परिचक्षते कथयन्ति शिष्टाः ॥ १७ ॥ सत्कारेति।

२ आनन्दगिरिव्याख्या।

त्वमहिताचिन्तनं च। तत् कथं गम्यते तत्राह—**मुखादीति**। तस्य स्वरूपमाह—**अन्तःकरणस्येति**। ननु मौनं वाङ्नियमनं वाङ्मये तपस्यन्तर्भवति तत्कथं मानसे तपसि व्यपदिश्यते तत्र वाचः संयमस्य कार्यत्वान्मनःसंयमस्य कारणत्वात् कार्येण कारणग्रहणान्मानसे तपसि मौनमुक्तमित्याह—**वागिति**। यद्वा मौनं मुनिभावो मननमात्मनो मनसो विनिग्रहो निरोधः। नन्वेवं मौनस्य मनोनिग्रहस्य च मनःसंयमत्वेनैकत्वात्पौनरुक्त्यं नेत्याह—**सर्वत इति**। भावस्य हृदयस्य संशुद्धी रागादिमलविकलतेति व्याचष्टे—**परैरिति**। मानसं मनसा प्रधानेन निर्वर्त्यमित्यर्थः ॥ १६ ॥ त्रिविधस्य तपसो यथासंभवं सात्त्विकादिभावेन तत्त्रैविध्यमाकाङ्क्षाद्वारा निक्षिपति—**यथोक्तमिति**। अधिष्ठानं देहवाङ्मनोनिर्वर्त्यमित्यर्थः। समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैरिति यावत् ॥ १७ ॥ राजसं तपो निर्दिशति—**सत्कारेति**। साधुकारमेवास्फोरयति—**साधुरिति**। दम्भेन चैव नास्तिक्येन केवलधर्मध्वजित्वेनेत्यर्थः।

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

रकाले मायाराहित्यम्, इति एवंप्रकारं अन्यद्दयादिकं एतन्मानसं तप उच्यते ॥ १६ ॥ त्रिविधं कायिकवाचिकमानसभेदेन। युक्तैरवहितैः ॥ १७ ॥ सत्कारः लोके साधुरयमिति वाक्पूजा। मानोऽभ्युत्थानाभिवादनादिकायिकी

४ मधुसूदनीव्याख्या।

मुनिभाव एकाग्रतयात्मचिन्तनं निदिध्यासनाख्यं, वाक्संयमहेतुर्मनःसंयमो मौनमिति भाष्यम्, आत्मविनिग्रह आत्मनो मनसो विशेषेण सर्ववृत्तिनिग्रहो निरोधः समाधिरसंप्रज्ञातः, भावस्य हृदयस्य शुद्धिः कामक्रोधलोभादिमलनिवृत्तिः पुनरशुद्ध्युत्पादराहित्येन सम्यक्त्वेन विशिष्टा सा भावशुद्धिः परैः सह व्यवहारकाले मायाराहित्यं सेति भाष्यं । इत्येतदेवंप्रकारं तपो मानसमुच्यते ॥ १६ ॥ शारीरवाचिकमानसभेदेन त्रिविधस्योक्तस्य तपसः सात्त्विकादिभेदेन त्रैविध्यमिदानीं दर्शयति त्रिभिः—तत्पूर्वोक्तं त्रिविधं शारीरं वाचिकं मानसं च तपः श्रद्धयास्तिक्यबुद्ध्या परया प्रकृष्टया अप्रामाण्यशङ्काकलङ्कशून्यया फलाभिसन्धिशून्यैर्युक्तैः समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैर्नरैरधिकारिभिस्तप्तमनुष्ठितं सात्त्विकं परिचक्षते शिष्टाः ॥१७॥ सत्कारः साधुरयं

५ भाष्योत्कर्षदीपिका।

भावस्य राजसत्वाद्यभावेन राजसतामसतपोभ्यामस्याग्रहणापत्तेरिति गृहाण। भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वम्। यत्तु भावस्य हृदयस्य शुद्धिः कामक्रोधलोभादिमलनिवृत्तिः पुनरशुद्ध्युत्पादराहित्येन सम्यक्त्वेन विशिष्टा सा भावसंशुद्धिरिति तन्नोपादेयमाचार्यैरनुक्तत्वात्। राजसे तामसे च तपस्येतादृशभावसंशुद्धेरसंभवाच्च इत्येतत्तपो मानसं मनसा प्रधानेन निर्वर्त्यमुच्यते ॥ १६ ॥ यथोक्तं कायिकादिभेदेन त्रिविधं तपस्तप्तं सात्त्विकादिभेदेन कथं त्रिविधं भवतीत्याकाङ्क्षायां तत्त्रैविध्यं प्रदर्शयन्नादौ सात्त्विकं तदाह—**श्रद्धयेति**। तत्पूर्वोक्तं कायिकवाचिकमानसभेदेन त्रिविधं श्रद्धया आस्तिक्यबुद्ध्या परयोत्कृष्टया भक्तियुक्तया अफलाकाङ्क्षिभिः फलाकाङ्क्षावर्जितैर्युक्तैः समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैर्नरैरनुष्ठातृभिः तप्तमनुष्ठितं सात्त्विकं परिचक्षते शिष्टाः कथ-

६ श्रीधरीव्याख्या।

विनिग्रहः विषयेभ्यः, प्रत्याहारः, भावसंशुद्धिर्व्यवहारे मायाराहित्यमित्येतन्मानसं तपः ॥ १६ ॥ तदेवं शरीरवाङ्मनोभिर्निर्वर्त्यं त्रिविधं तपो दर्शितम्। त्रिविधस्यापि तपसः सात्त्विकादिभेदेन त्रैविध्यमाह—**श्रद्धयेति त्रिभिः**। त्रिविधमपि तपः श्रेष्ठया श्रद्धया

७ अभिनवगुप्ताचार्यव्याख्या।

वृत्तकथनमात्रम्। भाव आशयस्तस्य सम्यक्शुद्धिः॥१५॥१६॥ श्रद्धयेत्यादि उदाहृतमित्यन्तं। त्रिविधेपि तपसि श्रद्धा। सात्त्विकस्य हि तन्म-

१ मधुसूदनः.

**क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥**
**मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**
**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

सत्कारमानपूजार्थं सत्कारः साधुकारः साधुरयं तपस्वी ब्राह्मण इत्येवमर्थं मानो माननं प्रत्युत्थानाभिवादनादिस्तदर्थं पूजा पादप्रक्षालनार्चनाशयितृत्वादिस्तदर्थं च तपः सत्कारमानपूजार्थं दम्भेनैव च क्रियते तपस्तदिह प्रोक्तं कथितं राजसं चलं कादाचित्कफलत्वेनाध्रुवम् ॥ १८ ॥ मूढेति । मूढग्राहेणाविवेकनिश्चयेनात्मनः पीडया क्रियते यत्तपः परस्योत्सादनार्थं विनाशार्थं वा तत्तामसं तप उदाहृतम् ॥१९॥ इदानीं दानभेद उच्यते—दातव्यमिति । दातव्यमित्येवं मनःकृत्वा यद्दानं दीयतेऽनुपका-

२ आनन्दगिरिव्याख्या ।

तदिह प्रोक्तमस्मिन्नेव लोके फलप्रदमित्यर्थः । कादाचित्कफलवत्वमध्रुवमनियतमनैकान्तिकफलमिति यावत् ॥ १८ ॥ तामसं तपः संगृह्णाति—मूढेति । मूढोऽत्यन्ताविवेकी तस्य ग्राहो नामाग्रहोऽभिनिवेशस्तेनेत्याह—अविवेकेति । आत्मनः स्वस्य देहादेरित्यर्थः ॥ १९ ॥ क्रमप्राप्तं दानस्य गुणनिमित्तभेदमाह—इदानीमिति ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूजा । पूजा लाभादि । एतदर्थं दम्भेन च यत्तपः क्रियते तद्राजसम् । चलं विनाशि । अध्रुवमनिश्चितफलम् ॥ १८ ॥ मूढग्राहेणाविवेककृतेन दुराग्रहेण । आत्मनः शरीरस्य उत्सादनार्थं विनाशार्थम् ॥ १९ ॥ दातव्यमेवेति बुद्ध्या यद्दानं प्रदेयद्रव्यं दीयते नतु फलमुद्दिश्य दीयते । कस्मै अनुपकारिणे प्रत्युपकारासमर्थाय । देशे कुरुक्षेत्रादौ

४ मधुसूदनीव्याख्या ।

तपस्वी ब्राह्मण इत्येवमविवेकिभिः क्रियमाणा स्तुतिः, मानः प्रत्युत्थानाभिवादनादिः, पूजा पादप्रक्षालनार्चनदानादिस्तदर्थं दम्भेनैव च केवलं धर्मध्वजित्वेनैव च न त्वास्तिक्यबुद्ध्या यत्तपः क्रियते तद्राजसं प्रोक्तं शिष्टैः, इहास्मिन्नेव लोके फलदं न पारलौकिकं चलमत्यल्पकालस्थायि फलं, अध्रुवं फलजनकतानियमशून्यम् ॥ १८ ॥ मूढग्राहेणाविवेकातिशयकृतेन दुराग्रहेणात्मनो देहेन्द्रियसंघातस्य पीडया यत्तपः क्रियते परस्योत्सादनार्थं वान्यस्य विनाशार्थमभिचाररूपं वा तत्तामसमुदाहृतं शिष्टैः ॥ १९ ॥ इदानीं क्रमप्राप्तस्य दानस्य त्रैविध्यं दर्शयति त्रिभिः—दातव्यमेव शास्त्रचोदनावशादित्येवं निश्चयेन नतु फलाभिस-

५ भाष्योत्कर्षदीपिका ।

यन्ति ॥ १७ ॥ सात्त्विकं तप उदाहृत्य राजसं तदुदाहरति । सत्कारः साधुरयं तपस्वीत्येवं स्तुतिरूपः साधुकारः । मानो माननं प्रत्युत्थानाभिवादनादि । पूजा पादप्रक्षालनार्चनान्नधनाद्यर्पणादि तदर्थं । दम्भेन चैव नास्तिक्येन केवलधर्मध्वजित्वेन यत्तपः क्रियते तदिहास्मिन्नेव लोके सत्कारादिफलप्रदं राजसं प्रोक्तं कथितम् । चलं क्षणिकफलमध्रुवमनियतफलं, यद्वा चलं कादाचित्कफलं दाम्भिकोऽयमित्यपरिज्ञानकाले कस्मिंश्चित्सत्कारादिफलप्रदं नतु सर्वदेतियावत् । अतएवाध्रुवं सत्कारादिप्राप्तिपर्यन्तं स्थायि नतु सदैवेत्यर्थः ॥ १८ ॥ एवं राजसं तप उक्त्वा तामसं तदाह । मूढग्राहेण अविवेकनिश्चयेन यद्येते तपश्चरन्ति तर्ह्यहमप्येतत्तपसोऽधिकं करिष्यामीत्येवमादिरूपेणात्मनः पीडया परस्योत्सादनार्थं वा एतादृशोऽयं कायिकवाचिकमानसतपोयुक्तोऽतोऽस्याज्ञापालनेनास्मदीयं कार्यं सर्वं सेत्स्यतीति बुद्धिं राजादीनामुत्पाद्य परस्य शत्रोर्नाशार्थं वा यत्तपः क्रियते तत्तामसमुदाहृतं शिष्टैः ॥ १९ ॥ एवं तपस्त्रैविध्यं विभज्य क्रमप्राप्तं दानत्रैविध्यं विभजन्नादौ सात्त्विकं दानमुदाहरति । दातव्यमित्येवं मनः कृत्वा यद्दानं देयवस्तु दीयते

६ श्रीधरीव्याख्या ।

फलाकाङ्क्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैस्तप्तं तत्सात्त्विकं कथयन्ति ॥ १७ ॥ राजसं तप आह—सत्कार इति । सत्कारः साधुकारः साधुरयमिति तापस इत्यादि वाक्पूजा, मानः प्रत्युत्थानाभिवादनादिः दैहिकीपूजाऽर्थलाभादिः, एतदर्थं दम्भेन च यत्तपः क्रियते अतएव चलं अनियतं अध्रुवं च क्षणिकं । यदेवंभूतं तपस्तदिह राजसं प्रोक्तम् ॥ १८ ॥ तामसं तप आह—मूढेति । मूढग्राहेणाविवेककृतेन दुराग्रहेणात्मनः पीडया यत्तपः क्रियते परस्योत्सादनार्थं वाऽन्यस्य विनाशार्थमभिचाररूपं तत्तामसमुदाहृतं कथितम् ॥ १९ ॥ पूर्वं प्रतिज्ञातमेव दानस्य त्रैविध्यमाह—दातव्यमिति । दातव्यमित्येवं निश्चयेन यद्दानं दीयते, अनुपकारिणे प्रत्युपकारा-

७ अभिनवगुप्ताचार्यव्याख्या ।

त्येव श्रद्धा, राजसस्य तु रजसि दम्भादावेव श्रद्धा, तमोनिष्ठस्य पुनः परोत्सादनादावेव श्रद्धेति त्रिविधमपि तपःश्रद्धयोपेतमिति मुनिराह ॥ १७॥१८॥१९ ॥ दातव्यमिति । दातव्यं दद्यादिति नियोगमात्रं पालनीयमिति दोषाभिसंधानाय परिक्लिष्टं मितादिदोषात् । दानस्य चा-

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥ २१ ॥**
**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**

१ श्रीमच्छांकरभाष्यम् ।

रिणे प्रत्युपकारासमर्थाय समर्थायापि निरपेक्षं दीयते देशे पुण्ये कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च षडङ्गविद्वेदपारग इत्यादौ तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥ यत्त्विति । यत्तु दानं प्रत्युपकारार्थं काले त्वयं मां प्रत्युपकरिष्यतीत्येवमर्थं फलं वास्य दानस्य मे भविष्यत्यदृष्टमिति तदुद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं तद्राजसं स्मृतम् ॥ २१ ॥ अदेशेति । अदेशकालेऽपुण्ये देशे म्लेच्छाशुचयादि-

२ आनन्दगिरिव्याख्या ।

दातव्यमित्येवं मनः कृत्वा दानमेव मया भाव्यं न फलमित्यभिसंधायेत्यर्थः ॥ २० ॥ राजसतामसदानविभजनं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

काले संक्रान्त्यादौ यद्दीयते तत्सात्त्विकमिति संबन्धः । यच्च पात्रे दानं समर्पणं तदपि सात्त्विकमिति योजना । अत्र आद्यो दानशब्दः कर्मणि व्युत्पन्नः प्रदेयद्रव्यवाची कर्मभूतः । तत्संयोगात्संप्रदाने चतुर्थ्यपेक्षा । द्वितीयस्तु भावव्युत्पन्नस्त्यागमात्रवाची । तेन तत्र पात्रभूते पुंसि न चतुर्थ्यपेक्षा 'कर्मणा यमभिप्रैति स संप्रदानम्' इति हि पारिभाषिक्याः संप्रदानसंज्ञाया अत्र कर्मविभक्त्यभावेनाप्रवृत्तेः, तेन पात्रे इति चतुर्थ्यर्थे सप्तमीति वा, पातृशब्दस्य चतुर्थीयमिति वा कल्पनं व्यर्थमेव । दानशब्दस्यावृत्त्या च देशकालानुपकारित्वविशिष्टे दानमित्येका कोटिः । पात्रे दानमित्यपरा । उभयसमुच्चये तु महान्गुण इति भावः ॥ २० ॥ परिक्लिष्टं कथमेतावद्द्रव्यव्ययः कर्तव्य इत्याकुलतायुक्तं यथा स्यात्तथा दीयत इति क्रियाविशेषणम् ॥ २१ ॥ असत्कृतं प्रियभाषणपादप्रक्षालनादिपूजासत्का-

४ मधुसूदनीव्याख्या ।

न्धिना यद्दानं तुलापुरुषादि दीयते अनुपकारिणे प्रत्युपकाराजनकाय, देशे पुण्ये कुरुक्षेत्रादौ, काले च पुण्ये सूर्योपरागादौ । पात्रे चेति चतुर्थ्यर्थे सप्तमी । कीदृशायानुपकारिणे दीयते पात्राय च विद्यातपोयुक्ताय च पात्रे रक्षकायेति वा । विद्यातपोभ्यामात्मनो दातुश्च पालनक्षम एव प्रतिगृह्णीयादिति शास्त्रात् । तदेवंभूतं दानं सात्त्विकं स्मृतम् ॥ २० ॥ प्रत्युपकारार्थं कालान्तरे मामयमुपकरिष्यतीत्येवं दृष्टार्थं फलं वा स्वर्गादिकमुद्दिश्य यत्पुनर्दानं सात्त्विकविलक्षणं दीयते परिक्लिष्टं च कथमेतावद्व्ययित-मिति पश्चात्तापयुक्तं यथा भवत्येवं च यद्दीयते तद्दानं राजसं स्मृतम् ॥ २१ ॥ अदेशे स्वतो दुर्जनसंसर्गाद्वा पापहेतावशुचि-

५ भाष्योत्कर्षदीपिका ।

ऽनुपकारिणे प्रत्युपकारासमर्थायापि निरपेक्षं दीयते पुण्ये देशे कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च यद्दानं समर्पणं षडङ्गविद्वेद-पारगे इत्यादौ तद्दानं सात्त्विकं स्मृतम् । तथाच प्रथमदानशब्दः कर्मव्युत्पत्त्या देयवस्तुपरः । चकारानुकृष्टस्तु भावव्युत्पत्त्या समर्पणपरः । तेन यो देयद्रव्यवाची द्वितीयान्तस्तत्संयोगात्संप्रदाने चतुर्थ्यपेक्षा । द्वितीयस्तु त्यागवाची प्रथमान्तः । तेन तत्र पात्रभूते पुंसि न चतुर्थ्यपेक्षा । 'कर्मणा यमभिप्रैति स संप्रदानम्' इति पारिभाषिक्याः संज्ञायाः अत्र कर्मविभक्त्यभावेनाप्रवृत्तेः एतेन पात्रे चेति चतुर्थ्यर्थे सप्तमी । कीदृशायानुपकारिणे दीयते पात्राय च विद्यातपोयुक्ताय च पात्रे रक्षकायेति वा विद्यातपोभ्यामात्मनो दातुश्च पालनक्षमएव प्रतिगृह्णीयादिति शास्त्रादिति कल्पनं व्यर्थमेवेति बोध्यम् ॥ २० ॥ सात्त्विकं दानमुक्त्वा राजसं तदाह— यत्तु प्रत्युपकारार्थं कालान्तरे त्वयं मां प्रत्युपकरिष्यतीत्येवं दृष्टार्थं फलमुद्दिश्यास्य दानस्यादृष्टस्वर्गादिफलं मे भविष्यतीति तद्वोद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं कथमेतावद्दीयत इति पश्चात्तापयुक्तं यथा स्यादित्येवं च तद्राजसमुदाहृतम् ॥ २१ ॥ राजसं दान-मुक्त्वा तामसं तदुदाहरति—अदेशकालेऽपुण्यदेशे म्लेच्छाशुच्यादिसंकीर्णे अकाले अपुण्यहेतुत्वेन प्रख्यातेऽशौचकाले संक्रान्त्यादि-

६ श्रीधरीव्याख्या ।

समर्थाय । देशे कुरुक्षेत्रादौ, काले ग्रहणादौ, पात्रे चेति देशकालादिसाहचर्यात्सप्तमी प्रयुक्ता । पात्रभूताय तपःश्रुतादिसंपन्नाय ब्राह्मणायेत्यर्थः । यद्वा पात्र इति चतुर्थ्यैवैषा । पात्रे इति तृजन्तं । रक्षकायेत्यर्थः । स हि सर्वस्मादापद्गणाद्दातारं पातीति । यदेवंभूतं दानं तत्सात्त्विकम् ॥ २० ॥ राजसं दानमाह—यत्त्विति । कालान्तरेऽयं मां प्रत्युपकारं करिष्यतीत्येवमर्थम्, फलं वा स्वर्गादिक-मुद्दिश्य यत्पुनर्दानं दीयते परिक्लिष्टं चित्तक्लेशयुक्तं यथा भवत्येवंभूतं तद्दानं राजसमुदाहृतं कथितम् ॥ २१ ॥ तामसं दानमाह— अदेशेति । अदेशे अशुचिस्थाने, अकाले अशौचसमये, अपात्रेभ्यो विटनटनर्तकादिभ्यो यद्दानं दीयते । देशकालपात्रसंपत्तावपि

७ अभिनवगुप्ताचार्यव्याख्या ।

सत्करणं तत्संप्रदानाद्यसत्करणात् । एवं लौकिकानां सात्त्विकादित्रिप्रकाराशयानुसारेण क्रिया व्याख्याता ॥ २० ॥ २१ ॥ २२ ॥ इदानीं ये

१ मधुसूदनः, श्रीधरः.

**असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥**
**ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

संकीर्णेऽकाले पुण्यहेतुत्वेनाप्रख्याते संक्रान्त्यादिविशेषरहितेऽपात्रेभ्यश्च मूर्खतस्करादिभ्यो देशादिसंपत्तौ वाऽसत्कृतं प्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तं च यद्दानं तत्तामसमुदाहृतम् ॥ २२ ॥ यज्ञदानतपःप्रभृतीनां साद्गुण्यकरणायायमुपदेश उच्यते—ॐतदिति । ॐतत्सदित्येष निर्देशो निर्दिश्यतेऽनेनेति निर्देशस्त्रिविधो नामनिर्देशो ब्रह्मणः स्मृतश्चिन्तितो वेदान्तेषु ब्रह्मविद्भिः । ब्राह्मणास्तेन निर्देशेन त्रिविधेन वेदाश्च यज्ञाश्च विहिता निर्मिताः पुरा पूर्वमिति निर्देशस्तुत्यर्थमु-

२ आनन्दगिरिव्याख्या ।

स्पष्टार्थम् ॥ २१ ॥ २२ ॥ विहितानां कर्मणां प्रमादयुक्ते वैगुण्ये कथं परिहारः स्यादित्याशङ्क्याह—**यज्ञेति** । 'ओमिति ब्रह्म' इत्यादिश्रुतेः ओमिति तावद्ब्रह्मणो नामनिर्देशः, 'तत्त्वमसि' इति श्रुतेस्तदित्यपि ब्रह्मणो नामनिर्देशः, 'सदेव सोम्येदम्' इति श्रुतेः सदित्यपि तस्य नामेति मत्वाह—**ओमिति** । कथं निर्देशेन तेषां विधानमित्याशङ्क्याह—**निर्दिश्यत इति** । यज्ञादीनां वैगुण्यप्रतीतिकाले यथोक्तनाम्नामन्यतमोच्चारणादवैगुण्यं सिध्यतीति भावः । कर्मसाद्गुण्यकारणं त्रिविधं नाम स्तौति—**ब्राह्मणा इति** । पूर्वं सर्गादौ निर्माणं च प्रजापतिकर्तृकम् ॥ २७ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रस्तद्रहितम् । अवज्ञातं पात्रपरिभवयुक्तम् । दानं प्रदेयं हिरण्यादि ॥ २२ ॥ अदृष्टार्थानां यज्ञदानतपःप्रभृतीनां वैकल्यशङ्कायां साद्गुण्यसिद्ध्यर्थं प्रायश्चित्तमुपदिश्यते—**ॐतत्सदिति** । ओमिति तदिति सदिति च त्रिविधस्त्रिप्रकारोऽयं ब्रह्मणो निर्देशो नाम्नां पाठः । यथा सहस्रनाम्नां पाठे सहस्रं नामानि एवमस्मिन्नपि नामपाठे त्रीण्येव नामानीत्यर्थः । 'ओमिति ब्रह्म' इति तैत्तिरीयके, 'तदिति वा एतस्य महतो भूतस्य नाम भवति' इत्यैतरेयके, 'सदेव सोम्येदमग्र आसीत्' इति छान्दोग्ये च एतेषां शब्दानां ब्रह्मनामत्वप्रसिद्धेः । तेन नामत्रयेण ब्राह्मणादयो विहिताः । पुरा

४ मधुसूदनीव्याख्या ।

स्थाने, अकाले पुण्यहेतुत्वेनाप्रसिद्धे यस्मिन् कस्मिंश्चिदशौचकाले वा, अपात्रेभ्यश्च विद्यातपोरहितेभ्यो नटविटादिभ्यो यद्दानं दीयते, देशकालपात्रसंपत्तावप्यसत्कृतं प्रियभाषणपादप्रक्षालनपूजादिसत्कारशून्यं अवज्ञातं पात्रपरिभवयुक्तं च तद्दानं तामसमुदाहृतम् ॥ २२ ॥ तदेवमाहारयज्ञतपोदानानां त्रैविध्यकथनेन सात्त्विकानि तान्यादेयानि राजसतामसानि तु परिहर्तव्यानीत्युक्तं । तत्राहारस्य दृष्टार्थत्वेन नास्त्यङ्गवैगुण्येन फलाभावशङ्का यज्ञतपोदानानां त्वदृष्टार्थानामङ्गवैगुण्यादपूर्वानुत्पत्तौ फलाभावः स्यादिति सात्त्विकानामपि तेषामानर्थक्यं प्राप्तं प्रमादबहुलत्वादनुष्ठातॄणामतस्तद्वैगुण्यपरिहाराय ॐतत्सदिति भगवन्नामोच्चारणरूपं सामान्यप्रायश्चित्तं परमकारुणिकतयोपदिशति भगवान्—ॐतत्सदित्येवंरूपो ब्रह्मणः परमात्मनो निर्देशो निर्दिश्यतेऽनेनेति निर्देशः प्रतिपादकः शब्दः नामेति यावत् । त्रिविधस्तिस्रो विधा अवयवा यस्य स त्रिविधः स्मृतो वेदान्तविद्भिः । एकवचनात्त्र्यवयवमेकं नाम प्रणववत् । यस्मात्पूर्वैर्महर्षिभिरयं ब्रह्मणो निर्देशः स्मृतस्तस्मादिदानींतनैरपि स्मर्तव्य इति विधिरत्र कल्प्यते 'वषट्कर्तुः प्रथमभक्षः' इत्यादिष्विव वचनानित्यपूर्वत्वादिति न्यायात् । यज्ञदानतपः क्रियासंयोगाच्चास्य तद्वैगुण्यमेव

५ भाष्योत्कर्षदीपिका ।

विशेषरहिते वा अपात्रेभ्यश्च मूर्खनटतस्करादिभ्यो देशादिसंपत्तावपि प्रियवचनपादप्रक्षालनपूजादिसत्काररहितमवज्ञातं पात्रपरिभवयुक्तं च यद्दानं दीयते तद्दानं तामसमुदाहृतम् ॥ २२ ॥ एवं आहारादीनां सात्त्विकानामादानाय हानाय च राजसतामसानां तेषां त्रैविध्यमुक्तम् । इदानीं विहितानां यज्ञादिकर्मणां प्रमादावश्यंभावात्तत्प्रयुक्ते वैगुण्ये कथं परिहारः स्यादित्याकाङ्क्षायां तेषां साद्गुण्यकरणाय करुणानिधिर्भगवान्प्रायश्चित्तमुपदिशति । ॐतत्सदिति एष निर्देशः निर्दिश्यतेऽनेनेति निर्देशो ब्रह्मणस्त्रिविधो नामनिर्देशः ओमिति ब्रह्म, तत्त्वमसि, सदेव सोम्येत्यादिवेदान्तेषु ब्रह्मविद्भिः स्मृतश्चिन्तितः यज्ञादिसाद्गुण्यसिद्ध्यर्थं अवश्यमिदं प्राय-

६ श्रीधरीव्याख्या ।

असत्कृतं पादप्रक्षालनादिसत्कारशून्यम्, अवज्ञातं तिरस्कारयुक्तं । एवंभूतं दानं तामसमुदाहृतम् ॥ २२ ॥ ननु चैवं विचार्यमाणे सर्वमपि यज्ञतपोदानादि राजसतामसप्रायमेवेति व्यर्थो यज्ञादिप्रयास इत्याशङ्क्य तथाविधस्यापि सात्त्विकत्वापादनप्रकारं दर्शयितुमाह—**ओमिति** । ॐतत्सदित्येवं त्रिविधो ब्रह्मणः परमात्मनो निर्देशो नाम व्यपदेशः स्मृतः शिष्टैः । तत्र तावत् 'ओमिति त्रिवृद्ब्रह्म'

७ अभिनवगुप्ताचार्यव्याख्या ।

गुणत्रितयसंकटोत्तीर्णधियस्ते क्रियां कथमाचरन्तीति तादृक्प्रकार उच्यते—ॐतत्सदित्यादिना । ॐतत्सदित्येभिस्त्रिभिः शब्दैर्ब्रह्मणो

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥**
**तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।**

१ श्रीमच्छांकरभाष्यम् ।

**च्यते ॥ २३॥ तस्मादोमित्युदाहृत्योच्चार्य यज्ञदानतपःक्रियाः यज्ञादिस्वरूपाः क्रियाः प्रवर्तन्ते विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा ब्रह्मवादिनां ब्रह्मवदनशीलानाम् ॥ २४॥ तदिति। तदित्यनभिसंधाय तदिति**

२ आनन्दगिरिव्याख्या ।

यस्माद्ब्राह्मणादीनां कारणं यस्माच्च ब्रह्मणो निर्देशस्तस्मादित्युपसंहरति—**तस्मादिति** । ब्रह्मवादिनामित्यत्र ब्रह्म वेदः ॥ २४ ॥ ॐशब्दस्य विनियोगमुक्त्वा तच्छब्दस्य विनियोगमाह—**तदित्यादिना** ॥ २५ ॥ वृत्तमनूद्यानन्तरश्लोक-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सर्गादौ ब्राह्मणाः एतन्नामत्रयोच्चारणसामर्थ्येनैव विधात्रा विप्रादयो विहिताः । प्रकाशिता इत्यर्थः ॥ २३ ॥ यस्मादेतन्नामत्रयपूर्वकं एतेषां विधानं सर्गादौ दृष्टं तस्मात्त्रिष्वेतेषु नामसु ओमित्येकमेव नाम उदाहृत्य ब्रह्मवादिनां वैदिकानां विधानोक्ताः वेदोक्ताः यज्ञादयः क्रियाः सततं प्रवर्तन्ते । तथाच श्रुतिः 'ॐमिति ब्रह्मा प्रसौति ॐमिति शस्त्राणि शंसन्ति ॐमित्यध्वर्युः प्रतिगरं प्रतिगृणाति ॐमिति सामानि गायन्ति' इति यज्ञे सर्वेषामृत्विजां क्रिया ॐकारपूर्विक इत्येतद्दर्शयति ॥ २४ ॥ ॐमिति नाम्नः काम्याकाम्यकर्मसाधारण्येन यज्ञादौ विनियोगमुक्त्वा तदिति नाम्नो निष्कामेषु मुमुक्षुकर्मसु विनियोगं दर्शयति—**तदिति** । मोक्षकाङ्क्षिभिः फलमनभिसंधाय विविधाः यज्ञतपःक्रियाः दानक्रियाश्च

४ मधुसूदनीव्याख्या ।

फलं नष्टाश्वदग्धरथवत् परस्पराकाङ्क्षया कल्प्यते । 'प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः' इति स्मृतेस्तथैव शिष्टाचाराच्च । ब्रह्मणो निर्देशः स्तूयते कर्मवैगुण्यपरिहारसामर्थ्यकथनाय । ब्राह्मणा इति त्रैवर्णिकोपलक्षणं । ब्राह्मणाद्याः कर्तारो वेदाः करणानि यज्ञाः कर्माणि तेन ब्रह्मणो निर्देशेन करणभूतेन पुरा विहिताः प्रजापतिना । तस्माद्यज्ञादिसृष्टिहेतुत्वेन तद्वैगुण्यपरिहारसमर्थो महाप्रभावोऽयं निर्देश इत्यर्थः ॥ २३ ॥ इदानीमकारोकारमकारव्याख्यानेन तत्समुदायोंकारव्याख्यानवदोंकारतच्छब्दसच्छब्दव्याख्यानेन तत्समुदायरूपं ब्रह्मणो निर्देशं स्तुत्यतिशयाय व्याख्यातुमारभते चतुर्भिः । तत्र प्रथममोंकारं व्याचष्टे—यस्मात् 'ओमिति ब्रह्म' इत्यादिषु श्रुतिष्वोमिति ब्रह्मणो नाम प्रसिद्धं तस्मादोमित्युदाहृत्य ओंकारोच्चारणानन्तरं विधानोक्ता विधिशास्त्रबोधिताः ब्रह्मवादिनां वेदवादिनां यज्ञदानतपःक्रियाः सततं प्रवर्तन्ते प्रकृष्टतया वैगुण्यराहित्येन वर्तन्ते । यस्यैकावयवोच्चारणादप्यवैगुण्यं किं पुनस्तस्य सर्वस्योच्चारणादिति स्तुत्यतिशयः ॥ २४ ॥ द्वितीयं तच्छब्दं व्याचष्टे—तत्त्वमसीत्यादिश्रुतिप्रसिद्धं तदिति ब्रह्मणो नामोदाहृत्य फलमनभिसंधायान्तःकरण-

५ भाष्योत्कर्षदीपिका ।

श्चित्तमनुष्ठेयमिति बोधनाय निर्देशं स्तौति । ब्राह्मणाः कर्तारो द्विजाः वेदाः करणानि यज्ञाः कर्माणि पुरा पूर्वं प्रजापतिना तेन निर्देशेन विहिता निर्मिताः । तथाच कर्त्रादीनां त्रयाणामपि कारणभूतत्वादस्य वैगुण्यनिवारकत्वं युक्तमेवेति भावः ॥ २३ ॥ यस्मादोंतत्सदिति ब्रह्मणो निर्देशो यस्माच्च ब्राह्मणादीनां कारणं तस्मादोमित्युदाहृत्योच्चार्य ब्रह्मवादिनां वेदवादिनां यज्ञदानतपःक्रियाः विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा प्रवर्तन्ते ॥ २४ ॥ ओमिति नाम्नो विनियोगमुक्त्वा तदित्यस्य विनियोगमाह—**तदिति ।**

६ श्रीधरीव्याख्या ।

इत्यादिश्रुतिप्रसिद्धेरोमिति ब्रह्मणो नाम, जगत्कारणत्वेनातिप्रसिद्धत्वात्, अविदुषां परोक्षत्वाच्च । तच्छब्दोऽपि ब्रह्मणो नाम । परमार्थसत्त्वसाधुत्वप्रशस्तत्वाभिः सच्छब्दो ब्रह्मणो नाम 'सदेव सोम्येदमग्र आसीत्' इत्यादिश्रुतेः । अयं त्रिविधोऽपि नामनिर्देशो विगुणमपि सगुणीकर्तुं समर्थ इत्याशयेन स्तौति । तेन त्रिविधेन ब्रह्मणो निर्देशेन ब्राह्मणाश्च वेदाश्च यज्ञाश्च पूर्वं सृष्ट्यादौ विहिताः विधात्रा निर्मिताः सगुणीकृता वा । यद्वा यस्यायं त्रिविधो निर्देशस्तेन परमात्मना ब्राह्मणादयः पवित्रतमाः सृष्टाः । तस्मात्तस्यायं त्रिविधो निर्देशोऽतिप्रशस्त इत्यर्थः ॥ २३ ॥ इदानीं प्रत्येकमोंकारादीनां प्राशस्त्यं दर्शयिष्यन्नोंकारस्य तदेवाह—**तस्मादिति** । यस्मादेवं ब्रह्मणो निर्देशः प्रशस्तस्तस्मादोमित्युदाहृत्य उच्चार्य कृता वेदवादीनां यज्ञाद्याः शास्त्रोक्ताः क्रियाः सततं सर्वदा अङ्गवैकल्येऽपि प्रकर्षेण वर्तन्ते । सगुणा भवन्तीत्यर्थः ॥ २४ ॥ द्वितीयं नाम प्रस्तौति—**तदिति** । तदित्युदाहृत्येति पूर्वस्यानुषङ्गः । तदित्युदाहृत्य शुद्धचित्तैर्मोक्षकाङ्क्षिभि-

७ अभिनवगुप्ताचार्यव्याख्या ।

निर्देशः संमुखीकरणम् । तत्र ॐमित्यनेन शास्त्रार्थोऽयमादेहसंबन्धमूरीकार्य इति सूच्यते । तदिति सर्वनामपदेन सामान्यमात्राभिधायिना विशेषपरामर्शमात्रासमर्थेन फलानभिसंधानं ब्रह्मण्युच्यते अभिसंधानस्य विशेषपरिग्रहमन्तरेणाभावात् । सकलविशेषानुग्राहित्वेऽपि सकलफलसंधाने सर्वकर्तृतायामपि विशिष्टफलायोगात्। सदित्यमुया श्रुत्या प्रशंसाभिधीयते । क्रियमाणमपीदं यज्ञादिकं दुष्टमिति बुद्ध्या क्रियमाणं

**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥**
**सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**
**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**

१ श्रीमच्छांकरभाष्यम् ।

ब्रह्माभिधानमुच्चार्यानभिसंधाय च कर्मणः फलं यज्ञतपःक्रियाः यज्ञक्रियास्तपःक्रियाश्च यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्वर्त्यन्ते मोक्षकाङ्क्षिभिः मोक्षार्थिभिर्मुमुक्षुभिः ॥ २५ ॥ ॐतच्छब्दयोर्विनियोग उक्तोऽथेदानीं सच्छब्दस्य विनियोगः कथ्यते सद्भाव इति । असतः सद्भावे तथा विद्यमानस्य पुत्रस्य जन्मनि, तथा साधुभावेऽसद्वृत्तस्यासाधोः सद्वृत्तता साधुभावस्तस्मिन् साधुभावे च सदित्येतदभिधानं ब्रह्मणः प्रयुज्यते तत्रोच्यतेऽभिधीयते प्रशस्ते कर्मणि विवादौ च तथा सच्छब्दः पार्थ युज्यते प्रयुज्यत इत्येतत् ॥ २६ ॥ यज्ञे यज्ञकर्मणि या

२ आनन्दगिरिव्याख्या ।

तात्पर्यमाह—ॐतच्छब्दयोरिति ॥ २६ ॥ प्रकारान्तरेण सच्छब्दस्य विनियोगमाह—यज्ञ इति । नामत्रयो-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

क्रियन्ते इति योजना । ननु फलं चेन्नाभिसंधीयते तर्हि किमभिसंधाय क्रियन्त इत्याकाङ्क्षायामाह—**तदिति** । **क्रियन्ते इति** । सर्वाः क्रियास्तदिति ब्रह्मेति क्रियन्ते । यथा ब्रह्मवादिभिः 'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना' इत्युक्तदिशा सर्वाः ससाधनफलाः क्रियाः ब्रह्मैवेदं सर्वमितिबुद्ध्या क्रियन्ते तथा मुमुक्षुभिरपीत्यर्थः । यदेव हि मुक्तानां स्वाभाविकं शीलं तदेव मुमुक्षूणां शास्त्रेण विधीयत इति प्रसिद्धेः । फलमनभिसंधायेति सान्निध्यात्तदितीत्यत्रापि सामर्थ्यादभिसंधायेति लभ्यते । तेन फलमनभिसंधाय तदित्यभिसंधाय क्रियाः प्रवर्तन्त इत्यन्वयोऽपि सुलभ एव । तदिति ब्रह्माभिधानमुच्चार्येति भाष्येऽपि उदाहृत्येति पूर्वश्लोकोक्तक्रियानुवृत्त्या योजनमस्मदुक्ताभिप्रायेणैव व्याख्येयम् उच्चारणस्यापि ब्रह्मानुसंधानार्थत्वादिति दिक् ॥ २५ ॥ ॐतच्छब्दयोर्विनियोगमुक्त्वा सच्छब्दस्य विनियोगमाह द्वाभ्याम्—**सद्भावे इति** । सद्भावे अस्तित्वे साधुभावे समीचीनत्वे सच्छब्दः सदिदं कर्मेति प्रशस्ते कर्मणि सत्सत्त्वं वेदोक्तत्वादस्त्येवेति सच्छब्दः प्रयुज्यते आस्तिकैः ॥ २६ ॥ किंच यज्ञादौ स्थितिर्निष्ठा सदिति समीचीनेति उच्यते । तदर्थः सच्छब्दार्थो ब्रह्म तदीयं तदर्थं कृतं

४ मधुसूदनीव्याख्या ।

शुद्ध्यर्थं यज्ञतपःक्रिया दानक्रियाश्च विविधा मोक्षकाङ्क्षिभिः क्रियन्ते तस्मादतिप्रशस्तमेतत् ॥ २५ ॥ तृतीयं सच्छब्दं व्याचष्टे द्वाभ्यां—'सदेव सोम्येदमग्र आसीत्' इत्यादि श्रुतिप्रसिद्धं सदित्येतद्ब्रह्मणो नाम सद्भावेऽविद्यमानत्वशङ्कायां विद्यमानत्वे साधुभावे चासाधुत्वशङ्कायां साधुत्वे च प्रयुज्यते शिष्टैः । तस्माद्वैगुण्यपरिहारेण यज्ञादेः साधुत्वं तत्फलस्य च विद्यमानत्वं कर्तुं क्षममेतदित्यर्थः । तथा सद्भावसाधुभावयोरिव प्रशस्तेऽप्रतिबन्धेनाशुसुखजनके माङ्गलिके कर्मणि विवाहादौ सच्छब्दो हे पार्थ, युज्यते प्रयुज्यते तस्मादप्रतिबन्धेनाशुफलजनकत्वं वैगुण्यपरिहारेण यज्ञादेः समर्थमेतन्नामेति प्रशस्ततरमेतदित्यर्थः ॥ २६ ॥ यज्ञे तपसि दाने च या स्थितिस्तत्परतयावस्थितिर्निष्ठा सापि सदित्युच्यते विद्वद्भिः । कर्म चैव तदर्थीयं

५ भाष्योत्कर्षदीपिका ।

फलमनभिसंधाय मोक्षकाङ्क्षिभिः मुमुक्षुभिः यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः तदिति ब्रह्माभिधानमुच्चार्य क्रियन्ते निर्वर्त्यन्ते ॥ २५ ॥ तृतीयनाम्नो विनियोगमाह द्वाभ्यां—**सदिति** । सतः सद्भावे यथाऽविद्यमानस्य पुत्रस्य जन्म तथा साधुभावेऽसद्वृत्तस्यासाधोः सद्वृत्तिता साधुभावस्तस्मिन्साधुभावे च सदित्येतत् ब्रह्मणोऽभिधानं प्रयुज्यतेऽभिधीयते । तथा प्रशस्ते कर्मणि विवाहादौ च स सच्छब्दः प्रयुज्यते, पृथापुत्र त्वयि पार्थशब्दो यथेति सूचयन्नाह—पार्थेति ॥ २६ ॥ यज्ञे यज्ञकर्मणि

६ श्रीधरीव्याख्या ।

पुरुषैः फलाभिसंधिमकृत्वा यज्ञाद्याः क्रियाः क्रियन्ते अतश्चित्तशोधनद्वारेण फलसंकल्पत्याजनेन मुमुक्षुत्वसंपादकत्वात्तच्छब्दनिर्देशः प्रशस्त इत्यर्थः ॥ २५ ॥ सच्छब्दस्य प्राशस्त्यमाह—**सद्भाव इति द्वाभ्याम्** । सद्भावे अस्तित्वे देवदत्तस्य पुत्रादिकमस्तीत्यस्मिन्नर्थे, साधुभावे च साधुत्वे देवदत्तस्य पुत्रादिश्रेष्ठमित्यस्मिन्नर्थे सदित्येतत्पदं प्रयुज्यते । प्रशस्ते माङ्गलिके विवाहादिकर्मणि च सदिदं कर्मेति

७ अभिनवगुप्ताचार्यव्याख्या ।

तामसतामेति । तस्मात्कर्तव्यमिदं मन्वाना विशिष्टफलाभिसंधानेन च क्रियमाणं न सत् बन्धदायकमेवेति यज्ञादिकुर्वाणा अपि न बध्यन्ते ।

**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥**
**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**

१ श्रीमच्छांकरभाष्यम् ।

**स्थितिस्तपसि च या स्थितिर्दाने च या स्थितिः सा च सदित्युच्यते विद्वद्भिः, कर्म चैव तदर्थीयमथवा यस्याभिधानत्रयं प्रकृतं तदर्थीयं यज्ञदानतपोर्थीयमीश्वरार्थीयमित्येतत्सदित्येवाभिधीयते। तदेतद्यज्ञदानतपआदिकर्मासात्त्विकं विगुणमपि श्रद्धापूर्वकं ब्रह्मणोभिधानत्रयप्रयोगेण सगुणं सात्त्विकं संपादितं भवति ॥ २७ ॥ अश्रद्धयेति । तत्र च सर्वत्र श्रद्धाप्रधानतया सर्वं संपाद्यते यस्मात्तस्माद्—अश्रद्धया हुतं हवनं कृतं दत्तं च ब्राह्मणेभ्योऽश्रद्धया, तपस्तप्तमनुष्ठितमश्रद्धया, तथाऽश्रद्ध-**

२ आनन्दगिरिव्याख्या ।

च्चारणेन साद्गुण्यं सिध्यतीति प्रकरणार्थमुपसंहरति—**तदेतदिति** ॥ २७ ॥ अश्रद्धान्वितस्यापि कर्मणो नामत्रयोच्चारणादवैगुण्ये श्रद्धाप्राधान्यं न स्यादित्याशङ्क्याह—**तत्र चेति** । सप्तमीभ्यां प्रकृतं यज्ञादि गृह्यते सर्वं यज्ञादि सगुणमिति शेषः । तस्यासत्त्वं साधयति—**मत्प्राप्तीति** । ऐहिकामुष्मिकं वा फलमश्रद्धितेनापि कर्मणा संपत्स्यते

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तदर्थीयं परमेश्वरप्राप्त्यर्थं कृतं कर्म सदित्येव समीचीनमित्येवाभिधीयते लोके । तदेवं असात्त्विकं विगुणं वा यज्ञादिकं श्रद्धापूर्वकं ब्रह्मणोऽभिधानत्रयोच्चारणेन सात्त्विकं सद्गुणं च संपादितं भवति ॥ २७ ॥ सर्वत्र श्रद्धैव साद्गुण्यहेतुरिति व्यतिरेकमुखेनाह—**अश्रद्धयेति** । हुतं होमः । दत्तं दानम् । तपस्तप्तमनुष्ठितम् कृतमश्रद्धया विहितं भगवन्ना-

४ मधुसूदनीव्याख्या ।

तेषु यज्ञदानतपोरूपेष्वर्थेषु भवं तदनुकूलमेव च कर्म । अथवा यस्य ब्रह्मणो नामेदं प्रस्तुतं तदेवार्थो विषयो यस्य तत्तदर्थं शुद्धब्रह्मज्ञानं तदनुकूलं कर्म तदर्थीयं, भगवदर्पणबुद्ध्या क्रियमाणं कर्म वा तदर्थीयं सदित्येवाभिधीयते । तस्मात्सदिति नाम कर्मवैगुण्यापनोदनसमर्थं प्रशस्ततरं । यस्यैकैकोऽवयवोऽप्येतादृशः किमु वक्तव्यं तत्समुदायस्योंतत्सदिति निर्देशस्य माहात्म्यमिति संपिण्डितार्थः ॥ २७ ॥ यद्यालस्यादिना शास्त्रीयं विधिमुत्सृज्य श्रद्दधानतयैव वृद्धव्यवहारमात्रेण यज्ञतपोदानादि कुर्वतां प्रमादाद्वैगुण्ये प्राप्ते ॐतत्सदिति ब्रह्मनिर्देशेन तत्परिहारस्तर्ह्यश्रद्दधानतया शास्त्रीयं विधिमुत्सृज्य कामकारेण यत्किंचिद्यज्ञादि कुर्वतामसुराणामपि तेनैव वैगुण्यपरिहारः स्यादिति कृतं श्रद्धया सात्त्विकत्वहेतुभूतयेत्यत आह—अश्रद्धया यद्धुतं हवनं कृत-

५ भाष्योत्कर्षदीपिका ।

या स्थितिस्तथा तपसि या स्थितिः दाने च या स्थितिः सा च विद्वद्भिः सदित्युच्यते । तदर्थीयं यज्ञदानतपोर्थीयं अथवा यस्याभिधानत्रयं प्रकृतं तदर्थीयमीश्वरार्थीयमित्येतत्सदित्येवाभिधीयते । तदेतद्यज्ञतपआदिकर्म असात्त्विकं विगुणमभक्तिपूर्वकमपि ब्रह्मणोऽभिधानत्रयेण सात्त्विकं सगुणं सभक्तिकं संपादितं भवत्यतोऽवश्यमोंतत्सदिति ब्रह्मणोऽभिधानत्रयमुदाहृत्य यज्ञादि प्रवर्तनीयमिति प्रकरणार्थः ॥ २७ ॥ तत्र सर्वत्रास्तिक्यलक्षणायाः श्रद्धायाः प्रधानतया सर्वं तथैव संपाद्यते यस्मात्तस्मादश्रद्धया हुतं हव्यहवनं

६ श्रीधरीव्याख्या ।

सच्छब्दो युज्यते प्रयुज्यते संगच्छत इति वा ॥ २६ ॥ किंच—**यज्ञ इति** । यज्ञादिषु च या स्थितिस्तात्पर्येणावस्थानं तदपि सदित्युच्यते । यस्य चेदं नामत्रयं स एव परमात्मा अर्थः फलं यस्य तत्तदर्थं कर्म पूजोपहारगृहाङ्गणपरिमार्जनोपलेपरङ्गमाङ्गलिकादिक्रियास्तत्सिद्धये यदन्यत्कर्म क्रियते उद्यानशालिक्षेत्रधनार्जनादिविषयं तत्कर्म तदर्थीयं । तच्चातिव्यवहितमपि सदित्येवाभिधीयते । यस्मादेवमतिप्रशस्तमेतन्नामत्रयं तस्मादेतत्सर्वकर्मसाद्गुण्यार्थं कीर्तयेदिति तात्पर्यार्थः । अत्र चार्थवादानुपपत्त्या विधिः कल्प्यते 'विधेयं स्तूयते वस्तु' इति न्यायात् । अपरे तु 'प्रवर्तन्ते विधानोक्ताः, क्रियन्ते मोक्षकाङ्क्षिभिः' इत्यादि वर्तमानोपदेशः 'समिधो यजति' इत्यादिवद्विधितया परिणमनीय इत्याहुः । तत्तु 'सद्भावे साधुभावे च' इत्यादिषु प्राप्तार्थत्वान्न संगच्छत इति पूर्वोक्तक्रमेण विधिकल्पनैव ज्यायसी

७ अभिनवगुप्ताचार्यव्याख्या ।

अनेनैवाभिप्रायेणादिपर्वण्युक्तम् 'तपो न कल्कोऽध्ययनं न कल्कः स्वाभाविको वेदविधिर्न कल्कः । प्रसह्य वित्ताहरणं न कल्कस्तान्येव भावोपहतानि कल्कः ॥' इति । कल्को बन्धकः । स्वाभाविक इति ब्राह्मणेन निष्कारणं षडङ्गं वेदोऽध्येतव्यमिति । प्रसह्य शास्त्रलोकप्रसिद्धोचितया चेष्टया भावेन सत्त्वादिगुणत्रययोगिना चित्तेनोपहतान्येतान्येव बन्धकानि नान्यथेति तात्पर्यम् । अतो यज्ञादि यावच्छरीरभाविंतया कार्यमेव तदर्थं विहितं कर्म अर्जनादि । यदि वा ॐमित्यनेन समुपशान्तसमस्तप्रपञ्चं तदित्यनेनोद्भिद्यमानविश्वतरङ्गपरामर्शमात्रात्मकेच्छास्वातन्त्र्यस्वभावं । सदित्यनेनेच्छास्वातन्त्र्यभरविस्रम्भमाणभेदकं पूर्णत्वेऽपि तावच्चित्रस्वभावतया भवनमिति प्रतिपाद्यते । तथाचोक्तम् 'सद्भावे साधुभावे च' इति । तेन परमप्रशान्तं रूपं पुरस्कृत्य दित्साथियक्षातितप्सात्मकेच्छातरङ्गसंगतं च मध्ये कृत्य दानयज्ञतपःक्रियाकारककलापपरिपूर्णं यच्चरमं वपुरिदमुल्लसितमेतत्खलु समं त्रितयमनर्गलस्य स्वाभाविकं रूपमिति कस्य किं कथं कुतः

**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

१ श्रीमच्छांकरभाष्यम्।

**यैव कृतं यत्स्तुतिनमस्कारादि तत्सर्वमसदित्युच्यते मत्प्राप्तिसाधनमार्गबाह्यत्वात् पार्थ। नच तद्बहायासमपि प्रेत्य फलाय नोऽपीहार्थं साधुभिर्निन्दितत्वादिति ॥ २८ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीभगवद्गीताभाष्ये श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥**

२ आनन्दगिरिव्याख्या।

कुतोऽस्यासत्त्वमित्याशङ्क्याह—**नचेति**। तस्योभयविधफलाहेतुत्वे हेतुमाह—**साधुभिरिति**। निन्दन्ति हि साधवः श्रद्धारहितं कर्मातो नैतदुभयफलोपयिकमित्यर्थः। तदनेन शास्त्रानभिज्ञानमपि श्रद्धावतां श्रद्धया सात्त्विकत्वादि-त्रैविध्यभाजां राजसतामसाहारादित्यागेन सात्त्विकाहारादिसेवया सत्त्वैकशरणानां प्राप्तमपि यज्ञादिवैगुण्यं ब्रह्मनाम-निर्देशेन परिहरतां परिशुद्धबुद्धीनां श्रवणादिसामग्रीसंजाततत्त्वसाक्षात्कारवतां मोक्षोपपत्तिरिति स्थितम् ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्दपूज्यपादशिष्यानन्दगिरिकृतौ सप्तदशोऽध्यायः ॥ १७ ॥

३ नीलकण्ठव्याख्या (चतुर्धरी)।

मत्स्मरणमपि यच्चान्यत्तत्सर्वमसत् अभावभूतमित्युच्यते। पार्थ, अतएव तत् प्रेत्य मृत्वा परलोके नोपयुज्यते। इहास्मिन् लोके वा नो नैवोपयुज्यते। तस्मात् श्रद्धैव सात्त्विकी मातेव सुखकामैः शरणीकरणीयेति भावः ॥ २८ ॥

इति भीष्मपर्वणि नैलकण्ठीये भारतभावदीपे श्रीमद्भगवद्गीतार्थप्रकाशे सप्तदशोऽध्यायः ॥ १७ ॥

४ मधुसूदनीव्याख्या।

मग्नौ दत्तं यद्ब्राह्मणेभ्यो यत्तपस्तप्तं यच्चान्यत्कर्म कृतं स्तुतिनमस्कारादि तत्सर्वमश्रद्धया कृतमसदसाध्वित्युच्यते। अत ओंतत्सदिति निर्देशेन न तस्य साधुभावः शक्यते कर्तुं सर्वथा तदयोग्यत्वाच्छिलाया इवाङ्कुरः' तत्कस्मादसदित्युच्यते शृणु हे पार्थ। चो हेतौ। यस्मात्तदश्रद्धाकृतं न प्रेत्य परलोके फलति विगुणत्वेनापूर्वाजनकत्वात्रो इह नापीह लोके यशः साधुभिर्निन्दितत्वात्। अत ऐहिकामुष्मिकफलविकलत्वादश्रद्धाकृतस्य सात्त्विक्या श्रद्धयैव सात्त्विकं यज्ञादि कुर्यादन्तःकरणशुद्धये। तादृशस्यैव श्रद्धापूर्वकस्य सात्त्विकस्य यज्ञादेर्दैवाद्वैगुण्यशङ्कायां ब्रह्मणो नामनिर्देशेन साद्गुण्यं संपादनीयमिति परमार्थः। श्रद्धापूर्वकमसात्त्विकमपि यज्ञादि विगुणं ब्रह्मणो नामनिर्देशेन सात्त्विकं सगुणं च संपादितं भवतीति भाष्यम्। तदेवमस्मिन्नध्याये आलस्यादिनाऽनादृतशास्त्राणां श्रद्धापूर्वकं वृद्धव्यवहारमात्रेण प्रवर्तमानानां शास्त्रानादरेणासुरसाधर्म्येण श्रद्धापूर्वकानुष्ठानेन च देवसाधर्म्येण किमसुरा अमी देवा वेत्यर्जुनसंशयविषयाणां राजसतामसश्रद्धापूर्वकं राजसतामसयज्ञादिकारिणोऽसुराः। शास्त्रीय-

५ भाष्योत्कर्षदीपिका।

कृतं दत्तं च ब्राह्मणेभ्यो यत्तपस्तप्तं यच्चान्यत्कर्म स्तुतिनमस्कारादिकृतं तत्सर्वमसदित्युच्यते सत्प्राप्तिमार्गादास्तिक्यलक्षणाद्बाह्यत्वात्। असत्त्वमेव प्रतिपादयति। नच तद्बहायासमपि प्रेत्य मृत्वा फलाय नापीह यशोरूपफलाय साधुभिर्निन्दितत्वात्। हुतमित्युक्त्या विहिते कर्मणि श्रद्धावनधिकारी प्रतिषिद्धे तु श्रद्धारहितोऽपीति बोधितम्। एतेन निषेधलङ्घिनो नास्तिकस्य प्रत्यवायाभावप्रसङ्गो निरस्तः। ननु 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुत्या श्रद्धया कृतं वीर्यवत्तरं चेत् श्रद्धारहितमपि वीर्यवदित्यर्थाद्बोधितमिति कथं भगवता प्रोक्तमसदित्युच्यत इति। नैष दोषः। यतः श्रुतिस्थश्रद्धापदं भक्तिरूपश्रद्धापरं स्मृतिस्थं तु विश्वासात्मकश्रद्धापरम्। एवंच नास्तिक्यबुद्ध्या कृतं सर्वं निरर्थकमेवातो नास्तिक्यं श्रेयोर्थिभिः सर्वथैव हेयमिति भावः। पृथा-

६ श्रीधरीव्याख्या।

॥ २७ ॥ इदानीं सर्वकर्मसु श्रद्धयैव प्रवृत्त्यर्थमश्रद्धाकृतं सर्वं निन्दति—**अश्रद्धयेति**। अश्रद्धया हुतं हवनं, दत्तं दानं, तप्तं निर्वर्तितं

७ अभिनवगुप्ताचार्यव्याख्या।

केन फलं स्यादिति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ इदानीमश्रद्धावतः तामसं कर्म सर्वथैव निष्फलं कारककलापसंयोजनमुपजनितप्रयासमात्रफलमेवेति सर्वथा अश्रद्धावता न भाव्यमित्युच्यते—अश्रद्धयेति। असदित्यप्रशस्तं तस्मादप्रशस्ते कर्मणि यतमानानां सुखे-

४ मधुसूदनीव्याख्या ।

ज्ञानसाधनानधिकारिणः सात्त्विकश्रद्धापूर्वकं सात्त्विकयज्ञादिकारिणस्तु देवाः शास्त्रीयज्ञानसाधनाधिकारिण इति श्रद्धात्रैविध्य-प्रदर्शनमुखेनाहारादित्रैविध्यप्रदर्शनेन च भगवता निर्णयः कृत इति सिद्धम् ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थ-दीपिकायां श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥

५ भाष्योत्कर्षदीपिका ।

पुत्रस्य तव तु कदापि तन्नोचितमिति सूचयन्संबोधयति पार्थेति ॥ २८ ॥ तदनेन सप्तदशाध्यायेन श्रद्धादित्रैविध्यं निरूपयता शास्त्रानभिज्ञानामपि सात्त्विकश्रद्धावतां राजसतामसाहारादिपरिवर्जनेन सात्त्विकाहारादिसेवया सत्त्वैकशरणानां प्राप्तमपि यज्ञादि-वैगुण्यं ब्रह्मनामनिर्देशेन परिहरतां परिशुद्धबुद्धीनां श्रवणादिना ब्रह्मात्मसाक्षात्कारो भवतीति प्रदर्शितम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां सप्तदशोऽध्यायः ॥ १७ ॥

६ श्रीधरीव्याख्या ।

तपः । यच्चान्यदपि कृतं कर्म तत्सर्वमसदित्युच्यते । यतस्तत्प्रेत्य लोकान्तरे न फलति विगुणत्वात् । नो इह न चास्मिँल्लोके फलति, अयशस्करत्वात् ॥ २८ ॥

रजस्तमोमयीं त्यक्त्वा श्रद्धां सत्त्वमयीं श्रितः । तत्त्वज्ञानेऽधिकारी स्यादिति सप्तदशे स्थितम् ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां सप्तदशोऽध्यायः ॥ १७ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

नैव भवतीति शिवम् ॥ २८ ॥ अत्र संग्रहः—स एव कारकावेशः क्रिया सैवाविशेषिणी । तथापि विज्ञानवतां मोक्षार्थे पर्यवस्यति ॥

इति श्रीमदाचार्याभिनवगुप्तविरचिते गीतातात्पर्यसंग्रहे सप्तदशोऽध्यायः ॥ १७ ॥



# अष्टादशोऽध्यायः ।

अर्जुन उवाच ।

**संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सर्वस्यैव गीताशास्त्रस्यार्थोऽस्मिन्नध्याय उपसंहृत्य सर्वश्च वेदार्थो वक्तव्य इत्येवमर्थोऽयमध्याय आरभ्यते सर्वेषु ह्यतीतेष्वध्यायेषु पूर्वोक्तोऽर्थोऽस्मिन्नध्यायेऽवगम्यतेऽर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच—संन्यासस्येति । संन्यासस्य संन्यासशब्दार्थस्येत्येतद्धे महाबाहो, तत्त्व

२ आनन्दगिरिव्याख्या ।

पूर्वैरध्यायैर्विस्तरेण यतस्ततो विक्षिप्ततयोक्तमर्थं सुखप्रतिपत्त्यर्थं संक्षेपेणोपसंहृत्याभिधातुमध्यायान्तरमवतारयति—**सर्वस्यैवेति** । उपसंहृत्य वक्तव्य इति संबन्धः । किं चोपनिषत्सु इतस्ततो विस्तृतस्यार्थस्य बुद्धिसौकर्यार्थमस्मिन्नध्याये संक्षिप्ताभिधानं कर्तव्यमुपनिषदां गीतानां चैकार्थत्वादित्याह—**सर्वश्चेति** । कथं सर्वोऽपि शास्त्रार्थोऽस्मिन्नध्याये संक्षिप्योपसंह्रियते तत्राह—**सर्वेषु हीति** । ननु वेदार्थश्चेदशेषतोऽत्रोपसंजिहीर्षितस्तर्हि किमिति त्यागेनैकेसंन्यासयोगादिति च वेदार्थैकदेशविषयं प्रश्नप्रतिवचनं तत्राह—**अर्जुनस्त्वति** । पृथगनयोस्तत्त्वं वेदितुमिच्छामीति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अस्यामष्टादशाध्याय्यां प्रथमे उपोद्घातितानां द्वितीये सूत्रितानां शेषैर्व्युत्पादितानामर्थानां कार्त्स्न्येनोपसंहारार्थोऽयमन्तिमोऽध्याय आरभ्यते । तत्र पूर्वाध्यायान्तेऽश्रद्धया कृतं सर्वं व्यर्थमित्युक्तम् । तत्र फलावश्यंभावनिश्चयः श्रद्धा सा च फलवतां कर्मणामेवाङ्गं नतु कर्मविरहरूपस्य संन्यासस्य भावरूपफलवर्जितस्य । अभावाद्भावोत्पत्तेरयोगात् । तस्माच्छ्रद्धासापेक्षकर्मापेक्षया श्रद्धानपेक्षः संन्यासः श्रेयान् । नचास्यैवंरूपस्य श्रद्धात्रैविध्यप्रयुक्तं सात्त्विकादिभेदेन त्रैविध्यं संभवति । येन फले तारतम्यं स्यात् । तत्फलस्य दृष्टविक्षेपनिवृत्तिरूपस्य सर्वत्र तुल्यत्वात् । सच संन्यासो यदि कर्मत्याग एव तर्हि सिद्धं नः समीहितम् । यदि तु तौ भिन्नौ तर्हि तयोर्वैलक्षण्यं विचार्यमित्याशयेनार्जुन उवाच—**संन्यासस्येति** । हे महाबाहो हे हृषीकेश हे केशिनिषूदनेति बहुकृत्वः संबोधयन् जिज्ञासितेऽर्थेऽत्या-

४ मधुसूदनीव्याख्या ।

पूर्वाध्याये श्रद्धात्रैविध्येनाहारयज्ञतपोदानत्रैविध्येन च कर्मिणां त्रैविध्यमुक्तं सात्त्विकानामादानाय राजसतामसानां च हानाय । इदानीं तु संन्यासत्रैविध्यकथनेन संन्यासिनामपि त्रैविध्यं वक्तव्यं तत्र तत्त्वबोधनानन्तरं यः फलभूतः सर्वकर्मसंन्यासः स चतुर्दशेऽध्याये गुणातीतत्वेन व्याख्यातत्वान्न सात्त्विकराजसतामसभेदमर्हति । योऽपि तत्त्वबोधात्प्राक् तदर्थं सर्वकर्मसंन्यासस्तत्त्वबुभुत्सया वेदान्तवाक्यविचाराय भवति सोऽपि 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इत्यादिना निर्गुणत्वेन व्याख्यातः यस्त्वनुत्पन्नतत्त्वबोधानामनुत्पन्नतत्त्वबुभुत्सानां च कर्मसंन्यासः 'स संन्यासी च योगी च' इत्यादिना गौणो व्याख्यातस्तस्य त्रैविध्यसंभवात्तद्विशेषं बुभुत्सुरर्जुन उवाच—अविदुषामनुपजातविविदिषाणां च कर्माधिकृतानामेव

५ भाष्योत्कर्षदीपिका ।

नमः समाय सोमाय मखार्च्याय मखारये । कृष्णायाकृष्णरूपाय विष्णवे शंभवे नमः ॥ १ ॥ पूर्वाध्यायैर्विस्तरेणेतस्ततो विक्षिप्ततयोक्तमर्थमुपनिषत्सु चेतस्ततो विस्तृतमर्थं सुखप्रतिपत्तये उपसंहृत्य वक्तुमयमध्याय आरभ्यते । अतीताध्यायेषूक्तस्य सर्ववेदार्थस्यास्मिन्नध्यायेऽवगम्यमानत्वात् । अर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच । संन्यासस्य संन्यासशब्दार्थस्य त्यागस्य च

६ श्रीधरीव्याख्या ।

न्यासत्यागविभागेन सर्वगीतार्थसंग्रहम् । स्पष्टमष्टादशे प्राह परमार्थविनिर्णये ॥ १ ॥

अत्र च 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । संन्यासयोगयुक्तात्मा' इत्यादिषु कर्मसंन्यास उपदिष्टः । तथा 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्' इत्यादिषु च फलमात्रत्यागेन कर्मानुष्ठानमुपदिष्टम् । न च परस्परं विरुद्धं सर्वज्ञः परमकारुणिको भगवानुपदिशेत् । अतः कर्मसंन्यासस्य तदनुष्ठानस्य चाविरोधप्रकारं बुभुत्सुरर्जुन उवाच—**संन्यासस्येति** । भो हृषीकेश सर्वेन्द्रियनियामक, हे केशिनिषूदन केशिनाम्नो हि महतो हयाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षयितु-

७ अभिनवगुप्ताचार्यव्याख्या ।

अर्जुन उवाच—संन्यासस्येति । पूर्वमुक्तं स त्यागी सच बुद्धिमानिति, तथा 'स संन्यासी च योगी च न निरग्निः' इत्यादि । अतस्त्यागि-

श्रीभगवानुवाच ।

**काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

१ श्रीमच्छांकरभाष्यम् ।

भावस्तत्त्वं याथात्म्यमित्येतद् इच्छामि वेदितुं ज्ञातुं त्यागस्य च त्यागशब्दार्थस्येत्येतद् हृषीकेश पृथगितरेतरविभागतः । केशिनिषूदन केशिनामा हयच्छद्मा कश्चिदसुरस्तं निषूदितवान्भगवान्वासुदेवस्तेन तन्नाम्ना संबोध्यतेऽर्जुनेन ॥ १ ॥ तत्र तत्र निर्दिष्टौ संन्यासत्यागशब्दौ न निर्लुण्ठितार्थौ पूर्वेष्वध्यायेष्वतोऽर्जुनाय पृष्टवते तन्निर्णयाय भगवानुवाच—काम्येति । काम्यानामश्वमेधादीनां कर्मणां

२ आनन्दगिरिव्याख्या ।

विशेषणादपृथगर्थस्तयोरस्तीति गम्यते । बुभुत्सितस्य प्रष्टव्यत्वादेकदेशे तदभावादुक्तप्रश्नोपपत्तिरिति भावः ॥ १ ॥ ननु पूर्वेष्वध्यायेषु तत्र तत्र संन्यासत्यागयोरुक्तत्वात्किमिति पुनस्तौ पृच्छयेते ज्ञाते तदयोगात्तत्राह—तत्र तत्रेति । न निर्लुण्ठितार्थौ न निकृष्टार्थौ न विविक्तार्थावित्यर्थः । बुभुत्सया प्रश्नस्य प्रवृत्तत्वात्प्रष्टुरभिप्रायं प्रश्नेन प्रतिपद्य भगवानुत्तरमुक्तवानित्याह—अत इति । पक्षद्वयोपन्यासेन संन्यासत्यागशब्दयोरर्थभेदं कथयति—काम्यानामिति । तत्किमिदानीं संन्यासत्यागशब्दयोरात्यन्तिकं भिन्नार्थत्वं तथा प्रसिद्धिविरोधः स्यादित्याशङ्क्यावान्तरभे-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दरं दर्शयति । संन्यासस्य तत्त्वं याथात्म्यं त्यागात्पृथग्भूतं वेदितुमिच्छामि । त्यागस्य याथात्म्यं संन्यासात्पृथग्भूतं वेदितुमिच्छामीति चकारेणानुवर्त्यते ॥ १ ॥ अत्रोत्तरं श्रीभगवानुवाच—काम्यानामिति । काम्यानां रागतः प्राप्तानां पुत्रकामेष्ट्यादीनां ननु फलस्य कामनाविषयत्वात् सर्वस्य कर्मणः फलवत्त्वनियमात् सर्वं कर्म काम्यमेवेति नित्यादीनामपि मुमुक्षोस्त्यागः स्यादिति सिद्धं नः समीहितमित्याशङ्क्याह—सर्वेति । सर्वेषां नित्यनैमित्तिककाम्यानां

४ मधुसूदनीव्याख्या ।

किंचित्कर्मपरिग्रहेण किंचित्कर्मपरित्यागो यः स त्यागांशगुणयोगात्संन्यासशब्देनोच्यते एतादृशस्यान्तःकरणशुद्ध्यर्थमविद्वत्कर्माधिकारिकर्तृकस्य संन्यासस्य केनचिद्रूपेण कर्मत्यागस्य तत्त्वं स्वरूपं पृथक् सात्त्विकराजसतामसभेदेन वेदितुमिच्छामि । त्यागस्य च तत्त्वं वेदितुमिच्छामि । किं संन्यासत्यागशब्दौ घटपटशब्दाविव भिन्नजातीयार्थौ किंवा ब्राह्मणपरिव्राजकशब्दाविवैकजातीयार्थौ । यद्याद्यस्तर्हि त्यागस्य तत्त्वं संन्यासात्पृथग् वेदितुमिच्छामि । यदि द्वितीयस्तर्ह्यवान्तरोपाधिभेदमात्रं वक्तव्यं । एकव्याख्यानेनैवोभयं व्याख्यातं भविष्यति । महाबाहो केशिनिषूदनेति संबोधनाभ्यां बाह्योपद्रवनिवारणस्वरूपयोग्यताफलोपधाने प्रदर्शिते । हृषीकेशेत्यन्तरुपद्रवनिवारणसामर्थ्यमिति भेदः । अत्यनुरागात्संबोधनत्रयम् । अत्रार्जुनस्य द्वौ प्रश्नौ । कर्माधिकारिकर्तृत्वेन पूर्वोक्तयज्ञादिसाधर्म्येण संन्यासशब्दप्रतिपाद्यत्वेन च गुणातीतसंन्यासद्वयसाधर्म्येण त्रैगुण्यसंभवासंभवाभ्यां संशयः प्रथमस्य प्रश्नस्य बीजं । द्वितीयस्य तु संन्यासत्यागशब्दयोः पर्यायत्वात्कर्मफलत्यागरूपेण च वैलक्षण्योक्तेः संशयो बीजम् ॥ १ ॥ तत्रान्तिमस्य सूचीकटाहन्यायेन निराकरणायोत्तरं श्रीभगवानुवाच—काम्यानां फलकामनया चोदितानामन्तःकरण-

५ भाष्योत्कर्षदीपिका ।

त्यागशब्दार्थस्य च पृथगन्योन्यविभागतस्तत्त्वं याथात्म्यं वेदितुं ज्ञातुमिच्छामि । हे महाबाहो इति संबोधयन् तव बाहुतो जातैः क्षत्रियैः महाबाहुभिरितरैर्बाह्वादिसाध्ये कर्मण्यधिकृतैरज्ञैश्च कृतस्य संन्यासस्य त्यागस्य च तत्त्वं पृथग्वेदितुमिच्छामीति ध्वनयति । सर्वेन्द्रियनियन्तुरन्तर्यामिणः सर्वज्ञस्य मदभिप्रायानुसारेणैतत्कथनं सुकरमितिद्योतयन्नाह—हृषीकेशेति । स्वजनसुखार्थं केश्यादिदुष्टनिषूदनस्य तव स्वभक्तस्य ममाप्यज्ञाननिषूदनं युक्तमेवेति सूचयन्संबोधयति केशिनिषूदनेति ॥ १ ॥ एवं पृष्टो ज्ञातार्जुनाभिप्रायः सर्वेष्वध्यायेषु तत्रतत्र निर्दिष्टौ संन्यासत्यागशब्दौ न विविक्तार्थावित्यतः प्रश्नौचित्यं मत्वा तन्निर्णयाय श्रीभगवानुवाच । काम्यानां स्वर्गादिकामनाप्रयुक्तानामश्वमेधादीनां कर्मणां न्यासं परित्यागं संन्यासं संन्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तानामनुष्ठानं कवयः पण्डिताः केचिद्विदुर्विजानन्ति । नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसंबन्धितया प्राप्तस्य फलस्य परित्यागः सर्वकर्मफलत्यागः तं त्यागं त्यागशब्दार्थं विचक्षणाः निपुणाः पण्डिताः कथयन्ति । ननु नित्यनैमित्तिकानां कर्मणां फलाभावाद्वन्ध्यापुत्रस्य त्याग इव

६ श्रीधरीव्याख्या ।

मागच्छतोऽत्यन्तं व्यात्ते मुखे वामबाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत्तं विदार्य निषूदितवान् । अतएव हे महाबाहो इतिसंबोधनम् । संन्यासस्य त्यागस्य च तत्त्वं पृथग्विवेकेन वेदितुमिच्छामि ॥ १ ॥ तत्रोत्तरं श्रीभगवानुवाच—काम्यानामिति । 'पुत्रकामो यजेत' 'स्वर्गकामो यजेत' इत्येवमादिकामोपबन्धेन विहितानां काम्यानां कर्मणां न्यासं परित्यागं संन्यासं कवयो

७ अभिनवगुप्ताचार्यव्याख्या ।

संन्यासिनोर्द्वयोः श्रवणाद्विशेषजिज्ञासोरयं प्रश्नः ॥ १ ॥ अत्रोत्तरं श्रीभगवानुवाच—काम्यानामिति । काम्यान्यग्निष्टोमादीनि । सर्वकर्मेति

१ श्रीमच्छांकरभाष्यम् ।

न्यासं परित्यागं संन्यासं संन्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तस्यानुष्ठानं कवयः पण्डिताः केचिद्विदुर्विजानन्ति नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसंबन्धितया प्राप्तस्य फलस्य परित्यागः सर्वकर्मफलत्यागस्तं प्राहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः । यदि काम्यकर्मपरित्यागः फलपरित्यागो वार्थो वक्तव्यः सर्वथा परित्यागमात्रं संन्यासत्यागशब्दयोरेकोऽर्थः स्यात्, न घटपटशब्दाविव जात्यन्तरभूतार्थौ । ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः कथमुच्यते तेषां फलत्याग इति । यथा वन्ध्यायाः पुत्रत्यागः । नैष दोषः, नित्यानामपि कर्मणां भगवता फल-

२ आनन्दगिरिव्याख्या ।

देऽपि नात्यन्तिकभेदोऽस्तीत्याह—यदीति । पुत्राभावाद्वन्ध्यायास्तत्त्यागायोगवन्नित्यनैमित्तिककर्मणामफलानां फलत्यागानुपपत्तेरुक्तस्त्यागशब्दार्थो न सिध्यतीति शङ्कते—नन्विति । नित्यनैमित्तिककर्मफलस्य वन्ध्यापुत्रसादृश्याभावात्त्यागसंभवादुक्तस्त्यागशब्दार्थः संभवतीति समाधत्ते—नैष दोष इति । भगवता तेषां फलवत्त्वमिष्टमित्यत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मणां फलत्यागमेव त्यागं विचक्षणाः प्राहुर्न स्वरूपतस्त्यागं प्राहुः । अतो न त्वदिष्टः संन्यासः सिद्ध्यतीत्यर्थः । अयमाशयः—यद्यपि संन्यासत्यागशब्दौ निवृत्तिमेव ब्रूतः तथापि सा वैराग्याद्वा कायक्लेशभयाद्वा मौढ्याद्वा भवतीति तत्कारणानां सात्त्विकादिभेदेन भिन्नत्वात्तस्या अपि सात्त्विकराजसतामसभेदेन त्रैविध्यं त्रिविधश्रद्धाप्रधानत्वं च दुर्वारम् । नचाविरक्तोऽश्रद्दधानश्च त्यक्तकर्मापि दृष्टविक्षेपहीनो दृश्यते । यथोक्तं वार्तिकाचार्यैः 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः ।' इति । तस्मादविरक्तकृतसंन्यासापेक्षया निष्कामकर्माचरणमेव

४ मधुसूदनीव्याख्या ।

शुद्धावनुपयुक्तानां कर्मणामिष्टिपशुसोमादीनां न्यासं त्यागं संन्यासं विदुर्जानन्ति कवयः सूक्ष्मदर्शिनः केचित् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति वाक्येन वेदानुवचनशब्दोपलक्षितस्य ब्रह्मचारिधर्मस्य यज्ञदानशब्दाभ्यामुपलक्षितस्य गृहस्थधर्मस्य तपोऽनाशकशब्दाभ्यामुपलक्षितस्य वानप्रस्थधर्मस्य नित्यस्य नित्येन नित्यविहितेन पापक्षयेण द्वारेणात्मज्ञानार्थत्वं बोध्यते । नच विनियोगवैयर्थ्यं 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यनेनैव लब्धत्वादिति वाच्यम्, विनियोगाभावे हि सत्यपि नित्यकर्मानुष्ठाने ज्ञानं स्याद्वा न वा स्यात्, सति तु विनियोगे ज्ञानमवश्यं भवेदेवेति नियमार्थत्वात् । तस्मान्नित्यकर्मणामेव वेदने विविदिषायां वा विनियोगात् सत्त्वशुद्धिविविदिषोत्पत्तिपूर्वकवेदनार्थिना नित्यान्येव कर्माणि भगवदर्पणबुद्ध्याऽनुष्ठेयानि । काम्यानि तु सर्वाणि सफलानि परित्याज्यानीत्येकं मतम् । अपरं मतं 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः', 'सर्वेषां काम्यानां नित्यानां च प्रतिपदोक्तफलत्यागं सत्त्वशुद्ध्यर्थितया विविदिषासंयोगेनानुष्ठानं विचक्षणा विचारकुशलास्त्यागं प्राहुः । 'खादिरो यूपो भवति, खादिरं वीर्यकामस्य यूपं करोति' इत्यत्र यथैकस्य खादिरत्वस्य क्रतुप्रकरणपाठात्फलसंयोगाच्च क्रत्वर्थत्वं पुरुषार्थत्वं च प्रमाणभेदात्, तथाऽग्निहोत्रेष्टिपशुसोमानां सर्वेषामपि शतपथपठितानां स्रोतपत्ति-

५ भाष्योत्कर्षदीपिका ।

तेषां फलत्यागासंभवादुक्तस्त्यागशब्दार्थो न युक्त इतिचेदुच्यते । यद्यपि स्वर्गकामः पशुकाम इत्यादिवत् 'संध्यामुपासीत' 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिषु फलविशेषो न श्रूयते तथाप्यपुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्तयितुमशक्नुवन्विधिर्विश्वजिन्न्यायेन किमपि फलमाक्षिपत्येव । श्रूयते च नित्यादिषु फलं 'सर्वे एते पुण्यलोका भवन्ति कर्मणा पितृलोकः, धर्मेण पापमपनुदति' इत्येवमादिषु । वक्ष्यति च भगवान् 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित्' इति । तस्माद्युक्तमुक्तं सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणा इति । नचैवमपि निष्फलेषु कर्मस्वप्रवृत्तिरेव प्राप्तेति वाच्यम् । सर्वेषामपि कर्मणां संयोगपृथक्त्वेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुत्या विविदिषार्थतया विनि-

६ श्रीधरीव्याख्या ।

विदुः सम्यक्फलैः सह सर्वकर्मणामपि न्यासं संन्यासं पण्डिता विदुः जानन्तीत्यर्थः । सर्वेषां काम्यानां नित्यनैमित्तिकानां च कर्मणां फलमात्रत्यागं प्राहुस्त्यागं विचक्षणा निपुणाः नतु स्वरूपतः कर्मत्यागम् । ननु नित्यनैमित्तिकानां फलाश्रवणादविद्यमानस्य फलस्य कथं त्यागः स्यात्, नहि वन्ध्यायाः पुत्रत्यागः संभवति । उच्यते । यद्यपि स्वर्गकामः पशुकाम इत्यादिवत् 'अहरहःसंध्यामुपासीत' 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिषु फलविशेषो न श्रूयते तथाप्यपुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्तयितुमशक्नुवन्विधिः 'विश्वजिता यजेत' इत्यादिष्विव सामान्यतः किमपि फलमाक्षिपत्येव । नचातीव गुरुमतः श्रद्धया स्वसिद्धिरेव विधेः प्रयोजनमिति मन्तव्यम्, पुरुष-

७ अभिनवगुप्ताचार्यव्याख्या ।

सर्वेषां नित्यनैमित्तिककाम्यानां कर्मणां क्रियमाणत्वेऽपि फलत्यागस्त्यागः । अत्र चाध्याये यदवशिष्टमवलम्ब्य वक्तव्यमस्ति तत्प्राक्तनैरेव

१ श्रीमच्छांकरभाष्यम्।

**वक्तव्यत्वेष्टत्वात्। वक्ष्यति हि भगवाननिष्टमिति नतु संन्यासिनामिति च। संन्यासिनामेव हि केवलं कर्मफलासंबन्धं दर्शयन्नसंन्यासिनां नित्यकर्मफलप्राप्तिं 'भवत्यत्यागिनां प्रेत्य' इति दर्शयति**

२ आनन्दगिरिव्याख्या।

वाक्यशेषमनुकूलयति—**वक्ष्यतीति**। तर्हि संन्यासिनामसंन्यासिनां च नित्याद्यनुष्ठायिनामविशेषेण तत्फलं स्यादिति चेन्नैवेत्याह—**नत्विति**। वक्ष्यतीत्यनुकर्षणं चकारार्थः। प्रसक्तस्य वचसोऽर्थं प्रकृतोपयोगित्वेन संगृह्य स्मारयति—**संन्यासिनामिति**॥ २॥ काम्यानि वर्जयित्वा नित्यनैमित्तिकानि फलाभिलाषादृते कर्तव्यानीत्युक्तं पक्षं प्रतिपक्ष-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

श्रेय इत्याशयेन भगवता काम्यकर्मत्यागः संन्यासत्वेन नित्यादिकर्मणां फलानभिसंधानं च त्यागत्वेन स्तूयत इति। तस्मादश्रद्धया कृतः संन्यासोऽप्यसन्नेवेति संन्यासाद्ब्रह्मणः स्थानमिति स्मृतं स्वफलं दातुं न समर्थ इति युक्तमुक्तं भगवता अश्रद्धया कृतं सर्वं व्यर्थमिति। यत्तु नित्यानामेव विविदिषायोगात्काम्यानां स्वरूपतोऽपि त्यागः पूर्वार्ध-स्यार्थः। सर्वेषां कर्मणां फलतस्त्याग इत्युत्तरार्धार्थ इति व्याख्यानं पक्षद्वयप्रदर्शनपरं तदग्रिमेण श्लोकेन पौनरु-

४ मधुसूदनीव्याख्या।

विधिसिद्धानां तत्तत्फलसंयोगः प्रत्येकवाक्येन विविदिषासंयोगश्च यज्ञादिवाक्येन क्रियत इत्युपपन्नं, 'एकस्य तूभयत्वेन संयोग-पृथक्त्वं' इति न्यायात्। तदुक्तं संक्षेपशारीरके 'यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा स्वोत्पत्त्याप्तानसिद्धं पुरुष-विविदिषामात्रसाध्ये युनक्ति' इति। तस्मात्काम्यान्यपि फलाभिसंधिमकृत्वाऽन्तःकरणशुद्ध्ये कर्तव्यानि। नह्यग्निहोत्रादिकर्मणां स्वतः काम्यत्वनित्यत्वरूपो विशेषोऽस्ति पुरुषाभिप्रायभेदकृतस्तु विशेषः फलाभिसंधित्यागे कुतस्त्यः। नित्यकर्मणां च प्राति-स्विकफलसद्भाव 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलं' इत्यत्र वक्ष्यति। नित्यानामेव विविदिषासंयोगेन काम्यानां कर्मणां फलेन सह स्वरूपतोऽपि परित्यागः पूर्वार्धस्यार्थः। काम्यानां नित्यानां च संयोगपृथक्त्वेन विविदिषासंयोगात्तदर्थं स्वरूपतोऽ-नुष्ठानेऽपि प्रातिस्विकफलाभिसन्धिमात्रपरित्याग इत्युत्तरार्धस्यार्थः। तदेतदाहुर्वार्तिककृतः 'वेदानुवचनादीनामैकात्म्यज्ञान-जन्मने। तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः॥ यद्वा विविदिषार्थत्वं सर्वेषामपि कर्मणाम्। तमेतमिति वाक्येन संयो-गस्य पृथक्त्वतः॥' इति। तदेवं सफलकाम्यकर्मत्यागः संन्यासशब्दार्थः। सर्वेषामपि कर्मणां फलाभिसन्धित्यागस्त्यागशब्दार्थ इति न घटपटशब्दयोरिव संन्यासत्यागशब्दयोर्भिन्नजातीयार्थत्वं किंत्वन्तःकरणशुद्ध्यर्थकर्मानुष्ठाने फलाभिसन्धित्याग इत्येक

५ भाष्योत्कर्षदीपिका।

योगात्। तदुक्तं सुरेश्वराचार्यैः 'वेदानुवचनादीनामैक्यात्म्यज्ञानजन्मने। तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः॥ यद्वा विविदिषार्थत्वं सर्वेषामपि कर्मणाम्। तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः॥' इति। तथाच चतुर्थाध्यायस्थं पारमर्षं सूत्रं 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति 'खादिरो यूपो भवति' 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इत्यत्रैकस्य खादिरत्वस्योभयत्वे क्रत्वर्थत्वपुरुषार्थत्वरूपोभयात्मकत्वे वचनद्वयेन क्रतुशेषत्वफलशेषत्वसंयोगभेदावगमान्न नित्यानित्यसंयोगविरोधः तथा सर्वेषां कर्मणां स्वोत्पत्तिविधिसिद्धानां प्रत्येकं वाक्येन तत्तत्फलसंयोगः तमेतमितिवाक्येन विविदिषासंयोगश्च सिध्यत इति॥ २॥ काम्यानि

६ श्रीधरीव्याख्या।

प्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात्। श्रूयते च नित्यादिष्वपि फलम्—'सर्वे एते पुण्यलोका भवन्ति' इति, 'कर्मणा पितृलोकः' इति, 'धर्मेण पापमपनुदति' इत्येवमादिषु। तस्माद्युक्तमुक्तं 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति। ननु फलत्यागेन पुनरपि निष्फलेषु कर्मस्वप्रवृत्तिरेव स्यात्तन्न, सर्वेषामपि कर्मणां संयोगपृथक्त्वेन विविदिषार्थतया विनियोगात्। तथाच श्रुतिः—'तमेतमात्मानं वेदानुवच-नेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति। अतः प्रतिपदोक्तं सर्वं फलं बन्धकत्वेन त्यक्त्वा विविदिषार्थं सर्वक-र्मानुष्ठानं घटत एव। विविदिषा च नित्यानित्यवस्तुविवेकेन निवृत्तदेहाभिमानतया बुद्धेः प्रत्यक्प्रवणता। तावत्पर्यन्तं च सत्त्वशुद्ध्यर्थं ज्ञानाविरुद्धं यथोचितमावश्यकं कर्म कुर्वतस्तत्फलत्याग एव कर्मत्यागो नाम न स्वरूपेण। तथाच श्रुतिः—'कुर्वन्नेवेह कर्माणि जिजीविषे-च्छतं समाः' इति। ततः परं तु सर्वकर्मनिवृत्तिः स्वत एव भवति। तदुक्तं नैष्कर्म्यसिद्धौ—'प्रत्यक्प्रवणता बुद्धेः कर्माण्युत्पाद्य शुद्धितः। कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव' इति। उक्तंच भगवता—'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' इति। वसिष्ठेन चोक्तम्—'न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ। कर्मणो मूलभूतस्य संकल्पस्यैव नाशतः' इति। ज्ञाननिष्ठाविक्षेपकत्वमालक्ष्य त्यजेद्वा। तदुक्तं श्रीभगवता भागवते—'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रव-णादौ वा श्रद्धा यावन्न जायते॥ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः' इत्यादि॥ अल-मतिप्रसङ्गेन। प्रकृतमनुसरामः॥ २॥ अविदुषः फलत्यागमात्रमेव त्यागशब्दार्थो न कर्मत्याग इत्येतदेव मतान्तरनिरासेन दृढीकर्तुं मत-

७ अभिनवगुप्ताचार्यव्याख्या।

तत्रभवद्भट्टभास्करादिभिर्वितत्य विमृष्टमिति किमस्माकं तद्गूढार्थप्रकाशनमात्रप्रतिज्ञानिर्वाहणसाराणां पुनरुक्तप्रदर्शनप्रयासेन॥ २॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे॥ ३॥**

१ श्रीमच्छांकरभाष्यम्।

॥ २॥ त्याज्यं दोषेति। त्याज्यं त्यक्तव्यं दोषवद्दोषोऽस्यास्तीति दोषवत्। किं तत् कर्म बन्धहेतुत्वात्सर्वमेव। अथवा दोषो यथा रागादिस्त्यज्यते तथा त्याज्यमित्येके कर्म प्राहुर्मनीषिणः पण्डिताः सांख्यादिदृष्टिमाश्रिता अधिकृतानां कर्मिणामपीति। तत्रैव यज्ञदानतपःकर्म न त्याज्यमिति चापरे। कर्मिण एवाधिकृतानपेक्ष्यैते विकल्पा नतु ज्ञाननिष्ठाम्व्युत्थायिनः संन्यासिनोऽपेक्ष्य। ज्ञानयोगेन सांख्यानां निष्ठा मया पुरा प्रोक्तेति कर्माधिकारादपोद्धृता ये न तान्प्रति चिन्ता। ननु कर्मयोगेन योगिनामित्यधिकृताः पूर्वं विभक्तनिष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्तामिति। न, तेषां मोहदुःखनिमित्तत्यागानुपपत्तेः। न कायक्लेशनिमित्तानि दुःखानि सांख्या आत्मनि पश्यन्ति, इच्छादीनां क्षेत्रधर्मत्वेनैव दर्शितत्वात्।

२ आनन्दगिरिव्याख्या।

निरासेन द्रढयितुं विप्रतिपत्तिमाह—**त्याज्यमिति**। कर्मणः सर्वस्य दोषवत्त्वे हेतुमाह—**बन्धेति**। दोषवदित्येतद्दृष्टान्तत्वेन व्याचष्टे—**अथवेति**। कर्मण्यनधिकृतानामकर्मिणामेव कर्म त्याज्यं कर्मिणां तत्त्यागे प्रत्यवायादित्याशङ्क्याह—**अधिकृतानामिति**। नहि तेषामपि कर्म त्यजतां प्रत्यवायो हिंसादियुक्तस्य कर्मणोऽनुष्ठाने परं प्रत्यवायादिति भावः। सांख्यादिपक्षसमाप्तावितिशब्दः। मीमांसकपक्षमाह—**तत्रैवेति**। कर्माधिकृतेष्वेवेति यावत्। कर्म नित्यं नैमित्तिकं च। काम्यानां कर्मणामित्यारभ्य श्लोकाभ्यां कर्मिणोऽकर्मिणोऽधिकृताननधिकृतांश्चापेक्ष्य दर्शितविकल्पानां प्रवृत्तिरित्याशङ्क्याह—**कर्मिण इति**। एवकारव्यवच्छेद्यमाह—**नत्विति**। तदेव स्फुटयति—**ज्ञानेति**। कर्माधिकृतानां ज्ञाननिष्ठातो विभक्तनिष्ठावत्त्वेन पूर्वोक्तानामपि शास्त्रार्थोपसंहारे पुनर्विचार्यत्ववज्ज्ञाननिष्ठानामपि विचार्यत्वमत्राविरुद्धमिति शङ्कते—**नन्विति**। सांख्यानां परमार्थज्ञाननिष्ठानां नात्र विचार्यतेत्युत्तरमाह—**न तेषामिति**। ननु तेषामपि स्वात्मनि क्लेशदुःखादि पश्यतां तदनुरोधेन राजसकर्मत्यागसिद्धेर्विचार्यत्वं नेत्याह—**न कायेति**। तत्र क्षेत्राध्यायोक्तं हेतूकरोति—**इच्छादीनामिति**। स्वात्मनि सांख्यादीनां क्लेशाद्यप्रतीतौ फलि-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

त्त्यमावहतीत्युपेक्षितम्॥ २॥ इदमेव पक्षद्वयमाह—**त्याज्यमिति**। एके मुख्याः मनीषिणो मनोनिग्रहसमर्थाः परमात्मनि उत्पन्नविविदिषाणां पुरुषाणां दोषवत् रागादयो यथा त्याज्यास्तद्वत् कर्म त्याज्यमिति प्राहुः। अपरे तु

४ मधुसूदनीव्याख्या।

एवार्थ उभयोरिति निर्णीत एकः प्रश्नोऽर्जुनस्य॥ २॥ अधुना द्वितीयप्रश्नप्रतिवचनाय संन्यासत्यागशब्दार्थस्य त्रैविध्यं निरूपयितुं तत्र विप्रतिपत्तिमाह—सर्वं कर्म बन्धहेतुत्वात् दोषवद्दुष्टमतः कर्माधिकृतैरपि कर्म त्याज्यमेवेत्येके मनीषिणः प्राहुः।

५ भाष्योत्कर्षदीपिका।

वर्जयित्वा नित्यनैमित्तिकानि फलाभिसंधिं विना कर्तव्यानीत्युक्तं पक्षं प्रतिपक्षनिरासेन द्रढयितुं विप्रतिपत्तिमाह—**त्याज्यमिति**। दोषोऽस्यास्तीति दोषवत् बन्धहेतुत्वात्। सर्वमेव कर्म त्याज्यं त्यक्तव्यं दोषो रागादिर्यथा त्यज्यते तद्वत्त्याज्यमिति वा। एके मनीषिणो बुद्धिमन्तः पण्डिताः सांख्यदृष्टिमाश्रिता अधिकृतैः कर्मिभिरपि सर्वं कर्म त्याज्यमिति प्राहुः कथयन्ति। ननु अधिकृतानां कर्मिणां कर्मत्यागं प्रत्यवायजनकं कथं प्राहुरितिचेत् हिंसादियुक्तकर्मत्यागे तेषामपि प्रत्यवायाभावं तदनुष्ठाने परं प्रत्यवायं चाभिप्रेत्येति गृहाण। परे मीमांसकदृष्टिमाश्रिता यज्ञदानतपःकर्म न त्याज्यम् 'अग्नीषोमीयं पशुमालभेत' इत्यादिविधिबोधितहिंसातिरिक्तहिंसानिषेधे 'न हिंस्यात्सर्वाभूतानि' इति वाक्यस्य सार्थक्याद्विधिबोधितं कर्म न प्रत्यवायावहं प्रत्युत विहितत्यागएव प्रत्यवायावह इत्यतः सर्वं कर्म न त्यक्तव्यमिति प्राहुः। अधिकृतान्कर्मिण एवापेक्ष्यैते विकल्पाः नतु ज्ञाननिष्ठान् त्यक्तसर्वपरिग्रहान्। ज्ञानयोगेन सांख्यानां निष्ठा मया प्रोक्तेति कर्माधिकारविनिर्मुक्तान् संन्यासिनोपेक्ष्य। ननु कर्मयोगेन योगिनामित्यधिकृताः कर्म

६ श्रीधरीव्याख्या।

भेदं दर्शयति—**त्याज्यमिति**। दोषवद्धिंसादिदोषवत्त्वेन बन्धकमिति हेतोः सर्वमपि कर्म त्याज्यमित्येके सांख्याः प्राहुर्मनीषिण इत्यस्यार्थं भावः—'न हिंस्यात्सर्वभूतानि' इति निषेधः पुरुषस्यानर्थहेतुर्हिंसेत्याह। 'अग्नीषोमीयं पशुमालभेत' इत्यादिप्राकरणिको विधिस्तु हिंसायाः क्रतूपकारकत्वमाह। अतो भिन्नविषयत्वेन सामान्यविशेषन्यायागोचरत्वाद्बाध्यबाधकता नास्ति। द्रव्यसाध्येषु च सर्वेष्वपि कर्मसु हिंसादेः संभवात्सर्वमपि कर्म त्याज्यमेवेति। तदुक्तम्—'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति। अस्यार्थः—उपायो ज्योतिष्टोमादिः

७ अभिनवगुप्ताचार्यव्याख्या।

तदत्रैव विशेषनिर्णयाय मतान्युपन्यस्यति—त्याज्यं दोषवदित्यादिना। दोषवद्धिंसादिसत्त्वात्पापयुक्तं तत्फलं त्याज्यं न सर्वं शुभफलमिति

१ श्रीमच्छांकरभाष्यम् ।

**अतस्ते न कायक्लेशदुःखभयात्कर्म परित्यजन्ति । नापि ते कर्माण्यात्मनि पश्यन्ति । येन नियतं कर्म मोहात्परित्यजेयुः । गुणानां कर्म नैव किंचित्करोमीति हि ते संन्यस्यन्ति । सर्वकर्माणि मनसा संन्यस्येत्यादिभिर्हि तत्त्वविदः संन्यासप्रकार उक्तः । तस्माद्येऽन्येऽधिकृताः कर्मण्यनात्मविदो येषां च मोहात्त्यागः संभवति कायक्लेशभयाच्च त एव तामसास्त्यागिनो राजसाश्चेति निन्द्यन्ते कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थम् । सर्वारम्भपरित्यागी मौनी संतुष्टो येन केनचिदनिकेतः स्थिरमतिरिति गुणातीतलक्षणे च परमार्थसंन्यासिनो विशेषितत्वात् । वक्ष्यति च ज्ञानस्य या परा, निष्ठेति । तस्माज्ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः । कर्मफलत्याग एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यास उच्यते न मुख्यः सर्वकर्मसंन्यासः । सर्वकर्मसंन्यासासंभवे च नहि देहभृतेति हेतुवचनान्मुख्य एवेति चेत् । न, हेतुवचनस्य स्तुत्यर्थत्वात् । यथा त्यागाच्छान्तिरनन्तरमिति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तमर्जुनमज्ञं प्रति विधानात्तथे-**

२ आनन्दगिरिव्याख्या ।

तस्माह—**अत इति** । ननु तेषां क्लेशाद्यदर्शनेऽपि स्वात्मनि कर्माणि पश्यतां तत्त्यागो युक्तस्तेषां कायक्लेशादिकरत्वान्नेत्याह—**नापीति** । अज्ञानां मोहमाहात्म्यान्नियतमपि कर्म त्यक्तुं शक्यं न तत्त्वविदां स्वात्मनि कर्मादर्शनेन तत्त्यागे हेत्वभावादिति मत्वाह—**मोहादिति** । कथं तर्हि तेषामात्मनि कर्माण्यपश्यतां ग्राह्यभावे तत्त्यागः संन्यासस्तत्राह—**गुणानामिति** । अविवेकप्राप्तानां कर्मणां त्यागस्तत्त्वविदामित्युक्तं स्मारयन्नप्राप्तप्रतिषेधं प्रत्यादिशति—**सर्वेति** । तत्त्वविदामत्राविचार्यत्वे फलितमाह—**तस्मादिति** । येऽनात्मविदस्त एवेत्युत्तरत्र संबन्धः । कर्मण्यधिकृतानामनात्मविदां कर्मत्यागसंभावनां दर्शयति—**येषां चेति** । तन्निन्दा कुत्रोपयुक्तेत्याशङ्क्याह—**कर्मिणामिति** । किंच परमार्थसंन्यासिनां प्रशस्तत्वोपलम्भान्न निन्दाविषयत्वमित्याह—**सर्वेति** । किंचात्रापि सिद्धिं प्राप्तो यथेत्यादिना ज्ञाननिष्ठाया वक्ष्यमाणत्वात्तद्वतां नेह विचार्यतेत्याह—**वक्ष्यतीति** । कर्माधिकृतानामेवात्र विवक्षितत्वं न ज्ञाननिष्ठानामित्युपसंहरति—**तस्मादिति** । ननु संन्यासशब्देन सर्वकर्मसंन्यासस्य ग्राह्यत्वात्तथाविधसंन्यासिनामिह विवक्षितत्वं प्रतिभाति तत्राह—**कर्मेति** । संन्यासशब्देन मुख्यस्यैव संन्यासस्य ग्रहणं गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययादन्यथा तदसंभवे हेतूक्तिवैयर्थ्यादप्राप्तप्रतिषेधादिति शङ्कते—**सर्वेति** । नेदं हेतुवचनं सर्वकर्मसंन्याससंभवसाधकं कर्मफलत्यागस्तुतिपरत्वादिति परिहरति—**नेत्यादिना** । एतदेव दृष्टान्तेन स्पष्टयति—**यथेति** । दृष्टान्तेऽपि यथाश्रुतार्थत्वं किं न स्यादित्याशङ्क्याह—**यथोक्तेति** । नहि फलत्यागादेव ज्ञानं विना

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विविदिषार्थिना यज्ञादिकं न त्याज्यमिति वा प्राहुरित्यनुवर्तते । तथाच द्विविधाः श्रुतय उपलभ्यन्ते 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्याद्याः । अविद्वद्विषयमेवैत-

४ मधुसूदनीव्याख्या ।

यद्वा दोषवद्दोष इव यथा दोषो रागादिस्त्यज्यते तद्वत्कर्म त्याज्यमनुत्पन्नबोधैरनुत्पन्नविविदिषैः कर्माधिकारिभिरपीत्येकः पक्षः ।

५ भाष्योत्कर्षदीपिका ।

कुर्वन्तः पूर्वं विभक्तनिष्ठा अपि इह शास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्ताम् । एवंच संन्यासिनोपेक्ष्य नह्येते विकल्पा इत्युक्तमनुपपन्नमितिचेन्न गुणानां कर्म । 'नैव किंचित्करोमीति' 'कर्माण्यात्मन्यपश्यन्त' इच्छादीनि च क्षेत्रधर्मत्वेनैव पश्यन्तो नियतं कर्म मोहात्परित्यजन्ति कायक्लेशदुःखभयाद्वा कर्म परित्यजन्तीति वक्तुमशक्यत्वेन तेषां मोहदुःखनिमित्तत्यागानुपपत्तेः । 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । नवद्वारे पुरे देही नैव कुर्वन्न कारयन्' इत्यादिभिस्तत्त्वविदां संन्यासप्रकारस्योक्तत्वाच्च । ननूदाहृतवचने मनसेत्युक्तत्वात् न कायिकादीनां संन्यासः, सर्वकर्माणीति विशेषितत्वात्सर्वेषामिति चेन्न । मानसानामेव सर्वेषामिति तदर्थात् । कायादिव्यापाराणां कारणानि वर्जयित्वाऽन्यानि सर्वाणि कर्माणि मनसा संन्यस्येति तदर्थो ग्राह्य इति चेन्न । उक्तकुकल्पनया नैव कुर्वन्न कारयन्निति विशेषणानर्थक्यप्रसङ्गात् । ननु सर्वकर्मसंन्यासोयं मरिष्यतो भगवतोक्तो न जीवत इतिचेन्न । नवद्वारे पुरे देही आस्त इति विशेषणानुपपत्तेस्तस्मादुदाहृतवचनादिभिस्तत्त्वविदः संन्यासप्रकारस्योक्तत्वात् ।

६ श्रीधरीव्याख्या ।

सोऽपि दृष्टोपायवद्गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदस्तद्बोधितः । तत्राविशुद्धिर्हिंसा तया क्षयो विनाशः । अग्निहोत्रज्योतिष्टोमादिजन्यस्वर्गेषु तारतम्यं च वर्तते । परोत्कर्षस्तु सर्वान्दुःखीकरोति । अपरे तु मीमांसका यज्ञादिकं कर्म न त्याज्यमिति प्राहुः । अयं भावः—क्रत्वर्थापि सतीयं हिंसा पुरुषेणैव कर्तव्या सा चान्योद्देशेनापि कृता पुरुषस्य प्रत्यवायहेतुरेव । तथाहि विधिर्विधेयस्य तदुद्देशेनानुष्ठानं विधत्ते तादर्थ्यलक्षण-

७ अभिनवगुप्ताचार्यव्याख्या ।

केचित्त्यागे विशेषं मन्यन्ते सांख्यगृह्या इव । अन्येतु मीमांसककञ्चुकानुप्रविष्टाः क्रत्वर्थो हि शास्त्रादवगम्यत इति । तथा 'तस्माद्या वैदिकी

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**दमपि नहि देहभृता शक्यमिति कर्मफलत्यागस्तुत्यर्थं वचनम् । न सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्त इत्यस्य पक्षस्यापवादः केनचिद्दर्शयितुं शक्यः । तस्मात्कर्मण्यधिकृतान्प्रत्येवैष संन्यासत्यागविकल्पः । ये तु परमार्थदर्शिनः सांख्यास्तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायामधिकारो नान्यत्रेति न ते विकल्पार्हाः । तथोपपादितमस्माभिर्वेदाविनाशिनमित्यस्मिन्प्रदेशे तृतीयादौ च ॥ ३ ॥ तत्रैतेषु विकल्पभेदेषु—निश्चयं शृण्ववधारय मे मम वचनात्तत्र त्यागे त्याग-**

२ आनन्दगिरिव्याख्या ।

मुक्तिर्युक्ता मुक्तेर्ज्ञानैकाधीनत्वसाधकश्रुतिस्मृतिविरोधाददृष्टेत्यादिना चानन्तरमेव ज्ञानसाधनविधानानर्थक्यादतस्त्यागस्तुतिरेवात्र ग्राह्येत्यर्थः । दृष्टान्तगतमर्थं दार्ष्टान्तिके योजयति—**तथेति** । प्रागुक्तपक्षापवादविवक्षया हेतूक्तेर्मुख्यार्थत्वमेव किं न स्यादित्याशङ्क्य तदपवादे हेत्वभावान्मैवमित्याह—**न सर्वेति** । न चेयमेव हेतूक्तिस्तदपवादिकान्यथासिद्धेरुक्तत्वादिति भावः । मुख्यसंन्यासापवादासंभवे संन्यासत्यागविकल्पस्य कथं सावकाशतेत्याशङ्क्याह—**तस्मादिति** । ज्ञाननिष्ठान्प्रत्युक्तविकल्पानुपपत्तौ कुत्र तेषामधिकारस्तत्राह—**ये त्विति** । संन्यासिनां विकल्पानर्हत्वेन ज्ञाननिष्ठायामेवाधिकारस्य भूयःसु प्रदेशेषु साधितत्वान्न साधनीयत्वापेक्षेत्याह—**तथेति** ॥ ३ ॥ कर्माधिकृतान्प्रत्येवोक्तविकल्पप्रवृत्तावपि कुतो निर्धारणसिद्धिस्तत्राह—**तत्रेति** । तमेव निश्चयं दर्शयितुमादौ त्यागगतमवान्तरविभागमाह—**त्यागो हीति** । ननु त्यागसंन्यासयोरुभयोरपि प्रकृतत्वाविशेषे त्यागस्यैवावान्तरविभागाभिधाने

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्पक्षद्वयम् । विदुषां तु कर्मसु प्रवृत्तिकारणस्याज्ञानस्य नष्टत्वात्स्वतःसिद्ध एव त्याग इति न तान्प्रति कर्मविधिर्वा तत्त्यागविधिर्वा प्रवर्तते । यथोक्तं 'न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ' इति ॥ ३ ॥ **निश्चयमिति** । तत्र कर्मणां त्यागात्त्यागविषये विप्रतिपत्तौ सत्यां प्रथमोपात्ते त्यागेविषये मे मद्वचनान्निश्चयं शृणु । हि यस्मात् हे

४ मधुसूदनीव्याख्या ।

अत्र द्वितीयः पक्षः कर्माधिकारिभिरन्तःकरणशुद्धिद्वारा विविदिषोत्पत्त्यर्थं यज्ञदानतपःकर्म न त्याज्यमिति चापरे मनीषिणः प्राहुः ॥ ३ ॥ एवं विप्रतिपत्तौ तत्र त्वया पृष्टे कर्माधिकारिकर्तृके संन्यासत्यागशब्दाभ्यां प्रतिपादिते त्यागे फलाभिसन्धिपूर्वककर्मत्यागे मे मम वचनान्निश्चयं पूर्वाचार्यैः कृतं शृणु । हे भरतसत्तम, किं तत्र दुर्ज्ञेयमस्तीत्यत आह—हे पुरुषव्याघ्र पुरुषश्रेष्ठ, हि यस्मात् त्यागः कर्माधिकारिकर्तृकः फलाभिसन्धिपूर्वककर्मत्यागस्त्रिविधस्त्रिप्रकारस्तामसादिभेदेन संप्रकीर्तितः । अथवा विशिष्टाभावरूपस्त्यागो विशेषणाभावाद्विशेष्याभावादुभयाभावाच्च त्रिविधः संप्रकीर्तितः । तथाहि फलाभिसन्धिपूर्वक-

५ भाष्योत्कर्षदीपिका ।

तेषां मोहादिनिमित्तत्यागानुपपत्तेश्च कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थं ये कर्मण्यधिकृता अनात्मविदो येषां च मोहात्कायक्लेशभयाच्च त्यागः संभवति तएव तामसास्त्यागिनो राजसाश्चेति निन्द्यन्ते । 'मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येनकेनचित् । अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः' इत्यादिना चतुर्दशद्वादशादौ परमार्थसंन्यासिनो विशेषितत्वात् । ज्ञानस्य या परा निष्ठेति वक्ष्यमाणत्वाच्च । ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः किंत्वतत्त्वविदः संन्यासिनस्तामसत्वाद्यपेक्षया सात्त्विकत्वेन गुणेन स्तूयन्ते । नच 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इति हेतुवचनेन मुख्य एवायं संन्यास इति भ्रमितव्यम् । त्यागाच्छान्तिरनन्तरमितिवद्धेतुवचनस्तुत्यर्थत्वादिति संक्षेपः ॥ ३ ॥ एवं मतभेदेन संन्यासत्यागशब्दार्थयोस्तत्त्वं पृथगुक्त्वा स्वाभिमतं तयोरैक्यं दर्शयितुमाह—**निश्चयमिति** । तत्र त्यागे त्यागसंन्यासविकल्पे मे मम वचनान्निश्चयं शृण्ववधारय । त्यागसंन्यासवाच्यो योर्थः स एकएवेत्यभिप्रेत्याह । त्यागस्त्रिविधः त्रिप्रकारः तामसादिप्रकारैः संप्रकीर्तितः सम्यक्शास्त्रेषु कथितः हि यस्मात्त्यागसंन्यासशब्दवाच्योऽर्थोऽधिकृतस्य कर्मिणोऽनात्मज्ञस्य तामसादिभेदेन त्रिविधः शास्त्रेषु संप्रकीर्तितः सर्वशास्त्रज्ञादीश्वरादन्येन वक्तुमशक्यः । तस्मादत्र दुर्विज्ञानेऽर्थे परमार्थशास्त्रार्थविषयमैश्वरं

६ श्रीधरीव्याख्या ।

त्वाच्छेषत्वस्य । नत्वेवं निषेधो निषेधस्य तादर्थ्यमपेक्षते, प्राप्तिमात्रापेक्षितत्वात् । अन्यथाज्ञानप्रमादादिकृते दोषाभावप्रसङ्गात् । तदेवं समानविषयत्वेन सामान्यशास्त्रस्य विशेषेण बाधान्नास्ति दोषवत्त्वमतो नित्यं यज्ञादिकर्म न त्याज्यमिति अनेन विधिनिषेधयोः समानबलता वार्यते सामान्यविशेषन्यायं संपादयितुम् ॥ ३ ॥ एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह—**निश्चयमिति** । तत्रैवं विप्रतिपन्ने त्यागे निश्चयं मे वचना-

७ अभिनवगुप्ताचार्यव्याख्या ।

हिंसा' इत्यादिनयेनेतिकर्तव्यतांशभागिनी हिंसैव न भवति । न हिंस्यादिति सामान्यशास्त्रस्य तत्रा बाधनात् श्येनादेव तु हिंसा 'फलांशे

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**संन्यासविकल्पे यथादर्शिते भरतसत्तम भरतानां साधुतम । त्यागो हि त्यागसंन्यासशब्दवाच्यो हि योऽर्थः स एक एवेत्यभिप्रेत्याह—त्यागो हीति । पुरुषव्याघ्र, त्रिविधस्त्रिप्रकारस्तामसादिप्रकारैः संप्रकीर्तितः शास्त्रेषु सम्यक्कथितः । यस्मात्तामसादिभेदेन त्यागसंन्यासशब्दवाच्योऽर्थोऽधिकृतस्य कर्मिणोऽनात्मज्ञस्य त्रिविधः संभवति न परमार्थदर्शिन इत्ययमर्थो दुर्ज्ञानस्तस्मादत्र तत्त्वं नान्यो वक्तुं समर्थः । तस्मान्निश्चयं परमार्थशास्त्रार्थविषयमध्यवसायमैश्वरं शृणु ॥ ४ ॥ कः पुनरसौ निश्चय इत्याह—यज्ञ इति । यज्ञो दानं तप इत्येतत्त्रिविधं कर्म न त्याज्यं न त्यक्तव्यं कार्यं करणीयमेव तत् ।**

२ आनन्दगिरिव्याख्या ।

संन्यासस्योपेक्षितत्वमापद्येत नेत्याह—**त्यागेति** । सात्त्विको राजसस्तामसश्चेत्युक्तेऽर्थे त्रैविध्येऽपि स्वयमेव निश्चयासंभवात्किमत्र भागवतेन निश्चयेनेत्याशङ्क्याह—**यस्मादिति** । भगवतोऽन्येनोक्तविभागे तत्त्वानिश्चयाद्भागवत-निश्चयस्य श्रोतव्यतेति निगमयति—**तस्मादिति** ॥ ४ ॥ तमेव भगवतो निश्चयं विशेषतो निर्धारयितुं प्रश्नपूर्वक-मनन्तरश्लोकप्रवृत्तिं दर्शयति—**कः पुनरिति** । यज्ञादीनां कर्तव्यत्वे हेतुमाह—**यज्ञ इति** । न केवलमत्याज्यं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पुरुषव्याघ्र, त्यागः त्रिविधः सात्त्विकराजसतामसभेदेन त्रिप्रकारः परिकीर्तितः शास्त्रे । दृढवैराग्यपूर्वकः कर्मसंन्यासः सात्त्विकः, आयासभयात्तत्त्यागो राजसः, मौढ्यात्तत्त्यागस्तामस इति, तस्माद्गहनत्वात्त्यागो निश्चयेन विचारणीय इत्यर्थः ॥ ४ ॥ सूचीकटाहन्यायेन त्यागस्वरूपकथनात्प्राक् परमतमत्यागपक्षं उपन्यस्यति—**यज्ञेति** । यज्ञादिकं कर्म न त्याज्यं किंतु कार्यमेव विधिगृहीततेनेव पुंसा अवश्यमनुष्ठेयमेव तत् । अकरणे प्रत्यवायश्रवणात् । चकारो

४ मधुसूदनीव्याख्या ।

कर्मत्यागः सत्यपि कर्मणि फलाभिसन्धित्यागादेकः, सत्यपि फलाभिसन्धौ कर्मत्यागाद्द्वितीयः, फलाभिसन्धेः कर्मणश्च त्यागात्तृतीयः । तत्र प्रथमः सात्त्विक आदेयः । द्वितीयस्तु हेयो द्विविधः, दुःखबुद्ध्या कृतो राजसः, विपर्यासेन कृतस्तामसः । एतावान्कर्माधिकारिकर्तृकस्त्यागोऽर्जुनस्य प्रश्नविषयः । तृतीयस्तु कर्मानधिकारिकर्तृको नैर्गुण्यरूपो नार्जुनप्रश्नविषयः । सोऽपि साधनफलभेदेन द्विविधः । तत्र सात्त्विकेन फलाभिसन्धित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिष-स्यात्मज्ञानसाधनश्रवणाख्यवेदान्तविचारस्य फलाभिसन्धिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य कर्मणो वैतुष्ये जात इवावहननस्य परित्यागः स एकः साधनभूतो विविदिषासंन्यास उच्यते, तमग्रे नैष्कर्म्यसिद्धिं परमामिति वक्ष्यति । द्वितीयस्तु जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिञ्जन्मन्यादावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसन्धेः कर्मणश्च परित्यागः फलभूतः स विद्वत्संन्यास इत्युच्यते । स तु यस्त्वात्मरतिरेव स्यादित्यादि श्लोकाभ्यां प्राग्व्याख्यातः, स्थितप्रज्ञलक्षणादिभिश्च बहुधा प्रपञ्चितः । यस्मादेवं त्यागस्य तत्त्वं दुर्ज्ञेयं त्वया चोक्तं तत्त्वं वेदितुमिच्छामीति, अतो मम सर्वज्ञस्य वचनाद्विद्धीत्यभि-प्रायः । संबोधनद्वयेन कुलनिमित्तोत्कर्षः पौरुषनिमित्तोत्कर्षश्च योग्यतातिशयसूचनायोक्तः ॥ ४ ॥ कोऽसौ निश्चयो विप्रतिपत्ति-कोटिभूतयोः पक्षयोर्द्वितीयः पक्ष इत्याह द्वाभ्याम्—चो हेतौ । यस्माद्यज्ञदानतपांसि मनीषिणामकृतफलाभिसन्धीनां पावनानि ज्ञानप्रतिबन्धकपापमलक्षालनेन ज्ञानोत्पत्तियोग्यतारूपपुण्यगुणाधानेन च शोधकानि अकृतफलाभिसन्धीनामेव यज्ञदानतपांस्येव

५ भाष्योत्कर्षदीपिका ।

निश्चयमध्यवसायं शृणु । भरतानां क्षत्रियवराणां मध्ये सत्तम साधुतमेति संबोधयन् क्षत्रियवरैः कर्तव्ये त्यागे संन्यासे च मयो-च्यमानं निश्चयं शृण्विति ध्वनयति । न केवलं क्षत्रियवरैरेव कर्तव्ये त्यागसंन्यासशब्दार्थे निश्चयो मयोच्यतेऽपितु पुरुषश्रेष्ठैरन्यैरपि कर्माधिकृतैरन्यैः कर्तव्ये तस्मिन्निति ध्वनयन् संबोधयति पुरुषव्याघ्रेति ॥ ४ ॥ प्रतिज्ञातं निश्चयं प्रदर्शयन् तत्र हेतुमाह—यज्ञो दानं तप इत्येतत्त्रिविधं कर्म न त्याज्यं न त्यक्तव्यम् । व्यतिरेकेणोक्तमर्थमन्वयेन द्रढयति । कार्यमेव तत् त्रिविधं कर्म करणीयमेव ।

६ श्रीधरीव्याख्या ।

च्छृणु । त्यागस्य लोकप्रसिद्धत्वात्किमत्र श्रोतव्यमिति मावमंस्था इत्याह—हे पुरुषव्याघ्र पुरुषश्रेष्ठ, त्यागोऽयं दुर्बोधः । हि यस्मादयं कर्मत्याग-स्तत्त्वविद्भिस्तामसादिभेदेन त्रिविधः सम्यग्विवेकेन प्रकीर्तितः । त्रैविध्यं च 'नियतस्य तु संन्यासः कर्मणः' इत्यादिना वक्ष्यति ॥ ४ ॥ प्रथमं तावन्निश्चयमाह—**यज्ञदानेति द्वाभ्याम्** । मनीषिणां विवेकिनां पावनानि चित्तशुद्धिकराणि ॥ ५ ॥ येन प्रकारेण कृतान्येतानि पावनानि

७ अभिनवगुप्ताचार्यव्याख्या ।

भावनायाश्च प्रत्ययोऽनुविधायकः' इति । अन्यान् यज्ञादीन् हिंसादियोगिनोऽपि न त्यजेत् । शास्त्रैकशरणकार्याकार्यविभागाः पण्डिताइति

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ ६॥**

१ श्रीमच्छांकरभाष्यम्।

कस्माद् यज्ञो दानं तपश्चैव पावनानि विशुद्धिकारणानि मनीषिणां फलानभिसंधीनामित्येतत्॥ ५॥ एतान्यपीति। एतान्यपि तु कर्माणि यज्ञदानतपांसि पावनान्युक्तानि सङ्गमासक्तिं तेषु त्यक्त्वा, फलानि च तेषां त्यक्त्वा परित्यज्य कर्तव्यान्यनुष्ठेयानीति मे मम निश्चितं मतमुत्तमम्। निश्चयं शृणु मे तत्रेति प्रतिज्ञाय पावनत्वं च सहेतुकमुक्त्वैतान्यपि कर्माणि कर्तव्यानीत्येतन्निश्चितं मतमुत्तममिति प्रतिज्ञातार्थोपसंहार एव नापूर्वार्थं वचनम्, एतान्यपीति प्रकृतसंनिकृष्टार्थतोपपत्तेः। सासङ्गस्य फलार्थिनो बन्धहेतव एतान्यपि कर्माणि मुमुक्षोः कर्तव्यानीत्यपिशब्दस्यार्थो न त्वन्यानि कर्माण्यपेक्ष्यैतान्यपीत्युच्यते। अन्ये वर्णयन्ति नित्यानां कर्मणां फलाभावात्सङ्गं त्यक्त्वा फलानि चेति नोपपद्यते। एतान्यपीति यानि काम्यानि कर्माणि नित्येभ्योऽन्यान्येतान्यपि कर्तव्यानि किमुत

२ आनन्दगिरिव्याख्या।

किंतु कर्तव्यमेवेत्याह—**कार्यमिति**। प्रतिज्ञातमेवं विभज्य हेतुं विभजते—**कस्मादिति**॥ ५॥ प्रतिज्ञातमर्थमुपसंहरति—**एतान्यपीति**। उपसंहारश्लोकाक्षराणि व्याकरोति—**एतानीत्यादिना**। अक्षरार्थमुक्त्वा तात्पर्यार्थमाह—**निश्चयमिति**। प्रकृतार्थोपसंहारे गमकमाह—**एतान्यपीति**। अपिशब्दस्य विवक्षितमर्थं दर्शयति—**सासङ्गस्येति**। व्यावर्त्यं कीर्तयति—**नत्विति**। एतान्यपीत्यादिवाक्यं न नित्यकर्मविषयमिति मतमुपन्यस्यति—**अन्य इति**। न चेदिदं नित्यकर्मविषयं किंविषयं तर्हीत्याशङ्क्य वाक्यमवतार्य व्याकरोति—**एतानीत्यादिना**।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

हेत्वर्थः। यस्माद्यज्ञो दानं तपश्चैव मनीषिणां निष्कामानां दम्भादिरहितानां पावनानि चित्तशोधकानि। तथाच श्रुतिः 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तपएव द्वितीयो ब्रह्मचर्याचार्यकुलवासी तृतीयः सर्व एते पुण्यलोका भवन्ति' इति यज्ञादीनां गृहस्थधर्माणां तपसो वनस्थधर्मस्याचार्यकुलवासस्य ब्रह्मचारिधर्मस्य च पावनत्वं दर्शयति। अत्रापि यज्ञदानशब्देन गृहस्थधर्मा ज्ञेयाः, तप इति वानप्रस्थधर्माः, परिशेषात्कर्मेति ब्रह्मचारिधर्माश्च ज्ञेयाः॥ ५॥ एवमत्यागपक्षमुक्त्वा औत्सुक्यात्प्रथमं स्वाभिमतं त्यागात्यागसमुच्चयपक्षं दर्शयति—**एतानीति**। तुशब्दः पूर्वोपन्यस्तात्पक्षाद्वैलक्षण्यं दर्शयति। अपिशब्द एवशब्दार्थः। एतान्येव कर्माणि यज्ञदानतपांसि सङ्गं त्यक्त्वा अहमेतेषां कर्ता मयावश्यमेतानि कर्तव्यानीत्यभिमानं वयोवर्णाद्यध्यासनिमित्तं त्यक्त्वा एतैः कृतैरहं स्वर्गं वा चित्तशुद्धिं वा ज्ञानं वा प्राप्स्यामीति फलानि च त्यक्त्वा, चकारादेषामकरणे मम प्रत्यवायो भविष्यतीत्येतमप्य-

४ मधुसूदनीव्याख्या।

शोधकानि भवन्त्येव। उपाधिशुद्ध्यैवोपहितशुद्धिरत्राभिप्रेता। तस्मादन्तःकरणशुद्ध्यर्थिभिः कर्माधिकृतैर्यज्ञो दानं तप इति यत् फलाभिसंधिरहितं कर्म तन्न त्याज्यं किंतु कार्यमेव तत्। अत्याज्यत्वेन कार्यत्वे लब्धेऽप्यत्यादरार्थं पुनः कार्यमेवेत्युक्तम्। यस्मात्कार्यं कर्तव्यतया विहितं तस्मान्न त्याज्यमेवेति वा॥ ५॥ यदि यज्ञदानतपसामन्तःकरणशोधने सामर्थ्यमस्ति तर्हि फलाभिसन्धिना कृतान्यपि तानि तच्छोधकानि भविष्यन्ति कृतं फलाभिसन्धित्यागेनेत्यत आह—तुशब्दः शङ्कानिराकरणार्थः। यद्यपि काम्यान्यपि शुद्धिमादधति धर्मत्वाभाव्यात्तथापि सा तत्फलभोगोपयोगिन्येव न ज्ञानोपयोगिनी। तदुक्तं वार्तिककृद्भिः 'काम्येऽपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा। विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते फलं' इति। ज्ञानोपयोगिनीं तु शुद्धिमादधति यानि यज्ञादीनि कर्माणि एतानि फलाभिसन्धिपूर्वकत्वेन बन्धनहेतुभूतान्यपि मुमुक्षुभिः सङ्गमहमेवं करोमीति कर्तृत्वाभि-

५ भाष्योत्कर्षदीपिका।

चो हेतौ। यस्माद्यज्ञदानतपांस्येव पावनानि विशुद्धिकराणि। पावनान्येवेति वा। मनीषिणां कुशलानां फलाभिसंधिरहितानाम्॥ ५॥ प्रतिज्ञातमर्थमुपसंहरति। एतानि यज्ञदानतपांसि ससङ्गस्य फलार्थिनो बन्धहेतवोऽपि कर्माणि मुमुक्षुभिः सङ्गं कर्तृत्वाभिनिवेशं फलानि च त्यक्त्वा परित्यज्य चित्तशुद्ध्यर्थं कर्तव्यानीत्येतन्निश्चितं मम परमेश्वरस्य वासुदेवस्य मतम्। यतो ममेदं निश्चितमत उत्तमं सर्वोत्कृष्टम्। उत्तमत्वान्मम निश्चितमिति वा। त्वया तु मत्संबन्धिना मदीयं निश्चितं मतमेवोपादेयमिति सूचनाय संबो-

६ श्रीधरीव्याख्या।

भवन्ति तं प्रकारं दर्शयन्नाह—**एतानीति**। यानि यज्ञादिकर्माणि मया पावनानीत्युक्तं एतान्येव कर्तव्यानि। कथम्। सङ्गं कर्तृत्वाभिनिवेशं

७ अभिनवगुप्ताचार्यव्याख्या।

मन्यन्ते। तत्र त्वयं निश्चय। प्रागलक्षितगुणस्वरूपवैचित्र्यात्त्यागस्यैव सत्त्वरजस्तमोमय्या चित्तवृत्त्या क्रियमाणस्य तद्विशिष्टस्वभाव-

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते।**
**मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥ ७॥**

१ श्रीमच्छांकरभाष्यम्।

यज्ञदानतपांसि नित्यानीति। तदसत्, नित्यानामपि कर्मणां फलवत्त्वस्योपपादितत्वात्। यज्ञो दानं तपश्चैव पावनानीत्यादिवचनेन नित्यान्यपि कर्माणि बन्धहेतुत्वाशङ्कया जिहासोर्मुमुक्षोः कुतः काम्येषु प्रसङ्गः 'दूरेण ह्यवरं कर्म' इति च निन्दितत्वात्, 'यज्ञार्थात्कर्मणोऽन्यत्र' इति च काम्यकर्मणां बन्धहेतुत्वस्य निश्चितत्वात्। 'त्रैगुण्यविषया वेदाः', 'त्रैविद्या मां सोमपाः', 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति च दूरव्यवहितत्वाच्च न काम्येष्वेतान्यपीति व्यपदेशः॥ ६॥ तस्मादज्ञस्याधिकृतस्य मुमुक्षोः—नियतस्य तु नित्यस्य संन्यासः परित्यागः कर्मणो नोपपद्यतेऽज्ञस्य पावनत्वस्ये-

२ आनन्दगिरिव्याख्या।

नित्यानामफलत्वमुपेत्य यच्चोद्यं तदयुक्तमिति दूषयति—**तदसदिति**। यत्तु काम्यान्यपि कर्तव्यानीति तन्निरस्यति—**नित्यान्यपीति**। किंच काम्यानां भगवता निन्दितत्वान्न तेषु मुमुक्षोरनुष्ठानमित्याह—**दूरेणेति**। किंच मुमुक्षोरपेक्षितमोक्षापेक्षया विरुद्धफलत्वात्काम्यकर्मणां न तेषु तस्यानुष्ठानमित्याह—**यज्ञार्थादिति**। काम्यानां बन्धहेतुत्वं निश्चितमित्यत्रैव पूर्वोत्तरवाक्यानुकूल्यं दर्शयति—**त्रैगुण्येति**। किंच पूर्वश्लोके यज्ञादिनित्यकर्मणां प्रकृतत्वादेतच्छब्देन संनिहितवाचिना परामर्शात्काम्यकर्मणां च 'काम्यानां कर्मणाम्' इति व्यवहितानां संनिहितपरामर्शैकैतच्छब्दाविषयत्वान्न काम्यकर्माण्येतान्यपीति व्यपदेशमर्हतीत्याह—**दूरेति**॥ ६॥ नित्यकर्मणामवश्यकर्तव्यत्वमुक्तमुपजीव्यापेक्षितं पूरयन्ननन्तरश्लोकमवतारयति—**तस्मादिति**। ननु कश्चिन्नियतमपि कर्म त्यजन्नुपलभ्यते

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

भिसन्धिं त्यक्त्वा ब्रह्मनिष्ठेनेवासङ्गस्वभावेन पुरुषेण कर्तव्यानीति एवंप्रकारं मे मम मतं उत्तमं पूर्वमताच्छ्रेष्ठम्। तत्रहि कर्तृत्वाभिमानरूपेण सङ्गेन प्रत्यवायोत्पादभयाच्च कर्मानुष्ठानं विहितम्। अत्र तु तदभावादसङ्गत्वाद्यंशेन कर्मणां त्यागः स्वरूपेणात्याग इति भेदः॥ ६॥ प्राक् प्रतिज्ञातं त्यागत्रैविध्यमाह—**नियतस्येति**। तुशब्दः

४ मधुसूदनीव्याख्या।

निवेशं फलानि चाभिसन्धीयमानानि त्यक्त्वाऽन्तःकरणशुद्धये कर्तव्यानीति मे मम निश्चितम्। अतएव हे पार्थ, कर्माधिकृतैः कर्माणि त्याज्यानि न त्याज्यानि वेति द्वयोर्मतयोर्न त्याज्यानीति मम निश्चितं मतमुत्तमं श्रेष्ठम्। यदुक्तं निश्चयं शृणु मे तत्रेति सोऽयं निश्चय उपसंहृतः 'भगवत्पूज्यपादानामभिप्रायोऽयमीरितः। अनिष्णाततया भाष्ये दुरापो मन्दबुद्धिभिः'॥ ६॥ तदेवं 'यज्ञदानतपःकर्म न त्याज्यमिति चापरे' इति स्वपक्षः स्थापितः। इदानीं 'त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः' इति परपक्षस्य पूर्वोक्तत्यागत्रैविध्यव्याख्यानेन निराकरणमारभते—काम्यस्य कर्मणोऽन्तःकरणशुद्धिहेतुत्वाभावेन बन्धहेतुत्वेन च दोषवत्त्वाद्बन्धनिवृत्तिहेतुबोधार्थिना क्रियमाणस्त्याग उपपद्यत एव। नियतस्य तु नित्यस्य कर्मणः शुद्धिहेतुत्वेनादोषस्य संन्यासस्त्यागो मुमुक्षुणान्तःकरणशुद्ध्यर्थिना नोपपद्यते शास्त्रयुक्तिभ्यां तस्यान्तःकरणशुद्ध्यर्थमवश्यानुष्ठेयत्वात्। तथाचोक्तं प्राक् 'आरुरुक्षोर्मुनेर्योगं कर्मकारणमुच्यते' इति। ननु दोषवत्त्वं काम्यस्येव नित्यस्यापि दर्शपूर्णमासज्योतिष्टोमादेर्व्रीहिपश्वादिहिंसामिश्रितत्वेन सांख्यैरभिहितम्। नच 'व्रीहीनवहन्ति' 'अग्नीषोमीयं पशुमालभेत' इत्यादिविशेषविधिगोचरत्वात् क्रत्वङ्गहिंसायाः 'न हिंस्यात्सर्वाभूतानि' इति सामान्यनिषेधस्य तदितरपरत्वमिति सांप्रतं भिन्नविषयत्वेन विधिनिषेधयोरबाधेनैव समावेशसंभवात्। निषेधेन हि पुरुषस्यानर्थहेतुर्हिंसेत्यभिहितं न त्वक्रत्वर्था सेति, विधिना क्रत्वर्था सेत्यभिहितं न त्वनर्थहेतुर्नेति। तथाच क्रतूपकारकत्वपुरुषानर्थहेतुत्वयोरेकत्र संभवात् क्रत्वर्थापि हिंसा निषिद्धैवेति हिंसायुक्तं दर्शपूर्णमासज्योतिष्टोमादि सर्वं दुष्टमेव। विहितस्यापि निषिद्धत्वं निषिद्धस्यापि च विहितत्वं श्येनादिवदुपपन्नमेव। यथाहि 'श्येनेनाभिचरन्यजेत'

५ भाष्योत्कर्षदीपिका।

धनं पार्थेति। यत्तु अपिशब्द एवशब्दार्थे इति भाष्यविरुद्धं अन्ये वर्णयन्ति तन्नादर्तव्यम्। सति संभवे स्वार्थत्यागस्यान्याय्यत्वात् ॥६॥ स्वाध्यवसायमुक्त्वा त्यागस्य त्रैविध्यं दर्शयितुमारभते। नियतस्य नित्यस्य तु कर्मणः मुमुक्षोरज्ञस्याधिकृतस्य संन्यासः परि-

६ श्रीधरीव्याख्या।

त्यक्त्वा केवलमीश्वराराधनतया कर्तव्यानीति फलानि च त्यक्त्वा कर्तव्यानीति च निश्चितं मे मम मतम्। अत एवोत्तमम् ॥ ६॥ प्रतिज्ञातं त्यागस्य त्रैविध्यमिदानीं दर्शयति—**नियतस्येति त्रिभिः**। काम्यस्य कर्मणो बन्धकत्वात्संन्यासो युक्तः।

७ अभिनवगुप्ताचार्यव्याख्या।

वस्तुस्थित्या तु त्यागो नाम परमब्रह्मविदां सिद्ध्यसिद्ध्यादिषु समतया रागद्वेषपरिहारेण फलप्रेप्साविरहेण कर्मणां निवर्तनम्। अत-

१ नीलकण्ठः।

१ श्रीमच्छांकरभाष्यम् ।

ष्टत्वात् । मोहादज्ञानात्तस्य नियतस्य परित्यागः । नियतं चावश्यं कर्तव्यं त्यज्यते चेति विप्रति-

२ आनन्दगिरिव्याख्या ।

तत्राह—**मोहादिति** । अज्ञानं पावनत्वापरिज्ञानम् । अज्ञस्य नित्यकर्मत्यागो मोहादित्येतदुपपादयति—**नियतं चेति** । नित्यकर्मत्यागस्य मोहकृतत्वे कुतस्तामसत्वमित्याशङ्क्याह—**मोहश्चेति** ॥ ७ ॥ इतश्च नित्यकर्मत्यागो नाज्ञस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पूर्वोक्तपक्षद्वयवैलक्षण्यार्थः । यस्मादधिकृतस्य मुमुक्षोर्नियतस्यावश्यानुष्ठेयस्य कर्मणः संन्यासः स्वरूपेण त्यागो नोपपद्यते न युज्यते । अज्ञस्य शुद्ध्यपेक्षत्वात् । एवंसति यो मोहादज्ञानात्तस्य नियतस्य कर्मणः परित्यागः स तामसः परिकीर्तितः । आवश्यकं च त्यज्यते चेति विप्रतिषेधात् ॥ ७ ॥ एवं तामसं त्यागमुक्त्वा राजसं त्यागमाह—

४ मधुसूदनीव्याख्या ।

इत्यायभिचारविधिना विहितोऽपि श्येनादिः 'न हिंस्यात्सर्वाभूतानि' इति निषेधविषयत्वादनर्थहेतुरेव, तद्दोषसहिष्णोरेव च रागद्वेषादिवशीकृतस्य तत्राधिकारः, एवं ज्योतिष्टोमादावपि । तथाचोक्तं महाभारते 'जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते । अहिंसया हि भूतानां जपयज्ञः प्रवर्तते' इति । मनुनापि 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते' इति वदता मैत्रीमहिंसां प्रशंसता हिंसाया दुष्टत्वमेव प्रतिपादितम् । अन्तःकरणशुद्धिश्चेदृशेन गायत्रीजपादिना सुतरामुपपत्स्यत इति हिंसादिदोषदुष्टं ज्योतिष्टोमादि नित्यं कर्म दोषासहिष्णुना श्येनादिकमिव कर्माधिकारिणापि त्याज्यमिति प्राप्ते ब्रूमः । न क्रत्वर्था हिंसाऽनर्थहेतुः, विधिस्पृष्टे निषेधानवकाशात् । तथाहि–विधिना बलवदिच्छाविषयसाधनताबोधरूपां प्रवर्तनां कुर्वताऽनर्थसाधने तदनुपपत्तेः स्वविषयस्य प्रवर्तनागोचरस्यानर्थसाधनत्वाभावोऽप्यर्थादाक्षिप्यते तेन विधिविषयस्य नानर्थहेतुत्वं युज्यते । नहि क्रत्वर्थत्वं साक्षाद्विध्यर्थो येन विरोधो न स्यात्; किंतु प्रवर्तनैव । प्रवर्तनाकर्मभूता तु पुरुषप्रवृत्तिः पुरुषार्थमेव विषयीकुर्वती क्वचित्क्रतुमपि पुरुषार्थसाधनत्वेन पुरुषार्थभावमापन्नं विषयीकरोतीत्यन्यत् । पुरुषप्रवृत्तिश्च बलवदिच्छोपधानदशायां जायमाना न भाव्यस्यार्थहेतुतामाक्षिपति, न वाऽनर्थहेतुतां प्रतिक्षिपति, किंतु यथाप्राप्तमेवावलम्बते । बलवदिच्छाविषये स्वत एव प्रवृत्तेः स्वर्गादौ विध्यनपेक्षणात् । अतएव विहितश्येनफलस्यापि शत्रुवधरूपस्याभिचारस्यानर्थहेतुत्वमुपपद्यत एव, फलस्य विधिजन्यप्रवृत्तिविषयत्वाभावात् । विधिजन्यप्रवृत्तिविषयं तु धात्वर्थरूपं करणं प्रवर्तनावलम्बते, सा चानर्थहेतुं न विषयीकरोतीति विशेषविधिबाधितं सामान्यनिषेधवाक्यं रागद्वेषादिमूलाक्रत्वर्थलौकिकहिंसाविषयं तेन श्येनाग्नीषोमीययोर्वैषम्यादुपपन्नमदुष्टत्वं, ज्योतिष्टोमादेः विधिस्पृष्टस्यापि निषेधविषयत्वे षोडशिग्रहणस्याप्यनर्थहेतुत्वापत्तिः, नातिरात्रे षोडशिनं गृह्णातीति निषेधात् । तस्मान्न किंचिदेतदिति भाट्टदर्शनम् । प्राभाकरं तु दर्शनं फलसाधने रागत एव प्रवृत्तिसिद्धेर्न नियोगस्य प्रवर्तकत्वं, तेन श्येनस्य रागजन्यप्रवृत्तिविषयत्वेन विधेरौदासीन्याच्च तस्यानर्थहेतुत्वं विधिना प्रतिक्षिप्यते । अग्नीषोमीयहिंसायां तु क्रत्वङ्गभूतायां फलसाधनत्वाभावेन रागाभावाद्विधिरेव प्रवर्तकः । स च स्वविषयस्यानर्थहेतुतां प्रतिक्षिपतीति प्रधानभूता हिंसानर्थं जनयति न क्रत्वर्थेति न हिंसामिश्रत्वेन ज्योतिष्टोमादेर्दुष्टत्वमिति सममेव । एतावन्मात्रे तु विशेषः 'चोदनालक्षणोऽर्थो धर्मः' इत्यत्रार्थपदव्यावर्त्यत्वेनाधर्मत्वं श्येनादेः प्राभाकरमते । भाट्टमते तु श्येनफलस्यैवाभिचारस्यानर्थहेतुत्वादधर्मत्वं, श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव । अर्थपदव्यावर्त्यत्वं तु कलञ्जभक्षणादेर्निषिद्धस्यैवेति । फलतोऽनर्थहेतुत्वेन तु शिष्टानां श्येनादौ न धर्मत्वेन व्यवहारः । तदुक्तं 'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते' इति । तार्किकाणां तु दर्शनं कृतिसाध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वं चेति त्रयं विध्यर्थः । तत्र क्रत्वर्थहिंसायां साक्षान्निषेधाभावात्प्रायश्चित्तानुपदेशाच्च कृतिसाध्यत्वार्थहेतुत्ववदनर्थाहेतुत्वमपि विधिना बोध्यत इति न तस्यानर्थहेतुत्वम् । श्येनादेस्त्वभिचारस्य साक्षादेव निषेधात्प्रायश्चित्तोपदेशाच्चानर्थहेतुत्वावगमात्तावन्मात्रं तत्र विधिना न बोध्यत इत्युपपन्नं । श्येनाग्नीषोमीययोर्वैलक्षण्यम् । औपनिषदैस्तु भाट्टमेव दर्शनं व्यवहारे प्रायेणावलम्बितम् । तथाच भगवद्बादरायणप्रणीतं सूत्रं 'अशुद्धमिति चेन्न शब्दात्' इति ज्योतिष्टोमादिकर्माग्नीषोमीयहिंसादिमिश्रितत्वेन दुष्टमितिचेत् न । 'अग्नीषोमीयं पशुमालभेत' इत्यादिविधिशब्दादित्यक्षरार्थः । जपप्रशंसापरं तु वाक्यं न क्रत्वर्थहिंसाया अधर्मत्वबोधकं तस्य तत्रातात्पर्यात् । तथाच सांख्यानां विहिते निषिद्धत्वज्ञानमनर्थाहेतावनर्थहेतुत्वज्ञानं धर्मे चाधर्मत्वज्ञानमनुष्ठेये चाननुष्ठेयत्वज्ञानं विपर्यासरूपो मोहः । तस्मान्मोहान्नित्यस्य

५ भाष्योत्कर्षदीपिका ।

त्यागो नोपपद्यते नोपपन्नो भवति नियतमवश्यकर्तव्यं त्यज्यते चेति विप्रतिषिद्धत्वात् । मोहात्पावनत्वापरिज्ञानात्तस्य नियतस्यावश्यकर्तव्यतया वेदविहितस्य परित्यागस्तामसः परिकीर्तितः । मोहश्च तमस्तन्निमित्तकत्वादित्यर्थः ॥ ७ ॥ एवं तामसत्यागप्रकारमुक्त्वा

६ श्रीधरीव्याख्या ।

नियतस्य तु नित्यस्य पुनः कर्मणः संन्यासस्त्यागो नोपपद्यते, सत्त्वशुद्धिद्वारा मोक्षहेतुत्वात् । अतस्तस्य परित्यागः उपादेयेऽपि

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥**
**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

षिद्धमतो मोहनिमित्तः परित्यागस्तामसः परिकीर्तितो मोहश्च तम इति ॥ ७ ॥ किंच—दुःखमिति । दुःखमित्येव यत्कर्म कायक्लेशभयाच्छरीरदुःखभयात्त्यजेत्परित्यजेत्स कृत्वा राजसं रजोनिर्वृत्तं त्यागं नैव तत्त्यागफलं ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं न लभेन्नैव लभते ॥ ८ ॥ कः पुनः सात्त्विकस्त्यागः—कार्यमिति । कार्यं कर्तव्यमित्येव यत्कर्म नियतं नित्यं क्रियते निर्वर्त्यते हेऽर्जुन,

२ आनन्दगिरिव्याख्या ।

संभवतीत्याह—किंचेति । ननु मोहं विनैव दुःखात्मकं कर्म कायक्लेशभयात्त्यजति । करणानि हि कार्यं जनयन्ति श्राम्यन्ति च, तथाच न तत्त्यागस्तामसो युक्तस्तत्राह—दुःखमित्येवेति । यत्कर्म दुःखात्मकमशक्यसाध्यमित्येवालोच्य ततो निवर्तते देहस्येन्द्रियाणां च क्लेशात्मनो भयात्त्यजति स तत्त्यक्त्वा रजोनिमित्तं त्यागं कृत्वापि न तत्फलं मोक्षं लभते, किंतु कृतेनैव राजसेन त्यागेन तदनुरूपं नरकं प्रतिपद्यत इत्याह—दुःखमित्येवेत्यादिना ॥ ८ ॥ कर्मत्यागस्तामसो राजसश्चेति द्विविधो दर्शितः, संप्रति सात्त्विकं त्यागं प्रश्नपूर्वकं वर्णयति—कः पुनरिति । कर्तव्यमित्येवेत्येवकारेण नित्यस्य भाव्यान्तरं निषिध्यते । नित्यानां विध्युद्देशे फलाश्रवणात्तेषां फलं त्यक्त्वेत्ययुक्तमित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दुःखमिति । यः दुःखरूपमेवेदं कर्मेति मत्वा कायक्लेशभयात् यत्त्यजेत् स पुमान् तस्मादेव हेतोः राजसं रजोगुणनिर्वृत्तं त्यागं कृत्वा त्यागफलं चित्तशुद्धिद्वारा मोक्षं नैव लभेत् लभेत ॥ ८ ॥ एवं द्वाभ्यां श्लोकाभ्यां तामसराजसौ मुख्यावेव त्यागावुक्तौ । तामसराजसयोरमुख्यत्यागयोरसंभवस्य भगवतैव मोहात्तस्य परित्याग इति कायक्लेशभयात्त्यजेदिति च सूचनात् । नह्येवं संभवति । मूढश्च करोति चेति विप्रतिषेधात् । यदि करोति नैव मूढः, यदि मूढस्तर्हि नैव करोति । एवं यदि कायक्लेशाद्बिभेति नैव करोति, यदि करोति नैव कायक्लेशाद्बिभेति तस्मात्करोति च कायक्लेशाद्बिभेति चेति विप्रतिषिद्धम् । अतस्तामसराजसयोरमुख्यत्यागयोरसंभवात्तौ नैवोक्तौ । सात्त्विकस्त्वमुख्यत्यागः संभवति । यथा स्फटिके जपाकुसुमाश्रिते लौहित्यं विवेकिनां प्रतीतित एवास्ति न वस्तुत एवमात्मनि ईश्वराधीने विवेकिनां कर्तृत्वं प्रतीतित एवास्ति न वस्तुत इति वक्तुं शक्यम् । एवंच कर्तृत्वाभिनिवेशशून्यः पुमान् प्रतीतितः करोत्येव न वस्तुत इति संभवत्यमुख्योऽपि सात्त्विकस्त्याग इति तमेव मुख्यत्यागेऽधिकारहेतुं प्रथममाह—कार्यमिति । कार्यं कर्तव्यमित्येव यत्कर्म नियतं नित्यं क्रियते हे अर्जुन, सङ्गं फलं च त्यक्त्वैवेत्यवधारणं

४ मधुसूदनीव्याख्या ।

कर्मणो यः परित्यागः स तामसः परिकीर्तितः । मोहो हि तमः ॥ ७ ॥ पूर्वोक्तमोहाभावेऽप्यनुपजातान्तःकरणशुद्धितया कर्माधिकृतोऽपि दुःखमेवेदमिति मत्वा कायक्लेशभयान्नित्यं कर्म त्यजेदिति यत् स त्यागो राजसः । दुःखं हि रजः अतः स मोहरहितोऽपि राजसः पुरुषस्तादृशं राजसं त्यागं कृत्वा नैव त्यागफलं सात्त्विकत्यागस्य फलं ज्ञाननिष्ठालक्षणं नैव लभेन्न लभेत ॥ ८ ॥ कर्मत्यागस्तामसो राजसश्च हेयो दर्शितः, कीदृशः पुनरुपादेयः सात्त्विकस्त्याग इत्युच्यते—विध्युद्देशे फलाश्रवणेऽपि कार्यं कर्तव्यमेवेति बुद्ध्वा नियतं नित्यं कर्मसङ्गं कर्तृत्वाभिनिवेशं फलं च त्यक्त्वैव यत्क्रियतेऽन्तःकरणशुद्धिपर्यन्तं स

५ भाष्योत्कर्षदीपिका ।

राजसं तमाह—दुःखमिति । मोहाभावेऽपि दुःखमेवेति मत्वा यत्कर्म कायक्लेशभयाच्छरीरदुःखभयात्त्यजेत् । यदित्यव्ययं वा । यस्त्यजेदित्यर्थः । स राजसं रजोनिर्वृत्तं त्यागं कृत्वा त्यागस्य ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं नैव लभेत् । एवकारेणैतादृशत्यागवता मोक्षाशापि न कर्तव्येति सूचयति ॥ ८ ॥ एवं राजसत्यागप्रकारमुक्त्वा सात्त्विकं तमाह—कार्यमिति । सङ्गं कर्तृत्वाभिनिवेशं फलं च त्यक्त्वा विहाय कार्यं कर्तव्यमित्येव नियतं नित्यं यत्कर्म क्रियते स त्यागः सात्त्विको मतः । ननु

६ श्रीधरीव्याख्या ।

त्याज्यमित्येवं लक्षणान्मोहादेव भवेत् । स च मोहस्य तामसत्वात्तामसः परिकीर्तितः ॥ ७ ॥ राजसं त्यागमाह—दुःखमिति । अकृतात्मबोधं विना केवलं दुःखमित्येवं ज्ञात्वा शरीरायासभयान्नित्यं कर्म त्यजेदिति यस्तादृशस्त्यागो राजसः, दुःखस्य राजसत्वात् । अतस्तं राजसं त्यागं कृत्वा राजसः पुरुषस्त्यागस्य फलं ज्ञाननिष्ठालक्षणं नैव लभत इत्यर्थः ॥ ८ ॥ सात्त्विकं त्यागमाह—कार्यमिति । कार्यमित्येवं बुद्ध्वा नियतमवश्यकर्तव्यतया विहितं कर्म सङ्गं फलं च त्यक्त्वा क्रियत इति यत् तादृशस्त्यागः

१ श्रीमच्छांकरभाष्यम्।

**सङ्गं त्यक्त्वा फलं चैव। नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणमवोचाम। अथवा यद्यपि फलं न श्रूयते नित्यस्य कर्मणस्तथापि नित्यं कर्म कृतमात्मसंस्कारं प्रत्यवायपरिहारं वा फलं करोत्यात्मन इति कल्पयत्येवाज्ञस्तत्र तामपि कल्पनां निवारयति फलं त्यक्त्वेत्यनेनातः साधूक्तं सङ्गं त्यक्त्वा फलं चेति। स त्यागो नित्यकर्मसु सङ्गफलपरित्यागः सात्त्विकः सत्त्वनिर्वृत्तो मतोऽभिमतः। ननु कर्मपरित्यागस्त्रिविधः संन्यास इति च प्रकृतस्तत्र तामसो राजसश्चोक्तस्त्यागः कथमिह सङ्गफलत्यागस्तृतीयत्वेनोच्यते यथा त्रयो ब्राह्मणा आगतास्तत्र षडङ्गविदौ द्वौ क्षत्रिय-**

२ आनन्दगिरिव्याख्या।

शङ्काह—**नित्यानामिति**। फलं त्यक्त्वेत्यस्य विधान्तरेण तात्पर्यमाह—**अथवेति**। नहि विधिना कृतं कर्मानर्थकं विध्यानर्थक्यात्तेन श्रौतफलाभावेऽपि नित्यं कर्म विधितोऽनुतिष्ठन्नात्मानमजानन्ननुपहतमनस्त्वोक्त्या तस्मिन्कर्मण्यात्मसंस्कारं फलं कल्पयति तदकरणे प्रत्यवायस्मृत्या तत्करणं कर्तुरात्मनस्तन्निवृत्तिं करोतीति वा नित्ये कर्मण्युक्तां कल्पनामनुनिष्पादितफलकल्पनां च फलं त्यक्त्वेत्यस्य भगवान्निवारयतीत्यर्थः। नित्यकर्मसु फलत्यागोक्तेः संभवे फलितमाह—**अत इति**। कर्मतत्फलत्यागस्य त्यागसंन्यासशब्दाभ्यां प्रकृतस्य त्यागो हीति त्रैविध्यं प्रतिज्ञाय प्रतिज्ञानुरोधेन द्वे विधे व्युत्पाद्य तृतीयां विधां तद्विरोधेन व्युत्पादयतो भगवतोऽकौशलमापतितमिति शङ्कते—**नन्विति**। प्रक्रमप्रतिकूलमुपसंहारवचनमनुचितमित्यत्र दृष्टान्तमाह—**यथेति**। पूर्वोत्तरविरोधेन प्राप्तमकौशलं

३ नीलकण्ठव्याख्या (चतुर्धरी)।

प्रागुक्तस्यात्यागपक्षस्य व्यावृत्त्यर्थम्। स एवंभूतस्त्यागः सात्त्विको मतः वेदे दृष्टः। तथाच श्रुतिः 'ईशावास्यमिदꣳ सर्वं यत्किंच जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्'। इति। ईशा ईशेन परमेश्वरेण सर्वकार्यकरणकर्त्रात्मप्रवर्तकेन इदं जगत्स्थावरजङ्गमं जगत्यां ब्रह्माण्डे स्थितं वास्यमाच्छादितं व्याप्तम्। येन हेतुना सर्वं तदधीनं तेन कारणेन त्यक्तेन त्यागेन कर्तृत्वभोक्तृत्वाभिमानवर्जनेन भुञ्जीथाः विषयान्भुङ्क्ष्व। मा गृधः गर्धं मा कार्षीः। कस्यस्विद्धनं न कस्यापि तत्र स्वामित्वमस्तीति वृथैव तत्र गर्ध इत्यर्थः। एवं कर्माण्यपि यज्ञादीनि कर्तृत्वाभिमानं त्यक्त्वा कुर्वतस्तव कर्मलेपो न भविष्यति। एतद्व्यतिरेकेण तव उपायान्तरं च नास्तीत्यग्रिममन्त्रेण प्रदर्श्यते 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति। इदमेव मुख्यं स्वमतं भगवता प्रदर्शितम्। एतान्यपि तु कर्माणीति श्लोके। ननु नित्यानां फलमेव नास्ति किं त्यक्तव्यमितिचेत्। इतएव भगवद्वचनात्तेषामपि फलमस्तीति जानीहि। निष्फलस्य वेदेनानुष्ठापनासंभवात्। तथाचापस्तम्बः

४ मधुसूदनीव्याख्या।

त्यागः सात्त्विकः सत्त्वनिर्वृत्तो मत आदेयत्वेन संमतः शिष्टानाम्। ननु नित्यानां फलमेव नास्ति कथं फलं त्यक्त्वेत्युक्तम्। उच्यते। अस्मादेव भगवद्वचनान्नित्यानां फलमस्तीति गम्यते निष्फलस्यानुष्ठानासंभवात्। तथाचापस्तम्बः 'तद्यथाम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इत्यानुषङ्गिकं फलं नित्यानां दर्शयति। अकरणे प्रत्यवायस्मृतिश्च। नित्यानां प्रत्यवायपरिहारं फलं दर्शयति 'धर्मेण पापमपनुदति। तस्माद्धर्मं परमं वदन्ति येन केचन जयेतापि वा दर्विहोमेनानुपहतमना एव भवति तदाहुर्देवयाजी श्रेयानात्मयाजीत्यात्मयाजीति ह ब्रूयात्स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गꣳ संस्क्रियत इदमनेनाङ्गमुपधीयते' इत्यादयः श्रुतयश्च ज्ञानप्रतिबन्धकपापक्षयलक्षणं ज्ञानयोग्यतारूपपुण्योत्पत्तिलक्षणं चात्मसंस्कारं नित्यानां कर्मणां फलं दर्शयन्ति, तदभिसंधिं त्यक्त्वा तान्यनुष्ठेयानीत्यर्थः। यदुक्तं 'त्यागसंन्यासशब्दौ घटपटशब्दाविव न भिन्नजातीयार्थौ किंतु फलाभिसन्धिपूर्वककर्मत्याग एव तयोरर्थ इति। तन्न विस्मर्तव्यम्। तत्र सत्यपि फलाभिसन्धौ मोहाद्वा कायक्लेशभयाद्वा यः कर्मत्यागः स विशेष्याभावकृतो विशिष्टाभावस्तामसत्वेन राजसत्वेन च निन्दितः। यस्तु सत्यपि कर्मणि फलाभिसन्धित्यागः स विशेषणाभावकृतो विशिष्टाभावः सात्त्विकत्वेन स्तूयत इति विशेष्याभावकृते विशेषणा-

५ भाष्योत्कर्षदीपिका।

नित्यानां विध्युद्देशे फलाश्रवणात्तेषां फलं त्यक्त्वेति कथमुक्तमिति चेत् नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणमिति गृहाण। अन्यथा भगवद्वचनमनर्थकं स्यात्। यद्वा विधिना कृतस्य कर्मण आनर्थक्ये विध्यानर्थक्यप्रसङ्गात्। श्रौतफलाभावेऽपि कर्माधिकृतोऽज्ञो नित्यं कर्मकृतमात्मसंस्कारं प्रत्यवायपरिहारं च फलं कर्तुः करोतीति कल्पयति तामपि कल्पनां निवारयति भगवान् फलं त्यक्त्वेति। अयमेव त्यागश्चित्तशुद्धिहेतुरिति सूचनार्थमर्जुनेति संबोधनम्। ननु कर्मपरित्यागस्त्रिविधो मत इति त्यागस्य त्रैविध्यं प्रस्तुत्य सङ्गफलत्यागस्य तृतीयत्वेन कथनमयुक्तम्। यथा त्रयो ब्राह्मणा आगतास्तत्र सषडङ्गवेदविदौ द्वौ क्षत्रियस्तृतीय इति तद्वदिति चेन्नैष दोषः। कर्मसंन्यासस्य सङ्गफलत्यागस्य च त्यागसामान्येन राजसतामसत्वेन कर्मत्यागनिन्दया सङ्गफलत्यागस्य

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः॥ १०॥**

१ श्रीमच्छांकरभाष्यम्।

स्तृतीय इति तद्वत् नैष दोषस्त्यागसामान्येन स्तुत्यर्थत्वात्। अस्ति हि कर्मसंन्यासस्य फलाभिसंधित्यागस्य च त्यागत्वसामान्यं तत्र राजसतामसत्वेन कर्मत्यागनिन्दया कर्मफलाभिसंधित्यागः सात्त्विकत्वेन स्तूयते 'स त्यागः सात्त्विको मतः' इति॥ ९॥ यस्त्वधिकृतः सङ्गं त्यक्त्वा फलाभिसन्धिं च नित्यं कर्म करोति तस्य फलरागादिनाऽकलुषी क्रियमाणमन्तःकरणं नित्यैश्च कर्मभिः संस्क्रियमाणं विशुद्ध्यति। विशुद्धं प्रसन्नमात्मालोचनक्षमं भवति। तस्यैव नित्यकर्मानुष्ठानेन विशुद्धान्तःकरणस्यात्मज्ञानाभिमुखस्य क्रमेण यथा तन्निष्ठा स्यात्तद्वक्तव्यमित्याह—न द्वेष्ट्यकुशलमशोभनं काम्यं

२ आनन्दगिरिव्याख्या।

प्रत्यादिशति—**नैष दोष इति**। कर्मत्यागफलत्यागयोस्त्यागत्वेन साहश्यात्कर्मत्यागनिन्दया तत्फलत्यागस्तुत्यर्थमिदं वचनमित्युपगमान्न विरोधोऽस्तीत्युक्तमेव व्यक्तीकुर्वन्नादौ त्यागसामान्यं विशदयति—**अस्तीति**। सति सामान्ये निर्देशस्य स्तुत्यर्थत्वं समर्थयते—**तत्रेति**॥ ९॥ एवं पूर्वापरविरोधं पराकृत्यानन्तरश्लोकतात्पर्यमाह—**यस्त्विति**। फलरागादिनेत्यादिशब्देन कर्मस्वरूपासङ्गो गृह्यते अन्तःकरणमकलुषीक्रियमाणमिति च्छेदः। विशुद्धेऽन्तःकरणे किं स्यादित्याशङ्क्याह—**विशुद्धमिति**। मलविकलत्वं विशुद्धत्वं, संस्क्रियमाणत्वं प्रसन्नत्वमिति भेदः। क्रमेण श्रवणा-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

'तद्यथाम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते' इति आनुषङ्गिकं फलं नित्यानां दर्शयति। अकरणे प्रत्यवायस्मृत्यापि तेषां प्रत्यवायपरिहारः फलमिति प्रदर्श्यते। 'धर्मेण पापमपनुदति' इत्यादिना च नित्येष्वपि कर्मसु फलं दृश्यते तदेव वक्तव्यमिति न कोऽपि दोषः॥ ९॥ एवं मुख्यं सात्त्विकत्यागमुक्त्वाऽमुख्यं तमाह—**न द्वेष्टीति**। सत्त्वेन सम्यगाविष्टो व्याप्तस्त्यागी मुख्यः सात्त्विकस्त्यागी संन्यासीत्यर्थः।

४ मधुसूदनीव्याख्या।

भावकृते च विशिष्टाभावत्वस्य समानत्वान्न पूर्वापरविरोधः। उभयाभावकृतस्तु निर्गुणत्वान्न त्रिविधमध्ये गणनीय इति चावोचाम। एतेन 'त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः' इति प्रतिज्ञाय कर्मत्यागलक्षणे द्वे विधे दर्शयित्वा प्रतिज्ञाननुरूपां कर्मानुष्ठानलक्षणां तृतीयां विधां दर्शयतो भगवतः प्रकटमकौशलमापतितं। नहि भवति, त्रयो ब्राह्मणा भोजयितव्या द्वौ कठकौण्डिन्यौ तृतीयः क्षत्रिय इति तद्वदिति परास्तम्। तिसृणामपि विधानां विशिष्टाभावरूपेण त्यागसामान्येनैकजातीयतया प्राग्व्याख्यातत्वात्। तस्माद्भगवदकौशलोद्भावनमेव महदकौशलमिति द्रष्टव्यम्॥ ९॥ सात्त्विकस्य त्यागस्यादौ सत्त्वशुद्धिद्वारेण

५ भाष्योत्कर्षदीपिका।

तृतीयत्वेन प्रदर्शनस्य सात्त्विकत्वेन स्तुत्यर्थत्वादित्येवमाचार्यैः प्रतिज्ञातं त्यागत्रैविध्यं त्रिभिः श्लोकैः प्रदर्शितम्। केचित्तु विशिष्टाभावरूपस्त्यागो विशेषणाभावाद्विशेष्याभावादुभयाभावाच्च त्रिविधः संप्रकीर्तितः। तथाहि फलाभिसंधिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसंधित्यागादेकः। सत्यपि फलाभिसंधौ कर्मत्यागाद्द्वितीयः। फलाभिसंधेः कर्मणश्च त्यागात्तृतीयः। तत्र प्रथमः सात्त्विक आदेयत्वेनात्रैव विधित्सितः। द्वितीयस्तु दुःखबुद्ध्या कृतो राजसः। विपर्यासेन कृतस्तामसः। इति राजसतामसभेदेन द्विविधोऽप्यत्रैव हेयत्वेन निन्दितः। तृतीयस्तु विदुषा कर्मानधिकारिणा विविदिषुणा च कर्तुं योग्यो द्विविधः। तत्राद्यः स्थितप्रज्ञलक्षणादौ प्राग्व्याख्यातः। द्वितीयस्तु नैष्कर्म्यसिद्धिं परमामित्यत्र वक्ष्यत इति वर्णयन्ति। अस्मिन्पक्षे एकस्मिन्द्वयोरन्तर्भावं कृत्वा तृतीयः प्रदेशान्तरे प्रक्षिप्त इति प्रतिज्ञाया अनिर्वाहो भगवतो महदकौशलतापादको द्रष्टव्यः॥ ९॥ एवं सात्त्विकं त्यागमुक्त्वा योऽधिकृतः सङ्गं फलाभिसन्धिं च त्यक्त्वा कर्म करोति तादृशकर्मानुष्ठानेन संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन संबुद्धः सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नासीनो नैष्कर्म्यलक्षणां ज्ञाननिष्ठां प्राप्नोतीत्येतत्पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमाह—**न द्वेष्टीति**। यस्त्यागी पूर्वोक्तसङ्गफलत्यागवान् नित्यकर्मानुष्ठायी यदा सत्त्वसमाविष्टः सङ्गं फलाभिसंधिं च त्यक्त्वा कर्मानु-

६ श्रीधरीव्याख्या।

सात्त्विको मतः॥ ९॥ एवंभूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह—**न द्वेष्टीति**। सत्त्वसमाविष्टः सत्त्वेन संव्याप्तः सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकं कर्म न द्वेष्टि, कुशले च सुखकरे कर्मणि निदाघे माध्याह्नस्नानादौ नानुषज्जते प्रीतिं न

७ अभिनवगुप्ताचार्यव्याख्या।

एवाह राजसं तामसं च त्यागं कृत्वा न किंचित्फलसंबन्ध इति। सात्त्विकस्य तु त्यागाच्छास्त्रार्थपालनात्मकं फलम्। त्यक्तगुणग्रामग्रहस्य

१ मधुसूदनः।

१ श्रीमच्छांकरभाष्यम् ।

कर्म शरीरारम्भद्वारेण संसारकारणं किमनेनेत्येवं कुशले शोभने नित्ये कर्मणि सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन मोक्षकारणमिदमित्येवं नानुषज्जते तत्रापि प्रयोजनमपश्यन्ननुषङ्गं प्रीतिं न करोतीत्येतत् कः पुनरसौ त्यागी पूर्वोक्तेन सङ्गफलपरित्यागेन तद्वांस्त्यागी यः कर्मणि सङ्गं त्यक्त्वा तत्फलं च नित्यकर्मानुष्ठायी स त्यागी । कदा पुनरसावकुशलं कर्म न द्वेष्टि कुशले च नानुषज्जत इत्युच्यते सत्त्वसमाविष्टो यदा सत्त्वेनात्मानात्मविवेकविज्ञानहेतुना समाविष्टः संव्याप्तः संयुक्त इत्येतत् । अतएव च मेधावी मेधयात्मज्ञानलक्षणया प्रज्ञया संयुक्तस्तद्वान्मेधावी मेधावित्वादेव छिन्नसं-

२ आनन्दगिरिव्याख्या ।

द्यावृत्तिद्वारेणेत्यर्थः । तन्निष्ठेत्यात्मज्ञाननिष्ठोक्ता । काम्यकर्मणि त्याज्यत्वेन द्वेषमभिनयति—**किमिति** । उभयत्र द्वेषं प्रीतिं च न करोतीति सामान्येनोक्तं कर्तारं प्रश्नपूर्वकं विशेषतो निर्दिशति—**कः पुनरिति** । त्यागीत्युक्तं त्यागिनमभिव्यनक्ति—**पूर्वोक्तेनेति** । कर्मणि सङ्गस्य तत्फलस्य च त्यागेनेति यावत् । उक्तमेव त्यागिनं विवृणोति—**यः कर्मणीति** । तत्फलं त्यक्त्वेति संबन्धः । काम्ये निषिद्धे च कर्मणि बन्धहेतुरिति न द्वेष्टि नित्ये नैमित्तिके च मोक्षहेतुरिति न प्रीयते । तत्र कालविशेषं पृच्छति—**कदेति** । नित्यादिकर्मणा फलाभिसन्धिवर्जितेन क्षपितकल्मषस्य सत्त्वं यथार्थग्रहणसामर्थ्यमुद्बुध्यते तेन समावेशदशायामुक्तप्रीतिद्वेषयोरभावो भवतीत्याह—**उच्यत इति** । अतएवेति समुद्बुद्धयथार्थग्रहणसमर्थसमाविष्टत्वादित्यर्थः । छिन्नसंशयत्वमेव विशदयति—**आत्मेति** । परं निःश्रेयसं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अकुशलमसुखप्रदं कर्म त्रिषवणस्नानचतुर्गुणशौचभिक्षाटनादिप्रयासरूपं न द्वेष्टि । कुशले मिष्टान्नभिक्षादौ नानुषज्जते न सङ्गं काकवत्प्रीतिं करोति । यद्वा कर्मकुशले सवादिकर्मकुशले शिष्यादौ न सज्जते तत्राकुशलं वा तं न द्वेष्टि । एतेन रागद्वेषशून्यत्वमस्य दर्शितम् । तदपि कुत इत्यपेक्षायामाह—**मेधावीति** । ऊहापोहकुशलतया नित्यानित्यवस्तुविवेचनादौ प्रज्ञावान् । अतएव छिन्नसंशयः किं कर्माण्येव मुक्तिसाधनानि उत संन्यास एवेति विचिकित्सारहितः । एवंच त्यागीत्यनेन यज्ञो दानं तपः कर्म न त्याज्यमित्युक्तादत्यागाद्यावृत्तिः । मेधावीत्यनेन मोहात्तस्य परित्याग इत्युक्तात्तामसत्यागाद्यावृत्तिः । पूर्वार्धेन रागद्वेषाभावप्रतिपादनेन कायक्लेशभयात्त्यजेदित्युक्ताद्राजसत्यागाद्यावृत्तिः । छिन्नसंशय इत्यनेन कार्यमित्येव यत्कर्मेत्युक्तादमुख्यसात्त्विकत्यागाद्यावृत्तिः । नह्यसौ कर्मणां तुच्छत्वं

४ मधुसूदनीव्याख्या ।

ज्ञाननिष्ठां फलमाह—यस्त्यागी सात्त्विकेन त्यागेन युक्तः पूर्वोक्तेन प्रकारेण कर्तृत्वाभिनिवेशं फलाभिसन्धिं च त्यक्त्वान्तःकरणशुद्ध्यर्थं विहितकर्मानुष्ठायी स यदा सत्त्वसमाविष्टः सत्त्वेनात्मानात्मविवेकज्ञानहेतुना चित्तगतेनातिशयेन सम्यग्ज्ञानप्रतिबन्धकरजस्तमोमलराहित्येनासमन्तात्फलाव्यभिचारेणाविष्टो व्याप्तो भवति भगवदर्पितनित्यकर्मानुष्ठानात्पापमलापकर्षलक्षणेन ज्ञानोत्पत्तियोग्यतारूपपुण्यगुणाधानलक्षणेन च संस्कारेण संस्कृतमन्तःकरणं यदा भवतीत्यर्थस्तदा मेधावी शमदमसर्वकर्मोपरमगुरूपसदनादिसामवायिकाङ्गयुक्तेन मनननिदिध्यासनाख्यफलोपकार्यङ्गयुक्तेन च श्रवणाख्यवेदान्तवाक्यविचारेण परिनिष्पन्नं वेदान्तमहावाक्यकरणकं निरस्तसमस्ताप्रामाण्याशङ्कं चिदन्याविषयकमहं ब्रह्मास्मीति ब्रह्मात्मैक्यज्ञानमेव मेधा तया नित्यं युक्तो मेधावी स्थितप्रज्ञो भवति तदा छिन्नसंशयोऽहं ब्रह्मास्मीति विद्यारूपया मेधया तदविद्योच्छेदे तत्कार्यसंशयविपर्ययशून्यो भवति तदा

५ भाष्योत्कर्षदीपिका ।

द्यानतः सङ्गफलाभ्यामकलुषीक्रियमाणं नित्यैश्च कर्मभिः संस्क्रियमाणं विशुद्धं समुद्बुद्धसत्त्वमात्मानात्मविवेकविज्ञानहेत्वन्तःकरणं सत्त्वमत्र ग्राह्यं तेन समाविष्टः संव्याप्तः संयुक्त इति यावत् । अतएव मेधावी ब्रह्मात्मज्ञानलक्षणा प्रज्ञा मेधा तद्वान् मेधावी । मेधावित्वादेव ब्रह्मात्मस्वरूपावस्थानमेव परं निःश्रेयससाधनं नान्यत्किंचिदित्येव निश्चयेन छिन्नोऽविद्याकृतः संशयो यस्य स छिन्नसंशयः 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतेः । स तदा अकुशलमशोभनं काम्यं निषिद्धं च कर्म न द्वेष्टि । काम्यादिकर्मशरीरारम्भादिद्वारेण संसारकारणमतः किमनेनेत्येवं द्वेषं न करोति । कुशले चित्तशुद्ध्यादिद्वारा मोक्षहेतुत्वाच्छोभने नित्ये कर्मणि नानुषज्जते । सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन मोक्षकारणमतोऽनेन मदीयं प्रयोजनं सेत्स्यतीत्यनुषङ्गमासक्तिं प्रीतिं न करोतीत्यर्थः । एवंभूतसात्त्विकपरित्यागनिष्ठस्य लक्षणमाह—सत्त्वसमाविष्टः सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकर्म न द्वेष्टि, कुशले च सुखकरे कर्मणि निदाघे मध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति । तत्र हेतुः—मेधावी स्थिरबुद्धिः । यत्र परपरिभवादिमहदुःखमपि सह्यते स्वर्गादिसुखं च त्यज्यते तत्र कियदेतत्तात्कालिकं सुखं दुःखं चैवमनुसंधानवानित्यर्थः । अतएव छिन्नः संशयो मिथ्या-

६ श्रीधरीव्याख्या ।

करोति । तत्र हेतुः—मेधावी स्थिरबुद्धिः । यत्र परपरिभवादि महदपि दुःखं सह्यते स्वर्गादिसुखं च त्यज्यते तत्र कियदेतत्तात्कालिकं

१ श्रीमच्छांकरभाष्यम् ।

**शयश्छिन्नोऽविद्याकृतः संशयो यस्यात्मस्वरूपावस्थानमेव परं निःश्रेयस्साधनं नान्यत्किंचिदित्येवं निश्चयेन छिन्नसंशयो योऽधिकृतः पुरुषः पूर्वोक्तेन प्रकारेण कर्मयोगानुष्ठानेन क्रमेण संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन संबुद्धः स सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नासीनो नैष्कर्म्यलक्षणां ज्ञाननिष्ठामश्नुत इत्येतत्पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमनेन श्लोके-**

२ आनन्दगिरिव्याख्या ।

तस्य च साधनं सम्यग्ज्ञानमेवेति योजना । न द्वेष्टीत्यादिना श्लोकेनोक्तमर्थं संक्षिप्यानुवदति—**योऽधिकृत इति** । पूर्वोक्तप्रकारेणेति कर्मणि तत्फले च सङ्गत्यागेनेत्यर्थः । कर्मात्मयोगस्यानुष्ठानेन संस्कृतात्मा सन् क्रमेण श्रवणाद्यनुष्ठानद्वारेण कूटस्थं ब्रह्म प्रत्यक्त्वेन संबुद्ध इति संबन्धः । परस्य निष्क्रियत्वे हेतुमाह—**जन्मादीति** । उक्तज्ञानवतः

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संन्यासस्य महाभाग्यत्वं च तत्त्वतो वेद । वेद चेत्क्षणमपि कर्मसु न तिष्ठेत् । नहि दाहोपशमार्थी निकटस्थं जाह्नवीमहाह्रदं जानन्ग्रीष्मोष्मप्रतप्तपाथसि पल्वले क्षणमपि रमेत । संशयच्छेदेऽपि हेतुः सत्त्वसमाविष्ट इति । यतः सत्त्वेनैव कर्त्रा सम्यगाविष्टो यं नत्वयं सत्त्वमाश्रित इति महान्विशेषः । एवंच पूर्वश्लोकोक्तस्य सात्त्विकत्यागरूपस्य कर्मयोगस्य फलभूतोऽयं मुख्यः संन्यासो विविदिषूणामनुष्ठेयो 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्', 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति श्रुतिप्रसिद्धः । भाष्ये तु ननु कर्मपरित्यागस्त्रिविधः संन्यास इति च प्रकृतस्तत्र तामसो राजसश्चोक्तस्त्यागः कथमिह सङ्गफलत्यागस्तृतीयत्वेनोच्यते । यथा त्रयो ब्राह्मणा आगतास्तत्र षडङ्गविदौ द्वौ क्षत्रियस्तृतीय इति तद्वत् । नैष दोषः । त्यागसामान्येन स्तुत्यर्थत्वात् । अस्ति कर्मसंन्यासस्य फलाभिसन्धित्यागस्य च त्यागत्वं सामान्यम् । तत्र राजसतामसत्वेन कर्मत्यागनिन्दया कर्मफलाभिसन्धित्यागः सात्त्विकत्वेन स्तूयते स त्यागः सात्त्विको मत इति ग्रन्थेन त्यागत्रैविध्यं समाधायैवं सङ्गफलत्यागपूर्वकं नित्यकर्मानुष्ठानेन विशुद्धान्तःकरणस्यात्मज्ञानाभिमुखस्य तन्निष्ठाक्रमकथनार्थोऽयं श्लोक इत्युक्तम् । तथैव श्लोकं व्याख्याय पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमनेन श्लोकेनोक्तमित्युपसंहृतम् । अन्ये तु फलाभिसंधिविशिष्टस्य कर्मणस्त्यागस्त्रिविधः । विशेषणाभावाद्विशेष्याभावादुभयाभावाच्च । आद्योऽत्रैव विधित्सितः, द्वितीयस्तु तामसराजसभेदेन द्विविधोऽप्यत्रैव निन्दितः । तृतीयस्तु कर्मानधिकारिणा विविदिषुणा विदुषा च कर्तुं योग्यो द्विविधः । तत्रान्त्यः स्थितप्रज्ञलक्षणादौ प्राग्व्या-

४ मधुसूदनीव्याख्या ।

क्षीणकर्मत्वात् न द्वेष्ट्यकुशलं कर्म अशोभनं काम्यं निषिद्धं वा कर्म न प्रतिकूलतया मन्यते, कुशले शोभने नित्ये कर्मणि नानुषज्जते न प्रीतिं करोति, कर्तृत्वाद्यभिमानरहितत्वेन कृतकृत्यत्वात् । तथाच श्रुतिः 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति । यस्मादेवं सात्त्विकस्य त्यागस्य फलं तस्मान्महतापि

५ भाष्योत्कर्षदीपिका ।

ज्ञानं दैहिकसुखदुःखयोरुपादित्सापरिजिहीर्षालक्षणं यस्य स इत्यपरे । इतरे तु सतु त्यागी सात्त्विकत्यागकर्ता । तुशब्दस्तामसराजसत्यागकर्तृतो विशेषद्योतकः । अकुशलमविवेकिनं मोक्षकथानभिज्ञं देहाभिमानिनम् । अतएवान्तःकरणशुद्धिप्रयोजककर्माचरणासहिष्णुं किमर्थं वा एतत्कर्माचरसि किंवा पुत्रदारादिनिर्वाहकृत्कर्म त्यजसीत्येवमादिजल्पन्तं न द्वेष्टि धिक् त्वां परतो गच्छेत्येवमादिचेष्टाभावाद्द्वेषं न करोतीत्यर्थः । तथा कर्मकुशले नित्यनैमित्तिककर्माचरणकुशले तन्मात्रासञ्जातफलत्यागवति स्वसमाने नानुषज्जते 'ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्' इत्युक्तमनुषङ्गं न करोति । ननु तस्योभयविधलिङ्गदर्शनात्संशय एव किं न स्यादित्यत उक्तं छिन्नसंशयः संशयरहितः । तत्रैव हेतुमाह–मेधावीति । स्वीकरणनिश्चयधारणावान् । कुतोयं निश्चयस्तस्येत्यत उक्तं असमाविष्ट इति । असमे क्षयिफलान्तरासदृशे निरतिशयानन्दरूपे फले आविष्टो लिप्सावान् अत ईदृग्लक्षणो योगी त्यागी ज्ञेय इति भाव इति वर्णयन्ति । एवममुख्यं सात्त्विकं त्यागमुक्त्वा मुख्यं तमाह–न द्वेष्टि सत्त्वेन सम्यगाविष्टो व्याप्तस्त्यागी मुख्यः सात्त्विकत्यागी संन्यासीत्यर्थः । अकुशलमसुखप्रदं कर्म त्रिषवणस्नानचतुर्गुणशौचभिक्षाटनादिप्रयासरूपं न द्वेष्टि । कुशले मिष्टान्नभक्षणादौ नानुषज्जते प्रीतिं न करोति । यद्वा कर्मकुशले सेवादिकर्मकुशले शिष्यादौ नानुषज्जते तत्राकुशलं वा तं न द्वेष्टि । एतेन रागद्वेषशून्यत्वमस्य दर्शितम्, तदपि कुत इत्यपेक्षायामाह—**मेधावीति** । ऊहापोहकुशलतया नित्यानित्यवस्तुविवेचनादौ प्रज्ञावान् । अनेन मोहात्तस्य परित्याग इत्युक्तात्तामसात्यागाद्व्यावृत्तिः । मेधावित्वादेव

६ श्रीधरीव्याख्या ।

सुखं दुःखं चेत्येवमनुसंधानवानित्यर्थः । अतएव छिन्नः संशयो मिथ्याज्ञानं दैहिकसुखदुःखयोरुपादित्सापरिजिहीर्षालक्षणं यस्य सः

---

१ श्रीधर॰.

**नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नोक्तम् ॥ १० ॥ यः पुनरधिकृतः सन्देहात्माभिमानित्वेन देहभृदज्ञोऽबाधितात्मकर्तृत्वविज्ञानतयाहं-कर्तेति निश्चितबुद्धिस्तस्याशेषकर्मपरित्यागस्याशक्यत्वात्कर्मफलत्यागेन चोदितकर्मानुष्ठान एवाधिकारो न तत्त्याग इत्येतमर्थं दर्शयितुमाह—नहीति । यस्माद्देहभृता देहं बिभर्तीति देहभृद्देहात्माभिमानवान्देहभृदुच्यते नहि विवेकी स हि वेदाविनाशिनमित्यादिना कर्तृत्वाधिकारान्निवर्तितोऽतस्तेन देहभृताऽज्ञेन न शक्यं त्यक्तुं संन्यसितुं कर्माण्यशेषतो निःशेषेण । तस्माद्यस्त्वज्ञोऽधिकृतो नित्यानि कर्माणि कुर्वन्कर्मफलत्यागी कर्मफलाभिसन्धिमात्रसंन्यासी स त्यागीत्यभिधीयते कर्म्यपि सन्निति स्तुत्यभिप्रायेण । तस्मात्परमार्थदर्शिनैवादेहभृता देहात्मभावरहितेनाशेषकर्मसंन्यासः

२ आनन्दगिरिव्याख्या ।

सर्वकर्मत्यागद्वारा मुक्तिभाक्त्वं दर्शयति—स सर्वेति ॥ १० ॥ आत्मज्ञानवतः सर्वकर्मत्यागसंभावनामुक्त्वा तद्धीनस्य तदसंभवे हेतुवचनत्वेनानन्तरश्लोकमवतारयति—यः पुनरिति । न बाधितमात्मनि कर्तृत्वविज्ञानमस्येत्यज्ञस्तथा तस्य भावस्तत्ता तयेति यावत्, एतमर्थं दर्शयितुमज्ञस्य सर्वकर्मसंन्यासासंभवे हेतुमाहेति योजना । यस्मादित्यस्य तस्मादित्युत्तरेण संबन्धः । विवेकिनोऽपि देहधारितया देहभृत्त्वाविशेषे कर्माधिकारः स्यादित्याशङ्क्याह—नहीति । कर्तृत्वाधिकारस्तत्पूर्वकं कर्मानुष्ठानं तस्मादिति यावत् । ज्ञानवतो देहधारणेऽपि तदभिमानित्वाभावोऽतःशब्दार्थः । अज्ञस्य सर्वकर्मत्यागायोगमुक्तं हेतूकृत्य फलितमाह—तस्मादिति । कर्मानुष्ठायिनस्त्यागित्वोक्तिरयुक्तेत्याशङ्क्याह—कर्म्यपीति । कर्मिणापि फलत्यागेन त्यागित्ववचनं फलत्यागस्तुत्यर्थमित्यर्थः । कस्य तर्हि सर्वकर्मत्यागः संभवतीत्याशङ्क्य विवेकवैराग्यादिमतो देहाभिमानहीनस्येत्युक्तं निगमयति—तस्मादिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ख्यातः । आद्यस्तु नैष्कर्म्यसिद्धिं परमामित्यत्र वक्ष्यते । तत्र भाष्ये तिस्रस्त्यागविधाः प्रतिज्ञाय द्वे यथावत्प्रदर्श्य तृतीयापि केनचित्सामान्येन प्रतिपादिता । अत्रतु एकस्यां द्वयोरन्तर्भावं कृत्वा द्वे एव विधे उपपाद्य तृतीया प्रदेशान्तरे प्रक्षिप्तेति प्रकृते प्रतिज्ञाया अनिर्वाह इति विशेषः ॥ १० ॥ अमुख्यमेव सात्त्विकं त्यागमनूद्य तत्प्रयोजनमाह द्वाभ्याम्—नहीति । देहभृता देहाभिमानिना हि यस्मादशेषतः कर्माणि त्यक्तुं न शक्यं अशक्यम् । प्राणयात्रालोपप्रसङ्गात् । तस्मादधिकृतः सन् यः कर्मफलत्यागशीलः । तुशब्द एवार्थे । स एव त्यागीत्युच्यते । यस्त्वशेषतः

४ मधुसूदनीव्याख्या ।

यत्नेन स एवोपादेय इत्यर्थः ॥ १० ॥ तदेवमात्मज्ञानवतः सर्वकर्मत्यागः संभाव्यते कर्मप्रवृत्तिहेत्वो रागद्वेषयोरभावादित्युक्तं, संप्रत्यज्ञस्य कर्मत्यागासंभवे हेतुरुच्यते—मनुष्योऽहं ब्राह्मणोऽहं गृहस्थोऽहमित्याद्यभिमानेनाबाधितेन देहं कर्माधिकारहेतुवर्णाश्रमादिरूपं कर्तृभोक्तृत्वाद्याश्रयं स्थूलसूक्ष्मशरीरेन्द्रियसङ्घातं बिभर्ति अनाद्यविद्यावासनावशाद्व्यवहारयोग्यत्वेन कल्पितमसत्यमपि सत्यतया स्वभिन्नमपि स्वाभिन्नतया पश्यन् धारयति पोषयति चेति देहभृदबाधितकर्माधिकारहेतुर्देहाभिमानस्तेन विवेकज्ञानशून्येन देहभृता कर्मप्रवृत्तिहेतुरागद्वेषपौष्कल्येन सततं कर्मसु प्रवर्तमानेन कर्माण्यशेषतो निःशेषेण त्यक्तुं हि यस्मान्न शक्यं न शक्यानि सत्यां कारणसामग्र्यां कार्यत्यागस्याशक्यत्वात् । तस्मात् यस्त्वज्ञोऽधिकारी सत्त्वशुद्ध्यर्थं कर्माणि कुर्वन्नपि

५ भाष्योत्कर्षदीपिका ।

छिन्नसंशयः किं कर्माण्येव मुक्तिसाधनानि उत संन्यास एवेति संशयरहितः । अनेन कार्यमित्येवेत्युक्तादमुख्यसात्त्विकत्यागाद्यावृत्तिरेव । त्यागीत्यनेन यज्ञो दानमित्युक्तादत्यागात्पूर्वार्धेन कायेत्युक्ताद्राजसात्त्यागाद्यावृत्तिरित्यन्ये । आचार्योक्तव्याख्यानापेक्षयोदाहृतव्याख्यानत्रयेऽप्यधिकं स्वारस्यं चिन्त्यम् ॥ १० ॥ तदेवं सात्त्विकत्यागवतः शुद्धचित्तस्य सर्वकर्मत्यागे मुख्यसंन्यासेऽधिकारं प्रदर्श्याधिकृतस्य देहाभिमानित्वेन देहभृतोऽज्ञस्याबाधितात्मकर्तृत्वविज्ञानतयाहंकर्तेति निश्चितबुद्धेरशेषकर्मपरित्यागस्याशक्यत्वात्, कर्मफलत्यागेन विहितकर्मानुष्ठान एवाधिकारो न त्याग इत्येतमर्थं दर्शयितुमाह—नहीति । हि यस्माद्देहभृता देहं स्वात्मत्वेन बिभर्ति धारयतीति देहभृत् देहाभिमानवान् तेनाज्ञेनाशेषतः निःशेषेण सर्वाणि कर्माणि त्यक्तुं संन्यसितुं न शक्यते । तस्माद्य-

६ श्रीधरीव्याख्या ।

॥ १० ॥ नन्वेवंभूतात्कर्मफलत्यागाद्वरं सर्वकर्मत्यागस्तथा सति कर्मविक्षेपाभावेन ज्ञाननिष्ठा सुखं संपद्यते तत्राह—नेति । देहभृता देहात्माभिमानवता निःशेषेण सर्वाणि कर्माणि त्यक्तुं नहि शक्यम् । तदुक्तम्–'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यादिना ।

१ नीलकण्ठः.

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**शक्यते कर्तुम् ॥ ११ ॥** किं पुनस्तत्प्रयोजनं यत्सर्वकर्मपरित्यागात्स्यादित्युच्यते—**अनिष्टं** नरकतिर्यगादिलक्षणम् **इष्टं** देवादिलक्षणं, **मिश्रम्** इष्टानिष्टसंयुक्तं मनुष्यलक्षणं चैवं **त्रिविधं** त्रिप्रकारं **कर्मणो** धर्माधर्मलक्षणस्य **फलं** बाह्यानेककारकव्यापारनिष्पन्नं सदविद्याकृतमिन्द्रजालमायोपमं महामोहकरं

२ आनन्दगिरिव्याख्या ।

॥ ११ ॥ उक्ताधिकारिणः सर्वकर्मसंन्यासासंभवेऽपि फलाभावे कुतस्तस्य कर्तव्यतेति शङ्कते—**किं पुनरिति ।** गौणस्य मुख्यस्य वा संन्यासस्य फलं पिपृच्छिषितमिति विकल्पयति—**उच्यत इति ।** सर्वकर्मत्यागो नाम तदनुष्ठानेऽपि तत्फलाभिसन्धित्यागः । स चामुख्यसंन्यासस्तस्य फलमाह—**अनिष्टमिति ।** मुख्ये तु संन्यासे सर्वकर्मत्यागे सम्यग्धीद्वारा सर्वसंसारोच्छित्तिरेव फलमित्याह—**नत्विति ।** पादत्रयं व्याकरोति—**अनिष्टमित्यादिना ।** तिर्यगादीत्यादिपदमवशिष्टनिकृष्टयोनिसंग्रहार्थं, देवादीत्यादिपदमवशिष्टोत्कृष्टयोनिग्रहणायेति विभागः । फलशब्दं व्युत्पादयति—**बाह्येति ।** करणद्वारकमनेकविधत्वमुक्त्वा मिथ्यात्वमाह—**अविद्येति ।** तत्कृतत्वेन दृष्टिमात्रदेहत्वे

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्माणि त्यक्तुं शक्नोति परमार्थदर्शी स मुख्यस्त्यागीत्यर्थः ॥ ११ ॥ एवंभूतस्य त्यागस्य फलमाह—**अनिष्टमिति ।** अनिष्टं नरकतिर्यगादिरूपम्, इष्टं देवतादिरूपम्, मिश्रं मानुषभाव इति कर्मणः कर्मजातीयस्य फलं त्रिविधं प्रेत्य मरणानन्तरमत्यागिनां पूर्वोक्तमुख्यसंन्यासहीनानां भवति मुख्यसंन्यासिनां तु क्वचित्तद्भवति । तेषां कर्तृत्वाभि-

४ मधुसूदनीव्याख्या ।

भगवदनुकम्पया तत्फलत्यागी । तुशब्दस्तस्य दुर्लभत्वद्योतनार्थः । स त्यागीत्यभिधीयते गौण्या वृत्त्या खल्वर्थमत्याग्यपि सन् । अशेषकर्मसंन्यासस्तु परमार्थदर्शिनैव देहभृता शक्यते कर्तुमिति स एव मुख्यया वृत्त्या त्यागीत्यभिप्रायः ॥ ११ ॥ ननु देहभृतः परमात्मज्ञानशून्यस्य कर्मिणोऽपि कर्मफलाभिसन्धित्यागित्वेन गौणसंन्यासिनः परमात्मज्ञानवतो देहाभिमानरहितस्य सर्वकर्मत्यागिनो मुख्यसंन्यासिनश्च कः फले विशेषो यदलाभेन गौणत्वमेकस्य यल्लाभेन च मुख्यत्वमन्यस्य, कर्मफलत्यागित्वं तु द्वयोरपि तुल्यमित्यन्यो विशेषो वाच्यः । उच्यते—अत्यागिनां कर्मफलत्यागित्वेऽपि कर्मानुष्ठायिनामज्ञानां गौणसंन्यासिनां प्रेत्य विविदिषापर्यन्तं सत्त्वशुद्धेः प्रागेव मृतानां पूर्वकृतस्य कर्मणः फलं शरीरग्रहणं भवति मायामयं फल्गुतया लयमदर्शनं गच्छतीति निरुक्तेः । कर्मण इति जात्यभिप्रायमेकवचनमेकस्य त्रिविधफलत्वानुपपत्तेः । तच्च फलं कर्मणस्त्रिविधत्वात्त्रिविधं पापस्यानिष्टं प्रतिकूलवेदनीयं नारकतिर्यगादिलक्षणं, पुण्यस्य इष्टमनुकूलवेदनीयं देवादिलक्षणं, मिश्रस्य तु पापपुण्ययुगलस्य मिश्रमिष्टानिष्टसंयुक्तं मानुष्यलक्षणमित्येवं त्रिविधमित्यनुवादो हेयत्वार्थः । एवं गौणसंन्यासिनां शरीरपातादूर्ध्वं शरीरान्तरग्रहणमावश्यकमित्युक्त्वा मुख्यसंन्यासिनां परमात्मसाक्षात्कारेणाविद्यातत्कार्यनिवृत्तौ विदेहकैवल्यमेवेत्याह—नतु संन्यासिनां क्वचित्परमात्मज्ञानवतां मुख्यसंन्यासिनां परमहंसपरिव्राजकानां प्रेत्य कर्मणः फलं शरीरग्रहणमनिष्टमिष्टं मिश्रं च क्वचिद्देशे काले वा न भवत्येवेत्यवधारणार्थस्तुशब्दः, ज्ञानेनाज्ञानस्योच्छेदे तत्कार्याणां कर्मणामुच्छिन्नत्वात् । तथाच श्रुतिः 'भिद्यते हृदय-

५ भाष्योत्कर्षदीपिका ।

स्वज्ञो देहभृदधिकृतो विहितानि कर्माणि कुर्वन् तत्फलत्यागी कर्मफलाभिसंधिमात्रसंन्यासी स त्यागीत्यभिधीयते । कर्म्यपि सन् त्यागीति स्तुत्यभिप्रायेणोक्तम् । तथाच परमार्थदर्शिना देहाभिमानशून्येनाशेषकर्मसंन्यासः शक्यते कर्तुमिति भावः ॥ ११ ॥ अमुख्यसंन्यासापेक्षया मुख्यसंन्यासस्य विशिष्टं प्रयोजनं किमित्याकाङ्क्षायामाह—अनिष्टं नरकतिर्यगादिलक्षणम्, इष्टं देवादिलक्षणम्, मिश्रमिष्टानिष्टसंयुक्तं मनुष्यलक्षणं चैवं त्रिविधं त्रिप्रकारं कर्मणो धर्माधर्मलक्षणस्य फलं बाह्यानेककारकव्यापारनिष्पन्नत्वादनेकं अविद्याकृतत्वात् मिथ्याभूतमिन्द्रजालमायोपमं महामोहकरं प्रत्यगात्मोपसर्पीव फल्गुतया लयमदर्शनं गच्छतीति फलशब्दनिर्वचनात् । तदेवं त्रिविधं फलमत्यागिनामज्ञानां कर्मिणामपरमार्थसंन्यासिनां प्रेत्य शरीरपातादूर्ध्वं भवति । फलाभिसंधिरहितानां कर्मणां देहपातादूर्ध्वं संचितादिकर्मानुरोधिफलस्यावश्यंभावादिति भावः । संन्यासिनां तु परमार्थसंन्यासिनां परमहंसपरिव्राजकानां केवल-

६ श्रीधरीव्याख्या ।

तस्माद्यस्तु कर्माणि कुर्वन्नेव कर्मफलत्यागी स एव मुख्यत्यागीत्यभिधीयते ॥ ११ ॥ एवंभूतस्य कर्मफलत्यागस्य फलमाह—**अनिष्टमिति ।** अनिष्टं नारकित्वं, इष्टं देवत्वं, मिश्रं मनुष्यत्वं, एवं त्रिविधं पापस्य पुण्यस्य चोभयमिश्रस्य च कर्मणो यत्फलं प्रसिद्धं तत्स-

७ अभिनवगुप्ताचार्यव्याख्या ।

पुनर्मुनेः सत्यतरत्यागवाचोयुक्तिरुपपत्तिमती ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ अनिष्टमिति । अत्यागिनामिति तन्मया-

१ श्रीमच्छांकरभाष्यम् ।

**प्रत्यगात्मोपसर्पीव फल्गुतया लयमदर्शनं गच्छतीति फलमिति फलनिर्वचनं तदेतदेवंलक्षणं फलं भवत्यत्यागिनामज्ञानां कर्मिणामपरमार्थसंन्यासिनां प्रेत्य शरीरपातादूर्ध्वम् । नतु परमार्थसंन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानां क्वचित् । नहि केवलसम्यग्दर्शननिष्ठा अविद्यादिसंसारबीजं**

२ आनन्दगिरिव्याख्या ।

दृष्टान्तमाह—**इन्द्रेति** । प्रतीतितो रमणीयत्वं सूचयति—**महामोहेति** । अविद्योत्थस्याविद्याश्रितत्वादात्माश्रितत्वं वस्तुतो नास्तीत्याह—**प्रत्यगिति** । उक्तं फलं कर्मिणामिष्यते चेदमुख्यसंन्यासफलोक्तिपरत्वं पादत्रयस्य कथमिष्टमित्याशङ्क्याह—**अपरमार्थेति** । फलाभिसंधिविकलानां कर्मिणां देहपातादूर्ध्वं कर्मानुरोधिफलमावश्यकमित्यर्थः । कर्मिणामेव सतामफलाभिसंधीनाममुख्यसंन्यासित्वात्तदीयामुख्यसंन्यासस्य फलमुक्त्वा चतुर्थपादं व्याचष्टे—**नत्विति** । अमुख्यसंन्यासमनन्तरप्रकृतं व्यवच्छिनत्ति—**परमार्थेति** । तेषां प्रधानं धर्ममुपदिशति—**केवलेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मानाभावात् । अन्येतु गौणसंन्यासिनामेवायं कर्मालेप इत्याहुः । तथाच व्याख्यातं 'कार्यमित्येव यत्कर्म' इत्यत्र । अन्यथा संन्यासिनां गौणसंन्यासिनां च विशेषो न स्यात् । नचैवं मुख्यसंन्यासिनां गौणसंन्यासिनां चाविशेषापत्तिरिति

४ मधुसूदनीव्याख्या ।

ग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति । पारमर्षं च सूत्रम् 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति परमात्मज्ञानादशेषकर्मक्षयं दर्शयति । तेन गौणसंन्यासिनां पुनः संसारः मुख्यसंन्यासिनां तु मोक्ष इति फले विशेष उक्तः । अत्र कश्चिदाह 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च' इत्यादौ कर्मफलत्यागिषु संन्यासिशब्दप्रयोगात्कर्मिण एवात्र फलत्यागसाम्यात्संन्यासिशब्देन गृह्यन्ते । तेषां च सात्त्विकानां नित्यकर्मानुष्ठानेन निषिद्धकर्माननुष्ठानेन च पापासंभवान्नानिष्टं फलं संभवति नापीष्टं काम्याननुष्ठानात्, ईश्वरार्पणेन फलस्य त्यक्तत्वाच्च । अतएव मिश्रमपि नेति त्रिविधकर्मफलासंभवः । अतएवोक्तं 'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया' इति, स वक्तव्यः शब्दस्यार्थस्य च मर्यादा न निरधारि भवतेति । तथाहि 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति शब्दमर्यादा । यथा 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्यत्रामावास्याशब्दः काले मुख्यः । तत्कालोत्पन्ने कर्मणि च गौणः 'य एवं विद्वानमावास्यायां यजते' इत्यादौ तत्रामावास्यायामिति कर्मग्रहणे पितृयज्ञस्य तदङ्गत्वान्न फलं कल्पनीयमिति विधेर्लाघवमिति पूर्वपक्षितं कात्यायनेन 'अङ्गं वा समभिव्याहारात्' इति गौणार्थस्य मुख्यार्थोपस्थितिपूर्वकत्वान्मुख्यार्थस्य चेहाबाधादमावास्याशब्देन काल एव गृह्यते' फलकल्पनागौरवं तूत्तरकालीनं प्रमाणत्वादङ्गीकार्यमिति सिद्धान्तितं जैमिनिना—'पितृयज्ञः स्वकालत्वादनङ्गं स्यात्' इति । एवं स्थिते संन्यासिशब्दस्य सर्वकर्मत्यागिनि मुख्यत्वात्कर्मिणि च फलत्यागसाम्येन गौणत्वान्मुख्यार्थस्य चेहाबाधात्तस्यैव संन्यासिशब्देन ग्रहणमिति शब्दमर्यादया सिद्धम् । सत्यां कारणसामग्र्यां कार्योत्पाद इति चार्थमर्यादा । तथाहि ईश्वरार्पणेन त्यक्तकर्मफलस्यापि सत्त्वशुद्ध्यर्थं नित्यानि कर्माण्यनुतिष्ठतोऽन्तराले मृतस्य प्रागर्जितैः कर्मभिस्त्रिविधं शरीरग्रहणं केन वार्यते 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः । अन्ततः सत्त्वशुद्धिफलज्ञानोत्पत्त्यर्थं तदधिकारिशरीरमपि तस्यावश्यकमेव । अतएव विविदिषासंन्यासिनः श्रवणादिकं कुर्वतोऽन्तराले मृतस्य योगभ्रष्टशब्दवाच्यस्य 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इत्यादिना ज्ञानाधिकारिशरीरप्राप्तिरवश्यंभाविनीति निर्णीतं षष्ठे । यत्र सर्वकर्मत्यागिनोऽप्यज्ञस्य शरीरग्रहणमावश्यकं तत्र किं वक्तव्यमज्ञस्य कर्मिण इति । तस्मादज्ञस्यावश्यं शरीरग्रहणमित्यर्थमर्यादया सिद्धम् । पराक्रान्तं चैकभविकपक्षनिराकरणे सूरिभिः । तस्माद्यथोक्तं भगवत्पूज्यपादभाष्यकृतं व्याख्यानमेव ज्यायः । तदयमत्र निष्कर्षः—अकर्त्रभोक्तृपरमानन्दाद्वितीयसत्यस्वप्रकाशब्रह्मात्मसाक्षात्कारेण निर्विकल्पेन वेदान्तवाक्यजन्येन विचारनिश्चितप्रामाण्येन सर्वप्रकाराप्रामाण्यशङ्काशून्येन ब्रह्मात्मज्ञानेनात्मज्ञाननिवृत्तौ तत्कार्यकर्तृत्वाद्य-

५ भाष्योत्कर्षदीपिका ।

ज्ञाननिष्ठानामुन्मूलिताविद्यादिसंसारबीजानां क्वचिद्देशे काले वा यथोक्तं फलं न भवति । अतः परमार्थतत्त्वविदः क्रियाकारकफलानामात्मन्यविद्याध्यारोपितत्वदर्शिन एवाशेषकर्मसंन्यासित्वं संभवति, नत्वज्ञस्याधिष्ठानादीनि क्रियाकर्तॄणि कारकाण्यात्मत्वेन पश्यतोऽशेषकर्मसंन्यासित्वमिति भावः । यैस्त्वपरे एवंभूतस्य कर्मफलत्यागस्य फलमाह । अनिष्टादिरूपं त्रिविधं फलमत्यागिनां सकामानामेव प्रेत्य परत्र भवति । तेषां त्रिविधकर्मसंभवात् नतु संन्यासिनां क्वचिदपि भवति । संन्यासिशब्देनात्र फलत्यागसाम्यात्प्रकृताः कर्मफलत्यागिनो गृह्यन्ते । अनाश्रितः कर्मफलं कार्यं कर्म करोति यः स संन्यासी च योगी चेत्येवमादौ च फलत्यागिषु

६ श्रीधरीव्याख्या ।

र्कमत्यागिनां सकामानामेव प्रेत्य परत्र भवति, तेषां त्रिविधकर्मसंभवात् । नतु संन्यसिनां क्वचिदपि भवति । संन्यासिशब्देनात्र

१ नीलकण्ठः।

**पञ्चैतानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

नोन्मूलयति कदाचिदित्यर्थः ॥ १२ ॥ अतः परमार्थदर्शिन एवाशेषकर्मसंन्यासित्वं संभवत्यविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानां न त्वज्ञस्याधिष्ठानादीनि क्रियाकर्तृणि कारकाण्यात्मत्वेन पश्यतोऽशेषकर्मसंन्यासः संभवति । तदेतदुत्तरैः श्लोकैर्दर्शयति—पञ्चेति । पञ्चैतानि वक्ष्यमाणानि

२ आनन्दगिरिव्याख्या ।

क्वचिद्देशे काले वा नास्ति यथोक्तं फलं तेषामिति संबन्धः । तर्हि परमार्थसंन्यासोऽफलत्वान्नानुष्ठियेतेत्याशङ्क्य तस्य मोक्षावसायित्वान्मैवमित्याह—**नहीति** ॥ १२ ॥ नन्वपरमार्थसंन्यासवदविशेषादज्ञानां परमार्थसंन्यासोऽपि किं न स्यात्त्यागस्य सुकरत्वात्तत्राह—**अतः परमार्थेति** । तस्य सम्यग्दर्शनादविद्यानिवृत्तौ तदारोपितक्रियाकारकादिनिवृत्तेरिति हेत्वर्थः । विद्यावतः सर्वकर्मसंन्यासित्वसंभावनामुक्त्वैवकारव्यावर्त्यं दर्शयति—**नत्विति** । अविदुषोऽशेषकर्मणां तद्धेतूनां च रागादीनां त्यागायोगे कारकेष्वधिष्ठानादिष्वात्मत्वदर्शनं हेतुमाह—**क्रियेति** । कथमधिष्ठानादीनां क्रियाकर्तृत्वं कथं वा विदुषस्तेष्वात्मत्वधीरित्याशङ्क्यानन्तरश्लोकचतुष्टयस्य तात्पर्यमाह—**तदेतदिति** । कर्मार्थानामधिष्ठानादीनामप्रामाणिकत्वाशङ्कामादावुद्धरति—**पञ्चेति** । उत्तरत्रेत्यधिष्ठानादिषु वक्ष्यमाणेष्वित्यर्थः ।

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

वाच्यम् । उभयेषामुत्तरकर्माश्लेषसाम्येऽपि पूर्वकर्मदाहादाहकृतस्य विशेषस्य सत्त्वात् । गौणसंन्यासिनां जन्मान्तरादिकमपि पूर्वकर्मभिरेव भविष्यति आपस्तम्बोक्ताम्रनिदर्शनेन योगभ्रष्टगतिवन्नान्तरीयकं वा नतु तस्य प्रधानं फलं स्वर्गादि भवितुमर्हत्यनुद्दिष्टत्वादिति ॥ १२ ॥ नन्वात्मनः कर्मालेपनिमित्तं यदकर्तृत्वानुसंधानं तत्किं योषिदग्निदृष्ट्यादिवदाहार्यमुत वास्तवमेव सदविद्याध्यस्तकर्तृत्वेनावृतमिति शास्त्रदृष्ट्या कर्तृत्वतिरोधानेनाकर्तृत्वमेव भाव्यत इत्याशङ्क्याग्रित्वेन

४ मधुसूदनीव्याख्या ।

भिमानरहितः परमार्थसंन्यासी सर्वकर्मोच्छेदाच्छुद्धः केवलः सन्नाविद्याकर्मादिनिमित्तं पुनः शरीरग्रहणमनुभवति सर्वभ्रमाणां कारणोच्छेदेनोच्छेदात् । यस्त्वविद्यावान्कर्तृत्वाद्यभिमानी देहभृत् स त्रिविधो रागादिदोषप्राबल्यात्काम्यनिषिद्धादियथेष्टकर्मानुष्ठायी मोक्षशास्त्रानधिकार्येकः । अपरस्तु यः प्राकृतसुकृतवशात्किंचित्प्रक्षीणरागादिदोषः सर्वाणि कर्माणि त्यक्तुमशक्नुवन्निषिद्धानि काम्यानि च परित्यज्य नित्यानि नैमित्तिकानि च कर्माणि फलाभिसंधित्यागेन सत्त्वशुद्ध्यर्थमनुतिष्ठन् गौणसंन्यासी मोक्षशास्त्राधिकारी द्वितीयः सः । ततो नित्यनैमित्तिककर्मानुष्ठानेनान्तःकरणशुद्ध्या समुपजातविविदिषः श्रवणादिना वेदनं मोक्षसाधनं संपिपादयिषुः सर्वाणि कर्माणि विधितः परित्यज्य ब्रह्मनिष्ठं गुरुमुपसर्पति विविदिषासंन्यासिसमाख्यस्तृतीयः । तत्राद्यस्य संसारित्वं सर्वप्रसिद्धं, द्वितीयस्य तु 'अनिष्टं' इत्यादिना व्याख्यातं, तृतीयस्य तु 'अयतिः श्रद्धयोपेतः' इति प्रश्नमुत्थाप्य निर्णीतं षष्ठे । अज्ञस्य संसारित्वं ध्रुवं कारणसामग्र्याः सत्त्वात् । तत्तु कस्यचिज्ज्ञानाननुगुणं कस्यचिज्ज्ञानानुगुणमिति विशेषः । विज्ञस्य तु संसारकारणाभावात्स्वत एव कैवल्यमिति द्वौ पदार्थौ सूत्रितावस्मिञ्श्लोके ॥ १२ ॥ तत्रात्मज्ञानरहितस्य संसारित्वे हेतुः कर्मत्यागासंभव उक्तः 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इति । तत्राज्ञस्य कर्मत्यागासंभवे को हेतुः कर्महेता-

५ भाष्योत्कर्षदीपिका ।

संन्यासिशब्दप्रयोगदर्शनात् । तेषां सात्त्विकानां पापासंभवात् ईश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्मफलं न भवतीत्यर्थ इति वर्णयन्ति तन्नोपादेयम् । संन्यासिशब्दस्य परमार्थसंन्यासिनि सर्वकर्मत्यागिनि मुख्यत्वात् कर्मिणि च फलत्यागसाम्येन गौणत्वात् मुख्यार्थस्य चेहाबाधात्तस्यैव संन्यासिशब्देन ग्रहणसंभवे गौणग्रहणस्य 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति शब्दमर्यादाऽपरिज्ञानविजृम्भितत्वात् सत्यां कारणसामग्र्यां कार्योत्पाद इत्यर्थमर्यादाऽज्ञानमूलकत्वाच्च ईश्वरार्पणेन त्यक्तकर्मफलस्यापि सत्त्वशुद्ध्यर्थं नित्यानि कर्माण्यनुतिष्ठतोऽन्तराले मृतस्य प्रागर्जितकर्मरूपकारणसामग्र्या त्रिविधशरीररूपकार्योत्पाद आवश्यक एवेति दिक् ॥१२॥ एवं परमार्थसंन्यासिनां त्रिविधकर्मफलाभावमुक्त्वा परमार्थसंन्यासाधिकारकारणस्यात्मन्यकर्तृत्वज्ञानस्यावश्यकतां बोधयितुमाह—**पञ्चैतानीत्यादिना** । एतानि वक्ष्यमाणानि कारणानि निर्वर्तकानि निबोध मद्वचनाज्जानीहि । ज्ञात्वा

६ श्रीधरीव्याख्या ।

फलत्यागसाम्यात्प्रकृताः कर्मफलत्यागिनोऽपि गृह्यन्ते । 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च' इत्येवमादौ च कर्मफलत्यागिषु संन्यासिशब्दप्रयोगदर्शनात् । तेषां सात्त्विकानां पापासंभवादीश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात्त्रिविधमपि कर्मफलं न भवतीत्यर्थः ॥ १२ ॥ ननु कर्म कुर्वतः कर्मफलं कथं न भवेदित्याशङ्क्य सङ्गत्यागिनो निरहंकारस्य सतः कर्मफलेन

७ अभिनवगुप्ताचार्यव्याख्या ।

नाम् ॥ १२ ॥ अधुना व्यवहारदशायामपि प्रशस्यं पे कर्महेतुषु स्थितेषु ब्रह्मादेवामी अविद्यान्धाः पुमांसः स्वात्मन्येव सकलकर्तृभाव-

१ श्रीमच्छांकरभाष्यम् ।

**हे महाबाहो, कारणानि निर्वर्तकानि । निबोध मे ममेति, उत्तरत्र चेतःसमाधानार्थं वस्तुवैषम्यप्रदर्शनार्थं च । तानि च कारणानि ज्ञातव्यतया स्तौति—सांख्ये ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिञ्शास्त्रे तत्सांख्यं वेदान्तः । कृतान्त इति तस्यैव विशेषणं । कृतमिति कर्मोच्यते तस्यान्तः कृतस्य परिसमाप्तिर्यत्र स कृतान्तः कर्मान्त इत्येतत् 'यावानर्थ उदपाने' 'सर्वं कर्माखिलं पार्थ ज्ञाने**

२ आनन्दगिरिव्याख्या ।

वस्तूनां तेषामेव वैषम्यं दिदर्शयिषितं नहि चेतःसमाधानादृते ज्ञातुं शक्यते । सांख्यशब्दं व्युत्पादयति—**ज्ञातव्या इति** । आत्मा त्वंपदार्थस्तत्पदार्थो ब्रह्म तयोरैक्यधीस्तदुपयोगिनश्च श्रवणादयः पदार्थास्ते संख्यायन्ते व्युत्पाद्यन्ते । कृतान्तशब्दस्य वेदान्तविषयत्वं विभजते—**कृतमित्यादिना** । वेदान्तस्य तत्त्वधीद्वारा कर्मावसानभूमित्वे वाक्योपक्रमानुकूल्यं दर्शयति—**यावानिति** । उदपाने कूपादौ यावानर्थः स्नानादिस्तावानर्थः समुद्रे संपद्यतेऽतो यथा कूपादिकृतं कार्यं सर्वं समुद्रेऽन्तर्भवति तथा सर्वेषु वेदेषु कर्मार्थेषु यावत्फलं तावज्ज्ञानवतो ब्राह्मणस्य ज्ञानेऽन्तर्भवति,

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दृष्टायां योषिति दग्धृत्वादर्शनेनेव कल्पितेनाकर्तृत्वेन वास्तवस्य कर्मालेपस्यासंभवादाद्यं निरस्य द्वितीयमुपपादयिष्यन् पीठिकामारचयति—**पञ्चेति** । हे महाबाहो, सर्वकर्मणां सिद्धये इमानि वक्ष्यमाणानि पञ्च कारणानि निर्वर्तकानि मे मद्वचनान्निबोध बुद्ध्यस्व । स्ववचने विश्वासोत्पादनार्थं कारणानां समूलत्वमाह—सांख्ये कृतान्ते प्रोक्तानीति । सम्यग्विविच्य ख्यायन्ते प्रकटीक्रियन्ते तत्त्वान्यात्मानात्मपदार्थरूपाणि यस्मिंस्तत्सांख्यं वेदान्तशास्त्रम् । तदेव विशिनष्टि—कृतान्ते कृतस्य कर्मणोऽन्तः परिसमाप्तिर्यस्मिन् । 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यात्मज्ञाने सति सर्व-

४ मधुसूदनीव्याख्या ।

वधिष्ठानादिपञ्चके तादात्म्याभिमान इतीममर्थं चतुर्भिः श्लोकैः प्रपञ्चयति । तत्र प्रथमेनाधिष्ठानादीनि पञ्च वेदान्तप्रमाणमूलानि हेयत्वार्थमवश्यं ज्ञातव्यानीत्याह—इमानि वक्ष्यमाणानि पञ्च सर्वकर्मणां सिद्धये निष्पत्तये कारणानि निर्वर्तकानि हे महाबाहो मे मम परमाप्तस्य सर्वज्ञस्य च वचनान्निबोध बोद्धुं सावधानो भव । नह्यत्यन्तदुर्ज्ञानान्येतान्यनवहितचेतसा शक्यन्ते ज्ञातुमिति चेतःसमाधानविधानेन तानि स्तौति । महाबाहुत्वेन च सत्पुरुष एव शक्तो ज्ञातुमिति सूचयति स्तुत्यर्थमेव । किमेतान्यप्रमाणकान्येव तव वचनाज्ज्ञेयानि नेत्याह—सांख्ये कृतान्ते प्रोक्तानि निरतिशयपुरुषार्थप्राप्त्यर्थं सर्वानर्थनिवृत्त्यर्थं च ज्ञातव्यानि जीवो ब्रह्म तयोरैक्यं तद्बोधोपयोगिनश्च श्रवणादयः पदार्थाः संख्यायन्ते व्युत्पाद्यन्तेऽस्मिन्निति सांख्यं वेदान्तशास्त्रं तस्मिन्नात्मवस्तुमात्रप्रतिपादके किमर्थमनात्मभूतान्यवस्तूनि लोकसिद्धानि च कर्मकारणानि पञ्च प्रतिपाद्यन्त इत्यतः शास्त्रविशेषणं कृतान्त इति । कृतमिति कर्मोच्यते तस्यान्तः परिसमाप्तिस्तत्त्वज्ञानोत्पत्त्या यत्र तस्मिन्कृतान्ते शास्त्रे प्रोक्तानि प्रसिद्धान्येव लोकेऽनात्मभूतान्येवात्मतया मिथ्याज्ञानारोपेण गृहीतान्यात्मतत्त्वज्ञानेन बाधसिद्धये हेयत्वेनोक्तानि । यदा ह्यन्यधर्म एव कर्मात्मन्यविद्ययाऽध्यारोपितमित्युच्यते तदा शुद्धात्मज्ञानेन तद्बाधात्कर्मणोऽन्तः कृतो भवति । अत आत्मनः कर्मासंबन्धप्रतिपादनायानात्मभूतान्येव पञ्च कर्मकारणानि वेदान्तशास्त्रे मायाकल्पितान्यनूदितानीति नाद्वैतात्ममात्रतात्पर्यहानिस्तेषां

५ भाष्योत्कर्षदीपिका ।

च महाबाहुसाध्ये कायिके युद्धे कर्मणि कर्तृत्वाभिमानं परित्यजेति ध्वनयन्संबोधयति—महाबाहो इति । तेषामवश्यज्ञातव्यताज्ञापनाय तानि स्तौति—सांख्य इति । त्वंपदार्थ आत्मा तत्पदार्थो ब्रह्म तयोरैक्यधीः तदुपयोगिनश्च शमदमादयो ज्ञातव्याः पदार्थाः संख्यायन्ते व्युत्पाद्यन्ते यस्मिन्वेदान्तशास्त्रे तत्सांख्यं । सांख्यं विशिनष्टि—कृतान्ते कृतस्य कर्मणोऽन्तः परिसमाप्तिर्यत्र तस्मिन्कृतान्ते ।'यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः'। 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यात्मज्ञाने जाते सर्वकर्मणां निवृत्तेर्दर्शितत्वात् आत्मज्ञानार्थकस्य सांख्यस्यापि कृतान्तत्वं । तस्मिन्प्रोक्तानि सर्वेषां कर्मणां सिद्धये निष्पत्त्यर्थं कथितानीत्यर्थः । संख्या मोचकं ज्ञानं तत्संबन्धिनि तज्जनके सांख्येऽकृतान्तेऽकृतो वेदोऽपौरुषेयत्वात्तस्यान्ते वेदान्ते इत्यर्थस्तु प्रश्लेषं विनैवार्थसंभवमभिप्रेत्याचार्यैर्न प्रदर्शितः । यत्तु संख्यायन्ते गण्यन्ते तत्त्वान्यस्मिन्निति सांख्यं कृतोऽन्तो निर्णयो यस्मिन्निति

६ श्रीधरीव्याख्या ।

लेपो नास्तीत्युपपादयितुमाह—**पञ्चैतानीति पञ्चभिः** । सर्वकर्मणां सिद्धये निष्पत्तये इमानि वक्ष्यमाणानि पञ्च कारणानि मे वचनान्निबोध जानीहि । आत्मनः कर्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानि ज्ञातव्यानीत्येवं तेषां स्तुत्यर्थमाह—सांख्य इति । सम्यक् ख्यायते ज्ञायते परमात्माऽनेनेति सांख्यं तत्त्वज्ञानं तस्मिन्कृतं कर्म तस्यान्तः समाप्तिरस्मिन्निति कृतान्तस्तस्मिन्वेदान्तसिद्धान्त इत्यर्थः । यद्वा

७ अभिनवगुप्ताचार्यव्याख्या ।

भारमारोपयन्ति अतो निजयैव धियात्मानं बध्नन्ति नतु वस्तुस्थित्यास्य बन्ध इत्युपदिश्यते पञ्चैतानीत्यादिना । कृतोऽन्तो निश्चयो यत्रेति

१ श्रीधर०.

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

परिसमाप्यते' इत्यात्मज्ञाने संजाते सर्वकर्मणां निवृत्तिं दर्शयति । अतस्तस्मिन्नात्मज्ञानार्थे सांख्ये कृतान्ते वेदान्ते प्रोक्तानि कथितानि सिद्धये निष्पत्त्यर्थं सर्वकर्मणाम् ॥ १३ ॥ कानि तानीत्युच्यते— अधिष्ठानमिति । अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयोऽधिष्ठानं शरीरं तथा

२ आनन्दगिरिव्याख्या ।

ज्ञानं प्राप्तस्य कर्तव्यानवशेषादित्यर्थः । तत्रैव वाक्यान्तरमनुक्रामति—**सर्वमिति** । उदाहृतवाक्ययोस्तात्पर्यमाह—**आत्मेति** । आत्मज्ञाने सति सर्वकर्मनिवृत्तावपि कथं वेदान्तस्य कृतान्तत्वमित्याशङ्क्याह—**अत इति** । तानि मद्वचनतो निबोधेति पूर्वेण संबन्धः ॥ १३ ॥ कर्मार्थान्यधिष्ठानादीनि मानमूलत्वाज्ज्ञेयानीत्युक्तमिदानीं प्रश्नपूर्वकं विशेषतस्तानि निर्दिशति—**कानीत्यादिना** । प्रतीकमादाय—व्याकरोति—**अधिष्ठानमिति** । उपाधिलक्षणो बुद्ध्यादिरुपाधिस्तल्लक्षणस्तत्स्वभावो बुद्ध्याद्यनुविधायी तद्धर्मानात्मनि पश्यन्नुपहितस्तत्प्रधान इत्यर्थः । तत्र कार्यलिङ्गकम-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्मणां समाप्तिदर्शनात् तस्मिन्सांख्ये कृतान्ते प्रोक्तानि ॥ १३ ॥ तान्येव पञ्च गणयति—**अधिष्ठानमिति** । अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयो देहः तस्यानात्मत्वं चार्वाकव्यतिरिक्तसमस्तवादिसिद्धम् । तथा कर्ता बुद्धिविशिष्टश्चिदाभासः प्रमाता नामाहंप्रत्ययविषयोऽहंकारस्तथेत्यनेन तद्वदेवानात्मत्वेन ज्ञेय इत्युक्तम् । देहस्यैव सृष्टौ प्रलये च तस्याप्युत्पत्तिविनाशयोर्दर्शनात् । एतच्च विशेषणनाशाद्विशिष्टनाशं विशेषणोत्पत्त्या च विशिष्टो-

४ मधुसूदनीव्याख्या ।

तदङ्गत्वेनैवेतरप्रतिपादनात् इहापि च सर्वकर्मान्तत्वं ज्ञानस्य प्रतिपादितं 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति । तस्माज्ज्ञानशास्त्रस्य कर्मान्तत्वमुपपन्नम् ॥ १३ ॥ प्रमाणमूलानि कर्मकारणानि पञ्चात्मनोऽकर्तृत्वसिद्ध्यर्थं हेयत्वेन ज्ञातव्यानीत्युक्ते कानि तानीत्यपेक्षायां तत्स्वरूपमाह द्वितीयेन—इच्छाद्वेषसुखदुःखचेतनाद्यभिव्यक्तेराश्रयोऽधिष्ठानं शरीरं । तथा कर्ता यथाधिष्ठानमनात्मा भौतिकं मायाकल्पितं स्वाप्नगृहरथादिवत् तथा कर्ताऽहं करोमीत्याद्यभिमानवान् ज्ञानशक्तिप्रधानापञ्चीकृतपञ्चमहाभूतकार्योऽहंकारोऽन्तःकरणं बुद्धिर्विज्ञानमित्यादिपर्यायशब्दवाच्यस्तादात्म्याध्यासेनात्मनि कर्तृत्वादिधर्माध्यारोपहेतुरनात्मा भौतिको मायाकल्पितश्चेति तथाशब्दार्थः । स्थूलशरीरस्य लोकायतिकैरात्मत्वेन परिगृहीतस्याप्यन्यैः परीक्षकैरनात्मत्वेन निश्चयात्तद्दृष्टान्तेन तार्किकादिभिरात्मत्वेन परिगृहीतस्य कर्तुरप्यनात्मत्वनिश्चयः सुकर इत्यर्थः । करणं च श्रोत्रादिशब्दाद्युपलब्धिसाधनम् । चशब्दस्तथेत्यनुकर्षार्थः । पृथग्विधं नानाप्रकारं पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनो बुद्धिश्चेति द्वादशसंख्यं । करणवर्गे मनो बुद्धिश्चेति वृत्तिविशेषौ वृत्तिमांस्त्वहंकारः कर्तैव । चिदाभासस्तु सर्वत्रैवाविशिष्टः । विविधा नानाप्रकाराः पञ्चधा दशधा वा प्रसिद्धाः । चशब्दस्तथेत्यनुकर्षार्थः । पृथक् असंकीर्णाः, चेष्टाः क्रियारूपाः क्रियाशक्तिप्रधाना—पञ्चीकृतपञ्चमहाभूतकार्याः क्रियाप्राधान्येन वायवीयत्वेन व्यपदिश्यमानाः प्राणापानव्यानोदानसमानाः नागकूर्मकृकलदेवदत्तधनंजयाख्याश्च तदन्तर्भूता एव । अत्र च सुषुप्तावन्तःकरणस्य कर्तुर्लयेऽपि प्राणव्यापारदर्शनाद्भेदव्यपदेशाच्चान्तःकरणादत्यन्तभिन्न एव प्राण इति केचित् । क्रियाशक्तिज्ञानशक्तिमदेकमेव जीवत्वोपाधिभूतमपञ्चीकृतपञ्चमहाभूतकार्यं क्रियाशक्तिप्राधान्येन प्राण इति ज्ञानशक्तिप्राधान्येन चान्तःकरणमिति व्यपदिश्यत इत्यभियुक्ताः । 'स ईक्षांचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत' इति श्रुतावुत्क्रान्त्याद्युपाधित्वं प्राणस्योक्तं । तथा 'सधीः स्वप्नो भूत्वेमं

५ भाष्योत्कर्षदीपिका ।

कृतान्तं सांख्यशास्त्रमेव तस्मिन्नित्यपरे वर्णयन्ति तन्नोपादेयम् । सांख्यशास्त्रे अधिष्ठानादीनां कारणत्वेनानुक्तत्वात् । भिन्नाः भोक्तार आत्मान इति प्रतिपादकस्य सांख्यशास्त्रस्य कर्तृत्वभोक्तृत्वशून्य एक एवात्मेति स्वसिद्धान्तविरुद्धस्य स्वोक्तेऽर्थे प्रमाणत्वेनोपन्यासायोगाच्च ॥ १३ ॥ कानि तानीत्यपेक्षायामाह—अधिष्ठानं इच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयो देहः । तथा कर्ता उपाधिलक्षणो बुद्ध्याद्युपाध्यनुविधायी तद्धर्मानात्मनि पश्यन्नुपहित उपाधिप्रधानो भोक्ता । करणं च श्रोत्रादिशब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च मनोबुद्धिश्चेति द्वादशसंख्यं । विविधाश्च पृथक् चेष्टाः वायवीयाः

६ श्रीधरीव्याख्या ।

संख्यायन्ते गण्यन्ते तत्त्वानि यस्मिन्निति सांख्यं, कृतः अन्तो निर्णयो यस्मिन्निति कृतान्तं सांख्यशास्त्रमेव तस्मिन्प्रोक्तानि अतः सम्यग्बोधेत्यर्थः ॥ १३ ॥ तान्येवाह—**अधिष्ठानमिति** । अधिष्ठानं शरीरं, कर्ता चिज्जडग्रन्थिरहंकारः, पृथग्विधमनेकप्रकारं करणं चक्षुः-

७ अभिनवगुप्ताचार्यव्याख्या ।

कृतान्तः सिद्धान्तः ॥ १३ ॥ अधिष्ठानं विषयः । दैवं प्रागर्जितं शुभाशुभम् । पञ्चैतेऽधिष्ठानादयः सामग्रीरूपतां प्राप्ताः सर्वकर्मसु हेतवः ।

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥ १५॥**

१ श्रीमच्छांकरभाष्यम्।

**कर्तोपाधिलक्षणो भोक्ता करणं च श्रोत्रादिकं शब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं द्वादशसंख्यं विविधाश्च पृथक्चेष्टा वायवीयाः प्राणापानाद्या दैवं चैव दैवमेव चात्रैतेषु चतुर्षु पञ्चमं पञ्चानां पूरणमादित्यादि चक्षुराद्यनुग्राहकम्॥ १४॥ शरीरेति। शरीरवाङ्मनोभिर्यत्कर्म त्रिभिरेतैः प्रारभते**

२ आनन्दगिरिव्याख्या।

नुमानं सूचयति—**शब्दादीति**। ज्ञानेन्द्रियाणि पञ्च, पञ्च कर्मेन्द्रियाणि मनोबुद्धिश्चेति द्वादशसंख्यत्वम्। चेष्टाया विविधत्वान्नानाप्रकारत्वं तदेव स्पष्टयति—**वायवीया इति**। पृथक्त्वमसंकीर्णत्वम्। नहि प्राणापानादिचेष्टानां मिथः संकरोऽस्ति। दैवमेवेति विशदयति—**आदित्यादीति**॥ १४॥ पञ्चानामधिष्ठानादीनामुक्तानां सर्वकर्मसिद्ध्यर्थत्वं स्फुटयति—**शरीरेति**। ननु जीवनकृतं निमेषोन्मेषादिकर्मान्तरं साधारणमस्ति तत्कथं राशिद्वयकरणमिति तत्राह—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

त्पत्तिमभिप्रेत्य श्रूयते 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' इति। 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेतस्मादात्मनः सर्वे एत आत्मानो व्युच्चरन्ति' इति च। विशिष्टस्य चानतिरेकादर्शनादनात्मत्वं सिद्धम्। करणं च शब्दाद्युपलब्धिसाधनं पृथग्विधं द्वादशविधं पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि मनो बुद्धिश्च। तथा विविधाश्च पृथक् चेष्टा वायवीयाः प्राणनादिरूपाः। दैवं पुण्यपापरूपं तत्तत्करणानुग्राहकसूर्यादिदेवतारूपम्। पञ्चमं पञ्चानां पूरणम्॥ १४॥ **शरीरेति**। न्याय्यं धर्म्यं शास्त्रीयम्। विपरीतमन्याय्यमधर्म्यमशास्त्रीयम्। ननु

४ मधुसूदनीव्याख्या।

लोकमतिक्रामति मृत्यो रूपाणि ध्यायतीव लेलायतीव' इत्यादिश्रुतावुत्क्रान्त्याद्युपाधित्वं बुद्धेरुक्तं। स्वतन्त्रोपाधिभेदे च जीवभेदप्रसङ्गः। तस्माद्बुद्धिप्राणयोरेकत्वेनैवोत्क्रान्त्याद्युपाधित्वं युक्तं भेदव्यपदेशश्च शक्तिभेदात्। सुषुप्तौ च ज्ञानशक्तिभागलयेऽपि क्रियाशक्तिभागदर्शनमेकत्वेऽपि न विरुद्धमनुभवसिद्धत्वात्, दृष्टिसृष्टिनये सर्वलयेऽपि प्राणव्यापारवच्छरीरस्य सुषुप्तोऽयमित्येवंरूपेण परैः कल्पितत्वाच्च। तस्मादुभयथापि व्यपदेशभेद उपपन्नः। दैवं चानुग्राहकदेवताजातम्। चशब्दस्तथेत्यनुकर्षणार्थः। अत्र कारणवर्गे पञ्चमं पञ्चसंख्यापूरणम्। एवशब्दस्तथाशब्देन संबध्यमानोऽनात्मत्वभौक्तिकत्वकल्पितत्वाद्यवधारणार्थः पञ्चानामपि। तत्र शरीरस्य कर्तृकरणक्रियाधिष्ठानस्य देवता पृथिवी। 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं दिशः श्रोत्रं मनश्चन्द्रं पृथिवीं शरीरम्' इति श्रुतौ वागाद्यधिष्ठात्र्यग्न्यादिभिः सह शरीराधिष्ठातृत्वेन पृथिवीपाठात्। कर्तुरहंकारस्याधिष्ठात्री देवता रुद्रः पुराणादिप्रसिद्धः। करणानां चाधिष्ठात्र्यो देवताः सुप्रसिद्धाः। श्रोत्रत्वक्चक्षूरसनघ्राणानां दिग्वातार्कप्रचेतोऽश्विनः वाक्पाणिपादपायूपस्थानां वह्नीन्द्रोपेन्द्रमित्रप्रजापतयः। मनोबुद्ध्योश्चन्द्रबृहस्पती इति। पञ्चप्राणानां क्रियारूपाणां सद्योजातवामदेवाघोरतत्पुरुषेशानाः पुराणप्रसिद्धाः। भाष्ये दैवमादित्यादिचक्षुराद्यनुग्राहकमित्यधिष्ठानादिदेवतानामप्युपलक्षणम्॥ १४॥ स्वरूपमुक्त्वा तेषां पञ्चानां कर्महेतुत्वमाह तृतीयेन—शारीरं वाचिकं मानसिकं च विधिप्रतिषेधलक्षणं त्रिविधं कर्म धर्मशास्त्रेषु प्रसिद्धं अक्षपादेन चोक्तं 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः' इति। बुद्धिर्मनः। अतः प्राधान्याभिप्रायेणोच्यते। शरीरेण वाचा मनसा वा यत्कर्म प्रारभते निर्वर्तयति नरो मनुष्याधिकारत्वाच्छास्त्रस्य। कीदृशं कर्म न्याय्यं वा,

५ भाष्योत्कर्षदीपिका।

प्राणापानाद्याः। अत्र चतुर्षु दैवमेव पञ्चमं चक्षुराद्यनुग्राहकमादित्यादिदैवं सर्वप्रेरकोऽन्तर्यामीति त्वात्मनः कर्तृत्वव्यावृत्तये परमात्मनः कर्तृत्वप्रतिपादनमयुक्तमित्यभिप्रेत्याचार्यैर्न प्रदर्शितम्॥ १४॥ पञ्चानां स्वरूपमुक्त्वा कर्महेतुत्वमाह—**शरीरेति**। यत्कर्म न्याय्यं वा धर्म्यं शास्त्रीयं विपरीतं वाऽधर्म्यमशास्त्रीयं यच्चापि निमिषितचेष्टादिजीवनहेतुः तदपि पूर्वकृतधर्मादेरेव कार्यमिति न्याय्यविपरीतयोर्ग्रहणेन ग्राह्यं यन्न्याय्यादि कर्म शरीरवाङ्मनोभिस्त्रिभिर्नरः प्रारभते निर्वर्तयति तस्य सर्वस्यैव कर्मणः पञ्चैते यथोक्ता अधिष्ठानादयो हेतवः कारणानि। ननु पञ्चैतानीत्यादिनाधिष्ठानादीनि सर्वकर्मणां निवर्तकान्युक्तानि अत्रतु

६ श्रीधरीव्याख्या।

श्रोत्रादि, विविधाश्च कार्यतः स्वरूपतश्च पृथग्भूताश्चेष्टाः प्राणापानादीनां व्यापाराः। अत्र चैतेष्वेव पञ्चमं दैवं च कारणं चक्षुराद्यनुग्राहकमादित्यादिसर्वप्रेरकोऽन्तर्यामी वा॥ १४॥ एतेषामेव सर्वकर्महेतुत्वमाह—**शरीरेति**। यथोक्तैः पञ्चभिः प्रारभ्यमाणं कर्म त्रिष्वेवान्तर्भाव्यशरीरवाङ्मनोभिरित्युक्तं शारीरं वाचिकं मानसं च त्रिविधं कर्मेति प्रसिद्धेः। शरीरादिभिर्यद्यत्कर्म धर्म्यं वाऽधर्म्यं वा

७ अभिनवगुप्ताचार्यव्याख्या।

अन्ये तु अधिष्ठीयतेऽनेन सर्वं कर्मेति बुद्धिगतं रजोलब्धवृत्तिकं धृतिश्रद्धासुखाविविदिषाविविदिषारूपं पञ्चकपरिणामिकर्मयोगशब्द-

१ श्रीधरः.

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

निर्वर्तयति नरो न्याय्यं वा धर्म्यं शास्त्रीयं, विपरीतं वाऽशास्त्रीयमधर्म्यम् यच्चापि निमिषितचेष्टादि जीवनहेतुस्तदपि पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्यविपरीतयोरेव ग्रहणेन गृहीतम् । पञ्चैते यथोक्तास्तस्य सर्वस्यैव कर्मणो हेतवः कारणानि । नन्वधिष्ठानादीनि सर्वकर्मणां कारणानि, कथमुच्यते शरीरवाङ्मनोभिः कर्म प्रारभत इति । नैष दोषः, विधिप्रतिषेधलक्षणं सर्वं कर्म शरीरादित्रयप्रधानं तदङ्गतया दर्शनश्रवणादि च जीवनलक्षणं त्रिधैव राशीकृतमुच्यते शरीरादिभिरधिष्ठानादिभिरारभत इति फलकालेऽपि तत्प्रधानैर्भुज्यत इति पञ्चानामेव हेतुत्वं न विरुध्यते ॥ १५ ॥ तत्रेति । तत्रेति प्रकृतेन संबध्यते, एवं सति, एवं यथोक्तैः पञ्चभिर्हेतुभिर्निर्वर्त्ये सति कर्मणि । तत्रैवं सतीति दुर्मतित्वस्य हेतुत्वेन संबध्यते । तत्र तेष्वात्मानमन्यत्वेनाविद्यया परिकल्प्य तैः क्रियमाणस्य कर्मणो-

२ आनन्दगिरिव्याख्या ।

यच्चेति । अधिष्ठानादीनां कर्ममात्रहेतुत्वं प्रतिज्ञाय शरीरादित्रिविधकर्महेतुत्वोक्तिरयुक्तेति शङ्कते—**नन्विति** । पूर्वापरविरोधं परिहरति—**नैष दोष इति** । ननु जीवनकृतानि स्वाभाविकानि कर्माणि दर्शनादीनि विधिनिषेधबाह्यत्वान्न देहादिनिर्वर्त्यानीत्याशङ्क्याह—**तदङ्गतयेति** । तस्य देहादित्रयस्य प्रधानस्याङ्गं चक्षुरादि तन्निष्पाद्यत्वेन जीवनकृतं दर्शनादि प्रधानकर्मण्यन्तर्भूतमिति त्रैविध्यमविरुद्धमित्यर्थः । देहाद्यारम्भे त्रिविधे कर्मणि सर्वकर्मान्तर्भावेऽपि कथं पञ्चानामेवाधिष्ठानादीनां तत्र हेतुत्वं फलोपभोगकाले कारणान्तरापेक्षासंभवादित्याशङ्क्य जन्मकालभाविनो भोगकालभाविनश्च सर्वस्य कारणस्य तेष्वेवान्तर्भावान्मैवमित्याह—**फलेति** ॥ १५ ॥ क्रियाकर्तृत्वमधिष्ठानादीनामापाद्याविदुषस्तेष्वात्मदृष्टिमनुवदति—**तत्रेति** । तत्पदपरामर्शयोग्यं प्रकृतं सर्वं कर्म प्रतीकमादाय पूर्वेण सहाक्षरार्थं कथयति—**एवमिति** । अधिष्ठानादीनामुक्तरीत्या कर्तृत्वे सत्यन्यगतं कर्तृत्वमात्मनो यतोऽध्यारोप्य पश्यति अतो दुर्मतिरित्यात्मनि कर्तृत्वं पश्यन्नित्याह—**तत्रैवमिति** । कर्तारमित्यादि व्याचष्टे—**तत्रेत्यादिना** । तेष्वधिष्ठानादिषु

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शरीरादिभिस्त्रिभिरारभ्यते पञ्चैते तस्य हेतव इति, च विप्रतिषिद्धमुच्यते । नैष दोषः । अत्रापि शरीरपदेनाधिष्ठानस्य नरपदेन कर्तुर्वाङ्मन इति करणस्यारभत इति चेष्टानां न्याय्यमिति धर्माधर्मरूपस्य दैवस्य च संग्रहात् । सर्वेषु कर्मसु पञ्चानां समानेऽप्युपयोगे विधिप्रतिषेधलक्षणं त्रिविधमेव कर्म शास्त्रे प्रसिद्धमिति । इदं शारीरं कर्मेदं मानसमिदं वाचिकमिति व्यपदेशो देहादीनां प्राधान्यापेक्ष इति न कश्चिद्विरोधः ॥ १५ ॥ एतत्प्रतिपादनफलं कर्तृत्वस्यारोपितत्वसिद्धिरकर्तृत्वस्य स्वाभाविकत्वसिद्धिश्चेति द्वाभ्यां श्लोकाभ्यां दर्शयति—**तत्रेति** । तत्र तस्मिन्कर्मणि । एवमुक्तरीत्या

४ मधुसूदनीव्याख्या ।

शास्त्रीयं धर्मं विपरीतं वाऽशास्त्रीयमधर्मं यच्च निमिषितचेष्टितादि जीवनहेतुरन्यद्वा विहितप्रतिषिद्धसमं तत्सर्वं पूर्वकृतधर्माधर्मयोरेव कार्यमिति न्याय्यविपरीतयोरेवान्तर्भूतम् । पञ्चैते यथोक्ता अधिष्ठानादयस्तस्य सर्वस्यैव कर्मणो हेतवः कारणानि ॥ १५ ॥ इदानीमेतेषामेव कर्मकर्तृत्वादात्मनो न कर्तृत्वमित्यधिष्ठानादिनिरूपणफलमाह—तत्र कर्मणि प्रागुक्ते सर्वस्मिन्, एवं सत्यधिष्ठानादिपञ्चहेतुके सति तैर्निर्वर्त्यमाने आत्मानं सर्वजडप्रपञ्चस्य भासकं सत्तास्फूर्तिरूपं स्वप्रकाशपरमानन्दमबाध्यं केवलमसङ्गोदासीनमकर्तारमविक्रियमद्वितीयं तु एव परमार्थतः । अविद्यया स्वधिष्ठानादौ प्रतिबिम्बितमादित्यमिव तोये तद्भासकमन-

५ भाष्योत्कर्षदीपिका ।

शरीरवाङ्मनोभिः कर्म प्रारभत इत्युक्तमतः पूर्वापरविरोध इतिचेत् । नैष दोषः । शरीराद्यारभ्ये त्रिविधे कर्मणि पञ्चानामधिष्ठानादीनां हेतुत्वस्य विवक्षणात् दर्शनश्रवणादि च जीवनलक्षणत्रिविधकर्मण्येवान्तर्भवतीति त्रिधैव राशीकृतमुच्यते । ननु फलोपभोगकाले कारणान्तरापेक्षासंभवात्कथं पञ्चानामेवाधिष्ठानादीनां तत्र हेतुत्वमितिचेत् अपेक्षितस्य सर्वस्यापि कारणस्यैतेष्वेवान्तर्भावात्पञ्चानां हेतुत्वं न विरुध्यते ॥ १५ ॥ एवमधिष्ठानादीनां सर्वकर्मणि हेतुत्वमुक्त्वाऽविदुष आत्मन्यकर्तरि कर्तृत्वदृष्टिमनुवदति—**तत्रैवं सतीति** । एवं यथोक्तैः पञ्चभिर्हेतुभिः सर्वस्मिन्कर्मणि निर्वर्त्ये सति केवलं शुद्धमसंहतं अकर्तारमात्मानमात्मनोऽनन्यत्वेन कल्पितैरधिष्ठानादिभिःक्रियमाणस्य कर्मणोऽहमेव कर्तेति कर्तारं योऽकृतबुद्धित्वात् वेदान्ताचार्योपदेशन्यायैरसंस्कृतबुद्धित्वात्पश्यति

६ श्रीधरीव्याख्या ।

करोति नरस्तस्य सर्वस्य कर्मण एते पञ्च हेतवः ॥ १५ ॥ ततः किमत आह—**तत्रेति** । तत्र सर्वस्मिन्कर्मणि एते पञ्च हेतव इत्येवं

७ अभिनवगुप्ताचार्यव्याख्या ।

वाच्यमधिष्ठानं क्वचित्प्रयत्नशब्देनोक्तम् । कर्तानुसंधाता बुद्धिलक्षणः । करणं मनश्चक्षुरादिबाह्यमपि च खड्गादि । चेष्टा प्राणापानादिका ।

१ श्रीमच्छांकरभाष्यम्।

**ऽहमेव कर्तेति कर्तारमात्मानं केवलं शुद्धं तु यः पश्यत्यविद्वान्कस्माद्वेदान्ताचार्योपदेशन्यायैरकृतबुद्धित्वादसंस्कृतबुद्धित्वाद्योऽपि देहादिव्यतिरिक्तात्मवाद्यन्यमात्मानमेव केवलं कर्तारं पश्यत्यसावप्यकृतबुद्धिरेवातोऽकृतबुद्धित्वान्न स पश्यत्यात्मनस्तत्त्वं कर्मणो वेत्यर्थोऽतो दुर्मतिः कुत्सिता विपरीता दुष्टाऽजस्रं जननमरणप्रतिपत्तिहेतुभूता मतिरस्येति दुर्मतिः स पश्यन्नपि न पश्यति, यथा तैमिरिकोऽनेकं चन्द्रं, यथा वाभ्रेषु धावत्सु चन्द्रं धावन्तं, यथा वा वाहन उपविष्टोऽन्येषु धाव-**

२ आनन्दगिरिव्याख्या।

तैरधिष्ठानादिभिरारोपितात्मभावैरित्यर्थः। अकर्तारमात्मानं कर्तारं पश्यतीत्यत्र प्रश्नद्वारा हेतुमाह—**कस्मादिति**। ननु शास्त्रसंस्कृतबुद्धिरेवातिरिक्तात्मवादी कर्तृत्वं तस्यानुमन्यते नासौ कर्तृत्वमात्मनि पश्यन्नपि भवत्यकृतबुद्धिस्तत्राह—**योऽपीति**। तस्यापि शास्त्रपूर्वकमाचार्योपदेशेन तदनुसारिन्यायैश्चानाहितबुद्धित्वादकृतबुद्धित्वं सिद्धमित्यर्थः। कौटस्थ्यमात्मनस्तत्त्वं याथात्म्यं कर्मणोऽपि तत्त्वमविद्याकृताधिष्ठानादिकृतत्वेनात्मास्पर्शित्वमात्मकर्मणोस्तत्त्वदर्शनाभावोऽतःशब्दार्थः। दुष्टत्वं स्पष्टीकर्तुं दुर्मतित्वं विवृणोति—**जननेति**। अहं कर्तेत्यात्मदर्शनवतोऽपि नाविदुषस्तद्दर्शनमस्तीत्यत्र दृष्टान्तमाह—**यथेति**। तिमिरोपहतचक्षुरनेकं चन्द्रं पश्यन्नपि तत्त्वतो न तं पश्यत्येवमविद्वानात्मानं कर्तारं पश्यन्नपि तत्त्वतो न तं पश्यतीत्यर्थः। अधिष्ठानादिष्वविद्यया संबद्धात्मनः स्वात्मनि तद्गतक्रियारोपे दृष्टान्तमाह—**यथावेति**। अन्येषु वाहकेषु पुरुषेषु धावनकर्तृषु वाहने स्थितः स्वात्मानं प्रधावनकर्तारमविवेकादभिमन्यते तथाधिष्ठानादिषु क्रियाकर्तृषु तद्गतं स्वात्मानं कर्तारं मन्यमानो दुर्मतिरित्यर्थः॥ १६॥ विपरीत-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

पञ्चभिर्निर्वर्त्ये सति। केवलं त्वकर्तारमप्यात्मानं चेतनम् 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतेः। अधिष्ठानादिपञ्चकप्रचारदर्शिनमुदासीनमपि यः कर्तारं कर्तृत्वाश्रयं पश्यति स दुर्मतिः पापाभिभूतमतिर्न पश्यति। अन्ध एव सः। अदर्शने हेतुः अकृतबुद्धित्वादिति। शास्त्राचार्योपदेशशमदमादिसंस्कृता बुद्धिर्यस्य स कृतबुद्धिस्तद्विपरीतोऽकृतबुद्धिस्तस्य भावस्तत्त्वं तस्मात्। यथा स्वमुखस्योदपात्रसांसर्गिकत्वं पश्यता जलचाञ्चल्यमपि तत्रारोप्यत एवमात्मनो बुद्धि-

४ मधुसूदनीव्याख्या।

न्यत्वेन परिकल्प्य तोयचलनेनादित्यश्चलतीतिवदधिष्ठानादिकर्मणोऽहमेव कर्तेति साक्षिणमपि सन्तं कर्तारं क्रियाश्रयं यः पश्यत्यविद्यया कल्पयति रज्जुमिव भुजङ्गं स एवं पश्यन्नपि न पश्यत्यात्मानं तत्त्वेन स्वरूपाज्ञानकृतत्वादध्यासस्य स भ्रान्त्या विपरीतमेव पश्यति न यथातत्त्वमित्यत्र को हेतुरत आह—अकृतबुद्धित्वात्। शास्त्राचार्योपदेशन्यायैरनुपजनितविवेकबुद्धित्वात्। नहि रज्जुतत्त्वसाक्षात्काराभावे भुजङ्गभ्रमं कश्चन बाधते। एवं शास्त्राचार्योपदेशन्यायैः परिनिष्ठिते 'अहमस्मि' 'सत्यं ज्ञानमनन्तम्' 'अकर्त्रभोक्तृपरमानन्दमनवस्थमद्वयं ब्रह्म' इति साक्षात्कारेऽनुपजनिते कुतो मिथ्याज्ञानतत्कार्यबाधः। एतादृशं साक्षात्कारं गुरुमुपसृत्य वेदान्तवाक्यविचारेण कुतो न जनयतीत्यत आह—दुर्मतिः, दुष्टा विवेकप्रतिबन्धकपापेन मलिना मतिर्यस्य सः। अतोऽशुद्धबुद्धित्वान्नित्यानित्यवस्तुविवेकादिशून्यत्वेन तत्त्वज्ञानायोग्यत्वादकर्तारमपि कर्तारं केवलमप्यकेवलमात्मानमविद्यया कल्पयन्संसारी कर्माधिकारी देहभृदकृतबुद्धिः कर्मकर्तृषु तादात्म्याभिमानात्कर्मत्यागासमर्थः सर्वदा जननमरणप्रबन्धेनानिष्टमिष्टं मिश्रं च कर्मफलमनुभवति। एतेन यस्तार्किको देहादिव्यतिरिक्तमात्मानमेव कर्तारं केवलं पश्यति सोऽप्यकृतबुद्धित्वेन व्याख्यातः। अन्यस्त्वाह—आत्मा केवलो न कर्ता किंत्वधिष्ठानादिभिः संहतः सन् परमार्थतः कर्तैव, कर्तारमात्मानं केवलं पश्यन् दुर्मतिरिति केवलशब्दप्रयोगादिति। तन्न। परमार्थतः सर्वक्रियाशून्यस्यासङ्गस्यात्मनोऽधिष्ठानादिभिः संहतत्वानुपपत्तेः, जलसूर्यकादिवत्त्वाविद्यकेन संहतत्वेन कर्तृत्वमपि तादृशमेव, अधिष्ठानादीनामप्याविद्यकत्वाच्च। केवलशब्दस्तु स्वभाव-

५ भाष्योत्कर्षदीपिका।

अतः स दुर्मतिः नैव पश्यति। योऽपि देहातिरिक्तात्मवादी तार्किकादिः केवलमकर्तारं शुद्धमात्मानं कर्तारं पश्यत्यसावप्यकृतबुद्धित्वान्न पश्यति आत्मनः कर्मणो वा तत्त्वम्। अतो दुर्मतिः कुत्सिता विपरीता दुष्टाऽजस्रं जननमरणप्राप्तिहेतुभूता मतिरस्येति। स पश्यन्नपि न पश्यति। यथा तैमिरिकोऽनेकचन्द्रं यथावान्येषु धावत्स्वेवासनस्थित आत्मानं धावन्तं पश्यति तथाधिष्ठानादिषु

६ श्रीधरीव्याख्या।

सति केवलं निरुपाधिकमसङ्गमात्मानं तु यः कर्तारं पश्यति शास्त्राचार्योपदेशत्यागेनासंस्कृतबुद्धित्वाद्दुर्मतिरसौ सम्यङ्न पश्यति॥ १६॥

७ अभिनवगुप्ताचार्यव्याख्या।

दैवशब्देन धर्माधर्मौ। ताभ्यां च बुद्धिगताः सर्वेऽपि भावा उपलक्षिताः। अन्ये त्वधिष्ठानमीश्वरं मन्यन्ते अकृतबुद्धित्वादनिश्चितप्रज्ञतया। यः पुनरहंकारवियोगदार्ढ्येन प्रागुक्तयुक्तिशतशोधितेन कर्माणि करोति न संबन्धभाक् कृतबुद्धित्वादित्याशयः॥ १४॥ १५॥ १६॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

स्वात्मानं धावन्तम् ॥ १६ ॥ कः पुनः सुमतिर्यः सम्यक्पश्यतीत्युच्यते—यस्येति यस्य शास्त्राचार्योपदेशन्यायसंस्कृतात्मनो न भवत्यहंकृतोऽहं कर्तेत्येवंलक्षणो भावो भावनाप्रत्यय एत एव पञ्चाधिष्ठानादयोऽविद्ययात्मनि कल्पिताः सर्वकर्मणां कर्तारो नाहमहं तु तद्व्यापाराणां साक्षिभूतो 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' 'केवलोऽविक्रिय' इत्येवं पश्यतीत्येतत् । बुद्धिरन्तःकरणं यस्यात्मन उपाधिभूता न लिप्यते नानुशयिनी भवतीदमहमकार्षं तेनाहं नरकं गमिष्यामीत्येवं

२ आनन्दगिरिव्याख्या ।

दृष्टेर्दुर्मतित्वं शिष्ट्वा सम्यग्दृष्टेः सुमतित्वं प्रश्नपूर्वकमाह—**कः पुनरित्यादिना** । अहं कर्तेत्यात्मनि कर्तृत्वप्रत्ययाभावे कुत्र कर्तृत्वधीरित्याशङ्क्याह—**एत इति** । कथं तर्हि कर्तृत्वधीरात्मनीत्याशङ्क्याधिष्ठानादीनां तद्व्यापाराणां च साक्षित्वादित्याह—**अहं त्विति** । आत्मनो न स्वतोऽस्ति क्रियाशक्तिमत्त्वमित्यत्र प्रमाणमाह—**अप्राणो हीति** । नापि तस्य स्वतो ज्ञानशक्तिमत्त्वमित्याह—**अमना इति** । उपाधिद्वयासंबन्धे शुद्धत्वं फलितमाह—**शुभ्र इति** । कारणसंबन्धादशुद्धिमाशङ्क्योक्तं—**अक्षरादिति** । कार्यकारणयोरात्मास्पर्शित्वेन पार्थक्ये सद्वितीयत्वमाशङ्क्य तयोरवस्तुत्वान्मैवमित्याह—**केवल इति** । जन्मादिसर्वविक्रियारहितत्वेन कौटस्थ्यमाह—**अविक्रिय इति** । बुद्धिर्यस्येत्यादि व्याचष्टे—**बुद्धिरिति** । नानुशायिनी नानुशयवती । न क्लेशशालिनीत्यर्थः । द्वितीयपादस्याक्षरार्थमुक्त्वा वाक्यार्थमाह—**इदमिति** । पापं कर्मेदमा परामृश्यते । लोकानां प्राणसंबन्धाभावे कुतो हिंसेत्याशङ्क्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संसृष्टत्वं पश्यता बुद्धिधर्मः कर्तृत्वादिरप्यात्मन्यारोप्यत इति भावः ॥ १६ ॥ द्वितीयं प्रयोजनमाह—**यस्येति** । यस्य प्रमातुर्भावः प्रत्ययमात्रस्वरूप आत्मा नाहंकृतः अहमिव कृतः अहंकारतादात्म्यं प्रापितोऽहंकृतस्तथा न ।

४ मधुसूदनीव्याख्या ।

सिद्धमात्मनोऽसङ्गाद्वितीयरूपत्वमनुवदति कर्तृत्वदर्शिनो दुर्मतित्वहेतुत्वेनेत्यदोषः ॥ १६ ॥ तदेवं चतुर्भिः श्लोकैः 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य' इति चरणत्रयं व्याख्यातम् । इदानीं 'नतु संन्यासिनां क्वचित्' इति तुरीयं चरणमेकेन व्याचष्टे—यस्य पूर्वोक्तविपरीतस्य पुण्यैः कर्मभिः क्षपितेषु विवेकविरोधिपापेषु नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयं प्राप्तवतः शास्त्राचार्योपदेशन्यायजनिताकर्त्रभोक्तृस्वप्रकाशपरमानन्दाद्वितीयब्रह्मात्मसाक्षात्कारस्याज्ञाने सकार्ये बाधिते न भवत्यहं कर्तेत्येवंरूपो भावः प्रत्ययः । यस्य भावः सद्भावोऽहंकृतोऽहमिति व्यपदेशार्हो न, अहंकारबाधेन शुद्धस्वरूपमात्रपरिशेषादिति वाहंकृतोऽहंकारस्य भावस्तत्तादात्म्यं यस्य न विवेकेन बाधितत्वादिति वा बाधितानुवृत्तावप्येत एव पञ्चाधिष्ठानादयो मायया मयि सर्वात्मनि कल्पिताः सर्वकर्मणां कर्तारो मया स्वप्रकाशचैतन्येनासङ्गेन कल्पितसंबन्धेन प्रकाश्यमानाः । अहं तु न कर्ता किंतु कर्तृतद्व्यापाराणां साक्षिभूतः क्रियाज्ञानशक्तिमदुपाधिद्वयनिर्मुक्तः शुद्धः सर्वकार्यकारणासंबद्धः कूटस्थनित्यो निर्द्वयः सर्वविकारशून्यः 'असङ्गो ह्ययं पुरुषः' 'साक्षी चेता केवलो निर्गुणश्च' 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' 'अज आत्मा महान्ध्रुवः' 'सलिल एको द्रष्टाऽद्वैतः' 'अजो नित्यः शाश्वतोऽयं पुराणः' 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'

५ भाष्योत्कर्षदीपिका ।

क्रियाकर्तृषु तद्वतः स्वात्मानमकर्तारं कर्तारं पश्यति स दुर्मतिरित्यर्थः ॥ १६ ॥ कः पुनः सुमतिः यः सम्यक्पश्यतीत्यपेक्षायामाह—**यस्येति** । यस्य शास्त्राचार्योपदेशन्यायसंस्कृतबुद्धित्वादहंकृतोऽहंकर्तेत्येवंलक्षणो भावो भावनाप्रत्ययः एते एव पञ्चाधिष्ठानादयोऽविद्ययात्मनि कल्पिताः सर्वकर्मणां कर्तारो नाहमहं तु तद्व्यापाराणां साक्षिभूतो 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः', 'केवलोऽविक्रियश्चे'त्येवं पश्यतोऽहंकृतो भावो नास्तीत्यर्थः । बुद्धिर्यस्य न लिप्यते बुद्धिरन्तःकरणं यस्यात्मन उपाधिभूता न लिप्यतेऽहमकार्षं तेनाहं नरकं गमिष्यामीति क्लेशशालिनी न भवतीत्यर्थः । स सुमतिः कृतबुद्धिः सम्यक् द्रष्टा इमान्प्रत्यक्षादिनानुभूयमानान् लोकान्प्राणिनो हत्वापि न हन्ति हननक्रियां न करोति कर्तृत्वाभिमानरहितत्वात् । न निबध्यते नापि तत्कार्येण हननक्रियाफलेन संबध्यते निर्लिप्तबुद्धित्वात् । भावः सद्भावः अहंकृतोऽहमिति व्यपदेशार्हो न, अहंकारबाधेन शुद्धस्वरूपमात्रपरिशेषादिति वाहंकृतोऽहंकारस्य भावस्तत्तादात्म्यं यस्य न विवेकेन बाधितत्वादितिवेति केचित् । यस्य नाहंकृत इति समानाधिकरणे षष्ठ्यौ । ततश्च यस्य

६ श्रीधरीव्याख्या ।

कस्तर्हि सुमतिः यस्य कर्मलेपो नास्तीत्युक्तमित्यपेक्षायामाह—**यस्येति** । अहमिति कुतोऽहं कर्तेत्येवंभूतो भावोऽभिप्रायो यस्य नास्ति । यद्वा अहंकृतोऽहंकारस्य भावः कर्तृत्वाभिनिवेशो यस्य नास्ति । शरीरादीनामेव कर्मकर्तृत्वालोचनादित्यर्थः । अतएव यस्य

१ मधुसूदनः.

१ श्रीमच्छांकरभाष्यम्।

यस्य बुद्धिर्न लिप्यते स सुमतिः स पश्यति। हत्वापि स इमाँल्लोकान्सर्वान्प्राणिन इत्यर्थः। न हन्ति हननक्रियां न करोति। न निबध्यते नापि तत्कार्येणाधर्मफलेन संबध्यते। ननु हत्वापि न हन्तीति विप्रतिषिद्धमुच्यते यद्यपि स्तुतिः। नैष दोषः, लौकिकपारमार्थिकदृष्ट्यपेक्षया तदुपपत्तेः। देहाद्यात्मबुद्ध्या हन्ताहमिति लौकिकीं दृष्टिमाश्रित्य हत्वापीत्याह यथादर्शितां पारमार्थिकीं दृष्टिमाश्रित्य न हन्ति न निबध्यत इति तदुभयमुपपद्यत एव। नन्वधिष्ठानादिभिः संभूय करोत्येवात्मा कर्तारमात्मानं केवलं त्विति केवलशब्दप्रयोगात्। नैष दोषः, आत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिः संहतत्वानुपपत्तेः। विक्रियावतो ह्यन्यैः संहननं संभवति संहत्य वा कर्तृत्वं स्यान्न त्वविक्रिय-

२ आनन्दगिरिव्याख्या।

प्राणिन इति। विरुद्धार्थोक्त्या स्तुतिरपि न युक्तेति शङ्कते—**नन्विति**। विरोधं परिहरति—**नैष दोष इति**। लौकिकदृष्टिमवष्टभ्य हत्वापीति निर्देशं विशदयति—**देहादीति**। तात्त्विकीं दृष्टिमास्थाय न हन्तीत्यादि निर्देशमुपपादयति—**यथेति**। नाहं कर्ता किंतु कर्तृतद्व्यापारयोः साक्षी क्रियाज्ञानशक्तिमदुपाधिद्वयविनिर्मुक्तः शुद्धः सन् कार्यकारणासंबन्धोऽद्वितीयोऽविक्रिय इत्येवं पारमार्थिकदृष्टेर्यथादर्शितत्वं द्रष्टव्यम्। हत्वापीत्येतन्न हन्तीत्यादि चोभयं दृष्टिद्वयावष्टम्भादुपपन्नमित्युपसंहरति—**तदुभयमिति**। केवलमेवात्मानं कर्तारं पश्यन्दुर्मतिरित्यत्रात्मविशेषणसमर्पककेवलशब्दसामर्थ्यादात्मनो विशिष्टस्य कर्तृत्वमिति शङ्कते—**नन्विति**। आत्मनो वैशिष्ट्यायोगान्न विशिष्टस्यापि कर्तृत्वमिति दूषयति—**नैष दोष इति**। अविक्रियस्वाभाव्येऽपि कथमात्मनोऽसंहतत्वमित्याशङ्क्याह—**विक्रियेति**। अधिष्ठानादिभिरात्मनः संहननेऽपि न कर्तृत्वमविक्रियस्य क्रियान्वयव्याघातादित्याह—**संहत्येति**।

३ नीलकण्ठव्याख्या (चतुर्धरी)।

यस्य बुद्धिर्न लिप्यते आत्मभावेन रञ्जिता न भवति। यस्य बुद्धेर्व्यतिरिक्तमात्मानं पश्यतो बुद्धिधर्माः कर्तृत्वादयो नात्मनि प्रतीयन्त इति कर्त्रात्मवादितार्किकनिरासः। यस्य च आत्मधर्माश्चैतन्यादयो बुद्धौ न संसृज्यन्त इति बुद्धिमेव चेतनां वदतो बौद्धस्य निरासः। चिदचितोरन्योन्यस्मिन्नन्योन्यधर्माध्यासो बाध्यत इति दुःखादिसंसर्गनिषेधेन

४ मधुसूदनीव्याख्या।

इत्यादिश्रुतिभ्यः। 'अविकार्योऽयमुच्यते' 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहंकारविमूढात्मा कर्ताहमिति मन्यते। तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः। गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते' 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इत्यादिस्मृतिभ्यश्च। तस्मान्नाहं कर्तेत्येवं परमार्थदृष्टेर्बुद्धिरन्तःकरणं यस्य न लिप्यते नानुशयिनी भवति। इदमहमकार्षमेतत्फलं भोक्ष्य इत्यनुसन्धानं कर्तृत्ववासनानिमित्तं लेपोऽनुशयः। स च पुण्ये कर्मणि हर्षरूपः पापे पश्चात्तापरूपः। ईदृशेन द्विविधेनापि लेपेन बुद्धिर्न युज्यते कर्तृत्वाभिमानबाधात्। तथाच ज्ञानिनं प्रकृत्य श्रुतिः 'एतमुहैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः'। तदेतदृचाभ्युक्तम्—'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्। तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन' इति। पापकेनेति पुण्यस्याप्युपलक्षणम्। वर्धते कनीयानिति च पुण्यपापयोः परितोषपरितापाभिप्रायम्। एवं 'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते' स पूर्वोक्तदुर्मतिविलक्षणः सुमतिः परमार्थदर्शी पश्यत्यकर्तारमात्मानं केवलं सकर्तृत्वाभिमानाभावादनिष्टादित्रिविधकर्मफलभागी न भवतीत्येतावति शास्त्रार्थेऽहंकाराभावबुद्धिलेपाभावौ स्तोतुमाह—हत्वा हिंसित्वापि स इमाँल्लोकान्सर्वान्प्राणिनो न हन्ति हननक्रियायाः कर्ता न भवत्यकर्तृस्वरूपसाक्षात्कारात्। न निबध्यते नापि तत्कार्येणाधर्मफलेन संबध्यते। अत्र नाहंकृतो

५ भाष्योत्कर्षदीपिका।

लिङ्गलक्षणस्योपाधेरहंकारात्मिकां वृत्तिमनुत्पादयतोऽहमध्यासशून्यस्वभावः सत्ता। यद्वाहमहंकर्ति करोतीत्यहंकृदन्तःकरणं यस्य संबन्धिनोऽहंकृतोऽन्तःकरणस्य न भावः न स्थितिः। अहंकृतिशून्यं यस्यान्तःकरणमित्यर्थः। तथाहमा कृतोऽहमध्यासमूलक इतियावत्। एवंविधो भावः पदार्थो ममेत्यध्यासरूपो यस्य लिङ्गात्मनो नास्तीत्युभयविधाध्यासशून्यत्वमुक्तं भवति। यस्य प्रमातुर्भावः प्रत्ययमात्रस्वरूप आत्मा नाहंकृतः अहमिव कृतोऽहंकारतादात्म्यप्रापितोऽहंकृतस्तथा न यस्य बुद्धिर्लिप्यते आत्मभावेन रञ्जिता न भवति यस्य बुद्धेर्व्यतिरिक्तमात्मानं पश्यतो बुद्धिधर्माः कर्तृत्वादयो नात्मनि प्रतीयन्ते इति कर्त्रात्मवादितार्किकनिरासः। यस्यच आत्मधर्माश्चैतन्यादयो बुद्धौ न संसृज्यन्ते इति बुद्धिमेव चेतनां वदतो बौद्धस्य निरासः। चिदचितोरन्योन्यस्मिन्नन्योन्यधर्माध्यासो यस्य नास्तीत्यर्थ इत्यन्ये। यस्य बुद्धिः शास्त्राचार्यसमाहिता तैलधारेवाविच्छिन्ना न लिप्यते विजातीयप्रत्ययलेपं न प्राप्नोति स पश्यतीति स विद्वानिति पूर्वश्लोकस्य पश्यतिपदानुषङ्गेण योज्यम्। कथंपुनरयमेवंविध इति ज्ञेयमित्याशङ्क्य चेष्टालिङ्गकमनुमानमाह—हत्वापीति।

६ श्रीधरीव्याख्या।

बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते स एवंभूतो देहादिव्यतिरिक्तात्मदर्शी इमाँल्लोकान्सर्वानपि प्राणिनो लोकदृष्ट्या हत्वापि

१ नीलकण्ठः।

१ श्रीमच्छांकरभाष्यम् ।

स्यात्मनः केनचित्संहननमस्तीति न संभूय कर्तृत्वमुपपद्यते । अतः केवलत्वमात्मनः स्वाभाविकमिति केवलशब्दोऽनुवादमात्रम् । अविक्रियत्वं चात्मनः श्रुतिस्मृतिन्यायप्रसिद्धम् । 'अविकार्योऽयमुच्यते' 'गुणैरेव कर्माणि क्रियन्ते' शरीरस्थोऽपि न करोतीत्याद्यसकृदुपपादितं गीतास्वेव तावत् । श्रुतिषु च 'ध्यायतीव लेलायतीव' इत्येवमाद्यासु । न्यायतश्च निरवयवमपरतन्त्रमविक्रियमात्मतत्त्वमिति राजमार्गः विक्रियावत्त्वाभ्युपगमेऽप्यात्मनः स्वकीयैव विक्रिया स्वस्य भवितुमर्हति । नाधिष्ठानादीनां कर्माण्यात्मकर्तृकाणि स्युः । नहि परस्य कर्म परेणाकृतमागन्तुमर्हति । यत्त्वविद्यया गमितं न तत्तस्य । यथा रजतत्वं न शुक्तिकाया यथावा तलमलवत्त्वं बालैर्गमितमविद्यया नाकाशस्य तथाधिष्ठानादि-विक्रियापि तेषामेवेति नात्मनः । तस्माद्युक्तमुक्तमहंकृतत्वबुद्धिलेपाभावाद्विद्वान्न हन्ति न निबध्यत इति । नायं हन्ति न हन्यत इति प्रतिज्ञाय न जायत इत्यादिहेतुवचनेनाविक्रियत्वमात्मन

२ आनन्दगिरिव्याख्या ।

संहतत्वानुपपत्तिं व्यक्तीकरोति—**नत्विति** । असंहतत्वे फलितमाह—**इति नेति** । कथं तर्हि केवलत्वमात्मनि केवलशब्दादुक्तं तदाह—**अत इति** । अकर्तृत्वमात्मनोऽभ्युपपन्नं नास्याविक्रियत्वमुपैतीत्याशङ्क्याह—**अविक्रियत्वं चेति** । तत्र स्मृतिवाक्यान्युदाहरति—**अविकार्योऽयमिति** । नायं हन्ति न हन्यत इत्यादिवाक्यमादिशब्दार्थः । उक्तवाक्यानामात्माविक्रियत्वे तात्पर्यं सूचयति—**असकृदिति** । निष्कलं निष्क्रियं शान्तमित्यादि वाक्यं श्रुतावादि-शब्दार्थः, यानि वाक्यानि तैरात्मनोऽविक्रियत्वं दर्शितमिति योजना, न्यायतश्च तद्दर्शितमिति पूर्वेण संबन्धः । न्यायमेव दर्शयति—**निरवयवमिति** । न तावदात्मा स्वतो विक्रियते निरवयवत्वादाकाशवन्नापि परतोऽसङ्गस्या-कार्यस्य पराधीनत्वायोगादित्यर्थः । किंचात्मनः स्वनिष्ठा वा विक्रियाधिष्ठानादिनिष्ठा वा, नाद्यः स्वनिष्ठविक्रियानुपपत्ते-रात्मनो दर्शितत्वादित्याशयेनाह—**विक्रियावत्त्वेति** । सा चायुक्तेत्युक्तमिति शेषः । द्वितीयं दूषयति—**नेत्या-दिना** । अधिष्ठानादिकृतमपि कर्म तद्योगादात्मन्यागच्छतीत्याशङ्क्य तदागमनं वास्तवमाविद्यं वेति विकल्प्याद्यं दूषयति—**नहीति** । द्वितीयं निरस्यति—**यत्त्विति** । आत्मन्यविद्याप्रापितं कर्म नात्मीयमित्येतद्दृष्टान्ताभ्यामुपपा-दयति—**यथेत्यादिना** । आत्मनोऽविक्रियत्वेन कर्तृत्वाभावे फलितमाह—**तस्मादिति** । ननु प्रागेवात्मनोऽविक्रि-यत्वं प्रतिपादितं तदिह कस्मादुच्यते तत्राह—**नायमिति** । शास्त्रादौ प्रतिज्ञातं हेतुपूर्वकं संक्षिप्योक्त्वा मध्ये तत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

भोक्तृत्वाभावो दर्शितः । 'हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते' इति तु स्तुतिमात्रम् । कर्तृत्वस्यैव बाधेन हन्तृत्वायोगात्, दग्धपटवत्कर्तृत्वानुवृत्तावपि हननक्रियायां प्रवर्तकस्य रागद्वेषादेरभावाच्च । एतेनात्मनस्तात्त्विकम-

४ मधुसूदनीव्याख्या ।

भाव इत्यस्य फलं न हन्तीति, बुद्धिर्न लिप्यत इत्यस्य फलं न निबध्यत इति । अनेन च कर्मालेपप्रदर्शनेऽतिशयमात्रमुक्तं नतु सर्वप्राणिहननं संभवति हत्वापीति कर्तृत्वाभ्यनुज्ञाबाधितकर्तृत्वदृष्ट्या लौकिक्या, न हन्तीति कर्तृत्वनिषेधः शास्त्रीयया परमार्थ-दृष्ट्येति न विरोधः । शास्त्रादौ नायं हन्ति न हन्यत इति सर्वकर्मासंस्पर्शित्वमात्मनः प्रतिज्ञाय न जायत इत्यादिहेतुवचनेन

५ भाष्योत्कर्षदीपिका ।

हन्धातुनात्र तदुपाया लक्ष्यन्ते अवस्थितानिति चाध्याह्रियन्ते । ततश्च हिंसोपायभूतान्पाषाणप्रहरणादीनुपायान्कृत्वावस्थितानिमाँ-ल्लोकान्स्वयं न हन्ति अहंममाभिमानशून्यत्वादित्यर्थः । अतश्च न निबध्यते नास्य बन्धो जीवन्मुक्तत्वादिरितीतरे । हत्वापि न हन्ति न निबध्यत इतिवाक्यशेषे हेतुत्वेन प्रतीयमानस्य यस्येत्यादेः, एतत्फलभूतेन प्रतीयमानस्य हत्वापीत्यादेश्च पूर्वपरानुगुण्येन व्याख्यानं कृतवतां सर्वज्ञानां मार्गप्रदर्शकानां भाष्यकृतामुदाहृतयत्किंचित्कल्पनाकरणेन न्यूनता नापादनीया । ननु यद्यपि स्तुतिरियं तथापि हत्वापि न हन्तीति विप्रतिषिद्धमुच्यमानं कथमुपपद्यत इतिचेत् देहाद्यात्मबुध्या हन्ताहमिति हि लोकैर्दृश्यते । नाहं कर्ता किंतु तद्व्यापारसाक्षी क्रियाज्ञानशक्तिमदुपाधिद्वयविनिर्मुक्तः शुद्धःसन् कार्यकारणासंबद्धोऽद्वितीयोऽविक्रिय इत्येवं हि विद्वान्पश्यति लौकिकीं पारमार्थिकीं च दृष्टिमाश्रित्य तदुभयमुपपद्यत एवेति गृहाण । तथाच यः केवलमात्मानं अकर्तारं कर्तारं पश्यति स दुर्मतिः । यस्तु यथाभूतं आत्मानमकर्तारं पश्यति स सुमतिरिति द्वयोः संपिण्डितार्थः । ननु 'आत्मानं केवलं तु यः' इति केवलपदप्रयोगा-दधिष्ठानादिविशिष्टः करोत्येव आत्मा । एवंविशिष्टस्य कर्तृत्वे सति केवलमात्मानं यः कर्तारं पश्यति स दुर्मतिरितिचेन्न । श्रुति-स्मृत्यादिभिरात्मनोऽविक्रियस्वभावत्वप्रतिपादनात् । तथाच श्रुतिः 'असङ्गो ह्ययं पुरुषः' 'साक्षी चेता केवलो निर्गुणश्च' 'अप्राणो

६ श्रीधरीव्याख्या

विविक्ततया स्वदृष्ट्या न हन्ति । नच तत्फलैर्निबध्यते बन्धनं न प्राप्नोति । किं पुनः सत्त्वशुद्धिद्वारा परोक्षज्ञानोत्पत्तिहेतुभिः कर्मभि-

१ श्रीमच्छांकरभाष्यम्।

**उक्त्वा वेदाविनाशिनमिति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपत उक्त्वा मध्ये प्रसारितां च तत्र तत्र प्रसङ्गं कृत्वेहोपसंहरति शास्त्रार्थपिण्डीकरणाय विद्वान्न हन्ति न निबध्यत इति । एवं च सति देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसंन्यासोपपत्तेः संन्यासिनामनिष्टादि त्रिविधं कर्मणः फलं न भवतीत्युपपन्नं तद्विपर्ययाच्चेतरेषां भवतीत्येतच्चापरिहार्यमित्येष गीताशास्त्रस्यार्थ उपसंहृतः । स एष सर्ववेदार्थसारो निपुणमतिभिः पण्डितैर्विचार्य प्रतिपत्तव्य इति तत्र तत्र प्रकरणविभागेन दर्शितोऽस्माभिः शास्त्रन्यायानुसारेण ॥ १७ ॥ अथेदानीं**

२ आनन्दगिरिव्याख्या।

तत्र प्रसङ्गं कृत्वा प्रसारितां कर्माधिकारनिवृत्तिमिहोपसंहरतीति संबन्धः । प्रतिज्ञातस्य हेतुनोपपादितस्यान्ते निगमनं किमर्थमित्याशङ्क्याह—**शास्त्रार्थेति** । कर्माधिकारो विदुषो नेति स्थिते तस्य देहाभिमानाभावे सत्यविद्योत्थसर्वकर्मत्यागसिद्धेरनिष्टमिष्टं मिश्रं चेति त्रिविधं कर्मफलं संन्यासिनां नेति प्रागुक्तं युक्तमेवेति परमप्रकृतमुपसंहरति—**एवं चेति** । ये पुनरविद्वांसो देहाभिमानिनस्तेषां त्रिविधं कर्मफलं संभवत्येवेति हेतुवचनसिद्धमर्थं निगमयति—**तद्विपर्ययाच्चेति** । अधिष्ठानादिकृतं कर्म नात्मकृतमविदुषामेव कर्माधिकारो देहाभिमानित्वेन तस्यागायोगाद्देहाभिमानाभावात्तु विदुषां कर्माधिकारनिवृत्तिरित्युपसंहृतमर्थं संक्षिप्याह—**इत्येष इति** । उक्तश्च गीतार्थो वेदार्थत्वादुपादेय इत्याह—**स एष इति** । कथमयमर्थो वेदार्थोऽपि प्रतिपत्तुं शक्यते तत्राह—**निपुणेति** । भाष्यकृता मानयुक्तिभ्यां विभज्यानुक्तत्वान्नास्यार्थस्योपादेयत्वमित्याशङ्क्याह—**तत्रेति** ॥ १७ ॥ शास्त्रार्थोपसंहारानन्तर्यमथेत्युक्तमिदानीमिति प्रवर्तकोपदेशापेक्षावस्थोक्ता । कर्मणां, येषु विदुषां नाधिकारोऽविदुषां चाधिकारस्तेषामित्यर्थः । ज्ञानशब्दस्य करण-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

कर्तृत्वं भावयता कृतं कर्मातात्त्विककर्तृत्वाभिमाननिमित्तं स्वफलं प्रस्तोतुं नार्हतीति दर्शितम् । नहि रज्जुसर्पे रज्जुबुद्धिं कृत्वा प्रहरतः सर्पक्षोभजं दंशनादिफलं भवति । सर्पे तु तथा कुर्वतस्तद्भवत्येव तद्वदिदमपि ज्ञेयम् ॥ १७ ॥ समासः सात्त्विकत्यागोपपादनोपयोगी आत्मनोऽकर्तृत्वोपपादनप्रकारः । अत्राह सांख्यः—यदुक्तं पञ्चैते तस्य हेतव इति,

४ मधुसूदनीव्याख्या।

साधयित्वा वेदाविनाशिनमित्यादिना विदुषः सर्वकर्माधिकारनिवृत्तिः संक्षेपेणोक्ता । मध्ये च तेन तेन प्रसङ्गेन प्रसारितेह शास्त्रार्थतात्त्वप्रदर्शनायोपसंहृता न हन्ति न निबध्यत इति । एवं चाविद्याकल्पितानामधिष्ठानाद्यनात्मकृतानां सर्वेषामपि कर्मणामात्मविद्यया समुच्छेदोपपत्तेः परमार्थसंन्यासिनामनिष्टादि त्रिविधं कर्मफलं न भवतीत्युपपन्नम् । परमार्थसंन्यासश्चाकर्त्रात्मसाक्षात्कार एव । जनकादीनामेतादृशसंन्यासित्वेऽपि बलवत्प्रारब्धकर्मवशाद्बाधितानुवृत्त्या परपरिकल्पनया वा कर्मदर्शनं न विरुद्धं परमहंसानामीदृशानां भिक्षाटनादिवत् । अतएव ज्ञानफलभूतो विद्वत्संन्यास उच्यते । साधनभूतस्तु विविदिषासंन्यासोऽनेवंविधोऽपि प्रथममुत्तरकाले ज्ञानोत्पत्तावेवंविधो भवतीति वक्ष्यते ॥ १७ ॥ पूर्वमधिष्ठानादिपञ्चकस्य क्रियाहेतुत्वेनात्मनः सर्वकर्मासंस्पर्शि-

५ भाष्योत्कर्षदीपिका।

ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' 'अज आत्मा महान्ध्रुवः' 'निष्कलं निष्क्रियं' 'ध्यायतीव लेलायतीव' इत्येवमाद्या । स्मृतयश्च–'कथं स पुरुषः पार्थ कं घातयति हन्ति कं' 'अविकार्योऽयमुच्यते' 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहंकारविमूढात्मा कर्ताहमिति मन्यते' 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इत्येवमाद्याः । न्यायाश्च न तावदात्मा स्वतो विक्रियते निरवयवत्वादाकाशवत् । नापि परतोऽसङ्गस्याविकार्यस्य स्वतन्त्रस्य परतो विक्रियावत्त्वायोगात् । किंचात्मनो विक्रियावत्त्वाभ्युपगमे तस्य स्वनिष्ठाविक्रिया अधिष्ठानादिनिष्ठा वा । नाद्यः । श्रुत्यादिभिरात्मनोऽविक्रियत्वप्रतिपादनात् । न द्वितीयः । अन्यनिष्ठाविक्रियाऽन्यस्मिन्निति विप्रतिषिद्धत्वात् । अविद्यया गमितमपि नान्यनिष्ठत्वमन्यस्य यथा रजतत्वं न शुक्तिकायां यथा तलमलिनत्वं बालैर्गमितमविद्यया नाकाशस्य तथाधिष्ठानादिविक्रियापि तेषामेव नात्मनस्तस्मादविक्रियस्यात्मनः केनचित्संहननं संहत्य वा कर्तृत्वं संभवतीति केवलत्वमात्मनः स्वाभाविकं केवलशब्दोऽनुवदति । नायं हन्ति न हन्यत इति प्रतिज्ञाय न जायत इत्यादिना हेतुवचनेनाविक्रियत्वमुक्त्वा वेदाविनाशिनमिति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपत उक्त्वा तत्रतत्र प्रसङ्गं कृत्वा प्रसारितं न हन्ति न निबध्यत इत्युपसंहरति । एवंसति देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसंन्यासोपपत्तेः परमार्थसंन्यासिनामनिष्टादित्रिविधं कर्मणः फलं न भवतीत्युपपन्नं तद्विपर्ययश्चेतरेषां भवतीत्येतच्चापरिहार्यमित्येष गीताशास्त्रस्यार्थ उपसंहृतः । स एष वेदार्थसारो निपुणमतिभिः पण्डितैर्विचार्य प्रतिपत्तव्य इति ॥ १७ ॥ आत्मनः कर्तृत्वं फलसंबन्धित्वं च नास्तीत्युक्तं तदेवोपपाद-

६ श्रीधरीव्याख्या।

स्तस्य बन्धशङ्केत्यर्थः । तदुक्तम्–'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन' इति ॥ १७ ॥ 'हत्वापि न हन्ति न निबध्यते' इत्येतदेवोपपादयितुं कर्मचोदनायाः कर्माश्रयस्य च कर्मफलादीनां च त्रिगुणात्मकत्वान्निर्गुणस्यात्मनस्तत्संबन्धो

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**तेषां कर्मणां प्रवर्तकमुच्यते—ज्ञानमिति । ज्ञानं ज्ञायतेऽनेनेति सर्वविषयमविशेषेणोच्यते । तथा ज्ञेयं ज्ञातव्यं तदपि सामान्येनैव सर्वमुच्यते । तथा परिज्ञातोपाधिलक्षणोऽविद्याकल्पितो भोक्ता,**

२ आनन्दगिरिव्याख्या ।

व्युत्पत्त्या ज्ञानमात्रार्थत्वमाह—**ज्ञानमिति** । ज्ञेयशब्दस्यापि तद्वदेव ज्ञातव्यमात्रार्थत्वमाह—**तथेति** । उपाधिलक्षणत्वं तत्प्रधानत्वमुपहितत्वं तस्यावस्तुत्वार्थमविद्याकल्पितविशेषणम् । एतदेव त्रयं सर्वकर्मप्रवर्तकमित्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

यच्चोक्तं न हन्तीति तन्मृष्यामहे । नह्यपरिणामी चेतनः परिस्पन्दात्मकस्य कायिकादिभेदेन त्रिविधस्य कर्मणः कर्ता भवतीति वक्तुं युज्यते । यत्तु न निबध्यत इति भोक्तृत्वमुक्तमपि प्रत्याख्यातं तन्न मृष्यामहे । नहि कुलालादयः स्वप्रयुक्ता एव घटादीन्निर्वर्तयन्ति किंतु भोक्तृपुरुषप्रयुक्ताः । अन्यथा भोक्तॄणामभावे व्यर्थैव तत्प्रवृत्तिरित्यापतति । एवं प्रधानमात्राभूताः कर्त्रादयः पुरुषस्य भोगापवर्गसाधनप्रयुक्ताः सर्वाणि कर्माणि निर्वर्तयन्ति । तस्मात्पुरुषस्य भोक्तृस्वभावत्वादकर्तृत्वानुसंधानपूर्वकमपि कृतं कर्म भोक्त्राऽवश्यमेव भोक्तव्यमिति सात्त्विकत्यागेऽपि कर्मालेपवचनमसंगतमिति । अत्र प्रतिविधत्ते—**ज्ञानं ज्ञेयमिति** । ज्ञानं ज्ञायते प्रकाश्यते वस्तुतत्त्वमनेनेति प्रत्यक्षादिप्रमाणजन्यो

४ मधुसूदनीव्याख्या ।

त्वमुक्तं, संप्रति तमेवार्थं ज्ञानज्ञेयादिप्रक्रियारचनया त्रैगुण्यभेदव्याख्यया च विवरीतुमुपक्रमते—ज्ञानं विषयप्रकाशक्रिया । ज्ञेयं तस्य कर्म । परिज्ञाता तस्याश्रयो भोक्तान्तःकरणोपाधिपरिकल्पितः । एतेषां त्रयाणां सन्निपाते हि हानोपादानादिसर्वकर्मारम्भः स्यादत एतत्त्रयं सर्वेषां कर्मणां प्रवर्तकं तदेतदाह—त्रिविधा कर्मचोदनेति । चोदनेति प्रवर्तकमुच्यते 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः' इति शाबरे, 'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति भाट्टे च वचने क्रियाप्रवर्तकवचनत्वं यद्यपि चोदनापदशक्यतया प्रतीयते तथापि वचनत्वं विहाय प्रवर्तकमात्रमिह लक्ष्यते ज्ञानादिषु वचनत्वाभावात् । एवंच प्रेरणीयत्वं प्रेरकत्वं चानात्मन एव नात्मन इत्यभिप्रायः । तथा करणं साधकतमं बाह्यं श्रोत्राद्यन्तस्थं बुद्ध्यादि । कर्म कर्तुरीप्सिततमं क्रियया व्याप्यमानमुत्पाद्यमाप्यं विकार्यं संस्कार्यं च । कर्ता च इतरकारकाप्रयोज्यत्वे सति सकलकारकाणां प्रयोक्ता क्रियाया निर्वर्तकश्चिदचिद्ग्रन्थिरूप इति त्रिविधस्त्रिप्रकारः, कर्म संगृह्यते समवैत्यत्रेति कर्मसंग्रहः कर्माश्रयः चकारार्थादितिशब्दात्संप्रदानमपादानमधिकरणं च राशित्रयान्तर्भूतम् । एवं कारकषट्कमेव त्रिविधं क्रियाया आश्रयो नतु कूटस्थ आत्मेत्यर्थः । कर्मप्रेरकस्य कर्माश्रयस्य च कारकरूपत्वात्त्रैगुण्यात्मकत्वाच्चाकारकस्वभावो गुणातीतश्चात्मा सर्वकर्मासंस्पर्शीत्यभिप्रायः । अथवा ज्ञानं प्रेरणारूपं लिङादिशब्दजन्यं, ज्ञेयं तस्य ज्ञानस्य विषयत्वेन लिङादिशब्दस्वरूपं प्रेरकं, परिज्ञाता तस्य ज्ञानस्याश्रयः प्रेरणीयः, इत्येवं त्रिविधा कर्मचोदना कर्म क्रिया पुरुषव्यापाररूपार्थीभावना तद्विषया चोदना प्रेरणा विधिरूपा शाब्दीभावनेत्यर्थः । तथा करणं सेतिकर्तव्यताकं साधनं धात्वर्थः, कर्म भाव्यं स्वर्गादिफलं, कर्ता फलकामनावान्पुरुषः क्रियाया निर्वर्तक इत्येवं त्रिविधः कर्मसंग्रहः कर्मणः पुंव्यापाररूपस्यार्थभावनायाः संग्रहः संक्षेपः । तदेवमर्थभावनारूपपुं(स्प्र)प्रयत्नस्य विधेयस्याभावाच्छब्दभावनारूपो विधिर्न शुद्धमात्मानं गोचरयति कारकाश्रयत्वाद्विधिविधेययोगः । तदुक्तं 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति । कारकाणां च त्रैगुण्यरूपत्वमनन्तरमेव व्याख्यास्यत इत्यभिप्रायः । अत्र प्रसङ्गाद्विधिश्चिन्त्यते प्रवृत्तिहेतुत्वेन प्रेरणा तावत्सर्वलोकानुभवसिद्धा । राज्ञा प्रेरितो बालेन प्रेरितो ब्राह्मणेन प्रेरितोऽहमिति हि प्रवर्तमाना वक्तारो भवन्ति । सा च प्रवर्तना प्रवर्तकराजादिनिष्ठा । तत्रोत्कृष्टस्य निकृष्टंप्रति प्रवर्तना आज्ञा प्रेषणेति चोच्यते । निकृष्टस्योत्कृष्टंप्रति प्रवर्तना याच्ञा अध्येषणेति चोच्यते । समस्य समं प्रत्युत्कर्षनिकर्षौदासीन्येन प्रवर्तना अनुज्ञाऽनुमतिरिति चोच्यते । ते चाज्ञादयो ज्ञानविशेषा इच्छाविशेषा वा चेतनधर्मा एव लोके प्रसिद्धाः, वेदे तु विधिनाहंप्रेरितः करोमीति व्यवहर्तारो भवन्ति । तत्र स्वयमचेतनत्वादपौरुषेयत्वाच्च वैदिकस्य विधेर्न चेतनधर्मेणाज्ञादिना प्रेरकता संभवति । अतः स्वधर्मेणैव साभ्युपगन्तव्या

५ भाष्योत्कर्षदीपिका ।

यितुं कर्मणां प्रवर्तकमाह—**ज्ञानमिति** । ज्ञायतेऽनेनेति करणव्युत्पत्त्याऽविशेषेण सर्वविषयं ज्ञानमात्रमुच्यते । तथा ज्ञेयमपि

६ श्रीधरीव्याख्या ।

नास्तीत्यभिप्रायेण कर्मचोदनां कर्माश्रयं चाह—**ज्ञानमिति** । ज्ञानमिष्टसाधनमेतदिति बोधः । ज्ञेयमिष्टसाधनं कर्म । परिज्ञाता एवंभूत-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ १७ ॥ ज्ञानं ज्ञेयमिति । कर्मणि चोदना प्रवृत्तीच्छा तत्समये येषामवबोधमात्रनिष्ठत्वाज्ज्ञानज्ञेयज्ञातृश्रुतिवाच्यता तेषामेव सम्यग्ग्रहणरूपं

१ श्रीमच्छांकरभाष्यम् ।

**इत्येतत्त्रयमेषामविशेषेण सर्वकर्मणां प्रवर्तिका त्रिविधा त्रिप्रकारा कर्मचोदना । ज्ञानादीनां हि**

२ आनन्दगिरिव्याख्या ।

**इत्येतदिति** । सर्वकर्मणां प्रवर्तकमित्यध्याहर्तव्यम् । चोदनेति क्रियायाः प्रवर्तकं वचनमिति भाष्यानुसारेण चोदनाशब्दार्थमाह—**प्रवर्तिकेति** । सर्वकर्मणामिति पूर्वेण संबन्धः । त्रैविध्यं ज्ञानादिना प्रागुक्तं, कर्मणां चोदनेति विग्रहः । तेषां सर्वकर्मप्रवर्तकत्वमनुभवेन साधयति—**ज्ञानादीनामिति** । हानोपादानादीत्यादिपदेनोपेक्षा विव-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

घटादिप्रकाशः सच वर्तमानोऽतीतो वा । ज्ञेयं बोधविषयो घटादिः । परिज्ञाता विषयी साभासधीरूपो यो भोक्तेत्युच्यते । एवंरूपप्रकारत्रयवती त्रिविधा कर्मणां चोदना । त्रयं समुच्चितं सत्कर्मणि प्रवर्तकमित्यर्थः । सत्यपि ज्ञेये

४ मधुसूदनीव्याख्या ।

गत्यन्तरासंभवात् । स एव च धर्मश्चोदना प्रवर्तना प्रेरणा विधिरुपदेशः शब्दभावनेति चोच्यते । तत्र केचिदलौकिकमेव शब्दव्यापारं कल्पयन्ति । अन्ये तु क्लृप्तेनैवोपपत्तौ नालौकिककल्पनां सहन्ते । प्रवर्तना हि प्रवृत्तिहेतुर्व्यापारः । विधिशब्दस्य चाख्यातत्वेन दशलकारसाधारणेनोपाधिना पुरुषप्रवृत्तिरूपार्थभावनांप्रति वाचकत्वं तज्ज्ञानहेतुत्वमिति यावत् । सा च ज्ञातैवानुष्ठातुं शक्यत इति तद्धीहेतोरपि शब्दस्य तद्धेतुत्वं परंपरया भवत्येव । तत्र विधिशब्दस्य पुरुषप्रवृत्तिरूपभावनाज्ञानहेतुर्व्यापारः पुरुषप्रवृत्तिवाचकस्तद्वाचकशक्तिमत्तया विधिशब्दज्ञानं स एव च तस्य प्रवृत्तिहेतुर्व्यापार इति प्रवर्तनाभिधानीयकं लभते । ज्ञानद्वारेणैव शब्दस्य प्रवृत्तिजनकत्वात्, ज्ञानजनकव्यापारातिरिक्तव्यापारकल्पने मानाभावात् । ज्ञानजनकश्च व्यापारस्तस्य स्वज्ञानं शक्तिज्ञानं शक्तिविशिष्टस्वज्ञानं च । तत्राद्ययोरन्यतरस्य शब्दभावनात्वं तृतीयस्य तु तत्र करणत्वमिति विवेकः । एवं स्थिते निष्कर्षः—विधिना स्वज्ञानं जन्यते प्रवर्तनात्वेनाभिधीयतेऽपीति विधिज्ञानमेव शब्दभावना । तस्यां च पुरुषप्रवृत्तिरूपार्थभावनैव भाव्यतयान्वेति । करणतया च प्रवृत्तिवाचकशक्तिमद्विधिज्ञानमेव । भावनासाध्यस्यापि फलावच्छिन्नां भावनां प्रति करणत्वं फलकरणत्वादेव यागस्येव स्वर्गभावनां प्रति न विरुध्यते । तथाच पुरुषः स्वप्रवृत्तिं भावयेत् । केनेत्यपेक्षायां पुरुषप्रवृत्तिवाचकशक्तिमत्तया ज्ञातेन विधिशब्देनेतिकरणांशपूरणम् । कथमित्याकाङ्क्षायां अर्थवादैः स्तुत्वेतीतिकर्तव्यतांशपूरणं इयं गौः क्रय्येति लौकिके विधौ बहुक्षीरा जीवद्वत्सा रूयपत्या समांसमीनेत्यादिलौकिकार्थवादवत् । समां समां प्रतिवर्षं प्रसूयते सा गौः । नन्वाख्यातत्वेन विधिशब्दादुपस्थिता पुरुषप्रवृत्तिर्भाव्यतयान्वेतु, करणं तु कथमनुपस्थितमन्वेति । उच्यते । विधिशब्दस्तावच्छ्रवणेनोपस्थापितस्तस्य पुरुषप्रवृत्तिवाचकशक्तिरपि स्मरणेनोपस्थापिता तदुभयवैशिष्ट्यं तन्निष्ठाज्ञातता च मनसेति वाचकशक्तिमत्तया ज्ञातो विधिशब्द उपस्थित एव । अनेन यच्छक्नुयात्तद्भावयेदिति प्रतिशब्दं स्वाध्यायविधितात्पर्याच्छब्दातिरिक्तेनोपस्थितमपि शाब्दबोधे भासत एव । यथा ज्योतिष्टोमादि नामधेयं यथावा लिङ्गविनियोज्यो मन्त्रः । तदुक्तमाचार्यैरुद्भिदधिकरणे 'अनुपस्थितिविशेषणाविशिष्टे बुद्धिर्न भवति न त्वनभिहितविशेषणेति' एवमर्थवादानामुपस्थितिः । श्रोत्रेण प्राशस्त्यस्य तु तैरेव लक्षणया तदुभयनिष्ठज्ञाततायास्तु मनसेत्यर्थवादैः प्रशस्तत्वेन ज्ञात्वेतीतिकर्तव्यतांशान्वयोऽप्युपपन्न एव । ननु किं प्राशस्त्यम्, न तावत्फलसाधनत्वं, तस्य 'यागेन भावयेत्स्वर्गम्' इत्यर्थभावनान्वयवशेन विधिवाक्यादेव लब्धत्वात् नान्यत्, प्रवृत्तावनुपयोगात् । उच्यते । बलवदनिष्टाननुबन्धित्वं प्राशस्त्यम् । तच्च नेष्टहेतुत्वज्ञानाल्लभ्यते । इष्टहेतावपि कलञ्जभक्षणादावनिष्टहेतुत्वस्यापि दर्शनात् । विहितश्येनफलस्य च शत्रुवधस्यानिष्टानुबन्धित्वं दृष्टम् । अतो यावत्साधनस्य फलस्य चानिष्टाहेतुत्वं नोच्यते तावदिष्टहेतुत्वेन ज्ञातेऽपि तत्र पुरुषो न प्रवर्तते । अतएवोक्तं 'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते' इति । अतः स्वतः फलतो वानर्थाननुबन्धित्वरूपप्राशस्त्यबोधनेनार्थवादा विधिशक्तिमुत्तम्भयन्ति । क उत्तम्भः स्वतः फलतो वार्थाननुबन्धित्वशङ्कायाः प्रवृत्तिप्रतिबन्धिकाया विगमः । इदमेव च विधेः प्रवृत्तिजनने साहाय्यमर्थवादैः क्रियत इति विधिरर्थवादसाकाङ्क्षः । एवमर्थवादा अप्यभिधया गौण्या वा वृत्त्या भूतमर्थं वदन्तोऽपि स्वाध्यायविध्यापादितप्रयोजनवत्त्वलाभाय विधिसाकाङ्क्षाः । सोऽयं नष्टाश्वदग्धरथवत्संप्रयोगः, यथैकस्य दग्धस्य रथस्य जीवद्भिरश्वैरन्यस्य विद्यमानस्य रथस्याविद्यमानाश्वस्य संप्रयोगः परस्परस्यार्थवत्त्वाय तथार्थवादानां प्रयोजनांशो विधिना पूर्यते विधेश्च शब्दभाव-

५ भाष्योत्कर्षदीपिका ।

सामान्येनैव ज्ञातव्यं सर्वमुच्यते । तथा परिज्ञाताऽविद्याकल्पितोपाधिप्रधानो भोक्तेत्येवं त्रिविधा कर्मचोदना । कर्मणां प्रवर्तकं त्रिविधमित्यर्थः । करणं क्रियतेऽनेनेति बाह्यं श्रोत्राद्याभ्यन्तरं बुद्ध्यादि । कर्मेप्सिततमं कर्तुः क्रियया व्याप्यमानम् । कर्ता स्वतन्त्रः

६ श्रीधरीव्याख्या ।

ज्ञानाश्रयः । एवं त्रिविधा कर्मचोदना । चोद्यते प्रवर्त्यते येनेति चोदना । ज्ञानादित्रितयं कर्मप्रवृत्तिहेतुरित्यर्थः । यद्वा चोदनेति विधि-

७ अभिनवगुप्ताचार्यव्याख्या ।

यत्फलाभिसंधानेनात्मीयबुद्ध्या स्वीकरणं अहमेतद्भोक्ष्ये यतो मया कृतमित्येवरूपं तत्समये तथा निर्वर्तनावसरे करणकर्मकर्तृशब्दाभिधे-

१ श्रीमच्छांकरभाष्यम् ।

**त्रयाणां संनिपाते हानोपादानादिप्रयोजनः सर्वकर्मारम्भः स्यात्ततः पञ्चभिरधिष्ठानादिभिरारब्धं**

२ आनन्दगिरिव्याख्या ।

**क्षिता । करणमित्यादेस्तात्पर्यमाह—तत इति । ज्ञानादीनां प्रवर्तकत्वादित्यर्थः । उक्तेऽर्थे श्लोकभागमवतारयति—**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ज्ञातरि वा ज्ञाने प्रवृत्त्यनुपपत्तेः । ज्ञाने ज्ञातरि च सति देशकालव्यवहिते ज्ञेये प्रवृत्त्यनुपपत्तेः । सत्यपि संस्कारात्मके ज्ञाने ज्ञेये च सन्निहिते तथापि सुषुप्तौ प्रमात्रभावात्प्रवृत्त्यदर्शनादेतत्त्रयं त्रिदण्डविष्टम्भवदन्योन्यापेक्षं सत् हानोपादानोपेक्षाबुद्धिरूपं कार्यं जनयित्वा हानाद्यनुकूले व्यापारे प्रवर्तयतीति कर्तृपदाभिधेयमित्यर्थः । चोदनेति कर्तरि नन्द्यादिल्युप्रत्ययान्तत्वेन चोदनाशब्दः कर्तृवाची । लिङ्गं त्वविवक्षितम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति वा । तथा करणमिन्द्रियम् । कर्म तेन यत्क्रियमाणं विषयग्रहणम् । कर्ता पूर्वोक्त एव परिज्ञाता । एतत्त्रयं समुदितं सत् कर्मसंग्रहः कर्मणः ईप्सिततमस्य भोग्यस्य संग्रहः संगृह्यतेऽस्मिन्निति संश्लेषस्थानं भोक्तेत्यर्थः । सत्यपि भोक्तरि करणे

४ मधुसूदनीव्याख्या ।

नाया इतिकर्तव्यतांशोऽर्थवादैरिति । तदिदमुभयोः श्रवणे पूर्णमेव वाक्यमेकस्य श्रवणे त्वन्यस्य कल्पनया पूरणीयम्, यथा 'वसन्ताय कपिञ्जलानालभेत' इति विधावर्थवादांशोऽश्रुतोऽपि कल्प्यते 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्याद्यर्थवादे विध्यंशः । तथाच सूत्रं 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इति । विधिना स्तुतिसाकाङ्क्षेण प्रयोजनसाकाङ्क्षाणामर्थवादानामेकवाक्यत्वाद्विधीनां विधेयानां स्तुत्यर्थेन स्तुतिप्रयोजनेन स्तुतिरूपेण प्रयोजनसाकाङ्क्षेण लाक्षणिकेनार्थेन वानर्थक्याभावादर्थवादा धर्मे प्रमाणानि स्युरिति तस्यार्थः । ननु य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चामीषामर्था इति न्यायाद्विधिशब्दस्य लोके यत्र शक्तिर्गृहीता वेदेऽपि तदर्थकेनैव तेन भवितव्यं, लोके च प्रेषणादिपुरुषधर्मवाचित्वं क्लृप्तमिति वेदे शब्दभावनावाचित्वं कथमुपपद्यते । उच्यते । लोकवेदयोरैकरूप्यमेव । तथाहि लोके प्रेषणादिकं न तेन तेन रूपेण विधिपदवाच्यं अननुगमेन नानार्थत्वप्रसङ्गात्तद्वदेव भावनावाचित्वोपपत्तेश्च, किंतु प्रेषणाध्येषणानुज्ञास्वस्तिप्रवर्तनात्वमेकं, तच्च शब्दव्यापारेऽपि तुल्यमिति तदेव लिङादिपदवाच्यं । तच्च लौकिकशब्दे नास्त्येव । तत्र राजादीनामेव प्रवर्तकत्वात् । प्रवर्तकव्यापार एव हि ( प्रेषणात्वेन इत्यादिना न विधिपदवाच्यं किंतु प्रवर्तनात्वेन वाच्यं ) । प्रवर्तना प्रवर्तकत्वं च राजादेरिव वेदस्याप्यनुभवसिद्धम् । ननु वेदेऽपि प्रवर्तनावानीश्वरः कल्प्यतां लोके राजादिवत् । तदुक्तं 'विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम्' इति । न, वेदस्यापौरुषेयत्वात् । नहि वेदस्य कर्ता पुरुषो लोके वेदे वा प्रसिद्धः । तत्कल्पने च तज्ज्ञानप्रामाण्यापेक्षया वेदप्रामाण्ये निरपेक्षत्वेन स्थितं स्वतःप्रामाण्यं भग्नं स्यात् । बुद्धवाक्येऽपि प्रामाण्यप्रसङ्गाच्च । ईश्वरवचनत्वे समानेऽपि बुद्धवाक्यं न प्रमाणं वेदवाक्यं तु प्रमाणमिति सुभगाभिक्षुकन्यायप्रसङ्गः । महाजनानामुभयसिद्धत्वाभावेन तत्परिग्रहापरिग्रहाभ्यामपि विशेषानुपपत्तेः । ईश्वरप्रेरणायाः लोकवेदसाधारणत्वेन लोकेऽपि राजादीनां प्रेरकत्वं स्यात् । ईश्वरप्रेरणायां स्थितायामेव राजादिरप्यसाधारणतया प्रेरक इति चेत् । हन्त सा तिष्ठतु न वा, किं लिङाप्यसाधारणः प्रेरको वेद एव राजादिस्थानीय इत्यागतं मार्गे । ईश्वरप्रेरणायाः साधारणाया असाधारणप्रेरणासहकारेणैव प्रवर्तकत्वात् । किंच ईश्वरप्रेरणायां सर्वोऽपि विहितं कुर्यादेव नतु कश्चिदपि लङ्घयेत् । निषिद्धेऽपि चेश्वरप्रेरणास्त्येव । अन्यथा न कोऽपि तत्र प्रवर्तेतेति तदपि विहितं स्यात् । तथाचोक्तं 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा' । तस्माद्राजादिरिव वेदोऽपि स्वप्रवर्तनां ज्ञापयन्निच्छोपहारमुखेन प्रवर्तयतीति सिद्धं लोकवेदयोरैकरूप्यम् । पूर्वमीमांसकानां स्वतन्त्रो वेदो, ब्रह्ममीमांसकानां तु ब्रह्मविवर्तत्वात्परतन्त्रो वेद इति यद्यपि विशेषस्तथापि श्वसिततुल्यत्वेन वेदस्यापौरुषेयत्वमुभयेषामपि समानम् । अत्र च प्रवृत्त्यनुकूलव्यापारवत्त्वं प्रवर्तनात्वं सखण्डोऽखण्डो वोपाधिस्तस्मिन् विधिपदशक्येऽपि तदाश्रयविशेषोपस्थितिर्गवादितुल्यैव । अनुकूलव्यापारत्वं वा शक्यं प्रवृत्त्यंशस्त्वाख्यातत्वेन शक्त्यन्तरलभ्यैव दण्डीत्यत्र संबन्धिनि मतुबर्थे प्रकृत्यर्थे दण्डांशवत् फलसाधनताबोध एव प्रेरणा तामेव कुर्वन् प्रेरको विधिरतः फलसाधनतैव प्रेरणात्वेन विधिपदशक्येति मण्डनाचार्याः । फलसाधनता चार्थभावनान्वयलभ्येत्युक्तं प्राक् । इममेव च पक्षं पार्थसारथिप्रभृतयः पण्डिताः प्रतिपन्नाः । औपनिषदानामपि केषांचिदिष्टसाधनतावादोऽनेनैव मतेनोपपादनीयः । इष्टसाधनत्वं स्वरूपेणैव लिङादिपदशक्यं न प्रेरणात्वेनेति तार्किकाः । तन्न । गौरवादन्यलभ्यत्वादनन्वयायोग्यत्वाच्च । इच्छाविषयसाधनत्वापेक्षया प्रवर्तनात्वमतिलघ्विच्छातद्विष-

५ भाष्योत्कर्षदीपिका ।

स्वातन्त्र्यं च कारकाप्रयोज्यस्य तत्प्रयोक्तृत्वं अविद्याकल्पितोपाधिप्रधानो व्यापारयिता इति त्रिविधः कर्मसंग्रहः संगृह्यतेऽस्मिन्निति संग्रहः कर्मणस्त्रिषु समवेतत्वात् अयं त्रिविधः कर्मसंग्रहः । ज्ञानादीनां हि त्रयाणां सन्निपाते हानोपादानोपेक्षाप्रयोजनः सर्वकर्मा-

६ श्रीधरीव्याख्या ।

रुच्यते । तदुक्तं भट्टैः-'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति । ततश्चायमर्थः-उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य

१ श्रीमच्छांकरभाष्यम् ।

**वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यत इत्येतदुच्यते—करणं क्रियते-ऽनेनेति बाह्यं श्रोत्रादि, अन्तःस्थं बुद्ध्यादि, कर्मेप्सिततमं कर्तुः क्रियया व्याप्यमानं, कर्ता करणानां**

२ आनन्दगिरिव्याख्या ।

**इत्येतदिति ।** बाह्यमन्तःस्थं च द्विविधं करणं करणव्युत्पत्त्या कथयति—**करणमिति ।** उक्तलक्षणं कर्मैव स्फुटयति—**कर्तुरिति ।** स्वतन्त्रो हि कर्ता स्वातन्त्र्यं च कारकाप्रयोज्यस्य तत्प्रयोक्तृत्वमित्याह—**कर्तेति ।** कथमुक्ते त्रिविधे कर्म

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

च क्रियांविना भोगासंभवात् क्रियायाश्चाश्रयंविना स्वरूपालाभादाश्रयस्य करणंविना भोक्तृत्वाङ्गकर्तृत्वानुपपत्तेश्चैतत्त्रयं मिलितं सत् भोक्तेत्युच्यत इत्यर्थः । तथाच श्रुतिः 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति । इन्द्रियं प्रसिद्धम् । मन इत्यनेन बुद्धिरेव गृह्यते । युक्तं इन्द्रियद्वारा मतेर्भोग्येन सह संबन्धक्रिया । इन्द्रियं च मनश्च युक्तं चेति विग्रहे इन्द्रियमनोयुक्तमिति द्वन्द्वैकवद्भावः । एतत्त्रयं भोक्ता आत्मेत्याहुर्मनीषिण इति श्रुत्यर्थः । एवंहि श्रुतिस्मृत्योर्व्याख्याने तयोर्मूलमूलिभावो युज्यते नान्यथा । तथाच कर्तृवत् भोक्तुरपि अनात्मगणपतितत्वाद्भोक्तृत्वं भोगकर्तृत्वमिति निर्वचनाद्यः कर्ता स एव भोक्तेति प्रतिपादनादहमकर्ताऽभोक्तेति चानुसंधानपूर्वकं कर्माणि कुर्वतः कर्तृत्वभोक्तृत्वकृतः कर्मलेपो नास्तीति सिद्धम् । भाष्यस्य चायमेवार्थः । येतु करणं क्रियायाः साधकतमं दशविधं बाह्यं, मनोबुद्धिरूपमान्तरम् । कर्म कर्तुरीप्सिततमं क्रियया व्याप्यमानं उत्पाद्यमाप्यं विकार्यं संस्कार्यं चेति चतुर्विधम् । कर्ता कारकान्तरप्रयोजकश्चिदचिद्ग्रन्थिः । एतत्त्रयं कर्मसंग्रहः कर्माश्रयः कर्तेत्यर्थः । तथा ज्ञानं विषयप्रकाशन-

४ मधुसूदनीव्याख्या ।

ययोरप्रवेशात् । इच्छाज्ञानस्यापि प्रवृत्तिज्ञानवत् प्रवृत्तिहेतुत्वापातात्, वस्तुगत्या य इच्छाविषयस्तत्साधनमितिशब्देन प्रतिपादयितुमशक्यत्वात् । साधनत्वमात्रस्यैव शक्यत्वे च तेनैव प्रत्ययेनोपस्थापितया प्रवृत्त्या सह श्रुत्या तदन्वयसंभवे पदान्तरोपस्थापितस्वर्गेण सह वाक्येन तदन्वयासंभवात् प्रवर्तनात्व एव पर्यवसानं श्रुत्या वाक्यस्य बाधात् । प्रत्ययश्रुतेः पदश्रुतितोऽपि बलीयस्त्वेन पशुना यजेतेत्यत्र प्रकृत्यर्थं पशुं विहाय प्रत्ययार्थेन करणेन सहैवैकत्वस्यान्वयादेकं करणं पशुरिति वचनव्यक्त्या करणत्वमेकत्वस्य स्थितं किमु वक्तव्यं पदान्तरसमभिव्याहाररूपाद्वाक्याद्बलीयस्त्वमिति । वाक्यार्थान्वयलभ्यत्वाच्च नेष्टसाधनत्वं पदार्थः । तथाहि प्रवर्तनाकर्मभूता पुरुषप्रवृत्तिरूपार्थभावना किं केन कथमित्यंशत्रयवती विधिनाऽऽलम्बत्वेन प्रतिपाद्यत इत्युक्तं प्राक् । अपुरुषार्थकर्मिकायां च तस्यां प्रवर्तनानुपपत्तेरेकपदोपस्थापितमप्यपुरुषार्थं धात्वर्थं विहाय भिन्नपदोपात्तमन्यविशेषणमपि कथमिदमसंबन्धेन साध्यतान्वययोग्यं स्वर्गमेव पुरुषार्थं सा भाव्यतयालम्बते । इच्छाविषयस्यैव कृतिविषयत्वनियमात् । स्वर्गं कामयते स्वर्गकाम इति कर्मण्यणि द्वितीयाया अन्तर्भूतत्वात् यजतेरकर्मकत्वेन स्वर्गमित्युक्तेनानन्वयाच्च । अतएव यत्र कमिपदं न श्रूयते तत्रापि तत्कल्प्यते यथा । 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यादौ प्रतिष्ठाकामा रात्रिसत्रमुपेयुरित्यादि । एवंच लब्धभाव्यायां तस्यां समानपदोपस्थापितो धात्वर्थ एव करणतयान्वेति भाव्यांशस्य कमिविषयेणाविरुद्धत्वात्, सुब्विभक्तियोग्ये धात्वर्थनामधेये ज्योतिष्टोमादौ तृतीयाश्रवणात्, यत्रापि नामधेये द्वितीया श्रूयते तत्रापि व्यत्ययानुशासनेन तृतीयाकल्पनात् । तदुक्तं महाभाष्यकारैरग्निहोत्रं जुहोतीति तृतीयार्थे द्वितीयेति । अतएव तैः प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येन प्रकृत्यर्थो गुणत्वेनेति प्रत्ययार्थभावनां प्रति धात्वर्थस्य गुणत्वेन करणत्वमुक्तम्, आख्यातं क्रियाप्रधानमिति वदद्भिर्निरुक्तकारैरप्येतदेवोक्तम् । भावार्थाधिकरणे च तथैव स्थितम् । तेन सर्वत्र प्रत्ययार्थं प्रति धात्वर्थस्य करणत्वेनैवान्वयनियमः । अतएव गुणविशिष्टधात्वर्थविधौ धात्वर्थानुवादेन केवलगुणविधौ च मत्वर्थलक्षणाविधेर्विप्रकृष्टविषयत्वं च । यथा, सोमेन यजेतेति विशिष्टविधौ सोमवता यागेनेति, दध्ना जुहोतीति गुणविधौ दधिमता होमेनेति । नामधेयान्वये तु सामानाधिकरण्योपपत्तेर्धात्वर्थमात्रविधानाच्च न मत्वर्थलक्षणा न वा विधिविप्रकर्षः । तदेवं 'ज्योतिष्टोमेन यजेत स्वर्गकामः' इत्यत्राख्यातार्थो भावयेदिति किमित्याकाङ्क्षायां कमिविषयं स्वर्गमिति विधिश्रुतेर्बलीयस्त्वादाकाङ्क्षाया उत्कटत्वाच्च । तथाच स्थितं षष्ठाद्ये । ततः केनेत्यपेक्षिते यागेनेति तृतीयान्तपदसमानाधिकरणत्वात् करणत्वेनैवान्वयनियमाच्च किंनाम्नेत्यपेक्षिते ज्योतिष्टोमेनेति तन्नाम्नेत्यर्थः । शब्दादनुपस्थितोऽपि ज्योतिष्टोमशब्दो भासत एव शाब्दे बोधे श्रवणेनोपस्थापितस्तात्पर्यवशात् । नामधेयान्वये च न विभक्त्यर्थो द्वारं नञि वाद्यर्थान्वय इव । तेन मत्वर्थलक्षणामन्तरेणैव ज्योतिष्टोमशब्दवतेत्यन्वयलाभः । तथाच कवि-

५ भाष्योत्कर्षदीपिका ।

रम्भो भवतीति ज्ञानादिरूपा त्रिविधा कर्मचोदनोच्यते । ततश्च पञ्चभिरधिष्ठानादिभिरारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं

६ श्रीधरीव्याख्या ।

कर्मविधिः प्रवर्तत इति । तदुक्तम्—'त्रैगुण्यविषया वेदाः' इति । तथाच करणं साधतकमम् । कर्म च कर्तुरीप्सिततमम् । कर्ता क्रियानिर्व-

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

१ श्रीमच्छांकरभाष्यम्।

**व्यापारयितोपाधिलक्षण इति त्रिविधस्त्रिप्रकारः कर्मसंग्रहः संगृह्यतेऽस्मिन्निति संग्रहः कर्मणः संग्रहः कर्मसंग्रहः। कर्मैषु हि त्रिषु समवैति तेनायं त्रिविधः कर्मसंग्रहः ॥ १८ ॥ अथेदानीं क्रियाकारकफलानां सर्वेषां गुणात्मकत्वात्सत्त्वरजस्तमोगुणभेदतस्त्रिविधो भेदो वक्तव्य इत्यारभ्यते—**

२ आनन्दगिरिव्याख्या।

**संगृह्यते तत्राह—कर्मेति।** कर्मणो हि प्रसिद्धं कारकाश्रयत्वमिति भावः ॥ १८ ॥ अनन्तरश्लोकदशकतात्पर्यमाह—**अथेति।** ज्ञानादिप्रस्तावानन्तर्यमथशब्दार्थः। इदानीं प्रस्तुतज्ञानाद्यवान्तरभेदापेक्षायामित्यर्थः। तेषां गुणभेदात्त्रैविध्ये हेतुमाह—**गुणात्मकत्वादिति।** वक्तव्यो वक्ष्यमाणश्लोकनवकेनेति शेषः। एवं स्थिते प्रथममवान्तरभेद-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

शक्तिः। ज्ञेयं विषयः। परिज्ञाता ज्ञानाश्रयो भोक्ता। एतत्त्रयं कर्मणि प्रवर्तकमिति व्याचक्षते। तेषामपि आत्मा न कर्ता नापि सांख्यानामिव भोक्तृत्वेन प्रकृतेः प्रवर्तक इत्येवाशयः। तथापि क्रियया व्याप्यमानस्य वक्ष्यमाणसात्त्विकादिभेदानर्हस्य घटादिरूपस्य कर्मणः कर्तृकोटौ प्रवेशायोगः। तस्य क्रियाश्रयत्वमात्रविवक्षायां प्रकृते तत्कथनानुपयोगश्च स्पष्टः। तथा अस्माकं तु घटादिव्यापकक्रियायाः कर्मशब्दवाच्यत्वं मुख्यम्। कर्तृकोटिप्रवेशश्च क्रियाक्रियावतोर्धर्मधर्मिणोरभेदापेक्षया युज्यते। तथा ज्ञानं प्रकाशनक्रियेति मते क्रियारूपेऽस्मिन्प्रवर्तकज्ञानान्तरस्यापेक्षेति तत्र तत्रान्यस्यान्यस्यापेक्षेत्यनवस्था दुर्निवारा ॥ १८ ॥ पूर्वश्लोकोक्ते ज्ञानादिषट्के परिज्ञाता कर्ता चैक एवेति परिशिष्टाः पञ्च तेषां

४ मधुसूदनीव्याख्या।

प्रयोगः 'हिमालयो नाम नगाधिराजः' इति। हिमालयनामवानित्यर्थः। एवमिह 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यादावगृहीतसङ्गतिकैकपदवति वाक्ये मधुकरादिपदं स्वरूपेणैव भासते नामधेयवन्नार्थमुपस्थापयति प्रागगृहीतसङ्गतिकत्वात्। अतएव मधुकरशब्दवाच्य इत्यपि लक्षणयानन्वयः शक्यज्ञानपूर्वकत्वाल्लक्ष्यज्ञानस्य। स्वरूपतस्तु शब्दे भाते वाच्यवाचकसंबन्धः पश्चात्कल्प्यते संसर्गनिर्वाहायेति। तदयं वाक्यार्थः—ज्योतिष्टोमनाम्ना यागेन स्वर्गमिष्टं भावयेदिति। कथमित्यपेक्षिते श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिः सामवायिकारादुपकारकाङ्गग्रामपूर्त्येति विकृतौ प्रकृतिवदित्युपबन्धेन नित्ये यथाशक्तीत्युपबन्धेन मुख्यालाभे प्रतिनिधायापीति यावन्न्यायलभ्यं तत्पूरणम्। एवंच यागस्य स्वर्गावच्छिन्नभावनाकरणत्वेन स्वर्गकरणत्वं करणत्वेन च साक्षात्कर्तृव्यापारविषयत्वरूपं कृतिसाध्यत्वं श्रुत्यर्थाभ्यां लभ्यत इति तदुभयमपि न लिङादिपदवाच्यम्। 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात्। अनन्वयाच्चेष्टसाधनमिति समासे गुणभूतमिष्टपदं स्वर्गकाम इति समासान्तरगुणभूतेन स्वर्गपदेन कथमन्वियादिष्टस्वर्गसाधनमिति। नहि राजपुरुषो वीरपुत्र इत्यत्र वीरपदराजपदयोरन्वयोऽस्ति पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति न्यायात्। करणविभक्त्यन्तज्योतिष्टोमादिनामधेयानन्वयप्रसङ्गादिदोषाश्चास्मिन्पक्षे द्रष्टव्याः। एतेनेष्टसाधनत्वमनिष्टसाधनत्वं कृतिसाध्यत्वमिति त्रयमपि विध्यर्थ इत्यपास्तम्। अतिगौरवादर्थवादानां सर्वथा वैयर्थ्यापत्तेश्च। अतएव कृतिसाध्यत्वमात्रं विध्यर्थ इत्यपि न, भावनाकरणत्वेनार्थलभ्यत्वादित्युक्तेः। अलौकिको नियोगस्त्वलौकिकत्वादेव न विध्यर्थः। पराकान्तं चात्र सूरिभिः। तस्मादनन्यलभ्या लघुभूता च प्रेरणैव लिङादिपदवाच्येति स्थितम्। प्रवर्तकं तु ज्ञानं वाक्यार्थमर्यादालभ्यमन्यदेव सर्वेषामपि वादिनाम् आख्यातार्थं एवच विशेष्यतया भासते न धात्वर्थो न नामार्थः स्वर्गकामो वेति चोक्तप्रायमेव। तेन च यागानुकूलकृतिमान्स्वर्गकाम इति तार्किकमतं पुरुषविशेष्यकवाक्यार्थज्ञानमपास्तम् 'संक्षेपेण मतं भाट्टमिदमत्रोपपादितम्। यद्वक्तव्यमिहान्यत्तदनुसन्धेयमाकरात्' ॥ १८ ॥ इदानीं ज्ञानज्ञेयज्ञातृरूपस्य करणकर्मकर्तृरूपस्य च त्रिकद्वयस्य

५ भाष्योत्कर्षदीपिका।

त्रिषु करणादिषु संगृह्यत इति करणादिरूपस्त्रिविधः कर्मसंग्रह उच्यत इति भावः। अत्र भाष्यस्यास्य सामान्यरूपत्वात्तदविरोधेन व्याख्यानान्तराण्यपि निर्दुष्टान्युपादेयानि ॥ १८ ॥ क्रियाकारकफलानामात्मसंबन्धो नास्तीति दर्शयितुं तेषां सर्वेषां त्रिगुणात्मक-

६ श्रीधरीव्याख्या।

र्तकः। कर्म संगृह्यतेऽस्मिन्निति कर्मसंग्रहः। करणादित्रिविधं कारकं क्रियाश्रय इत्यर्थः। संप्रदानादिकारकत्रयं तु परंपरया क्रियानिर्वर्तकमेव केवलं नतु साक्षात्क्रियाया आश्रयः। अतः करणादित्रितयमेव क्रियाश्रय इत्युक्तम् ॥ १८ ॥ ततः किमत आह—**ज्ञान-**

७ अभिनवगुप्ताचार्यव्याख्या।

यत्वमाविष्टत्वात्। अतो योगिनामावेशो नास्तीति तान्प्रति करणादिगिरां प्रसङ्गो नास्ति अपितु ज्ञानादिमात्र एव तात्पर्यम् ॥ १८ ॥ अथैषां त्रयाणामपि संक्षेपेण गुणभेदाद्भेदं दर्शयितुमाह—ज्ञानं कर्मचेति। गुणानां संख्यानं निश्चयो यत्र तत्र सांख्यीयकृतान्ते ज्ञानादि

१ श्रीमच्छांकरभाष्यम्।

**ज्ञानं कर्म चेति। ज्ञानं कर्म च, कर्म क्रिया, न कारकं पारिभाषिकमीप्सिततमं कर्म, कर्ता च निर्वर्तकः क्रियाणां त्रिधैवावधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थं गुणभेदतः सत्त्वादिभेदेनेत्यर्थः। प्रोच्यते कथ्यते। गुणसंख्याने कापिले शास्त्रे तदपि गुणसंख्यानशास्त्रं गुणभोक्तृविषये प्रमाणमेव परमार्थब्रह्मैकत्वविषये यद्यपि विरुध्यते, तथापि ते हि कापिला गुणगौणव्यापारनिरूपणेऽभियुक्ता इति तच्छास्त्रमपि वक्ष्यमाणार्थस्तुत्यर्थत्वेनोपादीयत इति न विरोधः।**

२ आनन्दगिरिव्याख्या।

प्रतिज्ञा क्रियत इत्याह—**इत्यारभ्यत इति**। कर्तुरीप्सिततमं कर्मेति यत्तत्परिभाष्यते तन्नात्र कर्मशब्दवाच्यमित्याह—**नेति**। गुणातिरेकेण विधान्तरं ज्ञानादिषु नेति निर्धारयितुमवधारणमित्याह—**गुणेति**। ज्ञानादीनां प्रत्येकं गुणभेदप्रयुक्ते त्रैविध्ये प्रमाणमाह—**प्रोच्यत इति**। ननु कापिलं पातञ्जलमित्यादि शास्त्रं विरुद्धार्थत्वादप्रमाणं कथमिह प्रमाणीक्रियते तत्राह—**तदपीति**। विषयविशेषे विरोधेऽपि प्रकृतेऽर्थे प्रामाण्यमविरुद्धमित्यर्थः। यद्यपि कापिलादयो गुणवृत्तिविचारे गौणव्यापारस्य भोगादेर्निरूपणे च निपुणास्तथापि कथं तदीयं शास्त्रमत्र प्रमाणीकृतमित्याशङ्क्याह—**ते हीति**। ज्ञानादिषु प्रत्येकमवान्तरभेदो वक्ष्यमाणोऽर्थस्तस्य तन्त्रान्तरेऽपि प्रसिद्धिकथनं स्तुति-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सर्वेषां प्राकृतत्वेन त्रिगुणात्मकत्वे प्राप्ते ज्ञेयकरणयोर्जडयोर्घटकुठारकल्पयोः परिसंख्यार्थं त्रयाणामेव प्रत्येकं त्रिविधत्वं विवरीतुं प्रतिजानीते—**ज्ञानमिति**। ज्ञानं कर्म कर्ता चेति त्रयमेव गुणभेदतस्त्रिधा नतु ज्ञेयकरणे। गुणसंख्याने कापिले शास्त्रे। यद्यपि तत्र एकस्यां प्रमदायां भर्तुः सुखं जायते, तं प्रति तस्याः सत्त्वोद्भूतत्वात्, तामविन्दतश्चैत्रस्य दुःखं जायते, तंप्रति तस्या रजउद्भूतत्वात्। तस्यामेव सपत्न्या द्वेषस्तांप्रति तस्यास्तमउद्भूतत्वात्। प्रमदयैव सर्वे भावा व्याख्याता इति कापिलानां ज्ञेयकरणयोरपि त्रैविध्यं प्रसिद्धम्। तथापि प्रमदादय एकस्यैव पुंसो निमित्तभेदेन

४ मधुसूदनीव्याख्या।

त्रिगुणात्मकत्वं वक्तव्यमिति तदुभयं संक्षिप्य त्रिगुणात्मकत्वं प्रतिजानीते—ज्ञानं प्राग्व्याख्यातम्। ज्ञेयमप्यत्रैवान्तर्भूतं ज्ञानोपाधिकत्वाज्ज्ञेयत्वस्य। कर्म क्रिया त्रिविधः कर्मसंग्रह इत्यत्रोक्ता। चकारात् करणकर्मकारकयोरत्रैवान्तर्भावः क्रियोपाधिकत्वात्कारकत्वस्य। कर्ता क्रियाया निर्वर्तकः चकाराज्ज्ञाता च कर्तुः क्रियोपाधिकत्वेऽपि पृथक् त्रैगुण्यकथनं कुतार्किकभ्रमकल्पितात्मत्वनिवारणार्थम्। ते हि कर्तैवात्मेति मन्यन्ते। गुणाः सत्त्वरजस्तमांसि सम्यक् कार्यभेदेन व्याख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं कापिलं तस्मिन्, ज्ञानं क्रिया च कर्ता च गुणभेदतः सत्त्वरजस्तमोभेदेन त्रिधैव प्रोच्यते। एवकारो विधान्तरनिवारणार्थः। यद्यपि कापिलं शास्त्रं परमार्थब्रह्मैकत्वविषये न प्रमाणं तथाप्यपरमार्थगुणगौणभेदनिरूपणे व्यावहारिकं प्रामाण्यं भजत इति वक्ष्यमाणार्थस्तुत्यर्थं गुणसंख्याने प्रोच्यत इत्युक्तम्। तन्त्रान्तरेऽपि प्रसिद्धमिदं न केवलमस्मिन्नेव तन्त्र इति स्तुतिः। यथावद्यथाशास्त्रं शृणु श्रोतुं सावधानो भव तानि ज्ञानादीनि। अपिशब्दात्तद्भेदजातानि च गुणभेदकृतानि। अत्र चैवमपौनरुक्त्यं द्रष्टव्यम्। चतुर्दशेऽध्याये तत्र सत्त्वं निर्मलत्वादित्यादिना गुणानां बन्धहेतुत्वप्रकारो निरूपितो गुणातीतस्य जीवन्मुक्तत्वनिरूपणाय। सप्तदशे पुनर्यजन्ते सात्त्विका देवानित्यादिना गुणकृतत्रिविधस्वभावनिरूपणेनासुरं रजस्तमःस्वभावं

५ भाष्योत्कर्षदीपिका।

त्वात् सत्त्वरजस्तमोगुणभेदेन त्रैविध्यप्रतिपादनमारभ्यते—**ज्ञानमिति**। कर्मशब्देन क्रिया ग्राह्या वक्ष्यमाणानुरोधात्। ननु कर्तुरीप्सिततमं कर्मेति पारिभाषिकं कर्म कारकं कर्ता च क्रियाणां निर्वर्तकः गुणभेदतः सत्त्वादिगुणभेदेन त्रिधैव गुणसंख्याने प्रोच्यते। अवधारणं गुणव्यतिरेकेण विविधान्तरं ज्ञानादिषु नास्तीति निर्धारणार्थम्। गुणाः सत्त्वादयः सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं कापिलशास्त्रं यद्यपि परमार्थब्रह्मैकत्वविषये विरुध्यते तथापि तेषां कापिलानां गुणगौणव्यापारनिरूपणेऽभि-

६ श्रीधरीव्याख्या।

**मिति**। गुणाः सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं सांख्यशास्त्रं तस्मिन्, ज्ञानं कर्म च क्रिया कर्ता च प्रत्येकं सत्त्वादिगुणभेदेन त्रिधैवोच्यते। तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथावच्छृणु। त्रिधैवेत्येवकारो गुणत्रयोपाधिव्यतिरेकेणात्मनः स्वतःकर्तृत्वादिप्रतिषेधार्थः। चतुर्दशेऽध्याये 'तत्र सत्त्वं निर्मलत्वात्' इत्यादिना गुणानां बन्धकत्वप्रकारो निरूपितः। सप्तदशेऽध्याये 'यजन्ते सात्त्विका देवान्' इत्यादिना गुणकृतत्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावं परित्यज्य सात्त्विकाहारादिसेवया सात्त्विकस्वभावः संपा-

७ अभिनवगुप्ताचार्यव्याख्या।

त्रिविधमुच्यते यत्तच्छृण्विति संगतिः। ज्ञानमित्यनेन ज्ञाने क्रियायां च यत्करणं तद्द्विविधमुक्तम्। एवं कर्मेति ज्ञेयं कार्यं कर्तेति ज्ञाता कर्ता चेति। तत्र सर्वभूतेष्वित्यादिना श्लोकत्रयेण ज्ञानकरणस्य त्रैरूप्यमुक्तम्। अतएव येनेति तृतीया। इयता च ज्ञानकरणसामान्यस्य स्व-

१ श्रीधरः, मधुसूदनः.

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥**

१ श्रीमच्छांकरभाष्यम् ।

यथावद्यथान्यायं यथाशास्त्रं शृणु तान्यपि ज्ञानादीनि तद्भेदजातानि गुणभेदकृतानि शृणु । वक्ष्यमाणेऽर्थे मनःसमाधिं कुर्वित्यर्थः ॥ १९ ॥ ज्ञानस्य तु तावत्त्रिविधत्वमुच्यते—**सर्वेति** । सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु भूतेषु येन ज्ञानेनैकं भावं वस्तु, भावशब्दो वस्तुवाच्येकमात्मवस्त्वित्यर्थः । अव्ययं न व्येति स्वात्मना धर्मैर्वा कूटस्थनित्यमित्यर्थः । ईक्षते येन ज्ञानेन पश्यति तं च भावमविभक्तं प्रतिदेहं विभक्तेषु देहभेदेषु न विभक्तं तदात्मवस्तु व्योमवन्निरन्तरमित्यर्थः । तज्ज्ञानमद्वैतात्मदर्शनं सात्त्विकं सम्यग्दर्शनं विद्धीति ॥२०॥ यानि द्वैतदर्शनानि तान्यसम्यग्भूतानि राजसानि तामसानि

२ आनन्दगिरिव्याख्या ।

स्वादर्थ्येन कापिलादिमतोपादानमिहोपयोगीत्यर्थः । तृतीयपादस्याविरुद्धार्थत्वं निगमयति—**नेति** । यथावदित्यादिव्याचष्टे—**यथान्यायमिति** ॥ १९ ॥ ज्ञानादीनां प्रत्येकं त्रैविध्यं ज्ञातव्यं प्रतिज्ञाय ज्ञानत्रैविध्यार्थं श्लोकत्रयमवतारयति—**ज्ञानस्येति** । तत्र सात्त्विकं ज्ञानमुपन्यस्यति—**सर्वेति** । भूतानि कार्यकारणात्मकान्युपाधिजातानि, अद्वितीयमखण्डैकरसं प्रत्यगात्मभूतमबाधितं तत्त्वं ज्ञेयत्वेन विवक्षितमित्याह—**एकमिति** । विवक्षितमव्ययत्वं संक्षिपति—**कूटस्थेति** । प्रतिदेहमविभक्तमित्युक्तं व्यनक्ति—**विभक्तेष्विति** । तज्ज्ञानमित्यादिव्याकरोति—**अद्वैतेति** ॥२०॥ द्वैतदर्शनान्यपि कानिचिद्भवन्ति सत्त्वनिर्वृत्तानि सम्यञ्चीत्याशङ्क्याह—**यानीति** । तेषामसम्यक्त्वे हेतुमाह—**राजसानीति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

प्रीतिदुःखद्वेषविषया अपि भवन्तीति पूर्वोक्तव्यवस्थाया निर्मूलत्वात् । प्रीत्यादीनां कर्तृसमवायितया प्रतीयमानानामालम्बनभूतायाः प्रमदायाः प्रीत्याद्यात्मकत्वं कल्पयितुं न शक्यत इति न भगवता तयोस्त्रिविधत्वं व्याख्यायते । अक्षरार्थः स्पष्टः ॥ १९ ॥ एवं ज्ञानादित्रयस्य त्रैविध्यं वक्तुं प्रतिज्ञाय ज्ञानत्रैविध्यं तावदाह—**सर्वभूतेष्विति** । यथा कटककुण्डलादिषु व्यावर्तमानेषु तत्त्वविवेकं काञ्चनमेवेदमिति पश्यति एवं येन ज्ञानेन सर्वभूतेषु विभक्तेषु नानानामरूपभेदभिन्नेषु अव्ययमपरिणामिनमेकं भावं चिन्मात्ररूपमीक्षते सर्वं ब्रह्मैवेदमिति पश्यति तज्ज्ञानं सात्त्विकं

४ मधुसूदनीव्याख्या ।

परित्यज्य सात्त्विकाहारादिसेवया दैवः सात्त्विकः स्वभावः संपादनीय इत्युक्तम् । इह तु स्वभावतो गुणातीतस्यात्मनः क्रियाकारकफलसंबन्धो नास्तीति दर्शयितुं तेषां सर्वेषां त्रिगुणात्मकत्वमेव न रूपान्तरमस्ति येनात्मसंबन्धिता स्यादित्युच्यत इति विशेषः ॥ १९ ॥ एवं ज्ञानस्य कर्मणः कर्तुश्च प्रत्येकं त्रैविध्ये ज्ञातव्यत्वेन प्रतिज्ञाते प्रथमं ज्ञानत्रैविध्यं निरूपयति त्रिभिः श्लोकैः । तत्राद्वैतवादिनां सात्त्विकं ज्ञानमाह—सर्वेषु भूतेषु अव्याकृतहिरण्यगर्भविराट्संज्ञेषु बीजसूक्ष्मस्थूलरूपेषु समष्टिव्यष्ट्यात्मकेषु, सर्वेष्वित्यनेनैव निर्वाहे भूतेष्वित्यनेन भवनधर्मकत्वमुच्यते । तेनोत्पत्तिविनाशशीलेषु दृश्यवर्गेषु, विभक्तेषु परस्परव्यावृत्तेषु नानारसेष्वव्ययमुत्पत्तिविनाशादिसर्वविक्रियाशून्यमदृश्यमविभक्तमव्यावृत्तं सर्वत्रानुस्यूतमधिष्ठानतया बाधावधितया च एकमद्वितीयं भावं परमार्थसत्तारूपं स्वप्रकाशानन्दमात्मानं येनान्तःकरणपरिणामभेदेन वेदान्तवाक्यविचारपरिनिष्पन्नेनेक्षते साक्षात्करोति तन्मिथ्याप्रपञ्चबाधकमद्वैतात्मदर्शनं सात्त्विकं सर्वसंसारोच्छित्तिकारणं ज्ञानं विद्धि । द्वैतदर्शनं

५ भाष्योत्कर्षदीपिका ।

युक्तत्वात्तच्छास्त्रमपि वक्ष्यमाणस्तुत्यर्थत्वेनोपादीयते । वक्ष्यमाणार्थस्य तन्त्रान्तरेऽपि प्रसिद्धिकथनं स्तुतिः । तानि ज्ञानादीनि अपिशब्दात्तद्भेदजातानि च गुणभेदकृतानि शृणु । वक्ष्यमाणेऽर्थे मनःसमाधानं कुर्वित्यर्थः ॥ १९ ॥ तत्र ज्ञानस्य त्रैविध्यं विभजन्नादौ तस्य सात्त्विकत्वमाह—सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु विभक्तेषु देहादिभेदेन विभागवत्सु एकमद्वितीयं भावं परमार्थवस्तु सच्चिदानन्दरूपमव्ययं स्वात्मना धर्मेण वा न व्येतीत्यव्ययं कूटस्थं नित्यमविभक्तं प्रतिदेहं विभागशून्यं व्योमवन्निरन्तरं येन ज्ञानेनोपनिषत्सिद्धान्तजन्येनाद्वैतवादी पश्यति तदद्वैतात्मदर्शनं सम्यग्ज्ञानं सात्त्विकं विद्धि विजानीहि ॥ २० ॥ एवमद्वैतवादिनां

६ श्रीधरीव्याख्या ।

दनीय इत्युक्तम् । इह तु क्रियाकारकफलादीनामात्मसंबन्धो नास्तीति दर्शयितुं सर्वेषां त्रिगुणात्मकत्वमुच्यत इति विशेषो ज्ञातव्यः ॥ १९ ॥ तत्र ज्ञानस्य सात्त्विकादि त्रैविध्यमाह—**सर्वभूतेष्विति त्रिभिः** । सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु परस्परं व्यावृत्तेषु अविभक्तमनुस्यूतं एकमव्ययं निर्विकारं भावं परमात्मतत्त्वं येन ज्ञानेनेक्षते आलोचयति तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

( सामर्थ्येत्यन्यादर्शे ) रूपमुक्तम् । नियतमित्यादिना श्लोकत्रयेण । कर्मणो ज्ञेयकार्यरूपस्य द्वैविध्यं । मुक्तसङ्ग इत्यादिना श्लोकत्रयेण तु कर्तुर्द्विरूपस्य संक्षेपेण स्वरूपं करणविशेषस्य स्वरूपभेदप्रतिपादनार्थं बुद्धेस्त्रैविध्यं निरूपितम् । तद्द्वारेण करणान्तराणामपि त्रैविध्यमुपलक्षितम् । कारणस्य रिवतिकर्तव्यतापेक्षित्वादितिकर्तव्यतायाश्च धृत्यादिपञ्चकरूपत्वेऽपि श्रद्धायाः पूर्वमुक्तत्वाद्विविदिषाविविदिषयोश्च धृति-

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**
**यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

चेति न साक्षात्संसारोच्छित्तये भवन्ति । पृथक्त्वेनेति । पृथक्त्वेन तु भेदेन प्रतिशरीरमन्यत्वेन यज्ज्ञानं नानाभावान्भिन्नानात्मनः पृथग्विधान्पृथक्प्रकारान् भिन्नलक्षणानित्यर्थः । वेत्ति विजानाति यज्ज्ञानं सर्वेषु भूतेषु ज्ञानस्य कर्तृत्वासंभवाद्येन ज्ञानेन वेत्तीत्यर्थः । तज्ज्ञानं विद्धि राजसं रजोनिर्वृत्तम् ॥ २१ ॥ यत्त्विति । यत्तु ज्ञानं कृत्स्नवत्समस्तवत्सर्वविषयमिवैकस्मिन्कार्ये देहे बहिर्वा प्रतिमादौ सक्तमेतावानेवात्मेश्वरो वा नातः परमस्तीति यथा नग्नक्षपणकादीनां शरीरानुवर्ती देहपरिमाणो जीव ईश्वरो वा पाषाणदार्वादिमात्रमित्येवमेकस्मिन्कार्ये सक्तमहैतुकं हेतुवर्जितं

२ आनन्दगिरिव्याख्या ।

प्रतिदेहमन्यत्वेन भिन्नात्मनो येन ज्ञानेन जानाति तज्ज्ञानं राजसमिति व्याचष्टे—**भेदेनेति** । पृथक्त्वं पृथग्विधत्वं च पुनरुक्तमित्याशङ्क्य हेतुहेतुमत्त्वेन विभागं विवक्षित्वाह—**भिन्नेति** । ज्ञानस्य ज्ञानकर्तृत्वमयुक्तमित्याशङ्क्याह—**येनेति** ॥ २१ ॥ सक्तत्वमेव व्यनक्ति—**एतावानिति** । एकस्मिन्कार्ये ज्ञानस्य सक्तत्वमेव दृष्टान्तेन

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

विद्धि । ऐकात्म्यज्ञानमेव सात्त्विकमित्यर्थः ॥ २० ॥ भेदज्ञाने राजसत्वमाह—**पृथक्त्वेनेति** । यत्पृथक्त्वेन भिन्नत्वेन । ज्ञानं तद्राजसमिति संबन्धः । पृथक्त्वेनेत्येतद्विवृणोति । सर्वेषु भूतेषु पाञ्चभौतिकत्वेनाविशिष्टेषु नानाभावान् सुरनरतिर्यक्स्थावरत्वभेदेन नानात्वानि । बहुवचनमत्यन्तभेदप्रदर्शनार्थम् । पृथग्विधान् एकजातीयेष्वपि नरादिषु प्रत्येकं विभिन्नप्रकारान् यज्ज्ञानं वेत्ति विषयीकरोतीति । येन ज्ञानेन वेत्तीति वक्तव्ये एधांसि पचन्तीतिवद्यज्ज्ञानं वेत्तीति करणे कर्तृत्वोपचारो बोध्यः । तेनात्मनां परस्परभेदस्तेषामीश्वराद्भेदस्तेभ्य ईश्वरादन्योन्यतश्च जडवर्गस्य भेद इत्यनौपाधिकभेदपञ्चकज्ञानं कुतार्किकाणां राजसमेवेत्यभिप्रायः ॥ २१ ॥ यत्तु ज्ञानमेकस्मिन्कार्ये देहे प्रतिमादौ वा

४ मधुसूदनीव्याख्या ।

तु राजसं तामसं च संसारकारणं न सात्त्विकमित्यभिप्रायः ॥ २० ॥ तुशब्दः प्रागुक्तसात्त्विकव्यतिरेकप्रदर्शनार्थः । पृथक्त्वेन भेदेन स्थितेषु सर्वभूतेषु देहादिषु नानाभावान् प्रतिदेहमन्यानात्मनः पृथग्विधान् सुखदुःखित्वादिरूपेण परस्परविलक्षणान्, येन ज्ञानेन वेत्तीति वक्तव्ये यज्ज्ञानं वेत्तीति करणे कर्तृत्वोपचारादेधांसि पचन्तीतिवत्कर्तुरहंकारस्य तद्वस्त्यभेदाद्वा, तज्ज्ञानं विद्धि राजसमिति पुनर्ज्ञानपदमात्मभेदज्ञानं अनात्मभेदज्ञानं च परामृशति । तेनात्मनां परस्परं भेदस्तेषामीश्वराद्भेदस्तेभ्य ईश्वरादन्योन्यतश्चाचेतनवर्गस्य भेद इत्यनौपाधिकभेदपञ्चकज्ञानं कुतार्किकाणां राजसमेवेत्यभिप्रायः ॥ २१ ॥ तुशब्दो राजसाद्भिनत्ति । बहुषु भूतकार्येषु विद्यमानेष्वेऽकस्मिन्कार्ये भूतविकारे देहे प्रतिमादौ वा अहेतुकं हेतुरुपपत्तिस्तद्रहितमन्येषां

५ भाष्योत्कर्षदीपिका ।

सात्त्विकमुपादेयमुक्त्वा तार्किकाणां तद्राजसं हेयमाह—**पृथक्त्वेन त्विति** । तुशब्दः संसारोच्छित्तिहेतुभूतात्पूर्वोक्तात्सात्त्विकाज्ज्ञानात्तदुच्छित्त्यहेतुभूतस्य प्रत्युत तत्कारणस्य वैलक्षण्यद्योतनार्थः । पृथक्त्वेन प्रतिशरीरमन्यत्वेन हेतुना पृथग्विधान् भिन्नलक्षणान् नानाभावान् भिन्नात्मनः सर्वेषु भूतेषु यज्ज्ञानं वेत्ति जानाति ज्ञानस्य कर्तृत्वासंभवात् येन ज्ञानेन वेत्तीत्यर्थः । एधांसि पचन्तीतिवत्करणे कर्तृत्वोपचारादेवं प्रयोगः । तज्ज्ञानं राजसं रजोनिर्वृत्तं विद्धि । यत्पृथक्त्वेन स्थितेषु भूतेष्विति तु दूरान्वयदोषेणाध्याहारदोषेण च ग्रस्तत्वादाचार्यैरुपेक्षितम् ॥ २१ ॥ राजसं ज्ञानमुदाहृत्य तामसं तदाह—**यत्त्विति** । तुशब्दो राजसा-

६ श्रीधरीव्याख्या ।

राजसं ज्ञानमाह—**पृथक्त्वेनेति** । पृथक्त्वेन तु यज्ज्ञानमित्यस्यैव विवरणं सर्वेषु भूतेषु देहेषु नानाभावान्वस्तुत एवानेकान्क्षेत्रज्ञान् पृथग्विधान्सुखीदुःखीत्यादिरूपेण विलक्षणान् येन ज्ञानेन वेत्ति तज्ज्ञानं राजसं विद्धि ॥ २१ ॥ तामसं ज्ञानमाह—**यत्त्विति** । एकस्मिन्कार्ये

७ अभिनवगुप्ताचार्यव्याख्या ।

सुखाभ्यामाक्षेपात्तयोस्त्रैविध्यम् । धृतेश्चेत्यनेन सुखं त्विदानीमित्यनेन चोक्तमिति, तदाह—सर्वभूतेष्वित्यादिना ॥ १९ ॥ २० ॥ पृथक्त्वेनेति । विभक्तेषु देवमनुष्यादितया पृथक्त्वेन इह मे प्रीतिरिह मे द्वेष इत्यादिबुद्ध्या अहेतुकं कारणमविचार्यैव अभिनिवेशावेशवशात्

१ मधुसूदनः ।

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**निर्युक्तिकमतत्त्वार्थवद्यथाभूतोऽर्थस्तत्त्वार्थः सोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवन्न तत्त्वार्थवदतत्त्वार्थव-दहैतुकत्वादेवाल्पं चाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसमुदाहृतम् । तामसानां हि प्राणिनामवि-वेकिनामीदृशं ज्ञानं दृश्यते ॥ २२ ॥ अथ कर्मणस्त्रैविध्यमुच्यते—नियतमिति । नियतं नित्यं सङ्गर-हितमासक्तिवर्जितमरागद्वेषतः कृतं रागप्रयुक्तेन द्वेषप्रयुक्तेन च कृतं रागद्वेषतः कृतं तद्विपरीतं कृतमरागद्वेषतः कृतमफलप्रेप्सुना फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णस्तद्विपरीतेनाफलप्रेप्सुना**

२ आनन्दगिरिव्याख्या ।

साधयति—**यथेत्यादिना** । यन्निर्युक्तिकत्वं तदेव ज्ञानस्याभासत्वे कारणमित्याह—**अहैतुकत्वादिति** । स्वरूपतो विषयतश्चाभासत्वं फलतो वेत्याह—**अल्पेति** । तामसं ज्ञानमुक्तलक्षणमित्यत्रानुभवं प्रमाणयति—**तामसानां हीति** ॥ २२ ॥ त्रिविधं कर्म वक्तुमनन्तरश्लोकत्रयमित्याह—**अथेति** । तत्र सात्त्विकं कर्म निरूपयति—**नियत-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कृत्स्नवत्परीपूर्णवदेतावानेवात्मा ईश्वरो वेति सक्तमभिनिवेशयुक्तम् । अहैतुकं निरुपपत्तिकम् । अतत्त्वार्थवत् परमार्थावलम्बनशून्यम् । अल्पं तुच्छविषयत्वादल्पफलत्वाच्च । यदेवंभूतं ज्ञानं तत्तामसमुदाहृतम् ॥ २२ ॥ अथ कर्मत्रैविध्यमाह—**नियतमित्यादिना** । नियतं नित्यम् । सङ्गरहितमभिमानवर्जितम् । राग इष्टे प्रीतिर्द्वेषोऽनिष्टेऽप्रीतिस्ताभ्यां कृतमिष्टानिष्टप्राप्तिपरिहारार्थं कृतं रागद्वेषतः कृतं तदन्यदरागद्वेषतः कृतं निष्काममित्यर्थः । फल्गु च लीयते

४ मधुसूदनीव्याख्या ।

भूतकार्याणामात्मत्वाभावे कथमेकस्य तादृशस्यात्मत्वमित्यनुसंधानशून्यं, कृत्स्नवत्परिपूर्णवत्सक्तं एतावानेवात्मा ईश्वरो वा नातः परमस्तीत्यभिनिवेशेन लग्नं यथा दिगम्बराणां सावयवो देहपरिमाण आत्मेति, यथा वा चार्वाकाणां देह एवात्मेति एवं पाषाण-दार्वादिमात्र ईश्वर इत्येकस्मिन्कार्ये सक्तमहैतुकत्वादेवातत्त्वार्थवन्न तत्त्वार्थालम्बनं, अल्पंच नित्यत्वविभुत्वाग्रहात् । ईदृशं नित्य-विभुदेहादिव्यतिरिक्तात्मतद्व्यतिरिक्तेश्वरग्राहितार्किकज्ञानविलक्षणमनित्यपरिच्छिन्नदेहाद्यात्माभिमानरूपं चार्वाकादीनां यज्ज्ञानं तत्तामसमुदाहृतं तामसानां प्राकृतजनानामीदृशज्ञानदर्शिभिः ॥ २२ ॥ तदेवमौपनिषदानामद्वैतात्मदर्शनं सात्त्विकमुपादेयं मुमुक्षुभिर्द्वैतदर्शिनां तु नित्यविभुपरस्परविभिन्नात्मदर्शनं राजसमनित्यपरिच्छिन्नात्मदर्शनं च तामसं हेयमुक्तं, संप्रति त्रिविधं कर्मोच्यते—नियतं यावदङ्गोपसंहारासमर्थानामपि फलावश्यंभावव्याप्तं नित्यमिति यावत् । सङ्गोऽहमेव महायाज्ञिक इत्याद्यभि-मानरूपोऽहंकारापरपर्यायो राजसो गर्वविशेषस्तेन शून्यं सङ्गरहितं, यावदज्ञानं तु कर्तृत्वभोक्तृत्वप्रवर्तनोऽहंकारोऽनुवर्तत एव सात्त्विकस्यापि । तद्रहितस्य तु तत्त्वविदो न कर्माधिकार इत्युक्तमसकृत् । रागो राजसन्मानादिकमनेन लप्स्य इत्यभिप्रायः, द्वेषः शत्रुमनेन पराजेष्य इत्यभिप्रायस्ताभ्यां न कृतमरागद्वेषतः कृतम् । अफलप्रेप्सुना फलाभिलाषरहितेन कर्त्रा यत्कृतं कर्म

५ भाष्योत्कर्षदीपिका ।

द्वैलक्षण्यद्योतनार्थः । यत्तु ज्ञानमेकस्मिन्कार्ये देहे बहिर्वा प्रतिमादौ कृत्स्नवत्समस्तवत्परिपूर्णवत् एतावानेवात्मा ईश्वरो नातः परम-स्तीति यथा चार्वाकादीनां शरीरानुवर्तिदेहपरिमाणो जीव ईश्वरो वा पाषाणदार्वादिमात्र इत्येवमभिनिवेशयुक्तं यतोऽहेतुकमुपपत्ति-शून्यमहेतुकत्वादतत्त्वार्थवत् यथाभूतोऽर्थस्तत्त्वार्थः सोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवत् न तत्त्वार्थवदतत्त्वार्थवत् । तत एवाल्पं चाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसानां प्राणिनां अविवेकिनां परिदृश्यमानमीदृशं ज्ञानं हेयं तत्तामसमुदाहृतम् ॥ २२ ॥ एवं ज्ञानत्रैविध्यं विभज्य कर्मत्रैविध्यं विभजन्नादौ सात्त्विकं कर्मोदाहरति । नियतं नित्यमवश्यकर्तव्यतया विहितं सङ्गरहितमासक्तिव-र्जितमभिनिवेशशून्यमरागद्वेषतः कृतं रागो विषयप्रेप्साकारणभूता रञ्जनात्मिका चित्तवृत्तिः तत्प्रयुक्तेन द्वेषप्रयुक्तेन च कृतं राग-द्वेषतः कृतं तद्विपरीतमरागद्वेषतः कृतं फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णः तद्विपरीतेनाऽफलप्रेप्सुना कर्त्रा यत्कर्म कृतं तत्सात्त्वि-कमुच्यते । फल्गु च लीयते चेति फलं क्रियया प्राप्यं अनात्मवस्तु तदन्यदफलमनागन्तुकं परिपूर्णमविनाशि आत्मतत्त्वं तत्प्रेप्सुना

६ श्रीधरीव्याख्या ।

देहे प्रतिमादौ वा कृत्स्नवत्परिपूर्णवत्सक्तमेतावानेवात्मा ईश्वरो वेत्यभिनिवेशयुक्तम्, अहैतुकं निरुपपत्तिकम्, अतत्त्वार्थवत्परमार्थावल-म्बनशून्यम्, अतएवाल्पं तुच्छम् अल्पविषयत्वादल्पफलत्वाच्च । यदेवंभूतं ज्ञानं तत्तामसमुदाहृतम् ॥ २२ ॥ इदानीं त्रिविधं कर्माह—**नियतमिति त्रिभिः** । नियतं नित्यतया विहितं, सङ्गरहितमभिनिवेशशून्यं, अरागद्वेषतः पुत्रादिप्रीत्या वा शत्रुद्वेषेण वा यत्कृतं न

७ अभिनवगुप्ताचार्यव्याख्या ।

क्रोधरागादिग्रहणम् । यत्तत्तामससंज्ञम् । नियतं कर्तव्यमिति क्लेशैरविद्याद्यैर्बहुलं व्याप्तं मोहाद्यभिनिवेशमयात् अहं कर्तेति न वदंस्तच्छीलस्त-

**यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।**
**क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥**
**अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।**
**मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कर्त्रा कृतं कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥ यत्त्विति । यत्तु कामेप्सुना फलप्रेप्सुनेत्यर्थः । कर्म साहंकारेण वा साहंकारेणेति न तत्त्वज्ञानापेक्षया किं तर्हि लौकिकश्रोत्रियनिरहंकारापेक्षया । यो हि परमार्थनिरहंकार आत्मवित्न तस्य कामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिरस्ति । सात्त्विकस्यापि कर्मणोऽनात्मवित्साहंकारः कर्ता किमुत राजसतामसयोः । लोकेऽनात्मविदपि श्रोत्रियो निरहंकार उच्यते निरहंकारोऽयं ब्राह्मण इति तस्मात्तदपेक्षयैव साहंकारेण वेत्युक्तम् । पुनःशब्दः पादपूरणार्थः । क्रियते बहुलायासं कर्त्रा महतायासेन निर्वर्त्यते तत्कर्म राजसमुदाहृतम् ॥ २४ ॥ अनुबन्धमिति ।

२ आनन्दगिरिव्याख्या ।

मिति ॥ २३ ॥ राजसं कर्म निर्दिशति—**यत्त्विति** । फलप्रेप्सुना कर्त्रा यत्कर्म क्रियते तद्राजसमित्युत्तरत्र संबन्धः । तत्त्वज्ञानवता निरहंकारेण साहंकारेण त्वज्ञेन क्रियते कर्मेति विवक्षां वारयति—**साहंकारेणेति** । तत्त्वज्ञानवता निरहंकारेण कृतं कर्मापेक्ष्य साहंकारेणाज्ञेन कृतमेतत्कर्मेति न विवक्ष्यते चेत्तर्हि किमत्र विवक्षितमिति पृच्छति—**किं तर्हीति** । यो हि दुरितरहितः श्रोत्रियो लोकादनपेतस्तस्य यदहंकारवर्जितं कर्म तदपेक्ष्येदं साहंकारेण कृतं कर्मेत्युक्तमित्याह—**लौकिकेति** । ननु तत्त्वज्ञानवतो निरहंकारस्य कर्मकर्तृत्वमपेक्ष्य साहंकारेणेत्यादि किं नेष्यते तत्राह—**यो हीति** । विशेषणान्तरवशादेव तत्त्वविदो निवारितत्वान्न तदपेक्षमिदं विशेषणमित्यर्थः । साहंकारस्यैव राजसे कर्मणि कर्तृत्वमित्येतत्कैमुतिकन्यायेन साधयति—**सात्त्विकस्येति** । नन्वात्मविदोऽन्यस्य निरहंकारत्वायोगात्कथं तदपेक्षया साहंकारेणेत्युक्तं तत्राह—**लोक इति** ॥ ३४ ॥ संप्रति तामसं कर्मोदाहरति—**अनुबन्ध-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चेति फलं क्रियया प्राप्यमनात्मवस्तु तदन्यदफलमनागन्तुकं परिपूर्णमविनाशि आत्मतत्त्वं तत्प्रेप्सुना कृतं 'विविदिषन्ति यज्ञेन' इति श्रुत्या आत्मलाभार्थं यज्ञादेर्विनियोगात् । तत्कर्म सात्त्विकमुच्यते ॥ २३ ॥ यत्तु कामेप्सुना फलार्थिना साहंकारेण । यद्यपि सात्त्विकोऽप्यनात्मवित्साहंकारस्तथाप्यहमेव कर्मकुशलो महान् श्रोत्रिय इत्यभिमानोऽहंकारस्तद्वता साहंकारेण । वाशब्दश्चार्थे । क्रियते बहुलायासमतिश्रमकरं तत्कर्म राजसमुदाहृतम् ॥ २४ ॥ अनु-

४ मधुसूदनीव्याख्या ।

यागदानहोमादि तत्सात्त्विकमुच्यते ॥ २३ ॥ तुः सात्त्विकाद्भिनत्ति । कामेप्सुना फलकामेन कर्त्रा साहंकारेण प्रागुक्तसज्ञात्मकगर्वयुक्तेन च । वाशब्दः समुच्चये । पुनरित्यनियतं यावत्कामनं काम्यावृत्तेः । बहुलायासं सर्वाङ्गोपसंहारेण क्लेशावहं यत्काम्यं कर्म क्रियते तद्राजसमुदाहृतम् । अत्रसर्वैर्विशेषणैः सात्त्विकसर्वविशेषणव्यतिरेको दर्शितः ॥ २४ ॥ अनुबन्धं

५ भाष्योत्कर्षदीपिका ।

कृतं 'विविदिषन्ति यज्ञेन' इति श्रुत्या आत्मलाभार्थं यज्ञादेर्विनियोगादित्यन्ये । आचार्यैस्तु कामेप्सुनेत्युत्तरानुरोधिक्लिष्टकल्पनाग्रस्तोऽयं पक्ष इत्यभिप्रेत्योपेक्षितः॥२३॥सात्त्विकं कर्मोक्त्वा राजसं तदुदाहरति—**यत्त्विति** । सात्त्विकाद्वैलक्षण्यद्योतकस्तुः । कामेप्सुना फलेप्सुना साहंकारेण वा पुनः मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवमहंकाराभिनिवेशेन तत्त्वज्ञानवतो निरहंकारस्य कर्मकर्तृत्वमपेक्ष्य साहंकारेणेति न भ्रमितव्यं तस्य कर्मण्यनधिकृतत्वात् । किंतु मत्सदृशोऽन्यः श्रोत्रियो नास्तीत्यभिमानरहितोऽनात्मविदपि लोके निरहंकार इत्युच्यमानो यस्तमपेक्ष्य साहंकारेण वा पुनरित्युच्यते । बहुलायासं महता आयासेन क्लेशेन निर्वर्त्यं यत्कर्म क्रियते तद्राजसमुदाहृतम् ॥ २४ ॥ राजसं कर्मोदाहृत्य तामसं तदाह—**अनुबन्धमिति** । अनुबध्यत इत्यनुबन्धः पश्चाद्भाविवस्तु तं क्षयं

६ श्रीधरीव्याख्या ।

भवति फलं प्राप्तुमिच्छतीति फलप्रेप्सुस्तद्विलक्षणेन निष्कामेण कर्त्रा यत्कृतं कर्म तत्सात्त्विकमुच्यते ॥ २३ ॥ राजसं कर्माह—**यत्त्विति** । यत्तु कर्म कामेप्सुना फलं प्राप्तुमिच्छता, साहंकारेण वा मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवं निरूढाहंकारयुक्तेन च क्रियते, यच्च पुनर्बहुलायासमतिक्लेशयुक्तं तत्कर्म राजसमुदाहृतम् ॥ २४ ॥ तामसं कर्माह—**अनुबन्धमिति** । अनुबध्यत इत्यनुबन्धः

७ अभिनवगुप्ताचार्यव्याख्या ।

द्धर्मस्तत्साधुकारी वानहंवादीति यो भवतीत्यनेन णिनिना व्यवहारमात्रं संवृत्तिवशेन योगिनोप्यहं करोमीति वचो न निषिद्धम् । हर्षशो-

१ नीलकण्ठः.

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥**
**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

अनुबन्धं पश्चाद्भावि यद्वस्तु सोऽनुबन्ध उच्यते तं चानुबन्धं, क्षयं यस्मिन्कर्मणि क्रियमाणे शक्तिक्षयोऽर्थक्षयो वा स्यात्तं क्षयं, हिंसां प्राणिपीडामनपेक्ष्य च पौरुषं पुरुषकारं शक्नोमीदं कर्म समापयितुमित्येवमात्मसामर्थ्यम्, इत्येतान्यनुबन्धादीन्यनपेक्ष्य पौरुषान्तानि मोहादविवेकत आरभ्यते कर्म यत्तत् तामसं तमोनिर्वृत्तमुच्यते ॥ २५ ॥ मुक्तेति । मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गो येन स मुक्तसङ्गोऽनहंवादी नाहंवदनशीलो धृत्युत्साहसमन्वितो धृतिर्धारणमुत्साह उद्यमस्ताभ्यां समन्वितः संयुक्तो धृत्युत्साहसमन्वितः सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धावसिद्धौ च सिद्ध्यसिद्ध्योर्निर्विकारः केवलं शास्त्रप्रमाणप्रयुक्तो न फलरागादिनाऽयुक्तो यः स निर्विकार उच्यते । एवंभूतः कर्ता यः स सात्त्विक उच्यते ॥ २६ ॥ रागीति । रागी रागोऽस्यास्तीति रागी,

२ आनन्दगिरिव्याख्या ।

**मित्यादिना** ॥ २५ ॥ इदानीं कर्तृत्रैविध्यं ब्रुवन्नादौ सात्त्विकं कर्तारं दर्शयति—**मुक्तेति** । सङ्गो नाम फलाभिसन्धिर्वा कर्तृत्वाभिमानो वा, नाहंवदनशीलः कर्ताहमिति वदनशीलो न भवतीत्यर्थः । धारणं धैर्यम् । क्रियमाणस्य कर्मणो यदि फलानभिसन्धिस्तर्हि नानुष्ठानविश्रम्भः संभवेदित्याशङ्क्याह—**केवलमिति** । फलरागादिनेत्यादिशब्देन कर्मरागो गृह्यते । अयुक्त इति च्छेदः ॥ २६ ॥ राजसं कर्तारं कथयति—**रागीति** । कर्मविषयो रागः, कर्मफल-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

बध्यतेऽनेनेत्यनुबन्धः फलम् । क्षयं शक्तेरर्थानां च नाशम् । हिंसां परपीडाम् । पौरुषं स्वसामर्थ्यम् । अनवेक्ष्यानालोच्य केवलमोहादविवेकतो यदारभ्यते कर्म तत्तामसमुदाहृतम् ॥ २५ ॥ कर्तृत्रैविध्यमाह—**मुक्तेत्यादिना** । मुक्तसङ्गस्त्यक्ताभिनिवेशः । अनहंवादी पूर्वोक्ताहंकारोक्तिरहितः । धृतिर्धैर्यम् । उत्साहः साधयिष्याम्येवेति बुद्धिनिश्चयः ताभ्यां समन्वितः । सिद्ध्यसिद्ध्योः कर्मण आरब्धस्येति शेषः । निर्विकारो हर्षविषादशून्यः कर्ता सात्त्विक उच्यते ॥ २६ ॥ रागी विषयलोलुपः । अतएव कर्मणः फलं प्रेप्सतीति कर्मफलप्रेप्सुः । लुब्धः परद्रव्यादौ संजात-

४ मधुसूदनीव्याख्या ।

पश्चाद्भाव्यशुभं, क्षयं शरीरसामर्थ्यस्य धनस्य सेनायाश्च नाशम्, हिंसां प्राणिपीडाम्, पौरुषमात्मसामर्थ्यं चानपेक्ष्यापर्यालोच्य मोहात्केवलाविवेकादेवारभ्यते यत्कर्म यथा दुर्योधनेन युद्धं तत्तामसमुच्यते ॥ २५ ॥ इदानीं त्रिविधः कर्तोच्यते—मुक्तसङ्गस्त्यक्तफलाभिसन्धिः, अनहंवादी कर्ताहमिति वदनशीलो न भवति स्वगुणश्लाघाविहीनो वा, धृतिर्विघ्नाद्युपस्थितावपि प्रारब्धापरित्यागहेतुरन्तःकरणवृत्तिविशेषो धैर्यमुत्साह इदमहं करिष्याम्येवेति निश्चयात्मिका बुद्धिर्धृतिहेतुभूता ताभ्यां संयुक्तो धृत्युत्साहसमन्वितः, कर्मणः क्रियमाणस्य फलस्य सिद्धावसिद्धौ च हर्षशोकाभ्यां हेतुभ्यां यो विकारो वदनविकासम्लानत्वादिस्तेन रहितः सिद्ध्यसिद्ध्योर्निर्विकारः केवलं शास्त्रप्रमाणप्रयुक्तो न फलरागेण । अत एवंभूतः कर्ता सात्त्विक उच्यते ॥ २६ ॥ रागी कामाद्याकुलचित्तः अतएव कर्मफलप्रेप्सुः कर्मफलार्थी । लुब्धः परद्रव्याभिलाषी धर्मार्थं स्वद्रव्यत्यागासमर्थश्च । स्वाभि-

५ भाष्योत्कर्षदीपिका ।

शक्त्यर्थादेर्नाशं हिंसां प्राणिपीडां च पौरुषं पुरुषकारमारब्धसमाप्तिसामर्थ्यमित्येतान्यनुबन्धादीन्यनवेक्ष्यापर्यालोच्य मोहादविवेकाद्यत्कर्म प्रारभ्यते तत्तामसमुदाहृतम् ॥२५॥ अधुना कर्तृत्रैविध्यं विभजन्नादौ सात्त्विकं कर्तारमाह—मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गः फलाभिसंधिर्येन सः अनहंवादी नाहंवदनशीलः कर्ताहमेतादृशगुणसंपन्नः सर्वोत्तम इति वदनशीलो न भवति। धृतिर्विघ्नाद्युपस्थानेऽपि कायादेर्धारणं धैर्यमिति यावत्। उत्साह उद्यमस्ताभ्यां सम्यगन्वितः कदापि कथमपि धृत्युत्साहरहितो न भवतीत्यर्थः। सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धौ तदसिद्धौ च निर्विकारः हर्षविषादशून्यः केवलं शास्त्रप्रमाणप्रयुक्तो न फलरागादिना यः कर्ता स सात्त्विक उच्यते ॥२६॥ सात्त्विककर्तारमुदाहृत्य राजसं तमाह—रागी रागवान् कर्मफलप्रेप्सुः कर्मफलपशुख-

६ श्रीधरीव्याख्या ।

पश्चाद्भाविशुभाशुभम्, क्षयं वित्तव्ययं, हिंसां परपीडां च, पौरुषं स्वसामर्थ्यं वा, अनवेक्ष्य अपर्यालोच्य केवलं मोहादेव यत्कर्मारभ्यते तत्तामसमुच्यते ॥ २५ ॥ कर्तारं त्रिविधमाह—**मुक्तसङ्ग इति त्रिभिः** । मुक्तसङ्गस्त्यक्ताभिनिवेशः, अनहंवादी गर्वोक्तिरहितः, धृतिर्धैर्यम्, उत्साह उद्यमः, ताभ्यां समन्वितः संयुक्तः, आरब्धस्य कर्मणः सिद्धावसिद्धौ च निर्विकारो हर्षविषादशून्यः एवं-

**अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कर्मफलप्रेप्सुः कर्मफलार्थी, लुब्धः परद्रव्येषु संजाततृष्णस्तीर्थादौ च स्वद्रव्यापरित्यागी, हिंसात्मकः परपीडाकरस्वभावोऽशुचिर्बाह्यान्तःशौचवर्जितः, हर्षशोकान्वित इष्टप्राप्तौ हर्षोऽनिष्टप्राप्ताविष्टवियोगे च शोकस्ताभ्यां हर्षशोकाभ्यामन्वितः संयुक्तस्तस्यैव च कर्मणः संपत्तिविपत्तिभ्यां हर्षशोकौ स्यातां ताभ्यां संयुक्तो यः कर्ता स राजसः परिकीर्तितः ॥ २७ ॥ अयुक्त इति । अयुक्तोऽसमाहितः । प्राकृतोऽत्यन्तासंस्कृतबुद्धिर्बालसमः, स्तब्धो दण्डवन्न नमति कस्मैचित्, शठो मायावी शक्तिगूहनकारी, नैष्कृतिकः परवृत्तिच्छेदनपरः अलसोऽप्रवृत्तिशीलः कर्तव्येष्वपि, विषादी सर्वदावसन्नस्वभावः, दीर्घसूत्री च कर्तव्यानां दीर्घप्रसारणो यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोति,**

२ आनन्दगिरिव्याख्या ।

प्रेप्सुरिति फलरागस्य पृथक्कथनात् । स्वाभिप्रायाप्रकटीकरणपूर्वकं परपीडनं परविच्छेदनं तेन स्वार्थपर इत्यर्थः ॥ २७ ॥ दीर्घं सूत्रयितुं शीलमस्येति व्युत्पत्तिं गृहीत्वा विवक्षितमर्थमाह—**कर्तव्यानामिति** । एवं क्रियमाणे सत्यनिष्टमिदं कथंचिदापद्येत यदा पुनरेवं क्रियते तदा त्वनिष्टमेव संभावनोपनीतमिति चिन्तापरंपरायां मन्थरप्रवृत्तिरित्यर्थः । तदेव स्पष्टयति—**यदद्येति** ॥ २८ ॥ ज्ञानादीनां प्रत्येकं त्रैविध्यमुक्त्वा वृत्तिमत्या बुद्धेस्तद्वृत्तेश्च धृत्याख्यायास्त्रैविध्यं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तृष्णस्तीर्थादौ वा द्रव्यापरित्यागी । हिंसात्मकः परपीडाकरस्वभावः । अशुचिर्बाह्यान्तःशौचवर्जित इष्टानिष्टप्राप्तौ हर्षशोकान्वितश्च यः कर्ता स राजसः परिकीर्तितः ॥ २७ ॥ अयुक्तोऽनवहितः । प्राकृतोऽत्यन्तमसंस्कृतबुद्धिर्बालसमः । स्तब्धो दण्डवन्न नमति कस्मैचित् । शठः शक्तिगूहनकारी । नैकृतिको वञ्चकः परावमानी वा । अलसः अप्रवृत्तिशीलः कर्तव्येष्वपि । विषादी सर्वदा अवसन्नस्वभावः । दीर्घसूत्री चिरकारी । एकाहसाध्यं कार्यं मासेनापि न करोतीत्यर्थः ।

४ मधुसूदनीव्याख्या ।

प्रायप्रकटनेन परवृत्तिच्छेदनं हिंसा तदात्मकस्तत्स्वभावः, स्वाभिप्रायाप्रकटने तु नैष्कृतिक इति भेदः, अशुचिः शास्त्रोक्तशौचहीनः सिद्ध्यसिद्ध्योः कर्मफलस्य हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥ अयुक्तः सर्वदा विषयापहृतचित्तत्वेन कर्तव्येष्वनवहितः, प्राकृतः शास्त्रासंस्कृतबुद्धिर्बालसमः, स्तब्धो गुरुदेवतादिष्वप्यनम्रः, शठः परवञ्चनार्थमन्यथाजानन्नप्यन्यथावादी, नैकृतिकः स्वस्मिन्नुपकारित्वभ्रममुत्पाद्य परवृत्तिच्छेदनेन स्वार्थपरः, अलसोऽवश्यकर्तव्येष्वप्यप्रवृत्तिशीलः, विषादी सततमसंतुष्टस्वभावत्वेनानुशोचनशीलः, दीर्घसूत्री निरन्तरशङ्कासहस्रकवलितान्तःकरणत्वेनातिमन्थरप्रवृत्तिर्यदद्यकर्तव्यं तन्मासेनापि करोति नवेत्येवंशीलश्च, कर्ता तामस उच्यते ॥ २८ ॥ तदेवं 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः' इति

५ भाष्योत्कर्षदीपिका ।

र्गार्थी, लुब्धः परद्रव्येषु संजाततृष्णः तीर्थादौ स्वद्रव्यापरित्यागी च, हिंसात्मकः वृत्तिच्छेदादिना परपीडाकरस्वभावः, अशुचिर्बाह्यान्तःशौचवर्जितः इष्टप्राप्तावनिष्टवियोगे च हर्षः अनिष्टप्राप्ताविष्टवियोगे च शोकः ताभ्यां हर्षशोकाभ्यामन्वितो युक्तः, तस्यैव कर्मणः संपत्तिविपत्त्योर्जाताभ्यां हर्षशोकाभ्यामन्वित इतिवा एवंविधो यः कर्ता स राजसः परिकीर्तितः ॥ २७ ॥ एवं राजसं कर्तारमुदाहृत्य तामसं तमाह—अयुक्तो विषयेषु विक्षिप्तचित्तत्वादसमाहितः, प्राकृतोऽत्यन्तासंस्कृतबुद्धिर्बालिशः, स्तब्धः कस्मैचिद्दण्डवन्न नमति सर्वदाऽनम्रो मन्दस्वभावः, शठः शक्तिगूहनकारी मायावी, नैकृतिकः परवृत्तिच्छेदनपरः, अलसः कर्तव्येष्वप्रवृत्तिशीलः, विषादी सर्वदा खिन्नस्वभावः, दीर्घं सूत्रयितुं शीलमस्येति दीर्घसूत्री कर्तव्यानां दीर्घप्रसारणस्वभावः एवं क्रियमाणे सत्यनिष्टमिदं कथंचिदापद्येत, यदा पुनरेवं क्रियते तदात्वनिष्टमेव संभावनोपनीतमित्येवं शङ्कासहस्रव्याप्तचित्तत्वेनातिमन्थरप्रवृत्तिशीलः यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोति एवंविधो यः कर्ता स तामस उच्यते ॥ २८ ॥ एवं ज्ञानस्य बुद्धिवृत्तेः

६ श्रीधरीव्याख्या ।

भूतः कर्ता सात्त्विक उच्यते ॥ २६ ॥ राजसं कर्तारमाह—**रागीति** । रागी पुत्रादिप्रीतिमान्, कर्मफलप्रेप्सुः कर्मफलकामी, लुब्धः परस्वाभिलाषी, हिंसात्मको मारकस्वभावः, अशुचिर्विहितशौचशून्यः, लाभालाभयोर्हर्षशोकाभ्यामन्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥ तामसं कर्तारमाह—**अयुक्त इति** । अयुक्तोऽनवहितः, प्राकृतो विवेकशून्यः, स्तब्धोऽनम्रः, शठः शक्तिगूहनकारी, नैष्कृतिकः परावमानी, अलसोऽनुद्यमशीलः, विषादी शोकशीलः, यदद्य वा श्वो या कार्यं तन्मासेनापि न संपादयति यः स दीर्घसूत्री, एवंभूतः कर्ता तामस उच्यते । कर्तृत्रैविध्येनैव ज्ञातुरपि त्रैविध्यमुक्तं भवति । कर्मत्रैविध्येन च ज्ञेयस्यापि त्रैविध्यमुक्तं वेदितव्यम् । बुद्धेस्त्रैविध्येन करणस्यापि

१ केषाञ्चिन्मते नैकृतिक इति पाठः।

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥**
**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥**

१ श्रीमच्छांकरभाष्यम्।

**यश्चैवंभूतः स कर्ता तामस उच्यते ॥ २८ ॥ बुद्धेर्भेदमिति। बुद्धेर्भेदं धृतेश्चैव भेदं गुणतः सत्त्वादिगुणतस्त्रिविधं शृण्विति सूत्रोपन्यासः। प्रोच्यमानं कथ्यमानमशेषेण निरवशेषतो यथावत् पृथक्त्वेन विवेकतो धनंजय। दिग्विजये मानुषं दैवं च प्रभूतं धनमजयत्तेनासौ धनंजयोऽर्जुनः ॥ २९ ॥ प्रवृत्तिं चेति। प्रवृत्तिं च प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः। निवृत्तिं च निवृत्तिर्मोक्षहेतुः संन्यासमार्गः। बन्धमोक्षसमानवाक्यत्वात्प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गावित्यवगम्यते। कार्याकार्ये विहितप्रतिषिद्धे कर्तव्याकर्तव्ये करणाकरणे इत्येतत्, कस्य, देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणाम्, भयाभये बिभेत्यस्मादिति भयं तद्विपरीतमभयं भयं चाभयं च भयाभये**

२ आनन्दगिरिव्याख्या।

सूचयति—**बुद्धेरिति**। सूत्रविवरणं प्रतिजानीते—**प्रोच्यमानमिति**। अर्जुनस्य धनंजयत्वं व्युत्पादयति—**दिगिति** ॥ २९ ॥ तत्रादौ सात्त्विकीं बुद्धिं निर्दिशति—**प्रवृत्तिं चेति**। प्रवृत्तिराचरणमात्रम्, अनाचरणमात्रं च निवृत्तिरिति किं नेष्यते तत्राह—**बन्धेति**। यस्मिन्वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव प्रवृत्तिनिवृत्त्योरुक्तत्वात् कर्ममार्गस्य बन्धहेतुत्वान्मोक्षहेतुत्वाच्च संन्यासमार्गस्य तावेवात्र ग्राह्यावित्यर्थः। करणाकरणयोर्निर्विषयत्वायोगाद्विषयापेक्षामवतार्य योग्यं विषयं निर्दिशति—**कस्येति**। अनिष्टसाधनं भयमिष्टसाधनमभयमिति विभजते—**भयेति**।

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

य एवंभूतः स कर्ता तामस उच्यते ॥ २८ ॥ बुद्धिधृती त्रैविध्येन व्याख्यातुमाह—**बुद्धेरिति**। तत्र बुद्धिविशिष्टश्चिदाभासः कर्ता ज्ञानं च प्रागुक्तम्। अत्रतु केवला बुद्धिर्वृत्तिमती तदीयवृत्त्यन्तरोपलक्षणार्थं तद्वृत्तिविशेषो धृतिश्च त्रैविध्येन कथ्यत इत्यर्थः ॥२९॥ प्रवृत्तिनिवृत्ती शास्त्रविहितप्रतिषिद्धविषये 'यजेत स्वर्गकामः', 'न सुरां पिबेत्'इत्यादि-

४ मधुसूदनीव्याख्या।

व्याख्यातम्। संप्रति धृत्युत्साहसमन्वित इत्यत्र सूचितयोर्बुद्धिधृत्योस्त्रैविध्यं प्रतिजानीते—**बुद्धेर**ध्यवसायादिवृत्तिमत्या धृतेश्च तद्वृत्तेः सत्त्वादिगुणतस्त्रिविधमेव भेदं मया त्वां प्रति त्वत्कालस्येन परमाप्तेन प्रोच्यमानमशेषेण निरवशेषं पृथक्त्वेन हेयोपादेयविवेकेन शृणु श्रोतुं सावधानो भव। हे धनंजयेति दिग्विजये प्रसिद्धं महिमानं सूचयन्प्रोत्साहयति। अत्रेदं चिन्त्यते—किमत्र बुद्धिशब्देन वृत्तिमात्रमभिप्रेतं किंवा वृत्तिमदन्तःकरणम्। प्रथमे ज्ञानं पृथङ्न वक्तव्यम्। द्वितीये कर्ता पृथङ्न वक्तव्यः। वृत्तिमदन्तःकरणस्यैव कर्तृत्वात्। ज्ञानधृत्योः पृथक्कथनवैयर्थ्यं च। नचेच्छादिपरिसंख्यार्थं तत्, वृत्तिमदन्तःकरणत्रैविध्यकथनेन सर्वासामपि तद्वृत्तीनां त्रैविध्यस्य विवक्षितत्वात्। उच्यते, अन्तःकरणोपहितश्चिदाभासः कर्ता। इहतूपहितान्निष्कृष्य उपाधिमात्रं करणत्वेन विवक्षितं सर्वत्र करणोपहितस्य कर्तृत्वात्। यद्यपि च 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुत्यनूदितानां सर्वासामपि वृत्तीनां त्रैविध्यं विवक्षितं तथापि धीधृत्योस्त्रैविध्यं पृथगुक्तं ज्ञानशक्तिक्रियाशक्त्युपलक्षणार्थं नतु परिसंख्यार्थमिति रहस्यम् ॥ २९ ॥ तत्र बुद्धेस्त्रैविध्यमाह त्रिभिः—**प्रवृत्तिं** कर्ममार्गं,

५ भाष्योत्कर्षदीपिका।

कर्मणः क्रियायाः कर्तुः बुद्ध्युपहितस्य च त्रैविध्यमुक्त्वा वृत्तिमत्या बुद्धेस्तद्वृत्तेश्च धृत्याख्यायास्त्रैविध्यं वक्तुमारभते। बुद्धेर्वृत्तिमत्या धृतेश्च तद्वृत्तेर्गुणतः सत्त्वादिगुणतस्त्रिविधभेदं मया प्रोच्यमानं कथ्यमानमशेषेण निःशेषतः पृथक्त्वेन हेयोपादेयविवेकतः शृणु श्रोतुं सावधानो भव। दिग्विजये मानुषं दैवं च प्रभूतं धनं यया बुद्ध्या धृत्या च त्वं जितवानसि सा त्वयान्यैश्च धनादिसमस्तपुरुषार्थसिद्धये विजयहेतुभूता उपादेयेति बोधनाय मया प्रोच्यमानं बुद्धेर्धृतेश्च त्रिविधं भेदं शृण्विति द्योतनाय संबोधयति धनंजयेति ॥ २९ ॥ तत्र बुद्धेस्त्रैविध्यं विभजन्नादौ सात्त्विकीं बुद्धिमुदाहरति—**प्रवृत्तिं च निवृत्तिं चेति**। यस्मिन्वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव

६ श्रीधरीव्याख्या।

त्रैविध्यमुक्तं भविष्यति ॥ २८ ॥ इदानीं बुद्धेर्धृतेश्चापि त्रैविध्यं प्रतिजानीते—**बुद्धिरिति**। स्पष्टार्थः ॥ २९ ॥ तत्र बुद्धेस्त्रैविध्यमाह—**प्रवृत्तिं चेति** त्रिभिः। प्रवृत्तिं च धर्मे निवृत्तिं चाधर्मे। यस्मिन् देशे काले च यत्कार्यमकार्यं च भयाभये कार्याकार्यनिमित्तावर्था-

७ अभिनवगुप्ताचार्यव्याख्या।

कान्वितः सिद्ध्यसिद्ध्योः। निकृतिर्नैष्ठुर्यम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ बुद्धेरिति। बुद्धिर्निश्चयः। धृतिः संतोषः। सर्वोहि सुकृतं दुष्कृतं वा कृत्वान्तेऽवश्यं कृतं करणीयं किमनेनेति धियं गृह्णाति। अन्यथा क्रियाभ्यो व्युपरमे को हेतुः स्यात्।

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**
**अधर्मं धर्ममिति या मन्यते तमसावृता ।**
**सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

दृष्टादृष्टविषययोर्भयाभययोः कारणे इत्यर्थः । बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति विजानाति बुद्धिः सा पार्थ सात्त्विकी । तत्र ज्ञानं बुद्धेर्वृत्तिर्बुद्धिस्तु वृत्तिमती । धृतिरपि वृत्तिविशेष एव बुद्धेः ॥ ३० ॥ ययेति । यया धर्मं शास्त्रचोदितमधर्मं च तत्प्रतिषिद्धं कार्यं चाकार्यमेव च पूर्वोक्ते एव कार्याकार्ये अयथावन्न यथावत्सर्वतो निर्णयेन न प्रजानाति या बुद्धिः सा पार्थ राजसी ॥ ३१ ॥ अधर्ममिति । अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसावृता सती

२ आनन्दगिरिव्याख्या ।

बन्धादिमात्रज्ञानस्य बुद्ध्यन्तरेऽपि संभवाद्विशेषणम् । ननु बुद्धिशब्दितस्य ज्ञानस्य प्रागेव त्रैविध्यप्रतिपादनात्किमिति बुद्धेरिदानीं त्रैविध्यं प्रतिज्ञाय व्युत्पाद्यते तत्राह—**ज्ञानमिति** । तर्हि ज्ञानेन गतत्वान्न पुनर्धृतिर्व्युत्पादनीयेत्याशङ्क्याह—**धृतिरपीति** । विशेषशब्देन ज्ञानाद्व्यावृत्तिरिष्टा ॥ ३० ॥ कार्याकार्ययोर्धर्माधर्माभ्यां पौनरुक्त्यं परिहरति—**पूर्वोक्ते इति** । पूर्वश्लोके कार्याकार्यशब्दाभ्यां दृष्टादृष्टार्थानां कर्मणां करणाकरणे निर्दिष्टे तयोरेवात्रापि ग्रहान्न धर्माधर्माभ्यां पूर्वपर्यायाभ्यां गतार्थतेत्यर्थः । या (सा) बुद्धिर्यया बुद्ध्या बोद्धा निर्णयेन न जानातीत्यर्थः ॥ ३१ ॥ धर्मशब्दो नपुंसकलिङ्गोऽपीत्यभिप्रेत्य धर्ममित्युक्तम् । तमसावृता अविवेकेन वेष्टितेत्यर्थः । कार्याकार्यादीनुक्तानुक्तांश्च

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रूपे । कार्यं कृतिसाध्यं स्वर्गादि । अकार्यं नित्यसिद्धं तेन नित्यानित्यवस्तुनी उक्ते । भयाभये कार्याकार्यनिमित्ते । बन्धं मोक्षं च या वेत्ति यया वेत्तीति पूर्ववत्करणे कर्तृत्वोपचारः । बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥ अयथावत् संदेहास्पदत्वेन । स्पष्टमन्यत् ॥ ३१ ॥ **अधर्ममिति** । विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः ॥ ३२ ॥ यया धृत्या

४ मधुसूदनीव्याख्या ।

निवृत्तिं संन्यासमार्गं, कार्यं प्रवृत्तिमार्गे कर्मणां करणम्, अकार्यं निवृत्तिमार्गे कर्मणामकरणम्, भयं प्रवृत्तिमार्गे गर्भवासादिदुःखं, अभयं निवृत्तिमार्गे तदभावं, बन्धं प्रवृत्तिमार्गे मिथ्याज्ञानकृतं कर्तृत्वाद्यभिमानम्, मोक्षं निवृत्तिमार्गे तत्त्वज्ञानकृतमज्ञानतत्कार्याभावं च या वेत्ति । करणे कर्तृत्वोपचारात् यया वेत्ति कर्ता बुद्धिः सा प्रमाणजनितनिश्चयवती हे पार्थ, सात्त्विकी । बन्धमोक्षयोरन्ते कीर्तनात्तद्विषयमेव प्रवृत्त्यादि व्याख्यातम् ॥ ३० ॥ धर्मं शास्त्रविहितं, अधर्मं शास्त्रप्रतिषिद्धमदृष्टार्थमुभयम्, कार्यं चाकार्यं च दृष्टार्थमुभयं अयथावदेव प्रजानाति यथावन्न जानाति किंस्विदिदमिदमित्थं नवेति चानध्यवसायं संशयं वा भजते यया बुद्ध्या सा राजसी बुद्धिः । अत्र तृतीयानिर्देशादन्यत्रापि करणत्वं व्याख्येयम् ॥ ३१ ॥ तमसा विशेषदर्शनविरोधिना दोषेणावृता या बुद्धिरधर्मं धर्ममिति मन्यतेऽदृष्टार्थे सर्वत्र विपर्यस्यति तथा सर्वार्थान्सर्वान्दृष्टप्रयोजनानपि

५ भाष्योत्कर्षदीपिका ।

प्रवृत्तिनिवृत्त्योरुक्तत्वात् । कर्ममार्गस्य बन्धहेतुत्वात् निवृत्तिमार्गस्य मोक्षहेतुत्वाच्च प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गाविल्यवगम्यते । तथाच प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः, निवृत्तिः संन्यासहेतुर्मोक्षमार्गः, प्रवृत्तिं शास्त्रविहितविषयां, निवृत्तिं तत्प्रतिषिद्धविषयामित्यपि बोध्यम् । कार्याकार्ये कर्तव्याकर्तव्ये देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणां करणाकरणे । बिभेत्यस्मादिति भयं भयकारणं तद्विपरीतमभयमभयकारणं भयं चाभयं च भयाभये । भयं दुःखमभयं सुखमिति तु सात्त्विक्या बुद्धेर्दुःखानुभवस्यायोग्यत्वं, भयं प्रवृत्तिमार्गे अभयं निवृत्तिमार्गे इति विवक्षायामध्याहारदोषं चाभिप्रेत्याचार्यैर्न व्याख्यातम् । बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति सा बुद्धिः सात्त्विकी । करणे कर्तृत्वोपचारात्प्रथमा । सात्त्विक्या बुद्ध्या युक्तायाः पृथायाः पुत्रस्त्वमपि तथैव भवितुं योग्योऽसीति सूचनार्थं पार्थेति संबोधनम् ॥ ३० ॥ सात्त्विकीं बुद्धिमुक्त्वा राजसीं तामाह—यया बुद्ध्या धर्मं शास्त्रचोदितं अधर्मं च तत्प्रतिषिद्धं कार्यं च कर्तव्यमकार्यमेव चाकर्तव्यं अयथावत् न यथावत्प्रजानाति सर्वतो निर्णयेन न प्रजानाति सा बुद्धिः पार्थ,

६ श्रीधरीव्याख्या ।

नर्थो कथं बन्धः कथं वा मोक्ष इति या बुद्धिरन्तःकरणं वेत्ति सा सात्त्विकी । यया पुमान् वेत्तीति वक्तव्ये करणे कर्तृत्वोपचारः काष्ठानि पचन्तीतिवत् ॥ ३० ॥ राजसीं बुद्धिमाह—**ययेति** । अयथावत्संदेहास्पदत्वेनेत्यर्थः । स्पष्टमन्यत् ॥ ३१ ॥ तामसीं बुद्धिमाह—**अधर्ममिति** । विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः । बुद्धिरन्तःकरणं पूर्वोक्तम् । ज्ञानं तु तद्वृत्तिः । धृतिरपि तद्वृत्तिरेव । यद्वा—

१ मधुसूदनः.

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥**
**यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

सर्वार्थान्सर्वानेव ज्ञेयपदार्थान्विपरीतांश्च विपरीतानेव विजानाति बुद्धिः सा पार्थ तामसी ॥ ३२ ॥ धृत्येति । धृत्या ययाऽव्यभिचारिण्येति व्यवहितेन संबन्धः । धारयते किं, मनःप्राणेन्द्रियक्रियाः मनश्च प्राणाश्चेन्द्रियाणि च मनः प्राणेन्द्रियाणि तेषां क्रियाश्चेष्टास्ता उच्छास्त्रमार्गप्रवृत्तेर्धारयते धारयति । धृत्या हि धार्यमाणा उच्छास्त्रमार्गविषया न भवन्ति । योगेन समाधिनाऽव्यभिचारिण्या नित्यसमाध्यनुगतयेत्यर्थः । एतदुक्तं भवति । अव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रिया धारयमाणा योगेन धारयतीति । यैवंलक्षणा धृतिः सा पार्थ, सात्त्विकी ॥ ३३ ॥ ययेति । यया तु धर्मकामार्थान्धर्मंश्च

२ आनन्दगिरिव्याख्या ।

संग्रहीतुं सर्वार्थानित्युक्तं तद्व्याचष्टे—**सर्वानेवेति** । विपरीतांश्चेति चकारमवधारणे गृहीत्वा विपरीतानेवेत्युक्तम् ॥ ३२ ॥ इदानीं धृतित्रैविध्यं व्युत्पिपादयिषुरादौ सात्त्विकीं धृतिं व्युत्पादयति—**धृत्येति** । निर्दिष्टानां चेष्टानां कथं धृत्या धारणं तत्राह—**ता इति** । तदेवानुभवेन साधयति—**धृत्या हीति** । ध्रियतेऽनयेति धृतिर्यत्नविशेषस्तया धृत्या धार्यमाणा यथोपदिष्टाश्चेष्टाः शास्त्रमतिक्रम्य नार्थान्तरावगाहिन्यो भवन्तीत्यर्थः । धृतिमेव समाध्यविनाभूतत्वेन विशिनष्टि—**योगेनेति** । ननु धृतेर्नियमेन समाध्यनुगतत्वं कथमुक्तक्रियाधारणोपयोगीत्याशङ्क्याह—**एतदिति** । उक्तक्रियाधारयमाणो योगेन ब्रह्मणि समाधानेनैकाग्र्येणाव्यभिचारिण्याविनाभूतया धृत्या धारयत्यन्यथा तदविनाभावाभावे नियमेन तद्धारणासिद्धेरित्यर्थः ॥ ३३ ॥ राजसीं धृतिं दर्शयति—**यया त्विति** । तेषां धारण-

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

अव्यभिचारिण्या समाध्यनुगतया मनःप्राणेन्द्रियाणां क्रियाश्चेष्टाः संकल्पे श्वासप्रश्वासौ शब्दादिग्रहणं च योगेन चित्तवृत्तिनिरोधेन ऐकाग्र्येण वा संयत्तास्तास्तथैव निरोधावस्थायामैकाग्र्यावस्थायां वा धारयते चिरमवस्थापयति सा धृतिः पार्थ, सात्त्विकी ॥ ३३ ॥ यया धृत्या धर्मादीन् धारयतेऽनुरोध्यतया निश्चिनोति प्रसङ्गेन धर्मादेः संबन्धेन

४ मधुसूदनीव्याख्या ।

ज्ञेयपदार्थान् विपरीतानेव मन्यते सा विपर्ययवती बुद्धिस्तामसी ॥ ३२ ॥ इदानीं धृतेस्त्रैविध्यमाह त्रिभिः—योगेन समाधिनाऽव्यभिचारिण्याऽविनाभूतया समाधिव्याप्तया यया धृत्या प्रयत्नेन मनसः प्राणस्येन्द्रियाणां च क्रियाश्चेष्टा धारयते उच्छास्त्रप्रवृत्तेर्निरुणद्धि यस्यां सत्यामवश्यं समाधिर्भवति यया च धार्यमाणा मनआदिक्रियाः शास्त्रमतिक्रम्य नार्थान्तरमवगाहन्ते धृतिः सा पार्थ, सात्त्विकी ॥ ३३ ॥ तुः सात्त्विक्या भिनत्ति । प्रसङ्गेन कर्तृत्वाद्यभिनिवेशेन फलाकाङ्क्षी सन् यया धृत्या धर्मं काममर्थं च धारयते नित्यं कर्तव्यतयावधारयति नतु मोक्षं कदाचिदपि धृतिः सा पार्थ, राजसी ॥ ३४ ॥ स्वप्नं निद्रां, भयं

५ भाष्योत्कर्षदीपिका ।

राजसी । पृथापुत्रस्य तव नेयं युक्तेति संबोधनाशयः ॥ ३१ ॥ राजसीं बुद्धिमुक्त्वा तामसीं तामाह—अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसाऽविवेकेनावृता वेष्टिता सती सर्वार्थानेव ज्ञेयपदार्थान् विपरीतांश्च विपरीतमेव विजानाति सा बुद्धिस्तामसी । पार्थ, तव नेयमुचितेति संबोधनाशयः ॥३२॥ एवं बुद्धेस्त्रैविध्यं विभज्य धृतेस्त्रैविध्यं विभजन्नादौ सात्त्विकीं धृतिमाह—धृत्या यया योगेन समाधानेनाव्यभिचारिण्या नित्यसमाध्यनुगतया मनःप्राणेन्द्रियाणां क्रियाश्चेष्टा उच्छास्त्रमार्गप्रवृत्तीर्धारयति । धृत्या हि धार्यमाणा उच्छास्त्रविषया न भवन्ति । एतदुक्तं भवति । उक्तक्रिया धार्यमाणा योगेन ब्रह्मणि समाधानेनैकाग्र्येणाऽव्य-

६ श्रीधरीव्याख्या ।

अन्तःकरणस्य धर्मिणो बुद्धिरध्यध्यवसायलक्षणाद्वृत्तिरेव । इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मभयाभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तम् । उपलक्षणं चैतदन्यासाम् ॥ ३२ ॥ इदानीं धृतेस्त्रैविध्यमाह—**धृत्येति त्रिभिः** । योगेन चित्तैकाग्र्येण हेतुनाव्यभिचारिण्या विषयान्तरमधारयन्त्या यया धृत्या मनसः प्राणस्येन्द्रियाणां च क्रिया धारयते नियच्छति सा धृतिः सात्त्विकी ॥ ३३ ॥ राजसीं धृतिमाह—**यया त्विति** । यया तु धृत्या धर्मार्थकामान्प्राधान्येन धारयते न विमुञ्चति तत्प्रसङ्गेन फलाकाङ्क्षी च

७ अभिनवगुप्ताचार्यव्याख्या ।

अतः सर्वस्यैव धृतिरस्तीति तात्पर्यार्थः । पदार्थस्तु प्रसिद्धो व्याख्यायत एव ॥ २९ ॥ ३० ॥ अयथावदसम्यक् ॥ ३१ ॥ ३२ ॥ मनःप्राणेन्द्रियक्रियाः योगेन धारयति । यथा किं ममोपभोगादिभिः सर्वथैवात्मारामो भूयासमिति मन्वानः ॥ ३३ ॥ प्रसङ्गेनेति न तथाभिनिवेशेन

**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥**
**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कामश्चार्थश्च धर्मकामार्थास्तान्धर्मकामार्थान् धृत्या यया धारयते मनसि नित्यकर्तव्यरूपानवधारयते हे अर्जुन, प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेन तेन प्रसङ्गेन फलाकाङ्क्षी च भवति यः पुरुषस्तस्य धृतिर्या सा पार्थ, राजसी ॥ ३४ ॥ ययेति । यया स्वप्नं निद्रां भयं त्रासं शोकं विषादमवसादं, विषण्णतां मदं विषयसेवामात्मनो बहु मन्यमानो मत्त इव मदमेव च यस्तस्य धृतिर्या सा कर्तव्यरूपतया कुर्वन्न विमुञ्चति धारयत्येव दुर्मेधाः कुत्सितमेधाः पुरुषो यस्तस्य धृतिर्या सा तामसी मता ॥ ३५ ॥ गुणभेदेन क्रियाणां कारकाणां च त्रिधा भेद उक्तोऽथेदानीं फलस्य च सुखस्य त्रिधा भेद उच्यते—सुखमिति । सुखं त्विदानीं त्रिविधं शृणु समाधानं कुर्वित्येतन्मे मम भरतर्षभ ।

२ आनन्दगिरिव्याख्या ।

प्रकारमभिनयति—**मनसीति** । फलाकाङ्क्षीति कस्य विशेषणं तत्राह—**यः पुरुष इति** ॥ ३४ ॥ तामसीं धृतिं व्याचष्टे—**ययेति** । शोकं प्रियवियोगनिमित्तं संतापम् । विषण्णतामिन्द्रियाणां ग्लानिम् । विषयसेवा कुमार्गप्रवृत्तेरुपलक्षणमुक्तं, स्वप्नादिमदान्तं सर्वमेव कर्तव्यतयात्मनो बहु मन्यमानो मनसि नित्यमेव कुर्वन्दुर्मेधा न विमुञ्चति किंतु धारयत्येवेति योजना ॥ ३५ ॥ वृत्तमनूद्यानन्तरश्लोकतात्पर्यमाह—**गुणेत्यादिना** । क्रियाकारकाणां गुणतस्त्रैविध्योक्त्यनन्तरं फलस्य सुखस्य त्रैविध्योक्त्यवसरे सतीत्याह—**इदानीमिति** । हेयोपादेयभेदार्थं त्रैविध्यं समाधान-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

फलाकाङ्क्षी च भवति पुरुषो धृतिः सा पार्थ राजसी ॥ ३४ ॥ स्वप्नं निद्राम् । भयं त्रासम् । शोकं प्रसिद्धम् । विषादं विषण्णताम् । मदमशास्त्रीयविषयसेवया चित्तस्य विवशत्वम् । एतान्न विमुञ्चति धारयत्येव यया धृत्या सा धृतिः पार्थ, तामसी ॥ ३५ ॥ गुणभेदेन क्रियाणां कारकाणां च त्रैविध्यमुक्तं तत्फलस्य सुखस्य त्रैविध्यमाह—**सुखं त्वित्यादिना** । अभ्यासात्पौनःपुन्येन सेवनात् । यत्र सात्त्विके राजसे तामसे वा सुखे रमते रतिं प्राप्नोति । यया रत्या

४ मधुसूदनीव्याख्या ।

त्रासं, शोकं इष्टवियोगनिमित्तं संतापं, विषादमिन्द्रियावसादं, मदमशास्त्रीयविषयसेवोन्मुखत्वं च यया न विमुञ्चत्येव किंतु सदैव कर्तव्यतया मन्यते दुर्मेधा विवेकासमर्था धृतिः सा पार्थ, तामसी ॥ ३५ ॥ एवं क्रियाणां कारकाणां च गुणतस्त्रैविध्यमुक्त्वा तत्फलस्य सुखस्य त्रैविध्यं प्रतिजानीते श्लोकार्धेन—मे मम वचनात् शृणु हेयोपादेयविवेकार्थं व्यासङ्गान्तरनिवारणेन मनः स्थिरीकुरु । हे भरतर्षभेति योग्यता दर्शिता । सात्त्विकं सुखमाह सार्धेन—यत्र समाधिसुखेऽभ्यासादतिपरिचयाद्रमते

५ भाष्योत्कर्षदीपिका ।

भिचारिण्या धृत्या धारयतीत्येवंलक्षणा या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥ सात्त्विकीं धृतिमुक्त्वा राजसीं तामाह—यया तु धृत्या धर्मार्थकामान्धारयते मनसि नित्यकर्तव्यतारूपानवधारयति नतु शुद्धब्रह्म मोक्षाख्यमिति ध्वनयन्नाह—हेऽर्जुनेति । प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेनतेन प्रसङ्गेन फलाकाङ्क्षी । प्रकर्षेण सङ्गः कर्तृत्वाभिनिवेशस्तेनेति केचित् । प्रसङ्गेन धर्मादेः संबन्धेनेत्यन्ये । आचार्यैस्तु प्रसिद्धार्थपरित्यागे विनिगमकविरहमभिप्रेत्यैवं न व्याख्यातम् । यः पुरुषः प्रसङ्गेन फलाकाङ्क्षीसन् यया धृत्या धर्मादीन्धारयते तस्य सा धृतिः हे पार्थ, राजसी ॥ ३४ ॥ राजसीं धृतिं व्युत्पाद्य तामसीं तां व्युत्पादयति—**ययेति** । दुर्मेधाः दुष्टा कुत्सिता मेधा बुद्धिर्यस्य स दुर्बुद्धिर्यया धृत्या स्वप्नं निद्रां भयं त्रासं शोकं प्रियवियोगनिमित्तं संतापं विषादं विषण्णतामिन्द्रियखिन्नतां विषयसेवात्मनो बहुमन्यमानो मत्त इव यो मदमेव च मनसि नित्यमेव कर्तव्यरूपतया कुर्वन्न विमुञ्चति धारयत्येव सा धृतिः पार्थ, तामसी ॥ ३५ ॥ एवं क्रियाणां कारकाणां च गुणतस्त्रिविधो भेद उक्तोऽथेदानीं फलस्य च सुखस्य त्रिविधं भेदं वक्तुमारभते । सुखं तु इदानीं त्रिविधं मे मम वचनाच्छृणु अवधारय । त्रिविधस्यापि सुखस्य सामान्य-

६ श्रीधरीव्याख्या ।

भवति सा राजसी धृतिः ॥ ३४ ॥ तामसीं धृतिमाह—**ययेति** । दुष्टा अविवेकबहुला मेधा यस्य स दुर्मेधाः पुरुषः यया धृत्या स्वप्नादीन्न विमुञ्चति पुनःपुनरावर्तयति । स्वप्नोऽत्र निद्रा । सा धृतिस्तामसी ॥ ३५ ॥ सुखस्य त्रैविध्यं प्रतिजानीते अर्धेन—**सुखमिति** । स्पष्टार्थः । तत्र सात्त्विकं सुखमाह—**अभ्यासादिति सार्धेन** । यत्र यस्मिन्सुखे अभ्यासादतिपरिचयाद्रमते नतु विषयसुख इव

१ मधुसूदनः। २ नीलकण्ठः।

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**अभ्यासात्परिचयादावृत्ते रमते रतिं प्रतिपद्यते यत्र यस्मिन्सुखानुभवे, दुःखान्तं च दुःखावसानं दुःखोपशमं च निगच्छति निश्चयेन प्राप्नोति ॥ ३६ ॥ यदिति । यत्तत् सुखमग्रे पूर्वं प्रथमसंनिपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकं भवति, परिणामे ज्ञानवैराग्यादिपरिपाकजं सुखममृतोपमं तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिरात्मनो बुद्धिरात्मबुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं सलिलवत्स्वच्छता ततो जातमात्मबुद्धिप्रसादजमात्मविषया वात्मालम्बना**

---

२ आनन्दगिरिव्याख्या ।

मैकाग्र्यं मम वचनादिति शेषः । यत्रेत्युभयत्र संबध्यते तत्रिविधं सुखमिति पूर्वेण संबन्धः ॥ ३६ ॥ तत्र सात्त्विकं सुखमादेयत्वेन दर्शयति—**यत्तदिति** । प्रथमसंनिपातं विभजते—**ज्ञानेति** । कुतस्तस्य दुःखात्मकत्वं तत्राह—**अत्यन्तेति** । दुःखात्मकत्वे दृष्टान्तमाह—**विषमिवेति** । ज्ञानादिपरिपाकावस्थापरिणामस्तस्मिन् सति ततो जातमिति योजना । तत्रैव हेत्वन्तरमाह—**आत्मन इति** । आत्मबुद्धिशब्दस्यार्थान्तरमाह—**आत्मविषयेति** । अन्तः-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दुःखस्य पुत्रशोकादेरप्यन्तमवसानं निगच्छति निश्चयेन प्राप्नोति तत्सुखं त्रिविधं शृणु । यद्वा त्वयमप्यर्थः सात्त्विकसुखस्यैव लक्षणार्थस्तदा यत्र समाधिसुखे अभ्यासाद्रमते नतु विषयसुख इव रागात् दुःखान्तं मोक्षं च निगच्छतीत्यर्थः ॥ ३६ ॥ यत्तत्प्रसिद्धं सर्वप्राणिप्रेमास्पदम् । अग्रे समारम्भकाले मनःप्राणेन्द्रियस्पन्दनिरोधेन यज्ञे संज्ञप्यमानस्य पशोरिव जायमानं विषमिवातितीव्रवेदनाकरम् । परिणामे सात्त्विक्या धृत्या निरुद्धासु मनआदिक्रियासु अमृतोपममत्याह्लादकरम् । आत्मनः स्वस्यैव बुद्धेः प्रसादो नैर्मल्यं रजस्तमोमलराहित्यं तस्मादाविर्भूतं नतु विषयसङ्गजं

४ मधुसूदनीव्याख्या ।

परितृप्तो भवति नतु विषयसुख इव सद्यएव यस्मिन् रममाणश्च दुःखस्य सर्वस्याप्यन्तमवसानं नितरां गच्छति नतु विषयसुख इवान्ते महद्दुःखम् ॥ ३६ ॥ तदेव विवृणोति—यदग्रे ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासनिर्वाह्यत्वाद्विषमिव द्वेषविशेषावहं भवति । परिणामे ज्ञानवैराग्यादिपरिपाके त्वमृतोपमं प्रीत्यतिशयास्पदं भवति । आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसादो निद्रालस्यादिराहित्येन स्वच्छतयावस्थानं ततो जातमात्मबुद्धिप्रसादजम् । नतु राजसमिव विषयेन्द्रियसंयोगजं नवा तामसमिव निद्रालस्यादिजमीदृशं यदनात्मबुद्धिनिवृत्त्यात्मबुद्धिप्रसादजं समाधिसुखं तत्सात्त्विकं प्रोक्तं योगिभिः । अपर आह—अभ्यासादावृत्तेर्यत्र रमते प्रीयते यत्र च दुःखावसानं प्राप्नोति तत्सुखं तच्च त्रिविधं गुणभेदेन शृण्विति तत्पदाध्याहारेण पूर्वस्य श्लोकस्यान्वयः । यत्तदग्र इत्यादिश्लोकेन तु सात्त्विकसुखलक्षणमिति । भाष्यकाराभिप्रायोप्येवम् ॥ ३७ ॥ विषया-

५ भाष्योत्कर्षदीपिका ।

लक्षणमाह—अभ्यासादावृत्तेर्यत्र सात्त्विकादिसुखे रमते यत्र रममाणश्च दुःखस्यान्तमवसानं च निगच्छति निश्चयेन प्राप्नोति । भरतर्षभेतिसंबोधयन् सुखस्य त्रैविध्यं मम वचनाच्छ्रुत्वा सात्त्विकं सुखमनुभवितुं योग्योऽसीति सूचयति । तत्र सात्त्विकं सुखमाह सार्धेन । यत्र यस्मिन्सुखेऽभ्यासादतिपरिचयाद्रमते नतु विषयसुखइव सहसा रतिं प्राप्नोतीत्यपरे । भाष्यस्य समानतया न तद्विरोधः ॥ ३६ ॥ सुखस्य त्रैविध्यं विभजन्नादौ सात्त्विकं सुखमाह—**यत्तदिति** । यत्सुखमग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकमिव भवति परिणामे ज्ञानादिपरिपाकेऽमृतोपमं तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिः कथितम् । आत्मनो बुद्धिरात्मबुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं सकार्यरजस्तमोमलत्यागेन सलिलवत्स्वच्छतयावस्थानं ततो जातमात्मबुद्धिप्रसादजम् । आत्मविषया आत्मालम्बना बुद्धिर्वा आत्मबुद्धिस्तत्प्रसादात्प्रकर्षाद्वा जातम् ॥ ३७ ॥ सात्त्विकं

६ श्रीधरीव्याख्या ।

सहसा रतिं प्राप्नोति । यस्मिन् रममाणश्च दुःखस्यान्तमवसानं नितरां गच्छति प्राप्नोति ॥ ३६ ॥ कीदृशं तत्—**यत्तदिति** । यत्तत्किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वाद्दुःखावहमिव भवति । परिणामे त्वमृतसदृशम् । आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसा-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ३४ ॥ निद्राकलहादिष्वेव यया संतोषं बध्नाति तरपरतया सा तामसी धृतिः ॥ ३५ ॥ ३६ ॥ तदात्वेऽभ्यासकाले विषमिव जन्मशताभ्यस्तविषयसङ्गस्य दुष्परिहरत्वात् । उक्तंच श्रुतौ 'क्षुरस्य धारा विषमा दुरत्यया' इत्यादि । आत्मप्रसादाद्बुद्धिप्रसादो जायते । अन्य-

---

१ श्रीधरः, मधुसूदनः, नीलकण्ठः.

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥**
**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥**
**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥**

१ श्रीमच्छांकरभाष्यम् ।

वा बुद्धिरात्मबुद्धिस्तत्प्रसादप्रकर्षाद्वा जातमित्येतत्तस्मात्सात्त्विकं तत् ॥ ३७ ॥ **विषयेति** । विषयेन्द्रियसंयोगाद्यत्तत्सुखं जायतेऽग्रे प्रथमक्षणेऽमृतोपमममृतसमं परिणामे विषमिव बलवीर्यरूपप्रज्ञामेधाधनोत्साहहानिहेतुत्वादधर्मतज्जनितनरकादिहेतुत्वाच्च परिणामे तदुपभोगविपरिणामान्ते विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥ **यदग्रे चेति** । यदग्रे चानुबन्धे चावसानोत्तरकाले सुखं मोहनं मोहकरमात्मनो निद्रालस्यप्रमादोत्थं निद्रा चालस्यं च प्रमादश्चेत्येतेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥ अथेदानीं प्रकरणोपसंहारार्थः श्लोक आरभ्यते—**नेति** । न

२ आनन्दगिरिव्याख्या ।

करणनैर्मल्याद्वा सम्यग्ज्ञानप्रकर्षाद्वा जातत्वादिति तच्छब्दार्थः ॥ ३७ ॥ राजसं सुखं हेयत्वाय कथयति—**विषयेति** । बलं सङ्घातसामर्थ्यं, वीर्यं पराक्रमकृतं यशः, रूपं शरीरसौन्दर्यं, प्रज्ञा श्रुतार्थग्रहणसामर्थ्यं, मेधा गृहीतार्थस्याविस्मरणेन धारणशक्तिः, धनं गोहिरण्यादि, उत्साहस्तु कार्यं प्रत्युपक्रमादिः, एतेषां नाशकत्वाद्वैषयिकं सुखं विषसममित्यर्थः । तत्रैव हेत्वन्तरमाह—**अधर्मेति** ॥ ३८ ॥ तामसं सुखं त्यागार्थमेवोदाहरति—**यदग्रे चेति** । अनुबन्धशब्दार्थमाह—**अवसानेति** । मोहनं मोहकरम् । तदुत्पत्तिहेतुमाह—**निद्रेति** ॥ ३९ ॥ क्रियाकारकफलात्मनः संसारस्य प्रत्येकं सात्त्विकादिभेदेन त्रैविध्यमुक्त्वा संसारान्तर्भूतमेव किंचिद्गुणत्रयास्पृष्टमपि क्वचिद्भविष्यतीत्याशङ्क्याह—**अथेति** । संसारस्य सर्वस्यैव गुणत्रयसंस्पृष्टत्वं प्रकरणम्, अन्यद्वाऽप्राणीत्यत्राप्राणिशब्देन प्रसिद्धा

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

निद्रालस्यादिजं वा तत्सुखं सात्त्विकं प्रोक्तम् ॥ ३७ ॥ राजसं सुखमाह—**विषयेति** । अग्रे भोगकाले । परिणामे विषमिव वियोगकाले । इहामुत्र च दुःखप्रदत्वात् ॥ ३८ ॥ अग्रे आरम्भे अनुबन्धे परिणामे । मोहनं मोहकरम् । आत्मनो बुद्धेः । यतो निद्रादिजम् ॥ ३९ ॥ प्रकरणार्थमुपसंहरत्यनुक्तमपि संगृह्णन्—**न तदस्तीति** । सत्त्वं प्राणि-

४ मधुसूदनीव्याख्या ।

णामिन्द्रियाणां च संयोगाज्जातं न त्वात्मबुद्धिप्रसादात् यत्तत् यदतिप्रसिद्धं स्रक्चन्दनवनितासङ्गादिसुखमग्रे प्रथमारम्भे मनःसंयमादिक्लेशाभावादमृतोपमं परिणामे त्वैहिकपारत्रिकदुःखावहत्वाद्विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥ अग्रे प्रथमारम्भे चानुबन्धे परिणामे च यत्सुखमात्मनो मोहकरं, निद्रालस्ये प्रसिद्धे, प्रमादः कर्तव्यार्थावधानमन्तरेण मनोराज्यमात्रं, तेभ्य

५ भाष्योत्कर्षदीपिका ।

सुखमुदाहृत्य राजसं तद्युत्पादयति । यत्सुखं विषयेन्द्रियसंयोगाज्जायतेऽग्रे प्रथमे क्षणेऽमृतोपमममृतसदृशं परिणामे तदुपभोगान्ते विषमिव बलवीर्यरसप्रज्ञादिहानिहेतुत्वादधर्मतज्जनितनरकादिहेतुत्वाच्च विषतुल्यं तत्सुखं हेयं राजसं स्मृतम् ॥ ३८ ॥ राजसं सुखमुक्त्वा तामसं तदुदाहरति । यत्सुखमग्रे च प्रथमे क्षणेऽनुबन्धे चावसानोत्तरकाले । चाभ्यां प्रथमक्षणादुत्तरावस्थासु अनुबन्धात्पूर्वावस्थासु चात्मनो मोहनं मोहकरं निद्रालस्यप्रमादेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं तत्सुखं हेयं तामसमुदाहृतम्

६ श्रीधरीव्याख्या ।

देन रजस्तमोमलत्यागेन स्वच्छतयावस्थानं ततो जातं यत्सुखं तत्सात्त्विकं प्रोक्तं योगिभिः ॥ ३७ ॥ राजसं सुखमाह—**विषयेन्द्रियेति** । विषयाणामिन्द्रियाणां च संयोगाद्यत्तत्प्रसिद्धं स्त्रीसङ्गादि सुखममृतमुपमा यस्य तादृशं भवत्यग्रे प्रथमम् । परिणामे तु विषतुल्यमिहामुत्र च दुःखहेतुत्वात्तत्सुखं राजसं स्मृतम् ॥ ३८ ॥ तामसं सुखमाह—**यदिति** । अग्रे प्रथमक्षणेऽनुबन्धे च पश्चादपि यत्सुखमात्मनो मोहकरम् । तदेवाह । निद्रा चालस्यं च प्रमादश्च कर्तव्यार्थावधानराहित्येन मनोराज्यमेतेभ्य उत्तिष्ठति यत्सुखं तत्तामस-

७ अभिनवगुप्ताचार्यव्याख्या ।

स्यापेक्षमाणस्याभावात् ॥ ३७ ॥ विषयेन्द्रियाणां परस्परसंयोगजं स्वयं चक्षुष एव रूपसंबन्धात् ॥ ३८ ॥ निद्रात आलस्येन शठतया प्रमादेन पूर्वव्याख्यातेन यत्सुखं तत्तामसम् ॥ ३९ ॥ एवं कर्तृकर्मकारणानां बुद्धिधृत्योः सुखस्य च सत्वादिभेदभिन्नानां परस्पराङ्गाङ्गिभावबा-

१ श्रीमच्छांकरभाष्यम्।

**तदस्ति तन्नास्ति पृथिव्यां वा मनुष्यादि सत्त्वं प्राणिजातमन्यद्वाऽप्राणिजातं दिवि देवेषु वा पुनः सत्त्वं प्रकृतिजैः प्रकृतितो जातैरेभिस्त्रिभिर्गुणैः सत्त्वादिभिर्मुक्तं परित्यक्तं यत्स्याद्भवेन्न तदस्तीति पूर्वेण संबन्धः॥ ४०॥ सर्वः संसारः क्रियाकारकफललक्षणः सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितः समूलोऽनर्थ उक्तो वृक्षरूपकल्पनया चोर्ध्वमूलमित्यादिना, तं चासङ्गशस्त्रेण दृढेन छित्त्वा, ततः पदं तत्परिमार्गितव्यमिति चोक्तं, तत्र च सर्वस्य त्रिगुणात्मकत्वात्संसारकारणनिवृत्त्यनुपपत्तौ प्राप्तायां यथा तन्निवृत्तिः स्यात्तथा वक्तव्यं, सर्वश्च गीताशास्त्रार्थ उपसंहर्तव्य एतावानेव च सर्वो वेदः स्मृत्यर्थश्च पुरुषार्थमिच्छद्भिरनुष्ठेय इत्येवमर्थं च ब्राह्मणक्षत्रियविशामित्यादिरारभ्यते—**

२ आनन्दगिरिव्याख्या।

स्थावरादि गृह्यते॥ ४०॥ प्रकरणार्थमुपसंहृतमनुवदति—**सर्व इति**। तस्यानेकात्मकत्वेन हेयत्वं सूचयति—**क्रियेति**। निर्गुणादात्मनो वैलक्षण्याच्च तस्य हेयतेत्याह—**सत्त्वेति**। अनर्थत्वाच्च तस्य त्याज्यत्वमनर्थत्वं चाविद्याकल्पितत्वेनावस्तुनो वस्तुवद्भानादित्याह—**अविद्येति**। न केवलमष्टादशे संसारो दर्शितः, किंतु पञ्चदशेऽपीत्याह—**वृक्षेति**। चकारादुक्तः संसार इत्यनुकृष्यते। संसारध्वस्तिसाधनं सम्यग्ज्ञानं च तत्रैवोक्तमित्याह—**असङ्गेति**। वृत्तमनूद्यानन्तरसंदर्भतात्पर्यमाह—**तत्र चेति**। उक्तो निवर्तयिषितः संसारः सतिसप्तम्या परामृश्यते, सर्वो हि संसारो गुणत्रयात्मकः। नच गुणानां प्रकृत्यात्मकानां संसारकारणीभूतानां निवृत्तिर्युक्ता प्रकृतेर्नित्यत्वादित्याशङ्कायां स्वधर्मानुष्ठानात्तत्त्वज्ञानोत्पत्त्या गुणानामज्ञानात्मकानां निवृत्तिर्यथा भवति तथा स्वधर्मजातं वक्तव्यमित्युत्तरग्रन्थप्रवृत्तिरित्यर्थः। तत्तद्वर्णप्रयुक्तधर्मजातानुपदेशे चोपसंहारप्रकरणप्रकोपः स्यादित्याह—**सर्वश्चेति**। उपसंहृते गीताशास्त्रार्थे यद्यपि सर्वो वेदार्थः स्मृत्यर्थश्च सर्व उपसंहृतस्तथापि मुमुक्षुभिरनुष्ठेयमस्ति वक्तव्यमवशिष्टमित्याशङ्क्याह—**एतावानिति**। अनुष्ठेयपरिमाणनिर्धारणवदुक्तशङ्कानिवर्तनं शास्त्रार्थोपसंहारश्चेत्येतदुभयं चकारार्थः। संप्रति वर्ण-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

जातम्। इदमुपलक्षणं जडस्यापि। सर्वस्य त्रिगुणविकारत्वात्। प्रकृतिजैर्जन्मान्तरीयधर्माधर्मसंस्कारजैः मायाप्रभवैर्वा। शेषं स्पष्टम्॥ ४०॥ एवं पञ्चदशे संसाराश्वत्थमसङ्गशस्त्रेण च्छित्त्वा परं पदं परिमार्गितव्यमित्युक्तं तत्रात्मनोऽ-

४ मधुसूदनीव्याख्या।

एवोत्तिष्ठति नतु सात्त्विकमिव बुद्धिप्रसादजं न वा राजसमिव विषयेन्द्रियसंयोगजं, तन्निद्रालस्यप्रमादोत्थं तामसं सुखमुदाहृतम्॥ ३९॥ इदानीमनुक्तमपि संगृह्णन्प्रकरणार्थमुपसंहरति भगवान्—सत्त्वरजस्तमसां साम्यावस्था प्रकृतिस्ततो जातैर्वैषम्यावस्थां प्राप्तैः प्रकृतिजैर्नतु साक्षाद्गुणानां प्रकृतिजत्वमस्ति तद्रूपत्वात्तस्माद्वैषम्यावस्थैव तदुत्पत्तिरुपचारात्। अथवा प्रकृतिर्माया तत्प्रभवैस्तत्कल्पितैः प्रकृतिजैरेभिस्त्रिभिर्गुणैर्बन्धनहेतुभिः सत्त्वादिभिर्मुक्तं हीनं सत्त्वं प्राणिजातमप्राणि वा यत्स्यात् तत्पुनः पृथिव्यां मनुष्यादिषु दिवि देवेषु वा नास्ति। क्वापि गुणत्रयरहितमनात्मवस्तु नास्तीत्यर्थः॥ ४०॥ तदेवं सत्त्वरजस्तमोगुणा-

५ भाष्योत्कर्षदीपिका।

॥ ३९॥ क्रियाकारकफलानां प्रत्येकं सात्त्विकादिभेदेन त्रैविध्यमुक्त्वा किंचिदेभिस्त्रिभिर्गुणैर्मुक्तमपि भविष्यतीत्याकाङ्क्षानुपपत्तयेऽनुक्तमपि संगृह्णन्प्रकरणार्थमुपसंहरति। न तदस्ति पृथिव्यां वा मनुष्यादिसत्त्वं प्राणिजातमन्यद्वाऽप्राणिजातं स्थावरादि दिवि देवेषु वा पुनः प्रकृतिजैः प्रकृतितो जातैः एभिस्त्रिभिर्गुणैः सत्त्वादिभिः मुक्तं परित्यक्तं यत्स्यात्तन्नास्तीत्यर्थः। अदिवीति परलोकत्वसादृश्याद्ब्राह्मण इतिवत्। पातालादिपरमितीतरे। आचार्यैस्तु तृतीयवाशब्दाभावात्पृथिवीविवरात्मकस्य पातालस्यापि पृथिवीशब्देन संग्रहसंभवात्प्रयोजनशून्यक्लिष्टकल्पनाया अयुक्तत्वाच्चैवं न व्याख्यातम्। तथाच क्रियाकारकफललक्षणः सर्वोऽपि संसारः सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितः समूलोऽनर्थः आत्मज्ञानेनाविद्यानिवृत्त्या निवर्तितव्य इति भावः॥ ४०॥ एवं क्रिया-

६ श्रीधरीव्याख्या।

मुदाहृतम्॥ ३९॥ अनुक्तमपि संगृह्णन्प्रकरणार्थमुपसंहरति—**न तदस्तीति**। एभिः प्रकृतिसंभवैः सत्त्वादिभिस्त्रिभिर्गुणैर्मुक्तं हीनं सत्त्वं प्राणिजातमन्यद्वा यत्स्यात्तत्पृथिव्यां मनुष्यलोकादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः॥ ४०॥ ननु च यद्येवं सर्वमपि क्रियाकारक-

७ अभिनवगुप्ताचार्यव्याख्या।

ध्यबाधकत्वसमुच्चयावृत्तिक्रमयौगपद्यादियोगादपरिसंख्येयभेदत्वाद्विविधफलप्रसवसमर्थत्वमित्यनेन कर्मणां प्राक् सूचितं गहनत्वं वितत्य सहेतुकं निर्णीतम्। सर्वे चैते देवतादिस्थावरान्ता गुणत्रयसंबन्धं नातिक्रामन्ति। उक्तंहि 'आब्रह्मणश्च कीटाच्च न कश्चित्तत्त्वतः सुखी' इति। तत्त्वतो हि सुखं गुणातिक्रान्तमनसो नेतरस्येत्याशयः। एवमियता षण्णां प्रत्येकं त्रिस्वरूपत्वं धृत्यादीनां च प्रतिपादितं तन्मध्यात्सात्त्विके राशौ वर्तमानो दैवीं संपदं प्राप्त इह ज्ञाने योग्यः। त्वं च तथाविध इत्यर्जुनः प्रोत्साहितः। अधुना त्विदमुच्यते। यदि तावदनया ज्ञानबुद्ध्या कर्माणि भवान्प्रवर्तते तदा स्वधर्मप्रवृत्त्या विज्ञानपूततया च न कर्मसंबन्धस्तव। अथैतन्नानुमन्यसे तदवश्यं तव प्रवृत्त्या तावद्भाव्यं जातेरेव तथाभावे स्थितत्वात्। यतः सर्वः स्वस्वभावनियतः कुतश्चिद्दोषात्तिरोहितत्तत्स्वभावः कंचित्कालं भूत्वापि तदि-

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**ब्राह्मणेति । ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशस्तेषां ब्राह्मणक्षत्रियविशां शूद्राणां च । शूद्राणामसमासकरणमेकजातित्वे सति वेदेऽनधिकारात्, हे परंतप, कर्माणि प्रविभक्तानीतरेतरविभागेन व्यवस्थापितानि । केन, स्वभावप्रभवैर्गुणैः स्वभाव ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका माया सा प्रभवो येषां गुणानां ते स्वभावप्रभवास्तैः । शमादीनि कर्माणि प्रविभक्तानि ब्राह्मणादीनाम् । अथवा ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः, प्रशान्त्यैश्वर्येहामूढतास्वभावदर्शनाच्चतुर्णाम् । अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभि-**

२ आनन्दगिरिव्याख्या ।

चतुष्टयस्यानुष्ठेयं धर्मजातं संकीर्णमिति सूत्रमुपन्यस्यति—**ब्राह्मणेति** । उपनयनसंस्कारवत्त्वे सति वेदाधिकारित्वं समानमिति त्रयाणां समासकरणम् । इतरेषामसमासे हेतुमाह—**शूद्राणामिति** । एकजातित्वमुपनयनवर्जितत्वं कर्मणामसंकीर्णत्वेन व्यवस्थापकं प्रश्नपूर्वकं प्रकटयति—**केनेत्यादिना** । स्वभावप्रभवैर्गुणैरित्यस्यार्थान्तरमाह—**अथवेति** । उक्तव्यवस्थायां कार्यदर्शनं प्रमाणयति—**प्रशान्तीति** । स्वभावशब्दस्यार्थान्तरमाह—**अथवेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

सङ्गत्वोपपादनाय क्रियाकारकफललक्षणस्य कृत्स्नस्य संसारस्य त्रिगुणात्मकत्वमुक्तम् । नह्यात्मानात्मनोर्गुणातीतगुणात्मकयोः सङ्गः संभवति । नह्याकाशान्तर्वर्तिपृथिव्यादिगुणेन गन्धादिनाकाशः संसृज्यते तद्वदित्युक्तम् । समासः शास्त्रार्थः । अथेदानीं सर्वगीताशास्त्रार्थमुपसंहर्तुमसङ्गशस्त्रास्युपायं च प्रदर्शयितुं प्रकरणान्तरमारभते—**ब्राह्मणेत्यादिना** । शूद्राणामसमासकरणं वेदानधिकारात् । प्रविभक्तानि असंकीर्णानि । तत्र हेतुमाह—**स्वभावप्रभवैर्गुणैः** । स्वभाव

४ मधुसूदनीव्याख्या ।

त्मकः क्रियाकारकफललक्षणः सर्वः संसारो मिथ्याज्ञानकल्पितोऽनर्थश्चतुर्दशाध्यायोक्त उपसंहृतः । पञ्चदशे च वृक्षरूपककल्पनया तमुक्त्वा 'अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा । ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः' इत्यसङ्गशस्त्रेण विषयवैराग्येण तस्य छेदनं कृत्वा परमात्मान्वेष्टव्य इत्युक्तम् । तत्र सर्वस्य त्रिगुणात्मकत्वे त्रिगुणात्मकस्य संसारवृक्षस्य कथं छेदोऽसङ्गशस्त्रस्यैवानुपपत्तेरित्याशङ्कायां स्वस्वाधिकारविहितैर्वर्णाश्रमधर्मैः परितोष्यमाणात्परमेश्वरादसङ्गशस्त्रलाभ इति वदितुमेतावानेव सर्ववेदार्थः परमपुरुषार्थमिच्छद्भिरनुष्ठेय इति च गीताशास्त्रार्थ उपसंहर्तव्य इत्येवमर्थमुत्तरं प्रकरणमारभ्यते । तत्रेदं सूत्रम्—त्रयाणां समासकरणं द्विजत्वेन वेदाध्ययनादितुल्यधर्मत्वकथनार्थम् । शूद्राणामिति पृथक्करणमेकजातित्वेन वेदानधिकारित्वज्ञापनार्थम् । तथाच वसिष्ठः 'चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः तेषां—'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते' इति । तथा प्रतिविशिष्टं चातुर्वर्ण्यं स्थानविशेषाच्च 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत'

५ भाष्योत्कर्षदीपिका ।

दिलक्षणस्य संसारस्य त्रिगुणात्मकत्वप्रतिपादकेन प्रकरणेन चतुर्दशसप्तदशाध्यायोक्तोऽर्थ उपसंहृतः । पञ्चदशे चोर्ध्वमूलमधःशाखमित्यादिनाऽविद्यापरिकल्पितं संसारं वृक्षरूपेणाभिधाय 'असङ्गशस्त्रेण दृढेन छित्त्वा । ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः' इत्युक्तम् । पूर्वोक्तराध्यायेषु च स्वस्वाधिकारविहितैर्वर्णाश्रमधर्मैर्निष्कामैरुपासनासमुच्चितैराराधितात्परमेश्वराल्लब्धाऽसङ्गशस्त्रः आसुर्या राक्षस्या च संपदा विनिर्मुक्तः दैव्या तया संपन्नः प्रत्यगभिन्नब्रह्मविचारतत्परः संसारवृक्षमसङ्गशस्त्रेण दृढेन छित्त्वा ब्रह्मज्ञानेन विमुच्यत इत्युक्तम् । तमिमं सर्वं गीताशास्त्रार्थमुपसंहर्तुं एतावानेव सर्वो वेदस्मृत्यर्थः पुरुषार्थमिच्छद्भिरनुष्ठेय इति बोधनाय ब्राह्मणेत्यादिप्रकरणमारभते । ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः तेषामुपनयनसंस्कारवत्त्वे सति वेदाधिकारित्वं सममिति ब्राह्मणादित्रयाणां समासकरणम् । शूद्राणामुपनयनवर्जितत्वे सति वेदानधिकारित्वमभिप्रेत्य पृथङ्नि-

६ श्रीधरीव्याख्या ।

फलादिकं प्राणिजातं च त्रिगुणात्मकमेव कथं तर्ह्यस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिः परमेश्वराराधनात्तत्प्रसादलब्धज्ञानेनेत्येवं सर्वगीतार्थसारं संगृह्य प्रदर्शयितुं प्रकरणान्तरमारभते—**ब्राह्मणेत्यादि** यावदध्यायसमाप्ति । हे परंतप शत्रुतापन, ब्राह्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

रोधायकविगमे स्वभावं व्यक्तापन्नं लभतएव । तथाह्येवंविधो वर्णानां स्वभावः ॥ ४० ॥ एवमवश्यंभाविन्यां प्रवृत्तौ ततः फलविभागिता भवेत् तदाह—ब्राह्मणक्षत्रियेति । ब्राह्मणादीनां कर्मप्रविभागनिरूपणस्य स्वभावोऽवश्यमतिक्रामतीति क्षत्रियस्वभावस्य भवतोऽनिच्छ-

१ श्रीमच्छांकरभाष्यम् ।

**मुखत्वेनाभिव्यक्तः स्वभावः स प्रभवो येषां गुणानां ते स्वभावप्रभवा गुणाः । गुणप्रादुर्भावस्य निष्कारणत्वानुपपत्तेः । स्वभावः कारणमिति कारणविशेषोपादानम् । एवं स्वभावप्रभवैः प्रकृतिप्रभवैः सत्त्वरजस्तमोभिर्गुणैः स्वकार्यानुरूपेण शमादीनि कर्माणि प्रविभक्तानि । ननु शास्त्रप्रविभक्तानि**

२ आनन्दगिरिव्याख्या ।

किमिति गुणाभिव्यक्तेरुक्तवासनाधीनत्वं तत्राह—**गुणेति** । ननु नास्ति गुणप्रादुर्भावस्य निष्कारणत्वं प्रकृतिजैर्गुणैरिति प्रकृतेर्गुणकारणत्वाभिधानादत आह—**स्वभाव इति** । वासनाकारणमिति गुणव्यक्तेर्निमित्तकारणत्वं विवक्षितं प्रकृतिस्तूपादानमिति भावः । उक्तमुपसंहरति—**एवमिति** । स्वभावप्रभवैः सत्त्वादिगुणैर्ब्राह्मणादीनां कर्माणि प्रविभक्तानीत्युक्तमाक्षिपति—**नन्विति** । शास्त्रस्य धर्मविभागहेतोः सत्त्वादिविशेषापेक्षयैव विभागज्ञापकत्वादुभयत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ईश्वरस्य प्रकृतिस्त्रिगुणात्मिका सैव प्रभवो हेतुर्येषां गुणानां ते स्वभावप्रभवास्तैः । यद्वा ब्राह्मणस्वभावस्य सत्त्वगुणएव प्रभवः शान्तत्वात् । क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः ईश्वरस्वभावत्वात् । वैश्यस्वभावस्य तमउपसर्जनं रजः कृष्यादिस्वभावत्वात् । शूद्रस्वभावस्य रजउपसर्जनं तमः शुश्रूषास्वभावत्वात् । अथवा स्वभावः प्राग्भवीयः संस्कारस्तत्प्रभवैर्नतु जातिमात्रप्रभवैः पक्षिणामाकाशगमनवत् । अतएव जात्यन्तरव्यावृत्तानां धर्माणां शमादिषु पाठो न दृश्यते । नहि शूद्राद्व्यावृत्तं त्रैवर्णिकानामध्ययनादिकं वा इतरद्वयाद्व्यावृत्तं ब्राह्मणानामध्यापनादिकं वा इह पठ्यते । किंतु सर्वे सर्वजातीयानां साधारणा धर्माः शमादयो दृश्यन्ते । यथाहि द्रोणादिषु ब्राह्मणेष्वपि शौर्यादिकं भरतादिषु क्षत्रियेष्वपि शमादिकं दृष्टम् । एवमितरत्र । तस्माद्यस्मिन्कस्मिंश्चिद्वर्णे शमादयो दृश्यन्ते स शूद्रोऽप्येतैर्लक्षणैर्ब्राह्मण एव ज्ञातव्यः । यत्र च ब्राह्मणेऽपि शूद्रधर्मा दृश्यन्ते स शूद्र एव । तथाचारण्यके सर्पभूतं नहुषंप्रति युधिष्ठिरवाक्यम् 'सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा । दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः' । तथा 'यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः । यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत्' इति । जातिधर्मास्तु मनुना दर्शिताः 'अध्यापनं

४ मधुसूदनीव्याख्या ।

इत्यपि निगमो भवति । 'गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छन्दसा शूद्रमित्यसंस्कारो विज्ञायते' इति । 'शूद्रश्चतुर्थो वर्ण एकजातिः' इति च गौतमः । हे परन्तप शत्रुतापन, तेषां चतुर्णामपि वर्णानां कर्माणि प्रकर्षेण विभक्तानीतरेतरविभागेन व्यवस्थितानि । कैः स्वभावप्रभवैर्गुणैर्ब्राह्मण्यादिस्वभावस्य प्रभवैर्हेतुभूतैर्गुणैः सत्त्वादिभिः । तथाहि—ब्राह्मणस्वभावस्य सत्त्वगुण एव प्रभवः प्रशान्तत्वात् । क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रज ईश्वरस्वभावत्वात् । वैश्यस्वभावस्य तमउपसर्जनं रज ईहास्वभावत्वात् । शूद्रस्वभावस्य रजउपसर्जनं तमो मूढस्वभावत्वात् । अथवा मायाख्या प्रकृतिः स्वभावस्तत उपादानात्प्रभवो येषां तैः । प्राग्भवीयः संस्कारो वर्तमाने भवे स्वफलाभिमुखत्वेनाभिव्यक्तः स्वभावः स निमित्तत्वेन प्रभवो येषामिति वा । शास्त्रस्यापि पुरुषस्वभावसापेक्षत्वाच्छास्त्रेण प्रविभक्तान्यपि गुणैः प्रविभक्तानीत्युच्यन्ते । 'आख्यातानामर्थं बोधयतामधिकारिशक्तिः सहकारिणी' इति न्यायात्, तथाहि गौतमः 'द्विजातीनामध्ययनमिज्या दानं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः । पूर्वेषु नियमस्तु । राज्ञोऽधिकं रक्षणं सर्वभूतानां न्याय्यदण्डत्वं, वैश्यस्याधिकं कृषिवणिक्पाशुपाल्यं कुसीदं च । शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यं अक्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके श्राद्धकर्म भृत्यभरणं स्वदारवृत्तिः परिचर्योत्तरेषां' इति । अत्र साधारणा असाधारणाश्च धर्मा उक्ताः । पूर्वेष्वध्ययनेज्यादानेषु नियमोऽवश्यकर्तव्यत्वं नतु प्रवचनयाजनप्रतिग्रहेषु वृत्त्यर्थत्वादित्यर्थः । वणिक् वाणिज्यं, कुसीदं वृद्ध्यै धनप्रयोगः । उत्तरेषामिति श्रेष्ठानां द्विजातीनामित्यर्थः । वसिष्ठोऽपि 'षट्कर्माणि ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहश्चेति । त्रीणि राजन्यस्याध्ययनं

५ भाष्योत्कर्षदीपिका ।

दिशति । शूद्राणां च कर्माणि शमदमादीनि प्रविभक्तानि इतरेतरविभागेन व्यवस्थितानि । कैरित्यपेक्षायामाह—स्वभावप्रभवैर्गुणैः ईश्वरस्य त्रिगुणात्मिका प्रकृतिः स्वभावः स प्रभवः कारणं येषां तैर्गुणैः । यद्वा स्वभावस्य प्रभवास्तैस्तथाच ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणं, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः । शान्त्यैश्वर्येहामूढस्वभावदर्शनाच्चतुर्णाम् । अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि

६ श्रीधरीव्याख्या ।

णानां क्षत्रियाणां विशां च शूद्राणां च कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि । शूद्राणां स्वभावात्पृथक्करणं द्विजत्वाभावेन वैलक्षण्यात् । विभागोपलक्षणमाह—स्वभावः सात्त्विकादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः । यद्वा स्वभावः पूर्वजन्मसं-

७ अभिनवगुप्ताचार्यव्याख्या ।

सोऽपि प्रकृतिः स्वभावाख्या नियोक्तृतामव्यभिचारेण भजते केवलं तथा नियुक्तस्य पुण्यपापसंबन्धः । अतो मदभिहितविज्ञानप्रमाणपुरः-

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**शास्त्रेण विहितानि ब्राह्मणादीनां शमादीनि कर्माणि कथमुच्यते सत्त्वादिगुणप्रविभक्तानीति । नैष दोषः; शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि न गुणानपेक्षयेति शास्त्रप्रविभक्तान्यपि कर्माणि गुणप्रविभक्तानीत्युच्यन्ते ॥ ४१ ॥ कानि पुनस्तानि कर्माणीत्युच्यन्ते—शम इति । शमो दमश्च यथाव्याख्यातार्थौ, तपो यथोक्तं शारीरादि, शौचं**

२ आनन्दगिरिव्याख्या ।

विभागहेतुत्वोक्तिरविरुद्धेति परिहरति—**नैष दोष इति** ॥ ४१ ॥ प्रविभक्तानि कर्माण्येव प्रश्नद्वारा विविच्य दर्शयति—**कानीत्यादिना** । अन्तःकरणोपशमः शमो दमो बाह्यकरणोपरतिरित्युक्तं स्मारयति—**यथेति** । त्रिविधं तपः सप्तदशे दर्शितमित्याह—**तप इति** । शौचमपि बाह्यान्तरभेदेन प्रागेवोक्तमित्याह—**शौचमिति** । क्षमा नामा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

चाध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥' इति । तस्मात् शमादयो यत्राब्राह्मणे ब्राह्मणे वा दृश्यन्ते सएव ब्राह्मण इत्यत्र विवक्षितम् । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इत्यत्र तु मनूक्तान्यध्यापनादीन्येव स्वकर्माणि ग्राह्याणि नतु शमदमादीनि । नहि ज्ञानविज्ञानवतोऽन्या संसिद्धिर्लब्धव्यास्ति । तस्माच्छमदमादयो ब्रह्मिष्ठस्यैव ब्राह्मणस्य लक्षणमिति दिक् ॥ ४१ ॥ ब्राह्मणकर्माण्याह—**शम इति** ।

४ मधुसूदनीव्याख्या ।

यज्ञो दानं च शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत् । एतान्येव त्रीणि वैश्यस्य कृषिर्वणिक्पाशुपाल्यं कुसीदं च । तेषां परिचर्या शूद्रस्य' इति । आपस्तम्बोऽपि 'चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयान् । स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छाद्यन्यच्चापरिगृहीतं । एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाय युद्धदण्डादिकानि । क्षत्रियवत् वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्षवाणिज्याधिकम् । परिचर्या शूद्रस्येतरेषां वर्णानाम्' इति । मनुरपि 'अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥' इति । एवं चतुर्णामपि वर्णानां गुणभेदेन कर्माणि प्रविभक्तानि ॥ ४१ ॥ तत्र ब्राह्मणस्य स्वाभाविकगुणकृतानि कर्माण्याह—**शम इति** । शमोऽन्तःकरणोपरमः । दमो बाह्यकरणोपरमः प्रागुक्तः । तपः शारीरादिदेवद्विजगुरुप्राज्ञेत्यादावुक्तम् । शौचमपि बाह्याभ्यन्तरभेदेन प्रागुक्तम् । क्षान्तिः क्षमा आक्रुष्टस्य ताडितस्य वा मनसि विकारराहित्यं प्राग्व्याख्यातम् । आर्जवमकौटिल्यं प्रागुक्तम् । ज्ञानं साङ्गवेदतदर्थविषयम् । विज्ञानं कर्मकाण्डे यज्ञादिकर्मकौशल्यम् । ब्रह्मकाण्डे ब्रह्मात्मैक्यानुभवः । आस्तिक्यं सात्त्विकी श्रद्धा प्रागुक्ता । एतच्छमादिनवकं स्वभावजं सत्त्वगुणस्वभावकृतं ब्रह्मकर्म ब्राह्मणजातेः कर्म । यद्यपि चतुर्णामपि वर्णानां सात्त्विकावस्थायामेते धर्माः संभवन्ति तथापि बाहुल्येन ब्राह्मणे भवन्ति सत्त्वस्वभावत्वात्तस्य । सत्त्वोद्रेकवशेन स्वन्य-

५ भाष्योत्कर्षदीपिका ।

स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः स प्रभवो येषां तैः प्रकृत्युद्बोधितैर्गुणैः स्वकार्यानुरूप्येण ब्राह्मणादीनां शमादीनि कर्माणि प्रविभक्तानि शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि नतु गुणानपेक्षयेति शास्त्रविभक्तान्यपि तानि गुणविभक्तान्युच्यन्ते । क्षत्रियस्वभावजं शत्रुतापनरूपं कर्म त्यक्तुमशक्यमङ्गीकर्तुं योग्योऽसीति सूचयति परंतपेति संबोधनेन ॥ ४१ ॥ कानि पुनस्तानि कर्माणीत्यपेक्षायां तानि व्युत्पादयितुमादौ ब्राह्मणस्य कर्माणि दर्शयति । शमः अन्तःकरणोपरमः । तमः बाह्यकरणोपरमः । तपः यथोक्तं शारीरादि । शौचं बाह्याभ्यन्तरभेदेन प्राग्व्याख्यातम् । क्षमा क्षान्तिः

६ श्रीधरीव्याख्या ।

स्कारस्तत्साराद्प्रादुर्भूतैरित्यर्थः । तत्र सत्त्वप्रधाना ब्राह्मणाः, सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियाः, तमउपसर्जनरजःप्रधाना वैश्याः, रजउपसर्जनतमःप्रधानाः शूद्राः ॥ ४१ ॥ तत्र ब्राह्मणस्य स्वाभाविकानि कर्मण्याह—**शम इति** । शमश्चित्तोपरमः, दमो बाह्येन्द्रियो-

७ अभिनवगुप्ताचार्यव्याख्या ।

सरीकारेण कर्माण्यनुतिष्ठ । तथासति बन्धो निवर्त्स्यतीत्यस्यार्थस्य परिकरबन्धनघटनतात्पर्यं महावाक्यार्थस्य । अवान्तरवाक्यानां स्पष्टार्थः

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

व्याख्यातं, क्षान्तिः क्षमा, आर्जवमृजुतैव च, ज्ञानं विज्ञानम्, आस्तिक्यमास्तिकभावः, श्रद्दधानता आगमार्थेषु, ब्रह्मकर्म ब्राह्मणजातेः कर्म मास्तिकस्वभावजम् । यदुक्तं स्वभावप्रभवैर्गुणैः प्रविभक्तानीति तदेवोक्तं स्वभावजमिति ॥ ४२ ॥ शौर्यमिति । शौर्यं शूरस्य भावः, तेजः प्रागल्भ्यम् । धृतिर्धारणम् । सर्वावस्थास्वनवसादो भवति यथा धृत्योत्तम्भितस्य । दाक्ष्यं दक्षस्य भावः, सहसा

२ आनन्दगिरिव्याख्या ।

क्रुष्टस्य ताडितस्य वा मनसि विकारराहित्यं, ज्ञानं शास्त्रीयपदार्थज्ञानं, विज्ञानं शास्त्रार्थस्य स्वानुभवायत्तत्वापादनं त्रिधा व्याख्यातं स्वभावशब्दार्थमुपेत्याह—**यदुक्तमिति** ॥ ४२ ॥ शूरस्य भावो विक्रमो बलवत्तरानपि प्रहर्तुं प्रवृत्तिः, प्रागल्भ्यं परैरधर्षणीयत्वम् । महत्यामपि विपदि देहेन्द्रियोत्तम्भनी चित्तवृत्तिर्धृतिरिति व्याचष्टे—**सर्वावस्था-**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

अन्तःकरणनिग्रहः शमः । बाह्येन्द्रियनिग्रहो दमः । तपः पूर्वोक्तं शारीरादिभेदेन त्रिविधम् । शौचं बाह्यं मृज्जलाभ्यां आभ्यन्तरं भावशुद्धिः । क्षान्तिः क्षमा । आर्जवमकौटिल्यम् । ज्ञानं शास्त्रीयं कर्म ब्रह्मविषयम् । विज्ञानं तदनुष्ठानानुभवात्मकम् । आस्तिक्यं श्रद्धा एतन्नवकं ब्रह्मकर्म ब्राह्मणत्वजात्यभिव्यञ्जकं कर्म । स्वभावजं प्राचीनधर्मसंस्कारजम् ॥ ४२ ॥ शौर्यं पराक्रमः । तेजः प्रागल्भ्यम् । धृतिर्धैर्यम् । दाक्ष्यं युद्धे कौशलमुत्साहो वा । दानमौदार्यम् । ईश्वरभावः

४ मधुसूदनीव्याख्या ।

त्रापि कदाचिद्भवन्तीति शास्त्रान्तरे साधारणधर्मतयोक्ताः । तथाच विष्णुः 'क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः । अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥ आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् । अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥' सामान्यश्चतुर्णामपि वर्णानाम् । तथा प्रायेण चतुर्णामप्याश्रमाणामित्यर्थः । तथा बृहस्पतिः 'दया क्षमाऽनसूया च शौचानायासमङ्गलम् । अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥ परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा । आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता ॥ बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥ न गुणान्गुणिनो हन्ति स्तौति मन्दगुणानपि । नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिर्गुणैः । स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥ शरीरं पीड्यते येन सुशुभेनापि कर्मणा । अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥ प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम् । एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥ स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना । अहन्यहनि यत्किंचिदकार्पण्यं हि तत्स्मृतम् ॥ यथोत्पन्नेन संतोषः कर्तव्यो ह्यर्थवस्तुना । परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्तिता ॥' इति । एत एवाष्टावात्मगुणत्वेन गौतमेन पठिताः 'अथाष्टावात्मगुणाः दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा' इति । तथा महाभारते 'सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमार्जवम् । ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः ॥ सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः । तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम् । संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् । क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥ ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता । दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ॥' देवलः 'शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया । विज्ञानं विनयः सत्यमिति धर्मसमुच्चयः ॥' तथा 'व्रतोपवासनियमैः शरीरोत्तापनं तपः । प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता ॥ नास्ति ह्यश्रद्दधानस्य कर्मकृत्यप्रयोजनम् । यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः ॥ धारणं सर्वविद्यानां विज्ञानमिति कीर्त्यते । विनयं द्विविधं प्राहुः शश्वद्दमशमाविति ॥' शेषं व्याख्यातप्रायमिति वचनानि न लिखितानि । याज्ञवल्क्यः 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इति । इयं च सर्वा दैवीसंपत्प्राग्व्याख्याता ब्राह्मणस्य स्वाभाविकीतरेषां तु नैमित्तिकीति न विरोधः ॥ ४२ ॥ क्षत्रियस्य गुणस्वभावकृतानि कर्माण्याह—**शौर्यमिति** । शौर्यं विक्रमो

५ भाष्योत्कर्षदीपिका ।

आक्रुष्टस्य ताडितस्य वा मनसि विकारराहित्यम् । आर्जवं ऋजुत्वम् । ज्ञानं शास्त्रीयं आत्मादिपदार्थज्ञानम् । विज्ञानं शास्त्रार्थस्यानुभवारूढतापादनम् । आस्तिक्यमास्तिकस्वभाव आगमोक्तार्थेषु श्रद्दधानता । ब्रह्मकर्म ब्राह्मणजातेः कर्म स्वभावजं स्वभावप्रभवेण गुणेन सत्त्वगुणेन प्रविभक्तमित्यर्थः ॥ ४२ ॥ ब्राह्मणस्य कर्मोदाहृत्य क्षत्रियस्य तदाह । शौर्यं शूरस्य भावो विक्रमो बलवत्तरानपि

६ श्रीधरीव्याख्या ।

परमः, तपः पूर्वोक्तं शारीरादि, शौचं बाह्याभ्यन्तरम्, क्षान्तिः क्षमा, आर्जवमवक्रता, ज्ञानं शास्त्रीयम्, विज्ञानमनुभवः, आस्तिक्यमस्तिपरलोक इति निश्चयः । एतच्छमादि ब्राह्मणस्य स्वभावाज्जातं कर्म ॥ ४२ ॥ क्षत्रियस्य स्वाभाविकानि कर्माण्याह—**शौर्यमिति** । शौर्यं पराक्रमः, तेजः प्रागल्भ्यम्, धृतिर्धैर्यम्, दाक्ष्यं कौशलं, युद्धे चाप्यपलायनपराङ्मुखता, दानमौदार्यम्, ईश्वरभावो

**कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिः । युद्धे चाप्यपलायनमपराङ्मुखीभावः शत्रुभ्यः । दानं देयद्रव्येषु मुक्तहस्तता । ईश्वरभावश्चेश्वरस्य भावः, प्रभुशक्तिप्रकटीकरणमीशितव्यान्प्रति, क्षात्रं कर्म क्षत्रियजातेर्विहितं कर्म क्षात्रकर्म स्वभावजम् ॥ ४३ ॥ कृषीति । कृषिगौरक्ष्यवाणिज्यं कृषिश्च गौरक्ष्यं च वाणिज्यं च कृषिगौरक्ष्यवाणिज्यं कृषिर्भूमेर्विलेखनं, गाः रक्षतीति गोरक्षस्तद्भावो गौरक्ष्यं पाशुपाल्यं वाणिज्यं वणिक्कर्म क्रयविक्रयादिलक्षणं वैश्यकर्म वैश्यजातेः कर्म वैश्यकर्म स्वभावजम् । परिचर्यात्मकं शुश्रूषास्वभावं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥ एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां स्वर्गप्राप्तिः फलं स्वभावतो 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्त' इत्यादिस्मृतिभ्यः, पुराणे च वर्णिनामाश्रमिणां च लोकफलभेदविशेषस्मरणात् । कारणान्तरात्त्विदं वक्ष्यमाणं फलं—

२ आनन्दगिरिव्याख्या ।

स्त्विति । दक्षस्य भावमेव विभजते—**सहसेति** । स्वभावस्तु पूर्ववत् ॥ ४३ ॥ वैश्यशूद्रयोः कर्म विवक्षयानुवदति—**कृषीति** । स्पष्टार्थः ॥ ४४ ॥ शमादिपरिचर्यान्तकर्मणां विभज्योक्तानामभ्युदयं फलमादावुपन्यस्यति—**एतेषामिति** । स्वभावतो विहितत्वादेव मोक्षापेक्षामन्तरेणानुष्ठानादित्यर्थः । तत्र प्रमाणमाह—**वर्णा इति** । शेषशब्देन भुक्तकर्मणोऽतिरिक्तं कर्मानुशयशब्दितमुच्यते, प्रत्येकं देशादिभिर्विशिष्टशब्दः संबध्यते, आदिशब्देन 'तद्यथाम्रे फलार्थे निमिते छायागन्धाद्यनूत्पद्यत एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते न धर्महानिर्भवति' इति स्मृतिर्गृह्यते । इतश्चोक्तानां कर्मणां स्वर्गफलत्वं युक्तमित्याह—**पुराणे चेति** । उक्तंहि 'यस्तु सम्यक्करोत्येवं गृहस्थः परमं विधिम् । तद्वर्णबन्धमुक्तोऽसौ लोकानाप्नोत्यनुत्तमान्' इति । 'यस्त्वेतां नियतश्चर्यां वानप्रस्थश्चरेन्मुनिः । स दहत्यग्निवद्दोषाञ्जयेल्लोकांश्च शाश्वतान्' इति । मोक्षाश्रमो यश्चरते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः । अनिन्धनज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः' इति च । 'सर्वे एते पुण्यलोका भवन्ति' इति श्रुतिश्चकारार्थः । यदि पुनर्मोक्षापेक्षयोक्तानि कर्माण्यनुष्ठीयेरंस्तदा मोक्षफलत्वं तेषां सेत्स्यतीत्याह—**कारणान्तरादिति** । तदेव कारणान्तरं यन्मोक्षापेक्षया तेषामनुष्ठानं मोक्षोपायेषु शमादिषु सात्त्विकेषु ब्राह्मणधर्मेषु क्षत्रियादी-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

उन्मार्गवर्तिनां नियमनशक्तिः । एतत्क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥ वैश्यशूद्रयोः कर्माण्याह—**कृषीति** । स्पष्टार्थः

४ मधुसूदनीव्याख्या ।

बलवत्तरानपि प्रहर्तुं प्रवृत्तिः । तेजः प्रागल्भ्यं परैरधर्षणीयत्वम् । धृतिर्महत्यामपि विपदि देहेन्द्रियसंघातस्यानवसादः । दाक्ष्यं दक्षभावः सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिः । युद्धे चाप्यपलायनमपराङ्मुखीभावः । दानमसंकोचेन वित्तेषु स्वस्वत्वपरित्यागेन परस्वत्वापादनम् । ईश्वरभावः प्रजापालनार्थमीशितव्येष्वर्थेषु प्रभुशक्तिप्रकटीकरणं च । क्षत्रकर्म क्षत्रियजातेर्विहितं कर्म स्वभावजं सत्त्वोपसर्जनरजोगुणस्वभावजम् ॥ ४३ ॥ कृषिरन्नोत्पत्त्यर्थं भूमेर्विलेखनम् । गोरक्षस्य भावो गौरक्ष्यं पाशुपाल्यम् । वाणिज्यं वणिजः कर्म क्रयविक्रयादिलक्षणम्, कुसीदमप्यत्रान्तर्गमनीयम् । वैश्यकर्म वैश्यजातेः कर्म स्वभावजं तमउपसर्जनरजोगुणस्वभावजम् । परिचर्यात्मकं द्विजातिशुश्रूषात्मकं कर्म शूद्रस्यापि स्वभावजं रजउपसर्जनतमोगुणस्वभावजम् ॥४४॥

५ भाष्योत्कर्षदीपिका ।

प्रहर्तुं प्रवृत्तिः । तेजः प्रागल्भ्यं परैरधर्षणीयत्वम् । धृतिः धारणं यया धृत्यात्मिकया चित्तवृत्त्या सर्वावस्थासु देहेन्द्रियसंघातस्यानवसादो भवति । दक्षस्य भावो दाक्ष्यं सहसा प्रत्युपस्थितेषु कार्येषु अव्यामोहेन बोधकौशल्यम् । युद्धेचाप्यपलायनं शत्रुभ्योऽपराङ्मुखत्वं चकारात्पराङ्मुखस्याहननम् । दानं देयेषु वस्तुषु मुक्तहस्तता । ईश्वरभावश्च ईश्वरस्य भाव ईशितव्यान् प्रति प्रभुशक्तिप्रकटीकरणम् । अनुक्तसमुच्चयार्थश्चः । क्षात्रं क्षत्रियजातेर्विहितं कर्म स्वभावजं स्वभावप्रभवेन सत्त्वोपसर्जनरजोगुणेन प्रविभक्तमित्यर्थः ॥ ४३ ॥ क्षात्रं कर्म व्युत्पाद्य वैश्यशूद्रयोस्तद्दर्शयति । कृषिर्भूमेर्विलेखनम् । गां रक्षतीति गोरक्षः तस्य भावो गौरक्ष्यं पाशुपाल्यम् । वाणिज्यं क्रयविक्रयादिलक्षणं वणिक्कर्म कृषिगौरक्ष्यवाणिज्यं वैश्यजातेः कर्मस्वभावजं स्वभावप्रभवेन तमउपसर्जनरजोगुणेन प्रविभक्तम् । परिचर्यात्मकं द्विजातिशुश्रूषास्वभावं कर्म शूद्रस्य शूद्रजातेरपि स्वभावजं स्वभावप्रभवेन रजउपसर्जनतमोगुणेन

६ श्रीधरीव्याख्या ।

नियमनशक्तिः, एतत्क्षत्रियस्य स्वभावजं कर्म ॥ ४३ ॥ वैश्यशूद्रयोः कर्माह—**कृषीति** । कृषिः कर्षणम्, गाः रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पाशुपाल्यमित्यर्थः । वाणिज्यं क्रयविक्रयादि, एतद्वैश्यस्य स्वभावजं कर्म । त्रैवर्णिकपरिचर्यात्मकं शूद्रस्यापि स्वभा-

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**स्वे स्वे यथोक्तलक्षणभेदे कर्मण्यभिरतस्तत्परः संसिद्धिं स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां संसिद्धिं लभते प्राप्नोति नरोऽधिकृतः पुरुषः । किं स्वकर्मानुष्ठानत एव साक्षा-**

२ आनन्दगिरिव्याख्या ।

नामनधिकाराद्ब्राह्मणानामेव मोक्षो न क्षत्रियादीनामित्याशङ्क्याह—**स्वे स्व इति** । यथा स्वे कर्मण्यभिरतस्य बुद्धिशुद्धिद्वारा ज्ञाननिष्ठायोग्यतया प्राप्तज्ञानस्य मोक्षोपपत्तेर्ब्राह्मणातिरिक्तस्यापि ज्ञानवतो मुक्तिरिति मत्वा पूर्वार्धं व्याचष्टे—**स्वे स्वे इत्यादिना** । संसिद्धिशब्दस्य मोक्षार्थत्वं गृहीत्वा स्वधर्मनिष्ठत्वमात्रेण तल्लाभे तादर्थ्येन संन्यासादिविधानानर्थक्यमिति मन्वानः शङ्कते—**किमिति** । न तावन्मात्रेण साक्षान्मोक्षो ज्ञाननिष्ठायोग्यता वेति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

श्लोकः ॥ ४४ ॥ कर्मप्रविभागफलमाह—**स्वेस्वे इति** । स्वे स्वे मन्वादिभिरुक्तेऽध्यापनादौ असाधारणे शमदमादौ

४ मधुसूदनीव्याख्या ।

तदेवं वर्णानां स्वभावजा गौणाख्या गुणधर्मा अभिहिताः । अन्येऽपि धर्माः शास्त्रेष्वाम्नाताः । तदुक्तं भविष्यपुराणे 'धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम् । स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः ॥ वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम् । वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा ॥ वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते । वर्णधर्मः स उक्तस्तु यथोपनयनं नृप ॥ यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्तते । स खल्वाश्रमधर्मः स्याद्भिक्षादण्डादिको यथा ॥ वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते । स वर्णाश्रमधर्मस्तु मौञ्ज्याद्या मेखला यथा ॥ यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते । यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम् ॥ निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा ॥' इति । अधिकारोऽत्र धर्मः । चतुर्विधं धर्ममाह हारीतः 'अथाश्रमिणां धर्मः पृथग्धर्मो विशेषधर्मः समानधर्मः कृत्स्नधर्मश्चेति' । पृथगाश्रमानुष्ठानात्पृथग्धर्मो यथा चातुर्वर्ण्यधर्मः स्वाश्रमविशेषानुष्ठानात् विशेषधर्मो यथा नैष्ठिकयायावरानुज्ञायिकचातुराश्रम्यसिद्धानाम् । सर्वेषां यः समानो धर्मः स समानधर्मो नैष्ठिकः कृत्स्नधर्म इति । नैष्ठिको ब्रह्मचारिविशेषः । यायावरो गृहस्थविशेषः । आनुज्ञायिको वानप्रस्थविशेषः । चातुराश्रम्यसिद्धो यतिविशेषः । सर्वेषामिति वर्णानामाश्रमाणां च । तत्राद्यो यथा महाभारते 'आनृशंस्यमहिंसा चाप्रमादः संविभागिता । श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥ स्वेषु दारेषु संतोषः शौचं नित्याऽनसूयता । आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥' सर्वाश्रमसाधारणस्तु प्रागुदाहृतः । निष्ठा संसारसमाप्तिस्तत्प्रयोजनो नैष्ठिको मोक्षहेत्वात्मज्ञानोत्पत्तिप्रतिबन्धकप्रत्यवायपरिहाराय निष्कामकर्मानुष्ठानं कृत्स्नधर्म इत्यर्थः । आश्रमाश्च शास्त्रेषु चत्वार आम्नाताः । यथाह गौतमः 'तस्याश्रमविकल्पमेके ब्रुवते ब्रह्मचारी गृहस्थो भिक्षुर्वैखानस' इति । आपस्तम्बः 'चत्वार आश्रमा गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थ्यमिति । तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति' इति । वसिष्ठः 'चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकास्तेषां वेदमधीत्य वेदौ वेदान्वाऽविशीर्णब्रह्मचर्यो यमिच्छेत्तमावसेदिति' । एवं तेषां पृथग्धर्मा अप्याम्नाताः । तथा फलमप्यज्ञानामाम्नातम् । यथाह मनुः 'श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन्हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्' ॥ अनुत्तमं सुखमिति यथाप्राप्ततत्तत्फलोपलक्षणार्थम् । आपस्तम्बः 'सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखं ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं वृत्तं, मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते' । गौतमः 'वर्णा आश्रमाश्च स्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति' । अत्र शेषशब्देन भुक्तज्योतिष्टोमादिकर्मातिरिक्तं चित्रादिकर्मानुशयशब्दितमुच्यते नतु पूर्वकर्मण एकदेश इति स्थितम् । 'कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवंच' इत्यत्र भट्टैरप्युक्तम् । गौतमीयेऽपि 'तच्छेषस्तस्मा-

५ भाष्योत्कर्षदीपिका ।

प्रविभक्तमित्यर्थः ॥ ४४ ॥ एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां मोक्षापेक्षामन्तरेण विहितत्वादेवानुष्ठानात्स्वर्गप्राप्तिः फलं 'सर्वे एते पुण्यलोका भवन्ति वर्णा आश्रमाः स्वकर्मनिष्ठाः प्रत्येकं कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलधर्मायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' 'यस्तु सम्यक्करोत्येतं गृहस्थः परमं विधिम् । तद्वर्णबन्धमुक्तोऽसौ लोकानाप्नोत्यनुत्तमान् । यस्त्वेतां नियतं चर्यां वानप्रस्थश्चरेन्मुनिः । स दहत्यग्निवद्दोषाञ्जयेल्लोकांश्च शाश्वतान् । मोक्षाश्रमं यश्चरते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः । अनिंधनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः' इत्यादिश्रुतिस्मृतिपुराणेभ्यः । एतेषामेव मोक्षापेक्षया सम्यगनुष्ठितानां यत्फलं तद्वक्तुमारभते । स्वेस्वे यथोक्तभेदे कर्मण्यभिरतः तत्परोऽधिकृतः पुरुषः संसिद्धिं स्वकर्मानुष्ठानाद-

६ श्रीधरीव्याख्या ।

वजं कर्म ॥ ४४ ॥ एवंभूतस्य ब्राह्मणादिकर्मणो ज्ञानहेतुत्वमाह—**स्वे स्व इति** । स्वस्वाधिकारविहितकर्मण्यभिरतः परिनिष्ठितो नरः

**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

त्संसिद्धिः । न, कथं तर्हि स्वकर्मनिरतः सिद्धिं यथा येन प्रकारेण विन्दति तच्छृणु ॥ ४५ ॥ यत इति । यतो यस्मात्प्रवृत्तिरुत्पत्तिश्चेष्टा वा यस्मादन्तर्यामिण ईश्वराद्भूतानां प्राणिनां स्याद्येनेश्वरेण सर्वमिदं जगत्ततं व्याप्तं स्वकर्मणा पूर्वोक्तेन प्रतिवर्णं तमीश्वरमभ्यर्च्य पूजयित्वाराध्य केवलं ज्ञान-

२ आनन्दगिरिव्याख्या ।

परिहरति—**नेति** । तर्हि कथं स्वधर्मनिष्ठस्य संसिद्धिरिति पृच्छति—**कथं तर्हीति** । उत्तरार्धेनोत्तरमाह—**स्वकर्मेति** । तच्छृणु तं प्रकारमेकाग्रचेता भूत्वा श्रुत्वावधारयेत्यर्थः ॥ ४५ ॥ तमेव प्रकारं स्फुटयति—**यत इति** । यतःशब्दार्थं यस्मादित्युक्तं व्यक्तीकरोति—**यस्मादिति** । प्राणिनामुत्पत्तिर्यस्मादीश्वरात्तेषां चेष्टा च यस्मादन्तर्यामिणो येन च सर्वं व्याप्तं मृदेव घटादिकार्यस्य कारणातिरिक्तस्वरूपाभावात्तं स्वकर्मणाभ्यर्च्य मानवः संसिद्धिं विन्दतीति संबन्धः । नहि ब्राह्मणादीनां यथोक्तधर्मनिष्ठया साक्षान्मोक्षो लभ्यते तस्य ज्ञानैकलभ्यत्वात्किंतु तन्निष्ठानां शुद्धबुद्धीनां कर्म सुफलमपश्यतामीश्वरप्रसादासादितविवेकवैराग्यवतां संन्यासिनां ज्ञाननिष्ठयोग्यतावतां ज्ञानप्राप्त्या मुक्तिरित्यभि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

साधारणे च कर्मण्यभिरतो निष्ठावान् संसिद्धिं ज्ञानयोग्यतां लभते नरः । एतदेव विवरीतुं प्रतिजानीते—**स्वेति** । सिद्धिं वक्ष्यमाणां मुख्यसंन्यासलक्षणां नैष्कर्म्यसिद्धिं यथा येन प्रकारेण ॥ ४५ ॥ तमेव प्रकारमाह—**यत इति** । प्रवृत्तिः कायवाङ्मनोनिर्वर्त्या चेष्टा । यतो हेतोरन्तर्यामिणः । 'येन वागभ्युद्यते' इत्यादिश्रुतेः । येन इदं सर्वं दृश्यं

४ मधुसूदनीव्याख्या ।

चित्राद्यपेक्षयेति' । विष्वञ्चः सर्वतोगामिनो यथेष्टचेष्टा विपरीता नरकादौ जन्म प्रतिपद्य विनश्यन्ति कृमिकीटादिभावेन सर्वपुरुषार्थेभ्यो भ्रश्यन्त इत्यर्थः । हारीतः 'काम्यैः केचिद्यज्ञदानैस्तपोभिर्लब्ध्वा लोकान्पुनरायान्ति जन्म । कामैर्मुक्ताः सत्ययज्ञाः सुदानास्तपोनिष्ठाश्चाक्षयान्यान्ति लोकान् ॥' अत्र कामनासदसद्भावनिबन्धनः फलभेदो दर्शितो भविष्यपुराणे 'फलं विनाप्यनुष्ठानं नित्यानामिष्यते स्फुटम् । काम्यानां स्वफलार्थं तु दोषघातार्थमेव तु ॥ नैमित्तिकानां करणे त्रिविधं कर्मणां फलम् । क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ॥ अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते । नित्यां क्रियां तथा चान्ये अनुषङ्गफलं विदुः ॥' अन्ये आपस्तम्बादयः । 'तद्यथाम्रे फलार्थे निमिते' इत्यादिवचनैरानुषङ्गिकफलतां नित्यकर्मणो विदुः । श्रुतिश्च 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचर्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति गृहस्थवानप्रस्थब्रह्मचारिण उक्त्वा 'सर्व एते पुण्यलोका भवन्ति' इति तेषामन्तःकरणशुद्ध्यभावे मोक्षाभावमुक्त्वा शुद्धान्तःकरणानामेषामेव परिव्राजकभावेन ज्ञाननिष्ठया मोक्षमाह 'ब्रह्मसंस्थोऽमृतत्वमेति' इति । तदेवं स्थिते ब्रह्मचारी गृहस्थो वानप्रस्थो वा मुमुक्षुः फलाभिसन्धित्यागेन भगवदर्पणबुद्ध्या स्वे स्वे तत्तद्वर्णाश्रमविहिते नतु स्वेच्छामात्रकृते कर्मणि श्रुतिस्मृत्युदितेऽभिरतः सम्यगनुष्ठानपरः संसिद्धिं देहेन्द्रियसंघातस्याशुद्धिक्षयेन सम्यग्ज्ञानोत्पत्तियोग्यतां लभते नरो वर्णाश्रमाभिमानी मनुष्यो मनुष्याधिकारत्वात्कर्मकाण्डस्य । देवादीनां वर्णाश्रमाभिमानित्वाभावाद्युक्त एव तद्धर्मेष्वनधिकारः । वर्णाश्रमाभिमानानपेक्षे तूपासनादावधिकारस्तेषामप्यस्तीति साधितं देवताधिकरणे । ननु बन्धहेतूनां कर्मणां कथं मोक्षहेतुत्वमुपासनाविशेषादित्याह—स्वकर्मनिरतः सिद्धिमुक्तलक्षणां यथा येन प्रकारेण विन्दति तच्छृणु श्रुत्वा तं प्रकारमवधारयेत्यर्थः ॥ ४५ ॥ यतो मायोपाधिकचैतन्यानन्दघनात्सर्वज्ञात्सर्वशक्तेरीश्वरादुपादानान्निमित्ताच्च सर्वान्तर्यामिणः प्रवृत्तिरुत्पत्तिर्मायामयी स्वाप्नरथादीनामिव भूतानां भवनधर्मणामाकाशादीनां येन चैकेन सद्रूपेण स्फुरणरूपेण च सर्वमिदं दृश्यजातं त्रिष्वपि कालेषु ततं व्याप्तं स्वात्मन्येवान्तर्भावितं कल्पितस्याधिष्ठानानतिरेकात् । तथाच श्रुतिः 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्मेति' । अत्र यत इति प्रकृतौ पञ्चमी । यतो येनेति चैकत्वं विवक्षितम् । 'आनन्दो

५ भाष्योत्कर्षदीपिका ।

शुद्धिक्षये सति कायेन्द्रियमनसां ज्ञाननिष्ठायोग्यतालक्षणां लभते प्राप्नोति । कथं लभते इत्यपेक्षायामाह—स्वकर्मनिरतः यथा येन प्रकारेण सिद्धिमुक्तलक्षणां विन्दति लभते तत्तथा शृणु ॥४५॥ तमेव प्रकारं दर्शयति—यतः यस्मात् जगज्जनकादन्तर्या-

६ श्रीधरीव्याख्या ।

संसिद्धिं ज्ञानयोग्यतां लभते । कर्मणां ज्ञानप्राप्तिप्रकारमाह—**स्वकर्मेति सार्धेन** । स्वकर्मपरिनिष्ठितो यथा येन प्रकारेण तत्त्वज्ञानं लभते तं प्रकारं शृणु ॥ ४५ ॥ तमेवाह—**यत इति** । यतोऽन्तर्यामिणः परमेश्वराद्भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति । येन च

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**निष्ठायोग्यतालक्षणां सिद्धिं विन्दति मानवो मनुष्यः ॥ ४६ ॥ यत एवमतः—श्रेयानिति । श्रेयान्प्रशस्यतरः स्वो धर्मः स्वधर्मो विगुणोऽपीत्यपिशब्दो द्रष्टव्यः, परधर्मात्स्वनुष्ठितात्स्वभावनियतं स्वभावेन नियतम्, यदुक्तं स्वभावजमिति तदेवोक्तं स्वभावनियतमिति, यथा विषजातस्येव कृमेर्विषं न दोषकरं तथा स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं पापम् ॥ ४७ ॥ स्वभावनियतं कर्म कुर्वाणो**

२ आनन्दगिरिव्याख्या ।

प्रेत्याह—**केवलमिति** ॥ ४६ ॥ स्वधर्मानुष्ठानस्य बुद्धिशुद्ध्यादिद्वारा मोक्षावसायित्वात्तदनुष्ठानमावश्यकमित्याह—**यत इति** । ननु युद्धादिलक्षणं स्वधर्मं कुर्वन्नपि हिंसाधीनं पापं प्राप्नोति तत्कथं स्वधर्मः श्रेयानिति तत्राह—**स्वभावेति** । स्वकीयं वर्णाश्रमं निमित्तीकृत्य विहितं स्वभावजमित्यधस्तादुक्तमित्याह—**यदुक्तमिति** । विग्रहात्मकमपि विहितं कर्म कुर्वन्पापं नाप्नोतीत्यत्र दृष्टान्तमाह—**तथेति** ॥ ४७ ॥ इतश्च विहितं कर्म दोषवदपि कर्तव्यं प्रकारान्तरासंभवादित्युक्तानुवादपूर्वकं कथयति—**स्वभावेत्यादिना** । नहि कृमिर्विषजो विषनिमित्तं मरणं प्रतिपद्यते तथा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ततं व्याप्तं उपादानत्वात् । स्वकर्मणा तमभ्यर्च्य संतर्प्य सिद्धिं मोक्षं विन्दति लभते मानवः । मनुष्याधिकारिकत्वाच्छास्त्रस्य । परमेश्वरे नित्यकर्मणामर्पणमेव मोक्षद्वारमित्यर्थः ॥ ४६ ॥ स्वकर्मणेति विशेषणस्य फलमाह—**श्रेयानिति** । स्वधर्मो विगुणः किंचिदङ्गहीनोऽपि श्रेयान् प्रशस्यतरः । किमपेक्ष्य श्रेयान् । परधर्मात्स्वनुष्ठितात् सम्यग्विहितादपि । उक्तंच 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति । स्वभावनियतं पूर्वोक्तत्रिविधस्वभावाज्जातं कर्म कुर्वन् किल्बिषं दोषं नाप्नोति । विषकृमेर्विषमिव न दोषकरम् । तस्मात्तव भैक्ष्यं हिंसाशून्यमपि न युक्तम् । किंतु हिंसायुक्तोऽपि स्वधर्मएव प्रशस्यतरः । धर्मत्वेन विहितेऽस्मिन्नग्नीषोमीयपश्वालम्भे इव कृतेसति न किल्बिषप्रसङ्गोऽस्ती-

४ मधुसूदनीव्याख्या ।

ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इति च । तस्य निर्णयवाक्यं 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादि श्रुत्यन्तराच्च मायोपाधिलाभः । 'यः सर्वज्ञः सर्ववित्' इत्यादि श्रुत्यन्तरात्सर्वज्ञत्वादिलाभः । एवं श्रौत एवायमर्थो भगवता प्रकाशितः । 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्' इति तमन्तर्यामिणं भगवन्तं स्वकर्मणा प्रतिवर्णाश्रमं विहितेनाभ्यर्च्य तोषयित्वा तत्प्रसादादैकात्म्यज्ञाननिष्ठायोग्यतालक्षणां सिद्धिमन्तःकरणशुद्धिं विन्दति मानवः । देवादिस्तूपासनामात्रेणेति भावः ॥ ४६ ॥ यतः स्वधर्म एव मनुष्याणां भगवत्प्रसादहेतुरतः परधर्मात्सम्यगनुष्ठितादपि श्रेयान्प्रशस्यतरः स्वधर्मो विगुणोऽसम्यगनुष्ठितोऽपि । तस्मात्क्षत्रियेण सता त्वया स्वधर्मो युद्धादिरेवानुष्ठेयो न परधर्मो भिक्षाटनादिरित्यभिप्रायः । ननु स्वधर्मोऽपि युद्धादिर्बन्धुवधादिप्रत्यवायहेतुत्वान्नानुष्ठेय इति चेन्नेत्याह—स्वभावनियतं पूर्वोक्तं शौर्यं तेज इत्यादि स्वभावजं युद्धादि कर्म कुर्वन् किल्बिषं पापं बन्धुवधादिनिमित्तं न प्राप्नोति । तथाच प्राग्व्याख्यातं 'सुखदुःखे समे कृत्वा' इत्यत्र विहितज्योतिष्टोमाङ्गपशुहिंसाया इव विहितयुद्धाङ्गबन्धुहिंसाया अपि प्रत्यवायहेतुत्वाभावात् । तथाचोक्तमधस्तात् ॥ ४७ ॥ यस्मादेवं

५ भाष्योत्कर्षदीपिका ।

मिणो भूतानां प्राणिनां प्रवृत्तिरुत्पत्तिश्चेष्टा वा स्यात् । येनेश्वरेण सर्वं कृत्स्नमिदं ततं व्याप्तं कार्यस्य कारणसत्तातिरिक्तसत्ताकत्वाभावात् । तं परमात्मानं स्वकर्मणा प्रतिवर्णं पूर्वोक्तेन अभ्यर्च्य सम्यक् पूजयित्वा आराध्य मानवोऽधिकृतो मनुष्यः सिद्धिं केवलज्ञाननिष्ठायोग्यतालक्षणां विन्दति लभते ॥ ४६ ॥ यतः स्वकर्मणा परमात्मामभ्यर्च्य सिद्धिं लभते तस्मात्स्वोधर्मः स्वधर्मो विगुणोऽसम्यगनुष्ठितोऽपि परधर्मात्स्वनुष्ठितात्सम्यगनुष्ठितात् श्रेयान्प्रशस्यतरः । ननु युद्धादिलक्षणं स्वधर्मं कुर्वन्नपि हिंसानिमित्तं पापं प्राप्नोति तत्कथं स्वधर्मः श्रेयानिति तत्राह स्वभावनियतं कर्म 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायन'मित्यादि कर्म स्वभावजं कुर्वन् किल्बिषं नाप्नोति । यथा विषजः कृमिः विषकृतं दोषं न प्रतिपद्यते तथायमधिकृतः पुरुषो दोषवदपि स्वभावनियतं कुर्वन् पापं नाप्नोतीत्यर्थः । तदुक्तं 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति । एतेन तर्हि दोषरहितमेव भिक्षाटनादि सर्वैरनुष्ठीयतामतो न पापप्राप्त्याशङ्केति न शङ्कनीयम् । तर्हि पापप्राप्तिशङ्कां परिहर्तुमकर्मनिष्ठतैव सर्वैः कुतो न संपाद्यत इति शङ्कापि न कर्तव्या । 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' । 'नहि देहभृता

६ श्रीधरीव्याख्या ।

कारणात्मना सर्वमिदं विश्वं ततं व्याप्तं तमीश्वरं स्वकर्मणाऽभ्यर्च्य पूजयित्वा सिद्धिं लभते मनुष्यः ॥ ४६ ॥ स्वकर्मणेति विशेषणस्य फलमाह—**श्रेयानिति** । विगुणोऽपि स्वधर्मः सम्यगनुष्ठितादपि परधर्माच्छ्रेयाञ्छ्रेष्ठः । नच बन्धुवधादियुक्तायुद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्मः श्रेष्ठ इति मन्तव्यम् । यतः स्वभावेन पूर्वोक्तेन नियतं नियमेनोक्तं कर्म कुर्वन्किल्बिषं नाप्नोति ॥ ४७ ॥ यदि पुनः

**सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

विषज इव कृमिः किल्बिषं नाप्नोतीत्युक्तम् । परधर्मश्च भयावह इति । अनात्मज्ञश्च नहि कश्चित्क्षणमप्यकर्मकृत्तिष्ठतीति अतः—सहजमिति । सहजं सह जन्मनैवोत्पन्नं सहजं किं तत्कर्म कौन्तेय, सदोषमपि त्रिगुणत्वान्न त्यजेत् सर्वारम्भा आरभ्यन्त इत्यारम्भाः सर्वकर्माणीत्येतत्प्रकरणात् । ये केचिदारम्भाः स्वधर्माः परधर्माश्च ते सर्वे हि यस्मात्त्रिगुणात्मकत्वमत्र हेतुस्त्रिगुणात्मकत्वाद्दोषेण धूमेन सहजेनाग्निरिवावृताः, सहजस्य कर्मणः स्वधर्माख्यस्य परित्यागेन परधर्मानुष्ठानेऽपि दोषान्नैव मुच्यते, भयावहश्च परधर्मः । नच शक्यतेऽशेषतस्त्यक्तुमज्ञेन कर्म यतस्तस्मान्न त्यजेदित्यर्थः । किमशेषतस्त्यक्तुमशक्यं कर्मेति न त्यजेत्किं वा सहजस्य कर्मणस्त्यागे दोषो भवतीति । किंचातो यदि तावदशेषतस्त्यक्तुमशक्यमिति न त्याज्यं सहजं कर्मैवं तर्ह्यशेषतस्त्यागे गुण एव स्यादिति सिद्धं भवति । सत्यमेवमशेषतस्त्याग एव नोपपद्यत इति चेत्, किं नित्यप्रचलितात्मकः पुरुषो यथा सांख्यानां गुणाः किंवा क्रियैव कारकं, यथा बौद्धानां पञ्चस्कन्धाः क्षणप्रध्वंसिनः, उभयथापि

२ आनन्दगिरिव्याख्या ।

ऽयमधिकृतः पुरुषो दोषवदपि विहितं कर्म कुर्वन्पापं नाप्नोतीत्युक्तमित्यर्थः । तर्हि दोषरहितमेव भिक्षाटनादि सर्वैरनुष्ठीयतामतो न पापप्राप्त्याशङ्केत्याशङ्क्याह—**परेति** । उक्तमित्यनुवर्तते । तर्हि पापप्राप्तिशङ्कां परिहर्तुमकर्मनिष्ठत्वमेव सर्वेषां स्यादित्याशङ्क्य ज्ञानाभावान्नैवमित्याह—**अनात्मज्ञ इति** । पूर्ववदत्रापि संबन्धः । प्रकारान्तरासंभवकृतं फलमाह—**अतइति** । सह जायत इति सहजं स्वभावनियतं नित्यं कर्म तद्विहितत्वान्निर्दोषमपि हिंसात्मकतया सदोषमित्यत्र हेतुमाह—**त्रिगुणेति** । सत्त्वादिगुणत्रयारब्धतया हिंसादिदोषवदपि कर्म विहितमत्याज्यमित्यर्थः । कर्मणां दोषवत्त्वं प्रपञ्चयति—**सर्वेति** । आरम्भशब्दस्य कर्मव्युत्पत्त्या स्वपरसर्वकर्मार्थत्वे कर्मणां प्रकृतत्वं हेतुमाह—**प्रकरणादिति** । दोषेणेत्यादि व्याचष्टे—**ये केचिदिति** । ते सर्वे दोषेणावृता इति संबन्धः । सर्वकर्मणां दोषावृतत्वे हिशब्दोपात्तं यस्मादित्युक्तं हेतुमेवाभिनयति—**त्रिगुणात्मकत्वमिति** । स्वभावनियतस्य कर्मणो दोषवत्त्वात्तत्त्यागद्वारा परधर्ममातिष्ठमानस्यापि नैव दोषाद्विमोकः संभवति । नच परधर्मोऽनुष्ठातुं शक्यते भयावहत्वान्नच तर्हि कर्मणोऽशेषतोऽननुष्ठानमेवाज्ञस्याशेषकर्मत्यागायोगादतः सहजं कर्म सदोषमपि न त्याज्यमिति वाक्यार्थमाह—**सहजस्येति** । सहजं कर्म सदोषमपि न त्यजेदित्यत्र विचारमवतारयति—**किमिति** । नहि कश्चिदिति न्यायादिति शेषः । दोषो विहितनित्यत्यागे प्रत्यवायः । संदिग्धस्य प्रयोजनस्य विचार्यत्वादुक्ते संदेहे प्रयोजनं पृच्छति—**किंचात इति** । तत्राद्यमनूद्य फलं दर्शयति—**यदीति** । अशक्यार्थानुष्ठानस्य गुणत्वेन प्रसिद्धत्वात्प्रसिद्धं हि महोदधिमगस्त्यस्य चुलुकीकृत्य पिबतो गुणवत्त्वं तदाह—**एवं तर्हीति** । अशेषकर्मत्यागस्य गुणवत्त्वेऽपि प्रागुक्तन्यायेन तदयोगात्तस्याशक्यानुष्ठानतेति शङ्कते—**सत्यमिति** । चोद्यमेव विवृण्वन्नाद्यं विभजते—**किमिति** । सत्त्वादिगुणवदात्मनो नित्यप्रचलितत्वेनाशेषतस्तेन न कर्म त्यक्तुं शक्यं नापि रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञानां क्षणध्वंसिनां स्कन्धानामिव क्रियाकारकभेदाभावात्कारकस्यैवात्मनः क्रियात्वमित्युक्ते कर्माशेषतस्त्यक्तुं शक्यमुभयत्रापि स्वभावभङ्गादित्याह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्यर्थः ॥ ४७ ॥ किंच सहजं स्वाभाविकं क्षात्रं कर्म सदोषं हिंसामिश्रमपि न त्यजेत् । हि यस्मात्सर्वारम्भाः सर्वाणि

४ मधुसूदनीव्याख्या ।

विहितहिंसादेर्न प्रत्यवायहेतुत्वं परधर्मश्च भयावहः सामान्यदोषेण च सर्वकर्माणि दुष्टानि तस्मादज्ञो वर्णाश्रमाभिमानी—हे कौन्तेय, सहजं स्वभावजं कर्म सदोषमपि विहितहिंसायुक्तमपि ज्योतिष्टोमयुद्धादि न त्यजेदन्तःकरणशुद्धेः प्राग्भवानन्यो वा । नह्यनात्मज्ञः कश्चित्क्षणमपि कर्माण्यकृत्वा स्थातुं शक्नोति । नच परधर्माननुतिष्ठन्नपि दोषान्मुच्यते । सर्वारम्भाः स्वधर्माः

५ भाष्योत्कर्षदीपिका ।

शक्यं त्यक्तुं कर्माण्यशेषतः' इत्यनात्मज्ञेनाकर्मनिष्ठतायाः संपादयितुमशक्यत्वात् ॥ ४७ ॥ अतः सहजं जन्मनैवोत्पन्नं स्वभावजं कर्म न त्यजेत् । कुन्तीपुत्रेण क्षत्रियवरेण त्वया युद्धे अपलायनादि सहजं कर्म न त्याज्यमिति संबोधनाशयः । दोषवत्सहजमपि कर्म परित्यज्य निर्दोषमन्यदीयं कर्म कुतो नाश्रयणीयमित्याशङ्क्य दोषरहितस्य कर्मणएवाभावादित्याह—सर्वारम्भा हि

६ श्रीधरीव्याख्या ।

सांख्यदृष्ट्या स्वधर्मे हिंसालक्षणं दोषं मत्वा परधर्मं श्रेष्ठं मन्यसे तर्हि सदोषत्वं परधर्मेऽपि तुल्यमित्याशयेनाह—**सहजमिति** ।

१ श्रीमच्छांकरभाष्यम् ।

कर्मणोऽशेषतस्त्यागो न संभवति । अथ तृतीयोऽपि पक्षो यदा करोति तदा सक्रियं वस्तु, यदा न करोति तदा निष्क्रियं वस्तु तदेव । तत्रैवं सति शक्यं कर्माशेषतस्त्यक्तुम् । अयं त्वस्मिंस्तृतीये पक्षे विशेषो न नित्यप्रचलितं वस्तु नापि क्रियैव कारकं किं तर्हि व्यवस्थिते द्रव्येऽविद्यमाना क्रियोत्पद्यते विद्यमाना च विनश्यति । शुद्धं द्रव्यं शक्तिमदवतिष्ठत इत्येवमाहुः काणादास्तदेव च कारकमित्यस्मिन्पक्षे को दोष इति, अयमेव तु दोषो यतस्त्वभागवतं मतमिदं कथं ज्ञायते, यत आह भगवान्नासतो विद्यते भाव इत्यादि । काणादानां ह्यसतो भावः सतश्चाभाव इतीदं मतम् । अभागवतत्वेऽपि न्यायवच्चेत्को दोष इति चेत् । उच्यते, दोषवत्त्विदं सर्वप्रमाणविरोधात् । कथम्, यदि तावद्द्व्यणुकादि द्रव्यं प्रागुत्पत्तेरत्यन्तमेवासदुत्पन्नं च स्थितं कंचित्कालं पुनरत्यन्तमेवासत्त्वमापद्यते । तथाच सत्यसदेव सज्जायते सदेवासत्त्वमापद्यतेऽभावो भावो भवति भावश्चाभाव इति । तत्राभावो जायमानः प्रागुत्पत्तेः शशविषाणकल्पः समवाय्यसमवायिनिमित्ताख्यं कारणमपेक्ष्य जायत इति । न चैवमभाव उत्पद्यते कारणं वापेक्षत इति शक्यं वक्तुं, असतां शशविषाणादीनामदर्शनात् । भावात्मकाश्चेद्घटादय उत्पद्यमानाः किंचिदभिव्यक्तिमात्रकारणमपेक्ष्योत्पद्यन्त इति शक्यं प्रतिपत्तुम् । किंचासतश्च सद्भावे सतश्चासद्भावे न क्वचित्प्रमाणप्रमेयव्यवहारे विश्वासः कस्यचित्स्यात् । सत्सदेवासदसदेवेति निश्चयानुपपत्तेः । किंचोत्पद्यत इति द्व्यणुकादेर्द्रव्यस्य स्वकारणसत्तासंबन्धमाहुः । प्रागुत्पत्तेश्चासत्पश्चात्स्वकारणव्यापारमपेक्ष्य स्वकारणैः परमाणुभिः सत्तया च समवायलक्षणेन

२ आनन्दगिरिव्याख्या ।

उभयथेति । पक्षद्वयानुरोधेनाशेषकर्मत्यागायोगे वैशेषिकश्चोदयति—अथेति । कदाचिदात्मा सक्रियो निष्क्रियश्च कदाचिदिति स्थिते फलितमाह—तत्रेति । उक्तमेव पक्षं पूर्वोक्तपक्षद्वयाद्विशेषदर्शनेन विशदयति—अयं त्विति । आगमापायित्वे क्रियायास्तद्वतो द्रव्यस्य कथं स्थायितेत्याशङ्क्याह—शुद्धमिति । क्रियाशक्तिमत्त्वेऽपि क्रियावत्त्वाभावे कथं कारकत्वं क्रियां कुर्वत् कारणं कारकमित्यभ्युपगमादित्याशङ्क्याह—तदेवेति । क्रियाशक्तिमदेव कारकं न क्रियाधिकरणं परस्पराश्रयादित्यर्थः । वैशेषिकपक्षे दोषाभावादस्ति सर्वैः स्वीकार्यतेत्युपसंहरति—इत्यस्मिन्निति । भगवन्मतानुसारित्वाभावादस्य पक्षस्य त्याज्यतेति दूषयति—अयमेवेति । भगवन्मताननुसारित्वमस्याप्रामाणिकमिति शङ्कते—कथमिति । भगवद्वचनमुदाहरन् परपक्षस्य तदनुगुणत्वाभावमाह—यत इति । परेषामपि मतमेतदनुगुणमेव किं न स्यादित्याशङ्क्याह—काणादानां हीति । भगवन्मतानुगुणत्वाभावेऽपि न्यायानुगुणत्वेन दोषरहितं काणादानां मतमुपादेयमेव तर्हि काणादमतविरोधादुपेक्ष्यते भगवन्मतमिति शङ्कते—अभागवतत्वेऽपीति । न्यायवत्त्वमसिद्धमिति दूषयति—उच्यत इति । सर्वप्रमाणानुसारिणो मतस्य न तद्विरोधितेत्याक्षिपति—कथमिति । वैशेषिकमतस्य सर्वप्रमाणविरोधं प्रकटयन्नादौ तन्मतमनुवदति—यदीति । असतो जन्म सतश्च नाश इति स्थिते फलितमाह—तथाचेति । उक्तमेव वाक्यं व्याकरोति—अभाव इति । सदेवासत्त्वमापद्यत इत्युक्तं व्याचष्टे—भावश्चेति । इति मतमिति शेषः । तत्रैवाभ्युपगमान्तरमाह—तत्रेति । प्रकृतं मतं सप्तम्यर्थः । इत्यभ्युपगम्यत इति शेषः । परकीयमभ्युपगमं दूषयति—नचेति । एवमिति परपरिभाषानुसारेणेत्यर्थः । अदर्शनादुत्पत्तेरपेक्षायाश्चेति शेषः । कथं तर्हि त्वन्मतेऽपि घटादीनां कारणापेक्षाणामुत्पत्तिर्न हि भावानां कारणापेक्षोत्पत्तिर्वा युक्तेति तत्राह—भावेति । घटादीनामस्मत्पक्षे प्रागपि कारणात्मना सतामेवाव्यक्तनामरूपाणामभिव्यक्तिसामग्रीमपेक्ष्य पृथगभिव्यक्तिसंभवान्न किंचिदनवद्यमित्यर्थः । असत्कार्यवादे दोषान्तरमाह—किंचेति । परमते मानमेयव्यवहारे क्वचिदपि विश्वासो न कस्यचिदित्यत्र हेतुमाह—सत्सदेवेति । नहि सत्तथैवेति निश्चितं तस्यैव पुनरसत्त्वप्राप्तेरिष्टत्वान्न चासत्तथैवेति निश्चयस्तस्यैव सत्त्वप्राप्तेरुपगमादतो यन्मानेन सदसद्वा निर्णीतं तत्तथेति विश्वासाभावान्मानवैफल्यमित्यर्थः । इतश्चासत्कार्यवादो न युक्तिमानित्याह—किंचेति । तदेव हेत्वन्तरं स्फोरयितुं परमतमनुवदति—उत्पद्यत इतीति । परकीयं वचनमेव व्याचष्टे—प्रागिति । संबद्धं सदित्यनेन कारणसंबन्धे सति कार्यस्य सत्तासंबन्धो भवतीत्युक्तं

४ मधुसूदनीव्याख्या ।

परधर्माश्च सर्वे हि यस्माद्दोषेण त्रिगुणात्मकत्वेन सामान्येनावृता व्याप्ताः सदोषा एव । तथाच प्राग्व्याख्यातं 'परिणामतापसंस्कारैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति । तस्मादगत्यानात्मज्ञः कर्माणि कुर्वन्विषजक्रमिरिव विषं सहजं कर्म

५ भाष्योत्कर्षदीपिका ।

यस्मादारभ्यन्त इत्यारम्भाः सर्वकर्माणि त्रिगुणात्मकत्वात्सहजेन धूमेनाग्निरिवावृताः व्याप्ताः सदोषा इत्यर्थः । तथाच सहजस्य

६ श्रीधरीव्याख्या ।

सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत् । हि यस्मात् सर्वेऽप्यारम्भा दृष्टादृष्टार्थानि सर्वाण्यपि कर्माणि दोषेण केनचिदावृता

१ श्रीमच्छांकरभाष्यम् ।

संबन्धेन संबध्यते संबद्धं सत्कारणसमवेतं सद्भवति । तत्र वक्तव्यं कथमसतः सत्कारणं भवेत्संबन्धो वा केनचित् स्यात् । नहि वन्ध्यापुत्रस्य सता संबन्धो वा कारणं वा केनचित्प्रमाणतः कल्पयितुं शक्यम् । ननु नैवं वैशेषिकैरभावस्य संबन्धः कल्प्यते द्व्यणुकादीनां हि द्रव्याणां स्वकारणेन समवायलक्षणः संबन्धः सतामेवोच्यत इति । न संबन्धात्प्राक्सत्त्वानभ्युपगमात् । नहि वैशेषिकैः कुलालदण्डचक्रादिव्यापारात्प्राग्घटादीनामस्तित्वमिष्यते । नच मृद एव घटाद्याकारप्राप्तिमिच्छन्ति । ततश्चासत एव संबन्धः पारिशेष्यादिष्टो भवति । नन्वसतोऽपि समवायलक्षणः संबन्धो न विरुद्धः । न; वन्ध्यापुत्रादीनामदर्शनात् । घटादेरेव प्रागभावस्य स्वकारणसंबन्धो भवति न वन्ध्यापुत्रादेः, अभावस्य तुल्यत्वेऽपीति विशेषोऽभावस्य वक्तव्यः । एकस्याभावो द्वयोरभावः सर्वस्याभावः प्रागभावः प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभाव इति लक्षणतो न केनचिद्विशेषो दर्शयितुं शक्यः । असति च विशेषे घटस्य प्रागभाव एव कुलालादिभिर्घटभावमापद्यते संबध्यते च भावेन कपालाख्येन, स्वकारणेन सर्वव्यवहारयोग्यश्च भवति नतु घटस्यैव प्रध्वंसाभावोऽभावत्वे सत्यपीति प्रध्वंसाद्यभावानां न क्वचिद्व्यवहारयोग्यत्वं प्रागभावस्यैव द्व्यणुकादिद्रव्याख्यस्योत्पत्त्यादिव्यवहारार्हत्वमित्येतदसमञ्जसमभावत्वाविशेषादत्यन्तप्रध्वंसाभावयोरिव । ननु नैवास्माभिः प्रागभावस्य भावापत्तिरुच्यते । भावस्यैव हि तर्हि भावापत्तिर्यथा घटस्य घटापत्तिः पटस्य वा पटापत्तिः । एतदप्यभावस्य भावापत्तिवदेव प्रमाणविरुद्धम् । सांख्यस्यापि यः परिणामपक्षः सोऽप्यपूर्वधर्मोत्पत्ति-

२ आनन्दगिरिव्याख्या ।

तदेव स्फुटयति—**कारणेति** । परमतमेवमनुभाष्य दूषयति—**तत्रेति** । कार्यस्यासतोऽपि कारणं संभवति तस्य च कार्येण संबन्धः सिध्यतीत्याशङ्क्याह—**नहीति** । असत्त्वादेवासतः संबन्धाभावे कारणस्य सतोऽपि न तेन संबन्धोऽनुमातुं शक्यते सदसतोः संबन्धासंभवादित्यर्थः । कार्यस्यात्यन्तासत्त्वानभ्युपगमात्कारणसंबन्धः स्यादिति शङ्कते—**नन्विति** । सतामेव द्व्यणुकादीनां कारणसंबन्धं शङ्कितं दूषयति—**न संबन्धादिति** । अनभ्युपगममेव विशदयति—**नहीति** । सदेव कारणं कार्याकारमापद्य कार्यव्यवहारं निर्वहतीत्यभ्युपगमान्नास्ति संबन्धानुपपत्तिरित्याशङ्क्यापराद्धान्तान्मैवमित्याह—**नचेति** । कार्यस्य कारणसंबन्धात्पूर्वं सत्त्वाभावे परिशेषसिद्धमर्थं दर्शयति—**ततश्चेति** । तत्र चानुपपत्तिरुक्तेति शेषः । संबन्धिनोः सदसतोरेवासंयोगेऽपि समवायः सदसतोः संभवेदिति तस्य नित्यत्वादन्यतरसंबन्धाभावेऽपि स्थितेरावश्यकत्वादिति शङ्कते—**नन्विति** । सदसतोर्मिथः संबन्धस्यादृष्टत्वान्नेति निराचष्टे—**न वन्ध्येति** । घटादिप्रागभावस्यात्यन्ताभावत्वाभावाद्वन्ध्यापुत्रादिविलक्षणतया स्वकारणसंबन्धः सिध्यतीत्याशङ्क्याह—**घटादेरिति** । उभयत्राभावस्वभावाविशेषेऽपि कस्यचित्कारणसंबन्धो नेतरस्येति विशेषे हेत्वभावान्न प्रागभावस्य कारणसंबन्धः संभवतीत्यर्थः । घटादिप्रागभावस्य सप्रतियोगिकत्वं वन्ध्यापुत्रादेर्नैवमिति विशेषमाशङ्क्य दूषयति—**एकस्येति** । प्रागभावस्यैवप्रध्वंसाभावादेरपि सप्रतियोगिकत्वाविशेषे स्वकारणेन संबन्धाविशेषः स्यादित्यर्थः । प्रागभावप्रध्वंसाभावयोर्विशेषाभावे फलितमाह—**असति चेति** । कपालशब्दो घटकारणीभूतमृदवयवविषयः, सर्वो व्यवहारो घटाश्रितो जन्मनाशादिव्यवहारः । प्रध्वंसाभावस्तु घटस्यैवाभावत्वे सत्यपि न घटत्वमापद्यते नापि कारणेन संबध्यते न चोत्पत्त्यादिव्यवहारयोग्यो भवतीत्येतदयुक्तं प्रागभावेनास्य विशेषाभावादित्याह—**नत्विति** । असमञ्जसमित्यनेनेतिशब्दः संबध्यते । असमञ्जसान्तरमाह—**प्रध्वंसादीति** । अन्योन्याभावात्यन्ताभावावादिपदार्थौ । क्वचिदिति देशकालयोर्ग्रहणं, व्यवहारो जन्मादिरेव, प्रागभावो नोत्पत्त्यादिव्यवहारयोग्योऽभावत्वात्प्रध्वंसादिवदित्यर्थः । प्रागभावस्य घटाभावानभ्युपगमादनुमानं सिद्धसाधनमिति शङ्कते—**नन्विति** । अभावस्य भावापत्त्यनभ्युपगमे भावस्यैव भावापत्तिरित्यनिष्टं स्यादिति दूषयति—**भावस्यैवेति** । तस्य तदापत्तेरयोग्यत्वे दृष्टान्तमाह—**यथेति** । अभावस्य भावापत्तिरनिष्टेति दार्ष्टान्तिकं स्पष्टयति—**एतदपीति** । आरम्भवादोक्तं दोषं परिणामवादेऽपि संचारयति—**सांख्यस्येति** । धर्मः परिणामः । असतोऽपूर्वपरिणामस्योत्पत्तेः सतश्च पूर्वपरिणामस्य नाशादसदसदेव

४ मधुसूदनीव्याख्या ।

युद्धादि त्रिगुणात्मकत्वेन सामान्येन बन्धुवधादिनिमित्तत्वेन विशेषेण च सदोषमपि न त्यजेत् । सर्वकर्मत्यागासमर्थत्वात् ।

५ भाष्योत्कर्षदीपिका ।

स्वधर्माख्यस्य कर्मणः परित्यागेन परधर्मानुष्ठानेऽपि सर्वकर्मणां दोषवत्त्वाद्दोषान्नैवमुच्यते । भयावहश्च परधर्मः । नच शक्यतेऽज्ञे-

६ श्रीधरीव्याख्या ।

व्याप्ता एव । यथा सहजेन धूमेनाग्निरावृतस्तद्वत् । अतो यथाग्नेर्धूमरूपं दोषमपाकृत्य प्रताप एव तमःशीतादिनिवृत्तये सेव्यते तथा

१ श्रीमच्छांकरभाष्यम् ।

विनाशाङ्गीकरणाद्वैशेषिकपक्षान्न विशिष्यते । अभिव्यक्तितिरोभावाङ्गीकरणेऽप्यभिव्यक्तितिरोभावयोर्विद्यमानत्वाविद्यमानत्वनिरूपणे पूर्ववदेव प्रमाणविरोधः । एतेन कारणस्यैव संस्थानमुत्पत्त्यादीत्येतदपि प्रत्युक्तम् । पारिशेष्यात्सदेकमेव वस्त्वविद्ययोत्पत्तिविनाशादिधर्मैर्नटवदनेकधा विकल्प्यत इतीदं भागवतं मतमुक्तं नासतो विद्यते भाव इत्यस्मिञ्श्लोके । सत्प्रत्ययस्याव्यभिचाराद्व्यभिचाराच्चेतरेषामिति । कथं तर्हि आत्मनोऽविक्रियत्वेऽशेषतः कर्मणस्त्यागो नोपपद्यत इति । यदि वस्तुभूता गुणाः यदि वाविद्याकल्पितास्तद्धर्मः कर्म तदात्मन्यविद्याध्यारोपितमेवेत्यविद्वान्नहि कश्चित्क्षणमप्यशेषतस्त्यक्तुं शक्नोतीत्युक्तम् । विद्वांस्तु पुनर्विद्ययाऽविद्यायां निवृत्तायां शक्नोत्येवाशेषतः कर्म परित्यक्तुमविद्याध्यारोपितस्य शेषानुपपत्तेः । नहि तैमिरिकदृष्ट्याध्यारोपितस्य द्विचन्द्रादेस्तिमिरापगमे शेषोऽवतिष्ठते । एवंच सतीदं वचनमुपपन्नं सर्वकर्माणि मनसेत्यादि । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः', 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति च ॥ ४८ ॥ या च कर्मजा

---

२ आनन्दगिरिव्याख्या ।

सच्च सदेवेति व्यवस्थात्रापि दुर्घटेत्यर्थः । ननु कार्यं कारणात्मना प्रागपि सदेवाव्यक्तं कारकव्यापाराद्व्यज्यते तेन व्यक्त्यव्यक्त्योर्जन्मनाशव्यवहारान्मतान्तराद्विशेषसिद्धिस्तत्राह—अभिव्यक्तीति । कारकव्यापारात्प्रागनभिव्यक्तिवदभिव्यक्तेः सत्त्वमसत्त्वं वा सत्त्वे कारकव्यापारवैयर्थ्यात्तद्विषयप्रमाणविरोधो द्वितीये पक्षान्तरवदत्यन्तासतस्तन्निर्वर्त्यत्वायोगे स एव दोषः कारकव्यापारादूर्ध्वं व्यक्तिवदव्यक्तेरपि सत्त्वे स एव दोषोऽसत्त्वेपि सतोऽसत्त्वानङ्गीकारान्मानमेयव्यवहारे न क्वापि विश्वासः सत्सदेवासदसदेवेत्यनिर्धारणादित्यर्थः । सांख्यपक्षप्रतिक्षेपन्यायेन पक्षान्तरमपि प्रतिक्षिप्तमित्याह—एतेनेति । कारणस्यैव कार्यरूपापत्तिरुत्पत्तिस्तस्यैव तद्रूपत्यागेन स्वरूपापत्तिर्नाश इत्येतदपि न पूर्वरूपे स्थिते नष्टे च परस्य पररूपापत्तेरनुपपत्तेः, न च प्राप्तं रूपं स्थितेन नष्टेन वा त्यक्तुं शक्यमित्यर्थः । आरम्भवादे परिणामवादेषु चोत्पत्त्यादिव्यवहारानुपपत्तौ परिशेषायातं दर्शयति—पारिशेष्यादिति । एकस्यानेकविधविकल्पानुपपत्तिमाशङ्क्याह—अविद्ययेति । अस्यापि मतस्य भगवन्मतानुरोधित्वाभावादविशिष्टा त्याज्यतेत्याशङ्क्याह—इतीदमिति । उक्तमेव भगवन्मतं विशदयति—सत्प्रत्ययस्येति । सदेकमेव वस्तु स्यादिति शेषः । इतरेषां विकारप्रत्ययानां रजतादिधीवदर्थव्यभिचारादविद्यया तदेव सद्वस्त्वनेकधा विकल्प्यत इत्याह—व्यभिचाराच्चेति । इति मतं श्लोके दर्शितमिति संबन्धः । आत्मनश्चेदविक्रियत्वं भगवतेष्टं तर्हि सर्वकर्मपरित्यागोपपत्तेः सहजस्यापि कर्मणस्त्यागसिद्धिरिति शङ्कते—कथमिति । किं कार्यकारणात्मनां गुणानामकल्पितानां कल्पितानां वा कर्म धर्मत्वेनेष्टं द्विधापि निःशेषकर्मत्यागो विदुषोऽविदुषो वा नाद्य इत्याह—यदीत्यादिना । अविद्यारोपितमेव गुणशब्दितकार्यकारणारोपद्वारा कर्मेति शेषः । द्वितीयं प्रत्याह—विद्वांस्त्विति । आरोपशेषवशाद्विदुषोऽपि नाशेषकर्मत्यागसिद्धिरित्याशङ्क्याह—अविद्येति । तामेवानुपपत्तिं दृष्टान्तेन स्पष्टयति—नहीति । विदुषोऽशेषकर्मत्यागे पाञ्चमिकमपि वचोऽनुकूलमित्याह—एवंचेति । अविदुषः सर्वकर्मत्यागायोगे च प्रकृताध्यायस्थमेव वाक्यमनुगुणमित्याह—स्वे स्व इति । वाक्यान्तरमपि तत्रैवार्थे युक्तार्थमित्याह—स्वकर्मणेति ॥ ४८ ॥ विदुषः सर्वकर्मत्यागेऽपि नाविदुषस्तथेत्युक्तम्, इदानीमुक्तमनूद्यानन्तरश्लोकतात्पर्यमाह—या च कर्मजेति । चोऽवधारणार्थो भिन्नक्रमो वक्तव्य इत्यत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कर्माणि दोषेण हिंसादिना आवृता एव । यस्माच्च परधर्मो भयावहस्तस्मात्स्वकर्म न त्यजेदित्यर्थः ॥ ४८ ॥ स्वकर्म-

४ मधुसूदनीव्याख्या ।

सर्वकर्मत्यागसमर्थस्तु शुद्धान्तःकरणस्त्यजेदेवेत्यभिप्रायः ॥ ४८ ॥ कः पुनः सर्वकर्मत्यागासमर्थो यो नित्यानित्यवस्तुविवेकजेनेहामुत्रार्थभोगवैराग्येण शमदमादिसंपन्नः कर्मजां सिद्धिमशुद्धिपरिक्षयद्वारा मुमुक्षुः शुद्धब्रह्मात्मैक्यजिज्ञासां प्राप्तः स स्वेष्टमोक्षहेतुब्रह्मात्मैक्यज्ञानसाधनवेदान्तवाक्यश्रवणादि कर्तुं सर्वविक्षेपनिवृत्त्या तच्छेषभूतं सर्वकर्मसंन्यासं श्रुतिस्मृतिविहितं कुर्यादेव । 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' इति श्रुतेः । 'सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' इति स्मृतेश्च उपरतस्त्यक्तसर्वकर्मा भूत्वात्मानं पश्येदात्मदर्शनाय वेदान्तवा-

५ भाष्योत्कर्षदीपिका ।

नाशेषतः कर्म त्यक्तुं यतस्तस्मान्न त्यजेदित्यर्थः ॥ ४८ ॥ ज्ञाननिष्ठायोग्यतालक्षणायाः कर्मजायाः सिद्धेः फलभूतां ज्ञाननि-

६ श्रीधरीव्याख्या ।

कर्मणोऽपि दोषांशं विहाय गुणांश एव सत्त्वशुद्धये सेव्यत इत्यर्थः ॥ ४८ ॥ ननु कथं कर्मणि क्रियमाणे दोषांशप्रहाणेन गुणांश एव

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

१ श्रीमच्छांकरभाष्यम्।

सिद्धिरुक्ता ज्ञाननिष्ठायोग्यतालक्षणा तस्याः फलभूता नैष्कर्म्यसिद्धिर्ज्ञाननिष्ठालक्षणा वक्तव्येति श्लोक आरभ्यते—असक्तबुद्धिरिति। असक्ता सङ्गरहिता बुद्धिरन्तःकरणं यस्य सोऽसक्तबुद्धिः सर्वत्र पुत्रदारादिष्वासक्तिनिमित्तेषु, जितात्मा जितो वशीकृत आत्मान्तःकरणं यस्य स जितात्मा विगतस्पृहो विगता स्पृहा तृष्णा देहजीवितभोगेषु यस्मात्स विगतस्पृहः। य एवंभूत आत्मज्ञः स नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मान्निष्क्रियब्रह्मात्मसंबोधात्स निष्कर्मा तस्य भावो नैष्कर्म्यं नैष्कर्म्यं च तत्सिद्धिश्च सा नैष्कर्म्यसिद्धिः नैष्कर्म्यस्य वा सिद्धिर्निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निष्पत्तिस्तां नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्मजसिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां संन्यासेन सम्यग्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसंन्यासेनाधिगच्छति प्राप्नोति। तथाचोक्तं 'सर्वकर्माणि

२ आनन्दगिरिव्याख्या।

संबध्यते। साधनान्युपदिश्य नैष्कर्म्यसिद्धिं व्यपदिशति—**असक्तेति**। पुत्रादिविषये चेतसः सङ्गाभावेऽपि तस्यास्वाधीनत्वमाशङ्क्याह—**जितात्मेति**। असक्तिमुक्त्वा स्पृहाभावं वदता पुनरुक्तिरिष्टेत्याशङ्क्याह—**देहेति**। उक्तमनूद्य तत्फलं लम्भयति—**य एवमिति**। कर्मणां निर्गतौ हेतुमाह—**निष्क्रियेति**। सम्यग्ज्ञानार्थत्वेन नैष्कर्म्यसिद्धिशब्दं व्याख्यायार्थान्तरमाह—**नैष्कर्म्यस्येति**। प्रकर्षमेव प्रकटयति—**कर्मजेति**। संन्यासस्य श्रुतिस्मृत्योः

३ नीलकण्ठव्याख्या (चतुर्धरी)।

णामीश्वरे समर्पणं कर्तव्यमित्युक्त्वानन्तरश्लोकद्वयेन स्वकर्मणामावश्यकत्वमुक्त्वा तेषां परमेश्वरेऽर्पणेन किं फलं स्यादित्यत आह—**असक्तेति**। संन्यासेन 'कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन। सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः' इति पूर्वोक्तेनामुख्यसात्त्विकत्यागेन। असक्तबुद्धिः पुत्रदारादिषु सक्तिपदेषु आसक्तिवर्जिता बुद्धिर्यस्य सोऽसक्तबुद्धिः विरक्त इत्यर्थः। अतएव जितात्मा शान्तचित्तः। विगतस्पृहः विशेषेण गता स्पृहा तृष्णा यस्य तादृशो भूत्वा नैष्कर्म्यसिद्धिं कार्त्स्न्येन स्वरूपतः कर्मत्यागलक्षणां पारिव्राज्यसिद्धिं परमां पूर्वोक्तामुख्यत्यागापेक्षयाति-

४ मधुसूदनीव्याख्या।

क्यानि विचारयेदिति श्रुत्यर्थः। एतादृश एव 'ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुत्या धर्मस्कन्धत्रयविलक्षणत्वेन प्रतिपादितः परमहंसपरिव्राजकः परमहंसपरिव्राजकं कृतकृत्यं गुरुमुपसृत्य वेदान्तवाक्यविचारसमर्थो यमुद्दिश्य 'अथातो ब्रह्मजिज्ञासा' इत्यादिचतुर्लक्षणमीमांसा भगवता बादरायणेन समारम्भि। कीदृशोऽसावित्याह—सर्वत्र पुत्रदारादिषु सक्तिनिमित्तेष्वप्यसक्तबुद्धिरहमेषां ममैत इत्यभिष्वङ्गरहिता बुद्धिर्यस्य सः। यतो जितात्मा विषयेभ्यः प्रत्याहृत्य वशीकृतान्तःकरणः। विषयरागे सति कथं प्रत्याहरणं तत्राह—विगतस्पृहः, देहजीवितभोगेष्वपि वाञ्छारहितः सर्वदृश्येषु दोषदर्शनेन नित्यबोधपरमानन्दरूपमोक्षगुणदर्शनेन च सर्वतो विरक्त इत्यर्थः। य एवं शुद्धान्तःकरणः 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति वचनप्रतिपादितां कर्मजामपरमां सिद्धिं ज्ञानसाधनवेदान्तवाक्यविचाराधिकारलक्षणां ज्ञाननिष्ठायोग्यतां प्राप्तः स संन्यासेन शिखायज्ञोपवीतादिसहितसर्वकर्मत्यागेन हेतुना तत्पूर्वकेण विचारेणेत्यर्थः। नैष्कर्म्यसिद्धिं निष्कर्म ब्रह्म तद्विषयं विचारपरिनिष्पन्नं ज्ञानं नैष्कर्म्यं तद्रूपां सिद्धिं परमां कर्मजाया अपरमसिद्धेः फलभूतामधिगच्छति साधनपरिपाकेण प्राप्नोति। अथवा संन्यासेनेतीत्थंभूतलक्षणे तृतीया। सर्वकर्मसंन्यासरूपां नैष्कर्म्यसिद्धिं ब्रह्मसाक्षात्कारयोग्यतां नैर्गुण्यलक्षणां सिद्धिं परमां

५ भाष्योत्कर्षदीपिका।

ष्ठालक्षणां नैष्कर्म्यसिद्धिमाह—**असक्तेति**। सर्वत्र सक्तिनिमित्तेषु पुत्रदारादिष्वसक्तबुद्धिरसक्ता सङ्गरहिता बुद्धिरन्तःकरणं यस्य स यतो जितो वशीकृत आत्मान्तःकरणं यस्य स जितात्मा। अतएव विगता स्पृहा देहजीवनभोगेषु तृष्णा यस्मात्स य एवंभूत आत्मज्ञः स नैष्कर्म्यसिद्धिं निर्गतानि कर्माणि यस्मात् निष्क्रियात्मसंबोधात् स निष्कर्मा तस्य भावो नैष्कर्म्यं तच्च तत्सिद्धिश्च सा नैष्कर्म्यस्य निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निर्वृत्तिरिति वा तां परमां कर्मजायाः सिद्धेः प्रकृष्टां सद्योमुक्त्यवस्थानरूपां संन्यासेन सम्यग्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसंन्यासेनाधिगच्छति प्राप्नोति। तदुक्तं 'सर्वकर्माणि मनसा संन्यस्यास्ते

६ श्रीधरीव्याख्या।

संपत्स्यत इत्यपेक्षायामाह—**असक्तेति**। असक्ता सङ्गशून्या बुद्धिर्यस्य, जितात्मा निरहंकारः, विगतस्पृहो विगता स्पृहा फलविषयेच्छा यस्मात्स एवंभूतेन 'स त्यागः सात्त्विको मत' इत्येवं पूर्वोक्तेन कर्मासक्तितत्फलयोस्त्यागलक्षणेन संन्यासेन नैष्कर्म्यसिद्धिं सर्वकर्मनिवृत्तिलक्षणां सत्त्वशुद्धिमधिगच्छति। यद्यपि सङ्गफलयोस्त्यागेन कर्मानुष्ठानमपि नैष्कर्म्यमेव, कर्तृत्वाभिनिवेशाभावात्। तदुक्तम्—'नैव किंचि-

**सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।**
**समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥**

१ श्रीमच्छांकरभाष्यम् ।

मनसा संन्यस्य नैव कुर्वन्न कारयन्नास्ते' इति ॥ ४९ ॥ पूर्वोक्तेन स्वकर्मानुष्ठानेनेश्वराभ्यर्चनरूपेण जनितां प्रागुक्तलक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकज्ञानस्य केवलात्मज्ञाननिष्ठारूपा नैष्कर्म्यलक्षणा सिद्धिर्येन क्रमेण भवति तद्वक्तव्यमित्याह—सिद्धिमिति । सिद्धिं प्राप्तः स्वकर्मणेश्वरं समभ्यर्च्य तत्प्रसादजां कायेन्द्रियाणां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः, सिद्धिं प्राप्त इति तदनुवाद उत्तरार्थः । किं तदुत्तरं यदर्थोऽनुवाद इत्युच्यते । यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानमाप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधारयेत्येतत् । किं विस्तरेण नेत्याह समासेनैव संक्षेपेणैव हे कौन्तेय । यथा ब्रह्म प्राप्नोति तथा निबोधेति अनेन या प्रतिज्ञाता ब्रह्मप्राप्तिस्तामिदंतया दर्शयितुमाह—निष्ठा ज्ञानस्य या परेति । निष्ठा पर्यवसानं परिसमाप्तिरित्येतत् । कस्य ब्रह्मज्ञानस्य या परा परिसमाप्तिः । कीदृशी सा, यादृशमात्मज्ञानम् । कीदृक् तत्, यादृश आत्मा । कीदृशोऽसौ, यादृशो भगवतोक्त उपनिषद्वाक्यैश्च न्यायतश्च । ननु

२ आनन्दगिरिव्याख्या ।

सम्यग्दर्शनत्वाप्रसिद्धेरयुक्तं तादात्म्यमित्याशङ्क्य पक्षान्तरमाह—तत्पूर्वकेणेति । संन्यासान्नैष्कर्म्यप्राप्तिरित्यत्र वाक्योपक्रमानुकूल्यमाह—तथाचेति ॥ ४९ ॥ ज्ञानप्राप्तियोग्यतावतो जातसम्यग्धियस्तत्फलप्राप्तौ मुक्तावुक्तायां वक्तव्यशेषो नास्तीत्याशङ्क्याह—पूर्वोक्तेनेति । क्रमाख्यं वस्तु तदित्युच्यते । सिद्धिं प्राप्त इत्युक्तमेव कस्मादनूद्यते तत्राह—तदनुवाद इति । उत्तरमेव प्रश्नपूर्वकं स्फोरयति—किं तदित्यादिना । ज्ञाननिष्ठाप्राप्तिक्रमस्य विस्तरेणोक्तौ दुर्बोधत्वमाशङ्क्य परिहरति—किमिति । चतुर्थपादस्य पूर्वेणासङ्गतिमाशङ्क्याह—यथेति । निष्ठायाः सापेक्षत्वात्प्रतिसंबन्धि प्रतिनिर्देष्टव्यमित्याह—कस्येति । या ब्रह्मज्ञानस्य परा निष्ठा सा प्रकृतस्य ज्ञानस्य निष्ठेत्याह—ब्रह्मेति । तस्य परा निष्ठा न प्रसिद्धेति कृत्वा साधनानुष्ठानाधीनतया साध्येति मत्वा पृच्छति—कीदृशीति । प्रसिद्धमात्मज्ञानमनुरुध्य ब्रह्मज्ञाननिष्ठा सुज्ञानेत्याह—यादृशमिति । तत्रापि प्रसिद्धिरसिद्धेति शङ्कते—कीदृगिति । अर्थेनैव विशेषो हीति न्यायेनोत्तरमाह—यादृश इति । तस्मिन्नपि विप्रतिपत्तेरप्रसिद्धिमभिसंधाय पृच्छति—कीदृश इति । भगवद्वाक्यान्युपनिषद्वाक्यानि चाश्रित्य परिहरति—यादृश इति । न जायते म्रियते वेत्यादीनि वाक्यानि ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

श्रेष्ठां न द्वेष्ट्यकुशलं कर्मेति श्लोके व्याख्यातां अधिगच्छति प्राप्नोति ॥ ४९ ॥ स्वकर्मनिरतः सिद्धिं यथा विन्दतीत्येतत्प्रतिज्ञातमुपपादितम् । इदानीं नैष्कर्म्यसिद्धिं प्राप्तोऽपि परिव्राट् वशीकारसंज्ञकवैराग्यवान् यथा ब्रह्म प्राप्नोति तथा वक्तुं प्रतिजानीते—सिद्धिमिति । सिद्धिं नैष्कर्म्यसिद्धिं निबोध बुध्यस्व मे । मद्वचनात्समासेन संक्षेपेणैव हे

४ मधुसूदनीव्याख्या ।

पूर्वस्याः सिद्धेः सात्त्विक्याः फलभूतामधिगच्छतीत्यर्थः ॥ ४९ ॥ प्रागुक्तसाधनसंपन्नस्य सर्वकर्मसंन्यासिनो ब्रह्मज्ञानोत्पत्तौ साधनक्रममाह—स्वकर्मणेश्वरमाराध्य तत्प्रसादजां सर्वकर्मत्यागपर्यन्तां ज्ञानोत्पत्तियोग्यतारूपां सिद्धिमन्तःकरणशुद्धिं प्राप्तो यथा ब्रह्म प्राप्नोति येन प्रकारेण शुद्धमात्मानं साक्षात्करोति तथा तं प्रकारं निबोध मे मद्वचनादवधारयानुष्ठातुम् । किमतिविस्तरेण नेत्याह—समासेन संक्षेपेणैव नतु विस्तरेण हे कौन्तेय । तदवधारणे किं स्यादित्यत आह—निष्ठा ज्ञानस्य या परा,

५ भाष्योत्कर्षदीपिका ।

सुखं वशी । नवद्वारे पुरे देही नैव कुर्वन्न कारयन्' इति ॥ ४९ ॥ पूर्वोक्तेन स्वकर्मानुष्ठानेनेश्वराभ्यर्चनरूपेण जनितां केवलज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकविज्ञानस्य केवलात्मज्ञाननिष्ठा नैष्कर्म्यलक्षणा प्रकृष्टा सिद्धिर्येन क्रमेण भवति तं श्रावयितुमाह । सिद्धिं स्वकर्मणेश्वरमभ्यर्च्य तत्प्रसादजां कायादीनां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानं प्राप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधारय । किं विस्तरेण, नेत्याह—समासेनैव संक्षेपेणैव । यं प्रकारमाश्रित्य मातृगर्भेण न संबध्यते तन्निबोधेति द्योतनार्थं कौन्तेयेति संबोधनम् । प्रतिज्ञातां ब्रह्मप्राप्तिमिदन्तया दर्शयितुमाह—निष्ठेति । या ब्रह्मप्राप्तिर्ज्ञानस्यात्मज्ञानस्य परा निष्ठा परा परिसमाप्तिः । 'अव्य-

६ श्रीधरीव्याख्या ।

स्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिश्लोकचतुष्टयेन, तथाप्यनेनोक्तलक्षणेन संन्यासेन परमां नैष्कर्म्यसिद्धिम् 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इत्येवंलक्षणां पारमहंस्यापरपर्यायां प्राप्नोति ॥ ४९ ॥ एवंभूतस्य परमहंसस्य ज्ञाननिष्ठया ब्रह्मभावप्रकारमाह—सिद्धिं प्राप्त इति षड्भिः । नैष्कर्म्यसिद्धिं प्राप्तः सन् यथा येन प्रकारेण ब्रह्म प्राप्नोति तथा तं प्रकारं संक्षेपेणैव मे वच-

१ श्रीमच्छांकरभाष्यम् ।

**विषयाकारं ज्ञानं न विषयो नाप्याकारवानात्मेष्यते क्वचित्, ननु 'आदित्यवर्णो भारूपः स्वयंज्योतिः' इत्याकारवत्त्वमात्मनः श्रूयते, न तमोरूपत्वप्रतिषेधार्थत्वात्तेषां वाक्यानाम् । द्रव्यगुणाद्याकारप्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थान्यादित्यवर्णमित्यादिवाक्यानि, अरूपमिति च विशेषतो रूपप्रतिषेधात् । अविषयत्वाच्च 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । अशब्दमस्पर्शम्' इत्याद्यैः । तस्मादात्माकारं ज्ञानमित्यनुपपन्नम् । कथं तर्ह्यात्मनो ज्ञानम् । सर्वं हि यद्विषयं ज्ञानं तत्तदाकारं भवति निराकारश्चात्मेत्युक्तम् । ज्ञानात्मनोश्चोभयोर्निराकारत्वे कथं तद्भावनानिष्ठेति । न, अत्यन्तनिर्मलत्वस्वच्छत्वसूक्ष्मत्वोपपत्तेरात्मनो बुद्धेश्चात्मसमनैर्मल्याद्युपपत्तेरात्मचैतन्याकाराभासत्वोपपत्तिः । बुद्ध्याभासं मनस्तदाभासानीन्द्रियाणीन्द्रियाभासश्च देहोऽतो लौकिकैर्देहमात्र एवात्मदृष्टिः क्रियते । देहचैतन्यवादिनश्च लोकायतिकाश्चैतन्यविशिष्टः कायः**

२ आनन्दगिरिव्याख्या ।

कूटस्थत्वमसङ्गत्वमित्यादिन्यायः । ज्ञानस्य विषयाकारत्वादात्मनश्चाविषयत्वादनाकारत्वाच्च तदाकारज्ञानायोगादात्मप्रसिद्धावपि नात्मज्ञानप्रसिद्धिरिति शङ्कते—**नन्विति** । आकारवत्त्वमात्मनः श्रुतिसिद्धमिति सिद्धान्ती शङ्कते—**नन्वादित्येति** । उक्तवाक्यानामन्यार्थत्वदर्शनेन पूर्ववादी परिहरति—**नेत्यादिना** । संग्रहवाक्यं प्रपञ्चयति—**द्रव्येति** । इतश्चाकारवत्त्वमात्मनो नास्तीत्याह—**अरूपमिति** । यदात्मनो विषयत्वाभावात्तद्विषयं ज्ञानं न संभवतीत्युक्तं तदुपपादयति—**अविषयत्वाच्चेति** । आत्मनोऽविषयत्वे श्रुतिमुदाहरति—**नेत्यादिना** । संदृशे सम्यग्दर्शनविषयत्वायास्यात्मनो रूपं न तिष्ठतीत्यर्थः । तदेव करणागोचरत्वेनोपपादयति—**नेति** । शब्दादिशून्यत्वाच्चात्मा विषयो न भवतीत्याह—**अशब्दमिति** । आत्मनो विषयत्वाकारवत्त्वयोरभावे फलितमाह—**तस्मादिति** । ज्ञानस्यात्माकारत्वाभावे सत्यात्मज्ञानमिति व्यपदेशासिद्धिरित्येकदेशी शङ्कते—**कथं तर्हीति** । कात्रानुपपत्तिरित्याशङ्क्याह—**सर्वं हीति** । आत्मनोऽपि तर्हि विषयत्वेन ज्ञानस्य तदाकारत्वं स्यादित्याशङ्क्याह—**निराकारश्चेति** । आत्मनो विषयत्वराहित्यं चकारार्थः । आत्मवत्तज्ज्ञानस्यापि तर्हि निराकारत्वं भविष्यतीत्यत्राह—**ज्ञानेति** । तच्छब्देनात्मज्ञानं गृह्यते । तस्य भावना पौनःपुन्येनानुसन्धानं तस्यानिष्ठा समाप्तिरात्मसाक्षात्कारदार्ढ्यं नचैतत्सर्वमात्मनो ज्ञानस्य वा निराकारत्वे सिध्यतीत्यर्थः । ज्ञानात्मनोः साम्योपन्यासेन सिद्धान्ती समाधत्ते **नेत्यादिना** । यथोक्तसाम्यानुसारादात्मचैतन्याभासव्याप्ता ज्ञानपरिणामवती बुद्धिः साभासबुद्धिव्याप्तं मनः साभासमनोव्याप्तानीन्द्रियाणि साभासेन्द्रियव्याप्तः स्थूलो देहः । तत्र लौकिकभ्रान्तिं प्रमाणयति—**अत इति** । आत्मदृष्टेर्देहमात्रे दृष्टत्वात्तत्र चैतन्याभासव्याप्तिरिन्द्रियद्वारा कल्प्यत इन्द्रियेषु च तद्दृष्टिदर्शनाच्चैतन्याभासवत्त्वं मनोद्वारा सिध्यति मनसि चात्मदृष्टेश्चैतन्याभासवत्त्वं बुद्धिद्वारा लभ्यते बुद्धौ चात्मदृष्टेर्ज्ञानद्वारा चैतन्याभाससिद्धिरित्यर्थः । देहे लौकिकमात्मत्वदर्शनं न्यायाभावादुपेक्षितमित्याशङ्क्याह—**देहेति** । तथापि कथमिन्द्रियाणां न्यायहीनमात्मत्वमिष्टमित्या-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

कौन्तेय, या यत्प्राप्यं ब्रह्म । विधेयापेक्षं स्त्रीत्वम् । ज्ञानस्य परा निष्ठा यदपेक्षयाऽन्यज्ज्ञेयं आन्तरतरं नास्तीत्यर्थः

४ मधुसूदनीव्याख्या ।

ज्ञानस्य विचारपरिनिष्पन्नस्य निष्ठा परिसमाप्तिः । यदनन्तरं साधनान्तरं नानुष्ठेयमस्ति । परा श्रेष्ठा सर्वान्त्या वा साक्षान्मोक्षहे-

५ भाष्योत्कर्षदीपिका ।

त्योयमचिन्त्योयमविकार्योयमुच्यते' । 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' । 'न जायते म्रियते वा' 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'तत्त्वमसि' इत्यादिभगवद्वाक्यैरुपनिषद्वाक्यैश्चोक्तः कूटस्थत्वमसङ्गत्वमित्यादिन्यायाच्च प्रदर्शितो य आत्मा तस्य ज्ञानं तु न साकारवस्तुविषयकज्ञानवद्भवितुमर्हति । आत्मन आकारवत्त्वस्यानिष्टत्वात् । 'न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम्' 'अशब्दमस्पर्शमरूपं' इत्यादिश्रुतेः । 'आदित्यवर्णो भारूपः स्वयंज्योतिः' इत्यादिवाक्यानि तु द्रव्यगुणाद्याकारप्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थानि । नन्वेवं तर्हि कथं निराकारस्यात्मनो ज्ञानं यतो यद्विषयं भवति यज्ज्ञानं तत्तदाकारं ज्ञानात्मनोश्चोभयोर्निराकारत्वेन कथमात्मज्ञानस्य पौनःपुन्येनानुसंधानात्मिका भावना निष्ठेतिचेदुच्यते । आत्मज्ञानमित्यात्मविषयं ज्ञानं न विधीयते, चैतन्यस्वरूपस्यात्मनः सुप्रसिद्धत्वेनाज्ञातत्वाभावात् । नहि यस्य चैतन्याभासता बुद्ध्यादिदेहान्ते आत्मत्वभ्रान्तिकारणं तस्याज्ञातत्वं शक्यं वक्तुम् । तस्मान्नामरूपाद्यनात्माध्यारोपणनिवृत्तिरेव प्रयत्नेन कार्या । बाह्याकारभेदनिवृत्तेरेवात्मस्वरूपावलम्बने कारणत्वात् । नात्मचैतन्यविज्ञानं तस्यात्यन्तप्रसिद्धत्वात् । नन्वत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतममात्मभूतमप्यप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यदिव ब्रह्म सर्वेषां कथं प्रतिभातीतिचेत् । अविद्याकल्पितनामरूपविशेषाकारापहतबुद्धित्वेनाविवेकित्वात्तेषामिति गृहाण । बाह्याकारनिवृत्तबुद्धीनां विवेकिनां तु लब्धगुर्वात्मप्रसादानां नातःपरं सुप्रसिद्धं

१ श्रीमच्छांकरभाष्यम् ।

**पुरुष इत्याहुः, तथान्य इन्द्रियचैतन्यवादिनः । अन्ये, मनश्चैतन्यवादिनः । अन्ये बुद्धिचैतन्यवादिनः । ततोऽप्यन्तरव्यक्तमव्याकृताख्यमविद्यावस्थमात्मत्वेन प्रतिपन्नाः केचित् । सर्वत्र हि बुद्ध्यादिदेहान्ते आत्मचैतन्याभासतात्मभ्रान्तिकारणमित्यतश्च आत्मविषयं ज्ञानं न विधातव्यं । किं तर्हि नामरूपाद्यनात्माध्यारोपणनिवृत्तिरेव कार्या नात्मचैतन्यविज्ञानम्, अविद्याध्यारोपितसर्वपदार्थाकारैरेव विशिष्टतया गृह्यमाणत्वात् । अतएव हि विज्ञानवादिनो बौद्धा विज्ञानव्यतिरेकेण वस्त्वेव नास्तीति प्रतिपन्नाः प्रमाणान्तरनिरपेक्षतां च स्वसंविदितत्वाभ्युपगमेन । तस्मादविद्याध्यारोपणनिराकरणमात्रं ब्रह्मणि कर्तव्यं नतु ब्रह्मज्ञाने यत्नोऽत्यन्तप्रसिद्धत्वात् । अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धित्वादत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतरमात्मभूतमप्यप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यदिव च प्रतिभात्यविवेकिनाम् । बाह्याकारनिवृत्तबुद्धीनां तु लब्धगुर्वात्मप्रसादानां नातःपरं सुखं सुप्रसिद्धं सुविज्ञेयं स्वासन्नमस्ति । तथाचोक्तं 'प्रत्यक्षावगमं धर्म्यम्' इत्यादि । केचित्तु पण्डितंमन्या निराकारत्वादात्मवस्तु नोपैति बुद्धिरतो दुःसाध्या सम्यग्ज्ञाननिष्ठेत्याहुः । सत्यं, एवं गुरुसंप्रदायरहितानामश्रुतवेदान्तानामत्यन्तबहिर्विषयासक्तबुद्धीनां सम्यक्प्रमाणेष्वकृतश्रमाणाम्, तद्विपरीतानां तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धिर्नितरां दुःसंपाद्यात्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः । यथा चैतदेवमेव नान्यथेत्यवोचाम । उक्तं च भगवता 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति । तस्माद् बाह्याकारभेदबुद्धिनिवृत्तिरेवात्मस्वरूपालम्बने कारणम् । नह्यात्मा नाम कस्यचित्कदा-**

२ आनन्दगिरिव्याख्या ।

शङ्काह—**तथेति** । तथापि मनसो यदात्मत्वं तन्न्यायशून्यमित्याशङ्क्याह—**अन्य इति** । बुद्धेरात्मत्वमपि न्यायोपेतमिति सूचयति—**अन्ये बुद्धीति** । देहादौ बुध्यन्ते परमात्मत्वबुद्धिर्नान्यत्रेति नियमं वारयति—**ततोऽपीति** । तत्र हि साभासेऽन्तर्यामिणि कारणोपासकानामात्मत्वधीरस्तीत्यर्थः । बुद्ध्यादौ देहान्ते लौकिकपरीक्षकाणामात्मत्वभ्रान्तौ साधारणं कारणमाह—**सर्वत्रेति** । आत्मज्ञानस्य लौकिकपरीक्षकप्रसिद्धत्वादेव विधिविषयत्वमपि परेष्टं परास्तमित्याह—**इत्यत इति** । ज्ञानस्य विधेयत्वाभावे किं कर्तव्यं द्रष्टव्यादिवाक्यैरित्याशङ्क्याह—**किंतर्हीति** । आत्मज्ञानस्याविधेयत्वे प्रागुक्तमतःशब्दितं हेतुं विवृणोति—**अविद्येति** । देहेन्द्रियमनोबुद्ध्यव्यक्तैरुपलभ्यमानैः सहोपलभ्यते चैतन्यं नान्यथा तेषामुपलम्भो जडत्वादित्यत्र विज्ञानवादिभ्रान्तिं प्रमाणयति—**अतएवेति** । सर्वं ज्ञेयं ज्ञानव्याप्तमेव ज्ञायते तेन ज्ञानातिरिक्तं नास्त्येव वस्तु, संमतं हि स्वप्नदृष्टं वस्तु ज्ञानातिरिक्तं नास्तीति ते भ्राम्यन्तीत्यर्थः । ज्ञानस्यापि ज्ञेयत्वाज्ज्ञातृ वस्त्वन्तरमेष्टव्यमित्याशङ्क्याह—**प्रमाणान्तरेति** । ज्ञानस्य स्वेनैव ज्ञेयत्वोपगमनेनातिरिक्तप्रमाणनिरपेक्षतां च प्रतिपन्ना इति संबन्धः । ब्रह्मात्मनि ज्ञानस्य सिद्धत्वेनाविधेयत्वे फलितमाह—**तस्मादिति** । यत्नोऽत्र भावना । ब्रह्मणस्तज्ज्ञानस्य चात्यन्तप्रसिद्धत्वे कथं ब्रह्मण्यन्यथा प्रथा लौकिकानामित्यत्राह—**अविद्येति** । यथाप्रतिभासं दुर्विज्ञेयत्वादिरूपमेव ब्रह्म किं न स्यात्तत्राह—**बाह्येति** । गुरुप्रसादः शुश्रूषया तोषितबुद्धेराचार्यस्य करुणातिरेकादेव तत्त्वं बुध्यतामिति निरवग्रहोऽनुग्रहः, आत्मप्रसादस्त्वधिगतपदशक्तिवाक्यतात्पर्यस्य श्रौतयुक्त्यनुसंधानादात्मनो मनसो विषयव्यावृत्तस्य प्रत्यगेकाग्रतया तत्प्रावण्यमिति विवेकः । आत्मज्ञानस्यात्मद्वारा प्रसिद्धत्वे वाक्योपक्रमं प्रमाणयति—**तथाचेति** । आत्मनो निराकारत्वात्तस्मिन्बुद्धेरप्रवृत्तेः सम्यग्ज्ञाननिष्ठा न सुसंपाद्येति मतमुत्थापयति—**केचित्त्विति** । बहिर्मुखानामन्तर्मुखानां वा ब्रह्मणि सम्यग्ज्ञाननिष्ठा दुःसाध्येति विकल्प्याद्यमनूद्याङ्गीकरोति—**सत्यमिति** । पूर्वपूर्वविशेषणमुत्तरोत्तरविशेषणे हेतुत्वेन योजनीयम् । द्वितीयं दूषयति—**तद्विपरीतानामिति** । अद्वैतनिष्ठानां द्वैतविषये सम्यग्बुद्धेरतिशयेन दुःसंपाद्यत्वे हेतुमाह—**आत्मेति** । तद्व्यतिरेकेण वस्त्वन्तरस्यासत्त्वं कथमित्याशङ्क्याह—**तथाचेति** । अद्वैतमेव वस्तु द्वैतं त्वाविद्यकं नान्यथा तात्त्विकमित्येतदेवमेव यथा स्यात्तथोक्तवन्तो वयं तत्र तत्राध्यायेष्विति योजना । अन्तर्निष्ठानामद्वैतदर्शिनां द्वैते नास्ति सद्बुद्धिरित्यत्र भगवतोऽपि संमतिमाह—**उक्तंचेति** । परमतं निराकृत्य प्रकृतमुपसंहरन्नात्मनो निराकारत्वे ज्ञानस्य तदालम्बनत्वे किं कारणमित्याशङ्क्याह—**तस्मादिति** । नन्वात्मा कथंचित्सम्यग्ज्ञानक्रियासाध्यश्चेत्तस्य हेयोपादेयान्य-

५ भाष्योत्कर्षदीपिका ।

सुविज्ञेयं स्वासन्नमस्ति । तथाचोक्तं—'प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययं' इति । एतेन निराकारत्वादात्मवस्तुनो बुद्धिरुपैत्यतो दुःसाध्या सम्यग्ज्ञाननिष्ठेति केषांचित्पण्डितंमन्यानामुक्तिरपास्ता । गुरुसंप्रदायवतां श्रुतवेदान्तानां बहिर्विषयेष्वनास-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ संक्षेपेण ज्ञानस्य प्रागुक्तस्य निष्ठां वाग्जालपरिहारेण निश्चित-

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥

१ श्रीमच्छांकरभाष्यम् ।

चिदप्रसिद्धः प्राप्यो हेय उपादेयो वा । अप्रसिद्धे हि तस्मिन्नात्मनि अस्वार्थाः सर्वाः प्रवृत्तयः व्यर्थाः प्रसज्येरन् । नच देहाद्यचेतनार्थत्वं शक्यं कल्पयितुम् । नच सुखार्थं सुखं दुःखार्थं वा दुःखमात्मावगत्यवसानार्थत्वाच्च सर्वव्यवहारस्य । तस्माद्यथा स्वदेहस्य परिच्छेदाय न प्रमाणान्तरापेक्षा ततोऽप्यात्मनोऽन्तरतमत्वात्तदवगतिंप्रति न प्रमाणान्तरापेक्षेत्यात्मज्ञाननिष्ठा विवेकिनां सुप्रसिद्धेति सिद्धम् । येषामपि निराकारं ज्ञानमप्रत्यक्षं तेषामपि ज्ञानवशेनैव ज्ञेयावगतिरिति ज्ञानमत्यन्तं प्रसिद्धं सुखादिवदेवेत्यभ्युपगन्तव्यम् । जिज्ञासानुपपत्तेश्च । अप्रसिद्धं चेज्ज्ञानं ज्ञेयवज्जिज्ञास्येत । यथा ज्ञेयं घटादिलक्षणं ज्ञानेन ज्ञाता व्याप्तुमिच्छति तथा ज्ञानमपि ज्ञानान्तरेण ज्ञाव्यमाप्तुमिच्छेत् । न चैतदस्ति । अतोऽत्यन्तप्रसिद्धं ज्ञानं ज्ञाताप्यतएव प्रसिद्ध इति । तस्माज्ज्ञाने यत्नो न कर्तव्यः किं त्वनात्मन्यात्मबुद्धिनिवृत्तावेव । तस्माज्ज्ञाननिष्ठा सुसंपाद्या ॥५०॥ सेयं ज्ञानस्य परा निष्ठोच्यते कथं कार्येति—बुद्ध्याध्यवसायात्मिकया विशुद्धया मायारहितया युक्तः संपन्नो धृत्या धैर्येणात्मानं कार्यकरण-

२ आनन्दगिरिव्याख्या ।

तरकोटिनिवेशात्प्राप्तं स्वर्गादिवत्क्रियासाध्यत्वेनाप्रसिद्धत्वं नेत्याह—नहीति । आत्मत्वादेव प्रसिद्धत्वेन प्राप्तत्वादनात्मवत्तस्य हेयोपादेयत्वयोरयोगान्न क्रियासाध्यतेत्यर्थः । आत्मनश्चेदते क्रियामसिद्धत्वं तदा सर्वप्रवृत्तीनामभ्युदयनिःश्रेयसार्थानामात्मार्थत्वायोगादर्थिनोऽभावे स्वार्थत्वमप्रामाणिकं स्यादित्याह—अप्रसिद्धे हीति । ननु प्रवृत्तीनां स्वार्थत्वं देहादीनामन्यतमस्यार्थित्वेन तादर्थ्यादित्याशङ्क्य घटादिवदचेतनस्यार्थित्वायोगान्नैवमित्याह—नचेति । ननु प्रवृत्तीनां फलावसायितया सुखदुःखयोरन्यतरार्थत्वान्न स्वार्थत्वं तत्राह—न चेति । प्रवृत्तीनां सुखदुःखार्थत्वेऽपि तयोः स्वार्थत्वासिद्धेरर्थित्वेनात्मा सिध्यतीत्यर्थः । किंच सर्वापेक्षान्यायादात्मावगत्यवसानः सर्वो व्यवहारः, नचात्मन्यप्रसिद्धे यज्ञादिव्यवहारस्य तज्ज्ञानार्थत्वं तेनात्मप्रसिद्धिरेष्टव्येत्याह—आत्मेति । नन्वात्माप्रसिद्धोऽपि प्रमाणद्वारा प्रसिध्यति यत्सिध्यति तत्प्रमाणादेवेति न्यायात्तत्राह—तस्मादिति । मानमेयादिसर्वव्यवहारस्यात्मावगत्यन्तत्वोपगमात्प्रागेव प्रमाणप्रवृत्तेरात्मप्रसिद्धेरेष्टव्यत्वादित्यर्थः । आत्मावगतेरेवं स्वाभाविकत्वे विवेकवतामारोपनिवृत्त्या ज्ञाननिष्ठा सुप्रसिद्धेत्युपसंहरति—इत्यात्मेति । नन्वनाकारामेवानुमिमीमहे बुद्धिमिति वदतामनाकारमप्रत्यक्षमिच्छतां प्रागर्थावगतेरप्रसिद्धमेव ज्ञानं नेत्याह—येषामिति । सुखादिवन्नित्यानुभवगम्यं ज्ञानं नानुमेयं विषयावगत्या तदनुमितावितरेतराश्रयादिति भावः । इतश्च ज्ञानं प्रसिद्धमन्यथा तत्र जिज्ञासाप्रसङ्गान्नच ज्ञाने जिज्ञासा प्रसिद्धा प्रसिद्धे च तदयोगादित्याह—जिज्ञासेति । तदेव प्रपञ्चयति—अप्रसिद्धं चेदिति । दृष्टान्तमेव व्याचष्टे—यथेति । दार्ष्टान्तिकं विवृणोति—तथेति । इष्टापत्तिं निराचष्टे—नचेति । ज्ञानस्य ज्ञानान्तरेण ज्ञेयत्वमेतच्छब्दार्थः । अनवस्थापत्तेरित्यर्थः । ज्ञाने जिज्ञासानुपपत्तौ फलितमाह—अत इति । प्रसिद्धेऽपि ज्ञाने ज्ञातर्यात्मनि किमायातं तदाह—ज्ञातापीति । ज्ञानस्य विना ज्ञातारमपर्यवसानादित्यर्थः । ज्ञानस्य प्रसिद्धत्वे तत्र भावनापर्यायो विधिर्नास्तीत्याह—तस्मादिति । कुत्र तर्हि प्रयत्नाख्या भावनेत्याशङ्क्याह—किंत्विति । अविषये निराकारे चात्मनि ज्ञाननिष्ठाया दुःसंपाद्यत्वाभावे फलितं निगमयति—तस्मादिति ॥ ५० ॥ ब्रह्मज्ञानस्य परां निष्ठां प्रतिष्ठापितामनूद्य श्लोकान्तरमवतारयितुं पृच्छति—सेयमिति । येयं ब्रह्मज्ञानस्य परा निष्ठा समारोपिता तद्धर्मनिवृत्तिद्वारा ब्रह्मणि परिसमाप्ति-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

॥ ५० ॥ तमेव ब्रह्मप्राप्तिप्रकारमाह त्रिभिः—बुद्ध्येति । बुद्ध्या वेदान्तश्रवणमननपरिपाकोत्थयाऽहं ब्रह्मास्मीति परो-

४ मधुसूदनीव्याख्या ।

तुलात् । तां सिद्धिं प्राप्तस्य ब्रह्मप्राप्तिरूपां ज्ञाननिष्ठां परां संक्षेपेण निबोधेत्यर्थः ॥ ५० ॥ सेयं ज्ञाननिष्ठा सप्रकारोच्यते—

५ भाष्योत्कर्षदीपिका ।

क्तबुद्धीनां सम्यक्प्रमाणेषु कृतश्रमाणां चैतन्यात्मव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेर्लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धेरत्यन्तदुःसंपाद्यत्वात् । तदुक्तं 'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति ज्ञानमप्यत्यन्तं प्रसिद्धमेव सुखादिवदभ्युपगन्तव्यम् । येषां निराकारं ज्ञानमप्रत्यक्षं तेषामपि ज्ञानवशेनैव ज्ञेयावगतेर्दर्शनात् । ज्ञेयवज्ज्ञानस्य जिज्ञासानुपपत्तेश्च । तथाच ज्ञानस्य ज्ञातुश्चात्यन्तप्रसिद्धत्वादात्मज्ञाने यत्नो न कर्तव्यः किं त्वनात्मन्यात्मबुद्धिनिवृत्तावेवेति संक्षेपः ॥ ५० ॥ ब्रह्मप्राप्तेः ब्रह्मज्ञानस्य परस्याः

६ श्रीधरीव्याख्या ।

नान्निबोध ॥ ५० ॥ तदेवाह—बुद्ध्येति । उक्तेन प्रकारेण विशुद्धया पूर्वोक्तया सात्त्विक्या बुद्ध्या युक्तः, धृत्या सात्त्विक्या आत्मानं

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

संघातं नियम्य च नियमनं कृत्वा वशीकृत्य शब्दादीञ्शब्द आदिर्येषां ते शब्दादयस्तान्विषयांस्त्यक्त्वा सामर्थ्याच्छरीरस्थितिमात्रहेतुन्केवलान्मुक्त्वा ततोऽधिकान्सुखार्थांस्त्यक्त्वेत्यर्थः । शरीरस्थित्यर्थत्वेन प्राप्तेषु च रागद्वेषौ व्युदस्य च परित्यज्य ॥ ५१ ॥ ततः—विविक्तसेव्यरण्यनदीपुलिनगिरिगुहादीन्विविक्तान्देशान्सेवितुं शीलमस्येति विविक्तसेवी । लघ्वाशी लघ्वशनशीलः । विवि-

२ आनन्दगिरिव्याख्या ।

ज्ञानसंतानरूपोच्यते सा कार्या सुसंपाद्येति यदुक्तं तत्कथं केनोपायेनेति प्रश्नार्थः । पृष्टमुपायभेदमुदाहरति—**बुद्ध्येति** । अध्यवसायो ब्रह्मात्मत्वनिश्चयः, मायारहितत्वं संशयविपर्ययशून्यत्वम् । शब्दादिसमस्तविषयत्यागे देहस्थितिरपि दुःस्था स्यादित्याशङ्क्याह—**सामर्थ्यादिति** । विषयमात्रत्यागे देहस्थित्यनुपपत्तेर्ज्ञाननिष्ठासिद्धिप्रसङ्गादित्यर्थः । देहस्थित्यर्थत्वेनानुज्ञातेष्वर्थेषु प्राप्तं रागादि ज्ञाननिष्ठाप्रतिबन्धकं व्युदस्यति—**शरीरेति** । परित्यज्य विविक्तसेवी स्यादिति संबन्धः । बुद्धेर्वैशारद्यं यत्नेन कार्यं करणनियमनम् ॥ ५१ ॥ देहस्थितिहेत्वतिरिक्तविषयत्यागो देहस्थित्यर्थेष्वपि तेषु रागद्वेषवर्जनमित्युपायभेदे सिद्धे सन्त्युपायान्तराण्यपि यत्नसाध्यानीत्याह—**तत इति** । चित्तैकाग्र्यप्रसादार्थं विविक्तसेवित्वं व्याकरोति— **अरण्येति** । निद्रादिदोषनिवृत्त्यर्थं लघ्वाशित्वं विशदयति—**लध्विति** । लघु परिमितं हितं मेध्यं चाशितुं शीलमस्येति तथोच्यते । विशेषणयोस्तात्पर्यं विवृणोति—**विविक्तेति** । निद्रा-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

क्षनिश्चयरूपया विशुद्धया सर्वभूतेषु मैत्र्यादिभावनयासम्यग्विशोधितया । धृत्या धैर्येण योगक्षेमादिनिमित्तवैयग्र्यराहित्येन । आत्मानं देहेन्द्रियसंघातं नियम्य । दृढासनो भूत्वेत्यर्थः । चकारात्प्राणं च नियम्य । शब्दादीन् विषयांस्त्यक्त्वा । तत इन्द्रियाणि प्रत्याहृत्येत्यर्थः । प्रत्याहृतकरणोऽप्यन्तर्मनसैव विषयान्स्मरति तत्परित्यागमाह—**रागद्वेषौ व्युदस्य चेति** । संकल्पं त्यक्त्वेत्यर्थः । सहि विषयं परिकल्प्य तत्र रागं जनयतीति प्रसिद्धम् । यथाचाक्षपादाचार्यसूत्रं 'दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः' इति । दोषो रागादिः । चकारादयमहमस्मीत्येतमपि भावं व्युदस्येति ज्ञेयम् । ततो ब्रह्मभूयाय ब्रह्मभावाय तं प्राप्तुं कल्पते योग्यो भवतीति तृतीयेन संबन्धः ॥ ५१ ॥ केन साधनजातेनैवंभूतो भवतीत्यत आह—**विविक्तेति** । यत्तच्छब्दाध्याहारेण योज्यम् । नित्यमिति सर्वत्र संबन्ध-

४ मधुसूदनीव्याख्या ।

विशुद्धया सर्वसंशयविपर्ययशून्यया बुद्ध्याऽहं ब्रह्मास्मीति वेदान्तवाक्यजन्यया बुद्धिवृत्त्या युक्तः सदा तदन्वितो धृत्या धैर्येणात्मानं शरीरेन्द्रियसङ्घातं नियम्योन्मार्गप्रवृत्तेर्निवार्यात्मप्रवणं कृत्वा । चशब्देन योगशास्त्रोक्तं साधनान्तरं समुच्चीयते । शब्दादीञ्शब्दस्पर्शरूपरसगन्धान् विषयान्भोगेन बन्धहेतून् सामर्थ्याज्ज्ञाननिष्ठार्थशरीरस्थितिमात्रप्रयोजनानुपयुक्तानिषिद्धानपि त्यक्त्वा शरीरस्थितिमात्रार्थेषु च तेषु रागद्वेषौ व्युदस्य परित्यज्य चकारादन्यदपि ज्ञानविक्षेपकं परित्यज्य, विविक्तसेवीत्यत्र स्यादित्यध्याहृतेन ब्रह्मभूयाय कल्पत इत्यनेनवान्वयः ॥ ५१ ॥ विविक्तं जनसंमर्दरहितं पवित्रं च यदरण्यगिरिगुहादि तत्सेवितुं

५ भाष्योत्कर्षदीपिका ।

निष्ठायाः समारोपिताऽतद्धर्मनिवृत्तिद्वारा ब्रह्मणि परिसमाप्तेः सुसंपाद्यायाः प्रतिज्ञातं क्रमं दर्शयति । बुद्ध्या व्यवसायात्मिकया व्यवसायश्च ब्रह्मात्मज्ञानादेव मोक्षः सचावश्यं संपादनीय इति निश्चयः । विशुद्धया मायारहितया युक्तः संपन्नः धृत्या धैर्येणात्मानं कार्यकरणसंघातं नियम्य वशीकृत्य षष्ठाध्यायादावुक्तानामनुक्तानां च साधनानां समुच्चयार्थश्चकारः । शब्दः आदिर्येषां तान् शब्दादीन्विषयांस्त्यक्त्वा सामर्थ्याच्छरीरस्थितिमात्रान् केवलान्मुक्त्वा ततोऽधिकान्सुखार्थांस्त्यक्त्वेत्यर्थः । विषयमात्रत्यागे देहस्थित्यनुपपत्त्या ज्ञाननिष्ठाया असिद्धिप्रसङ्गात् । शरीरस्थित्यर्थत्वेन प्राप्तेषु च रागद्वेषौ व्युदस्य परित्यज्य चकारादन्यदपि ज्ञाननिष्ठाविक्षेपकं मात्सर्यादि परित्यज्य विविक्तसेवी स्यादित्यध्याहृतेन ब्रह्मभूयाय कल्पत इत्यनेन वा संबन्धः ॥ ५१ ॥ ततः विविक्तदेशसेवी वनगिरिगुहानदीपुलिनादीन्विविक्तान् जनसमुदायशून्यान् देशान्सेवितुं शीलमस्येति विविक्तदेशसेवी एतादृशस्य

६ श्रीधरीव्याख्या ।

तामेव बुद्धिं नियम्य निश्चलां कृत्वा, शब्दादीन्विषयांस्त्यक्त्वा तद्विषयौ रागद्वेषौ च व्युदस्य 'बुद्ध्या विशुद्धया युक्तः' इत्यादीनां 'ब्रह्मभूयाय कल्पते' इति तृतीयेनान्वयः ॥ ५१ ॥ किंच—**विविक्तेति** । विविक्तसेवी शुद्धदेशावस्थायी लघ्वाशी मित-

७ अभिनवगुप्ताचार्यव्याख्या ।

माह—बुद्ध्या विशुद्धयेत्यादि । सर्वमेतद्व्याख्यातप्रायमिति न पुनराख्यते ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ५८ ॥ ५९ ॥

**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**क्तसेवालघ्वशनयोर्निद्रादिदोषनिवर्तकत्वेन चित्तप्रसादहेतुत्वाद्ग्रहणम् । यतवाक्कायमानसो वाक् च कायश्च मानसं च यतानि संयतानि यस्य ज्ञाननिष्ठस्य स ज्ञाननिष्ठो यतिर्यतवाक्कायमानसः स्यात् । एवमुपरतसर्वकरणः सन्, ध्यानयोगपरो ध्यानमात्मस्वरूपचिन्तनं योग आत्मविषय एवैकाग्रीकरणं तौ ध्यानयोगौ परत्वेन कर्तव्यौ यस्य स ध्यानयोगपरः । नित्यं नित्यग्रहणं मन्त्रजपाद्यन्यकर्तव्याभावप्रदर्शनार्थम् । वैराग्यं विरागभावो दृष्टादृष्टेषु विषयेषु वैतृष्ण्यं समुपाश्रितः सम्यगुपाश्रितो नित्यमेवेत्यर्थः ॥ ५२ ॥ किंच—अहंकारमहंकरणमहंकारो देहेन्द्रियादिषु तं, बलं सामर्थ्यं**

२ आनन्दगिरिव्याख्या ।

दीत्यादिशब्दादालस्यप्रमादादयो बुद्धिविक्षेपका विवक्षिताः । वक्ष्यमाणध्यानयोगयोरुपायत्वेन विशेषणान्तरं विभजते—**वाक्चेति** । वागादिसंयमस्यावश्यकत्वद्योतनार्थं स्यादित्युक्तम् । संयतवागादिकरणग्रामस्यानायासेन कर्तव्यमुपदिशति—**एवमिति** । मन्त्रजपादीत्यादिपदेन प्रदक्षिणप्रणामादयो ध्यानयोगप्रतिबन्धका गृहीताः । उक्तयोरेव ध्यानयोगयोरुपायत्वेनोक्तं विरागभावं विभजते—**दृष्टेति** । सम्यक्त्वमेव व्यनक्ति—**नित्यमिति** ॥ ५२ ॥ ज्ञाननिष्ठस्य यतेर्विशेषणान्तरं समुच्चिनोति——**किंचेति** । नित्यं ध्यानयोगपरत्वे समुच्चितं कारणान्तरं विवृणोति—**अहंकरणमिति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नीयम् । यो नित्यं विविक्तसेवी एकान्तशीली । लघ्वाशी मिताशनशीलश्च । तथा नित्यं वैराग्यं रागाभावं समुपाश्रितश्च । तथा नित्यं ध्यानयोगः षष्ठाध्यायोक्तस्तत्परश्च यो नित्यं भवति स यतवाक्कायमानसो भवति । यतकाय आसनदार्ढ्येन । यतवाग् विषयेभ्य इन्द्रियाणां प्रत्याहरणेन । यतमानसः सर्वसंकल्पत्यागेन । अत्र चतुर्भिः साधनैर्यतवाक्कायमानसत्वं साध्यम् । नित्यं विविक्तसेवादिशीलः सन् यतवाक्कायमानसो भूत्वा ब्रह्मभूयाय कल्पत इत्युत्तरेणान्वयः ॥ ५२ ॥ एवं यतवाक्कायमानसस्य योगिनो योगजाः सिद्धय उपतिष्ठन्ति । ताश्च श्रुतौ दर्शिताः 'पृथिव्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तत्र रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्' इति । तथा 'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इति च । संविभाति संकल्पयति । लोकं लोचनीयमतीतानागतमर्थजातम् । कामान् काम्यमानान्विषयान् जयते उपलभते इति श्रुतिपदानामर्थः । तथा 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' इति । प्रज्ञानेन शास्त्राचार्योपदेशजेन ज्ञानेन दुश्चरितादिसेवनाद्विरक्तः शान्तो जितचित्तः समाहितो निरुद्धचित्तवृत्तिरप्यशान्तमानसो योगैश्वर्यासक्तचित्तः एनमात्मानं न प्राप्नुयादिति श्रुत्यर्थः । तदिदमाह—**अहंकारमिति** । यदा तु योगी यतमानसोऽस्मितामात्रप्रत्ययो भवति तदा सैवास्मितावस्थितिर्विषयाभिमुखाहंकार

४ मधुसूदनीव्याख्या ।

शीलं यस्य स चित्तैकाग्र्यसम्पत्त्यर्थं तद्विक्षेपकारिरहित इत्यर्थः । लघ्वाशी लघु परिमितं हितं मेध्यं चाशितुं शीलं यस्य सः । निद्रालस्यादि चित्तलयकारिरहित इत्यर्थः । यतानि संयतानि वाक्कायमानसानि येन स यमनियमासनादिसाधनसंपन्न इत्यर्थः । ध्यानयोगपरो नित्यं चित्तस्यात्माकारप्रत्ययावृत्तिर्ध्यानम् । आत्माकारप्रत्ययेन निर्वृत्तिकतापादनं योगः । नित्यं सदैव तत्परस्तयोरनुष्ठानपरो नतु मन्त्रजपतीर्थयात्रादिपरः कदाचिदित्यर्थः । वैराग्यं दृष्टादृष्टविषयेषु स्पृहाविरोधि चित्तपरिणामं समुपाश्रितः सम्यङ्निश्चलत्वेन नित्यमाश्रितः ॥ ५२ ॥ अहंकारं महाकुलप्रसूतोऽहं महतां शिष्योऽतिविरक्तोऽस्मि नास्ति द्वितीयो मत्सम

५ भाष्योत्कर्षदीपिका ।

चित्तं विक्षेपकाभावादेकाग्रं सत्प्रसन्नं भवति । निद्रादिदोषनिबन्धनचित्ताप्रसादनिवृत्त्यर्थमाह—लघ्वाशी हितमितमेध्याशनशीलः । यतानि वशीकृतानि वाक्कायमानसानि यस्य स ज्ञाननिष्ठः यतवाक्कायमानसः । एवमुपरतसर्वकरणः सन् ध्यानयोगपरो ध्यानमात्मस्वरूपचिन्तनं, मनस आत्मस्वरूपविषय एकाग्रीकरणं योगः ध्यानयोगौ परत्वेन कर्तव्यौ यस्य स नित्यं सदैव ध्यानयोगपरः । मन्त्रजपप्रदक्षिणाप्रणामाद्यन्यकर्तव्याभावप्रदर्शनार्थं नित्यग्रहणम् । ध्यानयोगपरत्वसिद्ध्यर्थमाह । वैराग्यं विरागभावं दृष्टादृष्टेष्टविषयेषु वैतृष्ण्यं समुपाश्रितः सम्यङ् निश्चलत्वेन नित्यमेवाश्रितः ॥ ५२ ॥ किंच देहादिष्वहंकरणमहंकारस्तं देहे आत्मत्वा-

६ श्रीधरीव्याख्या ।

भोजी एतैरुपायैर्यतवाक्कायमानसः संयतवाग्देहचित्तो भूत्वा नित्यं सर्वदा ध्यानेन यो योगो ब्रह्मसंस्पर्शस्तत्परः सन् ध्यानाविच्छेदार्थं पुनः पुनर्दृढं वैराग्यं सम्यगुपाश्रितो भूत्वा ॥ ५२ ॥ किंच—**अहंकारमिति** । ततश्च विरक्तोऽहमित्याद्यहंकारं बलं दुराग्रहं दर्पं

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥**

१ श्रीमच्छांकरभाष्यम् ।

कामरागादियुक्तं नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन तत्त्यागस्याशक्यत्वात् । दर्पो नाम हर्षानन्तरभावी धर्मातिक्रमहेतुः 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मरणात्, तं च, काममिच्छां क्रोधं द्वेषं परिग्रहमिन्द्रियमनोगतदोषपरित्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा बाह्यः परिग्रहः प्राप्तस्तं च विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनमात्रेऽपि निर्गतममभावो निर्ममोऽत एव शान्त उपरतः । यः संहृतहर्षायासो यतिर्ज्ञाननिष्ठो ब्रह्मभूयाय ब्रह्मभवनाय कल्पते समर्थो भवति ॥ ५३ ॥ अनेन क्रमेण ब्रह्मभूतो ब्रह्मप्राप्तः प्रसन्नात्मा लब्धाध्यात्मप्रसादो

२ आनन्दगिरिव्याख्या ।

सामर्थ्यमात्रे बलशब्दादुपलभ्यमाने किमिति विशेषवचनमित्याशङ्क्याह—**स्वाभाविकत्वेनेति** । उक्तेर्थे मानमाह—**हृष्ट इति** । वैराग्यशब्देन लब्धस्यापि कामत्यागस्य पुनर्वचनं प्रकृष्टत्वख्यापनार्थम् । अहंकारादित्यागे परिग्रहप्राह्यभावात्तत्त्यागोक्तिरयुक्तेत्याशङ्क्याह—**इन्द्रियेति** । परिग्रहाभावे ममत्वविषयाभावान्निर्ममत्वं कथमित्याशङ्क्याह—**देहेति** । अहंकारममकारयोरभावेन प्राप्तामन्तःकरणोपरतिमनुवदति—**अतएवेति** । उक्तमनूद्य जीवन्नेवासौ ब्रह्मीभवतीति फलितमाह—**यः संहृतेति** । ज्ञाननिष्ठपदादूर्ध्वं स शब्दो द्रष्टव्यः । ब्रह्मणो भवनमनुसन्धानपरिपाकपर्यन्तं साक्षात्करणं तदर्थमिति यावत् ॥ ५३ ॥ अपेक्षितं पूरयन्नुत्तरश्लोकमवतारयति—**अनेनेति** । बुद्ध्या

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

इत्युच्यते, विषयविमुखा त्वस्मितेति ततस्तमहंकारं निगृह्णीयात् । तदनिग्रहे योगी बलं सत्यसंकल्पत्वादिसामर्थ्यमात्मनः पश्यन् दर्पं करोति न मत्तुल्योऽन्योऽस्तीति मन्यते । ततश्च दृप्तो धर्ममतिक्रामतीत्यापस्तम्बवचनाद्दिव्यान्कामानिच्छति । तत्र केनचिन्निमित्तेन कामप्रतिबन्धे सति क्रोधवान्भवति । ततः परोत्सादनाय भूयांसं शिष्यादिपरिग्रहं संपादयति ततो नश्यतीति । तस्मात्सर्वानर्थमूलभूतमहंकारमेव विमुच्य तत इतरान्सर्वान् विमुञ्चति । अहंकारविमोकेऽपि निर्ममत्वं तत्प्रदर्शितेषु विषयेषु ममताशून्यत्वे सत्यहंकारः शिथिलीभूतो विषयवैमुख्यं प्राप्य स्वकारणेऽस्मितायां विलीयते । ततः शान्तोऽस्मिताया अपि प्रलयान्निरिन्धनाग्निवदुपरतो योगी ब्रह्मभूयाय कल्पते ॥ ५३ ॥ अस्यैवं शान्तस्य केवलस्य योगिनो व्युत्थानावस्थामाह—**ब्रह्मभूत इति** । यो हि सुप्तौ लये वा निपतितो योगी व्युत्थाने जडदेह-

४ मधुसूदनीव्याख्या ।

इत्यभिमानं, बलमसदाग्रहं न तु शारीरं, तस्य स्वाभाविकत्वेन त्यक्तुमशक्यत्वात्, दर्पं हर्षजन्यं मदं धर्मातिक्रमकारणं 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामतीति' स्मृतेः, कामं विषयाभिलाषं, वैराग्यं समुपाश्रित इत्यनेनोक्तस्यापि कामत्यागस्य पुनर्वचनं यत्नाधिक्यार्थं, क्रोधं द्वेषं, परिग्रहं शरीरधारणार्थकमस्पृहत्वेऽपि परोपनीतं बाह्योपकारणं विमुच्य त्यक्त्वा शिखायज्ञोपवीतादिकमपि, दण्डमेकं कमण्डलुं कौपीनाच्छादनं च शास्त्राभ्यनुज्ञातं स्वशरीरयात्रार्थमादाय परमहंसपरिव्राजको भूत्वा निर्ममो देहजीवनमात्रेऽपि ममकाररहितः अतएवाहंकारममकाराभावादपगतहर्षविषादत्वात् शान्तश्चित्तविक्षेपरहितो यतिर्ज्ञानसाधनपरिपाकक्रमेण ब्रह्मभूयाय ब्रह्मसाक्षात्काराय कल्पते समर्थो भवति ॥ ५३ ॥ केन क्रमेण ब्रह्मभूयाय कल्पत इति तदाह—ब्रह्मभूतोऽहं ब्रह्मास्मीति दृढनिश्चयवान् श्रवणमननाभ्यासात्, प्रसन्नात्मा शुद्धचित्तः शमदमाद्यभ्यासात् । अतएव न शोचति

५ भाष्योत्कर्षदीपिका ।

भिमानं बलं कामरागादिप्रयुक्तं सामर्थ्यं नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन तत्त्यागस्याशक्यत्वात्, दर्पो हर्षानन्तरभावी धर्मातिक्रमहेतुः । 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मरणात् । तंच काममिच्छां वैराग्यशब्देन लब्धस्यापि कामत्यागस्य पुनर्वचनं तस्मिन्नधिकयत्नः कर्तव्य इति बोधनाय प्रकृष्टत्वख्यापनार्थं इच्छितपदार्थालाभप्रयुक्तं क्रोधं परिग्रहमिन्द्रियमनोगतदोषत्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा प्राप्तं बाह्यपरिग्रहं च विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनमात्रेऽपि विगतममभावो निर्ममोऽतएव शान्तः उपरतः संहृतायासो यतिर्ज्ञाननिष्ठो ब्रह्मभूयाय ब्रह्मभवनाय ब्रह्मणोऽनुसंधानपरिपाकपर्यन्तजाय साक्षात्काराय कल्पते समर्थो भवति ॥ ५३ ॥ अनेन क्रमेण ब्रह्मभूतः ब्रह्मभवनसमर्थत्वाद् ब्रह्मभूतः प्रसन्नात्मा प्रसन्नः कर्तृत्वा-

६ श्रीधरीव्याख्या ।

योगबलादुन्मार्गप्रवृत्तिलक्षणं प्रारब्धवशात्प्राप्यमाणेष्वपि विषयेषु कामं क्रोधं परिग्रहं च विमुच्य विशेषेण त्यक्त्वा बलादापन्नेषु निर्ममः सन् शान्तः परामुपशान्तिं प्राप्तो ब्रह्मभूयाय ब्रह्माहमिति नैश्चल्येनावस्थानाय कल्पते योग्यो भवति ॥ ५३ ॥ ब्रह्माहमित्येवं नैश्चल्येनावस्थानस्य फलमाह—**ब्रह्मभूत इति** । ब्रह्मभूतो ब्रह्मण्यवस्थितः प्रसन्नचित्तो नष्टं न शोचति । न चाप्राप्तं काङ्क्षति देहा-

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

न शोचति किंचिदर्थवैकल्यमात्मनो वैगुण्यं चोद्दिश्य न शोचति न संतप्यते न काङ्क्षति । ब्रह्मभूतस्यायं स्वभावोऽनूद्यते न शोचति न काङ्क्षतीति । नह्यप्राप्तविषयाकाङ्क्षा ब्रह्मविद उपपद्यते । 'न हृष्यतीति' वा पाठः । समः सर्वेषु भूतेष्वात्मौपम्येन सर्वेषु भूतेषु सुखं दुःखं वा सममेव पश्यतीत्यर्थो नात्मसमदर्शनमिह तस्य वक्ष्यमाणत्वाद्भक्त्या मामभिजानातीति । एवंभूतो ज्ञाननिष्ठो मद्भक्तिं मयि परमेश्वरे भक्तिं भजनं परामुत्तमां ज्ञानलक्षणां चतुर्थीं लभते चतुर्विधा भजन्ते मामित्युक्तम् ॥ ५४ ॥ ततो ज्ञानलक्षणया—भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तरभेदो

२ आनन्दगिरिव्याख्या ।

विशुद्ध्येत्यादिरत्र क्रमः, ब्रह्मप्राप्तो जीवन्नेव निवृत्ताशेषानर्थो निरतिशयानन्दं ब्रह्मात्मत्वेनानुभवन्नित्यर्थः । अध्यात्मं प्रत्यगात्मा तस्मिन्प्रसादः सर्वानर्थनिवृत्त्या परमानन्दाविर्भावः स लब्धो येन जीवन्मुक्तेन स तथा । न शोचतीत्यादौ तात्पर्यमाह—ब्रह्मभूतस्येति । प्राप्तव्यपरिहार्याभावनिश्चयादित्यर्थः । स्वभावानुवादमुपपादयति—नहीति । तस्याप्राप्तविषयाभावान्नापि परिहार्यापरिहारप्रयुक्तः शोकः परिहार्यस्यैवाभावादित्यर्थः । पाठान्तरे तु रमणीयं प्राप्य न प्रमोदते तदभावादित्यर्थः । विवक्षितं समदर्शनं विशदयति—आत्मेति । ननु सर्वेषु भूतेष्वात्मनः समस्य निर्विशेषस्य दर्शनमत्राभिप्रेतं किं नेष्यते तत्राह—नात्मेति । उक्तविशेषणवतो जीवन्मुक्तस्य ज्ञाननिष्ठा प्रागुक्तक्रमेण प्राप्ता सुप्रतिष्ठिता भवतीत्याह—एवंभूत इति । श्रवणमनननिदिध्यासनवतः शमादियुक्तस्याभ्यस्तैः श्रवणादिभिर्ब्रह्मात्मन्यपरोक्षं मोक्षफलं ज्ञानं सिध्यतीत्यर्थः । आर्तादिभक्तित्रयापेक्षया ज्ञानलक्षणा भक्तिश्चतुर्थीत्युक्ता । तत्र सप्तमस्थवाक्यमनुकूलयति—चतुर्विधा इति ॥ ५४ ॥ ननु समाधिसाध्येन परमभक्त्यात्मकेन ज्ञानेन किमपूर्वमवाप्यते तत्राह—तत इति । भक्त्या समाधिजन्यया मां ब्रह्माभिमुख्येन प्रत्यक्तया जानाति व्याप्नोतीत्यर्थः । तदेव

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्तमोग्रस्तचित्तइव तन्द्रालुरुत्तिष्ठति ब्रह्मभूतस्तु प्रसन्नात्मा प्रसन्नचेताः लघुशरीरः अमृतेनेव समाधिसुखेन तृप्तस्तदेकप्रवणो न शोचति नष्टम् । नाप्यप्राप्तं काङ्क्षति दारादिकम् । सर्वेषु भूतेषु चतुर्विधेषु समः ब्रह्मैवेदं सर्वमिति बुद्ध्या वैषम्यवर्जितः सन् परां मद्भक्तिं द्वैतदृष्टिविवर्जितां भावनां लभते । पातञ्जलयोगी तु न व्युत्थाने परां दृष्टिं लभते भेददर्शित्वात् । अयं च भक्तः श्रीभागवते दर्शितः 'सर्वभूतेषु येनैकं भगवद्भावमीक्षते । भूतानि भगवत्यात्मन्येष भागवतोत्तमः' इति । सोऽयं चतुर्थो भक्तो 'ज्ञानी त्वात्मैव मे मतम्' इति भगवतापि दर्शितः ॥ ५४ ॥ अस्या अद्वैतात्मतत्त्वज्ञानलक्षणाया भक्तेः फलमाह—भक्त्येति । मां उक्तविधया भक्त्या ज्ञानी अभितः साकल्येन

४ मधुसूदनीव्याख्या ।

नष्टं न काङ्क्षत्यप्राप्तम् । अतएव निग्रहानुग्रहयोरनारम्भात् समः सर्वेषु भूतेष्वात्मौपम्येन सर्वत्र सुखं दुःखं च पश्यतीत्यर्थः । एवंभूतो ज्ञाननिष्ठो यतिर्मद्भक्तिं मयि भगवति शुद्धे परमात्मनि भक्तिमुपासनां मदाकारचित्तवृत्त्यावृत्तिरूपां परिपक्वनिदिध्यासनाख्यां श्रवणमननाभ्यासफलभूतां लभते परां श्रेष्ठामव्यवधानेन साक्षात्कारफलां चतुर्विधा भजन्ते मामित्यत्रोक्तस्य भक्तिचतुष्टयस्यान्त्यां ज्ञानलक्षणामिति वा ॥ ५४ ॥ ततश्च भक्त्या निदिध्यासनात्मिकया ज्ञाननिष्ठया मामद्वितीयमात्मानमभि-

५ भाष्योत्कर्षदीपिका ।

दिविनिर्मुक्तः आविर्भूतानन्द आत्मा प्रत्यगात्मा यस्य स लब्धात्मप्रसादः न शोचति किंचिदर्थवैकल्यमात्मनो वैगुण्यं चोद्दिश्य न शोचति न संतप्यते । न काङ्क्षति अप्राप्तं वस्तु ब्रह्मभूतस्य शोकाकाङ्क्षयोरनुपपन्नत्वात्तस्य स्वभावोऽनूद्यते न शोचति न काङ्क्षतीति । न हृष्यतीति वा पाठः । रमणीयं प्राप्य न प्रमोदते तस्य मिथ्यात्वेन निश्चयादित्यर्थः । सर्वेषु भूतेषु समः सुखं दुःखं वा आत्मौपम्येन सममेव पश्यतीत्यर्थः । नत्वात्मसमदर्शनमिह ग्राह्यम् । भक्त्या मामभिजानातीति तस्य वक्ष्यमाणत्वात् । य एवंभूतः स मद्विषयां भक्तिं आर्तो जिज्ञासुरर्थार्थी ज्ञानी चेत्यत्रोक्तां चतुर्थीं ज्ञानलक्षणाम् । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्युक्तां परामनुत्तमां लभते प्राप्नोति ॥ ५४ ॥ ततश्च ज्ञानलक्षणया भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तारभेदो

६ श्रीधरीव्याख्या ।

त्वभिमानाभावात् । अतएव सर्वेष्वपि भूतेषु समः सन् रागद्वेषादिकृतविक्षेपाभावात्सर्वभूतेषु मद्भावनालक्षणां परां मद्भक्तिं लभते ॥ ५४ ॥ ततश्च—भक्त्या मामिति । तया च परया भक्त्या तत्त्वतो मामभिजानाति । कथंभूतम्, यावान् सर्वव्यापी यश्चास्मि

१ श्रीमच्छांकरभाष्यम् ।

**यश्चाहं विध्वस्तसर्वोपाधिभेद उत्तमपुरुष आकाशकल्पस्तं मामद्वैतं चैतन्यमात्रैकरसमजरममरमभयमनिधनं तत्त्वतोऽभिजानाति । ततो मामेवं तत्त्वतो ज्ञात्वा विशते तदनन्तरं मामेव ज्ञानानन्तरम् । नात्र ज्ञानप्रवेशक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तरमिति, । किं तर्हि फलान्तराभावज्ञानमात्रमेव, क्षेत्रज्ञं चापि मां विद्धीत्युक्तत्वात् । ननु विरुद्धमिदमुक्तं ज्ञानस्य या परा निष्ठा तया मामभिजानातीति, कथं विरुद्धमिति चेदुच्यते, यदैव यस्मिन्विषये ज्ञानमुत्पद्यते ज्ञातुस्तदैव तं विषयमभिजानाति ज्ञातेति न ज्ञाननिष्ठां ज्ञानावृत्तिलक्षणामपेक्षत इति । अतश्च ज्ञानेन नाभिजानाति ज्ञानावृत्त्या तु ज्ञाननिष्ठयाभिजानातीति । नैष दोषो ज्ञानस्य स्वात्मोत्पत्तिपरिपाकहेतुयुक्तस्य प्रतिपक्षविहीनस्य यदात्मानुभवनिश्चयावसानत्वं तस्य निष्ठाशब्दाभिलापाच्छास्त्राचार्योपदेशेन ज्ञानो-**

२ आनन्दगिरिव्याख्या ।

ज्ञानं भक्तिपराधीनं विवृणोति—**यावानिति** । आकाशकल्पत्वमनवच्छिन्नत्वमसङ्गत्वं च । चैतन्यस्य विषयसापेक्षत्वं प्रतिक्षिपति—**अद्वैतमिति** । ये तु द्रव्यबोधात्मत्वमात्मनो मन्यन्ते तान्प्रत्युक्तं—**चैतन्यमात्रेति** । आत्मनि तन्मात्रेऽपि धर्मान्तरमुपेत्य धर्मधर्मित्वं प्रत्याह—**एकरसमिति** । सर्वविक्रियाराहित्योक्त्या कौटस्थ्यमात्मनो व्यवस्थापयति—**अजमिति** । उक्तविक्रियाभावे तद्धेत्वज्ञानासंबन्धं हेतुमाह—**अभयमिति** । तत्त्वज्ञानमनूद्य तत्फलं विदेहकैवल्यं लम्भयति—**तत इति** । तत्त्वज्ञानस्य तस्मादनन्तरप्रवेशक्रियायाश्च भिन्नत्वं प्राप्तं प्रत्याह—**नात्रेति** । भिन्नत्वाभावे का गतिर्भेदोक्तेरित्याशङ्क्यौपचारिकत्वमाह—**किं तर्हीति** । प्रवेश इति शेषः । ब्रह्मप्राप्तिरेव फलान्तरमित्याशङ्क्य ब्रह्मात्मनोर्भेदाभावान्न ज्ञानातिरिक्ता तत्प्राप्तिरित्याह—**क्षेत्रज्ञं चेति** । ज्ञाननिष्ठया परया भक्त्या मामभिजानातीत्युक्तमाक्षिपति—**नन्विति** । विरुद्धत्वं स्फोरयितुं पृच्छति—**कथमिति** । विरोधस्फुटीकरणं प्रतिजानीते—**उच्यत इति** । तत्र ज्ञानस्योत्पत्तेरेव विषयाभिव्यक्तिरित्याह—**यदेति** । एवकारनिरस्यं दर्शयति—**न ज्ञानेति** । इत्यावयोः सिद्धमिति शेषः । ज्ञानस्योत्पत्तेरेव विषयाभिव्यक्तत्वेऽपि कथं प्रकृते विरोधधीत्याशङ्क्याह—**ततश्चेति** । विरुद्धमिति शेषः । शङ्कितं विरोधं निरस्यति—**नैष दोष इति** । उक्तमेव हेतुं प्रपञ्चयति—**शास्त्रेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

जानाति । साकल्यमेवाह—**यावानिति** । किमहमणुपरिमाणो वा देहसंमितो वा तार्किकाणामिवाकाशवत्सकलमूर्तद्रव्यसंयोगित्वलक्षणविभुत्वाश्रयो वा सप्रपञ्चाद्वैतवादिनामिव स्वगतभेदवान्वाऽखण्डैकरसो वेति परिमाणतस्तत्त्वतो मां तत्पदार्थं जानाति तथा यश्चास्मीति । देहेन्द्रियप्राणमनसामन्यतमः कियत्कालस्थायी वा क्षणिकविज्ञानरूपो वा शून्यं वा कर्ता भोक्ता वा जडो वा जडाजडरूपो वा चिद्रूपो भोक्ता वा कर्तृत्वभोक्तृत्ववर्जित आनन्दघनो वेति तत्त्वतः सर्वसंशयराहित्येन मामजरममरमभयमशोकं जानाति । तथाच श्रुतिः 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसं-

४ मधुसूदनीव्याख्या ।

जानाति साक्षात्करोति । यावान् विभुर्नित्यश्च यश्च परिपूर्णसत्यज्ञानानन्दघनः सदा विध्वस्तसर्वोपाधिरखण्डैकरस एकस्तावन्तं चाभिजानाति । ततो मामेवं तत्त्वतो ज्ञात्वाहमस्म्यखण्डानन्दाद्वितीयं ब्रह्मेति साक्षात्कृत्य विशते अज्ञानतत्कार्यनिवृत्तौ सर्वोपाधिशून्यतया मद्रूप एव भवति । तदनन्तरं बलवत्प्रारब्धकर्मभोगेन देहपातानन्तरं ननु ज्ञानानन्तरमेव । क्त्वाप्रत्ययेनैव तल्लाभे तदनन्तरमित्यस्य वैयर्थ्यापातात् तस्मात् 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति श्रुत्यर्थ एवात्र दर्शितो भगवता । यद्यपि ज्ञानेनाज्ञानं निवर्तितमेव दीपेनेव तमस्तस्य तद्विरोधिस्वभावत्वात्तथापि तदुपादेयमहंकारदेहादि निरुपादानमेव यावत्प्रारब्धकर्मभोगमनुवर्तते दृष्टत्वादेव । नहि दृष्टेऽनुपपन्नं नाम । तार्किकैरपि हि समवायिकारणनाशाद्द्रव्यनाशमङ्गीकुर्वद्भिर्निरुपादानं द्रव्यं क्षणमात्रं तिष्ठतीत्यङ्गीकृतम् । नित्यपरमाणुसमवेतद्व्यणुकनाशे त्वसमवायिकारणनाशादेव द्रव्यनाशः समवायनिरूपितकारणनाशत्वमुभयोरनुगतमिति नाननुगमः । येत्वसमवायिकारणनाशमेव सर्वत्र कार्यद्रव्यनाशकमिच्छन्ति तेषामाश्रयनाशस्थले क्षणद्वयमनुपादानं कार्यं तिष्ठति । एवंच तत्रैव प्रतिबन्धकसन्निपाते बहुकालावस्थितिः केन वार्यते ।

५ भाष्योत्कर्षदीपिका ।

यश्चास्मि विध्वस्तसर्वोपाधिभेद उत्तमः पुरुष आकाशवदसङ्गो निर्विकारस्तं मामद्वैतचैतन्यमात्रैकरसमजरममरमभयमनिधनं भक्त्या तत्त्वतोऽभिजानाति ततो मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं मामेव विशते प्राप्नोति । अत्र ज्ञानप्रवेशक्रिये भिन्ने न विवक्षिते । भेदोक्तिस्त्वौपचारिकी बोध्या । ब्रह्मप्राप्तिस्तु ज्ञानान्नातिरिच्यते । क्षेत्रज्ञं चापि मां विद्धीति ब्रह्मात्मनोरभेदस्योक्तत्वात् । भक्त्या निदिध्यासनात्मिकया मामद्वितीयमात्मानमभिजानाति साक्षात्करोति तदनन्तरं बलवत्प्रारब्धकर्मभोगेन देहपातानन्तरं ननु

६ श्रीधरीव्याख्या ।

सच्चिदानन्दघनस्तथाभूतम् । ततश्च मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं तस्य ज्ञानस्याप्युपरमे सति मां विशते । परमानन्दरूपो भवती-

१ श्रीमच्छांकरभाष्यम् ।

त्पत्तिपरिपाकहेतुं सहकारीकारणं बुद्धिविशुद्ध्याद्यमानित्वादि चापेक्ष्य जनितस्य क्षेत्रज्ञपरमात्मैकत्वज्ञानस्य कर्त्रादिकारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवनिश्चयरूपेण यदवस्थानं सा परा ज्ञाननिष्ठेत्युच्यते । सेयं ज्ञाननिष्ठार्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्ता । तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति । यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषतो निवर्तते अतो ज्ञाननिष्ठालक्षणया भक्त्या मामभिजानातीति वचनं न विरुध्यते । अत्र च सर्वं निवृत्तिविधायि शास्त्रं वेदान्तेतिहासपुराणस्मृतिलक्षणं न्यायप्रसिद्धमर्थवद्भवति, 'विदित्वा व्युत्थायाथ भिक्षाचर्यं चरन्ति तस्मान्न्यासमेषां तपसामतिरिक्तमाहुर्न्यास एवात्यरेचयत्' इति संन्यासः कर्मणां न्यासः, 'वेदानिमं च लोकममुं च परित्यज्य, त्यज धर्ममधर्मं चे'त्यादि । इह च दर्शितानि वाक्यानि, नच तेषां वाक्यानामानर्थक्यं युक्तम् । नचार्थवादत्वं स्वप्रकरणस्थत्वात् प्रत्यगात्माविक्रियस्वरूपनिष्ठत्वाच्च मोक्षस्य ।

२ आनन्दगिरिव्याख्या ।

यो हि शास्त्रानुसार्याचार्योपदेशस्तेन ज्ञानोत्पत्तिः 'आचार्यवान्पुरुषो वेद' इति श्रुतेः । तस्याश्च परिपाकः संशयादिप्रतिबन्धध्वंसस्तत्र हेतुभूतमुपदेशस्यैव सहकारिकारणं यद्बुद्धिशुद्ध्यादि तदपेक्ष्य तस्मादेवोपदेशाज्जनितं यदैक्यज्ञानं तस्य कारकभेदबुद्धिनिबन्धनानि यानि सर्वाणि कर्माणि तेषां संन्यासेन सहितस्य फलरूपेण स्वात्मन्येव सर्वप्रकल्पनारहिते यदवस्थानं सा ज्ञानस्य परा निष्ठेति व्यवह्रियते प्रामाणिकैरित्यर्थः । यदि यथोक्ता परा ज्ञाननिष्ठा कथं तर्हि सा चतुर्थी भक्तिरित्युक्तेति तत्राह—**सेयमिति** । यथोक्तया भक्त्या भगवत्तत्त्वज्ञानं सिध्यतीत्याह—**तयेति** । तत्त्वज्ञानस्य फलमाह—**यदनन्तरमिति** । ज्ञाननिष्ठारूपाया भगवद्भक्तेस्तत्त्वज्ञानानतिरेकात्तत्फलस्य चाज्ञाननिवृत्तेस्तन्मात्रत्वाद्भेदोक्तेश्चौपचारिकत्वात्प्रकृतं वाक्यमविरुद्धमित्युपसंहरति—**अत इति** । औपदेशिकैक्यज्ञानस्य सर्वकर्मसंन्याससहितस्य स्वरूपावस्थानात्मकस्य परमपुरुषार्थौपयिकत्वमित्यस्मिन्नर्थे मानमाह—**अत्र चेति** । तदेव शास्त्रमुदाहरति—**विदित्वेत्यादिना** । दर्शितानि वाक्यानि सर्वकर्माणि मनसेत्यादीनि । नन्वेषां वाक्यानामविवक्षितार्थत्वान्नास्ति स्वार्थे प्रामाण्यमित्याशङ्क्याध्ययनविध्युपात्तत्वाद्वेदवाक्यानां तदनुरोधित्वाच्चेतरेषां नैवमित्याह—**नचेति** । तथापि सोऽरोदीदित्यादिवन्न स्वार्थे मानतेत्याशङ्क्याह—**नचार्थवादत्वमिति** । इतश्च मुमुक्षोरपेक्षितमोक्षौपयिकज्ञाननिष्ठस्य संन्यासेऽधिकारो न कर्मनिष्ठायामित्याह—**प्रत्यगिति** । ज्ञाननिष्ठस्य कर्मनिष्ठाविरुद्धेत्यत्र

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति आत्मदर्शने सति सर्वसंशयोच्छेदं दर्शयति । एवं 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्युक्तेः सर्वक्षेत्रेष्वेकं मां विभुं सच्चिदानन्दघनं तत्त्वतो ज्ञात्वा सर्वोपाधिविनिर्मुक्तं याथात्म्येन ज्ञात्वा साक्षात्कृत्य ततो व्याप्तो ब्रह्मभावं गतो भवतीत्यर्थः । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः । यद्वा तत इति कारणब्रह्मभावापत्तिः सार्वात्म्यरूपा प्रथममुक्ता । 'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' 'स एतमेव पुरुषं ब्रह्म ततममपश्यत्' इत्यादिश्रुतिभ्यो मुक्तानां सर्वात्म्यावगमात् । ततमं तततमम् । एकस्तकार-

४ मधुसूदनीव्याख्या ।

प्रारब्धकर्मणश्च प्रतिबन्धकत्वं श्रुतिसिद्धमन्तःकरणदेहाद्यवस्थित्यन्यथानुपपत्तिसिद्धं च । एवं शिष्यसेवकाद्यदृष्टमपि तत्प्रतिबन्धकं तदभावमपेक्ष्य च पूर्वसिद्ध एवाज्ञाननाशस्तत्कार्यमन्तःकरणादिकं नाशयतीति न पुनर्ज्ञानापेक्षा । तदुक्तं 'तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् । ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ।' इति । न जानामीत्यादिप्रत्ययस्तु तस्य निवृत्ताज्ञानस्याप्यज्ञाननाशजनितादनुपादानात्साक्षादात्माश्रयादेवाज्ञानसंस्कारात्तत्त्वज्ञानसंस्कारनिवर्त्योदन्तःकरणस्थित्यवधेरिति विवरणकृतः अहं ब्रह्मास्मीति चरमसाक्षात्कारानन्तरमहं ब्रह्म न भवामि न जानामीत्यादिप्रत्ययो नास्त्येव । यदि परं घटं न जाना-

५ भाष्योत्कर्षदीपिका ।

ज्ञानानन्तरमेव । क्त्वाप्रत्ययेनैव तल्लाभे तदनन्तरमित्यस्य वैयर्थ्यापातादिति केचित् । इतरे तु विशत्यात्मनि स्वसिद्धयेऽनिर्वचनीयसंबन्धेनेति विशत् सर्वानर्थमूलमज्ञानं तस्मै तत्सविलासमुन्मूलयितुं ज्ञात्वाऽपरोक्षीकृत्य तदनन्तरं अन्तरं भेदस्तच्छून्यं शाश्वतं पदमव्ययमाप्नोतीत्युत्तरश्लोकस्यानुषङ्गेण व्याख्येयमिति वदन्ति । तत्तत्त्वतो याथात्म्येन ज्ञात्वा साक्षात्कृत्य ततो व्याप्तः ब्रह्मभावं गतो भवतीत्यर्थः । 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः । यद्वा तत इति कारणब्रह्मभावापत्तिः सार्वात्म्यरूपा प्रथममुक्ता । अनन्तरं कारणभावापत्तेरनुपदमेव तद्ब्रह्म तत्पदाभिधेयं शुद्धं ब्रह्म विशते । दर्पणाद्यपाये प्रतिबिम्बो बिम्बमिव प्रविशतीत्यर्थ इत्यन्ये । तदेतद्व्याख्यानत्रयमपि सर्वज्ञैराचार्यैः ध्यानयोगपरो नित्यमित्यत्र निदिध्यासनस्योक्तत्वाद्भक्तिं लभत इत्यस्य परामिति

१ मधुसूदनः. २ नीलकण्ठः.

१ श्रीमच्छांकरभाष्यम्।

**नहि पूर्वसमुद्रं जिगमिषोः प्रातिलोम्येन प्रत्यक्समुद्रं जिगमिषुणा समानमार्गत्वं संभवति। प्रत्यगात्मविषयप्रत्ययसंतानकरणाभिनिवेशश्च ज्ञाननिष्ठा। सा च प्रत्यक्समुद्रगमनवत्कर्मणा सहभावित्वेन विरुध्यते। पर्वतसर्षपयोरिवान्तरवान्विरोधः प्रमाणविदां निश्चितः। तस्मात्सर्वकर्मसंन्यासेनैव ज्ञाननिष्ठा कार्येति सिद्धम् ॥ ५५ ॥ स्वकर्मणा भगवतोऽभ्यर्चनभक्तियोगस्य सिद्धिप्राप्तिः फलं ज्ञाननिष्ठायोग्यता। यन्निमित्ता ज्ञाननिष्ठा मोक्षफलावसाना। स भगवद्भक्तियोगोऽधुना स्तूयते**

२ आनन्दगिरिव्याख्या।

दृष्टान्तमाह—**नहीति**। ज्ञाननिष्ठास्वरूपानुवादपूर्वकं कर्मनिष्ठया तस्याः सहभावित्वं विरुद्धमिति दार्ष्टान्तिकमाह—**प्रत्यगात्मेति**। कथं ज्ञानकर्मणोर्विरोधधीरित्याशङ्क्य कर्मणां ज्ञाननिवर्त्यत्वस्य श्रुतिस्मृतिसिद्धत्वादित्याह—**पर्वतेति**। अन्तरवानुभयोरेकधर्मिनिष्ठत्वेन साङ्कर्याभावसंपादकभेदवानित्यर्थः। ज्ञानकर्मणोरसमुच्चये फलितमुपसंहरति—**तस्मादिति** ॥ ५५ ॥ तर्हि ज्ञाननिष्ठस्यैव मोक्षसंभवान्न कर्मानुष्ठानसिद्धिरित्याशङ्क्याह—**स्वकर्मणेति**। तामेव सिद्धिप्राप्तिं विशिनष्टि—**ज्ञानेति**। ज्ञाननिष्ठायोग्यतायै स्वकर्मानुष्ठानं भगवदर्चनरूपं कर्तव्यमित्यर्थः। ज्ञाननिष्ठायोग्यतापि किमर्थेत्याशङ्क्य ज्ञाननिष्ठासिद्ध्यर्थेत्याह—**यन्निमित्तेति**। ज्ञाननिष्ठापि कुत्रोपयुक्तेत्यत्राह—**मोक्षेति**। स्वकर्मणा भगवदर्चनात्मनो भक्तियोगस्य परम्परया मोक्षफलस्य कार्यत्वेन विधेयत्वे विध्यपेक्षितां स्तुतिमवतारयति—**स भगवदिति**। ज्ञाननिष्ठा कर्मनिष्ठेत्युभयं प्रतिज्ञाय तत्र तत्र विभागेन प्रतिपादितं किमितीदानीं कर्मनिष्ठा

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

श्छान्दसां प्रक्रियायां लुप्तो द्रष्टव्य इति श्रुतिभाष्यम्। अनन्तरं कारणभावापत्तेरनुपदमेव तद्ब्रह्म तच्छब्दाभिधेयम् 'तदिति वा एतस्य महतो भूतस्य नाम भवति' इति श्रुतेः। शुद्धं ब्रह्म विशते दर्पणापाये प्रतिबिम्बो बिम्बमिव प्रविशति। कार्योपाधीनां जीवानां कारणोपाधीश्वरप्राप्तिद्वारैव निष्कलब्रह्मप्राप्तिरित्यावेदितं प्रागेव। यद्वा मां ज्ञात्वा तद्विशत इत्येतावतैव ज्ञानप्रवेशयोः पौर्वापर्ये सिद्धे तदनन्तरमिति पदेन तच्छब्देन बुद्धिस्थं देहं परामृश्य तत्पातानन्तरमिति व्याख्येयम्। यतो जातेऽपि तत्त्वज्ञाने यावद्देहपातं प्रारब्धकर्मणां प्रतिबन्धाद्विदेहकैवल्यं न प्राप्यते। अन्यथा ज्ञानसमकालमेव देहपातापत्तिः स्यात्। 'विमुक्तश्च विमुच्यते' 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति मुक्तस्य मुक्तिं निवृत्तायाश्च मायायाः पुनर्निवृत्तिं वदज्जीवन्मुक्तिशास्त्रं बाधितं स्यात्। यथा तार्किकाणां नष्टेऽपि समवायिकारणे पटादिकं क्षणमात्रमवतिष्ठते एवमस्माकमप्यनादिकालाया देहाद्युपादानभूताया अविद्याया विनाशेऽपि किंचित्कालं देहादिप्रतिभानं युज्यते। ईदृशमेव जीवन्मुक्तमपेक्ष्य भगवतोक्तं 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति। स्थितप्रज्ञलक्षणस्मृतिरपि तल्लक्षणाभिधित्सयैव प्रववृते इति दिक् ॥ ५५ ॥ ननु 'तद्यथैषीकातूलमग्नौ प्रोतं

४ मधुसूदनीव्याख्या।

मीत्यादिप्रलयः स्यात्तदुपपादनाय चेयं संस्कारकल्पनेति नानुपपन्नम्। अज्ञानलेशपदेनाप्ययमेव संस्कारो विवक्षितः। नहि सावयवमज्ञानं, येन कियन्नश्यति कियत्तिष्ठतीति वाच्यम्, अनिर्वचनीयत्वात्। एकदेशाभ्युपगमे तु तन्निवृत्त्यर्थं पुनश्चरमं ज्ञानमपेक्षितमेव। तच्च मृतिकाले दुर्घटमिति तत्त्वज्ञानसंस्कारनाश्यता तस्याभ्युपेया। ततश्च संस्कारपक्षान्न कोऽपि विशेष इति पूर्वोक्तैव कल्पना श्रेयसी। ईदृशजीवन्मुक्त्यपेक्षया च प्राग्भगवतोक्तं 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति स्थितप्रज्ञलक्षणानि च व्याख्यातानि। तस्मात्साधूक्तं विशते तदनन्तरमिति ॥ ५५ ॥ ननु योऽनात्मज्ञोऽशुद्धान्तःकरणः सोऽन्तःकरणशुद्धिपर्यन्तं सहजं कर्म न त्यजेत्। यस्तु शुद्धान्तःकरणः स नैष्कर्म्यसिद्धिं संन्यासेनाधिगच्छतीत्युक्तम्। संन्यासश्च ब्राह्मणेनैव कर्तव्यो न क्षत्रियवैश्याभ्यामिति प्रागुक्तं भगवता 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्यत्र। तत्र शुद्धान्तःकरणेन क्षत्रियादिना किं कर्माण्यनुष्ठेयानि किं वा सर्वकर्मसंन्यासः कर्तव्यः। नाद्यः 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।

५ भाष्योत्कर्षदीपिका।

विशेषणस्य च वैयर्थ्यं तच्छब्देनाप्रस्तुतपरामर्शस्यानुषङ्गाध्याहारादिक्लेशव्याप्तायाः कुकल्पनायाश्चानौचित्यमभिप्रेत्य त्यक्तत्वादुपेक्ष्यम्। तथाचायमर्थः 'आचार्यवान्पुरुषो वेद' इति श्रुत्या शास्त्रानुसार्याचार्योपदेशेन ज्ञानोत्पत्तिः। तस्य च परिपाके असंभावनादिप्रध्वंसे हेतुभूतमुपदेशस्यैव सहकारिकारणं बुद्धिविशुद्धत्वादि अमानित्वादिगणं चापेक्ष्य तस्मादेवोपदेशाज्जनितस्य क्षेत्रज्ञपरात्मैकत्वज्ञानस्य कारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवरूपेण स्वात्मन्येव सर्वकल्पनारहितस्य यदवस्थानं सा ज्ञानस्य परा निष्ठेत्युच्यते, सेयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्त्वा तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषं ततो निवर्तते। क्त्वाप्रत्ययेनोक्तमानन्तर्यमव्यवहितं नतु किंचिद्व्यवधानयुक्तमिति बोधनायानन्तरमित्युक्तमिति ॥ ५५ ॥ एवं शुद्धान्तःकरणस्य संन्यासाधिकारिणो ब्रह्मप्राप्तिक्रममभिधायानात्मज्ञस्याशुद्धान्तःकरणस्य

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय—सर्वेति । सर्वकर्माणि प्रतिषिद्धान्यपि सदा-कुर्वाणोऽनुतिष्ठन्मद्व्यपाश्रयोऽहं वासुदेव ईश्वरो व्यपाश्रयो यस्य स मद्व्यपाश्रयो मय्यर्पितसर्वात्मभाव इत्यर्थः । सोऽपि मत्प्रसादान्ममेश्वरस्य प्रसादादवाप्नोति शाश्वतं नित्यं वैष्णवं पदमव्ययम्

२ आनन्दगिरिव्याख्या ।

पुनः स्तुत्या कर्तव्यतयोच्यते तत्राह—**शास्त्रार्थेति** । तत्रतत्रोक्तस्यैव कर्मानुष्ठानस्य प्रकरणवशादिहोपसंहारः । स च शास्त्रार्थनिश्चयस्य दृढतां द्योतयतीत्यर्थः । यद्यपि कस्यचित्कर्मानुष्ठायिनो बुद्धिशुद्धिद्वारा कैवल्यं सिध्यति तथापि पापबाहुल्यात्कर्मानुष्ठायिनोऽपि कस्यचिद्बुद्धिशुद्ध्यभावे कैवल्यासिद्धिरित्याशङ्क्याह—**सर्वकर्माणीति** । सर्वशब्दानुरोधादीश्वराराधनस्तुतिपरत्वेन श्लोकं व्याचष्टे—**प्रतिषिद्धान्यपीति** । नित्यनैमित्तिकवदित्यपेरर्थः । निषिद्धाचरणस्य प्रामादिकत्वं व्यावर्तयति—**सदेति** । अनुतिष्ठन्वैष्णवं पदमाप्नोतीति संबन्धः । पापकर्मकारिणो यथोक्तपदप्राप्तौ पापस्यापि मोक्षफलत्वमुपगतं स्यादित्यत्राह—**मद्व्यपाश्रय इति** । तस्यैव तात्पर्यमाह—**मयीति** । तर्हि ज्ञानस्य मोक्षहेतुत्वमुपेक्षितं स्यादित्यत्राह—**सोऽपीति** । प्रसादोऽनुग्रहः सम्यग्ज्ञानोदयः पदं पदनीयमुपनिषत्तात्पर्यगम्यमव्ययमपक्षयरहितम् ॥ ५६ ॥ परमेश्वरप्रसादस्यैवं माहात्म्यं यतः सिद्धं तस्मात्तत्प्रसादार्थं भवता प्रयतितव्यमि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

दूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति पूर्वकर्मणां ज्ञानेन प्रायश्चित्तेनेव सत्यपि नाशश्रवणे ज्ञानोत्तरकालीनानां कर्मणां नाशाभावात् ज्ञानोत्तरमपि देहधारणे स्वाभाविकानां कर्मणां वर्जनस्यासंभवादवश्यं ज्ञानिनोऽपि बन्धः स्यादित्याशङ्क्याह—**सर्वकर्माणीति** । मद्व्यपाश्रयोऽहमेव प्रज्ञानघनः प्रत्यगात्मा व्यपाश्रय आश्रयो यस्य सं मद्व्यपाश्रयो ज्ञानी । सर्वकर्माणि विहितानि निषिद्धानि वा सदाऽसकृत्कुर्वाणोऽपि मत्प्रसादान्मदनुग्रहात् शाश्वतं नित्यं अव्ययं परमसर्वोत्कृष्टं पदं पदनीयं मोक्षमवाप्नोति । ननु ज्ञानोत्तरमपि क्रियमाणैः कर्मभिर्बध्यते । 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति, 'न ह वा एवंविदि किंचन रज आध्वंसते' 'तं विदित्वा न

४ मधुसूदनीव्याख्या ।

योगारूढस्य तस्यैव शमः कारणमुच्यते' इत्यादिना योगमन्तःकरणशुद्धिमारूढस्य कर्मानुष्ठाननिषेधात् । न द्वितीयः । 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इत्यादिना ब्राह्मणधर्मस्य सर्वकर्मसंन्यासस्य क्षत्रियादिकं प्रति निषेधात् । नच कर्मानुष्ठानकर्मत्यागयोरन्यतरमन्तरेण तृतीयः प्रकारोऽस्ति । तस्मादुभयोरपि प्रतिषिद्धत्वेन गत्यन्तराभावेन चावश्यकर्तव्ये प्रतिषेधातिक्रमे कर्मत्याग एव श्रेयान् बन्धहेतुपरित्यागेन मोक्षसाधनपौष्कल्यात्, नतु कर्माण्यनुष्ठेयानि चित्तविक्षेपहेतुत्वेन मोक्षसाधनज्ञानप्रतिबन्धकत्वादित्यभिप्रायमर्जुनस्यालक्ष्याह भगवान्—यः पूर्वोक्तैः कर्मभिः शुद्धान्तःकरणः सोऽवश्यं भगवदेकशरणो भगवदेकशरणतापर्यन्तत्वादन्तःकरणशुद्धेः । एतादृशश्चेद्ब्राह्मणः संन्यासप्रतिबन्धरहितः सर्वकर्माणि संन्यस्यतु नाम । संसारविमोक्षस्तु तस्य भगवदेकशरणस्य भगवत्प्रसादादेव । एतादृशश्चेत्क्षत्रियादिः संन्यासानधिकारी स करोतु नाम कर्माणि किंतु मद्व्यपाश्रयः, अहं भगवान्वासुदेव एव व्यपाश्रयः शरणं यस्य स मदेकशरणो मय्यर्पितसर्वात्मभावः संन्यासानधिकारात्सर्वकर्माणि सर्वाणि कर्माणि वर्णाश्रमधर्मरूपाणि लौकिकानि प्रतिषिद्धानि वा सदा कुर्वाणो मत्प्रसादान्ममेश्वरस्यानुग्रहादवाप्नोति । हिरण्यगर्भवन्मद्विज्ञानोत्पत्त्या शाश्वतं नित्यं पदं वैष्णवमव्ययमपरिणामि । एतादृशो भगवदेकशरणः करोत्येव न प्रतिषिद्धानि कर्माणि, यदि कुर्यात्तथापि मत्प्रसादात्प्रत्यवायानुत्पत्त्या मद्विज्ञानेन मोक्षभाग्भवतीति भगवदेकशरणतास्तुत्यर्थं सर्वकर्माणि सर्वदा कुर्वाणोऽ-

५ भाष्योत्कर्षदीपिका ।

संन्यासानधिकारिणो ब्रह्मप्राप्तिसाधनं भगवद्भक्तियोगं तत्र तत्र प्रतिपादितं शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय स्तौति—**सर्वकर्माणीति** । सर्वाणि नित्यनैमित्तिकादीनि प्रतिषिद्धान्यपि सदा कुर्वाणोऽनुतिष्ठन्नपि मद्व्यपाश्रयोऽहं वासुदेव ईश्वरो व्यपाश्रय आश्रयणीयो यस्य स मद्व्यपाश्रयो मय्यर्पितसर्वात्मभावः मत्प्रसादान्ममेश्वरस्य प्रसादात् शाश्वतं नित्यमव्ययमपक्षयशून्यं पदं वैष्णवमवाप्नोति । निषिद्धान्यप्याचरन् शाश्वतं पदमव्ययमवाप्नोतीत्युक्त्या पापस्यापि मोक्षफलहेतुत्वं स्यादित्याशङ्कानिरासाय मद्व्यपाश्रयः मत्प्रसादादित्युक्तम् । तथाच येन भक्तियोगेन प्रसादितादीश्वरात्सर्वकर्माण्यनुतिष्ठतोऽपि वैष्णवपदप्राप्तिस्तस्य माहात्म्यं किं वक्तव्य-

६ श्रीधरीव्याख्या ।

त्यर्थः ॥ ५५ ॥ स्वकर्मभिः परमेश्वराराधनादुक्तं मोक्षप्रकारमुपसंहरति—**सर्वकर्माणीति** । सर्वकर्माणि नित्यनैमित्तिकानि काम्यानि च कर्माणि पूर्वोक्तक्रमेण मद्व्यपाश्रयः सन् कुर्वाणोऽहमेव व्यपाश्रय आश्रयणीयो नतु स्वर्गादिफलं यस्य सः मत्प्रसादाच्छाश्वतमनादि

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥**
**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।**
**अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

॥ ५६ ॥ यस्मादेवं तस्मात्—चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे संन्यस्य यत्करोषि यदश्नासीत्युक्तन्यायेन मत्परोऽहं वासुदेवः परो यस्य तव स त्वं मत्परः सन् मय्यर्पितसर्वात्मभावः बुद्धियोगं मयि समाहितबुद्धित्वं बुद्धियोगस्तं बुद्धियोगमुपाश्रित्याश्रयोऽनन्यशरणत्वं मच्चित्तो मय्येव चित्तं यस्य तव स त्वं मच्चित्तः सततं सर्वदा भव ॥ ५७ ॥ मच्चित्तः सर्वदुर्गाणि सर्वाणि दुस्तराणि संसारहेतुजातानि मत्प्रसादात्तरिष्यस्यतिक्रमिष्यसि । अथ चेद् यदि त्वं मदुक्तमहंकारात्पण्डितोऽहमिति न श्रोष्यसि न ग्रहीष्यसि ततस्त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि ॥ ५८ ॥

२ आनन्दगिरिव्याख्या ।

त्याह—यस्मादिति । भगवत्प्रसादादासादितसम्यग्ज्ञानादेव मुक्तिर्न कर्ममात्रादिति ज्ञानं विवेकबुद्धिः । आश्रयशब्दार्थमाह—अनन्येति ॥ ५७ ॥ किमतो भवति तदाह—मच्चित्त इति । भीत्यापि प्रवर्तेतेति मन्वानो विपर्यये

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

लिप्यते कर्मणा पापकेन' इत्यादिशास्त्रेण तत्त्वज्ञानिनः कर्मालेपश्रवणात् ॥ ५६ ॥ एवं वर्णाश्रमादिधर्मपुरस्कारेण ससाधना सफला च ब्रह्मविद्या निरूपिता । अस्याः प्राप्तये पुनः साधनत्वेन भक्तिमेव विधत्ते—चेतसेति । चेतसा विवेकबुद्ध्या सर्वाणि कर्माणि नित्यनैमित्तिकानि मयि भगवति वासुदेवे संन्यस्य 'यत्करोषि यदश्नासि' इत्युक्तरीत्या समर्प्य मत्परः अहमेव परः प्राप्यो यस्य नतु मद्भक्त्या अर्थादीन्प्रार्थयानः । बुद्धियोगं पूर्वोक्तं सिद्ध्यसिद्ध्योः समत्वलक्षणं बन्धहेतोरपि कर्मणो मोक्षहेतुत्वसंपादकं उपाश्रित्य आश्रित्य मच्चित्तः मदेकशरणः सततं सर्वदा भव ॥ ५७ ॥ एतस्य भक्तियोगस्य करणे गुणमकरणे दोषं चाह—मच्चित्त इति । दुर्गाणि आध्यात्मिकाधिभौतिकादीनि संकटानि । अहंकारात्स्वपाण्डित्याभिमानान्न श्रोष्यसि मद्वाक्यं तर्हि विनङ्क्ष्यसि पुरुषार्थशून्यो भविष्यसि ॥ ५८ ॥

४ मधुसूदनीव्याख्या ।

पीत्यनूद्यते ॥ ५६ ॥ यस्मान्मदेकशरणतामात्रं मोक्षसाधनं न कर्मानुष्ठानं कर्मसंन्यासो वा तस्मात्क्षत्रियस्त्वं—चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे संन्यस्य 'यत्करोषि यदश्नासि' इत्युक्तन्यायेन समर्प्य मत्परोऽहं भगवान्वासुदेव एव परः प्रियतमो यस्य स मत्परः सन् बुद्धियोगं पूर्वोक्तसमत्वबुद्धिलक्षणं योगं बन्धहेतोरपि कर्मणो मोक्षहेतुत्वसंपादकमुपाश्रित्यानन्यशरणतया स्वीकृत्य मच्चित्तो मयि भगवति वासुदेव एव चित्तं यस्य न राजनि कामिन्यादौ वा स मच्चित्तः सततं भव ॥ ५७ ॥ ततः किं स्यादिति तदाह—मच्चित्तस्त्वं सर्वदुर्गाणि दुस्तराणि कामक्रोधादीनि संसारदुःखसाधनानि मत्प्रसादात्स्वव्यापारमन्तरेणैव तरिष्यस्यनायासेनैवातिक्रमिष्यसि । अथ चेत् यदि तु त्वं मदुक्ते विश्वासमकृत्वाहंकारात्पण्डितोऽहमिति गर्वान्न श्रोष्यसि मद्वचनार्थं न करिष्यसि ततो विनङ्क्ष्यसि पुरुषार्थाद्भ्रष्टो भविष्यसि कामकारेण संन्यासाद्याचरन् ॥ ५८ ॥ त्वं चाहंकारं

५ भाष्योत्कर्षदीपिका ।

मिति भावः ॥५६॥ यतो भक्तियोगस्यैवं माहात्म्यं तस्मान्मत्प्रसादार्थं भवता मदाराधने प्रयतितव्यमित्याह—चेतसेति । चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयि संन्यस्य 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' इत्युक्तन्यायेन समर्प्य मत्परोऽहं वासुदेवएव परः प्रकृष्टः प्राप्यो यस्य नतु स्वर्गादिः स मत्परः सन् बुद्धियोगं समाहितबुद्धित्वं सिद्ध्यसिद्धिजन्याभ्यां हर्षविषादाभ्यां अक्षुभितबुद्धित्वमुपाश्रित्यानन्यशरणत्वेनाङ्गीकृत्य मच्चित्तो मय्येव चित्तं यस्य स त्वं सततं सर्वदा मच्चित्तो भव ॥५७॥ ततः किमित्यपेक्षायामाह—मच्चित्तः सर्वदुर्गाणि संसारहेतुभूताज्ञानादीनि मत्प्रसादात्तरिष्यस्यतिक्रमिष्यसि । व्यतिरेके दोषमाह—अथ चेद्यदि मदुक्तमहंकारात् पण्डितेन मया स्वबुद्ध्या यद्विचारितं तदेव सम्यगित्यभिमानान्न श्रोष्यसि न ग्रहीष्यसि ततस्त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि पुरुषार्थाद्भ्रष्टो भविष्यसि ॥ ५८ ॥ स्वतन्त्रोऽहं परोक्तं न करिष्यामीति

६ श्रीधरीव्याख्या ।

अव्ययं नित्यं सर्वोत्कृष्टं वैष्णवं पदं प्राप्नोति ॥ ५६ ॥ यस्मादेवं तस्मात्—चेतसेति । सर्वकर्माणि चेतसा मयि संन्यस्य समर्प्य मत्परः अहमेव परः प्राप्यः पुरुषार्थो यस्य सः व्यवसायात्मिकया बुद्ध्या योगमाश्रित्य सततं कर्मानुष्ठानकालेऽपि 'ब्रह्मार्पणं ब्रह्महविः' इति न्यायेन मय्येव चित्तं यस्य तथाभूतो भव ॥ ५७ ॥ ततो यद्भविष्यति तच्छृणु—मच्चित्त इति । मच्चित्तः सन् मत्प्रसादात्सर्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकाणि दुःखानि तरिष्यसि । विपक्षे दोषमाह—अथ चेद्यदि पुनस्त्वमहंकाराज्ज्ञातृत्वाभिमाना

**यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥**
**स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥**
**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

इदं च त्वया न मन्तव्यं स्वतन्त्रोऽहं किमर्थं परोक्तं करिष्यामीति । यदिचेत्त्वमहंकारमाश्रित्य न योत्स्य इति न युद्धं करिष्यामीति मन्यसे चिन्तयसि निश्चयं करोषि मिथ्यैव व्यवसायो निश्चयस्ते तव, यस्मात् प्रकृतिः क्षत्रस्वभावस्त्वां नियोक्ष्यति ॥ ५९ ॥ यस्माच्च स्वभावजेन शौर्यादिना यथोक्तेन कौन्तेय, निबद्धो निश्चयेन बद्धः स्वेनात्मीयेन कर्मणा कर्तुं नेच्छसि यत्कर्म मोहादविवेकतः करिष्यस्यवशोऽपि परवश एव तत्कर्म ॥ ६० ॥ यस्मात्—ईश्वर ईशनशीलो नारायणः सर्वभूतानां

२ आनन्दगिरिव्याख्या ।

दोषमाह—**अथ चेदिति** ॥ ५८ ॥ स्वातन्त्र्ये सति भीतेरवकाशो नास्तीत्याशङ्क्याह—**इदं चेति** ॥ ५९ ॥ इतश्च त्वया युद्धान्न वैमुख्यं कर्तुमुचितमित्याह—**यस्माच्चेति** । स्वभावजेन स्वेन कर्मणा निबद्धस्त्वमिति संबन्धः ॥ ६० ॥ इतोऽपि त्वया युद्धं कर्तव्यमेवेत्याह—**यस्मादिति** । अर्जुनशब्दस्योक्तार्थत्वे श्रुतिमुदाहरति—**अहश्चेति** । 'अहश्च

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

स्वतन्त्रोऽहं त्वदुक्तं न करिष्यामीत्याशङ्क्याह—**यदिति** । यत् यदि अहंकारं गर्वमाश्रित्य न योत्स्ये युद्धं न करिष्ये इति मन्यसे एष ते तव व्यवसायो निश्चयो मिथ्या । यतः प्रकृतिः क्षात्रस्वभावस्त्वां नियोक्ष्यति । 'प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति' इति चोक्तम् ॥ ५९ ॥ प्रकृतिस्त्वां नियोक्ष्यतीत्येतदेव व्याचष्टे—**स्वभावजेनेति** । स्वभावजेन पूर्वोक्तेन शौर्यादिना अवशोऽपि परवश एव तत्करिष्यसि ॥ ६० ॥ कोऽसौ परो यद्वशोऽहमस्मीत्यत आह—**ईश्वर इति** । ईश्वर ईशनशीलोऽन्तर्यामी पृथिव्यादीनामस्माकं च सर्वभूतानां सर्वप्राणिनां हृद्देशे बुद्धिगुहायां

४ मधुसूदनीव्याख्या ।

धार्मिकोऽहं क्रूरं कर्म न करिष्यामीति मिथ्याभिमानमाश्रित्य न योत्स्ये युद्धं न करिष्यामीति मन्यसे यन्मिथ्या निष्फल एष व्यवसायो निश्चयस्ते तव यस्मात्प्रकृतिः क्षत्रजात्यारम्भको रजोगुणस्वभावस्त्वां नियोक्ष्यति प्रेरयिष्यति युद्धे ॥ ५९ ॥ प्रकृतिं विवृणोति—स्वभावजेन पूर्वोक्तक्षत्रियस्वभावजेन शौर्यादिना स्वेनानागन्तुकेन कर्मणा निबद्धो वशीकृतस्त्वं हे कौन्तेय यद्बन्धुवधादिनिमित्तं युद्धं मोहात्स्वतन्त्रोऽहं यथेच्छामि तथा संपादयिष्यामीति भ्रमात् कर्तुं नेच्छसि तदवशोऽप्यनिच्छन्नपि स्वाभाविककर्मपरतन्त्रः परमेश्वरपरतन्त्रश्च करिष्यस्येव ॥ ६० ॥ स्वभावाधीनतामुक्त्वेश्वराधीनतां विवृणोति—ईश्वर ईशनशीलो

५ भाष्योत्कर्षदीपिका ।

त्वया न मन्तव्यं परतन्त्रत्वात्तवेत्याशयेनाह—**यदिति** । यच्चैतत्त्वमहंकारं मिथ्याभिमानमाश्रित्य न योत्स्ये युद्धं न करिष्यामीति मन्यसे निश्चयं करोषि एष ते व्यवसायोऽहं स्वतन्त्रोऽनर्थहेतुभूतं युद्धं न करिष्यामीति निश्चयो मिथ्या भ्रममूलको निष्फलः । यतः प्रकृतिः क्षत्रियस्वभावस्त्वां क्षत्रियं नियोक्ष्यति बलात्कारेण युद्धे प्रेरयिष्यति ॥ ५९ ॥ प्रकृतिपारतन्त्र्यं विशदयति—स्वभावजेन शौर्यादिना यथोक्तेन स्वेन स्वकीयेन कर्मणा निबद्धः निश्चयेन बद्धः यन्मोहादविवेकात्कर्तुं नेच्छसि तदवशोऽपि परवशएव करिष्यसि । यस्माच्चैवं तस्मात्कुन्तीपुत्रस्य क्षत्रियशिरोमणेरस्मत्संबन्धिनस्तव युद्धवैमुख्यं नोचितमिति सूचयन्संबोधयति हे कौन्तेयेति ॥ ६० ॥ स्वभावपारतन्त्र्यमुक्त्वेदानीमन्तर्यामिपारतन्त्र्यमाह । ईश्वर ईशनशीलः नारायणः सर्वभूतानां सर्वप्राणिनां हृद्देशे तिष्ठति

६ श्रीधरीव्याख्या ।

न्मदुक्तमेतन्न श्रोष्यसि तर्हि विनङ्क्ष्यसि पुरुषार्थाद्भ्रश्यसि ॥ ५८ ॥ कामं विनङ्क्ष्यामि नतु बन्धुभिर्युद्धं करिष्यामीति चेत्तत्राह—**यदिति** । मदुक्तमनादृत्य केवलमहंकारमवलम्ब्य युद्धं न करिष्यामीति त्वं यन्मन्यसेऽध्यवस्यसि एष तेऽध्यवसायो मिथ्यैव, अस्वतन्त्रत्वात्तव । तदेवाह—प्रकृतिस्त्वां रजोगुणरूपेण परिणता सती नियोक्ष्यति युद्धे प्रवर्तयिष्यत्येव ॥ ५९ ॥ किंच—**स्वभावेति** । स्वभावः क्षत्रियत्वे हेतुः पूर्वकर्मसंस्कारस्तस्माज्जातेन स्वकीयेन कर्मणा शौर्यादिना पूर्वोक्तेन निबद्धो यन्त्रितस्त्वं मोहाद्यत्कर्म युद्धल-

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ६० ॥ एष ईश्वरः परमात्मावश्यं शरणत्वेन ग्राह्यः । तत्र ह्यधिष्ठातरि कर्तरि बोद्धरि स्वात्ममये चित्पदे । कर्माणि न स्थितिभाञ्जि

१ श्रीमच्छांकरभाष्यम् ।

**सर्वप्राणिनां हृद्देशे हृदयदेशेऽर्जुन, शुक्लान्तरात्मस्वभावो विशुद्धान्तःकरण इति, 'अहश्च कृष्णमहरर्जुनं च' इति दर्शनात्, तिष्ठति स्थितिं लभते। तेषु स कथं तिष्ठतीत्याह—भ्रामयन्भ्रमणं कारयन्सर्वभूतानि यन्त्रारूढानीव यन्त्राण्यारूढान्यधिष्ठितानीवेतीवशब्दोऽत्र द्रष्टव्यः। यथा दारुकृतपुरुषादीनि**

२ आनन्दगिरिव्याख्या ।

कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः' इत्यत्र किंचिदहस्तावत्कृष्णमस्वच्छं कलुषितमिव लक्ष्यते किंचित्पुनरहरर्जुनमतिस्वच्छं शुद्धस्वभावमुपलभ्यते। एवमर्जुनशब्दस्य शुक्लशब्दपर्यायतया प्रयोगदर्शनादुक्तार्थत्वमुचितमित्यर्थः। यन्त्रारूढानीवेति कथमुच्यते तत्राह—इवशब्द इति। तदेव प्रपञ्चयति—यथेति। दारुमयानि यन्त्राणि यथा लौकिको मायावी मायया भ्रामयन्वर्तते तथेश्वरोऽपि सर्वाणि भूतानि भ्रामयन्नेव हृदये तिष्ठतीत्यर्थः ॥ ६१ ॥ ईश्वरः सर्वाणि

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

सर्वप्राणिप्रवर्तकस्तिष्ठति । कीदृशः । सर्वभूतानि भ्रामयन्नूर्ध्वाधोमार्गेषु संचारयन् काष्ठपुत्तिकाइव सूत्रधारः यन्त्रारूढानि यन्त्रमिव यन्त्रं उत्क्रमणादिसाधनं सर्वप्राणाद्यात्मकं लिङ्गं तदारूढानि मायया स्वशक्त्या भ्रामयन्निति संबन्धः। हे अर्जुन शुक्ल विशुद्धान्तःकरण, सेश्वरोऽसीति भावः। अत्राहंकारपूर्वकं यः कर्म करोति यश्च ईश्वरपरवशोऽहंकरोमीति बुद्ध्या करोति तयोरत्यन्तवैलक्षण्यप्रदर्शनार्थो मन्त्रो भाष्ये उदाहृतः 'अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसी वेद्याभिः' इति भारद्वाजार्षे 'अहश्च कृष्णमहरर्जुनं च' 'इत्याग्निमारुतस्य प्रतिपत्' इति ब्राह्मणेन आग्निमारुते शस्त्रे विनियुक्ता प्रथमेयमृक्। यस्मिन् दिवसे सोमः सूयते यागार्थं तदेव जन्मसाफल्यदिनं मुख्यमहःशब्दवाच्यम्। अन्यत्तु दिनमदिनमेव निष्फलत्वात्। तथाच स्मृतिः 'दशभिर्जन्मभिर्वेदा आधानं शतजन्मभिः। सहस्रैर्जन्मभिः सोमं ब्राह्मण्यं पातुमर्हति' इति सोमयागस्य दौर्लभ्यं दर्शयति । तदयमहःशब्दः कालवचनोऽपि सौम्ये कर्मणि वर्तते। यथा दर्शपौर्णमासशब्दौ। तत्रैवं सति अहः यागः कृष्णं अविदुषा कृतं अप्रकाशमिव भवति। तथाऽहरर्जुनं स्वच्छं तदेव विदुषा कृतं प्रकाशरूपमिव भवति। ते एते उभे अपि विद्वदविद्वत्कृते अहनी रजसी प्रवृत्तिरूपत्वात् रजोगुणकार्ये अपि वेद्याभिर्विद्याभिः कर्माङ्गावबद्धोपासनारूपा वा परमेश्वरे सर्वकर्मार्पणरूपा वा अहंकरोमीत्यभिमानरूपा वा विद्या विज्ञानानि ताभिर्विवर्तेते वैपरीत्येन वर्तेते। सोपासनं कर्म श्वेतं परमात्मतत्त्वप्रकाशकं बन्धविच्छेदहेतुः, मूढकृतं कर्म कृष्णं स्वरूपावरकं बन्धहेतुरित्यर्थः। तदेवं भगवान् पार्थं अर्जुनेतिसंबोधयन् एतस्य

४ मधुसूदनीव्याख्या ।

नारायणः सर्वान्तर्यामी 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति'। 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुतिसिद्धः सर्वभूतानां सर्वेषां प्राणिनां हृद्देशेऽन्तःकरणे तिष्ठति सर्वव्यापकोऽपि तत्राभिव्यज्यते सप्तद्वीपाधिपतिरिव राम उत्तरकोसलेषु । हेऽर्जुन हे शुक्ल शुद्धान्तःकरण, एतादृशमीश्वरं त्वं ज्ञातुं योग्योऽसीति द्योत्यते । किं कुर्वंस्तिष्ठति भ्रामयन्नितस्ततश्चालयन् सर्वभूतानि परतन्त्राणि मायया छद्मना यन्त्रारूढानीव सूत्रसंचारादियन्त्रमारूढानि दारुनिर्मितपुरुषादीन्यत्यन्तपरतन्त्राणि यथा

५ भाष्योत्कर्षदीपिका ।

सर्वत्र स्थितोऽपि हृदयेऽभिव्यक्ततया तिष्ठति। 'अहश्च कृष्णमहरर्जुनं च' इति श्रुतौ अर्जुनशब्दस्य शुक्लशब्दपर्यायतया प्रयोगदर्शनात् शुक्लान्तरात्मस्वभावो विशुद्धान्तःकरणोऽर्जुनस्त्वं संबोधयन्नर्जुनस्य तवाविवेकेन निबन्धनं स्वस्मिन्तत्क्रियाध्यारोपणं नोचितम्, किंतु ईश्वरप्रेरितः सर्वं करोमीति परिज्ञानमिति सूचयति। किं कुर्वन् तिष्ठतीत्याकाङ्क्षायामाह—भ्रामयन् भ्रमणं कारयन् सर्वभूतानि यन्त्रारूढानि यन्त्राण्यारूढान्यधिष्ठितानीव यथा मायावी दारुकृतपुरुषादीनि यन्त्रारूढानि मायया छद्मना भ्रामयंस्तिष्ठति तद्वदीश्वरो यन्त्रसदृश

६ श्रीधरीव्याख्या ।

क्षणं कर्तुं नेच्छसि, अवशोऽपि तत्कर्म करिष्यस्येव ॥ ६० ॥ तदेवं श्लोकद्वयेन सांख्यादिमतेन प्रकृतिपारतन्त्र्यं स्वभावपारतन्त्र्यं कर्मपारतन्त्र्यं चोक्तम्। इदानीं स्वमतमाह—**ईश्वर इति द्वाभ्याम्**। सर्वभूतानां हृदयमध्ये ईश्वरोऽन्तर्यामी तिष्ठति। किं कुर्वन् सर्वाणि भूतानि मायया निजशक्त्या भ्रामयन् तत्तत्कर्मसु प्रवर्तयन् यथा दारुयन्त्रमारूढानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः। यद्वा यन्त्राणि शरीराणि आरूढानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः। तथाच श्वेताश्वतराणां मन्त्रः— 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च' इति। अन्तर्यामिब्राह्मणं च 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरं एष त आत्मान्तर्याम्यमृतः' इत्यादि ॥ ६१ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

भवन्ति। नहि निशिततरनखरकोटिविदारितसमदकरिकरटगलितमुक्ताफलनिकरपरिकरप्रकाशितप्रतापमहसि सिंहकिशोरके गुहामधि-

**तमेव शरणं गच्छ सर्वभावेन भारत।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥ ६२॥**
**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु॥ ६३॥**

१ श्रीमच्छांकरभाष्यम्।

**यन्त्रारूढानि। मायया छद्मना भ्रामयंस्तिष्ठतीति संबन्धः॥ ६१॥ तमेवेश्वरं शरणमाश्रयं संसारार्तिहरणार्थं गच्छाश्रय सर्वभावेन सर्वात्मना हे भारत, ततस्तत्प्रसादादीश्वरानुग्रहात्परां प्रकृष्टां शान्तिं परामुपरतिं स्थानं च मम विष्णोः परमं पदमवाप्स्यसि शाश्वतं नित्यम्॥ ६२॥ इत्येतत्ते तुभ्यं ज्ञानमाख्यातं कथितं गुह्याद्गोप्याद्गुह्यतरमतिशयेन गुह्यं रहस्यमित्यर्थः। मया सर्वज्ञेनेश्वरेण। विमृश्य**

२ आनन्दगिरिव्याख्या।

भूतानि प्रेरयति चेत्प्राप्तकैवल्यस्यापि पुरुषकारस्यानर्थक्यमित्याशङ्क्याह—**तमेवेति**। सर्वात्मना मनोवृत्त्या वाचा कर्मणा चेत्यर्थः। ईश्वरस्यानुग्रहात्तत्त्वज्ञानोत्पत्तिपर्यन्तादिति शेषः। मुक्तास्तिष्ठन्त्यस्मिन्निति स्थानम्॥ ६२॥ शास्त्रमुपसंहर्तुमिच्छन्नाह—**इति ते ज्ञानमिति**। ज्ञानं करणव्युत्पत्त्या गीताशास्त्रम्, यथेच्छसि तथा कुरु ज्ञानं कर्म वा

३ नीलकण्ठव्याख्या (चतुर्धरी)।

स्वच्छान्तःकरणत्वद्योतनेन शुक्ले धर्मेऽधिकारं दर्शयति॥ ६२॥ तमेव ईश्वरं सर्वभावेन सर्वात्मना शरणमाश्रयं गच्छ श्रयस्व। तत्प्रसादात् तदनुग्रहात्परां शान्तिमुपरतिं समाधिमितियावत्। तथाच सूत्रं 'समाधिसिद्धिरीश्वरप्रणिधानात्' इति। स्थानं च परं विष्णोः पदं मोक्षं शाश्वतं नित्यं प्राप्स्यसि॥ ६२॥ सर्वगीतार्थमुपसंहरति—**इतीति**। इति एवंप्रकारं ते तुभ्यं मया सर्वज्ञेन परमकारुणिकेन ज्ञानं आख्यातम्। गुह्यान्मन्त्रतन्त्ररसायनरूपाद्गुह्यतरमतिशयितं

४ मधुसूदनीव्याख्या।

मायावी भ्रामयति तद्वदित्यर्थशेषः॥ ६१॥ ईश्वरः सर्वभूतानि परतन्त्राणि प्रेरयति चेत्प्राप्तं विधिप्रतिषेधशास्त्रस्य सर्वस्य पुरुषकारस्य चानर्थक्यमित्यत्राह—तमेवेश्वरं शरणमाश्रयं संसारसमुद्रोत्तरणार्थं गच्छ आश्रय सर्वभावेन सर्वात्मना मनसा वाचा कर्मणा च हे भारत तत्प्रसादात्तस्यैवेश्वरस्यानुग्रहात्तत्त्वज्ञानोत्पत्तिपर्यन्तात्परां शान्तिं सकार्याविद्यानिवृत्तिं स्थानमद्वितीयस्वप्रकाशपरमानन्दरूपेणावस्थानं शाश्वतं नित्यं प्राप्स्यसि॥ ६२॥ सर्वगीतार्थमुपसंहरन्नाह—इत्यनेन प्रकारेण ते तुभ्यमत्यन्तप्रियाय ज्ञानमात्ममात्रविषयं मोक्षसाधनं गुह्याद्गुह्यतरं परमरहस्यादपि संन्यासान्तात्कर्मयोगाद्रहस्यतरं तत्फलभूतत्वादाख्यातं समन्तात् कथितं मया सर्वज्ञेन परमाप्तेन। अतो विमृश्य पर्यालोच्य एतन्मयोपदिष्टं गीताशास्त्रमशेषेण सामस्त्येन सर्वैकवाक्यतया ज्ञात्वा स्वाधिकारानुरूपेण यथेच्छसि तथा कुरु न त्वेतदविमृश्यैव कामकारेण यत्किंचिदित्यर्थः। अत्र चैतावदुक्तम्—अशुद्धान्तःकरणस्य मुमुक्षोर्मोक्षसाधनज्ञानोत्पत्तियोग्यताप्रतिबन्धकपापक्षयार्थं फलाभिसन्धिपरित्यागेन भगवदर्पणबुद्ध्या वर्णाश्रमधर्मानुष्ठानं, ततः शुद्धान्तःकरणस्य विविदिषोत्पत्तौ गुरुमुपसृत्य ज्ञानसाधनवेदान्तवाक्यविचाराय ब्राह्मणस्य सर्वकर्मसंन्यासः, ततो भगवदेकशरणतया विविक्तदेशसेवादिज्ञानसाधनाभ्यासाच्छ्रवणमनननिदिध्यासनैरात्मसाक्षात्कारोत्पत्त्या

५ भाष्योत्कर्षदीपिका।

शरीरारूढानि भूतानीत्यर्थः॥ ६१॥ यस्मादीश्वर एव तत्तत्कर्मफलप्रदाता भ्रामयति तस्मात्तमेव ईश्वरं शरणं आश्रयं संसारार्तिहरणार्थं सर्वभावेन सर्वात्मना मनसा वाचा कर्मणा च गच्छ आश्रय। हेभारतेति संबोधयन् उत्तमवंशोद्भवस्त्वं योग्योऽसीति द्योतयति। तत्प्रसादात्तस्य सम्यगाराधितस्येश्वरस्य प्रसादादनुग्रहात्परां प्रकृष्टां शान्तिं अविद्योपशमरूपां सर्वानर्थनिवृत्तिस्थानं च मुक्तास्तिष्ठन्ति यस्मिन्निति स्थानं मम विष्णोः परमं पदं शाश्वतं सदैकरसमवाप्स्यसि॥ ६२॥ शास्त्रमुपसंहर्तुमिच्छन्नाह—**इतीति**। इत्येतत्ते तुभ्यं ज्ञायतेनेनेति ज्ञानं गीताशास्त्रं गुह्याद्गोप्याद्गुह्यतरं अतिशयेन गोप्यं रहस्यं मया सर्वज्ञेनाप्ततमेन शास्त्रयोनिना आख्यातं कथितम्। एतद्यथोक्तशास्त्रमशेषेण समस्तं विमृश्य विमर्शनमालोचनं कृत्वा यथेच्छसि तथा कुरु नत्वेतत्सा-

६ श्रीधरीव्याख्या।

**तमिति**। यस्मादेवं सर्वे जीवाः परमेश्वरपरतन्त्रास्तस्मादहंकारं परित्यज्य सर्वभावेन सर्वात्मना तमीश्वरमेव शरणं गच्छ। ततस्तस्यैव प्रसादात्परमामुपशान्तिं स्थानं च पारमेश्वरं शाश्वतं नित्यं प्राप्स्यसि॥ ६२॥ सर्वगीतार्थमुपसंहरन्नाह—**इतीति**। इति अनेन प्रकारेण तुभ्यं सर्वज्ञेन परमकारुणिकेन मया ज्ञानमाख्यातमुपदिष्टम्। कथंभूतम् गुह्याद्गोप्याद्रहस्यमन्त्रयोगादिज्ञानादपि गुह्यतरं

७ अभिनवगुप्ताचार्यव्याख्या।

तिष्ठति चपलमनसो वि(द्रव)द्रावणमात्रबलशालिनो हरिणपोतकाः स्वैरं स्वव्यापारपरिशीलनापङ्गुभावमवलम्बन्ते इति॥ ६१॥ ६२॥ तमेव शरणं गच्छेत्युपक्रम्य मत्प्रसादादिति निर्वाहवाक्यमभिदधद्भगवान्परमात्मानमीश्वरं वासुदेवं चैकतया योजयतीति तदेवेदं ज्ञान-

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।**
**इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**
**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**

१ श्रीमच्छांकरभाष्यम् ।

विमर्शनमालोचनं कृत्वैतद्यथोक्तं शास्त्रमशेषेण समस्तं यथोक्तं चार्थजातं यथेच्छसि तथा कुरु ॥६३॥ भूयोऽपि मयोच्यमानं शृणु—सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यन्तगुह्यतममत्यन्तरहस्यमुक्तमप्यसकृद्भूयः पुनः शृणु मे मम परमं प्रकृष्टं वचो वाक्यम् । न भयान्नाप्यर्थकारणाद्वा वक्ष्यामि किंतर्हीष्टः प्रियोऽसि मे मम दृढमव्यभिचारेणेति कृत्वा ततस्तेन कारणेन वक्ष्यामि कथयिष्यामि ते तव हितं परमं ज्ञानप्राप्तिसाधनम् । तद्धि सर्वहितानां हिततमम् ॥ ६४ ॥ किं तदित्याह—मदिति ।

२ आनन्दगिरिव्याख्या ।

यदिष्टं तदनुतिष्ठेत्यर्थः ॥ ६३ ॥ गीताशास्त्रस्य पौर्वापर्येण विमर्शनद्वारा तात्पर्यार्थं प्रतिपत्तुमसमर्थं प्रत्याह—**भूयोऽपीति** । किमर्थमिच्छन्पुनःपुनरभिदधासीत्याशङ्क्याह—**न भयादिति** । हितमिति साधारणनिर्देशे कथं परममित्यादिविशेषणमित्याशङ्क्याह—**तद्धीति** ॥ ६४ ॥ तदेव प्रश्नद्वारा विवृणोति—**किं तदित्यादिना** । उत्तरार्धं

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

रहस्यम् । एतद्यथोक्तं शास्त्रार्थजातं विमृश्य सम्यगालोच्य यथेच्छसि तथा कुरु ॥ ६३ ॥ एवं यथेष्टकरणमभ्यनुज्ञायापि अतिवात्सल्याच्छ्लोकद्वयेनैव कृत्स्नं शास्त्रार्थमुपदेक्ष्यंस्तद्ग्रहणे ऐकाग्र्यमस्य संपादयितुमाह—**सर्वेति** । सर्वेभ्यो गुह्येभ्यः अतिशयितं गुह्यं सर्वगुह्यतमं भूयः पुनरसकृदुक्तमपि मे मम वचनं शृणु । परमं परमार्थविषयत्वात् । न लोभान्नापि भयात्त्वां वक्ष्यामि । किं तर्हि मे मम इष्टोऽसि परमाप्तोसि इति हेतोः दृढं अतिशयितं ते तव हितं यतस्ततो वक्ष्यामि । तव इष्टत्वात् विद्यायाश्च हितत्वात् तद्वचनं आप्ते त्वयि अवश्यं वक्तव्यमिति भावः ॥ ६४ ॥

४ मधुसूदनीव्याख्या ।

मोक्ष इति । क्षत्रियादेस्तु संन्यासानधिकारिणो मुमुक्षोरन्तःकरणशुद्ध्यनन्तरमपि भगवदाज्ञापालनाय लोकसंग्रहाय च यथाकथंचित्कर्माणि कुर्वतोऽपि भगवदेकशरणतया पूर्वजन्मकृतसंन्यासादिपरिपाकाद्वा हिरण्यगर्भन्यायेन तदपेक्षणाद्वा भगवदनुग्रहमात्रेणेहैव तत्त्वज्ञानोत्पत्त्याऽग्रिमजन्मनि ब्राह्मणजन्मलाभेन संन्यासादिपूर्वकज्ञानोत्पत्त्या वा मोक्ष इति । एवं विचारिते च नास्ति मोहावकाश इति भावः ॥ ६३ ॥ अतिगम्भीरस्य गीताशास्त्रस्याशेषतः पर्यालोचननिवृत्तये कृपया स्वयमेव तस्य सारं संक्षिप्य कथयति—पूर्वं हि गुह्यात्कर्मयोगाद्गुह्यतरं ज्ञानमाख्यातम्, अधुना तु कर्मयोगात्तत्फलभूतज्ञानाच्च सर्वस्मादतिशयेन गुह्यं रहस्यं गुह्यतमं परमं सर्वतः प्रकृष्टं मे मम वचो वाक्यं भूयस्तत्रतत्रोक्तमपि त्वदनुग्रहार्थं पुनर्वक्ष्यमाणं शृणु । न लाभपूजाख्यात्याद्यर्थं त्वां ब्रवीमि किंतु इष्टः प्रियोऽसि मे मम दृढमतिशयेन इति यतस्ततस्तेनैवेष्टत्वेन वक्ष्यामि कथयिष्याम्य-

५ भाष्योत्कर्षदीपिका ।

कल्येनाविमृश्यैवेत्यर्थः ॥ ६३ ॥ अतिगम्भीरस्य गीताशास्त्रस्य पौर्वापर्येण विमर्शनद्वारा प्रतिपत्तुमसमर्थं प्रति स्वयमेव करुणानिधिः श्रीभगवान्वासुदेवस्तस्य सारं संगृह्य कथयति । तथा भूयोपि मयोच्यमानं सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यन्तरहस्यमुक्तमप्यसकृद् भूयः पुनः मे मम परमं प्रकृष्टं वचो वाक्यं शृणु । यत्तु पूर्वं गुह्यात्कर्मयोगाद्गुह्यतरं ज्ञानमाख्यातं अधुना तु कर्मयोगात् तत्फलभूतज्ञानयोगाच्च सर्वस्मादतिशयेन गुह्यतममिति तु नादर्तव्यम् । पूर्वस्मिन्श्लोके ज्ञानं करणव्युत्पत्त्या गीताशास्त्रपरमिति व्याख्यातत्वात् । 'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे' इत्यादौ ज्ञानस्य गुह्यतमत्वाभिधानायाऽत्र ज्ञानादपि गुह्यतममन्यदित्यभिधानस्यानुचितत्वाच्च किमर्थं पुनःपुनः श्रावयसीतिचेन्न भयान्नाप्यर्थकारणाद्वा वक्ष्यामि, किंतु दृढमव्यभिचारेणात्यन्तं मे मम इष्टः प्रियोऽसि तत्तस्मा-

६ श्रीधरीव्याख्या ।

एतन्मयोपदिष्टं गीताशास्त्रमशेषतो विमृश्य पर्यालोच्य पश्चाद्यथेच्छसि तथा कुरु । एतस्मिन्पर्यालोचिते सति तव मोहो निवर्तिष्यत इति भावः ॥ ६३ ॥ अतिगम्भीरं गीताशास्त्रमशेषतः पर्यालोचयितुमशक्नुवतः कृपया स्वयमेव तस्य सारं संगृह्य कथयति—**सर्वगुह्यतममितित्रिभिः** । सर्वेभ्योऽपि गुह्येभ्यो गुह्यतमं मे वचः तत्रतत्रोक्तमपि भूयः पुनः पुनरपि वक्ष्यमाणं शृणु । पुनःपुनः कथने हेतुमाह—दृढमत्यन्तं मे मम त्वमिष्टः प्रियोऽसीति मत्वा । तत एव हेतोस्ते हितं वक्ष्यामि । यद्वा त्वं ममेष्टोऽसि मया वक्ष्यमाणं च दृढं

७ अभिनवगुप्ताचार्यव्याख्या ।

मुक्तं गुह्याद्वेदान्तादपि गुह्यं परमविमृश्येति द्वैतप्रकाशनात् । एतच्चाशेषेण संग्रहतात्पर्यमत्र विचार्येत्यर्थः । तच्च तात्पर्यं यथावसरमस्माभिः श्लोकव्याहिकयैव प्रकाशितं यद्यपि तथापि स्फुटमशेषविमर्शनं प्रदर्श्यते उपादेयतमं ह्यदः । नास्मिन्निरूप्यमाणे श्रूयमाणे वा मतिस्तृप्यति ॥ ६३ ॥ गुह्यतमं यदत्र निश्चितं तज्ज्ञानमिदानीं शृण्वित्याह—इष्टोऽसीति माशुच इत्यन्तम् । मन्मना भवेत्यत्र शास्त्रे ब्रह्मार्पण एव

**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**मन्मना भव मच्चित्तो भव मद्भक्तो भव मद्भजनो भव मद्याजी मद्यजनशीलो भव मां नमस्कुरु नमस्कारमपि ममैव कुरु । तत्रैवं वर्तमानो वासुदेवएव समर्पितसाध्यसाधनप्रयोजनो मामेवैष्यस्यागमिष्यसि । सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोम्येतस्मिन्वस्तुनीत्यर्थः । यतः प्रियोऽसि मे । एवं भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा भगवद्भक्तेरवश्यंभाविमोक्षफलमवधार्य भगवच्छरणैकपरायणो भवेदिति वाक्यार्थः ॥ ६५ ॥ कर्मयोगनिष्ठायाः परमरहस्यमीश्वरशरणतामुपसंहृत्याथेदानीं**

२ आनन्दगिरिव्याख्या ।

व्याचष्टे—**तत्रेति** । एवमुक्तया रीत्या वर्तमानस्त्वं तस्मिन्नेव वासुदेवे भगवत्यर्पितसर्वभावो मामेवागमिष्यसीति संबन्धः । सत्यप्रतिज्ञाकरणे हेतुमाह—**यत इति** । इदानीं वाक्यार्थं श्रेयोऽर्थिनां प्रवृत्त्युपयोगित्वेन संगृह्णाति—**एवमिति** ॥ ६५ ॥ वृत्तमनूद्यानन्तरश्लोकतात्पर्यमाह—**कर्मयोगेति** । धर्मविशेषणादधर्मानुज्ञां वारयति—**धर्मेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

तदेव गुह्यतमं हितमाह—**मन्मना इति** । अहं प्रत्यगात्मानन्दैकघनः परिपूर्णस्तदाकारं मनो यस्य स मन्मनाः भव । एतेन ब्रह्मात्माभेदोऽपि साक्षात्करणीय इत्युत्तरषट्कार्थ उक्तः । कथमेवंविधा ज्ञाननिष्ठा लभ्यतेऽत आह—**मद्भक्तो भव** । एतेन भगवदुपासनात्मको मध्यमषट्कार्थ उक्तः । कथमल्पपुण्यस्य भक्तिरुदेष्यतीत्यत आह—मद्याजी भगवदर्थकर्मकरणशीलो भव । एतेन कर्मप्रधान आद्यषट्कार्थो विवृतः । ननु यस्य भगवद्याजित्वं न संभवति दारिद्र्यात्त्वृयाद्यभावाद्वा तस्य भगवद्भक्तिदौर्लभ्याद्ब्रह्माकारा चेतोवृत्तिर्दुर्लभतरेत्याशङ्क्याह—मां नमस्कुरु प्राकृतभक्त्यैव प्रतिमादौ भगवन्तं सर्वोपचारसमर्पणेन नमस्कारादिना सम्यगाराधयेत्यर्थः । तथाचाश्वलायनो नमस्कारस्यैव यज्ञत्वमुदाहरति 'यो नमसा स्वध्वरः, इति यज्ञो वै नम इति हि ब्राह्मणं भवति' इति च । एवमुक्तस्य सोपानत्रयारूढस्य फलमाह—**मामिति** । मामेव तत्पदार्थं सर्वजगत्कारणं सर्वेश्वरं सर्वशक्तिमखण्डैकरसं त्वं एष्यसि प्राप्स्यसि बिम्बइव प्रतिबिम्बं, घटाकाशइव महाकाशम् । अस्मिन्नर्थे शपथं करोति । ते तव पुरः सत्यं अबाधितार्थभूतं प्रतिजाने प्रतिज्ञां करोमि मामेवैष्यसीति । प्रियोऽसि मे यतस्त्वं मे मम प्रियोऽसि अतः प्रतारणानर्हे त्वयि सत्यमेवाहं

४ मधुसूदनीव्याख्या ।

पृष्टोऽपि सन्नहं ते तव हितं परमं श्रेयः ॥ ६४ ॥ तदेवाह—मयि भगवति वासुदेवे मनो यस्य स मन्मना भव सदा मां चिन्तय । द्वेषेण कंसशिशुपालादिरपि तथात आह—मद्भक्तः प्रेम्णा मय्यनुरक्तो मद्विषयेणानुरागेण सदा मद्विषयं मनः कुर्विति विधीयते । त्वद्विषयोऽनुराग एव केन स्यादित्यत आह—मद्याजी मां यष्टुं पूजयितुं शीलं यस्य स सदा मत्पूजापरो भव । पूजोपकरणाभावे तु मां नमस्कुरु कायेन वाचा मनसा च प्रह्वीभवनेनाराधय । इदं चार्चनवन्दनाद्यन्येषामपि भागवतधर्माणामुपलक्षणम् । तथाचोक्तं श्रीभागवते 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥' इति । एतच्च भक्तिरसायने व्याख्यातं विस्तरेण । एवं सदा भागवतधर्मानुष्ठानेन मय्यनुरागोत्पत्त्या मन्मनाः सन् मां भगवन्तं वासुदेवमेव एष्यसि प्राप्स्यसि वेदान्तवाक्यजनितेन मद्बोधेन । त्वंचात्र संशयं मा कार्षीः । सत्यं यथार्थं ते तुभ्यं प्रतिजाने सत्यामेव प्रतिज्ञां करोम्यस्मिन्नर्थे । यतः प्रियोऽसि मे । प्रियस्य प्रतारणा नोचितैवेति भावः । सत्यं ते प्रारब्धकर्मणोऽन्ते सति मामेष्यसीति वा । अनुवादापेक्षया विश्वासदार्ढ्यप्रयोजनं प्रथमं व्याख्यातमेव श्रेयः । अनेन यत्पूर्वमुक्तं 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥' इति तद्व्याख्यातं मच्छब्देनेश्वरत्वप्रकटनात् ॥ ६५ ॥ अधुना तु ईश्वरः सर्व-

५ भाष्योत्कर्षदीपिका ।

त्कारणाद्वक्ष्यामि कथयिष्यामि ते तव हितं परं ज्ञानप्राप्तिसाधनं तद्धि सर्वहितानां हिततमम् ॥ ६४ ॥ किं तदित्यपेक्षायामाह—मन्मना मयि भगवति वासुदेवे मनो यस्य स मच्चित्तो भव सर्वदा मामेव चिन्तय । मद्भक्तो मच्छ्रवणकीर्तनादिमद्भजनो भव । मद्याजी मद्यजनशीलो भव । मां नमस्कुरु नमस्कारमपि मामेव कुरु । तत्रैव वर्तमानो मयि वासुदेव एव समर्पितसाध्यसाधनप्रयोजनो मामेवैष्यसि आगमिष्यसि मदभेदज्ञानं प्राप्स्यसि । अस्मिन्नर्थे सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोमि । यतः प्रियोऽसि मे । तथाच मम भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा मद्भक्तेरवश्यंभावि मत्प्राप्तिफलत्वमवधार्य मच्छरणैकपरायणो भवेति

६ श्रीधरीव्याख्या ।

सर्वप्रमाणोपेतमिति निश्चित्य ततस्ते वक्ष्यामीत्यर्थः । दृढमतिरिति केचित्पठन्ति ॥ ६४ ॥ तदेवाह—**मन्मना इति** । मन्मना भव, मच्चित्तो भव, ममैव भक्तो भव, मद्याजी मद्यजनशीलो भव, मामेव नमस्कुरु एवं वर्तमानस्त्वं मत्प्रसादाल्लब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि

**सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**कर्मयोगनिष्ठाफलं सम्यग्दर्शनं सर्ववेदान्तसारविहितं वक्तव्यमित्याह—सर्वधर्मान्सर्वे च ते धर्माश्च सर्वधर्मास्तान् । धर्मशब्देनात्राधर्मोऽपि गृह्यते नैष्कर्म्यस्य विवक्षितत्वात् । 'नाविरतो दुश्चरितात्'**

२ आनन्दगिरिव्याख्या ।

ज्ञाननिष्ठेन मुमुक्षुणा धर्माधर्मयोस्त्याज्यत्वे श्रुतिस्मृती उदाहरति—**नाविरत इति** । मामेकमित्यादेस्तात्पर्यमाह—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ब्रवीमीत्यर्थः ॥ ६५ ॥ एवं नमनयजनभजनमननक्रमेण सांख्यनिष्ठा उक्ता या पूर्वं ध्यानेनात्मनि पश्यन्तीत्यनेन श्लोकेन दर्शिता इदानीं 'अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः' इति केवलोपास्तिनिष्ठा योगाख्योक्ता तामाह—**सर्वेति** । सर्वेषां वर्णानामाश्रमाणां देहेन्द्रियबुद्धीनां च धर्मानग्रिहो-

४ मधुसूदनीव्याख्या ।

भूतानां हृद्देशेऽर्जुन तिष्ठति तमेव सर्वभावेन शरणं गच्छेति यदुक्तं तद्विवृणोति—केचिद्वर्णधर्माः केचिदाश्रमधर्माः केचित्सामान्यधर्मा इत्येवं सर्वानपि धर्मान्परित्यज्य विद्यमानानविद्यमानान्वा शरणत्वेनानादृत्य मामीश्वरमेकमद्वितीयं सर्वधर्माणामधिष्ठातारं फलदातारं च शरणं व्रज । धर्माः सन्तु न सन्तु वा किं तैरन्यसापेक्षैर्भगवदनुग्रहादेव त्वन्यनिरपेक्षादहं कृतार्थो

५ भाष्योत्कर्षदीपिका ।

वाक्यार्थः ॥ ६५ ॥ परमेश्वरयजनात्मकं कर्मयोगं तन्निष्ठायाः परमरहस्यं ईश्वरशरणतालक्षणं भक्तियोगं चोपसंहृत्याथेदानीमुभयफलभूतं सम्यग्दर्शनं सर्ववेदान्तप्रतिपादितं तत्रतत्र विस्तरेण प्रोक्तमुपसंहरति–सर्वधर्मान् सर्वे च ते धर्माश्च सर्वधर्माः तान् । धर्मशब्देनात्राधर्मोऽपि गृह्यते । नैष्कर्म्यस्य विवक्षितत्वात् 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' 'त्यज धर्ममधर्मं च' इत्यादिश्रुतिस्मृतिभ्यः सर्वधर्मान् सर्वाणि कर्माणि परित्यज्य संन्यस्य मामेकं सर्वात्मानं समं सर्वभूतस्थमीश्वरमच्युतं गर्भजन्मजरावर्जितमहमेवैतादृशः परमात्मेत्येवमेकं शरणं व्रज । न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः । अहं त्वामेवं निश्चितबुद्धिं सर्वपापेभ्यः सर्वेभ्यो धर्माधर्मबन्धनरूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशकरणेन । उक्तंच दशमे 'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति । अतो मा शुचः शोकं माकार्षीरित्यर्थः । यत्तु कश्चित्प्रललाप 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यत्र कर्मनिष्ठा कर्मसंन्यासपर्यन्तोपसंहृता 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इत्यत्र संन्यासपूर्वकश्रवणादिपरिपाकसहितज्ञाननिष्ठोपसंहृता । अधुना तु 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' 'तमेव शरणं गच्छ सर्वभावेन' इति यदुक्तं तद्विवृण्वन् भगवद्भक्तिनिष्ठामुभयसाधनत्वादुभयफलभूतत्वाच्चान्ते उपसंहरति—**सर्वधर्मानिति** । सर्वान्वर्णाश्रमादिधर्मानविद्यमानान् विद्यमानान्वा परित्यज्य शरणत्वेनानादृत्य मामीश्वरमेकमद्वितीयं सर्वधर्माणामधिष्ठातारं फलदातारं च शरणं व्रज । धर्माः सन्तु न सन्तु वा किं तैरन्यसापेक्षैः । भगवदनुग्रहादेव अन्यनिरपेक्षादहं कृतार्थो भविष्यामीति निश्चयेन परमानन्दघनमूर्तिमनन्तं श्रीवासुदेवमेव भगवन्तमनुक्षणभावनया भजस्व । इदमेव परमं तत्त्वं नातोऽधिकमस्तीति विचारपूर्वकेण प्रेमप्रकर्षेण सर्वानात्मचिन्ताशून्यया मनोवृत्त्या तैलधारावदनविच्छिन्नया सततं चिन्तयेत्यर्थः । अत्र मामेकं शरणं व्रजेति सर्वशरणतापरित्यागे लब्धे सर्वधर्मान्परित्यज्येति निषेधानुवादस्तत्कार्यकारितालाभाय । यज्ञायज्ञीये साम्नि 'ऐरं कृत्वोद्गेयम्' इत्यत्र 'न गिरागिरेति ब्रूयात्' इतिवत् तथाच ममैव सर्वधर्मकारित्वान्मदेकशरणस्य नास्ति धर्मापेक्षेत्यर्थः। एतेनेदमपास्तम्। सर्वधर्मान्परित्यज्येत्युक्तेनाधर्माणां परित्यागो न लभ्यतेऽतो धर्मपदं कर्मपरमिति । न ह्यत्र कर्मत्यागो विधीयतेऽपितु विद्यमानेऽपि कर्मणि तत्रानादरेण भगवदेकशरणतामात्रं ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां साधारण्येन विधीयते । तत्र सर्वधर्मान्परित्यज्येति तेषां स्वधर्मादरसंभवेन तन्निवारणार्थे अधर्मे चानर्थफले कस्याप्यादराभावात् त्यागवचनमनर्थकमेव शास्त्रान्तरप्राप्तत्वाच्च तस्माद्वर्णाश्रमधर्माणामभ्युदयहेतुत्वप्रसिद्धेर्मोक्षहेतुत्वमपि स्यादेव । नचेदमपि संन्यासशास्त्रं भगवदेकशरणताया विधित्सितत्वात् तस्मात्सर्वधर्मान्परित्यज्येत्यनुवादएव सर्वेषां तच्छास्त्राणां परमरहस्यमीश्वरशरणतैवेति तत्रैव परिसमाप्तिर्भगवता कृता । तामन्तरेण संन्यासस्यापि स्वफलपर्यवसायित्वात् अर्जुनं च क्षत्रियं संन्यासानधिकारिणंप्रति संन्यासोपदेशायोगात् । अर्जुनव्याजेनान्यस्योपदेशे तु वक्ष्यामि ते हितं त्वा मोक्षयिष्यामि सर्वपापेभ्यस्त्वं माशुचः इत्युपक्रमोपसंहारौ न स्याताम् । तस्मात्संन्यासधर्मेष्वप्यनादरेण भगवदेकशरणतामात्रे तात्पर्यं भगवतः । यस्मात्त्वं मदेकशरणः ।

६ श्रीधरीव्याख्या ।

अत्र च संशयं माकार्षीः । त्वं हि मे प्रियोऽसि अतः सत्यं यथाभवत्येवं तुभ्यमहं प्रतिजाने प्रतिज्ञां करोमि ॥ ६५ ॥ ततोऽपि गुह्यतममाह—**सर्वेति** । मद्भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैंकर्यं त्यक्त्वा मदेकशरणो भव । एवंवर्तमानः कर्मत्यागनिमित्तं

७ अभिनवगुप्ताचार्यव्याख्या ।

सर्वथा प्राधान्यमिति निश्चितं ब्रह्मार्पणकारिणः शास्त्रमिदमर्थवदित्युक्तं आह च सर्वधर्मान्परित्यज्येति । यदिदं युद्धकरणे प्रासङ्गिकबन्धु-

१ श्रीमच्छांकरभाष्यम् ।

इति 'त्यज धर्ममधर्मं च' इत्यादिश्रुतिस्मृतिभ्यः । सर्वधर्मान्परित्यज्य संन्यस्य सर्वकर्माणीत्येतत् । मामेकं सर्वात्मानं समं सर्वभूतस्थमीश्वरमच्युतं गर्भजन्मजरामरणविवर्जितमहमेवेत्येवमेकं शरणं व्रज न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः । अहं त्वा त्वामेवं निश्चितबुद्धिं सर्वपापेभ्यः सर्वधर्माधर्मबन्धन-

२ आनन्दगिरिव्याख्या ।

न मत्तोऽन्यदिति । अर्जुनस्य क्षत्रियत्वादुक्तसंन्यासद्वारा ज्ञाननिष्ठायां मुख्यानधिकारेऽपि तं पुरस्कृत्याधिकारि-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

त्रादीन् सुखदुःखादींश्च त्यक्त्वा मामेकं सर्वेश्वरं सर्वशक्तिं सोपाधिं निरुपाधिं वाऽखण्डैकरसमानन्दघनं परमात्मानम् । शरणं शृणाति हिनस्त्यविद्यादीन्क्लेशादीन् शरणमाश्रयः परायणं गच्छ प्राप्नुहि । मदेकशरणो भवेत्यर्थः । अत्र अन्नं भुक्त्वैव तृप्यति नतु जलमात्रं पीत्वेतिवद्धेतुत्वं क्त्वाप्रत्ययार्थः । सर्वधर्मपरित्यागेन मां शरणं व्रजेत्यर्थः । यथोक्तम् 'अनात्मदर्शनेनैव परात्मानमुपास्महे' इति । एतस्य भगवच्छरणीकरणस्य फलमाह—अहं त्वेति । अहं प्रत्यगात्मा सूर्याद्यन्तर्यामी नारायणः सकलपाप्मविनिर्मुक्तः सम्यग्ज्ञातः सन् त्वा त्वां सर्वपापेभ्यः

४ मधुसूदनीव्याख्या ।

भविष्यामीति निश्चयेन परमानन्दघनमूर्तिमनन्तं श्रीवासुदेवमेव भगवन्तमनुक्षणं भावनया भजस्व, इदमेव परमं तत्त्वं नातोऽधिकमस्तीति विचारपूर्वकेण प्रेमप्रकर्षेण सर्वानात्मचिन्ताशून्यया मनोवृत्त्या तैलधारावदविच्छिन्नया सततं चिन्तयेत्यर्थः । अत्र मामेकं शरणं व्रजेत्यनेनैव सर्वधर्मशरणतापरित्यागे लब्धे सर्वधर्मान्परित्यज्येति निषेधानुवादस्तु कार्यकारितालाभाय 'यज्ञायज्ञीये साम्नि ऐरं कृत्वोद्गेयमित्यत्र न गिरा गिरेतिब्रूयात्' इतिवत् । तथाच ममैव सर्वधर्मकार्यकारित्वान्मदेकशरणस्य नास्ति धर्मापेक्षेत्यर्थः । एतेनेदमपास्तं सर्वधर्मान्परित्यज्येत्युक्ते नाधर्माणां परित्यागो लभ्यतेऽतो धर्मपदं कर्ममात्रपरमिति । नह्यत्र कर्मत्यागो विधीयते अपितु विद्यमानेऽपि कर्मणि तत्रानादरेण भगवदेकशरणतामात्रं ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां साधारण्येन विधीयते । तत्र सर्वधर्मान्परित्यज्येति तेषां स्वधर्मादरसंभवेन तन्निवारणार्थम् । अधर्मे चानर्थफले कस्याप्यादराभावात्तत्परित्यागवचनमनर्थकमेव, शास्त्रान्तरप्राप्तत्वाच । तस्माद्वर्णाश्रमधर्माणामभ्युदयहेतुत्वप्रसिद्धेर्मोक्षहेतुत्वमपि स्यादिति शङ्कानिराकरणार्थमेवैतद्वच इति न्याय्यम् । नच सर्वधर्माधर्मपरित्यागोऽत्र विधीयते संन्यासशास्त्रेण प्रतिषेधशास्त्रेण च लब्ध-

५ भाष्योत्कर्षदीपिका ।

सर्वधर्मानादरेणातोऽहं सर्वकार्यकारित्वात्त्वां सर्वपापेभ्यो बन्धुवधादिनिमित्तेभ्यः संसारहेतुभ्यो मोक्षयिष्यामि प्रायश्चित्तं विनैव 'धर्मेण पापमपनुदति' इतिश्रुतेर्धर्मस्थानीयत्वाच मम । अतो माशुचः युद्धे प्रवृत्तस्य मम बन्धुवधादिनिमित्तप्रत्यवायात्कथं निस्तारः स्यादिति शोकं माकार्षीरित्यादि तन्नादर्तव्यम् । श्रीमतां सर्वज्ञानां भगवदात्मत्वात्, भगवदभिप्रायविदां भगवतां भाष्यकृतामभिप्रायापरिज्ञानविजृम्भितत्वात् । तथाहि सप्तदशाध्यायान्तगीताशास्त्रार्थोपसंहारात्मकेऽस्मिन्नध्याये प्रतिपादितेन कर्मादिना एतदध्यायान्तसमस्तशास्त्रोपसंहारो नोपपद्यते । नहि 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यत्र कर्मनिष्ठानिरूपणस्य समाप्तिर्दृश्यते 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः । चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः' इत्युक्तत्वात्तस्मात्तत्रतत्र प्रतिपादितं कर्मयोगं भक्तियोगं ज्ञानं चास्मिन्नध्याये संग्रहेणोपपाद्य सर्वशास्त्रान्त उपसंहरतीत्येवयुक्तम् । अन्यथा 'बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव । मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि' इत्यत्र भक्तियोग उपसंहृत इत्यपि कुतो न स्यात् । तस्मात्कर्मयोगादिप्रतिपादनपरिसमाप्तावेव यथासंभवं उपसंहारवर्णनं युक्तं नतु यत्रकुत्रचित् । 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते । नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।' 'इदं तु ते गुह्यतमं' 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति' इत्यादिना प्रतिपादितायाः समस्तवेदान्ततात्पर्यभूतायाः कर्मयोगभक्तियोगफलभूतायाः संन्यासपूर्विकायाः ज्ञाननिष्ठाया उपसंहारस्य शास्त्रान्ते कर्तव्यत्वावश्यकत्वेन सर्वधर्मान्परित्यज्येत्यनेन सर्वकर्मसंन्यासस्य स्पष्टतया प्रतीयमानत्वेन च तादृशज्ञाननिष्ठोपसंहारस्य युक्ततामभिप्रेत्याचार्यैः सैवास्मिन्श्लोक उपसंहृता । ईश्वराभिप्राय ईश्वरेणैव ज्ञायते नतु वराकैरस्मदादिभिः । विष्णुशिवयोरेकात्मत्वं परमात्मत्वं च श्रुतिस्मृतीतिहासपुराणादिसिद्धम् । तमेव शरणं गच्छेत्यस्य विवरणमनेन क्रियत इत्यपि न । असंदिग्धार्थस्य संदिग्धार्थेन विवरणायोगात् । सर्वधर्मान्परित्यज्येति तु तत्रतत्रार्जुनं निमित्तीकृत्य संन्यासपूर्वकज्ञाननिष्ठाप्रतिपादनमिवार्जुनस्य क्षत्रियत्वादुक्तसंन्यासद्वारा ज्ञाननिष्ठायामनधिकारेऽपि तं पुरस्कृत्याधिकारिभ्यस्तस्योपदिदिक्षितत्वान्न विरुध्यतेऽर्जुनं निमित्तीकृत्य लोकोपकाराय भगवतः प्रवृत्तिरिति संमतम् । अन्यथा क्षत्रियस्यार्जुनस्य श्रोतुर्यस्मिन्नधिकारस्तस्यैव वक्तव्यत्वे संन्यासपूर्विकायाः ज्ञाननिष्ठायाः वर्णनमनर्थकं स्यात् । वस्तुतोऽर्जुनस्य स्वविग्रहस्य सर्वज्ञत्वेनोपदेशानर्थक्यं च भवेत् । अपिच तं प्रति सर्वधर्मपरित्यागकथनं भगवतः पूर्वापरविरुद्धम् । 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि' । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' 'न

७ अभिनवगुप्ताचार्यव्याख्या ।

वधादि तस्य सर्वस्याहं कर्तेत्यात्मधर्मतां परित्यज्य तथाचार्यादिहननक्रियानिषेधे ममाधर्मो भविष्यतीति मनसाविहाय मामेवैकं सर्वकर्तारं

१ श्रीमच्छांकरभाष्यम् ।

**रूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशीकरणेन। उक्तंच 'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता'**

२ आनन्दगिरिव्याख्या ।

भ्यस्तस्योपदिदिक्षितत्वादविरोधमभिप्रेत्याह—**अहं त्वेति** । उक्तेऽर्थे दाशमिकं वाक्यमनुकूलयति—**उक्तंचेति** ।

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

संचितक्रियमाणेभ्यो गोत्रवधादिजेभ्यो मोक्षयिष्यामि । मा शुचः शोकं माकार्षीः । तथाहि । तत्त्वज्ञानफलं पापास्पर्शः शोकतरणं च सर्वश्रुतिस्मृतिप्रसिद्धम् । आदित्यान्तर्वर्तिनं नारायणं प्रकृत्य च्छान्दोग्ये श्रूयते 'स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' 'तरति शोकमात्मवित्' 'तत्र को मोहः कः शोक

४ मधुसूदनीव्याख्या ।

त्वादेव । नचेदमपि संन्यासशास्त्रं भगवदेकशरणतया विधित्सितत्वात् । तस्मात्सर्वधर्मान्परित्यज्येत्यनुवाद एव । सर्वेषां तु शास्त्राणां परमं रहस्यमीश्वरशरणतैवेति तत्रैव शास्त्रपरिसमाप्तिर्भगवता कृता । तामन्तरेण संन्यासस्यापि स्वफलापर्यवसायित्वात् । अर्जुनं च क्षत्रियं संन्यासानधिकारिणं प्रति संन्यासोपदेशायोगात् । अर्जुनव्याजेनान्यस्योपदेशे तु 'वक्ष्यामि ते हितं त्वा मोक्षयिष्यामि सर्वपापेभ्यस्त्वं, मा शुचः' इति चोपक्रमोपसंहारौ न स्याताम् । तस्मात्संन्यासधर्मेष्वप्यनादरेण भगवदेकशरणतामात्रे तात्पर्यं भगवतः । यस्मात्त्वं मदेकशरणः सर्वधर्मानादरेण, अतोऽहं सर्वधर्मकार्यकारित्वात्त्वां सर्वपापेभ्यो बन्धुवधादिनिमित्तेभ्यः संसारहेतुभ्यो मोक्षयिष्यामि प्रायश्चित्तं विनैव । 'धर्मेण पापमपनुदति' इति श्रुतेर्धर्मस्थानीयत्वाच्च मम । अतो मा शुचः युद्धे प्रवृत्तस्य मम बन्धुवधादिनिमित्तप्रत्यवायात्कथं निस्तारः स्यादिति शोकं माकार्षीः ॥ 'भाष्यकारैर्निरस्तानि दुर्मतानीह विस्तरात् । ग्रन्थव्याख्यानमात्रार्थी न तदर्थमहं यते ॥ तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा । भगवच्छरणत्वं स्यात्साधनाभ्यासपाकतः ॥ विशेषो वर्णितोऽस्माभिः सर्वो भक्तिरसायने । ग्रन्थविस्तरभीरुत्वाद्दिङ्मात्रमिह कथ्यते ॥ तत्राद्यं मृदु यथा—'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥' द्वितीयं मध्यं यथा—'हस्तमुत्क्षिप्य यातोऽसि बलात्कृष्ण किमद्भुतम् । हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥' तृतीयमवधिमात्रं यथा—'सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरः स एकः । इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥' इति दूतं प्रति यमवचनम् । अम्बरीषप्रह्लादगोपीप्रभृतयश्चास्यां भूमिकायामुदाहर्तव्याः । अस्मिन् हि

५ भाष्योत्कर्षदीपिका ।

कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' 'स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु' 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' 'श्रेयान्स्वधर्मो विगुणः' 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्' 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः' 'स्वभावजेन कौन्तेय' इत्यादिना तत्रतत्र कर्मापरित्यागमत्याग्रहेण प्रतिपाद्यात्रैवं कथने परस्परविरोधस्य स्पष्टत्वात् । एतेन सर्वधर्मान्परित्यज्य शरणत्वेनानादृत्य धर्माः सन्तु न सन्तु वा किंतैरित्यादिवर्णनमपास्तम् । 'यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणां' 'मत्कर्मकृन्मत्परमः' 'स्वकर्मणा तमभ्यर्च्य' इत्यादिवचनानां विरोधस्यास्मिन्नश्रुतकल्पनेऽपि तुल्यत्वात् । कर्माधिकृतेनाज्ञेन वेदविहितं धर्ममनादृत्य मद्रूपोपासनं कार्यमिति सर्वस्मिन्गीताशास्त्रे क्वाप्यनुक्तत्वेन तदुपसंहारवर्णनस्यानुचितत्वाच्च । 'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाः रताः' 'मामनुस्मर युध्य च' 'श्रुतिस्मृती ममैवाज्ञे ते उल्लङ्घ्य प्रवर्तते । आज्ञाभङ्गो मम द्रोहो मद्भक्तोऽपि न वैष्णवः ॥ वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम् । तस्मात्सदाचारवता पुरुषेण जनार्दनः । आराध्यते स्ववर्णोक्तधर्मानुष्ठानकारिणा' इत्यादिश्रुतिस्मृतिभ्यः कर्मसमुच्चितोपासनायां वैशिष्ट्यबोधनाच्च । यत्र तु कर्मणो निन्दा पुराणादिषु श्रूयते न सा भगवदाराधनलक्षणस्य निष्कामकर्मणो वेदविहितस्य नियतस्यापितु भगवत्पराङ्मुखेनानुष्ठानस्य सकामस्य । तस्मादर्जुनेन सर्वकर्मत्यागः कर्तव्य इति भगवतो नाभिप्रेतम् किंतु त्यागाधिकारिभिः कर्ममात्रं संन्यस्याहमेव भगवान्स वासुदेवः नतु मत्तोऽन्योऽस्तीति ज्ञाननिष्ठा सम्यक् संपादनीयेति वक्ष्यामि ते हितं त्वां मोक्षयिष्यामि सर्वपापेभ्यस्त्वं माशुच इति चोपक्रमोपसंहारात् । 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्यादिवत् अर्जुनव्याजेनान्यस्योपदेशेपि न विरुध्यते । यदपि सर्वपापेभ्यः बन्धुवधादिनिमित्तेभ्य इत्यादि तदपि साहसमात्रम् । 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इत्यादौ अग्नीषोमीयपशुहिंसावद्युद्धे शत्रुहननरूपाया विहिताया हिंसायाः पापजनकत्वाभावस्यात्याग्रहेण स्वेनैव स्थापितत्वात् । यदप्यत्रेत्यादि तदपि बालविमोहनमात्रम् । उक्तयुक्त्या मामेकं शरणं व्रजेत्यत्राचार्योक्तार्थस्यैव विवक्षितत्वात् । मामेकं शरणं व्रज स्वधर्माचरणादिना मामेवाराधय नतु देवतान्तरमित्यर्थस्यापि संभवेन सर्वधर्मत्यागस्य लाभायोगाच्च । यदप्येते-

७ अभिनवगुप्ताचार्यव्याख्या ।

परमेश्वरं स्वतन्त्रं शरणं सर्वस्वभावाधिष्ठायकतया व्रज । अतएवाहं सर्वज्ञः सर्वेभ्यः पापेभ्यस्त्वां मोक्षयिष्यामीति । माशुचः किंकर्तव्यता

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

इति । अतो मा शुचः शोकं मा कार्षीरित्यर्थः ॥ ६६ ॥ अस्मिन्हि गीताशास्त्रे परं निःश्रेयससाधनं निश्चितं किं ज्ञानं किं कर्म वाहोस्विदुभयमिति । कुतः संदेहः 'यज्ज्ञात्वामृतमश्नुते', 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इत्यादीनि वाक्यानि केवलाज्ज्ञानान्निःश्रेयसप्राप्तिं दर्शयन्ति । 'कर्मण्येवाधिकारस्ते' 'कुरु कर्मैव' त्येवमादीनि कर्मणामवश्यकर्तव्यतां दर्शयन्ति । एवं ज्ञानकर्मणोः

२ आनन्दगिरिव्याख्या ।

ईश्वरस्य त्वदीयबन्धननिरसनद्वारा त्वत्पालयितृत्वान्न ते शोकावकाशोऽस्तीत्याह—अत इति ॥ ६६ ॥ पूर्वापरालोचनातो गीताशास्त्रं व्याख्यायोपसंहृत्य तत्तात्पर्यार्थं निर्धारितमपि विचारद्वारा निर्धारयितुं विचारमवतारयति—अस्मिन्निति । किंशब्दार्थमेव त्रेधा विभजते—ज्ञानमिति । निमित्ताभावे संशयस्याभासत्वान्न निरस्येति मत्वा पृच्छति—कुत इति । तत्तदर्थावद्योतकानेकवाक्यदर्शनं तन्निमित्तमित्याह—यज्ज्ञात्वेति । कर्मणामवश्यकर्तव्यत्वोपलम्भात्तेभ्योऽपि निःश्रेयसप्राप्तिर्भातीत्याह—कर्मण्येवेति । तथापि समुच्चयप्रापकं नास्तीत्याशङ्क्याह—एवमिति । सत्यां

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

एकत्वमनुपश्यतः' इति । उदितः ऊर्ध्वमितो गतः पाप्मान्युत्क्रम्य गतो निष्पाप इति श्रुतिपदार्थः । वर्णाश्रमधर्मसंन्यासपूर्वकं षष्ठाध्यायेनोक्तेन योगेन देहादीनां धर्मांश्च त्यक्त्वा निर्विकल्पमात्मानं साक्षात्कुर्वतो न कर्मलेप इत्यर्थः ॥ ६६ ॥ एवं श्लोकद्वयेन 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति सांख्ययोगौ द्वितीयाध्याये दर्शितावुपसंहृत्य विद्यासंप्रदायविधिमाह—इदमिति । अतपस्काय तप आलोचनं तद्रहिताय । अयत्नशीलायेत्यर्थः ।

४ मधुसूदनीव्याख्या ।

गीताशास्त्रे निष्ठात्रयं साध्यसाधनभावापन्नं विवक्षितमुक्तं च बहुधा । तत्र कर्मनिष्ठा सर्वकर्मसंन्यासपर्यन्तोपसंहृता 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यत्र । संन्यासपूर्वकश्रवणादिपरिपाकसहिता ज्ञाननिष्ठोपसंहृता 'ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इत्यत्र । भगवद्भक्तिनिष्ठा तूभयसाधनभूतोभयफलभूता च भवतीत्यन्त उपसंहृता 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इत्यत्र । भाष्यकृतस्तु सर्वधर्मान्परित्यज्येति सर्वकर्मसंन्यासानुवादेन मामेकं शरणं व्रजेति ज्ञाननिष्ठोपसंहृतेत्याहुः । भगवदभिप्रायवर्णने के वयं वराकाः 'वचो यद्गीताख्यं परमपुरुषस्यागमगिरां रहस्यं तद्व्याख्यामनतिनिपुणः को वितनुताम् । अहं त्वेतद्बाल्यं यदिह कृतवानस्मि कथमप्यहेतुस्नेहानां तदपि कुतुकायैव महताम्' ॥ ६६ ॥ समाप्तः शास्त्रार्थः । शास्त्रसंप्रदायविधिमधुना कथयति—इदमिति । इदं गीताख्यं सर्वशास्त्रार्थरहस्यं ते तव संसारविच्छित्तये मयोक्तं नातप-

५ भाष्योत्कर्षदीपिका ।

नेदमपास्तमित्यादि तदपि तुच्छमेव । 'नाविरतो दुश्चरितात्' 'त्यज धर्ममधर्मं च' इति भाष्योदाहृतश्रुतिस्मृत्यनवलोकनविजृम्भितत्वात् । तथाच सर्वस्याप्यज्ञस्य कामिनो विषयरागवशादधर्माचरणं दृश्यते शरीरस्थितिमात्रविषयकामनया तदाचरणं संन्याsधिकारिणोऽपि संभाव्य तत्परित्यागवचनस्य श्रुतिस्मृत्यनुरोधेन सार्थक्यम् । अधर्मेऽनर्थफले कस्याप्यादरो नास्तीति वक्तुमशक्यं लोके तदादरस्योपलभ्यमानत्वादन्यथा न सुरां पिबेत् न कलञ्जं भक्षयेदित्यादि निषेधवाक्यानां वैयर्थ्यं स्यात् । तस्मादत्रार्जुनं निमित्तीकृत्याधिकारिभ्यो वेदविहितकर्मत्यागो गीताशास्त्रे उपपाद्य तदन्ते उपसंह्रियते । भगवदेकशरणतायाः तमेव शरणं गच्छेत्यनेनोक्तत्वात् । 'मन्मना भव मद्भक्तो मद्याजी'त्यनेन भक्तियोगस्य कर्मयोगस्य चोपसंहृतत्वात् । यत्तु संन्यासशास्त्रेण प्रतिषिद्धशास्त्रेण च लब्धत्वान्नात्र सर्वधर्मत्यागो विधीयते इति तन्न विधिनिषेधरूपेण वेदेन प्राप्तत्वात् । तदर्थप्रतिपादकस्मृतीतिहासपुराणानां वैयर्थ्यप्रसङ्गादित्यास्तां तावत् । एवमन्येषामपि कुकल्पना भाष्यविरुद्धाः सम्यग्विचार्य निराकर्तव्याः । 'गोभाराहरणार्थिना सुविहता वेदार्थनाशे रता येऽनाद्यं जगतां निदानममलं शास्त्रस्य योनिं विभुम् । यत्कारुण्यकटाक्षतोऽभिलषितं पूर्णं ममाप्यद्भुतं तं वन्दे परमामृतं चिवमहं कृष्णं गुरूणां गुरुम्' ॥ ६६ ॥ एवं सप्तदशाध्यायान्तगीताशास्त्रार्थं सर्वं प्रतिपत्तिसौकर्यार्थमस्मिन्नध्याये विस्तरेणोपसंहृत्यान्ते मन्मना भवेति द्वाभ्यां पुनः स्वशास्त्रदार्ढ्याय संक्षेपतस्तस्योपसंहारं कृत्वाथेदानीं शास्त्रसंप्रदायविधिमाह—इदमिति । इदं शास्त्रं

६ श्रीधरीव्याख्या ।

पापं स्यादिति मा शुचः शोकं माकार्षीः । यतस्त्वा त्वां मदेकशरणं सर्वपापेभ्योऽहं मोक्षयिष्यामि ॥ ६६ ॥ एवं गीतार्थतत्त्वमुपदिश्य तत्संप्रदायप्रवर्तने नियममाह—इदमिति । इदं गीतार्थतत्त्वं ते त्वयाऽतपस्काय स्वधर्मानुष्ठानहीनाय न वाच्यं, न चाभक्ताय

७ अभिनवगुप्ताचार्यव्याख्या ।

मोहं मागाः ॥ ६५ ॥ ६६ ॥ इदं त इति । नास्यज्ञानस्य गोप्यमानत्वं सिद्धिदं सर्वजनाविषयत्वात् । तपसा तावत्पापग्रन्थौ विशीर्णे कुशल-

१ श्रीमच्छांकरभाष्यम्।

कर्तव्यतोपदेशात्समुच्चितयोरपि निःश्रेयसहेतुत्वं स्यादिति भवेत्संशयः। किं पुनरत्र मीमांसाफलम्। नन्वेतदेवैषामन्यतमस्य परमनिःश्रेयससाधनत्वावधारणम्। अतो विस्तीर्णतरं मीमांस्यमेतत्। आत्मज्ञानस्य तु केवलस्य निःश्रेयसहेतुत्वं भेदप्रत्ययनिवर्तकत्वेन कैवल्यफलावसानत्वात्। क्रियाकारकफलभेदबुद्धिरविद्ययात्मनि नित्यप्रवृत्ता मम कर्माहं कर्तामुष्मै फलायेदं कर्म करिष्यामीतीयमविद्यानादिकालप्रवृत्ता। अस्या अविद्याया निवर्तकमयमहमस्मि केवलोऽकर्ताक्रियोऽफलो न मत्तोऽन्योऽस्ति कश्चिदित्येवंरूपमात्मविषयं ज्ञानमुत्पद्यमानं कर्मप्रवृत्तिहेतुभूताया भेदबुद्धेर्निवर्तकत्वात्। तुशब्दः पक्षद्वयव्यावृत्त्यर्थो न केवलेभ्यः कर्मभ्यो नच ज्ञानकर्मभ्यां समुच्चिताभ्यां निःश्रेयसप्राप्तिरिति पक्षद्वयं निवर्तयति। अकार्यत्वाच्च निःश्रेयसस्य कर्मसाधनत्वानुपपत्तिः। नहि नित्यं वस्तु कर्मणा ज्ञानेन वा क्रियते। केवलज्ञानमप्यनर्थकं तर्हि। नाविद्यानिवर्तकत्वे सति दृष्टकैवल्यफलावसानत्वात्। अविद्यातमोनिवर्तकस्य ज्ञानस्य दृष्टं कैवल्यफलावसानत्वम्। रज्ज्वादिविषये सर्पाद्यज्ञानतमोनिवर्तकप्रदीपप्रकाशफलवत्। विनिवृत्तसर्पादिविकल्परज्जुकैवल्यावसानं हि प्रकाशफलं तथा ज्ञानम्। दृष्टार्थानां च छिदिक्रियाग्निमन्थनादीनां व्यापृतकर्त्रादिकारकाणां द्वैधीभावाग्निदर्शनादिफलादन्यफले कर्मान्तरे वा व्यापारानुपपत्तिर्यथा तथा ज्ञाननिष्ठा क्रियायां दृष्टार्थायां व्यापृतस्य ज्ञात्रादिकारकस्यात्मकैवल्यफलादन्यफले कर्मान्तरे प्रवृत्तिरनुपपन्नेति न ज्ञाननिष्ठा कर्मसहितोपपद्यते। भुज्यग्निहोत्रादिक्रियावत्स्यादिति चेत्। न, कैवल्यफले ज्ञाने क्रियाफलार्थित्वा-

२ आनन्दगिरिव्याख्या।

सामर्थ्यां कार्यमवश्यंभावीत्युपसंहरति—**इति भवेदिति**। संदिग्धं सफलं च विचार्यमिति स्थितेरसति फले संदिग्धमपि न विचार्यमिति बुद्ध्या पृच्छति—**किं पुनरिति**। प्रत्येकं ज्ञानकर्मणोः समुच्चितयोर्वा मुक्तिं प्रति परमसाधनतेत्यवधारणमेव विचारफलमिति परिहरति—**नन्विति**। संदेहप्रयोजनयोर्विचारप्रयोजकयोर्भावाद्विचारद्वारा परममुक्तिसाधनं निर्धारणीयमिति निगमयति—**अत इति**। एवं विचारमवतार्य सिद्धान्तं संगृह्णाति—**आत्मेति**। संग्रहवाक्यं विवृण्वन्नादावात्मज्ञानापोह्यामविद्यां दर्शयति—**क्रियेति**। आश्रयोक्त्या तदनादित्वमाह—**आत्मनीति**। तामेवाविद्यामनाद्यविद्योत्थामनर्थात्मिकां प्रपञ्चयति—**ममेति**। अनाद्यविद्याकार्यत्वात्प्रवाहरूपेणानादित्वमस्या विवक्षित्वा विशिनष्टि—**अनादीति**। तत्र कारणाविद्यानिवर्तकत्वमात्मज्ञानस्योपन्यस्यति—**अस्या इति**। ननु नेदमुत्पन्नं ज्ञानं निवर्तयत्यविरोधेनोत्पन्नत्वान्न चानुत्पन्नमलब्धात्मकस्यार्थक्रियाकारित्वाभावात्तत्राह—**उत्पद्यमानमिति**। कथं तस्य कारणाविद्यानिवर्तकत्वमित्याशङ्क्य कार्याविद्यानिवर्तकत्वदृष्टेरित्याह—**कर्मेति**। आत्मज्ञानस्येत्यादिसंग्रहवाक्ये तुशब्दद्योत्यविशेषाभावात्तदानर्थक्यमाशङ्क्याह—**तुशब्द इति**। पक्षद्वयव्यावर्तकत्वमेवास्य स्फुटयति—**नेत्यादिना**। इतश्च कर्मासाध्यता मुक्तेरित्याह—**अकार्यत्वाच्चेति**। 'एष नित्यो महिमा' इति श्रुतेर्नित्यत्वेन मोक्षस्याकार्यत्वान्न तत्र हेत्वपेक्षेत्युपपादयति—**नहीति**। ज्ञानेनापि मोक्षो न क्रियते चेत्तर्हि केवलमपि ज्ञानं मुक्त्यनुपयुक्तमिति कुतस्तस्य तत्र हेतुत्वधीरित्याशङ्कते—**केवलेति**। ज्ञानानर्थक्यं दूषयति—**नेति**। तदेव प्रपञ्चयति—**अविद्येति**। यदुक्तमविद्यानिवर्तकज्ञानस्य कैवल्यफलावसायित्वं दृष्टमिति तत्र दृष्टान्तमाह—**रज्ज्वादीति**। उक्ते विषये तमोनिवर्तकप्रकाशस्य कस्मिन्फले पर्यवसानं तत्राह—**विनिवृत्तेति**। प्रदीपप्रकाशस्य सर्पभ्रमनिवृत्तिद्वारा रज्जुमात्रे पर्यवसानवदात्मज्ञानस्यापि तदविद्यानिवृत्त्यात्मकैवल्यावसानमिति दार्ष्टान्तिकमाह—**तथेति**। ज्ञात्रादीनां ज्ञाननिष्ठाहेतूनां कर्मान्तरे प्रवृत्तिसंभवात्कर्मसहितैव सा कैवल्यावसायिनीति चेत्तत्राह—**दृष्टार्थायामिति**। कर्मसाहित्यं ज्ञाननिष्ठाया दृष्टान्तेन साधयन्नाशङ्कते—**भुजीति**। भुजिक्रियाया लौकिक्या वैदिक्याश्चाग्निहोत्रादिक्रियायाः सहानु-

३ नीलकण्ठव्याख्या (चतुर्धरी)।

अभक्ताय श्रद्धाहीनाय। अशुश्रूषवे गुरुसेवामकुर्वते। मां परमात्मानं योऽभ्यसूयति मदीयगुणासहिष्णुतया मयि

४ मधुसूदनीव्याख्या।

स्कायासंयतेन्द्रियाय न वाच्यम्। कदाचन कस्यामप्यवस्थायामिति पर्यायत्रयेऽपि संबध्यते। तपस्विनेऽप्यभक्ताय गुरौ देवे च भक्तिरहिताय न वाच्यं कदाचन। तपस्विने भक्तायाप्यशुश्रूषवे शुश्रूषां परिचर्यामकुर्वते च न वाच्यं कदाचन। चशब्दो

५ भाष्योत्कर्षदीपिका।

संसारविच्छित्तिहेतुभूतं तव हिताय मयोक्तम्। अतपस्काय उक्तशारीरादितपोरहिताय न वाच्यं कदाचन कस्यांचिदप्यवस्थायामपि

६ श्रीधरीव्याख्या।

गुरौ ईश्वरे च भक्तिशून्याय कदाचिदपि न वाच्यं, न चाशुश्रूषवे परिचर्यामकुर्वते वाच्यं, मां परमेश्वरं योऽभ्यसूयति मनुष्य-

७ अभिनवगुप्ताचार्यव्याख्या।

तपःपाकोन्मुखता भवतीति पूर्वं तपस्तपसः श्रद्धा जायते सैवात्र भक्तिः। श्रद्धाप्युपजाता कदाचिन्न प्ररोहति सौदामिनीव क्षणदृष्टत्वात्।

१ श्रीमच्छांकरभाष्यम् ।

नुपपत्तेः । कैवल्यफले हि ज्ञाने प्राप्ते सर्वतः संप्लुतोदके फले कूपतडागादिक्रियाफलार्थित्वाभाववत्फलान्तरे तत्साधनभूतायां वा क्रियायामर्थित्वानुपपत्तिः । नहि राजप्राप्तिफले कर्मणि व्यापृतस्य क्षेत्रप्राप्तिफले व्यापारोपपत्तिस्तद्विषयं चार्थित्वम् । तस्मान्न कर्मणोऽस्ति निःश्रेयससाधनत्वम् । नच ज्ञानकर्मणोः समुच्चितयोः । नापि ज्ञानस्य कैवल्यफलस्य कर्मसाहाय्यापेक्षाविद्यानिवर्तकत्वेन विरोधात् । नहि तमस्तमसो निवर्तकमतः केवलमेव ज्ञानं निःश्रेयससाधनमिति । न नित्याकरणे प्रत्यवायप्राप्तेः कैवल्यस्य च नित्यत्वात् । यत्तावत्केवलज्ञानात्कैवल्यप्राप्तिरित्येतत्तदसत् । यतो नित्यानां कर्मणां श्रुत्युक्तानामकरणे प्रत्यवायो नरकादिप्राप्तिलक्षणः स्यात् । नन्वेवं तर्हि कर्मभ्यो मोक्षो नास्तीत्यनिर्मोक्ष एव नैष दोषो नित्यत्वान्मोक्षस्य । नित्यानां कर्मणामनुष्ठानात्प्रत्यवायस्याप्राप्तिः । प्रतिषिद्धस्य चाकरणादनिष्टशरीरानुपपत्तिः । काम्यानां च वर्जनादिष्टशरीरानुपपत्तिः । वर्तमानशरीरारम्भकस्य च कर्मणः फलोपभोगक्षये पतितेऽस्मिञ्शरीरे देहान्तरोत्पत्तौ च कारणाभावादात्मनो रागादीनां चाकरणात्स्वरूपावस्थानमेव कैवल्यमित्ययत्नसिद्धं कैवल्यमिति । अतिक्रान्तानेकजन्मान्तरकृतस्य स्वर्गनरकादिप्राप्तिफलस्यानारब्धकार्यस्योपभोगानुपपत्तेः क्षयाभाव

२ आनन्दगिरिव्याख्या ।

ज्ञानवदग्निहोत्रादिक्रियाया ज्ञाननिष्ठायाश्च साहित्यमित्यर्थः । भुजिफले तृष्णाख्ये प्राप्तेऽपि स्वर्गादौ तद्धेतौ चाग्निहोत्रादावर्थित्ववद्दृष्टेर्युक्तं तत्र साहित्यं न तथा मुक्तिफलज्ञाननिष्ठालाभे स्वर्गादौ तद्धेतौ वा कर्मण्यर्थित्वं तेन ज्ञाननिष्ठाकर्मणोर्न साहित्यमिति परिहरति—**नेत्यादिना** । संग्रहवाक्यं विवृणोति—**कैवल्येति** । ज्ञाने फलवति लब्धे फलान्तरे तद्धेतौ च नार्थितेत्यत्र दृष्टान्तमाह—**सर्वत इति** । सर्वत्र संप्लुतं व्याप्तमुदकमिति समुद्रोक्तिस्तत्फलं स्नानादि तस्मिन्प्राप्ते न तडागादिनिर्माणक्रियायां तदधीने च स्नानादौ कस्यचिदर्थित्वं तथा प्रकृतेपीत्यर्थः । निरतिशयफले ज्ञाने लब्धे सातिशयफले कर्मणि नार्थित्वमित्येतद्दृष्टान्तेन स्फुटयति—**नहीति** । कर्मणः सातिशयफलत्वमुक्तमुपजीव्य फलितमाह—**तस्मान्नेति** । ज्ञानकर्मणोः साहित्यासंभवमपि पूर्वोक्तं निगमयति—**नचेति** । नहि प्रकाशतमसोरिव मिथो विरुद्धयोस्तयोः साक्षादेकस्मिन्फले साहित्यमित्यर्थः । ननु ज्ञानमेव मोक्षं साधयदात्मसहायत्वेन कर्मापेक्षते करणस्योपकरणापेक्षत्वात्तत्राह—**नापीति** । ज्ञानमुत्पत्तौ यज्ञाद्यपेक्षमपि नोत्पन्नं फले तदपेक्षं स्वोत्पत्तिनान्तरीयकत्वेन मुक्तेस्तन्मात्रायत्तत्वादित्यर्थः । यदुक्तमितिकर्तव्यत्वेन ज्ञानं कर्मापेक्षमिति तत्राह—**अविद्येति** । ज्ञानस्याज्ञाननिवर्तकत्वात्तत्र कर्मणो विरुद्धतया सहकारित्वायोगान्न फले तदपेक्षेत्यर्थः । कर्मणोऽपि ज्ञानवदज्ञाननिवर्तकत्वे कुतो विरुद्धतेत्याशङ्क्याह—**नहीति** । केवलस्य समुच्चितस्य वा कर्मणो मोक्षे साक्षादनन्वये फलितमाह—**अत इति** । केवलं ज्ञानं मुक्तिसाधनमित्युक्तं तन्निषेधयन्नाशङ्कते—**नेत्यादिना** । निषेध्यमनूद्य नञर्थमाह—**यत्तावदिति** । नित्याकरणे प्रत्यवायाप्राप्तेरिति हेतुं प्रपञ्चयति—**यत इति** । ज्ञानवतोऽपि नित्यानुष्ठानस्यावश्यकत्वान्न केवलज्ञानस्य कैवल्यहेतुतेत्यर्थः । कैवल्यस्य च नित्यत्वादित्यस्य व्यावर्त्यं दर्शयति—**नन्विति** । यदि नित्यनैमित्तिककर्माणि श्रौतान्यकरणे प्रत्यवायकारीण्यवश्यानुष्ठेयान्येवं तर्हि तेभ्यः समुच्चितेभ्योऽसमुच्चितेभ्यश्च मोक्षो नेत्युक्तत्वात्केवलज्ञानस्य चातद्धेतुत्वादनिबन्धना मुक्तिर्न सिध्येदित्यर्थः । कैवल्यस्य चेत्यादि व्याकुर्वन्ननिर्मोक्षप्रसङ्गं प्रत्यादिशति—**नैष दोष इति** । मुक्तेर्नित्यत्वेनायत्नसिद्धेर्न तदभावशङ्केत्युक्तं प्रपञ्चयति—**नित्यानामिति** । काम्यकर्मवशादिष्टशरीरापत्तिं शङ्कित्वोक्तं—**काम्यानां चेति** । आरब्धकर्मवशात्तर्हि देहान्तरं नेत्याह—**वर्तमानेति** । तर्हि देहान्तरं शेषकर्मणा स्यादित्याशङ्क्य कर्माशयस्यैकभविकत्वान्नेत्याह—**पतितेऽस्मिन्निति** । रागादिना कर्मान्तरं ततो देहान्तरं च भविष्यतीत्याशङ्क्याह—**रागादीनां चेति** । आत्मनः स्वरूपावस्थानमिति संबन्धः । अतीतासंख्यजन्मभेदेष्वर्जितस्य कर्मणो नानाफलस्यानारब्धस्य भोगेन विनाक्षयात्ततो देहान्तरारम्भादैकभविकत्वस्याप्रामाणिकत्वान्न मुक्तेरयत्न-

३ नीलकण्ठव्याख्या (चतुर्धरी) ।

दोषारोपपरो भवति तस्मै । नञः प्रत्येकं संबद्धत्वादेतेषां विशेषणानामन्यतमाभावेऽपि कदाचन महत्यपि संकटे इदं

४ मधुसूदनीव्याख्या ।

वाच्यं कदाचनेति पदद्वयाकर्षणार्थः । नच मां योऽभ्यसूयति मां भगवन्तं वासुदेवं मनुष्यमसर्वज्ञत्वादिगुणकं मत्वाभ्यसू-

५ भाष्योत्कर्षदीपिका ।

सर्वैः संबध्यते । तपस्विनेऽप्यभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन न वाच्यं विशेषणद्वययुक्तायाप्यशुश्रूषवे शुश्रूषावर्जिताय

७ अभिनवगुप्ताचार्यव्याख्या ।

ततस्तत्प्ररोहे श्रोतुमिच्छा भवति । इयदपि च कस्यचिदनीश्वरे वस्तुनि शुष्कसांख्यादिज्ञाने भवति सेश्वरेऽपि वा कस्यचित्फलार्थितया

१ श्रीमच्छांकरभाष्यम् ।

इति चेत् । न, नित्यकर्मानुष्ठानायासदुःखोपभोगस्य तत्फलोपभोगत्वोपपत्तेः । प्रायश्चित्तवद्वा पूर्वोपात्तदुरितक्षयार्थत्वान्नित्यकर्मणाम् । आरब्धानां चोपभोगेनैव कर्मणां क्षीणत्वादपूर्वाणां च कर्मणामनारम्भेऽयत्नसिद्धं कैवल्यमिति । न, 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति विद्याया अन्यः पन्था मोक्षाय न विद्यत इति श्रुतेश्चर्मवदाकाशवेष्टनासंभववदविदुषो मोक्षासंभवश्रुतेर्ज्ञानात्कैवल्यमाप्नोतीति च पुराणस्मृतेरनारब्धफलानां पुण्यानां कर्मणां क्षयानुपपत्तेश्च । यथा पूर्वोपात्तानां दुरितानामनारब्धफलानां संभवस्तथा पुण्यानामप्यनारब्धफलानां स्यात्संभवः । तेषां च देहान्तरमकृत्वा क्षयानुपपत्तौ मोक्षानुपपत्तिः । धर्माधर्महेतूनां च रागद्वेषमोहानामन्यत्रात्मज्ञानादुच्छेदानुपपत्तेर्धर्माधर्मोच्छेदानुपपत्तिः । नित्यानां च कर्मणां पुण्यलोकफलश्रुतेर्वर्णा आश्रमाश्च स्वकर्मनिष्ठा इत्यादिस्मृतेश्च कर्मक्षयानुपपत्तिः । ये त्वाहुर्नित्यानि कर्माणि दुःखरूपत्वात्पूर्वकृतदुरितकर्मणां फलमेव नतु तेषां स्वरूपव्यतिरेकेणान्यत्फलमस्त्यश्रुतत्वाज्जीवनादिनिमित्ते च विधानादिति । न, अप्रवृत्तानां फलदानासंभवाद्दुःखफलविशेषानुपपत्तिश्च स्यात् । यदुक्तं पूर्वजन्मकृतदुरितानां कर्मणां फलं नित्यकर्मानुष्ठानायासदुःखं भुज्यत इति तदसत् । नहि मरणकाले फलदानायानङ्कुरीभूतस्य कर्मणः फलमन्यकर्मारब्धे जन्मन्युपभुज्यत इत्युपपत्तिः ।

२ आनन्दगिरिव्याख्या ।

सिद्धतेति चोदयति—**अतिक्रान्तेति** । नोक्तकर्मनिमित्तं देहान्तरं शङ्कितव्यमित्याह—**नेति** । नित्यनैमित्तिककर्माणि श्रौतान्यवश्यमनुष्ठेयानि तदनुष्ठाने च महानायासस्ततो दुःखोपभोगस्तस्योक्तानारब्धकर्मफलभोगत्वोपगमान्न ततो देहान्तरमित्याह—**नित्येति** । नित्यादिना दुरितनिवृत्तावप्यविरोधान्न सुकृतनिवृत्तिस्ततो देहान्तरमित्याशङ्क्य सुकृतस्य नित्यादेरन्यत्वेनारब्धत्वे च न्यायविरुद्धस्य तस्यासिद्धत्वात्ततो देहान्तरायोगान्नित्यादेरनन्यत्वे च न तस्य फलान्तरमिति मत्वा यथा प्रायश्चित्तमुपात्तदुरितनिबर्हणार्थं न फलान्तरापेक्षं तथेदं सर्वमपि नित्यादिकर्मोपात्तपापनिराकरणार्थं तस्मिन्नेव पर्यवस्यन्न देहान्तरारम्भकमिति पक्षान्तरमाह—**प्रायश्चित्तवदिति** । तथापि प्रारब्धवशादेव देहान्तरं शङ्क्यते नानाजन्मारम्भकाणामपि तेषां यावदधिकारन्यायेन संभवादित्याशङ्क्याह—**आरब्धानां चेति** । पूर्वार्जितकर्मणामेवं क्षीणत्वेऽपि कानिचित्पूर्वकर्माणि देहान्तरमारभेरन्नित्याशङ्क्याह—**अपूर्वाणां चेति** । विना ज्ञानं कर्मणैव मुक्तिरिति पक्षं श्रुत्यवष्टम्भेन निराचष्टे—**नेत्यादिना** । विद्यतेऽयनायेति श्रुतेरिति संबन्धः । एवकारार्थं विवृण्वन्नेत्यादिभागं व्याकरोति—**अन्य इति** । 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' इति श्रुतिमर्थतोऽनुवदति—**चर्मवदिति** । श्रौतार्थे स्मृतिं संवादयति—**ज्ञानादिति** । किंच त्वदीयन्यायस्यानुग्राह्यमानहीनत्वेनाभासतया पुण्यकर्मणामनारब्धफलानां क्षयाभावे देहान्तरारम्भसंभवान्न ज्ञानं विना मुक्तिरित्याह—**अनारब्धेति** । तथाविधानां कर्मणां नास्ति संभावनेत्याशङ्क्याह—**यथेति** । अनारब्धफलपुण्यकर्माभावेऽपि कथं मोक्षानुपपत्तिरिति तत्राह—**तेषां चेति** । इतश्च कर्मक्षयानुपपत्त्या मोक्षानुपपत्तिरिति तत्राह—**धर्मेति** । 'कर्मणा पितृलोकः' इति श्रुतिमाश्रित्य कर्माक्षये हेत्वन्तरमाह—**नित्यानामिति** । स्मृत्यापि यथोक्तमर्थं समर्थयति—**वर्णा इति** । प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टजात्यादिभाजो जन्म प्रतिपद्यन्त इत्येतदादिपदार्थः । यत्तु नित्यानुष्ठानायासदुःखभोगस्य तत्फलभोगत्वमिति तदिदानीमनुभवति—**ये त्विति** । नित्यान्यनुष्ठीयमानान्यायासपर्यन्तानीति शेषः । तथापि नित्यानां काम्यानामिव स्वरूपातिरिक्तं फलमाशङ्क्य विध्युद्देशे तदश्रवणान्मैवमित्याह—**नत्विति** । विध्युद्देशे फलाश्रुतौ तत्कामनाया निमित्तस्याभावान्न नित्यानि विधीयेरन्नित्याशङ्क्याह—**जीवनादीति** । न नित्यानां विध्यसिद्धिरिति शेषः । अनुभाषितं दूषयति—**नेत्यादिना** । तदेव विवृण्वन्निषेध्यमनूद्य नञर्थमाह—**यदुक्तमिति** । अप्रवृत्तानामित्यादिहेतुं प्रपञ्चयति—**नहीति** । कर्मान्तरारब्धेऽपि देहे दुरितफलं नित्यानुष्ठानायासदुःखं भुज्यतां कानु-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

न वाच्यं नोपदेष्टव्यम् । अत्र 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय

४ मधुसूदनीव्याख्या ।

यत्यात्मप्रशंसादिदोषाध्यारोपणेनेश्वरत्वमसहमानो द्वेष्टि यस्तस्मै श्रीकृष्णोत्कर्षासहिष्णवेऽतपस्विनेऽभक्तायाशुश्रूषवेऽपि न वाच्यं

५ भाष्योत्कर्षदीपिका ।

कदापि न वाच्यम् । यो मां वासुदेवं मनुष्यं प्राकृतं मत्वाऽभ्यसूयति आत्मप्रशंसादिदोषाध्यारोपणेन मत्स्वरूपानभिज्ञो ममेश्वरत्वं न

७ अभिनवगुप्ताचार्यव्याख्या ।

फलमेव प्रधानीकृत्य भगवन्तं च स्वमात्मानं तदुपकरणपात्रीकरणेन न्यकृत्य भवेत् । यदुक्तं 'पुरुषश्च कर्मार्थत्वात्कर्मण्यपि फलार्थत्वात्

१ श्रीमच्छांकरभाष्यम्।

अन्यथा स्वर्गफलोपभोगायाग्निहोत्रादिकर्मारब्धे जन्मनि नरककर्मफलोपभोगानुपपत्तिर्न स्यात्। तस्य दुरितदुःखविशेषफलत्वानुपपत्तेश्च, अनेकेषु हि दुरितेषु संभवत्सु भिन्नदुःखसाधनफलेषु नित्यकर्मानुष्ठानायासदुःखमात्रफलेषु कल्प्यमानेषु द्वन्द्वरोगादिबाधानिमित्तं नहि शक्यते कल्पयितुं नित्यकर्मानुष्ठानायासदुःखमेव पूर्वकृतदुरितफलं न शिरसा पाषाणवहनादिदुःखमिति। अप्रकृतं चेदमुच्यते नित्यकर्मानुष्ठानायासदुःखं पूर्वकृतदुरितकर्मफलमिति। कथम्, अप्रसूतफलस्य पूर्वकृतदुरितस्य क्षयो नोपपद्यत इति प्रकृतं तत्र प्रसूतफलस्य कर्मणः फलं नित्यकर्मानुष्ठानायासदुःखमाह भवान्नाप्रसूतफलस्येति। अथ सर्वमेव पूर्वकृतं दुरितं तत्प्रसूतफलमेवेति मन्यते भवांस्ततो नित्यकर्मानुष्ठानायासदुःखमेव फलमिति विशेषणमयुक्तं नित्यकर्मविध्यानर्थक्यप्रसङ्गश्चोपभोगेनैव प्रसूतफलस्य दुरितकर्मणः क्षयोपपत्तेः। किंच श्रुतस्य नित्यस्य दुःखं कर्मणश्चेत्फलं नित्यकर्मानुष्ठानायासादेव तद्दृश्यते व्यायामादिवत्तदन्यस्येति कल्पनानुपपत्तिः। जीवनादिनिमित्ते च विधानान्नित्यानां कर्मणाम्। प्रायश्चित्तवत्पूर्वकृतदुरितफलत्वानुपपत्तिः। यस्मिन्पापकर्मनिमित्ते यद्विहितं प्रायश्चित्तं नतु तस्य पापस्य तत्फलम्। अथ तस्यैव पापस्य निमित्तस्य प्रायश्चित्तदुःखं फलं जीवनादिनिमित्त-

२ आनन्दगिरिव्याख्या।

पपत्तिरित्याशङ्क्याह—अन्यथेति। यदुक्तं दुःखफलविशेषानुपपत्तिश्च स्यादिति तदुपपादयति—तस्येति। संभावितानि तावदनन्तानि संचितानि दुरितानि तानि च नानादुःखफलानि यदि तानि नित्यानुष्ठानायासरूपं दुःखं तन्मात्रफलानि कल्प्येरंस्तदा तेष्वेवं कल्प्यमानेषु सत्सु नित्यस्यानुष्ठितस्यायासमासादयतो यो दुरितकृतो दुःखविशेषो न तत्फलं दुरितफलानां दुःखानां बहुत्वादतो नित्यं कर्म यथाविशेषं तं दुरितकृतदुःखविशेषफलकमित्ययुक्तमित्यर्थः। किंच नित्यानुष्ठानायासदुःखमात्रफलानि चेद्दुरितानि कल्प्यन्ते तदा द्वन्द्वशब्दितरागादिबाधस्य रोगादिबाधायाश्च दुरितनिमित्तत्वानुपपत्तेः सुकृतकृतत्वस्य चासंभवादनुपपत्तिरेवोदीरितबाधायाः स्यादित्याह—द्वन्द्वेति। इतश्च नित्यानुष्ठानायासदुःखमेव दुरितफलमित्ययुक्तमित्याह—नित्येति। दुःखमिति न शक्यते कल्पयितुमिति पूर्वेण संबन्धः। यदि तदेव तत्फलं न तर्हि शिरसा पाषाणवहनादिदुःखं दुरितकृतं नच तत्कारणं सुकृतं दुःखस्यातत्कार्यत्वादतस्तदाकस्मिकं स्यादित्यर्थः। नित्यानुष्ठानायासदुःखमुपात्तदुरितफलमित्येतदप्रकृतत्वाच्चायुक्तं वक्तुमित्याह—अप्रकृतं चेति। तदेव प्रपञ्चयितुं पृच्छति—कथमिति। तत्रादौ प्रकृतमाह—अप्रसूतेति। तथापि कथमस्माकमप्रकृतवादित्वं तत्राह—तत्रेति। प्रसूतफलत्वमप्रसूतफलत्वमिति प्राचीनदुरितगतविशेषानुपगमादविशेषेण सर्वस्यैव तस्य प्रसूतफलत्वान्नित्यानुष्ठानायासदुःखफलत्वसंभवान्नाप्रकृतवादितेति शङ्कते—अथेति। पूर्वोपात्तदुरितस्याविशेषेणारब्धफलत्वे विशेषणानर्थक्यमिति परिहरति—तत इति। दुरितमात्रस्यारब्धफलत्वेनानारब्धफलस्य तस्योक्तफलविशेषवत्त्वानुपपत्तेरित्यर्थः। पूर्वोपात्तदुरितमारब्धफलं चेद्भोगेनैव तत्क्षयसंभवात्तन्निवृत्त्यर्थं नित्यं कर्म न विधातव्यमिति दोषान्तरमाह—नित्येति। इतश्च नित्यानुष्ठानायासदुःखं नोपात्तदुरितफलमित्याह—किंचेति। तदेव स्फोरयति—श्रुतस्येति। यथा व्यायामगमनादिकृतं दुःखं नान्यस्य दुरितस्येष्यते तत्फलत्वसंभवात्तथा नित्यस्यापि श्रुत्युक्तस्यानुष्ठितस्यायासपर्यन्तस्य फलान्तरानुपगमादनुष्ठानायासदुःखमेव चेत्फलं तर्हि तस्मादेव तद्दर्शनात्तस्य न दुरितफलत्वं कल्प्यं नित्यफलत्वसंभवादित्यर्थः। दुःखफलत्वे नित्यानामननुष्ठानमेव श्रेयः स्यादित्याशङ्क्याह—जीवनादिति। नित्यानां दुरितफलत्वानुपपत्तौ हेत्वन्तरमाह—प्रायश्चित्तवदिति। दृष्टान्तं प्रपञ्चयति—यस्मिन्निति। तथा जीवनादिनिमित्ते विहितानां नित्यानां दुरितफलत्वासिद्धिरिति शेषः। सत्यं प्रायश्चित्तं न निमित्तस्य पापस्य फलं किंतु तदनुष्ठानायासदुःखं तस्य पापस्य फलमिति शङ्कते—अथेति। प्रायश्चित्तानुष्ठानायासदुःखस्य निमित्तभूतपापफलत्वे जीवनादिनिमित्तमित्याद्यनुष्ठानायासदुःखमपि जीवनादेरेव फलं स्यान्नोपात्तदुरितस्येति परिहरति—

३ नीलकण्ठव्याख्या (चतुर्धरी)।

न मा ब्रूयाऽवीर्यवती तथा स्याम्'। 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रका-

४ मधुसूदनीव्याख्या।

कदाचनेत्यनुकर्षणार्थश्चकारः। तपस्विने भक्ताय शुश्रूषवे श्रीकृष्णानुरक्ताय च वाच्यमित्यर्थः। एकैकविशेषणाभावेऽप्ययोग्यता-

५ भाष्योत्कर्षदीपिका।

सहते तस्मै ममेश्वरत्वासहिष्णवेऽतपस्विनेऽभक्तायाशुश्रूषवेऽपि कदाचन न वाच्यम्। तपस्विने भक्ताय शुश्रूषवेऽनसूयवे शास्त्रं वाच्य-

७ अभिनवगुप्ताचार्यव्याख्या।

इति। एवमुभयथापि भगवत्यसूयैवानादर इत्यर्थः। भक्तिमिति। एतदेव मयि भक्तिकरणं मद्भक्तेष्वेतन्निरूपणं मद्भक्तेष्वभिधास्यति आभि-

१ श्रीमच्छांकरभाष्यम् ।

मपि नित्यकर्मानुष्ठानायासदुःखं जीवनादिनिमित्तस्यैव तत्फलं प्रसज्येत नित्यप्रायश्चित्तयोर्नैमित्तिकत्वाविशेषात् । किंचान्यन्नित्यस्य काम्यस्य चाग्निहोत्रादेरनुष्ठानायासदुःखस्य तुल्यत्वान्नित्यानुष्ठानायासदुःखमेव पूर्वकृतदुरितस्य फलं नतु काम्यानुष्ठानायासदुःखमिति विशेषो नास्तीति तदपि पूर्वकृतदुरितफलं प्रसज्येत । तथाच सति नित्यानां फलाश्रवणात्तद्विधानान्यथानुपपत्तेश्च नित्यानुष्ठानायासदुःखं पूर्वकृतदुरितफलमित्यर्थापत्तिकल्पनाऽनुपपन्ना । एवंविधानान्यथानुपपत्तेरनुष्ठानायासदुःखव्यतिरिक्तफलत्वानुमानाच्च नित्यानाम् । विरोधाच्च । विरुद्धं चेदमुच्यते नित्यकर्मण्यनुष्ठीयमानेऽन्यस्य कर्मणः फलं भुज्यत इत्यभ्युपगम्यमाने स एवोपभोगो नित्यस्य कर्मणः फलमिति नित्यस्य कर्मणः फलाभाव इति च विरुद्धमुच्यते । किंच काम्याग्निहोत्रादावनुष्ठीयमाने नित्यमप्यग्निहोत्रादि तन्त्रेणैवानुष्ठितं भवतीति तदायासदुःखेनैव काम्याग्निहोत्रादिफलमुपक्षीणं स्यात्तत्तन्त्रत्वात् । अथ काम्याग्निहोत्रादिफलमन्यदेव स्वर्गादि तदनुष्ठानायासदुःखमपि भिन्नं प्रसज्येत । नच तदस्ति दृष्टविरोधात् । नहि काम्यानुष्ठानायासदुःखात्केवलनित्यानुष्ठानायासदुःखं भिद्यते । किंचान्यदविहितमप्रतिषिद्धं च कर्म तत्कालफलं नतु शास्त्रचोदितं प्रतिषिद्धं वा तत्कालफलम् । भवेद्यदि तदा स्वर्गादिष्वप्यदृष्टफलशासने चोद्यमो न स्यात् । अग्निहोत्रादीनामेव कर्मस्वरूपाविशेषेऽनुष्ठानायासदुःखमात्रेणोपक्षयः काम्यानां च स्वर्गादिमहाफलत्वमङ्गेतिकर्तव्यताद्याधिक्ये त्वसति फलकामित्वमात्रेणेति न शक्यं कल्पयितुम् । तस्मान्न नित्यानां कर्मणामदृष्टफलाभावः कदाचिदप्युप-

२ आनन्दगिरिव्याख्या ।

**जीवनादीति** । प्रायश्चित्तदुःखस्य तन्निमित्तपापफलत्ववज्जीवनादिनिमित्तकर्मकृतमपि दुःखं जीवनादिफलमित्यत्र हेतुमाह—**नित्येति** । इतश्च नित्यानुष्ठानायासदुःखमेवोपात्तदुरितफलमित्याशङ्क्य वक्तुमित्याह—**किंचेति** । काम्यानुष्ठानायासदुःखमपि दुरितफलमित्युपगमात्प्रसङ्गस्येष्टत्वमाशङ्क्याह—**तथाचेति** । विहितानि तावन्नित्यानि नच तेषु फलं श्रुतं नच विना फलं विधिस्तेन दुरितनिबर्हणार्थानि नित्यानीत्यर्थापत्त्या कल्प्यते नच सा युक्ता काम्यानुष्ठानादपि दुरितनिवृत्तिसंभवादित्यर्थः । किंच नित्यान्यनुष्ठानायासदुःखातिरिक्तफलानि विहितत्वात्काम्यवदित्यनुमानान्न तेषां दुरितनिवृत्त्यर्थतेत्याह—**एवमिति** । काम्यादिकर्म दृष्टान्तयितुमेवमित्युक्तम् । स्वोक्तिव्याघाताच्च नित्यानुष्ठानाद्दुरितफलभोगोक्तिरयुक्तेत्याह—**विरोधाच्चेति** । तदेव प्रपञ्चयति—**विरुद्धं चेति** । इदंशब्दार्थमेव विशदयति—**नित्येति** । अन्यस्य कर्मणो दुरितस्येति यावत् । **स एवेति** । यदनन्तरं यद्भवति तत्तस्य कार्यमिति नियमादित्यर्थः । इतश्च नित्यानुष्ठाने दुरितफलभोगो न सिध्यतीत्याह—**किंचेति** । काम्यानुष्ठानस्य नित्यानुष्ठानस्य च यौगपद्यान्नित्यानुष्ठानायासदुःखेन दुरितफलभोगवत्काम्यफलस्यापि भुक्तत्वसंभवादिति हेतुमाह—**तत्तन्त्रत्वादिति** । नित्यकाम्यानुष्ठानयोर्यौगपद्येऽपि नित्यानुष्ठानायासदुःखादन्यदेव काम्यानुष्ठानफलं श्रुतत्वादिति शङ्कते—**अथेति** । काम्यानुष्ठानफलं नित्यानुष्ठानायासदुःखाद्भिन्नं चेत्तर्हि काम्यानुष्ठानायासदुःखं नित्यानुष्ठानायासदुःखं च मिथो भिन्नं स्यादित्याह—**तदनुष्ठानेति** । प्रसङ्गस्येष्टत्वमाशङ्क्य निराचष्टे—**नचेति** । दृष्टविरोधमेव स्पष्टयति—**नहीति** । आत्माज्ञानवदग्निहोत्रादीनां मोक्षे साक्षादन्वयो नेत्यत्रान्यदपि कारणमस्तीत्याह—**किंचान्यदिति** । तदेव कारणं विवृणोति—**अविहितमिति** । यत्कर्म मर्दनभोजनादि तन्न शास्त्रेण विहितं निषिद्धं वा तदनन्तरफलं तथानुभवादित्यर्थः । शास्त्रीयं कर्म तु नानन्तरफलमानन्तर्यस्याचोदितत्वादतो ज्ञाने दृष्टफले नादृष्टफलं कर्म सहकारि भवति, नापि स्वयमेव दृष्टफले मोक्षे कर्म प्रवृत्तिक्षममिति विवक्षित्वाह—**नत्विति** । शास्त्रीयस्याग्निहोत्रादेरपि फलानन्तर्ये स्वर्गादीनामनन्तरमनुपलब्धिर्विरुद्धयेत ततस्तेष्वदृष्टेऽपि तथाविधफलापेक्षया प्रवृत्तिरग्निहोत्रादिषु न स्यादित्याह—**तदेति** । किंच नित्यानामग्निहोत्रादीनां नादृष्टं फलं तेषामेव काम्यानां तादृक्फलं नच हेतुं विनायं विभागो भावीत्याह—**अग्निहोत्रादीनामिति** । **फलकामित्वमात्रेणेति** । न स्यादिति पूर्वेण संबन्धः । यानि नित्यान्यग्निहोत्रादीनि यानि च काम्यानि तेषामुभयेषामेव कर्मस्वरूपविशेषाभावेऽपि नित्यानां तेषामनुष्ठानायासदुःखमात्रेण

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

शन्ते महात्मनः' इति श्रवणादसूयारहितायार्जवोपेतायाभ्यासशीलाय गुरुपरमेश्वराराधनपराय च एतद्रहस्यं देयं

४ मधुसूदनीव्याख्या ।

प्रतिपादनार्थाश्चत्वारो नकाराः । मेधाविने तपस्विने वेत्यन्यत्र विकल्पदर्शनाच्छुश्रूषा गुरुभक्तिभगवदनुरक्तियुक्ताय

५ भाष्योत्कर्षदीपिका ।

मिति प्रतिषेधसामर्थ्याद्गम्यते । तत्र मेधाविने तपस्विने वेति स्मृत्यन्तरे मेधावितपस्विनोर्विकल्पदर्शनात् । शुश्रूषाभक्तियुक्ताय भग-

१ श्रीमच्छांकरभाष्यम् ।

पद्यते । अतश्चाविद्यापूर्वकस्य कर्मणो विद्यैव शुभस्याशुभस्य वा क्षयकारणमशेषतो न नित्यकर्मानुष्ठानम् । अविद्याकामबीजं हि सर्वमेव कर्म । तथाचोपपादितम् । अविद्वद्विषयं कर्म विद्वद्विषया च सर्वकर्मसंन्यासपूर्विका ज्ञाननिष्ठा । उभौ तौ न विजानीतः, वेदाविनाशिनं नित्यं, ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां, अज्ञानां कर्मसङ्गिनां, तत्त्ववित्तु, गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते, सर्वकर्माणि मनसा संन्यास्यास्ते, नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्, अर्थादज्ञः करोमीति । आरुरुक्षोः कर्मकारणमारूढस्य योगस्थस्य शम एव कारणम् । उदारास्त्रयोऽप्यज्ञा ज्ञानी त्वात्मैव मे मतम्, अज्ञाः कर्मिणो गतागतं कामकामा लभन्ते, अनन्याश्चिन्तयन्तो मां नित्ययुक्ता, यथोक्तमात्मानमाकाशकल्पमकल्मषमुपासते । ददामि बुद्धियोगं तं येन मामुपयान्ति ते अर्थान्न कर्मिणोऽज्ञा उपयान्ति । भगवत्कर्मकारिणो ये युक्ततमा अपि कर्मिणोऽज्ञास्त उत्तरोत्तरहीनफलत्यागावसानसाधनाः । अनिर्देश्याक्षरोपासकास्त्वद्वेष्टा सर्वभूतानामित्यध्यायपरिसमाप्त्युक्तसाधनाः, क्षेत्राध्यायाद्यध्यायत्रयोक्तज्ञानसाधनाश्च । अधिष्ठानादिपञ्चहेतुकसर्वकर्मसंन्यासिनामात्मैकत्वाकर्तृत्वज्ञानवतां परस्यां ज्ञाननिष्ठायां वर्तमानानां भगवत्तत्त्वविदामनिष्टादिकर्मफलत्रयं परमहंसपरिव्राज-

२ आनन्दगिरिव्याख्या ।

क्षयो न फलान्तरमस्ति, तेषामेव काम्यानामङ्गाद्याधिक्याभावेऽपि फलकामित्वमधिकारिण्यस्तीत्येतावन्मात्रेण स्वर्गादिमहाफलत्वमित्ययं विभागो न प्रमाणवानित्यर्थः । उक्तविभागायोगे फलितमाह—तस्मान्नेति । काम्यवन्नित्यानामपि पितृलोकाद्यदृष्टफलवत्त्वे दुरितनिवृत्त्यर्थत्वायोगात्तादर्थ्येनात्मविद्यैवाभ्युपगन्तव्येत्याह—अतश्चेति । शुभाशुभात्मकं कर्म सर्वमविद्यापूर्वकं चेदशेषतस्तर्हि तस्य क्षयकारणं विद्येत्युपपद्यते न तु सर्वं कर्माविद्यापूर्वकमिति सिद्धमित्याशङ्क्याह—अविद्येति । तत्र हि शब्दद्योतितां युक्तिं दर्शयति—तथेति । इतश्चाविद्वद्विषयं कर्मेत्याह—अविद्वदिति । अधिकारिभेदेन निष्ठाद्वयमित्यत्र वाक्योपक्रममनुकूलयन्नात्मनि कर्तृत्वं कर्मत्वं चारोपयन्न जानात्यात्मानमिति वदता कर्माज्ञानमूलमिति दर्शितमित्याह—उभाविति । आत्मानं याथातथ्येन जानन्कर्तृत्वादिरहितो भवतीति ब्रुवता कर्मसंन्यासे ज्ञानवतोऽधिकारित्वं सूचितमित्याह —वेदेति । निष्ठाद्वयमधिकारिभेदेन वोद्धव्यमित्यत्रैव वाक्यान्तरमाह—ज्ञानेति । न बुद्धिभेदं जनयेदित्यत्र चाविद्यामूलत्वं कर्मणः सूचयता कर्मनिष्ठा विद्वद्विषयानुमोदितेत्याह—अज्ञानामिति । यदुक्तं विद्वद्विषया संन्यासपूर्विका ज्ञाननिष्ठेति तत्र 'तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः' इत्यादि वाक्यमुदाहरति—तत्त्ववित्त्विति । तत्रैव वाक्यान्तरं पठति—सर्वेति । विदुषो ज्ञाननिष्ठेत्यत्रैव पाञ्चमिकं वाक्यान्तरमाह—नैवेति । तत्रैवार्थसिद्धमर्थं कथयति—अज्ञ इति । मन्यत इति संबन्धः । अज्ञस्य चित्तशुद्ध्यर्थं कर्म शुद्धचित्तस्य कर्मसंन्यासो ज्ञानप्राप्तौ हेतुरित्यत्र वाक्यान्तरमाह—आरुरुक्षोरिति । यथोक्ते विभागे साप्तमिकं वाक्यमनुगुणमित्याह—उदारा इति । एवं त्रयीधर्ममित्यादि नावमिकं वाक्यमविद्वद्विषयं कर्मेत्यत्र प्रमाणयति—अज्ञा इति । विदुषः संन्यासपूर्विका ज्ञाननिष्ठेत्यत्रैव नावमिकं वाक्यान्तरमाह—अनन्या इति । मामित्येतद्व्याचष्टे—यथोक्तमिति । तेषां सततयुक्तानामित्यादि दाशमिकं वाक्यं तत्रैव प्रमाणयति—ददामीति । विद्यावतामेव भगवत्प्राप्तिनिर्देशादितरेषां तदप्राप्तिः सूचितेत्यर्थसिद्धमर्थमाह—अर्थादिति । ननु भगवत्कर्मकारिणां युक्ततमत्वात्कर्मिणोऽपि भगवन्तं यान्तीत्याशङ्क्याह—भगवदिति । ये मत्कर्मकृदित्यादिन्यायेन भगवत्कर्मकारिणस्ते यद्यपि युक्ततमास्तथापि कर्मिणोऽज्ञाः सन्तो न भगवन्तं सहसा गन्तुमर्हन्तीत्यर्थः । तेषामज्ञत्वे गमकं दर्शयति—उत्तरोत्तरेति । चित्तसमाधानमारभ्य फलत्यागपर्यन्तं पाठक्रमेणोत्तरोत्तरं हीनसाधनोपादानादभ्यासासमर्थस्य भगवत्कर्मकारित्वाभिधानाद्भगवत्कर्मकारिणामज्ञत्वं विज्ञातमित्यर्थः । ये त्वक्षरमनिर्देश्यमित्यादिवाक्यावष्टम्भेन विद्वद्विषयत्वं संन्यासपूर्वकज्ञाननिष्ठाया निर्धारयति—अनिर्देश्येति । उक्तसाधनास्तेन ते संन्यासपूर्वकज्ञाननिष्ठायामधिक्रियेरन्निति शेषः । किंच त्रयोदशे यान्यमानित्वादीनि चतुर्दशे च प्रकाशं च प्रवृत्तिं चेत्यादीनि यानि पञ्चदशे च यान्यसङ्गत्वादीन्युक्तानि तैः सर्वैः साधनैः सहिता भवन्त्यनिर्देश्याक्षरोपासकास्ततोऽपि ते ज्ञाननिष्ठायामेवाधिक्रियेरन्नित्याह—क्षेत्रेति । निष्ठाद्वयमधिकारिभेदेन प्रतिष्ठाप्य ज्ञाननिष्ठानामनिष्टमिष्टं मिश्रमिति त्रिविधं कर्मफलं न भवति किंतु मुक्तिरेव कर्मनिष्ठानां तु त्रिविधं कर्मफलं न मुक्तिरिति शास्त्रार्थविभागमभिप्रेतमुपसंहरति—अधि-

४ मधुसूदनीव्याख्या ।

तपस्विने तद्युक्ताय मेधाविने वा वाच्यं । मेधातपसोः पाक्षिकत्वेऽपि भगवदनुरक्तिगुरुभक्तिशुश्रूषाणां नियम एवेति भाष्यकृतः

५ भाष्योत्कर्षदीपिका ।

वत्यसूयारहिताय तपस्विने वाच्यम् । शुश्रूषाभक्त्यनसूयासहिताय मेधाविने वा वाच्यम् । शुश्रूषाभक्तिवियुक्ताय तपस्विने मेधाविने

१ श्रीमच्छांकरभाष्यम् ।

कानामेव लब्धभगवत्स्वरूपात्मैकत्वशरणानां न भवति भवत्येवान्येषामज्ञानां कर्मिणामसंन्यासिनामित्येष गीताशास्त्रोक्तस्य कर्तव्यार्थस्य विभागः । अविद्यापूर्वकत्वं सर्वस्य कर्मणोऽसिद्धमिति चेन्न ब्रह्महत्यादिवत् । यद्यपि शास्त्रावगतं नित्यं कर्म तथाप्यविद्यावत एव भवति । यथा प्रतिषेधशास्त्रावगतमपि ब्रह्महत्यादिलक्षणं कर्मानर्थकारणमविद्याकामादिदोषवतो भवत्यन्यथा प्रवृत्त्यनुपपत्तेस्तथा नित्यनैमित्तिककाम्यान्यपीति । देहव्यतिरिक्तात्मन्यज्ञाते प्रवृत्तिर्नित्यादिकर्मस्वनुपपन्नेति चेन्न, चलनात्मकस्य कर्मणोऽनात्मकर्तृकस्याहंकरोमीति प्रवृत्तिदर्शनात् । देहादिसंघातेऽहंप्रत्ययो गौणो न मिथ्येति चेन्न, तत्कार्येष्वपि गौणत्वोपपत्तेः । आत्मीये देहादिसंघातेऽहंप्रत्ययो गौणो यथात्मीये पुत्रे आत्मा वै पुत्रनामासीति, लोके चापि मम प्राण एवायं गौरिति तद्वत्, नैवायं मिथ्याप्रत्ययः । मिथ्याप्रत्ययस्तु स्थाणुपुरुषयोरपुरुषयोरगृह्यमाणविशेषयोः । न गौणप्रत्ययस्य मुख्यकार्यार्थता, अधिकरणस्तुत्यर्थत्वाल्लुप्तोपमाशब्देन । यथा सिंहो देवदत्तोऽग्निर्माणवक इति सिंह इवाग्निरिव क्रौर्यपैङ्गल्यादिसामान्यवत्त्वाद्देवदत्तमाणवकाधिकरणस्तुत्यर्थमेव नतु सिंहकार्यमग्निकार्यं वा गौणशब्दप्रत्ययनिमित्तं किंचित्साध्यते; मिथ्याप्रत्ययकार्यं त्वनर्थमनुभवतीति गौणप्रत्ययविषयं च जानाति नैष सिंहो देवदत्तस्तथायमग्निर्माणवक इति । तथा गौणेन देहादिसंघातेनात्मना कृतं कर्म न मुख्येनाहंप्रत्ययविषयेणात्मना कृतं स्यात् । नहि गौणसिंहाग्निभ्यां कृतं कर्म मुख्यसिंहाग्निभ्यां कृतं स्यात् । नच क्रौर्येण

---

२ आनन्दगिरिव्याख्या ।

ष्ठानादीति । यदुक्तमविद्याकामबीजं सर्वं कर्मेति तन्न शास्त्रावगतस्य कर्मणोऽविद्यापूर्वकत्वानुपपत्तेरित्याक्षिपति—अविद्येति । दृष्टान्तेन समाधत्ते—नेति । तत्राभिमतां प्रतिज्ञां विभजते—यद्यपीति । उक्तं दृष्टान्तं व्याचष्टे—यथेति । अविद्यादिमतो ब्रह्महत्यादि कर्मेत्यत्र हेतुमाह—अन्यथेति । दार्ष्टान्तिकं गृह्णाति—तथेति । तान्यप्यविद्यादिमतो भवन्तीत्यविद्यादिपूर्वकत्वं तेषामेपितव्यमित्यर्थः । पारलौकिककर्मसु देहाद्यतिरिक्तात्मज्ञानं विना प्रवृत्त्ययोगान्न तेषामविद्यापूर्वकतेति शङ्कते—व्यतिरिक्त इति । सत्यपि व्यतिरिक्तात्मज्ञाने पारमार्थिकात्मज्ञानाभावान्मिथ्याज्ञानादेव नित्यादिकर्मसु प्रवृत्तेरविद्यापूर्वकत्वं तेषामप्रतिहतमिति परिहरति—नेत्यादिना । कर्मणश्चलनात्मकत्वान्नात्मकर्तृकत्वं तस्य निष्क्रियत्वाद्देहादिसंघातस्य तु सक्रियत्वात्तत्कर्तृकं कर्म युक्तं तथापि संघातेऽहमभिमानद्वाराहं करोमीत्यात्मनो मिथ्याधीपूर्विका कर्मणि प्रवृत्तिर्दृष्टा तेनाविद्यापूर्वकत्वं तस्य युक्तमित्यर्थः । यदुक्तं देहादिसंघातेऽहमभिमानस्य मिथ्याज्ञानत्वं तदाक्षिपति—देहादीति । अहंधियो गौणत्वे तत्पूर्वककर्मस्वपि गौणत्वापत्तेरात्मनोऽनर्थाभावात्तन्निवृत्त्यर्थं हेत्वन्वेषणं न स्यादिति दूषयति—नेति । एतदेव प्रपञ्चयन्नादौ चोद्यं प्रपञ्चयति—आत्मीयेति । तत्र श्रुत्यवष्टम्भेन दृष्टान्तमाह—यथेति । दर्शितश्रुतेरात्मीये पुत्रेऽहंप्रत्ययो गौणो यथा संघातेऽप्यात्मीयेऽहंप्रत्ययस्तथा युक्त इत्यर्थः । भेदधीपूर्वकत्वं गौणधियो लोके प्रसिद्धमित्याह—लोके चेति । लोकवेदानुरोधेनात्मीये संघातेऽहंधीरपि गौणी स्यादिति दार्ष्टान्तिकमाह—तद्वदिति । मिथ्याधियोऽपि भेदधीपूर्वकत्वसंभवादात्मीये संघातेऽहंधियो मिथ्यात्वमेव किं न स्यादित्याशङ्क्याह—नैवायमिति । भेदधीपूर्वकत्वाभावे कथं मिथ्याधीरुदेतीत्याशङ्क्याह—मिथ्येति । अधिष्ठानारोप्ययोर्विवेकाग्रहात्तदुत्पत्तिरित्यर्थः । देहादावहंधियो गौणतेति चोद्ये विवृते तत्कार्येष्वपीत्यादिपरिहारं विवृणोति—नेत्यादिना । हेतुभागं विभजते—यथेति । सिंहो देवदत्त इति वाक्यं देवदत्तः सिंह इवेत्युपमया देवदत्तं क्रौर्याद्यधिकरणं स्तोतुं प्रवृत्तमग्निर्माणवक इत्यपि वाक्यं माणवकोऽग्निरिवेत्युपमया माणवकस्य पैङ्गल्याधिकरणस्य स्तुत्यर्थमेव न तथा मनुष्योऽहमिति वाक्यस्याधिकरणस्तुत्यर्थता भातीत्यर्थः । देवदत्तमाणवकयोरधिकरणत्वं कथमित्याशङ्क्याह—क्रौर्येति । किंच गौणशब्दं तत्प्रत्ययं च निमित्तं कृत्वा सिंहकार्यं न किंचिद्देवदत्ते साध्यते नापि माणवके किंचिदग्निकार्यं मिथ्याधीकार्यं त्वनर्थमात्मानुभवत्यतो न देहादावहंधीर्गौणीत्याह—नत्विति । इतोऽपि देहादौ नाहंधीर्गौणीत्याह—गौणेति । यो देवदत्तो माणवको वा गौण्या धियो विषयस्तं परो नैष सिंहो नायमग्निरिति जानाति नैवमविद्वानात्मनः संघातस्य च सत्यपि भेदे संघातस्यानात्मत्वं प्रत्येत्यतो न संघातेऽहंशब्दप्रत्ययौ गौणावित्यर्थः । संघाते तयोर्गौणत्वे दोषान्तरं समुच्चिनोति—तथेति । तथा सत्यात्मनि कर्तृत्वादिप्रतिभासासिद्धिरिति शेषः । गौणेन कृतं न मुख्येन कृतमित्युदाहरणेन स्फुटयति—नहीति । यद्यपि देवदत्तमाणवकाभ्यां कृतं कार्यं मुख्याभ्यां सिंहाग्निभ्यां न क्रियते तथापि देवदत्तगतक्रौर्येण मुख्यसिंहस्य माणवकनिष्ठपैङ्गल्येन मुख्याग्नेरिव च संघातगतेनापि जडत्वेनात्मनो मुख्यस्य किंचित्कार्यं कृतं भविष्य-

---

५ भाष्योत्कर्षदीपिका ।

वापि न वाच्यम् । भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम् । गुरुशुश्रूषाभक्त्यनसूयायुक्ताय तपस्विने मेधाविने वा वाच्य-

१ श्रीमच्छांकरभाष्यम् ।

पैङ्गल्येन वा मुख्यासिंहाग्न्योः कार्यं किंचित्क्रियते स्तुत्यर्थेनोपक्षीणत्वात् । स्तूयमानौ च जानीतो नाहं सिंहो नाहमग्निरिति न सिंहस्य कर्म ममाग्नेश्चेति तथा न संघातस्य कर्म मम मुख्यस्यात्मन इति प्रत्ययो युक्ततरः स्यान्न पुनरहं कर्ता मम कर्मेति । यच्चाहुरात्मीयैः स्मृतीच्छाप्रयत्नैः कर्महेतुभिरात्मा कर्म करोतीति न, तेषां मिथ्याप्रत्ययपूर्वकत्वात् । मिथ्याप्रत्ययनिमित्तेष्टानिष्टानुभूतक्रियाफलजनितसंस्कारपूर्वका हि स्मृतीच्छाप्रयत्नादयः । यथास्मिञ्जन्मनि देहादिसंघाताभिमानरागद्वेषादिकृतौ धर्माधर्मौ तत्फलानुभवश्च तथाऽतीतेऽतीततरेऽपि जन्मनीत्यनादिरविद्याकृतः संसारोऽतीतोनागतश्चानुमेयः । ततश्च सर्वकर्मसंन्याससहितज्ञाननिष्ठया आत्यन्तिकः संसारोपरम इति सिद्धम् । अविद्यात्मकत्वाच्च देहाभिमानस्य तन्निवृत्तौ देहानुपपत्तेः संसारानुपपत्तिः । देहादिसंघात आत्माभिमानोऽविद्यात्मकः । नहि लोके गवादिभ्योऽन्योऽहं मत्तश्चान्ये गवादय इति जानंस्तानहमिति प्रत्ययं मन्यते कश्चित् । अजानंस्तु स्थाणौ पुरुषविज्ञानवदविवेकतो देहादिसंघाते कुर्यादहमिति प्रत्ययं न विवेकतो जानन् । यस्त्वात्मा वै पुत्रनामासीति पुत्रेऽहंप्रत्ययः स तु जन्यजनकसंबन्धनिमित्तो गौणः । गौणेन चात्मना भोजनादिवत्परमार्थकार्यं न शक्यते कर्तुं गौणसिंहाग्निभ्यां मुख्यसिंहाग्निकार्यवत् । अदृष्टविषयचोदनाप्रामाण्यादात्मकर्तव्यं गौणैर्देहेन्द्रियात्मभिः क्रियत एव इति चेन्न, अविद्याकृतात्मत्वात्तेषां । न च गौणा आत्मनो देहेन्द्रियादयः । किं तर्हि मिथ्याप्रत्ययेनैवासङ्गस्यात्मनः सङ्गत्यात्मत्वमापाद्यते तद्भावे भावात्तदभावे चाभावात् । अविवेकिनां ह्यज्ञानकाले बालनां दृश्यते दीर्घोऽहं गौरोऽहमिति देहादिसंघाते अहंप्रत्ययः । नतु विवेकिनामन्योऽहं देहादिसंघातादिति जानतां तत्काले देहादिसं-

---

२ आनन्दगिरिव्याख्या ।

तीत्याशङ्क्याह—**नचेति** । देहादावहंधियो गौणत्वायोगे हेत्वन्तरमाह—**स्तूयमानाविति** । देवदत्तमाणवकयोः सिंहाग्निभ्यां भेदधीपूर्वकं तद्व्यापारवत्त्वाभावधीवदात्मनोऽपि मुख्यस्य संघाताद्भेदधीद्वारा तदीयव्यापारराहित्यमात्मनि दृष्टं स्यादित्यर्थः । व्यावर्त्यं दर्शयति—**न पुनरिति** । संघातेऽहंधियो मिथ्याधीत्वेऽपि न तत्कृतमात्मनि कर्तृत्वं किं चात्मीयैर्ज्ञानेच्छाप्रयत्नैरस्य कर्तृत्वं वास्तवमिति मतमनुवदति—**यच्चेति** । ज्ञानादिकृतमपि कर्तृत्वं मिथ्याधीकृतमेव ज्ञानादीनां मिथ्याधीकार्यत्वादिति दूषयति—**न तेषामिति** । तदेव प्रपञ्चयति—**मिथ्येति** । मिथ्याज्ञानं निमित्तं कृत्वा किंचिदिष्टं किंचिदनिष्टमित्यारोप्य तद्द्वारानुभूते तस्मिन्प्रेप्साजिहासाभ्यां क्रियां निर्वर्त्य तयेष्टमनिष्टं च फलं भुक्त्वा तेन संस्कारेण तत्पूर्विकाः स्मृत्यादयः स्वात्मनि क्रियां कुर्वन्तीति युक्तं कर्तृत्वस्य मिथ्यात्वमित्यर्थः । अतीतानागतजन्मनोरिव वर्तमानेऽपि जन्मनि कर्तृत्वादिसंसारस्य वस्तुत्वमाशङ्क्याह—**यथेति** । विमतौ कालावविद्याकृतसंसारवन्तौ कालत्वाद्वर्तमानकालवदित्यर्थः । संसारस्याविद्याकृतत्वे फलितमाह—**ततश्चेति** । तस्याविद्यत्वेन विद्यापोह्यत्वे हेत्वन्तरमाह—**अविद्येति** । कुतोऽस्याविद्याकृतत्वं धर्माधर्मकृतत्वसंभवादित्याशङ्क्याह—**देहादीति** । आत्मनो धर्मादिकर्तृत्वस्याविद्यत्वान्नाविद्यां विना कर्मिणां देहाभिमानः संभवत्यतश्चात्मनः संघातेऽहमभिमानस्याविद्याविद्यमानतेत्यर्थः । आत्मनो देहाद्यभिमानस्याविद्यकत्वमन्वयव्यतिरेकाभ्यां साधयन्व्यतिरेकं दर्शयति—**नहीति** । अन्वयं दर्शयन्व्यतिरेकमनुवदति—**अजानन्निति** । पुत्रे पितुरहंधीवदात्मीये देहादावहंधीर्गौणीत्युक्तमनुवदति—**यस्त्विति** । तत्र दृष्टान्तश्रुतेर्गौणात्मविषयत्वमुक्तमङ्गीकरोति—**स त्विति** । तर्हि देहादावपि तथैव स्वकीये स्यादहंधीर्गौणीत्याशङ्क्याह—**गौणेनेति** । नहि स्वकीयेन पुत्रादिना गौणात्मना पितृभोजनादिकार्यं क्रियते तथा देहादेरपि गौणात्मत्वे तेन कर्तृत्वादिकार्यमात्मनो न वास्तवं सिध्यतीत्यर्थः । गौणात्मना मुख्यात्मनो नास्ति वास्तवं कार्यमित्यत्र दृष्टान्तमाह—**गौणेति** । नहि गौणसिंहेन देवदत्तेन मुख्यसिंहकार्यं क्रियते नापि गौणाग्निना माणवकेन मुख्याग्निकार्यं दाहपाकादि तथा देहादिना गौणात्मना मुख्यात्मनो न वास्तवं कार्यं कर्तृत्वादि कर्तुं शक्यमित्यर्थः । स्वर्गकामादिवाक्यप्रामाण्यादात्मनो देहाद्यतिरेकज्ञानात्तस्य च केवलस्याकर्तृत्वात्तत्कर्तव्यं कर्म गौणैरेव देहाद्यात्मभिः संपाद्यते नहि सत्येव श्रौतातिरेकज्ञाने देहादावात्मत्वमात्मनो मुख्यं युक्तमिति चोदयति—**अदृष्टेति** । न देहादीनामात्मत्वं गौणं तदीयात्मत्वस्याविद्यत्वेन मुख्यत्वादतो न गौणात्मभिरात्मकर्तव्यं कर्म क्रियते किंतु मिथ्यात्मभिरिति परिहरति—**नाविद्येति** । तदेव विवृण्वन्नञर्थं स्फुटयति—**न गौणा इति** । कथं तर्हि देहादिविषयात्मत्वप्रथेत्याशङ्क्याविद्याकृतेत्यादिहेतुं विभजते—**कथं तर्हीति** । देहादीनामनात्मनामेव सतामात्मत्वं मिथ्याप्रत्ययकृतमित्यत्रान्वयव्यतिरेकावुदाहरति—**तद्भाव इति** । उक्तेऽन्वये शास्त्रीयसंस्कारशून्यानामनुभवं प्रमाणयति—**अविवेकिनामिति** । व्यतिरेकेऽपि दर्शिते शास्त्राभिज्ञानामनुभवमनुकूलयति—**नत्विति** । अन्वयव्यतिरेकाभ्या-

१ श्रीमच्छांकरभाष्यम् ।

घातेऽहंप्रत्ययो भवति । तस्मान्मिथ्याप्रत्ययाभावेऽभावात्तत्कृत एव न गौणः । पृथग्गृह्यमाणविशेषसामान्ययोर्हि सिंहदेवदत्तयोरग्निमाणवकयोर्वा गौणः प्रत्ययः शब्दप्रयोगौ वा स्यान्नागृह्यमाणसामान्यविशेषयोः । यत्तूक्तं श्रुतिप्रामाण्यादिति । तन्न, तत्प्रामाण्यस्यादृष्टविषयत्वात् । प्रत्यक्षादिप्रमाणानुपलब्धे हि विषयेऽग्निहोत्रादिसाध्यसाधनसंबन्धे श्रुतेः प्रामाण्यं न प्रत्यक्षादिविषयेऽदृष्टदर्शनार्थविषयत्वात्प्रामाण्यस्य । तस्मान्न दृष्टमिथ्याज्ञाननिमित्तस्याहंप्रत्ययस्य देहादिसंघाते गौणत्वं कल्पयितुं शक्यम् । नहि श्रुतिशतमपि शीतोऽग्निरप्रकाशो वेति ब्रुवत्प्रामाण्यमुपैति । यदि ब्रूयाच्छीतोऽग्निरप्रकाशो वेति तथाप्यर्थान्तरं श्रुतेर्विवक्षितं कल्प्यं प्रामाण्यान्यथानुपपत्तेर्नतु प्रमाणान्तरविरुद्धं स्ववचनविरुद्धं वा । कर्मणो मिथ्याप्रत्ययवत्कर्तृकत्वात्कर्तुरभावे श्रुतेरप्रामाण्यमिति चेत् । न, ब्रह्मविद्यायामर्थवत्त्वोपपत्तेः । कर्मविधिश्रुतिवद्ब्रह्मविद्याविधिश्रुतेरप्रामाण्यप्रसङ्ग इति चेत् । न, बाधकप्रत्ययानुपपत्तेः । यथा ब्रह्मविद्याविधिश्रुत्यात्मन्यवगते देहादिसंघातेऽहंप्रत्ययो बाध्यते तथात्मन्येवात्मावगतिर्न कदाचित्केनचित्कथंचिदपि बाधितुं शक्या, फलाव्यतिरेकादवगतेर्यथाग्निरुष्णः प्रकाशश्चेति । नचैवं कर्मविधिश्रुतेरप्रामाण्यं, पूर्वपूर्वप्रवृत्तिनिरोधेनोत्तरोत्तरापूर्वप्रवृत्तिजननस्य प्रत्यगात्माभिमुख्येन प्रवृत्त्युत्पादनार्थत्वात् । मिथ्यात्वेऽप्युपायस्योपेयसत्यतया सत्यत्वमेव स्याद्यथार्थवादानां विधिशेषाणाम् । लोकेऽपि बालोन्मत्तादीनां पयआदौ पाययितव्ये चूडावर्धनादिवचनम् । प्रकारान्तरस्थानां च साक्षादेव वा प्रामाण्यसिद्धिः प्रागात्मज्ञानाद्देहाभिमाननिमित्तप्रत्यक्षादिप्रामाण्यवत् । यत्तु मन्यसे

२ आनन्दगिरिव्याख्या ।

अनुभवानुसारिणां सिद्धमर्थमुपसंहरति—**तस्मादिति** । तत्कृत एव देहादावहंप्रत्यय इति शेषः । किंच व्यवहारभूमौ भेदग्रहस्य गौणत्वव्यापकत्वात्तस्य प्रकृतेऽभावान्न देहादावहंशब्दप्रत्ययौ गौणावित्याह—**पृथगिति** । अदृष्टविषयचोदनाप्रामाण्यात्कर्तुरात्मनो व्यतिरेकावधारणात्तस्य देहादावहमभिमानस्य गौणतेत्युक्तमनुवदति—**यत्त्विति** । श्रुतिप्रामाण्यस्याज्ञातार्थविषयत्वान्मानान्तरसिद्धे व्यतिरिक्तात्मनि चोदनाप्रामाण्याभावान्न तदवष्टम्भेन देहादावात्माभिमानस्य गौणतेत्युत्तरमाह—**न तदिति** । श्रुतिप्रामाण्यस्यादृष्टविषयत्वं स्पष्टयति—**प्रत्यक्षादीति** । अज्ञातार्थज्ञापकं प्रमाणमिति स्थितेर्न ज्ञाते श्रुतिप्रामाण्यमित्याह—**अदृष्टेति** । अज्ञातसाध्यसाधनसंबन्धबोधिनः शास्त्रस्यातिरिक्तात्मन्यौदासीन्ये फलितमाह—**तस्मादिति** । अन्वयव्यतिरेकाभ्यां दृष्टो मिथ्याज्ञाननिमित्तो देहादिसंघातोऽहंप्रत्ययस्तस्येति यावत् । अन्यविषयत्वाच्चोदनाया नातिरिक्तात्मविषयतेत्युक्तमिदानीं तद्विषयत्वाङ्गीकारेऽपि न तन्निर्वोढुं शक्यं प्रत्यक्षविरोधादित्याह—**नहीति** । अपौरुषेयायाः श्रुतेरसंभावितदोषाया मानान्तरविरोधेऽपि प्रामाण्यमप्रत्याख्येयमित्यभिप्रेत्याह—**यदीति** । स्वार्थं बोधयन्त्याः श्रुतेरविरोधापेक्षत्वाद्विरुद्धार्थवादित्वे तत्परिहाराय विवक्षितमर्थान्तरमविरुद्धं तस्याः स्वीकर्तव्यं विरोधे तत्प्रामाण्यानुपपत्तेरित्याह—**तथापीति** । अविरोधमवधा[धी]र्य श्रुत्यर्थकल्पना न युक्तेति व्यावर्त्यमाह—**नत्विति** । अविद्यावत्कर्तृकं कर्मेति त्वयोपगमादुत्पन्नायां विद्यायामविद्याभावे तदधीनकर्तुरभावादन्तरेण कर्तारमनुष्ठानासिद्धौ कर्मकाण्डाप्रामाण्यमित्यध्ययनविधिविरोधः स्यादिति शङ्कते—**कर्मण इति** । कर्मकाण्डश्रुतेर्विद्योदयात्पूर्वं व्यावहारिकप्रामाण्यस्य तात्त्विकप्रामाण्याभावेऽपि संभवाद्ब्रह्मकाण्डश्रुतेश्च तात्त्विकप्रामाण्यस्य ब्रह्मविद्याजनकत्वेनोपपन्नत्वान्नाध्ययनविधिविरोध इति परिहरति—**न ब्रह्मेति** । कर्मकाण्डश्रुतेस्तात्त्विकप्रामाण्याभावे ब्रह्मकाण्डश्रुतेरपि तदसिद्धिरविशेषादिति शङ्कते—**कर्मेति** । उत्पन्नाया ब्रह्मविद्याया बाधकाभावेन प्रमाणत्वात्तद्धेतुश्रुतेस्तात्त्विकं प्रामाण्यमिति दूषयति—**न बाधकेति** । ब्रह्मविद्याया बाधकानुपपत्तिं दृष्टान्तेन साधयति—**यथेति** । देहादिसंघातवदित्यपेरर्थः । लौकिकावगतेरिवात्मावगतेरपि फलाव्यतिरेकमुदाहरणेन स्फोरयति—**यथेति** । फलमज्ञाननिवृत्तिः । कर्मविधिश्रुतिवदित्युक्तं दृष्टान्तं विघटयति—**न चेति** । अनादिकालप्रवृत्तस्वाभाविकप्रवृत्तिव्यक्तीनां प्रतिबन्धेन यागाद्यलौकिकप्रवृत्तिव्यक्तीर्जनयति, कर्मकाण्डश्रुतिस्तज्जननं च चित्तशुद्धिद्वारा प्रत्यगात्माभिमुख्यप्रवृत्तिमुत्पादयति, तथाच कर्मविधिश्रुतीनां पारंपर्येण प्रत्यगात्मज्ञानार्थत्वात्तात्त्विकप्रामाण्यसिद्धिरित्यर्थः । नन्वेवमपि श्रुतेर्मिथ्यात्वाद्धूमाभासवदप्रामाण्यमिति चेन्नेत्याह—**मिथ्यात्वेऽपीति** । स्वरूपेणासत्यत्वेऽपि सत्योपेयद्वारा प्रामाण्यमित्यत्र दृष्टान्तमाह—**यथेति** । मन्त्रार्थवादेतिहासपुराणानां श्रुतेऽर्थे प्रामाण्याभावेऽपि शेषिविध्यनुरोधेन प्रामाण्यवत्प्रकृतेऽपि श्रुतेः स्वरूपेणासत्याया विषयसत्यतया सत्यत्वे प्रामाण्यमविरुद्धमित्यर्थः वाक्यस्य शेषिविध्यनुरोधेन प्रामाण्यं नालौकिकमित्याह—**लोकेऽपीति** । कर्मकाण्डश्रुतीनामुक्तरीत्या परंपरया प्रामाण्येऽपि साक्षात्प्रामाण्यमुपेक्षितमित्याशङ्क्याह—**प्रकारान्तरेति** । आत्मज्ञानोदयात्प्रागवस्था प्रकारान्तरं, तत्र स्थितानां कर्म श्रुतीनामज्ञातसंबन्धबोधकत्वेन साक्षादेव प्रामाण्यमिष्टमित्यर्थः । ज्ञानात्पूर्वं कर्मश्रुतीनां व्यावहारिक-

१ श्रीमच्छांकरभाष्यम् ।

स्वयमव्याप्रियमाणोऽप्यात्मा संनिधिमात्रेण करोति तदेव च मुख्यं कर्तृत्वमात्मनः । यथा राजा युद्ध्यमानेषु योधेषु युध्यत इति प्रसिद्धं स्वयमयुध्यमानोऽपि संनिधानादेव जितः पराजितश्चेति च तथा सेनापतिर्वाचैव करोति क्रियाफलसंबन्धश्च राज्ञः सेनापतेश्च दृष्टः, यथाच ऋत्विक्कर्म यजमानस्य, तथा देहादीनां कर्मात्मकृतं स्यात्तत्फलस्यात्मगामित्वात् । यथा वा भ्रामकस्य लोहभ्रामयितृत्वादव्यापृतस्यैव मुख्यमेव कर्तृत्वं तथा चात्मन इति । तदसत्, अकुर्वतः कारकत्वप्रसङ्गात् । कारकमनेकप्रकारमिति चेन्न । राजप्रभृतीनां मुख्यस्यापि कर्तृत्वस्य दर्शनात् । राजा तावत्स्वव्यापारेणापि युद्ध्यते योधानां च योधयितृत्वे धनदाने च मुख्यमेव कर्तृत्वं तथा जयपराजयफलोपभोगे । तथा यजमानस्यापि प्रधानत्यागे दक्षिणादाने च मुख्यमेव कर्तृत्वम् । तस्मादव्यापृतस्य कर्तृत्वोपचारो यः स गौण इत्यवगम्यते । यदि मुख्यं कर्तृत्वं स्वव्यापारलक्षणं नोपलभ्यते राजयजमानप्रभृतीनां तदा संनिधिमात्रेणापि कर्तृत्वं मुख्यं परिकल्प्येत यथा भ्रामकस्य लोहभ्रमणेन न तथा राजयजमानादीनां स्वव्यापारो नोपलभ्यते । तस्मात्संनिधिमात्रेणापि कर्तृत्वं गौणमेव । तथाच सति तत्फलसंबन्धोऽपि गौण एव स्यात् । न, गौणेन मुख्यं कार्यं निर्वर्त्यते । तस्मादसदेवैतद्गीयते देहादीनां व्यापारेणाव्यापृत आत्मा कर्ता भोक्ता च स्यादिति । भ्रान्तिनिमित्तं तु सर्वमुपपद्यते । यथा स्वप्ने मायायां चैवम् । नच देहाद्यात्मप्रत्ययभ्रान्तिसन्तानविच्छेदेषु सुषुप्तिसमाध्यादिषु कर्तृत्वभोक्तृत्वाद्यनर्थ उपलभ्यते । तस्माद्भ्रान्तिप्रत्ययनिमित्त एवायं संसारभ्रमो नतु परमार्थ इति सम्यग्दर्शनादत्यन्तमेवोपरम इति सिद्धम् । सर्वं गीताशास्त्रार्थमुपसंहृत्यास्मिन्नध्याये विशेषतश्चान्ते इह शास्त्रार्थदार्ढ्याय संक्षेपत उपसंहारं कृत्वाथेदानीं शास्त्रसंप्रदायविधिमाह—इदमिति । इदं शास्त्रं ते तव हिताय मयोक्तं संसारविच्छित्तयेऽतपस्काय तपोरहिताय न वाच्यमिति व्यवहितेन संबध्यते । तपस्विनेऽप्यभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन कस्यांचिदप्यवस्थायां न वाच्यम् । भक्तस्तपस्व्यपि सन्नशुश्रूषुर्यो भवति तस्मा अपि न वाच्यम् । नच यो मां वासुदेवं प्राकृतं मनुष्यं मत्वाभ्यसूयत्यात्मप्रशंसादिदोषाध्यारोपणेन ममेश्व-

२ आनन्दगिरिव्याख्या ।

प्रामाण्ये दृष्टान्तमाह—प्रागिति । प्रातीतिककर्तृत्वस्याविद्यकत्वेऽपि श्रुतिप्रामाण्यमप्रत्यूहमित्युक्तं संप्रति कर्तृत्वस्य प्रकारान्तरेण पारमार्थिकत्वमुत्थापयति—यद्यपीति । स्वव्यापाराभावे संनिधिमात्रेण कुतो मुख्यं कर्तृत्वमित्याशङ्क्य दृष्टान्तमाह—यथेति । स्वयमयुध्यमानत्वे कथं तत्फलवत्त्वमित्याशङ्क्य प्रसिद्धिवशादित्याह—जित इति । कायिकव्यापाराभावेऽपि कर्तृत्वस्य मुख्यत्वे दृष्टान्तमाह—सेनापतिरिति । तस्यापि फलवत्त्वं राजवदविशिष्टमित्याह—क्रियेति । अन्यकर्मणान्यस्य संनिहितस्य मुख्ये कर्तृत्वे वैदिकमुदाहरणमाह—यथा चेति । कथमृत्विजां कर्म यजमानस्येत्याशङ्क्याह—तत्फलस्येति । स्वव्यापारादृते संनिधेरेवान्यव्यापारहेतोर्मुख्यकर्तृत्वे दृष्टान्तान्तरमाह—यथा चेति । क्रियां कुर्वत्कारणं कारकमित्यङ्गीकारविरोधान्नैतदिति दूषयति—तदसदिति । कारकविशेषविषयत्वेनाङ्गीकारोपपत्तिरिति शङ्कते—कारकमिति । स्वव्यापारमन्तरेण न किंचिदपि कारकमिति परिहरति—न राजेति । दर्शनमेव विशदयति—राजेति । यथा राज्ञो युद्धे योधयितृत्वेन धनदानेन च मुख्यं कर्तृत्वं तथा फलभोगेऽपि मुख्यमेव तस्य कर्तृत्वमित्याह—तथेति । यदुक्तमृत्विक्कर्म यजमानस्येति तत्राह—यजमानस्यापीति । स्वव्यापारादेव मुख्यं कर्तृत्वमिति स्थिते फलितमाह—यस्मादिति । तदेव प्रपञ्चयति—यदीति । तर्हि संनिधानादेव मुख्यं कर्तृत्वं राजादीनामुपगतमिति नेत्याह—न तथेति । राजादीनां स्वव्यापारवत्त्वे पूर्वोक्तं सिद्धमित्याह—तस्मादिति । राजप्रभृतीनां संनिधेरेव कर्तृत्वस्य गौणत्वे जयादिफलवत्त्वस्यापि सिद्धं गौणत्वमित्याह—तथा चेति । तत्र पूर्वोक्तं हेतुत्वेन स्मारयति—नेति । अन्यव्यापारेणान्यस्य मुख्यकर्तृत्वाभावे फलितमुपसंहरति—तस्मादिति । कथं तर्हि त्वयात्मनि कर्तृत्वादि स्वीकृतं नहि बुद्धेस्तदिष्टं कर्ता शास्त्रार्थवत्त्वादिति न्यायात्तत्राह—भ्रान्तीति । कर्तृत्वाद्यात्मनि भ्रान्तमित्येतदुदाहरणेन स्फोरयति—यथेति । मिथ्याज्ञानकृतमात्मनि कर्तृत्वादीत्यत्र व्यतिरेकं दर्शयति—नचेति । उक्तव्यतिरेकफलं कथयति—तस्मादिति । संसारभ्रमस्याविद्याकृतत्वे सिद्धे परमप्रकृतमुपसंहरति—इति सम्यगिति । शास्त्रतात्पर्यार्थं विचारद्वारा निर्धार्यानन्तरश्लोकमवतारयति—सर्वमिति । प्रकृते खल्वष्टादशाध्याये गीताशास्त्रार्थं सर्वं प्रतिपत्तिसौकर्यार्थमुपसंहृत्यान्ते च सर्वधर्मान्परित्यज्येत्यादौ विशेषतस्तस्य संक्षेपेणोपसंहारं कृत्वा संप्रदायविधिवचनस्यावसरे सतीदानीमिति योजना । किमिति विस्तरेणोपसंहृतः शास्त्रार्थः संक्षिप्योपसंह्रियते तत्राह—शास्त्रार्थेति । संक्षेपविस्तराभ्यामुक्तोऽर्थः सर्वेषां दृढतया बुद्धिमधिरोहतीत्यर्थः । हितायेत्येतदेव

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥**

१ श्रीमच्छांकरभाष्यम् ।

रत्वमजानन्न सहते ऽसावप्ययोग्यस्तस्मा अपि न वाच्यम् । भगवति अनसूयायुक्ताय भक्ताय तपस्विने शुश्रूषवेऽनसूयवे च वाच्यं शास्त्रमिति सामर्थ्याद्गम्यते । तत्र मेधाविने तपस्विने वेत्यनयोर्विकल्पदर्शनात् । शुश्रूषाभक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम् । शुश्रूषाभक्तिवियुक्ताय न तपस्विने नापि मेधाविने वाच्यम् । भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम् । गुरुशुश्रूषाभक्तिमते च वाच्यमित्येष शास्त्रसंप्रदायविधिः ॥ ६७ ॥ संप्रदायस्य कर्तुः फलमिदानीमाह—य इति । य इमं यथोक्तं परमं निःश्रेयसार्थं केशवार्जुनयोः संवादरूपं ग्रन्थं गुह्यं गोप्यं मद्भक्तेषु मयि भक्तिमत्स्वभिधास्यति वक्ष्यति । ग्रन्थतोऽर्थतश्च स्थापयिष्यतीत्यर्थः । यथा त्वयि मया । भक्तेः पुनर्ग्रहणाद्भक्तिमात्रेण केवलेन शास्त्रसंप्रदाने पात्रं भवतीति गम्यते । कथमभिधास्यतीत्युच्यते भक्तिं मयि परां कृत्वा भगवतः परमगुरोः अच्युतस्य शुश्रूषा मया क्रियत इत्येवं कृत्वेत्यर्थः । तस्येदं फलं मामेवैष्यति मुच्यत

२ आनन्दगिरिव्याख्या ।

व्याचष्टे—**संसारेति** । कदाचनेति सर्वैः संबध्यते । प्रतिषेधसामर्थ्यसिद्धमर्थं कथयति—**भगवतीति** । अर्थसिद्धेऽर्थे स्मृत्यन्तरमनुसृत्य मेधावित्वमन्तर्भावयति—**तत्रेति** । विकल्पदर्शनात्तत्पूर्वोक्तेषु विशेषणेषु मेधावित्वमपि प्रविशतीत्यर्थः । विकल्पपक्षे कथमधिकारिप्रतिपत्तिरिति तत्राह—**शुश्रूषेति** । ताभ्यां युक्ताय भगवत्यसूयारहिताय तपस्विने वाच्यमिति संबन्धः । तद्युक्ताय शुश्रूषाभक्त्यनसूयासहितायेत्यर्थः । तपस्वित्वं मेधावित्वं वा निरपेक्षमधिकारिविशेषणमिति शङ्कां शातयति—**शुश्रूषेति** । भगवद्विषयासूयाराहित्ये तात्पर्यं सूचयति—**भगवतीति** । कस्मै तर्हि वाच्यमेतदित्याशङ्क्य पूर्वोक्तसर्वगुणसंपन्नायेत्याह—**गुरुशुश्रूषेति** । अनुक्तेतरविशेषणोपलक्षणार्थमुभयग्रहणम् । मेधाविनस्तपस्वित्वं नातीवापेक्षते सर्वमन्यद्बाधकाभावादपेक्षितमेवेति भावः ॥ ६७ ॥ शास्त्रसंप्रदायप्रवृत्त्यर्थमुत्तरश्लोकप्रवृत्तिं दर्शयति—**संप्रदायस्येति** । य इत्यध्यापको निर्दिश्यते । परमत्वं ग्रन्थस्य निरतिशयपुरुषार्थसाधनत्वमित्याह—**परममिति** । गोप्यत्वमस्य रहस्यार्थविषयत्वात् । यथोक्तसंवादस्य ग्रन्थतोऽर्थतश्च भक्तेषु स्थापने दृष्टान्तमाह—**यथेति** । मयि वासुदेवे भगवति, अनन्यभक्ते त्वयि यथा मया ग्रन्थोऽर्थतः स्थापितस्तथा मद्भक्तेष्वन्येष्वपि यो ग्रन्थमिमं स्थापयिष्यति तस्येदं फलमित्युत्तरत्र संबन्धः । नाभक्तायेति भक्तेरधिकारिविशेषणत्वोक्तेर्मद्भक्तेष्विति पुनर्भक्तिग्रहणमनर्थकमित्याशङ्क्याह—**भक्तेरिति** । शुश्रूषादिसहकारिराहित्यं केवलशब्दार्थः । यद्यपि मात्रशब्देन सूचितमेतत्तथापीतरेण स्फुटीकृतमित्यविरोधः । प्रश्नपूर्वकमभिधानप्रकारमभिनयति—**कथमित्यादिना** । भगवति भक्तिकरणप्रकारं प्रकटयति—**भगवत इति** । यच्छब्दापेक्षितं पूरयति—**तस्येति** । मामेष्यत्ये-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नान्यस्मा इत्यर्थः ॥ ६७ ॥ एवं संप्रदायविधिमुक्त्वा संप्रदायकर्तुः फलमाह—**य इदमिति** । इदं परमं गुह्यं यो भक्तिहीनो मानपूजाद्यर्थी सन् मद्भक्तेष्वभिधास्यति सोऽपि ततएव पुण्यान्मयि परमेश्वरे चिदेकरसे परां भक्तिमद्वैतलक्षणामुपासनां कृत्वा तत्रादरं प्राप्य तामनुष्ठाय च मामेवैष्यति मुक्तिं प्राप्स्यतीत्यर्थः । असंशयः संशयोऽत्र

४ मधुसूदनीव्याख्या ।

॥ ६७ ॥ एवं संप्रदायस्य विधिमुक्त्वा तस्य कर्तुः फलमाह—यः संप्रदायस्य प्रवर्तक इममावयोः संवादरूपं ग्रन्थं परमं निरतिशयपुरुषार्थसाधनं गुह्यं रहस्यार्थत्वात्सर्वत्र प्रकाशयितुमनर्हं मद्भक्तेषु मां भगवन्तं वासुदेवं प्रत्यनुरक्तेष्वभिधास्यत्यभितो ग्रन्थतोऽर्थतश्च धास्यति स्थापयिष्यति । भक्तेः पुनर्ग्रहणात्पूर्वोक्तविशेषणत्रयरहितस्यापि भगवद्भक्तिमात्रेण पात्रता सूचिता

५ भाष्योत्कर्षदीपिका ।

मित्येष शास्त्रसंप्रदायविधिः ॥ ६७ ॥ एवं संप्रदायस्य विधिमुक्त्वा शास्त्रसंप्रदाने प्रवृत्त्यर्थं तस्य कर्तुः फलमाह—**य इति** । इमं यथोक्तं केशवार्जुनयोः संवादरूपं ग्रन्थम् । इदमिति पाठस्त्वाचार्यैरव्याख्यातत्वादनादरणीयः । य इमं निःश्रेयसार्थत्वात्परमं प्रकृष्टं गुह्यं गोप्यं रहस्यार्थविषयत्वात् । मद्भक्तेषु मयि भक्तिमत्सु योऽध्यापकोऽभिधास्यति ग्रन्थतोऽर्थतश्चाध्यापयिष्यति । यथा मयि वासुदेवे नित्यभक्ते त्वयि मया ग्रन्थतोऽर्थतश्च स्थापितस्तथा मद्भक्तेषु यो ग्रन्थमिमं स्थापयिष्यति स भक्तिं मयि परां कृत्वा भग-

६ श्रीधरीव्याख्या ।

द्वेष्या दोषारोपेण निन्दति तस्मै च न वाच्यम् ॥ ६७ ॥ एतैर्दोषैर्विरहितेभ्यो मद्भक्तेभ्यो गीताशास्त्रोपदेष्टुः फलमाह—**य इति** । मद्भक्तेष्वभि-

१ श्रीधरः. नीलकण्ठः.

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

१ श्रीमच्छांकरभाष्यम् ।

एव। असंशयोऽत्र संशयो न कर्तव्यः ॥ ६८ ॥ किंच—नच तस्माच्छास्त्रसंप्रदायकृतो मनुष्येषु मनुष्याणां मध्ये कश्चिन्मे मम प्रियकृत्तमोऽतिशयेन प्रियकरोऽन्यःप्रियकृत्तमो नास्त्येवेत्यर्थो वर्तमानेषु नच भविता भविष्यत्यपि काले तस्माद्द्वितीयोऽन्यः प्रियतरः प्रियकृत्तरः भुवि लोकेऽस्मिन् न भविता ॥ ६९ ॥ योऽपि—

२ आनन्दगिरिव्याख्या ।

वेत्यन्वयं गृहीत्वा व्याचष्टे—मुच्यत एवेति ॥ ६८ ॥ ननु सर्वेषां मुक्तिसाधनानां ध्यानस्य श्रेष्ठत्वात्तन्निष्ठस्य मुमुक्षोर्नास्ति विद्यासंप्रदाने प्रवृत्तिरिति तत्राह—किंचेति । इतश्च विद्यासंप्रदानं मुमुक्षुणा यथोक्तविशेषणवते कर्तव्यमित्यर्थः । वर्तमानेषु मध्ये त्वत्तोऽन्यो नास्त्येव प्रियकृत्तमो नाप्यतीतेषु तादृक्कश्चिदासीदिति शेषः । तस्माद्विद्यासंप्रदायकर्तुः सकाशादित्यर्थः । ध्याननिष्ठस्य श्रेष्ठत्वेऽपि स्वसंप्रदायप्रवक्तुः श्रेष्ठतमत्वादुचिता विद्यासंप्रदाने प्रवृत्तिरिति भावः ॥ ६९ ॥ संप्रदायप्रवक्तुः सर्वाधिकं फलं 'स वक्ता विष्णुरित्युक्तो न स विश्वाधिदैवतम्' इति न्यायेनोक्त्वा संप्रत्यध्येतुर्विवक्षितं फलमाह—योऽपीति । यथोक्तस्य शास्त्रस्य योऽप्यध्येता तेनेदं कृतं स्यादिति

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

नास्ति । स्मर्यते हि अजामिलादीनां भक्तिगन्धहीनानामपि पुत्रसंकेतितेन नारायणेतिनाम्ना स्नेहवशादाह्वयतां तावन्मात्रतुष्टेन भगवता सद्गतिर्दत्ता किमु वक्तव्यं यो वाचा एतावच्छास्त्ररहस्यं प्रतिपादयति तस्य भक्तिलाभादिक्रमेण कृतकृत्यत्वं भविष्यतीति ॥ ६८ ॥ ननु अश्रद्धया कृतं सर्वं व्यर्थमिति त्वयैवोक्तं कथमभक्तस्याप्येतच्छास्त्राभिधानतो भक्त्यादिलाभः संभवेदित्याशङ्क्याह—नचेति । तस्मादेतच्छास्त्रप्रवर्तकादन्यो मनुष्येषु मे मम प्रियकृत्तमो नच कश्चिदस्ति । इयमेव मम महती वाचिकी भक्तिस्तां कृत्वा सोपानारोहक्रमेण मे मम प्रियतरो भविता भविष्यति । 'अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः' इति । नच भुवि एतस्मादन्यत्परमार्थसाधनमस्तीति भावः । अक्षरार्थः स्पष्टः ॥ ६९ ॥ अध्यापकस्य फलमुक्त्वाऽध्येतुः फलमाह—अध्येष्यते चेति । ज्ञानयज्ञेन निर्विकल्प-

४ मधुसूदनीव्याख्या ।

भवति । कथमभिधास्यति तत्राह—भक्तिं मयि परां कृत्वा भगवतः परमगुरोः शुश्रूषैवेयं मया क्रियत इत्येवं कृत्वा निश्चित्य योऽभिधास्यति स मामेवैष्यति मां भगवन्तं वासुदेवमेष्यत्येवाचिरान्मोक्ष्यत एव संसारादत्र संशयो न कर्तव्यः । अथवा मयि परां भक्तिं कृत्वाऽसंशयो निःसंशयः सन्मामेष्यत्येवेति वा मामेवैष्यति नान्यमिति यथाश्रुतमेव वा योज्यम् ॥ ६८ ॥ किंच—तस्मान्मद्भक्तेषु शास्त्रसंप्रदायकृतः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मे मम प्रियकृत्तमोऽतिशयेन प्रियकृत् मद्विषयप्रीत्यतिशयवान्नास्ति वर्तमाने काले नापि प्रागासीत्तादृक्कश्चित् नच कालान्तरे भविता भविष्यति ममापि तस्मादन्यः प्रियतरः प्रीत्यतिशयविषयः कश्चिदप्यासीन्न । अधुना च भुवि लोकेऽस्मिन्नास्ति । नच कालान्तरे भवितेत्यावृत्त्या योज्यम् ॥ ६९ ॥ अध्यापकस्य फलमुक्त्वाऽध्येतुः फलमाह—आवयोः संवादमिमं ग्रन्थं धर्म्यं धर्मादनपेतं योऽध्येष्यते जपरूपेण

५ भाष्योत्कर्षदीपिका ।

वतः परमगुरोः शुश्रूषा मया क्रियत इत्येवं कृत्वा मामेवैष्यति नान्यम् । मुक्तो भविष्यत्येवेत्यर्थः । अत्र संशयो न कर्तव्यः । मद्भक्तेष्विति भक्तेः पुनर्ग्रहणं भक्तिमात्रेण शास्त्रसंप्रदाने पात्रं भवतीति गम्यते । भक्तिं परामद्वैतलक्षणामुपासनां कृत्वेति तु गीताशास्त्रप्रदानलक्षणभक्तेः फलं वक्तुं प्रवृत्तस्येतरभक्तिफलकथनमनुचितमित्यभिप्रेत्याचार्यैर्न व्याख्यातम् ॥ ६८ ॥ ननु सर्वेषां मुक्तिसाधनानां ध्यानस्य श्रेष्ठत्वात्तन्निष्ठस्य मुमुक्षोः कुत एतच्छास्त्रसंप्रदाने प्रवृत्तिरित्याशङ्क्याह । नच तस्माच्छास्त्रसंप्रदायकृतो मनुष्येषु मद्भक्तिमत्सु वर्तमानेषु मध्ये कश्चिन्मे प्रियकृत्तमोऽतिशयेन प्रीतिकृत्ततोऽन्यो नास्त्येव नाप्यतीतेष्वेतादृक्कश्चिदासीदिति शेषः । तस्मादेतच्छास्त्रसंप्रदानकर्तुरन्यो द्वितीयो भुवि लोकेऽस्मिन्कालान्तरेऽपि नच भविता न भविष्यतीत्यर्थः । ध्यानकर्तुः श्रेष्ठत्वेऽपि एतच्छास्त्रसंप्रदानकर्तुरन्यस्य कालत्रयेऽपि श्रेष्ठतमत्वाभावादेतच्छास्त्रसंप्रदाने प्रवृत्तिरुचितैवेति भावः ॥ ६९ ॥ एवमेतच्छास्त्रसंप्र-

६ श्रीधरीव्याख्या ।

धास्यति मद्भक्तेभ्यो यो वक्ष्यति स मयि परां भक्तिं करोति । ततो निःसंशयः सन् मामेव प्राप्नोतीत्यर्थः ॥ ६८ ॥ किंच—नचेति । तस्मान्मद्भक्तेभ्यो गीताशास्त्रव्याख्यातुः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मम प्रियकृत्तमोऽत्यन्तं परितोषकर्ता नास्ति । नच कालान्तरे भविता भविष्यति । ममापि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति । नच कालान्तरेऽपि भविष्यतीत्यर्थः ॥ ६९ ॥ पठतः

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥**
**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**अध्येष्यते च पठिष्यति य इमं धर्म्यं धर्मादनपेतं संवादरूपं ग्रन्थमावयोस्तेनेदं कृतं स्यात् । ज्ञानयज्ञेन विधिजपोपांशुमानसानां यज्ञानां ज्ञानयज्ञो मानसत्वाद्विशिष्टतम इत्यतस्तेन ज्ञानयज्ञेन गीताशास्त्रस्याध्ययनं स्तूयते । फलविधिरेव वा देवतादिविषयज्ञानयज्ञफलतुल्यमस्य फलं भवतीति । तेनाध्ययनेनाहमिष्टः पूजितः स्यां भवेयमिति मे मम मतिर्निश्चयः ॥ ७० ॥ अथ श्रोतुरिदं फलम्—श्रद्धावाञ्श्रद्दधानोऽनसूयश्चासूयावर्जितः सन्निमं ग्रन्थं शृणुयादपि यो नरोऽपिशब्दात्किमुतार्थज्ञानवान् सोऽपि पापा-**

२ आनन्दगिरिव्याख्या ।

संबन्धः । तदेवाह—**अध्येष्यत इति** । तेनेदं कृतमित्यत्रेदंशब्दार्थं विशदयति—**ज्ञानेति** । तेनाहमिष्टः स्यामिति संबन्धः । चतुर्विधानां यज्ञानां मध्ये ज्ञानयज्ञस्य 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' इति विशिष्टत्वाभिधानात्तेनाहमिष्टः स्यामित्यध्ययनस्य स्तुतिरभिमतेत्याह—**विधीति** । पक्षान्तरमाह—**फलेति** । फलविधिमेव प्रकटयति—**देवतादीति** । यद्धि ज्ञानयज्ञस्य फलं कैवल्यं तेन तुल्यमस्याध्येतुः संपद्यते तच्च देवताद्यात्मत्वमित्यर्थः । कथमध्ययनादेव सर्वात्मत्वं फलं लभ्यते 'तस्मात्सर्वमभवत' इति श्रुतिस्तत्राह—**तेनेति** । तेनाध्येत्रा ज्ञानयज्ञतुल्येनाध्ययनेन भगवानिष्टस्तथाच तज्ज्ञानादुक्तं फलमविरुद्धमित्यर्थः ॥ ७० ॥ प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरिदानीं फलं कथयति—**अथेति**

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

समाधिना इष्टः पूजितः स हि धर्ममेघनामा पुष्कलपुण्यवृष्टिकरस्तद्धेतस्य शास्त्रस्याध्ययनमपीत्यर्थः । इति मे मम सर्वेश्वरस्य मतिः । तेनात्र स्तुतिमात्रमेतदिति न मन्तव्यं किंतु भूतार्थवाद एवायमिति भावः ॥ ७० ॥ प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरपि फलमाह—**श्रद्धावानिति** । शृणुयादपि अक्षरश्रवणं कुर्यादपि किमु वक्तव्यमादरेणार्थग्रहणं यः कुर्यात्स उक्तं फलं प्राप्नुयादिति । स्पष्टार्थः श्लोकः । तथाचोक्तं श्रीभागवते—'वासुदेवकथाप्रश्नः

४ मधुसूदनीव्याख्या ।

पठिष्यति ज्ञानयज्ञेन ज्ञानात्मकेन यज्ञेन चतुर्थाध्यायोक्तेन द्रव्ययज्ञादि श्रेष्ठेनाहं सर्वेश्वरस्तेनाध्येत्रा इष्टः पूजितः स्यामिति मे मतिर्मम निश्चयः । यद्यप्यसौ गीतार्थमबुध्यमान एव जपति तथापि तच्छृण्वतो मम मामेवासौ प्रकाशयतीति बुद्धिर्भवति । अतो जपमात्रादपि ज्ञानयज्ञफलं मोक्षं लभते । सत्त्वशुद्धिज्ञानोत्पत्तिद्वारा । अर्थानुसन्धानपूर्वकं पठतस्तु साक्षादेव मोक्ष इति किमु वक्तव्यमिति फलविधिरेवायं नार्थवादः । 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप' इति प्रागुक्तम् ॥ ७० ॥ प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरिदानीं फलं कथयति—यो नरः कश्चिदप्यन्यस्योच्चैर्जपतः कारुणिकस्य सकाशात् श्रद्धावान् श्रद्धायुक्तः । तथा किमर्थमयमुच्चैर्जपत्यबद्धं वा जपतीति दोषदृष्ट्याऽसूयया रहितोऽनसूयश्च केवलं शृणुयादिमं ग्रन्थं, अपिशब्दात् किमुतार्थज्ञानवान् सोऽपि केवलाक्षरमात्रश्रोतापि मुक्तः पापैः शुभान् प्रशस्ताँल्लोकान् पुण्यकर्मणामश्वमेधादिकृतां प्राप्नुयात् । ज्ञानवतस्तु किं

५ भाष्योत्कर्षदीपिका ।

दानकर्तुरध्यापकस्य फलमुक्त्वाऽध्येतुस्तदाह—**अध्येष्यते इति** । योऽध्येता धर्म्यं धर्मादनपेतमिममावयोः संवादमध्येष्यते च पठिष्यति तेन अध्येत्रा ज्ञानयज्ञेनाहमिष्टः स्यां श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञ इति सर्वयज्ञेभ्यः श्रेष्ठतमत्वेनाभिहितस्य देवतादिविषयज्ञानयज्ञस्य फलकैवल्यं तत्तुल्यं देवताद्यात्मत्वमस्य फलं भवतीत्यर्थः । तेनाध्येत्रा ज्ञानयज्ञफलतुल्यफलेनाध्ययनेनाहमिष्टः पूजितः स्यां भवेयमिति मे मम मतिर्निश्चयः । फलविधिरेवायं नत्वर्थवादः ॥ ७० ॥ प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरपि फलं कथयति । श्रद्धावान् श्रद्दधानोऽनसूयश्च पौरुषेयत्वात् श्रुतितो निकृष्टमिदमिति दोषदृष्टिरसूया तद्रहितः सन्निमं ग्रन्थं यो नरो यः कश्चिच्छृणुयादपि । नरशब्देनैतच्छ्रवणेनापि यो हीनो नासौ नरः किंतु पशुरिति सूचयति । सोऽपि मुक्तः पातकाद्रहितः पुण्यकर्मणामग्निहोत्राश्व-

६ श्रीधरीव्याख्या ।

फलमाह—**अध्येष्यत इति** । आवयोः कृष्णार्जुनयोः इमं धर्म्यं धर्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति तेन पुंसा सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां भवेयमिति मे मतिः । यद्यप्यसौ गीतार्थमबुध्यमान एव केवलं जपति तथापि मम तच्छृण्वतो मामेवासौ प्रकाशयतीति बुद्धिर्भवति । यथा लोके यदृच्छयापि कश्चित्कदाचित्कस्यचिन्नाम गृह्णाति तदासौ मामेवायमाह्वयतीति मत्वा तत्पार्श्वमागच्छति, तथाहमपि तस्य सन्निहितो भवेयम् । अतएव अजामिलक्षत्रबन्धुप्रमुखानां कथंचिन्नामोच्चारणमात्रेण प्रसन्नोऽस्मि, तथैवास्यापि प्रसन्नो भवेयमित्यर्थः ॥ ७० ॥ अन्यस्य जपतो योऽन्यः कश्चिच्छृणोति तस्यापि फलमाह—**श्रद्धावानिति** । यो नरः श्रद्धायुक्तः केवलं शृणुयादपि श्रद्धावानपि कश्चित्किमर्थमुच्चैर्जपति अबद्धं जपतीति वा दोषदृष्टिं करोति तद्व्यावृत्त्यर्थमाह । अनसू-

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥**

१ श्रीमच्छांकरभाष्यम् ।

न्मुक्तः शुभान्प्रशस्ताँल्लोकान्प्राप्नुयात्पुण्यकर्मणामग्निहोत्रादिकर्मवताम् ॥ ७१ ॥ शिष्यस्य शास्त्रार्थग्रहणाग्रहणविवेकबुभुत्सया पृच्छति—तदग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणापीति प्रष्टुरभिप्रायः । यत्नान्तरं चास्थाय शिष्यः कृतार्थः कर्तव्य इत्याचार्यधर्मः प्रदर्शितो भवति । कच्चित्किमेतन्मयोक्तं श्रुतं श्रवणेनावधारितं पार्थ किं त्वयैकाग्रेण चेतसा चित्तेन किं वाऽप्रमादतः । कच्चिदज्ञानसंमोहोऽज्ञाननिमित्तः संमोहोऽविविक्तभावोऽविवेकः स्वाभाविकः किं प्रनष्टः । यदर्थोऽयं शास्त्रश्रवणायासस्तव मम

२ आनन्दगिरिव्याख्या ।

॥ ७१ ॥ आचार्येण शिष्याय यावदज्ञानसंशयविपर्यासस्तावदनेकधोपदेष्टव्यमिति दर्शयितुं भगवानर्जुनं पृष्टवानित्याह—**शिष्यस्येति** । प्रष्टुरभिप्रायं प्रकटयति—**तदग्रहण इति** । शिष्यश्चेदुक्तं गृहीतुं नेष्टे तर्हि तं प्रत्यौदासीन्यमाचार्यस्योचितं तस्य मन्दबुद्धित्वादित्याशङ्क्याह—**यत्नान्तरमिति** । कच्चिदिति कोमलप्रश्ने । तमेव व्याचष्टे—**किमेतदिति** । द्वितीयं किंपदं पूर्वस्य व्याख्यानतया संबध्यते । कच्चिदिति द्वितीयं प्रश्नं विभजते—**किं प्रनष्ट इति** । मोहप्रणाशस्य प्रसंगं दर्शयति—**यदर्थ इति** ॥ ७२ ॥ प्रेमोपदिष्टात्मज्ञानस्य अज्ञानसंदेहविपर्यासरहितस्य

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

पुरुषांस्त्रीन्पुनाति हि । वक्तारं प्रच्छकं श्रोतॄंस्तत्पादसलिलं यथा' इति ॥ ७१ ॥ सर्वान्तर्यामी सर्वज्ञोऽपि भगवाँल्लोकशिक्षार्थं शिष्यस्य ज्ञानं जातं नवेति पृच्छति । अन्यथा पुनःपुनः स्वयमेत्य उपदेशं कृतवता प्रभुणा निदाघ इव मयायं शतकृत्वोप्युपदेशेन कृतार्थः कर्तव्य इत्याशयेनाह—**कच्चिदिति** । कच्चिदिति कामप्रवेदने । हे पार्थ, एतत्त्वया एकाग्रेण चेतसा श्रोतव्यं शब्दतोऽर्थतश्च बोद्धव्यमिति मम कामोऽस्ति ततस्त्वां पृच्छामि किमिदं त्वया श्रुतमिति । श्रुतवतोऽपि तव अज्ञानकृतः संमोहो विपर्ययः अनात्मन्यात्मधीरूपः स्वधर्मे युद्धे चाधर्मधीरूप इति स द्विविधोऽपि नष्टः कच्चित् । मच्छ्रमसाफल्यमिच्छुस्त्वामहं पृच्छामीत्यर्थः ॥ ७२ ॥ एवं पृष्टः स्वस्य कृतकृत्यतां

४ मधुसूदनीव्याख्या ।

वाच्यमिति भावः ॥ ७१ ॥ शिष्यस्य ज्ञानोत्पत्तिपर्यन्तं गुरुणा कारुणिकेन प्रयासः कार्य इति गुरोर्धर्मं शिक्षयितुं सर्वज्ञोऽपि पुनरुपदेशापेक्षा नास्तीति ज्ञापनाय पृच्छति—कच्चिदिति प्रश्ने । एतन्मयोक्तं गीताशास्त्रमेकाग्रेण व्यासङ्गरहितेन चेतसा हे पार्थ, त्वया किं श्रुतमर्थतोऽवधारितं । कच्चित् किमज्ञानसंमोहोऽज्ञाननिमित्तः संमोहो विपर्ययोऽज्ञाननाशात् प्रनष्टः प्रकर्षेण पुनरुत्पत्तिविरोधित्वेन नष्टस्ते तव हे धनंजय यदि स्यात्पुनरुपदेशं करिष्यामीत्यभिप्रायः ॥ ७२ ॥ एवं पृष्टः कृतार्थत्वेन

५ भाष्योत्कर्षदीपिका ।

मेधादिपुण्यकर्मवतां लोकान् शुभान्प्रशस्तान्प्राप्नुयात् । अपिशब्दात्किमुतार्थज्ञानवान् ॥ ७१ ॥ तं तु प्रयत्नमास्थाय सर्वप्रकारेण शिष्यः कृतार्थः कर्तव्य इत्याचार्यधर्मं दर्शयितुं उपदिष्टार्थाग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणेत्यभिप्रायवान् शिष्यस्य शास्त्रार्थग्रहणं विवित्सुः पृच्छति—कच्चिदिति प्रशस्तप्रश्नार्थे । एकाग्रेण चेतसा चित्तेन त्वया एतन्मयोक्तं श्रुतं श्रवणेनावधारितं किंवा प्रमादेन नावधारितम् । अज्ञानसंमोहः अज्ञाननिमित्तः संमोहः अविवेकस्वभावः कच्चिदिति किं तेऽज्ञाननाशात्प्रनष्टः प्रकर्षेण पुनरुत्पत्तिविरोधित्वेन नष्टः यदर्थोऽयं तव शास्त्रश्रवणायासो मम चोपदेष्टृत्वायासः प्रकृतः । हे पार्थेति संबोधयन् स्त्रीस्वभावशोकमोहनिवर्तकमेतत्त्वयैकाग्रेण चेतसा श्रुतमिति सूचयति । यदि त्वया न श्रुतं स्यात्तर्हि पुनर्मया वक्तव्यं पृथापुत्रेण प्रेमास्पदेन त्वया यावन्नावधारितं तावन्मया पुनः श्रावणीयमिति वा संबोधनाशयः । मदाज्ञया लोकोद्धारार्थं त्वया स्त्रीस्वभावौ शोकमोहावङ्गीकृतौ लोकोद्धारोपायस्य च मया प्रोक्तस्यैतस्य त्वयैकाग्रेण मनसा श्रुतत्वादिदानीं तौ विहाय स्वस्वभावमाविर्भावयेति पार्थेति संबोधनस्य गूढाभिसंधिः । धनंजयेति संबोधयन् यदि ते मोहः प्रनष्टस्तर्हि धनंजयो भव नोचेत्पुनस्तन्नाशाय यत्प्रष्टव्यं तत्पृच्छेति सूचयति । गूढाभिसंधिपक्षे 'वीरोऽनन्तो धनंजयः' इत्यत्रोक्तेन धनंजयेन स्वनाम्ना संबोधयन् मदवतारस्य तवाज्ञाननिमित्तकमोहाभावान्मदाज्ञया लोकोपकारायाङ्गीकृतोऽज्ञानसंमोहः कच्चित्प्रनष्टः अज्ञाननिमित्तकसंमोहप्रणाशनसामर्थ्यं मदुपदेशस्यास्ति कच्चिदिति ध्वनयति

६ श्रीधरीव्याख्या ।

यश्च असूयारहितो यः शृणुयात्सोऽपि सर्वैः पापैर्मुक्तः सन् अश्वमेधादिपुण्यकृताँल्लोकान्प्राप्नुयात् ॥ ७१ ॥ सम्यग्बोधानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह—**कच्चिदिति** । कच्चिदिति प्रश्नार्थे । अज्ञानसंमोहः तत्त्वाज्ञानकृतो विपर्ययः । स्पष्टमन्यत् ॥ ७२ ॥ कृतार्थः

७ अभिनवगुप्ताचार्यव्याख्या ।

मुख्येन शास्त्रोक्तप्रक्रियया धास्यति वितरिष्यति स मन्मयतामेतीति विधिरेवैष नार्थवादः । एवमन्यत्र ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥

अर्जुन उवाच ।

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।**
**स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥**

१ श्रीमच्छांकरभाष्यम् ।

**चोपदेष्टृत्वायासः प्रवृत्तस्ते तुभ्यं धनंजय ॥ ७२ ॥ नष्टो मोहोऽज्ञानजः समस्तसंसारानर्थहेतुः सागर इव दुस्तरः। स्मृतिश्चात्मतत्त्वविषया लब्धा। यस्या लाभात्सर्वहृदयग्रन्थीनां विप्रमोक्षः। त्वत्प्रसादात्त्वत्प्रसादान्मया त्वत्प्रसादमाश्रितेनाच्युत। अनेन मोहनाशप्रश्नप्रतिवचनेन सर्वशास्त्रार्थज्ञानफलमेतावदेवेति निश्चितं दर्शितं भवति। यतो ज्ञानान्मोहनाश आत्मस्मृतिलाभश्चेति। तथाच श्रुतावनात्मविच्छोचामीत्युपन्यस्यात्मज्ञानेन सर्वग्रन्थिविप्रमोक्ष उक्तः। भिद्यते हृदयग्रन्थिस्तत्र को मोहः कः शोक एकत्वमनुपश्यत इति च मन्त्रवर्णः। अथेदानीं त्वच्छासने स्थितोऽस्मि गतसंदेहो मुक्तसंशयः। करिष्ये**

२ आनन्दगिरिव्याख्या ।

पृष्टस्य भगवदनुग्रहप्राप्तिकथनेन भगवन्तं परितोषयिष्यन्नर्जुनो विज्ञापितवानित्याह—**अर्जुन इति** । अज्ञानोत्थस्याविवेकस्य नष्टत्वमेव स्पष्टयति—**समस्त इति** । स्वयंज्योतिषि प्रतीचि ब्रह्मण्यविद्याभ्रमं विद्यापनयति नाविदितं प्रकाशयतीति मत्वाह—**स्मृतिश्चेति** । स्मृतिलाभे किं स्यादिति चेत्तदाह—**यस्या इति** । मोहनाशे स्मृतिप्रतिलम्भे चासाधारणं कारणमाह—**त्वत्प्रसादादिति** । प्रकृतेन प्रश्नप्रतिवचनेन लब्धमर्थं कथयति—**अनेनेति** । यदुक्तं स्मृतिप्रतिलम्भादशेषतो हृदयग्रन्थीनां विप्रमोक्षः स्यादिति तत्र प्रमाणमाह—**तथाचेति** । ज्ञानादज्ञानतत्कार्यनिवृत्तौ श्रुत्यन्तरमपि संवादयति—**भिद्यत इति** । भगवदनुग्रहादज्ञानकृतमोहदाहानन्तरमात्मज्ञाने प्रतिलब्धे त्वदाज्ञाप्रतीक्षोऽहमित्युत्तरार्धं व्याकरोति—**अथेति** । तव वचनं करिष्येऽहमित्यत्र तात्पर्यमाह—**अहमिति** ॥ ७३ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

ज्ञापयन्नर्जुन उवाच—**नष्टो मोह इति** । मोहः पूर्वोक्तो द्विविधोऽपि नष्टः । स्मृतिरयमहमस्मि परंब्रह्मेत्यात्मानुसंधानरूपा आत्मतत्त्वविषया लब्धा । यस्या लाभेन सर्वहृदयग्रन्थीनां 'यावान्यश्चास्मि तत्त्वतः' इत्यत्रोदाहृतानां चिज्जडैक्यभ्रमप्रभवानां विमोक्षो भवति । तथाच श्रूयते 'वियोगायोग्यस्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति । त्वत्प्रसादान्मयाच्युत स्मृतिर्लब्धेति संबन्धः । स्थितोऽस्मि त्वच्छासने इति शेषः । गतसंदेहो नष्टसंदेह इत्यनेनानात्मन्यात्मधीरूपो

४ मधुसूदनीव्याख्या ।

पुनरुपदेशानपेक्षतामात्मन अर्जुन उवाच—नष्ट उच्छिन्नो मोहोऽज्ञानकृतो विपर्ययः । तन्नाशकमाह—स्मृतिर्लब्धा त्वत्प्रसादान्मया । यस्मात्त्वदुपदेशादात्मज्ञानं लब्धं सर्वसंशयानाक्रान्ततया प्राप्तमतः सर्वप्रतिबन्धशून्येनात्मज्ञानेन मोहो नष्ट इत्यर्थः । हेऽच्युत, आत्मत्वेन निश्चितत्वात् 'वियोगायोग्यस्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' इति श्रुत्यर्थमनुभवन्नाह—स्थितोऽस्मि गतसंदेहो निवृत्तसर्वसंदेहः स्थितोऽस्मि युद्धकर्तव्यतारूपे त्वच्छासने । यावज्जीवं च करिष्ये वचनं तव भगवतः परमगुरोराज्ञां पालयिष्यामीति प्रयाससाफल्यकथनेन भगवन्तमर्जुनः परितोषयामास । अनेन गीताशास्त्राध्यायिनो भगवत्प्रसादादवश्यं

५ भाष्योत्कर्षदीपिका ।

॥ ७२ ॥ भगवदनुग्रहात्स्वस्य कृतार्थताकथनेन भगवन्तं परितोषयिष्यन्नर्जुन उवाच । नष्टो मोहोऽज्ञानजन्यः समस्तसंसारहेतुः सागर इव दुस्तरः नष्टः नाशं गतः, स्मृतिश्च त्वत्प्रसादान्मया लब्धा अच्युताभिन्नत्वात्स्वस्वरूपात्कदाप्यप्रच्युतः जरामरणादिवर्जितकर्तृत्वभोक्तृत्वादिविनिर्मुक्त इत्यात्मतत्त्वविषया सर्वग्रन्थ्यादिविप्रमोक्षहेतुभूता स्मृतिर्लब्धेति सूचयन्संबोधयति–अच्युतेति । स्वयंज्योतिषि प्रत्यगभिन्ने ब्रह्मण्यविद्याभ्रमं विद्यापनयति नाविदितं प्रकाशयतीति बोधयितुं स्मृतिर्लब्धेत्युक्तं । अज्ञानसंमोहनाशः आत्मस्मृतिप्रतिलाभश्चेत्येतावदेव सर्वशास्त्रज्ञानफलमित्यनेन प्रश्नप्रतिवचनेन निश्चितं दर्शितम् । एतादृशस्य सर्वशास्त्रार्थज्ञानफलस्य संप्राप्तौ तवोपदेशस्य सामर्थ्यमस्तीति लोकोपकारः सम्यक् त्वया संपादित इति गूढाभिसंधिः । आत्मज्ञाने सति सर्वग्रन्थ्यादिविप्रमोक्षश्च श्रुतावुक्तः । तथाच श्रुतिः 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' । 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इत्याद्या । अथेदानीं धर्मतत्त्वे आत्मत्वे च गतसंदेहः मुक्तसंशयः त्वच्छासने स्थितोऽस्मि । तव

६ श्रीधरीव्याख्या ।

सन्नर्जुन उवाच—**नष्ट इति** । आत्मविषयो मोहो नष्टः । यतोऽयमहमस्मीति स्वरूपानुसंधानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा ।

७ अभिनवगुप्ताचार्यव्याख्या ।

॥ ७२ ॥ अर्जुन उवाच । एवमत्र नष्टो मोह इत्यादिना युद्धप्रवृत्तिस्तावदर्जुनस्योत्पन्ना नतु सम्यग्ब्रह्मवित्त्वं जातमिति सूचयन्भाविनोऽनुगी-

संजय उवाच ।

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

१ श्रीमच्छांकरभाष्यम् ।

वचनं तव । अहं त्वत्प्रसादात्कृतार्थो न मे कर्तव्यमस्तीत्यभिप्रायः ॥७३॥ परिसमाप्तः शास्त्रार्थः । अथेदानीं कथासंबन्धप्रदर्शनार्थं संजय उवाच—इत्येवमहं वासुदेवस्य पार्थस्य च महात्मनः संवादमिमं यथोक्तमश्रौषं श्रुतवानस्मि अद्भुतमत्यन्तविस्मयकरं रोमहर्षणं रोमाञ्चकरम् ॥ ७४ ॥ तं चेमं व्यासप्रसादात् ततो दिव्यचक्षुर्लाभाच्छ्रुतवानेतं संवादं गुह्यतमं परं योगं योगार्थत्वाद्ग्रन्थोऽपि योगः, संवादमिमं

२ आनन्दगिरिव्याख्या ।

शास्त्रार्थे समाप्ते सत्यस्यामवस्थायां संजयवचनं कुत्रोपयुक्तमिति तदाह—**परिसमाप्त इति** । वासुदेवस्य सर्वज्ञस्य सर्वेश्वरस्य कृतार्थस्य पार्थस्य पृथासुतस्यार्जुनस्य महात्मनोऽक्षुद्रबुद्धेः सर्वाधिकारिगुणसंपन्नस्य सम्यञ्चं वादं संवादं गुरुशिष्यभावेन प्रश्नप्रतिवचनाभिधानमिममनुक्रान्तमद्भुतं विस्मयकरं रोमाणि हृष्यन्ति पुलकीभवन्त्यनेनेति रोमहर्षणमाह्लादकं यथोक्तं श्रुतवानस्मीत्याह—**इत्येवमिति** ॥ ७४ ॥ प्रकृष्टं संवादं कथमश्रौषीरिति चेत्तत्राह—**तं चेति** । एतत्पदं संवादपरत्वात्पुंलिङ्गत्वेन नेतव्यमित्याह—**एतमिति** । परमपुरुषार्थौपयिकत्वात्परत्वं परं गुह्यमतिशयेन गुह्यं रहस्यमिति वा । योगो ज्ञानं कर्म च तदर्थत्वादयं संवादो योग उक्तः, अथवा चित्तवृत्तिनिरोधस्य योगस्याङ्गत्वादयं संवादो योग इत्याह—**संवादमिति** । योगानामीश्वरो योगेश्वरस्तदनुग्रहहेतुत्वाद्योगतत्फलयोस्ततः साक्षाद-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

मोहो नष्ट इति दर्शितम् । करिष्ये वचनं तवेत्यनेन स्वधर्मे युद्धे चाधर्मधीरूपोऽपि मोहो नष्ट इति दर्शितम् ॥ ७३ ॥ समाप्तः शास्त्रार्थः । इदानीं कथाप्रबन्धमेवानुवर्तयन्संजय उवाच—**इतीति** । अद्भुतं चेतसो विस्मयकरम् । रोमहर्षणं रोमाञ्चोद्भेदजनकम् । शेषं स्पष्टम् ॥ ७४ ॥ कथमयं त्वया दूरस्थयोरपि वासुदेवार्जुनयोः संवादः श्रुत इत्यत आह—**व्यासप्रसादादिति** । भगवता व्यासेन दिव्यं चक्षुः श्रोत्रादिकं मह्यं दत्तं येनाहं व्यवहितं विप्रकृष्टं वा सर्वं करतलामलकवद्विजानामि । अतो व्यासप्रसादादेतच्छास्त्रं परं गुह्यं गोप्यं अहं श्रुतवान् । योगं च

४ मधुसूदनीव्याख्या ।

मोक्षफलपर्यन्तं ज्ञानं भवतीति शास्त्रफलमुपसंहृतं तद्वास्य विजज्ञावितिवत् ॥ ७३ ॥ समाप्तः शास्त्रार्थः । कथासंबन्धमिदानीमनुसंदधानः संजय उवाच—अद्भुतं चेतसो विस्मयाख्यविकारकरं लोकेष्वसंभाव्यमानत्वात् । रोमहर्षणं शरीरस्य रोमाञ्चाख्यविकारकरम् । तेनातिपरिपुष्टत्वं विस्मयस्य दर्शितम् । स्पष्टमन्यत् ॥ ७४ ॥ व्यवहितस्यापि भगवदर्जुनसंवादस्य श्रवणयोग्य-

५ भाष्योत्कर्षदीपिका ।

वचनमहं करिष्ये । त्वत्प्रसादात्कृतार्थस्य मम न किंचित्कर्तव्यमस्तीत्यभिप्रायः ॥ ७३ ॥ परिसमाप्तः कृष्णपार्थसंवादात्मकः शास्त्रार्थोऽथेदानीं कथासंबन्धप्रदर्शनार्थं संजय उवाच—इत्यहं वासुदेवस्य सर्वात्मनः सर्वज्ञस्य सर्वेश्वरस्य पार्थस्य पृथापुत्रस्य च महात्मनोऽक्षुद्रस्वभावस्य भगवदनुगृहीतस्य सम्यग्वादं संवादं गुरुशिष्यवचनेन प्रश्नप्रतिवचनाभिधानमिमं त्वां प्रत्युक्तं अद्भुतमत्यन्तविस्मयकरं रोमाणि हृष्यन्ति पुलकीभवन्त्यनेनेति रोमहर्षणं हर्षनिमित्तकरोमाञ्चकरं अश्रौषं श्रुतवानस्मि । अतिधन्यो वसुदेवो यद्गृहे स्वयं भगवानवतीर्णः, पृथा च धन्या यस्याः पुत्रः परमभागवतो भगवदनुगृहीतः प्रतिक्षणं भगवता संवदमानस्त्वं त्वत्यन्ताधन्यो यस्य पुत्रो दुर्योधनः कृष्णपराङ्मुखस्तद्भक्तद्रोही चेति वासुदेवपार्थेति शब्दाभ्यां ध्वनितम् ॥ ७४ ॥ व्यवहितस्त्वं कथं श्रुतवानित्यपेक्षायामाह—व्यासप्रसादाल्लब्धदिव्येन्द्रियोऽहं इमं संवादं गुह्यमतिरहस्यं परं योगार्थत्वादयं संवादोऽपि योगस्तं चित्तवृत्तिनिरो-

६ श्रीधरीव्याख्या ।

अतः स्थितोऽस्मि युद्धायोपस्थितोऽस्मि । गतो धर्मविषयः संदेहो यस्य सोऽहं तवाज्ञां करिष्य इति ॥ ७३ ॥ तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसंदधानः संजय उवाच—**इतीति** । रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं श्रुतवानहम् । स्पष्टमन्यत् ॥ ७४ ॥ आत्मनस्तच्छ्रवणे संभावनामाह—**व्यासप्रसादादिति** । भगवता व्यासेन दिव्यं चक्षुःश्रोत्रादि मह्यं दत्तम्,

७ अभिनवगुप्ताचार्यव्याख्या ।

तार्थस्यावकाशं ददाति ॥ ७३ ॥ संजय उवाच—इत्यहमिति । संजयवचनेन संवादमुपसंहरन्नतदर्थस्य गाढप्रबन्धक्रमेण निरन्तरचिन्ता-

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**
**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥**

१ श्रीमच्छांकरभाष्यम् ।

योगमेव वा योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयं न परंपराया ॥ ७५ ॥ हे राजन्धृतराष्ट्र संस्मृत्य संस्मृत्य प्रतिक्षणं संवादमिममद्भुतं केशवार्जुनयोः पुण्यं श्रवणादपि पापहरं श्रुत्वा हृष्यामि च मुहुर्मुहुः प्रतिक्षणम् ॥ ७६ ॥ तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेर्विश्वरूपं विस्मयो मे महान् राजन्, हृष्यामि

२ आनन्दगिरिव्याख्या ।

व्यवधानेन श्रुतवान्न परंपरयेत्याह—**योगेश्वरादिति** । स्वयं स्वेन परमेश्वरेणातिरस्कृतज्ञानैश्वर्यरूपेण कथयतो व्याचक्षाणादित्यर्थः ॥ ७५ ॥ यथोक्तं संवादं भगवतः श्रुत्वा किमुपेक्षसे नेत्याह—**राजन्निति** । पुण्यत्वं साधयति—**श्रवणादपीति** ॥ ७६ ॥ यत्तु विश्वरूपाख्यं रूपं स्वगुणमर्जुनाय भगवान्दर्शितवान्ध्यानार्थं तदिदानीं स्तौति—

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

'पश्य मे योगमैश्वरम्' इति प्रतिज्ञापूर्वकं प्रदर्शितं वैश्वरूप्यं तमपि दृष्टवानिति शेषः । स्वयं कथयत इत्युक्ते 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इति श्रुतेः स्वनिःश्वसितं वेदं शिष्याचार्यपरंपरया कथयत इत्यायाति तदर्थं साक्षात्कथयत इति । सृष्ट्यादौ ब्रह्माणं प्रतीव इदानीमर्जुनं प्रति साक्षात्कथयतः श्रुतवानहमित्यर्थः । तेन भगवदनुग्रहपात्रतया ब्रह्मणा समत्वं स्वस्य द्योत्यते । अत्र एतद्योगमित्यभेदेनान्वये तु गुह्यपदापेक्षया एतद्योगमिति पुंनपुंसकलिङ्गयोरपि सामानाधिकरण्यं शक्यं च यत्किंचिदक्षतापि क्षुदुपहन्तुमित्यादाविव पूर्वप्रवृत्तलिङ्गसंस्कारप्राबल्यादुत्तरत्र भिन्नलिङ्गविशेष्यलाभेऽपि पूर्वसंस्कारो न निवर्तत इति सामानाधिकरण्यं विलिङ्गयोरपि वक्तुं शक्यमिति ज्ञेयम् ॥ ७५ ॥ केशवार्जुनसंवादश्रवणजं विश्वरूपाख्ययोगदर्शनजं चाह्लादं क्रमेण श्लोकद्वयेनाह—**राजन्निति** । हे राजन् हे धृतराष्ट्र, पुण्यं पुण्यकरं पापहरं चेत्यर्थात् । संस्मृत्य संस्मृत्येति संभ्रमे द्विरुक्तिः । शेषं स्पष्टार्थम् ॥७६॥ **तच्चेति** । रूपं विश्वरूपम् । एतद्दर्शने हि 'ब्रह्माणमीशम्' इति देशतो विप्रकृष्टं, 'वक्त्राणि ते त्वरमाणा विशन्ति' इति कालतो व्यवहितं भीष्मादिक्षयं च करतलामलकवद्दृष्टवान् । तच्च जगतो मिथ्यात्वमन्तरेण न संभवतीति प्रतिपादितं

४ मधुसूदनीव्याख्या ।

तामात्मन आह—व्यासदत्तदिव्यचक्षुःश्रोत्रादिलाभरूपाद्व्यासप्रसादादिमं परं गुह्यं योगं योगाव्यभिचारिहेतुं संवादं योगेश्वरात्कृष्णात्स्वयं स्वेन पारमेश्वरेण रूपेण कथयतः साक्षादेवाहं श्रुतवानस्मि न परंपरयेति स्वभाग्यमभिनन्दति । अत्रेममिति पुंलिङ्गपाठो भाष्यकारैर्व्याख्यातः । एतदिति नपुंसकलिङ्गपाठस्यैव योगशब्दसामानाधिकरण्येन व्याख्यानमिदमिति तद्व्याख्यातारः ॥ ७५ ॥ पुण्यं श्रवणेनापि सर्वपापहरं केशवार्जुनयोरिमं संवादमद्भुतं न केवलं श्रुतवानस्मि किंतु संस्मृत्य संस्मृत्य । संभ्रमे द्विरुक्तिः । मुहुर्मुहुर्वारंवारं हृष्यामि च हर्षं प्राप्नोमि च । प्रतिक्षणं रोमाञ्चितो भवामीति वा ॥ ७६ ॥ यद्विश्वरूपाख्यं

५ भाष्योत्कर्षदीपिका ।

धस्य योगस्याङ्गत्वाद्वा एष योगस्तं श्रुतवान् योगेश्वरात् कृष्णात्साक्षात्स्वयं कथयतः नतु परंपरातः । योगानामीश्वरादित्युक्त्या व्यवहितेन मया येन योगसामर्थ्येन श्रुतं तत् तस्यैव योगेश्वरस्य सामर्थ्यं नतु ममेति सूचयति । कृष्णादित्यनेन कृष्णप्रसाद एव कृष्णद्वैपायनप्रसादो नत्वन्य इति ध्वनयति ॥ ७५ ॥ किंचेममेव केशवार्जुनयोः संवादमद्भुतं पुण्यं श्रवणमात्रेणापि पापहरं श्रुत्वा संस्मृत्य संस्मृत्य पुनःपुनः स्मृत्वा मुहुर्मुहुः प्रतिक्षणं हृष्यामि रोमाञ्चितो भवामि हर्षं प्राप्नोमीति वा । तयोः संवादं श्रुतवान् त्वमपि वैरं विहाय कृष्णभक्तिमत्यादरेणाङ्गीकुर्वन्नत्यन्तदीप्तिमानत्यन्तहृष्टो वास्तवो राजा भवेति बोधयन् संबोधयति हे राजन्निति ॥ ७६ ॥ यत्तु विश्वरूपं सगुणमर्जुनाय भगवान्ध्यानार्थं दर्शितवान् तच्च हरेरत्यद्भुतं रूपं संस्मृत्य संस्मृत्य मे महान् विस्मयो भवति ।

६ श्रीधरीव्याख्या ।

अतो व्यासस्य प्रसादादेतदहं श्रुतवानस्मि । किं तदित्यपेक्षायामाह परं योगम् । परत्वमाविष्करोति । योगेश्वराच्छ्रीकृष्णात्स्वयमेव साक्षात्कथयतः श्रुतवानिति ॥ ७५ ॥ किंच—**राजन्निति** । हृष्यामि रोमाञ्चितो भवामि हर्षं प्राप्नोमीति वा । स्पष्टमन्यत् ॥ ७६ ॥ किंच—

७ अभिनवगुप्ताचार्यव्याख्या ।

संतानोपकृतनैरन्तर्यादेव चान्ते सुपरिस्फुटनिर्विकल्पानुभवरूपतामापाद्यमानं स्मरणमात्रमेव परब्रह्मप्रदायकमित्युच्यते । एवं भगवदर्जुन-

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

१ श्रीमच्छांकरभाष्यम् ।

च पुनः पुनः ॥ ७७ ॥ किंबहुना यत्र यस्मिन्पक्षे योगेश्वरः सर्वयोगानामीश्वरस्तत्प्रभावत्वात्सर्वयोगबी-

२ आनन्दगिरिव्याख्या ।

**तच्चेति** ॥ ७७ ॥ द्वयोरपि कृष्णार्जुनयोर्नरनारायणयोः संवादस्य प्रामाण्यार्थं परममुत्कर्षं दर्शयति—**किं बहुनेति** । कथं सर्वेषां योगानामीश्वरो भगवानिति तत्राह—**तत्प्रभवत्वादिति** । सर्वयोगो ज्ञानं कर्म च तस्य बीजं शास्त्रीयं ज्ञानवैराग्यादि तद्धि भगवदधीनं तदनुग्रहविहीनस्य तदयोगादतो योगतत्फलयोर्भगवदनुग्रहायत्तत्वाद्भगवतो योगेश्वरत्वमित्यर्थः । श्रीर्लक्ष्मीर्विजयः परम उत्कर्षः । राज्ञो धृतराष्ट्रस्य स्वपुत्रेषु विजयाशां शिथिलीकृत्य पाण्डवेषु जय-

३ नीलकण्ठव्याख्या ( चतुर्धरी ) ।

वेदान्तकतके 'अतीतानागतं वस्तु वीक्ष्यते करबिल्ववत् । योगी संकल्पमात्रोत्थमिति शास्त्रेषु डिण्डिमः १ मायायां सर्वदा सर्वं सर्वावस्थमिदं जगत् । अस्तीति तदुपाधिश्चित्सार्वात्म्यात्सर्वमीक्षते २ आरम्भपरिणामाभ्यां स्वेन रूपेण यन्न सत् । अतीतानागतं वस्तु योगी तद्वीक्षतां कथम् ३ संकल्पमात्रभातं वस्त्वतीतादि यदीष्यते । नष्टस्त्रीदर्शनाभं तत्स्यायोगिज्ञानमप्रमा ४ योगिसंकल्पमात्रेण तस्योत्पत्तिर्यदीष्यते । ईशसंकल्पमात्रेण सर्वोत्पत्तिस्तदेष्यताम् ५ आरम्भे परिणामे वा देशकालाद्यतिक्रमः । नैव दृष्टः क्वचित्सोऽयं स्वप्नमायादिषु स्फुटः ६ युगपद्दृश्यते कुम्भो नानादेशस्थयोगिभिः । जलसूर्य इवास्माभिस्तेनासौ कल्पितः स्फुटम् ७ योगिभिर्गृह्यमाणत्वाद्घटः सर्वत्र सर्वदा । सन्नेवास्तीति चेत्कार्यं कथमीदृग्विधं भवेत् ८ व्यावृत्तं हीष्यते कार्यं युगपद्भिन्नदेशता । चेत्कल्पनां विनास्येष्टा दृष्टान्तस्तत्र नास्ति वः ९ तस्मान्नाणुभिरारब्धभित्तिवन्नापि गव्यवत् । प्रकृतेः परिणामो वा जगत्किंत्विन्द्रजालवत् १० सत्यं बद्धदृशामिन्द्रजालं विश्वं पराक्दृशाम् । अधिष्ठानादृते शुद्धदृशां नास्त्येव तद्द्वयम् ॥' इति ११ स्पष्टार्थो मूलश्लोकः ॥ ७७ ॥ यस्मादनन्तैश्वर्यो भगवांस्तदनुगृहीतोऽर्जुनश्च युधिष्ठिरपक्षेऽस्ति अतस्त्वया जयाशा न कार्येत्याह **यत्रेति** । यत्र

४ मधुसूदनीव्याख्या ।

सगुणं रूपमर्जुनाय ध्यानार्थं भगवान्दर्शयामास तदिदानीमनुसंदधानआह—तदिति विश्वरूपं हे राजन्, मम महान्विस्मयोऽतएव हृष्यामि चाहं स्पष्टमन्यत् ॥ ७७ ॥ एवंच सति स्वपुत्रे विजयादिसंभावनां परित्यजेत्याह—**यत्रेति** । यत्र यस्मिन् युधिष्ठिरपक्षे योगेश्वरः सर्वयोगसिद्धीनामीश्वरः सर्वज्ञः सर्वशक्तिर्भगवान्कृष्णो भक्तदुःखकर्षणस्तिष्ठति नारायणः, यत्र पार्थो धनुर्धरो यत्र गाण्डीवधन्वा तिष्ठत्यर्जुनो नरस्तत्र नरनारायणाधिष्ठिते तस्मिन् युधिष्ठिरपक्षे श्री राज्यलक्ष्मीर्विजयः शत्रुपरा-

५ भाष्योत्कर्षदीपिका ।

हृष्यामि च पुनः पुनः हरेः यद्वा जयेम यदि वा नो जयेयुरित्यर्जुनसंशयस्य विश्वरूपप्रदर्शनेन हरणे प्रवृत्तस्य सर्वोपसंहरणं प्रदर्शयतः विश्वरूपं श्रुत्वापि त्वं तु द्रोहं परित्यज्य संध्यर्थमुद्यतः सन् न सज्जस इत्याश्चर्यमिति ध्वनयन्नाह हे राजन्निति ॥ ७७ ॥ द्वयोरपि कृष्णार्जुनयोः नरनारायणयोः संवादस्य प्रामाण्यार्थं जयाशाशातनार्थं च परममुत्कर्षं दर्शयति—**यत्रेति** । यत्र यस्मिन्पक्षे योगेश्वरो योगानां कर्मयोगादीनामघटितघटनापटीयसीनां मायाशक्तीनां चेश्वरः कृष्णः 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इत्युक्तः सच्चिदानन्दघनोऽघाकर्षणश्च यत्र यस्मिन्पक्षे, यत्र च पार्थोऽर्जुनो धनुर्धरो-

६ श्रीधरीव्याख्या ।

तच्चेति । तदिति विश्वरूपं निर्दिशति । स्पष्टमन्यत् ॥ ७७ ॥ अतस्त्वं पुत्राणां राज्यादिशङ्कां परित्यजेत्याशयेनाह—**यत्रेति** । यत्र येषां पाण्डवानां पक्षे योगेश्वरः श्रीकृष्णो वर्तते, यत्र च पार्थो गाण्डीवधनुर्धरः तत्रैव श्री राज्यलक्ष्मीः, तत्रैव च विजयः तत्रैव च भूतिरुत्तरोत्तराभिवृद्धिश्च, तत्रैव नीतिर्नयोऽपि ध्रुवा निश्चितेति सर्वत्र संबध्यते । इति मम मतिर्निश्चयः । अत इदानीमपि तावत्सपुत्रस्त्वं श्रीकृष्णं शरणमुपेत्य पाण्डवान्प्रसाद्य सर्वस्वं च तेभ्यो निवेद्य पुत्रप्राणरक्षणं कुर्विति भावः ॥ ७८ ॥ भगवद्भक्तियुक्तस्य तत्प्रसादात्म-

७ अभिनवगुप्ताचार्यव्याख्या ।

संवादमात्रस्मरणादेव तत्त्वावाप्त्या श्रीविजयविभूतयः इति शिवम् ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥

१ श्रीमच्छांकरभाष्यम् ।

**जश्च कृष्णो यत्र पार्थो यस्मिन्पक्षे धनुर्धरो गाण्डीवधन्वा तत्र श्रीस्तस्मिन्पाण्डवानां पक्षे श्रीः विजयस्तत्रैव भूतिः श्रियो विशेषो विस्तारो भूतिर्ध्रुवाव्यभिचारिणी नीतिर्नय इत्येवं मतिर्ममेति ॥ ७८ ॥**

**इति श्रीमत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमदाचार्यश्रीशंकरभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥**

२ आनन्दगिरिव्याख्या ।

प्राप्तिमैकान्तिकीमुपसंहरति—इत्येवमिति । उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात्कर्मनिष्ठा परंपरया ज्ञाननिष्ठाहेतुः, ज्ञाननिष्ठा तु साक्षादेव मोक्षहेतुरिति शास्त्रार्थमुपसंहर्तुमितीत्युक्तम् ॥ ७८ ॥

३ नीलकण्ठव्याख्या ( चतुर्धरी )।

पक्षे । ध्रुवेति सर्वत्र संबध्यते । श्रीर्दिव्यसभादिशोभा । विजयः प्रसिद्धः । भूतिरैश्वर्यं सर्वनियन्तृत्वम् । नीतिर्नयश्च एतत्सर्वं तत्र तस्मिन्पक्षे ध्रुवमिति मम मतिः । अतः पाण्डवैः सह संधिरेव कर्तव्य इति भावः ॥ ७८ ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविन्दसूरिसूनोः श्रीनीलकण्ठसूरिवर्यस्य कृतौ भारतभावदीपे भीष्मपर्वणि गीतार्थप्रकाशे अष्टादशोऽध्यायः ॥ १८ ॥

४ मधुसूदनीव्याख्या ।

जयनिमित्त उत्कर्षो भूतिरुत्तरोत्तरं राज्यलक्ष्म्या विवृद्धिर्ध्रुवाऽवश्यंभाविनीति सर्वत्रान्वयः । नीतिर्नयः । एवं मम मतिर्निश्चयः । तस्माद्वृथा पुत्रविजयाशां त्यक्त्वा भगवदनुगृहीतैर्लक्ष्मीविजयादिभाग्भिः पाण्डवैः सह सन्धिरेव विधीयतामित्यभिप्रायः ॥७८॥

५ भाष्योत्कर्षदीपिका ।

गाण्डीवधन्वास्ति तत्र तस्मिन्पाण्डवानां पक्षे श्रीः लक्ष्मीः विजयः परम उत्कर्षः विभूतिः गजादिरूपेण श्रियो विस्तारः ध्रुवाऽव्यभिचारिणीति सर्वत्र संबन्धनीयम् । नीतिः नयः एतत्सर्वं तस्मिन्पक्षेऽस्तीति मम मतिः निश्चयः ॥ ७८ ॥ तदनेनाष्टादशाध्यायेन समस्तगीताशास्त्रार्थं विस्तरतः संक्षेपतश्चोपसंहरता एतत्संप्रदायप्रवर्तकादेरनायासेन सर्वशास्त्रज्ञानफलं कैवल्यं भवतीति प्रकाशितम् । निष्कामकर्मणां परमेश्वराराधनलक्षणेन शुद्धचित्तस्य भक्तिवशीकृतपरमेश्वरस्य लब्धतत्प्रसादस्य तत्त्वज्ञानाधिकारिणः तत्त्वसाक्षात्कारात्केवलादन्यनिरपेक्षान्मोक्ष इति गीताशास्त्रार्थसंग्रहः । तथाहि 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' 'ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति' 'गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः' 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः' 'अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनां' 'ज्ञानवान्मां प्रपद्यते' 'ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्' 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते' इत्यादिना तत्त्वज्ञानस्यैव मोक्षानन्यसाधनत्वेनोक्तत्वात् । 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इत्यत्र भक्तिपदं तु ज्ञानलक्षणभक्तिपरम् । 'चतुर्विधा भजन्ते मां' 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्यत्र ज्ञानलक्षणाया भक्तेरुक्तत्वात् । अन्यथा ज्ञानलभ्यो भक्तिलभ्य इत्युक्ते परस्परविरोधः स्यात् । भक्त्या मामभिजानातीत्यादौ भेदनिर्देशस्तु 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्' इत्यादिवद्बोध्यः । यत्रापि भक्तिपदं ज्ञानेतरसाधनभक्तिपरं तत्रापि ज्ञानद्वारेति व्याख्येयम् । ज्ञानस्य श्रुतियुक्तिसिद्धमोक्षानन्यसाधनत्वस्य त्यागायोगात् । तथाच श्रुतयः 'ब्रह्म वेद ब्रह्मैव भवति' 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' 'अभयं वै जनक प्राप्तोऽसि' 'तदात्मानमेवावेदहं ब्रह्मास्मीति' तस्मात्तत्सर्वमभवत्तत्र को

६ श्रीधरीव्याख्या ।

बोधतः । सुखं बन्धविमुक्तिः स्यादिति गीतार्थसंग्रहः ॥ १ ॥ तथाहि 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया', 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन' इत्यादौ भगवद्भक्तेर्मोक्षं प्रति साधकतमत्वश्रवणात्तदेकान्तभक्तिरेव तत्प्रसादोत्थज्ञानावान्तरव्यापारमात्रयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते । ज्ञानस्य भक्त्यवान्तरव्यापारत्वमेव युक्तम् । 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते', 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्यादिवचनात्तत्त्वज्ञानमेव भक्तिरित्युक्तम् । 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः' इत्यादौ भेदेन निर्देशात् । न चैवं सति 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इत्यादि श्रुतिविरोधः शङ्कनीयः, भक्त्यवान्तरव्यापारत्वाज्ज्ञानस्य । न

७ अभिनवगुप्ताचार्यव्याख्या ।

अत्र संग्रहः—मंक्त्वा ज्ञानविमोहमन्थरमयीं सत्त्वादिभिन्नां धियं प्राप्य स्वात्मविबोधसुन्दरतया विष्णुं विकल्पातिगम् ।
यत्किंचित्स्वरसोद्यदिन्द्रियनिजव्यापारमात्रस्थितेर्हेलातः कुरुते तमथ सकलं संपद्यते शंकरम् ।

इति श्रीमन्महामाहेश्वराचार्याभिनवगुप्तविरचिते गीतार्थसंग्रहे ऽष्टादशोऽध्यायः ॥ १८ ॥

२ आनन्दगिरिव्याख्या ।

काण्डत्रयात्मकं शास्त्रं पदवाक्यार्थगोचरम् । आदिमध्यान्तषट्केषु व्याख्याया गोचरीकृतम् ॥ १ ॥
संक्षेपविस्तराभ्यां यो लक्षणैरुपपादितः । सोऽर्थोऽन्तिमेन संक्षिप्य लक्षणेन विवक्षितः ॥ २ ॥
गीताशास्त्रमहार्णवोत्थममृतं वैकुण्ठकण्ठोद्भवं श्रीकण्ठापरनामवन्मुनिकृतं निष्ठाद्वयद्योतितम् ।
निष्ठा यत्र मतिप्रसादजननी साक्षात्कृतं कुर्वती मोक्षे पर्यवसास्यति प्रतिदिनं सेवध्वमेतद्बुधाः ॥ ३ ॥
प्राचामाचार्यपादानां पदवीमनुगच्छता । गीताभाष्ये कृता टीका टीकतां पुरुषोत्तमम् ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरिविरचिते
श्रीगीताभाष्यविवेचनेऽष्टादशोऽध्यायः ॥ १८ ॥

४ मधुसूदनीव्याख्या ।

वंशीविभूषितकरान्नवनीरदाभात्पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात्परं किमपि तत्त्वमहं न जाने ॥ १ ॥
काण्डत्रयात्मकं शास्त्रं गीताख्यं येन निर्मितम् । आदिमध्यान्तषट्केषु तस्मै भगवते नमः ॥ २ ॥
श्रीगोविन्दमुखारविन्दमधुना मिष्टं महाभारते गीताख्यं परमं रहस्यमृषिणा व्यासेन विख्यापितम् ।
व्याख्यातं भगवत्पदैः प्रतिपदं श्रीशङ्कराख्यैः पुनर्विस्पष्टं मधुसूदनेन मुनिना स्वज्ञानशुद्ध्यै कृतम् ॥ ३ ॥
इह योऽस्ति विमोहयन्मनः परमानन्दघनः सनातनः । गुणदोषभृदेष एव नस्तृणतुल्यो यदयं स्वयं जनः ॥ ४ ॥
श्रीरामविश्वेश्वरमाधवानां प्रसादमासाद्य मया गुरूणाम् । व्याख्यानमेतद्विहितं सुबोधं समर्पितं तच्चरणाम्बुजेषु ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपूज्यपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां
श्रीमद्भगवद्गीतागूढार्थदीपिकायां मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

५ भाष्योत्कर्षदीपिका ।

मोहः कः शोक एकत्वमनुपश्यतः त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मवित् सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु न तस्मै मृदितकषायाय तमसः पारं तारयति भगवान्सनत्कुमारः' । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'ज्ञानादेव तु कैवल्यं' 'ऋते ज्ञानान्न मोक्षः' इत्येवमाद्या अज्ञानपरिकल्पितस्य संसारस्य ज्ञानेनैव निवृत्तिर्युक्ता नतु कर्मणा । उपास्तिक्रियया वा । तथासति । मोक्षस्यानित्यत्वं सातिशयत्वं च प्रसज्येत इत्यन्यत्र विस्तरः । एतेनोपासनायाः साक्षान्मोक्षसाधनत्वं ज्ञानस्य चावान्तरव्यापाररूपत्वं च वदतामपरेषामुक्तिर्निरस्ता । वेदान्तडिण्डिमेषु मोक्षानन्यसाधनत्वेन प्रसिद्धस्य तत्त्वज्ञानस्यावान्तरव्यापाररूपत्वप्रदर्शनानौचित्यात् । अन्यथा मुख्यफलस्याप्यवान्तरव्यापारत्वकल्पनायां 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्तत्वात्कर्मैव साक्षात् मोक्षसाधनं भक्तिर्ज्ञानं चावान्तरव्यापार इत्यपि कुतो न स्यादित्यास्तां तावत् ॥

आज्ञया भाष्यकाराणां तैर्दत्ताभिः सुयुक्तिभिः । आपातरम्यव्याख्यानां मया निरसनं कृतम् ॥ १ ॥
जयरामाख्यकृतिभिः शास्त्राभिज्ञैः सुसाधुभिः । विरक्तैरतिरक्तैश्च रामे कृष्णे शिवेऽद्वये ॥ २ ॥
प्रेरितः कृतवान् गीताभाष्यस्योत्कर्षदीपिकाम् । सद्भिर्विलोक्यतां सम्यक् प्रमादः क्षम्यतां बुधैः ॥ ३ ॥
क्षेत्रादन्यमनादिमध्यनिधनं सत्त्वादिसत्ताप्रदं लभ्यं संसृतिवृक्षछेदनपरैर्युक्तैः सतां संपदा ।
सद्यज्ञादिविधूतमानसमलैर्गीताख्यशास्त्रार्थगैर्वन्दे स्वात्मसुखाप्तये शिवमहं कृष्णं परं केवलम् ॥ ४ ॥

६ श्रीधरीव्याख्या ।

हि काष्ठैः पचतीत्युक्ते ज्वालानामसाधनत्वमुक्तं भवति । किंच 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनाम्' 'देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे' 'यमेवैष वृणुते तेन लभ्यः' इत्यादि श्रुतिस्मृतिपुराणवचनान्येवं सति समंजसानि भवन्ति तस्माद्भक्तिरेव मोक्षहेतुरिति सिद्धम् ॥

तेनैव दत्तया मत्या तद्गीताविवृतिः कृता । स एव परमानन्दस्तया प्रीणातु माधवः ॥ १ ॥
परमानन्दपादाब्जरजःश्रीधारिणाधुना । श्रीधरस्वामियतिना कृता गीतासुबोधिनी ॥ २ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

श्रीमान्कात्यायनोऽभूद्वररुचिसदृशः प्रस्फुरद्बोधतृप्तस्तद्वंशालंकृतो यः स्थिरमतिरभवत्सौचुकाख्योऽतिविद्वान् ।
विप्रः श्रीभूतिराजस्तदनु समभवत्तस्य सूनुर्महात्मा येनामी सर्वलोकास्तमसि निपतिताः प्रोद्धृता भानुनेव ॥ १ ॥
तच्चरणकमलमधुपो भगवद्गीतार्थसंग्रहं व्यदधात् । अभिनवगुप्तः सद्द्विजलोककृतचोदनावशतः ॥ २ ॥

५ भाष्योत्कर्षदीपिका ।

कृत्या धनपतेः कृष्णः प्रीयतां परमेश्वरः । शिवाख्यः कृष्णसंज्ञश्च शिवः सर्वेश्वरेश्वरः ॥ ५ ॥

रामेष्वहीन्दुसंवत्सरस्य प्रभवसंज्ञिनः । फाल्गुने कृष्णपञ्चम्यां वृषे सिद्धा गुरावियम् ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीबालस्वामिशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा सारस्वतेन विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां अष्टादशोऽध्यायः ॥ १८ ॥

६ श्रीधरीव्याख्या ।

स्वप्रागल्भ्यबलाद्विलोड्य भगवद्गीतां तदन्तर्गतं तत्त्वं प्रेप्सुरुपैति किं गुरुकृपापीयूषदृष्टिं विना ।

अम्बु स्वाञ्जलिना निरस्य जलधेरादित्सुरन्तर्मणीनावर्तेषु न किं निमज्जति जनः सत्कर्णधारं विना ॥ ३ ॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे योगशास्त्रनिर्णयसंन्यासादितत्त्वनिर्णये सुबोधिन्यां टीकायां श्रीधरस्वामीकृतौ मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

७ अभिनवगुप्ताचार्यव्याख्या ।

अत इदमवधार्यं वा यथार्थमपि सर्वथा नैव । विदुषाममूहनीयं कृत्यमिदं बान्धवार्थं हि ॥ ३ ॥

परिपूर्णोऽयं श्रीमद्भगवद्गीतार्थसंग्रहः । कृतिश्चेयं परमेश्वरचरणचिन्तनलब्धचिदात्मसाक्षात्काराचार्याभिनवगुप्तपादानाम् ॥

अभिनवरूपा शक्तिस्तद्गुप्तो यो महेश्वरो देवः । तदुभयथाऽमलरूपमभिनवगुप्तं शिवं वन्दे ॥ १ ॥

श्रीभगवदनुकंपया भद्रं बोभवीतु सद्भक्तानाम् ।



श्रीमधुसूदनसरस्वतिस्वामिप्रणीतायाः

# भगवद्गीतागूढार्थदीपिकाव्याख्यायाः

## श्रीधर्मदत्तशर्मणा( प्रसिद्धश्रीबच्चाशर्मणा )विरचितो गूढार्थतत्त्वालोकः ।

### नमःश्रीशंकराय ।

यस्यामानि गले पयोधिमथनप्रोद्भूतहालाहलज्वालादुस्थजगत्रयीभयभरध्वान्तं निपीतं सुरैः ।
विघ्नैरासुनिगीर्णभक्तजनतादुःखानलप्रोद्भवद्धूमोत्पादितकज्जलं भगवते तस्मै नमः सर्वदा ॥ १ ॥
आनन्दैकरसे चिदात्मनि परे ब्रह्मण्युमाश्लेषतो यत्रैश्वर्यवतीश्वरेत्यभिधयैकान्तिक्युपेता स्थितिः ।
तस्यैकस्य शिवस्य मायिकगुणप्रोद्भासिभेदां परां विश्वोत्पत्त्यवनक्षयक्षमतमां मूर्तित्रयीं तां नुमः ॥ २ ॥
श्रीगोविन्दसविभ्रमेक्षणघनप्रस्यन्दमानै रसैर्नाभीचारुतरालवालवलयात्पूर्णादिव प्रोद्गताम् ।
तारुण्यस्य मठद्वयीं सुललितामारोढुमुज्जृम्भितां राधाया रुचिरोदराम्बरगतां शृङ्गारवल्लीं भजे ॥ ३ ॥
टीका निगूढभावा ख्याता गूढार्थदीपिकाभिधया । श्रीमधुसूदनयतिना कृतिना विहितास्ति गीतायाः ॥ ४ ॥
वेदान्तार्थविचारप्रचुरांस्तस्या द्वितीयादीन् । वीक्ष्याध्यायांस्तेषामालोकोऽयं कृतो येन ॥ ५ ॥
सोऽभ्युदितः सुकृतीन्दुर्मैथिलभूदेववंशपाथोधेः । श्रीधर्मदत्तनामा भूयात्प्राप्तामृताह्लादः ॥ ६ ॥

**इत्येवंलक्षणयेति ।** प्रकारवाचिनैवंशब्देन बन्धुवधप्रवृत्तस्य मम प्राणत्याग एव निष्कृतिरित्याद्यर्थपरिग्रहः । लक्षणशब्दो व्यावर्तकवाची प्रकृते बुद्धिव्यावर्तकविषयाकारपरः, बुद्धेः स्वरूपेणाव्यावृत्तत्वेन विषयाकारस्यैव तद्व्यावर्तकत्वस्याभ्युपेयत्वात् । कृपाशब्दस्य परदुःखप्रहाणेच्छायां प्रसिद्धतया तस्य प्रकृतेऽसंभवात्, परेषां तदानीं सहर्षं युद्धप्रवृत्तेरर्जुनेन ज्ञातत्वात्, अनिवार्यभीमादिप्रतियोद्धृकृतप्रहारादिदुःखस्यापरिहार्यत्वज्ञानात् तत्रेच्छोदयासंभवात् अतस्तद्व्याचष्टे—**ममेत इतीत्यादिना ।** व्यामोहो निमित्तं यस्येति बहुव्रीहिः । अहंममेत्यादिप्रत्ययस्य सर्वस्यैवाविद्यादोषजनितचिदचित्तादात्म्यविषयकविभ्रमरूपत्वाद् व्यामोह इत्युक्तम् । **आगन्तुकत्वमिति ।** यद्यपि प्रकृते कर्मकर्तृस्वरूपयोरागन्तुकत्वे वैपरीत्यमेव, तथापि कर्मत्वविशिष्टरूपस्य सर्वत्रैव कर्तृत्वविशिष्टरूपापेक्षयाऽऽगन्तुकत्वम् क्रियाजन्यफलभागित्वरूपकर्मत्वस्य क्रियानिष्पादकव्यापारात्मककर्तृत्वप्रयोज्यत्वात् । आगन्तुकत्वं यद्यपि कृपाया व्यामोहनिमित्तत्वेनास्त्येव तथापि व्यामोहातिरिक्तागन्तुकोपकारादिनिमित्तव्यावृत्तौ तात्पर्यम् । ममकारस्यानादित्वेनानागन्तुकत्वात् अनागन्तुकनिमित्तस्याप्यनागन्तुककल्पत्वादनागन्तुकत्वमुक्तम् । तस्य विषादस्यागन्तुकत्वम् तद्धेतोरुक्ताशङ्काया आगन्तुकत्वात् । **अतएव** कृपाविष्टत्वादेव अस्निग्धस्वजनविच्छेदनिश्चयस्यापि शोकाजनकत्वात् स्नेहस्य शोकहेतुत्वादिदमुक्तम् । यथाश्रुतेऽश्रुपूर्णाकुलेक्षणत्वस्य कृपामात्रनिमित्तत्वप्रतीतिः स्यादिति पश्चादुक्तमपि विषीदन्तमितिपदं प्रागेव व्याख्यातम्, तथाच विषादनिमित्तत्वस्यापि तस्य लाभेन तदनुक्तिप्रयुक्तन्यूनत्वस्य न प्रसक्तिः । अनुभावेन भावपरिपोषस्य युक्तत्वात् अपुष्टात्कारणात्कार्योत्पत्तेरसंभवात् परिपोषं गताभ्यामित्युक्तम् । कृपाया अपि पारम्पर्येणोद्वेगहेतुत्वात् कार्यकारणयोरैक्योपचारादुद्वेगत्वम् । तथाच कृपाविषादाभिन्नोद्वेगवन्तमिति कृपाविषादाभ्यामुद्विग्नमित्यस्यार्थः । तेन पदार्थातिरिक्तनिष्फलव्याख्यानप्रयुक्तन्यूनत्वस्य नावकाशः । यद्वा चित्तव्याकुलीभाव आनन्दसंभारादपि भवतीति तन्निरासार्थमुद्वेगहेतुत्वं शोकस्य दर्शयितुं तावत्पर्यन्तस्य तात्पर्यार्थस्य कथनम् तेन कृपाविष्टं विषीदन्तं चार्जुनमित्येव वक्तुमुचितमिति शङ्कानिरस्ता ॥ १ ॥ **एतादृशं समग्रमैश्वर्यादिकमिति ।** ननु भगशब्दो न षट्सु व्यासज्य वर्तते । समग्रैश्वर्यविरहिणि परमर्ष्यादिष्वपि भगवच्छब्दप्रयोगात् एकैकसद्भावेन च तत्प्रयोगस्य विवक्षितपरमेश्वरोत्कर्षानिर्वाहकत्वादत आह—**नित्यमप्रतिबन्धेनेति ।** तथाच नित्ययोगार्थकमतुबन्तो भगवच्छब्दो भवति हि परमेश्वरमात्रनिष्ठः, परमेश्वरस्य पूर्वसिद्धैश्वर्यवत्तया तदिच्छाविपरीतेऽन्येषामैश्वर्यप्रतिरोधात् तस्यैश्वर्यस्याप्रतिरोधादिति भावः । आदिपदेनात्र धर्मो न संग्राह्यः । परमेश्वरे तत्त्वज्ञानवति तदुत्पत्तेरसंभवात् । यद्वा धर्मपदेन समग्रपाप्मनिवृत्तिः परिगृह्यते, सचास्त्येवेश्वर इति धर्मोऽप्यादिपदेन परिगृहीतुं शक्यते । एतेन धर्मपदस्य पुण्यपरत्वे समग्रस्य पुण्यजातीयस्याप्येकत्रासंभवेन तदुपाधिकस्य भगवच्छब्दस्याप्रवृत्तिप्रसंगेन तस्य भगशब्दार्थत्वं

न स्यात्। शरीरभेदेन कालभेदेन च तत्सद्भावस्य तथात्वे सर्वत्रैव तत्प्रयोगप्रसंगादिति प्रतिविहितम् । नच वसिष्ठादीनामपि दुःखसद्भावादस्त्येव दुरितमिति वाच्यम्, प्रारब्धातिरिक्तत्वस्य दुरिते विशेषणीयत्वात्। अथवा धर्मपदं पुण्यजनकक्रियापरमेव तदनुष्ठातृत्वं च संप्रदायप्रवर्तकतया परमेश्वरेऽस्त्येव सामर्थ्यं च तस्य परमेश्वर एव नान्यत्र। नन्वप्रतिबन्धेनेत्यस्य स्वप्रयोज्यत्वेनेप्सितकार्यप्रतिबन्धकविरहविशिष्टत्वेनेत्यर्थः। कैवल्यप्राक्क्षणे जीवेऽपि तद्विशिष्टं तत्त्वज्ञानं वर्तत इति दुर्वारमेव तत्साधारण्यं। नच नित्ययोग इत्यत्र योगपदस्यैवाप्रतिबन्धेन योग इत्यर्थः, नतु नित्यपदस्याप्रतिबन्धेनेत्यर्थः, तथाच जीवे नित्यं तत्सत्त्वाभावान्न दोष इति वाच्यम्। अप्रतिबन्धेनेत्यस्य वैयर्थ्यात् कस्मिंश्चिदपि जीवे नित्यमैश्वर्यादेः सद्भावस्यासंभवात्। किंच नित्ययोगशब्दस्य किमर्थमेतद्व्याख्यानम्, नच वेदान्तमते ब्रह्मातिरिक्तस्य कस्यापि न नित्यत्वमिति तथा व्याख्यानमिति वाच्यम्, तथाच नित्यसद्भावो हि विवक्षितुमेवाशक्य इति चेन्न। यद्यपि तत्त्वज्ञानाद्येकैकोपादानेऽन्यत्रवृत्तिरपि भगवच्छब्दः तथापि तात्पर्यवशाद्येषां समग्राणामप्रतिबन्धेन वृत्तिः परमेश्वर एव तेषामेवेह ग्रहणस्य विवक्षितत्वाद्विनिगमकाभावेनान्येषामपि संभवति ग्रहणमिति द्योतयितुमैश्वर्यादिकमित्यत्रादिपदम्। वस्तुतो भगवच्छब्द उक्तधर्मषट्कावच्छिन्ने लक्षणा। जीवस्यापि कस्यचित्परमेश्वरकल्पस्य समग्रोक्तषट्काश्रयत्वस्य संभवात्तद्व्यावृत्त्यर्थमप्रतिबन्धेनेति। यत्तु समग्रमैश्वर्यादिकं परमेश्वर एवेति तत्र तथासति नित्ययोगे मतुपोऽनुसरणस्य वैयर्थ्यापत्तेः, अतः सामग्र्यं हि प्रकृते यस्यैश्वर्यस्य यावत्पर्यन्तकार्यजनने शक्तिस्तावत्पर्यन्तकार्योपधायकत्वमेव विवक्षितम्। तच्च क्वचिज्जीवेऽपि संभवत्यतो नित्ययोगपर्यन्तानुसरणं सार्थकम्। समग्रशब्दस्याशेषार्थकत्वे योगिनिष्ठस्येश्वरे विरहेणासंभवापत्तेः ऐश्वर्यादिजातीये चाशेषत्वविवक्षणे तत्संभवेऽपि तस्याशब्दार्थत्वात्। अत्र समग्रस्यैवैश्वर्यादेर्भगशब्दार्थता कस्यचिन्नेत्यत्र न तात्पर्यमुक्तवाक्यस्य तेन तत्रतत्र जीवविशेषे भगवच्छब्दप्रयोगस्य सत्त्वेऽपि न क्षतिरिति चिन्त्यम्। एतादृशमित्यस्य विवरणं समग्रमिति नतु मूलपाठः। क्वचिज्जीवे समग्रस्य क्वचिज्जीवे चाप्रतिबद्धस्य भगपदार्थस्य सत्त्वेऽपि कुत्रापि न समग्रस्याप्रतिबद्धस्य सत्त्वमित्युभयं सार्थकम्। **त्वां सर्वक्षत्रियप्रवरमिति।** संबोध्यत्वेन युष्मदर्थस्योपस्थितस्य योग्यस्य चोपस्थितिक्रियाकर्मत्वलाभाद्विशेषानाधायकत्वप्रयुक्तानुपयुक्तत्वनिबन्धनान्वयानुपपत्त्या युष्मच्छब्दवाच्यस्याविवक्षितत्वात्। अर्थान्तरे सर्वक्षत्रियप्रवरे संक्रमितत्वं बोध्यम्। यदाहि दोषाः कफपित्तादयः पच्यन्ते न तदा स्वकार्यं कायक्लेशकरं कुर्वन्त्येवमेव चित्तरञ्जकत्वात् कषायाः रागादयो दोषाः क्लेशानुबन्धिप्रवृत्त्यादिकार्यं पक्का न कुर्वन्तीति तेषां परिपाकः कार्याक्षमत्वं पाचकत्वं च वैराग्यादेर्बोध्यम्। एवंचापरिपक्वकषायैरित्यस्याप्रक्षीणस्वकार्यजननशक्तिभिरित्यर्थः। अस्वर्ग्यं स्वर्गाननुबन्ध्यपि शरीरविधारकभोजनादिकं स्वर्गेच्छुभिः क्रियत इति स्वर्गविरोधिपरतया व्याचष्टे—**स्वर्गहेत्वित्यादिना।** कीर्तिभिन्नधर्मादिकरं कीर्तिप्रेप्सुभिरपि क्रियत इति। तदपि व्याचष्टे—**कीर्त्यभावेत्यादिना** ॥ २ ॥ यद्यपि पृथायाः स्त्रीत्वात्तत्तनयत्वेन स्त्रीसुलभाधैर्यचापल्यादिव्यञ्जना पूर्वमुक्ता स एव च पृथाशब्दोऽयमपीति कथमधैर्यविपरीतव्यञ्जकमस्तु, तथाप्येक एव शब्दः प्रकरणादिवशाद्विचित्रव्यञ्जनो भवतीति क्लैब्याभावप्रतिपादनपरे वाक्ये निपतित उक्तक्रमेणोक्त एवार्थे अर्थान्तरसंक्रमितवाच्यो भवितुमर्हति नतु स्त्रीपुत्रत्वेतदर्थ इति युक्तमुक्तं पृथया देवेत्यादिकम्। भूयोदृष्टतत्सामानाधिकरण्यस्यापि हीरकादौ पार्थिवत्वस्य लौहलेख्यत्वव्यभिचारित्ववत्पार्थत्वस्यापि मध्यमपाण्डवे कदाचित्क्लैब्यायोग्यत्वव्यभिचारित्वं स्यादतस्तदयोग्यत्वनियतमर्जुनत्वरूपमसाधारणधर्मबोधकमर्जुनेतिपदमनुषञ्जनीयतया मनसि निधायार्जुनत्वेनापीत्याद्युक्तम्। अर्जुनत्वेन नैर्मल्यं तेन प्रवीरक्षत्रवंशोत्पन्नस्य क्लैब्यरूपमालिन्यसंसर्गाभावः सुबोधः त्वयीत्यपि त्वामितीवोक्तरीत्यान्वयानुपपत्त्यार्थान्तरसंक्रमितवाच्यम्। तत्र युष्मच्छब्दो यदि संबोध्यमुपस्थितेन पार्थत्वेन रूपेण वाच्यकक्षायां बोधयेत्पृथासंबन्धनिमित्तकगुणविशिष्टतयैव लक्षयेत् तच्च लब्धमेव। नचोपपत्त्यभावनिमित्तं च तस्य, क्लैब्यायोग्यत्वमात्रव्यञ्जनसामर्थ्यात्तदयोग्यमपि हि क्वचित्कारणप्राबल्यादितस्तद्योग्यं भवतीत्यत आह—**त्वय्यर्जुन इति।** नोपपद्यत इति समभिव्याहारात्क्लैब्यविरोधिधैर्यमहोत्साहाद्युपधानबोधकमहेश्वरप्रतिमल्लत्वादिविशिष्टे अर्थान्तरसंक्रमितत्वं युज्यत इति भावः। तच्छब्देन क्लैब्यमनिर्दिश्यैतच्छब्देन तन्निर्देशस्य फलमाह—**एतत्क्लैब्यमिति।** क्लैब्यस्यासाधारणरूपेणैतत्त्वेनाध्यक्षविषयधर्मविशेषेण यदसाधारण्यं तेनार्जुनायोग्यत्वस्य निर्देशो बोधक एतदितीतिशब्द इत्यर्थः। यद्यपि क्लैब्यमेतदिति निर्देष्टुमनर्हं तस्यानध्यक्षत्वात् तथापि तत्कार्यस्य तथात्वात्तस्यापि तथात्वं बोध्यम्। युद्धाय सज्जीभावे हेतुः परन्तपत्वं तद्घटितार्थकं परन्तपेति संबोधनपदमित्यर्थः ॥ ३ ॥ क्रियत इतीत्यस्यार्जुनस्याभिप्रायमित्यत्रान्वयः। नहि भीष्मत्वद्रोणत्वे स्वरूपेण पूजार्हत्वप्रयोजक इति भीष्मद्रोणपदं व्याचष्टे—**पितामहमिति। आचार्यमिति च। निषिद्धत्वेचेति।** उक्तनिषेधेन युद्धनिषेधस्योन्नेतुं शक्यत्वादिति भावः ॥ ४ ॥ **सांप्रतं** इदानीम्। **तस्मादिति।** ननु तच्छब्देन गुरुत्वेनास्वीकारस्योक्तवचनस्य वा परामर्शो न संभवति द्वयोरपि वधश्रेयस्त्वहेतुत्वासंभवात्, यो हि गुरुत्वेन न स्वीक्रियते परित्याज्यतया स्मर्यते वा स वध्यो भवेदित्यविधानात्, बहुतरानिष्टप्रसंगाच्चेतिचेन्न, श्रेयस्त्वं हि प्रकृते बलवदनिष्टाननुबन्धित्वेसति राज्यलाभादीष्टसाधनत्वमेव। तत्र बलवदनिष्टानुबन्धित्वप्रयोजकगुरुत्वनिःपाप्मत्वयोरुक्तेन स्मृतेरित्यन्तार्थेनापनीयते तस्य बलवदनिष्टानुबन्धित्वप्रयोजकत्वेन हेतुत्वसंभवात् 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः। उत्पथं प्रतिपन्नस्य कार्यं भवति शासन'मिति वचनान्तरेणापापत्वावगतेः पापत्वे वातिस्वल्पत्वेन राज्यसुखस्यातिभूयस्त्वेन बलवद्द्वेषाविषयत्वादिति भावः ॥ ५ ॥ ननु गुरुहनननिन्दापूर्वकं भैक्ष्यस्य

श्रेष्ठत्वं यदोपपादितं तदा स्वजयस्य गुरुहननसाध्यस्याश्रेष्ठत्वं निर्णीतमेवेति यज्जयेम वा यदि वा नो जयेयुरिति कतरन्नो गरीय इति यथाश्रुतार्थो न युज्यत इत्यवतरणपूर्वकं पूरणसंवलितमन्यथा व्याचष्टे—**ननु भिक्षाशनस्येत्यादिना** ॥ ६ ॥ आत्मानात्मनोरैक्यभ्रमोऽनात्माध्यासः तस्यासज्ञात्मस्वरूपज्ञानान्निवृत्तौ ममत्वस्यापि निवृत्तेरभिनिवेशात्मको दोषो न भवतीति तन्निमित्तकः सचोक्तः, ममत्वाश्रयाणामन्येषां सत्त्वे भोगसहकारिराहित्यनिबन्धनभोगसाधनशरीरवैफल्यग्रहप्रयुक्तद्विष्टाचरणकर्तृधार्तराष्ट्रादिसोत्साहयुद्धोपस्थितस्वपक्षीयवधबलवद्द्वेषासंभवादतोऽन्येषां व्यवच्छेदायैत एवेत्येवकारनिर्देशः । ममत्वाश्रयस्य सर्वस्यैव युद्ध उपस्थितत्वान्नैवकारार्थासंभवो यद्यपि तथापि अन्यजन्मनि ममबान्धवा इत्यादिप्रामाणिकनिर्देशात् अहंकारविषयलिङ्गशरीरावच्छिन्नात्मनो जन्मान्तरसाधारण्येन तत्संबन्धित्वग्रहविषयत्वलक्षणममत्वस्य तत्र संभवाच्चैवकारार्थाप्रसिद्धिः स्यादत उक्तम्—**अस्मिञ्जन्मनीति । इत्यभिनिवेशेति ।** यद्यप्यभिनिवेशो मरणत्रासरूपयोगसूत्रपरिगणितपञ्चमक्लेशरूपः अवश्यानुष्ठेयतयेष्टगोचरप्रत्ययरूपाऽऽग्रहरूपो वा नोक्ताकारकस्तथापि युद्धनिवृत्तिप्रयोजकोक्तग्रहो मरणत्रासनिमित्तक इति तयोरभेदोपचारात्तथोक्तिः । यद्वा भाव्यनिष्टहेतुतयाऽत्यन्तविद्विष्टस्वमरणप्रयोजकमेतेषां हननमकर्तव्यमित्याकारग्रहपर्यवसाय्येवोक्तग्रहः स च भवत्येव मरणत्रासात्मकः । मरणत्रासो हि मरणहेतुकत्वेन भाव्यनिष्टज्ञानं भाव्यनिष्टहेतुत्वेन मरणज्ञानं वा ममतालक्षण इति । उक्तज्ञानस्यापि मूलं ममत्वमेवेति कार्यकारणयोरभेदोपचारात्तथा प्रयोगः । ममतालक्षणं विषयो यस्येति वार्थः । ममत्वगोचरत्वादुक्तज्ञानस्येति तथोक्तिः । मदीया इत्यस्य हि ममत्ववन्त इत्यर्थः । नहि मदीयत्वं ममत्वं चैकं, ममेति विभक्त्यन्तप्रतिरूपकमव्ययं, ममेदमित्याकारकग्रहविशेष्यार्थकमित्युक्तविशेष्यत्वं ममत्वं, मत्संबन्धविशेषो मदीयत्वम् । नच तदेवास्तु ममत्वमिति वाच्यम्, द्वेषाद्विज्ञानविशेषाच्च ममत्वस्य निवृत्तेर्मदीयत्वस्यानिवृत्तेश्च । **व्याख्यातमेतदिति ।** हिंसाशून्यत्वेन स्वधर्मतया विहितत्वेन च विरुद्धयोस्तुल्यकक्षत्वं प्रतिपादितमित्यर्थः । एकस्यान्ते निकटे भवतीत्यैकान्तिको नियतो व्याप्तः । यथा धूम एकस्य वह्नेरेव समीपे भवति न वह्नयभावस्य वह्निस्तु धूमतदभावयोर्द्वयोरपीति धूम एकान्तिको वह्निरनैकान्तिक इत्यक्षरार्थः । प्रकृतोपयोगितात्पर्यार्थस्तु प्रदर्श्यते—**साधनानन्तरमवश्यंभावित्वमित्यनेन ।** अन्तमतिक्रम्य भवतीत्यात्यन्तिकमविनाशि तस्य भावो नाशाप्रतियोगित्वमात्यन्तिकत्वमित्यक्षरार्थमेवाह—**अविनाश आत्यन्तिकत्वमिति ।** रोगनिवृत्तिर्विनाश्यत इति कथं संगच्छते, निवृत्तिरत्यन्ताभावो ध्वंसो वा स्यात् । नहि तौ विनाशिनाविति चेन्न । सद्युत्पत्ति विनाशशाली चतुर्थोऽभावः । संबन्धनाशाद्वा तस्य नाशव्यपदेशः । वेदान्तमते सर्वस्य ब्रह्मातिरिक्तस्य विनाशित्वाद्वा । नच तन्मते तथाविधश्रेयोऽप्रसिद्धिरिति वाच्यम्, निवृत्ताविद्यस्य ब्रह्मस्वरूपानन्दस्य तादृशश्रेयस्त्वात् । अज्ञानप्रयुक्तालब्धत्वेन ज्ञानेनाज्ञानापगमे लब्धकल्पतया साध्यत्वेन व्यवहारादसाध्यतयाऽऽत्यन्तिकत्वसंभवात् । **प्रतिबन्धवशात्स्वर्गो न भवेदपीति ।** नच तत्त्वज्ञाने सत्यपि प्रारब्धकर्मप्रतिबन्धवशान्मोक्षो न भवेदिति सोऽपि नैकान्तिक इति वाच्यम्, प्रारब्धकर्मप्रतिबन्धवशाद्विक्षेपशक्तिरूपेणैव ह्यज्ञानसंस्कारानुवृत्तिरिति सावरणशक्त्यज्ञाननिवृत्तिमत्स्वप्रकाशपरमानन्दस्वरूपस्याभिलषितस्य श्रेयस ऐकान्तिकत्वानपायात् । विदेहतासंपत्तिः परं प्रारब्धविगमेसति नान्तरीयकतया भाविन्यनभिलषितैव पुरुषव्यापारासाध्यतयाऽवशिष्यत इति न कापि क्षतिः । दृष्टे सेत्यादेर्दृष्ट एव दुःखाभिघातके हेतौ सति अदृष्टतद्गोचरा जिज्ञासा अपार्था निरर्थिका न दृष्टाद्धेतोः श्रेयस एकान्ततोऽत्यन्ततोऽभावात् । आनुश्रविको वैदिको यागादिः दृष्टवदेवैकान्तिकात्यन्तिकश्रेयसोऽसाधनमित्यर्थः । स हि यागादिः पशुबीजहिंसादिजन्यदुरितजनकतयाऽविशुद्ध्यादियुक्त इत्यर्थः ॥ ७ ॥ 'द्वावेतौ पुरुषौ लोक' इत्यस्य 'सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः' इति शेषभागः । अवाप्येत्यस्यापनुद्यादित्यनेन विभिन्नकर्तृकत्वात्प्रपश्यामीत्यनेनायोग्यत्वादनन्वयात्पूरयति—**स्थितस्यापीति ।** अनुमानादित्यनन्तरमामुत्रिकाणां नाशनिश्चयादिति शेषः । एतेनोक्तश्रुतेरुक्तानुमानस्य च न शोकनिवर्तक इत्यत्र हेतुत्वासंभवेऽपि न क्षतिः । दर्शनादित्यत्र दर्शनपदस्य ज्ञानमात्रपरत्वे तत्रोक्तयोरन्वयसंभवेऽपि दर्शनाच्चेति चकारार्थानन्वयः । प्रत्यक्षेणापीत्यपिना श्रुत्यनुमानयोः समुच्चयः । **भोगपारतन्त्र्यादिनेति ।** भोगो दुःखसाक्षात्कारः राज्यादितोऽपि संरक्षणसाधनोपादानादौ तस्यावश्यंभावात् तत्पारतन्त्र्यमस्ति ऐहिकभोगस्य । अथवा भुज्यत इति भोगो भोगसाधनं विषयः तत्पारतन्त्र्यमस्ति भोगयोः, साधनोपादनं विना तदसंपत्तेः । तत्र च दुःखनियमाच्छोकजनकत्वं, तस्य तदर्थमेव साधने प्रवृत्तस्य दुःखोत्पत्तेः कथंचित्तस्य दुःखनिमित्तत्वात् । आदिपदात् क्षयित्वज्ञानादिपरिग्रहः । यद्वा ऐहिक आमुत्रिको वा भोग इत्यत्रैव भोगो विषयस्तस्य भोगपारतन्त्र्यं यदधीनसत्ताकं यदधीनोत्पत्तिकं यदधीनस्वकार्यकं वा यत्तत्परतन्त्रमुच्यते, विषयस्य भोगार्थमुपात्तत्वात् संरक्ष्यत्वाच्च भोगाधीनसत्तोत्पत्तिकत्वेन तत्पारतन्त्र्यम् । तथासति प्रतिबन्धादिना भोगानुत्पत्तिशङ्कया दुःखसाधनत्वं तयोरिति भावः ॥ ८ ॥ आधिपत्यमित्यन्तग्रन्थेन युद्धफलतया प्रतिपन्नस्य राज्यादेर्दुःखानुबन्धित्वेनानभिलषितत्वोक्त्या युद्धस्य निष्फलत्वपर्यवसानं फलस्याभिलषितलक्षणत्वात्, तथा च तत्र प्रवृत्तेः प्रेक्षावदयोग्यत्वान्न योत्स्य इत्यस्य तत्संबन्धित्वात्तेन सहैकवाक्यतापन्नमाधिपत्यन्तवाक्यम् । एवं च एवमुक्त्वेत्यत्रैवंशब्देनानुपदोक्तस्याधिपत्यमित्यन्तस्य परिग्रहे न योत्स्य इत्यस्यापि परिग्रहात्पुनरुक्त्वेत्यस्य पौनरुक्त्यं स्यादत **आदाविति ।** युद्धस्य निष्फलत्वेन तद्गोचरप्रवृत्त्यभावबोधकवाक्यात्प्रथममित्यर्थकं पूरयित्वा एवमिति व्याचष्टे—**कथं भीष्मेत्यादिना ।** धात्वर्थतावच्छेदकज्ञानस्य

विषयभूतं फलं दर्शयति—**युद्धस्वरूपेत्यादिना** । अनन्तरमिति पूरणग्रन्थः । **न योत्स्य इति** । सुराणामपि चाधिपत्यमित्येकवाक्यतापन्नेन न योत्स्य इत्यनेनेत्यर्थः । तथा च न पुनरुक्तिरिति भावः । हशब्दस्य पादपूरणमात्रार्थत्वे निरर्थकत्वं स्यात् तच्चेदृशे सन्दर्भे नोचितमित्यत आह—**द्योतयितुं हशब्द इति** । अयमभिसन्धिः—'अव्ययं निन्दने क्षान्तौ नियोगे पादपूरणे । संबोधने निग्रहे चे'ति कोषात् हशब्दार्थस्य प्रकृतत्वाद्युद्धस्य निन्दायाः क्षान्तेरिन्द्रियनिग्रहस्य वा प्रयोज्यत्वसंबन्धेन युद्धव्यापारनिवृत्तिरूपतूष्णींभावेऽन्वये एकविशेषाभिधानस्य प्राप्तविशेषान्तरव्यावृत्तिफलकत्वेन प्रयोजकतयाऽऽलस्यपरतापकत्वसामर्थ्याभावयोर्व्यावृत्तिः, तेन चार्जुने तयोरागन्तुकयोरभावस्य व्यक्तिः । गुडाकेशपरन्तपपदाभ्यां तु स्वाभाविकयोरेव तयोर्लाभेनागन्तुकतद्विपरीतवस्त्वविरोधित्वान्न तल्लाभ इति ॥ ९ ॥ १० ॥ **प्रतिबद्धेति** । स्वकार्ययुद्धोत्पादनासमर्था नत्वनुत्पादप्रतियोगिनी जातायास्तत्त्वासंभवात् । **स्थूलेति** । स्थूलसूक्ष्मशरीरद्वयं तत्कारणमविद्याख्योपाधिश्चेति यत्त्रयं तस्याविवेकेनात्मन्यभेदग्रहणेत्यर्थः । यथाधिश्रयणादिव्यापारकलापो विक्लित्त्यनुकूलत्वेनैकप्रतीत्यारूढतया एक इव पच्यर्थतां भजते तथा पराभिमुखीभवनादिव्यापारसमुदायः परपराभवानुकूलतयेष्यमाणत्वेनैकप्रतीत्यारूढत्वादेकीभूत इव युध्यर्थतां भजत इति मरणानुकूलव्यापाररूपहिंसाया इव कपटाचरणपरतेजोवधफलकपरनिन्दनात्मप्रशंसनाद्यनेकव्यापारस्य निन्दितस्य तद्घटकत्वात्तेषामपि संग्रहाय हिंसादीत्यत्रादिपदमुपात्तम् । करुणादीत्यत्रादिपदेन सर्वसाधारणमोहस्य युद्धविधिशास्त्रार्थाननुसन्धानस्य च परिग्रहः । शोको यद्यपि वैक्लव्यरूपो दुःखं दुःखजनितावस्थाविशेषो वा चेतसः तथापि प्रकृते तन्मात्रस्य न धात्वर्थता । सकर्मकत्वासंभवात् तथासति शोच्यादिपदानिष्पत्तेः गतासूनगतासूंश्च नानुशोचन्ति भूतानि शोचितुमर्हसीत्यादिप्रयोगानुपपत्तेश्च कृतेरिव धातुविशेषप्रतिपाद्यतामात्रेणास्त्विति तु न वाच्यम् । कृतेर्हि सविषयायाः ज्ञानवद्गौणकर्मसंभवेन तस्य द्वितीयाकाङ्क्षामात्रनिर्वाहकत्वेन न्यायनये ज्ञानवत् करोतेः प्रयोगसद्भावात् द्वितीयासाकाङ्क्षत्वकल्पनम् यततेः समभिव्याहारस्य प्रयोगविरहेण द्वितीयानाकाङ्क्षत्वकल्पनं च युज्यते । उक्तस्य हि निर्विषयत्वेन गौणकर्मणोऽप्यसंभवः । वैयाकरणादिभिरुत्पत्त्यनुकूलव्यापारस्यैव करोत्यर्थत्वाभ्युपगमेन दृष्टान्तासिद्धिरेव हि तन्मते किंतु दुःखवत्तया प्रतीतेः । अतएवाग्रेऽनुशोचन्तीत्यस्य व्यामुह्यन्तीति व्याख्या । दुःखवत्ता च स्वप्रयोजकनाशप्रतियोगित्वस्वप्रयोजकदुःखवत्त्वस्वाश्रयत्वान्यतमसंबन्धेन बोध्या । एवंच नष्टं पुत्रं शोचति दीनं शोचति स्वं शोचतीत्यादिप्रतीतिरुपपन्ना । विशेष्यत्वस्य द्वितीयार्थत्वसंभवाद्विवेकिनामात्मनो लिङ्गदेहस्य चाच्छेद्यत्वादिग्रहाद्युद्धादौ विनाशग्रहासंभवात् स्थूलदेहस्यावश्यविनाशित्वग्रहेण तन्नाशस्य दुःखानुत्पादकत्वात् आत्मन्यपि दुःखप्रतीतेर्भ्रमत्वनिश्चयात् उक्तप्रमितिविशेष्यत्वस्य शोच्यत्वस्य वस्तुतो भीष्मादावभावादशोच्यत्वम् । नच प्रतियोग्यप्रसिद्धिः व्यावहारिकभ्रमेण सिद्धेः । अविवेकिनां तु भ्रम एव प्रमात्वग्रहेण तथा व्यवहारः । त्वमिति मध्यमपुरुषलभ्यतया व्यर्थतां गतोऽतिपण्डितेऽर्थान्तरे संक्रमितवाच्य उक्तानौचित्यं द्योतयतीति बोध्यम् । पुनरर्थकश्चकारः, तेनावक्तव्यवचनरूपस्यानुचितस्याशोच्यशोकरूपानुचितानन्तरत्वेऽवगतेऽत्यन्तानुचितत्वं भवति व्यक्तम् । भूयस्त्वावगतेः विप्रकृष्टकाले द्वयोरवगतावपि तदनवगतेरनुचितत्वस्य नात्यन्तिकत्वव्यक्तिः तूष्णींबभूवहेत्यनेन भाषणनिवृत्तेरुक्तत्वाच्छोकस्य वर्तमानत्वात् । लङ्लटोर्व्यत्ययस्यावश्यकत्वात्तिङ्व्यत्ययेनेत्युक्तम् । शोचसीत्यभाषथा इत्यस्य वर्तमानत्वमित्यतीतत्वस्योपलक्षणं बोध्यम् । **कृतत्वादिति** । यद्यपि शोकस्य दुःखस्य तत्प्रयुक्तावस्थाविशेषस्य दुःखवत्तया प्रतीतिविशेषस्य वा विनैव यत्नं कारणोपनिपाते दुर्वारत्वान्न कृतत्वं तथापि तत्साध्यस्य प्रलापरोदनादेस्तथात्वात्तद्व्यपदेशः । शोकपदमेव वा तत्परम् । कृतत्वादित्यनन्तरं विलपनादेरिति शेषो वा तन्मूलत्वेन वसिष्ठादावनुमितः शोकः शोकेऽनौचित्यमपनुदतीति भावः । **इति नव्यामुह्यन्तीति** । इतीत्यनेनोक्ताकारप्रत्ययस्य परामर्शः । तेन दुःखोत्पादाद्वस्तुतो दुःखानिमित्तस्यापि शरीरादेः दुःखवत्तयां यज्ज्ञानं शोच्यभ्रमात्मकं शोकपदार्थस्तद्वन्तो न भवन्तीत्यर्थः । तत्प्रतिभासेत्यत्र तत्पदेनैते मृता इत्यादिवाक्यार्थपरिग्रहः । शोच्यभ्रमस्य शोच्यविशेष्यकदुःखवत्त्वज्ञानस्य वस्तुतो भ्रमरूपस्य शोकस्येत्यर्थः । तथातथानुकरणं यथायथा भ्रान्तानां भ्रान्तिप्रयुक्तानां शोकाद्यनुभावभूतविलापादीनामाचरणं तथैव वसिष्ठादीनामपि प्रारब्धवशात्तेषां करणं न कर्तव्यबुद्ध्येत्यर्थः । तथा च तस्य शोकमूलकत्वाभावेन शोकानुमापकतया वसिष्ठादिमहाभागसंबन्धिजातीयत्वाभावादनौचित्यं दुर्वारमेव शोकस्येति भावः ॥ ११ ॥ तुशब्दः प्रकृतभेदवाची भेदप्रयोजकं वैलक्षण्यं सूचयतीत्यर्थः । तुशब्देन सूचितं देहाद्वैलक्षण्यमनित्यभिन्नत्वमेव साधयितुं विवक्षितम्, तद्धेतोरेव प्रदर्शनात्, अतएवोपसंहारे वैलक्षण्यं सिद्धमित्युक्तं संगच्छते । यद्यपि कदाचिदपि नासमिति भेत्येतावतैवासत्त्वव्यवच्छेदो लभ्यते तथापि इतःपूर्वं सत्त्वासत्त्वयोरुभयोः सत्त्वे कदाचिदित्यनेन सत्वकालपरिग्रहे नासत्त्वं व्यवच्छिन्नं प्रतीयत इत्येवकारः, तथाचासत्त्वस्य निषेधातिरिक्तं सत्त्वं व्यवच्छिन्नं कदाचिदपीत्यस्य सकलपूर्वकालपरतां व्यवस्थापयतीति भावः ॥ १२ ॥ **उपपत्तेरिति** । अत्रैव प्रतीतेरित्यस्यान्वयः । यथा गौरो देवदत्तो जातो मृत इति प्रतीतेर्देहस्य जन्मविनाशौ तथा विज्ञो देवदत्तो जातो मृत इति प्रतीतेरात्मनस्तौ । नचात्मांशे भ्रमः प्रतीतेस्तुल्यत्वेन देहेऽपि हि तथात्वं स्यात्, न स्यादुभयत्रैव न स्यादिति देहजन्मविनाशाभ्यां सहात्मनोऽपि तत्सिद्धेरिति भावः । **प्रमाणमस्तीति** । नच सुखदुःखाद्यसंकर एव मानमिति वाच्यम् । वैषयिकसुखादेरन्तःकरणधर्मत्वेन तदुपाधिकस्यैवात्मनि प्रतीतेस्तस्य प्रतिशरीरं भेदस्याभ्युपगमादित्यस्य तत्रतत्रोप-

पादितत्वादिति भावः। आत्मन एकत्वे पूर्वश्लोकोक्तं वयमितिबहुवचनमसंगतमत आह—**सर्वे इत्यादि**। तत्त्वज्ञानपूर्वप्रतीतपृथग्जनदेहमेदस्य बाधितानुवृत्त्येत्यर्थः। यद्वा गतासूनगतासूंश्चेत्यत्र पूर्वमुक्तो यो देहमेदस्तस्य तदवच्छिन्न आत्मन्युत्तरवाक्यप्रतिपादनकालेऽनुसन्धानेनेत्यर्थः। अथवा पूर्वदेहस्य मत्स्यकूर्मादिदेहस्य यो मेदस्तस्य तदवच्छिन्नेऽनुवृत्त्येत्यर्थः। **देहे** देहावच्छेदेनेत्यर्थः। **परस्परविरुद्धं** एककालायवच्छेदेनैकत्रावर्तमानम्। **नतु तद्भेदेन** नतूक्तावस्थारूपवैलक्षण्येन आत्मभेदः। विरुद्धधर्मस्य स्वाभाविकस्यैवाश्रयभेदकत्वात् उक्तधर्मस्य शरीरे वास्तविकत्वेन शरीरभेदकत्वेऽप्यात्मन्यौपाधिकत्वेन तद्भेदकत्वासंभवात् आत्मनि कुतो न वास्तविकत्वमित्यत आह—**य एवाहमित्यादि**। विरुद्धोक्तधर्मपरिमाणादेरध्यासात्प्रत्यक्षतश्च शरीरस्य भेदे सिद्धे आत्मनोऽभावे भेदे वा बाल्य इत्यादिप्रतीतेर्व्यावहारिकसकलपरीक्षकसाधारण्या अनुपपत्तेः। शरीरातिरिक्तस्यैकस्यात्मनः सिद्धिरिति भावः। **अन्यनिष्ठसंस्कारस्येति**। नच संस्कारसंक्रमादुपपत्तिः जन्यजनकयोरप्युपादानोपादेयभाव एव तथाभ्युपगमेनातिप्रसंगासंभवात्प्रत्यभिज्ञानस्य साजात्यविषयकत्वेनाप्युपपत्तेरिति वाच्यम्। संस्कारसंक्रमस्य संस्कारस्यामूर्तत्वेन यथाश्रुतस्यासंभवात् सजातीयोत्पत्तिरूपस्यैव वाच्यतयानन्ताप्रामाणिकसंस्कारकल्पनागौरवात्। आत्मैक्येऽनुपपत्तेरभावात् तस्य जातमात्रप्रवृत्त्यादितोऽवश्याभ्युपेयताया वक्ष्यमाणत्वाच्च गौरवस्यादोषताया वक्तुमशक्यत्वात्। एवं हस्तायवच्छेदेनानुभूतस्य सुखादेः संस्कारस्यापि तदवच्छेदेनैव शरीरे स्वीकरणीयतयावच्छेदकहस्तापगमे संस्कारस्यापगमो वाच्यः, शाखापगमे तदवच्छिन्नसंयोगापगमवत्। नचावच्छेदकवृत्तिगुणसजातीयगुणस्यैव तथात्वमिति वाच्यम्। तस्य हस्तवृत्तिसंस्कारसजातीयत्वात् हस्तशरीरयोरुपादानोपादेयभावेनावयविवृत्तिविशेषगुणजातीयगुणस्यावश्यमवयवे स्वीकर्तव्यत्वात्, अतिरिक्तावयविपक्षेऽपि प्रत्युत प्रत्यक्षानुपपादकगुणस्यावयविन्येव स्वीकर्तुमनर्हत्वात्, अवयविनोऽनतिरिक्तत्वे सुतरां तथात्वात्। एवंच निमित्तस्य संस्कारस्याभावेनोत्तरशरीरे पूर्वशरीरोपादानके संस्कारस्य नोत्पत्तिसंभवः। हस्तनाशेन शरीरनाशे संस्कारनाशे चावस्थिततच्छरीरावयवैः शरीरान्तरारम्भ इति पक्षे च नोत्तरशरीरे संस्कारेणोत्पत्तव्यं तत्पूर्वं संस्कारस्याभावात्। नच शरीरनाशक्षणे शरीरान्तरोत्पत्तिसंभवः पूर्वशरीरस्य प्रतिबन्धकत्वात्। अवच्छेदकनाशेन तत्पूर्वमेव संस्कारस्य नाशाच्च। आत्मनिष्ठत्वपक्षे च स्थायिनि तत्र संस्कारस्य कल्पनात्तत्र हस्तायवच्छेद्यत्वस्य तत्कारणसुखानुभवोपाध्यन्तःकरणशरीरादिनिमित्तकत्वाभ्युपगमात्, उपादानोपादेयभावनिमित्तकत्वास्वीकारात्तादृशावच्छेदकवृत्तिजातीयगुणस्यैवावच्छेदकनाशेन नाशाभ्युपगमात्, तत्रापि समवायिनाशेनैव वा नाशात्, हस्तादिनाशेऽपि न संस्कारनाशः। हस्तावयवतदवयवपरम्परायां संस्कारमभ्युपगम्य तत्परम्पराप्रविष्टस्य कस्यचित्प्रवेशं च खण्डशरीरे कथंचिदभ्युपगम्य तत्परम्परया तदभ्युपगमे तच्छरीरप्रविष्टभूतैर्विलक्षणशरीरान्तरारम्भेऽपि संस्कारानुवृत्तिप्रसंगं इत्यादिकमपि बोध्यम्। **अत्यन्तविलक्षणदेहेति**। शरीरत्वव्याप्यतद्वृत्तिजातिशून्यदेहेत्यर्थः। सा च जातिश्चैत्रत्वादिः प्रायेणाभिव्यक्तैकप्रारब्धत्वाश्रयारब्धयावच्छरीरवृत्तिः न तादृशे शरीरान्तरेऽस्ति, द्रव्यत्वादिर्न शरीरत्वव्याप्या, स्वस्यापि स्वव्याप्यत्वे शरीरत्ववारणायान्यथान्यतरत्वद्वित्वादिवारणाय जातीत्युपात्तम्। **ब्रूयादित्यनेन** यावत्प्रत्यभिज्ञमित्यादिन्यायस्य बाधकाविषयविषयकत्वेन द्रव्यभेदनियतस्य परिमाणभेदस्य बाधकस्य सत्त्वेन प्रत्यभिज्ञाया नैक्यसाधकत्वमिति वस्तुस्थितिरिति सूचितम्। **एकभोक्तृका इति**। नचान्तःकरणभेदस्याभ्युपगमात् भोक्तृत्वस्यान्तःकरणावच्छिन्नस्यैव भोगसांकर्यवारणाय वक्तव्यतया भेद एवेति साध्याप्रसिद्धिरप्रयोजकत्वं चेति वाच्यम्। स्वभोक्तृतादात्म्यापन्नभोक्तृका इत्यर्थस्य विवक्षितत्वात् उपाधिपुरस्कारेण भेदेऽप्युक्तयुक्त्याऽभेदस्यापि सत्त्वादुक्तहेतोर्लाघवतर्कानुगृहीतत्वेनाप्रयोजकत्वविरहाच्च। एवमपि सर्वप्रमाणापेक्षया साधितप्राबल्यत्वेनैक्ये मानतया श्रुतिमुपन्यस्यति—**श्रुतिरपीत्यादिना** ॥ १३ ॥ आगमापायिन इत्यस्य प्रथमान्तत्वभ्रमं मात्रास्पर्शा इत्येतद्विशेषणत्वापादकं निरसितुमुत्पत्तिविनाशवत इति षष्ठ्यन्तं विवरणपदं तस्य प्रकृतोपयोगिविशेषावधारणमन्तःकरणस्यैवेति शीतोष्णादेर्विषयेन्द्रियसंबन्धाजन्यत्वेन तद्व्यापारत्वासंभवाच्छीतोष्णपदं तदुपलब्धिपरम्। **अभेदादिति**। तथासति धर्मात्मना परिणामेन श्रुत्यादिसिद्धस्य कौटस्थ्यस्य हान्यापत्तेरिति भावः। **संबन्धान्तरानुपपत्तेरिति**। भेदस्याभेदस्य च क्लृप्तत्वात्समानाधिकरणाभ्यां ताभ्यामेव सामानाधिकरण्यप्रत्ययस्य व्याप्तत्वादत्यन्ते भेदेऽभेदे च तदभावात्। तेन भेदसमानाधिकरणाभेदेनैव गुणक्रियादिविशिष्टबुद्ध्युपपत्तौ समवायस्याक्लृप्तस्य तस्य संसर्गत्वस्य च कल्पने मानाभावात् समवायनिराकरणस्यात्र सविस्तरवक्ष्यमाणत्वात् स्वरूपस्यापि संबन्धतायाः संबन्धत्वस्य संबन्धिभेदव्याप्तत्वादिभिर्निराकरिष्यमाणत्वात्। अन्यस्य चासंभावितत्वादिति भावः। साक्षस्येति क्वचित्। साक्ष्यस्येति क्वचित्पाठः। अक्षेणेन्द्रियेण सहितः ग्राह्यग्राहकभावलक्षणेन संबन्धेनेन्द्रियविशिष्टो विषयः साक्षः सचास्यास्तीति साक्षी। लोके विवादविषयार्थस्य प्रत्यक्षावभासवान् तथाविधार्थस्याभोक्ता चाक्षगम्यस्य तदर्थस्यासंसर्गी च साक्षीत्युच्यत इति प्रकृतेऽप्यपरोक्षावभासस्वभावः परमात्मा भास्यार्थासंसर्गी तत्फलस्याभोक्तैव साक्षिरूपो मन्तव्य इति साक्ष्यस्य साक्षस्य वाऽपरोक्षतया तेन भास्यस्य ज्ञानसुखादेः कथं वस्तुतस्तद्धर्मतासंभवः? तत्स्वरूपविरोधादिति भावः। विक्रियां ऋते विना दुःखी न भवति। दुःखपदं ज्ञानेच्छादिपरसंप्रतिपन्नाखिलात्मधर्मोपलक्षकसर्वदानुपलम्भात्तद्व्यतिरेकोपलम्भाच्च तेषामस्वाभाविकतयागन्तुकतदात्मकधर्मसंसर्गलक्षणविक्रियाया दुःखाद्युपगमे दुर्वारत्वात् विक्रियां विना दुःखी न भवतीत्यर्थः। विकारिणः का साक्षिता न

कापि नोपपन्नेत्यर्थः। लोके साक्षिणः वादिप्रतिवादिभ्यामिव जयपराजययोः सुखदुःखादिलक्षणविकाराराहित्यस्यैव दृष्टत्वात्प्रकृतेऽपि तथात्वस्यैव युक्तत्वाद्धियो बुद्धितत्त्वस्यान्तःकरणस्य विक्रियाणां सुखदुःखादितत्प्रयोजकज्ञानादिविक्रियाणां साक्षी अहमतोऽविक्रिय इत्यन्वयः। **सर्वव्यवस्थोपपत्तेरिति**। एकस्याविक्रियस्यात्मनोऽविद्योपधानाद्भोक्तृत्वेऽपि चैत्र इदानीं सुखी मैत्रो दुःखी चैत्रो घटं जानाति न मैत्र इत्यादिप्रतीयमानायाः सुखदुःखादेः प्रतिनियतसत्ताया उपपत्तेः तत्तदन्तःकरणावच्छेदेनैव भोक्तृत्वाभ्युपगमाद्गगनस्यैकत्वेऽपि कर्णशष्कुल्यवच्छेदेनैव शब्दग्राहकत्वाभ्युपगमेनान्यावच्छेदेन तदनुपलम्भवद् यद्यदन्तःकरणस्य यदा सुखाद्यात्मना परिणामस्तत्तदवच्छेदेनैव साक्षिणा ग्रहणात्तेषां च चैत्रादिशरीरवृत्तितया तत्रैव नियतप्रतीत्युपपत्तेः प्रत्युतात्मभेदवाद एव। तस्य विभुत्वाभ्युपगमेन सर्वेषामात्मनां सर्वेन्द्रियशरीरादिसंबन्धसाम्यात् व्यवस्थाया दुर्लभत्वम् तदीयादृष्टोपात्तत्वकृतवैलक्षण्यस्यादृष्टसामग्रीसाधारण्येनादृष्टस्यैव तदीयतामात्रत्वानुपपत्त्या दुर्लभत्वात् तज्ज्ञानेच्छाप्रयत्नसंपादितत्वेनादृष्टसामग्रीवैलक्षण्यस्यापि ज्ञानादिसामग्रीसाधारण्येन ज्ञानादेरेव तदीयतामात्रत्वानुपपत्त्या दुर्लभत्वात्। अस्माकं तु विषयानुसारेण प्रतीत्यभावेन प्रतीत्यनुसारे विषयस्य कल्पनीयतया वास्तविकत्वाभावेन तथा व्यवस्थितायां प्रतीतावनाद्यविद्यासंस्कारतस्तथैव सर्वस्य कल्पनादविद्याया अघटितघटनापटीयस्त्वेनानुपपत्तेः कालपनिकत्वपक्षभूषणत्वेनादोषत्वादित्यन्यत्र विस्तरः। **सद्रूपेण स्फुरणरूपेण चेति**। सत्ताज्ञानयोरात्मना सह कल्पितभेदेन धर्मिधर्मिभावव्यवहारोपपत्तौ धर्म्यतिरिक्तयोस्तयोः कल्पने स्वरूपकल्पनाया धर्मत्वकल्पनायाः संबन्धकल्पनायाश्च गुरुतरायाः प्रसंगः स्यादिति सत्त्वानुगमेन ज्ञानानुगमेन च चैत्रोऽस्ति जानाति मैत्रोऽस्ति जानाति इत्यनुगताकारप्रतीतेरेकेन सत्तास्फुरणरूपेणात्मनैवोपपाद्यतया तद्भेदस्यायुक्तत्वमिति भावः। **अभ्यर्हितत्वादिति**। निराश्रयस्य निमित्तस्य स्वयमप्रतिष्ठत्वेन कार्यजनकत्वासंभवात् तेनाप्यपेक्षणीयत्वेन प्रधानत्वादित्यर्थः। प्रथमं तस्यैवोपस्थितत्वादिति शेषः। **समवायिकारणान्तरानुपस्थिताविति**। आत्मनः कूटस्थनित्यतया श्रुतिबोधितस्य समवायिकारणत्वासंभवादिति भावः। अनित्या इत्यस्य यथाश्रुतार्थस्य सर्वसंप्रतिपन्नतया उपदेशानर्हत्वात् प्रकृतानुपयोगित्वाच्च विवरणमनियतरूपा इति। दर्शनादित्यनन्तरं द्वारस्यानियतरूपत्वे द्वारिणः सुतरां तथात्वादिति शेषः। सामर्थ्याद्वा लभ्यः। तेन मात्रास्पर्शस्यानियतत्वे प्रतिपाद्ये शीतोष्णादेस्तत्प्रतिपादनमसङ्गतमिति निरस्तम्। **उपलक्षणार्थमिति**। सुखदुःखकारणत्वाद्ये सुखदुःखरूपत्वेनोपचरिता आध्यात्मिकादयः पदार्थास्तेषां सर्वेषां बोधनार्थं न स्वरूपमात्रस्यैव न्यूनताप्रसङ्गात्। एतेन शीतोष्णपदाभ्यामेव दुःखत्रयबोधे सुखदुःखपदं व्यर्थमिति निरस्तम्। तयोरनुपचरितसुखदुःखबोधकत्वात् सुखं दुःखं चेति कार्यकारणयोरभेदोपचारात्॥ १४॥ **तस्यैव कर्तृत्वेनेति**। सुखादिकंप्रति कर्तुः कारणत्वे प्रत्यासत्तिलाघवात्सुखाद्याश्रयस्यैव कर्तृत्वस्य वक्तव्यत्वादुक्तम्। एवमकर्तुर्भोक्तृत्वेऽतिप्रसंगान्नियमाय संबन्धविशेषस्य परम्परारूपस्य कल्पने गौरवात्कर्तुरेव भोक्तृत्वस्य वक्तव्यत्वाद्भोक्तृत्वेन चेत्युक्तम्। **नाममात्र इति**। अन्तःकरणं बुद्धिः महत्तत्त्वमित्यादिनाम त्वया मया च जीव आत्मेत्यादिनाम तस्योच्यत इति नामभेद एव विवादपर्यवसानं न पदार्थभेद इत्यर्थः। **तदभ्युपगम इति**। भोक्तृभासकातिरिक्तस्य भोग्यसुखदुःखाद्याश्रयस्याभ्युपगम इत्यर्थः। **मुक्तत्वादिति**। अन्तःकरणे स्वसमानसत्ताकस्यैव दुःखादेरभ्युपगमेन तत्स्वभावत्वात्तस्य तेन भावस्य प्रच्युतेरसंभवान्मोक्षदशायां वेदान्तनयेऽन्तःकरणस्यासत्त्वाच्च तस्य मुक्तत्वाङ्गीकारासंभवात् आत्मनश्च दुःखादिरूपबन्धस्य स्वाभाविकस्यानभ्युपगमेन मुक्तत्वस्योपपादितत्वात् उभयोर्वैयधिकरण्यापत्तिरुपपन्ना तन्मत इति। तस्माद्भोक्तुश्चेतनस्य दुःखाद्याश्रयत्वमभ्युपगन्तव्यम्, तथासति न वैयधिकरण्यापत्तिः दुःखादेः कारणजन्यस्यैव स्वीकारेण कारणनिवृत्त्याऽकल्पितस्यापि तस्य निवृत्तेः संभवात् तस्य मोक्षोपपत्तेरिति भावः। **स्वं स्वप्रकाशत्वेन स्वत एव सिद्धमिति**। उपक्रमस्थो यच्छब्दः प्रसिद्धं वस्त्वाह, अत्र च प्रकृतोपयोगितया प्रसिद्धिः स्वप्रकाशत्वेन कथिता। तेन दुःखाद्याश्रयस्यान्तःकरणस्य जडस्य चेतनात्स्वप्रकाशाद्भेदः चेतनस्य स्वप्रकाशतया स्वत एव सिद्धत्वेन परतो दुःखाद्याश्रयस्य चेतनत्वसाधकहेतोस्तत्सिद्ध्यभावात् तथाच प्रागुक्तस्य दुःखाद्याश्रये चेतनत्वस्य निरासः। **पूर्णत्वेन पुरिशयानमिति**। यो ह्यसंपन्नाभिलषितार्थतयाऽपूर्णो न सोऽभिलषितार्थसंपादनव्यग्रतया शेते, अयं तु पूर्णत्वादव्यग्रतया शेते पुरि देह इति भावः। **चिदाभासद्वारेत्यादि**। जडाया धियो विषयप्रतिभासासंभवेन तन्मूलाया इच्छाद्वेषप्रवृत्तिनिवृत्तिधर्माधर्मसुखदुःखाद्यात्मना परिणतिलक्षणायाः प्रवृत्तेरसंभवात् तदर्थं तस्यां चिदाभासश्चित्प्रतिबिम्बो वक्तव्यः तस्य च तया तादात्म्याध्यासश्चित्तदाभासयोरपि तादात्म्याध्यासो धीचितोरपि च जलकम्पेन सूर्यप्रतिबिम्बकम्पप्रतीतेस्तयोरिव धियस्तत्तत्परिणतौ सत्यां चिदाभासस्यापि तद्वत्तया प्रतीतेस्तयोस्तादात्म्याध्यासस्याङ्गीकरणीयत्वात् प्रतिबिम्बकम्पप्रतीतौ सूर्यः कम्पत इति प्रतीतेस्तयोरिव चित्तदाभासयोरपि तादात्म्याङ्गीकारात् तदभाव आभासस्यापि भासकत्वासंभवाच्च। एवंच धीतादात्म्याध्यासे चितः स्वतादात्म्याध्यासद्वारा चिदाभासस्य द्वारत्वमुक्तमुपपन्नं चितो धीव्यापारफलालोचिकाया वस्तुतस्तद्व्यापारफलानुपभोक्तृत्वेन साक्षिभूतायाः स्वाभासद्वारा प्रयत्नलक्षणायामशेषपरिणामलक्षणायां वा प्रवृत्तौ हेतुत्वेन प्रवर्तकत्वं च साक्षित्वपर्यवसन्नमुक्तमुपपन्नम्। इदं चाभासजीववादे परिच्छेदवादे चान्तःकरणस्य चितेर्यस्तादात्म्यलक्षण आध्यासिकसंबन्धस्तत्प्रयोजको योऽध्यासस्तेन जडस्यान्तःकरणस्य संपादितो यश्चिदाभासः कल्पितचिद्रूपत्वं विषया-

वभासप्रयोजकं तत्तत्परिणामलक्षणप्रवृत्तिनिमित्तं तत्र चितः प्रयोजकत्वेन चिदाभासद्वारा धीतादात्म्याध्यासस्य प्रयोजकत्वं बोध्यम् । **एतेन बन्धप्रसक्तिर्दर्शितेति** । तथा च धीनिष्ठस्य बन्धस्याज्ञानेन धीतादात्म्यापन्नाभासतादात्म्यद्वारा सदामुक्ते परमात्मनि साक्षिणि प्रसञ्जितत्वेन बन्धमोक्षयोर्न वैयधिकरण्यापत्तिरिति भावः । **यतो मानानीत्यादि** । यतः येन साक्षिणा मानानि अभिव्यक्तविषयसंबन्धरूपस्य प्रतिबिम्बनद्वारा विषयाकारतापन्नस्य वा स्वप्रकाशचिद्रूपस्य व्यावहारिकप्रमालक्षणफलस्यासाधारणनिमित्तानि विषयाकारधीवृत्तिरूपाणि **सिद्ध्यन्ति** गृह्यन्ते नतु प्रमाणेन स गृह्यते । **जाग्रदादित्रयं** जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयं तत्र ज्ञेया विषयाश्च भावाभावविभागः सत्त्वासत्त्वविभागश्च प्रमाणवृत्तिसहकारेण साक्षिणः सत्तया वस्तुग्राहकत्वात् अविद्यावृत्तिसहकारेणाज्ञाततवादिनाऽसत्तया ग्राहकत्वात् इदमिदानीं सदिदं नेदमिदानीं असदिदं नेति विभागः सिद्ध्यति स अध्यासवशात्तांस्तान्विषयांस्तदाकारवृत्तीस्तत्प्रयुक्तेच्छाप्रयत्नादींस्तत्प्रयुक्तसुखदुःखादींश्च गृह्णन् प्रमातृकर्तृभोक्तृरूपतामवास्तविकीं प्रतिपन्नो बद्ध इव अहं ब्रह्मास्मीति श्रुत्या निर्मृष्टनिखिलोपाधिसंबन्धशुद्धब्रह्मरूपतया बोध्यते न कश्चिद्वास्तविकप्रमात्रादिर्नाप्रमात्रादिरित्यर्थः, एवंचास्य पद्यस्य बन्धप्रसक्तौ प्रमाणत्वं सिद्धम् । पाकस्थले सर्वविशेषगुणनिवृत्तधर्मिनिवृत्तिमन्तरेण दर्शनादाह—**प्रागभावासहवृत्तेरिति** । तत्र पाकजप्रागभावस्य सत्त्वेनोक्तनिवृत्तेस्तत्सहवृत्तित्वान्न व्यभिचारः । **स्वाभाविक इति** । अथ यद्यपि न्यायादिदर्शनेऽस्ति स्वभाववादो निराकृतस्तथापि स्वभावः स्वस्यासाधारणो धर्मः शरीरात्माभेदग्रहरूपं मिथ्याज्ञानं तत्प्रयुक्तो बन्ध इत्यभ्युपेयते स्वाभाविक एव बन्ध इति न स्वाभाविक इत्यसंगतमिति चेन्न । स्वभाव एव स्वाभाविकः स्वभावश्च स्वात्मको भावो वा अनागन्तुकः स्वधर्मो वा स्वकारणजन्यः स्वनाशनाश्यो वा भावः । नचैवंविधो बन्ध आत्मन इति हि न स्वाभाविकः । अथ तदेतन्न्यायादिदर्शनसाधारणम् । बुद्ध्याद्युपाधिकृत इत्यपि बुद्धिपदस्य मिथ्याज्ञानपरत्वान्मनःपरत्वाद्वा उपाधिपदस्य जातीतरधर्मपरत्वाच्च न्यायादिदर्शने नेतुं शक्यम् । तथा सति हन्ततर्हिस्वाद्युत्तरग्रन्थस्यासंगतिरितिचेदुच्यते । वक्ष्यमाणयुक्तिश्रुत्यादिभिः आत्मनः स्वप्रकाशानन्दरूपत्वे व्यवस्थापिते सति बन्धस्य निरुक्तौपाधिकरूपस्यैव वाच्यत्वेन नासंगतिरिति । **कर्तृकर्मविरोधादिति** । नच कर्तृकर्मणोर्विरोधस्तादात्म्येन, सचैकक्रियायां कर्तृत्वकर्मत्वयोरसामानाधिकरण्यं स्वस्वं गच्छति स्वंस्वमारोहतीत्यादिप्रत्ययविरहात्सिद्धमेवास्ति, न तत्र सप्तमी प्रकृत्यर्थस्य प्रयोजकत्वमित्यसंगतिरिति वाच्यम् । विरुद्धयोस्तयोरेकत्र प्रसंगः स्यादित्यत्र तात्पर्यात् । ननु अनेनैवानुमानेन कथं न स्वव्यतिरिक्तभासकसाधकानुमानस्य प्रतिरोध इत्यत आह—**भासकत्वं चेति** । **अन्यथेति** । उक्तानुमानघटकभासकपदार्थस्य भानकरणभानान्यतररूपतया भानापेक्षाप्रतिक्षेप इत्यर्थः । **असिद्धो हेतुरिति** । उभयमत एव दुःखिनो भानरूपत्वानभ्युपगमादिति भावः । दुःखी स्वव्यतिरिक्तभास्य इत्यनुमाने बाधमाशङ्कते—**बुद्धिवृत्त्यतिरिक्तेति** । विभुत्वे हेतुः सर्वदेशानुस्यूतत्वम् । नित्यत्वे च सर्वकालानुस्यूतत्वम् । अयमाशयः—यो यो न भानेनानुस्यूतः संबद्धो देशः कालो वा स स न भवेदेव प्रमाणाभावात् । अतः सर्वस्यैव भानसंबन्धित्वं वाच्यम् । तत्र भानस्य बुद्धिवृत्तिरूपत्वे संबन्धस्य दुर्वचत्वात् संबन्धिनोः संबन्धतया क्लृप्ते संयोगादौ तयोरेकदेशकालत्वनियमात् । परोक्षस्थले वृत्तेस्तदसंभवात् परम्पराविशेषस्य निर्वक्तुमशक्यत्वाद्विनिगमकाभावेनानेकत्वापत्तेः अतिप्रसक्तेश्च आध्यासिकतादात्म्यमेव भानस्यानुगतं अनुगतव्यवहारे घटो भाति पटो भाति तदानीं भातीत्यादिरूपेण प्रयोजकमभ्युपेयमिति विभुत्वं नित्यत्वं च सिद्ध्यतीति ज्ञानस्यानेकत्वे विभुत्वं नित्यत्वं च न स्यादित्येकत्वं वाच्यम् । तत्र हेतुमाह—**भेदकधर्मशून्यतयेति** । जानामीत्यंशः सर्वत्राविशिष्टः प्रतीयते विशेषश्च घटं पटमित्याद्यंशाभिलप्यविलक्षणघटपटादिसंबन्ध एवेत्येतावतैव प्रतीतिवैलक्षण्योपपत्तौ ज्ञानभेदकल्पने मानाभावः । नच जानामिजानामीत्यनुगताकारता गौर्गौरित्यनुगताकारतावत् जात्यैवोपपादनीयेति वाच्यम् । अनन्यथासिद्धस्वारसिकसार्वजनीनध्वंसोत्पादादिप्रत्ययानुरोधाद्वादिव्यक्तिभेदे व्यक्त्यानुगताकारत्वस्य दुरुपपादतया जातिविषयत्वेनागत्या तस्योपपाद्यत्वात् । अनुगतांशस्यायमयमित्यादितो व्यक्तिसामानाधिकरण्येन घटंपटमित्यादितो विषयसाक्षात्संबन्धित्वेन च प्रतीयमानस्यानुगतजातिनिबन्धनत्वस्यानुचितत्वात् । ज्ञानध्वंसोत्पादादिप्रत्ययस्यास्वारसिकत्वादभिव्यक्तविषयसंबन्धवृत्त्यादिनिष्ठतद्विषयकत्वेनान्यथासिद्धतया व्यक्तिभेदस्याप्रामाणिकत्वेनानुगतेन व्यक्तिस्वरूपेणानुगताकारतोपपादनस्योचितत्वात् । नच घटादिस्थलेऽपि घटादेरभिव्यक्तिरेवास्तु तथा च घटादिरप्येक एव स्यात्, ध्वंसोत्पादादिप्रतीतेः कपालतत्संबन्धाभिव्यक्त्यादिविषयत्वादिति वाच्यम् । उक्तयुक्त्या कपालादेरपि तथात्वापातात् कपालादिध्वंसोत्पादविषयत्वासंभवात् । पृथक्स्थितस्य कपालद्वयस्य यादृशेन संयोगेन घटोत्पत्तिव्यवहारस्तादृशसंयोगे विद्यमानेऽपि कपालस्यैव कतिपयभागापगमे घटनाशव्यवहारदर्शनात् संबन्धनाशादिविषयत्वासंभवात् । नच कपालावयवापगमात् कपालस्याभावेन संबन्धनाशस्तत्रास्त्येवेति वाच्यम् । उक्तयुक्त्या कपालस्याविनाशात् । अन्यथा घटस्यापि विनाशप्रसंगात् । अभिव्यक्तेरतिरिक्ताया नाशोत्पादादिकल्पने घटसमसंख्याकाभिव्यक्तेः घटध्वंसप्रागभावसमसंख्याकाभिव्यक्तिध्वंसप्रागभावयोर्घटस्याधिकस्य कल्पनेन गौरवात्, घटत्वापेक्षया घटाभिव्यक्तित्वस्य कार्यतावच्छेदकत्वे गौरवाच्च । अभिव्यक्तेरुत्पत्तिस्थाने तिरोभावस्य विनाशस्थाने च कल्पने तयोर्घटानतिरिक्तत्वे उत्पत्तिविनाशप्रतीत्योरविशेषापत्तेः सर्वदापत्तेश्च घटातिरिक्तत्वे नियतत्वे च तयोः सर्वदैव घटादेरुत्पत्तिविनाशप्रत्ययापत्तेः अनित्यत्वे च पूर्वोपदर्शितगौरव-

द्वैगुण्यापत्तेः तयोरप्याविर्भावतिरोभावयोरेव कल्पने घटातिरिक्तत्वानतिरिक्तत्ववत् आविर्भावतिरोभावातिरिक्तत्वानतिरिक्तत्वयोर्दोषात् अतिरिक्ततायां घटतत्प्रागभावध्वंसानां त्रयाणां घटाविर्भावतिरोभावतदाविर्भावतिरोभावानां च असंख्यानां प्रसङ्गात्। नच तवापि घटप्रागभावतद्ध्वंसतत्प्रागभावादीनां घटध्वंसतत्प्रागभावतद्ध्वंसादीनां चानन्तानां प्रसंग इति वाच्यम्। घटप्रागभावध्वंसस्य घटात्मकत्वाद्घटध्वंसप्रागभावस्यापि च घटात्मकत्वात् घटो भविष्यति अस्ति घटः घटो नश्यतीति प्रत्ययत्रयस्यैव स्वारसिकत्वात्। नच घटस्याविर्भावतिरोभावौ तिरोभावस्याविर्भाव आविर्भावस्य च तिरोभाव एतावन्मात्रं कल्प्यमिति वाच्यम्। तव मते घटस्य सनातनत्वेनाविर्भावतिरोभावस्य घटात्मकत्वे घटाविर्भावस्य सदैव तिरोहितत्वस्य घटतिरोभावस्य सदैवाविर्भूतत्वस्य च प्रसंगात्, घटाविर्भावतिरोभावस्यातिरिक्तस्य नित्यत्वे सदैव घटस्यानाविर्भूतत्वप्रसंगात्। अनित्यत्वे चाविर्भावतिरोभावासंख्यत्वापत्तेरनुद्धारात्। नचोत्पत्तावप्ययं प्रसङ्गः। घट उत्पद्यत इति प्रतीतौ स्वरूपेण पूर्वोत्तरकालयोरसतो मध्ये सतो घटस्य सामग्र्यव्यवहितोत्तरक्षणेन यः स्वरूपसंबन्धस्तदुभयात्मकस्तस्यैव संबन्धत्वेन विषयत्वात् घटोत्पत्तेरुत्पत्तेरतिरिक्तस्याभावेऽपि क्षत्यभावाद्घटोत्पत्तेरेवातिरिक्तस्याभावात् पूर्वोत्तरकालयोर्घटस्य प्रागभावध्वंसयोरतिरिक्तयोर्घटविरोधिनोः सत्त्वेन घटप्रतीत्यापत्तेर्विषयस्यैवाभावेनाभावात्। एवं घटस्य स्वारसिकसार्वजनीननीलपीतादिपरिमाणादीनां विरुद्धानां प्रत्ययादपि घटस्य भेदः। नह्येवमेकज्ञानस्य नीलपीतादिसंसर्गो विरुद्धः समूहालम्बने त्वयापि तदनङ्गीकारात्। नच यावतां नीलादीनां मधुरादीनां कोमलत्वादिप्रभृतीनामण्वादीनामेकजातीयत्वं तावतां नित्यत्वं व्यापकत्वं चाभ्युपेयं, लाघवात्सामग्रीविशेषसंबन्धाद्व्यापक एकस्मिन्घटे व्यापक एकस्मिन्नाकाशे शब्दविशेषा इवावच्छेदकविशेषादेव नीलादीनां संबन्धविशेषाविर्भाव इति कुतो विरुद्धधर्मसंसर्गाद्भेद इति वाच्यम्। नीलाद्युत्पादविनाशस्य घटोत्पादविनाशेनैव व्याख्यातत्वात् घटानित्यत्वेऽपि नीलादिनित्यतायाः प्रकृतानुपयुक्तत्वात् पाकस्थले घटस्य विद्यमानत्वेन जातिवदप्रत्यक्षताया अन्यत्रैवाश्रयाभावेन वक्तुमशक्यत्वात् आविर्भावतिरोभावे गौरवस्योक्तत्वात् पाकस्य नीलपीतादिप्रत्यक्षंप्रति प्रतिबन्धकत्वे कारणत्वे च नीलपीतादिप्रत्यक्षत्वापेक्षया लाघवेन नीलत्वादेः कार्यतावच्छेदकत्वस्योचितत्वात् कार्यकारणभावलाघवस्य वस्तुव्यवस्थितेः कार्यकारणभावमूलकत्वेनाभ्यर्हिततया नीलादिध्वंसप्रागभावादिकल्पनागौरवस्य फलमुखगौरवत्वेनादोषत्वात्। अपाकजस्थले सर्वेषां शुक्लादीनां जलाद्यभिव्यङ्ग्यानां एकत्वमभ्युपेयसेचेत् अस्तु का नो हानिः जलादीनां रूपादिभेदात् भेदस्याप्रत्ययात् उत्पादविनाशेनैव भेदस्यानुभविकत्वात्। नच ज्ञानेऽपि प्रत्यक्षत्वानुमितित्वशाब्दत्वादयो भेदकाः सन्त्येव धर्मा इति वाच्यम्। विषयसंबन्धाभिव्यञ्जिकानामावरणाभिभाविकानां प्रतिबिम्बोपाधीनां वा वृत्तीनामेव तेषां स्वाभाविकधर्मत्वात् विषयावच्छिन्नचैतन्यरूपेऽभिव्यक्तेऽनावृते प्रतिबिम्बिते वा विषयज्ञानत्वेन व्यवहार्ये वृत्त्यवच्छिन्नचैतन्याभेदरूपस्य प्रत्यक्षत्वस्य वन्ह्याकारानुमित्यात्मकवृत्त्यवच्छिन्नेन पर्वताकारप्रत्यक्षवृत्त्यवच्छिन्नस्यागृहीतभेदत्वरूपस्य विशिष्टज्ञाननिर्वाह्यप्रत्येकज्ञानानिर्वाह्यकार्यप्रयोजकस्यानुमितित्वस्यैवं शाब्दत्वादेरस्वाभाविकधर्मतया भेदकत्वासंभवात्, औपाधिकस्य जल औष्ण्यादेः स्फटिके रक्ततादेः शीतजलशुक्लस्फटिकादितो भेदकत्वादर्शनात्, दशमस्त्वमसीत्यादौ प्रत्यक्षत्वशाब्दत्वादेः सामानाधिकरण्येनाविरुद्धतया भेदकत्वासंभवाच। नच विषयचैतन्यस्य सर्वदा विद्यमानत्वेन घटादिज्ञानव्यवहारस्य कादाचित्कत्वेन तन्निर्वाहायाभिव्यक्त्याद्यर्थवृत्तेरवश्यकल्प्यत्वात् विषयेण सहाकाराख्यसंबन्धस्यापि चावश्यकल्प्यत्वात् तेनैव विषयप्रकाशोऽस्तु तयैवालमतिरिक्तमानकल्पनयेति वाच्यम्। आत्मनो हि सर्वदैवासन्दिग्धत्वाविपर्यस्तत्वनिर्वाहाय भानमङ्गीकरणीयं तस्यानित्यत्वे तद्दोषस्य दुरुद्धरत्वान्नित्यत्वमङ्गीकार्यम्। भानस्यापि हि भानान्तरापेक्षसिद्धिकत्वेऽनवस्थापत्तिः। क्वचिदपि भानविच्छेदे तदसिद्ध्याऽऽमूलं सर्वस्यासिद्धिप्रसंग इति स्वप्रकाशत्वमङ्गीकरणीयमिति लाघवादात्माभिन्नत्वमेकत्वं च, तथाच तेनैवाध्यासिकेन संबन्धेन सर्वभाननिर्वाहे वृत्तेरनन्ताया न तथात्वमेवं एकस्यात्मरूपज्ञानस्य स्वतो वैलक्षण्याभावेन प्रतीयमानवैलक्षण्यस्यौपाधिकताया एव वाच्यतया उपाधेर्विषयस्याभावे तदनुपपत्तेः। सिद्धे विषये पश्चात्कल्प्यमानायां कादाचित्कविषयभाननिर्वाहाय वृत्तौ सर्वानुपपत्तिपरिहारसमर्था स्वाभाविकवैलक्षण्यात्मकाकारविशिष्टैव सा कल्प्यते न तत्र साकारवादापत्तिः। यदि विषयित्वापरपर्यायैः स्वाभाविकैराकारैर्न्यायमतसिद्धज्ञानापरपर्याया वृत्तिरेव प्रथमतो भानरूपा कल्प्येत स्यात् साकारवादापत्तिः। स्वाभाविकवैलक्षण्येनैव ज्ञानानां वैलक्षण्योपपत्तौ तदुपपादकविषयस्य तदाकारातिरिक्तत्वे मानाभावादिति जितं स्याद्विज्ञानवादिभिः। लाघवं च मम मते यावन्ति हि तव ज्ञानानि तावत्यो मम वृत्तयः तवासंख्याता अनुव्यवसाया मम चैकमेव स्वप्रकाशमात्मरूपं ज्ञानमिति सिद्धं भेदकधर्मशून्यतया ज्ञानस्यैकत्वम् ॥ १५ ॥ अस्मिंश्लोके आत्मनः सत्यस्य बुद्ध्याद्युपाधिनिबन्धनतत्तद्धर्मसंसर्गित्वप्रतिभासरूपबन्धस्य बुद्ध्याद्युपाधेर्मिथ्यात्वं सिद्धवत्कृत्वा ज्ञानेन बुद्ध्यादिनिवृत्त्या निवृत्तिरुपपादिता बुद्ध्याद्युपाधेरिदानीं मिथ्यात्वं साधयितुं शङ्कते—**नन्वित्यादिना। जडद्रष्टृत्वरूपः सत्य एव संसार इति।** अस्तूक्तयुक्त्या आत्मन एकत्वम्। नचैकत्वे सुखदुःखभोगव्यवस्थानुपपत्तिः। मनोरूपस्यान्तःकरणस्य प्रत्यात्मभेदं भिन्नत्वस्य नैयायिकादिभिरिवात्मैकत्वपक्षेऽपि तद्भेदस्यैव स्वीकारात्तद्धर्मत्वं सुखादीनामभ्युपेत्य भोगस्य तदुपाधिकस्य व्यवस्थाया उपपत्तेः किंत्वात्मवद्बुद्धेरपि सत्यत्वमेवास्तु। एवं सुखदुःखादेर्बुद्धौ सत्यस्यैवात्मनि प्रतिभासोऽपि सत्य एव। स्फटिकलौहित्यावभासस्यापि सत्यस्यैवाभ्युपगमात् तस्यैवास्याप्यन्यथाख्यातित्वमस्तु।

अस्त्वितिचेत् जपाकुसुमसन्निधानस्यागन्तुकत्वेन तदपगमे तज्ज्ञानधारापगमसंभवेऽप्यन्तःकरणसन्निधानस्यानादितया दुःखादिकारणादृष्टादेरप्यनाद्यपरिमेयप्रवाहकत्वेन दुःखभोगस्य न विरामसंभव इत्याशयः । देशपरिच्छेदोऽपि पृथगुक्त इति । अथ यदि देशपरिच्छेदस्यानुक्तौ कालपरिच्छेदरहिते परमाणौ असत्त्वं न स्यादित्यभिप्रायिका तदुक्तिः तदा कालपरिच्छेदस्य देशपरिच्छेदव्याप्यत्वस्योक्ततया कालपरिच्छिन्नस्यापि देशपरिच्छेदेनैवासत्त्वे कालपरिच्छिन्नत्वोपादानमफलमेवं उभयोरपि वस्तुपरिच्छेदेनैवासत्त्वे तदुभयोपादानमफलम् । यद्युभयोः परस्परव्याप्यव्यापकभाव एकस्य वैयर्थ्यमिति परमाणौ कालपरिच्छेदव्याप्यताभङ्गप्रदर्शनेन तत्परिहारोऽभिप्रेतः तदा पाकजरूपरसादितत्प्रागभावानां समनियतानां वैयर्थ्यं स्यात् । नच प्रामाणिकत्वान्न स्यादिति वाच्यम्, सामनैयत्येपि हि तयोरपि प्रामाणिकत्वेनावैयर्थ्यात् । एवं सर्वं प्रमेयमित्याकारकजन्यज्ञानविषयत्वस्य सर्वदेशवृत्तेः कालपरिच्छिन्नतया कालपरिच्छिन्नस्य देशपरिच्छिन्नत्वनियमस्यासंभव इति चेन्न । यत्कालतो देशतो वस्तुतो वा परिच्छिन्नं तदसदिति प्राचां कालपरिच्छिन्नत्वमुक्त्वा देशपरिच्छिन्नत्वस्य योक्तिः सा कालपरिच्छिन्नत्वस्य परमाणवाद्यसंग्राहकत्वात्तत्संग्रहाय यदि देशपरिच्छिन्नत्वमुक्त्वा कालपरिच्छिन्नत्वस्योक्तिः स्यात्स्याद्वैयर्थ्यं तदुक्तेः तच्च नास्त्येव । एवं देशपरिच्छिन्नत्वस्याकाशाद्यसंग्राहकत्वाद्वस्तुपरिच्छिन्नत्वस्योक्तिः । यदीयमेकस्य देशपरिच्छिन्नत्वस्य प्रागुभयोर्वा प्राक्स्यात् एकस्य द्वयोर्वा वैयर्थ्यं स्यान्नास्त्येव तत् । तथैव किंनोक्तमिति तु नोद्देश्यम् । त्रयाणामप्यसत्त्वप्रयोजकत्वस्य समानतया पक्षविशेषे कालपरिच्छेदस्यापि साधकत्वसंभवेन तदनुक्तौ हि न्यूनता स्यादित्यभिप्रायात् । पूर्वोक्तज्ञानविषयत्वस्य हि ज्ञानासमानकालत्व आकाशवत्कालपरिच्छिन्नत्वं ज्ञानसमानकालीनत्वे ज्ञानाभावकाले सर्वदेशे तस्याप्यभावेन देशपरिच्छिन्नत्वमपि पृथगुक्त इत्यस्य देशपरिच्छेदस्य कालपरिच्छेदाव्याप्यतया तदुक्त्या तत्संग्राह्यसंग्रहस्यासंभवेन गतार्थयितुमशक्य इत्यर्थः । तेन तयोरेकरूपत्वाभावेनैकोक्त्यसंभवेऽपि न क्षतिः । **स्वगत इति** । प्रतियोगितया स्वगतः स्वं भेदाश्रयः पत्रपुष्पशाखादेर्वृक्षेण सह परिणामपरिणामिभावेनाभेदात् वृक्षस्य पत्रादिभेदप्रतियोगित्वम् । **एवं सांख्यमतेऽपीति** । सत्कार्यवादिनस्तस्य कार्यस्यापि कालपरिच्छेदाभावात्तन्मतेऽसत्त्वसाधनाय देशपरिच्छेदोक्तिः । प्रकृतिपुरुषादेर्देशपरिच्छिन्नत्वस्याप्यभावाद्वस्तुपरिच्छिन्नत्वोक्तिरित्यर्थः । **अननुगतं व्यभिचारिवस्त्विति** । अभि व्याप्त्या संबन्धोऽभिचारस्तादात्म्यम् विरुद्धोऽभिचारोऽस्यास्तीति व्यभिचारि, सत्तादात्म्यं तु न कस्यापि विरोधि । घटरजतादितादात्म्यं तु तादात्म्येन पटशुक्त्यादिविरोधि भवतीति व्यभिचारित्वं व्यावृत्तत्वं पर्यवसन्नम् । अतएव तुच्छव्यावृत्तत्वेन व्यभिचारित्वादिति वक्ष्यति **सदधिकरणेति** । सत्त्वेन प्रतीयमानाधिकरणेत्यर्थः । तेन घटादेर्वस्तुतः सत्त्वविरहेऽपि सतो घटाद्यधिकरणेत्यादेर्नासङ्गतिः । **पूर्ववद्विरोधादिति** । असतो भावे यथा परिच्छिन्नत्वापरिच्छिन्नत्वयोर्विरोधात् असतः परिच्छिन्नस्य घटादेरपरिच्छिन्नत्वस्य भावस्य प्रतिषेध एव । एवं सतोऽपरिच्छिन्नस्याभावे परिच्छिन्नत्वे परिच्छिन्नत्वापरिच्छिन्नत्वयोर्विरोधादभावस्य परिच्छिन्नत्वस्याभाव एवेत्यर्थः । **सन्नामेति** । नच यदि सत्त्वं स्वीकृतं तदा तदाश्रयः सन्नपि स्वीक्रियत एवेति सन्नाम नास्त्येवेत्यसङ्गतमिति वाच्यम् । नामेति हि प्रसिद्धार्थकम् । तथाच वेदान्तदर्शने सत्त्वरूपवास्तविकधर्मविना सद्रूपमबाधितस्वरूपं ज्ञानानन्दात्मकं यत्प्रसिद्धं तत्सत्त्वरूपधर्माश्रयान्नित्यज्ञानादिमत आत्मरूपद्रव्यादीश्वरादतिरिक्तं नास्तीत्यर्थः । **स्वानुत्पादकस्याकल्पनादिति** । द्रव्यमित्यादिप्रतीतेर्वैलक्षण्यं सत्सदित्यादिप्रतीतेः स्वरूपवैलक्षण्यविरहिण्या विषयभेदमन्तरेणानुपपन्नं तेनानुपपन्नेन वैलक्षण्येन सा द्रव्यादिषु सत्त्वरूपधर्मं तत्संबन्धं च कल्पयेत् । तद्यदि सत्त्वं द्रव्यादित्रिकमात्रवृत्ति स्यात्सामान्यं सत् विशेषः सन्नित्यादिप्रतीतेरनुपपादकं स्यात् इत्यनुपपादककल्पनाप्रसङ्गात् सर्वोपपादकं सर्वानुस्यूतमन्यदेव किंचित्कल्पनीयं तया । नच सत्सदित्येका नास्ति प्रतीतिः द्रव्यं सदित्याद्यन्या सामान्यं सदित्यन्यैवेति द्रव्यं सदित्यादिप्रतीतिरेव स्ववैलक्षण्यान्यथानुपपत्त्या द्रव्यादिसाधारणसत्त्वकल्पिकेति नानुपपादककल्पनाप्रसङ्ग इति वाच्यम् । एवं सति हि द्रव्यं सदिति प्रतीतिरन्यान्यैव च गुणः सन्नित्यादिरिति द्रव्यमात्रवृत्तिसत्त्वं अन्यत्स्यात् त्रितयसाधारणैकप्रतीतेः सदित्याकाराया अभावात् । यदिच वैलक्षण्येनानुपपद्यमानेन प्रतीतेः कल्पकतया व्यक्तिभेदेऽपि सत्सदित्यंशस्य स्वतो वैलक्षण्याभावात् द्रव्यं गुण इत्यादितो वैलक्षण्यं स्वतश्चावैलक्षण्यं द्रव्यत्वादितो विलक्षणं द्रव्यादिष्वविलक्षणमसद्व्यावृत्तं धर्मं विनानुपपन्नं तथाभूतमेव धर्मं कल्पयेत् न द्रव्यादिप्रत्येकवृत्तिधर्मं तस्यानुपपादकत्वादित्युच्यते तदा द्रव्यं सदिति प्रतीतेः सामान्यं सदिति प्रतीतेश्च सत्सदित्यंशे नास्ति स्वतो वैलक्षण्यमपि तु द्रव्यं सामान्यमित्यादितएव वैलक्षण्यमिति द्रव्यत्वसामान्यत्वादितो विलक्षणं द्रव्यादिसामान्यादिष्वविलक्षणमसद्व्यावृत्तं धर्मं विनानुपपन्नं तथाभूतमेव धर्मं कल्पयेन्न द्रव्यादित्रिकमात्रवृत्तिधर्मं तस्यानुपपादकत्वात् । नच द्रव्यं सदित्यादिप्रतीतेरन्यस्याः कस्याश्चित्प्रतीतेः द्रव्यादित्रिकमात्रवृत्तिसत्ताकल्पकत्वमस्तीति सत्तासामान्याङ्गीकर्तुर्दुर्वार एव स्यात् अनुपपादककल्पनाप्रसङ्गः । अथ कार्यत्वकारणत्वावच्छेदकतया लाघवेन सिद्धस्य सत्त्वसामान्यस्य द्रव्यं सदित्यादिप्रतीतिविषयत्वमात्रमुच्यते नतु सत्सदित्यनुगताकारत्वस्य तत्कल्पकत्वमिति नानुपपादककल्पनाप्रसंग इति चेन्न । नहि समवायेन सत्त्वावच्छिन्नंप्रति तादात्म्येन द्रव्यत्वेन कारणत्वं भवति संभवदुक्तिकम्, अङ्गीकरणीयस्य सत्त्वस्य नित्यसाधारण्येन कार्यतावच्छेदकत्वासंभवात् । जन्यसत्त्वावच्छिन्नंप्रति कारणत्वे जन्यमात्रवृत्तिसत्त्वं स्यात् प्रमाणान्तरेण तस्य

नित्यसाधारणस्य सिद्धावेवोक्तकार्यतायामनित्यत्वेन विशेषितस्यावच्छेकत्वं स्यात् तत्र प्रमाणान्तरस्य वक्तव्यतापातात्, कारणतावच्छेदकतया तु सुतरामेव न सिद्धिः द्रव्यस्य समवायिकारणत्वात् गुणकर्मणोरसमवायिकारणत्वात् त्रयाणां निमित्तकारणत्वेऽपि तदेकनिरूपितकार्यत्वस्य संबन्धभेदेनानुगतावच्छेदकाभावेन च दुर्वचत्वात् विशेषकार्यकारणभावेनैवावश्यकेनोपपत्तौ प्रवृत्त्याद्यनुपयोगिनः सामान्यकार्यकारणभावस्याकल्प्यत्वाच्च । **वैपरीत्यस्यापि सुवचत्वादिति** । यदि सत्सदिति प्रतीतिरनुपपादकमपि द्रव्यादित्रयमात्रवृत्तिसत्त्वं कल्पयेत् सामान्यादित्रयमात्रवृत्तिधर्ममेव कुतो न कल्पयेदिति वैपरीत्यं सामान्यादीनामेव सत्त्वं द्रव्यादीनां तदभावः तस्यापि सुवचत्वात् सामान्यादौ वर्तमानत्वगोचरतया परम्पराविशेषसंबन्धेन द्रव्यादिगतसत्त्वस्यैव सामान्यादौ विषयत्वकल्पनया वा द्रव्यादित्रयवृत्तिसत्तापक्षस्यैव सामान्यादित्रयमात्रवृत्तिसत्त्वपक्षस्यापि सुवचत्वात् । नच सामान्यादौ सामान्याभावान्न तत्र सत्त्वजातिसंभव इति वाच्यम् । सत्सदिति प्रतीतिर्हि सत्त्वं गोचरयति न तत्र सामान्यत्वमपि, सामान्यत्वे मानाभावाच्च प्रत्यक्षस्य नित्यत्वादिघटिते तत्रासामर्थ्यात् अनुमानादेर्व्याप्त्यादिग्रहसापेक्षत्वेन साध्यप्रसिद्धिंविनाऽसंभवात् । यद्वा सतो विपरीतमसत् तस्य भावो वैपरीत्यमसत्त्वं तस्यापि सुवचत्वात् प्रतीतेरनुपपादककल्पकत्वेऽनुपपादकत्वस्य द्रव्यादिमात्रवृत्तिसत्त्वस्येव तदसत्त्वस्य समानत्वेन वक्तुं योग्यत्वात् । ( अथवा ) ननु वैपरीत्यस्यानुपपादकतया सत्तासामान्यतुल्यत्वेऽप्यसत्त्वं दुर्वचत्वादेव न कल्पनीयम् द्रव्यादीनामसत्त्वेऽखिलकार्यकारणभावस्य तदायत्तनिखिलप्रवृत्तेश्च विलोपापत्तेरित्यत आह—**सुवचत्वादिति** । अनुगतविषयमात्रनिर्वाह्यानुगताकारप्रतीतिविषयस्यैकस्य सर्वानुस्यूतस्य सतो विरुद्धस्वभावानेकवस्तुतादात्म्यं हि न भवति पारमार्थिकमित्याध्यात्मिकमेव वाच्यमिति द्रव्यादीनामसत्त्वमेव सर्वप्रमाणाधिकबलश्रुतिगोचरीकृतं सुवचम् । नच कार्यकारणभावाद्यनुपपत्तिरिति वाच्यम्, कार्यकारणभावावच्छेदककोटौ सत्त्वस्य गौरवेणाप्रवेश्यत्वात्, न्यायमते तस्याव्यावर्तकत्वात्, वेदान्तमतेऽसंभवाच्च कार्यकारणयोरसत्त्वेऽपि क्षत्यभवात्, नहि पूर्वकालवृत्तित्वमपारमार्थिकत्वं च विरुद्धम् । प्रवृत्त्यादिरप्येतेन समाहितः । नचाशामोदकतृप्तानामुपार्जितमोदकतृप्तानां तुल्यरसवीर्यविपाकाद्यापत्तिरिति वाच्यम्, सत्त्वाविशेषेऽपि सर्वस्मात्सर्वकार्यापत्तिस्तव मते यथाऽवान्तरभेदकल्पनया वार्यते तथाऽसत्त्वाविशेषेऽपि तैरेव कल्पितैः कार्यकारणगतभेदैरस्मन्मतेऽपि सा वार्यत इत्युपार्जितमोदकात्तत्सदृशमेव रसवीर्यादिकमाशामोदकाच्च तादृशमेव तदिति दोषाभावात् । यद्वा सत्सदितिप्रतीतेरनुगताकाराया द्रव्यादिनिखिलपदार्थावलम्बिन्या यथैकसत्स्वरूपवस्तुगोचरत्वं विना नोपपत्तिरिति तया सत्स्वरूपत्वस्य सुवचत्वं तथावश्यकैकसत्स्वरूपतादात्म्येन सर्वसत्त्वप्रतीत्युपपत्तौ जपालौहित्येन स्फटिकारुण्योपपत्त्या तदसत्त्ववत् द्रव्यादीनामसत्त्वमपि तयैव प्रतीत्या सुवचमित्यत्र तात्पर्यम् । **संबन्धभेदस्येति** । द्रव्यादित्रये समवायस्य जात्यादावेकार्थसमवायस्य सत्त्वसंबन्धत्वे संबन्धभेदस्तस्येत्यर्थः । **स्वरूपभेदस्य चेति** । द्रव्यादौ सत्तासामान्यस्य सामान्यादावस्तित्वस्य विषयत्वे तयोः स्वरूपभेदस्य चेत्यर्थः । नचास्तु सर्वत्रैवास्तित्वस्यैव विषयत्वमिति न रूपभेद इति वाच्यम्, नित्यद्रव्यस्य समवायेन गुणादीनां च संयोगेनावृत्तित्वेन सर्वसाधारणैकास्तित्वस्याभावात् । नच कालिकविशेषणतयास्तित्वं सर्वसाधारणमिति वाच्यम्, सर्वेषां जन्यानामेककालावृत्तित्वेन निरूपककालभेदेन तद्भेतस्यावश्यकत्वात् । नच महाकालवृत्तित्वमेव तथास्त्विति वाच्यम्, उपाधिव्यतिरेकेण महाकालविषयिण्याः प्रतीतेः स्वरसतोऽभावात् इदानीमस्ति तदानीमस्तीत्यादेरेव प्रतीतेरानुभविकत्वात् तत्र चोपाधिभेदेन भिन्नानामेव कालवृत्तित्वानामवगमादिति भावः । **जातिमात्रोच्छेदप्रसङ्गादिति** । ननु कार्यकारणभावावच्छेदकतया द्रव्यत्वसंयोगत्वादेः पृथिवीत्वगन्धत्वादेश्च सिद्धिरिति कथं जातिमात्रोच्छेद इतिचेन्न । पदार्थान्तररूपायाः कारणताया अवच्छेदके मानाभावात् । नचावच्छेदकाभावेऽपूर्वगवादौ दुग्धाद्यर्थिप्रवृत्त्यनुपपत्तिः, गृहीतकारणतायाः प्रत्यायकस्य तत्र विरहादिति वाच्यम्, सास्नादेरेव तत्र प्रत्यायकत्वात् । अन्यथा जातेरपि नियतव्यञ्जकव्यङ्ग्याय दुर्ग्रहत्वप्रसंगात् । नच सास्नादिरेवाननुगत इति वाच्यम्, तेषामपि जातिव्यञ्जकस्वावयवविशेषेणानुगतेन ग्रहणात् । नचानवस्थाप्रसङ्गः, अनुगताकारप्रतीतिसिद्धजातिस्वीकार एव तत्परिहारप्रत्याशाया अपि संभवात् कारणतानियामकतया सिद्धिमिच्छतस्तवैव तत्प्रसङ्गस्य दुर्वारत्वात् । यदा हि सास्नादिकमनुगतं सिद्ध्यति तदा गोत्वं कारणतानियामकतया सिद्ध्यति । सास्नादावप्यनुगतो धर्मः कस्यचित् कारणत्वस्य नियामकतयैव सिद्ध्यति सोऽपि धर्मो व्यञ्जकनियतधर्मसिद्ध्यधीनसिद्धिक इत्यनवस्थिताया अपेक्षाया दुर्वारत्वात् । गौर्गौरित्यनुगताकारायाः प्रात्यक्षिकप्रतीतेरन्यतमत्वेन हि नास्तिगतिरिति तस्याः सामान्यसाधकत्वे सिद्ध्यति तत् भेदकूटावच्छिन्नप्रतियोगिताकभेदस्वरूपस्य तस्य भेदकूटग्रहसापेक्षत्वेनातीतानागतगोव्यक्तिभेदस्य प्रत्यक्षाविषयत्वेन तद्विषयत्वासंभवात् नियतपूर्ववर्तित्वस्वरूपायाः कारणतायाः सावच्छेकत्वेऽपि कारणतावच्छेदकतया तत्सिद्धिरनुमितिः क्लृप्तं तदेव ह्यवच्छेदकतया विषयीकुर्यादिति तन्न सिद्ध्येत् । नच गौरवं बाधकम्, अतिरिक्तजातिकल्पनापेक्षया अखण्डतादृशभेदव्यक्तेरेव स्वरूपतोऽवच्छेकत्वकल्पनायां तदभावात् । नित्यस्यैकस्येश्वरज्ञानस्यावश्यके तावद्व्यक्तिषु विषयत्वे चैकत्वं प्रकल्प्य स्वरूपतस्तस्यैवावच्छेदकतयाऽनुमितिविषयत्वकल्पनौचित्याद्वा न कारणतावच्छेदकतया तत्सिद्धिसंभवः । अनुगताकारप्रतीतेस्तत्साधकत्वेतु भवत्येव तत्सिद्धिः । अनुगताकारप्रात्यक्षिकप्रतीतेरुक्तविषयस्वविषयकत्वासंभवादिति भावः—**भेदघटितेति** ।

संबन्धिनोर्भेदनियतः समवायादिर्भेद इत्युच्यते तद्घटितेत्यर्थः । ननु कथमेकस्य सर्वाभिन्नत्वं तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् द्रव्यगुणादीनां परस्परामेदप्रसङ्ग इति बाधकबलादगत्या द्रव्यादिषु सत्त्वधर्मगोचरत्वमेव तस्या वाच्यमित्यत आह—**द्रव्यगुणभेदासिद्ध्याचेति ।** यथैकं सुवर्णं कुण्डलात्मकं विधाय पुनः कटकात्मकं विधत्ते तत्र यत्कुण्डलमासीत् हेम तदेवेदं कटकमिति प्रतीत्या हेमात्मना वस्तुभूतेन कटककुण्डलयोर्वस्तुतोऽभेदः, भेदस्तु कल्पित एव हेमस्वरूपस्य कालत्रयानुवर्तित्वात् विकारस्य कुण्डलादेः वाचारम्भणमात्रत्वात्, तथैव सदात्मना द्रव्यगुणयोरभेद एव पारमार्थिकः तस्यैव कालत्रयानुवर्तित्वात्, द्रव्यगुणादिभेदस्य वाचरम्भणमात्रत्वात्, इदं च 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यधिकरण उपपादितम्, किंच द्रव्यं न गुण इति प्रतीतिः द्रव्यगुणाभ्यां भेदस्य प्रतीतेश्च भेदं न गोचरयतीति भेदस्य प्रतीतेश्च ताभ्यामभेदे तयोरप्यभेदः । नच ताभ्यां भेदस्य भेदः प्रतीत्यन्तरगोचर इति वाच्यम् । द्रव्यगुणभेदेभ्यो भेदस्य स्वरूपस्य च भेदमगोचरयन्त्या पुनस्तेषां भेदासिद्ध्या सर्वेषामभेद इत्यनवस्थाप्रसङ्गात् भेदासिद्धिर्विश्रामे तदारभ्यैव सर्वाभेदप्रसङ्ग इत्यादिभेदखण्डनप्रपञ्चः खण्डनग्रन्थे प्रपञ्चित इति भेदासिद्ध्याभेदप्रसङ्गो न बाधक इति बाधकाभावात् लाघवस्य च सत्त्वात् सति धर्मिणि तेषामभेदो न तेषु सत्त्वं नाम कश्चिद्धर्मः । नच किं लाघवमिति वाच्यम् । सत्त्वधर्मकल्पनायामपि सर्वसाक्षिणः स्वप्रकाशस्य नित्यस्यैकस्यात्मस्वरूपस्य सदात्मकस्यावश्यककल्पनीयत्वेन तेनैव सद्व्यवहारोपपत्तौ सत्त्वरूपधर्मस्यातिरिक्तस्य तेषु तत्संबन्धस्य च कल्पनायाः गुरुत्वात् तदभावेन लाघवात् सत्त्वरूपधर्मं विनैव सर्वबाधावसानतयाऽबाध्यस्वरूपस्य स्वात्मनैवात्मनः सिद्धत्वात् तद्धर्मस्यापि कल्पितत्वात् । एवंसति स्वप्रकाशे सर्वेषां आध्यासिकसंबन्ध एव दृश्यत्वोपपत्तिः । अन्यथा तदनुपपत्तेस्त्वर्कात्पूर्वमत्रोपपादितादपि सत्येवाधिष्ठान इदमर्थ इव रजतादेः द्रव्यद्रव्यत्वादीनामपि विशेषणतयैव गोचरत्वमिति निःप्रत्यूहं सिद्धम् । उपपादितं तद्विस्तरेणाद्वैतसिद्धाविति भावः । सत्तापि नासतो भेदिकेत्यादिवार्तिकविवरणम् । वार्तिकं च सामान्यतो भेदनिराकरणपरम् । तदुक्तयुक्तेः सति सर्वेषामध्यास एव संभवति द्रव्यादिषु सत्त्वरूपधर्मेसति द्रव्यत्वगुणत्वादिनाभेदः स्यादेवेत्युक्तवार्तिकतात्पर्यमुक्तार्थं इति तदुक्तमिति सुसङ्गतम् । **तस्याप्रसिद्धेरिति ।** तस्यासतोऽप्रसिद्धेरज्ञानात् प्रतियोगिज्ञानसापेक्षं हि भेदज्ञानम् सद्भामभावो निरूप्यत इति न्यायात् इति न भेदिकासत्तेत्यर्थः । **सद्धर्मत्वान्न सतो भेदकमिति ।** यदोक्तयुक्तेरेकस्यैव सतो धर्मा द्रव्यत्वादयः तदा कथं भेदका भवेयुः तद्घटस्य हि धर्मा रूपरसादयः किं तस्य भवन्ति भेदका इति भावः । **अतएवेति ।** उक्तयुक्तेः सत्येवैकस्मिन्नभेदेन द्रव्यादीनां विशेषणत्वे द्रव्यत्वादिनापि सतो भेदाभावादेवेत्यर्थः । यद्यपि तार्किकैः कालत्वं कालोपाधित्वरूपमेव सर्वेषां मन्यते तदपि जन्यानामेव तथापि तदेकदेशिमतेनैतत् । नित्यानां स्वतः कालोपाधित्वविरहेऽप्यनित्यधर्मविशिष्टतया तथात्वम् ॥ १६ ॥ **परिच्छिन्नत्वापत्तेरिति ।** वस्तुपरिच्छेदस्य सदन्तरज्ञाननिष्ठभेदप्रतियोगित्वसत्त्वेन सत्त्वापत्तेरित्यर्थः । तथासति मिथ्यात्वं स्यादिति भावः । नन्वस्तु ज्ञानात्मकत्वं तत् यथा सति घटादीनामध्यासात् सतो घटाद्यात्मकत्वं तथैव ज्ञानस्यापि सत्यध्यासात् ज्ञानात्मकत्वं एवंसति न परिच्छिन्नत्वं ज्ञानं न सदिति व्यवहाराभावेन सतो ज्ञानाधिकरणभेदप्रतियोगित्वासंभवादित्यत आह—**तच्चेत्यादि ।** **जडत्वापत्तेरिति ।** कल्पिताकल्पितयोर्वास्तवाभेदस्याभावात् ज्ञानान्यस्वरूपजडत्वस्य सत्त्वेन मिथ्यात्वं स्यादिति भावः । **धात्वर्थत्वात्** क्रियारूपत्वात् । **आरोपमात्र इति ।** वास्तवपरिच्छेदाभावेऽपि घटादीनां तत्राध्यस्तत्वेन तत्तादात्म्येन तद्धर्मस्य परिच्छेदस्य स्फुरणरूपे सत्यारोप इत्यर्थः । परिच्छेदारोपमुपपादयितुं अहं घटं जानामीति प्रतीतिगोचरीभूतं सत् ज्ञानं सिध्यति सा च कथं ज्ञानवद्घटं विषयमाश्रयमहंकारमपि गोचरयन्ती ज्ञानं सत्कुर्यात् विषयादिकं चासन्नचैकमाश्रयो विषयो विषयि चाश्रितं च भवतीति परिच्छिन्नमपि वस्तुत एव भवतीति शङ्कां निराकर्तुमुपक्रमते—**अहं घटमित्यादिना ।** शुद्धं हि ज्ञानस्वरूपकल्पितमपरिच्छिन्नं तत्स्वसंवेदनसिद्धमेव नास्याः प्रतीतेर्विषयः विषयश्च वृत्त्यवच्छिन्नः स च वृत्त्याश्रयविषयाभ्यां परिच्छिन्नायाः कल्पिताया धर्मेण परिच्छिदेन परिच्छिन्न इति भवति शुद्धे परिच्छेद आरोपितः तस्या विषयश्च नैकोऽपि सन् येनान्यस्यापि तत्त्वं स्यात् इत्याश्रयस्य विषयस्य चाध्यस्तत्वं प्रदर्शयिष्यते अहंकारस्त्वित्यादिनेति भावः । ननु ज्ञानातिरिक्तज्ञानव्यञ्जकवृत्तिकल्पने तव गौरवमित्यत आह—**आत्ममनोयोगस्येति ।** तत्तज्ज्ञानकारणस्य भिन्नस्यैवात्ममनोयोगस्य तव मते सत्त्वेन वृत्तेरन्तःकरणपरिणामस्य तत्स्थानीयतया नास्ति गौरवम् । प्रत्युतानन्तज्ञानप्रागभावध्वंसादिकल्पने तवैव गौरवमिति भावः । ध्वन्यवच्छेदेन शब्दवदिति आसंसारं शब्दस्य स्थायित्वेऽपि तवदच्छेदकस्य तद्व्यञ्जकस्य ध्वनेरुत्पत्त्यादिभिर्यथा उत्पन्नो गकारो विनष्टो गकार इत्यस्योपपत्तिस्तथा ज्ञानव्यञ्जकवृत्तेरुत्पत्त्यादिभिर्ज्ञानस्य तदुपपत्तिः उक्तयुक्तिभिः ज्ञानस्य नित्यत्व एकत्वे च सिद्ध उत्पत्त्यादेरौपाधिकत्वकल्पनाया एव न्याय्यत्वादित्यर्थः । अहंकारस्तु अहंप्रत्ययविषयजीवस्त्वित्यर्थः । तस्मिन् सति ज्ञान इत्यर्थः । तदाश्रयतया ज्ञानाश्रयतया । **तद्वृत्तीति ।** अन्तःकरणवृत्तीत्यर्थः । ननु सुषुप्तिकाले वस्तुमात्रस्यैवास्फुरणात् तत्कालव्यावृत्तस्य ज्ञानस्य कुतो न कालपरिच्छिन्नत्वमित्यत आह—**सुषुप्तावहंकारेत्यादिना ।** अन्यथा सुषुप्तावज्ञानस्यास्फुरण इत्यर्थः । **स्मरणं न स्यादिति ।** अनुभवाभावे संस्कारस्याभावात् । नच सुषुप्तिकालीनस्य ज्ञानाभावस्य मनसा त्वक्संयुक्तेन संयुक्तविशेषणतया जाग्रदाद्यक्षणेऽस्तु प्रत्यक्षमिति वाच्यम् । प्रतियोगितावच्छेदकरूपेण प्रतियोगिज्ञानस्याभावात्, भावे च ज्ञानसामान्याभावरूपविषयस्यैवासत्त्वं स्यात् तदा सुषुप्तिकालस्यावि-

यमानत्वेन प्रत्यक्षेण तद्ग्रहणासंभवात् तथासत्येतावन्तं कालमिति स्मरणे तत्कालविषयता न स्यात् । ननु जागराद्यक्षणे द्वित्रिक्षणमध्ये वा ज्ञानाभावानुमितेः संस्कारादुक्तस्मरणमुपपादनीयम् अनुमितिरेव वा तथाकारास्त्वित्यत आह—**नचोत्थितस्येत्यादि** । सुषुप्तिकालरूपपक्षाज्ञानादिति पक्षतावच्छेदकाज्ञानस्याप्युपलक्षकं, तेन सुषुप्तिकालावच्छिन्नात्मपक्षकानुमानमपि निरस्तम् । नन्वयं जाग्रत्कालः सुषुप्तिकालविशिष्टः जाग्रत्कालत्वात् मैत्रीयजाग्रत्कालवदिति सुषुप्तिकालानुमानम् । नचाद्यजाग्रत्काले व्यभिचारः जाग्रत्कालोत्तरत्वेन हेतोर्विशेषणात् । नच तस्याप्यस्येवान्यदीयजाग्रत्कालोत्तरत्वम् । अन्यदीयसुषुप्तिकालविशिष्टत्वस्यापि सत्त्वात् । यद्यभिमतस्वीयसुषुप्तिकालसिद्धये स्वाश्रयकालाव्यवहितोत्तरत्वस्वावच्छेदकशरीरावच्छिन्नत्वोभयसंबन्धस्य साध्यतावच्छेदकसंबन्धत्वं जाग्रदवस्थाया एव पक्षत्वम् । तदा स्वोत्तरत्वस्वावच्छेदकशरीरावच्छिन्नत्वोभयसंबन्धेन जाग्रदवस्थाविशिष्टत्वस्य हेतौ विशेषणीयत्वात् । नच जाग्रदव्यवहितोत्तरजाग्रदवस्थायां व्यभिचारः स्वोत्तरत्वस्यैव साध्यतावच्छेदकसंबन्धत्वात् हेतौ जाग्रत्कालाव्यवहितोत्तरशून्यत्वस्य विशेषणत्वाद्वेति चेन्न । परकीयसुषुप्तेर्दुर्ग्रहत्वेन दृष्टान्तसिद्धेः । परकीयज्ञानस्य दुर्ग्रहत्वेन तदभावस्य नाडीविशेषमनःसंयोगस्य वा तस्याः प्रत्यक्षासंभवात् सुषुप्तिलिङ्गानि जाग्रति मायिके व्यभिचारेणानुमानस्याप्यसंभवात् शब्दस्यापि तदुभयपूर्वकत्वेनासंभवात् । अथायं कालः कालपूर्वकः कालत्वादित्यनुमानेनैतज्जाग्रत्कालपूर्वत्वेन गृहीतस्य सुषुप्तिकालस्य भवति पक्षत्वसंभव इति चेन्न । एतज्जाग्रतत्कालपूर्वकालत्वस्य स्वीयजाग्रत्कालेऽपि सत्त्वेनावच्छेदकावच्छेदेन पक्षत्वे बाधः सामानाधिकरण्येन पक्षत्वे सर्वत्र सुषुप्तौ साध्यासिद्ध्याऽभिमतासिद्धिः कालाव्यवहितपूर्वक इत्येव साधनेऽव्यवहितपूर्वत्वादेः स्वत्वघटितत्वेनाननुगततया दृष्टान्तपक्षसाधारण्यासंभवात् यथाकथंचिदनुगतेनाव्यवहितोत्तरत्वसंसर्गेण कालस्य सामान्यतः साध्यत्वे पक्षधर्मत्वमहिम्ना कालविशेषस्य सिद्धावपि कालत्वमात्रस्यानुमितिविषयस्य पक्षतावच्छेदकत्व उक्तदोषतादवस्थ्यम्, विशेषधर्मस्य चानुमित्या नियन्त्रितविषयिण्याऽविषयीकरणात् । तत्कालत्वेन तज्जाग्रत्कालाव्यवहितपूर्वकालत्वेन वा पक्षत्वं न संभवत्येवेत्युक्तरीतेरप्यसंभवात्, अथ कथंचित्तेन रूपेण ग्रहणेऽपि तस्यैतज्जाग्रत्पूर्वकालाव्यवहितपूर्वकालत्वस्य जाग्रत्सुषुप्तिसाधारणस्थूलकालेऽपि सत्त्वेन तत्रानवच्छिन्नविशेषणतया न स्वीयज्ञानाभावसंभवः । विशेषणतामात्रेण च साध्यत्वे सुषुप्तौ ज्ञानसत्त्वेऽपि शरीरान्तरावच्छेदेन तत्सिद्ध्यार्थान्तरत्वं स्यात् । स्वीयशरीरावच्छिन्नविशेषणतया साधनेऽपि मूर्च्छासंप्रज्ञातादिसाधारणस्थूलकाले तत्कालावच्छेदेन तत्सिद्ध्यार्थान्तरापत्तिरेव स्थूलसुषुप्तिकालसंग्राहकस्योक्तकालासंग्राहकस्य सुज्ञेयस्य चासंभवः । सूक्ष्ममात्रसंग्राहकोपादाने सूक्ष्मेऽपि तस्मिन् तदितरस्मिन् साध्यासिद्धिः एतावन्तं कालमित्याकारकानुपपत्तिश्च । नच स्थूल एव सुषुप्तिकाले मूर्च्छादिसाधारणे ज्ञानाभावसिद्धावप्युक्तपरामर्शस्य ज्ञाने सर्वकालाननुस्यूतत्वस्य चोपपत्तेस्तदेवास्त्विति वाच्यम् । सुषुप्तौ ज्ञानसत्त्वेऽपि मूर्च्छाकालावच्छेदेन मूर्च्छाकाले ज्ञानसत्त्वेऽपि सुषुप्तिकालावच्छेदेन वा ज्ञानाभावसंभवेन सुषुप्तिमूर्च्छयोस्तस्य तन्निश्चायकत्वाभावेनाप्रयोजकत्वात् । अथास्तु कथंचित्पक्षस्याभिमतस्य प्रसिद्धिस्तथाप्याह—**लिङ्गासंभवाच्चेति । अस्मरणादेरिति** । अस्मरणं ज्ञानवत्तया स्मरणविषयत्वाभावः तस्य ज्ञानकालेऽपि ज्ञानाप्रत्यक्षे संस्काराभावेन सत्तया व्यभिचारित्वम्, सुषुप्तिकालस्यापि भ्रान्त्या ज्ञानवत्तया ग्रहणे स्मरणविषयत्वसंभवेनासिद्धिरपि । आदिपदात् ज्ञानवत्त्वप्रकारकप्रमाविषयत्वाभावपरिग्रहः । तत्र यदि स्वपरसाधारणस्मृतिप्रमाविषयत्वसामान्याभावो हेतुस्तदा परकीयज्ञानविषयत्वसन्देहेन सन्दिग्धासिद्धिः । यदि स्वीयस्मृत्यादिविषयत्वाभावः तदापि कालान्तरे स्मृत्यादिसंदेहात् संदिग्धासिद्धिः । तत्कालीनस्मृत्यादिविषयत्वाभाव उत्तरकाले ज्ञानवत्तया निश्चिते तत्कालीनस्मृत्यविषयत्वनिश्चयेन व्यभिचारनिश्चय एव, अनुकूलतर्कविरहेण संदेहोऽपि व्यभिचारस्य दूषक एव किमु वक्तव्यं निश्चयस्य तत्त्व इति । अयं कालो ज्ञानानधिकरणकालोत्तरः ज्ञानानधिकरणकालाव्यवहितोत्तरो वा स्मरणानधिकरणत्वात् सुषुप्तिकालो वा ज्ञानानधिकरणः स्मरणाव्यवहितपूर्वत्वशून्यत्वात् स्मरणपूर्वत्वशून्यत्वात् विषयसंबन्धितया स्मरणाविषयत्वाद्वेत्यादीन्यप्यनुमानान्यर्थान्तरव्यभिचारसंदिग्धासिद्ध्यादिभिर्निरस्तानि । तथाहि प्रथमानुमाने सुषुप्तेर्ज्ञानाधिकरणत्वेऽपि स्मरणानधिकरणजागरक्षणस्य ज्ञानानधिकरणमूर्च्छाद्युत्तरत्वेन साध्यसिद्ध्यार्थान्तरता ज्ञानाधिकरणकालोत्तरत्वशून्यत्वस्य साध्यत्वे च बाध एव । द्वितीये ज्ञानाव्यवहितोत्तरसंस्कारक्षणे स्मृत्यनधिकरणे व्यभिचारः । तृतीये ज्ञानोत्पत्तिक्षणे स्मृत्यव्यवहितपूर्वत्वशून्य उपेक्षाज्ञानाधिकरणक्षणे च व्यभिचारः । चतुर्थेऽसिद्धिरेव । पञ्चमे ज्ञानमात्रस्य स्वाधिकरणकालविषयत्वे कालस्य विषयसंबन्धितया नियमेन स्मरणे च मानाभावात् प्रत्युत न स्मरामि कदा दृष्टमित्यनुभवात् ज्ञानाधिकरणक्षणस्यापि तादृशस्मरणाविषयत्वेन व्यभिचार इति । सुषुप्तिकालः ज्ञानाभाववान् ज्ञानसामग्र्यभावात् इत्यनुमानं दूषयितुमाह—**ज्ञानसामग्र्यभावस्येत्यादि** । सामग्र्याः फलैकसमधिगम्यत्वेन तदभावस्य फलाभावज्ञानेन ज्ञेयतया प्रकृतानुमानेन ज्ञानाभावनिर्णये सामग्र्यभावनिर्णयः सामग्र्यभावनिर्णये च ज्ञानाभावानुमानमित्यन्योन्याश्रय इति भावः । अत्रोत्पन्नपुनरुत्पत्त्यदर्शनात् ज्ञानक्षणस्य ज्ञानसामग्र्यनधिकरणत्वं वाच्यमिति व्यभिचारोपि दोषः । ज्ञानसामग्र्यव्यवहितोत्तरत्वशून्यत्वस्य हेतुत्वे त्वन्योन्याश्रय एव । एवंच सुषुप्तौ ज्ञानाभावासिद्ध्या पूर्वोक्तयुक्तिभिः सतो ज्ञानात्मकत्वं ज्ञानस्य नित्यत्वमेकत्वं च निरपवादं सिद्ध्यति । किंच सामग्र्यभावेन ज्ञानाभावसिद्धिः जन्यज्ञानस्यैव बाधिका स्यात् साक्षिज्ञानं च नित्यमेव सुषुप्तौ हि वर्तते । अज्ञानभानप्रतिबन्धकागन्तुकबाह्यान्तःकरणभानसामग्रीविरहमात्रेणाज्ञानसंबन्धितया स्फुरणमात्रमिति नानुमानेनोक्तसिद्धि-

प्रतिरोधः। अज्ञानभानं सुषुप्तौ प्रतिपादितमुपपादयन् घटादेर्विषयस्य कल्पितत्वमाह—**एवं घटादिर्विषयोऽपीति।** यथा आश्रयतया प्रतीयमानोऽहंकारः सति स्फुरणरूपे कल्पितः एवं विषयतया प्रतीयमानो घटादिरपीत्यर्थः। अज्ञानावस्थाभासक इत्यत्र हेतुः—**प्रागज्ञात इति।** यद्यज्ञाततया साक्षिणा न विषयीकृतः स्यात् प्रागज्ञात इति परामर्शो न स्यात्। यथा प्राग्दृष्ट एव घटे यो मया प्राक् दृष्टः स एवेदानीं दृष्ट इति नादृष्ट इति भावः। अज्ञातस्य ज्ञाताद्भेदेऽज्ञातावस्थाभासके स्फुरणे कल्पितत्वं न स्यादत उक्तं—**यः सएवेति।** कल्पितत्वे हेतुः—**ज्ञातइति।** कल्पितत्वं विना ज्ञातत्वानुपपत्तेः। आध्यासिकतादात्म्यातिरिक्तस्य ज्ञानज्ञेयसंबन्धस्यानिर्वाच्यत्वात्। ज्ञानेऽध्यासं विना तेन सह तादात्म्यायोगात्। सदंशे हि कल्पितत्वं प्रागेवोपपादितमितीयमपि कल्पना न ततोऽन्येति बोध्यम्। ननु स्वरूपेणैव घटादीनां ज्ञानेन प्रमाणव्यापारे सति ग्रहणम् नहि तस्य प्रागज्ञातत्वमपि तेन गृह्यत इत्यत आह—**अज्ञातज्ञापकत्वं हीत्यादि।** अत्राज्ञातत्वं नोपलक्षणं तथासत्यज्ञातत्वांशस्य ज्ञापकघटकज्ञानेनासंबन्धः स्यात् स्मृतिरपि प्रागनुभवात् अज्ञातो यो घटस्तद्विषयिणीति प्रमा स्यात्। विशेषणत्वे चाज्ञातत्वस्य ज्ञानसंबन्धात्स्मृतिस्थले साक्षिणा विषयस्य ज्ञातत्वेनैव ग्रहात्। स घट इति यः प्रागनुभूतः स इत्यर्थ इति न सा प्रमा। अनुभवस्थले हि साक्षिणा प्रागज्ञातत्वेनैव विषयो गृह्यते अयं घट इति। घटमहमनुभवामि प्रागज्ञातं घटं पश्यामि अनुमिनोमि इत्याद्यर्थ इति भावः। साक्षिणः स्फुरणस्यैवाज्ञातत्वग्राहकत्वमुपपादयति—**अज्ञातत्वं चेत्यादिना। तज्ज्ञनोत्तरेति।** प्रत्यक्षस्य विद्यमानावभासकतया चाक्षुषादिज्ञानकाले सतोऽज्ञानस्य तदविरोधितया पश्चादपि तेन तदपसारणासंभवादिति भावः। धारावाहिकेति व्यभिचारज्ञानसौलभ्याय तत्र साध्याभावस्य प्राग्ज्ञातत्वस्येदानीं ज्ञातत्वरूपहेतोश्च ग्रहात्। व्यभिचारस्तु व्यवहितानेकज्ञानस्थलेऽपि भवत्येव। अनुमानस्वीकर्तृमते साध्यस्य प्राग्ज्ञातत्वाभावरूपत्वात्, अज्ञातत्वस्य भावस्यानभ्युपगमात्, तेन प्रागज्ञातत्वस्यैव सत्त्वेन साध्याभावासत्त्वाद्व्यभिचारासङ्गतेर्नावकाश इति भावः। प्रकारान्तरेण साक्षिणाऽज्ञातत्वग्रहणमुपपादयति—**नचाज्ञातावस्थेति।** प्रत्यक्षज्ञानं प्रति विषयस्य तत्सन्निकर्षस्य वा हेतुत्वं सर्वसंमतं तत्र ज्ञातस्य हेतुत्व आत्माश्रयः तेनैव हि ज्ञानेन तस्य ज्ञातत्वं ज्ञातत्वे च पूर्वसतो ज्ञानात् ज्ञानमित्यज्ञातस्यैव ज्ञानंप्रति हेतुत्वम् तच्चाज्ञातस्य धर्मिणो ज्ञानाभावे कथं ग्राह्यं अग्रहणे च न प्रामाणिकम्। नच प्रत्यक्षेण गृहीते घटे पश्चाद्धेतुत्वज्ञानमिति वाच्यम्। नहि तज्ज्ञानं प्रत्यक्षं हेतोरज्ञातावस्थापन्नस्य विषयस्य धर्मिणोऽभावात्। अनुमानं तु अनुकूलतर्कानुगृहीतहेत्वभावादसंभवि। नच तद्व्यक्तित्वमेव जनकतावच्छेदकम् तेनैव च रूपेण सत्त्वं ज्ञातत्वं चापेक्षितमिति प्रत्यक्षानन्तरं ग्रहणे न क्षतिरिति वाच्यम्। अन्वयव्यतिरेकग्रहसहकारेणैव प्रत्यक्षेण हि ग्रहणं तौ च पूर्वकाले तद्व्यक्त्यसत्त्वे प्रत्यक्षव्यक्त्यभावः पूर्वकाले तत्सत्त्वे तत्सत्त्वमिति ज्ञानात्मकौ। नहि तेनैव प्रत्यक्षेण प्राक्कालसंबन्धितया शक्यते गृहीतुम् तद्व्यक्तिर्ज्ञानान्तरं च तस्या नास्त्येव प्राक् प्रथममेव हि तत्प्रत्यक्षमित्यवश्यमज्ञातत्वेन प्राक्कालसत्तया ग्राहकोऽभ्युपेयः साक्षीति भावः। पुनरज्ञानग्रहणे प्रमाणान्तरमाह—**घटमहं न जानामीत्यादि।** व्याप्तिस्मरणशब्दज्ञानाद्यभावेऽपि जायमानस्य सार्वजनीनस्य प्रत्यक्षरूपस्य घटमहं न जानामीत्याकारस्य साक्षिरूपत्वमज्ञानविषयत्वं च विना नास्त्येव हि गतिः। घटज्ञानाभावविषयकत्वे प्रतियोगितावच्छेदकरूपेण प्रतियोगिज्ञानस्य तत्र कारणत्वेन तत्सत्त्वे घटज्ञानस्य सत्तया विषयस्यैवाभावेन प्रत्यक्षासंभवात्। साक्षिज्ञानं ह्यज्ञानसंबन्धितया सर्वं गोचरयत् तत्स्वीकृतमखिलप्रमाणमर्यादातिवर्तिसर्वानुपपत्तिपरिहारक्षमरूपमिति न तत्र काप्यनुपपत्तिः। कोऽतिभारो ह्यनुभवस्य स हि सार्वजनीनः कदर्थनामसहमानः किं न साधयेदिति भावः। **अन्यथेति।** अज्ञाते चिति सद्रूपे घटादीनामकल्पितत्व इत्यर्थः। **घटादेर्जडत्वेनेत्यादि।** यस्यानावृतावृतत्वयोः भवति विशेषः तत्रैवावरणं कल्प्यमानं भवति कार्यकारि, यथ प्रदीपे प्रकाशके सत्यावरणे घटादेरभानं तदभावे भानं पटादावावृतानावृतत्वयोरपि न भवति कश्चिद्विशेषः तथा स्फुरण एवानावृतावृतत्वयोः घटादीनां भानाभाने इति चैतन्यस्यैवावृतत्वं प्रकाशकत्वात्। नच सत्यपि प्रदीपे घट आवृते भवत्यभानं तस्मिन्ननावृते भानमिति दृश्यत एव विशेष इति वाच्यम्, घटावच्छेदेन प्रकाशकप्रदीपान्तःकरणाद्यावरकत्वेनैव हि तत्रापि भानाभानरूपो विशेषः कथमन्यथाऽपवरकावृते घटेऽपवरकमध्यस्थेन घटग्रहणं बहिःस्थेनाग्रहणं घटस्यावृतत्वविशेषात् प्रदीपान्तःकरणे हि केचिदावृते केचिदनावृत इति पुंविशेषयोर्ग्रहणाग्रहण उपपन्न इति। **जडत्वेना**प्रकाशकत्वेन घटादीनां प्रकाशविरोध्यज्ञानरूपावरणविलक्षणसंबन्धस्याज्ञातत्वप्रयोजकस्याभावात्। अज्ञातत्वस्य तदभावेनाज्ञातो घट इत्यज्ञातत्वभानस्यानुपपत्तेरित्यर्थः। स्वाध्यस्तेनाज्ञानेनाज्ञाते सति स्फुरणे घटस्य यदा कल्पितत्वं तदा तत्तादात्म्येन सत्त्वतद्भानवदज्ञातत्वतद्भानं घट उपपद्यते प्रमाणेनापनीते चावरणे स्फुरणतादात्म्याभिव्यक्तेर्भातत्वं चेति भावः॥ **एतेन** श्रुत्या सत्यस्यानन्तस्य महतः प्रतिपादनेनेत्यर्थः। नचैवंभूतं भवति शून्यं सत्तारहितमिति भावः। युक्तिमप्याह—**निरधिष्ठानेत्यादि। एतेन** नित्यस्य स्फुरणस्य सर्वाधिष्ठानस्य सिद्ध्येत्यर्थः। क्षणिकतावादे सर्वं क्षणिकमप्युपगतमेकस्यापि स्थायित्वे तन्निरस्तमिति भावः। तत्किमन्यस्य क्षणिकत्वमभ्युपेयमित्यत आह—**अबाधितेत्यादि।** सर्वस्य क्षणिकत्वे पूर्वापरान्वयिधर्माभावेन साजात्यविषयत्वस्यासंभवादिति भावः। **अन्यदृष्टान्यस्मरणानुपपत्तेश्चेति।** अन्येन दृष्टस्यान्यपुरुषेण यत्स्मरणं तस्यानुपपत्तेरित्यर्थः। आलयविज्ञानस्यापि क्षणिकतया द्रष्टृस्मर्त्रोरैक्यासंभवात्। तथासति चैत्रदृष्टस्य मैत्रेणापि स्मरणं स्यात्।

नच कारणगतवासनायाः कार्ये संक्रमान्न दोषः । मातृदृष्टस्य पुत्रेण स्मरणप्रसङ्गात् । नचोपादानोपादेयभावो नियामकः त्वन्मते तस्य दुर्वचत्वात् कार्याधारस्य कार्यानुस्यूतस्य वा कारणस्योपादानत्वात् निरन्वयध्वस्तस्य पूर्वालयविज्ञानस्योत्तरंप्रति तत्त्वासंभवात् । नच साजात्यं नियामकं, तस्य पूर्वापरक्षणसंबन्धित्वेन स्थायित्वापत्त्या त्वयानभ्युपेयत्वात् । नच विकल्पितेन धर्मेण विशेषितात्द्वास्तविककार्यसंपत्तिः सत्त्वेन क्षणिकत्वाभ्युपगन्तुस्तव युज्यते । अथैकसन्तानपतितानां अनुभवविशिष्टालयविज्ञानक्षणादुत्तरोत्तरमतिशयविशिष्टालयविज्ञानोत्पत्तिक्रमेण स्मरणविशिष्टालयविज्ञानक्षणोत्पत्तिरुपपद्यते । नचैवमनन्ताप्रामाणिकसंस्कारकल्पनागौरवमपि स्वलक्षणस्य विलक्षणस्य धर्मिधर्मभावानापन्नस्यैव स्वीकारात् । अनुभवस्मरणे अपि न तयोः स्वरूपातिरिक्ते धर्मधर्मिभावस्य विकल्पमात्रत्वादिति चेन्न । सन्तानैक्यस्यानुगतवास्तवधर्मं विना वक्तुमशक्यत्वात् । घटानुभवविशिष्टालयविज्ञानक्षणोत्तरं चैत्रीयालयविज्ञानस्येव मैत्रीयालयविज्ञानस्याप्युत्पन्नत्वाविशेषेण स्मरणप्रयोजकातिशयितरूपस्य कुतो नोत्पत्तिरित्यस्योत्तरयितुमशक्यत्वात् कार्यकारणयोरेकदेशतायाः सर्वत्रैवाभावेन तयोर्देशभेदान्न कार्यकारणभाव इत्यस्यापि वक्तुमशक्यत्वात् पूर्ववर्तितायाः सर्वत्रैव समानत्वात् । नच स्थैर्ये सामर्थ्यासामर्थ्यरूपविरुद्धधर्माध्यास इति वाच्यम् । अङ्कुरजननसमर्थे तदसामर्थ्यानभ्युगमात् । कार्योपधानविलम्बश्च सहकारिसमवधानविलम्बेन ह्युपपादनीयः पूर्वभावनियमादेककार्यनिरूपितादेकं विना परस्य कार्योपधायकत्वाभावरूपसहकारित्वप्रयोजकादतिरिक्तस्योपकारस्यानभ्युपगमेनोपकारानुपकारविकल्पप्रसञ्जितोपकारधाराकल्पनाप्रयुक्तानवस्थाया अपि हि नावकाशोऽधिकमात्मतत्त्वविवेकादावनुसन्धेयमिति ॥ १७ ॥ **अन्वक्षविनाशादिति** । प्रत्यक्षविनाशादित्यर्थः । **अपरोक्षा इति** । जाग्रति स्थूलस्य अहं गौर इत्यादिप्रत्यक्षविषयत्वं जाग्रत्स्वप्नयोरहं सुखीत्यादिप्रत्यक्षविषयत्वं सूक्ष्मस्य लिङ्गशरीरस्य सुषुप्तौ कारणशरीरस्याविद्यात्मनः न किंचिदवेदिषमित्यादिपरामर्शहेतुसाक्षिप्रत्यक्षविषयत्वमस्तीति सर्वेषामपरोक्षत्वं बोध्यम् । यद्यपि'दिह उपचये' इति धातोर्देह इति तथाच उपचितरूपत्वादित्येव वक्तुमुचितं तथापि उपचयस्यापचयनान्तरीयकत्वात् उपचितापचितरूपत्वादित्युक्तम् । देहशब्दस्य शरीरे रूढत्वेऽपि योगप्रदर्शनमन्तवत्त्वहेतुतया बोध्यम् । स समष्टितया हिरण्यगर्भः समष्ट्यभिमानीश्वरकोटिप्रविष्टविशिष्टचैतन्यघटकतया हिरण्यगर्भपदप्रतिपाद्यो लिङ्गदेहः प्राणपञ्चकेन्द्रियदशकमनोबुद्धिसङ्घातात्मकः प्राणायत्तत्वात्क्रियायाः क्रियानुकूलशक्तिः प्राण इति कार्यकारणयोः शक्तिशक्तिमतोरेकत्वाध्यवसायात्कर्मात्मकत्वेन क्रियाशक्तिमात्रमादायेति सङ्गतम् । कर्मात्मकत्वेनेत्यस्य उक्त इत्यत्रान्वयः । एवमग्रेऽपि । वस्तुनः स्वरूपनिरपेक्षं नामैव प्रथमं मनःपरिणामज्ञानारूढं सद्भवति कल्पितमिति विषयविषयिणोः कल्प्यकल्पकयोर्वा वृत्तिवृत्तिमतोश्चाभेदाध्यवसायान्नामात्मकत्वेनेति सङ्गतम् । मनसा ज्ञानद्वारा परिकल्पिते च नाम्नि निःस्वरूपस्य तुच्छस्य नाम्नोऽभावात्तदपेक्षितं तदर्थभूतं वस्तुनः स्वरूपं क्रियाशक्तेरपि वस्तुस्वरूप एव क्रियोत्पादकत्वेन तदपेक्षितमपि पूर्वपूर्वसंस्कारानुसारेण कृतिपरिणामिन्या बुद्ध्या निष्पाद्यत इति ज्ञानक्रियाशक्तिमदुभयाश्रयतया रूपनिष्पादकत्वेन तदुभयापेक्षिततया कार्यकारणयोः रूपकृत्योः वृत्तिवृत्तिमतोः कृतिबुद्ध्योरभेदाध्यवसायाद्रूपात्मकतयेत्यादिसङ्गतम् । एवंच बृहदारण्योक्तकर्मादिपदत्रयं क्रियाज्ञानशक्तिकर्तृत्वरूपधर्मत्रयविशिष्टपरमित्यभिप्रायः । **यावद्विकारं त्वित्यादि** शारीरकसूत्रम् । तत्र यद्यद्विभज्यते तत्सर्वं विकारात्मकं यथा लौकिकं दधिदुग्धादिकं एवमाकाशादिकमपि । यल्लोकसिद्धोत्पत्तिविनाशरहितं तदपि विभज्यत इति विकारात्मकं यतश्च विकारात्मकं अतोऽनित्यमिति निर्णीतमिति नित्यत्वव्यवहारस्य यावत्कालभावित्वरूपगौणनित्यत्वविषयत्वे हेतुतया तन्न्यायोपन्यासः । **शास्त्रारम्भवैयर्थ्यादिति** । सर्वमेव शास्त्रं देहिन इष्टानिष्टप्राप्तिपरिहाराय तत्तत्त्वज्ञानाय चारब्धं तस्यैवालीकत्वे भवति हि व्यर्थमित्यर्थः । **तथाच वस्तुपरिच्छेदो दुःपरिहर इति** । देहिनि प्रमाणस्यावश्यवक्तव्यत्वे सत्येकस्य प्रमाणप्रमेयोभयत्वासंभवात्तत्प्रमाणे ततो भेदास्यावश्यकत्वात् तन्निष्ठभेदप्रतियोगित्वरूपवस्तुपरिच्छेदो दुःपरिहर इत्यर्थः । **शास्त्रयोनित्वादिति** शारीरकसूत्रम् । तेनात्मनो वेदप्रमाणकत्वं वेदकारणत्वं च निर्णीतम् । तथाच प्रमाणप्रमेयभावस्य कार्यकारणभावस्य च भेदाधिष्ठितत्वाद्दुःपरिहरो वस्तुपरिच्छेदो न्यायसिद्ध इति भावः । **स्वभानार्थं न स्वभावस्यापेक्षेति** । स्वभाने स्वभास्यापेक्षायां यद्यप्यन्योन्याश्रयो नास्ति द्वयोरप्यज्ञातयोरेव भासकत्वोपगमात् तथाप्येकनिरूपितभास्यत्वभासकत्वयोर्विरुद्धयोः प्रसङ्गः स्यादिति न स्वभास्यापेक्षोपेयेति तथोक्तम् । तथाच प्रमाणजन्यप्रमितिविषयत्वाभावान्न प्रमेयत्वमिति भावः । **कल्पितवृत्तिविशेषापेक्षेति** । ब्रह्माकारवृत्तिविशेषद्वारैव शास्त्रस्याज्ञाननिवर्तकत्वेनापवर्गरूपपुमर्थसाधनत्वेन सप्रयोजनत्वं, वृत्तेरसत्त्वे च शास्त्रस्य निःप्रयोजनत्वमेव स्यात्, सत्त्वे च परिच्छेद आत्मनो दुःपरिहर इत्यत उक्तं **कल्पितेति** । तथाचाज्ञाननिवृत्तिं प्रति वृत्तेर्गौरवेण सत्त्वविशिष्टत्वेन न कारणत्वं अपितु ब्रह्माकारवृत्तिविशेषत्वेनैव । तथासति तस्याः कल्पितत्वेप्यदोषः कल्पितस्य च न परिच्छेदकत्वमिति भावः । **वृत्तिविशेषोत्पत्त्यर्थं शास्त्रारम्भ इति** । अद्वितीयब्रह्मात्मगोचरनिर्विकल्पकत्वं वृत्तौ विशेषः । शब्दादपि निर्विकल्पकाभ्युपगमात् । तादृशं च निर्विकल्पकं न तत्त्वमस्यादिशास्त्रादन्यतः । नापि तन्निर्विकल्पकभिन्नात् निवृत्ताशेषाविद्यातत्कार्यतया प्रकाशमानपरमानन्दात्मकापवर्गलक्षणपरमपुरुषार्थाधिगतिरिति शास्त्रस्यार्थवत्त्वेन न तदारम्भवैयर्थ्यम् । नच तादृशवृत्तिविषयत्वात्प्रमेयत्वमात्मन इति वाच्यम् । वृत्तावप्रकारीभूतापि हि वृत्तिः स्वविषयमुपहितं करोतीत्युपहितस्यैव वृत्त्याऽद्वितीयपरमात्मस्वरूपस्य विषयत्वान्न शुद्धस्य प्रमेयत्वं न वृत्ते-

निर्विकल्पकत्वहानिः अज्ञानादिनिवर्तकत्वे च तस्याः प्रयोजकमद्वितीयत्वादिविशिष्टज्ञानादिघटितोक्तवाक्यानिष्पादितसामग्रीप्रयुक्तं विलक्षणविषयकत्वमेवेति भावः ॥ **स्वतः सर्वदाभासमानत्वादित्यादि ।** तुच्छत्वे हि विकल्पमात्रविषयत्वमप्रकाशमानत्वं वा प्रयोजकं न प्रमाणागृहीतत्वम्, अनवस्थाभयेन कुत्रापि प्रमाणविश्रामे तस्य तुच्छत्वापत्त्या सर्वस्य तथात्वापातात् ब्रह्मणस्तु प्रमाणागोचरस्यापि सद्रूपताया स्वतो भासमानस्य शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति लक्षणलक्षितविकल्पगोचरत्वासंभवात् अप्रकाशमानत्वासंभवाच्च जडाया वृत्तेः विषयप्रकाशकत्वासंभवेन प्रकाशरूपैकसद्रूपवस्तूपरागेण तस्यास्तन्निवर्तितावरणचितो वा विषयप्रकाशस्याभ्युपेयत्वाच्च न चिद्रूपस्यात्मनस्तुच्छत्वसंभव इति भावः । ननु स्वप्रकाशत्वेऽपि स्वरूपस्यैव प्रकाशः नाद्वितीयत्वादेः तदर्थमेकमेवाद्वितीयमित्यादिश्रुतेः प्रमाणतयाऽऽदरणीयत्वात् तस्य सत्त्वमावश्यकमित्यात्मनः परिच्छेदो दुष्परिहर इत्यत आह—**तथाचैकमेवेत्यादि ।** प्रमाणाविषयत्वेऽप्यतुच्छत्व इति तथा चेत्यस्यार्थः । प्रमाणविषयत्वेनैव सत्त्वे यक्षानुरूपो बलिरितिन्यायेन प्रमाणस्यापि सत्त्वं स्यात् तथासति परिच्छेदो दुष्परिहरः स्यात् एवं प्रमाणस्य सत्त्वावश्यकत्वे सजातीयद्वितीयराहित्यरूपामुख्याद्वितीयत्वबोधकनयैकमेवेत्यादिश्रुतेरुपपादनीयत्वं च स्यात् । स्वप्रकाशतया तथात्वे प्रमाणसत्त्वस्यानावश्यकत्वात् अद्वितीयत्वादेरपि स्वरूपभूतस्यैव सत्यत्वात् प्रतियोगिविशेषितात्मना तु व्यावहारिकतया व्यावहारिकत्वस्यैव प्रमाणेऽपेक्षितत्वात् अद्वितीयपदमुख्यार्थत्यागे बीजाभावेन स्वप्रमेयानुरोधेन स्वस्वरूपस्यापि कल्पितत्वस्यैवाभ्युपेयत्वाद्भवति परिच्छेदस्य परिहार इति भावः । ननु 'सत्यं ज्ञानमानन्दं ब्रह्मे'ति श्रुतेः सत्यत्वेऽपि नास्याः प्रमेयबाधः तथापि ब्रह्मणः सत्यत्वादौ क्षत्यभावादिति चेन्न । इदं हि महावाक्यमस्य सत्यपदार्थनिर्वचनपरमग्रिमं वाक्यं 'यत्किंचन सत्यं चानृतं च तत्सर्वं सत्य' मित्यादि तच्च श्रुतेः सत्यत्वे नोपपद्यते सत्ययोरैक्यासंभवात् कल्पितत्वे चाधिष्ठानातिरिक्तसत्ताभावेन तदुपपत्तेरिति । **तथाहि यत्र जिज्ञासोरित्यादि ।** यत्र यद्विषय इत्यर्थः । जिज्ञासोरित्यनेन ज्ञानानुकूलचक्षुरुन्मीलनादिव्यापारसत्त्वमुक्तम् । तथाच तद्गोचरजिज्ञासाप्रयुक्ततज्ज्ञानानुकूलव्यापारे सति तद्गोचरसंशयादीनां यदा यत्पुरुषस्याभावस्तदा तस्य तद्गोचरसंशयादिविरोधिज्ञानमिति फलितार्थः । तेन सुषुप्तौ पदार्थान्तरव्यासक्तचित्ते च न व्यभिचारः । ज्ञानसुखादेः सर्वस्यात्मार्थत्वेन घटादिजिज्ञासाक्षणेऽप्यस्त्येवात्मजिज्ञासा तज्ज्ञानानुकूलान्तःकरणव्यापारश्चेति सर्वदैव तथाविधक्षणे आत्मगोचरसंशयादीनामभावेनात्मनः प्रमाज्ञानसिद्धिः अतश्च कदाचिदपि तदभावस्य प्रामाणिकत्वे स्वप्रकाशत्वमशक्यं स्यात् आत्मज्ञानासत्त्वविरोधादिति निरस्तम् । सतिचैवं कल्पनालाघवेन सिद्धे ज्ञानानुकूलतयाऽभिमते व्यापारेऽन्यथासिद्धत्वं ज्ञानस्यात्मस्वरूपानन्यत्वं च सेत्स्यत्यनायासेनेत्यभिप्रायः । तद्गोचरप्रमायास्तद्विशेष्यकान्यप्रकारिकाया अन्यविशेष्यकतत्प्रकारिकायाश्च सत्त्वेऽपि तद्गोचरसंशयादेरुक्तविधस्य सत्त्वसंभवादुक्तव्याप्तेरप्रयोजकत्वं स्यात् अतः प्रमाविशेषणं **तद्विरोधीति ॥ आत्मनि चाहं नाहं वेति न कस्यचित्संशयः नापि नाहमिति विपर्यय इति ।** ननु संशयस्य किंचिद्धर्मावच्छिन्नविशेष्यतानिरूपितकोटिताख्यविषयताकत्वनियमात् अहमर्थतद्भेदयोरहन्त्वतदभावयोर्वा कोटित्वसंभवेऽपि तन्निरूपितविशेष्यत्वस्यानवच्छिन्नत्वेन कथमुक्तस्य संशयत्वं संशये धर्मितावच्छेदकप्रकारकज्ञानस्य हेतुत्वादेवं नाहमित्येतावन्मात्रस्य कथं विपर्ययत्वम् तस्याहमर्थभेदमात्रावगाहित्वात् प्रमेयभेदादिवत्तस्याप्रसिद्धिविरहेण भेदेऽहमर्थविपर्ययत्वासंभवादितिचेन्न । इदंत्वावच्छिन्नविशेष्यकस्यायमहं नवेत्यादिसंशयस्यायमहं नेति विपरीतज्ञानस्य विवक्षितत्वात् । यथा ह्ययं पर्वतो न वेत्यादिसंदेहेऽयं पर्वतो वह्निमान् नवेति संदेहोऽयं पर्वतो वह्निमानित्यादिनिर्णयश्च न जायते यदा तु जायते तदा नास्त्युक्तसंशय इत्यवसीयते तथाहं जानामि सुखी दुःख्यहं सपापो नवेत्यादिनिर्णयसंशयानामास्वप्रावस्थं सर्वदानुभवादयमहं नवेत्यादिसंशयस्याभाव एवावसीयते । तत्प्रयोजकं च तद्विपरीतज्ञानमयमहमित्यादिप्रत्यक्षेदन्त्वादिसामान्यधर्मावच्छिन्नविशेष्यकाहन्त्वप्रकारकं सर्वदास्तीत्यपि निर्णीयते । अहमित्येतावज्ज्ञानं तु न कस्यापि संशयादेर्विरोधि । यथा चाहमित्यस्य सर्वदा संभवः तथायमहमित्यादेरपि सामग्र्या अधिकाया अनपेक्षणात् स्वगतेदन्त्वस्याहन्त्ववत्सदा प्रत्यक्षत्वात् । यत्तु अहमर्थस्थलेऽहमित्येतावन्मात्रस्याहन्त्वप्रकारतानिरूपितानवच्छिन्नाहमर्थनिष्ठविशेष्यताकस्यापि विरोधित्वं तस्याभावेऽहमर्थनिष्ठनिरवच्छिन्नविशेष्यताकाहन्त्वतदभावकोटिताकत्वेनाप्यभ्युपगम्यमानस्य संशयस्याहमर्थनिष्ठनिरवच्छिन्नविशेष्यताकाहन्त्वावच्छिन्नभेदप्रकारताकविपरीतज्ञानस्यापि वा भवेत् समुदय इति विरोध्युक्तज्ञानस्य सर्वदा सत्त्वकल्पनमिति । तन्न, बाह्यपदार्थे क्लृप्तेनेत्यादिग्रन्थविरोधात् । उक्तज्ञानस्य विरोधितायां द्वितीयस्य संशयरूपताया अक्लृप्तत्वेन तत्कल्पनस्यानौचित्यात् । स्वयं तथाभ्युपगतवतस्तथोक्तेः विरोधस्य दुष्परिहरत्वादिति । अथोक्तविरोधिज्ञानस्य सर्वदैव सत्त्वे उक्तसंशयविपरीतज्ञानयोः सदैवानुत्पन्नत्वेनालीकतया तदभावहेतुनोक्तविपरीतज्ञानसाधनासंभव इति चेन्न । ज्ञानीयस्वनिष्ठेदन्त्वावच्छिन्नविशेष्यतात्वावच्छेदेनाहन्त्वावच्छिन्नभेदप्रकारतानिरूपकत्वाद्यभावहेतुनोक्तविरोधिज्ञानविशिष्टज्ञानीयत्वस्य साध्यत्वात् । **वैशिष्ट्यंचैककालावच्छिन्नैकपुरुषवृत्तित्वमिति ।** इदंत्वावच्छिन्नधर्मिकाऽहन्त्वसंशयेऽहन्त्वावच्छिन्नस्य संशयादिधर्मित्वासंभवात्तस्य सर्वसंशयेत्यादिग्रन्थसंगतिः । **आत्मनोऽभासमानत्व इति ।** नन्वात्मनोऽभाने आत्मरूपस्य विशेषणस्य विशेष्यस्य वा ज्ञानाभावात्कारणविरहादेव मयि घटज्ञानं नवा अहं घटज्ञानवान्नवेति संशयो न स्यात् भाने च घटज्ञाननिश्चयस्यैव संभवादिदमयुक्तमितिचेन्न । भासमानत्वे चात्मनो घटज्ञानोत्पत्तिक्षण एव मयि घटज्ञानं अहं

घटज्ञानवानिति निश्चयस्य सदा संभवात् । आत्मनोऽपि स्वप्रकाशत्वादनवस्थाभयेन घटज्ञानादेरपि तथात्वात् । भवति हि ज्ञानोत्पादे सदा संशयानुत्पादो युक्तः । यदात्वात्मनो न स्वप्रकाशत्वं तदा घटज्ञानक्षणे तादृशनिश्चयासंभवात् कारणबलादुत्तरकालमुत्पन्ने चात्मरूपधर्मिज्ञाने तत्रैवाभावकोटेर्भाने तदुत्तरं वा तदुपस्थितौ कारणसंपत्त्या संशयस्य कदाचिदापत्तिसंभवात् । घटज्ञानमात्रज्ञानस्यात्मनः स्वप्रकाशत्वपक्षेऽसंभवात् । घटज्ञानस्मृतावहं घटज्ञानवानित्यादिस्मृतेरेव संभवेन स्मरणात्मककोटिद्वयोपस्थितेः कालान्तरेऽप्युक्तसंशयापादनस्यासंभवात् । विस्मरणस्थले शब्दादितः कोट्युपस्थितौ मयि घटज्ञानमासीन्नवेत्यादिसंशये चेष्टापत्तेः । नच स्वप्रकाशतापक्षेऽपि समूहालम्बनन्यायेनास्तूभयोर्ज्ञानं विशिष्टज्ञानं तु विशेषणज्ञानाभावान्नोत्पत्तिक्षण एव संभवतीति वाच्यम् । स्वप्रकाशविशेषणविशेष्ययोर्ज्ञानस्य तदभावकाले विशिष्टज्ञानापत्तेरसंभवात् । ज्ञानाभावे विषयाभावात् । ज्ञाने च तज्ज्ञाननियमात् । कारणत्वस्याकल्पनीयत्वादिति भावः ॥ **अन्यथेति** । अप्रामाणिकस्वभावभेदकल्पन इत्यर्थः । **सर्वविप्लवोपपत्तेरिति** । सर्वेषां विप्लवानां स्वभावान्यथाभावानामुपपत्तेरित्यर्थः । जलादीनामप्यौष्ण्यस्य व्यावहारिकवस्तुत्वेऽपि सर्वस्य जलप्रत्यक्षे तत्प्रत्यक्षापत्तेः । तत्प्रत्यक्षस्य भ्रमस्थलसंप्रतिपन्नकारणजन्यत्वरूपस्वभावभेदस्य सर्वसंप्रतिपन्नव्यावहारिकपदार्थप्रत्यक्षस्वभावविलक्षणस्य कल्पनेन वारणसंभवादिति भावः ॥ **समूहालम्बनेति** । विषयस्यात्मविशेषणत्वासंभवात् । ज्ञानस्यानुत्पन्नत्वेन प्राक् तत्सन्निकर्षाभावात् । विशिष्टात्मविषयकत्वासंभवात् समूहालम्बनस्यैवोक्तिः । **दुर्निवारमिति** । नच बहिरर्थलौकिकप्रत्यक्षसामग्र्याः सर्वतो बलवत्त्वात् तत्प्रतिबन्धकतया विषयतयात्मप्रत्यक्षे योग्यविशेषगुणकारणतया च तद्वारणमिति वाच्यम्, घटज्ञाने जाते घटं जानासीति पृष्टो जानामीति सर्वो ब्रूते नचान्यथा । नचैतदृते घटज्ञानज्ञानं संभवतीत्यावश्यके तस्मिन्ननन्ताप्रामाणिकज्ञानकल्पनं तत्सामग्रीभेदकल्पनमुक्तप्रतिबन्धकत्वादिकल्पनं चापेक्ष्य मानसत्वचाक्षुषत्वादिजातेः साङ्कर्यस्य तस्या अंशतो वृत्तिकल्पनया दोषत्वाभावस्यैवोपपादयितुं युक्तत्वात् । व्यावृत्तिस्वभावस्याप्येकावच्छेदेनैकत्र वृत्तावेव विरोधात् । द्रव्यगतजातिसाङ्कर्यस्यांशतो गवाश्वरूपैकव्यक्तिसंभावनाप्रसङ्गेन बहुतरानुमानभङ्गप्रसङ्गादितो दोषत्वेऽपि प्रकृते तदभावेन बहुतरलाघवेन तस्यातथात्वात् । अनुगताकारप्रत्ययैकशरणजातित्वस्य कस्यचिद्गुणस्यांशिकत्वविरहेऽपि संयोगादेस्तथात्ववत् कस्यचिद्गुणस्य परस्परात्यन्ताभावसमानाधिकरणस्य सामानाधिकरण्यविरहेऽपि संयोगद्वित्वादेस्तथात्ववच्च गोत्वादिजातेः कस्याश्चिदांशिकत्वसाङ्कर्ययोर्विरहेऽपि चाक्षुषत्वादेस्तथात्वे बाधकाभावेन तत्र सत्वे क्षत्यभावादिति साङ्कर्यस्य सर्वजातिदोषत्वेऽपि चाक्षुषत्वादेरुपाधेरेवाभ्युपगमादुक्तलाघवानुरोधेनैकत्र ज्ञानवृत्तौ क्षत्यभावात् ज्ञानमात्रस्यात्मविषयकत्वं दुर्वारमिति भावः । नैयायिकानामप्येवमात्मभानस्य सर्वत्र दुर्वारत्वे तद्भाने सामग्रीकल्पनागौरवेण स्वप्रकाशत्वमनायासेन सेत्स्यतीत्यभिप्रायेणेदम् । एवंच स्वमते आत्मभाने सामग्र्यभावेऽपि व्यवसायमात्र एवेत्यादेर्नासङ्गतिः । **सजातीयानपेक्षत्वादिति** । साजात्यं च व्यवहर्तव्यविषयकत्वे सति तद्भिन्नज्ञानत्वं नतु ज्ञानत्वमात्रमतिप्रसङ्गात् । व्यवसाये निरुक्तसाजात्यसत्त्वोपपादने व्यवहर्तव्यो विषयः । अनुव्यवसाये तथात्वोपपादने व्यवसाय एव ग्राह्यः । अथैतन्मते न प्राभाकरमतवत्स्वप्रकाशत्वस्य व्यवसायात्मनोर्विषयभासकसामग्र्यतिरिक्तसामग्र्यनपेक्षोत्पत्तिकज्ञानविषयत्वरूपतया व्यवसायविषयत्वं विषयस्येव व्यवसायात्मनोरप्युररीक्रियते किंतु स्वव्यवहारे स्वातिरिक्तप्रकाशानपेक्षत्वस्य स्वप्रकाशरूपतया व्यवसायात्मनोर्विषयत्वाभाव एव, वृत्तिपक्षे च प्रकाशो वृत्त्यात्मक एव तेन चैतन्यापेक्षायामपि न क्षतिः । विषयस्य घटादेर्विद्यमानत्वेऽपि प्रमाणव्यापारात्प्राक् व्यवहाराभावेन जडस्य घटादेर्व्यवहारे स्वातिरिक्तप्रकाशस्य गौणस्य वृत्तिरूपस्य मुख्यस्य वा तत्प्रतिबिंबितचैतन्यस्यास्त्यपेक्षेति वृत्तौ तस्याकाराख्यसंबन्धविशेषो विषयत्वं चितित्वाध्यासिकतादात्म्यं वर्तते आत्मनो वृत्तिरूपज्ञानस्य च स्वसत्तामात्रेण व्यवहारात् क्षणविलम्बकल्पनायाश्चान्याय्यत्वात् स्वव्यवहारे स्वातिरिक्तप्रकाशानपेक्षणात् स्वप्रकाशत्वमुक्तविषयत्वयोः स्वंप्रति स्वस्यासंभवात् अन्यादृशनिष्प्रयोजनविषयत्वकल्पनायां मानाभावात्स्वव्यवहारप्रयोजकत्वमात्रेण स्वस्य विषयित्वव्यवहारः तन्निरूपकत्वेन विषयत्वव्यवहारः न वस्तुतो विषयत्वमस्तीति व्यवसाये पराभ्युपगतविषयत्वस्य खण्डनमारभते स्वाभिमतस्वप्रकाशत्वसिद्ध्यर्थमनुव्यवसायनिरासार्थं च **नहि घटतज्ज्ञानयोरित्यादिना** । एवंच पूर्वापरग्रन्थयोरात्मव्यवसाययोरापाततः प्रतीयमानविषयत्वस्य न विरोधः । तस्य पराभ्युपगतानुवादमात्रत्वात् तस्य वास्तविकत्वे एतद्ग्रन्थविरोधस्य दुष्परिहरत्वं स्यात् साक्षी न स्वव्यतिरिक्तभास्य इत्यादिग्रन्थेन श्रुतिभिश्च प्रागेव वृत्तिविषयत्वस्य निराकरणात् तद्विरोधस्यापि दुष्परिहरत्वं स्यादिति । **वैजात्यमस्तीति** । वैजात्यसद्भावे विषयत्वव्यवस्थापकं व्यवसायनिष्ठं विषयत्वावच्छेदकमन्यदनुव्यवसायनिष्ठं विषयित्वावच्छेदकं चान्यत्स्यादिति विषयत्वावच्छेदकस्य विषयत्वावच्छेदकत्वाभावाद्वक्ष्यमाणस्य घटादेः विषयित्वप्रसङ्गस्यावकाशो न स्यात् तच्च नास्तीति व्यक्तिभेदमात्रेण तथात्वे घटयोरपि व्यक्तिभेदाद्विषयत्वविषयित्वे स्यातामिति भावः । **अविशेषादिति** । व्यवसायादित्यादिः । विषयतावच्छेदकरूपवतो व्यवसायस्य यथा विषयित्वं तादृशस्य घटादेरपि तत्त्वं स्याद्विषयतावच्छेदकरूपवत्त्वेनोभयोस्तुल्यत्वादित्यर्थः । तथाच ज्ञानस्य विषयित्वमेव न विषयत्वं तस्य तत्स्वभावत्वाद्विषयस्य न विषयित्वं तस्यापि तत्स्वभावत्वादित्यकामेनाप्युपेयमिति नानुव्यवसायसिद्धिरिति भावः । नन्वित्यादिशङ्कायाः प्राभाकरमतेनोत्तरमाह—**नहीत्यादिना** । व्यवहारंप्रति व्यवहर्तव्यविषयज्ञानत्वेन हेतुत्वेऽपि ज्ञानज्ञानं सिध्यति । व्यवहर्तव्यभिन्नत्वस्य कारणतावच्छेदकत्वे तु स्यादपि स्वभिन्नानु-

व्यवसायसिद्धिः तच्च नास्ति गौरवादित्यर्थः । घटज्ञानज्ञानत्वस्यापि नास्ति कारणतावच्छेदकत्वं कुतस्तद्बलाद्घटज्ञानज्ञान-रूपानुव्यवसायसिद्धिः स्यादित्याहानुव्यवसायस्यापीत्यादिना ॥ **त्रिपुटीप्रत्यक्षवादिन इति ।** त्रयाणां पुटानां समाहार-स्त्रिपुटी ज्ञातृज्ञेयज्ञानत्रितयात्मिका तद्गोचरप्रत्यक्षवादिन इत्यर्थः । **प्राभाकरा इति ।** अस्य न पूर्वग्रन्थेन संबन्धः । तथा सति व्यवसायविषयत्वखण्डनस्यासङ्गत्यापत्तिः । प्राभाकरैर्व्यवसायस्य स्वविषयत्वाङ्गीकारात् किंतु नन्वित्यादिशङ्कोत्तरेणैवेति बोध्यम् । **कर्तृकर्मविरोधेन तद्भानानुपपत्तेरिति ।** कर्तृकर्मणोस्तादात्म्येन यो विरोधः एकक्रियांप्रति कर्तृत्वकर्मत्व-योर्यो विरोध इति यावत्तेन तदापत्तिभयेन प्राभाकरसतसिद्धस्यात्मभानस्यानुपपत्तेरित्यर्थः । तथाच प्राभाकरैर्यथास्वप्रकाशज्ञा-नस्याश्रयत्वं विषयत्वं चात्मनोऽभ्युपेयते तथाभ्युपगम्येत चेत् एकज्ञानक्रियानिरूपितयोर्विरुद्धयोः कर्तृत्वकर्मत्वयोरेकत्रात्मन्या-पत्तिः स्यान्नत्वेवमभ्युपेयत इति भावः । **स्वप्रकाशज्ञानमात्रेति ।** मात्रपदेन साक्षित्वप्रमात्वादेर्वस्तुभूतस्य व्यवच्छेदः । **अविद्योपहित इति ।** इदं चैकसाक्षिवादे यन्मतेऽन्तःकरणस्य विशेषणत्वे प्रमातृत्वरूपं जीवत्वं तस्योपलक्षणत्वे तु साक्षित्वं तन्मते नानैवसाक्षी एको देव इत्यत्र । १ । श्रुतमेकत्वं वस्तुभूतैकत्वपरं कर्मफलाभोक्तृत्वे सति द्रष्टृत्वात् साक्षिभूतोऽन्त-र्यामी यः परमेश्वरस्तदेकत्वपरं वा । साक्षिभास्यानां सुखादीनामेकस्य भाने सर्वस्य भानप्रसङ्गेन नव्यैर्नानात्वपक्ष एवाश्रितः । प्राचां तु साक्षिणः प्रकाशकचैतन्यस्य नानात्वं नाभ्युपेयं गौरवात् तत्तदन्तःकरणानां तेन तेन रूपेण परिणामे तत्तदवच्छे-देनैव साक्षिसंबन्धस्य तत्तत्सुखादिष्वभिव्यक्तिस्वीकारान्न प्रमात्रन्तरस्य सुखादिग्रहणप्रसङ्ग इति व्यवस्थोपपत्तेरित्याशयः । **एकलोलीभावापन्नमिति ।** लोलशब्दो लौल्यसाध्यसंश्लिष्टोपलक्षकः । यथा सति प्रबले समीरणे भिन्नदेशस्थिते शाखे लोलीभूते भवत एकत्र प्रदेशे संश्लिष्टे भवतश्च तदवच्छिन्नाकाशावप्येकदेशस्थावर्थादेकत्वमापन्नौ तथा एकस्यां घटाद्याकार-वृत्तौ सत्यां पृथग् व्यवस्थितो घटादिरन्तःकरणं चान्यतरलौल्यादेकत्र संश्लिष्टं भवत्युपाध्योरेकत्रावस्थानादुपहितद्वयं च तथा भवत्यर्थादेकं भवतीत्यर्थः । **प्रमात्रभेदात्स्वाज्ञानं नाशयदिति ।** घटावच्छिन्नता हि चैतन्यस्य स्वविषयस्वाश्रि-ताज्ञानस्य घटाकारपरिणामेऽधिष्ठानतया भवतीति यावद्व्यवहारं तत्राज्ञानस्यावश्यकतया घटादीनां विना प्रमाणव्यापार-मभाततयाऽज्ञानस्य तदभानप्रयोजकावरकतायाऽवश्यकल्पनीयत्वाच्च प्रकाशस्यापि तस्य पिहितत्वात्स्वतो नास्ति प्रकाशकता घटस्य वाऽस्वच्छस्य नास्ति प्रतिबिम्बोद्ग्राहिता चक्षुरादिकरणद्वाराऽन्तःकरणस्य विषयदेशगमने तदाकारपरिणामेन वृत्त्याख्येन प्रदीपवत्स्वच्छेनावरकशक्तिनाशेन तद्विशिष्टाज्ञाननाशे तूलाज्ञाननाशे वा घटस्य स्वच्छवृत्तिसंबन्धात् स्वच्छतयाऽधिष्ठानचै-तन्यप्रतिबिम्बग्राहित्वे वा घटावच्छिन्नचैतन्यं प्रकाशते । तथा सत्त्वावच्छेदको घटादिरपि प्रकाशमानचिद्रूपसदधिष्ठानतादा-त्म्यापन्नत्वात्प्रकाशत इति विषयचैतन्यस्य स्वप्रकाशकता च भवतीति घटादीनां प्रकाशमानत्वे भातीति व्यवहारप्रयोजके वृत्तिमदन्तःकरणावच्छिन्नचैतन्यात्मकप्रमात्रभेदस्य भवत्युपयोगः, तदभावे प्रकाशासंभवात् । नचान्तःकरणस्यापि स्वच्छ-त्वात्तस्य विषयदेशगमने तेनैवास्तु विषयावच्छिन्नचैतन्यगताज्ञाननिवृत्तिरलं वृत्त्येति वाच्यम् । परोक्षस्थलेऽपि विषयस्य सत्तया प्रकाशात्तत्रान्तःकरणस्यानिर्गमनेनासत्त्वापादकाज्ञाननिवर्तकत्वासम्भवात् स्वकारणबलात्तत्तद्विषयाकारान्तःकरणपरिणामे वृत्त्या-ख्येऽभ्युपगम्यमाने विषयस्य स्वच्छया वृत्त्याऽऽकाराख्येन संबन्धेन संबन्धत्वात्तदवच्छिन्ने चैतन्येऽसत्त्वापादकाज्ञानस्य निवृत्तिः संभवतीत्यपरोक्षस्थलेऽपि क्लृप्तत्वादज्ञाननाशाय वृत्तेरभ्युपेयत्वात् । वृत्त्यभ्युपगमे च संस्कार उपपद्यते । तस्य ज्ञान-नाशे सति कालान्तरीयस्मरणायातिरिक्तस्य सूक्ष्मावस्थारूपस्य वोपगमात् नित्यब्रह्मात्मकज्ञानस्यान्तःकरणस्य वा नाशासं-भवेन तदुपपादनस्याक्लेशेनासंभवात् । नचैवमपि परोक्षस्थलवदन्तःकरणस्यानिर्गतस्यैव विषयेन्द्रियसंबन्धादिरूपकारणविशेषजा वृत्तिरस्तु तस्याः वृत्त्यन्तरविलक्षणायाः भाति स्फुटं प्रकाशत इत्यादिव्यवहारप्रयोजकत्वस्याशेषविशेषगोचरसंदेहजिज्ञासा-दिविरोधित्वस्य च संभव इति वाच्यम् । आध्यासिकतादात्म्यस्यैव ज्ञानेन विषयस्य संबन्धरूपतया व्यवस्थापनात् तस्य साक्षा-त्संबन्धत्वात्तत्संभवे परम्परासंबन्धस्याक्लृप्तस्वरूपसंबन्धविशेषस्य संबन्धत्वकल्पनाया अयुक्तत्वात् तादृशसंबन्धस्य सर्वदैव सत्त्वेन सर्वदा भानप्रसङ्गेन तद्वारणाय विषयचैतन्ये प्रमात्रावरणादेरावश्यकतया तन्निवृत्त्यर्थं तत्र वृत्तेरुपेयत्वादन्यदेशस्यालो-कस्यान्यत्र तमोविनाशाभिव्यक्त्यादेरजनकत्वात् । अन्तःकरणनिर्गमस्याप्यावश्यकत्वात् सुखादिषु ज्ञानसाक्षात्संबन्धस्यैव भान-प्रयोजकत्वेनान्यत्रापि तथात्वोपगमात् परोक्षस्थले चागत्या स्वरूपसंबन्धविशेषस्य हि तथात्वोपगमः । वृत्त्यवच्छिन्नचैतन्या-भेदस्य विषयचैतन्यगतस्यापरोक्षत्वरूपत्वेन तन्निर्वाहायापि वृत्तिनिर्गमस्यावश्यकत्वात् अन्यस्य तस्य दुर्वचत्वाज्जडपरिणाम-रूपवृत्तेः ज्ञानत्वाभावाज्ज्ञानस्यैकत्वेन तत्र जातेरसंभवात् उपाधिभूतवृत्तिवैजात्यादेव तदुपगमेऽपि सुरभिचन्दनमित्यादौ तवै-कज्ञानस्योपगमेन तस्यापरोक्षत्वे सौरभांशेऽपि तथात्वापातात् । जातेरव्याप्यवृत्तित्वस्य दृष्टविरुद्धत्वात् लौकिकसंनिकर्षस्यान-नुगतत्वेन तज्जन्यत्वस्यापि तथात्वोपगमासंभवात् अनुमितेरपि परम्परया तज्जन्यत्वात् साक्षात्तथात्वस्य दुर्निरूपत्वात् विष-यताविशेषस्यापि च तथात्वादिति । किंच चक्षुरादेरेवं सत्यन्तःकरणप्रापण एवोपक्षीणव्यापारत्वात्प्राप्तं चान्तःकरणमविशेषात् रूपघटादाविव गुरुत्वेऽप्यज्ञानं नाशयेत् गुरुत्वस्यायोग्यत्वं चेन्द्रियाणामकिंचित्करम् । इन्द्रियस्य वृत्त्युपजननपर्यन्तव्यापारत्वे च वृत्तेः कल्प्यायाः फलानुरोधात्तत्तदिन्द्रिययोग्य एव कल्पनीयत्वात् तस्या एव चावरणनाशकत्वेन गुरुत्वादेर्न भानप्रसङ्गः । गुरुत्वस्वरूपस्यैवाभानापादकाज्ञाननाशविरोधित्वे तु योगिनामीश्वरस्य च तदभानप्रसङ्गः । किंच गन्धस्वरूपस्य तथात्वे घ्राणे-

नापि गन्धाग्रहप्रसङ्गः स्यात्तत्र चक्षुषान्तःकरणे प्रापिते गन्धभानप्रसङ्गः गन्धस्य चक्षुरयोग्यत्वेऽपि चक्षुषोऽन्तःकरणप्रापणमात्रफलत्वेन तस्य कृततयाऽन्तःकरणस्य च घ्राणस्थले गन्धाज्ञाननिवर्तकत्वस्य क्लृप्ततया च तेन तदज्ञाननाशस्यावश्यं कार्यत्वाद्वृत्त्यभ्युपगमे च वृत्तिपर्यन्तव्यापारत्वेन चक्षुरादेः स्वायोग्ये गन्धे तज्जनकत्वासंभवादकल्पनाच्च । चक्षुषा प्राप्तस्य गन्धेऽज्ञाननाशकत्वमन्तःकरणस्य न भवतीति वचनं कार्यकर्तुः कार्यदेशे शिबिकया वाऽश्वेन वा प्राप्तौ कार्यकारितायां न भवति विशेष इति दृष्टविरुद्धत्वादनादेयम् । किंचान्तःकरणस्य स्वत एवाज्ञाननाशकत्वे शरीरस्थितहृत्कमलादीनां शरीरपाटने ग्रहणयोग्यानां प्राप्तेनान्तःकरणेनाज्ञाननाशे ग्रहणप्रसङ्गः चक्षुरादिव्यापारस्य प्रापणमात्रफलकत्वेन स्वतःप्राप्तौ तस्याकिंचित्करत्वाद्वृत्त्यभ्युपगमे च तस्याः प्रमाणाधीनतया प्रमाणप्रसाराभावेन वृत्त्यभावादग्रहणोपपत्तेः । वृत्त्यभ्युपगम एव चालोकादीनां वृत्त्युत्पादने चक्षुरादिसहकारित्वोपपत्तिः । प्राप्तिमात्रफलकत्वे तद्वैयर्थ्यं च स्यादिति वृत्त्यभ्युपगमस्यैषा दिक् । **स्वावच्छिन्नेनैव चैतन्येनेति** । एवकारेण वृत्त्याकारायास्स्वभिन्नाया वृत्तेर्व्यवच्छेदः । तथा सत्यनवस्था स्यात् । अतो वृत्तेरवश्यापेक्षितत्वस्य क्लृप्ततया तदनुरोधेन वृत्तेरावश्यकत्वेऽपि स्वस्या एव विषयाकारत्ववत्स्वाकारत्वं वाच्यम् । अथवान्तःकरणपरिणामस्य वृत्तिसुखादेरभासमानस्याभावेनाज्ञानस्य तदावरकताया एवाकल्पनीयत्वात्तद्भङ्गफलावृत्तिर्न कल्पनीया । अनन्तवृत्तितद्ध्वंसाद्यकल्पनालाघवं चाप्यत्र क्लृप्तवृत्त्युपयोगपरिपन्थील्यकल्पनीयमेव स्वाकारत्वमित्यन्यदेतत् । **घटं प्रति वृत्त्यपेक्षत्वात्प्रमातृतेति** । घटाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्याभिन्ना वृत्त्यभिव्यक्ता वा या घटावच्छिन्नचिद्रूपा घटप्रमातादात्म्यरूपं तत्कर्तृत्वमन्तःकरणावच्छिन्नचैतन्ये कर्मत्वं च घट इति न कर्तृकर्मविरोध इति भावः । **साक्षितेति** । अहमर्थवृत्त्योर्भास्यत्वेऽपि तयोर्भानं वृत्त्यनपेक्षं स्वप्रकाशमनादिचैतन्यमेवेति न तत्प्रमा नापि क्रिया न तत्प्रत्यहमर्थस्य कर्तृतेति न तत्रापि कर्तृकर्मविरोधः नापि क्रियाकर्मविरोधः । वृत्तेः स्वभास्यत्वानभ्युपगमादिति भावः । **उभयप्राप्तौ कर्मणीतिसूत्रम्** । उभयोः कर्तृकर्मणोः युगपत् षष्ठीप्राप्तौ कर्मण्येवेत्यर्थः । अगोपेनाश्चर्यो गवां दोह इत्युदाहरणम् । **अकाकारयोरित्यादि** । 'युवोरनाकौ' इत्यनेन ल्युटो युस्थानेऽनोण्वुलोवुस्थानेऽको विहितः स चाकोऽकशब्देन ग्राह्यः । 'अप्रत्ययात्' इत्यनेन स्त्रियां प्रत्ययान्तादप्रत्यये विहितः स चाकारशब्देन ग्राह्यः । स्त्रीप्रत्ययान्तयोरकाकारयोः प्रयोगे 'उभयप्राप्तौ' इत्यनेन कर्मणि षष्ठी न नियम्यत इत्यर्थः । भेदिका बिभित्सा वा जगतो रुद्रस्येत्युदाहरणम् । **कर्मणि चेतीति** । 'उभयप्राप्तौ कर्मणि' इति या षष्ठी सा न समस्यत इत्यर्थः । गवां दोहोऽगोपेनेत्यसमासः । अत्रात्मतत्त्वप्रतिपादनेन मोक्षफलकवस्तुप्रतिपादनप्रकरणत्वावगतेस्तत्र युध्यस्वेत्युक्त्या विहितस्य स्वधर्मत्वेन युद्धस्य प्राकरणिकमोक्षफलसंबन्धप्रतीतेरेकत्र फले भिन्नव्यापारकसाधनद्वयस्य समुच्चयत्वौचित्यात्समुच्चयं मन्यमानस्य कस्यचित्पक्षं निराकरोति—**तन्नेत्यादिना** । युध्यस्वेत्यस्य स्वधर्मबुध्या युद्धेऽर्जुनप्रवृत्तिविषयेऽभ्यनुज्ञामात्रत्वव्यवस्थापनाद्विजयरूपप्रागभिसन्धिविषयफलसंबन्धस्य तत्र प्रतीतेर्मोक्षसंबन्धानुपपत्तेः । शब्दतो मोक्षफलोद्देशेनात्राविधानाच्च समुच्चयो नोचित इति भावः ॥ १८ ॥ यत्र शोको नास्तीत्यादौ यत्र तत्रेति विषयनिर्देशः ॥ १९ ॥ कदाचिन्नायं भूत्वेत्यस्य पर्यवसितार्थमाह—**अभूत्वा प्रागिति** । नाशकाले भवनस्य प्रकृतानुपयोगित्वात् प्रागिति भूयःशब्दो हि वीप्सार्थकः । तस्य च प्रकृतानुपयोगात्पुनरिति तस्य विवरणम् तदप्युत्तरकाल इत्यर्थकम् । पुनर्गच्छेत्यादौ प्रतीतस्य समानकर्तृकसजातीयोत्तरकालत्वस्य प्रकृतेऽनुपयोगात् तथा च प्राक्कालिकसत्त्वभावसमानाधिकरणोत्तरकालिकसत्त्वमुत्पत्तिव्याप्यमात्मनि निषिध्यते सच विशिष्टाभावः प्राक्कालासत्त्वरूपविशेषणविरहादात्मनि वर्तत इति भावः । अयं तु प्रागपि सत्त्वादित्यनन्तरं नोत्पत्तिलक्षणां विक्रियामनुभवतीति पूरणीयम् । न जायते म्रियते वेति प्रतिज्ञाद्वयं तत्र न जायत इत्यस्योपपादकमभूत्वा न भवितेति वाक्यमुक्तं न म्रियत इत्यस्याप्युपपादकं वक्तव्यं तच्च न पृथगुक्तं किंतूक्तवाक्यस्यैवावृत्त्या लभ्यं तदपि न विना पूर्वयोजनाविपरीतयोजनात्मकविपरिवृत्तिं विपरिवृत्तिश्च पूर्ववाक्ये यत्र नञः संबन्धो यत्रासंबन्धश्चोत्तरवाक्ये तत्रासंबन्धस्तत्र संबन्धश्चेति । मानं च तत्र भविता वेत्यत्र वाशब्दः अन्यथा तस्य वैयर्थ्यादित्यभिप्रेत्याह—**तथायमात्मेत्यादि** । उत्तरकालेऽपि सत्त्वादित्यनन्तरं मृतिलक्षणां विक्रियां नानुभवतीति पूरणीयम् । **विनाशायोग्य इति** । अनित्योऽपि वर्तमानतादशायां भवत्येव नाशरहितो नाशायोग्यश्च न भवति प्रतियोगित्वसंबन्धावच्छिन्ननाशत्वावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतावच्छेदकरूपात्मकस्योत्पत्तिमद्भावस्य नाशयोग्यत्वस्य तत्र सदैव सत्त्वादिति भावः । न पक्त्वा व्रजतीत्यादावसमस्तनञः प्रधानक्रिययैव स्वरसतो भवति योगः । तथा सत्येवापक्त्वा गन्तरि पक्त्वा चागन्तरि विशिष्टाभावस्य स्वसमानकर्तृकपाकोत्तरकालिकगमनकर्तृत्वाभावात्मकस्य सत्त्वादुभयस्थले तादृशप्रयोगनिर्वाह इति प्रकृतेऽप्यसमस्तनञो भवितेत्यनेन च संबन्धः स्वारसिकः । तथाच भूत्वा भविता नवेत्येतदेकमेव वाक्यं स्यात् भूत्वेति कृदन्तेन सहान्वये समास एव स्यादित्यभूत्वेत्येव स्यादित्यतो नानुयाजेष्वित्यादौ यथा प्रधानक्रियासंबन्धे यजतिषु येयजामहंकरोत्यनुयाजेषु न करोतीति वाक्यभेदोऽनुयाजे विकल्पापत्तिः यजतिष्वित्यत्रानुयाजभिन्नयागलक्षणापत्तिर्वेत्यसमस्तस्यापि नञः प्रातिपदिकेनैव योगस्तथा सत्यनुयाजभिन्नेषु यजतिषु येयजामहं करोतीत्येकएव वाक्यार्थस्तथा प्रकृतेऽपि भूत्वेत्यनेनैव योगोऽसमासश्चेत्याह—**अत्र न भूत्वेत्यादिना** । नानुपपत्तिः असमस्तस्य नञः क्रियातिरिक्तान्वयनैराकाङ्क्ष्यनिबन्धनविवक्षितबोधस्यानुपपत्तिर्नेत्यर्थः । तस्यापि तत्राकाङ्क्षाभ्युपगमादित्यर्थः । **वावचनानर्थक्यं तु स्वभावसिद्धत्वादिति** । यथाहि घटादिशब्दानां

कम्बुग्रीवादिमदर्थे साधुत्वस्य नास्ति वचनं तस्य स्वभावसिद्धत्वात् ग्राहकमनपेक्ष्य लोकैस्तत्र प्रयोगादिति व्यवहारादवधृतो यो घटादिपदानां घटाद्यर्थप्रतिपादनसामर्थ्यस्वभावः तेनैव तेषां सिद्धत्वात् तथा नियमेनाभूत्वाऽपक्त्वाऽघटइत्यादय एव लौकिकानां प्रयोगा इति सद्व्यवहारावधृताभवनाद्यर्थप्रतिपादनसामर्थ्यस्वभावादेव तेषां सिद्धत्वात् नञ्समासवचनेनापि न भवितव्यमिति नञ्समासवचनानर्थक्यं तु वा स्वभावसिद्धत्वादित्यर्थः । नहि यत्कदाचिद्भवति तत्स्वभावसिद्धं भवति कदाचित् कृष्णमाश्रितो राज्ञः पुरुषः कदाचिदाश्रितः कृष्णं पुरुषो राज्ञ इति कदाचित्कृष्णाश्रितो राजपुरुष इति तत्र स्वभावसिद्धत्वाभावात् वाक्यव्यवहारदर्शनगृहीतस्य वाक्यातिरिक्ते वाक्यार्थासाधुत्वस्य वाक्यवदाश्रितकृष्णपुरुषराजादेः साधुत्वस्य वा व्यवच्छेदाय 'द्वितीयाश्रित' इत्यादिवचनं सार्थकं नञ्समासस्थले तु न तथेति भावः । **अस्तित्वविपरिणामौ त्विति** । अस्तित्वं च न सत्तामात्रं नित्यसाधारणस्य तस्य परिणामरूपत्वाभावात् किंतु प्राथमिकदेशसंबन्धः उत्पत्तिश्च प्राथमिककालसंबन्धः तत्र कालप्रवेशेऽस्तित्वस्य भवत्यन्तर्भाव इति कृत्वा नास्तित्वस्य न पृथङ्निराकरणोक्तिः विपरिणामश्च पूर्वावस्थाविपरीतः परिणामः । यस्मिन् सति न प्रत्यभिज्ञायते भावः । तथाच संस्थानानन्यत्वे सति प्रचुरप्रत्यभिज्ञानविरोधिपरिणामो विपरिणामः संस्थानान्यत्वे सति तादृशः परिणामो नाशः तत्र संस्थानान्यत्वं विहाय प्रत्यभिज्ञाविरोधिपरिणाममात्रे नाशे संभवति विपरिणामस्यान्तर्भाव इति कृत्वा विपरिणामस्यापि नास्ति पृथङ्निराकरणोक्तिरिति भावः ॥ २० ॥ **अवयवापचयेन गुणापचयेन चेति** । यद्यप्यवयवापचयस्य समवायिकारणनाशपर्यवसायित्वेन तेनावयविनाशो युक्तः गुणापचयेन तु तन्नाशो न युक्तः एकत्वसंख्यापरिमाणादीनामाश्रयनाशादेव नाशात् रूपादीनामप्यपार्थिवानामाश्रयनाशादेव नाशात् पाकेन पार्थिवरूपादिनाशेऽप्यवयविनो विनाशादर्शनात् संयोगादीनां नाशेऽप्यवयविनो विनाशाभावात् तथापि गुणापचयेनात्रावयवसमवेतासमवायिकारणभूतगुणापचयो विवक्षितः तस्य चावयविनाशकत्वं दृश्यत एव । यद्वा य एवावयवा मधुरादिगुणविशिष्टा दुग्धतया परिणतास्त एवाम्लादिगुणविशिष्टा दधिजाता इति मधुरादिगुणापचय एव दुग्धनाशक इत्यभिप्रायेण तदुक्तिः । अत्र परिणामपरिणामिनोस्तादात्म्यात् अवयवस्येव गुणस्याप्यवयविसंबन्धित्वमस्त्येवेति । **ननु जन्यत्वेनेति** । भावत्वे सतीति पूरणीयम् । तेनाविनाशिनि विनाशेन व्यभिचारः । यद्वा भावत्वे सतीति न देयम् । ध्वंसस्याप्युपादानात्मकस्य नाशसंभवात्सर्वोपादानाज्ञाननाशस्याप्यनधिष्ठानात्मकस्य दृश्यत्वेन ज्ञानतोऽज्ञानवदेव निवृत्तेरिति । अत्र पक्षेऽन्वयक्रमभङ्गात्पक्षान्तरमाह—**अथवेति अभ्यनुज्ञानादिति** । तथाच व्यावहारिककर्तृत्वप्रतिक्षेपो न वक्तुमर्ह इति भावः ॥ २१ ॥ **अपराणीति** विशेषणमुत्कर्षेत्यादि । न विद्यते परो यस्मात् तदपरमनुत्तमवत् परशब्दश्चोत्कृष्टवचनः । तथाचापरशब्दादत्यन्तोत्कृष्टार्थप्रत्ययो युक्त इति । **अन्यानि देवादिशरीराणीति** । यद्यप्यन्यशब्दस्य हानकर्मशरीरापेक्षयोत्कृष्टशरीरबोधकत्वं पदमर्यादयाऽपरशब्दवन्न संभवति तथापि हानप्रयोजकस्य जीर्णत्वस्योक्ततयोपादानप्रयोजकमपि वक्तुमुचितम् एवं दृष्टान्ते तस्योक्तत्वात् दार्ष्टान्तिकेऽपि तत्प्रतिपादयितुमुचितमिति लक्षणयाप्यन्यशब्दोऽप्यतिशयोत्कृष्टपरो वाच्यः सचोत्कर्षो मनुष्यशरीरापेक्षया देवशरीरत्वादिकमेवेति तथोक्तम् । नच दृष्टान्तदार्ष्टान्तिकयोर्नवानीत्युक्तमेव नवत्वमुपादानप्रयोजकमिति वाच्यम् । उत्कृष्टत्वेन ज्ञायमानमेव हि नवत्वं भवति तथानुत्कृष्टस्यापि नवस्य संभवादित्यपरपदान्यपदयोर्भिन्नार्थकत्वं विहायोत्कृष्टार्थकताया एव वाच्यत्वात् ॥ २२ ॥ **शस्त्रादीनामिति** । शस्त्रपदेनात्रास्यादिभावमापन्ना पृथिवी ग्राह्या । तेन पृथिव्येत्यादेर्नासङ्गतिः । यद्यपि स्वतो युद्धे न प्रकृता अग्न्यादयस्तथाप्याग्नेयवारुणाद्यस्त्रभावमापन्ना भवन्ति प्रकृता इति पृथिव्यादिषु चतुर्षु स्थूलेन तत्तद्भूतेन स्थूलस्य तस्य क्रमेणाविनाशेऽपि क्रमशः सूक्ष्मेण तत्तद्भूतेन भवेत्सूक्ष्मस्य तस्य विनाश इति शङ्का मा भूत् इति श्लोके क्रमरहिततयाभिधानं बोध्यम् । तथाच स्थूलत्वसूक्ष्मत्वयोरतन्त्रत्वं क्रमेण नाशकतायामिति सूचितमित्युक्तशङ्कानिरास इति भावः ॥ २३ ॥ शस्त्रादीनामित्यादौ सप्तम्यन्तद्वयघटितपाठे समस्तश्लोकस्येदमवतरणम् तन्नाशकत्वासामर्थ्ये हेतुमच्छेद्यत्वाद्युक्तिलभ्यनाशानर्हत्वद्वाराच्छेद्यत्वादिकम् तज्जनितनाशानर्हत्वे तन्नाशकत्वासामर्थ्योपपादके हेतुं तदुपपादकाच्छेद्यत्वाद्युपपादकं नित्यत्वादिकमाह एतच्छ्लोकेनेत्यन्वयः । नाशानर्हत्व इत्यनन्तरं चकारो युक्तः । नच च्छेदाद्यनर्हत्वे हेतुमाहेत्यनेनाग्रिमग्रन्थेन पौनरुक्त्यमिति वाच्यम् । विशेषाभावरूपाणामच्छेद्यत्वादीनां नाशानर्हत्वरूपसामान्याभावातिरिक्तत्वात् । तज्जनितनाशानर्हत्वं हेतुमाहेति यदि पाठः स्यात्तदा न भवति सङ्गमनक्लेशबाहुल्यम् । अच्छेद्यत्वाद्युक्तिरेव हि विशेषाभावकूटस्य सामान्याभावपर्यवसायित्वेन नाशानर्हत्वोक्तिरिति नासङ्गतिः । **पूर्वापरकोटीति** । प्रागभावध्वंसेत्यर्थः । पूर्वा कोटिः सामग्रीवा तेन प्रागभावानङ्गीकारेऽपि न क्षतिः । यद्यपि पूर्वकोटिराहित्यमेवानुत्पाद्यत्वे प्रयोजकं पूर्वकोटेरेवोत्पाद्यत्वव्यापकत्वात् उत्तरकोटेरतथात्वात् उत्पाद्येऽपि ध्वंसे तदभावात् तथापि विशेषणविशेष्ययोरेकस्य तथात्वे विशिष्टस्य तथात्वानपायात् पूर्वकोटिराहित्यविशिष्टापरकोटिराहित्यविवक्षणे न दोषः । यद्वा अत इत्यनेनावयुत्यपूर्वकोटिराहित्यस्यैव प्रयोजकत्वं विवक्षितं योग्यत्वात् । मिलितस्यैव नित्यपदप्रतिपाद्यतावच्छेदकत्वात्तथोक्तिः । अथवा प्रागभावप्रध्वंसयोरप्यविद्यापरिणामत्वेनोत्पाद्यत्वाद्विनाश्यत्वाच्चोभयोरपि व्यतिरेकौ ब्रह्ममात्रनिष्ठौ भवत एवानुत्पाद्यत्वप्रयोजकौ । नचोभयोरवध्योः पूर्वं परतश्च भावसत्त्वप्रसङ्गः । प्रागभावप्रागभावस्य ध्वंसध्वंसस्यापि प्रतियोगिप्रतियोगिकत्वाभ्युपगमात् । मिथ्यात्वघटकीभूताभावस्य दृश्यत्वेन प्रतियोगितदभावोभयप्रतियोगिकत्ववत् । नचानादित्वमेवास्तु प्रागभावस्येति वाच्यम् । जीवेशादिषट्पदा-

र्थस्यैवात्रानादित्वाभ्युपगमात्। एवं प्रतियोगिविनाकृतस्य दुर्निरूपत्वात् प्रतियोगिनासमं वास्तविकस्य संबन्धस्य विभिन्नदेशकालत्वेनासंभवेन प्रतियोगिविशेषितरूपेण वास्तविकत्वासंभवात् प्रागभावस्य प्रतियोगिनश्च सत उत्पत्तिविनाशयोरयोगात् प्रागभावंविना प्रतियोगिनोऽप्युत्पत्त्यसंभवात् प्रतियोगिप्रागभावयोरुभयोरपि कल्पितत्वस्य वाच्यत्वात् प्रतियोगिकल्पनतत्कल्पनयोर्हि बीजाङ्कुरवत्परस्परापेक्षत्वम् कल्पनाच प्रतियोग्यनुत्तरतयैव हि प्रागभावस्य प्रागभावापूर्ववर्तितयैव च प्रतियोगिन इति नास्त्येवोक्तदोषः। **यावद्विकारं तु विभाग इति न्यायादिति**। 'यावद्विकारं तु विभागो लोकव'दिति वेदान्तसूत्रोक्तयुक्तेराकाशकालदिक्परमाण्वादयः सर्वे विकारा आत्मान्यत्वे सति विभक्तत्वादित्यर्थः। आत्मनोऽप्यनित्यजडपरिच्छिन्नेभ्यो विभक्तत्वात् तत्र व्यभिचारवारणायात्मान्यत्वे सतीति। तथाच धर्मिसमसत्ताकभेदाश्रयत्वादिति पर्यवसितार्थः। तेन विभक्तत्वादित्यस्य न वैयर्थ्यम्। ब्रह्मणि तु स्वसमानसत्ताकभेदविरहात् भेदमात्रस्य कल्पितत्वान्न व्यभिचारः। विकाराः पराधीनसत्त्वका इत्यर्थस्तेनाविद्याया विभक्तायाः विकाररूपत्वाभावात् सर्वस्याविद्याविकारत्वात् स्वस्याः स्वविकारत्वासंभवात् न तत्र व्यभिचारः। तस्या अपि कल्पितत्वेन ब्रह्मसत्तयैव सत्त्वादिति। **परमाण्वादीनामनभ्युपगमादिति**। परमाणवस्तावदभ्युपगम्यन्ते वैशेषिकैर्नैयायिकैश्च तत्कार्यभूतास्तेभ्योऽत्यन्तं भिन्ना अवयविनश्च। तत्राप्रत्यक्षाः परमाणवः प्रत्यक्षैरवयविभिश्चानुमेया इत्यवयविसाधनमेव प्रथममुपदर्श्यते। तथाहि जलाहरणप्रावरणादिकार्यं कपालतन्त्वाद्यसाध्यमुपलभ्यमानं कपालाद्यतिरिक्तं स्वकारणमवयविनं घटादिकं साधयति। नच घटपटाद्यारम्भकत्वेनाभिमतैः संयोगविशेषैर्विशेषिताः पूर्वावस्थाविलक्षणावस्थाः कपालादय एव जलाहरणादिकार्यकारिणः सन्तु किं घटाद्यतिरिक्तावयविभिरिति वाच्यम्। तथा सति कपालतन्त्वादयोऽपि संयोगविशेषापन्नाः कपालिकांश्वादय एव सन्तु किं तैरपीत्येवं क्रमेण परमाणुसंज्ञाशालिद्रव्यसङ्घातस्यैव संयोगविशेषापन्नस्य चरमावयवित्वेनाभिमतघटाद्यात्मकत्वापत्तौ सर्वेषां घटाद्यवयविनामप्रत्यक्षत्वापत्तेः। प्रत्यक्षता हि महत्त्वोद्भूतरूपादिसंबन्धात् स च परमाणुत्वविरोधी न परमाणुसङ्घाते संभवति, समुदायस्य प्रत्येकानतिरेकात्। कथं हि प्रत्येकमप्रत्यक्षं समुदायभावापन्नं सत्प्रत्यक्षं स्यात् केशादिकमेकैकमपि हि समीपे प्रत्यक्षमिति समुदायभावापन्नं दूरादपि प्रत्यक्षम्। नचातिरिक्तावयव्यभावे परमाणुत्वविरोधिमहत्त्वरूपगुणस्वरूपमेव दुर्लभं कस्य प्रत्यक्षत्वप्रयोजकत्वं स्यात् अतः संयोगविशेषः संयोगविशेषापन्नपरमाणुसंघातत्वं वा महत्त्वं स्थौल्यं च तदेव प्रत्यक्षत्वप्रयोजकं तस्यैकत्वादेवैकोऽयं घट इति व्यवहार एको महान्धान्यराशिरितिवत्तेनैव च संघातत्वेन महत्त्वस्थूलत्वव्यवहारः सङ्घातत्वविशेषो वाऽतद्व्यावृत्तिरूपापोहो वा घटत्वादिरपीतिवाच्यम्। अनन्तानां तादृशसंयोगानां परस्परानपेक्षाणां प्रत्यक्षत्वप्रयोजकत्वे तादृशसंयोगघटकपरमाणुद्वयसंयोगमात्रे जाते शिष्टे वा प्रत्यक्षापत्तेः। अतः परस्परापेक्षस्य तथात्वं वाच्यम्। तथा सति विनिगमनाविरहेण गुरुतरानन्तप्रत्यक्षकार्यकारणभावापत्तेः अतोऽतिरिक्तस्यैकस्य महत्त्वस्य लघुतरमेककारणत्वमेव हि युक्तम्। उक्तसङ्घातत्वमपि हि न महत्त्वं तद्धि सङ्ख्यावाऽपेक्षाबुद्धिविषयता वा न संभवति। परमाणुष्वतीन्द्रियेष्वतीन्द्रियसंयोगविशिष्टेष्वयमेकोऽयमेक इत्यपेक्षाबुद्धेरेवासंभवात् संभवे वाऽपेक्षाबुद्ध्यवसानायां सङ्ख्यायां त्रिक्षणावस्थायिन्यामपेक्षाबुद्धौ च व्युपरतायां घटादीनां प्रत्यक्षं न स्यात् प्रयोजकस्य सङ्ख्यादेरभावात् कार्यकारणभावानन्त्यापत्तेश्चैकैकस्मिन् घटे संख्यादेरुक्ताया आनन्त्यात्। अतीन्द्रियगतायाः संख्याया अप्यतीन्द्रियत्वेन महानयमित्यादिप्रत्यक्षविषयतापि हि न स्यात्। तादृशापेक्षाबुद्धिरहितस्य जनस्य तादृशसंख्योत्पत्तेरसंभवेन तदभावदशायामपि महत्त्वप्रत्यक्षोत्पत्तेस्तद्विषयत्वस्योक्तसंख्याया असंभवात्। एवंचैको घट इति प्रत्यक्षे सङ्घातत्वगतैकत्वस्य विषयत्वासंभवादतिरिक्तावयविगतैकत्वस्यैवाऽकामेन विषयत्वस्योपेयत्वात्। अपेक्षाबुद्धिविषयत्वस्य सुतरामेव प्रत्यक्षविषयत्वासंभवेन महत्त्वरूपत्वासंभवात्। अयं घट इति प्रत्यक्षविषयत्वस्यानन्तपरमाणुषु तत्संयोगेषु च कल्पनामपेक्ष्यैकस्यातिरिक्तावयविन एव विषयत्वकल्पनाया उचितत्वात् साधकप्रत्ययेन लाघवादेकघटादिसिद्धौ तत्प्रागभावध्वंसादिकल्पनागौरवस्य फलमुखत्वेनादोषत्वात् परमाणूनां समुदायत्वेन घटादिरूपत्वे प्रत्यक्षत्वे च सति धान्यराशिरयमितिवत् परमाणुराशिरयमिति घटादावपरीक्षकाणामपि हि प्रत्ययः स्यात्। तद्वारणाय दोषप्रतिबन्धकत्वकल्पने चातिगौरवात् जलाहरणादिकंप्रति कारणत्वस्यानन्तपरमाणुषु संबन्धकल्पनाया अपि गुरुत्वात् संयोगानपेक्षस्य समुदायत्वस्य तदवच्छेदकत्वेऽसंयुक्तेभ्योऽपि परमाणुभ्यो जलाहरणापत्तेः संयोगापेक्षस्य तत्त्वे संयोगस्याप्यनन्तत्वेन विनिगमनाविरहेणानन्तकारणत्वापत्तेः अपोहरूपस्य घटत्वस्यापि हि न कारणतावच्छेदकत्वसंभवः। घटव्यक्तेरतिरिक्तस्यैकस्याभावेन तत्तद्व्यक्तिभेदस्य निवेशयितुमशक्यत्वात् तत्तत्परमाणुव्यक्तिभेदकूटावच्छिन्नभेदस्य संयुक्तपरमाणुभ्यो संयुक्तपरमाणोरनन्यत्वेऽसंयुक्तेष्वपि सत्त्वेन तेभ्यो जलाहरणापत्तेः अन्यत्वे संयुक्तव्यक्तिभेदनिवेशेनोक्तापत्तिवारणेऽपि संयुक्तानामतिरिक्तानां तावत्परमाणूनां कल्पनापेक्षयाऽतिरिक्तैकावयविकल्पनाया एव युक्तत्वात्। एवं घटादीनां प्रत्यक्षत्वोपपत्तयेऽदृश्यपरमाणुपुञ्जात् दृश्यपरमाणुपुञ्जोत्पत्त्यभ्युपगमो नितरामयुक्तः। अदृश्यस्वभावा हि परमाणवो न दृश्यस्वभावा भवितुमर्हन्ति। दृश्याश्चेत्तेऽन्य एव परमाणुभ्यो भवेयुरिति दृश्यैकावयविकल्पनैव ज्यायसी। किंच पुञ्जः समुदायिभ्योऽनतिरिक्तोऽतिरिक्तो वा। अनतिरिक्तत्वे चैकैकस्यापि दृश्यत्वापत्तिः अतिरिक्तत्वे स चैक एवेति सिद्ध एवावयवी। नचावयविनोऽतिरिक्तत्वे य एवार्वाग्भागे सत्स एव पश्चाद्भागेऽपीत्यर्वाग्भागे चक्षुःसन्निकर्षे पश्चाद्भागावच्छिन्नोऽप्युपलब्धः स्यात् तथा सति तत्रायं श्वेतो वा

पीतादिर्वा निश्चीयेत नत्वेवम् । अनुपलब्धत्वे चोपलब्धत्वानुपलब्धत्वरूपविरुद्धधर्माध्यासप्रसङ्ग इति वाच्यम् । अवयवी चैक उपलभ्यत एवेति हि न विरुद्धधर्माध्यासः । पश्चाद्भागोऽवयवविशेषो नोपलभ्यते न तस्य रूपमपि तत्रैव संशयो नावयविरूपे चित्रस्य विजातीयस्य तद्रूपस्य निश्चितत्वात् एकजातीयरूपवत् सकलावयवारब्धत्वे हि सुतराम् । न चातिरिक्तोऽयमवयवी अवयवे चैकस्मिन् कार्त्स्न्येन वर्तेत एकदेशेन वा कार्त्स्न्येन वृत्तावयवान्तरवैयर्थ्यम् एकदेशेन वृत्तौ वृत्तिनिरूपकावयवात्तद्वृत्तितावच्छेदकस्यातिरिक्तस्यैकदेशस्य वक्तव्यतापातः नहि स्ववृत्तौ स्वमेवावच्छेदकं भवतीति वाच्यम् । अवयवेषु व्यासज्यावयवी वर्तेत इत्येतावन्मात्रस्योपगमात् कस्याप्यवयवस्य वैयर्थ्यासंभवात् । अव्याप्यवृत्तित्वानभ्युपगमेनावच्छेदकदेशविकल्पस्यासंभवात् कृत्स्नश्चैकदेशश्च समूहस्य हि भवति नैकस्येत्यतोऽपि तद्विकल्पासंभवात् मालायामेकैकस्मिन् पुष्पे हि सूत्रं तदवयवश्च वर्तत इति एवं चलत्वाचलत्वादिरूपविरुद्धधर्मसंसर्गोऽपि सुनिरस्यः वाय्वभिघातादिनैकशाखाकम्पेऽवयविनः कम्पानुपगमादिति सिद्धेऽवयविनि तदवयवधारायाः क्वचिदवश्यं विश्रामो वाच्यः । अन्यथा मेरुसर्षपयोः साम्यप्रसङ्गः । अथास्तां दूरे मेरुसर्षपयोः साम्यचिन्ता सर्षपराजमाषयोरपि न भवति साम्यम् । नचानन्तावयवत्वेन साम्यापादनमिति वाच्यम् । इष्टापत्तेः । नचानवस्थादोषो बीजाङ्कुरानवस्थावददोषत्वात् । समानपरिमाणता हि नेष्टा सा च न संभवति । तथाहि । यावद्विभक्तुं द्रष्टुं च शक्यते तावद्विभागे कृते यदि पञ्चसर्षपस्य भवन्ति भागा भवन्ति तदा विंशतिभागा राजमाषस्येति पञ्चारब्धत्वात्सर्षपमल्पपरिमाणं विंशत्यारब्धत्वात् ततो महत्परिमाणं राजमाषं निश्चिनुमः । सर्षपे पञ्चानां दृश्यमानावयवानामविश्रान्तावयवधारा राजमाषे विंशतीनामित्यल्पत्वाधिक्ये सुनिश्चेय इतिचेन्न । यो हि पञ्चस्वेको भागस्तमेवाधिकृत्य चिन्तायां जगदिदं व्याप्तमिव तदवयवावयवपरम्पराभिरवगम्यते । तथाहि । तस्यैकस्य द्वाववयवौ द्वयोरेकैकस्य द्वौद्वौ चतुर्णां द्वौद्वावित्यष्टावेवमुपर्युपरि भागचिन्तायामेकैकस्य यत्किंचिद्देशचिन्तायां च भवत्येव विश्वव्याप्तिरिति । तादृशपञ्चावयवके सर्षपे यदतिशयितं प्राप्यते महत्त्वं चेतःपथातिवर्तिमेरोरपि तादृशकोट्यवयवकस्य किं ततोऽतिशयितं महत्त्वं स्यादिति मेरोरपि यो महान् स्यात्तेनापि समं महत्त्वेन साम्यं सर्षपादपि यो लघुः तस्याप्यापादयितुं शक्यं किं मेरुसर्षपयोः साम्यापादने वक्तव्यम्, एवंचावयवधाराया विश्रामावश्यंभावे केचित्त्रसरेणावेव विश्रामो मन्तव्यः तन्महत्त्वस्य नित्यत्वाभ्युपगमात् जन्यमहत्त्वं प्रत्येवानेकद्रव्यत्वस्य प्रयोजकतयापकृष्टमहत्त्वोपपत्तये त्रसरेणोर्न सावयवत्वप्रसङ्गः । नच नित्यत्वे मानाभावः । त्रसरेणुमहत्त्वं नित्यं सजातीयनिरूपितोत्कर्षापकर्षोभयानाधारत्वे सति महत्त्वत्वात् गगनादिमहत्त्ववदित्यनुमानस्य मानत्वात् । यथा गगनपरिमाणं स्वापेक्षयोत्कृष्टमहत्त्वस्याभावेनापकर्षानाधारत्वादुभयानाधारः अथच नित्यमेवं त्रुटेर्महत्त्वापेक्षयाऽपकृष्टमहत्त्वाभावेन तदुत्कर्षानाधारत्वादुभयानाधार इति तेनापि नित्येन भवितव्यम् । अणुव्यवहारोऽप्यपकृष्टमहत्त्वेन परमाणुव्यवहारश्चोत्कर्षानाश्रयमहत्त्वेनोपपाद्य इति न तदर्थमपि किंचिद्द्रव्यं महत्त्वानाश्रयभूतमुपगन्तव्यमित्याहुः तन्न । निरुक्तानुमानस्याप्रयोजकत्वात् महत्त्वस्य नित्यतायामपकर्षानाधारत्वमात्रस्य लाघवेन प्रयोजकत्वात् महत्त्वस्यापकर्षाश्रयत्वे हि तदाश्रयस्य विभुत्वासंभवेन परिच्छिन्नत्वापत्तौ विभाज्यत्वेन सावयवत्वात् अनित्यत्वं स्यादिति तदाश्रितं महत्त्वमपि न नित्यं स्यादपकर्षानाश्रयत्वे च विभुत्वाव्याघातादपरिच्छिन्नानवयवत्वेनानित्यत्वस्य तदाश्रयेऽसंभवेन तस्य नित्यत्वमनपनोदितं भवतीत्युक्तहेतावुत्कर्षप्रवेशस्य व्यर्थत्वात् उक्तोभयानाश्रयत्वहेतोरपकर्षानाश्रयमहत्त्वत्वेन सोपाधित्वाच्चापकर्षानाश्रयत्वमात्रेण त्रसरेणुमहत्त्वे नित्यत्वसाधनस्य स्वरूपासिद्ध्या चासंभवात् प्रत्युत चाक्षुषत्वे सति महत्त्वत्वादिना नित्यत्वाभाव एव तत्र सिद्ध्यति । नचेदमप्यप्रयोजकम् । महत्त्वस्य च तदाश्रयस्य च चाक्षुषत्वेऽनेकद्रव्यत्वस्य सावयवारब्धत्वरूपस्य प्रयोजकत्वेन नित्यत्वे चाक्षुषत्वप्रयोजकस्य तस्याभावेन चाक्षुषत्वमेव न स्यात् । नचापकृष्टमहत्त्वमेव लाघवात्तादात्म्येन स्वप्रत्यक्षे समवायेन द्रव्यप्रत्यक्षे च प्रयोजकमस्तु किमनेकद्रव्यत्वेन गुरुणा तथाच त्रुटेर्नित्यत्वेऽपि न क्षतिरिति वाच्यम् । व्यभिचारानिश्चयासहकृतान्वयव्यतिरेकनिश्चयस्य प्रयोज्यप्रयोजकभावनिर्णायकत्वेन त्रसरेणोर्नित्यत्वस्य संदिग्धत्वात् अन्यत्र सर्वत्रावयवसंख्याप्रचयमहत्वान्यतमस्यान्वयव्यतिरेकाभ्यामपकृष्टमहत्वे प्रयोजकत्वावधारणेन त्रसरेणोर्नित्यत्वे तस्यैवानुपपत्तेः । अपकृष्टमहत्वोत्कर्षेण चाक्षुषोत्कर्षस्य दूरस्थवस्त्वादौ दर्शनादकारणोत्कर्षस्याकार्योत्कर्षप्रत्यप्रयोजकत्वात् कारणत्वेनावधृतापकृष्टमहत्वस्योत्कर्षतारतम्येऽवयवसंख्यातिरेकविशेषस्यैव नियामकत्वात् एवं सति प्रत्यक्षापकर्षतारतम्येऽपि महत्त्वापकर्षतारतम्यस्यावयवसंख्याल्पत्वविशेषनियम्यस्य प्रयोजकतयावश्यमुपेयत्वात् त्रसरेणुप्रत्यक्षापकर्षतमत्वस्य तन्महत्वापकर्षतमत्वप्रयोज्यत्वात् तस्याप्यवयवसंख्याल्पत्वप्रयोज्यत्वेन त्रसरेणोर्नित्यत्वे तदपि न स्यादिति त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वादित्यनेनेन त्रसरेणोरवयवसिद्धौ न त्रुटावेव विश्रामः । नचावयवो दृश्यस्य त्रसरेणोर्दृश्य एव वाच्यः दृश्यंप्रत्यदृश्यस्यानुपादानत्वात् अदृश्योपादेयस्यादृश्यत्वापत्तेः दृश्यश्च त्रसरेणोरवयवः अनुपलम्भबाधित इति न सावयवत्वसिद्धिरिति वाच्यम्, तेजसि व्यभिचारेण तन्नियमस्य त्याज्यत्वात् दृश्यते ह्यदृश्यादेव भर्जनकपालस्थवह्नेर्दृश्यवह्न्युत्पत्तिः । नहि दृश्यत्वमदृश्यत्वं वा स्वाभाविकमस्माकं किंतु महत्वोद्भूतरूपतदभावादितः तद्यदि त्रसरेणुरदृश्यादप्युत्पन्नो महाञ्जातः किमिति न स्यात् दृश्य इति योग्यानुपलब्ध्यभावान्न त्रसरेणोरवयवासिद्धिः । नच प्रत्यक्षविषयस्य सर्वस्यैव घटादेर्महदवयवारब्धत्वदर्शनात् त्रसरेणुरपि यद्यवयवारब्धः स्यात् महदारब्ध एव स्यात् तादृशश्चावयवो योग्यानुपलब्धिबाधित एवेति वाच्यम् । यथाकथंचित्सहचारेण व्याप्तिसिद्धौ

तेजसः प्रचुरमुद्भूतस्पर्शवत एवोपलब्धेरतादृशं नयनं तैजसं हि न सिध्येत् । एवं सिद्धे त्रसरेणोरवयवे त्रसरेणोरवयवाः सावयवाः चाक्षुषद्रव्यारम्भकत्वात् कपालवदित्यनुमानात्तदवयवसिद्धिः । नच चाक्षुषद्रव्यारम्भकारम्भकत्वात् कपालिकादृष्टान्तेन तदवयवोऽपि सिध्येदिति वाच्यम् । अनवस्थया मेरुसर्षपसाम्यप्रसङ्गरूपप्रतिकूलतर्कपराहतत्वादुक्तानुमानस्य । अथ परमाणव एव सन्तु साक्षात्त्रसरेणोरारम्भका इतिचेन्न परमाणवो नाहत्य स्थूलारम्भकाः परमाणुत्वे सति बहुत्वात् घटोपगृहीतपरमाणुवदित्यनुमानेन द्व्यणुकमनारभ्य परमाणोस्त्रसरेण्वनारम्भकत्वसिद्धेः द्व्यणुकेषु व्यभिचारवारणाय परमेति परमाणुद्वयस्य स्वापेक्षया स्थूलद्व्यणुकारम्भकत्वात् तत्र व्यभिचारवाणाय बहुत्वादिति । द्व्यणुकादिपरम्परया घटारम्भकपरमाणूनां साक्षाद्घटारम्भकत्वे भग्ने घटे कपालादिर्नोपलभ्येत तस्य घटानारम्भकत्वादिति । घटोपगृहीताः परमाणवो यथा न साक्षाद्घटारम्भकाः तथा परमाणवो न साक्षात्त्रसरेणोरप्यारम्भका इति द्वाभ्यां परमाणुभ्यामेव द्व्यणुकस्यारम्भो न त्रिप्रभृतिभिः बहुभिः परमाणुभिः कस्यचित् द्रव्यस्योत्पत्तिः । द्व्यणुकं चेश्वरापेक्षाबुद्धिजन्यपरमाणुगतद्वित्वजन्यपरमाणुपरिमाणविलक्षणपरिमाणवज्जायत इति । अथ द्व्यणुकानि नाहत्य महदारम्भकाणि द्व्यणुकत्वे सति बहुत्वात् घटोपगृहीतद्व्यणुकवदित्यनुमानात् द्व्यणुकानामपि द्व्यणुकद्वयात्किंचिदारभ्य महदारम्भकत्वं स्यात्तच्च नेष्टमिति तद्वारणाय यदि विनाशानन्तरोपलभ्यमानावयवकमहत्कार्यारम्भकाणि नाहत्येति वाच्यं तदा परमाणुपक्षकानुमानेऽपि तथैव वाच्यम् । तथाच षड्भिः परमाणुभिः साक्षादपि त्रसरेणोरारम्भ उक्तानुमानबाधाभावात्त्रसरेणोर्विनाशानन्तरोपलभ्यमानावयवकत्वाभावात् द्व्यणुकाभ्युपगमो निरर्थक इतिचेन्न । लोष्टतदवयवतदवयवादीनां गुरुत्वोत्कर्षापकर्षयोः मूलीभूतपरमाणुसंख्योत्कर्षापकर्षाभ्यां वाच्यत्वात् । तत्र हि लोष्टमूलपरमाणुसंख्यावधिकापकर्षस्य तदवयवमूलपरमाणुसंख्यानिष्ठस्य तदवयवगतगुरुत्वापकर्षप्रयोजकत्वम् । संख्ययोरुत्कर्षापकर्षौ चाधिक्यन्यूनत्वे संख्याचारम्भिका ग्राह्या अनारम्भकसंख्यायाः उभयत्रापि साम्यसंभवात् । संख्या चारम्भिका न साक्षात् गुणस्य साक्षात् द्रव्यानारम्भकत्वात् आरम्भकत्वस्य समवायिकारण एवोपगमात् किंत्वसमवायिकारणसंयोगविशिष्टत्वेन समवायिकारणस्यारम्भकत्वे पर्याप्तिसंबन्धेनावच्छेदकतया तत्त्वं च न परमाणुगतैकत्वस्यैकमात्रस्यारम्भकसंयोगविशिष्टत्वासम्भवात् त्रिप्रभृतीनामारम्भकसंयोगविशिष्टत्वसंभवेन त्रित्वादेर्निरुक्तारम्भकत्वसंभवेऽप्यवयविमूलपरमाणुगतत्रित्वादेरवयवमूलपरमाणुगतद्वित्वापेक्षया साम्यस्य न्यूनत्वस्य वा संभवेनावयवगतसंख्यानिष्ठापकर्षावधित्वस्यासंभवात् । अतएवोत्कर्षाश्रयत्वस्यासंभवात् त्रित्वादिर्नोपादेयः । एवंच प्रकृत आरम्भिकोत्कर्षापकर्षाश्रयत्वावधिकत्वयोग्या सैव यतः परमल्पदेशवृत्तिरन्या न संभवति । भवति चैतादृशी द्वित्वसङ्ख्यैवेति परमाणुद्वयसंयोगासमवायिकारणकद्व्यणुकद्रव्यस्य न संभवत्यपलापः । तथा सति परमाणव इत्याद्यनुमाने विनाशानन्तरेत्यादिसाध्यविशेषणं न देयम् । द्व्यणुकाकल्पनलाघवतर्कस्योक्ताविशिष्टसाध्यसाधनव्याप्यव्यापकभावग्रहानुकूलस्याभावेन गुरुत्वोत्कर्षापकर्षव्यवस्थापकानुनिपातिनो द्व्यणुकस्य भोगोपयोगित्रसरेण्वादिमहदनारम्भकत्वे निष्प्रयोजनत्वापत्त्योत्पत्त्यसंभवात् । परमाणुद्वयसंयोगस्यानारम्भकत्वापत्त्या परमाणुगतद्वित्वस्यारम्भकत्वासंभवादुक्तव्यवस्थानुपपत्तेः द्व्यणुकस्य त्रसरेण्वाद्यारम्भकत्वावश्यंभावे त्रसरेणूपगृहीतपरमाणुषु व्यभिचारसंदेहस्याप्यसंभवेन च लाघवेन परमाणुपक्षकोक्तानुमाने ह्यविशिष्टसाध्यसाधनव्याप्यव्यापकभावनिश्चयस्य संभवात् क्वचिद्द्व्यणुकद्वारा क्वचिच्च साक्षात्परमाणूनां त्रसरेण्वारम्भकत्वस्य कारणकारणजातीयस्य कार्यकार्यजातीयानारम्भकत्वनियमेनाप्यसंभवाच्च परमाणुद्वयादेव द्व्यणुकरूपं कार्यं न परमाणुत्रयादितः किमपि कार्यमिति सिद्धम् । एवं द्व्यणुकद्वयादपि न किमपि कार्यम् द्व्यणुकद्वयादुत्पन्नस्य कार्यस्यापि महत्त्वहेत्ववयवबहुत्वमहत्त्वादीनामभावेन महत्त्वासंभवात् द्व्यणुकवदणुरूपस्यैवोपेयत्वात्तद्द्वयादपि कार्यस्याणुरूपस्यैवोपेयत्वात् तत्त्रिभिः कस्यचिन्महत उत्पत्त्यभ्युपगमे द्व्यणुकत्रयादेव तदुत्पत्त्यभ्युपगमस्योचितत्वात् । द्व्यणुकद्वयारब्धद्रव्यस्य निष्प्रयोजनतयाऽनभ्युपगम एवोचित इति द्व्यणुकैर्बहुभिरेव जायते द्रव्यं न द्व्यणुकद्वयादित्यपि सिद्धम् । एवंच द्व्यणुकपक्षकोक्तानुमाने विनाशानन्तरेत्यादिविशेषणविशेषितमेव साध्यं द्व्यणुकद्वयात्कार्यस्य निराकृतत्वात् । तदित्थमारम्भवादः परमाणुमूलकारणक उपपादित इतीदानीं परिणामवादस्य श्रुतियुक्तिसिद्धस्य व्यवस्थापनाय तत्प्रतिकूलं युक्तिमात्रसिद्धमारम्भवादं निराकर्तुं परमाणुमूलकः सर्गो न संभवतीति प्रस्तूयते । तथाहि परमाणुवादिभिरप्युपेयते प्रलय इति तदानीं विभक्ताः परमाणवो यदि संयुक्ताः स्युः स्यात्संभवो द्व्यणुकक्रमेण पुनः सर्गस्य नास्तिसंभवः परमाणूनां संयोगस्य तस्यापि परमाणुवदनुमेयत्वात् । अनुमानं च दृष्टसाधर्म्येण प्रवर्तमानं न दृष्टमर्यादातिलङ्घने भवति हि समर्थम् । दृष्टं च सृष्टिदशायां नोदनाभिघातवेगगुरुत्वद्रवत्वैरेकस्य द्वयोर्वा जाते कर्मणि संयोगभवनं नादृष्टमात्रात्कर्म ततः संयोगभवनम् । नहि संभवति प्रलयावसाने नोदनादित्रितयम् । क्रियासाध्यत्वात्तस्य तत्साध्यत्वाच्च क्रियाया इत्यन्योन्याश्रयात् । गुरुत्वद्रवत्वे हि परमाणुगते नित्य इति तन्मात्रस्य तद्धेतुत्वे परमाणुक्रियासातत्यप्रसङ्ग इति कर्माभावात् संयोगाभावेन न सर्गसंभवः । नच दृष्टमिदानीमप्यदृष्टमात्राद्वायोस्तिर्यग्गमनं वह्नेरूर्ध्वज्वलनं चेति तयोरेवादृष्टमात्रात्प्रलयेति प्रथमं कर्म ततस्तद्द्व्यणुकाद्युत्पत्तिः तेन नोदिता अभिहता वा परमाणवः पार्थिवाः पाथसीया वा जातक्रियाः संयुज्येरन्निति वाच्यम् । वाय्वन्तरेणाभिहताः नोदिता वा वायवो वह्नयश्च सक्रियाः सर्गे नादृष्टमात्रात् वायुरभिश्चासौ मूर्तान्तराभिघातादिप्रयुक्तक्रियावान् मूर्तत्वात् तृणशाखादिवदित्यनुमानेन तथैव सिद्धेः । अतएव निरिछद्रीकृते प्रपूर्णे वायुना पात्रे वायोर्निर्वाते

च प्रदीपादेः स्तैमित्यं क्षणमनुभवसिद्धं विनाशश्च न चिराच्छ्वासावरोधेन प्राणिनो वह्नेश्च स्यादप्यभ्युपगमो दृष्टातिक्रमेणाप्यदृष्टमात्रात् क्रियाया यद्यन्यथानुपपत्तिः सर्गस्य स्यात् । सा हि सर्वतो बलवती । नच सास्ति श्रुतिप्रमाणसिद्धायाः सर्गान्यथोपपत्तेर्वक्ष्यमाणत्वात् शरीराभावेन तदानीमात्मनां ज्ञानेच्छाप्रयत्नासंभवात् प्रयत्नवदात्मसंयोगेन शरीरवदपि न परमाणौ क्रियायाः संभवः । नापि हि शरीरादन्यत्र प्रयत्नवदात्मसंयोगस्य क्रियाजनकता क्वचिदपि दृष्टा । एवमदृष्टमात्रादपि सर्गप्राक्काले नास्ति संभवः परमाणौ कर्मणः अचेतनस्य चेतनानधिष्ठितस्य क्रियाश्रयत्वप्रयोजकत्वयोरदर्शनात् जीवस्य तदानीं चैतन्याभावेनाधिष्ठातृत्वासंभवात् अदृष्टमप्रत्यक्षयतो जीवस्य तदधिष्ठातृत्वस्य चेतनावस्थायामप्यसंभवाच्च । अथ तदधिष्ठातृत्वं द्विधा भवति तन्निष्पादितफलभोक्तृत्वेन राजवत् तद्व्यापारानुकूलप्रयत्नवत्त्वेन च सेनाधिपतिवत् तत्र व्यापारमात्रेऽपि प्रवृत्तिपदवृत्तेः सेनादिप्रवृत्तिप्रयोजकव्यापारवति सेनानायके सेनाधिष्ठातृत्वव्यवहार इवोद्गमननिपतनादिव्यापारवत् कुठारादिप्रवर्तकत्वेन छेत्तरि पुरुषे कुठाराद्यधिष्ठातृत्वव्यवहारः । ईदृशे चाधिष्ठातृत्वेऽधिष्ठेयप्रत्यक्षस्य तन्त्रत्वेऽपि तत्कृतफलभोक्तृत्वेनाधिष्ठातृत्वे तस्यातन्त्रत्वमेवान्यथात्मनोऽतीन्द्रिये अधिष्ठातृत्वं न स्यात् । प्रवर्तकत्वेनेन्द्रियाधिष्ठातृत्वं हि न संभवति इन्द्रियव्यापारे सन्निकर्षे पुरुषप्रयत्नस्य नियमेनापेक्षाभावात् अनिच्छत्यपि दहनसंयोगं पुरुषे कुतश्चित्कारणाद्दहनसंयोगे त्वचि तदुष्णत्वग्रहात् । एवं सभयस्थाने भयहेतुवस्तुदर्शनप्रतिकूलप्रयत्नवत्यपि भीरौ भयविचित्रस्वभावात् बलाच्चक्षुषः प्रवृत्तेश्च । एवं चेन्द्रियाधिष्ठातृत्ववददृष्टकृतफलभोक्तृत्वेन जीवात्मन एवादृष्टाधिष्ठातृत्वसंभवः । ततश्च जीवाधिष्ठितेनाचेतनेनाप्यदृष्टेन परमाणौ क्रियायाः संभवः । नचादृष्टेनात्मवर्तिना नास्ति परमाणोः संबन्ध इति वाच्यम् । स्वाश्रयात्मसंयोगस्य संबन्धत्वसंभवादितिचेत् सत्यम् । सृष्टिकाले हि संभवति न प्रलयेऽधिष्ठातृत्वम् । स्वप्ने बाह्येन्द्रियस्य सुषुप्तौ करणमात्रस्यात्मन्यधिष्ठातृत्वाभावात् । तत्कृतफलभोगस्य फलसाक्षात्काररूपस्य या योग्यता जाग्रदवस्थात्वलक्षणा तस्यास्तत्प्रयोजकत्वस्योपगन्तव्यत्वात् । आत्मत्वमात्रस्य तथात्वे सुषुप्तौ प्रलयेऽपि तथात्वापातात् । तथाच प्रलये शरीराद्यभावेन जाग्रदवस्थादिलक्षणादृष्टकृतफलभोगयोग्यत्वस्याप्यसंभवात् फलभोगोपहितत्वस्य स्वतरामसंभवात् तत्कृतफलभोक्तृत्वेनाप्यदृष्टाधिष्ठातृत्वं न संभवत्येव नच सुषुप्त्यादावस्त्येवाधिष्ठातृत्वं त्वङ्मनःसंयोगाद्यभावान्नेन्द्रियादिकृतफलभोग इति वाच्यम् । सुषुप्त्यादौ कदाचिदपि फलभोगाभावेऽधिष्ठातृत्वे मानाभावात् । चेतनाधिष्ठितस्यादृष्टस्य फलाय प्रवृत्तिसंभवेन कदाचित्तदापत्त्या नियमेन तदभावस्योपपादयितुमशक्यत्वात् । जाग्रदवस्थायां बहुधा फलभोगदर्शनात्तथात्वस्योपगमात् कदाचित्फलभोगाभावस्य प्रतिबन्धकसद्भावादिनोपपादनीयत्वात् । किंच दृष्टानुसारेण प्रवृत्तमनुमानं सृष्टिकाले शरीरेन्द्रियादिमत एव दृष्टमधिष्ठातृत्वमिति तदतिक्रमेण प्रलये कथमदृष्टाधिष्ठातृत्वं साधयेत् । नचानुमानस्य दृष्टान्तदृष्टसकलधर्मोपजीवकत्वं नास्तीति वाच्यम् । अप्रयोजकधर्मानुपजीवनेऽपि प्रयोजकस्यावश्यमुपजीवनात् । प्रयोजकं चाधिष्ठातृत्वे चैतन्यं अन्यथा ह्यचेतनस्यापि तत्त्वं स्यात् । नचात्मत्वमेव ततो विशेषः सुषुप्तमुक्तयोरपि तथात्वेनादृष्टाधिष्ठातृत्वापातस्योक्तत्वात् चैतन्यं हि शरीरनियतं भवतां नित्यचैतन्यास्वीकारात् प्रलये नास्तीति । एवमदृष्टमात्रस्य परमाणुक्रियायां स्वाश्रयात्मसंयोगेन हेतुत्वे परमाणुक्रियासातत्यप्रसङ्गः । यद्यपि परमाणुक्रियाजन्यतया परमाणुजीवसंयोगस्य सातत्यासंभवान्न सातत्यापत्तिसंभवः तथापि प्रवाहरूपेण सातत्यसम्भवादापत्तिसंभवः । नच तत्तत्कार्यं प्रति तत्तददृष्टस्य कारणत्वात् तस्य च कालविशेषादेः सहकारित्वोपगमात् अन्यथाऽदृष्टस्य सत्त्वेन स्वर्गादिविलम्बानुपपत्तेः कालविशेषस्य चाभावाच्च परमाणुक्रियासातत्यापत्तिरिति वाच्यम् । प्रलये सूर्यपरिस्पन्दाद्यभावेन कालविशेषव्यवस्थाया असंभवात् । ब्रह्माण्डान्तरवर्तिसूर्यपरिस्पन्दस्य सत्त्वे भवेदपि तद्व्यवस्था । तस्यैव ह्यभावात् सकलब्रह्माण्डनाशोपगमात् प्रलयकालस्यैव सहकारित्वे तस्य त्रिक्षणमात्रत्वापत्तेः चतुर्थक्षणे द्व्यणुकस्य सृष्टेः । एवं द्व्यणुकसृष्टेः प्राक् प्रलयकालः तत्सहकृतेनादृष्टेन यावदेका विभागानुकूला क्रिया तावदप्यदृष्टकालसद्भावाद्द्वितीयापि तादृशीत्येवं क्रियाधारायां परमाणुद्वयसंयोगस्य दुर्लभत्वापत्तेः । तत्तत्क्रियादिप्रतिबन्धकत्वकल्पनायाश्चान्यथापि सृष्ट्युपपत्तेरप्रामाणिक्याः प्रसङ्गाच्च युगपत्सकलब्रह्माण्डानाशेऽपि ब्रह्माण्डान्तरवर्तिसूर्यपरिस्पन्दस्योपलक्षणतया कारणतावच्छेदकघटकत्वे तदुपलक्षितकालस्यान्यदापि सत्त्वात् सदैव परमाणुक्रियापत्तिः । विशेषणतया तथात्वे च विशेषणीभूतक्रियायाः प्रलयप्रदेशे विरहेण तत्प्रदेशस्थपरमाणौ तादृशक्रियावच्छिन्नकालस्य संयोगेन सत्त्वायोगात् अभिमतसमयेऽपि क्रियानापत्तिः । तत्रापि सूर्यपरिस्पन्दे सूर्यनियतवृत्तिशालिनि सति प्रलयत्वव्याघातात् । नहि भवति गृहप्रदेशे घटासत्त्वेऽत्र घटाकाश इति । द्वीपान्तरवर्तिसूर्यरश्मौ रजनाविह दिनमिति भवेत् । तदप्यस्त्येतत्प्रदेशे सूर्यरश्मिविरहेऽपि तद्विशिष्टकालसत्त्वे तस्यैव दिनरूपत्वात् । इह दिनमिति प्रतीतिव्यवहारयोर्द्वैधैतद्देशविषयतावारणाय दिनपदार्थस्यैतद्द्वीपाघटितस्यैव वाच्यत्वादिति ॥ अथास्तु नित्यचैतन्यवानीश्वरः प्रलयेऽदृष्टाधिष्ठाता तेनाधिष्ठितमचेतनमप्यदृष्टं कर्मणे प्रवर्तते । नचादृष्टस्य का नाम प्रवृत्तिः कश्चेश्वरस्य प्रवृत्त्यनुकूलो व्यापार इत्यनुयोक्तव्यम् । प्रसुप्तकल्पस्यादृष्टस्य फलाभिमुख्यलक्षणप्रबोधस्यैव तत्प्रवृत्तित्वात् । यत्नविशेषस्यैवेश्वरे प्रवर्तकत्वरूपत्वादितिचेन्न । प्रयत्नवदीश्वरसंयुक्तात्मसमवायस्यैवादृष्टप्रवृत्तिप्रयोजकत्वेन तत्सातत्येनादृष्टप्रवृत्तिसातत्यापत्तेः प्रवृत्तादृष्टवदात्मसंयोगसातत्येन परमाणुक्रियासातत्यापत्तेर्दुरुद्धरत्वात् । फलाभिमुख्यस्यापि प्रलये दुर्निरूपत्वात् सृष्टिसमये कारणप्रवाहसंपादितस्यादृष्टफलत्वेनाभिमतानां दृष्टकारणकलापसहभावस्य फलाभिमुख्यत्वेन वक्तुं शक्यत्वेऽपि प्रलये तदभावात्

प्रलये कालविशेषसमवधानरूपस्याप्याभिमुख्यस्य निराकृतत्वात् अदृष्टस्यैव फलजनने विहितनिषिद्धक्रियाव्यापारत्वेन तद्व्यापारान्तरस्यानुपगमात् तस्या दृष्टसमकालत्वे दृष्टमात्रसाध्यत्वे चाभ्युपगमवैयर्थ्यात् । कारणान्तरजन्यत्वे तस्यैवादृष्टसहकारित्वाभ्युपगमेन फलोत्पादव्यवस्थोपपत्तेर्व्यापारान्तरकल्पनाया अयुक्तत्वात् । किंच परमकारुणिको निरस्तसमस्तपुंदोषो हि भगवानभ्युपेयते परमेश्वरः स कथं कुत्सिते दुःखानुबन्धिनि कर्मणि प्रवर्तयेत् । तादृशकर्मसाध्यमदृष्टं वा दुःखाय प्रवर्तयेत् । नचानादौ संसारे पूर्वपूर्वादृष्टेन प्रवर्तित उत्तरोत्तरादृष्टं प्रवर्तयतीति वाच्यम् । अचेतनेन प्रवर्तितो ह्यचेतनं प्रवर्तयतीत्यन्धपरम्परापातात् दृष्टान्तनियतप्रवृत्तिकानुमानेनाधिष्ठातृतयोपगतस्य दृष्टान्तदृष्टशरीरादिमत्तयैवोपगन्तव्यतया प्रलये शरीराद्यभावेनाधिष्ठातृत्वासंभवात् एवमदृष्टवदात्मसंयोगस्य परमाणौ क्रियाहेतुत्वाभ्युपगमे परमाणोरात्मनश्च निरवयवतया तत्संयोगस्यावच्छेदकासंभवेनाव्याप्यवृत्तित्वासंभवात् व्याप्यवृत्तित्वाभ्युपगमे चात्मनोऽवच्छेदकभेदं विना विरुद्धयोर्भावाभावयोरेकत्र प्रसङ्गवारणाय संयोगमात्रस्वीकारे परमाणोरात्मवद्विभुत्वापत्तिः । संयोगाभावेऽदृष्टप्रत्यासत्त्यभावात् परमाणौ कर्माभावापत्तिः । नचात्मनि परमाणुसंयोगोऽव्याप्यवृत्तिरेव परमाणोरेव तदवच्छेदकत्वस्य संभवात् ज्ञानवृत्तौ शरीरवदिति वाच्यम् । अवयविन्यवयवस्य समवेतत्वरूपसंबन्धस्य सत्त्वेन तत्र संयोगवृत्तौ तस्य तदीयादृष्टोपात्तत्वेनात्मसंबन्धिनः शरीरस्यात्मनि ज्ञानवृत्तावच्छेदकत्वसंभवेऽपि परमाणोर्नित्यस्य निर्लेनात्मनोभयविधसंबन्धासंभवेनावच्छेदकत्वासंभवात् । वीणाकर्णशष्कुल्यादेः संयोगेनाकाशसंबद्धस्य तत्र शब्दवृत्तितायामवच्छेदकत्ववत् संयोगेनैवात्मसंबन्धिनः परमाणोरवच्छेदकत्वसंभव इति तु न वाच्यम् । अवच्छेदकतानियामकसंबन्धेन तत्तदवच्छेदकविशिष्टे संयोगज्ञानशब्दाद्युत्पत्तौ तस्य तदवच्छेदकत्वदर्शनात् परमाणुसंयोगात्प्राक् संयोगेन परमाणुविशिष्टत्वासंभवेनोक्तरीत्याऽवच्छेदकत्वासंभवात् । नच परमाणुसाधकयुक्तिभिः सिद्धे परिमण्डले परमाणौ सिद्धे चात्मसाधकयुक्तिभिर्विभावात्मनि स्वकारणात्परमाणुसंयोग आत्मनि जायमानः परमाणुमात्रदेशो जायते नात्मव्यापक इति वाच्यम् । परमाणुमात्रदेश इत्यस्य निर्वक्तुमशक्यत्वात् । परमाण्वात्मनोरुभयोर्निष्प्रदेशत्वात् अवच्छेदकत्वस्य निराकृतत्वात् परमाणोः पारिमाण्डल्यस्यात्मनो विभुत्वस्य वानुपपत्तिरूपप्रतिकूलतर्केण विभुत्वपारिमाण्डल्यान्यतरसाधकस्याभासीकरणात् । एवं परमाणुक्रियया परमाणुसंयोगोऽपि दुरुपपादः । तथाहि । मध्यपरमाणोश्चतुर्दिक्षूपरिचाधश्च षड्भिः परमाणुभिर्योगे परमाणोः षडंशता स्यात् सांशस्य परिमण्डलत्वं नित्यत्वं च दुर्लभम् । यद्यंशेन न संयोगः सर्वात्मनैव स्यात् पिण्डोऽणुमात्र एव स्यात् सर्वेषां परमाणूनां संयोगेन मध्यपरमाणुमात्रदेशत्वात्प्रथिमानुपपत्तेः । एकदेशेन संयोगे एकदेशान्तरेण परमाण्वन्तरस्यासंयोगेन तदव्यापितया प्रथिमोपपत्तिर्भवत्येव । नच द्वयोरेव परमाण्वोः संयोगसंभवः एकेन परमाणुनाक्रान्ते मूर्तेन मूर्तस्य परमाण्वन्तरस्य परमाणौ संयोगासंभवादिति वाच्यम् । परमाण्वोः सर्वात्मना संयुक्तयोरन्योन्यस्य परितो वर्तमानयोः स्वक्रियया प्राप्तेन परमाण्वन्तरेण यन्नैरन्तर्यं तस्य संयोगरूपत्वात् एवमन्येनान्येनेति बहूनां संयोगसंभवात् । नैरन्तर्यस्य तस्य संयोगातिरेके तेनैवान्यत्रापि संयोगव्यवहारोपपत्तौ संयोगस्यासत्त्वमेव हि स्यादिति । यत्तु समाने मध्यस्थितपरमाणौ षण्णां परमाणूनां संयोगा एव सन्ति न परमाणव इति परमाणूनां मध्यमपरमाणुमात्रदेशताविरहात्पिण्डस्थौल्यस्य न भवति कापि हानिः । नच घटस्य पटेन संयोगे पटस्य तन्तोरंशोश्च यथा तत्र संयोगेन वृत्तिः । एवं परमाणूनां संयोगस्य तत्र सत्त्वे संयोगेन तेषामपि भवत्येव तत्रैकदेशे वृत्तिः । नहि समवायेनैव वृत्तिरिति नियमः । कुण्डे रूपमितिवत् कुण्डे बदरमिति प्रत्ययस्याविशेषेण सर्वजनीनत्वादिति वाच्यम् । समवायेन हि समानदेशता स्थौल्यारम्भविरोधिनी । नहि रूपरसादिकं समवायेन समानदेशं किंचित्कार्यं स्थूलमारभमाणं दृष्टमेवं तन्त्वादीनां बहूनां पटाद्यारम्भकाणां क्वचिदेकत्रांश्वादौ समवायेन वृत्तिर्यदि स्यात् तदा तदंशुमात्रदेशतैव स्यात् समवाय्यधिकदेशोपलब्धतायाः समवेते क्वाप्यदर्शनादिति पटस्य स्थौल्यं न स्यादिति द्रव्यस्य समानदेशतासमवायेन नोपेयते संयोगेनैकैकस्मिन् तन्तावनेकतन्तूनां वृत्तावपि पटस्थौल्यदर्शनात् संयोगेनैकत्र वृत्तेः स्थौल्यारम्भविरोधित्वविरहात् तदुपगमेऽपि क्षत्यभावात् एवं च षण्णां परमाणूनां संयोगेनैकमध्यपरमाणुदेशवृत्तावपि कार्यस्थौल्यसंभवात् । एकदेशेन वृत्त्यभ्युपगमस्याकार्यत्वात्परमाणोरनवयवत्वमेवेति न्यायवार्तिकतात्पर्यादिग्रन्थस्थितं समाधानं तदसमाधानमेव । तथाहि । यत्रयत्र संयोगेनैकत्र वर्तमानानामपि बहूनां स्थूलकार्यारम्भकत्वं दृष्टं न तत्रैकावच्छेदेनैकत्र वर्तमानानामर्थाद्देशानवच्छिन्नैकनिरूपितवृत्तिमतां अपितु विभिन्नदेशावच्छेदेनैकत्र वर्तमानानामेव । तथासत्येव स्थौल्योपपत्तेः एकावच्छेदेनैकत्र संयोगेन वृत्तिमतां समवायेन वृत्तिमतामिव स्थौल्यानारम्भकत्वस्यैवानुभविकत्वात् । तन्तौ तन्तूनां तत्तदंश्ववच्छेदेन वृत्तिमतामेव स्थौल्यारम्भकत्वदर्शनादेकावच्छेदेनैकत्र वृत्तिमतां बहूनां स्थौल्यारम्भकत्वस्य क्वाप्यदर्शनात् अप्रत्यक्षे परमाणौ दृष्टानुसारेणैव तस्य कल्पनीयत्वाद्विभिन्नावच्छेदकानवच्छिन्नैकपरमाणुनिरूपितवृत्तिमतां परमाणूनां दृष्टविरुद्धं स्थौल्यारम्भकत्वं कथं कल्पनीयं स्यात् । नचावच्छेदकदेशविरहेऽपि परमाणोः परमाण्वन्तरेण यः संयोगः स संयोगस्वाभाव्यादेवाव्याप्यवृत्तिरिति वाच्यम् । अव्याप्यवृत्तित्वे परमाणुसंयोगस्य परमाणुसंयोगवत्येव हि तदभावो वाच्यः । सच भावाभावयोः स्वभावयोः विरुद्धत्वान्न संभवति । संभवति चावच्छेदकभेदे सत्येव तस्य च परमाणावभावेन नाभावसंभव इति संयोगस्य व्याप्यवृत्तितैव । सा यदि संयोगस्वभावविरुद्धा माभ्युपगम्यतां परमाणोः परमाण्वन्तरेण संयोगः संयोगाभावे च परमाणोर्द्रव्यारम्भकता दूरापेतैव । नच प्राच्यादिदिग्भेदावच्छिन्नवृत्तिकः परमाणुसंयोगोऽस्त्व-

व्याप्यवृत्तिरिति वाच्यम् । दिङ्मात्रावच्छिन्नवृत्तित्वेन संयोगस्य द्रव्येऽव्याप्यवृत्तितायाः क्वाप्यदर्शनात् द्रव्यत्वेन परमाणौ सिद्ध्यन् संयोगो दृष्टानुरोधाद्देशविशेषावच्छिन्नत्वनियतदिग्विशेषावच्छिन्नत्ववानेव सिद्ध्येत् तथाच सावयवत्वस्यैव प्रसङ्गात् । नच परमाणुग्राहकप्रमाणेन निरवयवतयैव परमाणोः सिद्धतया देशावच्छिन्नत्वबाधाद्दिङ्मात्रावच्छिन्नत्वस्य परमाणुसंयोगे सिद्धिरिति वाच्यम् । संयोगानुपपत्तिरूपप्रतिकूलतर्केण बाधिततया निरवयवत्वेन तत्सिद्धेरेवासंभवात् । परमाणुं विना सृष्ट्याद्यनुपपत्त्यावर्थापत्तिः सर्वतो बलवती परिहरन्त्यनुपपत्तीर्निरवयवत्वेन दिङ्मात्रावच्छिन्नसंयोगशालित्वेन च परमाणून् साधयेत् साच नास्त्येवान्यथैव सृष्ट्युपपत्तेः वक्ष्यमाणत्वात् । एवंचानवस्थायां मेरुसर्षपसाम्यप्रसङ्गोऽपि संयोगानुपपत्तेरेव साहायकमाचरन् परमाणुकल्पनामूलोच्छेदक एव । किंच दिङ्मात्रावच्छिन्नत्वेनाव्याप्यवृत्तित्वाभिमानो दुरभिमान एव । तथाहि—यत्र संयुक्तास्त्रयः परमाणवः तत्र मध्यमपरमाणोः प्राच्यवस्थितपरमाणुसंयोगः प्राचीदिगवच्छेदेन वर्तते प्रतीचीदिगवच्छेदेन तदभावः मूर्तांश्च त्रय इति मध्यमेन व्यवहितौ द्वौ तयोरेकः सूर्योदयदेशसन्निहितः प्रतीचीस्थ इति तयोः संयोगौ प्राचीप्रतीच्यवच्छिन्नावव्याप्यवृत्तीति तवाभिप्रायः । सचासंभवी । योहि सावयवस्तस्य कश्चिदवयवः प्राचीस्थः कश्चित् प्रतीचीस्थः प्राचीस्थावयवे येन संयुक्तः तत्संयोगः प्राच्यवच्छिन्नः । प्रतीचीस्थावयवे येन संयुक्तः तत्संयोगस्तत्र प्रतीच्यवच्छिन्न इत्यानुभविको मन्तुमर्हः । मूर्तोऽपि परमाणुः यर्हि निरवयवः तर्हि तस्य निरवयवपरमाण्वन्तरेण प्राचीस्थत्वेनाभिमतेन संयोगः कुतो न प्रतीच्यामिति वक्तव्यम् । प्रादेशिकत्वे सति तद्वक्तुमर्हं तस्याभावात् । दैशिकाव्याप्यवृत्तित्वशून्यस्य प्रतीच्यामपि भावात् । यदाहि संयुक्तौ परमाणू तदा परित एव संयुक्तौ अतएव मध्यमस्य व्यवधायकत्वमपि दुर्वचम् । प्राच्यवच्छिन्नः संयोग एवैको भागः परमाणोः प्रतीच्यवच्छिन्नश्चापर इत्यपि न वाच्यः । भागसिद्धौ प्राच्यवच्छिन्नत्वसिद्धिस्तत्सिद्धौ च भागसिद्धिरित्यन्योन्याश्रयात् । नच कल्पनया निर्वाहः कल्पितस्यावस्तुत्वात् । अथ परमाणुद्वयसंयोगादुत्पन्नो द्व्यणुको भागवान् भवति तत्तद्भागावच्छिन्ने त्रयाणां द्व्यणुकानां संयोगात् स्थूलत्रसरेणुसंभवान्न काप्यनुपपत्तिरितिचेन्न । यदा हि संयुक्तौ परमाणू सर्वतः संयुक्तौ तदा द्व्यणुकः परमाणुमात्रमेव भवेदिति त्रयाणां द्व्यणुकानां संयोगे परमाणूनां सर्वेषामपि सर्वतः सर्वसंयोगे त्रसरेणोरपि परमाणुमात्रतैव तदवस्था । नच परमाणोर्निःप्रदेशत्वात्सर्वतः संयुक्ताविति वक्तुमयुक्तं सर्वत इत्यस्य सर्वावयवावच्छेदेनेत्यर्थकत्वादिति वाच्यम् । तत्किमेकदेशेन हि संयुक्ताविति वक्तव्यं । नच तदपि हि भागाभावात् । तथासति न सर्वतः संयुक्तौ नचैकदेशेन संयुक्तावित्यसंयुक्ताविति पर्यवसन्नं तृतीयप्रकारस्यादर्शनात् । अन्यथानुपपत्तौ दृष्टविरुद्धमपि कल्प्येतान्यथोपपत्तेः परिणामवादोपपादनेन वक्ष्यमाणत्वादिति । एतेन परमाणुसंयोगः फुल्लाख्यो विलक्षणो येनैकदेशत्वेऽपि संयोगानामनेकानुप्रवेशादवयवी स्थूलः संपद्यत इत्यपि निरस्तम् । एवं नित्यः परमाणुरभिमतो वैशेषिकाणां तन्मूर्तत्वाद्गुणोपचयाच्चायुक्तः । तथाहि यद्यन्मूर्तं तत्सर्वमनित्यं दृष्टम् । मूर्तश्च परमाणुरिति । नच कार्यत्वमुपाधिरनित्यत्वं प्रति तस्यैव प्रयोजकत्वादिति वाच्यम् । विनाशित्वस्यैव साध्यत्वेन कार्यत्वस्य तदप्रयोजकत्वात् । ध्वंसे कार्ये विनाशित्वादर्शनात् । नच भावत्वे सति कार्यत्वं प्रयोजकमिति वाच्यम् । मूर्तत्वस्यैव प्रयोजकत्वे लाघवाद्व्यतिरेकेण गुणादीनामभावात् मूर्तत्वव्यतिरेकेण गुणे विनाशित्वस्य शङ्कितुमशक्यत्वात् । कार्यत्वस्यापि तेनैव हेतुना तत्र साध्यत्वेन तस्योपाधित्वस्यायुक्तत्वात् । 'अतोऽन्यदार्त'मित्यादिश्रुतिभिर्ब्रह्मातिरिक्ताखिलविनाशित्वप्रतिपादिकाभिर्नित्यनिर्दोषत्वेनाखिलप्रमाणप्रबलाभिरुन्मूलितप्रतिकूलतर्कशतसामर्थ्याभिर्गृहीतपक्षपातस्यानित्यत्वसाधकानुमानस्य निष्प्रत्यूहं स्वविषयसाधकत्वात् । एवं शब्दैकगुणादाकाशात्सूक्ष्मात्स्पर्शशब्दगुणस्य वायोस्तस्मादपि रूपस्पर्शशब्दगुणस्य तेजसस्तस्मादपि सरसपूर्वोक्तगुणत्रयस्य जलस्य तस्मादपि सगन्धपूर्वोक्तगुणचतुष्टयायाः पृथिव्याः गुणोपचयेन मूर्त्युपचयस्य स्थौल्यतारतम्यस्य दर्शनात्कार्यद्वारेणानुमेये परमाणौ कारणे गुणोपचयस्यावश्यमभ्युपगन्तव्यतया मूर्त्युपचयस्य स्थौल्यस्यावश्यकत्वम् । तथाचानित्य एव परमाणुः । नचान्यस्य गुणस्योपचयेन कार्यस्यैवोपचयो न युक्त इति वाच्यम् । गुणगुणिनोरभेदस्याग्रे साधयिष्यमाणत्वात् । नच विनाशकारणस्यावयवनाशस्य तत्संयोगनाशस्य चाभावान्न परमाणुनाश इति वाच्यम् । संयोगसचिवानां बहूनां सजातीयद्रव्याणामेव द्रव्यारम्भकत्वमिति प्रक्रियासिद्धावेवोक्तस्य नाशकत्वं तस्यैव चासिद्धेः । करकाघृतसुवर्णकाठिन्यप्रविलयवन्मूर्तिप्रविलयेन कारणावस्थाप्राप्तिरूपनाशस्य परमाणोः संभवादिति दिक् ॥ अथावयवसंयोगादारब्धोऽवयवी यद्यवयवादत्यन्तं भिन्नोऽभ्युपेयते वाच्यस्तदाऽवयवावयविनोः संबन्धः । ननु समवायः स हि प्रमाणं च तत्र गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्योभयसंबन्धविषया विशिष्टबुद्धित्वात् । दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानम् । युतसिद्धत्वाभावेन संयोगासंभवात् । अनेकस्वरूपस्य संबन्धत्वकल्पनापेक्षयाऽतिरिक्तैकसमवायस्य संबन्धत्वे लाघवादिति चेन्न । संबन्धिभ्यामत्यन्तभिन्नाभ्यामत्यन्तभिन्नः समवायः संबन्धिभ्यामसंबद्धः संबन्धिनौ यदि हि संबन्धयेत्सर्वं सर्वेण संबन्धयेत् असंबन्धस्य संबन्धिभिन्नस्वरूपत्वस्य चाविशेषात् । संबन्धिभ्यां संबद्धस्य तथात्वे तस्यापि संबन्धस्य स्वसंबन्धिभ्यां भिन्नस्यासंबद्धस्य तथात्व उक्तदोषतादवस्थ्यात् तस्यापि संबन्धान्तरं तस्यापि संबन्धान्तरमित्यनवस्था स्यात् । अथ संबन्धिनौ घटयितुं प्रमाणेन सिद्धोऽसौ संबन्धिघटने संबन्धान्तरं नापेक्षते । संबन्धिसंबन्धनपरमार्थत्वात्तस्येति तस्मिन् सति संबन्धिनौ न भवतोऽसंबद्धौ स चापि संबन्धान्तरं विनैव भवति संबन्धिनोरिति नातिप्रसङ्गो नानवस्था न विशिष्टबुद्ध्यनुपपत्तिरितिचेन्न । संयोगोऽप्येवं हि विनैव

संबन्धं समवायलक्षणं संबन्धिनोः स्याद्घटयेच्च संबन्धिनावित्यस्य प्रसङ्गात् । नच संयोगो न संबन्धिनौ घटयितुमेव सिद्धः सिद्धश्चान्यथा संबन्धिनौ घटयति येन सिद्धः तेन समवायिकारणादिजन्यतयैवेति तस्य समवाय आवश्यको गुणत्वादपि रूपादिवत् तत्समवाय आवश्यक इति वाच्यम् । द्रव्याश्रितया हि प्रमाणेन सिद्धो न द्रव्यसमवेततया । तथात्वे समवायिवादिनां विवादानापत्तेः । नहि कश्चिद्घटाद्याकारे विवदते । आश्रितत्वं च स्वरूपतोऽपि संयोगस्य संभवत्येव, गुणत्वस्य परिभाषामात्रत्वात् तस्याः पुरुषाभिप्रायविशेषत्वेन तस्यानेकविधत्वेन वस्तुनोऽनेकरूपत्वापत्तेः । नहीष्टं तद्धि यदि संबन्धिभ्यामत्यन्तभिन्नोऽसंबद्धश्च ताभ्यां कथं संबन्धिनौ घटयितुमीष्टे । अनुभवविरोधात् । अन्यथा यः संयोगो घटपटौ घटयति स हिमवद्विन्ध्यावपि घटयेत् । अयं संयोग इमावेव घटयेन्नेमावित्यत्र नियामकाभावादित्यभ्युपेयः संयोगस्य समवाय इत्युच्यते तदेतत्समवायेऽपि समानमिति दुरुद्धरैवानवस्था । किंच संबन्धान्तरं विनैव संबन्धिनोः स इत्यत्र कः षष्ठ्यर्थः संबन्ध एव तस्याविधानात् । अथ स्वरूपात्मकः संबन्धः षष्ठ्यर्थः संबन्धान्तरस्यैव निषेधादितिचेन्न । समवायस्य स्वरूपसंबन्धकल्पनाया आवश्यकत्वे घटे रूपं नीलो घट इति प्रतीतिसिद्धसंबन्धस्यापि स्वरूपात्मकताया एव न्याय्यत्वात् । नच स्वं न स्वीयमिति सर्वजनीनानुभवबाधादात्माश्रयप्रसङ्गाच्च स्वस्य सर्वजनीने घटे रूपमित्यादिप्रत्यये संबन्धतया भानं नोपेयते समवायस्य तथाभाने तु न किंचिद्बाधकमिति बाधकविरहसहकृतं प्रमाणमात्माश्रयान्योन्याश्रयादितो गुरुतरदोषरूपानवस्थापरिहाराय संबन्धान्तरेणासंबद्धं लघुदोषमात्माश्रयमुररीकृत्य स्वरूपेण संबद्धं प्रमाणान्तरागोचरं समवायं साधयतीति पश्चादनुसंधीयमानोऽप्यात्माश्रयोऽकिंचित्कर एवेति वाच्यम् । अनुभवबाधस्यावश्यमुररीकरणीयत्वे समवायरूपात्क्लृप्तपदार्थमभ्युपेत्य तदूरीकरणस्यान्याय्यत्वात् । प्रथममेव तदूरीकारे समवायाकल्पनलाघवस्य संभवात् । नच यावद्रक्षणीयस्य रक्षा कर्तुं शक्या तावत्करणं हि न्याय्यमिति समवायाभ्युपगमः कृते च समवायाभ्युपगम उक्तानुभवस्य रक्षणीयस्याशक्यतया रक्षाभावस्यादोषत्वम् । सिद्धस्य समवायस्यापगमासंभवश्चेति वाच्यम् । उक्तानुभवबाधस्योभयत्र समानत्वेनैकत्र प्रथमकक्षायामन्यत्र द्वितीयकक्षायामित्येतावन्मात्रविशेषस्याक्लृप्तसमवायरूपसंबन्धत्वधर्म्यकल्पनालाघवेनाप्रयोजकीकरणात् । वस्तुतस्तु संबन्धतयोभयवादिक्लृप्तेन तादात्म्येन गुणक्रियादिविशिष्टबुद्धिरित्याद्यनुमानस्य विषयलाभसंभवादुक्तानुभवस्य यावच्छक्यं रक्षितत्वानपायाच्च संबन्धत्वेनाक्लृप्तसमवायसिद्ध्यसंभवात्तादात्म्यं च गुणगुण्यादीनामुपपादयिष्यामः । तस्य च तादात्म्यस्य संबन्धिद्वयान्यतररूपत्वे स्वं न स्वीयमित्यनुभवबाधानवस्थादिदोषादतिरिक्तत्वमेव । नच तादात्म्यत्वेन भेदसंभवान्नानुभवबाध इति वाच्यम् । भेदे सिद्धे तस्य संसर्गासाधारणधर्मतादात्म्यत्वसिद्धिः स्वरूपे संबन्धिनस्तादात्म्यत्वसिद्धौ च भेदसिद्धिरित्यन्योन्याश्रयात् तस्य तु स्वरूपस्य संबन्धत्वे यथा न दोषस्तथा समवायसंबन्धत्वसाधने ह्यनुपदमेवोक्तमनुसंधेयम् । यद्वा संबन्धिवृत्त्यसाधारणधर्मात्मकमेवास्तु तादात्म्यं लाघवात् संबन्धतया भासमानस्योपस्थित्यनपेक्षत्वेन स्वरूपतो भासमानघटत्वादेस्तादात्म्यरूपस्य घटत्वत्वादेरनुपस्थितत्वेऽपि न क्षतिः । नचात्र स्वं नेत्याद्यनुभवबाधोऽपि तादात्म्यत्वमतिरिच्यतां मा वेत्यन्यदेतदिति । यत्तु स्वरूपस्य संबन्धत्वेऽनेकस्वरूपस्य संबन्धत्वकल्पनमिति गौरवम् । एकस्य समवायस्य तस्य संबन्धत्वस्य च कल्पनमेव ततो वरं लाघवादिति । तत्र स्वरूपस्य संबन्धत्वकल्पने यद्गौरवमभिधीयते तत्किमाश्रयस्याधिकस्य कल्पनातः किमनेकसंबन्धत्वकल्पनातः किमनेकेष्वाश्रयेषु संबन्धत्वस्य संबन्धकल्पनातः । नाद्यः । आश्रयस्य संबन्धिस्वरूपस्य समवायकल्पनेप्यावश्यकत्वात् क्लृप्तत्वाच्च । न द्वितीयः । संबन्धिभेदेपि संबन्धत्वस्याभेदे संबन्धभेदेऽप्यभेदापत्तेः दोषस्योभयत्र समानत्वेन संबन्धत्वानेकत्वस्याप्युभयत्र समानत्वात् । तथाहि यद्यनेकः समवायः तदा संबन्धस्यापि भेदात्संबन्धत्वं स्वरूपस्य संबन्धत्ववदनन्तं समवायरूपाक्लृप्ताश्रयानन्त्यगौरवमधिकम् । यदाप्येकः समवायः संबन्धिभेदात्तदापि संबन्धत्वं भिन्नमेवाभ्युपेयमन्यथा संबन्धत्वस्याभेदेऽस्ति वायावपि समवायसंबन्धः तस्याप्यस्ति स्वरूपं रूपस्यापि संबन्धः समवाय एव तस्यापि रूपे स्वरूपं संबन्धत्वमपि यदेव स्पर्शस्य तदेव रूपस्य यदेव वायोस्तदेव पृथिव्या इति वायौ रूपवद्बुद्धेः प्रमात्वस्य दुर्वारत्वात् । नच वायौ रूपाभावान्न प्रमेति वाच्यम् । संबन्धसत्ताधीनत्वात्संबन्धिसत्त्वस्य वायौ रूपसमवायसत्त्वे तत्काले विद्यमानानां रूपाणामभावस्य तत्र वक्तुमशक्यत्वात् । नच रूपप्रतियोगिकत्वविशिष्टसमवायाभावाद्रूपाभाव इति वाच्यम् । समवायस्यैकत्व उक्तविशिष्टासत्त्वस्यैवानिर्वाच्यत्वात् विशेषणासत्त्वनिबन्धनस्यैव विशिष्टासत्त्वस्य वाच्यतया संबन्धद्वारकसत्त्वशालिन उक्तप्रतियोगिकत्वस्य संबन्धसत्त्वे संबन्धे च तत्सत्त्वेऽभावस्य वक्तुमशक्यत्वात् । एवं समवायमात्रस्य रूपसंबन्धत्वाभावे तत्प्रतियोगिकत्वस्य तत्रासंभवेन विशिष्टाप्रसिद्धेः समवायमात्रस्य रूपप्रतियोगिकत्वे तस्यैव तत्संसर्गत्वेन तत्सत्त्वस्यानपाय उक्तविशिष्टासत्त्वस्याकिंचित्करत्वात् । संबन्धत्वं समवायमात्रस्य संबन्धिसत्त्वनियामकत्वं तूक्तविशिष्टस्येत्यभ्युपगमे विशेषणसत्त्वनियामकत्वेन विशिष्टप्रत्ययजननयोग्यत्वरूपसंबन्धत्वस्यैव समवाये दुर्लभत्वात् । एवं विशिष्टप्रत्यये शुद्धसमवायत्वेन विषयत्वे विषयताविशेषरूपसंसर्गत्वस्य शुद्धसमवाय एव सत्त्वेन तत्सत्त्वनिबन्धनविशेषणसत्त्वस्यैव प्रमात्वप्रयोजकत्वेनोक्तप्रमाया दुर्वारत्वात् रूपप्रतियोगिकत्वादिविशिष्टसमवायत्वेन विषयत्वे तदवच्छिन्नत्वेन संसर्गताया भेदस्य दुर्वारत्वात् । वस्तुतः पृथिव्यादौ रूपस्य विशिष्टप्रत्ययो न वायाविति समवायस्य पृथिव्यादावेव रूपसंसर्गत्वं न वायावर्थात्पृथिव्यनुयोगिताकत्वावच्छिन्नरूपप्रतियोगिताकत्वविशिष्टं संसर्गत्वं समवाये ननु वाय्वनुयोगिताकत्वावच्छिन्नरूपप्रति-

योगिताकत्वविशिष्टसंसर्गत्वं तच्च कालिकादावेव । एवंसति समवायस्य वायौ सत्त्वेऽपि तत्र रूपसंबन्धत्वाभावेन रूपसत्तानियामकत्वाभावादुक्तप्रमात्वापत्तेर्वारणमिति संसर्गताभेदस्य दुर्वारत्वात् । नापि तृतीयः । संसर्गताभेदस्यावश्यकत्व एकस्मिन्नपि समवाये तत्तत्संसर्गत्वसंबन्धस्य नानात्वस्यावश्यकतयाऽनेकस्वरूपे संबन्धत्वनानात्वतो विशेषाभावात् । नच समवायस्य संसर्गत्वे निखिलगुणक्रियादिविशिष्टबुद्धावेकः संबन्धो विषयः स्वरूपस्य संबन्धत्वे त्वनेक इति समवाय एवाभ्युपेयः संसर्ग इति वाच्यम् । एकैकप्रत्यये ममाप्येकैकस्यैव विषयत्वात् । एकप्रत्ययेऽनेकस्यैकस्य च विषयत्वप्राप्तावेकस्य विषयताया न्याय्यत्वात् । एकस्यैकप्रत्ययविषयत्वस्यैकविषये संबन्धस्यैकत्वात् विषयनानात्वे तद्भेदेन संबन्धभेदस्यावर्जनीयतया गौरवात् । विशिष्टप्रत्ययभेदे तद्विषयत्वस्यापि भिन्नतया तत्प्रतियोगिकसंबन्धस्य भेदावश्यकत्वे विषयनानात्वैकत्वयोरकिंचित्करत्वात् । यत्तु स्वरूपस्य संबन्धत्वे विशेषणस्वरूपस्य संबन्धत्वं विशेष्यस्वरूपस्य वेत्यत्र विनिगमनाविरहात् क्लृप्ते विनिगमनाविरहे कल्प्यमन्यत्सिध्यतीति न्यायेन समवायसिद्धिरिति । तन्न । समवायस्याप्येवं संबन्धान्तरं तस्यापि तस्यापीत्यनवस्थापातात् । तत्र त्वयोपायस्य कस्यचित्संपादने तस्यैव प्रथममेवोपायस्योरीकर्तुमुचितत्वात् । नच रूपसमवायवान् घट इत्यादौ घटस्वरूपस्यानेकत्वात् । समवायस्वरूपस्यैकत्वात् विनिगमकलाभेन समवायस्वरूपस्यैव संसर्गत्वं नत्वेवं नीलो घट इत्यादावेवंऽच शब्दसमवायवानाकाश इत्यत्रोभयोरेकत्वेपि समवायस्वरूपस्य क्लृप्तसंसर्गत्वस्यैव विनिगमकत्वमिति वाच्यम् । शब्दध्वंसवानाकाश इत्यत्राकाशस्वरूपस्याप्येकत्वेन संसर्गतया क्लृप्तत्वात्संसर्गतया क्लृप्तत्वस्याविनिगमकत्वात् । एवं तद्घटस्तद्रूपसमवायीत्यत्रापि संबन्धिनोरेकत्वात् क्लृप्तसंसर्गत्वाच्च विनिगमकाभावात् समवायस्य संबन्धान्तरसिद्धेर्दुर्वारत्वात् । नच स्वरूपस्य संसर्गतानिर्वाहकोपायः त्वया निर्वक्तव्य इति वाच्यम् । समवायसंसर्गस्वीकारेऽपि स्वरूपस्य संसर्गताया आवश्यकतया तन्निर्वाहकोपायनिर्वक्तव्यतायाः समानत्वात् अनिर्वचनीयतावादिनो मम तन्निर्वचनाभावास्यानुकूलत्वेन वस्तुतः साम्याभावात् । नच स्वरूपस्य संसर्गतापक्षे कुतो नानवस्थेति वाच्यम् । स्वरूपस्य स्वेनाभिन्नतया संसर्गान्तरापेक्षणात् । सर्वेषां स्वरूपाविशेषेऽपि ययोर्विशिष्टबुद्धिरानुभविकी तयोरेव स्वरूपयोः संसर्गत्वाभ्युपगमात् । स्वेन स्वेन रूपेण संबन्धिनोरभेदेन संसृष्टत्वात् परम्परासंबन्धघटकपदार्थयोराद्यचरमयोः प्रत्येकमेकैकसंबन्धित्वेन विशिष्टस्य संबन्धिद्वयसंसृष्टत्ववत् । अनुगतेन संयोगत्वप्रतियोगितात्वादिना तत्तत्संयोगप्रतियोगित्वादिवदनुगतेन वस्तुत्वसमकक्षेण स्वरूपत्वेन संबन्धिद्वयतत्तत्स्वरूपयोरेकसंबन्धत्वाभ्युपगमाच्च विनिगमनाविरहादिकमतो न क्लृप्त इत्यादिन्यायप्रवृत्त्यवसर इति स्वरूपसंबन्धत्वनिर्वाहकोपायस्य समवायसंसर्गत्वाभ्युपगन्तॄणामप्यनुसरणीकरणे ममापि तस्यैवोपायस्यावलम्बनीयत्वात् न कोपि दोषः । तत्रापि सूक्ष्मदोषानुसरणे ह्यनिर्वचनीयतावादिनो ममेष्टसिद्धेरनुसरणे स्यादनिष्टं तु तवैव महदापतेदिति । किंच समवायोऽतिरिक्तः संबन्धिभ्यां यदि स्वं न स्वीयमित्यादिबाधकसहकृतेनानुमानेन सिध्येत्तदा भावस्यापि वैशिष्ट्यं तथैव बाधकसहकृतेनानुमानेन सिध्येत् । नचातिरिक्तस्य वैशिष्ट्यस्य नित्यत्वे घटानयनानन्तरमपि भूतले घटाभावबुद्धिः स्यात् संबन्धस्य संबन्धिनश्च द्वयोर्नित्यत्वेन सत्त्वात् अनित्यत्वे च तस्य स्वरूपस्य संबन्धत्वापेक्षयानेकत्वेन गौरवमेव स्यादिति वाच्यम् । यथा ह्यन्यत्र स्वरूपमात्रस्यैकसंसर्गत्वेऽपि घटानयनापसारणस्थले स्वरूपस्य तत्तत्कालावच्छिन्नत्वविशेषितानेकसंसर्गत्वं तथान्यत्रातिरिक्तस्य नित्यस्य वैशिष्ट्यस्य कालाद्यनवच्छिन्नस्य संसर्गत्वेऽपि घटानयनापसारणस्थले तत्तत्कालावच्छिन्नत्वविशेषितस्यैव संसर्गत्वमित्यस्य वक्तुं शक्यत्वात् । यद्यतिरिक्तवैशिष्ट्यस्य कल्पनेन तत्र प्रमेयत्वाभिधेयत्वाद्यनेकपदार्थसंबन्धकल्पनेन च प्रसक्तादतिगौरवदोषात् बाधकसंकोचाभ्युपगमेन स्वरूपस्य संसर्गत्वमुपपाद्यते तदा समवायस्थलेपि तथैव गौरवेण स्वरूपस्यैव संसर्गता निराबाधा स्यादिति । नचैवं गुणगुण्यादीनां त्वन्मते तादात्म्यस्य संसर्गत्वाभ्युपगमविरोध इति वाच्यम् । समवायाभ्युपगमे तत्संबन्धतया स्वरूपे प्रसक्तं प्रतिबन्धितया गुण्यादिस्वरूपस्य संबन्धत्वोक्तेर्न स्वाभिमततया तादात्म्यस्य भेदसमानाधिकरणाभेदस्य संबन्धिद्वयस्वरूपत्वेन स्वरूपस्य संबन्धत्वेऽप्यभ्युपगमविरोधाप्रसक्तेश्च । अथ यदुक्तं वैशेषिकैः युतसिद्धयोः संयोगः समवायस्त्वयुतसिद्धयोरिति । तत्र युमिश्रणामिश्रणयोरित्यमिश्रणार्थकयुधातोः क्तप्रत्ययेन निष्पन्नोयं युतशब्दस्तथाच युतसिद्धत्वं संबन्धित्वेनाभिमतयोर्द्वयोर्द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वम् पृथगाश्रयाश्रितत्वं वा संबन्धित्वेनाभिमतयोर्द्वयोः संबन्धिभ्यां स्वात्मकाभ्यामन्यदेशत्वं वा । मूर्तयोः कदाचित् द्वयोः पृथग्गतिमत्त्वं गोमहिषघटपटादिकार्ययोस्तत्तदवयवयोः कारणयोरनित्ययोः परमाण्वोर्नित्ययोश्च कदाचिदन्यतरस्य विभुमूर्तयोस्त्वन्यतरस्यैव मूर्तमात्रस्य पृथग्गतिमत्त्वम् । एवं द्वयोरेकस्य संबन्धित्वं विनाप्येकस्य यस्मिन् कस्मिंश्चिदाश्रय आश्रितत्वम् द्वयोः कार्ययोः कारणयोर्वा मूर्तयोर्विभुमूर्तयोर्वास्तीति युतसिद्धत्वम् तयोः संयोगः उक्तयुतसिद्धत्वादन्यत्वमयुतसिद्धत्वम् । तच्च कपालघटयोस्तन्तुपटयोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योरस्ति उक्तयुतसिद्धत्वाभावात् । तथाहि कपालाद्यवयवानां घटाद्यवयविगत्यकालीनगतिमत्त्वेऽपि कपालादिगत्यकालीनगतिमत्त्वं न घटादेरिति द्वयोः पृथग्गतिमत्त्वाभावादयुतसिद्धत्वम् । गुणादीनामाश्रयगतिं विना स्वातन्त्र्येण गत्यभावात्सुतरां द्वयोः पृथग्गतिमत्त्वम् । एवं संबन्धिनोः कपालघटाद्योः कपालादेर्घटादिसंबन्धित्वं विनाप्यनारब्धघटादितादशायां भूतलादौ कपालिकादौ वाश्रितत्वेऽपि घटादेः कपालादिसंबन्धित्वं विना न क्वचिदाश्रय आश्रितत्वमिति द्वयोः पृथगाश्रयाश्रितत्वाभावादयुतसिद्धत्वमेवं गुणगुण्यादेः यद्यपि

घटस्य कपालभिन्नभूतलादिदेशत्वमस्ति तथापि देशश्च समवाय्येवेत्येतदभिप्रायेण तथोक्तमथवा संबन्ध्यनाश्रितत्वे सत्याश्रितत्वं तदर्थः । तथाच घटो भूतलादौ क्वचिदपि न कपालमनाश्रित्य वर्तेत इति भवत्ययुतसिद्धत्वमिति । तन्न युक्तम् । विभुद्वयस्य परस्परं संयोगात्तयोरुक्तयुतसिद्धत्वासंभवात् । नच विभुद्वयसंयोगे मानाभाव इति वाच्यम् । आकाशमात्मसंयोगि मूर्तद्रव्यसंयोगित्वात् घटादिवदित्यनुमानस्य मानत्वात् । नच मूर्तद्रव्यत्वमुपाधिरिति वाच्यम् । आत्मसंयोगित्वं हि नात्मप्रतियोगिकसंयोगानुयोगित्वं साध्यमपित्वात्माश्रितसंयोगाश्रयत्वम् तस्यात्मन्यपि सत्त्वेन साध्याव्यापकत्वात् । नच पक्षधर्मात्मान्यत्वावच्छिन्नसाध्यव्यापकत्वादुपाधिरिति पक्ष एव व्यभिचारग्रह इति वाच्यम् । विभुत्वान्यथानुपपत्तेः तर्केण साध्यसाधनयोर्व्याप्तिग्रहात् । तथाहि विभुत्वं निखिलमूर्तसंयोगित्वम् तदेकस्मिन् यस्मिन् परमाणुप्रदेश आत्मसंयोगस्तस्मिन्नस्त्याकाशसंयोगो नहि परमाणुः सावयवो येनैकदेश आकाशसंयोग एकदेश आत्मसंयोगः स्यादिति वक्तुमपि शक्येत वस्तुतः सावयवेऽपि विनिगमकाभावात् सर्वत्रैवावयव आकाशसंयोग आत्मसंयोगश्चावश्यक इत्येकत्र प्रदेश उभयोः संयोग आकाशात्मनोर्नैरन्तर्यमावश्यकम् । तथाच द्वयोस्तयोरस्ति नैरन्तर्यं नास्ति संयोग इति विप्रतिषिद्धमेतत् । संयोगातिरिक्तस्य नैरन्तर्यस्य निर्वक्तुमशक्यत्वात् निरुक्तौ वा तस्यैव सर्वत्र संयुक्तप्रतीतिविषयत्वसंभवेन संयोगस्याभावप्रसङ्गात् । नच गुणगुणिनोरपि निरन्तरत्वेन तयोः संयुक्तत्वव्यवहारापत्तिरिति वाच्यम् । मम तु क्षत्यभावात् षट्पदार्थपरिभाषाया ममाभावात् । अतएवोक्तं भाष्ये कारणद्रव्येणापि संबन्धः संयोग एव स्यान्न समवाय इति । विशेषानभिधानाद्गुणस्याप्युपक्रान्तत्वाच्च । गुणविषयत्वमपि हि तस्य द्रव्ययोर्नैरन्तर्यं संयोग इत्यस्यापि वक्तुं शक्यत्वाच्च । नचाप्राप्तिपूर्विका प्राप्तिः संयोगः । नचाकाशात्मनोरप्राप्तिरिति वाच्यम् । तस्य जन्यसंयोगलक्षणत्वात् । अन्यथोक्तरीत्या विभुद्वयसंयोगसिद्धौ तत्राव्याप्तेः । किंच प्राप्तिः संबन्धस्तथाच सामान्यतो यदसंबन्धपूर्वकः संबन्धः संयोग इति लक्षणं तदाऽसंभवः संयोगकारणक्रियादिसमवायरूपसंबन्धपूर्वकत्वात् वस्त्वन्तरसंयोगपूर्वकत्वाच्च संयोगस्य । यदि संबन्धित्वेनाभिमतयोरसंबन्धपूर्वकः संबन्ध इत्युच्यते तदापि ययोरवयविनोरेकावयवसंयोगजः संयोगस्तयोरेव तस्मिन् सत्येवावयवान्तरसंयोगजो यः संयोगस्तत्र पूर्वावयवक्रियया पूर्वसंयोगनाशक्षणेऽवयवान्तरक्रियया यः संयोगजः संयोगस्तत्र चाव्याप्तेः संबन्धित्वेनाभिमतयोरेव संबन्धपूर्वकत्वात् । तस्य संबन्धित्वेनाभिमतयोस्तत्तदवच्छेदेन संबन्धाभावपूर्वकस्तत्तदवच्छेदेन संबन्ध इत्युक्तिरपि न युक्ता । संयोगसामान्यस्यैतल्लक्षणलक्ष्यत्वे तत्तदवच्छेदकानवच्छिन्नसंयोगाव्याप्तेः तत्तदवच्छिन्नसंयोगस्य लक्ष्यत्वे विभुद्वयसंयोगस्यानवच्छिन्नस्य लक्ष्यत्वाभावेन लक्षणासत्त्वस्य तत्राकिंचित्करत्वात् स्वाभावपूर्वकत्वस्याप्यननुगतत्वात् स्वत्वस्याननुगमात् एकलक्षणाभावेनाजसंयोगे तदसत्त्वेऽपि क्षत्यभावात् स्वत्वघटितस्य लक्षणस्य तत्तद्व्यक्तित्व एव पर्यवसानात् विनाशित्वजन्यत्वादेस्तदर्थत्वे विषयित्वप्रतियोगित्वादेर्जन्यत्वपक्षे तत्रातिप्रसक्तेः संबन्धस्य संबन्ध्यधीननिरूपणत्वेन संबन्धिसत्त्वनियतसत्त्वेन चास्वतन्त्रताया उभयप्रतिपन्नसंयोगे ग्रहात् संबन्धिनोर्द्वयोरेकस्य बाह्यविद्यमानत्वे संबन्धसत्त्वस्याननुभविकत्वात् । समवायस्य नित्यताया भाष्ये निराकरणात् तत्राप्यतिप्रसङ्गात् तत्तदन्यसंबन्धत्वस्य विभुद्वयसंयोगसाधारणत्वादतिरिक्तसामान्यलक्षणस्य वक्तव्यत्वापाताच्च । एवं परमाण्वाकाशसंयोगस्यापि नास्त्यप्राप्तिपूर्वकत्वम् । आकाशेनाप्राप्तत्वस्य कदाचिदपि हि परमाणौ न संभवः । अवयविनि तु स्वात्मकसमवायिकारणस्य पूर्वमभावेनोत्पत्तिक्षणे स्यादपि तस्य संभवः । नच परमाणावपि क्रियया विभागेन पूर्वसंयोगनाशे सति तस्मिन्नेव क्षणेऽप्राप्तिः संभवतीति वाच्यम् । यत्र हि तदानीं वर्तेते परमाणुः स प्रदेशः किमनाकाशो येन तदानीमाकाशेन स न प्राप्तः स्यात्किमाकाशपरमाण्वोर्व्यवधिः येन न प्राप्तिः प्राप्तिकारणाभावान्न प्राप्तिरिति तु न वाच्यम् । कारणेन कर्मणा व्यवधानराहित्यं संपाद्यते तदर्थमेव हि तदपेक्षणीयम् । तत्रैव पूर्वसंयोगनाशसहकृतत्वमप्यपेक्षणीयम् यत्र तु तत्स्वतःसिद्धं किं तत्र तादृशकर्मणा त्वया तु स्वसिद्धान्ताभिनिवेशात् यत्किंचिदुच्यते तदानीं परमाण्वाकाशसंयोगाभावे सर्वमूर्तसंयोगाभावादाकाशादेर्विभुत्वमपि कादाचित्कं स्यात् । नच परममहत्परिमाणमेव विभुत्वं तथाच न संयोगापेक्षेति वाच्यम् । तेन तेन हि निरन्तरस्य तत्र वर्तमानस्य द्रव्यस्याकाशादेरसंयोगे सर्वगतोऽपि जातिवत्सर्वमूर्तासंयोग्येवाकाशादिरास्तां क्षत्यभावात् अनुभवापलापस्य त्वयैव कृतत्वात् । नच यद्यत् त्वत्समयसिद्धमनुभवविरुद्धमपि स्यात्तदङ्गीकरणीयं नान्यदितीश्वरस्यास्ति हि निदेशः । नच कर्मादिकारणसमवधाने संभवति नान्यथेति ब्रूम इति वाच्यम् । अप्रत्यक्षस्य तस्य संयोगस्य कल्पनीयतयानुभवोल्लङ्घने लाघवानुरोधेनैव कल्पनीयत्वादनन्ताकाशादिसंयोगादिकल्पनामपेक्ष्य लाघवेन मूर्तत्वेन समवायिकारणत्वस्यैवोचितत्वात् कारणाभावादेवाकाशसंयोगस्यासंभवात् । नच मूर्तत्वेन कारणत्वापेक्षया लाघवेन द्रव्यत्वेन कारणत्वे व्यवस्थिते संयोगादिकल्पनागौरवस्य फलमुखत्वेनादोषत्वमिति वाच्यम् । तथापि परमाण्वादिक्रियाया मूर्तान्तरसंयोगमात्रार्थत्वेन सफलत्वे विभुसंयोगार्थत्वाकल्पनादक्रियेऽनभिमुखे च संयोगानुत्पत्तये समवायाभिमुख्यान्यतरसंबन्धेन क्रियायाः कारणत्वात् सर्वतः स्थिते विभावाभिमुख्यस्याकल्पनात् । नचाकाशादिसंयोगाभावे वीणाकाशसंयोगाभावेन शब्दस्यानुत्पत्तिरदृष्टस्य कार्यमात्रे प्रत्यकारणत्वप्रसङ्गश्चात्मसंयोगाभावादन्यदपि बहुतरासामञ्जस्यमिति वाच्यम् । स्वरूपस्य फलबलकल्प्येन संबन्धत्वेन सर्वसामञ्जस्यात् । असमवायिकारणावश्यंभावचर्चायाः स्वशिष्यकुलमात्रशोभनत्वात् । आकाशादौ संयोगाभावस्तु नाङ्गीकरणीयस्त्वया द्रव्यपरिभाषा-

व्याघातात् तस्मात्परमाण्वादिभिराकाशस्य संयोगः सततमेवोपेय इति तत्रैवाप्राप्तिपूर्वकत्वाभावादव्याप्त्याप्राप्तिपूर्वकत्वं नोपादेयम् । अतएवोक्तं भामत्यां माभूदप्राप्तिः कार्यकारणयोः प्राप्तिस्त्वनयोः संयोगः कस्मान्न भवतीति । तदित्थं सिद्धे विभुद्वयसंयोगेनोक्तरूपा ह्ययुतसिद्धिः समवायप्रयोजिका वक्तुं शक्या । एवमपृथग्देशत्वस्य घटकपालयो रूपघटयोश्च कपालकपालिकादेशत्वाद्घटकपालदेशत्वाच्च न तद्रूपता । नाप्यपृथक्कालत्वस्यासंभवात्सव्येतरविषाणयोरतिव्याप्तेश्च । नापि चापृथक्स्वभावत्वस्य तादात्म्ये सत्येव स्वभावैक्यस्य संभवात् । यश्चायुतसिद्धिशब्दस्य मुख्योर्थोऽपृथगुत्पत्तिमत्त्वरूपस्तस्यापि कार्यकारणयोर्विभिन्नकालोत्पत्तिकयोरसंभवात् अतद्रूपतेति समवायस्य प्रयोजकानिर्वचनादसंभवः । एवं कारणे कार्यस्य समवाय एवोत्पत्तिर्वाच्यः सचेन्नित्यः । कारणव्यापारवैयर्थ्यं उत्पन्नश्चेत्तस्योत्पत्तेः समवायादन्यस्या एव वक्तव्यतया सैवास्तु कार्यस्य किं समवायेन । नचोत्पत्तिराद्यक्षणसंबन्धो न समवाय इति समवायस्य नित्यत्वेऽपि न क्षतिरिति वाच्यम् । इदानीं कपाले घटस्योत्पत्तिरित्यत्र विनिगमनाविरहेण कपालावच्छिन्नकालविशेषनिष्ठसंबन्धस्येव कालविशेषावच्छिन्नकपालनिष्ठसंबन्धस्यापि विषयताया वाच्यतया कपाले घटसंबन्धस्य समवायरूपत्वेन तस्य नित्यत्वे संबन्धिनो घटस्यापि सत्त्वस्यावश्यकत्वात् संबन्धिद्वयसत्त्वायत्तत्वात्संबन्धसत्त्वस्येति कारणव्यापारवैयर्थ्यादनित्यत्वे च समवायस्योक्तदोषसद्भावादित्यतोऽपि न समवायः । किंच शुक्लः पटो नीलो घट इत्यादिविशिष्टप्रत्यक्षोपपत्तये गुणगुणिनोरभ्युपगम्यते समवायः सचाभ्युपगतोऽपि नोक्तसामानाधिकरण्यप्रत्ययोपपादकस्तत्सामेद एव दर्शनात् घटो द्रव्यमिति न भवति भेदे यथा गौरश्व इति समवायाभ्युपगमे चात्यन्तिको भेदो गुणगुणिनोरुपेयते । तथासति भवेदेवोक्तप्रत्यक्षबाधस्तस्मान्नास्ति समवायोऽपितु सर्वत्रैव तादात्म्यविषये समवायपदप्रयोगः । नच समवायनिबन्धनः सचाभेदविभ्रम इति वाच्यम् । रूपादिगुणमात्रगोचरस्य प्रत्यक्षस्याभावात् धर्मिभेदाभेदौदासीन्येन तत्सिद्धेरसंभवात् तत्साधकस्य नीलो घटो मधुरं फलमित्यादि प्रत्यक्षस्य तु गुणितादात्म्येनैव गुणादिगोचरत्वेन तस्यैव भ्रमत्वे गुणस्यैवासिद्ध्यापत्तेः कुत्र प्रत्यक्षेण गुणिभेदः सिध्येत् । तस्य प्रमात्वे च ततः सिद्धेऽभिन्नतया गुणे तादृशोपजीव्यप्रत्यक्षविरोधात् केनापि प्रमाणेन भेदस्य न भवति सिद्धिरिति । नच शुक्लपदस्य गुणिपरत्वादभेदप्रथोपपत्तिरिति वाच्यम् प्रत्यक्षस्य शब्दवृत्त्यननुसारित्वात् । सच प्रत्यक्षो विभिन्नसंबन्धिद्वयसंबन्धगोचरो यदि स्यात् कुण्डे बदरमितिवत् पटे शुक्ल इति स्यात् नचैवमस्ति तस्मान्नास्ति समवायः । अथाभिलप्यमानाभिलापयोरस्ति समानविषयत्वनियमो भवति च नीलो घट इत्यस्याभिलापस्य व्याकरणकोशादितो गुणिपरत्वनिश्चयः कथमन्यथा शुक्लं फलं शुक्ला शाटीति गुणपरत्वे शुक्लः फलमित्येव स्यात् गुणे नित्यपुंलिङ्गत्वात् । यदि वा शुक्लरूपस्य गुणस्य गुणिभिरभेदः स्यात् शुक्लरूपं घटः शौक्ल्यं घटो मधुररसः फलं माधुर्यं फलमित्यादिकमपि स्यात् भवति घटे शौक्ल्यं फले माधुर्यमिति तथा न भवति संयोगो घटोऽपि तु संयुक्त इति । तथा कपालं घटः तन्तुः पट इति न भवति भवति च कपालाभ्यां घटः तन्तुभ्यः पट इति । तथाचाभिलापस्योक्तस्य गुणिविषयत्वे निर्णीतेऽभिलप्यप्रत्यक्षस्यापि गुणिविषयत्वमेव न्याय्यमिति चेन्नाभिलापाभिलप्यमानयोः समानविषयत्वानियमात् । संयोगेन वह्निव्याप्यत्वेन गृहीताद्धूमात् वह्निमान् पर्वत इत्यनुमितेः पर्वते वह्निप्रकारकत्वं वह्निमतो व्यापकत्वेनाग्रहात् । वह्निमान् पर्वत इत्यभिलापस्य वह्निमत्प्रकारकत्वं नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वादेवमिदं रजतमिति प्रत्यक्षस्य रजतत्वप्रकारकत्वमिदं रजतमिति शाब्दस्य रजतप्रकारकत्वमित्युक्तनियमाभावात् । अभिलापेन प्रत्यक्षादिविषयावधारणस्य कर्तुमशक्यत्वात् । पौरुषेयवाक्यस्य वाक्यार्थज्ञानपूर्वकत्वनियमेन प्रत्यक्षादिज्ञानस्य तदुपजीव्यत्वेन तदनुसारेणैव कथंचिदभिलापविषयनिर्णयस्य कर्तुमुचितत्वाच्च । प्रत्यक्षादिविषयनिर्णयश्च श्रुत्यनुकूलाभिः युक्तिभिरेव कर्तुमुचितो युक्तयश्च तथाविधा अभेद एव भवन्ति बहुलाः । तथाहि गुणगुणिनोर्भेदे समवाये चाभ्युपगम्यमाने घटो नील इति बुद्धिं प्रति घटो न नील इतिबुद्धेर्नीलत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकभेदनिश्चयत्वेन प्रतिबन्धकत्वमुभयवादिसिद्धं समवायसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारताशालिबुद्धिं प्रति समवायसंबन्धावच्छिन्ननीलत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावनिश्चयत्वेनैकं अपरं च समवायसंबन्धावच्छिन्ननीलत्वावच्छिन्नावच्छेदकताकप्रकारताशालिबुद्धिंप्रति तादृशावच्छेदकताकप्रतियोगिताकभेदनिश्चयत्वेन प्रतिबन्धकत्वमिति प्रतिबन्धकताद्वयं तादृशनिश्चयाभावत्वेन कारणताद्वयं च तादात्म्येन नीलप्रकारकघटविशेष्यकशाब्दबुद्धौ तादृशयोग्यताकाङ्क्षाज्ञानादीनामुभयवादिसिद्धं कारणत्वम् । समवायेन नीलविशिष्टप्रकारकशाब्दबुद्धौ तादृशयोग्यताज्ञानादिकारणत्वमधिकमेवं क्रमेण विषयभेदेनानन्तकारणत्वप्रतिबन्धकत्वानि स्युः । मम तु समवायस्याभावान्न तानीति गौरवलाघवतर्कसहकृतस्य गुणगुण्यादितादात्म्यग्राहकमानस्य समवायग्राहकमानबाधकतैव स्यान्न बाध्यता । सतिचैवं गुणक्रियादिविशिष्टबुद्धिरित्याद्यनुमानं समवायसाधकत्वेनाभिमतमभेदस्यैव संसर्गतया साधकं भवति । तस्माद्गुणगुण्यादीनां तादात्म्यमेव च मन्तव्यम् । प्रमाणं च तत्र येषामात्यन्तिको भेदस्तेष्वन्योन्यमेकनिरूपणंविनाप्यपरो निरूप्यत एकसद्भावनिरपेक्षोऽपरस्तिष्ठति तदतिरेकेणाप्यपर उपलभ्यते यथा गौरश्वश्च नैवमवयवावयविगुणगुण्यादिकं तस्मादभिन्नं तत् । नच नित्यमिलितत्वात्तथेति वाच्यम् । नहि ययोर्मिलनं तयोर्नित्यत्वं विना नित्यमिलिताविमाविति भवितुं युक्तम् । नित्यत्वं च समवायिनां सर्वेषां सिद्धान्तविरुद्धम् । नित्यमिलितत्वं नित्यमिलनरूपसमवायवत्त्वं तस्मादेव संबन्धिनोस्तथात्वमित्यपि न वाच्यम् । संबन्धिद्वयनिरूपणाधीननिरूपणत्वस्य संबन्धि-

द्वयसत्तानियतसत्ताकत्वस्य चोभयसंप्रतिपन्नसंयोगसंबन्धे संबन्धत्वव्यापकत्वस्य निर्णयात् । समवाये संबन्धिद्वयान्यतरासत्त्वेऽपि सत्त्वाभ्युपगमे व्यापकनिवृत्त्या व्याप्यस्य संबन्धत्वस्यापि निवृत्तिः स्यात्तथासति गुणगुण्यादिसंबन्धत्वमात्रेण सिद्धस्य तस्यैवाभावः स्यात् । एवं न स्वतः संबन्धिनावथ चास्ति संबन्ध इत्यनुभवविरुद्धमिति संबन्धिनाशे समवायस्य सत्त्वाभ्युपगमासंभवात् । तस्य नित्यत्वस्यैव दुर्लभत्वात् । नचैकस्य समवायस्य कदाचिदप्येवं नास्ति संबन्धिद्वयं न विद्यत इति रूपविनाशेऽपि परिमाणघटयोर्घटविनाशेऽपि पटरूपयोः प्रलयेऽपि परमाणुपृथिवीत्वाद्योः सत्त्वादिति वाच्यम् । यदुभयनिरूपितसंबन्धत्वं यस्य यस्य तस्य तस्य तदुभयसत्त्वनियतसत्त्वं भवति यथा संयोगस्येति व्याप्यव्यापकभावस्य वाधकविरहेण निर्णयसंभवात् । तद्धटतद्रूपोभयनिरूपितसंबन्धत्त्वनिवृत्तौ सत्यामपि तयोर्विशिष्टप्रत्ययस्योपपत्तौ परमाणुपृथिवीत्वादिविशिष्टप्रत्ययस्यापि तथैवोपपत्तिसंभवात्तस्यासिद्धिरेव स्यादिति तद्रूपतद्धटोभयसंबन्धत्वोपपत्तये तदुभयसत्त्वनियतसत्त्वस्वीकारे नित्यत्वाभावस्य दुर्वारत्वात् । समवायस्यैव संबन्धिव्यतिरिक्तस्यासिद्धेर्निपुणतरनिरूपणेऽपि संबन्धिद्वयव्यतिरेकेण समवायनिरूपणसत्त्वयोरभावात् । अनुमानस्योभयसंप्रतिपन्नतादात्म्यविषयकत्वेनाप्युपपत्तेः । भेदव्यापकपृथक्ज्ञप्तिस्थित्याद्यभावे व्याप्यस्य भेदस्य दुर्लभत्वादेवं च संबन्धिभिन्नसमवायस्वरूपस्यैव प्रथमं दुर्लभत्वे ह्यपृथगुपलब्ध्यादेस्तन्निमित्तत्वस्य दुरवधारणीयत्वात् । एवं संयोगस्यापि संबन्धिद्वयात्यन्तभिन्नत्वमसंभावितमेव । तथाहि संयुक्तयोर्घटपटयोरतिरेकेण निपुणरूपणेनापि संयोगाख्यस्य कस्यचिन्नोपलब्धिरेतावत्तूपलभ्यते । यत्क्रियातः पूर्वं सान्तरयोर्नैरन्तर्यं क्रियातो भवतीति । नच नैरन्तर्यमेव संयोग इति वाच्यम् । मम तु तदेव हि सः त्वया तु नैवं वाच्यम् । सूक्ष्मतरपटव्यवधाने सति घटस्य तीव्रतरवेगवतापि हस्तेन कारणसंवलनात्संयोगः कुतो न जायत इत्येतदर्थं संयोगं प्रति व्यवधानस्य प्रतिवन्धकत्वं तदभावस्य नैरन्तर्यस्य कारणत्वं वाच्यम् । नहि कार्यं कारणं चैकं भवति । नच मध्ये द्रव्यान्तरसंयोग एव व्यवधानं तथाचावश्यकः संयोग इति वाच्यम् । असंयुक्तेनापि मध्यस्थितद्रव्येण व्यवहितत्वव्यवहारात् । यथा त्वयाऽऽवश्यकत्वाल्लाघवाच्चानुभवसंभारमपि कदर्थीकृत्य तेजोविशेषाभाव एवान्धकार उच्यते तथैव व्यवधानाभाव एवावश्यकत्वाल्लाघवाच्च संयोगो मयाभिधीयते । सान्तरत्वे वाय्वादिसूक्ष्मभागानां मध्येऽवस्थानावश्यंभावादतिप्रसङ्गस्याप्यभावादेतावानेवात्र विशेषस्त्वयेव मम तु न सर्वजनीनस्य कस्यचिदनुभवस्य बाधः । अथवात्यर्थानुभवागोचरे समवाय इव कथं चिदनुभवगोचरे संयोगस्वरूपे न मम द्वेषोऽपि तु संबन्धिस्वरूपात्तस्यात्यन्तभेद इति गृहाण । नच समवायसंयोगादीनां धर्म्यतिरेकेणाभावे समवायादिबुद्धिभेदव्यपदेशभेदयोः का गतिरिति वाच्यम् । यावत्संबन्धिद्वयस्थायिनैरन्तर्योपाधिना समवायबुद्ध्यादावतथाभूतनैरन्तर्योपाधिना संयोगबुद्ध्यादौ संबन्धिन एव विषयत्वोपगमात् । एकस्योपाध्युपरागनिबन्धना लौकिका बहवो बुद्धिव्यपदेशभेदा दर्शिता भाष्ये । यथायं मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति । यथा चैकापि सती रेखा स्थानान्यत्वेन निवेश्यमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवतीति एवं रूपादिगुणानां गुण्यादिभेदाभावोऽपि द्रष्टव्यः । यत्त्ववयवावयविगुणगुण्याद्यभेदे कपालं घटो रूपं घट इत्यापादितम् । तन्न । मृद्धटः सुवर्णं कुण्डलमितिवत् संयोगविशेषविशिष्टं कपालद्वयं घटः शाखादिसमुदायः सन्निवेशविशेषविशिष्टो वृक्षः । तन्तव एव तानप्रतितानविशिष्टाः पटतामुपगता इति किंचिदपि विचारयतां भवन्ति प्रत्ययाः । तस्मात्कपालं घट इत्यत्रेष्टापत्तिरपि भवति युक्ता । नच लोकैर्नैवं प्रतीयत इति वाच्यम् । तत्किं कपाले घटः तन्तुषु पट इति लोकैः प्रतीयते येन समवायो ह्यभ्युपेयते भवता केवलं हि कुतर्काभ्यासदुष्टचेतसां तादृशकल्पनामात्रम् । यदा निपुणतरवीक्षणेनापि कदापि कुत्राप्युपलब्धियोग्योऽपि घटपटादिः कपालतन्त्वादिव्यतिरेकेण न वर्तते नोपलभ्यते च । यथोपलभ्यतेऽश्वव्यतिरेकेणाश्वादत्यन्तभिन्नो गोमहिषादिरिति भेदव्यापकपृथगुपलब्ध्याद्यभावादात्यन्तिको भेदो न सिद्ध्यति प्रत्युत बाध्यते तदा लोकानां विचारविकलहृदां प्रत्ययविशेषतदभावादि कथंचिदुपपादनीयम् । न तदनुसारेण व्यवस्थापनीयं वस्तु किंचित् मूलं चोक्तप्रत्ययाभावे धर्मधर्मिभावादिकल्पनामूलकोऽनादिकालनिरूढः संस्कारः घटत्वेन कपालत्वेन कार्यकारणभावस्य रूपत्वादिना घटत्वादिना शौक्ल्यत्वादिना शुक्लादिभावत्वरूपेण घटत्वादिना चाधाराधेयभावस्य कल्पनायास्तन्मूलकसंस्कारस्य च भावः । सएवच चूर्णेन पिण्डः पिण्डेन कपालं कपालेन घटः तूलेनांशुरंशुना तन्तुस्तन्तुना पटः कृत इत्यादीनां घटे रूपं शौक्ल्यं फले माधुर्यं कुसुमे सौरभं वर्तत इत्यादीनां निमित्तम् । मृत्त्वशुक्लत्वमधुरत्वसुरभित्वकठिनत्वादिना च धर्मधर्मिभावकल्पनाविरहाद्भवत्येव मृद्धटः शुक्लः पटो मधुरं फलं सुरभि कुसुमं कठिनं काष्ठमित्यादि प्रत्ययः स चोक्तयुक्तिगृहीतप्रमाणभावः प्रभवति तादात्म्यसाधने । नच प्रभवति कपाले घटः पटे रूपं शौक्ल्यमित्यादिप्रत्ययो युक्तिबाधितः समवायसाधन इति । किंच यद्रूपविशिष्टयोराधाराधेयभावोऽनुभवसिद्धस्तयोस्तादात्म्येऽपि सोऽभ्युपेयो यथा घटाभावे घटो नास्तीति प्रत्ययसिद्धयोर्घटाभावघटविरोध्यभावत्वविशिष्टयोः संबन्धान्तराभावे संबन्धतया तादात्म्यमेव तत्तत्प्रत्ययेषु भासते चेति न काप्यनुपपत्तिरिति ॥ एवमवयवी यद्यवयवादत्यन्तं भिन्नः स्यात्कपालद्वये तुलारूढे सति यावदवनतिः तुलाया आरब्धघटे कपालद्वये तुलारूढे सति द्विगुणा ततोऽधिका वाऽवनतिः स्यात् । अवयवगुणापकृष्टगुणारम्भस्यावयविन्यदर्शनात् । अथावयविनि नास्ति गुरुत्वं कुतस्तत्कार्यदर्शनमितिचेत् । अवयविनि गुणोत्पादकतया स्वकारणगुणस्यैव संप्रतिपत्तेः कारणे गुरुत्वस्य विद्यमानत्वेऽपि गुरुत्वं कार्ये नोत्पद्यत इति ह्यनुभवविरुद्धम् ।

तथाप्यनुत्पादेऽवयविनि रूपादयोऽपि नोत्पद्येरन् इष्टापत्तौ च रूपादिसकलगुणरहितस्य तस्य स्वरूपमेव दुर्लभम् । नहि रूपादिगुणहीनं पृथिव्यादिकं किंचिद्द्रव्यं नाम । अथ कारणगणेषु गुरुत्वमेव न गुरुत्वान्तरारम्भकं कार्यगुरुत्वस्य कार्यादर्शनादितिचेत् । दृश्यत एव हि पतनं तस्य कार्यम् । कारणपाते गुरुत्वस्य समवायेनैव कारणत्वावधारणात् । कार्ये गुरुत्वाभावे सति कारणपातेऽपि कार्यं न पतेत् । नच गुरुत्ववद्द्रव्यसंबन्धादपि दृष्टं पतनमिति किं कार्यगुरुत्वेनेति वाच्यम् । गुरुत्ववद्द्रव्यसंयोगादेव हि दृष्टं पतनमिति तथैवाभ्युपेयम् । नास्ति च गुरुत्वता कारणेन कार्यस्य संयोग इति । अथास्तु गुरुत्ववत्समवायोऽपि पतनहेतुरिति चेदत्राहुर्न्यायवार्तिककाराः । समवायस्य पतनहेतुत्वे गुरुत्ववत्समवायस्य कारणरूपादिष्वपि सत्त्वेन तान्यपि कार्यमनुपतेयुः । पतन्त्येवेति चेद्गुरुत्वमपि पतेत् । तदपीष्यत इतिचेदेकस्यैकनिरूपितकरणत्वकर्तृत्वयोः करणत्वकर्मत्वयोर्वा विरोधात्स्वपातं प्रति स्वस्य निमित्तत्वासंभवाद्गुरुत्वान्तराभ्युपगमेऽनवस्थापातादिष्टापत्तेरयोगात् । तस्मान्न गुरुत्वं नापि च रूपादिकं पततीति गुरुत्ववत्समवायस्य पातहेतुत्वे गुरुत्वरूपोभयपतनमनिष्टमापतेत् । यदि पतनहेतावपि न पतेत्केनचित्प्रतिरुद्धमिति मन्तव्यम् । तदा तथासति यथा संयुक्तयोरेकस्य पातेऽपि हस्तादिसंबन्धरूपप्रतिबन्धकादपरस्यापतनेन ततो विश्लिष्टस्य तत्रैवावस्थानं तथा गुरुत्वाश्रयपातेऽपि रूपादिकमपतत् समानेऽपि कारणे प्रतिबन्धकविशेषमहिम्ना कारणाद्विश्लिष्टं तत्रैवावतिष्ठेदित्युपलभेत रूपादिहीनं कारणम् । यदि पतेद्रूपादिकं क्रियावत्स्यात् । न पतति न तिष्ठतीति युक्तिविरुद्धं तस्माद्गुरुत्ववत्समवायो न पातहेतुरपि तु गुरुत्वसमवायो गुरुत्ववत्संयोगश्चेति गुरुत्वं पतनार्थमवयविन्यावश्यकं न ह्यत्र रूपादिपतनप्रसङ्गः कारणविरहात् पतनवारणाय प्रतिबन्धकाकल्पनाच्च न कारणात्तेन विश्लेष्य तत्रैवावस्थापनमपितु कारणे तिष्ठदेव यत्र कारणं तत्र तद्गततयोपलभ्यत इति । अत्रेदमवधेयम्—द्रव्यरूपसमवायिकारणसापेक्षस्यैव गुरुत्वस्योक्तप्रत्यासत्त्या हेतुत्वं पतनं प्रति वाच्यम् । तथाचोक्तप्रत्यासत्त्या रूपादिषु गुरुत्वसद्भावेऽपि द्रव्यरूपकारणविरहादेव रूपपतनवारणसंभवात् । प्रतिबन्धकस्याकल्पनेन कारणपातेऽपि रूपाद्यवस्थानाद्यापत्तिविरह इति किमर्थं कार्यगुरुत्वं कल्पनीयं अवश्योपेया च समवायिकारणसापेक्षता भवतापि कथमन्यथा कारणरूपादेः स्वाश्रयसमवायेन कारणत्वस्य संप्रतिपन्नत्वेन कार्यद्रव्य इवावयवगुणेऽपि न रूपाद्युत्पत्तिः तादात्म्येन कारणीभूतद्रव्यविरहेण रूपाद्युत्पत्तिवारणं तु ममापि समानमिति । अथैवं कार्यादन्त्यादपसारितं गुरुत्वं ततस्ततः कारणादपि कार्यभूतादपसरदन्त्यकारणेषु परमाणुष्वेवावस्थितं भविष्यति । तथासति परमाणौ पतति सति गुरुत्ववत्परमाणुसमवायाद्द्व्यणुकं पतेत् त्रसरेण्वादेश्च गुरुत्ववत्समवायाभावात् पतनं न स्याद्गुरुत्ववत्समवेतसमवायादेश्च चरमकार्यपर्यन्तमसंख्यत्वादसंख्यकार्यकारणभावापत्तेः कार्यतावच्छेदकाननुगमात्कुत्र कार्ये कतिपयसमवायघटितस्य कारणतावच्छेदकसंबन्धत्वमित्यस्यासर्वज्ञदुर्ज्ञेयत्वाच्च । समवायेन पतनं प्रति समवायेन गुरुत्वस्य लाघवात्कारणत्वे प्रथमं निर्णीते बहुतरगुरुत्वकल्पनागौरवस्य फलमुखत्वेनादोषत्वात् सर्वावयविषु गुरुत्वं सिद्ध्यत्येव । यद्वा यथा स्यादवयविषु गुरुत्वसिद्धिस्तथा स्वसिद्धान्ताविघाताय भवद्भिः प्रयतितव्यम् । मया तु त्वत्सिद्धान्तमवलम्ब्यातिरिक्तत्वेऽवयविनो द्विगुणावनतिरूपगुरुत्वकार्यप्रसङ्गरूपदोष उद्भावितः । यद्यपि तस्य वारणमित्थं न्यायवार्तिककृता कृतम् । तथाहि कपालद्वयेऽनारब्धघटे तुलायामारूढे सति शतपलं कपालद्वयमिति यदवधारणं गुरुत्वस्य न तत्कपालमात्रगुरुत्वस्य परमाणुमारभ्य कपालिकापर्यन्तस्य कपालसंसृष्टतया तुलायामारूढत्वात्कियत्कपालस्य कियत्कपालिकादेरित्यस्यासर्वज्ञजनदुर्ज्ञेयत्वात् । एतावत्त्ववधार्यते । कार्यकारणसङ्घातस्यैतावद्गुरुत्वमिति । नच सङ्घातस्य घटं प्रति कारणत्वम् । येन सङ्घातगुरुत्वानपकृष्टगुरुत्वं कार्ये घटादौ भवेत् भवेच्च गुरुत्वान्तरकार्योपलब्धिप्रसङ्गश्च । सति चैवमारब्धघटेऽपि कपाले तुलारूढे यत्पूर्ववदेवावनमनं तदुपपद्यत एव यत्किंचिद्गुरुत्ववृद्धावपि तस्या अस्मदाद्युपलब्धियोग्यावनमनगतविशेषानाधायकत्वात् तुलायां कतिपयत्रसरेणुनिपातेऽप्यवनमनविशेषाग्रहणवदिति । तथापि तत्स्वशिष्यव्यामोहनमात्रमेव विचारप्रहितदृशा समालोचितं सत्प्रतिभाति । तथाहि न परमाणुगुरुत्वादल्पं संभवति गुरुत्वं तावन्मात्रगुरुत्वारम्भेऽप्यवयविनि चरमावयविसंपत्तौ सत्यां तस्मिंस्तुलारूढे च सति विशकलितेषु तद्घटकसूक्ष्मावयवेषु यावदवनमनं किमप्यस्मदादिभिराकलितं ततो द्विगुणितं ततोऽनतिन्यूनं वा द्विगुणितमवनमनं प्राप्नोत्येव यो हि लक्षपरमाण्वारब्धो घटः सहि द्व्यणुकादिक्रमेणैव परमाणुभिरारभ्य इति पञ्चाशत्सहस्रमितानि द्व्यणुकगुरुत्वानि षट्षष्ठ्याधिकषोडशसहस्रमितानि त्रुटिगुरुत्वानि तदारब्धान्तरालिककार्यगुरुत्वैः सह तानि संकलितानि परमाणुगुरुत्वसमानि किंचिन्न्यूनानि वा स्युरित्युक्तस्यावनमनविशेषस्य दुर्वारत्वम् नच घटे तुलारूढे सति यावदवनमनं दृष्टं परमाणुगुरुत्वतदारब्धद्व्यणुकादिकार्यगुरुत्वानां मिलितानामेव तावत्तदवसीयते । नहि केनाप्यनारब्धकार्याणां परमाणूनां द्व्यणुकादीनां वा गुरुत्वकार्यं पृथगवधारितं कदाचिदपीति वाच्यम् । तुलारूढेन घटेन यावदवनमनं दृष्टं तावदेव तं भङ्क्त्वा कपालेषु तानि भङ्क्त्वा कपालिकासु ताः संचूर्ण्य चूर्णेषु स्थूलेषु तानि पिष्ट्वा रजःसु सूक्ष्मतरेषु बहुषु तुलायामारोपितेषु किमप्यवनमने वैलक्षण्यं न दृष्टं नष्टानि चासंख्यकार्याणि तदैवं निर्णेतु शक्यन्त एव एतावदेवावनमनं त्रुटिद्व्यणुकपरमाणुष्वपि तुलारूढेषु भविष्यतीति । प्रयोगश्च घटोपगृहीतकारणद्रव्यपर्याप्तसमुदायत्वावच्छिन्नो घटप्रयोज्यावनमनतुल्यावनमनप्रयोजकः तादृशसमुदायत्वात् कपालादिरजःपर्यन्तवत् अवच्छेदकावच्छेदेन साध्यत्वात्परमाण्वादिसमुदायेऽपि साध्यसिद्धिः परमाण्वादीनां विशिष्यैव वा पक्षेऽन्तर्भावः करणीयः निरुपाधित्वेनैव च सप्रयोजकत्वमनयैव च

रीत्या घटतुल्यरूपरसादिमत्त्वमपि परमाण्वादिषु साधनीयं तदपि नान्यथा सिध्येत्। सिद्धे चैवं समानेऽवनमने तस्योक्तरीत्या द्विगुण्यादिप्रसङ्गेन बाधः स्यात्। यद्यवयवी व्यतिरिच्येतावयवेभ्य इत्याशयेनैव तत्रतत्र वेदान्तग्रन्थे द्विगुणगुरुत्वकार्यापादनं कृतमस्तीत्यवधेयम्। कार्यगुरुत्वेन कारणगुरुत्वस्य प्रतिबध्यता विनाश्यता च न्यायवार्तिक एव कार्यपातेऽपि कारणपातस्यासंभवात् कार्यस्यानाधारस्य स्यात् कार्यनाशे कारणगुरुत्वनाशपक्षे कारणपातादिगुरुत्वकार्याभावः स्यादित्यादिदूषणैर्निराकृतेति। एवं चावयवावयविगुणगुण्यादीनामात्यन्तिकभेदे निरस्ते निरस्ते च समवाये तेषां संबन्धः तादात्म्यमेव तच्च भेदसमानाधिकरणोऽभेदः प्रमाणं च तत्र गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादित्यनुमानम्। समानाधिकृतत्वं चाभेदसंसर्गकप्रत्ययविषयत्वम्। समानविभक्तिकविशेष्यविशेषणपदघटिताभिलापजन्यप्रत्ययगोचरत्वं वाऽनुकूलतर्कश्च सामानाधिकरण्यानुपपत्तिरेव। तथाहि भेदे चात्यन्तिके सति न सामानाधिकरण्यप्रत्ययः यथा गौरश्वः नापि चात्यन्तिकाभेदे यथा घटो घट इति। तथाच गुणादिकं यदि गुण्यादिभिर्भिन्नाभिन्नं न स्यात् समानाधिकृतं न स्यादिति विपक्षबाधको भवति सत्तर्कः। सच भेदोऽभेदो वा नावच्छेदकभेदेन सामानाधिकरण्येऽपेक्षितः। तथासति कुण्डलमिदं कटकमित्यपि स्यात् तयोः कुण्डलत्वकटकत्वाभ्यां भेद इव हि हेमत्वेनाभेदोऽप्यस्ति। यद्धेम प्राक् कटकमभूत्तस्यैव कटकविनाशेन कुण्डलतासंपत्तौ हि तदिदं हेमकुण्डलमिति सामानाधिकरण्यप्रत्ययात् तदिति हि कटकं परामृशति। एवं घटो घट इत्यपि स्यात् घटत्वेनाभेद इव द्रव्यत्वकम्बुग्रीवादिमत्त्वादिना हि भेदोऽप्यस्ति द्रव्यं घटः कम्बुग्रीवादिमान् घट इति सामानाधिकरण्यप्रत्ययात्। तस्माद्येन येन रूपेण विशेषणविशेष्ययोर्भानं ताभ्यामेव रूपाभ्यां भेदाभेदौ वाच्याविति हेमकुण्डलं घटो द्रव्यं नीलो घट इत्यादौ कुण्डलत्वाद्यवच्छिन्ने हेमत्वाद्यवच्छिन्नस्यैव भेदोऽभेदश्च वाच्य इत्येकरूपावच्छेदेनैव तयोः सत्त्वमपेक्षणीयतामाप्नोति। नचावच्छेदकभेदं विना भावाभावयोर्विरोधात्कथमेकत्र सत्त्वमिति वाच्यम्। विरोधाविरोधयोर्हि प्रत्ययैकशरणयोर्ययोर्नैकत्र प्रत्ययः प्रत्ययेऽपि वावच्छेदकभेदेनैव प्रत्ययस्तयोरवच्छेदकभेदेनाविरोधोऽवच्छेदकैक्ये तु विरोधः यथा कपिसंयोगतदभावयोः। ययोरवच्छेदकभेदेऽपि नैकत्र प्रत्ययस्तयोर्विरोध एव यथा वृक्षत्वतदभावयोरिति प्रत्ययानुरोधादेवाभ्युपेयते यथा तथा नीलो घट इत्यादिसामानाधिकरण्यप्रत्ययादवच्छेदकभेदनिरपेक्ष एव गुणगुण्यादोर्भेदोऽभेदश्चाभ्युपेयः। अतएवोक्तम् विरुद्धमिति नः क्व संप्रत्ययो यत्र प्रमाणगोचरः प्रकृते च प्रमाणसत्त्वान्न विरोधः प्रत्ययः। सामानाधिकरण्यप्रत्यये हि भेदाभेदौ भासेत इति भामत्याम्। अथापि कथं तयोरेकज्ञानविषयता नीलो घटो नीलो न घट इति ज्ञानयौगपद्यादर्शनादिति चेन्नैकधर्मिणि तयोर्नैकदा भानमिह हि भेदोपलक्षिताधिकरणवृत्तित्वविशिष्टाभेदस्य संसर्गतया भानाभ्युपगमात्। यद्धर्मविशिष्टे संसर्गत्वेनाभेदो भासते न तद्धर्मविशिष्टे संसर्गत्वेन भेदो भासत इति ज्ञानविरोधाभावात् भेदस्य विशेषणत्वानुपगमात् वह्निसामानाधिकरण्यविशिष्टधूमस्य पर्वते भाने वह्नेरपि तत्र भानमिति शिरोमण्युक्तरीत्या संसर्गतयाप्यभेदधर्मिणि भेदभानाप्रसक्तेः वृत्तित्वस्य विशेषणत्वोपगमाच्चोपलक्षणतयापि भेदधर्मिण्येवाभेदस्य सत्त्वान्नान्यत्रेति लभ्यते। अथ भेदस्य संसर्गतया भानं किमर्थं नियामकत्वमात्राभ्युपगमेऽपि सामञ्जस्यादितिचेत् सर्वत्रैव विशिष्टबुद्धौ भेदसमानाधिकरणसंसर्गस्यैव भानोपगमात्। अन्यथा घटभूतलयोर्यः संयोगस्तस्य भूतल इव घटेऽपि सत्त्वेन तद्घटस्तद्घटवानित्यपि प्रत्ययः प्रमा स्यात्। भेदभाने तु तद्घटत्वेन भेदानुपगमेन तदभावेन प्रमात्वासंभवात् तद्व्यक्तित्वस्य प्रतियोगितानुयोगितावच्छेदकघटकत्वे तन्मात्रस्यैवावच्छेदकत्वात् घटत्वकम्बुग्रीवादिमत्त्वयोर्गौरवेण तद्घटकत्वासंभवात्। तद्घटस्तत्कम्बुग्रीवादिमानित्यस्यापत्तिविरहात्। नच विशेषणभेदविशेषणोभयवद्विशेष्यनिष्ठविशेष्यतानिरूपितप्रकारताकत्वमेव हि प्रमात्वं वाच्यम् तावतैवोक्तस्य प्रमात्वाभावनिर्वाह इति। अबाधितविषयकत्वस्यैव प्रमापदमुख्यार्थत्वेन भेदस्याविषयकत्वे बाधितविषयकत्वस्यासंभवेन प्रमात्वापत्तेस्तत्र दुर्वारत्वात्। अतएव स्वप्रतियोगिकसंबन्धानुयोगित्वस्य स्वस्मिन्नभावेन तादृशानुयोगित्ववन्निष्ठविशेष्यतानिरूपितप्रकारताकत्वरूपप्रमात्वस्यासंभवेन तत्र तदापत्तिवारणात् भेदभानमप्रामाणिकमिति निरस्तम्। प्रमापदमुख्यार्थस्योक्तस्य तथापि सत्त्वप्रसङ्गादुक्तयोश्च प्रमापदपारिभाषिकार्थत्वात् प्रतियोगित्वानुयोगित्वभानं तु संसर्गसंसर्गभानस्यानवस्थादोषेणाप्रामाणिकतया न संभवत्येव। नच घटाभावो घटाभाववानित्यस्य प्रमात्वानुपपत्तिर्भेदाभावादिति वाच्यम्। घटाभावत्वघटविरोध्यभावत्वादिनैव विशेष्यविशेषणभावाभ्युपगमेन तेन रूपेण भेदस्य संभवात्। अत्रेदमवधेयम्—यद्यपि घटकपालयोः समवायस्य वह्निपर्वतयोः संयोगस्योभयत्र सत्त्वाविशेषेण भेदभानाभ्युपगमेऽपि घटवत्कपालं वह्निमान् पर्वत इतिवत् कपालवान् घटः पर्वतवान् वह्निरित्यस्य प्रमात्वापत्तिरित्यतः संसर्गस्य प्रतियोगित्वानुयोगित्वयोर्भानमभ्युपेयं तथा सति समवायाविशेषेऽपि कपालस्यैवानुयोगित्वं घटस्य प्रतियोगित्वमेव संयोगाविशेषेऽपि पर्वतस्यैवानुयोगित्वं वह्नेरेव प्रतियोगित्वमभ्युपेयम्। तथाच कपालपर्वतयोर्विशेषणत्वे घटवह्नयोर्विशेष्यत्वे च प्रतियोगित्वानुयोगित्वयोर्वैपरीत्येन भानाद्भवति बाधितविषयकत्वम्। मास्तु वा संबन्धसंबन्धभानं तथापि तेन संबन्धेन तत्रैव तद्वत्त्वं यत्र यत्प्रतियोगिकसंसर्गस्यानुयोगित्वमन्यत्र तत्संबन्धावच्छिन्नप्रतियोगिताकतदभाव एवेत्यभ्युपेयं तथासत्यप्युक्तज्ञानयोर्बाधितविषयकत्वनिर्वाहः। एवं च तद्घटस्तद्घटवानित्यस्यापि न प्रमात्वप्रसङ्ग इति तद्वारणाय सर्वत्र भेदभानाभ्युपगमोऽनर्थक एवेति तथापि यद्ग्रहे यद्ग्रहो यदभावग्रहेन यद्ग्रहस्तस्य तत्प्रयोजकत्वमिति सत्यपि भेदे सत्यपि

चौत्तराधर्यभावेन संयोग उभयोरैक्यग्रहे न भवति । संयोगप्रतियोगित्वानुयोगित्वग्रहः सत्यपि चैक्ये दूरादेकत्र वृक्षे भेदग्रहे शाखयोर्यः संयोगस्तत्प्रतियोगित्वानुयोगित्वयोरेकत्रैव वृक्षे ग्रह इति सर्वत्रैव संबन्धे भेदतद्ग्रहापेक्षानियमदर्शनाद्भेदस्य संसर्गप्रतियोगित्वानुयोगित्वव्यापकत्वे निर्णीतेऽभेदस्यापि संसर्गत्वेन तत्प्रतियोगित्वानुयोगित्वयोरपि व्यापकभेदनियतत्वमावश्यकमेवेत्युक्तानुमानस्य भिन्नाभिन्नत्वग्राहकस्याबाधितत्वमेव सामानाधिकरण्यप्रत्ययस्य भेदविषयकत्वे तद्व्यापाराभावात् । एवंच सामानाधिकरण्यप्रत्यये हीत्यादि भामत्याश्च सामानाधिकरण्यप्रत्यये हि प्रमाणे सति गुणगुण्यायोर्भेदाभेदावनुमितौ भासेत इत्यर्थः । ननु नीलो घट इत्यादिसामानाधिकरण्यप्रत्यये भासेत इत्यर्थः । अतएव सिद्धान्तबिन्दुटीकायां वस्तुतो विशेषणभिन्नतया ज्ञायमाने विशेष्ये तादात्म्येन विशेषणप्रकारकज्ञानत्वं तादात्म्येन विशेषणांशे प्रमात्वं ननु विशेषणभेदसमानाधिकरणतादात्म्यसंसर्गत्वघटितमित्यादि ब्रह्मानंदेनोक्तम् । अथ भेदस्य तादात्म्यज्ञानाविषयत्वे घटो घट इत्यस्य व्यावहारिकप्रमात्वमपि नानुभूयते । अनुभूयते च नीलो घट इत्यस्येति विशेषः किंकृतः स्यात् तादात्म्यस्योभयत्राबाधादितिचेन्न । तादात्म्यप्रतियोगित्वानुयोगित्वव्यापको यो भेदः प्रमाणसिद्धः स हि भवत्यौपाधिकः औपाधिकश्च भेदो विशेषणविशेष्यतावच्छेदकयोर्योभेदस्तदनतिरिक्त उपहितयोर्भेद उच्यते । भेदयोरनतिरेकश्च विशेषणविशेष्यतावच्छेदकभेदस्य प्रातीतिकतत्तदुपहितप्रतियोगित्वानुयोगिकत्वविशिष्टत्वम् । तत्तदुपाधिभेदस्यैव तत्तदुपहितभेदतया प्रतीतेरभ्युपेयत्वात् । अभिन्नस्योपहितस्वरूपस्योपाधिद्वयोपरागेणोपाधिभेदातिरिक्तभेदाभ्युपगमे गौरवात् । प्रतीयते हि प्राचीप्रतीच्योर्वीणाकाशमृदङ्गाकाशयोर्वस्तुत एकयोरेवोपाधिभेदाद्भेदो या प्राची सा न प्रतीचीत्यादावेवं नीलपदार्थो घटपदार्थश्च नैक इत्यादावपि नीलपदघटपदयोः सह प्रयोगानुपपत्तेः । पटादेरनीलत्वस्य घटादेररक्तत्वस्य च प्रसङ्गादत्यन्ताभेदासंभवात् स्वाभाविकभेदे च घटस्यानीलत्वप्रसङ्गाद्दोरनश्वत्ववदिति नैक इत्यौपाधिकभेदवानिति पर्यवसानात् । एवंच भेदभानपक्षे घटो घट इत्यत्र भासमानभेदस्योपाधिभेदाभावेनौपाधिकत्वासंभवादनौपाधिकस्य स्वतो बाधादप्रमात्वस्यैव निर्णयः, नीलो घट इत्यादौ तु भासमानभेदस्य नीलत्वघटत्वप्रतियोग्यनुयोगिकस्य व्यावहारिकस्य प्रातीतिकनीलघटप्रतियोगिकत्वानुयोगिकत्वोपरक्ततया प्रातीतिकत्वनिश्चये व्यवहारकालबाधितप्रातीतिकविषयकत्वेन व्यवहारकालेऽपि भ्रमत्वग्रह उक्तप्रकारेण प्रातीतिकत्वाग्रहे तु नेति विशेषस्य सद्भावात् । नच भेदभानपक्षे विशेष्यतावच्छेदकविशेषणतावच्छेदकयोरेव भेदभानमस्तु तदुपहितभेदभानाभ्युपगमोऽनर्थकः । तथासत्युपाधिभेदस्योपहितप्रतियोगिकत्वादिकल्पनं गौरवादेव हेयमिति वाच्यम् । सामानाधिकरण्यानुभवे हि नीलो घटो द्रव्यं घट इत्यादौ नीलत्वोपहितस्य तादात्म्यं शुद्धघटत्वोपहिते भासते तत्राभेदमात्रस्य संसर्गत्वे घटो घट इत्यादीनां प्रमात्वापत्तिः स्यादिति भेदस्य संसर्गतया भानमभ्युपेयम् । सच विशेषणतावच्छेदकनीलत्वमात्रप्रतियोगिको न नीलस्य संसर्गो भवितुमर्हति । अन्यप्रतियोगिकस्य संसर्गस्यान्यनिरूपितसंसर्गत्वासंभवात् । स्ववृत्तिनीलत्वभेदस्य संसर्गत्वसंभवेऽपि तस्य स्वातन्त्र्येण घटत्वे भानाभ्युपगमे गौरश्व इत्यादेः प्रमात्ववारणायाभेदेन विशेषणस्य तत्तद्धर्मोपहिते भानस्यावश्यमुपेयतया स्वतन्त्रमुख्यविशेष्यताद्वयापत्त्या समूहालम्बनविलक्षणत्वानापत्तिः । अतो धर्मिपारतन्त्र्येण भानं वाच्यम् । तत्त्वंच धर्मिणि येन संबन्धेन विशेषणस्य भानं येन च संबन्धेन धर्मितावच्छेदकस्य तदुभयघटितसामानाधिकरण्येन भानत्वम् । अन्यादृशस्य तस्यानुभवविरुद्धत्वात् । तादृशस्य च घटो घट इत्यत्रापि घटस्य घटत्वेऽबाधात् प्रमात्वं स्यात् । विशेषणतावच्छेदकस्य विशेष्यतावच्छेदके भेदभानं तु न संभवत्येव । विशेषणविशेषणतया भासमानस्य तस्य स्वातन्त्र्येणान्यविशेषणत्वासंभवात् । धर्मिपारतन्त्र्येण भानं तु स्वधर्मिसंबन्धिमात्रे स्यान्न तत्संबन्धिसंबद्धे नापि हि स्वधर्मिणि भासमानो यः स्वस्य संसर्गः स्वधर्मिणश्च यः संबन्धस्तद्धटितपरम्परान्यतरसंबन्धेन तस्य संसर्गताया अनुभवविरुद्धत्वादतिप्रसञ्जकत्वाच्च । तस्माद्विशेषणस्यैव भेदः संसर्गतया भासत इत्यभ्युपेयः । सच न स्वाभिन्ने स्वस्य स्वाभाविकः संभवतीत्यौपाधिक एव वाच्यः । औपाधिकस्य च तस्यातिरिक्तस्य कल्पनापेक्षया क्लृप्तस्योपाधिप्रतियोग्यनुयोगिकस्योपहितप्रतियोग्यनुयोगिकतया कल्पनस्य लाघवेनोचितत्वात् । उपाध्योर्विद्यमानभेदस्योपहितप्रतियोगिकत्वेन विशेषणसंसर्गत्वस्य नानुपपत्तिः । नीलो घट इत्यत्र नीलत्वघटत्वयोरुपाध्योर्भेदस्य विद्यमानत्वात्तस्य नीलप्रतियोगिकतया नीलसंसर्गतया भानसंभवः । घटो घट इत्यत्र घटत्वस्य स्वस्माद्भेदासंभवेनोपाध्योर्भेदस्यैवाभावेनोपहितप्रतियोगिकतया कस्य संसर्गतया भानं स्यादिति तस्य तथा भाने व्यावहारिकत्वस्यापि प्रमात्वस्य न संभव इति । यश्च घटत्वोपहितयोरस्ति व्यक्त्योर्भेदः सच तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिकः प्रागभावादिवदनवच्छिन्नप्रतियोगिको वा स्वाभाविक एव नत्वौपाधिक उपाध्योर्भेदाभावादिति न घटत्वादिविशिष्टस्य स भवति संसर्गो नापि हि तादृशव्यक्तिद्वयावगाहिसामानाधिकरण्यप्रत्ययस्य प्रमात्वसंभवो ह्यभेदस्य बाधात् । द्रव्यत्वत्वघटत्वत्वविशिष्टयोरिव शुद्धयोरपि तयोर्भेदेन भाव्यमित्यस्त्यनुभवः । तस्योपाधिकभेदाभ्युपगमं विना शुद्धभेदावगाहिप्रत्ययस्याप्रामाणिकतया बाधः स्यात् घटत्वं न द्रव्यत्वमित्यादौ द्रव्यत्वत्वाद्युपहितभेदस्यैव भानादित्यतोऽप्युपहितभेदोऽभ्युपेयोऽभ्युपगमे स तस्य घटो द्रव्यमित्यत्रैव तादृशभेदभानसंभव उपहितभेदग्रहस्थल उपाधिभेदस्योपहितप्रतियोगिकत्वेनोपाधिरूपप्रतियोगितावच्छेदकग्रहमात्रापेक्षयाप्यभावग्रहस्थलीयकारणनियमरक्षासंभवात् अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वमते घटादिप्रतियोगिमात्रस्य ग्रहत्वेन ग्रहापेक्षा नतु प्रागभावादिप्रतियोगिनस्तद्वत् । एवंच घटो द्रव्यं नीलो घट इत्यादौ घटाद्यनुयोगिकतयोपहितस्य विशे-

षणस्य भेदभानं घटत्वाद्यनुयोगिकतया स्वाभाविकस्य द्रव्यत्वाद्युपाधेर्भेदस्य वा भानमित्यत्र विनिगमनाविरहादुपहितयोरपि भेदभानमावश्यकम् । नच क्लृप्तत्वं विनिगमकमिति वाच्यम् । शुद्धप्रतियोगिकानुयोगिकभेदस्याप्यक्लृप्तत्वात् क्लृप्तभेदस्य शुद्धप्रतियोगिकत्वाद्यभावात् तद्ग्रहस्य प्रतियोगितावच्छेदकद्रव्यत्वत्वादिग्रहमन्तरेणासंभवात् तत्र क्लृप्तभेदभानस्य वक्तुमशक्यत्वात् । नच संसर्गतया भेदभानेन प्रतियोगितावच्छेदकग्रहापेक्षेति वाच्यम् । संसर्गतया भेदमात्रभानस्याप्यक्लृप्तत्वात् शुद्धस्य धर्मविशेषावच्छिन्नप्रतियोगिताकभेदसंसर्गेण भानोपगमे विनिगमकाभावात् द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदसंसर्गेणापि भानं स्यात् । तथासति घटो घट इत्यस्य प्रमात्वापत्तेर्दुर्वारत्वात् । नच तद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबुद्धौ तद्धर्मभेदस्य कारणत्वात् तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नंप्रति तद्धर्मभेदस्य कारणत्वाद्वा न तादृशज्ञानसंभव इति वाच्यम् । साकाङ्क्षशब्दमात्राद्बाधादिग्रहकालेऽपि शाब्दबोधस्य व्यवस्थापितत्वात् उक्तशाब्दबोधस्य दुर्वारत्वेनोक्तकार्यकारणभावस्यासंभवात् । नच तत्रागृहीतग्राहित्वाभावादेव प्रमात्वापत्तिवारणसंभवाद्भेदभानोपगमोऽनर्थक इति वाच्यम् । घट इत्येतावन्मात्रात्तत्तादात्म्यस्य ज्ञातुमशक्यत्वादज्ञाततादात्म्यविषयकत्वसंभवेनागृहीतग्राहित्वभागेन प्रमात्वापत्तिवारणासंभवेनौपाधिकभेदभानस्यावश्यकत्वादिति । भेदस्याभानपक्षेऽपि तादृशौपाधिकभेदसमानाधिकरणस्यैवाभेदस्योपहितसंसर्गतया भानाभ्युपगमेन तादृशभेदस्य तत्राभावेन वस्तुतस्तादात्म्यसंसर्गस्याभावाद्द्वित्वावच्छिन्नप्रतियोगिकसंयोगेन द्रव्यत्वावच्छिन्नस्येव नीलत्वावच्छिन्नौपाधिकभेदसमानाधिकरणतादात्म्येन नीलत्वावच्छिन्नस्यैव संसर्गेण घटत्वावच्छिन्नस्य घटत्वावच्छिन्ने बाधितत्वसंभवेन संभवत्येव हि घटो घट इत्यस्य प्रमात्ववारणमिति । अथ घटादौ नीलादिभेदसत्त्वे घटो न नील इति प्रतीतिः प्रमा कुतो न स्यादितिचेन्न । नञा प्रतियोगिविरोधित्वेनैवाभावस्य प्रतिपादनात् । प्रतियोगिमति तथाविधाभावस्य सत्त्वायोगात् प्रमात्वापत्तेरसंभवात् । अत एव घटादिसंशयनिवृत्त्यर्थं घटाभाववद्भूतलमिति न प्रयुङ्क्ते अपि तु भूतले घटो नास्तीत्येवेति । नच मूले वृक्षे कपिसंयोगो नास्तीत्यादौ कपिसंयोगाभावस्य कपिसंयोगविरोधित्वविरहात्का गतिरिति वाच्यम् । मूलावच्छिन्नवृत्तिककपिसंयोगाभावस्य मूलावच्छेदेन कपिसंयोगविरोधित्वात्तद्विशिष्टस्य तस्यास्त्येव तत्र सत्त्वमिति तत्प्रतीतेः प्रमात्वनिर्वाहात् । ननु मूलावच्छेदेन कपिसंयोगविरोधित्वस्य कोऽर्थः मूलावच्छेद्यकपिसंयोगाधिकरणत्ववत्यवृत्तित्वं वा मूलावच्छेद्यं यत्कपिसंयोगवद्वृत्तित्वं तदभावो वा मूलावच्छेद्यो यः कपिसंयोगवद्वृत्तित्वाभावः तदाश्रयत्वं वा । नाद्यः । मूलावच्छेद्यस्य कपिसंयोगाधिकरणत्वस्याप्रसिद्धेः । न द्वितीयः । कपिसंयोगाभावे मूलावच्छेद्यस्य कपिसंयोगवद्वृत्तित्वस्यैव सत्त्वेन तदभावस्य तत्र सत्त्वायोगात् । अत एव न तृतीयः । मूलावच्छेद्यस्य कपिसंयोगवद्वृत्तित्वस्यैव कपिसंयोगाभावे सत्त्वेन तदवच्छेदेन तदभावस्य तत्र सत्त्वायोगादिति चेन्न । कपिसंयोगवत्त्वावच्छेदकावच्छिन्नं यत्कपिसंयोगवन्निरूपितवृत्तित्वं तदभावस्यैव तदर्थत्वात् । व्याप्यवृत्तिप्रतियोगिकाभावस्थले प्रतियोगिमन्निरूपितवृत्तित्त्वाभावमात्रस्य विवक्षितत्वात्तत्र प्रतियोगिमत्त्वावच्छेदकाप्रसिद्धावपि न क्षतिः । प्रतियोगिमत्त्वावच्छेदकत्वस्य स्वानवच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्वरूपस्य विवक्षितत्वाद्वा न दोषः । नच सामानाधिकरण्यस्य व्याप्यवृत्तित्वपक्षे रसत्वादिमति कस्यापि वृत्तित्वस्यावच्छिन्नत्वविरहेण रूपे रसत्वं नास्तीत्यादावप्रसिद्धिरिति वाच्यम् । अवच्छेदकावच्छेद्यत्वस्याप्यवच्छिन्नत्वविशिष्टेन स्वानवच्छिन्नत्वसंबन्धेनावच्छिन्नप्रतियोगिताकाभावरूपस्यैव विवक्षितत्वात् अनवच्छिन्ने रसादिनिरूपितवृत्तित्वे चावच्छेद्यत्वविरहेण तद्विशिष्टस्वानवच्छिन्नत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य संभवात् । गगनाद्यभावस्थलानुरोधेन स्वाश्रयत्वावच्छेदकावच्छिन्नस्वाश्रयनिरूपितवृत्तित्वसंबन्धावच्छिन्नप्रतियोगिताकप्रतियोग्यभावस्यैव प्रतियोगिविरोधित्वपदेन विवक्षितत्वात् न तत्राप्यनुपपत्तिरिति । अथ निराकृते जगन्मूलोपादानकारणे परमाणौ कार्यकारणादिसंबन्धे च समवाये यदभ्युपगतं तादात्म्यं भेदसमानाधिकरणाभेदलक्षणं तदपि नोपपद्यते । तथाहि कार्यकारणयोः कनककुण्डलयोः मृद्घटयोश्च यद्यस्त्यभेदस्तदा यत्कनकं कुण्डलं या च मृदुदञ्चनमासीत्तदेव कटकं सैव शरावो यदा भवति तदा यथा हेम मृच्चानुवर्तमानं तथा तदभिन्नं कुण्डलमुदञ्चनं च किमित्यनुवर्तमानं न प्रतीयते नानुवर्तते । अथचाभिन्नमिति हि विप्रतिषिद्धमेतत् । कुसुमेष्वनुवर्तमानेऽपि सूत्रे कुसुमान्तरमन्यत्र कुसुमेऽननुवर्तमानं सूत्राद्भिन्नमेव यथा तथा हेम्न्यनुवर्तमानेऽप्यननुवृत्तं कुण्डलं हेम्नो भिन्नमेव स्यात् नाभिन्नमेवं दूरात्कनकमिदमित्यवगमे कनकादभिन्नेषु कुण्डलादिषु कुतो भवति संदेहजिज्ञासादिकं, निश्चिते कनके तेषामपि निश्चितत्वात् । ननु हेमत्वकुण्डलत्वाद्योर्भेदात् तदुपहितयोरप्यस्ति भेदं इति भेदसद्भावादननुवृत्तिसंदेहजिज्ञासाद्युपपत्तिरिति चेत् । भेदसद्भावादज्ञातत्ववदभेदसद्भावाज्ज्ञातत्वमेव हि किं न स्यात् । प्रत्युताभेदे विद्यमाने च तत्र ग्रहणयोग्ये कुण्डलत्वे तेनापि रूपेण ग्रहणमेव तस्य प्रसज्यते इन्द्रियसंप्रयोगादिकारणसद्भावात् कुण्डलत्वघटत्वादिकं हि हेममृदादितो व्यावृत्तं चेद्धेममृदादीनां कुण्डलघटाद्यभेद एव न स्यात् पटादिवत्, अनुवृत्तौ च योग्यस्य तस्य ग्रहणावश्यंभावात् जातिव्यक्त्योरप्यभेदस्योपगमेन हेमग्रहणे तदभिन्नकुण्डलत्वस्याग्रहणाशाया दुराशात्वात् मृदः कपालादंशोस्तन्तोश्च जलाहरणप्रावरणादिकं कुतो न स्यात् कार्यकारणयोरभेदे । नच भेदोऽप्यत एव स्वीक्रियते । तथासत्यभेदांशोपजीवनेन सामानाधिकरण्यप्रत्ययादिर्भेदांशोपजीवनेन प्रावरणाप्रावरणादिरिति वाच्यम् । द्वावपि भेदाभेदौ विद्येते । अथ च तयोरेकं स्वकार्यं तनोत्यपरः स्वकार्ये उदास्त इति हि यत्तत्किमन्योन्यस्य प्रतिबन्धकत्वात्किमन्यस्य निरोधकत्वात्किं तच्छिक्षयेति वक्तव्यम् । तत्र नाद्यः । कदापि किंचिन्न कुर्यात् । न द्वितीयः ।

दुर्निरूपत्वाल्लाघवेन कारणव्यतिरिक्तकार्यस्वीकारस्यैवोचितत्वात् । तृतीयमवशिष्यते । अवश्यं च तत्प्राज्ञेनाभ्युपगन्तुमर्हम् । श्लाघ्यो हि तत्रोभयोः शिष्यशिक्षकभावः । ननु कारणेनाभिन्नमपि कार्यमनभिव्यक्तं प्राक् कारणव्यापारात् अतो नोक्तदोषावसरः । यदि सूक्ष्मरूपेण कारणेषु कार्यं नाभविष्यत्तत्तत्कारणतो नियमेन तत्तत्कार्यं नोदपत्स्यतेति तस्यावस्थानावश्यंभावेऽभिव्यक्तिरूपैवोत्पत्तिर्वाच्यावस्थानमपि भिन्नस्य तस्याभेद एवान्यस्य दुर्निरूपत्वादितिचेन्न । कुत्र हि कस्यावस्थानमित्यत्रान्वयव्यतिरेकस्यैव शरणीकरणीयतया तेनैव प्रमाणसहकृतेन तत्तत्कार्यप्रत्येव तत्तत्कारणस्य कारणत्वनिश्चयसंभवेनातिप्रसङ्गवारणसंभवात्सूक्ष्मरूपेणावस्थानोपगमस्य व्यर्थत्वात् । अभिव्यक्तेरसतः प्रादुर्भावाभ्युपगमे सत्यसत्कार्यवादापत्तेः तस्यापि सूक्ष्मरूपेणावस्थाने तदभिव्यक्तेरप्यङ्गीकरणीयतयाऽनवस्थापत्तेः । एवं यादृशारोहपरिणाहवान् वटादिवृक्षस्तादृशस्य कारणे सूक्ष्मतमे सद्भावोऽसंभवी । तादृशस्य हि सौक्ष्म्यं विरोधादेवानभ्युपेयमित्यसत्कार्यापत्तेर्दुर्वारत्वाच्चेतिचेत् । उच्यते । सांख्याभ्युपगतस्याभेदस्य भवता निरासः क्रियते । तत्र हि दर्शने सति कारणे सत एव कार्यस्य भेदमभेदं चाङ्गीकृत्य परिणामवादोऽभ्युपेयते तत्रैव भवदुक्तदोषाणामवकाशो नास्मद्दर्शने । तत्किं भवद्भिः कारणस्य कार्येणाभेदो नोपेयते । तथासति 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधादि'ति सूत्रेण प्रथमाध्यायचतुर्थपादस्थेन ब्रह्मणो जगदुपादानत्वं प्रसाध्य 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यादिसूत्रैः द्वितीयाध्यायप्रथमपादस्थैः कार्यानन्यत्वस्याभेदस्य यद्यवस्थापनं कृतमस्ति तद्विरुध्येतेतिचेत् आशयानवबोधात् । तदनन्यत्वमितिसूत्रेण कारणसत्तातिरेकेण कार्यसत्त्वविरहपर्यवसन्नस्यानन्यत्वस्य हि प्रतिपादनं क्रियते तावता च सकलजगत उपादाने ब्रह्मणा सह सन् घटः सत् कपालं सती मृदित्याद्यध्यासगोचरत्वेनाध्यासिकतादात्म्यं लभ्यते । तच्च भेदसमानाधिकरणाभेदरूपमुक्तव्यवहारकालाबाध्यसामानाधिकरण्यप्रत्ययानुरोधादुपेयते । स हि प्रत्ययो विचित्रानेकशक्तिमदविद्यानिष्पादित इति विभ्रमात्मकस्तद्विषयश्च भेदोऽभेदश्च कल्पित एव न वस्तुसत् । नच विरुद्धयोरुभयोः कथमेकत्रावस्तुत्वं तयोरेकस्यापराभावरूपत्वादिति वाच्यम् । प्रतियोगिन एवावस्तुत्वे तन्निरूपितयोरुभयोः खाप्रागजतदभाववदवस्तुत्वस्य संभवात् । नच प्रत्यक्षपरिदृश्यमानस्य जगतः कथमवस्तुत्वमिति वाच्यम् । प्रत्यक्षादौ पुरुषदोषसंस्पर्शेन सार्वजनीनचन्द्रवितस्तिपरिमाणदेहात्मैक्यप्रत्यक्षादिसाजात्येन चाप्रमात्वेन ग्रहाद्दौर्बल्यनिश्चयात् । परमपुरुषार्थमोक्षफलकतत्त्वज्ञानविषयाद्वितीयसच्चिदानन्दब्रह्मप्रतिपादनतात्पर्यवत्त्वेनावधृतयाऽर्थवादवदुपचरितार्थत्वस्य वेदान्तानामसंभवेन नित्यनिर्दुष्टतया स्वतःप्रमाणैस्तैर्जगन्मिथ्यात्वनिश्चयस्य संभवात् सदनिर्वचनीययोर्वास्तविकाभेदस्यासंभवात् कार्यकारणयोर्भेदस्यापि प्रागेव निरस्तत्वेन तस्याप्यनिर्वाच्यस्याविद्याविलसितत्वमात्रत्वस्यैवोपगमात् तादृशभेदोपजीवनेनानिर्वाच्यकार्यकारणभावादिविभ्रमाणां संजातत्वात् । भेदाभेदयोर्वास्तविकत्वानुपगमेनोभयपक्षप्रागुक्तदोषाणामाविद्यकत्वभूषणतायामेव पर्यवसानात् कार्यकारणयोः सदसद्भ्यामनिर्वाच्यत्वेनेव भिन्नाभिन्नत्वाभ्यामप्यनिर्वाच्यत्वेनापि मिथ्यात्वस्य संप्रत्ययात् सांख्यानां सत्कार्यवादः कार्यकारणयोर्वास्तविकभेदाभेदाभ्युपगमश्च नितरामयुक्तः । यदत्र दर्शने कारणव्यापारात् प्राक्कार्यस्यावस्थानप्रतिपादनं तदनिर्वचनीयकार्यस्य या चरमबाधात्प्राक् अतीतानागतयोरनुवर्तमाना संस्कारात्मिकानिर्वाच्या सूक्ष्मावस्था परिणाम्युपादानभूता या विवर्तोपादानब्रह्माश्रिता या जीवाश्रिता या विवर्तमानब्रह्मसहकारिकारणरूपा या वाऽविद्याया अनिर्वाच्याया अनिर्वाच्यतादात्म्यापन्ना तदवस्थानाभिप्रायेण विद्यमानकालेऽपि कारणात्मनैव कार्याणां सत्त्वं स्वरूपेण तु मिथ्यात्वादभाव एव । एवमतीतानागतयोः कारणात्मना सत्त्वं तु भवत्येवेत्यभिप्रायेण वा बोध्यम् । याच 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधादिति सूत्रभाष्यादौ ब्रह्मणो जगदुपादानत्वलक्षणप्रकृतित्वसाधकतयैकविज्ञानेन सर्वविज्ञानप्रतिज्ञा श्रुतिषूपलब्धोपदर्शिता सा नूनं ब्रह्मणो जगतश्चोपादानोपादेयभाव एव घटते । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवती'ति दृष्टान्तोऽपि श्रौतत्वमेवोपोद्बलयति । निमित्तनैमित्तिकयोरेकतत्त्वाभावात्तस्य तादात्म्यनिमित्तत्वात् । एकं च तत्त्वं तदेव भवति यत्तादात्म्येन प्रतीयमानयोर्द्वयोः कालत्रयानुवृत्तस्वरूपत्वादपरापेक्षयाऽधिकसत्ताकं । तत्त्वं हि नाम यथार्थमबाधितस्वरूपम् । नहि भिन्नयोर्द्वयोरेकं भवति तादृशं किंचित् । यथा मृत्पटयोस्तत्त्वं न मृत्, तन्तुघटयोश्च न तन्तुः, घटशरावोदञ्चनादीनां तु मृदात्मकानां सर्वेषां मृदेकैव तत्त्वम् । मृदिव यदि घटादिकमपि मृदि ज्ञातायामपि संदेहजिज्ञासादिगोचरं कालत्रयानुवृत्तरूपं स्यात् तदा मृद्वत्तत्त्वं पृथक् पृथगेव स्यात् । तथाच न सर्वेषामेकं तत्त्वं स्यात् । यदातु सत्त्वासत्त्वाभ्यां भेदाभेदाभ्यां चानिर्वाच्यरूपं मध्य एवोपलभ्यमानमज्ञानवशात् संस्काराच्च तत्तन्नामरूपाभ्यां प्रतीयते घटादिकं तदा तस्यातत्त्वात्मत्वाद्विविच्यमानं मृद्रूपमेव तत्त्वं सर्वेषां तेषां नानारूपेणानिर्वाच्येन परिणतं निर्णीयते । युज्यते हि तथासति मृदेकस्यां ज्ञातायां सकलमृत्प्रपञ्चज्ञानं । ज्ञानं हि वस्तुनस्तत्त्वज्ञानमेव यदतत्त्वं तज्ज्ञानमज्ञानं विभ्रमत्वात् । मृदि सकलमृण्मयतत्त्वभूतायां ज्ञातायां किं ज्ञातुमवशिष्यते न किमपीति । एवमेव सकलबाधावसानस्य सदेकरसस्य सकलप्रपञ्चानुस्यूतस्वरूपस्य तत्त्वात्मकस्य ब्रह्मणः पूर्वापरकालाविद्यमानानिर्वाच्यमायामयाखिलप्रपञ्चैकतत्त्वरूपत्व एव तद्विज्ञानेन सकलजगतस्तत्त्वज्ञानं संपद्यते निमित्तमात्रत्वे तु ब्रह्मणः सकलप्रपञ्चाद्भिन्नत्वेन सकलतत्त्वात्मकत्वं न स्यात् । एवं प्रपञ्चस्य कालत्रयाबाध्यत्वे तस्य पृथक्पृथगेव तत्त्वं स्यात् । तथा सति ब्रह्मणः सकलप्रपञ्चैकतत्त्वरूपत्वासंभवात् ब्रह्ममात्रज्ञानेन सकलप्रपञ्चस्य तत्त्वज्ञानाभावात्प्रतिज्ञानुपपत्ता स्यात् । तस्माद्ब्रह्मणो जगदुपादानत्वं जगतश्चानिर्वाच्यत्वं भवति सिद्धम् । विकारजातस्यानृतत्व एव प्रतिज्ञोपपत्तिं मन्वाना श्रुतिः

कण्ठत एव विकारजातस्यानृतत्वमाह 'वाचारम्भणं विकारो नामधेय'मित्यादि । एवं 'यतो वा इमानि भूतानि जायन्त'इति श्रुतौ 'जनिकर्तुः प्रकृति'रिति सूत्रेण विहिता पञ्चम्यपि ब्रह्मणः प्रकृतित्वमाह । 'तथा सोऽकामयत बहु स्यां प्रजायेय' 'तदैक्षत बहुस्यां प्रजायेये'त्यादिश्रुतयोऽपि प्रकृतित्वमाहुः । ब्रह्मणः नहि बहुभवनाभिध्यानमप्रकृतित्व उपपद्यते । नहि कार्यबहुत्वेऽपि निमित्तं बहु भवति । एवमुत्पत्तिप्रलयस्थानत्वं ब्रह्मणो दर्शयन्ती 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ती'त्यादिका श्रुतिरपि ब्रह्मणः प्रकृतित्वमाह । यदुपादान एवोत्पत्तिलययोः कार्यस्य दर्शनात् । तथा 'यथोर्णनाभिः सृजते गृह्णते चे'त्यादिवाक्यशेषावधारितप्रकृतिपरत्वकयोनिशब्दघटिताः 'कर्तारमीशं पुरुषं ब्रह्मयोनिम् । यद्भूतयोनिं परिपश्यन्ति धीरा' इत्याद्याः श्रुतयोऽपि प्रकृतित्वं दर्शयन्ति । नच प्रकृतित्वे ब्रह्मण 'ईक्षणकर्तृत्वेन निमित्तत्वं न स्यादुभयोरेकत्रादर्शनादिति' वाच्यम् । नह्ययमर्थो लौकिको येन लोकदर्शनानुसारी स्यादपितु निर्णीतः स्वार्थतात्पर्यवद्वेदैकगम्य इति यथावैदिकप्रज्ञानमास्थेयमिति । यत्तु भोक्तॄणामन्तःकरणप्रविभागाधीनप्रविभक्तस्वरूपाणामपीतौ प्रलय उपादानात्मतां गते किमित्युपादानं तदभिन्नमभ्युपगतं कार्यवत्स्थौल्यादिधर्मकं न भवेत् । पुनः सृष्टौ प्रविभागनिमित्ताभावाद्भोग्यभोक्तृसांकर्यं कुतो न स्यात् तस्मात्परमार्थभेदभिन्ना नित्या भोक्तारः कार्याणामप्युपादानं तस्मात्परमार्थतो भिन्नं परमाणुवृन्दमुपेयमिति । तदपि न किंचित् । 'इदं सर्वं यदयमात्मा । आत्मैवेदं सर्वं । ब्रह्मैवेदममृतं पुरस्तात् । सर्वं खल्विदं ब्रह्मे'त्याद्याः श्रुतयः कालत्रयेऽपि सर्वस्य ब्रह्मात्मतां बोधयन्त्यः तदनन्यसत्त्वपर्यवसायिन्यो भवन्ति । तथाच विद्यमानकाले यथा ब्रह्मात्मभूतानामपि सर्वेषां काल्पनिकाविद्यकभेदेनैव प्रविभागो न प्रविभक्तं वस्तुभूतमस्ति किंचित् । एवं प्रलयेऽपि सर्वमविद्याकल्पितप्रविभागवत्संस्कारूपेण प्राक् तत्त्वसाक्षात्कारादबाधितं वर्तत इति सर्गादिकाले पुनरदृष्टप्रबोधे सूक्ष्मावस्थापन्नानि कार्यकारणानि कल्पितभेदवन्ति तथैव स्थूलरूपाणि व्यक्तानि भवन्तीति नास्ति काचिदनुपपत्तिः । प्रविलीनानि कार्याण्युपादान इति स्थूलरूपं विहाय सूक्ष्मावस्थतां गतानीति मन्यामह इति कुतः कारणस्य स्थौल्यादिप्रसङ्गः दृश्यतेऽप्येवम् । घटादीनां कुण्डलादीनां मृत्स्वर्णतामुपगतानामुपादानस्य मृत्सुवर्णादेरघटाद्याकारतेति । यत्तु ब्रह्मणः प्रकृतित्वविघाताय परैरुच्यते जगदचेतनं यदि चेतनब्रह्मप्रकृतिकं स्याच्चेतनं स्यात् उपादानोपादेययोः समानगुणत्वदर्शनात् । नहि नीलतन्तुकः पटो रक्तो दृष्टः । नहि मधुरेक्षुप्रकृतिकः सितादिस्तिक्त इति, तदपि न । विकृतेः प्रकृतिसर्वधर्मान्वये विकृतित्वानुपपत्तेः । कस्यचिद्धर्मस्यान्वय इहाप्यस्त्येव सत्त्वादेः । दृश्यते च गोमयाद्विलक्षणस्य वृश्चिकस्य, शुक्लपीतादिनानावर्णतन्तुभ्यो विलक्षणचित्ररूपवतः पटस्य, परिमण्डलात्परमाणोस्तद्विलक्षणाणुपरिमाणवतो द्व्यणुकस्याणुपरिमाणाद्व्यणुकान्महतस्त्रसरेणोरुत्पत्तिर्न तत्र तत्र कारणगुणानुवृत्तिरेवमन्येषामपि दृष्टान्तानां कारणगुणविलक्षणगुणानामस्ति सद्भाव इति चेतनात्कथमचेतनोत्पत्तिरित्यकिंचिदेतत् । वस्तुतस्तु ब्रह्म विवर्तोपादानं जगतो न परिणाम्युपादानं परिणाम्युपादानस्यैव कथंचित्समानगुणादिककार्योत्पादकत्वं न विवर्तोपादानस्येति । नास्त्येव प्रकृते कापि क्षतिः । कार्यतादात्म्यात् । सन्घट इत्यादिप्रतीतिसिद्धात्प्रकृतित्वबोधकोक्तश्रुतेश्चोपादानता श्रुतिष्वेव सर्वविकारप्रतिषेधाद्वास्तवपरिणामाभावाद्विवर्तमानता तत्त्वंच कार्यतादात्म्ये सति कार्यविषमसत्ताकत्वम् । परिणममानाविद्याश्रयत्वे सति कार्यतादात्म्यं वा । तथाच विचित्रशक्तिमदनाद्यदृष्टादिप्रवाहशाल्यन्तःकरणतत्सूक्ष्मावस्थादिमदविद्योपधानलब्धनानाविधनामरूपादिमद्ब्रह्मभोग्यभोक्त्राद्याविद्यकविभागवत्कार्यस्योपादानमाविद्यकैश्वर्यवत्तयेश्वरतामापन्नमीक्षणादिकर्तृत्वेन निमित्तमाख्यायते । स्वतस्त्वद्वितीयं सदेकरसमानन्दघनं स्वतःप्रकाशचिद्रूपमखिलधर्मातिगमेवेति । सति चैवमखिलानां परप्रयुक्तकुतर्कवात्याविलसितानामनवकाशः संपद्यते । तथाहि यदखिलभोक्तृभोग्यप्रपञ्चस्य ब्रह्मानन्यत्वे तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् सर्वेषामविभागापत्तिः । अविभागापत्तौ लौकिकवैदिकसकलव्यवहारसमुच्छेद इति तदुक्तेनैव दत्तोत्तरम् । लोकेषु यथा समुद्रादभिन्नानां तरङ्गवीचीबुद्बुदानां परस्परं भेदप्रत्ययः तथाविद्यकानामविद्याकल्पितप्रविभागानां प्राक् ब्रह्मैकात्म्यावधारणात् प्रातिस्विकसत्त्वेनावधृतानामस्त्येव हि विभागोऽस्त्येव तादृशो व्यवहारश्च न तस्य विरोधिब्रह्मानन्यत्वमिति । यत्तु यद्ब्रह्म जगदुपादानत्वेन त्वयाऽभ्युपेयते तदेकमद्वितीयमप्युररीक्रियते विप्रतिषिद्धं चैतदुभयं । नह्येकस्मात्क्रमवद्विलक्षणानेकसहकारिरहितात्क्रमिकं विचित्रमनेकं कार्यं भवितुमर्हति । नापिच तादृशसहकारिसंपन्नं भवत्यद्वितीयमिति परैराक्षिप्तं तदपि नाद्वैतस्य पारमार्थिकत्वात् । परमार्थसदद्वितीयस्य हि ब्रह्मणो नास्त्येव कारणत्वं नास्ति च कार्यम् । 'न तस्य कार्यं करणं च विद्यते' इति श्रुतेः । कार्यं तु विचित्रानेकक्रमिकविपाकस्वभावादृष्टशक्तिशाल्यविद्यातत्कल्पितमृच्चूर्णकपालघटादिकार्यकारणपरम्परोपेतस्य ब्रह्मणः क्रमवच्चूर्णकपालघटजलाहरणादिकं तत्राविद्यादृष्टमृदादिसहकारिसंपत्तेर्न क्रमवैलक्षण्याद्यनुपपत्तिरिति । यदपि प्रयोजनाभावनिबन्धनप्रवृत्त्यभाववैषम्यनैर्घृण्यादिप्रसङ्गेन परमेश्वरस्य कारणत्वनिराकरणं तदप्ययुक्तमेव । यतोऽनादिप्राण्यदृष्टपरम्पराप्रवर्तिताविद्याविलक्षणवृत्तिसंपादितत्वात्प्राणिसुखदुःखादेरितीश्वरे वैषम्यनैर्घृण्याप्रसक्तेः । प्रवृत्तिरपि हि नियतनिमित्तानपेक्षया यादृच्छिकी स्वाभाविकी लीलामात्रेण वा परमेश्वरस्य विचित्रशक्तिशालिन उपपद्यत एव । प्रयोजनमनुद्दिश्यापि हि प्रवृत्तिर्वर्तते कथमन्यथा 'न कुर्वीत वृथा चेष्टा'मित्यादिमनुः संगच्छेत । श्वासप्रश्वासप्रवृत्तिश्च तादृशी दृश्यते राजतदमात्यादीनां क्रीडासु च प्रवृत्तिः । ततोऽपि किंचित् प्रयोजननिर्वृत्तावपि तत्रोद्देश्यत्वाभावादप्रयोजनमिव तत् । तथा परमेश्वरस्यापि प्रयोजनानुसन्धानविरहेऽपि प्रवृत्तिरुपपद्यत एव । वस्तुतस्त्वविद्यैव स्वतःप्रवृत्तिस्वभावानादिप्राण्यदृष्टानु-

गृहीता प्रवर्तते। नहि प्रवृत्तिस्वभावा नदी वायुर्वा कथमपि प्रयोजनमुद्दिश्य प्रवर्तते। परमेश्वरस्तु तदाश्रयत्वाच्चैतन्यसंपादकत्वाच्च कारणतया व्यपदिश्यत इति न कोऽपि दोषः। यत्तु लोकदृष्टकुलालकुविन्दादिकर्तृवच्छरीरादिबाह्यसाधनवैकल्यादीश्वरकर्तृत्व आक्षेपः परेषां तदप्यमितसर्वातिशायिविचित्रशक्तिशालित्वात्परमेश्वरस्य समाहितमेव। प्रसिद्धा च तादृशी शक्तिः परमेश्वरस्य श्रुतिषु जगज्जन्मादिकारणतया श्रुत्यैकसमधिगम्ये मायिनि विचित्रैश्वर्यशालिनि भगवति भवे नास्त्येव कुतर्काणामवकाशः। 'यत्नैषा मतिस्तर्केणापनेये'तिश्रुतौ स्मृताव'प्यचिन्त्याः खलु ये भावा न तांस्तर्केण योजये'दिति श्रूयते। दृश्यते चेदानीमपि यत्कार्यमेकेनाल्पशक्तिमता यावत्साधनेन संपाद्यते तत्तदल्पसाधनेन तदतिशयशक्तिमता निष्पाद्यत इति बहिःसाधननिरपेक्षैर्योगिभिर्देवादिभिश्चाद्भुतं निष्पादितं पुराणादिषु श्रूयते। तत्किमाश्चर्यं निरतिशयैश्वर्यशालिनो बाह्यसाधनानपेक्षस्येश्वरस्य ब्रह्माण्डनिर्माणायद्भुतकार्यसंपादन इति सर्वमवदातम्। एवमविद्यासहितस्य ब्रह्मणो जगदुपादानत्वे श्रुतिप्रसिद्धे निरवद्ये सति सांख्यप्रसिद्धप्रकृतिकारणत्वस्य न्यायतन्त्रसिद्धपरमाणुकारणत्वस्य च श्रुतिश्रुत्यनपायिमन्वादिस्मृत्यगोचरस्य परस्परविरोधसमासादितपुरुषसुलभदोषसंस्पर्शोपपादिताप्रामाण्यकपिलकणादादितन्त्रमात्रप्रसिद्धस्याभ्युपगमो नोचितः। नापि च मूलप्रकृतेः परमाणोश्चाभ्युपगम इत्येतदभिसंधायोक्तं परमाणोरभ्युपगमादिति। परमाणोरभ्युपगमे नित्यतयैव तस्याभ्युपेयतयाऽसर्वगतत्वस्य नित्यत्वाव्याप्यतयापादकत्वं न स्यादित्यनभ्युपगमोक्तिः। वृक्षइवेत्यादिश्रुतिः स्थाणुत्वे प्रमाणम्। प्रकारान्तरेणाप्युक्तश्लोकार्थस्य श्रुतिसंमतत्वं दर्शयति—**य इत्यादिना। तद्विषयत्वमिति**। छेदनादिरूपशस्त्रादिव्यापाराविषयत्वमित्यर्थः। **अत्रेति**। अच्छेद्यत्वाद्युपपादकसर्वगतेत्यादौ येनेत्याद्याः श्रुतयः प्रमाणत्वेनानुसंधेयाः। सर्वगतत्वं विना तदर्थस्यानुपपन्नत्वादित्यर्थः। **प्रकटीकरिष्यतीति**। उक्तश्रुत्यर्थमिति शेषः। अत्राणुत्वेऽप्यात्मनः परमाणुवन्नित्यत्वाभ्युपगमेन कृतनाशाकृताभ्यागमस्तनपानादिप्रवृत्त्यनुपपत्त्यादिपरीहारसंभवादात्मानमणुं मन्यमाना अच्छेद्य इत्यादिपूर्वार्धेऽनुपपत्त्यभावादुत्तरार्धेऽसमस्तपाठेऽनुपपत्तिमालोच्य सर्वगतस्थाणुरित्यत्र सर्वगतस्थाणुरिति समस्तैकपदपाठं प्रकल्प्य सर्वगते परमेश्वरे तिष्ठतीति सर्वगतस्थः सचासावणुश्चेति विग्रहं कृत्वाऽऽत्माणुत्वपक्षानुकूल्येनोक्तश्लोकव्याख्यां कुर्वन्ति केचित्। अणुत्वाभ्युपगमश्च तेषामनित्यत्वप्रसङ्गदोषेण मध्यमपरिमाणे निराकृते सति श्रुतोत्क्रान्त्यादेर्विभुत्वपक्षे चानुपपत्तावणुपरिमाणावश्यंभावात्। उत्क्रान्तिश्रुतिस्तावत् 'स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामतीति' (कौ० ३। ३।) गतिश्रुतिश्च 'येवै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति' (कौ० १। २।) आगतिश्रुतिश्च 'तस्माल्लोकात्पुनरेत्यस्मैलोकाय कर्मण इति' (बृ० ४। ४। ६।) एवं शरीरमध्येऽपि शारीरस्योत्क्रान्तिगत्यागतीर्दर्शयति श्रुतिः। तथाहि 'चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्य' इति (बृ० ४। ४। २।) 'स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति' (बृ० ४। ४। १।) 'शुक्रमादाय पुनरेति स्थानमिति' (४। ३। ११।) चक्षुष इत्यादौ निष्क्रामतीति शेषः। तेजोमात्रा इन्द्रियाणि गृह्णन् स्वापादौ हृदयमागच्छतीत्यर्थः। शुक्रं प्रकाशकमिन्द्रियग्राममादाय स्थानं जागरितस्थानमेतीत्यर्थश्चोक्तश्रुत्योर्द्रष्टव्यः। एवं 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणाः पञ्चधा संविशन्ति' (मु० ३। १। ९) इति श्रुतिः जीवस्यैव प्राणसंबन्धप्रसिद्धेः साक्षादणुत्वं जीवस्य दर्शयति। एवं 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेय' इति श्रुतिरपि वालाग्रादुद्धृतो यः शततमो भागस्तस्मादप्युद्धृतो यः शतमो भागो भवेत्स जीवस्तत्तुल्यपरिमाणो जीव इत्यर्थं बोधयन्ती तस्याणुत्वमाह। एव'माराग्रमात्रो ह्यवरोऽपि दृष्ट'इतिश्रुतिरपि। एवं हृदयरूपदेशविशेषेऽवस्थानमपि 'हृदि ह्येष आत्मेति' (प्र. ३। ६) 'स वा एष आत्मा हृदीति' (छा. ८। ३। ३।) 'कतम आत्मा योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष' इत्याद्याः श्रुतयो दर्शयन्ति तदपि परिच्छिन्नत्व एवात्मन उपपद्यते। असति बाधके सर्वं हि वाक्यं सावधारणं भवति। नहि सर्वगते हृद्येवेत्यवकल्पते। नहि भवन्ति प्रासादोदरव्यापक आलोकादौ प्रासादकोणे दीप इतिवत्प्रासादकोण आलोक इत्यादिव्यवहाराः। यास्तु 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु, आकाशवत्सर्वगतश्च नित्यः, सत्यं ज्ञानमनन्तं ब्रह्मे'त्याद्याः श्रुतयो महत्त्वबोधिकास्ता वेदान्तेषु प्राधान्येन परमात्मनः प्रतिपाद्यत्वेन प्रकृतत्वात्तत्परा एव न जीवपराः। योऽयं विज्ञानमयः प्राणेषु हृदीति निर्देशात्सवा एष महानित्यपि न शारीरस्य स्वतो महत्वपरः किंतु जीवपरमात्मनोर्भेदाभेदस्याभ्युपगमेन परमात्माभेदाभिप्रायेण शास्त्रदृष्ट्या त्वेषनिर्देशो वामदेववदिति। अथवान्तर्यामीश्वरपरः। स एव हि सर्वविषयकत्वरूपवैशिष्ट्यवज्ज्ञानमयः जीवस्याल्पज्ञत्वान्मयटोऽपीश्वर एव ह्यानुगुण्यमिति। सोऽयं जीवाणुत्वपक्षो न क्षोदक्षम इति तदनुसारिणी व्याख्याप्यपव्याख्यैव। तथाहि शारीरकमीमांसया चतुर्लक्षण्या जीवब्रह्माभेदस्य पारमार्थिकस्य सकलवेदान्ततात्पर्यविषयत्वे सिद्धे तत्प्रतिकूलजीवपरस्परभेदे सतर्कयुक्तिभिर्भेदानुकूलतर्कनिराकरणेन निराकृते चाणुत्वस्य जीवे कथं स्यात्संभवः। एवमेकेनैव सता चेतनेन परमात्मना सकलचेतनव्यवहारोपपत्तौ परमगुरुत्वापादिका पारमार्थिकानेकत्ववदनेकजीवकल्पना न युज्यते। आत्मैकत्वेऽपि चैत्रः सुखी न मैत्रः, मैत्रो घटं पश्यति न पटं, चैत्रो न घटमपितु पटमित्यादीनां व्यवहाराणां क्रियामात्रस्य कर्तृभिन्नकरणसापेक्षत्वेन ज्ञानक्रियाकरणतया प्रतिजीवमन्तःकरणस्य भिन्नस्य सर्वानुमतत्वेन तस्यैवोपाधित्वप्रकल्पनेन वीणोपाधिके मृदङ्गोपाधिके चैकस्मिन्नेव वियतीतरेतरव्यावृत्तविलक्षणशब्दवत् तत्तदन्तःकरणोपाधिभेदकल्पितभेदेषु जीवेषु तत्तदन्तःकरणपरिणामानां तत्तदिन्द्रियलिङ्गशब्दादिनिमित्तजानां ज्ञानात्मकवृत्तीनां सुखाद्यात्मकवृत्तीनां

च परस्पराश्रयव्यावृत्तानामभ्युपगमेनोपपादनसंभवात्। परोक्षज्ञानस्थलेऽतीतानागतविप्रकृष्टविषयैर्ज्ञानस्य संबन्धान्तरोपपादनस्याशक्यत्वेनाध्यासिकतादात्म्यस्यैव वाच्यतयाऽतद्देशस्याधिष्ठानत्वासंभवेन सकलविषयदेशावस्थितस्य ज्ञानस्य व्यापकस्याणुजीवस्य स्वरूपताया गुणत्वस्य वा वक्तुमशक्यतया ज्ञानात्मकस्य व्यापकस्यैव जीवस्याभ्युपगमो न्याय्यः। एवं परस्यैवात्मनः 'सवा एष महा'नित्यादौ महतो जीवभावस्य प्रदर्शनात्। अन्यास्वपि श्रुतिषु परमात्मनोऽन्तःकरणरूपगुहाप्रवेशादिना जीवभावस्य प्रतिपादनाच्च जीवस्याणुत्वासंभवः। नच परमात्मजीवात्मनोर्भेदाभेदस्याभ्युपगमादभेददृष्ट्या जीवस्य महत्त्वमुपपद्यत एव। नहि तादृशमहत्त्वमणुत्वविरोधीति वाच्यम्। विरुद्धयोर्भेदाभेदयोरेकत्रासंभवात् उभयोः पारमार्थिकत्वस्य वक्तुमशक्यत्वात्। अभेदस्य पारमार्थिकत्वे जीवस्य महत्त्वमेव हि पारमार्थिकं भवेत् अणुत्वं च भेदोपजीवकमुपाधिभेदकृतत्वेन भेदवदुपाध्यणुत्वकृतत्वेनापारमार्थिकमेव स्यात्। तत्तु स्वीक्रियत एव। भेदस्यैव पारमार्थिकत्वेऽभेदस्य कल्पितत्वस्यैव वक्तव्यतयोक्तश्रुतिरपारमार्थिकमहत्त्वबोधने नाप्रामाणिकी स्यात्। नच तवापि निर्गुणस्य महत्वाभावेनाप्रामाण्यं तादवस्थ्यमिति वाच्यम्। अधिकरणस्वरूपाणुत्वाभावस्यैव महत्त्वरूपत्वेन तदभावात्। नचान्तर्यामिपरतयापि गतिः संभवति। एष इत्यनेनाहमित्यादिसाक्षात्कारगोचरप्रक्रान्तजीवस्यैव परामर्शात्। तस्य पारमार्थिकमहत्त्वबोधने प्रामाण्याव्याघातात् तदानीं बाधस्यानुपस्थितेरसंभवाच्च। ब्रह्माभेदप्रतिपत्तिमन्तरेणापि स्वतो महत्त्वबोधकत्वसंभवात् पश्चाच्छ्रुतियुक्तिभिर्ब्रह्माभेदनिश्चये चोक्तमहत्त्वस्य ब्रह्माभेदनिबन्धनत्वे पर्यवसानात् वृत्तावपि ज्ञानशब्दस्य प्रयुक्तत्वेन तद्वैलक्षण्येन स्वरूपज्ञानलाभाय विज्ञानेत्युक्तिर्युक्तैव। मयट्प्रत्ययोऽपि नित्यज्ञानात्मकब्रह्मात्मतां पारमार्थिकीं हि ज्ञापयन् न प्रातिकूल्यं भजतीति। एवंच प्रागुक्तयुक्तिसहकृतोक्तश्रुतिभिरणुत्वाभावनिश्चयस्याभेदप्रतिपत्तिमन्तरेणापि संभवादणुत्वाभावनिश्चये जीवब्रह्माभेदनिश्चयः तन्निश्चये चाणुत्वाभावनिश्चय इत्यन्योन्याश्रय इति निरस्तम्। यत्तूत्क्रान्त्यादिहेतुभिर्जीवस्याणुत्वमुक्तं तदपि दुरुक्तमेव। हेतोरेवासिद्धेः। नचोत्क्रान्त्यादिबोधकोक्तश्रुतिभिस्तत्सिद्धिरिति वाच्यम्। उक्तश्रुतियुक्तिभिः वक्ष्यमाणानुकूलतर्कसहितानुमानैश्च स्वतो महत्त्वसिद्धावुत्क्रान्त्यादीनामुपाध्यन्तःकरणौपाधिकोत्क्रान्त्यादिपरत्वात्तस्य स्वतोऽणुत्वासाधकत्वात्। 'बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट'इति श्रुतौ बुद्धिगुणेन परमार्थत आत्मगुणेनौपाधिकतया ह्याराग्रमात्रत्वोक्तेश्च। नच तत्र बुद्धेर्गुणेनावर आत्मगुणेनाराग्रमात्र इत्यन्वय इति वाच्यम्। महत्वबोधकानेकश्रुतियुक्त्यनुरोधेन बुद्धेर्गुणेनाराग्रमात्र इति योजनाया एवोचितत्वात्। औपाधिकमणुत्वं हीष्यत एव। तत्परतयैव चाणुत्वप्रतिपादकश्रुतीनामपि गतिसंभवः। तच्चाणुत्वं नत्वदभिमतपरमाणुत्वमपितु दुर्ग्राह्यत्वं। तदप्यनुद्भूतरूपस्पर्शतेजोरूपतया बाह्येन्द्रियाग्राह्यत्वात्। अतएव 'अणोरणीयान् महतो महीयानि'त्युपदिशति श्रुतिः। नचोभयोः पारमार्थिकत्वसंभव इत्येकस्य तत्त्वं वाच्यम्। तत्र परमाणुत्वस्य तथात्वे परममहत्त्वस्य कथमप्युपपादनासंभवः। तस्य तथात्व उक्तयुक्त्या परमाणुत्वस्योपपादनसंभव इति तेनावेदनेन तथाविधोपदेशोऽर्थवान्भवतीति। नच 'नाकस्य पृष्ठे ते सुकृतमनुभूत्वेमं लोकं हीनतरं वा विशन्ती'त्यादिश्रुतौ सुकृताशुभपदलक्षितसुखदुःखानुभवसामानाधिकरण्येनागतिश्रवणादात्मन एव सेति वाच्यम्। सुखदुःखानुभवस्याप्यन्तःकरणौपाधिकस्य वात्मन्यभ्युपगमात्। 'कामः संकल्प'इत्यादिश्रुत्यान्तःकरणधर्मताया एव प्रतिपादनात्। नच 'स एतान् ब्रह्म गमयती'ति श्रुतौ 'विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य'मिति श्रुतौ च 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना' इति स्मृतौ च गतेर्मुक्तिसामानाधिकरण्योक्तेर्मुक्तावन्तःकरणाभावादौपाधिकत्वस्य वक्तुमशक्यत्वमिति वाच्यम्। ब्रह्मणो व्यापकत्वस्य तवाप्यनुमतत्वेन मुख्यगतेरसंभवात्। अव्यापकस्याव्यापकं प्रत्येव मुख्यगतेः संभवात्। प्रकृते तूपाधिनिवृत्त्या तत्कृतभेदनिवृत्तेरेव गतिशब्देन प्रतिपादनात्। नच 'तेन प्रद्योतेनैष आत्मा निष्क्रामती'तिश्रुतौ स्फुटमात्मनिष्ठत्वोक्तेः। 'यथा नः सुसमाहितमुत्सर्जन्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याती'तिश्रुतावप्यात्मन एव स्वाभाविकगतिशकटदृष्टान्तेन स्वाभाविकगत्युक्तेश्च नौपाधिकतत्परतान्यत्रापि संभवतीति वाच्यम्। एष इति बुद्ध्युपहितस्यैव परामर्शेन शुद्धात्मनिष्ठत्वस्याबोधनात्। दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्यस्य कुत्राप्यसंभवेन तावन्मात्रेण स्वाभाविकगतिप्रतिपत्तेरसंभवाच्च। नच 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति श्रुतौ प्राणपदप्रतिपाद्यबुद्ध्युत्क्रान्तेः प्रागेवात्मोत्क्रान्तिश्रुतेरौपाधिकगतिपरता न संभवतीति वाच्यम्। प्राणपदेन क्रियाशक्तिमत एव प्रतिपादनेन ज्ञानशक्तिमदन्तःकरणौपाधिकोत्क्रान्तेः प्राणोत्क्रान्तेः पूर्वमपि संभवात्। मनउत्क्रामन्नित्यादिश्रुतौ मनस उत्क्रमणेप्यात्मनस्तदभावोक्तिस्तु शुद्धात्मपरैवेति बोध्यम्। ननूपाधिगत्या यद्युपहिते गतिरङ्गीक्रियेत तदा सा गतिरुपाधिगत्यन्या नोपहिते संभवति। घटगत्या तदवच्छिन्ने नभसि गत्यप्रतिपत्तेः। तथासत्युपाधिर्यस्मात्प्रदेशाद्गतस्तत्प्रदेशस्य निराकाशत्वं निरात्मत्वं च स्यात्प्रदेशान्तरस्य द्विगुणाकाशत्वं द्विगुणात्मत्वं च स्यात् नाप्युपाधिगतिरेवोपहित उपचर्यते। तथासत्येतत्प्रदेशस्थेनोपाधिविशिष्टेन कर्त्रा कर्मकृतमुपाधेः परलोकगमन उपाध्यवच्छिन्नेन तत्प्रदेशस्थेन भुज्यत इति कृतहान्यकृतागमप्रसङ्ग इति चेन्न। उपाधिगतिरेव ह्युपहित उपचर्यते। विभोरात्मनः प्रदेशाभावात्सावयवस्यैव सप्रदेशत्वात्। स्थूलोपाधेः शरीरस्य प्रदेशवत्त्वेऽपि तत्प्रदेशभेदस्योभयमतेऽप्यविशेषात्तस्याकिंचित्करत्वाच्च। उपाधेरुपहितो यस्तस्य वा भेदे भवत्युपहितभेद एतल्लोकस्थे परलोकस्थे वा सूक्ष्मोपाधावुपाधौ न तस्य भेदो नाप्युपहितव्यक्तिभेद इति कर्तृभोक्त्रोश्चोपहितस्य भेदाभावात्कृतहान्यकृतागमप्रसङ्ग-

विरहात् । उपाध्यवस्थित्यवच्छेदकयोरेतल्लोकपरलोकयोर्भेदेऽपि तस्याकिंचित्करत्वादिति । यत्त्वात्मत्वमणुवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्वादिवदित्यनुमानं तत्र व्यापकावृत्तित्वमुपाधिः पृथिवीत्वादीनामणुवृत्तित्वेन द्रव्यत्वसाक्षाद्व्याप्यत्वं प्रयोजकमपितु कार्यद्रव्यस्य निराधारत्वमनवस्था च । नच चरमाधारो नित्यो व्यापको भवितुमर्हति । मूर्तद्वयस्य समानदेशताया असंभवादिति कार्यद्रव्यवृत्तित्वमपि साधनावच्छिन्नसाध्यव्यापकमुपाधिः साध्योपाध्योः समव्याप्तेरप्रयोजकत्वात् । न्यायनये द्व्यणुकवृत्तित्वस्य तादृशस्योपाधित्वसंभवाच्चोक्तहेतोर्निरुपाधित्वे तेनैव मनस्त्वान्यत्वविशेषितेन स्पर्शवद्वृत्तित्वस्याप्यात्मत्वे साधनप्रसङ्गाच्च । यच्च जीवो न व्यापक आकाशान्यत्वे परत्वासमवायिकारणसंयोगानाधारत्वे च सत्यसर्वज्ञत्वात् शब्देतरानित्यविशेषगुणाश्रयत्वाद्वा संस्काराश्रयत्वाद्वा घटवदित्यादिकमनुमानं तदपि न । आद्ये दृष्टान्तासिद्धिः मूर्तमात्रस्यैवोक्तसंयोगाश्रयत्वात् परत्वेत्यादिस्थाने दिक्कालान्यत्वे सतीत्युक्ते भवत्यपि दृष्टान्तप्रसिद्धिः परंतु व्यापिकायां जातौ व्यभिचारः जात्यन्यत्वे द्रव्यत्वे वा सतीति विशेषणे स्पर्शवत्त्वस्यापि मनोऽन्यद्रव्यत्वेसतीति विशेषणेन सिद्धिप्रसङ्गः । तस्मादुक्तानुमानस्याप्रयोजकत्वस्यैव वाच्यत्वादनात्मत्वस्योपाधित्वाच्च । अतएवान्त्यावपि निरस्तौ । वेदान्तनयेऽनित्यविशेषगुणसंस्कारादीनामुपाध्यन्तःकरणनिष्ठत्वेन जीवे तदभावादसिद्धेश्च जीवोऽणुः ज्ञानासमवायिकारणसंयोगाश्रयत्वात् मनोवत् इत्यप्यात्मेतरत्वस्योपाधित्वात् । वेदान्तनये मनसो मध्यमपरिमाणत्वाभ्युपगमेन दृष्टान्तासिद्धेश्च नच वाच्यम् । नच मनसो मध्यमपरिमाणत्वे ज्ञानयौगपद्यप्रसङ्गः । दीर्घशष्कुलीभक्षणादौ तस्य दृष्टत्वेनेष्टत्वात् । नच तत्र शतपत्रपत्रशतभेदनवद्यौगपद्यभ्रम एवेति वाच्यम् । शतपत्रभेदनस्थल एकपत्रभेदनमन्तरेण पत्रान्तरभेदनस्यासंभवेन यौगपद्यासंभवेन भ्रमत्वकल्पनेऽप्यणुत्वनिश्चयं विनोक्तस्थले भ्रमत्वकल्पनायोगात् । नच व्यासङ्गानुरोधेन मनसोऽणुत्वसिद्धिरिति वाच्यम् । व्यासङ्गो हि योग्यविषयसंबन्धसाम्येऽप्येकेन्द्रियजन्यज्ञानस्योत्पत्तावपरेन्द्रियजन्यज्ञानस्य याऽनुत्पत्तिरेकेन्द्रियजन्यज्ञानस्याप्येकविषय उत्पत्तौ विषयान्तरे च याऽनुत्पत्तिस्तत्प्रयोजकः तद्विषयतदिन्द्रियसंबन्धकाले तद्विषयतदिन्द्रियेण मनसोऽसंबन्धे सति विषयान्तरसंबद्धेन्द्रियान्तरेण विशेषेण संबन्धो विशेषश्च झटित्यविगमादिः । सचायं व्यासङ्गो मनोवैभवमध्यमपरिमाणयोर्नोपपद्यत इत्यणुत्वाभ्युपगमस्तव । तत्रेदमालोचनीयम् । दीर्घशष्कुलीभक्षणस्थले तव मनसस्तादृशशीघ्रगत्युपगमो येन सकलेन्द्रियजन्यज्ञानानां क्रमिकाणामपि यौगपद्यप्रतीतिरिति । व्यासङ्गस्थले कुतो न तादृशशीघ्रगतिशीलस्य मनस इन्द्रियान्तरेण संबन्ध इति बुभुत्साविशेषस्यादृष्टविशेषस्य वा तत्रेन्द्रियान्तरसंबन्धप्रयोजकगतिप्रतिबन्धकत्वं वाच्यम् । तथा सति ममापि तेनैव व्यासङ्गोपपत्तिः । नच तव मध्यमपरिमाणस्य मनसः सकलेन्द्रियसंबद्धतया गत्यपेक्षाविरहेण प्रतिबन्धकत्वकल्पनयाप्यगतिरेवेति वाच्यम् । मध्यमपरिमाणत्वेऽपि हि तदन्तःकरणं हृद्गुहायां मुख्यतो वर्तते तडाग इव नीरं घटोदरे प्रदीपः तडागसंलग्नप्रणालिका इव घटसुषिराणीव हृद्गुहासंलग्ना नाड्यः तत्तदिन्द्रियपर्यन्तं लग्नाः प्रणालिका इव सेतुभिः मुखे केनचित्पिहिता वर्तन्ते तथा सति यथाभ्यासोपदेशादिदृष्टकारणसाकल्यसाम्येऽपि विद्योत्कर्षापकर्षादावदृष्टादेव वैचित्र्यं तस्मादेव च तादृशादृष्टसिद्धिः तथान्तःकरणस्य शीघ्रतरगतिमत्त्वेऽपि यत्र नानेन्द्रियविषयसंबन्धसाम्येऽपि कस्याचिदिन्द्रियस्य कार्यं कस्यचिन्न च दृश्यते तत्र फलानुरोधादीश्वराधिष्ठितादृष्टात्तत्तदिन्द्रियसंबद्धनाडीद्वारपिधानापगमः क्रियते । करकाद्रवत्वप्रतिरोधकादृष्टापगम इव तत्तन्नाडीगतिप्रतिरोधकादृष्टापगम एव वा क्रियते । नत्वितरेन्द्रियसंबद्धनाडीद्वारपिधानापगमः प्रतिरोधकादृष्टापगमो वा क्रियत इति व्यासङ्गोपपत्तिः । नच यत्र चक्षुर्घटेन पटेन च संबद्धं घटस्य ज्ञानं न पटस्य तत्र घटज्ञानानुरोधेन मनसश्चक्षुःसन्निकर्षोऽवश्यं वाच्य इति कथं न पटोपलब्धिरिति वाच्यम् । अणुत्वेऽपि तत्रोक्तदोषतादवस्थ्यात् अन्यबुभुत्साया अन्यत्र प्रतिबन्धकत्वेन तादृशस्थले सर्वत्र बुभुत्साकल्पनेन च तद्वारणस्योभयपक्षेऽपि समानत्वात् । मन्मतेऽन्तःकरणस्य चक्षुर्द्वारा विषयदेशगमनाभ्युपगमेन चक्षुषा सह निर्गतस्याप्यदृष्टरूपप्रतिबन्धकात्पटेन गमनमपितु घट एवेति कल्पनाया अपि संभवाच्च । यत्र दीर्घशष्कुलीभक्षणस्थलेऽनेकेन्द्रियजन्यज्ञानयौगपद्यमनुभूयते तत्र युगपदेव सर्वनाडीद्वारपिधानापगमः । भवति चैवं यौगपद्यप्रतीतेर्नाप्रामाण्यलक्षणक्लेशः इन्द्रियसंबन्धानतिरिक्तवृत्तितापि तस्य फलबलेन स्वभावतया कल्प्यते तेन घटस्य बाह्यदेशे चक्षुःसंबन्धे गते च तत्र मध्यमपरिमाणे प्रकाशकेऽन्तःकरणे घटमध्यदेशतत्स्थपदार्थयोर्न ग्रहणम् । नचान्तःकरणस्य शरीराद्बहिर्गमने शरीरस्य मृतत्वापत्तिरिति वाच्यम् । शरीरं परित्यज्य गमन एव हि तथात्वं शरीरमपरित्यज्य गमने तथात्वाभावात् अन्यथा चक्षुषो बहिर्गमन अन्धत्वमपि हि स्यादविशेषात् । एवं मध्यमपरिमाणाभ्युपगमे युगपद्धस्तपादादौ सुखदुःखानुभवस्याप्युपपत्तिः । न्यायनये तु हस्तपादाद्यवच्छिन्नेऽणुनः करणस्य मनसो युगपत्प्राप्त्यसंभवात्तन्न स्यात् । नच मनःसंयुक्तात्मसमवायस्य युगपदुभयदेशावच्छिन्नसुखादिषु सत्त्वेन तदुपपत्तिरिति वाच्यम् । एवंसति हि वृक्षे मूले कुठारसंयोगे शाखायामपि वृक्षे छिदाद्युत्पत्तिः स्यादिति तद्देशावच्छिन्नफलोत्पत्तौ तद्देशावच्छिन्नाश्रये करणसंबन्धोऽपेक्षणीय इत्यस्यावश्यमुपेयतया देशद्वयावच्छिन्ने सुखादितदनुभवाश्रय आत्मनि मनःसंयोगासंभवेनोक्तदोषतादवस्थ्यम् । नच हस्ते मे सुखं पादे मे दुःखमित्यादिप्रतीतेः सुखादावेव हस्ताद्यवच्छिन्नत्वं तच्च हस्तादिदेशविशेषनियतनिमित्तचन्दनसंयोगादियौगपद्येनोपपद्यत एव । असमवायिकारणस्य तु समवायिकारणप्रत्यासत्तिमात्रमपेक्षितं नतु कार्यदेशव्याप्तिः । तथा सति तन्तुद्वयकपालद्वयसंयोगयोः घटपटदेशाव्यापितया तयोरनुत्पत्तिरेव स्यादिति । कुत्राप्यात्मनि मनःसंयोगसत्त्वमपेक्षितं तदप्यस्त्येवेति

वाच्यम् । इदानीं हस्ते सुखमनुभूयते पादे दुःखमिति प्रत्ययस्यापि सत्त्वेनानुभवेऽपि देशविशेषावच्छिन्नत्वस्य यौगपद्यस्य च प्रत्ययात्तस्योपपादयितुमशक्यत्वात् । असमवायिकारणस्य कार्यदेशव्यापित्वाभावेऽपि यदवच्छिन्ने कार्योत्पत्तिस्तत्रैकत्रापि सत्त्वावश्यंभावदर्शनेन पादे दुःखोत्पत्तौ तदवच्छिन्नात्मनि मनःसंबन्धाभावे तदुत्पत्तेरप्यसंभवाच्च । नचोक्तस्थलेऽपि हस्ताद्यवच्छिन्नसुखादेरनुभव एव प्रतीयत इति वाच्यम् । इदानीं हस्ते पादे चानुभूयत इत्यभिलापस्याक्लेशेनोपपादयितुमशक्यत्वात् हस्ताद्यवच्छिन्नसुखादेरपि युगपदुत्पत्त्यसंभवस्योक्तत्वाच्च । एवं गङ्गास्नानादौ सर्वाङ्गीणशैत्योपलब्धिस्थले हस्ते शैत्यमनुभूयते पादे चेत्यादौ शैत्यस्य जलस्थस्य हस्ताद्यवच्छिन्नत्वासंभवात् अनुभव एव तद्भानस्य वाच्यत्वात् तस्य हस्ताद्यवच्छिन्नेऽनुभवाश्रय आत्मनि युगपन्मनःसंयोगरूपासमवायिकारणविरहादसंभवेनोक्तानुभवबाधः । आत्मनोऽणुत्ववादिनां तु सुतरामयं दोषः । युगपद्धस्तपादावच्छिन्नत्वस्य तदुभयासंबन्धिन आत्मनोऽसंभवेन युगपद्धस्ताद्यवच्छिन्नसुखदुःखतदनुभवशरीरव्यापिशैत्यानुभवादीनामसंभवात् । नचैकदेशस्थितेऽप्यणावात्मनि सुखदुःखादिकमुत्पद्यते निमित्तस्य चन्दनसंयोगादेः शरीरद्वारा परम्परया सत्त्वात् । तत्र साक्षाद्युगपदात्मासंबन्धिनोऽपि हस्तपादादेः स्वसंबद्धशरीरसंबन्धित्वेन तत्संबन्धितया तत्समवेतसुखादाववच्छेदकत्वस्य संभव इति वाच्यम् । वृक्षसमवेतसंयोगादौ वृक्षसाक्षात्संबन्धिन एव शाखादेरवच्छेदकत्वदर्शनात् अन्यथा वृक्षसंयुक्तशरीरावयवस्य वृक्षगतकपिसंयोगावच्छेदकत्वमपि हि स्यात् । नच तादृशस्य कप्यवयवस्यावच्छेदकत्वं भवत्येवेति वाच्यम् । तस्य कपावेव संयोगसत्तायामवच्छेदकत्वात् वृक्ष इति तत्तत्कार्ये देशादेः स्वाश्रयसाक्षात्संबन्धिनोऽवच्छेदकत्वस्य निर्व्यभिचारतया सुखाद्याश्रयात्मना हस्तादेर्युगपत्साक्षात्संबन्धाभावेन न संभवत्येव ह्यवच्छेदकत्वम् । नच शरीर एवास्तु सुखादिकमिति वाच्यम् । अदृष्टस्य कृतनाशाकृताभ्यागमादिदोषेणात्मगतत्वस्यावश्यकत्वेन सन्दिग्धाश्रयसुखादिकंप्रति तस्य कारणतायां लाघवेन समवायस्यावच्छेदकत्वे सिद्धे तेषामात्मगतत्वस्य सिद्धेः । अहं सुखीत्याद्यात्मगतत्वप्रत्ययाच्च । नचाहं धनीतिवत्परम्परासंबन्धविषयत्वमेवास्तु तस्येति वाच्यम् । साक्षात्संबन्धसंभवे परम्पराश्रयणस्यायुक्तत्वात् । दृष्टान्तेऽप्यसिद्धेश्च । तत्रापि स्वामित्वादिसाक्षात्संबन्धस्यैव विषयत्वात् । अन्यथाऽन्यधनादौ स्वगृहशरीरादिस्थितेऽप्यहंधनीति प्रत्ययः स्यादिति । नचाणुरूपस्याप्यात्मनः शीघ्रतरगतिमत्त्वादुभयदेशे स्थितिसंभवेन सुखदुःखतदनुभवानामुपपत्तिसंभवो यौगपद्यप्रत्ययस्याणुमनोवादिनैयायिकस्येव हि भ्रमत्वमिति वाच्यम् । पूर्वमेव निराकृतत्वात् । एवमात्मनो विभुत्वे लाघवमपि । तथाहि तस्य तत्तच्छरीरप्रदेशेषु ज्ञानसुखाद्युपपत्तये तत्र तत्र गत्यभ्युपगमेनानन्तगतिस्वीकारापत्तिः विभुत्वे च नैवम् । नच नैयायिकस्य तावन्मनोगतिर्यावती तावत्येवास्माकमात्मनो गतिरिति वाच्यम् । मध्यमपरिमाणान्तःकरणवादिनो मम मते लाघवस्य दुर्वारत्वात् । तथाहि स्वाधिष्ठानान्निर्गत्य शरीरं व्याप्य तिष्ठति प्रहरमन्तःकरणे शिरसि पादे च वेदनायां ममैकैव गतिः तव प्रहरे यावतां क्षणानां सङ्घातस्तावती गतिरिति स्पष्टं लाघवम् न्यायमतादपि तवैव गौरवम् । तथाहि सुखादिसाक्षात्कारक्रियाकरणत्वेन कर्तृभिन्नस्याणुपरिमाणस्य मनसस्तवापि स्वीकरणीयत्वान्मनोबोधकश्रुतेश्च । तथासति मनोगतिरुभयोः समात्मगतिस्तवानन्ताधिकैव । नचाणोरात्मनः करणत्वमप्यस्तु किं मनसा । एकस्य कर्तृत्वं करणत्वं चात्मनो ज्ञानक्रियायां कर्तृत्वकर्मत्ववच्च विरुद्धम् । रूपभेदेनोभयोरुपपादनस्य समानत्वादिति वाच्यम् । यत्र हि प्रामाणिको निर्विवादो ह्यनुभवस्तत्रैवानेकस्थलदृष्टविरुद्धतोपशमायैकस्य रूपभेदेन कर्तृकर्मत्वादिकल्पनम् । यथाहमात्मानं जानामीत्यनुभवे तादृशे सत्यात्मनः कर्तृत्वकर्मत्वयो रूपभेदेन कल्पनम् । यत्र न तादृशानुभवो न तत्र तदपि यथा चैत्रः स्वमारोहतीत्यनुभवस्य तादृशस्याभावात् । न चैत्रादे रूपभेदेनाप्यारोहणकर्तृकर्मत्वकल्पनं प्रकृतेऽप्यात्मनः कर्तृकरणत्वानुभवस्य तादृशस्याभावात् । दृष्टविरुद्धतत्कल्पनं दुःशक्यमेव । एवं जन्मारभ्य मरणपर्यन्तं चैत्रशरीरेण सहावस्थाभेदाच्छरीरभेदे कतिपयसंयोगा यत्र मम विभोरात्मनस्तत्र शरीरमध्ये संचरत आत्मनोऽनन्ताः संयोगा भवन्ति तवेत्यपि गौरवम् । नच बाह्यपदार्थानामनन्तत्वेन तैः सह विभोः संयोगचिन्तने तवैवातिगौरवमिति वाच्यम् । विभोरीश्वरस्याकाशादेश्च तवाप्यभ्युपगन्तव्यतया तैः सह यो बाह्यपदार्थस्य संयोगस्तदतिरेकेणात्मनः संयोगस्यानङ्गीकारेण गौरवविरहात् । नच संयोगस्योभयनिष्ठत्वनियम इति वाच्यम् । उभयमात्रनिष्ठत्वस्यैवानभ्युपगमात् । यया हि क्रियया पूर्वदेशात्तदवच्छिन्नाकाशादेश्च विभज्योत्तरदेशेन सह संयुज्यते मूर्तः तयैवाकाशादिभिश्चात्मभिश्च न तत्र कारणान्तरमुपलभ्यत इति कारणाभेदे कुतः कार्यभेदः । नच समवायिकारणभेदाद्भेद इति वाच्यम् । तथासत्युभयनिष्ठताप्येकस्य संयोगस्य न स्यादिति सामग्रीभेदादेव भेदो वाच्यः । सा यथा तव समवायिकारणद्वयघटितैका तथा मम समवायिकारणानेकघटिताप्येकैवेति न संयोगभेदः । तत्तन्मूर्तविभुसंयोगभेदश्चैकमूर्तक्रियया संयोगनाशे निष्क्रियेपि तस्य नाशापत्त्याभ्युपेयत एव । नच नैयायिकमत एवं लाघवसत्त्वेऽपि शरीरादन्तःकरणनिर्गमनाभ्युपगन्तुर्वेदान्तिनो न लाघवमिति वाच्यम् । उक्तप्रक्रियया मनसः स्वीकारे तवापतितेऽनन्ततावज्जीवकल्पनमपेक्ष्य कतिपयसंयोगप्रसङ्गस्य गौरवानापादकत्वात् । नच तवाप्यन्तःकरणात् कर्तृशरीरप्रविष्टादतिरिक्तमनःस्वीकार उक्तयुक्तेः प्रसज्यत एवेति वाच्यम् । कर्तृत्वमन्तःकरणविशिष्टस्य नान्तःकरणस्य करणत्वमन्तःकरणस्य तद्वृत्तेर्वेति विरोधविरहेणातिरिक्तमनःकल्पनाया अनवकाशात् । नन्वस्माभिर्हस्तपादाद्यवच्छिन्नसुखाद्युपपत्तये जीवस्याणोर्गतिर्नाभ्युपेयते किंतु यथैकदेशस्थेऽपि शरीरस्य चन्दनबिन्दौ सर्वशरीरे सुखमनुभूयते विलक्षणत्वाद्वस्तुशक्तेः तथैकत्र स्थितेऽपि जीवे तस्य सर्वाङ्गीणसुखाद्युपलब्धि-

रूपेयते । यद्वा यथा प्रासादकोणस्थस्यापि दीपस्य प्रभा प्रासादोदरव्यापिनी गुणात्मिका कार्यं जनयति तथा जीवस्य चैतन्यरूपो गुणः सर्वदेहव्यापी सुखादिकं गृह्णातीत्यभ्युपेयत इति चेन्न । निदाघे गङ्गास्नानादौ सर्वाङ्गीणजलसंयोग एव सर्वशरीरे शैत्योपलब्धिः शरीरव्यापकसुखोपलब्धिश्च । दृष्टादृष्टानुसारिणी च कल्पना कथंचिदपि दृष्टानुगुण्ये संभवति नाकस्माददृष्टशक्तिविशेषानुसारिणी युक्तेति कर्पूरभागानामिव चन्दनबिन्दुभागानामपि झटिति सर्वशरीरप्रसरणेनापि तत्र सर्वाङ्गीणशैत्यसुखाद्युपलब्ध्युपपादनसंभवे चादृष्टस्य पादे कण्टकतोदे हस्ते दुःखस्य दुःखानुभवस्येव शरीरे क्वचित्प्रदेशे चन्दनबिन्दौ प्रदेशान्तरे शैत्यसुखाद्यनुभवस्य कल्पना तदर्थं वस्तुशक्तिविशेषकल्पना च न युक्तेति न प्रथमो दृष्टान्तः । नापि द्वितीयो युक्तः । तथाहि प्रदीपादतिघनावयवाद्द्रव्यान्तरमेव प्रभारूपं शीघ्रतरगतिमदुद्भूतरूपमनुद्भूतस्पर्शं प्रविरलावयवमुत्पद्यते । युज्यते च तस्य दीपे चैकदेशस्थेऽपि गृहोदरव्याप्तिः । नचैषा गतिर्जीवस्थले परमाणोरनवयवात्तस्मात्तादृशचैतन्यगुणद्रव्यान्तरस्य देहव्यापिन उत्पत्तेरसंभवात् । अतएव बृहच्चलरैकदेशस्थे स्वल्पावयवे प्रदीपे स्वल्पे यावद्देशव्यापिप्रभाप्रसारस्ततोऽधिकदेशव्यापिप्रभाप्रसारो बह्ववयवे महति प्रदीपे दृष्ट उपपद्यते । तव तु न स्यादावरणाभावमात्रापेक्षप्रसारस्य तेजसः प्रकाशरूपप्रभागुणस्य समदेशतैवोभयत्र स्यात् । नच तावद्देशव्याप्यवयवनिःसरणे प्रदीपक्षयप्रसङ्गः । नच तत् दृश्यत इत्यगत्या प्रदीपविशेषप्रकाशस्य देशविशेषव्याप्तिः प्रदीपवैलक्षण्यादेवोपपाद्येति वाच्यम् । तैलवर्तिविशेषादिघटितसामग्र्या अवयवानुपूरणेन प्रदीपक्षयाभावोपपत्तौ किमित्यप्रामाणिकतमस्याश्रयं विना गुणावस्थानस्य हि कल्पना कार्या । एवं गुणस्य गत्यभावेन कथं प्रासादोदरव्याप्त्युपपत्तिः । ननु यया सामग्र्या प्रदीपस्तद्गुणो वोत्पादितः सा तावद्देशावस्थितप्रकाशगुणाश्रयप्रदीपस्य तादृशगुणस्यैव वोत्पादिका । नचाश्रयंविना कृतस्य गुणस्य कस्याप्यवस्थानादर्शनादयुक्तत्वाच्च नैवमिति वाच्यम् । गुणानां भिन्नभिन्नस्वभावत्वाद्रूपस्य प्रत्येकं द्रव्यत्रयावस्थानं हि स्वभावः । चक्षुर्ग्राह्यत्वं च रसस्य द्रव्यद्वयावस्थानं रसनाग्राह्यत्वं च संयोगस्यैकस्यैव निरन्तरानेकाधारे विभागस्यैकस्यैव सान्तरानेकाधारे संख्याया एकस्याः सान्तरे निरन्तरे चाधार इत्याद्येवं प्रभागुणस्य प्रदीपादिकमाश्रित्यान्यत्र वर्तनं स्वभाव इत्यस्य वक्तुं शक्यत्वात् । यथाहि गुर्वपि दण्डादिकमंशेनाश्रित्य पाणिं वियत्यपि तिष्ठति तथैतदपि गुणस्य सर्वथा द्रव्यानाश्रितत्वस्यैव विरुद्धत्वादितिचेन्न । दण्डस्य हि सावयवत्वेनांशतो हस्ताश्रयणमनाश्रयणं चोपपद्यते । गुणस्य निरंशत्वेन सर्वथैव प्रदीपाश्रयत्वमित्यन्यत्रानवस्थितत्वमन्यत्रावस्थितत्वे सर्वथैव प्रदीपानाश्रितत्वं वा स्यादेवं प्रदीपावस्थाने मध्य आवरणसंपादनेऽप्युत्पन्नस्य प्रदेशान्तरप्रकाशस्य पूर्ववदेवोपलब्धिप्रसङ्गादाश्रयनाशादेस्तन्नाशकारणस्याभावादमूर्तत्वेन व्यवहितत्वासंभवाच्च । नच तवाप्यावरणस्थले का गतिः प्रदेशान्तरगतस्य द्रव्यस्योपलब्धिवारण इति वाच्यम् । आवरणेन प्रतिरुद्धे प्रदीपनिःसृतप्रभावयवपूरणेऽतिलघोस्तदवयवसङ्घातस्य मरुतेतस्ततो झटिति विप्रकीर्णत्वेनानुपलम्भोपपत्तेः । नचावरणस्यैव तन्नाशकत्वं ममापि संभवतीति वाच्यम् । य एकः प्रकाशगुण उत्पादितः स आवरणाद्बहिर्विनष्ट आवरणमध्ये तिष्ठतीत्येकस्य स्थितिविनाशौ विरुद्धावेकदा स्यातामिति । तस्य बहिर्भागस्य विनाशो भागान्तरस्यावस्थानं प्रकाशगुणस्य तस्य च विनाश इति कल्पने गुणस्यापि सावयवत्वकल्पनासाहसमतिविजयते तव । नच पूर्वगुणस्य नाश आवरणमध्ये गुणान्तरस्यैवोत्पत्तिः । नहि तत्र गौरवं त्वदूरीकृतद्रव्योत्पत्तिविनाशाभ्यां समानत्वादिति वाच्यम् । प्रदीपेऽपि तस्यैव पूर्वं स्थितत्वेन तन्नाशे गुणान्तरोत्पत्तिपर्यन्तं प्रदीपं पश्यतामविच्छेदेन बहूनां केनापि प्रदीपानुपलम्भोऽनुभूयेत । नच भवत्येवानुपलम्भोऽनुपलम्भकालस्यातिसूक्ष्मत्वात्तदननुभवोपपत्तिरिति वाच्यम् । अकारणैतादृशकुसृष्टिकल्पनायास्त्वदेकमात्रगोचरत्वात्प्रदीपगुणस्यानन्तस्य कल्पनागौरवादेवमपि न विमुच्यसे । आवरणस्य किंचित्किंचिच्चालने तावत्संख्याकगुणोत्पत्तेस्तवावश्यकत्वात् । नच प्रभाद्रव्योत्पत्त्यादिभिः साम्यमिति वाच्यम् । त्रसरेणुप्रभृतीनां संहतानां परप्रकाशक्षमाणां निरन्तरप्रसारितधान्यसंहतिवदेकप्रत्ययगोचराणां नानाप्रभाद्रव्याणामापूरणेन घनसंसृष्टतयानेकत्वप्रत्ययाविषयाणां प्रथमत एवोत्पत्तिस्वीकारादेकमहत्तरद्रव्याभ्युपगमेऽपि तेषामभ्युपगमस्यावश्यकतया गौरवविरहात् । आवरणस्थले द्रव्यविनाशोत्पत्तेरेवमभ्युपगमस्यानावश्यकत्वात् । नच कुतो न तेषामारम्भकसंयोग इति वाच्यम् । फलानुरोधित्वात्तत्कल्पनायाः असंदिग्धफलस्याभावात् । तथासति लाघवानुरोधेनैवाकल्प्यत्वात् । एतत्पर्यनुयोगस्य पिण्डीकृतपटादौ पटप्रयोजकारम्भकसंयोगशालिनां तन्तूनां संयोगादेरनारम्भकतायां पटात्प्रागेव पिण्डीकृततन्तुसंयोगानामप्यनारम्भकतायां समानत्वात् गुणस्थले चैवमसंभवात् । अनेकगुणकल्पने यः सर्वथैव प्रदीपासंबद्धस्तस्य गुणत्वासंभवात् आश्रयसंबन्धस्वीकार उक्तयुक्त्योत्पत्तिविनाशशालितावद्गुणानामेव प्रसङ्गात् । नच द्रव्यकल्पने तस्य बहुतरगुणस्यापि कल्पनं गुणकल्पने च न तदिति गुणकल्पन एव लाघवमिति वाच्यम् । चक्षुषोपलभ्यमानस्य प्रकाशस्य द्रव्यत्वं गुणत्वं वेति विमर्शे यत्र कार्यकारणभावादिलाघवं तदेव ह्यभ्युपगन्तव्यम् । उपजीव्यतया तस्य तल्लाघवस्यैवाभ्यर्हितत्वात् । तथाहि प्रथमतो यावद्देशव्यापिगुणारम्भः स्वीकृतो मध्ये सत्यावरणे तादृशगुणोत्पादकपूर्वसामग्र्या विद्यमानतया तत्र तदुत्पत्तिवारणायावरणस्य प्रतिबन्धकत्वं तदभावस्य कारणत्वं वाच्यम् । ते च गुणागुणव्याप्तिसीमास्थावरणस्य प्रतीपाभिमुखं शनैरानयने चावरणमध्यस्था भवन्ति । अनन्ता उत्पन्ना बहिस्थाश्चानन्ता विनष्टास्तत्र विनष्टसमानदेशानां तदावरणे शनैरालोकसीमावधि नीयमाने पुनरुत्पत्स्यमानानां पौर्विकसामग्र्योत्पादवारणाय तेष्वावरणस्य तत्तद्देशावस्थितत्वविशिष्टस्यानन्तानि प्रतिबन्धकत्वानि तदभावकारणत्वानि च भवन्ति ।

मध्यस्थानामुत्पद्यमानोत्पत्स्यमानानां युगपदुत्पादवारणाय तत्रतत्र तत्तद्देशावस्थितत्वविशिष्टावरणस्यानन्तानि कारणत्वानि च कल्प्यानि भवन्ति । नहि द्रव्यत्वे तस्य तानि भवन्तीति सिद्धे द्रव्यत्वे द्रव्याधिक्यगुणाधिक्यानां पश्चादापतितानां शब्दानित्यत्वे शब्दानन्त्यतत्प्रागभावध्वंसाद्यानन्त्यानां फलमुखत्वेनादोषत्वमिवादोषत्वमेव । एवंच न यत्रावरणं तत्रापि प्रभात्वेन द्रव्यत्वमेव हि सिध्यति । नच तत्रोक्तकार्यकारणभावादिलाघवविरहात्पदार्थलाघवस्य गुणत्व एव सत्त्वेन गुणत्वे सिद्धेऽन्यत्रापि प्रभात्वेन तद्दृष्टान्तेन गुणत्वमेव किं न सिध्येदिति वाच्यम् । स्वाभाविकवायोः सततं प्रदीपस्य चलने देशत्यागे गुणविनाशगुणोत्पादानामनन्तानां सर्वत्रैव दुर्वारतयोक्तक्रमेण तत्तद्व्यक्तौ तत्तद्देशस्थप्रदीपत्वेन तत्प्रदीपाधिकरणतत्तद्देशत्वेन वा कारणत्वप्रतिबन्धकत्वानन्त्यस्य दुर्वारत्वात् । गुणाकर्षणादेराकर्षणस्य संयोगविशेषादिसाध्यत्वेनासंभवेन प्रदीपे देशान्तरगते प्रकाशगुणस्य ततो विश्लेषस्य विनाशस्य वावश्यकत्वात् । एवं प्रदीपसन्निहितसन्निहिततरसन्निहिततमदेशे सूक्ष्मवस्तूपलब्धिवैलक्षण्यं विप्रकृष्टादावुपलब्ध्यनुपलब्धिवैलक्षण्यं चानुभूयत इति प्रदीपसमवेतानां तत्तद्देशव्यापिनामेकजातीयानां प्रभागुणानां समकालमुत्पादस्याभ्युपगन्तव्यतया सोऽप्यत्यन्तादृष्ट आपद्यते । एकस्य वा प्रभागुणस्य भागविशेषे वैलक्षण्यकल्पनं तदपि निरवयवे गुणेऽत्यन्तादृष्टमापद्यत इति । एवं जातिदृष्टान्तेनैवाश्रयमन्तरेणापि गुणस्थितिस्त्वया कल्प्या गुणक्रियादेरन्यस्य विवादानध्यासितस्याभावात् तत्रास्ति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । तथाहि येन प्रमाणेन जातिः सिद्ध्यति तेन व्यवहितविप्रकृष्टानेकदेशस्थितसमकालोत्पन्ना तादृशाखिलव्यक्तिगतैव सिध्यति । तादृशव्यक्तिगतत्वं च न व्यापकत्वमन्तरेण एकस्य वस्तुनो विच्छिद्य स्थितेरसंभवादिति तस्या अन्यत्र स्थितिः प्रामाणिकी । नहि प्रदीपस्य प्रकाशगुणो येन सिध्यति तेनान्यत्र तत्सिद्धिं विनानुपपन्नस्य कस्यचित्सिद्धिरस्ति । गुणो हि भास्वरशुक्लः तच्चाक्षुषानुपपत्त्यादिभिः सिद्धस्तत्रैव सिध्यति स एव च प्रकाश उच्यते । यश्चान्यदीयप्रकाशहेतुरालोकस्तस्य तदन्यत्वमेव । अनन्यत्वे हि तस्यान्यवस्तुप्रत्यक्षानुरोधेनान्यत्र वृत्तिः स्यात् । अनन्यत्वे च तस्य परप्रत्यक्षहेतुत्वं दुर्घटम् । गुणत्वेन संयोगसंबन्धाभावात् । समवायस्वीकारे नीलद्रव्यादावपि तादृशशुक्लव्यवहारापत्तेः । प्रदीपे तत्प्रयोजकस्य समवायस्य भावात् स्वरूपस्य गुणसंसर्गताया अदृष्टत्वाज्जातिवत्कल्पकाभावाच्च । जातेरन्यत्र वृत्तावपि व्यक्तावेव हि प्रत्यक्षो भवदभिमतस्य प्रभारूपगुणस्यान्यत्राप्युपलम्भ इत्यस्ति वैषम्यम् । ननु गुणस्याप्यस्त्येवाश्रयमन्तरेण गन्धस्य वृत्तिः कथमन्यथैकदेशस्थिते चम्पकादौ परितो दूरस्थानां गन्धोपलब्धिः स एव प्रभागुणस्य चैतन्यगुणस्य चान्यत्र वृत्तौ दृष्टान्त इति चेन्न । तत्रापि गन्धाश्रयानुद्भूतरूपस्पर्शत्रसरेणोरेवान्यत्र गमनेन गन्धमात्रोपलब्धेरुपपादयितुं शक्यत्वात् । आश्रयमन्तरेण गुणवृत्तेरदृष्टायाः कल्पनस्यान्याय्यत्वात् । नच गन्ध उपलब्धो न गन्धवद्द्रव्यमित्यस्त्यनुभवः । सचाश्रयस्येन्द्रियासंबन्धं विनानुपपद्यमानो घ्राणप्रदेशे गन्धमात्रसत्त्वस्य कल्पको यत्रास्त्याश्रयस्य रूपवतश्चक्षुषा संबन्धस्तत्र नीलो घट उपलब्ध इति हि भवत्यनुभव इति वाच्यम् । गन्धग्रहणस्थल आश्रयाग्रहणं हि नाश्रयासंबन्धनिबन्धनं घ्राणस्य द्रव्यग्रहणाशक्तिनिबन्धनमेव । अन्यथा घ्राणसंयुक्ते पुष्पे पुष्पग्रहणं निमीलिताक्षस्य स्यात् । चक्षुषो द्रव्यग्रहणेऽपि सामर्थ्यात् आश्रयस्यापि ग्रहणम् । विचित्रा हि शक्तयोऽन्यथा चक्षुरिन्द्रियं रूपं गृह्णातीति घ्राणादिकमपीन्द्रियं रूपं गृह्णीयात् । नच सुरभिविशेषग्रहणे चम्पकादिग्रहणमपि तत्र जायत एवेति वाच्यम् । तस्यानुमानिकस्य दूरस्थेऽपि चम्पकादौ समानत्वात् । ग्रहणकालभेदेऽपि सौक्ष्म्यादेव हि तस्याग्रहणम् । द्रव्यस्य घ्राणसंयोगस्थले घ्राणेनैव तद्ग्रहणेऽगृहीतविशेषसुरभिमद्द्रव्यद्वययोरेकस्य संयोगेऽसंदिग्धद्रव्यविशेषप्रत्ययापत्तिः स्यात् । नच गन्धवैजात्यग्रहणं द्रव्यप्रत्यक्षे घ्राणस्य सहकारीति वाच्यम् । तथा सति कालभेदस्यावश्यकतया द्रव्यग्रहणस्यानुमानिकत्वे बाधकाभावात् । वैजात्यग्रहणस्थले चम्पकसंनिकर्षासंनिकर्षयोराश्रयग्रहणसाम्येऽप्येकस्य प्रत्यक्षत्वमन्यस्यानुमानिकत्वमिति । वैषम्यस्याकारणमभ्युपेयत्वात् । एवं गुणस्य गमनासंभवात् । घ्राणसंनिकर्षोऽपि हि दुरुपपादः । तदभ्युपगमे द्रव्यत्वापत्तेः प्रभास्थलवदत्रापि गौरवादेरनुसन्धेयत्वाच्च । नच दूरतरदेशोपलभ्यसौरभाणां नागकेसरचम्पकादीनां तावद्देशव्यापित्रसरेणुनिःसरणे सच्छिद्रत्वस्य विलयस्य वा प्रसङ्ग इति वाच्यम् । सुरभिभागानामापूरणेन सच्छिद्रत्वाद्यभावात् । उपष्टम्भकतयैवान्यत्र गमनशीलानां परागनामकानां भागानां पुष्पादिष्वभ्युपगमात् । न द्रव्यनाशोत्पत्त्यादिकल्पनाप्रसङ्गोऽपि । केतक्यादौ तादृशभागानां स्पष्टमुपलब्धेः । केषुचित्पुष्पेषु दृढसंबद्धकतिपयसुरभिपरागेषु सुरभिस्वावयवेषु चाप्रावृत्तस्थेष्वपि चिरं चिरतरकालं च सौरभोपलम्भेऽपि केषुचिदविनष्टेषु कतिपयकालादेवासुरभित्वमप्यदृढोपष्टम्भकपरागापगमादेवोपपद्यते । अत्रापि पक्षे कर्पूरादिषु च कालाद्द्रव्यस्यैव क्षयश्च गन्धमात्रनिर्गमने तदसंभवात् । नच स्फाटिकादिदृढतरकरण्डावस्थितकस्तूर्यादेर्बहिर्गन्धोपलब्धौ का गतिस्तत्र द्रव्यनिर्गमनस्यासंभवादिति वाच्यम् । तत्रापि सूक्ष्मतरच्छिद्रस्य सत्त्वात् । नच तत्कल्पने मानाभाव इति वाच्यम् । गुणस्याश्रयंविना स्थित्याद्यसंभवस्यैव मानत्वात् । च्छिद्राभावे बहिश्चिरतरकालाज्जलपूरितस्फटिकभाण्डस्य क्लेदोपलब्ध्यनुपपत्तिः । तत्स्थद्रव्यस्य तस्मिन्नग्निस्थे पाकदाहयोरनुपपत्तिश्च । तत्र तेजःसंयोगस्य कारणत्वात् । उष्णस्पर्शमात्रस्य तथात्वे संबन्धस्य निर्वक्तुमशक्यत्वात् । अवयवसंयोगक्रमेणारब्धे सान्तरत्वस्यावश्यकत्वात् । अन्यथाऽवयविमहत्त्वोपपादनस्य दुःशक्यत्वात् । परिणामवादेऽपि सान्तरस्यैव परिणामाभ्युपगमात् । एवं पङ्क्तिक्रमेण स्थितेषु बहुषु वायुगतिवैचित्र्यात् केषांचिद्गन्धोपलब्धिः । सन्निहितानां दूरवर्तिनां चानुपलब्धिश्च केषांचिन्मध्यस्थितानां तस्यागन्धस्यैव प्रसार उपपादयितुमशक्यत्वात् । आश्रयाविच्छिन्ने गन्धे

प्रसूते मध्यस्थस्याप्युपलब्धिः स्यात्। सर्वथाश्रयासंबद्धस्य गुणस्यासंभवात्। तस्य पुष्पविनाशेऽपि चिरमवस्थानापत्तिरतिदूरं प्रसारापत्तिः। गन्धभावेन पुष्पसामग्र्यादित एव तावद्देशव्यापिगन्धोत्पत्तेः स्वीकरणीयतया सर्वथाश्रयविच्छिन्नस्य तस्य तत उत्पत्त्यसंभवात् त्रोटितपुष्पादौ सामग्रीघटकानां बहूनामभावात् तदसंभवात् सामग्र्यन्तरकल्पने गौरवाच्चेति। एवं प्रत्यक्षत्वात्प्रत्यक्षगुणाश्रयत्वाद्वा नाणुर्जीवः। प्रत्यक्षंप्रति महत्त्वस्य कारणत्वात्। नच यथा लोकस्य चाक्षुषकारणत्वेऽपि तमःप्रत्यक्षेण कारणत्वमुद्भूतरूपस्यापि वायावुद्भूतरूपाभावप्रत्यक्षे महत्त्वस्य परमाणौ महत्त्वाभावप्रत्यक्षे यथा न कारणत्वमेवमात्मतद्गुणप्रत्यक्षेऽपि न कारणत्वं महत्त्वस्य महत्त्वेऽप्यात्मनस्तज्जातीयस्यामहतोऽभावेनापत्त्यसंभवादित्यणुत्वेऽप्यात्मनश्चेतनस्य प्रत्यक्षत्वमुपपद्यत एवेति वाच्यम्। द्रव्यनिष्ठविषयतासंबन्धेन प्रत्यक्षत्वावच्छिन्नंप्रति समवायेन महत्त्वस्य सामान्यत एव कारणत्वात् अणोरात्मनः प्रत्यक्षत्वासंभवात्। नच यथा द्रव्यवृत्त्यभावनिष्ठविषयतया प्रत्यक्षे महत्त्वस्य स्वसमवायिविशेषणतया कारणत्वे महत्त्वाभावप्रत्यक्षे व्यभिचारवारणाय महत्त्वाभावान्यत्वं निवेश्यतेऽभावे कार्यतावच्छेदकसंबन्धकोटौ तथैवात्मान्यत्वं निवेश्यमुक्तकार्यतावच्छेदकसंबन्धकोटौ द्रव्य इत्यणोरात्मनः प्रत्यक्षत्वोपपत्तिरिति वाच्यम्। महत्त्वाभावप्रत्यक्षे व्यभिचारनिश्चयेन तद्वारणाय तदन्यत्वनिवेशसंभवेऽपि प्रकृते तदभावादात्मनोऽणुत्वानिश्चयात्। प्रत्युताणुत्व उक्तकार्यकारणभावे गौरवापत्त्यात्ममहत्त्वस्यैव सिद्धेः। नच न्यायनय उक्तप्रकारस्य संभवेऽपि वेदान्तनये न संभवः। प्रत्यक्षस्यात्मनो निर्गुणत्वाभ्युपगमेन महत्त्वाभावादिति वाच्यम्। शुद्धस्यैव ब्रह्मणो निर्गुणत्वं न तस्य हि प्रत्यक्षविषयत्वमुपेयते। किंतु स्वप्रकाशप्रत्यक्षरूपत्वमेव। यस्यान्तःकरणोपहितस्य प्रत्यक्षविषयत्वं तस्यान्तःकरणगुणेन महत्त्वे नास्त्येवमहत्त्वयोगः। कारणतावच्छेदककोटौ पारमार्थिकत्वस्यानिवेशात्। परमते वैयर्थ्यात् मन्मतेऽप्रसिद्धत्वात्। नच ममापि मतेऽणोरात्मनः स्वप्रकाशप्रत्यक्षरूपतैवास्त्विति वाच्यम्। तद्यथाऽणुनश्चक्षुषः प्रकाशो व्याप्त एवमेवास्य पुरुषस्य प्रकाशो व्याप्त इति श्रुतिः यथाश्रुतार्थानुसारेणात्मनः चैतन्यगुणस्य प्रभादिदृष्टान्तेन युगपद्धस्तपादाद्यवच्छिन्नसुखतदनुभवाद्युपपादनाय शरीरव्यापित्वस्य त्वयोपगतत्वात्। तस्यात्माभेदे ह्यसंभवात्। नह्येवं स्वप्रकाशतासंभवो ह्यपराधीनप्रकाशतैव सा। साचात्मनः परस्य स्वीयप्रकाशगुणस्य स्वप्रकाशो ह्यपेक्षणेन न संभवतीति। नन्वस्मदादिप्रत्यक्षद्रव्यत्वादेवास्तु जीवस्याव्यापकत्वम्। अत्रास्मदादीति परमात्मनि व्यभिचारवारणाय प्रत्यक्षेऽत्यन्तमाकाशादौ व्यभिचारवारणाय द्रव्यत्वेति व्यापिकायां जातौ व्यभिचारवारणायोक्तम्। अत्रास्ति विपक्षे बाधकं शरीरादृष्टभोगसाधारण्यम्। तथाहि जीवस्य व्यापकत्वे सर्वस्य शरीरसंबन्धाविशेषे तच्छरीरं सर्वस्य स्यात्। तच्छरीरक्रियया सर्वात्मन्यदृष्टं स्यात्। भागोऽपि च तज्जन्यं सर्वत्र स्यात्। न चादृष्टंप्रति क्रियायाः कारणत्वे स्वाश्रयशरीरसंयोगस्य न तदवच्छेदकसंबन्धत्वम् स्वजनककृतिमत्त्वस्यैव च तत्त्वं तच्च नात्मान्तर इति वाच्यम्। एतच्छरीरक्रियैतदात्मकृतिजन्येति कुतो नियन्तुं शक्या साक्षात्संबन्धस्याभावात्। स्वाश्रयसंयोगादेः क्रियासमवायिसर्वशरीरसाधारण्यात्। तत्कृतिस्तत्रैवात्मनीत्यपि नियन्तुं न शक्यते तत्कारणज्ञानसाधारण्यात्। इष्टसाधनताज्ञानादेः सर्वस्य प्रत्यक्षमूलकत्वेन तत्तद्विषयसंबद्धतत्तदिन्द्रियेण संबद्धस्य शरीरस्य मनसो वा संयोगस्य सर्वात्मसाधारण्यात्। नचाहन्त्वारोपविषयत्वसाधारण्यप्रयोजकः शरीरात्मसंबन्ध इति वाच्यम्। तस्यारोपस्य तदात्ममात्रनिष्ठत्वनियामकस्य वक्तुमशक्यत्वात् इष्टसाधनताज्ञानादिवत्। अतएव यागदानादिरिच्छारूपा क्रिया साक्षादात्मसमवेतैवेति निरस्तम्। नच शरीरात्मनोरवच्छेद्यावच्छेदकभाव एव संबन्धः प्रत्यात्मनियतज्ञानादेः प्रयोजकः। सचैकशरीरेणैकात्मन एव प्रतिनियतज्ञानान्यथानुपपत्त्या कल्पते। तथात्वेऽपि विभुत्वाव्याघातात्। सर्वमूर्तसंयोगित्वस्यैव विभुत्वादिति वाच्यम्। नहि नियामकमन्तरेणावच्छेदकतया तदात्मनैव संबद्धं शरीरमुत्पन्नं नापरात्मनेति वक्तुं शक्यमुक्तान्यथानुपपत्तिरवच्छेदकतया तत्तदात्ममात्रसंबद्धतत्तच्छरीरज्ञापिका। नचोत्पादिका तादृशोत्पादकालाभे सर्वात्मसंबद्धशरीरोत्पादे स्वकारणान्नीलघट उत्पन्ने रक्तघटग्राहकप्रमाणाप्रवृत्त्या भासत्ववदुक्तानुपपत्तेरप्यप्रवृत्तिराभासता वा स्यात्। नच यददृष्टाद्यच्छरीरमुत्पन्नं तत्तस्यावच्छेदकमिति वाच्यम्। अदृष्टसाधारण्यस्याप्युक्तत्वात्। तच्छरीरोत्पादकमदृष्टं तस्यैवेत्यस्यासंभवादितिचेन्न। यदात्मसमवेतानि पूर्वपूर्वतरपूर्वतमशरीरोत्पादितान्यदृष्टानि शरीरं विना भोगासंभवात् भोगावच्छेदायावच्छेद्यावच्छेदकभावेन तदात्मसंबद्धं यच्छरीरमुत्पादयन्ति तत्तस्य नान्यस्येति नियमसंभवात्। एवं पूर्वपूर्वतरशरीरादिकमपि तत्पूर्वपूर्वतरशरीराद्युत्पादिततददृष्टोत्पादितानि तस्यैव नान्यस्येत्यनादौ संसारे संभवात्। नचानवस्थाप्रसङ्ग इति वाच्यम्। बीजाङ्कुराद्यनवस्थावत् प्रामाणिकत्वेनादोषात्। इन्द्रियादिष्वप्येवमेव तत्तदात्मीयत्वं व्यवस्थापनीयं। तथासति सर्वज्ञानमूलीभूतप्रत्यक्षस्यापि व्यवस्थासंभवः। सत्यां च तद्व्यवस्थायामिच्छेष्टसाधनताज्ञानप्रयत्नादीनामपि व्यवस्थासंभवात्। त्वयाप्येतन्मार्गस्यैवाश्रयणीयत्वात्। कथमन्यथेश्वरस्य व्यापकत्वेन त्वदभिमतस्य सर्वशरीरसंबन्धे शरीरकृतकर्मभोगाभावः। तस्मात्त्वयापि यददृष्टोपार्जितं यच्छरीरं तदेव तस्य भोगसाधनमित्यभ्युपेयम्। तत्र शरीरोत्पादकादृष्टस्यैवेश्वरात्मन्यसत्त्वे किं नियामकं पूर्वपूर्वतरशरीरेन्द्रियादिभिरपीश्वरस्य संबद्धत्वादित्यदृष्टपरम्पराश्रयणस्यावश्यकत्वात्। किंचाणुत्वेऽपि जीवस्य ज्ञानेच्छाप्रयत्नसुखदुःखादिनियामकः शरीरेन्द्रियादिसंबन्धोऽवश्यं वाच्यः। अन्यथा सर्वस्यासंबन्धाविशेषे ज्ञानादिकमपि सर्वं सर्वस्य स्यात्। सच संबन्धो यदि संयोगस्तदोत्पत्त्यनन्तरमेव स्यात्। क्रिययेति क्रियोत्पत्तेः प्राक् तच्छरीरं तदीयं न स्यात्। गुणान्तरविशिष्टोत्पादवत्संयोगविशिष्टोत्पादस्य द्रव्यसमकालगुणोत्पादपक्षेऽपि वक्तुमशक्यत्वात्। अन्वय-

व्यतिरेकाभ्यां विवादानध्यासितसंयोगमात्रे क्रियायाः कारणत्वावधारणात् तद्विपरीतकल्पनाया अन्याय्यत्वात् । किंच तादृशसंयोगस्याश्रयनाशमन्तरेण नाशासंभवेनाणोर्जीवस्याशरीरमेकत्रैवावस्थाने नातिशीघ्रगत्यभ्युपगमेन हस्तपादादिदेशावच्छिन्नयुगपत्सुखदुःखादिप्रत्ययस्य यौगपद्यांशे भ्रमत्वाभ्युपगमेनोपपादनस्यातिनिरस्तचैतन्यगुणव्यापित्वपक्षादितः समीचीनस्याप्यसंभवापत्तिः । क्रियाजन्यसंयोगाद्यभ्युपगमे च पूर्वसंयोगनाशक्षणेऽणोर्जीवस्य शरीरासंयुक्ततया तदीयत्वं च न स्यादिति तत्कालपूर्वोत्पन्नतत्क्षणविनाशिधर्माद्युत्पादककर्मणा तत्र जीवे धर्मादिकं न स्यात् । एवमिन्द्रियादिकमपि कदाचित्तदीयं स्यात् कदाचिन्न स्याच्च । तच्चानुभवविरुद्धम् । अवच्छेदकत्वादिसंबन्धोऽप्युपपादकसापेक्षः अदृष्टमन्तरेणान्येनोपपादयितुमशक्यः । एवमदृष्टपरम्परानभ्युपगमे शरीरहेतुरेतोमूलान्नाद्यनुप्रवेशस्य नियतस्य तत्तज्जीवानां श्रुत्यादिसिद्धस्योपपादनमप्यशक्यमेव स्यात् । सति चैवं पितृशरीरे प्रविष्टस्याधानात्पूर्वं तत्रावस्थितस्य सत्याधाने मातृशरीरावस्थितस्य च पितुर्मातुश्च शरीरेन्द्रियादिभिः संयोगादिसंभवेन ज्ञानादिकं स्यादित्यतोऽप्यदृष्टपरम्परैव त्वयाप्याश्रयणीया संबन्धविशेषनियमाय शुक्रसंयोगविशेषादेः पितृशरीरेन्द्रियादिसंबन्धप्रतिबन्धकत्वाभ्युपगमे गौरवमिति व्यापकत्वपक्षेप्युक्तरीत्या गतिसंभवे तवोक्तविपक्षबाधकतर्को मूलशैथिल्यादाभासीभूतो विपक्षबाधनाय नालमित्युक्ता व्यापकत्वानुमानमात्मेतरत्वोपाधिकवलितमेव पक्षेतरत्वस्यानुपाधित्वम् । बाधानुन्नीतस्यैव बाधोन्नीतस्य तु वह्निरनुष्णः कृतकत्वादित्यादाविव भवत्येव तत्त्वं साध्यव्यापकत्वनिश्चयात् । प्रकृतेऽप्यात्मविभुत्वसाधकैरुक्तैर्बहुभिः सत्तर्कप्रमाणैर्बाधनिश्चयादिति । किंच दृष्टकारणसामग्र्ये समानेऽपि कार्यानुत्पत्तिकार्यवैलक्षण्येऽदृष्टं विनानुपपद्यमाने कार्यमात्रं प्रत्यदृष्टस्य कारणत्वं कल्पयतः सर्वकार्यजातीयस्य क्वचिदनुत्पादस्य वैलक्षण्यस्य च सत्त्वात् । तत्र तत्तत्कार्यजनकादृष्टस्य तत्तत्कार्याश्रयेण क्वचित्समवायस्य क्वचित्स्वाश्रयसंयोगादेः संभवेऽपि तदात्मभोगोपपादकातिविप्रकृष्टदेशोत्पद्यमानकार्याश्रये तदसंभवादाकाशादिद्वारकसंबन्धाभ्युपगमे कालदिक्परमेश्वरादिभिर्विनिगमनाविरहेणानेकसंबन्धप्रसङ्गगौरवात्स्ववृत्तिप्रमेयत्वादेस्तथात्वे च सत्त्ववाच्यत्वगगनाद्यभावादीनामनन्तानां संबन्धघटकत्वापत्त्यानन्तसंबन्धकल्पनाप्रसङ्गेनातिगौरवाच्च । क्लृप्ते विनिगमनाविरहे कल्प्यमन्यत्सिध्यतीति न्यायेन संदिग्धाणुत्वमहत्त्वकस्याकाशादिद्वारकसंबन्धेऽप्यावश्यकप्रवेशस्यात्मनो विभुतया संबन्धघटकतया सिद्धिः । नच ज्ञानविषययोरभावप्रतियोगिनोरतिरिक्तसंबन्धवत् कार्यादृष्टयोरप्यतिरिक्त एवास्तु संबन्ध इति वाच्यम् । क्लृप्तेष्वात्मसु विभुत्वमात्रकल्पनापेक्षया संबन्धत्वाश्रयानन्तातिरिक्तव्यक्तिकल्पनायामतिगौरवान्मानान्तरस्याभावात् । वेदान्तमते चोक्तसंबन्धानिरुक्त्यनवस्थादेर्मायिकत्वानुकूलत्वेन दोषत्वासंभवादिति । यत्तु योगशास्त्रप्रामाण्याभ्युपगमेन कायव्यूहस्य प्रामाणिकतया तत्रोभयशरीरावच्छेदेन युगपत् ज्ञानोपपत्तिर्नात्मविभुत्वमन्तरेण संभवतीति नात्मनोऽणुत्वसंभव इति तदेकशरीरे हस्तपादाद्यवच्छेदेन युगपत्सुखज्ञानानुपपत्तितो नातिविलक्षणमित्यणुत्वनिराकरणप्रस्तावे श्रीमद्भगवत्पादैर्भाष्ये मधुसूदनस्वामिभिश्चाद्वैतसिद्ध्यादावुक्तम् । नचैकशरीरेऽतिद्रुतमात्मनो गतिसंभवेनाणुत्वेऽपि यौगपद्यावभासोपपत्तिः सहस्रयोजनादिव्यवहिते देहद्वये झटिति गत्यागत्यसंभवात् । यौगपद्यावभासस्याणुत्वपक्षे कथंचिदपि नोपपत्तिसंभव इत्यस्ति वैलक्षण्यसंभव इति वाच्यम् । योगजातिशयभाजां शीघ्रतमगतीनां गतिप्रतिबन्धकादृष्टादिरहितानामेकशरीरप्रदेशद्वय इव तावद्दूरस्थितशरीरद्वयेऽपि गतागतौ क्रमप्रतीतिरसंभाव्यैवान्येषाम् । चक्षुरुन्मीलने वितस्तिदेशावस्थितवस्तु लक्षयोजनाद्यवस्थिचन्द्रादग्रहणक्रमे सत्यपि तेजसोऽतिद्रुतगतित्वेन तत्प्रतीतिरिव योगिभ्योऽन्येषाम् । आत्मनो विभुत्वेऽपि मनसो गतागतेरावश्यकत्वादेकात्मन एकस्यैव मनसः सत्त्वात् । नच योगिनामुक्तात्मनो मनसो ज्ञानाद्युत्पत्त्यर्थमेकत्र शरीरे स्वीकरणमिति वाच्यम् । तथा सत्यपूर्वकल्पनाया आवश्यकतयात्मनोतिद्रुतगतिकल्पने क्षतिविरहादित्यलमतिविस्तरेण ॥ २४ ॥ **न प्रत्यक्षं तत्र छेद्यत्वादिग्राहकमिति** । धर्मिणमगृहीत्वा धर्मग्राहकत्वासंभवादिति भावः । **प्रत्यक्षो हीति** । दृष्टान्तधर्मिणि महानसादाविति शेषः । **वह्नयादिरिति** । वह्नित्वजात्यवच्छिन्न इत्यर्थः । तेन प्रत्यक्षस्य वह्नेरनुमेयत्वेऽपि न क्षतिः । **सामान्यतो दृष्टानुमानेति** । लिङ्गज्ञानाद्यकरणकमिदं ज्ञानं सकरणकं । क्रियात्वात् ज्ञानत्वाद्वा छिदादिवदनुमित्यादिवद्वेत्याद्यनुमानेनेत्यर्थः । **नार्थापत्तेरिति** । विकारादिरहितस्थलीयार्थापत्त्यादेरनुकूलतर्काद्यभावेन प्रामाण्यासंभवात् । प्रमाणभूततद्विषयत्वमेव हि तत्सिद्धये विवक्षितं तन्नास्तीत्यर्थः । **सोपकरणेनेति** । उपकरणमर्थप्रतिपादनसहकारिव्याकरणनिरुक्तवाक्यशेषमीमांसादित्यर्थः ॥ २५ ॥ **प्रतिक्षणविनाशीति** । अर्थक्रियाकारित्वलक्षणसत्त्वक्षणिकत्वयोर्व्याप्यव्यापकभावग्रहात् स्थायिनोऽर्थक्रियाकारित्वासंभवरूपानुकूलतर्कसद्भावात् स्थायिनस्तथात्वे क्रमवत्कार्यकारित्वतदभावरूपविरुद्धधर्माध्यासप्रसङ्गात् । सहकारिविलम्बेन तदुपपादनस्य सहकारिण उपकारकतायामुपकारे कर्तव्य उपकारान्तरापेक्षायामनवस्थाप्रसङ्गात् । अकिंचित्करत्वे सहकारित्वासंभवाच्च कर्तुमशक्यत्वादित्यात्मनः सत्त्वे प्रतिक्षणविनाशित्वामावश्यकमिति भावः । **देह एवात्मेति** । गौरोऽहं स्थूलोऽहं कृशोऽहमित्यनुभवस्य सार्वजनीनस्याबाधस्यैवोचितत्वात् । गौरत्वस्थूलत्वादेर्ज्ञानादावसंभवात् तदाश्रयो देह एवाहमर्थरूप आत्मा तत्सामानाधिकरण्येन प्रतीतत्वात् । नच काणोऽहं बधिरोऽहमित्याद्यनुभवस्यापि सार्वजनीनत्वेनाबाधस्यैव वक्तुमुचिततया चक्षुषो वा श्रोत्रस्य वाऽहमर्थता स्यादितीतस्तत आकृष्यमाणोऽहमर्थस्तपस्वी संकटमापादितः स्यादिति वाच्यम् । देहसामानाधिकरण्येनाहमर्थप्रत्ययो यथाहि सार्वजनीनो नैवमिन्द्रियसामानाधिकरण्येन देहश्चैकमिन्द्रियमनेकमनेकस्याहमर्थत्व आत्मनो बहुत्वमपि प्रतिसंदधीत न प्रतिसंधत्ते

कश्चित्। तस्माद्देहाधिष्ठितत्वात्तदेकदेशत्वादिन्द्रियादिष्वहमिति प्रत्यय इत्यस्यावश्यमुपेयत्वादिति । नचानुमानागमादितो जन्मान्तरपरलोकादृष्टादेस्तदन्वात्मनश्च देहव्यतिरिक्तस्य सिद्धिरिति वाच्यम् । अनुमानमूलीभूतव्याप्तिनिश्चयस्य व्यभिचार-शङ्कयाऽसंभवात्तर्कस्यापि व्याप्तिमूलकत्वेन तत्रापि व्यभिचारशङ्कायां तर्कान्तरानुसरणेऽनवस्थाप्रसङ्गादनुमानस्य प्रामाण्या-संभवात् शब्दस्य शक्तिग्रहादिसापेक्षस्य शक्त्यादिग्राहकानुमानोपजीवकत्वावश्यंभावादनुमानाप्रामाण्ये तत्प्रामाण्यासंभ-वात्। प्रत्यक्षस्य सर्वोपजीव्यत्वेन प्रबलत्वात्तद्बाधनस्यान्याय्यत्वात् देहातिरिक्तात्मनः सिद्ध्यसंभवादिति भावः । **स्थिरोऽप्य-नुक्षणपरिणामीति**। योऽहं बालः पितरावन्वभूवं सोऽहं वृद्धः पुत्रमनुभवामीत्यबाधितप्रत्ययानुरोधादहमर्थस्य देहस्यैव स्थिरत्वमशितपीतपरिणतिभेदाच्छरीरस्य प्रतिक्षणपरिणामभेदश्च प्रतिक्षणपरिणामित्वेऽपि न स्थैर्यहानिः । परिणामात्मना विनाशेऽपि निरन्वयनाशानभ्युपगमेन स्वरूपेण परिणामिनोऽनुस्यूतत्वात् । अन्यथा सर्वथैवापूर्वस्योत्पादे वर्णाकारादीनां कदाचिदन्यत्वापत्तेरिति भावः। अथ भूतानामचेतनत्वात्तत्परिणामस्य शरीरस्य न संभवति चैतन्यम्। यत्तु चेतनस्य यथाऽ-चेतनं कार्यं वेदान्तिनामणुनो द्व्यणुकस्य कार्यं, महांस्त्रसरेणुस्तार्किकाणां श्वेतेन चूर्णेन पीताया हरिद्राया योगे तत्र लौहित्यं, मद्याद्यवस्थापन्नेऽन्नादिरसे मादकतायाश्च दर्शनात् तथा भूतानां संयोगविशेषात्कायाकारपरिणामे सति चैतन्यं न विरुध्यते। नच मरणानन्तरमपि शरीरस्य सत्त्वात् चैतन्यं तत्कार्यं च ज्ञायेतेति वाच्यम्। विभोरात्मनश्चेतनत्वेऽपि शरीरस्यात्मनश्च सत्त्वात्त-दापत्तेः प्राणाद्यपगमेन चैतन्याभावोपपादनस्य शरीरपक्षेऽपि तुल्यत्वात् । नचैकैकात्मनामनन्तानि शरीराणि भवन्तीति शरीरापेक्षयात्मनोऽल्पत्वात्तस्यैव ज्ञानाश्रयत्वकल्पनमुचितं न शरीराणां गौरवादिति वाच्यम्। आत्मनो विभुत्वपक्षे घटादावपि चैतन्यापत्त्या शरीर एव चैतन्योपपत्तये तेषामवच्छेदकत्वस्य कल्पनीयतया तेषामेवाश्रयत्वकल्पन आश्रयान्तराकल्पनेना-तिलाघवादिति । तन्न । परिणामभेदेन द्रव्यभेदस्यावश्यकत्वात्। स्थायित्वसंभवेऽपि बाल्ययुवादिशरीरभेदस्यावश्योपेयत्वात् । वर्णाकारादिभेदानुपलम्भस्योपादानतत्संयोगसौसाजात्यदोषनिबन्धनत्वेनोपपत्तेः। नच पिण्डीकृते प्रसारिते च तस्मिन्नेव पटे परिणामभेददर्शनाच्छरीरस्थलेऽपि बाल्ये तदेव संकुचितमल्पं यौवने विस्तारमापन्नं महत्प्रतीयत इति वाच्यम् । संकुचिताव-स्थायामपि पटस्य विस्तृतावस्थाकालोपलभ्यमानपरिमाणस्यैव भावात् संकोचेनावयवानामनारम्भकसंयोगविशेषेण दोषेण हि तदग्रहमात्रमेव हि जायते। अतएव पूर्वगृहीतपरिमाणानां पुंसां दशहस्तमिदं नाल्पपरिमाणमित्येव प्रत्ययाभिलापाविति परि-णामभेदे द्रव्यैकत्वे दृष्टान्ताभावात् चर्मसंकुचितं रुधिराद्यनुप्रवेशाद्विस्तृतं भवतीति तदेकमित्येतस्य कथंचित्संभवेऽप्याहार-परिणामरुधिरमांसादेरपूर्वस्यानुप्रवेशेन तत्समुदायरूपस्य तदारब्धातिरिक्तावयविनो वा पूर्वस्मादभेदस्य युक्तिविरुद्धत्वाच्च । तस्मादभ्युपगन्तव्यमुक्तप्रतिसन्धानोपपत्तये शरीरातिरिक्तमाजन्ममरणकालमध्यवर्ति यावच्छरीरानुस्यूतमेकमात्मतत्त्वम्। शरी-रोत्पत्तिपूर्वं परतश्च मरणात्तदनुभवाभावेन तत्सत्त्वे मानाभावात्। शरीरसमकालोत्पत्तिकः शरीरसमकालविनाशी स चाभ्यु-पगन्तव्य इत्यभिप्रेत्याह—**देहातिरिक्तोऽपीति**। ननु शारीरस्य देहसमकालत्वे जातमात्रस्य स्तनपानप्रवृत्तिहासरोदनादीनां कथमुपपत्तिः। नच स्वभावात्तदुपपत्तिरिति वाच्यम्। नहि भावस्य स्वभावात्कदाचिदपि भवति प्रच्युतिः । तथात्वे स्वभा-वत्वानुपपत्तेः। तद्बाल्यस्योक्तप्रवृत्त्यादिस्वभावत्वे सततप्रवृत्त्याद्यापत्तिर्हि स्यात् । नच कादाचित्कप्रवृत्तिस्वभावत्वमेव तस्येति वाच्यम्। कादाचित्कत्वप्रयोजकस्य वक्तव्यतापत्तेः। नहि कारणानियम्यस्य कादाचित्कत्वमुपपद्यते । तादृशश्च स्यादेव न स्यादेव वा ननु कदाचित्स्यात्। कारणे च कल्पयितव्येऽन्यत्र प्रवृत्तौ क्लृप्तमिष्टसाधनताज्ञानं भयदुःखसुखज्ञानादिकं च कल्प्यम्। तादृशं च ज्ञानं स्तनपानगोचरमनुमितिरूपं भयतद्धेतुसुखदुःखाद्यनुस्मृतिरूपं वा जातमात्रस्यासंभवि व्याप्तिग्रहस्यैतज्जन्म-न्यसंभवात् । भयतद्धेत्वादिज्ञानस्यापीति जन्मान्तरानुभवजनितसंस्कारादेव तद्वाच्यमित्यनेकभवानुवर्तिस्वरूपमात्मनो वाच्यं ननु तत्तद्देहोत्पादविनाशानुविधाय्युत्पादविनाशं रूपमात्मनोऽभ्युपेयमित्यभिप्रायेण कश्चिदा सर्गादा च प्रलयाद्वर्तमानमुत्पत्ति-विनाशिनमात्मानं मन्यते तन्मतेनाह—**सर्गाद्यकाल एवेत्यादि**। इदं च वेदान्तयथाश्रुतार्थग्राहिणः कस्यचिन्मतम्। नन्व-त्रापि सर्गाद्यकालिकतादृशप्रवृत्तितत्तज्जात्युचितभोगानुकूलवासनाभिव्यक्त्याद्यभावकृतहान्यकृताभ्यागमप्रसङ्गादिदोषवारणाया-नादित्वस्यावश्यवाच्यतयानादिभावस्य विनाशानौचित्यान्नित्यत्वमेवाभ्युपेयमात्मनः तस्यैकत्वे चैत्रमैत्रादिप्रतिनियतज्ञानसुख-दुःखादिव्यवस्थानुपपत्तेरनेकत्वं चाभ्युपेयमिति तार्किका वदन्ति तन्मतमाह—**नित्य एवात्मेति**। घटादिषूत्पत्तिविनाशशा-लिषु मरणव्यवहाराभावाद्भ्रियमाणशरीरादिसंबन्धाभावस्य मुख्यमरणपदार्थत्वात्तन्नियतव्यवहारगोचरस्य जन्मशब्दस्यापूर्व-शरीरादिसंबन्धे रूढिरुचिता। तथाच प्रादुर्भावत्वरूपयोगार्थतावच्छेदकस्य घटाद्युत्पत्तौ सत्त्वेऽपि पङ्कजशब्दस्य योगार्थताव-च्छेदकपङ्कजनिकर्तृत्वस्य कुमुदादौ सत्त्वेऽपि रूढ्यर्थस्य पद्मत्वस्यासत्त्वात्तस्यामुख्यत्वमिव रूढ्यर्थतावच्छेदकस्यापूर्वशरीरेन्द्रि-यादिसंबन्धत्वस्यासत्त्वादमुख्यत्वमेवोचितं योगार्थस्येत्यभिप्रायेणाह—**नित्यस्यैव मुख्यमिति** । रूढ्यर्थस्यैव मुख्यत्वादिति शेषः। नमूक्तसंबन्धरूपस्यानित्यात्मपक्षे कुतो न मुख्यार्थस्य सत्त्वमित्यत आह—**धर्माधर्मनिमित्तत्वादिति**। तादृशजन्म-मरणयोर्नियतनिमित्तान्तराभावेन धर्माधर्मयोरेव तथात्वस्य वाच्यत्वाल्लाघवेन तत्समानाधिकरणस्यैव नैमित्तिकस्य वाच्यत्वात् । धर्माधर्मयोश्चाश्रयत्वस्य नित्य एवात्मन्युपेयत्वात् । तयोः कालान्तरभाविफलकत्वेन क्षणिकत्वशरीरानुविनाशित्वपक्षयोस्तद-संभवेनासंभवादाप्रलयस्थायित्वपक्षेऽपि प्राथमिकशरीरतदवच्छिन्नभोगादेराकस्मिकत्वापत्त्या धर्मादेर्निमित्तत्वाभ्युपगमेऽना-

दित्वाविनाशित्वयोरापत्तेस्तत्र कथंचिच्छरीरभोगयोर्विनैव धर्मादिकं परेणोपपादनस्य दुराग्रहेण करणेऽनन्तरशरीरादावपि तदुपपादनस्य तथैव संभवेन धर्माधर्माभावप्रसङ्गात्तदाश्रयत्वस्य दूरापेतत्वादनित्यस्यात्मन इति तन्निमित्तकजन्ममरणयोर्मुख्य-योर्न संभव इति भावः। उत्पत्तिविनाशावेव जन्ममरणशब्दयोर्मुख्यार्थौ नित्ये तदभावात् गौणौ। स्वाश्रयोपाधिसंबन्धरूपौ तौ वाच्याविति मतान्तरमाह—**नित्यस्याप्यात्मन इति**। अत्रापिना जातो मृत इति व्यवहारस्य सार्वजनीनस्यानुपपत्तेरा-त्मा नित्यो नाभ्युपेय इति शङ्का निराकृता। नित्यत्वसाधकपूर्वोक्तयुक्तिभिर्नित्यत्वे सिद्धे व्यवहारयोरुक्तयोर्गौणार्थेनाप्युपपाद-नसंभवात्तदर्थमयुक्तस्यानित्यत्वस्योपगमो नोचित इति भावः। अन्य इत्यस्वरससूचनाय। सच विनाशस्यैव मरणशब्दमुख्या-र्थत्वे घटो मृतो म्रियत इत्यादिव्यवहारस्य प्रसङ्गः। नच शरीरादिसंबन्धतदभावयोर्जन्ममरणशब्दमुख्यार्थत्वे जातो घटो जायते घट इत्यादिव्यवहारानुपपत्तिरिति वाच्यम्। योगार्थमात्रेणापि तदुपपत्तेरिति। नित्यमित्यस्य विवरणं नियतमिति। जातत्वमृतत्वव्याप्यस्वरूपमित्यर्थः। सोपहासं सानुकम्पमित्युभयत्रोक्तमिति शेषः। तदन्वयि चोक्तद्वितीयान्तद्वयम्। महा-बाहुता हि पुरुषधौरेयस्य लक्षणं तया पुरुषधौरेयो भवति लक्षित इति पुरुषधौरेयेत्युक्तम्। भवसि पुरुषधौरेयतया जगति प्रथितोऽभ्युपैषि च बह्वनर्थसाधनं कुमतमिति सखिबुद्ध्योपहासः। मच्छिष्योऽयमीदृशेऽनर्थसाधने कुमते निपतित इति दयया तथोक्तं तन्निवृत्तये स्वरूपस्मारणायेति। एवमिति मूलम्। **दृष्टमपीति**। बन्धुविनाशदर्शननिमित्तकमित्यर्थः। **बन्धुविनाशदर्शित्वाभावादीति**। शरीरेन्द्रियालयविज्ञानादीनां सर्वेषां क्षणिकत्वाभ्युपगमात्। यस्य यच्छरीरेन्द्रि-ययद्विषयसंप्रयोगस्तेषां दर्शनक्षणेऽभावादन्येन्द्रियविषयसंप्रयोगादितोऽन्यस्य दर्शनादावतिप्रसङ्गाद्बन्धुविनाशदर्शित्वासंभवा-दित्यर्थः। यद्यपि कार्यकारणभावाभ्युपगमादितोऽतिप्रसङ्गवारणसंभवाद्भवति कथंचिद्बन्धुविनाशदर्शित्वाद्युपपत्तिः तथापि सर्वथैवासंबद्धानां कार्यकारणभावाद्युपपादनस्यैवासंभवात्। पूर्ववर्तितामात्रेण तथात्वे ह्युत्तरक्षणे घटपटगवाश्वादि सर्वात्मकं सर्वं स्यात्। पक्षान्तरे समवायिनः स्थायिनः सत्त्वेन कारणान्तरैः कार्यस्य च तद्द्वारा मिलनसंभवेन दोषासंभवान्नोपपत्ति-संभव आपाततो वा तथोक्तमिति ॥ २६ ॥ **तदारम्भककर्मक्षयनिमित्त इति**। यद्यपि कर्मशरीरस्य निमित्तं निमि-त्तनाशश्च न कार्यनाशप्रयोजकः तथापि विनाशरीरं भोगाभावात्प्रारब्धं स्वफलभोगसंपादनाय शरीरं संपादयति शरीरं च तत्फलेनैव फलवत्। तदपि फलं प्रारब्धसंपादितशरीरात्मसंबन्धविशेषाधीनं संबन्धोऽपि च सफलस्तेनैव फलेनेति विनाशकोप-निपातेऽपि प्रारब्धेनैव विनाशकं प्रतिरुध्य शरीरतत्संबन्धावस्थितिस्तन्यते। संपन्ने च निखिलफले नष्टे च ततः प्रारब्धे विना-शकप्राप्तौ प्रतिबन्धकाभावाच्छरीरविनाशस्यावश्यकत्वमिति कर्मक्षयस्य प्रतिबन्धकाभावरूपस्य भवति शरीरादिनाशहेतुत्व-मिति तथोक्तम्। **सानुशयस्यैव प्रस्तुतत्वादिति**। कर्मफलपर्यन्तं चित्तभूमावनुशेते निर्व्यापारं वर्तत इत्यनुशयोऽदृष्टः तत्सहितस्यैव जातस्येत्यनेन प्रस्तुतत्वात्। नहि निरनुशयस्य जन्म भवतीत्येतदनुरोधात् मृतस्येत्यस्य सानुशयस्य मृतस्येत्य-र्थात्। **न जीवन्मुक्ते व्यभिचार इति**। तस्य जातस्यापि चरमदेहस्य तत्त्वसाक्षात्कारसमुन्मूलितप्रारब्धेतरनिखिलकर्मा-दृष्टमिथ्याज्ञानतद्वासनस्यानुत्पन्नादृष्टान्तरस्य भोगक्षपितप्रारब्धस्य निरनुशयमृतस्य जन्मप्रयोजकाभावेन जन्मासंभवेऽपि ध्रुवं जन्म मृतस्य चेत्यस्य यथाश्रुतार्थे प्रसक्तो व्यभिचारो न भवति। तस्योक्तार्थतात्पर्यकत्वात् सानुशयं मृतस्य जन्मनियमा-दित्यर्थः। **न प्रत्यवायजनकमिति**। मा हिंस्यादिति निषेधस्य सामान्यस्य बलवदनिष्टाननुबन्धित्वतदनुबन्धित्वयोरेकत्र विरोधेन विशेषशास्त्रेण युद्धविधायकेन निरवकाशेन स्वविषये बाधात्तदतिरिक्तहिंसानिषेधकत्वात् युद्धं न प्रत्यवायजनक-मित्यर्थः। तथाचेति प्रत्यवायाजनकं चेत्यर्थः। हिंसाकर्मेति शेषः। गवादिकं यदयोद्धृ तत्प्रचुरे पाठात् ब्राह्मणोऽप्ययोद्धृ-ग्राह्यः। योद्धृब्राह्मणवधस्य प्रत्यवायाजनकत्वस्य वक्ष्यमाणत्वात्। गवादीति न पाठकृतमादित्वमपि त्वयोद्धृपरिगणने गोर्मुख्य-त्वेनादौ परिगणनीयत्वात् अर्थकृतं बोध्यम्। मुख्यता च युद्धयोग्यत्वस्यापि विरहात् वादी च तवास्मीति वादी वक्ष्यमाण-मनुवचने 'तवास्मीति च वादिन'मिति दर्शनात्। यद्वा गवादयो येऽयोद्धृतया प्रसिद्धास्तत्प्रायानां तत्सदृशानामत्र पाठात्। सादृश्यस्य च युद्धप्रयोजकरूपवैकल्येन विवक्षितत्वात् ब्राह्मणोऽप्ययोद्धैव तत्सदृश इति स एव ब्राह्मणपदेन ग्राह्य इत्यर्थः। गोब्राह्मणवादीत्यस्य गौरस्मि ब्राह्मणोऽस्मीति वादीति वार्थः। यस्तु युद्धे प्रवृत्तो ब्राह्मणस्तस्यैव हनने प्रत्यवायाभावे तद्ब्रा-ह्मणवादिहननस्याप्यप्रत्यवायत्वादयोद्धृब्राह्मणेत्युक्तमिति ॥ २७ ॥ नन्वव्यक्तेति श्लोकव्याख्याधारभूते वेदान्तपरमसिद्धान्त-दृष्टसृष्टिपक्षे सांख्यमतवत् स्वकारणे परिणाम्युपादाने परमार्थसति परमार्थसतां कार्याणां व्यवहारायोग्यसूक्ष्मरूपेणावस्थान-रूपमव्यक्तत्वं न संभवति। परिणाम्युपादाने परमार्थसत्त्वस्य खण्डनात् विश्वमिथ्यात्वसाधकश्रुतियुक्तिभिः कार्यपरमार्थसत्त्व-स्यापि खण्डनादाविर्भावतिरोभावयोरपि सत्त्वासत्त्वपक्षयोः कारणव्यापारवैयर्थ्यादिप्रसङ्गेन तयोरप्याविर्भावतिरोभावाभ्युप-गमेऽनवस्थाप्रसङ्गात्। सूक्ष्मावस्थाया अपि निराकृतत्वात्। नापि न्यायमत इव कार्यजन्मप्राक्काले व्यक्तेभ्यः कारणादिभ्यः परमार्थभिन्नत्वमव्यक्तत्वम्। उपादानोपादेययोरभेदस्यैव भेदापेक्षया परमार्थत्वात्। तत्त्वज्ञानात्प्राक् कस्याप्यत्यन्तसमुच्छेदस्य वक्तुमशक्यतया संस्कारपदवाच्यया कारणानन्यया सूक्ष्मावस्थया सर्वकार्याणामवस्थानाभ्युपगमात्। परमकारणस्याज्ञानस्य साक्षिणा सुषुप्त्यादावप्यनुभवेन व्यक्ततया ततोऽन्यत्वस्य कार्येष्वसंभवात्। कारणस्याव्यक्तत्वेऽप्युक्तरूपस्याव्यक्तत्वस्य जन्मो-त्तरमपि सत्त्वेन तत्र व्यक्तत्वाभ्युपगमेन वक्तुमशक्यत्वात्। जन्मप्राक्काल इत्यस्य व्यक्तत्वेऽन्वयस्यात एव निरस्तत्वात्।

जन्मप्राक्काले कार्याणां व्यक्तभिन्नत्वमित्यस्यापि जन्मप्राक्काले कार्यस्याव्यक्तत्वाधारतया विवक्षितस्याभावेन कस्य तदानीमव्यक्तत्वं स्यादित्यतोऽव्यक्तानीत्यस्यार्थमाह—**अनुपलब्धानीति**। स्वस्वरूपविशेषेणाज्ञातानीत्यर्थः। तेन जन्मनः प्राक् ज्योतिःशास्त्रादितोऽस्य पुत्रो भविष्यतीति सामान्यतो ज्ञातत्वेऽपि न क्षतिः। नवा गुरुत्वादेरुत्पत्त्यनन्तरमप्यप्रत्यक्षत्वेऽपि च क्षतिः। **व्यक्तान्युपलब्धानीति**। मध्य एव ज्ञातान्येव नान्यदा नत्वज्ञातानीत्यर्थः। **सन्तीति**। यदा ज्ञातानि तदैव सन्ति नान्यदेत्यर्थः। तेन जन्मानन्तरमपि शून्यगृहादौ सुषुप्तिदशायामज्ञातत्वे शरीरादेरसत्त्वमेवेति न दृष्टसृष्टित्वपक्षहानिरिति। **यथा स्वप्नेन्द्रजालादावित्यादि**। शुक्तिरूप्यादिवत्प्रतिभासमात्रजीवनानि प्रतिभासव्याप्यसत्त्वानि यथा स्वप्नेन्द्रजालादौ वस्तूनि तत्काले व्यक्तान्यन्यदाऽव्यक्तानि तथैव शरीरादीन्यपि जन्मव्यवहारोत्तरमेव व्यक्तानि सन्त्यन्यदात्वव्यक्तानि न सन्तीत्यर्थः। **दृष्टसृष्ट्यभ्युपगमादिति**। वेदान्तदर्शने मन्दाधिकार्युद्देशेन सृष्टिदृष्टिवाद एकः प्रदर्शितोऽस्ति यतः सच भवति सुबोधः। तथाहि तत्र सर्वेषां वियदादिमहत्सूक्ष्मभूतभौतिकान्तःकरणप्राणेन्द्रियशरीरमृद्दण्डसूत्रवेमादिघटपटादिवस्तूनां कार्यकारणात्मकानां त्रिकालाबाध्यतया परमार्थसच्छुद्धब्रह्मविषयाश्रितस्यानादिकल्पितजीवाश्रितब्रह्मगोचरस्य वा विचित्रशक्तिमत एकस्यानेकस्य वा प्रवाहानादिविचित्रादृष्टसहकृतस्यानादेः कल्पितस्य भावरूपस्य त्रिगुणस्याज्ञानस्य समानसत्ताककार्यतया परिणामत्वम्। परमार्थसदधिष्ठानभूतब्रह्मणो विषमसत्ताककार्यतया विवर्तत्वमभ्युपेयते। अत्र च पक्षे परमेश्वरेक्षणाद्यदृष्टादिसहकृताज्ञानं कारणात्मना परिणमते। तदनु तत्तत्कारणसहितं कार्यात्मना सच परिणामः सृष्टिरुच्यते सृष्टौ सत्यां दृष्टिर्ज्ञानं सृष्टिदृष्टिरित्याख्यायते सृष्ट्यनन्तरमज्ञाननिवर्तकाधिष्ठानब्रह्मतत्त्वसाक्षात्कारात्मकबाधात्पूर्वं ज्ञानभावकालेऽपि व्यवहारकालाबाध्यतयाऽस्त्येव व्यावहारिकं सत्त्वं सर्वेषामनाद्यविद्यामात्रदोषप्रयुक्तानां कार्याणाम्। एकस्यैवानेककालस्थायितया प्रत्यभिज्ञायमानत्वमनेकद्रष्टृदृश्यत्वं च। तथा सति बौद्धक्षणिकत्ववादादिनिराकरणपरप्रत्यभिज्ञामूलकस्थायित्वप्रतिपादकसूत्रभाष्यवार्तिकविवरणादिग्रन्थानामक्लेशेनोपपत्तिः। एवं यदा यत्पुरुषीयेन्द्रियं यद्विषयसंप्रयोगजवृत्त्या विषयावच्छिन्नचैतन्यावरणभङ्गो विषये चैतन्यप्रतिबिम्बो विषयचैतत्संबन्धाभिव्यक्तिर्वा तदा सविषयस्तत्पुरुषज्ञानस्य कर्म नान्यदा नान्यस्य नान्य इति प्रतिकर्मव्यवस्थाया अप्यक्लेशेनोपपत्तिः। ज्ञानात्पूर्वमिन्द्रियसंप्रयोगकाले विषयस्य सत्त्वात्। एवं परप्रत्यायनार्थं शब्दप्रयोगे तृप्त्यर्थं भोजने धूमार्थं वन्ह्यानयने प्रवृत्तिरप्युपपद्यत एव। तत्तकार्याणां तत्तत्कारणसहकृताज्ञानपरिणामत्वोपगमात्। एवं व्यवहारकाले कार्यस्य सत्त्वेऽपि स्वसंबन्धितया प्रतिपन्ने पारमार्थिकसत्त्वेनाभावस्य सत्त्वान्मिथ्यात्वं शुक्तिरूप्यवत् तच तद्दृष्टान्तेन दृश्यत्वात्परिच्छिन्नत्वात् जडत्वाचानुमेयं तत्रास्ति। दृग्दृश्यसंबन्धान्यथानुपपत्त्यादिरनुकूलतर्कस्तत्र श्रुतयश्च 'नेह नानास्ति किंचन' 'वाचारम्भण'मित्याद्यतोन्यदार्तमित्याद्या मीमांसावधारिततात्पर्यवत्योऽनुग्राहिकाः स्वतःप्रमाणभूताः सन्ति नातो निर्मूला प्रतिष्ठितानुमानैरतीन्द्रियकालादिघटितत्रिकालाबाध्यत्वरूपमिथ्यात्वविरोधिपारमार्थिकसत्त्वाग्राहिभिरप्रमाणसार्वजनीनचन्द्रवितस्तिपरिमाणग्राहिप्रत्यक्षसाजात्यगृहीताप्रामाण्यैर्घटादिसत्त्वग्राहिप्रत्यक्षैः यागस्वर्गादिसत्त्वतात्पर्यरहितैः प्रतियोगिप्रसक्त्यादिमुखेन द्वैताभावोपलक्षितब्रह्मप्रतिपादकश्रुतिशेषभूतैरन्तःकरणशुद्धिहेतुसुकृतिविधानदुष्कृतिविवर्जनार्थतया कृतार्थैः'रश्वमेधेन यजेते'त्यादिश्रुतिभिश्च बाध्यत्वं मिथ्यात्वानुमानस्येति ब्रह्मणः पारमार्थिकं सत्त्वं प्रपञ्चस्य व्यावहारिकं तत्। तृतीयमप्यस्ति सत्त्वं प्रातीतिकं प्रतीतिमात्रजीवितानां स्वप्नमायाकाचकामलायागन्तुकदोषसादृश्यदर्शनाद्युद्बोधितपूर्वदृष्टसंस्कारादिसहकृतशुक्तित्वादिप्रकारकाविद्यापरिणामभूतानां स्वाप्नैन्द्रजालिकवस्तुशुक्तिरजतादीनां नच तत्र ख्यातिमात्रमेवास्तु प्रवृत्तिभयकंपरेतःपातसुखदुःखादेस्तावताप्युपपत्तेर्विषयस्यापूर्वस्य कल्पनायां मानाभाव इति वाच्यम्। एवं सति त्वदभिमतसद्घटादिज्ञानस्थलेऽपि हि ज्ञानमात्रमेवास्तु तावतैव प्रवृत्त्याद्युपपत्तेः। प्रवृत्त्यादिकमपि न वस्तु। तज्ज्ञानेनैव तद्व्यवहारोपपत्तेरिति बौद्धमतप्रवेशापत्तेः। अथ ज्ञानमात्राभ्युपगमे तस्य स्वतो निराकारतया वस्तुभूतभेदकधर्मशून्यतया सर्वज्ञानतः सर्वप्रवृत्त्याद्यापत्तिरित्यभ्युपेयो विषयः। नच विषयितैवास्तु ज्ञानधर्मभूता ज्ञानभेदिकेति वाच्यम्। घटमहं जानामीत्याद्यनुभवे कर्मीभूतविषयज्ञानक्रियातिरेकेण परस्परतत्तज्ज्ञानव्यावृत्तविषयित्वस्वरूपाप्रतिभासनात्। नच घटादिरेवास्तु ज्ञानधर्मो ज्ञानभेदक इति वाच्यम्। तथा सति बाह्यत्वस्थौल्याद्यवभासबाधापत्तेः। नच स्थौल्याद्यवभासो भ्रम इति वाच्यम्। क्वचिदप्यप्रसिद्धस्य भ्रमादर्शनात्। नच पूर्वपूर्वभ्रमप्रसिद्धस्योत्तरोत्तरभ्रमेऽवभास इति वाच्यम्। अनवस्थापातात्। नचानादित्वाददोष इति वाच्यम्। स्थूलबहिर्वस्त्वभ्युपगमेनोपपत्तिसंभवेऽन्यथानुपपत्तिप्रमापितत्वाभावेनाप्रामाणिकतयाऽनवस्थाया दोषत्वावश्यंभावात्। नच विषयसद्भावेऽपि संयोगेन कम्बलवान् पुरुषः पुरुषवत्कम्बलमिति ज्ञानयोः समानविषयकयोर्भेदाय विषयितावैलक्षण्यस्य प्रकारितात्वादेरावश्यकतया तेन विलक्षणं विषयित्वमेवास्तु भेदकमिति वाच्यम्। प्रकारित्वविशेष्यित्वादेरुभयोर्ज्ञानयोः समानत्वेन भेदकत्वासंभवान्निरूपकतया विषयविशेषविशेषितस्य प्रकारित्वादेर्भेदकत्वसंभवेऽप्युपजीव्यतया विषयावश्यंभावात्। विषयविनाकृतप्रकारित्वादिगतवैलक्षण्यस्यानुभवेनाविषयीकरणात्तथाभूतं हि तज्ज्ञानवैलक्षण्यान्यथानुपपत्त्या कल्पमेव स्यात्। सा च तादृशवैलक्षण्यसमानाधिकरणं ज्ञानगतमेव वैलक्षण्यं कल्पयेत्तत्र स्थौल्याद्यवभासानुपपत्त्यादिरुक्त एवेति चेन्न। एतावतापि तवाभिमतासिद्धेः। घटपटनीलपीतजन्मोत्पत्त्यादिकं हि सर्वं जगत्स्वेकमेवास्तु तत्तद्विषयनिरूपितप्रकारित्वादिभिर्ज्ञानभेदस्य संभवात्। अनुपपद्यमानज्ञानवैलक्षण्यस्यैव विषयसाधकत्वेन तस्यैकघटादिभि-

रप्युपपत्तेः। नचायं घट इदानीमुत्पन्नोऽयं घट इदानीं विनष्ट इति प्रतीतिविषयघटयोर्नैकत्वसंभव एकदैकस्योत्पादविनाशयोरसंभवादिति वाच्यम्। ज्ञानभेदस्य घटाद्यैक्येऽपि तत्तद्विषयनिरूपितावच्छेद्यावच्छेदकभावापन्नप्रकारित्वविशेष्यित्वाभ्यां भिन्नाभ्यामेव संभवात्। उत्पत्तिविनाशविशिष्टघटाभ्युपगम एवैकत्वस्य विरोधात्तदनभ्युपगमात्। एवं नीलो घटः पीतो घट इत्यत्रापि नीलपीतादि विशिष्टघटस्यानभ्युपगमादेकत्वाविरोधान्नहि तस्य तत्राभावे तस्य तत्र न प्रत्यय इति नियमः। शुक्लः स्फटिक इतिवद्रक्तः स्फटिक इति प्रत्ययदर्शनात्। नचैवं विशिष्टप्रत्ययमात्रस्याप्रामाण्यप्रसङ्ग इति वाच्यम्। सविकल्पकमात्रस्य बौद्धैस्तथात्वाङ्गीकारात्। तस्माल्लाघवेनानुपपद्यमानज्ञानवैलक्षण्यमपहाय ज्ञानस्यैव विषयसाधकत्वं वाच्यम्। एवं सत्यकामेनापि येन रूपेण यद्वस्तुसंसृष्टतया यज्ज्ञानेन विषयीक्रियते तत्तथैवाभ्युपेयमिति विषयपक्षपातित्वं ज्ञानस्वभावतया मन्तव्यम्। तथा सति तत्तत्कालदेशोत्पत्तिविनाशादिसंसृष्टतया प्रतीयमानं घटादिकं तथैवाभ्युपेयम्। नहि तस्यैकत्वसंभवः। एवं च भवदभिमतानेकघटपटनीलपीतोत्पत्तिविनाशादिसिद्धिवन्मदभिमतस्यापि शुक्त्यात्मकेदंसंसृष्टरजतस्य सिद्धिः। इदं रजतमिति ज्ञानेन तथैव रजतस्य विषयीकरणात्। नचैवं तत्तत्क्षणविशिष्टतया घटस्य विषयत्वे घटानन्त्यमिति वाच्यम्। प्रत्यभिज्ञानुरोधेन पूर्वापरकालसंसृष्टस्यैकस्य सिद्धौ तत्तत्क्षणसंबन्धस्याविरुद्धतया विषयभेदकत्वाभावात्। विरुद्धदेशकालधर्मसंबन्धस्यैव प्रतीतस्य भेदकत्वात्। विरोधश्च विषययोरेकज्ञानकालेऽपरज्ञानानुत्पत्त्यावधारणीयः। तत्र भावाभावौ स्वतो विरुद्धावन्ये च तन्नियतत्वेन गृहीतास्तादृशाः। वस्तुतस्तु विषयभेदेनैव ज्ञानभेदे सिद्धे तत्तत्क्षणोपलक्षितघटविषयकतत्तत्क्षणविशिष्टघटविषयकज्ञानयोर्भेदो वैलक्षण्यं न स्यात्। यदि विशिष्टस्य भेदो न स्यात् क्षणघटतत्संबन्धानामुभयत्र विषयत्वसाम्यादित्यावश्यक एव विशिष्टभेदः। नच विशिष्टस्य प्रकारत्वे विशेषणस्य तदवच्छेदकत्वमुपलक्षितस्य प्रकारत्वे विशेषणस्य तत्र प्रकारतामात्रं न तु तदवच्छेदकत्वमिति तन्निरूपकत्वतदभावौ ज्ञानयोर्भेदकाविति विशिष्टभेदो न मन्तव्य इति वाच्यम्। विषयतावैलक्षण्यस्य भेदकत्वानभ्युपगमात्। साकारवादापत्तेः। नच विषयमनपेक्ष्य विलक्षणविषयित्वस्य भेदकत्वास्वीकारान्न साकारवादापत्तिरितिवाच्यम्। विषयस्य भेदकतायाः क्लृप्ततया लाघवेन सर्वत्र तस्यैव तथात्वौचित्यात्। अर्धजरतीयत्वस्यान्याय्यत्वात्। अनुभवागोचरविषयितावैलक्षण्यस्य विषयैक्येऽप्यभ्युपगमे तत्रारोपितपदं विषयवैलक्षण्यानपेक्षविषयितावैलक्षण्ये ज्ञानवैलक्षण्यप्रयोजकत्वं सर्वत्र प्रसृतं विषयवैलक्षण्यं पुनरुन्मूलयेदित्यावश्यक एव विशिष्टभेदः। नच विशिष्टाधिकरणत्वस्य केवलाधिकरणत्वातिरिक्तस्य स्वीकारात्तदेव ज्ञानभेदकं भविष्यतीति वाच्यम्। अनुभवानारूढविशिष्टाधिकरणत्वस्य विषयत्वं तस्य केवलाधिकरणत्वभेदस्तस्य ज्ञानभेदकत्वं चेति त्रितयकल्पनापेक्षया विषयत्वेन भेदकत्वेन च क्लृप्तस्य विशिष्टस्य भेदमात्रकल्पनाया न्याय्यत्वात्। पश्चादापतितस्य विशिष्टानन्त्यतत्प्रागभावध्वंसाद्यानन्त्यगौरवस्य फलमुखत्वेनादोषत्वात्। धर्मिभेदधर्मात्यन्ताभावयोः समनियताभावानां चैक्यस्येव विशेषणविशेष्यध्वंसप्रागभावानामेव विशिष्टध्वंसप्रागभावरूपत्वस्य यथासंभवमभ्युपगमात्। विशेषणादिध्वंसस्यैव विशिष्टप्रतियोगिकत्वाभ्युपगमाद्वा ध्वंसादिगौरवानवकाशात्। विशिष्टानन्त्यस्य तदधिकरणत्वानन्त्येन साम्यात्। ननु ज्ञानस्यासतिबाधक एव विषयसाधकत्वेन नेदं रजतमिति बाधसत्त्वादिदं रजतमिति ज्ञानस्य नेदं संसृष्टविषयसाधकत्वमिति चेन्न। घटादिविषयेष्वपि न्यायनिर्णीततात्पर्यवत् 'नेह नानास्ति किंचन'इत्यादिश्रुतिसत्तर्कमिथ्यात्वानुमानादिप्रत्ययप्रभवसंस्कारादिसहकृततत्त्वमस्यादिवाक्यजन्यचरमाद्वितीयब्रह्मसाक्षात्कारस्य बाधकस्य सत्त्वात्। यावन्न बाधोदयस्तावज्ज्ञानस्य विषयसाधकतया उभयत्र समानत्वात्। इयांस्तु विशेषः–शुक्तिरजतस्थले व्यवहारकाल एव बाधेन तस्य व्यावहारिकसत्वापहारः। प्रतीतिकाले बाधाभावात् प्रातीतिकसत्त्वानपहारश्च। घटादिस्थले व्यवहारकाले बाधाभावान्न व्यावहारिकसत्त्वापहारः। पारमार्थिकसत्त्वाभावश्चोभयत्रापि समानः। वस्तुतस्तु संयोगादिषु क्लृप्तसंबन्धेषु समानदेशकालवस्तुद्वयसंबन्धत्वस्य दर्शनात् कल्पनायाश्च क्लृप्तानुसारित्वात्। प्रागभावध्वंसादिभिः प्रतियोगिनः संबन्धस्यापि पक्षसमत्वाद्व्यवहितविप्रकृष्टातीतानागतविषयैर्ज्ञानस्य संबन्धो ह्यकल्पितो वक्तुमशक्य इति विलक्षणविषयित्वादीनां ज्ञानविषयसंबन्धत्वेनाभिमतानामेवाभावात्तस्य वैलक्षण्यप्रयोजकत्वं दूरापेतमेवेति यथा ज्ञानसिद्धविषयस्यैव तथात्वस्य वाच्यतया शुक्तिरूप्यविशिष्टपदार्थादिरभ्युपेय एव भवति। अथ किं ज्ञानज्ञेययोर्नास्त्येव संबन्ध इति चेत्को ब्रूते नास्तीति अस्त्याध्यासिकं तादात्म्यं सर्वेषां वस्तूनां परमार्थसद्रूपे व्यापके ज्ञानात्मन्येकस्मिन् अद्वितीये ब्रह्मण्यधिष्ठानेऽज्ञानेनाध्यासात्। सन् घट इत्यादिप्रत्ययात् सर्वेषां ज्ञानसमानदेशकालत्वेन तादात्म्यस्य तत्संबन्धत्वे विरोधविरहात्। तदेव च विषयत्वं प्रकारतात्वादिकमपि तन्निष्ठं निर्वक्तुं शक्यम्। तथाहि विशेष्यतादात्म्यापन्ने ज्ञाने विशेषणतादात्म्यावच्छिन्नसंसर्गतादात्म्योपगमेन भग्नावरणचिन्निष्ठविशेषणसंसर्गतादात्म्यावच्छेदकत्वं विशेष्यतादात्म्यनिष्ठं विशेष्यतात्वं तादृशावच्छेदकत्वनिरूपकत्वं संसर्गतात्वं तादृशनिरूपकतावच्छेदकत्वं प्रकारतात्वमित्याद्यन्यदप्यूह्यमधिकं मिथ्यात्वनिरुक्तिचन्द्रिकायां द्रष्टव्यमेवं चेदमवच्छिन्ने चिति रजततत्तादात्म्याभावे रजतस्यानुभूयमानमिदंपदार्थे प्रकारत्वं न स्यादिति शुक्तिरजतमावश्यकमेव। नच घटादीनां सत्तादात्म्यं पारमार्थिकमेव कुतोनाङ्गीक्रियत इति वाच्यम्। घटादीनां हि सत्त्वं स्वाभाविकं चेन्नहि भावस्य कदाचिदपि स्वभावराहित्यसम्भवः। नहि कदाचिदपि भवत्युष्णो वह्निरशीतं जलमिति जन्मनः प्राङ् नाशादुत्तरमपि सत्त्वं स्यान्नाप्यसत्त्वमपि तेषां स्वाभाविको धर्मो जन्मोत्तरमपि सद्भावो न स्यात्। एवमसत्त्वे ज्ञेयत्वं न स्यात्। नह्यसन्नृशृङ्गादि

प्रतीयते । नचाप्रत्यये शशशृङ्गमसन्नृशृङ्गं नास्ति गगनकुसुमवदिदमित्यादेः कागतिरिति वाच्यम् । शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति योगसूत्रोक्तविकल्पवृत्तिवेद्यत्वमेव हि तस्य ततस्तन्मूलकात्संस्काराद्वा शब्दप्रयोगः । शब्दात्सेति यदावयवशक्त्या शशादेः शृङ्गादेश्चोपस्थितौ शशीयत्वादिना शृङ्गादेः प्रत्ययस्तदा भ्रम एव सः । यदा त्वखण्डविषयिणी निर्विकल्परूपा वृत्तिः तदा सा विकल्पात्मिकेति तद्विषयत्वेऽपि प्रतीतत्वाभावात् । यदि विकल्पवृत्तिरपि ज्ञानविशेष एव तदा ह्यसत्त्वे विकल्पान्यज्ञानाविषयत्वमापाद्यं भवति च घटशुक्तिरूप्यादिकं तदन्यचाक्षुषादिविषय इति एतेनासत्ख्यातिरेव घटादीनामित्यपि निरस्तम् । तथात्वे चाक्षुषादित्वं न स्यात् । न स्याच्च सत्त्वेन प्रतीतिः । नृशृङ्गमस्तीत्यादि तु शृङ्गे नृसम्बन्धभ्रमदशायां गवादौ वा नृपदादिशक्तिभ्रमवतामेव भवतीत्यन्यत्र प्रपञ्चितम् । किंचासत्त्वं कदा तस्य वाच्यम् । जन्मोत्तरं चेत् सद्भावादेवासंभवः । तस्य तत्प्राक् स्वस्यैवाभावेन कुत्रासत्त्वं स्यात् । नच सत्त्वासत्त्वेन भावस्य स्वभावभूते धर्मौ किंतु कारणव्यापारायत्तं सत्त्वं तदभावनाशकव्यापारयोरधीनमसत्त्वमिति वाच्यम् । तौ धर्मौ स्वीयौ विधातुं कालत्रये दण्डायमानो यदि भावः स्यात्कृतं कारणव्यापारेण कुतो वाऽसत्त्वं तस्य स्यात् । यदि न दण्डायमानो भावो भावासत्त्वयोरेकदाऽसतोः परस्परानाकलनैकस्वभावयोस्तदा कुतो धर्मिधर्मभावः । अथास्यासत्त्वं नाम न किंचिद्धर्मभूतं वस्तु स्वीकुर्मः किंतु कारणव्यापारात्प्राङ् नाशकानन्तरं च स एव न भवतीति ब्रूम इति चेन्न । यो हि कारणव्यापारात्प्राक् स्वीकृतो घटादेरभावः स प्रतियोगिघटितस्वरूप उत तदघटितस्वरूपः । तदघटितस्वरूपश्चेत्तेन संबद्ध उतासंबद्धः । संबद्धोऽपि चेदन्यतरस्यान्यतरः स्वभावभूतोऽस्वभावभूतो वा । नाद्यः । तद्घटितस्वरूपस्य तस्य सत्त्वे तद्घटकस्यासत्त्वमनुभवविरुद्धं ह्यापतेत् । आत्मैव हि तस्य सः । न द्वितीयः । तदघटितस्य ततोऽत्यन्तं भिन्नस्य तेनासंबन्धस्य तस्य सत्त्वेऽपि प्राक्काले प्रतियोगिनः किं तेन स्यात् । यदि स्याद्दण्डादीनामपि स्यात् । अविशेषात् । अथ प्रतियोगिना संबद्धः स इति चेन्न । एककाले ह्यविद्यमानयोस्तयोर्वास्तवसंबन्धस्यासंभवान्न विद्येते संबन्धिनावथ च संबन्ध इति हि दृष्टविरुद्धम् । क्लृप्तेषु संयोगादिसंबन्धेषु संबन्धिनोरेकदा सत्त्वनियमग्रहात् । नच विषयत्वसंबन्धस्थले दृष्टं संबन्धिनोरेकदा ह्यसत्त्वमिति वाच्यम् । तत्राप्यत एव दोषात्कल्पितस्य तादात्म्यस्य विषयत्वरूपत्वोपगमात् वास्तविकत्वासंभवात् । किंचात्यन्तभिन्नस्य तस्य प्रतियोगित्वमेकदैकदेशासत्त्वाविशेषेऽपि घटस्यैव न पटस्येति नियामकमपि हि दुर्लभम् । लाभे वा तस्यैव संबन्धत्वौचित्यात् । तत्रापि नियामकपर्यनुयोगस्य तादवस्थ्याच्च । तस्मान्नास्वाभाविकः संबन्धः । नाप्यस्वभावभूतोऽन्यतरस्यान्यतर इति स्वभावेन संबन्धो वाच्यः । स्वाभाविके च संबन्धेऽभ्युपगम्यमाने स संबन्धः तादात्म्यरूप एव वाच्यो नियामकान्तरानपेक्षस्यान्यादृशस्य दुर्वचत्वात् । तथा सति तादात्म्यापन्नयोर्द्वयोरन्यतरस्यान्यतरस्वभावत्वमावश्यकम् । तत्राभावस्य भावस्वभावत्वे भावानां सर्वदा सत्त्वापत्त्या नित्यत्वापत्तिः । भावस्याभावस्वभावत्वे सर्वभावानां तुच्छत्वेन जगच्छून्यतापत्तिः । तस्माद्भावानां सत्यनिर्वचनीयविचित्राविद्यापरिणामानां कल्पितत्वेनाधिष्ठानौपाधिकमेव सत्त्वमसत्त्वमपि प्रत्यक्षादिगृहीततया तुच्छनृशृङ्गादिव्यावृत्तमभावेनानिर्वचनीयेनाविद्याकल्पिततया परिहृतसकलदोषेणानिर्वचनीयप्रतियोगित्वसंबन्धेन संबद्धत्वमेवेत्यभिप्रायकमेव द्वितीयाध्यायप्रथमपादस्थ'तदनन्यत्वे'त्यादिसूत्रभामत्यामथैष प्रतिषेधो निरुच्यतामित्यादिनोक्तमिति । सदसद्भ्यामनिर्वाच्यानां तेषां पारमार्थिकसत्तादात्म्यासंभवादाध्यासिकत्वाङ्गीकारात् । एवं स्वसंबन्धितया प्रतीयमाने सर्वेषां 'नेह नाने'तिश्रुत्या हि स्वरूपेणाभावबोधनात् सद्रूपत्वासंभवेनाध्यासिकसत्तादात्म्याङ्गीकारः । नच सर्वत्रैव सर्वेषां स्वरूपेणैवाभावे कारणत्वासंभवेन स्वक्रियाव्याघातादयो दोषा इति वाच्यम् । कारणतावच्छेदककोटौ सत्त्वाप्रवेशेनासत्त्वेऽपि कारणत्वाव्याघातात् । कारणतावच्छेदकदण्डत्वादेस्तदवच्छेदकसंयोगादेर्दण्डसमशीलस्याभ्युपगमात् । नच सत्त्वाभावे स्वसंबन्धिन्यप्यभावे कोऽयं दण्डादीनामभ्युपगमो नामेति वाच्यम् । दण्डः सन् दण्डोऽत्रास्ति कारणं दण्डाद्घटो भवति घटोऽत्रास्ति कार्यं घटेन जलमाहरामीत्यादिप्रतीतिरेवाभ्युपगमः । सैव च विषयसिद्धिरूपेति दण्डः कारणं कारणत्वं घटः कार्यं कार्यत्वं जलाहरणादिः सिद्ध एव भवति । एवं शुक्तिरूप्यस्यापीदं रजतमित्यस्ति प्रतीतिः सिद्धिरभ्युपगमश्चेति तदपि सिद्धं भवतीति सत्त्वे बाधकाभावे सत्तयापि सिद्धः स्यात् । सचास्त्येव प्रदर्शित इति न सद्रूपतया सिध्यति । नच सत्त्वासिद्धौ कथं वस्तुसिद्धिरिति वाच्यम् । नहि सत्त्वं घटादिश्चैकं येन सत्त्वासिद्धौ तदसिद्धिः स्यात् । नच स्वरूपेणैव दण्डादीनामभावे स्वरूपेण कथं तदवस्थानमिति वाच्यम् । अभावस्य भूतलाद्युपहितपरमार्थसदधिष्ठानरूपतया पारमार्थिकत्वात् । दण्डादेरविद्यया कल्पितत्वात् । नहि तादृशं तदुभयमेकत्र विरुद्धम् । यदि व्यवहारकाले तादृशाभावप्रतीतिः स्यात् न स्यात्तदा दण्डादिविभ्रमो नच तदस्ति । शून्यतावादिमाध्यमिकमते भ्रमस्य सदधिष्ठानकस्यानभ्युपगमेन सत्त्वेन प्रतीयमानत्वस्य दण्डघटादिषु सर्वेष्वभावात् । सर्वेषां गगनकुसुमादितुल्यतया तुच्छत्वम् । वेदान्तनये च बाधात्पूर्वं सर्वेषां सन्घटः सन्पट इत्यादिसदधिष्ठानकभ्रमात्मकप्रत्ययात्सत्त्वेन प्रतीयमानत्वादतुच्छत्वमिति विशेषः । सत्त्वाभावे तु न विशेषो मतयोरस्तीति । एवं नयायिकादिभिर्यद्यत्कारणं कार्यं गुणक्रियादिविशिष्टमुपेयतेऽस्माभिरपि तत्तथैवाभ्युपेयते । सतोऽपि गगनादेरुत्पत्त्यभावान्नाशाभावाच्चोत्पत्त्यादिमत्त्वे सत्त्वस्याप्रयोजकतया स्वरूपविशेषस्यैव तथात्वस्य वाच्यतया तस्य मयाप्यभ्युपगमेन सत्त्वाभावेऽपि दण्डघटादीनामुत्पत्त्यादिमत्त्वमूरीकर्तुं शक्यत इति । तेषामिवास्माकमपि सर्वव्यवहारोपपत्तिर्न तत्र वैलक्षण्यं किंतु बाधस्य सुदृढत्वादस्माभिस्तेषां पारमार्थिकसत्त्वं नाभ्युपेयते । तैस्तु श्रुतियुक्त्यादिसम्यगालोचनरहितैर्बाधाग्रहणेन यथाप्रतीतिस्वरूप-

वस्तत्त्वमप्यभ्युपेयत इति नास्ति वैलक्षण्यमिति । अथेदं रजतमित्यादिस्थले धर्मीन्द्रियसन्निकर्षादिदन्त्वेन शुक्तिप्रत्यक्षं दोषरूपप्रतिबन्धकाच्छुक्तित्वेनाप्रत्यक्षं सादृश्यदर्शनोद्बुद्धसंस्काराद्रजतस्मृतिश्चेति ज्ञानद्वयमेव वर्तते, विशिष्टज्ञानकारणत्वेनावश्यकत्वात् । विशिष्टज्ञानाकल्पनेन लाघवं च । नच संभवत्यपि विशिष्टज्ञानं ज्ञानकारणानां सर्वेषां प्रमायामेव सामर्थ्यावधारणात् । नह्यशक्तात्किंचिदुत्पत्तुमर्हति । नच दुष्टात्तस्मात्तदुत्पत्तिरिति वाच्यम् । दोषस्य कार्यप्रतिरोधकत्वमेव हि स्वभावो नाशक्ते सामर्थ्याधायकत्वं । अन्यथा दुष्टात्कुटजबीजाद्वटोत्पत्तिप्रसङ्गात् । नच विशिष्टज्ञानसाध्यायाः पुरोवर्तिनि रजतार्थिनः प्रवृत्तेरनुपपत्तिरिति वाच्यम् । विशिष्टज्ञानार्थमावश्यकस्य पुरोवर्तिनीष्टरजतादिभेदाग्रहस्य दोषप्रयुक्तस्य धर्मिज्ञानरजतोपस्थितिसहकृतस्य प्रवर्तकत्वाभ्युपगमात् । दोषवशाद्रजतत्वेनागृहीते रङ्गत्वेन गृहीते पुरोवर्तिनि कथंचिद्रजतस्मरणे रजतभेदाग्रहस्य सत्त्वाद्रजतार्थिप्रवृत्त्यापत्तिवारणाय दोषप्रयुक्तेति रजते रजतभेदाग्रहस्य कारणाभावप्रयुक्तत्वेन दोषाप्रयुक्तत्वात् । नच विशिष्टज्ञानव्यवहारानापत्तिरिति वाच्यम् । दोषप्रयुक्तज्ञानभेदाग्रहेण तस्यापि संभवादिति भ्रमस्यैवाभावात् शुक्तिरजतं दूरापेतमिति चेन्न । रजत एवेदं रजतमिति ग्रहे प्रवृत्तिं प्रति लाघवेनेदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकज्ञानत्वेन हि कारणत्वं वाच्यम् । रजतभेदग्रहाभावत्वेन कारणत्व एवातिगौरवात् । किंपुनरुक्तदोषवारणाय दोषप्रयुक्तत्वस्य कारणतावच्छेदकत्वे गौरवातिशये वक्तव्यम् । किंच सुषुप्त्यादौ प्रवृत्तिवारणाय रजतस्मृतिवैशिष्ट्यस्य तथात्वे । नच तत्र दोषप्रयुक्तत्वाभावादेव वारणमिति वाच्यम् । शुक्त्यादौ पुरोवर्तिनि गृहीते सादृश्याद्रङ्गस्मृतौ रजतस्यास्मृतौ च प्रवृत्त्यापत्तिवारणाय तादृशस्मृतिवैशिष्ट्यस्यावश्यं वाच्यत्वात् । एवं दोषत्वस्याननुगतानतिप्रसक्तस्य दुर्वचतया विशिष्य निवेशे कारणत्वानन्त्यादतिगौरवापत्तिरिति । नचानन्तविशिष्टज्ञानतद्ध्वंसप्रागभावादिकल्पनागौरवादल्पमेवोक्तकारणतागौरवमिति वाच्यम् । कारणत्वग्रहसमयेऽवच्छेदकोपस्थितेरेवावश्यकतया प्रमास्थलगृहीतविशिष्टज्ञानत्वस्योक्ताभावत्वस्य चोपस्थितौ कस्यावच्छेदकत्वमिति चिन्तायां तदानीमनावश्यकतयोक्तानन्त्यगौरवानुपस्थितौ च लाघवेन विशिष्टज्ञानत्वेऽवच्छेदकत्वग्रहे पश्चादुक्तानन्त्यगौरवस्य गृहीतस्यापि फलमुखत्वेनादोषत्वात् । कार्यकारणभावमूलकत्वेन सर्वपदार्थसिद्धेस्तस्योपजीव्यत्वेन तल्लाघवस्यैवाभ्यर्हितत्वात् । किंच शुक्तौ पुरस्थायामिदं रजतमिति गृहीतायां रङ्गे च पुरोवर्तिनीदं न रजतमिति गृहीते च रजतार्थिनः शुक्ताविव रङ्गे च प्रवृत्त्यापत्तिः । प्रवर्तकसामग्रीसाम्राज्यादतस्तदुद्देश्यकरजतार्थिप्रवृत्तौ दोषप्रयोज्यस्य तद्विशेष्यकरजतभेदग्रहाभावस्य कारणत्वं वाच्यम् । तथाच प्रमास्थले न ततो निर्वाहः । रजतविशेष्यकरजतभेदग्रहस्याप्रसिद्धेरिति विशिष्टबुद्धित्वेनापि कारणत्वस्यावश्यकतया द्विविधकारणत्वाभ्युपगमः । मन्मते च विशिष्टज्ञानत्वेनैकमेव कारणत्वमित्यपि लाघवम् । एवं यत्र वह्निमत्येव पर्वते वह्निव्याप्यहेतुभ्रमात्पर्वतो वह्निमानिति प्रमानुमितिः तत्र परामर्शस्य विशिष्टज्ञानत्वेन कारणत्वे परामर्शस्य भ्रमस्याभ्युपगमः । तत्र ज्ञानद्वयमभ्युपगम्य भेदाग्रहस्य कारणत्वाभ्युपगमे तस्मादेव कारणाद्वह्निशून्येऽपि पर्वतो वह्निमानित्यनुमितेरेव भ्रमात्मिकाया अभ्युपगम इति भ्रमो दुर्वारः । यच्चोक्तं कारणाभावान्न भ्रम इति तदप्यत एव निरस्तम् । दुष्टादिन्द्रियादेः प्रमाणादपि हि भ्रमः संभवत्येव । दावदग्धवेत्रबीजात्कदलीकाण्डोत्पत्तिदर्शनात् । एवंच विवादाध्यासितः प्रत्ययः पुरोवर्तिविशेष्यकरजतत्वप्रकारकः पुरोवर्तिनि रजतार्थिप्रवृत्तिजनकत्वात् प्रमावदित्यनुमानं भ्रमे मानम् । तादृशप्रवृत्त्यनुपपत्तिरेव विपक्षबाधिकेति निरपवादो भ्रम इति । अथापि भ्रमस्यान्यथाख्यातित्वमेवास्तु कृतं तत्र रजताभ्युपगमेन । पूर्वंगृहीतस्य स्मृतस्य देशान्तरस्थरजतस्योपनयसन्निकर्षेण प्रत्यक्षदृष्टधर्मिणि भानसंभवादितिचेन्न । ज्ञानस्य यथागृहीतवस्तुसिद्धिरूपतायाः पूर्वं व्यवस्थापितत्वेन भ्रमस्थले विशिष्टज्ञानावश्यकत्वे ज्ञानेनेदंसंबद्धरजतस्य गृहीतया तज्ज्ञानस्य तत्सिद्धिरूपतया तस्याभ्युपगमस्य दुर्वारत्वात् । किंचोक्तस्थले रजतं पश्यामि साक्षात्करोमीत्यादिप्रत्ययादस्ति तत्र रजतप्रत्यक्षं न तद्देशान्तरस्थरजतभानाभ्युपगम उपपादयितुं शक्यते । तत्कारणीभूतस्य रजतचक्षुःसन्निकर्षस्याभावात् । विशेषणविशेष्योभयसन्निकर्षो हि विशिष्टसाक्षात्कारहेतुः । नच तत्प्रकारकजन्यप्रमासाक्षात्कारं प्रत्येव विशेषणलौकिकसन्निकर्षो हेतुः । उक्तस्य भ्रमत्वेन तद्विरहेऽपि न क्षतिः । तत्प्रकारकभ्रमात्मकसाक्षात्कारं च दोषविशेषो हेतुरित्युक्तस्थले दोषस्य सत्त्वेन साक्षात्काररूपता तस्य साक्षात्कारित्वव्यञ्जकविषयतांप्रति लौकिकसन्निकर्षवद्दोषविशेषस्यापि प्रयोजकतया तस्यास्तत्र दोषतः सद्भावेन रजतं साक्षात्करोमीत्यनुभवोपपत्तिरिति वाच्यम् । लाघवेन तद्विषयकजन्यचाक्षुषप्रत्यक्षंप्रति तच्चक्षुःसन्निकर्षत्वेनैव हेतुत्वस्य वाच्यत्वात् । भ्रमत्वावच्छिन्नं प्रत्येव दोषस्यापि लाघवेन कारणत्वाच्चोक्तस्थले देशान्तरस्थरजतस्य प्रत्यक्षासंभवात् । मन्मते भ्रमस्थले रजतादेः प्रत्यक्षत्वेऽपि तस्य चाक्षुषत्वानङ्गीकारात् । रजताकारवृत्तेश्चक्षुरजन्यत्वेन तद्वारकचाक्षुषत्वस्य प्रत्यक्षे विरहेण चक्षुःसन्निकर्षस्य न व्यभिचारः । त्वया तु चाक्षुषत्वस्यैवाभ्युपगम्यतया सन्निकर्षं विना तदुत्पत्तेरसंभव एव । नच चक्षुषा रजतं पश्यामीति कथमिति वाच्यम् । चाक्षुषेदमाकारवृत्तितादात्म्यस्य रजताकारवृत्तावध्यासात् । नचोक्तकार्यकारणभावेन देशान्तरस्थरजतप्रत्यक्षस्य न वारणम् । तेन सह चक्षुषः संबन्धात् । सन्निकर्षस्य लौकिकालौकिकभेदेन द्विविधत्वात् । लौकिकसन्निकर्षविरहेऽप्यलौकिकस्य ज्ञानलक्षणस्य सत्त्वादिति वाच्यम् । अलौकिकसन्निकर्षे मानाभावात् । नच तदभावे सुरभिचन्दनमिति चाक्षुषे सौरभभानं न स्यात् । लौकिकस्य चक्षुःसंयुक्तसमवायरूपस्य सत्त्वेऽपि तस्य चक्षुरयोग्यसौरभप्रत्यक्षाहेतुत्वात् । घ्राणस्य लौकिकसन्निकर्षस्य दूरस्थेसति चन्दने सौरभेऽभावादित्यगत्या सौरभभानाय सौरभत्वभानाय वा चक्षुषः

स्वसंबद्धात्मसमवेतज्ञानं विषयता सौरभसौरभत्वाभ्यां संबद्धं सन्निकर्षरूपमभ्युपेयमेवं घटमहं जानामीत्यनुव्यवसाये घटभानायापि तदभ्युपेयमिति वाच्यम् । सौरभांशे चाक्षुषत्वाभ्युपगमे सौरभं साक्षात्करोमीति वा प्रत्यक्षयामीति वा सौरभं चक्षुषा जानामीति वा सौरभं साक्षात्कृतं दृष्टं चक्षुषा ज्ञातं प्रत्यक्षं मे सौरभमित्याद्यनुभवः स्यात् तस्य चाभावात् सौरभे चक्षुःसन्निकर्षस्य कल्पयितुमशक्यत्वात् । चक्षुषा चन्दनं साक्षात्करोमि जानामीत्याद्यनुभवस्यैव सद्भावात् तस्य चन्दने लौकिकसन्निकर्षेणैव संभवात् । नचैवं सौरभभानस्य का गतिरिति वाच्यम् । उद्बुद्धसंस्कारेण तद्भानसंभवात् । नचैवं तज्ज्ञानस्य सौरभस्मृतित्वापत्तिरिति वाच्यम् इष्टापत्तेः । नच प्रत्यक्षत्वस्मृतित्वसाङ्कर्यापत्तिरिति वाच्यम् । द्रव्यगतजातौ कथंचित्तस्य दोषत्वेऽपि गुणगतजातौ तस्यादोषत्वात् । किंच साङ्कर्यस्य किमनुगतत्वस्य बाधकत्वमुत जातित्वस्य । नाद्यः । जातीतरस्य सङ्कीर्णानुगतधर्मस्य लौकिकालौकिकत्वादेस्त्वयाप्यङ्गीकारात् । न द्वितीयः । जातित्व एव प्रमाणाभावात् गौर्गौरित्याद्यनुगताकारप्रत्ययादेर्गन्धसमवायिकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वादित्याद्यनुमानादेरनुगताननतिप्रसक्तधर्ममात्रे प्रमाणत्वात् । ननु नित्यत्वे सत्यनेकसमवेतत्वरूपजातित्वे गौः पृथिवीत्यादिप्रत्यक्षस्य सुतरामप्रमाणत्वात् इन्द्रियायोग्यपदार्थघटितत्वाद्धि तस्य तव पारिभाषिकमात्रं हि तत्स्वशिष्यमात्रज्ञापनीयमास्तां का नो हानिः । किंच संभवत्यपि न तत् ब्रह्मातिरिक्तस्य सर्वस्यैवानित्यत्वस्य व्यवस्थापितत्वात् समवायवस्याभावाच्च । समवायावगाहिप्रत्ययस्य तादात्म्येनैवोपपाद्यत्वात् । एवं सति यत्र चन्दने सौरभं न गृहीतं तत्र सुरभिचन्दनमिति बुद्धेश्चन्दनत्वलिङ्गकानुमितित्वमेवाभ्युपेयम् । नच पूर्वस्थले सौरभं स्मरामीत्यनुभवस्य सत्त्वेन स्मृतित्वोपगमसंभवेऽपि सौरभमनुमिनोमीत्यनुभवाभावान्नानुमितित्वोपगमसंभव इति वाच्यम् । यथाहि धूमदर्शनेन पामराणां वह्न्यनुमितावपि वह्निं जानामीत्येवानुभवो नानुमिनोमीति व्यञ्जकस्य व्याप्तिज्ञानादिजन्यत्वग्रहस्याभावात् । धूमज्ञानजन्यत्वमात्रग्रहेण कथमवगतमिति प्रश्ने धूमेनावगतमित्युत्तरस्य धूमेन वह्निं जानामीत्यनुभवसाध्यस्य दर्शनाज्जानासि तव वह्निज्ञानं किं प्रत्यक्षमुतानुमितिरिति प्रश्ने कानुमितिरिति न ज्ञायतेऽस्माभिरित्युत्तरदर्शनात् तथाकल्पनादेवमुक्तस्थले संस्कारजन्यत्वाप्रतिसन्धाने स्मरामीत्यपि न किंतु जानामीत्येव । तथा व्याप्तिज्ञानजन्यत्वाप्रतिसन्धानेनानुमिनोमीति किंतु जानामीत्येव यत्र तत्प्रतिसन्धानं तत्रानुमिनोमीति भवत्येव । अतएव कथं जानास्यत्र सौरभमिति प्रश्ने चन्दनेऽजस्रमुपलब्धं सौरभमिदमपि चन्दनमित्यनुमित्या जानामीत्युत्तरं परीक्षकाणाम् न कथंचिदपि चक्षुषा सौरभं जानामीत्युत्तरमिति । यत्त्वनुव्यवसाये घटभानानुरोधेन ज्ञानलक्षणप्रत्यासत्त्यभ्युपगम इत्युक्तं तदपि न ज्ञानस्वप्रकाशताया एव व्यवस्थापनात् ज्ञाने च विषयभासकसामग्र्याः सत्त्वात् । एवं ज्ञानलक्षणायाः प्रत्यासत्तित्वेऽनुमितिस्थले विधेयस्यापि तत एव भानसंभवादनुमानस्य प्रमाणान्तरता न स्यात् । नचालौकिकप्रत्यक्षसामग्र्यपेक्षया अनुमितिसामग्र्या बलवत्त्वकल्पनान्न तत्रालौकिकप्रत्यक्षसंभव इति वाच्यम् । दूरत्वदोषात्प्रत्यक्षसामग्रीविघटने स्थाणुर्वा पुरुषो वेति संशयानन्तरं स्थाणुत्वव्याप्यशाखादिमानयमिति विशेषदर्शने जाते तेनोत्तेजकेन प्रतिबन्धकत्वापाकृतौ स्थाणुरयमिति प्रत्यक्षं जायते तदुपपत्तये समानविषयकानुमितित्वावच्छिन्नंप्रति समानविषयकलौकिकप्रत्यक्षसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यम् । तदपेक्षया लाघवेन समानविषयकप्रत्यक्षसामग्रीत्वेनैव प्रतिबन्धकत्वं वक्तुमुचितमित्यनुमितिस्थले तस्याः सत्त्वेनानुमितेर्दुर्लभत्वापत्तेः । ज्ञानलक्षणप्रत्यासत्त्यनभ्युपगमे प्रत्यक्षसामग्र्यभावेनानुमितेः संभवात् । नचेदं रजतमित्यत्रापि सुरभिचन्दनमित्यत्रेव रजतांशे स्मृतित्वमेवास्त्विति वाच्यम् किं न स्याद्यदि हि रजतं साक्षात्करोमीत्यनुभवबाधो न स्यात् । अथ तव मते कथं तदुपपत्तिरिति चेदित्थम् । तथाहि पुरोवर्तिनि चक्षुःसन्निकृष्टे चक्षुर्द्वारा तत्रान्तःकरणे प्राप्ते सतीदमवच्छिन्नचैतन्यस्यान्तःकरणावच्छिन्नप्रमातृचैतन्यस्यैक्येन तदाश्रिता शुक्तित्वप्रकारिकाऽविद्यामूलाविद्याशक्तिरूपा तज्जन्या तूलाविद्यापदाभिधेया वा रजताकारेण रजतज्ञानाकारेण चोद्बुद्धरजतसंस्कारागन्तुकदोषविशेषसहकृता परिणमते । तथा सति रजतरूपविषयावच्छिन्नचैतन्यस्य तदाकारवृत्त्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यस्य चैक्याद्रजतस्य तज्ज्ञानस्य च प्रत्यक्षत्वोपपत्तिः । तज्ज्ञानप्रत्यक्षत्वं हि तदाकारवृत्त्यवच्छिन्नचैतन्यस्य तदवच्छिन्नचैतन्याभिन्नत्वमेव तच्च रजताकारवृत्त्यवच्छिन्नचैतन्यस्य रजतावच्छिन्नचैतन्येनाभेदादस्त्येव । अत्र चक्षुर्द्वारान्तःकरणे चन्दनदेशस्थे सति सौरभाकारवृत्तेरपि तद्देशस्थत्वात्सौरभस्यापि तद्देशस्थत्वात्सौरभस्य प्रत्यक्षत्वापत्तिः । तत्तदिन्द्रिययोग्यविषयावच्छिन्नचैतन्यस्य तत्तदिन्द्रियजन्यवृत्त्यवच्छिन्नचैतन्येऽभेदस्य विवक्षणे शुक्तिरूप्यादिज्ञानस्य प्रत्यक्षता न स्यात् । अन्तःकरणधर्मसुखादेरपि प्रत्यक्षता न स्यात् । तदुभयाकारवृत्तेरिन्द्रियाजन्यत्वात् उभयोरिन्द्रियायोग्यत्वाच्च । इन्द्रियसाक्ष्यन्यतरयोग्यत्वस्यान्यतरजन्यवृत्तित्वस्य च प्रवेशे शुक्तिरजतादेरन्तःकरणधर्मसुखादेः साक्षियोग्यत्वात् । तदाकारवृत्तेरधिष्ठानविधया साक्षिजन्यत्वात् तदुभयप्रत्यक्षसंग्रहेऽपि धर्माधर्मादिगोचरशाब्दादिवृत्तिदशायां वृत्तिद्वारा तस्य साक्षियोग्यत्वात् तदाकारवृत्तेः साक्षिजन्यत्वाच्च तज्ज्ञानस्य प्रत्यक्षत्वं स्यादिति । तत्तदिन्द्रियतत्तत्साक्ष्यन्यतरजन्यतत्तदाकारवृत्त्यवच्छिन्नचैतन्यस्य तत्तदिन्द्रियकेवलतत्तत्साक्ष्यन्यतरयोग्यतत्तद्विषयावच्छिन्नचैतन्याभिन्नत्वं तत्तद्विषयप्रत्यक्षत्वमिति विवक्षणीयम् । कैवल्यं च स्वयोग्यत्वे प्रमाणवृत्त्यनपेक्षत्वम् । धर्मादिकं प्रमाणवृत्तिमपेक्ष्यैव साक्षियोग्यमिति न तस्य केवलसाक्षियोग्यत्वम् । प्रातिभासिकस्य सुखादेश्च स्वाकारवृत्तिमपेक्ष्य साक्षियोग्यत्वेऽपि सा वृत्तिर्न प्रमाणजन्येति तस्य केवलसाक्षियोग्यत्वमव्याहतम् । विषयप्रत्यक्षत्वमपि विषयावच्छिन्नचैतन्यस्य स्वाकारवृत्त्युपहितप्रमातृ-

चैतन्याभिन्नत्वं तदपि शुक्तिरूप्यस्याव्याहतम् । रूपादेः प्रत्यक्षतादशायां परिमाणादेः प्रत्यक्षतावारणायोपहितान्तम् । अथ रजतत्वावच्छिन्नोत्पादिकाया रजतावयवादिघटितसामग्र्यास्तत्र विरहेण कथं रजतोत्पत्तिरिति चेन्न । व्यावहारिकसंसर्गेण रजतत्वावच्छिन्नस्यैव रजतावयवादिघटितसामग्रीकार्यत्वात् । अनुभवसिद्धप्रत्यक्षत्वोपपत्तये रजतोत्पादस्यावश्यकतया व्यावहारिकत्वप्रवेशे गौरवस्यादोषत्वात् । योग्यचक्षुःसंयुक्तसमवायकार्यतावच्छेदककोटौ त्रसरेणोरनुभवसिद्धप्रत्यक्षत्वोपपादकद्रव्यान्यत्वप्रवेशगौरववत् । दोषरजतस्मृतिशुक्तित्वाज्ञानघटितसामग्र्या रजतोत्पादसंभवात्तत्र च रजतत्वस्य प्रातीतिक एव संसर्ग इति व्यावहारिकसंसर्गेण तस्य रजतत्वावच्छिन्नत्वाभावात् । रजतावयवादिघटितसामग्र्यभावेऽपि क्षत्यभावात् । नच तत्र रजतत्वस्य व्यावहारिकरजतसामान्यस्यारोप एवास्तु तावतैवेदं रजतमित्याकारनिर्वाहात् अलं रजतोत्पत्त्येति वाच्यम् । व्यावहारिकरजतत्वस्य सन्निकर्षविरहेण प्रत्यक्षानुपपत्तेस्तदारोपस्य वक्तुमशक्यत्वात् । रजतत्वस्योत्पादस्वीकारे प्रत्यक्षोपपत्तिसंभवेऽपि तस्येष्टसाधनतावच्छेदकतयाऽगृहीतत्वेन रजतार्थिप्रवृत्तिर्न स्यात् । रजतत्वत्वेन तद्ग्रहसंभवेऽपि तेन रूपेणेदं रजतमित्यत्राप्रतिभासमानतया रजतत्वत्वविशिष्टरजतत्वस्य सखण्डस्योत्पादाभ्युपगमस्याशक्यत्वादखण्डस्यैव रजतत्वस्योत्पत्तेर्वाच्यतया तत्र प्रवृत्त्यनुपपत्तेरुक्तत्वात् अतो व्यावहारिकरजतधर्मैः रजतत्वादिभिः संसृष्टस्य रजतस्योत्पत्तेरभ्युपगन्तव्यत्वात् । प्रवृत्तौ चेष्टसाधनतावच्छेदकरजतत्वस्य व्यावहारिकप्रातीतिकत्वौदासीन्येन तादात्म्यमात्रस्य प्रयोजकत्वात् । तदित्थंसिद्धे प्रातिभासिके रजतादौ स्वाप्नपदार्थे चोत्पत्तिमतस्तस्य विनाशस्यावश्यकतया समवायिकारणादिनाशस्य तन्नाशकस्याभावात् प्रतीतिनाशे तत्पुरुषस्यान्यस्य च तद्दर्शनाद्यभावात्प्रतीतिनाशकस्यैव तन्नाशकत्वमुपेयत इति यावत्प्रतीतिकालं तदवस्थानं भवति । नेदं रजतमियं शुक्तिरिति बाधे जाते नष्टे चाज्ञाने तत्संस्कारस्याप्युच्छेदः । तदनन्तरं मिथ्यैव रजतमभादिति जीवन्मुक्तानां प्रपञ्चावभास इव बाधितानुवृत्तिरेव युगपदनेकपुरुषाणामिदं रजतमिति विभ्रमे जातेऽपीदमवच्छिन्नचितिनैकस्य रजतस्योत्पत्तिरुपादानाज्ञानभेदादेकस्य शुक्तित्वज्ञाने जातेऽप्यन्यस्य तदभावे तथैव रजतप्रत्ययाच्चेति सृष्टिदृष्टिवादेऽपि प्रातिभासिकस्थले दृष्टिसृष्टिरेवोपेयत इति । अपरश्चोत्तमाधिकारिणंप्रति दर्शितो दृष्टिसृष्टिवादः सचानतिशुद्धान्तःकरणैर्दुर्बोधः । सच सिद्धे प्रातीतिके शुक्तिरजतादौ स्वाप्नप्रपञ्चे च बाधात्पूर्वं सत्तया प्रतीयमानत्वेन तुच्छविलक्षणे वियदादिप्रपञ्चानामपि तथात्वमेवोचितम् । तथा सति यथा शुक्तिरजतादीनां स्वकारणाद्रजतावयवादित उत्पत्त्यनन्तरं न दृष्टिः प्रतीतिः । किंतु शुक्तित्वप्रकारकाज्ञानात्स्वाकारवृत्तौ जातायां तदवच्छिन्नचिद्रूपदृष्टौ सत्यां सृष्टिरुत्पत्तिस्तथैव व्यावहारिकत्वेन संप्रतिपन्नानां प्रपञ्चानामपि स्वस्वकारणादुत्पत्तौ सत्यामुत्तरकालेन दृष्टिरपि त्वद्वितीयब्रह्माज्ञानात् स्वाकारवृत्तौ सत्यामुत्पत्तिरज्ञाततादशायां स्थितौ मानाभावात् । एवंच स्वज्ञानव्याप्यत्वं स्वीयाज्ञानाभावव्याप्यत्वं वा दृष्टिसृष्टिरिति पर्यवसन्नम् । व्याप्यव्यापकभावः कालिके न बोध्यः । नच भ्रमपूर्वं शुक्तित्वग्रहे भ्रमस्यासंभवः । तदग्रहे शुक्तेरेवाभावात्कस्याज्ञानमुपादानं रजतस्य स्यादिति वाच्यम् । शुक्तित्वासत्त्वेऽपि तदज्ञानसत्त्वे बाधकाभावात् तज्ज्ञानेनैव तदज्ञानस्य विरोधात् । अथ यादृशं घटमालोच्य निमील्याक्षिणी स्थितस्य कियत्कालानन्तरं चक्षुरुन्मीलने तादृशघटोपलब्धौ सोऽयं घट इति प्रत्यभिज्ञापूर्वापरदर्शनगोचरस्यैक्ये प्रमाणीभूता मध्ये चादर्शनकालेऽपि स्थितिं साधयति नहि मध्ये विनाशे तादृशैक्यं संभवति । नच दीपप्रत्यभिज्ञायां पारिमाणभेदादिग्रह इव किमपि बाधकमस्तीति चेन्न । स्वज्ञानकाले घटवत् प्रत्यभिज्ञानकाल ऐक्यस्य जननात् । ततोऽन्यादृश ऐक्ये तस्या अप्रमाणत्वात् । तत्स्थानात् पूर्वदृष्टघटमपनीय तत्तुल्यसदृशघटान्तरस्य तत्रावस्थानेऽपि तादृशप्रत्यभिज्ञानात्तस्या ऐक्ये प्रमाणत्वे तयोरप्यैक्यसिद्ध्यापत्तेः । नचापनेतृवाक्येन भेदग्रहात्प्रत्यभिज्ञानेऽप्रामाण्यग्रहे प्रातीतिकस्यैक्यस्य बाधान्न तत्रैक्यम् । यत्रतु न भेदग्रहः प्रत्युत मध्येऽपि द्रष्टुः पुरुषान्तरस्य वाक्यादैक्यप्रतीतिरेव तत्रोक्तप्रत्यभिज्ञानात् भवत्येवैक्यसिद्धिरिति वाच्यम् । क्वचिदपनयनस्थले केनचित्पुरुषेण सोऽयं घट इत्युक्ते परस्यायं प्रतारयतीति वाक्यात्प्रतारकत्वग्रहे त्वदुक्तस्थलेऽपि प्रतारकत्वसंदेहेनाप्रामाण्यसंशयसंभवादित्यप्रमात्वेन गृहीतजातीयत्वात्कचित्क्वचित्प्रतारकत्वसंदेहपारम्पर्येणाप्रामाण्यग्रहात् सर्वत्रैवाप्रामाण्यशङ्काकवलितत्वस्य प्रत्यभिज्ञायां संभवेन तस्या ऐक्यस्यासाधकत्व उक्तक्रमेण स्थैर्यस्यासिद्धेः । अतएव कुलालेन निर्मितो मया क्रीतो दृष्टश्च चैत्रेण यो दृष्टो मयापि स एवेत्यादिप्रत्ययादपि न दृष्टिसृष्टिस्तत्र हि प्रतिपुरुषं प्रतिज्ञानं च विषयभेदेनोक्तप्रतीतेरसंभवः स्यादिति निरस्तमुक्तप्रतीतेरपि भ्रमत्वात् । मन्दालोके रज्जौ युगपदनेकपुरुषाणां सर्पभ्रमे पलायमानानां संवादेन सर्वपुरुषीयसर्पैक्यप्रत्ययवन्नहि प्रातिभासिकस्य तत्तत्सर्पस्य कथंचिदैक्यं संभवतीति । नचोक्तरीत्या प्रामाण्यसंशये प्रवृत्त्यादिव्याघात इति वाच्यम् । अप्रामाण्यसंशयेऽपि सकम्पप्रवृत्तिसंभवात् । यावदप्रामाण्यशङ्कावतरेत्तत्प्रागपि प्रवृत्तेः संभवाच्च । नह्येवं वस्तुसिद्धौ गतिः ह्रदो वह्निमानित्यत्राप्रामाण्यग्रहात्पूर्वं ततो वह्निसिद्धिः स्यात् । नचैवं किमपि न सिद्ध्येत् । सर्वत्रैवमप्रामाण्यशङ्कासौलभ्यादिति वाच्यम् । ब्रह्म हि स्वप्रकाशमेव । तत्राप्रामाण्यशङ्कापिशाची न किमपि कर्तुमीष्टे । अन्यस्य सर्वस्यासिद्धिर्मिदभिमतैव । यथायथा ह्यनुपपत्तिस्तथातथाऽघटितघटनापटीयस्त्ववन्मायाप्रभवत्वेन प्रपञ्चस्यानिर्वाच्यतैव सुदृढा स्यादिति । अथ दण्डचक्रादिव्यापारान्मृदः कुलालगृहे भूयो घटोत्पत्तिरुपलब्धा । तादृशव्यापाराद्यभावे कुविन्दगृहे च घटानुत्पत्तिरिति मृद्दण्डादिकारणकत्वनिर्णये सति प्रातीतिकत्वं दुर्घटम् । नहि मृदादीनां स्थायित्वं विना तदुपपद्यते । नापि मृदादिजन्यस्य घटस्य प्रतीतिनाशेन नाशो युक्त एवमुक्तव्यापारात्प्राक् विस्फारिताक्षस्यापि न

घटोपलब्धिरुत्पत्त्यनन्तरमुपलब्धिः । सापि निमीलिताक्षस्य नेति भूयोग्रहात् । घटचक्षुःसन्निकर्षजत्वं घटप्रत्यक्षस्य सिद्धम् । प्रत्यक्षपूर्वसत्त्वं साधयतीत्यतोऽपि न तस्य प्रातीतिकत्वमेवमुपलभ्य घटजन्म तत्रावस्थितस्य यस्मिन्दण्डपातस्तस्यादर्शनं यत्र न तस्य दर्शनं दण्डपातात्प्राग् जन्मानन्तरं घटसत्त्वं व्यवस्थापयतीत्यतोऽपि न प्रातीतिकत्वम् । एवं सौदामिनीसंपाते किंचिद्वस्तूपलभ्यानन्तरमपश्यन्नेव तत्तदानयनाय प्रवर्तते प्राप्नोति च तत्सा प्रवृत्तिः । प्राप्तिश्च तावत्कालं तस्यानवस्थानेन घटत इत्यतोऽपि न प्रातीतिकत्वमितिचेन्न । कुलालगृहमुपलब्धमित्युपलब्धिकाले गृहमुत्पन्नमनन्तरं गृहे कुलालोपलब्धौ सोऽप्युत्पन्नो दण्डाद्युपलब्धौ दण्डादिस्ततो घटोपलब्धौ घट उत्पन्नः कार्यकारणभावग्रहे तत्क्षण एव कारणत्वकार्यत्वे तत्तद्विशिष्टं दण्डादिकं घटादिकं चाज्ञानकाले तत्सत्त्वे मानाभावात् । निदर्शनं चात्र स्वप्ने तथा दर्शनेऽपि न स्थायिदण्डादितः स्थायिघटाद्युत्पत्तिः अपितु तत्तज्ज्ञानम् । ज्ञानसमकालतुच्छविलक्षणदण्डघटादिश्च । नच स्वप्ने पूर्वानुभूतस्मरणमात्रमपरोक्षावभासानुभवविरोधात् । अपरोक्षावभासस्थले तत्काले विषयावश्यंभावस्य व्यवस्थापनादिति । कारणत्वादिग्रहस्य प्रातीतिकत्वाविरोधित्वात् । एवं चक्षुःसन्निकर्षाज्ञाने तस्यैवाप्रामाणिकत्वात् ज्ञाने सोऽपि प्रातीतिकस्तत्कारणत्वाज्ञाने तस्यासिद्धिः तज्ज्ञाने तदपि प्रातीतिकमेवेति तस्यापि घटप्रातीतिकत्वाविरोधित्वात् । एवं घटप्राथमिकप्रत्ययानन्तरं दण्डपातप्रत्ययनाशप्रत्ययादितः पूर्वं मध्ये यावन्ति घटप्रत्यक्षाणि तावतां प्रातीतिकानामुत्पादादप्रत्यक्षकाले सत्त्वे मानाभावात् । नाशादेरपि प्रातीतिकत्वाविरोधित्वात् । एवं बाधात्पूर्वं प्रातीतिकत्वानिर्णयेन स्थायित्वभ्रमादेव प्रवृत्त्युपपत्तेः भ्रमात्प्रवृत्तेर्बहुलं दर्शनात् । प्राप्तेश्चैतत्कालीनघटज्ञानादनन्यत्वात्तदानीं घटान्तरोत्पत्तेः मध्ये घटाप्रत्ययकाले घटसत्त्वे मानाभावादित्युक्तप्रवृत्त्यादेरपि प्रातिभासिकत्वाविरोधित्वात् । अथ दण्डादिकं यदि न घटकारणं नच घटचक्षुःसंयोगादिकं तज्ज्ञानकारणं तदा कुलालगृह एव न कुविन्दगृहे तत्तत्काल एव न कालान्तरे घटज्ञानमित्यत्र नियामकं दुर्लभं स्यात् । ब्रह्माज्ञानस्य सत्त्वाविशेषादितिचेन्न । कुलालगृह एव दण्डादिकं न कुविन्दगृह इत्यत्र हि ते किं नियामकम् । कुलालस्य दण्डादिसंमेलनप्रवृत्तिः कुविन्दस्य तदभावः कुलालस्यैव सा प्रवृत्तिः न कुविन्दस्येत्यत्रैव किं नियामकम् । इष्टसाधनत्वज्ञानतदभावौ तत्रैव किं नियामकमेवं दण्डादिसामग्री तत्रैव नान्यत्रेत्यादावपि नियामकपर्यनुयोगपरम्परेति । तद्वारणाय प्रवाहानादिज्ञानशुभाशुभकर्मसंस्कारात्मकभावनादृष्टचक्रस्यैव शरणीकरणीयतया तस्य लाघवेन विषयेषु कारणत्वमप्रकल्प्य ज्ञानं विना विषयस्य नृशृङ्गादिकल्पतापत्त्यावश्यके तत्तद्विषयज्ञान एव कारणत्वस्योचितत्वात् । तस्यैवाविद्यासहकारिणः कुलालगृहे तत्तत्काल एव घटज्ञानं न कुविन्दगृह इत्यत्र घटस्थितिकालत्वेन तव संप्रतिपन्नेषु तत्तत्कालेषु तत्तद्देशेषु घटज्ञानं नान्यत्रेत्यत्रापि च ममापि नियामकत्वस्याभ्युपेयत्वात् । नच घटज्ञानत्वेन कार्यत्वापेक्षया घटत्वेन कार्यत्वे लाघवमिति वाच्यम् । यत्र यत्र हि मया घटज्ञानमुपेयते तत्र तत्र त्वयाभ्युपेयत इति घटज्ञानत्वावच्छिन्नं प्रत्यदृष्टस्य त्वयापि कारणत्वमिष्यत एव । कार्यमात्रं प्रत्यदृष्टस्य त्वया कारणत्वाभ्युपगमादिति गौरवविरहात् । घटं प्रत्यदृष्टस्य त्वयापि कारणत्वमभ्युपेयत एव ममापि तदभ्युपेतं चेत्तथापि हि गौरवं न स्यादेव । घटाद्यनन्तकार्येषु दण्डाद्यनन्तकारणत्वाकल्पनेन घटचक्षुःसंयोगतत्क्रियातत्कारणत्वाद्यकल्पनेन च ममातिलाघवाच्च । नच यत्र ममैकघटकल्पनं तत्र तव कालपुरुषभेदेनानेकघटकल्पनमिति गौरवमिति वाच्यम् । स्थायित्वपक्षेऽनवरतपरिस्पन्दमानपवनाद्यनन्तपरमाणवनन्तविभुजीवाकाशादिसंयोगकल्पनागौरवचिन्तायां तावत्परमाणुकल्पनागौरवचिन्तायां चोक्तगौरवस्यात्यल्पीयस्त्वात् । नच गुणादिज्ञानस्थल उक्तगौरवाभावात्तत्र तव प्रागुक्तगौरवस्यावर्जनीयत्वमिति वाच्यम् । गुणादीनां द्रव्यमुपादानं तवेति तस्य गुणाद्युपजीव्यत्वेन तत्र चिन्तायामुक्तयुक्तिभिस्तस्य सिद्धे प्रातीतिकत्वे गुणस्य स्थायित्वासंभवेनोक्तगौरवस्यादोषत्वात् । वस्तुतस्तु प्रातीतिकप्रतीत्योरेकसामग्रीप्रभवत्वेन भेदस्य वक्तुमशक्यतया घटतदाकारवृत्त्योरेकतया रूपादितदाकारवृत्त्योरप्येकतया वृत्तेस्त्वदभिमतज्ञानस्य च समसंख्यत्वात्तत्कारणकल्पनायाश्च समानत्वात् । स्थायितयापि रूपाद्यभ्युपगमेऽनन्ततादृशपदार्थकल्पनागौरवं हि तवैवातिविपुलम् । नच घटं पश्यामीत्यनुभवेन घटस्य ज्ञानकर्मतयावगाहनात्स्वस्य च स्वकर्मत्वासंभवादयुक्तमिदमिति वाच्यम् । स्तोकं पचतीत्यादाविवाभेदस्यैव द्वितीयया बोधनात् तदतिरेकेण ज्ञानकर्मत्वस्य दुर्वचत्वात् अन्यस्थलीयकर्मत्वविलक्षणमेव हि तद्वाच्यम् । तद्विषयत्वमभेदो नेत्यत्र प्रमाणस्य वक्तुमशक्यत्वात् । प्रत्युतोक्तलाघवसहकृतोक्तानुभवस्याभेद एव प्रमाणत्वात् । नचैवं बौद्धमतात्को विशेषो ज्ञानमात्रस्यैवाभ्युपगमादिति वाच्यम् । आशयानवबोधात् । न्यायादिनये यस्य घटस्य दण्डादिसामग्रीजन्यस्य यदा चक्षुरादिना ज्ञानं सृष्टिदृष्टिपक्षे च वेदान्तिनामन्तःकरणनिर्गमनेन तद्घटप्रदेश एव यत्प्रमातुर्ज्ञानं तस्य घटस्यादृष्टादिसहकृताविद्यया तत्कालमुत्पादितस्य स्वप्रकाशवृत्तिमपरोक्षां सृष्टिदृष्टिपक्षाभिमतां न्यायमतसिद्धज्ञानसब्रह्मचारिणीमपलप्य सुखादेरिव स्वप्रकाशापरोक्षरूपता तदैव तं प्रत्येवाभ्युपेयते सृष्टिदृष्टिपक्षे यावत्कालं विरोधिवृत्त्यन्तरानुदये तद्वृत्तिसत्त्वं तावत्कालं तादृशस्य तस्यैव सत्त्वमिति नैकान्ततः क्षणिकत्वम् । नापि बाह्यस्थूलत्वानुभवविरोधः तत्सूक्ष्मावस्थारूपसंस्कारस्य सुषुप्त्यनन्तरं प्रबोधे पुनस्तथैव भानोपपादनायाभ्युपगमेन न निरन्वयविनाशः । सदधिष्ठिताविद्यापरिणामस्य सद्विवर्तस्याविद्यासहकृतसद्विवर्तमात्रस्य वा तस्याभ्युपगमेन न निरधिष्ठानभ्रमाङ्गीकार इति बौद्धमताद्बहुविशेषस्य सद्भावात् । नचैवं ज्ञानात्मकस्य तस्य स्थायित्वेऽपि न ज्ञातैकसत्त्वनियमभङ्ग इति स्थायित्वमेवास्त्विति वाच्यम् । तथा सति यावत्सत्त्वमेव हि घटं जानामीत्यनुभवापत्तेः । सर्वपुरुषं प्रत्येकस्यैव स्थायिन-

स्तथात्वेनैकस्येवान्येषामपि तदानीं तादृशानुभवापत्तेरित्युक्तरीतेरेवाभ्युपेयत्वात् । अथ ज्ञानस्य चक्षुराद्यजन्यत्वे ज्ञानस्य विषयस्य वा चाक्षुषत्वादिकं न स्यात् । तज्जन्यत्वे चक्षुरादीन्द्रियस्यापि दृष्टिसृष्टेरेवाभ्युपगन्तव्यतया तज्ज्ञानमावश्यकम् । अन्यथा चक्षुरादीनामभावप्रसङ्गेन तज्जन्यत्वं न स्यात् । एवं तज्ज्ञानस्याप्यनुमानादिजन्यत्वाभावेऽनुमितित्वादिकं न स्यात् । तज्जन्यत्वे तज्ज्ञानमावश्यकमित्यनवस्था । एवं शरीरान्तःकरणादिष्वप्यविद्याजीवेशतद्विभागाविद्याचित्संबन्धभावनादृष्टादिष्वपि प्रसङ्ग इति चेन्न । दृष्टिसृष्टिसिद्धान्तज्ञानविरहवतां देहेन्द्रियान्तःकरणविषयस्थायित्वज्ञानचक्षुरादिकार्यकारणभावभ्रमवासनामूलकचाक्षुषत्वादिप्रतीतिमात्रत्वाच्चाक्षुषत्वादेरवास्तवत्वेन तस्य घटादिज्ञाने चक्षुरादेरकारणतया पूर्वसद्भावानपेक्षणेनावश्यं तत्पूर्वं दृष्टिसृष्टेरुपगन्तव्यताविरहेणोक्तानवस्थाविरहात् । किंच जीवादीनां षण्णामनादित्वमेव न तत्र दृष्टिसृष्ट्यभ्युपगमः । अविद्यायाश्चानादित्वं प्रवाहानाद्यदृष्टभावनादिमदन्तःकरणविषयसूक्ष्मावस्थाविशिष्टाया एवाभ्युपेयते । येषामैन्द्रियकत्वं परैरभ्युपेयते तेषामेव दृष्टिसृष्टेरुपगमादित्यविद्यादौ दृष्टिसृष्ट्यभ्युपगमप्रयुक्तदोषासंभवात् । नच सूक्ष्मावस्थाभ्युपगमे सांख्यमतप्रवेशः । तस्याः परमार्थसत्त्वस्य तेनाभ्युपगमात् । अस्माभिस्तदनभ्युपगमात् । तादृशसूक्ष्मावस्थाभिप्रायेणैव बौद्धाभिमतक्षणिकत्वनिरासाय तत्रतत्र स्थायित्वोपन्यासः । नच तत्र मानाभावः । तत्त्वज्ञानं विना कस्याप्यत्यन्तसमुच्छेदासंभवेन केनचिद्रूपेण सत्त्वस्यावश्यकत्वात् । एवंच चक्षुरादीनां जनकत्वेऽपि न क्षतिः । तेषामतीन्द्रियत्वेन तत्र दृष्टिसृष्टेरनुपगमात् । संयुक्तस्य हि न कारणत्वम् अपितु संयोगोपधायकत्वविशिष्टस्येति नातिप्रसङ्गो न विषयस्य ज्ञानपूर्वकाले सत्वप्रसङ्ग इति । अत्र जीवब्रह्मविभागस्यापि दृष्टिसृष्ट्युपगमे सुषुप्तौ तदभावेन तद्विनाशे मुक्तस्य पुनरावृत्तिप्रसङ्गः । एवं जीवब्रह्मैक्यस्य मोक्षस्य दृष्टिसृष्टौ तन्नाशे मोक्षाभावप्रसङ्गः । एवं भावनाया दृष्टिसृष्टौ सुप्तोत्थितस्य पूर्वदृष्टस्य स्मरणं न स्यात् । स्याद्वापूर्वादृष्टस्यापि । एवमदृष्टस्यापि दृष्टिसृष्टौ कृतनाशाकृताभ्यागमप्रसङ्ग इत्यादयो दोषा निरस्ताः । तेषु दृष्टिसृष्ट्यनभ्युपगमात् । नच दृष्टिसृष्टिपक्षे भ्रमबाधयोरेकविषयकत्वानुपपत्तिः । यथाज्ञानं सृष्टिस्वीकारेण भ्रम इदमात्मकं बाधे त्वभावसंसृष्टं रजतादिकमिति तयोर्भिन्नविषयकत्वादिति वाच्यम् । सारूप्यादेव स्वप्नवदुपपत्तेः तद्धर्मावच्छिन्नबुद्धौ तद्धर्मावच्छिन्नाभावनिश्चयत्वेन बाधकत्वाभ्युपगमात् । रजतत्वस्यानादेः स्वीकारात् । यद्वा रूप्यं नास्तीति बुद्धौ सृष्टिदृष्टिपक्ष एकरजतविषयिण्यां बाधकतावच्छेदकशक्तिर्यथा ह्यभ्युपेयते तथा दृष्टिसृष्टिपक्षे विभिन्नरजतगोचरायामपि रूप्यं नास्तीत्यत्रैव । ननु विभिन्नगोचरायां रङ्गं नास्तीत्यत्र फलबलकल्प्यत्वाच्छुक्तेरेवं च रजतत्वस्य प्रतिदृष्टिभिन्नत्वेऽपि न क्षतिः । अथवा नेदं रजतमिति बुद्धिरभावस्यैव दृष्टिसृष्टिर्न रजतस्य तदानीं तस्येन्द्रियागोचरत्वात् । इन्द्रियगोचर एव हि दृष्टिसृष्टिः । कथमन्यथा संस्कारादृष्टादौ न दृष्टिसृष्टिः । दृष्टौ सत्यां सृष्टिर्हि साक्षात्करोमीत्यस्यान्यथानुपपत्त्या नहि तत्र रजतं साक्षात्करोमीति प्रत्ययः किंत्विदं रजतमित्यत्रैवेति तदानीमेव रजतस्य दृष्टिसृष्टिः । तस्य स्मृतौ नेदं रजतमिति बुद्धिः । स्मृतरजतसंसृष्टाभावस्यैव सृष्टिरिति समानविषयत्वमपीति । यदि यथाज्ञानं विषयसिद्धिरित्यनादिभावातिरिक्ताखिलस्यैव दृष्टिसृष्टिस्तदास्तु रजतस्याभावसंसृष्टस्योक्तप्रतीतिः सृष्टिः परंतु विद्यमानविषयानुमितिशाब्दादिस्थले कथंचिद्विशेष्यविशेषणयोर्विशिष्टस्य वा दृष्टिसृष्टिसंभवेऽप्यतीतानागतविषयकानुमित्यादिस्थले प्रतीतिसमकालविषयस्य कथं सृष्टिः स्यात्तस्यातीतत्वाद्यसंभवात् । भस्मादिलिङ्गेनात्र वह्निरासीत् सामग्रीदर्शनेनात्र भविष्यतीत्यनुमितिर्हि जायते तया विषयस्यातीतत्वादेरवगाहनात् । तस्मादतीतादिकाले यस्य दृष्टि(सृष्टि)स्तद्विषयानुमितिमात्रं न विषयसृष्टिरित्युपेयम् । अथवा यथाऽन्यदेशसंबद्धतयाऽन्यदेशस्थस्य विषयस्य भ्रमे विचित्रशक्तिमन्माया तादृशविषयरूपेण भ्रमकाले परिणमते तथान्यकालसंबद्धतयान्यकालस्थविषयात्मनापि प्रतीतिकाले परिणमेतेत्यत्र किमाश्चर्यम् । नचोक्तानुमितेरभ्रान्तत्वं सर्वानुमतं विरुध्येतेति वाच्यम् । ब्रह्मज्ञानातिरिक्तस्य सर्वज्ञानस्य भ्रमत्वस्येष्टत्वात् । नच व्यवहारकालेऽपि भ्रमत्वापत्तिरिति वाच्यम् । दृष्टिसृष्टिपक्षे सर्वस्य व्यावहारिकज्ञानस्यापि स्वाप्नविभ्रमतुल्यत्वाङ्गीकारेणोक्तस्यापीष्टत्वात् । दृष्टिसृष्ट्यज्ञानेनानुमितिविषयस्यातीतत्वादिना प्रतीतस्य तत्कालसृष्ट्यज्ञानेन परमप्रमात्वं हि न गृह्यत इति । अथैवं सूक्ष्मावस्थाभावनादृष्टादेरपि दृष्टिसृष्टिरेव स्यात्तत्रानुमित्यादेस्तददृष्टिरूपत्वे तस्य स्थायिता न स्यात्तस्यापि सूक्ष्मावस्थाभ्युपगमेऽनवस्था स्यादितिचेन्न । सूक्ष्मावस्थादिविषयकनिर्विकल्पकाविद्यावृत्तेस्तदुत्पत्तिक्षण एवाभ्युपगमेन तदवच्छिन्नसाक्षिरूपतदृष्टेः सुषुप्तिप्रलयादावपि संभवान्निर्विकल्पकत्वाच्च न तदनुभवः । नचैवमपि न स्थायित्वमिति वाच्यम् । तद्धारया एकस्या एव वा फलानुरोधेन सकलवृत्तिविरोधशून्यायाः कल्पनाद्वृत्तियौगपद्यादेरस्माभिरभ्युपगमात् । नच सृष्टिदृष्टिपक्षादेतदभ्युपगमेनात्र गौरवमिति वाच्यम् । तत्रापि सुषुप्त्यादावज्ञानाकारायावृत्तेः स्वीकारेण तस्या एव सूक्ष्मावस्थाद्याकारत्वस्याभ्युपगमात् । नचैवं नाहमवेदिषमितिवत्सूक्ष्मावस्थादिकमवेदिषमित्यपि स्यादिति वाच्यम् । तदंशे निर्विकल्पकत्वाभ्युपगमेन तदुपरागेण तत्प्रत्यक्षासंभवात् । सविकल्पकत्वनिर्विकल्पकत्वयोः परस्परविरहरूपत्वाद्विरोध इति न वाच्यम् । सांसर्गिकविषयत्वानिरूपिततदन्यविषयताकत्वस्यैव निर्विकल्पकत्वरूपत्वात्प्रकारताशून्यत्वस्यातद्रूपत्वात् । अथवा स्वकारणात्सूक्ष्मावस्थादिकं स्वाकारनिर्विकल्पकवृत्यनन्यात्मकमेवोत्पद्यते त्वदभिमतनाशकस्यैव फलान्यथानुपपत्त्यादिभिर्नाशकत्वाभ्युपगमेन स्थायित्वासंभवात् । स्वज्ञानात्मकघटादीनां स्थायित्वे सर्वदानुभवप्रसङ्गाद्यापत्तेरिवात्र बाधकाभावात् । नच तेषामपि निर्विकल्पकात्मकत्वाभ्युपगमेनोक्तापत्तिसंभव इति वाच्यम् । घटं जानामीत्यनुभवस्तर्हि कदाचिदपि न स्यात् । नचागन्तुकचाक्षुषादिवृत्त्या तत्संभवोऽ-

नुमानादिना सूक्ष्मावस्थादितदाश्रयवैशिष्ट्यज्ञानानुभववदिति वाच्यम्। चाक्षुषादिवृत्त्यन्यकाले तत्स्थितावनुमानाद्यन्यकाले सूक्ष्मावस्थादिस्थितावुक्तप्रमाणवत्प्रमाणाभावेनानुमानाद्यतिरिक्तनिर्विकल्पकात्मकत्ववचाक्षुषाद्यतिरिक्तनिर्विकल्पकत्वाभ्युपगमस्य गौरवादिभिरसंभवात्। सर्वत्र निर्विकल्पकस्य वस्तुसाधकत्वे मानाभावात्सूक्ष्मावस्थादावगत्या तदभ्युपगमाच्चेति। अथेदं रजतमितिवन्नेदं रजतमित्यस्यापि प्रातिभासिकविषयकत्वे कथं बाधकत्वमिति चेन्न। बाधकतायामन्यूनसत्ताकत्वं हि प्रयोजकं स्वाप्नस्य स्वाप्नेनापि बाधदर्शनात्। नचोभयोस्तुल्यत्वे बाध्यबाधकभावे विनिगमनाविरह इति वाच्यम्। बाध्यतायां पूर्वत्वस्य बाधकतायामुत्तरत्वस्य तन्त्रत्वात्। पूर्वमबाधितोत्तरस्य जन्मासंभवात्। प्रमोत्तरभ्रमस्थलेऽपि प्रमाबाधकस्यैव भ्रमस्योत्पादात्। तदुत्तरं प्रमान्तरोत्पादेन भ्रमस्य बाधे पुनः पूर्वप्रमाया बाध्यत्वमपनीयाबाध्यत्वमवतिष्ठते। भ्रमोत्तरं प्रमोत्पादेन भ्रमस्य बाध्यत्वे प्रमोत्तरं बाधकान्तरानुत्पादेन तद्बाध्यत्वमेवानपनोदितमवतिष्ठत इति हि विशेषः। दृष्टिसृष्टिज्ञाने सति यावद्व्यवहारकालं न यस्य बाधस्तद्विषयकत्वमेतत्प्रमात्वं तद्विपरीतं भ्रमत्वमिति हि विवक्षितमिति न भ्रमत्वप्रमात्वव्यवहारानुपपत्तिः। अथ वियदादीनामपि प्रातिभासिकत्वे ततो वाय्वाद्युत्पादबोधकश्रुतेरप्रामाण्यमात्यन्तिकं स्यादिति चेन्न। स्वाप्नार्थबोधकवाक्यतुल्यत्वस्यैव तस्याभ्युपगमात्। सृष्टिदृष्टिपक्षेऽपि तस्य पारमार्थिकप्रामाण्यस्य वक्तुमशक्यतयाऽप्रामाण्येऽत्यन्ताप्रामाण्येऽपि क्षत्यभावात्। नच वेदस्याप्यप्रामाण्ये क्व समाश्वास इति वाच्यम्। यथाकथंचित् कृत्स्नस्यैव वेदस्याद्वितीये ब्रह्मणि परमतात्पर्येण तत्राप्रामाण्यविरहात्। यथाश्रुतार्थेऽर्थवादवदप्रामाण्येऽपि क्षत्यभावात्। नच वेदस्वरूपस्यैवासत्त्वे कथं प्रामाण्यमिति वाच्यम्। नहि स्वरूपसत्त्वं प्रामाण्ये प्रयोजकमपितु विषयस्याबाध्यत्वम् दोषासंस्पर्शश्च। तदुभयमप्यबाधितब्रह्मतात्पर्यवत्यपौरुषेये वेदेऽस्त्येवेति स्वरूपासत्त्वेऽपि क्षत्यभावात्। नच 'ध्रुवा द्यौर्ध्रुवापृथिवी'त्यादिश्रुतिविरोध इति वाच्यम्। पृथिव्यादिकमनित्यं ननु तस्य दृष्टिसृष्टिरिति वादिभिरपि श्रुतेरन्यथानयनस्यावश्यकतया संतानाविच्छेदेन स्थूलसूक्ष्मावस्थान्यतररूपेणावस्थानात्मकेनाकल्पं स्थितेरेव ध्रुवपदार्थतया श्रुत्यविरोधस्य दृष्टिसृष्टिपक्षेऽपि संभवात्। दृष्टिसृष्टौ च 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोका' इत्यादि श्रुतिः सुप्तोत्थितस्य जीवात्प्राणादिसृष्टिं प्रतिपादयन्ती प्रमाणम्। नहि स्थितस्य सृष्टिर्भवति। नापि दृष्टिसृष्ट्यभावे स्थित्यभावः। नच प्राणाद्युपलम्भाच्छ्रुतिरुपचरितार्था भविष्यतीति वाच्यम्। 'नतु तद्द्वितीयमस्ति' 'ततोऽन्यद्विभक्तं यत्पश्ये'दितिश्रुत्याऽविशेषेण सर्वेषामभावबोधनात्सुप्तपुरुषदृष्टिसृष्टिमत्सकलप्रपञ्चाभावावश्यकत्वात्। तद्भोगानुकूलशरीरप्राणहिताहितसाधनविषयेन्द्रियाणां भोगजनकादृष्टविरामेऽभावस्योचितत्वात्। प्राणशरीराद्युपलब्धेरन्यपुरुषाणां तत्संस्कारसहिताविद्याजनितविभ्रममात्रत्वेन द्रष्टृपुरुषदृष्टिसृष्टिमत्प्राणादिसत्त्वेऽपि सुप्तंप्रति तदभावप्रतिपादकश्रुतेराञ्जस्ये क्लिष्टकल्पनादिना तदुपपादनस्यान्याय्यत्वात्। अत्र च श्रुतिविरोधतत्परिहारादिकमद्वैतसिद्ध्यादौ प्रदर्शितमालोचनीयम्। दृष्टिसृष्टिपक्षस्योत्तमता च संक्षेपशारीरके 'तत्त्वावेदकमानदृष्टिरधमा तत्त्वक्षतिर्मध्यमा तत्त्वप्रच्युतिविभ्रमक्षतिकरी तत्रान्त्यदृष्टिर्मते'त्यादिनोक्ता। तत्त्वावेदकं मानं मानसामान्यमिति दृष्टिः प्रत्यक्षादिमानानामपि तत्त्वावेदकत्वमिति दृष्टिरिति यावदधमाश्रुतियुक्तिभिर्विश्वमिथ्यात्वसिद्धौ प्रत्यक्षादीनां तत्त्वावेदकत्वस्यासंभवात्। तत्त्वस्य क्षतिर्यया सा दृष्टिर्मध्यमा तदिति तत्त्वावेदकमानं परामृशति। तस्य भावस्तत्त्वम् परमार्थसद्बोधकत्वं तस्य क्षतिः तस्यैव क्षतिः नतु व्यवहारसद्बोधकत्वस्य। तथाच प्रत्यक्षादयो व्यावहारिकसद्बोधकत्वेन व्यावहारिकाप्रामाण्यभाजः श्रुतिरेव केवलं पारमार्थिकप्रामाण्यवतीति दृष्टिर्मध्यमा स्वाप्नप्रपञ्चशुक्तिरूप्यादिप्रातीतिकसिद्धौ विश्वमात्रस्यापि तद्दृष्टान्तेन प्रातीतिकत्वाभ्युपगमेऽपि सर्वव्यवहारस्योपपादितत्वेन व्यावहारिकसत्त्वाभ्युपगमस्यापि निरर्थकत्वात्। तत्त्वप्रच्युतेः व्यावहारिकमानत्वस्य प्रत्यक्षादिषु यो विभ्रमस्तस्य क्षतिकरी निवर्तिका दृष्टिः। ब्रह्माद्वैतश्रुत्यतिरिक्तसर्वमानानां व्यावहारिकमपि न प्रामाण्यम्। अपितु प्रातीतिकमेवेति दृष्टिः। दृष्टिसृष्टिपक्षानुसारिणी तृतीया तेष्वन्त्यदृष्टिर्मता सर्वोत्तमा मतेत्यर्थः। एवमाकरेष्वन्यत्रापि। 'अविद्यायोनयो भावाः सर्वेऽमी बुद्बुदा इव। क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लय'मित्याद्युक्तमिति। एतत्सर्वमभिप्रेत्योक्तं दृष्टिसृष्ट्यभ्युपगमादिति। **अत्यन्ततुच्छेष्विति**। अत्यन्तानादरणीयेष्वित्यर्थः। तेन शुक्तिरूप्यादेरप्यत्यन्तासन्नृशृङ्गादिवैलक्षण्यस्यैव स्वीकारादन्यथा सदसद्भ्यामनिर्वचनीयत्वं न स्यादिति नापसिद्धान्तः। एवंचासत्त्वमप्युक्तं नात्यन्ततुच्छतारूपं सत्तया प्रतीत्यनर्हत्वमपि तु परमार्थसत्स्वरूपराहित्यमेव बोध्यम्। भूतेष्विति विषयसप्तमी। तदर्थस्य दुःखप्रलापशब्दार्थे दुःखज्ञानानुकूलप्रलापे हापुत्रो मे नष्ट इत्यादिरूपे शरीरविशेषबोधकेऽन्वयः। शब्दस्यापि ज्ञानद्वारा सविषयकत्वादिति ॥ २८ ॥ साधारणधर्मं प्रदर्शयति—**आविद्यकनानाविधविरुद्धधर्मवत्तयेति**। तृतीयार्थस्य प्रयोज्यत्वस्याभेदस्य वा तुल्यत्वेऽन्वयः। सादृश्यस्यातिरिक्तत्वात्तद्भिन्नत्वे सति तद्गतधर्मरूपत्वाद्वा। निर्धर्मकस्य सच्चिदानन्दादिस्वरूपस्य सत्त्वचित्त्वादिकं स्वरूपेणैवाविद्यया कल्पितत्वेनाविद्यकम्। सत्त्वादिकमसद्विलक्षणत्वे सति त्रिकालाबाध्यत्वाजडत्वानानन्दान्यत्वाद्यभावात्मकमधिकरणस्वरूपं परमार्थसच्च स्वत आविद्यकमपितु धर्मिधर्मभावेन याऽविद्यया कल्पना तद्गोचरत्वेनाविद्यकं वोभयथाप्याविद्यका ये सत्त्वादयो नानाविधा धर्मास्तद्वत्तयेत्यर्थः। सन्तं स्वरूपेण त्रिकालाबाध्यमप्यहं गौरः काणः चैत्राज्जातो विनङ्क्ष्यामीत्याद्यतादृशशरीरेन्द्रियादितादात्म्याध्यासेनासन्तमिव न वस्तुतो सन्तमित्यर्थः। एवमग्रेऽपि जडत्वदुःखित्वादिकमपि सर्वं तादृशशरीरान्तःकरणादितादात्म्याध्यासेनैव बोध्यम्। **निवृत्ताविद्यातत्कार्योऽपि प्रारब्धकर्मप्राबल्यात्तद्वानिव व्यवहरतीति**। अत्र

'ज्ञानाग्निः सर्वकर्माणी'त्यादि'नाऽभुक्तं क्षीयते कर्मे'त्यादिवचनयोरविरोधाय प्रारब्धेतरकर्मपरत्वे प्रारब्धकर्मपरत्वे च स्थिते 'तस्य तावदेव चिर'मित्यादिश्रुतौ तावदित्यस्य भोगेन न यावत्प्रारब्धकर्मनाशस्तावदित्यर्थकत्वे च व्यवस्थिते जातेऽपि तत्त्वज्ञानरूपेऽविद्याशेषतत्कार्यनाशके फलाय व्याप्रियमाणं प्रारब्धं कर्मातिवेगप्रक्षिप्तशरवदुत्तरदेशसंयोगं विनेव निःशेषफलभोगं विना न विनश्यतीति कल्प्यते । तेन चाविनष्टेन प्रतिबद्धं तत्त्वज्ञानं फलोपभोगप्रारब्धस्थित्याद्यनुकूलं भावजातमपि न विनाशयतीत्यपरेणापि येनोपपद्यते तदपि चोपजीव्यत्वात्कल्प्यत इति । एवं च देहेन्द्रियपुत्रकलत्रमित्रस्रक्चन्दनामित्रविषसर्पादिविभ्रमानुवृत्तये नष्टायामप्यविद्यायां नष्टेऽपि दण्डसंयोगे चक्रभ्रमणानुकूलसंस्कारवदविद्याजन्यः संस्कारोऽनुवर्तते । नष्टेऽपि समवायिकारणे क्षणमात्रं कार्यवदविद्यानाशेऽपि चिरं तदवस्थानं न विरुध्यते । प्रागुक्तान्यथानुपपत्तेः प्रमाणस्य सत्त्वान्नाशकस्य प्रारब्धेन प्रतिबद्धत्वान्नष्ट एव प्रतिबन्धके कर्मणि भोगतः पश्चात्तत्त्वज्ञानेनैव नाश्यत्वादित्यविद्यायाः संस्कारप्रारब्धकर्माद्युपादानाश्रयत्वभानुरोधेनानुवृत्त्यापत्तेरपि नावकाशः । नच निरुपादानकं न दृष्टं कार्यमिति वाच्यम् । समवायिनाशजन्यकार्यध्वंसस्य दर्शनात् । नच भावकार्यं न तथेति वाच्यम् । भावत्वाविशेषेऽपि पृथिव्यादे रूपाद्युपादानत्वम् । नहि वाय्वादेरित्यत्रेव भावत्वाविशेषेऽपि घटादेः सोपादानत्वं न संस्कारादेरित्यत्र प्रमाणतदभावयोरेव शरणीकरणीयत्वात् । प्रकृते चोक्तश्रुतिसहकृतोक्तानुपपत्तेर्मानस्य सत्त्वान्निरुपादानत्वेऽपि विरोधविरहात् । नच निराश्रयत्वं न दृष्टमिति वाच्यम् । अविद्याया इव तत्संस्कारस्यापि शुद्धब्रह्मण एवाश्रयत्वकल्पनात् । नच ज्ञानक्रियातिरिक्तस्य न दृष्टः संस्कारः ज्ञानस्य च भावनाक्रियायास्त्वदृष्टं दृष्टमिति वाच्यम् । अविद्याविनाशः संस्कारव्याप्तः संस्कारनाशान्यत्वे सति नाशत्वात् ज्ञाननाशवदित्यनुमानस्यैव मानत्वात् । नचैवं घटादेरपि संस्कारापत्तिरिष्टत्वादित्येकः पक्षः । अथ निरुपादानकार्ये नचेत्संप्रतिपत्तिः माभ्युपगम्यतां संस्कारः । लेशतोऽविद्यानुवृत्तिरेवाभ्युपेयः । लेशत इत्यस्य कोऽर्थः इतिचेत् अविद्यायां विचित्राः सन्ति शक्तयस्तासु प्रारब्धकालिकतत्त्वज्ञानेनावरणशक्तेः प्रपञ्चपारमार्थिकत्वादिभ्रमानुकूलशक्तिरूपायाः प्रपञ्चगतार्थक्रियासमर्थत्वाद्यनुकूलशक्तेश्च नाशेऽपि प्रारब्धेन स्वभोगोपपत्तये प्रतिबद्धेन तेनापरोक्षप्रतिभासयोग्यानां सर्पादिकार्यदंशाद्यसमर्थतया सर्पाद्याभासानां भयकम्पदुःखादिकतिपयकार्यक्षमाणां प्रातिभासिकसर्पादीनामिवापरोक्षावभासयोग्यानां जीवन्मुक्तभोगाननुकूलपुत्रकलत्रादिबहुतरकार्यक्षमतया पुत्रकलत्राद्याभासानामुपभोगजनकानां समर्थायाः शक्तेरविनाशेन तद्विशिष्टतयेत्यर्थः । यद्वाऽविद्यासूक्ष्मावस्थायाः प्रारब्धकर्मप्रतिबद्धेन ज्ञानेनाविनाशात्सैव लेशपदार्थः तदवस्थयेत्यर्थ इति गृहाण । तथाच जीवन्मुक्त्यवस्थायामनुवृत्ततादृशशक्तिमदविद्यायास्तत्सूक्ष्मावस्थाया वा परिणामभूतं पुत्रकलत्राद्याभासादिकमस्तीत्यपरः पक्षः । तत्राद्यपक्षे निवृत्ता स्वरूपेणाविद्या निवृत्तं तत्संस्कारप्रारब्धकर्म पुत्रकलत्रादिकार्याभासान्यकार्यजातं यस्य स इत्यर्थः । द्वितीयपक्षे च निवृत्तावरणशक्तिविशिष्टतया स्थूलरूपेण वाऽविद्यानिवृत्तमाभासान्यकार्यजातं यस्य स इत्यर्थः । तद्वानित्यत्र तत्पदेनाविद्यातत्कार्यदेहेन्द्रियादिग्रहणम् । इवेन तद्वद्वैलक्षण्यं बोधयतानुत्पन्नतत्त्वसाक्षात्कारस्य यथा परिपूर्णशक्तिमती स्थूलानुपहतस्वरूपाविद्या स्वस्वाशेषकार्यकार्यनुपजाता प्रामाण्यशङ्कानास्कन्दितमिथ्यात्वग्रहतया प्रतिभासमानसत्वेन चानुपमर्दितस्वरूपं कार्यजातं विद्यते न तथा जीवन्मुक्तस्य किंतु संस्कारमात्रशेषावशिष्ट्यत्किंचिच्छक्तिमती सूक्ष्मावाऽविद्यमानकल्पाविद्यातत्कार्यमप्याभासभूतं वर्तते । तदुभयमप्यप्रामाण्यज्ञानानास्कन्दितमिथ्यात्वनिश्चयेनोत्सन्नसत्त्वप्रतिभासमुपमृदितस्वरूपं बाधितमेव प्रारब्धप्राबल्यादनुवर्तेत इति सूचितम् । सर्वदा समाधिनिष्ठोऽस्यत्र सर्वदेति समाध्यतिशयप्राचुर्याभिप्रायेण । तेन व्युत्तिष्ठतीत्यस्य न विरोधः । यद्वा व्युत्तिष्ठतीत्यत्रापि इवेति संबध्यते । तथा सर्वदेत्यसंकुचितमेव । तथाच निरुद्धाखिलानाभासवृत्तिरविच्छिन्नानन्दाद्वयात्मसाक्षात्कारोऽपि व्युत्तिष्ठतीव प्रारब्धप्राबल्यात्तदानीमपि बाधिततयोपमर्दितस्वरूपसुखदुःखादिवृत्त्याभासवान्भवतीत्यर्थः । एवंच समाधिव्युत्थानयोर्विरुद्धयोरपि समावेशाद्वैचित्र्यमव्याहतं भवति । **अवाच्यस्येति** । प्रवृत्तिनिमित्तं विना शब्दवाच्यत्वासंभवान्निर्धर्मके ब्रह्मणि प्रवृत्तिनिमित्तायोगादवाच्यस्येत्यर्थः । **विशिष्टशक्तेन पदेन जहदजहत्स्वार्थलक्षणयेत्यादि** । 'ब्रह्मविदाप्नोति पर'मिति श्रुत्या 'तमेव विदित्वे'ति श्रुत्या च मुक्तिहेतुत्वेन बोधितस्य शुद्धब्रह्मवेदनस्य तत्त्वमस्यादिमहावाक्यजन्यनिर्विकल्पकसाक्षात्कारात्मकस्य मोक्षाय संपादनमावश्यकं । तत्र तत्त्वंपदाभ्यां समानाधिकरणाभ्यां जीवत्वविशिष्टेश्वरत्वविशिष्टप्रतिपादकाभ्यां तयोस्तादात्म्येनान्वयबोधसाकाङ्क्षाभ्यां 'यतो वा इमानी'त्यादिश्रुतिबोधितेश्वरगृहीतशक्तिक'तद्यथामहामत्स्ये'त्यादिश्रुतिबोधितजीवगृहीतशक्तिकाभ्यां विशिष्टोपस्थितौ सत्यां गृहीते च तयोरभेदे सर्वसंप्रतिपन्नविशिष्टाभेदपरवाक्यजन्येषु घटः प्रमेयवानित्यादिबोधेषु गृहीतेन विशिष्टाभेदविषयकत्वस्य विशेषणाभेदविषयकत्वनियमेन तत्र विरोधप्रतिसन्धाने च सति वाच्यार्थाभेदज्ञाने प्रमात्वासंभवेन तात्पर्यासंभवग्रहाच्छुद्धविषयकनिर्विकल्पकबोधे तात्पर्यग्रहः । नहि तात्पर्यविषयग्रहासंपत्तौ तत्तात्पर्यमुपपद्यते । तादृशग्रहश्च न शुद्धस्यावाच्यस्य लक्षणाग्रहं विना तेन विना तादृशशाब्दहेतोः शुद्धस्मृतेरसंभवात् । तद्धेतुर्लक्षणाग्रहश्च संबन्धांशे स्वरूपतः शुद्धब्रह्मावगाही शुद्धब्रह्मसंबन्धिशक्तं तदादिपदमित्याकारकः तस्य शुद्धब्रह्मविशिष्टवैशिष्ट्यावगाहित्वेन तदर्थमपि शुद्धब्रह्मज्ञानस्यावश्यकत्वम् । तच्च तदा स्मृतिरूपमेव संभवति । नच सैवास्तु शाब्दहेतुरिति वाच्यम् । पदपदार्थसंबन्धग्रहाधीनपदार्थस्मृतेरेव हेतुत्वादन्यथा तीरादिलक्षणाग्रहार्थापेक्षिततीरस्मृतेरेव तीरशाब्दबोधसंभवे लक्षणाग्रहात्पुनस्तीरस्मृतेर्नावश्यकता स्यात् । अनुभवबाधस्तु

समानमुभयत्र लक्षणाग्रहार्थापेक्षितशुद्धस्मृतिश्च न संस्कारंविना संस्कारश्च नानुभवंविनेति तादृशानुभवोऽपेक्षितः । सच सत्यादिवाक्यतः यतोवेत्यादिवाक्यतोऽपि च संभवति । तयोर्लक्षणवाक्यत्वेन शुद्धलक्ष्यव्यक्तिबोधपरत्वात् । सोऽपि निर्विकल्पको निर्विकल्पकस्मृतिसाध्यः साच सत्यादिपदेभ्यः सत्यत्वाद्युपलक्षितलक्षणाग्रहाधीना । नच तदर्थमपि तादृशानुभवापेक्षायामनवस्थेऽति वाच्यम् । सुषुप्तौ साक्षिस्वरूपाज्ञानस्वरूपसुखस्वरूपनिर्विकल्पकास्तिस्रोऽविद्यावृत्तयो विवरणकारादिभिरङ्गिकृतास्तासु साक्षिस्वरूपनिर्विकल्पकवृत्तेः संस्कारस्य तद्धेतुत्वसंभवात् आत्मान्यगोचराखिलवृत्तिनिरोधात्मकासंप्रज्ञातसमाधिगतनिर्विकल्पकसाक्षिस्वरूपप्रत्यक्षजसंस्कारस्य वा हेतुत्वसंभवात् । नचायमेव संस्कारस्तत्त्वमस्यादिवाक्यजन्यशाब्दानुकूलनिर्विकल्पकस्मृतिहेतुरस्तु किंसत्यादिवाक्यजनिर्विकल्पकानुभवजसंस्कारेणेति वाच्यम् । यदि हि महावाक्यजशाब्दानुकूलस्मृत्यर्थंतैवोक्तानुभवस्य स्यात् किंन स्याद्वैयर्थ्यम् । नच तदस्ति किंतु मोक्षहेतुतया शुद्धब्रह्मानिर्विकल्पके श्रुतिभिर्गृहीते किंतद्ब्रह्मेति शुद्धब्रह्मविजिज्ञापयिषया प्रवृत्तानां सत्यादिवाक्यानां सत्यत्वाद्युपलक्षितैक्यगोचरनिर्विकल्पकतात्पर्येऽवधृते ततो विशिष्टाभेदबोधद्वारा विरोधप्रतिसंधानपूर्वकलक्षणादिग्रहजन्यशुद्धस्मृतिस्ततस्तात्पर्यविषयानुभवोत्पत्तिः ततश्चोक्तजिज्ञासानिवृत्तिः । निवृत्तायां विरोधिन्यां तस्यां महावाक्यश्रवणतज्जन्यबोधादिसंपादनसंभवः । तदनुकूला स्मृतिर्यद्यपि सौषुप्तानुभवजसंस्कारादपि संभवति तथापि स्वप्रकरणस्थावश्यापेक्षणीयवाक्यजानुभवसंस्कारस्यैव झटित्युद्बोधसंभवेन तादृशस्मृतेस्तादृशानुभवमूलकत्वोक्तिरुपपन्ना । नच सत्यादिवाक्याल्लक्षणया सत्यत्वाद्युपलक्षितशुद्धोपस्थितौ तद्गोचरानुभवोऽस्तु किं सत्यत्वादिविशिष्टार्थतादात्म्यावगाहिबोधेनेति वाच्यम् । पदानां विशिष्टे शक्तौ विशिष्टोपस्थितौ च प्रथमतो जातायामाकाङ्क्षादिशालिभ्यः पदेभ्यो विशिष्टार्थसंसर्गावगाह्यनुभवस्यैव मुख्यत्वात्प्रथमत उत्पत्तेरवर्जनीयत्वात् । ततो विरोधग्रहादितो लाक्षणिकार्थप्रतिपत्तिर्हि संभवति । अन्यथा पदार्थमात्रे विरोधाभावात् लक्षणैव न स्यादित्यतोऽप्यपेक्षणीयत्वाद्वा । नच विशिष्टार्थतादात्म्यभाने विशेषणयोः सत्यत्वब्रह्मत्वाद्योरपि तादात्म्यभानस्यावश्यकतया तस्य बाधेन तदुत्पत्तुमेव नार्हतीति वाच्यम् । शाब्दबुद्धेः बाधाप्रतिबध्यत्वात् । तदुक्तं खण्डने 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति ही'ति । नच तत्त्वमसीतिवाक्यजन्यशाब्दानुकूलोपस्थितिहेतुसंस्कारसंपत्तेः किंतद्ब्रह्मेति जिज्ञासानिवृत्तेश्च सत्यं ब्रह्मेति पदद्वयादपि संभवात् पदान्तरवैयर्थ्यमिति वाच्यम् । ब्रह्मत्वोपलक्षिते सत्यत्वोपलक्षितभेदभ्रमेण ब्रह्मस्वरूपमोक्षे बाध्यत्वापत्तौ तदर्थं तदुपाये प्रवृत्तिर्न स्यादिति तद्भ्रमतन्मूलाज्ञाननिवृत्तये सत्यत्वोपलक्षितब्रह्मत्वोपलक्षितयोरैक्यज्ञानमपेक्षणीयम् । तच्च सत्यं ब्रह्मेति पदाभ्यां यथासंपादनीयम् तथा ब्रह्मत्वोपलक्षिते ज्ञानत्वानन्दत्वानन्तत्वाद्युपलक्षितभेदभ्रमाणामज्ञानत्वेनास्वप्रकाशतयाऽसुखत्वेनानभिलषिततया सान्तत्वेन च ब्रह्मस्वरूपमोक्षस्यापुरुषार्थत्वापादकानां तन्मूलाज्ञानानां च निवृत्तये ज्ञानत्वाद्युपलक्षितब्रह्मत्वोपलक्षितैक्यज्ञानमप्यपेक्षणीयं । तच्च ज्ञानमानन्दमनन्तं ब्रह्मेत्यादिपदेभ्यः संपादनीयमिति वैयर्थ्यासंभवात् । नचैक्यं ब्रह्मस्वरूपातिरिक्तमनतिरिक्तं वा । अतिरिक्तमपारमार्थिकं पारमार्थिकं वा । तत्रातिरिक्तस्यापारमार्थिकस्य निर्विकल्पकप्रमायां भाने प्रमात्वानुपपत्तिः । तस्य पारमार्थिकत्वेऽद्वैतहानिः । अनतिरिक्तस्य तस्य भाने लक्षणामूलतज्जन्यनिर्विकल्पकोपस्थितिविषयत्वेन ज्ञाततयाऽज्ञातविषयत्वाभावेन प्रमात्वानुपपत्तिरिति वाच्यम् । सत्यत्वाद्युपलक्षितभेदाभावात्मकस्यैक्यस्य ब्रह्मत्वोपलक्षितस्वरूपात्यन्तानतिरिक्तस्यैव सत्यादिवाक्यतात्पर्यविषयबोधे भानाभ्युपगमादबाधितविषयत्वाक्षतेः । सत्यत्वब्रह्मत्वोपलक्षितयोः स्वरूपयोरत्यन्ताभिन्नयोस्तादात्म्यस्य स्वस्वरूपानतिरिक्तोक्तभेदाभावस्यापि च संसर्गतया भानासंभवेनैक्यगोचरत्वेऽपि निर्विकल्पकत्वाव्याघातात् । यथाकथंचिज्ज्ञातत्वस्य सर्वत्रैव संभवेन प्रकृतप्रमानिवर्त्यभ्रमसंशयसमानाकारकभ्रमादिनिवर्तकज्ञानविषयत्वेनैव ज्ञातत्वस्य वाच्यत्वात् । यत्र सत्यत्वादिकं यत्र ब्रह्मत्वं तयोर्भेद इत्युपलक्षितभेदभ्रमविरोधिनः प्रमाणत्वेनाभिमतप्रकृतवाक्यजबोधपूर्वकालिकस्य ज्ञानस्य विषयत्वमेव प्रकृते ज्ञातत्वमैक्यस्योक्तस्य । तच्च न तादृशवाक्यजन्यबोधात्प्राक् तस्योक्तबोधस्यैव विरोधित्वादित्यनन्यत्वेऽपि ब्रह्मस्वरूपादैक्यस्याज्ञातत्वेनाज्ञातविषयकत्वस्याप्यनपायात् । नच निर्विकल्पकोपस्थितितः शाब्दस्योक्तनिर्विकल्पकस्य विषयावैलक्षण्यादुपस्थितिवदस्यापि विरोधित्वं न स्यात् । भेदाभावत्वेनैवैक्यस्य भेदविरोधित्वेन तेन तदनवगाहिनो विरोध्यविषयकत्वात्तथात्वेऽपि विरोधित्व उक्तशाब्दवदुपस्थितेरपि तथात्वं स्यादिति वाच्यम् । तयोः समानविषयकत्वेऽपि सत्यत्वविशिष्टब्रह्मत्वविशिष्टतादात्म्यबोधकोक्तवाक्यजन्यानुभवत्वरूपानुभवसिद्धविरोधितावच्छेदकधर्मसत्त्वासत्त्वाभ्यां वैलक्षण्यात् पीतः शङ्ख इति साक्षात्कारिभ्रमेऽनुमानजन्यादुष्टेन्द्रियजन्यश्वैत्यज्ञानयोः समानविषयकत्वेऽपि विरोधित्वाविरोधित्वयोः प्रत्यक्षत्वतदभावाभ्यां वैलक्षण्यवत् । नच विरोध्यविषयकस्योक्तवाक्यजन्यत्वमात्रेण विरोधित्वं कथमिति वाच्यम् । स्वरूपाभेदस्य विरोध्युक्तभेदाभावव्याप्यत्वग्रहात्तदाहितोक्तवाक्यजोक्तविशिष्टग्रहाद्युद्बोधितसंस्कारसहितस्योक्तानुभवस्य विरोधित्वे क्षत्यभावात् यद्वोक्तवाक्यजन्यस्य विशिष्टद्वयतादात्म्यसंसर्गावगाहिज्ञानस्योपहिततादात्म्यविषयकत्वनियमेन तस्याप्युपलक्षितभेदग्रहविरोधित्वसंभवात् व्युत्पत्तिवैचित्र्यात्प्रथमार्थभेदाभावे पदद्वयशक्त्युपस्थापितविशिष्टनिःकृष्टविशेष्यमात्रभानस्य तात्पर्यविशेषादिग्रहमहिम्ना विशिष्टबोधे तदनन्तरं बोधान्तरे वा प्रथमार्थाभेदे पदद्वयलक्ष्यशुद्धभानस्य संभवेन तस्य यत्र सत्यत्वं यत्र च ब्रह्मत्वं तयोर्भेदाभाव इत्याकारकस्य निर्विवादविरोधित्वसंभवात् तदुपधायकोक्तवाक्यजन्यत्वस्य निर्विकल्पकानुभवे विरोधित्वप्रयोजकत्वस्यानुभविकत्वात् । नच भेदभ्रमादीनामान्तरालिकभेदाभावत्व-

विशिष्टविषयकविरोधिग्रहादेव निवृत्तिसंभवात्तन्निवृत्त्यर्थं निर्विकल्पकाभ्युपगमो निरर्थक एवेति वाच्यम् । मुद्गरपातेन घटस्य विनाशेऽपि तत्सूक्ष्मावस्थाया यथा ह्यज्ञाननिवर्तकप्रमयैवोच्छेदस्तथा विरोध्युक्तज्ञानेन हि भेदभ्रमविनाशरूपनिवृत्त्युत्पत्तावपि तत्संस्कारनिवृत्तिरूपतदुच्छेदस्य प्रमांविना न संभवः । नचान्तरालिकमुक्तज्ञानं प्रमाभेदाभावत्वविशिष्टविषयकत्वात् विशिष्टमात्रस्य च कल्पितत्वादित्यतस्तस्य विरोधिनो विशेषणत्यागेन शुद्धब्रह्मरूपतया तात्त्विकस्य प्रमारूपतात्पर्यविषयनिर्विकल्पकबोधस्वीकारस्तत्समानविषयकस्याप्यनुभावानारूढविरोधित्वकस्य तद्वारणायोक्तविरोधिविशिष्टबोधोपधायकोक्तवाक्यजन्यत्वपुरस्कार इति दिक् । एवमेव जीवत्वोपलक्षितब्रह्मत्वोपलक्षितभेदग्रहः सर्वथा निष्ठापादकोऽनाद्यविद्यामूलकोऽङ्गीकार्यः । तथाहि जीवस्वरूपं परमार्थसत्सुखस्वरूपब्रह्मणो वस्तुतो भिन्नं यद्यपारमार्थिकं कस्य मोक्षाय प्रवृत्तिरर्थवती स्यात्तस्यैवाभावात् । यदि पारमार्थिकं तदापि स्वभावतो दुःखादिमद्गुतोपाधितः स्वभावतो दुःखित्वेऽनिर्मोक्षः स्यात् स्वभावप्रच्युतेरशक्यत्वात् । औपाधिकत्वे लाघवाद्भेदोप्यौपाधिक एवास्तु न वास्तविक इति भ्रमविषय एव सः । स एव च स्वप्रकाशपरमार्थसदानन्दस्य सर्वानिष्टहेतुर्भ्रमश्चानाद्युक्तैकाविद्यापादित इति समूलस्य तस्योच्छित्तये जीवत्वोपलक्षितब्रह्मत्वोपलक्षितैक्यस्य भेदाभावात्मकस्य स्वरूपानतिरिक्ततया पारमार्थिकस्य निर्विकल्पकप्रमा तत्त्वमस्यादिवाक्यतात्पर्यविषयोक्तप्रणाल्या तद्वाक्यात्संपादनीया । तत एव हि तस्याः समूलोक्तभ्रमोच्छेदत्वं नान्यथा । अन्यथा जीवब्रह्मैक्यस्य स्वरूपानतिरिक्तस्य सत्यादिवाक्यजप्रमायां विषयत्वस्याविशिष्टत्वेन ततोऽपि तन्निवृत्तिः स्यात् । नचेष्टापत्तिः अनुभवविरोधात् । नहि नीलो न घट इति भ्रमस्य स्थूलो घट इति बुद्धिर्निवर्तिका । नच तयोर्विशिष्टविषयकत्वान्न दृष्टान्ततेति वाच्यम् । यो नीलः स नायं घट इति नीलत्वोपलक्षितभेदबुद्धावपि यः पीतः सचायं घट इति बुद्धेः पीतत्वोपलक्षिताभेदविषयिण्या विरोधाननुभवात् । नहि व्यक्तिरेकैव भवतीति नियमः । तस्मात्तत्तद्धर्मोपलक्षितयोर्भेदबुद्धौ तयोरैक्यज्ञानं विरोधीत्येवास्थेयम् । उपलक्षितस्वरूपमात्रस्याविशेषादुपलक्षकस्याभानात्कथमत्रैतदुपलक्षितस्य विषयत्वं नात्रेति । नच वाच्यं तत्प्रकारकज्ञानप्रयोज्यनिर्विकल्पके पूर्वज्ञानीयविशेष्यताप्रयोज्यविषयतावत्वस्य नियामकत्वादतएवापि सर्वत्र शुद्धबोधतात्पर्यकवाक्यस्थले विशिष्टविषयकस्योपहितविषयकस्य वा बोधस्य तत्पूर्वमूरीकारः । एवंचोपलक्षितभेदैक्यगोचरज्ञानयोरनुभवसिद्धप्रतिबध्यप्रतिबन्धकभावावच्छेदकत्वं तद्धर्मप्रकारतानिरूपितविशेष्यताप्रयोज्यानवच्छिन्नप्रतियोगितासंबन्धावच्छिन्नप्रकारतानिरूपितभेदविशेष्यतानिरूपिततद्धर्मप्रकारतानिरूपितविशेष्यप्रयोज्यानवच्छिन्नप्रकारताकबुद्धित्वे यत्र सत्यत्वं यत्र ब्रह्मत्वं तयोर्भेद इति बुद्धिनिष्ठे तत्तद्धर्मप्रकारतानिरूपितविशेष्यताप्रयोज्यानवच्छिन्नविषयताविशिष्टत्वे सति तादृशविषयतान्तरविशिष्टभेदाभावत्वान्यधर्मानवच्छिन्नभेदाभावनिष्ठविषयताकबुद्धित्वे च सत्यत्वादिकं यत्र यत्र तयोरैक्यमित्याकारकज्ञाननिष्ठे तादृशैक्यनिर्विकल्पकनिष्ठे वा संभवदुक्तिकम् । वैशिष्ट्यं च स्वतादात्म्यस्वनिरूपितत्वान्यतरसंबन्धेन निर्विकल्पके च विषयतात्रयाणामैक्यात्समन्वयः । नचोपलक्षितयोर्भेदज्ञानमेव न संभवति अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहितानियमादिति वाच्यम् । तन्नियमस्य लौकिकप्रत्यक्षविषयत्वात् । तत्रैव संबन्धितावच्छेदकरूपेण संबन्धिग्रहापेक्षायाः संयोगादिस्थले दर्शनात् । प्रतियोगितावच्छेदकानुयोगितावच्छेदकयोरपि संबन्धितावच्छेदकरूपत्वात् । एवमयं गौरिति प्रत्यक्षोत्तरं गोत्वेनेमं जानामीत्यनुव्यवसाये प्रत्यक्षरूपे संबन्धिनो गोत्वस्य स्वरूपतो भानदर्शनात्तत्तद्धर्मावच्छिन्नतत्तत्संबन्धिनिष्ठलौकिकविषयताकप्रत्यक्ष एव तत्तद्धर्मावच्छिन्नसंबन्धिविषयताकज्ञानं कारणम् । तत्तद्धर्मावच्छिन्नतत्तत्संबन्धिताकसंसर्गावगाहिज्ञान एव तत्तद्धर्मावच्छिन्नतत्तन्निष्ठलौकिकविषयताकत्वनियम इत्यभ्युपेयं । तथाचोपलक्षितभेदावगाहिज्ञानस्य सामग्रीसमाजात्प्रामाणिकत्वेऽपि न क्षतिः । नचोपलक्षितभेदतदभावादिधियोः क्वापि प्रतिबद्ध्यत्वप्रतिबन्धकत्वे न दृष्ट इति वाच्यम् । कोह्यतिभारोऽनुभवस्य यदि तयोरपि तथात्वमानुभविकं तदान्यत्रादृष्टमपि किं न स्यात् । अन्यत्र पृथिव्यामदृष्टमपि लौहाच्छेद्यत्वमानुभविकमिति हीरके स्वीक्रियत एव । नह्येकान्ततोऽदृष्टमपि स्वरूपतो घटत्वप्रकारकेऽयं घट इति ज्ञाने नायं घट इत्यस्य स्वरूपतो घटत्वात्यन्ताभावबुद्धेर्विरोधित्वस्य दर्शनात् । नच तयोर्घटतादात्म्यघटभेदाभावावेव विषयाविति वाच्यम् । भिन्नविषयकानुमितिसामग्रीदशायां स्वरूपतो घटत्वप्रकारकप्रत्यक्षेच्छातस्तादृशज्ञानसंभवात् । नैयायिकैस्तादृशप्रत्यक्षस्यान्यत्रापि स्वीकाराच्च तत्र तदभावानवगाहिनोऽसमानप्रकारकघटभेदज्ञानस्य विरोधित्वासंभवात् घटभेदप्रकारकनिश्चयत्वेन गुरुणा प्रतिबन्धकत्वापेक्षया लाघवेन शुद्धघटत्वविशेषिताभावनिश्चयत्वेन प्रतिबन्धकत्वस्यैव युक्तत्वात् तस्यैव तादृशाभावावगाहित्वे प्रमाणत्वाच्च । नचात्यन्ताभावप्रतियोगित्वस्यावच्छिन्नत्वनियम इति वाच्यम् । ध्वंसप्रागभावादिप्रतियोगित्वस्यानवच्छिन्नत्वेऽवच्छेदकंविनाऽनुपपत्त्यभावसहकृतलाघवस्य प्रयोजकतायाः क्लृप्तत्वेन तस्यात्यन्ताभावप्रतियोगित्वेऽपि सत्त्वे तत्राप्यनवच्छिन्नत्वसंभवादुक्तनियमस्याप्रयोजकत्वात् । नच घटविशेषणस्य घटत्वस्य कथमभावविशेषणत्वमिति वाच्यम् । शिखी विनष्ट इत्यत्र पुरुषविशेषणीभूताया अपि शिखाया अभावविशेषणत्वाभ्युपगमस्य पुरुषसत्त्वग्रहबाधकेनेवात्राप्युक्तगौरवादिबाधकेनात्यन्ताभावे घटत्वविशेषणत्वाभ्युपगमस्य समानत्वादिति । तत्त्वमस्यादिवाक्यस्थले व्यवस्थितायां प्रक्रियायां शुद्धब्रह्मशाब्दसाक्षात्कारानुकूलोपस्थितिमधिकृत्य मतानि प्रदर्श्यन्ते । तत्र शक्तिग्रहाद्विशिष्टोपस्थित्यादौ जाते विरोधप्रतिसंधानगृहीतशुद्धबोधतात्पर्यान्यथानुपपत्त्या विशेष्यमात्रे लक्षणायाः शक्यविशिष्टतादात्म्यरूपाया विशिष्टस्यापि शुद्धे सति कल्पितत्वया कल्पितायाः शुद्धनिष्ठानवच्छिन्नप्रकारताशालिशुद्धसंबन्धिशक्तं तत्पदमिति ज्ञानाच्छुद्धो-

पस्थितिर्जायते । नच लक्ष्यतावच्छेदकतीरत्वदध्युपघातकत्वादिरूपेणैव तीरमार्जारादौ लक्षणा दृष्टा । नचानवच्छिन्नेन च तद्ग्रहान्निर्विकल्पकोपस्थितिर्लक्ष्यतावच्छेदके लक्षणाभ्युपेया नवेत्यन्यदेतदिति वाच्यम् । तात्पर्याधीनत्वाच्छब्दवृत्तेस्तात्पर्याद्धि वृत्तिरिति चिन्तामणावप्युक्तम् । तथाच तत्त्वमस्यादिवाक्यानां शुद्धे ब्रह्मणि तात्पर्येऽवधृते तात्पर्यविषयबोधनिर्वाहकतदुपस्थित्यर्थं तत्र लक्षणाया आवश्यकत्वात् । तत्तद्धर्म्मविशिष्टोपहितबोधे तात्पर्ये सति तत्र शक्त्यभावे तत्तद्धर्मविशिष्टोपहितयोर्लक्षणायास्तद्ग्रहाद्विशिष्टाद्युपस्थितेश्च युक्तत्वात् विशिष्टादितात्पर्यस्यैव प्रायिकत्वेन । नचानवच्छिन्ने लक्षणादिकमिति हि प्रवादः । नच निर्विकल्पकं स्मरणं नेत्यपि वाच्यम् । अथवाकाशादिपदान्निर्विकल्पकमेव स्मरणमास्तामिति मणावुक्तत्वात् । तादृशस्मृतेर्यत्र प्रामाणिकत्वं तत्र तादृशानुभवजसंस्कारस्य तत्कारणत्वस्यापि संभवात् । उक्ताच लक्षणा भागलक्षणा जहदजहल्लक्षणा चोच्यत इत्येकं मतम् । अपरं च विशिष्टशक्तिग्रहादुद्बुद्धे विशिष्टसंस्कारे तत एव शुद्धतात्पर्यग्रहरूपात्प्रतिबन्धकाद्विशेषणप्रमोषेण तस्माद्वा सहकारिणो विशेष्य एव संस्कारोद्बोधेन विशेष्यमात्रगोचरनिर्विकल्पकोपस्थितिरुपपद्यते । स्वीक्रियते च प्रमेयजातिमदाद्यनुभवाहितसंस्कारस्यादृष्टादिविशेषेण प्रमेयत्वजातित्वादिप्रमोषेण शुद्धरामत्वाद्यंश एवोद्बोधेन शुद्धरामत्वादिविशिष्टोपस्थिती रामादिपदात्तादृशविशिष्टतात्पर्यशालिन इति न लक्षणाया वृत्तिरूपायास्तत्रादरः । वस्तुतो न कुत्रापि शक्तिज्ञानाच्छक्योपस्थितौ शक्यसंबन्धरूपलक्षणाग्रहस्य तात्पर्यविषयबोधानुकूलोपस्थितिजनकत्वकल्पनापेक्षया शक्तिज्ञानस्यैव तात्पर्यविशेषग्रहसहकृतस्य संस्कारोद्बोधनद्वारा शक्यार्थस्य तत्संन्ध्यर्थस्य चोपस्थितौ लाघवेन हेतुत्वं कल्पनीयम् । अर्थविशेषोपस्थितिनियमश्च तात्पर्यग्रहविशेषसहकारिसमवधानासमवधानाभ्यामुपपद्यते । नच शक्तिः पदपदार्थयोः संबन्धस्तज्ज्ञानं च नियतोद्बोधकं यन्निरूपितत्वेन संबन्धविषयकं तत्संस्कारोद्बोधनेन तस्यैव स्मारकमिति न शक्यसंबन्धिस्मृतिस्ततः संभवतीति लक्षणाया लक्ष्यार्थसंबन्धरूपाया अभ्युपगम इति वाच्यम् । पदजन्या ह्युपस्थितिरपेक्षणीया साच नियतोद्बोधकादन्यथा वेत्यन्यदेतत् । तथाच । शक्यार्थस्मृतिर्नियतोद्बोधकविधयैव तत आस्तां तत्संबन्ध्यर्थस्मृतिस्तु ततो दृष्टादिति इहैव भवतु क्षत्यभावात् । लक्षणाभ्युपगमेऽपि तात्पर्यस्य नियामकताया अवश्यंवाच्यतया तत एव सर्वदोषपरिहारसंभवाल्लाघवमेवात्र कल्पनायां प्रमाणस्य बलवत्सहकारीति मन्तव्यमिति न वृत्तिर्लक्षणा । अपितु शक्तिज्ञानजन्यशक्यसंबन्ध्यर्थोपस्थितिः तज्जन्यत्वादेव निर्विकल्पकानुभवस्य तत्तद्ग्रन्थे लक्षणाजन्यत्वव्यवहार इति मतम् । अन्यच्च शक्तिज्ञानजन्यविशिष्टोपस्थितेरेव शुद्धबोधतात्पर्यज्ञानसहकृताया उपस्थितविशेष्यस्य निर्विकल्पकशाब्दसाक्षात्कारेऽपि कारणत्वं विशेषणाभेदबाधग्रहेण विशिष्टबोधतात्पर्यग्रहरूपप्रतिबन्धकस्यापाकरणात् । विशिष्टशक्तपदस्य विशेषणमात्रपदार्थान्तरान्वयतात्पर्ये स्वातन्त्र्येण तदुपस्थितये लक्षणादरणीयैव शक्त्या विशेष्यविशेषणतयोपस्थितस्य पदार्थान्तरेणान्वयासंभवादेकत्र विशेषणत्वेनेत्यादिव्युत्पत्तिविरोधादत्र शुद्धविषयकोपस्थित्यन्तरा कल्पनलाघवं च प्रमाणस्य सहकारि बोध्यमिति मतं तेषु प्रथममतमाश्रित्योक्तं जहदजहत्स्वार्थलक्षणयेति । शक्यतावच्छेदकस्य विशेषणस्य त्यागाच्छक्यस्य विशेष्यस्यात्यागाज्जहदजहत्स्वार्थेत्युच्यते । नचैतद्दध्युपघातकलक्षणायामपि गतमिति वाच्यम् । शक्यतावच्छेदकाबोधकत्वे सत्यशक्याबोधकवृत्तित्वस्य विवक्षितत्वात् । शक्तिवारणाय सत्यन्तम् । जहत्स्वार्थाया अजहत्स्वार्थायाश्च विशेष्येनैव वारणात् । नच बोध्यस्य शुद्धस्याशक्यत्वादसंभव इति वाच्यम् । विशिष्टघटकतया विशेष्यमात्रस्यापि शक्यत्वात् । विशिष्टस्य विशेषणविशेष्योभयरूपत्वेन शक्यतोभयत्र पर्याप्तेति तत्पर्याप्त्यनधिकरणत्वस्यावाच्यत्वरूपत्वात् । अजहत्स्वार्थेत्यत्र स्वार्थपदेन शक्यताश्रयत्वमात्रस्य विवक्षितत्वादवाच्यस्येत्यजहत्स्वार्थेत्युक्त्योर्न विरोधः । सर्वत्रान्यत्र लक्षणया प्रतिपत्तिर्लक्ष्यतावच्छेदकसहितस्यैव । सापि सविकल्पा साक्षात्कारात्मकशाब्दात्मिका । अत्रत्या तु ततो विलक्षणेत्याश्चर्यमिति संगतम् । **संबन्धान्तरमिति** । शक्यसादृश्यरूपसंबन्धं गौणीवृत्त्याख्यम् व्यञ्जनाख्यसंबन्धंवेत्यर्थः । तदुभयं प्रामाणिकं भवतु मा वा अस्ति तु प्रसिद्धमित्येतावतैवोक्तम् । **अतिप्रसङ्ग इति** । यस्य बोधो यत्राभिमतस्तदन्यस्यापि बोधप्रसङ्ग इत्यर्थः । **साधारणत्वादिति** । नच संबन्धस्य साधारण्येऽपि तत्र ग्रहस्तस्य बोध इति नातिप्रसङ्ग इति वाच्यम् । संबन्धसत्त्वे तत्रैव ग्रह इत्यस्यासंभवात् । नच यस्योपस्थितिस्तत्र ग्रहो नान्यत्रेति वाच्यम् । उपस्थितावपि पर्यनुयोगस्य समानत्वाददृष्टविशेषघटितसामग्रीतः कथंचित्तन्नियमेऽप्यनेकार्थोपस्थितौ सर्वत्र तद्ग्रहसंभवेन यस्य बोधोऽभिमतस्तदन्यबोधप्रसङ्गस्य तादवस्थ्यात् । **सर्वानिति** । गृहीततात्पर्यागृहीततात्पर्यानित्यर्थः । तथाच तदर्थतात्पर्यग्रहवतस्तद्बोध इव तदग्रहवतोऽपि तत्रैव तात्पर्यं तस्यैव बोधः स्यात् स्वरूपेण तात्पर्यस्योभयंप्रत्यविशेषादिति भावः । **न सर्वे इति** । तथाच तात्पर्यनिर्णयस्य नियामकत्वोपगमेनागृहीततात्पर्यस्य पुंसस्तदभावान्नोक्तापत्तिरिति भावः । **तर्हीति** । पुरुषगतेन निर्दोषत्वादिना नियमितस्य तात्पर्यनिश्चयस्य नियामकत्व इत्यर्थः । **पुरुषगत एवेति** । बोद्धृपुरुषगतएवेत्यर्थं । तथाच नियामकत्वेनाभिमतेषु प्रागुक्तेषु शक्तिः शब्दगता शक्यार्थसंबन्धरूपा लक्षणार्थगता तदन्यमात्रप्रतीतीच्छयानुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वरूपं तात्पर्यमपि शब्दगतमेव तात्पर्यनिर्णयस्तु पश्चादुक्तः । पुरुषगतस्तस्यापि नियामकपर्यनुयोगेऽनादिप्रवाहपतितविपाकाभिमुखक्रमवत्कार्यकारणसुकृतिचक्रघटकघटितसामग्रीचक्रान्तर्गतसुकृतिविशेषघटिततात्पर्यनिर्णयोपधायकनिर्दोषत्वातिरिक्तचरमसामग्रीतदुत्सारितदुरिततमःसमुद्रकादिदोषरूपप्रतिबन्धकाभावौ तात्पर्यनिर्णयनियामकतया पुरुषगावेवाभिधातव्यौ । एवंसति लक्षणाभ्युपगमेऽपि तात्पर्यनिर्णयद्वारा सामग्रीसहितो निर्दोषत्वरूपो विशेषः पुरुषग एव

नियामकः पर्यवसन्न इति भावः । **सचेति** । सच लक्षणादिवृत्तिमन्तरेणापि श्रुततत्त्वमस्यादिवाक्यस्य सहकारिभावमापन्नः पुरुषविशेषगतस्तात्पर्यविषयबोधस्य संभवत्येव नियामक इति लक्षणाद्यभ्युपगमोऽनर्थक एवेति भावः । **यादृशस्येति** । तात्पर्यनिर्णयानुकूलविचारादिमत इत्यर्थः । लक्षणाग्रहतज्जन्यशुद्धोपस्थित्यादेर्नहि यादृशपदार्थेऽन्तर्भावः लक्षणयेत्यभिधानस्यासङ्गत्यापत्तेः । एवंच तादृशस्यैवेत्यनेन लक्षणाग्रहाद्यतिरिक्तशाब्दानुकूलधर्मवतः शुद्धान्तःकरणस्यैव परामर्षेण विनापीत्यादेरपि नासङ्गतिः । तादृशस्यैवेत्येवकारेणाकृतविचारस्य शाब्दानुकूलव्युत्पत्तिरहितस्य नित्यनैमित्तिकानुष्ठानाद्युपजातान्तःकरणशुद्धेः पुरुषस्य व्यवच्छेदः तेन शब्दविशेषस्यैव कारणत्व उक्तपुरुषस्याप्युक्तसाक्षात्कारः स्यादित्यापत्तिरपाकृता । तादृशेत्यनेन विचारव्युत्पत्त्यादेरुक्तस्य पुरस्कारात् । **केवल इति** । कैवल्यमत्र लक्षणाजन्योपस्थितिसाहित्यराहित्यमुक्तदोषेण विचारादिपुरस्कारस्यावश्यकत्वेन स्वेतरराहित्यरूपस्य तस्य वक्तुमशक्यत्वात् । उपस्थितेरनावश्यकत्वे तद्धेतोर्गृहीताया लक्षणायाः सुतरामनावश्यकत्वमित्याह—**विनापि संबन्धेनेति** । **अयमभिप्रायः**—तत्त्वमसीत्यादेरुपासनाप्रकरणस्थत्वाभावेनोपास्यसमर्प्पकत्वासंभवात् 'ब्रह्मविदाप्नोति परं' 'तमेव विदित्वे'त्यादिश्रुतिबोधितमोक्षसाधननिर्विकल्पकसाक्षात्कारपरत्वे निर्णीते तदुपपत्त्यर्थमन्यत्राक्लृप्तं किमपि कल्पनीयम् । तत्र निर्विकल्पकोपस्थितिर्लक्षणाग्रहस्य तत्कारणत्वं लक्ष्यतावच्छेदकानवगाहिलक्षणाग्रहः शक्तिग्रहस्य विशिष्टार्थविषयकस्य शक्यसंबन्ध्युपस्थापकत्वं विशिष्टोपस्थितेर्विशेष्यमात्रशाब्दहेतुत्वं चेति सर्वमप्यक्लृप्तेषु किंचित्कल्पनीयम् । अथवोपस्थितिंविनैव शाब्दहेतुत्वमक्लृप्तं कल्पनीयमिति विमर्शे लाघवात्तत्त्वमस्यादिशब्दविशेषस्य तात्पर्यविषयनिर्विकल्पकसाक्षात्कारे शाब्दे हेतुत्वमेव कल्पनीयमिति सति चात्रास्य प्रामाणिकत्वे शाब्दबोधस्योपस्थितिजन्यत्वानुभवस्य न विरोधो न वान्यत्राप्येवमुपस्थित्यनपेक्षस्य शब्दस्य शाब्दहेतुत्वप्रसङ्गश्चेति विरोधिनोर्मध्ये यः प्रबलः स दुर्बलं बाधत इत्यज्ञानप्राबल्ये ज्ञानमुत्पत्तुमेव नार्हतीत्यत आह—**दुर्बलत्वादविद्याया इति** । तमःप्रकाशयोः स्वभावतः प्रकाशस्यैव प्राबल्यं । निबिडतमेऽपि हि तमसि स्वल्पोऽपि नीतः प्रदीपः तम एव पराभवति नतु तमसा पराभूयत इति प्रदीपोत्पत्त्यवस्थानप्रतिबन्धकसमवधानमेव तमसः प्राबल्यमेवमत्यन्तमालोकासंबन्धश्च तदुभयराहित्य आवरणाद्यपगमादीषदीषदालोकसंबन्धाच्च सति दौर्बल्यमेवावतिष्ठते । प्रतीपागमे सर्वथैव तदुच्छेद ईषदालोकसंबन्धे च तानवं स्फुटमनुभूयमानं यथा तथाऽज्ञानस्य ज्ञानोदयप्रतिबन्धकदुरितसमवधानमापातज्ञानसंबन्धश्च प्राबल्यम् । निदिध्यासनपरिपाकात्प्रतिबन्धकापगमो दौर्बल्यं तस्मिन्सति ज्ञानोदयेऽत्यन्तमुच्छेदः तात्पर्यनिर्णयमननादितोऽसाक्षात्कारात्मकापातज्ञाने तानवं दौर्बल्यं तस्मिन् सत्यश्रद्धाद्युत्पादनस्वकार्याक्षमत्वम् । तथाचाविद्याया उभयविधदौर्बल्ये शुद्धब्रह्मवेदनं साक्षात्कारात्मकं न दुर्लभमिति भावः । नन्वेवमपि तस्येन्द्रियाग्राह्यत्वान्नित्यमेव परोक्षत्वमहमर्थस्यापरोक्षत्वेऽपि तद्वेदनस्य न मोक्षानुकूलात्मवेदनत्वमित्यविद्योच्छेदसमर्थापरोक्षात्मज्ञानं दुर्लभमेवेत्यत आह—**आत्मत्वाद्बोधरूपिण इति** । 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुतेर्नित्यापरोक्षब्रह्मात्यन्ताभिन्नस्यैवात्मत्वेन तत्साक्षात्कारायेन्द्रियव्यापारस्यानावश्यकत्वादपरोक्षविषयवेदनस्येन्द्रियंविनाप्यपरोक्षत्वादपरोक्षस्तु स्वत एवायमात्मा न परत इत्यन्तःकरणनिर्गमनफलकेन्द्रियव्यापारस्य हि नापेक्षेत्युक्तरूपमात्मवेदनं नासंभवीति भावः । नन्वेवमपीन्द्रियस्यानपेक्षत्वेऽपि तादृशनिर्विकल्पकज्ञानमसंभवि । निर्विकल्पसमर्थतया प्रसिद्धस्येन्द्रियस्य तत्रासमर्थत्वादनुमानार्थापत्त्योरुद्देश्यविधेयभावापन्नार्थसविकल्पमात्रसमर्थत्वादुपमानानुपलब्ध्योरपि तादृशत्वाच्छक्त्यादिनियतविषयत्वाच्च । शब्दस्यापि पदपदार्थसंबन्धग्रहाधीनविशिष्टोपस्थित्यादिसहकृतस्य पदार्थद्वयसंसर्गावगाहिबोधजननस्वभावत्वादिति प्रमाणमात्रव्यापारस्य तत्राभावात्तथापि तत्स्वीकारे सर्वदैव तदापत्तिरित्यत आह—**शब्दशक्तेरचिन्त्यत्वादिति** । विचारातीतत्वादित्यर्थः । शब्दो हि सर्वप्रमाणमर्यादातिशायिमर्यादः । कोऽन्यो हि तमृते गृहीतबाधविषयं वह्निना सिञ्चतीत्यादौ वह्निकरणकसेकादिकमवगमयेत् । नावगतंचेत्कथमद्रवेण वह्निना सेकं ब्रवीषीत्याद्युपहासो नोपपद्येत । नचेच्छाप्रयुक्तप्रत्यक्षज्ञानात् संभवस्तस्य ज्ञानाद्यलौकिकसंनिकर्षनिराकरणेनासंभवादनुभवानारूढेच्छातत्सामग्रीकालविलम्बादिकल्पनागौरवपराहतत्वात् । ब्रवीषीत्यस्योपपादनायाप्रामाणिककुकल्पनाया अनुसरणीयत्वाच्च । एव'मेष वन्ध्यासुतो याति शशशृङ्गधनुर्धर' इत्यादावत्यन्तासदखण्डार्थगोचरविकल्पजननेऽपि तमृते कोऽन्यो हि प्रभुः को वात्यन्तालौकिकरसाद्यभिव्यक्तिसमर्थां 'गच्छगच्छसी'त्यादौ मागच्छेत्याद्यर्थाभिव्यक्तिसमर्थां प्रकरणनियमितशक्त्यगोचरागृहीततात्पर्यकार्थविषयानेकार्थकवाक्यस्थले तादृशार्थाभिव्यक्तिसमर्थां वात्यर्थालौकिकीं शक्तिं तमृते हि स्ववशगां बिभर्तुमीष्टे । नचात्र मानसज्ञानेन तन्निर्वाहः मनसो बहिरर्थेष्वस्वतन्त्रत्वात् अलौकिकसंनिकर्षस्य निराकरणात् । नाप्यनुमानेन व्यभिचारनिरूपकस्याप्यर्थस्याभिव्यक्तेः मुख्यार्थबाधस्याभावात् वक्तुस्तात्पर्याभावनिर्णयेऽपि सहृदयस्य तादृशार्थाभिव्यक्तेस्तात्पर्यानुपपत्तेरप्रतिसंधानाच्च । लक्षणाया अभावात् शक्तेः प्रकरणेन नियमितत्वाच्च न लक्षणशक्तिभ्यामपि निर्वाह इति शब्दस्योक्तविचित्रशक्तिं प्रामाणिकीं प्रसिद्धामपि प्रकृतानुपयोगिनीमाकलय्य शब्दशक्तेरचिन्त्यत्वादित्यस्य तादृशविचित्रशक्तिपरताभ्रमं निरसितुमुक्तवाक्यविवरणरूपं प्रकृतोपयोग्यत्यर्थाद्भुतशक्तिप्रतिपादकमनुपदमगृहीत्वैवेत्यादि वक्ष्यति तस्यायमभिसन्धिः । सुषुप्तस्य प्राथमिकबोधे कार्यत्वेन सकारणकत्वनिश्चये प्रबोधकवाक्यातिरिक्तस्यानुपलम्भेन बाधे परिशेषाद्वाक्यस्य तत्कारणतानिश्चयः । नचादृष्टमात्रात्तदुपपत्तिः । तस्य प्रबोधकवाक्यादिरहितस्थलीयप्रबोधे क्लृप्तत्वादिति वाच्यम् । कालक्रमेण निद्राप्रयोजकदोषोपशमेन निद्राहानेरेव तत्रोप-

गमाददृष्टमात्रस्य तत्राप्यकारणत्वाच्च । प्रबोधस्य तत्र निद्राक्षयोत्तरसंपन्नलौकिककारणादेवोपगमात् दृष्टकारणोपलम्भे त्वदृष्टमात्रस्य तथात्वानङ्गीकारात् अन्यथा सकललोकव्यवहारव्याकुलीभावप्रसङ्गात् । नच तत्र लोकप्रसिद्धशक्त्या निर्वाहः । तस्याः पदपदार्थसंबन्धग्रहतज्जन्योपस्थित्यादिसहकृताया एव फलोपधायकत्वव्यवस्थितेः सुषुप्तौ तदसंभवात् सुषुप्त्यपगमक्षणे लोकविलक्षणसामग्रीतः संबन्धग्रहादिकं प्रकल्प्य तदभ्युपगमे साक्षाल्लोकविलक्षणशक्तेर्लाघवेन तद्वाक्य एव कल्पयितुमुचितत्वात् । अथ भेर्यादिशब्दादवाक्यादपि प्रबोधान्नेदं तत्त्वमसीति वाक्यस्य तथाबोधकत्व उदाहरणीकर्तुमुचितम् । सुप्तप्रबोधकवाक्यस्य भेर्यादिशब्दसमानशक्तिमत्त्वोपगमादिति चेदुच्यते । यत्र हि प्रबोधकवाक्येनोत्तिष्ठोत्तिष्ठ प्रबुध्यस्वेत्याद्यात्मकेनावर्तितेन प्रबोधो वाक्यतात्पर्यगोचरस्वरूपविषयको जायते सचानुभविकःप्रबुद्धोऽहमस्मीत्यादिव्यवहारान्यथानुपपत्त्या सिद्धः प्रबुद्धोऽस्मि न वेति संशयादर्शनात्तवान्यस्य वा व्यापारादित्यादिसंशयदर्शनात् वाक्यार्थप्रबोधगोचरः तदन्यागोचरः स निर्णीतः । तत्रोक्तप्रबोधे जाग्रद्दशायामुक्तवाक्ये क्लृप्ता या शक्तिस्तस्या एव लाघवादुपस्थित्यादिसहकारिवैकल्येऽपि फलोपधायकत्वरूपवैचित्र्यमात्रं हि कल्प्यते नतु भेरीशब्दादिसाधारणशक्त्यन्तरं । तच्च क्वचिदपि ज्ञानादिविषयकोक्तबोधे भेरीशब्दादौ न क्लृप्तमिति तत्कल्पनं तस्यान्यत्र क्लृप्ततादृशबोधसामग्रीवैकल्येऽपि फलोपधायकत्वकल्पनमित्युभयकल्पने गौरवात् । एवं शक्यत्वेनाक्लृप्तत्वाविशेषाज्ज्ञानादिगोचरप्रबोधे तच्छक्तिकल्पने प्रबोधकपुरुषसंबन्धादिविषयकेऽपि तस्मिन् सा स्यात् तथासत्युक्तसंशयानुपपत्तिरतस्तत्प्रबोधनिरूपितत्वे सति तदितरबोधानिरूपितत्वेन तत्कल्प्यमित्यस्यापि गौरवस्य सत्त्वात् । मन्मते तादृशबोध एव तद्वाक्यस्य क्लृप्ता शक्तिर्नोक्तसंबन्धबोध इत्यशक्तेरेव तदनुत्पत्तिनिर्वाहात् । अक्लृप्ते शक्तेरकल्पनेन तदविशेषादन्यत्राप्यक्लृप्ते तत्प्रसक्तेरेवाभावात् । तस्मान्निद्राया अभावप्रत्ययालम्बनवृत्तिविशेषादिरूपाया हानिरेव भेरीशब्दाज्जायते एवमनुभूयमानप्रबोधविषयाविषयकतारतरवाक्यादपि निद्राहानिरेव । प्रबोधस्तु भेरीशब्दाद्यतिरिक्तसामग्रीसंपत्त्या विलम्बेनैवेत्युपेयम् । नचोक्तप्रबोधसमर्थवाक्यस्थलेऽप्येवमुचितम् । तादृशवाक्यस्य तादृशबोधे क्लृप्ता या शक्तिस्तस्याः प्रागुक्तोपधायकत्वमात्रकल्पनातोऽननुभूयमानजाग्रत्स्थलीयोत्पत्तिविनाशवद्वाक्योपस्थित्यादिघटितसामग्रीकल्पनाया गौरवपराहतत्वात् । भेरीशब्दादिस्थले त्वत्यन्तादृष्टतयातिजघन्यशक्तिकल्पनापेक्षया दृष्टोक्तसामग्रीकल्पनाया एवोचितत्वात् । अस्मत्पक्षे चादृष्टशक्तिकल्पनाया एवाभावादित्युक्तप्रबोधजनकवाक्यस्यैव दृष्टान्ततयाऽभिमतत्वेन सर्वसामञ्जस्यम् । **विद्मस्त्वं मोहहानत इति** । त्वं स्वप्रकाशज्ञानस्वरूपमात्मानमित्यर्थः । वेद्मीत्यस्य भग्नावरणचित्तादात्म्याश्रय इत्यर्थः । द्वितीयेयं क्रियाविशेषणेऽभेदस्तदर्थः । विषयत्वस्य शुद्धात्मन्यसंभवात् । तथात्वे तस्य दृश्यत्वेन मिथ्यात्वापत्तेः भग्नावरणचित्तादात्म्यस्यैव दृश्यत्वरूपत्वे भेदगर्भस्य तस्य स्वस्मिन्नसत्त्वेन मिथ्यात्वापत्त्ययोगात् वृत्तेराकाराख्यस्य विषयत्वस्य तत्राभ्युपगमसंभवेऽपि वेदनस्य तद्रूपत्वोक्त्यसंभवात् । तसिल्प्रत्ययेनोक्तस्य मोहहानेरविद्यानिवृत्तेस्तत्प्रयोजकत्वस्यासंभवात् तस्या एव तत्प्रयोजकत्वात् । उक्तप्रयोजकत्वस्य ह्यज्ञाननाशंप्रति स्वरूपसंबन्धविशेषरूपत्वं तद्वृत्त्यधिकरणक्षणस्याविद्यातत्प्रयुक्ताधिकरणक्षणपूर्वत्वाभावनियमरूपत्वं वेत्यन्यदेतत् । तसिलः सार्वविभक्तिकत्वेन मोहहानायेत्येतत्समानार्थकत्वे वेदनत्ववृत्तिरूपत्वे च द्वितीयाया आकाराख्यविषयत्वार्थकत्वमपि संभवति हानशब्दस्य प्रागुक्तदौर्बल्यलक्षणक्षैण्यार्थकत्वेऽपि वेदनस्य तादृशात्माकारवृत्तिरूपत्वं संभवति तत्प्रयुक्तत्वस्य तत्राबाधादित्येवं वा द्वितीयाया विषयत्वार्थकत्वसंभवः । विद्मस्त्वं मोहहानत इत्येतद्विवृणोति—**अविद्याघातिन इत्यादिना** । ज्ञानाज्ञानयोर्विरुद्धयोरेकदा सत्त्वासंभवात् भावरूपस्याप्यज्ञानस्य न जानामीत्यादिप्रत्ययगोचरस्य ज्ञानाभाववत् स्वत एव ज्ञानविरोधित्वात् वृत्तिकाल एवाविद्यानाशोऽभ्युपेयः । विरोधिसामग्र्या एव च तन्नाशकत्वं वाच्यम् । समवायिनाशाधीनकार्यनाशस्थले नैयायिकानामिवोपादानव्यतिरेकेणापि क्षणं वृत्त्यवस्थानस्य संभवात् । नच 'नश्यत्यविद्यया सार्धं'मित्यस्य विरोधस्तेन तयोः सहैव नाशस्य प्रतिपादनात् सहभावस्यैककालोत्पत्तिकत्वरूपस्यैवैतादृशस्थले प्रत्ययादन्यथा दिवसादिविलम्बेन घटनाशोत्तरं पटनाशे घटेन सार्धं पटो नश्यतीत्यपि स्यादेककालस्थितेस्तत्रापि सत्त्वादिति वाच्यम् । सहनाशो हि तयोर्न वृत्त्युत्पत्तिक्षण उत्पत्तिनाशयोरेकदाऽसंभवात् । नापि हि वृत्त्युत्पत्त्यनन्तरक्षण उभयोर्नाशकस्य पूर्वक्षणे दुर्निरूपत्वात् शब्दस्याविद्यानाशकत्वेऽपि वृत्तिनाशकत्वायोगात् । जनकस्यैव तस्य नाशकत्वे जन्मासंभवात् रूपभेदेनापि तयोर्विरुद्धस्वभावयोर्बलवत्प्रमाणाभावेन तस्योपगन्तुमशक्यत्वात् । वृत्तेरविद्यानाशकत्वसंभवेऽपि स्वनाशकत्वस्यायोगात् अनुभवविरोधात् क्षणिकान्त्यशब्दस्योपान्त्यशब्देन तस्यान्त्यशब्देन समकालमेव नाशात् । तत्रापि क्षणिकान्त्यशब्दस्य स्वनाशकत्वानुपगमात् । वृत्त्यविद्ययोः सह नाशे हत्वेत्यादिनोक्तस्य रोगनाशोत्तरकालिकौषधनाशस्य दृष्टान्तत्वासङ्गतेश्च । तस्माद्विरोधिवृत्तिसामग्र्या अविद्यानाश उपादानभूताविद्यानाशाद्वृत्तिनाश इत्येवाभ्युपेयमित्यगत्याऽविद्यानाशवृत्तिनाशयोरेकमात्रक्षणेनाप्यव्यवहितयोरुत्पत्त्योर्दुर्ग्राह्यक्रमतया समानकालत्वमुपचर्यातितीक्ष्णेयं सूची यत्समं शतपत्रपत्रशतं भिनत्तीतिवत् साविद्यया सार्धंनश्यतीति प्रयोगः कृत इत्यस्योपेयत्वात् । तादृशस्थलेऽन्यत्र सहभावस्यैककालोत्पत्तिकत्वरूपत्वेऽपि समानकालत्वमात्रविवक्षया वा यथाकथंचिदत्र तस्योपपाद्यत्वात् दृष्टान्तवाक्यस्य पक्षद्वयेऽपि सर्वथा सामञ्जस्याविरहात् । सहनाशपक्षे स्वस्य स्वनाशकत्वाभ्युपगमेन समानकर्तृकत्वसंभवेऽपि पौर्वापर्यस्यात्रपक्षे समानकर्तृकत्वस्यासंभवेनैकमात्रपरित्यागेन हत्वेत्यस्यामुख्यताया एवोपेयत्वात् । एवं चाविद्याघातिन इत्यस्याविद्यानाशजनकादिति मुख्य एवार्थोऽभ्युपगतो भवत्युपक्रमस्थत्वेन तन्मुख्यार्थत्वस्यैव

न्याय्यत्वात् । यद्वा विरोधिज्ञानक्षणोत्पन्नसन्निकर्षादिसामग्रीजन्यविरोधिज्ञानोत्पत्तिक्षणे न्यायनये विरोधिनोः क्षणमेकत्रावस्थानमिव भावरूपयोर्ज्ञानाज्ञानयोरपि क्षणमेकत्रावस्थानमुपेयम् । ज्ञानाव्यवहितोत्तरक्षणे च तस्मादज्ञाननाश एवं सति ज्ञानस्य तत्र तत्राज्ञाननाशकत्वोद्घोषो न दौःस्थ्यमुपयाति । विरुद्धयोरपि रूपभेदेनैकत्रावस्थानस्य बहुधा दर्शनादन्यस्य नाशकत्वबाधे कार्यत्वेन तन्नाशस्यावश्यकत्वे च सति तन्नाशः तत्कारणशब्दजन्योऽसंभावितशब्देतरजन्यत्वे सति जन्यत्वादित्यनेन शब्दस्य नाशजनकत्वे सिद्धे शब्दनिष्ठा तद्वृत्तिनाशजनकता तन्निष्ठतद्वृत्तिजनकतावच्छेदकातिरिक्तधर्मावच्छिन्ना तद्विरुद्धत्वेन प्रतीयमाननिरूपितजनकतात्वादितिरूपभेदेन नाशकत्वजनकत्वयोः प्रामाणिकत्वेऽविद्यानाशक्षण एव स्वजनकशब्दाद्वृत्तिनाशसंभवः । जनकतावच्छेदकं च तादृशशब्दत्वं नाशकतावच्छेदकं च तन्निष्ठविशेषणतया वृत्त्युपहितत्वं बोध्यम् । किंवा स्थित्यनुभवविरोधेनान्येषां स्वनाशकत्वासंभवेऽपि स्थित्यनुभवरहितस्य क्षणिकान्त्यशब्दादेस्तत्त्वसाक्षात्कारस्य च स्वनाशकत्वोपगमे क्षत्यभावात् । अविद्यानाश इव स्वनाशोऽपि स्वोत्पत्त्यव्यवहितोत्तरक्षणे स्वस्मादेव जायते । अत्रच पक्षे दृश्यत्वावच्छिन्ननाशंप्रति तत्त्वज्ञानत्वेनैककार्यकारणभावसंभवाल्लाघवम् । एवंच 'नश्यत्यविद्यया सार्ध'मित्यस्य नौपचारिकत्वं दृष्टान्तोपपादनं तूक्तमेवेत्यविद्याघातिन इत्यस्य ब्रह्माकारवृत्तिद्वाराऽविद्यानाशकस्येत्यर्थः । अत्र नश्यत्यविद्ययासार्धमित्यस्य प्रधानीभूतवाक्यांशस्य मुख्यार्थत्वं न्याय्यमव्याहतं भवति । केचित्तु दृष्टान्तवाक्यस्यैव मुख्यार्थकत्वमभ्युपगच्छन्ति विना बलवत्प्रमाणमुपादानासमवायिकारणनाशातिरिक्तस्य कार्यनाशकतायां मनःप्रत्ययमलभमाना रोगोपादाननाशद्वारैव हि रोगनाशकत्वमौषधस्य । एवंच रोगं हत्वा स्वोपादाननाशेन यथौषधं नश्यति एवमविद्यां हत्वा तद्रूपोपादाननाशादहं ब्रह्मेति या धीः सा नश्यतीत्यर्थः । सार्धमिति त्वौपचारिकमेवाविद्याघातिन इत्यस्य वृत्तिद्वारा यन्नाशकत्वमविद्यानाशकजनकत्वरूपममुख्यघातकत्वं तदर्थकत्वेनामुख्यार्थत्वमेवेति वदन्ति । वस्तुतस्तु तत्त्वज्ञानसमानकालिकस्तदुत्तरकालिको वाऽविद्यानाशः स्वकारणाभिमतजन्यो न संभवति कारणजन्यस्य तस्य ब्रह्मस्वरूपत्वासंभवेनाविनाशे मोक्षे श्रुतस्याद्वैतस्य भङ्गापत्तेः । विनाशे चाविद्योन्मज्जनापत्तेस्तन्नाशस्याविद्याविशिष्टनाशनाशत्वेनाविद्यानाशरूपत्वोपगमेन तद्वारणेऽपि तस्याविनाशेऽद्वैतभङ्गापत्तेः तस्यापि नाशेऽनवस्थापत्तेः । नह्यत्यन्ताभाववत् ध्वंसस्यापि सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं येन नेह नानेत्यादिश्रुतिबोधितसकलद्वैतबाधरूपद्वैतवन्निष्ठदृश्यत्वावच्छिन्नाभावस्य दृश्यत्वेन स्वघटतदत्यन्ताभावत्वविशिष्टाद्युभयप्रतियोगिकत्वेन मिथ्यात्वस्य मिथ्यात्वेऽपि घटादेरमिथ्यात्वप्रसङ्गवारणवत् । तत्त्वज्ञानजन्यनाशस्यापि सकलदृश्यप्रतियोगिकत्वेन प्रतियोगितन्नाशप्रतियोगिकतया नाशनाशेऽपि भावोन्मज्जनस्यानवस्थायाश्च प्रसङ्गवारणं स्यात् । नह्यभ्युपगन्तुमपि शक्यम् । तद्यथाहि समवायादिना प्रमेयं नास्ति घटतदत्यन्ताभावौ न स्त इत्यादिप्रतीतेरत्यन्ताभावस्योभयप्रतियोगिकत्वं प्रामाणिकं न तथा ध्वंसस्य घटतद्ध्वंसौ नश्यत इत्याद्यप्रतीतेः । तथाच प्रमेयं नास्तीति प्रतीतिसिद्धाभावस्य प्रमेयत्वेन स्वप्रतियोगिकत्वं स्वस्यापि समवायेनासत्त्वात् । बाधकविरहात् । नहि स्वं समवायेन क्वचिज्जात्यादौ वर्तते । नहि न प्रमेयम् । एवं नाशस्य स्वप्रतियोगिकत्व उत्पत्तिनाशयोरेकदा संभवविरहात् । अनादिभिन्नस्य तस्योत्पत्तिरहितत्वेन तुच्छत्वापत्तिः । तथाच न नाशोऽपि नहि वन्ध्यापुत्रादिकं नश्यति तस्योत्पत्तिमत्त्वे तत्कालेन स्वं नापि स्वभिन्नं नाशरूपं हि वस्तु कालभेदेन नाशद्वयाभ्युपगमेऽपि न निस्तारः । उत्तरनाशस्य पूर्वनाशप्रतियोगिकत्वसंभवेऽपि पूर्वनाशस्योत्तरनाशप्रतियोगिकत्वासंभवात् । तत्पूर्वं तस्यानुत्पन्नत्वेन प्रतियोगिरूपतत्कारणविरहात् । अथाविद्यादिसकलदृश्यनाशस्याविनाशेऽपि कुतोऽद्वैतहानिः परमार्थसत्त्वस्य तत्रानुपगमेन परमार्थसद्द्वितीयराहित्यरूपस्याद्वैतस्याविघातात् । घटसत्त्वकाले घटात्यन्ताभावस्येव नाशकालेऽपि नाशात्यन्ताभावोपगमेन मिथ्यात्वस्य संभवात् । नच नाशस्याविनाश उत्पन्नस्य तस्यानन्तत्वापत्तिरिति वाच्यम् । इष्टापत्तेः । नच तथात्वे कल्पितत्वं न स्यादिति वाच्यम् । यथा ह्यनादित्वं न जीवादिषण्णां कल्पितत्वविरोधि तथाऽनन्तत्वमपि न नाशस्य तथात्वविरोधि विरोधि च स्वभावसत्त्वमुभयत्रैव हि न प्रामाणिकमेकेन सद्रूपेण सर्वत्र सत्प्रतीत्युपपत्तौ प्रातिस्विकसत्त्वकल्पनाया गौरवपराहतत्वेनौपाधिकसत्त्वस्यैव व्यवस्थितेः । नच कल्पिकाया अविद्यायास्तदानीमभावात् कथं कल्पितत्वमिति वाच्यम् । नहि तत्तत्पदार्थसमानकालिकयैव कल्पनया भवति कल्पितत्वं येनाविद्यानाशस्य न स्यात् । तथा सति वियदादीनामीश्वरकल्पितत्वपक्षे तदुत्पत्तिपूर्वकालिकमायावृत्तिरूपकल्पनया कल्पितत्वं न स्यात् । नचेश्वरस्य सा वृत्तिर्न कल्पना कल्पना हि भ्रम इतीश्वरो भ्रान्तः स्यादिति वाच्यम् । बाधितविषयकत्वेन तस्या भ्रमत्वस्य दुर्वारत्वात् । भ्रान्तिं हि भ्रान्तित्वेनाजानत एव भ्रान्तत्वं । नहि स्वस्मिन् रामत्वादिकमारोप्य तास्ताश्चेष्टाः कुर्वन्नटो भ्रान्त उच्यत इति भ्रान्तिसत्त्वेऽपीश्वरस्याभ्रान्तत्वोपपत्तेः । तादृशी च वृत्तिरीश्वरस्य जीवादृष्टमात्रात्तदुद्भावितेच्छातो वा सर्वज्ञस्य । एवमेव जीवाज्ञानकल्पितत्वपक्षेऽपि । तथाचाध्यासः कल्पनाभ्रान्तिरित्यनर्थान्तरम् । सा यथेदं रजतमित्यादौ बाधात्प्राक् सत्तया गृहीतेदमर्थादिविशेष्यिका रजतस्य कल्पना तथा सत्यविद्या सन् जीवः सन् घट इत्यादिप्रतीतिर्विचारग्राह्यभ्रान्तित्वकाकल्पनाऽविद्यादीनां बाधात्प्राक् यदा कदापि भवन्ती तत्तद्विषयाणां सैव सिद्धिरिति तद्विषयत्वरूपं कल्पितत्वं तेषां यदि सत्प्रतीतिरभ्रान्ता स्यात् । तदतिरिक्ता वा काचित्प्रमासिद्धिः स्यात् । प्रमितत्वेन तेषां तदा कल्पितत्वं न भवेत् । नह्येवमस्ति सर्वस्यैव सविकल्पकस्य कालस्येव सत् संबन्धस्यावगाहित्वेन भ्रमत्वात् । नह्ययं घटः पर्वतो वह्निमानित्यादिप्रत्यये सति घटवह्न्यादीनां सत्त्वे भवन्ति केऽपि सन्दिहानाः । न्यायादिनये

कदाचिद्धटादीनां भ्रमात्मकप्रत्ययेऽपि प्रमायास्तत्सिद्धिरूपायाः सत्त्वेन कल्पनयैव सिद्धत्वविरहेण नहि तेषां कल्पितत्वम् । नच न भ्रमादर्थसिद्धिरित्यस्य विरोध इति वाच्यम् । न भ्रमेणार्थपारमार्थिकसत्त्वस्य गोचरीकरणमित्यत्र तात्पर्येण विरोधाभावात् । नच प्रत्यक्षस्य सत्त्वावगाहित्वे स्वाभाविकतदवगाहित्वमेवास्तु बलवता तेन तद्विषयमिथ्यात्वग्राहकस्यागमस्यैव बाधः किं न स्यादिति वाच्यम् । सदोषत्वेन संदिग्धात्प्रत्यक्षान्निर्दोषत्वेन निश्चितस्यागमस्यैव प्रबलत्वेन विषयमिथ्यात्वग्राहकाद्वैतश्रुत्या तस्यैव हि बाधः स्यात् । तथाच यस्यौपाधिकसत्त्वविषयत्वस्यैव वाच्यत्वात् । नापि हि मिथ्यात्वविरोधित्रिकालाबाध्यत्वस्य प्रत्यक्षायोग्यस्य विषयत्वं प्रत्यक्षेऽभ्युपगच्छामः । किं त्वनुगतसद्रूपस्य स्वत एव प्रत्यक्षयोग्यस्य संबन्धं तादात्म्यरूपं प्रत्यक्षादिविषयमूरीकुर्मः । तच्च तादात्म्यं भग्नावरणसद्रूपचितो विषयत्वरूपं न मिथ्यात्वविरोधि अपितु साधकमेव यो हि यथाकल्पनारूपस्वसिद्ध्या गोचरीक्रियते स तथैव भवति सिद्धो गोचरीकृतश्चाविद्यादिपदार्थोऽनादिसान्ततया घटादिरुत्पत्तिविनाशतत्तद्देशकालादिसंबन्धितयेति ते तथैव भवन्ति सिद्धाः । कल्पना च नोत्पत्तेः प्रयोजिकेति न नियमेन पूर्वमपेक्षिता न स्थितेरिति न सदैव स्थितिकालेऽपीति । यदाकदाचिदपि भवन्ती सद्रूपेण विषयं गोचरयन्ती सिद्धिरूपा विषयस्य सिद्धत्वमापादयन्ती तुच्छव्यावृत्तेः प्रयोजिकेति । साचेयं कल्पनानन्तेऽप्यज्ञाननाशे ज्ञानादज्ञाननाशः सन्नेवंरूपासंसारकाल एव जायमाना विद्या नाशेऽपि कल्पितत्वस्य प्रयोजिकेत्यनन्तत्वेऽप्यविद्यादिनाशस्य न कल्पितत्वहानिरिति चेदुच्यते । नहि बाधितः सन् कश्चिदुत्पद्यते । घटादिव्यावहारिकाणां शुक्तिरजतादिप्रातीतिकानां च बाधात्प्रागेवोत्पत्तिदर्शनात् । तथाच चरमतत्त्वसाक्षात्कारो यद्यविद्यादीनामिव तेषां नाशस्यापि बाधस्तदा बाधितः स नोत्पद्येतैवाविद्यादिनाशो यदि न स नाशस्य बाधस्तदा तादृशनाशोत्तरं पुनस्तस्य बाधस्योत्पत्त्यसंभवेन तस्याबाधिततया त्रिकालाबाध्यलक्षणपरमार्थसतो ब्रह्मातिरिक्तस्य सत्त्वेन कुतो नाद्वैतहानिः । किंच परमार्थसद्द्वितीयराहित्यस्य परमार्थसत्त्वेन द्वैताभावरूपस्याद्वैतपदार्थत्वाभ्युपगमे तद्रूपाद्वैतस्य मुक्तिसंसारकालयोरविशेषेण विशिष्य विदुषो द्वैतप्रतिपादनं 'विद्वान्नामरूपाद्विमुक्तः' 'ज्ञात्वा देवं मुच्यते सर्वपाशै'रित्यादिभिरसमञ्जसं स्यादिति । येन रूपेण द्वैतस्य कल्पनया सिद्धिस्तद्रूपावच्छिन्नाभाव एवाद्वैतपदार्थो वाच्यः । तथा सति तादृशरूपावच्छिन्नाभावो न बाधात्प्राक् इति विशिष्य मोक्षे तत्प्रतिपादनं भवति समञ्जसविद्याविनाशस्य मोक्षदशायां विद्यमानत्वे चाविद्याविनाशत्वरूपोक्तधर्मावच्छिन्नस्य सत्त्वे तदभावस्यासंभवेन भवेदद्वैतभङ्गः । यदि प्रपञ्चस्य स्वरूपेणैवाभावो मिथ्यात्वघटकस्तदा तादृशाभावरूपस्याद्वैतस्य नोक्तश्रुतिविषयत्वसंभवो मोक्षसंसारयोस्तत्सत्त्वस्याविशेषात् । किंतु दृश्याधिकरणसामान्यभेदरूपस्य सच दृश्यवति दृश्यात्यन्ताभाव इव दृश्यावच्छेदकदेशकालावच्छेदेन नाभ्युपेयत इति संसारदशायां न तस्य संभवो मोक्षकालेऽपि यद्यविद्यानाशादिरूपदृश्यवत्त्वं ब्रह्मणि स्यान्न स्यात्तदानीमपि तस्य संभव इति भवेदेवाद्वैतभङ्गः । दृश्यासत्त्वे च प्रतियोग्युपलक्षितस्वरूपेणाधिकरणीभूतब्रह्मरूपस्य तस्योपगमेन भवत्यद्वैतभङ्गः । उपलक्षकतापि तस्य कल्पितेनैव संबन्धेन । नचैककाले कदाप्यविद्यमानयोः कथमुपलक्षकत्वमपीति वाच्यम् । प्रतियोगित्वानुयोगित्वयोः स्वरूपसंबन्धात्मकत्वपक्षे प्रतियोगिना ध्वंसप्रागभावयोः स्वरूपात्मकसंबन्धेन विशिष्टप्रत्ययविषयत्ववत् । तादृशाधिकरणशुद्धब्रह्मणोरुक्तप्रत्ययविषयत्वस्य संभवेनोपलक्ष्योपलक्षकत्वस्य संभवात् । वस्तुतः सर्वधर्मशून्यस्य स्वप्रकाशसचिद्रूपस्य समस्तबाधावसानस्य बाधासंभवादज्ञानासंभवाच्च । विषयत्वोपलक्ष्यत्वशुद्धत्वदृश्याधिकरणसामान्यभेदादीनां तत्र निर्वचनासंभवेऽपि व्यवहारप्रवृत्त्युपयोगिनो व्यवहारकालकल्पितस्य संभवेन तेन सर्वव्यवहारोपपत्तेः । तैस्तैः पदैः लक्षणवाक्यादिवत्तद्विपरीतबुद्धिविरोधिनिर्विकल्पकस्य संभवात्तस्य मोक्षेऽद्वितीयं शुद्धमानन्दं ब्रह्मेत्यादिव्यवहारस्य प्रयोजकत्वात् । शुद्धे धर्माणां विरहेऽपि प्रपञ्चतत्समानसत्ताकस्य शुद्धनिरूपितोपलक्षकत्वशुद्धस्वरूपाद्वैतप्रतियोगित्वादेः सत्त्वेन तस्यैवोक्तव्यवहारहेतुत्वोपगमाद्वा सर्वोपपत्तिसंभवः । अथ स्वरूपेणाभावपक्षो न युक्तः । घटसत्त्वेऽपि तस्य सत्तया प्रत्यक्षायापत्तेरिति चेन्न । स हि स्वाश्रये विद्यमानोऽप्यविद्यारूपदोषान्नाध्यक्ष इत्यपरोक्षस्य घटादौ मिथ्यात्वग्रहस्याभावात् घटसत्त्वतदभावयोः विरोधप्रतिसंधानेनैककालेन तयोर्ज्ञानमिति प्रवृत्तिनिवृत्त्यादेरपि न व्याघातः । शुक्तिरजतघटादीनां निषिद्धस्वरूपत्वेऽविशेषेऽपि व्यवहारकाले स्वरूपनिषेधप्रत्यक्षाप्रत्यक्षाभ्यामेव विशेषः । नच निषिद्धस्वरूपत्वे गगनकुसुमादितुल्यतया घटादीनामुत्पत्तिर्दण्डादीनां कारणत्वं न स्यादिति वाच्यम् । सत्त्वेन प्रतीयमानत्वतदभावाभ्यामुभयोर्वैलक्षण्यम् । सत्त्वेन प्रतीयमानत्वमेव हि तुच्छव्यावृत्तं कारणोत्पत्त्यादिमत्त्वे प्रयोजकम् । तच्च घटादीनामस्त्येव । नह्यनिषिद्धस्वरूपत्वं परमते तादृशस्य गगनादेरुत्पत्तेस्तादृशस्य पारिमाण्डल्यादेः कारणत्वस्य चाभावात् । वचनानिषिद्धस्वरूपत्वं नोत्पत्त्यादेर्व्याप्यं येन तस्य गगनादावुत्पत्त्यादिप्रसञ्जकत्वं स्यात् किंतु व्यापकमेव । तच्च दण्डघटादितो व्यावृत्तं करणत्वोत्पत्त्यादिकमपि व्यावर्तयेदिति वाच्यम् । उभयसंप्रतिपन्नानिषिद्धस्वरूपोत्पत्त्यादिमत्पदार्थस्याभावेन सहचारदर्शनस्यैवाभावेन व्याप्यव्यापकभावस्य दुरवधारणीयत्वात् । यद्यनिषिद्धस्वरूपत्वं पारमार्थिकसत्त्वं वा कार्यकारणभावावच्छेदकं स्यान्न स्यान्निषिद्धस्वरूपस्योत्पत्त्यादिमत्त्वम् । नह्येवमस्ति घटत्वदण्डत्वाभ्यामेव लाघवेन कार्यकारणभावात् । न्यायनये चाव्यावर्तकत्वात् अस्मन्मते चासत्त्वादनिषिद्धस्वरूपत्वादेस्तदवच्छेदकत्वस्य वक्तुमशक्यत्वाच्च । नच स्वरूपेणैव दण्डादीनां घटादिकार्याधिकरणेऽभावसत्वे नियतपूर्वसत्त्वरूपस्य कारणत्वस्य न संभवः दण्डादीनां तत्रासत्त्वात् । असत्त्वेऽपि कारणत्वे तन्त्वादीनामपि घटे कारणत्वं स्यादिति वाच्यम् । कारणताघटकीभूतं हि सत्त्वं

नानिषिद्धस्वरूपत्वादिकमपितु वर्तमानत्वं तच्च निषिद्धस्वरूपस्यापि दण्डस्यैव घटदेशेन तन्त्वादेरिति दण्डस्य कारणत्वेऽपि तन्त्वादेरकारणत्वसंभवात् । नच स्वरूपेण स्वाभाववति स्वस्य स्थितिरेव कथं स्यात् विरोधात् अन्यथा पर्वतह्रदयोः समानमेव वह्निमत्त्वं स्यादिति वाच्यम् । तादृशाभावस्य स्थित्यविरोधित्वात् । पारमार्थिकसत्त्वस्यैव विरोधित्वात् स्थितिर्हि स्वकारणाधीना पर्वत एव कारणसाम्राज्याद्भवति वह्नेर्न ह्रद इत्यस्य वक्तुं शक्यत्वात् । नच कारणेऽपि तादृशपर्यनुयोगः समान इति वाच्यम् । तादृशपर्यनुयोगस्य सत्त्वाभ्युपगमपक्षेऽपि समानत्वात् । पर्वत एव कस्माद्वह्निसामग्री न ह्रदे सामग्रीकारणमपि कुतः पर्वत एव न ह्रद इत्येवं पर्यनुयोगपरम्परायाः संभवात् । दण्ड एव घटकारणं कुतो न तन्तुरित्यनुयोगस्यापि संभवात् अदृष्टेश्वरेच्छादावपि तादृशातादृशत्वविकल्पस्य संभवात् । नच नित्यत्वादीश्वरेच्छायां प्रवाहानादित्वाददृष्टादौ न तदवकाश इति वाच्यम् । तन्तोर्घटो भवतु ह्रदे वह्निसामग्री भवत्वेवं रूपत्वेपीश्वरीयत्वनित्यत्वादिप्रामाणिकवस्त्वव्याघातेन तादृशपर्यनुयोगस्य वारयितुमशक्यत्वात् । नचेश्वरेच्छादेरप्रत्यक्षत्वेन कल्प्यतया तन्तोर्घटादर्शनात् ह्रदे वन्ह्यदर्शनात् तन्तौ घटकारणत्वाभावस्य ह्रदादौ वह्निसामग्र्यभावस्य निर्णयात्तथाविधेश्वरेच्छादेस्तत्तदनुकूलादृष्टादिप्रवाहादेर्न कल्पनमिति वाच्यम् । यथा दर्शनं कल्पनेति हि वदता परिहृतस्त्वया दुर्वारोऽपि दोषनिवहः । परन्त्वेवमस्मत्पक्षेऽप्युक्तपर्यनुयोगादौ परित्यजाक्षिनिमीलनमुन्मीलितेक्षिणि सर्वदोषपरिहारस्य तवावलोकनसंभवात् । तथाहि समानेऽपि गुणत्वे रूपादेर्नैकावयविनि भावे सत्यभावः संयोगादेश्च भावे सत्यप्यभावो दर्शनतदभावाभ्यामेव यथाभ्युपगतः तथाऽभावत्वाविशेषेऽपि क्वचिदाश्रये प्रतियोगी न सर्वत्रेत्यस्यापि दर्शनतदभावावेव नियामकौ । यत्र यस्य दर्शनं तत्रैव तस्य सिद्धिरुत्पत्तिरवस्थितिश्च नान्यत्रेति पर्वत एव वह्नेः स्थितिर्न ह्रद इत्यत्रावयोर्न विशेषः तथा सति सर्वव्यवहाराणामदौस्थ्यं ममापि विशेषस्त्वयमावयोर्विषयदर्शनरूपासिद्धिस्तव वस्तुतः प्रमैव ममतु भ्रान्तिरेव । भ्रान्तिर्द्विविधा व्यवहारकाल एव बाधात् भ्रान्तित्वेन गृहीतायां भवानपि भ्रान्तिरूपां मन्यते तया नार्थसिद्धिः भवदभिमता मया तु साप्यर्थसिद्धिरूपाभ्युपेयते यया शुक्तिप्रदेशे सिद्धस्य रजतस्य साक्षात्कारिप्रत्ययस्तत्र रजतासिद्धौ देशान्तरस्थरजतस्यैव प्रत्यये साक्षात्कारिप्रत्ययानुपपत्तेरापणस्थरजतवदलङ्काराद्यखिलरजतकार्यासमर्थत्वात्तत्रासिद्धत्वव्यवहारः । तादृशकार्यासामर्थ्ये बीजन्तुव्यबहारकाले बाधस्तादृशकार्यसमर्थतया चाकल्पितत्वं तत्प्रयोजकतयापणस्थरजतसामग्र्याश्चाकल्पितत्वमतएवोपार्जितमोदकाशामोदकतृप्तयो रसवीर्यविपाकादितुल्यतापि परिहृता । यद्धि यादृशं यादृशकार्यकारि भवति कल्पनया सिद्धं तत्तादृशं तादृशकार्यकार्येव भवति । उपार्जितस्य मोदकस्य व्यवहारकालाबाध्यस्य तादृशसामग्रीजन्यत्वेन तादृशकार्यकारित्वेन कल्पनयोत्पत्तिस्थित्यादिमत्तया सिद्धत्वाद्व्यवहारकालाबाध्यरसादिजनकत्वमाशामोदकतृप्त्यादेर्व्यवहारकालएव बाधितस्य प्रागुक्तरूपेण कल्पनया ह्यसिद्धस्य प्रतिभासमात्रशरीरस्य व्यवहारकालबाध्यप्रतीतिमात्रशरीररसादिजनकत्वमेव सर्पविभ्रमादिस्थले भयकम्पादेर्व्यवहारकालाबाध्यतज्ज्ञानकार्यत्वमेव न तद्विषयसर्पादिकार्यत्वमित्युक्तनियमेन व्यभिचारः । द्वितीया तु यावद्व्यवहारमात्मतत्त्वसाक्षात्कारात्प्राक् भ्रान्तित्वेनाविचारकैः प्रचुरैरगृहीताविचारकैरप्यत्यल्पैरसाक्षात्कृतबाधैस्तत्त्वेनासाक्षात्कृताविचारमात्रगृहीततयाऽपरिनिष्ठितभ्रमभावाया भवद्भिर्वस्तुतः प्रमैवाभ्युपेयते तयैव चार्थसिद्धिरस्माभिस्तु सुतरां तयार्थसिद्धिरुपेयते व्यवहारकालाबाधात् व्यावहारिकप्रमोच्यते तदुभयरूपा भ्रान्तिः कल्पना तया सिद्धस्य कल्पितत्वेन न पारमार्थिकसत्त्वं न सिद्धत्वमात्रेण परमार्थसत्त्वंमपि तु प्रमासिद्धत्वेन प्रमाचाबाधितविषयचरमनिर्विकल्पकाभिव्यक्तसद्रूपचैतन्यमात्रं स्वप्रकाशमित्यनन्यसिद्धत्वेन स्वतःसिद्धं ब्रह्मैव परमार्थसद्रूपत्वाद्धटाभावत्वाद्युपलक्षिताभावस्वरूपमपि । ननु प्रतियोग्युपरक्ताभावत्वविशिष्टं तस्य प्रतियोगिवत्कल्पितत्वमेवेति सिद्धं तत्त्वज्ञानां नाविद्यादिदृश्यनाश उत्पद्यत इति किंतु तत्त्वज्ञानस्याविद्यादिसकलदृश्याश्रयकालपूर्वत्वाभावनियममात्रं तावतैव मोक्षक्षणस्य बद्धपुरुषकल्पितस्य दृश्यसामान्यात्यन्ताभाववत्वं दृश्याधिकरणसामान्यभिन्नत्वं वा सिद्ध्यतीत्येवं सत्यविद्याघातिन इत्यादेरविद्यात्यन्ताभावेन सह क्षैमिकप्रयोज्यप्रयोजकभावेन वृत्तिद्वारा संबद्धादित्यर्थः । नश्यतीत्यस्याप्यदर्शनमविद्यया सार्धं प्राप्नोतीत्यर्थः । सुषुप्तौ यया साक्षिचैतन्येनाविद्यादेर्ग्रहणं तादृगपि ग्रहणं तत्त्वज्ञानोत्तरं कस्यापि न भवति ग्राह्यस्य सर्वस्यैव तदानीं स्वप्रकाशचिद्रूपविशुद्धब्रह्मस्वरूपाभावस्य सत्त्वात् अथानादेरविद्याया उत्पत्तिमतस्तत्कार्यस्य चाविनाशे कथमसत्त्वं तत्त्वज्ञानोत्तरं स्यात् । तथासति कथमुक्तनियमस्यापि संभवः । नह्युक्तिमात्रेण कस्यचिद्भवति सिद्धिः । विपरीतोक्तेरपि संभवादिति चेन्न । विनाशेऽपि हि कुतो घटस्यासत्त्वं यथाह्युत्पत्तिः स्थितिश्च घटेन संबद्धा घटस्यासत्त्वादिकं वारयति नैवं विनाशो घटादत्यन्तभिन्नो घटोत्तरं कश्चिद्भाव इव जायमानस्तेनासंबद्धस्तत्राकिंचित्करो घटस्थितेरसंभवद्विघातकत्वको घटसत्त्वं वारयितुमीष्टे । नच घटेन सह विनाशस्यास्त्येव प्रतियोग्यनुयोगिभावलक्षणः संबन्ध इति वाच्यम् । अकिंचित्करत्वस्यासमाहितत्वेन प्रतियोग्यनुयोगिभावो विनाशेनान्येन सह सामानाधिकरण्यमित्यस्त्येव संबन्धोऽस्त्येव च समानमकिंचित्करत्वं भेदश्चात्यन्तिकः कुतो नाशस्यैव स्थितिविरोधित्वं न संबद्धभावान्तरस्येत्यस्य दुर्वारत्वात् । नच प्रतियोग्यनुयोगिभावसंबन्धेन संबद्ध एव स्थितिविरोधी नान्येन संबन्धेनेति वाच्यम् । यथा हि ह्रदे स्थितेनात्यन्ताभावेन पर्वते स्थितस्यापि वह्नेर्भवति प्रतियोग्यनुयोगिभावेन संबद्धत्वमेवं स्थितस्यैवास्तु घटस्य नाशेनापि संबन्धः । अत्यन्ताभाववत्सहानवस्थानमात्रस्य नाशकाभिमतसामग्र्या भूतलादिदेशे नाशोत्पादकत्वाभ्युपगमेनोपपत्तेः । कपाले घटस्य स्थित्यविरोधान्न च प्रतियोगिसमवायिन्येव नाशाव-

स्थाननियम इति वाच्यम् । आश्रयनाशाधीननाशस्थले व्यभिचारेण नियमस्य वक्तुमशक्यत्वात् । नच सति समवायिनि तत्रैवेति नियमो नियामकं च सामग्र्यास्तत्रैव सत्त्वमिति वाच्यम् । एकेन केनापि संबन्धेन कारणकूटस्य तत्र सत्त्वासंभवात्तत्कारणतावच्छेदकसंबन्धेनापि प्रत्येकमखिलकारणस्य तत्र सत्त्वासंभवात् तादात्म्येन कारणस्य प्रतियोगिन एव विरहात् । तत्रतत्र वर्तमानानामेवान्यत्रोत्पादकत्वेऽन्यत्वस्याविशेषाद्भूतलेऽपि तदुत्पादकत्वस्य दुर्वारत्वात् । नच भूतले कस्यापि कारणस्य नास्ति संबन्ध इति वाच्यम् । भूतले घटो नश्यति गेहे घटो नश्यति नष्ट इत्यादिसार्वजनीनप्रतीतेः भूतलगेहादौ विनाशसत्त्वे सिद्धे कारणस्य कस्यापि कस्यचित्संबन्धस्य कल्पयितुं शक्यत्वात् । कपाले घटस्तन्तौ पटो नश्यतीत्यादिप्रत्ययस्यैवत्वदुःशिक्षितशिष्यकुलैकव्यवस्थितरूपस्य दुःशिक्षादोषजत्वेन कपाले तत्सत्त्वासाधकत्वेन कपाले कारणसंबन्धकल्पनस्यैवायुक्तत्वात् । एवं कपालस्याप्यनन्तरं नाशे घटनाशस्यापि निराश्रयस्यापायः स्यात् प्रागपि निराश्रयतैव वा स्यात् गेहाधारत्वे तु पूर्वमपि तदाधारत्वं स्यात् । अमूर्तस्य गतिविरहेण पश्चात्तदाधारत्वासंभवात् । कपालिकाधारत्वे प्रागपि तदाधारतैव स्यात् । तत्तन्नाशचिन्तायां परमाणावेव वा तदाधारत्वविश्रान्तिः स्यादिति घटतन्नाशयोर्विभिन्नाधारत्वस्य दुर्वारत्वात् । गेहेऽवच्छेदकत्वमन्यत्राश्रयत्वमित्यत्र प्रमाणाभावात् । नच नाशेन गेहादुत्सारिता स्थितिर्घटस्य गेहान्तर्वर्तिकपालादप्युत्सारितैवेति वाच्यम् । नहि गेहं कपालं चैकं नह्यन्यत्राभावस्थितिरन्यत्रापि प्रतियोगिस्थितेर्विरोधिनी । तथा सति ह्रदे वन्ह्यभावस्थितौ पर्वतेऽपि वह्नेः स्थितिर्न स्यात् । किंच गेहे क्वचिद्धि घटस्य स्थितिः क्वचिद्विनाशस्येत्यस्यापि संभवात् । एतेनेदानीं घटो नश्यतीति प्रतीतेरेतत्कालावस्थितेन नाशेनैतत्कालादुत्सारितायां घटस्थितावस्थितिरेवोत्तरकालेऽपि स्यात् पुनः स्थितेः प्रयोजकस्य दुर्लभत्वादित्यपि निरस्तम् । कपाले घटस्य गेहे विनाशस्य स्थितावुपपादितायामेतत्काले द्वयोरपि स्थितेः संभवात् । प्रतियोगितदत्यन्ताभावयोरिव । एवं प्रतियोगिनियमाय प्रतियोगितासंबन्धेन तन्नाशंप्रति तादात्म्येन तद्घटादेः कारणत्वं वाच्यम् । तच्च न संभवति । कारणतावच्छेदकसंबन्धे कारणसंबन्धिनि कार्यतावच्छेदकसंबन्धेन कार्यसत्त्वस्य सर्वत्र दृष्टस्य बाधात् । यदा हि घटस्तदा न नाशो यदा हि नाशो न तदा घटः । नच नाशात्प्राग् विद्यमानो घटः कारणं स्वसंबन्धिनं नाशं कपाल उत्पादयति । नाशक्षणे घटसत्त्वस्यानपेक्षणादिति वाच्यम् । दृष्टान्तालाभात् । यो हि प्रतियोगितया समकक्षो विषयत्वादिरतीतानागतसंबन्धत्वेन तेनापि संबन्धेन प्रत्यक्षे कारणस्य विषयस्य प्रत्यक्षक्षणे तत्संबन्धितया सत्त्वदर्शनात् । तस्मात् दण्डपाताद्यनन्तरं नियमेन घटादर्शनस्योपपत्तये तदन्यथाऽनुपपत्त्यापाकृतसर्वानुपपत्त्यभ्युपेयम् । नाशस्य घटस्थित्यादिविरोधित्वं प्रागुक्तरीत्योपपत्तिरहितमपि । तदित्थं तल्लाघवेन नाशमतिरिक्तमप्रकल्प्य नाशकाभिमतस्यैवोत्तरकालिकस्थितिविरोधित्वं कल्पयितुं न्याय्यम् । तथाच यथा विनैव घटनाशं मुद्गरपाताद्यनन्तरं घटासत्त्वं तेनैव निर्वाह्यम् । तत्र स्थितस्य घटाभावस्याभिव्यक्तिश्च तथाऽविद्यानाशकाभिमतात्तत्त्वसाक्षात्कारादविद्यादिनाशं विनैवोत्तरकालेऽविद्यादेः सत्त्वाभाव इति तत्त्वज्ञानस्याविद्यादिद्वयाश्रयकालपूर्वत्वाभावनियमस्य न क्षतिः । नचैवं दण्डपाताद्घटो नश्यति नष्ट इत्यस्य कोऽर्थ इति वाच्यम् । दण्डपातप्रयोज्यघटोत्तरकालिकविद्यमानकेवलकपालप्रतियोगी घट इत्येतदर्थकत्वात् । प्रयोज्यप्रयोजकभावस्य दण्डपातसत्त्वे घटोत्तरं केवलं कपालं तदभावे नेति क्षैमिकस्य संभवात् । घटात्प्राक् तत्केवलं कपालं मुद्गरपातानन्तरमपि तस्यैव सत्त्वेनोत्पत्त्यनुकूलत्वलक्षणस्य तस्यासंभवात् । प्राक्काले शुक्लस्य पटस्य रञ्जनेन प्राप्ताया नैल्यावस्थायाः प्रक्षालनेनापगमेन हि शुक्लः पट उत्पन्न इति कस्याप्यभ्युपगमः । तथैव हि प्राक्केवलस्य कपालस्य मध्ये प्राप्ताया घटरूपावस्थाया दण्डपातादितोऽवस्थानविरहे केवलं कपालमुत्पन्नमिति न कस्यापि संप्रत्ययः । अथ घटोत्पत्त्या कपालस्य कैवल्यमपगतं नवा । नापगतं चेत् घटोत्तरकालिककेवलकपालसत्त्वेन घटस्थितिकालेऽपि घटो नश्यतीति व्यवहारापत्तिः । अपगतं चेत्केनापि पुनरनुत्पादितत्वे केवलकपालाभावेन मुद्गरपातोत्तरं नाशव्यवहारानुपपत्तिः । उत्पादितत्वे तस्य संज्ञान्तरत्व एव पर्यवसानं विनष्टस्य कैवल्यस्य प्रागभावसंज्ञयोत्पन्नस्य ध्वंससंज्ञया मया व्यवहृतत्वादिति चेन्न । अतिरिक्तनाशस्याभ्युपगमेऽपि तस्य घटप्रतियोगिकत्वं त्वयाप्यभ्युपेयं । विलक्षणं च ध्वंसस्य प्रतियोगित्वं विलक्षणं च प्रागभावस्य तन्निरूपकत्वमेव कैवल्यं तच्च कपालादावेवाभ्युपेयं ध्वंसप्रागभावाकल्पनेन लाघवात् । तदवच्छेदकं च नाशकाभिमतोत्तरकालः सामग्रीपूर्वकालं च प्रागभावस्य प्रतियोगित्वमपि वा न कल्प्यम् । प्रागभावस्यैव दीधितिकृता सामान्यलक्षणाग्रन्थे निराकृतत्वात् ध्वंसस्यापि वा न प्रतियोगित्वमुपेयम् । अत्यन्ताभावस्यैव नाशकाभिमतोत्तरतत्तत्कालावच्छिन्नकपालभूतलादिस्वरूपसंबन्धेन नश्यतीत्यादिप्रत्ययविषयत्वसंभवात् । घटानयनापसारणस्थलेऽत्यन्ताभावस्य तत्तत्कालघटितस्वरूपे संबन्धताया नैयायिकैरुपगमात् । अत्यन्ताभावस्यापि प्रतियोगित्वमात्रमभ्युपेयते न तन्निरूपको धर्मी कपालभूतलाद्यतिरिक्तोऽभावो लाघवात् । नचैवं भूतले घटो नास्तीत्याधाराधेयभावानुपपत्तिः । स्वस्य स्वाधारत्वासंभवादिति वाच्यम् । घटाभावे घटो नास्ति प्रमेयत्वे प्रमेयत्वमस्तीत्यादिप्रतीतेस्त्वया स्वरूपेणैवाधाराधेयभावस्य स्वीकारात् । सामान्यतः स्वस्य स्वाधारत्वं नेत्यस्य वक्तुमशक्यत्वात् येन रूपेण यस्य येन रूपेण यस्याधारत्वं प्रतीतिसिद्धं तेन तेन रूपेणाधाराधेयभावो नापलपितुं शक्यः अन्यथा च नोरीकर्तुमिति भूतले भूतलमित्यप्रत्ययात्तेन रूपेणाधाराधेयभावविरहेऽप्युक्तप्रतीतेर्भूतलत्वघटप्रतियोगिकाभावत्वाभ्यां भूतलस्यैकस्याधाराधेयभावो न विरुद्ध्यते । नच गन्धाभावस्य जलरूपत्वे चाक्षुषत्वं स्यादिति वाच्यम् । त्वन्मतेऽपि चक्षुःसन्निकर्षसत्त्वेनायोग्यतयैव तस्य वारणीयत्वात् । मन्मतेऽपि जलस्य

स्वरूपेण चक्षुर्ग्राह्यत्वेऽपि गन्धप्रतियोगिकाभावत्वेन चक्षुरयोग्यत्वस्य घ्राणयोग्यत्वस्यैव स्वीकारात् । नचानन्ताधिकरणेषु तादृशाभावत्वसंबन्धकल्पनामपेक्ष्यैकातिरिक्ताभावकल्पनैव लाघवादुचितेति वाच्यम् । अभावसंबन्धत्वस्यानन्ताधिकरणेषु कल्पना हि द्वयोः समानैव । मम त्वेकाभावत्वस्यानन्ताधिकरणेषु तवैकाभावेऽनन्तवस्त्वभावभावानां संबन्धत्वस्य कल्पनमिति । संबन्धत्वं च प्रतियोग्यनुयोगिभ्यां निरूपितं तयोरेकभेदादपि भिद्यत इति तवैव गौरवमिति । यच्चास्माभिरुपेयते अभावस्याधिकरणात्मकत्वं तदपि यत्राधिकरणे कदाचिदपि न प्रतियोगी वर्तते यथा जलादौ गन्धादिः तत्र गन्धाद्यभावस्य जलादिरूपत्वमेव । यत्र भूतलादौ कदाचिद्वर्तते कदाचिन्न घटस्तत्र घटाभावस्य केवलभूतलरूपत्वम् । किंतत्कैवल्यमिति पर्यनुयोगे घटानाधारत्वं यदा यत्र घटो न वर्तते तत्कालावच्छिन्नतत्त्वमिति वा गृहाण । नच घटानाधारत्वमपि घटाधारत्वाभावः । सोऽप्यधिकरणात्मक एव । तस्यापि केवलाधिकरणात्मकत्वं तत्रापि किं कैवल्यमिति पर्यनुयोगे यदा यत्रेत्यादिना यदुक्तं तदुक्तावपि कदा कुत्र न वर्तत इत्यनुयोगः समान इति वाच्यम् । अभावस्याधिकरणानात्मकत्वेऽपि गन्धाभावस्य किमधिकरणं घटाभावस्य किमधिकरणमिति पर्यनुयोगे त्वया घटाभावाधिकरणं यदि निर्वक्तुं शक्यं तदा तस्यैव घटाभावरूपत्वं मया वाच्यम् । अधिकरणानात्मकत्वे निर्वक्तुं शक्यमधिकरणात्मकत्वे तु नेति तव दुराशैव । तथाहि जलं तेज इत्याद्युक्तावननुगमस्तवेष्टापत्तौ गन्धाभावो जलं तेज इत्याद्यननुगतस्वरूपोक्तेर्ममापि संभवः । यत्र गन्धो न वर्तते यो गन्धानाधार इत्याद्युक्तौ तव संतुष्टिर्मुखमुद्रणमूरीकृत्य स्थीयते मया तस्यैव गन्धाभावरूपत्वस्य मयापि वाच्यत्वात् । त्वया पुनः कुत्र गन्धो न वर्तत इति पर्यनुयोगे कृते स एव ममापि पर्यनुयोगः । यत्र घटस्य न प्रमा यत्र वा घटाभावः प्रमीयते तत्रेत्यपि समानम् । कुत्र न प्रमा कुत्र प्रमीयत इति पर्यनुयोगोऽपि समानः । यत्र घटोऽस्ति तत्र न प्रमा यत्र नास्ति तत्र च प्रमीयत इत्युक्तौ यत्र घटो नास्ति तत्रास्ति घटाभाव इत्यत्र पर्यवसानं तस्यापि यत्रास्ति तत्रास्तीत्यत्र पर्यवसानम् । तत्र ते यदि मनस्तोषः तदा यत्रास्ति तदात्मत्वं घटाभावस्येति मयापि वक्तुं शक्यत एव । नच यत्रास्ति तदात्मकत्वे स्वस्य स्वस्मिन् वृत्तिरनुभवबाधितेति यत्रास्तीत्यंशविरोध इति वाच्यम् । प्रागेवैतस्य समाहितत्वात् यद्यत्रापि पर्यनुयोगः कुत्रास्तीति तदा निर्वचनकर्तृत्वाभिमानमपहायानिर्वचनीयं घटाभावाधिकरणमिति स्वमुखेनैव त्वया वक्तव्यं तदा कृतास्पदा मयि विजयलक्ष्मीः । अघटितघटनापटीयस्या मायायाः स्वयमप्यनिर्वाच्यायाः सर्वमिदं विलसितम् । यद्भूतले घटो नास्ति जले गन्धो नास्तीत्यादिव्यवहारो भूतलजलादौ घटगन्धाद्यभावात्मकस्तद्विषयश्चानिर्वाच्य एव निर्वचनीयवदवभासते । एवमनिर्वाच्येनैवाधिकरणेनाधेयतयाऽधिकरणतया च स्वस्वरूपावगाहिप्रत्ययोऽप्रमात्मक एव प्रमाकल्प आधीयते सत्यप्यभेदे भिन्नमिवाभावाधिकरणद्वयं प्रतीयते । अतएव घटाभावो न भूतलमिति भवति प्रत्ययो न भवति घटाभावो भूतलमित्यादि । तथाचाविद्यकमनिर्वाच्यं सर्वमिदं परमार्थतः कुतो निर्वक्तुं शक्यत इति तावदेव व्यवहारप्रवृत्त्युपयोगिधर्मनिर्वचनादिकं कार्यम् । न यावता व्यवहारव्याघातस्तथासति लाघवादधिकरणात्मकत्वं व्यवतिष्ठत एवेत्यलम्—**प्रागवद्याख्येयमिति** । श्रोतव्यस्य ब्रह्मण आश्चर्यत्वं द्रष्टव्यस्याविद्यकनानाविधेत्यादिना यदुक्तं तद्वद्बोध्यम् । श्रवणस्य वदनवदाश्चर्यरूपत्वम् । यथा सर्वशब्दावाच्यस्य प्रतिपादनमाश्चर्यं तथा तादृशेऽद्वितीये ब्रह्मणि तात्पर्यनिश्चयेन शुद्धब्रह्मावधारणं विचारात्मकं श्रवणमप्याश्चर्यमेव सर्ववाक्यतात्पर्यस्य तन्निर्णयाधीननिर्णयस्य च विशिष्ट एव दर्शनात् । **श्रुत्येकवाक्यता नेति । विरोधश्चेति** । श्रुतिस्मृत्योर्ज्ञातृत्वस्योपसंहारादिह तदभावस्येत्येकवाक्यत्वाभावो विरोधश्चेत्यर्थः । संबधं कृत्वानुवदति—**कश्चिदेनं न पश्यतीत्यादि । इतीति** । इति योजनया पञ्चप्रकारा उक्ता इति पञ्चमो यः प्रकारः सर्वबहिर्भूतात्मकः स उक्तयोजनयैव लभ्य इत्युक्तयोजनाभावे चत्वार एव प्रकाराः स्युरुक्ता इत्युक्तयोजनया पञ्चप्रकारा उक्ता इति सङ्गतम् । तान् पञ्चप्रकारान्दर्शयति—**कश्चित्पश्यत्येवेत्यादि** वहिर्भूत इत्यन्तेन । तत्र कश्चिदेनं पश्यतीति वाक्यमसति बाधके सर्वं हि वाक्यं सावधारणमिति न्यायात्सावधारणं मत्वा कश्चित्पश्यत्येव न वदतीति प्रथमः प्रकारः । अन्य इत्यस्य वदनाकर्तृदर्शनकर्तृभिन्नपरत्वात् चकारस्य पश्यतीत्येतत्समुच्चायकत्वात् । कश्चित्पश्यति वदति चेत्येकवाक्यं कृत्वा द्वितीयः प्रकार उक्तः । श्रुत्वापि कश्चिन्न वेदेत्युक्त्यार्थात्कश्चिज्जानातीति लभ्यते । अन्यथा कश्चिदित्यनभिधाय सर्वे इत्येव ब्रूयादित्यर्थाल्लब्धेन कश्चिज्जानातीत्यनेनान्यः शृणोतीत्येतत्संयोज्य तृतीय उक्तः । तथा सति श्रुत्वापि कश्चिन्न वेदेति योजनायामपि नोक्तश्रुत्येकवाक्यताभङ्गो न वोक्तश्रुतिविरोधश्च । चतुर्थप्रकारस्तु स्पष्टः । **अविद्वत्पक्षेत्विति** । तुकारः पक्षान्तरतां द्योतयन् सर्वव्याख्यानस्य विद्वत्पक्षीयतामाह । अविद्वांश्च शमदमादिसाधनसंपत्त्यनासादितचेतोविशुद्धिरकृतसम्यग्वेदान्तविचार आपातश्रुताद्वितीयादुःखिसुखैकरूपाकर्त्रात्मतत्त्वो ग्राह्यः । इन्द्रजालादिषु यदाश्चर्यदर्शनवदनश्रवणादिकं तत्र यथा भवत्यसंभावना विपरीतभावना वा । तथैव श्रुतिविपरीतसद्वितीयदुःखिकर्त्रादिरूपमात्मानं पश्यतः श्रुतिदृढप्रामाण्यग्रहतो दर्शनविषये क्षणमसंभावना विपरीतभावना वा भवतीत्याश्चर्यतुल्यता । अथवा यथेन्द्रजालादिस्थलीयदर्शनविषयोऽसंभावनाद्यभिभूतः तथैवाविदुषोऽद्वितीयत्वादुःखित्वादिना श्रुत आत्माप्यसंभावनाद्यभिभूत इत्याश्चर्यवदाश्चर्यतुल्यमेनमात्मानं कश्चिदविद्वान् । अहं दुःखीत्यादि साक्षात्करोतीत्यर्थः । यद्वा प्रकृष्टप्रकाशश्चन्द्रः सोऽयमित्यादिस्थलसंजातव्युत्पत्तिमतो यस्तत्त्वमस्यादिवाक्यजन्योऽखण्डसाक्षात्कारः । कथंचिदविदुषो जायते तदेवात्र दर्शनमभिमतम् । तत्रैवाशुद्धान्तःकरणतयाऽसंभावनाविपरीतभावनासत्त्वादाश्चर्य-

तुल्यता बोध्या। दृष्ट्वोक्त्वा श्रुत्वापीति योजना। अध्याहृत्य योजना। अविद्वान् दृष्ट्वोक्त्वा श्रुत्वापि न वेद नाज्ञानविरोधिसाक्षात्कारवान्भवतीत्यर्थ इति॥ २९॥ ३०॥ **क्षत्रियमात्रजातिवाचीति।** राजसूयं प्रकृत्य श्रुतायामाग्नेयोऽष्टाकपालो हिरण्यं दक्षिणेत्येवमाद्यवेष्टिसंज्ञकेष्टौ यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिं हुत्वाभिघारयेदित्यादिश्रूयते। ततश्च ब्राह्मणकर्तृकापि सेष्टिरिति निश्चीयते। तत्र राजसूये ब्राह्मणस्याप्यधिकारः। राजशब्दस्य प्रजापालनादिराज्ययोगिन्यार्याणां प्रसिद्धे राज्ययोगस्य ब्राह्मणादिष्वपि संभवादिति तत्प्रकरणस्थायामवेष्टावपि ब्राह्मणादेरस्त्येव प्राप्तिरतो यदीत्यादिश्रुतयो-बार्हस्पत्यादिमध्यनिधाननिमित्तार्था इत्यवेष्ट्यधिकरणे पूर्वपक्षयित्वा 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति ष्यञ्प्रत्ययं राज्ञः कर्मेत्यस्मिन्नर्थे राजशब्दादिविधाय राज्यशब्दं निष्पादयतो भगवतोऽभियुक्ततरस्य पाणिनेः स्मृत्यनुगृहीता क्षत्रियजातौ राजशब्दस्यान्ध्राणामनादिरर्थान्निरूढा प्रसिद्धिरार्यप्रसिद्धेर्बलवती। नच राज्यकर्तरि निष्पन्नाद्राजशब्दात्कर्मणि ष्यञि राज्यशब्दः स्मर्तुं शक्योऽन्योन्याश्रयात्। तथाच राज्यसूयवाक्ये तदनुसारेण राजशब्दार्थनिर्णयेऽवेष्टौ ब्राह्मणादीनां प्राप्त्यभावान्निमित्तार्थविधानस्यासंभवादवेष्टेस्तत्प्रकरणादुत्कर्ष इति सिद्धान्तितमिति तदनुसारेण सिद्धं क्षत्रियत्वजातिवाची राजशब्द इति। एवं राजानमभ्यषिञ्चेदित्यत्र क्षत्रियत्वजातिपरत्वाभावे राजशब्दस्याभिषेकाद्राज्ययोगो राज्ययोगादभिषेक इत्यान्योन्याश्रय इति क्षत्रियत्वजातिपरत्वव्यवस्थापनं बोध्यम्। स्थितमेतदवेष्ट्यधिकरणे पूर्वमीमांसायाम्। **न दोष इति।** युद्धभिन्नस्यापि बहुतरश्रेयःसाधनस्य सत्त्वाद्विरोधरूपो दोषो नेत्यर्थः। **एतेनेति।** युद्धस्य प्रशस्ततमत्वेनेत्यर्थः। प्रशस्ततमतां हि यदृच्छयेत्यनुपदमेव वक्ष्यति—**इत्येतदपीति।** निरस्तमित्यनेनान्वेति॥ ३१॥ **प्रतियोगित्वेन लभन्त इति।** लाभः प्रतियोगित्वमेवाभेदे चेयं तृतीया। तथाच भीष्मादिप्रतियोगिकयुद्धप्रतियोगिनो भवन्तीत्यर्थः। **तत्फलस्येति।** अभिचारलक्षणस्य विध्युद्देशे कीर्तितस्येत्यर्थः। अभिचारः शत्रोर्मरणानुकूलो व्यापारः। वधहिंसादिपर्यायो मा हिंस्यादिति निषेधे विधिगोचरो भवतीत्यभिप्रेत्याह—**शत्रुवधस्येत्यादि।** नन्वस्ति विधिस्पृष्टे निषेधानवकाश इति न्यायोऽस्ति च श्येनेनाभिचरन् यजेतेति विधिबोधितप्रवर्तनात्मकविधेः स्वविषयार्थीभावनाकर्मत्वलक्षणः संसर्गोऽभिचारस्येति। तत्र निषेधप्रवृत्तिर्न स्यादिति फलदोषेणापि श्येनो न दुष्टः स्यादित्यत आह—**फले विध्यभावाच्चेति।** यथा ह्युद्देश्यस्य न्यायनयेऽनुमितिविषयत्वेऽपि विधेयस्यैवानुमेयत्वं तथा प्रवर्तनात्मकविधेः स्वभाव्यार्थीभावनाद्वारा फलस्योद्देश्यस्य कर्मत्वेन संबन्धित्वेऽपि तस्याननुष्ठेयतयाऽनुष्ठेयायाः श्येनादिनामकधात्वर्थीभूतक्रियाया एवस्वभाव्यार्थीभावनाकरणत्वलक्षणविधेयत्वात्मकः संबन्धो न फलस्येति। तेन संबन्धेन फले विधेरभावः फलस्य विधेयत्वाभाव इति यावत्। विधेयत्वमेव च निषेध्यत्वविरोधि निषेध्ये बलवदनिष्टानुबन्धिनि भवित्रीष्टभवनानुकूलप्रवृत्तिलक्षणार्थीभावनाविषयत्वविशेषस्य विधेयत्वस्यासंभवात्। निषेध्यस्यापि फलस्य रागौत्कट्येनोद्देश्यत्वसंभवादुद्देश्यत्वलक्षणो विधेः संबन्धो न निषेध्यत्वविरोधीति विधिस्पृष्ट इत्यत्र स्पर्शपदार्थो विधेयत्वरूप एव संसर्गो विवक्षितः। तथा चाभिचारस्य फलस्य तदभावान्निषेध्यत्वाविरोधान्निषिद्धफलकः श्येनो भवत्येव दुष्ट इति भावः। ननु युद्धं स्वफलद्वारा मा भूद्दुष्टं हिंसारूपत्वात् स्वत एव निषिद्धतया तथा भवत्परिहार्यं स्यादित्यत आह—**युद्धंत्वग्नीषोमीयेत्यादि।** यद्यपि युद्धं महीलाभादिसाध्यबहुतरसुखरागतः प्राप्तमेवेति न तत्र विध्यपेक्षा तथापि स्वर्गसाधनतावच्छेदकापराङ्मुखत्वाद्यनेकगुणविशिष्टतया न प्राप्तमिति तस्य स्वर्गोद्देशेन विधितो विधानमुचितमेवेति विधिस्पृष्टत्वाच्च तत्र निषेधावकाश इति भावः। नन्वेवं हिंसात्वेन सामान्यतो बलवदनिष्टाननुबन्धित्वबोधकस्य मा हिंस्यादित्यस्याप्रामाण्यप्रसङ्गो विशेषविधिना बलवदनिष्टाननुबन्धित्वलक्षणप्राशस्त्याबोधकार्थवादसहकृतेनाग्नीषोमीयहिंसादौ प्राशस्त्यस्य बोधनान्न चेष्टापत्तिः। वेदत्वेन तस्यापि प्रसिद्धप्रमाणभावत्वादित्यत आह—**षोडशीत्यादि।** अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति विधिनिषेधौ तुल्यबलौ विशेषशास्त्रत्वादिरूपबलवत्त्वसामान्यशास्त्रत्वादिरूपदुर्बलत्वरहितौ स्तो नह्यतः कोऽपि कस्यापि बाधकः तयोर्नच बाध्यो नचाप्युभयोर्विषयौ ग्रहणाग्रहणे युगपद्विधातुं शक्येत इति तत्र विकल्पः। यस्य ग्रहणफल उत्कटरागात् तदनुष्ठानश्रमेण बलवद्द्वेषः। तस्य ग्रहणे प्रवृत्तिरिति विधिशास्त्रमर्थवत्त्वविधेयाभावेऽङ्गिनोर्निर्दिष्टफलाजनकत्वस्य यन्निसर्गतः प्रतिपादनं तदभावात्संकुचितं च एवं निषेधशास्त्रमपि ग्रहणफले यस्य नोत्कटो रागो ग्रहणश्रमे बलवांश्च द्वेषः तस्य ग्रहणेऽप्रवृत्तेरर्थवत्। निषेधशास्त्रस्य यन्निषेध्ये श्रमाद्यतिरिक्तनरकाद्यनिष्टसाधनत्वस्य निसर्गतः प्रतिपादकत्वं तदभावेन संकुचितं च न किंचिदपि शास्त्रं भवत्यप्रमाणमेवं मा हिंस्यादित्यपि विहितहिंसातिरिक्तहिंसाविषयकत्वेन संकुचितं न भवत्यप्रमाणमिति। तथाच विकल्पवदित्यस्य विकल्प इवेत्यर्थः। तस्य यथा विकल्पस्थले बाध्यबाधकभावाभावेऽपि संकोचो न कस्याप्यप्रामाण्यं तथा सामान्यविशेषभावेन बाध्यबाधकभावापन्नत्वेऽपि संकोच एव नाप्रामाण्यमुभयोरपि गृहीतप्रमाणभावत्वादिति पर्यवसितोऽर्थः। नचाग्नीषोमीयहिंसाया विशेषत्वात् तद्दृष्टान्तेनैव युद्धहिंसारूपविशेषेऽपि संकोचप्रतिपादनसंभवाद्विकल्पवदित्युक्तिरनर्थिकेति वाच्यम्। विधिस्पृष्टेऽपि ग्रहणे न गृह्णातीति निषेधदर्शनात्सामान्यविशेषभावाभावेन संकोचासंभवाद्विधिस्पृष्टे न निषेधावकाश इति न्यायोऽसङ्गत इति शंकोत्तरार्थत्वात्। विकल्पे सति संकोचस्य दर्शितत्वात्। तथा सत्यङ्गफलार्थिनो ग्रहणश्रमद्वेषवतः पुरुषान् प्रत्यप्यङ्गं विना नाङ्गिनः फलमिति सामान्यतः प्रसक्तस्य ग्रहणस्य निषेधविषयताग्रहणफलातिशयरागौत्कट्यशालिनः श्रमद्वेषविरहिणः पुरुषान्प्राति ग्रहणस्य विधिविषयतेति विधिस्पृष्टे विधिना पुरुष-

प्रवृत्त्यर्थमतिशयिताङ्गिफलसाधनत्वेन बोधितेन निषेधावकाशोन निषेधेन विधेयानुष्ठानानन्तरीयकश्रमादिद्विष्टाधिकनरकाद्य-निष्टसाधनत्वस्य बोधनमित्युक्तन्यायस्यासङ्गत्यभावादुक्त एवार्थे न्यायस्य तात्पर्यादिति । यद्वा विकल्पवदिति निषेधेन स्प्रष्टुं न शक्यत इत्यत्रैवान्वेति । यथा विकल्पस्थलेन निषेधस्पर्शस्तथोक्तमनुपदमेव । ननु युद्धविधायिका स्मृतिस्तस्याविशेषविषय-कत्वं प्राबल्यं मा हिंस्यादिति हि श्रुतिस्तस्याः श्रुतित्वमेव प्राबल्यं तस्यानपेक्षप्रमाणरूपत्वात् स्मृतेस्तु पौरुषेयायाः श्रुतिमूलकप्र-माणरूपत्वादिति स्मृतित्वाच्छ्रुतित्वस्य प्राबल्यरूपतायाः सर्वानुमतत्वात् उक्तयोश्च प्राबल्ययोः पूर्वस्यार्थज्ञानार्थगतविशेषत्व-ज्ञानसापेक्षत्वेन मन्थरप्रवृत्तिकत्वेन बाधकतायामनादरणीयत्वमुत्तरस्य स्वरूपज्ञानमात्रापेक्षित्वेन बाधकतायामादरणीयत्वमि-त्युक्तस्मृतिर्बाधिता सति न संकोचिका स्यादिति चेन्न । अग्नीषोमीयादिहिंसाविशेषप्रतिपादकानेकश्रुत्यनुरोधेनावश्यं संकोचे कर्तव्ये विशिष्य तत्तद्धिंसेतरत्वेन संकोचापेक्षया प्रमाणविहिताहिंसेतरत्वेन संकोचस्यैव युक्तत्वात् । स्मृतेरपि युद्धगोचराया-स्तत्त्वेनावधृतप्रमाणत्वादुक्तश्रुतिबाध्यत्वस्यान्यतोऽप्रामाण्यनिश्चयं विनाऽसंभवादन्यथान्योन्याश्रयात् । किंचानर्थक्यप्रतिहतानां तु विपरीतं बलाबलमिति न्यायेन श्रुतेः सामान्यविषयाया अन्यत्र चरितार्थायाः स्मृतितोऽसंकोचे स्मृतेरानर्थक्यमेव हि स्यादिति स्मृतेरेव प्राबल्यस्य विशेषविषयत्वलक्षणस्य बाधकतायामादरणीयत्वात् । दृष्टो हि नैमित्तिकाचमनस्मृत्यापि क्रमबोधक-श्रुतेर्बाध इति । **धर्मार्थसन्निपातेऽर्थग्राहिण इति** । धर्मफलकार्थफलकक्रिययोर्युगपत्प्राप्तौ धर्ममवधीर्यार्थफलकक्रिया-कर्तुरित्यर्थः । विधानादित्यस्य न कर्तव्य इत्यत्रान्वयः । **चतुष्पाद्व्यवहार इति** । पूर्वपक्ष आद्यपादो द्वितीयश्चोत्तरो मतः । क्रियापादस्तथान्यश्च चतुर्थो निर्णयस्स्मृत इति बृहस्पत्युक्ताश्चत्वारः पादा ज्ञेयाः । क्रिया च साक्ष्यादिभिः स्वस्वपक्ष-व्यवस्थापनम् । **न नो ह्यानिरिति** । युद्धविधायकस्य धर्मशास्त्रत्वादिति भावः ॥ ३२ ॥ कूटैः मायिकैः । कर्णिभिः बाण-विशेषैः । दिग्धैः विषलिप्तैः । अग्निना ज्वलितैः तैर्जनैर्वंशमुञ्जादिभिः स्थलारूढम् रथादितोऽवरुह्य स्थल आरूढन्तत्रावस्थि-तम् । आसीनं युद्धव्यापारं परित्यज्योपविष्टम् । सुप्तं युद्धश्रमादिना रथादौ सुप्तम् । विसन्नाहं कवचरहितम् । अयुध्यमानं सन्तं पश्यन्तम् । **शास्त्रविहितस्येति** । मुख्यतः पालनस्य विहितत्वेऽपि तदुपसर्जनतया जयाक्षिप्तस्य युद्धस्य फलसंबन्धं विनैव विहितत्वादुपस्थितायां परसेनायां युद्धस्य नित्यवत्प्राप्तत्वात्फलकामनाभावेन तदनाचरणे स्वधर्मत्यागस्तेन च पापं तव स्यादेवेति भावः । युद्धत्यागस्य पापजनकत्वे विशिष्यप्रमाणमाह—**न निवर्तेतेत्यादि** । हित्वेत्येकमपि पदं स्वधर्ममित्यनेन संबद्धं सदननुष्ठायेत्यर्थं बोधयन् स्वधर्मयुद्धानाचारणस्य पापसाधनतामाह योग्यत्वात् । पक्त्वा भुङ्क्ष इतिवत् । कीर्तिमित्य-नेन संबद्धं सन् विनाश्येत्यर्थं बोधयन् पौर्वापर्यमात्रम् **न तु धर्मं कीर्तिं चेति** । हिंसानाचरणेन योऽभिमतो धर्मस्त्वं कारुण्यातिशयादनेनामितसुखसाधनं राज्यमपि त्यक्तमित्यभिमता या कीर्तिस्तामित्यर्थः । उपस्थितयुद्धस्थले क्षत्रियस्यासंन्या-सिनो हिंसात्यागस्योक्तरीत्या धर्माजनकत्वात् । भीष्मादिमहावीरभयादेवानेन युद्धं परित्यक्तमिति प्रवादादकीर्तेरेव प्रत्युतो-द्भवाचेति भावः ॥ ३३ ॥ **निपातौ चकारापिरूपौ** । ननु न युद्धयेत कदाचनेत्यनेन युद्धस्य निषिद्धत्वात् तत्र प्रवृत्तिर्नो-चितेत्यत आह—**उदाहृतेति** । तत्रैव युद्धनिवृत्तेर्दृष्टार्थत्वस्योक्तत्वादर्थशास्त्रत्वात् युद्धस्य नरकाद्यनिष्टसाधनत्वाप्रत्यायक-त्वात् युद्धनिवृत्तिनिषेधकशास्त्रे दृष्टस्य कस्यचिन्निषेधफलस्यानभिधानात्तस्य निवृत्तौ नरकाद्यनिष्टसाधनत्वप्रत्यायकत्वाद्युद्धे प्रवृ-त्तिरेवोचितेति भावः ॥ ३४ ॥ **अत इति** । भयहेतुकयुद्धोपरमकर्तृत्वेन यन्मननं तस्मादित्यर्थः । यास्यसीत्यनेनास्यान्वयः । कीदृशो भूत्वेत्याकाङ्क्षायां पूरयति—**युद्धादुपरत इति** । तादृश इति । बहुमत इत्यर्थः ॥ ३५ ॥ खर्परे शरि विसर्गलोपस्य वैकल्पिकत्वात् निन्दन्त इति विसर्गलोपस्त्वव सामर्थ्यमित्येकं पदं च मत्वा व्याख्यान्तरमाह—**अथवेति** ॥ ३६ ॥ ३७ ॥ ॥ ३८ ॥ **तदपनयेनेति** । चित्तदोषापनयेनेत्यर्थः । **एतेनेति** । श्रवणायोग्यत्वेनेत्यर्थः । **अन्तरङ्गमिति** । समानविषय-कत्वाददूरविप्रकर्षेण साधनत्वाच्च । बहिरङ्गमिति पूर्वविपरीतत्वादिति ॥ ३९ ॥ **संयोगपृथक्त्वन्यायेनेति** । एकस्य तूभयार्थत्वे संयोगपृथक्त्वमिति सूत्रोदितन्यायेनेत्यर्थः । सूत्रार्थस्तु संयोगः समभिव्याहारलक्षणं वाक्यं तस्य पृथक्त्वं भेदो भवत्येकस्य तूभयार्थत्व उभयफलकत्वे सतीत्यर्थः । न यत्र संयोगपृथक्त्वमर्थादेकवाक्यत्वं न तत्रैकस्य कर्मण उभयार्थत्व-मेकवाक्य एकैव हि प्रवर्तनाविषयीभूतार्थाभावना तस्यामेकस्यैव फलस्य कर्मतयान्वयात्तत्र करणीभूतस्य कर्मणो धात्वर्थस्य तन्मात्रसाधकत्वाद्वाक्यभेदे तु भावनाभेदादन्यभावनायामन्यस्य फलस्य कर्मतयान्वयसंभवेन तत्र करणीभूतस्य तस्यैव कर्मणस्तत्फलकत्वसंभवादेवंच स्वर्गादितत्तत्फलार्थं तत्तद्वाक्येन ज्योतिष्टोमादेर्विहितस्यापि तमेतमिति वाक्यान्तरेण विवि-दिषाज्ञानयोः फलयोः पुनर्विधानसंभवात्तदर्थत्वमिति भावः ॥ ४० ॥ **श्रेयोमार्ग इति** । मोक्षप्राप्तिसाधन इत्यर्थः । साध-नत्वमिह प्रयोजकत्वं तच्च वेदानुवचनादितत्त्वज्ञानान्तेषु वर्तते । घटकत्वं सप्तम्यर्थः । यद्वा वेदानुवचनादिनिदिध्यासनान्ते साधनेसति या जायते सा बुद्धिरित्यर्थः । **वाक्य इति** । प्रतिपादकतयोक्तवाक्ये वृत्तिर्ज्ञानस्य बोध्या । **व्यवसायात्मिकेति** । अवसायो निश्चयः । विशेषोऽवसायो व्यवसायः विशेषश्च ज्ञानान्तरात् तत्त्वविषयकत्वम् । तत्त्वमबाधितोऽर्थः । सच्चात्मैवान्यस्य मिथ्यात्वात् । तन्निश्चयो निर्विकल्पको व्यवसायोऽभिमत इत्यभिप्रायेणाह—**आत्मतत्त्वनिश्चयात्मिकेति** । चतुर्णा-**माश्रमाणामिति** । वेदानुवचनं वेदाध्ययनं ब्रह्मचर्याश्रमे मुख्यमिति । तेन ब्रह्मचर्याश्रमः यज्ञदाने गृहस्थाश्रमेषु मुख्ये ताभ्यां स अनाशकं कामानशनं सितमेध्याशनं तपो वानप्रस्थे मुख्यम् तेन स तुरीयस्तु प्रधानत्वादेवोपलक्ष्यः श्रुत्यन्तर-

विहित इति सुष्ठूक्तं चतुर्णामिति । **भिन्नार्थत्वेऽहीति** । अर्थोऽत्र न प्रधानप्रयोजनं तद्भेदे साधनानां तत्तत्फलार्थानां समुच्चयस्यात्यन्तमसंभावितत्वात् । अपितु प्रधानफलनिष्पादकावान्तरव्यापारस्तस्यैकत्वे साधनानां तद्द्वारा प्रधाननिष्पादकानामेकेन साधनेन तद्व्यापारनिष्पत्तावन्यस्याकिंचित्करत्वेनानुपादेयत्वात् समुच्चयासंभवो भिन्नभिन्नत्वे चैकेन साधनेनैकव्यापारनिष्पत्तावपि प्रधानार्थापेक्षणीयव्यापारान्तरार्थं साधनान्तरस्याप्युपादेयतया साधनानां भवति समुच्चय इति भावः । **एकार्थत्वेऽपीति** । प्रधानं प्रति साधनतया प्राप्तानामन्योन्यापेक्षत्वबोधकप्रमाणे सति व्यापारैक्येऽपि भवत्येव समुच्चय एकेन साधनेन तस्यैवानिष्पत्तेर्मिलितस्यैव तन्निष्पादकत्वात्सापेक्षत्वबोधकप्रमाणं च द्वन्द्वसमासचकारादिकं तच्च वेदानुवचनेनेत्यादौ नास्तीति निरपेक्षसाधनत्वस्यैव प्रत्ययेन न समुच्चयः । व्यापारभेदे तु स्यात्सोऽपि नास्ति । निःश्रेयसरूपे प्रधानफले जननीये व्यवसायात्मकबुद्धिस्वरूपव्यापारात्मकस्यार्थस्यैकत्वात् तत्प्रयोजकचेतोविशुद्धेः स्वतःसिद्धौ तुरीयस्यैवाशुद्धिसत्त्वे तत्प्रक्षयाय तत्तारतम्येन क्वचिदेकस्य ब्रह्मचर्यस्य क्वचिद्ब्रह्मचर्यगार्हस्थ्ययोः क्वचिद्ब्रह्मचर्यगार्हस्थ्यवानप्रस्थानामपेक्षणीयत्वमिति चातुराश्रम्यसाध्यतोक्ता संभवाभिप्रायेण न नियमेन मिलितसाध्यत्वाभिप्रायेणेति । शब्देन वेत्यनन्तरं सापेक्षत्वे बोधित इति शेषः । समुच्चयः स्यादित्यनुषञ्जनीयः । **तथेति** । सापेक्षत्वबोधकमित्यर्थः । साङ्ख्यविषयेति । ब्रह्मविषयेत्यर्थः । योगविषयेति कर्मयोगविषयेत्यर्थः । द्वयोर्वास्त्वैकत्वाभावादाहैकफलत्वादिति । निःश्रेयसरूपैकफलत्वादित्यर्थः । कर्मयोगबुद्धौ तत्त्वविषयकत्वरूपस्य व्यवसायपदार्थघटकविशेषणस्यासंभवाद्विपरीतबुद्धिबाधकत्वरूपं तमाह—**सर्वेत्यादि** । कर्मयोगबुद्धेरपि कर्मानुष्ठानचेतोविशुद्धिश्रवणादिपरम्परयात्मतत्त्वनिर्विकल्पद्वारास्त्येव कथंचिद्बाधकत्वमिति नानुपपत्तिः । **अव्यवसायिनामिति** । निरुक्तव्यवसायात्मकबुद्धिमतो भिन्नानाम् । बुद्धय ऐहिकामुष्मिकफलमात्रानुबन्धिन्यः साध्यसाधनेतिकर्तव्यत्वादिगोचराबाध्या एवेत्यर्थः । एकेत्यस्यार्थमाह—**एकनिष्ठेति** । एकस्मिन्प्रधानतया ग्राह्ये परमेश्वराराधनमात्रनिष्ठसंसारसंतरणोपायत्वरूपे निष्ठा परिसमाप्तिर्यस्याः सा । अर्थात्तदितरागोचरा । नह्येवमव्यवसायिनां बुद्धिस्तस्यास्तत्तत्फलतत्तत्साधनाद्यनेकविषयकत्वादित्यर्थ इति ॥ ४१ ॥ **प्रमाणस्येति** । वेदान्तवाक्यादेरित्यर्थः । **अध्ययनविध्युपात्तेति** । 'स्वाध्यायोऽध्येतव्य' इति विध्युपात्तेत्यर्थः । **साध्यसाधनसंबन्धप्रतिभानादिति** । कर्मकाण्डवाग्जन्यबोध इत्यादिः । तथाचोक्तवाचा यत्फलसाधनत्वेन कर्मावबोध्यते स्वजन्यसाध्यसाधनेतिकर्तव्यताबोधप्रयुक्तकर्मानुष्ठानद्वारा तदेव फलं तादृशवाचस्तस्यैव साध्यत्वेन बोधितमित्यन्तवत्वात्तापानुबन्धित्वेन विवेकवतामनभिलषितेन तादृशफलेन विशिष्टं कर्मास्वादुफलानुबन्धि किंशुककुसुमतुल्यमविवेकिनामेव कामितमिति तैः किंशुकपुष्पसदृशैः कर्मभिर्बोध्यबोधकभावसंबन्धेन पुष्पैर्जन्यजनकभावसंबन्धेन किंशुकलतामिव संबद्धामित्यापातरमणीयामिति पर्यवसितार्थः । **निरतिशयफलाभावाच्चेति** । कर्मफलं स्वर्गादि सातिशयमेव मोक्षस्य स्वप्रकाशपरमानन्दात्मस्वरूपस्याभिव्यक्ततामात्रेण ज्ञानफलतामुपगतस्य नित्यस्य सर्वातिशायिनः सत्त्वादिति सातिशयफलत्वादप्यापातरमणीयामित्यर्थः । **ददातीति** । **तथेति** । स्वार्थज्ञानद्वारा पारम्पर्येण जन्मादिनिष्पादकत्वमेव तद्दातृत्वं बोध्यम् । **विचारजन्यतात्पर्यज्ञानशून्या इति** । साक्षात्परम्परया वा सर्वेषां वेदवाक्यानामद्वितीये ब्रह्मण्येव भवति विचारेण तात्पर्यग्रहः । तादृशग्रहवतां च न स्वर्गादिफले परमार्थत्वग्रहो नापि च तादृशफलसाधनकर्मविधायकत्वेन प्रकृष्टत्वेन कर्मकाण्डश्रुतीनामभ्युपगमः । किंतु ये तादृशतात्पर्यज्ञानशून्यास्तेषामेव स्वर्गादिषु परमार्थत्वग्रहो बाधकासंप्रत्ययात्तादृशफलसाधनकर्मविधायकत्वेन प्रकृष्टत्वोपगमश्च तासां श्रुतीनामिति त एवोक्तां वाचं प्रवदन्तीति समग्रवाक्यतात्पर्यार्थः । वेदार्थमिति उक्तार्थवादार्थं सत्यत्वेन मन्यमाना इति शेषः । **वेदार्थसत्यत्वेनेति** । समस्तपाठे वेदार्थस्य सत्यत्वेन । एवमेवैतदिति यो मिथ्याविश्वासः मिथ्याप्रामाण्यग्रहस्तेनेत्यर्थः । उक्तग्रहान्वयी सत्यत्वेनेति तृतीयायाः प्रयोज्यत्वमर्थः । सन्तुष्टा एतदेव परं लब्धव्यं नातःपरं लब्धव्यमस्तीति ग्रहणेनातिरिक्तेच्छाविरहिण इति । **वेदस्य कार्यपरत्वादिति** । प्रयोज्यप्रयोजकवृद्धव्यवहारात् कार्यान्वितस्वार्थे पदानां शक्तिग्रहात् प्रथमगृहीतशक्तित्यागे मानाभावात्सिद्धार्थेऽग्रहीतग्राहित्वलक्षणप्रामाण्यासंभवादर्थवादानामपि विध्यपेक्षितस्तुतिसमर्पकत्वेन तदेकवाक्यत्वात् वेदान्तानामपि यथाकथंचित् कर्त्रादिस्तावकत्वेन विधिवाक्यशेषत्वसंभवात्समस्तस्यैव वेदस्यापूर्वकार्यपरत्वादित्यर्थः । **नास्त्यन्यन्निरतिशयं ज्ञानफलमिति** । आत्मतत्त्वज्ञानस्य फलं मोक्षाख्यम् । अक्षयत्वेनामृतत्वेन चाक्षय्यं ह्वेत्याद्यपाम सोममित्यादिश्रुतिबोधितकर्मफलस्वर्गाद्यपेक्षया निरतिशयमुत्कृष्टतमं नास्तीत्यर्थः । **महता प्रबन्धेनेति** । स्वयोग्येऽर्थे सर्वप्रमाणापेक्षया प्रत्यक्षस्य समर्थप्रवृत्तिसंदेहजिज्ञासादिनिवृत्तिदर्शनादितः । प्राबल्यनिश्चयात्तत्प्रमितघटाद्यस्तित्वविरोधेन वेदान्तानामात्मापेक्ष्याल्पकालस्थायित्वरूपासत्त्वेनेदमित्यादिप्रत्यक्षबोधकपदनिर्दिष्टजगद्बोधने ह्यलौकिकाक्षय्यसुकृतफलस्वर्गादिनिरतिशयरागप्रयोजकलौकिकसुखतत्साधनवैराग्यसंपत्त्यनुकूले तात्पर्यावधारणात् । विरोधिज्ञानेन संजातज्ञानविषयभेदासंसर्गाग्रहादिसंपत्तेस्तत्राप्रामाण्यग्रहस्यैव वा संपादनात् विषयात्यन्तबाधस्यानुभवविरोधेन वक्तुमशक्यत्वात् ज्ञानेन विषयसृष्टेस्तु सुतरामसंभवात् । प्रतिभासमात्रशरीरत्वस्य जगतो वक्तुमशक्यत्वात् प्रवृत्तेः समर्थत्वासमर्थत्वविभागानुपपत्तेः । तथा सति प्रामाण्याप्रामाण्यविभागस्याप्यनुपपत्तेः तस्यां च बाध्यबाधकभावव्यवस्थाया अप्यनुपपत्तेः ज्ञानाभावातिरिक्तस्य भावरूपाज्ञानस्य गगनकुसुमस्येव निःस्वरूपतया तत्परिणामस्य विश्वस्य तत्फलायमानत्वाच्च विश्वमिथ्यात्वस्यासंभवादद्वितीयस्वप्रकाशनित्यपरमान-

न्दरूपमोक्षस्वरूपो दुर्लभः । एवं फलोत्पत्त्यन्यथानुपपत्तिश्रुतिमात्रसाधितस्वरूपस्य फलोत्पादमन्तरेण विनाशस्यायुक्तत्वादना-दिकालसंपादितानिशप्रवर्तमानकर्मचक्रानुनिष्पादितनिष्पद्यमानानन्तादृष्टप्रवाहविरामस्याप्यसंभवात्तुल्यायव्ययत्वेन विचारकजन-कामनागोचरत्वस्याप्यसंभवादात्यन्तिकदुःखनिवृत्तिरूपमोक्षस्वरूपोऽपि दुर्लभ एवेति नितरां तस्य निरतिशयत्वं दुर्लभमि-त्यायर्थकेन प्रबन्धेन ज्ञानकाण्डस्य वेदान्तस्य चरमप्रवृत्तस्य नित्यनिर्दोषत्वेन स्वतःप्रमाणस्य सर्वप्रमाणातिशायिमर्यादस्य शारीरकमीमांसापरिगृहीतसर्वप्रमाणागोचरात्यन्तापूर्वाद्वितीयब्रह्मतात्पर्यस्य नित्यनिरतिशयाविद्यानिवृत्तिमात्रलभ्याभिव्यक्तस्वानु-भवसिद्धस्वरूपानन्दभूमात्मकमोक्षाख्यफलेन फलवतो विरुद्धभाषिण इत्यर्थः । **प्रमाणान्तराबाधित इति** । सुकृत-तत्फलेनाविनाशिनी जन्यभावत्वाद्घटादिवदित्यनुमानेन'तोन्यदार्त'मित्यादिश्रुत्या च बाधितं यत्तद्भिन्न इत्यर्थः । **समाधि-विषयेति** । समाधिर्ब्रह्म तद्विषयेत्यर्थः । विपूर्वकस्य धाञः करोतिसमानार्थत्वात् विधीयत इत्यस्य क्रियत इत्यर्थः स्यात् । कर्तव्यत्वेन ज्ञापनार्थकत्वे च कर्तव्यत्वेन ज्ञाप्यत इत्यर्थः स्यात् । तस्य चोभयस्य सर्वस्यैव सदैव कृत्यविषये बुद्धि-स्वरूपेऽभावात् षष्ठ्यन्तोपादानमनर्थकं स्यादित्यत आह—**कर्मकर्तरीति** । तथाच करोत्यर्थकस्य तस्य कर्म घटादिकं तस्यैव सौकर्यद्योतनाय कर्तृत्वेन विवक्षायां कर्मणो घटादेरेव व्यापारो धातुतात्पर्यविषयः पर्यवस्यति । सच भवनमेव तदा-श्रयत्वमेव कर्तृत्वमिति घटो विधीयत इत्यस्य स्वयमेव घटो भवतीत्यर्थः पर्यवसितो भवति । प्रसिद्धः सप्रसक्तः प्रतिषिद्ध्यते । व्यवसायात्मिकाबुद्धिः विशुद्धान्तःकरणानां विरक्तानां भवति न भोगैश्वर्यप्रसक्तानामिति भावः । एतदभिप्रायेणैव न भवतीत्यर्थ इत्युक्तम् । **अन्तःकरणं वा परमात्मा वेति** । अन्तःकरणपक्षे समधीयते बुद्ध्या संनिधाप्यत इत्यर्थः । परमात्मपक्षे समाधीयते समारोप्यतेऽधिष्ठानभूते तस्मिन्नित्यर्थः । **नाप्रसिद्धार्थकल्पनमिति** । योगेन लब्धत्वादिति शेषः । **तन्निमित्तमिति** । समाधाविति निमित्तसप्तमी । निमित्तं च फलमपि विना प्रयोजनमुत्पत्त्यवस्थित्योः कस्यापि वस्तुनोऽभावात् समाधिनिमित्तं समाध्यर्थम् । क्रियाविशेषणमिदम् । व्यवसायात्मिकाऽग्निहोत्रादिकर्मनिष्पादिका तत्कर्तव्यता-बुद्धिः सकामानां ब्रह्मैकाम्यलक्षणसमाधिनिष्पादकचेतःशुद्धिविशेषजनकं कर्मद्वारा न भवतीति तात्पर्यार्थः । एतदेवाह अयं भाव इत्यादिना ॥ ४२ ॥ ४३ ॥ ४४ ॥ **सकामानामित्यादि** । सकामानां कर्मफलस्वर्गाद्यर्थरागवतामाशयस्यान्तः-करणस्य दोषादशुद्धेः प्रतिबन्धकान्मा भूत् कर्मयोगबुद्धिरूपा व्यवसायात्मिका बुद्धिर्निष्कामानां तु निरुक्तात्यर्थरागरहितानां तु तादृशरागरूपप्रतिबन्धकाभावेनोत्पन्नया व्यवसायात्मकबुद्ध्या कर्मफलस्वर्गाद्यनभिसंधानपरमेश्वरार्पणपूर्वकनित्यनैमित्तिक-कर्मानुष्ठानतत्परस्वरूपकर्मयोगप्रयोजकावश्यतत्कर्तव्यत्वग्रहरूपया तत्तत्कर्मकुर्वतां विशुद्धेऽप्यन्तःकरणे कर्मस्वाभाव्यात्स्वफ-लोत्पादनियतशक्तेः स्वर्गादिफलप्राप्तौ साक्षात्कृतस्वर्गाद्यर्थरामणीयकसमुद्भावितनितान्तरागतद्वासनारूपदोषात्मकप्रतिबन्धकात् सकामैः समानो ज्ञानप्रतिबन्धस्तत्त्वज्ञानानुत्पाद इत्यर्थः । **त्रयाणां गुणानामिति** । सत्त्वरजस्तमसाम् ज्ञानेच्छाप्रयत्नानां वा कर्मनिष्पाद्यम् । कामस्येच्छायाः प्रधानत्वात् काममूल इत्युक्तम् । संसारः जन्मकर्मफलभोगभोग्यमरणचक्रम् । **यो यत्काम इत्यादि** । कामनायाः कर्तृविशेषणत्वस्य शब्दतोऽर्थतो वा प्रत्ययात् शौचादिवदुपलक्षणतया तस्या अपि तत्तत्फलगोचरायास्तत्तत्फलानुकूलादृष्टं प्रति प्रयोजकत्वात् । कामनाभावे तादृशादृष्टोत्पत्तेरसंभवात् यो यत्फलकामस्तस्यैव तत्फलं बोधयन्तीत्यर्थः । तत्फलानुकूलसक्तिसत्त्वेऽपि तत्तदिच्छाविरहेण तत्तत्फलानुपधायकत्वे योगसिद्ध्याधिकरणसिद्धा-न्तमुदाहरति—**नहि सर्वेभ्य इत्यादि** । तत्तत्फलाय तत्तदिष्टिं समाम्नाय सर्वेभ्यो दर्शपूर्णमासावित्याम्नातम् । तत्र यत्किंचित्स्वर्गादिकामनया कृतयोरपि दर्शपूर्णमासयोः सकलेष्टिफलजनकत्वेन विधिना विहितयोर्भवत्येव सकलफलोपधाय-कत्वं इच्छा हि प्रवृत्तिद्वारा स्वरूपनिष्पत्तावुपक्षीणा न फलनिष्पत्त्युपयोगिनी । सा च सामर्थ्यनियता यद्यस्ति सकलेष्टि-फलजननशक्तिर्दर्शपूर्णमासयोर्विधिबोधिता ततः सकलेष्टिफलनिष्पत्तिरावश्यकी । नहि घटदर्शनेच्छया संपादितो दीपः पटं न दर्शयति पटदर्शनजननेऽपि तस्य शक्तत्वादिति पूर्वपक्षे कर्मणां फलजननेन स्वरूपमात्रनिष्पत्तिरपेक्षिताऽऽशुविनाशिनः स्वरूपस्य कालान्तरभाविफलकालपर्यन्तमसत्त्वात् किंतु पूर्वापराङ्गकलापापूर्वसहकृतोत्पत्त्यपूर्वनिष्पादितपरमापूर्वरूपव्यापारोऽप्य-पेक्षितः । सच यत्किंचिद्वैगुण्येनोत्पत्तुमर्हं इति शौचादिवत्कर्तृविशेषणं कामनापि यथाकथंचिदङ्गमुपेयमतः स शौचाद्यभाव इव कामनाभावेऽपि हि नोत्पत्तुमर्हति नैवं प्रदीपस्थले । तत्र घटदर्शन इव पटदर्शनेऽपि स्वरूपमात्रस्यापेक्षणीयत्वात् । घटदर्शनेच्छयापि स्वरूपसंपत्तावुचितं पटदर्शनम् । नच कामनाया अङ्गत्वमेव कथमवधारणीयमिति वाच्यम् । प्रकृते च शब्दैकसमधिगम्येऽर्थे शब्दमर्यादयैव हि सर्वमवधारणीयम् । तद्यदि कामना न तन्त्रं स्यात्स्वर्गाय यजेतेत्येव श्रुतिः स्यात् । स्वर्गकामो यजेतेति तु श्रूयते । तन्त्रत्वेऽपि स्वरूपमात्रनिष्पत्तौ प्रयोजकत्वे तस्य प्रवृत्तिद्वारा कार्यमात्रे लोकत एव सिद्धत्वात् यशःकामनया वा स्वर्गकामनया वा स्वरूपनिष्पत्तौ विशेषाभावात्तदाम्नानवैयर्थ्यमिति तत्तत्फल-जनकादृष्टलक्षणव्यापारोत्पत्तावपि तत्तत्फलकामनायाः प्रयोजकत्वमभ्युपेयम् । शौचादिवत् अशुचिनापि यागस्वरूपस्य निष्पाद्यत्वात्तदर्थं शौचवैयर्थ्यात् शौचादिरप्यदृष्टार्थ एव ह्यपेक्षणीयः । नच सर्वेभ्य इत्यत्र कामना न श्रूयत इति वाच्यम् । प्रक्रान्तवाच्ययं सर्वशब्दः । प्रक्रान्तश्च कामनोपरक्त एव पश्वादिः पशुकाम इत्यादिनेति । तेन रूपेणैव सर्वशब्दस्य तद्बोध-कत्वात् । तथासत्यर्थतः कर्तृविशेषणत्वप्राप्तेः चतुर्थ्या अप्युद्देश्यत्वबोधकत्वेन पश्वादिकामो दर्शपूर्णमासाभ्यां यजेतेत्यर्थो-

द्वचनव्यक्तिसंभवाच्च । एवं यत्र क्वचनार्थवादादिगतमेव फलमुपादीयते तत्रापि भावनासंबन्धार्थं कामादिपदघटितवचनव्यक्तिराश्रयणीयैव । उद्देश्यगतसंख्याया अविवक्षितत्वेन समुच्चितस्य फलत्वाभावात् । कस्यचित्समकालत्वाभावात् कस्यचिल्लब्धत्वेनाकामितत्वात् समुच्चितस्य फलत्वासंभवात् संभवे वा सर्वफलगोचरकामनयानुष्ठिताभ्यां ताभ्यां बहुफलसंभवेनैकैकफले कर्मणि कस्यापि प्रवृत्त्यसंभवात्तदाम्नानवैयर्थ्यापत्तेश्च । प्रत्येकमेवोद्देश्यत्वं तथा सति तत्तत्फलकामनावानेवाधिकारी न समुच्चितफलकामनावान् । तत्तत्फलकामनायां च तत्तत्फलानुकूलादृष्टस्यैवोत्पादेन तत्तत्फलकामनाकृतयागाच्छक्तिमात्रेण न फलान्तरोत्पत्तिः । तदनुकूलादृष्टोत्पादककामनाविरहादिति सिद्धान्तितम् । तथाच कामनाया अपि काम्यकर्मणि फलप्रयोजकत्वे निश्चिते निष्कामस्य चेतःशुद्ध्यर्थं लोकमर्यादानतिक्रमायेश्वराराधनबुद्ध्या क्रियमाणकाम्यकर्मणा न स्वर्गादिफलप्राप्तिरपि तु चेतःशुद्धिमात्रं नित्याग्निहोत्रादौ कामनायाः कर्तृविशेषणत्वाप्रत्ययात्तस्याः फलाजनकत्वेन कामनाभावेऽपि परमेश्वराराधनार्थमकरणजन्यप्रत्यवायपरिहारार्थं चानुष्ठितादग्निहोत्रादेर्नित्यान्नैमित्तिकाद्वानुषङ्गिकैहिक-पारलौकिक-फलप्राप्तावपि विशुद्धान्तःकरणत्वादीश्वरप्रीतेर्निष्कामस्वभावत्वाच्च रागरूपदोषाप्रसक्तेर्निष्प्रत्यूहं ज्ञानोत्पत्तिरिति न सकामपुरुषसाम्यमिति भावः । **कामनाविरहे फलविरह इति** । काम्यकर्माभिप्रायेणेदम् । नित्यकर्मणः कामनाविरहेऽपि स्वर्गाद्यानुषङ्गिकफलस्य तृतीयाध्यायदशमश्लोकव्याख्यानावसरे वक्ष्यमाणत्वात् । यद्वा रागादिदोषप्रसंजकत्वेन ज्ञानप्रतिबन्धकस्य फलस्य विरह इत्यर्थः । फलमात्रसद्भावेऽपि विशेषणाभावाद्विशिष्टविरहः । एवं च सामान्यतः फलविरहस्यात्राप्रतिपादितत्वेन न तृतीयाध्यायदशमश्लोकव्याख्याविरोधः । **संसारोऽपि निरस्त इति** । संसारस्य काममूलत्वात् कामनाविरहे सति काम्यात्फलस्यैवानुत्पत्तेर्नित्यादानुषङ्गिकस्य स्वर्गादेरुत्पत्तावपि तस्य रागाद्यशुद्ध्यापादकत्वविरहेणेह जन्मान्तरे वा ज्ञानोत्पत्तिसंभवेन संसारोच्छेदसंभवादिति भावः । **निस्त्रैगुण्यो निष्काम इति** । त्रैगुण्यं गुणत्रयं निर्गतं यस्मात्स निस्त्रैगुण्यः कामनायाः सर्वप्रधानत्वात्तदभावे चेतरयोरभावनियमान्निष्काम इति व्याख्यानम् ॥ ४५ ॥ ॥ ४६ ॥ **ज्ञाननिष्ठारूप इति** । ज्ञाने तत्त्वज्ञाने निष्ठा परिसमाप्तिर्यस्य तस्मिन् । ज्ञानैकफलक इति यावत् । तथाच विचारे कर्तव्यताबुद्धौ तत्रैव प्रवृत्तौ च शुद्ध्यर्थनिष्कामकर्मकरणासंभवादन्तःकरणशुद्धेरसंभवादशुद्धान्तःकरणस्य तव ज्ञानमपि न स्यादतः कर्मण्येवाधिकारोऽस्तु । तथा सत्यन्तःकरणशुद्धौ विचाराधिकारे विचारान्निष्प्रत्यूहं ज्ञानमुदेष्यतीति भावः ॥ ४७ ॥ **फलाभिलाषमिति** । फलमिहोपभोगे सति स्वातिहृद्यस्वभावाद्रागोपचयहेतुः स्वर्गादिविध्युद्देशे श्रूयमाणम् । तेन सामान्यतः फलेच्छाविरहे प्रवृत्तेरसंभवाच्चेतःशुद्ध्यादीच्छाया आवश्यकत्वेऽपि न क्षतिः । ईश्वराधिष्ठिताभ्यां सुकृतदुष्कृताभ्यां प्रवर्तितत्वेऽप्यहमेवात्र कर्मणि स्वतन्त्रव्यापारवानिति मिथ्याज्ञानम् कर्तृत्वाभिनिवेशस्तत्त्यागे सति शरीरयात्रानिर्वाहकभोजनगमनादिनान्तरीयकहिंसादेरशुद्ध्यापादकत्वाभाव इत्युक्ताभिनिवेशस्य सङ्गतयोपादानम् । तत्फलाभिलाषत्यागे तत्र प्रवृत्तेरसंभवात् तदनुष्ठानस्य शुद्ध्यहेतुत्वेन तदिच्छया तत्र प्रवृत्तेरुपपादयितुमशक्यत्वात् फलाभिलाषत्यागस्य तत्रासंभवात् मितमेध्याशनादेः शुद्धिहेतुत्वे तु कर्तृत्वाभिनिवेशत्यागोऽपि भोगानापादकतया विहितकर्मतः शुद्धिसंपादकः स्यादिति संभवाभिप्रायेण सोऽप्युपात्त इति । **सङ्गत्यागोपायमाहेति** । ननु विनाशित्वस्य विनाशे सति दुःखानुबन्धित्वस्य दुःखसंभिन्नत्वादेश्च स्वर्गादिफले निश्चयस्यैव स्वर्गादिफलाभिषङ्गत्यागोपायत्वं न सिद्ध्यसिद्ध्योः समभावस्य तस्य हर्षविषादान्यतरत्वावच्छिन्नाभावरूपस्य स्वर्गादीच्छाविघटकत्वस्यानुभविकत्वादिति चेन्न । नहि सिद्ध्यसिद्ध्योरुक्तसमभावो न विनाशित्वाद्युक्तदोषदर्शनं विनेति तस्यैव तेनोपलक्षणीयत्वात् कार्यमुखेन तदुपलक्षणेन दृढभूमिकस्य तस्य लाभादिति भावः ॥ ४८ ॥ **पुरुषार्थ इति** । स्वतः पुरुषार्थ इत्यर्थः । **कर्तव्यमिति** । प्रवृत्तिविषयस्वसाधनेन संपाद्यम् । नहि स्वतःप्रयोजनस्य किंचित्फलं भवतीति निष्फलं तत् । **प्रयोजनमनुद्दिश्येत्यादि** । यदि न तत्स्वतः प्रयोजनं स्यात् नापि च प्रयोजनान्तरसाधनत्वेनेष्टं तदा प्रवृत्तेरुपादानत्वोद्देश्यत्वाख्यविषयत्वान्यतरवन्न स्यात् स्यात् यदि प्रयोजनमनुद्दिश्यापि प्रवृत्तिस्तदा ह्यस्वतः पुरुषार्थोऽपि प्रवृत्तिविषयः स्यान्न चैवमस्ति तत्सुखदुःखाभावमात्रनियतस्य स्वतःप्रयोजनत्वस्यान्यत्रात्यन्तादृष्टस्य कल्पनातः स्वतःप्रयोजनान्यस्मिन् निष्प्रयोजने प्रवृत्तिविषयत्वस्यादृष्टस्य कल्पनातश्च वरं सदा कर्तव्यत्वेनाभिमते कर्मणि श्रुतफलोद्देश्यकप्रवृत्तिविषयत्वाभ्युपगमनमित्यर्थः । परमपुरुषार्थमोक्षफलकात्मबुद्धेश्चेतःशुद्धिद्वारा साधनभूतं निष्कामकर्म न स्वतःप्रयोजनं नापि निष्फलमपितु परमानर्थनिवर्तकपरमानन्दस्वरूपमोक्षप्रयोजकज्ञानसंपादकचेतःशुद्ध्या फलवत्तदुद्देश्यकप्रवृत्तिर्विषयश्चोच्यते । प्रसिद्धस्वर्गादिफलकामनाविरहाच्च निष्कामम् । जन्ममरणप्रबन्धापादकसकामकर्मतस्तद्विपरीतत्वात् । वरमत्युत्कृष्टं चानुष्ठेयमभिधीयत इत्यभिप्रायवानाह—**नेत्याह बुद्धियोगादित्यादि** ॥ ४९ ॥ **समत्वबुद्ध्येति** । सर्वानर्थनिवारकमोक्षापेक्षयात्यन्तनिकृष्टे जन्ममरणप्रबन्धापादके क्षयित्वादिदोषयुक्ते कर्मफले स्वर्गादौ प्राप्ते को हर्षोऽप्राप्ते वा तस्मिन् को विषाद इत्येवं निश्चयरूपया सिद्ध्यसिद्ध्योः हर्षविषादान्यतरत्वावच्छिन्नाभावरूपसमत्वबुद्ध्येत्यर्थः । **सत्त्वशुद्धीति** । समत्वबुद्ध्यापादितस्वर्गादिफलेच्छोत्सादेऽपि शुद्धीच्छयानुष्ठितकर्मणेत्यादिः । **उद्युक्तो भवेति** । उक्तसमत्वबुद्धिसंपत्तये य उद्योगस्तत्साधनस्य दोषदर्शनस्याभ्यासस्तद्वान्भवेत्यर्थः । यदित्येतस्य पर्यवसायित्वमित्येतत्सामानाधिकरण्ये तत्पदार्थोऽपि तादृशपर्यवसायित्वमेव स्यात् । तस्य योग इत्यनेन सामानाधिकरण्यं बाधि-

तमतो यदिति लुप्तपञ्चम्यन्तमव्ययं बोध्यम् । यस्माद्बुद्धियोगात्कर्मणां तदभावो बन्धहेतुत्वाभावः । मोक्षपर्यवसायित्वं च स समत्वबुद्धियोगः कर्मसु प्रवर्तमानस्य पुरुषस्य कौशलम् । तदिति कौशलमित्येतदपेक्षया नपुंसकनिर्देशः । कर्मयोग इति न मूलस्थयोग इत्यस्य विवरणम् । येन योगायेति पदस्य योगशब्दार्थतया समत्वबुद्धियोगस्योक्तत्वेन योग इत्यत्रापि तस्यैव योगपदार्थतया प्रतिपादनस्योचितत्वेन कौशलरूपतया मूलोक्तस्य तस्य कुशलरूपतयोक्तत्वेन चासङ्गतिः स्यात् किंतु समत्वेत्यादिकं सर्वं ध्वन्यमानार्थस्वरूपं तद्घटकम् । यथा समत्वबुद्धियुक्तत्वेन कुशलः पुरुषोऽवगतः समत्वबुद्धियोगस्य कुशलत्वरूपतयोक्तेस्तथा कर्मयोगोऽपि समत्वबुद्धियुक्तस्तस्मादेव हेतोः कुशलोऽवगम्यते । अवगते च कुशलतया कर्मयोगेऽयमीदृशः समत्वबुद्धियोगो येनाचेतनोऽपि कर्मयोगः कुशलः सन् सजातीयमनादिमोहपक्षपातप्रबलमप्युन्मूलयति त्वं तु चेतनोऽपि तद्विधुरो न भवसि कुशलो नापि सजातीयदुष्टक्षयं कर्तुं समर्थ इति व्यतिरेकः स्फुटं ध्वन्यत इति व्यतिरेको ध्वनित इति युक्तमुक्तम् ॥ ५० ॥ ज्ञानिनां परत्र गमनस्य श्रुत्यसंमतत्वाद्गच्छन्तीत्यस्यार्थमाह—**अभेदेनाप्राप्नुवन्तीति** । एतेन न्यायादिमतसिद्धस्य मोक्षस्वरूपस्यासुखत्वाज्जडत्वाच्चानभिलषितं मिथ्याभूतं च तत्र प्राप्यमिति सूचितम् । नच दुःखाभावरूपत्वात्तदभिलषितमिति वाच्यम् । दुःखस्य सुखविरोधित्वेन सुखार्थमेव तस्याभिलषितत्वात् । अन्यथा मूर्च्छाया अपि कामितत्वप्रसङ्गात् ज्ञाततयाभिलषितत्वे च मोक्षरूपस्यानभिलषितत्वतादवस्थ्यादिति ॥ ५१ ॥ ५२ ॥ श्रुतयो हि गृहीततात्पर्याः संशयविपर्यासनिवर्तकाः नतु तत्प्रयोजका इति विवृणोति—**नानाविधफलश्रवणैरिति** । नानाविधानि फलानि तेषां नानाविधानि फलानि येषां तेषां वा श्रवणैः शाब्दबोधैः न विचारितं तात्पर्यग्राहकलिङ्गैरद्वितीये ब्रह्मण्यवधारितं तात्पर्यं यत्र तैरर्थाद्यथाश्रुतार्थं एव गृहीततात्पर्यैरित्यर्थः । तथाच भवन्तु वेदानिर्णायका एव परन्तु तेषां वास्तविकतात्पर्याग्रहेऽन्यथा तात्पर्यग्रहात् यथाश्रुतार्थशाब्दबोधः संशयादिहेतुर्भवत्येवेति भावः । **अनेकविधेत्यादि** । कारीर्यादिफलस्यैहिकस्य वृष्ट्यादेः कदाचित्प्रतिबन्धकादसंपत्तौ स्वर्गादिफलेऽपि संदेहः । एवमैहिकानामनेकानां फलानामभिलषितानां श्रवणात् संपाद्यमिदमिदं वेति संदेहः श्रुततत्तत्फले कर्मणि समर्थत्वासमर्थत्वसंदेहस्तरति शोकं तरति ब्रह्महत्यामित्यादिवाक्यतोऽश्वमेधस्य 'तरति शोकमात्मविदि'त्यादितस्तत्त्वज्ञानस्य मोक्षफलकत्वग्रहादश्वमेधो वा तत्त्वज्ञानं वा संपाद्यमिति संदेहः । वेदेनैव स्वर्गादेः फलस्य फलवत्कर्मणां वा प्रतिपादनात् । अद्वैतस्य च प्रतिपादनादनयोरिदमिदं वा तत्त्वमिति संदेहः । 'अक्षय्यं ह वै' 'अपामसोमम'इत्यादिश्रुतितः कर्मफलस्याक्षयत्वावगतेः कार्यत्वेन क्षयित्वावगतेश्च संदेहः कोट्यन्तरानुपस्थितौ च तेष्वेव विपर्यासस्तदुभयशालित्वादशुद्धान्तःकरणस्य बुद्धिर्जीवोपाधिभूता ज्ञानेच्छादिवृत्तिमती विक्षिप्तानवस्थिता भवति शुद्धिहेतुसमवधानात्प्रागित्यर्थः । **जीवपरमात्मैक्यलक्षणमिति** । जीवपरमात्मैक्यं विषयतया लक्षणं यस्य तमित्यर्थः ॥ ५३ ॥ जीवन्मुक्तलक्षणप्रश्नो मुमुक्षोरर्जुनस्य नोचित इत्यत आह । यान्येव हीत्यादि मन्वान इत्यस्यार्जुन इत्यनेनान्वयः । **केशवेतीति** । कश्चेशश्च केशौ तयोः प्रशस्तसंबन्धवान् केशौ वात्यन्तर्यामितया प्राप्नोतीति वा केशव इति विवरणमभिप्रेत्य सर्वान्तर्यामितयेत्यादिव्यङ्ग्यार्थोक्तिः । यदा ब्रह्मेशानयोर्जन्यजनकभावेन संबद्धस्तयोरन्तर्यामी वा तदान्येषामन्तर्यामित्वे किमु वक्तव्यमिति सर्वेषामित्युक्तम् ॥ ५४ ॥ **कामसंकल्पादीनिति** । 'कामः संकल्पो विचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे'ति श्रुतिप्रसिद्धान्मनोवृत्तिविशेषानिति फलेच्छाकामः कर्तव्यत्वाध्यवसायः संकल्पः । विचिकित्सा संशयः । श्रद्धाश्रद्धे प्रामाण्याप्रामाण्यज्ञाने । धृतिरधृतिः धैर्याधैर्ये । न्यायनये हर्षविषादादिविकारकारणे सत्यप्यदृष्टविशेषरूपप्रतिबन्धकात्तदभावो धैर्यं तद्विपरीतमधैर्यम् । अत्रच मते विकारकारणसमवधानकालिकतदभावप्रयोजकचेतोवृत्तिविशेषो धैर्यम् । तद्विपरीता वृत्तिरधैर्यं लज्जाप्यत्र चेतसः संकोचरूपा वृत्तिः । वैशेषिकनये चाभिलषितप्रवृत्त्यभावप्रयोजकनिन्दाद्यनुबन्धित्वज्ञानम् । धीरावरणभङ्गप्रयोजकवृत्तिविशेषः ज्ञानादिशब्दप्रतिपाद्यः । भीः स्वानिष्टचिन्तनम् । इत्येतदित्युपलक्षणं प्रयत्नानुकम्पादृष्टादीनां बोध्यम् । **तन्त्रान्तर इति** । योगशास्त्र इत्यर्थः । **पञ्चधा प्रपञ्चितानिति** । यद्यपि कामसंकल्पादीनां नोक्तपञ्चवृत्तिष्वन्तर्भावः तथापि कामादीनां सर्वेषां वृत्तिपञ्चकमेव मूलमिति कार्यकारणयोरभेदोपचारात्तथोक्तम् । स्वानन्तरोत्पन्नविशेषगुणेन नाशश्च सर्वजनसाधारण इति कारणबाधेनेत्युक्तम् । बाधकश्चाभ्यासो वैराग्यमात्मतत्त्वदर्शनं च । **स्वाभाविकत्वादिति** । स्वाभाविकत्वस्यैव वाच्यत्वात् । कामादीनामनित्यानां वास्तविकतद्धर्मत्वे धर्मधर्मिणोस्तादात्म्याद्धर्मात्मनात्मनोऽप्यनित्यत्वापत्त्याश्रुतकूटस्थत्वानुपपत्तेरिति भावः—**धर्मा एत इति** । मनोरूपोपाधेरनादिकल्पिततादात्म्यलक्षणसंनिधानादात्मनि प्रतीयन्त इति शेषः । **तत्परित्यागेनेति** । अद्वितीयात्मतत्त्वसाक्षात्कारेण मनसस्तत्संबन्धस्य च बाधेनेत्यर्थः । जीवन्मुक्तैश्चरमदेहैरिति शेषः । तेषामपि प्रारब्धवशाद्बाधितस्यैवानुवृत्तेर्भोगाभासादिनिर्वाह इति भावः ॥ ५५ ॥ शोकः पुत्रधनविनाशादिनिमित्तकदुःखवत्त्वप्रतीतिः । मोहः प्रवृद्धं तमः तज्जनितो विपर्यासविशेषोऽनात्मन्यात्मत्वस्यानात्मीय आत्मीयत्वस्य ग्रहः । कामक्रोधादिश्च कश्चित्स्वरूपेण कश्चित्स्वविषयनाशादिद्वारा दुःखहेतुर्बोध्यः । निराकुर्यादित्यनन्तरं किमिति दुःखं जायत इत्यनुषञ्जनीयम्—**प्रारब्धाभावादिति** । तादृशप्रारब्धाकल्पनादित्यर्थः । भ्रमत्वमिहायथार्थगोचरत्वमात्रं न ज्ञानत्वघटितं तेन ज्ञानानात्मकवृत्तीनां विपर्यासत्वोक्तावपि नासङ्गतिः । निरुक्तसमस्तवृत्तीनामहंकारममकारानुविद्धविषयकत्वेन भ्रमत्वं तु सुज्ञेयमित्यन्यथातथात्वं यथायथमुक्तं दुःख-

कारणे सत्यपीत्यादिनेति ॥ ५६ ॥ **धीवृत्तिरित्यादि** । धीरन्तःकरणं तत्परिणामविशेषः । वस्तुतः परिणामदुःखत्वेन दुःखैकमये पुत्रकलत्रादौ सुखैकानुबन्धिगुणवत्त्वप्रकारकत्वेन भ्रमात्मक इत्यर्थः । व्यर्थत्वादित्येतद्वयं तामसत्वे हेतुर्यतो रजोबहुलस्य हि दुःखानुबन्धिनी सत्त्वबहुलस्य हि सुखानुबन्धिनी तमोबहुलस्य तु वृथाचेष्टा दृश्यते । तत्प्रयोजिका वृत्तिरपि वृथात्वात्तामसीत्यध्यवसीयत इति ॥ ५७ ॥ ५८ ॥ काष्ठवद्वृथाशीतातपसहिष्णुत्वनिष्क्रियत्वादिमान् काष्ठतपस्वी लोभादिना परवञ्चनाद्यभिसंधानेन । तस्य हि तपसि प्रवृत्तिस्तस्य तादृशक्लेशबहुलतपसो धनादिकतुच्छफलमफलमेवेत्यभिप्रेत्योक्तं काष्ठतपस्विनो वेति ॥ ५९ ॥ **चक्षिङो ङित्त्वकरणादिति** । नच ङित्वाभावे सतीदित्वान्नुम् स्यादिति तद्वारणाय ङित्वकरणसार्थक्यात्र तस्यानुदात्तेत्त्वलक्षणात्मनेपदानित्यत्वज्ञापकत्वम् । ङित्वेऽपीदित्वान्नुम्प्राप्तिस्तु न शङ्क्या अन्त्येदित्वस्यैव तन्निमित्तत्वेन ङित्करणे तदभावादिति वाच्यम् । अनुदात्ताकारे त्वकारणेनापि नुम्प्राप्तिवारणसंभवान्नित्यमात्मनेपदस्य संभवाच्च ङित्वकरणवैयर्थ्यस्य दुर्वारत्वात् अनुदात्तेत्त्वलक्षणात्मनेपदस्यानित्यत्वे तु नित्यमात्मनेपदप्राप्त्यर्थं ङित्वस्य सार्थक्यसंभवाद्भवति ज्ञापकत्वमिति भावः ॥ ६० ॥ **ज्ञानकर्मसाधनभूतानीति** । ज्ञानसाधनानि चक्षुरादीनि कर्मसाधनानि वागादीनीत्यर्थः । **मत्वेति** । इन्द्रियस्याचेतनत्वेऽपि तदभिमानिदेवताभिप्रायेणोक्तम् ॥ ६१ ॥ ६२ ॥ ६३ ॥ व्यवहितस्य तु शब्दस्यान्वयं कृत्वा पठति—**विधेयात्मात्विति** । व्याकरोति—**वशीकृतान्तःकरणस्त्वति** । **विधेति** । वशीकृतेत्यर्थः । आत्मेत्यन्तःकरणेत्यर्थः । रागद्वेषविरहितत्वं च रागद्वेषविषयाविषयकत्वम् ॥ ६४ ॥ ॥ ६५ ॥ **निवृत्तिरूपेति** । प्रयोज्यप्रयोजकयोरेकत्वोपचारात् अविद्यानिवृत्तिः कार्यत्वेन रूपं चिह्नं ज्ञापकमस्येति विग्रहाश्रयणात् । तत्त्वज्ञानजन्यस्याविद्यानिवृत्तेस्तद्ध्वंसस्यातिरिक्तस्याभावपक्षे स्वोत्तरकालीनाविद्यात्यन्ताभावस्य रूप्यतेऽनेनेति रूपं ज्ञापकं तत्त्वज्ञानस्याज्ञानतत्कार्याश्रयकालपूर्वत्वाभावनियमादित्यभिप्रायेण वोपपाद्यम् ॥ ६६ ॥ ६७ ॥ ६८ ॥ **वस्त्वदर्शनेति** । वस्त्वविद्येत्यर्थः ॥ ६९ ॥ **प्रविशन्तीति** । प्रमाणवृत्त्यभिव्यक्तयत्संबन्धाश्रया भवन्तीत्यर्थः । **विकर्तुमिति** । रागद्वेषादिकं जनयितुमित्यर्थः । **लौकिकालौकिककर्मविक्षेपेति** । पाकभोजनपानतृप्तिगमनोपवेशनशयनादिलौकिकमलौकिकमिष्टापूर्तादि तत्तत्फलं च तद्विक्षेपस्तदुत्पत्तितत्प्रतिभासादिस्तन्निवृत्तिरज्ञानस्य तदखिलहेतोरभावात् । **बाधितानुवृत्ताविद्याकार्यनिवृत्तिमिति** । बाधितं सदपि प्रारब्धवशादनुवृत्तं प्रति भासमानमविद्याकार्यं क्रियातत्फलादिकं तन्निवृत्तिं पारमार्थिकीमित्यर्थः । यद्वा पूर्वोक्ता निवृत्तिः स्थितप्रज्ञस्य जीवन्मुक्त्यवस्थाभिप्रायेण । द्वितीया तु जीवन्मुक्त्यवस्थायां यद्बाधितानुवृत्तमविद्याकार्यं तस्यापि निवृत्तिः प्रारब्धक्षयेण विदेहकैवल्याभिप्रायेण । निर्वृत्तिमिति पाठस्तु सुगमः । प्रारब्धवशेन बाधानुवृत्ताविद्याकार्यनिष्पत्तिमित्यर्थसंभवात् । **दैवाधीनेति** । प्रारब्धाधीनेत्यर्थः ॥ ७० ॥ ७१ ॥ ७२ ॥

इति श्रीधर्मदत्तशर्मणा विरचिते मधुसूदनसरस्वतीकृतद्वितीयाध्यायभगवद्गीतागूढार्थदीपिकातत्त्वालोके द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

**सांख्यबुद्धिमाश्रित्येति** । सांख्यं ब्रह्म तदेकमात्रगोचरां बुद्धिं मोक्षरूपपरमपुरुषार्थसाधनत्वेनाश्रित्य निश्चित्य ज्ञाननिष्ठा ब्रह्मज्ञानैकपरायणता संपाद्यत्वेनोक्ता । योगः कर्मपरायणता तद्गोचरां फलसाधनत्वेन तद्विषयिणीं बुद्धिं प्रतिपादनकारणत्वेनाश्रित्य कर्तव्यतया कर्मनिष्ठा प्रतिपादितेत्यर्थः । **निकृष्टत्वाभिधानादिति** । निकृष्टतोत्कृष्टता च न स्वरूपेण । तत्प्रयोजकस्य तादृशस्याप्रतिपत्तेः किंतु फलद्वारा । न चोत्कृष्टमपकृष्टं च फलमेकं फलभेदे च तत्तत्फलकामनारूपाधिकारोऽपि नैक इत्यैकाधिकारिकत्वाभावाद्यापारमेदसंभवेऽपि न समुच्चयसंभव इति भावः । ननु फलयोरुत्कर्षापकर्षेऽपि द्वयोर्निसर्गसुन्दरत्वेन कामनासंभवाद्विवेकित्वाविवेकित्वाद्यवस्थाभेदेनैकेनापि पुरुषेण समयभेदेनोभयोपादानसंभवादेकपुरुषानुष्ठितत्वमात्रेणास्तु कथंचित्समुच्चय इत्यत आह—**यावानर्थेति** । तत्तत्कर्मणा तत्तदेकैकफलस्यैवैकानुष्ठानेन प्राप्तेर्ज्ञानेन सकलकर्मफलपार्यन्तिकसुखस्य प्राप्तेः प्रतिपादनान्मन्दस्यापि कर्मणि प्रवृत्त्ययोगान्न समुच्चयसंभव इति भावः । ननु कर्मणोऽपि यज्ज्ञानफलं तत्फलत्वमस्तु तथासत्येकाधिकारिकत्वसंभवात्समुच्चयसंभवः । कर्मणोऽवरत्वप्रतिपादनं तु विध्युद्देशश्रुतफलापेक्षयेत्यत आह—**स्थितप्रज्ञेति** । यदि कर्मफलमपि तत्स्यात्सप्रशंसं ज्ञानफलतयैव नोपसंहियेत तस्माच्च तत्कर्म फलतया भगवदभिप्रेतमिति भावः । ननु ज्ञानस्य प्रधानसाधनत्वात्तत्फलतयैव तन्निर्देश इत्यत आह—**या निशेति** । तथा च विरोधादेव न समुच्चयसंभव इति भावः । ननु ज्ञानात्पूर्वमनुष्ठितात्कर्मणो व्यापारद्वारा मोक्षफलसंभवात्समुच्चयसंभव इत्यत आह—**अविद्येत्यादि** । अविद्यानिवृत्त्युपलक्षितात्मस्वरूपस्य मोक्षरूपत्वादविद्यानिवृत्तेरधिकरणस्वरूपत्वात् मोक्षस्याविद्यानिवृत्तिलक्षणत्वमविद्याप्रतियोगिकनिवृत्तित्वेन ज्ञानसाध्याया अविद्यानिवृत्तेः संपत्त्यैवेव तदुपलक्षितमोक्षस्वरूपसंपत्तिरिति ज्ञानफलत्वं चाज्ञाननिवृत्तिश्च लोकेऽपि शुक्त्यज्ञानादेः शुक्तिज्ञानमात्रादेव दृष्टा न कर्मादित इति न कथंचिदपि कर्मणो मोक्षफले समुच्चयसंभव इति भावः । ज्ञानमात्रस्य मोक्षहेतुत्वे श्रुतिमपि प्रमाणयति—**तमेवेत्यादिना** । कर्मणो

मोक्षहेतुत्वे 'न कर्मणा न प्रजये'त्यादिश्रुतिरपि प्रमाणमनुसंधेया । **उत्कृष्टेत्यादि ।** उत्कृष्टं विहायापकृष्टे प्रवृत्त्यसंभवात्कर्मणोऽपकृष्टत्वस्य भगवतैवोक्तत्वात् विकल्पानुपपत्तेरित्यर्थः । ननु फलेऽप्युत्कर्षापकर्षकल्पनात्तत्संभव इत्यत आह—**अविद्येत्यादि ।** पर्याकुलीभूतबुद्धिरित्यस्यार्जुन उवाचेत्यनेन संबन्ध इति ॥ १ ॥ २ ॥ **निष्ठा स्थितिरिति ।** निरावरणस्वप्रकाशचिद्रूपानन्दे स्थितिरभेदेन तादृशानन्दैक्यलक्षणो मोक्ष इति यावत् । **द्विविधा द्विप्रकारेति ।** व्यवहिताव्यवहितसाधनभेदेन द्वौ प्रकारौ भेदकौ सांख्ययोगसाध्यत्वलक्षणौ यस्या वस्तुत एकस्या निष्ठायाः सा तथेत्यर्थः । अव्यवहितसाधनं जन्मान्तरानुष्ठितकर्मयोगनिष्पन्नान्तःकरणशुद्धिमदधिकारिणः संन्यासपूर्वकश्रवणादिनिष्पन्नज्ञानयोगः । ज्ञानयोगेनेति तृतीया साक्षात्साध्यत्वबोधिका अतएवोक्ताव्यवहितसाधनं चाशुद्धान्तःकरणस्याधिकारिण इह जन्मान्तरे वान्तःकरणशुद्धिसंन्यासश्रवणादिपरम्परया ज्ञाननिष्पादनद्वारा कर्मयोगः । कर्मयोगेनेति तृतीयातएवोक्तपरम्परासाध्यत्वबोधिकोक्ता फलनिष्ठैयमुक्तैतदभिप्रायेणैव वक्ष्यति—**एकैव निष्ठेति ।** ज्ञानकर्मपरतयोः स्वरूपत एव भेदेनान्यथा तदसंगतं स्यात् । **साध्यसाधनावस्थाभेदेनेति ।** साध्या निष्पाद्या साधनैः कर्मयोगान्तःकरणशुद्धिसंन्यासादिभिः श्रवणादिसाक्षात्कारान्तो ब्रह्मगोचराविच्छिन्नज्ञानप्रवाहो ज्ञानयोगो ज्ञानपरता सैवान्तःकरणस्य शुद्धिमतोऽधिकारिविशेषस्यावस्था साध्यावस्था साध्यावस्थाया अन्तःकरणशुद्ध्यादिद्वारानिष्पादिका साधनावस्था कर्मपरता कर्मयोगः तदुभयभेदेन द्विप्रकारा ज्ञानयोगनिष्पाद्या कर्मयोगनिष्पाद्या चेति । पूर्वं तु ज्ञानपरता कर्मपरता च निष्ठोक्ता साधनस्यैवोपदेश्यत्वेन प्रधानतया साधननिष्ठा लक्षणा फलसाधननिष्ठयोः प्रयोज्यप्रयोजकयोरभेदोऽत्र विवक्षितोऽतो न पूर्वापरग्रन्थविरोधः । ज्ञानं परमुत्कृष्टमनन्यसंपाद्यत्वेनाभिमतं यस्य तस्य भावो ज्ञानपरता एवं कर्मपरतापि व्याख्येया । साधननिष्ठापक्षे च तृतीयाद्वयमभेदार्थकं बोध्यम् । यद्वा एका फलनिष्ठैवोक्ता ज्ञानस्य परोत्तरीभूता कर्मणः परोत्तरीभूतार्थाच्छुद्धान्तःकरणस्य कर्मानपेक्षज्ञानसाध्याऽशुद्धान्तःकरणस्य तु शुद्धिपारम्पर्येण कर्मसाध्या तलः स्वार्थकत्वं देवतादिशब्दवदतो न पूर्वापरग्रन्थविरोधः । **एकं सांख्यमिति ।** एकफलकमित्यर्थः ॥ ३ ॥ **सर्वकर्मशून्यत्वमिति ।** फलपर्यवसायीति शेषः । तथाच विवक्षितविवेकेन ज्ञानयोगेन निष्ठामिति पर्यवस्यतीत्युभयोर्नैष्कर्म्योक्तनिष्ठयोरभेदाभावेऽपि न क्षतिः ॥ ४ ॥ प्रकृतितो मूलकारणादविद्यातः कार्याकारेणाभिव्यक्तैः कार्यात्मना परिणतैरित्यर्थः । यथाश्रुतार्थस्तु सांख्यसिद्धान्तानुसारित्वादसङ्गत इति ॥ ५ ॥ **औत्सुक्यमात्रेणेति ।** संन्यासफलनैसर्गिकनिरतिशयरामणीयकोपजातफलोत्कटरागेणेत्यर्थः । प्रतिबन्धकाशुद्ध्यपाकरणयत्नव्यवच्छेदो मात्रार्थः । **विमूढात्मेति ।** विशिष्टो यो मोहः तद्युक्तमात्मान्तःकरणं यस्य सः । वैशिष्ट्यं च रागद्वेषादिकार्योपधानम् । पर्यवसितार्थमाह—**रागेत्यादि । मिथ्याचार इति ।** मिथ्याशब्दो मोघवचनः । आचारः संन्यासप्रयोजकबाह्येन्द्रियनिग्रहादिव्यापारः । तथाच सत्त्वशुद्ध्यभावेन तत्त्वंपदार्थविवेकादिरूपसंन्यासफलयोग्यत्वस्य चेतोविशुद्धिलक्षणस्याभावान्मोघ उक्तफलानुपधायक आचारो यस्य स इति तात्पर्यार्थमाह—**सत्त्वेत्यादिना ।** यस्य हि विशुद्धान्तःकरणस्य सकलकर्मबीजदाहप्रसिद्धा मोघशक्तितत्त्वज्ञानानुबन्धितत्त्वंपदार्थविवेकादिकमप्रतिबद्धमुत्पद्यते । स तादृशविवेकार्थविहितसंन्यासकारी नित्यनैमित्तिकानुष्ठानत्यागेनापि न पतति । यस्त्वविशुद्धान्तःकरणोऽसंभावितत्तादृशविवेकोऽनधिकारी संन्यासकारी स नित्यनैमित्तिकाननुष्ठानेन पतत्यपि परं न फलवञ्चितमात्र एव भवतीत्यभिप्रायेणाह—**पापाचार उच्यत इति ।** तादृशोक्तौ प्रमाणमाह—**त्वंपदेत्यादि ।** तत्त्यागी त्वंपदार्थविवेकत्यागीत्यर्थः । **पतितो भवेदिति ।** यथा समुदेष्यत्यपि न चिरात्सूर्ये तमो न भवति तथैवेह जन्मनि विशुद्धान्तःकरणस्य समुदेष्यति । तत्त्वज्ञाने नित्यनैमित्तिकाननुष्ठानतोऽपि न भवति पाप्मेति युक्तम् । फलमनुत्पाद्यैव विनाशिनस्तस्य लाघवेनानुत्पत्तेरेव कल्पयितुमुचितत्वात् । यस्य न विशुद्धमन्तःकरणं तस्येह जन्मनि त्वंपदार्थविवेकतत्त्वज्ञानादेरनुदयात्कर्मपरित्यागो भवेदेव पापहेतुरिति भावः ॥ ६ ॥ **परिश्रमसाम्येऽपीति ।** इन्द्रियव्यापाराभावेन्द्रियव्यापारप्रयोजकप्रयत्नसाम्येऽपीत्यर्थः । तेन कर्मेन्द्रियव्यापारपक्षे कायश्रमाधिक्येऽपि न क्षतिः । इति वेत्यनन्तरमित्येतावत्पर्यन्तं विवक्षितमिति पूरणीयम् ॥ ७ ॥ नियतपदेन नित्यस्य संग्रहाय विध्युद्देश इत्यादिफलसंबन्धशून्यतया विहितमिति फलोद्देशेनाविहितत्वेसति विहितमित्यर्थः । तेन तृतीयायाः प्रकारत्वार्थकत्वे नित्याग्निहोत्रसन्ध्यावन्दनादिविधिजन्यबोधे फलसंबन्धशून्यत्वस्याप्रकारत्वेऽपि न क्षतिः । न वा तृतीयाया वैशिष्ट्यार्थकत्वेन फलसंबन्धशून्यं सद्विहितमित्यर्थपक्षेऽकरणजन्यप्रत्यवायाभावरूपफलसंबन्धेन नित्यस्य फलसंबन्धशून्यत्वविरहेऽपि हानिः । ननु विध्युद्देशे फलाभावस्य रात्रिसत्रे विरहात्तस्यापि नित्यत्वापत्तिः । अर्थवादस्याप्युपलक्षणे 'सन्ध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातन'मित्यर्थवादे सन्ध्यावन्दनादिनित्यकर्मणोऽप्यस्ति फलं श्रुतमिति तत्राव्याप्तिरितिचेन्न । रात्रिसत्रादावकरणे प्रत्यवायाश्रवणेन प्रत्यवायाभावोद्देशेन तत्र प्रवृत्त्यसंभवात्प्रवर्तनालक्षणविधेरनुपपत्तेरत्यन्ताश्रुतफलस्यार्थवादश्रुतफलापेक्षया जघन्यतयार्थवादिकफलस्य तस्याप्यभावेऽश्रुतस्यैव फलस्य विध्युद्देशघटकत्वकल्पनस्यावश्यकतया रात्रिसत्रविश्वजिदादेः फलोद्देशेन विहितत्वानपायात् । नित्यानां तु प्रवर्तनात्मकविधेरावश्यकाकरणजन्यप्रत्यवायाभावकामनामूलकप्रवृत्त्योपपत्तेर्विधिना फलस्यानपेक्षिततया विध्युद्देशघटकत्वस्यार्थवादिकफले कल्पनायोगात् फलोद्देशेनाविहितत्वस्यानपायाच्च । नैमित्तिकसंग्रहायाह—**नियतनिमित्तेनेति ।**

नच नित्यमिति प्रसिद्धमित्यनेन विरोधो नहि नैमित्तिकं नित्यमिति प्रसिद्धमिति वाच्यम् । यस्याकरणे प्रत्यवायस्तन्नित्यमित्यस्यैव प्रसिद्धेस्तत्त्वस्य नैमित्तिकसाधारणत्वेनाविरोधात् । नैमित्तिकव्यावृत्तस्वरूपनित्यपदार्थस्य विवक्षितत्वे नित्यमित्येव हि ब्रूयात् । प्रसिद्धमित्यस्य व्यर्थत्वापातात् । एकोक्त्योक्तधर्मेणोभयसंग्रहायैव हि नित्यमिति प्रसिद्धमित्यधिकमुक्तम्—**अर्थान्तरे संक्रमितमिति** । वाच्यसाधारणलक्ष्यतावच्छेदकरूपेण बोधकमित्यर्थः । अर्थान्तरं च तत्प्रागननुष्ठितशुद्धिहेतुकर्मेत्यनेन प्रागुक्तम्—**क्षात्रवृत्तिकृतत्वलक्षणेनेति** । क्षात्रवृत्तिर्युद्धादिना धनार्जनादिस्तेन संपादितस्वरूपेणेत्यर्थः । **तथाचेति** । यथाच युद्धाद्युपार्जितधनादिना वर्तनमुत्कृष्टं तथा चेत्यर्थः । **प्रागुक्तमिति** । धर्म्याद्धि युद्धाच्छ्रेयोऽन्यदित्यादिना पूर्वाध्याय उक्तमित्यर्थः ॥ ८ ॥ ९ ॥ पूर्वश्लोके परमेश्वराराधनार्थं कर्मणः कर्तव्यत्वमुक्तम् । तच्च कर्म नित्यनैमित्तिकरूपमेव नतु काम्यं तदकरणे प्रत्यवायाभावात् तदुद्देशेन तदनुष्ठानस्यासंभवात् । निर्दिष्टफलेच्छया तत्संभवेऽपि मुक्तसङ्ग इत्यनेन तस्यानिराकरणात् । ईश्वराराधनार्थमपि हि काम्यं न कर्तव्यं तत्फलस्यावश्यकर्तव्यनित्येनेव संभवात् । बह्वायासापादकेनानावश्यकेन काम्येन तत्संपादनस्यायुक्तत्वादिति । तस्मिन्नुक्ते कर्तव्यत्वे प्रमाणतयोदाहृतं प्रजापतिवचनं यदि काम्यकर्ममात्रविषयकं स्यान्न स्यान्नित्यस्य कर्तव्यत्वे प्रमाणमिति । तद्वचनस्थैषशब्दस्यावश्यकाग्निहोत्रसन्ध्यावन्दनादीनामप्युपलक्षकत्वं वाच्यम् । तथाच प्रमाणत्वसंभवेऽपि तस्येष्टकामधुगित्यस्यासङ्गतिः । फलेच्छामन्तरेण कर्तव्यतया प्रतिपादितस्य नित्यादेरिष्टस्य तदानीमिच्छाविषयस्य कामस्य कामनास्वरूपयोग्यस्य स्वर्गादेः साधनत्वाभावादित्याशयेनाह—**अत्र यद्यपीति** । अत्र सहयज्ञा इति भगवद्वचनेऽनेनेत्यादि । प्रजापतिवचने च परमेश्वराराधनार्थं निर्दिष्टफलकामनामन्तरेण नित्यनैमित्तिककर्मकर्तव्यत्व उक्ते प्रमाणतयोपन्यस्त इत्यर्थः । तेन प्रजापतिवचनस्य नित्यकर्मकर्तव्यत्वप्रकरणस्थत्वाभावेन काम्यकर्ममात्रपरत्वेऽपि क्षत्यभावान्नित्यपरत्वमङ्गीकृत्येष्टकामधुगित्यस्यासङ्गत्युद्भावनमसंगतमिति शङ्का निरस्ता । काम्यकर्ममात्रपरत्वे तद्वचनस्योक्तनित्यकर्मकर्तव्यत्वप्रमाणतया सर्वज्ञस्य सकलवचनतात्पर्यविदः परमेश्वरस्य तद्वचनाभिधानमसंगतं स्यादिति नित्येऽपि तत्तात्पर्यस्योन्नेयत्वात् । नित्यकर्तव्यत्वबोधकवचनान्तराभावेन प्रजापतेः सृष्टाधिकारिप्रजाशिक्षकस्य न्यूनतापत्त्यामपि च तत्र तात्पर्यस्य वाच्यत्वात् । नच नित्यपरत्वे काम्यानभिधानान्न्यूनतेति वाच्यम् । नित्यमात्रपरत्वानभ्युपगमादत एवोक्तमावश्यककर्मोपलक्षणार्थम् । तस्यावश्यककर्मण उपलक्षणं शक्यसाधारणरूपेण ज्ञानमर्थः प्रयोजनं यस्येत्यर्थः । उपलक्षकत्वं हि शक्यलक्ष्यसाधारणरूपेण शक्यबोधकस्य शक्येतरबोधकत्वम् । तथासति काम्यस्यापि हि बोधकत्वमक्षतम् । उपलक्षणार्थमित्यनन्तरं न शक्ययज्ञमात्रबोधनार्थमिति शेषः । तथा च नोक्तन्यूनतेति भावः । यज्ञग्रहणमित्यस्य यज्ञो गृह्यते ज्ञायतेऽनेनेति यज्ञग्रहणं यज्ञबोधकं पदमित्यर्थः । तच्च सहयज्ञा इति भगवद्वाक्यस्थयज्ञपदं प्रजापतिवाक्यस्थसर्वनामपदं च अकरण इति नित्यनैमित्तिकयोरित्यादिः । **कथनादिति** । हेतुरयं प्रजापतिवाक्यस्थसर्वनाम्नो नित्यपरत्वे यस्याकरणाद्धि प्रत्यवायस्तत्कर्म कथं कर्तव्यतया प्रजापतिर्नोच्येतेति । **काम्यकर्मणां चेति** । चो हेत्वर्थे । काम्यकर्मणामप्रस्तुतत्वादित्यर्थः । हेतुरयं सहयज्ञा इत्यत्र यज्ञपदस्य नित्यकर्मोपलक्षकत्वे काम्यकर्मपरतायामप्रस्तुताभिधानापत्तेः । अप्रस्तुतत्वे **हेतुर्निराकृतत्वादिति** । एतदनन्तरं तथा चेष्टकामधुगित्यस्यासङ्गतिरिति शेषः । यद्वा अत्र इत्यस्य सहयज्ञा इति भगवद्वचन इत्येवार्थः । यज्ञग्रहणमित्यस्यापि यज्ञपदमित्येवार्थः । यज्ञपदज्ञानमिति वार्थः । यज्ञपदप्रयोग इति वार्थः । निराकृतत्वादित्यनन्तरं तथाच सहयज्ञा इत्यत्र यज्ञपदस्य नित्यपरत्वे स्थिते तत्समानार्थकस्य प्रजापतिवचनस्थसर्वनाम्नोऽपि नित्यकर्मपरत्वस्यावश्यकत्वादिष्टकामधुगित्यस्यासङ्गतिरिति शेषो बोध्य इति । **आनुषङ्गिकफलसद्भावादिति** । नित्यविधेः पापनिवृत्त्युद्देशेनापि प्रवृत्त्योपपत्तिसंभवाद्विध्युद्देशे कामपदादेरकल्प्यत्वात्कामनायाः कर्तृविशेषणत्वालाभात्काम्यस्थलवत्फलहेतुत्वस्याग्रहात्कामनां विनापि फलोत्पत्तिसंभवात् । यथाश्रुतवाक्यार्थे प्रमाणान्तरविरोधरहितेन स्तुतिपरेणाप्यर्थवादवाक्येन स्तुतिद्वारभूतवाक्यार्थप्रमित्या प्रमितस्य फलसाधनत्वस्य दुर्वारत्वात् । परमेश्वराराधनदुरितक्षयाद्युद्देशेन प्रवृत्तितोऽपि स्वर्गादिफलसंभवेनेष्टकामधुगित्यस्य नासङ्गतिः । अनुषङ्गः साध्यसाधनभावादिसंबन्धस्तन्मात्राद्भवति यन्न तदुद्देश्यकप्रवृत्त्यादिकमप्यपेक्षत इत्यानुषङ्गिकं हि तत् । **धर्मं चर्यमाणमिति** । धर्ममित्येव चर्यमाणं नतु किंचित्फलमुद्दिश्येत्यर्थः । अर्थाः फलानि उत्पद्यन्तेऽनुधर्ममित्यन्वयः । **नोचेदनूत्पद्यन्त इति** । कुतश्चित्प्रतिबन्धकादिति शेषः । न धर्महानिः नित्यनैमित्तिकयोर्धर्मत्वेनाभिमतयोराचरणात् तथाच धर्माचरणादकरणजन्यप्रत्यवायस्यानुत्पत्तेः कामनाविरहेणानुषङ्गिकफलावाप्तावपि कामनाविरहप्रयोजकादेव रागादिदोषस्यासंभवादन्तःकरणशुद्धेरप्रत्यूहं तत्त्वज्ञानस्येह जन्मान्तरे वा संभवान्न कापि क्षतिरिति भावः । **अनभिसंहितस्यापीति** । फलस्येति शेषः । **न विशेष इति** । नित्यकाम्ययोरिति शेषः ॥ १० ॥ ११ ॥ १२ ॥ **अमृतमिति** । अमृतत्वेन मन्वादिभिः परिभाषितमित्यर्थः । **पञ्चयज्ञैरिति** । देवर्षिपितृभूतमनुष्ययज्ञैर्देवार्चनस्वाध्यायतर्पणश्राद्धवैश्वदेवबलिभिक्षाप्रदानातिथिसत्काररूपैरित्यर्थः । **इदमिति** । इदंपदेन यज्ञशिष्टाशिन इति पदस्थयज्ञपदं बोध्यम्—**उपलक्षणमिति** । अवश्यकर्तव्यत्वरूपेण बोधकमित्यर्थः । केषामित्यपेक्षायामाह—**पञ्चेत्यादि** । **अनुष्ठेयानीति चेति** । चो हेत्वर्थे ॥ १३ ॥ यज्ञपदस्याग्निहोत्रादिकर्मपरत्वे तस्य कर्मसमुद्भवत्वोक्तिरसङ्गता स्यादित्यत आह—**अपूर्वाख्याद्धर्मादिति** ॥ १४ ॥ **समुद्भवः प्रमाणमिति** । नच

पूर्वापरयोरुत्पत्त्यर्थकस्यैव भूधातोः प्रयोगान्मध्येऽन्यार्थकत्वस्यानुचितत्वात्प्रमाणरूपार्थे प्रसिद्धिविरहाच्च प्रमाणमित्यसङ्गतमिति वाच्यम् । पर्यवसितार्थकथनात् । उद्भवत्यस्मादित्युद्भवं तद्ब्रह्म यस्येत्यस्यैवाक्षरार्थत्वात् । पञ्चम्यास्तु प्रयोजकत्वार्थकत्वात् । प्रयोजकता हि वेदस्य कर्मोत्पत्तौ ज्ञप्तिद्वारैव । नह्यज्ञातं कर्मानुष्ठातुं शक्यमित्युत्पादकत्वस्य प्रमापकत्व एव पर्यवसानात् प्रमाणमिति हि युक्तमुक्तम् । **पुरुषेत्यादि** । यथा पुरुषस्य निःश्वासो न पुरुषस्य कर्तव्यत्वादिबुद्धिमपेक्ष्योत्पद्यते सुषुप्तौ ज्ञानविरहिणि तदभावप्रसङ्गात् तथा वेदोऽपि वाक्ये वाक्यार्थज्ञानविधया कारणं प्रमाणजज्ञानमुत्पत्तौ नापेक्षते निःश्वसितमित्यनेन निःश्वासवत्पुरुषज्ञानानपेक्षतया बोधितत्वात् । यद्यपि तदैक्षतेत्यादिश्रुत्या परमेश्वरस्येक्षणं ज्ञानं कार्यमात्रहेतुत्वेन प्रमितमिति कार्ये वेदेऽपि कारणं तथापि कार्यसामान्ये यदुपादानप्रत्यक्षत्वेन कार्यगोचरकर्तव्यताज्ञानत्वेन वा कारणत्वं तेन ज्ञानापेक्षा न प्रतिषिध्यते अपितु वाक्यार्थज्ञानत्वेन वाक्ये यत्कारणत्वं तेनैव । तत्रैव हि वाक्ये वाक्यार्थज्ञानस्य कारणत्वं यदानुपूर्व्या वक्तुर्वाक्यात्पूर्वं नानुभवः सर्वत्र कारणत्वे वाक्यार्थानभिज्ञस्य प्रागनुभूतानुपूर्वीकवाक्योच्चारणं न स्यात् । तथा सति तादृशवाक्योच्चारणे वाक्यार्थाभिज्ञपुरुषीयेऽपि तादृशानुपूर्व्यवच्छिन्नज्ञानमेव कारणमर्थज्ञानस्य क्लृप्तेनोक्तज्ञानेनान्यथासिद्धत्वात् । तादृशानुपूर्व्यवच्छिन्नज्ञाने सति तत्र वाक्यार्थबोधस्य तदन्यस्य वेष्टस्य साधनत्वग्रहसंभवात्तत्चिकीर्षाप्रयत्नादिप्रणाड्या वाक्योत्पत्तेः संभवस्योभयत्राप्यविशेषात् वाक्यार्थज्ञानस्यापेक्षणीयत्वे तत्र तत्प्रणालीघटकाधिकवस्तुकल्पनावश्यकत्वेन गौरवात् । यत्र हि तादृशानुपूर्वीज्ञानं नास्ति तत्र वाक्यार्थज्ञानस्यैवागत्या कारणत्वस्याभ्युपगन्तव्यतया गुरुभूताया अपि प्रणाड्या अवश्यमाश्रयणीयत्वम् । तथाहि वाक्यार्थज्ञाने सति वाक्यर्थघटकतत्तत्पदार्थपदयोर्बोध्यबोधकभावादिरूपसंबन्धज्ञानं ततस्तत्सहकृतपदार्थरूपैकसंबन्धिज्ञानात्तत्संबन्धितत्तत्पदज्ञानं स्मरणात्मकमुपस्थितेषु च तत्तत्पदेषु साकाङ्क्षत्वेष्टसाधनत्वज्ञानं चिकीर्षाप्रयत्नादिकमिति प्रणाड्यैव वाक्योत्पत्तिरावश्यकी । तथाच प्रागुक्तवाक्यानुपूर्वीज्ञानस्थले वाक्यार्थज्ञानस्याहेतुत्वे नियमतः संबन्धज्ञानपदोपस्थित्यादेरकल्पनेन लाघवस्यानपायादन्यथासिद्धमेव तदिति सिद्धम् । एवंच सर्वज्ञस्य परमेश्वरस्य वाक्यार्थज्ञानसत्त्वेऽपि तस्य वेदे कारणत्वाभावात् । प्रवाहानादेर्वेदराशेः प्राक्सर्गेऽपि सत्त्वेन तदानुपूर्व्या विद्यमानवेदोत्पतेः प्रागपि ज्ञानाद्वेदस्य वाक्यार्थज्ञानकार्यतावच्छेदकानाक्रान्तत्वात् निःश्वसिततुल्यत्वमव्याहतम् । सति चैवं वाक्यार्थज्ञानस्यानपेक्षितत्वे तद्द्वारानुवादकवाक्ये तद्दोषस्पर्शवत्पुरुषदोषस्पर्शस्य न संभवः । भ्रमविप्रलिप्सयोस्तद्द्वारैव प्रयोजकत्वात् । प्रमादकरणापाटवयोर्निरतिशयैश्वर्यशालिनि भगवत्यसंभवात् । भ्रमविप्रलिप्सयोरप्यसंभावितत्वादपि च । एवंच वाक्यार्थज्ञानापेक्षोच्चारणकवृत्त्यानुपूर्वीशून्यत्वं सजातीयोच्चारणानपेक्षोच्चारणकवृत्त्यानुपूर्वीरहितत्वं वा भवति वेदान्तदर्शनाभिमतमपौरुषेयत्वम् नतु मीमांसकानामिव पुरुषप्रयत्नापेक्षोत्पत्तिरहितत्वम् । नचाश्रुतवेदेन वाक्यार्थज्ञानतो यस्य दैवाद्वेदसदृशवाक्यस्य कृतमुच्चारणं तद्वृत्त्यानुपूर्व्या वेदेऽपि सत्त्वादव्याप्तिरिति वाच्यम् । वाक्यार्थज्ञानापेक्षोच्चारणकमात्रवृत्त्यानुपूर्वीशून्यत्वस्य विवक्षितत्वात् वाक्यार्थज्ञानानपेक्षोच्चारणके वेदेऽपि तस्यावृत्तेः । नच तादृशपौरुषेयवाक्येतिव्याप्तिरिति वाच्यम् । वेदार्थज्ञानवता पुरुषेण ज्ञातवेदानुपूर्वीकेणेव तादृशज्ञानरहितेनाप्युच्चरिततादृशवेदसमानभागस्य वेदत्वाभ्युपगमस्यैव कर्तव्यत्वेन लक्ष्यत्वात् । द्वितीयलक्षणे सजातीयोच्चारणानपेक्षोच्चारणकत्वशून्यत्वमात्रोक्तौ पौरुषेयवाक्यानुपूर्वी विज्ञायोच्चरिते पौरुषेयवाक्येतिव्याप्तिः स्यात् । द्वितीयवाक्योच्चारणस्य सजातीयोच्चारणापेक्षत्वात् । यथोक्तादरे च प्रथमोच्चारणस्य सजातीयोच्चारणानपेक्षत्वेन तादृशोच्चारणकवृत्त्यानुपूर्वीशून्यत्वस्योक्तवाक्ययोर्विरहात् वेदोच्चारणस्य सर्वस्यैव पूर्वपूर्वसर्गीयवेदोच्चारणसापेक्षत्वात् परमेश्वरेण पूर्वपूर्वसर्गीयवेदानुपूर्वीसमालोचनेनैवोत्तरोत्तरसर्गे वेदस्य विरचनात् । नन्वत्र मतेऽपि नैयायिकमतवत् वर्णपदवाक्यानां क्षणिकत्वमेवास्तु तन्मते ह्युत्पन्नो गकारो विनष्टो गकारः श्रुतपूर्वो गकारो नास्ति निवृत्तः कोलाहल इत्याद्यबाधितानुभवेनोत्पत्तिविनाशशालित्वे वर्णानां पौर्वापर्यविशिष्टवर्णसमुदायात्मकानां पदानां पदसमुदायात्मकानां वाक्यानां च सुतरां तथात्वमित्यनित्वे स्वानन्तरोत्पन्नविशेषगुणरूपनाशकेन तृतीयक्षण एव नाशाभ्युपगमः । नच सोऽयं गकार इति प्रत्यभिज्ञानादेकत्वे सिद्धे न क्षणिकत्वमिति वाच्यम् । तस्य साजात्यावलम्बित्वेनाप्युपपत्तेः । नच बाधकसत्त्व एव साजात्यगोचरत्वमुपेयमन्यथा घटादीनां क्षणिकत्वे जितं स्याद्बौद्धैरिति वाच्यम् । विनष्टो गकार इत्यादिबाधकस्योक्तत्वात् । स्थायित्वे कुतो न प्रत्यक्षमित्यस्यापि वक्तव्यतापाताच्च । यदि च कण्ठताल्वाद्यभिघातस्य त्वयोत्पत्तौ मयाभिव्यक्तौ कारणत्वाभ्युपगमेन स्थायित्वेऽप्यप्रत्यक्षत्वस्योपपादयितुं शक्यत्वात् । उत्पन्नो गकारो विनष्टो गकार इत्यादेरुष्णं जलमितिवदुत्पत्तिविनाशशालिध्वन्यौपाधिकत्वेनोपपत्तेः संभवाच्च प्रत्यभिज्ञाया ऐक्यगोचरत्वमेव । नच तारत्वमन्दत्वस्त्रीपुंप्रभवगतवैजात्यादिभिर्भेद इति वाच्यम् । ध्वनिधर्माणां तेषां दोषनैयत्येन चन्द्रवितस्तिपरिमाणप्रत्यक्षवत्सर्वेषां वर्णेष्ववभासात् जातेः सावधित्वादर्शनात् तारत्वादयोऽवधिनिरूप्या अभिभाव्याभिभावकत्वस्वभावा अखण्डोपाधयो वर्णस्यैव धर्मा इत्यस्यापि वक्तुं शक्यत्वात् । ह्रस्वत्वदीर्घत्वोदात्तत्वानुदात्तत्वादीनामप्येवमेव ध्वनिधर्माणां वर्णेष्ववभाससंभवेन तेषामपि भेदकत्वासंभवाद्ध्वनिश्चोत्पादकत्वेन परमते व्यञ्जकत्वेनास्मन्मतेऽभिमतो वायुः । नच वायोरश्रावणत्वात्तद्धर्माणां कथं श्रुत्याग्रहः कथं वा श्रोत्रस्थेन त्वचा न तत्स्पर्शग्रह इति वाच्यम् । परेषामाकाशाग्रहेऽपि शब्दग्रहवत् वायोरग्रहेऽपि तद्धर्मग्रहसंभवात् श्रोत्रस्य द्रव्याग्राहकेन्द्रियत्वात् ताल्वाद्यभिघातकवायुस्पर्शाग्रहवत् कर्णप्राप्तवायोरपि सौक्ष्म्यादनुद्भूतत्वाद्वा

तत्स्पर्शस्याप्यग्रहणसंभवात्। यद्वा ह्रस्वत्वदीर्घत्वादिविरुद्धधर्माध्यासभिन्नस्वरूपो दूराद्बहुषु शब्दमुच्चारयत्सु वर्णविशेषाप्रत्ययेऽपि प्रतीयमान उत्पत्तिविनाशशाली श्रोत्रग्राह्यः शब्दस्तदन्यो वा स मन्तव्य एवंचानन्ततत्तद्वर्णध्वंसप्रागभावप्रागभावध्वंसध्वंसप्रागभावादीनामकल्पनेनातिलाघवमेवं गकारादिव्यक्तिभेदकल्पनेन भेदप्रत्ययोपगमे प्रत्यभिज्ञोपपत्तये कत्वखत्वाद्यनेकजातेः कल्पनेन गौरवम्। ध्वन्यौपाधिकभेदेन भेदप्रत्ययोपपादने च ककारादिव्यक्त्यैक्येनैव प्रत्यभिज्ञाया अप्युपपत्तेरुक्तजातेरकल्पनाल्लाघवम्। एवं गकारादिव्यक्तेर्भेदे दशगकारानुदचरच्चैत्र इति स्यात्। नहि भवति तदपि तु दशकृत्वो गकारमुदचरदिति सर्वेषां प्रत्ययस्तद्वर्णैकत्वपक्षे व्यवतिष्ठत इत्युच्यते। तथापि कार्यकारणभावलाघवस्य वस्तुलाघवादभ्यर्हितत्वेन तत्तद्वर्णत्वेन वा कार्यत्वमुपेयं तत्तद्वर्णप्रत्यक्षत्वेन वेति चिन्तायां कण्ठताल्वाद्यभिघातादेरभिव्यक्तिहेतुत्वपक्षे कार्यतावच्छेदकगौरवेण लाघवेन वर्णकारणत्वे व्यवस्थिते ध्वंसप्रागभावकल्पनागौरवस्य फलमुखत्वेनादोषत्वादनित्यत्वमेव व्यवतिष्ठत इति चेन्न। नह्येककार्यकारणभावे यदवच्छेदकत्वलाघवं तदेव कार्यकारणभावलाघवं पुरस्करणीयं नान्यदित्यत्रास्ति राज्ञामाज्ञा। नापि तदवसरेऽन्यकार्यकारणभावादिकं न प्रतिसन्धेयमित्यत्रापि। प्रथमतो निर्विचारमुत्पन्ना बुद्धिः सविचारमुत्पन्नयापि पश्चान्न बाध्यत इत्यत्रापि च। तथाचैकस्मिन्कार्यत्वे गत्वेऽवच्छेदकत्वमेकमपरस्मिन् विषयत्वे गकारे गत्वे चावच्छेदकत्वं त्रयमिति गौरवसद्भावेऽपि तारत्वादिभेदभिन्नेषु तत्तत्स्त्रीपुरुषप्रभववैजात्यभेदभिन्नेषु च गकारेष्वनेकं कार्यत्वं कारणत्वं तत्तदवच्छेदकत्वं चानन्तमनन्तासु गकारव्यक्तिषु तत्तत्प्रागभावानामनन्तं कार्यत्वं कारणत्वमवच्छेदकत्वं चानन्तमनन्ततत्तद्व्यक्तिध्वंसेष्वनन्ततत्तद्व्यक्तीनां कार्यत्वं कारणत्वमवच्छेदकत्वं च तत्तद्गकारव्यक्तिषु पूर्ववर्तितत्तद्गकारव्यक्तीनां कार्यत्वं कारणत्वमवच्छेदकत्वं चोपेयत इति कार्यत्वकारणत्वावच्छेदकत्वकल्पनातिशयगौरवमेव किमिति नालोच्यते। तदालोचने च गत्वावच्छिन्नकार्यकारणभावादिकं कुतो न बाध्येत किमु वक्तव्यमनन्तगकारव्यक्तितत्प्रागभावतद्ध्वंसादिकल्पनागौरवप्रतिसन्धानेनोक्तकार्यकारणभावबाधे। एवं प्रतिभिज्ञाबाधे विनष्टो गकार उत्पन्नो गकार इत्यादीनामनौपाधिकत्वनिश्चयस्तन्निश्चये प्रत्यभिज्ञाबाध इत्यन्योन्याश्रयोऽपि। नचोपाधिभूतध्वनिकल्पनागौरवमिति वाच्यम्। तस्य प्रत्यक्षसिद्धस्योभाभ्यामप्यपलपितुमशक्यत्वात्। वर्णातिरेकेण वीणादौ वाद्यमाने तत्प्रत्यक्षानुभवात्। मठाद्यन्तस्थेन पुरुषेण वर्णसहभूतध्वनेः स्पष्टमुपलम्भात् तारत्वादीनामपि वीणादिध्वनौ वर्णव्यतिरेकेणोपलम्भादुक्तलाघवगौरवादिभिः प्रत्यभिज्ञाया अभेदविषयकत्वे व्यवस्थिते तस्यैव बाधकत्वाच्च। यन्नैयायिकैरुक्तं यद्यद्गततयोपलभ्यते तत्तस्यैव धर्मोऽसतिबाधके बाधकं च तद्धर्मस्यान्यत्र ग्रहस्तज्जातीये तद्विरुद्धधर्मग्रहः प्रतीयमानधर्माश्रयसान्निध्यान्वयव्यतिरेकग्रहश्च। जलगततयोपलभ्यमानं हि शैत्यं जलस्यैव स्वाभाविको धर्मः तस्यान्यत्राग्रहात्। तद्विरुद्धस्य धर्मस्य जलेऽग्रहादन्यसान्निध्यान्वयव्यतिरेकाप्रतीतेश्च जलगततया प्रतीयमानमौष्ण्यगन्धादिकं न तस्य धर्मोऽपि त्वौपाधिकोऽन्यत्र वह्न्यादौ प्रत्ययात् तद्विरुद्धस्य शैत्यस्य जले प्रत्ययाद्वह्निसान्निध्यान्वयव्यतिरेकस्य ग्रहाच्चैवमुदात्तत्वतारत्वादीनां वर्णगततया प्रतीतानां वर्णधर्मत्वमेव न त्वौपाधिकत्वमिति तन्निरस्तम्। शेषं शब्दप्रामाण्यनिरूपणप्रस्तावे षष्ठे वक्ष्यामः। नचैवं घटादीनामप्यैक्यं स्यादिति वाच्यम्। प्रत्यक्षतो यावदात्मसाक्षात्कारं भेदस्योत्पादविनाशोत्पादकविनाशकादेर्भेदकस्य विभिन्नदेशावस्थितिरूपपरिमाणादेश्च तादृशस्य स्फुटमुपलम्भात्। नह्येवं दशसु पुरुषेषु गकारमुच्चरत्सु स्फुटो गकारभेदः कस्यचिदनुभवगोचरः। नचैवमपि नीलादीनामैक्यप्रसङ्ग इति वाच्यम्। अव्यापकत्वे देशभेदेन भेदस्यावश्यकत्वात्। व्यापकत्वे च योग्यस्य तस्य सर्वत्रोपलम्भप्रसङ्गात्। नच जातिवद्व्यापकत्वेऽपि प्रतिनियताश्रयस्यैव व्यञ्जकत्वोपगमान्नोक्तदोष इति वाच्यम्। प्रतिनियताश्रयाभावात्। यत्रयत्र यस्य रूपस्य नीलादेरुपलब्धिस्तस्य तस्यैव कारणत्वं नोत्पत्तावपितु प्रत्यक्ष इत्यभ्युपगमेनोक्तदोष इति यद्युच्यते तदा मास्तु भेदः का नो हानिः। नच पाकस्थले का गतिस्तत्रैकस्मिन्नेवाश्रये रूपद्वयस्य नित्यस्यैव स्वीकारेण व्यञ्जकस्याश्रयस्य पाकात्पूर्वं परतश्च सत्त्वेन सदैवोभयरूपोपलब्धिप्रसङ्गः। पाकस्य तु श्यामरूपोपलब्धौ प्रतिबन्धकत्वस्य रक्तरूपोपलब्धौ कारणत्वस्य न संभवः। पाकनाशोत्तरं श्यामरूपोपलब्धे रक्तरूपानुपलब्धेश्च प्रसङ्गादिति वाच्यम्। पाकप्रागभावस्य श्यामरूपोपलब्धौ जननीय आश्रयसहकारित्वस्य रक्तरूपोपलब्धौ जननीये पाकध्वंसस्याश्रयसहकारित्वस्य कल्पनादिति। नचैवमेकदैकाश्रये विरुद्धरूपाणां सत्त्वप्रसङ्ग इति वाच्यम्। एकदोपलब्ध्योरेव विरोधात्। अथैवं मीमांसकमत इव वर्णानां पदानां वाक्यानां च वेदानामस्तु सर्वदैव सत्त्वं नतु कदाचिदपि विनाशो विनाशरहितभावस्य नाप्युत्पत्तिरिति चेन्नोक्तलाघवेन सर्वथा नित्यत्वप्रसक्तावपि हि सकलप्रमाणप्रबलेन 'ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजु'रित्याद्यागमेन 'महतो भूतस्य निःश्वसितमेतदि'त्याद्यागमेन च जन्यतया वेदानां प्रमितत्वात् जन्यस्य विनाशित्वनियमा'दतोऽन्यदार्त'मित्यादिश्रुत्या च विनाशितया प्रमितत्वाच्च न सर्वथा नित्यत्वमपितु यावत्सर्गस्थायित्वरूपनित्यमेवोपेयम्। न्यायनयापेक्षया तथाप्यतिलाघवात्। तत्र सर्गादिकाले यादृशक्रमविशिष्टा वर्णाः परमेश्वरेणोच्चारिता अविद्यापरिणामभूताः सद्ब्रह्मणो विवर्ताः जीवाश्रिताविद्यासहकृतब्रह्मविवर्ता वा वियदिव यावदविद्यादेशव्यापकाः समुत्पन्नास्ते तथैव यावत्प्रलयकालपूर्वमवस्थिता एकार्थाभिधानशक्तिमन्तः क्रमवद्व्यञ्जकौपाधिकक्रमवत्तयौत्पत्तिकक्रमवत्तया वा पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतश्रोत्रजन्यैकबुद्ध्युपारूढाः पदसंज्ञां लभन्ते लब्धपदभावास्तत्तत्पदार्थसंसर्गघटितार्थावबोधसमर्थत्वेनैकप्रत्ययोपारूढा वाक्यसंज्ञां लभन्ते।

वर्णाश्च य एव वैदिकास्त एव लौकिकाः पदानि च । वाक्यानि तु भिद्यन्तेऽर्थभेदात् । तत्र वैदिकवाक्यानि गृहीतनियतक्रमाणि पदानि सर्गादिकालमारभ्याऽऽप्रलयमवस्थितानि लौकिकानि त्वनियतक्रमाणि सर्गाद्यकाले परमेश्वरेण तादृशक्रमवत्तया नोच्चरितानीति क्रमविशेषविशिष्टतयाऽचिरस्थायीन्येव तत्तत्पदसमुदायात्मकान्यपीति लौकिकवैदिकयोर्विशेषः । एवं च पदवाक्यबुद्ध्युपपत्तेः पदपदार्थसंबन्धबुद्ध्युपपत्तेश्च सर्वानुभवागोचरस्यैकं पदमेकं वाक्यमिति बुद्धिमात्रशरणस्य स्फोटाख्यस्य शब्दस्य योगशास्त्रसंमतस्य नावकाशः । एकं वनमितिवदेकबुद्ध्युपारूढत्वेनैकंपदमित्यस्योपपत्तिसंभवादिति । **नित्यमविनाशि चेति** । अविनाशित्वमिदं सर्गकालिकविनाशाप्रतियोगित्वमेव प्रलये विनाशाभ्युपगमादिति ॥ १५ ॥ सर्वेषां भूतानां लोक इत्यस्योपव्याख्यानं सयज्जुहोतीत्यादि । षष्ठी सर्वेत्रोपकार्योपकारकभावलक्षणसंबन्धमाह । लोको जनाः ॥ १६ ॥ **रतितृप्तितुष्टयो मनोवृत्तिविशेषा इति** । न्यायनये तु रतिरुत्कटेच्छा । तृप्तिः कामितलाभप्रयुक्तलब्धाधिकतज्जातीयेच्छाराहित्ये सति सुखविशेषः । कामितमनोज्ञान्नपानादिलाभेऽपि तज्जातीयलब्धाधिकेच्छावतो लब्धप्रयुक्तसुखसत्त्वेऽपि न तृप्तिव्यवहारोऽपि तु नास्मि तृप्तो परं देहीति व्यवहार इति सत्यन्तम् । तादृशेच्छाविरहेऽन्नपानाद्युपयोगप्रयुक्तसुखविरहे तृप्तत्वव्यवहारवारणाय विशेष्यदलम् । तुष्टिरत्पलाभेऽपि तदधिकवाञ्छाराहित्यम् । **उपचारादेवमुच्यत इति** । आत्मरत्यादिशब्दा अनात्मविषयकरत्याद्यभाववति भवन्ति लाक्षणिका रत्यादिपदानामुक्तमनोवृत्तिविशेषेषु शक्तत्वान्मुख्यस्यात्मसाक्षात्कारवति रत्यादिपदार्थस्याभावादित्युपचारादित्युक्तम् । आत्मरतिरात्मतृप्त आत्मसंतुष्ट इत्येवमुपचारादुच्यत इत्यन्वयः । **य एवंभूत इति** । आत्मरत्यादिमानित्यर्थः । **अधिकारहेत्वभावादि** । क्रियाकर्मकरणकर्त्रादिद्वैतदर्शनस्याधिकारहेतोरभावादित्यर्थः ॥ १७ ॥ **सूचितेति** । कर्मप्रयोज्यार्थसत्त्वनिषेधमात्रे यदि तात्पर्यं स्यान्नास्तीत्येवोच्येत नैवार्थोऽस्तीति वदता चार्थस्य सर्वथास्तित्वव्यवच्छेदस्तात्पर्यविषयः सूचितः । तथाच कृतपदस्य कार्यभूतसाधनलक्षकत्वावगमात्कर्मणा ज्ञानेन च निष्पाद्यं प्रयोजनं नास्तीत्यर्थोऽवगन्तुं शक्यत इति तथैवाह—**आत्मरूपस्येत्यादिना** । नाभूत्या इति चतुर्थ्यन्तस्य विवरणं मोक्षभावनायेति । **एतादृशो ब्रह्मविदिति** । अत्र ब्रह्मवित्त्वमुपलक्षणं तेन भाविभूतविद्यमानज्ञानवतो लाभः । अन्यथा चतुर्थभूमिं प्राप्तो योगी ब्रह्मविदुच्यत इत्यग्रिमग्रन्थेन चतुर्थभूमिकापन्नस्यैव ब्रह्मवित्त्वप्राप्तेस्तस्यैव ग्रहणं स्यात्तस्य शुभेच्छाद्यवस्थात्रयाभावादसङ्गतिः स्यात् । अथवा नोक्तपारिभाषिकब्रह्मवित्त्वमिह विवक्षितमपि तु यौगिकमेवापाततो ब्रह्मज्ञानं च भूमिकात्रयवतोऽप्यस्त्येवान्यथा तस्यैवानुपपत्तेरिति । तनुमानसेत्यत्र तनु सूक्ष्मग्रहणयोग्यं मानसं यस्यामिति बहुव्रीहिः । **सत्त्वापत्तिरिति** । सत्त्वं रजस्तमोमलापेतं तत्त्वावासनक्षमसुद्रिक्तसत्त्वं चेतस्तस्यापत्तिः प्रसक्तिर्यस्यां सा तत्त्वज्ञानावस्थोच्यते । **स्वप्नावस्थेति** । स्वप्नं स्वप्नपरिदृश्यमानं तद्वदवस्था प्रबोधे सति बाध्यतया ज्ञायमानरूपा यस्यामर्थाज्जगतः सा । **स्वयमेव व्युत्थानादिति** । व्युत्थानं भेदवत्प्रपञ्चाकलनम् । तावन्मात्रसमाधितोऽनादिकालनिरूढप्रपञ्चसंस्कारस्येषदभिभवेन तत्प्राबल्यात्स्वयमेव ततो व्युत्थानसंभवादगाढसुषुप्तेरिवेत्यर्थः । **असंसक्तिरिति** । विकल्पः प्रकारस्तेन रहितो निर्विकल्पकः समाधिः सच संसक्त्या संबन्धेन रहितो विषयतयाऽसंसक्तिरित्याख्यायते । यद्वा न विद्यते संसक्तिर्बाह्यान्तःकरणानां विषयैर्यस्यां साऽसंसक्तिरिति । **पदार्थाभावनीति** । पदार्थानामभावनमसत्त्वसंपादनं यया सा । यो हि न ज्ञायते चिरमसन्निव स भवतीति । **स्वयमनुत्थितस्येति** । उक्तसंस्कारस्य समाधिपरिपाकादत्यन्ताभिभवेन स्वतःसामर्थ्याभावादिति भावः । **परप्रयत्नेनैवेति** । भेदात्प्रपञ्चावगमहेतुपरवाक्यादिलब्धबलतयात्यर्थपराभूतस्याप्युक्तसंस्कारस्य व्युत्थाननिमित्तत्वसंभवादिति भावः । **पततीति** । धात्वर्थे कर्मानन्तर्भावे गच्छति समानार्थकत्वाद्भूमिकामिति द्वितीयाया नानुपपत्तिः । **सर्वथेति** । समाध्यत्यर्थपरिपाकमाहात्म्यादुक्तसंस्कारात्यन्तराहित्येनेत्यर्थः । ननु सर्वथा व्युत्थानाभावे चरमदेहस्य तस्य श्वासप्रश्वासाङ्गचेष्टाशनपानादेरुपलब्धस्यानुपपत्तिः स्यादित्यभ्युपेयं व्युत्थानमित्यत आह—**स्वप्रयत्नेत्यादि** । विनैव व्युत्थानमवशिष्टप्रारब्धप्रेरितपरमेश्वरप्रवर्तितप्राणशिष्यादिव्यापारादुक्ताखिलक्रियानिर्वाहसंभवादिति भावः । **सप्तमीतुरीयावस्थेति** । यद्यपि सप्तमत्वतुरीयत्वयोः सप्तत्वचतुष्ट्वपूरकत्वरूपयोर्विरुद्धत्वादसङ्गतिः तथापि साधनभूतावस्थात्रयसाध्यावस्थाचतुष्टयमिलितैतद्द्वयरूपसप्तकाभिप्राये सप्तमी साध्यब्रह्मविदवस्थाचतुष्टयाभिप्रायेण तुरीयेति न विरोधः । तुरीये परमेश्वरजीवसाक्षिशुद्धब्रह्मसु चतुर्षु तुरीये शुद्धेऽवस्थाऽवस्थितिर्यस्यां सेति वा विवक्षिता । अतएव 'सप्तमी तुर्यगा स्मृता' इत्युक्तम् । तुर्यं चतुर्थं शुद्धं ब्रह्म गच्छति गमयति या सा तुर्यगेति तदर्थः । **किंचिदेवैषेत्यादि** । प्रारब्धरूपप्रतिबन्धकेन सर्वथाऽविद्योच्छेदाभावात्तल्लेशानुवृत्त्येषद्विक्षेपात्किंचिदसंपन्नतापरमानन्दसाक्षात्कारात्किञ्चित्संपन्नता बोध्या । **देहं च नश्वरेत्यादि** । स्थितं निर्व्यापारमुत्थितं सव्यापारम् । दैवादहष्टादुपेतं प्राप्तं जातमिति यावत् । दैववशात् शरीरान्तरानुकूलविपाकाभिमुखादृष्टवशादपेतं विद्यमानशरीरपूर्वशरीरम् । जीवन्मुक्तस्य विद्यमानदेहापायस्य प्रारब्धक्षयहेतुकत्वात् शरीरान्तरस्याभावेन तदर्थमदृष्टस्य विपाकाभिमुख्यासंभवात्तत्त्वज्ञानेन प्रक्षयाच्च । यद्वा दैववशाद्दैवाधीनत्वतः अतिक्रान्तम् अदृष्टानायत्तम् । सर्वथैवाविद्योच्छेदेन जीवन्मुक्तशरीरतद्व्यापारतत्प्रयुक्तसुखदुःखादिनिर्भासस्य तस्याभावात्परस्यैव सुखदुःखाद्यनुकूलतया तन्निर्भासोपगमात् । न पश्यतीत्यत्र हेतुमाह—**यतोऽध्यगमत्स्वरूपमिति** । परिकृतम् परिकरीकृतं धृतमिति यावत् । दैवादि-

त्यादिवासोविशेषणमेव वा दैववशगः प्रारब्धायत्तः सासुर्देहः स्वारम्भकं कर्म स्वावच्छेदेन सुखदुःखप्रतिभानाभासाय प्रतिसमीक्षते प्रतीक्षां करोत्येव प्रतिबुद्धवस्तुः साक्षात्कृततत्त्वः जाग्रदवस्थश्च यथा स्वाप्नं न भजते तथा सप्रपञ्चं तं देहम् । अधिरूढसमाधियोगः परिपक्वनिर्विकल्पकसमाधिः जीवन्मुक्तो न भजत इत्यर्थः । निर्व्ययनी निर्मोकः अमृता अविनष्टा शयीत निर्व्यापारा वर्तते तथेदं शरीरं जीवन्मुक्तस्य शेते । अज्ञजनं प्रतीव विविधधर्माधर्मसुखदुःखाद्यनुकूलव्यापारवन्न भवतीति । प्रारब्धक्षये शरीररहितोऽयं जीवन्मुक्तः । **प्राणो ब्रह्मेति** । ब्रह्मणः प्राणरूपता तेजोरूपता शारीरकभाष्य उक्ता । **प्रथमभूमित्रयमारूढो ज्ञोऽपीति** । अत्राज्ञोपीति नच्छेद एतादृशो ब्रह्मविदित्यादिग्रन्थेन भूमिकात्रयवतोऽपि ब्रह्मवित्त्वलाभेन ज्ञत्वात्संदर्भविरोधापत्तेस्तथा च भूमिकात्रयवान् यश्च ज्ञ आपाततो ब्रह्मवित्सोऽपि न यदा कर्माधिकारी किमु वक्तव्यं परिनिष्ठितब्रह्मज्ञानवतः कर्मानधिकार इति भावः ॥ १८ ॥ **मुमुक्षुरिति** । नच प्रथमभूमित्रयमारूढो ज्ञोऽपि न कर्माधिकारीत्यनेनानुपदमेव मुमुक्षोः 'ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिते'ति साधनात्मकप्रथमभूमित्रयान्तर्गत-प्रथमभूमिरूपतयाभिहितां मोक्षेच्छामधिरूढस्य कर्मानधिकारित्वमुक्तम् इदानीं कर्माधिकारित्वमुच्यत इति विरोध इति वाच्यम् । नित्यानित्यवस्तुविवेकपुरस्सरफलपर्यवसायिमोक्षेच्छारूपप्रथमभूमिकामधिरूढस्यैव कर्मानधिकारित्वस्योक्तत्वादर्जुन-स्यातादृशत्वान्मोक्षरूपातिरमणीयवस्तुस्वभावमात्रेण मोक्षेच्छाया अर्जुनस्य जातत्वात्तन्मात्रस्य प्रथमभूमिकत्वाभावादत एवोक्तं नत्वेवंभूतो ज्ञानीति । ज्ञानपदं प्रागुक्तभूमिकासप्तकपरमन्यथाफलभूतभूमिकाचतुष्टयमात्रपरत्वे प्रथमभूमित्रयस्यार्जुने ह्यनि-राकरणात्तादृशस्यापि कर्मानधिकारस्यात्र प्रथमभूमीत्यादिनानुपदमुक्तत्वात्कर्माधिकृत एवेत्युक्तिरसङ्गता स्यादिति भावः ॥ १९ ॥ अथ कथं पुरुषधौरेयवरिष्ठे मयि साधनरूपावस्थात्रयस्यासंभावना नितरां च प्रथमायास्तज्जनितद्वितीयावस्थान्त-र्गतविविदिषाया इति मन्वानमर्जुनं प्रति तुष्यतुदुर्जनन्यायेन प्रथमभूमिकानियतविविदिषामभ्युपेत्य तथापि न ते संन्या-साधिकार इत्येतत्परतयोक्तमनन्तरश्लोकमवतारयति—**नन्विति** । एतेन पूर्वमर्जुनस्य न त्वमेवंभूतो ज्ञानीत्यादिना सर्वभूमिकाभाव उक्तः कथमिदानीमवतरणे विविदिषोरित्युच्यत इति शङ्कानिरस्ता । **संन्यासो विहित इति** । 'ब्रह्म-संस्थोऽमृतत्वमेती'तिश्रुत्या 'आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तये'तिस्मृत्या चानन्यव्यापारेण पुरुषेणानुष्ठिताः श्रवणादयो ज्ञाननिष्ठाप्रापका इत्यवगताः । नहि स्वस्वाश्रमोचितकर्मव्यग्राणामनन्यव्यापारता संभवतीति तत्संपादनरूपदृष्टव्यापारेण संन्यासोपयोगः श्रवणादौ सिद्ध्यति । एवं विद्यासाधनत्वेन संन्यासं विदधता शास्त्रेण विद्यायां निरन्तरश्रवणादेर्द्वारतया-पेक्षणे तत्राप्यनन्यव्यापारतासंपादनद्वारेण प्रयोजकत्वे क्वाप्यदृष्टस्य नापेक्षा संभवति । दृष्टे नादृष्टकल्पना न्याय्येति श्रवणाद्य-ङ्गतयापि संन्यासो भवति फलतो विहित इति श्रवणादौ संन्यासोपयोगः सिद्ध्यति । एतेन संन्यासस्य विद्याङ्गत्वमेव संन्यास-विधायकशास्त्रेण लभ्यत इति न श्रवणाद्यङ्गत्वमिति निरस्तम् । पक्षे चास्मिन् संन्यासविधिरपूर्वविधिः । यद्वा ब्रह्मसंस्थ इत्यादिश्रुतिस्मृत्योर्न नैरन्तर्ये तात्पर्यम् । संन्यासिनामपि तदाश्रमोचितशौचादिशरीरयात्रानिर्वाहकभैक्ष्यादिव्यापारेण निरन्तरत्वासंभवादपि त्वव्यग्रतया प्रचुरतदनुष्ठाने तात्पर्यमव्यग्रता च संन्यासेन व्यग्रताप्रयोजकबहुलकर्मानुष्ठाने निरस्ते यथा भवति तथा कस्यचित्पुरुषधौरेयस्यातिसुकृतशालिनो दैन्यहर्षक्रोधभयदौर्मनस्यादिलक्षणविक्षेपस्य व्यग्रताभिधेयस्य श्रवणादिविरोधिनोऽभावो विनापि संन्यासं संभवति संभवति च कर्मच्छिद्रेषु श्रवणाद्यनुष्ठानमपीति संन्यासद्वारस्य पक्ष-प्राप्तत्वान्नापूर्वविधिः अपितु नियमविधिः । संन्यासाश्रमग्रहणेनैव श्रवणादि निर्वर्तनीयमिति नियमविधित्वेऽपि संन्यासस्य दृष्ट एव व्यापारोऽदृष्टं तु नियमफलं बोध्यमित्येतत्पक्षद्वयमभिप्रेत्योक्तम् श्रवणमनननिदिध्यासनानुष्ठानाय संन्यासो विहित इति । यश्चास्ति संन्यासो विद्योद्देशेन विहितो विद्याया एवाङ्गम् । तदङ्गता च संन्यासजनितपुण्येनादृष्टेन नित्यनैमित्तिकाद्यनाशित-विद्याप्रतिबन्धकदुरितक्षयरूपशुद्धिसंपादनद्वारा । विद्याप्रतिबन्धकं हि द्विविधम् । किंचिन्निष्कामकर्मनाश्यं किंचित्संन्यासापूर्व-नाश्यं चेति पक्षः । न तत्र श्रवणादौ तदुपयोगो नातस्तदभिप्रायकतास्य ग्रन्थस्य युक्ता । पक्षे चास्मिन् जन्मान्तरीयसंन्यासा-पूर्ववशादेव संन्यासाधिकाररहितानामपि श्रवणादिमतां विद्यालाभः । जनकादीनां पूर्वभवानुष्ठितसंन्यासवतामिहैवान्येषां संन्यासानधिकारिणां संन्यासयोग्यजन्मान्तरलाभे संन्याससंपत्तौ जन्मान्तरे विद्यालाभ इति बोध्यम् । यश्च विद्यासाधन-श्रवणाद्यधिकारिविशेषणं संन्यासापूर्वं तद्विना विद्यासाधनश्रवणाधिकारस्यैवासिद्धेर्विद्याङ्गत्वं तस्यात्र शुद्धिर्निष्कामकर्मनिष्पा-द्यैव । यथाहि संन्यासापूर्वस्याधिकारिविशेषणता तथोच्यते साधनचतुष्टयस्य श्रवणाद्यधिकारिविशेषणता प्रथमसूत्रभाष्ये निर्णीता । साधनचतुष्टयं च नित्यानित्यवस्तुविवेक ऐहिकामुष्मिकफलभोगविरागः शमादिषट्कं मुमुक्षा चेति । तत्र नित्यनैमित्ति-ककर्मातिरिक्तानां व्यापाराणामन्तरिन्द्रियस्य बाह्येन्द्रियस्य चाभावः शमो दमश्च । उपरतिर्नित्यनैमित्तिकादीनामपि त्याग-लक्षणः संन्यासः । तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता । समाधानं श्रवणाद्यपेक्षितचित्तैकाग्र्यम् । श्रद्धावित्तत्वम् गुरुवेदान्त-वाक्येषु श्रद्धैव वित्तं वित्तवत्सदा रक्षणीयं यस्य तस्य भाव इति शमादिषट्कं ज्ञेयम् । तच्च 'शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये'दिति श्रुतौ कार्यकारणसंघातात्मके कोशपञ्चक आत्मन्यविषया गृहीते तद्विवेकेन तत्साक्षिभूतस्य परमात्मनो यद्दर्शनं तत्साधनत्वेनोक्तम् । यद्यपि ज्ञानाधिकारिविशेषणतैवातः श्रुत्या लभ्यते तथापि श्रव-णादीनां ज्ञानसाधनत्वस्य श्रोतव्य इत्यादावुक्तत्वात् तदविरोधाय शमादीनां तद्वारैव तत्साधनत्वमुचितम् । शमादेर्वि-

यासाधनदृष्टव्यापारस्यासिद्धेरदृष्टकल्पनेऽपि क्लृप्तदृष्टसाधनानपेक्षाददृष्टात्क्वापि ज्ञानादर्शनात् श्रवणाद्यतिरिक्तदृष्टसाधनकल्पनापेक्षया श्रवणादेर्दृष्टस्य श्रुतिप्रसिद्धज्ञानसाधनभावस्यैव तथात्वौचित्यात् । तथाच शमादिसंपन्नः श्रवणादिकं कृत्वात्मानं पश्येदिति श्रुत्यर्थे संपन्ने श्रवणाद्यधिकारिविशेषणत्वं लभ्यत एव शमादीनां शमाद्यन्तर्गतश्च संन्यासः सच कर्मत्यागहेतुभूतो विधिना विहितः कर्मविशेष इति स्वरूपेण तस्याचिरस्थायित्वात्तदपूर्वस्याधिकारिविशेषणतोच्यते । एवं 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनि'रिति पाण्डित्यशब्दितविचारस्य तदनु बाल्यशब्दितमननस्य तदनु मौनस्य ध्यानस्य विधायकाद्वाक्यात्प्रागेव भिक्षाचर्यं चरन्तीति संन्यासस्य बृहदारण्यक उक्तत्वेन तयोरेकवाक्यत्वाच्छ्रवणाद्यधिकारिविशेषणता संन्यासस्य लभ्यते । उक्तश्चायमर्थः सह कार्यान्तरविधिरिति सूत्रभाष्ये श्रुतिवाक्यस्थस्य तस्मादित्यस्य यस्मादतिक्रान्ता ब्राह्मणाः श्रवणादिसाधनैरात्मानं विदित्वा जीवन्मुक्तिव्यञ्जकाशेषविक्षेपराहित्यवत्परमहंसाश्रमं प्राप्तास्तस्मादित्यर्थः । निर्विद्येत्यस्य निश्चयेन लब्ध्वेत्यर्थ इति । उक्तो ह्ययमर्थो वार्तिककृतापि 'त्यक्ताशेषक्रियस्यैव संन्यासं प्रजिहासतः । जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिते'ति । अत्र त्रय्यन्तशब्देन वेदान्तप्रतिपादकेन तच्छ्रवणादिर्लक्ष्यते । पादत्रयेणाधिकारिविशेषणानि संन्यासमुमुक्षाजिज्ञासारूपाण्युक्तानीति पक्षस्तदभिप्रायकता तु भवत्येवोक्तग्रन्थस्य । अथ विविदिषोः संन्यासाधिकारेऽपि संन्यासविधायकवाक्येषु ब्राह्मणस्यैव श्रवणात्कथं क्षत्रियस्यार्जुनस्य संन्यासाधिकारः शंक्यत इति चेदुच्यते । 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वे'ति श्रुतौ वैराग्यतारतम्येनाविशेषेण त्रयाणां वर्णानामाश्रमवतां संन्यासविधानादविशेषेण संन्यासाधिकारे त्रयाणां सिद्धेऽन्यासु श्रुतिषु ब्राह्मणग्रहणं वेदाधिकारित्रैवर्णिकोपलक्षणमित्येतदभिप्रायेण तदाशङ्कनात् 'त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ । यदोपलक्षणार्थः स्याद्ब्राह्मणग्रहणं तदे'ति वार्तिकेनैव तदर्थस्य प्रतिपादनात् । 'ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहा'दितिस्मृतेः 'त्रयाणां वर्णानां चत्वार आश्रमा' इति स्मृतेश्च त्रयाणामधिकारप्रतिपादनाच्च । ननु 'ब्राह्मणाः पुत्रैषणायाश्चे'त्यादि 'ब्राह्मणो निर्वेदमायाद्ब्राह्मणः प्रव्रजे'दित्याद्यनेकश्रुतिष्वस्ति कर्तृविशेषणम् । तत्र हि ब्राह्मणत्वं विवक्षितं 'राजा राजसूयेने'त्यत्र क्षत्रियत्ववत् । नह्यत्रास्त्यविवक्षाकारणमुद्देश्यविशेषणत्वम् । नापि प्राप्तकर्मानुवादेनानेकविधाने वाक्यभेदप्रसङ्गः । ब्राह्मणकर्तृकत्वविशिष्टाप्राप्तसंन्यासविधानसंभवात् । एवं च बहुषु वाक्येषु ब्राह्मणपदस्य लक्षणापेक्षया ह्यश्रुतकर्तृकेऽवश्यकल्पनीये कर्तृपदे झटित्युपस्थितब्राह्मणपदस्य तत्र संबन्धकल्पनाया एवोचितत्वमुक्तश्रुतौ । 'यदिवेतरथे'ति तस्या जाबालश्रुतेः संनिधावेवायज्ञोपवीती कथं ब्राह्मण इति श्रवणात्क्षत्रियादीनामप्यधिकारस्य तात्पर्यविषयत्वे कथं क्षत्रिय इत्यादेरपि श्रवणं स्यादित्यतोऽपि तत्र ब्राह्मणपरामर्शावधारणात् । तथाच ब्राह्मणस्यैवाधिकारः सिध्यति । नचानुपदोदाहृतस्मृतिविरोध इति वाच्यम् । विरोधाधिकरणन्यायेनोक्तस्मृतेः श्रुतिविरोधेन स्वार्थे त्वप्रामाण्यस्यैवोपेयत्वात् । 'चत्वार आश्रमा ब्राह्मणस्ये'त्यादिस्मृतेः 'मुखजानामयं धर्म'इत्यादिस्मृतेरेव च श्रुत्यविरोधेन प्रमाणत्वात् । उदाहृतवार्तिकवचनं तु विद्वत्संन्यासविषयम् । यतस्तदनन्तरं 'सर्वाधिकाराविच्छेदि विज्ञानं चेदुपेयते । कुतोऽधिकारनियमो व्युत्थाने क्रियते बला'दिति स्वयमाह वार्तिककारः । **व्युत्थान इति** । संन्यास इत्यर्थः । कुतो बलादित्यन्वय इत्येतदभिप्रायेण कर्मणैवेत्यस्य सिद्धान्तस्य विवरणेन तु त्यागेन संन्यासेनेत्यत्र हेतुमाह । ब्राह्मणाः पुत्रैषणायाश्चेत्यादिना । **श्रवणादिसाध्यां ज्ञाननिष्ठां प्राप्ता इति** । ननु क्षत्रियस्य जनकादेः कथं कर्मणा ज्ञाननिष्ठाप्राप्तिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने'त्यादिश्रुत्या ब्राह्मणस्यैव ज्ञानार्थकर्मविधानात् ब्राह्मणकृतनिष्कामकर्मणामेव चेतःशुद्धिद्वारा ज्ञानसाधनत्वावगमात् । नच कर्मणैवेति स्मृतेरेव श्रुतिकल्पनया जनकादिकर्मणां तथात्वबोधकत्वं स्यादिति वाच्यम् । प्रत्यक्षश्रुत्या ब्राह्मणाधिकारपरया स्मृतेर्दुर्बलाया बाधेन श्रुतिकल्पकत्वानवकाशात् । नच संसिद्धिर्मुक्तिरेवास्तु । तत्रैव जनकादिकर्मणः साक्षादेव हेतुत्वबोधकत्वमुक्तस्मृतेः संभवतीति वाच्यम् । 'तमेव विदित्वे'त्यादिश्रुतिविरोधेनोक्तार्थपरत्वासंभवादतएव संसिद्धिमित्यस्य ज्ञाननिष्ठामिति विवरणं टीकाकृता कृतमिति चेदुच्यते । मुमुक्षोरविशेषेण श्रोतव्य इत्यादिका श्रुतिरात्मदर्शनरूपविद्यासाधनं विधत्त इति श्रवणे सर्वेषामधिकारस्त्रैवर्णिकानां मुमुक्षूणामात्मदर्शने च मुमुक्षैव ह्यधिकारो न तत्र श्रूयते । ब्राह्मणत्वादिकमधिकारिविशेषणमिति सिद्धे त्रैवर्णिकानां श्रवणादिषु तत्साध्यायां विद्यायां चाधिकारे स्वतःसिद्धचेतःशुद्धिमतो मुमुक्षोर्विविदिषोस्त्रैवर्णिकस्य प्रवृत्तिगोचरे श्रवणादौ व्यापारनिवृत्त्या निवर्तमानाफलवच्छ्रवणादिसिद्ध्यर्थापेक्षितशुद्धिसंपादनव्यग्रा ह्यशुद्धचित्तं मुमुक्षुं विद्याकाममधिकृत्य शुद्ध्यर्थं प्रवर्तमानाश्रुतिरन्वयव्यतिरेकाभ्यां विविदिषामात्रसापेक्षा ज्ञानार्थकर्मप्रवर्तने नतु ब्राह्मणत्वसापेक्षेति निर्णीयते । तथाच ब्राह्मणग्रहणं प्राधान्येन व्यपदेशा भवन्तीति न्यायेनैव । एवंच ब्राह्मणा इत्यस्य वैदिककर्माधिकारिण इत्येवार्थ इति क्षत्रियकृतेनापि कर्मणा ज्ञानप्राप्तिसंभव इति । अथ राजा राजसूयेनेत्यत्रेव ब्राह्मणत्वस्य विवक्षितत्वे तदनुसारेणैव श्रोतव्य इत्यादेरपि नेयत्वान्नोक्तप्रकारसंभव इतिचेन्न । विद्याकामो यज्ञादीननुतिष्ठेदिति हि विधिस्तमेतमित्यादेर्विपरिणामेन पर्यवस्यति । तत्र विद्याकाममुद्दिश्य यज्ञादिर्विधीयते । कर्मण्युपपदेऽणि विद्यां कामयत इति विद्याकाम इति निष्पद्यते । संभवति तस्य विशेषणं ब्राह्मणत्वम् । तथा सति विवक्षितविवेकेन ब्राह्मणकामनाविषयविद्यां यज्ञादिभिर्भावयेदिति वचनव्यक्तिः स्यात् । तत्रापेक्षितविद्यामात्रस्योद्देश्यत्वं युक्तम् । मोक्षंप्रत्यात्मदर्शनरूपविद्यात्वेन साधनत्वावगमेन तेन रूपेणैवेच्छोत्पत्तेस्तन्मात्रस्योद्देश्यत्वोप

योगित्वात् । तथाचानुपयुक्तं ब्राह्मणत्वं विधिसंपर्कहीनं नाधिकारणं परिच्छेत्तुमर्हतीति विद्याकाममात्रस्याधिकारः । तथाच विशिष्टस्योद्देश्यत्वे गौरवं वाक्यभेदश्च बाधकम् । विशिष्टोद्देश्यकोटिसंनिविष्टविशेषणस्याप्युद्देश्यत्वे विवक्षिते प्रत्युद्देश्यं विधिव्यापारभेदेन यज्ञादिभिर्विद्यां भावयेत् । तां च ब्राह्मणस्य कुर्यादिति वाक्यभेदस्य दुर्वारत्वात् । ब्राह्मणा इत्यस्याविवक्षितत्वे कर्मणि घञि काम्यत इति कामः विद्या तस्याभावनायामुद्देश्यत्वेनान्वये हि न कापि क्लिष्टकल्पनापि प्रागुक्तपक्षे च कामनाविशेषणत्वेनोपस्थिताया अन्यत्र भावनायामन्वयक्लेशश्च भवति सह्यगत्यैव मर्षणीयः । नापि राजा राजसूयेन यजेतेत्यत्रेव कर्तृपरिच्छेदकतया राजकर्तृकेन राजसूयेन स्वराज्यं भावयेदित्येवमन्वये राजत्वस्याधिकारिविशेषणत्ववदिहापि ब्राह्मणकर्तृकेन यज्ञेन विद्यां भावयेदित्यन्वयेन कर्तृपरिच्छेदकतया ब्राह्मणत्वस्याधिकारिविशेषणत्वसंभवः । उभयोर्वैषम्यात् राजसूयस्याप्राप्तत्वेन कर्तृभूतराजविशिष्टतया स्वाराज्योद्देशेन विधाने वाक्यभेदाभावात् प्रकृते च सर्वथापि 'त एवोभयलिङ्गा' दिति सूत्रेऽन्यत्र विहितयज्ञादीनां फलसंबन्धमात्रविधाने लाघवेन यज्ञशब्दतः प्राप्तप्रत्यभिज्ञाया जाताया अबाधेन च तमेतमित्यादिवाक्येऽन्यत्र विहितयज्ञविषयत्वस्य व्यवस्थापनात् । विहितस्य यज्ञादेर्विद्योद्देशेन विधानासंभवात्प्राप्तयज्ञानुवादेन विद्यारूपफलसंबन्धस्यैव विधातव्यतया तत्र ब्राह्मणादिकर्तृविधाने विधेयभेदेन वाक्यभेदस्य दुर्वारत्वात् । उक्तं हि 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः' इति । अन्यत्र त्रैवर्णिकाधिकारिकतया विहितयज्ञादीनामेवात्र विषयत्वे ब्राह्मणातिरिक्ताधिकारबाधकविशेषाभावे च सति विध्यसंस्पर्शिब्राह्मणपदसमभिव्याहारमात्रेणाधिकारसंकोचोऽपि न युज्यते । समभिव्याहारमात्रस्य त्रैवर्णिकाधिकार्युपलक्षकतयाप्युपपत्तेरनुष्ठेययज्ञसमर्पकपदसंजातत्रैवर्णिकाधिकारिविशिष्टयज्ञबुद्धिबाधनस्यान्याय्यत्वादिति त्रैवर्णिकानां विद्यार्थकर्माधिकारित्वे सिद्धे क्षत्रियादीनामपि निष्कामकर्मजनितचेतोविशुद्धिसंपादितश्रवणादिना विनैव संन्यासं ज्ञाननिष्ठाप्राप्तिसंभवात्कर्मणैवेत्यस्य नानुपपत्तिलेशोऽपि । ननु संन्यासस्य श्रवणाद्यङ्गताया अधिकारिविशेषणताया वा व्यवस्थापितत्वात्संन्यासरूपाङ्गविकलादनधिकारिकृताद्वा क्षत्रियादिकृतश्रवणादितः कथं ज्ञाननिष्ठाप्राप्तिसंभव इतिचेन्न । श्रोतव्य इति हि श्रवणविधिः सामान्येन मुमुक्षून् विद्याकामानधिकरोति ते चापशूद्राधिकरणन्यायेन त्रैवर्णिका भवन्तीति सामान्यत्रैवर्णिकगोचरश्रवणाद्यधिकारित्वज्ञानं संन्यासविध्यनपेक्षादेव तस्माज्जायते । संन्यासविधिस्तु ब्राह्मणाधिकारेण प्रवर्तमानो विद्यारूपफलसाधनतया संन्यासं ब्राह्मणस्य बोधयन् साक्षाददृष्टद्वारेण वा क्लृप्तविद्यासाधनस्य श्रवणादेः केवलेन नियमादृष्टसहकृतेन वा विक्षेपनिवृत्त्यादिदृष्टद्वारेण संभवति दृष्ट इत्यादिन्यायगृहीताभ्यर्हितत्वकेनोपकारकतया वा विद्यासाधनं ब्राह्मणस्य संन्यासमवगमयति नहि श्रवणविधिजन्यमुक्तज्ञानं क्षत्रियवैश्ययोरधिकारित्वांशे बाधते । तदबाधने चानुपपत्तिविरहात् । अपितत्वगतं ब्राह्मणांशे विद्यासाधनश्रवणाधिकारित्वं संन्यासनियतमभ्यर्हितद्वितीयपक्षे व्यवस्थापयति । यदि सामान्यतः श्रवणाद्यधिकारित्वं संन्यासनियतं स्यात् क्रममुक्तिफलया सगुणोपासनया देवभावं प्राप्तस्य यज्ञादिकर्मानधिकारित्वेन तत्त्यागलक्षणसंन्यासरहितस्य श्रवणाद्यधिकारित्वव्यवस्थापनं देवताद्यधिकरणस्थमसङ्गतं स्यात् । तथाच ब्राह्मणस्यैव श्रवणं संन्याससापेक्षं ज्ञाननिष्ठाप्रापकं, क्षत्रियादेस्तु संन्यासानपेक्षमेवेति पर्यवसितमिति नोक्तदोषः । सत्येवं संन्यासस्य द्विविधश्रवणाङ्गतापक्षो ब्राह्मणकर्तृकश्रवणविषय एव पर्यवस्यतीति बोध्यम् । नचैवं त्रयाणां वर्णानां श्रवणादितो जातेनात्मदर्शनेन मोक्षप्राप्तावविशिष्टायां ब्राह्मणस्य संन्यासोऽधिकोऽकिंचित्करतामिवापद्यमानो ब्राह्मण्यमपुरस्करणीयं विधत्त इति वाच्यम् । यदि हि कर्माधिक्येन ब्राह्मण्यमपुरस्करणीयं भवेत् तदा संन्यासातिरिक्तानामपि बहूनामधिकानां कर्मणां सद्भावात्तथात्वं ब्राह्मणस्य स्यात् । सर्ववर्णगुरुत्वादिभिरुत्कर्षेण पुरस्करणीयत्वस्य संन्यासाधिक्येऽप्यहानिरेव हि वर्णान्तराणां विना संन्यासं ज्ञानमोक्षादिलाभे सति ब्राह्मणस्य संन्यासविधानं किमर्थमिति तु न पर्यनुयोज्यं विधेरपर्यनुयोज्यत्वात् । अस्मदादिभिस्तदतिशयस्य दुर्ज्ञेयत्वात् । संन्यासरहितानां श्रवणादिभिः फलस्य विक्षेपबाहुल्येन तत्तज्जन्मानुष्ठितश्रवणादिसंस्कारपरिपाकक्रमेण प्रमाणाद्यसंभावनानिवृत्तिक्षमश्रवणादिसंपत्तेरनेकजन्मसु संभवेन चिरकालात्संपत्तिः संन्यासिनां त्वचिराद्विक्षेपाभावादिति विशेषस्य वा सुज्ञानत्वादिति । केचित्तु निरन्तराभ्यस्तस्यैव श्रवणादित्रयस्य मोक्षसाधनत्वेन 'ब्रह्मसंस्थोऽमृतत्वमेती'त्यादिश्रुतिस्मृत्यादिबोधितस्य प्रमाणासंभावना–प्रमेयासंभावना–विपरीतभावनानिवृत्तिरूपफलपर्यन्तस्य नैरन्तर्यापादकसंन्यासरूपसहकार्युपेततयैव संभवेन तादृशादेव साक्षात्कारप्रतिबन्धकनिवृत्तिहेतुत्वपूर्वस्य नियमापूर्वस्य वोत्पादाभ्युपगमेन साक्षात्काररूपचरमफलसंभवात्संन्यासिनो ब्राह्मणस्य मुख्यः श्रवणाद्यधिकारः । मुख्यता च तस्य संन्यासिनमधिकृत्य ब्रह्मसंस्थत्वादिधर्मकश्रवणादेः 'ब्रह्मसंस्थोऽमृतत्वमेती'त्यादिश्रुतिभिः 'गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽथवा । न विचारपरं चेतो यस्यासौ मृत उच्यते । आसुप्तेरामृतेः कालं नयेद्वेदान्तचर्चये'त्यादिस्मृतिभिर्विहितत्वेन 'काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः । स याति नरकान्घोरान्महारौरवसंज्ञका'निति परमहंसोपनिषदि श्रूयमाणश्रुत्या 'नित्यं कर्म परित्यज्य वेदान्तश्रवणं विना । वर्तमानस्तु संन्यासी निरयं प्रतिपद्यते'इति स्मृत्या निन्दिताकरणत्वेन च नित्यतया बोध्या । क्षत्रियादीनां तु मुमुक्षुतया विविदिषावतां गौणो विद्याकामनासद्भावासद्भावेनानियतत्वेनानित्यः फलपर्यन्तस्य श्रवणादेस्तेषामभावेनात्रैव जन्मन्यात्मसाक्षात्कारासंभवात् कृतश्रवणादिसंस्कारस्याद्यश्रवणप्रयोजकादृष्टविशेषमहिम्ना जन्मान्तरे संन्यासयोग्ये तदयोग्ये वा समुद्बोधेन निरन्तरतयाऽनेकभवाहितपरिपाकसंस्कारकतया वा

कृतश्रवणादितः साक्षात्कारः संभवतीति क्षत्रियादीनामपि ज्ञाननिष्ठाप्राप्तिसंभव इत्याहुः । **प्रौढिवादमात्रेणेति** । प्रौढिरभिमानविशेषः । सच प्रकृते वादिनं प्रति यथेच्छमर्थमहं साधयितुं प्रभुरिति ज्ञानम् । तेन यो वादः कथनं तृतीयार्थोऽभेद उक्तिक्रियान्वयी । मात्रपदेन प्रमात्वेन गृहीतवाक्यार्थप्रमाव्यवच्छेदः । यथाच प्रौढिवादमात्रं तथोक्तं प्राक् । **उक्तमिति** । त्रयाणामविशेषेणेत्यादिकारिकयेति ॥ २० ॥ **प्रतिपत्तावपीति** । अनुष्ठेयगोचरकर्तव्यताबुद्धावपीत्यर्थः । **यदिति** । ज्ञानकरणमित्यर्थः । प्रमात्वमविवक्षितं तेनाशास्त्रीयाचारहेतुभूतकर्तव्यताज्ञानस्याप्रमात्वेऽपि न क्षतिः । यदित्युद्देश्यम् । **प्रमाणं मन्यत इति** । स्वाचारहेतुकर्तव्यताज्ञानकरणं प्रमासाधनं स्वीकरोतीत्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ **कर्मानुपपत्तेरिति** । प्रलये सर्वसंप्रदायविलोपाद्यथावत्साध्यसाधनेतिकर्तव्यता तद्व्यापारविशेषज्ञानाभावेन लौकिकवैदिककर्मकलापानुष्ठानासंभवात् । व्यवहारोपयोगिसकलपदार्थस्याभावेन शरीरयात्रानिर्वाहासंभवेन शरीरस्थित्यसंभवादग्निहोत्रादिधर्माभावेन वृष्ट्याद्यभावाल्लोकोच्छेदः स्यात् । पुण्यपापविवेकाद्यभावे शरीरस्वभावात्कामादिनिबन्धनप्रवृत्त्या वर्णसंकरश्च स्यात् । यद्यहं स्वर्गादिकाले निखिलजनप्रारब्धप्रवर्तितः कुलालकुविन्दादिकायमधिष्ठाय व्यवहारोपयोगिघटपटादिनिर्माणकर्माणि यजमानर्त्विगादिरूपमास्थायाग्निहोत्रदर्शपूर्णमाससोमादिवैदिककर्माणि शासकेन्द्रयमादिरूपो भूत्वा सुकृतिदुष्कृतिजननिग्रहानुग्रहादिकर्माणि च न कुर्यां तदेति क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय संप्रदायप्रद्योतकोऽनुग्राहकः परमेश्वरोऽत्राहमर्थ इति भावः ॥ २४ ॥ **लोकसंग्रहं कर्तुमिच्छुरिति** । यद्यपीच्छेष्टसाधनताऽज्ञानपूर्विका स्वफलाभिसन्धिरहितस्य विदुषो न संभवति तथापि करुणामयस्य स्वप्रारब्धलोकप्रारब्धप्रेरितस्य लोकहितसाधनताज्ञानाद्भवत्येवेति भावः ॥ २५ ॥ **स तेनेति** । सर्वं ब्रह्मेति कथनेनेत्यर्थः ॥ २६ ॥ **मिथ्याज्ञानात्मिकेति** । त्रिगुणात्मिकायाः सत्यरूपायाः प्रकृतेः सांख्याभिमताया व्यावृत्त्यर्थं मिथ्येति । **ज्ञानात्मिकेति** । ज्ञानविरोधिभावरूपेत्यर्थः । मिथ्याज्ञानात्मिकेति नैकं पदं भ्रमज्ञानस्य मायाकार्यत्वात् । यद्वा कार्यकारणयोरभेदोपचारात् मायायाः भ्रमज्ञानात्मकत्वसंभवादेकपदत्वेऽपि न क्षतिः । ननु किमस्या लक्षणं किंचात्र प्रमाणमितिचेदुच्यते । अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वम् उत्तरज्ञाननिवर्त्यपूर्वज्ञानवारणायानादीति ज्ञानप्रागभाववारणाय भावेति । जीवेश्वरादिवारणाय ज्ञाननिवर्त्यत्वं तच्च साक्षाद्वाच्यं तेन जीवेशाविद्याचित्संबन्धादेरविद्यानाशद्वारा ज्ञाननिवर्त्यत्वेऽपि न क्षतिः । नच रजतोपादानाज्ञानस्य सादित्वेनाभावविभ्रमोपादानाज्ञानस्योपादानोपादेययोः सजातीयत्वनियमेन भावत्वशून्यतया व्याप्तिस्तयोरिति वाच्यम् । मूलाज्ञानस्यैव शुक्त्यवच्छेदेन तदावरणरजतविक्षेपानुकूलशक्तिमत्त्वेन रजतोपादानत्वोपगमाच्छुक्तित्वप्रकारकज्ञानेनोभयविधशक्तेरेव विनाशात्तदनन्तरमज्ञानसत्त्वेऽपि रजतविभ्रमरजतज्ञानयोरनुल्लासादनादित्वाव्याघातात् सर्वथा साजात्य उपादानोपादेयभावाभावात् । प्रतिनियतकिंचिद्रूपेणैव तदभ्युपगमादज्ञानस्याभावविलक्षणत्वरूपभावत्वेऽप्युपादेयोपादानत्वाव्याघातात् जडत्वादिना साजात्यस्य सत्त्वात् । नच किंचिद्रूपेण साजात्यस्यैवोपादानोपादेयभावप्रयोजकत्वे सत्यमिथ्याभूतयोरपि तथात्वं स्यादभावविलक्षणत्वेनोभयोरपि सजातीयत्वादिति वाच्यम् । सत्यस्योपादानत्वे तस्य कदाचिदपि विनाशासंभवेन तदात्मकस्योपादेयस्याप्यनिवृत्तिप्रसङ्गादुपादाननिवृत्तिमन्तरेणोपादेयस्य निवृत्त्ययोगात् । सत्यस्य ब्रह्मणः कूटस्थत्वस्य श्रुतिसिद्धत्वेन परिणामित्वे तद्व्याघाताच्च तस्य तथात्वानभ्युपगमात् विवर्ताधिष्ठानत्वं ह्युपेयत एव । नचौपाधिकभ्रमोपादानाज्ञानस्य यावदुपाधिसत्त्वमधिष्ठानतत्त्वज्ञानेऽपि भ्रमोत्पत्त्या तदनिवर्त्यत्वस्योपगन्तव्यतया तत्र जीवन्मुक्ताज्ञानस्यापि यावच्छरीरं प्रपञ्चप्रतिभासेनानिवृत्तत्वस्योपगन्तव्यतया तत्र चाव्याप्तिरिति वाच्यम् । उपाधिप्रारब्धाभावविशिष्टज्ञानस्य निवर्तकत्वेन तदुभयापगम एव निवर्तकतावच्छेदकविशिष्टज्ञानसत्त्वेन तयोर्ज्ञाननिवर्त्यत्वानपायात् । जीवन्मुक्तिस्थले तत्त्वसाक्षात्कारेणाविलम्बिताज्ञाननिवृत्तिपक्षस्याप्युपपादितत्वाच्च । नच कल्पितत्वेन प्रतिभासमात्रशरीरत्वस्य ज्ञाननिवर्त्यत्वे सत्यभावविलक्षणत्वेन सादित्वस्य च प्रसङ्गेनासंभव इति वाच्यम् । सादिकल्पकवत्त्वस्यैव प्रतिभासमात्रशरीरत्वप्रयोजकत्वात् । अविद्याकल्पकमविद्यावच्छिन्नचिदेव हि तस्यानादित्वान्न प्रतिभासमात्रशरीरत्वम् सादित्वे च प्रागभावप्रतियोगित्वादेरेव प्रयोजकत्वेनाविद्यायास्तदभावेनानादित्वात् । नच ज्ञाननिवर्त्यत्वे सत्यभावविलक्षणत्वेन शुक्तिरजतादिवत्सादित्वमनुमेयमिति वाच्यम् । ज्ञाननिवर्त्यभावविलक्षणत्वेन प्रागभाववदनादित्वसाधकेन सत्प्रतिपक्षत्वात् । ध्वंसव्यावृत्तपक्षधर्माभावविलक्षणत्वावच्छिन्नसाध्यव्यापकत्वेन निश्चितस्य पक्ष एव संदिग्धसाधनाव्यापकत्वस्य भावत्वस्योपाधित्वाच्च । नचैकत्राविद्यायां विरोधान्न भावाभावविलक्षणत्वरूपोभयस्य संभव इति वाच्यम् । भावत्वाभावत्वयोः परस्पराभावव्यापकत्वरूपविरोधस्यासिद्धत्वेन परस्पराभावव्याप्यत्वेऽपि गोत्वाश्वत्वयोः परस्पराभावाव्यापकयोः परस्पराभावव्याप्यत्वेऽपि तदभावयोरिव भावाभावविलक्षणत्वयोरपि विरोधाभावात् विनाशिभावस्य सादित्वनियमः । श्रुत्यादिसिद्धानादिस्वरूपायामविद्यायां भावत्वस्योपादानत्वमभावत्वस्य हि बाधकमिति भावाभावाभ्यां विलक्षणायास्तृतीयप्रकाराया एवाविद्याया उपगमात् । नचानादित्वे सत्यभावविलक्षणत्वेनाविद्यायामात्मवदनिवर्त्यत्वसिद्धिरिति वाच्यम् । अन्योन्यात्यन्ताभावयोरधिकरणातिरिक्तेण निवर्त्यत्वस्यैवोपगमात्तुच्छे साधनाभावादात्मत्वस्य साधनावच्छिन्नसाध्यव्यापकत्वेनोपाधित्वात्, सादित्वानादित्वयोर्निवर्त्यत्वानिवर्त्यत्वे प्रत्यप्रयोजकत्वात्, तथात्वेऽपि ध्वंसप्रागभावयोरतथात्वस्य तव मते त्वदर्शनात्, नाशसामग्रीसन्निपातासन्निपातयोस्तदुभयप्रयोजकत्वेनानादेरप्यज्ञानस्य नाशकसन्निपाते

नाश्यत्वस्य दुर्वारत्वाच्च । अथवा ज्ञानत्वावच्छिन्ननिवर्तकतानिरूपितनिवर्त्यत्वमात्रं लक्षणम् । स्वानन्तरोत्पन्नविशेषगुणत्वेन प्रतियोगित्वेन च रूपेण पूर्वज्ञानज्ञानप्रागभावयोर्ज्ञाननिवर्त्यत्वात् । अत्रच पक्षे शुक्त्यज्ञानादीनां सादित्वेऽपि न क्षतिः । भ्रमोपादानत्वं वा लक्षणम् । विश्वविभ्रमोपादानभूतस्याज्ञानस्य ब्रह्माधिष्ठानमेवेति पक्षे यथाश्रुतमेवेदम् । ब्रह्माविद्ययोरुपादानत्वपक्षे च ब्रह्मण्यतिव्याप्तिवारणाय परिणामित्वेनाचेतनत्वेन वा विशेषणीयम् । नचाज्ञानोपादानकत्वे प्रपञ्चस्याज्ञानानुविद्धतया प्रतीत्यापत्तिर्मृदनुविद्धतया घटस्येवेति वाच्यम् । सर्वधर्मेणोपादानगतेन तथा प्रतीत्यभावात् । कपालानुविद्धतया घटस्य घटाद्यनुविद्धतया रूपादेः प्रतीत्यदर्शनात् । यत्किंचिद्धर्मेण तु तथात्वमत्राप्यस्त्येवोभयोर्जडत्वेन प्रत्ययात् । नचाज्ञानस्य भावविलक्षणत्व उपादानत्वानुपपत्तिरिति वाच्यम् । भावत्वेऽपि गुणत्वादीनामनुपादानत्वेनोपादानत्वं प्रति भावत्वस्याप्रयोजकत्वात् । वस्तुस्वभावविशेषस्यैव तथात्वात् । तस्य प्रमाणफलाभ्यां प्रकृतेऽपि कल्पनात् । नच द्रव्यत्वं प्रयोजकमिति वाच्यम् । तस्य त्वदेकपरिभाषागोचरत्वात् अस्मदादिभिरनभ्युपगमात् । सत्त्वादिगुणशालित्वेन द्रव्यत्वस्य संभवाद्वेति न लक्षणासंभवेन विलक्षणाज्ञानासंभव इति । प्रमाणं त्वज्ञानेऽहमज्ञो न जानामि मयि नास्ति ज्ञानमित्यादिप्रत्यक्षं सामान्यतो, घटं न जानामि त्वदुक्तमर्थं न जानामीत्यादिप्रत्यक्षं तु विशेषतः । नचाघटं भूतलं भूतले घटो नास्तीत्यादीनां यथा घटाभावविषयकत्वमेव नतु घटविरोधिभावभूताघटात्मकपदार्थविषयत्वं तथैवोक्तप्रतीतेरपि ज्ञानाभावविषयकत्वमेवोचितं नतु ज्ञानविरोधिभावरूपाज्ञानविषयकत्वमिति वाच्यम् । अभावविषयकत्वे हि प्रतियोग्यंशे भासमानधर्मपर्याप्तावच्छेदकताकप्रतियोगिताकाभावावगाहित्वमेव वाच्यम् । अन्यथा घटवत्यपि घटो नास्तीति प्रतीत्यापत्तेः । घटत्वमात्रस्य प्रतियोग्यंशे प्रकारत्वेऽपि नीलघटत्वाद्यवच्छिन्नाभावाद्यवगाहित्वसंभवात् । नच सामान्याभाव एव मानाभाव इति वाच्यम् । तथासति घटो नास्तीत्यादिबुद्धेस्तत्तद्विशेषाभावावगाहित्वस्यैव वाच्यतया एकविशेषवत्तानिश्चयसत्वेऽपि सामान्यतः प्रतियोग्यवगाह्यभावबुद्धिप्रसङ्गात् । तद्धर्मावच्छिन्नवत्ताबुद्धौ प्रतियोगित्वसंबन्धावच्छिन्नतद्धर्मपर्याप्तावच्छेदकताकप्रकारताकाभावनिश्चयत्वेन विरोधित्वोपगमेनोक्तापत्तिवारणेऽपि शुद्धघटत्वावच्छिन्नस्य विशेषधर्मावच्छिन्नप्रतियोगित्वस्य संसर्गत्वे घटवत्यपि घटो नास्तीति बुद्धेः प्रमात्वापत्तेरवारणात् । असंसर्गत्वे च घटशून्येऽपि हि प्रमात्वं न स्यात् । सामान्याभावस्याभावेन सामान्यधर्मावच्छिन्नप्रतियोगित्वस्य तदीयस्याभावात् विशेषाभावीयविशेषधर्मावच्छिन्नप्रयोगित्वस्य तद्धटो नास्तीत्यादिप्रतीत्या विशेषधर्मावच्छिन्नसंसर्गतया क्लृप्तस्य सामान्यधर्मावच्छिन्नासंसर्गत्वेन तेन संबन्धेन तत्प्रकारकबुद्धेः प्रमात्वासंभवात् । यत्तु वायौ यावद्विशेषाभावनिश्चयेऽपि वायू रूपवान्न वेति संशयान्निश्चिते संशयायोगात्सामान्याभावोऽतिरिक्त एव संशयकोटिरभ्युपेयः । नचैतावन्त्येव रूपाणीत्यनिश्चये पार्थिवादिरूपत्रयादधिकमपि रूपं भविष्यतीति संभावनायां सत्यां वोक्तसंशयात्तद्विरहादुक्तसंशय उक्तसंभावनाविरहविशिष्टस्यैव प्रतिबन्धकत्वेन विशेषाभावकूटनिर्णयेऽपि तद्गोचरसंशयसंभव इति वाच्यम् । संभावनां विना संशयाभावस्य संदिग्धत्वेनोक्तरूपेण प्रतिबन्धकत्वे मानाभावादिति । तन्न, तत्तद्रूपत्वेन निश्चयेऽपि रूपत्वेन तत्तद्रूपस्यैव तत्तद्रूपाभावत्वेन निर्णयेऽपि रूपत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तत्तद्रूपाभावस्यापि संशयकोटित्वसंभवात् । अतिरिक्तसामान्याभावकल्पनापेक्षया क्लृप्तविशेषाभावेषु सामान्यावच्छिन्नप्रतियोगिताकत्वकल्पनाया एव युक्तत्वात् । एवमपि संशयानुपपत्तिवारणेऽपि यत्किंचिद्रूपवति रूपं नास्तीति प्रत्ययापत्तेरतिरिक्तसामान्याभावं विना न वारणम् । अथ सामान्यधर्मावच्छिन्नप्रतियोगित्वतन्निरूपकाभावयोः कल्पनामपेक्ष्य क्लृप्तेषु विशेषाभावेषु निखिलेषु व्यासज्यवृत्तिसामान्यधर्मावच्छिन्नप्रतियोगिकत्वमेव लाघवात्कल्प्यम् । तथासत्येकविशेषवति तदभावस्यैवाभावेन तत्साधारण्यव्यासज्यवृत्तिनिरुक्तधर्मावच्छिन्नस्य सत्वासंभवादशेषविशेषविरहिणि सकलविशेषाभावस्य सत्वेनोक्तधर्मावच्छिन्नसत्त्वस्य संभवान्नोक्तदोषद्वयसंभव इत्युच्यते तदाप्यस्माकं क्षत्यभावात् मयि ज्ञानं नास्तीत्यस्याप्यखिलज्ञानविशेषाभावावगाहित्वस्य वाच्यतया यत्किंचिज्ज्ञानसत्त्वे ज्ञानसामान्याभावप्रत्ययासंभवादुक्तप्रत्ययस्य ज्ञानाभावविषयकत्वासंभवात् । वस्तुतस्त्वभ्युपेय एव सामान्याभावो लाघवात् । तथाहि तावदभावेषु तादृशप्रतियोगित्वस्य तस्य व्यासज्यवृत्तित्वस्य तावदभावेषु ज्ञानविषयत्वसंबन्धस्य कल्पनामपेक्ष्यातिरिक्तसामान्याभावस्य तत्र विषयतैव युज्यते । किंच व्यासज्यवृत्तिधर्मस्य निखिलाश्रययोग्यतयैव योग्यत्वं । नहि पिशाचवृक्षगतद्वित्वं कस्यचित्प्रत्यक्षमिति वायौ रूपं नास्तीति प्रत्यक्षं न स्यादयोग्यस्यायोग्यरूपविशेषाभावस्यापि तदाश्रयत्वेन तादृशप्रतियोगिताकत्वस्याप्ययोग्यतया तेनाभावस्य प्रत्यक्षत्वासंभवात् । यत्तु कार्यैन्द्रियधर्माणां यथाकार्यमुन्नयनमित्यन्यत्र व्यासज्यवृत्तिधर्मग्रहे यावदाश्रयग्रहस्य तन्त्रत्वेऽप्युक्तस्थले तस्यातन्त्रत्वोपगम इति । तन्न । विशेषाभावस्याप्येवमसत्त्वापत्तेरधिकरणस्यैव तत्तद्धर्मावच्छिन्नाभावत्वेन तत्प्रतीतिविषयत्वसंभवाज्जलप्रत्यक्षे घ्राणानपेक्षायामपि गन्धाभावत्वेन तत्प्रत्यक्षे तदपेक्षाकल्पनस्योक्तरीत्या संभवान्नचेष्टापत्तिः । सामान्याभावमपलप्य विशेषाभावेषु तादृशप्रतियोगिताकत्वस्य व्यासज्यवृत्तेः कल्पयितुरिष्टत्वोक्तेरत्यन्तायुक्तत्वादधिकरणात्मकत्वपक्षस्येदानीमनुपक्रान्तत्वात् । सामान्याभावाभ्युपगमे तु नैवमतिरिक्तस्य तस्यायोग्यप्रतियोगिकत्वेऽपि प्रतियोगितावच्छेदकस्याव्यासज्यवृत्ते रूपत्वस्य यत्किंचिदाश्रययोग्यतयैव योग्यत्वात्तदवच्छिन्नप्रतियोगित्वस्यापि योग्यत्वात्तादृशयोग्यत्वस्यैवात्यन्ताभावप्रत्यक्षे तन्त्रत्वादुपपद्यत एव वायौ रूपं नास्तीति प्रत्यक्षं । नच रूपस्यैवाभावविशेषत्वं निरुक्तप्रतियोगिताकत्वं तु संसर्गस्तस्यायोग्यत्वेऽपि न क्षतिरिति वाच्यम् ।

नहि दूरत्वादिदोषात्संयोगाप्रत्यक्षत्वे तेन संबन्धेन संबन्धिनोर्विशिष्टप्रत्यक्षमानुभविकम् । एषैव च रीतिरनुपलब्धेः करणत्वपक्षेऽपि यादृश्या सामग्र्याभावस्य प्रत्यक्षत्वं तादृश्यैव ह्यनुपलब्धिगोचरत्वम् । कारणयोरिन्द्रियानुपलब्ध्योरभावविशिष्टप्रत्यक्षे करणत्व एव विवादात् । सिद्धे च सामान्याभावे सुतरां मयि ज्ञानं नास्त्यहमज्ञ इत्यस्य न ज्ञानाभावविषयकत्वसंभवः । नच न यत्र किंचिदपि ज्ञानं तत्रैव तथा प्रत्यक्षमिति वाच्यम् । अभावप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणत्वात् । सर्वत्रैव तादृशाभावप्रत्यक्षस्थले ज्ञानावश्यंभावात् । नच तदभावबुद्धौ तद्बुद्धिविषये धर्मिणि तद्वत्ताज्ञानस्यैव विरोधितया ज्ञानज्ञानात्मके ज्ञाने सत्यपि मयि ज्ञानमिति ज्ञानाभावान्नोक्तप्रत्यक्षानुपपत्तिरिति वाच्यम् । जाते घटज्ञाने कुतश्चिद्धेतोस्तदज्ञानेऽपि घटं जानामि न वेति संदेहाभावस्य सर्वानुभवसिद्धत्वात् । तदुपपत्तये ज्ञानसुखाद्यभावज्ञाने स्वरूपत एव ज्ञानसुखादेर्विरोधित्वस्योपगन्तव्यत्वात्स्वप्रकाशवादे हि सुतराम् । एवं विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन कारणत्वस्य सर्वसंमततयाऽभावज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वनियमेन तं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुतयोक्तस्थले ज्ञानज्ञानस्यावश्यकत्वात् । एतेनोक्तकार्यकारणभावादेव घटाद्यज्ञानकाले घटाभावादिप्रत्यक्षादिवारणसंभवादभावबुद्धौ स्वातन्त्र्येण प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिश्चयत्वेन हेतुत्वस्यानावश्यकत्वेऽपि न क्षतिः । एवंच वेदान्तिनामस्ति जगति वाच्यत्वं वाच्यत्वत्वेनैव नतु घटत्वेनेत्यनुभवस्य वाच्यत्वे घटत्वाभावनिर्णयकालीनस्य व्यधिकरणधर्मावच्छिन्नाभावसाधकस्य न बाधः । तादृशानुभवस्य घटत्वावच्छिन्नस्वनिष्ठप्रतियोगिताकत्वसंबन्धेनाभावांशे वाच्यत्वत्वविशिष्टवाच्यत्वावगाहित्वेन तज्ज्ञानस्य निष्प्रत्यूहमुत्पत्तेः प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वे तु घटत्वविशिष्टवाच्यत्वज्ञानस्य बाधकसद्भावादनुत्पत्तेः कारणविरहेणोक्तानुभवस्य बाधः स्यात् । नच व्यधिकरणधर्मावच्छिन्नाभावाभ्युपगमपक्षे घटत्वेन घटो नास्तीत्यादि निर्विवादाभावप्रत्यक्षे प्रतियोगिन्येव तृतीयान्ताभिलप्यघटत्ववैशिष्ट्यभानस्यानुभविकत्वेन तस्य बाधः । वाच्यत्वे घटत्ववैशिष्ट्यभाने तज्ज्ञानस्य भ्रमत्वापत्त्या ततस्तादृशाभावासिद्धप्रसङ्गादिति वाच्यम् । वाच्यत्वे घटत्वभानस्य हि बाधकसत्त्वेनासंभवेन संसर्गभूतप्रतियोगित्व एव तृतीयान्ताभिलप्यघटत्वावच्छिन्नत्वस्य भानाभ्युपगमः । तदभिलापे चावच्छिन्नत्वार्थकतृतीयान्तपदस्य घटत्वावच्छिन्नप्रतियोगित्वसंसर्गतात्पर्यग्राहकस्य प्रयोगः । घटत्वेन घटो नास्तीत्यत्रापि वस्तुतो विचारे क्रियमाणे प्रतियोगिनि न घटत्ववैशिष्ट्यभानमव्यावर्तकत्वात् । घटो घटत्ववानितिवन्निराकाङ्क्षत्वाच्च प्रतियोगित्वे च भानाभ्युपगमे धर्मान्तरावच्छिन्नप्रतियोगित्वव्यावर्तनेन सफलत्वात्तादृशप्रतियोगितात्पर्यग्राहकत्वेन निराकाङ्क्षत्वाभावाच्च । नच घटो नास्तीत्यादाविव प्रतियोगिनि भासमानस्यैवावच्छेदकत्वं युक्तमिति वाच्यम् । वाच्यत्वत्वेन जगति प्रसक्तस्य तेन रूपेण निराकरणासंभवात् । घटत्वेन तस्याभावबुबोधयिषया कृतात्तादृशाभिलापात् घटत्वावच्छिन्नत्वेन प्रतियोगित्वभानस्यावश्यकतया निरुक्ततात्पर्यग्रहस्यैव तादृशवाच्यत्वत्वावच्छिन्नत्वभानविरोधित्वात् । अभिलापजन्यबोधविषयनिर्णये चाभिलप्यमानप्रत्ययविषयस्यावधारणमपि सुशक्यम् । सति च बाधके किं किं नाभ्युपेयते । यथा घटत्वापेक्षया कम्बुग्रीवात्वस्य गुरुत्वज्ञाने प्रतियोगिनि भावमानस्यापि कम्बुग्रीवादिमत्त्वस्यानवच्छेदकत्वमतादृशस्य घटत्वस्यावच्छेदकत्वम् शिखिनश्चाविनाशाग्रहे शिखी विनष्ट इत्यत्र शिखायाः प्रतियोगित्वं चोपेयते । नचैवं घटत्वेन द्रव्यं नास्ति द्रव्यत्वेन घटो नास्तीति प्रतीतिभ्यां विशेषरूपेण सामान्याभावस्य सामान्यरूपेण विशेषाभावस्यापि प्रसङ्ग इति वाच्यम् । यदि गौरवं नस्याद्बाधकं किं नस्याद्विशेषविरहमात्रप्रयुक्त उभयत्र तादृशप्रत्यय इति तत्र सामान्यस्य प्रतियोगित्वावच्छेदकत्वयोरकिंचित्करत्वाद्विशेषाभावातिरिक्तस्य तदुभयस्य गुरुत्वापादकत्वात् । व्यधिकरणधर्मावच्छिन्नाभावस्य समवाप्यभाववाच्यत्वाभावाभ्यामन्यथासिद्धयितुमशक्यत्वात् तदभ्युपगम आवश्यक इत्यलमनुप्रसक्तबहुविचारेण । एवं घटं न जानामीत्यत्राप्यभावविषयकत्वे घटज्ञानज्ञानावश्यंभावे घटज्ञानस्यावश्यकतया न तदभावविषयकत्वसंभवः । एवं त्वदुक्तमर्थं न जानामि किमपि न जानामीत्यत्रापि । न चैत्तादृशप्रतीतिरप्रामाणिकी । सुप्तोत्थितस्य व्यपगतमूर्च्छस्य च मयि ज्ञानं नास्ति किमपि न जानामीत्याद्यनुभवस्य सर्वानुभवसाक्षिकत्वात् । अहमज्ञ इत्यस्य सर्वप्राकृतजनानुभवस्यापि सर्वानुभवसिद्धत्वात् । घटं जानासीति प्रश्नानन्तरं घटं नजानामीत्युत्तरस्य स्वानुभवाभिलापरूपस्यापि प्रामाणिकत्वात् । क्लिष्टवाक्यार्थे सति त्वदुक्तमर्थं न जानामीत्यनुभवस्यापि प्रामाणिकत्वात् । यत्तु न जानामीत्यादौ सर्वत्रैव ज्ञानविशेषाभावस्य त्वदुक्तमर्थं न जानामीत्यादौ त्वदुक्तार्थविशेषज्ञानाभावस्य घटं न जानामीत्यादौ घटगतविशेषविशिष्टज्ञानाभावस्य विषयत्वे बाधकाभावः । नचैवमपि ज्ञानविशेषत्वदुक्तार्थविशेषघटगतविशेषविशिष्टस्यापि ज्ञानावच्छेदकतया ज्ञानावश्यंभावाद्व्याहतितादवस्थ्यमिति वाच्यम् । ज्ञानसामान्यज्ञानातिरिक्तज्ञानाभावस्य त्वदुक्तार्थगतघटादिगतविशेषधर्मनिष्ठप्रकारताविशेषनिरूपितविशेष्यताकत्वविशिष्टज्ञानाभावस्य विषयत्वे व्याघातासंभवात् । विशेषणतावच्छेदकोक्तधर्मज्ञानसत्त्वेऽपि प्रतियोगिनो धर्मविशेषनिष्ठानवच्छिन्नप्रकारतानिरूपितत्वदुक्तार्थघटादिनिष्ठविशेष्यताकज्ञानासत्त्वेन तदभावाव्याघातादिति । तन्न । तादृशप्रकारत्वादिज्ञानविरहवतामपि घटं न जानामीत्यादिप्रत्यक्षस्यानुभवसिद्धत्वात् । अन्याकारतया स्वानुभवसिद्धस्याप्यन्याकारत्वोपगमे स्वरसतोऽन्यार्थकतया प्रतीयमानस्याभिलापस्यान्यार्थकतयोपव्याख्याने सर्ववस्तुसिद्धिव्याकुलीभावप्रसङ्गात् । घटे ज्ञानं नास्तीत्याद्यनुभवाभिलापयोरप्युक्तरूपेण ज्ञानाभावविषयकत्वसंभवेन तत्संभावनया घटादौ ज्ञानसामान्याभावासिद्धिप्रसङ्गात् । तथा-

सति घटादीनामचेतनत्वस्यापि निश्चयासंभवप्रसङ्गात् । न चोक्तस्थले बाधकसत्त्वाज्ज्ञानसामान्याभावविषयकत्वानभ्युपगमः घटे ज्ञानं नास्तीत्यत्र तदभावात्कुतः सामान्याभावविषयकत्वानभ्युपगमः स्यादिति वाच्यम् । अन्यविषयकस्यान्याकारतयाऽनुभूयमानत्वे ज्ञानविषयस्यैवानवधारणादबाधितत्वस्य सामान्याभावविशेषाभावयोर्द्वयोरप्यविशेषात् । नच मयि ज्ञानं नास्तीत्यत्र सामान्याभावस्य व्याहतत्वात् भावरूपाज्ञानाभ्युपगमे गौरवाच्च बाधकात् विशेषाभावविषयकत्वोपगमोऽसति बाधकेऽन्याकारतयाऽनुभूयमानस्यान्यविषयकत्वानुपगमाद्घटे ज्ञानं नास्तीत्यस्यानुभूयमानाकारातिलङ्घनेनान्यविषयकत्वाभ्युपगमासंभवात्तद्विषयावधारणं भवत्येवेति वाच्यम् । विशेषाभावविषयकत्वे तत्र तत्र सर्वत्र तज्ज्ञानपूर्वं तत्तद्विषयप्रकारत्वविशेष्यत्वादिविषयकानन्तज्ञानानां तेषु पदार्थान्तरसंबन्धस्य च कल्पनापेक्षयाऽतिरिक्तैकाज्ञानकल्पन एव लाघवेनोक्तस्थलेऽपि विनैव बाधकमनुभूयमानाकारातिलङ्घनेनान्यविषयकत्वस्य दुर्वारत्वात् अज्ञानपक्षे च यथा नोक्तज्ञानात्पूर्वं तावज्ज्ञानानां कल्पनं तथाऽनुपदमेव वक्ष्यमाणत्वात् । एवं घटज्ञानस्य त्वदुक्तार्थज्ञानस्य च प्रतियोगितावच्छेदकघटकज्ञानत्वेनावश्यकत्वे घटं जानामि त्वदुक्तार्थं जानामीति ज्ञानाभिलापादिव्यवहारप्रसङ्गोऽपि दोषः स्यात् । नचोक्ताभावप्रतियोगिभूतज्ञानालम्बनत्वमेव तस्योपेयते तदभावाच्च नोक्तव्यवहारापत्तिरिति वाच्यम् । यत्र हि त्वदुक्तार्थस्य स्वातन्त्र्येण ज्ञानस्थले त्वदुक्तमर्थं जानामीति प्रत्ययादिरिष्टो यादृशसामग्र्या तादृश्यास्तस्यास्त्वदुक्तमर्थं न जानामीत्यत्रापि ज्ञानाभावविषयकत्वाभ्युपगन्तुरावश्यकतया तथापत्तेरवारणात् । स्वातन्त्र्येण नास्ति ज्ञानमिति तु न वाच्यम् । त्वदुक्तार्थस्यापि विशेषणतावच्छेदकतया स्वातन्त्र्येण तज्ज्ञानस्य तवावश्यकत्वापातादिति । अथातिरिक्ताज्ञानाभ्युपगमपक्षेऽपि तस्य स्वानुभवे ज्ञानविरोधित्वरूपेणैव भानमुपेयमन्यथा तस्य ज्ञानविरोधित्वमप्रमाणत्वान्न स्यादज्ञानानुभवेन तदग्रहणात् । अतएव तदभिलापे न जानामीत्यादौ विरोधार्थकस्य नञः प्रयोगोऽत्रास्याज्ञानमित्यादौ च पुरुषविशेषीयत्वविषयविशेषविशिष्टत्वादिनाप्यज्ञानस्यानुभवः । तथाचाज्ञानानुभवस्यापि तत्तद्विशेषणविशिष्टवैशिष्ट्यावगाहित्वेन तत्तज्ज्ञानस्यावश्यकतया ज्ञानविरोधिनोऽज्ञानस्यापि कुतस्तदानीं संभवोऽज्ञानविशेषावगाहित्वे तु घटज्ञानसद्भावेऽपि घटं न जानामीत्यनुभवापत्तिः स्यादतो ज्ञानसामान्यविरोधित्वेनैवाज्ञानविषयकत्वस्य वाच्यत्वादिति ज्ञानाभावविषयकत्वपक्षवद्व्याघातस्य दुर्वारत्वादितिचेन्न । यस्य हि परैर्मानसं प्रत्यक्षमुपेयते तस्यास्माभिः साक्षिणा प्रत्यक्षेण ग्रहणमुपेयते । तत्र यथा न्यायनये सविषयकस्य ज्ञानस्य प्रत्यक्षे प्रत्यक्षविषयातिरिक्तं विशेषणतावच्छेदकविषयस्य ज्ञानं ज्ञानत्वादेश्च ज्ञानं कारणं नोपेयते विषयातिरिक्तस्यापेक्षणे स्वानन्तरोत्पन्नघटादिज्ञानेन ज्ञानत्वज्ञानेन च पूर्वज्ञानस्य नाशेन विषयाभावात्तृतीयक्षणे तत्प्रत्यक्षानुपपत्तेः । तथास्माभिः सामान्यत एव योग्यसविषयकप्रत्यक्षे विषयातिरिक्तस्य विशेषणतावच्छेदकादिविषयकस्य कारणत्वं नोपेयते ज्ञानत्वस्याप्रयोजकत्वात् । नच घटं जानामीत्यत्र प्रत्यक्षविषयस्य ज्ञानत्वेन तस्यैव विषयरूपविशेषणतावच्छेदकविषयकज्ञानत्वाद्युक्तं तदतिरिक्तज्ञानानपेक्षणम् । घटमिच्छामीत्यादौ विषयस्येच्छारूपत्वेन तस्य विशेषणतावच्छेदकविषयज्ञानरूपत्वासंभवात्तदतिरिक्तं विषयज्ञानमावश्यकमिति वाच्यम् । ज्ञानप्रत्यक्षवदिच्छाप्रत्यक्षस्यापि प्रामाणिकत्वाज्ज्ञानत्वेच्छात्वादेर्विशेषणतावच्छेदकत्वेऽपि तज्ज्ञानापेक्षणे विषयनाशेन प्रामाणिकप्रत्यक्षस्वरूपानुपपत्तेस्तदनपेक्षायां प्रमाणस्य विषयरूपविशेषणतावच्छेदकज्ञानानपेक्षायामपि तुल्यप्रसरत्वात् क्वचिदर्थवशातत्संपत्तेरकिंचित्करत्वादिति सविषयकत्वयोग्यत्वयोरेव तथात्वौचित्यात् । सुखादिप्रत्यक्षे विशेषणतावच्छेदकस्य सुखत्वादेरपि ज्ञानस्यानपेक्षितत्वम् । अन्यथा तेन सुखस्य नाशे विषयाभावेन क्वापि सुखादिप्रत्यक्षं न स्यादिति मनोग्राह्यस्य साक्षिभास्यस्य वा यदसाधारणो धर्मः सविषयकत्वतत्तत्पुरुषीयत्वज्ञानत्वेच्छात्वसुखत्वादिकं तद्विशिष्टप्रत्यक्षे तत्तद्विशेषणतावच्छेदकज्ञानस्य कारणत्वानुपगमो युक्तस्तथा सति भावरूपाज्ञानस्यापि सविषयकस्य साक्षिभास्यस्यैवोपगमादिच्छाविरोधिद्वेषवत् ज्ञानविरोधिनोऽज्ञानस्य सविषयकत्वेनैवानुभवात् । तदसाधारणधर्मस्योत्सर्गतो नियमतः तद्विशेषणत्वेन भानयोग्यस्य विषयपुरुषसंबन्धज्ञानविरोधित्वादेर्ज्ञानस्य पूर्ववर्तितया नास्त्येवापेक्षा । अपितु तत्तद्विशिष्टाज्ञानविषयकसाक्षिज्ञानमेवाहत्य तत्तद्विशेषणविषयकमपि भवतीति न व्याघातसंभवः । सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिगोचर इत्युक्तं हि विवरणे । ज्ञाततयाऽज्ञाततयेत्यस्य ज्ञानाज्ञानयोर्विषयत्वेन विशेषणतयेत्यर्थः । साक्षिज्ञानं त्वज्ञानविषयविषयकमपि नाज्ञानविरोधि तत्साधकत्वात् । विरोधित्वे तु विरोधादज्ञानसत्वं तत्क्षणे विरुद्धं स्यात्स्याच्च विषयाविद्यमानत्वेन तस्या प्रत्यक्षत्वमपि एवमज्ञानविषयविषयकप्रमाणजज्ञानस्यैवाज्ञानविरोधित्वम् अज्ञानसाक्षिज्ञानस्याविद्योपहितसाक्षिचैतन्यरूपत्वे जन्यत्वस्यैवाभावेन प्रमाणजन्यत्वस्य दूरापेतत्वादविद्यावृत्त्युपहितचैतन्यात्मकत्वेप्यविद्यावृत्तेः स्वाकारायाः प्रमाणज्ञानसामग्र्यभावसहितादृष्टविशेषजन्यत्वेन प्रमाणाजन्यत्वात् । ज्ञानत्ववदज्ञानत्वमप्यखण्डमेव तदभिलापस्थनञ्पदमधर्मादिपदस्थनञ्वदखण्डदुरितत्वादेरिवाखण्डाज्ञानत्वादेर्लक्षणाबीजतात्पर्यग्राहकमेव । ज्ञानविरोधित्वेनाज्ञानप्रतिपादनं तु विवरणे ज्ञानेनाज्ञाननाशानुभवे तद्धेतुकतत्प्रतीत्यभिप्रायकम् । सैव च तस्याज्ञानविरोधित्वेऽपि च प्रमाणमित्यन्यदेतत् । ज्ञानाभावप्रत्यक्षाभ्युपगमे तु नैव साक्षिप्रत्यक्षेण गतिः । ज्ञानस्य साक्षिवेद्यत्वेन तद्विशेषणतयातीतानागतविद्यमानसकलविषयादिग्रहणसंभवेऽपि ज्ञानाभावस्य साक्षिवेद्यत्वानुपगमात् तद्विशेषणज्ञानतद्विषयादेः साक्षिणा ग्रहीतुमशक्यत्वात् । घटादौ ज्ञानाभावस्यानुपलब्धिवेद्यतायाः क्लृप्तत्वेन सर्वत्रैव तस्य तथात्वस्योचितत्वात् । नच येन यो गृह्यते तदभावोऽपि तेनैव ग्राह्य इति ज्ञानाभावोऽपि साक्षिभास्य एवेति

वाच्यम् । धर्मिग्रहोपक्षीणव्यापारत्वादिन्द्रियादेरित्यावश्यकानुपलब्धेरनन्यव्यापाराया एव करणत्वौचित्यात् । नचाभावस्यानुपलब्धिवेद्यत्वमेवास्तु । तद्विशेषणज्ञानस्य साक्षिवेद्यत्वेनानुपपत्तिरिति वाच्यम् । तथा सति ज्ञानस्य साक्षात्साक्षिवेद्यत्वापत्तेः विशेष्यग्रहणे तदव्यापारात् साक्षाद्वेद्यत्वस्य विद्यमानत्वनियतत्वात् ज्ञानस्य तथात्वे ज्ञानाभावस्यैव दुर्लभत्वापत्तेः । अज्ञानप्रत्यक्षस्य विशेष्ये विशेषणं तत्रापि च विशेषणान्तरमिति रीत्यापि संभवात् । तत्र साक्षिप्रत्यक्षातिरिक्तस्य ज्ञानविरोधित्वविषयादिज्ञानस्य स्वपूर्ववर्तितयाऽपेक्षाभावात् । साक्षिप्रत्यक्षस्य तत्तद्विशेषणविशिष्टवैशिष्ट्यानवगाहित्वात् । विशिष्टबुद्धौ विशेषणज्ञानत्वेन कारणत्वानुपगमात् । विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानत्वेन निश्चयत्वेन वा कारणत्वेन रक्तो दण्ड इति ज्ञानविरहकाले दण्डो रक्तो न वेति संशयकाले वा रक्तदण्डवान् पुरुष इति ज्ञानवारणायावश्यकेनैवापत्त्यादिवारणसंभवात् अनन्तनिर्विकल्पकव्यक्तिकल्पनागौरवाच्च । चक्षुःसंनिकर्षानन्तरं निर्विकल्पकविलम्बेन विशिष्टज्ञानविलम्बस्याप्रामाणिकत्वात् । नच चक्षुःसंनिकर्षानन्तरं जातित्वेन घटत्वोपस्थितौ सत्यां जातित्वेन घटत्वावगाहिजातिमानयमिति ज्ञानं जायते तदानीं स्वरूपतो घटत्वप्रकारकमपि प्रत्यक्षं स्यात् सामग्रीसत्त्वात् । विशेषणज्ञानस्य कारणत्वे तु निरवच्छिन्नघटत्वप्रकारकबुद्धौ निरवच्छिन्नघटत्वनिष्ठविषयताकज्ञानत्वेन कारणत्वात्तदभावेनापत्त्यसंभवात् । घटत्वसविकल्पकनिर्विकल्पकयोरेकदासत्त्वासंभवात् । एकज्ञानस्यांशतः प्रत्यक्षत्वाप्रत्यक्षत्वापत्त्या सविकल्पकनिर्विकल्पकत्वयोरसंभवादिति वाच्यम् । घटत्वांशे जातित्वभासकसामग्रीसत्वे तदंशे तज्ज्ञानस्य दुर्वारतया स्वरूपतो घटत्वप्रकारकत्वासंभवात् स्वरूपतो घटत्वप्रकारकप्रत्यक्षे चक्षुःसंनिकर्षादेरकारणत्वात् । घटत्वांशेऽन्यभानप्रयोजकसामग्र्यभावसहकृताद्घटत्वप्रत्यक्षकारणाच्चक्षुःसंयुक्तसमवायादित एव तादृशप्रकारत्वस्य संभवादितरभासकसत्त्वे तु निरुक्तकारणस्यावच्छिन्नघटत्वविषयताकप्रत्यक्षोत्पत्त्या चरितार्थतया स्वातन्त्र्येण कार्यानर्पकत्वस्यैवोचितत्वादित्यापत्त्यसंभवाद्विशेषणज्ञानत्वेन कारणत्वस्यानावश्यकत्वादनन्तनिर्विकल्पकव्यक्तिकल्पनापेक्षया सविकल्पकोक्तसामग्रीप्रतिबन्धकताकल्पनस्यैव वोचितत्वात् । जातित्वविशिष्टज्ञानानन्तरोत्पन्ननिर्विकल्पकादुभयाकारकप्रत्यक्षापत्तिवारणाय प्रतिबन्धकत्वस्य त्वयापि वाच्यत्वादिष्टापत्तौ निर्विकल्पकाभ्युपगमवैयर्थ्यादिति । अभावावगाहित्वपक्षे तु न विशेष्ये विशेषणमितिरीत्या तथात्वसंभवोऽभावबोधो हि विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेत इत्यभ्युपगमात् । नचाभावप्रत्यक्षस्यान्यत्र विशेषणतावच्छेदकप्रकारकज्ञानजन्यत्वेऽप्यात्मविशेष्यकज्ञानाभावादिप्रत्यक्षस्य मयापि तथात्वं न कल्प्यत इति वाच्यम् । क्लृप्ता भावग्रहसामग्री भेदो हि कल्प्यः स च कार्यभेदग्रहसापेक्षकल्पनाविषयस्तत्र कार्यस्य प्रत्यक्षस्य स्वतो वैलक्षण्याभावाद्विषयवैलक्षण्येनैव वैलक्षण्यस्य वाच्यतयाऽहमज्ञो मयि ज्ञानं नास्तीत्यादावज्ञानस्य ज्ञानाभावविलक्षणस्य तथात्वौचित्यात् । नच ज्ञानत्वावच्छिन्नप्रतियोगिताकत्वेनैव प्रतियोगितावच्छेदकग्रहसापेक्षप्रत्यक्षविषयाभावाद्भेद इति वाच्यम् । घटे ज्ञानं नास्तीत्यस्यापि ज्ञानस्य तादृशप्रतियोगिताकाभावविषयकत्वेन प्रतियोगितावच्छेदकग्रहसापेक्षस्य तस्य तदनपेक्षत्वापातात् । नच नास्त्येव तत्राप्यपेक्षेति वाच्यम् । ज्ञानानुपस्थितौ तादृशप्रत्ययस्यानुभविकत्वात् । अन्यथा घटो नास्तीत्यादावपि घटज्ञानानपेक्षापातोऽनुभवनिगडस्य त्वयैव भग्नत्वादिति । अथोक्तप्रत्यक्षस्यास्तु ज्ञानप्रागभावविषयतैवेति चेन्न । तस्य सामान्यधर्मावच्छिन्नप्रतियोगिकत्वानुपगमादुपगमेऽपि वा सामान्याभाववदेव तस्यासत्त्वप्रसङ्गात् । यावत्प्रागभावसत्त्वाधीनसत्त्वेनातीतप्रागभावविरहेण तत्सत्त्वस्य वक्तुमशक्यत्वात् । विशेषप्रतियोगिकयत्किंचित्प्रागभावस्य घटज्ञानसत्त्वेऽपि सत्तया तदानीमपि घटं न जानामीत्यादिप्रत्ययप्रसङ्गात् । प्रागभावे मानाभावाच्च यथा न प्रागभावसिद्धिस्तथाऽनुपलब्धिप्रकरणे वक्ष्यते । एवं सुखमहमस्वाप्सं न किंचिदवेदिषमिति सुप्तोत्थितपुरुषीयपरामर्शसिद्धस्य सुषुप्तिकालीनानुभवस्याप्यस्त्यज्ञाने मानत्वम् । अथ न किंचिदवेदिषमिति ज्ञानाभावानुमितिरेव । तथाहि प्रभातकालोऽयं पूर्वगृहीतरात्रियामानन्तरयामत्रयपूर्वकः प्रभातत्वात् संप्रतिपन्नप्रभातवदित्यनुमानेन सुषुप्तिकालमनुमाय तावत्कालेऽहं ज्ञानाभाववान् ज्ञानसामग्रीरहितत्वात् अवस्थाविशेषवत्वात् ज्ञानवत्त्वेन स्मरणयोग्यत्वे सति ज्ञानवत्वेनास्मर्यमाणत्वाद्वा यन्नैवं तन्नैवं यथाहमिदानीमिति चेन्न । सामग्र्यभावनिर्णयस्य ज्ञानरूपफलाभावनिर्णयेन तन्निर्णयस्य सामग्र्यभावनिर्णयेन संपाद्यत्वेन हेतुग्रहस्यैवान्योन्याश्रयेणासंभवात् । अवस्थाविषयत्वस्य ज्ञानाभावादिरूपत्वेन तस्य साध्यतया हेतुत्वासंभवात् । तृतीयहेतौ तादृशयोग्यत्वस्य ज्ञानाभाववत्वे सति स्वात्मत्वरूपत्वे पक्षे हेत्वसिद्धेर्हेतोः साध्यघटितत्वात् स्वात्मत्वमात्ररूपत्वे ज्ञानस्य विद्यमानतादशायां तद्वत्तयाऽस्मर्यमाणत्वसत्त्वेन प्रत्यक्षेण तदाज्ञानरूपसाध्याभावनिश्चयेन व्यभिचारनिश्चयात् । ज्ञानवत्वेनेति हेत्वंशघटकज्ञानस्यानुपेक्षणीयज्ञानात्मकत्वे तेन हेतुनोपेक्षणीयज्ञानाभावो न सिध्येत् । सामान्यतो ज्ञानरूपत्व उपेक्षणीयज्ञानतः संस्काराभावेन तादृशज्ञानकाले तद्वतो ज्ञानवत्वेनास्मर्यमाणतया तथापि व्यभिचारात् । प्रातरनुभूतचत्वरे गजज्ञानाभावज्ञानं तु तदानीं साक्षिणा गृहीतेन विद्यमानकाले प्रातश्चत्वरे गजं नाज्ञासिषमिति स्मर्यमाणेन ज्ञानविरोधितया गृहीतज्ञानाभावव्याप्यत्वेनाज्ञानेन लिङ्गेनैव संभवति इच्छादेरपि नियमतो ज्ञानपूर्वकत्वेनाज्ञानस्येच्छाद्यभावस्यापि व्याप्यतयेच्छाभावाद्यनुमानस्यापि सुषुप्तौ स्मर्यमाणेनाज्ञानेन संभवान्न तदर्थमिच्छाविरोधिनो द्वेषस्य ज्ञानविरोधिनोऽज्ञानस्येवाभ्युपगमप्रसङ्गः । सुषुप्तिकालेऽज्ञानानुभवे स्वीक्रियमाणे तु तज्जनितसंस्कारवशाज्जाग्रद्दशायामज्ञानविशिष्टाहमर्थस्मरणेऽस्वाप्सं न किंचिदवेदिषमित्याकारके सति स्मृतेनाज्ञानेन ज्ञानाभावानुमितिरुपपद्यते । सुषुप्तिकाले चानुभवः सकलज्ञानाभावप्रयो-

जकोद्रिक्ततमोंशाज्ञानाकारतत्सात्त्विकांशपरिणामवृत्तिरूपसुषुप्त्यवस्थापन्नस्याज्ञानस्योक्तवृत्त्यवच्छिन्नचैतन्यात्मकसाक्षिरूपः साक्षिणः स्वरूपेण नित्यत्वेऽपि वृत्तेर्विनाशेन वृत्त्युपहितरूपेण नाशसंभवान्न संस्कारानुपपत्तिः। तेन च संस्कारेण सुषुप्त्यवस्थाविशिष्टाज्ञानस्मृत्युपपत्तिः। स्वरूपेणाज्ञानस्य स्वोपहितचैतन्यरूपसाक्षिभास्यतया तस्य संस्काराभावेन जाग्रत्सुषुप्त्यविच्छिन्नप्रवाहत्वेनाज्ञानस्वरूपमात्रस्य धारावाही निर्विकल्पकोऽनुभव एव सुषुप्त्यवस्थाविशिष्टाज्ञानस्य जाग्रत्कालेनानुभवसंभवः। वृत्तिरूपतादृशावस्थायास्तदानीं नाशेन साक्षितादात्म्यासंभवात्। तस्य सुषुप्तावेवानुभवो जाग्रत्काले तु स्मरणमेव। एवमहमर्थस्य ज्ञानविरोधित्वांशस्य च जाग्रत्काले विद्यमानत्वेन तदंशस्यापि तदानीमनुभव एवेति विवरणानुसारिणो मतम्। वार्तिकानुसारिणस्तु सुषुप्तिमात्रगता काऽप्यविद्यावृत्तिर्नास्ति जाग्रत्सुषुप्तिसाधारणी वृत्तिस्त्वस्ति तद्विशिष्टचैतन्यरूपसाक्षिज्ञानमनुभव एव जाग्रद्दशायामपि नावेदिषमित्याकारकः। यद्वा नास्त्येव वृत्तिरविद्याविशिष्टचैतन्यरूप एव साक्ष्यनुभवः। सचैक एव जाग्रत्सुषुप्त्यवस्थयोः सविकल्पकोऽन्तःकरणरूपकार्योपाधिविलयसंस्कृताज्ञानस्वरूपात्मकसुषुप्तिमपि गोचरयति। सुषुप्तेर्विशिष्टरूपाया अतीतत्वेन तन्निबन्धन एवातीतनिर्देशो नाज्ञासिषमिति सर्वथैव सुषुप्तिकालिकत्वेन गृहीतमज्ञानं ज्ञानाभावस्य तदनुमापकमिति सिद्ध्यत्येव। अथ स्मरणपक्षे कुतो न तत्तोल्लेख इति चेदनुभवे साक्षिरूपे सुषुप्तिकालीनेऽज्ञानतदवस्थाविशेषरूपसुषुप्तिमात्रग्राहिणि तद्देशतत्कालसंबन्धस्याभानेन तत्संबन्धरूपतत्त्वस्य स्मृतावभानोपपत्तेः। प्रमुष्टतत्ताकस्यापि स्मरणस्य तत्र तत्र प्रदर्शितत्वात्। ननु यद्यज्ञानस्वरूपमात्रस्य सुषुप्तौ साक्षिणा ग्रहणं तदा ज्ञानाभावस्वरूपमात्रस्यैवास्तु तत्र ग्रहणमिति चेन्न। अभावस्य साक्षिभास्यत्वाभावस्य प्रागुपपादितत्वात् अनुपलब्धेस्तु प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानसहकारेणैवाभावग्राहकत्वात्तस्य सुषुप्तावसंभवात्। क्लृप्ता भावज्ञानसामग्री विलक्षणसामग्रीस्वीकारे क्लृप्ताभावविलक्षणस्यैव तज्जन्यज्ञानविषयस्योचितत्वात् निर्विकल्पविषयस्य भावत्वस्यैवोचितत्वाच्च। तथाप्यभावत्वोपगमे तस्य परिभाषामात्रत्वापत्तेरिति अनुमानमप्यस्ति मानमविद्यायाम्। तथाहि विवादपदं प्रमाणज्ञानम्। स्वप्रागभावातिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकमप्रकाशितार्थप्रकाशकत्वात्। अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति। अत्राज्ञातस्य सुखादेरङ्गीकारेण सुखादिगोचरसाक्षिज्ञानस्य तादृशवस्त्वन्तरपूर्वकत्वाभावाद्बाधवारणाय प्रमाणमिति। इदंत्वावच्छिन्ने भ्रमसंशयादर्शनात्तत्राज्ञानकल्पने मानाभावादिदमिति प्रमाणज्ञाने बाधवारणाय विवादपदमिति। विशेषधर्मप्रकारकमित्यर्थः। एतावन्तं कालं न ज्ञातमिदमिदानीं ज्ञातमित्यनुभवाद्यदीदमंशेऽप्यज्ञानमुपेयते तदा तन्न देयम्। तस्य भ्रमानुपादानत्वेऽपि तदुपादानत्वयोग्यतयाऽज्ञानसामान्यलक्षणाक्रान्तत्वम्। प्रतिकर्मव्यवस्थामुपगम्याज्ञानभेदमुररीकृत्येदमनुमानं बोध्यम्। स्वविषयेऽस्ति प्रकाश इति व्यवहारस्य विरोधित्वं स्वविषयावरणत्वं तच्च ज्ञानप्रागभावेऽप्यस्तीति तेनार्थान्तरवारणायातिरिक्तान्तम्। प्रागभावनिवृत्तेः प्रतियोगिसाध्यायाः प्रतियोग्यतिरिक्तायाः स्वीकारेण प्रागभावस्य स्वनिवर्त्यत्वानपायात्तेन वारणासंभवात् प्रागभावत्वमनुयोगिताविशेषः। तेन प्रागित्यस्य न निष्प्रयोजनत्वशङ्का। तज्ज्ञानजनकस्य विषयान्तरज्ञानप्रतिबन्धकस्य कार्यनाश्यस्यादृष्टस्य वारणाय स्वविषयावरणेति। तस्य विषयान्तरावरणत्वेऽपि स्वविषयानावरणत्वाद्वारणम्। नच स्वसमानविषयकज्ञानान्तरप्रतिबन्धकेन स्वजनकादृष्टेन तथाप्यर्थान्तरमिति वाच्यम्। प्रदीपप्रभारूपदृष्टान्तस्य स्वविषयाप्रसिद्ध्या स्वविषयविषयकनिरुक्तव्यवहारप्रतिबन्धकत्वस्य निवेशयितुमशक्यतया स्वप्रयुक्ततादृशव्यवहारप्रतिबन्धकत्वस्यैव निवेश्यतया ज्ञानान्तरद्वारा तज्जन्यतादृशव्यवहारप्रतिबन्धकत्वेऽपि तद्व्यवहारस्य स्वप्रयुक्तत्वाभावात्तद्दोषवारणात् तज्ज्ञानप्रतिबन्धकादृष्टमादायार्थान्तरवारणाय स्वनिवर्त्येति। चरमतत्त्वसाक्षात्कारप्रतिबन्धकादृष्टस्य तत्पूर्वमेव निवृत्तत्वेऽपि कारणात्मना स्थितस्य तत्त्वज्ञानेनैव निवृत्तेर्मिथ्यात्वं स्वरूपेण तत्त्वज्ञानानिवर्त्यत्वात्स्वरूपेण ज्ञाननिवर्त्यत्वस्यैव च साध्यकुक्षौ प्रवेशादर्थान्तरप्रसङ्गानापादकत्वं च विषयगताज्ञातत्वेनार्थान्तरवारणाय स्वदेशगतेति। ज्ञानविषयत्वस्याभावोऽज्ञातत्वमुत्पत्तिविनाशशाली ज्ञाननिवर्त्यः संभवतीत्यभिप्रायेणेदम्। यद्यदि तादात्म्येन ज्ञानाश्रये चित्यधिष्ठाने तादात्म्येनाश्रितत्वं ज्ञानविषयत्वाभावस्यास्त्येव तस्यापि कल्पितत्वेन चिदधिष्ठानत्वात्। तथापि स्वाश्रयनिष्ठस्वाश्रयतानवच्छेदकदेशानवच्छिन्नाश्रयताकत्वरूपं तदज्ञान एवास्ति। ननु ज्ञानविषयत्वाभावेऽसत्त्वापादकाज्ञानस्य तन्निवर्तकपरोक्षवृत्तेश्चान्तःकरणावच्छिन्नचिद्रूपे प्रमातरि सत्त्वेनोभयाश्रयत्वस्यान्तःकरणेनैवावच्छिन्नत्वात् तथात्वमन्यावच्छेदेन वृत्त्यज्ञानयोर्वर्तमानयोरविरोधेन नाश्यनाशकभावासंभवात्। अभानापादकाज्ञानस्यापरोक्षवृत्तेश्चान्तःकरणस्य चक्षुरादिद्वारा विषयदेशप्राप्तौ विषयरूपैकदेशावच्छिन्नचिन्निष्ठाश्रयताकत्वात्तथात्वम्। शुद्धचिन्निष्ठमूलाज्ञानाश्रयत्वस्यानवच्छिन्नतयैव ज्ञानाश्रयतानवच्छेदकानवच्छिन्नत्वमस्तीति न साध्याप्रसिद्धिः। एतेनाज्ञानस्य शुद्धा चिदेवाश्रयः स्वोपहिता चिदेव वान्तःकरणतत्परिणामस्य चाज्ञानोपहिताश्रयः स्वोपहिता वेति कथं वृत्त्यज्ञानयोरेकाश्रयकत्वमिति निरस्तम्। उपहिताश्रयकस्योपधेयाश्रयकत्वाच्च कर्णशष्कुल्यवच्छिन्नाकाशाश्रितशब्दस्य शुद्धाकाशाश्रितत्ववत्। ज्ञानविषयत्वाभावस्य तु विषयगतस्य न तथात्वमहमज्ञो घटं न जानामीत्यज्ञानवज्ज्ञानाश्रयप्रमात्राश्रितत्वेनानुभवविरहात्। घटो न ज्ञातो ज्ञानविषयत्वाभाववान् घट इत्येवानुभावात्। विषयावच्छिन्नचिद्गतत्वस्यापि विषयपरिणामत्वाभावेन कल्पयितुमशक्यत्वादपरोक्षवृत्त्या सहापि विषयदेशे समानाश्रयकत्वासंभवात् कल्पितत्वेऽपि तस्याज्ञानाश्रये चितिनावश्यं वृत्त्यवच्छेदकान्तःकरणविषयाद्यवच्छेदेनैवाश्रयत्वं तज्ज्ञानविरोधिवृत्तितज्ज्ञानविषयतानवच्छेदकधर्मावच्छेदेनापि तदाश्रयत्वात्तस्य

प्रकृतवृत्त्यनवच्छेदकत्वात् तमसस्तु चाक्षुषादिवृत्त्यविषयातीन्द्रियविषयावच्छिन्नेऽपि चिति सत्त्वेन तमसोतथात्वादनेनैव तद्वारणात्तम आदायार्थान्तराप्रसक्तेस्तद्वारणाय न स्वनिवर्त्यत्वस्य सार्थकतेति । प्रागभावत्वस्याखण्डत्वाभावपक्षे ज्ञानाभावत्वापेक्षयाऽज्ञानत्वस्याखण्डस्य लाघवेन प्रतिबन्धकत्वावच्छेदकत्वस्योचिततत्वेनाभावस्यानावरणत्वात्प्रागभावातिरिक्तेति व्यर्थं स्यादिति स्वप्रागभावातिरिक्तत्वस्वविषयावरणत्वान्यतरघटितं साध्यद्वये तात्पर्यं बोध्यम् । ननु पक्षदृष्टान्तसाधारणस्यैकस्य प्रकाशत्वस्याभावेनेदमसंगतमिति चेन्न । न प्रकाशत इति व्यवहारगोचरत्वलक्षणाप्रकाशितत्ववान्योऽर्थस्तद्गोचरस्याप्रकाशितार्थः प्रकाशत इति व्यवहारस्य प्रयोजकत्वे सति प्रकाशशब्दवाच्यत्वस्य हेतुत्वसंभवात् । अज्ञानेन तमसा च न प्रकाशत इत्याकारकव्यवहारगोचरार्थस्यायमिदानीं प्रकाशत इति व्यवहारस्य प्रयोजकत्वस्याज्ञाननाशद्वारा ज्ञाने तमोनाशद्वारा चालोके सत्त्वात्प्रकाशपदवाच्यत्वस्याप्युभयत्र सत्त्वाच्चानुपपत्त्यभावात् । भ्रमविषयस्य ज्ञातैकसत्त्वेन तत्राज्ञानाभावेन रजताकारवृत्तौ साध्याभावेऽपि रजतस्य प्रकाशकालमात्रसतोऽप्रकाशितत्वविरहेणाप्रकाशितार्थगोचरत्वघटितहेत्वभावेन न व्यभिचारसंभव इति । अत्रानुकूलतर्कश्च त्वदुक्तमर्थं न जानामीत्यादिप्रतीत्यन्यथानुपपत्तिः प्रागुक्तोऽनुसंधेयः । इत्थं च गोशब्दवाच्यत्वादिना पृथिव्यादौ शृङ्गित्वानुमानसाम्यापादनं चानुकूलतर्काभाववत उक्तानुमानात्तस्य ततो वैषम्यान्निरस्तम् । ननूक्ताज्ञानानुमितिर्यदि प्रमाणज्ञानं तदा तत्रैव पक्षतावच्छेदकाश्रये साध्यहेत्वोरभावादुक्तानुमानस्याभासत्वम् । अज्ञानस्याज्ञानाविषयत्वात्सदैव साक्षिणा प्रकाशितत्वाच्च यदि न प्रमाणज्ञानं कथं ततोऽर्थसिद्धिरिति चेन्न । अज्ञानस्य स्वरूपतः साक्षिभास्यत्वेऽपि भावत्वादिना चातथात्वादज्ञानविषयत्वाप्रकाशितत्वयोः संभवात् । अतएव भावत्वादिना तत्र संदेहविवादादिकमुपपद्यत इति । अथानादिभावत्वादिकं न निवर्त्यनिष्ठमनादिभावमात्रनिष्ठत्वादात्मत्ववत् निवर्त्यत्वं वा नानादिभावनिष्ठं निवर्त्यमात्रनिष्ठत्वात् घटत्वप्रागभावत्वादिवत् । प्रमाणज्ञानमभावान्यानाद्यनिवर्तकं ज्ञानत्वात् भ्रमवदित्याद्यनुमानैः सत्प्रतिपक्षतेति चेन्न । उक्तानुमानानामनुकूलतर्करहितत्वेनाप्रयोजकत्वात् अनादिभावत्वस्य निवर्त्यावृत्तित्वेऽप्यविद्याया भावविलक्षणाया निवर्त्यत्वे क्षत्यभावात् । अनाद्यभावविलक्षणत्वं पक्षीकृत्य निवर्त्यावृत्तित्वस्यानाद्यभावविलक्षणमात्रवृत्तित्वेन साधने चानाश्रितमात्रवृत्तित्वस्योपाधित्वात् ध्वंसस्यापि निवृत्त्युपगमेन ध्वंसत्वे साध्याव्यापकत्वस्य शङ्कितुमप्यशक्यत्वात् साधनावच्छिन्नसाध्यव्यापकत्वाच्च नाशकसामग्रीरहितवृत्तित्वस्य साध्यप्रयोजकत्वेनोपाधित्वाच्च । द्वितीयेऽप्यविद्याया भावविलक्षणत्वे निवर्त्यत्वस्यानादिभावावृत्तित्वेऽपि क्षत्यभावात् । अनाद्यभावविलक्षणावृत्तित्वस्यैव निवर्त्यमात्रवृत्तित्वेन निवर्त्यत्वे साधने सकलनिवर्त्यावृत्तित्वस्योपाधित्वात् । मां प्रति प्रयुक्तानुमानस्य मां प्रत्येवादुष्टत्वस्यापेक्षिततत्वेन नाशसामग्रीमत्त्वे मन्मते साध्योपाध्योरभावनिश्चयेनोपाधिव्यभिचारस्योक्तसामग्रीमत्वान्तर्भावेण साध्ये शङ्कितुमशक्यत्वात् । घटत्वादौ साध्याव्यापकत्ववारणाय सकलेति । तथाच घटत्वे निवर्त्यवृत्तित्वेऽपि सकलनिवर्त्यवृत्तित्वविरहेण न तत्रोपाधेः साध्याव्यापकत्वमिति । नच साध्यस्योपाध्यप्रयोज्यत्वान्नायमुपाधिरिति वाच्यम् । समव्याप्तत्वस्यानपेक्षिततत्वात् । सामग्रीरहितावृत्तित्वस्य तादृशस्य संभवाच्च । एवमितरेष्वप्यनुमानेषु यथासंभवमप्रयोजकत्वोपाधिमत्वादिकमनुसंधेयम् । चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका प्रमात्वात् मैत्रप्रमावदिति । विमता प्रमा प्रमाप्रागभावातिरिक्तानादिनिर्वर्तिका कार्यत्वात् घटवत् ज्ञानत्वाद्वा भ्रमवदिति । जन्यज्ञानमभावत्वानधिकरणस्वविरोधिसमानाधिकरणं प्रयत्नान्यत्वे सति सविषयत्वे सत्यनित्यत्वादनित्येच्छावत् निवृत्तेः प्रयत्नाभावरूपत्वे प्रयत्ने व्यभिचारवारणाय प्रयत्नान्यत्वे सतीति निवृत्तेर्द्वेषरूपत्वे तु नोपादेयम् । घटादौ व्यभिचारवारणाय सविषयकत्वे सतीति नित्यज्ञाने व्यभिचारवारणाय विशेष्यम् । स्वविरोधित्वं च स्वनाश्यत्वस्वप्रतिबध्यत्वान्यतरवत्वे सति स्वसमानविषयकत्वम् । द्वेषस्येच्छानाश्यत्वाभावात् प्रतिबध्यत्वप्रवेशः स्वविशेष्यधर्मिकस्वप्रकाराभावप्रकारकज्ञानमादाय सिद्धसाधनवारणाय स्वसमानविषयकेति । इच्छादौ द्वेषमादाय प्रसिद्धस्य साध्यस्य पक्षे सिद्धौ तादृशाज्ञानमादायैव पर्यवसानम् । यद्यपि प्रागभावस्यापि स्वसमानविषयकत्वादेव वारणं तथापि स्वविरोधिस्वसमानविषयकं भावरूपमभावविलक्षणं वेति सूचयितुमभावत्वानधिकरणेति । यद्वा स्वप्रकाराभावतद्व्यापकाभावान्यतरविषयकत्वसंबन्धावच्छिन्नस्वाभाववत्वं विवक्षितं प्रागभावस्यापि तथात्वात्तद्वारणाय तदिति । तथाऽनाद्यभावविलक्षणत्वं ज्ञानविरोधिवृत्त्यनाद्यभावविलक्षणमात्रवृत्तित्वादभिधेयत्ववदत्रापि स्वाभाववत्वं विरोधिविशेषणमुपादेयमेवान्यथोक्तसिद्धसाधनावारणात् । मात्रपदमशेषार्थकं नेतरव्यावर्तकं तेनाभिधेयत्वे न हेत्वप्रसिद्धिरनुकूलतर्कश्चोक्त एवेत्याद्यनुमानप्रक्रियान्यत्र विस्तृतेत्युपरम्यते । अविद्यायामर्थापत्तिरपि मानम् । तथाहि श्रुत्यादिप्रमितब्रह्माभेदस्य जीवस्यानवच्छिन्नस्वप्रकाशचिद्रूपब्रह्मस्वरूपानन्दाप्रकाशस्य तादृशानन्दस्यानावृतत्वं विनानुपपद्यमानतयाऽविद्यारूपावरणकल्पकत्वमावश्यकम् । चित्त्वानन्दत्वाभ्यामविद्याकल्पितभेदस्य यावदज्ञानमनुवृत्तत्वेन चित्सद्रूपेण सततं प्रकाशमानस्यापि तादृशानन्दस्वरूपेणाप्रकाशमानत्वोपपत्तेः घटप्रकाशे तदात्मना प्रकाशमानस्यापि पटभेदस्य पटभेदत्वेनाप्रकाशमानत्ववदिति । एवं शुक्तिरूप्यादीनां भ्रमसमकालमुत्पत्त्यादेर्व्यवस्थापितत्वेन तत्र प्रमाणव्यापारासंभवात्तत्त एव बहिरर्थेष्वस्वतन्त्रस्य मनसस्तत्र ज्ञानाजनकत्वाच्च शुक्तिरूप्यादिविभ्रमान्यथानुपपत्त्या तत्परिणाम्युपादानत्वेनाप्यज्ञानकल्पनमावश्यकम् । ब्रह्मणः परिणाम्युपादानत्वे तदात्मना विनाशापत्त्या कूटस्थत्वादिश्रुतिविरोधात् । ब्रह्मणो विवर्तोपादानत्वसंभवेऽप्यतात्त्विकान्यथाभावरूपविवर्तत्वस्याविद्यां विना स्वीकर्तुमशक्यत्वात् । अधिष्ठानत्वे च ब्राह्मणः परिणाम्युपादानत्व इव बाधक-

स्वाभावेन ब्रह्मातिरिक्तोपादानवत्तदतिरिक्ताधिष्ठानकल्पनाप्रसङ्गस्यानवकाशात् । नच सांख्याभिमतप्रकृतेरुपादानत्वमस्त्विति वाच्यम् । तस्या अनिर्वचनीयत्वे सैव मायेतीष्टापत्तेः । निर्वाच्यता तु न संभवति । तथाहि तस्याश्चेतनाद्भेदे निर्णीतस्वतःप्रामाण्यतात्पर्यवच्छ्रुतिशतबोधितयुक्तिसिद्धाद्वैतहानिरभेदे जडत्वानुपपत्तिः । भेदाभेदयोश्च वास्तविकयोर्विरुद्धयोरेकत्र सत्त्वानुपपत्तिः सत्त्वेऽपि सतो ब्रह्मणो भेदेऽद्वैतहानिः सत्यास्तस्याः संसारजननस्वरूपयोग्याया निवृत्त्यसंभवेन नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमादनिर्मोक्षप्रसङ्गश्च । असत्त्वे शशशृङ्गवदुपादानत्वानुपपत्तिः । सावयवत्वेऽनादित्वव्याघातो निरवयवत्वे ब्रह्मवत्परिणामित्वाप्रसक्तिः । नच सत्त्वरजस्तमसां तदवयवत्वं तेषां तद्गुणत्वात् तत्संघातमात्रस्य प्रकृतित्वे समूहित्वलक्षणावयवत्वस्य परिणामित्वाप्रयोजकत्वतादवस्थ्यात् । नचाविद्यापक्षेऽप्ययं दोषः । तस्याः काल्पनिकत्वेन यथादृष्टोपपत्तिकल्पनादनुपपत्तेस्तत्र भूषणत्वादिति । श्रुतिरप्यविद्यायां मानम् । तथाहि 'सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन प्रत्यूढा' इति ब्रह्मवेदनप्रतिबन्धकत्वेनानृतं वदन्ती ब्रह्मावरकमज्ञानमेवाह श्रुतिः नचानृतं पापमेव ज्ञानप्रतिबन्धकत्वेन दर्शयति । ऋतं सत्यं तथा धर्म इत्यनेन ऋतशब्दस्य धर्मवाचकत्वग्रहादिति वाच्यम् । सुषुप्त्यवस्थामधिकृत्य प्रवृत्तेयं श्रुतिरिति तदान्तःकरणस्यैवाभावेन तदाश्रितपापस्य सुतरामसंभवेन तस्य प्रतिबन्धकत्वासंभवात् । तस्मादनृतशब्देन सत्यभिन्नस्वरूपेणाज्ञानमेव प्रतिपादयति । नहि पापादिकं प्रधानं वा भवतामसत्यमभिमतम् । 'भूयश्चान्ते विश्वमायानिवृत्ति'रितिश्रुत्या ज्ञाननिवर्त्यमपि तदेवावरणं मायाशब्दितं प्रतिपाद्यते । नहि पापादिकं साक्षाज्ज्ञाननिवर्त्यं प्रसिद्धम् । किंच पापस्य दुःखभोगहेतोः पुण्यस्य सुखभोगहेतोः मिथ्याज्ञानजन्यसंस्कारस्य च निरतिशयानन्दब्रह्मस्वरूपगोचरेऽस्तिभातीति व्यवहारे विनिगमनाविरहेण प्रतिबन्धकत्वापेक्षया क्लृप्ते विनिगमनाविरहे कल्प्यमन्यत्सिध्यतीति न्यायेनाज्ञानं सिध्यति । नचाज्ञानेऽपि स दोषः । तदानीं कल्प्यस्यानुपस्थितत्वेन तेन सह विनिगमनाविरहस्याप्रसक्तेः । उपस्थितं च हि तत्प्रतिबन्धकत्वेन तत्त्वं च परिहृतविनिगमनाविरहतयैवेति । नच मायाऽज्ञानात्पृथगेवान्यथा मायिनः परमेश्वरस्याज्ञत्वापत्तिरिति वाच्यम् । 'एवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती'तिश्रुत्या तयोरैक्यप्रतिपादनात् शुद्धसत्त्वप्राधान्येन मायात्वस्य मलिनसत्त्वप्राधान्येनाविद्यात्वस्य तत्रैव कल्पनादुभयोरौपाधिकभेदाभ्युपगमात् । एतदभिप्रायेणैव 'मायिनं तु महेश्वर'मित्युक्तम् । स्वयमित्युक्त्या व्यक्त्यैक्यलाभात् स्वरूपभेदस्य वक्तुमशक्यत्वात् । अथवा विक्षेपशक्तिप्राधान्येन मायात्वमावरणशक्तिप्राधान्येनाविद्यात्वमिति ताभ्यामेवोपाधिभ्यां भेदोपगमादीशस्य हि मायित्वं सर्वज्ञत्वं सर्वकारणत्वं च जीवस्याज्ञत्वमसर्वज्ञत्वं कतिपयकार्यजनकत्वं चोपेयते । नचैकमेव सत्त्वं कथमेकदैव शुद्धं मलिनं च प्रधानमप्रधानं च संभवतीति वाच्यम् । यथैकपुरुषंप्रति मन्त्रविशेषप्रतिबद्धशक्तेर्हुताशनस्यादाहकत्वमन्यंप्रति च दाहकत्वं तथैव जीवेशयोरप्यनादितयैव कल्पितत्वेनेश्वरंप्रति सत्त्वेन कार्ये जननीये तमसो ग्राहकत्वमात्रधर्मावच्छिन्नतया प्रवर्तकत्वमात्रावच्छिन्नतया च रजःसहकारित्वं सर्वत्रैव विषये चानावरकत्वादिकमिति तमोरजोभ्यामीशं प्रति सत्त्वस्यानभिभूतत्वात्स्वीयाखिलकार्यकारित्वाद्विशुद्धत्वं प्राधान्यं च जीवंप्रति तद्विपरीतत्वादशुद्धत्वमप्रधानत्वं चोच्यते । तथैव कल्पितत्वात् । यद्यथा कल्प्यते तत्तथैव कल्पितकार्यकारि कार्यस्यापि कल्पितत्वात् । उक्तभेदाभेदाविद्यास्वरूपादीनामपारमार्थिकत्वेन विरोधलेशाभावात् । अविद्यामायास्वरूपभेदपक्षे च दोषलेशस्याप्यसंभवात् । मायां प्रति बिम्बत्वस्येश्वरोपाधित्वात्प्रतिबिम्बत्वस्य जीवोपाधित्वादुपाधेः प्रतिबिम्बपक्षपातित्वेन तं प्रत्येवावरकत्वादित्वेनेश्वरस्य न सार्वज्ञ्यादिहानिरिति वा बोध्यम् । यत्तु 'तमआसी'दिति श्रुतिरेव तमसोऽज्ञानस्य सत्त्वं प्रतिपादयतीति कथमनृतत्वमिति । तन्न । 'नासदासीन्नो सदासीदि'ति श्रुत्यैव तुच्छत्वपारमार्थिकसत्त्वयोर्निषेधादुक्तश्रुतेर्व्यावहारिकसत्त्वपरत्वात् । एव 'मनीशया शोचति मुह्यमान' इति श्रुत्यानीशयेश्वरभेदेन शोचति संसरति मुह्यमानो मोहपदार्थाज्ञानविशिष्ट इत्यर्थकयोर्द्देश्यविधेयभावमहिम्ना जीवेशभेदस्य मोहप्रयोज्यत्वलाभात् । 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । भवत्यभेदो भेदश्च तस्याज्ञानकृतो भवेदि'ति पद्मपुराणे भेदस्याज्ञानप्रयोज्यतायाः स्पष्टमभिधानाच्च तत्त्वस्य पापप्रधानादावसंभवा'दजामेका'मित्यादौ त्रिगुणाया मायायाः सरूपजगत्कारणत्वस्योपादानत्वपर्यन्तस्य प्रतिपादनेन तत्त्वस्यापि पापादावसंभवात् 'नीहारेण प्रावृता'इत्यादावावरकत्वे नीहारसदृशत्वस्य प्रतिपादनात्कर्मादिव्यतिरिक्तमज्ञानमेव 'अनृतेन प्रत्यूढा' इत्यत्रानृतशब्देन प्रतिपाद्यत इति । साचेयमविद्याऽविद्यारूपदोषप्रयुक्तया समाधिप्रयोजकमाहात्म्यात्समाधावनुत्पन्नया स्वाकारया स्वतःप्रकाशमानया वृत्त्योपहितेन चैतन्येन साक्षिणा गृह्यते । न शुद्धचैतन्येन निर्दोषेण न प्रमाणवृत्त्या च निर्दोषचित्प्रकाश्यत्वे पारमार्थिकत्वापत्तेः । प्रमाणग्राह्यत्वे सुषुप्तौ सर्वप्रमाणोपरमे तदभानापत्तेः । तत्र भानोपपादकेन जाग्रत्यपि तद्भानोपपत्तौ तत्र प्रमाणव्यापारकल्पनाया अनौचित्यात् । समाधावभानोपपत्तये नावेदिषमिति स्मरणप्रयोजकवृत्तिनाशाधेयसंस्कारोपपत्तये च चरमतत्त्वसाक्षात्कारातिरिक्तानाश्याविद्योपहितचिद्रूपस्याविद्यासाक्षित्वस्य त्याज्यत्वात् न च प्रमाणाग्राह्यत्वेऽविद्यायां प्रमाणोपन्यासवैफल्यमिति वाच्यम् । साक्षिणस्तत्स्वरूपमात्रस्य स्वतोग्राहकत्वादसद्व्यावृत्ततया ग्रहणाय तदुपनायकत्वेन प्रमाणापेक्षाया आवश्यकत्वात् । नच तयैव चैतन्यस्यावृतत्वात्कथं तत्प्रकाश इति वाच्यम् । राहुणावृत्ते चन्द्रमस्यन्याप्रकाशेऽपि राहुप्रकाशवदविद्याप्रकाशोपपत्तेरिति 'आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवले'ति संक्षेपशारीरकानुसारात् शुद्धस्य ब्रह्मण एवाविद्याश्रयत्वम् न तत्कल्पितस्य

जीवस्य तस्याश्रयत्वे तदाश्रिताविद्यया तत्कल्पने जीवत्वम् । कल्पिते च जीवत्वे तस्या जीवाश्रितत्वं निराश्रयस्य हि वस्तुनो न किंचित्करत्वमित्यन्योन्याश्रयापातात् । नच शुद्धस्यैवाज्ञानाश्रयत्वे 'मायिनं तु महेश्वर'मित्यस्यानुपपत्तिरीशस्यापि कल्पितत्वादिति वाच्यम् । मायिना तदुपाधिकबिम्बत्वरूपसंबन्धविशेषस्यैव बोधनात् धनस्वामिन्येव धनीत्यादिप्रत्ययात्स्वामित्वादिसंबन्धविशेषवत् । नचैवं जीवस्याज्ञत्वव्यवहारानापत्तिरिति वाच्यम् । अविद्याजीवयोरेकत्र शुद्धेऽध्यस्तत्वेनाविद्याश्रयतत्तादात्म्यादेवायो दहतीतिवदहमज्ञ इति प्रतीतिव्यवहारयोरुपपत्तेः । ईश्वरस्य तादृशतादात्म्येऽपि तत्राज्ञानकृत्यावरणतत्प्रयुक्तभ्रमाद्यभावादज्ञ इति व्यवहारविरहाच्च जातेर्व्यापकत्वपक्षे व्यक्तिभिन्नेन संबन्धस्य गौरित्यादिप्रतीतिव्यवहाराप्रयोजकत्ववत्तस्य तादृशप्रतीतिव्यवहारप्रयोजकत्वाकल्पनात् । एवमेव शुद्धेऽपि न तद्व्यवहारः । ईश्वरे कुतो नावरणादिकमिति चेत्तस्याविद्यारूपोपाधिप्रयुक्तबिम्बत्वाश्रयत्वादुपाधेः प्रतिबिम्बपक्षपातित्वात् प्रतिबिम्ब एव बिम्बातिशयितप्रतिनियतकतिपयकार्यकारित्वात् बिम्बं विहाय प्रतिबिम्ब एव जलदर्पणाद्युपाधेर्मालिन्यकम्पाद्युपधायकत्ववत् । बिम्बभूतेश्वरं विहाय प्रतिबिम्बे जीव एवासर्वज्ञत्वाज्ञत्वावरणकर्तृत्वभोक्तृत्वाद्युपधायकत्वात् । तादृशकार्योपधायकत्वरूपेणैवाविद्याया दोषत्वबन्धत्वाद्याश्रयतया शुद्धेश्वरयोस्तादृशकार्याभावेन तस्यास्ताद्रूप्याभावान्निरवद्यत्वनित्यमुक्तत्वादिबोधकस्य 'निरनिष्टो निरवद्यः शोकं मोहमत्येति नित्यमुक्त' इत्यागमस्य न विरोधः । प्रतिबिम्बपक्षपातित्वाभ्युपगमेन बिम्बे कस्यापि धर्मस्य नाधायकत्वमित्यस्यानुपगतत्वाच्च बिम्बत्वसर्वज्ञत्वादेरौपाधिकस्य बिम्बेऽपि न व्याघातः । अथ ज्ञातुरर्थाप्रकाशस्याज्ञानत्वोक्तेर्ज्ञातृत्वोपहित एवाज्ञानमुचितमिति चेन्न । अज्ञानानाश्रितत्वस्याविद्यकेऽसंभवात्प्रसक्तप्रकाशत्वस्य चाप्यसंभवात्तदुभयोरेव चाज्ञानाश्रयत्वनियामकत्वाच्छुद्ध एव ह्यज्ञानाश्रयत्वं ज्ञातृत्वं चाविद्योपधानेनैवेति यद्यप्यस्ति तथापि ज्ञातृत्वाश्रयोपहितघटकोपधेयांशस्याविद्याश्रयस्य च वस्तुत एकतया विद्याश्रयत्वस्य ज्ञातृत्वसामानाधिकरण्योपपत्तेर्ज्ञातुरित्यादेरनुपपत्त्यभावात् । अथ रूपवतश्चाक्षुषस्यैवोपाधित्वं दर्पणजलादे रूपवतश्चाक्षुषस्यैव बिम्बत्वं मुखादेर्दृष्टमेवमभिमुखयोरत्यर्थव्यवहितयोरत्यर्थसन्निकृष्टयोश्च प्रतिबिम्बत्वानिरूपकत्वं च दृष्टमिति कथमतादृशाविद्याचैतन्ययोरुपाधित्वबिम्बत्वयोः संभवः । कथं च प्रतिबिम्ब इति चेन्न । रूपहीनस्यापि रूपपरिमाणादेरचाक्षुषस्याप्याकाशादेः प्रतिबिम्बदर्शनेन रूपचाक्षुषत्वादेर्बिम्बत्वाप्रयोजकत्वादव्यापकत्वाच्च । नच रूपवत एव प्रतिबिम्बो न रूपादेरिति वाच्यम् । तथा सति यस्य हि बिम्बस्य कदापि न दर्शनं तस्य दर्पणादौ प्रतिबिंबे रूपपरिमाणादिग्रहणानुभवविरोधः । नच द्रव्यस्य प्रतिबिम्ब एव रूपादिमत्त्वं तन्त्रमिति वाच्यम् । ब्रह्मणो द्रव्यत्वे मानाभावेनास्माकं क्षतिविरहात् आकाशादिप्रतिबिम्बे तथापि व्यभिचारात् किंच रूपवत्त्वं चाक्षुषत्वं च यदि बिम्बत्वप्रयोजकं दर्पणोपाधौ दर्पणान्तरस्य तदतिसदृशस्य प्रतिबिम्बापत्तिः बिम्बत्वव्याप्यं चेत्तत्तदभाववतोऽपि बिम्बत्वे न क्षतिः । यदि व्यापकमात्रं प्रयोजकं तदा प्रयोजकान्तरस्य कस्यचिद्व्यक्तव्यतयाऽनुकूलतर्काभावेन भूयः सहचारदर्शनेऽपि क्वचिद्व्यभिचारशङ्कया पृथिवीत्वलौहलेख्यत्वयोर्वज्रमणौ व्यभिचारादिव व्याप्यव्यापकभावस्यैव गृहीतुमशक्यत्वात् । एतेनाकाशस्य न प्रतिबिम्बमपि तु प्रभामण्डलस्यैवाकाशे च प्रतिबिम्बत्वारोप एव । नच सूक्ष्मतरोपाधौ नीलत्वेन प्रतीयमानविपुलाकाशप्रतीबिम्बानुभवो न कदर्थनीयः । प्रभामण्डलस्य नीलत्वेनागृहीतस्य प्रतिबिम्बत्वाभ्युपगमे नैल्यग्रहणस्यायुक्तत्वादिति वाच्यम् । आकाशप्रतिबिम्बे सिद्धे चाक्षुषद्रव्यत्वादीनामप्रयोजकत्वं तस्याप्रयोजकत्वे चाकाशप्रतिबिम्बसिद्धिरित्यन्योन्याश्रयात् । तथाच चाक्षुषद्रव्यत्वस्य प्रयोजकत्वव्यापकत्वयोः संभवान्न ब्रह्मप्रतिबिम्बसिद्धिरिति निरस्तम् । किंचानुभूयमानाकाशप्रतिबिम्बासिद्धौ चाक्षुषत्वादीनां व्यापकत्वसिद्धिः । तत्सिद्धौ चाकाशादीनामनुभूयमानप्रतिबिम्बासिद्धिरित्यन्योन्याश्रयेण व्यापकत्वस्यापि दुर्ग्रहत्वात् । प्रभामण्डलप्रतिबिम्बत्वस्याकाश आरोपे तस्यारोपितप्रतिबिम्बत्वकतया तत्रैव व्यभिचारात्प्रतिबिम्बे ह्यनारोपितत्वस्य वक्तुमशक्यत्वादप्रयोजकत्वाच्च । एवमेव रूपादिमत्वस्यौपाधिकत्वप्रयोजकत्वे घटादीनां तथात्वापातात् । अप्रयोजकत्वे चानुकूलतर्काभावेन व्यभिचारसंदेहेन व्याप्यव्यापकभावमात्रस्य गृहीतुमशक्यत्वादविद्याया न प्रतिबिम्बोपाधित्वानुपपत्तिः । किंच रूपादिमतोऽपि सर्वस्योपाधित्वादर्शनात्स्वच्छत्वमेव विलक्षणं मरुमरीचिकाजलादिव्यावृत्तं तत्प्रयोजकं वाच्यं । तस्याविद्यायामुपगमेऽपि नास्ति किंचिद्बाधकमेतेन मरीचिकाजलादौ प्रतिबिम्बादर्शनादुपाधेर्बिम्बसमानसत्ताकत्वमवश्यं वाच्यम् । तथाच ब्रह्मप्रतिबिम्बासंभव इति निरस्तम् । एवमुपाध्यन्तरसदृशस्य प्रतिबिम्बादर्शनाद्वैलक्षण्यं बिम्बगतं प्रतिबिम्बगतानि रूपकतावच्छेदकमनुगतं कल्प्यं । तच्च चैतन्यसाधारणमेवास्माभिः कल्प्यते । तथाच न काप्यनुपपत्तिरत्र चोपमा सूर्यकादिवदिति सूत्रं तद्भाष्योदाहृतो ब्रह्मप्रतिबिम्बबोधकश्रुतिकलापश्चानुकूल्यमावहति । तथाच तात्पर्यवच्छ्रुतिप्रमिता लौकिकार्थस्य लोकविरोधेन त्यक्तुमशुक्तत्वात् प्रत्युतालौकिकार्थतया लोकवैलक्षण्यस्यादूषणत्वाद्बिम्बात्यर्थसान्निध्यनीरूपादिकत्वं च न क्षतिकरमित्यलम् । निखिलदर्शनपारावारपारीणवाचस्पतिमिश्रमते च जीवस्यैवाज्ञानाश्रयत्वं तस्यैवाज्ञत्वेन प्रतीतेः जीवस्याज्ञानकल्पितत्वेऽपि नान्योन्याश्रयो जीवाविद्ययोरुभयोरप्यनादित्वेनैव कल्पितत्वेनाविद्याधीनोत्पत्तिकत्वाभावेनोत्पत्तौ चिद्रूपब्रह्माभिन्नस्य जीवस्य स्वतःप्रकाशत्वेनाविद्यायाश्चिद्रूपसाक्षिभास्यत्वेऽपि ज्ञप्तौ जीवस्यैवाविद्याश्रयत्वेन कल्पिततयाऽविद्याश्रितत्वस्य जीवे विरहेण जीवे स्थितौ च तदसंभवादेतन्मते जीवस्यौपाधिकनानात्वेनाविद्यापि तत्तज्जीवाश्रिता तदावरिका नानैव ताः सहकृत्य ब्रह्मैव जगदाकारेण विवर्तते तदेवोपादानं नाविद्या । तथाच तत्तदज्ञाननाशे मुक्तेऽपि तत्तज्जीवे जीवान्तरं प्रति संसारस्याबाधेनावस्थानं

न विरुध्यते । संसारस्य हि कल्पनामात्रत्वेन तद्बीजस्याज्ञानस्य जीवान्तरेऽनुवृत्तेः । नच जडाविद्यानुपादानत्वे जडत्वानुपपत्तिरिति वाच्यम् । तत्तदाकारादिमदुपादानाजन्यत्वेन तत्तदाकारानुपपत्त्या अविद्यायास्तत्तदाकारत्वस्यापत्तेस्तस्मात्तत्तदाकारशालितयेव जडत्वेनापि कल्पिततयैव तत्त्वोपपत्तिरिति बोध्यम् । विषयस्तु तस्याः प्रकाशस्वभावा चिदेव यतः सैवावरणात्मिकाऽविद्या विषयमात्रृणोत्यावरणकृत्यं च प्रकाशरूपे वस्तुनि दृश्यते । यथाऽऽवृत्ते प्रदीपे घटादिप्रकाशके नास्ति न भातीति व्यवहारोऽस्ति भातीति व्यवहाराभावो वावरणकृत्यं तथैव चैतन्येऽविद्ययाऽऽवृत्ते नास्ति न भातीति व्यवहारो वास्ति भातीति व्यवहाराभावो वावरणकृत्यमस्ति । अस्तित्वं च तूलाज्ञानपक्षेऽसत्त्वापादकाज्ञानाभावविशिष्टचित्तादात्म्यम् । भातत्वं चाभानापादकाज्ञानाभावविशिष्टचित्तादात्म्यम् । साक्षिभास्यपदार्थाभावविशिष्टबुद्धौ तादृशपदार्थसत्त्वमेव विरोधीत्यज्ञानसत्त्वदशायामस्तिभातीति न व्यवहारः । प्रमाणवृत्तिमात्रेणासत्त्वापादकाज्ञाने प्रमातृगते घटादिविषयावच्छिन्नचैतन्यविषयके नाशिते सति विषयत्वसंबन्धावच्छिन्नतदभावो भवति घटाद्यवच्छिन्नचिन्निष्ठः । अपरोक्षवृत्त्या च विषयावच्छिन्नचिन्निष्ठया विषयावच्छिन्नचिदाश्रितेऽभानापादकाज्ञाने विनाशिते तदभावोऽपि भवति विषयचिन्निष्ठ इति विरोध्यभावादस्तिभातीति व्यवहारोपपत्तिः । एकाज्ञानपक्षे तूलाज्ञानसमानस्वभावविषयाऽनन्तामूलाज्ञानशक्तिरेवास्ति तदभाव एव प्रवेश्यः । यद्वा प्रमाणवृत्तिसामान्यविषयत्वसमानाधिकरणं यदज्ञानावच्छेदकत्वं तत्तदभाववत्त्वे सति चित्तादात्म्यं सत्त्वम् । भातत्वशरीरे चापरोक्षवृत्तिर्निवेश्या तूलाज्ञानानां शक्तीनां वा तत्तद्विषयावच्छिन्नचिद्विषयकाणां स्वसमानविषयकप्रमाणवृत्त्या विनाशः । मूलाज्ञानस्य तु जगदनुपादानस्य शुद्धचिद्गोचरस्य शुद्धचिद्गोचरतत्त्वमस्यादिवाक्यजन्याखण्डसाक्षात्कारादेव तत्समानविषयकाद्विनाशः । फलबलेन तथैव कल्पनात्तेनाहमाकारवृत्तेश्चिद्विषयत्वेऽपि समानविषयकत्वाभावादविद्यावृत्तित्वाद्वा न तन्नाशकत्वम् । यत्तु विशिष्टविषयकत्वान्न विशेष्यमात्राज्ञाननिवृत्तिरिति । तन्न । दण्डी चैत्र इति ज्ञानादपि चैत्रविषयाज्ञाननिवृत्तिदर्शनात्परं विशेष्यमात्रज्ञानेऽपि विशिष्टगोचराज्ञानस्य न निवृत्तिश्चैत्र इति ज्ञानेऽपि दण्ड्यभेदाज्ञानस्यायमिति ज्ञाने तत्ताविशिष्टाज्ञानस्य नाशादर्शनात् । शुद्धचिति विद्यमानमप्यावरणमज्ञानं स्वकल्पितभेदवत्पूर्णानन्दांशमेवावृणोति न चैतन्यांशम् । तेन संसारदशायामपि सदंशस्य ज्ञानांशस्य च स्फुरणेऽपि न क्षतिः । परिपूर्णानन्दांशास्फुरणस्यैवेष्टत्वात् । एवं ब्रह्मणो निर्विभागत्वेनानन्दांश एवावरणमित्युक्तिरपि न संगच्छत इत्यप्यपास्तम् । अविद्यया भेदकल्पनात् । एवं सदंशस्याधिष्ठानस्यावृतत्वेऽधिष्ठानज्ञानाभावाद्विश्वविभ्रमानुपपत्तिरित्यपि निरस्तम् । तत्रावरणकृत्यानुपगमात् । अद्वितीयानन्दांशस्यावृतत्वादेव च शुक्तित्वस्यावृतत्वेन रजतविभ्रमवद्विश्वविभ्रमोपपत्तिरिति । अविद्यावृत्तिसाक्षिज्ञानादिकं तु नाज्ञानविरोधि तेनाज्ञानावच्छेदकतया विषयज्ञानकालेऽपि त्वदुक्तमर्थं न जानामीत्यादिप्रतीतेर्नानुपपत्तिरिति । विस्तरस्त्वद्वैतसिद्धौ द्रष्टव्यः । अत्रेदं बोध्यम्—वृत्तेश्चिदुपरागार्थत्वपक्षेऽभेदाभिव्यक्त्यर्थत्वपक्षे च मूलाज्ञानमद्वितीयपरमानन्दांशावरकमेकमेव तदावरणाच्च प्रपञ्चसद्वितीयसद्रूपविभ्रमाः समुपपद्यन्ते विषयावच्छिन्नचित्यावरणानावश्यकत्वाच्चावस्थाऽज्ञानानामनभ्युपगमः । अतएवाजामेकामित्येकत्वं श्रुतं मुख्यमिन्द्रोमायाभिरिति बहुवचनं च तच्छक्तिबहुत्वाभिप्रायकम् । जीवस्य व्यापकत्वपक्षेऽपि तस्य प्रपञ्चानुपादानत्वेन प्रपञ्चेन सहाध्यासिकतादात्म्यरूपविषयित्वस्य जीवचैतन्येऽभावाद्विषयप्रकाशकत्वानुपपत्तिः । परिच्छिन्नत्वपक्षे च सर्वथैव विषयासंसृष्टत्वात्सुतरां विषयप्रकाशकत्वासंभव इति चिदुपरागार्थाऽभेदाभिव्यक्त्यर्था वा वृत्तिर्विषयप्रकाशायावश्यकी चिदुपरागश्च चिति विषयप्रकाशकत्वेनाभिमतायां ज्ञातृजीवतादात्म्यापन्नायां विषयस्य प्रकाशप्रयोजकः संबन्धविशेषोऽन्वयव्यतिरेकसिद्धवृत्तिप्रयोज्यत्ववान् । सच विषयविषयिभाव इति केचित् । तथात्वस्यापरोक्षस्थलेऽपि विनैवान्तःकरणनिर्गममैन्द्रियकवृत्त्या संभवेन तन्निर्गमसिद्धान्तभङ्गभीत्या विषयसंयुक्तवृत्तितादात्म्यलक्षणः परम्परासंबन्ध इत्यन्ये । सुखादौ साक्षात्संबन्धेनैवापारोक्ष्यदर्शनात् वृत्तिविषयसंयोगे वृत्त्यवच्छेदेन तदुपादानजीवस्यापि संयोगजो विषयसंयोग इत्यपरे । पक्षयोरनयोर्गुणगुणिनोरभेदे गुणेनापि गुण्याद्यात्मना संयोग उपेयोऽथवा द्वितीयपक्ष एव तस्यावश्यकता प्रथमपक्षे परम्परायाः संबन्धत्वोपगमेन गुणसंबद्धद्रव्यसंयोगघटितपरम्परायाः संबन्धत्वसंभवात् । अन्यैरपि विषयैरुक्तपरम्परासंबन्धसंभवेऽपि फलबलात्तत्तदिन्द्रियग्राह्यतया संप्रतिपन्नैरेव तत्तद्विषयैरुक्तपरम्परासंबन्धस्य भानप्रयोजकत्वान्नान्यस्येत्युपगमान्न चक्षुषा रसादेर्न रसनादिभिर्द्रव्यरूपादेर्ग्रहणप्रसङ्ग इति बोध्यम् । परोक्षस्थले च न वृत्तेश्चिदुपरागाद्यर्थतासंभवो वृत्तेरनिर्गमनात् । किंतु तदाकारत्वमेव तत्तत्कारणविशेषाहिततत्तद्विषयैर्वृत्तेः संबन्धः । स चास्तीति व्यवहारमात्रप्रयोजको भातीति व्यवहारस्यापरोक्षमात्रस्थलीयस्याकाराख्यसंबन्धनिर्वाह्यत्वेन तन्निर्वाहायापरोक्षस्थले चिदुपरागाद्यभ्युपगमः । आकारस्यैव वैलक्षण्याभ्युपगमे साकारवादिविजयभयमिति तस्यानुपेयत्वात् । स्वतःप्रतिबिम्बायोग्ये जडतया भातीति व्यवहारयोग्यप्रकाशानात्मके घटादौ रूपादौ च सत्त्वपरिणामतया स्वच्छान्तःकरणवृत्तिसंश्लिष्टत्वेन भवति । स्वतो भानयोग्यप्रकाशात्मकचित्प्रतिबिम्बश्चिदुपरागः । तेन घटादिरपि भातीति व्यवहारयोग्यश्च भवति । याच विषयचित्सैव जीवचिदुपाध्योरेकदेशस्थत्वादिति जीवस्य ज्ञातृत्वस्यापि निर्वाह इति परे वदन्ति । का चाभेदाभिव्यक्तिरिति चेदाध्यासिकतादात्म्येन विषयित्वेन विषयसंबद्धतया विषयप्रकाशकविषयचिता ज्ञातृजीवचैतन्यस्य यो भेदोऽनभिव्यक्तः इन्द्रियप्रणालिकयान्तःकरणे विषयदेशं प्राप्ते तत्तदुपाध्योरेकदेशस्थत्वेन तत्परिणामभूतवृत्त्या तस्मिन्नभेदेऽभिव्यक्ते भवति जीवस्य घटमहं जानामि साक्षात्करोमि घटो भातीति प्रत्ययो व्यवहारश्चेति वृत्त्या

तादृशप्रत्ययव्यवहारजननयोग्यताऽभेदस्य सैवाभेदाभिव्यक्तिरिति केचित् । विषयावच्छिन्नचितः सदैव विषयसंबद्धतया विषयावभासिकाया जगदुपादानजगद्व्यापकमायारूपेश्वरोपाधेः सर्वत्र विषयदेशे सत्त्वेन तदवच्छिन्नचिद्रूपेश्वराभिन्नतया भवतीश्वरः सदैव सर्वज्ञः । तद्यदि जीवेनाभिव्यक्ताभेदाविषयचित्स्यान्नेश्वरता तस्याः स्यादितीश्वरोऽसर्वज्ञः स्यात्तस्माद्विषयचितो वृत्त्यग्रे प्रतिबिम्बमुपेत्य विषयावभासकचित्प्रतिबिम्बत्वेन विषयावभासकेन तेन प्रतिबिम्बेनैव जीवचैतन्यस्याभेदाभिव्यक्तिरुक्तलक्षणोपेयेत्यन्ये । विषयावच्छिन्नचैतन्येनाभेदाभिव्यक्तावपि तस्य बिम्बत्वोपहितरूपेणेश्वरतया बिम्बत्वोपलक्षितात्मना जीवाभेदाभिव्यक्तावपि नेशजीवसांकर्यमित्यपरे प्राहुः । अथ जीवस्य व्यापकस्य विषयदेशसंसृष्टोपाधिकतया विषयावभासकविषयचैतन्येन सहाभेदादुपाध्योरेकदेशस्थत्वात् सुषुप्ताविवान्तःकरणेन्द्रियव्यापाराभावेऽपि विषयज्ञातृता स्यादतो जीवं प्रत्यावरणं विषयचैतन्य आवश्यकं तदभिभवश्च तत्तदन्तःकरणवृत्त्या यदन्तःकरणवृत्त्या चावरणभङ्गस्तदवच्छेदेन ज्ञातृत्वतदनुभवव्यवहारादय इति वृत्तेरावरणाभिभवार्थत्वपक्ष आवरणे कस्याज्ञानस्य घटमहं न जानामीति घटादितत्तद्विषयकतया घटज्ञानविरोधितया च प्रतीतस्य घटज्ञानान्निवृत्तं घटाज्ञानमिति घटज्ञाननिवर्त्यतयानुभूतस्य च नानात्वमेवोपेयं । तानि चाज्ञानानि मूलाज्ञानावस्थारूपाणि तदभिप्रायकमेव 'इन्द्रोमायाभि'रित्यत्र बहुत्वश्रवणम् । एकामित्येकत्वश्रवणं मूलाज्ञानविषयं बोध्यम् । यत्त्वेकमेव मूलाज्ञानं तत्तद्विषयकत्वावच्छेदेन तत्तद्विषयकज्ञानविरोधित्वनिवर्त्यत्ववदुपेयमिति । तन्न । निष्क्रियस्य ब्रह्मतत्त्वसाक्षात्कारात्प्राक् स्थायिनो भीतभटवदपसरणस्य पटवत्संवेष्टनस्य विनाशस्य च निवर्त्यत्वरूपस्य वक्तुमशक्यात्वात् । यदपि तत्तद्विषयविषयकास्तित्वभातत्वप्रत्ययव्यवहारौ प्रति तत्तद्विषयकवृत्तिविरहविशिष्टाज्ञानत्वेन प्रतिबन्धकत्वमावरकत्वं तदभाव एव तत्तद्विषयकत्वावच्छेदेन तत्तद्विषयकवृत्तिनिवर्त्यत्वमित्युपेयते । तथाच नाज्ञानभेदोपगम इति । तदपि शक्तिपदार्थोपगन्तॄणां मीमांसकवद्वेदान्तिनां न शोभते । तेषामभावस्य कारणतदवच्छेदकत्वयोरनुपगमात् आवश्यके चावस्थारूपनानाऽज्ञाने सति यथा निद्राजाग्रत्प्रपञ्चजीवावावृत्य स्वाप्नप्रपञ्चजीवौ विक्षिपन्त्यज्ञानावस्थारूपा तत्तज्जीवप्रतिनियता सादिस्तथा तत्तज्जीवंप्रत्यावरणात्मिका तत्तद्विषयविषयिणी तत्तद्विषयवृत्तौ निवृत्ता वृत्त्यपगमे पुनरुद्भवन्त्यज्ञानावस्थापि सादिरुपेयते । न तत्र काचिदप्यनुपपत्तिः । अज्ञानावस्थाप्यज्ञानत्वादनादिरेव । यद्यपि विषयो घटादिरुत्तरकालिकस्तथापि सूक्ष्मरूपेण प्रागपि तदस्तीति घटाद्यवच्छिन्नस्य चितोनाश्रयत्वाद्यनुपपत्तिः । यद्वा जातिरिवोत्पन्नव्यक्तिं शुद्धाश्रितैव पूर्वं घटाद्युत्पत्तौ तदवच्छिन्नचितमाश्रयतीति पक्षे च । घटाद्येकैकविषयविषयिणी तत्तदवच्छिन्नचिदुपादानकभ्रमतद्विषयोपादानतया तदवच्छिन्नचिदाश्रयावश्यकी चाभानापादिका तत्तदाकारा परोक्षवृत्तिनिवर्त्या, परोक्षवृत्तिनिवर्त्या चासत्त्वापादिका प्रमातृगता चानन्तोपेयते । अथैकया तत्तद्विषयाकारवृत्त्या तत्तद्विषयकाशेषाज्ञाननिवृत्तौ वृत्त्यन्तरस्य वैयर्थ्यमनिवृत्तौ चापरस्यावरकाज्ञानस्य सत्त्वाद्विषयप्रकाशायोगात्तद्वृत्तिवैयर्थ्यमेवमेकान्तःकरणपरिणामवृत्त्याज्ञाननाशे सर्वान्तःकरणावच्छेदेन जीवस्य विषयावभासप्रसङ्ग इति चेदत्र तत्तदन्तःकरणावच्छेदेन ज्ञातृत्वविरहप्रयोजकावरणकारकमज्ञानं भिन्नभिन्नमुपेयम् । तत्तदन्तःकरणवृत्त्या तदवच्छेद्याज्ञातृत्वप्रयोजकावरणकारिणो ज्ञानस्यैव नाशो नान्यस्य । नच चैत्रवस्त्रेण संवेष्टिते घटे तथा तमावृत्तत्वाच्चैत्रो न पश्यत्येवं मैत्रोऽपीत्यन्तःकरणान्तरवृत्तिनाश्याज्ञानसत्त्वे तदन्तःकरणवृत्त्या यत्किंचिदज्ञाननाशेऽपि कथं तदन्तःकरणावच्छेदेनापि विषयभानमिति वाच्यम् । नहि पटवदज्ञानं नाम किमपि मूर्तं विषयाच्छादकं । पटश्च साधारणमावरणमिन्द्रियव्यपारविघटकत्वादिति चैत्रीयपटेनावृते घटे मैत्रस्याप्यदर्शनं युज्यतेऽज्ञानं त्वेकैकं तत्तदन्तःकरणावच्छेदेन तत्तद्विषयज्ञानसत्वभानादिव्यवहारप्रतिबन्धकत्वादावरकमिति तस्य तस्य विनाशात् । सत्त्वाच्च प्रतिबन्धकापगमेनानपगमेन च तत्तदन्तःकरणावच्छेदेन ज्ञातृत्वतदभावयोरुपपत्तिरिति सर्वपक्षे समानम् । एकैकान्तःकरणवृत्तिविनाश्येष्वज्ञानेषु न सर्वमेकदावृणोति वैफल्यादपि त्वेकमेकदेत्येकवृत्त्यैकनाशे जाते च विषयभानादौ वृत्तिनाशे पुनरपरेणावरणं तस्यापि पुनर्वृत्त्यन्तरेण विनाश इति चरमस्य तत्त्वसाक्षात्कारान्मूलाज्ञाननाशे तदवस्थाविशेषत्वाद्विनाशो नह्यवस्थावति विनष्टेवस्थाऽविनष्टा भवतुमर्हतीति केचित् । सर्वमज्ञानं सर्वदावृणोति शक्तत्वाद्विनिगमकाभावाच्च वृत्तौ जातायां किंचिदेकं विनश्यत्यपरं सर्वं तिरस्कृतं भवति । यथा पतताऽशनिना यदुपरि पतितः स नाश्यते तत्रावस्थितश्चापरो व्याकुलीक्रियते । यथावा सौरालोकेन वह्निप्रकाशस्तिरस्क्रियते तथैव ज्ञानाज्ञानयोस्तादृशस्वभावत्वात् तिरस्कारः स्वकार्याक्षमतेत्यपरे । एकमेवाज्ञानं शुद्धविषयावच्छिन्नचिद्विषयकं प्रथमवृत्तिनाश्यं यद्विनाशात्सदैव भवति घटं जानामीत्यपराणि तु तत्तद्देकालविशिष्टविषयावच्छिन्नचिद्विषयकाणि तेषामत्रेदानीं घट इत्याकारकतत्तद्देशकालावस्थाविशिष्टविषयविषयकवृत्त्या नाशः तादृशाज्ञानस्य विनाशान्न कस्याश्चिदपि वृत्तेर्वैफल्यमित्यन्ये तु वदन्ति । नच वेदान्तनयेऽनन्ताज्ञानकल्पनागौरवं तावतां ज्ञानानां तत्प्रागभावानां च कल्पनया नैयायिकानामेव गौरवात् । ममत्वेकस्यैव नित्यस्य ज्ञानस्य सद्भावात् प्रागभावस्यानभ्युपगमात् । नच मम यावन्ति ज्ञानानि तवापि तावन्ति वृत्तिज्ञानानि सन्तीति वाच्यम् । वृत्तिज्ञानानामन्तःकरणावस्थारूपत्वात् । तस्याश्च विषयेन्द्रियसंबन्धे सति तत्संबन्धविशेषरूपाया ज्ञानकारणीभूताया मनसस्तवाप्यभ्युपगमेन तदनधिकाया एव तस्या मनसा सहाभेदवत्या मनःपरिणामभूताया विषयेन्द्रियसंबन्धकारणजाताया मयाप्यभ्युपेतत्वात् । मनसोऽणुत्वानभ्युपगमेन्द्रियेण सह सदैव संयुक्तत्वात् । अपूर्वसंयोगेऽपि वा तद्विशिष्टमनस एव तथात्वोपगमाच्चेत्यवधेयम् । गुणैरित्यस्य प्रकृतिस्वभावभूतसत्त्वादिभिरित्यर्थस्य सत्त्वादीनां साक्षात्कर्मासाधन-

त्वादसङ्गततया तमन्यथा व्याचष्टे—**विकारैरिति**। प्रकृतिविकृत्योर्विकारस्य प्रकृत्याश्रितत्वात् तत्तत्त्वस्थित्यादिमत्त्वाद्गुणत्वं प्रकृतेरेव च प्राधान्यमिति गुणैरित्यस्य विकारैरित्यर्थ इति भावः । **कार्यकारणरूपैरिति**। मनोज्ञानेच्छाकृतिभिः कारणरूपैः पूर्वपूर्वैरुत्तरोत्तरैश्च कार्यरूपैरित्यर्थः । **कार्यकारणसंघातात्मप्रत्ययैरिति** । कार्यकारणसङ्घातेष्वविद्यान्तःकरणेन्द्रियशरीरेषु य आत्मप्रत्ययस्तेनेत्यर्थः । **षष्ठीप्रतिषेध इति**। कर्माणि कर्तेति द्वितीयोपपत्तिरिति ॥ २७ ॥ २८ ॥ २९ ॥ **आध्यात्मचेतसेति**। कार्यकारणयोरभेदाच्चेतोबुद्धिरध्यात्मेति तद्विषयनिर्देशस्तस्य व्याख्यानमहंकर्तेति । **ईश्वरायेति**। ईश्वरार्थमीश्वरमनुकूलयितुं वेत्यर्थः । बुद्ध्येति तृतीयया समर्पण उक्तबुद्धेः साधनत्वं लभ्यते । समर्पणं च कर्मणामीश्वरे न निधानरूपममूर्तत्वात् । कर्त्रा सह कर्मणां यः संबन्धस्तस्याप्यकर्तरि संबन्धसंपादनमशक्यमिति तद्रूपमपि नेति बुद्धिविशेष एव विषयताविशेषेण परमेश्वरगतस्तस्मिन् समर्पणम् । साच बुद्धिर्भृत्यकृतकर्मणां राजेव मत्कृतकर्मणामीशः फलभाक् नचाहं यद्धि कर्म यस्य फलार्थं तत्तस्येतीशस्य प्रवर्तकस्यैतानि कर्माणि न ममेत्याकारिका तस्यामीशस्यान्तर्यामिणः प्रवर्तकत्वगोचरायां निरुक्तबुद्धेः साधनत्वं हि युज्यते । उक्तरूपे च समर्पणे यस्मिन् समर्पयति तत्रेश्वरत्वस्य तदभिज्ञत्वस्य स्वनियन्तृत्वस्य सर्वात्मत्वस्य चास्त्युपयोग इति मयीत्यस्यार्थान्तरसंक्रमितवाच्यस्य विवरणं परमेश्वर इत्यादि । अधिकमिच्छन् हि जनः स्वल्पमर्पयति यस्तैश्वर्यवान् सचाभिलषितमधिकमर्पयितुमीष्टे इतीश्वरत्वस्य यो हि समर्पणं न जानाति स ततोऽधिकमर्थितं नार्पयति परकीयबुद्ध्यात्मकस्यार्पणस्य ज्ञानं न परस्य सुलभमिति सर्वज्ञत्वस्य सर्वनियन्तृत्वस्य च प्रागुपदर्शितबुद्धिघटकस्वप्रवर्तकत्व उपयोगः सर्वात्मत्वस्य सर्वकर्मफलसंबन्धासंभावनानिरास इति बोध्यम् ॥ ३० ॥ ३१ ॥ **यज्ज्ञानं तत्रेति**। निरूपितत्वं सप्तम्यर्थः । तस्यायोग्यानिति योग्यपदार्थजनकतावच्छेदकतापर्याप्त्यधिकरणधर्मवद्घटकजनकत्वेऽन्वयः तादृशश्च धर्मोऽन्तःकरणशुद्धिश्रद्धावत्त्वानसूयित्वादिः । **प्रमाणत इत्यादि**। तत्प्रमाणतद्रूपप्रमेयतत्फलज्ञानानां सर्वेषां तज्ज्ञानत्वं तद्विषयकत्वादस्तीति तज्ज्ञानस्य प्रमाणादिविषयकत्वेन विविधत्वं प्रमाणादिविषयकत्वलक्षणसर्वप्रकारविशिष्टत्वमस्तीति । **सर्वप्रकारेणेति । विविधमिति**। शब्दविवरणरूपं मूढानित्यनेन शब्दतोऽन्वितमपि हि फलतस्तत्रेत्यनेनान्वितम् । प्रमाणादितस्तत्रायोग्यत्वस्य प्रमाणादिविषयकत्वविशिष्टतन्निरूपितायोग्यत्वे पर्यवसानादिति ॥ ३२ ॥ **तं विद्याकर्मणीत्यादि**। तत्पदार्थः प्रकृतिरूपो धर्मसंस्कारसंघातः । विद्या शास्त्रजं ज्ञानं । कर्म विहितं निषिद्धं च । प्रज्ञा लौकिकार्थज्ञानम् समन्वारम्भणमुत्पादनम् । **अनुरूपं चेष्टत इति** । यादृशस्य कारणादेर्यादृशं कार्यादिकं तादृशत्वमनुरूपत्वमिति ॥ ३३ ॥ **प्रकृतिवशवर्तित्व इति**। प्रकृत्यधीनदुर्निवारप्रयत्नादिमत्त्व इत्यर्थः । **पुरुषकारविषयाभावादिति** । पुरुषकारः पुरुषप्रयत्नः । विहितेषु प्रवृत्तिर्निषिद्धेषु निवृत्तिश्च तस्य यो विषयस्तस्याभावात् । प्रकृतितस्तद्विपरीतप्रवृत्त्या विपरीतानुष्ठानेन ततोऽन्यस्यैवोत्पत्तेः । नच यत्र प्रकृतिजा प्रवृत्तिर्न विपरीता तत्रैव पुरुषकारविषयभाव इति वाच्यम् । तत्र क्लृप्तप्रकृतित एव तस्य संभवेन पुरुषकारस्यान्यथासिद्धत्वादिति । विधिनिषेधशास्त्रे अपि स्वविषयपुरुषप्रयत्नोत्पादनार्थे अनर्थके स्यातामिति भावः ॥ अथ प्रकृतिरपि तत्तत्कार्यक्लृप्तदृष्टकारणसामग्र्यानपेक्षा न किमपि कार्यं जनयितुमीष्टे । तदभावे क्वापि कार्यादर्शनात् । तथाच विहितयागादिसंपत्तिर्निषिद्धकलञ्जभक्षणादिपरिहारश्च तत्तद्गोचरप्रवृत्तेर्निवृत्तेश्च दृष्टकारणात्साध्यः तयोश्च दृष्टकारणे रागद्वेषौ तयोश्च तथाविधकारणे बलवदनिष्टानुबन्धित्वज्ञानाभावसहकृतेष्टसाधनत्वज्ञानबलवदिष्टानुबन्धित्वज्ञानाभावसहकृतानिष्टसाधनत्वज्ञाने तच्च लोकप्रसिद्धेष्टानिष्टसाधनभावे यागकलञ्जभक्षणादौ न नैसर्गिककारणादिति । तादृशज्ञानरूपदृष्टकारणस्य दृष्टं कारणमलौकिकशब्दप्रमाणरूपमेवाश्रयणीयम् । विनाप्रमाणं प्रकृतिमात्रात्क्वापि तस्यादर्शनादितीष्टसाधनत्वानिष्टसाधनत्वज्ञानजनने बलवदनिष्टसाधनत्वज्ञानबलवदिष्टसाधनत्वज्ञानप्रतिरोधे च विधिनिषेधशास्त्रयोर्व्यापार इति यागादिप्रवृत्तौ कलञ्जभक्षणादिनिवृत्तौ न तयोरन्यथासिद्धिरिति न वैयर्थ्यं तयोरतएव पुरुषकारस्यापि न वैयर्थ्यम् । यत्र यस्य च पुरुषस्य शास्त्रजनितप्रवृत्त्यादिकारणरागादिसामग्र्या अत्यल्पे यागादिनान्तरीयकदुःखेऽत्यल्पे कलञ्जभक्षणादिजन्यसुखे च लोकसिद्धे बलवन्तं रागद्वेषं च जनयित्वा न प्रकृतिर्विघटयित्री तत्र तस्य प्रकृतेरानुकूल्यस्य हि कल्पनम् । यत्र हि प्रकृतेरुक्तसामग्रीविघटनेन विहितनिषिद्धयोर्वैपरीत्येन प्रवृत्तिनिवृत्तिसंपादकत्वं तत्रैव पुरुषस्य प्रकृतिवशवर्तित्वं बोध्यम् । आपाततो गृहीतशास्त्रस्यापि यस्य प्रकृत्याप्रागुक्तसामग्रीविघटनद्वारा बलवद्विष्टधनव्ययश्रमादिजन्यदुःखसाधनताज्ञानाद्यागादावेव द्वेषो बलवदिष्टैहिकसुखसाधनताज्ञानात्पराङ्गनासंभोगादावेव रागो दृष्टः तस्यैव शास्त्राभ्यासपरिपाकवत्तदर्थभावनातस्तादृशरागद्वेषकारणोपमर्दैन तदभावो दृष्टो नियमेनान्यथातु नेत्यन्वयव्यतिरेकाभ्यामभ्यस्ततया दृढतरशास्त्रार्थसंस्कारस्य विपरीतरागद्वेषहेतुज्ञानप्रतिबन्धकताकल्पनात्तदुभयानुत्पत्तितद्विपरीतरागाद्युत्पत्तिभ्यां प्रकृतेरन्यथात्वमुन्नीयते धर्माधर्मसंस्काररूपप्रकृतिघटकयोरुक्तप्रवृत्तिहेत्वधर्मसंस्कारयोः प्रक्षयः यागादिरागपराङ्गनासंभोगद्विद्वेषानुकूलधर्मसंस्कारयोरुदय इत्येतदेव प्रकृत्यन्यथात्वम् । सति चैवं शास्त्रवशवर्तित्वं न लौकिकसुखदुःखसाधनताज्ञानायत्तरागद्वेषवशवर्तित्वं भवतीति तथा शास्त्राभ्याससत्सङ्गादौ पुरुषकारवान् यो भवेद्यथोक्तरागद्वेषवशवर्तित्वतो मुच्येत स इत्येतदभिप्रायकं वीप्सयेत्याद्युपरम्यत इत्यन्तं संदर्भितं टीकायाम् । तत्रेन्द्रियाणामित्यस्य ज्ञानेन्द्रियाणामित्यर्थः । तेन ज्ञानेन्द्रियं विशिष्यानभिधाय कर्मेन्द्रियस्य विशेष्याभिधानाच्च संदर्भविरोधः । **वचनादाविति** । वचनं न वागिन्द्रियजन्योक्तिक्रियापूर्वमपि श्रवणादिजन्यश्रवणादिक्रियाया अन-

भिधानादपि तु तद्विषयशब्दादेरेवाभिधानं प्रागितीहाप्युक्तिक्रिया कर्म वक्तव्यशब्दरूपमेव तद्बोध्यम् । आदिपदात्पाणिपादपायूपस्थानामादानगमनविसर्जनानन्दनक्रियाकर्मणां परिग्रहः । उपस्थस्य प्रजननं वा व्यापारः । **अनुकूल इति ।** प्रकृतिजन्योत्कटरागविषयैहिकसुखसाधन इत्यर्थः । **प्रतिकूल इति ।** प्रकृतिजन्योत्कटद्वेषविषयैहिकदुःखसाधन इत्यर्थः । तेन विहितनिषिद्धयोर्विवेचकानां प्रतिकूलत्वविरहेऽपि न क्षतिः । **अयं विषय इति ।** रागद्वेषवशवर्तित्वाभावरूपोऽयं विषयः संपाद्य इत्यर्थः । पुरुषकारशास्त्राभ्यां तस्यासंपाद्यत्वमाशङ्कते—**कथमिति ।** उत्तरम् । **याहीति ।** शास्त्रदृष्टिमिति चेत्पाठस्तदा शास्त्रे दृष्टिर्यस्य तमित्यर्थः । शास्त्रदर्शितमिति पाठेन भाव्यम् ॥ ३४ ॥ **श्रेयोमार्गभ्रंशेनेति ।** भ्रंशयतीति भ्रंशः । अभेदे तृतीया । तस्य सप्तम्यन्तद्वयार्थेऽन्वय इति ॥ ३५ ॥ **स्वयं कर्तुमनिच्छन्नपीति ।** अथेच्छां विना न काचिदपि प्रवृत्तिर्दृष्टेतीदमसंगतमेवमुत्तरश्लोकेन कामस्येच्छाविशेषात्मकस्यैव प्रवर्तकत्वमभिहितं तदप्यनिच्छोः कर्माचरणकारणप्रश्ने तस्यैव च कारणाभिधानमुचितमनिच्छोरिच्छात्मककारणं चासंभवीत्यसङ्गतमितिचेन्न । यथा हि राजाज्ञातः पूर्वं सविषान्नभक्षणे बलवदनिष्टानुबन्धित्वज्ञानात्कर्तुं स्वयमनिच्छन्नपि पुरुषो राजाज्ञायां तदकरणे नियतबलवदनिष्टसाधनताज्ञानात्तत्करणे प्रायिकतदभावज्ञानात्सविषान्नभक्षणं कामयमानस्तदाचरति तथा शास्त्रगृहीतबलवदनिष्टसाधनत्वज्ञानात्कलञ्जभक्षणादिकं तत्प्रवृत्तिसमयात्प्राक् सततं कर्तुमनिच्छन्नपि समयविशेषविपाकाभिमुखादृष्टत ऐहिकसुखे बलवद्रागे जनिते नरकादावपनीते च द्वेषे कलञ्जभक्षणं कामयमानस्तदाचरतीति कर्तुमनिच्छन्नाचरतीत्यस्य नासङ्गतिः । शतृप्रत्ययश्चेह वर्तमानसमीपकालविहितलट्स्थानिकः । तथाच पूर्वकालेऽनिच्छासत्त्वेऽपि प्रागुक्तक्रमेणोक्तेच्छारूपकामस्य सत्त्वं न विरुध्यते साक्षादनर्थहेतुत्वात्कामस्यैव तादृशस्य निरासे यत्नो विधेय इत्यर्थतात्पर्यकमुत्तरवचनमपि हि सुसङ्गतमिति । ननु करोतीत्यन्वयः । एतदभिधानं च पारतन्त्र्यं द्रढयितुं कामोपमर्दे भवति मदुपदिष्टे परमेष्टेऽपि प्रवृत्तिरित्यत्रोत्तरवचनस्य तात्पर्यमुन्नयितुं चेति ॥ ३६ ॥ **क्रोधोऽप्येष काम एवेति ।** क्रोधस्य जिघांसात्मकस्येच्छात्वादिति भावः ॥ ३७ ॥ **अवान्तरवैधर्म्येति ।** सहजत्वासहजत्वलक्षणेत्यर्थः । दृष्टान्तत्रयाभिधानं सङ्गमयितुमावरकस्य कामस्यावस्थात्रयं प्रतिपादयति—**शरीरेत्यादिना ।** यद्यपि स्थूलावस्थादित्रयमेव दार्ष्टान्तिकं तथापि तत्र सूक्ष्मावस्थामप्रतिपाद्य प्रतिपादयितुमर्हमिति तत्प्रथममुक्तम् । **तथा प्रकारत्रयेणापीति ।** वैशिष्ट्ये तृतीया । स्थूलावस्थादिप्रकारत्रयविशिष्टेनेत्यर्थः । अभिव्यक्तिरेव स्थौल्यम् । तदवस्थाविशिष्टेन कामेनान्तःकरणसहोद्भूतेनावृतेऽप्यन्तःकरणे प्रकाशत एव विधिनिषेधगोचरयोस्तत्त्वं बलवदिष्टानिष्टसाधनत्वम् । तादृशप्रकाशादिकमेव च सात्त्विकस्य तस्य कार्यम् । प्रायोविषयसुखादिपराङ्मुखेऽध्ययनैकरते ब्रह्मचारिणि कतिपयावश्यकविषयोपरागेणैव कामस्याभिव्यक्तत्वात्तथा च धूमेनेत्यादिना साम्यम् । ततोऽध्ययनान्निवृत्ते विषयोपभोगयोग्यावस्थावति तरुणे स्नातके तेषु तेषु विषयेषु चिन्त्यमानेषु तत्तद्विषयोपरागेणौत्कट्यमुपगतेन कामेनावृतेऽन्तःकरणे तत्तद्विषयकृतैहिकसुखदुःखयो रागद्वेषौत्कट्याद्विहितनिषिद्धयोरुक्तं तत्त्वं न प्रकाशतेऽन्तःकरणस्वरूपं तु यथाकथंचित्प्रकाशत इति तादृशकार्याभावादादर्शेत्यादिदृष्टान्तेन साम्यम् । ततः कृतदारसंग्रहे प्रचुरमुपभुज्यमानविषये तस्मिन्नैहिकोत्कटसुखदुःखरागमयतामुपगते नितान्तमौत्कट्यशालिना कामेनावृतान्तःकरणे परलोकादिसुखदुःखभाग्यहमर्थरूपं तत्स्वरूपमपि कथमपि न प्रकाशते दूरे तूक्तकार्यसंपत्तिरित्युल्बेनेत्यादिदृष्टान्तेन साम्यं सूपपादं बोध्यम् । उत्तरश्लोकस्थज्ञानपदार्थत्वस्य विवेकज्ञानं वेत्यनेन विवेकज्ञानस्योक्तत्वेन तस्य दार्ष्टान्तिकत्वपक्षे कामेन तस्यावृतत्वं सर्वथा कार्यक्षमत्वाभावमात्रेण धूमावृतस्य वह्नेः सर्वथा प्रकाशाभाववत् । द्वितीयपक्षे कथंचिदुत्पन्नस्यापि प्रवातस्थदीपवद्दुर्लभावस्थानस्य कथंचिदपि नास्ति कार्यक्षमत्वमिति तद्बोध्यम् । तृतीयपक्षे संस्कारमात्रेणावस्थितस्य तस्य तस्य सर्वथा स्वरूपानुपलंभेन तत् । विवेकज्ञानं तु शरीरादिविविक्ततया पारलौकिकभोगक्षमस्यात्मस्वरूपस्य विज्ञानमैहिकामुष्मिकसुखदुःखयोर्यथार्थस्वरूपज्ञानं च कार्यं च तस्यामुष्मिकसुखदुःखयोर्बलवद्रागद्वेषादिकमैहिके च तयोर्विपरीतं तदिति ॥ ३८ ॥ ३९ ॥ इन्द्रियादीनामधिष्ठानत्वं स्वविषयसमर्पकत्वेन बोध्यम् । कामः संकल्पो विचिकित्सेतीादिश्रुत्या मनस एवाश्रयत्वप्रतिपादनात् **आच्छाद्येति ।** तिरस्कृत्योत्पत्तुमनर्हम् । कार्याक्षमं वा कृत्वेत्यर्थ इति ॥ ४० ॥ ४१ ॥ तात्पर्यविषयत्वादित्यस्य न विरुध्यत इत्यनेनान्वयः । इन्द्रियाणि पराण्याहुरित्यत्रेन्द्रियगतपरत्वावधेरनुक्तत्वादर्थेभ्य इत्यध्याहार्यमिति शब्दादीन्द्रियार्थसाधकत्वेनेन्द्रियस्य यत्ततः परत्वं तद्विवक्षया भगवतार्थेभ्यः पराणीन्द्रियाणीत्येवोक्तमित्यवगम्यते । इन्द्रियेभ्यः परत्वस्य मनस उक्तेरिन्द्रियाणि पराणीत्यस्येन्द्रियेभ्यः परा ह्यर्था इति श्रुत्युक्तस्थानत्वं लभ्यते । श्रुतौ चेन्द्रियाणामर्थग्रहणार्थत्वेनार्थस्य यत्परत्वमापाततस्तद्विवक्षया तथोक्तम् । श्रुतेस्तत्रापि मुख्यतात्पर्ये तादृशपरत्वस्यादरणीयतया तद्विरुद्धत्वेन भगवदुक्तेर्भवेदेव विरोधस्तत्तु नास्त्यर्थेभ्य इन्द्रियस्येन्द्रियेभ्यो वार्थस्योक्तरूपं परत्वमस्तु न किंचिदेतत्तदुभयस्मादपि परतो मनःप्रवृत्तेर्यदात्मा परस्तदा तस्य सर्वस्मात्परत्वमव्याहतमित्यत्र श्रुतेः परमतात्पर्येण भगवदुक्तेर्विरोधासंभवात् । नच टीकाकृता पूर्वं देहमपेक्ष्य पराणीत्युक्तमधुनाऽर्थेभ्यः पराणीन्द्रियाणीत्युच्यत इति विरोध इति वाच्यम् । स्थूलशरीरस्यापीन्द्रियग्राह्यत्वेनेन्द्रियार्थत्वात् विरोधाभावात् ज्ञातृज्ञानसाधनयोरेव परापरभावस्य

प्राधान्येन प्रतिपादनात्तादृशस्यार्थेषु शरीरस्यैव भावात्पूर्वमर्थेषु शरीरस्य पृथगभिहितत्वाच्चेति समुदायार्थः । उक्तश्रुतेः सांख्यमतानुसारीत्वभ्रमं निरसितुं तद्व्याचष्टे—**बुद्धेरस्सदादीत्यादिनेति** ॥ ४२ ॥ ४३ ॥

इति तृतीयाध्यायगूढार्थदीपिकाविवृतिः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

**कथिताविति** । कथं योगमित्येकवचनमुक्तमित्यत्र तात्पर्यम् । **एकयमुपचर्येति** । ईदृगेकत्वमभिप्रेत्य योगमित्येकवचनमुक्तमिति भावः । **बलाधानेनेति** । सर्वजगत्पालनानुकूलैश्वर्यस्याधानेनेत्यर्थः । तदधीनमुक्तोभययोगाधीनम् । **पालयितुमिति** । पालनक्रियाविशेषणमिदम् । योगेन यद्बलाधानं तेन व्यापारेण योगाधीनं पालनमिति बोधयितुं बलाधानेन तदधीनमित्युक्तम् । पालयितुमुक्तमित्यन्वयः । अनेन भवता किमर्थमुक्तमित्याशङ्का निराकृता । पालनार्थतयोक्तयोगकथनस्यौचित्यमाविष्कर्तुमर्थान्तरसंक्रमितवाच्यस्यास्मच्छब्दस्य सर्वजगत्परिपालक इत्यर्थकरणं सुसंगतम् । सर्वशक्तिमद्ब्रह्मैक्यानुसंधानस्य निर्विकल्पसाक्षात्काररूपासंप्रज्ञातततामुपगतस्य मोक्षफलस्यैव संप्रज्ञातरूपपूर्वावस्थायामखिलैश्वर्यफलत्वेन प्रसिद्धस्याव्यभिचारिफलतया बलाधायकत्वमुचितमित्याक्षेपपूर्वकमाह—**कथमनेनेत्यादि** । केन प्रकारेणानेन योगेन बलाधानमित्यर्थः । **इतीति** । आक्षेप इति शेषः । विशेषणेनाव्ययमिति विशेषणेन दर्शयतीति—**तमित्यादिः** । प्रकारमित्यर्थः । अव्ययवेदमूलत्वमव्ययमोक्षफलत्वं चाव्ययत्वं स्तुत्युपयोगीति दर्शितमव्यभिचारिफलत्वं च बलाधानोपयोगितयोक्तम्, न व्यभिचारोऽव्यभिचारः । साधननिष्ठः स निरूपकत्वेनास्यास्तीत्यव्यभिचारि तत्फलं यस्येति विग्रहाद्यस्मिन् सत्यवश्यं फलं तमित्यर्थः । सर्वत्रैव फलस्य कारणाव्यभिचारित्वेन तदभिधानस्य व्यर्थत्वात्फलाव्यभिचारित्वस्य कारणेऽसार्वत्रिकत्वेन प्रकृतोपयोगित्वेन तस्यैव प्रतिपादनीयत्वात्क्लेशेनैवं व्याख्यानमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ सर्वं हि वाक्यं सावधारणमिति तवेत्युक्तौ तवैवेति प्रतीयते तच्चासङ्गतमन्येषामपि जीवानां जन्मनामतीतत्वादत आह—**तव चेत्युपेत्यादि । जीवैक्याभिप्रायेण वेति** । तथाच तवेत्युक्त्यैव सर्वप्रतीतेरुपलक्षणाभावेऽपि न क्षतिरिति भावः । **संबोधनद्वयेनेति ।** अर्जुनेत्यनेनावरणशक्तिः । परंतपेत्यनेन शत्रुहननतत्प्रवृत्त्यादेः कार्यस्यावगमात्तदनुकूलविक्षेपशक्तिं विना तदसंभवात् विक्षेपशक्तिरर्जुनोपाध्यज्ञानगता दर्शितेत्यर्थः ॥ ५ ॥ **तर्हीति** । तत्तस्मादुक्तस्मरणाद्धेतोर्हि निश्चयेन जीवस्त्वमिति जीव एव भवसि न तावता सर्वज्ञ ईश्वर इत्यर्थः । नन्वीश्वरस्य सर्वज्ञस्यैव तथात्वं न जीवस्याप्रामाणिकत्वादिति जातिस्मरत्व ईश्वरत्वमेवेत्यत आह—**परजन्मेत्यादि । सार्वात्म्याभिमानेनेति** । सर्वतादात्म्यापन्नव्यापकोपाध्यवच्छिन्नसर्वज्ञेश्वरतादात्म्याभिमानेनेत्यर्थः । **नमुख्यमिति** । सर्वतादात्म्यलक्षणसर्वविषयकत्ववदनावृतचैतन्यात्मकत्वमेव मुख्यं सार्वज्ञ्यं । तादृशं चेश्वरस्यैव परिच्छिन्नस्य जीवचैतन्यस्य सर्वानुपादानत्वेन सर्वतादात्म्यासंभवेन तदसंभवादपि तु तादृशेश्वरतादात्म्यमाभिमानिकं गौणमेव तत्तथाच तदभिमानेनैव त्वमपि वामदेववत्परजन्मस्मर्तृत्वं निर्दिशसि न वस्तुतस्तादृशोऽसीति भावः । **तत्तथैवेति ।** नोपपद्यत एवेत्यर्थः । पृच्छति—**कथमिति** । उत्तरयति—**यदि तस्येत्यादिना** । द्विविधं हि शरीरं समष्टिरूपं व्यष्टिरूपं च । व्यष्टिरूपमीशस्य शरीरं स्थूलभूतकार्यं सूक्ष्मभूतकार्यं वा चेदस्मदादितुल्यः परिच्छिन्नोपाधिकतयैश्वर्यसर्वज्ञत्वादिरहितः स्थूलभूतकार्यस्थूलशरीराभिमानिजाग्रदवस्थजीवकोटावन्तर्भूतः स्यात् सूक्ष्मभूतकार्यलिङ्गशरीरमात्राभिमानिस्वप्नावस्थजीवकोटावन्तर्भूतः स्यात् । समष्टिरूपं यदि स्थूलभूतकार्यं तदभिमानीश्वरो विराडेव स्यात् भूतसूक्ष्मकार्यलिङ्गशरीरसमष्टिरूपं चेच्छरीरं तदभिमानीश्वरो हिरण्यगर्भ एव स्यादिति सिद्धमित्यन्तार्थः । **चिदाभासेन वशीकृत्येति** । अचेतनायां मायायां स्वतःप्रवृत्त्यसंभवाच्चेतनानधिष्ठितस्याचेतनस्य व्यापारायोगादिति चिदात्मनः स्वस्याभासेन प्रतिबिम्बेन प्रवृत्त्यनुकूलचैतन्ययोगेन चेतनत्वसंपादनेन स्वेच्छयैव तां तत्तत्परिणामानुकूलप्रवृत्तिमतीं विधायेत्यर्थः । परिणामविशेषैर्मायामोहितजनप्रतीयमानचतुर्भुजादिविग्रहविशेषैरित्यर्थः । अभेदे तृतीया । **देहवानिवेत्यत्र देहेऽन्वेति** । इवकारेण यथा मायायां तादात्म्याध्यासो मम न तथोत्पत्तिविनाशादिमत्तत्तद्विग्रहे शरीरं हि तदेव तस्य यत्र यस्य तादात्म्याध्यास इति न मम वस्तुतो देहः सोऽपि तु मद्देहत्वेन लोकप्रत्ययगोचरतया देह इवातस्तेनाहमपि देहवानिव यतो न मम तच्छरीरं वस्तुतोऽतो न तेनोपाधिनापि जातो भवाम्यपितु यतस्तेन विग्रहेण देहवानिवातो जात इव तद्विग्रहविशिष्टतयेति सूचितम् । **मदिच्छयैव प्रवर्तमानेति** । जीवभोगानुकूलैरदृष्टैः समयविशेषोद्बोधितैः प्रथमसमुत्पादिततया मदुपाधिमायापरिणामतया मदीयया जगत्स्रजेयमितीच्छयैव प्रवर्तमाना जगदात्मना यः परिणामस्तदनुकूलपरिणामवती भवतीत्यर्थः । **अजत्वमित्यादि** । स्वरूपतो जीवस्यापि ब्रह्माभिन्नतयाऽजत्वमव्ययत्वमस्त्येव परंतु तदुपाधेरुत्पादविनाशशालितया तस्य तद्विशिष्टवेषेण जन्मव्ययशालित्वमीश्वरस्य तूपाधेरपि जन्मरहितत्वं यावद्व्यवहारकालं न विनाश इति व्यवहारागोचरनाशत्वेन व्ययरहितत्वं चेत्सोपाधिकस्यापि तदुभयस्याभावादीशस्याजत्वमव्ययत्वं तस्य स्वाभाविकधर्मशून्यत्वेऽपि मायापरिणामैश्वर्यरूपधर्मवत्वं च तदुपाधि-

कत्वादुपपद्यत इति भावः । मायाया ईश्वरशरीरत्वे प्रमाणमाह—**तथाच श्रुतिरित्यादि** । आकाशशब्दस्य भूतविशेषे प्रसिद्धतया नोक्तश्रुत्या मायायास्तथात्वसिद्धिरित्यत आह—**आकाशोऽत्राव्याकृतमिति** । भूतावस्थस्य नामरूपाभ्यां व्याकृतत्वात्कारणावस्थाव्याकृतरूपमायैवात्राकाशपदार्थ इत्यर्थः । सर्वथा तत्राप्रसिद्धवृत्तेः शब्दस्य तदर्थत्वं नोचितमत आकाशशब्दस्याव्याकृतार्थतां दर्शयति—**आकाश एवेत्यादि** । नहि कार्यरूपे भूताकाशे जगत ओतप्रोतत्वसंभव इत्यव्याकृत एवात्राकाशशब्दः प्रयुक्तो दृश्यत इत्याकाशशरीरमित्यत्राप्याकाशपदस्याव्याकृतार्थत्वसंभव इति भावः । ननूभयत्राप्याकाशशब्दस्य दर्शनात्संदेह एवास्तु कुतोऽवधारणमव्याकृतस्य स्यादित्यतो युक्तिमाह—**आकाशस्तदित्यादि** । उक्तसूत्रोक्तयुक्तेरित्यर्थः । यथास्य लोकस्य का गतिरित्याकाश इति होवाचेत्यत्राकाशशब्देन परब्रह्मैवाभिधीयते । तल्लिङ्गात्तस्यैव लिङ्गदर्शनादिति युक्तिसद्भावादवधारणमिति भावः । मायाया ईश्वरशरीरत्वे भगवद्गीताभाष्यसंवादमुपदर्शयति—**उक्तंचेत्यादि** । 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इत्यादिरपि तत्र प्रमाणमनुसंधेयम् । **असंभवस्तु सतोऽनुपपत्तेरिति** । द्वितीयाध्यायतृतीयपादस्य नवमं सूत्रम् । तदर्थस्तु सतो ब्रह्मण उत्पत्त्यादेरसंभवोऽनुपपत्तेः । नह्यतिशयाभावे प्रकृतिविकाराभावस्य संभवो यद्धि सर्वानुस्यूततया सर्वतः सामान्यं तत्तस्योत्पत्तिकारणत्वेनाभिमतं यत्किंचित्स्यात्ततो न सामान्यं स्यादिति सतस्तद्व्यावृत्तत्वे तस्यासत्त्वापत्त्या कारणत्वासंभवात्सन्मात्ररूपत्वे तस्य कार्यकारणयोरविशेषापत्त्या कार्यकारणरूपत्वव्याघातात् । तस्य सद्विशेषत्वे विशेषस्य सामान्योपादानत्वासंभवेन तत्त्वासंभवात् । कुत्रचिद्विश्रामाभावेऽनवस्थापातान्मूलकारणस्य वाच्यतया तस्यैव सद्रूपब्रह्मत्वोपगमादिति । **तन्न्यायादिति** । तत्प्रतिपादितयुक्तेरित्यर्थः । **नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य इति** । द्वितीयाध्यायतृतीयपादस्य सप्तदशसूत्रम् । तदर्थस्तु आत्मा जीवः नोत्पद्यते उत्पत्तिप्रकरणेषु बहुष्वपि तदुत्पत्तेरश्रुतेः ताभ्यः श्रुतिभ्यः प्रमाणेभ्यस्तस्य नित्यत्वेन प्रमितत्वात् नित्यस्य चोत्पत्त्यसंभवादिति । **न्यायादिति** । तत्प्रतिपादितयुक्तेरित्यर्थः । यद्यप्यत्र जीवस्य नित्यत्वं साधितमिति न प्रकृतोपयोगि तथापि न तस्य जीवस्वतन्त्रनित्यत्वे तात्पर्यमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहानेरद्वैतविघातादेश्चेति नित्येश्वरानन्यतयैव जीवनित्यत्वे तात्पर्यं वक्तव्यं । व्यक्तं च तत्तत्र भाष्य इतीश्वरनित्यत्व एव तत्पर्यवसानान्नासङ्गतमिति भावः ॥ ६ ॥ ७ ॥ **पूर्ववदिति** । सृजामीतिवद्व्याख्येयम् ॥ ८ ॥ ९ ॥ १० ॥ **फलमत उपपत्तेरिति** । तृतीयाध्यायद्वितीयपादस्थसूत्रम् । फलमतः कर्माराधितादीश्वराद्भवति उपपत्तेस्तस्य कर्मजनितप्रसादवतः फलपूर्वं सत्त्वात् । कर्मणश्चाशुविनाशिनस्तदानीमभावादिति तदर्थः । अत्र वस्त्वादिरूपकर्मफलप्रदत्वेन 'सवा एष महानज आत्माऽन्नादो वसुदान' इत्यादिश्रुतौ श्रुतत्वाच्चेश्वरः कर्मफलदोऽभ्युपेयते । अन्नमासमन्ताद्ददातीत्यन्नादः । अत्रच 'धर्मं जैमिनिरतएवे'तिसूत्रेण पूर्वपक्षोऽस्ति विहितः । तथाहि अतएव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिश्रुतावीश्वरनिरपेक्षस्य कर्मणो दर्शपूर्णमासादेः फलसाधनत्वेन श्रुतत्वादुपपत्तेश्चैव धर्ममेव फलदातारं जैमिनिर्मन्यते नेश्वरम् । श्रुतस्य स्वर्गसाधनत्वस्याशुविनाशिनः कर्मणोऽन्यथानुपपत्त्या विहितस्य प्रतिषिद्धस्य च तस्यापूर्वं धर्माभिधमधर्माभिधं च व्यापारं फलपूर्वकालपर्यन्तस्थायिनं श्रुतिप्रामाण्यादेवाभ्युपेत्य कर्मणः फलदत्वोपपादनसंभवात् ईश्वरस्याविचित्रस्य कारणत्वे विचित्रकार्यानुपपत्तेरनुष्ठानवैयर्थ्याद्वैषम्यनैर्घृण्यापत्तेश्च न सकारणमिति । अस्य चोत्तरम् 'पूर्वं तु बादरायणो हेतुव्यपदेशा'दिति सूत्रेणास्ति कृतम् । तथाहि हर्षभयशोकतदपनोदकार्थकानां सिद्धार्थकपदघटितानां पुत्रस्ते जातो भुजङ्गोऽयं मृता ते दारा रज्जुरियं न सर्प इत्यादिवाक्यानां श्रवणसमनन्तरमुत्पन्नस्य हर्षादेर्लिङ्गं यन्मुखप्रसादमुखमालिन्यादिकं तद्वत् पुरुषसविधवर्तिना व्युत्पन्नेनापि पूर्वगृहीतहर्षादिहेतुपुत्रजन्माद्यर्थेन पुरुषेणोक्तलिङ्गैरनुमितेषु हर्षादिषु वाक्यार्थज्ञानान्याहेतुकत्वेन निश्चितेषु कार्यत्वेनोक्तवाक्यार्थज्ञानहेतुकत्वेऽनुमिते गृहीते च हर्षादिहेत्वर्थावगतिसाधनत्वे निरुक्तवाक्येषु तदानीमुपस्थापकविशेषसान्निध्योपस्थितपूर्वगृहीतपुत्रजन्माद्यर्थावगतिसाधनत्वरूपविशेषात्मना पर्यवसिते पुत्रादितत्तत्पदानां कार्यानन्वितपुत्रादिसिद्धार्थकतावापोद्वापादिभिर्निर्णीयत इति सिद्धे सिद्धार्थसंबन्धे पदानां प्रामाण्ये चाहेयोपादेयप्रयोजनवद्भूतापूर्वार्थकानामपि वाक्यानां स्वार्थेऽर्थवादवाक्यानां चावश्यापेक्षितवाक्यान्तरार्थसंबन्धकानामन्यार्थत्वेनासंभवत्स्वार्थपर्यवसानानां स्वाध्यायविधिगृहीतार्थवत्वादिलोभेन विध्यर्थसमन्वितस्वार्थतात्पर्यकाणामपि स्तुत्यादिविध्यर्थसमन्वितार्थप्रतिपादनद्वारभूते स्वार्थं बाधिते लक्षितगुणादिद्वारेण स्तुत्याद्यर्थकत्वमबाधिते च लौकिकप्रमाणैः स्वार्थे संभवति स्वार्थेऽन्यार्थताया अन्याय्यतया स्वार्थद्वारेणैवेति द्वारभूता स्वार्थप्रतीतिरबाधिता गृहीतार्थगोचरान्यार्थतात्पर्यकवाक्यादपि जायमाना प्रमैव भवति भवति च तद्गोचरीभूतोऽर्थः सिद्धो विशिष्टार्थतात्पर्यकवाक्यप्रतीतविशेषणवदिति प्रसाध्यमानान्तरागोचरागृहीतबाधार्थकमन्त्रार्थवादाद्यवान्तरप्रतीतिविषयतया परमेश्वरानन्येन्द्रादिदेवताविग्रहचैतन्यहविरुपभोगतृप्तीशनाप्रसादकोपफलदातृत्वाद्यर्थजातं च प्रामाणिकं प्रसाधितमैश्वर्यविशेषयोगाद्यज्ञस्थानेष्वनेकेषूपस्थानमनुपस्थितस्यापि वा स्वस्थानस्थितस्यैव सर्वज्ञस्याह्वानज्ञानस्वोद्देश्यकत्यागज्ञानतत्फलसन्निधानग्रहणादिफलसंपादनं तत्रादर्शनादिकं चोपपादितम् । प्रयोगापेक्षितद्रव्यस्वर्गादिज्ञानानामिव ज्ञानस्वभावादर्थसत्त्वप्रवणानां कारणान्तरानुपस्थित्या मन्त्रार्थवादवाक्यशेषजत्वेनाभ्युपेयानां यागापेक्षितदेवतास्वरूपज्ञानानामपि बाधाभावात्स्वविषयसत्त्वसाधकतया यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्नित्यनेन यागपूर्वं कर्तव्यतया प्राप्तस्य ध्यानस्य वस्तुगोचरत्वे संभवति समारोपमात्ररूपताकल्पनस्यान्याय्यत्वादर्थवादादिगृहीतदेवदत्तस्वरूपालम्बनत्वस्योचितत्वात्

करणतया ज्ञातस्य मन्त्रस्य तद्विषयत्वानौचित्येन च मन्त्राभिन्नता च निराकृता । देवतायाः मन्त्रात्मत्वेऽर्थवादादिगृहीतविग्रहवदिन्द्राद्यर्थकतात्यागशब्दस्वरूपरूपपरार्थत्वस्वीकारप्रसङ्ग इन्द्रादिपदेषु योगेषु च देवपूजात्वस्य देवप्रसादानुकूलव्यापारत्वलक्षणस्याचेतनमन्त्रात्मकदेवतोद्देश्यकत्वे तस्याः प्रसादासंभवेनानुपपत्तिश्च प्रदर्शिता । तेषामिन्द्रादीनां स्थानविशेषाभिमानिनां देवभावे स्थिते कर्मानधिकारिणामिन्द्राद्युद्देश्यकयागकर्तृत्वाभावादैन्द्रपदप्रापककर्मकर्तृत्वावस्थायां तदभिमानिव्यक्त्यन्तरोद्देशेन यागकर्तृत्वस्य 'इन्द्रं मित्रं वरुणमग्निमाहु'रिति श्रुत्या प्रतिपन्नेन्द्रादिदेवभावमीश्वरं तत्तदात्मना विध्यनुरोधेनाभिध्याय तदुद्देशेन वेन्द्रादिकर्तृकयागस्य वोपपादनेन देवताविग्रहस्वीकार इन्द्राद्युद्देशेनेन्द्रादिकर्तृकयागस्यासंभवाशङ्का च निराकृता । स्थिरीकृते चैवं देवताविग्रहचैतन्यादौ पूर्वंत्वित्यादिसूत्रेण कर्माराधितायाश्चेतनदेवतायाः फलप्रदत्वं व्यवस्थापितम् । 'एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषती'त्यादिश्रुत्या कर्महेतुत्वेन फलहेतुत्वेन चेश्वरस्य व्यपदेशात्कर्माराधितादीश्वरात्प्रसादद्वारा फलं बादरायणो मन्यत इति हि सूत्रार्थः । अथ कर्मणोऽपूर्वंप्रति कारणत्वे स्वजनककृतिमत्त्वादिपरम्परासंबन्ध एवावच्छेदकत्वेनाश्रयणीयः प्रसादं प्रति हेतुत्वे चोद्देश्यत्वादिकं कारयितृत्वविशेषादिकं वा कारयतीति श्रुतिनिर्देशसिद्धं संबन्धत्वेनोपेयमिति गौरवविरहेऽपि फलं प्रत्यपूर्वस्य कारणत्वे तदवच्छेदकः संबन्धः समवायः स्यात्, देवतासमवेतस्य प्रसादस्य हेतुत्वे च परम्परासंबन्ध एव तथाभ्युपेय इति यागादिकर्मव्यापारतयाऽदृष्टमेव कल्पनीयं न देवताप्रसाद इति चेन्न । अदृष्टं हि साधनतया कल्पितमप्यचेतनमेव कल्प्यते तस्य चैतन्याभ्युपगमस्यापसिद्धान्तकवलितत्वादनन्तचैतन्यकल्पनागौरवपराहतत्वाच्च । तच्चाचेतनं चेतनानधिष्ठितं सन्न साधनभावमुपगन्तुमर्हति । चेतनाधिष्ठितस्य कुठारादेश्छेदनादिहेतुत्वमन्यथा तदभाव इत्यस्य सहस्रशो दृष्टत्वात्पवनविद्युदादीनां स्वसंचारादिहेतुत्वे चेतनाधिष्ठितत्वव्यभिचारस्य तेषां पक्षसमत्वेनादोषत्वात् । दृष्टविरुद्धं च न किमपि कल्पयितुमर्हमतिप्रसङ्गात् । नच जीवस्य तदधिष्ठातृत्वसंभवः । तत्स्वरूपतत्प्रकाराद्यज्ञत्वात्तादृशस्यैव चाधिष्ठातृत्वस्य दृष्टत्वात् । तस्मादीश्वरस्य तदधिष्ठातृत्वं वाच्यम् । तदधिष्ठातृत्वं हि न तदसंबद्धस्येतीश्वरेणादृष्टस्य परंपरासंबन्धोऽभ्युपेयः । सचानुकूलप्रयत्नेच्छादिमदीश्वरसंयुक्तात्मसमवायादिरेव तव स्यात्तद्वरं मम मतेन स्वाश्रयेश्वरतादात्म्येन कर्मकर्तृनिष्ठेन प्रसादस्यैवादृष्टमप्रकल्प्यफलहेतुत्वं कल्पयितुं युक्तम् । प्रसादाधिष्ठातृत्वं हि तेन समवायादिसाक्षात्संबन्धेन संबद्धस्यैव चेतनानधिष्ठितस्यादृष्टस्य दृष्टविरुद्धसाधनत्वकल्पनापेक्षया श्रुतितन्मूलकपुराणेतिहासतन्मूलकलोकप्रसिद्धिगोचरस्य देवताप्रसादस्य जातेर्व्यक्त्यतिरिक्तेषु स्वरूपसंबन्धवत्साक्षादेव स्वरूपादिसंबन्धस्य कल्पनमुचितम् । यं प्रति कोपस्तेन सह कोपस्येव यं प्रति प्रसादस्तेन सह प्रसादस्याप्यशुभकारिणे कुप्यति प्रसीदति शुभकारिणं प्रतीति प्रत्ययसिद्धस्य स्वस्वामिभावादिवत्साक्षात्संबन्धस्य विषयत्वाद्यात्मकस्याथवा नाप्रसिद्धत्वम् । देवताप्रसादस्य व्यापारत्वं हि सुश्लिष्टं भवति लोकदृष्टेन । तथाहि लौकिक ईश्वरो राजा प्रणिपतनाञ्जलिकरणस्तुत्यनुकूलाचरणादिभिराराधितः प्रसन्नः स्वानुरूपमीप्सितफलमाराधकाय प्रयच्छति विपरीताचरणैः कुपितोऽनिष्टं च । तथैव परमेश्वरोऽपि देवपूजात्मकेन यागेनाराधितः प्रसन्नः सन् कामितं फलं प्रयच्छति प्रतिषिद्धेन कर्मणा कुपितोऽनिष्टं चेति । एवं प्रसादस्य व्यापारत्वे तद्धेतुतया लोकेऽपि क्लृप्तं स्तोत्रादिकं यागेऽप्यनुष्ठितं नात्यन्तादृष्टव्यापारकं भवति देवतातत्प्रसादाद्यभावपक्षे तु तादृशमेव । एवमन्येषामपि होत्रादिव्यापाराणां तथात्वं बोध्यम् । नचैवंविधा अपि सन्ति यागे व्यापारा ये लोके प्रसादहेतवो न दृष्टा इति वाच्यम् । दृष्टा हि लोके लौकिकेश्वरस्य प्राकृतजनविलक्षणप्रसादकोपानुबन्धिनो लोकव्यापाराः किमु तदा वक्तव्यं परमेश्वरस्य लोकविलक्षणप्रसादहेतुत्वे व्यापाराणाम् । यथैवाङ्गापूर्वाणि स्वीक्रियन्ते तथैवावान्तरप्रसादाः परमप्रसादहेतवोऽङ्गेभ्य इति नाङ्गानुष्ठानवैफल्यम् । दृष्टं चैवं लोकेऽप्यात्मप्रियपुत्रदारामात्याराधनोपजाताल्पप्रसादक्रमेण क्रियाविशेषेण महाप्रसादः प्रभूणाम् । यथा च लौकिक ईश्वरोऽनुगृह्णन् साधुकारिणो निगृह्णन् पापाचारिणो रक्तो द्विष्टो वा न भवत्येवं परमेश्वरोऽपि कर्मापेक्षस्यैव परमेश्वरस्य प्रसादादिद्वारा फलहेतुत्वाभ्युपगमान्न कर्मानुष्ठानवैफल्यवैषम्यनैर्घृण्यसृष्टिवैचित्र्याभावादिदोषाणामस्त्यवसरः प्रासादश्च मायान्तःकरणादेर्वृत्तिविशेषो रतिहासशोकादिस्थायिभाववत्स्थायी च भवति । नास्त्यस्माकं हि चतुर्विंशतिगुणाद्यभ्युपगमनिगडबन्धनम् । यत्स्वर्गादिफलं प्रतीश्वरस्य साधनत्वं न तदागमसिद्धविश्वहेतुत्वादतिरिच्यत इत्यतोऽपि लाघवमत्र बोध्यमिति सिद्धं परमेश्वरस्य फलप्रदत्वमिति ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ **अस्मिन्युग इति** । दैवयुगाभिप्रायेण अन्यथा विद्यमानद्वापरे ययातिप्रभृतेरभावादसङ्गतिरेव स्यात् ॥ १५ ॥ १६ ॥ १७ ॥ **धर्म्यध्यासेनात्मन्यारोपित इति** । कर्मणां कायिकवाचिकमानसिकानां यो धर्मी देहेन्द्रियान्तःकरणरूपस्तेन सह योऽहं गौरः काणः खञ्जः सुखी दुःखीत्यादितादात्म्यारोपस्तद्धेतुको य आत्मनि शरीरादिकर्मणामारोपस्तद्विषय इत्यर्थः । सतिसप्तमीयम् । **कर्माभावमिति** । कर्मारोपधर्मिण्यात्मनीति शेषः । लिङर्थस्याविवक्षितत्वादाह—**पश्यतीति** । **सव्यापारेष्विति** । सत्सु तेष्विति शेषः । **व्यापारोपरम इति** । सतिसप्तमीयम् । **व्यापारमिति** । आरोपधर्मिषु देहेन्द्रियादिष्विति शेषः । **कर्मविकर्मणोस्तत्त्वमिति** । आत्मा कूटस्थचैतन्यरूपः सदैव कर्मरहितः शरीरेन्द्रियान्तःकरणादिकमेव सदा कर्मवदिति कर्मणस्तत्त्वमित्यर्थः । **अकर्मणस्तत्त्वमिति** । शरीरादिकं सततपरिणामस्वभावत्रिगुणमयमायापरिणामत्वात्सततमेव कर्मवन्न क्षणमपि निर्व्यापारम् । परमात्मैव च कर्मरहित इत्यकर्मणस्तत्त्वमित्यर्थः । **जड इति** । विषयसप्तमीयम् । तथा दृग्वस्तुनीत्यपि **दृग्दृश्ययोः**

**संबन्धानुपपत्तेरिति ।** अयमाशयः—न वृत्तिरेव ज्ञानं । तथा सति ज्ञानं प्रत्यक्षं प्रति विषयेन्द्रियसंनिकर्षादेर्विषयस्य च हेतुत्वमस्त्यावश्यकं तच्च ग्रहणासंभवेनाप्रामाणिकं स्यात् । तच्चान्वयव्यतिरेकग्रहे सति हि ग्राह्यम् । ज्ञानात्पूर्वकाले विषये प्रमाणानवतारेण तस्यैवाप्रामाणिकत्वापत्त्या कस्मिन्नन्वयव्यतिरेकौ कार्यस्य हि ग्राह्यौ स्यातामिति प्रत्यक्षपूर्वकाले सत्तया तद्ग्रहायात्मस्वरूपमपि विषयग्राहकं ज्ञानरूपमुपेयम् । तच्चाज्ञाततया प्रमाणानपेक्षमपि तच्छक्नोति गृहीतुम् । तेनाज्ञातेऽप्यनेन तज्ज्ञातमस्त्येवेत्यपि न वाच्यम् । उत्पत्त्यनन्तरं प्रथमप्रत्यक्षपूर्वक्षणे केनापि पुरुषेण तस्य ज्ञातत्वाभावात् । नच तदानीमज्ञातत्वेऽपि प्रत्यक्षेणैव पूर्वकालसत्तया तस्योत्तरकालमनुमितत्वसंभवान्नासत्वं यदाकदाचिदपि ज्ञातस्य तत्वासंभवादन्यथा स्वापकाले सर्वस्यासत्त्वापातात् । नहि संनिकर्षविषयादेर्हेतुतया ज्ञातस्य कारणत्वं येन पूर्वकाल आवश्यकं ज्ञानं भवेदपितु स्वरूपत एव हेतुत्वमिति वाच्यम् । कार्येण स्वाव्यवहितपूर्वक्षणवृत्तितयैव कारणमनुमेयं । नचोत्पत्तिक्षणे किमपि संनिकृष्टं येन तदव्यवहितोत्तरक्षणोत्पन्नेन कार्येण तत्कालसत्तयाऽनुमीयेतेति । तदानीमप्रमितसत्त्वस्यासत्त्व उत्तरकालेऽप्यसत्त्वापातात् । नच सर्वज्ञेश्वरेण तदानीमप्यस्त्येव गृहीतमिति वाच्यम् । तत्रैव मानाभावादन्यथेश्वरगृहीतत्वेन नृशृङ्गादिकमपि सत्संभाव्येत । लोकेन गृहीतसत्त्वस्यैव सर्वज्ञेश्वरगृहीतत्वे मानत्वस्यात एव वाच्यत्वात् । नच सामग्र्योत्पत्तिक्षणे ग्रहणमिति वाच्यम् । तस्याः कार्येणैव तदानीं गृहीतेन ग्राह्यतयाऽगृहीतायाश्चालिङ्गतयान्योन्याश्रयात् । यदाकदाचिद्गृहीतेन कार्येण यदाकदाचित्सत्तया सिद्धिर्नोत्पत्तिक्षणसत्तया कार्यस्य ह्यनुमापिका । नह्येतावत्कालव्याप्तानेककार्यकारणपरम्परालब्धोत्पत्तिकाखिलकार्यकारणपरम्परायां सर्वं स्वस्वोत्पत्तिकाले प्रमितमेवेति कथंचिदपि वक्तुं शक्यं । तथाच यस्यकस्यचिदप्यप्रमितत्वे तस्यासत्त्वे सर्वकार्याणामसत्त्वापत्त्या बहुतरानुपपत्तिरापतेदिति । तस्मादज्ञाततया सर्वस्य वस्तुनः स्वसत्ताकाले सर्वदैव ग्राहकमनवच्छिन्नभूममखिलातिशायिस्फुरणैकरसमुपेयं ज्ञानं वृत्तिभिन्नम् । किंच वृत्तिः प्रदीपस्य प्रदीपान्तरानपेक्षत्ववद्वृत्त्यन्तरानपेक्षतामात्रेण स्वप्रकाशोच्यते न वस्तुतः स्वप्रकाशा प्रदीपवदेव तस्यापि स्वभिन्नज्ञानापेक्षत्वात् । जडपरिणामत्वेन जडतया चेतनापेक्षाया आवश्यकत्वादिति स्वयमप्रकाशमानया परप्रकाशस्याशक्यतया कूटस्थनित्यस्वप्रकाशचैतन्यं ज्ञानमुपेयम् । एकेन ज्ञानेन जानामि जानामीत्यनुगताकारप्रतीत्युपपत्तौ जात्यालम्बनक्लेशेनानुगमोपपादनेऽप्यनेकविषयत्वकल्पनागौरवस्याप्रामाणिकस्य दुर्वारतापत्तेरेकमङ्गीकरणीयमेव स्वप्रकाशचैतन्यम् । किंच सुषुप्तिकालीनाज्ञानानुभवानुरोधेन ज्ञातैकसत्सुखदुःखादिप्रकाशानुरोधेन च स्वीकरणीयमेव वृत्तिभिन्नं ज्ञानम् । सुषुप्तौ वृत्त्यसंभवात् सुखादावपि वृत्त्युपगमेऽननुभविकक्षणमात्राज्ञातसत्त्वप्रसङ्गेन वृत्तेरनभ्युपगमात्सत्त्वप्रधानान्तःकरणपरिणामत्वस्य वृत्तिसुखयोरविशिष्टत्वेन स्वप्रकाशे वृत्त्यनपेक्षतायास्तुल्यत्वात् व्यवस्थिते चैवं कूटस्थनित्ये परमात्मस्वरूपे सकलबाधावसानतयाऽबाधिते सकलविषयावभासके ज्ञानेऽज्ञानसाधकत्वेनाज्ञानाविरोधिन्यज्ञाननिवृत्तये वृत्त्यपेक्षायामपि स्थितायां ज्ञानेन सह ज्ञेयस्य संबन्धो न ज्ञेयमिथ्यात्वं विना संभवतीति ज्ञेयस्य विश्वस्य यदि मिथ्यात्वं न स्याज्ज्ञेयत्वं न स्यात् तस्य ज्ञानसंबन्धरूपत्वादिति मिथ्यात्वानुमानेऽस्त्यनुकूलतर्कोऽभिमतो वेदान्तिनाम् । तत्र ज्ञानवज्ज्ञेयस्यापि परमार्थसद्रूपत्वे संबन्धस्तेन सह न संभवति । तथाहि प्रत्यक्षस्थले ज्ञानेन ज्ञेयस्य कालविप्रकर्षाभावनियमेऽपि विषयस्य बाह्यस्यान्तरेण ज्ञानेन परमते देशविप्रकर्षनियमात् । संबन्धदेशकालविप्रकर्षाभावयोश्च समव्याप्तत्वस्य सर्वसंप्रतिपन्नसंयोगसमवायादिसंबन्धस्थले गृहीतत्वात् देशकालविप्रकर्षाभावो ह्यव्यवहितदेशकालत्वम् तस्य प्रतियोग्यभावादीनां तात्त्विकसंबन्धस्यासिद्धतया तत्र व्यभिचारनिर्णयस्यासंभवात् व्यभिचारसंशयस्य तत्तर्कस्थलेऽविरोधित्वात् संबन्धं प्रति देशकालविप्रकर्षाभावस्य प्रयोजकत्वे देशकालाविप्रकर्षे संबन्धनियमस्तदभावे हिमवद्विन्ध्यादौ संबन्धाभाव इत्यन्वयव्यतिरेकेण निर्णीते प्रयोजकाभावे प्रयोज्यानुपपत्तेस्तर्कस्य विद्यमानत्वात् । घटीयरूपरसयोर्देशकालविप्रकर्षाभावेऽपि न संबन्ध इति कथं तस्य प्रयोजकत्वमित्यस्यापि वक्तुमशक्यत्वादुभयोरपि घटात्मकत्वेन संबद्धत्वात् । अयमस्य देश इति व्यवहारगोचरो देशोऽपि नहि दुर्निरूप्यः । यस्य यद्देशत्वं त्वादृशामभिमतं तस्यैव देशतयोपादानात् व्याप्यादेः सर्वस्य व्यावहारिकत्वात् परमार्थतो दुर्निरूप्यत्वस्य मायिकानां व्याप्यादीनामुक्तानां देशकालादिघटितानां भूषणत्वात् । यत्रयत्र संबन्धस्तत्र देशकालविप्रकर्षाभाव इति संबन्धस्य व्याप्यतया देशकालविप्रकर्षाभावस्य व्यापकतया भवति निर्णयः । सति चैवं ययोर्विप्रकर्षो न तयोः संबन्ध इति व्याप्तिः संबन्धव्यापकदेशकालाविप्रकर्षस्याभावेन ज्ञानज्ञेययोः संबन्धाभाव एव परं सिद्ध्यति । सा चानुमितिस्तात्त्विकत्वेनैव संबन्धाभावं गोचरयति । व्यावहारिकसंबन्धस्य विषयस्यातात्त्विकत्वोपगमेन साधयिष्यमाणत्वात् । नचैवं यस्य देशकालविप्रकर्षाभावस्तस्य सिद्ध्यन् संयोगादिः संबन्धस्तात्त्विकः सिद्ध्येत् । संयोगवत्संबन्धत्वेन समवायस्यापि युतसिद्धाश्रयत्वं सिद्ध्येदिति वाच्यम् । देशकालविप्रकर्षाभावस्य हि संबन्धत्वेनैव संबन्धव्याप्तता न तात्त्विकसंबन्धत्वेन मन्मतेऽप्रसिद्धेः । परमते वैयर्थ्यादव्यावर्तकत्वादिति संबन्धमात्रं देशकालविप्रकर्षाभावात्सिद्ध्यति । यदि बाधकं न स्यात्स्यादेव संयोगादिस्तात्त्विकोऽस्तिहि सदसद्भ्यामनिर्वचनीयत्वदृश्यत्वादेरद्वैतश्रुतेश्च बाधकस्यैव सत्त्वम् । युतसिद्धयोरपि हिमवद्विन्ध्ययोः । संबन्धादर्शनात् संबन्धंप्रति तस्याप्रयोजकत्वेन तदभावे संबन्धानुपपत्त्यभावात् । समवाये युतसिद्धसंबन्धत्वासंभवाच्च । नच यथा संयोगबाधाद्गुणक्रियादिविशिष्टबुद्धेः समवायः सिद्ध्यति तथैव घटो नास्ति घटं जानामीच्छामीत्यादिविशिष्टबुद्धेः प्रतियोगित्वविषयत्वादिसंबन्धः प्रतियोगिविषयादेः संयोगसमवायादिबाधात्तदतिरिक्तः सेत्स्यतीतिवाच्यम् । विम-

तोक्ता प्रतियोग्यभावविषयज्ञानादिविषयिणी बुद्धिर्विशेषणविशेष्यसंबन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुषो नीलो घट इत्यादिविशिष्टबुद्धिवदित्यनुमानेन संबन्धत्वेनैव विषयित्वादिसिद्धेस्तात्त्विकसंबन्धत्वेन तदसिद्धेर्मिथ्याभूतस्य ज्ञानज्ञेयाज्ञानाज्ञेय-प्रतियोग्यभावादीनां विषयत्वप्रतियोगित्वादिसंबन्धस्यास्माभिप्यङ्गीकारात् न वयं हि तेषां संबन्ध एव नास्तीति ब्रूमः किंतु मिथ्याभूतः देशकालविप्रकर्षाभावरूपव्यापकस्याभावेन विषयज्ञानादेः संबन्धाभावस्य सिद्धेर्मिथ्याभूतसंबन्धस्यैव तद-विरोधित्वात् । उक्ताभावस्य नेह नानेत्यादिश्रुत्यनुकूलसत्तर्कोक्तप्रमाणसिद्धत्वेनाप्रातिभासिकतया तात्त्विकसंबन्धस्य तद-विरोधित्वासंभवात् । यदा हि विश्वस्य विषयस्य ज्ञानेऽध्यस्तत्वं न तात्त्विकत्वं तदाधिष्ठानेन ज्ञानेन विषयस्य देशकालविप्र-कर्षाभावात्संबन्धाभावस्यासिद्धतयोक्तानुमानेन सिद्ध्यन् संबन्धो ज्ञानधर्मिकस्य सन्घट इत्याद्यारोपस्य विषयीभूतो यो घटस्य सता ज्ञानेन तादात्म्यलक्षणः संबन्धस्तदात्मक एव सिद्ध्यति लाघवात् तस्यावश्यकतया तेनैव घटं जानामीत्यादिविशिष्ट-प्रत्ययव्यवहाराद्युपपत्तौ तदतिरिक्तस्य प्रतियोगित्वादिकल्पस्य विषयत्वस्य संबन्धतया कल्पने गौरवात् एवंच घटादीनां सति ज्ञाने व्यापके कल्पितत्वे ज्ञानेन सह देशकालविप्रकर्षाभावात् भूतलादिना संयोगवत् ज्ञानेन संबन्धो भवत्युपपन्नो व्यापका-भावाभावेन तात्त्विकत्वेन संबन्धस्याभावस्याप्राप्तेः संयोगादीनामिव दृश्यत्वादिहेतुभिर्दृश्यस्य संबन्धानुपपत्तितर्कसहकृतैस्त-स्यापि मिथ्यात्वसिद्ध्या न तात्त्विकत्वम् । संयोगादितः प्रतियोगित्वादीनां त्वयं विशेषः । संयोगादेर्देशकालविप्रकर्षाभावेन तदभावासत्त्वात् । यावद्व्यवहारं शास्त्रदृशामपि तात्त्विकसंबन्धत्वेन नाभावग्रहणं प्रतियोगित्वादीनां तु देशकालविप्रकर्षात् व्यव-हारकाल एव तात्विकसंबन्धत्वेनाभावग्रहणमिति संयोगविषयत्वादिकं घटादिव्यावहारिककल्पम् । विषयत्वस्याध्यासिकत्वेऽपि तदध्यासस्य हि मूलाज्ञानमात्रजन्यतया तस्य व्यावहारिकत्वमेव । प्रतियोगित्वादीनां तु सर्वजनव्यवहारगोचराणामपि चन्द्र-वितस्तिपरिमाणदेहात्मैक्यादितुल्यत्वम् । अविद्यातिरिक्तदूरत्वसंस्कारविशेषादिदोषविशेषजन्यारोपगोचरत्वेन व्यवहारकालेऽपि शास्त्रतस्तद्भावनिश्चयेऽप्यनुवर्तमानत्वादित्युपपन्ना विश्वस्य तात्त्विकत्वे दृग्दृश्यसंबन्धानुपपत्तिः । यत्तु विषयत्वस्य विषयित्वस्य वातिरिक्तस्य प्रतियोगित्वादिकल्पस्य संबन्धत्वं न संभवति विषयत्वस्य विषयमात्रनिष्ठत्वात् विषयित्वस्य च ज्ञानमात्र-गतत्वात् संबन्धस्य संबन्धिद्वयनिष्ठत्वनियमादिति । तन्न । एकसंबन्धेन संबन्धिद्वयनिष्ठत्वनियमे मानाभावात् । विषय-त्वस्य स्वरूपेण विषयेण निरूपकतया च ज्ञानेन संबद्धस्य संबन्धत्वोपगमे क्षत्यभावात् । अत्र विषयत्वस्य यत्संसर्गत्वं तत्किं संबन्धिद्वयातिरिक्तस्य तदनतिरिक्तस्य वा । अतिरिक्तस्य चेदवश्यं संबन्धिभ्यां संबद्धस्यैव संबन्धत्वं वाच्यमन्यथातिप्रस-ङ्गात् । संबन्धस्याप्यसंबद्धस्य तथात्वेऽतिप्रसङ्गात् संबन्धो वाच्य इत्यनवस्था स्यात् । अनतिरिक्तस्य तथात्वे संबन्धान्तरान-पेक्षतयाऽनवस्थाविरहेऽपि ज्ञानात्मकता वा स्यात् विषयात्मकता वा स्यात् । नाद्यः । इदं रजतमिदं रङ्गमिति समूहालम्बन-प्रमाया अपि भ्रमत्वापातात् रजतरङ्गनिष्ठविशेष्यत्वयोरुभयोरेकज्ञानात्मकत्वेनैकतया रङ्गत्वरजतत्वप्रकारतानिरूपितत्वात् एवं पर्वतो वह्निमान् महानसं धूमवदित्युभयाकारसमूहालम्बनज्ञानस्य महानसं वन्ह्यभाववत् पर्वतो धूमाभाववानिति बुद्ध्योः प्रतिबन्धकत्वापत्तिरेकज्ञानानतिरिक्तविशेष्यत्वयोरेकतया प्रकारताद्वयनिरूपितत्वात् विषयस्वरूपत्वे पर्वतत्वद्रव्यत्ववह्नित्वाद्य-वच्छिन्नविषयत्वादीनामेकत्वापत्त्या वह्निमान् पर्वत इति बुद्धेर्द्रव्याभाववान् पर्वतो वन्ह्यभाववत् द्रव्यमिति बुद्धिप्रतिबन्धक-त्वापत्तेः विषयतावच्छेदकरूपत्वे च संयोगसमवायावच्छिन्नवह्नित्वावच्छिन्नप्रकारत्वयोरेकत्वापत्त्या संयोगेन वह्निर्नास्तीति बुद्धौ समवायेन वह्निमानित्यस्य प्रतिबन्धकत्वापत्तेः । पर्वतत्वावच्छिन्नप्रकारत्वविशेष्यत्वयोः वह्नित्वावच्छिन्नप्रकारत्व-विशेष्यत्वयोरप्येकत्वापत्त्या पर्वते वह्निर्नास्तीति बुद्धिंप्रति पर्वतवान् वह्निरित्यस्यापि प्रतिबन्धकत्वापत्तेः । एतेन प्रका-शस्य सतस्तदीयतामात्रनिबन्धनः स्वरूपसंबन्धविशेषो विषयत्वमित्युदयनाचार्योक्तमप्यपास्तम् । ज्ञानविषयस्वरूपत्वस्य निराकृतत्वादन्यस्वरूपत्वस्य सर्वथैवासंभावितत्वात् । अथातिरिक्तमेव विषयत्वं तच्च स्वरूपसंबन्धेन विषयेण संबद्धं विषयज्ञानयोः संसर्गः स्वरूपस्य संबन्धान्तरेण संबद्धत्वानपेक्षत्वात् अन्यस्वरूपस्य स्वस्वरूपत्वासंभवेनातिप्रसङ्गविरहा-दित्यनवस्थाया नास्त्यवकाश इति चेन्न । विषयत्वस्वरूपं यदिहि संसर्गः स्यात्पट इति ज्ञानविषयत्वस्य घटादिव पटादप्यति-रिक्तस्य पटेनेव घटेनापि स्वरूपेण कुतो न संबद्धता स्यात् । स्वरूपस्यानपायात् । स्वं न स्वीयमित्यबाधितप्रत्ययेन स्वस्य स्वसंबद्धत्वासंभवात् । यदि विषयस्वरूपमेव विषयत्वस्य संसर्ग उच्यते तदपि नातिरिक्तस्य विषयत्वस्योक्तज्ञानीयस्य यथा घटोऽनात्मा तथैव पटोऽपि संबन्धान्तरेणासंबन्धी च यथा पटस्य स्वरूपं विद्यते तथा घटस्यापीति पट एव स्वरूपेण तत्संबन्धी न घट इत्यस्य दुर्वचत्वात् । नच यज्ज्ञानं यद्विषयकं यद्विषयत्वस्य तत्स्वरूपमेव संबन्ध इत्यपि वक्तुं शक्यम् । पट इति ज्ञानविषयत्वस्य घटेनासंबन्धनिश्चय उक्तज्ञानस्य घटाविषयकत्वनिश्चयो घटाविषयकत्वनिश्चय उक्तज्ञानविषयत्वस्य घटेनासंबन्धनिश्चय इत्यन्योन्याश्रयापत्तेः । नापि पट इत्याकारकज्ञानविषयत्वस्य पटस्वरूपमेव संसर्ग इत्यपि संभवति । साकारवादातिरिक्तपक्षे पटविषयकत्वातिरिक्तस्य पटाकारत्वस्य वक्तुमशक्यत्वात् तस्य निराकृतत्वात् । स्वं न स्वीयमित्य-बाधितप्रत्ययाद्यथा स्वस्य न स्वप्रतियोगिकत्वं तथा स्वानुयोगिकत्वमपि नेति विषये विषयत्वस्य विषयस्वरूपस्यापि संबन्धत्वा-संभवाच्च । तस्माद्घटं जानामीति विशिष्टज्ञानप्रत्ययगोचरः संबन्ध आध्यासिकतादात्म्यमेव व्यवतिष्ठते । तस्याविद्यकत्वेन प्रागुक्तरीत्या संबन्धत्वानुपपत्त्यादेस्तद्भूषणत्वादिति । अथान्यदपि विषयत्वं शक्यं वक्तुम् । कथमुच्यत आध्यासिकतादात्म्य-

मेव तदिति चेन्नान्यस्य निर्वक्तुमशक्यत्वात् । तथाहि ज्ञानकर्मत्वं विषयत्वमित्यपि न निर्वक्तुं शक्यम् । तद्धि ज्ञानजन्यफलाश्रयत्वम् । फलं च ज्ञातैव स्यात् । सा च स्वासंबद्धे यदि ज्ञानेन जननीया सर्वत्र स्यात् स्वसंबद्धे यदि तदा तस्य संबन्धस्य निर्वचनेऽलं ज्ञाततयाऽनिर्वचने संबन्धत्वानुपपत्तिः । तादृशसंबन्धसद्भावेऽपि कर्मत्वव्यवहाराय तत्स्वीकार इत्यपि न । अतीतानागतादेरपि ज्ञानविषयत्वेन तत्र ज्ञातताया ज्ञानेनोत्पादयितुमशक्यतया विनैव ज्ञाततां यथाकथंचिद्विषयत्वेनैव गौणकर्मत्वेन कर्मत्वव्यवहारस्योपपाद्यतया विद्यमानविषयेऽपि ज्ञाततायां मानाभावात् । ज्ञानाकारार्पणक्षमत्वं विषयत्वमित्येतदपि न ज्ञानाकारस्य तदर्पणक्षमत्वस्य च दुर्निरूपत्वात् तज्जन्यहानोपादानगोचरत्वमपि न तत् । अतादृशस्याकाशादेरविषयत्वापातात् । एवमन्यदपि न विषयत्वरूपं किमपि वक्तुं शक्यमित्यगत्या यथोक्तरूपमेव तदङ्गीकरणीयमिति सुष्ठूक्तं दृग्दृश्ययोः संबन्धानुपपत्तेरिति । **बन्धहेतुत्वाभावादिति** । यद्यत्कर्म यज्ञदानादिकं तत्सर्वं बन्धहेतुर्बन्धाहेतुश्चाकर्मेति बन्धहेतुत्वाभावस्याकर्मसादृश्यस्याकर्मभ्रमनिमित्तत्वसंभवाद्धेतुत्वेन निर्देशः । अकर्मपदेन बन्धहेतुरुच्यते । तत्र पदार्थतावच्छेदकसत्त्वस्य विशिष्टतादात्म्यप्रयोजकतया हेतुत्वेन निर्देश इति तु न वाच्यम् । तथासत्युक्तज्ञानस्य भ्रमानात्मकतया मिथ्याज्ञानत्वेनेत्याद्यग्रिमग्रन्थविरोधात् । **प्रत्यवायहेतुत्वेनेति** । निन्दितेन कर्मणा सह पापहेतुत्वेन सादृश्येन भ्रमनिमित्तेन नित्यकर्माकरणे भवति निन्दितकर्मबुद्धिरिति तस्यापि हेतुत्वेन निर्देशः कृत इति । **अशुभमोक्षहेतुत्वेति** । अशुभाद्यो मोक्षस्तद्धेतुत्वेत्यर्थः । **नचैतादृशं मिथ्याज्ञानं बोद्धव्यं तत्वमिति** । यद्यपि कर्मणोऽकर्मणश्च तत्वं तस्याबाधितो धर्मः धर्मिविशेषविशिष्टाबाधितस्वरूपं वा । नचोक्तमिथ्याज्ञानं कर्मादितत्वमपि तु कर्मणोऽकर्मत्वं कर्मतत्वमुक्तव्याख्यातुरभिमतं तन्निराकरणमुचितं नतु मिथ्याज्ञानस्य बोद्धव्यतत्वरूपतानिराकरणमित्यसङ्गतिस्तस्यापि कर्मणोऽकर्मत्वस्य तत्त्वानात्मकत्वात्कर्मतत्त्वरूपतया तस्य व्याख्यात्रभिमतत्वासंभवात्कर्मतत्त्वरूपतयोक्ताज्ञानस्यैव तदभिमतत्वं वाच्यम् । विषयतयोक्तज्ञानस्य कर्मधर्मत्वादबाधितत्वाच्च कर्मतत्त्वरूपत्वसंभवात्तन्निराकरणं च नासङ्गतम् । नचैतादृशस्य ज्ञानस्य तत्त्वरूपत्वेन बोद्धव्यं तत्वं नेति निराकरणं तथाप्यसंगतमेवेति वाच्यम् । नहि केवलं तत्त्वं नेति निषिध्यतेऽपितु बोद्धव्यं तत्वं नेति । तथाच बोद्धव्यत्वोपरागेण निषेधप्रत्ययादसङ्गत्यभावात् ज्ञानविषयीभूतं तत्त्वं बोद्धव्यं तत्वमुच्यते न बोध एव बोद्धव्यतत्वं तत्रापि च न कथंचिन्मिथ्याज्ञानं प्रमाज्ञानस्यैव तत्वविषयकत्वोपरागेण बोद्धव्यत्वतत्वरूपत्वयोः कथंचित्संभवादेतस्य मिथ्याज्ञानत्वान्नेदं बोद्धव्यं तत्वमित्यभिप्रायकत्वेनासङ्गत्यभावात् । यद्वा एतादृशं यथाकथंचिदविचारितरमणीयतया पराभिमतं कर्म तत्त्वमकर्म तत्त्वलक्षणं बोद्धव्यं । नच तत्वं मिथ्याज्ञानं । यतः मिथ्याबाधितं ज्ञानं यस्येति बहुव्रीहिरिति नासङ्गतिः । **द्वारोपयुज्यत इति** । तत्प्रतिपादनं भवेत्सार्थकमिति भावः । **कुत्राप्युपयुज्यत इति** । अनुपयुक्तस्य प्रतिपादनमनुचितमिति भावः । **उपक्रमादिविरोधस्योक्तेरिति** । यज्ज्ञात्वा मोक्ष्यसेऽशुभादित्यनेनाशुभनिवृत्तिहेतुं ज्ञानमुपक्रम्याशुभहेतुमिथ्यादर्शनविधानस्य विरुद्धत्वादित्युक्तविरोधस्योक्तेरुक्तप्रायत्वादनुपदमित्यर्थः । **लक्षकतयोपयुज्यत इति** । नित्यकर्माकरणपदेन प्रत्यवायहेतूक्तविरुद्धकर्म लक्ष्यते । तथाच प्रत्यवायसाधनतया तज्ज्ञाने सति तत्परिहारार्थत्वेन नित्यकर्माकरणप्रतिपादनमुपयुज्यते न तत्र कर्मदृष्टिप्रतिपादनमपीत्यर्थः । नित्यकर्माकरणे कर्मबुद्धिः प्रत्यवायजनकत्वरूपसादृश्यात्स्यात्तदेव तु न संभवतीत्याह—**नापि नित्येति** । भावार्था इत्यादिजैमिनिसूत्रम् । अस्य च कर्मशब्दा यजेत दद्यादित्यादि कर्मबोधकशब्दाः भावोपरक्ता भावनाविषयकास्तेभ्य एव नतु गुणादिशब्देभ्यः साध्यस्वरूपपूर्वापरीभूतव्यापारप्रचयरूपभावार्थसाध्यतया क्रियाकार्यमपूर्वं प्रतीयेत । प्राभाकरनये वाच्यतया भट्टादिनये च स्वर्गादिकर्मकभावनायां यागस्य करणत्वेनान्वये प्रतीतस्वर्गसाधनत्वस्याशुविनाशिनि यागेऽनुपपत्तिज्ञानेन हि यतः एषोऽर्थो भावार्थरूपोऽर्थः भावनाद्वारा विधीयते । साध्यरूपो भावार्थ एव हि विधिविषयाया भावनायाः साक्षाद्विषयो नतु सिद्धरूपो गुणादिः । घटं कुर्वित्यादावपि घटार्थं दण्डादिकं व्यापारयेति पुरुषव्यापारगोचरकृतेरेव प्रतीतेः । भावना हि भवितृभवनानुकूलभावुकव्यापारत्वेन प्रतीयमाना कृतिरेव । तथाच गुणादीनां भावार्थमद्वारीकृत्य विधिविषयभावनया संबन्धाभावाद्विधिसंबद्धभावार्थादेव दध्ना जुहोतीत्यादावपि दध्यादिगुणोपरक्तादपूर्वं नतु दध्यादिगुणात्केवलं तत्र भावार्थस्य प्राप्तत्वाल्लाघवेन विधेर्गुणपरत्वं । यत्रोभयोरप्राप्तत्वं तत्र विशिष्टपरत्वं यथा सोमेन यजेतेत्यादावित्यर्थः । **अतिरात्र इति** । अतिरात्रे षोडशिनं गृह्णातीत्यनेन षोडशिग्रहणस्य विहिततया न गृह्णातीत्यस्य तन्निषेधपरत्वासंभवादगत्या षोडश्यग्रहणसंकल्पः पक्षे तेन विधीयत इति संकल्परूपभावार्थादेव तत्रापूर्वं न षोडशिग्रहणाभावादित्यर्थः । प्रजापतिव्रतमुपक्रम्य नेक्षेतोद्यन्तमित्याद्युक्तं तत्रेक्षणाभावस्याव्रतरूपत्वादुक्तवाक्यस्य तत्परत्व उपक्रमविरोधादनीक्षणसंकल्परूपभावार्थपरत्वमेव नञ्समभिव्याहृतधातोरिति विधिविषयभावनाविषयादुक्तसंकल्परूपभावार्थादेव यथा पूर्वं तथेत्यर्थः । **लक्षणार्थे शताव्याख्याता इति** । शतेति हलन्तादाप् वाचानिशेत्यादिवत् शतृप्रत्यय इत्यर्थः । लक्ष्यतेऽनेनेति लक्षणम् । प्रकृत्यर्थे क्रियान्तरस्य लक्षणे विवक्षिते कर्तरि विहिता शता व्याख्याता । अत्र लक्षणे प्रकृत्यर्थे विहितोऽयमिति व्याख्यातशतृप्रत्यय इत्यर्थः । प्रकृत्यर्थो विहितकर्माकरणम् । विहितकर्मविरुद्धप्रत्यवायहेतुकर्मणो लक्षणम् । तथाचोक्तं कर्म कुर्वन् प्रायश्चित्तीयते प्रायश्चित्तप्रयोजकपाप्मवान्भवतीत्यर्थः । पर्यवस्यतीति भावः । यद्वा शतेति तृतीयान्तम् । लक्षणे प्रकृत्यर्थे विहितेन शतृप्रत्ययेन प्रागुक्ता अनुपदं मया येऽर्था व्या-

ख्याता इत्यर्थः । व्याख्याता इति बहुवचनान्तोऽत्रपक्षे पाठः । अत्रपक्षेऽनुपपत्तेरित्यस्य लक्षणार्थे शतेत्यत्रान्वय इति ॥ १८ ॥ **तदधिगम इत्यादि** । चतुर्थाध्यायप्रथमपादस्थब्रह्मसूत्रम् । तदर्थश्च तदधिगमे ब्रह्मसाक्षात्कारे सति उत्तरपूर्वयोरघयोरुत्पन्नस्य पूर्वस्य कर्मरूपहेतोरुत्पत्स्यमानतया संभाव्यमानस्योत्तरस्य च विनाशोऽश्लेषोऽसंबन्धोऽनुत्पादश्च तद्व्यपदेशात् ब्रह्मविदितयोरश्लेषविनाशयोः श्रुतिषु व्यपदेशात् । तद्यथा 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत'इति । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त'इति । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर'इति ॥ १९ ॥ **विशेषणद्वयमिति** । नित्यतृप्त इति । निराश्रय इति च ॥ २० ॥ **प्रत्याहारेणेति** । अन्तःकरणस्य बाह्येन्द्रियाणां च स्वस्वविषयेषु या प्रवृत्तिस्तद्विरोधी प्रयत्नविशेषः प्रत्याहारः । येन विषयासंप्रयोगात्स्वस्वरूपव्यवस्थितस्य चित्तसत्त्वस्यानुकारो भवतीन्द्रियाणां तेनेत्यर्थः । **वैयर्थ्यमिति** । प्रथमव्याख्याने पौनरुक्त्यपरिहाराय स्वर्गादिफलकयागादिव्यावृत्तिस्तत्फलमस्त्यत्र पक्षे शरीरपदेन तदव्यावृत्तेर्वैयर्थ्यमित्यर्थः । **अप्रसक्तेति** । विहितात्कर्मणः पापस्याप्राप्तत्वात्तन्निषेधोऽप्रसक्तप्रतिषेध इत्यर्थः । प्रथमपक्षे तु कौपीनाद्युपादानादिक्रियातः सर्वजनप्रसिद्धं सुखं दुःखं वा पूर्वाचरितपुण्यपापादिविपाकतयाऽस्ति प्राप्तं तत्प्रतिषेधान्नाप्रसक्तप्रतिषेध इति भावः । **उक्तं स्यादिति** । एकविशेषप्रतिषेधस्य शेषाभ्यनुज्ञाफलकत्वादिति भावः । **साधारणपरत्व इति** । कर्मत्वेन सामान्यरूपेण प्रतिषिद्धपरता स्यादपि प्रतिषिद्धमात्रपरता तु न स्यादेव । तादृशस्य पुंसः प्रतिषिद्धाचरणस्यात्यन्तमसंभावितत्वात् । तत्फलस्य दूरमप्राप्त्या तत्प्रतिषेधस्यात्यन्तासङ्गतत्वादिति भावः ॥ २१ ॥ **असत्कृतमिति** । सत्कृतिः सत्कारस्तेन लब्धं सत्कृतमतादृशमित्यर्थः । 'अभिपूजितलाभात्तु जुगुप्सेतैव सर्वश'इत्यादिना मनुना सत्कारपूर्वकदत्तस्य प्रदातृगोचररागनिमित्तत्वेन निन्दितत्वात् । नचोत्पातनिमित्ताभ्यां कथिताभ्यामिति शेषः । आगामिभूकम्पाद्युत्पातकथनेन शुभाशुभनिमित्तकथनेन च नक्षत्रविद्ययाङ्गविद्यया हस्तपादललाटाद्यङ्गसंबन्धिरेखोपरेखादिभिः शुभाशुभसूचकसामुद्रिकविद्यया च अनुशासनेन धर्मशास्त्रे विहितमिदं निषिद्धमिदमत इदं कुरु नेदमित्युपदेशेन वादेन न्यायशास्त्रोदितकथात्रयेण चेत्यर्थः । **सहेतुकस्येति** । कर्तृत्वाभिमानफलतृष्णादिहेतुसहितस्येत्यर्थः ॥ २२ ॥ २३ ॥ **तत्कारणोच्छेदादिति** । तत्पदं कर्मफलोभयपरम् । तत्कारणानामज्ञानान्तःकरणकर्तृत्वाद्यध्यासफलाभिलाषादीनां ब्रह्मज्ञानेनोच्छेदादित्यर्थः । यद्यपि कर्माशुविनाशि विनापि ब्रह्मज्ञानं फलमजनयित्वा नश्यत्येव । नच कर्मजनितमपूर्वमिह कर्मपदेन विवक्षितम् । फलपर्यन्तस्थायिनोऽपि तस्य केवलस्य फलाजनकत्वात्सहकारिणोऽहंकारफलभोक्त्रादिभेदादेरपगमेन फलमजनयित्वैव तस्य नाशस्यौचित्यमिति वाच्यम् । क्रियमाणमिति विशेषणवैयर्थ्यात् । तथापि यावद्भिर्विहितैः साधनैरज्ञानिना क्रियमाणं कर्म जनयित्वाऽपूर्वं फलपर्यन्तस्थायि तद्द्वारा स्वयं फलं जनयित्वैव स्वरूपव्यापारोभयरूपेण नश्यति । ज्ञानिनापि विहितैस्तावद्भिः साधनैरेव संपादितं कर्मेति तस्याप्यपूर्वजननेन फलं जनयित्वैवोभयात्मना विनाश उचितः कुतश्च तत्फलमजनयित्वैव नश्यतीति शङ्कार्थः । ज्ञानिना कृतं कर्म कर्माभासमेव दग्धपटाभासवत् । यतः करणेतिकर्तव्यताकर्मसंप्रदानाधिकरणकर्त्रादिप्रविभागवत्साधनकलापोऽपि तस्य साधनाभास एवेति तत्त्वज्ञानेन कर्मकारणस्य सर्वस्य बाधात्तथाच यथा दग्धपटात् न प्रावरणादिकं तथैवोक्तकर्मणो नापूर्वं कुतः फलमिति फलमजनयित्वैव यथैव कारणाभासादुत्पन्नं प्रतीतं तथैवाशुविनाशिखाभाव्याद्विनश्यतीत्यपि प्रतीयत इति भावः । **त्यागो याग इति** । सामान्याभिधानमिदम् । यजतिजुहोतीत्यादिपदाभिधेयस्य तिष्ठद्धोमा यजत य इत्यादिनाभिहितस्य विशेषस्य नेह विवक्षा कारकभेदप्रतिपादनानुपयोगित्वात् । ब्रह्मणेति तृतीयान्तस्य ब्रह्माभिन्नकर्तृकमित्यर्थः । अनेन रूपेण ब्रह्मार्पणमित्याद्युक्तप्रकारेण एतस्यापेक्षितत्वादध्याहारः समाधेः दृढभूम्यवच्छिन्नज्ञानस्य धर्मिणः कर्मणः निखिलकारकसहितस्य कर्मण उक्तत्वेऽपि प्रकारस्यानुक्तत्वात्तत्पूरणसंवलितमुक्तं ब्रह्मज्ञानमिति । **एकमिति** । ब्रह्मणो ब्रह्मप्रकारकं कर्मणि कर्मविशेष्यकं समाधिर्ज्ञानं यस्येति समस्तमेकं पदं नतु ब्रह्मपदं भिन्नमित्यर्थः । अस्मिन्पक्ष इत्यनेन ब्रह्मैव तेनेत्याद्युत्तरार्धं ज्ञानफलकथनाय इति पक्ष इति नार्थः । पूर्वं ब्रह्मपदं हुतमित्यनेन संबध्यत इत्यस्यासङ्गतत्वापत्तेः । तथासत्युत्तरार्धस्यातथात्वात् । अपितु अर्पणपदेनैव स्वर्गस्य बोध्यत्वपक्ष इत्यस्मिन्पक्ष इत्यस्यार्थः । तथाच नासङ्गतिः । अस्मिन्पक्षे उत्तरार्धस्य द्वयी गतिः । ब्रह्मकर्मसमाधिना तेन ब्रह्मैव गन्तव्यमिति संपूर्णमुत्तरार्धं ज्ञानफलकथनायेत्येका । ब्रह्मैवेति हुतमित्यनेनान्वितम् । कर्मसमाधिना तेन ब्रह्मैव गन्तव्यमित्यपरा । तत्र प्रथमपक्षे गन्तव्यमित्येतदनुषङ्गाभावेऽपि हुतमित्येतदपेक्षितस्य ब्रह्मैवेत्यस्यानुषङ्ग एकोऽस्त्येवेति द्वितीयपक्षानुसारेणाह—**नानुषङ्गद्वयक्लेश इति** । **संपन्मात्रेणेति** । विशेष्यस्वरूपानुपमर्देन विशेष्यस्य यादृशं रूपं तदबाधनेन तस्मिन्नारोप्य विरोधिनि भासमाने सत्यपि विपरीतग्रहे योऽन्यारोपः फलविशेषेच्छयाहार्यरूपः स संपत् शुद्धारोपे तु आरोप्यविरोधिरूपस्य धर्मिणि न भानमिति विशेष इति ॥ २४ ॥ २५ ॥ प्रसंख्यानेऽपीत्यादियोगसूत्रम् । प्रसंख्यानं संप्रज्ञातः समाधिः । तत्राप्यकुसीदस्य तत्फलमप्यैश्वर्यादिकमनभिलषतस्तत्रापि विरक्तस्येति यावत् । धर्ममेघः समाधिः संप्रज्ञातचरमावस्थारूप इत्यर्थः ॥ २६ ॥ २७ ॥ ॥ २८ ॥ **प्रक्षिपन्तीति** । प्राणस्य या गतिर्बहिर्निर्गमलक्षणा तदभावेनापानस्यान्तर्गतिरूपा या वृत्तिस्तदनुकूल्येनावस्थापयन्तीत्यर्थः । तथाचान्तराकृष्टेन बाह्यपवनेन शरीरपूरणं भवतीति भावः । एवं रेचकेऽपि बोध्यम् ॥ २९ ॥ ३० ॥ ३१ ॥

॥ ३२ ॥ सर्वापेक्षा चेत्यादिब्रह्मसूत्रं प्राग्विवृतम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ तदधिगमेत्यादिब्रह्मसूत्रं प्राक् व्याख्यातम् । इतरस्याप्येवमश्लेषः पाते त्विति ब्रह्मसूत्रस्य । इतरस्य पुण्यस्यैवं प्राग्वदत्राश्लेषः पूर्वस्य विनाश उत्तरस्यासंश्लेषः पापवत्पुण्यस्यापि नाशकतायां तद्व्यपदेशादेः समानत्वात् । 'उभे उ हैवैष एते तरती'तिश्रुतौ द्वयोर्नाश्यत्वेन व्यपदेशात् । पापपुण्ययोरेवमश्लेषविनाशविदुषः शरीरस्य पाते तु अवश्यं मुक्तिरित्यर्थः । अनारब्ध इत्यादिब्रह्मसूत्रस्य अनारब्धं फलं याभ्यां पुण्यपापाभ्यां ते पूर्वे प्राग्जन्मनि तत्त्वज्ञानात्प्रागत्रापि जन्मनि संचिते पुण्यपापे तत्त्वज्ञानात्क्षीयेते नतु प्रारब्धफले ते तदवधेस्तस्य तावदेव चिरमिति श्रुतौ शरीरपातस्य मुक्ताववधिकरणात्तत्त्वज्ञानात्प्रारब्धकर्मणोऽपि क्षये विलम्बाभावेन तत्त्वज्ञानस्यैवावधित्वं क्रियेत प्रारब्धस्य भोगेनैव क्षये तु जातेऽपि तत्त्वज्ञाने शरीरनाशाभावेन प्रारब्धेनानष्टेन भोगाभासस्य क्रियमाणतया मुक्तेर्विलम्बाज्ज्ञानस्यावधित्वाकरणं हि युज्यते । किंच तत्त्वज्ञानायापि कर्मणा शरीरारम्भस्यावश्यकतया प्रवृत्तव्यापारस्य प्रारब्धस्य प्रक्षिप्तेषुवत् भ्रामितकुलालचक्रवद्वाहिनान्तरा व्यापारोपरम उचित इत्यर्थः । 'भोगेन त्वितरे क्षपयित्वा संपद्यत' इति सूत्रस्य भोगेन इतरे प्रारब्धफले पुण्यपापे क्षपयित्वा ब्रह्म संपद्यत इत्यर्थः । 'यावदधिकारं' इत्यादिसूत्रस्य यथान्येषां प्रारब्धं कर्मैकशरीरारम्भकं तच्छरीरापगमे नश्यति तथाधिकारिणां देवर्षिप्रभृतीनां तदधिकारारम्भकं कर्म प्राथमिकतत्त्वज्ञानजनकशरीरनिपातेऽपि न नश्यति किंतु यावन्न तदधिकारसमाप्तिस्तावत्तिष्ठति प्रयोजनादिवशाच्छरीराण्यन्यान्यप्यनन्तरा तत्कर्मणैव संपाद्यन्तेऽधिकारसमाप्तावेव तेषां मुक्तिः । प्रसिद्धश्चायमर्थः पुराणेतिहासादिष्वित्यर्थः ॥ ३७—४२ ॥

इति भगवद्गीतागूढार्थदीपिकाचतुर्थाध्यायस्य श्रीधर्मदत्तशर्मणा विरचितो गूढार्थतत्त्वालोकः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

**एवं सर्वकर्माणीति** । अन्तःकरणशुद्धिद्वारा नित्यनैमित्तिकनिष्कामकृतयज्ञादिकर्माणीत्यर्थः । **कर्मतत्त्यागयोरित्यादि** । स्वव्यापारातिरिक्तव्यवधानराहित्येनोपकारकं प्रधानस्यारादुपकारकं प्रयाजवददृष्टेन स्वव्यापारमात्रेण प्रधानयज्ञस्य कर्मसंन्यासः सर्वविक्षेपाभावसंपादनेन प्रधानज्ञानस्योत्पत्तावुपकारकः । सति विक्षेपे तदसंभवात् । प्रधानसाधनद्रव्यादिसंस्कारद्वारा प्रधानोपकारकं संनिपत्योपकारकमवघातप्रोक्षणादिवत् प्रधानसाधनव्रीह्यादिसंस्कारद्वारा प्रधानयागस्य ज्ञानसाधनान्तःकरणस्य शुद्धिरूपसंस्कारद्वारा प्रधानज्ञानस्य साधनं नित्यनैमित्तिकादिकर्म तत्रारादुपकारकस्य संनिपत्योपकारकादन्तरङ्गत्वेन मुख्यतया द्वन्द्वे प्रथमनिर्देशः कर्मतत्त्यागयोरल्पाच्त्वात्कर्मणः प्रथमनिर्देश आवश्यक इति दार्ष्टान्तिके वैपरीत्येनान्वयेऽपि नासङ्गतिः । प्रयाजावघातयोरिवेति व्यतिरेकदृष्टान्तः । **एकार्थत्वाभावादिति** । विकल्पप्रयोजकस्य द्वारैक्येनैकार्थत्वस्य द्वारभेदेनाभावादित्यर्थः । तेनैकार्थयोः कर्मतत्त्यागयोरेकार्थत्वाभावस्यैवाभावाद्द्वारभेदेनापि तत्सत्त्वासंभवान्नासङ्गतिः । एकार्थस्य द्वारैक्य एकेन तत्संपत्तौ द्वितीयस्य वैफल्याद्विकल्पो ह्युचितः । द्वारभेदे हि तत्तद्द्वारस्य तेन तेनैव संपाद्यतया वैफल्याभावेन विकल्पो न युक्त इति भावः । नियमापूर्वं त्विति । यद्यप्यदृष्टत्वेन सामान्यत एकत्वमप्रयोजकमन्यथैकप्रधानार्थानामदृष्टद्वाराणां प्रयाजादीनां विकल्पापत्तेरेवमाज्यावेक्षणोत्पवनादीनां संस्कारद्वाराणां तथात्वापत्तेरपित्वेकावान्तरजातीयद्वाराणामेकार्थानां विकल्पः । दृष्टस्य हि व्यापारस्य तथात्वावगमो दर्शनादेवादृष्टस्य च लिङ्गादिभिः लिङ्गं च वाशब्दादिरनुष्ठेयविरोधश्च समुच्चयग्राहकचशब्दसंख्याविशेषप्रतिपादकाभावादिसहकृतः । लिङ्गाभावे सति तुल्यवदाम्नातानामनेकदोषदुष्टविकल्पस्यान्याय्यत्वात् । एवं च नियमादृष्टस्य संन्यासस्थले सत्त्वेऽपि तस्य दुरितनिवृत्तेश्च विजातीयत्वेन तस्य तस्य तत्तत्साध्यत्वात् न विकल्पावकाशस्तथापि प्रौढिवादेनैतदभिधानम् । अदृष्टत्वेनोभयोरस्त्वैक्यं तथापि न विकल्प इति । तथाहि नियमादृष्टस्य नियमफलत्वेन प्रकृतक्रियाव्यापारत्वाभावात् तस्य प्रकृतक्रियाव्यापारत्वे तस्यैव तत्प्रयोजकतया सकृदवघातेन तुषविमोकानिष्पत्तावप्यदृष्टोत्पत्त्या तत्र पुनःप्रवृत्त्यनापत्तेरतस्तुषविमोकादिदृष्टस्यैव तद्व्यापारत्वं प्रयोजकत्वं चोपेयं तथाच तुषविमोकस्यापेक्षिततण्डुलनिष्पादकस्य यावता सिद्धिस्तावदवघातेषु प्रवृत्तिरुपपद्यते । एवंच संन्यासस्यापि विक्षेपराहित्यप्रयोज्यत्वेन नियमादृष्टस्य तदप्रयोजकतया तद्व्यापारत्वाभावादव्यापारस्यैक्येऽपि व्यापारस्यानेकतया न विकल्पावकाश इति भावः । **दृष्टसमवायित्वादिति** । दृष्टेन व्यापारेण प्रयोगे समवैतीति दृष्टसमवायि तत्वादित्यर्थः । **तदेत्यादि** । विशुद्धिरहितस्य कर्मणा चेतःशुद्धिद्वारा ज्ञानाधिकारलाभः स्यात् शुद्धिमतः संन्यासेन विक्षेपनिरासद्वारा वा ज्ञानाधिकारलाभः स्यात् तदुभयमपि संन्यासानन्तरं कर्मानुष्ठानेन भवत्युपपन्नम् । तत्राद्ये यो दोषस्तमाह—**परित्यक्तेति** । संन्यासोत्तरेण तेन कर्मणा पातित्यस्यैव जननेन शुद्धेर्दूरापास्तत्वात् न ज्ञानाधिकारलाभसंभव इति भावः । ननु कर्मान्तरेणोक्तपातित्यस्य तेन च कर्मणा पौर्विकपापान्तरस्य विनाशसंभवाच्छुद्धिसंभव इत्यत आह—**कर्मानधिकारित्वमिति** । तथाचोक्तपातित्येन कर्मस्वधिकारस्यैवापाकरणात्कर्मान्तरादपि न विशुद्धिसंभव इति भावः । नैतावन्मात्रमपि तु कर्मप्राक्कालिकस्य संन्यासस्य चेतोविशुद्धिरहिते विक्षेपनिवर्तकत्वासंभवात् वैयर्थ्यमपीत्याह—**प्राक्तनेति** । ननु कालान्तरभाविफलानुकूलादृष्टोत्पादकत्वेन सार्थक्यं स्यादित्यत आह—**तस्यादृष्टेति** । संन्यासस्य विक्षेपराहित्यरूपदृष्टार्थत्वस्यैवोपगमेनादृष्टार्थत्वानु-

पगमादित्यर्थः। द्वितीये दोषमाह—**प्रथमकृतेति**। संन्यासात्प्रागेव विशुद्धचित्तस्य कर्मप्रथमसंन्यासेन विक्षेपराहित्ये संपादिते ज्ञानाधिकारलाभे च सति चेतःशुद्धिद्वारा ज्ञानाधिकारलाभफलककर्मणो वैयर्थ्यं स्यात्तस्य संपन्नत्वादित्यर्थः। **वेदानुवचनादय इति**। भवन्तीति शेषः। कर्मभ्य इत्यनन्तरं तत इति शेषः। कषाय इत्यादि च द्वितीयचरणस्य स्पष्टीकरणम्। **श्रेणीस्थानेष्विति**। आश्रमत्रयेष्वित्यर्थः। संघातस्य तेष्ववस्थानात्। **भावितैः करणैरिति**। तत्तत्करणानां विषयेषु दोषदर्शनेभ्यो या भावनास्ताभिः प्रत्याहारभावनाभिर्मैत्र्यादिभावनाभिश्च भावितैः करणैरिन्द्रियान्तःकरणादिभिः मोक्षं वैराग्यमासादयतीत्यन्वयः। बहुसंसारयोनिष्वनेकेषु जन्मसु भावितैरित्यन्वयः॥ १—९॥ **पापपुण्यात्मकेनेति**। पापशब्दस्य संसारानुबन्धित्वादधर्मे धर्मे च श्रुतिषु प्रसिद्धिरिति। पापं च तत्पुण्यात्मकं पापमिह तेनेत्यर्थः। तेनाधर्मस्य शुद्ध्यजनकत्वेऽपि न मूलासङ्गतिरिति भावः॥ १०—१३॥ **संन्यासे सतीति**। अकर्त्रभोक्त्रात्मदर्शनरूपविद्याप्रयुक्तबाधरूप अनुपदोक्तसंन्यास इति नार्थस्तथासत्यथवेत्यादिकोट्यन्तर एव पर्यवसानादपि तु कर्मत्यागरूपे संन्यास इत्यर्थः। तथाच वास्तविक्येव गतिः। कालान्तरे यथा देवदत्तगतागतिविरोधिस्थितिकाले न भवति तथैव कालान्तरे देवदत्तात्मनि वास्तविकमेव कर्मकर्तृत्वादिकं तद्विरोधिकर्मत्यागकाले न भवतीति संदेहस्य प्रथमा कोटिः, अथवेत्यादिद्वितीया कोटिस्त्वध्यस्तमेव कर्तृत्वादिकमुक्तबाधलक्षणसंन्यासेन भवतीति रूपेति॥ १४॥ **नवविधेति**। यद्यपि भोगवत्प्रमायाः कृतितत्साध्यगमनाशनादिक्रियायाश्चाभिधानमुचितम्। प्रमातृत्वादिघटकतयाऽनभिधाने प्रमाऽऽदेर्भोगस्यापि भोक्तृत्वादिघटकतयाऽनभिधानं स्यात्तथापि प्राचीनस्वतन्त्रप्रतिभक्तदुर्लङ्घ्यविभागानुरोधेन भोगपदस्य क्रियामात्रोपलक्षकतया नवविधत्वमुपपाद्यम्। मनस्तु स्वमतेनेन्द्रियं प्रमातृकोटिप्रविष्टमेवेति प्रमाणादिवद्भोगकरणस्य नाभिधानमिति बोध्यम्। **अवभासरूपमिति**। यद्यपि मोहमित्यस्य विवरणं विक्षेपमिति तदन्वयि यथावभासरूपमिति तथैव संसाररूपमित्यपि तदनन्वयिनस्तस्यान्यत्रान्वयासंभवेनासंबद्धाभिधानापत्तेरभेदेन चैकत्र संसारावभासयोरन्वयोऽप्यसंगत एव। तथापि विषयविषयिणोरभेदोपचारात्प्रपञ्चमात्रस्य प्रतिभासमात्रशरीरत्वाद्वा तत्संगमनीयम्॥ १५॥ **अत्राज्ञानेनावृतमित्यादि** विस्तरेण प्रागेव कृतव्याख्यानं तृतीयाध्यायस्थसप्तविंशतिश्लोकव्याख्यानावसर इतीह न किंचिदुच्यत इति॥ १६—२१॥ याहीत्यादिस्मृतिश्चेत्यतः प्राक् योगभाष्यम्। सर्वस्येत्यारभ्य तापदुःखतोच्यत इत्यन्तं च तत्। यद्यपि भ्रममात्रस्याविद्यात्वं तथापि येषां संसारनिदानत्वं त एवेह प्रदर्शनीया इति सूत्रकारेण तद्विशेषा एवानित्याशुचीत्यादिसूत्रेण दर्शिता इत्येतदभिप्रेत्याह—**तस्याविशेष इति**। ध्रुवा पृथिवीत्यादिबहुलं योगभाष्यम्। तद्वाचस्पत्ये च विवृतमेतदिति न व्याख्यातम्॥ २२॥ **प्रस्तुत इति**। भवत इति शेषः। **मात्रमिति**। प्रस्तुतं भवतीति शेषः। **न दृष्टान्त इतीति**। नैवं दृष्टान्त इतीत्यर्थः। मात्रमित्येतदनन्तरं नञो विरहे प्रस्तुत इति सति सप्तमी। दृष्टान्त इति प्रथमान्तम्॥ २३॥ 'अवस्थितेरिति काशकृत्स्न' इति प्रथमाध्यायचतुर्थपादसूत्रम्। अत्राविकृतस्यैव ब्रह्मणो जीवात्मता व्यवस्थापिता युक्तिभिः श्रुत्यनुकूलाभिरिति बोध्यम्॥ २४—२९॥ इति पञ्चमाध्यायगूढार्थदीपिकालोकः॥ ५॥

---

## षष्ठोऽध्यायः।

निष्कामकर्मानुष्ठायिनमबोधयत्संन्यासीति योगीति च पदं न भवति स्तावकमत आह—**संन्यासो हीत्यादि**। फलत्यागात्स्वर्गादिकं फलं मम मास्त्वितीच्छाविशेषादित्यर्थस्तेनोभयोः संन्यासयोगयोर्भेदः कर्मफलतृष्णात्यागेनैकेनापि स्तुतिसंभवादर्थवादस्थले वाक्यलक्षणाया अप्यभ्युपगमाल्लाघवाचाह। कर्मफलतृष्णात्याग एवात्रेत्यादिकथनायेत्यन्तम्। **भाविनौ हीति**। भाविनौ यत इत्यर्थः। तेन तस्मादित्यस्य नासङ्गतिः। **प्रशंसालक्षणयेति**। यथान्येषां पशुत्वेऽपि पशुशब्दस्य प्रशस्तपशुलक्षणयाऽपशव इव नञर्थान्वयोपपत्तिस्तथा फलतृष्णादिमतोऽशुद्धचेतसो निरग्नेरक्रियस्य संन्यासित्वेऽपि फलतृष्णारहितत्वेन विशुद्धचित्तत्वेन यत्प्राशस्त्यं तद्विशिष्टे संन्यासिपदस्य लक्षणया न संन्यासीत्यादि नञर्थान्वयोपपत्तिरित्यर्थः॥ १॥ परशब्दः परबोधकशब्दः। परत्वं च शब्दान्तरापेक्षया परत्र स्वभिन्नशब्दान्तरार्थे शब्दौ चेमौ प्रयुज्यमानौ समानाधिकरणौ ग्राह्यावर्थौ च शक्यौ। तथाच लक्षकव्यवच्छेदः। नहि गङ्गायां तीरे घोष इति प्रयुज्यते। **सादृश्यमिति**। विशेषणीभूतं सादृश्यमर्थात्सदृशम्। **गौण्या वृत्त्येति**। शक्यार्थसंबन्धरूपा हि पदस्य वृत्तिर्लक्षणा। लक्ष्यमाणगुणसंबन्धरूपान्यैव च गौणी। तया तु गुणरूपं यत्सादृश्यं तद्विशिष्टो धर्मी प्रतीयत इति बोध्यम्। शक्यतावच्छेदकारोपो लक्षणेति कस्यचिन्मतम्। तत्र तीरादौ गङ्गात्वारोपे सति गङ्गापदात्स्वशक्यतावच्छेदकारोपसंबन्धात्तीरत्वेन तीरप्रतीतिर्गङ्गात्वेन वेत्यन्यदेतत्। सिंहो माणवक इत्यादौ तु सिंहत्वारोपेण सिंहसादृश्यविशिष्टप्रतीतौ गुणप्रत्यायकत्वाल्लक्षणैवोक्ता गौणीत्वेन व्यवह्रियते। न सा वृत्त्यन्तरमित्येतन्मताभिप्रायेणाह—**तद्भावारोपेण वेति**। वाकारोऽनास्थायाम्। तद्बीजभ्रान्तस्य तन्मते प्रतीत्यनुपपत्तिः। यद्वा तद्भावारोपेणेति सामान्यतो लक्षणामुपलक्षयति। तथाच न्यायरीत्या सिंहशब्दस्य स्ववाच्यसंबन्धरूपलक्षणायाः सिंहसादृश्यविशिष्टे ज्ञानात्तेन रूपेण बोधनिर्वाह इति नानास्थोपगमो विधेयः। **प्रत्यक्षानुमानशास्त्रोपमा-**

**नार्थापत्त्यभावाख्यानीति।** प्रत्यक्षं तु सर्वतैर्थिकसंप्रतिपन्नमेवेति न तस्य प्रामाण्ये किमप्यभिधेयम्। अनुमानं तु व्यभिचारशङ्कया व्याप्तिग्रहासंभवेन प्रमाणानुपधायकत्वान्न भवति प्रमाणम्। धूमदर्शनेन वह्न्यर्थिप्रवृत्तिश्च धूमस्य प्रायशो वह्निसहचरितस्यैव दर्शनादत्र प्रायो वह्निर्भविष्यतीति वह्निसंभावनयैवोपपद्यते। कृष्यादौ फलसंभावनयैव हि लोकानां दृश्यते प्रवृत्तिः। नच तर्काद्व्यभिचारशङ्कापनोदने व्याप्तिनिश्चयाद्वह्नेर्निश्चयसंभव इति वाच्यम्। आहार्यारोपरूपेऽनिष्टापत्त्यात्मनि तर्के आपाद्य व्यतिरेकनिश्चयसहितस्यापाद्यव्याप्यापादकवत्तानिश्चयस्य हेतुत्वेन व्यभिचारशङ्कयापाद्यापादकयोर्व्याप्यव्यापकभावानिश्चयात् तर्कस्यैवासंभवादिति चार्वाकविप्रतिपत्तेः प्रमाणत्वेन निरूपणीयं तत्तत्र धूमदर्शनेन निष्कम्पप्रवृत्तेर्वह्नेर्निश्चय एवावधार्यते। तादृशप्रवृत्तिहेतोः प्रामाण्यनिश्चयस्य संभावनायामसंभवात् विपर्यये दोषवशात्प्रामाण्यग्रहसंभवेऽपि संदेहे कदाचिदपि प्रामाण्यग्रहस्यायोगात् सर्वत्र संदेहे स्वक्रियाव्याघातात्संदेहाभावादितस्तर्कमूलव्याप्तिनिश्चये तर्केणापनोदिते व्यभिचारज्ञाने व्यभिचारादर्शनसहकृतसहचारदर्शनेन व्याप्तिनिश्चयसंभवाद्वह्निनिश्चयासंभवस्यापनयात्। नचावश्यकवह्निज्ञानलक्षणया प्रत्यासत्त्या सुरभिचन्दनमितिवत्पर्वतो वह्निमानिति प्रत्यक्षज्ञानमेवास्त्विति वाच्यम्। व्याप्तिपक्षधर्मतानिश्चयोत्तरजायमानज्ञानोत्तरमेवानुमिनोमीत्यनुव्यवसायात्प्रत्यक्षदृष्टे वह्न्यादावुपनीतभानविषये सौरभादौ च तददर्शनात्प्रत्यक्षविजातीयैव सा प्रमेत्यवधारणात्। नचैवमपि प्रत्यक्षत्वव्याप्यैवास्तु सा जातिरिति वाच्यम्। वैदिकानां नये ज्ञानलक्षणायाः प्रत्यासत्तित्वानुपगमात्। प्रत्यक्षत्वस्यैव तत्रासंभवेन तद्विशेषत्वस्य दूरापास्तत्वात्। नचैवं सुरभिचन्दनमिति प्रत्यक्षस्य का गतिरिति वाच्यम्। यस्मिन् चन्दने सौरभं प्राग्गृहीतं पुरोवर्तिचन्दनस्य तत्त्व उक्तज्ञानं चन्दने प्रत्यक्षं सौरभे च स्मरणमेव गुणगतजातिसांकर्यस्यादोषत्वात्। तस्मात्तद्रूपत्वे चन्दनत्वलिङ्गेन सौरभस्यानुमितेरेवोपगमात्। सौरभं साक्षात्करोमीत्यनुव्यवसायाभावेनानुमितित्वे विरोधविरहात्। किंच सामान्यलक्षणायाः प्रत्यासत्तित्वस्य नव्यनैयायिकैरनभ्युपगमात् ज्ञानलक्षणायास्तु स्वविषयमात्रप्रत्यासत्तित्वात्। पर्वतीयवह्नेश्च प्रागप्रतीतत्वात् न ज्ञानलक्षणया भानसंभव इत्यनुमानमावश्यकम्। नचैवं ज्ञानलक्षणयास्तयैवानुमानकार्यसंपादनादनुमानप्रामाण्योच्छेदप्रसङ्गेन निराकरणं वेदान्तिनामसमञ्जसमिति वाच्यम्। तद्धर्मविशिष्टज्ञानात्मकज्ञानलक्षणायास्तद्धर्मविशिष्टज्ञानहेतुप्रत्यासत्तित्वोपगमे तथाभिधानात् तत्र तद्धर्माश्रयत्वस्य स्वविषय इवान्यत्रापि समानत्वेन वह्नित्वेन यत्किंचिद्वह्निज्ञानादपि वह्नित्वाश्रयस्याविषयपर्वतीयवह्निभानसंभवात्। अथाप्यस्तु तस्याः प्रत्यक्षत्वमेव नचेन्द्रियसंनिकर्षजत्वाभावात्कथं तथात्वमिति वाच्यम्। ईश्वरज्ञानस्यातथात्वेऽपि प्रत्यक्षत्वोपगमात्। नच ज्ञानाकरणकत्वात्तस्य तथात्वमस्यालिङ्गज्ञानकरणकत्वान्न तथात्वसंभव इति वाच्यम्। प्रत्यक्षत्वोपगम इन्द्रियस्यैव करणत्वोपगमात्। परामर्शस्य तद्व्यापारत्वेन ज्ञानाकरणकत्वस्य संभवात्। अनिन्द्रियपक्षहेत्वादिस्थले मनस एव करणत्वोपगमात् सर्वत्रैव वा मनस एव करणत्वोपगमात्। तेन चाक्षुषत्वादिना नानुमितित्वस्य संकरश्चाक्षुषत्वादेस्तत्रानुपगमात्। नच मानसत्वेन संकर इति वाच्यम्। लौकिकमनःसन्निकर्षजन्य एव तज्जातेरुपगमात्। तत्र मनोजन्यतावच्छेदकस्य प्रत्यक्षत्वव्याप्यानुमितित्वस्यैवोपगमात्। नचानुमितिस्थले प्रत्यक्षत्वेनानुव्यवसायाभावात् तत्र प्रत्यक्षत्वसत्त्व एव न मानं तथा सति मनसः करणत्वं तु दूरापास्तमिति वाच्यम्। लाघवेन प्रत्यक्षत्वोपगमात्। तथाहि विशिष्टवैशिष्ट्यावगाहिबुद्धावनुमितौ विशेषणतावच्छेदकप्रकारकज्ञानस्य न कारणत्वान्तरं तादृशप्रत्यक्षत्वावच्छिन्नं प्रति कारणतयैव निर्वाहात्। अन्यथा तादृशानुमितित्वावच्छिन्नं प्रत्यपि कारणत्वान्तरं स्यात् न चानुमितौ विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणत्वे मानाभावः परामर्शकारणत्वस्यावश्यकतया तस्यैव तथात्वादिति वाच्यम्। वह्निव्याप्यवत्त्वपरामर्शानन्तरं वह्नेर्महानसीयत्वे लाघवमिति ज्ञाने सति महानसीयो वह्निरिति ज्ञानकाल इव तदभावकालेऽपि महासनीयवह्नित्वविशिष्टवैशिष्ट्यावगाह्यनुमित्यापत्तेः परामर्शस्य महानसीयवह्नित्वाप्रकारकत्वात्। नच प्रत्यक्षत्वस्यानुमितावभावेऽपि प्रत्यक्षानुमितिसाधारणविशिष्टवैशिष्ट्यावगाह्यनुभवत्वावच्छिन्नं प्रत्येकमेवास्तु कारणत्वमिति वाच्यम्। अनुभवत्वस्य साक्षात्कारत्वातिरेके मानाभावात्। परोक्षस्थलेऽनुभवामीत्यप्रत्ययात्। स्मृत्यन्यज्ञानत्वस्य कार्यतावच्छेदकत्वे विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नकार्यत्वद्वयापेक्षया प्रत्यक्षत्वानुमितित्वावच्छिन्नकार्यत्वद्वयस्यैव युक्तत्वादनुमितेः प्रत्यक्षत्वे चैककार्यत्वस्य संभवेन लाघवस्यानपायादर्थापत्तिशाब्दयोरप्यनुमितिवत्प्रत्यक्षत्वस्यैवोपगन्तव्यत्वादिति चेन्मैवम्। विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रत्यनुमितसाविशिष्टानुमितिसामग्र्याः प्रतिबन्धकत्वेनानुमितेः प्रत्यक्षत्वोपगमे वह्न्यनुमितिसामग्रीसत्त्वे स्वसामग्र्या घटानुमितेर्वह्न्यनुमितिभिन्नविषयप्रत्यक्षरूपाया उपपत्तयेऽनुमित्यन्यत्वस्य प्रतिबध्यतावच्छेदके निवेशनीयतया गौरवापत्तेः। नच भिन्नविषयकत्वं न तद्विषयकत्वान्यविषयताकत्वमपितु तद्विषयकत्वाभाववत्त्वं तद्विशिष्टप्रत्यक्षं प्रति प्रतिबन्धकत्वे चोभयानुमितिसामग्रीसत्त्वे समूहालम्बनात्मकोभयविषयकानुमितेः संभवात्तस्याः प्रतिबन्धकतावच्छेदकानाक्रान्तत्वादित्यनुमितेः प्रत्यक्षत्वेऽप्यनुमित्यन्यत्वनिवेशनमविधेयमिति वाच्यम्। पर्वतो वह्निमानिति प्रत्यक्षमात्रसामग्र्यां सत्यां तादृशानुमितिसामग्र्यभावकाले पर्वतो वह्निमानिति प्रत्यक्षक्षणे वह्निमत्पर्वतविषयत्वाभाववत्प्रत्यक्षस्य तादृशसामग्र्यभावादापत्तेर्दुर्वारत्वात् निरुक्तसामग्र्यभावस्य सहकार्यान्तरकल्पनस्यासंभवात् उक्तप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वान्तरकल्पने चातिगौरवात्। वह्निमत्पर्वतविषयत्वान्यविषयत्वस्य तथात्वे च तादृशानुमितिसामग्र्यभावादुक्तस्थले तदवच्छिन्नस्यापत्त्यसंभवात् तादृशविषयत्वान्यघटादिविषयत्ववत्प्रत्यक्षप्रयो-

जकघटादिचक्षुःसंनिकर्षादिकारणस्याभावात् । नच भिन्नविषयकप्रत्यक्ष इव भिन्नविषयकशाब्दबोधेऽप्यनुमितिसामग्र्याः प्रतिबन्धकत्वेन तदुभयसाधारण्याय तादृशानुमित्यन्यत्वस्यैव प्रतिबध्यतावच्छेदकत्वं वाच्यमिति क्व गौरवमिति वाच्यम् । यद्वद्विषयकानुमितिसामग्रीदशायां तत्तदन्यविषयकशाब्दसामग्रीसंवलनं कदाचिदपि नाभूत् । तत्तदनुमितिसामग्रीप्रतिबध्यतावच्छेदकत्वस्य शाब्दसाधारण्यसंपादनाय गुरुभूततादृशानुमित्यन्यत्वेऽनुसरणे प्रयोजनाभावेन भिन्नविषयकप्रत्यक्षत्वस्यैव वाच्यतया प्रत्यक्षत्वस्यानुमितिसाधारण्येऽनुमित्यन्यत्वस्यावच्छेदककोटाववश्यंप्रवेश्यत्वेन गौरवस्य दुर्वारत्वादिति । एवं भिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वेन तादृशानुमितावप्रतिबन्धकत्वेन च प्रत्यक्षत्वस्यानुमितिसाधारण्ये तत्प्रतिबध्यतावच्छेदककोटावप्यनुमित्यन्यत्वस्य प्रवेशनीयतया गौरवं बोध्यमिति । सिद्धायां प्रत्यक्षविजातीयप्रमायां तत्करणमनुमानं भवत्येव मानान्तरम् । प्रमा च वृत्तिरूपैवानुमितिः । साचैका विशिष्टवैशिष्ट्यप्रत्ययात्मिका पक्षांशेऽप्यनुमितिरेवानुमिनोमीत्यनुव्यवसाये तत्तद्विधेयताकानुमितेरेव कारणत्वेन पर्वतस्याविधेयतया पर्वतो वह्निमानित्यनुमित्यनन्तरं पर्वतमनुमिनोमीत्यनुव्यवसायस्यापत्त्यसंभवात् । यद्वा पक्षांशे प्रत्यक्षाद्यात्मिका साध्यांशे चानुमित्यात्मिका सा गुणगतजातौ सांकार्यस्यादोषत्वात् । नचैवमनुमितौ प्रत्यक्षत्वबाधकस्योक्तलाघवगौरवस्यासंभवः । जातिसांकार्यभयेनैवोक्तप्रतिबध्यप्रतिबन्धकभावस्योपगम्यत्वेन तदभावे तस्यैवाभावात्कुत्रानुमित्यन्यत्वं प्रवेशनीयं कुतश्च तत्प्रवेशनिबन्धनं गौरवं हि स्यादिति वाच्यम् । अनुमितित्वस्य प्रत्यक्षत्वव्याप्यत्वे मानाभावेनानुमितित्वावच्छिन्नत्वस्य करणान्तरस्यैवोपगन्तव्यत्वात् अतीन्द्रियस्य पक्षस्य शाब्दस्यानुमितौ प्रत्यक्षेण भानासंभवेन तत्रैव प्रत्यक्षत्वव्यभिचारात् । शब्दव्यापारे कथंचिच्छाब्दत्वस्य संभवात् । विस्फारितविलोचनस्य पक्षहेतूपलब्धिक्षण एव दैवान्नेत्रनिमीलन उत्तरक्षणे व्याप्तिस्मृतौ तदनन्तरक्षणोत्पन्नानुमितौ पक्षस्य प्रत्यक्षेण भानासंभवेन तत्रापि व्यभिचाराच्च । न चोक्तस्थलयोर्मनस इन्द्रियस्य करणत्वात्प्रत्यक्षत्वमिति वाच्यम् । बहिरर्थे मनसोऽस्वातन्त्र्यात् । यदसाधारणं सहकार्यासाद्य मनो बहिर्गोचरां प्रमां जनयति तस्य प्रमाणान्तरत्वेनानुमानस्य प्रमाणान्तरताया दुर्वारत्वात् । मनस इन्द्रियत्वस्य निराकरणाच्च सुखादेः साक्षिणैव ग्रहणसंभवात् ज्ञानस्य स्वप्रकाशत्वात् व्यासङ्गोपपत्तेस्तस्यानिन्द्रियत्वेऽपि संभवात् पक्षप्रत्यक्षत्वादेः संभवाभिप्रायकत्वादुक्तस्थलेऽनुमेयत्वेऽपि क्षत्यभावात्सति संभवे प्रत्यक्षत्वस्य न्यायमतवद्विस्फारिताक्षस्याप्यनुमितौ पक्षस्यानुमेयत्वानुपगमात् । तन्मते वह्निमनुमिनोमि पर्वतं पश्यामीत्यनुभवस्यापलापस्यैव करणीयत्वात् अनुव्यवसायक्षणे विषयस्य प्रत्यक्षस्याविद्यमानत्वादिति । यद्वा तत्तद्विषयाकारा भिन्नैव वृत्तिरिति वह्न्याकारानुमित्यात्मकवृत्तौ न प्रत्यक्षत्वम् । वन्ह्याकारसंयोगाकारपर्वताकारवृत्तित्रयस्यैकत्वाध्यासाद्विशिष्टवैशिष्ट्यावगाहित्वव्यवहारस्तत्तदाकारत्वाख्यविषयितानामवच्छेदकभावोपगमाच्चेति । करणं च पक्षे लिङ्गदर्शनमेव । तद्व्यापारश्च तदुद्बोधितव्याप्तिविशिष्टसंस्कारः व्याप्तिज्ञानं करणं तज्जन्यसंस्कारो वा व्यापारो दृष्टे धर्मिणि लिङ्गे उद्बुद्धे च साध्यव्याप्यलिङ्गसंस्कारेऽनुमितौ विलम्बे मानाभावात् । नच संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिरिति वाच्यम् । प्रत्यभिज्ञायाः स्मृतित्ववारणाय संस्कारेतरव्यवहितपूर्ववर्त्यसाधारणकारणाजन्यत्वस्य विवक्षितत्वात् संस्कारत्वावच्छिन्नजनकतानिरूपितस्वसमानविषयकत्वावच्छिन्नजन्यत्वस्य परिष्कृतस्य विवक्षितत्वाद्वानुमितौ स्मृतित्वानापत्तेः । अथ पक्षधर्मताज्ञानव्याप्तिज्ञानयोः पक्षधर्मताज्ञानव्याप्त्युद्बुद्धसंस्कारयोर्वा हेतुत्वे गौरवाल्लाघवेन विशिष्टपरामर्शत्वे हेतुत्वमेव युक्तम् । तथाहि धूमवान् पर्वत आलोको वह्निव्याप्य इति ज्ञानकालेऽनुमित्यनुदयात्तत्तद्धर्मावच्छिन्नविशेष्यकव्याप्तिज्ञानतत्तद्धर्मावच्छिन्नपक्षधर्मताज्ञानयोः कारणत्वं सहकारित्वं च परस्परं वाच्यमित्येकविधेयस्थलेऽपि लिङ्गभेदेनानन्तकार्यकारणभावापत्तिरस्मन्मते तु साध्याभाववदवृत्तित्वावच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वादेकविधेयस्थले कार्यकारणभावस्यैक्यात् । व्यापकसामानाधिकरण्यस्य व्याप्तित्वेऽप्ययमालोको धूमो वोभयथा वह्निव्याप्यो वह्निव्याप्यैतद्वान्पर्वत इति विशिष्टज्ञानादनुमित्युदयात् धूमत्वेनालोकत्वेन वा व्याप्तिपक्षधर्मत्वानिश्चयात् ज्ञानद्वयेनानुमितिनिर्वाहासंभवाद्विशिष्टज्ञानत्वेन लिङ्गभेदेन कारणत्वस्य कल्पनम् । यावन्ति मम कारणत्वानि ततो द्विगुणितानि ज्ञानद्वयकारणत्वपक्षे स्युरनुमितिसामग्र्याः प्रतिबन्धकत्वे ज्ञानद्वयनिवेशनेन विशेष्यविशेषणभावे विनिगमनाविरहेणाधिकप्रतिबन्धकत्वानि च स्युरित्यतिगौरवम् । ज्ञानद्वयकारणत्ववादिनां विशिष्टज्ञानतद्ध्वंसतत्प्रागभावादिकल्पनागौरवं च फलमुखत्वान्न दोष इति चेन्न । पक्षे विधेयभाने प्रयोजकं हि लिङ्गस्य व्याप्यत्वं पक्षधर्मत्वं च ज्ञायमानं तदुभयं चेत् ज्ञातमपेक्षणीयं किमवशिष्यते यदर्थं विलम्बः स्यात्तथाच विशिष्टज्ञानोत्तरत्वेनानुमित्यनुभवस्य निर्विवादस्याभावात् प्रत्युत विशिष्टज्ञानार्थापेक्षणीयज्ञानद्वयोत्तरत्वेनानुमित्यनुभवस्यैव निर्विवादत्वात् विशिष्टज्ञानस्य व्यभिचारेण कारणत्वासंभवाल्लाघवमकिंचित्करम् । नच लाघवग्रहतर्केण व्यभिचारग्रहापनोदने कारणत्वग्रहसंभव इति वाच्यम् । तदानीमेवोपजायमानेनानन्तविशिष्टज्ञानतत्प्रागभावध्वंसतत्तद्व्यक्तिकारणत्वकार्यत्वादिगौरवग्रहरूपप्रतिपक्षतर्केण लाघवतर्के शिथिलीकृतेनपनोदितव्यभिचारग्रहेण कारणत्वस्यैवाग्रहादुक्तगौरवस्य फलमुखत्वेनादोषताया वक्तुमशक्यत्वात् । अयमालोक इत्याद्युक्तस्थले चेदंत्वावच्छिन्नस्यैव लिङ्गत्वोपगमात्तदवच्छिन्ने तदानीमेव व्याप्तिग्रहस्य पक्षधर्मत्वग्रहस्य च भावात् । मन्मते विशिष्टज्ञानं विनापि हि संभवोऽनुमितेः । नच व्याप्तिसंस्कारहेतुत्वपक्षे तत्र का गतिरिति वाच्यम् । क्षणविलम्बेन तस्यापि संभवात् उद्बुद्धसंस्कारहेतुत्वपक्षेऽपि व्याप्तिज्ञानस्यैव स्वजन्योद्बुद्धसंस्कारवत्त्वसमवायान्यतरसबन्धेन हेतुत्वोपगमाद्वोक्तस्थले

दोषासंभवात् । अत्र पक्षे संस्कारजन्यत्वेनानुमितेः स्मृतित्वापादनमपि हि निरवकाशमिति । तदेतदनुमानमन्वयिमात्रं केवलान्वयिनोऽभावात्, ब्रह्मातिरिक्तवस्तुमात्रस्य कल्पितत्वेन प्रमेयत्वादेरपि स्वाधिष्ठाने सद्रूपे ब्रह्मणि स्वरूपेण पारमार्थिकत्वेन वाऽभावस्य परमार्थसतोऽधिकरणात्मना विद्यमानत्वेन व्यतिरेकस्यापि सत्तया केवलस्यान्वयस्याभावात् । नच स्ववृत्तिविरोध्यत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं तच्चास्ति प्रमेयत्वादीनाम् मिथ्यात्वघटकीभूताभावस्य स्वसमानाधिकरणत्वात् समानसत्ताकभावाभावयोरेव विरोधित्वात् व्यावहारिकस्य प्रमेयं त्वस्य क्वचिदपि देशे काले च व्यावहारिकाभावस्यासत्त्वात् । घटादीनामेव स्ववृत्तिविरोधिस्वसमानसत्ताकदेशान्तरस्थाभावप्रतियोगित्वेन तद्भिन्नत्वस्य प्रमेयत्वे सत्त्वादितिवाच्यम् । एतस्य पारिभाषिकत्वात् । एवं केवलान्वयित्वग्रहे तावतैव सर्वदेशे प्रमेयत्वसिद्धेस्तत्र लिङ्गापेक्षाविरहेण किंस्यात्केवलान्वय्यनुमानम् । तदग्रहे च तस्यापि व्यतिरेकितुल्यतया तत्साधकस्य न प्रकारान्तरत्वमिति हृदयं वेदान्तिनाम् । एतेनात्यन्ताभावप्रतियोगित्वस्य व्यावृत्तत्वे यतो व्यावृत्तत्वं तदेव केवलान्वयि अव्यावृत्तत्वे च तदेव केवलान्वयीति केवलान्वयिनो निराकरणमशक्यमिति निरस्तम् । तस्यापि कल्पितत्वेनाधिष्ठाने ब्रह्मण्यभावसत्त्वेन केवलस्यान्वयस्याभावाद्ब्रह्मणो निर्धर्मकत्वेन स्वव्यतिरिक्तसत्ताककेवलान्वयित्वस्यासंभवाच्च । सहचारभेदाद्भेदे त्वन्वयसहचारमात्रगृहीतव्याप्तिकं केवलान्वयित्वं व्यतिरेकसहचारमात्रगृहीतव्याप्तिकत्वं केवलव्यतिरेकित्वमुभयसहचारमात्रगृहीतव्याप्तिकत्वमन्वयव्यतिरेकित्वमिति तु नासंप्रतिपन्नं वेदान्तिनामपि । केवलव्यतिरेक्यपि नानुमानप्रभेदोऽर्थापत्तावन्तर्भावनीयत्वादिति । पक्षता तु सिसाधयिषाविरहसहकृतसाधकमानाभाव इति । तच्चानुमानं द्विविधम् स्वार्थं परार्थं च परार्थं न्यायसाध्यं न्यायश्च न्यायनये पञ्चावयववाक्यात्मको वेदान्तनये प्रतिज्ञाहेतूदाहरणत्रयावयवको विप्रतिपत्तौ सत्यां विना प्रतिज्ञां विचारारम्भेऽन्यत्रन्यात्र प्रवेशेन विवादापर्यवसानद्धेत्वाकाङ्क्षोत्थानासंभवाच्च प्रथमं प्रतिज्ञाया आवश्यकत्वात्तदनुज्ञापकाकाङ्क्षया हेतोर्ज्ञापकत्वनिर्वाहव्याप्त्याकाङ्क्षायामुदाहरणस्यावश्यकत्वात् । नच व्याप्तिवत्पक्षधर्मत्वस्यापि ज्ञापकत्वौपयिकत्वेनाकाङ्क्षिततया तन्निवृत्त्यर्थमुपनयोऽप्यावश्यक इति वाच्यम् । हेतुवाक्यादेव पक्षधर्मत्वावगमात् धूमादित्यस्य पर्वतस्य धूमवत्त्वादित्यत्र तात्पर्यात् । नच तथापि व्याप्यस्य न पक्षधर्मतालाभ इति वाच्यम् । तस्यानपेक्षितत्वाद्विशिष्टज्ञानहेतुतायाः प्रागेव खण्डितत्वात् । बाधनिश्चयाभाव एव ह्यपेक्षितो नत्वबाधितत्वनिश्चय इति निगमनं तु सर्वथैवानपेक्षणीयं । प्रतिज्ञादेरावश्यकत्वादुदाहरणादित्रयावयवपक्षो नादरणीयः । न्यायतदवयवप्रतिज्ञादिलक्षणं तु चिन्तामण्याद्युक्तरीत्या करणीयमित्यनुमाननिरूपणम् ॥ ॥ वैशेषिकास्तूपमानस्यापि न मानान्तरत्वमनुमानेनैव गतार्थत्वात् । तथाहि पिण्डोऽयं गवयपदवाच्यो गोसदृशत्वादिति गवयत्वग्रहानन्तरं च गवयत्वविशिष्टो गवयपदवाच्योऽतिदेशवाक्यस्थगवयपदसमानाधिकरणगोसदृशपदार्थदृष्टसजातीयत्वादित्यनुमानं सादृश्यादेः प्रवृत्तिनिमित्तत्वे गवयत्वापेक्षया गौरवमिति तर्कसहकृतं गवयत्वे वाच्यतावच्छेदकत्वमवगाहते । यद्वा गवयपदं किंचिद्धर्मावच्छिन्नवाचकम् । पदत्वाद्गवादिपदवदिति सामान्यतः शक्तिसिद्धौ गवयत्वसमनियतं गवयत्वेतरत् । न गवयपदप्रवृत्तिनिमित्तं जातिसमनियतजात्यन्यत्वात् गोत्वसमनियतसास्नादिमत्त्ववदित्यनुमानाद्गवयत्वेतराप्रवृत्तिनिमित्तकत्वे च सिद्धे गवयपदं गवयत्वावच्छिन्नशक्तं गवयत्वान्यधर्मावच्छिन्नाशक्तत्वेसति शक्तत्वात् यन्नैवं तन्नैवं यथा गवादिपदम् । यद्वा गवयपदं गवयत्वविशिष्टवाचकम् वृत्त्यन्तरंविना वृद्धैस्तत्र प्रयुज्यमानत्वात् गवि गवादिपदवत् । गवयप्रतिपत्तीतरप्रयोजनानुपलम्भेन वृत्त्यन्तराभावस्य सुग्रहत्वात् प्रवाहशक्तं गङ्गादिपदं तीरे प्रयुक्तम् । तीरप्रतिपत्तीतरशैत्यपावनत्वादिप्रत्ययरूपप्रयोजनेनैव स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्जामह इति न्यायादिति तत्र लक्षणारूपवृत्त्यन्तरवद्धि तन्निर्णीयत इति वदन्ति । तत्र न्यायविदः । कीदृशो गवयोऽर्थाद्गवयपदवाच्य इति प्रश्नानन्तरं गोसदृशो गवयोऽर्थाद्गवयपदवाच्य इत्यतिदेशवाक्यं प्रयुक्तं श्रुत्वा ग्रामीणो वनं गतो दृष्ट्वा गवययूथं तत्र गवये गोसादृश्यं चाकलय्य स्मरत्यतिदेशवाक्यार्थमनन्तरं व्याप्तिग्रहणस्मरणादिकंविनैव गवयो गवयपदवाच्य इति जानात्यनुव्यवस्यति चोपमिनोमीति तदनुमितिविजातीया संज्ञासंज्ञिसंबन्धस्योक्ता प्रमितिरतिदेशवाक्यागृहीतगवयत्वगतवाच्यतावच्छेदकत्वावगाहिन्यनुमित्याद्यनन्तर्भूता तत्करणमप्यतिदेशवाक्यार्थघटकसादृश्यज्ञानमतिदेशवाक्यार्थस्मृतिव्यापारकमुपमानं मानान्तरमेव तत्सहकारि च सादृश्याद्यपेक्षया गवयत्वे लाघवज्ञानम् । यथा च चक्षुरादिव्यापारोपरमेऽपि सादृश्यविशिष्टपिण्डस्मृतावतिदेशवाक्यार्थस्मृतौ च जायमानायां प्रत्यक्षेण न गतार्थता सर्वथैव लौकिकसंनिकर्षविरामे प्रत्यक्षस्य करणत्वानुपगमादतिदेशवाक्यार्थस्मृतिंविना सादृश्यज्ञानमात्रादिन्द्रियजादिन्द्रियजलिङ्गज्ञानमात्रादनुमितेरिवोपमितेरप्यनुदयात् तद्व्यापारान्तरस्यायुक्तत्वात् व्यापारस्यापि व्यापारान्तरादर्शनात् अन्यथानुमानशब्दयोरपि तत्रैवान्तर्भावप्रसङ्गात् । तथा व्याप्तिज्ञानाद्यभावान्नानुमाने गतार्थता युक्ता । नचातिदेशवाक्यादेव गवयत्वविशिष्टे शक्तिग्रहसंभवेन शब्देन गतार्थतेति वाच्यम् । तदानीं गवयत्वविशिष्टस्यानुपस्थितेः कालान्तरे प्रत्यक्षेण तद्ग्रहे सति वाक्यात्तत्र वाच्यत्वग्रहासंभवात् शब्दादीनां विरम्य व्यापाराभावात् गवयपदादपि तदानीं तदुपस्थित्ययोगात् तत्र तदानीं तस्यागृहीतसङ्गतित्वात् वाच्यताबोधकपदान्तराभावाच्च । नच तात्पर्यग्राहकगोपदसमभिव्याहृतसदृशपदलक्षणया गवयोपस्थितिरिति वाच्यम् । तदानीं गवयत्वविशिष्टोपस्थित्यभावेन तत्र लक्षणाया एवाग्रहात् । नच प्रत्यक्षतो गवयत्वविशिष्टग्रहे निरुक्तलाघवग्रहे च सति तदानी-

मनुस्मृतस्यातिदेशवाक्यस्य गवयत्वविशिष्टे गवयपदवाच्यत्वबोधतात्पर्ये च निर्णीते सदृशपदलक्षणाग्रहाद्गवयत्वविशिष्टोपस्थितौ निरुक्तवाक्यज्ञानादेव तत्र गवयपदार्थगवयपदवाच्यत्वान्वयबोधसंभवादुपमानफलनिर्वाह इति वाच्यम् । उक्ततात्पर्यविपरीत-तात्पर्यग्रहवतां गोसादृश्यविशिष्ट एव गवयपदवाच्यत्वतात्पर्यग्रहवतां चापि गवयो गवयपदवाच्य इति प्रतिपत्तेरानुभवि-कत्वेनोक्तवाक्यात्तदसंभवेनोपमानस्य मानान्तरताया आवश्यकत्वात् । एवं करभनिन्दापरे धिक्करभमतिदीर्घग्रीवमित्यादि-वाक्ये श्रुते निन्दातात्पर्ये च गृहीते कालान्तरेऽपि तादृशवाक्यतत्तात्पर्यानुस्मरणवतो दृष्टकरभयूथस्य करभत्वविशिष्टो-पस्थितौ वाक्यार्थदीर्घग्रीवत्वादिदर्शने वाक्यार्थानुसन्धाने च निरुक्तवाक्यस्योपमित्यर्थतात्पर्यग्रहाभावेन लक्षणादिना वाक्यादुपमानफलस्यानिर्वाहात् मानान्तरमुपमानम् । अथानुमानवदेवात्रापि भवत्याशङ्कोपमितौ साक्षात्करोमीत्यनुभवा-भावेन तत्प्रयोजकलौकिकसंनिकर्षप्रयोज्यविषयताविशेषस्य तत्राभावेऽपि प्रत्यक्षोपमितिसामग्र्योः सद्भावे प्रत्यक्षवारणाय कल्पनीयस्योपमितिसामग्र्याः प्रत्यक्षे प्रतिबन्धकत्वस्याकल्पनालाघवेन प्रत्यक्षत्वं कल्पनीयं तद्व्याप्यं चोपमितित्वमङ्गीकरणीयम् । यदि चाक्षुषत्वस्पार्शनत्वादेरुपमितौ समावेशः स्यात् स्यात्ताभ्यां सांकर्यमिति तेषामुपमितित्वविरुद्धत्वमुपेयं । तथाच चाक्षुष-त्वाद्यवच्छिन्नंप्रति प्रतिबन्धकत्वमावश्यकमिति प्रत्यक्षत्वावच्छिन्नंप्रति प्रतिबन्धकत्वस्योपमितेः प्रत्यक्षत्वाभावेऽप्यकल्पनाल्लाघ-वस्योक्तस्य तथाप्यनपायात्प्रत्यक्षत्वे तत्र न मानमिति विभाव्यते तथापि तत्र मानसत्त्वमस्तु । तथासति शक्तिमानस उपमितिसामग्र्याः प्रतिबन्धकत्वाकल्पनलाघवस्य संभवादितिचेन्न । घटादिमानस उपमितिसामग्र्याः प्रतिबन्धकत्वस्यावश्य-वाच्यतया लाघवेन तत्र विषयविशेषमनिवेश्य मानसत्वावच्छिन्नंप्रति प्रतिबन्धकत्वस्य वाच्यतयोपमितेर्मानसत्वाभावेऽपि गौरवविरहात्तत्र मानसत्वे मानाभावात् । इच्छोत्तेजकत्वानुरोधेन प्रतिबन्धकताभेदेऽपि चाक्षुषादिसामग्र्या मानसंप्रति प्रतिबन्धकत्व कल्पनीय उपमितेर्मानसत्वोपगमे चाक्षुषसामग्रीकाल उपमित्युपपत्तये प्रतिबध्यतावच्छेदककोटावुपमित्यन्य-त्वनिवेशेन गौरवात् । उपमितिसामग्रीकाल उपमित्यन्यमानसवारणाय तत्रोपमितिसामग्र्याः प्रतिबन्धकत्वकल्पने गौरवा-च्चोपमितेर्मानसत्वानभ्युपगमस्यैवोचितत्वादिति । अथाष्टद्रव्यविधर्माकाश इति वाक्यं श्रुतवतामाकाशे चाष्टद्रव्यवैधर्म्यरूप-शब्दावगतावुक्तवाक्यार्थस्मरणे च सति शब्दाश्रयत्वविशिष्टे आकाशपदशक्तिग्रहो जायते तस्याप्युपमितित्वमेव वाच्यम् । एवं गन्धवती पृथिवीत्यादेर्धिक्करभमित्यादेश्च वाक्यस्यार्थं स्मरतः पृथिव्यां गन्धग्रहे करभे च दीर्घग्रीवत्वादिग्रहे पृथिवीत्वकरभ-त्वादिविशिष्टे पृथिवीकरभादिपदशक्तिग्रहो जायते तस्याप्युपमितित्वमेव स्वीकरणीयमिति कारणानां साधर्म्यवैधर्म्यादिज्ञानानां व्यतिरेकव्यभिचारात्कथं कारणत्वग्रह इति चेन्न । अनुमितौ तत्तल्लिङ्गव्याप्तिज्ञानाद्यनन्तरत्वस्येवात्रापि सादृश्यादिज्ञानाव्यहितो-त्तरत्वस्य कार्यतावच्छेदकत्वोपगमादुपमितित्वव्याप्यजातिविशेषस्य तथात्वोपगमाद्वा व्यभिचारवारणसंभवात् । अथाप्युप-मितित्वावच्छिन्नंप्रति कस्यापि कारणत्वानिर्वचनात्तस्याकस्मिकत्वापत्तिरितिचेन्न । अगृहीतसङ्गतिसंज्ञाविशिष्टधर्मज्ञानत्वेनोपमिति-सामान्यहेतुत्वस्य स्वीकारात् । वैशिष्ट्यं च स्वघटितवाक्यार्थत्वस्वप्रवृत्तिनिमित्तनियतत्वोभयसंबन्धेन तादृशज्ञानं च साध-र्म्यवैधर्म्यादिविषयकमेव न तदंशे वाक्यार्थत्वादेर्विषयत्वमिति प्राहुः ॥ ॥ वेदान्तिनस्तु प्रत्यक्षदृष्टे गवये यद्गोसादृश्यज्ञानं तत्करणम् । नच व्यापाराभावान्न करणत्वमिति वाच्यम् । फलायोगव्यवच्छिन्नकारणत्वस्यैव तत्त्वेनाभिमतत्वात् । नच कारणान्तरसमवधाने करणस्येव कारकान्तरस्यापि तथात्वात्करणत्वापत्तिरुपधेयसंकरेऽप्युपाधेरसंकरात् तस्मादुत्पद्यमानम-प्रत्यक्षगोधर्मिकगवयसादृश्यज्ञानमुपमितिः फलमुपमिनोमीत्यनुव्यवसायसिद्धवैजात्याश्रयस्य तस्य क्लृप्तैः प्रमाकरणैरसंभवेन करणान्तरस्योपमानाख्यस्यावश्योपेयत्वात् । तथाहि न प्रत्यक्षेण तत्संभवः गोगवयोभयनिष्ठस्य सादृश्यस्यैकस्याभावात् । एकत्वे हि गवयान्तर्भावेण संनिकृष्टस्य तस्य कथंचित्स्यात्प्रत्यक्षत्वोपगमः । वस्तुतस्त्वाश्रयस्यासंनिकृष्टत्वेन तद्विशेष्यकस्य प्रत्यक्षस्य हि न संभवः । तद्विशेष्यकप्रत्यक्षे धर्मीन्द्रियसंनिकर्षादिसामग्र्याः प्रयोजकत्वादन्यथा घटे संनिकृष्टे तदन्तर्भावेण द्रव्यत्वसंनिकर्षाद्घटो द्रव्यमितिवत् पटासंनिकर्षेऽपि पटो द्रव्यमिति प्रत्यक्षं पटे द्रव्यत्वं साक्षात्करोमीत्यनुव्यवसायश्च स्यात् । तच्चानेकमाश्रयनिरूपकभेदेन भिन्नं क्लृप्तसप्तपदार्थवैधर्म्यात्पदार्थान्तरम् । विधिमुखेनैव हि प्रतीयमानत्वान्नाभावः । सामा-न्यादिषु हि प्रतीयमानत्वान्न द्रव्यादिभावषट्कमतएव न तस्य प्रतियोग्यनुपस्थितावाश्रयमात्रसंनिकर्षेऽपि ग्रहणमुभय-निरूप्यस्वभावस्यैव तस्य स्वीकारात्, क्लृप्तपदार्थान्तर्भावे च तेषामतादृशत्वेन नियमेन प्रतियोग्युपस्थितिसापेक्षग्रहणानु-पपत्तेरिति जरन्मीमांसकाः । भाट्टास्तु तस्यातिरिक्तस्यापि साधारणधर्मव्यङ्ग्यत्वस्यावश्यकत्वात्तादृशधर्माग्रहे सादृश्याप्रत्य-यादित्यावश्यकसाधारणधर्मेण तद्व्यवहारोपपत्तावतिरिक्ते तत्र मानाभावः गोत्वाश्वत्वादिसामान्यानामपि हि नित्यत्वादिकमस्ति साधारणो धर्मः सचातिरिक्तसादृश्योपगमानुपगमयोः क्लृप्तः सप्तस्वन्तर्भूतोऽनन्तर्भूतो वेत्यन्यदेतत् । यद्यपि साधारणधर्मा-त्मकं सादृश्यं स्वरूपेण न सनिरूपकं तथापि तद्भिन्नत्वे सति तद्गतभूयोधर्मत्वलक्षणसादृश्यत्वेन भासमानं तत्पदार्थप्रति-योगिज्ञानसापेक्षनिरूपणं सनिरूपकमेव । भूयस्त्वं च न शरीरघटकं तेन विषाणित्वेन गोसदृशो महिष इति व्यवहारस्य नानुपपत्तिः । तृतीयया हि प्रयोज्यत्वमभेदो वा सादृश्यान्वयितया प्रत्याय्यते । भूयस्त्वकथनं च धर्मभूयस्त्वाल्पत्वाभ्यां सादृश्यस्योत्कर्षापकर्षौ भवत इति सूचयितुमिति न हि तत्प्रत्यक्षेणासंनिकृष्टे गवि ग्रहीतुं शक्यम् । नाप्यनुमानेन व्याप्तिपक्ष-धर्मत्वयोरग्रहात् नच सदृशयोरुभयोः संनिकृष्टत्वेऽनेन सदृशोयमनेनापि सदृशोऽयमिति ग्रहे व्यभिचारादर्शने च सति

यद्यत्प्रतियोगिसादृश्यवत्तदपि तत्प्रतियोगिकसादृश्यवदिति व्याप्तिग्रहसंभवात् । गोप्रतियोगिकसादृश्यस्य गवये ग्रहणे गवयनिष्ठसादृश्यप्रतियोगित्वस्यापि गवि सुग्रहत्वात् गौर्गवयप्रतियोगिकसादृश्यवान् गवयनिष्ठसादृश्यप्रतियोगित्वात् घटयोरेक इवापरस्येत्यनुमानेनैवोपमानफलनिर्वाह इति वाच्यम् । यत्तदर्थयोरननुगमात् दृष्टान्तदृष्ट्योः साध्यहेतुत्वाभावात् साध्यहेत्वोरनुमानात्प्राक् क्काप्यसिद्धत्वात् साध्यस्याप्रसिद्धत्वादेव व्यतिरेकव्याप्तिग्रहस्याप्यसंभवात् शब्दस्य तत्राभावादेव शाब्दत्वं दूरापास्तम् । नैयायिकैस्तु यदभ्युपेतं शक्तिपरिच्छेद उपमितिरिति यच्चोक्तम् व्याप्त्यादिज्ञानविरहकालेऽपि तत्संभवान्न तस्यानुमितित्वमिति तन्न युक्तम् । सादृश्याविषयकस्योक्तज्ञानस्योपमिनोमीत्यनुव्यवसायस्यैवासिद्धेरुपमितित्वे तस्य मानाभावात् । नचोपमितित्वं जातिविशेषः । प्रत्यक्षादिप्रमाणाजन्यागृहीतसङ्गतीत्यादिप्रागुक्तकारणजन्यज्ञाननिष्ठः प्रत्यक्षः स्वीक्रियत इति सादृश्याविषयकत्वेऽपि नोक्तानुव्यवसायोऽनुपपन्न इति वाच्यम् । उपमेयसदृशत्वेन प्रसिद्धं वस्तूपलभ्यप्रमाणात् तेनोपमेयमुपमिन्वन्त्यापामरं जना यथा चन्द्रं दृष्ट्वा कामिनीवदनं गवयं दृष्ट्वा गां तत्रैव च चन्द्रेण कामिनीवदनमुपमिनोमि गवयेन गामुपमिनोमीत्यनुव्यवस्यन्ति च । तथाच सर्वलोकानुभवविरुद्धत्वाच्छक्तिपरिच्छेदस्थले तादृशानुव्यवसायकल्पनस्यायुक्तत्वमेव हि मन्तव्यं कथमन्यथा गोसादृश्यज्ञानजनितगवयपदशक्तिपरिच्छेदस्थले गवा गवयमुपमिनोमीतिवत् वैधर्म्येण शक्तिपरिच्छेदस्थले विधर्मिणा तेन वाच्यन्तमुपमिनोमीति नानुव्यवसायो व्यवहारश्च । मन्मते तु धात्वर्थतादृशजातिविशेषावच्छिन्नान्वयिनी तृतीयान्तार्थप्रतियोगिकसादृश्यनिष्ठप्रकारतानिरूपितद्वितीयान्तार्थनिष्ठविशेष्यतैव द्वितीयार्थः । तृतीयान्तपदं तात्पर्यग्राहकं सादृश्यविषयकानुमित्यादिस्थलेऽनुमिनोमीत्येवानुव्यवसायादुपमिनोमीत्यप्रत्ययात् सादृश्यप्रकारताकजातिविशेषावच्छिन्न एव वा धात्वर्थः गोनिष्ठविशेष्यताकत्वं द्वितीयान्तार्थः सादृश्यान्वयी गवयप्रतियोगिकत्वं तृतीयान्तार्थ इति वैधर्म्यस्थले नोक्तापत्तिरुष्ट्रेण गामुपमिनोमीति । नचोष्ट्रोयं गोविधर्मेति ज्ञानानन्तरमुष्ट्रविधर्मा गौरिति प्रमितेः कुत्रान्तर्भाव इति वाच्यम् । उपमिनोमीति प्रत्ययाभावेनोष्ट्रवैधर्म्यस्य तत्रोपलब्धव्यक्त्यन्तरेषु ग्रहणेऽन्वयव्याप्तेरपि सुग्रहतयाऽनुमानजैव सेत्यस्य वक्तुं शक्यत्वात् । एवमेव चायं तस्माद्दीर्घ इति ज्ञानानन्तरं स चास्माद्ध्रस्व इति ज्ञानस्यापि गतिर्बोध्या । शक्तिपरिच्छेदस्थले चोपमिनोमीत्यनुव्यवसायस्यानुभवविरुद्धत्वेन निश्चये व्याप्त्यादिप्रतिसंधानाभावे शक्तिपरिच्छेदोऽपि निश्चेतुमशक्य इत्यनुव्यवसायकल्पनं शक्तिपरिच्छेदकल्पनं चाविधाय क्लृप्तानुमितिसामग्रीकल्पनमेव हि युक्ततरं तथासति तादृशोपमितेरभावेन तत्र ज्ञानान्तरसामग्र्यास्तादृशोपमितिसामग्र्या एवाभावेन तस्याज्ञानान्तरे च प्रतिबन्धकत्वाकल्पनेन लाघवमपि क्वचिदनुमिनोमीति प्रत्ययाभावो दोषात् । मन्मते तु सादृश्यज्ञानस्थल उपमिनोमीत्यनुभवस्यापामरजनप्रसिद्धतया तत्करणमपि विलक्षणमेव कल्पयितुं युक्तमिति तत्र व्याप्तिज्ञानादिकल्पनाक्लेशो हि नोचितो न वोक्तसामग्रीप्रतिबन्धकत्वादिकल्पनागौरवं दोषः फलमुखत्वादिति प्राहुरिति ॥ ॥ एवंशब्दप्रामाण्यमपि वैशेषिकादिविप्रतिपत्तेः परीक्षणीयम् । तत्र वैशेषिकाः—शब्दो न प्रमाणमनुमानेनैव गतार्थत्वात् । तथाहि प्रयोज्यप्रयोजकव्यवहारेणाद्यशक्तिपरिच्छेदस्थले गामानय कुठारेण च्छिन्धीत्यादिवाक्यार्थस्यानुमानेनैवावगतत्वं शक्तिग्रहाभावेन शब्दतोऽर्थग्रहासंभवात् । तद्वाक्यं तु दृष्टान्तीकृत्य घटमानयेति वाक्यं घटकर्मत्वान्वितानयनबोधतात्पर्यकम् घटाद्यर्थस्मारकसाकाङ्क्षपदकदम्बत्वात् गामानयेतिवाक्यवदित्यनुमानाज्ज्ञानावच्छेदकतया वाक्यार्थसिद्धिः संभवति । यद्वा एते पदार्थाः मिथः संसर्गवन्तस्तात्पर्यवत्साकाङ्क्षपदकदम्बघटकपदस्मारितत्वात् गोकर्मत्वादिपदार्थवदित्यनुमानादन्वयबोधसिद्धिः । अथवा कर्मत्वं घटीयं घटस्मारकपदसाकाङ्क्षम् पदस्मारितत्वात् गोकर्मत्ववदानयनं घटकर्मतानिरूपकं द्वितीयान्तघटपदसाकाङ्क्षानयतिस्मारितत्वादित्येवं विशिष्टवाक्यार्थप्रत्ययसंभव इति शब्दो न मानमिति वदन्ति । तन्न व्याप्तिपक्षधर्मत्वाद्यप्रतिसंधानेऽपि साकाङ्क्षत्वादिग्रहे शाब्दबोधोदयादनुमानेन गतार्थयितुमशक्यत्वाच्छब्दस्य मानान्तरत्वावश्यंभावात् । नच शब्दस्य प्रमाणान्तरत्वे सामग्र्यन्तरकल्पना तत्प्रतिबन्धकत्वान्तरकल्पनादिगौरवाद्वरं सर्वत्र शाब्दस्थले व्याप्तिज्ञानदिकल्पनैव युक्तेति वाच्यम् । अमुमर्थं शृणोमि शाब्दयामीति विलक्षणज्ञानगोचरानुभवाद्विजातीयप्रमासिद्धौ तत्करणान्तरस्यावश्यमुपेयत्वादन्यथा तस्याकस्मिकत्वापत्तेरनुमितिसामग्र्याः प्रयोजकत्वे धूमादिलिङ्गकानुमित्याहिस्थलेऽपि तादृशप्रमोत्पत्त्या शृणोमीत्यनुव्यवसायापत्तेः । नचाकाङ्क्षाज्ञानादिशाब्दक्लृप्तसामग्रीघटितानुमितिसामग्रीजन्यानुमितिरेव श्रुधात्वर्थ इति वाच्यम् । तादृशसामग्रीजन्यत्वाप्रतिसन्धानेऽपि तादृशप्रतीत्युदयादुक्तार्थे गौरवेणाकाङ्क्षादेरननुगतत्वेन च शक्त्यैवक्तुमशक्यत्वात् । अथ शाब्दत्वजातेः सिद्धावपि तस्या अनुमितित्वव्याप्यत्वं स्वीकरणीयम् । नच तत्र मानाभाव इति वाच्यम् । समानविषयकप्रत्यक्षसामग्रीसत्त्वे शाब्दवारणाय तस्याः प्रतिबन्धकत्वाकल्पनेन लाघवात् । अनुमितिंप्रति प्रतिबन्धकत्वस्य क्लृप्ततयाऽनुमितित्वाभ्युपगमे तत्प्रतिबन्धकतयैव निर्वाहात् । नचेच्छोत्तेजकत्वानुरोधेन प्रतिबन्धकताभेदस्यैव वक्तव्यत्वात्क्व लाघवमिति वाच्यम् । येषु येषु विषयेषु प्रत्यक्षसामग्रीकालेन शाब्देच्छा कदापि जाता तत्तद्विषयशाब्देषु पृथक्प्रतिबन्धकत्वाकल्पनलाघवस्य तथापि संभवात् । एवं समानविषयकानुमितिसामग्रीकाले शाब्दबोधवारणायानुमितिसामग्र्याः प्रतिबन्धकत्वस्य शाब्दबोधस्यानुमित्यनात्मकत्वे वक्तव्यत्वात् । तदात्मकत्वे चानुमित्यात्मकशाब्दोत्पत्तेरिष्टत्वात्प्रतिबन्धकत्वस्याकल्पनीयतया लाघवात् । अथ शाब्दस्यानुमितित्वोपगमे शाब्दसामग्र्याः व्याप्तिज्ञानादिघटितत्वस्यावश्यकतया तस्याभिन्नविषयकप्रत्यक्षादौ प्रतिबन्धकत्वे

गौरवमनुमितित्वाभावे च प्रतिबन्धकतावच्छेदककोटौ व्याप्तिज्ञानाद्यप्रवेशेन लाघवमितिचेन्न । यथाह्यन्वयव्याप्तिज्ञानघटितैकानुमितिसामग्रीपरा च व्यतिरेकव्याप्तिज्ञानघटिता नच तयोरनुगमकं किंचित् लिङ्गभेदेनाननुगमस्तु सुतरां तथापि तत्तत्सामग्रीजन्यसर्वज्ञानेष्वमितित्वमनुगतम् । व्यभिचारवारणाय कार्यतावच्छेदके तत्तत्कारणानन्तर्यप्रवेशेऽप्यनुमितित्वस्याकस्मिकत्ववारणाय सकलकार्यतावच्छेदककोटौ तत्प्रवेशाङ्गीकारात् अनुमितित्वावच्छिन्नंप्रत्यभावज्ञानत्वेन कारणत्वोपगमात् व्याप्तिमात्रस्याभावघटितत्वेन सर्वत्रानुमितिस्थले तत्संभवात् । तथाऽपराव्याप्त्यिघटिताप्याकाङ्क्षा ज्ञानादिघटिता सामग्र्युपेयते तत्कार्यतावच्छेदककोटावप्यनुमितित्वान्तर्भावेणाकाङ्क्षाज्ञानस्याव्यवहितोत्तरत्वघटकाभावविषयकत्वेन वा तादृशसामग्रीजन्यज्ञानेऽप्यनुमितित्वसद्भावसंभव एतादृशकार्यकारणभावे चोक्तलाघवगौरवस्यैव मानत्वात् एवंच शाब्दसामग्रीप्रतिबन्धकतावच्छेदककोटौ व्याप्तिज्ञानाद्यप्रवेशेन न गौरवावकाशः । अथ शाब्दबोधस्य सिद्धिकालेऽपि विनैवेच्छामुत्पत्तेरनुमितिकारणस्य पक्षत्वस्य तत्राभावान्न तत्रानुमितित्वसंभव इति चेन्न । तत्तल्लिङ्गकानुमितौ तत्तल्लिङ्गकानुमित्साविरहविशिष्टसिद्ध्यभावत्वेन कारणत्वोपगमात् लिङ्गाजन्यशाब्दस्थले पक्षत्वाभावेऽप्यनुमितित्वे क्षत्यभावादितिचेदुच्यते । सत्येवमनुमितित्वस्यैव शाब्दत्वव्याप्यत्वं कुतो न स्याद्विनिगमकाभावात् । नच तत्र किं मानमिति वाच्यम् । समानविषयकप्रत्यक्षसामग्र्या अनुमितौ प्रतिबन्धकत्वाकल्पनलाघवस्यैव मानत्वात् क्लृप्तशाब्दप्रतिबन्धकतयैव निर्वाहात् । नचानुमितिसामग्र्यामाकाङ्क्षाज्ञानादीनां तत्र शाब्दत्वनिर्वाहाय प्रवेशनीयतया तस्याः प्रतिबन्धकत्वे गौरवमिति वाच्यम् । आकाङ्क्षाद्यघटितस्यैव व्याप्तिज्ञानादिघटितस्य शाब्दसामग्रीविशेषस्य स्वीकारात् । कारणाव्यवहितोत्तरत्वस्याकाङ्क्षाव्याप्त्यादेरननुगमेन कारणतावच्छेदककोटाववश्यं प्रवेशनीयतया व्यभिचारस्य वारणसंभवात् । नच तत्र शृणोमीत्यनुव्यवसायापत्तिरिति वाच्यम् । तवापि शाब्दस्थलेऽनुमिनोमीत्यनुव्यवसायापत्तेर्दुरुद्धरत्वात् । शाब्दान्यानुमितित्वेनानुमिनोमीत्यत्र तवानुमित्यन्यशाब्दत्वेन शृणोमीत्यत्र कारणत्वकल्पनेनापत्तिवारणस्य समानत्वात् । नचानुमितौ व्याप्तिज्ञानादिकार्यतावच्छेदककोटौ शाब्दत्वाप्रवेशात्कुतः शाब्दत्वस्य संभव इति वाच्यम् । आकाङ्क्षाज्ञानादिकार्यतावच्छेदकेऽप्यनुमितित्वस्याप्रवेशात्कुतोऽनुमितित्वस्य संभव इत्यस्य समानत्वात् । यदि चोक्तलाघवानुरोधादेवानुमितित्वस्याकाङ्क्षाज्ञानादिकार्यतावच्छेदके प्रवेश इत्युच्यते तदोक्तलाघवानुरोधेन शाब्दत्वस्यापि व्याप्तिज्ञानादिकार्यतावच्छेदककोटौ प्रवेशोपगम इत्यपि वक्तुं शक्यम् । शाब्दत्वावच्छिन्नंप्रति ज्ञानत्वेन कारणत्वोपगमाद्वा शाब्दत्वस्य संभवः निर्विशेषसामान्योत्पत्त्यसंभवेन विशेषसामग्रीविरहेण प्रत्यक्षादौ च शाब्दत्वासंभवः । अथ न शृणोमीति विपरीतानुव्यवसायात् न शाब्दत्वमितिचेन्न अनुमिनोमीत्यनुव्यवसायान्नानुमितित्वमपीत्यपि तुल्यं तस्माद्विरुद्धमेवानुमितित्वं शाब्दत्वं च मानसत्वनिराकरणमनुमिताविव शाब्देऽप्यनुसंधेयम् ॥ ॥ शाब्दबोधे च पदज्ञानजन्यपदार्थोपस्थितिः कारणमाकाङ्क्षादिज्ञाने सत्यपि पदात्पदार्थानुपस्थितौ शाब्दबोधानुदयात् समवायेनाकाशसंबन्धित्वेन गृहीतघटादिपदादाकाशोपस्थितौ तस्य शाब्दबोधाभावाद्वृत्तिरूपसंबन्धेनार्थसंबन्धितया गृहीतात्पदादेव जायमानोपस्थितिः कारणं बोध्यम् । अथ घटपदं घटे शक्तं गङ्गापदं तीरसंबन्धिशक्तमित्यादिज्ञानानामपि घटतीरादिविषयकतया तेषामेवास्तु घटतीरादिशाब्दहेतुत्वं तदुत्तरं पुनर्घटतीराद्युपस्थितिकल्पनमनर्थकमितिचेन्न यदि हि विशेषणज्ञानसंपत्तिमात्रार्थं स्यात्पदार्थज्ञानं ततश्च शाब्दबोधः प्रत्यक्षादितोऽपि घटादिज्ञाने शाब्दबोधः स्यादिति पदप्रयोज्यैव ज्ञाने तदर्थविषयता तदर्थशाब्दप्रयोजिकेत्युपेयानुभवानुरोधात् । नहि शक्तिज्ञाने तदर्थविषयता पदप्रयोज्येति न सा शाब्दोपयोगिनीति शक्तिज्ञानाद्यनन्तरं पदप्रयोज्यविषयताकपदार्थोपस्थितिरवश्यमुपेयेति । किंचान्वयव्यतिरेकाभ्यां पदज्ञानजन्योपस्थितेर्हेतुत्वे सिद्धे तदुपायतया शक्तिज्ञानादेः कारणत्वकल्पनं नहि तच्छक्तिज्ञानादितोपलपितुं शक्यम् । वस्तुतस्तु शक्तिसंबन्धेनार्थसंबन्धितया गृहीतेऽपि पदे बाधकात्पदार्थस्यास्मरणे शाब्दबोधस्याननुभविकत्वात्पदार्थोपस्थितेस्तज्जन्याया हेतुत्वं विनाप्युपस्थितेः शक्तिज्ञानमात्रादितः शाब्दस्यानुभविकत्व उपस्थितिहेतुत्वव्यवस्थानं गीर्वाणगुरूणामप्यशक्यमिति मन्तव्यम् । वृत्तिः शक्तिर्लक्षणा च । शक्तिश्चास्माच्छब्दादयमर्थो बोद्धव्य इदं पदममुमर्थं बोधयत्वितीश्वरेच्छा तादृशेच्छामात्रं वा नैयायिकादीनाम् । पदार्थान्तरमेव वाच्यवाचकभावादिरन्यत्र कार्यानुकूलशक्तिवत्पदेऽप्यर्थस्मृत्यनुकूला तदार्थानुभवानुकूला च शक्तिर्भट्टादिमीमांसकानां वेदान्तिनां च शक्यश्च जातिगुणक्रियाद्रव्यभेदाच्चतुर्धा तत्र गवादिपदानां गोत्वविशिष्टे शक्तिः जातिमात्रस्य हानोपादानाद्यशक्यत्वात् गामानय गामपसारय गौर्नश्यतीत्यादेरसंभवप्रसङ्गादिति नैयायिकाः । नागृहीतविशेषणा बुद्धिर्विशिष्टमुपसंक्रामतीति न्यायात् गौरवाच्च जातावेव शक्तिः । गामानयेत्यादौ कर्मत्वादौ गोत्वादेः प्रथमं स्वाश्रयवृत्तित्वादिसंबन्धेनान्वये पश्चादनुमानतो जातितुल्यवित्तिवेद्यत्वेन व्यक्तेरर्थाज्जातिभासकसामग्र्या व्यक्तिभासकत्वेन वानुपपत्तिज्ञानसहकृतशब्दाद्विनैव लक्षणां जातिशक्ततया गृहीताद्वा जातिशक्तेन लक्षणयोपस्थापितस्य तद्विशिष्टस्य कर्मत्वेन्वयाद्वा गवादिकर्मत्वप्रतीतिः नाशप्रतियोगित्वे स्वाश्रयवृत्तित्वसंबन्धेन नाश एव वा स्वाश्रयप्रतियोगिकत्वेन गोत्वस्य स्वरूपत उपस्थितस्यान्वयः । तेन शाब्दबोधविशेष्यत्वस्यावच्छिन्नत्वनियमेऽपि न क्षतिः । स्वरूपत एव शक्तिसंबन्धेन गोत्वप्रकारकस्य शक्त्यंश एव वा निरूपितत्वसंबन्धेन तत्प्रकारकस्य शक्तिज्ञानस्योपगमान्न गोत्वग्रहापेक्षानिबन्धनगौरवस्यावकाशः । शुक्लत्वादिगुणानामेकत्वात् । द्रव्यस्य तदभिव्यञ्जकत्वोपगमेनोत्पत्त्याद्यस्वीकारात् तत्रैव शुक्लादिपदानां शक्तिः धातूनां क्रियायामेव शक्तिः तस्या एव कारकाद्यन्वय-

विशेष्यत्वसंभवात् स्वरूपतो जातेर्विशेष्यत्वासंभवेन किंचिद्रूपेण तथात्वे गौरवात् जातेः संस्थानव्यङ्ग्याया गुणक्रियादावनभ्युपगमाच्च चैत्रादिसंज्ञाशब्दानां द्रव्ये शक्तिरिति मीमांसका वेदान्तिनश्च । यथाच कार्यान्वितस्वार्थ एव न पदानां शक्तिरपितु सिद्धार्थ एव लिङ्गाद्यतिरिक्तानां पुत्रस्ते जात इत्यादितोऽपि शक्तिग्रहात् । तथोक्तं प्रागन्यत्रापि च प्रपञ्चितमिति नेह प्रपञ्च्यते । लक्षणा शक्यसंबन्धरूपा वृत्तिः । साच पदस्येति नैयायिकाः । पदार्थस्येति मीमांसका वेदान्तिनश्च । साच जहत्स्वार्थाऽजहत्स्वार्था जहदजहत्स्वार्था चेति त्रिविधा । गङ्गादिपदानां तीरे विषं भुंक्ष्वेत्यत्र भुजः शत्रुगृहभोजननिवृत्तौ लक्षणा जहत्स्वार्था । शुक्लादिपदानां शुक्लगुणविशिष्टे लक्षणाऽजहत्स्वार्था । सोऽयं देवदत्तस्तत्त्वमसीत्यादौ विशिष्टयोः पदाभिधेययोरैक्यानुपपत्त्या विशेषणपरित्यागेन विशेष्यमात्रे लक्षणा जहदजहत्स्वार्था । सेयं भागलक्षणेत्यप्युच्यते । वस्तुतस्तत्र शक्त्योपस्थिते विशिष्टे विशेषणान्वयबाधाद्विशेष्यमात्रान्वयो लक्षणांविनैवेति पक्षे काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातकत्वेन काकतदितरलक्षणैव जहदजहत्स्वार्था बोध्या । शक्यतावच्छेदककाकत्वरूपस्वार्थपरित्यागात्काकरूपस्वार्थापरित्यागाच्च । एवं निरूढाधुनिका चेति प्रकारभेदोऽपि लक्षणायाः शुक्लादिपदानां गुणवाचकानां गुणिनि लक्षणा निरूढा अनादिप्रयोगपरम्परानुमितानादितात्पर्यकत्वस्यैव निरूढलक्षणात्वात् । साचेयं शक्तिकल्पैव । नचानादिप्रयोगविषयत्वे शक्तिरेवास्त्विति वाच्यम् । लाघवेनानादिप्रयोगविषये गुणे शक्तिसिद्धौ शक्यार्थसंबन्धादपि गुणिप्रतीतिनिर्वाहादनन्यलभ्यो हि शब्दार्थ इति न्यायाच्च तत्र शक्त्यभावावधारणात् । आधुनिका च सा प्रयोजनवती । स्वायत्ते शब्दप्रयोगेऽवाचकप्रयोगस्यान्याय्यत्वात् । सति च प्रयोजने तस्य वाचकानधीनस्य संपत्तये लक्षणयार्थप्रत्यायकस्यावश्यको हि प्रयोगः यथा गङ्गायां घोष इत्यत्र तीरे शैत्यपावनादिप्रत्ययाय लाक्षणिकगङ्गापदप्रयोगः सारोपत्वसाध्यवसानत्वादिभिः प्रभेदा अलंकारशास्त्रप्रसिद्धा बहवस्तत एव वेदितव्याः । गौणी च न वृत्त्यन्तरम् । शक्यार्थसादृश्यात्मकसंबन्धत्वेन लक्षणायामन्तर्भावात् । साचेयं लक्षणा वाक्यार्थसंबन्धात्मिकाप्यस्ति । पदार्थत्वस्य लक्षणाशरीरघटकस्य पदबोध्यत्वरूपस्यैव विवक्षितत्वात् । वाक्यार्थस्यावाच्यत्वेऽपि पदबोध्यत्वानपायात्तत्संबन्धस्य लक्षणात्वाक्षतेः । नचात्र मानाभावः । घोषे गभीरनदीतीरवृत्तित्ववत्तात्पर्येण प्रयुक्तस्य गभीरायां नद्यां घोष इति वाक्यस्यान्यथानुपपत्तेः । तथाहि नदीपदस्य नदीतीरलक्षकत्वे तत्र गभीरपदार्थानन्वयो नहि तीरं गभीरम् नद्याः पदार्थैकदेशत्वेन तत्र हि गभीरपदार्थान्वयो न व्युत्पन्नः । नापि नदीपदस्य गभीरनदीतीरलक्षकत्वम् । गभीरपदस्य वैयर्थ्यात् । तात्पर्यग्राहकत्वस्य विवक्षितार्थत्वसंभवे व्यर्थत्वकल्पस्यानुचितत्वात् । तस्मात् गभीरायां नद्यामिति वाक्यार्थो गभीरनदीवृत्तित्वात्मकः स्वसंबन्धेन गभीरनदीतीरवृत्तित्वं लक्षयति । तस्य स्वरूपेण घोषेऽन्वयस्तस्य वाक्यार्थत्वेनानामार्थतया भेदान्वयो नायुक्तः । वाक्यार्थान्वये हि परेषां यादृश्याकाङ्क्षा तद्वाक्यलक्ष्यार्थान्वयेऽप्यस्माभिरपि तादृश्याकाङ्क्षाया एवोपगमान्नातिप्रसक्तिः । एवं चार्थवादवाक्यानां प्राशस्त्यादौ लक्षणा विधिवाक्यैनैकवाक्यताप्युपपन्नेति । लक्षणाबीजं तु नान्वयानुपपत्तिः काकेभ्यो दधि रक्ष्यतामित्यादौ सत्यामप्यन्वयोपपत्तौ तात्पर्यसत्त्वे दध्युपघातकस्य लक्षणया प्रतीतेः किंतु तात्पर्यानुपपत्तिः विना लक्षणां लक्षणाबीजम् । तत्त्वं च लक्षणाजन्योपस्थितेः शाब्दसामग्रीघटकत्वप्रयोजकत्वम् । तथाच शक्यलक्ष्यार्थद्वयोपस्थित्योर्यदर्थतात्पर्यग्रहः शाब्दसामग्रीघटकस्तदर्थोपस्थितिरेव शाब्दसामग्रीघटिका नान्येति फलितम् । व्यञ्जनात्वालंकारिकाभिमतापि न वृत्त्यन्तरम् । शब्दकर्मणां विरम्यव्यापाराभावाच्छक्यलक्ष्यार्थप्रतीत्याभिधानपर्यवसाने व्यङ्ग्यार्थप्रत्यये तद्व्यापाराभावात् । व्यङ्ग्यार्थोपरागेण शृणोमीत्यनुव्यवसायाभावाच्च । व्यङ्ग्यार्थप्रत्ययस्तु क्वचिल्लक्षणयैव क्वचिदनुमानात्क्वचिन्मानस इति तत्त्वम् ॥ शाब्दबुद्धौ चाकाङ्क्षायोग्यतातात्पर्याणां ज्ञानमासत्तिश्च कारणम् । तत्राकाङ्क्षा नाम वेदान्तिनामन्वयप्रतियोग्यनुयोगिनोः पदोपस्थितयोः परस्परजिज्ञासाविषयत्वयोग्यतैव यथा घटमानयेत्यादौ पदोपस्थितयोर्घटत्वकर्मत्वाद्योः कर्मत्वानयनाद्योश्चास्ति घटज्ञाने तदन्वयिकर्मत्वादेः कर्मत्वज्ञाने तदन्वयिघटादेरानयनादिक्रियायास्तज्ज्ञाने कर्मत्वादिकारकशक्तेर्जिज्ञासोदयात् तद्विषयत्वयोग्यता । नहि भवति घटादिकं कर्मत्वादिद्वारा क्रियायामनन्वितं कर्मत्वादिकं वाश्रयानन्वितं क्रियासमन्वितं क्रिया वा कारकानन्विता कारकं वा क्रियानन्वितमवगतं समीहितफलकबोधविषयसमर्पणे पर्याप्तमिति भवति प्रातिपदिकार्थघटविभक्त्यर्थकर्मत्वादिज्ञानानन्तरमेतदर्थान्वितविभक्त्यर्थं जानीयां विभक्त्यर्थकर्मत्वाद्यन्वयिनं प्रातिपदिकार्थमेतत्कारकान्वयिनीं क्रियामेतत्क्रियान्वयि कारकं जानीयामित्यादिका जिज्ञासा । सा च न शाब्दस्थले नियतेति तद्विषयत्वमुपेक्ष्य तद्विषयत्वयोग्यत्वमुपात्तम् । तत्त्वं च समभिव्याहृतपदार्थान्वयबोधविरहसहकृतत्वे सति क्रियात्वकारकत्वादिकम् समानविभक्तिकपदोपस्थाप्यत्वं च । नहि समभिव्याहृतपदार्थान्वयबोधे सति क्वचिदपि भवत्यन्वयिनो जिज्ञासेति सत्यन्तमुपात्तम् । तेन वाक्येनान्वयबोधे जनिते न पुनरन्वयबोधापत्तिः । क्रियाकारकत्वादिमत्त्वेऽप्युक्तबोधाभावविरहेण निरुक्तविशिष्टयोग्यत्वलक्षणाकाङ्क्षाविरहात् पुनस्तेनैव शब्देनान्वयबोधस्येच्छायां पुनःशाब्दोत्पत्तेरिष्टत्वे तादृशबुबोधयिषाविरहविशिष्टान्वयबोधाभावसहकृतत्वं वाच्यम् । वस्तुतस्तु तत्तद्वाक्यजन्यबोधे तत्तद्वाक्यजन्यान्वयबोधेच्छाविरहविशिष्टतत्तद्वाक्यजन्यान्वयबोधाभावस्यैव कारणत्वमाकाङ्क्षात्वं च । सेयकाङ्क्षा स्वरूपसत्येव हेतुरेतस्याश्चाकाङ्क्षाया मूलं तु विशेषणत्वेनैकत्रान्वितस्य नान्यत्रान्वय इति सकृदुच्चरितः शब्दः सकृदेवार्थं बोधयतीति सर्वशास्त्रकृत्सिद्धान्तः । अनुमितौ सिद्धिमात्रं विरोधिशाब्दे तु तत्तद्वाक्यजन्ये तत्तद्वाक्यजन्यज्ञानमेव नतु तत्समानार्थकवाक्यान्तरजन्यमपि ज्ञानं प्रत्यक्षादिजन्यं तु सुतरां न विरोधीति

विशेषो बोध्यः । नन्वेवं 'सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन'मित्यत्र यागद्वारा विश्वेदेवस्यामिक्षयान्वितस्य वाजिनपदार्थान्वये नैराकाङ्क्ष्यप्रतिपादनं ग्रन्थकृतामसङ्गतं स्यात् । विश्वेदेवान्वितवाजिनबोधाभावस्यैव तादृशबोधानुकूलत्वेन तस्य प्रथममभावेनाकाङ्क्षायाः सत्त्वादितिचेन्न । 'विनियोक्त्री श्रुतिस्तावत्सर्वेष्वेतेषु सुस्फुटा । धीस्तस्याः संनिकर्षेण विप्रकर्षेण च स्थिते'ति वार्तिकाद्धि श्रुतेरेव सर्वत्र विनियोक्तृत्वमवगम्यते । श्रुतिश्च क्वचित्प्रत्यक्षा क्वचिचाप्रत्यक्षा लिङ्गवाक्यादिभिः कल्प्या । तत्र श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिधेयेष्वङ्गाङ्गिभावग्राहकेषु श्रुतिकल्पनया विनियोजकानां लिङ्गादीनां श्रुतिकल्पकत्व उत्तरोत्तरानपेक्षत्वेन पूर्वपूर्वस्य संनिकर्ष उत्तरोत्तरस्य पूर्वपूर्वापेक्षत्वेन विप्रकर्षः श्रुतिबुद्ध्या कल्पनात्मिकया भवति । तथाच प्रत्यक्षश्रुतिस्थले तया विनियोगसिद्धौ विनियोगाय श्रुतिकल्पनायां नाकाङ्क्षा । यत्र न श्रुतिः प्रत्यक्षा तत्र विनियोगसिद्धये श्रुतिकल्पनायां भवत्याकाङ्क्षेति साकाङ्क्षस्थले लिङ्गादिभिः कल्पिता सा भवत्यपौरुषेयैव । अन्यथा प्रामाण्याभावेन कल्पितयापि तया विनियोगानिर्वाहात् । यत्र तु नाकाङ्क्षा तत्र लिङ्गादिभिः कल्पितापि श्रुतिः पौरुषेयैव तां विना विध्यपेक्षितविनियोगासिद्ध्यभावेनापौरुषेयतया कल्पनायां सामर्थ्यविरहादित्यप्रामाण्येन नास्ति विनियोजकत्वं तस्या इति विनियोगसिद्ध्यनुकूलश्रुतिकल्पनाप्रयोजकाकाङ्क्षाभावप्रतिपादकत्वेन हि ग्रन्थसामंजस्यम् । वाजिनविनियोगाय कल्पितायाः श्रुतेः पौरुषेयतया विनियोगासाधकत्वेनोक्ताकाङ्क्षाविरहस्य सत्त्वादिति । अथवा तत्तत्पदार्थान्वितततत्तत्पदार्थशाब्दबोधे तत्तत्पदार्थान्वितत्तदितरार्थशाब्दबोधाभावलक्षणं जिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षामूलमत्र घटमानयाश्वमपसारयेति वाक्यद्वयस्थले घटकर्मकत्वेनानयनबोधे जाते सत्यपि तात्पर्ये घटकर्मकत्वेनापसरणस्य बोधानुदयः । घटमानय पिधेहि चेत्यादौ घटमित्यनुसंहितपदान्तरादेव हि घटकर्मकत्वेन पिधानबोधः । पदार्थत्वं च पदप्रयोज्यविषयताश्रयत्वं । तेन घटकर्मत्वादीनां न पदार्थत्वहानिः । तादृशबोधे सति हि तत्पदार्थान्वितार्थगोचरजिज्ञासानुदयात् तादृशबोधाभावस्य योग्यत्वरूपता । विश्वेदेवान्वितवाजिनबोधात्प्रागेव विश्वेदेवान्वितवाजिनेतरामिक्षाबोधस्य विद्यमानत्वेन तदभावरूपाकाङ्क्षाविरहो विश्वेदेवान्वितामिक्षाबोधात्प्राक् विश्वेदेवान्वितामिक्षेतरपदार्थबोधाभावस्य सत्त्वेनाकाङ्क्षासद्भावश्चेति । एतेन धारावाहिकशाब्दबोध एव हि नेष्टः । सच सामग्र्यनुवृत्तिविरहादेव वार्यते । सामग्रीसद्भावे च प्रमाणान्तरजन्यसमानविषयकज्ञानानन्तरमिव तद्वाक्यजन्यैकशाब्दानन्तरमपि पुनस्तत्तस्तादृशशाब्दबोध इष्यत एव विनैवेच्छामिति प्रागुक्तजिज्ञासाविरहविशिष्टशाब्दाभावस्य नाकाङ्क्षात्मकतया कारणत्वसंभवः सकृदुच्चरित इत्यादेस्त्वेकवाक्यमेकार्थविषयकबोधमेव जनयति नार्थान्तरविषयकमर्थद्वयतात्पर्ये वाक्यभेदप्रसङ्गेनैकार्थ एवैकवाक्यतात्पर्यस्याङ्गीकरणीयतया तात्पर्याभावादर्थान्तरबोधस्य न संभव इत्यत्र तात्पर्यम् । नच श्लेषस्थल उभयार्थ एव तात्पर्यादुभयार्थबोधस्येष्टतयैवमयुक्तमिति वाच्यम् । आवृत्त्यैव तत्रापि बोधाङ्गीकारादेकस्योभयाबोधकत्वानपायादिति पक्षेऽपि न क्षतिः ॥ अथोक्ताकाङ्क्षाभ्युपगमे घटः कर्मत्वमानयनं कृतिश्चैत्र इत्यत्रापि घटकर्मताकानयनकृतिमचैत्रादिबोधापत्तिरितिचेन्न । घटान्वितकर्मत्वादिबोधे घटमित्याद्यानुपूर्वीज्ञानस्यानयनान्वितकृत्यादिबोध आनयतीत्याद्यानुपूर्वीज्ञानस्य हेतुत्वमित्यस्योपगमेनोक्तापत्त्यसंभवात् । नच घटान्वितकर्मत्वबोधस्य कलशमित्यादावपि दर्शनाद्व्यभिचार इति वाच्यम् । घटमित्यानुपूर्वीज्ञानाव्यवहितोत्तरतादृशबोधे घटमित्यानुपूर्वीज्ञानस्य कलशमित्यानुपूर्वीज्ञानाव्यवहितोत्तरतादृशबोधे कलशमित्यानुपूर्वीज्ञानस्य हेतुत्वमित्यादेरुपगमेन दोषाभावात् । घटकर्मत्वानयनाद्योश्चान्वयबोधे निरुक्ततादृशाभावलक्षणाकाङ्क्षैव कारणमिति । न्यायविदस्तु गामानयाश्वमपसारयेत्यादौ सति तात्पर्ये गोकर्मकापसारणान्वयबोधस्येष्टत्वमुररीकुर्वन्तो नोक्ताभावस्य कारणत्वमिच्छन्ति तेषां गामानयेत्यादौ गोकर्मत्वान्वितानयनादिप्रतीतेः कथमुपपत्तिराकाङ्क्षाभावात् । अत्र केचित् द्वितीयान्तगोपदसमभिव्याहृताख्यातान्तन्यादिधातुज्ञानत्वेन कारणत्वादुक्तज्ञानविषयोक्तसमभिव्याहारस्याकाङ्क्षात्वान्न नैराकाङ्क्ष्यमित्याहुः । वस्तुतो न समभिव्याहारस्याकाङ्क्षात्वं गौरवात् । तथाहि राज्ञो भूरित्यादौ राजसंबन्धिभूप्रभृतिज्ञाने दशदशराजभूसंज्ञासमुदायान्तर्गतसंज्ञाद्वयसमभिव्याहारज्ञानानां शतं कारणानि स्युरानुपूर्व्यास्तु कारणत्वे विंशतिकार्यकारणभावाः । तथाहि राज्ञ इत्यानुपूर्वीज्ञानाव्यवहितोत्तरराजसंबन्धिभूविषयकशाब्दबोधे राज्ञ इत्यानुपूर्वीज्ञानस्य कारणत्वमित्येवं ङसन्तराजपर्यायानुपूर्व्या दशभूरित्यानुपूर्वीज्ञानाव्यवहितोत्तरराजसंबन्धिभूविषयकशाब्दबोधे भूरित्यानुपूर्वीज्ञानस्य कारणत्वमित्येवं स्वन्तभूपर्यायानुपूर्वीज्ञानस्य दशेति राजसंबन्धिभूविषयकशाब्दस्योभयज्ञानकार्यतावच्छेदकाक्रान्तत्वेन नोभयानुपूर्वीज्ञानंविना तदुत्पत्तिरुभयज्ञानं चैकदा नोभयानुपूर्व्यवच्छिन्नसमभिव्याहारंविनेति तादृशसमभिव्याहारस्यावश्यकता । एवमेव सर्वत्रानुपूर्वीज्ञानस्य कारणतोहनीयेत्याकाङ्क्षासंक्षेपः ॥ ॥ योग्यता चायोग्यतानिश्चयविरह इति केचित् । विशेष्ये विशेषणसंसर्गवत्त्वं तज्ज्ञानं निश्चयसंशयसाधारणं कारणमित्यपरे । बीजं चास्य कारणत्वे सेको न वह्निकरणक इति बाधनिश्चये वह्निना सिञ्चतीत्यतः शाब्दबोधानुदय एव । यद्यपि बाधनिश्चये प्रत्यक्षेच्छायां प्रत्यक्षोदयात्प्रत्यक्षत्वावच्छिन्नंप्रति प्रत्यक्षेच्छाविरहविशिष्टबाधनिश्चयस्य विरोधित्वं पृथगेव वाच्यं प्रत्यक्षान्यबुद्धित्वावच्छिन्नंप्रति तदतिरिक्तप्रतिबन्धकत्वोपगमे प्रत्यक्षान्यत्वबुद्धित्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुप्रतिबध्यत्वद्वयापेक्षया शाब्दत्वावच्छिन्नमनुमितित्वावच्छिन्नंप्रति च प्रतिबन्धकत्वद्वयमुपेयं तत्र शाब्दत्वावच्छिन्नंप्रति प्रतिबन्धकत्वं न वाच्यम् । तथासति प्रतिबन्धकबाधनिश्चयाभाववत्वेन कारणता स्यात्तदपेक्षया योग्यताज्ञानस्य कारणत्वमेवोचितम् । बाधनिश्चये तदसंपत्त्यैव

शाब्दापत्त्ययोगात्तथापि परोक्षत्वस्य जातित्वेऽनुमितिसाधारणं तदवच्छिन्नंप्रत्येकमेव प्रतिबन्धकत्वं वक्तुं शक्यम् । परोक्षत्वजातेरभावेऽपि संशयात्मकयोग्यताज्ञानानन्तरं बाधनिश्चयसंभवेन शाब्दापत्तेर्दुर्वारतया शाब्दत्वावच्छिन्नंप्रत्यपि प्रतिबन्धकत्वस्यावश्यकत्वमिति तदभाव एव योग्यतेति प्रथमपक्षनिष्कर्षः । द्वितीयपक्षेऽस्ति पक्षद्वयम् । बाधनिश्चयाभावस्य कारणत्वेऽपि वह्निकरणकत्वाभाववत्सेकीयाकृतिरित्यादिमानसंप्रति वह्निना सिञ्चतीत्यादिशाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनलाघवानुरोधेन योग्यताज्ञानाभावमानसप्रत्यक्षे शाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनलाघवानुरोधेन च योग्यताज्ञानस्य कारणत्वमित्येकः पक्षः । नच वह्निकरणकत्वाभाववत्सेकीयाकृतिरिति मानसप्रत्यक्षे सेको न वह्निकरणक इति निश्चयस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया कारणत्वेन तत्सत्त्वे तदभावरूपशाब्दसामग्र्यभावात्सामग्रीद्वयस्यैकदाऽसंभवान्न प्रतिबन्धकत्वकल्पनाप्रसर इति वाच्यम् । विशेष्ये विशेषणमिति रीत्यैव मानसस्यापाद्यत्वात्तत्र विशेषणतावच्छेदकप्रकारकनिर्णयस्याहेतुतया बाधनिश्चयस्य सत्त्वानावश्यरूपत्वेन सामग्रीद्वयसत्त्वसंभवात् योग्यताज्ञानस्य कारणत्वे तु विशेषणांशे संशयस्यानुपगमेन सेकांशे वह्निकरणकत्वनिश्चयात्मकस्य वह्निकरणकसेककृतिप्रकारकयोग्यताज्ञानस्य सत्त्वे बाधनिश्चयविधया तस्योक्तमानसविरोधितया तत एव तदनुत्पत्तेः सामग्रीप्रतिबन्धकत्वस्यानावश्यकत्वमेवं योग्यताज्ञानस्य स्वरूपत एव तदभावमानसविरोधितया तत एव तदनुत्पत्तेस्तत्रापि सामग्रीप्रतिबन्धकत्वस्यानावश्यकत्वमिति । द्वितीयपक्षस्तु शाब्दबोधे बाधनिश्चयस्य न विरोधित्वं सत्यपि सेको न वह्निकरणक इति बाधनिश्चये वह्निना सिञ्चतीति वाक्याद्वह्निकरणकसेकशाब्दबोधस्यानुभविकत्वात् । अतएव कथमद्रवेण वह्निना सेकं ब्रवीषीत्याद्युपहाससङ्गतिः । उक्तं च ‘अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोतिही’ति । नचैतत्सर्वं शब्दजन्योपस्थितिमूलकमानसादुपपादनीयमिति वाच्यम् । तत्र वह्निकरणकं सेकं शृणोमि श्रुतस्तादृशसेक इत्यनुव्यवसायस्यान्यथोपपादयितुमशक्यत्वात् । एवंसत्यपि योग्यताज्ञानस्य कारणत्वमावश्यकमन्यथा बाधनिश्चये सति बुभुत्सितार्थस्य प्रतिपत्तिर्नाबुभुत्सितार्थस्येति व्यवस्था न स्यात् । योग्यताज्ञानस्य कारणत्वे तु तत्संपादन एव तदुपयोगः बाधकाले विनेच्छां योग्यताज्ञानस्य मानसस्यासंभवात् । नच शाब्दबोध एवाहार्योऽस्तु तदुपयोग इति वाच्यम् । अपरोक्षं ज्ञानमनाहार्यमेवेति सिद्धान्तात् शाब्दस्याहार्यस्यासंभवात् । नचाहार्ययोग्यताज्ञानेनावश्यकेन शाब्दप्रयोज्यकार्यनिर्वाहसंभवात् तत्स्वीकारो व्यर्थ इति वाच्यम् । शृणोमीत्यादिप्रागुक्तानुभावस्य शाब्दज्ञानं विनाऽनिर्वाहस्तस्यावश्यकत्वादिति योग्यतासंक्षेपः ॥ ॥ आसत्तिः पदजन्यपदार्थोपस्थितिः । साच प्रागेव निरूपिता ॥ ॥ सैन्धवमानयेत्यादौ सैन्धवादिपदाल्लवणतुरगादिनानार्थोपस्थितावपि कस्यचिदेवान्वयबोधो न सर्वस्येत्यनुभवोपपत्तये तात्पर्यस्य हेतुत्वं तस्य न स्वरूपेण सतः कारणत्वं तद्भ्रमाच्छाब्दबोधस्यानुभविकत्वात् । किंतु तज्ज्ञानमेव कारणं तात्पर्यं तु तत्प्रतीतिजनकत्वप्रकारकेच्छयोच्चरितत्वम् । तच्च द्विविधम् । पदार्थतात्पर्यं वाक्यार्थतात्पर्यं च । तत्र वाक्यार्थतात्पर्यज्ञानस्याहेतुत्वे सैन्धवं कलयतीत्यादौ लवणभक्षणाश्वदर्शनतात्पर्ये सति लवणदर्शनाश्वभक्षणादिशाब्दापत्तेः पदतात्पर्यग्रहहेतुतया वारयितुमशक्यत्वात् । एकवाक्यताभिप्रायविषयत्वरूपसमभिव्याहारज्ञानकारणतया घटं पश्य पटमानयेत्यादौ पटदर्शनघटानयनबोधापत्तिवारणसंभवेऽप्युक्तापत्तेर्दुर्वारत्वाद्वाक्यार्थतात्पर्यज्ञानहेतुत्वमावश्यकम् । अथाप्यन्वयव्यतिरेकाभ्यां पदार्थतात्पर्यज्ञानस्य हेतुत्वं वाक्यार्थतात्पर्यग्रहार्थमावश्यकत्वात् । नहि भवति सैन्धवपदस्य लवणतात्पर्याग्रहे लवणकर्मत्वान्वितानयनतात्पर्यकमिदं वाक्यमिति ग्रहः नच नानार्थकपदजन्यतत्तदर्थकबोध एवास्तु नानार्थकपदतत्तदर्थतात्पर्यज्ञानस्य हेतुत्वमिति वाच्यम् । कार्यतावच्छेदके तत्तत्पदजन्यत्वप्रवेशे गौरवात्तत्तदर्थशाब्दबोधसामान्य एव तत्तदर्थतात्पर्यज्ञानस्य हेतुताया उपगन्तव्यत्वात् । एवंच शक्यलक्ष्यार्थोभयोपस्थितावपि लक्ष्यार्थतात्पर्यग्रहस्य सत्त्वेन तस्यैव बोधो न शक्यार्थस्य । तथाच तात्पर्यानुपपत्तेर्लक्षणाबीजत्वमप्युपपद्यते । मूर्खपठितवेदादिस्थले शुकोच्चरितवाक्यादिस्थले च विशेषदर्शनात्तात्पर्यभ्रमासंभवेऽपि सजातीयस्य प्रयोजकतयोपस्थितेश्वरोच्चरितवेदस्य पौरुषेयशुकोच्चरितसजातीयतत्प्रयोजकवाक्यस्य तात्पर्यग्रहादेव शाब्दबोधः । यदि चान्यवाक्यतात्पर्यज्ञानेऽन्यवाक्यान्न बोध इष्यते तदा करणत्वमपि तात्पर्यवदुपस्थितवाक्यान्तरस्यैवास्तु । नच मूर्खशुकादिवाक्याच्छ्रुतोऽयमर्थ इत्यस्यानुपपत्तिरिति वाच्यम् । तस्यापि कथंचिच्छाब्दप्रयोजकत्वेन तदुपपत्तेः । अतएव शुकवाक्यादिस्थले निरुक्तक्रमेणापि तात्पर्यग्रहाभावे मानसबोधाभ्युपगमे शुकवाक्याच्छ्रुतोऽयमर्थ इत्यस्यानुपपत्तिरिति परास्तम् । यत्तु लवणादितात्पर्यग्रहेऽश्वादिबोधवारणाय तदर्थबोधे तदन्यार्थतात्पर्यग्रहस्य प्रतिबन्धकत्वं तदभावस्य कारणत्वमुपेयं । तथाच मूर्खपठितवेदाच्छुकादिवाक्याच्च न शाब्दानुपपत्तिरिति । तन्न । तदन्यार्थतात्पर्यग्रहे तदर्थतात्पर्यग्रहेसति तदर्थशाब्दबोधोदयात्तदर्थतात्पर्यग्रहाभावविशिष्टान्यतात्पर्यग्रहाभावस्य कारणत्वे गौरवात्तदर्थतात्पर्यज्ञानत्वेनैव लाघवात्कारणत्वं वाच्यम् । शुकादिवाक्यस्थले पूर्वोक्तरीत्यापि निर्वाहसंभवादिति न्यायविद आहुः ॥ वेदान्तिनस्तु मूर्खपठितवेदस्थले शुकपठितवाक्यस्थले च तात्पर्यग्रहंविनाप्यन्वयबोध आनुभविकः विशेषदर्शनेन तात्पर्यभ्रमासंभवाच्छुके मूर्खशिक्षितत्वग्रहे शिक्षकवाक्यतात्पर्यग्रहस्याप्यसंभवात् । मानसज्ञानोपगमे शुकवाक्यादयमर्थः श्रुत इत्यनुभवस्य बाधापत्तेः यथाकथंचित्प्रयोज्यतामात्रेणोक्तवाक्यप्रयोज्यबोधविषयत्वेन तदुपपादनेन पञ्चम्यभिलापोपपत्तावपि लोचनमुन्मीलयेति वाक्यानन्तरं लोचनोन्मीलनेन प्रत्यक्षे जाते तत्राप्युक्तवाक्याच्छ्रुतोऽयमर्थ इत्यस्यापत्तेः । शाब्दत्वजात्यवगाहित्वस्य स्वरससिद्धस्य बाधानुद्धा-

राच्चान्यथा विजातीयप्रमाया एवासिद्ध्यापातात् सर्वत्रैव मानसोपगमे श्रुत इत्यस्य तद्विषयत्वेन भवद्रीत्योपपत्तेरतो न तदर्थबोधजनकत्वप्रकारकेच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्य कारणत्वम्, किंतु तदन्यमात्रार्थबुबोधयिषयानुच्चरितत्वेसति तदर्थबोधजननयोग्यत्वं तात्पर्यं तज्ज्ञानस्य कारणत्वम् । शुकादिवाक्यस्थले तदन्यार्थबोधेच्छयोच्चरितत्वाभावात् न शाब्दानुपपत्तिः अश्वबुबोधयिषयोच्चरितत्वग्रहे च न लवणशाब्दबोधापत्तिः । नापि लवणाश्वोभयबुबोधयिषायां लवणशाब्दानुपपत्तिः । नापि च वाक्यस्य प्रकृतार्थबोधासामर्थ्यग्रहे ततः शाब्दबोधप्रसङ्गः । योग्यता च शाब्दानुकूलवाक्यनिष्ठा पदार्थान्तरभूता शक्तिरेव । तज्ज्ञानं च लोके प्रकरणाकाङ्क्षादिज्ञानतो वेदे मीमांसाख्यतर्केणेदं वाक्यमीदृशान्वयबोधे शक्तं नेदृशान्वयबोध इति । नच तदर्थबुबोधयिषयोच्चरितत्वस्यैव ज्ञानं यत्रास्ति नतु निरुक्तानुच्चरितत्वज्ञानं तत्रापि शाब्दबोध आनुभाविक इति न निरुक्ततात्पर्यज्ञानस्य कारणत्वमिति वाच्यम् । तदर्थबुबोधयिषयोच्चरितत्वज्ञानकारणतावादिनः सर्वत्र तत्कल्पन इव तादृशज्ञानेनोक्तानुच्चरितत्वज्ञानकल्पने हि न भवत्यतिक्लेशो न वोक्तानुभवबाधादिरिति तस्यैव हेतुत्वौचित्यात् । यदि तादृशज्ञानकल्पनेन परितोषस्तदास्तूक्तोच्चरितत्वज्ञानमुक्तानुच्चरितत्वज्ञानं च यथायथं हेतुः । नच व्यभिचार इति वाच्यम् । अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वोपगमात् । तदन्यमात्रप्रतीतीच्छयोच्चरितत्वज्ञानविरोधिज्ञानत्वेन हेतुत्वोपगमाद्वा व्यभिचारवारणसंभवात् उक्तज्ञानविरोधिता चोभयत्रानुभवसिद्धा । नहि तत्प्रतीतीच्छयोच्चरितत्वज्ञाने तदन्यमात्रप्रतीतीच्छयोच्चरितत्वज्ञानस्य संभव इत्याहुः । यत्तु तदर्थोपस्थितावेव तदन्यार्थतात्पर्यज्ञानं विरोधीति प्रलपितं कस्यचित्तदनादेयम् । शक्तिग्रहात्प्रागेव लक्ष्यार्थतात्पर्यग्रहे शक्यार्थोपस्थित्यसंभवेन लक्षणाग्रहासंभवाच्छाब्दानुपपत्तेरिति । केचित्तु तात्पर्यग्रहायावश्यकस्य प्रकरणज्ञानस्यैव हेतुत्वं न तात्पर्यज्ञानस्येति वदन्ति तदपि हेयम् । तात्पर्यग्रहहेतूनां प्रकरणादीनामननुगतत्वेन शाब्दहेतुत्वासंभवात्तात्पर्यज्ञानस्यानुगतत्वेन तस्यैव शाब्दहेतुत्वौचित्यात् । प्रकरणादिज्ञानानां शाब्दहेतुत्वेऽपि ततस्तात्पर्यग्रहस्यानुभवसिद्धत्वेन तत्र तेषामनुगतहेतुत्वस्योभयपक्षेऽपि तुल्यत्वादिति ॥ परेतु तात्पर्यज्ञानं न शाब्दबोधे हेतुः नवान्यार्थतात्पर्यज्ञानं प्रतिबन्धकं मानाभावात् श्लिष्टवाक्यस्थल उभयार्थ एव तात्पर्यस्य सत्त्वेनोभयोर्बोधस्येष्टत्वात् । परं तत्र वाक्यभेदवारणाय यथाकथंचिदुपमानोपमेयभावादिनैकार्थसंपादनेन तादृशविशिष्टार्थ एव परमतात्पर्यस्य वक्तव्यत्वादेवमेव सैन्धवमानय सुरभिमांसं भक्षयेत्यादावपि सत्यप्येकार्थतात्पर्यग्रहे परार्थबोधस्याप्युपेयत्वादन्यथोपहासादेरनुपपत्तेः मानसबोधेन तदुपपादनस्य श्रुतत्वानुभवबाधापत्त्या निरस्तत्वात् व्यञ्जनया तदुपपादनस्याधिकवृत्तिकल्पनागौरवेणाप्रामाणिकेन परिहरणीयत्वात्, लक्षणामूलव्यञ्जनास्थलीयबोधस्य लक्षणयैव निर्वाह्यत्वात् सकृदुच्चरित इत्यादिनियमस्याप्यप्रामाणिकत्वात् सामग्रीसंवलने कार्यस्य नियममात्रेण वारयितुमशक्यत्वात् अनुभवस्य कस्यचिदनुपपत्तेरभावेनोक्तनियममूलककारणत्वप्रतिबन्धकत्वादेर्गौरवेणैवानङ्गीकरणीयत्वाच्च । तात्पर्यग्रहस्योपयोगस्तु प्रामाण्याप्रामाण्यावधारणे यत्परत्वं हि वाक्यस्य तस्याबाधितत्वे प्रामाण्यं बाधितत्वे त्वप्रामाण्यमवध्रियते । अत एवार्थवादवाक्यार्थस्य यथाश्रुतस्य बाधितत्वेऽपि तात्पर्यविषयार्थस्याबाधिततया प्रामाण्यं निश्चीयत इति प्राहुः । प्रभाणभूतः शब्दश्च द्विविधः । लौकिको वैदिकश्च । तत्र वेदो न पौरुषेयः शरीरिमात्रस्य भ्रमप्रमादविप्रलिप्साकरणापाटवादिभ्रमप्रयोजकदोषान्यतमनियमेन पौरुषेयत्वे ह्यप्रमाण्यशङ्काकलङ्कितत्वापत्तेः, अतो नित्य एव वेदो नित्यत्वादेव च निर्दुष्टत्वादप्रामाण्यशङ्काकलङ्करहितः । नित्यता च वर्णानां नित्यत्व एवोपपद्यत इति नित्यत्वं साधयन्ति मीमांसकाः । तत्प्रक्रिया च तृतीयाध्यायपञ्चदशश्लोकव्याख्यानावसरे प्रतिपादिता । तत्र नित्यस्य सर्वदोपलब्ध्यभावोपपत्त्यर्थं प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमुक्तं । तच्च शब्दोत्पत्तौ कारणत्वेन पराभिमतस्य कण्ठताल्वाद्यभिघातजन्यवायुसंयोगविशेषस्यावच्छेदकतासंबन्धेन शरीरनिष्ठेन शब्दप्रत्यक्षं प्रति श्रोत्रावच्छिन्नसमवायेन शरीरनिष्ठेन कारणत्वोपगमेनोपपादयितुं शक्यम् । इदानीं तत्र परस्य काचिदाशङ्कोपन्यस्य निराक्रियते । तथाहि कप्रत्यक्षविषयः खकरो न प्रतिनियतव्यञ्जकव्यङ्ग्यः एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वाद्धटैकत्वतत्परिमाणवदित्यनुमानात्प्रतिनियतव्यञ्जकाभावे सिद्धे शब्दनित्यत्वपक्षे कस्यचिदेकस्य व्यञ्जकसमवधाने निखिलवर्णप्रत्यक्षापत्तेर्व्यञ्जकत्वेनाभिमतस्य शब्दोत्पादकत्वमेवोचितम् । तथाचान्यस्यानुत्पन्नतया न प्रत्यक्षापत्तिरिति । तन्न । प्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्य स्वविषयकसाक्षात्काराजनकतत्प्रतिबन्धकासमवहितकारणजन्यप्रत्यक्षविषयतत्कत्वे सति तत्साक्षात्काराजनकतत्प्रतिबन्धकासमवहितकारणजन्यप्रत्यक्षविषयं यद्यत्स्वं तत्वस्यैव साध्यप्रतियोगितया निवेशनीयत्वात् । तस्य स्वगर्भत्वेनाननुगमात् रूपरसाद्यनेकस्वपदार्थभेदस्य शब्दे ममापीष्टत्वात् । शब्दमपि स्वपदेनोपादाय तद्धटितभेदकूटस्य पक्षीभूतशब्दादन्यशब्दमादायेष्टापत्तेर्दुर्वारत्वात् । तादृशं यद्यत्स्वं तत्तद्व्यक्तित्वावच्छिन्नभेदकूटस्यासर्वज्ञदुर्ज्ञेयत्वात् यं कमपि तत्पदार्थमुपादाय दृष्टान्तेऽपि प्रतिनियतव्यङ्ग्यत्वापत्त्या दृष्टान्तासिद्धिप्रसङ्गात् । तस्माद्यद्यदेकावच्छेदेन यत्समानदेशत्वे सति यद्ग्राहकेन्द्रियग्राह्यं तत्स्वसाक्षात्काराजनकतत्प्रतिबन्धकासमानकालिककारणजन्यसाक्षात्कारविषयतत्कत्वे सति तद्विषयकसाक्षात्काराजनकतत्प्रतिबन्धकासमानकालिककारणजन्यसाक्षात्कारविषयं यद्यत्स्वं तद्भेदकूटवदिति सामान्यत एव यत्तत्पदार्थघटिता व्याप्तिर्वाच्या । घटगतैकत्वैकत्वपृथक्त्वयोः प्रतिनियतग्राहकग्राह्यत्ववारणाय परस्परतादृशसाक्षात्कारविषयत्वप्रवेशोऽन्यथा घटगतैकत्वस्य घटगतैकपृथक्त्वसाक्षात्काराजनकस्यैको घट इति ज्ञानस्य घटगतैकत्वसाक्षात्कारोपधायकतया तज्जन्य-

साक्षात्कारविषयत्वेन तथात्वापत्तेरवधिज्ञानसापेक्षसाक्षात्कारो ह्येकपृथक्त्वादिर्नहि घट एवैकत्वेन गृहीत एकस्मादस्मात् पृथक् घट इति ग्रहीतुं शक्यत इत्यवधिभूतघटान्यैकपदार्थाज्ञानकाले घटगतैकपृथक्त्वसाक्षात्कारानुपधायकैकत्वसाक्षात्कारोपधायकस्य संभवस्तदुपादाने च तस्य संभवेऽप्येकत्वसाक्षात्कारानुपधायकैकपृथक्त्वसाक्षात्कारोपधायकाभावादतथात्वोपपत्तेः। अन्योन्यसाक्षात्कारप्रतिबन्धकसमवहितस्वस्वसाक्षात्कारोपधायकस्यान्योन्यसाक्षात्कारानुपधायकतया घटैकत्वपरिमाणयोः प्रतिनियतव्यञ्जकव्यङ्ग्यत्वापत्त्या दृष्टान्तासिद्धिः स्यादित्युभयत्रासमानकालिकत्वोपादानम्। शब्दसाक्षात्कारे वायुसंयोगत्वेन यत्सामान्यतः कारणत्वं तदवच्छेदकत्वेन सर्वस्य तस्य सर्वतत्साक्षात्कारस्वरूपयोग्यतया मीमांसकमते सिद्धसाधनापत्तेः। स्वरूपयोग्यत्वपरिष्कारे गौरवापत्त्या साक्षात्कारोपधायकत्वरूपमेव तज्जनकत्वमुपादेयम्। यद्यप्यत्र यस्य कस्यचित्तत्पदार्थस्य न ग्रहणम्। बुद्धिस्थस्य यत्समानेत्यादिवाक्यस्थयत्पदार्थस्यैव ग्राहकत्वात्। तथापि यत्तदर्थयोरननुगमात्तस्या अपि दुर्वचत्वात्। यस्त्वाश्रयाग्राहकेन्द्रियाग्राह्यत्वस्योपाधित्वम् ययोर्गन्धरसायोराश्रयाग्राहकेन्द्रियग्राह्यत्वमस्त्येव तयोः प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमिति तत्र गन्धयोर्व्यभिचारात्। प्रागुक्तबहुतरलाघवतर्केण गृहीतव्याप्तिकस्य शब्देतरत्वस्य हि संभवत्युपाधितापीति निरपवादं व्यवस्थिता नित्या एव वर्णास्तद्घटितं वाक्यमपि नित्यमेव। वेदवाक्यस्थले समभिव्याहारभेदाभावेनानुपूर्व्या अखण्डोपाधिरूपाया एवाभ्युपगमात्। वस्तुतस्तु तादृशधर्मस्यानुभविकतया पौर्वापर्येण तत्तद्वर्णविशिष्टवर्णात्मकं पदं पदविशिष्टपदात्मकं च वाक्यम्। तत्र प्रविष्टं वर्णे वर्णान्तरवैशिष्ट्यं स्वज्ञानाव्यवहितोत्तरज्ञानविषयत्वेनाभिप्रायविषयत्वमेव नित्यानां वर्णानां स्वतः पौर्वापर्यासंभवात्। मीमांसकानां तादृशाभिप्रायोऽविच्छिन्नगुरुशिष्यपरम्पराकाध्यापकानां प्रलयानभ्युपगमात्। वेदान्तिनां तु सर्गादिकालीनपरमेश्वराभिप्राय एव तादृशः। एवं च पदानां वाक्यानां च मीमांसकमतेऽपि न नित्यत्वमनित्यज्ञानाभिप्रायादिघटितत्वात्। नचैवं वेदानां नित्यत्वोक्तिविरोध इति वाच्यम्। तदुक्तेः प्रामाण्यसिद्ध्यर्थत्वात्। तस्योच्चारयितृपुरुषस्वातन्त्र्याभावनिर्वाह्यत्वात्। यत्र हि पुरुषोऽन्यप्रमाणगृहीतवाक्यार्थो बुबोधयिषया वाक्यं तदर्थप्रतिपादकं कर्तुमकर्तुमन्यथाकर्तुं प्रभवति तत्र तस्य स्वातन्त्र्यं तत्र पुरुषबुद्धिप्रभवत्वेन वाक्यस्य तत्प्रामाण्यानुविधायित्वम्। वेदे च न कस्यापि स्वातन्त्र्यम्। वाक्यार्थस्य प्रमाणान्तरागृहीतत्वादध्यापकोच्चरितवेदानुपूर्वीमाकलय्य तथैवोच्चारणादन्यथा कर्तुमशक्यत्वाच्च। तथाच पुरुषबुद्धेरतन्त्रतया न प्रामाण्यहानिः। अतएवोक्तं वार्तिके। 'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रते'ति। नित्यत्वं च कालत्वव्यापकस्वसमानानुपूर्वीकवाक्यकत्वमेव। वेदान्तनये वेदानां वर्णानां च न मीमांसकवन्नित्यत्वं नापि नैनायिकवत्क्षणिकत्वम्। श्रुतिप्रामाण्यात्परमेश्वरजन्यत्वं जन्यत्वादेव च विनाशित्वम्। आकाशवदाकल्पस्थायित्वमेव तु नित्यत्वं मध्ये जीवप्रयत्नजन्यकण्ठताल्वाद्यभिघातजवायुविशेषाद्यङ्ग्यत्वमेव जन्यत्वे मीमांसकप्रदर्शितगौरवापत्तेः। श्रुतिश्च 'महतो भूतस्य निःश्वसितमेतयदृग्वेद'इत्यादिः 'ऋचः सामानि जज्ञिर'इत्यादिश्च। एवं ब्रह्मातिरिक्तस्य सर्वस्याविद्याकल्पितत्वेन कल्पितस्य च नित्यत्वादर्शनेन वेदस्याप्यनित्यत्वम्। वेदत्वं चाभियुक्तानामयं वेदोऽयं वेद इति व्यवहारविषयत्वमृगाद्यन्यमत्वं वा वाच्यम्। नैयायिकानां तु शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमातृशब्दत्वं वेदत्वम्। प्रत्यक्षप्रमाणजन्यवाक्यार्थज्ञानजन्यलौकिकवाक्येऽतिव्याप्तिवारणाय सत्यन्तम्। अपूर्वार्थकस्मृतावतिव्याप्तिवारणाय विशेष्यदलं। परिष्कारश्चास्य चिन्तामणिव्याख्यायां द्रष्टव्यो विस्तरभयान्नेहोक्तः। ईश्वरप्रणितत्वेऽपि वेदानां न पौरुषेयत्वं वेदान्तनये सजातीयोच्चारणानपेक्षोच्चारणकत्वस्यैव पौरुषेयत्वेन वेदे तदभावात्परमेश्वरेण पूर्वसर्गवेदानुपूर्वीमाकलय्यैवोत्तरसर्गे वेदप्रणयनादानुपूर्वीवैचित्र्ये वाग्वज्रत्वेनेष्टसाधनत्वानुपपत्ते'र्धाता यथापूर्वमकल्पय'दिति श्रुतेश्चेति संक्षेपतो निरूपितं शब्दप्रामाण्यम्॥ ॥ अर्थापत्तिरपि प्रमाणान्तरमेवानुमिनोमीति वदर्थापयामि कल्पयामीति विलक्षणप्रमासाधकानुभवस्य सत्त्वात् तादृशविलक्षणप्रमाकरणेन प्रमाणेनापि विलक्षणेन भवितव्यमित्यनुमानाद्भिन्नं प्रमाणमर्थापत्तिलक्षणमावश्यकम्। नचार्थापत्तिर्व्यतिरेक्यनुमान एवान्तर्भावनीयेति वाच्यम्। यत्र यत्र हेतुस्तत्र साध्यमिति हेतुव्यापकं साध्यमिति यदा गृह्यते तदा व्याप्येन हेतुना व्यापकज्ञानेऽनुमिनोमीत्यनुव्यवसायो जायते तत्सिद्धामनुमितिं प्रति हेतुव्यापकसाध्यसामानाधिकरण्यरूपसाध्यव्याप्तिज्ञानं हेतुरध्यवसीयते। यदा तु वह्निं विना धूमस्यानुपपद्यमानत्वस्य वह्न्यभावव्यापकाभावप्रतियोगित्वरूपस्य धूमे ग्रहस्तदा ह्यनुपपाद्यमानेन धूमेनोपपादकवह्निज्ञाने धूमेन वह्निं कल्पयामीत्यनुव्यवसायस्तत्सिद्धा प्रमितिर्नानुमितिस्तत्कारणस्य साध्यसाधनयोर्व्याप्यव्यापकभावग्रहस्य तत्राभावात् उक्तस्थले कल्प्यकल्पकाभावयोर्व्याप्यव्यापकभावस्य ग्रहात्। सच ग्रहोऽनुमितिकारणविलक्षणो विलक्षणकल्पनाख्यप्रमितिकरणम्। भवत्येव हि मानान्तरं तेनागतार्थत्वाद्व्यतिरेक्यनुमानस्यैवाभावात्तत्रार्थापत्तेरन्तर्भावयितुमशक्यत्वात्। नच तदभावव्यापकीभूताभावप्रतियोगित्वमपि साध्यनिरूपिता व्याप्तिर्व्यतिरेकव्याप्तिरुच्यत इत्यस्त्येव तत्रानुमितिसामग्रीति वाच्यम्। तत्र हि साध्याभावव्यापकता हेत्वभावे भासते न साध्यस्य हेतुव्यापकतेति हेत्वभावव्याप्यत्वं साध्याभावे गृह्येतापि न साध्यव्याप्यत्वं हेतोरतो भासमानस्योक्ताभावप्रतियोगित्वस्य परिभाषया साध्यनिरूपितव्याप्तित्वोपगमेन प्रमाणाल्पत्वमिच्छतस्तवाकाङ्क्षादेरपि परिभाषया व्याप्तित्वाभ्युपगमेनानुमान एव शब्दाद्यन्तर्भावेन महत्यभिमतसिद्धिः स्यादिति तस्य व्याप्तित्वस्यानुपेयत्वात्। नचोक्तप्रतियोगित्वं व्याप्यमात्रनिष्ठत्वाद्व्याप्तित्वेनाभ्युपगन्तुमुचितं नचाकाङ्क्षादिकमिति वाच्यम्। परिभाषया व्याप्तिपदाभिधेयस्यानुमित्युपयोगित्वे परि-

भाषया व्याप्तिपदाभिधेयत्वस्याकाङ्क्षादेरपि संभवात् । नहि परिभाषावाच्यधर्मसंबन्धमपि कथंचित्पुरस्करोत्यन्यथा नदीवृद्ध्यादेस्तत्रतत्रार्थे परिभाषात्वानुपपत्तेः । अस्तुवोक्तप्रतियोगित्वस्य व्याप्तित्वं तथापि यदा कल्पयामीत्येव विलक्षणप्रमानुभवस्तज्ज्ञानानन्तरं तदा तज्ज्ञानस्य तत्करणत्वाद्दुर्वारमेव प्रमाणान्तरत्वमिति । सेयमर्थापत्तिर्द्विधा । दृष्टार्थापत्तिः श्रुतार्थापत्तिश्च । तत्र दृष्टस्य धूमादेर्दिवाऽभोजिनः पीनत्वादेर्वह्न्यादिकं विना रात्रिभोजित्वं विना चानुपपद्यमानत्वग्रहादुपपादकयोर्वह्निरात्रिभोजित्वयोः कल्पना दृष्टार्थापत्तिः । श्रुतस्य यागे स्वर्गसाधनत्वादेरदृष्टं विनानुपपाद्यमानत्वग्रहादुपपादकस्यादृष्टस्य कल्पना श्रुतार्थापत्तिः । अनुमितार्थापत्तिस्तु नास्ति इतरबाधसहकारेणेवानुपपत्तिज्ञानसहकारेणापि व्यापकतयाऽगृहीतस्याप्यनुमानेनैवोपपादकस्य तस्य ग्रहणसंभवादित्यर्थापत्तिनिरूपणम् ॥ ॥ अनुपलब्धिरपि मानान्तरम् । तथाहि घटाभावं साक्षात्करोमीति निर्विवादप्रत्ययाभावाद् दृष्टो घटाभाव इत्यनुभवस्यापि तथात्वात् । घटमत्र नोपलभामीति प्रत्ययस्य निर्विवादस्य विजातीयघटाभावप्रमाविषयत्वस्यैव युक्तत्वात् गामुपमिनोमीति प्रत्ययवत् तस्य घटोपलब्ध्यभावविषयत्वासंभवात्, प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य तदर्थमपेक्षणीयतया घटोपलब्धिज्ञानस्य तदानीमभावात् सामग्र्या नियमेन सत्त्वासंभवात् । घटोपलब्धिविना तत्प्रत्यक्षासंभवात् । शब्दस्य तद्बोधकस्य तदानीमभावाल्लिङ्गादेरदर्शनाद्युक्तानुभवसिद्धां विजातीयप्रमां प्रति करणान्तरमनुपलब्ध्याख्यमवश्यमुपेयम् । किंचाभावानुभवस्थले योग्यानुपलब्धिः कारणत्वेनोभयमतसिद्धा । तस्या एव कारणत्वे लाघवात् । अभावीयविशेषणतायाः संनिकर्षत्वस्य तस्याः कारणत्वस्य च कल्पने गौरवात् । इन्द्रियस्याधिकरणग्रह एवोपक्षीणत्वेनान्यथासिद्धत्वादनुपलब्धिर्मानान्तरम् । किंच सप्रतियोगिकपदार्थप्रत्यक्षस्य प्रतियोगिप्रत्यक्षतानियमेन तद्विपरीतत्वादप्यभावज्ञानस्य न प्रत्यक्षत्वमिति तत्करणं मानान्तरम् । यत्त्वभावस्याधिकरणात्मकत्वं लाघवात् निपुणानिपुणेनापि घटवद्भूतलस्थले यथा घटो भूतलं च द्वयमुपलभ्यते न तथाऽभावस्थले भूतलादधिकं किंचिदुपलभ्यत इति तत्तद्भूतलमेव घटाभाव आधाराधेयभावस्तु तव यथा भावाधिकरणकाभावस्याधिकरणात्मकत्वेऽप्याधाराधेयभावस्तथा ममापि स्वरूपेण तस्यातथात्वेऽपि प्रतियोगिविशेषिताभावत्वेन तथात्वे त्वविरोधात् प्रतियोगित्वतन्निरूपकत्वाभावत्वादेरखण्डोपाधेरतिरिक्ततापक्षस्यैवातिरिक्ताभाववादिनामप्यनुमतत्वात् । यदि घटशून्यतानन्तरं भूतलस्य घटवत्त्वस्थले प्राक्कालिकाभावव्यवहारानुरोधेन तद्भूतलस्य घटाभावात्मकताया आवश्यकतया तस्य घटवत्त्वकालेऽपि सत्त्वेनाभावप्रत्ययापत्तिः । नच प्रतियोग्युपलब्धेः प्रतिबन्धकत्वान्न तथेति वाच्यम् । शब्दादिजन्याभावप्रत्ययस्य तथापि प्रमात्वापातादिति विभाव्यते तदा तत्तदधिकरणज्ञानस्य तत्तदधिकरणसंबद्धतत्तत्कालस्याभावत्वमस्तु तस्याधिकरणेन विषयतया विशेषणताविशेषेण चासंबद्धस्याधाराधेयभावोपपत्तिरधिकरणज्ञानकालानां स्वरूपेण घ्राणाद्ययोग्यत्वेऽपि घ्राणादियोग्यगन्धादिप्रतियोगिकत्वोपरागेण घ्राणाद्यपेक्षोपगमादपेक्षा चानुपलब्धेर्योग्यत्वसंपत्ताविति । तथाचातिरिक्तत्वाभावेन विशेषणत्वसंनिकर्षस्यासंभव इति तन्न । गुणादिप्रत्यक्षानुरोधेन संयुक्ततादात्म्यस्याभ्युपगम्यतया तस्यैव संनिकर्षत्वसंभवात् अनेकेष्वधिकरणेष्वभावत्वसंबन्धकल्पनामपेक्ष्यैकस्याभावत्वसंबन्धिनः कल्पनाया लघुत्वात् । नचातिरिक्ताभावस्याधिकरणेषु संबन्धेन तत्समानमिति वाच्यम् । अभावत्वेनाधिकरणानामप्याधाराधेयभावानुरोधेनाधिकरणेषु संबन्धस्य कल्प्यत्वेन तेन समानत्वात् । वेदान्तिनामधिकरणात्मकत्वे नितान्तनिर्भरस्याभावात्कल्पिततयैवातिरिक्तस्याप्यभ्युपेयतयाऽद्वैताप्रतिकूलत्वात्तस्याधिकरणात्मकत्वं च प्रागुपपादितम् । योग्यता चानुपलब्धेस्तत्सत्त्वप्रसंजकप्रसंजितप्रतियोगिकत्वलक्षणा तत्पदमभावप्रतियोगिपरम् । तदपि प्रसंजितत्वम् तत्सत्त्वव्यापकत्वलक्षणप्रसक्तियोग्यत्वं तेन प्रसक्त्यभावेऽपि न योग्यत्वानिर्वाहो न वा भ्रमात्मककारणात्क्वचित्प्रसक्त्या योग्यत्वप्रसङ्गः । व्यापकतानियामकसंबन्धो विषयताविशेषः केवलस्य प्रतियोगिसत्त्वस्योपलब्धिव्यभिचारित्वेऽपि यथायथमुद्भूतरूपस्पर्शमहत्त्वालोकसंबन्धाद्यवच्छिन्नस्यास्ति तथात्वमिति योग्यताप्यनुपलब्धेस्तथाविधस्थल एव नातः परमाणौ महत्त्वाभावान्याभावस्य चाक्षुषादिर्वायावुद्भूतरूपाभावान्याभावस्य चाक्षुषादिरन्धकारे प्रकृष्टप्रकाशकतेजोऽभावान्याभावस्य चाक्षुषादिरिति भट्टानुयायिनो वेदान्तिन आहुः ॥ नव्यन्यायविदस्त्वाहुः योग्यानुपलब्धिर्नास्त्येवाभावप्रत्यक्षे कारणम् । भावप्रत्यक्षे यथा महत्त्वावच्छिन्नोद्भूतरूपावच्छिन्नालोकसंयोगावच्छिन्नचक्षुःसंयोगादेः कारणत्वं तथैवाभावप्रत्यक्षे तादृशचक्षुःसंयुक्तविशेषणतादेः कारणत्वमिति परमाणुवाय्वन्धकारादौ न चाक्षुषाभावग्रहप्रसङ्गः एवंच योग्यानुपलब्धेः कारणत्वेनोभयवाद्यसिद्धतया करणत्वेन तत्कल्पनायां परेषां गौरवादधिकरणादिज्ञानानुरोधेनावश्यकस्येन्द्रियस्यैव विशेषणतासन्निकर्षेण करणत्वं युक्तमिति । तच्चातिरिक्तप्रमाव्यवस्थापनेन समाहितम् । अथाधिकरणप्रत्यक्षानुरोधेनेन्द्रियप्रणालिकयाऽन्तःकरणस्याधिकरणदेशप्राप्तावधिकरणरूपविषयावच्छिन्नचैतन्यस्य च प्रमाणवृत्त्यवच्छिन्नचैतन्येनाभेदात्तज्ज्ञानस्य प्रमातृचैतन्येनाभेदादधिकरणस्य विषयस्य यथा प्रत्यक्षत्वं तथा भावावच्छिन्नचैतन्यस्यापि तथात्वेनाभावज्ञानाभावयोः प्रत्यक्षत्वमेवेति किं प्रमाणान्तरेणेतिचेन्न । नहि फलीभूतब्रह्मचैतन्येन प्रमाणभेदव्यवस्थोपेयते तस्य 'यत्साक्षादपरोक्षाद्ब्रह्म'ति श्रुत्या प्रत्यक्षात्मकस्यैवोपगमात् । किंतु विषयाकारवृत्त्यनुसारेण वृत्तिसंभवस्थले प्रमाणव्यवस्था यत्रेन्द्रियजन्या वृत्तिस्तत्रेन्द्रियं प्रत्यक्षप्रमाणमिहाभावाकारवृत्तिर्नेन्द्रियजन्या किंत्वनुपलब्धिजन्येति सैव प्रमाणम् । दशमस्त्वमसीत्यादाविवाभावज्ञानस्य फलीभूतस्य प्रत्यक्षत्वेनास्माकं विमतिरिति । नन्वभावज्ञानस्य प्रत्यक्षत्वेऽभावभ्रमस्थले शुक्तिरजतवत्प्रातिभासिका-

भावोत्पत्तिप्रसङ्गः। नचेष्टापत्तिः मायोपादानकत्वे तस्य मायाया भावत्वेन भावत्वप्रसङ्गो मायाया अनुपादानत्वे तस्याः सकलकार्योपादनत्वभङ्ग इतिचेन्न। संनिहितवस्त्वन्तरनिष्ठाभावस्य जपाकुसुमलौहित्यवत्तत्रान्यथाख्यातेरुपगमात् तादृशस्थले प्रातीतिकवस्तूपगमस्यासिद्धान्तत्वात्। क्वचित्प्रातीतिकाभावोत्पत्त्यभ्युपगमेऽपि व्यावहारिकाभाववन्मायोपादानत्वेऽपि भावत्वाप्रसक्तेरुपादानगतसर्वधर्मस्योपादेयेऽनुवृत्त्यनभ्युपगमादन्यथा पटादेस्तन्तुत्वाद्यापत्तेः ब्रह्मातिरिक्तस्य कस्यापि पारमार्थिकत्वानुपगमेनाभावस्य सर्वस्यैव कल्पितत्वेन मायोपादानत्वस्यावश्यमुपेयत्वात् ब्रह्मणः सकलकार्यविजातीयत्वनिबन्धनं न परिणामित्वानभ्युपगमनमपितु निरवयवत्वात् कौटस्थ्यश्रुतिविरोधाच्च। अनुपलब्धिप्रमाणगम्योऽभावश्च चतुर्विधः। प्रागभावो ध्वंसोऽत्यन्ताभावो भेदश्च। नच भेदाभ्युपगमेऽद्वैतसिद्धान्तभङ्ग इति वाच्यम्। पारमार्थिकस्य तस्याद्वैतविघातत्वेनानभ्युपगमात्। निर्वक्तुमशक्यत्वेन च पारमार्थिकत्वासंभवात्। यथा च भेदस्यानिर्वचनीयत्वं तथोक्तं विस्तरेण खण्डनखण्डखाद्यादौसंक्षेपेणेहाप्युच्यते। तथाहि भेदो न परमार्थसद्भवितुमर्हति सन् घटः सन् पट इत्यादिप्रतीतेर्घटादिसकलप्रपञ्चस्यैकसदात्मकत्वस्य प्रागिह व्यवस्थापितत्वा'त्तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्रभाष्यभामत्यादिषु चैकब्रह्मोपादानकत्वस्य व्यवस्थापनादुपादानोपादेययोश्चाभेदात्सच्चैकमेव हि ब्रह्म लाघवात्सदतिरेकेण सत्त्वस्य धर्मस्याप्यभावात्सदात्मना सकलप्रपञ्चस्यास्त्यभेद एवमेकमृदुपादानकघटशरावोदञ्चनादीनामेकमृदात्मकत्वमेकसुवर्णोपादानककटककुण्डलादीनां चैकसुवर्णात्मकत्वमस्तीति मृदात्मना घटादीनां सुवर्णात्मना कटकादीनामस्त्यभेदस्तद्भिन्नाभिन्नस्य तदभिन्नत्वनियमात्। भेदोऽपि चास्ति घटो न शरावः कटकं कुण्डलमित्यादिप्रतीतेर्भेदाभेदयोश्च द्वयोर्विरुद्धस्वभावयोरेकत्र पारमार्थिकत्वासंभवादन्यतरस्य कल्पितत्वे वाच्य एकत्वोपादानाभेदकल्पनैव ज्यायसी। भेदपारमार्थिकत्वेऽप्येकत्वस्य पारमार्थिकताया आवश्यकत्वादेकमपरस्माद्धि भिद्यते नह्येवमेकत्वस्य पारमार्थिकत्वे भेदपारमार्थिकत्वापेक्षेत्युपजीव्यविरोधादकल्पितत्वेन व्यवस्थितमेकत्वं लाघवात्सदेकरूपमधिष्ठानीकृत्य जायमानाया अविद्योपादानिकायाः कल्पनाया विषयो भेदोऽनिर्वचनीय एव व्यवतिष्ठते। किंच घटाद्भेदः पटस्य पटाच्च भेदो घटस्य यो वर्तते स च प्रतियोगिसंबद्धोऽनुयोगिनिष्ठ उतासंबद्धोऽसंबद्धस्य प्रतियोगिनो भेदकत्वानुपपत्त्या सर्वभेदानामेकत्वापत्तौ स्वमपि स्वस्माद्भिन्नं स्यान्न स्याच्च किमपि कस्मादपि भिन्नम्। संबद्धश्चेन्न विप्रकृष्टदेशकालेन कस्यापि केनचित्संबन्धो दृष्ट इति पटसंबद्धभेदस्य घटदेशत्वे पटः पटत्वभेदस्य तथात्वे पटत्वमपि घटे स्यात्। तथाच सर्वं सर्वात्मकं स्यात्। अथ विषयविषयिभाववत्प्रतियोग्यनुयोगिभावोऽपि विभिन्नदेशकालयोरेव संबन्ध इतिचेन्न। संबन्धत्वव्यापकत्वस्य संबन्धिद्वयदेशकालाविप्रकर्षे संयोगसमवायादिषु गृहीतत्वेन व्यापकाभावाद्व्याप्यस्याभावाद्विषयित्वस्यापि पक्षसमत्वेन दृष्टान्तत्वासंभवात् प्रतियोगित्वादेः काल्पनिकसंबन्धत्वे वाच्ये तेन संबन्धेन नियमतः प्रतियोगिसंबद्धतया प्रतीयमानस्य भेदस्याप्यनिर्वचनीयत्वं दुर्वारं। नह्यस्ति प्रतियोगिविनाकृता काचिन्नेत्येवमभावप्रतीतिः। एवं प्रतियोगित्वस्यापि नासंबन्धस्य संसर्गत्वं। तथात्वे सर्वभेदस्य सर्वप्रतियोगिकत्वापत्तेरिति संबन्धस्तस्यापि वाच्य एवं तस्यापीत्यनवस्थापातः। स्वरूपस्य क्वचिदनवस्थापरिहाराय वाच्यतायामादावेव तस्यैव तथात्वापातः। नच सोऽप्यभ्युपगन्तुं कुत्रापि शक्यः विकल्पासहत्वात् किमनुयोगिस्वरूपस्यैव संबन्धत्वमुत प्रतियोगिस्वरूपस्यैवोत मिलितस्य। तत्र नाद्यः। विनिगमकाभावात्। नातएव द्वितीयः। किंच भेदस्वरूपस्य प्रतियोगित्वानुयोगित्वस्वरूपस्य वा सर्वान्प्रति स्वरूपत्वेऽविशेषात्सर्वप्रतियोगिसंबन्धत्वापत्त्या सर्वभेदानां सर्वप्रतियोगिकसंबद्धत्वे सर्वप्रतियोगिकभेदत्वापत्तेः। एवं प्रतियोगिस्वरूपसंबन्धत्वेऽपि प्रतियोगिस्वरूपस्यानुयोगिरूपभेदप्रतियोगित्वाद्यनात्मकत्वेन संबन्धान्तरस्य चाभावेन तत्र संबन्धत्वे तदनात्मकत्वतदसंबद्धत्वयोरविशेषात्सर्वभेदप्रतियोगित्वादौ संबन्धत्वापत्तेरनुयोगिस्वरूपस्य स्वात्मकत्वेऽपि प्रतियोगिना सहाभेदसंबन्धयोरभावेन सर्वप्रतियोगिसंबन्धत्वापत्तेः। नच घटः पटो नेति प्रतीतेः घटनिष्ठस्य पटावृत्तेर्भेदस्य विशेषात्मनः प्रतियोगित्वेन संबन्धेन प्रतियोगित्वस्यापि स्वरूपेण पटेनैव संबन्धत्वं न घटादिभिर्घटो घटो नेत्यप्रतीतेरिति वाच्यम्। भेदस्य स्वरूपतो वैलक्षण्याभावात्प्रतियोगिसंबन्धोपरागेणैव वैलक्षण्यस्य वाच्यतया संबन्धस्य च भेदान्तरव्यावृत्तिसिद्धिं विना पटसंबन्धत्वेन घटनिष्ठो मठस्य पटवृत्तिर्भेदो विषयः पटावृत्तिर्वेत्यस्य कलहस्य प्रतीत्या वारयितुमशक्यत्वात्तदनिवृत्तौ घटः पटो नेतिवत् पटः पटो नेत्यस्य प्रामाण्यमपि वारयितुमशक्यम्। अतएव नापि तृतीयः। मिलितस्य संबन्धिद्वयानात्मकत्वसंबन्धान्तरयोरभावस्य सत्त्वे नोक्तदोषानतिवृत्तेरित्येवमपि संबन्धदुर्वचत्वाद्भेदोऽनिर्वचनीयः। एवं भेदस्याधिकरणेऽपि स्वरूपसंबन्धो दुर्वच इति तादात्म्येनैवाधिकरणभेदयोः संबन्धो वाच्यः। तत्र प्रतियोगिघटितशरीरस्याधिकरणात्मकत्वं तदघटितस्य वा। नाद्यः। घटस्य पटादिघटितभेदात्मकत्वेन पटात्मकत्वापत्त्या सर्वात्मकत्वं स्यान्नहि संभवति पटानात्मकत्वे तस्य पटभेदोभयसंभिन्नात्मकविशिष्टात्मकत्वम्। नच द्वितीयो युक्तः। पटस्तटस्थ एव सन् भेदं विशिनष्टि न तत्स्वरूपप्रविष्ट इतीति वाच्यम्। संबन्धानिर्वचनेन तटस्थीभूय विशेषकत्वस्य पटादावसंभवादगत्या पटादिघटितात्मकतयैव भेदस्य विलक्षणत्वस्य वाच्यतयोक्तदोषानतिलङ्घनात्। स्वतो विलक्षणस्याधिकरणात्मकत्वेऽधिकरणधर्मत्वे वा तस्याधिकरणप्रतियोग्यभेदाविरोधित्वे क्षत्यभावात्। घटस्य नीलत्वे नीलाभेदवत् प्रतियोग्यविशेषिततादृशप्रत्ययाभावेन तादृशवैलक्षण्यवद्भेदे मानाभावाच्च नियतनिरूपकनिरूप्यस्वभावस्य स्वतो वैलक्षण्ये विषयमन्तरेणापि ज्ञानस्य वैलक्षण्यापत्त्या विषय विलोपप्रसङ्गादित्यतोऽप्यनिर्वचनीयो भेदः। एवमति-

रिक्तो भेदो भिन्ने वर्तत उत भेदरहिते । नाद्यः । स्वविशिष्टे वृत्तावात्माश्रयात् अपरभेदविशिष्टे तस्य तद्विशिष्टे वापरस्य वृत्तावन्योन्याश्रयादपरापरतत्स्वीकारे चानवस्थापातात् स्वोपलक्षितेऽपि स्वाश्रयत्वस्वीकारे स्वाश्रयत्वज्ञप्तावात्माश्रयात् स्वस्यैवोपलक्षणतया स्वाश्रयत्वावच्छेदकत्वेनावच्छेदकत्वस्याश्रयत्वाधिकरणेऽवच्छेदकाश्रयत्वंविना चासंभवेनावच्छेदकज्ञान आश्रयत्वज्ञानस्याश्रयत्वज्ञाने चावच्छेदकज्ञानस्यापेक्षणात् । घटत्वादितत्तद्धर्माणां पटादिभेदाश्रयत्वावच्छेदकत्वेऽननुगमाद्घटत्वाद्याश्रयत्वस्याप्युक्तक्रमेण दुर्वचत्वात् । यत्र यत्प्रमीयते तत्र तदाश्रयत्वमित्यपि न कुत्र प्रमीयत इत्याकाङ्क्षायां यत्र वर्तत इति कुत्र वर्तत इत्यकाङ्क्षायां यत्र प्रमीयत इत्यस्यैव वाच्यतयाऽन्योन्याश्रयात् । न द्वितीयः । स्वस्यापि स्वभिन्नत्वापातादित्यतोऽप्यनिर्वचनीयो भेदः । एवं घटभेदपटभेदयोरन्योन्यस्मादन्योन्यस्यास्ति भेदो न वा । नचेद्घटादपि घटो भिन्नः स्यात् । पटादपि वा न स्यात् । भेदे च भेदभेदयोरभेद उक्त एव दोषः स्यादिति तयोर्भेदस्तयोर्भेद इत्यनवस्थाप्रसङ्ग इत्यतोऽप्यनिर्वचनीयो भेदः । एवमद्वैतश्रुतितो बाधादप्यनिर्वचनीयो भेदः । नच प्रत्यक्षेण भेदग्राहिणा द्वैतश्रुतेरेव बाधः किं न स्यादिति वाच्यम् । तस्य सदोषत्वशङ्कया संदिग्धप्रमाणत्वेन नित्यानिर्दोषतया निश्चितप्रमाणादद्वैतश्रुतेर्दुर्बलत्वेन तद्बाधकत्वायोगात् । घटः पटो नेति प्रत्यक्षस्य घटपटयोर्भेदग्राहित्वेऽपि स्वस्वविषययोर्भेदाग्राहितया तयोरभेदे प्रत्यक्षेणाबाधिताद्वैतश्रुतिस्तं साधयन्ती तदभिन्नाभिन्नस्य तदभिन्नत्वनियमलब्धबला घटपटयोरप्यभेदं हि साधयेत् । नच ज्ञानविषययोरपि भेदस्य ज्ञानान्तरेण ग्रहणात्तत्राप्यद्वैतश्रुतिबाध इति वाच्यम् । तज्ज्ञानेनापि हि स्वस्वविषयभेदाग्रहणेन तयोरभेदे लब्धपदा श्रुतिरामूलमभेदं साधयेत् । एवं सविषयतत्तज्ज्ञानस्वविषयग्रहणप्रवृत्ता बुद्धिर्विषयशतभारमन्थरा यत्रैव भवेद्विश्रान्ता तत्रैवाद्वैतागमेन भेदबुद्धेः पराभवादभेदसिद्धावामूलमभेदस्य दुर्वारत्वादेवं लक्षणतोऽपि भेदस्य दुर्वचत्वम् । तथा ह्यन्योन्याभावत्वं न भेदत्वं तद्धि नान्योन्यप्रतियोगिकाभावत्वं घटात्यन्ताभावपटात्यन्ताभावयोरपि तथात्वात् । एकस्य कस्यापि भेदस्यान्योन्यप्रतियोगिकत्वविरहेणाव्याप्तेरन्योन्यपदार्थस्यापि भेदघटितत्वेनात्माश्रयात् । नाप्यन्योन्यस्मिन्नन्योन्यप्रतियोगिको भावः पूर्वोक्तदोषानतिवृत्तेः । स्वप्रतियोगितावच्छेदकविरोध्यभावत्वमपि न कालिकसंबन्धावच्छिन्नप्रतियोगिताकजन्याभावेऽतिव्याप्तेः तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमपि न तत् तादात्म्यानिरुक्तेः । अभेदस्य तादात्म्यरूपत्वे तस्य भेदाभावरूपतयान्योन्याश्रयात् स्ववृत्त्यसाधारणधर्मात्मकत्वे चासाधारण्यस्य स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वरूपत्वे भेदगर्भत्वेनान्योन्याश्रयात् स्वसामानाधिकरण्यस्वाभाववद्वृत्तित्वोभयसंबन्धेन धर्मविशिष्टान्यत्वस्यापि भेदरूपत्वेनान्योन्याश्रयात् उक्तोभयसंबन्धावच्छिन्नप्रतियोगिताकधर्मात्यन्ताभावस्य वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वे वक्तुमशक्यत्वात् अखण्डधर्मविशेषस्य तस्य विशेषानिर्वचनेन वक्तुमशक्यत्वात् । अतएव भेदत्वमनुयोगिताविशेष इत्यप्यपास्तम् । एवमेवात्यन्ताभावादीनामप्यनिर्वचनीयत्वमनुसंधेयम् । भेदोऽपि व्यावहारिकोऽभ्युपेय एव घटो न घटत्वमित्यादेरत्यन्ताभावादिभिरुपपादयितुमशक्यत्वादिदमिह नास्तीत्याद्यत्यन्ताभावप्रतीतेर्विलक्षणत्वाच्च । सच भेदो द्विविधः । सोपाधिको निरुपाधिकश्च । घटाद्युपाधिभेदादाकाशस्य तत्तदन्तःकरणभेदाद्ब्रह्मणो भेदः सोपाधिकः सचोपाधिनिवृत्त्या निवर्तते, घटपटयोर्भेदो निरुपाधिकः सोऽप्यधिकरणनिवृत्त्या निवर्ततेऽधिकरणानात्मकश्चेत्कल्पितत्वात्तत्त्वज्ञानेन निवर्तत इति । प्रागभावस्तु मानाभावादपि न मन्तव्यः । घटाद्युत्पत्तेः पूर्वं घटो नास्तीति बुद्धेरत्यन्ताभावेन सामयिकेन वा घटानयनापसारणस्थलकल्पनीयेनाभावेनोपपत्तेर्घटप्रागभावोऽस्तीत्येवं लोकानामप्रतीतेः शास्त्रविदां केषांचिच्छास्त्रवादव्यामूढदृशां तत्संस्कारात्प्रतीतावपि तस्या विना प्रामाण्यपरीक्षां वस्त्वसाधकत्वादन्यथा तत्तच्छास्त्रविदां तत्तदाकारप्रतीत्या विरुद्धनित्यानित्यस्वभावशब्दादिसिद्ध्यापत्तेः कार्यदेशनियमस्य प्रागभावनियामकेनैव संभावात्कपाल एव घटप्रागभावो न तन्ताविति नियमनिर्वाहकताया घटसामग्रीघटककपालादेस्तादात्म्येन वक्तव्यत्वात्तस्यैव घटदेशनियामकत्वसंभवात् । अथ पाकजस्थले रूपरसादीनामन्योन्यभेदार्थं सामग्रीभेदस्यावश्यकतया रूपादिप्रागभावघटितत्वेनैव सामग्रीभेदो वाच्यः । समवायिकारणासमवायिकारणाग्निसंयोगस्यैकत्वादिति प्रागभाव आवश्यकः । एवं त्रिचतुरादिषु द्वित्वोत्पत्तिवारणाय द्वित्वे द्वित्वप्रागभावस्य हेतुत्वं वाच्यमित्यावश्यकः प्रागभावः । नच द्वित्वोत्पत्तौ व्यक्तिद्वयगोचरापेक्षाबुद्धेर्विषयतया कारणत्वान्नापत्तिरिति वाच्यम् । द्वित्वोत्पत्तेः पूर्वं व्यक्तिद्वयगोचरेत्यस्य वक्तुमशक्यत्वात् । एवं सहस्रतन्तुकपटस्य तेषूत्पत्तिर्नान्यत्रेति नियमाय तत्प्रागभावस्य हेतुत्वं वाच्यम् । तत्तत्तन्तुकव्यक्तेस्तत्तत्संयोगव्यक्तेर्व्यक्त्यन्तरेषु व्यतिरेकव्यभिचारेण समवायप्रत्यासत्त्या हेतुत्वासंभवात्तावत्तन्तूनां तावत्संयोगानां च कालिकप्रत्यासत्त्यैव हेतुत्वस्य वाच्यतया तैर्देशनियमासंभवादित्यावश्यकः प्रागभाव इति तत्तत्कारणकार्यभाव एव मानं प्रागभाव इति । एवमन्यतरकर्मजसंयोगे कर्मण उत्तरदेशे व्यभिचारेण समवायप्रत्यासत्त्या हेतुत्वासंभवात्कालिकेन स्वस्वप्रागभावोभयाधिकरणं यत्कर्म तद्विशिष्टसमवायेन संयोगंप्रति समावयेन कर्मणः कारणत्वं वाच्यम् । तथा चोक्तसंबन्धेन संयोगस्य नोत्तरदेशे सत्वं अपितु कर्मवत्येवेति न व्यभिचारः । विनष्टोत्तरदेशक्रियावारणाय संयोगसमकालोत्पत्तिकोत्तरदेशक्रियावारणाय चोभयाधिकरणत्वप्रवेशः कर्मविशेषणतया कृतः । यद्वा स्वजन्यसंयोगप्रागभाववत्वस्य कारणतावच्छेदकसंबन्धत्वं वाच्यमित्युक्तकार्यकारणभावस्यापि प्रागभावे मानत्वम् । एवं घटोत्पत्तिद्वितीयक्षणो यदि घटसामग्र्यव्यवहितोत्तरः स्याद्घटोत्पत्तिमान् स्यादित्युत्पन्नपुनरुत्पत्तिप्रसङ्गवारणाय सामग्र्यां प्रागभावनिवेश आवश्यक इतिचेन्न । प्रागभावस्य हि वैल-

क्षण्याप्रयोजकत्वं अन्यथा सलक्षणानां घटव्यक्तीनां प्रागभावस्य तव भेदसत्त्वेन वैलक्षण्यापत्तेरेवं रूपनाशक्षणत्वेनाभिमतक्षण एव हि पाकजरूपोत्पत्त्यापत्तिस्तत्प्रागभावस्य सत्त्वादितिरूपोत्पत्तौ रूपत्वावच्छिन्नाभावस्य रसाद्युत्पत्तौ रसत्वाद्यवच्छिन्नाभावस्य कारणताया वाच्यतया तद्घटितत्वेन सामग्र्या भेदात्पाकजस्थले रूपरसादिवैलक्षण्यनिर्वाहोऽभ्युपेय इति तदर्थं प्रागभावस्यानुपेयत्वात् । व्यक्तिद्वयविषयकापेक्षाबुद्ध्यादेर्द्वित्वादिकंप्रति कारणताया अवच्छेदककोटौ द्वित्वस्योपलक्षणविधयैव प्रवेशेन पूर्वकाले द्वित्वस्यानुपजातत्वेऽपि क्षत्यभावात्, गुणेऽपि बुद्धिविशेषविषयत्वरूपसंख्यायाः सर्वैरुपगमात्, द्वित्वत्रित्वादावेकत्वद्वयैकत्वत्रयादेर्हेतुत्वाद्वा व्यक्तित्रये द्वित्वाद्यापत्तिवारणसंभवात्तदर्थमपि प्रागभावस्यानभ्युपगमात्, सहस्रतन्तुकादिपटोत्पत्तौ प्रागभावस्य हेतुत्वेऽपि तावत्तन्तुतावत्तत्संयोगेष्वेकस्याप्यभावे तत्पटानुत्पत्तेस्तेषां हेतुत्वस्यावश्यकतया स्ववृत्तिसहस्रत्वविशेषसंबन्धेन स्वसमानाधिकरणसहस्रत्वविशेषसंबन्धेन च हेतुत्वं तेषां कालिकेनैव तेषामुक्तसहस्रत्वविशेषस्य पर्याप्त्या वा हेतुत्वोपगमात्सहस्रतन्तुकपटस्य विनैव प्रागभावं देशनियमसंभवात् तदर्थमपि प्रागभावस्यानुपेयत्वात्, एवमन्यतरकर्मसंयोगंप्रति कर्मणः कालिकप्रत्यासत्त्या द्रव्यविशेषनिष्ठद्वित्वसंख्याया द्वित्वविशेषेण द्रव्यस्य वा कर्मण एव वा स्वसमानाधिकरणद्वित्वविशेषसंबन्धेन हेतुत्वसंभवात्कर्मीकरणत्वानुरोधेनापि प्रागभावस्यानङ्गीकरणीयत्वात् । विशेषश्च कर्माश्रयकर्माभिमुखदेशस्थद्रव्यनिष्ठत्वम् । प्रतियोगित्वाभिमुख्ययोरभ्युपगमे तदन्यतरसंबन्धेन कर्मणः कारणत्वोपगमो विधेयः । एवं समवायेन द्रव्यंप्रति समवायेन द्रव्यस्य प्रतिबन्धकताया महापटवति खण्डपटप्रागभावसत्त्वेन तदुत्पत्तिवारणायावश्यकत्वात् । तथैवोत्पत्त्यवच्छिन्नसमवायेन चरमसंयोगव्यक्तेर्हेतुतया वोत्पन्नद्रव्यपुनरुत्पत्तिवारणसंभवात्तदर्थमपि प्रागभावस्याखीकरणीयत्वात्, परिणामवादे कार्यकारणयोरभेदस्यावस्थाभेदेन कारणभेदस्योपगमेन प्रागभावासत्त्वेऽपि सुतरां दोषाभावात् । अथ प्रागभावासत्त्वे पूर्वत्वस्य तत्प्रागभावाधिकरणत्वरूपस्याव्यवहितपूर्वत्वस्य स्वप्रागभावाधिकरणक्षणप्रागभावानधिकरणत्वे सति स्वप्रागभावाधिकरणत्वरूपस्य दुर्वचत्वमितिचेन्न । स्वोत्पत्तिक्षणवृत्तिध्वंसप्रतियोगित्वस्य पूर्वत्वरूपत्वात्, स्वोत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वस्याव्यवहितपूर्वत्वरूपत्वात्, विनापि प्रागभावं तयोर्दुर्वचत्वविरहात् । एवं भविष्यत्त्वमपि न वर्तमानप्रागभावप्रतियोगित्वं श्वोभाविन्यस्य भविष्यति गृहपरभागे भाविन्यत्रापरभागे घटो भविष्यतीति प्रत्ययप्रसङ्गाद्दपितु वर्तमानक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वं तथासत्युत्पत्तौ कालदेशादेरन्वयेनोक्तदोषाभावात् । अतएव घटो भविष्यतीति प्रतीत्या प्रागभावसिद्धिरित्यपास्तम् । तस्यानिरुक्तभविष्यत्त्वगोचरत्वात् । घटकीभूतध्वंसत्वमपि न प्रागभावप्रतियोग्यभावत्वं, प्रागभावत्वस्यापि ध्वंसप्रतियोग्यभावत्वेनान्योन्याश्रयादपित्वनुयोगिताविशेषो जन्याभावत्वं वा । जन्यत्वं च स्वरूपसंबन्धविशेषः । एवं वर्तमानत्वमपि कालस्य न स्वध्वंसस्वप्रागभावोभयानधिकरणकालत्वम् । स्वाधिकरणकालत्वरूपत्वे दोषाभावादिति यद्यपीत्थं नास्ति प्रागभावस्य व्यावहारिकत्वमपि तथापीह कपाल इदानीं घटप्रागभावो न तत्र तन्ताविति प्रतीतिर्यदि स्वारसिकी लोकानां तदा नापलपनीयः प्रागभावः । तन्तावत्यन्ताभावनिषेधानुपपत्त्या तद्विषयत्वस्य वक्तुमशक्यत्वात् । कालत्रयेऽपि यत्र प्रतियोगी नास्ति तत्रैवात्यन्ताभावोपगमे श्यामतादशायां पाकेन भविष्यद्रक्तरूपे घटे रक्तो नास्तीति प्रतीतेरपि प्रागभावो मन्तव्यः । एवंच पूर्वत्वादिकं प्रागभावघटितमपि वक्तुं शक्यमस्माकं ब्रह्मातिरिक्तस्य पारमार्थिकसत्तायामेव श्रुतिविरुद्धायां प्रद्वेषात्तस्य प्राङ्गिराकृतत्वाद्व्यावहारिकसत्ता तु यथाव्यवहारमुपेयत एवेत्यलम् ॥ ॥ निरुक्तानुसारिभिर्ध्वंसोऽपि नातिरिक्तोऽभावो मानाभावात् । मुद्गरपातानन्तरं घटो नास्तीति बुद्धावत्यन्ताभावस्य सामयिकाभावस्य वा विषयत्वादपि तु भावस्यैव कश्चिद्विकारः जायतेऽस्तिवर्धते विपरिणमतेऽपक्षीयते विनश्यतीति षड्भावविकारेषु नाशस्य परिगणनात् । अथवा चरमक्षणसंबन्ध एव भावस्य नाशः । तस्य वर्तमानत्वातीतत्वभविष्यत्त्वादिभिरेव नश्यति नष्टो नङ्क्ष्यतीत्यादिप्रतीतेरुपपत्तेरिदानीं घटस्य ध्वंस इति न स्वरसतो लोकानां प्रत्ययोऽपि तु शास्त्रव्यामोहजनितोऽतस्ताद्दशसंबन्धस्य तदानीमभावेनातिरिक्तध्वंसोपगम आवश्यक इत्युक्तेर्नावकाशः । अथ ध्वंसाभावे प्रागुक्तस्य ध्वंसघटितस्य पूर्वत्वभविष्यत्त्वादेः का गतिरेवं स्वाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणत्वरूपस्याद्यत्वस्य स्ववृत्तियावद्ध्वंसविशिष्टत्वरूपस्य चरमत्वस्य वर्तमानध्वंसप्रतियोगित्वरूपस्यातीतत्वस्य स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपस्योत्तरत्वस्य स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपस्याव्यवहितोत्तरत्वस्य च सर्वस्य ध्वंसघटितत्वेन ध्वंसाभावे का गतिरितिचेन्न । प्रतियोगित्वाधिकरणत्वप्रकारत्वविशेष्यत्वावच्छेदकत्वविधेयत्वादिवत्पूर्वत्वादीनामपि सर्वेषामखण्डोपाधित्वाभ्युपगमादखण्डत्वेऽप्यखण्डतारत्वमन्दत्वप्रकारत्वादिवत्सनिरूपकस्वभावस्योपगमादिदमस्मादुत्तरमस्मात्पूर्वमित्यादेर्नानुपपत्तिरिति वदन्ति । वेदान्तिनां तु चिरस्थायिनो दुःखनाशस्यार्थं तदुपाये घटनाशार्थं मुद्गरपातादौ चिरस्थायिनो रोगनाशस्य कृते भेषजपानादौ प्रवृत्तिदर्शनात् । दुःखनाशादितो हर्षादिकार्यदर्शनादत्यन्ताभावस्य कालत्रयेऽपि न यत्र प्रतियोगी तत्रैवोपगमेन रक्ततादशायां श्यामो नास्तीति प्रतीतेरिहेदानीं घटनाशो न तन्तावित्यत्रात्यन्ताभावस्य विषयत्वासंभवादन्यत्र तत्प्रतिषेधात्सामयिकाभावस्यानुपगमाद्यवस्त्यतिरिक्तो व्यावहारिको ध्वंस आस्तां न तत्र विद्वेषः । पारमार्थिकत्वस्यैव तस्य प्रतिषेध्यत्वात् । सच ध्वंसो नैयायिकानामिव नाविनाशी कल्पितत्वेनावश्यं तत्त्वज्ञानेन विनाश्यत्वात् । कपालाद्यात्मकत्वपक्षे कपाल एव विलक्षणघटनिष्ठप्रतियोगिकाभावत्वस्योपगमात् तदाश्रयस्य नाशावश्यंभावाच्च ।

नच घटध्वंसनाशे घटोन्मज्जनापत्तिः । घटध्वंसध्वंसस्यापि घटप्रतियोगिकलोपगमादधिकमत्र विषये प्रागुक्तम् । ध्वंसस्योपादाननाशजन्यत्वादिकृतवैचित्र्यमन्यत्र प्रपञ्चितमनुसंधेयम् । अत्यन्ताभावोऽपि व्यावहारिको नापलपनीयो वेदान्तिभिः । पारमार्थिकस्यैवोक्तयुक्तिभिर्निषेधात् । तथाहि प्रतीतिरेव हि वस्तूपगमे शरणम् । प्रतीतिश्च घट इति भूतलमिति घटो भूतलं चेति भूतले घटमिति प्रतीतिभ्यो विलक्षणा घटो नास्तीत्यस्ति । तद्वैलक्षण्यं च न विषयवैलक्षण्यं विना । स्वतो वैलक्षण्यस्यासाकारवादिभिरनुपगमादिति घटत्वावच्छिन्नप्रतियोगिताकाभावत्वरूपधर्मविशिष्टः कश्चिद्घटादिविलक्षणोऽभ्युपेय एव विषयः । सच धर्मोऽतिरिक्तस्याभावस्य वाधिकरणस्य भूतलादेरेव वेत्यन्यदेतत् । अत्यन्ताभावोऽप्युक्तधर्मविशिष्टतया कल्प्यत इति विनाश्येवेति सविषयानुपलब्धिनिरूपणम् ॥ ॥ प्रथमनिरूपणीयमपि प्रत्यक्षं निर्विवादप्रमाणतया चरममभिधीयते । तथाहि फलं सर्वत्रैव प्रमाणे स्वप्रकाशमपरोक्षमेकमेव ब्रह्मचैतन्यं तस्यैकत्वं स्वप्रकाशत्वमपरोक्षत्वं च द्वितीयाध्याये प्रसङ्गादुक्तं तस्यैव सर्वभानप्रयोजकत्वादन्यस्य सर्वस्य जडत्वात् । तथाच श्रुतिः 'तमेव भान्तमनु भाति' इत्यादिः । तच्च ब्रह्मचैतन्यं विषयाकारवृत्त्यवच्छिन्नं सद्विषयचैतन्याभेदमापन्नं प्रत्यक्षप्रमोच्यते । प्रमाणं तत्र वृत्त्यवच्छिन्नं चैतन्यम् । प्रमेयं तु प्रत्यक्षं प्रमातृचैतन्याभिन्नस्वावच्छिन्नचैतन्यकम् । प्रमाता चान्तःकरणावच्छिन्नं चैतन्यमन्तःकरणस्येन्द्रियद्वारा विषयदेशप्राप्तौ त्रयाणां चैतन्यानां भवत्यैक्यमिति ज्ञानस्य विषयस्य च प्रत्यक्षत्वं तदुभयलक्षणं द्वितीयाध्यायस्थोनत्रिंशच्छ्लोकव्याख्यायां वृत्तेर्ज्ञानातिरिक्तस्योपगमेऽपि यथा न गौरवं न्यायादिमतापेक्षया तथा द्वितीयाध्यायस्थपञ्चदशश्लोकव्याख्यानेऽन्तःकरणनिर्गमनेऽपि यथा तेनैव नावरणभङ्गादिः किंतु वृत्तिरवश्यमुपेया तथा द्वितीयाध्यायाष्टादशश्लोकव्याख्याने यथा वृत्तेरावरणाभिभवार्थत्वाभेदाभिव्यक्त्यर्थत्वचिदुपरागार्थत्वान्यतमरूपेणोपयोगस्तथा तृतीयाध्यायसप्तविंशतिश्लोकव्याख्याने चाभिहितमितीदानीं वृत्तावुपयोगिनामिन्द्रियाणां सपरिकराणां विचारोऽवशिष्टो निरूप्यते । तत्र प्रत्यक्षवृत्तिजनकानीन्द्रियाणि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्चैव तन्मात्रसंज्ञकापञ्चीकृतभूतसत्त्वकार्याणि भवन्ति । श्रोत्रादिषूपादानतया सत्त्वप्रधानापञ्चीकृताकाशादीनामन्येषां तूपष्टम्भकतया निमित्तत्वेन कारणत्वमतो न वेदान्तपरिभाषायाः सृष्टिप्रकरणीयेन सत्त्वगुणोपेतैः पञ्चभूतैर्व्यस्तैर्यथाक्रमं श्रोत्रादीनीन्द्रियाणि जायन्त इति वाक्येन प्रत्यक्षप्रकरणीयशिखामणिवाक्यस्येन्द्रियाणि प्रत्येकभूतारब्धानीति वैशेषिका इत्यादेः पाञ्चभौतिकत्वप्रतिपादकस्य न विरोधः । नवा श्रोत्रस्य परिच्छिन्नत्वेन वीणादिदेशगमनप्रतिपादकवेदान्तपरिभाषावाक्यस्यासङ्गतिः । व्यस्तैरित्यनेनैकैकस्योपादानत्वाभिधानात्, पञ्चीकृतभूतोपादानत्वनिषेधाच्च, पाञ्चभौतिकत्वस्य शरीरवद्यथाकथंचिद्भूतकार्यत्वेनाप्युपपत्तेश्च । अत्रेदमवधेयम् । भौतिकत्वे चान्त्येष्टिप्रकरणीया 'सूर्यन्ते चक्षुर्गच्छता'दित्यादिका 'तेजोमयी वाक्' इति च्छान्दोग्यस्था च श्रुतिर्मानम् । नच क्वचन पाञ्चभौतिकत्वं सूत्रभाष्ययोरप्युपलभ्यते । व्यस्तैरितीन्द्रियप्रकरणे मिलितैरित्यन्तःकरणप्रकरणे वेदान्तपरिभाषायामभिधानाच्च श्रोत्रादीनामाकाशाद्येकैकभूतपरिणामत्वमेव पाञ्चभौतिकत्वे गौरवात् । शरीरस्य स्वेदोष्मगन्धादेरिवेन्द्रियस्य तथात्वे लिङ्गाभावात् श्रोत्रस्य तादृशस्य रजोऽनुगृहीतसत्त्वप्रधानाकाशपरिणामत्वम् । यादृशस्य परिच्छिन्नत्वेन गतिमद्रजःसहकृतसत्त्वजन्यत्वेन भवति गतिरुपपन्ना । चक्षुषो घ्राणादेश्च मूर्तत्वाविशेषेऽपि तमःसहकारित्वविशेषाप्रयुक्तत्वप्रयुक्तत्वाभ्यां गतितदभावौ भवत उपपन्नौ मानं चात्रानुपदमेव वक्ष्यत इति । एवं चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वात् प्रभावदित्यादिन्यायतन्त्रोक्तमनुमानमपि मानम् तस्य श्रुतिसंवादित्वेन सप्रयोजकत्वम् । चक्षुरादीनां यदि पार्थिवादित्वं स्यात्सजातीयासाधारणविशेषगुणं गन्धादिकमप्रकाश्यरूपादिप्रकाशकत्वं न स्यादिति तर्केणापि च यद्यपि न्यायनये शब्दगन्धयोरसाधारण्येऽपि स्पर्शरूपरसानां नासाधारण्यं तथापि वेदान्तनये त्वाकाशादीनां पञ्चानामपञ्चीकृतानां शब्दादेरेकैकस्यासाधारणत्वमेव पञ्चीकृतानामपि तेषां तत्तद्गुणवत्कारणजन्यतयैव तत्तद्गुणवत्त्वमिति फलतः परकीयमेव तदित्याकाशादीनां शब्दादिरेवासाधारणविशेषगुण इति । एतेन त्वगेकैवेन्द्रियमस्तु सकलशरीरव्यापकत्वेन सर्वेन्द्रियाधिष्ठानगतत्वादित्यपि निरस्तम् । चक्षुष उपघातेऽप्यन्धत्वं श्रोत्रस्योपघातेऽपि बधिरत्वं न स्यात् । रूपशब्दादिप्रकाशकस्य त्वगिन्द्रियस्य विद्यमानत्वात् । नह्यस्ति प्रसन्नान्धादीनामधिष्ठानस्य व्याघातः । येनाधिष्ठानविशेषाद्यवच्छेदेनैव रूपादिग्राहकत्वस्योपगततयापि निस्तारः । नापि कृष्णसाराद्यधिष्ठितानां त्वगवयवानां रूपादिग्राहकत्वोपगमेन निस्तार इन्द्रियैकत्वप्रतिज्ञाव्याघातात्नाना ह्यवयवा अवयवावयविनोरत्यादात्म्येऽप्येकान्तत ऐक्याभावात् । एवं त्वक् शरीरसंयुक्ते द्रव्ये स्पर्शग्राहिका दृष्टा तथैव यदि रूपं गृह्णीयात् शरीरासंयुक्ते द्रव्ये न गृह्णीयात् यदि स्पर्शं तथा गृह्णाति रूपमन्यथापि तदा कुड्यादिव्यवहितस्यापि रूपं गृह्णीयात् । एकैव त्वगेकदैव शरीरस्थिता गता च सूर्यमण्डलमल्पेनापि तेजसा दह्यते गृह्णाति तस्यौष्ण्यं न सौरेण न सौरस्येति केन सचेतसा मन्तव्यमिति नानैवेन्द्रियाणि न त्वगेकेति काचादिव्यवहिताविप्रकृष्टवस्त्वविलम्बग्रहणान्न भौतिकं तस्य प्रतिघातिस्वभावत्वादपित्वाहंकारिकं व्यापकं चेत्यपि न । कुड्यादिव्यवहितस्याग्रहणमतिदूरस्थस्य चाव्यवहितस्य निकटस्थस्य च ग्रहणमिति विशेषस्याकस्मिकत्वापातात् । विषयेन्द्रियसंनिकर्षस्याविशेषात् । व्यवहिताव्यवहितयोः संनिहितासंनिहितयोरुभयोर्ग्रहणमेवाग्रहणमेव वा स्यात् । नच व्यापकत्वेऽपि न सर्वत्र प्रत्यक्षप्रयोजिका तस्य वृत्तिरुपेयते । अपितु गन्धरसस्पर्शादिप्रत्यक्षोपयोगिन्यो वृत्तयो घ्राणाद्यधिष्ठानेष्वेव रूपादिप्रत्यक्षोपयोगिनी च वृत्तिर्यादृशयादृशविष-

याणांन्यायनये चाक्षुषत्वं तादृशेषु कल्प्यत इति कुड्यादिव्यवहितस्य विप्रकृष्टस्य च न प्रत्यक्षापत्तिरिति वाच्यम् । एवं सति घ्राणादिप्रदेशस्थवृत्तीनामेव घ्राणादीन्द्रियत्वस्य लाघवेनोचितत्वात् रूपाद्युपलम्भप्रयोजकवृत्तेरेकस्या स्थायिन्या लोचनाधिष्ठान उपगमे व्यवहिताव्यवहितयोर्ग्रहणमेवाग्रहणमेव वा स्यादित्यापत्तेरनुद्धाराद्विषयदेश एवाभ्युपगमे विस्फारिताक्षस्येव निमीलिताक्षस्यापि विषयप्रत्यक्षापत्तेः प्रतिनयननिमीलनोन्मीलने वृत्तिविनाशोत्पादकल्पने च गौरवात् । नच संयोगोत्पादविनाशाभ्यां साम्यमिति वाच्यम् । आहंकारिकस्य तस्य सर्वपुरुषंप्रत्येकत्वे विस्फारिताक्षे चैकस्मिन् सर्वस्य प्रत्यक्षं स्यात्तदनुरोधेन विषये वृत्तेरुपेयत्वात् । निमीलिताक्षे चैकस्मिन् सर्वस्याप्रत्यक्षं स्यात्तदनुरोधेन वृत्तेर्नाशस्योपेयत्वादिति प्रतिपुरुषं भेदाभ्युपगमे तस्य विषये वृत्तिर्वा संयोगो वा कल्प्यतां नाममात्रे विवादात् । किंच तस्याव्यापकत्वोपगमे स्वसिद्धान्तव्याघाताद्व्यापकत्वोपगमे विषयदेशस्थस्य तस्य विषयदेशे वृत्त्युत्पत्तौ विषयासंबन्धस्य नयनोन्मीलननिमीलनादेरकिंचित्करतया तद्देशस्थोत्पादकेन वृत्त्युत्पत्तेर्दुर्वारतया निमीलिताक्षस्य प्रत्यक्षापत्तेर्दृष्टनिरपेक्षाददृष्टमात्रात्तदभ्युपगमे तस्मादेव चक्षुष्मदन्धयोः प्रत्यक्षाप्रत्यक्षयोः संभवादिन्द्रियवैफल्यापत्तेः निमीलनादेरक्लृप्तानन्तप्रतिबन्धकत्वकल्पने गौरवात् । वृत्तेरपि विषयेण संबन्धस्यावश्यकल्प्यतया संयोगपक्षापेक्षया तदाधिक्येनापि गौरवाच्च । तस्माद्भौतिकानीन्द्रियाणि विषयं प्राप्य ग्राहकाणीति मन्तव्यम् । तथाच कुड्यादिव्यवधाने चक्षुषो गतिप्रतिरोधात्प्राप्तेरभावादग्रहणमव्यवधाने च गत्यप्रतिरोधात्प्राप्तेर्ग्रहणमुपपद्यते । नच काचादिव्यवधानेऽपि ग्रहणं न स्यात् भूतस्य तृणादेस्तेन प्रतिघातदर्शनाद्भूतं च चक्षुस्तदपि प्रतिहतं स्यादिति वाच्यम् । काचस्फटिकादिव्यवधानेऽपि सौर्येण तेजसाङ्गुलिप्रभृतेर्दाहदर्शनात् काचादेः पार्थिवादिव्यवधायकत्वेऽपि तेजसो व्यवधायकत्वाभावस्योपगन्तव्यत्वात् । सर्वं ह्यवयवि सान्तरावयवसंयोगजनितं कथमन्यथा धातुपाषाणादिपात्रान्तस्थस्य बहिरग्निसंयोगे पाकौष्ण्यादिर्जलपूरिततत्पात्रबहिर्देशे जलकणशीतस्पर्शोपलम्भ इति लघुतरं तेजोद्रव्यं तावदप्यवयवान्तरप्रदेशान्निर्गत्य संयुज्यते काचादिव्यवहितार्थेनेति न तत्प्रत्यक्षानुपपत्तिः । नचापृथुपाषाणादिपरभागवर्तिवस्तुन औष्ण्याद्युपलम्भात्तेजसो निर्गमनमावश्यकमिति चक्षुरपि तेजस्त्वान्निर्गत्य विषयं तदन्तरितं गृह्णीयादिति वाच्यम् । यथा दर्शनमप्रत्यक्षस्थले हि कल्पना भवतीति दृश्यते वस्तुन औष्ण्यमिति तदुपपत्तये तद्व्यवधानं व्यतिभिद्य वह्निज्वालादिबहिर्गमनं कल्प्यते । वस्तुनः प्रत्यक्षाप्रत्ययान्नायनस्य रश्मेर्न व्यतिभिद्य गमनं कल्प्यते । काचादिव्यवहितस्यौष्ण्यप्रत्यक्षप्रत्ययात्सौर्यनयनरश्म्योरुभयोरपि व्यतिभिद्य गमनं कल्प्यत इति । प्रसादो हि रूपविशेषो द्रव्यान्तरासंयुक्ततया निर्मलावयवारब्धकाचस्फटिकादिद्रव्यगतो व्यतिभिद्य चक्षुषोगमने प्रयोजकः । सच कुड्यादिषु नास्तीति तद्व्यवहितवस्तुनश्चक्षुषा संबन्धाभावात्काचादिव्यवहितस्य संबन्धात्प्रत्यक्षत्वाप्रत्यक्षत्वे भवत इति तत्प्रयोजकसंबन्धतदभावनिर्वाहाय गतिमत्तेजोद्रव्यं चक्षुरुपगन्तव्यम् । नच तुल्यकालं यच्छाखाचन्द्रमसोर्ग्रहणं तदनुपपत्तिरिति वाच्यम् । तेजसो लाघवातिशयेन वेगातिशयाद्द्रुततरगमनेन तदुभयोरतिझटिति प्राप्तिसंभवेन तदुपपत्तेः । दृश्यते ह्युदयगिरिशिखरमारोहत्येव भगवति भास्वति समुपलभ्यमानौष्ण्यप्रकाशस्य रश्मेः प्राङ्गणेऽवस्थानं गतिसाध्यम् । स यथा प्रसरणशीलः पूर्वपूर्वदेशेन संयुज्यमान एवोत्तरोत्तरदेशं प्रसरति तथैव नयनरश्मिरपि नयनान्निर्गत आनयनादाच चन्द्रमसमाबद्धैकरेखो त्यक्तपूर्वपूर्वपदार्थः प्रसरति तत्रामिताः क्षणचतुष्टयावस्थायिन्यो गतयोऽमिताश्च क्षणाद्द्रुततमगतीनामपि तेषां भवन्ति ये निरन्तरगतयो वेगातिशयात्ते द्रुततमगतयः, ये वेगाल्पाल्पतयाधिकाधिकगतिरहितक्षणान्तरितगतयस्ते मन्दमन्दतरगतयो भवन्ति । सूर्यनयनरश्म्यादीनां तावद्दूरगमनेऽमितोऽपि क्षणप्रचयः स्थूलकालैकदर्शिनामत्यल्पतयाभासत इति । तत्कालविभागासमर्थानां सन्निहितोत्तरदेशप्राप्त्यपेक्षया विप्रकृष्टोत्तरदेशप्राप्तौ क्षणाधिक्येऽपि तदविभावनाच्छतपत्रपत्रशतभेदतुल्यकालत्वभ्रमवदुक्तस्थलेऽपि तुल्यकालताभ्रम एवेति किमनुपपन्नम् । यद्वा तत्र पूर्वदेशात्प्रचलितस्योत्तरदेशसंयोगे जनयितव्ये क्षणचतुष्टयस्य क्रियातज्जन्यविभागतज्जन्यपूर्वदेशसंयोगनाशतज्जन्योत्तरदेशसंयोगाश्रयलक्षणस्य यद्यप्यस्त्यावश्यकत्वं तथापि मध्ये गतिरोधकाभावे मन्दतमगतिर्यमुत्तरदेशं बहुभिः क्षणत्रयानन्तरभाविभिः क्षणैः प्राप्नोति मन्दमन्दतरशीघ्रशीघ्रतरशीघ्रतमगतयोऽल्पाल्पतराल्पतमैः क्षणैस्तं प्राप्नुवन्ति । भवत्यल्पतमतायाः पराकाष्ठा क्षणस्य यच्चतुष्टयानधिकतैव । महिमैषो वेगातिशयस्य यदन्तरालस्थाः परमाण्वादयोऽपसरन्तस्तद्गतिनाशकसंयोगभाजो न भवन्ति । न भवन्त्यत उत्तरदेशा येचानपसर्तुमयोग्या उपलब्धुं योग्या स्थूलास्ते च सहस्रयोजनस्था अपि चतुर्थक्षण एव तादृशसंयोगभाज उत्तरदेशा भवन्त्यधिकाधिकगत्यकल्पनालाघवेनैतस्योपगमादेवं चोपपन्नतरमतिझटिति नयनरश्मेः सूर्यमण्डलगमनम् । यद्यप्येवमप्यावश्यकं शाखासंयोगाच्चन्द्रसंयोगे क्षणानामाधिक्यं तथाप्यस्माकं तादृशकालविभागाक्षमाणां न तत्प्रतीतिरिति शतपत्रपत्रशतभेदनतुल्यकालताप्रतीतिवच्छाखाचन्द्रसंप्रयोगप्रत्यक्षतुल्यकालत्वप्रतीतिरपि भ्रमात्मिकैवेति । अथ यदि घ्राणरसनादिवत्प्राप्यैव विषयं चक्षुर्गृह्णीयात् घ्राणादिगृहीतार्थ इव चक्षुर्गृहीतेऽपि सान्तरोऽयमिति प्रत्ययो न स्याद्भवति प्रत्यय इति सान्तरस्यैव ग्रहणमिति गोलकमेव चक्षुरिति चेन्न । उक्तप्रतीतेः शरीरापेक्षया सान्तरत्वविषयकत्वेनाप्युपपत्तेरिन्द्रियापेक्षया सान्तरत्वासाधकत्वाद्विनिगमकं च । तत्रोक्तयुक्तिभिश्चक्षुषो गतिप्राप्तिसिद्धिरतएवानन्तगतिसंयोगादिकल्पनागौरवमपि फलमुखत्वान्न दोषाधायकम् । ननु दूरस्थस्य यदग्रहणं तत्कस्मादिति वक्तव्यं नचाप्राप्तेरिति वक्तुं शक्यं । नहि भवति युक्तं गिरिशिखरादित्यमण्डलं प्राप्नोति तन्मध्यवर्तिनिकट-

स्थमपि पक्ष्यादिकं नेति । तस्माच्चक्षुः स्वविषयस्यैव ग्राहकं विषयं च न कुड्यादिव्यवहितो न पक्ष्यादिर्दूरस्थोऽपि तु काचादिव्यवहितो दूरस्थश्च गिरिसूर्यादिरिति किं चक्षुषो गतिप्राप्तिकल्पनया गुरुतरयेति कृष्णसारगोलकमेवास्तां चक्षुरितिचेन्न । विषयता हि यदि विषयस्येन्द्रियनिरूपिता स्वभावस्तदा तदेव वस्तु दूरादगृहीतमपि संनिधाने गृह्यत इति विषयत्वाविषयत्वोभयस्वभावं स्यादिति । यदि हि स्वरूपयोग्यता महत्वादिर्विषयता समानैव सा संनिधाने व्यवधाने चैकस्य वस्तुन इति संनिधाविव ग्राह्यस्य व्यवधानेऽपि ग्रहणं स्यात् । सहकारिसाकल्यं तु प्राप्तिमन्तरेण दुर्वचम् । तथाहि कुठारादीनि सर्वाणि करणानि सत्यप्यस्वच्छमूर्ताव्यवधाने स्वच्छमूर्तद्रव्यव्यवधाने वा संनिधाने च स्वविषयं छेद्यादिकमप्राप्य न कुर्वन्ति च्छिदादिकां क्रियामित्यस्ति भूयो दर्शनम् । भूयोदर्शनानुसारिणी च भवति कल्पनेति व्यवधानाभावसंनिधानादिकं प्राप्तियोग्यताप्राप्तिरेव च सहकारिसाकल्यमित्यवधार्यते तदेव चेद्विषयत्वमस्त्वेव तत्सांख्यानामाहंकारिकेन्द्रियस्येति व्यवहितादिग्रहणं दुर्वारं स्यात् । येषां सौगतानां कृष्णसारगोलकमेव चक्षुस्तेषां तदभावान्न स्यात्कुत्रापि प्रत्यक्षमिन्द्रियत्वाद् घ्राणादिवत् करणत्वाद्वा वास्यादिवच्चक्षुषोऽपि प्राप्यकारित्वस्य सिद्धत्वात् । किंचास्माकं प्राप्तिरनुगतं प्रत्यक्षप्रयोजकं ग्राहकस्येन्द्रियस्य ग्राहकं च कस्यचित्कस्यचिद्वस्तुनः परिपूर्णावयवं घनतमं घनतरं घनं च कस्यचित्कस्यचित्प्रक्षीणावयवमपि प्रविरलं प्रविरलतरं प्रविरलतमं च चक्षुर्निर्गच्छत्तद्गोलकात्प्रसृताग्रं पृथूभवत्क्रमेण क्रमेण घनतमादिभावात्प्रच्युतं सूचीनाराचपक्षिहरिणगोहस्तिवृक्षगिरिसूर्यादिषु पूर्वंपूर्वं घनतमाद्यवस्थं सत्संनिहिततमादिकमुत्तरमुत्तरं प्रविरलादिकमपि सव्यवहितादिकं गृह्णाति विषयश्च महानुद्भूतरूपोऽनभिभूतश्च ग्राह्यः । नह्येवं परेषामस्ति किंचित्प्रयोजकमसर्वज्ञसुज्ञेयम् । तथाहि ग्राहकस्य गोलकस्य न वैचित्र्यं तत्तद्विषयगतविचित्रसंनिधानं तु केनासर्वज्ञेन भवति ज्ञेयमेवं व्यवधानाभावोऽपि नानुगतः प्रयोजकः नेत्रसंनिधानेऽङ्गुलीद्वयव्यवधानेऽपि वस्त्वग्रहात् । नेत्रविप्रकृष्टविप्रकृष्टतरतमादिदेशस्थे च तस्मिन्वस्तुग्रहाद्देशविशेषावस्थानादिविशिष्टस्यैवाभावस्य वाच्यत्वात् । अथ कथं प्राप्तौ सति वस्तुग्रहणे गिर्यादिग्रहणमुपपद्येतात्पेन नयनेनाभिव्याप्त्या गिर्यादिप्राप्त्यसंभवादितिचेन्न । तत्तद्वस्तुग्रहणे हि तेन चक्षुषः प्राप्तेरपेक्षणं नत्वभिव्याप्तिस्तस्या अपेक्षितेति गिरेरेकदेशे संनिकर्षाद्गिरिग्रहणस्योपपन्नत्वात् । यथाहि सूक्ष्मादपि प्रदीपान्निर्गता प्रभा प्रासादोदरं व्याप्नोति तथा सूक्ष्मादपि गोलकान्निर्गत्य क्रमेण प्रसृतो नयनरश्मिर्बहूनपि गिर्यवयवान्प्राप्नोति प्रतिरोधाद्येनावयवेन न संयुज्यते तस्य न ग्रहणमितरेषां च ग्रहणमिति । अथ नयनगोलकं घटादिकं च सत्त्वात्प्रतिक्षणपरिणामिक्रमेण सातिशयं परिणममानं ग्राहकं ग्राह्यं च संपद्यते स चातिशयः कार्यानुमेयो न कुड्यादिव्यवधानेन वा विप्रकर्षविशेषे विषयविशेषस्य भवतीति न कापृयनुपपत्तिरितिचेन्न । अर्थक्रियाकारित्वलक्षणसत्त्वव्यापकक्रमयौगपद्ययोः स्थैर्येऽपि सहकारिसमवधानासमवधानाभ्यामुपपत्तेः क्षणिकत्वं विना व्यापकक्रमयौगपद्यानुपपत्तिप्रयुक्तोक्तसत्त्वानुपपत्तेरभावात्क्षणभङ्गस्यासिद्धेः । सान्तरग्रहणसंनिहितप्रकृष्टतुल्यकालताग्रहणपृथुतरग्रहणादेरन्यथाप्युपपादितत्वेन तदर्थमप्यतिगुरुतरक्षणभङ्गपक्षस्यानभ्युपेयत्वात् । अथ यदि बहिर्निर्गत्य गतं विषयदेशं गृह्णाति चक्षुर्विषयं तदा कुतो न पुनर्निमीलितनयनस्यापि प्रत्यक्षं विषयेण चक्षुषः संनिकर्षस्य विद्यमानत्वादिति गोलकमेव चक्षुस्तथासति निमीलनेन व्यवधानादग्रहणमुपपद्यते इतिचेन्न । नयनगोलकादारभ्य विषयपर्यन्तमेकस्य बद्धरेखस्य चक्षुष एव विषयग्राहकत्वात्तथासत्येव विषयसंबद्धस्य चक्षुषोः मनःसंबन्धान्मनःसंबद्धस्यैव ग्राहकत्वान्निमीलने च विषयसंबद्धस्य मनःसंयोगाभावेन विषयग्रहणासंभवात् शरीरावच्छिन्नान्तःकरणसंबन्धस्यैव तथात्वादन्तःकरणनिर्गमपक्षेऽपि दोषाभावात् । निमीलने सति विषयदेशावस्थितस्याप्यन्तःकरणस्य शरीरानवच्छिन्नत्वात् । विस्फारिताक्षस्य हृदयादा च विषयदेशादण्डायमानस्यान्तःकरणस्यैकत्वेन शरीरावच्छिन्नत्वसंभवात् । नचान्तःकरणस्य विषयदेशस्थत्वेन प्रमातुरपि तत्रैव सद्भावात्कुतो न शरीराद्बहिः प्रमेति वाच्यम् । अवच्छेदकतया ज्ञानसामान्यंप्रति शरीरस्यापि कारणत्वात् । शरीरस्य वृत्त्यात्मना परिणतान्तःकरणसंबन्धे सत्येव तादृशान्तःकरणावच्छेदकत्वात्तत्तादात्म्यापन्नवृत्तितदवच्छिन्नचैतन्याद्यवच्छेदकत्वस्य शरीरे संभवात्तदन्यत्रावच्छेदकत्वस्यानभ्युपगमात् व्यापकज्ञानत्वावच्छिन्नकारणशरीरस्य तादात्म्येन विरहात् शरीरानवच्छिन्नस्याप्रसिद्धत्वेनैवापत्त्यसंभवात् । यद्वाचेतनानधिष्ठितस्याचेतनस्य प्रवृत्त्ययोगाज्जीवस्याधिष्ठातृतयेन्द्रियप्रवर्तकत्वात्प्रतिकूलतया ज्ञातेऽपि विषये प्रवृत्तेरिन्द्रियाणां दर्शनात्स्वप्रतिकूलतया ज्ञाते स्वस्य प्रवर्तकत्वायोगा'च्चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवत'मिति सुबालोपनिषत्प्रामाण्यादादित्यस्य वाधिष्ठातृत्वोपगमाददृष्टविशेषसहकारेणाधिष्ठातृप्रेरितस्य निमीलनप्रयत्नसमकालमन्तःकरणसहितस्य चक्षुषः परावृत्त्युपगमेन बहिरनवस्थानेनोक्तदोषासंभवात् । यत्तु कृष्णसारोपघातानुपघाताभ्यां दर्शनादर्शनाभ्यां तस्यैव चक्षुष्ट्वमिति तन्न । तदधिष्ठानोपघातानुपघाताभ्यां तस्योपघातानुपघातयोः संभवात् लताच्छेदनसेचनाभ्यां फलानुपकारोपकारवदिति सिद्धं प्राप्यकारि तैजसं चक्षुरिति ॥ एवं श्रोत्रमपि परिच्छिन्नमाकाशपरिणाममपि प्राप्यकार्येव यथाच गतिमत्तथोपपादितं प्राक् । अधिष्ठानं तस्य कर्णशष्कुल्यवच्छिन्नं नभः । तद्गतौ मानं च प्राच्यां वीणाशब्दस्तत्र गृहे भेरीशब्दः श्रूयत इत्यादिप्रतीतिरेव न्यायादिमते श्रूयमाणशब्दस्य कर्णदेश एवोत्पत्तेस्तस्य वीणाजन्यत्वस्य वीणाद्यवच्छिन्नत्वस्य वा प्राच्यादिदिगवच्छिन्नत्वस्य चाभावात् । परम्पराजन्यतया तथात्वे वीणाकर्तृत्वेन वीणावादकत्वेन पुरुषस्यापि तज्जनकतया पुरुषशब्दः श्रूयत इत्यस्याप्यापत्तेः । वीणादेः पश्वादेः स्त्रीपुरुषादेश्च जन्यतावच्छेदकस्य वैजात्यस्य

कर्णगतेषु तत्तच्छब्देषु सत्त्वे तदवच्छिन्नं प्रति वीणादीनां व्यभिचारेणाकारणत्वापातात् तेष्वसत्त्वे च श्रोत्रेण तद्ग्रहणासंभवाद्विजातीयशब्देन वीणाद्यनुमानासंभवेन वीणाद्यनुपस्थितेर्वीणाशब्दः श्रूयत इति प्रतीत्यनुपपत्तेः वीणाशब्दमारभ्य कर्णगतशब्दपर्यन्तेषु शब्देषु यावन्ति वैजात्यानि तावतामाश्रयाग्रहणेन कदाचिदपि ग्रहणस्यासंभवेन परम्पराजन्यजनकशृङ्खलाग्रहणस्याप्यसंभवादगृहीतविजातीयशब्देन परम्पराजनकतयापि वीणादेरनुमानासंभवादवश्यं वीणादिदेशे श्रोत्रस्यैव गमनं वाच्यम् । तथासति वीणाजन्यस्य प्राच्याद्यवच्छिन्नस्य विजातीयशब्दस्यैव ग्रहणेनोक्तप्रतीतेरक्लेशेनोपपत्तिर्वीणाद्यनुमानस्यापि संभव इति सूक्ष्मत्वान्निर्मलत्वाल्लाघवेन द्रुतगतिमत्त्वाच्चपरित्यक्तश्रोत्रदेशस्य ग्राह्यशब्ददेशपर्यन्तं चक्षुर्वदेव दण्डायमानस्य श्रोत्रस्य सान्तःकरणस्य भवत्यवस्थानमिति शरीरावच्छेदेन शब्दप्रमाद्युपपत्तिश्चात्र पक्षेऽनन्तशब्दाकल्पनलाघवमिन्द्रियसमवायसमवेतसमवायतद्विशेषणत्वादेः संनिकर्षत्वाकल्पनेनापि लाघवमनुकूलस्तर्क इति ॥ ॥ ननु मनसोऽपि सुखादिसाक्षात्कारकरणत्वेनेन्द्रियतया सिद्धस्य सत्त्वात्पञ्चैव ज्ञानसाधनानीन्द्रियाणीत्यसङ्गतमितिचेदुच्यते । दुःखादीनामात्मनः स्वाभाविकधर्मत्वे तदुपरमस्याशक्यत्वाभावनिवृत्तिंविना स्वभावनिवृत्तेरयोगात् जलवह्न्यादेः शीतौष्ण्यादिवत् अनौपाधिकस्य तस्य नैमित्तिकत्वेऽपि तंप्रति तस्य नित्यस्य स्वरूपयोग्यत्वे फलावश्यंभावनियमात् तदनुवृत्तेर्दुर्वारत्वात् । कामः संकल्प इत्यादिश्रुतेश्चान्तःकरणधर्मा एव ज्ञानाद्यष्टौ भावाः तत्र ज्ञानं सुखं च द्विविधमात्मनः स्वरूपभूतमन्तःकरणवृत्तिरूपं च स्वरूपसुखमासंसारमविद्यावृतमेव वृत्तिरूपं त्ववभासमानमेवावतिष्ठत इति न तदज्ञातं भवत्यज्ञाते तत्र मानाभावादेवं दुःखादयोऽपि नाज्ञाता उपलब्धस्यैव सुखस्य दुःखस्य च धर्मस्याधर्मस्य च फलत्वेनातादृशस्योत्पत्तुमनर्हत्वादित्युत्पद्यमाना एव सदैव भवन्ति ज्ञाताः क्षणविलम्बे मानाभावात् । तथाचावरणभङ्गादेर्वृत्तिप्रयोजनस्याभावेनापरोक्षवृत्तेस्तत्रोपगमस्यासंभवात् । वृत्तावेव च प्रमाणानामपेक्षणीयत्वान्न तत्करणतया मनस इन्द्रियत्वेन सिद्धिः । यच्च सुखादीनां ज्ञानं सुखाद्युपहितसाक्षिस्वरूपं तत्र साक्ष्यंशस्यान्तःकरणोपलक्षितचिद्रूपात्मनो नित्यत्वादेव न करणापेक्षा सुखाद्यंशस्य स्रक्चन्दनवनिताभुजङ्गज्वलनकण्टकिलतासंपर्कादिकरणकत्वमेव न तत्रापि मनसः करणत्वेनापेक्षा परिणाम्युपादानत्वेनान्तःकरणापेक्षा तु न प्रतिषिध्यत इति तादृशसुखादिज्ञानकरणतयेन्द्रियत्वेन कथंचिदपि न मनसः सिद्धिः । नच मनसोऽनिन्द्रियत्वे 'मनःषष्ठानीन्द्रियाणी'ति गीताविरोधः सजातीयेनैव संख्यापूरणादिति वाच्यम् । गुणयोगादितरत्त्वेन प्रसिद्धेनातज्जातीयेनापि संख्यापूरणस्य दर्शनात् इन्द्रियवज्ज्ञानसाधनत्वेन गुणेनेन्द्रियतया न्यायादौ मनसः प्रसिद्धेस्तेन संख्यापूरणेऽविरोधात् । दृश्यते 'यजमानपञ्चमा इडां भक्षयन्ति' इत्यत्रार्त्विजापि यजमानेन सत्रे तत्त्वेन प्रसिद्धेन यजमानगतसंख्यापूरणदर्शनादेवं 'वेदानध्यापयामास महाभारतपञ्चमा'नित्यत्रापि वेद एव च मनसोऽनिन्द्रियत्वमुक्तम् 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन' इत्यत्रेति । नचानिन्द्रियजत्वे सुखादिज्ञानस्य कथं साक्षात्कारत्वमिति वाच्यम् । ईश्वरज्ञानस्य प्रत्यक्षत्वानुरोधेनेन्द्रियजत्वस्य त्वयापि तत्प्रयोजकत्वानङ्गीकारात् । त्वदङ्गीकृतज्ञानाकरणकत्वरूपस्य प्रत्यक्षत्वस्य सुखादिज्ञानेऽनपायात् मयोपगतस्य सुखादिज्ञानसाधारणप्रत्यक्षत्वस्य प्रागेव दर्शितत्वात् । ज्ञानसुखाद्याधारस्यात्मोपाधेरन्तःकरणस्योपगतस्य संशयनिश्चयाभिमानस्मरणात्मकवृत्तिभेदेन कल्पिता एव मनोबुद्ध्यहंकारचित्तात्मकाः प्रभेदा वस्तुतस्त्वेकत्वमेव तस्य तच्चान्तःकरण'मन्नमयं हि सोम्य मन'इत्यादिश्रुत्यादितोऽन्नशब्दितभूतविकारतयाऽवगतत्वेन पञ्चभूतविकारपञ्चेन्द्रियसाधारणतया च सत्त्वप्रधानमिलिता पञ्चीकृतभूतपञ्चकपरिणामात्मकमनित्यमुक्तश्रुतेरतोऽन्यदार्तमिति श्रुत्या प्रागुक्तमिथ्यात्वसाधकबहुतरयुक्तेश्च न न्यायमत इव नित्यं नात एव प्राकृतं महत्तत्त्वपदवाच्यं व्यापकं च । नापि न्यायमतवदणु किंतु विशुद्धसत्त्वकार्यत्वात्प्रकाशकमणुहृदयायतनस्थतयाणुनिर्गतं हृदयादीन्द्रियद्वारा प्रदीपप्रभावद्विसारि चोपेयते । नचाणुत्वाभावे ज्ञानयौगपद्याभावानिर्वाह इति वाच्यम् । दीर्घशष्कुलीभक्षणादौ युगपद्रूपरसगन्धस्पर्शशब्दैश्चक्षुरादीनां संबन्धे तेषां ज्ञानानां यौगपद्येनानुभवस्य सार्वजनीनतया कारणसन्निपातेऽन्यत्रापि यौगपद्यस्येष्टत्वात् । नच शतपत्रपत्रशतभेदनयौगपद्यप्रत्ययवत्सोऽपि प्रत्ययो भ्रम एवेति वाच्यम् । विभिद्यैकैकं पत्रमपरमपरं हि भिनत्ति सति व्यवधाने परभेदनासंभवादिति क्रमस्य प्रामाणिकत्वे यौगपद्यप्रत्ययस्य भ्रमरूपत्वं ह्युचितं प्रकृते च नास्ति हि बाधकं किंचित् । गुणगतजातिसांकर्यस्यादोषत्वात्सर्वेन्द्रियजन्यं सन्निकृष्टसर्वविषयकमेकमेव हि वा ज्ञानं चाक्षुषघटघटत्वरूपपरिमाणसंख्यादिसर्वविषयकैकज्ञानवज्जायते । अथ घटचक्षुःसन्निकर्षे चिरकालपर्यन्तं घटज्ञानमानुभविकं तत्र पूर्वक्षण इवोत्तरोत्तरक्षणेऽपि सामग्रीसत्त्वेन ज्ञानोत्पत्तिर्दुर्वारा । विनाशश्च पूर्वपूर्वस्य स्वानन्तरोत्पन्नविशेषगुणेन नाशकेन तृतीयक्षण इति ज्ञानधारा तावत्कालीना भवत्यावश्यकी । साच चक्षुरादीनां करणानां वास्यादीनां हस्त इव मनोरूपाधिष्ठायकं करणंविना नोपपद्यते । तथाहि यैव पूर्वज्ञानस्य सामग्री सैवोत्तरज्ञानस्यापि घटचक्षुःसंनिकर्षालोकमहत्त्वोद्भूतरूपादिघटिता तस्याश्चोत्तरज्ञानं प्रति सामर्थ्ये तत्क्षेपायोगादसामर्थ्य उत्तरकालेऽपि तन्न स्यादिति सर्वज्ञानानामेकदोत्पादप्रसङ्गेन ज्ञानधारा प्रामाणिकी न सिध्येत् । नच चक्षुषः करणत्वेन करणधर्मादेव युगपदनेकज्ञानक्रियानुत्पादनिर्वाहः । करणानां हि युगपदनेकक्रियानिर्वर्तकत्वाभावः प्रामाणिको धर्मः करणं च वास्यादिवच्चक्षुरिति वाच्यं । नहि करणानां तादृशस्वभाव आकस्मिकोऽपि तु सहकारिविरहप्रयोज्यो वाच्यो यथा वास्यादिश्छेदनप्रभेदान् हस्तसंयोगविशेषादिसहकारिविशेषविरहान्नैकदा करोतीति तादृशयुगपदकरणं सहकारिविरहप्रयोज्यं । नैवं

पूर्वज्ञानोत्पादनानुकूलसहकारिविलक्षणं सहकारि किंचिदुत्तरज्ञानजननेऽस्ति दृष्टं यद्विरहेणोक्तकरणधर्मो निर्वाह्य इति करणधर्मस्यैवासिद्धेस्तेनायौगपद्यस्य निर्वाहासंभवात् तत्तत्क्षणस्यादृष्टविशेषस्य वाऽदृष्टस्य तत्तज्ज्ञानोत्पत्ताविन्द्रियसहकारितया कल्पनेन तद्विरहेण तदुपपादनमप्यशक्यं दृष्टसाकल्येऽदृष्टविलम्बेन विलम्बस्य प्रवृत्तिव्याघातप्रसङ्गेनानुपगन्तव्यत्वाददृष्टस्य दृष्टसाकल्यमात्रार्थत्वोपगमात् करणधर्मस्योक्तस्य सिद्धौ तदुपपत्त्यर्थमदृष्टस्य कल्पनमदृष्टकल्पने सति करणधर्मसिद्धिरित्यन्योन्याश्रयाच्च । यदि च चक्षुरादिकं तादृशयुगपज्ज्ञानोत्पादवारणायैव स्यात्कल्पितं तदा यावता तदुपपत्तिस्तावद्विशिष्टं भवेत्कल्पितमित्युक्तकरणधर्मविशिष्टमेव तत्सिद्ध्येत्तथासति प्रमाणसिद्धस्य स्वाभाविकस्योक्तकरणधर्मस्याकस्मिकत्वपर्यनुयोगायोगात्क्षणविशेषादृष्टविशेषादिसहकारिविरहस्योक्तयुक्त्या तन्निर्वाहकत्वासंभवेऽपि क्षत्यभावाद्भवेच्च करणधर्मादयौगपद्योपपत्तिः । नचैतदस्ति रूपादिप्रत्यक्षानुरोधेन चक्षुषः करणत्वेन सिद्धस्यैवोक्तकरणधर्मस्य वक्तव्यतया तस्य स्वाभाविकत्वविरहित्वेन तदसंभवस्योक्तत्वात् । मनस्त्वसिद्धमित्युक्तायौगपद्यनिर्वाहाय कल्प्यं । कल्पितेनापि तेन तदनिर्वाहे तत्कल्पनैव न स्यादित्यन्यथानुपपत्तिरतिशयितमहिमशालिनी क्षणविशेषादृष्टविशेषादिसहकारिविरहानिर्वाह्येनापि युगपदनेकक्रियाकरणाभावरूपस्वाभाविककरणधर्मेण विशिष्टमेवोपपादकं मनः कल्पयतीत्ययौगपद्यनिर्वाहो भवति मनसि कल्पित इति । नच मनोऽपि सुखादिप्रत्यक्षकरणत्वेन सिद्धमेवेति वाच्यम् । सुखादिप्रत्यक्षे करणस्य तस्य धर्मतो घटादिप्रत्यक्षे ह्यकरणत्वे तद्यौगपद्याभावादिनिर्वाहकत्वासंभवात् । घटादिप्रत्यक्षे च करणतया न सिद्धं चक्षुरादिवदन्वयव्यतिरेकाभावादनुमानस्य चक्षुषा सिद्धसाधनादित्युक्तायौगपद्यनिर्वाहायैव घटादिप्रत्यक्षकरणतया कल्पनीयत्वादुक्तकरणधर्मविशिष्टतया कल्पितेनैव तेनायौगपद्यनिर्वाहात् करणत्वमात्रेण तत्कल्पनस्य वैयर्थ्यप्रसङ्गादुक्तधर्मस्य स्वाभाविकत्वानपायात् । यद्वान्यत्र करणधर्मस्य कार्यप्रयोजकरूपवैकल्येनैवास्ति दर्शनं यथा वास्यादीनामनेककरणानां सन्निधानेऽपि तत्तत्करणैर्न युगपदनेका क्रिया संपाद्यते । कर्त्रा तदधिष्ठायकस्य करणस्य हस्तस्य करणधर्मादेकस्य हस्तस्य तेषु कार्यप्रयोजकसंयोगाभावात् । यथावैकस्य वास्यादेः करणस्य पाटनत्वक्षणाद्यनेकक्रियाणां यौगपद्येनाकरणं कार्यप्रयोजकसंयोगविशेषाणां युगपदभावेन करणधर्मादुपपद्यते तथा प्रकृतेऽपि करणस्य मनसः करणधर्माच्चक्षुषोऽनेकज्ञानक्रियाणां यौगपद्येनाकरणम् । कार्यप्रयोजकमनःसंबन्धिनः कस्यचिद्विरहादिवोपपाद्यं नानपेक्षस्वभावमात्रादिति ज्ञानधारास्थले ज्ञानायौगपद्याय घटादिप्रत्यक्षेऽधिष्ठायककरणतया करणधर्मेण तत्तत्क्षणावच्छिन्नस्वसंयोगविरहनिर्वाह्येण विशिष्टमेव मनः कल्प्यते । तथाचाग्रिमाग्रिमक्षणोत्पत्स्यमानज्ञानप्रयोजकतत्तदव्यवहितपूर्वक्षणावच्छिन्नसंयोगानां प्रथमज्ञानपूर्वक्षणे विरहेण करणधर्मस्य निर्वाहान्नात्राप्यनपेक्षस्य करणधर्मस्य प्रसङ्गः । प्रकृते चादृष्टतत्तत्क्षणावच्छिन्नसंयोगेन कार्यविलम्बस्यानन्यथासिद्धतया प्रामाणिकस्यादोषत्वमप्रामाणिकतादृशविलम्बस्यैव प्रवृत्त्यादिव्याघातकत्वेन दोषत्वात् । विशिष्यैकबाह्येन्द्रियकरणकानेकक्रियायुगपत्करणाभावविशिष्टतया कल्पने गौरवात्सामान्यत एवानेकक्रिया युगपत् करणाभावरूपकरणधर्मविशिष्टतया तत्कल्पनाया एव कर्तव्यत्वादेकेनापि चक्षुरिन्द्रियेण नानाविषयकनानाज्ञानानामपि न यौगपद्येनोत्पादप्रसङ्गः । न वा चक्षुरादिष्विन्द्रियेषु स्वस्वविषयसंनिकृष्टेषु तत्तद्विषयज्ञानानां युगपदुत्पादप्रसङ्ग उक्तोभयस्थलेऽपि मनसो वास्यादौ हस्तादीनामिव करणत्वेन तद्धर्मतस्तद्वारणात् । सिद्धं च ज्ञानायौगपद्याय मनोऽण्वेवोपगन्तव्यमन्यथा व्यासङ्गानुपपत्तेः । व्यासङ्गो हि संनिकृष्टेष्वपि बहुषु विषयेषु कस्यचिदेव ज्ञानमणुनो मनसोऽभावे विषयेन्द्रियसंनिकर्षस्येन्द्रियमनःसंनिकर्षस्य च समानत्वेन विषयान्तरस्यापि प्रत्यक्षं स्यादिति व्यासङ्गासंभवात् । नचोक्तव्यासङ्गे मानाभाव इति वाच्यं । तत्र गतेन दृष्टस्त्वया घटः पटश्चेत्यनुयोगे दृष्टो मया घटो न पट इत्युत्तरस्याप्तपुरुषीयस्य मानत्वात् । तादृशमनःस्वीकारे च घटचक्षुःसंयोगक्षणे मनसा चक्षुषः संबन्धेऽपि पटचक्षुःसंनिकर्षक्षणे चपलस्य मनसोऽन्यत्र गतत्वेन मनःसंयोगाभावेन पटाप्रत्यक्षोपपत्तिः शरीरपरिमाणत्वे व्यापकत्वे वा तदसंयोगस्यासंभवात् । एवं चक्षुःसंनिकृष्टे कुसुमे तद्गन्धे च घ्राणसंनिकृष्टे कदाचिद्रूपस्यैव कदाचिद्गन्धस्यैवोपलब्धेरपि नाणु मनोभ्युपगमंविनोपपत्तिः । नच बुभुत्सातद्विरहाभ्यां तदुपपत्तिरिति वाच्यम् । सत्यामपि बुभुत्सायां कदाचिद्ग्रहणात्प्रतिकूलदर्शनद्वेषेऽपि कदाचित्तस्यैव ग्रहणाद्बुभुत्साया अकिंचित्करत्वात् । एवंच दीर्घशष्कुलीभक्षणस्थले सर्वेन्द्रियाणां मनसा संनिकर्षाभावात्तत्करणधर्माद्बाधकादेव यौगपद्यग्रहस्य भ्रमत्वमुपगन्तव्यमितिचेन्न । धारावाहिज्ञानस्थले ह्युत्तरोत्तरज्ञानस्यागृहीतग्राहित्वनिर्वाहाय पूर्वज्ञानागृहीतकालविशिष्टस्य विषयत्वोपगमेन प्रत्यक्षे विषयस्य कार्यसहभावेन हेतुतया विद्यमानविषय एवान्तःकरणस्य तदाकारेण परिणामात् । विषयाभावादेव ज्ञानयौगपद्यासंभवाद्धारावाहित्वानुपपत्त्यभावादुक्तकरणधर्मविशिष्टमनःकल्पनस्याप्रामाणिकत्वात् । यद्वोक्तस्थले तावत्कालं घटज्ञानसत्त्वमानुभविकं तच्च ज्ञानधारयेवैकज्ञानोपगमेनाप्युपपद्यते । तथासत्यनेकज्ञानतत्प्रागभावध्वंसाद्यकल्पनेन भवति लाघवम् । नच सामग्रीसत्त्वे द्वितीयक्षणे कुतो न ज्ञानोत्पत्तिरिति वाच्यम् । सामग्रीभेदस्यैव कार्यभेदकत्वेन तदभावेन भेदासिद्ध्या तस्यैव पुनरुत्पत्तेः प्रसञ्जनीयतया तस्याः स्वोत्पत्तौ स्वाभावस्यान्यत्र क्लृप्तकारणतयैव वारणात् । नाशस्यापि द्वितीयक्षणे स्वविरोधिवृत्त्यन्तररूपनाशकविरहेणासंभवादुक्तकरणधर्मविशिष्टमनःकल्पनस्याप्रामाणिकत्वात् । दीर्घशष्कुलीभक्षणस्थले बाधकविरहेण यौगपद्यप्रत्ययस्य भ्रमत्वकल्पनाया असंभवात् । तत्तदिन्द्रियाणां स्वकरणधर्मस्यैकैकमात्रक्रियाजननेनाव्याघातात् । कर्तुश्चैकदानेकक्रियाजनकत्वस्याविरुद्धत्वात् । येन हेतुना तव

व्यासङ्गस्थले मनस एकेन केनचिदिन्द्रियेणैव संयोगो नापरेण तेनैव हेतुना ममापि हृत्पुण्डरीकदरोदहरकुहरवर्तितया घटान्तःस्थतया प्रदीपतेजस इव स्वल्पस्यापि हृत्पुण्डरीकप्रसृतासु नाडीषु कयाचिदेकया विवृतद्वारया निर्गतस्य केनचिदेकेनेन्द्रियेण संयोगो नापरेण । यथोद्घाटितेन केनचिद्घटच्छिद्रेण निर्गतस्य प्रदीपतेजसस्तद्दिग्वर्तिवस्तुना संबन्धो नापरेणैवं मिलित्वेन्द्रियतेजसा विषयं प्राप्तं तत् यथासंभवं व्याप्नोति प्रदीपतेज इव भवनोदरमिति येनेन्द्रियेण संयोगस्तद्विषयविषयकमेव ज्ञानं जनयति नापरविषयविषयकम् । येन हेतुना क्षणादेव तदिन्द्रियाद्वियुज्यापरेन्द्रियेण संयुज्यते तव तेनैव हेतुना झटिति तदिन्द्रियप्रदेशात्परावृत्य प्रविश्य हृदयान्तःसंकुचिते तन्नाडीद्वार उद्घाटितद्वारया परनाड्या निर्गत्य झटित्यपरेन्द्रियेण ममापि मते संयुज्यत इति व्यासङ्गोपपत्तिः । यदा तु दीर्घशष्कुलीभक्षणादिस्थले केनचिद्धेतुना सर्वनाडीद्वारविवृत्तिस्तदा ताभिः सर्वाभिर्निर्गतस्य घटस्यानेकैश्छिद्रैः प्रदीपतेजस इव बहुभिर्वस्तुभिः सर्वेन्द्रियैः संबन्धे युगपत्तत्तदिन्द्रियगोचरानेकज्ञानोदयेन यौगपद्यानुभवस्याप्युपपत्तिरत्र च ज्ञानविशेषं प्रति ज्ञानविशेषसामग्र्या अनेकप्रतिबन्धकल्पाकल्पनलाघवमपि भवतीति सिद्धं नाणु मन इति ॥ तदेषां सिद्धानां प्रमाणानां प्रामाण्यमपि स्वत एव ज्ञानप्रमात्वस्योपगमात् । ननु प्रमायां गुणस्य हेतुत्वात्तत्प्रयोज्यमेव प्रमात्वमिति कुतः स्वतस्त्वमितिचेन्न । भूयोऽवयवेन्द्रियसंनिकर्षप्रमापरामर्शप्रमायोग्यताज्ञानादिसाधारणानुगतस्य गुणत्वस्याभावेन प्रमासामान्ये तेन रूपेण कारणत्वासंभवात् प्रत्यक्षप्रमासामान्येऽपि भूयोऽवयवेन्द्रियसंनिकर्षस्य गुणक्रियादिप्रत्यक्षे व्यभिचारेणाहेतुत्वाद्भूयस्त्वस्य दुर्निरूपत्वात् साम्नाया अदर्शने संनिकर्षेऽपि भूयोऽवयवैर्गवि गवयत्वभ्रमाच्च अनुमितिप्रमायामपि लिङ्गिमतिपक्षे भ्रमात्मकपरामर्शादपि प्रमोत्पादेन प्रमापरामर्शस्य व्यभिचारात् । प्रमापरामर्शे सत्यपि लाघवज्ञानादितो भ्रमोत्पादेनापि व्यभिचारात् । पीतः शङ्ख इत्यादिभ्रमस्थले गुणे सत्यपि प्रमानुत्पादाद्दोषाभावसाहित्यस्य गुण आवश्यकत्वे चावश्यकत्वाद्दोषाभावस्यैव प्रमायां हेतुत्वस्य वाच्यत्वात् । नच दूरत्वादिदोषे सत्येव कस्यचित्प्रमावत्कस्यचित्प्रमाया अप्युत्पादाद्दोषाभावस्यापि कथमनुगतहेतुत्वमेवं यस्यैव विषयविशेषस्य दूरत्वे सति न प्रत्यक्षप्रमा तस्यैव तत्स्थानादागतस्याप्तत्वेन निश्चितस्य पुरुषस्य वाक्यात्प्रमोत्पत्तेर्व्यभिचारादपीति वाच्यम् । तत्तद्विषयकप्रत्यक्षादावगत्या तत्तद्दोषाभावकूटस्य कारणत्वोपगमात् । नचाननुगमे गुणस्यैवाननुगतस्य लघोर्हेतुत्वमस्त्विति वाच्यम् । दोषभावस्यावश्यकत्वेन तद्धेतुतया निर्वाहे गुणहेतुत्व एव गौरवात् । नच न गुणं विनापि प्रमोत्पाद इति तस्यापि हेतुत्वमावश्यकमिति वाच्यम् । दोषाभावसहितस्य तस्येन्द्रियसंनिकर्षत्वपरामर्शत्वादिनैव हेतुत्वाद्भूयोऽवयवसंनिकर्षत्वप्रमापरामर्शत्वादिना हेतुत्वानुपगमात्तादृशहेतुत्वस्यैव गुणहेतुत्वपदार्थत्वाद्वक्तृवाक्यार्थयथार्थज्ञानस्य शुकाद्युच्चरितवाक्यस्थले विरहेण शाब्दप्रमायां गुणत्वासंभवात् । भ्रान्तप्रतारकवाक्यस्थलेऽपि व्यभिचाराच्च । नचानुमितौ शाब्दे चेश्वरस्यैव प्रमापरामर्शो वाक्यार्थयथार्थज्ञानं च गुण इति वाच्यम् । तस्य परम्परासंबन्धेन हेतुत्वस्य वाच्यतया भ्रमपूर्वमपि पुरुषे सत्त्वेनाव्यावर्तकत्वात् । यस्मिन्विशेष्ये यत्प्रकारकानुमितिः प्रमा तद्विशेष्यकतत्प्रकारकानुमितौ तद्विशेष्यकतद्व्याप्यवत्तापरामर्शस्येश्वरीयस्य हेतुत्वापेक्षया तद्विशेष्यज्ञानस्य हेतुताया एव युक्तत्वात् भ्रमस्थले तत्सत्त्वस्येश्वरीयपरामर्शसत्त्वेनाविशिष्टत्वात् । तन्मात्रात्प्रमोत्पत्त्यापत्तेरित्यप्यविशिष्टत्वात् । तत्पुरुषगततत्साध्यव्याप्यवत्तापरामर्शसहकारित्वकल्पनेन तद्विरहात्तद्वारणस्यापि समानत्वात् । नचेष्टापत्तिः । पर्वतविशेष्यकानुमितिमात्रे तस्यान्वयव्यतिरेकग्रहस्य समानत्वेन प्रमामात्रे तस्योक्तेश्वरज्ञानस्यापि हेतुताया अनुभवविरुद्धत्वात् । एवमीश्वरज्ञानस्य परम्परया हेतुत्वेऽनेकविधपरम्परायाः संभवेन विनिगमकाभावेनानन्तहेतुत्वापत्तेश्च । तस्माद्यदि कस्यचिद्भावस्य प्रमायामप्रमाव्यावृत्तस्य हेतुत्वं वक्तव्यं स्वविशेष्ये स्वप्रकारवत्त्वस्य स्वरूपसतो हेतुत्वं वक्तव्यम् । संनिकर्षपरामर्शादेः प्रत्यक्षानुमित्यादिसामान्यकारणविरहादेव तन्मात्रात्प्रमापत्तिवारणसंभवात् । नह्येतावता प्रमायाः परतन्त्रत्वादीश्वरसिद्धिरूपस्य तवाभिमतस्य सिद्धिः । वस्तुतः प्रत्यक्षानुमित्यादिसामान्यकारणाद्दोषाभावसहितात्प्रमोत्पत्तिरस्माकमभिमता नैतावता स्वतस्त्वहानिः । ज्ञानसामान्यसामग्र्यधिकागन्तुकभावाप्रयुक्तत्वस्यैव तत्त्वाद्दोषाभावस्याधिकस्यापेक्षणेऽपि तस्य भावत्वाभावान्न प्रमात्वस्य स्वतस्त्वहानिः । दोषस्य भावस्यैवाधिकस्यापेक्षणान्नाप्रमात्वस्य स्वतस्त्वापत्तिरिति । एवं निष्कम्पप्रवृत्तिर्न ज्ञानेऽप्रामाण्यसंशये सति भवतीत्यप्रामाण्यज्ञानाभावविशिष्टज्ञानत्वेन तत्र कारणत्वं वाच्यम् । तदपेक्षया लाघवेन गृहीतप्रामाण्यज्ञानत्वेनैव कारणत्वं युक्तम् । तच्च स्वतःप्रामाण्यग्रह एव संभवति नान्यथानुमानादिना प्रामाण्यग्रहणे ज्ञानस्यैवाभावात् । प्रामाण्यस्य क्वचिदप्यनुमानेनैव ग्राह्यतया तत्रापि साध्यसाधनसहचारग्रहापेक्षायां साध्यग्रहस्यानुमानेनैवानुसरणीयतयाऽनवस्थापाताच्च । जन्मान्तरीयप्रामाण्यग्रहजनितसंस्कारतोऽत्र जन्मनि तत्स्मरणे क्वचिज्ज्ञाने तदुपनीतभाने तत्र सहचारग्रहेऽनुमानमेवं पूर्वजन्मनि तत्पूर्वजन्मसंस्कारजनितस्मरणेन सहचारज्ञानादनुमानमित्यनादितोपगमेनानवस्थापरिहारस्यापि स्वतोऽग्राह्यतया प्रामाण्यस्य गतिसंभवे तादृशकल्पनाया अन्याय्यत्वेनायुक्तत्वात् । अगतावेव हि जन्मान्तरीयसंस्कारोद्बोधकल्पनम् । यत्त्वप्रामाण्याभावस्यैव समर्थप्रवृत्तिजनकत्वेन लिङ्गेनाप्रमायां गृहीतव्यतिरेकव्याप्तिकेन पक्षधर्मताबलाज्ज्ञानेऽप्रामाण्याभाव इति साध्यविशेष्यकानुमितौ जायमानायां लाघवज्ञानादिसहकारेण व्यापकत्वेनागृहीतस्यैव प्रामाण्यनिष्ठाप्रामाण्याभावसामनैयत्यरूपवस्तुसहकृतनिरुक्तपक्षधर्मत्वग्रहादेव व्यापकत्वेनागृहीतस्यापि प्रामाण्यस्य विशेष्यतया भानं संभवति विशेषणतया प्रामाण्यस्य तत्राभानेन तत्पूर्वं तज्ज्ञानापेक्षाविरहात्पश्चाच्चेदं ज्ञानं प्रमेति प्रामाण्यप्रकारकं ज्ञानमपि भूतले घटो नास्तीत्यभावविशेष्यकज्ञानानन्तरं घटाभाववद्भूत-

लमिति ज्ञानवद्विशेष्यविधया तज्ज्ञानस्यैव विशेषणज्ञानत्वेनाग्रिमक्षणे तद्विशिष्टबुद्धिसंभवात् अभावाभावत्वयोः प्रतियोगिनिरूप्यत्वस्वभावत्वेन तयोर्निर्विकल्पासंभवादिति । तन्न । लाघवज्ञानादिस्थलेऽपि विधेयत्वमुख्यविशेष्यत्वयोरेकपरामर्शप्रयोज्ययोरनुपगमादुक्तानुमितावेकस्मादेव परामर्शादप्रामाण्याभावप्रामाण्ययोर्विधेयतया मुख्यविशेष्यतया च भानासंभवाद्विशेष्यतावच्छेदकज्ञानस्यावश्यकत्वेनानुमितौ प्राक्प्रामाण्याग्रहे प्रामाण्यविशेष्यकत्वस्यासंभवादभावज्ञानस्य प्रत्यक्षत्वे निर्धर्मितावच्छेदकभानस्यापि संभवाच्च । अथ प्रामाण्यस्य स्वतोग्राह्यत्वे ज्ञानग्रहणस्यैव प्रामाण्यज्ञानत्वेन ज्ञाने कदापि प्रामाण्यसंदेहो न स्यादिति चेन्न । प्रामाण्यसंदेहस्य भ्रमत्वेन तत्प्रयोजकदोषस्यावश्यंभावेन प्रामाण्यस्य स्वतोग्रहणासंभवाद्दोषाभावे सति ज्ञानग्राहकयावद्ग्राह्यत्वस्यैव स्वतोग्राह्यत्वादप्रामाण्यसंदेहसंभवात् संदेहस्य ज्ञानोत्पत्तिक्षणे पूर्वमेव साधारणधर्मवद्धर्मिज्ञानस्य दोषस्य सत्त्व एव भवताभ्युपेयत्वेन दोषात्स्वतःप्रामाण्यनिश्चयप्रतिरोधात् ज्ञानोत्पत्त्यनन्तरं संस्कारेण ज्ञानस्मृतावेवोपस्थिते तत्र संदेहस्य वाच्यतया दोषात्प्रमुष्टप्रामाण्यकस्मृतेरुपगमात्संदेहसंभवात् । यद्यपि प्रामाण्यस्यागृहीताबाधितज्ञानत्वस्य नास्ति स्वतोग्राह्यत्वसंभवस्तथापि स्मृतिसाधारणस्य प्रवृत्त्यौपयिकस्यार्थतथात्वस्य तद्वति तत्प्रकारकत्वापर्यवसन्नस्य स्वतोग्राह्यता संभवति विशेष्यत्वप्रकारत्वयोर्ज्ञानत्वज्ञानवदेव ज्ञानोत्पत्त्यैव प्रकाशाद्विशेष्ये विशेषणवत्त्वस्य व्यवसाये भानात् विशेष्ये विशेषणमिति रीत्या तद्भानोपगमेन पूर्वं विशेष्यत्वे वह्निमत्पर्वतस्य ज्ञानेऽभासमानत्वेऽपि न क्षतिः । अस्मिन् पक्षे च ज्ञानोत्पादकसामग्र्यतिरिक्तस्य प्रामाण्यभासकसामग्र्या अकल्पने प्रामाण्यज्ञानान्तरस्य तत्प्रागभावध्वंसादेश्चाकल्पनेनातिलाघवं तेन यथाकथंचित्प्रामाण्यघटकवस्तूपस्थितिमूलकविशेष्ये विशेषणमितिरीत्या प्रामाण्यतत्सहचारादिग्रहसंपादनेन तदनुमित्युपपादनमपि निरस्तम् । तच्चेदं प्रामाण्यं द्विविधम् । व्यावहारिकं पारमार्थिकं च । व्यवहारकालव्यापकनिषेधाप्रतियोगित्वं व्यावहारिकम् । घटादेर्निषेधस्य यावद्व्यवहारकालमभावेन तस्य निषेधाप्रतियोगितायास्तादृशकालत्वव्यापकत्वादस्ति । द्वितीयं तु ब्रह्ममात्रस्य सदैव सर्वबाधावसानतया तस्यानिषिद्धत्वात् । प्रपञ्चस्य तत्त्वज्ञानबाधितत्वेनातत्त्वादिति सुष्टूक्तं प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्यभावाख्यानि षट्प्रमाणानीति वैदिका इति शास्त्रं प्रमाणशब्दमात्रोपलक्षकम् । न विधिवाक्यमात्रस्य भट्टादिमीमांसकवेदान्तिभ्यामपि सिद्धार्थकस्याप्यबाधितानधिगतार्थकवाक्यस्य प्रामाण्यस्य व्यवस्थापनात् । वैदिका इति मीमांसकवेदान्तिनोर्ग्रहणम् । **अन्तर्भाववहिर्भावाभ्यामिति** । प्रत्यक्षेऽनुपलब्धेरनुमानेऽर्थापत्तेरन्तर्भावेण चत्वारि प्रमाणानीति नैयायिकाः । यथान्तर्भावस्तथानुपलब्ध्यर्थापत्त्योः प्रमाणान्तरत्वव्यवस्थापनावसरे पूर्वपक्षतयोक्तम् । उपमानस्याप्यनुमानेऽन्तर्भावात्त्रीणि प्रमाणानीति योगाः । यथान्तर्भावस्तथोपमानप्रामाण्यव्यवस्थापनावसरे पूर्वपक्षतयोक्तम् । शब्दस्योपमानस्याप्यनुमानेऽन्तर्भावात्प्रत्यक्षानुमाने प्रमाण इति वैशेषिकबौद्धौ । यथाऽनुमानेऽन्तर्भावस्तथा शब्दप्रामाण्यव्यवस्थापनावसरे पूर्वपक्षतयोक्तम् । प्रत्यक्षमेव संभावनात्मन्यनुमानस्यान्तर्भावादेकमेव प्रत्यक्षं प्रमाणमिति चार्वाकाः । यथान्तर्भावस्तथानुमानप्रामाण्यव्यवस्थापनावसरे पूर्वपक्षतयोक्तम् । ऐतिह्यस्यानवधृतवक्तृकस्यास्मिन् वटे यक्षः प्रतिवसतीत्यादिप्रवादस्य शब्दे संभवस्य खार्यामस्ति संभवः प्रस्थस्यातोऽस्ति प्रस्थमितं धान्यमस्येत्येवंरूपस्यानुमाने लिपेरप्यनुमानेऽन्तर्भावो बोध्यस्तद्बहिर्भावस्त्वनतियुक्तिक इति पूर्वपक्षतयापि नोक्तः । बहिर्भावस्तु तेषामनुपलब्ध्यर्थापत्त्युपमानशब्दानां तत्रतत्र सिद्धान्ततयोक्त इत्यर्थः । **संकोचविकासाविति** । न्यूनाधिकसंख्यकत्व इत्यर्थः । प्रमाणानामिति शेषः । **अत एवेति** । संकोचस्य विकासस्य वाभ्युपगमादेवेत्यर्थः । **तार्किकादीनामिति** । आदिपदाद्वैशेषिकबौद्धचार्वाकानां ग्रहणम् । वेदान्तनयस्योपक्रमाद्वृत्तिपञ्चकस्य योगनयेनोक्तत्वात्तयोः पृथगुक्तिः परमतमप्रतिषिद्धमनुमतं भवतीति न्यायेन योगसूत्रोदितवृत्तिपञ्चकस्य प्रतिपादनम् । वेदान्तिनामपि योगवदेव प्रमाणवृत्त्युपगम इति भ्रमो माभूदिति षडिति वैदिका इत्युक्तम् । **विपर्ययो मिथ्याज्ञानम् । तस्य पञ्चभेदा इति** । यद्यपि योगसूत्रोक्ताविद्या समस्तजगदुपादानत्रिगुणाज्ञानपदाभिधेयाद्भिन्ना 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखख्यातिरविद्ये'ति सूत्रेण लक्षिता चतुर्विधाऽविद्या विपर्ययज्ञानं भवति । तथाहि अनित्यतया हेये येषु स्वरादिलोकेषु नित्यत्वस्याशुचिषु शरीरादिषु शुचित्वस्य परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च 'दुःखमेव सर्वं विवेकिन' इति सूत्रेण सर्वस्य वैषयिकसुखस्य दुःखत्वस्य व्यवस्थापनात्तत्र सुखत्वस्य शरीरेन्द्रियमनोबुद्ध्यहंकारादिष्वनात्मस्वात्मत्वस्य च बुद्धेश्चतुःप्रकाराया अतद्वति तत्प्रकारकत्वादस्मितादीनां तु 'दृग्दर्शनशक्त्योरेकात्मतेवास्मिते'ति सूत्रेण लक्षितायाः बुद्धिपुरुषयोर्भोगानुकूलाया अविद्याकल्पिताया एकात्मताया अस्मिताया ज्ञानानात्मकत्वात् 'सुखानुशयी राग' इति सूत्रेण लक्षितस्य सुखाभिज्ञानां सुखानुस्मृतिपूर्वको यः सुखे तत्साधने वा गर्धस्तृष्णा लोभ इत्यादिपर्यायैरभिधेयस्तस्य रागस्येच्छारूपत्वात् 'दुःखानुशयी द्वेष' इति सूत्रेण लक्षितस्य दुःखाभिज्ञानां दुःखानुस्मृतिपूर्वको यो दुःखे तत्साधने च इच्छाप्रतिद्वन्द्विगुणस्तस्य द्वेषस्यापि ज्ञानानात्मकत्वात्तद्विशेषस्य मिथ्याज्ञानत्वं दूरापेतमेवमनुभूतमरणदुःखस्य मरणत्रासाद्यात्माशीर्मा न भूवं भूयासं जीव्यासमित्यात्मनि प्रार्थना विदुषोऽपि निरूढत्वात्स्वरूपेण वासनात्मना वा सदैव सुदृढतयावस्थानादभिनिवेशस्तस्यापीच्छारूपत्वात् न मिथ्याज्ञानत्वं तथापि तेषां सर्वेषामविद्याऽविनाभूतत्वेन विपर्ययत्वं बोध्यम् । उक्तं हि योगवाचस्पत्ये 'अविद्या तावद्विपर्यय एवास्मितादयोऽप्यविद्योपादानास्तदविनिर्भागवर्तिन इति विपर्यया' इति । अविनिर्भागवर्तिन इत्यविनाभूता इत्यर्थः । तत्रास्मिताया बुद्धावनात्मन्यात्मबुद्धिजत्वाद्रागस्य दुःखात्मके सर्वस्मिन्सुखतया योऽनुभवो विपर्यय-

स्तन्मूलकस्मृतिजत्वात् द्वेषस्य निर्दुःखे परमार्थतः स्वस्वरूपे रजःपरिणामदुःखाश्रयबुद्ध्यभेदविपर्ययजाहंदुःखीत्यादिविपर्ययमूलकदुःखानुस्मृतिजत्वादभिनिवेशस्य च नित्ये स्वात्मनि शरीराद्यभेदविपर्ययापादितमरणबुद्धिजत्रासहेतुकत्वाद्विपर्ययाविनाभूतत्वं द्रष्टव्यम् । ये च विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठमिति सूत्रवाचस्पत्येऽभिहिता अविद्यास्मितारागद्वेषाभिनिवेशास्तमोमोहमहामोहतामिस्रान्धतामिस्राख्यास्तेषां स्वरूपेणैवमिथ्याज्ञानत्वं बोध्यम् । तथा ह्यव्यक्तमहदहंकारपञ्चतन्मात्रेष्वष्टस्वनात्मस्वात्मबुद्धिरविद्या । योगिनामष्टस्वणिमादिकेष्वैश्वर्येष्वश्रेयःसु श्रेयोबुद्धिरस्मिता । योगेनाष्टविधमैश्वर्यमुपादाय सिद्धोभूत्वा शब्दादीन्दश विषयान्भोक्ष्य इत्यभोक्तर्येव पुष्करपलाशवन्निर्लेपे स्वात्मनि भोक्तृत्वप्रतिपत्ती रागः । एतेनैवाभिसंधिना प्रवर्तमानस्य केनचित्प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबन्धनभोगासिद्धौ प्रतिबन्धकविषयोऽणिमाद्यैश्वर्यतत्प्रयुक्तभोगादीनां मोक्षप्रतिकूलत्वेन तत्प्रतिबन्धकस्य योगिनामनुकूलतयानुत्सादनीयत्वेन तादृशे प्रतिबन्धक उत्सादनीयताबुद्धिर्जिघांसापर्यन्तो द्वेषः । एवमणिमादिसंपत्तौ दृष्टानुश्रविकविषयोपस्थितौ कल्पान्ते सर्वमेतन्नङ्क्ष्यतीति त्रासस्तेनारक्षणीयेषु रक्ष्यताबुद्धिपर्यन्तोऽभिनिवेश इति सर्वेषामेषामतद्रूपप्रतिष्ठत्वाद्विपर्ययत्वं स्पष्टम् ॥ **भ्रमप्रमाविलक्षणोऽसदर्थव्यवहार इति ।** यथा शशविषाणमसत्तथेदं पुरुषस्य चैतन्यं तिष्ठति वाण इत्यादिव्यवहारस्य हेतुभूता कार्यभूता च काचिदन्तःकरणस्य वृत्तिर्निर्विकल्पकवत्प्रकारतादिशून्याखण्डविषयिणी निरुक्तशब्दैकजन्या पूर्ववृत्तिसंस्कारजशब्दप्रयोगशब्दप्रयोगजवृत्तिसंस्कारचक्रप्रवाहवती सा नास्ति शशे शृङ्गमिति बाधे सत्यपि विदुषामप्युदयादतएव तेनाबाधितत्वाद्भ्रमविलक्षणा शशे शृङ्गप्रकारतारहिता च । एवं पुरुषचैतन्ययोरत्यन्ताभेदनिश्चये सत्यपि विदुषो जायमाना पुरुषभिन्नचैतन्यरूपाखण्डासद्गोचरा वृत्तिरपि तथा बोध्या असद्विषयकत्वात् । नहि प्रमापि कालत्रयेऽपि तद्विषयस्यासत्तया प्रमाणाजन्या चेति प्रमाणविपर्ययातिरिक्तत्वम् । प्रमाणं च तस्यामुक्तव्यवहारानुपपत्तिरेवेति भावः ॥ **तमोगुण इति ।** स्वमते समुपचिततमोगुणमज्ञानं तदाकारा तत्परिणामरूपा वृत्तिः काचित्सुषुप्तिकालीना निद्रापदाभिधेया । सतः सुप्तोत्थितस्य परामर्शो न किंचिदवेदिषमिति परामर्शः । विचारश्चास्या विद्यासाधनप्रकरणे विहित इति । **नतु ज्ञानाभावमात्रमिति ।** निद्रेतिसंबध्यते । मात्रपदेनाज्ञानगोचरवृत्तिव्यवच्छेदः । ज्ञानाभावमात्ररूपत्वे हि निरुक्तपरामर्शानुपपत्तिः स्यादिति भावः । **लज्जादीति ।** आदिपदाद्रत्युत्साहकरुणाविस्मयहास्यक्रोधभयहर्षशोकविचिकित्साश्रद्धाश्रद्धाधैर्याधैर्येच्छाद्वेषप्रयत्नादीनां परिग्रहः । यद्यपि प्रमाणादीनां पञ्चानां ज्ञानरूपत्वाद्विलक्षणानुभवसिद्धानामिच्छाद्वेषप्रयत्नसुखदुःखानां तत्रान्तर्भावो नोचितस्तथापि सर्वेषामिच्छादीनां ज्ञानसाध्यत्वाज्ज्ञानात्मकान्तःकरणपरिणामविशेषत्वेन ज्ञानात्मताभ्युपगमात्पञ्चस्वन्तर्भाव इत्युक्तम् । लज्जादयः स्थूलसूक्ष्मान्यतररूपतापन्नज्ञानेच्छयोरन्तर्भावनीयाः । यथा कालविशेषदेशविशेषावच्छेद्यजनविशेषसंनिधानप्रयोज्यकार्यविशेषगता कर्तव्यत्वबुद्धिर्लज्जा । रतिरुत्कटेच्छा । उत्साहोऽन्यैरशक्यतयाऽवधृतेऽप्यवश्यकर्तव्यताबुद्धिः । करुणा दुःखप्रहाणेच्छा । विस्मय आश्चर्यमिदमिति बुद्धिः । आश्चर्यता चासंभाव्यतयाऽवधृतस्य संभवः । हास्यं विकृतवेषवाक्चेष्टादिदर्शनजन्यसुखविशेषो रदविकासादिहेतुः । क्रोधो जिघांसा । भयं भाव्यनिष्टचिन्तनम् । हर्षः सुखप्रभेदः । शोकः प्रागुक्तः । विचिकित्सा संशयः । श्रद्धा प्रामाण्यबुद्धिः । अश्रद्धा तद्विपरीतबुद्धिः । धैर्यं परित्यागकारणे सत्यप्यैकान्तिककर्तव्यत्वाकर्तव्यत्वान्यतरबुद्धिः । अधैर्यमापातकारणेऽपि पूर्वबुद्धिपरित्यागेनोक्तान्यतरबुद्धिरित्याद्यूह्यम् । यदि च लज्जादयो विलक्षणानुभवसिद्धवैजात्यविशिष्टज्ञानादितो विजातीयाश्चेतसोऽवस्थाविशेषा नान्तर्भावयितुमर्हा वृत्तिपञ्चके तदापि नासङ्गतिः । रोद्धव्यासु पञ्चस्वेव निरोद्धव्यतयाऽन्तर्भावो द्रष्टव्य इत्यस्य सर्वासां लज्जादीनां वृत्तिपञ्चकमूलत्वेन तन्निरोधादेव निरोद्धव्यत्वं न स्वातन्त्र्येण निरोधः कर्तव्य इत्यत्र तात्पर्यात् । **गौण्येति ।** श्रेयःसाधनवृत्तिनिरोधत्वं गुण इति ॥ २ ॥ चित्तवृत्तिनिरोधे योगेऽभ्यासवैराग्ययोरेव कारणत्वात्साक्षात्कर्मणोऽकारणत्वाद्योगपदार्थमाह—**अन्तःकरणशुद्धिरूपमिति ।** कारणत्वमात्रोक्तेर्निष्फलत्वात्पूरयत्य**नुष्ठेयमिति ।** तथाच प्रवृत्त्युपयोगिनोऽनुष्ठेयत्वस्य कर्मणि लाभान्न वैयर्थ्यमिति भावः । उक्तिक्रियायाः करणकर्त्रोरपेक्षितत्वादाह—**वेदमुखेन मयेति** ॥ ३—५ ॥ **कार्यकरणसंघात इति ।** बुद्धिशरीरेन्द्रियादिरित्यर्थः । **वशीकृत इति ।** स्वेष्टसाधन एव प्रवृत्तिमान् कृत इत्यर्थः ॥ ६ ॥ सत्स्वपि सतोरपीति मूलस्थसप्तमीद्वयस्य सतिसप्तमीत्वं द्योतयितुमुक्तं **तेष्विति ।** तच्छब्देन सप्तमीद्वयप्रकृत्यर्थं परामृश्य सप्तमीद्वयार्थं विषयत्वलक्षणमाह । अत्रपक्षे समत्वेनेति पूरयति । तेषु यत्समत्वं समदर्शनं तेनेत्यर्थः । एतदेवाह सर्वत्र शीतोष्णादिषु समबुद्ध्येत्यनेन । अन्वयश्चास्य शान्त इत्यत्र ॥ ७ ॥ **तथैव तेषामिति ।** येन प्रकारेण शास्त्रोपदेशेन ये पदार्था ज्ञातास्तेन प्रकारेण तेषामित्यर्थः । **संजातालंप्रत्यय इति ।** परिणामतापसंस्कारैर्दुःखपर्यवसायिभिरेभिरलं व्यर्थानीमानीति प्रत्ययो जातो यस्य स इत्यर्थः ॥ ८ ॥ **स्वकृतापकारेति ।** यस्यारिः स स्वपदार्थः ॥ ९ ॥ **क्षिप्तेत्यादि ।** क्षिप्तादयः पञ्च चित्तस्य भूमयोऽवस्थाविशेषा बोध्याः । तत्र क्षिप्तत्वमुद्रिक्तेन रजसाक्षिप्यमाणस्यात्यन्तास्थिरत्वम् । मूढत्वमुद्रिक्तेन तमसा निद्रावस्थत्वम् । विक्षिप्तत्वं क्षिप्ताद्विशिष्टत्वं । तत्त्वं च रजसोऽल्पीभावेन कदाचित्स्थिरत्वम् । एकाग्रता रजस्तमोराहित्येनैकविषयवृत्तिप्रवाहार्हता । निरुद्धत्वं निरुद्धसकलवृत्तिकत्वेन संस्कारमात्रशेषत्वम् । आसु भूमिषु प्रथमभूमित्रयस्य योगानर्हत्वादन्त्ययोरेव योगमाह—**एकाग्रनिरोधभूमिभ्यामिति ।** तत्रैकाग्रे संप्रज्ञातो निरुद्धे चासंप्रज्ञातो बोध्यः ॥ १० ॥ **परेच्छानियमाभावेनेति ।** परासनेऽवस्थितेः परेच्छाधीनत्वेन नियमा-

भावेनास्मिन्नेव काले तत्रस्थेन योगो विधेय इति नियमाभावेनेत्यर्थः । परस्य तत्र तत्काले तदनवस्थानेच्छायां तत्रावस्थानासंभवेन नियमासंभवात् । **आसीनः संभवादिति** । आसीन इत्यनन्तरं योगमभ्यसेदिति शेषः । तत्र हेतुः संभवादिति । शयानस्य तमसस्तिष्ठतो रजःस्वभावतोऽभिवृद्धेरानुभविकत्वात्तदवस्थस्य योगासंभवादुपविष्टस्यैव संभवादित्यर्थः । इति न्यायादित्यत्रोक्तयुक्तेरित्यर्थः ॥ ११ ॥ १२ ॥ **बाह्यमासनमिति** । आस्यतेऽस्मिन्निति व्युत्पत्त्यासनपदार्थश्चैलाजिनादिर्बाह्यः । आस्यतेऽनेनेति व्युत्पत्त्यासनपदार्थः शारीरो बन्धविशेषः । पद्मासनस्वस्तिकभद्रासनवीरासनादिरबाह्योऽन्योऽस्तीति बाह्यमित्युक्तम् ॥ १३ ॥ १४ ॥ **वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञात इति** । वितर्कादीनां चतुर्णां वक्ष्यमाणानां स्वरूपैरनुगमात् तैरनुगमश्च संप्रज्ञातस्य सामान्यस्य विषयद्वारा तदनुविद्धतार्थात्तद्विषयविषयकत्वम् । संप्रज्ञातो हि भावनाविशेषात्मा भाव्यगोचरश्चित्तस्य परिणामः । स च यतः कुतश्चित्प्रमाणात् भाव्यज्ञाने सति भवति नान्यथा । चेतसः स्वतो बाह्यार्थासंबन्धात् । यादृशो हि पूर्वज्ञानेन स्वनिमित्तेन गृहीतो विषयस्तादृशमेव तं भावना गोचरयतीति विषयद्वारा संप्रज्ञाते वितर्कादीनामनुगतिरुपपन्ना स्वविषयविषयकत्वलक्षणमेव साहित्यं पुरस्कृत्य सवितर्केत्यादिसंप्रज्ञातभेदोक्तिः योगसूत्र इति । वितर्काद्यनुगमादुक्तवितर्कानुविद्धत्वात्संप्रज्ञातः सालम्बनः समाधेः संप्रज्ञातत्वे हेतुरयम् । संप्रज्ञातं विवृणोति—**सम्यगित्यादिना** । संशयविपर्ययौ यावनध्यवसायावप्रमात्मकौ ताभ्यां रहितत्वेनेत्यर्थः । अध्यवसायः प्रमा । यद्वा संशयः कोटिद्वयालम्बनः अयं घटो नवेत्यादिरूपः । विपर्ययः घटभिन्ने घटोऽयमिति निश्चयः । अध्यवसायादृष्ट एवायमित्याकारादघटव्यावृत्ततया प्रमाणेन गृहीतधर्मिणि घटत्वगोचरादर्थान्निश्चितप्रामाण्यात्संप्रज्ञातात्मकभावनोपयोगिनो भिन्नोऽनध्यवसायो घट एव घटोऽयमिति निश्चयः । प्रामाण्याप्रामाण्यग्रहोदासीनस्वरूपस्तैस्त्रिभी रहितत्वेनेत्यर्थः । इदं च सम्यगित्यस्य विवरणम् । राहित्यं च यदा विषयतया तदा तृतीयार्थस्य वैशिष्ट्यस्य भाव्यस्वरूपेऽन्वयः । तच्च विवरणवाक्ये कर्मप्रत्ययस्यार्थः । विव्रियमाणवाक्ये प्रज्ञातपदार्थलक्ष्यचतुर्विधविषयविषयकाङ्गभूतसमाध्यगृहीतविशेषगोचरत्वात्मकसाक्षात्कारत्वरूपप्रकर्षवज्ज्ञानसाधनभावनारूपार्थघटकः । यदा च कारणतया कार्यतया वा तद्राहित्यं तादृशज्ञानाजन्यत्वं तादृशज्ञानाजनकत्वं वा तदा तृतीयार्थवैशिष्ट्यस्य विवरणवाक्यस्थस्य येनेतिपदस्यार्थं उक्तलक्ष्यघटके भावनात्मकसाधनेऽन्वयः । यदा तु तद्राहित्यं तन्निवर्तकत्वं तत्स्वरूपरहितत्वं तदा वैशिष्ट्यं ज्ञानान्वयि । सर्वथैव ज्ञाने यावल्लोकव्यवहाराबाध्यविषयकत्वस्य सम्यगित्यर्थकेन समित्युपसर्गेण लाभः । ज्ञानमिह साक्षात्कारात्मकं प्रोपसर्गात्प्रकर्षबोधकाल्लभ्यते । भावना हि परिपाकवती भाव्यस्य साक्षात्कारं जनयति । भावना हीत्यादिग्रन्थस्यायमभिप्रायः । यथा कुसुमेन भावितं तैलमित्यत्र तैलस्य कुसुमभावनानाम कुसुमसूक्ष्मभागाणां सुरभिपरागाणां तैले भूयोभूयो निवेशनम् । येन तैलमपि कुसुमवदेव सुरभि भवति । तथा समाधिना स्थूलादिभिर्विषयैर्भावितं चित्तमित्यत्रापि चित्तस्य विषयभावनानाम विषयस्वभावस्य चित्ते भूयोभूयो निवेशनम् । तच्च न तैलस्यात्यन्तिकपरागसंयोगवद्बाह्यविषयसंयोगस्तस्य परोक्षस्थले सर्वमत एवासंभवादपितु पुनःपुनर्विषयाकारपरिणामविशेषात्मक एव विषयसंबन्धः । सच परिणामविशेषः स्मृतिर्वान्य एव वा सत्त्वस्य वृत्तिविशेष इत्यन्यदेतत् । पौनःपुन्यं विषयान्तराकारवृत्त्यनन्तरितनिरन्तरत्वम् । समाधिनेति तृतीयार्थाभेदो भावनान्वयी । तथाच सत्यङ्गभूतसमाधिपरिपाके भाव्यसाक्षात्कारोपहितरूपः साक्षात्काररूपतया परिणतो वा संशयाद्यनिमित्तकः संशयादिविरोधी विषयान्तराकारवृत्त्यनन्तरितनिरन्तरप्रवाहवान् स्थूलादिचतुर्विधविषयकश्चित्तसत्त्वस्य विशुद्धस्य स्मृतिरूपस्तदन्यः परिणामविशेषो वा भावनापदाभिधेयः । संप्रज्ञातो दोषविशेषजन्यज्ञानस्येव भावनाजन्यज्ञानस्यापि साक्षात्करोमीत्यनुभवात्साक्षात्कारत्वं हि तस्येति । **भेदादिति** । तथाच वितर्केत्यादिसूत्रोक्तविषयचातुर्विध्यस्य न हानिः । तत्स्थता तत्रैवैकाग्रतेति पर्यवसितार्थकथनम् । तत्स्थस्य तदञ्जनतेति विग्रहमभिप्रेत्य तेषु ग्रहीतृग्रहणग्राह्येषु स्थितस्य धारितस्य ध्यानपरिपाकवशादपहतरजस्तमोमलस्य तदञ्जनता तदाकारतेति वाचस्पत्ये ह्यस्ति तद्याख्यानम् । ततश्च तत्स्थतानामेन्द्रियाणां स्वस्वविषयेषु स्वच्छन्दनैसर्गिकप्रवृत्तीनां निरोधकेन विपरीतप्रयत्नविशेषलक्षणेन प्रत्याहारेण वशीकारे सति प्रमाणगृहीतेष्वभिमतेष्वपि ध्येयतया ग्रहीत्रादिषु तद्विषयवृत्तिरूपसंसर्गेण चेतसोऽवस्थापनरूपायाः धारणायाः प्रतिपक्षाणां बलादिन्द्रियैस्तेषु तेष्वनभिमतेष्वपि नीतस्य चेतसो वृत्तीनामनुजयेनाप्रतिबन्धं जातया यथेष्टमभिमतविषयेषु वृत्तिरूपसंबन्धेनावस्थापनरूपया ध्यानयोग्यतापर्यवसन्नया धारणया धृतत्वमेव शब्दतः प्रतीयते तन्मात्रात्तु न तदञ्जनतेति विसदृशप्रत्ययानन्तरितप्रतिभासमानध्येयध्यातृध्यानस्वरूपभेदध्येयगोचरवृत्तिप्रवाहात्मकध्यानरूपवृत्तिलक्षणसंबन्धेन तत्तद्विषयनिष्ठतारूपैकाग्रतावश्यमपेक्षणीया । ततोऽपि वा नान्तरीयकरूपा ध्यानपरिपाकाज्जायमानेन ध्येयादिभेदप्रतिभासविगममात्रतो ध्यानाद्विलक्षणेन साक्षात्कारानुपहितरूपत्वमात्रतोऽङ्गिनः संप्रज्ञातसमाधेर्विलक्षणेन चाङ्गेन समाधिना वृत्तिरूपेण संबन्धेन तन्निष्ठतालक्षणैकाग्रतावश्यकीति सैव हि तात्पर्यतस्तत्स्थताशब्देन विवक्षितेति । उक्तैकाग्रत्वरूपतत्स्थत्वस्य ध्यानपरिपाकेत्यादिवाचस्पत्यतो लाभात् ध्यानपरिपाक एव हि समाधिस्तेन विषयनिष्ठैकाग्रता सर्वथा रजस्तमोमलराहित्यमेवेति । **न्यग्भूत इति** । नीचैरनुत्कृष्टतयाञ्चति प्रज्ञायां गच्छतीति न्यक्तस्य भाव आत्मीयरूपेण ज्ञानेष्वप्रकाशमानत्वमभिभूतत्वमपकर्षस्तद्वति चित्त इत्यर्थः । **उत्कर्ष इति** । अन्यमभिभूय प्रकाशमानतया वर्तनम् । तथाच निर्मृष्टरजस्तमोमलस्य चित्तसत्त्वस्य प्रकाश आत्मनो रूपं वृत्तिज्ञानतेति यावत् । तत्परिणामे ध्याने च स्वप्रकाशे

समेदं तुल्यवत् विषयो ध्याता ध्यानरूपं ज्ञानं च स्फुटमवभासत इति न चेतसो न विषयस्य कस्यापि न्यग्भावः । समाधौ तु तादृशचित्तपरिणामे स्वप्रकाशेऽपि ध्यानाभ्यासाच्चेतसि तदञ्जनतां विषयस्वरूपोपरक्ततां विषयानन्यतामिव प्राप्ते भानयोग्यमपि समाधिरूपं ज्ञानं भावकस्वरूपं च न भासते । विषयस्वरूपमेवानवभासमानभेदं प्रकाशते न प्रथतेऽहं जानामीति शिवः शिव इत्येवमेवावभासत इति चेतसः स्वस्वरूपज्ञानात्मतानवभासान्न्यग्भावः । विषयस्य स्वस्वरूपमात्रप्रतिभासादुत्कर्षः । यथा वह्निप्रकाशस्य स्वरूपेणानवभासान्मध्याह्ने न्यग्भावः सौरालोकस्य स्वरूपेणावभासादुत्कर्ष इति भावः । **तथाविधेति** । निरुक्तप्रकारवती ज्ञानत्वाहंत्वादिस्वरूपेण ज्ञानात्माद्यगोचरत्वे सति भाव्यगोचरत्वरूपप्रकारवतीत्यर्थः । **भावनीयवस्तूपरागादिति** । भावनात्मतया परिणतचेतोनिमित्तभूतज्ञानविषयत्वलक्षणविषयसंनिधानाच्चक्षुरिन्द्रियसंप्रयोगादिवृत्तिकारणजनिताद्विषयोपरागाख्यसंबन्धविशेषाद्वेत्यर्थः । तद्रूपापत्तिः तत्तद्विषयाकारमात्रावभाससाक्षात्कारात्मकपरिणामविशेष इत्यर्थः । मात्रपदेन ज्ञानज्ञातृत्वादिव्यवच्छेदः । **भूमिकाक्रमेति** । अवस्थाक्रमेत्यर्थः । **ग्राह्यनिष्ठेति** । विषयतया ग्राह्यः परिसमाप्त इत्यर्थः । **एवमग्रेऽपि व्याख्यास्यत इति** । एतच्छ्लोकव्याख्यान एव तत्र ग्रहीतृभानपूर्वकमेवेत्यादिग्रन्थेन । **महाभूतेन्द्रियात्मकेति** । यद्यपि वितर्कविचारेत्यादिसूत्रव्याख्याने इन्द्रिये स्थूल आलम्बने चित्तस्याभोग आह्लाद इत्यादिग्रन्थे ग्रहणसमापत्तिरिन्द्रियविषया प्रदर्शिता वाचस्पत्ये । इह तु सवितर्कायां एव समापत्तेरिन्द्रियविषयत्वमुच्यत इति विरोधस्तथापि गृह्यतेऽनेनेति ग्रहणं ज्ञानसाधनं । तत्त्वं च न रजस्तमःप्रधानपरिणामतया तादृशस्य कस्यापि तथात्वादर्शनादपितु प्रकाशशीलसत्त्वात्मतयैवेतीन्द्रियाणां सर्वेषां साधारणं रूपं कारणात्मकं चेतःसत्त्वमेव ज्ञानसाधनमिन्द्रियाण्यपि हि विषयाण्यालोच्यान्तःकरणे समर्पयन्ति तस्मिन्विषयाकारेण परिणते तत्र चैतन्यप्रतिबिम्बे सत्यतात्त्विकस्यान्तःकरणगतदर्पणमालिन्यवत्पारमार्थिकविषयाकारत्वसंबन्धस्य मुखे मालिन्यसंबन्धकल्पस्य चैतन्ये भवति संपत्तिरिति तादृशविषयाकारतापन्नचैतन्यरूपे ज्ञान उपलब्धिपदवाच्ये ह्यदूरसाधनत्वस्यान्तःकरणसत्त्व एव सत्त्वादेवं च ग्रहणसमापत्तेस्तद्विषयतैवोचिता । वक्ष्यत्यपीह यदा रजस्तमोलेशानुविद्धेत्यादिग्रन्थेन । तथैव सानन्दसमापत्तेरेव ग्रहणसमापत्तित्वाद्ग्रहणविषयत्वं दर्शयत्यानन्द इतीति वाचस्पत्युक्तेस्तस्याश्चान्तःकरणसत्त्वविषयकत्वस्यात्रोक्तेः । तथाचेन्द्रियाणां यानि प्रातिस्विकानि पञ्चमहाभूतवद्विकारमात्राणि कार्यात्मकानि रूपाणि तेषां सवितर्कसमापत्तिविषयतैवोचिता प्रागुक्तयुक्त्या चेतसस्सत्त्वस्यैव ग्रहणात्मकत्वेन तेषां ग्राह्यकोटावेव व्यवस्थितेरिन्द्रियस्य सवितर्कसमापत्तिविषयत्वमत्रोक्तं युक्तमेव । एवं ग्रहणसमापत्तिः सानन्दोच्यते । आनन्दः सत्त्वमेव तस्यैव सुखरूपत्वोक्तेस्तद्विषयकत्वाद्धि सानन्दत्वमुचितमिन्द्रियाणां तु तद्रूपतयैव सुखत्वं कार्यकारणयोरभेदान्न स्वरूपेण प्रधानतया सत्त्वस्य तत्र कारणत्वेऽप्यनुग्राहकतया रजस्तमसोरपि कारणत्वेन त्रिगुणकार्यतया दुःखात्मत्वस्यापि सत्त्वादवयुत्य सुखरूपत्वोक्तेस्तत्रानुचितत्वादितीन्द्रियस्वरूपविषयतया सानन्दत्वोक्तिर्हि नोचितेति ग्राह्यसमापत्तेरेवेन्द्रियविषयत्वकथनमुचितम् । वाचस्पत्ये तु ग्रहणसमापत्तेः सानन्दाया यदिन्द्रियविषयत्वकथनं तदन्तःकरणसत्त्वस्य बाह्यार्थे स्वतःप्रवृत्त्यभावेन सर्वप्रमाणमूलेन्द्रियस्वरूपस्य ज्ञानसाधनत्वेऽवश्यापेक्षणीयतया ग्रहणत्वस्येन्द्रियघटितमूर्तित्वात्तेन रूपेण समापत्तेः सविकल्पाया इन्द्रियविषयकत्वसंभवादिन्द्रियप्राधान्यं विवक्षित्वाऽऽनन्दता तु कारणात्मना कथंचिदुपपादिता । प्रधान्यं तु तस्यावश्यकत्वाद्ग्रहणत्वेन ज्ञानसाधनत्वेन लोकप्रसिद्धेश्चेति । यद्वेन्द्रियं यदानुमानादिना स्वयं ग्राह्यतयोपस्थितं तदा तद्विषयसमापत्तिः सवितर्ककोटौ निवेशयितुमुचिता तदभिप्रायेणैवेह तथोक्तिः यदातु तद्घटादिज्ञानसाधनत्वेनैवोपस्थितं तदा तद्विषयसमापत्तिर्ग्रहणसमापत्तावन्तर्भावयितुमुचिता तदभिप्रायेण वाचस्पत्ये तथोक्तिरिति न कश्चिद्विरोध इति । **षोडशेति** । पञ्चमहाभूतान्येकादशेन्द्रियाणीति षोडशेत्यर्थः । संप्रज्ञातो हि वितर्कानुगतविचारानुगतानन्दानुगतास्मितानुगतभेदाच्चतुर्धाविभक्तस्तत्र वितर्कादिशब्दाः स्थूलसूक्ष्मग्रहणग्रहीतृरूपविषयपरास्तत्तद्विषयकभावनाहेतुज्ञानपरास्तत्तद्विषयकसमाधिपराश्च । तत्र विषयानुगतत्वं समाधेर्विषयतया ज्ञानानुगतत्वं च समानविषयकत्वेन सानन्दसास्मितादिव्यवहाराश्चैतत्पक्षावलम्बने न दृश्यन्ते । समाधिपक्षे तत्त्वं च सामान्यविशेषभावेन समाधिपक्षमाश्रित्योक्तं चात्र एतावुभावप्यत्र सवितर्कशब्देनोक्ताविति । भाष्येऽपि स्थूल आलम्बने चित्तस्याभोगो वितर्कः । सूक्ष्मे च विचार एवं ग्रहण आनन्दो ग्रहीतर्यस्मितेत्यूह्यम् । आभोगः साक्षात्कारवती प्रज्ञेति वाचस्पत्ये साक्षात्कारश्च साक्षात्करोमीति प्रतीतिसाक्षिको विषयिताविशेषस्तद्वज्ज्ञानं वेति समाधेः साक्षात्कारोपहितभावनारूपत्वभावनापरिणामसाक्षात्काररूपत्वपक्षयोरपि तस्य संग्रहः । एवं च वितर्कत्वादिचतुष्टयं सवितर्कनिर्वितर्कादियुग्मचतुष्टयस्यापि संग्राहकम् । सवितर्कसविचारशब्दयोर्वितर्कविचारपदार्थश्च स्थूलसूक्ष्मविषयकत्वकृतविशेषपरित्यागेन विकल्पकल्पनाध्यासभ्रमादिपदाभिधेयम् ज्ञानं देशकालगुणक्रियाजात्यादिसंज्ञाविशिष्टप्रत्ययस्य विकल्पमात्रस्य भ्रमत्वात् । सर्वस्यैव विशिष्टप्रत्ययस्याभिन्नयोरपि गुणक्रियादिधर्मतद्धर्मिणोर्भेदकल्पनात्मकत्वात् भिन्नानामपि शब्दार्थज्ञानानां यावल्लोकव्यवहारं संज्ञासंज्ञिभावेनाभिन्नतया च गोचरीक्रियमाणत्वात् यावत्संज्ञासंज्ञिनोः संकेतं स्मरति तावत्संकेतगृहीताविविक्तस्वरूपशब्दार्थद्वयं संज्ञासंज्ञिभावेन हि ज्ञानमात्रं विषयीकरोति । गौरिति ज्ञाने गवार्थगोचरे गौरिति शब्दः समर्थ इत्यविविक्तशब्दार्थज्ञानगोचरत्वस्य संकेते प्रयोज्यप्रयोजकव्यवहारगृहीत आनुभविकत्वात् । तदेवं भूतस्वनिमित्तविकल्पज्ञानसाहित्येन कल्पितभेदादिधर्मधर्मिभावविषयकत्वेन वा सविकल्पकत्वम् । चतुर्षु

संप्रज्ञातप्रभेदेष्वस्ति भावनामाहात्म्यात् रजस्तमसोर्दोषयोस्तानवप्रकर्षेण विवेकप्रज्ञया संकेतस्मृतिधर्मधर्मिभावविकल्पापगमे सति जायमानेषु चतुर्षु समाधिषु निर्विकल्पकत्वमिति संप्रज्ञातस्याष्टविधत्वं भवति । तत्र स्थूलविषयो विकल्पो वितर्कशब्देन सूक्ष्मविषयो विचारशब्देनाभिधीयत इति तत्साहित्यराहित्याभ्यां विशिष्योक्ताः सवितर्कनिर्वितर्कसविचारनिर्विचाररूपाश्चत्वारो भेदाः । सविकल्पग्रहणसमाधिनिर्विकल्पग्रहणसमाधिसविकल्पग्रहीतृसमाधिनिर्विकल्पग्रहीतृसमाधिरूपाश्चत्वारो विशेषसंज्ञारहिता अप्यूह्या इत्येतदभिप्रेत्य पूर्वापरानुसंधानेनेत्याद्युक्तमिति बोध्यम् । **पूर्वापरानुसंधानेनेति** । एतेन कस्यचित्पूर्वकालानुसंधाने तद्विशिष्टतया कस्यचित्परकालानुसंधाने तद्विशिष्टतया स्थूलस्य भावनोक्ता । शब्दार्थोल्लेखेनेत्यनेन संज्ञासंभिन्नसंज्ञिविषयतोक्ता धर्मविशिष्टधर्मिविषयताप्यूहनीया । तृतीयार्थवैशिष्ट्यं यथासंभवं भावनान्वयि बोध्यम् । **तन्मात्रान्तःकरणलक्षणमिति** । अत्र तन्मात्रपदेन गन्धरसरूपस्पर्शशब्दतन्मात्राणि स्वकार्यपार्थिवादिपरमाण्वात्मकभूतसूक्ष्मोपेतानि ग्राह्याणि अन्तःकरणपदेन कार्यकारणभावापन्नाहंकारमहत्त्वप्रकृतिरूपाणि सूक्ष्माणि ग्राह्याणि । यद्यपि ग्रहणसमापत्तावप्यन्तःकरणं विषयस्तथापि तत्र ज्ञान-साधनत्वलक्षणग्रहणत्वयोग्यं प्रकाशसुखमात्ररूपमन्तःकरणस्य निष्कृष्टसत्त्वं विषयाकारवृत्तिरूपकार्यसंपादनमात्रोपयोगिरजस्तमो-लेशानुविद्धम् । विषयत्वेन विवक्षितमिहाहंकाररूपकार्यकरणत्वयोग्यं तत्साधनोपयोगिरजस्तमोभ्यां संपृक्तस्वरूपं विषयत्वेन विव-क्षितमिति विवेकः । रजस्तमोलेशेत्युक्त्या तद्रूपदोषाद्धेये तत्र तद्गोचरसंप्रज्ञातोपयोग्युपादेयत्वभ्रमः सूचितः । **विगतदेहाहंका-रत्वादिति** । रजस्तमसोर्भूयस्त्वेन प्रक्षयाद्देहादितो दुःखबहुलादभिमानव्युत्थितेः सुखमात्रान्तःकरणसत्त्वेऽभिमानाद्विगतदेहा-हंकारत्वादित्यर्थः । ग्रहीतृविषयां समापत्तिं दर्शयितुं भूमिमारचयति—**ततःपरमित्यादिना** । अयमाशयः—समाधिमाहा-त्म्यात्कार्योपयोगिरजस्तमोलेशस्याप्यपगमेऽप्रतिबन्धमुत्पन्ने विषयसुखमात्रवैतृष्ण्ये प्रकाशात्मकसत्त्वस्वरूपसुखभोगलिप्सामात्रे शिष्टे ह्यनिवृत्ते चाधिकारे पुरुषस्य बुद्ध्यासह संबन्धस्यापि विद्यमानत्वादविद्याकल्पितबुद्धिपुरुषैकात्म्यवद्ग्रहीतृत्वोपहितरूपमपि वर्तत एव ग्रहीतुः, परन्तु बुद्धेस्तत्तत्कार्यपरिणामस्याभाव्यत्वात्प्रकृतौ लये कार्योपधानराहित्येन विद्यमानतया सत्तामात्रेण सा वर्तत इति व्यवह्रियते । बुद्धेश्च तथात्वे प्रागुक्तग्रहीतुरपि तथात्वं भवति सत्तासत्तावतोरभेदात्तादृशसत्तावद्ग्रहीतापि सत्तोच्यते । अस्त्यस्मीत्यादिकं विभक्त्यन्तप्रतिरूपकमव्ययं ततो भावप्रत्ययेऽस्तितादिशब्दवदस्मितादिशब्दोऽपि सत्तावचन-स्तादृशसत्तावद्ग्रहीतृविषयसमापत्तेर्निरुक्तसत्तासहितत्वात्सास्मितत्वमुपपद्यते । एवंरूपेण सास्मितसमाध्युक्त्या तादृशसमाधिमतो योगिनः प्रकृतिलयत्वं लभ्यते । एकात्मिका संविदस्मितेति भाष्यव्याख्याने वाचस्पत्ये ग्रहीत्रा सह बुद्धेरेकात्मिकासंविदि-त्युक्त्या पुरुषैकात्मतापन्नबुद्धिरेवास्मिताशब्देनाभिहिता । तद्विषयकत्वमात्रतयोक्तौ बहिर्मुखस्यापि प्रकृतावलीनायामपि बुद्धौ तस्याः सत्त्वेन तत्कालीनतद्गोचरसमापत्तेरपि परिग्रहः स्यात्स च नेष्टः । क्रमेण समाधिचतुष्टयेऽन्तर्मुखत्वोत्कर्षस्य विवक्षि-तत्वादतो योग्यताक्रमग्रहगृहीतेन प्रागुक्तसत्तामात्ररूपास्मितावस्थपुरुषैकात्म्यापन्नबुद्धिरूपास्मितास्वरूपतातपर्येण भाष्यार्थता-मुक्तार्थे समाकलय्योक्तसत्तैवास्मिताशब्देन यौगिकेनोक्ता । तादृशसत्तामात्रस्य विषयत्वे शुद्धं सत्त्वमालम्बनीकृत्येति विरुध्येत । सत्त्वमात्रस्यैव विषयत्वे सेयं ग्रहीतृसमापत्तिरिति विरुध्येत । नहि सत्त्वमात्रं ग्रहीतृ निरुक्तसत्तापन्नपुरुषैकात्म्यतावद्बुद्धिविषयत्वे तु तद्घटकबुद्धिविषयत्वात्सत्त्वमालम्बनीकृत्येत्यस्य पुरुषविषयत्वात्सेयं ग्रहीतृसमापत्तिरित्यस्य च न विरोधः । नवा भाष्य-स्यापि तदुक्तास्मिताविषयत्वादिति । **यत्रेति** । यस्मिन्सतीत्यर्थः । **प्रतिलोमपरिणामेनेति** । स्वकारणे यः स्वस्य प्रविलयस्तद्धेतुभूतपरिणामेनेत्यर्थः । **सत्तामात्रेति** । मात्रशब्देनाहमित्युल्लेखव्यवच्छेदः । **अस्मितामात्ररूपेति** । मात्रपदेन तत्तदाकारवृत्त्यादिकार्यसाधनत्वव्यवच्छेदः । **येतु परमिति** । अस्मितासमाधिप्रकर्षाद्गृहीते सत्त्वपुरुषभेदे प्रकृतौ लीनाया अपि बुद्धेः पुरुषैकात्म्ये प्रशिथिलीभूते सत्त्वस्वरूपसुखेऽपि प्राकृते वैतृष्ण्ये जाते पुरुषमात्रविषया समापत्ति-रुक्तास्मितत्वस्याप्यविषयत्वात्, ग्रहीतृत्वं तु पुरुषस्य स्वरूपचैतन्यमादाय योग्यतालक्षणमेवेति तथापि सा ग्रहीतृसमापत्तिर-भिधीयते परंतु न सास्मिता इति भावः । **तत्र ग्रहीतृभानपूर्वकमेवेति** । यत्रान्तर्मुखे चेतसि प्रतिलोमपरिणामेन तस्मिन्प्रकृतौ लीने जातायां ग्रहीतृसमापत्तौ सुषुप्तेरिवादृष्टविशेषवशात्तस्माद्व्युत्थाने क्रमाज्जायमाने तदनन्तरं क्रमशः सानन्दः सविचारः सवितर्को जायते तत्रेत्यर्थः । **चतुष्टयानुगत इति** । स्थूल आदृते सति सूक्ष्मग्रहणग्रहीतॄणां प्रविलयाभावा-त्कार्यतद्ग्रहणावस्थायां तदनुप्रविष्टकारणीभूतसूक्ष्मग्रहणग्राहकानुवृत्तेर्दुर्वारत्वात् प्रमाणगृहीतेषु तेषु सूक्ष्मादिष्वपि स्थूलाव-रुद्धतया योगिनः समापत्तिसंभवाच्चतुष्टयानुगतिः । समाधिमाहात्म्यादतत्त्वतया स्थूले गृहीते परित्यक्ते च बुद्धौ पुनस्त-दनारोहात्कार्यानुप्रविष्टत्वस्य कारणे चाभावात्स्थूलं विनापि सूक्ष्मावस्थानात्सूक्ष्मसमापत्तिदशायां स्थूलसमापत्तेरसंभवात्तस्य वितर्कवैकल्यम् । एवं ग्रहणादिसमापत्तावपि बोध्यम् । अर्थाद्व्याख्यातमिति सूत्रे सवितर्कनिर्वितर्कयोः स्थूलविषयत्वस्या-प्रतिपादनात्सविचारनिर्विचारयोः सूक्ष्मविषयत्वकथनेनैव तयोः स्थूलविषयत्वं लब्धमित्यर्थः ॥ १५—१८ ॥ **आत्मनो योगं युञ्जत इति व्याख्यान इति** । आत्मन आत्माकारत्वस्य योगं संबन्धं संपादयत इत्यार्थोऽथवात्मनो योगमात्मन आकाराख्यसंबन्धं विषयेण सह ज्ञानस्याकाराख्यसंबन्धाभ्युपगमादित्यर्थोऽत्र पक्षेऽभिप्रेतो बोध्यः । स्फुटार्थप्रत्ययानु-कूलव्यापारो व्याख्या सचानेकार्थस्य शब्दस्याभिमतार्थैकमात्रबोधकपदप्रतिपादनमप्रसिद्धार्थस्य प्रसिद्धार्थपर्यायान्तरप्रति-पादनं समस्तस्य विग्रहकरणादिकं च यथातथापदानामन्वयकरणं चेति व्याख्यान इत्यस्य नासङ्गतिः । **योगेनात्माकार-**

**तेति** । यतचित्तस्येत्यस्यात्रपक्षेऽसंप्रज्ञातसमाधिमत इत्यर्थकतयोद्देश्यतावच्छेदकयोगस्य प्रयोजकत्वविवक्षया योगेनेति साधनत्वनिर्देशः । यद्वा योगशब्दो योगसाधनलाक्षणिकः क्रियाविशेषणं आत्मन आकारत्वस्य योगस्य साधनमित्यर्थस्तस्य युञ्जतो योगमनुतिष्ठत इत्यर्थस्य घटके धात्वर्थे योगेऽन्वय इति योगस्य साधनत्वलाभ इति । अथात्मनश्चित्तस्य योगमसंप्रज्ञातं युञ्जतः संपादयत इत्यर्थो यतचित्तस्येत्यत एव दार्ष्टान्तिकलाभ इत्याह—**यतचित्तस्येति वेत्यादिना** । **भावनिर्देश इति** । बहुव्रीहिसमस्तपदार्थस्य भावो यतं चित्तमेव तदेव दार्ष्टान्तिकमिति भावः । तथा विवक्षणे लाघवात्कर्मधारय एव युक्त इत्यत आह—**कर्मधारयो वेति** ॥ १९ ॥ २० ॥ **निर्वृत्तिकेन तु चित्तेन स्वरूपसुखानुभव इति** । यद्यपि स्वरूपसुखं स्वरूपचैतान्येनैवानुभवितुमर्हं तथापि सवृत्तिकस्य चित्तस्य तद्विरोधित्वात्तद्विपरीतस्यान्वयव्यतिरेकाभ्यां भवति साधनत्वमिति भावः ॥ २१ ॥ **महतापि दुःखेनेति** । साधनस्य शस्त्रनिपातादेः सत्त्वादुत्पत्तुं योग्येन दुःखेनेत्यर्थः । तेनाज्ञातदुःखाभावेऽपि न क्षतिः ॥ २२ ॥ २३ ॥ दृष्टेषु स्रगादिष्वदृष्टेष्विन्द्रलोकादिषु च शोभनाध्यासबाधादित्यन्वयः ॥ २४ ॥ सांख्याभिमतमहत्तत्त्वभ्रमं निरसितुमाह—**द्विविध इत्यादि** । **अहंकार इति** । मिलितसमस्तापञ्चीकृतभूतसत्त्वांशकार्यान्तःकरणस्याभिमानाख्यवृत्तिमत्प्रभेद इत्यर्थः । **अनिर्वाच्यमिति** । सांख्याभिमतप्रकृतिनिरासाय तथाचाविद्यालाभः समस्तजगदुपादानत्वात्सा प्रकृतिः । **परा बुद्धिरिति** । अन्तःकरणप्रभेदो विशेषाभिमानवृत्तिमान् विशेषाहंकार इत्यर्थः । **महानिति** । महत्तत्त्वं सामान्याहंकारो विशेषाहंकारसमष्टिरूप इत्यर्थः । अव्यक्तमित्यविद्येत्यर्थः ॥ २५—२८ ॥ **इति विशेष इति** । तस्मात्संप्रज्ञाते चित्तदर्शनसद्भावादसंप्रज्ञात एवोपाय इति शेषः । **उपायासंभवादिति** । प्रपञ्चपरमार्थतानिश्चयदार्ढ्येन वेदान्तार्थश्रद्धाभावेन श्रवणादिप्रवृत्त्ययोगादित्यर्थः । ऋतंभरायां प्रज्ञायां जातायां तेषामपि प्रपञ्चानृतत्वाद्वितीयब्रह्मादिनिश्चयादिना मोक्षस्य संभव इति योगोऽप्युपादेय एवेति भावः । **तस्येति** । चित्तदोषनिवर्तकयोगस्येत्यर्थः ॥ २९ ॥ ३० ॥ **तदङ्गीकृत्येति** । दत्तात्रेयादीनां वस्तुतो निषिद्धकर्माभावेऽपि लोकानामेवादृष्टविशेषेण तत्प्रतिभासाल्लोकबुद्धिविषयत्वेन तदङ्गीकृत्येत्यर्थः । निषिद्धकर्मासंभवेऽपीत्युपलक्षणं । विहितकर्मणोऽपि तत्रापि प्रवर्तकस्याभावात्प्रारब्धात्प्रवृत्तिपक्षश्चेत्सा तूभयत्र समैव स्यादिति ॥ ३१ ॥ **पूर्वापरपरामर्शमन्तरेणेति** । पूर्वः क्रोधस्य दृष्टसाधनमपकारोऽपरस्तत्कार्यभूतो हिंसादिरनर्थस्तयोः परामर्श विनैवेत्यर्थः । अपकारग्रहे सति यः क्रोधः स न स्वहेतुतया वासनामाक्षेप्तुमर्हति दृष्टेनैव निर्वाहात् । अपरपरामर्शे क्रोध उत्पत्तुमेव नार्हति क आक्षिपेदित्यर्थः । यद्वा पूर्वापरपरामर्शः पूर्वं मया मदीयेन वापकृतमनन्तरमनेनानेनैव पूर्वमपकृतमनन्तरं मदीयेनेति परामर्शस्तं विनैवेत्यर्थः । किंच क्रोधान्ममेदमिष्टं स्यादिति क्रोधतत्फलपरामर्शं विनेत्यर्थः । एवमन्यवृत्तिष्वपि बोध्यम् । **गत्वा दुःसाध्यानि स्थितानीति** । दुःसाध्यतयावस्थितेः समानकर्तृकत्वात् । गत्वेति क्त्वाप्रत्ययस्तेन मिथः कारणत्वप्राप्तेर्दुःसाध्यत्वे हेतुत्वलाभः । येषां हि मिथो हेतुहेतुमद्भावस्तेऽवश्यं भवन्ति दुःसाध्या अन्योन्यापेक्षोत्पत्तीनां संपादने प्रायः सर्वेषां व्यामोहोत्पत्तेः । वक्ष्यमाणेन विवेकेन तेषामन्यतोऽप्युत्पत्तिनिश्चये व्यामोहापगमाद्यत्नविशेषेण संपादनसंभवादसाध्यानीति विहाय दुःसाध्यानीत्युक्तम् । **उत्पादनमितीति** । इत्याकारक इत्यर्थः । सच निश्चयेनान्वेति । **औत्सुक्यमात्रादिति** । मोक्षरूपनितान्तरमणीयफलसाधनेनोत्कटेच्छामात्रादित्यर्थः । औत्सुक्यमात्रादिकं विवृणोति—**योगं विनेत्यादिना** । **अविद्याग्रन्थिरिति** । ग्रन्थिरिव ग्रन्थिरविद्या यथा ग्रथौ सत्यां न भवति बन्धाद्विमुक्तिस्तथाऽविद्यायां न भवति संसारान्मुक्तिरिति सा प्रथमा ग्रन्थिः । द्वितीयं हृदयमन्तःकरणम् । अब्रह्मत्वं स्वस्य ब्रह्मणोऽपि कल्पितब्रह्मभिन्नत्वम् । द्वैताद्वैतोभयकोटिस्पृग्विज्ञानम् संशयः कर्माणि कर्माधर्मौ सर्वविषयस्पृहा सर्वकामत्वम् । **असर्वत्वनिवृत्तिफलमिति** । असर्वत्वनिवृत्तिर्ब्रह्मात्मत्ववेदनस्य फलं प्रागुक्तबन्धनिवृत्तिदृष्टान्तत्वेन प्रतिपादनीयम् । यथा ब्रह्मवेदनस्यासर्वत्वनिवृत्तिः फलं तथोक्तबन्धनिवृत्तिरपीतीत्यर्थः । न जायत इतीत्येतावदेव पाठो युक्तः । पुनर्जन्मनिवृत्त्यन्तबन्धनिवृत्तौ ज्ञानफलत्वेन प्रतिपादितायां प्रमाणापेक्षायां तथाच श्रूयत इत्यादिग्रन्थप्रवृत्तेस्तत्र प्रमाणत्वस्य च न जायत इत्यन्तश्रुतिष्वेव पर्यवसानात् । य एवं वेदेत्याद्युदाहार्यमित्यन्तस्य निराकाङ्क्षत्वात् । यद्वा न जायत इतीत्थं सर्वं बन्धनिवृत्तिफलं वचनमुदाहार्यमिति पाठेन भवितव्यम् । सामान्येन ज्ञातस्य विशेषेणाभिधानमुदाहरणम् । तथाच श्रूयत इत्यनेन सामान्यतस्तत्त्वज्ञानस्य बन्धनिवृत्तिफलकत्वे प्रमाणतया ज्ञाता । श्रुतिः यो वेद निहितमित्यादिविशेषरूपेण प्रतिपादिता । इत्थमनेन प्रकारेण बन्धनिवृत्तिः फलं यत्र तत्सर्वं वचनमुदाहार्यमिति तदर्थः । **दृढभावनयेत्यादि** । दृढभावनया यया पदार्थस्य क्रोधादिचित्तवृत्तेरादानं स्वीकारः सा भावनेत्यर्थः । त्यक्तपूर्वापरविचारणमिति प्राक् व्याख्यातम् । **अभिनिवेश इति** । स्वदेशाचारादाविष्टसाधनत्वोत्तमत्वग्रहजनितदृढतरसंस्कारस्तदादानहेतुरित्यर्थः । यद्वा अभिनिवेश आग्रहोऽवश्यादानबुद्धिः कार्यमिदं यद्यपि वासनायास्तथापि कार्यकारणयोरभेदोपचारात्तथोक्तिः । **शास्त्रवासनेति** । शास्त्रतत्प्रतिपाद्यगोचरा वासना शास्त्रपाठः शास्त्रार्थज्ञानम् तदनुष्ठानं च हितसाधनमुत्कृष्टं चेति ग्रहजनितदृढतरसंस्कारस्तत्कार्यमेव । यद्यपि पाठव्यसनादिकं पौनःपुन्येन तदनुष्ठानरूपं तथापि कार्यकारणयोरभेदोपचरादिदमप्युक्तमिति । **जन्महेतुत्वादिति** । वेदपुराणपाठादितो धर्मोत्पत्त्या तद्भोगार्थं जन्मन आवश्यकत्वादित्यर्थः । **आत्मत्वभ्रान्तिरित्यादि** । शरीरेन्द्रियादावात्मत्वभ्रान्तिः ।

शरीरादिगुणाधानदोषापनयाभ्यामात्मनि तदुभयभ्रान्तिर्बोध्या । यद्यप्यात्मत्वादिभ्रान्तिर्वासनाहेतुस्तथापि कारण एव कार्योपचारादेतदुक्तमिति । **शब्दादीति ।** रूपरसगन्धस्पर्शवस्त्राभूषणधनकलत्रपुत्रादिकं सर्वं समीचीनं शरीरसंबन्धिगुणतया प्रसिद्धं तस्य वस्तुतः शरीरादावेव संपादनं भवत्यथापि भवति मतिरहं शास्त्री सुरूपः सुवचनो धनी सुपुत्र इति सा भ्रान्तिः । **गङ्गास्नानेत्यादि ।** शालग्रामतीर्थपदं तत्पूजनतत्सेवनपरम् । तान्यपि शरीरादिगतान्येवाहं गङ्गास्नायी शालग्रामपूजकस्तीर्थसेवीत्यादिमत्यात्मन्यारोपयतीति शास्त्रीयगुणभ्रान्तिर्द्रष्टव्या । शास्त्रीयत्वं च शास्त्रप्रसिद्धत्वेन । **अप्रामाणिकत्वादित्यादि ।** विषयस्याप्रामाणिकत्वादशक्यत्वादर्थादप्रामाणिकविषयकत्वादशक्यविषयकत्वादित्यर्थः । **भोगस्य** पुरुषार्थाभासत्वात्तदुपयोगित्वेऽपि मोक्षरूपपुरुषार्थानुपयोगित्वादित्यर्थः । सकलप्रवृत्तिहेतुत्वेन धर्माधर्मद्वारा तत्फलसंपादनहेतुजन्महेतुत्वेनेत्यर्थः । **कामक्रोधेति ।** कामक्रोधादीनां वासनात्वोक्तिश्च कार्यकारणयोरभेदोपचारादेव । तेन क्रोधादिवृत्तिविशेषस्य हेतुरित्यादिपूर्वग्रन्थस्य न विरोधः । **भुज्यमानत्वदशेति ।** विषयतया शब्दादिसाक्षात्काररूपो भोग एव तस्य संस्काराधायकत्वसंभवान्नासङ्गतिः । एवं काम्यमानत्वदशापि विषयतया कामनातद्धेतुरिष्टसाधनत्वबुद्धिर्वा कामनाद्वेषादेरप्युपलक्षिका । तेन क्रोधादिहेतुवासनानामपि संग्रहः । **अस्मिन् पक्ष इति ।** पूर्वश्लोकोक्तवासनाद्वयपक्ष इत्यर्थः । **अनयोरिति ।** बाह्याभ्यन्तरवासनयोरित्यर्थः । **निवर्तत इति ।** विषयसंपत्तेस्तन्निवर्तकत्वान्निवृत्तिश्चेयं सजातीयान्तरानुत्पत्तिः । **अशुक्लकृष्णमिति ।** योगजधर्मस्य ज्ञानोत्पत्तिप्रतिबन्धकापाकरणेन मोक्षसाधनत्वेन दुःखासंभिन्नसुखसाधनहिंसाद्यमिश्रितजपपूजादिशुक्लभिन्नत्वम् । दुःखासाधनत्वेन कृष्णभिन्नत्वं च बोध्यम् । **शुभाशुभमिति ।** हिंसादिसंभिन्नं ज्योतिष्टोमादिकम् । इदं सांख्यानुसारेण । मीमांसकमते क्रत्वङ्गहिंसाया अनर्थत्वाभावात् । **केनापीति ।** अन्यंप्रति कथनादिनेत्यर्थः ॥ ३२ ॥ **मधुसूदनेति ।** मधुप्रभृतिदैत्यादेर्वैदिकसंप्रदायोच्छेदकत्वेन तन्नाशकतया मधुसूदनशब्दात् वैदिकसंप्रदायप्रवर्तकत्वलाभः । अनेन मादृशजनाशक्यानुष्ठानस्याप्युत्तमयोगस्य वैदिकसंप्रदायसिद्धस्योक्तिः संप्रदायप्रवर्तकस्य तव नानुचितेति सूचितम् । अर्थान्तरसंक्रमितवाच्यस्य युष्मदः सर्वज्ञेनेश्वरेणेत्यर्थोक्त्या त्वयुक्तौ यद्यपि नास्त्येव बाधितार्थत्वानुष्ठानलक्षणाप्रामाण्यशङ्का सर्वज्ञस्य ते भ्रान्त्यसंभवादैश्वर्यशालित्वेनाशक्यार्थस्याप्यनुष्ठापकत्वसंभवात्तथापि स्वाशयाशुद्धेर्जातामसंभावितत्वबुद्धिमपनेतुं त्वदुक्तमाक्षिपामीति ध्वनितम् ॥ ३३ ॥ **विरोधिसद्भावाच्चेति ।** एतदेव विवृणोति—**प्रतिक्षणेत्यादिना** ॥ ३४—४३ ॥ **योगस्येति ।** यद्यपि जिज्ञासुरित्यस्योप्रत्ययान्तत्वेन 'नलोके'त्यादिनिषेधात् षष्ठी न युज्यते तथापि संबन्धसामान्ये तु भवत्येव सच कर्मत्वलक्षण एवेति स्फुटीकर्तुं विषयं ब्रह्मेति द्वितीयान्तेन तद्विवरणम् ॥ ४४—४७ ॥ इति श्रीमैथिलधर्मदत्तशर्मविरचिते गीतागूढार्थदीपिकालोके षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

**निविष्टमिति ।** मदेकाकारवृत्तिप्रवाहवदित्यर्थः । मुमुक्षुस्त्विति तुशब्दोऽन्याश्रितादन्यासक्तचेतसो वैलक्षण्यमेकाश्रितत्वमेकासक्तचित्तत्वं द्योतयितुम् ॥ १—३ ॥ **प्रकृतिशब्दसामानाधिकरण्येन स्वार्थहानेरावश्यकत्वादिति ।** प्रकृतिशब्दस्य तन्मात्राद्यष्टस्वेव रूढत्वात् तत्समानविभक्तिकभूम्यादिपदार्थस्य तदर्थाभेदेन प्रतीयमानत्वेन तदबाधाय स्वार्थत्यागस्यावश्यकत्वादित्यर्थः । सांख्यसिद्धान्त एवाष्टानां प्रकृतित्वेन प्रसिद्धत्वात्तन्मतेन प्रथमं व्याख्याय स्वमतेऽप्युक्तश्लोकार्थं सङ्गमयति—**इयमपरोक्षेत्यादिना** ॥ ४ ॥ **परार्थत्वादिति ।** परो जीवो भोक्ता तदर्थत्वात् साक्षात्परम्परया वा तद्भोगसंपादकत्वादित्यर्थः । नहि धारणं संबन्धं विनेत्यत आह—**अन्तरनुप्रविष्टतयेति ।** यदि जीवो नामान्तःकरणावच्छिन्नत्वेन परिच्छिन्नं चैतन्यं तदा तच्छरीर एवानुप्रविष्टं प्रमीयते न घटादिषु । यदि मायावच्छिन्नत्वेन व्यापकं चैतन्यं तदान्तर्बहिश्च तत्संबद्धस्य तस्य तत्रानुप्रवेशासंभव इति लक्षणया प्रत्यक्षेणाविभाव्यमानत्वे सति संबद्धोऽनुप्रविष्टपदार्थो वाच्यो भवति हि कस्यचिदन्तःप्रविष्टस्तस्मिन् प्रत्यक्षेण विभावितेऽप्यविभाव्यमान इति घटादिषु चैतन्यस्याविभावनाच्चैतन्यरूपाया जीवात्मकप्रकृतेर्जगदनुप्रविष्टत्वनिर्वाह इति भावः । मानं च तत्र धारणं तत्र च विशीर्यत्वमित्यभिप्रायेण हेतुगर्भविशेषणसहितं धार्यत इत्यस्य व्याख्यानमाह—**स्वतो विशीर्यमुत्तभ्यत इति ।** स्वतो जगदिदं विशरणयोग्यमपरमार्थसत् । यद्धि परमार्थसद्भवति न तत्कदाचिदपि विशीर्यते विनश्यतीति । इदमेवंभूतं जगदुत्तभ्यतेऽवस्थाप्यतेऽधोगतेर्विनाशात् सत्ताशून्यावस्थाया विपरीतयावस्थित्या स्वीयसत्तया योज्यतेऽधृतं हि केनचिन्निपतति निशीर्यते विनश्यति सत्ताहीनं भवतीति जगदिदं धार्यते । स्वीयसत्तया सत्संपाद्यत इत्यर्थः । विशीर्य उत्तभ्यत इति त्वपपाठः । समानकर्तृकत्वाभावेन क्त्वाप्रत्ययासंभवात् निष्प्रयोजनत्वाच्च तथोक्तेरिति ॥ ५ ॥ **क्षेत्रक्षेत्रज्ञलक्षणे ममोपाधिभूत इति ।** यद्यपि क्षेत्रज्ञं चैतन्यमुपहितं स्वात्मैव नोपाधिस्तथाप्युपाधिनिबन्धनत्वात्तद्व्यवहारस्योपाधिप्राधान्यादुपाधेः क्षेत्रज्ञपदार्थत्वाभिमानेनोपाधेस्तथात्व उपहितस्यापि तथात्वाभिमानेन वा तथोक्तिरिति ॥ ६ ॥ **मयि प्रोतं ग्रथितमिति ।** एकस्मिन्ननुगततया भासमाने सति कारणरूपे जगदिदमनेकतया प्रथमानं संबद्धतया व्यवस्थितमित्यर्थः । **चैतन्यग्रथितत्व-**

**मात्र इति**। मत्रिशब्देन सूत्रमण्योः सज्जगतोर्दृष्टान्तदार्ष्टान्तिकत्वव्यवच्छेदः। सूत्रमण्योः समानसत्त्वात् सज्जगतोश्च विषमसत्त्वादिति भावः। 'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इति शारीरकतृतीयाध्यायस्थपूर्वपक्षसूत्रम्। तदर्थश्च अतो ब्रह्मणः परमस्ति सेतुव्यपदेशादुन्मानव्यपदेशात्संबन्धव्यपदेशाद्भेदव्यपदेशाच्च सेतुव्यपदेश 'एष सेतुर्विधरणः, सेतुं तीर्त्वे'त्यादि। उन्मानव्यपदेशः 'चतुष्पादष्टाशफ' इत्यादि। संबन्धव्यपदेशः 'एष संपरिष्वक्त' इत्यादि। भेदव्यपदेशो 'य एषोऽन्तरक्षिणि पुरुष' इत्यादि। समाधानं चास्य सर्वस्य जगतो जन्मलयादेर्ब्रह्मणः सिद्धान्तितत्वात्' 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति न्यायेन कारणसत्त्वातिरेकेण कार्यसत्त्वाभावेनानन्यत्वस्य कारणात्कार्यस्य सिद्धान्तितत्वादुक्तसर्वव्यपदेशस्यौपाधिककल्पितभेदेनाप्युपपत्तिरिति नास्ति ब्रह्मणः परमिति कृतमस्ति। तत्र तदनेन श्लोकेनापि भगवता कृतमित्यभिप्रायेण कस्यचिद्व्याख्यानं तदाह—उत्तरत्वेन श्लोकमिमं व्याचक्षत इत्यादि॥ ७॥ **आध्यानायेति**। चिन्तनाय नतु वस्तुत्वेन ज्ञानाय रसतन्मात्रादीनां तस्मिन्सद्रूपे कल्पितत्वेनापारमार्थिकतया वस्तुतस्तद्रूपत्वाभावात् तदतिरेकेण सत्ताऽभावेनैव तदनन्यतया रसादीनां तस्य रसाद्यात्मकत्वोक्तेरित्यर्थः। **अभिनिवेष्टव्यमिति**। गृहीतप्रामाण्यतया सुदृढतत्त्वमतिर्न कार्येत्यर्थः॥ ८॥ शब्दादीनां पुण्यापुण्यभेदेनानेकविधत्वात्कथं सामान्यात्मकत्वमित्यत आह—**शब्दस्पर्शेति**। **पुण्यत्वमविकृतत्वमिति**। सुखसाधनत्वमित्यर्थः। तथाच शब्दादीनां स्वतः पुण्यैकमात्ररूपत्वान्न सामान्यत्वव्याघात इति भावः। **तेषामपुण्यत्वमिति**। अधर्मरूपसहकारिविशेषात्त एव शब्दादयो दुःखसाधनविकृतावस्थामापद्यन्ते यथा मधुराण्येव दुग्धान्यम्लसंयोगाद्विजातीयरसवद्दध्यवस्थामिति तेषामपुण्यत्वं न स्वाभाविकमपि त्ववस्थोपाधिकमिति तादृशभेदेऽपि न सामान्यत्वहानिः। एतेन शब्दादीनामवान्तरविशेषा अप्यनुभूयमाना अवस्थौपाधिका एव न स्वाभाविका इति व्याख्याताः। शुक्लमेव स्वाभाविकं रूपं सहकारिविशेषान्नीलपीताद्यात्मतां प्रतिपद्यते। यथा शुक्लं चूर्णस्य रूपं हरिद्रायोगे रक्तत्वम्। यथावा हरितालादिपीतं नील्यादिसंबन्धाद्धरितत्वम्। नच शुक्लमित्येव कुतोऽवधार्यत इति वाच्यम्। रूपतन्मात्राया-स्तेजोरूपं हि कार्यं शुक्लमेवेति पृथिव्यादौ तेजःसंसर्गात्सहकारिवैचित्र्याद्विचित्रावस्थं तदेव हि जायते। एवं रसो मधुर एवापां कारणत्वात् स्पर्शोऽनुष्णाशीत एव वायुकारणत्वाद्रूपवदेव सहकारिवैचित्र्याद्विजातीयावस्थः सन् भूतान्तरेषूपलभ्यते। नच वायौ पुण्य इत्यादिग्रन्थे शीतस्पर्श इति दृश्यते ततो विरोध इति वाच्यम्। शीतशब्दस्यानुकूलवेदनीयपरत्वात्तत्र तस्य बहुधा प्रयोगात्। वायौ शैत्यस्यौष्ण्यवदौपाधिकत्वनिर्णयात्। जलसंबन्धोत्कर्षेण तत्र शैत्योत्कर्षानुभवाच्च। यद्वा शीतेति प्रामादिकम्॥ ९॥ १०॥ **प्राप्तिकारणाभावेऽपीति**। वृत्तिविशेषस्य विशेषणम्। तथाच प्राप्तिकारणाभावकालीनो वृत्तिविशेष इति लभ्यते। विषयविशेषणत्वे तु प्राप्तिकारणाभावे सति या प्राप्तिस्तद्विषयत्वं लभ्येत तस्यासंभव एव। कस्य हि सचेतसः कारणाभावे कार्यं जायतामिति हि भवतीच्छा। एवं क्षयकारणे सत्यपीत्यत्रापि बोध्यम्। **तुशब्दार्थ इति**। तुशब्दस्यार्थोऽर्थो यस्य सः तुशब्दार्थो वैलक्षण्यम्। कामरागसहितात् ध्येयत्वलक्षणम्। तथासति यत्पर्यवसितं तदाह—**कामरागवर्जितमेवेत्यादि**। **भिन्नक्रम इति**। बलवतामित्यनन्तरं प्रयुक्तो विवर्जितमित्यनन्तरत्वेन ग्राह्य इत्यर्थः॥ ११॥ १२॥ **जगत इति**। सर्वजीवस्येत्यर्थः॥ १३॥ **एषा साक्षिप्रत्यक्षत्वेनापलापानर्हेति**। अविद्यास्वरूपलक्षणप्रमाणादिभिस्तृतीयाध्यायसप्तविंशतिश्लोकव्याख्याने सविस्तरं निरूपितेति नेह तत्र किंचिदुच्यत इति॥ **नैवात्मन इति**। निजलाभपूर्णः परिपूर्णाखिलकामो यमीश्वरोऽविदुषो जनान्तस्तत्सकाशादात्मनो मानं पूजां न वृणीते। यद्यन्मानं विदधीत भगवते भगवन्तमनुकूलयितुं तदात्मन आत्मानं परं सुखयितुं विधत्त इत्यर्थः। दृष्टान्तं विवृणोति—**दर्पणेत्यादिना**॥ १४—२५॥ **स्वयं प्रतिबद्धज्ञानत्वादिति**। परेषां प्रतिबद्धं ज्ञानं येन तत्त्वादित्यर्थः। यद्वा प्रतिबद्धं ज्ञानं यस्य तत्त्वात्। षष्ठी तु विषयत्वलक्षणसंबन्धबोधिका। तथा च मायया यद्विषयकं ज्ञानं लोकानां प्रतिबद्धं तत्त्वादिति पर्यवसितार्थः॥ २६॥ **बहिर्विषयमपि ज्ञानमिति**। यथार्थज्ञानमित्यर्थः। तेन रागद्वेषप्रयुक्तस्य ज्ञानदर्शनेऽपि नासङ्गतिः॥ २७॥ २८॥ तदित्यस्य विवरणं तत्पदलक्ष्यमिति॥ २९॥ लक्षणया ज्ञेयं शुद्धं ब्रह्म मुख्यया शक्त्या ध्येयमुपाधिपरिच्छिन्नमित्यन्वयः॥ ३०॥ इति श्रीमैथिलधर्मदत्तशर्मणा विरचिते गीतागूढार्थदीपिकालोके सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः।

**श्लोकाभ्यामिति**। पृच्छतीति शेषः। **कर्माणीति**। वचनविपरिणामेन यज्ञमित्यस्यात्राप्यन्वयः। तथाच यज्ञस्य द्वैविध्यमुपपद्यते। हे पुरुषेतिसंबोधनेनेत्यन्वयः। शङ्कामपनुदन् न किंचिदज्ञेयमिति सूचयतीत्यन्वयश्च द्रष्टव्यः। **कार्यमिति**। वर्तते तदिति शेषः॥ १॥ २॥ **एवमिति**। कथितप्रकारेणेत्यर्थः। **श्लोकैरिति**। क्रियत इति शेषः। **अनायासेनेति**। व्युत्क्रमेण निर्णये क्रियमाणे कथं मज्जिज्ञासाक्रमानुरोधिप्रश्नक्रममुल्लङ्घ्य निर्णयः क्रियत इति प्रश्नक्रमत्यागकारणजिज्ञासया चित्तवैयग्र्येण निर्णयार्थोक्तवाक्यसम्यगर्थावधारणासंभवात् स्वत उत्तरयितुर्वोक्तत्यागकारणनिर्णयनिमित्ताया-

सेनाभीष्टस्य निर्णयस्य सिद्धिः स्यात् । क्रमेण निर्णये क्रियमाण उक्तायासाभावादनायासेन सिद्धिरिति भावः । **प्रश्नत्रयमिति** । प्रश्नविषयत्रयमित्यर्थः । **द्वितीयेति** । उत्तरत्रयघटकद्वितीयेत्यर्थः । एवं तृतीयेत्यत्रापि बोध्यम् । ननु सोपाधिकमितीत्यस्योत्तरमित्यनेनान्वयः । व्याप्त्यर्थकस्याश औणादिकप्रत्ययेऽक्षरमिति वा सिध्यति, तदनुसारेण सर्वव्यापकमित्यक्षरशब्दार्थमाह—**अश्नुत इत्यादिना** । सोपाधिकस्य कालदेशाभ्यां परिच्छिन्नत्वेनाक्षरत्वासंभवादिति निरुपाधिकमेव ज्ञेयम् । ब्रह्मग्राह्यमक्षरत्वात् तादृशब्रह्मज्ञानस्यैवाक्षयफलत्वादिति भावः । सर्वव्यापकमित्यनन्तरं तथाचेति शेषः । अक्षरत्वादित्यत्र निरुपाधीत्यादि ननु सोपाधिकमित्यन्तमनुषञ्जनीयमेवं चाक्षरत्वादित्यस्य नासंबद्धत्वम् । अक्षरत्वादित्यधिकमेव वा । ब्रह्मपदार्थोऽक्षरमविनाशी निरुपाधिरेव न, कुतः प्रणवादि ग्राह्यमित्यत आह—**एतद्वै तदक्षरमित्यादि** । **अक्षरमम्बरान्तधृतेरितिन्यायादिति** । एतद्वै तदक्षरमित्यादिश्रुतावक्षरशब्दार्थो ब्रह्मैव आकाशान्तकृत्स्नप्रपञ्चधृतेर्ब्रह्मलिङ्गात्तस्यैव तत्र श्रवणादिति प्रथमाध्यायतृतीयपादस्थतत्सूत्रार्थः । **नत्विहेति** । ग्राह्यमिति परेणान्वयः । **न्यायमूलकेनेति** । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इत्यत्राधिकरणे पूर्वपूर्वापेक्षया परस्य परस्य दौर्बल्यं पूर्वपूर्वस्य च प्राबल्यं व्यवस्थापितम् । हेतुश्च तत्र दौर्बल्ये ज्ञापनीयेनार्थेन विप्रकर्षः स्वकार्य इतरापेक्षत्वलक्षणसंनिधिश्च प्राबल्य इतरापेक्षत्वलक्षणः । ययोः प्राबल्यदौर्बल्ये विचार्येते तयोरेकस्मादेकस्येतरत्वं विवक्षितम् । यथा श्रुतिलिङ्गयोः श्रुतिः स्वकार्ये न लिङ्गसापेक्षेति सा ततो बलवती । लिङ्गं च श्रुतिसापेक्षमिति तत्ततो दुर्बलमिति । एतस्यापि शीघ्रप्रवृत्तेन कार्यसंपत्तावन्यस्यानपेक्षितत्वे दौर्बल्यबीजे भवति पर्यवसानं तदेव च बीजं रूढेर्योगात्प्राबल्येऽपीति रूढिर्योगमपहरतीति न्यायस्य श्रुतिलिङ्गाधिकरणन्यायमूलत्वं भवति । तथाहि कस्यचिदर्थस्य प्रतिपत्तये शब्दः प्रयुज्यते नचानपेक्षेण शब्देनार्थप्रतिपत्तिरिति स तत्र वृत्तिज्ञानमपेक्षते । यावद्धि योगेनावयवशक्त्यात्मकेन विलम्बितप्रवृत्तेनार्थप्रतिपत्तिः संपाद्येत ततः प्रागेव शीघ्रप्रवृत्तया समुदायशक्त्यात्मिकया रूढ्यार्थप्रतिपत्तिरूपकार्यसंपत्तेः कार्यत्वात्कृतकृत्येन शब्देन योगस्यानपेक्षितत्वमिति योगस्य दौर्बल्यम् । रूढिर्ह्युपस्थिता न कंचनापरमपेक्षत इति शीघ्रप्रवृत्तोच्यते । योगो ह्यवयवशक्तिः साचोपस्थितापि नैकोपेक्षितार्थप्रतिपत्तौ भवति समर्थैत्यपरावयवशक्तिवाक्यवत्परस्परान्वयप्रयोजकानुपूर्वीं तत्तात्पर्यज्ञानं चापेक्षमाणा तत्संपत्तिविलम्बेन विलम्बितप्रवृत्तोच्यत इति । एवं च रूढिर्योगमपहरतीत्यस्य कार्यदेशादपनयति कार्याक्षमं करोतीत्यर्थस्तस्य योगार्थमात्रगोचरबुद्धौ रूढिज्ञानस्य प्रतिबन्धकत्वे पर्यवसानमिति भावः । **तत्रेति** । प्रणव इत्यर्थः । **उक्तलिङ्गेति** । प्रशासितृत्वविधारकत्वादिलिङ्गेत्यर्थः । **परेणेति** । ओमित्याद्यग्रिमग्रन्थेनेत्यर्थः । विशेषणाद्ब्रह्मपदेन परमात्मनि रूढेन वर्णात्मकस्याक्षरस्य व्यावर्तनादित्यर्थः । **आनर्थक्यप्रतिहतानामिति** । येषु प्रबलेष्वप्यभ्युपगम्यमानेषु सार्थकतया निश्चितस्य कस्यचिदानर्थक्यं प्रसज्यते तेन प्रसक्तेनानर्थक्येन प्रतिहतानां कार्याक्षमभावं नीतानां बलवत्तया गृहीतानामपि बलाबलं विपरीतं भवति । तेषां प्रबलानामेव दौर्बल्यं दुर्बलानामेव कस्यचिदानर्थक्याप्रसंजकानां प्राबल्यमित्यर्थः । तथा चोक्तलिङ्गानां वर्णेष्वसंभवादानर्थक्येन योगाद्रूढेरेव दुर्बलत्वमिति भावः । **विशेष इति** । रूढ्यर्थे तस्मिञ्जातिविशेषेऽभ्युपगम्यमानेऽपि नास्त्यसंभवेन कस्यचिद्वैयर्थ्यमिति रूढेर्बलवत्त्वानपायाद्योगेन न रथकारशब्देन त्रैवर्णिकपरिग्रहः । नच विद्याभावेनाधानस्यासंभवः शङ्क्यः । विधेयस्य तस्यापूर्वत्वेन बलवत्या रूढ्या जातिविशेषे त्रैवर्णिकातिरिक्ते परिगृहीते विधिनैव स्वोपपादकविद्यासहितस्याधानस्य प्रापितत्वेन तदसंभवाभावात् । प्रशासितृत्वादेरविधेयत्वाच्चेतनमात्रधर्मस्य तस्य कथमप्यचेतने वर्णे प्रापयितुमशक्यत्वाच्चासंभवस्य दुर्वारत्वात्ततोऽत्र विशेष इति भावः । **आकाशस्तल्लिङ्गादिति** । 'अस्य लोकस्य का गतिरित्याकाश इति होवाचे'ति श्रुतौ भूतविशेषे रूढस्याप्याकाशशब्दस्य गौण्या वृत्त्या समन्तात्काशत इति योगाद्ब्रह्मैवाभिधेयम् 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त' इत्यादेरनन्यथासिद्धाद्ब्रह्मणो लिङ्गात्तादृशलिङ्गस्य दर्शनादिति सूत्रार्थः । आर्शआद्यचि आज्यादिपदघटितस्तोत्र आज्यादिपदानां योगसंभवादिदमुक्तम् । **प्रसिद्धेश्चेति** । शारीरकप्रथमाध्यायतृतीयपादसूत्रम् 'दहरोऽस्मिन्नन्तराकाश'इत्यत्राकाशः परमेश्वर एव । 'आकाशो ह वै नामरूपयोर्निर्वहिते' त्यादौ परमेश्वर एवाकाशशब्दप्रसिद्धेरिति तदर्थः । प्रसिद्धिरत्यन्तनिरूढावृत्तिर्लक्षणेति भामतीकृतः । योगोऽपीत्यत्र योगशब्दस्तत्सदृशीं निरूढलक्षणामपि गृह्णातीति योगः संभवतीत्यत्रापि निरूढलक्षणोपग्रहः कार्योऽन्यथा न्यूनत्वापत्तेः । तत्परिग्रह एव प्रमाणोपदर्शनं तथाचेत्यादिना विहितम् । यद्वा समन्तात्सर्वतो व्यापकतया प्रकाशमानत्वस्य योगार्थस्य परिच्छिन्नजीवातिरिक्ते परमेश्वर एव संभवेन तत्रैवाकाशशब्दप्रसिद्धेः स एव दहराकाश इति सूत्रार्थः । आकाशशब्दस्य ब्रह्मणि योगसद्भाव एव । तथाचेत्यादिना प्रमाणोपदर्शनम् । एवंच योगः संभवतीति चेदिति पूर्वपक्षे स एव गृह्यतामिति योगपरिग्रहेऽङ्गीकृते तथाचेतिग्रन्थेन तत्रैव प्रमाणोपदर्शनमुचितं तच्च न कृतम् । प्रसिद्धेश्चेति सूत्रस्य प्रसिद्धिशब्दस्य ब्रह्मणि श्रुत्यन्तरेष्वनन्यथासिद्धलिङ्गेनाकाशशब्दस्य व्यवस्थापनेन श्रुतिषु तत्र तस्य प्रसिद्धिपरत्वात्तत्राधिकरण आकाशशब्दस्य योगाप्रदर्शनादिति शङ्का निरस्ता । अथवा तथाचेत्यादिप्रमाणप्रदर्शनमपि श्रुतेर्बाधेन वृत्त्यन्तपरिग्रह एवाभिहितमिति । **निषादस्थपत्यधिकरणेति** । अनयैव ऋचा निषादस्थपतिं याजयेदित्यत्र निषादानां स्थपतिरिति षष्ठीतत्पुरुषपरिग्रहे विद्यावतस्त्रैवर्णिकस्य लाभान्नापूर्वविद्याप्रयुक्तिकल्पनप्रसक्तिरिति पूर्वपक्षयित्वा नामार्थयोर्भेदान्वयस्याव्युत्प-

न्नतया निषादपदस्य निषादसंबन्धिनि लक्षणाया आवश्यकत्वं तत्पुरुषपक्ष इति लक्षणाग्रहतज्जन्योपस्थितिसापेक्षतया विलम्बितप्रवृत्तेन तत्पुरुषेण यावत्त्रैवर्णिकस्य बोधः स्यात्तावच्छीघ्रप्रवृत्तेन कर्मधारयेण तावदुपस्थित्यनपेक्षाकृतलाघवेन बलवता निषादाभिन्नस्थपतिरेव बोधितः स्यात्तस्य च परित्यागकारणाभावादपूर्वबोधकेन विधिना तस्यैव स्वोपपादकाध्ययनपरिगृहीतर्कूकरणकयागस्य विधानं भवति न्याय्यमिति निषादस्थपत्यधिकरणं तेन सिद्धत्वादित्यर्थ इति ॥ ३ ॥ **प्राणिजातमधिकृत्येति** । भोक्तृत्वेन स्वनिमित्तीकृत्यार्थात्प्राणिनां भोगोपपत्त्यर्थमित्यर्थः । हिरण्यगर्भस्य पुरुषशब्दार्थत्वे मानमाह—**आत्मैवेदमग्रेत्यादि** । **औषदिति** । उषदाह इत्यस्य रूपम् । पुरिति पूर्ववचनः । ओषतीत्युष उभयोः कर्मधारये पुरुष इति निष्पद्यते तत्र पूर्वत्वस्यावध्यपेक्षायामस्मात्सर्वस्मादिति दाहस्य कर्मापेक्षायां सर्वान् पाप्मन इति । **अग्न्यादीनधिकृत्येति** । तेष्वधिकारं स्वाम्यं विधायेत्यर्थः । **अनुगृह्णातीति** । प्रकाशाद्यात्मकैरग्न्यादिभिः स्वरूपसंपादनं सहकारिसंपादानं चानुग्रहः । भूतान्येव हि सात्त्विकांशेन ज्ञानेन्द्रियतया राजसांशेन कर्मेन्द्रियतया परिणमन्ते । आलोकरूपरसादिविशेषैरात्मीयैः सहकारी भवन्ति च येषु रूपरसादिषु नष्टेष्वविकलेष्वपीन्द्रियगोलकेषु नचाक्षुषरासनादिः । कथमिति प्रश्नः । व्याख्यातमित्युत्तरम् । प्रागिति शेषः । **विष्णुरूपत्वादिति** । व्यापकस्वरूपत्वादित्यर्थः । वर्तत इत्यत्रायं हेतुः । देहे यज्ञावस्थाने श्रुतिप्रसिद्धं हेत्वन्तरमाह—**यज्ञस्य मनुष्यदेहेति** । यदेनं यज्ञं पुरुषस्तनुते तेन यज्ञनिष्पादकत्वेन यज्ञः पुरुष उच्यत इत्यन्वयः । नहि पुरि शरीरे शेते वर्तत इति पुरुषो देहाधिपतिर्देहनिष्ठो देहव्यापारं विना यज्ञनिर्वर्तक इति पुरुषे यज्ञनिर्वर्तकत्वस्यैव देहेऽपि यज्ञनिर्वर्तकत्वपर्यवसायित्वादस्याः श्रुतेस्तत्र मानतयोपन्यासो नासङ्गतः । वस्तुतः पुरुषस्य यज्ञनिर्वर्तकत्वेन यज्ञत्वाद्देहे च पुरुषस्य सत्त्वादेव देहे यज्ञावस्थानेऽस्याः श्रुतेरुपन्यासो युक्तः ॥ ४ ॥ **त्यक्त्वा प्रयातीत्यन्वयः** । इति लोकदृष्ट्याभिप्रायमित्यपरोऽन्वयः । इतीति प्रयासीति परामृशति ॥ ५—८ ॥ **फलमत उपपत्तेरिति** । तृतीयाध्यायद्वितीयपादसूत्रम् । कर्मणः फलमतः परमेश्वराद्भवति उपपत्तेः । नह्याशुविनाशिनः कर्मणः कालान्तरभावि फलमुपपद्यते । नवा स्वयमचेतनाच्चेतनानधिष्ठितात्तज्जनितधर्मादधर्माद्वा तत् दृष्टानुसारिणी हि कल्पना भवति । दृष्टं हि मृद्दण्डादिभिः कुम्भकाराद्यधिष्ठितैरेव कुम्भादिजननम् ग्रावेष्टकाकाष्ठादिभिः शिल्प्यधिष्ठितैरेव प्रासादाद्युपजननम् । नच स्वरूपविनियोगादिविशेषविज्ञानशून्यस्य जीवस्य तदधिष्ठातृत्वं संभवति । तस्मादीश्वराधिष्ठिताद्धर्मादितः फलमिति युक्तं कल्पयितुम् । एवमिदमपि दृष्टम् । लौकिकोऽपीश्वरः सम्यगाराधितः प्रसन्नः प्रसादानुरूपमाराधकायापकृतश्च कुपितः कोपानुरूपमपकारिणे फलं प्रयच्छति । नच तदनपेक्षात्तस्मात्कर्मण एव किमपीति तथैवेहापि भवितव्यम् । साधुकर्मणा प्रसन्नोऽसाधुकर्मणा कुपितोऽलौकिकः कश्चित्परमेश्वरस्तत्तत्कर्मकर्त्रेऽलौकिकमिष्टमनिष्टं वा प्रसादानुरूपमप्रसादानुरूपं वा प्रयच्छति न कमपीश्वरमनपेक्ष्यैव कर्मणस्तद्व्यापाराद्वा किमपीति । तस्मादुपपत्तेः सिद्धं परमेश्वरादेव फलमिति तत्सूत्रार्थः ॥ ९—११ ॥ **इन्द्रियद्वाराणीति** । इन्द्रियरूपाणि द्वाराणि विषयोपलब्धाविति शेषः ॥ १२ ॥ **तीव्रसंवेगानामिति** । तीव्रवैराग्यानामित्यर्थः । **भावनमिति** । इति सूत्राभ्यां व्याख्यातमित्यन्वयः । ईश्वरवाचकप्रणवाभ्यासः प्रणवार्थेश्वरानुचिन्तनं च चक्रवदावर्तमानमीश्वरप्रणिधानमित्यर्थः । तथाचोक्तं योगभाष्ये 'स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत् । स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते'इति । इतिचेत्यन्तेनेश्वरप्रणिधानाद्वेत्यस्यैवार्थकथनमतो न पौनरुक्त्यं नवा समाधीत्यादिसूत्राभावेन चासङ्गतिः । **तत इति** । 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्नि'त्यनेनोक्ताद्योगसूत्रोक्तोक्तलक्षणेश्वरप्रणिधानादित्यर्थः । योगसूत्रे तु ततः समाधिलाभस्तस्मात्परमगतिरुक्तेत्युक्तवचनस्य योगसूत्रेण विरोधः प्राप्तस्तं परिहरति—**तस्मादिति** । **इति व्याख्येयमिति** । तथा व्याख्याने चोक्तप्रणिधानात्समाधिर्योगतस्ततः परमगतिरित्यस्य लाभान्न सूत्रेण विरोधः । ईश्वरप्रणिधानेन स्वात्मगोचराज्ञानस्य संसारहेतोर्विना स्वात्मगोचरमुत्तमयोगं निवृत्त्य योगेन साक्षान्मोक्षहेतुत्वायोगादीश्वरप्रणिधानेन योगान्तरायोन्मूलनद्वारा योगस्यैव संपादनीयत्वादीश्वरप्रणिधानानन्तर्यस्य योगनिष्ठस्यार्थक्रमत्वात् । तेन पाठक्रमाद्बलवता पाठक्रमबाधो हि युज्यत एव । एतेन सूत्रस्योक्तवाक्यात्प्रबलप्रमाणत्वाभावेन सूत्रानुरोधेनैतद्वाक्यार्थकरणं नोचितमिति निरस्तम् । सूत्रस्य पञ्चमीश्रुत्या साक्षात्क्रमबोधकस्य स्मरन्परमां गतिं यातीत्यत उद्देश्यतावच्छेदकविधेययोरसति बाधके प्रयोज्यप्रयोजकभावव्युत्पत्त्या व्यवधानेन क्रमबोधकात्प्राबल्याच्च निरतिशयशक्तिमद्वीश्वरप्रणिधानमुत्कर्षकाष्ठामुपगतं मणिमन्त्रन्यायेनाविद्याविरोधिभवत्तामुन्मूलयत् विनापि योगं मोक्षहेतुरतादृशं च योगान्तरायमात्रोन्मूलनक्षमतामुपगतं, योगसंपादनेन मोक्षहेतुरितीश्वरप्रणिधानस्य तस्य मोक्षयोगरूपविजातीयफलद्वयकत्वस्योपपत्तेर्वा सूत्रविरोधपरिहारसंभवादुक्तरीत्या न व्याख्येयमित्यभिप्रेत्याह—**विचित्रेति** ॥ १३—१५ ॥ अभिविधिरभिव्याप्तिः । ब्रह्मलोकं प्राप्तानामप्यपुनरावृत्तिश्रवणादाब्रह्मेत्यादीनामसङ्गतिरित्यतआह—**अत्रेयं व्यवस्थेति** । **अतत्क्रतवोऽपीति** । तदुपासनं क्रतुर्येषां ते तत्क्रतवो न तत्क्रतवोऽतत्क्रतव इत्यर्थः । **अनावृत्तिः शब्दादिति** । ब्रह्मोपासकानां ब्रह्मलोकं गतानां न ततः पुनरावृत्तिः कार्यं ब्रह्मणि मुक्ते मुक्तिः । 'न स पुनरावर्तत' इति श्रुतेरिति सूत्रार्थः । **इतरत्रेति** । श्रुत्यन्तर इत्यर्थः । इहेति चेममिति च ब्रह्मलोकगत्यधिकरणकल्पपरं । तथाच यस्मिन् कल्पे ब्रह्मलोकं गतास्तस्मिन्कल्पे न पुनरावृत्तिरिति श्रुत्यर्थस्तत्र कल्पान्तरेऽपि पुनरावृत्त्यभावेऽपि व्यावर्त्याभावादिहेती-

ममिति च व्यर्थं विशेषणं स्यादतः कल्पान्तरे पुनरावृत्तिर्लभ्यत इति आब्रह्मेत्यादेर्नासङ्गतिः । वैष्णवं धाम गतानां तु कथंचिदपि न पुनरावृत्तिरिति ब्रह्मलोकादप्युत्कर्षश्च सिद्ध इति भावः ॥ १६ ॥ युगानीत्यस्य विवरणं चतुर्युगानीति ॥ १७—१८ ॥ **समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्चेति** । प्रथमाध्यायतृतीयपादस्थमिदं सूत्रम् । देवादीनां विग्रहवत्त्वे स्थितेऽनित्यविग्रहवच्चैत्राद्यर्थैश्चैत्रादिशब्दानामिव वेदस्थेन्द्रादिशब्दानामपि विग्रहवदनित्येन्द्रादिदेवतार्थैरपि पौरुषेयोऽनित्यः संबन्धः स्यात्तत्तश्च नित्यशब्दार्थसंबन्धव्यवस्थापनेनानपेक्षत्वाद्वेदस्य व्यवस्थापितं यत्प्रामाण्यं तस्य विरोध इत्याशङ्कायां 'शब्द इतिचेन्ने'ति सूत्रेण सव्याख्यानेन गवादिशब्दानां यथा नित्यैर्गवाद्याकृतिभिरेव नित्य एव तथेन्द्रादिशब्दानामपि नित्यैरेवेन्द्राद्याकृतिभिर्नित्य एव संबन्धो न चैत्रादिशब्दवदनित्यैकव्यक्तिभिरनित्यः संबन्धो गवादिव्यक्तीनामिवेन्द्रादिव्यक्तीनामप्यानन्त्याद्व्यभिचाराच्च शक्तिलक्षणसंबन्धस्य वक्तुमशक्यत्वात्तथाचानपेक्षत्वस्य सूपपादत्वेन न विरोधः । प्रामाण्यस्येत्येवं निराकृतायाम् । प्रलये निरन्वयं ध्वस्ते जगति देवादीनामपि विनाशे सर्गान्तरे देवान्तरस्य संज्ञान्तरविशिष्टस्योद्भवादिन्द्रादिशब्दानामिन्द्राद्येकाकृतिविरहेण नित्यव्यक्तिभिरनित्य एव संबन्धो भवितुमर्हतीति न प्रागुक्तं युक्तमित्याशङ्कायाः पुनरुद्भूताया निराकरणं समानेत्यादिसूत्रेण कृतम् । तथाहि अनादौ संसारे प्रतायमाने यथा सुप्तोत्थितानां पूर्ववदेव तैस्तैरर्थैः शब्दैश्च ते एव व्यवहारा न विसदृशास्तथा प्रलयेऽपि सर्वेऽर्थाः शब्दाश्च प्राण्यदृष्टान्तःकरणसहिताः स्वकारणे मायावति परमेश्वरे प्रलीय सूक्ष्मरूपेणावस्थिता भोगानुकूले ह्यदृष्टे पुनर्विपाकाभिमुखे सति पूर्वसर्गीयाकृतिसंज्ञादिविशिष्टा एव प्रादुर्भवन्ति सर्वे व्यवहार्यव्यवहारा न विसदृशाः विसदृशत्वे तत्तज्जात्यनुगुणवासनोद्बोधनियमिततत्तज्जात्युचितभोगदुरवस्था स्यात् सर्वस्य पूर्वानुभूतविसदृशत्वादुद्बोधस्याकिंचित्करत्वापातात् । तस्मात्तादृशाकृतिसंज्ञादिविशिष्टादेव मनुष्यपशुपक्ष्यादयश्चक्षुरादयः प्रतिनियता भोग्यागोचराश्च सुखदुःखसाधनभूता घटपटादयोऽन्नादयो वृक्षलतोपलादयः प्राक् सर्गे तादृशाकृतिसंज्ञादिविशिष्टा एवोत्तरसर्गेऽपि प्रादुर्भवन्ति । दृष्टवैलक्षण्येन कल्पनायां मानाभावादित्याकृतेरेकत्वाद्देवतादीनामेकयैकया तया तत्तत्संज्ञानं नित्यः संबन्धः संभवतीत्यविरोधः । ईश्वरानुग्रहाच्चाधिकारिकाणां हिरण्यगर्भेन्द्रादिदेवतामनुसप्तर्ष्यादीनामितरप्राणिनः प्रज्ञैश्वर्यादिवैलक्षण्येन पूर्वकल्पव्यवहारवेदादिप्रतिभानात्पूर्ववदेवाखिलव्यवहारप्रवर्तकत्वम् । भवन्ति चात्र श्रुतयः 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा'इत्यादि 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इत्यादिकाः । स्मृतयश्च 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ यथाभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह । देवादेवैरतीतैर्हि रूपैर्नामभिरेव चे'त्यादिकाः । एवंचेन्द्रादीनां समाननामरूपत्वादेकाकृत्येकसंज्ञावत्त्वाच्च पुनरावृत्तावपि सर्वप्रलयोत्तरं सर्गेऽपि निरुक्ताद्धेतोरविरोधः संबन्धनित्यत्वे विरोधस्यासंभवः । समाननामरूपत्वे हेतुः दर्शनाच्छ्रुतेस्स्मृतेश्चेत्युक्तसूत्रार्थ इति ॥ १९—२२ ॥ **गतिसृतिशब्दयोरिति** । अनन्तरश्लोकस्थयोरिति । कालस्यातद्रूपत्वादित्यपि च शेषः । अभावादिति प्रातःकालेऽग्निहोत्रे सूर्यस्य देवत्वात् । तथाचाग्निहोत्रकर्मणोऽग्नितदन्यदेवताकस्य यथादेवतैकदेशेनाग्निना संबन्धादग्नये होत्रमिति व्युत्पत्त्याग्निहोत्रशब्देन ग्रहणम् । तथा मार्गस्य कालतदन्याभिमानिदेवताकस्याप्येकदेशेनापि कालेन कालोऽस्यास्तीत्यर्शआद्यचि निष्पन्नकालशब्देन ग्रहणमित्यर्थः ॥ २३ ॥ **आतिवाहिकास्तल्लिङ्गादिति** । चतुर्थाध्यायतृतीयपादे सूत्रमिदम् । अर्चिरादिशब्दाः किं देवयानमार्गचिह्नप्रतिपादकाः । यथा लोके ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते गच्छेतस्त्वममुङ्गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्राममिति तथैव देवयानेन प्रस्थितस्य मार्गचिह्नप्रतिपादनं तेऽर्चिरभिसंभवन्तीत्यादिकमुत देवयानेन पथा गच्छतो मार्गे भोगभूमीनां प्रतिपादकास्ते ते शब्दा यथा दूरं प्रस्थितस्य लोकेऽपि भवन्ति तानि तानि विश्रामस्थानान्यथवातिवाहकानां स्थानात्स्थानान्तरमसुगमं नेतॄणां प्रतिपादकास्ते शब्दा यथा लोकेऽप्यज्ञातसंकटवर्त्मना प्रस्थितस्य तत्तत्स्थानप्रापका मार्गाभिज्ञा भवन्ति पुरुषा इति संशये सिद्धान्तप्रतिपादकम् । अर्चिरादिशब्दप्रतिपाद्या अर्चिराद्यभिमानिन्यश्चेतनाः स्थानान्तरप्रापणलक्षणातिवहनयोग्या देवता भवन्ति न मार्गचिह्नानि । यतस्तानि पर्वतवृक्षनद्यादीन्यवस्थितानि स्थिराणि मार्गमुपलक्षयितुं समर्थानि भवन्त्यर्चिरहःप्रभृतीन्यस्थिराणीति लक्षयितुमसमर्थानि । प्रेता हि शान्तेऽप्यर्चिषि रात्रावपि कृष्णेऽपि पक्षे दक्षिणायनेऽपि भवन्ति ब्रह्मोपासकाः क्षीणे प्रारब्धे प्रस्थिताः नापि भोगस्थानानि प्रेतानां विगतदेहानां संपिण्डितकरणग्रामाणां मध्ये भोगासामर्थ्यात् । युज्यन्ते चातिवाहिकास्तेषां संपिण्डितानि स्वस्वकार्यासमर्थानीन्द्रियाणि येषां प्रेतानां लोकेऽपि दृश्यते मत्तमूर्च्छितादीनामसमर्थकरणानांप्रस्थितानामतिवाहका गन्तव्यस्थानप्रापका भवन्तीति न केवलं युक्त्यैवैतत्प्रत्येतव्यमपितु तल्लिङ्गात् । तस्यातिवाहकत्वस्य लिङ्गाल्लिङ्गदर्शनात् । तथाहि 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयती'ति सिद्धवद्गमयितृत्वं दर्शयति । तथा चोपसंहारे स्फुटमातिवाहिकत्व'मर्चिरभिसंभवन्ती'त्यर्चिषा सह सामान्यतः श्रूयमाणमभिसंभवनं गमनं पर्यवसितमभिसंबन्धं बाधकाभावात्संपिण्डितकरणानां स्वतोगन्तुमसमर्थानां विशिष्टचेतनसाध्ये नियतश्रुत्युक्तगतिविशेषे गमयितृत्रपेक्षत्वाच्चातिवाहकत्वलक्षणसंबन्धविशेषेऽवस्थापयति अर्चिरादयोऽप्यचेतना अतिवाहयितुमसमर्था इति स्वाभिमानिनीर्देवता लक्षयन्ति ता अति-

वाहिकाः तत्रहि नात्यन्तमश्रुतकल्पना । लोकेऽप्यतिवाहकेष्वेवं निर्देशो दृश्यते । गच्छ त्वं बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति बलवर्मा जयसिंहं स कृष्णगुप्तं प्रति त्वां नेष्यतीति तात्पर्येण । नचामानवो ब्रह्म गमयतीत्येतद्वचनं विद्युतो ब्रह्मगमयितृत्वममानवपुरुषस्याह यथावचनं हि वाचनिकमिति ततः कथमर्चिरादेरतिवाहकत्वसिद्धिरिति वाच्यम् । उक्तयुक्तेरर्चिरादेरतिवाहकत्वे सति हि तत्प्रकरणादतिवाहकत्वमनूद्यार्चिराद्यतिवाहकवत्प्राप्तमानवत्वप्रतिषेध एवैतत्तात्पर्येण वाक्यभेदोऽन्यथाऽमानत्वातिवाहकत्वयोरपूर्वयोरुभयोर्विधाने वाक्यभेदापत्तेरित्यमानवः पुरुषो ब्रह्म गमयतीत्येतस्य स्थितस्याप्यर्चिराद्यतिवाहकत्वस्य संदिग्धस्य निर्णये लिङ्गत्वमुक्तं भवति युक्तम् । अर्चिष इत्यादिपञ्चमी हेतौ । अर्चिराद्यभिमानिदेवतानां गमयितृत्वेऽर्चिरादीनां यथाकथंचित्प्रयोजकत्वमाश्रित्येति बोध्यम् । विद्युतोऽनन्तरं वरुणादिलोकप्राप्तावपि वरुणादीनां न गमयितृत्वममानवपुरुषस्यैव विद्युदभिसंभवनानन्तरं गमयितृत्वश्रुतेस्तत्कदर्थने कारणाभावात् । वरुणादीनामप्रतिबन्धकरणेन साहायकत्वमात्रमिति द्रष्टव्यम् । एतस्यार्थस्य टीकायामिह संक्षेपेणोक्तिं विस्तरतोऽभिधानमावश्यकपरिज्ञानत्वादिति ॥ **देवतानामिति** । संवत्सराद्यभिमानिदेवतानामित्यर्थः । **अत्रेति** । अनुपदोक्तश्रुतावित्यर्थः । **श्रुत्यन्तरेति** । मासेभ्यो देवलोकं देवलोकादादित्यमिति बृहदारण्यकश्रुतेः 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते । यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती'ति बृहदारण्यकश्रुतेश्चानुसारादित्यर्थः । **आकरे निर्णीतमिति** । 'वायुमब्दादविशेषविशेषाभ्याम्' इति सूत्रभाष्ये निर्णीतमित्यर्थः । सन्ति यद्यपि नानाविधगतिमार्गप्रतिपादिकाः श्रुतयस्तथापि पूर्वाधिकरणे गन्तव्यस्य कार्यब्रह्मण एकत्वात् । सर्वत्र गत्येकदेशप्रत्यभिज्ञानादेक एव गतिमार्गोऽनुक्ततत्तद्विशेषाणां सर्वत्रैवोपसंहारः क्रमस्तु तेऽर्चिरभिसंभवन्तीत्यादिच्छान्दोग्यश्रुत्युक्त आदरणीयस्तत्र भूयसां मार्गपर्वणां क्रमवतामुक्तेरन्यक्रमाश्रयणे हि बहूनामन्यथा नयनं स्यात् । छान्दोग्यक्रमाश्रयणेऽल्पस्यान्यथानयनमिति सिद्धान्तितम् । अनन्तरे चाधिकरणे मासानन्तर्यस्य मासघटितसंवत्सरे युक्तत्वेन च्छान्दोग्यश्रुतिसिद्धत्वेन मासेभ्यो देवलोकमित्यत्र मासानन्तर्यस्य संवत्सरद्वारकानन्तर्यपरत्वम् । यदा वै पुरुष इत्यत्र श्रुतावादित्यात्पूर्वत्वं वायोः प्रतीयते स वायुः विजिहीते छिद्रं करोति तेन वायुप्रत्तेन रथचक्रच्छिद्रमितच्छिद्रेणादित्यप्राप्तेः प्रतिपादनाद्देवलोकादादित्यमित्यत्र देवलोकानन्तर्यस्य वायुद्वारानन्तर्यपरत्वमेवं च छान्दोग्ये श्रुतस्य संवत्सरानन्तर्यस्यादित्ये संवत्सरानन्तरदेवलोकानन्तरवाय्वानन्तर्यद्वारकस्य विवक्षितत्वम् । 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक'मित्यस्मिन् कौषीतकिब्राह्मणे श्रुतानां वरुणादीनां पाठक्रमेण क्रमवतामश्रुतक्रमाणामागन्तुकानामन्ते सन्निवेश इति न्यायेन च्छान्दोग्यश्रुतिसिद्धक्रमवत्तडिदानन्तर्यम् । छान्दोग्ये तडिदानन्तर्यं च वरुणेन्द्रप्रजापतिद्वारकानन्तर्यपरमिति सिद्धान्तितमित्येतदभिसंधायोक्तमाकरे निर्णीतमिति । तथाचार्चिरित्यादेरयमर्थः पर्यवसितः । कार्यब्रह्मोपासकाः प्रेताः संपिण्डितकरणग्रामाः प्रथमं स्वदेशाभिसंबद्धमर्चिः प्राप्नोति ततोऽर्चिरभिमानिनी देवता तमहः प्रापयति तदभिमानिनी शुक्लपक्षं तदभिमानिनी मासं मासाभिमानिनी संवत्सरं तदभिमानिनी देवलोकं देवलोकदेवता वायुं तदभिमानिनी आदित्यमादित्यश्चन्द्रमसं चन्द्रमा विद्युतं ततोऽमानवः पुरुषो वरुणादिभिरप्रतिबन्धमात्रेण दत्तसाहायकः क्रमेण वरुणेन्द्रप्रजापतिलोकमध्याद्ब्रह्मलोकं प्रापयतीति । **ते तत्प्राप्नुवन्तीति** । 'कार्यं बादरिरस्य गत्युपपत्ते'रिति चतुर्थाध्यायतृतीयपादसूत्रम् । कार्यं कार्योपाधिकं ब्रह्म प्राप्यम् बादरिराचार्यो मन्यते कुतः अस्य कार्यब्रह्मणः गन्तव्यत्वोपपत्तेः प्रदेशवत्त्वान्न निरुपाधिकमतथात्वादित्यर्थः । **तद्वारैवेति** । गच्छन्तीति शेषः । **अत्रेति** । ब्रह्मलोकं प्राप्यापि केचिन्निवर्तन्ते केचिन्नेत्यस्य प्रतिपादनमित्यर्थः । व्याख्यानात् उक्तमार्गकथनेन तन्नियतोकार्थस्यापि लाभादित्यर्थः ॥ २४ ॥ इति श्रीमैथिलधर्मदत्तशर्मणा विरचिते गूढार्थदीपिकालोके अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

**तस्येति** । ध्यानस्येत्यर्थः । **तत्** ध्यानं जनयतीत्यनेनान्वयः । इदमिति द्वितीयान्तं ज्ञानविशेषणम् ॥ १ ॥ प्रत्यक्षं मानमित्यस्य प्रदर्शनं मयेदं विदितमिति । प्रत्यक्षं फलमित्यस्य प्रदर्शनं न दृष्टमिदानीं ममाज्ञानमिति बोध्यम् ॥ २ ॥ ३ ॥ **तत्कृतेना**ध्यस्तकृतेन । **न तत्संबध्यते** । नाधिष्ठानं संबध्यत इत्यर्थः ॥ ४—७ ॥ **किंनिमित्तेति** । प्रयोजनस्यापि निमित्तत्वमालम्ब्येदमुक्तम् । प्रयोजनं विना कस्याप्युत्पत्तिस्थित्यादेरभावात् । चैतन्यमात्रस्येत्यस्य द्वितीयचैतन्यस्येत्यर्थः । **बन्धाभावादिति** । परमार्थसद्द्वितीयस्याभावादिति शेषः । **अपवर्गाविरोधित्वादिति** । अद्वितीयस्वस्वरूपापवर्गे सत्येव कल्पितस्य बन्धस्य सत्त्वेन तस्यापवर्गाविरोधित्वादित्यर्थः । **इत्याद्यनुपपत्तिरिति** । सृष्टिस्रष्ट्व्यादेः पारमार्थिकत्वे स्वतःप्रमाणश्रुतिसिद्धा । भोक्तृत्वाद्वितीयत्वाबद्धत्वसदामुक्तत्वाद्यनुपपत्तिरित्यर्थः । भोक्तृत्वभोग्यभोगबन्धादिकल्पनया सृष्टिकल्पनानादिमायोपादानात्तत्त्वज्ञानावसानात्स्वीक्रियतेऽस्माभिरिति सानुपपत्तिर्न प्रतिकूलेत्याह—**सृष्टेरित्यादिना** ॥ ८—१५ ॥ **वैश्वानरे द्वादशकपाल इति** । वैश्वानरद्वादशकपालवाक्येन वैश्वानरदेवताकद्वादशकपालसंस्कृतद्रव्यकयागविधायकेन सहोपक्रमोपसंहारादिभिरेकवाक्यत्वनिर्णये कर्मान्तरासंभवादष्टाकपालवाक्यं द्वादशकपालान्तर्गताष्टकपालं ततोऽवयुत्य पृथ-

कृत्य तत्संस्कृतद्रव्यकानुवादो यथाष्टाकपालाग्नेयादिविकृतिलायनुसंधानाय तथा प्रकृतेऽपि सर्वेभ्यः सद्व्यवहारोपयोगिपदार्था-न्पृथक्कृत्य परमेश्वराभिन्नतया तदनुवादेनार्थात्तदनुवादाभिन्नं तत्तदेकदेशकथनं पूर्णफलानुबन्धिपरमेश्वरात्मतया तत्तत्पदार्थज्ञानं यज्ञादिव्यवहारेषु भवतीति सूचनायेत्यर्थः ॥ १६ ॥ **सैव** ऋगेव **साम** प्रकृते सामपदाभिधेया । पूर्वापरयोर्मन्त्ररूप-त्वेन मध्ये स्थितस्य साम्नोऽपि तद्रूपताया एवोचितत्वात् । **सामपदं त्विति** । 'गीतिषु सामाख्या'इति सूत्रानुसारादिति शेषः । **गीतिमात्रेति** । मात्रपदेन ऋचोव्यवच्छेदः । **अन्यदिति** । प्रकृतानुपयोगि । रथन्तरादीनां साम्नां तासु तास्वृक्षु विधानाद्गीतिविशिष्टाया ऋचः सामरूपत्वे तस्या ऋक्षु विधानस्यासंभवात् गीतिमात्रस्य सामसंज्ञाकरणं तद्धि तत्प्रयोजनमिह नास्तीति भावः ॥ १७ ॥ **ब्रह्मविश्वेत्यादि** । सात्त्विकीं गतिं सत्त्वगुणं पुरस्कृत्य कृतस्य कर्मणो विशुद्धतपोध्यानोपासन-योगाभ्यासादेः फलरूपामुत्तमामाहुः । ब्रह्मा हिरण्यगर्भः । विश्वसृजो मरीच्यादयः । प्रजापतयः धर्मो विग्रहवांस्तदभि-मानी देवः महान् व्यक्तं च तत्त्वद्वयाभिमानिन्यौ देवते । एते सर्वे सात्त्विककर्मफलभूतजन्मवत्तया सात्त्विकगतित्वेन व्यपदेष्टु-मर्हा एतामित्येतच्छब्देन परामृश्यन्त इत्यर्थः ॥ १८—२४ ॥ **उष्ट्रमुखन्यायेनेति** । यथोष्ट्रशब्दस्योष्ट्रमुखसदृशे लक्षणा-मुपेत्य बहुव्रीहिसमासस्तथेत्यर्थः । समासानङ्गीकाराद्विना विशेषविधिं मध्यमपदलोपिसमासानङ्गीकारात् । तेन देवस्य संबन्धिप्रसाधकं वा व्रतं येषां ते देवव्रता इति न समास इत्यर्थः । यूपाय दार्वित्यादौ प्रकृतेरुपादानस्य विकृतिभूतोपादेया-र्थत्व एव समासस्तेन तादर्थ्यचतुर्थ्या देवाय व्रतमिति देवव्रतमिति न समासः । भवति हि तत्संबन्धियत्किंचिद्वस्त्वर्थ-त्वेऽपि तादर्थ्यव्यवहारः । यथा ब्राह्मणसंबन्धितृप्त्याद्यर्थेऽन्ने ब्राह्मणार्थमन्नं ब्राह्मणाय वान्नमिति तथा देवसंबन्धिप्रसादा-र्थेऽपि व्रते देवार्थं व्रतं देवाय वा व्रतमिति विग्रहमात्रं नानुपपन्नमित्यभिप्रेत्याह—**प्रकृतीत्यादिना** । यद्यप्युपक्रमानुरोधेन निर्णयो न्याय्यस्तथाप्यन्त्यस्थस्येज्याशब्दस्य पूजामात्ररूढत्वेनासंदिग्धार्थतया तेन सामान्यतो नियमबोधकस्य व्रतशब्दस्य पूजात्मकविशेषपरतानिर्णयो न्याय्य इत्याह—**अन्ते चेत्यादिना** ॥ २५ ॥ २६ ॥ **कर्मसिद्ध्यर्थं चेति** । यज्ञादिसाङ्ग-तायर्थमिडाभक्षणादिकमित्यर्थः । **समर्पणमिति** । यतोऽहं परमेश्वरपरतन्त्रस्ततः सर्वमिदं कर्मफलसहितं सर्वात्मकस्य तस्यैव न ममेति ज्ञानमित्यर्थः । **गुराविति** । सप्तम्या विषयत्वविशेषोऽर्थः ॥ २७ ॥ २८ ॥ **सावित्रस्येवेति** । यथा सावित्रस्य प्रकाशस्य शोभनोऽशोभनश्च सममेव संबन्धी तथा सुकृती दुष्कृती च मम समानमेव संबन्धी रागद्वेषादिलक्षणसं-बन्धविशेषो नेत्यर्थः । **वह्निवत्कल्पतरुवच्चावैषम्यमिति** । यथा वह्नेर्दहने कल्पतरोः प्रदाने सत्यसति च साम्यमेव तस्य तादृशस्वभावत्वान्न वैषम्यं तथेत्यर्थः ॥ २९—३४ ॥

इति श्रीधर्मदत्तशर्मणा विरचिते गीतागूढार्थदीपिकालोके नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

**उपायभूता इति** । सोपाधिकध्याने उपाधिभूततत्तद्विभूतिविशिष्टस्य विषयत्वेन तत्र विशेषणीभूतविभूतिज्ञानस्य हेतु-तया तद्विषयत्वेन तासामुपायत्वात् निरुपाधिकज्ञाने च ध्यानजनितधर्मविशेषादिनाऽन्तरायनिवारणनिर्विकल्पसमाधिसंपाद-नादिद्वारा विशिष्टद्वयान्वयबाधाद्युपस्थापनभागलक्षणाशुद्धार्थतात्पर्यग्रहसंपादनद्वारा वोपायत्वाच्चाभिहितम् ॥ १ ॥ २ ॥ अन्यत्र पापनिवृत्तावपि तत्कारणस्य संमोहस्य विद्यमानतया तत्र सूक्ष्मावस्थारूपसंस्काररूपेण पापसत्त्वात्संस्काररूपेणाप्यनवस्थान-रूपस्य प्रकर्षस्य पापमुक्तौ न संभवो भगवद्वेदनेन संमोहनिवृत्तौ तत्संभव इत्यभिप्रेत्याह—**प्रकर्षेणेत्यादिना** ॥ ३ ॥ **सर्वपदार्थावबोध इति** । स्वसमानसत्ताकस्वभावपुरस्कारेण सर्वविषयकबोध इत्यर्थः । **बोद्धव्येष्विति** । इष्टानिष्टतया बोद्धव्येष्वित्यर्थः । **अव्याकुलतयेति** । उभयकोट्यवगाहित्वेनानवस्थितविषयत्वं ज्ञानस्य व्याकुलत्वं तदभावोऽव्याकुलत्व-मसंदेहत्वमिति यावत् । तेनेत्यर्थः । **विवेकेनेति** । इष्टस्यानिष्टव्यावृत्तिरनिष्टस्य चेष्टव्यावृत्तिर्विवेकः तेनेत्यर्थः । प्रथमतृती-यायाः स्वरूपलक्षणं द्वितीयतृतीयायाश्च विषयत्वलक्षणं वैशिष्ट्यमर्थः । अन्वयश्च द्वयोः प्रवृत्तिपदार्थे प्रवृत्तिश्च बोद्धव्येषु चेतसस्तदाकारपरिणामात्मिका ज्ञानपदव्यपदेश्या । **कर्तव्येष्विति** । कृतिविषयेष्वित्यर्थः । कृतिर्यत्नोऽत्र द्विविधः परिग्राह्यः । प्रवृत्तिर्निवृत्तिश्च । तत्राव्याकुलत्वं निष्कम्पत्वम् । विवेकश्चोपादेयस्यैवोपादेयतया हेयस्यैव हेयतयाऽवगाहनम् । **आक्रुष्ट-स्येति** । आक्रोशो निन्दा । **निर्विकारेति** । आक्रोशताडनप्रयुक्तक्रोधादिरूपविकाररहितेत्यर्थः । **नान्यस्मादिति** । यद्यपि प्रातिस्वीकतत्तत्कारणसद्भावादन्यथा तेषामेकमात्रजन्यत्वेन पार्थक्यानुपपत्तेरविद्याया अपि कारणत्वाच्चेदमनुपपन्नं तथापि सर्वे भावाः प्रत्येकं तत्तत्कारणेन चेतनेन तेनतेनाचेतनेन वा जायन्त एवाविद्यया चाचेतनया कृत्स्नमचेतनात्तु सत एकस्मात् मत्त एव कार्त्स्न्येन सर्वे जायन्ते नान्यस्मादित्यर्थे तात्पर्यान्नानुपपत्तिरिति ॥ ४—७ ॥ **उपादानं निमित्तं चेति** । समस्तजगदाकारेण परिणममानाविद्याश्रयत्वेनाधिष्ठानतया विवर्तोपादानमित्यर्थोऽतएव सर्वस्यैव जगतः सद्रूपानु-विद्धतया प्रतीतिरुपादानकारणानुविद्धतयैव कार्यस्य प्रत्ययात् । निमित्तं स कार्यानुकूलेक्षणेच्छादिमत्तया रूपभेदेनैकस्याप्यु-पादाननिमित्तभावाविरोधात् । तन्तून्प्रति लूताशरीरस्य प्रयत्नविशेषावच्छेदकतया निमित्तत्वस्य लूतापरिणामिलालादिसंहत-

त्वेनोपादानत्वस्य च दृष्टत्वादिति भावः ॥ ८ ॥ **मयि चित्तमिति** । वृत्त्यात्मना परिणतं चित्तमित्यर्थो मदेकाकारचित्तवृत्तिरूपयोगवत्त इति यावत् । **मद्भजननिमित्तेति** । मम भजनं सेवा प्रीत्युत्पत्त्यनुकूलो व्यापारः मन्मूर्त्यालोकनार्चनवन्दनस्तुतिकीर्तिश्रवणादिलक्षणस्तस्य निमित्तानि चक्षुरादयो येषां त इत्यर्थः । **मय्युपसंहृतसर्वकरणा इति** । उपसंहारः समर्पणम् । नैतानि मदर्थानि नाहमेषामधिष्ठाता अपितु परमेश्वरभजनाद्यर्थानि स एवाधिष्ठातेति बुद्धिरिति ॥ ९ ॥ १० ॥ **न कर्मणोऽभ्यासस्य चेति** । नान्यस्य कस्यचिदिति वक्तव्यम् । **तत इति** । दीयत इत्यर्थः ॥ ११—१७ ॥ **जनार्दनेति** । जनैरर्द्यते याच्यत इति जनार्दनेत्यस्य व्युत्पत्तिः । **त्वद्वाक्यमित्यनुक्तेरिति** । यदि तदुक्तं स्यात्तदैकरूपकमेव स्यादनुक्तौ तस्य तदध्याहारे तात्पर्यसत्त्वे रूपकम् । अनध्याहारे चोपमानवाचकपदेनोपमेयस्य निगरणादतिशयोक्तिः । इदं न वाक्यमित्यध्याहारे कथ्यमाने वाक्यरूपे धर्मिण्यमृतत्वारोपार्थं वाक्यत्वस्यापह्नवादपह्नुतिरित्यनुक्तेरलंकारत्रयप्रापणहेतुत्वाद्धेतुत्वेनोपन्यासो युज्यते । **संकर इति** । न निश्चितानामयं संकरोऽपितु तात्पर्यसंदेहात्संदिग्धानामिति बोध्यम् ॥ १८—३१ ॥ प्रमाणतर्केत्यादि वादलक्षणसूत्रम्, यथोक्तोपपन्नेत्यादि जल्पलक्षणसूत्रम्, सत्प्रतिपक्षेत्यादि वितण्डालक्षणसूत्रंच न्यायदर्शनप्रथमाध्यायद्वितीयपादस्थम् । तदर्थश्च भाष्यवर्तिकतात्पर्यादितो विस्तरेणावगन्तव्यः संक्षेपत इहाप्युक्तः । छलजातिनिग्रहस्थानानामपि लक्षणानि न्यायदर्शनप्रथमाध्यायद्वितीयपादे द्रष्टव्यानि ॥ ३२ ॥ द्वन्द्वः सर्व एव सर्वपदार्थप्रधानस्तदतिरिक्तो न कश्चित् । तत्राव्ययीभावोऽक्षपरि दण्डादण्डि तिष्ठद्गुप्रभृति विहाय प्रायेण पूर्वपदार्थप्रधानस्तत्पुरुषः पूर्वकायार्धपिप्पलीत्यादिकं विहाय प्रायेणोत्तरपदार्थप्रधानो बहुव्रीहिः सर्व एवान्यपदार्थप्रधान इति सर्वपदार्थप्राधान्यादन्येभ्यः समासेभ्यो द्वन्द्वस्य श्रैष्ठ्यमित्याह—**उभयपदार्थेत्यादिना** ॥ ३३ ॥ **ग्रन्थार्थधारणाशक्तिरिति** । इच्छामात्रेण स्मृत्युपधायकः संस्कारः फलबलेन चरमफलमरणकालादिनाऽयतया कल्पनीयो धारणा चेतसो वृत्तिविशेषो वा । सत्यप्यनुभवे कस्यचिदेव तादृशसंस्कारादवश्यकल्प्या तदनुकूला शक्तिः सा पदार्थान्तरमस्माकमदृष्टविशेषो नैयायिकानाम् । **हर्षविषादयोरविकृतचित्ततेति** । हर्षे सति तद्धेतावनुग्रहादिर्विषादे सति तद्धेतौ कोपादिर्विकारस्तद्राहित्यं क्षमेति । वस्तुतस्तदनुत्पत्तिप्रयोजकः सत्त्वातिशयशक्तिविशेषादिपदाभिधेयश्चित्तस्य वृत्तिविशेष इति ॥ ३४—३९ ॥ **सर्वज्ञेनापीति** । परमेश्वरातिरिक्तसर्वज्ञेनापीत्यर्थः । **सन्मात्रविषयत्वादिति** । सत्पदं विद्यमानार्थकम् । मात्रपदं च कृत्स्नार्थकम् । तेन निखिलसदेकविषयत्वादित्यर्थः । तथाच परमेश्वरातिरिक्तस्य या सर्वज्ञता सर्वविषयकं ज्ञानं तद्विद्यमानसर्वविषयकमेव नतु भूतभविष्यवर्तमानपर्याप्तसर्वत्वव्यापकविषयताकं । तथाच मात्रपदस्येतरव्यावर्तकपरत्वे सत्पदस्य पारमार्थिकसत्परत्वे ब्रह्माकारनिर्विकल्पकज्ञानान्यस्यासंग्रहः । नृशृङ्गादिव्यावृत्तस्य कालसंबन्धितया सत्त्वेन वा प्रतीयमानस्य बोधकत्वे सर्वथैव किंचिज्ज्ञात्सर्वज्ञस्य वैलक्षण्यानुपपत्तिः । सर्वज्ञस्यापि निखिलविभूत्यज्ञत्व उक्तस्य हेतुत्वानुपपत्तिः निखिलविभूतिज्ञसाधारण्यात् । मात्रपदस्य कृत्स्नार्थकत्वेऽपि सत्पदस्य नृशृङ्गादिव्यावृत्तवस्तुपरत्व उक्तस्याखिलविभूतिज्ञत्वहेतुत्वेन तद्विपरीतहेतुत्वानुपपत्तिः । विद्यमानार्थकत्वे च परमेश्वरातिरिक्तसर्वज्ञज्ञानेऽपि भूतादेरपि विषयत्वेन तदसंग्रह इत्यादिदूषणानां नावकाश इति ॥ ४०—४२ ॥ इति श्रीधर्मदत्तशर्मविरचिते गूढार्थदीपिकालोके दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

**शोकेति** । शोकनिवृत्तिरूपो य उपकारस्तस्मा इत्यर्थः ॥ १ ॥ **अविकारित्वमिति** । कर्तृत्वस्य स्वोपाधिभूतमायापरिणामत्वेनास्वाभाविकत्वादिति भावः । **अवैषम्यमिति** । अनादिप्रवाहवद्विचित्रतत्तत्पुरुषाधिष्ठातृत्वेनैव तत्प्रयुक्तशुभाशुभादिकारयितृत्वेन स्वातन्त्र्याभावादिति भावः । **असङ्गौदासीन्यमिति** । असङ्गस्यौदासीन्यं रागादिरहितत्वे सति तत्तत्फलाभोक्तृत्वम् । प्रागुक्तहेतुरेवात्रापि हेतुत्वेनानुसंधेयः । **विपरिणतमिति श्रुताविति** । द्विवचनान्तप्रकृतिभूतमेकवचनान्तत्वेनानुसंहितमित्यर्थः ॥ २—५ ॥ **नानाविधानीत्यस्य विवरणमिति** । नानेत्यस्य बहूनिति प्रकारार्थकस्य विधेत्यस्यादित्यानित्यादीति ॥ ६—११ ॥ **अत्राविद्यमानेति** । यदि पदसमभिव्याहृतेन स्यादित्यनेन तादृशी भा नास्तीत्यस्य निगरणादविद्यमानाध्यवसाय उपमानस्य तत उपमानाभावाच्चोपमाभावपरात् यदि स्यात्तादृशी भावः सा सदृशी स्यादित्यतोऽभूतोपमाऽविद्यमानस्वरूपोपमात्मिकाऽतिशयोक्तिर्गम्यमाना प्रथमं यदि स्याद्यदि वा न स्यादित्यादि मन्य इत्यन्तेन प्रागुक्तामुत्प्रेक्षां व्यञ्जयन्ती परमतात्पर्यविषयनिरुपमत्वमेव व्यनक्तीत्यर्थः । उभावित्यादिकस्यचित्कवेरुक्तालंकाराणां वाच्यव्यङ्ग्यानामुदाहरणभूतं पद्यं दर्शितम् ॥ १२ ॥ १३ ॥ **आलम्बनविभावेनेति** । उत्पादकोद्बोधकयोर्विभावशब्दो वर्तते । आलम्बनश्चाश्रयो विषयश्च । निराश्रयस्य निर्विषयस्य च विस्मयादेश्चेतोवृत्तिविशेषस्य स्वरूपेण वासनारूपेण वा स्थायिन उत्पत्त्यसंभवादित्युत्पादकरूपो विस्मयस्यार्जुनाश्रितस्य स्थायिनो विषयो भगवानालम्बनविभावः । उद्दीप्यत उद्बोध्यते कार्यकरणार्हावस्थां नीयतेऽनुद्बुद्धः स्थाप्यते न तदुद्दीपनविभावोऽत्र भगवतस्तादृशस्य मुहुर्दर्शनम् । सकृद्दर्शनेनोत्पादितोऽपि विस्मयो ग्रागित्येव वासनात्मतां प्राप्तः कार्याक्षमो मुहुर्दर्शनेन रोमाञ्चादिकार्यकरणावस्थां हि नीयते अनु पश्चाद्भवतीत्यनु-

भावः कार्यम् । प्रकृते रोमाञ्चनमस्काराञ्जलिकरणान्यनुभावाः । संचरत्यस्थिरीभवति स्थायिनि विद्यमान एव स संचारी स एव व्यभिचारिशब्देनोच्यते विच्छिद्य विच्छिद्य स्थायिनमभिचरतीति व्युत्पत्तेः । स च प्रकृते धृत्यादिस्तस्यापि स्थायिवद्व्यज्यमानस्यैव रसप्रकर्षकत्वादाह—**अनुभावाक्षिप्तेनेति** । नहि धृत्यादिरहितस्य तादृशरूपावलोकने रोमाञ्चनमस्कारादिसंभवोऽपितु मूर्च्छापलापनादिकमेवेत्यनुभावस्य तदाक्षेपकत्वं युज्यते । परिपोषादित्यनेन सर्वेषां तृतीयान्तानामन्वयः । पञ्चम्यन्तस्य तस्य परिपोषं गत इत्यत्रान्वयः । आलम्बनगतस्यापरिपुष्टत्वे श्रोतुरालम्बनाद्भेदग्रहे च श्रोतृगतस्य स्थायिभावस्य परिपुष्टत्वासंभवादुभयोः परिपोषभेदानध्यवसाययोर्हेतुत्वेनोपन्यासः । विभावानुभावव्यभिचारिभिः परिपोषं गत एवानन्दात्मतयास्वादयितुमर्होऽतादृशस्य स्वरूपमात्रोपलम्भानर्हत्वादिति परिपोषं गत इत्युक्तम् । श्रोतृणामेवालौकिकेन व्यञ्जनव्यापारेण स्थायिन उपस्थितेस्तादृशस्यैव च रसत्वाभ्युपगमादालम्बनस्य च तद्ग्रहणस्य लौकिकत्वात्तथा गृहीतस्य रसतयानास्वादाच्छ्रोतृणामित्युक्तम् । **परमानन्दास्वादरूपेणेति** । अभिधयोपस्थितैर्विभावानुभावादिभिरभिव्यञ्जितस्य स्थायिनः । साधारणीकरणव्यापारेण सहृदयतादोषोल्लासितेन भेदाग्रहसहकृतेन जायमानया विभावानुभावसंचारिसंभिन्नस्थायिगोचरवृत्त्या ह्यलौकिक्या स्थाय्यवच्छिन्नचैतन्यावरणभङ्गे परमानन्दांशेऽप्यावरणभङ्गोपगमादधिष्ठानोपादेययोरभेदादानन्दाभिन्नतया स्थायिगोचरा भग्नावरणा स्वप्रकाशचिदेवास्वादश्चर्वणेति चोच्यते । रसस्य स्थायी तु तत्तादात्म्यमाध्यासिकं विषयत्वलक्षणं गत आस्वादितश्चर्वित इत्युच्यते । निरुक्तकारणजनितवृत्तिप्रयोज्यभग्नावरणस्वप्रकाशास्वादानन्यपरमानन्दतादात्म्योपरागेण च रस इत्युच्यत इत्यास्वादरूपेण रसो भवतीति सुष्ठूक्तम् ॥ १४—१६ ॥ **सयकारपाठ इति** । दुर्निरीक्ष्य इति पाठ इत्यर्थः ॥ १७—३७ ॥ प्रधानं सांख्याभिमतमचेतनम् । उपादानम् वेदनरूप इत्यादि प्रागेव विस्तरेण कृतव्याख्यानम् ॥ ३८ ॥ ॥ ३९ ॥ स्तादित्यसः लोट्लकारे रूपम् । पुरः अग्रे नमोऽस्त्वित्यर्थः ॥ ४०—४३ ॥ प्रियाया इव अर्हसीत्यवस्थायां यलयलोपे इवशब्दस्यापि लोपे सवर्णदीर्घे प्रियायार्हसीति सिध्यतीत्याह—**प्रियायार्हसीत्यत्रेवेति** ॥ ४४—५५ ॥

इति धर्मदत्तशर्मविरचिते गूढार्थदीपिकालोके एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ।

**निराकारमेव सर्वस्वरूपमिति** । निराकारमुपाधिरहितत्वादपरिच्छिन्नं भवति सर्वेषामधिष्ठानमधिष्ठानं हि कार्यानन्यरूपं स्वसत्तातिरिक्तसत्तारहितकार्यमिति सर्वस्वरूपमुपहितं च परिच्छिन्नं न भवति सर्वोपादानमतो न सर्वस्वरूपमित्यर्थः । **इत्यादौ निराकारमिति** । साकारस्य वासुदेवः सर्वमिति प्रतिपत्तेरयोगात्तस्यासर्वात्मकत्वादिति भावः । **यथेति साकारमिति** । आकारविशिष्टदर्शनस्यैवात्रोक्तेः **विरोधादिति** । एकमधिकारिणं प्रति विरुद्धयोः साकारनिराकारवेदनयोरुपदेशविरोधादित्यर्थः । **बुभुत्सयेति** । अस्यार्जुन उवाचेति मूलेन संबन्धः । एवमित्यस्य विवरणं मत्कर्मेत्यादिप्रकारेणेत्यन्तम् । न क्षरतीत्यक्षरमविनाशि अश्नुत इत्यक्षरं व्यापकमित्यर्थः । **विदन्ति विन्दन्तीति** । जानन्ति प्राप्नुवन्तीत्यर्थः । **उभयेऽपीति** । साकारचिन्तका निराकारचिन्तकाश्चेत्यर्थः । ते चोभयविधा निरुक्तव्युत्पत्त्या योगवित्पदार्थास्तेषां मध्ये के योगवित्तमा योगिश्रेष्ठा इत्यर्थः । केषां योगिनां संबन्धिज्ञानं तज्ज्ञानसमानाकारकं ज्ञानं मयानुसरणीयं संपादनीयमित्यर्थः ॥ १ ॥ स्तुवन् प्रथमाः साकारध्यायिनः श्रेष्ठा इति भगवानुवाचेति संबन्धः । स्तुवन्नित्यनेन श्रेष्ठत्ववचनं स्तुतिमात्रं न वस्तुतः श्रेष्ठत्वपरं निर्गुणध्यानकर्त्रपेक्षया तदसंभवादिति सूचितम् । तेन च भगवद्वचनस्यानवधेयवचनत्वशङ्का निराकृता ॥ २ ॥ **तन्निरूपकानिति** । सगुणब्रह्मोपासकनिष्ठातिशयनिरूपकानित्यर्थः । जातिं गोत्वादिकं द्वारीकृत्य प्रथमतोऽभिधया बोधयित्वेति मीमांसकानामननुगतव्यक्तिबोधने शक्यतावच्छेदकतया पुरस्कृत्येति नैयायिकानां मतेऽर्थोऽवसेयः । **शब्दप्रवृत्तेरिति** । पदार्थेषु प्रतिपाद्येषु शब्दानामाक्षेपेण लक्षणया वा शक्त्यैव वा प्रवृत्तेः अस्मिन्नर्थे शब्दः प्रवर्तत इत्यत्र धात्वर्थतया ज्ञानजनकत्वं प्रतीयते । ज्ञानान्वयिविषयत्वं सप्तम्यर्थः । तथाच बोधनमेव प्रवृत्तिर्गवादिशब्देन स एवार्थो बोध्यते । यत्र द्वारभूतगोत्वादिजातिर्वर्तत इति गोत्वादिः प्रवृत्तिनिमित्तमुच्यते । नच निमित्ताभावे प्रवृत्तिरुचिता निर्धर्मके च तदभावाच्छब्दप्रवृत्त्ययोगाच्छब्देन तद्बोधनासंभवादित्यर्थः । नच जातिंविना यथा जातौ शब्दप्रवृत्तिस्तथैव ब्रह्मणि स्यादिति वाच्यम् । हानोपादानाद्यगोचरे गोत्वादौ शब्दानामप्रवृत्तेरत एवोक्तं जातेरस्तित्वनास्तित्वे नहि कश्चिद्विवक्षतीति गोत्वादीनुपायतयैव गोचरयति । तथाच विशेषणत्वान्यविषयत्वस्यैवास्मिन्नर्थे प्रवर्तत इत्यत्र सप्तम्यर्थत्वाददोषात् । गुणं नीलो मधुरः सुरभिर्मृदुरेको दीर्घो भूतो मूर्तः सुन्दरो बुध इत्यादौ नत्यादिकम् । क्रियां चलः पवनः पावकः पाचक इत्यादौ चलनादिकाम् । संबन्धं तस्येदमित्याद्यर्थविहिततद्धितस्थले दैवं मानुषं चैत्रियं वह्निमान् धनी गार्ग्यमित्यादौ देवसंबन्धादिकम् । **आकाशादीति** । आदिपदात्परमाण्वादिपरिग्रहः । तेन कार्यस्यैवेति नियमस्य न भङ्गः । जातिपदं गुणादित्रयातिरिक्तधर्ममात्रपरं । तेन डित्थादिशब्दानामधिकानामाशङ्का निरस्ता । **तर्हि कथमिति** । मनसोऽप्यगोचरत्वे कथमुपनिषद्गम्यत्वस्य बुद्धिपरिणामदर्शनविषयत्वस्य शास्त्रप्रमाणकत्वस्य च

प्रतिपादनमित्यर्थः । शब्दादिजन्यस्वाकारवृत्तिप्रतिफलितचैतन्याध्यासिकतादात्म्यमेव वृत्तेरपि मुख्यं विषयत्वं चित एव ज्ञानत्वेन तस्यैव तत्संबन्धरूपत्वात् । ज्ञानसंबन्धस्यैव विषयतात्वात् ज्ञानावच्छेदकतया वृत्तेरपि ज्ञानात्मकतया क्लृप्तज्ञानसंबन्धस्योक्तस्य तां प्रत्यपि विषयतासंबन्धत्वकल्पनाद्घटादिष्विव शुद्धे ब्रह्मण्युक्तसंबन्धस्य विषयत्वस्यासंभवात्तन्निषेधपरताया एव 'यतो वाचो निवर्तन्त' इत्यादेरुपगमादुपनिषद्गम्यत्वाभिधानस्य चाविद्याकल्पिताया निर्विकल्पकसद्रूपब्रह्मगोचरचरमवृत्तेस्तादृशेनाकाराख्येन विषयत्वेन गम्यत्वपरत्वात् । तादृशवृत्तेः संबन्धस्य विषयत्वस्य चाविद्यकत्वेऽपि विषयस्य परमार्थसत्त्वादुक्तवृत्तेः प्रमात्वाव्याघातेनाज्ञानतत्कार्यबाधनक्षमत्वानपायात् । नहि शुद्धे सद्रूपे ब्रह्मणि तद्वृत्तेरपि कल्पिततया तस्य तदधिष्ठानत्वेन वृत्त्या सहाध्यासिकतादात्म्यं तद्विषयत्वं । तथासति घटाद्याकारवृत्तेरपि शुद्धब्रह्मण्येव कल्पितत्वेन तांप्रत्यपि तस्य विषयत्वापत्तेरित्यभिप्रेत्याह—**उच्यत इति । अविद्याकल्पितसंबन्धेनेति ।** अविद्यया कल्पितेनाकाराख्यसंबन्धेन शुद्धस्य ब्रह्मणस्तद्गोचराज्ञानतत्कार्ययोर्निवृत्त्युपपत्तेराध्यासिकतादात्म्यलक्षणमुख्यविषयत्वस्याभावेऽपि चैतन्यप्रतिबिम्बोद्ग्राहितया ज्ञानत्वमुपेताया वृत्तेराकाराख्यस्य संबन्धस्य तद्गोचराज्ञाननिवृत्तिप्रयोजकत्वेन घटादिनिष्ठमुख्यविषयत्वगतेन तत्सादृश्येन यो विषयत्वाभेदबुद्धिलक्षण उपचारस्तेन विषयत्वात्मकत्वात्तेनैव विषयत्वेनोपचारप्रयुक्तेन ब्रह्मणः शुद्धस्य तंत्वौपनिषदमित्यादौ विषयत्वाभिधानादित्यर्थः । शुद्धब्रह्मणाऽविद्यायाः संबन्धाभावे तत्राकाराख्यसंबन्धस्य तस्या नकल्प्यकत्वमित्यावश्यकः स चापि संबन्धो न परमार्थसन् द्वैतापत्तेरिति कल्पित एव । कल्पितोऽपि च तस्या अपि तत्र कल्पितत्वेन तेन सहाध्यासिकतादात्म्यरूप एवेत्याह—**अतस्तत्र कल्पितेत्यादिना ।** यद्वा अविद्यायाः स्वकार्यचरमवृत्तिसहितायाः कल्पितो यः संबन्ध आध्यासिकतादात्म्यलक्षणो ब्रह्मणस्तदुपहितत्वप्रयोजकस्तेनोपचारेण विषयत्वाभिधानादित्यन्वयः । तृतीयायाः यथाकथंचित्प्रयोजकत्वमर्थस्तथा च शुद्धस्योक्ततादात्म्यासंभवेऽप्यविद्यया निरुक्तवृत्त्यैव वोपहितस्य तादृशवृत्तिप्रतिफलितचित्तादात्म्यलक्षणविषयत्वसंभव उक्तं ह्यद्वैतसिद्धौ शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिर्वृत्त्युपहितमेव विषयीकरोतीति । तस्य च शुद्धाकारत्वनिबन्धनशुद्धगोचराज्ञाननिवर्तकवृत्तिप्रतिफलितचित्तादात्म्यस्योपहितनिष्ठस्यापि स्वाश्रयोपहिततादात्म्येन शुद्धे विषयत्वोपचारप्रयोजकत्वमेव यद्गोचराज्ञानस्य निवर्तकं यदाकारवृत्तिप्रतिफलितचैतन्यं तद्रूपज्ञानस्य तदेव हि विषय उच्यत इति उपहितस्य विषयत्वेऽपि तन्निष्ठोक्ततादात्म्यस्य तदज्ञानानिवर्तकत्वेन न तत्र विषयत्वव्यवहारप्रयोजकत्वमिति शुद्धे विषयत्वोपचारप्रयोजकत्वमुपहितत्वप्रयोजकाविद्यासंबन्धस्याव्याहतमिति भावः । **अत इति ।** यत उक्तसंबन्धस्य तादृशविषयत्वोपचारप्रयोजकत्वेनौपनिषदत्वादिश्रुतिविरोधनिवर्तकत्वमत इत्यर्थः । उपासत इत्येतद्विवृणोति—**श्रवणेनेत्यादिकुर्वन्तीत्यन्तेन । अतीतत्वादिति ।** नष्टत्वादित्यर्थः ॥ ३—८ ॥ **सर्वतः समाहृत्येति ।** तद्विषयदोषदर्शनेन तज्ज्ञानेऽपीष्टसाधनत्वाभावस्येष्टज्ञानान्तरप्रतिपक्षतयाऽनिष्टसाधनत्वस्य च ज्ञानात्तत्संस्काराच्च प्रतिबन्धकादन्यसर्वविषयकज्ञानं निरुध्येत्यर्थः । **प्रतिमादावालम्बने पुनःपुनश्चेतसोऽवस्थापनमिति ।** अनेन धारणोक्ता । बाह्यविषये चेतसोऽवस्थापनं न स्वरूपेणापि तु वृत्त्येतीष्टालम्बनगोचरा वृत्तिरेवान्तराले मनाग्विषयान्तरसंचारे संस्कारादिवशाज्जातेऽपि तन्निरोधेन पौनःपुन्येन संपादिता धारणाऽन्तराले यथायथा विषयान्तरगोचरवृत्तीनां प्रतिपक्षप्रागुक्तसंस्कारदार्ढ्यादल्पीभावतरतमादिभावस्तथातथा धारणाया भवत्युत्कर्षः । धारणैव चाभ्यासशब्देनोच्यते । धारणाप्रकर्षात्सर्वथैवेष्टगोचरवृत्तीनां विषयान्तरवृत्त्यनन्तरितत्वे वृत्तितद्गोचरज्ञातृभेदाकलने यः प्रवाहः स ध्यानम् । तत्प्रकर्षादुक्तभेदाकलनरहितध्येयैकमात्रनिर्भासिनिरुक्तवृत्तिप्रवाहः साक्षात्कारात्मको योगाङ्गं समाधिः । तत्प्रकर्षाच्च स एव प्रवाह इष्टैकसाक्षात्काररूपस्तदशेषविशेषाकलनात्माङ्गी समाधिः स योग इत्युच्यते तमभिप्रेत्याह—**तत्पूर्वको योगः समाधिरिति ।** तत्पूर्वकत्वंचानुपदोक्तरीत्या स्वोत्तरध्यानोत्तरसमाधिपूर्वकत्वमेव योगशास्त्रे तथैवोक्तत्वादिति ॥ ९—११ ॥ **स्तूयत इति ।** स्तुतिः पूर्वपूर्वसाधनेष्वसमर्थस्य तत्र नियत प्रवृत्त्यर्था नतु वस्तुपरा । वस्तुतो ध्यानाद्विधिपूर्वकश्रवणमननादिजन्मनस्तत्त्वसाक्षात्कारहेतोस्तद्द्वारा संसारमूलाविद्योच्छेदकादङ्गेन कृतस्य कर्मफलत्यागमात्रस्य चेतोविशुद्धिद्वारा संसारनिवृत्तेरतिव्यवहितहेतोरुत्कृष्टत्वस्याभावात् । **यदा सर्वे इत्यादि ।** श्रुतिषु श्रुतस्य विश्वमिथ्यात्वग्रहेण दृढीभूतस्याद्वितीयब्रह्मात्मत्वस्य ग्रहेणाविद्यापगमेन हृदि संस्काररूपेणाप्यवस्थितानां कामानां परित्यागस्य सहेतुकसंसारशान्तिरूपफलेन निरन्तरस्य यत्सामान्यं कथंचित्कामत्यागत्वं कर्मफलस्यापि कामत्वेन तत्त्यागेऽपि गतं तेन सामान्येन संसारशान्तिव्यवहितेऽपि तन्निरन्तरत्वमारोप्य स्तुतिरभिहिता भवत्युचिता । यथेदानीन्तनब्राह्मणानां ब्राह्मणत्वसामान्येनागस्त्यपरशुरामादावाश्चर्यमहिमसमानाधिकरणतया गृहीतेन तादृशमहिमानमारोप्य भवति हि स्तुतिर्दृष्टेति भावः । त्यागादनन्तरं संसारस्य शान्तिरुपशम इत्यन्वयः । श्रुतिषु लक्षणेषु च साधनत्वमन्तर्गतमित्यन्वयः । श्रुतिष्वन्तर्गतत्वं प्रतिपाद्यतया लक्षणेषु घटकतया बोध्यम् ॥ १२ ॥ **उदितहोमविधाविति ।** अग्निहोत्रप्रकरणेऽग्निहोत्रहोम उदयोत्तरकालत्वेनोदयपूर्वकालत्वे च विकल्पेनोदिते जुहोत्यनुदिते जुहोतीति वाक्याभ्यां विहितस्तत्रोदितहोमपक्षपरिगृहीतृप्रवृत्तयेऽनुदितहोमस्य शबलोऽस्याहुतिमभ्यवहरति । यात्वनुदिते जुहोतीत्यनेन निन्दा कृता सा नानुदितहोमस्य बलवदनिष्टानुबन्धित्वबोधनेन हेयत्वपरा तस्यापि विहितत्वादपि तु लक्षणयोदितहोमप्राशस्त्यपरा

तद्वदित्यर्थः । इदमुदितहोमनिन्दाया अप्युपलक्षकम् । **नहि निन्देति ।** विधिवाक्यसमभिव्याहृता वाक्यान्तरेण विहितस्य निन्देत्यर्थः । तस्या निन्दापरत्वे प्रतीतैकवाक्यताभङ्गापत्तेर्विध्यन्तरविरोधापत्तेश्च । एतेन निषेधसमभिव्याहृताया वाक्यान्तराविहितगोचराया निन्दाया निन्दापरत्वेऽपि नासङ्गतिः । **वृत्तस्वाध्यायेति ।** वृत्तानि सम्यगनुष्ठितानि तेषु तेषु ब्रह्मचर्याद्याश्रमेषु तत्तदाश्रमोचितानि स्वाध्यायादीनि वेदाध्ययनादिनित्यनैमित्तिकानि तैः कृतो योऽहंकारो गर्वस्तस्मादित्यर्थः ॥ १३—१६ ॥ **विवृणोतीति ।** पौनरुक्त्यनिरासाय ॥ १७—२० ॥

इति श्रीधर्मदत्तशर्मणा विरचिते गूढार्थदीपिकालोके द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ।

**वाक्यार्थनिष्ठ इति ।** तत्त्वमस्यहं ब्रह्मास्मीत्यादिमहावाक्यार्थजीवब्रह्माभेदप्रतिपादक इत्यर्थः । **कथमभेद इति ।** पुत्रः पिता स्वामी भृत्यो ब्राह्मणः क्षत्रियो मूर्खः पण्डितो दरिद्रो धनी त्वमयमहमित्याद्यखिलजनानुभवसिद्धभेदानां जीवानां सर्वेषामेकेन परमात्मनाऽभेदे तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन सर्वेषां जीवानां परस्परमभेदापत्त्या भेदानुभवबाधापत्तिरित्यभेदः कथमुपेयो न कथंचिच्छ्रुतिश्चाभेदप्रतिपादिकोपचरितार्था भविष्यतीत्यर्थः । **अविद्याकल्पितेति ।** तात्पर्यग्राहकलिङ्गैरशेषवेदान्तानां नित्यनिर्दुष्टस्वतःप्रमाणानामद्वितीये चिदेकरसे ब्रह्मात्मनि तात्पर्ये निर्णीत उपचरितार्थत्वस्य वक्तुमशक्यतया सतर्कयुक्तिप्रचयसहकृतश्रुतिसिद्धस्याभेदस्य बाधितुमशक्यतया भेदानुभवस्याशेषपुरुषीयस्यापि चन्द्रवितस्तिपरिमाणग्रहवद्बाधितत्वस्यैव वाच्यत्वात्तत्त्वस्य दोषनियतत्वादनादिप्रवाहे तस्मिन् भ्रमकलापेऽनाद्यविद्यातिरिक्तस्य दोषताया वक्तुमशक्यतयाऽद्वितीयब्रह्माज्ञानस्यैव दोषत्वाभ्युपगमादविद्याजन्यभ्रमरूपकल्पनासिद्धानात्मान्तःकरणादिधर्मत्वात्संसारस्य जन्ममरणसुखदुःखप्रबन्धस्य भिन्नत्वस्य चेत्यर्थः । तथाच भिन्नतया कल्पितानामन्तःकरणादीनां भेदस्यैव तदुपाधिकेषु जीवेषु सर्वानुभवगोचरत्वात्संसारस्यापि तदुपाधिकस्यैव तेषु प्रतिभानाद्यावदज्ञानं व्यावहारिकजीवभेदेसत्त्वपि तेषां पारमार्थिकभेदविरहेण परस्परामेदस्येष्टतया तदापादकत्वस्यैकब्रह्मात्माभेदेऽसंभवात्तदनुपपत्तिशङ्का न संभवतीति भावः । **तदर्थमिति ।** एकस्य जीवस्याविद्याकल्पितान्तःकरणाद्यौपाधिकसंसारित्वभेदसिद्ध्यर्थमित्यर्थः । उपाध्युपधेयभावस्य भेदनियतत्वादन्योपाधीनां नानात्वमुपधेयस्य चैक्यमिति विरुद्धं स्यादित्युपाधिविवेकेन भेदेनोपधेयग्रह आवश्यक एवौपाधिकभेदग्रहे सच प्रतिपादनेन स्यादिति क्षेत्ररूपोपाधिक्षेत्रज्ञरूपोपधेयभेदं प्रतिपादयति भगवानस्मिन्नध्याय इत्याह—**देहेन्द्रियान्तःकरणेभ्य इत्यादिना ।** यद्यपि जीवान्तःकरणयोर्भेदो न पारमार्थिको ब्रह्मण एकस्यैव पारमार्थिकत्वेनान्तःकरणादेरप्यपरमार्थतया तत्प्रतियोगिभेदस्य पारमार्थिकत्वासंभवादित्यपारमार्थिकप्रतिपादनं भगवतो नोचितं तथापि व्यावहारिकौपाधिकजीवभेदग्रहौपयिकोपाध्युपधेयभेदस्य तादृशस्यैवापेक्षितत्वेनापारमार्थिकत्वेऽपि तस्य न कापि क्षतिरिति बोध्यम् । कर्मत्वमित्यभिप्रैतीत्यनेनान्वेति । **क्षेत्रज्ञशब्दे चेति ।** सप्तमीयमौपश्लेषिकी । तेन क्षेत्रज्ञशब्दोपश्लिष्टमितिशब्दमाहरन् प्रयुञ्जान इत्यर्थः । **तमिति ।** तच्छब्दात्क्षेत्रगोचराहन्त्वाद्यभिमानकर्तृत्वरूपेणोपहितस्य ज्ञानकर्मत्वयोग्यस्योपस्थापकात्कर्मत्वबोधकद्वितीयाप्रयोगे समुचिते कृतेऽपि तत्समानाधिकरणक्षेत्रज्ञशब्दादुचितां द्वितीयां विना द्वितीयां प्रस्फुटकर्मत्वबोधिकामप्रयुज्येति शब्दं धात्वर्थज्ञानानुकूलव्यापारैकदेशज्ञानान्वय्याकरार्थकं प्रयुञ्जानः क्षेत्रज्ञपदार्थे प्रतिक्षेत्रमेकस्मिन्निर्विकारचिद्रूपे ज्ञानकर्मत्वस्य मुख्यस्य चित्तादात्म्यरूपस्याभावमभिप्रैति । तद्बोधाभिप्रायवान्भवतीत्यर्थः । एवं च 'कमादमुं नारद इत्यबोधी'त्यस्य व्याख्याने इतिशब्देन कर्मत्वस्याभिधानान्न द्वितीयेत्युक्तेरितिपदाभिधानेऽपि कर्मत्वप्रतिपत्तेरेवं तत्समानाधिकृततत्पदार्थस्य द्वितीयया कर्मत्वे बोधिते क्षेत्रज्ञपदार्थेऽपि तत्प्रतिपत्तेरसङ्गतिरिति निरस्तम् । आकाराख्यस्यौपचारिककर्मत्वस्य बोधनेऽपि मुख्यकर्मत्वाभावबोधतात्पर्ये विरोधविरहात्तत्पदार्थनिष्कृष्टचैतन्यांशेनैव क्षेत्रज्ञपदार्थसामानाधिकरण्ये तात्पर्याद्विशिष्टस्यैव कर्मत्वप्रत्ययाच्च । एतादृशतात्पर्योन्नयनबीजं तु लघुभूतस्येति शब्दप्रयोगात्प्रसिद्धकर्मत्वार्थकद्वितीयाप्रयोगस्याविधानम् । **कर्तृगतेति ।** अभिधानकर्तृगतेत्यर्थः । **विशेषेति ।** विवेकित्वादिविशेषेत्यर्थः । **विवेकिन इति ।** क्षेत्रक्षेत्रज्ञयोर्जडत्वेन चित्त्वेन च यो विवेको भेदस्तद्विद इत्यर्थः । कर्मत्वमन्तरेणैवेत्यस्य तस्य मुख्यकर्मत्वाभावज्ञानेऽपीत्यत्र तात्पर्यम् । तथाचाविद्याप्रत्युपस्थापितौपाधिकभेदवत उपाध्युपरागेणोपाधिवन्नानाविकारभाजोऽपि वस्तुत एकस्य निर्विकारचिद्रूपस्य मुख्यकर्मत्वाभावेनाकर्मत्वं विदन्तोऽपि क्षेत्रगोचराहन्त्वाभिमानाश्रयोपाधिकलुषितस्वरूपगोचरवास्तविकनिर्विकारचिद्रूपक्षेत्रज्ञस्वरूपाभेदाकारज्ञानानुकूलव्यापारकर्तारः क्षेत्रक्षेत्रज्ञविवेकविद इत्यर्थे भगवद्वाक्यस्य तात्पर्यमुन्नीयत इति शब्दप्रयोगादित इति समुदायार्थः । **कथयितुमिति ।** व्यञ्जयितुमित्यर्थः । **विलक्षणवचनव्यक्त्येति ।** द्वितीयामप्रयुज्येति शब्दयोगलक्षणयेत्यर्थः । यद्वा विलक्षणा या वचनस्य व्यक्तिर्व्यञ्जनाख्यो व्यापारस्तेनेत्यर्थः । **एकत्रेति ।** एकत्राभिधानलक्षणक्रियायां तद्विद इति कर्तृपदोपादानेनेत्यर्थः । **निर्दिशतीति ।** प्रयुङ्क्त इत्यर्थः ॥ १ ॥ २ ॥ यदित्यस्यार्थः कार्यमिति ॥ ३—५ ॥ **क्रोध इतीर्ष्येतीति ।** क्रोधो यद्यपि जिघांसापरोन्नत्यसहिष्णुता चेर्ष्या तथापि कार्यकारणयोरभेदोपचारादिदम् । **निरुपाधीच्छेति ।**

इच्छानधीनेच्छेत्यर्थः । निरुपाधिद्वेषेति द्वेषानधीनद्वेषेत्यर्थः ॥ ६ ॥ **पञ्चभिरिति** । श्लोकैरिति शेषः । आहेत्यनेनान्वयः । **श्लाघनमिति** । गुणवत्त्वप्रयोज्योत्कृष्टत्वज्ञानानुकूलशब्दात्मकव्यापार इत्यर्थः । **यथाहृदयमिति** । कार्यकारणयोरभेदाद्यथा ज्ञानेच्छादिकम् । उपनीयाध्यापकस्तत्सेवनस्य ब्रह्मचर्याश्रम एव वृत्तत्वादिति शेषः ॥ ७ ॥ **आलोचनमिति** । जन्मादिषु यथादर्शं दुःखाद्यनुबन्धि तस्य तथैव ज्ञानमित्यर्थः । ज्ञानमात्रस्य प्रकृतानुपयोगित्वात् । दोषस्य हेयस्य साधनतया दर्शनम् दुःखे च तथात्वं दुःखे सति तदनुस्मृतिपूर्वकस्तत्साधने द्वेषस्ततो हिंसा ततः पापं ततो दुःखमिति दुःखानुबन्धितया हेयद्वेषादिरूपदोषवत्त्वेन बोध्यम् । दुःखे च साक्षाद्दुःखासाधनत्वाद्दुःखरूपदोषपरित्यागः ॥ ८—११ ॥ **अनादीत्येतावतैवेति** । आदिपदान्मतुपं विधाय पश्चान्नञ्समासे कृते आदिमन्न भवतीत्यनादिमदिति प्रागुक्तेन कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेदर्थप्रतिपत्तिकर इति व्युत्पत्तिविरोधो यद्यपि न भवति भवति चादेरभावोऽनादीति नञादिपदस्य प्रथमं समासं विधाय मतुपि कृते कर्मधारयपदस्य बहुव्रीहीतरपरत्वात् तत्तु न प्रागुक्तं नापि विवक्षितं तथाप्यनादीत्येतावतैव बहुव्रीहिणा तात्पर्यविषयार्थलाभसंभवेऽनादिमदिति गुरूक्तिरनुचितेत्यत्र तात्पर्यम् । **अतिशायने नित्ययोग इति** । अनादिशब्दाद्बहुव्रीहावनादित्वयोगमात्रं प्रतीयते तावन्मात्रस्य विवक्षितत्वे भवेन्निष्प्रयोजनं गुरूक्तिर्दोषावहा । नच तदस्ति कार्यस्यापि तत्संभवात् कार्यस्यास्ति हि रूपद्वयमव्याकृतनामरूपावस्थाशालि स्वाभिन्नं कारणं रूपं व्याकृतनामरूपावस्थाशालि रूपमपरमिति स्वान्यूनसत्ताकेऽपि रूपे कारणात्मके तस्य संभवात्कार्यकारणयोरभेदस्याभ्युपगमादतोऽनादित्वस्यातिशयेन नित्यं वा योगो विवक्षितः स च न बहुव्रीहिमात्राल्लभ्यत इति तादृशार्थको मतुप्प्रत्ययोऽर्थवानिति सप्रयोजना गुरूक्तिरुचितैव । नचानादित्वेनाद्यभावरूपेण यस्य योगस्तस्य नित्यमेव नह्येकं वस्तु कदाचिदनादि कदाचित्सादि भवतीति नित्यपदव्यावर्त्याभावान्निःप्रयोजनत्वमेव स्यादिति वाच्यं । नित्यत्वविशिष्टयोगस्य स्वान्यूनसत्ताकनिखिलावस्थायोगरूपस्य विवक्षितत्वात् । कार्यस्य स्वान्यूनसत्ताककारणावस्थायामनादित्वयोगेऽपि कार्यावस्थायां तदभावेन कार्यस्य प्रागुक्तरीत्यानादित्वयोगेऽपि विवक्षितानादित्वनित्ययोगाभावात्तस्यैव व्यावर्त्यत्वस्य संभवाद्ब्रह्मणः स्वान्यूनसत्ताकावस्थानकार्यात्मिकेति तादृशनिखिलावस्थास्वेवानादित्वयोगेन निरुक्तानादित्वयोगो ह्यव्याहतः । यद्वोक्तप्रक्रियया कार्यस्याप्यनादित्वं स्यादित्यादिशब्दादतिशययोगादौ मतुपं विधाय नञ्समासाश्रयणेनानादिमदित्युक्तम् । तथासत्यादित्वेन स्वसमानसत्ताकसर्वावस्थासु योगलक्षणो नित्ययोगः कार्यत्वेन कार्यस्यैव तद्भिन्नत्वं ब्रह्मणोऽव्याहतमन्यथा कार्यात्मना ब्रह्मणोऽप्यादिमत्वेन तद्भिन्नत्वं न स्यात् स्याद्वा कार्यस्यापि स्वाधिष्ठानब्रह्मात्मना तथात्वम् । तथोक्तौ च तादृशभेदस्य स्वान्यूनसत्ताकनिरवच्छिन्नस्वरूपसंबन्धेन सत्त्वस्य विवक्षितत्वात् । यत्र यस्य प्रतियोगि व्यावहारिकं नहि तत्र तस्य व्यावहारिकत्वम् । ब्रह्मणि न प्रतियोगिव्यावहारिकमिति तादृशाभावस्य व्यावहारिकस्य सत्त्वं कार्ये च प्रतियोग्यस्ति व्यावहारिकं न तत्राभावस्तादृशस्तादृशेन संबन्धेनेति भवत्यदोषः । एतेनानादिपदात्कृतनञ्तत्पुरुषरूपान्मतुपः प्रागनुक्तत्वेन तस्येदानीं कल्पान्तरत्वेन तत्सूचकवाकाराद्यभिधानमुचितमेकस्य वाकारस्यावृत्तिकरणं वानुचितमिति निरस्तम् । अथवा जीवाविद्याद्यनादय एव व्यावर्त्यास्तेषामनादित्वेन योगे सत्यपि न नित्ययोगस्तत्स्वरूपवदनादित्वतद्योगयोरपि कल्पितत्वेन ब्रह्मज्ञाननिवर्त्यत्वात् । ब्रह्मणि त्वनादित्वमभावरूपं ब्रह्मस्वरूपं संबन्धोऽपि ब्रह्मस्वरूपो नित्य एवेति प्रयोजनवती गुरूक्तिरुचितैवेति भावः । **दिङ्नास्त्येवेति** । क्लृप्तेनाकाशेन तत्तदुपाध्यवच्छिन्नेन प्राच्यादिव्यवहारोपपत्त्या परापरत्वासमवायिकारणसंयोगाश्रयत्वस्यापि तत्रैवोपगमसंभवेन च दिशि मानाभावान्नास्ति दिगित्यर्थः । आकाशस्य श्रुतिसिद्धोत्पत्तिकत्वेन तत्पूर्वकालव्यवहारविषयत्वस्याकाशेऽसंभवादीश्वरस्यैव तद्विषयस्योपगन्तव्यतया सर्वकालप्रत्ययेषु तस्यैव विषयत्वौचित्यादाह—**कालश्च नेश्वरादिति । अतिरेके वेति** । क्लृप्ते विनिगमनाविरहात्कल्प्यमन्यत्सिद्ध्यतीति न्यायेन दिक्कालयोरतिरिक्तयोरेवाभ्युपेयत्वात् । तथाहि दिग्व्यवहारविषयत्वस्याकाशे परमेश्वरे मायायां वा विनिगमनाविरहेण कल्पने लाघवादतिरिक्तदिशस्तद्व्यवहारविषयतया सिद्धिरेवं कालेऽपि परापरत्वासमवायिकारणसंयोगकारणत्वेऽपि विनिगमनाविरहेणानेककारणतायां गौरवेण लाघवादेककारणत्वस्योपेयतया तादृशसंयोगाश्रयतयापि दिगादिसिद्धिरिति ॥ १२—१८ ॥ **कारणसापेक्षत्व इति** । अनादेरेवैकस्य कारणत्वे तस्य पूर्वपूर्वकाले सत्तया कार्यत्वेनाभिमतस्यापि पूर्वपूर्वं सत्त्वापत्त्यानादित्वमकार्यत्वं च स्यात् आगन्तुकस्य कारणकोटिप्रवेशे तस्याप्यन्यत्कारणं तस्याप्यन्यदित्यनवस्थाप्रसङ्गादित्यर्थः । अत्रेदमवधेयम् । उक्तानवस्थाया न दोषाधायकत्वं बीजाङ्कुरप्रवाहवदनादित्वाज्जीवाश्रिताविद्योपगन्तॄणामाचार्यवाचस्पतिमिश्राणां जीवाविद्ययोरन्योन्याश्रयस्य परिहारो बीजाङ्कुरप्रवाहवदनादिप्रवाहत्वेनैव हि संमतस्तन्मतेऽविद्याया अनादित्वमपि प्रवाहानादित्वमेव । यद्युक्तानवस्था दोषाधायिका स्यात्तदानादेरेकस्या मायाया अनादेः क्षेत्रज्ञस्य च कारणत्वेऽपि तयोरनादित्वेन कार्यत्वेनाभिमतस्य पूर्वपूर्वमुत्पत्त्यापत्त्याऽनादित्वमकार्यत्वं च स्यादित्यागन्तुकस्यादृष्टादेः कारणत्वोपगमे तदागन्तुकतासिद्धये तंप्रत्यागन्तुकस्य तंप्रत्यागन्तुकस्य कारणत्वमित्यवर्जनीयानवस्थापि तादृशी स्यादित्यनवस्थोद्भावनं यद्यपि न किंचित्तथापि कार्यवैचित्र्यायानादिप्रवाहवद्विचित्रादृष्टादेः कारणस्य निमित्तात्मकस्यावश्योपेयतया तैस्तैः प्रमाणैर्जगद्विभ्रमोपादानतया सिद्धाया मायाया लाघवादेकत्वमेवोपेयम् । दोषस्य निमित्तकारणैरेव परिहृतत्वात् । एकस्याश्च तस्या अनादित्वमेव सादित्वेऽप्रामाणिकानवस्थाप्रसङ्गात् । यथाचाविद्यायाः स्वतएवानादित्वेऽपि हि श्रीमद्वाचस्पतिमिश्रमतनिर्वाहस्तथोक्तमविद्यासा-

धनप्रस्ताव इति । अविद्यायाः कल्पितत्वेऽपि यथाऽनादित्वनिर्वाहस्तथोक्तं दृष्टसृष्टिवादप्रस्तावे कल्पितत्वेऽप्यनादित्वोपगमादुत्पत्तेरनभ्युपगमेनाविद्यायाः किमुपादानमित्यस्यापि नावकाशः । यथाच कल्पितत्वं ब्रह्मातिरिक्तस्य तथा भूयः प्राक् प्रपञ्चितम् । **पुरुषस्यानादित्वमिति** । एतदपि प्रागेव विस्तरेणोक्तमिति नेह व्याख्यायते । गुणानां प्रकृत्यनन्यत्वात्स्वतःप्रकृतिकार्यत्वासंभवादाह—**सुखदुःखमोहानिति** ॥ १९ ॥ **तत्स्थानीति** । शरीरस्थानीत्यर्थः । त्रयोदशेति पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनोबुद्ध्यहंकाराणीति त्रयोदशेत्यर्थः ॥ २० ॥ **स यथाकाम इति** । यादृशफलेच्छावान् तत्फलसाधने कर्मणि कर्तव्यत्वाध्यवसायवान्भवति यत्कर्मगोचरकर्तव्यतानिश्चयवान् तत्कर्म कुरुते यत्कर्म कुरुते तदीयफलवान्संपद्यत इत्यर्थः । यादृशफलोपभोगानुकूलं जन्मापि तत्कर्मण एव फलमिति भावः ॥ २१ ॥ **द्रष्टृत्वेति** । गौरोऽहं काणोऽहममुमर्थं संकल्पयन् विकल्पयन् बाहमध्यवश्यश्चाहं चेतनोऽहं पश्यामीत्याद्यनुभवसिद्धं देहादीनां द्रष्टृत्वं बोध्यम् । **अत्यव्यवहितो द्रष्टेति** । देहाधिष्ठितेन्द्रियकरणकान्तःकरणवृत्त्यभिव्यक्तचैतन्यरूपस्य विशिष्टस्य दर्शनस्य कर्तृत्वं साधनत्वमात्रं स्वव्यञ्जकवृत्तिसाधनेन्द्रियाधिष्ठानत्वं व्यवहिततमं बाह्ये देहे तादृशवृत्तिकरणत्वरूपं व्यवहिततरमिन्द्रिये तादृशवृत्तितादात्म्यं व्यवहितमन्तःकरणे तादात्म्यमात्ररूपमत्यन्ताव्यवहितं चेतन आत्मनीत्यव्यवहितो द्रष्टात्मेत्यर्थः ॥ २२ ॥ **निवृत्ते ममाज्ञानतत्कार्य इति** । वेत्तीत्यन्वयः । **इन्द्रवदिति** । इन्द्रो यथा संपन्नतत्त्वज्ञानोऽधिकारविशेषापादकप्रारब्धकर्मभिस्तत्तत्फलभोगानुकूलाविहितकर्मकर्तापि नाविहितकर्मफलभोगाय पुनरभिजायते तद्वदित्यर्थः । इन्द्रदृष्टान्तोपन्यासस्तस्य तत्त्वज्ञाननिषिद्धाचरणादेः श्रुतिप्रसिद्धत्वात् । 'तदधिगम' इति शारीरकसूत्रम् । तस्य परमात्मनोऽधिगमे साक्षात्कारे उत्तरस्य भविष्यत्वेनाभिमतस्यादृष्टस्याश्लेषः सत्यपि तत्साधनेऽनुत्पादः पूर्वस्योत्पन्नस्य प्रारब्धेतरस्य विनैवभोगं विनाशः श्रुतौ तथैव व्यपदेशादित्यर्थः ॥ २३—२५ ॥ **अनिर्वचनीयसदसत्त्वमिति** । निर्वक्तुमशक्यं सत्त्वमसत्त्वं च यस्य तदित्यर्थः । प्रागिदं विस्तरेणोक्तम् । **इतरेतराविवेकेति** । इतरेतरभेदाग्रहेत्यर्थः ॥ २६ ॥ अन्यद्विनाशित्वादिकम् ॥ २७ ॥ २८ ॥ शुभाशुभकर्मकर्तार इत्यनेन तत्तद्विचित्रफलभोक्तृत्वेन विषमाश्वेत्यनेन च कश्चिच्छुभं करोति कश्चिदशुभमेकस्मिन्नेव काले कश्चित्पूर्वकृतशुभफलं भुङ्क्ते कश्चित्पूर्वकृताशुभफलं भुङ्क्ते कश्चिज्जानाति घटं कश्चित्पटं कश्चित्सुषुप्तो न किमपि कश्चित्स्वप्नात्पश्यति कश्चित्प्रबुद्ध इत्यादिप्रविभागानां सर्वानुभवसिद्धानां प्रतिशरीरं जीवात्मनां चेतनानां भेदं विनानुपपत्तियुक्तिर्नानात्वे जीवानां प्रदर्शिता तया च वास्तविका भेदा औपनिषदान्यसर्वतीर्थकरैः प्रतिपन्ना औपनिषदैस्तु ते भेदा अविद्याकल्पितोपाधिप्रयुक्ता जीवभेदानुभवविषयास्तथैव स्वीकृताः । औपाधिकानामपारमार्थिकानामपि भेदानां सार्वजनीनानुभवगोचरता हि नैयायिकादिभिरपीयं प्राची न प्रतीचीयं प्रतीचीनोदीचीति भेदाः दिशः क्षणमुहूर्तयामाहोरजनीमासर्तुवर्षभेदाः कालस्य चैत्रमैत्रादिश्रोत्रभेदानुभवविषया भेदा आकाशस्य स्वीकृता एव तत्प्रयुक्ताः कार्यभेदाश्च समानेऽप्येकत्वे विभुत्वे च सर्वप्रमाणशिरोमणितात्पर्यवदागमसिद्धमात्मैकत्वमपह्नुत्य दुःशिक्षातिमिरविप्लुतदृष्टित्वमृते किमन्यत्कारणमात्मभेदस्य पारमार्थिकत्वोपगमे न्यायसिद्धान्ताद्यनुसारिणां शरीरात्मत्वक्षणिकविज्ञानात्मत्वादिवादनिराकरणपरमतात्पर्यशालिनो लोककर्मकाण्डप्रसिद्धात्मभेदानुवादिनः परमार्थभूतमनादित्वं प्रतिपादयतो न्यायादिसूत्रसंदर्भस्याशयमविदुषां स्यादिति हि ते मन्यन्ते । सति चौपाधिके भेदे तद्गतानामेव शुभाशुभकर्मकर्तृत्वतत्फलसुखदुःखतद्भोगकामादीनां कल्पितभेदजीवगतत्वेन प्रतीतिर्न ते धर्मा जीवानां वास्तविकानामपि भेदा अपि तेषामेकत्वमेव तु स्वरूपानतिरिक्तं पारमार्थिकमित्यभिसन्धाय प्रकृत्यैवेत्यादिकं विवृणोति—**कर्माणि वाङ्मनःकायारम्भाणीत्यादिना** । अथ के ते उपाधयः कश्च तैः संबन्धः कीदृश्यान्यौपाधिकानि जीवस्वरूपाणि कथं चोपाधिगतानां जीवे धर्माणामुपलम्भ इत्यत्र सन्ति मतभेदा वेदान्तिनां त इह संक्षेपेण प्रदर्श्यन्ते । तथाहि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर' मितिश्रुतौ श्रुतानिर्वचनीयविचित्रानेकशक्तिमत्तया मायापदप्रतिपाद्या अतएव सांख्याभिमतप्रकृतेर्विलक्षणा जगत्प्रकृतिर्महेश्वरपदलक्ष्यशुद्धचेतनाश्रितैका प्रतिबिम्बभूतस्येश्वरस्य प्रतिबिम्बनकृत्स्नोपाधिस्तत्तद्विक्षेपावरणरूपानन्तशक्तिमत्त्वेन कल्पितानन्तप्रदेशभेदवती प्रतिबिम्बनोपाधितां गता परिच्छिन्ना जीवोपाधिस्तेषु तेषु प्रदेशेष्वविद्याभिधानेषु प्रतिबिम्बास्ते ते जीवा उपाधेरनादित्वात्परिच्छिन्नत्वाच्चानादयः परिच्छिन्नाश्च सर्वत्र प्रसिद्धोपदेशादित्यधिकरणभाष्ये द्युभ्वाद्यधिकरणभाष्ये च जीवस्य शरीर एव प्रतिलम्भस्याविभुत्वस्य च प्रतिपादनादित्येकं मतम् । 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवती'तिश्रुतौ त्रिगुणाया मूलप्रकृतेर्द्वौ भेदावुक्तौ तत्र शुद्धसत्त्वप्रधाना माया परमेश्वरोपाधिः प्रतिबिम्बने मलिनसत्त्वप्रधानाऽविद्या जीवप्रतिबिम्बनोपाधिरुपाधेर्विशुद्धमलिनत्वाभ्यामीश्वरजीवयोः सर्वज्ञत्वाल्पज्ञत्व इति कस्यचिन्मतम् । विक्षेपशक्तिप्रधाना मायेश्वरोपाधिरत एव स सर्वजगत्कर्तावरणशक्त्यप्राधान्यात्सर्वज्ञः । आवरणशक्तिप्रधानाऽविद्या जीवोपाधिरत एव जीवोऽज्ञः । विक्षेपशक्त्यप्राधान्यात्कस्यचित्प्रातिभासिकादेरेव स्रष्टेत्यपि कस्यचिन्मतम् । मतेष्वेतेषु प्रकृतेरेकस्या एव शक्त्यपरिच्छिन्नत्वपरिच्छिन्नत्वाभ्यां शुद्धमलिनसत्त्वप्राधान्याभ्यां विक्षेपावरणशक्तिप्राधान्याभ्यां वा काल्पनिको भेदो न व्यावहारिकोऽपि तयैव श्रुत्या स्वयमेव भवतीत्यभेदप्रतिपादनात् । नचोपाधिभेदंविनैकस्य प्रतिबिम्बभेदसंभव इत्यतः 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वर'इतिश्रुत्यनुसारादविद्यैका कारणमीश्वरोपाधिरन्तःकरणानि कार्याणि जीवोपाधिरूपाण्यविद्यान्तःकरणयोरुपाध्योः प्रतिबिम्बरूपावीश्वरजीवौ श्रुतावस्मिन्तयोरुपा-

धित्वस्य कण्ठत एवोक्ते'जीवेशावभासेनकरोती'त्यत्र जीवेशयोः प्रतिविम्बत्वमात्रप्रतीतेर्मायाविद्ययोरुपाधित्वाप्रतीतेरविद्याशब्देनान्तःकरणस्यैवोक्तत्वात्तस्यैवाज्ञत्वप्रयोजकत्वात्तत्कार्यस्य तस्य तदभेदस्यापि संभवात् । नचान्तःकरणस्य कार्यतया सादित्वाज्जीवोऽपि सादिरेव स्यात्तथा चाकृताभ्यागमप्रसङ्गो वासनाद्यभावेन स्तनपानादिप्रवृत्त्यभावप्रसङ्गश्चेति वाच्यम् । संसारस्यानादिताया एव स्वीकारेणादृष्टानां जातविपाकानां भोगेन क्षये स्थितानां विपाककालाप्राप्तावुपस्थिते प्रलयेऽन्तःकरणान्यदृष्टवासनासहितानि स्थूलरूपतामपहाय सूक्ष्मरूपेण संस्कारापराभिधानेन स्वकारणे प्रलीय निर्मृष्टचित्रकल्पान्यवतिष्ठन्ते । पुनः प्रलयावधौ पूर्णे विपाकाभिमुखेष्वदृष्टेषु स्थूलरूपतां प्रतिपद्यन्ते । एवं तत्पूर्वसर्गे तत्पूर्वसर्गे चेति नोक्तदोषस्य ह्यस्त्यवकाशः । सूक्ष्मरूपतापत्तिरेव हि विनाशो न बाधकात्तत्त्वज्ञानात्प्राङ्निरन्वयो विनाशः स्थूलरूपतापत्तिरेव तस्य कार्यत्वं तादृशावस्थमेव च तत्परिणामतया व्यपदिश्यते । सूक्ष्मावस्थागतान्यप्यदृष्टान्येव विपाककाले प्राप्ते स्वफलोपभोगसाधनस्यान्तःकरणादेः स्थूलरूपतापत्तौ तत्कारणस्य परिणामिनो विवर्तमानस्य च निमित्तस्य चेश्वरस्य सहकारितामापद्यन्ते । अन्तःकरणोपादानं साक्षादज्ञानं वा मिलितापञ्चीकृतभूतसात्त्विकांशो वेत्यन्यदेतदिति संक्षेपशारीरकमतम् । एषु च प्रतिबिम्बपक्षेषु यथा 'स्वयंज्योतिरात्माविवस्वानपो भिन्ना बहुधैकोऽनुगच्छत् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे'ति । 'अतएव चोपमा सूर्यकादिवदि'ति सूत्रमपि च प्रमाणम् । चित्रदीपे च 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति श्रुतौ देहादिसंघातरूपेण परिणतेभ्यो भूतेभ्य उपाधिरूपेभ्यः समुत्थानं तत्साम्येन तदुत्पत्त्योत्पादोऽनुविनाशस्तन्नाशेन नाशः प्रज्ञानघनस्य प्रतिपादितः । सच प्रतिबिम्बरूपस्यैव भवति तस्यैवोपाध्युत्पादविनाशाभ्यामुत्पादविनाशस्य लोके दर्शनात्स एव संसार्युपाधिसाम्यमापन्नो जीवः । स एव पुनः प्रज्ञानघनः पुनरनन्तरश्रुतौ 'अविनाशी वा अरे अयमात्मा' इत्यस्यामविनाशित्वेन प्रतिपाद्यते । नहि प्रतिबिम्बत्वविशिष्टरूपस्य तस्य विनाशिनोऽविनाशित्वसंभवः नाप्यपरिच्छिन्नः शुद्धः प्रज्ञानघनोऽयमिति निर्देष्टुमर्हः । परिच्छिन्नेऽध्यक्षे च वस्तुनि तादृशनिर्देशदर्शनात् । तस्मादुपाधिप्रतिबिम्बितस्य पूर्वनिर्दिष्टस्याधिष्ठानभूत उपाधिपरिच्छिन्न उपाधिधर्माकलुषिततया सर्वविक्रियारहितः प्रतिबिम्बाविवेकेन सुखी दुःखीत्याद्यध्यक्षानुभवगोचरः प्रज्ञानघनस्य कश्चिदात्मा प्रतिपादित इति विज्ञायते स न शुद्धः परिच्छिन्नोपाध्युपहितत्वादतएव नेश्वरो नापि जीव उपाध्यननुविनाशित्वादिभिः किंतु तुरीयः कूटस्थपदवाच्यो निर्विकारत्वात् । समस्तजीवधर्मावभासनसमर्थत्वाज्जीवसाक्षीत्यप्युच्यते । सच घटाकाश इव जीवस्तु तस्मिन्कल्पिते तदधिष्ठानेऽन्तःकरणाद्युपाधौ प्रतिबिम्बो घटस्थजले साभ्रनक्षत्राकाशप्रतिबिम्बतुल्यः शुक्ताविव रजतं तस्मिन्नेवाधिष्ठानेऽध्यस्तस्यासाधारणानन्दमयत्वपरिपूर्णत्वादिधर्मेण शुक्तित्वादिनेवाप्रतिभासमानः साधारणेन स्वयंत्वेनेदंत्वेनेवेदं रजतमिति प्रतीताविव स्वयमहं जानामि करोमीत्यादौ प्रथते । शुद्धस्तु महाकाशतुल्योऽनवच्छिन्नः शुद्धाधिष्ठितायां तस्मिन्कल्पितायां मायायामुपाधौ प्रतिबिम्ब ईश्वरः महाकाशस्थितजलमयमेघे नक्षत्रादिमयाकाशप्रतिबिम्बतुल्य इति सदृष्टान्तं शुद्धेश्वरकूटस्थजीवभेदेन चातुर्विध्यं प्रतिपादितम् । यदीश्वरचैतन्यं तदधिदैवतमित्युच्यते यज्जीवचैतन्यं तदध्यात्ममित्युच्यते । तत्राधिदैवतं त्रिविधम् । मायोपाधिकमीश्वर इत्येव प्रसिद्धमेकं । मायाकार्यापञ्चीकृतभूतसात्त्विकराजसांशकार्यान्तःकरणेन्द्रियादिसप्तदशसंघातात्मकलिङ्गशरीराभिधेयसूक्ष्मशरीरसमष्ट्यभिमानिहिरण्यगर्भाख्यं द्वितीयम् । पञ्चीकृतभूतकार्यस्थूलशरीरसमष्ट्यभिमानिविराट्पदाभिधेयं तृतीयम् । विराडेव वैश्वानर इत्यप्युच्यते । अध्यात्ममपि त्रिविधम् जागरे व्यष्टिस्थूलशरीराभिमानिविश्वपदाभिधेयकम् । स्वप्ने विगलितस्थूलशरीराभिमाने स्वस्वरूपावस्थव्यष्टिलिङ्गशरीराभिमानितैजससंज्ञं द्वितीयम् । सुषुप्तौ विगलितसूक्ष्मशरीराभिमानायां स्वकारणेऽविद्यायां प्रलीय सूक्ष्मावस्थतया स्थिते लिङ्गशरीरे तादृशतदभिमान्यज्ञानसौषुप्तस्वरूपासुखावभासिप्राज्ञपदाभिधेयं तृतीयम् । इदमानन्दशब्देनाप्यभिधीयते । एष्वेव त्रिषु स्थूलसूक्ष्मसूक्ष्मतरोपाधिकेषु तादृशोपाधिमदीश्वरत्रयभेदमुपाधिसाम्येन प्रतिपत्तिसौकर्याय प्रविलाप्य शुद्धादिभेदचतुष्टयरूपपादचतुष्टयवतो ब्रह्मणो विश्वादिपादत्रयनिरूपणं तुरीयस्य शुद्धस्य सौलभ्येन प्रतिपत्त्यर्थं माण्डूक्यादौ कृतम् । प्राज्ञ ईश्वरस्यान्तर्भावादानन्दमयशब्दितस्य तस्य सर्वेश्वरत्वादिना निर्देशोऽपि तत्रत्य उपपद्यत इति । क्वचिच्च जीवस्य पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन त्रैविध्यमुक्तम् । तथाह्युपाध्यवच्छिन्नः पारमार्थिको जीवोऽवच्छेदकोपाधिविगमेऽप्यवच्छेद्यस्वरूपस्य तस्य त्रिकालाबाध्यत्वादयमेवान्यत्र कूटस्थशब्देनाभिहितस्तस्मिन्नुपाधौ चेतनप्रतिबिम्बो व्यावहारिको जीवः प्रतिबिम्बस्य कल्पनामात्रत्वेन पारमार्थिकत्वासंभवात् । यावद्व्यवहारमुपाधेर्वर्तमानत्वेन वर्तमानतया व्यावहारिकत्वम् । स्वप्ने कल्पितः स्वाप्नदेहादावहमभिमानी प्रातीतिकः निद्रारूपदोषापगमे प्रबोधे बाधादिति । नास्ति मायाविद्ययोर्भेदः प्रामाणिको न वा शक्तीनां प्रदेशभेदकत्वमानुभविकमितीश्वरजीवयोरुभयोः प्रतिबिम्बरूपत्वासंभव इत्येकस्यामनिर्वाच्यायां शुद्धब्रह्माश्रयविषयायां चित्प्रतिबिम्बो जीवो बिम्ब ईश्वरः प्रतिबिम्बत्ववद्बिम्बत्वरूपेण काल्पनिकधर्मेणोपधानान्न शुद्धत्वमुपाधेः प्रतिबिम्बपक्षपातित्वान्नेश्वरस्यावृत्तत्वाज्ञत्वादिकमेकत्वे च जीवस्य तेन जीवेनैकमेव शरीरं सजीवं शरीरान्तराणि निर्जीवान्येव स्वप्नदृष्टशरीरकल्प्यानि तथैव चेष्टावत्तया प्रतिभासमानानि तदविद्यया तथैव कल्पनात् । स्वप्ने यथा सर्वेषां स्वाप्नपुरुषाणां व्यवहारास्तथैव जगद्व्यवहाराः यथा प्रबोधे स्वाप्नप्रपञ्चापगमस्तथा तस्य विद्याप्रबोधोदये तदविद्याकल्पितसंसारापगमस्तन्मोक्षश्च बन्धमोक्षव्यवस्था नास्ति चात्र शुकादिमोक्षः स्वप्नप्रतीतमोक्षतुल्य एवेत्येकं मतम् । हिरण्यगर्भ एवैको

मुख्यो जीवोऽविद्याप्रतिबिम्बरूपोऽन्ये चान्तःकरणेषु तत्प्रतिबिम्बरूपा जीवाभासा एव, तैरेवान्यानि शरीराणि सजीवानि तेषां ज्ञानोदये हिरण्यगर्भभावापत्तिस्तन्मुक्तौ शुद्धब्रह्मरूपतापत्तिरित्यपरं मतम्। एकेनैवाविद्याप्रतिबिम्बेन जीवेन सर्वाणि शरीराणि सजीवानीत्येतन्मतमुक्तमताभ्यामुत्तमम्। नचात्रेह देहे सुखमनुभवामि तत्र दुःखमित्यनुसंधानप्रसङ्ग इति वाच्यम्। जन्मान्तरानुसंधानादर्शनेन शरीरभेदे तदभावस्य कल्पनाद्यापकत्वेऽपि तस्य सुखदुःखाद्यभिव्यक्तिप्रयोजकानां तदुपाध्यज्ञानपरिणामानां प्रतिशरीरमन्तःकरणानां भिन्नत्वेन तत्तच्छरीरेन्द्रियविषयसंपर्ककारिकारणवशात्सुखदुःखेच्छाज्ञानकृत्याद्यात्मना परिणते तत्तदन्तःकरण एव सर्वतो विसृत्वरस्य सवितृप्रकाशस्य दर्पण इव तस्याभिव्यक्तौ तत्तच्छरीरावच्छेदेनैवाहं सुखी जानामीत्यादेर्व्यवस्थितस्यानुभवस्योपपत्तिर्द्रष्टव्या। तत्तदन्तःकरणशरीराद्यभिमानप्रयुक्ता चैत्रमैत्रादिभेदव्यवस्था च मोक्षश्चैकदैव श्रवणादिसाधनसंपत्त्या यस्यान्तःकरणस्य तत्त्वसाक्षात्कारात्मकः परिणामस्तस्य बाधात्तदवच्छेदेन दुःखाद्यनुपलब्धिमात्राच्छुकादिषु मुक्तव्यवहार इति। बन्धमोक्षव्यवस्थाज्ञस्याय कैश्चिन्नानैवाविद्यास्ति 'इन्द्रो मायाभिः' इतिश्रुतौ बहुवचननिर्देशात् 'मायां तु' इत्यादिश्रुतौ जात्यभिप्रायकमेकवचनम्। तेषुतेष्वविद्योपाधिषु भिन्नेषु भिन्नानि प्रतिबिम्बानि जीवपदाभिधेयानि बिम्बं त्वेकमेवेश्वरपदाभिधेयमित्युच्यते। ताश्च ब्रह्माश्रिता ब्रह्मविषयिण्यो जगदुपादानभूताः संभूयैव जगदाकारेण परिणमन्ते। तत्त्वज्ञानेनैकस्या नाशेऽपि पुनर्द्रागेवावस्थितानां परिणामः खण्डपटस्थलवदिति कस्यचिदुपगमः। तत्तज्जीवोपाध्यविद्यानां प्रत्येकमेव जगत्परिणामः संवादश्चैकस्मिन्विषये युगपदेकरज्जूपादानकानेकपुरुषीयसर्पविभ्रमस्थलवदित्यपरस्येति। अन्तःकरणोपाधिषु प्रतिबिम्बभूतास्तैरुपाधिभिरवच्छिन्ना वा जीवास्तदाश्रिताः ब्रह्मविषयिण्यो जगदाकारेण विवर्तमानब्रह्मसहकारिमात्ररूपाः तत्तज्जीवसंसारोभयकल्पनानिमित्तभूतास्तत्तज्जीवतत्त्वज्ञाननिवर्त्या अनिर्वाच्या वाचस्पतिमिश्रैरभ्युपेयन्ते। मतमेतत्प्रागेव परिष्कृतमिति। यद्यपि नीरूपेऽज्ञान उपाधौ नीरूपस्यापि ब्रह्मणोऽविद्यानिरूपणप्रस्तावेऽस्ति प्रतिबिम्बसंभवो दर्शितः एवं प्रतिबिम्बस्थले बिम्बाद्भेदस्यान्यदेशस्थत्वस्याभिमुखत्वादेश्च कल्पनेन कल्पिततत्तादृशधर्मविशिष्टबिम्बस्यैव प्रतिबिम्बपदार्थत्वं धर्मिकल्पनातो धर्मकल्पनाया लघुत्वात् धर्मिकल्पने धर्मकल्पनाया अप्यावश्यकत्वात्। शुक्तिरजतादिस्थले रजतरूपधर्मिकल्पना हि रजतं साक्षात्करोमीतिप्रत्ययान्यथानुपपत्त्योरीकृता दर्पणे मुखं साक्षात्करोमीति हि प्रतिबिम्बस्थलीया प्रतीतिर्बिम्बभूतमुखविषयकतयाप्युपपद्यते। स्वच्छद्रव्यप्रतिहतनयनरश्मेर्मुखेन संयोगाद्दोषाच्च मुखे दर्पणस्थत्वाभिमुखत्वादिभानमिति तन्मात्रं तत्र कल्पितमिति दृष्टानुसारिणी हि कल्पना भवतीति प्रतिबिम्बजीवस्थलेऽप्यविद्यास्थत्वबिम्बभेदादीनामेव कल्पनमिति प्रबिम्बमप्युपाध्युपगमे सर्वथा मोक्षदशायां न वर्तेत इत्यस्याभावात्कल्पितधर्ममात्रस्यैवापगमाद्धर्मिणः परमार्थसतो जीवानन्यस्य विद्यमानत्वान्मोक्षानन्वयप्रसङ्गोऽपि न संसारिणो जीवस्य, तथापि नीरूपोपाधौ नीरूपस्यात्यर्थमव्यवहितस्य प्रतिबिम्बे मनस्तोषमलभमाना बिम्बस्योपाध्यन्तर्गतत्वादर्शनेन बिम्बभूतस्येश्वरस्याण्डाद्बहिरवस्थित्यापत्त्यान्तर्यामिब्राह्मणाज्ञस्याभावं चाकलयन्तः प्रतिबिम्बार्थमप्युपाधेरावश्यकत्वेन तद्विशिष्टवेषेण विशेषणभेदौपाधिकजीवभेदानां व्यवहारनिर्वाहकाणां कल्पने लाघवं च पश्यन्तः तत्तदन्तःकरणावच्छिन्नचैतन्यानां जीवभावमुररीकुर्वन्त्यविद्यावच्छिन्नस्येश्वरत्वं च मूलाविद्यात्वेका तच्छक्तयस्तूलाविद्या वा नाना नानैव मूलाविद्या ब्रह्माश्रिता ब्रह्मविषयिण्यो जीवाश्रिता ब्रह्मविषयिण्यो वाऽस्मिन्नपि पक्षे मतभेदेन द्रष्टव्याः। नचावच्छेदपक्षे यस्यान्तःकरणावच्छिन्नस्य कर्तृत्वं तदन्यस्यैवान्तःकरणावच्छिन्नप्रदेशस्य भोक्तृत्वमिति कृतहान्यकृताभ्यागमप्रसङ्ग इति वाच्यम्। यदेव ह्यन्तःकरणं कर्तृत्वावच्छेदकं तदेव भोक्तृत्वस्याप्यवच्छेद्यमप्येकमेव तस्य कर्तृत्वाश्रययत्तादात्म्याभिमानात्कर्तृत्वं तत्फलसुखाद्याश्रयतत्तादात्म्यादेव भोक्तृत्वमपीति न कृतहान्यकृताभ्यागमप्रसङ्गः। प्रदेशभेदस्याकिंचित्करत्वान्निरवयवस्य वास्तविकप्रदेशाभावेनावच्छेदककृतप्रदेशभेदस्यैव वाच्यतया तस्यैक्ये प्रदेशभेदस्याप्यभावाच्चेति। प्रमाणं चात्र 'घटसंवृतमाकाशं नीयमाने यथा घटे। घटो नीयेत नाकाशं तथा जीवो नभोपम' इति श्रुतिरंशो नानाव्यपदेशादिति सूत्रं च। अस्मिन्पक्षे यथा 'स्वयंज्योतिरात्मा' इति श्रुतिरपि प्रतिबिम्बपक्षस्याज्ञस्येनोपपादयितुमशक्यत्वे सति यथा विवस्वानापोऽनुगच्छति तत्र प्रतिबिम्बितस्तदनुकारी भवति तच्चलने चलतीव तद्वृद्धौ वर्धत इवेत्यादि। तथैवोपाधिना देवोयमात्माभेदरूपोऽनेकरूपः क्रियते उपाधौ सुखिनि सुखीव दुःखिनि दुःखीवोपाधिना क्रियत इत्यर्थकतया नेतव्या। स्पष्टं चैतदम्बुवदग्रहणात्तु न तथात्वमित्यधिकरणभाष्य इति। यत्त्वविद्योपाधिकजीवपक्षे व्यापकस्य तस्य कायव्यूहाधिष्ठानं संभवति योगबलसृष्टानेकशरीरस्थत्वादन्तःकरणोपाधिकजीवपक्षेऽव्यापकस्य तस्य शरीरान्तरेऽवस्थानासंभवात्तदसंबद्धस्य तच्चेष्टाद्यजनकत्वात्तच्छरीरविषयसंबन्धजनितसुखदुःखादिसंवेदनस्याप्यसंभवाच्च कायव्यूहाधिष्ठानं योगिनः संभवतीति। तन्न। एकाविद्यैकजीववादपक्षे योगिनः कायव्यूहाधिष्ठानं नायोगिन इति हि विभागस्तत्तच्छरीराधिष्ठितान्तःकरणरूपाभिव्यक्तिनियामकमेदभिन्नप्रदेशेऽन्तःकरणस्य योगयुक्तत्वे योगित्वमन्यथा त्वयोगित्वमिति विभागाभ्युपगमेन निर्वाह्यस्तथासति योगिनः शरीरान्तरासंबन्धस्तुल्यो ह्ययोगिनः संबन्धसंभवेऽपि योगिनः किमायातं तदधिष्ठायकत्वेऽविद्याभेदेन जीवभेदपक्षेऽपि व्यापकस्यैव तत्तज्जीवस्य। योगित्वायोगित्वयोः स्वतःसंभवेऽपि योगिसृष्टशरीरेषु तत्संबन्धसंभवेऽपि च जीवान्तरशरीरे जीवान्तरस्य व्यापकस्य शीतोष्णाद्यनुपलम्भसिद्धये सत्यपीन्द्रियविषयसंबन्धे कदाचित्तद्ज्ञानादिसिद्धये च ज्ञानसुखादिनियामकस्य प्रतिशरीरमन्तःकरणभेदस्य तत्त-

जीवानां वक्तव्यतया बहुतरश्रुतिस्मृत्यादिप्रमाणसिद्धत्वेनापह्नोतुमशक्यतया च शरीरान्तरे योगसृष्टे तदभावेन कायव्यूहाधिष्ठानमुपपादयितुमशक्यं । तस्माद्यानि शरीराणि योगमाहात्म्याद्योगिना सृष्टानि तेषां सेन्द्रियाणां चेष्टात्वेकशरीरस्थितप्रयत्नवदन्तःकरणरूपसाधनयुक्तोऽपि योगी तत्तदन्तःकरणसंबद्धरश्मिसंबन्धात्स्वसंबद्धसूत्रसंबद्धपाञ्चालिकाशरीरक्रियासु नट इव भवति हेतुरित्यस्य स्वसृष्टशरीरेन्द्रियविषयसंपर्कस्य रश्म्यादिपरम्परयापि शरीरान्तरस्थितान्तःकरणस्य सुखदुःखाद्यात्मना परिणामे हेतुत्वस्य च फलानुरोधात्त्वयापि वक्तव्यतया मन्मते जीवस्य तत्तच्छरीरे विरहेऽपि क्षत्यभावात् तत्तच्छरीरसंबन्धे जीवस्य चेदाग्रहः स्वसृष्टशरीरेषु योगमाहात्म्यात्प्रधानशरीरसंबन्धापरित्यागेन विकाशशाल्यन्तःकरणं प्रवेशयति भजति च तदवच्छिन्नत्वेषु प्रमातृभावं योगीत्यभ्युपगम्यताम् । चाक्षुषरश्मिद्वारा निर्गतेऽन्तःकरणे गिर्यादिविपुलतरप्रदेशं व्याप्नुवति तत्र तावद्देशव्यापी प्रमाताभ्युपेयत एव हि । प्रतिशरीरमन्तःकरणभेदनिर्देशस्तु प्रतिशरीरं वृत्तेर्भेदात्तन्निबन्धनः । वृत्तिरहितस्यासत्कल्पतया वृत्त्युन्नेयसत्त्वस्य तस्य वृत्तिभेदे भेदव्यपदेशस्योचितत्वादिति । अस्मिन्पक्षे यदि ब्रह्माश्रितं ब्रह्मविषयकमेकमेवाज्ञानं तदेव च जगदुपादानं वृत्तिः संबन्धाभिव्यक्त्यार्था चिदुपरागार्था वेति पक्षे कस्यचित्तत्त्वज्ञानोदयेऽप्यज्ञाननाशाभावादन्तःकरणतादात्म्याध्यासनिवृत्तिप्रयुक्तनिवृत्तदुःखादिप्रपञ्चप्रतिभानो यावत्सर्वविद्योदयनिमित्तकाज्ञाननाशममुक्त एवावतिष्ठत इत्येके । अविद्यासंबन्धनिवृत्तिरेव मोक्षस्तत्त्वज्ञानोदये घटानयनाद्धटाभावसंबन्धवदविद्यासंबन्धो निवर्तेत इत्येकस्मिन्बद्धेऽप्यन्यो मुक्त इत्यन्ये ॥ जीवन्मुक्तावविद्यालेशानुवृत्तेः प्रतिपादनादंशवती सेति विज्ञायते । तथाच तत्त्वज्ञाने जाते तत्र वर्तमानस्यांशस्य निवृत्तेरंशेनान्यत्र वृत्तावपि सान्तःकरणस्याज्ञानस्य तत्राभावात्स मुक्तोऽन्यो बद्ध इत्यपरे । वृत्तेरावरणाभिभवार्थत्वपक्षेऽज्ञानस्य तत्तज्जीवंप्रत्यावरणशक्तेर्भिन्नत्वात् जाते तत्त्वज्ञाने तं प्रत्यावरणशक्तेर्विनाशात्परमानन्दस्य निरावरणस्याभिव्यक्तिः सैव मोक्ष इति केचित् ॥ एकस्याज्ञानस्य जीवाश्रितत्वपक्षे जातिवत्प्रत्येकपर्यवसितं तदिति नष्टां व्यक्तिं जातिर्यथा जहाति तथैवोत्पन्नतत्त्वज्ञानमविद्यात्यागश्च संबन्धनिवृत्तिर्वोपगत आलोके तमोवदपसरणं वेति परे । जीवाश्रिता प्रतिजीवं भिन्नैवाविद्येति मते तत्त्वज्ञानेन तन्नाशे मोक्ष एकस्यापरस्य बन्ध इति बन्धमोक्षव्यवस्थासौलभ्यात्तदेव बहु मन्यन्ते बहवस्तत्र सैव संभूय जगदुपादानमिति पक्ष एकस्य तत्त्वज्ञानेनैकाज्ञाननिवृत्तावपि खण्डपटन्यायेन द्रागेव पुनर्जगदुत्पत्तिः क्षणैकमात्रं जगदभावेऽपि तदुपलम्भासंभवेन कस्यचिदप्यनुभवस्य न बाधः । ब्रह्माण्डस्यामितत्वेनातिविपुलत्वेन च कस्यचिदविद्यायाः प्रतिक्षणं विनाशे संसारावस्थितिर्दुर्लभेति तु न शङ्क्यम् । प्रतिकल्पमप्येकस्य तत्त्वज्ञानोत्पादे प्रमाणाभावाच्छ्रुतिस्मृतिपुराणादिषु जनकयाज्ञवल्क्यशुकनारदवामदेवसनकादीनां कतिपयानामेव श्रवणात् प्रत्येकं जगदुपादानमिति पक्षे त्वपेक्षाबुद्धितो द्वित्ववत्तत्तज्जीवाज्ञानतः तत्तज्जीवाकलनीयं भिन्नमेव जगदुत्पद्यते । संवादश्चोपपादितः प्राक् । दृष्टिसृष्टिपक्षादस्यायं विशेषो यदत्र यावत्तत्त्वज्ञानमेकजीवस्यैकैव सृष्टिस्तत्र प्रतिदृष्टिसृष्टिभेद इति । जगदुपादानं ब्रह्माश्रितमूलाविद्यैव जीवाश्रितास्तु ताः प्रातिभासिकोपादानानि । मूलाज्ञाननिवृत्तिस्तु चरमतत्त्वज्ञानादेव यदनन्तरं महाप्रलय इत्यपि तत्र मतम् । वाचस्पतिमिश्रमतं तु प्रागेव दर्शितम् । अथ प्रसङ्गाद्ब्रह्मजीवयोः परस्परं जीवानां भेदसाधकयुक्तयो निराक्रियन्ते । तथाहि ब्रह्म जीवाद्भिन्नं सर्वज्ञत्वात् व्यतिरेके जीववत् १, आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वात् पृथिवीत्ववत् २, दुखं गुणत्वावान्तरजात्या सजातीयाश्रयभिन्नाश्रितं गुणत्वात् रूपवत् ३, आत्मा आत्मप्रतियोगिकभेदवान् द्रव्यत्वात् घटवत् ४, ईश्वरो जीवप्रतियोगिकभेदवान् सर्वशक्तिमत्त्वात् सर्वज्ञत्वात् सर्वकार्यकर्तृत्वात् स्वतन्त्रत्वात् व्यतिरेके जीववत् ५, जीव ईश्वराद्भिन्नः अल्पशक्तित्वादसर्वज्ञत्वाद्व्यतिरेकेणेश्वरवत् ६, ब्रह्म जीवाद्भिन्नं दुःखाननुभवितृत्वात् अभ्रान्तत्वात् असंसारित्वात् घटवत् ७, चैत्रो मैत्रप्रतियोगिकभेदवान् मैत्रानुसंहितदुःखाननुसंधातृत्वात् मैत्रस्मृतसर्वास्मर्तृत्वात् मैत्रानुभूतसर्वाननुभवितृत्वात् घटवत् ८, विमतो बन्धध्वंसः स्वप्रतियोगितावच्छेदकावच्छिन्नाश्रयप्रतियोगिकभेदवन्निष्ठः बन्धध्वंसत्वात् त्वन्मतवत् ९, इत्याद्यनुमानानि न भवन्त्यभिमतसाधकानि । यतः सामान्यतो भेदस्य साध्यत्वेऽविद्याकल्पितभेदमादाय सिद्धसाधनम् । तात्त्विकभेदस्य साध्यत्वे प्रसिद्धसाध्यता ब्रह्मातिरिक्तस्य तात्त्विकत्वासिद्धेः । नच धर्मिसमसत्ताकत्वेन भेदस्य साधने घटादिसमसत्ताकस्य जीवभेदस्य घटादौ प्रसिद्धस्य ब्रह्मणि सिद्धौ ब्रह्मसमसत्ताकस्य तस्य सिद्धिरिति वाच्यम् । घटादेरपि धर्मित्वेन तत्समसत्ताकभेदेन सिद्धसाधनतादवस्थ्यात् । ब्रह्मणो विशिष्यसाध्यकोटावुपादानेऽप्रसिद्धसाध्यत्वस्य तादवस्थ्यात् । एवं स्वसमानसत्ताकत्वस्यापि न विशेषणत्वम् । स्वत्वस्याननुगतत्वात् । घटादेः साध्यकोटौ प्रवेशे सिद्धसाधनात् । ब्रह्मणः प्रवेशेऽप्रसिद्धसाध्यकत्वतादवस्थ्यात् । नच धर्मिपदस्वपदादेः समभिव्याहृतपदार्थबोधकत्वात् स्वपदार्थघटितस्य सामान्यत एव साध्यत्वात् । दृष्टान्ते तस्य प्रसिद्धस्य पक्षे सिद्धौ पक्षरूपस्वपदार्थमादायैव तस्य पर्यवसानेनाभीष्टसिद्धिरिति वाच्यम् । शब्दमर्यादाया अनुमानस्थलेऽकिंचित्करत्वात् परार्थानुमानस्थले शब्दप्रयोगेऽपि तस्य शाब्दबुद्धावुपयोगित्वात् । अनुमितौ तु तन्मूलकमानसपरामर्शस्यैव हेतुत्वात् । तत्र घटत्वेन स्वपदार्थत्वेन वा घटादिघटितस्य साध्यत्वे सिद्धसाधनस्य ब्रह्मघटितस्य तथात्वे चाप्रसिद्धसाध्यत्वस्य तादवस्थ्यात् । अथ स्वतादात्म्यस्वसमानसत्ताकस्वभेदवत्त्वोभयसंबन्धेन वस्तुविशिष्टत्वमेव साध्यम् । संबन्धे च स्वपदार्थाप्रवेशेन हि नाननुगतत्वमितिचेन्न । घटादितादात्म्यस्य सद्रूपे ब्रह्मणि स्वीकारेण घटादिवस्त्वादाय सिद्धसाधनस्य तादवस्थ्यात् तादात्म्यस्यानुगतस्याभावात् । घटतादात्म्यस्य संसर्गघटकत्वे

घटसमानसत्ताकभेदस्यैव तथात्वेन सिद्धसाधनात् । ब्रह्मतादात्म्यस्य तथात्वे ब्रह्मसमानसत्ताकभेदस्य तथात्वेनाप्रसिद्धसंसर्गता । नहि संसर्गघटकतया शशशृङ्गमपि सिध्यति । नच स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यधर्मत्वमेवानुगतं तादात्म्यमिति वाच्यम् । स्वस्यापि रूपान्तरेण स्वभिन्नत्वान्नीलो घटः सन् घट इत्यादिसामानाधिकरण्यप्रत्ययात्तत्र भेदसमानाधिकरणाभेदस्य विषयताया उपपादनात् धर्ममात्रस्य भेदविशिष्टत्वेन तादृशधर्माप्रसिद्धेः साधारणेऽपि धर्मे काल्पनिकभेदविशिष्टान्यत्वसत्त्वेन सिद्धसाधनतादवस्थ्यात् तत्रापि पारमार्थिकत्वोपादाने पुनरप्यप्रसिद्धतादवस्थ्यादिति । एतेन स्वज्ञानाबाध्यत्वस्य स्वाज्ञानाकार्यत्वस्य यावत्स्वस्वरूपमनुवर्तमानत्वस्य च विशेषणत्वमप्यपास्तम् । स्वत्वाननुगमेन दोषस्य तावदवस्थ्यात् । ब्रह्मपक्षकानुमानेषु शुद्धस्य पक्षत्वे सर्वसाधनानां तत्रासत्त्वेन स्वरूपासिद्धिरुपहितस्य पक्षत्वे सिद्धसाधनम् । अथ जीवब्रह्मणोरभेदः स्याज्जीववद्ब्रह्मणोऽपि दुःखाद्यनुसंधातृत्वं दुःखत्वादिकं च स्यात् जीवानां परस्परमभेदः स्यात् एकस्य दुःखादिमत्त्वे दुःखाद्यनुसंधातृत्वे च सर्वं दुःखादिमत्तदनुसंधातृ च स्यात् । एकस्मिन्मुक्ते सर्वं मुक्तं स्यात् । बद्धे चैकस्मिन सर्वं बद्धं स्यादित्यादिकं भेदग्राहकानुमानेऽनुकूलतर्कजातमप्यविद्याकल्पितैरन्तःकरणाद्युपाधिभिः कृतकल्पनैराविद्यकभेदैः सर्वोक्तापत्तेः सत्येव जीवब्रह्मणोर्जीवानां च पारमार्थिके ह्यभेदे परीहारादाभासतामुपगतं नानुमानं प्रबलीकरोति । अथ भचोपाधिरसंबद्ध उपहितभेदप्रयोजक इत्युपाधिस्तत्र संबद्धो वाच्यः । स च शुद्धे वर्तेत उपहिते वा शुद्धे चेत्तस्य भेदकत्वानुपपत्तिरुपहिते चेत्तेनैवोपाधिनोपहितेऽन्येन वा तेन चेदात्माश्रयोऽन्येन चेदन्योन्याश्रयादिरिति चेन्न । उपहितपक्षे ह्यदोषात् । तेनोपहितेऽपि वृत्तावात्माश्रयविरहात् विशेषणवदुपाधेस्तत्स्वरूपाघटकत्वात् । ननु शुद्ध उपाधिरंशतो वर्तेते कार्त्स्न्येन वा । नाद्यो निरवयवस्यांशाभावात् । न द्वितीय एकैकेनैवोपाधिना कृत्स्नस्यावष्टब्धतया तेनतेनोपाधिना भेदासंभव इति चेन्न । वस्तुतोंऽशाभावेऽप्यविद्याकल्पितेन तेन तेनोपाधिना कृतकल्पनेन भेदेन कल्पितांशोपपत्तेराविद्यकभेदतन्निबन्धनव्यवहारवैलक्षण्याद्युपगन्तॄणामस्माकमनुपपत्तेर्भूषणत्वादाविद्यकत्वव्यवस्थापकत्वादिति ॥ २९ ॥ ३० ॥ **नसन्त्येवेति** । यद्यप्यनादिरविद्या जन्मरहितापि तत्तद्विकारवती तत्त्वज्ञानात्स्वरूपेणापि विनश्यतीत्यनादित्वादित्यस्याव्ययहेतुत्वकथनमसङ्गतं तथाप्युत्पत्तिरहितस्य स्वरूपेण भावभूतविकारावस्थापन्नरूपेण न विनाश इत्यत्र तात्पर्यमविद्यापि हि भावभूतचरमतत्त्वसाक्षात्कारात्मकविकारावस्थापन्नैव विनश्यतीति न हेत्वसङ्गतिः । विकारवत्तस्या अपि कल्पितत्वेन सर्वकल्पितविरोधिज्ञानोदये स्वरूपतोऽपि तस्या अत्यन्तं हि विनाश इति । **स्वगतभेद इति** । गुणक्रियावस्थाद्येकविशिष्टस्य गुणक्रियाद्यन्तरैः स्वस्याद्यो भेद इत्यर्थः ॥ ३१—३३ ॥ इति श्रीधर्मदत्तशर्मणा विरचिते गीतागूढार्थदीपिकातत्त्वालोके त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः ।

**परमात्मज्ञानसाधनमिति** । श्रवणादिकमित्यर्थः । **बहिरङ्गानां यज्ञादीनामिति** । अत्र निर्धारणषष्ठी । प्रकृत्यर्थतावच्छेदकस्य बहिरङ्गत्वरूपविशेषणविशिष्टस्य यज्ञादित्वस्योत्तमत्वेन निर्धारणीयान्तरङ्गज्ञानसाधनासाधारणत्वान्निर्धारणद्योतकस्य मध्य इत्यस्यासङ्गतिर्यद्यपि तथापि ज्ञानसाधनानामित्यनेनैव मध्य इत्यस्य संबन्धः । ज्ञानसाधनत्वं चोद्देश्यसाधारणं भवत्येव । उत्तमत्वं हि सावधिकं तदवधि च तदेव यत उत्तमत्वं व्यावर्तते तानि यज्ञादीनि षष्ठी चावधित्वरूपसंबन्धार्थो संबन्धत्वेन तत्प्रतिपादनान्न पञ्चमी । पञ्चमीप्रयोगस्तु युक्तः । यद्वापेक्ष्येति शेषस्तथासति यज्ञादीनामपेक्ष्योत्तममित्यन्वयेनानुपपत्तिः । एतेन नत्वमानित्वादीनामित्यपि व्याख्यातम् । ज्ञानमात्रस्य फलाजनकत्वाज्ज्ञानस्यानुष्ठानपर्यन्तस्य विवक्षिततया ज्ञात्वेत्यस्यानुष्ठायेति विवरणम् ॥ १—४ ॥ **कम्पादिमत्तयेति** । उपदर्शयन्तीत्यनुषज्यते । पुरुषं प्रतीत्यस्य पुरुषनिरूपितत्वमर्थः । अन्वयश्चास्य परतन्त्रैकपदार्थैकदेशे पारतन्त्र्ये पुरुषंप्रतीति प्रामादिकः पाठो वा । **तर्हीति** । प्रकृतेर्गुणत्रयात्मकत्व इत्यर्थः । **कथं प्रकृतिसंभवा इति** । गुणा इति शेषः । अभेदे कार्यकारणभावासंभवादिति भावः । **परस्परेति** । अङ्गाङ्गिभावलक्षणविषमावस्थारूपो यः पूर्वावस्थान्यथाभावरूपः परिणामस्तद्विशिष्टा गुणाः पूर्वावस्थया साम्यलक्षणया विशिष्टानां गुणानां कार्यभूता इत्यर्थः । ये निबध्नन्तीत्यन्वयः । ते प्रकृतिसंभवा गुणा इति बोध्याः ॥ ५ ॥ **नहि सध्यञ्जकाविति** । सुखादेर्ज्ञातैकसतोऽन्तःकरणपरिणामस्य निरावरणत्वात्साक्षात्प्रमात्रा संबद्धत्वात्तत्रापि ज्ञानवद्वृत्त्यपेक्षाभावात् सतश्चैतन्यस्याभिव्यञ्जकत्वमुक्तम् । **विषयधर्मो विषयिणो भवतीति** । विषयस्यान्तःकरणस्य धर्मः सुखादिः विषयिणो ज्ञानरूपस्यात्मनो भवतीत्यर्थः ॥ ६ ॥ रागस्येच्छारूपतया प्रसिद्धस्येह ग्रहणे तृष्णेत्यादेः पौनरुक्त्यासङ्गतिरतो व्याचष्टे—**रज्यत इत्यादिना** । कामः स्थूलावस्थतया व्यक्तिमापन्नस्य रागपदार्थतया प्रसिद्धस्याभिलाषस्य हेतुः सूक्ष्मावस्था । गर्वोऽहंकारस्तद्रहितस्यापि रागाद्यजननात्सोऽपि रागहेतुः । रज्यत इत्यत्र धात्वर्थरागस्याश्रयत्वलक्षणकर्तृत्वमुच्यते । अनेनेत्यनेन यो रागहेतुः कामादी रागात्मकमित्यत्र रागपदेन स एवोच्यत इत्यर्थः ॥ ७ ॥ **उद्भूतमिति** । स्वकार्यजननयोग्यमवस्थामापन्नम् तमःपूर्वावस्थया शक्त्याख्यया सूक्ष्मया विशिष्टस्य तमसः कार्यमुच्यत इति भावः । **अविवेकरूपत्वेनेति** । शुक्तौ रजतभ्रमस्य विरोधी यो विवेको विपरीतनिश्चयस्तद्विरोधी तत्प्रतिबन्धक आवरणमेव कार्यभूतमविवेकस्त-

देव रूपं यस्य कार्यकारणयोरभेदात्तत्त्वेनेत्यर्थः । आवरणमप्यवस्थाविशेषविशिष्टं तमो बोध्यम् । भावरूपस्याज्ञानस्यैव तत्तदवस्थापन्नतया कार्यकारणभावेन प्रपञ्चनमिदम् ॥ ८ ॥ ९ ॥ **अभिभूयेति । वर्धत इति ।** अभिभवः कार्याक्षमत्वम् । वृद्धिः कार्यक्षमत्वं तदुभयत्र प्रवाहानादितया वर्तमानानामदृष्टानां विपाकाभिमुख्यमेव निमित्तमालोचनीयमिति ॥ १० ॥ ॥ ११ ॥ **वर्धमान इति ।** लब्धाधिकविषयतयोत्तरोत्तरमुपजायमान इत्यर्थः । **स्वविषयेति ।** यद्यपि तत्तदिच्छाव्यक्तिः सर्वैव स्वोत्तरोत्पन्नविशेषगुणेन निवर्तते विनश्यति न काचिदपि विषयसिध्द्या निर्वृत्तेर्विनाशस्यान्यथैव सिद्धेरिच्छानाशान्तरमेव प्रायेण विषयसिद्धेश्चेति व्यावर्त्याभावात्स्वविषयेत्यादि व्यर्थम् । तथाप्युत्तरोत्तरं सजातीयानुवृत्तिरेवानिवृत्तिस्तदभाव एव निवृत्तिव्यवहारादिच्छायाः कारणं चाननुवृत्तेरलंप्रत्ययरूपः सन्तोषः स हि जाताया इच्छाया विषयसिद्धेर्भवति । ततश्च तत्सजातीयस्याननुवृत्तिर्विषयसिद्धिप्रयोज्य इत्युच्यते । तथाच विषयसिद्धिप्रयोज्याननुवृत्तिमज्जातीयभिन्नेच्छेत्यर्थः । स्वविषयप्राप्तिप्रतिबध्यतावच्छेदकरूपशून्यत्वरूपस्यानिवर्त्यत्वस्यासंभवादेवाविवक्षितत्वम् । इच्छामात्रस्यैवोक्तप्रतिबध्यतावच्छेदकरूपवत्वात् । एवंच सन्तोषशीलस्य शरीरयात्रानिर्वाहकगोचरेच्छायास्तादृशानुवृत्तिमज्जातीयत्वात्तद्व्यावृत्त्यर्थमुक्तविशेषणं सार्थकम् । स्वविषयेत्यत्र स्वपदार्थो विशेष्यव्यक्तिः । स्वविषयप्राप्तौ तद्विषयकस्येच्छान्तरस्यानुत्पत्तावपि विशेष्यसजातीयस्योत्पत्तेर्लुब्धस्यालंप्रत्ययरूपतत्प्रतिबन्धकाभावात् । साजात्यं च स्वविषयतावच्छेदकधर्मावच्छिन्नविषयताकत्वम् । लुब्धस्यापि सिद्धधनगोचरेच्छाभावेऽपि पूर्वेच्छाविषयतावच्छेदकधनत्वेनासिद्धधननगोचरेच्छासंभवेन तादृशानुत्पत्तिजातीयत्वाभावाल्लोभे निरुक्तरूपस्य संभव इति । यद्वा संपन्नादधिकं मे धनं जायतामित्येकैवेच्छा यावज्जीवमनुवर्तते कस्यचित्कस्यचित्संतोषोत्पत्तौ निवर्तते क्षणिकत्वनियमो नोपेयत एव धारावाहिकप्रत्यक्षस्थले वृत्त्यैक्यमुररीकुर्वद्भिर्वेदान्तिभिः । साचेच्छा न स्वविषयसिद्धौ निवर्तते लुब्धस्य धनलाभेऽपि तदधिकधनलाभाय प्रयत्नदर्शनात्सर्वदैव लुब्धे क्षुब्धत्वव्यवहारदर्शनात्तस्यां चास्ति स्वविषयनिवर्त्यव्यावृत्तं वैजात्यं तदभिप्रायेणोक्तं विशेष इति ॥ **स्पृहा उच्चावचेति ।** उच्चावचेत्यादिविषयस्वरूपस्य प्रतिपादनं न विशेषणस्य व्यावर्त्याभावात् लोभस्पृहयोरुपधेययोः क्वचिदभेदोऽपि तदुपाध्योर्भेदाद्भेदः । धनं मे स्यादिति लोभस्याकारः येन केनाप्युपायेन धनं संपादयेयमिति स्पृहाया आकार इति । स्वरूपेणापि भेद इति ॥ १२—१७ ॥ **तेषां मध्य इति ।** ऊर्ध्वाधोलोकानां मध्य इत्यर्थः ॥ १८—२१ ॥ **इदं चेति ।** इदं च लक्षणं स्वात्मनः प्रत्यक्षविषयीभूतं स्वार्थमेव स्वस्यैवागुणातीतव्यावृत्तिबोधरूपप्रयोजनकम् न परस्य तादृशबोधफलकं तस्योक्तलक्षणज्ञानासंभवात् । तत्र हेतुमाह—**नहीति ।** ॥ २२—२७ ॥ इति श्रीधर्मदत्तशर्मणा विरचिते गीतागूढार्थदीपिकातत्त्वालोके चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

प्रेमपूर्वकेण भजनेनेत्यर्थः । प्रेमैव वा भजनं तेनेत्यर्थः ॥ १ ॥ **न दोष इति ।** न पूर्वश्लोकेन ब्रह्ममूलत्वप्रतिपादकेन विरोध इत्यर्थः ॥ २—४ ॥ **अविवेको विपर्ययो वेति ।** वस्तुयथार्थस्वरूपालोचनं विवेकस्तदभावोऽविवेकः । विपर्ययोऽयथार्थज्ञानमित्यर्थः ॥ ५ ॥ ६ ॥ **षष्ठमिति ।** अनिन्द्रियेणैव मनसेन्द्रियगतषट्त्वसंख्यापूरणमिति प्रागुक्तम् ॥ ७ ॥ **पुनरागमनराहित्येनेति ।** त्यक्तशरीर इत्यादिः ॥ ८ ॥ **तदाहेति ।** शरीरान्तरपरिग्रहस्य भोगार्थत्वेन भोगस्य चेन्द्रियसाध्यत्वात् शरीरवत्प्रतिशरीरमिन्द्रियादीनामभिनवानां कल्पनेऽतिगौरवात्पूर्वोत्तरशरीरयोरिन्द्रियैकत्वे प्रमाणविरोधाभावात्तान्येवेन्द्रियाणि गृह्णातीत्याहेत्यर्थः ॥ ९—१५ ॥ **पुरुषोत्तमत्वेनेति** । तेन रूपेण जीवस्याग्रिमश्लोके प्रतिपादनीयतया अक्षरशब्देन तस्यैवात्र प्रतिपादने तत्र पौनरुक्त्यमिति भावः । नच पुरुषोत्तमत्वेनेश्वर एव प्रतिपादनीयोऽव्यय ईश्वर इति स्पष्टमुक्तेरिति वाच्यं । जीवपरतादात्म्यस्य मोक्षोपयोगित्वेन प्रतिपादिनीयतया क्षराक्षरपदाभ्यां कल्पितपुरुषरूपयोः कार्यकारणोपाध्योः पार्थक्येन चेतनानां जीवेश्वरशुद्धब्रह्मणां तदुपाधिप्रयुक्तकल्पितभेदानां परमार्थतोऽभिन्नत्वेनाग्रिमश्लोके प्रतिपादने तात्पर्यात् । तत्रोपाधिरूपकल्पितपुरुषाज्जडादुत्तमत्वेन तदुपाधिकश्चिद्रूपो हि जीव ईश्वरश्चोत्तमः पुरुषस्त्वन्यो विभर्त्यव्यय ईश्वर इत्याभ्यां प्रतिपादितः सामानाधिकरण्याच्च तयोरभेदः । तयोरपि पुनः परमात्मेत्युदाहृत इत्यनेन हि शुद्धाभेदः प्रतिपादनीयः । पूर्वश्लोक एव जीवस्याक्षरशब्देनोक्तौ हि तस्मादन्यत्वमेवेश्वरस्य शुद्धस्य चान्य इत्यनेनाभिहितं स्यात् स्याच तदनभिधेयमेवाभिहितं सिद्धान्तविरुद्धं चेति ॥ १६ ॥ १७ ॥ कारुण्येत्यादिश्लोकद्वयं भक्त्युद्रेकविवशीकृतचेतसा टीकाकृता स्वातन्त्र्येणोक्तमेवमग्रेऽपि ॥ १८—२० ॥

इति श्रीधर्मदत्तशर्मणा विरचिते गीतागूढार्थदीपिकातत्त्वालोके पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

**दैवी संपदमिति ।** भगवानुवाचेत्यनेन संबन्धः । न विद्यते भयं यस्मात्तदभयमिति व्युत्पत्त्यनुसारेणाह—**शास्त्रमिति ।** तादृशानुष्ठानशीलस्य प्रत्यवायाभावान्नरकादिभयस्य चेतःशुद्ध्यादिद्वारा ज्ञानोत्पत्तौ संसारभयस्य चाभावात्तादृशानु-

ष्ठाननिष्ठत्वस्याभयत्वमुपपद्यत इति भावः। एतेन भयराहित्यं वेति वाकारस्य नासङ्गतिः। नवास्य दैवीसंपदमित्येतद्विशेषणत्वेऽभयादीनां तादृशदैवीसंपत्त्वानुपपत्त्याऽसङ्गतिः। **व्याजेनेति**। अन्यफलसाधनतया स्वेष्टस्यान्यफलसाधनत्वेन ज्ञापितस्याचरणं व्याजः आचरणं क्वचित्स्वतः स्वव्यापारस्य क्वचिद्यंप्रति ज्ञापनं तद्व्यापारानुकूलव्यापारस्य। परज्ञानानुकूलश्च व्यापारो वचनचेष्टादिः। यथा स्वगततपस्वित्वसिद्धत्वस्निग्धत्वनिर्वैरत्वादिज्ञानोत्पादनद्वारा लाभपूजाख्यातिवैरनिर्यातनादिस्वेष्टफलसाधनत्वेनेष्टस्य तपआदेः परनिर्जनस्थाननयनादेर्वा स्वर्गसाधनत्वाद्यनुकूलत्वेन परेष्टसाधनत्वाद्यनुकूलत्वेन वा ज्ञापितस्याचरणम्। ईदृशेन व्याजेन स्वगततपस्वित्वादिज्ञानोत्पादनद्वारा यद्यदेवाभिरुचितमस्य तत्तदेवावश्यं करिष्यामीत्यध्यवसायसंपादनं वशीकरणमित्यर्थः। **हृदयेऽन्यथाकृत्वेति**। तत्तद्व्यवहरणोचितज्ञानादन्यप्रकारकं यज्ज्ञानं तत्संपाद्येत्यर्थः। णिजर्थो न विवक्षितो निरुक्तज्ञानसंपत्तावित्यत्रैव तात्पर्यम्। **अन्यथा व्यवहरणमिति**। विद्यमानज्ञानोचितव्यवहरणादन्यप्रकारकं व्यवहरणमित्यर्थः। यथा स्वस्मात्प्रबले राजादौ रिपुरयमस्माकं पातक्ययमिति ज्ञानसंपत्तावपि तदुचितं यद्व्यवहरणं तर्जनताडनादिकं सहासनभोजनादिपरिवर्जनं वा ततोऽन्यप्रकारकं भीत्यादितोऽनुकूलाचरणं सहासनादिकं वा मित्रत्वसुकृतित्वादिज्ञानोचितम्। साचेयं माया प्रायः परवञ्चनानुकूला भवति। **अयथादृष्टकरणमिति**। प्रमाणेन यथा गृहीतं ततोऽन्यथैव व्यापारः। सच वागात्मकोऽनृतत्वेन प्रसिद्ध एव। भोजनासनगमनाद्याचरणस्नानपूजाद्यनाचरणानुकूलसंकल्पादयोऽपि भवन्त्यनृतानि। यथा प्रमाणेनाकर्तव्यतया गृहीतस्य कलञ्जभक्षणादेराचरणम्। प्रमाणेन कर्तव्यतया गृहीतस्य स्नानादेरनाचरणं तत्संकल्पश्चेति। प्रायोऽत्र सर्वपाप्मनां संनिवेशो द्रष्टव्यः। **तस्येति**। आत्मतत्त्वस्येत्यर्थः। **स्वानुभवेति**। संप्रज्ञातरूपसाक्षात्कारेत्यर्थः। अग्रे चात्मसाक्षात्कारो निर्विकल्पकासंप्रज्ञातरूपो ग्राह्यः। उपायभूताभयादिपरत्वेनाभयमित्यादिकं व्याख्यातुमुपक्रमते—**यदात्वित्यादिना**। देवयज्ञो देवपूजादिः। पितृयज्ञः पार्वणादिः। भूतयज्ञो वैश्वदेवबलिप्रभृतिः। मनुष्ययज्ञोऽतिथिभ्योऽन्नदानम्। **एतत्त्रयमिति**। दानदमयज्ञरूपमित्यर्थः॥ १॥ **यथाभूतार्थवचनमिति**। प्रमा शाब्दबोधजनकवचनमित्यर्थः। तथाभूतमपि कस्यचिदनर्थोपादकं चेत्सत्याभासमित्युक्तमनर्थाननुबन्धीति। क्रोधहेतोरभावे क्रोधाभावस्य क्रोधनाचेतनसाधारण्येनाविशेषकत्वादाह—**परैराक्रोश इत्यादि**। प्राप्त इत्युत्पत्तुमर्ह इत्यर्थः। **उपशमनमिति**। क्रोधे बलवदनिष्टानुबन्धित्वज्ञानरूपप्रतिबन्धकसंपत्त्यानुत्पाद इत्यर्थः। **क्षमायां सामर्थ्ये सतीति**। विशेषोऽत्र तस्य न पुरस्कार इत्यपौनरुक्त्यम्। अथवा प्राप्त उत्पन्नमित्यर्थः। उपशमनं बलवदनिष्टानुबन्धित्वस्य दृढतरसंस्काराज्झटित्यनुसंधानेनाकृतकार्यस्यैव सद्यो विनाश इत्यर्थः। एतेन वक्ष्यमाणक्षमापदार्थस्य न पौनरुक्त्यम्। दोषज्ञानेनास्य दोषोपशमाय प्रवृत्तिर्भवत्वितीच्छादिना तस्मै दोषप्रकाशनं तु न पैशुनमित्युक्तं परस्मा इति। अध्यक्षे यथार्थवादित्वादिना दोषप्रकाशनमपि न पैशुनमित्युक्तं परोक्ष इति। परत्वं पारोक्ष्यं च निरूपयितुं परदोषेति। तथासति योऽत्र परत्वेनाभिमतस्तन्निरूपितमेव तदुभयं प्रतीयत इति न काचिदनुपपत्तिः॥ २॥ **सामर्थ्य इति**। तर्जनताडनादिप्रतीकारसामर्थ्य इत्यर्थः। **क्रोधस्येति**। क्रोधकार्यताडनादेरिति वक्तव्यम्। जातेऽपि क्रोधे क्षान्तं मयाऽनेनेत्यादिव्यवहारादिति। अवसादं यथोचितकार्यानर्हत्वमित्यर्थः। **केनचिद्रूपेणेति**। स्वजन्यधर्मात्मकवासनाजनकत्वरूपेण गौणवासनारूपत्व इत्यर्थः॥ ३—५॥ अथ त्रया इत्यादिवाक्यं प्राजापत्यानां प्रजापतिस्रष्टानां जातिभेदेन त्रित्वपरं न वक्तुमर्हं गोत्वाश्वत्वादिजातिभेदेनानन्त्यात्। नापि सम्यगिन्द्रियसाकल्यवतां जातिभेदेन गन्धर्वयक्षत्वादिजातीनामपि बहुत्वात्। नाप्यवान्तरप्रकृतिभेदेन तस्या अप्यानन्त्यादुपदेशशास्त्रस्यास्य मनुष्यमात्राधिकारिकत्वाच्चापि तु धर्माधर्मरूपनिमित्तद्वयभेदेन द्विविधामेव प्रकृतिं तदुभयफलिकां 'द्वया ह वै प्राजापत्या' इत्यादिश्रुतिसिद्धां पुरस्कृत्य तदुभयप्रकृतिशालिषु मनुष्येषु दैवीप्रकृतियुक्तं स्वतो दमादिशालिनं दमादिविधानानुपदेश्यमाकलय्यासुरीप्रकृतिशालिनं दमादिरहितमुपदेश्यत्वेनोद्दिश्य त्रया इत्यादिवाक्यं दमाद्युपदेशे प्रवृत्तं। ये प्रकृत्या असुरा एव नत्वसुरजातीया उद्देश्या मनुष्यास्तेषामेवोपदेश्यभावउत्तममध्यमाधमत्वद्योतनाय जात्या देवानां ग्रहणधारणसामर्थ्यानहंकृत्वादिवैशिष्ट्यरूपसाधर्म्येण जात्या मनुष्याणामुत्तमानां शौचगुरुसेवकत्वादिरूपसाधर्म्येण जात्याऽसुराणां साधर्म्येण कृच्छ्राद्विनेयत्वादिरूपेण चौपचारिकैर्देवत्वमनुष्यत्वासुरत्वैस्त्रित्वं तत्परं। तथासति प्रकृतिद्वैविध्यस्य नानुपपत्तिरुक्तश्रुतेः। प्रकृत्या मनुष्यभेदप्रतिपादने तात्पर्याभावादित्याह अस्मिँल्लोक इत्यादियुक्तमुक्तमित्यन्तेन। **इत्युपचर्यन्त इति**। निरुक्तसाधर्म्यविशिष्टलक्षणारूपया ह्यमुख्यवृत्त्या देवादिशब्दैः प्रतिपाद्यन्त इत्यर्थः। **ननु विजातीया इति**। विजातीयप्रकृतिका विजातीया इत्यर्थः। जातिभेदनियतत्वादुक्तविजातीयप्रकृतित्रयस्य तेन विजातीयप्रकृतिनिराकरणस्यैव प्रकृतत्वेन तदनुक्तेरसङ्गतिरित्यपास्तम्। अत्र मनुष्ये मनुष्यशब्दस्य कथमुपचारः कथमसुरतयोक्ते वा सुरशब्दस्य किं वासाधर्म्यं तथोपचारस्य किं फलं मनुष्यमात्रस्य विवक्षितत्वे कथं त्रित्वोपपत्तिरित्यादिशङ्कानां नावकाशः समाहितत्वादिति॥ ६॥ ७॥ **विशिष्टाभाव इति**। प्रामाण्यविशिष्टवेदाद्यभाव इत्यर्थः। **क्वचिद्दत्त्वेति**। यागादितो धर्मो हिंसादितोऽधर्मः। वैपरीत्यमेव कुतो नेति यागादीनामयं स्वभावो यद्धर्ममेवोत्पादयति। हिंसादीनामयं स्वभावो यदधर्ममेवोत्पादयतीति। स्वभावस्य शरणीकरणीयत्वादेवं मन्त्रव्रतपुरोडाशचरुप्रभृतीनामेव धर्मानुकूलयागनिष्पादकत्वं कुतो नान्येषामित्यतोऽपि स्वभावस्य शरणीकरणीयत्वादेवं सत्यप्यदृष्टे चन्दनादित एव सुखं कुतो न कण्टकादित इत्य-

तोऽपि स्वभावस्य शरणीकरणीयत्वात् एवं धर्माधर्मनिचये विद्यमानेऽपि कदाचिदेव कस्यचिद्विपाकाभिमुख्यमित्यस्यापि स्वभावेनैव निर्वाह्यत्वाद्यागादिकमाश्रित्यापि स्वभावस्याश्रयणीयत्वादित्यर्थः । **स्वाभाविकमेवेति** । एवकारेणादृष्टव्यवच्छेदः । यथाहि पाकजविशेषमङ्गीकृत्य शक्तिनिरासो नैयायिकानां तथाभूतेभ्य एव पाकजानन्तविशेषशालिभ्योऽदृष्टं विनैव नियतसुखदुःखादिमच्चेतनकायोत्पत्तिः स्वभावेनैवेत्यभ्युपेत्यादृष्टस्य निरास एवं सुखदुःखादिकमपि दृष्टादेव चन्दनदहनसंयोगादितस्तादृशसंयोगादिकमपि दृष्टत एव क्रियादितो न क्वचिदप्यदृष्टापेक्षेति भावः ॥ ८—१८ ॥ 'वैषम्यनैर्घृण्य'मित्यादिसूत्रं शारीरकद्वितीयाध्यायप्रथमपादस्य । 'परात्तु तच्छ्रुते'रिति सूत्रं च शारीरकद्वितीयाध्यायतृतीयपादस्य बोध्यम् । **किंचिद्वैषम्यापादन इति** । यद्यपि सुखदुःखधर्माधर्मयागहिंसादिपुरुषकृतीश्वरकृतीनां निमित्तनैमित्तिकभावापन्नानां प्रवाहानादितया धर्मापेक्षेश्वरप्रयत्नात्पुरुषकृतिस्ततो यागादिस्ततो धर्मस्ततः सुखमधर्मसापेक्षेश्वरप्रयत्नात्पुरुषकृतिस्ततो हिंसादिस्ततः पापं ततो दुःखमिति घटीयन्त्रवदावर्तते । तत्रेश्वरप्रयत्नस्य साक्षाच्चेतनान्तरानपेक्षत्वेऽपि धर्माधर्मद्वारा भाविसुखदुःखपुरुषसापेक्षत्वेन सुखदुःखयोर्भृत्याचरणजातकोपप्रसादतद्दुःखसुखप्रदराजवन्न वैषम्यनैर्घृण्ये ईश्वरस्य एवं कार्यमात्रसामग्र्यामदृष्टादिजीवग्रहणायोग्यकारणानामचेतनानां चेतनाधिष्ठानमन्तरेण कार्याक्षमाणामनुप्रविष्टतयाधिष्ठातृत्वेन कार्यमात्र ईश्वरस्य जनकत्वेऽपि चैत्रस्य दुःखं मैत्रस्य सुखं भवत्वितीच्छायाश्चैत्रः पापं मैत्रो धर्मं करोत्वितीच्छायाश्च तदनुगुणप्रयत्नस्य च विशिष्याभावात् । तत्तद्व्यक्त्युत्पत्तिमात्रगोचरेच्छादेरेवाभ्युपगमात्ततस्तत्तद्व्यक्तिरुत्पद्यमाना स्वकारणान्तरतत्तददृष्टादिमति तत्तत्पुरुष उत्पद्यत इत्यतोऽपि नेश्वरस्य वैषम्यनैर्घृण्ये भवतः । तथापि स भगवान् रागद्वेषाभ्यां रहितोऽत्यर्थं कारुणिकः सर्वथैव निरतिशयैश्वर्यशाली स्वतन्त्रो भवितुमर्हति कलयन् दुःखबहुलं प्राणिजातमदृष्टशृङ्खलानियमनं च भेत्तुम् । कर्तुं च सुखैकरसं जगदिदमकुर्वंश्च कथं न वैषम्यलेशमावहेदिति भावः । नन्वीश्वरज्ञानेच्छाकृतीनां नित्यत्वात्फलानुसारेण तत्र विषयित्वविशेषस्य तत्तद्वस्तुनिरूपितस्य कल्पनान्न वैषम्यादिदोष इति चेन्न । नैयायिकादीनां कथंचित्संभवेऽपि वेदान्तिनां तदसंभवात्तैस्तेषां नित्यत्वानुपगमादतो वैषम्यादिपरिहारमाह—**महामायत्वाददोष इति** । ईश्वरसंकल्पादिसकलवृत्तेरदृष्टादिसापेक्षमायापरिणामत्वेन मायाधारत्वात्तद्दोषेण परमेश्वरस्य नित्यनिर्दोषचिदात्मकस्य संपर्कासंभवान्मायायाश्च विचित्रकार्यशक्तिमत्त्वादीश्वरस्य कारुणिकत्वेऽपि जगद्दुःखित्वादिसंभवान्न वैषम्याकारुणिकत्वादिदोषसंभव इति भावः ॥ १९—२४ ॥ इति श्रीधर्मदत्तशर्मणा विरचिते गीतागूढार्थदीपिकातत्त्वालोके षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ।

**शास्त्रीयं विधिमिति** । शास्त्रं वेदस्तद्धटकं दद्याज्जुहुयाद्यजेतेत्यादिकमित्यर्थः । यद्वा वेदप्रतिपाद्यं कर्तव्यत्वेष्टसाधनत्वादिकमित्यर्थः । **उपेक्ष्येति** । आलस्यादिदोषेण साङ्गस्य वेदस्याध्ययनाभावेनागृहीत्वेत्यर्थः । यद्वा मीमांसापर्यन्तस्य तस्याध्ययनाभावेनाज्ञात्वेत्यर्थः । **वृद्धव्यवहारमात्रेणेति** । वृद्धव्यवहारलक्षणेन विहिताचरणनिषिद्धपरिवर्जनरूपवृद्धाचारेण प्रमाणेनेत्यर्थस्तेन जनिता या श्रद्धा प्रमात्वेन गृहीतं शास्त्रविहितनिषिद्धयोः कर्तव्यत्वाकर्तव्यत्वज्ञानं ननु शास्त्रजनितं तादृशज्ञानं तद्विशिष्टतयेत्यर्थः श्रद्धानतयेत्यस्य बोध्यः । **अनुतिष्ठन्तीति** । शिष्टरचितपद्धत्याद्यवलम्बेनेति शेषः । देवेष्वितीत्यस्य संदिहान इत्यनेनान्वयः । उभयधर्मदर्शनादित्यनेन साधारणधर्मवद्धर्मिज्ञानरूपसंशयकारणप्रदर्शनम् । अदर्शनादित्यन्तेन संशयप्रतिबन्धकविशेषदर्शनाभावप्रदर्शनम् । उभयोरसुरत्वदेवत्वरूपकोटिद्वयवतोर्यो धर्मः शास्त्रीयविध्युपेक्षालक्षणः श्रद्धापूर्वकानुष्ठानलक्षणश्च तयोर्दर्शनादित्यर्थः । इदंचोभयकोटिसाहचर्यावच्छिन्नैकधर्मप्रकारताकज्ञानस्य संशायकतामतेन संभवति यद्यपि तथापि प्रत्येककोटिसहचरितधर्मवत्ताज्ञानत्वेन कारणताज्ञानयोश्च परस्परसहकारित्वं धर्मैक्यमप्रयोजकमिति मते नोक्तमिति । **शास्त्रानुसारिण इति** । शास्त्रमनुस्मृत्येति वक्तुमुचितं किंस्वित्यादिसंदर्भस्य तथैव परिशुद्धेरिति ॥ १ ॥ **श्रद्धामेदमिति** । श्रीभगवानुवाचेत्यनेन संबन्धः ॥ २ ॥ तच्चान्तःकरणं चोद्भूतसत्त्वं क्रियत इति संबन्धः । भरतस्य राज्ञो महतः कुले जातः भा ज्ञानं तत्र रत इत्यर्थद्वयमाह—**महाकुलेत्यादिना** ॥ ३ ॥ ४ ॥ **तपस्तप्यन्त इति** । व्यापारमात्रं धात्वर्थोऽभेदेन तदन्वयी तपःपदार्थः । क्रियाविशेषणे चेयं द्वितीया । आख्यातार्थस्तु प्रयत्नलक्षणभावनेति । तपःकुर्वन्तीति पर्यवस्यतीत्यभिप्रायेणाह—**तप्यन्ते कुर्वन्तीति** । योगस्य दम्भाहंकारयोगस्य दम्भाहंकारयोर्वियोगजननासामर्थ्यम् । वियोजकत्वेनाभिमतस्य योगमात्रस्यैव कदाचिदपि वियोगजननसामर्थ्यस्य विरहात्तस्य तद्गतसम्यक्त्वरूपत्वासंभवात् । नच वियोजकनिष्ठस्य तस्य कथं योगनिष्ठसम्यक्त्वरूपत्वमिति वाच्यम् । निरूपकतया तथात्वसंभवात् । अनायासेन प्रयोजकसाध्यो यो वियोगस्तत्प्रतिद्वन्द्वित्वस्य तथात्वात् । **अभिनिविष्टत्वेति** । तत्प्रतिकूलव्यापारगोचरबलवद्द्वेषोपधायकतदनुकूलगोचरोत्कटेच्छालक्षणाभिनिवेशाश्रयत्वेत्यर्थः । **आग्रह इति** । आपतितेऽपि प्रत्यूहव्यूहे तदपनीयेदं संपादयामीति निश्चय इत्यर्थः ॥ ५ ॥ कृशीकुर्वन्तस्तनूकुर्वन्तः आज्ञालङ्घनेन कर्शयन्तः विधिनिषेधरूपाज्ञाविपरीताचरणेन तिरस्कुर्वन्तः ॥ ६ ॥ **त्याग इतीति** । इति सूत्रेणेत्यर्थः । कल्पकारैर्निरुक्तो यज्ञ इत्यन्वयः । **यजतिनेत्यादि** । यजधातुघटिततया

हुधातुघटिततया च चोदनया विहितत्वेनेत्यर्थः । **उत्तिष्ठद्धोमेति** । यद्यपीदं द्रव्यमिन्द्रस्य भवतु न ममास्त्विती च्छैव स्वत्वनिवृत्त्यनुकूला त्यागो यागो होमश्च तद्विषयत्वेन द्रव्यं देवता च तत्स्वरूपघटकं नोत्थानप्रक्षेपादिकमतएव पशुना रुद्रं यजेतेत्यस्य पशुं रुद्राय ददातीति विवरणम्, तथापि संनिपत्योपकारकारादुपकारकाङ्कलापान्तर्गता उत्थानादयोऽङ्गाङ्गिभावेन संबद्धा यागहोमाभ्यां तौ भेत्तुमर्हन्तीत्यभिप्रायेणोक्तम् । उत्तिष्ठताध्वर्युणा होमः प्रक्षेप आहवनीयाद्याधारे येषाम्, त्यागबोधको वषडिति शब्दः प्रयुज्यत इति प्रयोगोऽन्ते येषां ते याज्यापुरोऽनुवाक्यासंज्ञकहोतृपठनीयमन्त्राभ्यामङ्गाङ्गिभावेन विशिष्टा यजतयश्चोदनाघटकयजधातुप्रतिपाद्या इत्यर्थः । एवमुपविष्टेत्याद्यपि व्याख्येयम् । **इतीति** । इतिसूत्राभ्यामित्यर्थः । यद्वा इति यः कल्पः कल्पसंज्ञकप्रयोगविधिप्रतिपादकवेदाङ्गविशेषस्य भागत्वात्तं कुर्वन्तीति कल्पकारास्तैरित्यर्थः । **परस्वत्वापत्तिफलक इति** । यागव्यावृत्त्यर्थम् । स्वमते देवता चैतन्यस्वीकारेऽपि देवकर्तृकयथेष्टविनियोगस्य कुत्राप्यदर्शनेन यथेष्टविनियोगार्हत्वलक्षणस्योद्देश्यदेवतास्वत्वस्य यागस्थले मानाभावेन यागव्यावृत्तेः । यदिच देवपित्रादिकर्तृकग्रहणाग्रहणप्रतिपादकवाक्यानां देवस्वग्रहणनिषेधकवाक्यानां च देशकालद्रव्यप्रदानाङ्गविशेषस्तुतितद्विपरीतनिन्दार्थकत्वादिभिरुपपत्तौ ग्रहणस्वत्वाद्युपगमकल्पनागौरवे सत्यपि यथाश्रुतार्थग्राहितया स्वत्वबोधकत्वमुपेयते कैश्चिदेवं दानस्य न स्वत्वजनकत्वमपितु स्वीकारस्यैवेति पक्ष आद्रियते तदा प्रतिपन्नमित्यादिशब्दाभिलप्यस्वीकारहेतुकस्वत्वप्रयोजक इत्यत्र तस्य तात्पर्योपवर्णनेन यागादिव्यावृत्तिसंभवः । यत्र न प्रतिपत्तिस्तत्र रजकाय वस्त्रं ददातीतिवद्गौण एव दानव्यवहारो देवातोद्देशेन त्यागस्तूत्सर्गमात्रं दानव्यवहारस्तत्रापि गौण इति भावः । **स्वस्वत्वत्याग इति** । स्वस्वत्वं निवृत्त्यनुकूलइच्छाविशेषरूपो व्यापार इत्यर्थः ॥ ७—९ ॥ **दृष्टादृष्टविरोध इति** । यातयामादिभक्षणस्य निषेधाददृष्टविरोधो बोध्यः ॥ १०—१४ ॥ प्रमाणमूलमित्यस्य विवरणमबाधितार्थमिति ॥ १५—२२ ॥ **अवयवा इति** । ओमिति तदिति सदिति च त्रयोऽवयवा इत्यर्थः । **एकवचसेति** । एकोक्त्येत्यर्थः । ब्रह्मरूपैकार्थाभिधानावच्छेदकविशिष्टानुपूर्वीरूपैकधर्मेणेति परमार्थः । एकं नामेत्यनेनान्वयः । सावयवमित्युक्त्याऽवयववृत्त्यापीदं नाम तस्यैवार्थस्य प्रतिपादकमिति सूचितम् । यन्नाम्नोऽवयवाः स्वातन्त्र्येण परस्परं मिलितावावृत्त्या विशिष्टाभिधेयार्थाभिधानासमर्थास्तन्नाम निरवयवं तादृशाभिधानसमर्था यदवयवास्तद्धि सावयवमिति तेनैकाक्षरकोषावधृतशक्तिकतत्तद्वर्णावयवकत्वेऽपि प्रायः सर्वपदानां न क्षतिः । **प्रणववदिति** । यथा प्रणवं ब्रह्मप्रतिपादकाकारोकारमकारात्मकत्र्यवयवकमपि समुदायशक्त्यापि ब्रह्मप्रतिपादकं तथेदमपीत्यर्थः । **कल्प्यत इति** । यद्यपि स्मृत इत्येतावन्मात्रं श्रूयते नतु विधिविभक्तिस्तथापि तावन्मात्रस्य प्रकृतासङ्गतत्वात्प्रमादजनिताङ्गवैगुण्यशान्तिफलकतया विशिष्टस्मरणस्याप्राप्तत्वेनापूर्वतया विधातुं योग्यत्वाच्च प्रकृतसङ्गतय उक्तवैगुण्यशान्तिकामेनोक्तनिर्देशः स्मर्तव्य इति विधिः कल्प्यत इत्यर्थः । **इवेति** । यथा वषट्कर्तुरित्यादौ विधिविभक्तेरश्रुतत्वेऽपि वषट्कर्तृसंबन्धिप्राथम्यविशिष्टभक्षणस्यान्यतोऽप्राप्तत्वेन विधिः कल्प्यते तथेत्यर्थः । **वचनानि त्वपूर्वत्वादिति** । प्रतिपाद्यस्यापूर्वत्वाद्धेतोर्वचनानि विधिपराणि भवन्तीत्यर्थः । **परस्पराकाङ्क्षयेति** । यज्ञादीनां सात्त्विकादितया प्रतिपादितानामङ्गवैगुण्ये तदुपशामकं मे किं स्यादित्यस्त्युपशामकाकाङ्क्षास्मरणस्य प्रतिपादितस्यास्ति साध्याकाङ्क्षेति परस्पराकाङ्क्षयेत्यर्थः । **स्तूयत इति** । ब्राह्मणत्वेनेत्यादिना ॥ २३—२८ ॥

इति श्रीधर्मदत्तशर्मणा विरचिते गीतागूढार्थदीपिकातत्त्वालोके सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

**कर्माधिकारीत्यादि** । कर्माधिकारिकर्तृकत्वलक्षणं यत्पूर्वोक्तयज्ञादिसाधर्म्यं तेन त्रैगुण्यसंभवात् संन्यासशब्दप्रतिपाद्यत्वलक्षणं यद्गुणातीतसंन्यासद्वयसाधर्म्यं तेन त्रैगुण्यासंभवाच्च संशय इत्यन्वयः । **कर्मफलत्यागरूपेण चेति** । रूप्यतेऽनेन रूपमसाधारणो धर्मः कर्मत्यागस्य यद्रूपं कर्मत्यागत्वं संन्यासनिष्ठत्वेनोक्तं फलत्यागस्य यद्रूपं फलत्यागत्वं त्यागपदार्थनिष्ठतयोक्तं ताभ्यां संन्यासत्यागयोर्वैलक्षण्योक्तिश्चेत्यर्थः ॥ १ ॥ **अनुपयुक्तानामिति** । त्यागहेतुगर्भविशेषणम् । अनुपयुक्तत्वे हेतुगर्भविशेषणं फलकामनया चोदितानामिति । फलकामनाप्रयुक्तं यत्प्रवर्तनाविषयत्वं तद्वतामित्यर्थः । तथाच कामनाविषये स्वर्गादौ तत्तद्वाक्येन विनियुक्तस्य विविदिषाहेत्वन्तःकरणशुद्ध्यादौ विनियोगस्यानुचिततया तस्य न तदर्थत्वमिति भावः । **त्यागमिति** । स्वर्गादिफलकामनारहितैर्विविदिषाद्यर्थान्तःकरणशुद्धिकामैः कृतमिति शेषः । ननु तमेतमिति वाक्येन यज्ञादिशब्देन सामान्यत एव यज्ञादीनां विविदिषादौ विनियोगात्कथं काम्यानां त्यागस्तैरपि विनियोगमाहात्म्यादन्तःकरणशुद्धेः कर्तव्यत्वादित्यत आह—**तमेतमित्यादि** । **नित्यस्येति** । स्वर्गादौ विनियुक्तस्य यज्ञादेरविगुणस्य समर्थस्य स्वर्गोत्पत्त्यवश्यंभावेन तदपूर्वस्य विविदिषाद्यन्तरायत्वात्काम्यपरिहारेणैव यज्ञादिशब्देन सामान्यबोधकेनापि नित्यमेव यज्ञाद्युपादाय विविदिषादौ यज्ञादिकं तमेतमित्यादिवाक्यं विनियुङ्क्ते इति न विनियोगवशात्काम्यानुष्ठानप्रसङ्ग इति भावः । नित्येन हि तेनेत्यधिकः पाठः । वाक्येनेत्यनेन द्वारेणेत्यनेन वा तस्यान्वयसंभवेऽपि फलाभावात्तदुक्तेरनुचितत्वान्नित्यत्वेन हि

प्रामाण्यं बोधनीयं तस्य प्रसिद्धोपनिषद्भावेनावगतत्वेनाबोधनीयत्वात् । द्वारे नित्यत्वस्य चोदनाघटकपदप्रतिपाद्यकाम्यफल-राहित्यलक्षणस्य नित्यकर्मद्वारत्वेनैव सिद्धेश्च विकल्पवाक्यानात्मकेनेत्यर्थोऽपि हि निष्प्रयोजनत्वादेव हेयः । तेनेति तु सर्वथैव निरर्थकम् । वाक्येनेत्यस्य बोधितत्वादित्यतोऽन्यत्रानन्वितस्य तच्छब्देन तेन सहान्वयार्थं परामर्शस्यानुचितत्वात् । प्रसिद्धार्थकमपि हि तत्तथैव हि तेनेत्येकपदकरणेऽपीष्टेनेति तदर्थस्य प्रकृतानुपयुक्ततया तथात्वमेव तादृशः पाठो वस्तुकथन-मात्ररूपश्चेदिष्यत इष्यताम् । **लब्धत्वादिति** । विधिबोधनीयस्य विविदिषाज्ञानादौ पापक्षयद्वारा नित्येषु साधनत्वस्य लब्धत्वात्तमेतमित्यादेरस्फुटविधिविभक्तेर्विधायकत्वकल्पनं व्यर्थमित्यर्थः । **नवा स्यादिति** । नच नित्यकर्मणः पापक्षयेऽपि ज्ञानानुत्पत्तौ व्यभिचारात् ज्ञानमुत्पद्यत इति वाक्यश्रुतहेतुत्वानुपपत्तेरुक्तशङ्का नोचितेति वाच्यम् । यस्मिन् साधनत्वेनाभि-मते सत्येव भवति तत्त्वमित्येतावन्मात्रस्य साधनत्वपदार्थत्वादुक्तशङ्कोपपत्तेः । न चोक्तशङ्काबीजस्य साधनान्तरासंपत्तिशङ्काया विधानपक्षेऽपि साम्यमिति वाच्यम् । अनियतविपाकाः संसारहेतवो धर्माधर्मा घटीयन्त्रवदावर्तमानाः सततं विपच्यन्त इति तद्रूपप्रतिबन्धकसद्भावेन तदभावरूपकारणाभावशङ्काया एव बीजत्वेनानुसरणीयत्वात् । सामग्र्या एव कार्यजनकत्वेन दृष्ट-कारणान्तराभावस्य शङ्कितुमशक्यत्वात् विधाने सति तद्वैयर्थ्यान्नियमलाभे यथा सुखदुःखहेतुविपरिपच्यमानादृष्टप्रवाहच्छिद्रे सुषुप्तिस्तथैव तच्छिद्रे कदाचिद्दृष्टसाकल्ये विविदिषादिहेत्वदृष्टपरिपाके नित्यकर्मणा तत्प्रतिबन्धकदुरितोच्छेदेऽवश्यं भवेदेव विविदिषादिरिति निर्णयेनोक्तशङ्कोच्छेदसंभवादिति भावः । विविदिषावेदनादिरूपफलस्य परिगृहीतत्वादुक्तं प्रतिपदोक्तेति विशिष्य तत्तत्कर्मबोधकपदघटितविध्यर्थवादादिघटकपदोक्तेत्यर्थः । नच नित्यानामपि प्रतिपदोक्तफलसद्भावे नित्यत्वहानि-रिति वाच्यम् । प्रत्यवायप्रयोजकाकरणप्रतियोगित्वस्यैव नित्यत्वरूपत्वात् । ननु फलत्यागमात्रं काम्यस्वरूपत्यागपक्षसाधा-रणमित्यत आह—**सत्त्वशुद्ध्यर्थितयेत्यादि । विविदिषासंयोगेनेति** । विविदिषावेदनरूपफलसंबन्धेनेत्यर्थः । वैशिष्ट्ये तृतीया । **अनुष्ठानमिति** । नित्यकाम्यसर्वकर्मणामित्यादिः काम्यकर्मानुष्ठानस्य प्रथमपक्षेऽभावात्ततो वैलक्षण्य-लाभः । सत्त्वशुद्ध्यर्थतयेत्यस्य सावधारणत्वात्सर्वकर्मफलत्यागलाभः स्वर्गादिकामनयाकृतेऽपि तदनुकूलसत्त्वशुद्ध्यर्थतास्त्येवेति विविदिषासंयोगेनेत्युक्तम् । तथाच तदतिरिक्तस्वर्गाद्यर्थित्वव्यावर्तकावधारणपरत्वावगतिः वेदनपर्यन्ताया विविदिषायाः पर-मपुरुषार्थमोक्षानुकूलत्वस्य प्रसिद्धतया सत्त्वशुद्धिमात्रस्यापुरुषार्थत्वेऽपि विविदिषाद्वारा तथात्वेन तदर्थित्वानुपपत्त्यभावश्च । ननु तत्तद्वाक्येन तत्तत्फले विनियुक्तानां काम्यानां तमेतमिति वाक्येन विनियोगोऽनुपपन्न इत्यत आह—**खादिरो यूपो भवतीत्यादि** । तथाचोत्पत्तिशिष्टफलावरोधे ह्याकाङ्क्षाभावादन्यत्राविनियोगो युज्यते उत्पत्तिवाक्यसिद्धानां फलाकाङ्क्षाणां पौर्वापर्यविनैव यदा सर्वाणि फलवाक्यानि फलसंबन्धं विदधते तदा क्वास्ति विनियुक्तविनियोगेनानौचित्यशङ्काश्रवणक्रमा-नुरोधिक्रमवत्प्रतीतीनामस्माकं विनियुक्तविनियोगस्य हि भ्रममात्रमेतदेव स्फोरयितुं स्वोत्पत्तिविधिसिद्धानामित्युक्तम् । **प्रमा-णभेदादिति** । प्रकरणवाक्यरूपप्रमाणभेदादित्यर्थः । नचानयोर्बलाबलं चिन्तनीयम् । विरोधाभावात् । क्रतुमुपकुर्वदेव हि पुरुषार्थं वीर्यं खादिरत्वं साधयिष्यति । एकस्येति सूत्रं तु प्राग्व्याख्यातम् । ननु काम्यानामग्निहोत्रादीनामनुष्ठाने स्वर्गाद्यवश्यं-भावेन तेषां विविदिषावेदनविरोधित्वमेवातो न तान्यनुष्ठेयानीत्यत आह—**नह्यग्नीत्यादि** । यदि काम्यकर्मनिष्ठं नित्य-व्यावृत्तं किंचिद्रूपमेवं स्याद्यस्य कामनामनपेक्ष्यैव स्वर्गादिप्रयोजकत्वं स्यात्स्यात्तदोक्तदोषो नह्येवमस्ति । कामनासहकारे तान्येव स्वर्गानुकूलमदृष्टं जनयित्वा स्वर्गं संपादयन्ति । कामनाभावे तु केवलनित्यवद्दुरितनिवर्तनेन विविदिषादिकम् । ननु नित्यका-म्ययोर्विविदिषान्यफलरहितत्वतादृशफलवत्त्व एव परस्परव्यावृत्ते रूपे स्त इति कथमेवमुच्यत इत्यत आह—**नित्यकर्मणां चेति** । यद्यप्यनिष्टमिष्टमित्यत्र प्रातिस्विकं किमपि फलमुक्तं न दृश्यते तत्र कर्मपदस्य काम्यनिषिद्धादिपरत्वात् नित्यस्या-न्तःकरणशुद्ध्यादिरूपेष्टफलस्य संभवेऽपि न तस्य प्रातिस्विकत्वं तथापि शुद्धेः पापाभावरूपायाः प्रतियोगिभेदेन भिन्नत्वात्तत्त-न्नित्याकरणोत्पत्स्यमानतत्तद्दुरिताभावस्य तत्तन्नित्यानुष्ठाननिर्वाह्यत्वाद्भवति प्रातिस्विकत्वं कथंचिद्वस्तुतस्तु 'सन्ध्यामुपासते ये तु सततं ब्रह्मवादिनः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनं'मित्यादावुक्तमिति वक्तव्यम् । **नित्यानामेवेति** । एव-कारेण विविदिषुकर्तृकानुष्ठानप्रयोजकविविदिषासंयोगस्य काम्ये व्यवच्छेदलाभेन विविदिषासंयोगेनेति तृतीयान्तस्य स्वरूप-तोऽपि परित्याग इत्यत्रान्वय उपपद्यते । **भिन्नजातीयार्थत्वमिति** । यथा घटपटशब्दयोरत्यन्तविलक्षण एव जाती प्रवृत्ति-निमित्ते नैवं त्यागसंन्यासशब्दयोः फलाभिसन्धित्यागत्वस्य सामान्यस्यैकस्योभयत्र प्रवृत्तिनिमित्तत्वात् काम्यकर्मस्वरूपत्यागस-हितत्वतद्रहितत्वाभ्यां विशेषणाभ्यामेव तु तस्योभयत्र भेदात्तथाच संन्यासविविदिषाशब्दौ नात्यन्तविजातीयार्थकौ नापि पर्यायौ किं तूपाधिभेदभिन्नधर्मप्रवृत्तिनिमित्तकौ तौ चोपाध्युक्ताविति प्रथमप्रश्नो जातोत्तर इति भावः ॥ २ ॥ ३ ॥ **दुःख-बुद्ध्येति** । विहितेऽपि त्यागप्रतियोगिन्यैहिकदुःखानुबन्धित्वबुद्ध्येत्यर्थः । दुःखेति तु साध्यसाधनयोरभेदोपचारात् । **विप-र्यासेनेति** । दुःखासंभिन्नं सुखं यदि स्यात्स्यान्मम तदिति फलाभिसन्धौ सत्यामपि सुखे दुःखासंभिन्नत्वाभावभ्रमेण स्वर्गसा-धनेऽपि यागादौ हिंसाद्यनुविद्धतया स्वर्गसाधनत्वाभावभ्रमेण चेत्यर्थः । **सोऽपीति** । नैर्गुण्यरूपोऽपीत्यर्थः । विचारायेत्यस्य कर्मण इत्यस्य परित्याग इत्यनेनान्वयः । **वैतुष्य इति** । यथा वैतुष्यरूपदृष्टार्थस्यावघातस्य जाते वैतुष्ये प्रयोजनाभावा-त्परित्यागो न पूर्वं परित्यागो नोत्तरमनुष्ठानम् तथा फलाभिसंधिरहितस्य पुंसोऽन्तःकरणशुद्धौ जातायां तीव्रविविदिषा-

नुमेयान्तःकरणशुद्ध्यैकप्रयोजनस्य कर्मणः परित्यागो न पूर्वं नोत्तरकालमनुष्ठानमित्यर्थः ॥ ४ ॥ **यज्ञदानतपांस्येवेति** । नच सन्ध्योपासनादीनामन्येषामपि पावनत्वमस्तीत्येवकारासङ्गतिरिति वाच्यम् । तेष्वेव तेषामप्यन्तर्भावात् यज्ञादिपदार्थस्यानेकविधस्य प्रागुक्तेरिति ॥ ५ ॥ **उपसंहृत इति** । ननु संयोगपृथक्त्वन्यायेन यज्ञशब्देन सामान्यतो नित्यानां काम्यानां च कर्मणां तमेतमिति वाक्येन विविदिषायां विनियोगस्य प्रागुक्तत्वात्फलकामनाया नियामिकाया अभावात् विनिगमकाभावात्सर्वाणि तत्तद्वर्णाश्रमोचितानि काम्यानि कर्माणि कर्तव्यानि स्युर्विविदिषार्थिनामितिचेन्न । नहि तमेतमिति वाक्यं समुच्चित्य सर्वाणि कर्माणि विविदिषायां विनियुङ्क्ते येन सर्वेषां कर्तव्यता स्यादपितु तत्तदाश्रमोचितकर्मत्वेन, सामान्यतस्तत्र नित्यानामकरणे प्रत्यवायश्रवणाद्यानि सन्ध्योपासनादीनि प्रत्यहं यानि दर्शादीनि प्रतिमासं यानि सोमादीनि कर्माणि जीवनमध्ये सकृदप्यवश्यं कर्तव्यत्वेन चोदितानि तानि तथावश्यं कर्तव्यानि ततश्चाकरणजन्यप्रत्यवायानुत्पत्तिः संचितदुरितानां विविदिषादिप्रतिबन्धकानां यथासंभवं क्रमेण निवृत्तिः ज्ञानानुकूलधर्मोत्पत्तिरपि च भवति । संचिततादृशदुरितझटितिनिवृत्त्युत्कटेच्छायां प्रातिस्विकफलकामनात्यागेन हि यथासाधनसंपत्तिकाम्यानामप्यनुष्ठानं नावश्यकं तन्नित्यानुष्ठानमात्रेणापि शास्त्रस्य चरितार्थत्वान्नावश्यं तत्परित्यागोऽपि सामान्यतो विहितत्वात् । विनिगमकं हि प्रागुक्तेच्छासाधनसंपत्त्यधिकसाधनसंपादनश्रमद्वेषाभावादिकमवसेयम् ॥ ६ ॥ **भिन्नविषयत्वेनेति** । समानविषयत्वे यथा घटोऽत्रास्ति घटो नास्तीति विधिनिषेधयोरेकबाधंविना नापरसमावेशो न तथात्र पटोऽस्ति नात्र घटोऽस्तीति विधिनिषेधयोर्भिन्नविषत्वे, विनाप्येकबाधमुभयसमावेशादेवमेव 'अग्नीषोमीयं पशुमालभेत' 'मा हिंस्यात्सर्वाभूतानि' इति विधिनिषेधशास्त्रयोर्भिन्नविषयत्वेन बाध्यबाधकभावं विनैवाग्नीषोमीयपशुहिंसायां समावेशसंभवादित्यर्थः । **एवं ज्योतिष्टोमादावपीति** । स्वर्गेऽत्यर्थरागवतो हिंसानन्यदुःखे बलवद्द्वेषाभावाज्ज्योतिष्टोमादावप्यधिकारः प्रवृत्तिश्चोपपद्यत इत्यर्थः । तथाच ज्योतिष्टोमादेरपि दोषवत्त्वाद्विवेकिभिस्तदपि त्याज्यमेव कर्मेति सांख्याशयः । अथ नित्यानां दर्शपूर्णमासज्योतिष्टोमादीनां दोषवत्त्वादनुष्ठानेऽप्यनर्थः, नित्यत्वादकरणे प्रत्यवायश्रवणात्परित्यागेऽप्यनर्थ इति सांख्यमत उभयतःपाशारज्जुरापतितेति चेन्न । यथाहि स्वर्गोत्कटरागिभिर्हिंसाजन्यदुःखे द्वेषानुदयादनुष्ठीयते ज्योतिष्टोमादिस्तथा हिंसाजन्यदुःखे परित्यागजन्यदुःखादधिके बलवद्द्वेषवता विवेकिना स्वर्गेऽपि पातभयादिदुःखमाकलय्य विरज्यता शुक्लेन सन्ध्योपासनजपयज्ञादिना नित्याकरणजन्यपापक्षयस्य साध्यत्वमाकलयता परित्यज्यतेऽपि । वस्तुतः येषां हिंसारूपाङ्गविकलानां नित्यानां शक्यमनुष्ठानं ते तथानुष्ठीयन्तेऽपि, तथाप्यकरणजन्यप्रत्यवायानुत्पत्तेः । साङ्गताविरहेण स्वर्गानुत्पत्तावपि तत्र रागाभावेन क्षत्यभावादिति सांख्याशयात् । **प्रवर्तनां कुर्वतेति** । प्रवृत्त्यनुकूलत्वेनोक्तबोधः प्रवर्तनात्रोच्यते, नचेयं लिङादिशक्या, तस्याः प्रवृत्तिविषयकत्वात्, तेन विध्यर्थः प्रवर्तनैवेत्यग्रिमग्रन्थेन न विरोधः । निरुक्तबोधरूपप्रवर्तनाकरणं तु न साक्षाच्छब्दप्रमाणतया तत्राशक्तत्वात्, अपितु तत्र लिङ्गभूतप्रवर्तनोपस्थापकत्वेन प्रवर्तनाविषयत्वबलवदिच्छाविषयसाधनत्वयोराचार्यादिप्रवर्तनाविषयाध्ययनादौ व्याप्तिग्रहादिति भावः । **तदनुपपत्तेरिति** । फलवदिच्छाविषयसाधनत्वबोधानुपपत्तेरित्यर्थः । तत्पदेन साधनत्वान्तपरामर्शो न युक्तः, नरकसाधनेऽप्यगम्यागमनादौ तज्जन्यसुख उत्कटरागवतो बलवदिच्छाविषयसाधनत्वसंभवादिच्छायामौत्कट्यस्यैव वैजात्यरूपस्य बलवत्त्वपदार्थत्वात्तदनुपपत्तिविरहात् । नच बोधविवक्षयापि किं जातमिति वाच्यम्, अनर्थसाधन इत्यस्यापि बलवद्द्वेषविषयसाधनत्वेन हि ज्ञात इत्यर्थः, तथाचागम्यागमनादिजन्यसुखे तस्यैवोत्कटो रागो न यस्य तज्जन्यनरक उत्कटो द्वेष, उत्कटद्वेषविषयसाधनत्वेन गृहीते चोत्कटेच्छाविषयसाधनत्वग्रहोऽनुपपन्न इति विधिस्तादृशग्रहं भावयन् तदुपपादकं बलवद्द्वेषविषयसाधकत्वज्ञानमपि संपादयति । नचोक्तानर्थसाधकत्वज्ञानरूपतद्विरोध्यभावादेव तदुपपत्तेरुक्तज्ञानकल्पनमनर्थकमिति वाच्यम् । प्रवृत्तिं प्रति तादृशज्ञानाभावत्वेन हेतुत्वापेक्षया निरुक्तासाधनत्वज्ञानत्वेन हेतुत्वस्य युक्ततया प्रवर्तकेन विधिना तत्संपादनस्यैवोचितत्वात् । वस्तुतस्तु प्रवर्तना प्रवृत्तौ न स्वातन्त्र्येण कारणमपितु प्रामाणिकवाक्यजन्यज्ञानविषयीभूता स्वविषयप्रवृत्तिगोचरत्वेन क्रियायां बलवदिच्छाविषयसाधनत्वमनुमापयन्ती तादृशसाधनत्वज्ञानस्यैव लोकेऽन्वयव्यतिरेकाभ्यां प्रवृत्तिकारणत्वावधारणात् । बलवदिच्छाविषयत्वं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकविजातीयदुःखानवच्छिन्नविजातीयसुखत्वम्, दुःखावच्छिन्नत्वं च स्वजनकजन्यत्वस्वसामानाधिकरण्योभयसंबन्धेन, दुःखे वैजात्यं चोत्कटरागप्रतिबन्धकज्ञानविषयतावच्छेदको धर्मः, तथा चोक्तेन लिङ्गेनानुमितस्य बलवदिच्छाविषयसुखसाधनत्वस्यागम्यागमनादौ तादृशदुःखसाधनत्वसद्भावेनानुपपत्तिर्वास्तविकी तादृशसाधनत्वाभावमाक्षिपत्येवेति तदनुपपत्तेरित्यत्र तच्छब्देन तादृशसाधनत्वस्यैव परामर्शो युक्तः । एतेन सुखगतवैजात्येनैव सुखस्य साधनत्वं प्रवर्तकज्ञानविषयो नतु बलवदिच्छाविषयत्वेन, तथाच तादृशबोधरूपप्रवर्तनासंपादकत्वोक्तिरयुक्तेत्यपि निरस्तम् । बलवदिच्छाविषयत्वस्य निरुक्तविजातीयसुखोपलक्षकत्वात् । ननु क्रत्वङ्गविधिस्थले क्रत्वर्थत्वमेव विध्यर्थः । साधनंविना कार्यानुपपत्तेर्गृहीतत्वेन क्रतौ प्रवृत्तस्य पुरुषस्य तावन्मात्रज्ञानादेव क्रत्वर्थे प्रवृत्त्युपपत्तेः, तथाचाग्नीषोमीयहिंसादावनर्थसाधनत्वाभावस्य विधितः कथमप्यनवगमान्न निषेधविषयत्वासंभव इत्यत आह—**नहि क्रत्वर्थत्वमिति** । संभवत्येकशक्तावनेकशक्तिकल्पनाया अन्याय्यत्वादाचार्यादिप्रेरणास्थले प्रवर्तनायां शक्तेः क्लृप्तत्वान्मुख्यक्रतुविधिस्थलेऽपि क्रत्वङ्गताव्यभिचारात् वेदेऽपि तत्रैव शक्तिग्रहादङ्गविधिस्थलेऽपि

प्रवर्तनाया अबाधात्क्रत्वर्थत्वं न विध्यर्थ इति भावः । अङ्गाङ्गिभावग्राहकमानसहकृताद्विधेरेव क्रत्वर्थत्वावगमात्**साक्षादिति** । अथ यद्यपि विधिर्बलवदिच्छाविषयसाधनतां बोधयत्येवानर्थसाधनत्वाभावं च, तथापि यत्र 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ प्रधानस्य कृतिविषयस्य भाव्यस्य स्वर्गादेरसमीहितसाधनत्वं तत्र यागादावेवाप्रधानेऽपि समीहितसाधनत्वादिकं बोधयति । यत्र त्वग्नीषोमीयमित्यादौ प्रवर्तनाविषयीभूता कृतिः क्रतुमेव भाव्यत्वेन प्रधानतया गोचरयति तत्र तस्य च समीहितसाधनत्वादिनावगन्तुं योग्यस्य प्रधानस्य तत्त्वेनावगमादेव विधेः कृतकृत्यत्वेनाङ्गभूतस्य क्रतुभावनायां करणतयान्वितत्वेन क्रत्वर्थत्वेन ज्ञातस्य पशुयागस्य समीहितसाधनत्वादिकं नावगमयतीति विधिस्पृष्टत्वेऽपि निषेधविषयता न विरुध्यत इत्यत आह—**प्रवर्तनाकर्मभूतात्विति** । **विषयीति** । भाव्यतयेत्यादिः । **अन्यदिति** । स्वर्गं वा क्रतुं वा गोचरयत्विन्यदप्रकृतोपयोगि, भाव्यत्वेन यदायं कमपि गोचरयति तं बलवदिच्छाविषयत्वरूपेष्टत्वेनैव नतु तत्साधनत्वेन, करणत्वेनान्विते कर्तव्ये तावतैव प्रवृत्त्युपपत्तेः प्रवर्तनायाः प्रक्षीणव्यापारत्वात् । तत्रापि यत्र भाव्यस्य स्वपदेनोपस्थितिस्तत्रोपस्थितप्रकारस्येष्टतावच्छेदकत्वेन गृहीतत्वे तेन रूपेण भाव्यतया तस्यान्वयो, यत्र तु प्रवर्तकवाक्ये तादृशरूपोपस्थापकपदं नास्ति तत्र बलवदिच्छाविषयत्वेनैव भाव्यस्यान्वयोऽग्नीषोमीयादिवाक्ये च नास्ति भाव्योपस्थापकं पदमिति तत्राग्नीषोमीयपशुकरणकयागकरणिकायां भावनायां बलवदिष्टत्वेनैव भाव्यस्य यागादेरन्वयो वाच्य इति स्वर्गवत्तस्यापि तदानीं प्रधानस्यापीष्टसाधनत्वयोग्यस्य तत्त्वेन बोधासंभव इति प्रवर्तनाविषयत्वलिङ्गेन तादृशेष्टतत्साधनत्वेन गृहीतेऽङ्गक्रतौ मुख्यक्रताविवानर्थसाधनत्वाभावोऽर्थाद्बोधनीय एवेति भावः । **यथाप्राप्तमेव गोचरयतीति** । बलवदिच्छाविषयत्वेन गृहीतमेव भाव्यतया विषयीकरोतीत्यर्थः । **अतएवेति** । विधिना भाव्यस्यानिष्टसाधनत्वाप्रतिक्षेपादेवेत्यर्थः । **विषयत्वाभावादिति** । विधेयत्वाख्यविषयत्वाभावादित्यर्थः । तेन भाव्यतया विषयत्वस्य फले प्रागुक्तस्य नासङ्गतिः । **अवलम्बत इति** । विधेयत्वेनेत्यादिः । **विशेषविधिबाधितमिति** । अग्नीषोमीयपशुहिंसाया अपि विधिना प्रवर्तनात्मकेन विधेयतया गोचरीक्रियमाणत्वेन बलवदनिष्टासाधनत्वेनार्थाद्बोधितत्वेन तादृशबोधस्यापि प्रमात्वेन सुग्रहत्वेन प्रमितानिष्टसाधनत्वाभावेन बाधितमित्यर्थः । **वैषम्यादिति** । श्येनफलस्याभिचारविध्यस्पृष्टस्य निषेधगोचरतयानर्थसाधनत्वेन तद्द्वारा श्येनस्यापि तथात्वम्, ज्योतिष्टोमादिफलस्य स्वर्गस्य विध्यस्पृष्टत्वेऽपि केनचिदपि निषेधेनाविषयीकरणात् नानर्थसाधनत्वं, तदङ्गहिंसाया अपि विधिस्पृष्टत्वेन निषेधेन गोचरयितुमशक्यत्वात् न तत्त्वमिति ज्योतिष्टोमस्य स्वतः फलाङ्गद्वारा वापि नानर्थसाधनत्वसंभव इत्युभयोरनर्थसाधनत्वतदभावाभ्यां वैषम्याज्ज्योतिष्टोमादेरदुष्टत्वमित्यर्थः । तथाच श्येनज्योतिष्टोमयोर्हिंसासंपृक्तत्वेनानर्थसाधनत्वाविशेषाद्विवेकिनां तुल्यैवाप्रवृत्तिरिति सांख्यप्रलापो निरस्त इति भावः । **न किंचिदेतदिति** । सांख्यप्रतिपादितं ज्योतिष्टोमादेरनर्थसाधनत्वं न किंचिदतितुच्छमित्यर्थः । **न नियोगस्य प्रवर्तकत्वमिति** । विधिवाक्यतो गृहीतस्यापीत्यादिः । प्रवृत्तिहेतुत्वेन क्लृप्तायाः समीहितसाधनत्वावगतेरेव झटिति प्रवृत्तिनिर्वाहे समुपस्थितोऽपि नियोगः पुरुषप्रवृत्तावुदास्ते, तस्यौदासीन्यं बलवदनिष्टाननुबन्धित्वज्ञानाजनकत्वम् । यद्यपि ज्योतिष्टमेऽपि फलसाधनता श्येनवदेवावगम्यत इति विधेस्तत्राप्यौदासीन्यं स्यात्तथापि तथात्वेऽपि तस्य निषेधमात्रगोचरत्वेनानर्थसाधनत्वाप्राप्तेर्नाधर्मत्वं, श्येनादेश्च निषेधगोचरत्वादनिष्टसाधनत्वेन भवत्यधर्मत्वम् । वस्तुतस्तु ज्योतिष्टोमादेरायासबहुलत्वेनैहिकानुभूतसमीहितसाधनत्वरहितत्वेन च स्वर्गस्याननुभूततया तत्साधनतावगमादपि बलवदायासदुःखावगमानभिभवेन ज्योतिष्टोमे प्रवृत्त्यनुकूलरागोत्पादनासंभव इति नियोगस्य न तत्रौदासीन्यमङ्गीकरणीयम् । अनुदासीने तु नियोगे तादृशदुःखावगमाभिभवेन बलवदनिष्टाननुबन्धित्वबोधजननद्वारा स्वर्गसाधनतावगमादप्युत्कटरागसंभवेन प्रवृत्त्युपपत्तिः । श्येनफलस्य त्विहानुभूतस्योत्कटरागगोचरत्वेन तत्साधने श्येनेऽपि नान्तरीयकदुःखावगमाभिभवेनोत्कटरागसंभवात्प्रवृत्त्युपपत्तेरुचितमेव विधेरौदासीन्यमिति भावः । **फलसाधनत्वाभावेनेति** । विधिवाक्यतः फलसाधनत्वानवगमेनेत्यर्थः । **व्यावर्त्यत्वेनाधर्मत्वमिति** । श्येनस्य बलवदनिष्टानुबन्धित्वेनाधर्मस्य चोदनालक्षणत्वेन धर्मत्वापत्त्या तद्व्यावृत्त्यर्थं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वार्थकमर्थपदोपादानमिति भावः । **निषिद्धस्यैवेतीति** । द्विविधा हि चोदना प्रवर्तिका निवर्तिका च । तत्र प्रवर्तकचोदनार्थप्रवर्तनागोचरस्य चोदनालक्षणस्य धर्मत्वमेव निवर्तकचोदनार्थनिवर्तनागोचरस्य कलञ्जभक्षणादेश्चोदनालक्षणस्याप्यधर्मत्वमेव तद्व्यावृत्त्यर्थमुक्तार्थकार्थपदमिति भावः ॥ ७ ॥ ८ ॥ **विध्युद्देश इति** । यस्य कस्यचित्सन्ध्योपासनादेरित्यादिः । तेन नित्यस्यापि दर्शपूर्णमासज्योतिष्टोमादेरित्यादिना ग्रन्थेन प्राङ्नित्यत्वेनोक्तस्य दर्शपूर्णमासादेर्विध्युद्देशे फलश्रवणेऽपि नासङ्गतिः । **कार्यमिति** । तदपीत्यादिः । **नित्यानां फलमेव नास्तीति** । सन्ध्योपासनादिनित्यानां विध्युद्देशादौ फलाश्रवणात् विशेषतः फलज्ञानं नास्तीति तत्त्यागो न शक्य इत्यर्थः । तेन नित्यानां सर्वथा फलाभावे फलाभावान्निष्फलं तत्कथं कार्यमित्याशङ्कोपेक्षणं कथं कृतमितिशङ्का निरस्ता । विहितत्वेन फलसंभावनया कार्यत्वसंभवात् । नच त्यागोऽपि तादृशफलस्यैव संभवतीति वाच्यम् । तथासति पुनरप्यकार्यत्वस्यापत्तेरिति यथा दर्शादीनां नित्यानां विध्युद्देश फलश्रवणाद्विशेषतस्तस्य ज्ञानात्तत्त्यागेन कार्यत्वं तथा सन्ध्यावन्दनादीनां फलज्ञानाभावात्त्यागो न शक्य इत्यत्रैव तात्पर्यस्य वक्तव्यत्वात् । नचैवमप्युच्यत इत्यादिग्रन्थासङ्गतिः । तत्र सामान्यतः फलसद्भावस्य प्रतिपादनात् । शङ्काग्रन्थस्यापि सामान्यतः फलसद्भावाभिप्रायकताया उक्तत्वादिति वाच्यम् ।

तस्यापि व्याख्येयत्वात् । अथवा नित्यानां सर्वथा फलाभावेऽपि नियोगादेव प्रवृत्तिः, नहि नियोगः पुरुषप्रवर्तने कार्यताज्ञानातिरेकेणेष्टसाधनताज्ञानमप्यपेक्षते । भवत्यत्र लोकानामनुभवः प्रमाणम्, राज्ञा गुरुणा वा नियुक्तेन मयेदमनुष्ठितमिष्टं तु किमपि नालोचितमिति प्राभाकरसरणिमालम्ब्य शङ्कोत्तरग्रन्थयोः प्रवृत्तिर्बोध्या, तत्रानुपपत्तिलेशोऽपि नेति । परन्तु निष्फलस्यानुष्ठानासंभवादित्यग्रिमग्रन्थदर्शनात् भट्टनैयायिकादिमतानुरोधेन व्याख्यानक्लेशादरः । **फलमस्तीति गम्यत इति।** प्रमाणत्वेनावधृतस्य भगवद्वचनस्य नित्यस्य फलाभावे प्रामाण्यानुपपत्तेस्तद्वचनादेव नित्यस्य फलमस्तीत्यस्यापि सिद्धेरित्यर्थः । निष्फलस्यानुष्ठानासंभवादिति स्वतन्त्रो हेतुरयं, तेनैतद्वचनस्य यथा नित्यस्य निष्फलत्वे कार्यत्वोक्त्यसंभवात्सफलत्वे प्रमाणत्वं तथा नित्यविधायकवाक्यस्याप्यनेनैव हेतुना सफलत्वे प्रमाणत्वमन्यथानुष्ठानलक्षणाप्रामाण्यप्रसङ्गादिति तदप्रतिपादनेन न्यूनतेति निरस्तम् । निष्फलस्य भ्रमप्रयोजकदोषरहितानामनुष्ठानासंभवादिति तु तदर्थः, तथाच तादृशानुष्ठानमेव तस्य सफलत्वे मानमिति भावः । **तदभिसन्धिं त्यक्त्वेति।** अत्र तत्पदेन यदि पापक्षयोक्तपुण्ययोः परिग्रहः तदा तस्याप्यभिसन्धेस्त्यागेऽनुष्ठानासंभवस्तदवस्थः स्यात् अतस्तत्पदेन लुप्तपञ्चमीकेन तान्यनुष्ठेयानीत्यन्वयिना भाव्यम् तथाच यतोऽस्ति दुरितनिवृत्त्यादिकं नित्यस्य फलं ततस्तदनुष्ठेयमित्यर्थः । अभिसन्धिं त्यक्त्वेत्यस्य तु बन्धरूपफलाभिसन्धिं त्यक्त्वेत्यर्थस्तथासति पापनिवृत्त्यादिफलाभिसन्धेः सत्त्वेऽपि तस्य तादृशाभिसन्धित्वाभावादुक्तत्यागोऽक्षत इति भावः । यत्तु काम्ये कर्मणि फलाभिसन्धिः प्रवर्तको नित्ये तु सफलत्वमात्रम् तथाच फलाभिसन्धित्यागेऽपि प्रवृत्तिनिर्वाह इति । तन्न । निष्फलत्वेऽपि फलसाधनताभ्रमे प्रवृत्तेर्दर्शनात्सफलेऽपि निष्फलत्वभ्रमे तददर्शनान्न स्वरूपतः सफलत्वं प्रवर्तकं, निष्फलस्येत्यादिग्रन्थस्यापि व्यभिचारेणासङ्गत्यापत्त्या निष्फलत्वेन ज्ञातस्यानुष्ठानासंभवादित्येवार्थ इति नित्यस्थलेऽपि तज्ज्ञानमेव प्रवर्तकं, सामग्रीभेदे मानाभावात्तस्य तथात्वे च फलेऽनिष्टत्वग्रह इष्टत्वाग्रहेऽपि च प्रवृत्त्यदर्शनादिष्टत्वग्रहोऽपि तत्र सहकारी वाच्यः । सच नेच्छां विनेति भवत्येव हि फलाभिसन्धिरपेक्षितो नित्यस्थले सामग्रीभेदकल्पने हि तस्य सफलत्वाभ्युपगमोऽपि निरर्थको नित्यत्वादेव निष्फलेऽपि नियोगमात्रादेव तत्र प्रवृत्त्युपपत्तेः । एवं च निष्फलस्यानुष्ठानासंभवादित्युक्तिरप्यसङ्गता स्यात्प्राभाकरमतप्रवेशश्च स्यादिति ॥ ९—११ ॥ **फले विशेष इति।** कर्मत्यागतत्फलत्यागयोरित्यादिः । एकस्य फलमात्रत्यागिनोऽन्यस्य कर्मत्यागिन इत्यर्थः । **गौणत्वमेकस्येति** मुख्यत्वमन्यस्येति चात्यन्तादरविषयत्वरूपस्य मुख्यत्वस्य तदपेक्षयाल्पादरविषयत्वलक्षणस्य गौणत्वस्य प्रतिपादकम् फले विशेषजिज्ञासायास्तत्रैवोपयोगात् । ननु शक्यत्वशक्यगुणयोगित्वरूपमुख्यत्वगौणत्वपरं तत्रोक्तजिज्ञासानुपयोगादिति बोध्यम् । कर्मफलभोक्तृत्वाभोक्तृत्वलक्षणबन्धतदभावावेवास्तु तादृशगौणत्वमुख्यत्वप्रयोजकावित्यत आह—**तुल्यमिति।** तथाच द्वयोरपि कर्मफलभोक्तृत्वप्रयोजकफलाभिसन्धित्यागस्य समानत्वेनोक्तबन्धाभावस्य समानत्वान्न विशेषकत्वमिति भावः । फलभोगाभावसाम्ये कर्मत्यागात्यागयोरप्युक्तमुख्यगौणत्वप्रयोजकत्वं न संभवतीति तन्न पृथङ्निराकृतम् । शरीरग्रहणंविना सुखादीनामप्यभावात्कर्मफलत्वेन तस्यैवोपादानम् । **मायामयमिति।** शरीरग्रहणं विशेषणमज्ञानां मायाया अज्ञानस्य सत्त्वेन तन्मयस्य तदुपादानकस्य शरीरग्रहणादेरवश्यंभावित्वद्योतनार्थम् । जन्यफलमात्रस्य मायामयत्वे फलशब्दनिरुक्तिं प्रमाणयति—**फल्गुतयेति।** फल्गुतया परमार्थसद्भिन्नत्वेन तुच्छतयेत्यर्थः । यद्वा कर्मफलत्वेन सुखदुःखादेः प्रसिद्धतया शरीरस्य फलपदार्थत्वे निरुक्तिं मानमाह—**फल्गुतयेति।** अत्रपक्षे मायायामिति पाठेन भाव्यम् । 'समभिव्याहारात्' इति सूत्रेण कात्यायनेन पूर्वपक्षितमित्यन्वयः । 'अनङ्गं स्यात्' इति सूत्रेण सिद्धान्तितं जैमिनिनेत्यन्वयः । गौणार्थस्येत्यादिकं तु सूत्रतात्पर्यार्थकथनम् । स्वस्वपूर्वजन्मकृतेन कर्मणोत्तरोत्तरजन्मन एव ग्रहणमित्येकभविककर्मपक्षे विद्यमानजन्मनि फलाभिसन्धित्यागेन कर्मकरणेऽपि फलासंभवेन जन्मान्तरग्रहणमज्ञस्य कर्मात्यागिनोऽपि न भवत्येवेत्युक्तविशेषप्रतिपादनमसङ्गतमित्यत आह—**पराक्रान्तमिति।** बहुतरश्रुतिस्मृत्यादिभिः कर्मणोऽनेकजन्मावच्छिन्नफलकत्वसिद्धेरेकभविकत्वमयुक्तमित्यादेस्तत्रतत्र विद्वद्भिः प्रतिपादनं कृतमिति तज्जन्मन इव तदग्रिमजन्मनोऽपि तज्जन्मपूर्वकृतकर्मणा भवति संभव इति न विशेषप्रतिपादनमसङ्गतमिति भावः ॥ १२—१७ ॥ अचेतनत्वेऽपि वेदस्य यथाचार्यवाक्यादेराचार्यनिष्ठप्रवर्तनावगमकत्वात्प्रवर्तकत्वं तथा वेदस्य पौरुषेयत्वे परमेश्वरनिष्ठप्रवर्तनाबोधकत्वादेव प्रवर्तकत्वं स्यादेवेति वेदे प्रवर्तनारूपधर्मकल्पना व्यर्थेत्यत आह—**पौरुषेयत्वादिति।** वेदस्य यथा ह्यपौरुषेयत्वं तथा प्रागुक्तमत्र प्रपञ्चितं चान्यत्र । **अलौकिकमेवेति।** लौकिकशब्दाबाध्यं लौकिकप्रमाणमात्रागोचरं नियोगकार्यापूर्वादिपदाभिधेयं यथाकथंचिच्छब्दसंबन्धित्वाच्छब्दधर्मं केचित्प्राभाकराः कल्पयन्तीत्यर्थः । यद्वा शब्दस्य द्रव्यत्वमभ्युपगम्य तत्र ज्ञानादिसमवायिकारणतावच्छेदकतया सिद्धेनात्मत्वेन रहित, ईश्वररूपद्रव्ये प्रमाणतो ज्ञानादिकमिवायमत्र प्रवर्ततामित्यादिप्रवृत्तिगोचरेच्छारूपप्रवर्तनामेवाचार्यो मां प्रवर्तयति विधिर्मां प्रवर्तयतीत्यनुभवयोः समानाकारकयोर्विषयवैजात्यकल्पनस्यान्याय्यत्वेनोक्तानुभवादेव प्रमाणाद्धट्टानुयायिन एव केचित्कल्पयन्तीत्यर्थः । **प्रवृत्तिर्हेतुर्व्यापार इति।** यतः प्रयोजकहेतुविहितण्यन्तधातोर्युचि प्रवर्तनाशब्दनिष्पत्तिरतः प्रवृत्त्यनुकूलव्यापार एव प्रवर्तनापदार्थो ननु प्रवृत्तिगोचरेच्छेत्यर्थः । आचार्यप्रेरितोऽहं गामानयामीति भवति प्रेरितस्य प्रत्ययः सच नाचार्यप्रेरणाज्ञानमन्तरेणान्यधर्मप्रेरणाया ज्ञापकं च गामानयेत्याचार्यवाक्यादृतेऽन्यत्रोपलभ्यत इति तद्वाक्यादेव सा प्रत्येतव्या । तत्रान्यपदानामन्यार्थशक्तत्वेन गृहीतत्वादावापोद्वापाच्च लिङ्त्ववि-

शिष्टस्य तत्र शक्तिरवधार्यते । एवं वेदवाक्यश्रवणानन्तरमपि विधिर्मां प्रवर्तयति विधिप्रेरितोऽहं यज इत्याद्यनुभवात्तदनुरोधेन लोकवदेव वैदिकलिङोऽपि प्रवर्तकगतप्रेरणायां शक्तिरवधारणीया । तत्र लोके वक्तुश्चेतनत्वात्प्रवर्तकगता प्रवृत्त्यनुकूलव्यापारलक्षणा प्रवर्तना भवत्विच्छारूपैव, वेदे त्वचेतनेऽनुपपत्तेरभावान्नेच्छारूपा सा कल्पनीया अपितु क्लृप्तस्यैव कस्यचित्प्रवृत्त्यनुकूलव्यापारत्वेन लिङभिधेयत्वमुपगन्तव्यम् । प्रवर्तकवाक्याद्धि प्रवृत्त्यनुकूलव्यापारत्वेनैव तामवगत्यैव प्रवर्तते यतो न प्रवर्तनायामगृहीतशक्तिः कश्चित्प्रवर्तते प्रथमं प्रवर्तयतीत्येतावदेवावगच्छति नचानुसंधत्ते तदानीं प्रवृत्तिहेतुर्ण्यर्थो व्यापारः किमात्मक इति, सर्वत्र स्वारसिकप्रवृत्तिहेत्विष्टसाधनत्वादिज्ञानं विना यद्यपि न प्रवृत्तिः संभवति तथापि तस्यानुमानतो लाभेनान्यलभ्यत्वान्न तत्र लिङः शक्तिकल्पनं युक्तं प्राथमिकानुभवबाधापत्तेश्च । यदा हि प्रवर्तकस्यानाप्तभिन्नस्याहितत्वादिरहितस्य प्रवृत्त्यनुकूलव्यापारं प्रतिसन्धत्ते तदा तादृशव्यापारभाव्यप्रवृत्तिविषयस्यान्वयव्यतिरेकग्रहमाहात्म्यादिष्टसाधनत्वादिकमवगच्छति यथैव लोके, तथैव वेदेऽपि तादृशव्यापारावगतौ वेदस्याप्यनाप्तादिभिन्नत्वात् तादृशव्यापारभाव्यप्रवृत्तिगोचरयागादेरपीष्टसाधनत्वादिकम्, इयांस्तु विशेषो लोके यत्तादृशव्यापारबोधकवाक्यात्प्रवर्तकस्तदुच्चारयितान्यो वेदे तु य एव तादृशव्यापारबोधकः स एव, वेदवक्तुर्निराकरणात् । एवंच यथा लोके प्रवृत्त्यनुकूलव्यापारस्य वाक्यार्थज्ञानमारभ्य प्रवृत्तिपर्यन्तं तादृशव्यापारत्वेनैव ग्रहणमपेक्षितं नतु तादृशेच्छात्वादिना तथा वेदेऽपीति पश्चाल्लोके यथा तादृशेच्छात्वादिना तदवगमस्तथा वेदे श्रावणलिङ्प्रत्यक्षरूपज्ञानस्य विषयतया शब्दधर्मस्य प्रवृत्त्यभिधाया वा आख्यातत्वेन लिङ्निष्ठायास्तथात्वेनावगमोऽन्यस्य कल्पनायां गौरवात्, लोकसाधारण्येन प्रवृत्त्यनुकूलव्यापारत्वेन तदवगमाल्लोकवत्प्रवृत्तेरनुपदमुपपादितत्वादित्येवं स्थिते लिङ्ज्ञानस्य यद्यपि प्रवृत्त्यनुकूलव्यापारत्वेनैव ज्ञानस्योक्तक्रमेणास्त्येव प्रवृत्त्यनुकूलत्वं तथापि तत्त्वमन्यथापि कथंचिदुपपादयति—**विधिशब्दस्य चेत्यादिना** । एवंसति कथंचिदपि नान्योन्याश्रयस्य संभवः सत्युक्तक्रमेण प्रवृत्त्यनुकूलव्यापारत्वे विशेषदर्शिनां तत्त्वेन तज्ज्ञानं तत्त्वेन तज्ज्ञाने प्रवृत्तौ सत्यां तादृशव्यापारत्वमित्यन्योन्याश्रयो हि कथंचिदेव न विचारतो लिङ्ज्ञानत्वादिविशिष्टे, तादृशव्यापारत्वग्रह एव तत्प्रसरात् लोकगृहीतशक्तितः प्रवृत्त्यनुकूलव्यापारत्वेनोपस्थितेः संभवादिति । **सा च पुरुषप्रवृत्तिश्च । अनुष्ठातुं संपादयितुम्** । येन स्वर्गोद्देश्यकयागोपादानकप्रवृत्तिर्न ज्ञाता तेन प्रवर्तनाज्ञानवत्तापि तादृशप्रवृत्तिसंपादनमशक्यमिति लिङ्पदात्प्रवृत्तिज्ञानसंपादनमावश्यकं, तथाच ज्ञानद्वारा प्रवृत्तिहेतुत्वं लिङ्ज्ञानरूपप्रवर्तनाख्यव्यापारस्याव्याहतमिति तादृशव्यापारत्वेन विशेषदर्शिनामपि लिङ्पदाल्लिङ्ज्ञानोपस्थितिः सुकरेति भावः । प्रवृत्तिहेतुर्व्यापारो विधेः प्रवर्तनेत्युक्तं तत्र विधिरूपस्य लिङादेः प्रवृत्तिहेतुत्वं विना तद्व्यापारस्य तत्त्वायोगात्तज्जन्यत्वे सति तज्जन्यजनकत्वस्यैव व्यापारपदार्थत्वादित्युक्तम् । **शब्दस्य** विधिशब्दस्य । **तद्धेतुत्व** प्रवृत्तिहेतुत्वमिति । प्रवृत्तिवाचकत्वविशिष्टतयाऽऽख्यातत्वेन लिङ्ज्ञानादपि प्रवृत्तिज्ञानमेव जायते नतु प्रवृत्तिरिति कथं तद्धेतुत्वमित्यत उक्तं **तद्धीहेतोरपीति** । सत्यं, प्रवृत्तिधीहेतुरेवाख्यातत्वेन लिङ्ज्ञानं परंतु तादृशधियां जातायां लिङ्त्वेन प्रवृत्तिहेतुव्यापारशक्तिग्रहात्तादृशव्यापारोपस्थितौ सत्यामुपस्थितस्य तादृशव्यापारस्य भाव्यत्वेन गृहीततादृशबोधे जाते तथावगतप्रवृत्तिविषयत्वेन यागादौ लौकिकलिङ्स्थले गवानयनादाविवेष्टसाधनत्वग्रहाद्भवति प्रवृत्तिरिति प्रवृत्तिज्ञानद्वारा प्रवृत्तिहेतुत्वं तस्य भवत्येव सूपपादमिति भावः । परम्परयेति चोक्तक्रमेणापि लिङ्ज्ञानस्य व्यापारात्मकस्यैव प्रवृत्तिहेतुत्वं प्राप्तं नतु लिङ इत्युक्तम् । लिङश्रावणप्रत्यक्षे सत्येव वाचकत्वविशिष्टलिङ्ज्ञानं ततः प्रवृत्त्यादिकमिति प्रत्यक्षं प्रति विषयतया तादात्म्येन कारणस्य लिङः परम्परयोक्तया हेतुत्वमव्याहतं भवतीति भावः । **ज्ञानद्वारेणैव** स्वज्ञानद्वारेणैव । इदंच ज्ञानस्य व्यापारत्वलाभायोक्तम् । **व्यापारातिरिक्तव्यापारेति** । प्रवृत्तिज्ञानजनकोक्तव्यापारातिरिक्तस्य प्रवृत्तिहेतुव्यापारात्मकप्रेरणारूपस्य व्यापारस्य कल्पन इत्यर्थः । **मानाभावादिति** । प्रवृत्तिज्ञापकव्यापारस्यैव लिङ्शब्दात्प्रवृत्तिहेतुव्यापारत्वलक्षणप्रवर्तनात्वेन ज्ञाने सत्युक्तरीत्येष्टसाधनत्वाद्यनुमित्यादितः प्रवृत्तिनिर्वाहेणान्यथानुपपत्त्यादेर्मानस्याभावादित्यर्थः । **विवेक इति** । भवितृभवनानुकूलभावुकव्यापाररूपाया भावनायाः करणेतिकर्तव्यतादयोऽपि प्रपञ्चा इति प्राक् स एव तस्येत्यादिग्रन्थेन वाचकशक्तिरूपाभिधाविशिष्टज्ञानस्य प्रवर्तनात्वाभिधानं नासङ्गतम् । प्रवर्तना हि शब्दसंबन्धिनी वेदे शाब्दी भावनेत्युच्यते । भावना च करणाद्यात्मिकापीत्यभिप्रायेण तथोक्तिः । विशिष्टज्ञानं च शब्दज्ञानात्मकं शक्तिज्ञानात्मकं चापि । तत्र शब्दज्ञानत्वादिना करणादिव्यवच्छिन्नतया प्रवर्तनात्वमेव, शक्तिज्ञानत्वेन तु करणत्वमेवेति विवेक इति भावः । **अभिधीयतेऽपीति** । तथाचोक्तप्रणाड्या लडादिस्थले तज्ज्ञानस्य प्रवृत्तिज्ञानहेतुत्वेऽपि लडादिना प्रवृत्तिहेतुव्यापारत्वेन तदनुपस्थापनादुक्तरीत्येष्टसाधनत्वानुमित्यादेरभावेन प्रवृत्त्यभावान्न प्रवृत्तिहेतुव्यापारत्वमिति न प्रवर्तनाव्यवहारस्य तत्र प्रसङ्ग इति भावः । ननु शब्दस्य शाब्दबोध एव करणत्वं क्लृप्तं नतु शब्दार्थे शब्दार्थश्च प्रवर्तनात्मिका शाब्दी भावनेत्यतः शब्दस्य भावनाकरणत्वे प्रमाणमाह—**अनेन यदिति** । अध्ययनमात्रस्य भाव्यत्वे तत्र पुरुषप्रवृत्त्ययोगादध्ययनगृहीतेन स्वाध्यायेनेष्टं भावयेदित्यत्र स्वाध्यायविधेस्तात्पर्यमुपवर्णितमस्ति अत्रानेनेति स्वाध्यायमाह यच्छक्नुयादितीष्टमिष्टं च स्वर्गाद्यवच्छिन्नप्रवृत्तिरूपशब्दभावनाभाव्यमपि तत्कर्मिकायामुक्तभावनायां स्वाध्यायरूपलिङः करणत्वस्य स्वाध्यायोऽध्येतव्य इत्यनेन प्रमाणेन बोधितत्वात्प्रमाणस्य हि नास्त्यतिभार इति पदार्थेऽपिशब्दस्य करणत्वं नाप्रामाणिकमिति भावः । शब्दानुपस्थितस्यापि शाब्दे भाने दृष्टान्तमाह—

**यथाज्योतीति** । स्वरूपतो नामधेयान्वयप्रकारश्चात्रैव वक्ष्यति—**नत्वनभिहितविशेषणेति** । एतेनैतदुक्तं भवति । विशिष्टान्वयबोधरूपे शाब्दबोधे विशेषणोपस्थितिस्तत्रं तांविना विशिष्टबोधादर्शनात् । नतूपस्थितौ शब्दवृत्तिजन्यत्वमपेक्षितं गौरवादनुपयोगाच्च । तथाच प्रत्यक्षेण मनःप्रभृतिसहकृतेनोपस्थितस्य प्रवृत्त्यभिधायकशक्तिविशिष्टलिङः शब्दादनुपस्थितस्यापि करणत्वेन शाब्दभावनान्वयितया शाब्दबुद्धिविषयत्वं नाप्रामाणिकमिति । अथैवमर्थाध्याहारवादिनः प्राभाकरस्य विजयः शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यत इति सिद्धान्तभङ्गश्चेति चेन्न । शब्देनैव प्रपूर्यत इति नियमस्यापरित्यागेन सिद्धान्तभङ्गाभावादर्थाध्याहाराप्रसङ्गाच्च । नचैवं लिङाद्युपस्थापकशब्दापेक्षाप्रसङ्ग इति वाच्यमाशयानवबोधात् । तथाहि साकाङ्क्षस्य कस्यचिच्छब्दस्य श्रवणानन्तरं तदर्थान्वयिवस्तुगोचराकाङ्क्षाहि शाब्दी साच शब्देनैव शाम्यति । यतः पिधेहीत्येतावदुक्तौ पिधानस्य कर्माकाङ्क्षा नहि प्रत्यक्षदृष्टेन द्वारेण कदाचिदपि व्युत्पन्नानां शाम्यति अपितु द्वारमिति शब्देनैवेत्यवश्यं शब्दोऽपेक्षणीयस्तत्राकाङ्क्षितस्य वस्तुनोपेक्षितशब्दार्थरूपत्वे शब्दः स्वार्थमुपस्थापयन्नाकाङ्क्षां विनिवर्तयति तत्र चोपस्थितेः शब्दवृत्तिजन्यत्वनियमोऽन्यतस्तत्कल्पने गौरवादपेक्षितशब्दादेव तत्संभवात् । शब्दरूपत्वे चाकाङ्क्षितस्य स्वस्वरूपमुपस्थापयन्नेवाकाङ्क्षां विनिवर्तयति शब्दः विशिष्टान्वयबोधविषयस्वस्वरूपस्य श्रोत्रसहकृतेन स्वेनैवोपस्थापनेनोपस्थापकशब्दान्तरानपेक्षणात् । एवंच नार्थाध्याहारपक्षप्रसङ्गः । प्रकृते च लिङ्शब्दाच्छब्दभावनायामुपस्थितायां तस्याः करणाकाङ्क्षायामाकाङ्क्षितस्य करणस्य पदार्थरूपत्वाभावेसति शब्दात्मकत्वे तात्पर्यविषयतया निर्णीते अपेक्षितो लिङ्शब्द एव स्वरूपोपस्थापनेन तामाकाङ्क्षां विनिवर्तयति स्वमात्रेण चोपस्थित्यसंभवादनुपस्थितस्य विशेषणत्वासंभवाच्च श्रोत्रापेक्षा भवति द्वारमित्यादौ च द्वाररूपार्थस्याकाङ्क्षितत्वेन शब्देन तेन वृत्तिज्ञानसहकृतेनार्थोपस्थापनमेव क्रियते इति सर्वसामञ्जस्यम् । **ज्ञात्वेति** । प्रवृत्तिविषयक्रियामित्यादिः । **तेनतेनेति** । प्रेषणाध्येषणात्वादिनेत्यर्थः । **समानेऽपीति** । बुद्धस्यापीश्वरावतारत्वप्रसिद्धेरित्यादिः । अशरीरस्य वाक्यकर्तृत्वादर्शनात्सशरीरस्यैव तथात्वं वाच्यमिति शरीरसंबन्धनियतदोषसंस्पर्शापादिताप्रामाण्यस्य वेदेऽपि समाना प्रसक्तिरिति भावः । **साधारणत्वेनेति** । ईश्वराज्ञीकर्तृमते कार्यमात्र एवेश्वरेच्छायाः कारणत्वोपगमेन यत्र राजाज्ञया पुरुषप्रवृत्तिः तत्राप्ययमत्र प्रवर्ततामितीश्वरेच्छाया वाच्यतया वेदस्थले कृप्तप्रवर्तकभावया तयैव तादृशप्रवृत्तेरपि संभवाद्राजप्रवर्तनाया अन्यथासिद्धत्वाद्राज्ञः प्रवर्तकत्वानुपपत्तिरिति भावः । **असाधारणतयेति** । कार्यमात्रे कारणानामीश्वरेच्छादृष्टकालादीनामसाधारणतत्तत्कार्यकारणंविना कार्यजनकत्वादर्शनादीश्वरेच्छायां सत्यामपि राजप्रेरणाविलम्बेन पुरुषप्रवृत्तिविलम्बाद्राजाज्ञादेर्नान्यथासिद्धिः अतएव राजप्रेरितोऽहंकरोमि नामात्यप्रेरित इति व्यवहारोपपत्तिरिति राजादेर्न प्रवर्तकत्वानुपपत्तिरिति भावः । **प्रवर्तकत्वादिति** । प्रवर्तकत्वस्यान्वयव्यतिरेकाभ्यामसाधारणप्रवर्तनाव्याप्यत्वग्रहादित्यर्थः । तथाच वेदस्थलेऽपि सहकारिभूताऽसाधारणी काचित्प्रवर्तनावश्यमुपेया साच तत्र पुरुषान्तराभावाद्वेदस्यैव मन्तव्येति शाब्दभावनयैव प्रवृत्तिनिर्वाहे कृतमीश्वरप्रवर्तनयेति भावः । अत्रेश्वरकर्तृत्वतत्सर्वज्ञत्वादिनिराकरणं विस्तरेण न्यायकणिकायामस्तीति नोक्तं प्रासङ्गिकैतद्विचारबाहुल्याद्वेदान्तविचारानुपयोगिनो ह्युपरमस्यैवोचितत्वात् । गौरवादिति विवृणोति—**इच्छाविषयेति** । अन्यलभ्यत्वादिति विवृणोति—**वाक्यार्थान्वयेति** । ननु स्वर्गस्य कर्मतयान्वये तत्र कर्मविभक्तिर्युक्तेत्यत आह—**इच्छाविषयस्यैवेति** । इच्छायाः कमिपदार्थभूताया यद्विषयत्वलक्षणं कर्मत्वं तदेवाख्यातार्थस्य पुरुषप्रवृत्तेरपि कर्मत्वं नान्यत्तस्य च स्वर्गं कामयत इति स्वर्गकाम इत्यत्रानभिधानाद्विग्रहे द्वितीयादर्शनेऽपि कमेः कर्मण्यणि कृते काम्यत इति कामः स्वर्गश्चासौ कामः स्वर्गकाम इत्यत्र द्वितीयार्थस्याण्प्रत्ययेनाभिधानाद्द्वितीयाया अन्तर्भूतत्वमदृश्यमानत्वं एवं च कमिकर्मणि द्वितीयाया अभावे ततोऽनतिरिक्ते प्रवृत्तिकर्मण्यपि सा न भवतीति प्रथमैवाख्यातार्थे कर्मत्वसंबन्धेन तदन्वये साकाङ्क्षेति भावः । **नियमादिति** । पञ्चम्या अन्तर्भूतत्वादित्यत्रान्वयः । इतीत्यस्य द्वितीयाया इत्यत्रान्वयः । कर्मण्यणि कृते सतीति शेषः । अन्यविशेषणमपीत्यस्य कामपदार्थविशेषणतया स्वरसतः प्रत्येतुमर्हमपीत्यर्थः । **योग्यमिति** । तथाच योग्यतावशात्कामाभिन्नस्वर्गस्यैव भाव्यतया तत्रान्वय इति भावः । अथापि कामपदं विहाय स्वर्गमित्येव वक्तुं युक्तं तत्राप्याह—**यजतेरकर्मकत्वेनेति** । संप्रदानरूपगौणकर्मण्येव द्वितीयासाकाङ्क्षत्वेनेत्यर्थः । तथाच द्वितीयार्थकर्मत्वस्य धात्वर्थान्वयद्वारैवाख्यातान्वयसाकाङ्क्षत्वेन धात्वर्थान्वये निराकाङ्क्षत्वे द्वितीया नोचितेति भावः । नच कामपदं विनैव प्रथमान्तं स्वर्गपदं प्रयोक्तव्यमिति वाच्यम् । कामपदसमभिव्याहारादेव साध्यत्वेनान्वययोग्यतालाभात्तद्ग्रह एव च साध्यत्वेनान्वये प्रथमायाः साकाङ्क्षत्वोपगमात् । करणतया धात्वर्थान्वये प्रमाणमाह—**सुब्विभक्तीति** । धातोः करणत्वेऽपि तस्य सुब्विभक्त्ययोग्यत्वान्न ततस्तृतीयाधात्वर्थसमानार्थकस्तु नामधेयः करणार्थकस्ततस्तृतीयाधात्वर्थस्यैव करणत्वमाहेति तस्य करणत्वं प्रामाणिकमिति भावः । **विप्रकृष्टविषयत्वमिति** । विभिन्नपदोपात्तविषयत्वमित्यर्थः । गुणस्य विभिन्नपदोपात्तत्वात्तत्र प्रथमे संनिकृष्टविषयत्वमपि धात्वर्थस्याविहितत्वेन विधिविषयत्वसंभवात् । द्वितीये तु विप्रकृष्टविषयत्वमेव धात्वर्थस्य प्राप्तत्वेन विधेयत्वलक्षणविधिविषयत्वासंभवात् । अतएव होमाश्रितेन दध्नेन्द्रियं भावयेदिति वचनव्यक्तिः । धात्वर्थानुपरक्तस्य भावनायामिन्द्रियकरणिकायां दध्नःकरणत्वासंभवान्मत्वर्थलक्षणाश्रयणमिति । **सामानाधिकरण्येति** । यथा धात्वर्थमात्रस्य भाव्यत्वेनान्वये तस्यापुरुषार्थतया विध्यनुपपत्तेरिष्टस्य कस्यचिद्भाव्यत्वेनान्वये धात्व-

र्थस्य करणत्वेनान्वयस्य वाच्यतया सोमेन यागं यागेनेष्टमित्यन्वये वाक्यभेदापत्तेः सोमसाधितेन यागेनेष्टमिति साध्यत्वसाधनत्वादिविरुद्धत्रिकद्वयापत्तेः सोमेन यागेनेति द्रव्यक्रिययोः सामानाधिकरण्यस्य चानुपपत्तेर्मत्वर्थलक्षणा न तथा नामधेयस्थले तत्र नामधेयस्य धातुसामानाधिकरण्योपपत्तेरुभयोरेकार्थकत्वादित्यर्थः । सोमादिवन्नाम्नोऽपि यदि विधेयत्वं स्यात्स्वतस्तदसंभवात्सोमवतेतिवज्ज्योतिष्टोमेति नामवतेति मत्वर्थलक्षणा स्यादेव ज्योतिष्टोमपदस्य नामपरत्वेन नाम्ना शब्देन क्रियाया एकत्वाभावेन सामानाधिकरण्यासंभवात्तत्तु नास्तीत्याह—**धात्वर्थमात्रेति** । **शब्दादनुपस्थितोऽपीति** । धात्वर्थेन करणभूतेन सह नामधेयत्वनिर्णायकन्यायतः तादात्म्यमापन्नस्यार्थस्योपस्थापकत्वात् न शब्दोपस्थापकत्वं । तस्य विधेयीभूतस्वार्थपरिच्छेदकतया तात्पर्यविषयत्वस्य च श्रोत्रसहकृतेन स्वेन विनैव वृत्त्योपस्थापितस्य स्वार्थे भानाभ्युपगमेनापि निर्वाहसंभवादिति भावः । ननु भेदसंबन्धेनान्वयेऽपि विभक्त्यर्थस्यावश्यद्वारता स च विभक्तिसत्त्वे तदर्थभूतो भासतेऽन्यथा लक्ष्यतयैव यथा राज्ञः पुरुष इत्यत्र विभक्त्यर्थभूतः । सोमेन यजेतेत्यत्र लक्ष्यस्तथेहापि नामधेयान्वये विभक्तिर्वा लक्षणावापेक्षणीयैवेत्यतआह—**न विभक्त्यर्थो द्वारमिति** । यथा विनैव विभक्त्यर्थद्वारा प्रातिपदिकनञिवाद्यर्थस्य प्रातिपदिकधात्वर्थाभ्यामन्वयदर्शनान्निपातातिरिक्तत्वेन नियमसंकोच इष्यते तथा प्रातिपदिकेन विना वृत्तिमुपस्थापितार्थस्यापि तथान्वयदर्शनात्तदतिरिक्तत्वेनापि नियमः संकोचनीय इति भावः । नामधेयान्वयंविनैव विभक्त्यर्थद्वारोदाहरति—**तथाचेति** । हिमालयपदेन श्रोत्रेणोपस्थापितस्वस्वरूपस्य नामपदार्थेऽभेदेन तस्य भेदेनैव विनैव विभक्त्यर्थं नगाधिराजपदार्थ इति द्रष्टव्यम् । यथा तात्पर्यानुपपत्तिर्लक्षणाया वृत्तित्वे मूलं तथा सैव लाघवसहकृता प्रत्यक्षोपस्थितनामस्वरूपस्योक्तरीत्यान्वयेऽपि मूलमित्यपि बोध्यम् । यत्र लक्षणाया अपि न संभवस्तादृशस्थलमुदाहरति—**एवमिहेति** । अनन्वयाच्चेति विवृणोति—**इष्टसाधनमितीति** । इष्टस्वर्गसाधनताबोधो हि तात्पर्यविषयोऽन्यथा स्वर्गकामस्य प्रवृत्त्यनुपपत्तेः सच स्वर्गेष्टयोरन्वये सत्येवोपपद्यते सचासंभवीति स्वर्गाद्यन्तर्भावेण शक्तिकल्पने चानन्तशक्त्यापत्तिः स्वर्गकामपदस्य विशिष्टार्थलक्षणातात्पर्यग्राहकत्वे च फलतो निरर्थकत्वापत्तिरिति भावः । **करणविभक्त्यन्तेति** । ज्योतिष्टोमादिपदस्य प्रकृत्यादिगणे पाठाभावात्तत्कल्पकस्यापि चाभावादन्यथाप्युपपत्तेरुक्तत्वात्तृतीयायास्तत्र करण एव वाच्यत्वादिति भावः । **अनन्वयेति** । धात्वर्थस्य न्यायमते करणतयान्वयाभावात्करणविभक्त्यन्तार्थस्य तेनाभेदान्वयस्यायुक्तत्वादनन्वयप्रसङ्गादित्यर्थः ॥ १८ ॥ १९ ॥ अव्याकृतेत्यविद्यारूपमूलकारणोपाधिको हिरण्यगर्भेति लिङ्गशरीररूपसूक्ष्मोपाधिको विराडिति स्थूलशरीरोपाधिक उक्तो न पारिभाषिकस्तेन समष्टिव्यष्ट्यात्मकेष्वित्यस्य नासङ्गतिः । अन्यथा तस्य व्यष्टिरूपत्वाभावादसङ्गतिः स्यात् । व्यष्टीत्यनेन प्राज्ञतैजसविश्वात्मका जीवभेदा उक्ताः ॥ २० ॥ **ज्ञानेनेति** । तृतीयान्तपदप्रतिपाद्यं ज्ञानं विचाररूपं मननशब्दबोध्यं साधनरूपमिह पूर्वश्लोके चोक्तम् । साध्यभूतं तु निदिध्यासनपरिपाकजं साक्षात्कारात्मकमुभयश्लोक उक्तं बोध्यमिति ॥ २१—३० ॥ दृष्टार्थस्यायुर्वेदनीतिशास्त्रादिना विहितस्य निषिद्धस्य च दृष्टफलान्वयव्यतिरेकाभ्यां राजसस्यापि यथावदेव ग्रहणसंभव इत्यदृष्टार्थमुभयमित्युक्तम् । अयथावज्ज्ञानस्य तामसत्वाद्व्याचष्टे—**अयथावदेवेति** । अस्य तात्पर्यार्थमाह—**यथावन्न जानातीति** । तथा च राजसो जनो यथावन्न जानाति तामसस्त्वयथावज्जानातीति विवेकः । यथार्थस्तथाज्ञानं यथावज्ज्ञानं ज्ञानार्थयोः सादृश्यं प्रकारेण संबन्धः । भ्रमस्थले ज्ञाने विषयत्वलक्षणप्रकारसंबन्धसत्त्वेऽपि विषये येन संबन्धेन यः प्रकारस्तस्य तत्संबन्धाभावान्न सादृश्यमिति बोध्यम् । राजसस्य जनस्य धर्मे बलवदिष्टानुबन्धित्वसत्त्वेऽपि स्वर्गादिसंदेहादर्थव्ययायासादौ बलवद्द्वेषाच्च न तस्यावधारणमेवमधर्मे बलवदनिष्टानुबन्धित्वसत्त्वेऽपि नरकादिसंदेहादैहिकसुख उत्कटरागाच्च न तदवधारणं भवति यद्यपि तथापि तस्य मूर्च्छितनिद्रितादितामससाधारणत्वान्न जानातीत्यस्यापि पर्यवसितमाह—**किंस्विदितीति** । अवधारणत्वविशिष्टयथावज्ज्ञानाभावस्यायथावदवधारणरहितज्ञानवन्निष्ठस्य संशयानवधारणज्ञानयोरेव पर्यवसानमिति तदेवेह विवक्षितमिति भावः । किंस्विदिदमित्यनध्यवसायमित्यन्वयः । यद्यपि न्यायमतेऽनध्यवसायरूपो ज्ञानप्रकारो नास्ति तथाप्यनुभवानुरोधाद्यथा विशेषधर्ममात्रप्रकारकस्य घटोऽयमित्याकारकस्य संशयान्यस्य निश्चयत्वं घट एवायमित्यस्येतरव्यावृत्त्यवगाहिनोऽवधारणात्मकविशेषत्वं यथावायं स्थाणुर्न वेत्यस्य संशयमात्रत्वं प्रायोऽयं स्थाणुरित्यस्य संभावनात्मकविशेषत्वं तथापाततो दर्शनस्थले कदाचित्संशयात्प्राग्जायमानस्य किंस्विदिदमित्याकारकस्य संशयनिश्चयमात्राविरोधिनः प्रकारविशेषानवगाहित्वेन तदुभयविलक्षणस्य सर्वगतत्वेन भानयोग्यतया साधारणस्य वस्तुनो विशेषस्येदन्त्वस्य प्रकारतयाऽवगाहित्वेन निर्विकल्पकादपि विलक्षणस्य ज्ञानस्यानध्यवसायात्मकत्वाभ्युपगममुचितं मत्वा तथोक्तं नैयायिकैस्त्ववान्तरविशेषस्यानादृतत्वेन सविकल्पकनिर्विकल्पकत्वाभ्यां ज्ञानस्य द्वैविध्यं सविकल्पकस्य यथार्थायथार्थज्ञानत्वाभ्यां निश्चयसंशयत्वाभ्यां च द्वैविध्यमात्रमुक्तमिदमित्थं नवेति संशयमित्यन्वयः ॥ ३१—४० ॥ **एकजातित्वेनेति** । एका जातिर्जन्म मातृत एव नतु संस्कारतो यस्य तत्त्वेनेत्यर्थः । **सत्त्वोपसर्जनमिति** । सत्त्वमुपसर्जनं गुणीभूतं यत्र तदित्यर्थः । एवमग्रेऽपि । शास्त्रस्य पुरुषस्वभावसापेक्षत्वे मानमाह—**आख्यातेति** । अर्थात्तत्तत्क्रियाकर्तृत्वादिकम् । अधिकारिताप्रयोजिकाशक्तिः स्वभावविशेषरूपो ब्राह्मण्यादिः तमपेक्ष्यैव शास्त्रेण तत्तत्क्रियासु कर्तृत्वादिकं बोध्यत इत्यर्थः ॥ ४१—४४ ॥ **चित्रादिकर्मेति** । पश्वाद्यैहिकफलकं प्रतिबन्धकवशात्स्वानुष्ठानावच्छेदकशरीरसंबन्धेनादत्तफलं ‘चित्रया यजेत पशुकाम’

इत्यादिभिर्विहितमित्यर्थः ॥ ४५—५४ ॥ **समवायनिरूपितेति** । वस्तुत इदं दुर्निरूपमेवान्यतरत्वमनुगतं कारणतावच्छेदकं कारणाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वमुपगम्य करणताद्वयं वा स्वीकरणीयम् ॥ ५५—६० ॥ **ईश्वराधीनतामिति** । स्वभावस्य प्राग्भवीयादृष्टसंस्काररूपस्याचेतनस्य चेतनाधिष्ठानमन्तरेणाकिंचित्करत्वाज्जीवस्यातीन्द्रियतत्साक्षात्काराकर्तुरधिष्ठानासंभवात्तदधिष्ठातृतयेश्वरस्येश्वराधीनतामुपगतामित्यर्थः । एतेन वैषम्यनैर्घृण्यादेरीशस्य नावकाशः । भक्तिरपि पूर्वं विशुद्धज्ञानात्मिकैवोक्ता । ज्ञानातिरिक्तस्य मोक्षसाधनतायाः श्रुत्यैव प्रतिषेधाद्विस्तरेणेह प्रागुक्तत्वाच्च । वासुदेवोऽपि ब्रह्मैव तत्प्रसादोऽपि विमलतत्साक्षात्कार एव । भक्तिस्तुत्यर्थमिह संपन्नोक्तभक्तेर्निषिद्धाचरणेऽपि प्रत्यवायाभाव उक्तः पूर्वापरग्रन्थपर्यालोचनातस्तथैव प्रतिभानात् । नराधमानां तु शिवविष्णुद्वेषमलिनान्तःकरणानामन्यथा प्रतिभानमुचितमेव ॥ ६१ ॥ **आनर्थक्यमिति** । अत्र परमेश्वरस्यास्वतन्त्रजीवप्रेरकत्वे विधिनिषेधशास्त्राभ्यामिष्टानिष्टसाधनत्वयोस्तत्तत्क्रियां प्रवृत्त्यर्थंबोधनस्य भवति निरर्थकत्वं पुरुषस्य स्वप्रवृत्तावस्वतन्त्रत्वात्परमेश्वरप्रवर्तनानिवर्तनाभ्यामेव तत्प्रवृत्तेः संपाद्यत्वात्तदभावे तादृशबोधसद्भावेऽपि प्रवृत्तिनिवृत्त्योरभावादिति तत्फलकशास्त्रस्यापि निरर्थकत्वमेवं सर्वस्य पुरुषकारस्येतिचेद्विवक्षितोऽर्थस्तदैतस्या एवाशङ्कायाः समाधातुमुचितत्वेन तदभावेनासङ्गतिर्दुर्वारा स्यादतः परतन्त्राणि पूर्वपूर्वतरभवकोटिसंपादितधर्माधर्मपरतन्त्राणि भूतानि तदधिष्ठातृतया प्रेरयति चेदीश्वरः संसारसमुद्रसंतरणे सर्वस्य विधिप्रतिषेधशास्त्रस्य श्रोतव्य इत्यादेः 'अहरहःसंध्यामुपासीत' इत्यादेः 'मा हिंस्यात्' इत्यादेश्चानर्थक्यं तत्संपादनस्याशक्यत्वादेवं गुरूपसदनादेः पुरुषकारस्य च श्रवणादितो ब्रह्मज्ञानेऽपि सन्ध्योपास्तिहिंसापरिवर्जनादितः पापानुत्पत्तावपि पूर्वाचरितधर्माधर्माणामेवानन्त्यात्तत्प्रेरकस्येश्वरस्य प्रेरणादितो निवृत्तेर्निमित्ताभावात्तद्भोगस्यैव विश्रान्तेर्भोगनान्तरीयकविधिनिषेधविषयक्रियातो धर्माधर्मधारायाश्चाविश्रान्तेरित्यर्थो वाच्यस्तथासत्युक्ताशङ्कायाः समाहितत्वेन नासङ्गतिः । तथाहि मनसा ध्यानादिभिस्तस्मिन्नद्वितीयपरमानन्दघने चिदात्मनि परमेश्वरे समाश्रिते वाचा कर्मणा चाचरितसकलफलसमर्पणेन निष्कामनित्यनैमित्तिकानुष्ठाननिषिद्धपरिवर्जनेनान्तःकरणे विशुद्धेऽहंकारादिसमस्तदोषे धर्माधर्माद्युत्पादके प्रक्षीणे भोगनान्तरीयककर्मभिर्धर्माद्युत्पादासंभवात्तत्त्वज्ञानेन संचितानां विनाशात्परमेश्वरस्य भोगप्रदकर्माभावेनाधिष्ठानतया प्रेरकत्वोपरमाद्भवति सुलभं संसारसमुद्रसंतरणम् । भवति चान्तःकरणशुद्धितत्त्वज्ञानोत्पादनरूपार्थवत्तया शास्त्रादेरर्थवत्त्वमिति । या तु पूर्वोक्तार्थकरणे प्रदर्शितशङ्का सापि समाहितेह प्रागधुनापि किंचिदुच्यते । सर्वेषामदृष्टेश्वरतदिच्छाप्रयत्नकालादीनां साधारणकारणानामप्रत्यक्षाणां प्रत्यक्षगृहीतान्वयव्यतिरेककारणकलापोपसंहारमुखेनैव कार्यकारणत्वमङ्गीक्रियते न स्वातन्त्र्येण । दृष्टकारणेष्वेकस्याप्यभावे कार्यादर्शनाद्दृष्टसकलकारणसंपत्तौ कार्यविलम्बाभावाच्च तादृशसामग्रीसंपत्त्यसंपत्तिभ्यामदृष्टादिसद्भावासद्भावौ केवलमनुमेयौ । एवंच प्रवृत्तिनिवृत्त्योर्दृष्टे कारण इष्टानिष्टसाधनत्वज्ञानेऽन्वयव्यतिरेकाभ्यां क्लृप्तेनादृष्टादिमात्रमेवं तादृशज्ञानयोरपि प्रत्यक्षादिप्रमाणं नादृष्टमात्रमिति लौकिकप्रवृत्त्यादिविषयक्रियास्वदृष्टादिसहकृतप्रत्यक्षादिप्रमाणत इष्टानिष्टसाधनत्वग्रहसंपत्तिसंभवेऽपि धर्माधर्माद्यलौकिकक्रियायामदृष्टादिसहकृतशास्त्रत एव तत्संभव इति न शास्त्रवैयर्थ्यमेवमेव पुरुषकारस्यापि न वैयर्थ्यं नचादृष्टादिवैयर्थ्यम् । तत्साधनस्य कुसुमाञ्जल्यादिग्रन्थे विस्तरेण कृतत्वादिति ॥ ६२ ॥ ६३ ॥ **गुह्यादिति** । स्वर्गपशुहिरण्यपुत्रकलत्रादिषु परमार्थतो रागानर्हेषु नितान्तरक्तेभ्यो जडतमेभ्यो रक्षणीयादित्यर्थस्तेषां हि महति कर्मयोगे फलकामनाराहित्येन फलाजनके चेतोविशुद्धिद्वारा मोक्षानुबन्धित्वेनादरणीये फलाभावेन धनव्ययेन श्रमातिरेकेण चानदरातिशयस्यैव संभवादिति भावः । **गुह्यतरमिति** । प्रमाणमार्गनिष्णातमन्येभ्यस्तार्किकमीमांसकेभ्योऽशुद्धान्तःकरणेभ्यस्तात्पर्याग्रहेण कुमार्गपातिभ्यश्च रक्षणीयतरम् । तार्किकादीनां हि प्रत्यक्षादिबलवत्प्रमाणबाधिताद्वैतादिविषयत्वेनाश्रद्धातिशयेनानादरातिशयान्मलिनान्तःकरणानां श्रद्धावतां च स्वर्गनरकादावापाततो मिथ्याग्रहाद्रागद्वेषप्राबल्याद्विहितत्यागनिषिद्धाचरणविनिपातकत्वाचेति भावः । **गुह्यतममिति** । मलिनतरान्तःकरणेभ्यस्तामसराजसश्रद्धायुक्तेभ्यस्तत्त्वतो ह्यगृहीतबहुतरार्थवादार्थेभ्यः शापगृहीतजन्मभ्यो बहुभ्यो नराधमेभ्यो रक्षणीयतमादित्यर्थः । तेषां हि बहुतरार्थवादव्यामोहितान्तःकरणतया नित्यनैमित्तिकवर्णाश्रमाचारधर्मपरित्यागेन यथार्थमत्स्वरूपाज्ञानेन बाह्यमुखतया चानर्थविनिपातप्रयोजकत्वादिति भावः । दुर्ग्राह्यतममदीयाद्वितीयानन्दचिद्घनशिवस्वरूपानुसरणस्य सर्वथा हि प्रथमं दुःशक्यतादुर्ग्राह्यतरमदीयमायोपहितेश्वरात्मकरूपस्यापि तथात्वमित्यशुद्धान्तःकरणावस्थायां सुग्रहकोटिकन्दर्पकमनीयलीलामयमनुष्यानुकारिचतुर्भुजद्विभुजभवाच्युतात्मकमूर्तेः सद्गुरूपदेशतो बाह्याभ्यन्तराराधनपरिपाटीं विज्ञाय नित्यनैमित्तिकानुष्ठानपुरस्सरं प्रत्यक्षादिप्रमाणाबाधादितो दृढश्रद्धं स्वर्गाद्यतिशायिभविष्णवादिलोकसुखलोभेन निरन्तरं बाह्याराधनं भवति प्रथमं विधेयं तद्विहितवतश्च प्रक्षीणाशुद्धितयान्तराराधने भक्त्यभिरुचितश्च निरन्तरानुष्ठितात्प्रक्षीणतराशुद्धितया समुपजातशमदमादिमतो निरुक्तलोकाप्तिलोभविगमेन निष्कामसकलकर्मानुष्ठानाभिरतीश्वरस्वरूपानुपातिप्रज्ञत्वसंपत्त्या प्रक्षीणतमान्तःकरणाशुद्धिता भवति । भवति च मदीये शिवाख्ये परस्वरूपे मनसः प्रवेशयोग्यता । ततश्च विविदिषादिक्रमेण मदीयपरमानन्दैकतानाद्वयचिद्रूपाकारनिरन्तरवृत्तिप्रवाहरूपनिदिध्यासनात्मिका साक्षात्कारनिदानभूता भवति परा भक्तिरिति मूलोपायभूतत्वेन प्रशस्ततमा मत्परिच्छिन्नस्वरूपयजननमनादिरूपा भक्तिर्गुरुणा सम्यगुपदिष्टा प्रथमं सर्वैरनुष्ठेया । मदभिमता सा तु ज्ञानरहस्योपदेशप्रवणमनसा मया तदधिकारिणे

तुभ्यं नोपदिष्टाऽधुना शास्त्रोपदेशसमाप्त्या ततो व्यावृत्तमनसोपदिश्यत इति भगवदभिप्रायो नतु परमपुरुषार्थमोक्षानन्यसाधनज्ञानमार्गादुत्कृष्टत्वेन ततो गुह्यतमत्वे बाह्याभ्यन्तरपरिच्छिन्नस्वरूपयजननमनादिभक्तिमार्गे सकलान्यवस्तुमिथ्यात्वस्वस्वरूपाद्वयत्वपरमपुरुषार्थस्वप्रकाशपरानन्दरूपत्वपरपूर्वोपदिष्टसकलशास्त्रव्याकोपप्रसङ्गादिति ॥ ६४ ॥ **परित्यज्येति ।** अन्तःकरणशुद्ध्यधीनविविदिषासंन्यासाऽपूर्व मुमुक्षुणापि फलकामनापरित्यागेन वर्णाश्रमोचितकर्मकरणस्य भूयसा प्रबन्धेन साधितत्वात्तदानीं तत्परित्यागोपदेशे पूर्वापरविरोधप्रसङ्गाद्याचष्टे—**विद्यमानेति ।** शरणत्वेन संसारसमुद्रे मुहुर्निपततो रक्षकत्वेनानादृत्य फलकामनारहितनित्यनैमित्तिकानुष्ठानमात्रादेवाहं मुख्य इति बुद्धिस्तत्रादरस्तत्परित्यज्येत्यर्थः । तादृशानुष्ठानस्य केवलान्तःकरणशुद्धिहेतुत्वेन ज्ञानोपायतैव । मोक्षोपायता तु श्रवणादिसाक्षात्कारान्तस्य मदेकशरणीकरणापरपर्यायस्यैवेति तत्रैवादरो नितरां विधेयो नतु कर्मणि शुद्धेऽन्तःकरणे विक्षेपहेतुस्तत्संन्यसनीयमेवेति भावः । **मदेकशरणस्येति ।** नित्यनैमित्तिकानुष्ठानेन विशुद्धान्तःकरणस्य संन्यासरूपसर्वधर्मपरित्यागेन निवृत्तविक्षेपस्य संजाताद्वितीयशुद्धचिद्रूपमदेकगोचरनिरन्तरवृत्तिप्रवाहस्येत्यर्थः ॥ ६५—७८ ॥

श्रीधर्मदत्तविदुषा मैथिलेन यथामति ॥ गूढार्थदीपिकालोको विहितोऽस्तु मुदे सताम् ॥ १ ॥

**इति श्रीमन्मिथिलावास्तव्यश्रीधर्मदत्तशर्म( प्रसिद्धश्रीबच्चाशर्म )प्रणीते भगवद्गीतागूढार्थदीपिकातत्त्वालोकेऽष्टादशोऽध्यायः ॥ १८ ॥**

**समाप्तोऽयं ग्रन्थः**

# श्रीमद्भगवद्गीतापद्यानामकारादिकोशः ।

# विक्रेयानि संस्कृतपुस्तकानि ।

## पातञ्जलमहाभाष्यम् ।

### ( नवाह्निकम् । )

**कैयटप्रणीतप्रदीपेन नागेशकृतोद्द्योतेन पायगुण्डेकृतछायया च परिवृतम् ।**

श्रीवाराणस्यादिनगरेषु विहितमुद्रणमपीदं नवाह्निकभाष्यमविभक्तविषयतया साहायकमिवाचरति दुर्बोधतायां विषयगाम्भीर्यस्येत्याकर्ण्य विविधविचक्षणमुखात्, संजातसुविभक्तमुद्रणोत्साहेन मयैतत् पूर्वपक्षि–सिद्धान्त्येकदेशि–सिद्धान्युक्तिभिस्तदन्तर्गतैरवान्तरविषयैश्च संविभाज्य, संयोज्य च यथास्वं शिरोलेख्ये–( हेडिंगे )न संविभक्तविषयसूचकेन, विभूष्य च कृतसंविभागप्रदीपोद्द्योतयोरधस्तात् संनिवेशनेन मुद्रितम् । येनास्यानतिशिक्षिता अपि रहस्यमवगच्छेयुः । पायगुण्डे इत्युपाभिधनागेशछात्रवरकृतछायायास्तु प्रथमोऽयं मुद्रणशालाप्रवेशः । इयमत्र टिप्पणीरूपं प्रतिलम्भिता. मू. ५ रू. मा. व्य. १ रू.

### ( विधिशेषरूपं द्वितीयं खण्डम् । )

**प्रथमाध्यायद्वितीयपादादिद्वितीयाध्यायान्तम्** । कैयटप्रणीतप्रदीपेन नागेशकृतोद्द्योतेन च परिवृतम् । इदमपि नवाह्निकवत् सुविभक्तमुद्रणपरिपाट्यैव पूर्वपक्षि–सिद्धान्त्येकदेशि–सिद्धान्त्युक्तिभिस्तदन्तर्गतैरवान्तरविषयैश्च संविभज्य संयोज्य च यथास्वं शिरोलेख्ये–(हेडिङ्गे)न संविभक्तविषयसूचकेन विभूष्य च कृतसंविभागप्रदीपोद्द्योतयोरधस्ताट्टिप्पणसंनिवेशनेन मुद्रितम् । येनास्यानतिशिक्षिता अपि रहस्यमवगच्छेयुः मू. ४॥. रू. मा. व्य. ॥=

---

## ब्रह्मसूत्रशाङ्करभाष्यम् ।

भाष्य-रत्नप्रभा–भामती–( आनन्दगिरीय ) न्यायनिर्णय व्याख्यात्रयोपेतम्. मू. ८ रू. मा. व्य. १। रू.

---

## तर्कसंग्रहचन्द्रिका ।

### तर्कसंग्रहसहिता ।

इयं व्याख्या गभीरार्थापि सुन्दरतरास्ति । अस्याः प्रणेता श्रीकाशीस्थः प्राच्यो विद्वान् महामहोपाध्यायप्रतिभो गाडेगिलोपाह्वः श्रीमुकुन्दशर्मासीदिति ज्ञायते । बालाल्पमतिदुरवबोधविषयचिख्यापयिषुणानेन व्याख्यात्रा महता परिश्रमेण व्यरचीयं टीका तथा विविधटिप्पणपरिष्कारपरिष्कृतास्तीति विद्यार्थिभिरवश्यमादरणीया. मू. ६. आ. मा. व्य. ८=

---

# योगवासिष्ठः ।

## वासिष्ठमहारामायणतात्पर्यप्रकाशव्याख्यासहितः ।

जगदिदमनादिमहामोहनिशासुप्तमनवरतदुःस्वप्नभ्रमपरंपराकल्पिते जन्मजरामरणहर्षामर्षशोकाद्यनर्थसंकटसहस्रसंकुले संसारमहारण्ये मोमुह्यमानं विवेकान्धं प्रबोधोपायदौर्लभ्यात्समुद्वीक्ष्य शास्त्रभानूदयेन तत्प्रबोधनाय प्रवर्तमानः परमकारुणिको **भगवान्वाल्मीकिमहामुनिः** श्रीरामचन्द्रमहोदयपवित्रचरित्रपूर्णं पूर्वरामायणं, आत्मानात्मविवेचनपूर्वकब्रह्मसाक्षात्कारगर्भमुत्तररामायणमिति निबन्धद्वयरूपं महानिबन्धं रचयांबभूव । तत्रेदमुत्तररामायणं **योगवासिष्ठ**संज्ञया वासिष्ठमहारामायणाख्यया च जगति वरीवर्ति । ललितचरित्रमिषेणाप्यस्मिन्परिशीलितेऽनायासेनाद्वैतवेदान्तसिद्धान्तज्ञानं भूयादित्यहो प्रणेतृचातुरी । परमादरणीयोऽप्ययं महानिबन्धः २४ चतुर्विंशतिमुद्राभिरेव लभ्योऽस्य लालसायामप्युदासते तनुद्रविणभाज इति सर्वेषां सौलभ्यायास्माभिः सुव्यवस्थया सचिक्कणपत्रेषु सुन्दरायसाक्षरैरानंक्यापि केवलं मूल्यं १४ रू. ( प्रतिभागं ७ रू. इति भागद्वयं कल्पितमस्य ) मार्गव्ययः २ रू.

---

# भाट्टदीपिका ।

## महामहोपाध्यायसर्वतन्त्रस्वतन्त्रखण्डदेवप्रणीता

### श्रीशंभुभट्टप्रणीतप्रभावलीव्याख्यासहिता ।

मीमांसाशास्त्रमधिजिगमिषूणामतीवोपकारकोऽयं ग्रन्थ इति महता प्रयासेन संपाद्य विद्वद्द्वारा संशोध्यास्माभिः ग्राहकसौकर्यार्थं केवलमादितोऽध्यायत्रयात्मको निवीतान्तोभागः सुव्यवस्थया सचिक्कणपत्रेषु सुन्दरायासाक्षरैरानंक्यापि केवलं मूल्यं ६ रू. मार्गव्ययः १ रू.

---

## शिवगीता ।

### लक्ष्मीनरहरिसूनुकृतबालानन्दिनीव्याख्यासहिता ।

अस्याः १६ अध्यायाः संति । पद्मपुराणे श्रीरामागस्त्यसंवादरूपेणास्या अनुवादोऽत्यन्तं सुललितोऽध्यात्मबुभुत्सूनां मनांस्याह्लादयति । अस्य मूल्यं १ रूप्यकपरिमितमासीत् । संप्रति सुव्यवस्थया संमुद्र्यापि केवलं ॥। पादोनरूप्यकमेव कृतम्. मा. व्य. ४≡

पाण्डुरङ्ग जावजी,

निर्णयसागरमुद्रणालयाध्यक्षः.